# आदर्शपुस्तकोल्लेखपत्रिका ।

अथास्य सटीकबृहदारण्यकोपनिषद्भाष्यवार्तिकस्य पुस्तकानि यैः परहितैकपरतया संस्करणार्थं प्रदत्तानि तेषां नामादीनि पुस्तकानां संज्ञाश्च कृतज्ञतया प्रकाश्यन्ते ।

(क.) इति संज्ञितम्—मूलं सटीकं, वटोदरनगरनिवासिनां पटवर्धनोपाह्वानां श्री० रा० रा० कृष्णराव भीमाशंकर इत्येतेषाम् । पत्राणि ८३८ । एकपत्रस्थाः पङ्क्तयः १६ । एकपङ्क्तिस्थान्यक्षराणि ५० । लेखनकालः शालिवाहनशके १७७२ ।

(ख.) इति संज्ञितम्—मूलं सटीकं, दक्षिणापथवर्तिविद्यालयग्रन्थसंग्रहालयस्थं 'डॉक्टर' इत्युपपदधारिभिर्भाण्डारकरोपाह्वैः रामकृष्ण गोपाल इत्येतैर्दत्तम् । पत्राणि ६७२ । पङ्क्तयः २१ । अक्षराणि ५० । लेखनकालः, विक्रमसंवत् १८९४ ।

(ग.) इति संज्ञितम्—केवलं मूलम्, अलीबागग्रामनिवासिनां श्री० रा० रा० 'रावसाहेब विवलकर' इत्येतेषाम् । पत्राणि ३७० । पङ्क्तयः १० । अक्षराणि ५५ । लेखनकालस्तु पञ्चाशद्वर्षात्मकोऽस्तीत्यनुमीयते ।

(घ.) इति संज्ञितम्—केवला टीका चतुर्थाध्यायस्य, एतदपि दक्षिणापथवर्तिविद्याभवनग्रन्थसंग्रहालयस्थं भाण्डरकरोपाह्वै रामकृष्ण गोपाल इत्येतैरेव दत्तम् । पत्राणि ४०९ । पङ्क्तयः १० । अक्षराणि ३५ । लेखनकालः विक्रमसंवत् १७७१ ।

समाप्तमिदं संज्ञापत्रकम् ।

# संबन्धवार्तिकश्लोकाद्यचरणवर्णानुक्रमः ।

संबन्धवार्तिकश्लोकाद्यचरणानां—

## वर्णानुक्रमः ।

| श्लोकाद्यचरणानि | पृष्ठाङ्काः |
| --- | --- |

## वर्णानुक्रमः ।

समाप्तमिदं सूचीपत्रकम्।

ॐ तत्सद्ब्रह्मणे नमः ।

# श्रीमत्सुरेश्वराचार्यविरचितं बृहदारण्यकोपनिषद्भाष्यवार्तिकम् ।

## आनन्दगिरिकृतशास्त्रप्रकाशिकाख्यटीकासंवलितम् ।

स्वाज्ञानोद्भूतभूतप्रमुखबहुमुखद्वैतदेहद्वयोद्य-
न्मातृत्वादिप्रपञ्चप्रचयपरिचयप्राप्तसंसारयन्त्रम् ॥
नैत्यभ्यासप्रसूतप्रबलमतिबलप्रास्तमोहप्रभाव-
प्रोत्थप्रत्यर्थिसार्थद्युतिकथमकथं धाम कामं प्रपद्ये ॥ १ ॥

कारुण्यामृतवारिपूरलहरीदूरीकृतस्वाश्रित-
स्वान्तध्वान्तनिरन्तरान्तररजोराशिर्यशःशेवधिः ॥
भास्वद्भानुसहस्रभानुगहनोऽवज्ञाततिग्मद्युति
र्देवः श्रीपुरुषोत्तमो विजयते नीलाद्रिचूडामणिः ॥ २ ॥

त्वङ्गत्तुङ्गभुजंगसङ्गगहनप्रत्युद्यदङ्गद्युति-
भ्रश्यद्विश्वदिगन्तरालबहुलप्रौढान्धकाराङ्कुरः ॥
सोमः सोमकलाकलापकलितो लावण्यकारुण्यभू-
र्भूयान्नो निरवद्यबोधविधये देवो भवानीपतिः ॥ ३ ॥

बन्धूकबन्धुरुचये रचये नमस्यां
हेरम्बनाम वहते महते गजाय ॥
प्रत्यूहभङ्गविधये निधये गुणानां
शोभामतीव भजते सृजते जगन्ति ॥ ४ ॥

मातर्नतोऽस्मि भवतीमथ वाऽर्थये त्वां
चेतः सरस्वति सुरेश्वरवार्तिके मे ॥
वाचा सहैव सदनुग्रहसंप्रसन्न
मेकाग्रमस्तु परिहाय पराञ्चमर्थम् ॥ ५ ॥

श्रीमद्व्यासपयोनिधिर्निधिरसौ सत्सूक्तिपङ्क्तिस्फुर
न्मुक्तानामनवद्यहृद्यविपुलप्रद्योतिविद्यामणिः ॥
शान्तिः क्षान्तिधृती दयेतिसरितामेकान्तविश्रान्तिभू-
र्भूयान्नः सततं मुनीन्द्रमकरश्रेणीश्रयः श्रेयसे ॥ ६ ॥

१ ख 'द्योतवि' ।

यद्भाष्याम्बुजजातजातमधुरप्रेयोमधुप्रार्थना-
सार्थव्यग्रधियः समग्रमरुतः स्वर्गेऽपि निर्वेदिनः ॥
यस्मिन्मुक्तिपथः पथीनमुनिभिः संप्रार्थितः संबभौ
तस्मै भाष्यकृते नमोऽस्तु भगवत्पादाभिधां बिभ्रते ॥ ७ ॥

संसाराम्भोधिपारप्रकटनपटुतागाढमूढागमान्त-
व्याख्याव्याख्यातविद्वन्निवहमहिमसंव्याप्तसर्वावकाशः ॥
शश्वद्विधात्ममोहप्रवहहुतवहः संदुहानः सुधानां
धारां गीर्भिः सुरेशः स जयति यमिनामग्रिमग्रामणीन्द्रः ॥ ८ ॥

यत्पादाम्बुजचञ्चरीकधिषणा निर्वाणमार्गाधिगा
पङ्क्तिर्मुक्तनिसर्गदुर्गदुग्गिना वाचंयमानामियम् ॥
यस्मिन्नित्यमिदं शमादि समभूद्बोधाङ्कुरो मे यतः
शुद्धानन्दमुनीश्वराय गुरवे तस्मै परस्मै नमः ॥ ९ ॥

कारुण्याम्भोनिधिभ्यो विविशतवशगान्प्राणिनो मोचयद्भ्यो
विद्यापारंगतेभ्यो गतविततमस्तोमवद्भ्यो महद्भ्यः ॥
आ भूमेरा च मत्यात्प्रथितपृथुयशःश्रेणिनिश्रेणिभाग्भ्य
स्तेभ्यः मद्भ्यो गुरुभ्यस्त्रिविधमपि नमः संततं संविदध्मः ॥ १० ॥

सम्प्रदायविदामुक्तीरनुसृत्य प्रणीयते ॥
शास्त्रप्रकाशिका सेयं सुरेश्वरवचोनुगा ॥ ११ ॥

**स्वाविद्यात्रिभवप्रसूतविपुलद्वैतप्रपञ्चाहित**
**स्पष्टभ्रान्तितिरोहितात्ममतयो यं भागशो मन्वते ॥**
**निर्भागं सकलाभिधानमननव्यापारदूरस्थितं**
**वन्दे नन्दितविश्वमव्ययमजं भक्त्या तमेकं विभुम् ॥ १ ॥**

इह खलु निखिलाम्नायार्थपरिशोधनार्थं काण्वोपनिषद्भाष्यं व्याचिकीर्षुराचार्यश्चिकीर्षितपरिसमाप्त्यादिपरिपन्थिदुरितनिबर्हणसिद्धये वृद्धाचारप्रमाणकमिष्टदेवताप्रणतिलक्षण मङ्गलाचरणं मुखतः समाचरन्नर्थाच्च व्याचिख्यासितभाष्यार्थं सुखप्रतिपत्त्यर्थं संक्षिपति । **स्वाविद्येत्यादिना**। तं विभुं वन्दे भक्त्येति संबन्धः। तच्छब्देन परस्य लोकवादिप्रसिद्धिरुक्ता। ननु परश्चेत्प्रसिद्धिविषयो न तर्हि शास्त्रप्रतिपाद्योऽनन्यलभ्यत्वाभावात्तत्र विशेष्यं व्यपदिशन्नुत्तरमाह। **विभुमिति**। सामान्येन प्रसिद्धोऽप्यनतिशयैश्वर्यशाली परो नानन्तसच्चिदानन्दात्मकविशेषाकारेण शास्त्रादृते सिध्यति तथा च धर्मवत्तस्य शास्त्रगम्यतोचितेति भावः । आराध्यानां हि परा काष्ठेश्वरोऽतस्तत्राभिवादनं युक्तमिति मत्वा वन्दनं प्रायुङ्क्त । भक्तिश्रद्धानिबन्धनमभिवादनमभिमतफलदमित्यभिप्रेत्याऽऽह । **भक्त्येति** ।

मीमांसकास्तु भोक्तृभोग्यविभागमनुभवन्तोऽतिरेकिणं प्रेरयितारमपश्यन्तस्तस्य शास्त्रप्रतिपाद्यत्वमसत्यां भित्तौ चित्रकर्मेतिवद्वर्णयन्ति तान्प्रत्याह । **स्वाविद्येति ।** स्वशब्दः स्वीयविषयो मैत्रस्य स्वमितिवत्स च मीमांस्यात्मगतोऽविद्याख्यो विभवस्तेनोपादानेन प्रसृता विपुलेन च भोक्तृभोग्यात्मकद्वैतप्रपञ्चेन प्रतीतेन निमित्तेनाऽऽहिताऽऽपादिता या स्पष्टा सुदृढा भ्रान्तिरीश्वरो नास्तीत्येवमात्मिका तया तिरोहिता प्रतिबद्धा परस्मिन्नस्तित्वधीर्येषां ते मीमांसका यमीश्वरं भोक्त्रादिविभागेनैव कल्पयन्ति तं वन्दे भक्त्येति योजना । अयं भावः । न तावदीश्वरो नास्ति तस्य श्रुत्याद्यधिगतत्वादतस्तस्य शास्त्रीयता युक्तेति । केचित्तु तस्य परिणामित्वं क्षीरवदाचक्षते तान्प्रत्याह । **निर्भागमिति ।** सावयवं हि क्षीरादि परिणमते न तु परो निरवयवत्वश्रुतेस्तथेति भावः । अन्ये तु सकर्तृकत्वानुमानादत्यतिष्ठदित्यादिश्रुतेश्च तटस्थमीश्वरमाहुस्तान्दूषयति । **सकलेति ।** न हि वाचां मनसां चागोचरं परमनुमानागमाभ्यां तटस्थमातिष्ठामहे । अनुमानं हि तत्र संभावनाहेतुर्न स्वतन्त्रं मानं जन्मादिसूत्रविरोधात् । आगमोऽपि तमगोचरयन्नेव तस्यासङ्गत्वमुद्गिरति न तु साक्षादेव तत्राऽऽगमानुमाने क्रमेते वाङ्मनसातीतत्वश्रुतेः । तन्नेश्वरस्य नाटस्थ्यमित्यर्थः । ननु क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर इति **पतञ्जलिना** भगवताऽभिधानात्तस्मिन्दुःखादिवन्न सुखमपीति कुतस्तस्य शास्त्रार्थता न हि[2] त्वन्मते परानन्दतया पुरुषार्थताभावे शास्त्रीयता तत्राऽऽह । **नन्दितविश्वमिति ।** यो हि धनवतोऽन्यान्करोति स स्वयमनवधिकधन इति प्रसिद्धम् । तत्र परोऽपि विश्वमानन्दयन्ननतिशयानन्दः स्वयमिति गम्यते । एष ह्येवाऽऽनन्दयातीति च **श्रुतेः** । अतोऽस्य योगसूत्राद्दुःखादिवद्वैषयिकसुखाभावेऽपि शास्त्रार्थता युक्तेति भावः । अथ यथाऽन्यं धनिनं कुर्वतः स्वस्यापि तद्वत्त्वमेव न धनत्वं तथा परस्य सर्वं सुखयतः सुखित्वमेव न सुखत्वं तथा च परानन्दयो रूपरूपिणोरिव गुणगुणित्वमत आह । **एकमिति ।** एकमेवेति सर्वभेदासहत्वश्रुतेर्न परस्मिन्गुणगुणित्वम् । आनन्दो ब्रह्मेति व्यजानादित्यादावभेदश्रवणाच्च सुखस्वरूपस्यापि तत्तद्वृत्त्यवच्छिन्नत्वेन सुखहेतुतेति भावः । सौगतास्तु सर्वज्ञमीश्वरं स्वरसनिर्वाणमविरतोदयं शास्त्रप्रणयनादिव्यवहारनिर्वाहकमाहुस्तान्प्रत्याह । **अव्ययमजमिति ।** न हि परस्य स्वतो जनिविनाशौ हेतूपादानस्यान्यत्रापि वैयर्थ्यापातात्सत्ताकाले तदभावात्तत्काले च स्वयमभावात् । स्वतः सिध्यतोश्च तयोः स्वप्रकाशवस्तुमात्रत्वापत्तेः । न च तौ परतः सिध्यतः परेणासंबन्धात् । आद्यन्तविकारव्यासेधेन तदन्तर्वर्तिसर्वविकारव्यासेधः । तथा च नित्यकूटस्थस्य परस्य यथावदप्रतिपन्नस्य युक्ता शास्त्रीयतेति भावः । अथवा तमिति प्रतीचः स्वतःसिद्धतया[3] सिद्धिरुक्ताऽन्यथा घटवदनात्मत्वापत्तेरत्रायं पुरुषः स्वयं ज्योतिरिति **श्रुतेः** । तस्याणुत्वमेकदेशिनो दिगम्बराश्च मध्यमपरिमाणत्वमाहुस्तदपनुदति । **विभुमिति** । अणुत्वे सर्वदेहव्यापिकार्यायोगा

१ ख. °त्याऽध° । २ क. हि ते । ३ क. °या प्रमि° ।

न्मध्यमपरिमाणत्वे घटवदनित्यत्वापत्तेरनन्तपरिमाणं प्रत्यञ्चं प्रतीमः । स पर्यगादित्याद्यी श्रुतिरित्याशयः । पूर्णे च प्रतीचि स्तोतव्यान्तराभावात्तस्यैवाभिवादनं योग्यमिति मत्वा वन्दतिः प्रयुज्यते न च तदभिवादनं भक्तिश्रद्धे विना फलवदिति भक्त्येत्युक्तम् । ननु प्रतीचो न पूर्णत्वमध्यात्मादिषु तद्भेदप्रतीतेस्तत्राऽऽह । स्वाविद्येति । स्वशब्देन प्रत्यगात्मोच्यते बलवत्यसति बाधके तस्य तस्मिन्मुख्यत्वात्तस्याविद्येव विभवः । न हि तस्याविद्यातिरिक्तं[2] सामर्थ्यम् । वक्ष्यति चाऽऽत्माऽविद्यैव नः शक्तिरिति । तेन प्रसूतो विपुलोऽध्यात्मादिभावेन विस्तीर्णो द्वैतप्रपञ्चस्तेन निमित्तेनाऽऽहिता स्पष्टा भ्रान्तिरात्मभेदावगाहिनी तया तिरोहिता प्रतीचि पूर्णा मतिर्येषां ते जीवाः सूत्रं हिरण्यगर्भो विराडित्यादिना भेदेन यं प्रत्यञ्चं चिन्तयन्ति तं वन्दे भक्त्येति संबन्धः । अयमाशयः । न तावत्प्रतीचो वास्तवो भेदो मानाभावात्प्रतीतेराविद्यत्वात्तथा च न तस्य पूर्णताहतिरिति । ननु यथाप्रतिभासं विभागो[3] वास्तवो लौकिकपरीक्षकसिद्धविभागबुद्धेरपहस्तयितुमशक्यत्वात्तत्राऽऽह । निर्भागमिति । न तावत्तत्र देशादिकृतो विभागो विभुत्वान्नित्यत्वादद्वयत्वाच्च यतश्चाऽऽत्मा व्यावर्तते[4] तस्य निःस्वरूपत्वमात्मस्वरूपस्य ततो व्यावृत्तेस्तस्मात्तस्मिन्भेदधीरविद्यैवेत्यर्थः । आत्मा निर्विभागश्चेत्तथैव सर्वेषां प्रथेतेत्याशङ्क्याऽऽह । सकलेति । यद्वाऽऽत्मा सर्वमानाविषयः स्वप्रकाशस्तस्मिन्भेदो न प्रामाणिको न खल्वमेये तद्भेदस्य[5] प्रमेयतेत्याह । सकलेति । अव्यवहार्यश्चेदात्मा न तर्हि शास्त्रार्थः प्रवृत्तिनिवृत्तिभ्यामपरामृष्टस्यापुरुषार्थत्वादिति नेत्याह । नन्दितेति । आत्मना हि सर्वं जगदापादितप्रहर्षं निरानन्दात्मकस्य तदयोगादेतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति च श्रुतिः । अतो युक्तमानन्दतया पुमर्थस्य प्रवृत्तिनिवृत्तिभ्यामपरामर्शेऽपि प्रतीचः शास्त्रार्थत्वमिति भावः । यद्वा सुख्यहं दुःख्यहमिति प्रतीतेः संसारी न शास्त्रार्थः स्यादित्याशङ्क्याऽऽह । नन्दितेति । माभाममन्तःकरणं सुखाद्याश्रयो न प्रत्यगात्मा तत्साक्षित्वात्परानन्दत्वाच्चातो युक्ता तस्य शास्त्रगम्यतेत्यर्थः । आत्मा चेदानन्दस्तस्य जन्मादिभावादात्मनोऽपि तत्प्रसक्तिरित्याशङ्क्याऽऽह । अव्ययमजमिति । न जायते म्रियते वेत्यादिना सर्वविक्रियानिषेधेन कौटस्थ्यमस्योच्यते तत्कृतोऽयं जन्मादिभागी न चाऽऽनन्दस्यापि तदस्त्युपाध्यपरामर्शे तदप्रतीतेर्दुःखादौ त्वात्मत्वाप्रमितेस्तस्य स्वाभाविकत्वेऽप्यदोषतेत्यर्थः । अभिवाद्याभिवादित्रोर्भेदस्य गुरुशिष्यादौ दृष्टेर्न प्रत्यगभिवादनमिति चेत्तत्राऽऽह । एकमिति । प्रतीचि[6] वस्तुतो भेदाभावेऽपि भेदं कल्पयित्वा तदभिवादनमिति भावः । अपरा योजना । सदेव सोम्येदमित्यादिश्रुतिदर्शितं सत्यज्ञानादिलक्षणं तत्पदलक्ष्यं निरूपयति । तमिति । कार्यकारणस्वामिनं तत्साक्षिणं त्वं-

१ क. °द्याऽत्र श्रु° । २ ख. °रिक्तसा° । ३ ख °गोऽस्तु लौ° । ४ क. °ते तेन त° । ५ ख. °स्य मे° । ६ क. °तीचो व° ।

पदलक्ष्यं योऽयं विज्ञानमयः प्राणेष्वित्यादिश्रुतिसिद्धं दर्शयति । **विभुमिति** । पदद्वय-सामानाधिकरण्यात्तत्त्वमर्थयोरैक्यं वाक्यार्थमावेदयति । **एकमिति** । कल्पितकर्मत्वमेव प्रत्यग्भूतं परं तत्त्वमभिवाद्यमित्यभिप्रेत्य द्वितीयाप्रयोगः । तत्र वाक्कायचेतसामेकाग्रतयाऽवस्थानमभिवादनम् । भक्तिश्रद्धाभ्यामेव क्रियमाणं तदभिवादनं फलवदिति भक्त्येत्युक्तम् । नन्वात्मा भोक्ता । तयोरन्यः पिप्पलं स्वाद्वत्तीति **श्रुतेः** । ईशस्तु नैवम् । अनश्नन्नन्यो अभिचाकशीतीति च **श्रुतेः** । अतो मिथो विरुद्धयोस्तयोर्नाभेदस्तत्राऽऽह । **स्वाविद्येति** । स्वशब्देन प्रत्यग्ब्रह्मोच्यते । स्वमपीतो भवतीति **श्रुतेः** । तदाश्रया तद्विषया चाविद्याऽन्यस्याऽऽविद्यत्वेन तदाश्रयत्वाद्ययोगात् । **यथाऽऽहुः** । आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवलेति । तस्या विभवः समाच्छादनशक्तिरन्या विक्षेपशक्तिः । न चाऽऽत्मोऽविद्यैव नः शक्तिरित्युक्तेरविद्याया न शक्त्यन्तरमनवस्थानादिति वाच्यम् । कार्यैकसमधिगम्या हि शक्तिः । अविद्यायाश्चाऽऽच्छादनविक्षेपाख्यं कार्यद्वयं लक्ष्यते । **उक्तं च**—आच्छाद्य विक्षिपति संस्फुरदात्मरूपमिति । तस्मात्तदनुरोधिशक्तिद्वयं तस्याः शक्तेरपीष्टम् । न चानवस्था शक्त्यन्तरकल्पकाभावात् । तेन प्रसृतो विपुलः समष्टिरूपः सूक्ष्मस्थूलभेदेन द्विधागतो योऽयमुपाधिरपञ्चीकृतपञ्चमहाभूततत्कार्यात्मकं सप्तदशकं लिङ्गं सूक्ष्मं शरीरं पञ्चीकृतपञ्चमहाभूततत्कार्यात्मकं च वैराजं स्थूलं शरीरं तद्भावेन द्वैतेनोपाधिना प्रपञ्चेन च व्यष्टिरूपेणाऽऽहिता देहद्वयोपहितास्तदैक्याध्यासादेव कर्ता भोक्तेतिस्पष्टभ्रान्तयो भ्रान्तत्वादेव तन्निदानाज्ञानावृतस्वरूपस्फुरणाश्चिदाभासा यं जीवो जगत्परमात्मेति भेदेन कल्पयन्ति तं वन्दे भक्त्येत्यन्वयः । **उक्तं च**--स्वाज्ञानकल्पितजगत्परमेश्वरत्वजीवत्वभेदकलुषीकृतभूमभावेति । स्वस्य स्वस्मिंन्वाऽविद्या स्वाविद्या तस्या विभवस्तेन प्रसृतश्च विपुलश्च द्वैधागतश्च स च प्रपञ्चश्च ताभ्यामाहिता स्पष्टा भ्रान्तिर्येषां ते स्पष्टभ्रान्तयः । आत्मेव मतिरात्ममतिः सा तिरोहिता येषां ते तथा स्वाविद्याविभवप्रसृतविपुलद्वैतप्रपञ्चाहिताश्च ते स्पष्टभ्रान्तयश्च ते तिरोहितात्ममतयश्चेति विग्रहः । तत्र स्वाविद्येत्येकरसे वस्तुनि मूलाविद्याध्यासो दर्शितो विभवशब्देन तस्याः शक्तिद्वयमुक्तम् । प्रसृतेत्यादिना भ्रान्तीत्यन्तेन विक्षेपशक्तेर्विकारो विक्षेपो व्याख्यातः । तिरोहितेत्यादिनाऽऽच्छादनशक्तिकार्यमुक्तमिति विभागः । अविद्योत्थपुरद्वयवेष्टनलब्धभेदप्रत्ययस्याऽऽत्मनो भेदभ्रान्तिमनुभाषते । **यं भागशो मन्वत इति** । इमामेव भेदभ्रान्तिमादाय बहुवचनमुन्नेयम् । अयमभिसंधिः । आत्मनि भोक्तृत्वादिभानस्याऽऽविद्यत्वात्तस्य विपरीतरूपेण परेणाऽऽत्मना वाक्यीयमैक्यमविरुद्धमिति । अथ मिथो ब्रह्मात्मानौ भिन्नौ विरुद्धधर्मवत्त्वात्पयःपावकवदित्यनुमानस्य किमुत्तरं तत्राऽऽह । **निर्भागमिति** । न तावदिह वास्तवो भेदः साध्योऽप्रसिद्धविशेषणत्वान्नापि प्रातिभासिकः सिद्धसाध्यत्वाद्विरुद्धधर्मवत्त्वं च प्रामाणिकमसिद्धमितरद्बिम्बप्रतिबिम्बयो-

१ क. ख. °स्मिन्नवि° ।

रनैकान्तमतो नानुमानादपि भेदो जीवपरयोरित्यर्थः । किंच वाङ्मनसातीतं ब्रह्म श्रुतं प्रत्यगात्मा च तथाऽन्यथा घटवदनात्मत्वापातात्तथा च नासौ परस्मात्तत्त्वतोऽतिरिच्यते वाङ्मनसातीतत्वात्तद्वदिति प्रत्यनुमानमाह । **सकलेति** । किंचाऽऽनन्दो ब्रह्मेति व्यजानादित्यादिश्रुतेरानन्दो ब्रह्म । एतस्यैवाऽऽनन्दस्येत्यादिश्रवणात्परप्रेमास्पदत्वाच्चाऽऽत्माऽपि तथाऽतो नायं परस्मात्तत्त्वतो भिन्नः परमानन्दत्वात्तद्वदित्यनुमानान्तरमाह । **नन्दितेति** । किंच श्रुतिस्मृतिभ्यां परस्तावत्कूटस्थो जीवोऽपि ताभ्यामेव तथा तेन स परस्मात्तत्त्वतो न भिन्नः कूटस्थत्वात्तद्वदित्याह । **अव्ययमजमिति** । किंचेशोऽनपेक्षोऽन्यथा तत्त्वायोगाज्जीवोऽपि तथाऽऽत्मत्वात्तद्वत्परतन्त्रताश्रुतिस्मृतिवादास्तु जीवशब्दितविशिष्टविषया अतस्त्वंशब्दलक्षितं प्रत्यक्चैतन्यं परस्मादभिन्नं स्वतन्त्रत्वात्तद्वन्न च साधनवैकल्यं दृष्टान्तेऽपि तल्लक्ष्यस्य विवक्षितत्वादित्याह । **एकमिति** । यद्वा भेदानुमानस्य श्रुतिविरोधमाह । **एकमिति** । तत्र तं विभुमेकमिति शास्त्रीयं तत्त्वमर्थयोरैक्यं विषयः श्रुत्योक्तो विषयविषयीभावः संबन्धोऽपि सूचितो नन्दितविश्वमित्यनतिशयानन्दाप्तिः फलमधिकारी च तत्कामो ध्वनितः । अतोऽनुबन्धचतुष्टयसिद्धेरिदमारभ्यमिति द्रष्टव्यम् ॥ १ ॥

**यां काण्वोपनिषच्छलेन सकलाम्नायार्थसंशोधिनीं**
**संचक्रुर्गुरवोऽनुवृत्तगुरवो वृत्तिं सतां शान्तये ॥**
**अर्थाविष्करणं कुतार्किककृताशङ्कासमुच्छित्तये**
**तस्या न्यायसमाश्रितेन वचसा प्रक्रम्यते लेशतः ॥ २ ॥**

एवं देवतानमस्कारव्याजेन स्वाविद्यया प्रतीच्यनात्मवर्गोऽध्यस्तो न वास्तवः स तु नित्यशुद्धबुद्धमुक्तस्वभावो ब्रह्मैवेति भाष्यार्थः संक्षिप्तः संप्रति व्याचिख्यासितभाष्यस्य सर्वदोषराहित्योक्त्या तदर्थप्रकटीकरणात्मनो वार्तिकस्यापि निर्दोषत्वं निर्दिशन्नुद्देश्यं प्रतिजानीते । **यामित्यादिना** । यां वृत्तिं गुरवः संचक्रुस्तस्या लेशतोऽर्थाविष्करणं प्रक्रम्यते न्यायसमाश्रितेन वचसेति संबन्धः । वृत्तिशब्दितस्य भाष्यस्यातिरोहितार्थत्वादव्याख्येयत्वमाशङ्क्य प्रसन्नगम्भीरत्वमाह । **काण्वेति** । तस्या व्याख्यानव्याजेनाध्ययनविध्युपात्तस्वाध्यायमात्रस्य ब्रह्मात्मन्यैदंपर्यं वक्तुं वृत्तिः प्रवृत्ता कर्मकाण्डं हि कर्मानुष्ठानप्रयुक्तशुद्धिद्वारा ब्रह्माधिगतावारादुपकारकं विविदिषन्ति यज्ञेनेति **श्रुतेः** सर्वापेक्षाधिकरणन्यायाच्च ज्ञानकाण्डं तु साक्षादेव तत्रोपयुक्तं परस्यौपनिषदत्वश्रुतेः समन्वयाधिकरणन्यायाच्च । सर्वे वेदा यत्पदमामनन्तीति च **श्रुतिः** । तदापातेन प्रसन्नाऽपि वृत्तिराम्नायमात्रस्य ब्रह्मपरत्वावेदकत्वादतिगम्भीरा व्याख्यानार्हेति भावः । एतेन विषयसंबन्धौ वृत्तेरुक्तौ । आप्तप्रणीतत्वादपि वृत्तेरस्ति व्याख्येयत्वमित्याह ।

---

१ ख. ॅयामोदाप्तिः ।

**गुरव इति ।** सांप्रदायिकप्रणीतत्वादपि सा व्याख्येयेत्याह । **अनुवृत्तेति ।** शुश्रूषादि-द्वारा गुरवोऽनुवृत्ता यैस्तेऽनुवृत्तगुरवस्ततो लब्धविद्या वृत्तिं चक्रुरतः सा व्याख्येये-त्यर्थः । साधनचतुष्टयसंपन्नाधिकारिणां सत्त्वादपि तानुद्दिश्य प्रवृत्ता वृत्तिर्व्याख्येये-त्याह । **सतामिति ।** तेभ्यो वृत्तिरेषा कथमुपकारमुपनयेदित्याशङ्क्य फलमाह । **शान्तय इति ।** शान्तिः सनिदानसंसारनिरासस्तत्प्राप्तये तेषामेषा वृत्तिरित्यर्थः । वृत्तेर-व्याख्येयत्वे हेत्वभावात्तदर्थाविष्करणे वार्तिकस्य प्रवृत्तिर्युक्तेति प्रतिजानीते । **अर्थेति ।** ननु वृत्तिफलमेव तद्वार्तिकफलं फलान्तरं वाऽऽद्ये वृत्तिमात्रलब्धफलानां प्रेक्षावतामुपेक्षा तद्वार्तिके स्याद्द्वितीये तद्वाच्यं तत्राऽऽह । **कुतार्किकेति ।** श्रौतं तदनुग्राहकं तर्कं हित्वा स्वधीप्रभवं तर्कमास्थाय तत्त्वं व्यवस्थापयितुकामा भेदवादिनः कुतार्किकास्तेषामौत्प्रेक्षि-कतर्कोत्थासंभावनादिनिवृत्तिर्वार्तिकावान्तरफलं परमफलं तु शान्तिरेवेति भावः । ननु भाष्याक्षरैरेव स्वार्थधीसमर्थैरवान्तरफलस्यापि सिद्धेर्वृथा वार्तिकमिति चेन्नेत्याह । **न्यायेति ।** मन्दमध्यमयोर्भाष्यार्थेऽपि विपरीतधीसंभवात्तन्निरासिन्यायापेक्षायां भाष्यस्थ-न्यायविशदीकरणात्मनो वार्तिकस्याऽऽरम्भात्तत्साफल्यमित्यर्थः । वचसेत्युक्तानुक्तद्वि-रुक्तादिचिन्तात्मकेनेति यावत् । **उक्तं च—**

"उक्तानुक्तद्विरुक्तादिचिन्ता यत्र प्रवर्तते ।
तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा मनीषिणः" इति ।

यथोक्ताया वृत्तेः सर्वार्थप्रकटनमशक्यमित्यतिगम्भीरतां द्रढयन्ननौद्धत्यं सूचयति । **लेशत इति ।** काण्वोपनिषद्भाष्यस्य व्याख्येयत्वोक्त्या तदीयवार्तिकस्याप्यारम्यत्वमु-क्तम् ॥ २ ॥

ननु ग्रन्थारम्भे प्रवृत्त्यङ्गत्वेनाधिकार्यादि वक्तव्यम् । तदभावे प्रेक्षावतामप्रवृत्तेः । **यथाऽऽहुः—**

"सिद्धार्थं सिद्धसंबन्धं श्रोतुं श्रोता प्रवर्तते ।
शास्त्रादौ तेन वक्तव्यः संबन्धः सप्रयोजनः" इति ।

यद्यपि संसारव्याधिवृत्सुभ्य इत्यादिभाष्याभ्यामधिकारिविषयावुच्येते तथाऽपि फला-नुक्तेर्न प्रवृत्तिविश्रम्भः । **उक्तं हि—**

"सर्वस्यैव हि शास्त्रस्य कर्मणो वाऽपि कस्य चित् ।
यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते" इति ।

न च भाष्यद्वयं तदप्यर्पयति वाक्यभेदान्न चार्थात्तदर्पणाददोषः । आर्थिकस्याशा-ब्दत्वेनानास्थापत्तेः । न च नामभाष्यं फलविषयं तस्य तन्निरुक्त्यैवावसानान्न च तदेव

१ ख. सर्वथाऽर्थ° । २ ख. °मिति । ३ क. °त्यं च म° ।

फलमिष्टत्वाभावात्तन्न व्याख्येयं भाष्यमिति तत्र सर्वव्यापाराणां फलार्थत्वात्तत्प्राधान्याद्धिकार्यार्पकभाष्ययोश्च वाच्यबाहुल्यात्तत्त्यागेनाऽऽदौ नामभाष्यस्य फलपरत्वमर्थक्रमबलीयस्त्वन्यायेन दर्शयति । **अत्र चेत्यादिना मुक्तिमात्रं प्रयोजनमित्यन्तेन ।**

**अत्र चोपनिषच्छब्दो ब्रह्मविद्यैकगोचरः ॥**
**तत्रैव चास्य सद्भावादभिधार्थस्य तत्कुतः ॥ ३ ॥**

सेयमित्यादिभाष्यं विभजते । **अत्रेति ।** अस्मिन्भाष्ये चशब्दाद्ग्रन्थान्तरे चाऽऽध्यात्मिके वृत्तमुपनिषत्पदं ब्रह्मविद्यामात्रमाहेति प्रतिज्ञातम् । तत्पराणामित्यादिभाष्योक्तं हेतुमाह । **तत्रेति ।** उपसर्गद्वयं क्विबन्तः सदिरित्यभिधानामर्थस्य वक्ष्यमाणरीत्या ब्रह्मविद्यायामेव संभवादुपनिपूर्वस्य सदेः क्विपि निष्पन्नमुपनिषत्पदं तामेव स्वाभिवितीमधिकरोतीत्यर्थः । उपनिषदं भो ब्रूहीत्यादौ ब्रह्मविद्यायां तच्छब्दप्रयोगसमुच्चयार्थश्चकारः । तच्छब्दस्याऽऽम्नायविशेषे रूढेस्तामतिलङ्घ्यावयवार्थेन कुतोऽर्थान्तरे वृत्तिः । रूढिर्योगमपहरतीतिन्यायादपरित्यज्यैव रूढिं श्येनादिशब्दानामन्यत्र वृत्तेरङ्गीकारादिति चोदयति । **तत्कुत इति ॥ ३ ॥**

**उपोपसर्गः सामीप्ये तत्प्रतीचि समाप्यते ॥**
**त्रिविधस्य सदर्थस्य निशब्दोऽपि विशेषणम् ॥ ४ ॥**

तद्व्यपदेशश्चेत्यत्राभिधावृत्तेस्तात्पर्यवृत्तिर्बलीयसीतिन्यायेन तात्पर्यालोचनया रूढिमत्यक्त्वा यथा ह वै श्येनो निपत्याऽऽदत्त एवमनेन द्विषन्तं भ्रातृव्यमित्याद्यर्थवादिकसादृश्येन श्येनादिशब्दानां कर्मनामत्वमुक्तं न तथाऽत्राभिधावृत्तिः समुदायशक्तेरसत्त्वात्प्रसिद्धेस्तु गतिर्वक्ष्यते तन्नेह न्यायोऽवतरतीत्यभिप्रेत्योपनिपूर्वस्येत्यादिभाष्यं वार्तिकचतुष्टयेन व्याकुर्वन्नुपेत्युपसर्गवाच्यमाह । **उपेति ।** तस्यैव लक्ष्यमर्थमाह । **तत्प्रतीचीति ।** सामीप्यमव्यवहितत्वमन्तर्बहिर्विभागशून्ये प्रतीचि पर्यवस्यति । अनन्तरोऽबाह्य इति श्रुतेः । **उक्तं च**—आत्मत्वादात्मनः केन व्यवधानमिति । विद्यासूत्रे चैतद्व्यक्तीकरिष्यते । अतः सर्वतोऽव्यवधानाभावोपलक्षितं चैतन्यमुपोपसर्गलक्ष्यमित्यर्थः । उपसर्गान्तरस्य धातोश्चार्थमाह । **त्रिविधस्येति ।** क्विप्प्रत्ययान्तस्य सदेर्धातोर्विशरणादिकर्तृत्वाख्यस्त्रिविधोऽर्थः । षद्‌लृ विशरणगत्यवसादनेष्विति स्मृतेः । तस्योपशब्दवन्निशब्दोऽपि वक्ष्यमाणरीत्या त्रिविधस्वार्थार्पणद्वारा विशेषणमित्यर्थः ॥ ४ ॥

**उपनीयेममात्मानं ब्रह्मापास्तद्वयं यतः ॥**
**निहन्त्यविद्यां तज्जं च तस्मादुपनिषद्भवेत् ॥ ५ ॥**

कथमित्थमवयवार्थेऽपि विद्यायामेवोपनिषत्पदमित्याशङ्क्योपसर्गयोर्धातोश्चार्थाननुवदन्विशेषणविशेष्ययोर्विद्यागतत्वात्सैवोपनिषदित्याह । **उपनीयेति ।** त्वमर्थं शुद्धमुपोपस-

१ क. तत्र व्या° ।

गलक्षितमप्रपञ्चं ब्रह्म ग्राहयित्वा विद्या सकार्यामविद्यां पूर्वावस्थातः शिथिलयति । **उक्तं च**—तत्समीपात्मनां विशातंनी गर्भादीनांमिति । अतोऽवयवार्थस्य तस्यां पौष्कल्यात्सैवोपनिषदित्यर्थः । अत्रेममित्यादिपदचतुष्टयेनोपोपसर्गार्थ उक्त उपनीयेति निशब्दार्थो निहन्तीति विशरणकर्तृत्वमिति भेदः ॥ ५ ॥

**निहत्यानर्थमूलं स्वाविद्यां प्रत्यक्तया परम् ॥**
**गमयत्यस्तसंभेदमतो वोपनिषद्भवेत् ॥ ६ ॥**

उपसर्गार्थं धात्वर्थं च गतिहेतुत्वमनुवदन्विद्यायामेवोपनिषच्छब्दप्रवृत्तौ प्रकारान्तरमाह । **निहत्येति ।** प्रमातृत्वादिरनर्थः । **उक्तं हि**—अनर्थश्च प्रमातृताप्रमुखं कर्तृत्वभोक्तृत्वमिति । तस्य मूलमविद्या तामात्माब्रह्मत्वधीहेतुं निरस्य विद्या परमात्मानं भेदाभावोपलक्षितं प्रत्यक्त्वेन प्रापयति । **यथोक्तम्**—निगमनाद्गमनाद्वोपरिष्टात्सर्वविद्यानां कार्यविशेष्यादिति । तस्मादभिधात्रयार्थस्य तस्यां पूर्तेः सैवोपनिषदित्यर्थः ॥ ६ ॥

**प्रवृत्तिहेतून्निःशेषांस्तन्मूलोच्छेदकत्वतः ॥**
**यतोऽवसादयेद्विद्या तस्मादुपनिषन्मता ॥ ७ ॥**

संप्रत्युपसर्गार्थं धात्वर्थं चावसादकत्वमनुवदन्नस्यामेवोपनिषच्छब्दप्रवृत्तौ प्रकारान्तरमालम्बते । **प्रवृत्तीति ।** शुभाशुभव्यामिश्रप्रवृत्तीनां हेतवो रागादयस्तानशेषेण तद्धेत्वज्ञानस्य प्रत्यक्त्वात्रतया निगमद्वारा विद्या नाशयति । **उक्तं हि**—अवसादनार्थस्य चावसादादिति । तस्मादवयवार्थस्यास्यां पूर्तेः सैवोपनिषदित्यर्थः ॥ ७ ॥

**यथोक्तविद्याबोधित्वाद्ग्रन्थोऽपि तदभेदतः ॥**
**भवेदुपनिषन्नामा लाङ्गलं जीवनं यथा ॥ ८ ॥**

विद्यैव चेदुपनिषदिष्टा कथं तर्हि ग्रन्थे तच्छब्दोऽन्यायश्चानेकार्थत्वमित्याशङ्क्य तादर्थ्यादित्यादिभाष्यं योजयति । **यथोक्तेति ।** सा हि विशरणादिहेतुर्ब्रह्मात्मधीस्तद्बोधित्वं ग्रन्थस्य तद्व्युत्पादकत्वमतो व्युत्पाद्यव्युत्पादकयोरभेदोपचारादुपनिषदमधीमह इत्यादौ ग्रन्थेऽपि तच्छब्दो युक्तः । एतेनोभयत्र तच्छक्तिकल्पना प्रत्युक्तेत्यर्थः । साध्यसाधनयोरभेदोपचारेण साध्यशब्दस्य साधने प्रयोगे दृष्टान्तमाह । **लाङ्गलमिति ॥** ८ ॥

**अरण्याध्ययनाच्चैतदारण्यकमितीर्यते ॥**
**बृहत्त्वाद्ग्रन्थतोऽर्थाच्च बृहदारण्यकं मतम् ॥ ९ ॥**

यथोक्तविद्याजनकत्वे ग्रन्थस्य तदध्येतॄणां सर्वेषां किमिति सा न भवतीत्याशङ्क्य श्रवणादिपराणामेवारण्यानुवचनादिनियमाधीनाक्षरेभ्यस्तज्जन्मेत्याशयेन सेयं षडध्यायीत्यादिभाष्यार्थमाह । **अरण्येति ।** न केवलमुक्तनियमाधीनः स्वाध्यायो विद्याहेतुर्वेदत्र-

१ क. °तनाद्गर्भा° । २ क. °नामपीति ।

तादिनियमाधीतश्चेति चार्थः । एतदिति ग्रन्थजातोक्तिः । अथारण्यानुवचनादिनियमाधीतवेदान्तानामपि केषांचित्तत्त्वाज्ञानात्कुतो यथोक्ताक्षरेभ्यो विद्याजन्मेत्याशङ्क्य बृहत्त्वादित्यादिभाष्यार्थमाह । **बृहत्त्वादिति ।** उपनिषदन्तरेभ्यो ग्रन्थाधिक्याद्ग्रन्थतोऽस्य बृहत्त्वमर्थतस्त्वखण्डस्य ब्रह्मणोऽत्र प्रतिपाद्यत्वात्तज्ज्ञानहेतूनां चान्तरङ्गबहिरङ्गाणां भूयसां प्रतिपादनादतो बृहत्त्वादारण्यकत्वाच्च बृहदारण्यकम् । तस्मादनेकजन्मसुकृतक्षालितचेतसो नियमाधीतस्वाध्यायस्याऽऽपादितश्रवणादेराचार्योद्दिष्टो वेदान्तो विद्याहेतुर्न त्वशुद्धबुद्धेरित्यर्थः ॥ ९ ॥

**इत्यादिनामव्युत्पत्तिच्छद्मना प्रकृतोचितम् ॥**
**सर्वोपनिषदामाह मुक्तिमात्रं प्रयोजनम् ॥ १० ॥**

नामभाष्यतात्पर्यमुपसंहरति । **इत्यादीति ।** इत्थं ग्रन्थादावुपनिषद्बृहदारण्यकनाम्नो व्युत्पादनव्याजेन प्रकृतशास्त्रारम्भौपयिकं सर्वोपनिषदुत्पाद्यब्रह्मविद्यायाः सहेतुबन्धध्वस्तिरनतिशयानन्दावाप्तिश्चेति फलं न साध्यफलान्तरमित्येतदाह भगवान्**भाष्यकारः ।** उपनिषद्ग्रहणं विद्याग्रन्थयोरेकफलत्वं दर्शयितुमित्याशयः ॥ १० ॥

**मिथोविरोधसिद्ध्यर्थं कर्मज्ञानाधिकारिणोः ॥**
**संसारव्याविवृत्सुभ्य इत्युक्तिं भाष्यकृज्जगौ ॥ ११ ॥**

ननु नामभाष्येण फलमुक्तं चेत्तत्कामोऽर्थादधिकारी सिद्धोऽतो व्यर्थमधिकारिभाष्यमित्याशङ्क्य तस्य तात्पर्यमाह । **मिथ इति ।** कर्माधिकारी ज्ञानाधिकारी च तयोरन्योन्यं विरोधो वैलक्षण्यं तत्सिद्ध्यर्थेऽधिकारिभाष्यमित्यक्षरार्थः । यद्यपि फलभाष्येऽर्थादधिकारी सिद्धस्तथाऽपि कर्माधिकारिणो ज्ञानाधिकारिणं भेत्तुमधिकारिभाष्यमिति भावः ॥ ११ ॥

**त्यक्ताशेषक्रियस्यैव संसारं प्रजिहासतः ॥**
**जिज्ञासोरेव चैकात्म्यं त्रय्यन्तेष्वधिकारिता ॥ १२ ॥**

अथ ज्ञानकर्मणोर्नाधिकारिभेदः शास्त्रार्थत्वादग्निहोत्रदर्शादिवदेकाधिकारिनिर्वर्त्यत्वसंभवात्तत्राऽऽह । **त्यक्तेति ।** अनेकजन्मार्जितशुभकर्मवशादुपजातबुद्धिशुद्धेर्नित्यानित्यविवेकिनः संसारमैहिकमामुष्मिकं च भोगं प्रकर्षेण हातुमिच्छतो विरक्तस्य कार्याः सर्वाः क्रियाः कृष्णविषाणवद्विधितस्त्यक्त्वा स्थितस्य संन्यासिनः शमादिमतो मुमुक्षोर्मोक्षोपायमपेक्षमाणस्याऽऽत्मस्वरूपमेकरसं ज्ञातुमिच्छतो वेदान्तेष्वधिकारः । अर्थी समर्थो विद्वानपर्युदस्तश्च विधिष्वधिक्रियते न च ज्ञानकर्मणोः शास्त्रार्थत्वादेकाधिकारित्वं बृहस्पतिसवराजसूयादिषु व्यभिचारात्तद्युक्तं ज्ञानकर्मणोरधिकारिवैलक्षण्यमित्यर्थः ॥ १२ ॥

---

१ क. ब्रह्मात्मैवं । २ क. साध्यफ° । ३ क. °रानति° ।

**एतमेवेति च तथा प्रत्यग्याथात्म्यवित्तये ॥**
**सर्वकर्मत्यजं प्राह श्रुतिर्विद्याधिकारिणम् ॥ १३ ॥**

उक्ते ज्ञानाधिकारिणि मानमाह । **एतमिति** । प्रतीचो याथात्म्यं तत्त्वं ब्रह्म तन्निश्चयार्थमधिकारिणमर्थयमाना श्रुतिरेतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्तीत्यादिवाक्येन शमादिवाक्येन चोक्ताधिकारिभेदानुरोधेन संन्यासिनमुक्तविशेषणं विद्याप्राप्त्यधिकारिणमाहेत्यर्थः ॥ १३ ॥

**प्रत्यग्विविदिषासिद्ध्यै वेदानुवचनादयः ॥**
**ब्रह्मावाप्त्यै तु तत्त्याग ईप्सन्तीतिश्रुतेर्बलात् ॥ १४ ॥**

ननु कर्मत्यजो ज्ञानाधिकारे धर्मात्सुखं च ज्ञानं चेत्यादि**स्मृत्या** कथं धर्मशब्दितकर्मणां ज्ञानहेतुत्वमुक्तं तत्राऽऽह । **प्रत्यगिति** । वेदानुवचनादिधर्माः सत्त्वशुद्धिविविदिषादिद्वारा धीहेतवो विविदिषन्ति यज्ञेनेतिश्रुतेरतः सति विविदिषादौ कृतकार्याणां तेषामकिंचित्करत्वात्तत्त्यागसिद्धिः **स्मृतिस्तु** परंपरया तेषां ज्ञानहेतुत्वार्थेति भावः । किं तर्हि साक्षाज्ज्ञानसाधनं तदाह । **ब्रह्मेति** । ब्रह्मणोऽवाप्तिर्ज्ञानं तदुत्पत्त्यै तेषां कर्मणां त्यागः श्रवणादिसहितः साक्षाद्धेतुः । योगारूढस्य तस्यैव शमः कारणमितिस्मृतेरित्यर्थः । संन्यासस्य साक्षाज्ज्ञानहेतुत्वे मानान्तरमाह । **ईप्सन्तीतिश्रुतेरिति** । एतमेव प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्तीति **माध्यंदिनश्रुतेः** संन्यासस्याऽऽत्मधीप्राप्तौ साक्षाद्धेतुत्वे श्रुतार्थापत्तिर्मानम् । न हि पारिव्राज्यस्य तदनुपायत्वे तदर्थिनस्तदाश्रयणम् । तत्कामिनो तद्धेतावप्रवृत्तेः । न हि ग्रामकामस्यैव तत्कामनानिरोधेनापूर्वकामनया भोजने प्रवृत्तिरिति भावः ॥ १४ ॥

**उक्ताधिकारविषयप्रतिपत्त्यर्थमीरितम् ॥**
**संसारहेत्वितिवचः स्फुटन्यायोपबृंहितम् ॥ १५ ॥**

अधिकारिभाष्यं व्याख्याय विषयाद्यर्पकं भाष्यमवतारयति । **उक्तेति** । वृत्तिरारभ्यत इतिभाष्योक्तोऽधिकारो भाष्यारम्भस्तस्यापेक्षितो विषयो वेदान्तगम्यमैक्यं तज्ज्ञानार्थं भाष्यम् । यद्वा । उक्तोऽधिकारोऽस्येत्युक्ताधिकारोऽनन्तरभाष्यादिष्टः साधनचतुष्टयविशिष्टोऽधिकारी तस्य विषयः साक्षात्प्रतिपत्तिरैक्यधीस्तदर्थं भाष्यम् । अथवोक्तोऽधिकारो नामभाष्योक्तं फलं तस्मै हि ज्ञानमधिक्रियते तस्य फलस्याविद्यानिवृत्तिरूपस्य हेतुर्वेदान्तविषयप्रतिपत्तिरैक्यधीस्तदर्थं भाष्यमिति त्रिविधोऽर्थः । भाष्यस्योक्तार्थोक्तिसामर्थ्यं कथमिति तदाह । **स्फुटेति** । न्यायस्य स्फुटत्वमनाभासत्वम् ॥ १५ ॥

**ऐकात्म्यविषयान्नान्यो वेदान्तवचसां यतः ॥**
**लभ्यते विषयः कश्चित्तद्धीस्तस्मात्तमोपनुत् ॥ १६ ॥**

ननु न वेदान्तानामैक्यं विषयः संपदादिपरत्वात्तथा चैक्यधीरप्रमात्वादफलेति

तत्राऽऽह । **ऐकात्म्येति ।** उपक्रमोपसंहारैकरूप्यादितात्पर्यलिङ्गैरैक्यपरत्वे वेदान्ताना-मवगम्यमाने संपदादिपरत्वायोगादैक्यज्ञानस्य प्रमात्वेन फलवत्त्वमित्यर्थः ॥ १६ ॥

**संसारकारणाविद्याध्वंसकृज्ज्ञानलब्धये ॥**
**प्रारब्धेयं प्रयत्नेन वेदान्तोपनिषत्परा ॥ १७ ॥**

ननु तमोनिवर्तकत्वेऽपि संसारहेत्वनिवर्तकत्वादैक्यधियो विफलता तदवस्था धर्माधर्मौ हि बन्धहेतू पुण्यो वै पुण्येनेत्यादिश्रुतेस्तौ च वस्तुत्वान्न ज्ञानावहेयावित्यत आह । **संसारेति ।** न हि धर्माधर्मौ तद्धेतू असङ्गस्याऽऽत्मनस्ताभ्यां विनाऽविद्यामसंबन्धादतोऽ-विद्यैव धर्मादिद्वारा तद्धेतुः । अविद्या चाऽऽत्मैक्यविद्यापोद्येति युक्तं तस्या बन्धहेतुध्वंसि-त्वमिति भावः । ननूत्पन्नज्ञानस्यापि बन्धोपलब्धेर्न तद्धेतुत्वज्ञानध्वंसकमात्मज्ञानं न हि हेतुध्वंसे कार्यस्थितिरित्यत आह । **ध्वंसकृदिति ।** न हि परोक्षं साधारणं चाऽऽत्मज्ञानं बन्धहेतुध्वंसि किंतु ब्रह्मसाक्षात्कारो यत्सिद्ध्यर्थं ग्रन्थरूपोपनिषत्तात्पर्येण प्रवृत्ता सति च तस्मिन्बन्धोपलब्धिराभासमात्रमित्यर्थः । साऽपि कथं वाचामगोचरे साक्षात्कारं जनये-त्तत्राऽऽह । **परेति ।** सा खल्वतिशयवती येनागोचरेऽपि मुख्येतरवृत्त्या धियमादध्या-दित्यर्थः । यद्वा विषयाद्यर्पकत्वभाष्यस्य तात्पर्यमुक्त्वा वृत्तिरारभ्यत इत्येनेन संबन्ध-यन्नक्षराणि योजयति । **संसारेति** ॥ १७ ॥

**प्रत्यग्याथात्म्यधीरेव प्रत्यगज्ञानहानिकृत् ॥**
**सा चाऽऽत्मोत्पत्तितो नान्यद्ध्वान्तध्वस्तावपेक्षते ॥ १८ ॥**

कर्मापेक्षात्मधीस्तदज्ञानध्वंसिनीति समुच्चयवादी मन्यते तं प्रत्याह । **प्रत्यगिति ।** अज्ञानाविरोधित्वात्कर्मणो न तद्ध्वंसिज्ञानसहायत्वं निरसिष्यते च समुच्चयोऽतो न स संभवतीत्यर्थः । ज्ञानस्याज्ञानध्वंसे कर्मासहायत्वेऽपि प्रसंख्यानं सहायो भविष्यती-त्याशङ्क्याऽऽह । **सा चेति ।** अन्यत्प्रसंख्यानम् । न हि मानस्य स्वफले तदितराभ्या सापेक्षेति भावः ॥ १८ ॥

**साधनं चाधिकारी च कर्मविज्ञानकाण्डयोः ॥**
**मिथो विरोधतः सिद्धावधुना तत्र चोद्यते ॥ १९ ॥**

भाष्यत्रयार्थमनुवदति । **साधनं चेति ।** अविवेकादिपूर्वकं कर्म कर्मकाण्डे पुमर्थसा-धनम् । ज्ञानकाण्डे विवेकादिपूर्वकं ज्ञानमिति काण्डयोर्मिथो वैलक्षण्येन साधनं सिद्धम् । अधिकारिभेदस्तु मिथोविरोधसिद्ध्यर्थमित्यत्रोक्तः । चकाराभ्यां विषयादिभेदमनुकर्षति । एवमुभयत्रापि साधनादीनि विलक्षणानि सिद्धानीत्यर्थः । संप्रति साधनादिभेदमाक्षिपति । **अधुनेति ।** तत्रेति साधनादिनिर्देशः ॥ १९ ॥

**नन्वभ्युदयवन्मुक्तिं गृह्णीमो विधिलक्षणाम् ॥**
**कार्यं विना नाधिकारी नापीज्याफलसंगमः ॥ २० ॥**

स्वर्गादेरभ्युदयस्य कर्मसाध्यत्ववन्मुक्तेरपि शास्त्रीयफलत्वेन तत्साध्यत्वानुमानात्मा-भेनाधिकारिणोरैक्यमिति मन्वानश्चोद्यं प्रपञ्चयति । **नन्विति** । कर्मव्युत्पत्त्या कर्म-विधिलक्षणं लक्षणया साधनमतो विधिलक्षणां कर्मसाधनामित्यर्थः । शास्त्रीयफलत्वेऽपि मुक्तेरकर्मसाध्यत्वे का हानिस्तत्राऽऽह । **कार्यमिति** । लोके शास्त्रानपेक्षोऽप्यधिकारी कार्यधीविषयमनुष्ठेयं विना न सिध्यतीत्यधिकारिप्रवृत्तेस्तद्विषयत्वात् । इज्याशब्दो याग-वाची साधनगोचरः ॥ २० ॥

**लभ्यते लौकिकोऽपीह किमङ्गाऽऽगमसंश्रयः ॥**
**विधिलक्षणसिद्ध्यर्थं सन्ति वाक्यानि च श्रुतौ ॥ २१ ॥**

लौकिकसाध्यसाधनसंबन्धोऽपि कार्यं विना न युक्तोऽकार्ये तद्बुद्ध्यभावादतो मुक्ते-रकर्मसाध्यत्वे शास्त्रीयफलत्वानुपपत्तिर्बाधिकेत्यर्थः । अपिना सूचितं कैमुतिकं न्याय-माह । **किमङ्गेति** । अङ्गेति हीनमध्यमयोरन्यतरसंबोधनम् । इदमत्राऽऽकूतम् । यदा लोकेऽपि विना कार्यं नाधिकार्यादिलाभस्तदा वेदाश्रयोऽसौ नान्तरेण कार्यं सेत्स्यति लोकवेदाधिकरणन्यायेन वेदस्य लोकानुसारित्वात्स्वर्गकामचोदनायां स्वर्गस्तदनुगुणश्च नियोगः साध्यो भातीत्युभयाधीनं पुरुषस्य कर्मण्यैश्वर्यं तत्रापि नियोगस्य प्राधान्यं याव-ज्जीवचोदनायां तु केवलनियोगकृर्तामिति हि यावज्जीवाधिकरणे स्थितम् । स्वर्गकाम-वाक्ये च साध्यस्वर्गविशिष्टनियोज्यस्य यागे नियोगो गम्यमानो यागस्य कामिविषय-स्वर्गोपायतामनापाद्य न पर्यवस्यतीति नियोगाक्षेपाद्यागस्य फलोपायताऽवगता क्षणिकस्य तस्य कालान्तरभाविफलहेतुत्वायोगादपूर्वाधिकरणन्यायेनापूर्वद्वारा तदिष्टम् । वैदिकी च यागफलसंगतिः कार्याधीनेत्युक्तं **बादर्यधिकरणे** । अतो मुमुक्षोरपि कर्मानुष्ठानादेव मुक्ति-रिति तत्कार्या सेति । न केवलं कैवल्यस्य कर्मकार्यत्वमानुमानिकमागमिकं चेत्याह । **विधीति** । श्लोकयोर्द्विवचनैकवचनं इतिवद्भावप्रधानो लक्षणशब्दः । मोक्षस्य कर्मसाध्य-त्वप्रतिपत्त्यर्थं श्रौतानि वाक्यान्यपि सन्तीत्यर्थः ॥ २१ ॥

**कुर्वीत क्रतुमित्यादिर्विधिरभ्युदये यथा ॥**
**उपासीतेति च तथा मुक्तावपि समीक्ष्यते ॥ २२ ॥**

तानि दृष्टान्तद्वारेणाऽऽह । **कुर्वीतेति** । स्वर्गादावुद्देश्ये यागादिहेतुविषयो विधि-र्यथा दृष्टस्तथोद्देश्यायां मुक्तावपि ध्यानादिगोचरः स दृश्यतेऽतो विधितोऽनुष्ठितध्याना-दिना मुक्तिरित्यर्थः । प्रज्ञाकरणवाक्यादिसमुच्चयश्चार्थः ॥ २२ ॥

**नाभ्युदयस्य मुक्तेश्च साध्यासाध्ये ध्रुवाध्रुवे ॥**
**वैलक्षण्यान्न युक्तेयं तुल्यसाधनता तयोः ॥ २३ ॥**

कर्मसाध्यस्य मोक्षस्य तत्फलेषु तारतम्यस्थितेष्वतिशयत्वात्काण्डद्वयेऽपि फलसाधनाधिकारिणामवैलक्षण्ये प्राप्ते प्रत्याह । **नेत्यादिना ।** उक्तनिषेधमुक्तहेतुना व्यक्तीकरोति । **अभ्युदयस्येति ।** अभ्युदयस्य मुक्तेश्चेयं तुल्यसाधनता न युक्ता तयोः साध्यासाध्यादिवैलक्षण्यादित्यन्वयः । न हि शास्त्रीयफलत्वानुमानं युक्तम् । साध्यत्वानित्यत्वोपाधिद्वयोपहतेः । न च साधनव्याप्तिर्मुक्तेरसाध्यत्वात्तदीयसाध्यताया निराकरिष्यमाणत्वान्नित्यत्वाच्च । अतः साधनफलभेदेऽधिकारभेदधीरिति भावः ॥ २३ ॥

**अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं सिनीतः ॥**
**तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते ॥२४॥**

किंच त्वदनुमानमागमबाधितमित्याह । **अन्यदिति ।** श्रेयोऽपवर्गोपायो ज्ञानं तदन्यद्विलक्षणं कर्मणः स्वर्गादिहेतोरित्यर्थः । प्रेयोऽभ्युदयसाधनं कर्म तदपि विलक्षणमेव मोक्षहेतोर्ज्ञानादित्याह । **अन्यदुतेति ।** ते च श्रेयःप्रेयसी ज्ञानकर्मणी पुरुषमेकं क्रमेण सिनीतो बध्नीतस्ते च स्वर्गापवर्गोपायतया भिन्नफले इत्याह । **ते उभे इति ।** तयोर्मध्ये श्रेयो ज्ञानं संपादयतः श्रवणादिपरस्य साधु पुनरावृत्तिहीनं फलं भवति । यस्तु प्रेयःशब्दितं कर्म वृणीते तदनुष्ठानपरो ज्ञानपराङ्मुखः सोऽर्थात्फलाद्भ्रश्यत्यनित्यमेव फलमाप्नोति तदाह । **तयोरित्यादिना ।** पूर्वार्धे हेतुफलभेदोऽन्यत्र फलाधिकारिवैलक्षण्यमुक्तमिति भेदः ॥ २४ ॥

**परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन ॥**
**तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥ २५ ॥**

प्रकृतानुमाने श्रुत्यन्तरविरोधमाह । **परीक्ष्येति ।** लोकान्स्वर्गपश्वादिफलभेदान्कर्मोत्थान्यत्कृतकं तदनित्यमित्यनुमानेनानित्यानालोच्याधीतवेदो विचारितवेदार्थश्च ब्राह्मणस्तेषु विरक्तः स्यादित्यर्थः । न केवलं फलेष्वेव निर्विद्यते किंतु कर्मस्वपि तेषामप्यपेक्षितमोक्षाक्षमत्वादित्याह । **नास्तीति ।** अकृतस्य तर्हि मोक्षस्य साधनं कीदृगित्यपेक्षायां तद्धेतुर्ज्ञानमिति श्रुतेरुपश्रुत्य तदर्थं मुमुक्षुर्देशिकाभ्याशं गच्छेदित्याह । **तद्विज्ञानार्थमिति ।** स्वयमेव ग्रन्थनिरीक्षणादिना सफलं ज्ञानं लब्धुमशक्यमाचार्यवानित्यादिश्रुतिविरोधादित्येवकारार्थः । रिक्तहस्तस्तु नोपेयाद्राजानं दैवतं गुरुमिति**न्याया**द्योग्यमुपहारमादाय गुरूपगमनं कार्यमिति नियमयति । **समिदिति ।** अधीतस्वाध्यायस्यैव गुरुत्वं न शूद्रादेरित्याह । **श्रोत्रियमिति ।** श्रोत्रियाणामपि कर्मिणां गुरुत्वं वारयति । **ब्रह्मेति** ॥ २५ ॥

---

१ ख. °साध्यध्रुवाध्रुवत्वे° । २ ख. गुरुमुप° ।

**नन्वभ्युदयवत्साध्या मुक्तिरप्राप्तरूपतः ॥**
**मैवं साध्याऽपि नो मुक्तिर्न त्वभ्युदयवद्यतः ॥ २६ ॥**

सोपाधिकत्वादागमविरोधाच्चानुमानस्याप्रवृत्तिरुक्ता । अथ विमता मुक्तिः साध्याऽप्राप्तरूपत्वात्स्वर्गवदित्यनुमानात्साध्यत्वोणधेः साधनव्याप्तिरिति शङ्कते । **नन्विति** मुक्तेरप्राप्तरूपत्वं तात्त्विकं भ्रान्तं वा नाऽऽद्योऽन्यतरासिद्धेरित्याह । **मैवमिति ।** द्वितीयेऽपि साध्यत्वमभूतप्रादुर्भावो वाऽप्राप्तिभ्रमध्वंसो वेति विकल्प्याऽऽद्यं निरस्यति । **साध्याऽपीति ।** यथाऽभ्युदयो यत्नोदयो न तथाऽस्माकमपवर्गोऽपि तस्य स्वरूपत्वादतो भ्रान्तमप्राप्तिरूपत्वं मुक्तेर्न मुख्यसाध्यत्वावहं हस्तन्यस्तविस्मृतसुवर्णादौ व्यभिचारादिति भावः ॥ २६ ॥

**स्वतोमुक्तान्तरायस्य तमसो विद्यया हतेः ॥**
**तत्कैवल्यमतः साध्यमुपचारात्प्रचक्षते ॥ २७ ॥**

द्वितीये सिद्धसाध्यत्वमाह । **स्वत इति ।** वस्तुतस्त्यक्तोऽन्तरायो येन तस्य यत्तमस्तस्येति व्यधिकरणे स्वतो वा मुक्तस्यान्तरायस्तमस्तस्येति समानाधिकरणे षष्ठ्यौ । तस्य वाक्योत्थविद्यया ध्वस्तेः स्वरूपतया नित्याप्तमपि निर्वाणमनाप्तवदुपचाराद्विद्यातः साध्यं विद्वांसो वदन्ति । वयमप्यौपचारिकं तत्साध्यत्वमाचक्ष्महे । तस्मादप्राप्तिभ्रमध्वंसाख्यसाध्यत्वे सिद्धसाध्यतेति भावः ॥ २७ ॥

**चिकित्सयेव संप्राप्यं स्वास्थ्यं रोगार्दितस्य तु ॥**
**आत्माविद्याहतेर्बाधात्तत्कैवल्यमवाप्यते ॥ २८ ॥**

मुक्तिर्वस्तुतः साध्या प्रेप्सितत्वात्स्वर्गवदित्याशङ्क्य व्यभिचारमाह । **चिकित्सयेति ।** स्वरूपेऽवस्थानं हि स्वास्थ्यम् । तत्सदातनमेव रोगाभिभूतमौषधविधिना तद्विगमे प्राप्यते । **उक्तं हि—**

"वायुः पित्तं कफश्चोक्तः शारीरो दोषसंग्रहः ।
मानसः पुनरुद्दिष्टो रजश्च तम एव च ॥
शाम्यते भेषजैः पूर्वो दैवयुक्तिव्यपाश्रयैः ।
मानसो ज्ञानविज्ञानधैर्यस्मृतिसमाधिभिः" इति ॥

तद्वद्ब्रह्मात्मत्वेन स्थिताऽपि मुक्तिरविद्यापिहिता तद्बाधात्तद्वस्तेराप्योपचर्यतेऽतो यथोक्तहेतो रोगिप्रेप्सिते स्वास्थ्ये व्यभिचारान्न वास्तवसाध्यत्वसाधकतेत्यर्थः ॥ २८ ॥

**ब्रह्म वा इदमित्यादिब्रह्मैवेति तथा श्रुतिः ॥**
**सुषुप्तनरवच्छ्रुत्या बोध्योऽतोऽयं न कार्यते ॥ २९ ॥**

१ क. °त्साध्यो । २ ख. °तो यत्र का° ।

मुक्तेरात्मत्वेन नित्याप्तत्वे मानमाह । **ब्रह्मेति ।** ब्रह्म वा इदमग्र आसीत् । ब्रह्मैव सन्ब्रह्माप्येति । ब्रह्म वेद ब्रह्मैव भवति । ब्रह्मविदाप्नोति परमित्याद्या श्रुतिर्मुक्तेः साध्यत्वस्यौपचारिकत्वेन ब्रह्मात्मरूपायास्तस्या नित्यसिद्धतां गमयति तस्मादागमबाधितं मुक्तेर्वस्तुतःसाध्यत्वानुमानमित्यर्थः । मुक्तेरात्मत्वेन नित्याप्तत्वे फलमाह । **सुषुप्तेति ।** यतो नित्यमुक्तोऽयमात्माऽतो यथा पार्श्वस्थेन पाणिपेषादिना सुप्तो बोध्यते नानुष्ठाप्यते तथा मुमुक्षुरपि तत्त्वमस्यादिश्रुत्या नासि संसारी ब्रह्मैवेति व्युत्पाद्यते न ध्यानादि कार्यतेऽतो बोधादबोधध्वस्त्योच्यते साध्या मुक्तिरित्यर्थः ॥ २९ ॥

**किमत्र विधिना कार्यमनृतत्रत्वहेतुतः ॥**
**श्रुतोऽप्यनर्थकोऽत्र स्याद्विध्यर्थासंभवत्वतः ॥ ३० ॥**

मुक्तेर्ज्ञानफलत्वेऽपि ज्ञानं प्रज्ञां कुर्वीतेत्यादिना विधीयतेऽतो विधेयधात्वर्थसाध्या मुक्तिर्विधिप्रमाणकत्वात्स्वर्गवदित्याशङ्क्य ज्ञानस्य कर्मवत्पुरुषतन्त्रत्वाभावान्न तत्र विधिकृत्यमित्याह । **किमत्रेति ।** तर्हि तत्र विधेः श्रूयमाणस्य का गतिस्तत्राऽऽह । **श्रुतोऽपीति ।** ज्ञाने श्रुतोऽपि विधिस्तस्याननुष्ठेयत्वात्तद्धेतुविवेकपरोऽन्यथाऽनर्थकः स्यादयोग्यविषयत्वादुपलादिषु क्षुरतैक्ष्ण्यवत् । एतेन विधिलक्षणसिद्ध्यर्थमित्यादि प्रत्युक्तमिति भावः ॥ ३० ॥

**यच्चास्यासति कर्तव्ये नाधिकारो निरूप्यते ॥**
**तदप्यशेपतश्चोद्यमूर्ध्वमुन्मूलयिष्यते ॥ ३१ ॥**

मुक्तेश्चतुर्विधक्रियाफलवैलक्षण्येनाभ्युदयवन्मुक्तिमित्यादि निराकुर्वता काण्डयोः साधनादिभेद उक्तः संप्रति कार्यं विनेत्यादिनोक्तां युक्तिमनुवदति । **यच्चेति ।** विधिमार्गेऽधिकारस्येत्यादिना भाविनं परिहारं सूचयति । **तदपीति ॥** ३१ ॥

**पर आहाऽऽत्मनः स्वास्थ्यं श्रेयो यद्यभिवाञ्छसि ॥**
**कर्मभ्य एव तत्सिध्येच्छ्रुतत्वात्कर्मणः श्रुतौ ॥ ३२ ॥**

मुक्तेरुक्तरीत्या कर्मसाध्यत्वे निरस्तेऽपि तादृश्यपि सा कर्मणैव सिध्यति तस्यैव पुमर्थहेतुत्वेन श्रुतत्वादिति शङ्कते । **पर इति ।** श्रेयःशब्दं कैवल्यमात्मनः स्वरूपावस्थानात्मकं यदीच्छसि तत्तर्हि तथैवेत्यनुमोदामहे । तथाऽपि तत्कर्मबलादेव सिध्येद्यावज्जीवादिश्रुतौ तस्यैव पुमर्थसापेक्षत्वेन श्रुतत्वान्मुक्तेश्च पुमर्थत्वान्नष्टाश्वदग्धरथवन्मिथः संबन्धादित्यर्थः ॥ ३२ ॥

**श्रुतौ स्मृतौ च विहितं कर्मैव श्रूयते यतः ॥**
**न च कर्मातिरेकेण मुक्त्यभ्युदयसाधनम् ॥ ३३ ॥**

---

१ ख. °त्वे ब्र° । २ क. °ना सुषुप्तौ मु° । ३ क. °च्चाप्यस° ।

तरति शोकमात्मविदित्यादौ ज्ञानमपि **श्रूयते** पुमर्थहेतुरिति चेन्नेत्याह । **श्रुताविति** । विहितं कर्तव्यमनुष्ठेयमिति यावत् । अतस्तस्यैव पुमर्थहेतुतेति शेषः । श्रुतेर्गतिर्वक्ष्यते । श्रुतितात्पर्याज्ञानादेव तत्र पुमर्थहेतोर्ज्ञानस्य तवादृष्टिरित्याशङ्क्याऽऽह । **न चेति** ॥३३॥

**यत्नतो न्यायतः किंचित्पश्यामो वेदचक्षुषा ॥**
**निषेधविधिमात्रत्वाद्वेदार्थस्येह सर्वतः ॥ ३४ ॥**

यत्नः श्रुतितात्पर्यनिर्दिधारयिषया पुरुषव्यापारः । न्यायस्तूपक्रमोपसंहारैकरूप्यादिः श्रुतिलिङ्गादिर्नेति विभागः । ननु श्रुतितदनुगुणन्यायाभ्यां विनाऽपि पुमर्थहेतुस्तथागताद्यागमादेव लब्धुं शक्यते नेत्याह । **वेदेति** । न हि वैदिका वेदातिरेकिणा मानेन पारलौकिकं हेतुं वदन्तीत्यर्थः । कर्मेतरपुमर्थहेतोरवैदिकत्वे हेतुमाह । **निषेधेति** इह । व्यवहारभूमौ सर्वस्यापि वेदार्थस्य विधिनिषेधतच्छेषत्वेन समाप्तेः कर्मैव पुमर्थहेतुरतो मुक्तेरपि स्वर्गवत्पुमर्थत्वात्तत्साध्यतेत्यर्थः ॥ ३४ ॥

**ननु श्रुतौ पुरोक्तानि वाक्यानि बहुशो मया ॥**
**अविधायित्वतस्तेषां न न्याय्यं भवतोदितम् ॥ ३५ ॥**

वस्तुबोधीन्यपि वाक्यानि श्रुतौ बहुशो दृश्यन्ते तानि च परीक्ष्येत्यादीनि मयोक्तानि तत्कथं कर्मैव पुमर्थहेतुरिति शङ्कते । **नन्विति** । तेषां वस्तुबोधित्वाभावात्कर्मैव पुमर्थहेतुर्वेदार्थस्य च विधिनिषेधमात्रता तेन तदतिरिक्तमपि वस्तु तदर्थोऽस्तीत्यनुचितमिति दूषयति । **अविधायित्वत इति** ॥ ३५ ॥

**आम्नायस्य क्रियार्थत्वाद्विधिनेति च सूत्रणात् ॥**
**विधिशेषतया तेषामेकवाक्यत्वसंभवे ॥ ३६ ॥**

तेषु श्रुतवस्तुपरत्वाभावे किंपराणि तानीत्याशङ्क्यार्थवादाधिकरणन्यायेनाऽऽह । **आम्नायस्येति । अयं भावः**—अस्ति तावदाम्नायस्य सर्वस्य फलवत्कार्यपरत्वं तद्यानि **वाक्यानि** सोऽरोदीदित्यादीनि क्रियां वा तत्संबन्धं वा किंचिन्नावगमयन्ति तेषां फलवद्धर्माप्रमापकत्वात्फलवदभिधेयवैधुर्यम् । तस्मादेवंजातीयकं वाक्यमनित्यं सिद्धार्थापेक्षितया प्रमाणान्तरसापेक्षमप्रमाणमित्याम्नायस्य क्रियार्थत्वादित्यादिसूत्रार्थः । तथाच सार्थवादानां शब्दानामप्रामाण्यमिति पूर्वपक्षितम् । वायुर्वै क्षेपिष्ठा देवतेत्यादिरर्थवादो वायव्यं श्वेतमालभेत भूतिकाम इत्येवमन्तेन विध्युद्देशेनैकवाक्यत्वात्प्रमाणं विधेयस्तुतेश्चैकवाक्यत्वं पदानां साकाङ्क्षत्वात् । यद्यपि वायुर्वै क्षेपिष्ठेत्यादौ क्रिया वा तत्संबन्धो वा किंचिन्नावगम्यते तथाऽपि विधीनामालभेतेत्यादीनामपेक्षितक्रियादिस्तुतिलक्षणेनार्थेनार्थवन्तः सन्तोऽर्थवादाः प्रमाणं स्युरिति विधिना त्वेकवाक्यत्वादित्यादि-

१ ख. सर्वशः ।

सिद्धान्तसूत्रस्यार्थः । अतोऽक्रियार्थानामपि विधिनैकवाक्यतयाऽर्थवत्त्वाद्वेदान्तानामपि सोऽरोदीदित्यादिवद्विधिशेषत्वमिति । कर्मप्रकरणस्थानामक्रियार्थानां सोऽरोदीदित्यादीनां विधिशेषतयाऽर्थवत्त्वेऽपि भिन्नप्रकरणस्था वेदान्ता न तादर्थ्येनार्थवन्तः स्युरित्याशङ्क्याऽऽह । **विधीति** ॥ ३६ ॥

**वचसामक्रियार्थानां वाक्यभेदप्रकल्पना ॥**
**गुर्वी स्यान्ननु कैवल्यं फलं नित्यमिहेष्यते ॥ ३७ ॥**

अस्यार्थः । यथा सोऽरोदीदित्यादिवचसां मुखतोऽक्रियार्थानां स्वार्थे फलमलभमानानां फलाकाङ्क्षिणां विधिनैकवाक्यतयाऽभ्युदये पर्यवसानं तथा वेदान्तानामपि स्वार्थे फलविकलानां तदाकाङ्क्षिणां फलवद्विध्येकवाक्यतामासाद्य पर्यवसानं युक्तं लाघवात् । न हि वेदान्तानामुक्तविधया विधिशेषत्वेन तदेकवाक्यत्वसंभवे वस्तुबोधित्वेन वाक्यान्तरत्वं गौरवात् । संभवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यत इति न्यायात्तत्र न तेषां प्रकरणान्तरत्वमिति । वेदान्तानां विधिशेषत्वममृष्यन्नाशङ्कते । **नन्विति** । तेषां विधिशेषत्वे विधेयक्रियासाध्या मुक्तिरनित्या स्यान्न च **मोक्षशास्त्रे** तदनित्यतेष्टा । अतो न सा कर्मसाध्या नित्यत्वादात्मवदित्याह । **कैवल्यमिति** ॥ ३७ ॥

**कथं नित्यं भवेत्तन्नो यदि स्यात्कर्मणः फलम् ॥**
**कर्मोत्थं न यतः किंचिद्ध्रुवं जगति वीक्ष्यते ॥ ३८ ॥**

क्रियासाध्यत्वेऽपि तन्नित्यता किं न स्यादित्याशङ्क्याऽऽह । **कथमिति** । कर्मसाध्यत्वेऽपि न मुक्तेरनित्यत्वप्रसङ्गः कर्मफलत्वानित्यत्वयोरव्याप्तेर्न हास्य कर्म क्षीयत इति **श्रुते**रित्याशङ्क्याऽऽह । **कर्मोति** । कृष्यादिफलेषु कर्मफलत्वानित्यत्वयोर्व्याप्तेर्यत्कृतकं तदनित्यमितिव्याप्त्यनुगृहीतया तद्यथेत्यादि**श्रुत्यो**पास्तिस्तुत्यर्थायाः श्रुतेर्बाधाच्च न प्रसङ्गस्य प्रशिथिलमूलतेत्यर्थः ॥ ३८ ॥

**तत्साधनेन चावश्यं भवितव्यमतो भवेत् ॥**
**पारिशेष्यादिह ज्ञानं वेदान्ते तत्प्रसिद्धितः ॥ ३९ ॥**

तर्हि हेतुरेव मुक्तेर्मा भून्नित्यत्वादित्याशङ्क्य सा साधनापेक्षा पुमर्थत्वात्स्वर्गवदित्याह । **तत्साधनेनेति** । तथाऽपि कथं ज्ञानस्य तद्धेतुत्वं तत्राऽऽह । **अत इति** । इहेति मोक्षोक्तिः । ज्ञानं हेतुरिति शेषः । नित्याऽपि मुक्तिः प्रतिबन्धध्वंसे ज्ञानापेक्षेति भावः । प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे संप्रत्ययः पारिशेषः । अत्र ज्ञानकर्मणी प्रसक्ते तत्र कर्मनिषेधाज्ज्ञानं मुक्तिहेतुरित्याह । **पारिशेष्यादिति** । ज्ञानस्याप्रसक्तेर्नैवमित्याशङ्क्य

---

१ ख. प्राप्त° । २ क. °माणस° ।

**ब्रह्म** वेदेत्यादौ मुक्तिहेतुत्वेन ज्ञानस्य प्रसिद्धत्वाद्युक्तौ प्रसङ्गपरिशेषावित्याह । **वेदान्त इति** ॥ ३९ ॥

**नैवं क्रियाभ्य एवास्या मुक्तेः सिद्धत्वहेतुतः ॥**
**कुतः क्रियाभ्यः सिद्धिश्चेच्छृणु तद्गण्यते यतः ॥ ४० ॥**

पूर्ववादी पारिशेष्यं दूषयति । **नवमिति** । क्रियासाध्यत्वे मुक्तेः स्वर्गवदनित्यत्वापत्तेर्न तत्फलतेत्याक्षिपति । **कुत इति** । अनित्यत्वं हित्वा तस्या यथा क्रियाफलत्वं ज्ञातुं शक्यं तथोच्यते तत्रावहितेन भाव्यमित्याह । **शृण्विति** ॥ ४० ॥

**निषिद्धकाम्ययोस्त्यागात्कर्मणोर्नित्यकर्मणः ॥**
**करणात्प्रत्यवायस्य हतेर्भोगेन च क्षयात् ॥ ४१ ॥**
**शरीरारम्भकस्यैवं मुक्तिः सिद्धाऽन्तरात्मनः ॥**
**विनाऽप्यैकात्म्यसंबोधात्कर्मणैवोक्तवर्त्मना ॥ ४२ ॥**

क्रियाफलस्यापि मुक्तेर्नित्यत्वं साधयति । **निषिद्धेत्यादिना** । पूर्वोपार्जितानि सर्वाणि कर्माणि संभूय देहमेकमारभन्ते तत्र ममाहंबुद्धिभागी यदि कश्चिद्दैवयोगान्मुमुक्षुः स्यात्तदा तस्य निषिद्धकर्मत्यागान्नरकयोनिनिरासः । काम्यकर्मत्यागाद्देवादिदेहाप्राप्तिः । नित्याद्यनुष्ठानादकरणनिमित्तप्रत्यवायहतिः । वर्तमानदेहारम्भककर्मणश्च भोगेन क्षयः । अतो वर्तमानदेहपाते देहान्तरग्रहे हेत्वभावादुक्तचारितस्याऽऽत्यन्तिकदेहोच्छित्तिर्मुक्तिरनायाससिद्धेत्यर्थः । अथ यथोक्तचरितोऽपि विज्ञानमपेक्ष्य मोक्षी संपत्स्यते नेत्याह । **विनेति** । उक्तरीत्या कर्मणैव मुक्तिर्न ज्ञानाद्भविष्यद्देहासंबन्धनिबन्धनाया मुक्तेस्तत्संबन्धनिमित्ताभावमात्राधीनत्वान्निमित्ताभावे नैमित्तिकाभावादिति भावः ॥ ४१ ॥ ४२ ॥

**ननु चाऽऽत्मावबोधस्य निचाय्येति फलं श्रुतम् ॥**
**ब्रह्म वेदेति च तथा नैवं तस्यार्थवादतः ॥ ४३ ॥**

ननु नैवमपि कर्म निर्वाणहेतुर्ज्ञानस्य तद्धेतुत्वश्रुतिविरोधान्न हि श्रुतं हित्वाऽश्रुतमादेयमिति शङ्कते । **नन्विति** । **निचाय्य** तं मृत्युमुखात्प्रमुच्यते **ब्रह्म** वेद ब्रह्मैव भवति **तरति** शोकमात्मविदित्यादौ ज्ञानं मुक्तिहेतुरिति श्रुतमित्येतद्दूषयति । **नैवमिति** ॥ ४३ ॥

**फलोक्तेरर्थवादत्वं द्रव्यसंस्कारकर्मसु ॥**
**सर्वत्र दर्शनाच्छास्त्रे पर्णमय्यां फलोक्तिवत् ॥ ४४ ॥**

ज्ञानस्य मुक्तिहेतुत्वश्रुतिर्विद्यमानाऽपि न स्वार्थे मानमर्थवादत्वादित्येतत्कथमित्याशङ्क्याऽऽह । **फलेति** । आत्मज्ञाने फलश्रुतेरर्थवादत्वं शास्त्रे द्रव्यादिषु सर्वेषु तदर्थवा-

१ क. °गान्नार° ।

दत्वस्य दर्शनादिति योजना । तत्र द्रव्यादिषु फलश्रुतेरर्थवादत्वे दृष्टान्तमाह । **पर्णमय्यामिति** । **अयं भावः**—"द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्" [ जै० सू० ४ । ३ । १ ] यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते यत्प्रयाजानुयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्याभिभूत्या इति द्रव्यादिषु **फलश्रुतयः** । किमेते फलविधयः किंवाऽर्थवादा इति **संशय्य** यस्य पथ्यं भोजनं भवति स कल्पो भवतीत्येवंजातीयकाद्वाक्याल्लोके साध्यसाधनताधीदृष्टेस्तत्सामान्यादत्रापि या क्रत्वर्था जुहूस्तां पर्णमयीं कुर्यादपापश्लोकश्रवणकाम इति साध्यसाधनत्वबुद्ध्युत्पादात्पर्णतासाध्यं स्वतन्त्रमेव कार्यमिति फलविधित्वमासामिति पूर्वपक्षयित्वा लौकिकवाक्यस्य मानान्तरसिद्धार्थत्वात्तदविरोधेन यथाकथंचिदर्थधीसंभवेऽपि वेदे शब्दैकनिबन्धनत्वादैदमर्थ्यस्य क्रत्वविनाभूतजुहूद्वारा संनिहितक्रत्वपूर्वार्थतैव पर्णत्वस्येत्यमूषामर्थवादतेति राद्धान्तितं **चतुर्थे** । तथा च पर्णताद्यवच्छिन्नजुह्वादेः क्रत्वर्थत्वाद्यथा तत्र फलश्रुतिरर्थवादस्तथाऽऽत्मज्ञानेऽपि साऽर्थवादी भवति तस्य प्रोक्षणादिवत्कर्मशेषत्वादिति ॥ ४४ ॥

**आत्मनः कर्मशेषत्वात्तद्धियः कर्मशेषता ॥**
**विधिं त्वयाऽनिच्छताऽपि ह्यभ्युपेयाऽर्थवादता ॥ ४५ ॥**

ननु कर्मसंबन्धिजुह्वादिद्वारा कर्माङ्गत्वात्पर्णतादेस्तत्र फलश्रुतिरर्थवादः स्यादात्मज्ञाने तु द्वाराभावात्कर्माङ्गत्वायोगान्न फलश्रुतेरर्थवादता न चेदं द्वारानपेक्षमेव क्रतावन्वेति पुरोडाशादिवत्तदनिर्वर्तकत्वात्तत्राऽऽह । **आत्मन इति** । यथा जुहूद्वारा क्रतूपकारि पर्णत्वं तथा कर्तृसंस्कारद्वारा तदुपकारि ज्ञानमपि तच्छेषः । तद्युक्ता तत्र फलश्रुतेरर्थवादतेत्यर्थः । ननु वायुर्वै क्षेपिष्ठेत्यादिरर्थवादो विधिशेषो दृष्टो न चास्ति वेदान्तेषु विधिरतो न ज्ञाने फलश्रुतिरर्थवादस्तत्राऽऽह । **विधिमिति** । ज्ञानस्याविधेयत्वात्तत्र विध्यभावेऽपि प्रोक्षणवत्कारकसंस्कारतया दुर्वाराऽस्य विधिशेषतेति युक्ता तत्फलश्रुतेरर्थवादतेत्यर्थः ॥ ४५ ॥

**नैवं तद्धेतुतद्रूपविरोधादितरेतरम् ॥**
**मुक्त्यभ्युदययोस्तस्मान्न सम्यग्भवतोदितम् ॥ ४६ ॥**

ऐकभविकन्यायेन परोक्तं मुक्तेः कर्मसाध्यत्वं निराकरोति । **नैवमिति** । तत्र हेतुस्तद्धेत्विति । तयोर्मुक्त्यभ्युदययोर्हेतू विवेकाविवेकपूर्वके ज्ञानकर्मणी तयोर्मिथो वैलक्षण्यान्न त्वदुक्तन्यायेन मुक्तिः साध्येत्यर्थः । अथ तद्धेत्वोर्विलक्षणत्वहेतुं परो नानुमन्यते स हि द्वयोरपि कर्मसाध्यत्वमिच्छति तत्राऽऽह । **तद्रूपेति** । तयो रूपे ध्रुवाध्रुवत्वे तद्वैलक्षण्यात्तद्धेतुवैलक्षण्यमार्थिकमित्यर्थः । किंच तयो रूपहेतुवैलक्षण्यं प्रागेव यस्मा-

---

१ ख. 'ण्याद्धे' ।

दुक्तं तस्माद्यत्कर्मसाध्यत्वं मुक्तेस्त्वयोच्यते तदुक्तहेत्वज्ञानकृतं न सम्यगित्याह । **मुक्तीति** ॥ ४६ ॥

**स्वरूपेऽवस्थितिर्मुक्तिरात्मनो भवतोच्यते ॥**
**काम्यादिवर्जनादिभ्यस्तस्याः सिद्धिश्च वर्ण्यते ॥ ४७ ॥**

पूर्वपक्षानुत्थानमुक्त्वा विधान्तरेणापि तद्वक्तुं परोक्तमनुवदति । **स्वरूप इति** । उपेयमनुभाष्योपायमनुभाषते । **काम्यादीति** ॥ ४७ ॥

**तत्राऽऽत्मा किं स्वरूपे प्राङ्न स्थितो येन तत्स्थितौ ॥**
**हेतुं व्यपेक्षते यत्नात्स्वरूपं हि न तद्भवेत् ॥ ४८ ॥**

उक्तहेत्वनुष्ठानात्प्रागात्मा स्वरूपे स्थितो न वेति विकल्पयति । **तत्रेति** । द्वितीयमनुवदति । **स्वरूप इति** । हेत्वनुष्ठानात्प्रागात्मनः स्वरूपानवस्थितत्वे गमकमाह । **येनेति** । येन हेतुना स्वरूपास्थितावात्मा हेतुमन्वेषते तेन प्रागयं स्वरूपे न स्थितो यदीत्यनुवादार्थः । दूषयति । **स्वरूपं हीति** ॥ ४८ ॥

**स्वतोऽनवस्थितो यत्र हेतुना स्थाप्यते बलात् ॥**
**अथावस्थित एवायं किमर्थं हेतुमार्गणम् ॥ ४९ ॥**

यत्र स्वतो[3] न स्थितो हेतुना चानुष्ठानवशेन स्थापितस्तत्राऽऽत्मस्वरूपमागन्तुकत्वाद्धर्मादिवदित्यर्थः । आद्यमादत्ते । **अथेति** । तर्हीष्टहेत्वनुष्ठानं व्यर्थं न हि प्राप्तग्रामो ग्रामं जिगमिषतीति दूषयति । **किमर्थमिति** ॥ ४९ ॥

**कैवल्येऽपि च तत्सक्तेरनिर्मोक्षः प्रसज्यते ॥**
**अतो निषिद्धकाम्यादिवर्जनान्नाऽऽत्ममुक्तता ॥ ५० ॥**

प्राप्तफलोऽपि स्वभावादेवोक्तं हेतुमनुतिष्ठन्न दुष्यतीत्याशङ्क्याऽऽह । **कैवल्येऽपीति** । स्वभावस्य यावद्द्रव्यभावित्वान्मुक्तोऽपि तमनुतिष्ठेत्ततो मुक्तिबन्धयोरैकरूप्यं स्यादित्यर्थः । किंच काम्यवर्जनादि देहादियोगाधीनमिति मुक्तस्यापि तदनुष्ठाने तत्संबन्धः स्यात्ततो न मुक्तिरित्याह । **अनिर्मोक्ष इति** । यतः प्राक्सिद्धत्वे पुनः साधनानुष्ठानवैयर्थ्यमसिद्धत्वे स्वभावत्वायोगोऽतो यथोक्तहेतोरात्मनो न स्वरूपावस्थानरूपमुक्तिसिद्धिरिति फलितमाह । **अत इति** ॥ ५० ॥

**विषयाभ्यासजास्वास्थ्यनुत्त्यर्थमिति चेन्मतम् ॥**
**स तु विषयसंपर्कः कस्माद्भवति कारणात् ॥ ५१ ॥**

न स्वरूपावस्थानार्थमुक्तमुपायमुपगच्छामः किंतु संसृष्टेषु विषयेष्वसकृदनुभवजनितपापशमनायेति शङ्कते । **विषयेति** । नाऽऽत्मन्यसङ्गे विषयसङ्गो हेत्वभावादित्याक्षि-

१ क. °द्धिस्तु व° । २ ख. तत्स्थौ । ३ ख. °तोऽनवस्थि° ।

पति । **स त्विति** । स्वभावादेवाऽऽत्मनि चैतन्यवद्विषयानुषङ्गमाशङ्क्याऽऽह । **कस्मादिति** ॥ ५१ ॥

**अकस्माद्भवतः सक्तेर्मुक्तावप्यनिषेधतः ॥**
**अनिर्मोक्षप्रसक्तिर्वस्तथा सति समापतेत् ॥ ५२ ॥**

हेतुं विनाऽऽत्मनि विषयसङ्गे न वो मुक्तिः स्यादित्युत्तरार्धेन प्रतिज्ञातेऽर्थे हेतुरकस्मादित्यादिः । विना हेतुं जायमानार्थयोगस्य मोक्षेऽपि प्रसङ्गध्रौव्यं हेत्वर्थः । तत्र निवारकाभावं हेतुमाह । **अनिषेधत इति** ॥ ५२ ॥

**धर्माधर्मनिमित्तश्चेत्किं पुनर्धर्मपातके ॥**
**अप्यसङ्गस्वभावस्य संपर्कं कुरुतो बलात् ॥ ५३ ॥**

विषयसंपर्के हेत्वभावकृतं दोषं धुनीते । **धर्मेति** । तौ किमसङ्गस्याकर्तुरात्मनोऽर्थयोगं कुर्वाते किंवा तद्विपरीतस्येति विकल्प्याऽऽद्यं दूषयति । **किं पुनरिति** । किंशब्दः क्षेपार्थः ॥ ५३ ॥

**भल्लातकाङ्कवद्वस्त्रे न हि लोके स्फुरन्नपि ॥**
**कुशलोऽपि कुलालः सन्नघटादिस्वभावकम् ॥ ५४ ॥**
**मृद्वद्व्योम घटी कुर्यान्मरुद्वाऽग्नेश्च शीतताम् ॥**
**आत्मा कर्त्रादिरूपश्चेन्मा काङ्क्षीस्तर्हि मुक्तताम् ॥ ५५ ॥**

तत्र वैधर्म्यदृष्टान्तमाह । **भल्लातकेति** । यथा वस्त्रे वस्तुतोऽकलङ्केऽपि भल्लातकफलं संसृज्यमानं तत्कलङ्कयति नैवमात्मनि सङ्गादिहीने धर्माधर्मावर्थयोगविधायकावित्यर्थः । तयोरात्मन्यर्थसंबन्धाधानासामर्थ्यं साधर्म्यदृष्टान्ताभ्यामाह । **न हीत्यादिना** । स्फुरन्बलान्नेत्युक्तेः स्फुरणं देहबलं कुशलो व्याख्यातेति प्रयोगात्कौशलं[1] बुद्धिबलमिति भेदः[2] । यथा कुलालो मृदं घटी करोति तद्वदघटादिस्वभावं नभो घटी न कर्तुमलम् । यथा च वायुः सर्वत्र शैत्यमापादयन्नपि नाग्नेस्तत्करोति तथा धर्मादिः सर्वोत्पत्तिमद्धेतुरपि नोक्तात्मन्यर्थं संबन्धयति न हि स्वभावविपरीतोऽर्थो हेतुशतेनापि कल्पनामर्हतीत्यर्थः । द्वितीयमनुभाषते । **आत्मेति** । कर्तृत्वादिस्वभावस्तावदात्मा तस्य विषयसंबन्धं धर्माधर्मावाधत्तस्तदभ्यासजास्वास्थ्यनुत्त्यर्थं काम्यादिवर्जनमित्यर्थः[3] । स किं कर्तृत्वादिकार्यस्वभावः किंवा तच्छक्तिस्वभावः । आद्ये कर्तृत्वादिकार्यध्वस्तावात्मनो मुक्तिस्तदध्वस्तौ वा नाऽऽद्य इत्याह । **मा काङ्क्षीरिति** ॥ ५४ ॥ ५५ ॥

**न हि स्वभावो भावानां व्यावर्त्येतौष्ण्यवद्रवेः ॥**
**स्वभावाद्विनिवृत्तोऽर्थो निःस्वभावः खपुष्पवत् ॥ ५६ ॥**

---

१ ख. °शल्यं बु° । २ ख. भावः । ३ ख. काम्यवर्जनादिरित्य° ।

तत्र हेतुः । **न हीति** । आत्मस्वभावोऽपि कर्तृत्वादिरनर्थो हेतुविशेषान्निवर्ततामित्याशङ्क्याऽऽह । **स्वभावादिति** ॥ ९६ ॥

**नाविनश्यन्यतो वह्निर्व्यावर्त्येतौष्ण्यतः क्वचित् ॥**
**न च कर्त्राद्यनिर्मुक्तौ मुक्तिः संभाव्यतेऽन्यतः ॥ ९७ ॥**

अथ मन्त्रादिसंनिधौ स्वभावादप्यौष्ण्याद्वह्निर्व्यावर्तते न चैतावताऽसौ खपुष्पवन्निःस्वभावस्तथाऽऽत्मा यथोक्ताद्धेतोरुक्तस्वभावान्निवृत्तोऽपि न निःस्वभावस्तत्राऽऽह । **नेत्यादिना** । मन्त्रादिसंनिधिकृतशक्तिप्रतिबन्धान्नाग्निः स्फोटादि करोति न तद्धेतोरौष्ण्यादपि स निवर्तते कालान्तरे तस्मादेव तत्कार्यदृष्टेरतो विद्यमानोऽग्निर्मन्त्रादिसंनिधौ स्वभावादौष्ण्याद्व्यावर्ततान्यथा नैःस्वाभाव्यापत्तेस्तथाऽऽत्मनोऽपि स्वभावव्यावृत्तौ नैःस्वाभाव्यादमुक्तिरिति भावः । न द्वितीय इत्याह । **न चेति** । अनर्थध्वस्तिर्हि मुक्तिः कर्तृत्वादिश्चानर्थस्तेन सति तस्मिन्न मुक्तिर्बन्धस्यैव सत्त्वादित्यर्थः ॥ ९७ ॥

**ननु कर्तृत्वभोक्तृत्वकार्यमेवाऽऽत्मसंसृतिः ॥**
**न तु तच्छक्तिरित्येवं शक्तिमात्रतया स्थिता ॥ ९८ ॥**

कर्तृत्वादिकार्यस्वरूपत्वपक्षं प्रतिक्षिप्य तच्छक्तिस्वभावत्वपक्षमालम्बते । **नन्विति** । एवकारनिरस्यमाह । **न त्विति** । तथाऽपि मोक्षानुपपत्तिस्तुल्येति चेन्नेत्याह । **इत्येवमिति** । शक्तिमात्रतया कर्तृत्वादिकार्यशून्यतच्छक्तिसत्त्वेनेति यावत् ॥ ९८ ॥

**सर्वानर्थविनिर्मुक्तेरुपपन्नाऽऽत्ममुक्तता ॥**
**मैवं[1] भेदे तथाऽभेदे दोषः स्याच्छक्तिकार्ययोः ॥ ९९ ॥**

अनर्थः कर्तृत्वादिकार्यं तच्छक्तौ सत्यामपि स्वापादावनर्थधियोऽभावादित्यर्थः । तच्छक्तिसत्त्वेऽपि न मुक्तिरिति दूषयति[2] । **मैवमिति** । कथं शक्तिपक्षे मोक्षायोगस्तत्राऽऽह । **भेद इति** ॥ ९९ ॥

**शक्तितत्कार्ययोर्यस्माद्व्यतिरेको न विद्यते ॥**
**नियमासंभवः प्राप्तव्यतिरेकस्तयोर्यदि ॥ ६० ॥**

कथमुभयत्र दोषसत्त्वमित्याशङ्क्य शक्तिशक्ययोरुपादानोपादेययोर्भेदे दोषं विशदयति । **शक्तीति** । इयं शक्तिरिदं कार्यमिति व्यतिरेको यस्मान्नोपलभ्यते विदेरत्र ज्ञानार्थत्वान्नासावस्तीत्यर्थः । अयोग्यत्वाद्विद्यमानोऽपि तद्भेदो न भातीत्याशङ्क्याऽऽह । **नियमेति** । शक्तितत्कार्ययोर्भेदे शक्तिरियं तत्कार्यमिदमिति नियमो न स्याद्गवाश्वयोरिवात्यन्तभिन्नयोस्तद्भावासंभवादित्यर्थः ॥ ६० ॥

**कार्यकारणता न स्यात्स्वतो भेदेन सिद्धयोः ॥**
**अभेदे च तयोरैक्यात्कार्यकारणता कुतः ॥ ६१ ॥**

१ ख. नैवं । २ ख. ॰ति । नैव॰ ।

शक्तितत्कार्ययोरिव गवाश्वयोरकार्यकारणत्वान्नानियम इत्याशङ्क्याऽऽह। **कार्येति।** वास्तवभेदे कार्यकारणत्वस्यैवाश्वमहिषवदयोगान्न तेनानियमनिराकृतिरित्यर्थः। अभेदपक्षे दोषं प्रकटयति। **अभेदे चेति** ॥ ६१ ॥

नाकुर्वत्कारणं दृष्टं कार्यं चाक्रियमाणकम् ॥
अथाभेदस्तयोरिष्टः कार्यध्वस्तौ प्रसज्यते ॥ ६२ ॥
तच्छक्तेरपि विध्वंसस्तयोरव्यतिरेकतः ॥
शक्तिस्वरूपहाने च शक्तिमद्रूपनिह्नुतिः ॥ ६३ ॥
तयोरव्यतिरेकत्वात्स एवाऽऽयात्यनीप्सितः ॥
निरात्मवादः पूर्वोक्तस्तस्मान्नैवं[१] प्रकल्पयेत् ॥ ६४ ॥

शक्तितत्कार्ययोरैक्येऽपि वस्तुनि कार्यकारणत्वे का हानिस्तत्राऽऽह। **नाकुर्वदिति।** न हि वस्तुमात्रं कारणं कार्यं वा तत्र कुर्वत्त्वाक्रियमाणत्वविभागाभावादकुर्वत्कारणमक्रियमाणं कार्यमित्यलौकिकं स्यादित्यर्थः। दोषान्तरं वक्तुं पुनरभेदपक्षमनुवदति। **अथेति।** कार्ये वा शक्तेरन्तर्भावः शक्तौ वा कार्यस्येति विकल्प्याऽऽद्ये दोषमाह। **कार्येति।** तच्छक्तेः कार्यप्रतियोगिकारणभूतशक्तेरिति यावत्। कर्तृत्वादिकार्यनाशवत्तच्छक्तिनाशेऽपि का क्षतिस्तत्राऽऽह। **शक्तीति।** शक्तितत्कार्यशक्तिमतां नाशेऽपि किं नश्छिन्नं तत्राऽऽह। **स एवेति।** अप्रस्तुते निरात्मवादे कथं स एवेति परामर्शस्तत्राऽऽह। **पूर्वोक्त इति।** स्वभावाद्विनिवृत्तोऽर्थ इत्यत्रेति यावत्। तथा च फलाभावान्न मोक्ष इति शेषः। कार्यस्य शक्त्यन्तर्भावे शक्तिस्थितौ कार्यानाशात्कर्तृत्वादेस्तच्छक्तिवद्यावदात्मभावित्वादनिर्मुक्तिरेवेत्याभिप्रेत्याभेदनिरासमुपसंहरति। **तस्मादिति** ॥ ६२ ॥ ६३ ॥ ६४ ॥

मतं कार्यानभिव्यक्तिर्निमित्तासंभवाद्यदि[२] ॥
शक्तेरिति न तद्युक्तं शक्तितद्धेतुसंभवात् ॥ ६५ ॥

शक्तितत्कार्यस्वभावपक्षयोरुक्तदोषं परिहरन्मतान्तरमाह। **मतमिति।** न कार्यस्य तच्छक्तेर्वा स्वरूपनाशो मुक्तिः किंतु शक्तेर्यत्कार्यं तदनभिव्यक्तिः सेति यदि मतमिति योजना। कार्याव्यक्तेः स्वापादावपि सत्त्वादतिप्रसक्तिरित्याशङ्क्याऽऽह। **निमित्तेति।** स्वापादौ पुनर्व्यक्तिनिमित्तान्यदृष्टादीनि सन्ति। अन्यथा ज्ञानानर्थक्यात्। मुक्तौ तु तेषामसंभवस्तथा चाऽऽत्यन्तिककार्यानभिव्यक्तिः सेति नातिप्रसक्तिरित्यर्थः। शक्तिकार्ययोः सतोरेव कार्याव्यक्तिर्मुक्तिरित्येतन्निरस्यति। **न तदिति।** तत्र हेतुमाह। **शक्तीति।** शक्तिरुपादानं तद्गतो वाऽतिशयस्तस्य कार्यस्य हेतुर्धर्मादिस्तयोः संभवा-

१ क. ॅवं विक॑। २ क. ॅदि ॥ मुक्तिर॑।

दिति योजना । यानि संसारे कार्यव्यक्तिनिमित्तानि तान्यविकलानि मुक्तावपि तदविकला तत्रापि कार्यव्यक्तिः स्यादिति भावः ॥ ६५ ॥

**शक्तिरूपेण संबन्धो निमित्तानामपीष्यते ॥**
**नैमित्तिकैरिति ततो वह्न्यौष्ण्यादिसमानता ॥ ६६ ॥**

ननु मोक्षे हेतुफलयोरव्यक्तयोः सत्त्वेऽपि मिथोऽसंबन्धान्न तदा कार्यव्यक्तिरत आह । **शक्तीति ।** निमित्तानां धर्मादीनां शक्त्या समवायिकारणेन तद्गतातिशयेन च संबन्धवन्नैमित्तिकैरपि कर्तृत्वादिभिरसावेष्टव्यः समवायी खल्वात्मा मोक्षेऽप्यस्तीति तदाश्रयाश्च धर्मादयस्तदा शक्तिवदव्यक्ताः । अतस्तत्राऽऽश्रयाश्रयित्वसंबन्धस्तद्गतातिशयेन तेषामैकाधिकरण्यम् । एतेन नैमित्तिकैरपि शक्तेरुक्तः संबन्धः । तद्धेतूनां कर्तृत्वादिभिर्निमित्तनैमित्तिकत्वं तस्मात्तत्रापि कर्तृत्वादिव्यक्तिः संसारादविशेष इत्यर्थः । मुक्त्यभावं फलितमाह । **इति तत इति ।** यतो धर्मादीनां नैमित्तिकैस्तत्संबन्धस्य च मुक्तौ दुर्वारता ततः सत्यग्नावप्रतिबद्धे तदौष्ण्यप्रकाशव्यक्तिवद्व्यञ्जकसद्भावे तत्रापि कार्यव्यक्तिर्नियतेति तदव्यक्तिर्मुक्तिरिति पक्षो न युक्त इत्यर्थः ॥ ६६ ॥

**कार्यस्य शक्तितन्त्रत्वे सर्वदा कारणस्थितेः ॥**
**कार्योत्पत्तिः सदैव स्यान्निदाघे घर्मवद्यतः ॥ ६७ ॥**

किंच कर्तृत्वादिकार्यस्य पुष्कलकारणतन्त्रत्वमस्ति न वा तत्राऽऽद्यमनूद्य दूषयति । **कार्यस्येति ।** शक्तिः समग्रो हेतुः कारणशब्दस्यापि स एवार्थः । न तद्युक्तमित्याद्युक्तरीत्या पुष्कलहेतोर्मोक्षेऽपि भावात्तत्रापि कार्योत्पत्तिप्राप्तेर्मुक्तिप्रलयसुप्तीनां लयः स्यादित्यर्थः । पूर्णहेतुतन्त्रत्वे कार्यस्य सति तस्मिन्न मुक्तिरित्यत्र दृष्टान्तमाह । **निदाघ इति ।** घर्मपुष्कलहेतौ सति घर्मसातत्यवत्कर्तृत्वादिसामग्र्यां यतस्ताद्विलम्बायोगोऽतः कर्तृत्वादिसातत्ये सत्यमुक्तिरित्यर्थः ॥ ६७ ॥

**तथैव शक्त्यतन्त्रत्वेऽप्येष दोषो यतो भवेत् ॥**
**सदा कार्यं न जायेत कारणासंभवात्सदा ॥ ६८ ॥**

द्वितीयं निराकरोति । **तथेति ।** यथाऽऽद्ये मोक्षासंभवस्तथैव कर्तृत्वादेः सामग्र्यनधीनत्वेऽपि यतः सोऽनुपज्यतेऽतस्तदतन्त्रत्वमयुक्तमित्यर्थः । तमेव दोषं दर्शयति । **सदेति ।** कार्यं कर्तृत्वादि सदा कारणासंभवात्कार्यस्य च कदाचिदपि पुष्कलकारणाधीनत्वाभावात्तदभावेन तन्निवृत्तिर्मुक्तिरित्यर्थः ॥ ६८ ॥

**निदाघे शीतवद्यस्मादतोऽसम्यगिदं वचः ॥**
**निष्कारणस्य चोद्भूतौ कार्यजन्म सदा भवेत् ॥ ६९ ॥**

---

१ ख. °दित्यर्थः ॥ ६५ ॥ श° । २ ख. °न्न का° । ३ क. °ह । त° । ४ ख. °बन्धे त° । ५ ख. °स्मात्ततो° ।

मोक्षार्थी काम्यादि वर्जयेदित्यस्मद्वचनस्थमाख्यातमस्तीत्याशङ्क्य त्वद्वचनस्य श्रुतिः स्मृतिर्वा मूलमिति विकल्प्याऽऽद्यं दूषयति । **मुक्त्यर्थीति** । श्रुतौ क्वचिदपि यथोक्ताख्यातासत्त्वे फलितमाह । **येनेति** । येन वेदे यथोक्ताख्यातसत्त्वेन कर्तृशक्तेराख्यातसहकारित्वेन तदंशत्वं तथा वेदे नाऽऽख्यातमस्त्यतो न श्रुतिमूलत्वेन त्वद्वाक्यप्रामाण्यमित्यर्थः ॥ ७६ ॥

**काम्यादिवर्जनं त्वेतेत्स्वमतिप्रभवं यतः ॥**
**नातः शक्तेस्तदंशत्वं कथंचिदपि युज्यते ॥ ७७ ॥**

मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः । **नित्य**नैमित्तिके कुर्यात्प्रत्यवायाजिहासयेत्याप्तवाक्यमस्मद्वचोमूलमिति द्वितीयमाशङ्क्याऽऽह[1] । **काम्यादीति** । न तावदिदं स्वतो मानं स्मृत्यधिकरणविरोधात् । न च प्रत्यक्षादि तन्मूलम् । पारलौकिकसाध्यसाधनसंबन्धस्य वेदैकगोचरत्वात् । न च वेदे यथोक्तमाख्यातमस्तीत्युक्तम् । तस्मादाप्तवाक्यस्य निर्मूलत्वेनामानत्वात्त्वद्वाक्यस्य तन्मूलत्वेन मानत्वायोगात्काम्यादिवर्जनविषयमाख्यातं त्वदुत्प्रेक्षामात्रं यतो भात्यतो न कर्तृशक्तेस्त्वद्वाक्यस्थाख्यातसहकारित्वेन तदंशतेत्यर्थः । त्वद्वाक्यस्य श्रुतिस्मृतिमूलत्वे निर्मूलत्वे वा तद्गताख्यातसहकारित्वेन तदंशत्वं कर्तृशक्तेर्न सिध्यतीति द्योतयति । **कथंचिदपीति** ॥ ७७ ॥

**नित्यादिकरणान्नापि काम्यादेश्चापि वर्जनात् ॥**
**श्रेयः संभाव्यते विद्यानिष्फलत्वप्रसङ्गतः ॥ ७८ ॥**

ननु मद्वाक्यस्योक्तमाप्तवाक्यं मूलं तन्मूलत्वेन च यथोक्तमुक्तिसाधनवादिवेदवाक्यमनुमीयते । **आचाराच्च** स्मृतिं ज्ञात्वा **स्मृतेश्च** श्रुतिकल्पनमिति **न्यायादत** आह । **नित्यादीति** । चकारोऽवधारणार्थो नञा संबध्यते । **निचाय्य** तं मृत्युमुखात्प्रमुच्यत इत्यादिविद्यामोक्षफलत्वप्रत्यक्षश्रुतिविरोधान्नोक्ता कल्पनाऽविरोधाधिकरणविरोधादिति भावः ॥ ७८ ॥

**काम्यात्स्वर्गादिकं मा भूदक्रियायां तदुद्भवम् ॥**
**अर्थान्तरात्स्वभावाद्वा भवन्न तु निवार्यते ॥ ७९ ॥**

भवतु यथा कथंचित्काम्यादिवर्जनं तथाऽपि न तस्य मोक्षोपायतेत्याह । **काम्यादिति** । काम्यकर्मनिमित्तं स्वर्गादि तद्भोगकारणं देहादि च तद्धेतुकर्मवर्जनान्मा भूत् । अक्रिया नाम निषिद्धक्रिया तस्यां सत्यां तत्परिपाकजं नरकपतनं तन्निदानं च देहादि निषिद्धवर्जनाद्वर्ज्यतां तथाऽपि न मुक्तिः । इष्टापूर्तादिहेतूनामित्यत्र वक्ष्यमाणादर्थान्तरात्स्वभावाद्वा पुण्यदेशनिवासादिकृतपुण्यादिवशाद्भवतः स्वर्गादेर्दुर्निवारत्वादित्यर्थः ॥७९॥

---

१ ख. प्रत्याह । २ ख. 'तत्पृं म' ।

**अन्यतो भवने मानं न चेदस्त्विह संशयः ॥**
**एतावताऽपि पक्षस्ते प्रतिबद्धो न सिध्यति ॥ ८० ॥**

ननूक्तोपायवतो वर्तमानदेहपाते हेत्वन्तराद्देहान्तरभावे मानाभावात्कैवल्यमावश्यकमिति शङ्कते । **अन्यत इति** । हेत्वन्तराद्देहान्तरस्याभवनेऽपि मानाभावाविशेषाद्भवनविषये संशयः स्यादित्याह । **अस्त्विति** । संशये च पक्षासिद्धिमुक्तां स्मारयति । **एतावतेति** । पक्षपदेन परकीयोपायलभ्यो मोक्षो गृह्यते निश्चयाधीनत्वात्पारलौकिकहेत्वनुष्ठानस्य संशयस्तत्प्रतिबन्धकः । अतः संशयेन विवक्षितो हेतुर्यस्मात्प्रतिबद्धस्तस्मात्ते मुक्त्यसिद्धिरिति भावः ॥ ८० ॥

**अथैतयोरिति तथा चोदनार्थातिलङ्घिनाम् ॥**
**सुखदुःखादिसंदृष्टेर्न चाप्यस्तीह संशयः ॥ ८१ ॥**

वर्तमानदेहपाते मुमुक्षोर्देहान्तरग्रहे संशयमुक्त्वा निश्चायकसद्भावान्निश्चयं दर्शयन्नुक्तं संशयं शिथिलयति । **अथेति** । यथा केवलकर्मवतां समुच्चयानुष्ठायिनां च देहपातादूर्ध्वं दक्षिणोत्तराध्वसंबन्धः श्रुतस्तथाऽधुनातनसुखदुःखादिदर्शनानुसारेण ये केचिद्विधिनिषेधातिक्रमशीला दृष्टास्तेषां विद्याकर्मबहिर्मुखानां वर्तमानदेहपाते सत्यथैनयोः पथोर्न कतरेणचनेत्यादिना तृतीयस्थानसंबन्धोऽत्यल्पसुखो बहुतरदुःखमोहात्मकश्च क्षुद्रजन्तुभावः श्रूयतेऽतो मुमुक्षोरपि ज्ञानकर्मशून्यस्य देहान्तरग्रहे न संशयः कर्माधिकारिणो हि मार्गद्वयहेत्वभावे देहान्तरग्रहश्रुतेः । न च सा मुमुक्षुव्यतिरिक्तविषया विहितत्वाच्चाऽऽश्रमकर्मापीति न्यायेन तस्यापि धर्माधिकृतत्वेन संकोचायोगात् । न च तस्य निषिद्धत्यागित्वान्न क्षुद्रजन्तुत्वम् । विहितत्यागितया तत्फलभाक्त्वस्यापि दुःसाधनत्वात् । न च नित्याद्यनुष्ठानान्न तृतीयस्थानसंबन्धस्तस्य विफलत्वोपगमात्तथा च ज्ञानकर्मणोरभावान्मुमुक्षोर्न मोक्षो नापि संसृतिरिति कष्टां बतासौ दशामाविशेत् । निराकरिष्यते चैकभविकत्वम् । अतो वर्णितचरितस्यापि देहान्तरं निश्चितमित्यज्ञस्य न मोक्षाशेति भावः ॥ ८१ ॥

**नित्यस्याकरणे दोषस्तत्क्रियायां न यद्यपि ॥**
**अन्यतोऽसौ स्वभावाद्वा न तु मानेन वार्यते ॥ ८२ ॥**

काम्यादेरस्मिञ्जन्मनि सर्वथा त्यागेऽपि जन्मान्तरीयात्ततो बन्धसिद्धेरमुक्तिरुक्ता यत्तु नित्याद्यनुष्ठानादकरणनिमित्तप्रत्यवायनिबर्हणान्न तत्कृतमस्य देहान्तरमिति तत्राऽऽह । **नित्यस्येति** । अस्मिञ्जन्मनि साकल्येन नित्याद्यनुष्ठानाद्वर्तमानतदकरणप्रयुक्तप्रत्यवायप्रसूतदेहान्तरग्रहाभावेऽपि जन्मान्तरीयादकरणाद्वा पापदेशनिवासाभ्यासादेर्वा स्वभावादुद्भवतः प्रत्यवायस्य प्रत्याख्यातुमशक्यत्वात्तत्कृतजन्मान्तरप्राप्तेर्न मुक्तिरित्यर्थः ॥ ८२ ॥

१ ख. °थैतयोः । २ ख. °नायक° । ३ ख. °निर्हरणा° ।

**नित्यादेः फलमिष्टं चेदुपात्तदुरितक्षयः ॥**
**तथाऽप्यागामिदोषेष्वाशङ्का पूर्ववदुद्भवेत् ॥ ८३ ॥**

जन्मान्तरसंचिताकरणादिहेतुकदुरितजातस्यैहिकनित्याद्यनुष्ठानजन्यापूर्वतो नाशान्न मुक्तिविरोधितेत्याशङ्कते । **नित्यादेरिति** । अतीताकरणादिकृतदुरितादेराधुनिकनित्यादिना निर्हरणेऽपि भविष्यदकरणकारणकदोषाधीनशरीरान्तरग्रहाशङ्का दुर्वारेति परिहरति । **तथाऽपीति** । अस्त्विह संशय इत्येतल्लक्षयति । **पूर्ववदिति** ॥ ८३ ॥

**अनभीष्टफलानां च दुरितत्वात्क्षयो भवेत् ॥**
**नत्वाभ्युदयिकानां स्यादभीष्टत्वात्क्षयस्तव ॥ ८४ ॥**

ननु भविष्यदकरणं मुमुक्षोरैहिकमामुष्मिकं वा नाऽऽद्यः प्रत्यहमुपात्तनित्यादेस्तथाविधाकरणाभावान्न द्वितीयो वर्तमानदेहान्ते मुक्तेरावश्यकत्वात्तत्राऽऽह । **अनभीष्टेति । धर्मेण** पापमपनुदतीति श्रुतेरनिष्टहेतुत्वाद्दुरितानामशेषतो नित्यादिना क्षयेऽपि सुकृतानामभ्युदयौपयिकानामिष्टोपायत्वादविरोधात्तस्मादध्वस्तेरनारब्धातीतागामिसुकृतकृतं देहान्तरमस्य दुर्वारमित्यर्थः ॥ ८४ ॥

**सर्वेषां दुष्टता चेत्स्यान्न विधानाददुष्टता ॥**
**नापि श्येनादितुल्यत्वं फलदोषेण दुष्टता ॥ ८५ ॥**

सुकृतानामपि दुष्कृतवन्मुमुक्षुं प्रत्यनिष्टत्वमविशिष्टमितरस्यापीत्यतिदेशाधिकरणन्यायादिति शङ्कते । **सर्वेषामिति** । विहितस्य विधिसामर्थ्यान्मुमुक्षुं प्रत्यपि न दुष्टतेत्याह । **नेति** । निषिद्धं हि दुष्टं न विहितं तस्य तु भोगादेवाज्ञं प्रति शान्तिरित्यर्थः । ननु विहितत्वं नादुष्टत्वे प्रयोजकं श्येनादौ व्यभिचारात्तत्राऽऽह । **नापीति** । आदिपदेन संदशैकत्रिकादिग्रहः । न हि सोमादीनां श्येनादिना तुल्यत्वमनिषिद्धफलत्वात् । श्येनादेस्तु न हिंस्यादिति फलं निषिद्धम् । तथाच फलस्य निषिद्धत्वेन दुष्टत्वादाधिकार्यभावान्न साधनांशे विधिः । **उक्तं** हि—

"उद्देशाच्च फलत्वेन श्येनादौ न विधेयता ।
भावनाविधिरप्येष फलांशाद्विनिवर्तते" इति ॥

सोमादौ त्वाधिकारिसद्भावादविकलो विधिः । **यथाऽऽहुः**—

"फलतोऽपि च यत्कर्म नानर्थेनानुबध्यते ।
केवलप्रीतिहेतुत्वात्तद्धर्मत्वेन कीर्त्यते" इति ॥

उपपादितं च श्येनाग्नीषोमीयवैषम्यं **चोदनासूत्रे**ऽतः श्येनादेर्विहितत्वमेव नेति कुतो व्यभिचार इत्यर्थः ॥ ८५ ॥

---

१ क. दुष्टतः ।

**ऐकात्म्यज्ञानतश्चेत्स्याद्व्यर्था कर्मप्रधानता ॥**
**प्रधानत्वं च विद्यायास्तमेतमिति दर्शितम् ॥ ८६ ॥**

उक्तोपायवतोऽपि न मुक्तिः कर्मान्तरेण देहान्तरसंभवादिति निरुद्धः सिद्धान्तमेवाऽऽदाय चोदयति । **ऐकात्म्येति** । उक्तोपायानुष्ठातुः शुद्धबुद्धैरैक्यधिया सर्वकर्मध्वस्तेर्मुक्तिरित्यर्थः । तर्हि तद्ध्वंसिनो ज्ञानादेव तत्संभवात्कर्मणां साक्षान्मोक्षहेतुत्वं मानफलहीनमित्याह । **व्यर्थेति** । ज्ञानस्यापि साक्षान्मोक्षसाधनत्वमप्रामाणिकमित्याशङ्क्याऽऽह । **प्रधानत्वं चेति** । विविदिषावाक्येन कर्मणां मुक्तिफलज्ञानेच्छासाधनत्वेन विनियुक्तत्वाज्ज्ञानस्य साक्षान्मोक्षोपायत्वसिद्धिस्**तमेव** विदित्वेत्यादिश्रुतेश्चेत्यर्थः ॥८६॥

**तत उक्तेन मार्गेण कर्तृसंस्कारकारिणाम् ॥**
**ऐकात्म्यज्ञानतात्पर्यं कर्मणामिति निश्चितम् ॥ ८७ ॥**

ननु पुरुषतन्त्रकर्तृत्वाभावादिच्छायास्तत्र कर्मणां न विनियोगोऽत एवेष्यमाणज्ञानेऽपि न तेषां विनियोगः । अतस्तेषां मोक्षोपायत्वमेवात आह । **तत इति** । यज्ञादीनामिच्छाज्ञानयोस्त्वनृतन्त्रयोः साक्षादनन्वयाद्येन केन च यजेतेत्यादिशास्त्रोक्तक्रमेण बुद्धिशुद्धिहेतूनां तृतीयाश्रुत्या मोक्षहेतुज्ञाने पर्यवसानं **पुरुषार्थपादे** निर्णीतमित्यर्थः ॥ ८७ ॥

**तेन निःसारतां बुद्ध्वा कर्मणां वेदतत्त्ववित् ॥**
**ऐकात्म्यज्ञानमन्वेति तपोमुषितकल्मषः ॥ ८८ ॥**

ननु कर्मणां संस्कारद्वारा ज्ञानहेतुत्वे यावज्ज्ञानमनुष्ठानं स्यात्तस्य दृष्टफलत्वादतो विविदिषामंन्यासासिद्धिरत आह । **तेनेति** । तपसा नित्यादिना निरस्ताशुद्धिरधीतवेदो वेदार्थमापातेन जानन्विवेको नास्त्यकृतः कृतेनेत्यादिना कर्मणामनित्यफलतां बुद्ध्वा ततो विरक्तो मुक्त्युपायं ज्ञानमुद्दिश्य श्रवणादि कर्तुं कर्म संन्यस्यतीति विविदिषासंन्याससिद्धिरित्यक्षरार्थः । नहि कर्माणि साक्षान्मोक्षहेतवः किंतु वैराग्यादिद्वारेणातो विरक्तस्य तेन कृत्यमिति न तदनुष्ठानं यानि त्वस्य साक्षादेव साधनानि तानि मोक्षकामो यावज्ज्ञानमनुतिष्ठत्यावृत्त्यधिकरणन्यायादिति भावः ॥ ८८ ॥

**यस्तु जन्मान्तराभ्यासात्क्षपिताशेषकामनः ॥**
**आदावेवाधिकारी स पुनः कर्म न वीक्षते ॥ ८९ ॥**

क्रमसंन्यासेऽपि ब्रह्मचारिणस्तदभावात्कथं **ब्रह्मचर्यादेव** प्रव्रजेदिति श्रुतिस्तत्राऽऽह । **यस्त्विति** । जन्मान्तराभ्यासादतीतजन्मसु नित्याद्यनुष्ठानबाहुल्यादिति यावत् । **आदाविति** प्रथमाश्रमोक्तिः । अधिकारी ज्ञानार्थश्रवणादिशेषे संन्यास इति शेषः । अथ प्रथममेव कर्मत्यजोऽपि पुनः श्रद्धया तदनुष्ठानं स्यादाद्ये वयसि विषयभोगहीनस्यापि यूनस्तदभिलाषप्रवृत्तिवत्तत्राऽऽह । **पुनरिति** ॥ ८९ ॥

१ क. °तुत्वमानं फ° । २ ख. °षक° । ३ ख. °योरनृ° ।

**विरक्तस्य तु जिज्ञासोर्मानान्नान्यव्यपेक्षणम् ॥**
**कर्मापेक्षा हि साध्येऽर्थे सिद्धेऽर्थे तदनर्थकम् ॥ ९० ॥**

तत्र हेतुमाह । **विरक्तस्येति** । ज्ञानस्य फलोपकारित्वेन कर्मापेक्षणीयमाग्नेयादीनां प्रयाजाद्यपेक्षावदित्याशङ्क्याऽऽह । **कर्मेति** ॥ ९० ॥

**वामदेवस्य मैत्रेय्या गार्ग्याश्चैव समञ्जसम् ॥**
**दर्शनं ब्रह्मचर्यादेस्तथा प्राव्राज्यशासनात् ॥ ९१ ॥**

दर्शपूर्णमासयोरिव प्रोक्षणादेः शुद्धिद्वारा कर्मणां ज्ञानस्वरूपोपकार्यङ्गत्वमेवेत्यत्र श्रुतार्थापत्तिं प्रमाणयति । **वामदेवस्येति** । गर्भस्थस्य वामदेवस्य मैत्रेयिगार्ग्योश्चास्मिञ्ज-न्मन्यनुष्ठितकर्माभावेऽपि तत्त्वज्ञानं **तद्धैतत्पश्यन्निति वाक्येन** मैत्रेयीगार्गीब्राह्मणाभ्यां च श्राव्यते तदेतज्जन्मान्तरीयकर्मणां परंपरया ज्ञानहेतुत्वमित्येवमभ्युपगमे युक्तं स्यात् । **उक्तं हि**—

"यान्यतोऽन्यानि जन्मानि तेषु नूनं कृतं भवेत् ।
यत्कृत्यं पुरुषेणेह नान्यथा ब्रह्मणि स्थितिः" इति ॥

तस्मादैहिककर्माभावेऽपि केषांचित्तत्त्वज्ञानान्मुक्तिदृष्टेर्न तत्फलोपकारित्वं तेषामिति भावः । किंच **यदहरेव** विरजेत्तदहरेव प्रव्रजेत् । ब्रह्मचर्यादेव प्रव्रजेदित्यादि ब्रह्मच-र्यादाश्रमान्तराच्च ज्ञानसाधनत्वेन संन्यासविधानं कर्मणां ज्ञानं प्रति फलोपकारित्वं वारयतीत्यर्थापत्त्यन्तरमाह । **ब्रह्मचर्यादेरिति** । तथाशब्दः समुच्चयार्थः ॥ ९१ ॥

**इष्टापूर्तादिहेतूनामानन्त्यात्स्वर्गसिद्धये ॥**
**हेत्वन्तरासंभवोऽतो दुर्ज्ञानः संभवाद्भवेत् ॥ ९२ ॥**

परोक्तोपायवतोऽपि न मुक्तिरर्थान्तरात्स्वभावाद्वा जन्मान्तरसंभवादैक्यज्ञानोपगमे च तस्मादेव मुक्तिः कर्माणि तस्मिन्नारादुपकारकाणीत्युक्तं संप्रत्यर्थान्तरं विवृणोति । **इष्टेति** । इष्टं श्रौतं कर्म पूर्तं स्मार्तमादिपदेन दत्तग्रहः । **उक्तं हि**—

"अग्निहोत्रं तपः सत्यं वेदानां चानुपालनम् ।
आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते ॥
वापीकूपतटाकादिदेवतायतनानि च ।
अन्नप्रदानमारामः पूर्तमित्यभिधीयते ॥
शरणागतसंत्राणं भूतानां चाप्यहिंसनम् ।
बहिर्वेदि च यद्दानं दत्तमित्यभिधीयते" इति ॥

१ ख. °त् । तत्क° । २ क. °तडागादि° ।

एतेषामनारब्धफलानामागामिदेहनिमित्तानामनन्तानां संभवादस्मिञ्जन्मनि सर्वात्मना काम्यं कर्म वर्जयतोऽपि मुमुक्षोर्वर्तमानदेहपाते देहान्तरे स्वर्गादिभोगार्थं हेत्वन्तरासंभवो दुर्ज्ञानः स्यादुक्तरीत्या तत्संभवादित्यर्थः ॥ ९२ ॥

**एवं निषिद्धवाक्येषु[1] यथोक्तं न्यायमादिशेत् ॥**
**नित्यकर्मवचःस्वेवं नातो मुक्तिविनिश्चयः ॥ ९३ ॥**

काम्येष्विव निषिद्धेष्वपि दर्शितं न्यायं दर्शयति । **एवमिति** । निषिद्धं कर्मेति वाक्यं येषु तानि निषिद्धकर्माणि निषिद्धवाक्यानि तेष्विति यावत् । निषिद्धानि हि कर्माण्यनन्तानि तेषामनारब्धफलानामागामिदेहहेतुत्वसंभवादस्मिञ्जन्मनि सर्वनिषिद्धं त्यजतोऽपि वर्तमानदेहपातादूर्ध्वं नरकपातार्थं[2] देहान्तरे हेत्वन्तराभावो ज्ञातुमशक्यः । यथोक्तनिषिद्धकर्मसंभवादित्यर्थः । ननु निषिद्धकर्माणि नित्यनैमित्तिकैरपास्तानि न देहान्तरं प्रयोजयन्त्यत आह । **नित्येति** । नित्यं कर्मेति वचो येषु तानि नित्यकर्मवचांसि नैमित्तिकसहितानि नित्यकर्माणि तेष्वपि काम्यनिषिद्धेष्विव यथोक्तो न्यायो वक्तव्यः पूर्वापरजन्मसु तेषां साकल्येनानुष्ठानासंभवात्तत्र सर्वात्मना पापानिवृत्तेस्तन्निमित्तदेहान्तरसंभवादिह नित्याद्यनुतिष्ठतोऽपि कुतो मुक्तिरित्यर्थः । यतो दर्शितन्यायादागामिदेहस्य हेतुरस्त्यतो यथोक्तोपायवतोऽपि मुक्तिर्निश्चेतुमशक्येति निगमयति । **नात इति** ॥ ९३ ॥

**अनेकजन्मोपात्तस्य पुण्यापुण्यस्य कर्मणः ॥**
**अनन्तदेहहेतोश्च विप्रघातस्य संभवात् ॥ ९४ ॥**

यत्तु कर्मणामैकभविकत्वादुक्तहेतुमतो जन्मान्तरहेतुकर्माभावान्मुक्तिरिति तत्राऽऽह । **अनेकेति** । अनादौ संसारे प्राक्षु जन्मस्वर्जितकर्मणो नानादेहभोग्यफलस्य संभवादैकभविकन्यायानवतारान्न तेन मुक्तिरित्यर्थः । यत्तूपात्तानि सर्वाण्यपि कर्माणि संभूय देहमेकमारभन्ते तद्युक्तमैकभविकत्वमिति तत्राऽऽह । **अनन्तेति** । न हि कर्माणि सर्वाणि संभूय देहमेकमारभेरन् । एकस्य विप्रघातस्यानेकदेहग्रहहेतोः संभवात् ।

"श्वशूकरखरोष्ट्राणां गोजाविमृगपक्षिणाम् ।
चाण्डालपुल्कसानां च ब्रह्महा योनिमृच्छति" इति **स्मृतेः** ।

न च तदतिरेकिणां कर्मणां प्रायणाभिव्यक्तानामेकदेहारम्भकत्वं तस्य तु तत्कालाभिव्यक्तस्यापर्यायमेवानेकविधदेहारम्भकतेति युक्तमैकभविकत्वस्याप्रामाणिकत्वादित्यर्थः ॥ ९४ ॥

**ततः शेषेण वचनात्तथा तद्य इहेत्यतः ॥**
**अनारब्धफलेहानां गम्यते संस्थितिस्ततः ॥ ९५ ॥**

---

१ क. निषेधवा° । २ ख. °तार्थदे° ।

अनेकजन्मार्जितानारब्धकर्मस्थितिनिश्चये **श्रुतिस्मृती** प्रमाणयति । **तत इति** । वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते **विष्वञ्चो** विपरीता नश्यन्तीति **स्मृतेस्तद्य** इह रमणीयचरणा रमणीयां योनिमापद्येरन्नित्यादिश्रुतेश्चानारब्धफलानां कर्मणां स्थितिः सिद्धा ततो न कर्मणामैकभविकत्वेन यथोक्ताधिकारिणो मुक्तिरित्यर्थः ॥ ९५ ॥

**फलं नित्यस्य नापीह दुरितक्षयमात्रकम् ॥**
**फलान्तरश्रुतेः साक्षात्तद्यथाऽऽम्रस्मृतेस्तथा ॥ ९६ ॥**

यत्तु नित्यानामकरणनिमित्तप्रत्यवायनिवृत्तिमात्रफलानां मुमुक्षुभिरनुष्ठितानामपि न देहान्तरारम्भकतेति तत्राऽऽह । **फलमिति** । इहेति शास्त्रस्याधिकारिणो वा निर्देशः । तत्र हेतुमाह । **फलान्तरेति** । नित्यादिकरणेऽकरणे च संसारो दुर्वारः करणे पितृलोकासंवक्तव्यत्वात्कर्मणा पितृलोक इति श्रुतेरकरणे च प्रत्यवायोपहतेर्नरकपातादिति भावः । नित्यादीनां फलान्तरसत्त्वे **स्मृतिरपि** मानमित्याह । **तद्यथेति** ॥ ९६ ॥

**आम्रे निमित्त इत्यादि ह्यापस्तम्बस्मृतेर्वचः ॥**
**फलवत्त्वं समाचष्टे नित्यानामपि कर्मणाम् ॥ ९७ ॥**

**तद्यथा**—"आम्रे फलार्थे निर्मिते छायागन्धावनूत्पद्येते । एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते नो चेदनूत्पद्यन्ते न धर्महानिर्भवति" इति **स्मृतिं** विवेचयति । **आम्र इति** । निमित्ते निहिते रोपित इत्यर्थः । विविच्योक्तस्मृतितात्पर्यमाह । **फलवत्त्वमिति** । अपिशब्दो नैमित्तिकसमुच्चयार्थः काम्यादिदृष्टान्तार्थो वा ॥ ९७ ॥

**उक्तमेव तु संशीतावियं त्वत्र विनिश्चितिः ॥**
**कार्यमारभते शक्तिर्यत्किंचेह व्यवस्थिता ॥ ९८ ॥**

नित्यादिकर्मणां श्रुतिस्मृतिभ्यां फलवत्त्वे सिद्धे फलितमाह । **उक्तमिति** । अन्यतो भवने मानं न चेदित्यत्रोक्तोपायवतः शरीरपातानन्तरं मुक्तिर्न वेति **संशये** निश्चायकासत्त्वं कारणमुक्तम् । अत्र तु नित्यादिकर्मणां फलवत्त्वे श्रुत्यादिसिद्धे यथोक्तसाधनस्यापि पुंसो मुक्तिर्नेति निश्चयः । नित्यादिकर्मणा पितृलोकादिश्रुतेरित्यर्थः । किंच यस्य त्वदुक्तहेत्वनुष्ठानान्मुक्तिस्तस्य तदनुष्ठाने शक्तिरस्ति न वा, नास्ति चेदशक्तस्य कुतस्तदनुष्ठानं कुतो वा मुक्तिरिति मत्वाऽऽद्यं दूषयति । **कार्यमिति** । इहेत्यात्मोक्तिः । शक्तेर्यावद्द्रव्यभावित्वात्संसारवन्मोक्षेऽपि हेत्वनुष्ठानारम्भकत्वादनिर्मोक्षः साधनानुष्ठानशक्तितुल्या हि कर्तृत्वादिशक्तिरित्यसावपि मुक्तौ कर्तृत्वाद्यारभेतेत्यर्थः ॥ ९८ ॥

**यस्मादसति कार्येऽसौ शक्तिरेव न सिध्यति ॥**
**कार्यकारणयोः सिद्धिरन्योन्याव्यतिरेकतः ॥ ९९ ॥**

---

१ क. °र्थोऽर्तार्न° । २ ख. °मेर्व्यक्तत्वा° ।

ननु शक्तेरात्मनि सत्त्वेऽपि न कार्यारम्भकत्वं कार्यमनारभ्यापि कारणस्थितिसंभवादत आह । **यस्मादिति ।** कार्यगम्यत्वाच्छक्तेर्मुक्तौ तदभावे शक्तिरेव न सिध्येत्तस्माच्छक्तिसत्त्वे कार्यसत्त्वमित्यर्थः । यत्तु कार्यमनारभ्यापि कारणं तिष्ठतीति तत्राऽऽह । **कार्येति ।** अन्योन्याधीनसिद्धिके कार्यकारणे तयोरन्यतराभावे न सिध्यतस्तथा च कार्याभावे हेत्वस्थितेर्मुक्तौ शक्तितद्वतोरवस्थाने कार्यमपि तिष्ठेदित्यर्थः ॥ ९९ ॥

**कर्तृभोक्तृस्वरूपेऽतो ह्यभ्युपेतेऽन्तरात्मनि ॥**
**न मुक्त्याशाऽस्ति पूर्वोक्तन्यायमार्गसमाश्रयात् ॥ १०० ॥**

कर्तृत्वादिशक्तिमतो यतस्तत्कार्यप्रवाहाविच्छेदोऽतः कर्तृभोक्तृरूपे प्रतीच्युपगते मोक्षेच्छा तुच्छेति मत्वोपसंहरति । **कर्त्रिति ।** मा काङ्क्षीस्तर्हीत्यादिनोक्तं स्मारयति । **पूर्वोक्तेति ॥ १०० ॥**

**सापराधत्वतो मुक्तिः संदिग्धैव प्रसज्यते ॥**
**द्विजातीनां खरादेस्तु त्वदुक्त्या स्यादसंशयात् ॥ १०१ ॥**

उक्तहेत्वनुष्ठाने मुमुक्षुः शक्तोऽशक्तो वेति कल्पौ निरस्य कल्पितोपाये दोषान्तरमाह । **सापराधत्वत इति ।** त्रैवर्णिकानां कर्माधिकृतानामिह यथोक्तं हेतुमनुतिष्ठतामपि किंचिद्विहिताकरणनिषिद्धसेवारूपप्रामादिकापराधसाहित्यसंभवात्ततो जन्मान्तरस्य संभावितत्वान्मुक्तिस्तेषां संदिग्धैव स्यादित्यर्थः । किं चानधिकृतस्य रासभादेर्निश्चितैव सा स्यात् । कर्मणामैकभविकत्वादेतद्देहपाते देहान्तरग्रहे हेत्वभावादित्याह । **खरादेरिति ।** त्वदुक्त्येत्यैकभविकत्वविषया परोक्तिरुच्यते ॥ १०१ ॥

**ननूक्तं कर्मशेषत्वमात्मनो यागकर्तृता ॥**
**नैतदेवं यतो नैतत्कर्माङ्गं ज्ञानमिष्यते ॥ १०२ ॥**

परोक्तमुक्तिहेतुनिरासेन ज्ञानस्यैव तद्धेतुत्वमुक्त्वा काण्डयोरधिकार्यादिभेद उक्त इदानीमात्मनः कर्मशेषत्वादित्यत्रोक्तमनुवदति । **नन्विति ।** आत्मज्ञानस्येति शेषः । केन द्वारेणास्य तच्छेषत्वं तत्राऽऽह । **आत्मन इति ।** लौकिकं वैदिकं वाऽऽत्मज्ञानं कर्माङ्गमिति विकल्प्याद्यमपाकरोति । **नेतदिति ।** लौकिकात्मज्ञानस्य कर्माङ्गत्वान्न तन्मुक्तिहेतुरित्येतदेव नेति प्रतिज्ञायां हेतुमाह । **यत इति ।** एतच्छब्दो लौकिकमात्मज्ञानमाह । अतस्त्वदुक्तमसदिति शेषः ॥ १०२ ॥

**कर्तृत्वमात्मनः सिद्धं यतोऽन्यत्रापि यागतः ॥**
**निःशेषकर्मकारित्वात्तस्मादुक्तमपेशलम् ॥ १०३ ॥**

यत्तु यागकर्तृत्वादात्मनस्तद्वारा तज्ज्ञानस्य कर्माङ्गतेति तत्राऽऽह । **कर्तृत्वमिति ।** व्यावहारिकात्मनो लौकिकवैदिकक्रियासाधारण्याद्यागादेरन्यत्रापि कर्तृत्वं यतो दृष्टमत-

१ ख. ॰तानां य॰ । २ ख. ॰र्तृतः ॥ नै॰ ।

स्तस्य जुह्वादिवदव्यभिचरितक्रतुसंबन्धद्वारत्वाभावान्न तद्द्वारा तद्धियस्तदङ्गताऽनन्यसाधारणत्वे सत्युपकारकमङ्गमित्यङ्गीकारादतो लौकिकात्मज्ञानस्य कर्माङ्गत्वमयुक्तमित्यर्थः ॥ १०३ ॥

**न ह्यात्मज्ञानविरहात्कर्म कर्तुं न शक्यते ॥**
**पर्णज्ञानमृते यद्वज्जुहूर्लातुं न शक्यते ॥ १०४ ॥**

अथ वैदिकात्मज्ञानस्य कर्माङ्गत्वं तदाऽपि किमशनायाद्यतीतात्मज्ञानं तदङ्गं किंवा देहातिरिक्तात्ममात्रज्ञानं नाऽऽद्य इत्याह । **न हीति ।** आत्मशब्देनाशनायाद्यतीतमपेतब्रह्मक्षत्रादिभेदमसंसारिवस्तु वेदान्तवेद्यं निगद्यते । प्रत्युत कर्त्राद्युपमर्दित्वेन विरोधित्वादिति शेषः । उक्तात्मज्ञानं विना कर्म कर्तुं नाशक्यमित्यत्र वैधर्म्यदृष्टान्तमाह । **पर्णेति ।** लातुमादातुमिति यावत् ॥ १०४ ॥

**देहान्तराभिसंबन्धी नत्वात्माऽस्तीत्यजानतः ॥**
**विवेकिनो न युक्तेयं प्रवृत्तिः पारलौकिकी ॥ १०५ ॥**

द्वितीयं व्यतिरेकमुखेनोत्थापयति । **देहान्तरेति ।** अस्यार्थः । देवदेहोपभोगार्हस्वर्गफले कर्मणि तद्देहयोग्यमात्मानमविदित्वा प्रेक्षावतो न प्रवृत्तिः सा चेयमनुपपत्तिर्व्यतिरेकज्ञानस्य तस्मिन्नङ्गत्वं गमयतीति ॥ १०५ ॥

**एवं तर्हि न कर्माङ्गं कर्तुश्चेष्टैकहेतुतः ॥**
**फलार्थिवन्न च ज्ञानं क्रियाङ्गत्वेन चोदितम् ॥ १०६ ॥**

देहातिरिक्तोऽप्यात्मा कर्ताऽकर्ता वाऽऽद्ये तज्ज्ञानं न कर्माङ्गं निःशेषकर्मकारित्वादित्यत्र कर्तुः साधारणत्वोक्तेस्तद्द्वारा तस्य तदङ्गत्वानुपपत्तेरित्यभिप्रेत्याऽऽह । **एवं तर्हीति ।** द्वितीयेऽपि तद्धीर्न कर्माङ्गं न ह्यात्मज्ञानविरहादित्युक्तन्यायात्कर्तुरेव कर्ममात्रहेतुत्वादित्याह । **एवं तर्हीति ।** सर्वप्रवृत्तिसाधारणस्याक्रियाङ्गत्वे दृष्टान्तमाह । **फलेति ।** फलार्थी रागी फलमर्थो विषयोऽस्येति व्युत्पत्तेः । स हि कर्तुः सर्वप्रवृत्तिहेतुरपि न कर्माङ्गं साधारणत्वात्तथा कर्तृज्ञानमित्यर्थः । यद्वा फलार्थी भोक्ता तस्य सर्वप्रवृत्तिहेतोर्ज्ञानं वैदिके कर्मण्यनङ्गं तस्य तदुपकारित्वेऽप्याधानवदनङ्गत्वसंभवात्तथा कर्तृज्ञानमपीत्यर्थः । किंच देहातिरिक्तात्मज्ञानस्य कर्माङ्गत्वे श्रुतिरर्थापत्तिर्वा मानं नाऽऽद्य इत्याह । **न चेति ।** विद्वान्यजत इत्यादौ तु हेत्वादिज्ञानानुवादेन यागविधिर्विवक्षितो नाऽऽत्मज्ञानस्य कर्माङ्गत्वविधिर्वाक्यस्य कर्मप्रकरणस्थस्याऽऽत्मज्ञानाविषयत्वादिति भावः ॥ १०६ ॥

**नन्वेवमपि सिद्धः स्यात्प्रवेशः सर्वकर्मसु ॥**
**आत्मज्ञानस्य सामर्थ्यान्न नाम विधिसंश्रयात् ॥ १०७ ॥**

देहेतरात्मधियं विना पारलौकिकप्रवृत्त्यनुपपत्त्या तज्ज्ञानस्य तदङ्गतेति द्वितीयं

शङ्कते । **नन्विति** । देहान्तराभिसंबन्धीत्यत्रोक्तमेव चोद्यं प्रसङ्गादिहाऽऽनीतम् । विध्यभावात्तदवष्टम्भादात्मज्ञानस्य यदि नाङ्गत्वं मा नाम भूदेवमपि पारलौकिकप्रवृत्त्यनुपपत्त्या सर्वेषु कर्मसु तस्य प्रवेशः सिद्धः स्यादिति योजना । उक्तानुपपत्तिः सामर्थ्यम् ॥ १०७ ॥

**नैतदेवमविज्ञाततत्त्वस्यैवेह कर्मसु ॥**
**अनात्मार्थविशिष्टस्य ह्यधिकारित्वहेतुतः ॥ १०८ ॥**

अर्थापत्त्या हि व्यतिरिक्तात्मधियोऽङ्गत्वं साध्यते । सा च विशिष्टविषया केवलविषया वाऽऽद्ये विशिष्टस्य कल्पितत्वान्न साऽऽत्मधीः स्यात्तेन तस्याः कर्माङ्गत्वेऽपि नाऽऽत्मधियस्तदङ्गतेत्याह । **नैतादिति** । द्वितीयं दूषयति । **अविज्ञातेति** । अज्ञानविशिष्टो हि कर्मस्वधिकारी न केवलो मुक्तवदतो विशिष्टात्मधियस्तदङ्गत्वेऽपि न केवलात्मधीस्तदङ्गं मानाभावात्सा तु मुक्तिहेतुरिति भावः। अज्ञस्य कर्माधिकारे गमकमाह । **अनात्मेति** । आत्मा हि देहाभ्यामवच्छिद्यतेऽनवच्छिन्नस्याधिकारायोगात्तदवच्छेदस्य चाज्ञानाधीनत्वं वक्ष्यते । तथा चाज्ञस्यैव कर्माधिकार इति भावः ॥ १०८ ॥

**स्वरूप आत्मनः स्थानमाहुर्निःश्रेयसं बुधाः ॥**
**ततोऽन्येनाभिसंबन्ध आत्मनोऽज्ञानहेतुकः ॥ १०९ ॥**

इतश्च केवलात्मधियो मुक्तिफलत्वान्न कर्माङ्गतेत्याह । **स्वरूप इति** । आत्मनो निःश्रेयसं स्वरूपावस्थानम् । तच्चाऽऽत्मज्ञानेनापाकृताज्ञानस्य सिध्यति । अतो ज्ञानस्याज्ञाननिरासद्वारा मुक्तिहेतुत्वान्न कर्माङ्गतेत्यर्थः । ज्ञानस्यापवर्गोपायत्वेऽप्यनात्मार्थविशिष्टस्येत्यात्मनः स्वाज्ञानकृतमनात्मवैशिष्ट्यमुक्तमयुक्तम् । तस्याविद्यासंबन्धवत्तत्प्रयुक्तिं विनोपपत्तेरिति चेत्तत्राऽऽह। **तत इति**। अविद्यातोऽन्येनानात्मनाऽऽत्मनः संबन्धोऽविद्यानिबन्धनोऽसङ्गस्य स्वतस्तदयोगादविद्यासंबन्धस्तु न निमित्तमपेक्षतेऽविद्यावदनादित्वात्स्वपरानिर्वाहकत्वाच्चेति भावः ॥ १०९ ॥

**आगन्त्वनात्मरूपं तत्स्वसंवित्त्यैव गम्यताम् ॥**
**नातोऽवाप्तपुमर्थस्य स्वरूपावस्थितस्य तु ॥ ११० ॥**

किंचानात्माऽविद्याधीनः कार्यत्वात्सर्पवदित्यनुमानात्तत्संबन्धस्यापि तदधीनत्वमित्याह । **आगन्त्विति** । किंचानात्मस्वरूपं साक्षिवेद्यम् । न च तत्संबन्धं विना तद्वेद्यत्वम्। न च विना विद्यां संगतिरित्यविद्याधीनत्वमनात्मतत्संबन्धयोरित्यभिप्रेत्याऽऽह। **तदिति** । तयोरविद्याधीनत्वोक्तिफलमाह । **नात इति** । हेत्वनुष्ठानादृते कुतोऽवाप्तपुमर्थत्वमत आह । **स्वरूपेति** ॥ ११० ॥

**कर्तृभोक्त्रादिरूपत्वं प्रत्यगज्ञानतोऽन्यतः ॥**
**कर्म तत्फलभोगश्च बाह्यानि करणानि च ॥ १११ ॥**

कूटस्थानन्दे स्वरूपे चेदेष स्थितस्तत्कथमस्यान्यथा प्रथेत्याशङ्क्याऽऽह । **कर्त्रिति ।** अन्यतो नेत्यन्वयः । नन्वज्ञानकृतं कर्तृत्वादीत्ययुक्तं चेतनत्वादात्मा स्वारस्येनैव कर्मण्यैश्वर्यं प्रतिपद्य कर्ता भोक्ता च भविष्यति तत्किमज्ञानेनेत्याशङ्क्याधिकारित्वादीनां तदधीनत्वसिद्ध्यर्थमधिकारकारणान्यनुक्रामति । **कर्मेत्यादिना ।** कर्म तावत्कर्मण्यधिकारे निमित्तं **पुण्यो** वै पुण्येनेत्यादि**श्रुतेः** कर्मफलभोगश्च तत्कारणमनुपभुक्ततत्फलस्य तद्रागद्वारा तत्रानधिकारात्**स्वर्गकामो** यजेतेत्यादिना सकामस्यैव तद्विधानाद्वागादिकर्मेन्द्रियाणि श्रोत्रादिज्ञानेन्द्रियाणि च तद्धेतवस्तेषामन्यतमस्यापि वैकल्ये कर्माधिकारानङ्गीकारादन्धपङ्ग्वादयो नरा गृहस्थत्वं न शक्ष्यन्ति कर्तुमित्युक्तत्वादित्याह । **बाह्यानीति ।** मनोऽपि तन्निदानम् । **यस्यै** देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेदिति **श्रुते**रिति चकारार्थः ॥ १११ ॥

**ततोऽपि बाह्यो देहश्च जातिस्तत्समवायिनी ॥**
**जरामरणजन्मानि देहाधिकरणानि च ॥ ११२ ॥**

न च तान्यनाश्रयाणि कर्मणि व्याप्रियन्ते तेन तदाश्रयस्य देहस्यापि तत्र हेतुत्वमित्याह । **ततोऽपीति ।** ब्राह्मणत्वादिजातिरपि तद्धेतु**र्ब्राह्मणो** यजेतेत्यादि**श्रुते**रित्याह । **जातिरिति ।** जन्मजरामरणान्यपि तन्निमित्तानि तान्यधिकृत्य जातकर्मादिविधेरित्याह । **जरेति** ॥ ११२ ॥

**दारपुत्रधनादीनि देहबाह्यानि यानि च ॥**
**कर्माधिकारहेतूनि स्वतोऽस्यानधिकारिणः ॥ ११३ ॥**

दारपुत्रधनान्यपि देहबाह्यानि तत्प्रयोजकानि सभार्यस्य जातपुत्रस्य धनवतोऽग्न्याधानादित्याह । **दारेति ।** अधिकारोपयुक्तानुक्तसंभावितसमस्तवस्तुसंग्रहार्थमादिपदम् । अनुक्रान्तान्यधिकारकारणानि निगमयति । **कर्मेति ।** भावप्रधानो हेतुशब्दः कर्मण्यधिकारे हेतुत्वं येषां कर्मादीनां तानि तथेति यावत् । चेतनत्वादात्मनः स्वत एवाधिकारसिद्धेरुक्तानि[2] तत्कारणानि व्यर्थानीत्याशङ्क्याऽऽह । **स्वत इति ।** असङ्गाविक्रियानवच्छिन्नस्य स्वतोऽनधिकारादनात्मसंबन्धादेवास्याधिकारादुक्तानि[3] तत्कारणानि युक्तानीति भावः ॥ ११३ ॥

**अभिन्नस्याऽऽत्मनो मोहाद्भेदकानीति मन्वते ॥**
**विशेषणं स्वरूपं वा नान्योन्यस्य स्वतो यतः ॥ ११४ ॥**
**लोके दृष्टं विनाऽविद्यां मोहाद्दृष्टं तु सर्वतः ॥**
**चोरोऽसौ मामभिप्रैतीत्येवं चोरविशेषणम् ॥ ११५ ॥**

---

१ क. कर्त्रादी° । २ ख. °नि कार° । ३ ख. °नि कार° ।

**स्थाणुं संभावयत्यज्ञो न तु दृष्टं तमो विना ॥**
**नन्वविद्यामृतेऽप्यन्यदृष्टमन्याविशेषणम् ॥ ११६ ॥**

स्वतश्चेदात्माऽनधिकारी कथमन्यतोऽपि तथा । न हि वह्निर्वायुसंबन्धादनुष्णो भवतीत्याशङ्क्याऽऽह । **अभिन्नस्येति ।** प्रतीचो निर्विशेषस्य स्वतोऽनधिकृतस्यापि यथोक्तानि साधनानि कर्तृत्वादिविशेषापादकानीति वादिनो मन्यन्ते न हि स्वतोऽप्रकाशस्य घटस्य दीपवशात्प्रकाशीभवतोऽस्ति काचिदनुपपत्तिरित्यर्थः । वस्तुतः सविशेषत्वं व्यावर्तयति । **मोहादिति ।** विरोधोऽप्येतेन निरस्तः । कर्मादीनामात्मनि स्वतो भेदकत्वसंभवे किं मोहेनेत्याशङ्क्याऽऽह । **विशेषणमिति ।** अन्यस्तावदन्यस्य स्वतो न विशेषणं स्वरूपं वा चैत्रमैत्रादिष्वदृष्टेर्न खल्वविद्यां विनाऽन्यदन्यस्य विशेषणादि लोके दृष्टं तस्मात्कर्माद्यपि मोहादेवाऽऽत्मनो विशेषणमित्यर्थः । अन्यदन्यस्य विशेषणं मोहादपि न दृष्टमित्याशङ्क्याऽऽह । **मोहादिति ।** सर्वतः सर्वत्र रजतमित्यादाविति यावत् । दृष्टमन्यदन्यस्य विशेषणमिति शेषः । मोहादन्यदन्यस्य विशेषणमित्युक्तं दृष्टान्तेन स्पष्टयति । **चोरोऽसाविति ।** यो हि पुरुषः पुरः स्थितं स्थाणुं याथातथ्येन न बुध्यते स पुनरसौ चोरो मामभिप्रैत्यागच्छतीति चोरेण तं विशिनष्टि । यस्तु पुरोवर्तिनं स्थाणुं स्थाणुत्वेन वेद स तत्त्वेन न तु विशिनष्टि । अतोऽन्वयव्यतिरेकाभ्यां स्थाणोर्मोहादेव पुरुषविशेषणत्वं तथाऽन्यत्रापीत्यर्थः । न तु दृष्टं तमो विनेत्यत्र व्यभिचारं चोदयति । **नन्विति ॥** ११४ ॥ ११५ ॥ ११६ ॥

**औपगवो नृपहयस्तथा श्येनचिदादयः ॥**
**नैतदेवं यतस्तत्र नैवं प्रत्यक्तयेष्यते ॥**
**अन्येनान्यस्य संबन्धः कृशोऽहमितिवत्क्वचित् ॥ ११७ ॥**

तामेव दृष्टिं व्याचष्टे । **औपगव इति ।** उपगोरपत्यमित्यत्रोपगुः प्रकृत्यर्थोऽपत्यप्रत्ययार्थस्य विशेषणम् । न च तत्र श्रोतुर्वक्तुश्चाज्ञानं हेतुरस्ति नृपहय इत्यत्रापि हयस्य नृपो विशेषणम् । न चात्राज्ञानं प्रयोजकमेवं श्येनचिदग्निचिद्दण्डीत्यादयो विशेषणविशेष्यभावा विनाऽप्यविद्यामुपलभ्यन्तेऽतो नाज्ञानादृतेऽन्यदन्यस्य विशेषणं दृष्टमिति न श्लिष्टमित्यर्थः । त्वदुक्तमुदाहरणं न मदुक्तपक्षसदृशं किंतु विसदृशमिति दूषयति । **नैतदेवमिति ।** वैसादृश्यमेव विशदयति । **यत इति ।** यथा कृशोऽहमित्यात्मनोऽगृहीतभेदं कार्श्यं तद्विशेषणं तथा त्वदुक्तप्रकृत्यर्थप्रभृतीनि विशेषणानि विशेष्यादृष्टभेदानि न तस्य विशेषणानि न हि त्वदिष्टे दृष्टान्ते क्वचिदपि विशेषणं प्रत्यक्तया विशेष्यादभेदेन दृष्टम् । किंतु भिन्नेनैव विशेष्येण भिन्नस्य विशेषणस्य संबन्धस्तत्रेष्टोऽतो वैधर्म्यामित्यर्थः ॥ ११७ ॥

---

१ ख. °षम्यादित्य° ।

**उपग्वादिर्हि पित्रादिः प्रकृत्यर्थो विशेषणम् ॥**
**भिन्नस्यौपगवापत्यप्रत्ययार्थस्य गम्यते ॥ ११८ ॥**

नन्वौपगवादिष्वदृष्टभेदयोरेव तद्भावः । विमतो विशेषणविशेष्यभावो भेदाग्रहपूर्वको विशेषणविशेष्यभावत्वात्कृशोऽहमितिवदित्यनुमानादत आह । **उपग्वादिर्हीति ।** औपगव इत्यत्र प्रकृत्यर्थः प्रत्ययार्थस्य विशेषणम् । न च तावददृष्टभेदौ प्रकृतिप्रत्ययाभ्यां तद्भेददृष्टेः समासेऽप्यपुनरुक्तानेकशब्दार्थभेदावगमात् । चयनचेत्रोरपि कर्मकर्त्रोः स्फुटो भेदो दण्डीत्यादौ तु प्रत्यक्षो भेदः । अतस्त्वदिष्टदृष्टान्तेषु दृष्टभेदयोरेव विशेषणविशेष्यत्वधीरिति भेदग्रहबाधिताऽनुमेत्यर्थः ॥ ११८ ॥

**नैवं कर्त्रादिदेहान्ताञ्जात्यादीन्देहगांस्तथा ॥**
**व्यतिरेकतया कश्चिद्विशिनष्टीह मानवः ॥ ११९ ॥**

अपत्यादेरुपग्वादिवदात्मविशेषणान्यपि ततो दृष्टभेदानीति कुतो वैषम्यमित्याशङ्क्याऽऽह । **नैवमिति ।** कर्ताऽहंकारः स येषामादिस्ते कर्त्रादयस्तान्देहावसानान्भावानिति यावत् । तेष्वात्मनि च भेदधीपूर्वकं विशेषणविशेष्यत्वं मनुष्यगोचरो नेति सूचयति । **मानव इति ।** इहेत्यविद्यादशोक्तिः ॥ ११९ ॥

**यत आत्मतयैवैतैर्विशिनष्ट्यविशेषणम् ॥**
**करोम्यन्धो द्विजो बालो दग्धश्छिन्नोऽहमित्यपि ॥ १२० ॥**

अज्ञातभेदस्य देहादेरात्मनश्च विशेषणविशेष्यत्वमित्यत्र स्वानुभवं प्रमाणयति । **यत इति ।** एतैर्देहादिभिरनात्मभिः स्वतो निर्विशेषणमात्मानमभेदेन यतो लोको विशिनष्टयतो विशेष्यादृष्टभेदं विशेषणं तत्र युक्तमित्यर्थः । तदेवाभिनयति । **करोमीति ।** देहेन्द्रियाहंकाराणामात्मनोऽदृष्टभेदानां तद्विशेषणत्वदृष्टेस्तेष्वात्मनि च तत्त्वं भेदाग्रहपूर्वकमन्यथाऽनुभवविरोधादिति भावः ॥ १२० ॥

**नाविद्यामन्तरेणैषां विशेषणविशेष्यता ॥**
**इयमेवाऽऽत्मनो ज्ञेया कर्माधिकृतिकारणम् ॥ १२१ ॥**

उक्तरीत्या कर्त्रादीनामात्मविशेषणत्वे सिद्धमर्थमाह । **नाविद्यामिति ।** कर्त्रादीनामज्ञातभेदानां पुंसः स्थाणुविशेषणत्ववदात्मविशेषणत्वस्याविद्याकृतत्वेऽपि प्रकृते कर्माधिकारे किमायातमिति तत्राऽऽह । **इयमेवेति ।** यस्माददृष्टभेदयोरात्मानात्मनोरविद्याधीना विशेषणविशेष्यतैवाऽऽत्मनोऽधिकारे हेतुस्तस्मादविद्यावतस्तत्राधिकारिता ज्ञेयेत्यर्थः ॥ १२१ ॥

**अधिक्रियन्ते येनैते बृहस्पतिसवादिषु ॥**
**अतोऽनवगतैकात्म्यकर्माधिकृतिहेतुतः ॥ १२२ ॥**

इतश्चाविद्यावान्कर्माधिकारीत्याह । **अधिक्रियन्त इति ।** येन हेतुनैते ब्राह्मणादयो

बृहस्पतिसवादिषु स्वामित्वेन संबध्यन्ते तदधिकृतिकारणमियमेवाविद्याकृता विशेषणविशेष्यतेति योजना। ब्राह्मण्याद्यभिमाननिबन्धनो हि कर्माधिकारोऽन्यथा **सर्वः** सर्वाधिकारीति **ब्राह्मणो** बृहस्पतिसवेन यजेतेत्यादिविशेषोपदेशो न स्यात्। आविद्यश्चाभिमानस्तस्मादविद्वान्कर्माधिकारीति भावः। तत्र फलितमाह। **अत इति**। अनवगतमैकात्म्यं येन तस्याज्ञस्य कर्मस्वधिकाराद्धेतोस्तज्ज्ञानस्य कर्माङ्गत्वेऽपि न शुद्धात्मज्ञानस्य तदङ्गतेत्यर्थः॥ १२२॥

**श्रुत्यादिमानप्रमितप्रत्यग्याथात्म्यनिष्ठितम्॥**
**सर्वकर्मसमुच्छेदि ज्ञानं वेदान्तमानजम्॥ १२३॥**

ननु तदपि कर्माङ्गमात्मज्ञानत्वादितरवत्तत्राऽऽह। **श्रुत्यादीति**। आदिशब्देन स्मृतीतिहासपुराणविद्वदनुभवानुमानादि गृह्यते यद्वा लिङ्गवाक्यप्रकरणस्थानसमाख्याः श्रुतिलिङ्गादिसूत्रोक्तास्तैः प्रमितं यत्प्रतीचो याथात्म्यमुत्खाताखिलदुःखमनतिशयानन्दैकतानं तन्निष्ठितं तद्विषयं यद्वेदान्तवाक्यजं ज्ञानं तन्न कर्माङ्गं तन्निवर्तकत्वात्। **क्षीयन्ते** चास्य कर्माणीति **श्रुतेर्ज्ञानाग्निः** सर्वकर्माणीत्यादि**स्मृतेश्च**ेत्यर्थः॥ १२३॥

**तन्मूलाज्ञानघातित्वाज्ज्ञानस्येह प्रसिद्धितः॥ १२४॥**
**न तु प्रवर्तकं तस्मान्नार्थवादत्वसंभवः॥**
**फलोक्तेः पर्णमय्यां तु युज्यते कर्मशेषतः॥ १२५॥**

ननु वाक्यीयमपि ज्ञानमज्ञानमेवापमार्ष्टुमीष्टे न कर्म ज्ञानाज्ञानयोरेव विरोधप्रसिद्धेस्तत्राऽऽह। **तन्मूलेति**। अज्ञानं कर्तृत्वाद्यभिमानमुपनयत्कर्माणि निर्वर्तयत्यतो ज्ञानं तदपनुदत्तन्मूलान्यपि तानि निरुणद्धीत्यर्थः। ननु तदुत्पन्नमज्ञानं निवर्तयत्यनुत्पन्नं वा नाऽऽद्योऽविरोधेनोत्पन्नत्वाद्विरोधे चानुत्पत्तेः। नेतरोऽनुत्पन्नस्यासतो निवर्तकत्वायोगादत आह। **ज्ञानस्येति**। लोकवेदयोर्ज्ञानस्य स्वोत्पत्तिनान्तरीयकत्वेनाज्ञाननिवर्तकत्वप्रसिद्धेर्दीपस्य च तमोनिवर्तकत्वदृष्टेर्नास्ति चोद्यमित्यर्थः। ज्ञानस्याज्ञाननिवर्तकत्वोपपादनोपयोगमाह। **नत्विति**। सर्वकर्मप्रवृत्तिनिमित्तनिवर्तकत्वान्न केवलात्मज्ञानस्य कर्माङ्गतेति भावः। यस्मात्तस्य न कर्माङ्गता तस्मादनन्यशेषत्वान्नार्थवादस्तत्फलश्रुतिरिति फलितमाह। **तस्मादिति**। यत्तु पर्णमय्यां फलोक्तिवदिति तत्राऽऽह। **पर्णमय्यां त्विति**। युज्यते फलोक्तेरर्थवादत्वमिति शेषः। तत्र हेतुमाह। **कर्मेति**। पर्णताया जुहूद्वारा कर्मानुप्रवेशात्तत्फलेनैव फलवत्त्वसंभवात्पृथक्फलश्रुतेरर्थवादता युक्तेत्यर्थः॥ १२४॥ १२५॥

**यत्त्वचोदि त्वयाऽपीयमभ्युपेयाऽर्थवादता॥**
**अनिच्छताऽपि विध्यर्थमत्र प्रतिविधीयते॥ १२६॥**

१ ख. °दतोति।

निरस्तमेवाऽऽधिक्याभिधित्सयाऽनुद्रवति । **यत्त्विति** । मयैवेतिदृष्टान्तार्थोऽपिशब्दः । वेदान्तेषु शेषिविध्यभावे कुतो ज्ञाने फलश्रुतेरर्थवादतेत्याशङ्क्याऽऽह । **अनिच्छताऽपीति** । अधिकं समाधिं प्रतिजानीते । **अत्रेति** ॥ १२६ ॥

**इच्छाम्येवार्थवादत्वं वचसोऽन्यपरत्वतः ॥**
**यथाश्रुतार्थवादित्वान्न त्वभूतार्थवादता ॥ १२७ ॥**

ज्ञाने फलश्रुतेरर्थवादत्वमात्रं वा साध्यतेऽभूतार्थवादत्वं वा तत्राऽऽद्यमङ्गीकरोति । **इच्छामीति** । ब्रह्म वेदेत्यादिफलश्रुतेरर्थवादत्वाङ्गीकारे हेतुमाह । **अन्येति** । महावाक्यं हि प्रधानं परापरयोरैक्यविषयतया फलवत्त्वादितरत्तत्संनिधावाम्नातं तदङ्गं तज्ज्ञानहेतुप्रवृत्तिशेषत्वादित्यर्थः । द्वितीयं दूषयति । **यथेति** ॥ १२७ ॥

**इज्येते स्वर्गलोकाय दर्शादर्शौ यथा तथा ॥**
**न त्वभूतार्थवादित्वं पापश्लोकाश्रुतेर्यथा ॥ १२८ ॥**

भूतार्थवादित्वं चेन्नार्थवादत्वमेव स्यादतिप्रसङ्गादित्याशङ्क्याऽऽह । **इज्येते इति** । **स्वर्गाय** हि लोकाय दर्शपूर्णमासाविज्येते इति दर्शपूर्णमासप्रकरणाम्नातस्य तच्छेषतयाऽर्थवादस्यापि भूतार्थत्ववद्ब्रह्म वेदेत्यादेरपि भूतार्थत्वमर्थवादत्वं च स्यादित्यर्थः । अपापश्लोकश्रुतिवदभूतार्थत्वमेव कुतो ब्रह्म वेदेत्यादेर्न स्याद्विपरीतोदाहरणसंभवादित्याशङ्क्याऽऽह । **नत्विति** । श्रौतस्य फलस्य ज्ञानानन्तरमनुभूयमानस्याविरुद्धत्वादिति भावः ॥ १२८ ॥

**कुतः प्राप्तं फलमिति प्रत्यक्षं ह्यात्मधीफलम् ॥**
**यतोऽवगम्यते तेन ज्ञानं कर्म न ढौकते ॥ १२९ ॥**

**ब्रह्म** वेदेत्यादीनां विद्यमानार्थत्वे मानान्तरं वाच्यं **दर्शपूर्ण**मासाभ्यां स्वर्गकामो यजेतेतिप्रधानवाक्यसिद्धस्य स्वर्गाय हीत्याद्यर्थवादेनानुवादान्न चात्र मानान्तरमित्यनुवादासिद्धिरित्याक्षिपति । **कुत इति** । विद्वत्प्रत्यक्षसिद्धं फलं फलश्रुतिभिरनूद्यत इत्याह । **प्रत्यक्षं हीति** । तासामनुवादित्वमुपेत्य फले मानान्तरमुक्तम् । संप्रत्युक्तहेतोरपि ज्ञानस्य न कर्माङ्गतेत्याह । **यत इति** । ज्ञानफलं विद्वत्प्रत्यक्षेण यतोऽवगम्यतेऽतः शुद्धात्मधीर्न कर्म स्पृशति । न हि फलवतो दर्शादेरन्यशेषतेत्यर्थः ॥ १२९ ॥

**प्रवृत्तेः प्रतिकूलत्वान्मुक्तिं प्रति विरोधतः ॥**
**मुमुक्षोरधिकारोऽतो निवृत्तौ सर्वकर्मणाम् ॥ १३० ॥**

केवलात्मधीर्मुक्तेरभ्युदयस्य च कर्म हेतुरित्युक्ते साधनभेदे काण्डयोरार्थिकोऽधिकारिभेद उक्तस्तत्रैव युक्त्यन्तरमाह । **प्रवृत्तेरिति** । या मुमुक्षोः श्रवणाद्यावृत्तिस्तस्या विरोधीनि कर्त्राद्यभिमानपूर्वाणि कर्माण्यतो न तेभ्यो मुमुक्षुः स्पृहयतीत्यर्थः । किंच

---

१ क. °दस्त° ।

तस्येष्टमुक्तिविरुद्धानि कर्माणि बन्धफलत्वात् "**धर्मरज्ज्वा** व्रजेदूर्ध्वं पापरज्ज्वा व्रजेदधः" इति **स्मृते**रतो न तेषु तस्य प्रवृत्तिरित्याह । **मुक्तिमिति** । कुत्र तर्हि तस्य प्रवृत्तिस्तत्राऽऽह । **मुमुक्षोरिति** । कर्मस्वधिकारायोगात्तत्त्यागद्वारा ज्ञानमुद्दिश्य श्रवणादिष्वधिकार इत्यर्थः ॥ १३० ॥

**प्रवृत्तिहेतुप्रध्वस्तेर्न प्रवृत्तौ कथंचन ॥**
**नाभिप्रेतपुरप्राप्तिसमर्थं सुगमं शिवम् ॥ १३१ ॥**

ननु तान्यनुतिष्ठन्नेवान्तराऽन्तरा कर्माण्यपि सोऽनुतिष्ठतु तन्नास्य संन्यासिता नेत्याह । **प्रवृत्तीति** । रागादिः प्रवृत्तिहेतुः स मुमुक्षोर्निःशेषतो ध्वस्तो निरस्तरागादिमलस्य तथात्वादतो नास्यान्तरालेऽपि कर्मप्रवृत्तिरित्यर्थः । अथ कृतश्रवणाद्युत्पन्नज्ञानोऽपि पूर्ववासनया कर्माणि करोति तन्नात्यन्तं भिन्नाधिकारित्वं काण्डयोरित्याशङ्क्य दृष्टान्तेन परिहरति । **नेत्यादिना** । अभिप्रेतं प्राप्तुमिष्टं पुरं तस्य प्राप्तिसमर्थं तत्प्राप्तौ योग्यमिति यावत् । उपेक्षानिमित्तपर्वतादिव्यवधानशून्यत्वमाह । **सुगममिति** । चोरादिपथिकोपद्रवराहित्यमाह । **शिवमिति** ॥ १३१ ॥

**वारिपथ्यदनोपेतं सर्वानर्थविवर्जितम् ॥**
**प्राप्तं मार्गं समुत्सृज्य तद्विरुद्धेन वर्त्मना ॥**
**यियासति सुधीः कश्चिद्यथा भ्रान्तोऽध्वगस्तथा ॥ १३२ ॥**

वापीप्रपादिमत्त्वेनाऽऽदेयत्वमाह । **वारीति** । पथ्यदनं पाथेयं वारिणा तेन च सहितमिति यावत् । अतिवातादिपरिहीणत्वमाह । **सर्वेति** । यथोक्तस्यापि पथो मेरुशिखरोपरिविसारिकैलासासादनसरणिवदप्राप्तिलक्षणोपेक्षाकारणमाशङ्क्याऽऽह । **प्राप्तमिति** । न हि कश्चिदपि विपश्चिदुक्तमध्वानमवधीर्याध्वान्तरेणोक्तविपरीतेनाभिप्रेतं देशमाप्तुमभिलषतीत्याह । **मार्गमित्यादिना** । इममेवार्थं वैधर्म्यदृष्टान्तेनाऽऽह । **यथेति** ॥१३२॥

**तथाऽविद्योत्थकर्त्रादिधर्मशून्यमविक्रियम् ॥**
**अक्रियाकारकं ज्ञात्वा निःशेषपुरुषार्थदम् ॥ १३३ ॥**

दार्ष्टान्तिकमाह । **तथेत्यादिना** । आत्मानं ज्ञात्वा कर्मणि कथं मनो दध्यादिति संबन्धः । विदुषो हि कर्माधिकारोऽनात्मसंबन्धात्स्वतो वा नाऽऽद्य इत्याह । **अविद्येति** । न हि तस्य स्वतोऽनात्मसंबन्धोऽसङ्गत्वान्नाप्यविद्यातो ध्वस्ताविद्यत्वादिति भावः । द्वितीयं दूषयति । **अविक्रियमिति** । न हि व्यापिनोऽनवयवस्य परिस्पन्दपरिणामाविति भावः । किंच क्रियाकारकस्पर्शशून्यमात्मानमाकलयतो न कर्माधिकार इत्याह । **अक्रियेति** । किंच कर्म विदुषोऽभ्युदयसिद्धये वा परमात्मप्रतिपत्तये वा प्रतिपन्नपरमात्मप्राप्तये वा तज्ज्ञानस्य पुमर्थतालब्धये वा तत्साक्षात्कृतये वाऽपवृक्तये वा तद्भूयस्त्वभूतये वा प्रथमं

१ ख. °त्यन्ताभि° ।

प्रत्यादिशति । **निःशेषेति** । न हि विदुषोऽभ्युदयार्थं कर्मानुपाधेरनतिशयानन्दस्य तस्याप्राप्ताभ्युदयाभावादिति भावः ॥ १३३ ॥

**आत्मप्रत्ययमागम्यमात्मानं देवमञ्जसा ॥**
**तत्स्थितौ च फलेऽभीष्टे नित्ये साधनवर्जिते ॥ १३४ ॥**

द्वितीयमपनुदति । **आत्मेति** । न हि विदुषो निरविद्यस्य परप्रतिपत्तये कर्मापेक्ष्यते स्वाभाविक्यास्तस्याः कारकानपेक्षत्वादित्यर्थः । तृतीयं निराकरोति । **आत्मानमिति** । न हि ज्ञानस्वरूपप्राप्तये विद्वान्कर्माऽऽश्रयते तस्य स्वरूपत्वेन सदाप्तत्वादित्यर्थः । चतुर्थं निरस्यति । **देवमिति** । न हि ज्ञानस्य पुमर्थतायै कर्मापेक्षा ज्ञानस्य परस्यापरिच्छिन्नानन्दतनोः स्वतस्तथात्वादित्यर्थः । पञ्चमं प्रत्याचष्टे । **अञ्जसेति** । न हि ज्ञानस्य चिद्धातोः साक्षात्कारार्थं कर्म ज्ञानेतरसाक्षात्काराभावात् । ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्मेति भाष्यात्तद्धेदेऽपि न कर्म तद्धेतुर्ज्ञानस्य स्वफले निरपेक्षत्वादिति भावः । षष्ठं प्रत्याख्याति । **तत्स्थितौ चेति** । नहि विदुषोऽपवर्गार्थं कर्म तस्य स्वात्मावस्थानत्वात्सकार्याविद्याध्वस्तेश्च विद्यामात्रायत्तत्वादित्यर्थः । सप्तमं प्रत्याह । **नित्य इति** । न हि साधनभूयस्त्वात्फलभूयस्त्वमिति न्यायेन ज्ञानादाप्तमुक्तेर्भूयस्त्वार्थं कर्मेति युक्तम् । स्वर्गवत्तत्र भूयस्त्वस्य दुःसाधनत्वान्नित्यत्वानित्यत्वभेदादिति भावः । मुक्तेः साधनानपेक्षत्वाच्च[1] विदुषो न कर्मेत्याह । **साधनेति** । यद्वा नित्यत्वमनेन साध्यते ॥ १३४ ॥

**तद्विरुद्धफले बाह्यसाधनेऽनेककारके ॥**
**कथं कर्मणि सर्वज्ञो मनो दध्याद्धसन्नपि ॥ १३५ ॥**

स्वर्गापवर्गेतरफलार्थं विद्वान्कर्मानुष्ठास्यतीत्याशङ्क्याऽऽह । **तद्विरुद्धेति** । मोक्षविरुद्धफलं कर्म **कर्मणा** बध्यते जन्तुरिति **स्मृतेर्न** तस्मिन्फलान्तरेच्छया विद्वत्प्रवृत्तिस्तस्यैव तदपेक्षस्याभावादिति भावः । किंचोत्पन्नज्ञानस्य प्रध्वस्ताज्ञानतज्जस्य बाह्योपकरणानां कर्मनिमित्तानामभावान्न कर्मसु प्रवृत्तिरित्याह । **बाह्येति** । अविदुषो बाह्यसाधनापेक्षायामपि विदुषस्तदपेक्षां विना कर्मानुष्ठानमाशङ्क्याऽऽह । **अनेकेति** । कारकाधीनं कर्म तच्च पश्वादि तेन तेन विना न कस्यापि कर्मप्रवृत्तिरित्यर्थः । किंचाविवेकपूर्विका तत्प्रवृत्तिर्न चोत्पन्नविद्यस्य सा युक्ता निरस्ताविद्यातज्जस्यानावृतस्वरूपसंवेदनस्यानुपलभ्यार्थाभावादित्याह । **सर्वज्ञ इति** । ननु कृतकृत्योऽपि विद्वानात्मक्रीडार्थं कर्म करिष्यति नेत्याह । **हसन्नपीति** । न हि लीलार्थमपि विद्वान्कर्म कर्तुमर्हत्यनुपकरणत्वादाप्तकामत्वाच्चेति[2] भावः ॥ १३५ ॥

१ ख. 'रूपात' । २ ख. 'त्वाच्च वि' ।

**सम्यग्धीमृदिताशेषध्वान्तस्य च न पूर्ववत् ॥**
**अज्ञानादि पुनः कर्तुं शक्यतेऽकारकत्वतः ॥ १३६ ॥**

तत्त्वज्ञानध्वस्ताज्ञानस्यापि भूयो भवतोऽज्ञानान्तरात्कारकयोगद्वारा कर्माधिकारः स्यादिति चेन्नेत्याह । **सम्यगिति** । तत्र हेतुरकारकत्वत इति । आत्मनः कूटस्थत्वादज्ञानादिहेतुत्वायोगाद्धेत्वन्तरस्याभावादहेतुकस्य च कार्यस्योत्पत्तिव्याघातादित्यर्थः ॥ १३६ ॥

**श्रुत्यादिमानप्रमितयाथात्म्यज्ञानतत्फलः ॥**
**प्रतिकूलत्वतो विद्वान्यतः कर्मसु नेहते ॥ १३७ ॥**

आत्मज्ञस्य कर्माधिकारनिरासेन विरक्तो विधितस्त्यक्तसर्वकर्मा मोक्षाधिकारीत्युक्त्वा विपरीतोऽभ्युदयाधिकारीत्याह । **श्रुत्यादीति** ॥ १३७ ॥

**अतोऽज्ञस्यैव निःशेषमुमुक्षुप्रजिहासितः ॥**
**कर्त्राद्यनात्मधर्मस्य कर्माधिकृतिरात्मनः ॥ १३८ ॥**

अज्ञानविशिष्टोऽपि न कर्माधिकारी सुप्तस्यापि तत्प्रसङ्गादित्याशङ्क्याऽऽह । **निःशेषेति** । कर्त्रादिदेहान्तानात्मविशिष्टस्य कर्माधिकारो नाज्ञानमात्रविशिष्टस्येति नातिप्रसङ्गः सुप्तस्याहंकाराद्यवैशिष्ट्यादित्यर्थः । तर्हि विदुषोऽप्यारब्धकर्मणा देहाद्यभिमानात्कर्माधिकारस्तत्राऽऽह । **मुमुक्ष्विति** । मुमुक्षोरप्यनात्मा हातुमिष्टः किं पुनर्विदुषो जीवन्मुक्तस्य तस्मात्तस्य देहादिभानेऽपि न कर्माधिकारस्तद्धेतुदेहाभिमानाभावादिति भावः ॥ १३८ ॥

**विद्यात्ममोहतत्कार्यविरोधाच्च परस्परम् ॥**
**रोगादिवदनर्थत्वात्कर्त्रादिः प्रजिहासितः ॥ १३९ ॥**

विदुषा कर्त्रादेरवहेयत्वे हेतुमाह । **विद्येति** । विद्या चाऽऽत्ममोहश्च तयोरन्योन्यं रूपतः कार्यतश्च विरोधात्कर्त्राद्यात्मविद्यया हातव्यमित्यर्थः । तच्छब्दः स्वरूपविषयः । संप्रति कर्त्रादेर्मुमुक्षुणा जिहासितत्वे हेतुमाह । **रोगादिवदिति** । आदिपदेनाहिकण्टकादिग्रहः ॥ १३९ ॥

**जिहासितुः स्वभावोऽसावित्युक्तिः शिशुवक्तृका ॥**
**कर्त्रादिश्चेत्स्वभावः स्यात्प्रत्यक्षाकर्तृरूपिणः ॥ १४० ॥**
**प्रत्यक्षादिविरोधः स्यादनिर्मोक्षस्तथैव च ॥**
**अस्तु काममनिर्मोक्षो विक्रियावत्त्वतो दृशेः ॥ १४१ ॥**
**अग्निवत्फलभोक्तृत्वान्नो चेदाकाशकल्पता ॥**
**इति चेन्नाऽऽत्मनो ध्रौव्याद्विक्रियानुपपत्तितः ॥ १४२ ॥**

---

१ क. °ग्धीमुषिता° । २ ख. °त्फलम् । प्र° । ३ ख. °देरवे ।

कर्त्रादेरात्मस्वरूपत्वान्न केनचिज्जिहासेत्याशङ्क्याऽऽह । **जिहासितुरिति** । कर्त्रादिरात्मस्वभावस्तत्र प्रतीयमानत्वाच्चैतन्यवदित्याशङ्क्याऽऽह । **कर्त्रादिरिति** । आत्मा विद्वत्प्रत्यक्षेणाकर्त्रादिरूपोऽनुभूयते तस्य वैपरीत्ये विद्वत्प्रत्यक्षेण वक्ष्यमाणानुमानेन **कृत्स्नः** प्रज्ञानघन एवेति श्रुत्या च विरोधः स्यादित्यर्थः । विद्वत्प्रत्यक्षस्य विप्रतिपत्तेर्न बाधकतेत्याशङ्क्य दोषान्तरमाह । **अनिर्मोक्ष इति** । कर्त्रादिस्वभावनिवृत्तावनिवृत्तौ च मोक्षासंभवः । आद्ये मोक्षिणोऽभावाद्द्वितीयेऽनर्थसद्भावादतश्चाऽऽत्मा कर्त्रादिरूपश्चेदित्यत्रोक्तं तथैव स्थितमित्यर्थः । तत्र लोकायतश्चोदयति । **अस्त्विति** । अनिर्मोक्षप्रसङ्गनस्येष्टापादनत्वे हेतुमाह । **विक्रियेति** । यथाऽग्नेर्दाहपाकादिविक्रिया तथाऽऽत्मनोऽपि जन्मादिविक्रियावत्त्वेनानित्यत्वान्न नित्यसिद्धा मुक्तिरित्यर्थः । जन्मादिविक्रियाया देहस्थत्वान्नाऽऽत्मनि सेत्याशङ्क्य देहादन्यात्माभावान्नैवमित्यभिप्रेत्य तदभ्युपगमेऽपि तस्य भोक्तृत्वमस्ति न वेति विकल्प्याऽऽद्यं प्रत्याह । **फलेति** । भोगश्च न विक्रियां विनेति तद्वत्त्वं भोक्तुरवश्यंभावीति शेषः । द्वितीयमनुद्रवति । **नो चेदिति** । तर्हि चेतनस्याऽऽत्मनोऽसत्त्वमेव भोक्तृत्वाभावे भोग्यभागनिवेशादित्याह । **आकाशेति** । आकाशस्य मूर्ताभावत्वात्तत्तुल्यताऽस्यासत्त्वमेवेति द्रष्टव्यम् । आत्मनो विक्रियावत्त्वं दूषयन्प्रसङ्गस्येष्टत्वं निराचष्टे । **नेति** । विक्रियावत्त्वमनित्यत्वव्याप्तमण्वादेरपि तद्वतो नित्यत्वासंप्रतिपत्तेः । नित्यश्चाऽऽत्मा वक्ष्यते । तद्व्यापकमात्मनो व्यावर्तमानं स्वव्याप्यं विक्रियावत्त्वमपि ततो व्यावर्तयतीति भावः ॥ १४० ॥ १४१ ॥ १४२ ॥

**मूर्तामूर्तत्वहीनस्य प्रतीचो विक्रिया कुतः ॥**
**प्रमायोगो हि भोक्तृत्वं प्रमा चैवाऽऽत्मनः सदा ॥ १४३ ॥**

किंच भूतभौतिकात्मके मूर्तामूर्तप्रपञ्चे विक्रिया दृष्टा । आत्मा तु तत्साक्षी तदन्योऽतो न तद्वानित्याह । **मूर्तेति** । यद्वा नित्यत्वमात्मनोऽनेन साध्यते । नित्यत्वे सिद्धे फलितमाह । **विक्रियेति** । यत्त्वात्मनोऽविकारस्याभोक्तुराकाशतुल्यतेति तत्राऽऽह । **प्रमेति** । भोगो नाम सुखाद्यनुभवस्तद्धेतुविषयानुभवश्च तद्योगो दृशो भोक्तृत्वं तदक्रियस्यापि स्यादिति नास्याऽऽकाशतुल्यतेत्यर्थः । अक्रियस्य न प्रमायोगोऽप्याकाशेऽनुपलब्धेरित्याशङ्क्याऽऽह । **प्रमा चेति** । आत्मा हि स्वरूपं परापेक्षां विनाऽनुभवति विषयांश्च तत्तदाकारान्तःकरणवृत्त्यवच्छिन्नत्वेन जानीते तस्मादात्मनोऽनुभवात्मनो बुद्ध्यादिसंबन्धाद्भोक्तृत्वम् । **उक्तं हि—"अविक्रियस्य** भोक्तृत्वं स्यादहंबुद्धिविभ्रमात्" इति तन्नाऽऽकाशसादृश्यमिति भावः ॥ १४३ ॥

**वाय्वग्निवद्विकारो न प्रागभावाद्यसंभवात् ॥**
**अग्न्यादीनां तु सांशत्वाद्बलवद्भिस्तदिन्धनैः ॥ १४४ ॥**

---

१ ख. °सत्यत्वमे° ।

**अभिभूतस्वरूपाणां काष्ठनिर्मथनादिना ॥**
**युक्तैवाऽऽविष्कृतिर्नित्यं तेषां कार्यात्मकत्वतः ॥ १४५ ॥**

किंच प्रागभावादिमत्त्येव विक्रिया यथा पावकादौ प्रागभावादिमत्त्वं चाऽऽत्मनो व्यावर्तमानं विक्रियावत्त्वमपि ततो व्यावर्तयतीति विधान्तरेणाऽऽत्मनोऽविक्रियत्वमाह । **वाय्वग्निवदिति ।** आत्मप्रागभावादि नाऽऽत्मप्रत्यक्षं तयोः समसमयत्वायोगान्नाप्यात्मान्तरस्य तद्भेदासिद्धेः । नापि स्वस्यैव स्वप्रागभावाद्यनुमेयम् । विमतः कालो मत्सत्तावान्कालत्वात्संमतवदिति वैपरीत्यानुमानात् । तस्मादात्मा प्रागभावाद्यभावादविक्रिय इति भावः । यद्वा नित्यत्वमेवानेनापि साध्यते । नन्वात्मा विक्रियावानाविर्भावतिरोभावभाक्त्वादग्न्यादिवदित्यनुमानात्तस्य विक्रियावत्त्वमत आह । **अग्न्यादीनामिति ।** सावयवानां तेषामभिभवनसमर्थैः सावयवैरिन्धनादिभिरभिभूतस्वभावानां काष्ठनिर्मथनव्यजनाभिघातादिनिमित्तेन केनचिदेकदेशेनाभिव्यक्तिर्युक्ता तथाऽपि न तेषामाविर्भावादिमात्त्वप्रयुक्तं विक्रियावत्त्वं किंतु सावयवत्वकृतमिति सोपाधिको हेतुरित्यर्थः । कथमग्न्यादीनां सावयवत्वं कार्यत्वे सति द्रव्यत्वादित्याह । **नित्यमिति** ॥ १४४ ॥ १४५ ॥

**न त्वात्मनो निरंशत्वान्मुख्यौ संभवतः क्वचित् ॥**
**आविर्भावतिरोभावौ स्वतःसिद्धेश्च कारणात् ॥ १४६ ॥**

साधनव्याप्तिं निरस्यति । **न त्विति ।** किंच कल्पितावाविर्भावतिरोभावौ हेतूकृतावकल्पितौ वा । आद्ये साध्यं विक्रियावत्त्वमपि कल्पितमकल्पितं वा नाऽऽद्यः सिद्धसाध्यत्वान्नेतरो गन्धर्वनगराद्याविर्भावतिरोभावाभ्यां व्यभिचारादिति मत्वा कल्पान्तरं निराकर्तुमाह । **मुख्याविति ।** पूर्वस्य नञोऽनुषङ्गः । अथ निरंशस्यापि यावन्नाऽऽविर्भावसामग्री तावद्वास्तवस्तिरोभावः । पश्चात्त्वाविर्भावस्तथा स्यात्तत्राऽऽह । **स्वतःसिद्धेरिति ।** चकारः शङ्कापनुत्त्यर्थः ॥ १४६ ॥

**अभ्युपेताऽप्यभिव्यक्तिर्नाभिव्यङ्ग्यस्य विक्रिया ॥**
**यथा तथाऽनभिव्यक्तिः सर्वेषामपि वादिनाम् ॥ १४७ ॥**

आविर्भावतिरोभावयोरात्मनि विक्रियाहेतुत्वाभावेऽपि विक्रियात्वमित्यपि न तयोरकल्पितयोर्युगपदेकत्रायोगात्क्रमेणापि स्वप्रकाशात्मन्यसंभवात्संभवेऽपि तयोरात्मनि न विक्रियात्वमित्याह । **अभ्युपेताऽपीति ।** अभिव्यक्त्यादेरभिव्यङ्ग्यादिविक्रियात्वाभावस्य सर्वतन्त्रसिद्धान्ततामाह । **सर्वेषामिति** ॥ १४७ ॥

**अतोऽनभ्युपगच्छद्भिर्मुक्तौ कर्त्रादिरात्मनः ॥**
**अविद्याकल्पितो ज्ञेयो न ह्यसौ परमार्थतः ॥ १४८ ॥**

---

१ ख. °वदावि° ।

आत्मनो विक्रियाभावे तस्मिन्प्रतीयमानकर्तृत्वादिविकारस्य का गतिस्तामाह । **अत इति ।** दृशो विक्रियावत्त्वस्योक्तन्यायविरोधात्तत्कर्त्रादिर्विकारो भासमानोऽप्यज्ञानकृत इति प्रतिज्ञायां हेतुमाह । **अनभ्युपगच्छद्भिरिति ।** न हि मोक्षवादिनो मोक्षे कर्तृत्वाद्यभ्युपयन्त्यतो व्यभिचारित्वादस्य शुक्तिरूप्यवत्कल्पितत्वमिति भावः । जडत्वाच्च कर्तृत्वादि सर्पादिवत्कल्पितमित्याह । **न हीति** ॥ १४८ ॥

**कर्त्राद्यात्मस्वभावस्य प्रात्यक्ष्यान्न तदात्मनि ॥ १४९ ॥**
**मात्रादिबोधकं मानं प्रत्यगात्मनि साक्षिणि ॥**
**न व्यापारयितुं शक्यं वह्निं दग्धुमिवोल्मुकम् ॥ १५० ॥**

नन्वात्मधर्मत्वात्कर्तृत्वादिश्चैतन्यवन्नाविद्याकृतस्तथा च धर्मिणि तस्याऽऽगमापायाभ्यां बन्धमोक्षौ नेत्याह । **कर्त्रादीति ।** तत्कर्त्राद्यात्मनि धर्मिणि धर्मो नेत्यत्र हेतुमाह । **आत्मेति ।** आत्मस्वभावश्चैतन्यं तदधीनत्वेनास्य दृश्यत्वादिति यावत् । किं कर्तृत्वादिरात्मदृश्यो न वा । आद्ये नासावात्मधर्मस्तदृदृश्यत्वाद्घटवत् । द्वितीये साधकाभावादसिद्धिरिति भावः । कर्तृत्वादेरात्मधर्मत्वाभावानुमानं तस्य तद्धर्मत्वग्राहकाहंप्रत्ययबाधितमित्याशङ्क्य मात्रादि वा स विषयीकरोति तत्साक्षिणं वेति विकल्प्याऽऽद्यं प्रत्याह । **मात्रादीति ।** त्वदुत्प्रेक्षितं प्रत्यक्षं मात्रादिबोधकं चेन्न प्रकृतानुमानबाधकम् । कर्तृत्वादेर्मात्रादिधर्मत्वस्य तेनानिरासादिति भावः । कल्पान्तरं निराह । **प्रत्यगिति ।** तद्धि मात्रादिकर्तृकं साक्षिकर्तृकं वा नाऽऽद्यः प्रतीचः स्वविषयमात्रादिकर्तृकक्रियाव्याप्यत्वानुपपत्तेः । न हि वह्निः स्वदाह्योल्मुकक्रियाव्याप्यः । नेतरः साक्षिणो निर्विकारस्य तत्कर्तृत्वायोगात् । अतो नाहंधीबाधितमनुमानमिति भावः ॥ १४९ ॥ १५० ॥

**साक्षिसाक्ष्याभिसंबन्धः प्रमात्रादौ यथा तथा ॥**
**साक्षिवस्तुनि नैव स्यात्केवलानुभवात्मनि ॥ १५१ ॥**

ननु मात्रादिसाक्षी द्रष्टाऽद्रष्टा वा । आद्ये सोऽपि साक्षिवेद्यो द्रष्टृत्वान्मातृवत्तथा च कर्तृत्वादेः साक्षिणि तेनैव सिद्धे साक्षिप्रत्यक्षप्रहतमनुमानम् । द्वितीये घटादिवदचेतनत्वादसाक्षितेति तत्राऽऽह । **साक्षीति ।** मात्रादौ जडे नियमेन स्वेतरप्रकाशापेक्षिणि साक्ष्यत्वं चिदात्मनि साक्षित्वमित्यनयोः साक्षिसाक्ष्ययोगो यथोपपद्यते न तथाऽऽत्मन्यसौ संभवति शुद्धचित्प्रकाशरूपत्वात्साक्ष्यपेक्षत्वाभावात्साक्ष्यन्तरस्य च जडत्वे तत्त्वायोगादजडत्वे ततो भेदानुपपत्तेः साक्ष्येव चिदात्मा तस्य चाऽऽदित्यस्य प्रकाशयितृत्ववद्द्रष्टृत्वमित्यर्थः ॥ १५१ ॥

**परार्थसंहतानात्मभोग्यकर्त्रादिबोधिना ॥**
**विरोधात्तद्विरुद्धोऽर्थः प्रत्ययेनेक्ष्यते कथम् ॥ १५२ ॥**

---

१ क. °स्य प्रत्यक्षान्न । २ क. ज्ञान ।

नन्वात्मा मात्रादिग्राहकग्राह्यो मात्रादेरविलक्षणत्वात्तद्वदित्यनुमानान्मात्रादिबोधकमेव मानमनुमानबाधकमित्यत आह । **परार्थेति** । मात्रादेः साक्षी न मात्रादिमानविषयस्ततो विलक्षणत्वात् । यो यतो विलक्षणो न स तन्मानविषयो यथा घटविलक्षणं नभो न तन्मानविषयो न च हेत्वसिद्धिः साक्षी मात्रादेर्विलक्षणोऽपरार्थत्वात्तद्वदिति व्यतिरेक्यनुमानादतो मात्राद्यविलक्षणत्वहेत्वसिद्धिरित्यर्थः । मात्रादिदृष्टान्तस्य साधनाव्यावृत्तत्वं परिहर्तुं परार्थत्वं साधयति । **संहतेति** । विमतं परार्थं संहतत्वाद्गृहवदित्यर्थः । किंच साक्षी मात्रादिविलक्षण आत्मत्वात्तद्वत् । न च साधनाव्यावृत्तो दृष्टान्तस्तस्य संहतत्वेनानात्मत्वसिद्धेरित्याह । **अनात्मेति** । किंच साक्षी तद्विलक्षणो भोक्तृत्वात्तद्वन्न च मात्रादेरपि भोक्तृत्वात्साधनाव्यावृत्तिस्तस्य प्रमायोगो हीत्युक्तन्यायेन भोग्यान्तर्भावादित्याह । **भोग्येति** । अकर्तृत्वाच्च साक्षी मात्रादेर्विलक्षणो न च तस्यापि तुल्यमकर्तृत्वं कर्तृत्वानुभवादित्याह । **कर्त्रादीति** । उक्तरूपमात्रादिबोधिना प्रत्ययेन तद्विलक्षणः साक्षी न विषयीकर्तुं शक्यः पराङ्मानस्य प्रतीचि प्रवृत्तिविरोधादित्याह । **बोधिनेत्यादिना** ॥ १९२

**इच्छाद्वेषादिरप्येवं नाऽऽत्मनो धर्म इष्यताम् ॥**
**कामः संकल्प इत्येवं मनोधर्मत्वसंश्रयात् ॥ १९३ ॥**

इच्छादयः क्वचिदाश्रिता गुणत्वाद्रूपादिवदित्यनुमानात्परिशेषात्तदधिकरणमात्मा सिध्यति । तथा चेच्छाद्यधीनं कर्तृत्वाद्यपि तस्य भविष्यतीति केचित्तान्प्रत्याह । **इच्छेति** । ते हि स्वतन्त्राः परतन्त्रा वा नाऽऽद्यो हेत्वसिद्धेः । नेतरः । आश्रयस्यानिरूप्यमाणत्वेनाऽऽश्रयासिद्धेः । न च ते स्वतःसिद्धा जडत्वान्नापि परतस्तस्यानात्मत्वे साधकत्वायोगादात्मत्वे तद्दृश्यानामिच्छादीनां रूपादिवत्तद्धर्मत्वासिद्धेस्तद्वत्कर्तृत्वादिरपि नाऽऽत्मधर्म इत्यर्थः । अथेच्छादयोऽष्टद्रव्यातिरिक्तद्रव्याश्रितास्तेष्वसंभावितत्वे सति गुणत्वाच्छब्दवदित्यनुमानात्तेषामात्मगुणतेत्याशङ्क्य श्रुतिविरोधान्नैवमित्याह । **काम इति** ॥ १९३ ॥

**स्वपरोभयहेतुत्वे ह्यनिर्मोक्षप्रसङ्गतः ॥**
**सम्यग्निरूपणे चैषामविद्याकार्यतैव हि ॥ १९४ ॥**

किंच तेषां कार्यत्वमकार्यत्वं वा न तावदकार्यत्वं तथा सति तेषां सदाभावादनिर्मोक्षापत्तेः । कार्यत्वेऽपि तेषां हेतुरस्ति न वा नास्तिचेत्सदासत्त्वमसत्त्वं वा स्यादाद्ये मोक्षानुपपत्तिरुक्ता द्वितीये बन्धासिद्धिः । हेतुरस्ति चेत्स किमिच्छादिरेव किंवाऽन्योऽथ वोभयं नाऽऽद्यः सिद्धस्येच्छादेः स्वसिद्धिहेतुत्वे स्वाश्रयत्वप्रसङ्गादसिद्धस्य जनकत्वे मोक्षेऽपि संभवादनिर्मोक्षः । न द्वितीयोऽन्यस्य हेतोरदृष्टेर्दृष्टौ वा तस्य कादाचित्कत्वे हेत्वन्वेषणायामनवस्थानित्यत्वे सदेच्छादिजनकत्वादनिर्मोक्षः । न तृतीयः । तत्र हि

द्वितीयोऽचेतनश्चेतनो वाऽऽद्ये तस्येच्छादिजनकत्वं स्वभावोऽस्वभावो वा। नाग्रिमोऽनिर्मोक्षप्रसक्तेः। न पश्चिमस्तस्य कदाचिदप्यजनकत्वापत्तेर्न हि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यत इति न्यायात्। तस्मादिच्छादेराविद्यत्वमुपेयमिति मत्वाऽऽह। **स्वपरेति**। किंच न तावदेतेषामात्मनो भिन्नत्वं धर्मधर्मित्वानुपपत्तेः। अत एव नाभिन्नत्वं नापि भिन्नाभिन्नत्वं विरोधान्नाप्यपरोक्षत्वात्तुच्छत्वमतो विचारासहत्वे सत्यपरोक्षत्वान्नभोनैल्यवत्तेषामाविद्यत्वमित्याह। **सम्यगिति** ॥ १५४ ॥

**इच्छादीनां स्वहेतुत्वेऽनर्थं कुर्यात्कथं स्वयम् ॥**
**आत्मा जानन्यथा शत्रोरात्मनोऽतो न युज्यते ॥ १५५ ॥**

इच्छादीनामुभयहेतुत्वे द्वितीयश्चेतनश्चेत्सोऽपि जीवो वा परो वा द्वौ वा जीवश्चेत्स किमिच्छादेरनर्थत्वं बुध्यते न वा तत्राऽऽद्यं दूषयति। **इच्छादीनामिति**। स्वयं स्वस्येति यावत्। बुद्धिपूर्वकारी नाऽऽत्मनोऽनर्थं करोतीत्यत्र वैधर्म्यदृष्टान्तमाह। **यथेति**। द्वितीयं दूषयति। **आत्मन इति**। तेषामनर्थत्वं जीवो न वेद चेत्प्राप्तमज्ञानकार्यत्वमतश्चाऽऽत्मनः सकाशान्न तज्जन्म युक्तमित्यर्थः ॥ १५५ ॥

**तथा परनिमित्तत्वेऽनर्थस्यापरिहारतः ॥**
**नैकान्तिकफलत्वं स्याद्रोगादिपरिहारवत् ॥ १५६ ॥**

यदि परश्चेतनस्तत्राऽऽह। **तथेति**। परश्चेदिच्छाद्यनर्थमुत्पादयेत्स तर्हि स्वस्यान्यस्य वा तं कुर्यान्नाऽऽद्यः सर्वज्ञत्वादिविरोधाद्द्वितीये यथाऽसौ संसारिणामनर्थमाधत्ते तथा मुक्तानामप्यादध्यात्तथाच तेषां तत्परिहारस्य नित्यफलत्वानुपपत्तिरित्यर्थः। ननु परः सर्वज्ञो मुक्तान्प्रत्यनर्थं नाऽऽधास्यति तन्मुक्त्युपायप्रतिबन्धादत आह। **नेति**। न हि मुक्तिहेतुर्ज्ञानं कर्म वा मुक्तावस्त्यतस्तदप्रतिबन्धादनर्थाधाने परस्य वारकाभावाल्लौकिकप्रतिकूलध्वस्तिवदनर्थध्वस्तिरपि नाऽऽत्यन्तिकी स्यादिति भावः ॥ १५६ ॥

**करणैः संहतिं चर्ते परिहारः कुतो दृशेः ॥**
**तथोभयनिमित्तत्वे नैकान्तिकफलोदयः ॥ १५७ ॥**

मुक्तात्मा परेणाऽऽपाद्यमानमनर्थं परिहरिष्यति तेन तुल्यत्वादिति चेन्नेत्याह। **करणैरिति**। मुक्तस्याऽऽत्मनः परेण क्रियमाणानर्थस्य तद्धेतोश्च परिहारो न सिध्यति कार्यकरणसंहतिविरहित्वादन्यथा संसारित्वप्रसङ्गादीश्वरस्य च मायावित्वादित्यर्थः। अथेच्छादेर्न परो जीवो वा केवलो हेतुः किंतूभावप्यतो न मुक्तिदशायां तदुत्पत्तिर्जीवस्य मुक्तत्वात्तदननुकूलत्वादत आह। **तथेति**। यथेच्छादेः परात्मजन्यत्वेऽनिर्मोक्षस्तथा तस्योभयजन्यत्वपक्षेऽपि। ईश्वरस्य स्वातन्त्र्याज्जीवस्य स्वानुकूलत्वमापाद्यैवानर्थमसौ संपादयिष्यत्यतो न मुक्तिरित्यर्थः ॥ १५७ ॥

**पराभिप्रायानियमान्नैव स्यान्मोक्षनिश्चितिः ।**
**निर्हेत्वविद्याक्लृप्तौ तु दोषः कश्चिन्न विद्यते ॥ १५८ ॥**

नन्वीश्वरो मुक्तमुपलभ्य माऽस्य भूयो बन्धो भूदिति मन्वानो न तस्मिन्ननर्थमाधास्यतीति मुक्तिनिश्चयस्तत्राऽऽह । **परेति** । त्वत्पक्षेऽपि समाविमौ विकल्पदोषावित्याशङ्क्याऽऽविद्यमिच्छादीति पक्षे नानिर्मोक्षादिदूषणमित्याह । **निर्हेत्विति** ॥ १५८ ॥

**तद्वर्जनस्य संसिद्धेः प्रसिद्धोपायसंश्रयात् ॥**
**परागर्थप्रमेयेषु या फलत्वेन संमता ॥**
**संवित्सैवेह मेयोऽर्थो वेदान्तोक्तिप्रमाणतः ॥ १५९ ॥**

कथमिच्छादेराविद्यस्य मुक्तावसंभवो येनानिर्मोक्षप्रसङ्गसमाधिस्तत्राऽऽह । **तद्वर्जनस्येति ।** अविद्यावर्जनस्य मोक्षे विद्यमानत्वात्तत्कार्यस्येच्छादेस्तत्रासंभवो विनोपादानमुपादेयाभावादिति भावः । नन्वविद्यावर्जनमविद्यातो वा तत्कार्याद्वा प्रतीचो वा हेत्वन्तराद्वा नाऽऽद्योऽविद्यायाः स्वव्याघातकत्वव्याघातान्न द्वितीयस्तत्कार्यस्य तन्निवर्तकत्वायोगान्न हि घटो मृदं निवर्तयति । न तृतीयः । आत्मनोऽविद्यानिवर्तकत्वे तत्र तदुपलम्भासंभवात् । नान्त्यो हेत्वन्तरस्याप्रतीतेरत आह । **प्रसिद्धेति ।** प्रत्यगात्मा स्वप्रकाशत्वेन प्रसिद्धः स एवोपायस्तस्य संश्रयादविद्यावर्जने साधनचतुष्टयवतः कृतान्वयव्यतिरेकस्य श्रवणाधिकारिणः श्रुताद्वाक्यादैक्यज्ञाने तस्मिन्नभिव्यक्तो दृगात्मा स्वाविद्यां सकार्यां दग्ध्वा स्वस्थो भवतीत्यर्थः । नन्वविद्यानिवृत्तेरात्ममात्रत्वान्न तत्र तस्योपायत्वम् । उपायोपेयत्वस्य भेदापेक्षत्वात्तत्राऽऽह । **परागिति ।** अस्यार्थः । पराञ्चः शब्दादयोऽर्था येषां प्रमेयास्तानि प्रत्यक्षादिप्रमाणानि परागर्थप्रमेयाणि तेषु फलत्वेन संमता या संवित् । वस्तुतस्तु न फलं जन्माभावात्सैव परात्मरूपा वेदान्तोक्तिलक्षणप्रमाणस्य प्रमेयस्तात्पर्यगम्योऽर्थः । तथा चाविद्याविरोध्याकारेणोपायत्वं तन्निवृत्त्यात्मना च फलत्वादुपेयतेत्येकत्रैवाऽऽत्मन्याकारभेदादुभयथात्वमिति ॥ १५९ ॥

**अप्रामाण्यप्रसक्तिश्च स्यादितोऽन्यार्थकल्पने ॥**
**वेदान्तानामतस्तस्मान्नान्यमर्थं प्रकल्पयेत् ॥ १६० ॥**

प्रत्यक्षादीनां परागर्थविषयत्वमुपेत्य तत्फलभूताखण्डसंविदो वेदान्तमेयत्वमुक्तम् । संप्रति तेषां परागर्थत्वं नास्तीत्याह । **अप्रामाण्येति ।** यदि प्रत्यक्षादीनि पराञ्चमर्थं गोचरयेयुस्तदा वेदान्ता निखिलभेदाभावोपलक्षिते ब्रह्मणि न प्रमाणं स्युः । तस्मादितोऽद्वितीयानुभवात्मनो वेदान्तवेद्यादन्यस्य पराचोऽर्थस्य प्रत्यक्षादिमेयत्वकल्पने वेदान्तानामप्रामाण्यं स्यात्तथा चातो वेदान्तवेद्यादन्यमर्थं प्रत्यक्षादिविषयत्वेन न कल्पयेत् । किंतु सोपाधिकं ब्रह्म तेषां विषयो निरुपाधिकं वेदान्तानामित्यर्थः ॥ १६० ॥

---

१ ख. °तेस्तत्राऽऽह । २ ख. °र्जनं सा° ।

**नन्वेवमपि मानत्वव्याघातः स्यात्क्रियाविधेः ॥**
**वेदान्तेष्वप्यनाश्वासस्तथा च प्रसजेद्ध्रुवम् ॥ १६१ ॥**

अद्वयानुभवविषयत्वं वेदान्तानाममृष्यन्नाशङ्कते । **नन्विति** । ब्रह्मण्यद्वयानुभनात्मनि वेदान्तप्रामाण्येऽपि कर्मकाण्डस्याप्रामाण्यं स्यात्तस्य कारकादिभेदावलम्बित्वाद्भेदस्य चाभेदवादिवेदान्तैरपह्नतत्वादित्यर्थः । कर्मकाण्डाप्रामाण्यमद्वैतवादिनो वेदान्तमात्र-प्रामाण्यमिच्छतो नानिष्टमित्याशङ्क्याऽऽह । **वेदान्तेष्विति** । तदप्रामाण्ये वेदैकदेश-त्वाद्वेदान्तेष्वपि तदनाश्वासान्न कर्मकाण्डाप्रामाण्यमिष्टमित्यर्थः ॥ १६१ ॥

**नैतदेवं यतोऽशेषमानानामपि मानता ॥**
**आ परात्मावबोधात्स्यात्तत्र सर्वसमाप्तितः ॥ १६२ ॥**

किं तस्य तात्त्विकं प्रामाण्यं व्याहन्यते किंवा व्यावहारिकं तत्राऽऽद्यमभ्युपेत्य द्वितीयं दूषयति । **नैतदिति** । तस्य व्यावहारिकं प्रामाण्यं ज्ञानात्पूर्वं वा विहन्यते पश्चाद्वा नाऽऽद्य इत्याह । **यत इति** । अतो ज्ञानात्प्राचि काले तदव्याहतिरिति **शेषः**। द्वितीयं दूषयति । **तत्रेति** । परविद्योदये सर्वानात्मध्वस्तेर्ज्ञानादूर्ध्वं विध्याद्यप्रामाण्यमि-ष्टमेव न च तस्य व्यावहारिके प्रामाण्ये वेदान्तानामपि तथात्वं तेषां तत्त्वविषयत्वस्य श्रौतत्वात्तात्त्विकप्रामाण्यादिति भावः ॥ १६२ ॥

**नातोऽवतारो मानानामैकात्म्येनैव संक्षयात् ॥**
**श्येनादिविधिवाधः स्यादहिंसाविधिना यथा ॥ १६३ ॥**

अथ विद्वानपि यथापूर्वं यावद्देहं मानतो व्यवहरति तत्कथं ज्ञानादूर्ध्वं विध्याद्यप्रा-माण्यं तत्राऽऽह । **नात इति** । ज्ञानादूर्ध्वमध्यक्षादिप्रवृत्तिहेत्वज्ञानस्य प्रत्यङ्मात्रतया क्षीणत्वान्न तत्प्रवृत्तिः । न च विदुषो मानं विना तदनुपपत्तिर्बाधितानुवृत्त्याऽपि तत्सं-भवादित्यर्थः । नन्वैक्यज्ञानं न मानबाधकं मानत्वान्मानान्तरवदिति तत्र व्यभिचारमाह । **श्येनादीति** । आदिशब्दो गवादिविषयः । तथा तत्त्वमस्यादिवाक्योत्थज्ञानेन पूर्वप्रवृत्तं विध्यादि बाध्यते पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवदिति न्यायादिति शेषः ॥ १६३ ॥

**कर्माण्यतो विधीयन्तेऽविद्यावन्तं नरं प्रति ॥**
**न तु विध्वस्तसकलकर्महेतुं द्विजं प्रति ॥ १६४ ॥**

किंचाविद्यावन्तं नराभिमानिनं प्रति कर्माणि यतो विधीयन्तेऽतो व्यावहारिकं कर्मका-ण्डप्रामाण्यं यावज्ज्ञानं तत्प्रामाण्ये विसंवादाभावादित्याह । **कर्माणीति**। विमतं तत्त्वा-वेदकं मानत्वात्संमतवदित्याशङ्क्याऽऽह । **नत्विति** । कारणेन सह ध्वस्तः समस्तः कर्महेतुर्ब्राह्मण्याद्यभिमानो यस्य तं विद्यावन्तं भूतपूर्वगत्या द्विजं प्रति कर्माणि न विधीयन्ते तस्यानियोज्यत्वात् । मानत्वं च तत्त्वावेदकत्वं चेत्साध्याविशिष्टता व्यवहाराङ्गत्वं चेत्स्वप्नादिबोधे व्यभिचारोऽतो न विध्यादेस्तात्त्विकं प्रामाण्यमित्यर्थः ॥ १६४ ॥

**सर्वकर्मनिरासेऽतो ह्यधिकारो विवेकिनः ॥**
**यथोक्तन्यायतः सिद्धो न तु कर्मसु कर्हिचित् ॥ १६५ ॥**

ननु कर्मणां विद्यावन्तं प्रत्यविधानेऽपि विविदिषावन्तं प्रति विधानाद्वेदान्तवद्विध्यादेरपि तत्त्वावेदकतेति नेत्याह । **सर्वकर्मेति** । विवेकवैराग्यविविदिषाद्युपेतस्य संन्यासपूर्वके श्रवणादावेवाधिकारस्तस्यैव मोक्षहेतुसम्यग्धीहेतुत्वान्न कदाचिदपि कर्मसु यथोक्ताधिकारिणोऽधिकारः प्रवृत्तेः प्रतिकूलत्वादित्यादिन्यायेन तेषामभिलषिताननुकूलत्वात्तस्मादविवेकिनं प्रत्येव कर्मविधेर्न तस्य तत्त्वावेदकतेति भावः ॥ १६५ ॥

**कारकव्यवहारे हि शुद्धं वस्तु न वीक्ष्यते ॥**
**शुद्धे वस्तुनि सिद्धे च कारकव्यापृतिस्तथा ॥ १६६ ॥**

ननु विवेकिनो विरक्तस्यापि यावज्ज्ञानं कर्मत्यागायोगो **यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तदिति स्मृतेरतो** विविदिषोरपि कर्माधिकारो नेत्याह । **कारकेति** । कर्त्रादिकारकाणां व्यवहारो नाम कर्म तस्मिन्सत्यात्मजिज्ञासैव न जायते सत्यामपि तस्यां जिज्ञासमानः शुद्धं वस्तु वीक्षितुं न क्षमः कर्मोपहृतधीत्वादतो यावद्विवेकं कर्मानुष्ठानम् । विवेके तु तत्त्यागः । **आरुरुक्षोर्मुनेर्योगमित्यादि स्मृतेः** । तथाच जिज्ञासोर्न कर्माधिकारः । **यज्ञ**दानतपःकर्मेत्यादि तु नित्यकर्मस्तावकमित्यर्थः । जिज्ञासोर्विरक्तस्य कर्मानधिकारे हेत्वन्तरमाह । **शुद्ध इति** । तथाशब्दो नञनुकर्षणार्थः । निष्प्रपञ्चे तत्त्वे विवेकविषयीकृते कर्मनिमित्ताभिमानशैथिल्यान्न तस्मिन्नधिकार इत्यर्थः ॥ १६६ ॥

**कारकाकारकधियोर्नैकदैकत्र वस्तुनि ॥**
**विरोधात्संभवोऽस्तीह प्रकाशतमसोरिव ॥ १६७ ॥**

किंच विवेकिनस्तावदकारकात्मधीरस्ति तस्य कर्माधिकारे कारकधीर्वाच्या तयोश्च यौगपद्यं क्रमो वा नाऽऽद्य इत्याह । **कारकेति** ॥ १६७ ॥

**अविरोधः क्रमेण स्यात्स्थितिगत्योरिवेति चेत् ॥**
**नाऽऽत्मज्ञानस्य कूटस्थवस्तुतन्त्रत्वहेतुतः ॥ १६८ ॥**

द्वितीयमुत्थापयति । **अविरोध इति** । पूर्वं कारकधीः पश्चादितरेति वा क्रमः प्रथममकारकधीः कालान्तरे त्वन्येति वा तत्राऽऽद्यमङ्गीकृत्यान्त्यं निराह । **नेत्यादिना** । अकारकधियोऽविकारिब्रह्मविषयत्वात्तस्यां कर्मप्रवृत्तिनिमित्तं कारकधीर्नोत्पत्तुं पारयति । तन्निमित्तजात्याद्यभिमानभङ्गादित्यर्थः ॥ १६८ ॥

**नौष्ण्यात्मको मितो वह्निः क्रमशोऽक्रमशोऽथ वा ॥**
**वस्तुतः शीततामेति कर्तृतन्त्रं तथा भवेत् ॥ १६९ ॥**

किं चाऽऽत्मन्यकारके मिते कारकत्वं मीयमानं कल्पितमकल्पितं वा नाऽऽद्यः

कल्पितकारकत्वाधीनाधिकारस्यापि तत्त्वप्रसङ्गादिति मन्वानो द्वितीयं दृष्टान्तेन निराचष्टे । **नेत्यादिना** । अथ यथाऽतिरात्रे मिथोविरुद्धे षोडशिग्रहणाग्रहणे वस्तुभूते स्तस्तथाऽऽत्मनोऽपि कारकत्वाकारकत्वे वास्तवे स्यातामत आह । **कर्त्रिति** । कर्तुमकर्तुमन्यथा कर्तुं शक्यत्वात्कर्म कर्तृतन्त्रं तस्य युक्तं वैकल्पिकं ग्रहणाद्यङ्गम् । आत्मा तु नैवं तद्व्यवस्थितरूपे वस्तुनि विकल्पायोगादित्यर्थः ॥ १६९ ॥

**भेदाभेदात्मकत्वाच्चेदेकस्यापीह वस्तुनः ॥**
**अविरोधो न तन्न्याय्यं त्वदुक्तार्थविरोधतः ॥ १७० ॥**

भेदाभेदवादी शङ्कते । **भेदेति** । इह हि शास्त्रे परिणामि ब्रह्म न चैवं मृदादिवदनित्यं यस्मिन्विक्रियमाणे तदेवेदमिति धीर्न विहन्यते तदपि नित्यमिनि स्थितेस्तथा चाप्रच्युतस्वभावत्वादकारकधियः स्वपरिणामभेदेन नानात्वाच्च कारकधियो गोचरस्तस्मादेकस्यापि ब्रह्मणो नानात्वाद्भेदाभेदाभ्यां कारकत्वाकारकत्वयोरकल्पितयोरुपपत्तिरित्यर्थः । एकस्य कारकत्वमकारकत्वं च तत्त्वमित्येतन्न्यायापेतमिति दूषयति । **न तदिति** । तत्र हेतुस्त्वदुक्तेति । एकस्य भेदाभेदात्मकत्वादिति यस्त्वदुक्तो हेतुस्तदर्थस्य भिन्नमेवाभिन्नमित्यस्य विरुद्धत्वादिति हेत्वर्थः ॥ १७० ॥

**नानेकस्यैकता न्याय्या तथैकस्याप्यनेकता ॥**
**वस्तुतन्त्रत्वतो बुद्धेर्न चेदेवं मृषा मतिः ॥ १७१ ॥**

कथमस्य विरुद्धतेति तत्र किमेकस्य भिन्नत्वमभिन्नत्वं च वास्तवं न वा नाऽऽद्य इत्याह । **नेति** । तत्र हेतुर्वस्त्विति । भिन्नत्वं चेद्वस्तुनो वस्तुतोऽस्ति तदा भेदबुद्धेर्वस्तुतन्त्रत्वेन प्रमाणत्वात्तद्विरोधादभेदधीर्नोत्पद्येत । अभिन्नत्वस्य वस्तुत्वेऽपि तद्धियस्तत्तन्त्रतया मानत्वात्तद्विरुद्धा भेदधीर्न जायेताऽतो भिन्नमभिन्नमेव वा वस्तु नोभयात्मकमित्यर्थः । एकस्य भिन्नाभिन्नत्वमवास्तवमिति पक्षं प्रत्याह । **न चेदिति** । भिन्नाभिन्नत्वधीरेकस्य मिथ्याधीश्चेत्तर्हि भिन्नाभिन्नमेकमित्युपगमेऽप्यदोषः । न चेदेषा मृषा धीस्तर्हि न स्यादेवोक्तविरोधस्य दुर्वारत्वादित्यर्थः । यद्वा बुद्धेरवस्तुतन्त्रत्वे दोषमाह । **न चेदिति** । द्वितीयस्तु कल्पो बहिरेव निरस्य आत्मनि भिन्नाभिन्नत्वं कल्पितं चेन्न क्षतिरभिन्नत्वस्यैव तत्र वस्तुत्वादिति ॥ १७१ ॥

**यथा चास्य विरुद्धत्वं तथोदर्के प्रवक्ष्यते ॥**
**ऐकात्म्यस्यैव मेयत्वं तस्यैवाप्रतिबोधतः ॥ १७२ ॥**

किं चैकरसमेवाऽऽत्मतत्त्वं **तदेतत्त्रयं** सदेकमित्यादिवाक्यव्याख्यानप्रसङ्गेन भेदाभेदवादस्य निरस्यत्वादित्याह । **यथा चेति** । नन्वध्वगस्याऽऽतपोपहतस्य दूरतरनिरन्तरतरुष्वेकत्वमविद्यातो भाति तथाऽस्यैक्यमाविद्यं नानात्वं तत्त्वमित्याशङ्क्याऽऽह । **ऐका-**

१ ख. °ते तथा° ।

**त्म्यस्येति ।** एकरसात्मरूपस्यैव प्रामाणिकतया वस्तुत्वं न प्रपञ्चस्य तस्य ब्रह्मव-दज्ञातत्वायोगादतः स तस्मिन्नारोपितो निरूपयिष्यते चैतदव्याकृतप्रक्रियायामि-त्यर्थः ॥ १७२ ॥

**वस्तूनीह प्रमीयन्ते व्यावृत्तानि परस्परम् ॥**
**अभावेन प्रमाणेन तेनोक्तं ते विरुध्यते ॥ १७३ ॥**

ननु किमैकात्म्यं प्रत्यक्षादेरागमस्य वा द्वयोर्वा मेयं नाऽऽद्य इत्याह । **वस्तूनीति ।** इहेति व्यवहारभूमिरुक्ता । अभावेन तदन्येनाध्यक्षादिनेति यावत् । न द्वितीयो द्वैतग्रा-हिमानविरोधे श्रुतेरैक्यगोचरत्वायोगात् । अत एव न तृतीय इत्याह । **तेनेति ॥** १७३ ॥

**भेदे वा यदि वाऽभेदे संसृतेर्ब्रह्मणा सह ॥**
**ब्रह्मणोऽब्रह्मता तद्वद्विद्यानर्थक्यसांशते ॥ १७४ ॥**

यत्तु प्रपञ्चस्याज्ञातत्वाभावेनामेयस्याऽऽत्मन्यारोपिततेति तत्र तस्य ब्रह्मणा भेदोऽ-भेदो वेति विकल्प्याऽऽद्यं दूषयति । **भेदे वेति ।** उभयत्रापि दोषोऽस्तीति शेषः । भेदपक्षे तं विशदयति । **ब्रह्मण इति ।** संसारप्रपञ्चो ब्रह्मणोऽन्यश्चेत्तस्य वस्तुपरिच्छे-दादब्रह्मतेत्यर्थः । अभेदपक्षे प्रपञ्चस्य ब्रह्मणोऽभेदो वा ब्रह्मणस्तस्मादभेदो वा । आद्ये विद्यानर्थक्यं ब्रह्माभिन्नसंसारस्य ब्रह्मवद्विद्यानिवर्त्यत्वायोगात् । द्वितीये ब्रह्मणोऽनेकर-सत्वं तादृक्प्रपञ्चाभेदात्प्रपञ्चवदित्याह । **तद्वदिति ॥** १७४ ॥

**ब्रह्माविद्यावदिष्टं चेन्ननु दोषो महानयम् ॥**
**निरविद्ये च विद्याया आनर्थक्यं प्रसज्यते ॥ १७५ ॥**

ननु संसारस्य ब्रह्मणोऽन्यत्वान्न विद्यानर्थक्यं नापि वस्तुपरिच्छेदस्तस्याऽऽविद्य-स्यावस्तुत्वात्तत्र किमविद्या ब्रह्माऽऽश्रयते किंवा जीवमुत स्वतन्त्रेति विकल्प्याऽऽ-द्यमादत्ते । **ब्रह्मेति ।** ज्ञानस्वभावं सर्वज्ञं च ब्रह्म तन्नाज्ञानमास्कन्दति व्याघातादिति दूषयति । **नन्विति ।** ब्रह्मणि निरविद्ये जीवोऽपि नाविद्याश्रयस्तस्य ब्रह्मानन्यत्वाद-न्यथा ब्रह्मणो निरविद्यत्वायोगादिति द्वितीयं निराह । **निरविद्ये चेति ।** चकारेण दोषो महानित्यन्वयः सूचितः । स्वतन्त्रत्वे ब्रह्मवद्विद्यापोद्यत्वायोगात्तदानर्थक्यमिति तृतीयं प्रत्याह । **विद्याया इति ।** ॥ १७५ ॥

**नाविद्याऽस्येत्यविद्यायामेवाऽऽसित्वा प्रकल्प्यते ॥**
**ब्रह्मदृष्ट्या त्वविद्येयं न कथंचन युज्यते ॥ १७६ ॥**

ऐकात्म्यपक्षायोगाज्जगद्ब्रह्मणोर्भेदाभेदावगमादेकत्राविरुद्धे कारकाकारकधियाविति प्राप्ते परिहरति । **नेति ।** न तावदैकात्म्यस्यामेयत्वं वक्ष्यमाणत्वान्नापि संसारमधिकृत्य भेदाभेदविकल्पावनिर्वाच्याविद्यातज्जात्मकस्य तस्य विकल्पानर्हत्वादित्यर्थः । यत्तु ब्रह्मणः

---

१ ख. प्रतीय° । २ ख. °दन्तेना° । ३ क. °वास्तित्वं प्र° । ४ ख. °कल्पते ।

सर्वज्ञत्वाद्विद्यास्वभावत्वाच्च नाविद्येति तत्राऽऽह । **अस्येति** । न हि सा स्वतन्त्रा ब्रह्मवदविद्यात्वव्याघातान्नापि जीवस्तदाश्रयो ब्रह्मामतिरेकात्तस्मादविद्यास्वभावालोचनया[1] तस्या ब्रह्मसंबन्धध्रौव्याद्वस्तुतश्च तत्स्वभावस्यैवाभावाद्ब्रह्मणस्तात्त्विकविद्यारूपत्वेनातात्त्विकाविद्यावत्त्वमविरुद्धम् । सर्वज्ञत्वं तु तद्वृत्तोपपादकं **शास्त्रयो**नित्वाधिकरणन्यायादिति भावः । नन्वविद्याब्रह्मणोः संबन्धस्तात्त्विको ब्रह्माविद्यासंबन्धयोरन्यतरत्वाद्ब्रह्मवत्तत्राऽऽह । **ब्रह्मेति** । ब्रह्मरूपालोचनया न तस्याविद्या तस्यासङ्गानवच्छिन्नचिद्धातुत्वात्तत्त्वज्ञानानपोह्यत्वो[2]पाधिना विमतोऽतात्त्विकोऽविद्याब्रह्मसंबन्धयोरन्यतरत्वादविद्यावदित्यनुमानेन चोपहतमनुमानमिति भावः ॥ १७६ ॥

**यतोऽनुभवतोऽविद्या ब्रह्मास्मीत्यनुभूतिवत् ॥**
**अतो मानोत्थविज्ञानध्वस्ता साऽप्येत्यथाऽऽत्मताम् ॥ १७७ ॥**

ननु कीदृग्ज्ञानमविद्यामपनुदति स्वरूपज्ञानं प्रमाणज्ञानं वा नाऽऽद्यस्तस्याज्ञानसाधकस्य तदनिवर्तकत्वान्न द्वितीय आगमादिमानविषयत्वाद्ब्रह्मवत्तस्यास्तन्निवर्त्य[3]त्वायोगादतः साधनव्याप्तिरत आह । **यत इति** । न तावदविद्या मानविषयो यतो न सा ततो निवर्तेत किंतु ब्रह्मरूपानुभवगोचरः स च प्रमाणाप्रमाणसाधारणश्चित्प्रकाशः श्रुत्यादिमानं तु तस्यां विप्रतिपन्नं प्रत्यभावव्यावृत्तिमात्रं बोधयति। **तथोक्तम्**—अत्र च साक्षिवेद्यस्याज्ञानस्य प्रमाणैरभावव्यावृत्तिः प्रदर्श्यत इति न तस्य प्रमाणवेद्यत्वप्रसङ्ग इति । तथाच प्रमाणज्ञाननिवर्त्यत्वादज्ञानतत्संबन्धयोर्न साधनव्याप्तिरुपाधेरित्यर्थः । आत्माज्ञानं नित्यानुभवसिद्धमित्यत्र दृष्टान्तमाह । **ब्रह्मेति** । वाक्योत्थं ज्ञानं ब्रह्मानुभूतिः सा जाड्यान्न स्वतःसिद्धा नापि मानतोऽनवस्थानादतो ब्रह्मस्वभावचित्प्रकाशात्सिद्धा तद्वदज्ञानमपीत्यर्थः । तस्य[4] नित्यानुभवमात्रसिद्धत्वे फलितमाह । **अत इति** । यतो नाविद्या मानविषयः किंतु नित्यानुभवगोचरोऽतो वाक्योत्थबुद्धिवृत्तिध्वस्ता न सा तात्त्विकीत्यविद्यातत्संबन्धावतात्त्विकाविति भावः । ननु ज्ञानादज्ञानध्वस्तिर्भवन्ती ब्रह्मणोऽन्या न वा । आद्ये द्वैतापातो द्वितीये ब्रह्म नाज्ञानाश्रयः स्यात्तद्ध्वंसकत्वान्नहि निवृत्तिर्निवृत्तिमदाश्रयस्तत्राऽऽह । **साऽप्येतीति** । अविद्या हि प्रमाणप्रहता ब्रह्मात्मतां प्राप्य प्रलीयते । **अविभागो** वचनादितिन्यायात् । अतोऽज्ञानध्वंसस्य ब्रह्मानतिरेकान्न द्वैतापातः । न च ब्रह्मणोऽज्ञानानाश्रयत्वं तद्ध्वंसात्प्राक्तदाश्रयत्वात् । घटध्वंसस्य मृदात्मत्वेऽपि तद्ध्वंसात्पूर्वं मृदो घटाश्रयत्वदृष्टेरित्याशयवानाह । **अप्येतीति** ॥ १७७ ॥

**ब्रह्मण्यविदिते बोधान्नाविद्येत्युपपद्यते ॥**
**नितरां चापि विज्ञाते मृषाधीर्नास्त्यबाधिता ॥ १७८ ॥**

१ ख. °चनायां त° । २ ख. °पोद्यत्वो° । ३ ख. °वर्तकत्वा° । ४ क. तस्यां ।

किंच ब्रह्मण्यज्ञाते तत्राज्ञानतत्संबन्धौ मीयेते ज्ञाते वा तत्राऽऽद्यं प्रत्याह । **ब्रह्मणीति** । अज्ञाते ब्रह्मणि तत्राविद्येत्यविद्यातत्संबन्धयोर्धीर्न मानात्सिध्यत्याश्रयधियं विनाऽऽश्रितधियोऽयोगादित्यर्थः । द्वितीयं निरस्यति । **नितरां चेति** । ज्ञाते ब्रह्मणि मृषाधीरज्ञानं तत्संबन्धश्च ज्ञानध्वस्तत्वान्न सिध्यति मानात्तयोर्धीस्तु दूरनिरस्तेत्यर्थः ॥ १७८ ॥

**अविद्यावानविद्यां तां न निरूपयितुं क्षमः ॥**
**वस्तुवृत्तमतोऽपेक्ष्य नाविद्येति निरूप्यते ॥ १७९ ॥**

किंच ब्रह्मण्यविद्यातद्योगाववि‍द्वान्मिनोति विद्वान्वा तत्राऽऽद्यं दूषयति । **अविद्यावानिति** । मानाभावात्तद्भावे वाऽविद्यावत्त्वव्याघातादित्यर्थः । न द्वितीय इत्याह । **वस्त्विति** । माता मानं च वस्तु तस्य वृत्तं स्वरूपं तदपेक्ष्य ब्रह्मण्यविद्यातत्संबन्धावयुक्तौ तस्मात्तौ साक्षिमात्रसिद्धावित्यर्थः ॥ १७९ ॥

**वस्तुनोऽन्यत्र मानानां व्यापृतिर्न हि युज्यते ॥**
**अविद्या च न वस्त्विष्टं मानाघातासहिष्णुतः ॥ १८० ॥**

अज्ञानस्याप्रामाणिकत्वमनुमातुं व्याप्तिमाह । **वस्तुन इति** । यदवस्तु तन्मानायोग्यं यथा शशविषाणमित्युक्त्वा विमतं मानायोग्यमवस्तुत्वात्तद्वदित्याह । **अविद्या चेति** । वस्तुशब्दादूर्ध्वमितिशब्दस्येष्टशब्दस्य परस्तात्पञ्चम्यां ज्ञाननिवर्त्यत्वादिति पदस्य चाध्याहारः ॥ १८० ॥

**अविद्याया अविद्यात्व इदमेव तु लक्षणम् ॥**
**मानाघातासहिष्णुत्वमसाधारणमिष्यते ॥ १८१ ॥**

ननु विमतं मानयोग्यं शास्त्रार्थत्वाद्ब्रह्मवदिति प्रत्यनुमानमाशङ्क्य हेत्वसिद्धिमभिसंधायाऽऽह । **अविद्याया इति** । नित्यानुभवमात्रसिद्धाविद्याध्यस्तः संसारो ब्रह्मात्मनि भात्यतो नासौ भेदाभेदविकल्पावर्हतीत्युक्तम् ॥ १८१ ॥

**त्वत्पक्षे बहु कल्प्यं स्यात्सर्वं मानविरोधि च ॥**
**कल्प्याऽविद्यैव मत्पक्षे सा चानुभवसंश्रया ॥ १८२ ॥**

ननु त्वन्मते तावदविद्या तस्याः संसारहेतुत्वं च कल्प्यते । मन्मते तु क्लृप्तयोः संसारब्रह्मणोर्भेदाभेदाविष्टौ तस्मात्कल्पनाविशेषान्मन्मतमेव किं नेष्यते तत्राऽऽह । **त्वत्पक्ष इति** । जगद्ब्रह्मणोर्भेदाभेदावनादेर्बन्धस्य सत्यस्यैव ध्वंसः कर्मफलं कैवल्यं तच्च नित्यमिति बहु त्वत्पक्षे कल्प्यमतो गौरवात्तदनङ्गीकरणमित्यर्थः । **प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपीति न्यायाद्गौरवमदूषणमिति** चेत्तत्राऽऽह । **सर्वमिति** । न तावत्कल्प्यानि

१ ख. °म्या मान° ।

मानवन्ति किंतु तद्विरुद्धानि । एकस्य भिन्नाभिन्नत्वे[1] सर्वमानविरोधो भावाभावयोरेको- पाधावुपगमात् । अनादेर्वस्तुनः संसारस्य निवृत्तिमत्त्वमपि वस्तुत्वे सत्यनादित्वादनिवृत्ति- रित्यनुमानविरुद्धम् । मोक्षस्य कर्मफलत्वं ज्ञानैकफलत्वश्रुतिस्मृतिविरुद्धम् । कर्मफ- लस्य तस्य नित्यत्वं **यत्कृतकं** तदनित्यमितिव्याप्तिपूर्वकानुमानागमविरुद्धमिति भावः । ननु त्वत्पक्षेऽप्यविद्या तदनादित्वं तस्या बन्धकत्वं विद्यापोद्यत्वं चेति बहुकल्पनादाव- योस्तुल्यता नेत्याह । **कल्प्येति** । अविद्यानादित्वानिर्वाच्यत्वबन्धकत्वज्ञानापोद्यत्वानाम्—

"अनादिमायया सुप्तो यदा जीवः प्रबुध्यते" ।

"प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि" ।

"नासदासीन्नो सदासीत्" "आसीदिदं तमोभूतम्" "मायां तु प्रकृतिं विद्यात्" "माया ह्येषा मया सृष्टा" "भूयश्चान्ते विश्वमायानिवृत्तिः" "मायामेतां तरन्ति ते" इति श्रुतिस्मृतिभिरेव सिद्धेर्न तान्यविद्यायाः कल्प्यत्वेऽपि कल्प्यानीति भावः । किं चाविद्याऽपि न कल्प्या नित्यानुभवसिद्धत्वादित्याह । **सा चेति** ॥ १८२ ॥

**तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः ॥**
**अविद्या सह कार्येण नाऽऽसीदस्ति भविष्यति ॥ १८३ ॥**

अविद्यातत्कार्याख्यबन्धस्याध्यस्तत्वे सिद्धमर्थमाह । **तत्त्वमस्यादीति** ॥ १८३ ॥

**अतः प्रमाणतोऽशक्याऽविद्योऽस्येति निरीक्षितुम् ॥**
**कीदृशी वा कुतो वाऽसावनुभूत्येकरूपतः ॥ १८४ ॥**

ननु मुक्तिकालोऽप्यविद्यादिस्पर्शी कालत्वात्पूर्वकालवन्नेत्याह । **अत इति** । यतो वाक्योत्था विद्या सकार्याविद्यायास्त्रिकालवर्तिनीमपि सत्तां न मृष्यत्यतो मुक्तस्य सका- र्याऽविद्याऽस्तीति न मानतः शक्यं निश्चेतुम् । अयोग्या हि सा मुक्तिकालेऽस्तीति वक्तुं तत्कालत्वव्याघातादित्यर्थः । ब्रह्मसंसृष्टाकारेण मेयत्वादविद्यायाः स्वरूपेणापि तत्संभ- वात्कुतः सा मानतो निरीक्षितुमशक्येत्याशङ्क्याऽऽह । **कीदृशीति** । किंरूपेयमविद्या कुतश्च ब्रह्मणीति बुभुत्सापनेतृ किमपि मानमत्र नान्वेष्यम् । तद्विना स्वानुभवतोऽविद्या- सिद्धौ बुभुत्साशान्तेरित्यर्थः ॥ १८४ ॥

**देवताद्रव्यकर्त्रादि ननु वस्त्वस्तु नाद्वयम् ॥**
**सर्वलोकप्रसिद्धत्वादद्वयस्याप्यसिद्धितः ॥ १८५ ॥**

अविद्या सह कार्येणेत्यादिना द्वैतस्य कल्पितत्वमनुभूत्येकरूपत इति च ब्रह्मस्वभावानु- भूतेरद्वयत्वमुक्तम् । तदेतदसहमानश्चोदयति । **देवतेति** । स्वर्गापूर्वादिद्वैतस्य वस्तुत्वे हेतुमाह । **सर्वेति** । अद्वयस्यावस्तुत्वे हेतुरद्वयस्येति । अप्यर्थो द्वैतवदिति वैधर्म्य- दृष्टान्तः ॥ १८५ ॥

---

१ ख. °त्वेन स° । २ क. °याऽस्तीति ।

**नैतत्साधु प्रमाणानां सर्वलोकाभिधं न हि ॥**
**प्रमाणमस्ति यत्प्राणाद्भवानेवं प्रभाषते ॥ १८६ ॥**

यद्बलाद्देवताद्येव वस्तु नाद्वयमित्युच्यते तत्किं सर्वलोकाख्यमानमध्यक्षाद्यतिरिक्तं तेष्वन्तर्भूतं वेति विकल्प्याऽऽद्यं दूषयति । **नैतदिति** । निर्धारणे षष्ठी । यत्प्राणाद्य-द्बलादिति यावत् ॥ १८६ ॥

**अभिमानश्च यत्रायं सर्वलोकस्य गम्यते ॥**
**प्रत्यक्षोऽर्थोऽयमित्येवं मिथ्यात्वं तस्य चोदितम् ॥ १८७ ॥**

द्वितीयं प्रत्याह । **अभिमानश्चेति** । यस्मिञ्जगति प्रत्यक्षोऽयमर्थो लैङ्गिकश्चाय-मित्यभिमानो लोकस्य गम्यते तस्याऽऽत्मयाथात्म्यज्ञानबाध्यत्वान्मिथ्यात्वं रजतादिव-द्वाचारम्भणादिशास्त्रेणोक्तम् । तथाच तद्विषयाध्यक्षाद्यन्तर्भूतसर्वलोकाख्यमानस्य देव-तादिसत्यार्थबोधित्वमसिद्धम् । प्रत्यक्षादीनामेवाऽऽरम्भणाधिकरणन्यायेनातद्बोधित्वा-दित्यर्थः ॥ १८७ ॥

**प्रत्यक्षं च यथाऽऽसन्नं परोक्षाद्वस्तुनो मतम् ॥**
**सर्वप्रत्यक्तमस्तद्वद्बोधो वाक्योत्थ आत्मनि ॥ १८८ ॥**

ननु श्रौतात्मधीर्नाध्यक्षबाधिकाऽप्रत्यक्षत्वानुमानवदित्यनुमानात्प्रत्यक्षसिद्धबन्धस्या-बाध्यत्वम् । तत्र श्रौतात्मधियोऽप्रत्यक्षत्वं संनिहितार्थाबोधित्वं वाऽपरोक्षार्थाबोधित्वं वाऽपरोक्षत्वानधिकरणत्वं वा निरपेक्षत्वराहित्यं वा नाऽऽद्य इत्याह । **प्रत्यक्षं चेति** । परोक्षादनुमेयाद्वस्तुनः सकाशात्प्रत्यक्षविषयभूतं वस्तु यथा संनिहितमिष्टं तथा ब्रह्मा-त्मनि वेदान्तवाक्यजो बोधः सर्वतः संनिहितं विषयीकरोति तद्विषयात्मनः प्रत्यक्तम-त्वात्तथा च तद्धियः संनिहिताबोधित्वा॑प्रत्यक्षत्वाभावाद्युक्तं द्वैतधीबाधकत्वमिति भावः ॥ १८८ ॥

**आत्मानुभवमाश्रित्य प्रत्यक्षादि प्रसिध्यति ॥**
**अनुभूतेः स्वतः सिद्धेः काऽपेक्षा ह्यात्मसिद्धये ॥ १८९ ॥**

न द्वितीय इत्याह । **आत्मानुभवमिति** । न तावत्प्रत्यक्षादि स्वतः सिध्यति जड-त्वान्नापि मानतोऽनवस्थानान्न॑ चासिद्धं विषयासाधकत्वापत्तेस्तस्मादात्मस्वभावमनुभवमा-लम्ब्य तत्सिद्धिरित्यर्थः । प्रत्यक्षादिवदात्मानुभवस्यापि स्फूर्तिरन्याधीनेत्याशङ्क्याऽऽह । **अनुभूतेरिति** । आत्मनो हि स्वरूपानुभूतेः सर्वसिद्धिहेतोरन्यतःसिद्ध्ययोगात्स्वतोऽपरो-क्षतेति तद्विषयवाक्योत्थधियो नापरोक्षार्थाबोधित्वमप्रत्यक्षत्वमित्यर्थः ॥ १८९ ॥

**आत्मानुभवपूर्वत्वात्प्रत्यक्षत्वस्य न स्वतः ॥**
**आत्मैकगम्यमैकात्म्यं वेदान्तेष्ववगम्यते ॥ १९० ॥**

---

१ क. °त्वाभा° । २ ख. °न्न वाऽसि° ।

न तृतीय इत्याह । **आत्मानुभवेति** । प्रत्यक्षमपि जाड्यान्न स्वतोऽपरोक्षम् । किंतु नित्यापरोक्षस्वरूपानुभवसंबन्धात् । तथा च तद्गतापरोक्षत्वस्य स्वतःसिद्धात्मानुभवाधीनत्वात्तद्विषयश्रौतधियोऽपि तदधीनत्वान्नापरोक्षत्वानधिकरणतेत्यर्थः । **न चतुर्थ** इत्याह । **आत्मैकगम्यमिति** । स्थितं हि **चोदनासूत्रे** प्रामाण्यस्वतस्त्वम् । तथा चोक्तार्थबोधि[1]वेदान्तानां सापेक्षत्वायोगात्तदीयात्मधियो नैरपे[2]क्ष्यमतिव्यक्तमिति भावः ॥ १९० ॥

**यच्चाप्युक्तं श्रुतिस्मृत्योः क्रियाया एव सिद्धितः ॥**
**अतः क्रियातिरेकेण नास्त्यन्यन्मुक्तिसाधनम् ॥ १९१ ॥**

श्रौताद्वैतधियोऽनपेक्षत्वे सत्यु[3]क्तोत्तरमानत्वेन बलीयस्त्वाद्वैतगाध्यक्षादिबाधकत्वसिद्धेरज्ञानोत्थप्रपञ्चस्य ज्ञानैकापनोद्यत्वसंभवाज्ज्ञानं मुक्तिहेतुः साधनचतुष्टयवानधिकारी कर्माभ्युदयहेतुरविवेकी चाधिकारीति काण्डयोः साधनादिभेद उक्तः । संप्रति प्रतिपत्तिकर्मन्यायेन परोक्तान्पूर्वपक्षलेशाननुभाष्य दूषयितुं श्रुतत्वात्कर्मणः श्रुतावित्यत्रोक्तमनुवदति । **यच्चेति** ॥ १९१ ॥

**केन चोक्तं क्रिया मु[4]क्तेः साधनत्वं न गच्छति ॥**
**तमेतमिति नाश्रौषीः संस्कारा इति च स्मृतिम् ॥ १९२ ॥**

तत्र किं कर्म साक्षान्मोक्षस्य हेतुरुत परंपरया नाऽऽद्यः प्रापकाभावात्कर्मणैव हि संसिद्धिमित्यादेस्तु **न** कर्मणेत्यादिश्रुतिविरोधेऽन्यपरत्वादिति मत्वा कल्पान्तरमङ्गीकरोति । **केनेति** । विविदिषाद्वारा संस्कारद्वारा वा कर्म मुक्तिहेतुरित्युपगतम् । तत्राऽऽद्ये विविदिषावाक्यं प्रमाणयति । **तमेतमितीति** । गर्भाधानपुंसवनसीमन्तोन्नय[5]नजातकर्मनामकरणान्नप्राशनचौलोपनयनं चत्वारि वेदव्रतानि स्नानं सहधर्मचारिणीसंयोगः पञ्चानां यज्ञानामनुष्ठानं देवपितृमनुष्यभूतब्रह्मणामेतेषां त्वष्टका पार्वणश्राद्धं श्रावण्याग्रहायणी प्रोष्ठपदी चैत्र्याश्वयुजीति **सप्त** पाकयज्ञसंस्थाः । अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणीति **सप्त** हविर्यज्ञसंस्थाः । अग्निष्टोमोऽत्यग्निष्टोम उक्थः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति **सप्त** सोमसंस्था इत्येते **चत्वारिंशत्संस्कारा** यस्य स ब्र[6]ह्मणः सायुज्यं जयतीत्यादिस्मृतिं संस्कारपक्षे दर्शयति । **संस्कारा इति चेति** ॥ १९२ ॥

**यद्यप्यैकात्म्यधीः साक्षाच्छ्रुतिस्मृत्योर्न चोद्यते ॥**
**तथाऽप्यसौ न तद्बाह्या ताभ्यामेवाऽऽत्मबोधनात् ॥ १९३ ॥**

कर्मभ्य एव तत्सिद्धेरित्यादि निरस्य श्रुतौ स्मृतौ च विहितं कर्मैवेत्यत्रोक्तं दूष-

१ ख. °धिनां वे° । २ क. °पेक्ष्यं व्य° । ३ ख. °त्युत्त° । ४ ख. मुक्तौ । ५ ख. °यनं जा° । ६ ख. ब्राह्मणः ।

यति । **यद्यपीति** । आत्मज्ञानमचोदितमपि नावैदिकं श्रुतिस्मृत्युक्तत्वात्कर्मज्ञानवदत-स्तस्य पुमर्थोपायत्वमविरुद्धमित्यर्थः ॥ १९३ ॥

**यच्च न ज्ञाप्यते वेदे वस्त्वित्येतदचूचुदः ॥**
**तच्चापहस्तितं चोद्यं वक्ष्यते च निराकृतिः ॥ १९४ ॥**

कथं श्रुतिस्मृतिभ्यामात्मा बोध्यते तयोः कार्यार्थत्वात्तच्छेषत्वेनैव भूतभव्यन्यायेन सिद्धार्थोपदेशादित्याशङ्क्य न च कर्मातिरेकेणेत्यादिनोक्तमनुवदति । **यच्चेति** । श्रुत्यादिमानप्रमितप्रत्यग्याथात्म्यनिष्ठितमित्यादिना निरस्तमेतदित्याह । **तच्चेति** । श्रुत्यादेरैक्ये मानत्वोक्तिमात्रेण तत्साधनं विना कथमेतदपास्तमित्याशङ्क्य सर्वोऽप्ययमित्यादौ वक्ष्यमाणमप्यत्रानुसंधेयमित्याह । **वक्ष्यते चेति** ॥ १९४ ॥

**विधावसति वाक्यस्य यच्चावोचोऽप्रमाणताम् ॥**
**स्फुटन्यायोक्तिभिस्तच्च यत्नात्परिहरिष्यति ॥ १९५ ॥**

निषेधविधिमात्रत्वाद्वेदार्थस्येत्यत्रोक्तमनुभाषते । **विधाविति** । क्रियापदादूर्ध्वमितिशब्दमध्याहृत्य यच्चेति योज्यम् । तदपि वस्तुन्यैकात्म्ये श्रुत्यादिमानत्वोक्त्या परास्तम् । अबाधितासंदिग्धन्यायसंदर्भोक्तिभिश्च सर्वोऽप्ययमित्यादावेव पराकरिष्यत इत्याह । **स्फुटेति** ॥ १९५ ॥

**यच्चोक्तं न पुमर्थोऽस्ति वस्तुमात्रावबोधनात् ॥**
**आख्यानप्रचुरा यस्मात्त्रय्यन्ता इह लक्षिताः ॥ १९६ ॥**

**आम्नायस्य** क्रियार्थत्वादित्यत्र विवक्षितं चोद्यमादत्ते । **यच्चोक्तमिति** । तत्र वेदान्तानां वस्तुमात्रपरत्वमिति शेषः । तन्मात्रपराणामपि तेषां सुखादिफलत्वेन प्रामाण्यमाशङ्क्याऽऽह । **आख्यानेति** । तेषां तत्प्राचुर्ये देवासुरसंग्रामाद्यर्थवाददर्शनं हेतुः । तस्मादेषां न प्रवृत्त्यादिसाध्यसुखादिफलवत्तया मानत्वमिति शेषः । इहेत्याम्नायोक्तिः ॥ १९६ ॥

**रामो राजा बभूवेति न ह्येतावत्प्रबोधतः ॥**
**संभाव्यते पुमर्थोऽतो विध्यर्थविरहात्क्वचित् ॥ १९७ ॥**

ननु वेदान्तेभ्यो वस्तुमात्रधीस्ततश्चेच्छा ततः प्रवृत्तिरिति तत्पराणामपि तेषां प्रवृत्तिसाध्यफलत्वेन मानत्वसिद्धिरत आह । **राम इति** । यथोक्तदृष्टान्ताद्वेदान्तानां तन्मात्रपराणामपि फलवैकल्ये कुतो मानतेति शेषः । यस्मादविधिपरस्य न पुमर्थत्वलाभस्तस्मात्तदर्थं वेदान्तानामपि विधिपरत्वं वाच्यमिति फलितमाह । **अत इति** । क्वापि वाक्ये नियोगं विना पुमर्थाभावाद्वेदान्तेष्वपि फलवत्त्वेन प्रामाण्यार्थमेष्टव्यो विधिरित्यर्थः ॥ १९७ ॥

**परार्थतैव सर्वत्र ज्ञानस्येहोपलक्ष्यते ॥**
**ज्ञात्वाऽनुष्ठानवचनाद्विद्वान्यजत इत्यपि ॥ १९८ ॥**

तेषु विध्यश्रवणात्कुतस्तत्परत्वेन पुमर्थावसायितया मानत्वमित्याशङ्क्याऽऽह । **परार्थतेति ।** इहेति शास्त्रोक्तिः । आज्यावेक्षणवदात्मज्ञानस्य कर्मशेषत्वात्तद्द्वारा तद्विधिपरत्वं वेदान्तानां युक्तमित्यर्थः । दर्शपूर्णमासप्रकरणे पत्न्यवेक्षितमाज्यं भवतीति श्रुतेरवेक्षणस्य कर्माङ्गत्वेन प्रकरणं प्रमाणम् । आत्मज्ञानस्य तदङ्गत्वे तु किं प्रमाणमित्याशङ्क्याऽऽह । **ज्ञात्वेति** ॥ १९८ ॥

**उक्तोऽत्र परिहारः प्रागूर्ध्वं चापि प्रवक्ष्यते ॥**
**विद्याफलस्य प्रात्यक्ष्यादितिहेतुसमाश्रयात् ॥ १९९ ॥**

काण्डयोरुक्तरीत्या साधनाधिकार्याद्यभेदे प्राप्ते प्रत्यादिशति । **उक्तोऽत्रेति ।** विद्वत्प्रत्यक्षश्रुत्यवष्टम्भेनाऽऽत्मधियोऽशेषानर्थध्वस्तिरनतिशयानन्दाभिव्यक्तिश्चेत्येवंविधं फलं प्रत्यक्षं ह्यात्मधीफलमित्यत्रोक्तं तन्न कर्मविधिशेषत्वं वेदान्तानामित्यर्थः । तत्राऽऽम्नायाभिधानस्येत्यादिना भाविनमपि समाधिं सूचयति । **ऊर्ध्वं चेति** ॥ १९९ ॥

**ननु निर्धूतशोकादि फलं यच्छ्रूयते श्रुतौ ॥**
**आत्मस्तुतिरसौ तस्मात्त्वन्मनोरथकल्पितम् ॥ २०० ॥**

विद्याफलविषयमागमं तरति शोकमात्मविदित्यादिकमुक्तमपाकुर्वन्नाशङ्कते । **नन्विति ।** फलं ज्ञानस्येति शेषः । महानुभावः खल्वयमात्मा यदस्य ज्ञानमशेषशोकादिनाशकमिति कर्माधिकृतात्मस्तुतिस्तस्मान्नाऽऽगमो विद्याफले मानमित्यर्थः । यत्तु तत्र विद्वत्प्रत्यक्षमुक्तं तत्प्रत्याह । **त्वदिति ।** न हि यथोक्तं फलमाकलयितुं त्वदुत्प्रेक्षितं प्रत्यक्षं क्षमते तस्य त्वन्मनोरथसिद्धतया तस्मिन्नस्माकमसंमतेरित्यर्थः ॥ २०० ॥

**अत्रोच्यते ह्यभिप्रेतं गम्यमानं प्रमाणतः ॥ २०१ ॥**
**फलं तत्संपरित्यज्य कस्माल्लक्षणया स्तुतिम् ॥**
**अश्रुतामनभिप्रेतां कल्पयस्यबुधो यथा ॥ २०२ ॥**

श्रुतेः शोकादिनाशपरतात्यागे तस्यानभिप्रेतत्वं वा हेतुर्वाक्यादाहत्यानवगम्यमानत्वं वा मानान्तरेणामीयमानत्वं वेति विकल्पयति । **अत्रेति ।** सुखं मे स्याद्दुःखं मा भूदित्यर्थ्यमानफलस्यानभिप्रेतत्वायोगान्नाऽऽद्य इत्याह । **अभिप्रेतमिति ।** न द्वितीय इत्याह । **गम्यमानमिति ।** प्रकृते फलश्रुतेर्झटिति दृश्यमानमित्यर्थः । न तृतीय इत्याह । **प्रमाणत इति ।** विद्वदनुभवाद्भासमानस्य मानान्तरेणागम्यमानत्वमासिद्धमिति भावः । किंच कथं फलश्रुतेरभूतार्थवादत्वेनाऽऽत्मस्तुतिपरत्वं किं वाक्यान्मुखतः स्तुतेरवगतत्वाद्भुताभिसंहितत्वात्किंवा मानान्तरसिद्धत्वान्नाऽऽद्य इत्याह । **फलमिति ।** न तावद्वाक्यादाहत्याऽऽत्मस्तुतिधीः किंतु लक्षणया सा कल्प्या न च श्रुतिदृष्टं

---

१ ख. ०स्य प्रत्यक्षादि० ।

विद्वद्दृष्टं च फलं हित्वा लाक्षणिकीं तां कल्पयन्प्रेक्षापूर्वकारी स्यादित्यर्थः। आत्मस्तुतिरिहाऽऽहत्य न भातीत्यत्र हेतुमाह । **अश्रुतामिति** । स्तुतिवाचिपदादृष्टेरित्यर्थः। न द्वितीय इत्याह । **अनभिप्रेतामिति** । सुखाप्तिदुःखहानितद्धेत्वन्यत्वान्नाभिसंहिता स्तुतिरित्यर्थः। न तृतीय इत्याह । **कल्पयसीति** । आत्मस्तुतित्वं शोकादिनाशस्य न मानान्तरसिद्धम्। त्वं पुनरज्ञवद्वर्तसेऽप्रामाणिकस्य कल्पनादित्यर्थः ॥ २०१ ॥ ॥ २०२ ॥

**न चास्त्येकविषयत्वं प्रत्यक्षवचसोर्यतः ॥**
**श्रुत्यैव परिहारोक्तेः स्वप्नादिस्थानसंचरात् ॥ २०३ ॥**

श्रुतहान्यश्रुतकल्पनाप्रसङ्गात्फलश्रुतिरात्मस्तुतिपरा नेत्युक्तम् । अथाहं दुःखीत्यध्यक्षविरोधादात्मनः शोकादिनाशपरत्वं फलश्रुतेर्नास्तीति तत्र भिन्नविषययोर्वा प्रत्यक्षश्रुत्योर्विरोध एकविषययोर्वा तत्राऽऽद्यमतिप्रसक्तिं मन्वानो द्वितीयं प्रत्याह । **न चेति** । न हि तयोरेकविषयत्वं विशिष्टस्वरूपविषयत्वेन व्यवस्थोक्तेस्तन्न विरोधस्तयोरित्यर्थः। आत्मा कर्तृत्वादिधर्मकोऽहंधीविषयस्तत्कथं प्रत्यक्षश्रुत्योर्भिन्नविषयतेत्याशङ्क्याऽऽह । **श्रुत्येति** । स्थानत्रयसंचारोक्त्याऽऽगमापायिभ्यः स्थानतदभिमानिभ्योऽन्यं तत्साक्षिणं सदानन्दानुभूतिस्वभावं प्रत्यञ्चमुक्त्वा तस्यावस्थात्रयासंबन्धात्तत्संबन्धाधीनदुःखाद्यभावमाह वेदः । अतः प्रत्यक्षश्रुत्योर्भिन्नविषयतया विरोधसमाधेः श्रुत्यैवोक्तत्वान्न तत्र विरोधाशङ्केत्यर्थः ॥ २०३ ॥

**बहुशोऽसङ्गवचसा निःसङ्गत्वं ब्रुवाणया ॥**
**मनोराज्यसमं मन्ये सर्वमेतत्त्वयोदितम् ॥ २०४ ॥**

उक्तात्मोक्तौ श्रुतेस्तात्पर्यमाह । **बहुश इति** । फलश्रुतेरुक्तरीत्या फलपरत्वमापाद्य त्वन्मनोरथकल्पितमित्युक्तं चोद्यमादत्ते । **मनोराज्येति** । एतच्छब्देन चिदानन्दैकतानं ब्रह्म तत्र कर्तृत्वादिरारोपितस्तस्याऽऽत्यन्तिकी ध्वस्तिर्धीफलं विद्वत्प्रत्यक्षाच्च तद्धीरित्येतदाह ॥ २०४ ॥

**न प्रत्येमि यतः साक्षात्प्रत्यक्षं ज्ञानतः फलम् ॥**
**श्रुतादपि न चेद्वाक्याज्जायेत फलवन्मतिः ॥**
**आशङ्क्येत तदैवैतद्यदेतद्भवतोदितम् ॥ २०५ ॥**

तत्र हेतुः । **नेति** । प्रत्यक्षस्यास्य[1] योग्यानुपलब्धिबाधान्न विद्याफले प्रामाण्यमिति भावः। प्रत्यक्षं विद्याफलमित्यादि न मनोरथमात्रमिति परिहरति। **श्रुतादिति**। श्रुतात्तत्त्वमादिवाक्यादधिकारिणोऽपि फलवज्ज्ञानं यदि नोत्पद्येत तदा त्वदुक्तमाशङ्क्येत। न चैतदस्ति। अधिकारिणः प्रमितिजनको वेद इति हि न्यायोऽतस्तस्य वाक्यीयधीसंभवात्तत्फलो-

---

१ ख. °क्षस्य ।

पलब्धेस्तदनुपलम्भो ज्ञानफलाध्यक्षं न बाधते स्वयमभावादज्ञस्य त्वनधिकारिणस्तदनुपलम्भो न फलाध्यक्षं क्षेप्तुं क्षमते । अयोग्यानुपलम्भत्वादिति भावः ॥ २०५ ॥

**नित्यमुक्तत्वविज्ञानं वाक्याद्भवति नान्यतः ॥**
**वाक्यार्थस्यापि विज्ञानं पदार्थस्मृतिपूर्वकम् ॥ २०६ ॥**

अधिकारिणः श्रुताद्वाक्याज्ज्ञानमुक्त्वा तस्य तस्मादृतेऽपि मानान्तरादेव यथोक्ता धीः स्यादित्याशङ्क्य वस्तुनो मानान्तरायोग्यत्वान्नैवमित्याह । **नित्येति** । ननु वाक्यमपि यथोक्तेऽर्थे ज्ञानं न जनयेत्सर्वेषामेव श्रुतवाक्यानां तदुत्पत्तिप्रसक्तेरित्याशङ्क्य पदार्थशुद्धिशून्यानां वाक्यश्राविणामपि बधिरेषु गानवद्वाक्यमकिंचित्करमित्याह । **वाक्यार्थस्येति** ॥ २०६ ॥

**अन्वयव्यतिरेकाभ्यां पदार्थः स्मर्यते ध्रुवम् ॥**
**एवं निर्दुःखमात्मानमक्रियं प्रतिपद्यते ॥ २०७ ॥**
**सदेवेत्यादिवाक्येभ्यः प्रमा स्फुटतरा भवेत् ॥**
**दशमस्त्वमसीत्यस्माद्यथैवं प्रत्यगात्मनि ॥ २०८ ॥**

तर्हि पदार्थस्मृतिरपि सर्वेषां स्यात्तत्राऽऽह । **अन्वयेति** । तत्र सर्वेषां पदार्थशुद्धिरिति शेषः । तर्हि ताभ्यामेव वाक्यार्थधीरस्तु कृतं वाक्येनेत्याशङ्क्य तयोरमानत्वान्नैवमित्याह । **एवमिति** । ननु सदेवेत्यादि वाक्यं न वस्तुमात्रे मानं वाक्यत्वाद्विधिवाक्यवत्तत्र तदप्रामाण्यं प्रमानुत्पादकत्वं वा दुष्टसामग्रीत्वं वा मानान्तरेणापहृतविषयत्वं वाऽपरोक्षज्ञानाजनकत्वं वा तत्राऽऽद्यमनुभवविरोधेन धुनीते । **प्रमेति** । वाक्यत्वहेतोरनैकान्तिकत्वमाह । **दशमस्त्वमिति** ॥ २०७ ॥ २०८ ॥

**अमात्वाशङ्कासद्भावान्मान्तरैश्चाविरोधतः ॥**
**वक्ष्यत्येतच्च यत्नेन लोकसिद्धोपपत्तिभिः ॥ २०९ ॥**

द्वितीयं दूषयति । **अमात्वेति** । अपौरुषेये वेदे दुष्टसामग्रीत्वशङ्कानवकाशादत्राप्यमानत्वं दुष्टसामग्रीत्वमशक्यशङ्कमित्यर्थः । तृतीयं प्रत्याह । **मान्तरैश्चेति** । विशिष्टस्वरूपविषयत्वेन व्यवस्थितयोर्न विरोधाशङ्का तत्कथं प्रत्यक्षादिभिः श्रुतेरपहृतविषयतेत्यर्थः । चतुर्थं निराह । **वक्ष्यतीति** । मानं हि यथा मेयं ज्ञानं जनयत्यन्यथा प्रामाण्यायोगात्तथा च परोक्षे परोक्षमपरोक्षे चापरोक्षं ज्ञानं मानानुसारि वाच्यम् । आत्मा च **यत्साक्षा**दित्यादिश्रु**ते**र्नित्यापरोक्षोऽतस्तत्रापरोक्षमेव ज्ञानं वाक्यं जनयेदित्यादिलोकसिद्धयुक्त्यवष्टम्भात्तस्मिन्वाक्यादपरोक्षं ज्ञानं भवतीति **भाष्यकारो** वक्ष्यतीत्यर्थः॥२०९॥

**चतुष्पान्मानिरासेन साक्षाज्ज्ञानफलं ततः ॥ २१० ॥**

१ ख. बाधेत । २ ख. °मात्वश° । ३ ख. °ग्रीजत्व° । ४ ख. °ग्रीजत्व° । ५ ख. °क्षे वाऽप° ।

**नवसंख्याहृतज्ञानो दशमो विभ्रमाद्यथा ॥**
**न वेत्ति दशमोऽस्मीति वीक्षमाणोऽपि तान्नव ॥ २११ ॥**

कथं वक्ष्यतीति वीक्षायामाह । **चतुष्पादिति ।** शब्दयुक्तिप्रसंख्यानात्मानश्चत्वारः पादा यस्याः प्रमायास्ततोऽपरोक्षज्ञानं न शब्दादित्येके तन्निरासप्रसङ्गेन ततो वाक्यादेव साक्षान्मानफलमपरोक्षज्ञानमिति वक्ष्यतीत्यर्थः । नन्वज्ञातज्ञापकं मानमात्मा च नाज्ञातोऽपरोक्षसंविदात्मत्वादतो न स वेदप्रमाणकः स्यादित्याशङ्क्य प्रागुक्तं दृष्टान्तं विवृणोति । **न वेत्तीति ।** यथा वस्तुतो दशमो माणवकः स्वात्मानममुष्य पुत्रो मैत्रोऽस्मीत्यपरोक्षं संविदानः स्वान्यान्माणवकान्वीक्षमाणोऽपि नवमाणवकगणनमुषितशेमुषीको दशमस्त्वमिति वाक्यादृते दशमोऽस्मीति न वेत्ति तत्त्वधीप्रतिबन्धकाज्ञानभावादित्यर्थः ॥ २१० ॥ २११ ॥

**अपविद्धद्वयोऽप्येवं तत्त्वमित्यादिना विना ॥**
**वेत्ति नैकलमात्मानं प्रत्यङ्मोहाप्रबोधतः ॥ २१२ ॥**

एवमित्यादिदार्ष्टान्तिकं प्रपञ्चयति । **अपविद्धेति ।** अतः सामान्येनापरोक्षीकृतस्यापि विशेषेणाज्ञातत्वादात्मनो वेदप्रमाणकतेति शेषः । ननु दशमस्य स्वविषयज्ञानाभाववत्त्वमज्ञातत्वमात्मनस्तु स्वप्रकाशस्य न तादृगज्ञातत्वं युक्तं तत्कुतस्तत्र वेदप्रामाण्यमत आह । **प्रत्यगिति ।** आत्मविषयस्तदाश्रयश्च मोहः प्रत्यङ्मोहः स एव विद्यापोद्यत्वादप्रबोधस्तस्मादात्मानमेष न वेत्तीत्यन्वयः । न हि स्वज्ञानाभाववत्त्वमज्ञातत्वं तत्खल्वज्ञानविषयत्वमज्ञानं च न ज्ञानाभावो जगद्विभ्रमहेतुत्वात्तथा चाभावान्याज्ञानविषयत्वं मां न जानामीत्यात्मन्यनुभूयते । अतो युक्तमात्मनो वैदिकत्वमिति भावः । **प्रत्यङ्मोहाप्रबाधत** इति पाठे तु न वेत्तीत्यत्र हेतुः ॥ २१२ ॥

**बुभुत्सोच्छेदिनैवास्य सदसीत्यादिना दृढा ॥**
**प्रतीचि प्रतिपत्तिः स्यात्प्रत्यगज्ञानबाधया ॥ २१३ ॥**

बुभुत्सितस्य शब्दबोध्यत्वादात्मनश्चापरोक्षत्वेनातथात्वादशाब्दत्वमित्याशङ्क्याऽऽह । **बुभुत्सेति ।** अपरोक्षचित्स्वभावोऽपि सदानन्दमात्मानं बुभुत्सते तस्य साङ्गाध्ययनवतः प्रतिवेदान्तेष्वापाततो दृष्टत्वेऽपि विशेषतोऽदृष्टत्वात्तस्मादाकाङ्क्षानिवर्तकवाक्येनाऽऽत्मन्यबाधितासंदिग्धावबोधः स्यादेवेत्यर्थः । ननु सदादिवाक्यमज्ञातमात्मानं विषयीकरोतीत्ययुक्तमज्ञानस्यापि तद्विषयत्वप्रसङ्गात् । न हि दण्डिन्यानीयमाने दण्डो नाऽऽनीयते तत्राऽऽह । **प्रत्यगिति ।** आत्मोपलक्षणाज्ञानबाधेनाऽऽत्मन्युपलक्षिते वाक्योत्थं ज्ञानमिष्टं तन्नाज्ञानस्य मेयतेत्यर्थः ॥ २१३ ॥

---

१ क. नवेति ।

**निःशेषकर्मसंन्यासो वाक्यार्थज्ञानजन्मने ॥**
**तस्याऽऽरादुपकारित्वात्सहायत्वाय कल्प्यते ॥ २१४ ॥**

ननु शोधितपदार्थस्य वाक्यार्थं जिज्ञासमानस्य वाक्यात्तद्धीरिति ब्रुवता संन्यासस्य ज्ञानाङ्गत्वमुपेक्षितम् । तथाच ब्रह्मावाप्त्यै तु तत्त्याग इति प्रतिज्ञाहानिस्तत्राऽऽह । **निःशेषेति ।** संन्यासस्य ज्ञानसाधनश्रवणादिसहायत्वे हेतुमाह । **तस्येति ।** विहितसंन्यासस्य शमादिवज्ज्ञानं प्रति संनिपत्योपकारकत्वादित्यर्थः ॥ २१४ ॥

**त्याग एव हि सर्वेषां[2] मोक्षसाधनमुत्तमम् ॥**
**त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम् ॥ २१५ ॥**

तस्य संनिकृष्टोपायत्वे[3] हेतुमाह । **त्याग इति ।** मोक्षशब्देन तद्धेतुर्ज्ञानं लक्ष्यते । उत्तममिति संनिकृष्टत्वोक्तिः । किमिति सर्वकर्मत्यागो ज्ञानं प्रति संनिकृष्टं साधनं कर्माण्येव तद्धेतवः किं न स्युरत आह । **त्यजतेति ।** न हि कर्माण्यनुतिष्ठन्कर्ता भोक्ताऽहमिति मन्यमानः क्रियादिसंबन्धविकलमात्मानमाकलयितुमलं विरोधादिति भावः ॥ २१५ ॥

**शान्तो दान्त इति तथा सर्वत्यागपुरःसरम् ॥**
**उपायमात्मविज्ञाने श्रुतिरेवाब्रवीत्स्वयम् ॥ २१६ ॥**

कर्मत्यागस्य ज्ञानहेतुत्वे वक्ष्यमाणश्रुतिसंवादं दर्शयति । **शान्त इति ।** तत्र तावदुपरतपदेन नित्यनैमित्तिकत्यागमुक्त्वा तत्पूर्वकमात्मानं पश्येदिति ज्ञानं वदन्ती श्रुतिः स्वयमेव तत्र कर्मत्यागमुपायमुक्तवती । शमादिसमभिव्याहारादुपरतेर्ज्ञानोपायत्वप्रत्ययादुपरतश्रुत्या चाऽऽग्नेयोऽष्टाकपाल इत्यादिवज्ज्ञानसाधनसंन्यासे विवक्षित उत्पत्तिविधिरित्यर्थः ॥ २१६ ॥

**प्रवृत्तिलक्षणो योगो ज्ञानं संन्यासलक्षणम् ॥**
**तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह[4] बुद्धिमान ॥ २१७ ॥**

तत्रैव वाक्यान्तरमाह । **प्रवृत्तीति ।** युज्यतेऽनेनेति योगः कर्म तेन हि पुमान्फलेन संबध्यते स प्रवृत्तिलक्षणः प्रवृत्ती रागादिपूर्वको व्यापारः स तस्य लक्षणं हेतुरिति यावत् । ज्ञानस्य विशेषमाह । **ज्ञानमिति ।** कर्मज्ञानविभागे फलितमाह । **तस्मादिति** ॥ २१७ ॥

**मुक्तेश्च बिभ्यतो देवा मोहेनापिदधुर्नरान ॥**
**ततस्ते कर्मसंयुक्ताः प्रावर्तन्ताविचक्षणाः ॥ २१८ ॥**

तर्हि मुक्तिकारणं ज्ञानमुद्दिश्य सर्वे प्रव्रजेयुरित्याशङ्क्याऽऽह । **मुक्तेश्चेति ।** देवा हि मनुष्यान्पशुवदुपभुञ्जते यथा **पशुरेवं स देवानामिति श्रुतेः ।** अतो मनुष्या ज्ञान-

१ ख. कल्पते । २ क. च । ३ ख. °त्वे मानमा° । ४ क. °न्यसेदि° ।

वन्तश्चेन्मुच्येरन्निति तन्मुक्तिं निमित्तीकृत्य पशुभावान्निवृत्तिं तेषामालोचयन्तो भयभागिनस्ते मोहेन कर्ताऽहमित्यादिना तानाच्छादितवन्तस्ते च तेनाऽऽच्छन्नत्वादेव कर्मसु संसारफलेषु तात्पर्यतो विवेकरहिता देवपशुत्वमत्यजन्तः प्रवृत्तिं चक्रुस्तथाच पारिव्राज्यं नाप्रयत्नप्राप्यमित्यर्थः ॥ २१८ ॥

**अतः संन्यस्य कर्माणि सर्वाण्यात्मावबोधतः ॥**
**हत्वाऽविद्यां धियैवेयात्तद्विष्णोः परमं पदम् ॥ २१९ ॥**

तर्हि सुलभानि कर्माण्येव मुक्तेर्हेतवः सन्तु कृतं पारिव्राज्यपूर्वकज्ञानेनेत्याशङ्क्याऽऽह । **अत इति** । यतो देवमायानिमित्ता नराणां कर्मसु प्रवृत्तिरतस्तदुपासनासाधितमोक्षाभिलाषो, विवेकी सर्वाण्यपि कर्माण्यविवेकपूर्वकाणि त्यक्त्वा तिष्ठेदित्यर्थः । अयमपि भवत्युत्पत्तिविधिः । संन्यासानन्तरमात्मज्ञानोद्देशेन श्रवणादि कार्यमित्याह । **आत्मावबोधत इति** । श्रवणादिपरिपाकलब्धात्मसाक्षात्कारेणाशेषानर्थमूलमज्ञानमपनुद्याऽऽरब्धकर्मभोगप्रतिबन्धलब्धप्राणं तदुपकरणदेहाभासं तन्निमित्तमज्ञानलेशश्चाऽऽरब्धक्षयान्तमनुमाय तदवसानापगतप्रतिबन्धेन ज्ञानाग्निनाऽज्ञानं निःशेषतो दग्ध्वाऽऽत्मनो ज्ञानानन्दसदेकतानमनवच्छिन्नं यत्परं पदं तत्प्राप्नुयादित्याह । **हत्वेति** ॥ २१९ ॥

**इति भाल्लविशाखायां श्रुतिवाक्यमधीयते ॥**
**सर्वकर्मनिरासेन तस्मादात्मधियो जनिः ॥ २२० ॥**

नन्वेतानि वाक्यानि न क्वचिदपि कण्डिकास्थानेषु पठ्यन्ते किंतु स्वाभिप्रायानुसारेण स्वयमेव लिखितानीत्याशङ्क्याऽऽह । **इति भाल्लवीति** । यथोक्तश्रुतिस्मृतीनां तात्पर्यमाह । **सर्वेति** । श्रुतिस्मृतिवाक्यानां संन्यासस्य ज्ञानहेतुतावादित्वं तच्छब्दार्थः ॥ २२० ॥

**सत्यानृते इति तथा सर्वसंन्यासपूर्वकम् ॥**
**आत्मनोऽन्वेषणं साक्षादापस्तम्बोऽब्रवीन्मुनिः ॥ २२१ ॥**

तस्य ज्ञानोपायत्वे स्मृत्यन्तरमाह । **सत्येति** । सत्यानृते सुखदुःखे वेदा**निमं लोक**ममुं च परित्यज्याऽऽत्मानमन्विच्छेदिति **वाक्येना**ऽऽत्मज्ञानमुद्दिश्य संन्यासपूर्वकं श्रवणाद्यनुष्ठेय**मापस्तम्बो** भगवानूचिवानित्यर्थः । तथाशब्दः समुच्चयार्थः । श्रुतार्थानुपपत्त्याऽयमर्थो न कल्प्यते किंतु वचोवृत्त्यैव भातीत्याह । **साक्षादिति** । तदुक्तेऽर्थे विश्वासार्थं तस्य ज्ञानातिशयवत्त्वं दर्शयति । **मुनिरिति** ॥ २२१ ॥

**नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ॥**
**नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥ २२२ ॥**

ननु काम्यानां कर्मणां न्यासमित्युपक्रम्य नियतस्य तु संन्यासः कर्मणो नोपपद्यत

१ ख. °तानानव° ।

इति वदता भगवता काम्यादित्यागेऽपि नित्यादित्यागो नानुमतस्तथा च काम्यादित्यागस्य ज्ञानहेतुत्वेऽपि न नित्यादित्यागस्य तद्धेतुतेत्याशङ्क्य श्रुत्यन्तरमाह। **नेत्यादिना।** दुश्चरितं निषिद्धं कर्म तस्मादनुपरतो न श्रवणादावधिक्रियते। अशान्तः काम्यानुष्ठानशीलः सोऽपि न तत्राधिकारी। असमाहितो विधितोऽत्यक्तनित्यादिकर्मा सोऽपि न तस्मिन्नधिकारी। अशान्तमानसो बाह्यविषयेष्वव्यावृत्तचित्तव्यापारः सोऽपि श्रवणाद्यनधिकारी तस्मिन्ननधिकृतश्चाकृतश्रवणादिरात्मैकत्वज्ञानेन नित्यमुक्तमात्मानं नाऽऽप्नोति हेत्वभावेन ज्ञानाभावादित्यर्थः। कर्मशीलानां ज्ञानानधिकारोक्तिमुखेन त्यक्ताशेषक्रियस्य संन्यासिनस्तदधिकारोऽनन्तरवाक्येषु दर्शितो भगवता तु शुद्धिहेतोर्नित्याद्यनुष्ठानस्य स्तुतिरिष्टा॥ २२२॥

**वेदानुवचनादीनां विनियोगोक्तियत्नतः॥**
**भिन्नाधिकारितालिङ्गं कर्मविज्ञानकाण्डयोः॥ २२३॥**

ननु विविदिषावाक्येन कर्मणां ज्ञानहेतुत्वेन विनियोगाद्गोदोहनन्यायेन कर्माधिकार्येव ज्ञानाधिकारी न त्यक्तकर्मेत्यत आह। **वेदेति।** कर्मणां ज्ञानसाधनत्वेन विनियोगोक्तौ विविदिषावाक्यस्य तात्पर्यदृष्टेर्न कर्माधिकृतस्य ज्ञानाधिकारः। किंतु काण्डयोरेष विनियोगो भिन्नाधिकारत्वं गमयति। न हि दर्शाद्यधिकृतस्याप्प्रणयनाधिकारे दर्शपूर्णमासयोस्तत्र विनियोगः। एवं कर्माधिकृतस्य ज्ञानाधिकारे कर्मणां तस्मिन्विनियोगो न स्यात्। अथाप्प्रणयनाधिकृतस्य दर्शाद्यधिकृतत्वेऽपि तस्य तस्मिन्विनियोगवत्कर्माधिकृतस्य ज्ञानाधिकारेऽपि तेषां तस्मिन्विनियोगः स्यादिति चेन्न। तस्य पृथक्फलाभावात्कर्मणां तु फलवतामेव संयोगपृथक्त्वेन ज्ञाने विनियोगादतो विविदिषावाक्यीयो विनियोगो भिन्नाधिकारित्वं काण्डयोः सूचयतीति भावः॥ २२३॥

**ज्ञानोत्पत्त्यादिकाल्लिङ्गाद्यतस्तद्धेतुमात्रकम्॥**
**गम्यते न विशेषोऽतः कर्मैवेति न गम्यते॥ २२४॥**

ननु कर्मणां ज्ञानहेतुत्वेन विनियोगान्न तत्त्यागस्य तद्धेतुत्वम्। न खल्वेकस्य भावाभावावेकस्मिन्फले हेतुतया संबध्येते तत्राऽऽह। **ज्ञानेति।** धर्मात्सुखं च ज्ञानं चेति ज्ञानोत्पादकत्वं कर्मणां गम्यते। विविदिषावाक्ये तु विविदिषाहेतुत्वम्। यस्यैते चत्वारिंशत्संस्कारा इति संस्कारत्वम्। अनुपहतमना एव भवति पावनानि मनीषिणामिति मनःशुद्धिकरत्वम्। एवं कर्मणो ज्ञानोत्पत्तिविविदिषासंस्कारशुद्धिलिङ्गदृष्टेस्तस्य ज्ञानं प्रति हेतुत्वमात्रं गम्यते न विशेषः। न हि कर्मैव ज्ञानहेतुरिति विशेषधीस्तत्त्यागस्यापि तद्धेतुत्वगमकश्रुत्यादिकोपप्रसङ्गात्तस्मात्कर्माणि शुद्धिद्वारा ज्ञानहेतवः।

---

१ ख. ज्ञानेऽन॰। २ ख. ॰तुमा॰।

संन्यासस्तु श्रवणादीतिकर्तव्यतया साक्षादिति विभागे द्वयोः साधनत्वोपपत्तिरित्यर्थः । न विशेष इत्यस्य व्याख्या कर्मैवेति न गम्यत इति ॥ २२४ ॥

**मुण्डोऽपरिग्रहोऽसङ्गो बहिरन्तःशुचिः सदा ॥**
**ब्रह्मभूयाय भवति परिव्राडिति च श्रुतिः ॥ २२५ ॥**

उभयप्रमाणानुरोधादुभयोरपि कर्मतत्त्यागयोर्ज्ञानहेतुत्वमुक्त्वा त्यागस्य तद्धेतुत्वे श्रुत्यन्तरमाह । **मुण्ड इति** । शिखाराहित्यवद्यज्ञोपवीताद्यभावमाह । **अपरिग्रह इति** । "**सशिखं** वपनं कृत्वा बहिःसूत्रं त्यजेद्बुधः" इति हि **श्रुत्यन्तरे**। गृहक्षेत्रादिपरिग्रहाभावेऽपि तद्विषयासक्तिः संभवति तन्निरासार्थमाह । **असङ्ग इति** । यथेष्टचेष्टाप्राप्तिं प्रत्याह । **बहिरिति** । उक्तः संन्यासी श्रवणादिद्वारा ब्रह्मसाक्षात्कारयोग्यो भवतीत्याह । **ब्रह्मेति** । अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय भवतीति **जाबालश्रुतिरुक्ताऽत्र** चाथ परिव्राडिति पारिव्राज्योत्पत्तिविधिरितस्तद्धर्मविधिरिति विभागः ॥ २२५ ॥

**इत्यादिश्रुतिवाक्यानि स्मृतिभिः सह कोटिशः ॥**
**ज्ञानाय विदधत्युच्चैः संन्यासं सर्वकर्मणाम् ॥ २२६ ॥**

दर्शितश्रुतिस्मृतीनां विविदिषासंन्यासविषयत्वं दर्शयन्मानमेये निगमयति । **इत्यादीति** । श्रुतिस्मृतीनां संन्यासविधौ तात्पर्यं सूचयति । **उच्चैरिति** । अत्र च चतुर्विधो विधिर्मिथोऽव्यभिचाराद्गुच्यते ॥ २२६ ॥

**यच्चाभाणि विना कार्यं नाधिकारो निरूप्यते ॥**
**दोषोऽयमपि नैव स्याज्ज्ञानोपाये यथोदिते ॥ २२७ ॥**

मुमुक्षोर्मोक्षसाधनं ज्ञानमपेक्षमाणस्य संन्यासो विहितः श्रुतिस्मृतिभ्यामिति वदता काण्डयोः साधनादिभेद उक्तः । इदानीं तदप्यशेषतश्चोद्यमित्यादि विशदयितुं चोद्यमनुवदति । **यच्चेति** । कार्याभावेऽधिकार्यभावान्मुमुक्षोरपि तेन भाव्यं कर्मण्यैश्वर्यस्य तदधीनत्वात्तदुपगमे च साधनाद्यैक्यमित्यर्थः । ज्ञानोपाये वा मुमुक्षोरधिकारसिद्धये कार्यमिष्यते ज्ञाने वा तत्राऽऽद्यं दूषयति । **दोषोऽयमिति** । ज्ञानस्योपाये संन्यासपूर्वके श्रवणादौ पूर्वोक्ते[2] कार्यं विना नाधिकारोऽस्तीत्येष दोषो न संभवति । तत्र श्रोतव्य इत्यादिकार्योपलम्भात् । न चैवं वेदान्तानां कार्यपरत्वं दर्शादिप्रकरणे वाक्यभेदं कृत्वा मलवद्वाससो व्रतकलापविधानवदत्रापि वाक्यभेदोपगमान्न च संभवत्येकवाक्यत्वे वाक्यभेदायोगान्नास्ति श्रवणादावपि विधिरिति वाच्यम् । तदभावे मुमुक्षुप्रवृत्तेरवैधत्वेन यादृच्छिकत्वप्रसङ्गाद्वेदान्तविचारकर्तव्यतापरस्य चाऽऽद्यसूत्रस्यानुपपत्त्यापातादित्यर्थः ॥ २२७ ॥

१ ख. °न्तरम् । गृ° । २ क. °र्वोक्तका° ।

**विधिमार्गेऽधिकारस्य परीक्षा वर्तते यतः ॥**
**फलभूते तु विज्ञाने नाधिकारो निरूप्यते ॥ २२८ ॥**

न द्वितीय इत्याह । **विधीति ।** विधेर्मार्गो विषयस्तस्मिन्नधिकारस्य विधिपुरुषसंबन्धस्य तन्निमित्तस्य वा परिक्षा शास्त्रे वर्तते । विधिविषयस्यादृष्टफलत्वात् । **वक्ष्यति हि**—"**कामिनाऽप्यग्निहोत्रादि शूद्रेणानधिकारिणा**" इत्यादि । न तु ज्ञानेऽधिकारचिन्ता तस्य विध्ययोग्यत्वादृष्टफलत्वाच्चातो ज्ञाने कार्याभावकृतोऽधिकार्यभावो नेति भावः । भवतु विधिमार्गेऽधिकारपरिक्षा ज्ञानमपि तन्मार्गः किं न स्यादित्याशङ्क्याऽऽह । **फलेति ।** विमतं न विधेयं फलत्वात्स्वर्गवदित्यनुमानान्न तस्मिन्नधिकारचिन्तेत्यर्थः ॥ २२८ ॥

**अधिकारविचारो हि नृतन्त्रे वस्तुनीष्यते ॥**
**वस्तुतन्त्रे न युक्तोऽसौ स्वयं चैव पुमर्थतः ॥ २२९ ॥**

विमतं विधेयं ज्ञानतद्धेत्वोरन्यतरत्वात्तद्धेतुवदिति प्रत्यनुमानमाशङ्क्याऽऽह । **अधिकारेति ।** विमतं विधेयं स्वर्गतद्धेत्वोरन्यतरत्वात्तद्धेतुवदित्याभाससमानत्वाद्यत्नार्हत्वोपाधेश्च नैवमिति भावः । उपाधेः साधनव्याप्तिमाशङ्क्याऽऽह । **वस्त्विति ।** प्रत्यनुमानाभावेऽपि फलत्वहेतोरसिद्धिमाशङ्क्याऽऽह । **स्वयं चेति ।** वाक्योत्थबुद्धिव्यक्तमात्मरूपं सकार्याविद्याध्वंसित्वाज्ज्ञानं न च तद्ध्वंसस्ततोऽतिरिच्यते । आत्मैवाज्ञानहानिरिति तत्र तत्र साधनात्तस्माज्ज्ञानस्य पुमर्थत्वान्नासिद्धिरित्यर्थः ॥ २२९ ॥

**अनात्मनि प्रमेयेऽर्थे या फलत्वेन संमता ॥**
**प्रमेया सैव वेदान्तेष्वनुभतिरिहाऽऽत्मनः ॥ २३० ॥**

उक्तरूपात्मनोऽविद्यादिनिवर्तकत्वमप्रसिद्धमित्याशङ्क्य प्रसिद्धोपायसंश्रयादित्यत्रोक्तं स्मारयति । **अनात्मनीति ।** शब्दादौ विषये प्रत्यक्षादिप्रमेये फलत्वेन प्रसिद्धा याऽऽत्मस्वरूपभूताऽनुभूतिः सैव वाक्यजायां बुद्धौ व्यज्यते । तथाच शब्दाद्याकारबुद्धिव्यक्तानुभूतेस्तदविद्यानिवर्तकत्ववदात्माकारवृत्तिव्यक्ततद्भूतानुभूतेः स्वाविद्यादिध्वंसित्वं प्रसिद्धमित्यर्थः ॥ २३० ॥

**विज्ञानमानन्दमिति ह्यात्मैवेति श्रुतेस्तथा ॥**
**पुमर्थस्यैव मेयत्वं मातृत्वाद्यनपेक्षिणः ॥ २३१ ॥**

ननु परो वेदान्तानां विषयः सचानन्तचिदेकतानः शब्दाद्यनुभवस्तु मानफलं परिच्छिद्यते । न च तयोरैक्यं परिच्छेदापरिच्छेदवतोस्तदभावादत आह । **विज्ञानमिति ।** तत्तद्वृत्तिमदन्तःकरणावच्छिन्नश्चिदात्मा मातृदशामाविशति तत्तद्वृत्त्यवच्छिन्नश्च मानावस्थां तत्तद्वृत्तिद्वारा तत्तद्विषयावच्छिन्नस्तु फलतामज्ञानद्वारा च तत्तदवच्छेदेन मेयताम् । यथोक्तं जागरणेऽपि प्रमाणज्ञानादन्तरपरोक्षानुभवान्न विषयस्थाऽपरोक्षता भिद्यत एक-

---

१ ख. विद्यते ।

रूपप्रकाशनादिति। स च **विज्ञानमानन्दं ब्रह्माऽऽत्मैवाऽऽनन्द** इत्यादिश्रुतेरानन्दज्ञानस्वभावस्तस्य च ज्ञानत्वान्मातृत्वादिष्वनपेक्षस्य परानन्दतया परमपुरुषार्थस्याज्ञानद्वारा तत्र तत्र मेयादिभावः। तथाच परिच्छेदस्य कल्पितत्वाद्वाक्योत्थबुद्धिव्यक्तचिद्धातोर्विज्ञानस्य फलत्वसंभवान्न हेत्वसिद्धिरिति भावः॥ २३१॥

**तज्ज्ञानं यस्य संजातं जातमेवास्य नान्यथा॥**
**कुक्षिस्थस्यापि हि सतो वामदेवस्य तद्यथा॥ २३२॥**

किं चाऽऽत्मज्ञानविधिपक्षे तस्याबाधे वा विधिः फलसंबन्धे वा तत्प्रतिबन्धध्वंसे वा नाऽऽद्य इत्याह। **तज्ज्ञानमिति।** यथा वामदेवस्य मुनेर्मूत्रपुरीषाद्यनेकदोषदूषिते गर्भाशये शयानस्यापि पूर्वजन्मानुष्ठितश्रवणादिसंस्कृतस्य सम्यग्ज्ञानं जातं **गर्भ एवै**तच्छयानो वामदेव एवमुवाचेति गर्भस्थस्यापि तस्य **ज्ञानित्वश्रुतेः। तद्धै**तत्पश्यन्निति च वक्ष्यति। न च तत्कुतश्चिद्बाध्यते तथाऽन्यस्यापि यस्य शुद्धबुद्धेः श्रवणादिवशाज्ज्ञानं जातं तत्तस्य नान्यथा भवति। न हि विपर्यासेन सम्यग्धीर्बाध्याऽवैपरीत्यान्न च सम्यग्ज्ञानान्तरं बाधकमस्तीत्यर्थः॥ २३२॥

**तद्वाविद्यानिरास्यैव व्याधभावनयाऽञ्चितः॥**
**राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते॥ २३३॥**
**यथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः॥**
**लब्धैकात्म्यस्मृतेर्व्येति सर्वाऽविद्या सकार्यका॥ २३४॥**

न द्वितीय इत्याह। **तद्वेति।** विधेयत्वं विनाऽपीति चकारार्थः। न खल्वात्मज्ञानस्य तदज्ञानध्वस्तिफलसंबन्धे विधिः प्रमाणज्ञानत्वाच्छुक्तिज्ञानवदिति भावः। न तृतीय इत्याह। **व्याधेति।** कश्चित्किल राजसूनुर्जन्ममात्रेण त्याजितराजसदनो निमित्तवशात्प्रवेशितविपिनो व्याधेन केनचिदपुत्रेण पुत्रतया गृहीतो गृहे तस्य वर्धमानोऽपि व्याधोऽस्मीतिभावितचेताश्चिरकालमतिवाहयामास[1]। स च कदाचिन्नासि व्याधसूनू राजकुमारस्त्वमित्याप्तेनोक्तः स्वीयराजसूनुत्वं सस्मार। तस्य पुना राजपुत्रोऽहमितिस्मृतिप्राप्तौ चिरगृहीतोऽपि व्याधभावो विरोधिस्मृत्या निवर्तते। तथाऽज्ञस्याज्ञानारोपितमनुष्यत्वादिधर्मवतः स्वाराज्याद्भ्रष्टस्य कष्टां दशां दृष्ट्वा कारुणिकेन गुरुणा दिष्टवाक्योत्थस्वात्मस्मृतेः सर्वप्रकाराऽविद्या कार्यसहिता नश्यति। तथा च सच्चिदानन्दं ब्रह्माऽऽत्मानमध्यवस्यतो ज्ञानफलप्रतिबन्धस्य तेनैवापहस्तितत्वान्न तद्ध्वंसेऽपि विधिरित्यर्थः॥२३३॥२३४॥

**यत एवमतो नात्र विधिः कल्प्यः कथंचन॥**
**अनर्थकः कल्पितोऽपि तस्येहानुपयोगतः॥ २३५॥**

किंचाऽऽत्मज्ञाने विधिः श्रुतो वा कल्पितो वा नाऽऽद्य इत्याह। **यत इति। द्रष्ट-**

१ क. °ज्ञाने वि°। २ क. °श्चिरंका°।

त्यादिशब्दस्य विधायकत्वं नेति यतो वक्ष्यतेऽतो नाऽऽत्मज्ञाने विधिः श्रुतोऽस्ति । उक्तन्यायेन तत्र तदुपयोगाभावाच्चेत्यर्थः । पूषा प्रपिष्टभाग इतिवदश्रुतोऽपि विधिरात्मज्ञाने कल्प्यतेऽन्यथा वाक्याप्रामाण्यादिति द्वितीयमादत्ते । **कल्प्य इति ।** मैवं कल्पकाभावान्न च वाक्यप्रामाण्यायोगस्तथा वस्तुमात्रावेदनेऽपि तद्योगान्मानं विना विधिं कल्पयतश्च तद्वैयर्थ्यमिति परिहरति । **अनर्थक इति ।** कल्पितविध्यानर्थक्ये हेतुमाह । **तस्येति ।** आत्मज्ञाने कल्पितविधेर्नोपयोगस्तत्र प्रवृत्तिनिवृत्त्योरयोगादतस्तत्कल्पना व्यर्थेत्यर्थः ॥ २३५ ॥

**उत्पत्तिराप्तिः संस्कारो विकारश्च विधेः फलम् ॥**
**मुक्तिर्विलक्षणैतेभ्यस्तेनेहानर्थको विधिः ॥ २३६ ॥**

ननु ज्ञाने कल्पितस्य विधेर्मुक्तावुपयोगो नेत्याह । **उत्पत्तिरिति ।** पुरोडाशोत्पत्तिः[1] संयवनविधिफलम् । पयसोऽवाप्तिर्दोहनविधिफलम् । प्रोक्षणविधिफलमुलूखलादिसंस्कारः । व्रीह्यादिविकारोऽवघातविधिफलमिति चतुर्विधमेव क्रियाफलं प्रसिद्धमित्यर्थः । क्रियाफलस्य चातुर्विध्येऽपि कथं नैयोगिकत्वं मुक्तेरपनुद्यते तत्राऽऽह । **मुक्तिरिति ।** न तावन्मुक्तिरुत्पत्तिरुत्पाद्या वा । अक्रियात्वादनादित्वाच्च । न चाऽऽप्तिराप्या वाऽसंबन्धत्वात्प्राप्तस्वरूपत्वाच्च । नापि संस्कारः संस्कार्या वा । निर्गुणत्वादनाधेयातिशयत्वाच्च । नापि विकारो विकार्या वाऽकार्यत्वादपरिणामित्वाच्च । तस्मान्न विधिफलं मुक्तिरित्यर्थः । तस्यास्तदफलत्वे फलितमाह । **तेनेति ।** इहेति ज्ञानोक्तिः ॥ २३६ ॥

**अनन्यायत्तसंसिद्धेर्निरविद्यात्मवस्तुनः ॥**
**न क्रियात्वं फलत्वं वा नापि कारकरूपता ॥ २३७ ॥**

ज्ञाने विध्यसंभवाद्ब्रह्मणस्तदशेषत्वेऽप्युपास्तिविधिसंभवात्तच्छेषतेत्याशङ्क्याऽऽह । **अनन्येति ।** न हि ब्रह्मोपास्तिविधिशेषस्तच्छेषत्वप्रयोजकीभूतक्रियाद्यन्यतमत्वस्य तस्मिन्दुःसाधनत्वान्न तावत्कारकाधीनात्मलाभत्वं क्रियात्वं ब्रह्मणोऽस्त्यनन्याधीनसिद्धिकत्वान्नाप्यविद्यावन्निष्ठकारकत्वं निरविद्यत्वान्नापि फलत्वं क्रियाजन्यत्वाभावात्तस्माद्ब्रह्मणो नोपासनाविधिशेषत्वमपीत्यर्थः ॥ २३७ ॥

**अतोऽत्र विध्यभावोऽयं न कथंचन दूषणम् ॥**
**अलंकृतिरियं साध्वी वेदान्तेषु प्रशस्यते ॥ २३८ ॥**

विधिशेषत्वाभावे वेदान्ताप्रामाण्यं मन्यमाना वेदोपरा वेदान्ता इति केचित्तान्प्रत्याह । **अत इति ।** यतो विधिं विनाऽपि नदीतीरफलसंबन्धवद्ब्रह्मणो वेदान्तप्रमाणकत्वमतस्तेषु विध्यभावो नाप्रामाण्यहेतुरित्यर्थः । न केवलं तेषु विध्यभावस्याप्रामाण्याहे-

---

१ ख. पिण्डोत्पत्तिः ।

तुत्वं प्राभाण्यहेतुत्वं चास्तीत्याह । **अलंकृतिरिति** । सति विधौ शुद्धे ब्रह्मणि वेदान्तप्रामाण्यायोगात्तदभावे पुमर्थब्रह्मात्मावबोधाद्युक्ता प्रशंसेति भावः ॥ २३८ ॥

**चोदनाभिर्नियुक्तोऽहं तथा ब्रह्माहमित्यपि ॥**
**परस्परविरुद्धत्वादेकदैकत्र न द्वयम् ॥ २३९ ॥**

किंच ज्ञानादिविधिषु विद्वान्विविदिषुर्वा नियोज्यो नाऽऽद्य इत्याह । **चोदनाभिरिति** ॥ २३९ ॥

**स्वामी सन्न हि भृत्येन स्वामिनेव नियुज्यते ॥**
**संबोधनीय एवासौ सुप्तो राजेव बन्दिभिः ॥ २४० ॥**

न द्वितीय इत्याह । **स्वामीति** । विविदिषुरपि संसारमार्गादुत्तीर्णत्वाद्वेदस्य स्वामी तन्नासौ तेन प्रेर्यते न हि स्वामिना भृत्यवत्तेन स्वामी नियुज्यते किंतु यथा सुप्तो राजा कार्यकालात्ययं मन्यमानैः सूतादिभिर्बोध्यते तद्वद्देहादिसाक्षित्वं जगत्कारणत्वोपलक्षितं ब्रह्मैवासीति वेदेनासौ बोधनीयस्तस्मान्नियोज्याभावादपि वेदान्तेषु न विधिरिति भावः । यद्वा विदुषो नियोज्यत्वाभावं पूर्वार्धेनोपपाद्य द्वितीयार्धेन विविदिषोरनियोज्यत्वं साध्यते । तस्य च श्रवणादौ नियोज्यत्वेऽपि न ज्ञाने तथात्वमिति मन्यते ॥ २४० ॥

**चोदनालक्षणत्वादि धर्मं प्रत्येव गृह्यताम् ॥**
**धर्मस्यैव प्रतिज्ञोक्तेर्न तु ब्रह्म प्रतीप्यते ॥ २४१ ॥**

ननु वेदान्तनिरूपणायां ब्रह्मणो विध्यशेषत्वेऽपि कर्ममीमांसासूत्रसंदर्भालोचनायां तत्र तस्य विधिशेषत्वं स्यात् । स हि वेदार्थमात्रोपाधौ प्रवृत्तस्तस्य चोदनालक्षणत्वमाचष्टे । विधिवचनश्च चोदनाशब्दश्चोदनेति क्रियायाः प्रवर्तकं वचनमिति स्थितेरतो ब्रह्मणोऽपि वेदार्थत्वाद्विधिस्पृष्टत्वमत आह । **चोदनेति** । विधिप्रमाणकत्वं भिन्नत्वमित्यादि धर्मं प्रत्येव न ब्रह्म प्रतीत्यत्र हेतुमाह । **धर्मस्येति** । वेदार्थैकदेशस्य धर्मस्यैव विचार्यत्वेनाऽऽद्ये सूत्रे प्रतिज्ञातत्वादित्यर्थः । ननु साङ्गाध्ययनवतः स्वाध्यायादापातप्रतिपन्नोऽर्थो बाधितोऽबाधितो वेति संदिहानस्य न्यायेन निर्णयार्थ**मथातो धर्मजिज्ञासेति** सूत्रितम् । तेन चाध्यापनविधिसत्त्वमुपनयनस्य तदङ्गत्वमध्ययनस्य तत्प्रयुक्तत्वं तदशेषतया स्वतन्त्राधिकारश्चेति चत्वारोऽर्थाः समर्थ्यन्ते । तत्र वेदार्थविचारोपायभूतन्यायनिबन्धनरूपं मीमांसाशास्त्रं विषयस्तत्किमनारभ्यमुताऽऽरभ्यमिति संदेहः । तत्र **स्वाध्यायोऽध्येतव्य** इति विधीयमानाध्ययनस्या**ष्टवर्षं** ब्राह्मणमुपनयीत तमध्यापयीतेति **श्रुतेरुपनीय** तु यः शिष्यमित्यादि**स्मृतेश्च** प्राप्तोपनयनाङ्गकाचार्यकरणविध्यधिकारनिष्पत्तिफलत्वात्स्वाध्यायस्य च तदर्थत्वादन्यपरत्वे सत्यविवक्षितस्वार्थः स इति विषयाद्यभावादनारभ्यं शास्त्रमिति **पूर्वः पक्षः** । उपनयनाङ्गकाध्यापनविधिप्रयुक्तत्वेऽप्यध्ययनस्य न तन्निष्पत्तिरेव फलं पुरुषान्तरस्थत्वेन बहिरङ्गत्वादर्थज्ञानं त्वध्ययनोत्तरभावित्वेऽप्यध्ये-

तृसमवेतत्वेनान्तरङ्गत्वात्तत्फलम् । तथा चाध्ययनस्य स्वनियोगोऽर्थधीश्चेति शब्दतोऽर्थतश्च फलद्वयम् । न चैवमर्थज्ञानकामस्य नियोज्यत्वं प्रागध्ययनाद्वेदार्थाज्ञानात्कामायोगात्परप्रयुक्त्या चानुष्ठाने नियोज्यापेक्षाभावादर्थधीरधिकारहेतुः । अतः स्वाध्यायस्य विवक्षितार्थत्वाद्विषयादिभावादारम्यं शास्त्रमिति **राद्धान्तः।** तदेवं वेदार्थोपाधौ विचारस्य प्रवृत्तत्वाद्ब्रह्मणोऽपि वेदार्थत्वात्तत्र विचार्यत्वेन प्रतिज्ञातत्वमिति नेत्याह । **नत्विति ।** ब्रह्म प्रति विचार्यत्वप्रतिज्ञोक्तिर्नेष्यते । धर्मशब्दविरोधादित्यर्थः ॥ २४१ ॥

**अथातो धर्म इत्युक्तेश्चोदनालक्षणोक्तितः ॥**
**तद्भूतानां क्रियार्थेन ह्याम्नायस्य क्रियार्थतः ॥ २४२ ॥**

ननु तेन[1] वेदार्थमात्रमुपलक्ष्य तस्य विचार्यत्वमभिमतम् । अतो ब्रह्मापि धर्मवद्विधिस्पृष्टतया विचारितमित्यत आह । **अथात इति ।** इदमर्थतः सूत्रोपादानम् । साङ्गाध्ययनानन्तरं तस्य विचारपुष्कलकारणत्वाद्धर्मो जिज्ञास्य इति कथनाद्वेदार्थमात्रविवक्षया विचारकार्यता न सूत्रिता । अन्यथाऽथातो वेदार्थजिज्ञासेतिसूत्रप्रसङ्गात् । न च धर्मशब्देन वेदार्थमात्रं लक्ष्यते । गौणमुख्ययोर्मुख्ये संप्रत्ययात् । न च तर्हि ब्रह्मवदधर्मोऽपि न लक्षणीयस्तन्निरूपणस्य तत्त्यागेन धर्मानुष्ठानानुगुणत्वात् । ब्रह्मनिरूपणस्य तु तद्वैपरीत्यात् । न च वेदार्थैकदेशस्यैव विचार्यत्वे विचारस्य[2] वेदमात्राध्ययनानन्तर्यविरोधः कर्मज्ञानाधिकृतस्याध्ययनविध्यधिकारित्वाद्वेदमात्राध्ययनानन्तरं स्वर्गादिकामस्य कर्मविचारे मोक्षकामस्य ब्रह्मजिज्ञासायां च प्रवृत्तेः । अतो धर्मविशेषणसामर्थ्याद्वेदार्थैकदेशोपाधावेव विचारकार्यताऽत एव **भाष्यकारः** सर्वत्राऽऽद्य**सूत्रभाष्ये** धर्मो जिज्ञासितव्यो धर्मं[3] ज्ञातुमिच्छेदित्यादौ धर्मशब्दमेवोक्तवानिति भावः । ननु **चोदनासूत्रे** ब्रह्मणोऽपि विधिशेषत्वं गम्यते तद्धि जिज्ञास्यत्वेन प्रतिज्ञातवेदार्थरूपं तत्र प्रमाणं शब्दस्यार्थस्पर्शित्वं कार्यस्यैव तदर्थत्वमित्यर्थचतुष्टयमादेष्टुमारब्धम् । तत्र वेदार्थो विषयः स किं सिद्धरूपः किंवा कार्यरूप एवेति **संशये सत्यं** ज्ञानमनन्तं ब्रह्मेत्यादिषु सिद्धार्थदृष्टेस्तदस्फूर्तेश्च हेत्वभावात्कार्याध्यवसानासिद्धेर्व्यवहारं[4] विनाऽपि सिद्धार्थेषु पुत्रजन्मादिवाक्येषु प्रथमव्युत्पत्तिसंभवात्तदनुसारित्वाच्च तात्पर्यस्य सिद्धरूपोऽपि वेदार्थः संभवतीति **पूर्वपक्षे** व्यवहारस्यैव व्युत्पत्तावादिमार्गत्वात्पुत्रजन्मवाक्ये च तज्जन्माख्यहर्षहेतुप्रतिपादकताया दुरवधारणत्वाद्बहुषु हर्षहेतुषु संभावितेषु पारिशेष्यायोगाद्व्यवहारस्य च विशिष्टार्थविषयतया दृष्टस्य शक्तिकल्पकत्वसंभवात्तस्य च कार्याव्यभिचारात्तत्र शक्तिग्रहादावापोद्वापाभ्यां च विशेषे तत्सिद्धेः शक्त्यनुसारित्वाच्च तात्पर्यस्यार्थस्पर्शिनः शब्दात्कार्यस्यैव सिद्धेरदृष्टकार्येष्वपि वाक्येष्वध्याहारलक्षणयोरन्यतरस्याऽऽवश्यकत्वाद्वेदान्तानामपि यथाकथंचिद्विधिशेषत्वेन कार्यपरत्वात्कार्यरूप एव वेदार्थ इति **राद्धान्ति-**

---

१ क. तेनैव । २ ख. °चार्यस्य । ३ क. ख. °र्मं जिज्ञासितु° । ४ ख. °र्याध्याहारासि° ।

तम् । तथाच वेदार्थत्वाद्ब्रह्मणोऽपि कार्यशेषतया विध्यनुप्रवेश इति तत्राऽऽह । चोदनेति । प्रवर्तकं वचनं चोदना तल्लक्षणस्तद्गम्यो योऽर्थः श्रेयस्करः श्येनाद्यतिरिक्तः स धर्म इति सूत्रार्थः । तत्र चोदनाधर्मविशेषणाभ्यां वेदार्थैकदेशस्यैव श्रुत्यर्थाभ्यां स्वरूपप्रमाणे प्रदर्श्येते । अन्यथा वेदप्रमाणको वेदार्थ इति सूत्रं स्यादर्थशब्दस्य च श्येनादिव्यावर्तकस्यायोगस्तस्यापि वेदार्थत्वात् । यथाऽऽहुः—तत्रानर्थो धर्म उक्तो मा भूदित्येवमर्थमर्थग्रहणमिति । अतो द्वितीयसूत्रमपि न ब्रह्मस्पृगिति भावः । ननु तद्भूताधिकरणन्यायेन ब्रह्म विधिस्पृष्टमेष्टव्यम् । तथा हि—वेदवाक्यानि विषयः । तानि मानान्तरसापेक्षाणि तन्निरपेक्षाणि वेति संशयः । तत्र वृद्धव्यवहारे वाक्यात्तदर्थावगमेऽपि [1]वेदे वाक्यस्य समुदायान्तरत्वात्तस्य चार्थेनागृहीतसंबन्धत्वात्तत्कल्पनायां च संकेतस्य स्वीकर्तव्यत्वाद्वेदवाक्यानां मानान्तरसापेक्षत्वादप्रामाण्यमिति पूर्वपक्षयित्वा लोके वेदे च पदपदार्थयोरनन्यत्वाद्वेदेऽपि वाक्यार्थावगतेर्लोकव्युत्पत्तिमूलत्वात्कार्यान्विते ज्ञातशक्तीनामेव पदानां विशिष्टार्थावच्छेदकानां वाक्यत्वात्संकेतानपेक्षाणां वैदिकवाक्यानां स्वार्थधीहेतुत्वादपौरुषेयाणां तेषामनपेक्षतया प्रामाण्यमिति सिद्धान्तितम् । अतो लोकावसितकार्यसंगतिद्वारा ब्रह्मण्यपि वाक्यं बोधकमिति तस्य कार्यसंबन्धाद्विधिशेषतेति नेत्याह । तद्भूतानामिति । तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् । तेषु पदार्थेषु भूतानां वर्तमानानां पदानां कार्यरूपेण वाक्यार्थेन तत्प्रतिपत्त्यर्थत्वेन समाम्नायः संभूय वाक्यत्वेनोच्चारणमेकैकपदस्मृतार्थस्य मिलितस्य वाक्यार्थप्रतिपत्तिनिमित्तत्वात्पदानामेव हि पदार्थस्मृत्यवान्तरव्यापाराणां वाक्यार्थप्रत्यायकत्वमिति सूत्रार्थः । न च ब्रह्मणो विधिशेषत्वमत्र भाति ब्रह्मप्रतिपादकं च वाक्यं लोकसिद्धशक्त्यनुरोध्यपि न कार्यमपेक्षते । सिद्धेऽप्यर्थे सामर्थ्यस्य सुग्रहत्वात् । न हि प्रीतिशोकाद्युत्पादकवाक्येषु वदनविकसनादिना विना कार्याध्याहारं बालाः शक्तिं नाऽऽकलयन्ति । तस्मान्न तद्भूताधिकरणादपि ब्रह्मणो विधिशेषतेति भावः । अथार्थवादाधिकरणन्यायेन विधिशेषो ब्रह्म । तथा हि—सोऽरोदीदित्याद्यर्थवादयुक्ताश्चोदना विषयः । ताः किमप्रमाणं प्रमाणं वेति संशयः । तत्र रुद्ररोदनादेरर्थवादार्थस्यासाध्यत्वात्कार्येणेतिकर्तव्यतया फलतया वाऽनन्वयात्पुरुषविशेषणत्वाभावाच्च जीवनादिवन्नियोज्याविशेषणत्वान्मलिनः स्नायादिति मलिनतायाः स्नानकर्तव्यताहेतुत्ववदिहापि हेतुत्वेनान्वयासिद्धेः स्तुत्या चान्वये लक्षणाप्रसङ्गाद्विध्युद्देशे च कर्तव्यतावगमात्प्रवृत्तिसिद्धौ स्तुत्यपेक्षाभावाद्धेतुत्वेन चान्वये तदधीनकार्यप्रतिपादनादर्थवादयुक्तसर्वचोदनानामप्रामाण्यमिति पूर्वपक्षे सर्वशब्दानां कार्यपरतया प्रामाण्याद्विधिशब्दस्य साक्षात्तद्वाचित्वात्पादान्तराणां तदन्वितस्वार्थवाचितया तत्परत्वादर्थवादार्थस्य च विध्युद्देशोक्तापूर्वकार्ये हेतुत्वे-

---

[1] ख. वेदवा° ।

नान्वये मानाभावादर्थवादपदानां प्राशस्त्यार्पणद्वारा कार्यावगत्युपयोगित्वादर्थवादयुक्तादेव विध्युद्देशात्तद्वीसिद्धे रक्तपटवद्युक्तं सार्थवादसर्वचोदनानां प्रामाण्यमिति **राद्धान्तः।** अतः सिद्धार्थवाक्यानां विधिनैकवाक्यतया प्रामाण्ये वेदान्तानामपि तदेकवाक्यत्वेनैव तत्प्रामाण्यात्प्राप्ता ब्रह्मणो विधिशेषतेति तत्राऽऽह । **आम्नायस्येति ।** तत्र हि सार्थवादचोदनानामप्रामाण्यमाशङ्क्य स्तावकत्वेनार्थवादानां विध्युद्देशेनैकवाक्यत्वात्तद्युक्तसर्वचोदनानां प्रामाण्यमिति स्थितम् । वेदान्तास्तु विधिप्रकरणलङ्घनजङ्घालाः स्वार्थज्ञानमात्रेणार्थवन्तो न विध्येकवाक्यत्वमपेक्षन्ते । तस्मान्नार्थवादाधिकरणादपि विधिशेषो ब्रह्मेति भावः ॥ २४२ ॥

**भावार्थाः कर्मशब्दा ये प्रतीयेत क्रिया ततः ॥**
**इत्येवं नरतन्त्रेऽर्थे ज्ञेया द्वादशलक्षणी ॥ २४३ ॥**

ननु भावार्थाधिकरणेन ब्रह्म विधिशेषः। तथा हि—**चित्रया** यजेत पशुकाम इत्यादौ किं तद्गतपदानां प्रत्येकं नियोगार्पकत्वमेकस्मिन्वाक्ये पदमेकमेव वा नियोगार्पकमितरत्तदर्थमिति **संशये** सर्वपदार्थानां कार्यार्थत्वात्साक्षात्तत्संबन्धसंभवे पारंपर्यायोगाद्दृश्यमानान्योन्यान्वयस्य पार्ष्णिकत्वात्प्रतिपदं नियोगार्पणमिति **पूर्वपक्षे** प्रतिपदं नियोगार्पकत्वे दृश्यमानक्रियाकारकान्वयभङ्गात्कार्यभेदे चारुणैकहायनीन्यायानवतारान्नियोगभङ्गे तदधीननियोगस्यापि भङ्गादेकमेव पदमेकस्मिन्वाक्ये नियोगार्पकमितरत्तदर्थमिति प्रतिपदाधिकरणे स्थिते तत्र द्रव्यगुणशब्दानामपि तदर्पकत्वं भावशब्दानामेव वेति **संदेहे** विनियोगाविरोधाद्विशेषाग्रहादनियमे प्राप्ते द्रव्यगुणयोर्विधिविषयत्वे क्रियां प्रति तयोरीप्सितत्वेन कर्मत्वात्तां प्रत्येव कारकत्वायोगाद्विनियोगभङ्गध्रौव्याद्भावार्थस्यैव स्वतःसाध्यस्य तद्विषयताया न्याय्यत्वात्प्रत्ययार्थमपूर्वं प्रति समानपदोपात्तस्य तस्य विषयत्वसंभवे पदान्तरोपात्तद्रव्यादेस्तदयोगाद्भावार्थानां कर्मशब्दानामेव नियोगार्पकत्वमितरेषां तादर्थ्यमिति **राद्धान्तः।** तथाच वेदान्तानामपि [6]सिद्धार्थमर्पयतां विधिशेषत्वाद्ब्रह्मणोऽपि तच्छेषतेति तत्राऽऽह । **भावार्था इति ।** "भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते" [ पू० मी० २।१।१ ] सन्ति केचित्केवला भावार्थाः शब्दा भावो भवनमित्यादयो न ते नियोगवाचिनः सन्ति च केचित्केवलाः कर्मशब्दा यागो दानमित्यादयस्तेऽपि न नियोगवाचिनः । ये तु भावार्थाः कर्मशब्दा यजेतेत्यादयस्तेभ्यः क्रियाशब्दितः साध्यैकरूपो नियोगो गम्यते। यस्मादेष नियोगाख्योऽर्थो विधिना विषयीक्रियते तस्माद्यथोक्तेभ्यः शब्देभ्यो नियोगप्रतीतेस्तादर्थ्यं क्रियाकारकपदानामिति सूत्रे प्रतीयते । ब्रह्म चाक्रियाकारकमर्पयन्ति वेदान्तास्ते कथं विधिशेषतां मृष्येरन्नतो न

१ क. °द्धंस्तयु° । २ ख. अत्र । ३ ख. °गार्थक° । ४ ख. °गार्थक° । ५ ख. °गार्थक° । ६ ख. सिद्धमर्थं° ।

भावार्थाधिकरणादपि विधिशेषो ब्रह्मेत्यर्थः। ननु प्राच्यां **मीमांसायां** सन्ति सहस्रमधिकरणानि तेष्वालोच्यमानेषु ब्रह्मणो विधिशेषत्वप्रापकोऽपि कश्चिन्न्यायो भविष्यति नेत्याह । **इत्येवमिति** । द्वादशाध्यायी **मीमांसा** धर्मप्रक्रमानुसारेण पुरुषेच्छाप्रयत्नसाध्यं धर्ममेव विषयीकरोति न ब्रह्म **तथा हि—प्रथमे**ऽ**ध्याये** विध्यर्थवादमन्त्रनामधेयस्मृतीनां वा चोदनानामेव वा प्रामाण्यमुक्तम्। **द्वितीये** शब्दान्तरादिना कर्मभेदः शास्त्रभेदो वा चिन्तितः । **तृतीये** वैनियोगिकः शेषशेषिभावो निरूपितः। **चतुर्थे** त्वौपादानिकमुत्पत्त्यधिकारप्रयुक्तिविनियोगरूपमर्थचतुष्टयं वा क्रत्वर्थपुरुषार्थप्रयुक्तानुष्ठानपरिमाणं वा परीक्षितम्। तत्र साङ्गे कर्मण्यनुष्ठानात्मप्रयुक्तिः श्रौतीत्येके सा पुनर्विधिसामर्थ्यलभ्येत्यपरे तन्मते प्रयुक्तिसामर्थ्यलभ्यं चोत्पत्त्यादित्रितयमित्यौपादानिकमेव चतुष्टयमपीष्टमिति द्रष्टव्यम् । **पञ्चमे** क्त्वाश्रुतिप्रमाणकोऽनुष्ठानक्रमो विचारितः। **षष्ठे** कर्तुरधिकारो वा नियोज्यत्वं वा पुंसो निर्धारितम् । नियोज्यान्वयपुरःसरो हि कर्त्रन्वयो गुरुमतानुसारिभिरिष्यते। एवं **पूर्वषट्का**दुपदेशापेक्षितो विचारः **सिद्धः । उत्तरषट्का**त्त्वतिदेशापेक्षितो **विचारः**। तत्र **सप्तमाष्टमयो**र्विध्यन्तन्यायानपेक्षितस्तदपेक्षितो वा सामान्यविशेषरूपो वाऽतिदेशो विशदीकृतः। **नवमे** प्रकृत्युपदिष्टमन्त्रसामसंस्कारकर्मणां विकृतावतिदिष्टानां प्रकृतिविकृत्योर्द्रव्यदेवताभेदे प्रकृतिस्थद्रव्यादिशब्दं हित्वा विकृतिस्थतच्छब्दाध्याहार ऊह उक्तः । यथाऽग्नये जुष्टमिति मन्त्रस्य विकृतौ सूर्याय जुष्टमिति पदप्रक्षेपः । **दशमे** विकृत्यातिदिष्टाङ्गानां प्रकृतौ सावकाशानां विकृतिस्थविशेषाङ्गोपदेशद्वारलोपप्रतिषेधैर्बाध उक्तः। यथा प्राकृतानां कुशानां विकृतावतिदिष्टानां प्रत्याम्नातैः शरबर्हिर्भिर्बाधः । कृष्णलेषु तुषकणविमोकद्वारलोपादवघातो बाध्यते तौ न पशौ करोतीति निषेधेनाऽऽज्यभागौ बाध्येते । **एकादशे** नैकशेषिविधिप्रयुक्तशेषस्य सकृदनुष्ठानादेव प्रयोजकसर्वशेष्युपकारसामान्यं तन्त्रं नामोक्तम् । यथा दर्शत्रयेण पौर्णमासत्रयेण वा प्रयुक्तस्य प्रयाजादेः सकृदनुष्ठानादेव प्रयोजकसर्वशेष्युपकारः । **द्वादशे** पुनरेकशेषिप्रयुक्तशेषानुष्ठानस्य प्रयोजकसामर्थ्यप्रयुक्तशेष्यन्तरेऽप्युपकारः प्रसङ्गो नामोक्तः । यथा पशुविधिप्रयुक्ताङ्गानां पशुपुरोडाशेषूपकारस्तदेवं **द्वादशलक्षणी मीमांसा** पुंस्तन्त्रेऽर्थे स्थिता न ब्रह्म स्पृशति। न हि तत्प्रामाण्यादीनां प्रसङ्गान्तानामन्यतममपेक्ष्य प्रविशतीति भावः ॥ २४३ ॥

**वेदान्तार्थापवादाय नालं साऽतत्प्रमाणतः ॥**
**मानं नालं निराकर्तुं वस्तु यन्मान्तरैर्मितम् ॥ २४४ ॥**

ननु कर्ममीमांसाया ब्रह्माविषयत्वेऽपि सा तद्रूपं निषेधति तस्यास्तद्विपरीतधर्मविषयत्वादित्याशङ्क्य सा हि न्यायसंघातात्मकः सूत्रसमुदायो वा तदनुग्राह्यः कर्मविधिर्वेति

१ ख. °मान्ये वि° ।

विकल्प्याऽऽद्यं दूषयति । **वेदान्तेति** । सा हि मीमांसा न्यायसंघातात्मकसूत्रसमुदाय-रूपा वेदान्तार्थं बाधितुं नोत्सहतेऽतत्प्रमाणत्वात् । न हि धर्मे ब्रह्मविपरीते सूत्रसंदर्भो मानं तस्य न्यायात्मनो मानानुग्राहकस्य स्वार्थे संभावनामात्रहेतुत्वात् । न चासौ ब्रह्म-ण्यसंभावनामपि करोति तस्मिन्नुदासीनत्वादित्यर्थः । यद्वा तत्प्रमाणत इति च्छेदः । तस्मिन्धर्मे मानभूतचोदनानुग्राहकत्वान्न सा ब्रह्म निषेद्धुमलमित्यर्थः । द्वितीयं निराह । **मानमिति** । न हि कर्मविधिर्वेदान्तप्रमेयं पराकर्तुं पारयति प्रमाणत्वात्प्रत्यक्षवदि-त्यर्थः ॥ २४४ ॥

**स्वमेयमात्रशूरत्वान्मितेर्नान्यत्र मानता ॥**
**अथातो ब्रह्मजिज्ञासा इत्याद्युक्तं नयान्वितम् ॥ २४५ ॥**

किंच कर्मविधिः स्वविषयं बोधयितुमन्यान्निषेद्धुं च क्रमाक्रमाभ्यां न प्रभवति शब्दादीनां विरम्य व्यापाराभावात्क्रमायोगाद्विधिनिषेधयोरेकस्मिन्मानेऽनुपलम्भाच्चाक्रमा-सिद्धेरित्याह । **स्वमेयेति** । मान्तरैर्मितमिति वेदान्तानां प्रामाण्यमङ्गीकृतं तदयुक्तं तेषामनुग्राहकन्यायाभावेनाऽऽभासत्वादित्याशङ्क्याऽऽह । **अथात इति** । साधनचतु-ष्टयसंपत्त्यनन्तरस्य ब्रह्मजिज्ञासापुष्कलहेतुत्वाद्ब्रह्मणो जिज्ञासा कर्तव्या । सूत्रे बहूक्त्य-भावेऽपि तां वदन्बन्धस्याध्यासत्वं धर्ममीमांसया ब्रह्ममीमांसाया गतार्थत्वाभावो विशि-ष्टाधिकारिसंभवो विषयादिसद्भावश्चेत्यर्थचतुष्टयमत्र शास्त्रारम्भार्थं समर्थितमिति दर्श-यति । यद्वा बहूक्त्या ब्रह्मसंबन्धिजिज्ञासापञ्चकमत्र कार्यत्वेन प्रतिज्ञातमिति सूचयति । यद्वा विसंधिं कुर्वन्ननित्यत्वं संधेराह । आदिपदेन **जन्मादिसूत्रप्रभृतीनि सूत्राणि** गृह्यन्ते **तैरनावृत्तिः शब्दादित्यन्तै**र्न्यायात्मकैरुक्तं ब्रह्म न्यायोपेतं प्रतिभाति । अतो न वेदा-न्तानां मानाभासत्वमित्यर्थः ॥ २४५ ॥

**मीमांसान्यायवत्त्वाभ्यां धर्ममीमांसनोक्तिवत् ॥**
**एवं सत्यनुकूलार्थं तत्त्वमित्यादिकं वचः ॥ २४६ ॥**

किंच ब्रह्मशास्त्रमपि कर्मशास्त्रवन्न्यायवत्त्वेन शास्त्रत्वेन च प्रसिद्धं तद्धर्ममीमांसाख्य-शास्त्रोक्तिविषयधर्मवद्ब्रह्मापि न्यायवदेवेति कुतस्तत्प्रतिपादकवेदान्तानामाभासतेत्याह । **मीमांसेति** । कथं तर्हि मिथोविरुद्धार्थं काण्डद्वयमव्याहतं सन्मानमित्याशङ्क्याऽऽह । **एवमिति** । कर्मविचारवद्ब्रह्मविचारस्यापि न्यायवत्त्वे सति तदनुग्राह्यं तत्त्वमादिवाक्यं तत्त्वबोधकं सत्कर्मकाण्डानुगुणमित्यर्थः ॥ २४६ ॥

**सर्ववेदान्तविषयमन्यथा तद्विरुध्यते ॥ २४७ ॥**
**न तत्र करणापेक्षा नेतिकर्तव्यता तथा ॥**
**यत्र यत्राऽऽत्मभावेन श्रुत्या ब्रह्मावबोध्यते ॥ २४८ ॥**

---

१ ख. °यात्म° ।

तस्य तत्त्वबोधित्वे हेतुं वदन्नानुगुण्यं स्फुटयति । **सर्वेति** । सर्वेषां वेदानामन्ततस्तात्पर्यनिर्णयावसानभूमिरद्वयं ब्रह्म तद्विषयं तत्त्वमादिवाक्यम् । यद्वा सर्वेषां वेदान्तानां विषय एव विषयो यस्य तत्तथोक्तं तच्च तत्त्वावेदकमारोपितक्रियादिभेदालम्बनं कर्मकाण्डं त्वतत्त्वावेदकं तथाचोभयोर्व्यवस्थितविषयत्वादव्याहतं प्रामाण्यमित्यर्थः । उक्तां व्यवस्थामनिच्छन्तं प्रत्याह । **अन्यथेति** । काण्डद्वयमुक्तरीत्या मानमित्यनभ्युपगमे तन्मानत्वं सुन्दोपसुन्दन्यायेन मिथो विरोधान्न सिध्यत्यतस्तत्कृतव्यवहारासिद्धिरित्यर्थः । वेदान्तेषु नियोगाख्यविधिनिरासेन ब्रह्मणस्तच्छेषत्वमपाकृत्य तेषु भावनाख्यविधिसंभवात्तस्य तच्छेषत्वं तदवस्थमित्याशङ्क्याऽऽह । **न तत्रेति** । यत्र यत्राऽऽम्नाये तत्पदलक्ष्यं ब्रह्म त्वंपदलक्ष्यप्रत्यक्त्वेन तत्त्वमादिश्रुत्या प्रत्याय्यते तत्र तत्र ज्ञातब्रह्मात्मतत्त्वस्यापेक्ष्यमाणफलांशाभावान्न करणेतिकर्तव्यतापेक्षा युक्ता । तन्न वेदान्तेष्वंशत्रयवती भावनेत्यर्थः ॥ २४७ ॥ २४८ ॥

**इतिकर्तव्यतादानं करणादानमेव च ॥**
**तत्र तत्र विधिः स्थाने प्रहितस्य फलेच्छया ॥ २४९ ॥**

ननु तेपु नास्तिचेदंशत्रयवती भावना कुत्र तर्हि तस्याः संभावनेति तत्राऽऽह । **इतिकर्तव्यतेति** । ज्ञातविध्यर्थस्य पुंसः स्वर्गादीच्छया प्रेरितस्य करणेतिकर्तव्यतयोरादानं यत्र यत्र भाति तत्र तत्रांशत्रयसंभवात्तद्वान्भावनाख्यो विधिः स्थाने युक्त इत्यर्थः ॥ २४९ ॥

**आप्ताशेषपुमर्थत्वात्त्यक्तानर्थस्य च स्वतः ॥**
**अनात्मनीव नेच्छेयं कथंचित्स्यादिहाऽऽत्मनि ॥**
**तन्निवृत्तौ निवर्तेते इतिकर्तव्यसाधने ॥ २५० ॥**

तत्त्वमादिवाक्यार्थधियोऽपि कर्मवाक्यार्थधीवत्पुमर्थहेतुत्वात्तदिच्छया प्रवृत्तेरितिकर्तव्यताद्यादानद्वारा वेदान्तेष्वंशत्रयवती भावना स्यादित्याशङ्क्याऽऽह । **आप्तेति** । महावाक्याज्ज्ञातात्मयाथात्म्यस्याऽऽप्तानन्दत्वात्त्यक्तानर्थत्वाच्चानात्मनि स्वर्गादाविवापवर्गे नेच्छा संगच्छते । तस्याऽऽत्मत्वेनाऽऽप्तत्वादित्यर्थः । ज्ञातवाक्यार्थस्य ज्ञाननान्तरीयकत्वेन तत्फलस्याऽऽप्तत्वात्फलेच्छायोगाद्भाव्यांशाभावमभिधायावशिष्टावंशौ निराचष्टे । **तन्निवृत्ताविति** । फलाकाङ्क्षाविनाभूता हि करणाद्याकाङ्क्षा सा च तत्त्वमादेर्व्यावर्तमाना करणाद्याकाङ्क्षामपि ततो व्यावर्तयतीत्यर्थः ॥ २५० ॥

**निरन्तरायतोऽशेषपुमर्थस्याऽऽत्मरूपतः ॥**
**न चांशत्रयशून्येह भावनेष्टा परीक्षकैः ॥ २५१ ॥**

मुमुक्षोर्मोक्षे कथमाकाङ्क्षाभावो मुमुक्षुत्वव्याघातादित्याशङ्क्याऽऽह । **निरन्तरायत**

---

१ ख. ˚भूर˚ ।

**इति** । तस्य तदाकाङ्क्षायामपि ज्ञातात्मतत्त्वो जीवन्मुक्तो न किंचिदपेक्षते । ज्ञानविधिश्चात्र निराचिकीर्षितस्तस्मात्फलाकाङ्क्षानिवृत्त्येतरनिवृत्तिरित्यर्थः । अंशत्रयाभावे फलितमाह । **न चेति** ॥ २९१ ॥

**भावनातो न चान्यत्र विधिरभ्युपगम्यते ॥**
**मोहमात्रान्तरायायां मुक्तावस्तु यथोदितम् ॥ २९२ ॥**

वेदान्तेषु भावनाभावे सिद्धमर्थमाह । **भावनात इति** । वेदान्तेषु द्विविधस्य विधेरसंभवादविधिस्पृष्टं ब्रह्म तत्त्वमादिवाक्यगम्यमिति तद्धीरेव केवला मुक्तिहेतुर्न कर्मेति काण्डयोर्भिन्नौ साधनाधिकारिणावित्युक्तम् । संप्रत्युक्तमसहमानश्चोदयति । **मोहमात्रेति** । उक्तायां मुक्तौ ज्ञानादेवान्तरायनिरासासिद्धेस्तन्मात्रं तद्धेतुरिति यथा त्वयोक्तं तथाऽस्तु न च मोहमात्रव्यवहिता सा किंतु साध्येत्यर्थः ॥ २९२ ॥

**एकदेशो विकारो वा संसारी त्वात्मनो यदा ॥**
**किं तदाऽप्युक्तमार्गेण मुक्तिः किंवा क्रियाश्रयात् ॥ २९३ ॥**

कथं साध्यत्वमित्याशङ्क्य तदर्थमादौ पक्षद्वयं करोति । **एकदेश इति** । यदा मतद्वयं तदा विज्ञानादेव मुक्तिः क्रियातो वेति विशये ज्ञानस्याकारकत्वाज्जीवस्य परैक्यं कैवल्यं क्रियासाध्यं निर्श्चीयते तत्र साधनादिवैलक्षण्यं काण्डयोरिति मत्वाऽऽह । **यदेति** ॥ २९३ ॥

**निवृत्तावेव निःशेषसंसारस्य तदाऽपि तु ॥**
**आगन्तोरधिकारः स्यान्न प्रवृत्तौ कथंचन ॥ २९४ ॥**

ब्रह्मांशस्य जीवस्य ब्रह्माप्तिर्वा भेदध्वस्तिर्वा मुक्तिरिति विकल्प्याऽऽद्यं दूषयन्परिहरति । **निवृत्ताविति** । अंशांशिनोरभेदो न कर्मसाध्यस्तस्य स्वतःसिद्धत्वादतोंऽशपक्षेऽपि निःशेषस्य कर्मादिबन्धस्याऽऽगन्तुकस्य ध्वस्तावेव मुमुक्षोरधिकारो न कर्मानुष्ठाने तस्यापेक्षितब्रह्मावाप्तावनुपयोगात्तन्न कथंचिदपि कर्मसाध्या मुक्तिरित्यर्थः ॥२९४॥

**आत्माज्ञाननिमित्तस्य ह्यन्यत्वानुपपत्तितः ॥**
**तदाऽप्यविद्याविध्वस्तावधिकारो न कर्मणि ॥ २९५ ॥**

द्वितीयं निराह । **आत्मेति** । ब्रह्माभिन्नस्य जीवस्य तत्त्वतस्ततो भेदायोगादुभयोरेकत्र विरोधादभेदस्योभयसिद्धत्वादविद्यया भेदोऽभ्युपेयो न चाज्ञानाधीनभेदस्य जीवस्य वास्तवमन्यत्वं व्याघातादतो न कर्मणा तद्ध्वंससिद्धिस्तस्याविद्यानिवर्तकत्वायोगात्तथा च भेदध्वस्तिमुक्तिपक्षेऽपि तन्मूलाविद्याध्वस्तिहेतुज्ञानोपाये मुमुक्षोरधिकारो न कर्मणीति भावः ॥ २९५ ॥

---

१ ख. °या ॥ २५३ ॥ २ क. °न्यथाऽनु°।

**कर्तव्याभावतस्त्वेवं विकारेऽपि न कर्मणि ॥**
**कारणैकत्वसंपत्तेः स्वतःसिद्धत्वहेतुतः ॥ २५६ ॥**

अंशपक्षं निराकृत्य ब्रह्मविकारस्यापि जीवस्य विकारिब्रह्माप्तिस्तद्भेदध्वंसो वा मुक्तिरिति विकल्प्याऽऽद्यमतिदेशेन दूषयति । **कर्तव्येति** । यथा ब्रह्मांशे जीवे न कर्मण्यधिकारो मुमुक्षोरित्युक्तं तथा तद्विकारेऽपि जीवे तत्कार्यस्य कारणब्रह्माभेदो न कर्मसाध्यः कार्यकारणयोरभेदस्य स्वाभाविकत्वात्कर्मणा कर्तव्यत्वायोगादतो न कर्मण्यधिकारो मुमुक्षोरित्यर्थः ॥ २५६ ॥

**मृदापत्तिर्घटस्येव विकारस्याऽऽत्मनो ध्रुवम् ॥**
**अविकारात्मसंपत्तिः सा च तत्त्वावबोधतः ॥ २५७ ॥**

कल्पान्तरं दृष्टान्तेन निराचष्टे । **मृदिति** । यथा घटस्य मृदभेदः स्वाभाविकस्तद्भेदोऽविद्याकृतस्तथा जीवस्यापि ब्रह्मविकारस्य स्वतो विकारिब्रह्माभेद आविद्यो भेदस्तत्त्वतोऽसंभवान्न च तादृग्भेदध्वंसः कर्मसाध्यस्तस्याविद्यानिवर्तकत्वानुपपत्तेरुक्तत्वात् । किंतु स सम्यग्धीमात्रलभ्योऽतोंऽशविकारपक्षयोरपि काण्डयोः साधनादिभेद इति भावः ॥ २५७ ॥

**कार्यकारणयोर्भित्तौ कार्यकारणता कुतः ॥**
**अभित्तौ च तयोरैक्यात्कार्यकारणता कुतः ॥ २५८ ॥**

एवं जीवस्यांशत्वं विकारत्वं चोपेत्य काण्डयोः साधनादिभेदमुक्त्वा तस्यांशत्वाद्येव दुर्वचमिति मन्वानो ब्रूते । **कार्येति** । अत्र कार्यकारणग्रहणमंशांशिनोरुपलक्षणम् ॥ २५८ ॥

**विज्ञानात्मविकारस्य कारणैक्यं विमुक्तता ॥ २५९ ॥**
**स्वतस्तस्य च संसिद्धेः कार्यता नोपपद्यते ॥**
**कर्मातोऽनर्थकं मुक्तावेकदेशविकारयोः ॥ २६० ॥**

अभेदे दोषान्तरं वक्तुमुक्तं स्मारयति । **विज्ञानेति** । विज्ञप्तिरूपं ब्रह्म तद्विकारस्य तदंशस्य वा तदभेदमिच्छता कारणेनांशिना वा तदैक्यं मुक्तत्वमिष्टम् । तस्य स्वतःसिद्धस्यासाध्यत्वाद्द्वयोरपि पक्षयोर्मोक्षस्य कर्म न हेतुरिति भावः ॥ २५९ ॥ २६० ॥



**अप्यनर्थाय कर्म स्यात्क्रियमाणं न मुक्तये ॥**
**प्रतिकूलं विमुक्तेश्च क्रियमाणमसंशयम् ॥**
**कर्माऽऽरभेत तेनैतन्मुक्तौ कर्म निरर्थकम् ॥ २६१ ॥**

न केवलमभेदे व्यर्थं कर्म किंत्वनर्थकरं चेत्यभिप्रेतं दोषान्तरमाह । **अप्यनर्थायेति** । सर्वमपि कर्म न मुक्त्यर्थमित्येव न किंतु तद्विपरीतानर्थसाधनं च स्यादित्यर्थः । तदेव प्रपञ्चयति । **प्रतिकूलमिति** । क्रियमाणं कर्म स्वर्गादि मुक्तिप्रतिकूलमप्रतिबन्धेनाऽऽ-

१ ख. °तश्चैवं ।

रभेत । **नाभुक्तं** क्षीयते कर्मेति **स्मृतेः** । अतो मोक्षं प्रति कर्म व्यर्थमनर्थकरं चेत्यर्थः ॥ २६१ ॥

**विकारोऽत्यन्तनिर्भिन्नो यदा तु स्याद्विकारिणः ॥**
**तदाऽपि विकृतेर्नाशो मुक्तिरित्यभिधीयते ॥ २६२ ॥**

विकारस्य जीवस्य विकारिणो ब्रह्मणोऽत्यन्तभेदमधिकदोषविवक्षयाऽनुभाषते । **विकार इति** । तस्यात्यन्तभिन्नस्य स्वरूपावस्थाने विकारिब्रह्मैक्यायोगादैक्यार्थं विकारनाशो वाच्यस्तथा च जीवनाशो मुक्तिः स्यादिति दूषयति । **तदेति** ॥ २६२ ॥

**अत्राप्यनर्थकं कर्म तत्फलासंभवत्वतः ॥**
**कर्मेव ज्ञानमप्यत्र फलाभावादनर्थकम् ॥ २६३ ॥**

अस्तु तन्नाशो मुक्तिरिति **शाक्यमतमाशङ्क्याऽऽह** । **अत्रापीति** । जीवरूपनाशो मुक्तिरिति पक्षेऽपि कर्मानर्थक्यं फल्यभावात्तत्फलाभावाच्चेत्यर्थः । कर्मानर्थक्येऽपि ज्ञानस्यार्थवत्त्वे मत्पक्षः सिध्यतीत्याशङ्क्याऽऽह । **कर्मेति** । अत्रेति जीवनाशपक्षोक्तिः । जीवनाशवादिनो ज्ञानकर्मानर्थक्ये निःश्रेयसार्थं शास्त्रारम्भासिद्धिरिति भावः ॥ २६३ ॥

**नैवाविद्याकृतैवासौ वास्तवी यदि संसृतिः ॥**
**स्वरूपनाशदोषः स्यादेकदेशेऽपि पूर्ववत् ॥ २६४ ॥**

किंच ब्रह्मविकारस्य जीवस्य बन्धः स्वाभाविको वा स्यादविद्याकृतो वा तत्राऽऽद्यं प्रत्याह । **नैवेति** । यद्येषा संसृतिर्वास्तवी नासौ ब्रह्मविद्ययाऽपनुद्येताविद्याकृतत्वाभावान्न हि वस्तु विद्यापोद्यं वस्तुत्वादात्मवन्न च कर्माणि बन्धं नुदन्ति तेषां तद्धेतुत्वादतो ज्ञानकर्मानर्थक्यमित्यर्थः । जीवे ब्रह्मैकदेशेऽपि पूर्ववद्विकल्प्याऽऽद्ये दोषमाह । **स्वरूपेति** । ब्रह्मैकदेशे जीवे स्वीकृतेऽपि तदीयो बन्धो वस्तुत्वान्न नश्यति चेदनिर्मोक्षस्तन्नाशे तद्विशिष्टजीवनाशाद्विकारपक्षवदत्रापि ज्ञानाद्यानर्थक्यमित्यर्थः ॥ २६४ ॥

**यदा त्वविद्ययाऽध्यस्तं संसारित्वं न वस्तुतः ॥ २६५ ॥**
**विकारेऽवयवे चैव तदा पूर्वोक्त एव तु ॥**
**पक्षो निर्वहणीयः स्यादस्माभिरपि संमतः ॥ २६६ ॥**

बन्धस्याऽऽविद्यत्वपक्षं पक्षद्वयेऽपि कक्षीकरोति । **यदा त्विति** । विकारत्वमंशत्वं बन्धो बद्धत्वमित्येतत्सर्वमाविद्यमेवाऽऽत्मनो मतद्वयेऽपि यदेष्टं तदा काण्डयोर्भिन्नमधिकार्यादीति पूर्वोक्तः पक्षो भवद्भिरपि निर्वाह्यः स्यादिति यावत् । यथा वयमुक्तपक्षनिर्वाहे यतामहे तथाऽन्येऽपि यतेरन्नित्याह । **अस्माभिरिति** ॥ २६५ ॥ २६६ ॥

**सर्ववादाविरोधी च नातो विधिरिहेष्यते ॥**
**तदा हि कल्पनाः सर्वा विकारावयवादिकाः ॥**

---

१ ख. °न्तमभिन्नो । २ क. °क्यं कल्पकाभा° । ३ ख. °वाद्यवि° ।

**वृथैवेमा ह्यविद्यैव सर्वाः संपादयिष्यति ॥ २६७ ॥**

न चैवं पक्षमिच्छतां लोकवेदविरोध इत्याह। **सर्वेति**। मोक्षवादिनः सर्वे सर्वं संसारित्वादिकमाविद्यमिच्छन्तो ज्ञानान्मोक्षमातिष्ठन्तां तथाऽपि तव किं सिद्धं तदाह। **नात इति**। यतो ज्ञानादेव मोक्षोऽतो वेदान्तेषु न विधिसंभवो विधेयाभावान्न हि मोक्षस्तथा स्वर्गवत्फलत्वान्नापि ज्ञानमपुंस्तन्त्रत्वात्तस्माद्वेदान्ता वस्तुमात्रे पर्यवस्यन्तीत्यर्थः। ननु यदि ब्रह्मांशत्वं तद्विकारत्वं च त्यक्त्वा जीवस्याखण्डवस्तुमात्रत्वं तदा "**पादोऽस्य सर्वा** भूतानि" "**ममैवांशो** जीवलोके" "**अंशो** नानाव्यपदेशात्" "**सर्वं** जनयति प्राणश्चेतोंऽशून्पुरुषः पृथक्" "**सर्व** एत आत्मानो व्युच्चरन्ति" इति वाक्यानां का गतिस्तत्राऽऽह। **तदा हीति**। यदा वेदान्तेषु विध्यभावस्तदा कल्पनाः सर्वा यथोक्ता व्यर्थाः सत्यो न युज्यन्ते। यदा ज्ञानान्मोक्षस्तदा पूर्वकल्पना वास्तव्यो न भवन्ति त्वेत्पक्षे मोक्षानुपपत्तेरुक्तत्वात्किंत्वेताः सर्वा भवन्त्यविद्यामय्यस्ताश्च श्रुत्यादयो भेदाभावाभिधित्सया व्यपदिशन्तीति भावः ॥ २६७ ॥

**पूर्णं निःश्रेयसं तस्मात्तदपूर्णमविद्यया ॥ २६८ ॥**
**आभासते मृषैवातो यथाभूतात्मविद्यया ॥**
**प्रध्वस्तायामविद्यायां पूर्णमेवावशिष्यते ॥ २६९ ॥**

**अथ** यदतः परो दिवो ज्योतिरित्यादिश्रुतेर्देशान्तरगत्यायत्ता कर्मसाध्या मुक्तिरिति काण्डयोरधिकार्याद्यभेदो जीवस्य चांशत्वादि दुर्वारमित्याशङ्क्याऽऽह। **पूर्णमिति**। **पूर्णमेवावशिष्यते सत्यं** ज्ञानमनन्तमित्यादिश्रुतेरव्यावृत्ताननुगतं वस्तु ब्रह्मगिरोच्यत इति वक्ष्यमाणत्वाच्च पूर्णं ब्रह्म **तदेव** निःश्रेयसं **ब्रह्म**विदाप्नोति परमित्यादिश्रुतेरतो न कर्मायत्ता मुक्तिः। **अथ** यदित्यादिवाक्यं तूपास्तिप्रकरणस्थं न देशान्तरगत्यायत्तां मुक्तिं वक्ति। तत्कुतो जीवस्यांशत्वादिसिद्धिरित्यर्थः। कथं तर्हि ब्रह्मणि परिच्छिन्नत्वधीरित्यत आह। **तदपूर्णमिति**। अथ ब्रह्मणः स्वरूपावस्थानमध्वस्तपरिच्छेदस्य ध्वस्तपरिच्छेदस्य वा नाऽऽद्यः संसारमोक्षयोरविशेषप्रसङ्गात्। द्वितीये स्वापमोक्षयोरविशेषापत्तिरत आह। **अत इति**। ध्वस्तपरिच्छेदस्य ब्रह्मणः स्वरूपावस्थानं मुक्तिः। स्वापादौ तु कार्यध्वस्तावपि कारणाध्वस्तेर्न मुक्तितुल्यत्वमतो विद्यया ध्वस्तहेतुफलभेदं ब्रह्मैव निःश्रेयसमित्यर्थः ॥ २६८ ॥ २६९ ॥

**अनर्थको विधिस्तस्मात्सर्वो निःश्रेयसं प्रति ॥**
**इत्येतन्न्यायतः सिद्धं यत्तु प्राक्चोदितं त्वया ॥**
**आम्नायस्य क्रियार्थत्वादित्यत्राप्यभिधीयते ॥ २७० ॥**

उक्तविधमपि निःश्रेयसं विधिफलं स्यादिति चेन्नेत्याह। **अनर्थक इति**।

---

१ ख. तत्पक्षे। २ क. °वतिष्ठते।

यस्मात्पूर्णं ब्रह्म निःश्रेयसं तस्मात्तस्य चतुर्विधक्रियाफलविलक्षणत्वादिति यावत् । सर्वशब्देनोत्पत्तिविनियोगाधिकारप्रयोगविधिप्रकारा गृह्यन्ते । मुक्तितद्धेत्वोर्विध्यभावमुपसंहराति । **इत्येतदिति ।** न्यायतः फलभूते तु विज्ञान इत्याद्युक्तन्यायादिति यावत् । कार्यं विना नाधिकारीत्येतन्निरासेन वेदान्तानां न विधिशेषतेति स्वसिद्धान्तमुपसंहृत्योर्ध्वं चापि प्रवक्ष्यत इत्युक्तं व्यक्तीकर्तुं प्रत्युक्तमेव चोद्यमनुवदति । **यत्त्विति ।** अर्थवादाधिकरणस्य नोपनिषद्विषयत्वं भाष्यवार्तिकटीकासु तासामनुदाहृतेरित्याह । **अत्रेति ।** प्रागपि परिहृतमेतदिति द्योतनायापीत्युक्तम् ॥ २७० ॥

**तत्राऽऽम्नायाभिधानस्य ह्याम्नायांशाभिधानतः ॥**
**विध्युक्तीनां क्रियार्थत्वं सिद्धं हेतुतयोच्यते ॥ २७१ ॥**

किंचाऽऽ**म्नायस्य** क्रियार्थत्वादित्यादिसूत्रे किमाम्नायशब्दसामर्थ्याद्वेदान्तानां विधिशेषत्वं किंवा तद्भूतातदर्थपदसामर्थ्यादिति विकल्प्याऽऽद्यं दूषयति । **तत्रेति ।** तत्र सूत्रे ग्रामो दग्ध इतिवदाम्नायपदस्य तदेकदेशविधिमात्रविषयत्वान्न तत्सामर्थ्यादुपनिषदां विधिशेषतेत्यर्थः । क्रिया कथमनुष्ठेयेति तां वेदितुं समाम्नातारो वाक्यानि समामनेयुरिति भाष्यादावाम्नायशब्दस्य संकोचकाभावे[2] कथमेकदेशविषयतेत्याशङ्क्याऽऽह । **विधीति ।** चोदनासूत्रे विधिवाक्यानां क्रियार्थत्वं सिद्धं नाऽऽम्नायमात्रस्य चोदनाधर्मशब्दविरोधात्प्रक्रमभङ्गाच्च तदेवास्मिन्नधिकरणे वाक्यानामतदर्थानामानर्थक्ये हेतुत्वेनोच्यते । अतो युक्तमाम्नायशब्दस्य विधिमात्रविषयत्वमन्यथा क्रियार्थत्वहेतोर्भागासिद्धेः । न च विधीनां क्रियार्थत्वमक्रियार्थानामानर्थक्ये व्यधिकरणत्वादहेतुश्चोदनानां कार्यार्थत्वात्तत्प्रकरणस्थानामपि तदर्थत्वं वाच्यम् । अन्यथा तेषामानर्थक्यात्तद्युक्तचोदनानामपि नार्थवत्त्वमिति हि पूर्वपक्षो विवक्षितः । तस्मादाम्नायपदस्य तदेकदेशविषयत्वान्न तद्वशाद्वेदान्तानां विधिशेषतेति भावः ॥ २७१ ॥

**क्रियाप्रकरणस्थानां विधिशेषात्मनां सताम् ॥**
**वचसामक्रियार्थानामानर्थक्याय तद्वचः ॥ २७२ ॥**

द्वितीयं प्रत्याह । **क्रियेति ।** कर्मप्रकरणस्थानां दैवगत्या क्रियार्थानां मुखतस्तथाप्रथाविरहिणां शब्दानामेवातदर्थशब्देनाभिधानात्तेषां फलवदर्थवैधुर्योक्तिद्वारा तद्युक्तचोदनाभागस्याप्रामाण्योक्त्यर्थत्वादस्य सूत्रस्य तद्भूतातदर्थपदसामर्थ्यादपि नोपनिषदां विधिशेषतेत्यर्थः ॥ २७२ ॥

**न तूपनिषदां न्याय्यं पार्थगर्थ्यस्य संभवात् ॥**
**पूर्वोक्तेनैव न्यायेन नातस्तद्विधिशेषता ॥ २७३ ॥**

अक्रियार्थत्वाविशेषात्तासामपि **सोऽरोदी**दित्यादिवदानर्थक्यं किमिति न सूत्रितमित्या-

१ ख. °नुद्रवति । २ ख. °कोचाभा° ।

शङ्कयाऽऽह । **न त्विति** । तासामक्रियार्थत्वेऽप्यानर्थक्यमन्याय्यमित्यत्र हेतुमाह । **पार्थगर्थ्यस्येति** । पृथगर्थस्य भावः पार्थगर्थ्यं तस्य संभवादुपनिषत्सु नाऽऽनर्थक्यमिति यावत् । हेत्वसिद्धिं धुनीते । **पूर्वेति** । श्रौतत्वाद्विद्वत्प्रत्यक्षत्वाच्च वाक्यीयं फलं दुरपह्नवमिति न्यायः । पूर्वपक्षसूत्रमन्यथाऽपि यतो निर्वहत्यतस्तेनोपनिषदां न विधिनिष्ठतेत्युपसंहरति । **नात इति** ॥ २७३ ॥

**विधिना त्वेकवाक्यत्वादिति यच्चापि चोदितम्[1] ॥**
**तेषामेव तदप्यस्तु तदानर्थक्यचोदनात् ॥ २७४ ॥**

ननु विधिनेति सिद्धान्तसूत्रादुपनिषदां विधिशेषत्वं यद्यपि क्रिया नावगम्यते क्रियासंबद्धं वा किंचित्तथाऽपि विध्युद्देशेनैकवाक्यत्वात्प्रमाणमिति भाष्यान्नेत्याह । **विधिना त्विति** । येषां क्रियाप्रकरणस्थानां वाक्यानामक्रियार्थत्वेनाऽऽनर्थक्यं शङ्कितं तेषामेव विध्यपेक्षितदेवतादिस्तुत्यर्थेन विधिनैकवाक्यत्वादर्थवत्त्वमुक्तम्[2] । प्रश्नोत्तरयोरैकार्थ्याभावे **सूत्रकृतो**ऽनाप्तत्वप्रसङ्गात् । **भाष्यकारश्च वायुर्वै** क्षेपिष्ठा देवतेत्याद्यर्थवादानां **वायव्यं** श्वेतमालभेतेत्यादिविधिनैकवाक्यतां ब्रुवन्प्रकरणान्तरवर्तिनो वेदान्तान्व्यावर्तयति । एवमिमानि सर्वाण्येव पदानि कंचिदर्थं स्तुवन्ति निन्दन्ति वाऽतः प्रमाणमेवंजातीयकानि **वायुर्वै** क्षेपिष्ठा देवतेत्येवमादीनीति वदन्वेदान्तानप्युपलक्षयतीति चेन्मैवमित्याह । **तदिति** । एवमिमान्येवंजातीयकानीति[3] च प्रकृततज्जातीयपरामर्शाद्वायुर्वै क्षेपिष्ठा देवतेत्यादीनि[4] च वाक्यशेषविरोधादिति भावः ॥ २७४ ॥

**न तु वेदान्तवचसां दृष्टार्थत्वेन हेतुना ॥**
**तद्बुद्धेः पृथगर्थत्वमुक्तमेवातिविस्तरात् ॥ २७५ ॥**

स्वर्गादिफलवद्विधिवाक्यसंनिधानादतत्फलानां वेदान्तानामपि तच्छेषत्वं फलवत्संनिधावफलं तदङ्गमिति न्यायादित्येवं पार्थगर्थ्यस्य[5] संभवादित्युक्तं प्रस्मृत्य प्रत्यवतिष्ठमानं प्रत्याह । **न त्विति** । फलविकलानां फलवत्संनिध्याम्नातानां तच्छेषत्वेऽपि वेदान्तानां प्रकरणान्तरस्थानां दृष्टफलानां दृष्टे सत्यदृष्टकल्पना न युक्तेति न्यायाददृष्टस्वर्गादिविमुखानां कुतो विधिशेषतेत्यर्थः । वेदान्तानां न दृष्टार्थत्वम् । दृष्टतत्त्वस्यापि यथापूर्वं संसारदृष्टेरित्याशङ्कयाऽऽह । **तद्बुद्धेरिति** । वाक्यार्थज्ञानस्य कर्मफलाद्विलक्षणफलत्वं नाभ्युदयस्येत्यादिना प्रपञ्चितम् । तन्न वेदान्तानां पार्थगर्थ्ये विवादः पूर्ववद्भ्रान्धधीस्तु बाधितानुवृत्तिरित्यर्थः ॥ २७५ ॥

**अन्यार्थानुपपत्तेश्च वेदान्तवचसां तथा ॥**
**अर्थैकत्वगतौ सत्यां वाक्यभेदप्रकल्पना ॥**
**न न्याय्या सेति दृष्टत्वाद्देवस्य त्वादिवाक्यवत् ॥ २७६ ॥**

---

१ क. चोद्यते । २ क. °वत्त्वं युक्त° । ३ क. एवं° । ४ च. °दीनीति च । ५ क. °गर्थ्यादिसं° ।

किंच प्रयाजादीनां दर्शपूर्णमासफलोपकारित्वात्तद्वाक्यानां तद्वाक्यशेषत्वं युक्तम्। वेदान्तवेद्यात्मवस्तुनस्तु कर्मानुपकारित्वान्न तेषां तद्विधिशेषतेत्याह। **अन्यार्थेति**। वेदान्तानामन्यार्थत्वं कर्मोपकारकार्थवत्त्वं तस्यानुपपत्तेस्तथाच न कर्मविधिशेषता तेषामित्यर्थः। एवं काण्डद्वयस्य भिन्नवाक्यत्वे साधिते संभवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यत इति न्यायेन विधिशेषतयेत्यादिनोक्तमाशङ्कते। **अर्थेति**। प्रयाजदर्शादिवाक्ययोरिव काण्डयोरेकफलत्वेनैकवाक्यत्वसिद्धौ न फलभेदेन वाक्यभेदकल्पना युक्तेत्यर्थः। एकार्थत्वेनैकवाक्यत्वे दृष्टान्तमाह। **इति दृष्टत्वादिति**। **अयं भावः**—"अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" [पू० मी० २।१।४२] यजुषां परिमाणं ज्ञातुमशक्यं शक्यं वेति **संशये** छन्दोबलादृचां छान्दसोपदेशाच्च साम्नां परिमाणस्य सुज्ञातत्वाद्यजुषां च प्रश्लेषपाठात्तन्निर्णयहेत्वभावान्न शक्यं तत्परिमाणं ज्ञातुमिति **पूर्वपक्षे** सत्येकफलप्रतिपादकं विभज्यमाने साकाङ्क्षं पदजातमेकं वाक्यं तच्चैकं यजुरिति शक्यं तत्परिमाणं ज्ञातुमिति द्वितीये स्थितम्। तदनेन न्यायेन **देवस्य** त्वा सवितुरित्यादिमन्त्रस्थपदजातस्य निर्वपामीत्यस्माद्विभागे साकाङ्क्षस्य तेन सहैकफलप्रतिपादकस्यैकवाक्यत्वमिति दृष्टत्वाद्वेदान्तानामपि कर्मकाण्डेनैकार्थतयैकवाक्यत्वसंभवे वाक्यभेदायोगादधिकार्याद्यभेद इति॥ २७६॥

**तथैव पृथगर्थत्वगतौ भिन्नवचस्त्वतः॥**
**इषे त्वादिषु दृष्टत्वान्न न्याय्यैकार्थकल्पना॥ २७७॥**

काण्डयोरेकवाक्यत्वं प्रत्यादिशति। **तथैवेति**। अर्थैकत्वे वाक्यानेकत्वं यथा न युक्तं तथा भिन्नार्थत्वदृष्टौ भिन्नवाक्यत्वदृष्टेरेकार्थत्वेनैकवाक्यत्वकल्पना न युक्तेत्यर्थः। अर्थभेदाद्वाक्यभेदे दृष्टान्तमाह। **इषे त्वादिष्विति**। **अस्यार्थः**—स्थितं भेदलक्षणे "समेषु वाक्यभेदः स्यात्" **इषे** त्वोर्जे त्वादिष्वेकमनेकं वा यजुरिति **संशये** प्रश्लेषपाठानुग्रहा**दिषे** त्वोर्जे त्वेत्यनयोरन्योन्यसंनिहितयोरेव शाखाच्छेदने चानुमार्जने च विनियोगादेकार्थतया वाक्यैक्यादेकं यजुरिति **पूर्वपक्षयित्वेषे** त्वेति शाखामाच्छिनत्त्यूर्जे त्वेत्यनुमार्ष्टीति च्छेदनानुमार्जनयोर्भेदेन विनियोगादर्थभेदभानात्प्रश्लेषपाठस्य चादृष्टार्थत्वेनापि संभवात्तद्बलाद्विधिवाक्यस्थशब्दस्य प्रतीकग्रहणेन लक्षणानुपपत्तेर्वाक्यभेदस्य न्याय्यत्वादनेकं यजुरिति **राद्धान्तितम्**। तदेवमिषे त्वेत्यादावर्थभेदे वाक्यभेदस्य दृष्टत्वात्काण्डयोरपि भिन्नफलयोर्वाक्यभेदस्य युक्तत्वान्नाधिकार्याद्यैक्यमिति॥ २७७॥

**ज्ञानकाण्डार्थशेषत्वं कर्मकाण्डस्य यत्पुनः॥**
**विनियोजकहेत्वेतत्तयोर्वाक्यैकवाक्यतः॥ २७८॥**

ननु कर्मवाक्यानां ज्ञानवाक्यशेषतया तदेकवाक्यत्वं सिद्धान्तेऽपि संमतमित्याशङ्क्याऽऽह। **ज्ञानेति**। यत्पुनः कर्मकाण्डस्य ज्ञानकाण्डार्थे ज्ञाने शुद्धिद्वारा शेषत्वं

तद्विनियोजकविविदिषावाक्यप्रमाणकं तयोर्भिन्नार्थतया भिन्नवाक्ययोरेवोपकार्योपकारकत्वेनैकवाक्यत्वाभ्युपगमादित्यक्षरार्थः । मन्त्रार्थवादानां पृथगर्थशून्यानां विधिनैकवाक्यत्ववत्कर्मकाण्डस्य ज्ञानकाण्डशेषत्वेन न तदेकवाक्यत्वं किंतु द्रव्यार्जनविधेः क्रतुविधिभिर्वाक्यैकवाक्यत्ववद्विविदिषावाक्येन कर्मणां ज्ञानहेतुतया विनियोगात्काण्डयोर्वाक्यैकवाक्यत्वमतो रागप्राप्तद्रव्यवद्विधिप्राप्तस्यापि तस्य क्रतूपकारित्वाद्द्रव्यार्जनक्रतुविध्योरिव तयोर्वाक्यैक्येऽपि साधनादि भिन्नमिति भावः ॥ २७८ ॥

**न्यायेन वक्ष्यमाणेन भूयोऽप्येतत्प्रवक्ष्यते ॥ २७९ ॥**
**पार्थगर्थ्यमतः सिद्धमपास्तविधिलक्षणम् ॥**
**सर्वोपनिषदां चाऽऽत्मज्ञानं कैवल्यसाधनम् ॥ २८० ॥**

विविदिषावाक्यस्य कुतो विनियोजकत्वं तत्राऽऽह । **न्यायेनेति** । विविदिषावाक्यस्य विनियोजकत्वमिति शेषः । फलवतो वाक्यस्य फलवता वाक्यान्तरेण वाक्यैकवाक्यत्वं द्रव्यार्जनक्रतुविध्योस्तथात्वादुपनिषदां तु फलवत्त्वमस्माकमसिद्धमित्याशङ्क्याऽऽह । **भूयोऽपीति** । उक्तं तासां फलवत्त्वं वक्ष्यते च तन्नामूषां फलवत्त्वासिद्धिरित्यर्थः । उपनिषदां पृथगर्थवत्त्वमुपसंहरति । **पार्थगर्थ्यमिति** । उक्तवक्ष्यमाणन्यायोऽतःशब्देनोच्यते । तमेवार्थं स्पष्टयति । **अपास्तेति** ॥ २७९ ॥ २८० ॥

**निःशेषवाङ्मनःकायप्रवृत्त्युपरमात्मिका ॥**
**तन्निष्ठा चेह विज्ञेया यथोक्तन्यायवर्त्मना ॥ २८१ ॥**

अथोक्तं ज्ञानमुपनिषद्भ्यो न सिध्यति । अधीतोपनिषदामपि केषां चित्तदनुपलम्भात्तस्मादुक्तमुपनिषत्फलमसंभावितमिति तत्राऽऽह । **निःशेषेति** । तस्य ज्ञानस्य निष्ठा श्रवणाद्या सा च स्वाभाविकाशेषव्यापारोपरमरूपा प्रकृते ज्ञाने साधनत्वेन शास्त्रादन्वयव्यतिरेकाभ्यां चावगन्तव्या तथाच यस्य शमादिसहितं श्रवणादि तस्यैवोपनिषद्भ्यो यथोक्तं ज्ञानं नेतरेषामधीतोपनिषदामपीत्यर्थः । शान्तो दान्त इत्यत्रोक्तं स्मारयति । **यथोक्तेति** ॥ २८१ ॥

**अधिकारोऽपि तस्यां च सिद्धोऽशेषक्रियात्यजः ॥**
**जिज्ञासोरेव कर्तुस्तु न सिषाधयिषोः सदा ॥ २८२ ॥**

ननु श्रवणादावधिकारिणा भाव्यमन्यथा तदनिष्पत्तेर्नियोगाधीनश्चाधिकाराधिगमः स च भावार्थाविषयस्तत्कथं ज्ञानहेतोः श्रवणादेरशेषव्यापारोपरमरूपता तत्राऽऽह । **अधिकारोऽपीति** । शमादिवाक्यादिति शेषः । नियोगं विनेति चार्थः । ज्ञाननिष्ठायां संन्यासी चेदधिकारी तस्य किंनिमित्तस्तत्राधिकारस्तत्राऽऽह । **जिज्ञासोरिति** । ज्ञानेच्छावतो ज्ञानसाधनेष्वधिकारो न कर्तुः सदा चिकीर्षोर्न च संन्यासिनोऽधिकारो नियोगकृतो विवेकादिपूर्वकज्ञानेच्छाकृतत्वात्कर्मणि कर्तुरधिकारो नियोगनिमित्त इति भावः ॥ २८२ ॥

**ब्रह्मात्मतत्त्वव्युत्पत्तिमात्रेणाप्यधिकारिता ॥**
**भवत्येवात्र जिज्ञासोरज्ञस्यापि मुमुक्षुतः ॥ २८३ ॥**

नन्वज्ञातब्रह्मभावो वा तज्ज्ञानहेतुष्वधिक्रियते ज्ञाततद्भावो वा नाऽऽद्यस्तस्य तज्जिज्ञासायोगाद्विशिष्टधियो विशेषणधीपूर्वकत्वान्न द्वितीयस्तस्य जिज्ञासोपरमादतोऽधिकार्यभावान्न श्रवणादि कर्तव्यं तत्राऽऽह । **ब्रह्मेति** । मुमुक्षोस्तद्धेतुमिच्छतोऽधीतस्वाध्यायस्य ज्ञातपदतदर्थसंगतेर्वेदान्तेष्वापातजं ज्ञानं ब्रह्मात्मगोचरं विचारप्रयोजकं व्युत्पत्तिशब्दितमुत्पद्यते । तन्मात्रेणापि श्रवणादावधिकारिता सिध्यत्यतोऽसाक्षात्कारवतोऽपि यथोक्ताधिकारिणस्तत्कर्तव्यत्वसिद्धेः सिद्धं भिन्नमधिकार्यादिकाण्डयोरित्यर्थः ॥ २८३ ॥

**मैवं प्रक्रमसंहारपर्यालोचनया पुरा ॥**
**वेदस्यैकार्थ्यतात्पर्यमेकवाक्यतयोदितम् ॥ २८४ ॥**

उक्तमधिकार्यादिभेदं विधान्तरेणाऽऽक्षिपति । **मैवमिति** । अग्निमीळे पुरोहितम् । **इषे** त्वोर्जे त्वा । **अग्न आयाहीत्यादेरुपक्रमस्य यावज्जीवमग्निहोत्रं** जुहुयात्कुर्वन्नेवेह कर्माणि **कुटुम्बे** शुचौ देशे स्वाध्यायमधीयान इत्यादेरुपसंहारस्य चाऽऽलोचनया वेदस्य कार्यैकार्थत्वं निश्चित्यैकवाक्यताऽधिगता । तथाच काण्डयोर्यत्पुरोक्तमधिकार्यादि भिन्नमिति तन्मैवमित्यर्थः । अथ वाऽर्थैकत्वगतावित्युक्तं चोद्यं सोपस्कारमिहोपस्थाप्यते तत्र च व्यक्तैवाक्षरयोजना ॥ २८४ ॥

**तेन निःशेषवेदोक्तकारिणोऽत्राधिकारिता ॥**
**सिद्धे ह्यनेकवाक्यत्वे कल्प्या भिन्नाधिकारिता ॥ २८५ ॥**

काण्डयोरेकवाक्यत्वेऽपि भिन्नाधिकारित्वमुक्तमित्याशङ्क्याऽऽह । **तेनेति** । एकवाक्यत्वेन हेतुना दर्वीहोममारभ्य यावत्सत्रं कर्मानुष्ठितवतो ज्ञानेऽधिकारिता तन्निःशेषकर्मानुष्ठानानन्तरं ज्ञाननियोगमनुतिष्ठतो मुक्तिरित्येकाधिकारित्वं काण्डयोरित्यर्थः । एकवाक्यत्वादेकाधिकारित्वमुक्त्वा विपक्षे दोषमाह । **सिद्धे हीति** । भिन्नाधिकारित्वे काण्डयोरेकवाक्यत्वासिद्धिरित्यर्थः ॥ २८५ ॥

**मैवं भिन्नैकवाक्यत्वे प्रागस्माभिः समर्थिते ॥**
**ततश्च भवदुक्तस्य चोद्यस्येह न संभवः ॥ २८६ ॥**

काण्डयोरेकार्थयोरेकवाक्यत्वादेकाधिकारित्वमित्येतन्निरस्यति । **मैवमिति** । स्वतन्त्रफलावसितव्यापारयोरपि काण्डयोरर्थद्वारोपकार्योपकारकत्वमात्रेण द्रव्यार्जनक्रतुविध्योरिव भिन्नाधिकारयोरेवैकवाक्यत्वं ज्ञानकाण्डार्थशेषत्वमित्यादिनोक्तमतो नानयोरेकार्थत्वेनैकवाक्यतेति कथमेकाधिकारितेत्यर्थः ॥ २८६ ॥

---

१ ख. °नास्याधि° । २ ख. °कार्थता° ।

**नापि निःशेषवेदार्थमनुष्ठातुं क्षमो नरः ॥**
**पुमायुषाऽपि येन स्यादात्मज्ञानेऽधिकारिता ॥ २८७ ॥**

प्रक्रमसंहारौ तु कर्मैकार्थौ न व्यक्तावित्युपेक्षितौ । तत्र तत्र वाक्यभेदेन ज्ञानार्थयोरपि तयोर्भावात् । यत्तु वेदोक्तसर्वकर्मकारिणो ज्ञानाधिकारितेति तत्राऽऽह । **नापीति ।** वर्षशतेनापि सर्वकर्मानुष्ठानासंभवेन ज्ञानाधिकार्यसिद्धेस्तन्नियोगो निरधिकारः स्यादिति फलितमाह । **येनेति** ॥ २८७ ॥

**संपदां चार्थवादत्वं तेन वेदान्तगोचरे ॥**
**ज्ञानेऽधिकारिणोऽभावात्प्रामाण्यं क्षिप्यते स्वतः ॥ २८८ ॥**

किंच काण्डयोरेकाधिकारित्वे काण्डद्वयं स्वर्गादिकामस्य वा ज्ञानकामस्य वा मानं नाऽऽद्य इत्याह । **संपदां चेति ।** यागादीनां ज्ञानशेषत्वात्तत्फलानां स्वर्गादीनामविवक्षितत्वात्तत्तत्कामाधिकार्ययोगान्न तस्य प्रमापकं काण्डद्वयमित्यर्थः । न द्वितीय इत्याह । **तेनेति ।** एकस्य सर्वकर्मानुष्ठानायोगेनोक्तहेतुना वाक्यजैक्यज्ञानेऽधिकार्यभावान्न तस्य काण्डद्वयं प्रमाणमतो यत्तस्य स्वतःप्रामाण्यं तद्भज्येतेति **चोदनासूत्रविरोध** इत्यर्थः ॥ २८८ ॥

**किंच मानादविज्ञाता विमुक्तिः काम्यते न च ॥**
**ज्ञातायां स्वात्मरूपत्वात्सुतरां नास्ति कामना ॥ २८९ ॥**

इतश्च ज्ञानाधिकारिणं प्रति न तत्प्रामाण्यमित्याह । **किं चेति ।** ज्ञानाधिकारिणो मोक्षकामना विशेषणं सा चाज्ञाते मोक्षे वा स्याज्ज्ञाते वा नाऽऽद्य इत्याह । **मानादिति ।** अनुभूते कामनेति स्थितेरित्यर्थः । द्वितीयं प्रत्याह । **ज्ञातायामिति ।** मुक्तौ ज्ञातायां नास्ति कामनेति संबन्धः । सा किमनात्मत्वेनाऽऽत्मत्वेन वा ज्ञायते नाऽऽद्यो मुक्तेरनात्मत्वधियो भ्रान्तित्वात् । द्वितीयं निराह । **स्वात्मेति ।** आत्मत्वेन ज्ञाता मुक्तिराप्तत्वान्न कामनामर्हत्यप्राप्ते स्मरणविपरिवर्तिनि कामनासंभवादिति भावः । प्राप्ते त्वस्या निवृत्तिरेवानुभवानुसारिणीत्यतिशयमाह । **सुतरामिति ।** अतोऽधिकारिविशेषणस्य मोक्षकामनायाः परपक्षे दुःसाधत्वाद्विशिष्टज्ञानाधिकार्यभावान्न वेदप्रामाण्यमिति समुदायार्थः ॥ २८९ ॥

**न युक्तं कामना मुक्तौ पुंसां नास्तीति भाषितुम् ॥**
**देशकालानवच्छिन्नसुखाद्यर्थित्वदर्शनात् ॥ २९० ॥**

ननु तवापि मोक्षकामना ज्ञानाधिकारिविशेषणं सा चाज्ञाते ज्ञाते वा मोक्षे त्वदुक्तरीत्या न युक्तेति कुतो वेदान्तप्रामाण्यं तत्राऽऽह । **न युक्तमिति ।** तत्र हेतुः । **देशेति ।** सुखं मे स्याद्दुःखं मा भूदिति सर्वप्राणभृतां प्रार्थनाप्रतीतेस्तदनुसारेण ---च्छि-

१ ख. °त्मभूतत्वा° ।

न्नानन्दाशेषानर्थोच्छेदात्मनि मुक्ताविच्छासंभवात्तन्न कामना नेति मां प्रति युक्तं वक्तुम्। न खल्वात्मनो ब्रह्मत्वलक्षणा मुक्तिरज्ञाता स्वप्रकाशत्वान्नापि ज्ञानोदयात्प्राङ्मानतो ज्ञाता तस्या मानान्तराविषयत्वादतः स्वरूपेण ज्ञाते मानतश्चाज्ञाते मोक्षे मत्पक्षे कामना-संभवाद्विशिष्टज्ञानाधिकारिसिद्धेर्न वेदान्ताप्रामाण्यं न च विरोधात्त्वं प्रत्येव कर्मकाण्डप्रा-माण्यमिति भावः ॥ २९० ॥

**किंच ज्ञानमदृष्टार्थमग्निहोत्रादिवद्यदि ॥**
**ततोऽधिकारिचिन्ता स्यात्कृतेऽप्यफलशङ्कया ॥ २९१ ॥**

इतश्चास्मन्मते ज्ञानाधिकारिलाभान्न तदप्रामाण्यमित्याह । **किंचेति** । त्वन्मते ज्ञान-स्याग्निहोत्रवददृष्टार्थत्वात्तस्मिन्कृतेऽपि फलं स्यान्न वेति संशयादनिश्चिताधिकारः पुमान्न प्रवर्तेत । अधिकारनिश्चयश्च मोक्षकामनामपेक्षते । सा च तस्मिञ्ज्ञातेऽज्ञाते[1] वाऽयुक्तेति युक्तस्त्वां प्रति ज्ञानाधिकार्यभावपर्यनुयोगः । अस्मन्मते तु नादृष्टार्थं ज्ञान-मन्वयव्यतिरेकसिद्धफलवत्तया कृष्यादिवद्दृष्टफलत्वस्येष्टत्वादतः शुक्त्यादिज्ञानवदात्म-ज्ञानेऽपि फलसत्त्वं निश्चित्य तत्कामस्याधिकारासिद्धेस्तद्विचारस्यानवसरत्वादधिकारिणि सुलभे प्रमापका वेदान्ता भवन्ति प्रमाणमित्यर्थः ॥ २९१ ॥

**कामिनाऽप्यग्निहोत्रादि शूद्रेणानधिकारिणा ॥**
**कृतमप्यफलं तेन यत्नात्तत्र निरूप्यते ॥ २९२ ॥**

ज्ञाने चेन्नाधिकारिचिन्ता हन्त वेदोक्तसाधनत्वाविशेषादग्निहोत्रेऽपि नासौ चिन्त्येत । तथाच सर्वमधिकारिनिरूपणमसत्स्यात् । न चाग्निहोत्रादेरननुष्ठानापत्तिः स्वर्गा-दिकामिनस्तत्सिद्धेरित्याशङ्क्याऽऽह । **कामिनेति** । स्वर्गादिकामिनाऽपि शूद्रेणानधि-कारिणाऽनुष्ठितस्याग्निहोत्रादेः फलादृष्टेरदृष्टफलेष्वधिकारचिन्तां विना प्रेक्षावतां प्रवृ-त्तिर्दुर्घटेति तत्र तच्चिन्ता युक्तेत्यर्थः ॥ २९२ ॥

**अविद्याघस्मरज्ञानजन्ममात्रावलम्बिनः ॥**
**पुमर्थस्याधिकं शास्त्रात्किंचिदत्र तु नार्थ्यते ॥ २९३ ॥**

आत्मज्ञानमप्यदृष्टार्थं वेदोक्तसाधनत्वादग्निहोत्रवदतस्तत्राप्यधिकारचिन्ता स्यादि-त्याशङ्क्य परोक्षमपरोक्षं वा ज्ञानमदृष्टार्थमिति विकल्प्याऽऽद्ये सिद्धसाध्यत्वं मत्वा द्वितीयं प्रत्याह । **अविद्येति** । शास्त्रादविद्याध्वंसिज्ञानलाभमात्राधीनपुमर्थस्य सद्भावे नाधिकमदृष्टं फलमर्थ्यते । अतो ज्ञाने कुतोऽधिकारचिन्तेत्यर्थः ॥ २९३ ॥

**कुतस्तज्ज्ञानमिति चेत्तद्धि बन्धपरिक्षयात् ॥**
**असावपि च भूतो वा भावी वा वर्ततेऽथवा ॥ २९४ ॥**

शास्त्रादुक्तं ज्ञानं नोत्पद्यते श्रुतशास्त्रस्याप्यनुपलम्भान्न च हेत्वन्तरं तदुत्पादकमि-

---

१ ख. °ते चायु° ।

त्याक्षिपति । **कुत इति** । क्षीणपापस्य श्रवणादिवशात्तत्त्वज्ञानमिति समाधत्ते । **तद्धीति** । अथायं प्रतिबन्धो भूतो भावी भवन्वा नाऽऽद्यस्तस्य वर्तमानज्ञानोदयाप्रतिबन्धकत्वादसतस्तदयोगात् । न द्वितीयः । तस्याप्राप्तस्य प्रतिबन्धकत्वानुपपत्तेः । न तृतीयोऽनुष्ठितज्ञानहेतोर्वर्तमानप्रतिबन्धसत्त्वे मानाभावादिति चोदयति । **असाविति** ॥ २९४ ॥

**अधीतवेदवेदार्थोऽप्यत एव न मुच्यते ॥**
**हिरण्यनिधिदृष्टान्तादिदमेव च दर्शितम् ॥ २९५ ॥**

ब्रह्मज्ञानोदयप्रतिबन्धे वर्तमाने मानं वदन्नुत्तरमाह । **अधीतेति** । सत्यामपि सामग्र्यां क्वचिज्ज्ञानाभावो दृश्यमानस्तस्मादेव प्रस्तुतात्प्रतिबन्धादित्यैहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनादितिन्यायात्तत्सिद्धिरित्यर्थः । यथोक्तप्रतिबन्धके पूर्वोपार्जितपापविशेषे प्रमाणमर्थापत्तिमुक्त्वा श्रुतिमाह । **हिरण्येति** । कृतश्रवणादेर्ज्ञाने प्रतिबन्धकं पापमिदमोच्यते । तद्यथाऽपि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्तीति श्रुतिरुक्तदृष्टान्तात्प्रतिबन्धास्तित्वं दर्शयतीत्यर्थः ॥ २९५ ॥

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥**
**क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ २९६ ॥**

एवं ज्ञानस्य दृष्टफलत्वादग्निहोत्रवदधिकारचिन्ता तस्मिन्नावतरतीति वदता तस्य दृष्टफलत्वे विद्वत्प्रत्यक्षसत्त्वमुक्तम् । संप्रति तत्रैव श्रुतिमाह । **भिद्यत इति** । परो हिरण्यगर्भः सोऽवरो यस्मात्परमव्याकृतं तद्वाऽवरं यस्माद्बिम्बरूपेण वा परोऽवरश्च प्रतिबिम्बात्मना तस्मिन्साक्षात्कृते सतीत्यर्थः ॥ २९६ ॥

**इत्यादिनाऽपि विज्ञानं नादृष्टार्थमितीरितम् ॥**
**तथा स ब्राह्मणः केन स्याद्येनेति प्रदर्शितम् ॥ २९७ ॥**

उक्तश्रुतितात्पर्यमाह । **इत्यादिनेति** । आदिपदेन **तरति** शोकमात्मविज्**ज्ञानाग्निः** सर्वकर्माणीत्यादि गृह्यते । पूर्वत्र सूचितं विद्वत्प्रत्यक्षमपिना समुच्चिनोति । ज्ञानस्य दृष्टार्थत्वे वाक्यान्तरमाह । **तथेति** । स विद्वानिमामवस्थां प्राप्तो मुख्यो ब्राह्मणो भवतीति विद्याफलोक्तिः । स च केन लक्षणेन स्यादिति पृच्छति । **केनेति** । येन लक्षणेन लक्षितः स्यात्तेनेदृश एव ज्ञाननिष्ठः सन्नेकरूपश्चिद्धातुरिति साध्यफलराहित्येन दृष्टफलत्वं ज्ञानस्याऽऽचष्टे येन स्यात्तेनेदृश एवेति । अनेन वाक्येन भिद्यते हृदयग्रन्थिरितिवज्ज्ञानस्य दर्शितं दृष्टफलत्वमित्याह । **इति प्रदर्शितमिति** ॥ २९७ ॥

**आत्यन्तिकसुखानर्थप्राप्तिविच्छेदकाङ्क्षिणः ॥**
**प्रीत्युत्कर्षोऽपि लोकेऽस्मिन्दृष्टः स किं न काम्यते ॥ २९८ ॥**

आत्मज्ञानस्य दृष्टार्थत्वेऽपि तस्मिन्मोक्षकामस्याधिकारोऽनिश्चितो निश्चितो वाऽनिश्चितश्चेत्स्वर्गादिकामस्यापि ज्ञाने प्रवृत्तिः स्यान्निश्चितश्चेद्येन न्यायेन त्वत्पक्षे तस्य तन्निश्चयस्तेनैवास्मन्मतेऽपि तन्निश्चयात्तं प्रति काण्डद्वयप्रामाण्यमविरुद्धमिति चोदयति । **आत्यन्तिकेति** । आत्यन्तिकी सुखप्राप्तिस्तादृग्दुःखोच्छेदश्च तदुभयाकाङ्क्षावतः प्रीत्युत्कर्षो योऽपि लोके दृष्टः स मोक्षः । न हि प्रार्थ्यमानसुखाप्त्यनर्थहानिभ्यां मुक्तिरर्थान्तरमतः सुखं मे स्यादित्यादिप्रार्थनायास्त्वत्पक्षवदस्मत्पक्षेऽपि मोक्षविषयत्वात्तत्कामस्याधिकारिणः संभवात्तं प्रति काण्डद्वयप्रामाण्यसिद्धिरिति भावः ॥ २९८ ॥

**दृष्टादृष्टार्थसंबन्धिप्रीत्युत्कर्षाविशेषतः ॥**
**नाऽऽनन्दादन्यतो मुख्यात्पण्डितः पर्यवस्यति ॥ २९९ ॥**

ननु प्रीत्युत्कर्षो न मोक्षः किंतु स्वर्गस्तत्कथं तत्कामो मोक्षकामः स्यात्कथं वा तं प्रति काण्डद्वयप्रामाण्यं तत्राऽऽह । **दृष्टेति** । पुत्रादिना दृष्टहेतुना यागादिना वाऽदृष्टहेतुना संबद्धप्रीत्युत्कर्षेणाविशेषितत्वात्सुखं मे स्यादिति प्रार्थ्यमानः प्रीत्युत्कर्षो निर्विशेषोऽतो नायं स्वर्गस्तस्य सविशेषत्वादित्यालोचयन्प्रेक्षावान्मुख्यानन्दादपवर्गादन्यत्र प्रार्थनाविषये न पर्यवस्यति किंतु मुख्यमानन्दमपवर्गमेव सुखं मे स्यादित्यर्थयते न स्वर्गमित्यर्थः ॥ २९९ ॥

**किंतु साधनसाध्यत्वादनित्यं कर्मजं सुखम् ॥**
**अभिव्यञ्जकतन्त्रस्तु मोक्षस्तेनाक्षयो मतः ॥ ३०० ॥**

प्रेक्षावत्प्रार्थनायाः स्वर्गाद्यविषयत्वे युक्त्यन्तरमाह । **किंत्विति** । तुशब्दश्चार्थः । कर्मजं सुखं साध्यत्वात्कृष्यादिफलवदनित्यमित्यनुमानान्न प्रेक्षावत्प्रार्थना मोक्षादन्यत्र पर्यवस्यतीत्यर्थः । साध्यत्वहेतोर्मोक्षे व्यभिचारमाशङ्क्याऽऽह । **अभिव्यञ्जकेति** । मोक्षो न साध्यः किंत्वभिव्यङ्ग्यस्तथा चाभिव्यञ्जकतन्त्रो न साधनाधीनो नित्योऽतस्तत्र न व्यभिचार इत्यर्थः ॥ ३०० ॥

**संस्कारमात्रकारित्वं सर्वेषामपि कर्मणाम् ॥**
**ज्ञानकाण्डे प्रवेशो वा तेषां नार्थान्तरं ततः ॥ ३०१ ॥**

ननु काण्डयोर्भिन्नवाक्यत्वमेकवाक्यत्वं वा नाऽऽद्यो मिथोविरुद्धार्थतया द्वयोरमानत्वापत्तेर्द्वितीये ज्ञानकाण्डार्थस्य कर्मकाण्डार्थानुपकारकत्वात्तस्यैवान्यशेषतया तदेकवाक्यत्वे वेदोक्ताशेषक्रियानुष्ठानवतो ज्ञानाधिकारोऽतो नापि निःशेषवेदार्थमनुष्ठातुं क्षमो नर इत्युक्तदोषापत्तिस्तत्राऽऽह । **संस्कारेति** । कर्मणां पुरुषसंस्कारद्वारोपकारकत्वा-

---

१ क. सन्कि न । २ क. °बद्धः प्री° । ३ ख. °काण्डप्र° ।

त्तत्काण्डस्येतरशेषत्वं न च तत्रोक्तो दोषो जन्मान्तरानुष्ठितानामपि तेषां संस्कारद्वाराऽऽत्मज्ञानाधिकारहेतुत्वस्वीकारान्न च तेषामदृष्टत्वादधिकारानिश्चायकत्वं तादृशानामेव कर्मणां कार्यकरत्वादित्यर्थः। कर्मणां संस्कारार्थत्वेन ज्ञानानुप्रवेशे सिद्धान्तादविशेषमाशङ्क्यापरितोषात्पक्षान्तरमाह। **ज्ञानेति**। तस्मिन्कर्मणां प्रवेशो नाम कीदृशस्तत्राऽऽह। **तेषामिति**। ततो ज्ञानफलान्मुक्तेरर्थान्तरं तेषां मोक्षोद्देशिनां कर्मणां नास्त्यतो ज्ञानफलं प्रति हेतुत्वं तेषां ज्ञानकाण्डे प्रवेशो नाम तत्र ज्ञानं प्रधानं तदुपसर्जनं कर्मेति भावः॥ ३०१॥

**एवमत्रैकवाक्यत्वं नानुष्ठेयसमाप्तितः॥ ३०२॥**
**असारफलसंप्राप्तिः पुमर्थो नेष्यते यतः॥**
**तृष्णया साधयन्प्रीतिं न प्रीतिलवमिच्छति॥ ३०३॥**

एवं ज्ञानकर्मसमुच्चयस्य मोक्षहेतुत्वावष्टम्भेन काण्डयोरेकवाक्यतेति फलितमाह। **एवमिति**। प्रकारान्तरेणैकवाक्यत्वं व्यावर्तयति। **नेति**। सर्वस्यैव वेदार्थस्यानुष्ठानेन समाप्तितो ज्ञाने प्रवृत्तिरित्येकवाक्यता तयोर्नेष्टेत्यर्थः। तेषां ततो नार्थान्तरमित्ययुक्तं मोक्षार्थं कर्मानुतिष्ठतोऽपि स्वर्गादेरानुषङ्गिकत्वात्तथा चोपभुक्तसर्वकर्मफलस्य पुंसो ज्ञानाधिकार इत्याशङ्क्याऽऽह। **असारेति**। मुमुक्षुर्मोक्षार्थं कर्माण्यनुतिष्ठति ज्ञानं चाऽऽद्रियते न च तेनामोक्षः स्वर्गो मृग्यते तस्याल्पीयस्त्वेनानीप्सितत्वादतो मोक्षस्योद्दिष्टत्वात्तमेव कर्मभिर्ज्ञानसहितैरसावाप्नोतीत्यर्थः। मोक्षेतरस्वर्गादेरप्रेप्सितत्वे हेतुमाह। **यत इति**। तृष्णया प्रेरितो दृष्टां प्रीतिं [1]संपादयन्नल्पामापादयितुं यतो नेच्छत्यतः स्वल्पप्रीतेः स्वर्गादेर्न प्रार्थ्यमानतेत्यर्थः॥ ३०२॥ ३०३॥

**प्रीतेः श्रुतः प्रकर्षोऽपि स्वर्गस्वाराज्यभेदतः॥**
**नापि प्रीतेरियत्तायाः स्वर्गशब्दोऽस्ति वाचकः॥ ३०४॥**

समुच्चयानुष्ठानान्मुक्तिपक्षे सिद्धान्तवज्ज्ञानाधिकारनिश्चयान्न वेदाप्रामाण्यं नापि काण्डयोरधिकार्यादिभेदसिद्धिरिति प्रसाध्य तयोः साधनादिभेदाभावे हेत्वन्तरमाह। **प्रीतेरिति**। प्रीतेः प्रकर्षो मोक्षः स च **स्वर्गकामो** यजेत **स्वाराज्यकामो** यजेतेति कर्मसाध्यत्वेनापि श्रुतोऽतो न काण्डयोः साधनादिभेद इत्यर्थः। स्वर्गकामवाक्ये स्वर्गशब्दो न मोक्षवाची किं त्वल्पतरं सुखविशेषमाह तत्कथं तद्वाक्यान्मोक्षस्य कर्मसाध्यत्वधीरित्याशङ्क्याऽऽह। **नापीति**। प्रीतेरियत्ता परिमाणं तस्याः स्वर्गशब्दो न वाचक इयत्तापरिच्छिन्नानां प्रीतिविशेषाणामानन्त्यात्तत्र शक्तेरयोगात्सामान्येन गृहीतशक्तेरविशेषितसुखमात्रवाचकत्वादपवर्गस्य च तावन्मात्रत्वाद्युक्तं स्वर्गशब्दस्यापवर्गैकवाचित्वमतः स्वर्गकामवाक्यान्मोक्षस्य कर्मसाध्यत्वसिद्धिरिति भावः॥ ३०४॥

---

[1] क. संधारय॰।

**न चाजानन्स्वसाध्यार्थं विद्वान्कश्चित्प्रवर्तते ॥
प्रीतिर्या काचिदिष्टा चेत्स्वर्गशब्देन भण्यते ॥ ३०५ ॥**

यद्यपि मोक्षे ज्ञातशक्तिः स्वर्गशब्दस्तथाऽपि प्रतिपत्ता स्वल्पमेव सुखं तेन प्रतिपद्य प्रवर्तत इत्याशङ्क्याऽऽह। **न चेति।** यद्यपि स्वर्गशब्देन स्वल्पमेव सुखं गृहीत्वा कश्चिद्यागादौ प्रवर्तते तथाऽपि विवेकी मोक्षमाणस्तच्छब्दार्थं विचार्य मोक्षवाचित्वं तस्य निश्चित्य तत्साधनानि कर्माण्यनुतिष्ठति । अनभिलषितक्षुद्रसुखविशेषविषयत्वे तच्छब्दस्य प्रेक्षावतो मुमुक्षोर्न कर्मानुष्ठानं स्यान्न वाऽमुमुक्षोरेव तदनुष्ठानम् । यद्वा विविदिषार्थत्वं सर्वेषामपि कर्मणामिति वक्ष्यमाणन्यायविरोधादिति भावः । स्वर्गकामादिवाक्येष्वेव कर्मणां मोक्षसाधनत्वाधिगमात्काण्डयोः साधनादिभेदाप्राप्तिरिति पूर्वपक्षं निराकर्तुमुक्तमनुवदति । **प्रीतिरिति ।** या काचिदविवक्षितविशेषणा फलभूता प्रीतिस्तन्मात्रं स्वर्गशब्दितं चेदित्यनुवादार्थः ॥ ३०५ ॥

**चित्राग्निष्टोमयागादेः पश्वादिफलसंकरः ॥
विशेषो वाञ्छितश्चेत्स्यात्पुत्रपश्वाद्युपाधितः ॥ ३०६ ॥**

तत्र दूषणमाह । **चित्रेति।** चित्रायागफलभूतपशुप्राप्तिप्राप्तक्षीरपानेऽपि सुखमात्रस्य भावादग्निष्टोमफलस्वर्गस्य मुक्तत्वप्राप्तेरनुष्ठितचित्रायागो ज्योतिष्टोमं नानुतिष्ठेत्तन्न सुखमात्रं स्वर्ग इत्यर्थः । प्रीतिविशेषस्य स्वर्गत्वादुक्तदोषाप्राप्तिरिति शङ्कते। **विशेष इति।** पुत्रादिहेतुकप्रीतेः सकाशाद्विशिष्टा प्रीतिः स्वर्गशब्देनेष्टा तथाच तन्मात्रस्य स्वर्गत्वकृतदोषाप्राप्तिरित्यर्थः ॥ ३०६ ॥

**न तावत्संभवेत्स्वर्गो ज्ञातोपाधिवियोगतः ॥
मुक्तौ काम्यफलेऽभीष्टे सकृत्करण एव च ॥
अनवच्छिन्नरूपायाः प्रीतेराप्तौ कृतार्थता ॥ ३०७ ॥**

स किं केनचिदुपाधिनोपरक्तः किंवा निरस्तसर्वोपाधिर्नोऽऽद्यस्तस्योपाध्यवच्छिन्नस्यामोक्षत्वादिति मत्वा द्वितीयं निराह । **न तावदिति ।** स निरुपाधिकः सुखविशेषः स्वर्गो न स्यादित्यत्र हेतुमाह । **ज्ञातेति ।** न हि निरुपाधिके सुखविशेषे स्वर्गशब्दप्रवृत्तौ निमित्तं ज्ञातमस्ति नापि तस्य ज्ञापकं न च तस्य स्वप्रकाशत्वं तथा सति तदुद्देशेन यागाननुष्ठानप्रसङ्गात्तस्य स्वतःसिद्धस्याज्ञानमात्रव्यवहितस्य ज्ञानेतरहेत्वनपेक्षत्वादतः स्वर्गशब्दस्य मोक्षाविषयत्वेन लोकविशेषविषयत्वाद्यन्न दुःखेन संभिन्नमित्यादेश्च तदीयस्तुतिपरत्वात्तस्यैव स्वर्गकामवाक्ये कर्मसाध्यत्वावगमान्न काण्डद्वयस्य साधनाद्यैक्यमिति भावः । स्वर्गकामवाक्ये स्वर्गशब्दस्य यथाकथंचिन्मोक्षविषयत्वेऽपि तस्य न कर्मसाध्यतेत्याह । **मुक्ताविति।** काम्यकर्मफलं मुक्तिरिति पक्षे सायंप्रातराहुतिद्वयेन

---

१ ख. °श्च चामु° । २ क. तु ।

काम्यकर्मणः सिद्धेस्तन्मात्रेण मुक्तिलाभान्नाग्निहोत्रमावर्त्येत । न च फलभूयस्त्वार्था तदावृत्तिर्मुक्तेर्निरतिशयब्रह्मरूपत्वादतः सकृदनुष्ठितादग्निहोत्रादेव मुक्तेस्तदानर्थक्यं कर्मान्तराणां चानुपयोगात्तद्विध्यप्रामाण्यमिति न काम्यकर्मफलं मुक्तिरित्यर्थः ॥ ३०७ ॥

**प्लवा ह्येते परीक्ष्येति तथा तद्य इहेति च ॥**
**कर्मभ्यो निर्वृतिर्नास्तीत्यादिवाक्यैः प्रदर्शितम् ॥ ३०८ ॥**

अक्षय्यमित्यादिवाक्यसिद्धं तर्हि नित्यकर्मफलत्वं मुक्तेरित्याशङ्क्य स्तुतिपरं वाक्यं वाक्यान्तरविरोधान्न स्वार्थे मानमिति मत्वाऽऽह । **प्लवा हीति** । एते यज्ञनिर्वर्तका यजमानादयः प्लवन्ते गच्छन्ति नश्यन्त्यतो नाक्षय्यफलहेतव इत्यर्थः । परीक्ष्य लोकानित्यत्र नास्त्यकृतः कृतेनेत्युपजीव्यम् । तत्तत्र जन्तूनां मध्ये ये केचिदिह जगति रमणीयकर्माणस्ते रमणीयां ब्राह्मणादियोनिं प्राप्नुवन्तीति वदद्वाक्यं कर्मणां निर्वाणफलत्वमर्थान्निषेधति । चशब्दाद्यथेह कर्मजित इत्यादि गृह्यते । उक्तश्रुतितात्पर्यमाह । **कर्मभ्य इति** । इत्यादिवाक्यैः कर्मभ्यो निर्वृतिर्नेति दर्शितमित्यन्वयः । आदिपदेन न कर्मणेत्यादि गृह्यते ॥ ३०८ ॥

**प्रत्यक्षश्रुतिविध्यन्तविहितानामकारणात् ॥**
**त्यागोऽतिसाहसं मन्ये ननु यागादिकर्मणाम् ॥ ३०९ ॥**

अर्थवादवाक्येभ्यो विधिवाक्यस्य बलीयस्त्वात्तदालम्ब्य कैवल्यस्य कर्मफलत्वावगमात्काण्डयोरेकाधिकारित्वं तदवस्थमिति शङ्कते । **प्रत्यक्षेति** । स्वप्नान्तादिशब्दवद्विधिरेव विध्यन्तो **यावज्जीवमग्निहोत्रं** जुहुयादित्यादिः स चापौरुषेयत्वेन मूलप्रमाणानपेक्षत्वात्प्रत्यक्षश्रुतिषु दृष्टस्तेन विहितानामग्निहोत्रादीनां विना हेतुं त्यागस्य साहसमात्रत्वादग्निहोत्राद्यपि ज्ञानशेषतया मुक्तिहेतुः । **उक्तं च**—कर्तुर्वा श्रुतिसंयोगादित्यत्राग्निहोत्रादेर्यावज्जीवमनुष्ठेयत्वम् । **यथाऽऽहुः**—एवं श्रुतिपरिच्छिन्नोऽर्थोभविष्यतीतरथा लक्षणा स्यादिति । तस्मात्कर्मधर्मस्य नियमस्य चोद्यमानत्वात्कर्मसमुच्चितज्ञानाधीनत्वान्मोक्षस्य काण्डयोः साधनादिभेदासिद्धिरित्यर्थः ॥ ३०९ ॥

**प्रत्यक्षोपनिषद्वाक्यविहितायास्ततोऽपि तु ॥**
**ऐकात्म्यज्ञाननिष्ठायास्त्यागोऽतीव हि साहसम् ॥ ३१० ॥**

शान्तादिवाक्येन विरक्तस्य संन्यासो विहितः । तस्यैव श्रोतव्यादिवाक्येन श्रवणाद्या वस्तुनिष्ठोक्ता तस्यास्त्यागः समुच्चयपक्षे स्यान्न चानेकोपनिषत्प्रसिद्धत्यागो युक्तः कर्मत्यागादपि तत्त्यागस्यातिसाहसत्वात्तस्मादैकात्म्यज्ञानमात्रस्य मोक्षसाधनत्वावेदकानेकवाक्यविरुद्धं कर्मणां तद्धेतुत्वसाधनमिति काण्डयोरेकाधिकारित्वासिद्धिर्यावज्जीवश्रुतिस्त्वविरक्तविषयेति सिद्धान्तयति । **प्रत्यक्षेति** ॥ ३१० ॥

**विचार्यमाणे यत्नेन त्वधिकारे यथाश्रुति ॥ ३११ ॥**
**न किंचित्साहसं त्वत्र प्रत्यक्षश्रुतिवाक्यतः ॥**
**अधिकारविभागस्य प्रसिद्धेरेव कारणात् ॥ ३१२ ॥**

तर्हि मिथो विरोधाद्द्वयोरपि काण्डयोरप्रामाण्यमिति कृतमधिकारचिन्तयेत्याशङ्क्याऽऽह । **विचार्यमाण इति** । अत्र काण्डद्वये श्रुतिमनुसृत्य कस्याधिकारः कस्मिन्नित्यधिकारे तात्पर्येणाऽऽलोच्यमाने विरक्तस्य नित्यादिकर्मत्यागे न साहसप्रसङ्गः । अनालोचिताधिकारस्य हि काण्डयोर्विरोधो भाति न श्रुतिस्वभावमनतिक्रम्याधिकारं विचारयत इत्यर्थः । तत्र हेतुः । **प्रत्यक्षेति** । **एतावान्वै** काम इति **श्रुतेरविरक्तस्या**त्यक्तक्रियस्य कर्मकाण्डे ब्राह्मणो निर्वेदमायादिति **श्रुतेर्विरक्तस्य** संन्यासिनो ज्ञानकाण्डेऽधिकारः । एवमधिकारविभागस्य श्रुतत्वादेव काण्डयोर्न विरोधगन्धोऽपीत्यर्थः ॥ ३११ ॥ ३१२ ॥

**तस्मात्सिद्धोऽधिकारोऽत्र ब्रह्मरूपं विविक्षिताम् ॥**
**तस्यास्य कर्मकाण्डेन संबन्ध इति भाष्यकृत् ॥**
**प्रतिज्ञायापि संबन्धं कस्मात्तन्नोक्तवान्स्फुटम् ॥ ३१३ ॥**

भाष्यत्रयार्थमाक्षेपसमाधिभ्यामुक्तमुपसंहरति । **तस्मादिति** । काण्डयोरधिकार्यादिभेदस्य दुर्वारत्वाद्ब्रह्मरूपं सदानन्दसंवित्स्वभावं प्रवेष्टुमिच्छतां मुमुक्षूणां ज्ञानकाण्डेऽधिकारः काण्डान्तरे तु रागिणामित्यधिकारिभेदः । ऐकात्म्यज्ञानमेव मुक्तेर्हेतुः कर्माभ्युदयस्येति साधनभेदो भाष्याभ्यां सिद्धः **सेयं ब्रह्मविद्येत्यादिभाष्येण** काण्डयोः प्रयोजनभेदः साधित इति भावः । भाष्यत्रयं काण्डद्वयस्याधिकार्यादिभेदसाधकं संक्षेपविस्तराभ्यां व्याख्याय **संबन्धप्रतिज्ञाभाष्य**मवतार्य तदर्थं चोद्यसमाधिभ्यामाविश्चिकीर्षुश्चोदयति । **तस्येति** । प्रतिज्ञातसंबन्धमात्रस्यापर्यवसानात्तद्विशेषमपि **भाष्यकृ**दुक्तवानित्याशङ्क्य तन्मात्रसिद्धावप्ययमसाविति स्पष्टो विशेषो न सिध्यतीत्याह । **स्फुटमिति** । अपेक्ष्यमाणसंबन्धविशेषानुक्तौ हेतुरन्विष्यत इति भावः ॥ ३१३ ॥

**अभिधीयत इत्यादिवचसाऽपि स नोच्यते ॥**
**सिद्धे वस्तुनि वेदस्य मानत्वं तेन भण्यते ॥ ३१४ ॥**

**सर्वोऽप्ययमि**त्यनन्तरभाष्ये संबन्धविशेषस्य वक्ष्यमाणत्वात्तदनुक्तिकारणं नान्वेष्यमित्याशङ्क्याऽऽह । **अभिधीयत इत्यादीति** । **अभिधीयत** इति भाष्यमादिर्यस्य **सर्वोऽप्ययमित्यादि**भाष्यस्य तदभिधीयत इत्यादि तेनापि वचसा संबन्धविशेषो नोच्यतेऽतस्तदनुक्तौ निमित्तं वाच्यमित्यर्थः । अनन्तरभाष्ये संबन्धविशेषाकथनं कथमवगतमित्याशङ्क्य तस्मिन्नर्थान्तरप्रतीतेरित्याह । **सिद्ध इति** ॥ ३१४ ॥

**वेदान्तोक्तेः प्रमाणत्वे सति संबन्ध उच्यते ॥**
**प्रामाण्यायैव तेनाऽऽदौ सर्वोऽपीत्यादि भण्यते ॥ ३१५ ॥**

तस्येत्यादिभाष्याक्षेपं प्राप्तं प्रत्याह । **वेदान्तेति** । संबन्धं प्रतिज्ञाय तद्विशेषमपेक्षितमपि हेतुविशेषमालक्ष्य भाष्यकारो नाभिदधाति । स्थितं हि **चोदनासूत्रे** प्रवर्तकवेदभागस्य प्रामाण्यं न वेदान्तानामक्रियार्थत्वात्प्रवृत्तिनिवृत्त्यनर्हवस्तुमात्रनिष्ठत्वादौत्पत्तिकसूत्रे वेदमात्रस्यानपेक्षत्वहेत्ववष्टम्भात्प्रामाण्ये सिद्धेऽपि प्रक्रमवशात्प्रवर्तकवेदभागस्यैव तदित्याशङ्कोन्मेषादुपनिपदामप्रामाण्यमाशङ्क्येतातोऽसिद्धप्रमाणभावस्य ज्ञानकाण्डस्य न केनापि संगतिरिति मन्वानो वेदान्तप्रामाण्यं प्रतिपाद्य पश्चात्तेषां कर्मकाण्डेन संगतिर्वक्तुं युक्तेति मत्वा तत्प्रामाण्यमनन्तरभाष्ये प्रतिपादयति । ततः संबन्धोक्तिः सुकरेति भावः ॥ ३१५ ॥

**आक्षिप्यते वा संबन्धः संबन्धो नाभिधीयते ॥**
**सप्तम्यन्तपदच्छेदात्कथं चेदिति भण्यते ॥ ३१६ ॥**

तर्हि प्रथमं तत्प्रामाण्यं प्रतिपाद्य संबन्धाकाङ्क्षायां तत्प्रतिज्ञाभाष्यं प्रणेतव्यमित्याशङ्क्य पक्षान्तरमाह । **आक्षिप्यते वेति** । तदाक्षेपो भाष्ये न भाति तदर्थस्य नञादेरदृष्टेरित्याशङ्क्याऽऽह । **संबन्धो नेति** । ज्ञानकाण्डस्य धर्मकाण्डे संबन्धो नोच्यत इति सप्तम्यन्तं पदं छित्त्वा नञमुद्धाव्याऽऽक्षेपो द्रष्टव्य इत्यर्थः । तदाक्षेपस्य निमित्तं पृच्छति । **कथमिति** । तदुक्तिं[1] प्रतिजानीते । **भण्यत इति** ॥ ३१६ ॥

**भिन्नार्थयोर्न संबन्धो ह्यन्योन्यार्थानपेक्षतः ॥**
**ऐकार्थ्ये चैकवाक्यत्वात्कर्मविज्ञानकाण्डयोः ॥ ३१७ ॥**

किमेते काण्डे भिन्नार्थे किंवाऽभिन्नार्थे । आद्येऽनपेक्षार्थयोरुभयाकाङ्क्षयाऽन्यतराकाङ्क्षया वा न संगतिरित्याह । **भिन्नेति** । द्वितीयं प्रत्याह । **ऐकार्थ्ये चेति** । चशब्दात्र संगतिरित्याकर्षः । काण्डयोरेकविषयत्वे न वाक्यभेद एकार्थत्वादेकं वाक्यमिति न्यायात् । एकवाक्यत्वे न संबन्धो द्वयोर्हि सः । नैकस्यैवेत्यर्थः ॥ ३१७ ॥

**तथा तयोरमानत्वे संबन्धोक्तिर्न युज्यते ॥**
**द्वयोरेकस्य वा मात्वे न संबन्धादि शस्यते ॥ ३१८ ॥**

किंच काण्डयोरमानत्वं मानत्वं वा । आद्ये विप्रलम्भकोक्त्योरिव न संगतिर्वाच्येत्याह । **तथेति** । मानत्वेऽपि द्वयोरन्यतरस्य वा तत्त्वं नोभयथाऽपि संबन्धः । मानत्वे द्वयोर्मिथो वार्तानभिज्ञत्वान्मानामानयोश्च संगतेरवाच्यत्वात् । द्वयोर्मानत्वे च न तत्त्वातत्त्वमानव्यवस्थाऽन्यतरस्यैव मानत्वे च साधनादिभेदासिद्धिरित्याह । **द्वयोरिति** ॥ ३१८ ॥

---

[1] क. °दुक्तं प्र° ।

श्रुत्यैव तस्य चोक्तत्वात्तमेतमिति यत्नतः ॥
इति चेतसि संधाय संबन्धं नोक्तवान्गुरुः ॥ ३१९ ॥

काण्डयोर्नियतपौर्वापर्यानुपपत्तिलभ्यसंबन्धस्य वाच्यत्वान्न तदाक्षेप इति विवक्षन्ननन्तरसंबन्धानुक्तौ हेत्वन्तरमाह । श्रुत्येति । तस्येत्यादिना संबन्धमात्रं प्रतिज्ञाय तद्विशेषं विवक्षुर्विविदिषावाक्ये तमतिरोहितमुपलभ्य भाष्यकारोऽधीतस्वाध्यायस्य ज्ञातपदपदार्थसंबन्धस्य वेदान्तेष्वापातज्ञानवतः स्वयमेवासौ बुद्धिमारोक्ष्यतीति न तत्प्रतिपाद्यतेति मत्वा नानन्तरं कथयतीत्यर्थः ॥ ३१९ ॥

प्रसाध्य वा प्रमाणत्वं वेदान्तानां प्रयत्नतः ॥
संबन्धं कर्मकाण्डेन पश्चात्सम्यक्प्रवक्ष्यते ॥ ३२० ॥

विविदिषावाक्ये काण्डयोः संबन्धधीस्तद्विशेषोक्तेरिव तत्प्रतिज्ञातस्यापि प्रतिबन्धिका स्यादित्याशङ्क्य वेदान्तोक्तेरित्युक्तं प्रपञ्चयति । प्रसाध्येति । अस्यार्थः । उपोद्घातप्रक्रियया भाष्यकारस्तस्येत्यादिना संबन्धं प्रत्यज्ञासीत् । ततो न तत्प्रतिज्ञा वेदान्तानामप्रामाण्यादिति चोद्यं तत्प्रामाण्योक्त्या प्रत्याख्याय विविदिषाश्रुतिसिद्धं कर्मणां विविदिषाहेतुत्वं नाम संबन्धविशेषमाह स्म । तस्मान्नास्मिन्भाष्ये किंचिदपि दूषणमिति ॥ ३२० ॥

वेदानुवचनादीनामैकात्म्यज्ञानजन्मने ॥
तमेतमिति वाक्येन नित्यानां वक्ष्यते विधिः ॥ ३२१ ॥

काण्डद्वयस्य विविदिषावाक्योक्तं संबन्धविशेषं भाष्ये विवक्षितमाक्षिपति । वेदेति । नित्यनैमित्तिकानामेव विविदिषावाक्येन ज्ञानोत्पत्तये साधनत्वप्रकारो निर्दिश्यते न सर्वकर्मणां काम्यानां फलान्तरहेतुतया विविदिषोपायत्वायोगात् । तथाच कर्मकाण्डैकदेशस्य ज्ञानकाण्डसंबन्धेऽपि न कृत्स्नस्य तेन संगतिरित्यर्थः । वक्ष्यत इत्यविवक्षितमुच्यत इति यावत् । पाठक्रममपेक्ष्य वाऽयं निर्देशः ॥ ३२१ ॥

यद्वा विविदिषार्थत्वं सर्वेषामपि कर्मणाम् ॥
तमेतमिति वाक्येन संयोगस्य पृथक्त्वतः ॥ ३२२ ॥

नित्यनैमित्तिकानामेव ज्ञानहेतुत्वमित्यशक्यं नियन्तुं नियामकाभावाद्यज्ञेनेति चाविशेषश्रुतेरतो विविदिषाद्वारा ज्ञानहेतुत्वं विविदिषावाक्येन सर्वकर्मणामुक्तमिति समाधत्ते । यद्वेति । काम्यानां फलान्तरे विध्युद्देशेन विनियुक्तानां न पुनर्विविदिषायां विनियोगो विनियुक्तविनियोगायोगादित्याशङ्क्याऽऽह । संयोगस्येति । अस्यार्थः । एकस्य तूभयत्वे संयोगपृथक्त्वम् । अग्निहोत्रे दध्ना जुहोति दध्नेन्द्रियकामस्य जुहुयादित्यत्र दध्नः पुमर्थत्वेन वा क्रत्वर्थताऽपि वेति संदेहे गोदोहनादिवद्दध्नेन्द्रियकामस्येति फलान्व-

१ क. 'न्तर सं' ।

यश्रुतेरधिकारविधुरस्य च वाक्यस्याधिकारवाक्येनैकवाक्यत्वात्पुरुषार्थतैव तस्येति **पूर्वपक्षे** लौकिकदधिहोमानुवादेनाप्यधिकारवाक्योपपत्तेर्वाक्यान्तरानपेक्षत्वाद्दध्ना जुहोतीत्यत्रापि प्रकृतहोमानुवादेन दधिविधानात्तत्प्रयुक्त्यैवानुष्ठानसिद्धेरधिकाराकाङ्क्षाभावात्संयोगभेदादुभयार्थतेति **चतुर्थे सिद्धान्तितम्** । एकस्य दध्नो नित्यत्वे नैमित्तिकत्वे च संयोगपृथक्त्वं हेतुरेको हि दध्ना जुहोतीति संयोगो दध्नेन्द्रियकामस्येति चापरमिति सूत्रार्थः । तथाच स्वर्गादियुक्तानां कर्मणां त्वर्गादिफलं परित्यज्य विविदिषायोगेन ज्ञानहेतुत्वात्कृत्स्नस्यापि कर्मकाण्डस्य ज्ञानकाण्डेन संबन्ध इति ॥ ३२२ ॥

**लोकतः सिद्धमादाय पशुव्रीह्यादिसाधनम् ॥**
**इदं कार्यमिदं नेति कर्मकाण्डश्रुतेर्गतिः ॥ ३२३ ॥**

ननु पश्वादिकारकभेदं ब्रूते कर्मकाण्डश्रुतिर्ज्ञानकाण्डश्रुतिस्त्वद्वयं ब्रह्मातो मिथो विरोधात्कुतः संबन्धितेत्यत आह। **लोकत इति** । लोकसिद्धं पश्वादि तद्भेदं च कर्मकाण्डश्रुतिश्चेदनुवदेत्तर्हि न तत्प्रामाण्यमनुवादकत्वादित्याशङ्क्याऽऽह । **इदमिति** ॥ ३२३ ॥

**मानान्तरेण संप्राप्तां साध्यसाधनसंगतिम् ॥**
**कर्मशास्त्रं व्यनक्तीति न तु वस्त्ववबोधकृत् ॥ ३२४ ॥**

तथाऽपि कथमुक्तचोद्यप्रत्युक्तिरित्याशङ्क्योत्तरार्धं प्रपञ्चयति । **मानान्तरेणेति** । क्रियादिरूपे तद्भेदे वाऽनुवादित्वेऽपि कर्मकाण्डस्य नाप्रामाण्यमज्ञातसंबन्धबोधित्वादित्यर्थः । व्यनक्तीति नाप्रमाणतेति शेषः । ननु तेन संबन्धवदात्माऽपि देहव्यतिरिक्तो ज्ञेयस्तदज्ञाने पारलौकिके कर्मण्यप्रवृत्तेस्तत्कृतं गतार्थेन काण्डान्तरेणेति नेत्याह । **न त्विति** । अबुद्धसंबन्धबोधि शास्त्रं न वस्तु बोधयति वाक्यभेदादार्थिकी त्वतिरिक्तात्मधीर्न शाब्दी यश्चार्थादर्थो न स चोदनार्थ इति न्यायादित्यर्थः ॥ ३२४ ॥

**वेदो हि सर्व एवायमैकात्म्यज्ञानसिद्धये ॥**
**अतो नान्योऽभिसंबन्धः कर्मविज्ञानकाण्डयोः ॥ ३२५ ॥**

तथाऽपि मिथो विलक्षणयोर्विविदिषाज्ञानकार्ययोरपर्यवसानान्न काण्डयोः संगतिरित्याशङ्क्याऽऽह । **वेदो हीति** । सर्वोऽप्ययं वेदो ब्रह्मात्मैक्यधीहेतुस्तत्र साक्षात्पारंपर्याभ्यां काण्डयोरेकधीनिष्ठयोरस्ति संगतिरित्यर्थः । रज्जुघटयोरिव तयोः संबन्धे संभवति किमप्रसिद्धेनैक्यधीहेतुत्वसंबन्धेनेत्याशङ्क्याऽऽह । **अत इति** । उक्तादैक्यधीहेतुत्वादन्यः संबन्धो नानयोर्युक्तः संयोगादेर्दुर्भणत्वादित्यर्थः ॥ ३२५ ॥

**नित्यनैमित्तिकानीह कर्तृसंस्कारतो यतः ॥**
**नान्यत्र पर्यवस्यन्ति ज्ञानादैकात्म्यगोचरात् ॥ ३२६ ॥**

वेदशब्दसमानाधिकृतसर्वशब्दमसहमानो वेदानुवचनादीनामित्यत्रानुक्रान्तं चोद्यमा-

---

१ क. °काण्डयोः प° ।

दत्ते । **नित्येति** । नानाविधेषु कर्मसु मध्ये नित्यनैमित्तिकानि कर्तरि संस्काराख्यशुद्ध्याधानद्वारा धीहेतवो न काम्यान्यतः सर्वस्य वेदस्य तद्धेतुत्वमसिद्धमित्यर्थः ॥३२६॥

**प्लवा ह्येते परीक्ष्येति तथा तद्य इहेति च ॥**
**निन्दाश्रुतेर्न काम्यानां कार्यताऽध्यवसीयते ॥ ३२७ ॥**

यद्वा विविदिषार्थत्वमित्यत्र काम्यानामपि धीहेतुत्वस्योक्तत्वात्कथं न सर्वो वेदस्तद्धेतुरित्याशङ्क्याऽऽह । **प्लवा हीति** । निन्दाश्रुत्या कार्यतैव तेषां नास्ति कुतस्तद्धीहेतुत्वमित्यर्थः ॥ ३२७ ॥

**विधिनिन्दासमावेशो नैवमप्युपपद्यते ॥**
**फलाभिसंधिमात्रे तु निन्दायामेव युज्यते ॥ ३२८ ॥**

काम्यानामकार्यत्वमयुक्तं विहितत्वादनिषेधाच्चेति परिहरति । **विधीति** । यद्यपि च काम्येषु कर्मसु विधिनिन्दयोरस्ति समावेशस्तथाऽपि नैव तेषामकार्यत्वमुपपद्यते विधिवन्निषेधाभावादिति योजना । अथ निन्दाश्रुत्या निषेधोऽपि तेषां कल्प्यते तत्र स्वरूपे फलाभिसंधौ वा निन्दा नाऽऽद्यश्चित्रया यजेतेत्यादिना काम्यानां कार्यत्वोक्तेस्तत्रैव निन्दाप्रवेशायोगादन्यथा तत्कल्पितनिषेधस्यापि तत्रैव प्रवेशे विधिनिषेधयोरेकत्राऽऽवेशात्प्रवृत्तिनिवृत्तिसंकरः स्यादित्यर्थः । द्वितीयमनुकूलयति । **फलेति** । फलासङ्गमात्रे निन्दायामिष्टायां स्वरूपे विधिः संभवत्येव । तथाच विना फलाभिलाषमनुष्ठितं चित्राद्यपि ज्ञानहेतुरिति पारंपर्येण सर्वकर्मणां तद्धेतुत्वसिद्धिः । न च फलाभिलाषाभावे चित्रादीनां न काम्यत्वं मुमुक्षोर्विध्युद्देशस्थफलाभिसंध्यभावेऽपि तस्याधिकार्यन्तरासङ्गविषयत्वात् । न च तर्हि मुमुक्षुं प्रत्यकाम्यत्वं तस्यापि मोक्षोपायशेषत्वेन तदनुष्ठानान्नित्यादिष्वपि मुमुक्ष्वनुष्ठानस्यैवंप्रकारत्वेऽपि तेषां विध्युद्देशे फलान्तरश्रुतेरवान्तरवैषम्यमिति भावः ॥ ३२८ ॥

**उपासनं च यत्किंचिद्विद्याप्रकरणे श्रुतम् ॥**
**तदप्यैकात्म्यविज्ञानयोग्यत्वायैव कल्प्यते ॥ ३२९ ॥**

प्रकरणान्तरस्थानां कर्मणां शुद्ध्यादिद्वारा धीहेतुत्वे वाक्यीयेऽपि विद्याप्रकरणस्थोपास्तीनां विद्यया सह मोक्षहेतुत्वं प्राकरणिकमित्याशङ्क्याऽऽह । **उपासनं चेति** । कर्मसमृद्ध्यर्थमभ्युदयार्थं क्रममुक्त्यर्थं चेति त्रिविधामुपास्तिं संगृह्णाति । **यत्किंचिदिति** । योग्यत्वं ज्ञानस्य जन्माभिमुख्यमनुष्ठितकर्मणामप्यनुत्पन्नविद्याभिलाषाणां तदुत्पत्तिप्रतिबन्धकपापापनोदनद्वारा तदिच्छोदयहेतुत्वमुपास्तीनामिष्टं न च विनियोजकाभावः प्रकरणस्यैव तत्त्वान्न च फलान्तरश्रुत्या कुतो विद्याशेषत्वममूषामिति वाच्यं श्रुतमपि फलमपहायानतिशयफलान्वयार्थं कर्मणामिव तच्छेषत्वान्वेषणात् । विविदिषावाक्यस्य चोभ-

१ ख. कल्पते । २ ख. °त्पत्ति प्रति प्र° । ३ ख. °यानिशे° । ४ क. °टाश्रया° । ५ क. °षणत्वात् ।

यत्र तुल्यतया संयोगपृथक्त्वन्यायावताराद्रुपास्तीनामपि तपःशब्देनोपादानादिति भावः ॥ ३२९ ॥

**विमुच्यमान इत्युक्तेरर्चिराद्युक्तितस्तथा ॥**
**स्वार्थमात्रावसायित्वं नोपास्तीनां प्रतीयते ॥ ३३० ॥**

अथोपासनानि विद्यावन्मोक्षस्यैव किमिति हेतवो न स्युरित्याशङ्क्याऽऽह । **विमुच्यमान इतीति** । उपास्तीनां साक्षात्परंपरया वा मोक्षहेतुत्वं नाऽऽद्य इतो विमुच्यमानः क्व गमिष्यसीत्युपास्तीनां परंपरया गन्तव्यस्य पृष्टत्वादुपासकस्यार्चिरादिमार्गसंबन्धश्रुतेश्च न च साक्षान्मोक्षे मार्गादि संभवति तस्य कार्यविषयतया **बादर्यधिकरणे राद्धान्तितत्वा**दिति भावः । द्वितीयं दूषयति । **स्वार्थेति** । सत्यलोकाप्त्यादिद्वारा चेदुपास्तीनां मुक्तिहेतुत्वं तदा श्रुतिस्मृत्यविरोधः स्वार्थो मोक्षस्तन्मात्रे पारंपर्यं विना न तासां पर्यवसितत्वं मानाभावादित्यर्थः ॥ ३३० ॥

**इत्येवमभिसंबन्धः कर्मकाण्डस्य युज्यते ॥**
**इतोऽन्यथाऽभिसंबन्धे न किंचिन्मानमीक्ष्यते ॥ ३३१ ॥**

कर्मणां शुद्धिद्वारा धीहेतुत्वमुपनिपदां तु साक्षादेवेति भाष्याभीष्टं काण्डयोः संबन्धमुपपादितमुपसंहरति । **इत्येवमिति** । ये तु ब्रह्मज्ञानस्य कर्तृसंस्कारतया कर्माङ्गत्वाज्ज्ञानकाण्डं कर्मकाण्डोपकारकमित्याहुस्तान्प्रत्याह । **इतोऽन्यथेति** ॥ ३३१ ॥

**न चोद्गीथादिविषयज्ञानवत्कर्मसंगतिः ॥**
**ऐकात्म्यबुद्धेस्तद्बुद्धिद्वारं नैव निरीक्ष्यते ॥ ३३२ ॥**

नन्वात्मज्ञानं कर्मानुप्रवेशि वैदिकज्ञानत्वादुद्गीथादिज्ञानवत्तत्राऽऽह । **न चेति** । तत्र हेतुमाह । **तद्बुद्धीति** । युक्तमुद्गीथादिज्ञानस्य तन्निर्धारणानियमन्यायेन कर्मानङ्गत्वेऽपि तदनुप्रवेशित्वमङ्गावबद्धत्वादात्मधियस्तु तदनुप्रवेशे द्वारादर्शनान्न कर्मानुप्रवेशितेत्यर्थः ॥ ३३२ ॥

**श्रुत्या नैकात्म्यविज्ञानं विनियुक्तं श्रुतौ क्वचित् ॥**
**उपस्थानं यथैन्द्र्या स्यान्नापि लिङ्गेन संगतिः ॥**
**बर्हिर्देवसदनं दामीत्यादौ च यथा तथा ॥ ३३३ ॥**

ननु विना द्वारापेक्षामैन्द्र्यधिकरणन्यायेन श्रुतिरेवाऽऽत्मज्ञानं[1] कर्मणि विनियुङ्क्ते । तथा स्थितं शेषलक्षणे "वचनात्त्वयथार्थमैन्द्री स्यात्" [पू०मी०३।२।३] अग्निप्रकरणे **निवेशनः** संगमनो वसूनामित्यैन्द्र्या गार्हपत्यमुपतिष्ठत इत्यत्रेन्द्रोपस्थानार्थो वाऽयं मन्त्रो गार्हपत्योपस्थानार्थो वेति **संशये** गार्हपत्यमितिद्वितीयाश्रुत्या गार्हपत्यस्य शेषित्वप्रती-

---

१ क. °वाऽऽत्मानं ।

तावपि मन्त्रस्य तदुक्त्यसामर्थ्याद्विनियोगस्य च विनियोज्यानुसारित्वादिन्द्रशब्दस्य च संभावितमुख्यार्थस्य गौणत्वायोगाद्गार्हपत्यमुपेत्येत्यध्याहारादिन्द्रोपस्थानार्थो मन्त्र इति **पूर्वपक्षे** द्वितीयया गार्हपत्यस्य प्राधान्यदृष्टेस्तृतीयया च मन्त्रस्य तद्गुणत्वप्रतीतेस्तस्य च गौण्या वृत्त्या तदुक्तिशक्तेरिन्द्रवद्गार्हपत्यस्यापि यज्ञसाधनत्वाद्विनियोगाच्च मन्त्रस्य तात्पर्यावगमात्तस्य च पदसामर्थ्यनिर्वाह्यत्वात्प्रतिपदं शक्तिविमर्शे सतीन्द्रशब्दस्यैव गौणत्वसंभवाद्गार्हपत्यस्यापि स्वकार्यं प्रत्यैश्वर्यात्तस्मिन्निन्द्रशब्दस्य यौगिकत्वादध्याहारं हित्वा गार्हपत्योपस्थानार्थो मन्त्र इति **राद्धान्तः** । ऐन्द्रीतिपदमयथार्थममुख्यार्थं गार्हपत्यविषयं स्याद्गार्हपत्यमुपतिष्ठत इति वचनाद्द्वितीयया गार्हपत्यस्य प्राधान्याधिगतेरिति सूत्रार्थः । तथाच प्रकृतेऽपि यदेव विद्यया करोतीति तृतीयाश्रुत्या कर्मण्यात्मधीर्विनियुक्तेत्यत आह । **श्रुत्येति** । यथैन्द्र्या **निवेशनः** संगमनो वसूनामित्याद्यया **कदाचन** स्तरीरसीत्याद्यया **चर्चा** गार्हपत्योपस्थानं स्यात्तथा श्रुत्याऽऽत्मधीः श्रुतिषु क्वचिदपि प्रकरणे कस्मिंश्चित्कर्मणि **न विनियुक्ता** विद्ययेति **श्रुतेश्चाङ्गावबद्धो**पास्तिविषयत्वादित्यर्थः । ननु गौणमुख्याधिकरणन्यायेनाऽऽत्मज्ञानस्य कर्तृसंस्कारतया श्रुतस्य कर्मानुप्रवेशमन्तरेणानुपपत्तिरूपसामर्थ्यलिङ्गेन कर्मसंगतिः । **तथा हि**—
"अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्तस्मादुत्पत्तिसंबन्धोऽर्थेन नित्यसंयोगात्"
[ पू० मी० ३ । २ । १ ] **बर्हिर्देवसदनमित्यादिमन्त्राणां** मुख्ये गौणे चार्थे विनियोगो मुख्य एव वेति **संशये** शब्दादेव यत्रार्थधीः स मुख्यो यत्र तु वाक्यार्थसंबन्धिगुणयोगेनार्थान्तरे धीः स गौण इति भेदादुभयत्र च शक्यविशेषादुभयत्र विनियोग इति **पूर्वपक्षे** गौणेऽर्थे शक्तिसत्त्वेऽपि तन्मात्रादविनियोगात्तदुपस्थापिते कार्ये विधेरेव विनियोजकत्वाद्गौणधियश्च मुख्यधीपूर्वकत्वादादौ मुख्येऽर्थे विनियोगे तावतैव विधेः कृतार्थत्वाद्गौणेऽपि विनियोगकल्पनानवकाशान्मुख्यासंभवे च गौणाङ्गीकारान्मुख्य एवार्थे लैङ्गिको विनियोगो मन्त्राणामिति **तृतीये** स्थितम्। मुख्यस्यार्थस्याभिधाने मन्त्राणां तत्र संयोगात्तेषु प्रकरणाम्नातेषु प्रकरणिनि प्रधाने शेषत्वं गौणे त्वर्थे मन्त्रा न नियोक्तव्या मुख्यनियोगेनैव तदानर्थक्यपरिहारात्तत्राप्यविनियोगे[1] प्रधानानुपकारितया तदुत्पत्तिरनर्थिका स्यात्तस्मान्मुख्येनार्थेन नित्यसंबन्धादेषां तत्प्रकरणोत्पत्तिलक्षणसंबन्धोऽर्थवानिति सूत्रार्थः । एवमात्मज्ञानमपि लिङ्गेन यथोक्ते कर्मणि विनियुज्यतामिति तत्राऽऽह । **नापीति** । यथा बर्हिरित्यादौ बर्हिर्लवनप्रकाशनसामर्थ्यादिलिङ्गेनायं मन्त्रो बर्हिर्लवनादौ विनियुज्यते तथाऽऽत्मज्ञानस्य कर्माङ्गभावप्रकाशनसामर्थ्याख्यलिङ्गादृष्टेर्न तेन तस्य कर्मणि संगतिस्तस्य कर्तृसंस्कारत्वेन कर्मप्रवेशस्तु निरस्तो निरसिष्यते चेत्यर्थः । आदिपदेनोरु[2] **प्रथस्वोरु ते** यज्ञपतिरित्यादि गृह्यते ॥ ३३३ ॥

---

१ क. °त्रापि वि° । २ ख. °दिशब्देनो° ।

**न चापि वाक्याद्विज्ञानं कर्तृद्वारेण गच्छति ॥**
**कर्मण्यप्रक्रियास्थं सज्जुहूपर्णमयीत्ववत् ॥ ३३४ ॥**

अस्तु तर्हि वाक्याधिकरणन्यायादात्मा ज्ञातव्य इत्यादिवाक्यात्तद्धियः कर्मणि शेषता। तथा हि स्थितं तृतीये "तत्सर्वार्थमप्रकरणात्" [ पू० मी० ३ । ६ । १ ] **यस्य पर्णमयी** जुहूर्भवति न स पापं श्लोकं शृणोति यस्य खादिरः स्रुवो भवति च्छन्दसामेव रसेनावद्य-तीत्यादावनारभ्याधीतस्यापि पर्णतादेः क्रत्वव्यभिचरितजुह्वादिसंबन्धेन क्रतुनियोगप्र-त्यभिज्ञानात्तदङ्गत्वे सिद्धे प्रकृतिविकृत्यर्थमेतद्विधानं प्रकृत्यर्थमेव वेति **संशये** व्यवस्था-पक[१]प्रकरणाभावाज्जुह्वाद्युद्देशेन विधानात्तत्[२]द्वा[३]रैतत्साध्यापूर्वशेषत्वाज्जुह्वादिसंबन्ध-स्योभयत्रोपदेशातिदेशाभ्यामविशेषादुभयार्थमेतद्विधानमिति **पूर्वपक्षे**[४] विकृतिषु चोदक-प्राप्तजुह्वाद्युद्दिश्य पर्णतादेर्विधेयत्वात्तन्मुखेन[५] जुह्वादिषु प्राप्यमाणेषु पर्णतादेरपि प्राप्ते-स्तत्र विधाने द्विरुक्तेर्दुरुत्तरत्वादुपदेशावगतजुह्वाद्युद्देशेन च प्रकृत्यर्थतया विधौ चरि-तार्थे चोदकापेक्षया पुनर्विकृत्यन्वये विरम्यव्यापाराभावात्प्रकृत्यर्थमेव पर्णतादि-विधानमिति **राद्धान्तः।** प्रकरणस्यानियामकत्वात्पर्णतादिविधानं प्रकृतिविकृत्यर्थमिति **पूर्वपक्षसूत्रार्थः।** प्रकृतौ वाऽद्विरुक्तत्वादिति **सिद्धान्तसूत्रं** प्रकृतावेव निविशेरन्ननार-भ्याधीतानि वाक्यान्येवं खल्वद्विरुक्तता भविष्यतीत्यर्थः। एवमात्मधीरपि वाक्यात्कर्मणि विनियुक्तेति नेत्याह। **न चेति। यस्य** पर्णमयीत्यादिवाक्येन पर्णत्वं क्रतुप्रकरणानधि-गतमपि जुहूगतं सत्तद्वारा कर्मशेषत्वं गच्छति नैवं ज्ञानं वाक्यादपि कर्तृद्वारा कर्मणि प्रविशतीत्यर्थः। वाक्यस्यात्र प्रसङ्गार्थं ज्ञानं विशिनष्टि। **अप्रक्रियेति** ॥ ३३४ ॥

**जुह्वाद्याकृतिसंपत्तिव्यपेक्षापूरणक्षमम् ॥**
**विशेत्पर्णमयीत्वादि प्रकृत्युपनयात्क्रतुम् ॥ ३३५ ॥**

पर्णमयीत्वादेर्वैधर्म्यदृष्टान्तत्वं विवृणोति। **जुह्वादीति।** जुह्वादीनां स्वरूपोत्पत्तौ प्रकृतिद्रव्यापेक्षायां तद्विषयार्पणसमर्थं पर्णत्वादि प्रकृत्युपस्थापनाज्जुह्वादिद्वारा पर्णमयी जुहूरित्यादिवाक्यात्क्रतुं प्रविशेदित्यर्थः ॥ ३३५ ॥

**कर्मापेक्षितकर्त्रादिरूपविध्वंसकृन्न तु ॥**
**ऐकात्म्यज्ञानमन्वेति स्वातन्त्र्येऽप्यर्थवत्त्वतः ॥ ३३६ ॥**

सोपस्कारं दार्ष्टान्तिकमाह। **कर्मेति।** ऐकात्म्यज्ञानं नान्वेति कर्मेति संबन्धः। आत्मज्ञानस्य कर्माप्रवेशे युक्त्यन्तरमाह। **स्वातन्त्र्येऽपीति** ॥ ३३६ ॥

**जुह्वाद्यव्यभिचारित्वात्प्रत्युपस्थापयेत्क्रतुम् ॥**
**कर्ताऽन्यत्रापि सद्भावान्नाऽऽक्षेप्ता व्यभिचारतः ॥ ३३७ ॥**

---

१ ख. °प्रमाणा°। २ क. विधिना तद्द्वा°। ३ क. °द्द्वारा त°। ४ क. °क्षे प्रकृतिचो°। ५ क. °न्मुख्येन।

क्रत्वपेक्षितसाधकत्वबाधकत्वाभ्यां पर्णत्वादेरात्मधियश्च वैषम्यमुक्त्वा क्रतुप्रवेशे द्वारत्वाभिमतयोर्जुह्वाद्यात्मनोरपि वैषम्यमाह । **जुह्वादीति ।** क्रत्वव्यभिचारित्वाज्जुह्वादि स्वापेक्षितप्रकृत्युपनायकं पर्णत्वादि प्रति शेषित्वेन क्रतुमुपस्थापयेत्कर्ता तु ज्ञानस्य शेषित्वेन कर्म नाऽऽक्षिपति लौकिकेऽपि कर्मणि भावाद्वैदिककर्मणा नियतसंबन्धाभावादित्यर्थः ॥ ३३७ ॥

**अनारभ्योक्तितश्चापि नेह प्रकरणग्रहः ॥ ३३८ ॥**
**सिद्धे सामान्यतो लिङ्गात्संबन्धे कर्मभिस्ततः ॥**
**विशेषावगतिर्नाम्नः क्रमाच्चेति व्यवस्थितम् ॥ ३३९ ॥**

ननु प्रकरणाधिकरणन्यायेन प्रकरणादात्मज्ञानस्य कर्मणि शेषत्वं **तथा हि**—"असंयुक्तं प्रकरणादितिकर्तव्यतार्थित्वात्" [पू० मी० ३ । ३ । ११] दर्शपूर्णमासादिष्वारादुपकारकप्रयाजाद्यङ्गेषु श्रुत्याद्यतिरिक्तं प्रकरणं नाम विनियोजकं प्रमाणमस्ति न वेति संशयेऽधिकारवाक्यस्थलिङ्पदस्य संनिहितपदार्थैरैदमर्थ्येनान्वितपरमापूर्वाभिधायित्वादैदमर्थ्यस्य च करणत्वेन तदनुग्राहकत्वेन वा नियतत्वादुत्पत्तिशिष्टाग्नेयाद्यवरुद्धे कार्ये तदुपकारकतयैव प्रयाजाद्यन्वयाद्विशेषस्याप्यन्विताभिधानदशानुप्रवेशेन श्रौतत्वादेष विनियोगः श्रौत एवेति **पूर्वपक्षे** सप्रयोजनाप्रयोजनसंनिपाते प्रयोजनवदर्थमितरदित्यादौ सामान्येनैदमर्थ्यं बुद्ध्वा कथमिति विशेषजिज्ञासायां किंचित्करणतया किंचिदितिकर्तव्यतयेति विशेषान्वयार्थं मानान्तरालोचनायामाग्नेयादीनां करणत्वमौपादानिकं प्रयाजादीनामितिकर्तव्यतात्वं प्राकरणिकमिति भेदाद्दर्शादिषु प्राकरणिकः प्रयाजाद्यन्वय इति **तृतीये राद्धान्तितम् ।** यदसंयुक्तं श्रुत्यादिना तदितिकर्तव्यतार्थित्वात्प्रकरणात्संयुज्यते यद्धीतिकर्तव्यताकाङ्क्षिणः संनिधावाकाङ्क्षापूरकं वाक्यं तत्तेनैकवाक्यतां यातीति सूत्रार्थः । तथाऽऽत्मधीरपि प्रकरणेन कर्मणि विनियुक्तेत्यत आह । **अनारभ्येति ।** प्रकरणभेदस्योक्तत्वात्कर्माऽऽरभ्य तत्रैवाऽऽत्मधियोऽपाठान्न तस्याः कर्मशेषत्वे प्रयाजादेरिव प्रकरणपरिग्रह इत्यर्थः । ज्ञानस्य कर्माङ्गत्वे स्थानसमाख्ययोरप्यप्रामाण्यमिति वक्तुं तयोर्विषयमाह । **सिद्ध इति ।** उक्तं **शेषलक्षणे**—लिङ्गक्रमसमाख्यानात्काम्ययुक्तं समाम्नातम् । ऐन्द्राग्नमेकादशकपालं निर्वपेद्भ्रातृव्यवानैन्द्राग्नमेकादशकपालं निर्वपेद्यस्य सजाता वीयुरित्यादीन्येकदैवत्यानि बहूनि काम्यकर्माणि क्रमेणोत्पन्नानि तथा काम्ययाज्यानुवाक्याकाण्डमिति समाख्याते काण्डे तत्क्रमेण तद्दैवत्यानि बहूनि याज्यानुवाक्यायुगलान्याम्नातानीन्द्राग्नी रोचना दिवः प्रचर्षणिभ्य इन्द्राग्नी नवतिं पुरः श्नथद्वृत्रमित्यादीनि तेषां यावल्लिङ्गं विनियोगः क्रमसमाख्याभ्यां नियमो वेति **संशये** लिङ्गाविशेषात्सर्वत्र विनियोग इति **पूर्वपक्षमाह । सिद्ध इत्यादिना ।** अस्यार्थः ।

---

१ ख. °न चानि° ।

यान्यैन्द्राग्नादीनि काम्यानि कर्माणि क्रमेणोत्पन्नानि तैः सर्वैः सहेन्द्राग्न्यादीनां याज्यानुवाक्यायुगलानां सामर्थ्याविशेषादविशेषतः संबन्धे प्राप्ते सतीति राद्धान्तमाह । **तत इत्यादिना** । एषोऽर्थः । सिद्धे सामान्येन ग्राहकसंबन्धे तन्निर्वाहाय विशेषमपेक्षमाणस्य विधेरेव मन्त्रसामर्थ्यमनुसंधाय तदनुगुणे कार्ये विनियोगकल्पकत्वात्सामर्थ्यस्य विशेषोपदर्शनेन तत्सहायत्वात्सर्वत्र सामान्यसंबन्धापेक्षस्य लिङ्गस्य विनियोजकत्वात्प्रकरणाभावे तदर्थं क्रमसमाख्ययोरन्वेष्यत्वात्ताभ्यां सामान्यद्वारा विशेषव्यवस्थेति सामान्यसंबन्धबुद्ध्यनन्तरमस्य याज्यानुवाक्यायुगलस्यास्मिन्कर्मणि विनियोग इति विशेषधीः काम्यमितिसमाख्यासामान्यात्क्रमवशाच्चेति लिङ्गक्रमाधिकरणे स्थितमित्यक्षरार्थः । लिङ्गयुक्तेन क्रमेण समाख्यानाच्च काम्यमित्युच्यमानमाम्नातं मन्त्रजातमिष्टिजातं च नियमेन संबध्नातीति सूत्रार्थः ॥ ३३८ ॥ ३३९ ॥

**इह त्वैकात्म्यधीयोगः काम्ययाज्येष्टिवन्न हि ॥**
**तस्मात्कर्माभिसंबन्धो नैवैकात्म्यधियोऽमितेः ॥ ३४० ॥**

अस्तु तर्हि प्रकृतेऽपि क्रमाधिकरणन्यायेन क्रमादेवाऽऽत्मधीः कर्मशेषः । तथा हि **तृतीये** स्थितम् । क्रमश्च देशसामान्यात् । दर्शपूर्णमासयोः प्रधानानुमन्त्रणमन्त्रेष्वाम्नायमानेषूपांशुयाजक्रमे **दब्धिर्नामासीति मन्त्रः** सर्वप्रधानार्थः किंवोपांशुयाजार्थ इति **संशये** नियोगैदमर्थ्येनान्वयस्य शाब्दत्वात्तस्य चाविशेषेण सर्वप्रधानार्थिताहेतुत्वाद्देशसामान्यादन्वयभेदस्याशाब्दत्वात्सर्वप्रधानार्थो मन्त्रो न क्रमादुपांशुयाजनिवेशीति **पूर्वपक्षयित्वा** नियोगैदमर्थ्येनान्वयस्य शाब्दत्वेऽपि तस्यैवं स्थानाख्यसंनिधिभेदाद्व्यवस्थाप्यमानत्वाद्दब्धिमन्त्रः क्रमादुपांशुयाजार्थ एवेति **राद्धान्तितम्** । क्रमश्च श्रुत्यादिवद्विनियोजकः क्रमवतां प्रधानानामनुमन्त्रणमन्त्रेष्वानुपूर्व्येणोपदिश्यमानेषु यस्य पर्याये यो धर्म उच्यते तस्य तं प्रत्याकाङ्क्षायाः सत्त्वात्संनिधिवशादेकवाक्यतेति सूत्रार्थः । एवं क्रमादात्मज्ञानस्यापि कर्मशेषता । यद्वा समाख्याधिकरणन्यायेन समाख्यया तस्य तत्र विनियोगः । तथा हि **तत्रैव** स्थितम् । आख्या चैवं तदर्थत्वात् । आध्वर्यवं हौत्रमौद्गात्रमित्यादिसमाख्यातेषु[1] कर्मस्वनियमो वा यद्येन समाख्यायते तत्तेनैव वा कार्यमिति संदेहे समाख्याया लौकिकत्वाद्वेदार्थविषयमङ्गाङ्गिभावं नियन्तुमसामर्थ्यादनियमे प्राप्ते तस्या लौकिकत्वेऽपि वेदार्थविषयत्वाद्वैदिकविधेः समाख्यादृष्टविनियोगकल्पकत्वात्तया नियम इति **सिद्धान्तः** । यथा लोके पाचकादिशब्दमुपलभ्य पचत्यादिना संबन्धधीरेवं वेदेऽप्यकृतकार्यसंबन्धवाचिनं शब्दं दृष्ट्वा भवति संबन्धे तस्मिन्प्रत्ययस्तस्मादाख्या च विनियोक्त्र्यर्थधीहेतुत्वात्तस्या इति सूत्रार्थः । एवं प्रकृतेऽपि समाख्यया ज्ञानं कर्मणि विनियुक्तमिति नेत्याह । **इह त्विति** । न हि काम्ययाज्यानुवाक्याकाण्डवाच्यमन्त्रेष्टी-

---

१ ख. °ख्यातेषु ।

नामिवाऽऽत्मधीकर्मणोः समाख्यासाम्यं क्रमसाम्यं वाऽस्ति तन्न ताभ्यां तस्यास्तस्मि-न्नङ्गत्वेन संगतिरित्यर्थः। अस्तु तर्हि मानान्तरादात्मज्ञानस्य कर्मशेषता नेत्याह। **तस्मादिति**। श्रुत्याद्यतिरिक्तशेषशेषित्वावेदकमानस्यालोकवेदसिद्धत्वादिति तत्प-दोक्तं हेतुमाह। **अमितेरिति** ॥ ३४० ॥

**न चाप्यस्यार्थवादत्वं विधिना वाक्यभेदतः ॥**
**दृष्टार्थत्वाच्च तद्बुद्धेः पाठान्नादृष्टकल्पना ॥ ३४१ ॥**

नन्वात्मविद्याफलश्रुतिरर्थवादः प्रत्यक्षविरुद्धत्वादपापश्लोकश्रुतिवदित्यनुमानात्पर्णम-यीत्ववदात्मधियोऽपि कर्मशेषत्वसंभवादमितिरसिद्धेत्यत आह। **न चेति**। विध्येकवा-क्यत्वव्याप्तमभूतार्थवादत्वं तदितो व्यावर्तमानं स्वव्याप्यमभूतार्थवादत्वमपि व्यावर्तयती-त्यर्थः। अस्येति फलवाक्योक्तिः। न चात्र फलश्रुतौ प्रत्यक्षविरोध उत्पन्नविद्यस्य दुःखानुभवाभावात्तद्वतश्चाविद्यावत्त्वादतो दुःखध्वस्तिश्रुतेरभूतार्थवादत्वाभावात्फलापेक्ष-याऽपि विज्ञानस्य न कर्मशेषतेत्यपेरर्थः। ये तु जरद्गवादिवाक्यवद्विरुद्धार्थतया वेदान्ता-प्रामाण्यात्तदध्ययनं ब्राह्मणस्य राजसूयाध्ययनवददृष्टार्थमिति ब्रुवन्तस्तेभ्यो नैक्यधीरित्या-हुस्तान्प्रत्याह। **दृष्टार्थत्वादिति**। वेदान्ताप्रामाण्ये हेत्वभावात्तज्जन्यधियोऽशेषदुःखहा-निफलस्य दृष्टत्वात्तदध्ययनं नादृष्टार्थमतस्तज्जधियः शेषत्वे मानाभावादप्रामाणिकः काण्डयोर्विपरीतः शेषशेषिभाव इत्यर्थः ॥ ३४१ ॥

**तमेतमिति वाक्यात्तु यागादेः प्रत्युताङ्गता ॥ ३४२ ॥**
**अन्ये त्वाहुर्न शक्नोति कामसंदूषिताशयः ॥**
**द्रष्टुं तत्परमद्वैतं सर्वकामासमाप्तितः ॥ ३४३ ॥**

न केवलमात्मधियः शेषत्वे मानाभावः प्रत्युत कर्मणां तच्छेषत्वे विविदिषावाक्यस्य मानत्वान्न विपरीतं शेषशेषित्वमित्याह। **तमिति**। ऐक्यधियः कर्मशेषत्वेन संबन्धं निरा-कृत्य कर्मणस्तच्छेषतया संबन्धः स्वाभीष्ट उक्तः। इदानीं कर्मणो ज्ञानशेषत्वेऽपि काम-विलयद्वारा तस्य तच्छेषत्वं न विविदिषाद्वारेति मतमाह। **अन्ये त्विति**। कामध्वस्ते-र्ज्ञानाधिकारहेतुत्वं साधयति। **नेत्यादिना**। अन्वयव्यतिरेकाभ्यां कामध्वस्तेरात्मधीहेतु-त्वसिद्धिरित्यर्थः। अस्तु तर्हि प्रथममेव कामध्वस्त्या ज्ञानाधिकार इत्याशङ्क्याऽऽह। **सर्वेति**। सर्वे कामाः स्वर्गादयस्तत्समाप्तौ तेभ्यो रागपरावृत्तिर्न त्वादावेव तदप्राप्ते-स्तद्रागस्य तेभ्यो रागध्वस्तिहेतोरसत्त्वादित्यर्थः ॥ ३४२ ॥ ३४३ ॥

**द्वैतैकत्वमतीहाभिः सूत्रान्तं फलमाप्य ना ॥**
**प्राजापत्यं पदं भुक्त्वा तदैकात्म्यं प्रपद्यते ॥ ३४४ ॥**

तर्हि स्वर्गादीनामादावेवाऽऽप्तिद्वारा कामध्वंसोऽपि स्यादित्याशङ्क्याऽऽह। **द्वैतेति**। द्वैतैकत्वमतिः सूत्रात्मनो ध्यानमीहास्तु दर्विहोममारभ्य सत्रान्तानि कर्माणि तैस्तैर्मनुष्य-

त्वमारभ्य सूत्रान्तं फलं क्रमेण प्राप्य सौत्रान्भोगान्भुक्त्वा तद्देहमानी तदन्यानुपभुक्तका-मयितव्यकर्मफलाभावात्सर्वतोनिवृत्तकामः प्रजापतिरात्मरूपमनुभवत्येवं कर्मणां कामविल-यमुखेन धीहेतुत्वे द्वारं प्राजापत्यं पदमित्यर्थः ॥ ३४४ ॥

**नैवं न कामसंप्राप्त्या तन्नाशोऽब्दशतैरपि ॥**
**तत्सेवातोऽतिवृद्धिः स्यान्निवृत्तिर्दोषदर्शनात् ॥ ३४५ ॥**

कामध्वंसद्वारा कर्मणां धीशेषत्वं दूषयति । **नैवमिति** । यत्तु भोगात्कामध्वस्तिरिति तत्राऽऽह । **नेति** । भोगिषु कामध्वंसादृष्टेर्योग्यानुपलब्धिबाधितमेतदिति भावः । किं तर्हि कामोपभोगाद्भवति तदाह । **तदिति** । कस्तर्हि कामध्वस्तिहेतुस्तत्राऽऽह । **निवृ-त्तिरिति** ॥ ३४५ ॥

**न जातु कामः कामानामुपभोगेन शाम्यति ॥**
**हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ३४६ ॥**

कामसेवारागातिशयहेतुर्न तद्ध्वस्तिनिमित्तमित्यत्र मन्वादिवाक्यं प्रमाणयति । **न जात्विति** ॥ ३४६ ॥

**निवर्तेतापि कामेभ्यस्तदुपायाप्रसिद्धितः ॥**
**सर्वक्लेशोपशान्त्यात्मज्ञानं चापि समाश्रयेत् ॥ ३४७ ॥**

भोगस्य कामाध्वस्तित्वेऽपि कर्माण्यनुष्ठितानि तं निरुन्धन्ति न हि सुकृतेषु कामः स्थातुमलं न तु विषयदोषधीस्तद्ध्वंसिनीत्याशङ्क्याऽऽह । **निवर्तेतेति** । कर्मधीतदनु-ष्ठानयोरभावे स्वर्गादेर्दुष्प्रापकत्वात्कथंचित्ततो विरागोऽपि स्यात्तज्ज्ञाने तदनुष्ठाने च तत्फलभोगस्याऽऽवश्यकत्वात्तेन रागोद्रेकात्कर्मद्वारा तत्फलाप्तिरिति न कदाचिदपि संसारचक्रातिक्रमोऽतो विषयसेवावत्कर्माण्यपि न कामं निवर्तयन्तीति भावः । किंच कर्मधीतदनुष्ठानाभावे कथंचित्तत्फलेच्छाध्वस्तावनवच्छिन्नब्रह्मानन्देच्छया तत्प्राप्तिहेतुं ज्ञानं संपिपादयिषुस्तद्धेतुषु श्रवणादिषु कदाचित्प्रवर्तेत । कर्मज्ञानादिभावे तु नैवमतोऽपि न कर्माणि रागध्वस्तिहेतव इत्याह । **सर्वेति** ॥ ३४७ ॥

**अथाऽऽनन्दः श्रुतः साक्षान्मानेनाविषयीकृतः ॥**
**दृष्टानन्दाभिलाषं स न मन्दीकर्तुमप्यलम् ॥ ३४८ ॥**

मा तर्हि[1] कर्माणि रागविरोधीनि भूवन्ब्रह्मानन्दस्तु श्रुतस्तादितररागं निरुन्ध्यादित्या-शङ्क्याऽऽह । **अथाऽऽनन्द इति** । न तावत्प्राजापत्ये पदे स्थितो ब्रह्मानन्दं शृणोति शास्त्रस्य मनुष्याधिकारत्वाच्छ्रुतोऽपि कथंचिदननुभूतो नानुभूतसजातीयफलरागप्रसरं मन्दीकर्तुमपि पारयति प्रागेव प्रत्याख्यातुमतः श्रुतोऽपि नासौ विषयरागध्वस्तिहेतुरि-त्यर्थः ॥ ३४८ ॥

---

१ क. का तर्हि ।

**कामप्रविलयायातस्तद्विपक्षार्थभावनम् ॥**
**विधयस्तत्क्रियाणां स्युस्तद्विपर्ययहेतवः ॥ ३४९ ॥**

यतो भोगकर्मब्रह्मानन्दा न कामध्वंसका अतो विषयदोषदर्शनाभ्यासप्रकर्षस्यैव तथात्वमित्युपसंहरति । **कामेति** । तस्य कामस्य विपक्षो विषयेषु दोषधीस्तस्या भावनमभ्यासः स विषयरागध्वस्तिं फलयतीत्यर्थः । काम्यानां फलरागप्रकर्षहेतुत्वेऽपि नित्यानामफलत्वादतद्धेतुत्वात्तानि विषयाभिलाषनिरासीनीत्याशङ्क्याऽऽह । **विधय इति । कर्मणा** पितृलोक इत्यविशेषश्रुतेर्नित्यानामपि फलवत्त्वात्तान्यपि काम्यानीव स्वफलेषु रागोद्रेकहेतवोऽतस्तेषां याः क्रियास्तासां विधयोऽनुष्ठानानि तानि तस्य कामध्वंसस्य विपर्ययस्तत्प्रकर्षस्तस्य हेतवस्तथा च दोषदर्शनाभ्यासादन्यो न तद्ध्वंसकृदित्यर्थः ॥३४९॥

**द्वारं न नियतं मुक्तेः प्राजापत्यं पदं भवेत् ॥**
**नह्युपाधिषु तत्त्वस्य विशेषः कश्चिदीक्ष्यते ॥ ३५० ॥**

यत्तु प्राजापत्यं पदं भुक्त्वेत्यादि तत्र तत्पदं तत्त्वज्ञानहेतुर्वा तत्त्वोत्कर्षहेतुर्वा नाऽऽद्य इत्याह । **द्वारमिति** । मुक्तेस्तद्धेतुज्ञानस्येति यावत् । **तद्यो** यो देवानामित्यविशेषश्रुतेरित्यर्थः । द्वितीयं दूषयति । **न हीति** ॥ ३५० ॥

**नाऽऽकाशस्य विशेषोऽस्ति कुम्भद्रोण्याद्युपाधिषु ॥**
**दूरान्तिकादिभिन्नेषु कल्पिताकल्पितेष्वपि ॥ ३५१ ॥**

तत्र दृष्टान्तमाह । **नेति** । तत्रोपाधीनामेकरूपत्वादविशेषेऽपि मनुष्यादिसूत्रान्तोपाधीनां नानारूपत्वादत्र सविशेषतेत्याशङ्क्याऽऽह । **कुम्भेति** । संनिहितोपाधिष्वविशेषेऽपि व्यवहितेषु सविशेषत्वमाशङ्क्याऽऽह । **दूरेति** । उत्पन्नोत्पद्यमानोत्पत्स्यमानोपाधिषु सविशेषत्वमाशङ्क्याऽऽह । **कल्पितेति** ॥ ३५१ ॥

**संत्तत्त्वापेक्षयाऽभेदो भावानां नाभ्युपेयते ॥**
**स्वभावहानादन्योन्यं विशेषो बाह्य एव सः ॥ ३५२ ॥**

आकाशवन्निर्विशेषं ब्रह्मेत्ययुक्तं तस्य सत्तासामान्यरूपस्य सविशेषत्वादित्याशङ्क्य मनुष्यादयस्तद्विशेषाः संत्तत्त्वाद्ब्रह्मणोऽभिन्ना भिन्ना वेति विकल्प्याऽऽद्ये दोषमाह । **संत्तत्त्वेति** । भावा मनुष्यादयो विशेषास्तेषां सद्रूपब्रह्मापेक्षया नाभेदस्तस्मादभिन्नत्वे तद्वत्तेषां विशेषत्वभङ्गादित्यर्थः । भेदपक्षं प्रत्याह । **सदिति** । भावानां सतो भेदः सत्त्वेनासत्त्वेन वा नाऽऽद्यः प्रतियोगिनोऽसत्त्वप्राप्तेरिति मत्वा द्वितीयं निराह । **स्वभावेति** । असत्त्वेन सत्त्वाद्भिद्यमानविशेषणान्निःस्वरूपत्वादसामान्यविशेषं विश्वं स्यादित्यर्थः । किंच विशेषा मिथोऽभिन्ना भिन्ना वा नाऽऽद्यो विशेषाद्वैतापातादुक्तदोषान्नेतरः सत्त्वेन भेदे प्रतियोग्यसत्त्वापत्तेरुक्तत्वादसत्त्वेन भेदे धर्मिणोऽसत्त्वापातात्तथा चोभय-

---

१ ख. सतत्त्वा॰ । २ ख. सतत्त्वा॰ । ३ ख. सतत्त्वे॰ । ४ ख. ॰पभ॰ ।

थाऽप्येक एव निःसामान्यविशेषो भावः स्यादित्याह । **अन्योन्यमिति** । अन्योन्यं भेदेऽभेदेऽपि स्वभावहानादित्यन्वयः । का तर्हि भासमानविशेषस्य गतिस्तत्राऽऽह । **विशेष इति** । सद्रूपे ब्रह्मण्यारोपितो मनुष्यादिर्विशेष इत्युपादेयरूपबहिर्भूतः स इत्यर्थः ॥ ३९२ ॥

**कार्यकारणपक्षेऽपि कार्यं नान्यत्र कारणात् ॥**
**न च तत्त्वे विशेषोऽस्ति कटकादीव हेमनि ॥ ३९३ ॥**

ब्रह्म सविशेषं कारणत्वात्सुवर्णवदित्याशङ्क्य कार्याणि ततोऽभिन्नानि भिन्नानि वेति विकल्प्याऽऽद्ये तानि न तत्कार्याणि तदभिन्नत्वात्तद्वदिति मत्वा द्वितीयं निराह । **कार्येति** । जगद्ब्रह्मणोः कार्यकारणत्वेऽपि नात्यन्तभेदस्तथाभूतयोरश्वमहिषवदतद्भावादित्यर्थः । किं च कार्याणि कारणे ब्रह्मणि विशेषहेतवः स्वयमेव वा विशेषा नाऽऽद्य इत्याह । **न चेति** । तत्त्वे कारणे ब्रह्मणि न कार्यकृतो विशेषो मानाभावादित्यर्थः । विमतं कार्यकृतविशेषवत्कारणत्वात्सुवर्णवदित्याशङ्क्याऽऽह । **कटकेति** । नञ्पदमिहानुषज्यते कटकादिकार्यकृतविशेषवत्त्वं न हेम्न्यस्ति[1] तेषु वर्तुलत्वादिविशेषोपलम्भेऽपि हेम्नस्तदभावादतः साध्यविकलतेत्यर्थः । नापि कार्याण्येव तद्विशेषास्तेषामागमापायिनां सर्पवत्कल्पितानां तात्त्विकविशेषत्वायोगान्न हि कटकादयोऽपि हाटके स्वरूपातिरिक्तास्तात्त्विका विशेषा इत्याशयेनाऽऽह । **कटकादीति** ॥ ३९३ ॥

**अतः प्रजापतौ तत्त्वं कृमौ वा न विशिष्यते ॥**
**तर्कादागमतश्चापि तद्यो य इति हीदृशात् ॥ ३९४ ॥**

ब्रह्मणि निर्विशेषत्वं निगमयति । **अत इति** । अतस्तर्कादिति संबन्धः । सामान्यविशेषभावायोगादिरनन्तरोक्तो यस्तर्कस्तस्य विपर्यये पर्यवसानाभावादाभासत्वमाशङ्क्याऽऽह । **आगमतश्चेति** । अत्र हि देवादिष्वविशेषतो ज्ञानोदयोक्तिसामर्थ्यादविशिष्टत्वं तेषु ब्रह्मणो दृष्टमित्यर्थः ॥ ३९४ ॥

**यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ॥**
**अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ ३९५ ॥**

सर्वोपाधिषु ब्रह्मणो निर्विशेषत्वे श्रौतलिङ्गान्तरमाह । **यदेति** । अत्र हि मर्त्यस्यामृतत्वोक्तेर्मर्त्यदेहस्थस्यैव ब्रह्मत्वोक्तेः कामानां हृदयाश्रितत्ववचनाच्च ब्रह्मणः सर्वोपाधिष्वविशेषतेति द्रष्टव्यम् ॥ ३९५ ॥

**एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ॥**
**कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च॥३९६॥**

ब्रह्मणो निर्विशेषत्वे श्रौतं लिङ्गमुक्त्वा श्रुतिमुदाहरति । **एक इति** । मूर्तित्रयात्मना

---

१ ख. हेम्नोऽस्ति ।

पुराणादिसिद्धभेदवारणार्थमेकपदम्। **वक्ष्यति च–"हरिर्ब्रह्मा पिनाकीति बहुधैकोऽपि गीयते"** इति। अखण्डं जाड्यं निरस्यति। **देव इति**। सवितृवत्ताटस्थ्यं वारयति। **सर्वभूतेष्विति**। किमिति तर्हि सर्वैरात्मत्वेन न गृह्यते तत्राऽऽह। **गूढ इति**। आधाराधेयत्वेन भेदं शङ्कित्वाऽऽह । **सर्वव्यापीति** । सर्वमेतत्सत्तया सदेतत्प्रतीत्या च स्फूर्तिमदतः सदन्तराऽस्फूर्तेर्न वस्तुतः परिच्छेद इत्यर्थः। भूतानामन्तरात्मा नियम्योऽयं नियन्तेति कथं वस्तुतोऽपरिच्छेदस्तत्राऽऽह। **सर्वभूतेति**। सर्वेषां ब्रह्मादिस्तम्बान्तभूतानामयमेवान्तरात्मा सृष्टेषु भूतेष्वस्यैव प्रवेशश्रुतेरित्यर्थः। तस्य तर्हि कर्तृत्वादिशक्तिरन्तरात्मनस्तथात्वान्नेत्याह। **कर्मेति**। तर्हि जगद्व्यापारसाक्षित्वेन ततोऽर्थान्तरत्वाद्भेदतादवस्थ्यं नेत्याह। **सर्वेति**। सर्वेषां भूतानामयमधिवासोऽधिष्ठानत्वान्न च तद्विनाऽऽरोपितस्वरूपमिति न वस्तुतः परिच्छेद इत्यर्थः। तस्य वस्तुत्वाद्घटवद्दृश्यत्वानुमानाद्द्रष्ट्रन्तरापेक्षायां परिच्छिन्नतेति चेन्न जडत्वोपाधेरित्याह। **साक्षीति**। ईक्षणकर्तृत्वात्परिच्छिन्नतेत्याशङ्क्याऽऽह। **चेतेति**। द्रष्टृत्वात्सविकारित्वं लौकिकद्रष्टृवदित्याशङ्क्याऽऽह। **केवल इति**। संनिधिमात्रेण विश्वव्यवहारहेतुतया चिन्मात्रत्वमस्य द्रष्टृत्वं न विकारितेत्यर्थः। ज्ञानानन्दौ ब्रह्मणो गुणावित्येके तान्निरस्यति। **निर्गुण इति**। किं बहुना सर्वविशेषशून्यमेकरसं ब्रह्मेति चार्थः॥ ३९६॥

**विज्ञानकर्मणोस्त्रेधा यद्युच्येत समुच्चयः॥**
**पूर्वोक्तैकात्म्यतात्पर्याद्वेदस्यासौ न युज्यते॥ ३९७॥**

सर्वोपाधिषु ब्रह्मणो निर्विशेषत्वात्तत्प्राप्तौ प्राजापत्यं पदं न नियतं द्वारमिति कामध्वंसमुखेन कर्मणां धीहेतुत्वमप्रामाणिकमित्युक्तं सम्प्रति न तानि ज्ञानहेतवः किंतु तत्समुच्चितानि मुक्तेरेवेति मतमाह। **विज्ञानेति**। ज्ञानं प्रधानं कर्म गुणो विपरीतं वा तयोः समप्रधानत्वं वेति त्रैविध्यं तत्र कर्मभागो ज्ञानभागो वा मानं नाऽऽद्यस्तस्य केवलकर्मणां स्वर्गादिहेतुत्वबोधने तात्पर्यादिति मत्वा द्वितीयं दूषयति । **पूर्वेति**। ऐकात्म्यविषयाम्नान्यो वेदान्तवचसामित्यादिः पूर्वशब्दार्थः। वेदस्योपनिषद्भागस्येति यावत्। स त्वपवर्जिताखिलोपाधावेकरसे ब्रह्मात्मनि पर्यवस्यत्युपक्रमादीनां तात्पर्यलिङ्गानां तत्रैवोपलम्भात्तस्मादसौ समुच्चयोऽप्रामाणिकत्वादयुक्त इत्यर्थः॥ ३९७॥

**एकवाक्यावशीभावात्साध्यैक्यायोगतस्तथा॥**
**समुच्चयः कुतो द्रव्यगुणवज्ज्ञानकर्मणोः॥ ३९८॥**

त्रिविधसमुच्चये साधारणदोषमुक्त्वा समसमुच्चये विशेषतस्तमाह। **एकेति**। अस्यार्थः। दर्शपूर्णमासयोर्यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चेत्यादिवाक्यैराग्नेयादिकर्माणि कालद्वयसंयुक्तान्युत्पन्नानि **य एवं** विद्वान्पौर्णमासीं यजते य एवं विद्वानमावास्यां यजत इति च **श्रुतम्**। तत्र किं यजती कर्मणोरपूर्वयोर्विधायकौ किंवा प्रकृताग्नेयादि-

समुदायद्वयानुवादकाविति **संशये** समिधो यजतीत्यादिवदभ्यासात्कर्मान्तरविधौ **प्राप्ते** प्रकृतानि कर्माणि पौर्णमास्यमावात्यायुक्तवाक्ययोरालम्बनं रूपभेदानुक्तेरिति **राद्धान्तितं** द्वितीये प्रकरणं तु पौर्णमास्यां रूपावचनादित्यत्र । अतो यथा यजतिभ्यां समुदायानुवादाद्दर्शपूर्णमासाभ्यामित्याधिकारिकाद्वित्वोपपत्तावाग्नेयादीनामेकाधिकारवाक्यसंबन्धात्समप्रधानानामपूर्वादौ समुच्चयो न तथा ज्ञानकर्मणोरिति । तत्रैव हेत्वन्तरमाह । **साध्येति** । एषोऽर्थः । आग्नेयादीनां प्रत्येकं फलसंबन्धः किंवा तन्त्रमेषां फलमिति **संदेहे** मिथोनपेक्षोत्पत्तिविध्युत्पन्नप्रधानानां पृथक्फलाकाङ्क्षत्वात्तत्संनिधौ श्रुतं फलमेकं प्रत्येकमेति संबन्धमिति प्राप्ते तेषां समुदायवाचिदर्शपूर्णमासशब्देनो[1]क्त्या फले विधानात्तन्त्रं फलमित्येकादशे प्रयोजनाभिसंबन्धात्पृथक्त्वमित्यादिना चिन्तितं न तथा ज्ञानकर्मणोर्ध्रुवाध्रुवफलयोः साध्यैक्यं तत्कृतः समुच्चय इति । तयोर्गुणप्रधानत्वेनासमुच्चये वैधर्म्यदृष्टान्तमाह । **द्रव्येति** । अस्यार्थः । अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात् । ज्योतिष्टोमेऽरुणयैकहायन्या सोमं क्रीणाति तत्राऽऽरुण्यं कृत्स्ने प्रकरणे निविशते क्रय एव वैकहायन्यामिति संशय्यारुणया क्रीणातीति तृतीयानिर्देशाद्वाक्येन क्रयसंबन्धावगमेऽपि गुणस्यामूर्ततया साक्षात्क्रियान्वयायोगाद्वाक्यं भित्त्वा सामर्थ्येन प्राकरणिकद्रव्यमात्रशेषतया निवेश इति प्राप्ते गवा यजेतेत्यत्राऽऽकृतिवदमूर्तस्यापि गुणस्य क्रयसाधनद्रव्यपरिच्छेदेन क्रयान्वयसंभवाद्वाक्यभेदाप्रसङ्गादरुणैकहायन्योरितरेतरनियमाद्वाक्यवशात्क्रय एवैकहायन्यामरुणिम्नो निवेश इति **तृतीये** स्थितम् । यत्र द्रव्यगुणयोरर्थैक्यं श्रुतं तत्र तावेकस्मिन्पदार्थे नियम्येयातामैककर्म्यादेककार्यत्वादेकं हि क्रयसंबन्धाख्यं कार्यमत्र श्रुतमिति सूत्रार्थः । तथा चारुणैकहायन्योर्गुणप्रधानतया क्रये समुच्चयवन्न ज्ञानकर्मणोरेकत्र साधनत्वेनानवगतयोरङ्गाङ्गितया समुच्चय इति त्रिधा समुच्चयासंभवं फलितमाह । **समुच्चयः कुतो ज्ञानकर्मणोरिति** ॥ ३५८ ॥

**भेदाभेदाश्रयत्वेन ह्येकात्म्यज्ञानकर्मणोः ॥**
**परस्परोपकारित्वहानात्कीदृक्समुच्चयः ॥ ३५९ ॥**

तत्रैव युक्त्यन्तरमाह । **भेदेति** । उपकार्योपकारकत्वाविनाभूतः समुच्चयः । इह च कर्तृत्वादिविभागाश्रितकर्मणस्तद्रहिताद्द्वितीयात्मधियश्च मिथो नोपकार्योपकारकत्वमतो व्यापकाभावात्तद्व्याप्तः समुच्चयोऽपि नास्तीत्यर्थः ॥ ३५९ ॥

**देवताद्रव्ययाथात्म्यज्ञानं कर्माङ्गतां गतम् ॥**
**तावदेव हि तत्कर्म नाज्ञातद्रव्यदैवतम् ॥ ३६० ॥**

विमतं ज्ञानं कर्मसमुच्चयार्हं ज्ञानत्वाद्देवतादिज्ञानवदित्याशङ्क्याऽऽह । **देवतेति** ।

---

१ क. ख. °नोक्त्वा फ° ।

कर्माङ्गतां तदन्तर्भूतत्वेन तद्देहतामित्येतत् । देवतादिज्ञानस्य कर्मान्तर्भूतत्वेन तदात्मकस्य तेनासमुच्चयात्साध्यविकलतेति भावः । ननु देवतादिज्ञानं न कर्मान्तर्भूतं तद्धीनस्यापि कर्मानुष्ठानात्तेनोभौ कुरुत इति श्रुतेरतोऽर्थान्तरत्वात्तस्य कर्मणा समुच्चयो नेत्याह । **तावदिति ।** **तद्धि** कर्म यज्ज्ञातद्रव्यदेवताकं विद्वान्यजते ज्ञात्वा कर्म समारभेतेति श्रुतेर्ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसीति च स्मृतेर्न तु तदज्ञातद्रव्यदेवताकं यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं चर्छेति गर्तं वा पद्यत इति निन्दाश्रुतेरतो देवतादिज्ञानं कर्मान्तर्भूतमित्यर्थः॥३६०॥

**तद्विशेषेऽङ्गभूयस्त्वात्फलभूयस्त्वमित्यतः ॥**
**समुच्चयो न तस्य स्यान्नाङ्गेनाङ्गिसमुच्चयः ॥ ३६१ ॥**

यद्यज्ञातदेवतादियाथात्म्यस्य कर्माननुष्ठानं तर्हि तेनोभौ कुरुत इत्यत्र कथमिष्टं तत्राऽऽह । **तद्विशेष इति ।** देवतादियाथात्म्यधीरूपाङ्गविशेषयोगे कर्मणो भूयस्त्वात्तत्फलस्यापि भूयस्त्वं यदेव विद्यया करोतीत्यादिश्रुतेरतो देवतोपास्तिहीनस्यापि कर्मानुष्ठानं स्यान्न फलभूयस्त्वं यदेव विद्ययेति हीति न्यायादित्यर्थः । फलातिशयवति कर्मण्यङ्गस्यापि भूयस्त्वाद्देवतादिज्ञानस्य तेन समुच्चयात्तदेकफलत्वात्कुतो दृष्टान्तस्य साध्यविकलतेत्याशङ्क्याऽऽह । **समुच्चय इति ।** देवतादिज्ञानं तस्येत्युच्यते । अङ्गशब्दः स्वरूपविषयः । अङ्गिपदं तदभिन्नस्वरूपिपरम् । तथाच पृथगेव सिद्धस्वरूपाणां प्रयाजादीनां फलोपकारितया दर्शादिना समुच्चयसिद्धिरिति द्रष्टव्यम् । अथवा प्रयाजादीनामपि दर्शपूर्णमासाद्यङ्गानां नाङ्गिना दर्शपूर्णमासादिना समुच्चयस्तद्विशिष्टस्यैव दर्शपूर्णमासादेः स्वर्गादौ साधकतमत्वात्सेतिकर्तव्यताकस्यैव करणत्वात्तथा देवतादिज्ञानस्य कर्मशेषत्वेऽपि तद्विशिष्टस्यैव तस्य फलभूयस्त्वे साधकतमत्वान्न तेनैव तस्य समुच्चयसिद्धिः ॥ ३६१ ॥

**यच्चाप्यैकात्म्यविज्ञानं तदज्ञानैकघस्मरम् ॥**
**तस्मिन्सति कुतः कर्म का वाऽपेक्षाऽस्य गोचरे ॥ ३६२ ॥**

देवतादिज्ञानदृष्टान्तस्य साध्यवैकल्यमुक्त्वा ज्ञानत्वहेतोः प्रत्यनुमानमाह । **यच्चेति ।** विमतं न कर्मणा समुच्चीयते तद्विरोधित्वाद्यद्यद्विरोधि न तत्तेन समुच्चीयते यथा प्रकाशस्तमसेत्यर्थः । प्रकाशः स्वकार्ये तमो नापेक्षते ज्ञानं तु तस्मिन्कर्मापेक्षमतो न तदुपमृद्नातीति हेत्वसिद्धिमाशङ्क्याऽऽह । **का वेति ।** अस्य ज्ञानस्य गोचरो ब्रह्मात्मत्वाख्योऽपवर्गस्तत्र तस्य नान्यापेक्षा सम्यग्धियः स्वफले नैरपेक्ष्यस्य शुक्त्यादिज्ञाने दृष्टत्वादित्यर्थः ॥ ३६२ ॥

**ब्राह्मणत्वादिविज्ञानमग्निहोत्रादिकर्मणाम् ॥**
**यद्दृष्टं साध्यसिद्ध्यै तु कर्मानुगुणमेव तत् ॥ ३६३ ॥**

ननु कर्तुरात्मनो ज्ञानस्य पक्षत्वात्कथं प्रत्यनुमानं तर्हि सिद्धसाध्यतेत्याह । **ब्राह्मण-**

त्वादीति । शूद्रो यज्ञेऽनवक्लृप्त इति श्रुतेः शूद्रेणानधिकारिणाऽनुष्ठितानामप्यग्निहोत्रादीनां नैष्फल्यात्तत्फलमुद्दिश्य ब्राह्मणादिज्ञानं **ब्राह्मणो** बृहस्पतिसवेनेत्यादिना यद्दृष्टं तत्कर्मोपकारकमतस्तस्य कर्मसमुच्चयेऽपि न क्षतिरित्यर्थः ॥ ३६३ ॥

**ऐकात्म्यवस्तुयाथात्म्यबोधे जात्यादिबाधनात् ॥**
**न केवलं क्रिया न स्यात्कर्मणां प्रत्युताक्रिया ॥ ३६४ ॥**

किंच ज्ञानोत्पत्त्युत्तरकालैर्वा कर्मभिः समुच्चयः प्राक्तनजन्मार्जितैर्वा प्राग्ज्ञानोत्पत्तेरस्मिन्नेव जन्मन्यापादितैर्वा[1] तत्राऽऽद्ये दोषमाह । **ऐकात्म्येति** । क्रियेत्यनुष्ठानोक्तिः । ऐकात्म्यमेव वस्तुयाथात्म्यमतिरिक्तस्याऽऽरोपितत्वात्तस्य बोधे वाक्यीये सत्यबोधबाधया तन्निमित्तदेशजात्यादिबाधात्तत्प्रयुक्तकर्मणामनुष्ठानं न सिध्येत्तथा च कथं ज्ञानात्पराचीनकर्मभिस्तत्समुच्चयः । द्वितीयं निरस्यति । **प्रत्युतेति** । न केवलं तदसिद्धिः प्रत्युतानुष्ठानविपरीतमक्रियाशब्दितं कर्मणामसत्त्वमेवेति योजना । आत्मापरोक्षज्ञानेनाज्ञानस्य निरस्तत्वात्तन्मूलजन्मान्तरार्जितकर्माभावात्तैरपि ज्ञानस्य समुच्चयायोगादित्यर्थः ॥ ३६४ ॥

**अयथावस्तुसर्पादिज्ञानं हेतुः पलायने ॥**
**रज्जुज्ञानेऽहिधीध्वस्तौ कृतमप्यनुशोचति ॥ ३६५ ॥**

अज्ञानकार्याणां तन्निवृत्तौ निवृत्तिर्न कर्मणामतत्कार्यत्वादित्याशङ्क्याऽऽह । **अयथेति** । रज्जुसर्पादि तावदयथावस्तु तज्ज्ञानं ज्ञानविरुद्धत्वादज्ञानं तत्पलायनादौ हेतुत्वेन लोकसिद्धमेवं कर्माण्यप्यज्ञानमूलानि । अज्ञो हि कामयमानस्तानि करोत्यतो ज्ञानादज्ञानध्वस्तौ तद्ध्वस्तिरित्यर्थः । यस्मिञ्जन्मनि ज्ञानं तस्मिन्नेव ज्ञानोदयात्प्राक्कालीनकर्मभिः समुच्चयो ज्ञानस्येति तृतीयमाशङ्क्याऽऽह । **रज्ज्वति** । यथा लोके रज्जुरेषेति ज्ञाने सति विद्वान्निमित्तनिवृत्तेः पूर्वकृतानि पलायनादीन्यनुशोचति तथा ज्ञाततत्त्वो बन्धध्वस्तावेतावन्तं कालं वृथैव कर्माकार्षमित्यनुशोचति तस्मादैहिकैरपि ज्ञानात्प्राक्कालीनकर्मभिर्न समुच्चयस्तदधिगमाधिकरणन्यायादिति भावः ॥ ३६५ ॥

**न कर्मव्यापृतिर्मुक्तावाप्त्यादीनामभावतः ॥**
**न च श्रुत्यादयस्तत्र तेन स्यान्न समुच्चयः ॥ ३६६ ॥**

ज्ञानकर्मणोः सर्वप्रकारसमुच्चयाभावे युक्त्यन्तरमाह । **न कर्मेति** । **विद्यां** चाविद्यां चेत्यादिश्रुतेर्**यथाऽन्नं** मधुसंयुक्तमित्यादिस्मृतेश्च समुच्चयमाशङ्क्याऽऽह । **न चेति** । **श्रुतिस्मृतीनां** समुच्चयवादिनीनां क्रमसमुच्चयपरतेति भावः । मानाभावफलमाह । **तेनेति** ॥ ३६६ ॥

---

[1] ख. ैतैर्वेति त॰ ।

**अन्तरङ्गं हि विज्ञानं प्रत्यङ्मात्रैकसंश्रयात् ॥**
**बहिरङ्गं तु कर्म स्याद्बाह्यद्रव्याश्रयत्वतः ॥ ३६७ ॥**

अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलवदिति न्यायात्प्रबलदुर्बलयोर्ज्ञानकर्मणोर्न समुच्चय इत्याह । **अन्तरङ्गं हीति** ॥ ३६७ ॥

**सत्यन्तरङ्गे विज्ञाने बहिरङ्गं न सिध्यति ॥**
**संस्कारकं तु कर्म स्याज्ज्ञानात्त्वज्ञाननिह्नुतिः ॥ ३६८ ॥**

अन्तरङ्गस्यापि बहिरङ्गापेक्षा कार्यवशादविरुद्धा राजान्तरङ्गस्यैव प्रधानस्य शिबिकोद्वाहकादिष्वपेक्षादर्शनादित्याशङ्क्याऽऽह । **सतीति** । मुक्त्यन्तरङ्गे ज्ञाने सति तद्बहिरङ्गं कर्म न भवति तद्धेत्वज्ञानध्वंसादसति कर्मणि ज्ञानस्य नापेक्षेत्यर्थः । अस्तु तर्हि बहिरङ्गस्य कर्मणोऽन्तरङ्गज्ञानापेक्षा[1] मोक्षार्थश्च समुच्चय इति नेत्याह । **संस्कारकमिति** । कर्मणां मोक्षोपायत्वे ज्ञानापेक्षया समुच्चयो न च तदस्ति तेषां कार्यान्तरे विनियोगस्य प्रागुक्तत्वादित्यर्थः । ज्ञानमपि पुरुषसंस्कारकं वैदिकोपायत्वात्कर्मवदित्याशङ्क्याऽऽह । **ज्ञानादिति** । विमतमज्ञाननिवर्तकं तत्त्वज्ञानत्वाद्रज्जुज्ञानवदित्यर्थः ॥ ३६८ ॥

**यथावस्त्वात्मविज्ञानं मोहमात्राश्रयाः क्रियाः ॥**
**सम्यग्ज्ञाने कुतः कर्म कर्महेतूपमर्दनात् ॥ ३६९ ॥**

तर्हि कर्माप्यज्ञाननिवर्तकं पुमर्थोपायत्वाज्ज्ञानवदित्याशङ्क्य तत्त्वज्ञानत्वमुपाधिरित्याह । **यथेति** । किंच कर्म नाज्ञाननिवर्तकमयथावस्त्वनुरोधित्वाद्रूप्यधीवदित्याह । **मोहेति** । केवलकर्मणोऽज्ञानानिवर्तकत्वेऽपि समुच्चितस्य तन्निवर्तकत्वमित्याशङ्क्याऽऽह । **सम्यगिति** । ज्ञानस्य कर्मनिवर्तकत्वानुपलम्भात्कथं तत्काले कर्माभावस्तत्राऽऽह । **कर्मेति** ॥ ३६९ ॥

**नित्यप्राप्तं च विज्ञानं प्रतीचः संनिधेः सदा ॥**
**कर्मानित्यं पृथग्रूपं नित्यं चानित्यबाधकम् ॥ ३७० ॥**

कर्मवज्ज्ञानस्याप्यज्ञानजत्वात्तत्समानयोगक्षेमत्वमित्याशङ्क्याऽऽह । **नित्येति** । ज्ञानमात्मस्वभावश्चित्प्रकाशस्तस्य नित्यत्वान्न कर्मतुल्यतेत्यर्थः । तन्नित्यत्वे हेतुमाह । **प्रतीच इति** । सर्वत्र सर्वदा प्रतीचः स्वरूपत्वेन सत्त्वात्तदात्मकचित्प्रकाशाख्यं ज्ञानं नित्यमपि वाक्योत्थबुद्धिमध्रीचीनमेव सहेतुं बन्धं धुनोतीति भावः । ज्ञानवत्कर्मापि नित्यमन्यथा संसारस्यादित्वापत्तेरित्याशङ्क्याऽऽह । **कर्मेति** । नहि कर्तव्यतया विधीयमानं कर्म नित्यं न च संसारस्येदंप्रथमता तद्धेत्वज्ञानस्यानादित्वादित्यर्थः । कर्मानित्यत्वे हेतुमाह । **पृथगिति** । नानाकारकतन्त्रत्वान्नानाकर्मातोऽनित्यमित्यर्थः । ज्ञानकर्मणोर्नित्यत्वानित्य-

---

1 ख. °पेक्षायां स° ।

त्वाभ्यां सिद्धमर्थमाह । **नित्यं चेति** । निष्प्रपञ्चब्रह्माकारधीवृत्तिविशेषसमेतो दृगात्मा स्वविपरीतावभासनिमित्तमज्ञानं सकार्यमुच्छिनत्त्यतो विलक्षणस्वभावयोर्ज्ञानकर्मणोर्न समुच्चितिरिति भावः ॥ ३७० ॥

**क्षयी कर्मार्जितो लोकः स्वराड्ब्रह्मावबोधतः ॥**
**लब्धे त्रैलोक्यराज्ये ना भिक्षामाद्रियते तु कः ॥ ३७१ ॥**

तत्रैव हेत्वन्तरमाह । **क्षयीति** । विरुद्धफलत्वाद्धीकर्मणोश्चित्रादर्शादिवन्न समुच्चय इत्यर्थः । ननु मोक्षमाणस्य ज्ञाने सति मोक्षकामनानिवृत्तावपि कर्मफलाभिलाषानिवृत्तेस्तदर्थं कर्मानुष्ठाने समुच्चयसिद्धिस्तत्राऽऽह । **लब्ध इति** ॥ ३७१ ॥

**भिन्नप्रकरणं ज्ञानं काङ्क्षितं न च कर्मणा ॥**
**विरोधाच्च स्वतन्त्रं तद्गुणभूतं न कस्यचित् ॥ ३७२ ॥**

ज्ञानकर्मणोर्गुणप्रधानत्वेन समप्रधानत्वेन वा समुच्चयमुक्त्वा कर्म प्रधानं गुणो ज्ञानमिति यः समुच्चयः स प्राकरणिको वा श्रुत्यादिगम्यो वेति विकल्प्याऽऽद्यं प्रत्याह । **भिन्नेति** । द्वितीयं दूषयति । **काङ्क्षितमिति** । कर्मणा ज्ञानस्यानाकाङ्क्षितत्वात्तयोः सामान्यसंबन्धासिद्धौ न श्रुत्यादिभिस्तद्विशेषसिद्धिरित्यर्थः । किं चोपकार्यस्योपकारकेऽपेक्षा न चानयोस्तद्भावो विरुद्धस्वभावत्वात्तन्न समुच्चय इत्याह । **विरोधाच्चेति** । ज्ञानस्य कर्मागुणत्वेऽपि स्वफलं प्रति गुणत्वान्न स्वातन्त्र्यमित्याशङ्क्याऽऽह । **गुणेति** । ज्ञानफलं कैवल्यं तदभिन्नमिति भावः ॥ ३७२ ॥

**यतो वस्त्वनुरोध्येतन्न ज्ञातृवशवर्त्यतः ॥**
**अज्ञानोच्छित्तये ज्ञानं स्वतन्त्रं तेन भण्यते ॥ ३७३ ॥**

यथा कर्म कर्तृतन्त्रं तथा ज्ञानमपि ज्ञातृतन्त्रं तन्न स्वातन्त्र्यमित्याशङ्क्याऽऽह । **यत इति** । तथाऽपि वस्तुतन्त्रं कथं स्वतन्त्रमित्याशङ्क्याह । **अज्ञानेति** । वस्तुतन्त्रत्वं तेनेति परामृश्यते । स्वतन्त्रं स्वफले हेत्वन्तरानपेक्षमिति यावत् ॥ ३७३ ॥

**अनावृत्तिश्च कर्मभ्यो न क्वचिच्छ्रूयते स्फुटम् ॥**
**ज्ञानादेव त्वनावृत्तिः श्रूयते बहुशः श्रुतौ ॥ ३७४ ॥**

कर्म प्रधानं गुणो ज्ञानमिति समुच्चयो मा भूत्तद्विपरीतस्तु स भविष्यतीत्याशङ्क्याऽऽह । **अनावृत्तिश्चेति** । मुक्तिहेतोर्ज्ञानस्य तदहेतुषु कर्मसु नापेक्षा तन्न विपरीतसमुच्चयोऽप्यमानत्वादित्यर्थः । न च पुनरावर्तत इत्यादौ कर्मभ्यो मुक्तिः श्रुतेत्याशङ्क्याऽऽह । **स्फुटमिति** । न हि तत्र कर्मणामनावृत्तिहेतुत्वं स्पष्टमुपासीनस्य क्रममुक्तिप्रतिपादनात्कार्यात्यये तदध्यक्षेण सहेत्यादिन्यायादिति भावः । कर्मवज्ज्ञानमपि नानावृत्तिहेतुर्वैदिकसाधनत्वादित्याशङ्क्याऽऽह । **ज्ञानादिति** । ज्ञानस्यानावृत्तिसाधनत्वं **फला-**

---

१ ख. तन्नायं वि° ।

ध्याये साधितमिति तुशब्दार्थः । तत्र श्रुतेरन्यपरत्वमाशङ्क्याऽऽह । **बहुश्च इति ।** निचाय्य तं मृत्युमुखात्प्रमुच्यत इत्याद्या श्रुतिः ॥ ३७४ ॥

**एकरूपं च विज्ञानमेकरूपात्ममेयतः ॥**
**भिन्नरूपाणि कर्माणि बहुकारकसंश्रयात् ॥ ३७५ ॥**

ज्ञानकर्मणोर्गुणप्रधानत्वेन समुच्चयं निरस्य समप्रधानतया तमेव युक्त्यन्तरेण विघटयति। **एकरूपं चेति ।** कर्मणामपि ज्ञानवदेकरूपत्वमाशङ्क्याऽऽह । **भिन्नेति** ॥३७५॥

**एकरूपस्य मोक्षस्य भिन्नरूपं न साधनम् ॥**
**एकरूपस्य मोक्षस्य ह्येकरूपं हि साधनम् ॥ ३७६ ॥**

अनेकरूपाण्येव तानि ज्ञानस्य मुक्तौ सह कुर्वन्तीत्याशङ्क्याऽऽह । **एकरूपस्येति ।** नित्यस्य मोक्षस्य ज्ञानमपि न साधनं नित्यत्वव्याघातादित्याशङ्क्याऽऽह । **एकरूपस्येति ।** योग्यं योग्येन संबध्यत इति न्यायमेकेन हिशब्देन द्योतयति । द्वितीयेन नित्यस्यापि मोक्षस्य प्रतिबन्धध्वस्तौ ज्ञानापेक्षेति सूचयति ॥ ३७६ ॥

**तस्मात्कर्मफलं नाना नानाकर्मसमुद्भवम् ॥**
**देवमानुषतिर्यक्षु कर्तुः शास्त्रैर्निदर्शितम् ॥ ३७७ ॥**

तर्हि किंफलानि कर्माणीत्याशङ्क्याऽऽह । **तस्मादिति ।** एकरूपस्य मोक्षस्याकर्मफलत्वं तच्छब्दार्थः । संसारसुखस्य नानात्वे हेतुमाह । **नानेति ।** कस्येदं कर्मफलमिति तत्राऽऽह । **देवेति ।** नानायोनिषु वर्तमानस्य कर्तुस्तत्फलं न ब्रह्मजिज्ञासोरिति शास्त्रैरिति तु कामयमान इत्यादिभिरुक्तमित्यर्थः ॥ ३७७ ॥

**अन्ये तु मन्वते केचिद्गम्भीरन्यायवादिनः ॥**
**भेदस्य विलयो वेदे गम्यते कस्यचित्क्वचित् ॥ ३७८ ॥**

कामध्वंससमुच्चयपक्षप्रत्युक्त्या कर्मकाण्डस्य विविदिषाद्वारा ब्रह्मकाण्डशेषतेति पारिशेष्यादुक्तम् । अथ प्रपञ्चविलयद्वारा कर्मकाण्डस्येतरशेषत्वात्पारिशेष्यासिद्धिरिति मतमुत्थापयति । **अन्ये त्विति ।** वक्ष्यमाणपक्षस्य सुकरं निरसनमिति सूचयितुमुपहसति । **गम्भीरेति ।** न्यायाभासवादिन इति यावत् । प्रपञ्चाभावपरत्वे शास्त्रस्य न प्रपञ्चोऽस्तीत्येतावताऽलं किं बहुप्रपञ्चेन वेदेनेत्याशङ्क्याऽऽह । **भेदस्येति ।** निषेध्यबाहुल्यान्निषेधकवेदस्यापि युक्तं तथात्वमित्यर्थः ॥ ३७८ ॥

**देहात्मभावविलयः स्वर्गकामपदे यथा ॥**
**देहाद्भिन्नोऽधिकार्यत्र स्वर्गभोग्यवगम्यते ॥ ३७९ ॥**

कर्मविधयस्तत्कार्यत्वं बोधयन्ति न प्रपञ्चाभावमित्याशङ्क्याऽऽह । **देहेति ।** यथा काण्डयोरुक्तरीत्या शेषशेषित्वं तथा दृष्टान्तः स्वर्गकामपदोपेतवाक्ये देहात्मत्वस्य लयो गम्यते तेन तल्लयपरत्वमित्यर्थः । ननु यागस्य स्वर्गसाधनत्वपरमिदं न कस्यचिल्लयपरमित्याश-

ङ्क्याऽऽह । देहादिति । अत्र हि कालान्तरादिगतस्वर्गभोगशक्तोऽधिकारी सिद्धः स च देहाद्भिन्नो देहस्यात्रैव भस्मीभूतस्य तद्भोगायोगादतो देहात्मत्वलये प्रमातव्ये तत्रैव वाक्यतात्पर्यं साधनपरत्वे देहातिरेकोऽशक्यप्रमो मनुष्योऽहमित्यध्यक्षबाधाल्लय-परत्वे तु न तद्बाधस्तत्परस्य तद्विरोधेऽपि नायं सर्प इत्याप्तोक्तिवद्बलवत्त्वाद्यागस्य च स्वर्गसाधनत्वमन्यपरेणापि वाक्येन शक्यं देवताधिकरणन्यायेन प्रमातुमिति स्वर्गकाम-वाक्यं लयपरमेवेति भावः ॥ ३७९ ॥

गोदोहनेनेत्यत्रापि विलयोऽन्याधिकारिणः ॥
अधिकृताधिकारित्वान्नान्योऽधिक्रियते यतः ॥ ३८० ॥

तथाऽपि वाक्यान्तरस्य तत्परत्वाभावात्काकतालीयमेतदित्याशङ्क्याऽऽह । गोदो-हनेनेति । गोदोहनेन पशुकामस्य प्रणयेदित्यत्र दर्शाद्यधिकारिणः सकाशादन्यस्य स्वतन्त्रस्याधिकारिणो लयधीरित्यत्र हेतुमाह । अधिकृतेति । यः स्वर्गकामः स दर्शा-द्यधिकृतस्तस्यैव पशुकामस्य सतो गोदोहनेऽधिकारित्वान्न स्वतन्त्रोऽत्राधिकारीति युक्तं गोदोहनवाक्यस्यापि विलयपरत्वमित्यर्थः ॥ ३८० ॥

रागाद्युत्थप्रवृत्तीनां निषेधेषु लयोऽञ्जसा ॥
विधिष्वपि लयैस्तासां[1] कार्यान्तरनियोगतः ॥ ३८१ ॥

काम्यविधीनां लये तात्पर्यमुक्त्वा निषेधवाक्यानामपि तत्रैव तात्पर्यमाह । रागा-दीति । नित्यनैमित्तिकविधीनां तत्परत्वमाह । विधिष्विति । नित्यनैमित्तिकविधिष्वपि स्वाभाविकप्रवृत्तीनामभावो भातीत्यर्थः । कथं तर्हि विधिनिषेधयोर्भेदस्तत्राऽऽह । कार्या-न्तरेति । सायंप्रातरग्निहोत्रं जुहुयादिति व्यापारान्तरनियोगमुखेन तत्काले कार्यान्तर-स्यानवसरमापादयन्तस्तदभावे नित्यादिविधयः पर्यवस्यन्तीत्यर्थः ॥ ३८१ ॥

लोकेऽपि चानभिप्रेतात्पथः साक्षान्निवारणम् ॥
मार्गान्तरोपदेशाद्वा वेदेऽप्येवं प्रतीयताम् ॥ ३८२ ॥

कल्पनालाघवात्तेऽपि कस्मादभावमेव नाभिदधीरन्नित्याशङ्क्याऽऽह । लोकेऽपीति । लोकवेदयोरेकप्रस्थानतया लोकानुसारिणि वेदे गौरवं नावतरतीत्यर्थः ॥ ३८२ ॥

एवं रागादिहेतूत्थप्रवृत्तिलयवर्त्मना ॥
आत्मज्ञानाधिकारार्था निःशेषा विधयः स्थिताः ॥ ३८३ ॥

कर्मकाण्डस्य प्रपञ्चलयद्वारा ज्ञाननियोगशेषत्वमुपसंहरति । एवमिति । प्रवृत्तिलयो देहादिलयस्याप्युपलक्षणम् । अधिकारो नियोगः । विधिशब्दो निषेधानामप्युपलक्ष-णम् ॥ ३८३ ॥

---

[1] ख. °यस्त्वासां ।

ङ्क्याऽऽह । **यत इति** । अविद्यानाशार्थं वस्तुबोधस्यैव यतोऽपेक्षितत्वमतः प्रपञ्चलयो निष्फलो न साध्यतामर्हतीति कुतस्तद्द्वारा नियोगापेक्षेत्यर्थः ॥ ३९१ ॥

**रज्जुज्ञानाद्धि सर्पादिप्रपञ्चविलयो यतः ॥**
**सर्पाभासलयेऽपीयं रज्जुस्तमसि नेक्ष्यते ॥ ३९२ ॥**

ज्ञाननियोगवत्तत्त्वज्ञानमपि नाज्ञानध्वंसे हेतुर्ज्ञातरज्जुतत्त्वस्यापि पुनस्तत्र सर्पभ्रमोपलम्भादित्याशङ्क्याऽऽह । **रज्ज्विति** । यतो यथोक्तज्ञानात्तल्लयोऽवगतोऽतस्तत्त्वज्ञानादज्ञानध्वस्तिः संमतेति शेषः । कथं तर्हि कालान्तरे तत्र सर्पधीरित्याशङ्क्याज्ञानान्तरादिति मत्वा तत्र मानमाह । **सर्पेति** । रज्जावारोपितसर्पाभासलयेऽपि कालान्तरे तमसि सत्येव सा नोपलभ्यते तेन विपर्यासान्तरवशात्तस्यां प्राचीनसर्पाभासहेतोरज्ञानाज्ज्ञानाभावाच्चान्यज्ज्ञानं गम्यते । न चैकस्मिन्ननेकाज्ञानस्वीकारेऽपराद्धान्तो यावन्ति ज्ञानानि तावन्त्यज्ञानानीत्युपगमात् । न च ब्रह्मण्यपि रज्जुवदनेकाज्ञानप्रसक्तावमुक्तिः सविशेषत्वनिर्विशेषत्वाभ्यां तयोर्भेदात्तस्मिन्नपि तदाकारभेदाङ्गीकाराच्च **भूयश्चान्ते** विश्वमायानिवृत्तिरिति श्रुतेश्चेति भावः ॥ ३९२ ॥

**लयनिष्ठे प्रमाणे नो वस्तुगोचरभेदतः ॥**
**अथ वस्तुनि तन्मानं न लये स्यान्न च द्वये ॥ ३९३ ॥**

अनादेः सादेर्भागस्य कृत्स्नस्य वा प्रपञ्चस्य लयो न नियोगविषय इत्युक्तम् । किंच प्रपञ्चलयमात्रं वा शास्त्रीयं वस्तुमात्रं वा द्वयं वा नाऽऽद्य इत्याह । **लयेति** । शास्त्रे प्रपञ्चलयमात्रविषये वस्तु न सिध्यति तस्य तद्विषयादन्यत्वान्मानान्तरस्य चातत्साधकत्वादित्यर्थः । द्वितीयमनूद्य दूषयति । **अथेति** । तृतीयं निरस्यति । **न चेति** । एकवाक्यत्वमेकार्थत्वेन व्याप्तमिह व्यापकं व्यावर्तमानमेकवाक्यत्वमपि व्यावर्तयतीति भावः ॥ ३९३ ॥

**भाव्युच्छेत्तुमशक्यस्ते भूतोऽप्युपरतः स्वतः ॥**
**प्रपञ्चो वर्तमानस्तु कार्यत्वान्नश्यति स्वतः ॥ ३९४ ॥**

किंच ज्ञाननियोगविषयो भाविनो भूतस्य भवतो वा प्रपञ्चस्य ध्वंसो नाऽऽद्य इत्याह । **भावीति** । अप्राप्तेरिति शेषः । न द्वितीय इत्याह । **भूतोऽपीति** । न तृतीय इत्याह । **प्रपञ्च इति** । स्वतो नियोगं विनेति यावत् ॥ ३९४ ॥

**श्रुतेर्विलयतात्पर्ये फलमाकस्मिकं भवेत् ॥**
**फलार्था चेल्लये न स्यान्नोभयं वाक्यभेदतः ॥ ३९५ ॥**

यत्तु कर्मश्रुतीनां प्रपञ्चाभावे तात्पर्यमिति तत्र किं तदभावमात्रे तासां तात्पर्यं स्वर्गादिफले वोभयत्र वा नाऽऽद्य इत्याह । **श्रुतेरिति** । कर्मश्रुतीनां प्रपञ्चाभावमात्रपरत्वे कर्मण्यनात्मपर्यादज्ञानहेतुभावस्य तस्याननुष्ठानादकृतकर्मणश्च पुंसः स्वर्गादि भव-

दाकस्मिकं स्यादित्यर्थः । द्वितीयमनुभाष्य दूषयति । **फलेति** । कर्मश्रुतिः स्वर्गादेर्यागादेश्च साध्यसाधनसंबन्धपरा चेन्न लये तात्पर्यवती स्यात्तथा च ज्ञानकामस्य प्रपञ्चध्वंसे नियोग इति कल्पनाविहतिरित्यर्थः । तृतीयं प्रत्याह । **नेति** ॥ ३९५ ॥

**प्रपञ्चविलयेनैव सर्वानर्थप्रहाणतः ॥**
**पुरुषार्थस्य संसिद्धेर्विद्या नैष्फल्यमापतेत् ॥ ३९६ ॥**

कर्मश्रुतीनां प्रपञ्चध्वंसपरत्वे दोषान्तरमाह । **प्रपञ्चेति** । तथाच ब्रह्मविदाप्नोति परमित्यादिब्रह्मकाण्डाप्रामाण्यमिति भावः ॥ ३९६ ॥

**अत ऐकात्म्ययाथात्म्यज्ञानादज्ञानहानतः ॥**
**सिद्धे पुमर्थे विलयकल्पना निष्प्रयोजना ॥ ३९७ ॥**

ज्ञानादज्ञानहानान्न तद्वैफल्यमित्याशङ्क्याऽऽह । **अत इति** । यतो ज्ञानावैफल्यार्थं ज्ञानादज्ञानहानिरिष्टाऽतस्तेनैव सर्वानर्थहानादनौपाधिकस्वरूपावस्थानलाभादफलः प्रपञ्चध्वंसो ज्ञानहेतुत्वं च तस्यान्योन्याश्रयतया निरस्तमित्यर्थः ॥ ३९७ ॥

**स्वकार्योपक्षयादेव विधीनां च परस्परम् ॥**
**कुत एकाधिकारत्वमपेक्षाभावतो वद ॥ ३९८ ॥**

यत्तु कर्मविधीनां ज्ञानाधिकारहेतुत्वादेकाधिकारत्वमिति तत्राऽऽह । **स्वकार्येति** । कर्मज्ञानविधीनामेकाधिकारत्वं कुतो हेतोस्त्वं वद तेषां स्वकार्योपक्षयादेवान्योन्यमपेक्षाभावादित्यन्वयः । अङ्गप्रधानविधीनामन्योन्याकाङ्क्षाणामेकाधिकारता न मिथोनपेक्षाणामधिकारविधीनामेते चाधिकारविधयोऽतो मिथोनपेक्षाः स्वस्वफले पर्यवस्यन्तः कथमेकाधिकाराः स्युरित्यर्थः ॥ ३९८ ॥

**विधीनां चापि सर्वेषां निषेधवचसां तथा ॥**
**नामादिलयनिष्ठत्वे ह्यभ्युपेतेऽप्रमाणके ॥**
**अनिमित्तोऽपवर्गोऽपि शास्त्रं चैवमनर्थकम् ॥ ३९९ ॥**

लयपरत्वे दोषान्तरमाह । **विधीनां चेति** । विधिनिषेधानां नामरूपकर्मात्मकप्रपञ्चाभावपरत्वे वेदत्वाविशेषात्तत्त्वमादेरपि तत्परत्वान्मोक्षोपायश्रवणादिविधायकाभावादविहितस्याननुष्ठानात्तत्त्वज्ञानासिद्धौ स्वर्गवदपवर्गस्याप्याकस्मिकत्वप्राप्तिरित्यर्थः । अस्तु स्वर्गापवर्गयोराकस्मिकत्वं तत्राऽऽह । **शास्त्रं चेति** ॥ ३९९ ॥

**स्वर्गादिकार्यमार्गेण मन्यसे यदि कर्मणाम् ॥**
**सोपानपङ्क्तिगत्येव हर्म्यपृष्ठाधिरोहणम् ॥**
**आत्मज्ञानाधिकारानुप्रवेशित्वं भविष्यति ॥ ४०० ॥**

काण्डयोर्मुक्तिफलत्वान्नाफलत्वं न च स्वर्गादेराकस्मिकत्वं मुक्तिद्वारत्वादिति शङ्कते । **स्वर्गादीति** । यदि मन्यसेऽग्निहोत्रादीनां देहादिलयद्वारा स्वर्गादिप्रापणेन ज्ञानि-

योगशेषत्वमिति संबन्धः । कर्माणि स्वर्गादिद्वारा ज्ञानाधिकारहेतवश्चेत्तेषां स्वर्गादिष्वेवावसानसंभवात्कुतोऽन्यशेषतेत्याशङ्क्याऽऽह । **सोपानेति** । यथा प्रासादशिखरमारुरुक्षुः सोपानपर्वक्रमेण तदारोहत्येवं मुमुक्षुरपि स्वर्गादिद्वारा मोक्षमारोक्ष्यत्यतः सोपानगमनस्य प्रासादारोहशेषत्ववत्स्वर्गादिफलकर्मणां ज्ञाननियोगशेषतेत्यर्थः ॥ ४०० ॥

**यथैव नगराध्वस्थग्रामगत्युपदेशनम् ॥**
**नगराध्वोपदेशस्य शेषत्वं प्रतिपद्यते ॥ ४०१ ॥**

सोपानगमनस्य हर्म्यारोहणशेषत्वं प्रत्यक्षं नैवं स्वर्गादिफलकर्मणां ज्ञाननियोगशेषत्वं प्रामाणिकमित्याशङ्क्याऽऽह । **यथेति** । तथा कर्मविधयोऽपि देहादिलयबोधनपूर्वकं स्वफलद्वारा ज्ञाननियोगशेषा इति शेषः । विमता ज्ञाननियोग शेषा ज्ञानार्थिनं प्रत्युपदिश्यमानत्वाद्यो यदर्थिनं प्रत्युपदिश्यते स तच्छेषो यथा नगरं जिगमिषुं प्रति मार्गग्रामगत्युपदेशो नगरगतिशेष इति भावः ॥ ४०१ ॥

**नाकामितत्वाद्ग्रामादिगतेर्युक्तैव शेषता ॥**
**स्वर्गादेर्न तु शेषत्वं पुरुषार्थत्वहेतुतः ॥ ४०२ ॥**

हेत्वसिद्धिं मत्वा ब्रूते । **नेति** । स्वार्थे फलवैकल्योपाधेश्च नानुमानमित्याह । **अकामितत्वादिति** । नगरमार्गस्थग्रामादिगतेर्नगरं जिगमिषोरनर्थित्वात्तदुक्तेः स्वार्थे विफलत्वात्फलवन्नगरगत्युक्तिशेषता युक्तैवेत्यर्थः । साधनव्याप्तिं धुनीते । **स्वर्गादेरिति** । कर्मविधीनां न ज्ञाननियोगशेषत्वं स्वर्गादेः पुमर्थस्य विध्युद्देशे श्रवणात्तत्र साधनव्याप्तिरित्यर्थः ॥ ४०२ ॥

**अथोपच्छन्दनार्थानि स्वर्गादीनि विमुक्तये ॥**
**नगराप्तौ तदध्वस्थग्रामादिगुणगीरिव ॥ ४०३ ॥**

स्वर्गादेरविवक्षितत्वात्तत्र कर्मविध्यपर्यवसानात्तेषां ज्ञाननियोगशेषतेति साधनव्याप्तिमेव मन्वानः शङ्कते । **अथेति** । ये सांसारिकसुखविलक्षणं मोक्षं न कामयन्ते तेषां तदर्थप्रवृत्तये प्ररोचनार्थानि स्वर्गादीन्यतस्तदर्थकर्मवाक्यानि न स्वार्थनिष्ठानीत्यर्थः । स्वर्गादीन्यविद्यमानानि चेन्न शशविषाणवत्प्ररोचनार्थानि विद्यमानानि चेन्न कर्मविधीनामन्यशेषतेत्याशङ्क्याऽऽह । **नगरेति** । यथोपच्छन्दनेन बालं नगरं निनीषुस्तन्मार्गस्थग्रामादिष्वन्नादिभोगोपकरणान्यादिशति तथा मोक्षप्ररोचनाय कर्मविधयोऽपि स्वर्गादीन्यादिश्य तद्भोगोत्थवैराग्यभाजो ज्ञाननियोगमापद्य मोक्षे पर्यवस्यन्तीत्यर्थः ॥ ४०३ ॥

**नैवं मानान्तरतः सिद्धेर्नृवाक्ये तत्समञ्जसम् ॥**
**वेदे तु वक्त्रभावत्वादभिप्रायाद्यसंभवः ॥ ४०४ ॥**

कर्मविधीनां ज्ञाननियोगशेषत्वं मानान्तराद्गम्यते शब्दाद्वा नाऽऽद्यो दृष्टान्तवैषम्या

१ ख. 'नशे' ।

दित्याह । **नैवमिति** । पौरुषेयवाक्ये प्रलोभनार्थं फलोक्तिर्युक्ता पुरुषाभिप्रायस्य मानान्तरेण ज्ञातुं शक्यत्वादतो नगरमार्गस्थग्रामादिगुणोक्तीनां नगराप्तिशेषतोचिता वेदे त्वपौरुषेये विप्रलम्भाद्यभावान्न फलश्रवणं प्रलोभनार्थं तथाच मानान्तरागोचरार्थे वेदे कुतः श्रुत्यादिना विना शेषशेषितेति भावः । वक्त्रभावत्वाद्वक्तुरसत्त्वादिति यावत् ॥ ४०४ ॥

**यद्वा तत्रैव तात्पर्यं यत्रोपच्छन्द्य नीयते ॥**
**नगराप्तौ तु माभावात्प्रयतेत पुमान्कुतः ॥ ४०५ ॥**

द्वितीयेऽप्यध्वग्रामोक्तेर्नगराप्तिशेषत्वमुपच्छन्दकोऽवगच्छति प्रतिपत्ता वा प्रतिपित्सुर्वा नाऽऽद्यः शब्दप्रयोगस्य परार्थत्वाद्दार्ष्टान्तिके च वक्तुरभावादित्यभिप्रेत्य कल्पान्तरं प्रत्याह । **यद्वेति** । यद्वेत्यवशिष्टपक्षनिषेधार्थं प्रतिपत्ता हि मार्गग्रामोक्तेस्तत्रैव तात्पर्यं प्रत्येति नान्यत्र शब्दान्मानान्तराद्वा नेतुर्नगरप्राप्त्यभिप्रायस्याज्ञातत्वान्न च ज्ञाताज्ञातयोः शेषशेषिता तन्नगराध्वग्रामोक्तेस्तस्मिन्नेव तात्पर्यं श्रोतृगोचरस्तथा च तत्प्रवृत्त्यधीनव्युत्पत्तिर्बालोऽपि मार्गग्रामगत्युक्तेर्नगरगतिशेषत्वं नाऽऽकलयति तथा कर्मविधीनामपि न ज्ञानाधिकारशेषता शाब्दीति भावः ॥ ४०५ ॥

**यदाऽपि वस्तुवृत्तेन नगरावाप्तिसाधनम् ॥**
**ग्रामाप्तिर्नगरप्राप्तिस्तदाऽप्यर्थान्न मानतः ॥ ४०६ ॥**

मार्गग्रामगतेर्नगरगतिशेषतायाः श्रोत्राद्यविषयत्वेऽपि वस्तुतस्तस्यास्तच्छेषत्वाद्ग्रामगत्युक्तेर्नगरप्राप्तौ तात्पर्यवत्कर्मविधीनामपि ज्ञाननियोगे तात्पर्यमतो न दृष्टान्तवैषम्यमित्याशङ्क्याऽऽह । **यदाऽपीति** । वस्तुवृत्तं वस्तुसामर्थ्यं तेन नगराप्तिसाधनं ग्रामाप्तिर्यदाऽपि गम्यते तदाऽपि वाक्याज्ज्ञातस्यार्थस्यापर्यवसानेनाध्वग्रामगतेर्नगरगतिशेषत्वं न शब्दात्कर्मविधीनां तु ज्ञाननियोगशेषत्वं शब्दादिष्टमित्यस्त्येव वैषम्यमित्यर्थः ॥ ४०६ ॥

**अर्थादपि न तात्पर्यं द्रव्यार्जनविधेरिव ॥**
**शब्दमात्रानुसारेण वेदे तात्पर्यधीर्यतः ॥ ४०७ ॥**

अस्तु तर्हि दृष्टान्तसाम्यार्थं कर्मविधीनामप्यर्थाज्ज्ञाननियोगशेषतेत्याशङ्क्याऽऽह । **अर्थादिति** । विधिनिषेधानामर्थादपि न ज्ञाननियोगे तात्पर्यधीस्तदवगतार्थस्य तामन्तरेणानुपपत्त्यभावादित्यर्थः । कर्मकाण्डस्य ज्ञाननियोगार्थत्वाभावे दृष्टान्तमाह । **द्रव्येति** । अस्यार्थः । **चतुर्थे स्थितम्** । यस्मिन्प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणाऽविभक्तत्वात् । ब्राह्मणस्य प्रतिग्रहादिना राजन्यस्य जयादिना वैश्यस्य कृष्यादिनेति तैस्तैर्नियमैर्द्रव्यार्जनमुच्यमानं क्रत्वर्थं पुरुषार्थं वेति **संदेहे** द्रव्यार्जने कस्यचिदधिकाराश्रवणाद्द्रव्यकामस्य तत्कल्पने रागादेव प्रवृत्तिसिद्धेर्विध्यानर्थक्यान्नियमार्थत्वे चोपायान्तरे प्रवर्तमानस्य शास्त्रातिक्रमप्रसङ्गात्क्रत्वपेक्षितद्रव्याप्तिमुखेनोपादानतः क्रत्वर्थताया युक्तत्वात्त-

दर्थं तदिति **पूर्वपक्षे** तादर्थ्ये प्रकरणाद्यभावात्क्रतुसंबन्धव्यभिचारितया पर्णतावद्द्रव्यमुखेन तच्छेषत्वायोगाद्विषयसामर्थ्यावगतस्य ब्राह्मणादेरधिकारेण निरधिकारत्वाभावाद्धनकामस्य सामान्येनोपायान्वेषणं कुर्वतस्तदर्जने प्रवृत्तस्यैव नियमविधेरिष्टत्वात्स्वाधिकारस्वतन्त्रविधिप्रयुक्तद्रव्यार्जनस्य नियतभोजनवत्पुरुषार्थत्वेऽपि न्यायापादितधनस्यैव क्रतुरिति तच्छेषत्वस्यापि संभवाद्द्रव्यार्जनं पुरुषार्थमेव क्रतूपकारकमिति **सिद्धान्तः**। यस्मिन्कृतेऽर्थे प्रीतिः पुंसो भवति तस्यार्थस्य लब्धुमिच्छा शरीरधारणार्था यस्य शरीरं ध्रियते व्यक्तं तस्यास्ति द्रव्यमतो द्रव्यार्जनं पुरुषार्थं प्रीत्या हि तदविभक्तमिति सूत्रार्थः । एवं कर्मकाण्डस्य ज्ञाननियोगार्थत्वाभावेऽपि कथंचिज्ज्ञानोपकारकत्वमस्तीत्यार्थिकमपि तात्पर्यं कर्मकाण्डस्य ज्ञाननियोगे नेष्यते चेत्कुत्र तर्हि तात्पर्यमित्याशङ्क्याऽऽह । **शब्देति ।** उपक्रमादिभ्यः श्रुत्यादिभ्यो वा वेदे तात्पर्यधीस्तथाच कर्मकाण्डेऽप्यज्ञाते संबन्धविशेषे तात्पर्यं श्रुत्यादिगम्यमित्यर्थः ॥ ४०७ ॥

**स्वर्गादौ यदि तात्पर्यं न स्यादैकात्म्यबोधने ॥**
**मुक्तौ चेन्न भवेत्स्वर्गे वाक्यभेदान्न च द्वये ॥ ४०८ ॥**

किंच कर्मकाण्डस्य ज्ञाननियोगशेषत्वे स्वर्गादौ वा मुक्तौ वोभयत्र वा तात्पर्यमाद्ये ज्ञाननियोगशेषत्वासिद्धिरित्याह । **स्वर्गादाविति ।** द्वितीये त्वज्ञातसंबन्धधीविरोधः स्यादित्याह । **मुक्तौ चेदिति** । तृतीयं दूषयति । **वाक्यभेदादिति** ॥ ४०८ ॥

**न च स्वर्गादिकार्याणां प्रयाजार्थसमानता ॥**
**अनुप्रवेशः कल्प्येत येन कार्यान्तरं प्रति ॥ ४०९ ॥**

स्वर्गादिफलश्रुतेरर्थवादत्वेनाविवक्षिततत्वाद्युक्तं कर्मकाण्डस्य फलवज्ज्ञाननियोगशेषत्वमित्याशङ्क्याऽऽह । **न चेति** । विध्युद्देशस्य फलस्याऽऽर्थवादिकफलवदविवक्षितत्वाभावान्न फलवद्विधिकाण्डस्यान्यशेषतेत्यर्थः ॥ ४०९ ॥

**वक्तव्यं च कथं त्वेते दृष्टेनैवोपकारिणः ॥**
**आत्मज्ञानाधिकारस्य यदि तावदिदं मतम् ॥ ४१० ॥**
**रागाद्याक्षिप्तदृष्टार्थप्रवृत्तिप्रतिषेधतः ॥**
**अस्त्वेवं प्रतिषेधेषु निवृत्तेरुपकारतः ॥ ४११ ॥**

यत्तु विधिनिषेधानां दृष्टेनैवोपकारेणाऽऽत्मज्ञानाधिकारहेतुत्वमिति तत्राऽऽह । **वक्तव्यं चेति ।** परेष्टं दृष्टं द्वारमनुभाषते । **यदीति ।** विशिष्टप्रवृत्तिनिषेधाख्यदृष्टद्वारा विधिनिषेधा ज्ञाननियोगस्योपकुर्वन्त्यतो ज्ञानाधिकारप्रवेशद्वारस्य प्रसिद्धत्वान्न किंचिद्वाच्यमित्यर्थः । निषेधेषूक्तनीत्या ज्ञाननियोगं प्रत्युपकारोऽस्तु तदधीननिवृत्तेस्तदुपयोगित्वादित्यङ्गीकरोति । **अस्त्वेवमिति** ॥ ४१० ॥ ४११ ॥

**विधयस्तु कथं रागं निरुन्धन्तीति भण्यताम् ॥**
**न हि ते परिसंख्यार्था नापि चैते नियामकाः ॥ ४१२ ॥**

निषेधवद्विधीनामपि रागादिवारणेन तन्निमित्तप्रवृत्तिवारकत्वाज्ज्ञाननियोगशेषतेत्याशङ्क्याऽऽह । **विधयस्त्विति** । तेऽपि प्रवृत्तिविशेषोक्तिद्वारा रागाद्यधीनां प्रवृत्तिं निरुन्धन्तीत्याशङ्क्याऽऽह । **न हीति** । परिसंख्यानियमापूर्वैस्त्रिविधो विधिस्तत्रोभयत्र प्राप्तौ परिसंख्याविधिः । इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त इतिवत् । न चोभयत्र प्राप्तौ कर्मविधयोऽतो न मुखतोऽन्यनिवृत्तिं फलयन्ति । पक्षे प्राप्तौ नियमविधिः स्वाध्यायोऽध्येतव्य इतिवत् । न तथैते नियमविधयः पाक्षिकप्राप्तिमाश्रित्याप्रवृत्तेः । तन्नार्थादप्यन्यनिवर्तका इत्यर्थः ॥ ४१२ ॥

**अत्यन्ताप्राप्तमर्थं हि विधयो बोधयन्ति नः ॥**
**प्राप्तार्थो यो विधिः सोऽन्यनिवृत्तिफल ईष्यते ॥ ४१३ ॥**

किमात्मकास्तर्ह्येते विधयस्तत्राऽऽह । **अत्यन्तेति** । **उक्तं च**—

"विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते" इति ।

कर्मविधीनामपूर्वविधिपरत्वेऽपि विधित्वादन्यनिवृत्तिफलत्वमितरवदित्याशङ्क्यात्यन्ताप्राप्तार्थाविषयत्वमुपाधिरिति मत्वाऽऽह । **प्राप्तेति** ॥ ४१३ ॥

**सेवासांग्रहणीहावत्तुल्यकार्यतया न च ॥**
**यतोऽनियतकालीनफला वैधी क्रियेष्यते ॥ ४१४ ॥**

कर्मविधीनामपूर्वार्थत्वेऽप्यन्यनिवृत्तिफलत्वं शङ्कते । **सेवेति** । सेवायाः सांग्रहण्याश्चेष्ट्यर्ग्रामफलत्वादेकत्र प्रवृत्तस्यार्थादन्यत्र निवृत्तिवदत्रापि रागाद्युत्थप्रवृत्तेः शास्त्रीयव्यवहारस्य च संसारफलत्वाच्छास्त्रीयव्यवहारे प्रवृत्तस्यार्थादन्यत्र निवृत्तिरतोऽत्यन्ताप्राप्तार्थानामपि कर्मविधीनां स्वाभाविकप्रवृत्तिनिरोधित्वमस्तीत्यर्थः । दूषयति । **न चेति** । दृष्टान्तदार्ष्टान्तिकवैषम्यं हेतुमाह । **यत इति** । वैषम्यमेव स्फुटयति । **अनियतेति** । शास्त्रीया प्रवृत्तिर्नियमेनानन्तरफला न भवत्युभयथाऽपि तत्फलोपपत्तेरित्यर्थः ॥ ४१४ ॥

**अदृष्टार्था हि दृष्टार्था रागाद्युत्थाः प्रवृत्तयः ॥**
**ग्रामोपायेन सेवायाः सांग्रहण्याऽविरुद्धता ॥ ४१५ ॥**

तत्र हेतुः । **अदृष्टार्थेति** । शास्त्रीयप्रवृत्तेरदृष्टार्थत्वाददृष्टवशाद्व्यवहितमव्यवहितं च तत्फलं संभवतीत्यर्थः । स्वाभाविकप्रवृत्तीनां वैपरीत्यमाह । **दृष्टार्था इति** । शास्त्रीयस्वाभाविकप्रवृत्तीनां संसारफलत्वेऽप्यवान्तरफलवैलक्षण्यान्न सेवादिवत्तुल्यफलतेति समुदायार्थः । सेवासांग्रहण्योरेकफलत्वमुपेत्य शास्त्रीयान्यप्रवृत्त्योस्तन्नास्तीत्युक्तमिदानीं

१ ख. उच्यते । २ ख. °द्युत्थप्र° ।

तयोरपि न तुल्यफलत्वनियमो ग्रामकामः सांग्रहणीं निर्वपेदितिवत्सेवाया ग्रामफलत्वस्य मानाभावेनानियतत्वात्तयोरेकफलत्वनियमेऽपि वैषम्यं दुर्वारमित्याह । **ग्रामेति** । ग्रामोपायेन सांग्रहण्या सहाविरोधः सेवाया निश्चितो नचाविरुद्धयोर्निवर्त्यनिवर्तकतेत्यर्थः ॥ ४१९ ॥

**क्रियातः फलमित्येवं शास्त्रमेतावति ममा ॥**
**क्रमेण युगपद्वाऽतः सेवासांग्रहणीहयोः ॥**
**नानुष्ठाने विरोधोऽस्ति फलभूमार्थिनः क्वचित् ॥ ४१६ ॥**

किंच ग्रामकामः सांग्रहणीमित्यादिशास्त्रं वा सेवाया निवर्तकं सेवासांग्रहण्योर्युगपदेकपुरुषानुष्ठानानर्हत्वाद्वा सांग्रहणी सेवां निवर्तयति तदनुष्ठानादिष्टग्रामाप्तेरनुपयोगादर्थाद्वा सेवाननुष्ठानं नाऽऽद्य इत्याह । **क्रियात इति** । सांग्रहण्याः समग्राङ्गोपसंहारवत्या ग्रामहेतुत्वमात्रं शास्त्राद्गम्यते न सेवायास्तद्धेतुत्वाभाव एकस्य वाक्यस्योभयत्रातात्पर्यात् । **उक्तं हि**—"काम्येषु चैवमर्थित्वात्" [ पू० मी० ६ । ३ । ८ ] वैश्वदेवीं सांग्रहणीं निर्वपेद्ग्रामकाम इत्यत्र विगुणाऽपि सा प्रयोक्तव्या सर्वाङ्गसंयुक्ता वेति **संशये** विकृतिषु प्रधानमात्रोपदेशादुपदिष्टविषयत्वादाधिकारस्याऽऽतिदेशिकाङ्गानपेक्षया नित्येष्विव विगुणाऽपि सा प्रयोक्तव्येति प्राप्ते प्रकृताविवितिकर्तव्यतान्वितस्य करणत्वादिहापि फलश्रवणादवश्यं करणीभूतस्य विषयत्वादनितिकर्तव्यताकस्य तदयोगात्प्रकृतिवत्काम्यविकृतावपि सर्वाङ्गोपसंहार इति स्थितं **षष्ठे** "असंयोगात्तु नैवं स्यात्" इत्यत्र तस्मान्न सांग्रहणीशास्त्रं निवर्तकमित्यर्थः । न द्वितीय इत्याह । **क्रमेणेति** । पूर्वापरसागरगतिवदपर्यायमेकपुरुषानुष्ठानानर्हत्वं न सेवासांग्रहण्योरस्त्येकस्मिन्नेवाहनि तयोरनुष्ठानेऽप्यविरोधाद्यद्वा कतिपयेष्वहःसु सेवामपरेषु सांग्रहणीमप्यनुतिष्ठत्यविरोधात् । अतः सांग्रहणी सेवां न निवर्तयतीत्यर्थः । न तृतीय इत्याह । **फलेति** । सांग्रहणी ग्राममात्रं साधयति सेवासहिता तु महान्तं ग्राममतश्च कालविशेषे फलातिशयं काङ्क्षतः साधनद्वयानुष्ठानयोगादर्थादपि न सेवाननुष्ठानमित्यर्थः ॥ ४१६ ॥

**रागाद्युत्थप्रवृत्तीनां कार्त्स्न्येन च विरोधतः ॥**
**नैयोगिक्योऽपि नैव स्युर्द्रव्याभावात्प्रवृत्तयः ॥ ४१७ ॥**

किंच वैध्यः प्रवृत्तयो याः काश्चिद्वा स्वाभाविकीः प्रवृत्तीरुन्मूलयन्ति सर्वा वाऽऽद्ये पुंव्यापारवैयर्थ्यं कतिपयाशास्त्रीयप्रवृत्तेरनायासेन निरासंभवादिति मत्वा द्वितीयं दूषयति । **रागादीति** । सर्वास्ता रागाद्युत्थप्रवृत्तीर्वैध्यः प्रवृत्तयो यदि निराकुर्युस्तर्हि द्रव्यार्जनविधिरपि निराकृतः स्यात्तस्यापि रागाक्षिप्तप्रवृत्तिनियामकत्वात् । **यथाऽऽहुः**—

१ क. नैव ।

नियमवचनात्काममदृष्टं कल्प्येत न तु दृष्टहानत इति । तन्निरोधे च द्रव्याभावान्नियोगाधीनप्रवृत्तयो न स्युरिति कर्मकाण्डाप्रामाण्यमित्यर्थः ॥ ४१७ ॥

**दृष्टादृष्टप्रवृत्त्योश्च न विशेषोऽस्ति कश्चन ॥**
**उपायत्वेन काम्यानां रागाद्याक्षिप्तहेतुतः ॥ ४१८ ॥**

शास्त्रीयप्रवृत्त्येतरप्रवृत्त्यनिरोधे हेत्वन्तरमाह । **दृष्टेति** । अदृष्टप्रवृत्तीनां वैधीनां मुक्त्यनुरोधित्वं दृष्टप्रवृत्तीनां तु स्वाभाविकीनां नैवमिति विशेषमाशङ्क्याऽऽह । **उपायत्वेनेति** । स्वाभाविकीभिः प्रवृत्तिभिर्वैध्यः प्रवृत्तयोऽपि काम्यमानफलोपायत्वेन तुल्या इत्यर्थः । स्वाभाविक्यो रागाद्याक्षिप्ता वैध्यस्तु नैवमित्याशङ्क्याऽऽह । **रागादीति ।** उभयीनामपि प्रवृत्तीनां रागादिनिमित्तत्वाविशेषो नहि स्वर्गादिकामनां विना वैध्यः प्रवृत्तयः सिध्यन्तीत्यर्थः ॥ ४१८ ॥

**प्रपञ्चाभिनिवेशित्वहेतौ तुल्येऽपि चानयोः ॥**
**कं विशेषमपेक्ष्यैका चेष्टा मुक्त्यनुरोधिनी ॥ ४१९ ॥**

प्रपञ्चाभिनिवेशपूर्विकाः स्वाभाविक्यः प्रवृत्तयोऽन्यास्तु मोक्षाभिनिवेशनिमित्ता इति विशेषमाशङ्क्याऽऽह । **प्रपञ्चेति ।** गृहक्षेत्राद्यभिनिवेशपूर्वकस्वाभाविकप्रवृत्तिवत्स्वर्गाद्यभिनिवेशपूर्विका वैध्यः प्रवृत्तयस्तथा चैको राशिर्मोक्षहेतुर्नापर इति विशेषासिद्धिरित्यर्थः ॥ ४१९ ॥

**कामोपायत्वमेवाथ नेष्टं यदि च कर्मणाम् ॥**
**उक्तो न्यायः प्रहीयेत फलं चाऽऽकस्मिकं भवेत् ॥ ४२० ॥**

कर्मणां स्वर्गादिफलत्वानङ्गीकारान्न प्रपञ्चाभिनिवेशपूर्वकत्वं तद्युक्तं वैधप्रवृत्तीनां मोक्षहेतुत्वमिति स्वर्गकामाधिकरणपूर्वपक्षन्यायेन शङ्कते । **कामेति ।** षष्ठाद्यराद्धान्तन्यायेन परिहरति । **उक्त इति । अयं भावः—दर्शपूर्णमासाभ्यां** स्वर्गकामो यजेतेत्यादिवाक्येषु स्वर्गयागयोः साध्यसाधनत्वे ज्ञाते स्वर्गो गुणो यागः प्रधानं विपरीतं वेति विशये देवदत्तः पचतीतिवत्स्वर्गकामपदस्य कर्तृसमर्पकत्वमङ्गीकृत्य यागस्य प्राधान्येन स्वर्गस्य गुणत्वेनासाध्यत्वादविवक्षितार्थत्वेन कर्मविधयो ज्ञाननियोगशेषा इति **पूर्वपक्षयित्वा** देवदत्त गामभ्याजेतिवत्स्वर्गकामपदस्य नियोज्यार्पकत्वमुपेत्य स्वर्गस्य प्राधान्येन यागस्य गुणत्वेन साध्यत्वाद्विवक्षितार्थाः कर्मविधयो नान्यशेषा इति **राद्धान्तितम् । तदुक्तम् ।** असाधकं तु तादर्थ्यादिति । प्रीतिर्हि स्वर्गस्तच्छब्दस्य तदव्यभिचारात्तदर्थं कर्मान्यथा साधयितारं नाधिगच्छेत्तस्मात्प्रीत्यर्थत्वात्कर्मणो यागो गुणः स्वर्गः प्रधानमिति सूत्रार्थः । सोऽयमुक्तो न्यायः कर्मणां स्वर्गादिसाधनत्वानभ्युपगमे प्रहतः स्या-

१ ख. कल्पेत ।

दिति । किंच कर्मणां स्वर्गादिफलत्वाभावे स्वर्गादि निर्निमित्तं स्यात्तथा चाकृताभ्यागमकृतनाशौ स्यातामित्याह । **फलं चेति** ॥ ४२० ॥

**सर्वकामाशनेनाथ कृत्स्नकामलयाध्वना ॥**
**यान्ति मुक्त्यानुगुण्यं चेद्धियो वार्त्तमेव तत् ॥ ४२१ ॥**

उक्तदोषपरिजिहीर्षया कामध्वंसपक्षमाश्रित्य शङ्कते । **सर्वेति ।** कर्मविधयस्तावत्कर्मणि पुरुषं प्रेरयन्ति तं च प्रवृत्तं फलानि भोजयन्ति भोगेन च तस्य फलकामनामपनयन्ति । तद्द्वारा च ते मुक्तिहेतुज्ञानाधिकारे पर्यवस्यन्त्यतो न न्यायविरोधो नापि स्वर्गादेराकस्मिकतेत्यर्थः । निराकरोति । **वार्त्तमिति** ॥ ४२१ ॥

**यन्निमित्ता प्रवृत्तिः स्यात्सा कथं तन्निवर्तिका ॥**
**प्रवृत्तोऽपि निवर्तेत न कामोपायकर्मतः ॥ ४२२ ॥**
**उद्विजेताथवा ज्ञानात्सर्वपुंभोगघस्मरात् ॥**
**अपि वृन्दावने शून्य इति कामिवचस्तथा ॥ ४२३ ॥**

कर्मसु प्रवृत्तिर्वा फलरागं निरुणद्धि तत्फलभोगो वा नाऽऽद्य इत्याह । **यन्निमित्तेति ।** फलरागनिमित्ता हि कर्मसु प्रवृत्तिर्नासौ तमेव निरोद्धुमर्हत्युद्देश्यविरोधादित्यर्थः । द्वितीयेऽपि फलभोगः स्वकाले वा स्वप्रागभावकाले वा स्वध्वंसकाले वा फलरागं निवर्तयेत्तत्राऽऽद्यं दूषयति । **यन्निमित्तेति ।** फलरागादनुष्ठानद्वारा भोगस्य प्रवृत्तिः सती न तमेव निवर्तयितुमलं भोगस्य तद्वृद्धिहेतुताया दर्शितत्वादित्यर्थः । द्वितीयं प्रत्याह । **प्रवृत्तोऽपीति ।** फलभोगः स्वप्रागभावकाले फलरागं वारयेच्चेद्वर्तमानकाले कर्मसु प्रवृत्तोऽपि काम्यमानफलोपायकर्मभ्यो निवर्तेत तत्प्रवृत्तिनिमित्तफलरागस्याऽऽगामिफलभोगेनापहस्तितत्वादतो न कदाचित्कर्मसु प्रवृत्तिरित्यर्थः । तृतीयं निराचष्टे । **उद्विजेतेति ।** कर्मफलभोगवासितधीर्भोगावसानकालेऽपि तत्फलमभिलषंस्तद्भोगोच्छेदिकायामात्मज्ञानवार्तायामुद्विजतेऽतः स्वध्वंसकाले फलभोगस्तद्रागानिवर्तक इत्यर्थः । अथेति तृतीयपक्षानुवादः । वाशब्दस्तन्निषेधः । इतरत्तदुपपादनमिति विभागः । यद्वा फलभुक्तिनिमित्ता कर्मप्रवृत्तिर्न सा कर्मादि निवर्तयति स्वव्याघातादित्याह । **यन्निमित्तेति ।** किंच भोगे प्रवृत्तोऽपि पुरुषस्तदपेक्षया तदुपायकर्मणो न निवर्तेत तुल्यभोगार्थं तदुपाये कर्मणि प्रवृत्तिध्रौव्यादित्याह । **प्रवृत्तोऽपीति ।** आत्मज्ञानात्ततो निवृत्तिमाशङ्क्य बुभुक्षोस्तदास्थायोगात्प्रत्युत तस्मादुद्वेगान्नेत्याह । **उद्विजेतेति ।** रागान्धानामात्मज्ञानवार्तायामुद्वेगे मानमाह । **अपीति ।**

"अपि वृन्दावने शून्ये शृगालत्वं स इच्छति ।
न तु निर्विषयं मोक्षं कदाचिदपि गौतम"

इति कामिगीतं वचो भोगादिनिवर्तकज्ञानोद्वेगगमकमित्यर्थः ॥ ४२२ ॥ ४२३ ॥

**उक्तं यदपि वेदेऽस्मिन्कस्यचिद्विलयः क्वचित् ॥**
**तन्नातत्परतस्तूक्तेर्न देहादिलयस्ततः ॥ ४२४ ॥**

प्रपञ्चध्वंसवादिनः स्वयूथ्यानित्थं निरस्य तदुक्तमनुवदति । **उक्तमिति** । दूषयति । **तन्नेति** । तत्र हेतुः । **अतत्परतस्त्विति** । न तावत्कर्मकाण्डं भेदध्वंसपरमज्ञातसंबन्धमात्रपरत्वान्नापि ज्ञानकाण्डं तत्परं निर्भेदवस्तुपरत्वात्ततो न द्वैतलयपरो वेदोऽस्तीत्यर्थः। यत्तु सर्वस्य वेदस्य भेदाभावार्थत्वे स्वर्गकामादिवाक्यं दृष्टान्तितं तत्राऽऽह । **नेति** । न हि स्वर्गकामादिवाक्याद्देहादिलयो गम्यते किंतु स्वर्गादेर्यागादेश्च संबन्धमात्रमित्यर्थः ॥ ४२४ ॥

**श्रुतेऽपि स्वर्गतात्पर्ये कल्पना चेल्लयेऽर्थतः ॥**
**तन्न प्रत्यक्षवचनाद्देहादिलयसिद्धितः ॥ ४२५ ॥**

तस्य संबन्धे तात्पर्यप्रतीतावपि देहादिलये तत्कल्पते[1]ऽन्यथाऽऽमुष्मिके कर्मणि पुरुषं प्रवर्तयितुमसामर्थ्यादिति शङ्कते । **श्रुतेऽपीति** । अनन्यथासिद्धो ह्यर्थः कल्पनां प्रसूते देहात्मत्वलयश्च मानान्तरसिद्धस्तन्निबन्धना पारलौकिकी प्रवृत्तिरतो नात्र कल्पनेति दूषयति । **तन्नेति** ॥ ४२५ ॥

**साक्षाद्धस्तिनि दृष्टेऽपि नहि हस्तिपदानुमा ॥**
**अस्थूलादिवचः साक्षाद्देहादिप्रतिषेधकृत् ॥ ४२६ ॥**

देहादिलयस्य शाब्दत्वे संभवत्यार्थिकत्वं न कल्प्यमित्यत्र दृष्टान्तमाह । **साक्षादिति** । किं तद्वचो मुख्यतो भेदादिलयसाधकं तदाह । **अस्थूलादीति** ॥ ४२६ ॥

**विपर्ययेण येऽप्याहुर्यथोक्तज्ञानकर्मणोः ॥**
**एकाधिकारितां वाच्यं मानं तैर्ज्ञानसंगतौ ॥ ४२७ ॥**

प्रपञ्चध्वंसद्वारा काण्डद्वयसंबन्धं निरस्येतोऽन्यथेत्यारभ्य निरस्तमपि विपर्ययसंबन्धं प्रकरणवाक्यलिङ्गाभावविवरणद्वारा निरसितुं पुनरनुवदति । **विपर्ययेणेति** । कर्मणः शेषित्वं ज्ञानस्य शेषत्वमिति विपर्ययः । एकाधिकारितामेकनियोगप्रयुक्तैकपुरुषनिर्वर्त्यतामित्यर्थः । ज्ञानस्य कर्मशेषत्वे मानं वाच्यमुक्तिमात्रात्तदसिद्धेरिति दूषयति । **वाच्यमिति** ॥ ४२७ ॥

**न तावत्प्रक्रियेहास्ति व्रीह्यादिप्रोक्षणे यथा ॥**
**प्रकृतापूर्वसंबन्धलक्षणापरतः स्थितेः ॥ ४२८ ॥**

प्रोक्षणस्य दर्शादिशेषत्ववज्ज्ञानस्यापि कर्मशेषत्वं प्राकरणिकमित्याशङ्क्याऽऽह । **न तावदिति** । वैधर्म्यदृष्टान्तं विवृणोति । **प्रकृतेति** । अपूर्वेण सह प्रदेयद्रव्यस्य प्रकृतित्वेन संबन्धो यस्य व्रीहिसमुदायस्य सोऽपूर्वसंबन्धः स च दर्शादिप्रकरणे चतुरो

---

१ क. °त्कल्प्यते° ।

मुष्टीन्निर्वपेदित्यत्र प्रकृतस्तल्लक्षणापरत्वेन तद्व्रमकत्वेन व्रीहीन्प्रोक्षतीत्यत्र व्रीहिशब्दस्य स्थितेर्युक्तं व्रीहिप्रोक्षणस्य प्रकरणात्प्रधानापूर्वशेषत्वमित्यर्थः ॥ ४२८ ॥

**व्रीहिशब्दस्य हि व्रीहिस्वरूपे तु निरर्थकम् ॥**
**प्रकृतापूर्वसंबन्धं बोधयेदिति युज्यते ॥ ४२९ ॥**

किमित्यपूर्वीयप्रदेयप्रकृतिद्रव्यतया प्रकृतव्रीहिसमुदायलक्षणत्वं व्रीहिशब्दस्येष्यते व्रीहिस्वरूपमात्रपरत्वमेव किं न स्यादित्याशङ्क्य व्रीहिमात्रे प्रोक्षणस्याशक्यत्वादानर्थक्याच्च लक्षकत्वमेवेत्याह । **व्रीहीति** । यस्मात्प्रकृतमपूर्वसंबन्धं व्रीहिसमुदायं व्रीहिशब्दो लक्षयति तस्माद्युज्यते तत्प्रोक्षणस्य दर्शादिशेषतेति निगमयति । **प्रकृतेति** । बोधयेत्प्रकरणमिति शेषः ॥ ४२९ ॥

**नापि वाक्येन संबन्धो जुहूपर्णमयीत्ववत् ॥ ४३० ॥**
**जुह्वाद्यव्यभिचारित्वकर्मसंगतिकारणात् ॥**
**विनाऽपि प्रक्रियां तेन कर्मोपस्थापयेद्ध्रुवम् ॥ ४३१ ॥**

ज्ञानस्य प्रकरणात्कर्मांशेषत्वेऽपि पर्णमयीत्वस्येव वाक्यात्तच्छेषता स्यादित्याशङ्क्याऽऽह । **नापीति** । वैधर्म्यदृष्टान्तं विवृणोति । **जुह्वादीति** । जुह्वादि द्रव्यं कर्मसंबन्धाव्यभिचारि तदुद्दिश्य पर्णमयीत्वादि यस्य पर्णमयीत्यादिना विधीयतेऽतस्तस्य कर्मसंबन्धे जुह्वादि कारणमिति प्रकरणेन विनाऽपि वाक्यादेव कर्मशेषतेत्यर्थः । तेनेति वाक्योक्तिः । अव्यभिचारित्वेन वैदिककर्मसंबन्धाद्धेतोरेतज्जुह्वादि प्रक्रियां विनाऽपि वाक्यादेव स्वप्रकृतिभूतं पर्णतादि प्रति क्रतुमवश्यमुपनयेदिति योजना ॥४३०॥४३१॥

**वाक्येनैवाभिसंबन्धस्तत्र तस्येति वर्णितम् ॥**
**आत्मज्ञानं तु नैवं स्यान्न तत्प्रकरणे श्रुतम् ॥ ४३२ ॥**

अनारभ्याधीतस्यापि पर्णतादेर्वाक्यादेव क्रतौ संगतिरित्येतत्तृतीये चिन्तितमित्याह । **वाक्येनेति** । अधिकरणं त्वनुक्रान्तम् । प्रकरणवाक्याभ्यां प्रोक्षणस्य पर्णतादेश्च कर्मशेषत्वमुक्त्वा ज्ञानस्य ताभ्यामतच्छेषत्वं वदन्न तावत्प्रक्रियेत्यादिदार्ष्टान्तिकं स्पष्टयति । **आत्मेति** । प्रोक्षणवज्ज्ञानं न कर्मशेषस्तत्प्रकरणे श्रुतत्वाभावात्कर्तव्यस्येतिकर्तव्यताकाङ्क्षादि प्रकरणं न च तज्ज्ञानस्य कर्मशेषत्वेऽस्तीत्यर्थः ॥ ४३२ ॥

**नापि चाव्यभिचारित्वमात्मनः कर्मणेष्यते ॥**[2]
**तेनास्य कर्मसंबन्धो न मानेनोपपद्यते ॥ ४३३ ॥**

नापि वाक्येनेत्यादिदार्ष्टान्तिकं प्रपञ्चयति । **नापीति** । लौकिकवैदिककर्मसाधारण्यादिति शेषः । तथाऽपि श्रुत्यादिना ज्ञानस्य कर्मशेषतेत्याशङ्क्याऽऽह । **तेनेति** । तेन श्रुत्यादिना मानेनेति संबन्धः । ज्ञानं षष्ठ्यर्थः श्रुत्यादेर्निरस्तत्वादिति भावः ॥ ४३३ ॥

---

१ क. °ृक्षा हि प्र° । २ ख. °र्मणाक्ष्य° ।

**एवं चाज्ञातपारार्थ्ये नार्थवादः फलश्रुतिः ॥**
**पृथगेवाधिकारोऽतो यथोक्तज्ञानकर्मणोः ॥ ४३४ ॥**

ज्ञानस्याकर्मशेषत्वे फलितमाह । **एवं चेति** । आत्मज्ञाने पूर्वोक्तनीत्या प्रमितान्यशेषत्वरहिते स्वतन्त्रे सति तस्मिन्फलश्रुतिर्नाभूतार्थवादः—

"विज्ञाते चास्य पारार्थ्ये याऽपि नाम फलश्रुतिः ।
साऽर्थवादी भवेदेव न विज्ञानात्फलान्तरम्"

इति निरस्तत्वाज्ज्ञानं मोक्षहेतुर्न कर्मेति काण्डयोरधिकार्यादिभेदाद्विपर्ययसंबन्धासिद्धिरित्यर्थः । ज्ञानस्य विवक्षितफलत्वे फलितमाह । **पृथगिति** । कर्मवज्ज्ञानस्य फलवत्त्वात्प्रस्तुतयोस्तयोः पृथगेव स्वाभिसंबन्धाद्भिन्नोऽधिकारी काण्डयोरित्युक्तं स्थितमित्यर्थः ॥ ४३४ ॥

**अर्थाक्षेपोऽपि योग्यस्य कर्तुर्भोक्तुश्च युज्यते ॥**
**न तु विध्वस्तभेदस्य स्यादौपनिषदस्य सः ॥ ४३५ ॥**

नन्वात्मधियो नास्ति कर्मशेषत्वे मानमित्ययुक्तमनिर्ज्ञातात्मस्वभावस्याऽऽमुष्मिकेषु कर्मसु प्रवृत्त्यनुपपत्त्या ज्ञानस्य कर्मशेषत्वाक्षेपादर्थापत्तेरत्र लिङ्गात्मनो मानत्वादिति तत्र लिङ्गाभावं प्रपञ्चयन्नाऽऽह । **अर्थेत्यादिना** । अर्थापत्तिः कर्त्रात्मज्ञानस्य कर्मशेषत्वमुपस्थापयत्यकर्त्रात्मज्ञानस्य वाऽऽद्यं प्रत्याह । **अर्थेति** । कर्ता भोक्ता वाऽऽत्मा कर्मणि योग्यस्तज्ज्ञानं विना तत्प्रवृत्त्ययोगादतस्तज्ज्ञानस्यार्थापत्त्या तच्छेषत्वेनाऽऽक्षेपो युक्त इष्टा च तद्धियस्तच्छेषतेत्यर्थः । द्वितीयं दूषयति । **न त्विति** । उपनिषदेकगम्यस्याऽऽत्मनो निरस्तकर्त्रादिभेदस्य कर्मायोग्यत्वात्तज्ज्ञानस्य तत्रानुपयोगाद्विरोधाच्च न तच्छेषत्वेनाऽऽक्षेप इत्यर्थः ॥ ४३५ ॥

**प्रत्यक्षवेदवचनप्रामाण्याद्याश्रयत्वतः[1] ॥**
**आदौ संन्याससंसिद्धेर्ऋणानीति ह्यपस्मृतिः ॥ ४३६ ॥**

ज्ञानस्य कर्मशेषत्वेन काण्डयोरसंबन्धेऽपि **जायमानो** वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते[2] । **ऋणानि** त्रीण्यपाकृत्य मनो मोक्षे निवेशयेदिति **श्रुतिस्मृतिभ्या**मृणापाकरणद्वारा कर्मणां ज्ञाननियोगशेषतेति मतान्तरमाशङ्क्याऽऽह । **प्रत्यक्षेति । ब्रह्मचर्यादेव** प्रव्रजेदित्यादिस्पष्टविधिश्रुतिप्रामाण्यावष्टम्भाद्ब्रह्मचर्याश्रमे स्थितस्यैव संन्याससिद्धिर्यस्मिञ्जन्मनि ज्ञानेऽधिक्रियते तस्मिन्नेव भाव्यमृणापाकरणेनेत्यनियमाद्यदा कदाचित्तत्कर्तव्यतामात्रं श्रुतिस्मृत्योरिष्टमिति भावः । यदि त्वस्मिन्नेव जन्मनि कार्यमृणापाकरणमिति श्रुत्यादेरिष्टोऽर्थस्तदा नार्थवादो विधिविरोधे मानं प्रत्यक्षश्रुतिविरोधे च स्मृतिरमानमित्याह । **ऋणानीति हीति** ॥ ४३६ ॥

---

१ ख. 'ण्यापाश्र' । २ क. 'वा जाय' ।

**न च केवलकर्मभ्यो मुक्तिर्युक्त्योपपद्यते ॥**
**तथाच वक्ष्यते स्पष्टमतो मुक्तिर्न कर्मतः ॥ ४३७ ॥**

ननु ज्ञानस्य मोक्षहेतुत्वे कर्मणां ज्ञाननियोगशेषत्वमृणनिरासद्वारा विधान्तरेण वेति चिन्ता न च ज्ञानं मोक्षहेतुर्मानाभावाच्छ्रुतिस्तु वर्तमानापदेशित्वादपापश्लोकश्रुतिवन्न मानं कर्म पुनस्तद्धेतुः **कर्मणैव** हि संसिद्धिमित्यादिस्मृतेस्तत्राऽऽह । **न चेति ।** वर्तमानापदेशित्वेऽपि ज्ञानान्मोक्षश्रुतिर्नामानं भूतार्थवादित्वात्सुवर्गाय हीत्यादिवत्तदर्थस्य विद्वदनुभवसिद्धतया योग्यानुपलम्भाभावाच्च स्मृतिस्तु शुद्धिद्वारा ज्ञानप्राप्तिविषया मोक्षविषयत्वे **न कर्मणे**त्यादिश्रुतिविरोधादिति भावः । का सा युक्तिर्या केवलकर्मभ्यो मुक्तिं न मृष्यति तत्राऽऽह । **तथा चेति ।** भुज्युविचारादौ वक्ष्यमाणा युक्तिः । फलितमाह । **अत इति** ॥ ४३७ ॥

**न चैकात्म्यपरिज्ञानमभ्यासापेक्षमिष्यते ॥**
**मुक्तये भावनार्थं वा तथा चोर्ध्वं प्रवक्ष्यते ॥ ४३८ ॥**

कर्मभ्यो मोक्षाभावेऽपि ज्ञानमभ्यासापेक्षं तद्धेतुर्न केवलमित्याशङ्क्य **तमेव** विदित्वेत्यादिविरोधान्नैवमित्याह । **न चेति ।** ये तु ज्ञानाभ्यासं मुक्तिहेतुमिच्छन्तो ज्ञानं तदर्थं मन्यन्ते तान्प्रत्याह । **भावनेति ।** भावनार्थं वा ज्ञानं नेष्यत इति संबन्धः । ज्ञानस्य स्वातन्त्र्येण पुमर्थहेतुत्वश्रुत्यादिविरोधादित्यर्थः । ज्ञानमन्यानपेक्षं मोक्षहेतुरित्यत्र भुज्युविचारादौ वक्ष्यमाणामुपपत्तिं सूचयति । **तथा चेति** ॥ ४३८ ॥

**स्वतोऽनुभवतः सिद्धेरैकात्म्याख्यस्य वस्तुनः ॥**
**न स्यात्सांपादिकं ज्ञानमित्येतच्चापि वक्ष्यते ॥ ४३९ ॥**

अथाऽऽत्मज्ञानममानमुपनिषज्जन्यत्वाद्योषाग्निज्ञानवदित्यनुमानात्कुतोऽस्य मोक्षोपायत्वं तत्राऽऽह । **स्वत इति ।** अध्यस्तविषयत्वोपाधेरनुमानायोगाद्युक्ता यथोक्तधियो मुक्तिहेतुतेति भावः । साधनव्याप्तिमाशङ्क्यानध्यस्तविषयत्वेनाऽऽत्मधियो मानत्वं **सर्वोऽपीत्यादि**भाष्यावसरे ज्ञेयमित्याह । **इत्येतच्चेति** ॥ ४३९ ॥

**अन्य आहुः पदार्थत्वात्प्रमाणान्तरगम्यताम् ॥**
**आत्मनो नाऽऽगमात्सिद्धिर्व्रीह्याद्यन्यपदार्थवत् ॥ ४४० ॥**

ऋणापाकरणपक्षनिरासप्रसङ्गेन केवलकर्मणामभ्यासस्य च मुक्तिहेतुत्वं प्रत्युक्तम् । संप्रति वेदान्तेषु जागरादिवासनानिरोधस्य मनोनिरोधस्य वा विधीयमानत्वात्तच्छेषास्ते कर्मविधयश्चेति काण्डयोः संगतिरिति मतमाह । **अन्य इति ।** ननु वेदान्ता न निरोधविधिशेषाः स्वार्थनिष्ठत्वात्प्रत्यक्षवन्नेत्याह । **पदार्थत्वादिति ।** आत्मनो व्रीह्यादिवत्सिद्धार्थत्वान्मानान्तरयोग्यत्वात्तत्संवादविसंवादाभ्यां न वेदान्तगम्यतेत्यर्थः ॥ ४४० ॥

**अन्वयव्यतिरेकाभ्यां जाग्रत्स्वप्नसुषुप्तितः ॥**
**विविच्यातः स्वमात्मानं प्रत्यभिज्ञानतस्तथा ॥**
**माव्यापारसमाप्तत्वान्न भूयस्तदपेक्षिता ॥ ४४१ ॥**

ननु जन्मादिसूत्रे भाष्यकृता नेन्द्रियाविषयत्वे संबन्धाग्रहणादित्यादिना दूषितमात्मनो मानान्तरविषयत्वमित्याशङ्क्य तद्विवेचनपूर्वकमाह । **अन्वयेति ।** अवस्थात्रयं व्यभिचारि साक्ष्यं चाऽऽत्मा त्वव्यभिचारी साक्षी चेत्यादिरूपावन्वयव्यतिरेकौ ताभ्यामतो जागरितादेर्देहाद्यनिरिक्तमात्मानं विविच्य जानन्यः सुप्तः सोऽहं जागर्मीत्यादिप्रत्यभिज्ञानतश्चैक्येन तं प्रतिपद्यमानो न पुनस्तस्मिन्मानमागमाख्यमपेक्षते तद्व्यापारस्याऽऽत्मस्फुरणस्य तदज्ञानहानेर्वा प्रत्यभिज्ञादिना प्रतिपादितत्वादतः प्रतीचो मानान्तरगम्यताया दुर्वारत्वाज्जन्मादिसूत्रमपि चिन्त्यमिति भावः ॥ ४४१ ॥

**तद्वासनानिरोधेऽतः पुमाञ्श्रुत्या नियुज्यते ॥ ४४२ ॥**
**मनसो वा निरोधेऽसौ न तु वस्त्ववबोधने ॥**
**मानान्तरेण तत्सिद्धेर्नात्र व्याप्रियते वचः ॥ ४४३ ॥**

मानान्तरयोग्यप्रतीचि वेदान्तामानत्वे तेषामध्ययनविध्युपात्तानां कथं प्रामाण्यमित्याशङ्क्याऽऽह । **तद्वासनेति ।** तच्छब्देनावस्थात्रयमुच्यते । श्रुत्या यच्छेद्वाङ्मनसी इत्याद्ययेति यावत् । नत्वसौ पुमान्वस्तुनोऽवबोधने नियुज्यते श्रुत्येत्युक्तेऽर्थे पूर्वोक्तं हेतुं स्मारयति । **मानान्तरेणेति ।** प्रागुक्तप्रत्यभिज्ञाद्यत्र मानान्तरं तच्छब्देन सप्तम्या चावबोधो गृह्यते ॥ ४४२ ॥ ४४३ ॥

**स्वयंज्योतिःस्वभावत्वान्निरुद्धस्वान्तवासनः ॥**
**प्रमान्तरानपेक्षोऽपि स्वयमात्मा प्रकाशते ॥ ४४४ ॥**

नन्वात्मनो मानान्तरगम्यत्वे घटवदनात्मत्वापत्तेः प्रत्यभिज्ञाद्यगम्यत्वाद्वेदान्तवेद्यतैवेति नेत्याह । **स्वयमिति ।** आत्मनो युक्त्या प्रत्यभिज्ञाद्यनपेक्षत्वेऽपि न स्वप्रतीतावागमापेक्षाऽन्यथा धर्मवदनात्मत्वापातादतो विवेकादिनिरस्तसर्वमनोवासनो निष्प्रत्यनीकतया स्वयमेव प्रकाशते चित्स्वभावत्वात्तथा च नास्य वेदान्तवेद्यतेत्यर्थः ॥ ४४४ ॥

**एवं कार्यमुखेनैव ज्योतिष्टोमादिवाक्यवत् ॥**
**वेदान्तानां प्रमाणत्वं नाक्षवद्वस्तुनीष्यते ॥ ४४५ ॥**

ननु तेषु निरोधविध्यप्रतीतेर्न तत्परत्वेन तत्प्रामाण्यं न चाप्रामाण्यमेव तेषामध्ययनविध्युपात्तत्वाद्विधिवाक्यवत्तस्मात्प्रत्यक्षवद्वस्तुनिष्ठं तन्मानत्वं तत्राऽऽह । **एवमिति ।** न तावद्वेदान्तानां चक्षुर्वद्वस्तुनि मानत्वं पदार्थत्वात्प्रमाणान्तरगम्यतेत्युक्तत्वात्स्वप्रकाशत्वाभ्युपगमाच्च वस्तुनस्तस्मिन्प्रमाणीकृत्याभावात्तथा च कर्मवाक्यवत्समाहितो भूत्वेत्यादिवाक्यसिद्धनिरोधनियोगद्वारैव प्रामाण्यात्तेषामध्ययनविध्युपात्ततेत्यर्थः ॥ ४४५ ॥

**वासनामात्रहेतुत्वादात्मनोऽनर्थसंगतेः ॥**
**अन्योपाये सत्यसति निरोधादेव मुक्तता ॥ ४४६ ॥**

निरोधनियोगस्य ज्ञानं मुक्तिर्वा फलं नाऽऽद्यः श्रवणादेरेव तत्सिद्धेर्न च निरोधनियोगस्यापि तच्छेषतया ज्ञानार्थत्वं त्वदिष्टशेषशेषित्वे वैपरीत्यापत्तेर्न द्वितीयो ज्ञानस्यैव मुक्तिहेतुताया श्रुतिस्मृतिसिद्धत्वात्तत्कथं निरोधनियोगशेषतया वेदान्तप्रामाण्यमित्याशङ्क्याऽऽह । **वासनेति** । आत्मनोऽनर्थसंगतेर्वासनामात्रकृतत्वस्यान्वयव्यतिरेकलभ्यत्वात्तासां निरोधादेव विधीयमानान्मुक्ततेत्यन्वयः । ज्ञानस्यैव मुक्तिहेतुत्वे प्रमिते कथमित्थमिति तत्राऽऽह । **अन्योति** । ज्ञानिनोऽपि संसारदृष्टेर्वासनानिरोधे च ज्ञानशब्दस्य नेतुं शक्यत्वात्तद्विषयतया श्रुतिस्मृतीनां चरितार्थत्वात्तस्यैव मोक्षोपायतेति भावः ॥ ४४६ ॥

**संभाव्यं नानपेक्षत्वं नियोगविरहात्क्वचित् ॥**
**शब्दप्रवृत्तेः सिद्धे च न नियोगस्य संभवः ॥ ४४७ ॥**

निरोधविधिशेषत्वेनैव वेदान्तप्रामाण्ये हेत्वन्तरमाह । **संभाव्यमिति** । लोकवेदयोः शब्दस्य प्रयुज्यमानस्यानपेक्षत्वं मानत्वं नियोगं विना न संभवति तन्निष्ठस्यैव तस्य तद्दर्शनादतस्तच्छेषत्वं प्रामाण्यार्थमेव वेदान्तानामित्यर्थः । तच्छेषत्वेन तत्प्रामाण्येऽपि सिद्धार्थबोधित्वसिद्धेरस्मदपेक्षितमक्षतमिति चेन्नेत्याह । **सिद्धे चेति** । भावार्थकरणकस्तद्विषयश्च नियोगः सिद्धे न सिध्यत्यतो नियोगशेषा वेदान्ता न सिद्धमर्थं बोधयेयुरित्यर्थः ॥ ४४७ ॥

**न च वस्तुनि मानत्व उदाहरणमिष्यते ॥**
**विधिर्गुणार्थस्तस्यापि व्यापारविषयत्वतः ॥ ४४८ ॥**

ननु दध्नेन्द्रियकामस्य जुहुयादित्यत्र प्रकृते कर्मणि फलार्थं गुणमात्रस्योच्यमानत्वान्नियोगपरस्यापि तस्य सिद्धार्थविषयत्ववद्वेदान्तानामपि तच्छेषाणामेव सिद्धार्थतेत्याशङ्क्य दध्नेन्द्रियकामाधिकरणन्यायेनाऽऽह । **न चेति** । अस्यार्थः । "फलश्रुतेस्तु कर्म स्यात्फलस्य कर्मयोगित्वात्" [पू०मी० २।२।२९] अग्निहोत्रं प्रकृत्य दध्नेन्द्रियकामस्य जुहुयादिति श्रुतं तत्र किं गुणविशिष्टं कर्मान्तरं विधीयते किंवा प्रकृते कर्मणि फलाय गुणविधिरिति **संशयः** । तत्राग्निहोत्रहोमाद्दधिहोमः कर्मान्तरमेव स्यात्फलं हीह श्रूयते तच्च कर्मणो न्याय्यं होमस्य हि श्रौतं फलं दध्नः फलमिति तु वाक्येन गम्यते श्रुतिश्च वाक्याद्बलीयसी तस्मात्फलस्य कर्मयोगित्वात्फलश्रुत्या कर्मान्तरमेव तत्र वाक्यात्प्रकृते कर्मणि फलाय गुणविधिरिति **पूर्वपक्षः** । नेदं कर्मान्तरं किंतु गुणात्फलं स्वर्गकामोऽग्निहोत्रं जुहुयाद्दध्नेन्द्रियकामस्य जुहुयादिति वाक्ययोरतुल्यत्वात्क्वचित्कर्मसमभिव्याहृतं फलमन्यत्र गुणसमभिव्याहृतं तस्मादिन्द्रियकामवाक्ये गुणनिमित्ततया फलधीरिति

प्रकृते कर्मणि फलाय गुणविधिरिति **राद्धान्तः** । तदुक्तं **भेदलक्षणे**—अतुल्यत्वात्तु वाक्ययोर्गुणे तत्र प्रतीयेतेति । तथा च गुणविधेरपि व्यापाराविष्टगुणविषयत्वान्न वेदान्तानां श्रुतिसिद्धसिद्धार्थबोधित्वे दृष्टान्ततेति ॥ ४४८ ॥

**किंचानुभूयमानस्य ह्यर्थस्य पुरुषार्थता ॥**
**सर्वत्र गम्यते वेदे नानुभूतेः कथंचन ॥ ४४९ ॥**

वेदान्तानां शुद्धे सिद्धे मानत्वाभावे हेत्वन्तरमाह । **किंचेति** । लोके सर्वत्रानुभाव्यस्यैव पुमर्थता दृष्टा सुखमपि स्वनिष्ठतया संवित्तमेव तथा वेदश्च लोकानुसारी । अतस्तत्रापि वेद्यस्यैव पुमर्थता न स्वप्रकाशात्मावगतेर्न चाफले वेदप्रामाण्यं तस्य फलानुबन्धित्वात्तथाच फलवन्नियोगशेषतयैव वेदान्ताः प्रमाणमिति भावः ॥ ४४९ ॥

**ततश्च प्रतिभामात्रं शब्दादिति न मानतः ॥**
**प्रतीयमान एवातः पुरुषार्थः प्रसिद्धितः ॥ ४५० ॥**

स्वप्रकाशवस्त्वनुभूतेरपुरुषार्थत्वे तत्पुमर्थतावद्योतिविज्ञानानन्दादिवाक्यानां का गतिस्तत्राऽऽह । **ततश्चेति** । अनुभाव्यस्यैव पुमर्थत्वदृष्टेर्विज्ञानादिशब्दात्प्रतिभामात्रमुद्भवति न मानतस्तसिप्रयोगस्य सार्वविभक्तिकत्वाङ्गीकारान्मानं तु न भवति लोकविरोधादित्यर्थः । इतिशब्दो विज्ञानादिवाक्यपरामर्शार्थः । अनुभवस्यापुमर्थत्वे नियोगादेरेव तदर्थतेति फलितमाह । **प्रतीयमान इति** । अनुभूयमानस्यैव सर्वत्र पुमर्थतायाः सिद्धत्वादिति हेतुमाह । **प्रसिद्धित इति** ॥ ४५० ॥

**अप्युपादीयमानं च सिद्धं वस्तु न कर्मणि ॥**
**पुमर्थं साधयद्दृष्टमनिर्ज्ञाताङ्गभावकम् ॥ ४५१ ॥**

नियोगादेरनुभाव्यस्य पुमर्थत्वे शब्दाधिगतसिद्धवस्तुनोऽपि पुमर्थत्वसिद्धेः शब्दस्य साध्यार्थत्वनियमो न स्यादित्याशङ्क्याऽऽह । **अपीति** । सिद्धं वस्तु वेदादवगम्यमानमपि श्रुत्यादिना कर्मशेषत्वेनानवगतं पुमर्थं साधयन्न दृष्टमतो न शब्दस्य शुद्धसिद्धार्थतेति योजना ॥ ४५१ ॥

**अनुपादीयमानश्च न च ज्ञाताङ्गभावकः ॥**
**आत्मा चेन्नास्य शेषत्वं विधिं प्रत्युपपद्यते ॥ ४५२ ॥**

आत्मनोऽपि तर्हि विधिशेषत्वेन पुरुषार्थतया शब्दप्रमाणकत्वं तत्राऽऽह । **अनुपादीयमानश्चेति** । आत्मा हि वेदेन न बोध्यते स्वप्रकाशानुभवस्वभावत्वान्नापि श्रुत्यादिना ज्ञातकर्मशेषभावः । एवं चेन्न तस्य विधिशेषत्वेन पुमर्थत्वं मानाभावादित्यर्थः ॥ ४५२ ॥

---

१ क. °नां शुद्धसिद्धा° । २ ख. संचितमे° ।

**उपासीत स्वमात्मानमिति साक्षाद्वचःश्रवात् ॥**
**तत्राङ्गभाव इति चेन्मत्पन्थानं भवानितः ॥ ४५३ ॥**

आत्मनः कर्मशेषत्वे वाक्यं प्रमाणमिति शङ्कते । **उपासीतेति ।** वाक्यस्य कल्प्यत्वं साक्षादिति व्यावर्त्यतेऽत एव वचःश्रवादित्युक्तम् । तत्रेत्युपासनानियोगोक्तिः । आत्मनो नियोगशेषत्वेन पुमर्थत्वं तत्र च वेदान्तप्रामाण्यमिति पक्षे शुद्धे सिद्धे तत्प्रामाण्यमिति त्वत्पक्षक्षतिर्नियोगशेषत्वेनैव तत्प्रामाण्यमिति मत्पक्षप्राप्तिश्चेति नियोगवाद्याह । **मत्पन्थानमिति ।** मां नियोगवादिनं निमित्तीकृत्य पन्थानं गतो भवानिति यावत् । अनित्यो वा समासान्तो विधिः ॥ ४५३ ॥

**क्रियाविधिपरत्वेन प्रामाण्यं वचसः स्थितम् ॥**
**इति व्याचक्षते केचिन्नियोगार्थैकरागिणः ॥ ४५४ ॥**

स्वकीयं पन्थानं विशिनष्टि । **क्रियेति ।** वेदान्तानां निरोधविधिशेषत्वात्कर्मणामपि तत्रैव तद्भावात्काण्डयोः सिद्धा संगतिरित्युपसंहरति । **इति व्याचक्षत इति ।** अस्य पक्षस्य रागमूलत्वेन निरस्यत्वं सूचयति । **नियोगेति** ॥ ४५४ ॥

**नैतत्साध्वभ्यधाय्युच्चैर्नियोगविरहादपि ॥**
**कामितार्थस्य संसिद्धेर्लौकिकादेव मानतः ॥ ४५५ ॥**

निरोधादेव मुक्ततेत्ययुक्तमिति प्रतिजानीते । **नैतदिति ।** यदेतदुच्चैस्तात्पर्येणाभ्यधायि निरोधविधिवादिना तन्न साध्विति संबन्धः । वासनानिरोधान्मोक्षपक्षे नियोगं विनाऽपि लौकिकमानादेवानर्थतद्धेतुपुरुषार्थतद्धेतुरूपेष्टार्थसिद्धेर्वेदवचोवैयर्थ्यमित्यसाधुतामेवं साधयति । **नियोगेति** ॥ ४५५ ॥

**तद्भावभावतो लिङ्गाद्वासनैकसमाश्रयात् ॥**
**ज्ञातोऽनर्थेन संबन्ध आत्मनो न तु वास्तवः ॥ ४५६ ॥**

कथमनर्थस्य तद्धेतोश्च लौकिकमानसिद्धतेत्याशङ्क्याऽऽह । **तद्भावेति ।** आत्मनोऽनर्थेन मातृत्वादिना संबन्धो भासमानः समुद्भूतजागरादिवासनानां भावे भावादभावे चाभावादित्यन्वयव्यतिरेकाख्याल्लिङ्गाद्वासनामात्रावष्टम्भाद्भवति ज्ञातोऽनात्मस्वभावानुसारी स्वापादावनवभासादतोऽनुभवलिङ्गाभ्यामनर्थतद्धेतुधीरित्यर्थः ॥ ४५६ ॥

**तस्मात्संसारसंबन्धनिदानस्य प्रसिद्धितः ॥**
**लिङ्गादेव ततस्तस्य ध्वंसेऽनर्थो निवर्तते ॥ ४५७ ॥**

तथाऽपि कथं वेदवचोवैयर्थ्यप्रतिज्ञेति तत्राऽऽह । **तस्मादिति ।** प्रकृतादनुभवादात्मनो बन्धसंबन्धस्य तन्निमित्तस्य च वासनाख्यस्याऽन्वयादिरूपलिङ्गादेव सिद्धेर्वचो विफलमित्युत्तरेण संबन्धः । नहि लिङ्गादिसिद्धेऽर्थे वचोऽर्थवदज्ञातविषयाभावादिति भावः ।

१ ख. °चसास्त्विति । इ° । २ ख. °वमेव सा° । ३ ख. वस्तुनः ।

नन्वनर्थतद्धेतुविषयत्वेन वचसोऽर्थवत्त्वाभावेऽपि पुरुषार्थतद्धेतुविषयतया तदर्थवत्ता तत्राऽऽह । **तत इति** । समाधिना मनोनिरोधे जागरादिवासना निरुध्यन्ते नान्यथेत्यन्वयव्यतिरेकाभ्यां मनोनिरोधादेवोपायात्तस्य वासनाख्यबन्धहेतोर्ध्वंसे हेत्वभावे फलाभावन्यायेनानर्थो बन्धसंज्ञो निवर्तते । तथाच शास्त्रादृतेऽपि पुरुषार्थतद्धेतुसिद्धेः शास्त्रानर्थक्यं परस्य दुर्वारमित्यर्थः ॥ ४५७ ॥

**अन्तरेणापि वचनं बौद्धादेरिव सिद्धितः ॥**
**मोक्षस्य पुरुषार्थस्य वचोऽतो निष्फलं भवेत् ॥ ४५८ ॥**

वैदिकं वचो विनैव मोक्षाख्यपुमर्थस्य तद्धेतोर्मनोवासनानिरोधस्य च लिङ्गादिना सिद्धत्वाद्बौद्धादेरिव तवापि वेदानर्थक्यमिति फलितमाह । **अन्तरेणेति** । अतः सिद्धित इति संबन्धः ॥ ४५८ ॥

**व्यतीतानेकजन्मोत्थवासनानामनन्ततः ॥**
**तासां निरोधोऽसंभाव्यो जन्मन्येकत्र मानवैः ॥ ४५९ ॥**

यत्तु तद्वासनानिरोधेऽतः पुमाञ्श्रुत्या नियुज्यत इति तत्रातीता वा वर्तमाना वा भाविन्यो वा वासना निरोद्धव्या नाऽऽद्य इत्याह । **व्यतीतेति** । अतीतजन्मार्जितवासनानामनन्तत्वादतिवृत्तत्वाच्च दुःसाध्यो निरोधः । देवादयो हि कथंचिद्यथोक्तवासना निरोद्धुमर्हन्ति मनुष्यास्तु शास्त्राधिकृता नैवमित्यर्थः । न द्वितीयो वर्तमानवासनानां कादाचित्कत्वान्नियोगं विना निरोधसिद्धेः । न तृतीयः । आगामिनीनां वासनानामप्राप्तत्वेन निरोधस्य दुःसाधत्वादिति[1] द्रष्टव्यम् ॥ ४५९ ॥

**साक्षादात्मावबोधेन प्रत्यग्ध्वान्तच्छिदा न चेत् ॥**
**दुःखादिभावना ध्वस्ता कथं तद्भावना नुदेत् ॥ ४६० ॥**

किंच वासनानिरोधे ज्ञानं वा तदभ्यासो वा तद्विषयनियोगो वा हेतुराद्यं प्रत्याह । **साक्षादिति** । अपरोक्षेणाऽऽत्मावबोधेनाऽऽत्माज्ञानध्वस्तिद्वारा वासनानिरोधेन मुक्तिश्चेदस्मन्मतमेव त्वयाऽपीष्टमिति भावः । द्वितीयं निरस्यति । **न चेदिति** । ज्ञानमज्ञानं वासनां वा नापनुदति ज्ञानभावना तदुभयं नुदति चेत्तदा चिरकालनिरूढातिनिबिडदुःखादिभावनाभिर्ध्वस्ता स्वल्पीयोज्ञानाभ्यासवासना कथं सकार्यमज्ञानं नुदेन्नहि स्वयंबाधिता भावनाऽन्यबाधे पर्याप्तेत्यर्थः ॥ ४६० ॥

**नियोगवर्त्मना चेयं यथा मुक्तिर्न सिध्यति ॥**
**स्पष्टेन न्यायमार्गेण वक्ष्यामोऽवसरे तथा ॥ ४६१ ॥**

ज्ञानाभ्यासनियोगोऽज्ञानादिनिरासद्वारा मुक्तिहेतुरिति तृतीयं दूषयति । **नियोगेति** ।

---

[1] क. °साध्यत्वा° ।

नियोगवशान्न मुक्तिरित्येतदन्योऽप्यनुभवोपाय इत्यारभ्याभिधास्यत इत्याह । **वक्ष्याम-इति** ॥ ४६१ ॥

**न पदार्थो न वाक्यार्थ आत्माऽयं वस्तुतो यतः ॥**
**तत्प्रत्याख्यानश्रुत्यैव तद्याथात्म्यावबोधनात् ॥ ४६२ ॥**

निरोधादेव मुक्ततेत्यादि निरस्तम् । यत्तु पदार्थत्वादात्मनो व्रीह्यादिवन्मानान्तरगम्यतेति तत्राऽऽह । **नेत्यादिना** । संसृष्टानां पदार्थानां तत्संसर्गस्य वा वाक्यार्थत्वात्कथमात्मनो वाक्यार्थस्यापदार्थत्वमत आह । **नेति** । तर्हि कथमस्य वेदार्थत्वं तत्राऽऽह । **तदिति** । पदार्थत्वादिः सर्वो विशेषस्तच्छब्दार्थः । आत्मविषयो द्वितीयस्तच्छब्दः । समारोपितसमस्तविशेषनिषेधद्वारा तस्य चिदेकतानस्य वेदार्थतेत्यर्थः ॥ ४६२ ॥

**वासनानामभावेऽपि सुषुप्त्यादौ न मुक्तता ॥**
**मानव्यापारविरहात्प्रथनं वा दृगात्मनः ॥ ४६३ ॥**

पदार्थत्वेनाऽऽत्मनो मानान्तरगम्यत्वशङ्कां निरस्य निरोधादेव मुक्ततेत्यत्र दोषान्तरमाह । **वासनानामिति** । न च तत्र पुनरुत्थानाज्जागरादिवासनाः सन्तीति वाच्यम् । स्वापादित्वभङ्गप्रसङ्गात् । न च तत्र कारणात्मना सत्त्वं विशेषोऽवस्थान्तरेऽपि तद्रूपेणैव सत्त्वान्न चैवमपि स्वापादौ न मुक्तिर्वासनाहेतुसत्त्वादिति युक्तम् । तथा सति तद्धेतुध्वंसादेव मुक्तिर्न वासनाध्वंसाद्धेतुध्वंसश्च ज्ञानादित्यस्मत्पक्षप्राप्तेरिति भावः । यत्तु स्वयंज्योतिस्स्वभावत्वादित्यत्र वासनासु निरुद्धासु प्रथनमात्मनोऽवश्यंभावीति तदपि स्वापादौ व्यभिचारीत्याह । **मानेति** । वाशब्देन नञ्पदमनुकृष्यते । सत्यपि स्वरूपप्रथने तद्व्यवहारो मानं विना न संभवतीति भावः ॥ ४६३ ॥

**सर्वानर्थाभिसंबन्धे ह्यविद्यैवास्य कारणम् ॥**
**वासनानामपि यतो सैव यस्मादपेक्ष्यते ॥ ४६४ ॥**

वासनामात्रहेतुत्वादात्मनोऽनर्थसंगतेरित्यत्र वासनाऽनर्थहेतुरित्युक्तं तत्राऽऽह । **सर्वेति** । अविद्यावद्वासनानामपि हेतुत्वसंभवे कुतोऽवधारणमित्याशङ्क्याऽऽह । **वासनानामिति** । तासां कार्यत्वेनान्वयानवस्थाभ्यामुपादानत्वायोगात्सवासनानर्थहेतुरविद्यैवेत्यर्थः । विनाऽविद्यासमङ्गस्याऽऽत्मनो न वासनासंगतिरिति द्योतयितुं सैवेत्युक्तम् ॥ ४६४ ॥

**संभाव्यतेऽनपेक्षत्वं नियोगविरहादपि ॥**
**यथा तथा च वक्ष्यामः स्पष्टेन न्यायवर्त्मना ॥ ४६५ ॥**

यच्च संभाव्यं नानपेक्षत्वमित्यत्र नियोगानुप्रवेशं विना शब्दस्य नानपेक्षं प्रामाण्यमित्युक्तं तत्राऽऽह । **संभाव्यत इति** । वक्ष्यामः **सर्वोऽपीत्यादाविति** शेषः ॥ ४६५ ॥

**स्वानुभूतिबलादेव भवताऽपि विभाव्यते ॥**
**नियोगादिः प्रमाणार्थो नानुभूतिर्नियोगतः ॥ ४६६ ॥**

यत्तु सिद्धे च न नियोगस्य संभव इति तत्राऽऽह । **स्वानुभूतीति** । नियोगवादिना चिदात्मवशादेव नियोगादिर्जडोऽर्थो गम्यते तथाच तत्साधकश्चिद्धातुः स्वसिद्धौ न नियोगाद्यपेक्षते नहि सविता रूपादिप्रकाशकस्तदपेक्षया प्रकाशने तन्न चिदात्मनि सिद्धेऽर्थे नियोगासंभवो दोषोऽभ्युपेतत्वादित्यर्थः ॥ ४६६ ॥

**यस्याप्रसिद्धिर्नाज्ञानात्प्रसिद्धिर्नापि मानतः ॥**
**तस्यानुभवतत्त्वस्य कुतः सापेक्षतोच्यते ॥ ४६७ ॥**

ननु मानाधीना मेयसिद्धिर्न चाऽऽत्मनि मानान्तरमिष्टमागमश्च नियोगनिष्ठो न विध्यस्पृष्टमात्मानं गोचरयति तस्मादात्मसिद्धौ नियोगापेक्षा दुर्वारा नेत्याह । **यस्येति** । ज्ञानाज्ञानाभ्यां प्रसिद्ध्यप्रसिद्ध्योरभावे हेतुमाह । **अनुभवतत्त्वस्येति** । अनुदितानस्तमितकूटस्थबोधैकरसस्य सिद्धौ न नियोगाद्यपेक्षाशङ्काऽपीत्याह । **कुत इति** ॥ ४६७ ॥

**स्वप्रधानात्मबुद्ध्यैव तदन्यस्य प्रसिद्धितः ॥**
**कार्यबुद्धिव्यपेक्षातो नानुभूत्यात्मवस्तुनः ॥ ४६८ ॥**

तत्रैव हेत्वन्तरमाह । **स्वप्रधानेति** । स्वप्रधानमनन्याधीनं स्वतन्त्रमात्मवस्तु तद्रूपा बुद्धिश्चैतन्यं तदात्मनैव स्वातिरिक्तानात्मवर्गस्य लब्धसत्ताकत्वाच्चिद्रूपस्य वस्तुनः स्वसिद्ध्यर्थं न नियोगादिबुद्ध्यपेक्षा न हि भुजंगधियमपेक्षते रज्जुधीरतो नाऽऽत्मसिद्धिर्नियोगापेक्षेत्यर्थः ॥ ४६८ ॥

**क्व नु प्रतीयमानस्य पुमर्थत्वं समीक्षितम् ॥**
**मानान्मानफलस्यैव पुमर्थत्वसमन्वयात् ॥ ४६९ ॥**

किं चानुभूयमानस्येत्यत्रानुभाव्यस्यैव पुमर्थत्वमित्युक्तं तत्राऽऽह । **क्वेति** । अर्थस्य हि निष्कृष्टानुभवस्य पुमर्थत्वं न क्वचिदपि मानादधिगतमित्यर्थः । कस्य तर्हि पुमर्थत्वं तत्राऽऽह । **मानफलस्येति** । पुमर्थत्वेनेष्टार्थविशेषणत्वेनानुभवस्य संबन्धात्तस्यैवानुगतस्य तदर्थत्वं नहि तत्त्वेनेष्टस्त्रगादिरनुभवानारूढस्तथा तदव्यभिचारिणोऽनुभवस्यैव पुमर्थता न मिथोव्यभिचारिणोऽर्थस्येत्यर्थः ॥ ४६९ ॥

**प्रतीतेर्माफलत्वाच्च कथं मेयैकनिष्ठता ॥**
**माक्रियाफलयोगोऽयं यतो मातरि भोक्तरि ॥ ४७० ॥**

अनुभाव्याश्रितत्वादनुभुतिरपि तद्गतरूपादिवदनुभाव्यैवेत्यर्थस्यैव पुमर्थतेति चेन्नेत्याह । **प्रतीतेरिति** । अनुभवो मानफलं न च मेयोऽर्थस्तदाश्रयो जडत्वान्नहि जडाजडयोराश्रयाश्रयित्वमतो हेत्वसिद्धिरित्यर्थः । ननु फलस्यास्वातन्त्र्यादाश्रयो वाच्यस्तत्र परिशेषान्मेयाश्रितत्वं नेत्याह । **माक्रियेति** । मानस्य हि फलं मातारमाश्रयते क्रियाफलं तु भोक्तारं न च तौ भिद्येते अतो मानक्रियाया यदनुभवाख्यमुपचरितं फलं तत्संबन्धस्तस्मिन्नात्म-

१ क. 'भूतात्म' ।

न्युपचर्यते तस्मान्मानफलस्य मेयनिष्ठत्वासिद्धेः सिद्धा हेत्वसिद्धिरित्यर्थः ॥ ४७० ॥

**न चाऽऽत्मानुभवादन्यो विषयः कश्चिदिष्यते[1] ॥**
**अपि सर्वप्रमाणानां किमु वेदान्तशासने ॥ ४७१ ॥**

यत्तु वेदान्तानां प्रमाणत्वं नाक्षवद्वस्तुनीति तत्राऽऽह । **न चेति** । अन्यस्याज्ञातत्वाभावादिति शेषः । अपिना सूचितमाह । **किम्विति** । वेदान्तेषु पुरुषार्थरूपानुभवस्वभावात्मनोऽन्यो विषयो नेति किमु वाच्यं तस्यैवाज्ञातत्वादित्यर्थः ॥ ४७१ ॥

**लौकिको वैदिकः सर्वो व्यवहारो जगत्यपि ॥**
**भोक्त्रर्थ एव नान्योऽतः प्रधानं भोक्तुरिष्यते ॥ ४७२ ॥**

नियोगास्पृष्टे परमपुरुषार्थे परस्मिन्नेव चिदात्मनि वेदान्तमानतेत्यत्रैव हेत्वन्तरमाह । **लौकिक इति** । सर्वत्र जगति सर्वोऽपि व्यवहारो भोक्त्रर्थो नान्यार्थः स्वतन्त्रो वाऽतो भोक्तृरूपानुभवस्य शेषित्वेन प्राधान्यात्तस्यैव परप्रेमास्पदस्य पुरुषार्थत्वं पुरुषार्थे चापूर्वे शब्दस्य तात्पर्यम् । तथा चाऽऽनन्दरूपे प्रतीचि वेदान्तप्रामाण्यमित्यर्थः ॥ ४७२ ॥

**न वा अरे पत्युरिति तदेतत्प्रेय इत्यपि ॥**
**निखिलेऽपि जगत्यस्मिन्प्रधानं नाऽऽत्मनोऽपरः ॥ ४७३ ॥**

प्रतीचो निरतिशयसुखत्वे मानमाह । **न वा इति** । अस्मिञ्जगति जायापुत्रादौ निखिलेऽपि प्रधानमात्मा न तस्मादन्यो जायादिस्तस्याऽऽत्मशेषत्वेन प्रियत्वस्य न वा अरे पत्युरित्यादिना श्रवणात्प्रधानं चाऽऽत्माऽनुपाधिप्रेमगोचरः कथं परमानन्दो न स्यात्त**देतत्प्रेयः** पुत्रादित्यादिश्रुतिश्चास्यानतिशयप्रीत्यास्पदत्वेन परमसुखतामाहेत्यर्थः॥४७३॥

**न प्रमाता प्रमाणं वा क्रियामेयफलानि वा[2] ॥**
**प्राधान्यायेह कल्पन्ते भोक्तुरेव प्रधानतः ॥ ४७४ ॥**

मात्रादौ प्रधाने सति कथं भोक्तृप्राधान्यं तत्राऽऽह । **नेति** । इहेति व्यवहारभूमिः । तत्र हेतुः । **भोक्तुरिति** । तस्य सर्वशेषित्वेनेष्यमाणत्वात्प्राधान्यस्य युक्तत्वादितरस्य शेषतया तदयोगादित्यर्थः ॥ ४७४ ॥

**आत्मनः कर्त्रवस्थाऽपि भोक्त्रर्थमिति निश्चयः ॥**
**यतोऽतोऽपरमप्येतद्भोक्त्रर्थं विनियुज्यते ॥ ४७५ ॥**

ननु कर्त्रवस्था क्रियाश्रयत्वात्प्रधानं तत्कथं भोक्तुरेव प्राधान्यं तत्राऽऽह । **आत्मन इति** । ननु विषयाभिनिवेशवान्पुमान्पुत्राद्येव प्रधानं मन्यते तत्राऽऽह । **यत इति** । कर्तृत्वस्य भोक्त्रर्थत्वे यदन्यत्पुत्रादि तत्सर्वं तदर्थमिति नाऽऽत्मनो भोक्तुरर्थान्तरं प्रधानमन्यत्र तदभिनिवेशस्तु भ्रान्तिरिति भावः ॥ ४७५ ॥

---

१ ख. °श्चिदीक्ष्यते । २ ख. च ।

**नापि चाऽऽत्मातिरेकेण वस्त्वन्यन्मानभूमिगम् ॥**
**संभाव्यते यथा चैतत्तथोदर्के प्रवक्ष्यते ॥ ४७६ ॥**

किंचाऽऽत्मनोऽर्थान्तरं न प्रामाणिकमस्ति यस्य प्राधान्यादि शङ्क्येतेत्याह । **नापीति** । कथमात्मातिरिक्तं वस्तु कल्पितमिति तत्राऽऽह । **यथा चेति** । उदर्कशब्दोऽव्याकृतविचारादिपरः ॥ ४७६ ॥

**अनादृत्य यथोक्तार्थं नियोगार्थैकरागतः ॥**
**केचित्कार्यैकनिष्ठत्वं वेदान्तानां प्रचक्षते ॥ ४७७ ॥**

एवं पुरुषार्थे कूटस्थानुभवे प्रत्यग्ब्रह्मणि वेदान्तप्रामाण्यात्तेषां निरोधविधिशेषत्वायोगात्काण्डद्वये संबन्धानां परोक्तानामयुक्तत्वात्कर्मणां शुद्धिद्वारा ज्ञानहेतुत्वमुपनिषदां साक्षादिति विविदिषावाक्यीयं संबन्धमुपेत्य **तस्येत्यादिभाष्यं** व्याख्यातम् । संप्रति **सर्वो**ऽपीत्यादिभाष्यनिरस्यं **पूर्वपक्षमाह** । **अनादृत्येत्यादिना** । काण्डयोरधिकार्यादिभेदं संबन्धविशेषमैकात्म्याख्यं वस्तु चोक्तं सर्वमप्रामाणिकं कृत्वा वेदान्तानां कार्यमात्रपर्यवसायित्वमेके वदन्तीत्यर्थः । वक्ष्यमाणपूर्वपक्षस्याऽऽभासत्वं सूचयति । **नियोगेति** ॥ ४७७ ॥

**कार्यैकमात्रनिष्ठत्वात्[1]प्रमाणस्याऽऽगमात्मनः ॥**
**कुत ऐकात्म्यनिष्ठत्वं त्वया यदुदितं पुरा ॥ ४७८ ॥**

तत्त्वमादिवाक्यमैक्यपरमुक्तं न च तदनादरे हेतुरस्तीत्याशङ्क्याऽऽह । **कार्येति** । तदपि कार्यनिष्ठं प्रमाणवाक्यत्वाद्विधिवाक्यवदित्यर्थः । वेदस्य सर्वस्यापि कार्यनिष्ठत्ववद्वस्तुनिष्ठत्वमपि स्यादित्याशङ्क्याऽऽह । **एकेति** । न खल्वेकं वाक्यमुभयार्थमर्थभेदे वाक्यभेदादिति भावः । भूतभव्यन्यायेन कार्यशेषतया भूतोपदेशोऽपि स्यादित्याशङ्क्य कार्यशेषस्य भूतस्यापि कार्यत्वमेवेति मत्वाऽऽह । **मात्रेति** ॥ ४७८ ॥

**नहि तस्यानपेक्षत्वं सिद्धवस्त्ववबोधनात् ॥**
**यतो मानान्तरमितं सिद्धं वस्त्विति भण्यते ॥ ४७९ ॥**

आगमस्य सिद्धार्थनिष्ठत्वाभावं साधयति । **न हीति** । सिद्धार्थत्वेनेष्टागमस्य तत्प्रकाशनान्नानपेक्षं प्रामाण्यं तस्य मानान्तरयोग्यत्वात्तन्निष्ठस्यानपेक्षत्वायोगादित्यर्थः । नन्वागमस्य कार्यनिष्ठत्वेऽपि निरपेक्षप्रामाण्यहानिस्तुल्येति नेत्याह । **यत इति** । यत्सिद्धं वस्तु तन्मानान्तरयोग्यमित्युच्यते न कार्यं तद्योग्यमतो मानान्तरापूर्वमपूर्वमित्यभ्युपगमादतस्तन्निष्ठस्यानपेक्ष्यं प्रामाण्यमित्यर्थः ॥ ४७९ ॥

**शब्दसामर्थ्यनियमो लोकादेवावगम्यते ॥**
**लोके मान्तरासिद्धोऽर्थः कार्यायैवाभिधीयते ॥ ४८० ॥**

[1] ख. 'त्वात्प्रामाण्यस्या'।

वेदः सर्वोऽपि कार्यनिष्ठो न सिद्धार्थे मानमित्यत्रैव हेत्वन्तरमाह । **शब्देति** । ज्ञातशक्तिशब्दो बोधकोऽस्यास्मिन्नर्थे शक्तिरिति नियता सा वृद्धव्यवहारादेव गम्यते ततश्चेयं कार्ये पर्यवस्यतीत्यर्थः । वृद्धव्यवहारलिङ्गतः सिद्धार्थेऽपि शक्तिः शब्दस्य गृह्यतामित्याशङ्क्य लिङ्गस्य प्रवर्तकबोधाधीनत्वान्नैवमिति मत्वाऽऽह । **लोक इति** । व्यवहारभूमावध्यक्षादिसिद्धस्य सिद्धार्थस्य कार्यशेषत्वेनैवोक्तेस्तदन्विते शक्तिग्रहात्तत्पर एव वेद इत्यर्थः ॥ ४८० ॥

**न प्रवृत्तिनिवृत्तिभ्यां शून्यस्य वचसो यतः ॥**
**कश्चिदर्थोऽत्र दृष्टोऽतो वस्तुनि स्यान्न मानता ॥ ४८१ ॥**

किंच तात्पर्याधीनं शब्दप्रमाण्यं तच्च पुरुषार्थे स च प्रवृत्तिनिवृत्तिसाध्यस्ते च विधिनिषेधाधीने तौ च कार्ये भवतोऽतोऽपि न वेदस्य सिद्धार्थपरतेत्याह । **नेत्यादिना** । शक्तितात्पर्ययोः कार्ये नियमो दर्शितः ॥ ४८१ ॥

**संबन्धावगमो नापि शब्दाद्भूतार्थवाचिनः ॥**
**प्रवर्तकात्प्रवृत्त्याऽर्थे प्रत्ययो ह्यनुमीयते ॥ ४८२ ॥**
**ततः शब्दस्य सामर्थ्यं प्रतीतेरवधार्यते ॥**
**कार्यैकविषयैवेयं[2] वाक्यस्यातः प्रमाणतः ॥ ४८३ ॥**

ननु शक्तिर्न कार्यमेवाधिकरोति प्रवर्तकादेव वाक्यात्तद्ग्रहानियमात्सिद्धार्थादपि पुत्रस्ते जात इत्यादेस्तद्ग्रहसंभवादिति तत्रापि कार्याध्याहारो लक्षणा वेति विवक्षन्नाह । **संबन्धेति** । प्रवृत्त्यभावेन लिङ्गाभावादिति शेषः । कथं तर्हि शक्तिधीस्तत्राऽऽह । **प्रवर्तकादिति** । उत्तमवृद्धोक्तप्रवर्तकवाक्यश्रुत्यनन्तरभाविमध्यमवृद्धप्रवृत्त्या प्रवर्तकार्थधीर्बालेनानुमीयते । विमता प्रवृत्तिः प्रवर्तकधीपूर्विका बुद्धिपूर्वप्रवृत्तित्वात्संमतवत्सा च प्रवर्तकधीः शब्दान्वयव्यतिरेकवत्तया प्रतीतेस्ततः शब्दादुत्पन्ना निश्चीयते । एवं प्रवर्तकार्थे सामर्थ्यं शब्दस्य सामान्यतोऽवधार्याऽऽवापोद्धाराभ्यां[3] लिङ्गादिपदं प्रवर्तकवाचीतराणि तदन्वितस्वार्थवाचीनीत्यवगम्यते तस्मात्कार्ये शक्तिधीरित्यर्थः । पदानां कार्ये ज्ञातशक्तित्वेऽपि वाक्यस्य सिद्धेऽर्थे प्रामाण्यं स्यादित्याशङ्क्याऽऽह । **कार्येति** । ज्ञातशक्तीनां पदानां स्वार्थबोधकत्वात्कार्ये च शक्तिज्ञानादित्यतःशब्दार्थः ॥ ४८२ ॥ ॥ ४८३ ॥

**क्रियाकारकसंबन्धो वाक्यार्थो यैरपीष्यते ॥**
**अनुवादविसंवादात्तेषामुक्तेरमानता ॥ ४८४ ॥**

ननु वाक्यं वाक्यार्थे क्रियाकारकसंबन्धे मानं तत्कथं कार्यैकविषयं वाक्यप्रामाण्यं

१ क. ख. °क्तिग्रहा° । २ °षया वे° । ३ ख. °पोद्वापाभ्यां ।

तत्राऽऽह । **क्रियेति ।** ओदनं पचतीत्यादौ क्रियाकारकान्वयस्य मानान्तरयोग्यत्वात्तत्संवादविसंवादाभ्यां तत्र वाक्याप्रामाण्यान्नियोगे तत्प्रामाण्यमित्यर्थः ॥ ४८४ ॥

**मान्तरानुप्रवेशित्वं कार्यस्य तु न शङ्क्यते ॥**
**शब्दादेव हि कार्यार्थप्रतिपत्तिर्न लोकतः ॥ ४८५ ॥**

ननु तस्मिन्नपि कार्यात्मनि लौकिककार्यवन्मानान्तरसंभवादुक्तदोषसाम्यमिति नेत्याह । **मान्तरेति ।** तत्र हेतुमाह । **शब्दादिति । क्रियादिभिन्नं** यत्कार्यं वेद्यं मानान्तरैर्न तदिति **न्यायेन** मानान्तरापूर्वनियोगे वाक्यं मानं नहि कार्यत्वेऽपि लौकिककार्यवदस्य मानान्तरगोचरत्वं क्रियात्वस्यापि तद्वदेव प्रसङ्गात्तदन्यत्वं च नियोगस्य वक्ष्यतेऽतो लिङादिशब्दात्प्रवर्तककार्यप्रतीतेस्तत्र वाक्यप्रामाण्यमिति भावः ॥ ४८५ ॥

**प्रवर्तनां वदञ्शब्दः प्रवर्तक इतीर्यते ॥**
**ज्ञापकत्वात्प्रमाणस्य प्रेरयन्कारको भवेत् ॥ ४८६ ॥**

ननु लिङादिशब्दात्प्रवर्तकधीश्चोदनेति क्रियाया वचनमाहुरिति **भाष्याल्लिङादेरेव** प्रवर्तकत्वादत आह । **प्रवर्तनामिति ।** लिङादिप्रवर्तनां बोधयन्प्रवर्तक इत्युच्यते **भाष्यकृतेति** किमिति कल्प्यते साक्षादेव प्रवर्तकत्वं तस्याभीष्टं किं न स्यात्तत्राऽऽह । **ज्ञापकत्वादिति ।** प्रमाणस्य ज्ञापकत्वान्न रागादिवत्कारकत्वं लिङादिश्चेत्प्रवर्तकः कारकं स्यान्न मानं मानं चेष्यतेऽतः प्रवर्तकवाचित्वेनैव **भाष्ये** तत्प्रवर्तकत्वोक्तिरित्यर्थः ॥४८६॥

**शब्दात्प्रवर्तनाबुद्धौ रागादिर्न च शङ्क्यते ॥**
**रागादिः प्रेरणाकारी प्रेरणाज्ञापको ध्वनिः ॥ ४८७ ॥**

लिङादेः प्रवर्तकवाचित्वेऽपि वाच्यः प्रवर्तको रागादिरस्तु न कार्यमिति चेन्नेत्याह । **शब्दादिति ।** लिङादिशब्दात्प्रवर्तकबुद्धाविष्टायां प्रवर्तकत्वेन रागादिर्न शङ्कामर्हतीत्यत्र हेतुमाह । **रागादिरिति ।** रागादेः प्रवर्तकनिर्वर्तनेनाप्रवर्तकत्वेऽपि प्रवृत्त्यनुविधायिनो लिङादेस्तथात्वं नहि तस्य रागादिवद्धेतुहेतुत्वादन्वयव्यतिरेकावन्यथा सिद्धावकारकत्वादित्याशङ्क्य प्रवर्तकत्वे कारकत्वप्रसङ्गान्मैवमित्याह । **प्रेरणेति ।** ध्वनिर्नाम लिङादिशब्दः स च न स्वयं प्रवर्तकः किंतु प्रेरणार्थप्रवर्तकज्ञापनेन प्रवृत्त्यनुविधायीत्युक्तमित्यर्थः[3] ॥ ४८७ ॥

**आज्ञापितार्थनिष्पत्तौ कृतिमत्त्वेक्षणात्प्रभोः ॥**
**रागाद्यर्थस्य चासिद्धौ कर्तृवृत्तिर्न रागतः ॥ ४८८ ॥**

रागादेः शब्दस्य च प्रवर्तकत्वानुपपत्त्या कार्यस्यैव तदित्युक्तम् । अथवा लोके रागादेरेव प्रवर्तकत्वेऽपि शब्दार्थभूततन्निरूपणे न तस्य तथात्वमित्याह । **आज्ञापितेति ।** आचार्यादेराज्ञाविषयगवानयनादिसंपादने शिष्यादेरागाद्यभावेऽप्याज्ञाप्रभावादेव कृतिश-

१ ख. शक्यते । २ ख. °र्यार्थे प्र° । ३ ख. °मितीत्य° । ४ ख. °द्धौ पुंस्प्रवृ° ।

ब्दितयत्नपूर्वकप्रवृत्तिमत्त्वस्य दर्शनात्कर्तृभृत्यादेः शब्दानन्तरभाविनी प्रवृत्ती रागादेर्न भवतीत्यर्थः ॥ ४८८ ॥

**स्वामिकोपप्रसादादिहृदयाकूतवेदनात् ॥**
**नापि श्रोतुः प्रवृत्तिः स्याच्छब्दात्कोपाद्यवेदनात् ॥ ४८९ ॥**

श्रोतृगतरागद्वेषयोरप्रवर्तकत्वेऽप्युत्तमवृद्धकोपादेर्लिङादिसिद्धस्य तद्भावान्न कार्यस्य प्रवर्तकत्वमित्याशङ्क्याऽऽह । **स्वामीति** । आदिशब्दो हर्षशोकादिविषयस्तदेव तस्य हृदयगतमाकूतमभिप्रायस्तस्य वेदनादपि न प्रवृत्तिरित्यर्थः । तत्र हेतुमाह । **शब्दादिति** । लिङादेर्नियोगवत्स्वामिकोपाद्यप्रतीतेरिति हेत्वर्थः ॥ ४८९ ॥

**लिङादयो न कोपादेः स्मर्यन्ते प्रतिपादकाः ॥**
**मानान्तरमिताः सन्तस्ते हि पुंसां प्रवर्तकाः ॥ ४९० ॥**

हेतुं साधयति । **लिङादय इति** । विध्यादिमात्रप्रतिपादकत्वस्मरणादित्यर्थः । स्वामिकोपादेरपि प्रवर्तकत्वप्रसिद्धेस्तस्याशाब्दत्वे केनावगतिर्न खल्वज्ञातस्यैव प्रवर्तकत्वं मृतस्यापि स्वामिकोपादिना तत्प्रसङ्गादित्याशङ्क्याऽऽह । **मानान्तरेति** । तथाचान-न्यलभ्यत्वाभावान्न शब्दार्थीभूतप्रवर्तकता तेषामिति भावः ॥ ४९० ॥

**धिगङ्गाद्यभिधानैस्तु लिङ्गभूतैरिहेङ्गिताः ॥**
**रागादयो नियोगस्य सिद्ध्यै विषयसाधनाः ॥ ४९१ ॥**

किं तन्मानान्तरं तदाह । **धिगिति** । आदिशब्देन कोपप्रसादहर्षशोकादिसूचका-न्युच्यन्ते । इहेति वाक्यश्रुत्युक्तिः । इङ्गितत्वमनुमितत्वम् । तत्र ते शब्दार्थीभूता इति शेषः । ननु लिङादेर्वा रागादेर्वा कोपादेर्वा प्रवर्तकत्वाभावे कार्यस्यैव प्रवर्तकत्वं परिशे-षतो लब्धं तथाच प्रेरणाकारी रागादिरित्युक्तमयुक्तं प्रेरणाख्यनियोगस्य धात्वर्थाधी-नतया रागाद्यजन्यत्वात्तत्राऽऽह । **रागादय इति** । नियोगसिद्ध्यर्थं धात्वर्थं साधय-न्नस्ते प्रेरणाख्यं तमपि साधयत्यतो रागादिः प्रेरणाकारीति युक्तमित्यर्थः ॥ ४९१ ॥

**अत एव च रागादिसंसृष्टोऽपि विविच्यते ॥**
**लोडाद्यर्थो व्रजेत्युक्तो याति स्वार्थं विना यतः ॥ ४९२ ॥**

ननु लौकिकवाक्ये रागादिसंसृष्टस्यैव नियोगस्य दृष्टत्वात्सर्वत्र शब्दानन्तरप्रवृत्तौ तत्संसृष्टस्यैव तस्य प्रवर्तकत्वप्रतीतेर्नियोगस्यैव प्रवर्तकत्वं न रागादेरिति विवेक्तुमश-क्यमत आह । **अत एवेति** । नहि लौकिकवाक्येषु रागादिसंसृष्टनियोगदृष्टिनियमो व्रजेति प्रभुणोक्तः श्रोता स्वार्थं फलरागं विनाऽपि यतो यात्यतो यत्र शाब्दप्रवृत्तौ रागादिः संभवति तत्रापि तत्संसृष्टो नियोगस्ततोऽपि विविच्यते तस्मादनुगतनियोग एव प्रवर्तको न रागादिरिति निश्चयसिद्धिरित्यर्थः ॥ ४९२ ॥

१ क. °द्दो दर्पशा° । २ ख. °कत्वे प्र° । ३ क °गतो नि° ।

**ननु दानादिसंबद्धमहावाक्यानुमानतः ॥**
**गच्छेत्याद्येकदेशोक्तौ लोभादेव प्रवर्तते ॥ ४९३ ॥**

फलरागं विना कस्यचिदप्रवृत्ते रागसंसृष्टस्यैव नियोगस्य प्रवर्तकत्वादुक्तप्रवर्तकत्वविवेकासिद्धिरिति शङ्कते । **नन्विति** । उत्तमवृद्धेन गच्छ तिष्ठेत्यादिवाक्यैकदेशोक्तौ गच्छ ग्रामं द्रव्यं दास्यामि तिष्ठात्र वस्त्रादिलाभस्ते भवितेत्यादिरूपं दानादिसंबद्धं महावाक्यं मध्यमवृद्धेनानुमीयते विमता वाक्प्रवृत्तिः श्रोतृफलावसायिनी विशिष्टवाक्प्रवृत्तित्वात्संप्रतिपन्नवत्ततो द्रव्यादिरागसहितादेव नियोगात्प्रवृत्तिरिति न प्रवर्तकनिष्कर्ष इत्यर्थः ॥ ४९३ ॥

**महावाक्यप्रयोगेऽपि पदार्थप्रविवेचने ॥**
**पुंप्रवृत्तिस्तु दृष्टेयं लोडादेरेव नान्यतः ॥ ४९४ ॥**

परिहरति । **महावाक्येति** । यत्र वाक्यैकदेशोक्तिं विना महावाक्यमेव प्रयुक्तं तत्रापि पुंसो मध्यमवृद्धस्य प्रवृत्तिरुपलब्धा सा नियोगाद्वा रागाद्वेति प्रवर्तकविवेके लोडाद्यर्थान्नियोगादेव न रागादिति निश्चीयते तत्र श्रोतृरागस्य दुःसंपादत्वादतो वाक्यैकदेशोक्तौ महावाक्यानुमानेऽपि प्रवर्तकनिरूपणे निकृष्टनियोगस्य तत्सिद्धिरित्यर्थः ॥ ४९४ ॥

**लोडादेरेव श्रवणाद्यत्र रागाद्यसंभवः ॥**
**बालः प्रवर्तते तत्र ज्ञायते प्रेरणार्थता ॥ ४९५ ॥**

उक्तमेव व्यनक्ति । **लोडादेरिति** । यत्र दण्डादौ बालस्याभिलाषाद्यसंभवस्तत्रापि लोडादेरानयेत्यादिरूपस्य श्रवणात्तदर्थज्ञानादेवासौ प्रवर्ततेऽतो लोडादिशब्दस्य प्रेरणाख्यप्रवर्तकनियोगार्थत्वावगमात्तस्यैव सर्वत्र प्रवर्तकत्वं निश्चितमित्यर्थः ॥ ४९५ ॥

**आह मानान्तरेणासौ किल नार्थोऽवगम्यते ॥**
**शब्दार्थं ज्ञायतेऽज्ञातसंबन्धादिति चित्रता ॥ ४९६ ॥**

अथ नियोगो मानान्तरगम्यो न वा । आद्ये मानान्तरानुप्रवेशित्वं कार्यस्य तु न शक्यत इत्युक्तिव्याघातः । द्वितीये त्वज्ञातसंबन्धस्य लिङादेर्न नियोगबोधितेति चोदयति । **आहेति** । नियोगश्चेन्मानान्तरागोचरो न तर्हि तत्र लिङादेः शक्तिर्गृह्येत न ह्यज्ञाते संबन्धधीर्न चाज्ञातशक्तेर्लिङादेर्नियोगावगतिर्बालस्यापि तत्प्रसङ्गादतो न शब्दार्थीभूतः प्रवर्तको नियोग इत्यर्थः ॥ ४९६ ॥

**यद्यनिर्ज्ञातसंबन्धोऽप्यर्थं शब्दः प्रबोधयेत् ॥**
**को द्वेषोऽस्मासु भवतो येनोपालम्भ ईर्यते ॥ ४९७ ॥**

१ ख. °र्च गम्यते° ।

लिङादेरेष महिमा यदयमज्ञातशक्तिरपि नियोगं गमयतीति शङ्कते । **यदीति ।** तदा पदधर्मव्युत्क्रान्तिरिति मत्वाऽऽह । **को द्वेष इति ।** नियोगवादिनो ब्रह्मवादिषु द्वेषो न युक्तो ब्रह्मादिपदस्याज्ञातशक्तेरेव बोधकत्वात्तच्छक्तिग्रहे ब्रह्मणि मानान्तरप्रवेशात्तत्संवादविसंवादाभ्यां वेदान्ताप्रामाण्यमित्याक्षेपो येन निक्षिप्यते ब्रह्मादिपदस्यापि लिङादिवदुक्तमहिमसंभवादित्यर्थः ॥ ४९७ ॥

**यदाऽवगम्यते नान्यत्प्रवृत्तेः कारणान्तरम् ॥**
**शब्दश्च गम्यते स्पष्टस्तदाऽर्थः प्रविविच्यते ॥ ४९८ ॥**

पूर्ववादी परिहरति । **यदेति ।** यदा कारणान्तरं शब्दानन्तरभाविप्रवृत्तिहेतुगमकं लिङादिशब्दादन्यन्नावगम्यते लिङादिशब्दश्च प्रवृत्तिहेतुज्ञापको ज्ञायते तदा लिङादेरर्थो नियोगो मानान्तरायोग्यत्वेन नामपदार्थेभ्यो विविच्यते स च निष्कृष्टः स्पष्टः शब्दार्थीभूतः प्रवृत्तिहेतुरित्यर्थः ॥ ४९८ ॥

**अन्वयव्यतिरेकौ तु वाक्यार्थज्ञानपूर्वकौ ॥**
**वाक्यार्थस्तु तदायत्तो नेत्यन्येभ्यो विशिष्टता ॥ ४९९ ॥**

कार्यमात्रे लिङादेः शक्तिग्रहेऽपि तन्मात्रस्यानियोगत्वान्मानान्तरायोग्ये नियोगे कथममावनवसितसंगतिस्तमवगमयेदित्याशङ्क्याऽऽह । **अन्वयेति ।** उत्तमवृद्धोक्तवाक्यात्तदर्थे नियोगे मध्यमवृद्धस्य ज्ञानपूर्वकप्रवृत्तिलिङ्गेन बालस्यान्वयव्यतिरेकाभ्यमनुमानमुदेति विमता प्रवृत्तिः प्रवृत्त्यभावविरोधिधीपूर्विका विशिष्टप्रवृत्तित्वान्मदीयप्रवृत्तिवत्स च प्रवृत्त्यभावविरोध्यर्थः शब्दान्वयव्यतिरेकवत्तया शब्दादेव प्रतिपन्न इति निश्चिनोति । एवं मध्यमवृद्धेन शब्दावगते प्रवर्तके बाले न लिङादेः शक्तिग्रहान्न प्रवर्तकनियोगस्य मानान्तरगम्यत्वम् । नाप्यज्ञातशक्तेः शब्दस्य बोधकत्वमित्यर्थः । प्रवर्तकमनुमाय तत्र लिङादेः शक्तिग्रहे कथं प्रवर्तकनियोगस्य मानान्तरागम्यतेत्याशङ्क्याऽऽह । **वाक्यार्थस्त्विति ।** चन्द्रादिसंपृक्तराहोरध्यक्षत्ववदाज्ञाद्युपहितस्यैव नियोगस्यानुमानादिगोचरत्वान्न स्वरूपेण वाक्यार्थो नियोगो मानान्तराधीनाधिगतिरित्यन्येभ्यः स्वरूपेण तद्योग्येभ्यो नामार्थेभ्यस्तस्य विलक्षणता तथा चोपाधिद्वारा नियोगे मानान्तरप्रवेशात्तत्र लिङादेः शक्तिग्रहात्स्वरूपेण मानान्तराप्रवेशाद्वैदिकत्वसिद्धेर्नियोगपक्षो युक्तिमानिति भावः ॥ ४९९ ॥

**कर्तव्यताविवक्षैव नृवाक्येभ्योऽपि गम्यते ॥**
**विवक्षाया न कार्यत्वं शब्दार्थविषया हि सा ॥ ५०० ॥**

ननु रागादिलिङाद्यर्थत्वाभावेऽपि नियोगस्य न तदर्थत्वं विवक्षायास्तदर्थत्वात् । **उक्तं हि** [१]**कीर्तिना—**

१ ख °कतया ।

कटस्येष्टत्वासिद्धौ तद्गतकर्मत्वरूपार्थस्य तव्यसामर्थ्येन लाभान्न कटे द्वितीयाप्राप्तिरर्थादभिहितत्वादनभिहित इत्यधिकारानवतारादित्यर्थः ॥ ५१३ ॥

**न चाभीष्टत्वकार्यत्वमभिन्नं व्यतिरेकतः ॥**
**इच्छेदेष्टव्यमित्येवं तत्रापि प्रत्ययो यतः ॥ ५१४ ॥**

ननु कर्तव्यत्वादभीष्टत्वसिद्धिरिति हेतुहेतुमद्भावो न युक्तस्तयोरेकत्वेन साध्याविशिष्टत्वादित्याशङ्क्य फलाच्चेत्यादि प्रपञ्चयति । **न चेति** । व्यतिरेकं विशदयति । **इच्छेदिति** । इष्टत्वादर्थान्तरेऽपि कार्यार्थस्य तव्यादिप्रत्ययस्य दृष्टत्वात्प्रत्ययार्थस्येष्टत्वस्य च भेदो न हि धर्मं जिज्ञासितुमिच्छेद्धर्मजिज्ञासनमेष्टव्यमित्यादावेिष्टत्वं प्रत्ययार्थ इच्छाविषयत्वं हीष्टत्वं न चेच्छायास्तद्विषयत्वं स्वविषयत्वे वृत्तिविरोधादन्यविषयत्वे चानवस्थानात्कर्तव्यताविषयत्वं तु तस्या दृष्टं तस्मादन्यदिष्टत्वमन्यच्च कर्तव्यत्वमिति न साध्याविशिष्टतेति भावः ॥ ५१४ ॥

**तस्मात्कर्तव्यतावेशात्क्रिया वा यदि वा फलम् ॥**
**कारकं वाऽपि कार्यत्वं लभते न स्वतन्त्रतः ॥ ५१५ ॥**

कर्तव्यता क्रियादिभ्यो भिन्ना चेत्कथं तर्हि तेषु तद्धीरित्याशङ्क्याऽऽह । **तस्मादिति** ॥ ५१५ ॥

**लोकवन्ननु वेदेऽपि कार्यमात्रं न गम्यते ॥**
**साधनेहानुबन्धस्य वेदे कार्यस्य बोधनात् ॥ ५१६ ॥**

क्रियादिविलक्षणं कार्यं लिङादिवाच्यमिति स्थिते चोदयति । **लोकवदिति** । यथा लोके मानान्तरसिद्धधात्वर्थसंबद्धं कार्यं गृह्यते न तन्मात्रं तथा वेदेऽपि कार्यमात्रं न प्रतीयते यजेतेत्यादौ मानान्तरसिद्धयागादिरूपसाधनभूतचेष्टासंसृष्टस्य कार्यस्य प्रतिपादनादित्यर्थः ॥ ५१६ ॥

**ततश्चाऽऽरोग्यकामस्य पथ्यभोजनवाक्यवत् ॥**
**मानान्तरप्रवेशेन सापेक्षत्वं प्रसज्यते ॥ ५१७ ॥**

मानान्तरगम्यभावार्थस्पृष्टकार्यस्य वैदिकत्वे प्राप्ते दोषमाह । **ततश्चेति** । आरोग्यकामः पथ्यमश्नीयादिति वाक्यस्य स्वार्थे मानान्तरप्रवेशात्तत्सापेक्षत्ववद्वेदेऽपि यजेतेत्यादौ मानान्तरसिद्धसाध्यसाधनसंबन्धविषयत्वान्नियोगस्य प्रमाणान्तरप्रवेशोपपत्तेः सापेक्षत्वापत्तिरित्यर्थः ॥ ५१७ ॥

**अतः प्रैषादितुल्योऽयं क्रियाफलनिबन्धनः ॥**
**नियोगस्तदसंवादाच्चित्रादौ ते विहन्यते ॥ ५१८ ॥**

भवतु सापेक्षत्वं नेत्याह । **अत इति** । यतो मानान्तरसिद्धसाध्यसाधनसंबन्धविषयो नियोगो हरीतकीं भक्षयेदित्यादिना प्रैषादिनियोगेन समोऽतस्तेन मानान्तरेण फलसाध-

न्त्वोपरक्तकार्यगोचरेण विरोधादुपरोधाद्वा चित्रया यजेत पशुकाम इत्यादौ वेदमात्रे प्रामाण्यं हीयते लोके हि फलसाधनतावच्छिन्ने कार्ये दृष्टो लिङादिर्वेदेऽपि न स्वतन्त्रकार्यार्थः किंतु विनियोगाधीनमेव नियोगमाहेति फलसाधनात्मकविनियोगे मानान्तरापेक्षयाऽनपेक्षत्वक्षतिश्चित्रादेश्च पश्वादिविद्यमानोपलम्भनं यद्धि क्रियानन्तरं भवनार्हं तस्य मानान्तरोपलम्भनार्हताऽस्ति तेन तदपेक्षफलसाधनतया चित्रादौ कार्यता व्यक्ता न चात्रानन्तरोपलब्ध्यर्हमपि फलमुपलभ्यते तस्मान्मानान्तरगोचरविनियोगावच्छिन्ननियोगविषयत्वेन सापेक्षत्वाद्योग्यत्वे सत्यनन्तरं फलादर्शनविरोधाच्च न चित्रादिवाक्ये प्रामाण्यमित्यर्थः ॥ ५१८ ॥

**मैवं मानान्तरावेशाल्लोके प्रैषाद्युपाधिकम् ॥**
**कार्यं प्रयोजनार्था च प्रवृत्तिरिति युज्यते ॥ ५१९ ॥**

कार्यवादी लौकिकवाक्येषु गतिं दर्शयन्परिहरति । **मैवमिति** । लोके वाक्यानां पौरुषेयत्वात्तदर्थे मानान्तरावेशात्प्रैषाद्युपाधिकं लिङादिवाच्यं कार्यं मानान्तरगम्यविनियोगप्रधानमित्यङ्गीकरोति । **मानान्तरेति** । यत्तु लोके मानान्तरसिद्धफलसाधनत्वावच्छिन्नलिङाद्यर्थनियोगनिमित्ता शाब्दी प्रवृत्तिरिति तत्राऽऽह । **प्रयोजनेति** ॥ ५१९ ॥

**साध्यसाधनसंबन्धविषयत्वं पुमर्थतः ॥**
**नियोगस्यात एवात्र कर्तृत्वेन नियुज्यते ॥ ५२० ॥**

इतश्च लौकिकनियोगस्य मानान्तरसिद्धविनियोगविषयत्वमित्याह । **साध्येति** । तदेव हेत्वन्तरं स्फुटयति । **पुमर्थत इति** । हरीतकीभक्षणादौ फलोपायत्वस्य मानान्तरगम्यत्वात्तदवच्छिन्नो नियोगस्तद्गम्यविनियोगविषयो युक्त इत्यर्थः । लौकिकनियोगस्य मानान्तरगम्यविनियोगविषयत्वे गमकमाह । **अत इति** । हरीतकीभक्षणानियोगस्य मानान्तरगम्यविनियोगविषयत्वादिति यावत् । अत्रेति हरीतकीभक्षणोक्तिः ॥ ५२० ॥

**स्वत एव प्रवृत्तत्वात्कर्तुरेवाधिकारिता ॥**
**पदं चाऽऽरोग्यकामादि भवन्कर्तृविशेषणम् ॥ ५२१ ॥**

ननु विरेचनकामो हरीतकीं भक्षयेदित्यत्र यजेतेतिवन्नियोज्यान्वयपूर्वकेऽधिकारान्वये सति कर्त्रन्वयो वाच्योऽन्यथा वेदेऽपि कर्त्रन्वयप्राथम्यापातात्तत्राऽऽह । **स्वत इति** । आरोग्यकामो हरीतकीं भक्षयेदित्यत्र नियोगस्य मानान्तरयोग्यविनियोगविषयत्वाद्वाक्यापेक्षां विना मानान्तरादेव हरीतकीभक्षणे पुंप्रवृत्तेस्तत्र गुणभूतस्याऽऽदावेव कर्तृत्वेनान्वितस्य पश्चाल्लिङादिश्राविणो नियोज्यत्वाधिकारित्वान्वयः । वेदे त्वन्यथात्वं वक्ष्यत इत्यर्थः । ननु स्वर्गकामपदवदारोग्यकामपदे नियोज्यार्पके सति कथं कर्त्रन्वय-

१ क. °मिथ्यामन्या° ।

प्राथम्यं तत्राऽऽह । **पदं चेति ।** देवदत्तः पचतीत्यत्र देवदत्तपदवदिदमपि कर्तुरर्पकं मानान्तरवशादत्र पुरुषप्रवृत्तेरुक्तत्वान्न तु नियोज्यस्येत्यर्थः ॥ ५२१ ॥

**वेदे तु सकलाक्षादिप्रमाणागोचरत्वतः ॥**
**साध्यसाधनताज्ञानं नियोगादेव नान्यतः ॥ ५२२ ॥**

लौकिकवाक्यानां गतिमुक्त्वा वैदिकप्रवर्तकवाक्यानां गतिमाह । **वेदे त्विति ।** अपौरुषेये वेदे प्रतीतोऽपि नियोगो न मानान्तरगोचरो न च यागादेः स्वर्गाद्यसाधकत्वे तत्कामस्य तस्मिन्नियोगो युक्तोऽतो नियोगवशादेव तत्र साध्यसाधनताधीर्न मानान्तरादित्यर्थः ॥ ५२२ ॥

**तथा ह्यकारकः कामी स्वर्गकामपदार्पितः ॥**
**नियोगात्कर्मसंबन्धे पश्चाद्यातीह कर्तृताम् ॥ ५२३ ॥**

वेदे साध्यसाधनताधियो नियोगाधीनत्वेऽपि कामस्य कर्तृविशेषणत्वं लोकवदित्याशङ्क्याऽऽह । **तथा हीति ।** वेदे साध्यसाधनत्वस्य मानान्तरासिद्धत्वात्तद्विषयनियोगस्यातत्सापेक्षत्वाद्वेदादेव तत्सिद्धिरिति सिद्धे तस्मिन्कार्यात्मनि ममायमिति स्वामित्वबोद्धुर्नियोज्यस्य स्वर्गकामपदेनार्पणादादौ नियोज्यान्वयः स च पश्चान्नियोगविषये तत्करणे च कर्मण्यैश्वर्यमधिकारं प्रतिपद्यते । एवं स्वर्गकामशब्दितः कामी नियोज्यश्चाधिकारी च न कारकः कर्तेति कामो न कर्तृविशेषणमित्यर्थः । नियोज्यान्वयपूर्वकोऽधिकारान्वयोऽस्तु कर्त्रन्वयस्तु कथमिति तत्राऽऽह । **नियोगादिति ।** नियोगेन नियोज्यतयाऽन्वयस्तद्द्वारा कर्मण्यधिकारान्वयस्तस्मिन्सति मदीयनियोगसाधकं चेत्कर्म तत्तर्हि निर्वर्तयिष्यामीति धात्वर्थे गुणतया कर्तृत्वेनान्वेतीत्यर्थः ॥ ५२३ ॥

**कामस्य च प्रधानत्वात्तत्प्राधान्यानपायतः ॥**
**पुंविशेषणता तस्माद्भोगी कामी न कारकः ॥ ५२४ ॥**

स्वर्गकामादिवाक्ये कामो न कर्तृविशेषणमित्यत्रैव हेत्वन्तरमाह । **कामस्येति ।** तस्य फलविषयत्वेन प्राधान्यात्तत्प्रधानत्वात्यागेन पुंविशेषणता वाच्या क्रियां प्रति कर्तुर्गुणत्वात्तद्विशेषणत्वे तस्योपसर्जनोपसर्जनत्वात्प्राधान्याच्च्युतिरधिकारिविशेषणत्वे तु तस्य स्वामित्वेन प्राधान्यान्न कामप्राधान्यहानिरित्यर्थः । वेदे कामस्याधिकारिविशेषणत्वं निगमयति । **तस्मादिति ।** भोगः फलं नियोगस्तद्वान्नियोज्योऽधिकारी वेदे कामविशेषित इति यावत् । तत्र कामो न कर्तृविशेषणमित्येतन्निगमयति । **न कारक इति** ॥ ५२४ ॥

**अप्रवृत्तप्रवृत्तेश्च कारकत्वं न युज्यते ॥**
**प्रवृत्तस्य णिचोक्तिः स्यात्पचन्तं पाचयेद्यथा ॥ ५२५ ॥**

वेदे नियोज्यान्वयपूर्वकाधिकारान्वये कर्त्रन्वय इत्यत्रैव हेत्वन्तरमाह । **अप्रवृत्तेति ।** हरीतकीभक्षणे साध्यसाधनत्वस्य मानान्तरगम्यत्वात्तद्वशात्प्रवृत्तस्य न नियोगाधीना

प्रवृत्तिर्न न प्रवृत्तप्रवृत्तौ णिचोऽवकाशः पौरुषेयवाक्यानां हि वक्तृधीरर्थ एवमयं पुरुषो वेदेति भवति प्रत्यय इति स्थितेस्तन्मानान्तरात्प्रवृत्तस्य लौकिकवाक्याद्वक्तृज्ञानमवगच्छतस्तद्द्वारा प्रवृत्तौ णिचो नावकाशो वेदे तु यागादौ मानान्तरादप्रवृत्तेरप्रवृत्तस्यैव शास्त्रात्प्रवृत्तिरतो धात्वर्थे पुरुषस्याऽऽदावेव वेदे कर्तृत्वायोगान्नियोज्यान्वयपूर्वकमधिकारित्वं प्राथमिकमित्यर्थः। नन्वादौ कर्त्रन्वयार्थं यागादावपि प्रवृत्तप्रवृत्तिरिष्टा तत्राऽऽह। **प्रवृत्तस्येति**। प्रवृत्तस्यैव यागादौ शब्दात्प्रवृत्तिश्चेत्प्रयोजकीभूतनियोगस्य याजयेदिति णिचा वचनं स्याद्यथा पाके प्रवृत्तस्य प्रवर्तने पाचयेदिति णिचोक्तिर्न तथाऽत्र साऽस्ति न चापौरुषेये वेदे पौरुषेयवाक्यतुल्यत्वमतोऽप्रवृत्तप्रवर्तनादधिकारिणो विशेषणं वेदे कामो न कर्तुरित्यर्थः ॥ ५२५ ॥

**अक्रियाकर्तृसंबन्धे ननु षष्ठी प्रसज्जते ॥**
**नैवं नाम्नोः सदा योगे षष्ठीयं शैषिकी यतः ॥ ५२६ ॥**

क्रियाकर्तृभावेन नियोगस्वर्गकामयोः संबन्धं हित्वा स्वस्वामित्वेन संबन्धे चैत्रस्य स्वामितिवन्नियोगः स्वर्गकामस्येति कृत्वा स्वर्गकामे षष्ठी प्राप्नोतीति शङ्कते। **अक्रियेति**। परिहरति। **नैवमिति**। शेषे षष्ठीति संबन्धमात्रविषया सा सूत्रिता सा चेयं नाम्नोः संबन्धे नियताऽतो यजेतेत्यस्यानामत्वात्तद्योगे स्वर्गकामपदस्य तस्य यजेतेति न षष्ठीत्यर्थः ॥ ५२६ ॥

**क्रियाकारकयोगे च द्वितीयादिर्लडादि तु ॥**
**स्यात्प्रातिपदिकार्थस्य भावार्थेनेत्यसंकरः ॥ ५२७ ॥**

नाम्नोर्मिथो योगे षष्ठीति प्रसङ्गेनेतरविभक्तीनां विषयव्यवस्थामाह। **क्रियेति**। वृक्षस्तिष्ठति तं पश्येत्यादिप्रयोगेषु क्रियाकारकयोगे गम्यमाने तदवद्योती प्रथमा द्वितीयेत्यादिर्विभक्तिविशेषः स्यात्तत्रापि क्रियायाः कर्तृकर्मकरणसंप्रदानापादानाधिकरणसंबन्धे विभक्तिविशेषा भवन्तीत्यर्थः। कारकविभक्तीनां विषयमुक्त्वा क्रियापदविषयमाह। **लडादीति**। आदिपदेन लिडादयो नव लकारा गृह्यन्ते। "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" इति **सूत्रित**प्रातिपदिकार्थस्य पचत्यादिधात्वर्थेन योगे गम्यमाने लडादिविभक्तिः स्यात्तत्रापि वर्तमानत्वानद्यतनत्वादिविशेषेषु क्रियायोगे लकारविशेषा भवन्तीत्यर्थः। सुपां तिङां च विभक्तीनामित्थं व्यवस्थितावसांकर्यं फलमाह। **इत्यसंकर इति** ॥ ५२७ ॥

**नीलोत्पले तु नामार्थावपहाय परस्परम् ॥**
**भेदमेकात्मतां यातावि[^1]ति षष्ठी न संमता ॥ ५२८ ॥**

नाम्नोर्मिथो योगे षष्ठीत्युक्तं तर्हि नीलोत्पलयोरपि तथात्वान्मिथो योगे नीलमुत्पल-

[^1]: १ ख. प्रयुज्यते।

स्येति षष्ठी स्यान्न सामानाधिकरण्यमित्याशङ्क्याऽऽह । **नीलेति** । यद्यपि नीलोत्पले नामार्थौ तथाऽपि तौ मिथो भेदं हित्वा प्राप्तावेकात्मतां नीलस्योत्पलमुत्पलस्य वा नीलमिति षष्ठी तद्विदां नेष्टेति योजना । युतसिद्धयोर्नामार्थयोर्योगे षष्ठी नीलोत्पलयोस्त्वयुतसिद्धयोः सामानाधिकरण्यमेवेत्यर्थः ॥ ५२८ ॥

**लिङर्थे युज्यमानस्य कर्मत्वं न च कामिनः ॥**
**अक्रियात्वान्नियोगस्य द्वितीया चेद्भवेत्तथा ॥ ५२९ ॥**

स्वर्गकामिनि षष्ठ्यभावेऽपि द्वितीया स्यात्स हि नियोगेन प्रेर्यते ग्रामं गच्छतीत्यादौ च क्रियाव्याप्ये द्वितीया दृष्टाऽतः स्वर्गकामं यजेतेति वाक्यं स्यादिति चेन्नेत्याह । **लिङर्थ इति** । नियोगे प्रेर्यत्वेन संबध्यमानस्य स्वर्गकामस्य कर्मत्वाप्राप्तेर्न तस्मिन्द्वितीयेत्यर्थः । कामिनो नियोगे युज्यमानस्याकर्मत्वे हेतुमाह । **अक्रियात्वादिति** । क्रियाविशेषो हि कर्मापेक्षो नियोगो न क्रिया तत्साध्यत्वादतस्तस्मिन्युज्यमाने कामिनि न द्वितीयापत्तिः स्वामित्वेन हि तस्य संगतिरित्यर्थः । एतदेव व्यतिरेकमुखेनाऽऽह । **द्वितीयेति** । गमनादिवत्क्रिया चेन्नियोगस्तर्हि तत्प्रेर्ये कामिनि ग्रामवद्द्वितीया स्यान्नासौ क्रिया तदन्यत्वस्योक्तत्वादित्यर्थः ॥ ५२९ ॥

**तस्मादकारकः कामी स्वनियोगप्रसिद्धये ॥**
**नियुज्यमान एवेह विषयं साध्यमीक्षते ॥ ५३० ॥**

नियोज्यान्वयपूर्वकेऽधिकारान्वये कर्त्रन्वय इत्युक्तमुपसंहरति । **तस्मादिति** । यस्मात्कामी नियोगेन नियोज्यतयाऽन्वेति तस्मात्प्रथमं कर्तृत्वधीरहितः स्वामित्वेन संबध्यमानः स्वीयत्वेन ज्ञातनियोगस्य विषयकरणविरहिणः स्फुरणसत्तानुपपत्तेस्तादर्थ्येन विषयाद्यपेक्षमाणो लिङादिना धात्वर्थे प्रेर्यमाणस्तदेव प्रतीत्यनुबन्धितया विषयमुत्पत्तिप्रयोजकतया च करणं स्वानुष्ठेयं पश्यतीत्यर्थः ॥ ५३० ॥

**राजादिषु प्रसिद्धश्च नियोगः साध्यगोचरः ॥**
**भावार्थस्य च साध्यत्वमिति तेनापि युज्यते ॥ ५३१ ॥**

ननु नियोगविषयस्य साध्यत्वमनियतं दध्नेन्द्रियकामस्येत्यादौ सिद्धेऽपि दध्यादौ नियोगदर्शनादत आह । **राजादिष्विति** । दध्यादेरपि धात्वर्थाविष्टतया साध्यस्यैव नियोगविषयता दृष्टेति भावः । नियोगस्य साध्यविषयत्वेऽपि दध्यादेः स्वरूपेणैव साध्यतया तद्विषयत्वसंभवे कृतं क्रियानुप्रवेशेनेत्याशङ्क्याऽऽह । **भावार्थस्येति** । क्रियैव साक्षात्साध्या तद्द्वारा द्रव्यादीति स्वसाक्षिकमित्यर्थः । ननु स्वर्गकामः स्वाभिलषितस्वर्गोपाये संबध्येत न चैकस्यैव स्वर्गस्य नियोगो यागश्चेति द्वावुपायावेकेनैवेष्टसिद्धावपरानर्थक्याद्विकल्पापत्तेरतो नियोगयागयोरन्यतरस्मिन्नेव स्वर्गकामस्य संगतिर्नेत्याह ।

---

१ क. ॰ति ते वा॰ । २ ख. ॰स्तमेव ।

इति तेनेति । नियोज्यत्वाधिकारित्वपूर्वकं कर्तृत्वमित्युक्तन्यायेन स्वर्गकामो नियोगेनाऽऽदौ संबध्य धात्वर्थेनापि संबध्यते न खल्वाशुतरविनाशिधात्वर्थो विना नियोगमिष्टमुपनयति नापि स भावार्थादृते भवति न च सोऽनिष्पन्नः स्वर्गमुपनयेत्तस्मादुभयत्र कामिनः संगतिरिति भावः ॥ ५३१ ॥

**अविवक्षितमप्येवं लिङ्गसंख्यं विवक्ष्यते ॥**
**पश्चाद्विषयसिद्ध्यर्थं कारकादि च यच्छ्रुतम् ॥ ५३२ ॥**

स्वर्गकामस्योभयत्र योगेऽपि वाक्यस्य नियोगपरत्वे स्वर्गकामपदे लिङ्गसंख्ययोरविवक्षितत्वादनुष्ठात्रनियमादनुष्ठानमनियतं स्यादित्याशङ्क्य पश्वेकत्वाधिकरणन्यायेनाऽऽह । **अविवक्षितमिति ।** उक्तन्यायाद्वाक्यस्य नियोगपरत्वाद्यद्यपि स्वर्गकामपदे लिङ्गं च संख्या चेत्येतदप्रतिपाद्यं तथाऽपि श्रुतलिङ्गादित्यागेनाश्रुतकल्पनायोगाद्यथाश्रुतं तद्ग्राह्यमित्यक्षरार्थः । **अयं भावः**—स्थितं **चतुर्थे**—"तत्रैकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वात्" [ पू० मी० ४ । १ । ११ ] ज्योतिष्टोमे यो दीक्षितो यदग्नीषोमीयं पशुमालभत इत्यनड्वाहौ युनक्तीति च श्रुतमश्वमेधेऽपि वसन्ताय कपिञ्जलानालभत इति । तत्रैकत्वाद्यविवक्षितं विवक्षितं वेति **संशये** पशुना यजेतेति वाक्यार्थे सति करणत्वेन पशोर्नियोगान्वयादेकत्वादेश्च तदभावात्तत्र पशावनडुहोः कपिञ्जलेषु चैकत्वाद्ययज्ञाङ्गभूतमविवक्षितमर्थस्य पश्वादेर्गुणभूतत्वेन नियोगायोगित्वादिति **पूर्वपक्षे राद्धान्तितम्** । "शब्दवत्तूपलभ्यते तदागमे हि दृश्यते तस्य ज्ञानं यथाऽन्येषाम्" [ पू० मी० ४ । १ । १९ ] इति । लोके **पशुमानयेत्या**दिप्रयोगे सत्येकत्वादिविशिष्टपश्वानयनं प्रतीयते तस्यैकवचनादेरागमे तस्यैकत्वादेर्ज्ञानं दृश्यते यदागमने यदुपजायते स तस्यार्थ इति गम्यते यथाऽन्येषां शब्दानामश्वमानयेत्युक्ते सत्यश्वानयनं गामानयेति तदानयनं चार्थो भाति तस्मात्पशुना यजेतेति वाक्येन संख्या यज्ञे विधीयत इति **सूत्रार्थः** । तथाच प्रकृतेऽपि स्वर्गकामपदे संख्या विवक्षिता । न चोपादेयविशेषणतया पश्वेकत्वस्य विवक्षितत्वेऽपि स्वर्गकामैकत्वं ग्रहैकत्ववदनुपादेयविशेषणत्वादविवक्षितमिति युक्तं तत्र हि वाक्यभेदादविवक्षितत्वम् । स्वर्गकामस्य तु नियोज्यत्वेनोपादेयत्वात्तद्विशेषणमेकत्वं कुतो न विवक्ष्यते । न चैवमपि लिङ्गमविवक्षितम् । पशुना यजेतेत्यत्र लिङ्गमविवक्षितं विवक्षितं वेति **संशय्यानुष्ठानविशेषा**नापादकत्वादविवक्षितमिति प्राप्य्यानुष्ठाने भेदाभावेऽपि तस्य विशेषनिष्ठत्वादुपादेयद्रव्यविशेषनिश्चयं विना तदयोगात्तन्निश्चयहेतुत्वाल्लिङ्गस्य संख्यावद्विवक्षितं तदित्युक्तम् "तथा च लिङ्गम्" [ पू० मी० ४ । १ । १७ ] इत्यत्र । अतः स्वर्गकामपदे लिङ्गमपि विवक्षितमिति तथाऽपि फलादेरविवक्षितत्वे कथमनुष्ठानं न हि विहाय क्रियाकारकफलाद्यनुष्ठानं नाम न चैकस्मिन्नेव वाक्ये नियोगस्य फलादेश्च विवक्षितत्वं वाक्यभेदापातादि-

---

१ ख. °द्वतस्तूप° ।

त्याशङ्कयाऽऽह । **पश्चादिति ।** प्रत्ययार्थप्रतीत्यनन्तरं तद्विषयधात्वर्थनिष्पत्त्यर्थं संनिधौ श्रुतं यत्कर्ता फलमितिकर्तव्यतेति तदपि ग्राह्यं न चार्थभेदाद्वाक्यभेदः साक्षान्नियोगपरस्यार्थादर्थान्तरेऽपि कारकादौ पर्यवसानादित्यर्थः ॥ ५३२ ॥

**ततश्च स्वर्गकामो यः स्वनियोगं स साधयेत् ॥**
**केन यागादिनिर्वृत्त्येत्येतच्छास्त्रात्प्रतीयते ॥ ५३३ ॥**

लिङ्गसंख्याकर्तृफलानां विवक्षितत्वे फलमाह । **ततश्चेति ।** फलस्य विवक्षितत्वात्स्वर्गकामोऽधिकारी न यत्किंचित्कामो लिङ्गस्य विवक्षितत्वात्तत्कामः पुरुषोऽधिकारी न स्वातन्त्र्यात्काऽपि स्त्री तत्कामा संख्याया विवक्षितत्वात्तत्काम एवाधिकारी न तत्कामौ तत्कामाश्च कर्तुर्विवक्षितत्वात्स एव क्रियाद्वारा स्वनियोगं साधयेन्नान्य इत्यर्थः । इतिकर्तव्यतादेर्विवक्षितत्वे फलोक्त्यर्थं केन स स्वनियोगं साधयेदित्याकाङ्क्षते । **केनेति ।** करणेतिकर्तव्यतयोर्विवक्षितत्वाद्यागस्य साङ्गस्य संपादनेन नियोज्यः स्वनियोगं साधयेदित्याह । **यागेति ।** साङ्गयागानुष्ठानान्नियोगसिद्धौ मानमाह । **इत्येतदिति** ॥ ५३३ ॥

**न चानपनयन्यागः कामिनः स्वर्गकामिताम् ॥**
**साधनं स्वाधिकारस्य भवतीह कथंचन ॥ ५३४ ॥**

ननु नियोगपरे वाक्ये लिङ्गादेरप्रतिपाद्यस्यैव फलवशादादानेऽपि यागादेर्नियोगसाधनत्वादसाधनं स्वर्गादि स्यान्नियोगस्य तत्साधनत्वे चाप्राधान्यमत आह । **न चेति ।** इह स्वर्गे कामिनो विहितो यागः कामिनः स्वर्गोत्पादनेन तत्कामितां पुंसो नापनयेच्चे[2]त्स्वसाध्याधिकाराख्यनियोगस्य न कथंचिदपि साधनं स्यान्नहि पुरुषेष्टं स्वर्गमनुपनयन्यागो नियोगं जनयेदतो नियोगद्वारा स्वर्गोत्पादनेन तदिच्छां यागोऽपनयेदित्यर्थः ॥ ५३४ ॥

**अनुन्मृदितकामो हि पूर्वावस्थाविशेषतः ॥**
**निष्पादिताधिकारोऽपि नियोगार्हः पुनर्भवेत् ॥ ५३५ ॥**

ननु यागो नियोगमेव साधयति तस्य तत्सिद्धिप्रयोजनत्वान्नियोगसिद्धेः किमन्यत्प्रयोजनं सर्वविधीनामिति हि टीकाकृतः स्वर्गकामना पुनरपि स्थास्यति नेत्याह । **अनुन्मृदितेति ।** यागेनानपाकृतस्वर्गकामनश्चेत्पुरुषस्तदा तेनाऽऽपादितनियोगोऽपि पुनस्तद्योग्यः स्यान्नियोगनिष्पत्तेः प्रागिवोर्ध्वमपि कामित्वाविशेषादतो यागो नियोगद्वारा स्वर्गमुत्पाद्य तत्कामितां पुंसो निवर्तयति नियोगसिद्धिस्तु नित्यविधीनामेव फलं विध्यन्तरेषु तद्द्वारा फलान्तरोपगमादित्यर्थः ॥ ५३५ ॥

**अधिकारः स्वसिद्ध्यर्थमतः कामस्य साध्यताम् ॥**
**यागेनाऽऽपाद्य संसिध्यन्विषयस्यैति साध्यताम् ॥ ५३६ ॥**

---

१ ख. °न्त्र्यात्कापि । २ ख. °च्चेत्तत्स्व° ।

यागः स्वर्गद्वारा तत्कामितापनायकश्चेत्तेनैवालं कृतं नियोगेनेत्याशङ्क्याऽऽह । **अधिकार इति ।** यागस्याऽऽशुनाशित्वात्कालान्तरभाविस्वर्गाहेतुत्वात्तद्धेतुतया नियोगाङ्गीकारादधिकारो नियोगः स्वसिद्ध्यनुकूलनियोज्यलाभार्थं स्वर्गस्य साध्यतां स्वविषयधात्वर्थेनाऽऽपाद्य नियोज्यानुष्ठितस्वविषयद्वारा स्वयं सिध्यन्विषयस्यैव करणत्वात्तत्साध्यतां गच्छति । तथा चास्य प्राधान्यमपि न च्यवते स्वानुकूलनियोज्यलाभार्थमेव फलानुकूलतावलम्बनादित्यर्थः ॥ ५३६ ॥

**नानन्तरफलाभावे विसंवादोऽत्र शङ्क्यते ॥**
**क्रियासाध्ये फले स स्याल्लिङर्थस्त्वक्रियात्मकः ॥ ५३७ ॥**

ननु भोजनादिवद्यागादेरनन्तरफलानुपलम्भादमानत्वं स्वर्गकामादिवाक्ये शङ्क्यते फलसाधनतावच्छिन्नो हि नियोगो लिङर्थोऽतो मानान्तरसापेक्षविनियोगविषयनियोगवाचित्वाल्लिङादेस्तद्युक्तं वाक्यं सापेक्षत्वादमानं यथाऽऽह कालान्तरफले स्वर्गादौ मानान्तरानर्हेऽपि तदपेक्षविनियोगाधीनो नियोगोऽनुगम्यत एवेति फले योग्यानुपलब्धिर्विरोधाच्च वेदाप्रामाण्यशङ्काऽवतरति नेत्याह । **नानन्तरेति ।** अत्र चित्रादिवाक्ये चित्राद्यनन्तरमुपलम्भार्हेऽपि फले पश्वादौ तदनुपलम्भान्मानान्तरेण विसंवादस्ततश्चाप्रामाण्यमित्ययुक्तमित्यत्र हेतुमाह । **क्रियेति ।** फले क्रियासाध्ये सति क्रियानन्तरं तदनुपलम्भाद्विसंवादादमानत्वं वाक्यस्य शङ्क्येत न चात्र सा युक्ता नियोगस्याक्रियात्वात्तत्साध्ये फलेऽनन्तरानुपलम्भाधीनाप्रामाण्यशङ्कानवतारान्निरस्ता च वैदिकनियोगस्य सापेक्षतेत्यर्थः ॥ ५३७ ॥

**प्रत्यर्थिनि च शब्देऽस्मिन्नाभावोऽनुपलब्धितः ॥**
**मानाभावे ह्यसौ मानमानन्तर्यं त्वचोदितम् ॥ ५३८ ॥**

यागाद्यनुष्ठानान्नियोगसिद्धौ तस्य मानान्तरानपेक्षत्वेऽप्यनन्तरानुपलम्भे योग्यानुपलम्भात्फलाभावनिश्चयान्न वाक्यमानतेत्याशङ्क्याऽऽह । **प्रत्यर्थिनीति ।** फलसत्त्वग्राहिणि शब्दे तदसत्त्वविरोधिनि सति योग्यानुपलब्ध्या न फलाभावः सिध्यति फलभावप्रमाणविरोधात्तदभावमानानुदयादिति भावः । अभावमानविरोधाद्भावमानस्यैवानुत्थानमाशङ्क्याऽऽह । **मानेति ।** भावमानाभावे सति तद्रूपानुपलब्धिरभावे मानं शब्दे चानादौ भावमानेऽनुपलब्धेरेवाभावान्न तद्विरोधाद्भावमानानुत्थानमित्यर्थः । तर्हि फलं प्रतिपादयता शब्देन यागादेस्तज्जन्यानियोगस्य वाऽनन्तरफलत्वं वाच्यं नेत्याह । **आनन्तर्यं त्विति ।** यागाद्युत्थनियोगस्य फलमावश्यकमित्येतावान्फलश्रुतेरर्थो न तस्याऽऽनन्तर्यमप्यतोऽपूर्वद्वारा फलसिद्धिध्रौव्यादानन्तर्यमशाब्दमित्यर्थः ॥ ५३८ ॥

**अतः कृताधिकारोऽपि यो विद्यादकृतार्थताम् ॥**
**तस्य शास्त्रानभिज्ञत्वान्नाधिकारोऽत्र वैदिके ॥ ५३९ ॥**

फलवाक्यमालोचयतो यागानुष्ठायिनो निष्पादितनियोगस्यानन्तरानुपलम्भेऽपि फलित्वाभिमानो युक्तस्तदालोचनाविकलस्त्वापादितनियोगोऽपि स्वस्याफलित्वमनन्तरानुपलम्भादित्यवश्यं वाक्याप्रामाण्यसंशयी स्यादित्याशङ्क्याऽऽह । **अत इति ।** कृतनियोगस्य पुंसोऽवश्यंभावि फलमित्यतःशब्दार्थः । तथाऽपि शास्त्रालोचनविकलत्वाद्विधितो निष्पादितनियोगोऽपि स्वस्याफलित्वं यो मन्यते तस्य वैदिके कर्मणि नाधिकारो विदुषस्तद्भावात्तेन तदीयः संशयो न प्रामाण्यविघातीत्यर्थः ॥ ५३९ ॥

**मन्त्रार्थवादनाम्नां च कार्यार्थानुप्रवेशतः ॥**
**प्रामाण्यं न स्वतस्तस्मात्कार्ये वेदस्य मानता ॥ ५४० ॥**

स्वर्गकामादिवाक्यस्य नियोगपरस्य प्रामाण्येऽपि मन्त्रादेरविवक्षितार्थत्वान्न सर्वस्य वेदस्य कार्यनिष्ठतेत्याशङ्क्य मन्त्राधिकरणादिन्यायेनाऽऽह । **मन्त्रेति** । अस्यार्थः । स्थितं **प्रमाणलक्षणे**—"तदर्थशास्त्रात्" [ पू० मी० १ । २ । ३१ ] श्रुत्यादिविनियुक्तार्थप्रकाशनसमर्था मन्त्राः किमविवक्षितार्थाः किंवा विवक्षितार्था इति **संशये मन्त्राणामुरु** प्रथस्वेत्यादीनां विवक्षितार्थत्वे तत्सामर्थ्यादेव पुरोडाशप्रथनादौ तद्विनियोगात्तदर्थशास्त्रस्योरु प्रथस्वेति पुरोडाशं प्रथयतीत्यादेरानर्थक्याद्यदभिधानसमर्थास्ते तेष्वेवैतान्निबध्नाति शास्त्रमित्युच्चारणमात्रोपकारिणो मन्त्रा इत्युभयाप्रामाण्यात्तदुपेतं प्रयोगशास्त्रमप्यप्रमाणमिति प्राप्ते **सिद्धान्तितम्** "अविशिष्टस्तु वाक्यार्थः" [ पू० मी० १।२।३० ] इति । सर्वशब्दानामर्थपरतया लोके व्युत्पन्नत्वान्मन्त्रेषु च प्रयुज्यमानानां स्वतोऽर्थपरत्वावगमान्मन्त्रलिङ्गालोचनया प्राप्तविनियोगानुवादेनापि तदर्थशास्त्राणामुपपत्तेर्लोकवेदयोर्वाक्यार्थाविशेषादुभयत्र प्रामाण्यात्तदेकवाक्यं प्रयोगशास्त्रं प्रमाणमिति सूत्रार्थः । तदेवं मन्त्राणां कार्यशेषत्वेन प्रामाण्यमर्थवादानां च तच्छेषत्वेन तत्त्वमुक्तमर्थवादाधिकरणे न तु तेषां कार्यसंबन्धं विना स्वार्थे मानता तत्र फलाभावान्नामधेयानामपि विध्युद्देशान्तर्भावेन कार्यपरत्वमेव । **तथा हि**—संभवदाख्यातसामानाधिकरण्यानुद्भिदभिजिच्चित्राज्यपृष्ठबहिष्पवमानाग्निहोत्राज्याघारश्येनेत्यादिशब्दानुदाहृत्य किं ते धर्मे प्रमाणं नेति **संशय्य** विध्यर्थवादमन्त्रांशैर्वेदस्य धर्मप्रतिपादकत्वादुद्भिदादिशब्दानां तेष्वनन्तर्भावात्तेषां च फलकरणेतिकर्तव्यतान्यतमविषयत्वाभावादेवंजातीयकं धर्मे न प्रमाणमिति **पूर्वपक्षयित्वा** समस्तस्यैवाऽऽम्नायस्याध्ययनं विध्युपात्ततया पुरुषार्थावसायित्वादुद्भिदादिशब्दानामपि पुमर्थावसायिताया वक्तव्यत्वाद्विध्युद्देशान्तर्भावस्य च प्रत्यक्षत्वात्तत्रैव गुणत्वेन नामधेयत्वेन वा प्रामाण्यमध्ययनविध्यनुरोधादध्यवसातव्यमिति **राद्धान्तितम्** "उक्तं समाम्नायैदमर्थ्यं तस्मात्" [ पू० मी० १ । ४ । १ ] इत्यत्र । तदेवं विध्युद्देशान्तर्भावेन नामधेयानां परत्वे स्थिते गुणविधानेन नामधेयत्वेन वा तेषां तत्परत्वमिति **संदिह्यापि** वा नामधेयं

---

१ क. ख. °म्भादत्र° । २ ख. °माण्ये सं° । ३ क. °धाने स° ।

न्यादित्यारभ्य तत्र तत्र गुणविधित्वनिराकरणेन नामधेयत्वेन तत्परत्वं प्रतिपाद्य नामधेययुक्तो वेदो धर्मे प्रमाणमिति नामधेयपादे **निर्धारितम्**। तस्मात्कार्ये सर्वस्य वेदस्य मानतेति ॥ ५४० ॥

**वेदान्तानामतो वाच्यं कार्यार्थानुप्रवेशनम् ॥**
**प्रामाण्यं वा निषेद्धव्यमत्र प्रतिविधीयते ॥ ५४१ ॥**

तथाऽपि न कार्ये वेदस्य मानता वेदान्तानामकार्ये तात्पर्यादित्याशङ्क्याऽऽह । **वेदान्तानामिति**। कार्यशेषत्वेन तत्प्रामाण्यं न मृष्यते चेदप्रामाण्यमेव तेषामित्याह। **प्रामाण्यं वेति**। हेत्वाभासप्राप्तं **पूर्वपक्षमनूद्य सिद्धान्तमाह**। **अत्रेति** ॥ ५४१ ॥

**निःशेषमातृतद्वृत्तिजन्मनां तद्विलक्षण—**
**स्वतःसिद्धात्मसंबोधव्याप्तिर्वस्त्वनुरोधतः ॥ ५४२ ॥**

कार्यानुप्रवेशाभावे वेदान्तानामप्रामाण्यं विषयाभावाद्वा सिद्धार्थे[1] शब्दसामर्थ्याद्यदर्शनाद्वेति विकल्प्याऽऽद्यं दूषयति। **निःशेषेति**। मातृशब्देन साभासा बुद्धयो गृह्यन्ते तद्गता वृत्तयो रागादयो निःशेषाणां मातॄणां तद्वृत्तीनां च यानि जन्मानि तेषां बुद्धितद्वृत्तितद्धर्मविलक्षणः स्वतःसिद्धत्वादात्मरूपो यः संबोधश्चिद्धातुस्तेन व्याप्तिरस्त्यनवच्छिन्नात्मरूपानुविधानान्नहि जन्मादिविक्रियावद्बुद्ध्यादावात्मनो व्याप्त्यभावोऽनवच्छिन्नत्वान्न च तद्व्याप्तिं विना जडं बुद्ध्यादि सिध्यत्यतो विक्रियावद्बुद्धितद्वृत्तीनां कूटस्थचिदात्मव्याप्तत्वाद्बुद्ध्यादिसाक्ष्यात्मनो वेदान्तप्रमेयस्य संभवान्न तेषां विषयाभावादप्रामाण्यमित्यर्थः ॥ ५४२ ॥

**वियद्वस्तुस्वभावानुरोधादेव न कारकात् ॥**
**वियत्संपूर्णतोत्पत्तौ कुम्भस्येव दृशा धियाम् ॥ ५४३ ॥**

ग्रामस्य चैत्रेण व्याप्तौ स्यात्तुश्चैत्रस्य स्वगतविकारवद्बुद्ध्यादेश्चिदात्मव्याप्तावात्मनोऽपि विकारप्रसङ्गान्न वेदान्तवेद्यस्य कूटस्थतेत्याशङ्क्याऽऽह । **वियदिति**। यथा कुम्भस्योत्पत्तौ वियता पूर्णता वियतः सर्वगतत्वस्वरूपानुरोधादेव न क्रियावत्त्वात्तथा धियां तद्वृत्तीनां तद्धर्माणां च दृगात्मना व्याप्तिस्तद्गतक्रियां विना पूर्णचित्स्वरूपवशादेवातो युक्ता वेदान्तवेद्यस्य कूटस्थतेत्यर्थः ॥ ५४३ ॥

**घटदुःखादिरूपत्वं धियां धर्मादिहेतुतः ॥**
**निर्हेतुत्वात्मसंबोधरूपित्वं वस्तुरूपतः ॥ ५४४ ॥**

आत्मनो विकारादृते बुद्ध्यादिव्याप्तौ बुद्ध्यादेरपि विना विकारं बाह्यान्तरविषयाकारभजनं स्याद्व्याप्तृत्वाविशेषादन्यथाऽऽत्मनोऽपि विकारद्वारैव बुद्ध्यादिव्याप्तेरकूटस्थतेति

---

1 ख. सिद्धेऽर्थे ।

चेन्नेत्याह । **घटेति** । बुद्धेर्जडाकारभजनमदृष्टकृतं न स्वारसिकं बुद्धिबोध्ययोरुभयोरपि परिच्छिन्नत्वाद्धर्मादेश्च साभासबुद्धिविक्रियात्वाद्युक्तं बुद्धेर्विकारद्वारा विषयाकारत्वमित्यर्थः । बुद्धेर्बोध्याकारवत्प्रत्यगाकारभजनमपि धर्मादिकृतमतो न प्रतीचः स्वतो बुद्ध्यादिव्याप्तिरित्याशङ्क्याऽऽह । **निर्हेत्विति** । बुद्धेश्चिदाकारत्वं नादृष्टकृतमनवच्छिन्नात्मरूपस्य बुद्ध्यादौ सदा व्याप्तस्यानुरोधादेव तत्सिद्धेरित्यर्थः ॥ ५४४ ॥

**बुद्धितद्वृत्तिभावोऽयमभावश्चाप्यनन्यमात् ॥**
**यतः सिद्ध्यायते सोऽर्थो ज्ञेयः सिद्धः स्वतः सदा ॥ ५४५ ॥**

प्रतीचो वेदान्तवेद्यस्य कूटस्थत्वेऽपि घटादिसाधकस्य मातुः साधकान्तरापेक्षावदस्यापि तत्प्राप्तेर्न स्वतःसिद्धतेत्याशङ्क्याऽऽह । **बुद्धीति** । बुद्धितद्वृत्तिभावाभावौ यतो मानाभासमनुभवतः सोऽर्थः सदा स्वतःसिद्धो ज्ञेय इति संबन्धः । तस्य स्वप्रकाशत्वेनान्यानपेक्षत्वे हेतुमाह । **अनन्यमादिति** । स्वविषयमानं विना भानादित्यर्थः । यद्वा यत इत्यस्य विशेषणमनन्यमादिति नास्त्यन्या मा यस्य सोऽनन्यमस्तस्मादिति यावत् ॥ ५४५ ॥

**ननु प्रमाणविरहात्स्वतःसिद्धो यदीप्यते ॥**
**वचसो बुद्धबोधित्वादप्रामाण्यं प्रसज्यते ॥ ५४६ ॥**

कूटस्थे बुद्ध्यादिसाक्षिणि स्वप्रकाशे वेदान्ता न प्रमाणं तत्र तेषामनुवादकत्वेनाप्रामाण्यस्य दुर्वारत्वादिति शङ्कते । **नन्विति** । प्रमाणविरहात्तद्विना भानादिति यावत् ॥ ५४६ ॥

**मैवमप्रतिपन्नत्वादनुभूत्यैव वस्तुनः ॥**
**तद्व्द्युत्पत्तेः पुरा साक्षाद्बोधो व्युत्पत्तिमात्रतः ॥ ५४७ ॥**

बुद्धबोधित्वेन स्वप्रकाशे प्रतीचि वेदान्तामानत्वं निरस्यति । **मैवमिति** । तस्मिन्वस्तुनि व्युत्पत्तेर्वाक्योत्थज्ञानात्पूर्वमज्ञोऽहं मां न जानामीति सर्वजनीनानुभवेनैव स्वप्रकाशस्याप्यज्ञातत्वाद्वेदान्तविचारादिरूपव्युत्पत्तिशब्दितश्रवणादिमात्रेण तत्रापरोक्षबोधोत्पत्तेर्युक्तं तस्मिन्वेदान्तप्रामाण्यमित्यर्थः ॥ ५४७ ॥

**बोधाबोधौ यतो दृष्टौ स्वानुभूत्यनुसारतः ॥**
**दृष्टे चानुपपन्नत्वं किंबलादभिधीयते ॥ ५४८ ॥**

स्वप्रकाशे कादाचित्को बोधोऽनाद्यबोधश्च तस्मादेवायुक्तावित्याशङ्क्याऽऽह । **बोधेति** । अन्वयव्यतिरेकाभ्यां विद्वदनुभवाच्च प्रतीचि कादाचित्को बोधो दृष्टोऽज्ञोऽहमित्यनुभवादनाद्यबोधश्च तेन तत्र घटते वेदान्तमानतेत्यर्थः । दृष्टोऽप्यबोधादिः स्वप्रकाशेऽनुपपन्नत्वात्त्यज्यतामित्याशङ्क्याऽऽह । **दृष्टे चेति** । आत्मन्यबोधादौ दृष्टे यदनुपपन्नत्वं तत्किंबलादिति वाच्यं न तावदनुभवबलादात्मन्यबोधाद्यसत्त्वे तदभावाद्युक्तिबलादयुक्तत्वमिष्टमेव कूटस्थे चिद्रूपे प्रतीचि बोधाबोधयोर्विनाऽनुभवं युक्तितोऽनभ्युपगमादिति भावः ॥ ५४८ ॥

**सुषुप्त्यादेश्च संसिद्धिर्मात्रादिविरहेऽपि या ॥**
**साऽपीहान्तरसंबुद्धमेयमात्रव्यपाश्रयात् ॥ ५४९ ॥**

ज्ञानविरोध्यज्ञानमनुभवमाश्रित्य तत्प्रसादात्कथं सिध्यति न हि विरोधिनः साधकत्वमाश्रयत्वं चेत्याशङ्क्याऽऽह । **सुषुप्त्यादेरिति ।** मात्राद्यभावेऽपि या स्वापमूर्छादिः स्फूर्तिः साऽपीह व्यवहारभूमौ भवन्ती प्रत्यग्भूताज्ञातानुभवात्मकवस्त्ववष्टम्भाद्भवति । तथाच ज्ञानविरोधिस्वापादिसिद्धिवत्तद्विरोध्यज्ञानसिद्धिरप्यनुभवादेवेत्यर्थः ॥ ५४९ ॥

**न चाभावप्रमाणात्सा सति मातर्यभावमा ॥**
**मात्राद्यभावसंसिद्धिः कथं मात्रादिपूर्विका ॥ ५५० ॥**

ननु स्वापादिसिद्धिर्नानुभवात्किं तु मात्रादिसत्त्वे विषयोपलब्धिध्रौव्याद्योग्यानुपलब्धेरन आह । **न चेति ।** तत्र हेतुः सतीति । उत्थितस्य न किंचिदवेदिषमिति स्वापादिपरामर्शो दृष्टो स च परामृश्यमानानुभवपूर्वको न च स्वापादिकाले तद्विषययोग्यानुपलम्भादिसंभवस्तदा मातुरभावान्न च तं विना मानप्रवृत्तिरतोऽनुभवादेव स्वापादिकाले तत्सिद्धिवत्तस्मादेवाज्ञानसिद्धिरपि न च निवर्तकस्यानुभवस्य साधकत्वाश्रयत्वायोगो वाक्योत्थबोधस्याज्ञानध्वंसिनः प्रकृतानुभवादर्थान्तरत्वादिति भावः । किंच मात्राद्यभावः स्वापादिस्तस्य स्फूर्तिर्न मात्रादिनिमित्ता स्वस्य स्वाभावासाधकत्वादन्यस्य च तत्साधकत्वेऽनवस्थानादतोऽनुभवादुक्तस्वापादिसिद्धिवदज्ञानसिद्धिरपीत्याह । **मात्रादीति ॥** ५५० ॥

**यमप्रमीयमाणानि नानात्मानं प्रमिण्वते ॥**
**वस्तुवृत्तानुरोधेन कथं तत्राप्रमा वचः ॥ ५५१ ॥**

स्वप्रकाशेऽपि प्रतीचि बोधाबोधयोरानुभविकत्वाद्युक्तं तत्र वेदान्तमानत्वमित्युक्त्वा तत्रैव कैमुतिकन्यायमाह । **यमिति ।** प्रत्यक्षादीनां तद्विषयाणां च जाड्यान्न स्वतः स्फूर्तिर्नाप्यन्यसाधकत्वमात्मनस्त्वजडचिद्वस्तुनः स्वतः स्फुरतः सर्वसाधकत्वमेवंविधवस्तुस्वरूपानुसारेण प्रत्यक्षादीनि यस्मिन्नात्मनि प्रमामनुत्पाद्य शब्दादिकं विषयं प्रमापयितुं न प्रभवन्ति तस्मिन्वेदान्तवचो न कथंचिदप्यमानं यदा हि शब्दादिबोधनेन चरितार्थमप्यध्यक्षाद्युक्तनीत्याऽऽत्मनि मानं तदा तत्त्वमादेरनन्यविषयत्वेनाचरितार्थस्य प्रतीचि प्रामाण्यमवश्यंभावीत्यर्थः ॥ ५५१ ॥

**अमीमांसक इत्युच्चैरमीमांसक इत्यतः ॥**
**आक्षिपन्ति यदज्ञानात्तच्छान्त्या उत्तरं वचः ॥ ५५२ ॥**

अकार्यानुप्रवेशित्वे वेदान्तानां विषयाभावेन प्रामाण्याक्षेपं परिहृत्य सिद्धेऽर्थे शब्दसामर्थ्याद्यदृष्टेस्तत्प्रामाण्याक्षेपं परिहर्तुं सर्वोऽपीत्यादिभाष्यमवतारयति । **अमीमांसक**

१ क. ॰माणीय॰ ।

**इति** । अमी कार्यवादिनः सिद्धेऽर्थे वेदप्रामाण्यमिति ब्रुवन्तं मांसको न्यायहीनमर्थं वदन्नमीमांसको विचारपराङ्मुख इत्युच्चैराक्षिपन्ति । अमीमांसक इति वा वीप्सया मामुपालभन्ते । उपालम्भे हेतुमनूद्य तन्निषेधं प्रतिजानीते । **अत इति** । अस्मादनुभवसिद्धान्नास्ति सिद्धेऽर्थे शब्दशक्तिरित्यादिरूपाद्यस्मात्प्रत्यगज्ञानादाक्षेपस्तस्य शान्त्यर्थं सर्वोऽपीत्यादि भाष्यमित्यर्थः ॥ ९९२ ॥

**सर्वोऽपि वेद इत्यादि यथोक्तपरिहारकृत् ॥**
**गुरुराह वचः स्पष्टं दृढन्यायोपबृंहितम् ॥ ९९३ ॥**

उत्तरं वच इति साधारण्येनोक्तं भाष्यं विशेषेणावलम्बते । **सर्वोऽपीति** । तस्योक्ताक्षेपसमाधौ तात्पर्यमाह । **यथोक्तेति** । तस्य नाबोधकत्वमाप्तोक्तत्वादित्याह । **गुरुरिति** । संदिग्धबोधित्वं विपर्यस्तबोधित्वं वा नास्तीत्याह । **स्पष्टमिति** । उपकरणन्यायाभासत्वकृतं दोषं धुनीते । **दृढेति** ॥ ९९३ ॥

**मानस्वभावमाश्रित्य सर्वोऽपीत्याद्युदीरणम् ॥**
**काण्डद्वयसमाख्या हि तत्प्रमेयानुरोधतः ॥ ९९४ ॥**

ननु कथमस्मिन्भाष्ये मिथो विलक्षणार्थं काण्डद्वयमेकराशित्वेनोपदिश्यते तत्राऽऽह । **मानेति** । अज्ञातार्थज्ञापकत्वं वेदमात्रस्य स्वभावस्तमाश्रित्य सर्वोऽपीत्येकराशित्वेन काण्डयोर्ग्रहणमित्यर्थः । कथं तर्हि तद्भेदप्रसिद्धिस्तत्राऽऽह । **काण्डेति** । अतीन्द्रियेऽर्थे मानत्वमेकोपाधिमाश्रित्य वेदमात्रस्यैकराशित्वेन ग्रहेऽपि काण्डभेदप्रसिद्धिर्युक्ता । सिद्धसाध्यत्वेन विषयभेदादित्यर्थः ॥ ९९४ ॥

**मानं हि व्यञ्जकं लोके सिद्धे तच्च स्वकारणात् ॥**
**स्वतः सिद्धेऽथ वा नित्यं मेयमात्रं विशिष्यते ॥ ९९५ ॥**

मानस्वभावमाश्रित्येति बोधकत्वं मानस्योक्तं तदयुक्तं चक्षुरादौ माने कारकत्वप्रसिद्धेरित्याशङ्क्याऽऽह । **मानं हीति** । न चक्षुरादि मानं तदुत्थज्ञानस्यैव[1] तद्भावादिति भावः । व्यञ्जकत्वमेव कारकत्वमित्याशङ्क्याऽऽह । **सिद्ध इति** । स्वतोऽन्यतो वा सति व्यञ्जकत्वमसति तु कारकत्वमिति भेदोऽस्तीत्यर्थः । स्वतः सति व्यञ्जकत्वमन्यादृशं परतः सति चान्यादृशमित्याशङ्क्याऽऽह । **मेयमात्रमिति** । विषये स्वतस्त्वपरतस्त्वविशेषेऽपि न मानस्य व्यञ्जकत्वे कश्चिद्विशेषस्तत्साधकाभावादित्यर्थः ॥ ९९५ ॥

**अतः सर्वोऽपि वेदोऽयं प्रमाणत्वैकहेतुतः ॥**
**प्रकाशनपरो ज्ञेयः सिद्धसाध्यात्मवस्तुनः ॥ ९९६ ॥**

लौकिक[2]मानवृत्तं वेदेऽपि वदन्भाष्यार्थमुपसंहरति । **अत इति** । लोके मानस्य व्यञ्ज-

१ ख. °दित्यर्थः । व्य° । २ ख. °किकं मा° ।

कत्वनियमाद्वेदेऽपि लोकानुसारात्काण्डद्वयात्मा सर्वो वेदो मानत्वादज्ञातज्ञापकस्तत्रापि ज्ञानकाण्डं सिद्धार्थस्य साध्यार्थस्य च काण्डान्तरं प्रकाशकमित्यर्थः ॥ ५५६ ॥

**एकवाक्यत्वतो यद्वा सर्वोऽपीत्यादि भण्यते ॥**
**पुरुषार्थावसायित्वाद्वेदाधीतिविधेरिति ॥ ५५७ ॥**

मानस्वभावस्याध्यक्षादिष्वपि तुल्यत्वात्काण्डद्वयासाधारण्याभावान्न तदाश्रित्य तदेकराशीकरणमित्याशङ्क्य भाष्यस्यार्थान्तरमाह । **एकवाक्यत्वत इति ।** सिद्धसाध्यार्थभेदान्नैकवाक्यतेत्याशङ्क्याऽऽह । **पुरुषार्थेति ।** अध्ययनविधेरक्षरावाप्तिद्वाराऽर्थबोधद्वारा वा फलान्तत्वात्तेनोपात्तकाण्डयोरेकपुमर्थावसायितया प्रयाजदर्शादिवाक्यवदेकवाक्यतेत्यर्थः । एकवाक्यत्वे काण्डयोरेकराशीकरणं युक्तमितीतिशब्दार्थः ॥ ५५७ ॥

**निःशेषसुखसंप्राप्तेः सर्वानर्थह्नुतेस्तथा ॥**
**मुक्तेरर्वाक्पुमर्थोऽन्यो नेह कश्चित्समीक्ष्यते ॥ ५५८ ॥**

कर्मकाण्डस्य स्वर्गाद्यर्थत्वाज्ज्ञानकाण्डस्य च मोक्षार्थत्वादेकफलत्वाभावान्नैकवाक्यतेति चेन्नेत्याह । **निःशेषेति ।** शास्त्रे द्विरूपाया मुक्तेरधस्तादन्यो न कश्चित्पुमर्थः स्वर्गादेराद्यन्तवत्त्वेन फलाभासत्वात्तत्राध्ययनविधेरवान्तरविधीनां चापर्यवसानान्मोक्षार्थतया युक्ता काण्डयोरेकवाक्यतेत्यर्थः ॥ ५५८ ॥

**असिद्धार्थस्य वा सिद्धिरनुभूत्येकमात्रतः ॥**
**सर्वोऽपीति वचः सिद्धिः सर्वा ह्यात्मैकसंविदः ॥ ५५९ ॥**

स्ववाक्यावगतात्कार्यान्नापेक्षन्ते फलान्तरमित्युक्तत्वान्न मोक्षफलतया काण्डयोरेकवाक्यतेत्याशङ्क्य व्याख्यान्तरमाह । **असिद्धार्थस्येति ।** स्वतःसत्तास्फूर्तिशून्यजडप्रपञ्चस्य सत्त्वं स्फूर्तिश्च याऽनुभूतिरेकाऽद्वितीया तावन्मात्ररूपेण भवतीत्यस्मिन्नर्थे **भाष्यम**वतारयति । **सर्वोऽपीति वच इति ।** अस्यार्थः । वेदनं वेदोऽनुभवः स च शब्देतरमानायोग्यो रूपादिहीनत्वात्स चेष्टानिष्टप्राप्तिपरिहारोपायस्तस्यैव तत्तदात्मनाऽवस्थानात्स च प्रकाशनः सर्वप्रकाशनत्वात्स च परोऽविद्यातज्जातीतत्वादेवंरूपो वेदश्चिदेकरसः प्रत्यग्धातुरेव सर्वोऽपि प्रपञ्च इति । तस्यानुभवमात्रत्वे युक्तिमाह । **सिद्धिरिति ।** आत्मरूपा यैकाऽद्वया संवित्ततः सर्वस्य जडस्य सिद्धिर्जाड्यादेव स्वतःसिद्ध्ययोगात्संविदितरसाधकाभावाच्च सा च सिद्धिः सर्वा सर्वं जडं स्वात्मन्यन्तर्भावयत्यनुभाव्यस्यानुभवाद्भेदेनानुपलम्भाज्जडसिद्धिश्चोक्तसंविदतिरेकेण नास्ति विशिष्टसिद्धेः स्वरूपाव्यतिरेकादतः सर्वं वेदशब्दितानुभवमात्रमैतदात्म्यमिदं सर्वमिति **श्रुतेरारम्भणाधिकरणन्याया**च्चेति भावः ॥ ५५९ ॥

**यद्वाऽनवगतोऽतोऽन्यः संभाव्यो नाऽऽत्मनस्ततः ॥**
**सर्वोऽपीति वचः प्राह तथा चोर्ध्वं प्रवक्ष्यते ॥ ५६० ॥**

ननु वेदपदस्य रूढिं त्यक्त्वा योगेन कृतं व्याख्यानमयुक्तं रूढिर्योगमपहरतीति न्यायादित्याशङ्क्य व्याख्यान्तरमाह । यद्वेति । अस्मादात्मनोऽन्यो नानवगतः संभाव्यतेऽन्यस्याज्ञानमयत्वेनाज्ञातत्वायोगात्तस्मादात्मन एवाज्ञातत्वात्तत्रैव सर्वो वेदो मानमित्यर्थः । अस्मिन्नर्थे भाष्यमादत्ते । सर्वोऽपीति । प्रत्यक्षादिनाऽनवगतो योऽसाविष्टप्राप्त्याद्युपायो ब्रह्मात्मा तस्य प्रकाशनपरः सर्वोऽप्ययं वेद इत्येतमर्थमाह भाष्यमित्यर्थः । कथं प्रत्यग्धातोरेवाज्ञातत्वं तत्राऽऽह । तथा चेति । ऊर्ध्वमित्यव्याकृतविचारोक्तिः ॥ ९६० ॥

**यद्धेतुकं प्रमाणत्वं वेदान्तानां समर्थ्यते ॥**
**तेनैव हेतुना कर्मकाण्डस्यापि प्रमाणता ॥ ९६१ ॥**

इत्थं भाष्यार्थे बहुमुखे संभवत्यपि कथं सिद्धेऽर्थे वेदान्तप्रामाण्यं तदुक्त्यर्थमिदं भाष्यमिति प्रक्रान्तं तत्राऽऽह । यद्धेतुकमिति । प्रामाण्यहेतोरज्ञातज्ञापकत्वस्य तुल्यत्वात्तदपि तयोस्तुल्यमेवेत्यर्थः । यद्धेतुकं कर्मकाण्डस्य प्रमाणत्वं तेनैव हेतुना वेदान्तानामपि समर्थ्यते प्रमाणतेति संबन्धः ॥ ९६१ ॥

**वेदान्तानाममानत्वं येन वा हेतुनोच्यते ॥**
**तेनैव हेतुना कर्मकाण्डस्यापि प्रसज्यते ॥ ९६२ ॥**

कर्मकाण्डविरोधाज्ज्ञानकाण्डाप्रामाण्यमाशङ्क्य वैपरीत्योपपत्तेर्मैवमित्याह । वेदान्तानामिति ॥ ९६२ ॥

**अपि सर्वप्रमाणानि स्वप्रमेयाभिसंगतेः ॥**
**प्रमामेवेह कुर्वन्ति प्रामाण्यं यान्ति नान्यथा ॥ ९६३ ॥**

किंच वेदान्ताः स्वार्थे मानमज्ञातज्ञापकत्वादध्यक्षवदित्याह । अपि सर्वेति । सर्वाण्येवाध्यक्षादीनि मानान्यज्ञातार्थयोगात्तत्र प्रमां कुर्वन्त्येव मानत्वं यान्ति फलवन्निश्चिताबाधितधीजनकत्वमेव हि मानत्वमतो वेदान्तानामपि तद्वदज्ञातं ज्ञापयतां मानतेत्यर्थः । स्वार्थे मानत्वाभावेऽज्ञातज्ञापकत्वस्यैव हानिरिति विपक्षे बाधकमाह । नेति ॥ ९६३ ॥

**विधिनैवैकवाक्यत्वं यतो मन्त्रार्थवादयोः ॥**
**ततो दर्शननिष्ठत्वं न तयोरुपपद्यते ॥ ९६४ ॥**

अथ वेदान्ता न स्वार्थे मानं विधिरहितवाक्यत्वान्मन्त्रादिवत्तत्राऽऽह । विधिनेति । मन्त्रादेस्तत्र तत्र प्रस्तुतविध्येकवाक्यतायाः श्रुत्यादिसिद्धत्वान्न स्वार्थे विफले धीहेतुत्वेन मानत्वमतः स्वार्थे विफलत्वमुपाधिरित्यर्थः ॥ ९६४ ॥

**अर्थवादोक्तितो याऽपि प्रतिष्ठाकामिकल्पना ॥**
**विध्यर्थसंगतावेव साऽपि नैव ततोऽन्यतः ॥ ९६५ ॥**

ननु स्वार्थे पुमर्थराहित्यादर्थवादादेस्तन्निष्ठत्वेनाप्रामाण्ये रात्रिसत्राधिकरणविरोधः ।

तथा हि **चतुर्थे** स्थितम्। "क्रतौ फलार्थवादमङ्गवत्कार्ष्णाजिनिः" [पू०मी०४।३।१७] **रात्रिसत्रे** प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्तीत्यत्र स्वर्गकामस्यैवाधिकारः किं वाऽऽर्थवादिकफलकामस्येति **संशये** प्रतितिष्ठन्तीति वर्तमानापदेशात्पर्णतादिष्विवा-ङ्गेषु साध्यफलानवगमात्क्रतौ प्रतिष्ठारूपफलवचनमर्थवादतया स्तुतिमात्रमिति स्वर्गकाम-स्यैवाधिकारे प्राप्ते **राद्धान्तः** "फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात्" [पू०मी०४।३।१८] इति। प्रतिष्ठावाक्यस्यार्थवादत्वेऽपि संनिहितत्यागेनात्यन्तासंनिहितस्वर्गकल्पनायो-गात्क्लृप्तं प्रतिष्ठारूपं फलमत्रास्तीत्यर्थवादे फलनिर्देशात्तत्कामस्यैवात्राधिकारः फलाश्रुतौ हि तत्कल्पनया तत्कामस्याधिकारः स्यादिति सूत्रार्थः। तथाचार्थवादनिष्ठं प्रतिष्ठा-ख्यफलं गृहीत्वा तत्कामिनो रात्रिसत्रेऽधिकारकल्पना ते विरुध्यते न खल्वर्धजरतीयं लभ्यमत आह। **अर्थवादेति**। प्रतितिष्ठन्तीत्यर्थवादवशात्प्रतिष्ठाख्यं फलमादाय तत्कामिनोऽधिकारकल्पना या सत्रे कृता साऽपि तस्य विधिसंबन्धद्वारा मानत्वे सत्येव न ततो विधिसंगतेरन्यतः स्वातन्त्र्येणार्थवादस्य मानत्वादेषा कल्पना। **यथाऽऽहुः**— प्रयोगवचनेन स्तुतिर्वा सह प्रतिष्ठादिभिर्विधात्री भविष्यतीति। तन्न प्रतिष्ठावाक्यवन्म-न्त्रादेः स्वार्थे मानतेत्यर्थः॥ ५६५॥

**विध्यर्थशेषभावश्च ततश्चार्थान्तरोक्तिता॥**
**ऐकार्थ्याद्वचसोऽशक्या विरुद्धद्व्यर्थकल्पना॥ ५६६॥**

ननु विध्यर्थशेषभावात्स्वार्थे च तात्पर्यादर्थवादस्योभयत्र मानत्वाद्विधिद्वारैव तस्मान्न फलकल्पना तत्राऽऽह। **विध्यर्थेति**। एकस्य वाक्यस्यैकस्मिन्नर्थे तात्पर्याद्विध्यर्थशेष-भावस्तत्र तात्पर्यं ततो विधेरर्थान्तरं स्वार्थस्तदुक्तिता तत्र तात्पर्यमिति विरुद्धार्थयोस्ता-त्पर्यकल्पनायोगादेकमेव वाक्यमुभयपरमिति वाक्यविदामसंगतेरर्थवादस्य विध्यर्थे महा-तात्पर्यद्वारा स्वार्थेऽवान्तरतात्पर्यमिति भावः॥ ५६६॥

**विरोधे गुणवादः स्यादनुवादोऽवधारिते॥**
**भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः॥ ५६७॥**

ननु स्वार्थे चेदर्थवादस्यावान्तरतात्पर्यं तर्हि यजमानः प्रस्तर इत्याद्यर्थवादानां स्वार्थेऽ-वान्तरतात्पर्यान्मानत्वे सर्वमपि वाक्यं स्वार्थे मानं स्यादित्याशङ्क्यार्थवादस्थमवान्तरभे-दमाह। **विरोध इति**। अस्यार्थः। अर्थवादो द्विविधो भूतार्थवादोऽभूतार्थवादश्च। आद्योऽपि द्वेधा संवादविसंवादहीनः संवादपूर्वकश्च। तत्राऽऽदित्यो यूप इत्यादिरभूतार्थ-वादः।स च स्वार्थेऽध्यक्षादिविरोधे सत्यमानत्वाद्विम्यतो गुणवादो भवति। **उक्तं हि**—"सारू-प्यात्"[पू०मी०१।४।२९]इति। आदित्यो यूपो यजमानो यूप इत्यत्रानध्यवसायोऽर्थवादो वेति **संशये** विरोधान्मुख्यार्थत्वायोगाद्गुणासंबन्धेनार्थवादत्वस्यायुक्तत्वादनध्यवसाये प्राप्ते

---

१ ख. °दस्थं प्र°। २ ख. °ष्ठाफ°। ३ क. °वन्माफलकान्म°।

तेजस्वित्वोर्ध्वत्वाभ्यां यूपस्याऽऽदित्ययजमानसादृश्याद्गौण्या वृत्त्या सामानाधिकरण्योपपत्तेरर्थवादतेति राद्धान्तितमिति । प्रतिपन्ने स्वार्थे प्रवृत्तोऽर्थवादो भूतस्यैव तस्यानुवादः सन्प्रशंसापरो भवतीत्याह । **अनुवाद इति । यथाऽऽह**—"प्रशंसा" [पू० मी० १।४।२६ ] इति । अपशवो वाऽन्ये गोअश्वेभ्यः पशवो गोअश्वा इत्यत्रानध्यवसायोऽर्थवादो वेति **संशय्य** प्रशंसानवगमादर्थवादत्वायोगादनध्यवसाये प्राप्तेऽन्येषामपि पशुजातीयत्वेनापशवोऽन्ये गोअश्वेभ्य इतिजातिनिषेधायोगात्कार्यनिषेधे पर्यवसानादपशव इत्यादिना गवादीनां पशुत्वस्य प्रतिपन्नस्य पशवो गोअश्वा इत्यनुवादाद्गवाश्वेषु पशुकार्यकरताया अगौणत्वात्प्रशंसासिद्धेरर्थवाद इति **राद्धान्तितमित्यर्थः** । क्वचित्पुनर्मानान्तरसंवादाद्यभावाद्विद्यमानस्यैवाज्ञातार्थस्योक्तिरित्याह । **भूतेति । उक्तं च**—"भूम्ना" [पू० मी० १।४।२७] इति । सृष्टीरुपदधातीत्यत्रानध्यवसायोऽर्थवादो वेति **संशये** सृष्टसृष्टिषु बह्वीष्विष्टकासु प्राप्तासु सृष्टिशब्दस्यानुवादित्वायोगादनध्यवसाये प्राप्ते सृष्टीनां भूयस्त्वात्ताभिः सहैकोपधानक्रियायोगादन्यासामपि लक्षणयाऽनुवादसंभवात्सृष्टिस्तुत्यर्थत्वेनार्थवादतेति **सिद्धान्तः** । तदिदमर्थवादत्रैविध्यं प्रमाणलक्षणे प्रसिद्धमित्याह । **अर्थवाद इति** ॥ ५६७ ॥

**विधिशेषोऽपि यद्यर्थमर्थवादः समर्पयेत् ॥**
**अद्वैतविधिनाऽऽक्षिप्ता वेदान्ता नेति का मितिः ॥ ५६८ ॥**

ननु संवादविसंवादयोरसतोरर्थवादस्य स्वार्थेऽपि देवताधिकरणन्यायेनावान्तरतात्पर्यान्मानत्वमिष्यतां तथाऽपि वेदान्तेषु किमायातं तदाह । **विधीति** । अद्वैतविधिस्तत्त्वावबोधस्तेन हेतुत्वेनाऽऽक्षिप्ता वेदान्ता न स्वार्थमर्पयन्तीत्यत्र मानाभावात्तेषां सिद्धेऽर्थे मानता सिद्धेत्युत्तरार्धार्थः ॥ ५६८ ॥

**प्रत्यक्षाद्यभिधानेन सर्वमानोपलक्षणम् ॥**
**मान्तरं नाऽऽगमादन्यद्यदैकात्म्यावबोधकृत् ॥ ५६९ ॥**

सर्वोऽपीत्यादिभाष्यव्याख्याद्वारा वेदान्तानां ब्रह्मात्मनि प्रामाण्यमुक्तं संप्रति प्रत्यक्षानुमानाभ्यामिति भाष्ये विशेषणादुपमानादिविषयत्वाद्ब्रह्मणस्तत्र वेदान्तानां तत्संवादविसंवादाभ्याममानतेत्याशङ्क्याऽऽह । **प्रत्यक्षादीति** । आगमस्यापि तर्हि सर्वपदोपात्तस्य प्रत्यक्षादिनोपलक्षणात्तद्गोचरत्वमैकात्म्यस्योक्त्वा तत्प्रकाशपरत्वं वेदस्य वदतो व्याहतिरित्याशङ्क्य प्रत्यक्षानुमानाभ्यामनवगतेत्यस्यार्थमाह । **मान्तरमिति** ॥ ५६९ ॥

**सिद्धेऽनवगते यस्मात्पुरस्ताद्यापृतिर्मितेः ॥**
**मानादज्ञाततासिद्धौ स्यादन्योन्यसमाश्रयः ॥ ५७० ॥**

प्रत्यक्षादौ मान्तरपदप्रयोगात्तस्य मानत्वे तद्विरोधाद्वेदो न ब्रह्मणि मानमित्याशङ्क्य

---

१ क. °ज्ञानता° । २ क. °क्षादेर्मान्त° ।

प्रत्यक्षादेर्व्यावहारिकमेव मानत्वं न तात्त्विकमज्ञातार्थाभावादिति वक्तुं सामान्यं न्याय-माह । **सिद्ध इति**[1] । प्रमाणप्रवृत्तेः प्रागेवाज्ञातेऽर्थे सिद्धे पश्चात्तत्प्रवृत्तिरिष्टा तस्मात्प्रागेवाध्यक्षादिप्रवृत्तेस्तद्विषयाज्ञातत्वं ज्ञेयमित्यर्थः । प्रागेव ज्ञायतां तदिति चेत्तत्र मानात्तत्सिद्धिरनुभवाद्वेति विकल्प्याऽऽद्यं दूषयति । **मानादिति** । नाप्यनुभवात्तत्सि-द्धिरनङ्गीकारादन्यथा स्वातिरिक्तस्य स्वाध्यस्तस्यैव साधकत्वात्तस्य जडतदज्ञातत्वयो रज्जुसर्पवत्तस्मिन्नध्यासप्रसङ्गान्न तद्विषयाध्यक्षादेस्तात्त्विकमानतेति द्रष्टव्यम् ॥ १७० ॥

**तत्त्वमस्यादिवाक्यस्य विरोधोऽतो न केनचित् ॥**
**सर्वाश्रयत्वात्संवित्तेस्तथाऽऽत्मन्यप्रवृत्तितः ॥ ५७१ ॥**

प्रत्यक्षादेरतात्त्विकमानत्वे फलितमाह । **तत्त्वमिति** । आगमस्याध्यक्षाद्यविरोधे हेत्वन्तरमाह । **सर्वेति** । अनुभवस्य सर्वाधिष्ठानत्वात्प्रत्यक्षादेः सविषयस्य तन्निष्ठत्वा-त्तद्विषयागमस्य तैरविरोधोऽधिष्ठानमानस्याऽऽरोपितेनाबाधादिति भावः । अविरोधे हेत्व-न्तरमाह । **तथेति** । रूपादिमद्विषयाध्यक्षादेस्तद्धीनात्मन्यप्रवृत्तेस्तद्विषयागमस्य न तद्विरोधो भिन्नार्थत्वादित्यर्थः ॥ ५७१ ॥

**कृत्स्नेष्टार्थस्य संप्राप्तिः कृत्स्नानर्थहनुतिस्तथा ॥**
**आत्मस्वरूपान्नान्यत्र संभाव्या सा हि मानतः ॥ ५७२ ॥**

अथैकात्म्यवाक्यस्य मानान्तरविरोधाधीनामानत्वनिवृत्तये विध्यननुप्रवेशेऽपि स्वार्थे फलाभावकृतामानत्वाशङ्कां निरसितुं तत्प्रवेशेन भाव्यम् । तथाच स्वार्थे पुमर्थराहित्य-मित्युक्तोपाधेः साधनव्याप्तिस्तत्राऽऽह । **कृत्स्नेति** । ज्ञातमात्मतत्त्वं परः पुरुषार्थ आत्म-लाभात्परलाभाभावात्तत्कथं तद्विषयागमस्य स्वार्थे फलाभावादमानत्वं कथंतरामुपाधेः साध-नव्याप्तिरित्यर्थः । द्विविधं फलमात्मरूपमपि विध्यायत्तं फलत्वात्स्वर्गवदिति चेन्नेत्याह । **सा हीति** । फलाप्तिः सर्वनाम्ना परामृश्यते । आत्मज्ञानादेवेष्टानिष्टप्राप्तिपरिहारौ न च तावात्मत्वादेव विध्यायत्तौ न चोक्तानुमानसंभवो रज्जुज्ञानाधीने फले व्यभिचारा-दिति भावः ॥ ५७२ ॥

**इत्येवमादिभाष्यार्थः क्रमेणैकात्म्यवस्तुनि ॥**
**यत्नेन वक्ष्यते न्यायात्पूर्वपक्षनिरासतः ॥ ५७३ ॥**

ननु सर्वोऽपीत्यादिभाष्येण वेदान्तानां ब्रह्मात्मन्युक्तमपि मानत्वं तावन्न स्थैर्यमवल-म्बते यावन्न पूर्वोक्ताः पूर्वपक्षहेतवः प्रतिक्षिप्यन्ते तत्र आह । **इत्येवमादीति** । इति-शब्दो मानान्तराविरोधपरामर्शी । एवंशब्दस्तेन संवादाभावपरः । आदिपदं फलतात्पर्य-योरभावव्याप्तेर्ग्रहार्थम् । अनेन विधिना सर्वोऽपीत्यादिभाष्यार्थो ब्रह्मणि वेदान्तमान-त्वाख्यो यो व्याख्यातः स क्रमेण न्यायावष्टम्भात्पूर्वपक्षहेतुनिरासद्वारा मानतात्पर्यालोच-

१ ख °ति । मानप्र°।

नया स्थिरी करिष्यते तत्र भाष्यार्थीभूतसिद्धार्थवेदमानत्वस्यास्थैर्याशङ्केत्यर्थः ॥ ९७३ ॥

**वेदान्तवचसां स्वार्थे प्रामाण्यं न विहन्यते ॥**
**मानलक्षणसद्भावाज्ज्योतिष्टोमादिवाक्यवत् ॥ ९७४ ॥**

कथं तर्हि पूर्वपक्षहेतुनिरसनमित्याशङ्क्य तस्यानपेक्षत्वमित्यत्र सिद्धस्य मानान्तरयोग्यत्वात्तत्र वेदान्तानां न मानतेत्युक्तं प्रत्याह । **वेदान्तेति** । आत्मनो मानान्तरयोग्यताया निरस्तत्वान्निरसिष्यमाणत्वाच्च तस्मिन्वेदान्तप्रामाण्यं युक्तमज्ञातज्ञापकत्वात्संमतवदित्यर्थः ॥ ९७४ ॥

**नैव कार्यैकनिष्ठानि व्यवहारे वचांसि हि ॥**
**नियमेन प्रयुज्यन्त इत्यत्र मितिरस्ति ते ॥ ९७५ ॥**

यत्तु शब्दसामर्थ्यनियमो लोकादेवेत्यादौ शब्दप्रयोगस्य कार्यपरत्वात्तत्परत्वे शब्दस्य सिद्धे सिद्धेऽर्थे न प्रामाण्यमिति तत्राऽऽह । **नैवेति** । वृद्धव्यवहारे हि वचांसि प्रयुज्यमानानि कार्यार्थान्येव नियमेन प्रयुज्यन्त इत्यत्र नैव ते मितिरस्तीति योजना ॥ ९७५ ॥

**दिष्ट्या त्वं वर्धसे भद्र जातः पुत्रस्तवाधिमान् ॥**
**इति नेदं प्रवृत्त्यर्थं वचो नापि निवृत्तये ॥ ९७६ ॥**

नियमे प्रमित्यभावं सिद्धार्थपरतया वाक्यप्रयोगप्रदर्शनेन साधयति । **दिष्ट्येति** । अथ पुत्रजन्मवाक्यमपि प्रवृत्त्यादौ पर्यवस्यन्न सिद्धार्थनिष्ठं नेत्याह । **इति नेदमिति** । प्रवर्तकनिवर्तकशब्दाश्रवणादित्यर्थः ॥ ९७६ ॥

**सुखाद्युत्पत्तिहेतूनि दृश्यन्तेऽकार्यवन्त्यपि ॥**
**वचनानि व्रज ग्राममित्यादीनि यथा तथा ॥ ९७७ ॥**

तर्हि न प्रवृत्तिनिवृत्तिभ्यां शून्यस्येत्युक्तन्यायात्पुत्रजन्मवाक्यस्याफलत्वादप्रामाण्यमित्याशङ्क्याऽऽह । **सुखादीति** । तदुत्पत्तौ हेतुत्वयुक्तानीति यावत् । यथा विधिवाक्यं सफलमेवमकार्यवन्ति विधिहीनान्यपि पुत्रजन्मादिवाक्यानि सुखाद्युत्पत्तिहेतुत्वभाञ्जि फलवन्ति दृश्यन्ते तद्विधिवाक्यवत्तद्धीनमपि वाक्यं स्वार्थे मानमित्यर्थः ॥ ९७७ ॥

**सुख्येधीति न चानेन प्रवृत्तिरुपदिश्यते ॥**
**सुखीभवनमस्यार्थान्नोपदेशव्यपेक्षया ॥ ९७८ ॥**

पुत्रजन्मवाक्येऽपि सुखी भवेति विधिरस्तीत्याशङ्क्य तेनोपाये प्रवृत्तिरुपदिश्यते सुखीभवने वेति विकल्प्याऽऽद्ये दोषमाह । **सुखीति** । पुत्रजन्मोपायस्य सिद्धत्वान्न तत्र प्रवर्तको विधिरित्यर्थः । द्वितीयं दूषयति । **सुखीभवनमिति** । अस्येति षष्ठी पितरमधिकरोति । उपदेशो विधिः । अर्थात्पुत्रजन्मश्रुतिसामर्थ्यादिति यावत् ॥ ९७८ ॥

**विशेषोऽस्ति प्रवृत्तेश्चेत्तात्पर्यं वचसोऽपि च ॥**
**नैवं सुखादिसंभूतावर्थवत्त्वोपपत्तितः ॥ ५७९ ॥**

पुत्रजन्मवाक्यश्रवणानन्तरं जातकर्मादिरूपो विशेषः प्रवृत्तेर्दृश्यते तत्र चापूर्वे फलवति वाक्यतात्पर्यमिति प्रवृत्तिनिष्ठमेव तदिति शङ्कते । **विशेषोऽस्तीति । वैश्वानरं** द्वादशकपालं निर्वपेत्पुत्रे जातेऽग्निमुपसमाधायेत्यादिविध्यन्तराधीनत्वाज्जातकर्मादिप्रवृत्तेर्न तत्परत्वं पुत्रजन्मवाक्यस्येति दूषयति । **नैवमिति ।** कथं तर्हि फलवत्त्वेन मानतेत्याशङ्क्य सुखाद्युत्पत्तिहेतूनीत्यत्रोक्तं स्मारयति । **सुखादीति ।** सुखस्य दुःखनिवृत्तेश्चोपायभूतपुत्रजन्मज्ञानोत्पत्तौ वाक्यस्यार्थवत्त्वेन मानत्वसिद्धेर्न तस्य प्रवृत्तिनिष्ठतेत्यर्थः ॥ ५७९ ॥

**आनर्थक्यभयादेव श्रुतादन्यत्र कल्प्यते ॥**
**तात्पर्यं प्रोक्षणाद्युक्तेर्न स्वतन्त्रेऽधिकारवत् ॥ ५८० ॥**

पुत्रजन्मवाक्यस्य स्वार्थनिष्ठत्वेऽपि तद्दृष्टान्तात्तत्त्वमादिवाक्यं न स्वार्थे पर्यवस्यति प्रोक्षणादिवाक्यवत्तस्य स्वार्थादन्यत्र तात्पर्यसंभवादित्याशङ्क्याऽऽह । **आनर्थक्येति ।** अस्यार्थः । प्रोक्षणादिवाक्यस्य स्वार्थे फलराहित्याच्छ्रुतादन्यत्र परमापूर्वे प्रकरणात्तात्पर्यं कल्प्यते । तदुक्तं **नवमे**—"संस्कारे[१] युज्यमानानां तादर्थ्यात्तत्प्रयुक्तं स्यात्" [ पू० मी० ९।१।२ ] इति । प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति प्रोक्षिताभ्यां दृषदुपलाभ्यां पिनष्टीत्यत्र प्रोक्षणमवघातादिकृतमपूर्वकृतं वेति **संशये** संस्कारेऽवहन्त्यादौ संबध्यमानानां प्रोक्षणादीनां तदर्थत्वात्प्रोक्षणं तेनावहन्त्यादिना प्रयुक्तं प्रकरणादपूर्वं कर्तव्यं गम्यते वाक्यादवहन्त्यादिप्रकरणाच्च बलीयो वाक्यमिति **पूर्वपक्षयित्वोक्तम्**—"तेन त्वर्थेन यज्ञस्य संयोगाद्धर्मसंबन्धस्तस्माद्यज्ञप्रयुक्तं स्यात्संस्कारस्य तदर्थत्वात्" [ पू० मी० ९ । १ । ३ ] इति । तेनावहन्त्यादिना यस्माद्यज्ञस्यापूर्वस्य संयोगस्तस्मात्तस्य प्रोक्षणधर्मसंबन्धोऽतो यज्ञेनापूर्वेण सफलेन प्रयुक्तं प्रोक्षणं संस्कारेण संबध्यते तस्य चापूर्वार्थत्वान्निष्फलावहन्त्याद्यर्थत्वाभावादपूर्वप्रयुक्तमेव प्रोक्षणमिति सूत्रार्थः । न चैवं स्वार्थे फलवति प्रयुक्त्यन्तरानपेक्षतत्त्वमादावन्यत्र तात्पर्यं कल्प्यमिति । नन्ववघातादेर्भावार्थत्वादपूर्वप्रयुक्तविषयत्ववत्तत्त्वमादिवाक्योत्थज्ञानस्यापि भावार्थत्वेन तद्विषयत्वाद्वाक्यमपूर्वशेषत्वेनैव मानं नेत्याह । **न स्वतन्त्र इति ।** न खल्ववघातादिः स्वतन्त्रेऽपूर्वे साक्षादन्वेति किंतु संस्कारकर्मतया । तदुक्तं **द्वितीये**—"तानि द्वैधं गुणप्रधानभूतानि" [ पू० मी० २।१।६ ] इति । व्रीहीनवहन्ति तण्डुलान्पिनष्ट्याज्यं विलापयतीत्यत्रावघातादीनामपि नियोगविषयत्वं संस्कारकर्मत्वं वेति **संशये** साक्षात्संबन्धसंभवे द्रव्यसंस्कारमुखेनान्वयस्यायोगाद्भावार्थत्वाविशेषाच्च यागवदवघातादीनामपि नियोगविषयतेति प्राप्ते व्रीहीनित्यादिद्वितीयाश्रुत्या द्रव्यस्य प्राधान्याव-

१ ख. °रे प्रयु° ।

गमाल्लोकतश्चावघातादीनां तण्डुलाद्युत्पत्त्यर्थत्वनिश्चयाद्द्रव्यस्य चिकीर्ष्यमाणत्वात्पदार्थसामर्थ्यानुरोधेनापूर्वाय द्रव्यसंस्कारैकर्मद्वारा कार्यान्वयसंभवे स्वभावबाधेन साक्षात्संबन्धलोभादपूर्वविषयत्वायोगात्संस्कारकर्मत्वं तेषामिति **सिद्धान्तः** । तानि यजेत पिनष्टीत्यादिपदानि द्विप्रकाराणि कानिचित्प्रधानकर्मणो वाचकानि संस्कारकर्मणश्च कानिचिदिति सूत्रार्थः । न चैवं तत्त्वमादिवाक्योत्थज्ञानस्य संस्कारकर्मतया कार्यान्वयस्तस्य स्वातन्त्र्येण फलहेतुत्वात्तद्विषये नियोगायोगस्य पूर्ववद्वक्ष्यमाणत्वादिति भावः । नन्ववघातादेर्द्रव्यगतस्य दृष्टकार्यस्य दृष्टत्वात्संस्कारहेतुकर्मत्वेऽपि प्रोक्षणादिषु तदभावाद्यागादिवन्नियोगविषयत्वं तथा तत्त्वमादिवाक्यीयज्ञानस्यापि तद्विषयत्वं सत्यपि तस्मिन्संसारदृष्टेरत आह । **अधिकारवदिति** । अस्यार्थः । न तावत्प्रोक्षणादिवज्ज्ञानस्य नियोगविषयत्वं तेषामपि संस्कारकर्मतया साक्षादन्वयाभावात् । तदुक्तं **भेदलक्षणे**—"धर्ममात्रे तु कर्म स्यादनिवृत्तेः प्रयाजादिवत्" [ पू० मी० २ । १ । ९ ] इति । व्रीहीन्प्रोक्षति स्रुचः संमार्ष्टीत्यादौ किमस्य नियोगविषयत्वं किंवा संस्कारकर्मतेति **संशये** यद्दृष्टस्य प्रयोजनस्यापर्याप्तं प्रोक्षणादि तस्मिन्धर्ममात्रे नियोगविषयत्वं स्यात्तेन द्रव्यस्योपकारानिष्पत्तेरतो द्रव्यं तन्निर्वर्तयत्तस्य प्रयाजादिवद्गुणभूतमिदं तु प्रधानकर्मेति प्राप्य्योक्तम्—"तुल्यश्रुतित्वाद्वेतरैः स धर्मः स्यात्" [ पू० मी० २ । १ । १० ] इति । इतरैर्गुणकर्मभिरवघातादिभिः स धर्मस्तुल्यस्वभावः स्यात्प्रोक्षणादिद्रव्येषु द्वितीयाश्रुतेरुभयत्र तुल्यत्वादिति सूत्रार्थः । न चैवं ज्ञाने संस्कारकर्मतया कार्यान्वयोऽतः स्वर्गकामो यजेतेत्यधिकारवाक्यवत्तत्त्वमादिवाक्यस्यापि स्वार्थे तात्पर्यमिति ॥ ९८० ॥

**किंचोपायेऽप्रवृत्तः सन्पुरुषोऽयं प्रवर्त्यते ॥**
**ज्ञातोपायत्वतो यद्वा विधिनोपेयसिद्धये ॥ ९८१ ॥**

अधिकारवाक्यवत्तत्त्वमादिवाक्यस्य स्वार्थनिष्ठत्वे तद्वदेव विधिनिष्ठत्वमपि स्यादित्याशङ्क्य पुत्रजन्मवाक्यवदस्याविधिनिष्ठत्वं वक्तुं तस्य विध्यनिष्ठत्वं मुख्येधीत्यादावुक्तं प्रपञ्चयति । **किंचेति** । नहि प्रवर्तकमेव वाक्यमिति नियमः पुत्रजन्मवाक्ये व्यभिचारादित्यर्थः । तत्र प्रवर्तकत्वव्यभिचारं दर्शयितुं विकल्पयति । **उपाय इति** । मुख्येधीति विधिना पुत्रजन्मोपाये पूर्वमप्रवृत्तः श्रोता प्रवर्त्यते किंवा विधिं विनोपायस्य ज्ञातत्वादुपेयसिद्धये तत्रेति विकल्पार्थः ॥ ९८१ ॥

**तत्रेह तावन्नोपाये पुत्रजन्मादिलक्षणे ॥**
**तस्य निष्पन्नरूपत्वान्नाप्युपेये सुखे तथा ॥ ९८२ ॥**

पुत्रजन्मनः सिद्धत्वान्न तत्र विधिना पुरुषस्य प्रवर्त्यतेत्याद्यं दूषयति । **तत्रेति** ।

१ ख. °पूर्वीय° । २ ख. °रद्वा° । ३ ख. °धीत्युक्तं ।

द्वितीयं निरस्यति । **नापीति** । पुत्रजन्मश्रुतिसामर्थ्यादेव सुखोत्पत्तेरुक्तत्वादिति हेतुमाह । **तथेति** ॥ ९८२ ॥

**न व्यापारान्तरं यस्मात्सुखार्थं किंचिदीक्ष्यते ॥**
**पुत्रजन्मोक्तिमात्रेण पुरुषार्थावसानतः ॥ ९८३ ॥**

सुखी भवेति विधिना पुत्रजन्मनो व्यापारान्तरे सुखसाधने पुमान्प्रवर्त्यतामित्याशङ्क्याऽऽह । **नेति** । तस्मात्तत्रापि पुरुषो विधिना प्रवर्त्यो न भवतीति शेषः । प्रामाणिकव्यापारान्तराभावे हेतुमाह । **पुत्रेति** । पुत्रजन्मवाक्यात्तदर्थधीमात्रेण सुखोत्पत्तेर्न प्रकृते व्यापारान्तरं तत्साधनं प्रामाणिकमस्ति प्रियासुखप्रसवादेः सतोऽपि पुत्रजन्मवद्विध्यनर्हत्वादित्यर्थः ॥ ९८३ ॥

**किं चाध्यस्ताहिदृष्टस्य तद्विषव्याप्तचेतसः ॥**
**स्रगियं न फणीत्युक्ते**[1] **दृष्टा विषनिराक्रिया ॥ ९८४ ॥**

वाक्यस्य प्रवर्तकत्वनियमाभावे हेत्वन्तरमाह । **किं चेति** । सिद्धार्थानि सुखोत्पत्तिफलानि वाक्यान्युदाहृत्य दुःखनिवृत्तिफलानि तादृग्वाक्यान्युदाहरन्प्रतिज्ञातं हेत्वन्तरं स्फुटयति । **अध्यस्तेति** ॥ ९८४ ॥

**मा भैषीरिति चोक्तेऽपि न नियोगः प्रतीयते ॥**
**स्रगुक्तेरेव निःशेषसाध्वसध्वंसलाभतः ॥ ९८५ ॥**

स्रगेषेत्यादिवाक्यस्यापि मा भैषीरिति नियोगनिष्ठत्वान्न वस्तुपर्यवसायितेत्याशङ्क्याऽऽह । **मा भैषीरिति चेति** । नियोगाप्रतीतौ हेतुमाह । **स्रगुक्तेरिति** । सफलो[2] नियोगो न भातीति शेषः ॥ ९८५ ॥

**न्याय्यो नियोगस्तत्रैव यत्र बुद्धाऽस्य कार्यताम् ॥**
**अनन्तरं प्रवृत्तिः स्याद्विषये तस्य सिद्धये ॥ ९८६ ॥**

इतश्चास्मिन्वाक्ये नियोगो नास्तीत्याह । **न्याय्य इति** । यत्तच्छब्दाभ्यां वाक्योक्तिः । षष्ठीभ्यां नियोगोपादानम् । कार्यतां साध्यतामिति यावत् । विषयो धात्वर्थः । न चात्राऽऽनयेत्यादाविव नियोगविषयप्रवृत्तिरिति कुतस्तदवकाश इत्यर्थः ॥ ९८६ ॥

**इह त्वैकात्म्यवाक्येषु तत्त्वमात्रावबोधतः**[3] **॥**
**सद्यः पुमर्थसंसिद्धेः कार्यसिद्धिर्न वीक्ष्यते ॥ ९८७ ॥**

लौकिकवाक्यानां सिद्धार्थानामपि फलवत्ता दृष्टत्वादुपपन्ना वेदान्तानां तु विधिविधुराणां सोऽरोदीदितिवन्न फलान्ततोपलभ्यते तेन तेषु विधिना भाव्यमित्याशङ्क्याऽऽह । **इह त्विति** ॥ ९८७ ॥

---

१ ख. °क्तेर्दृष्टा । २ ख. सकलो । ३ ख. °धनात् । स° ।

**कुतूहलवतां तद्वन्निर्वृत्ताख्यानमात्रतः ॥**
**दृष्टा नराणां निःशेषकुतूहलनिराक्रिया ॥ ५८८ ॥**

वेदान्तानां सिद्धार्थानामेव फलवत्त्वार्थं श्रौतस्मार्तोपाख्यानरूपवाक्यमुदाहरति । **कुतूहलेति** । कुतूहलशब्देनाऽऽकुलतावाचिना दुःखं लक्ष्यते । स्त्रगियमित्यादौ वस्तुज्ञानादेव दुःखनिवृत्तिवदित्याह । **तद्वदिति** । निर्वृत्ताख्यानमात्रतो निष्पन्नस्य सिद्धार्थस्य यदाख्यानं लौकिकं वैदिकं वा ततो वस्तुमात्रज्ञानादिति यावत् ॥ ५८८ ॥

**वस्तुमात्रावसायित्वात्तद्वचांसि न कानिचित् ॥**
**उपादानाय वाऽलं स्युर्नापि हानाय तद्विदः ॥ ५८९ ॥**

ननु कुतूहलनिवृत्तिफलान्यपि लौकिकवैदिकवाक्यानि प्रवृत्तिनिवृत्त्यन्यतरार्थत्वान्नियोगनिष्ठान्येवेत्याशङ्क्याऽऽह । **वस्तुमात्रेति** । उक्तवाक्यानामर्थज्ञानवतस्तेषां स्वार्थे फलवत्यवसाने वेदनान्न प्रवृत्त्यादिसाध्यनियोगनिष्ठतेत्यर्थः ॥ ५८९ ॥

**यत्रापि च प्रतीयेते हानादाने वचःश्रवात ॥**
**अयं चोराकुलः पन्था देशोऽयं निधिमानिति ॥ ५९० ॥**

**तत्रापि नैव शब्दस्य व्यापारः सिद्धवेदनात् ॥**
**कृतार्थत्वान्नरस्यापि रागादेव प्रवृत्तितः ॥ ५९१ ॥**

पुत्रजन्मादिवाक्यानां सिद्धार्थत्वेऽपि प्रतिरोधकवान्पन्था भूभागो निधिमानिति वाक्ययोः श्रवणे प्रवृत्त्यादिदृष्टेस्तयोर्विधिनिषेधविषयत्ववत्तत्त्वमादेरपि विधिनिष्ठत्वमित्याशङ्कामनुभाष्य दूषयति । **यत्रेत्यादिना** । दृष्टान्तेऽपि शब्दस्य प्रवृत्त्यादौ व्यापाराभावे हेतुमाह । **सिद्धेति** । अकार्यरूपनिध्यादिसंबन्धबोधनेनैव वाक्ययोरुपक्षयादित्यर्थः । कथं तर्हि वाक्ययोः श्रवणे श्रोता प्रवृत्तिनिवृत्ती प्रतिपद्यते तत्राऽऽह । **नरस्येति** । अपिशब्दो द्वेषान्निवृत्तिसमुच्चयार्थः ॥ ५९० ॥ ५९१ ॥

**कामैकपाशाकृष्टः सन्निच्छयैव प्रवर्तते ॥**
**निवर्तते च तद्द्वेषान्न शब्दव्यापृतेर्नरः ॥ ५९२ ॥**

रागद्वेषाभ्यामेव प्रवृत्तिनिवृत्ती न विधिनिषेधाभ्यामित्येतत्प्रपञ्चयति । **कामेति** । प्रतिरोधकचोरादिविषयस्तच्छब्दः । विधेर्नियोगबोधनं व्यापृतिर्निषेधस्य निवृत्तिबोधनं तस्य प्रसक्तक्रियानिवृत्त्यौदासीन्ये पर्यवसानस्वीकारादिति भेदः ॥ ५९२ ॥

**नन्वप्रयुक्तमप्येतद्वक्त्रा वाक्यं विवक्षितम् ॥**
**न गन्तव्यं पथाऽनेन गृहाणेमं निधिं तथा ॥ ५९३ ॥**

प्रतिरोधकवानध्वेति वदता निषेधस्येष्टत्वात्तन्निष्ठं वाक्यं भूभागो निधिमानिति च वदता विधेरिष्टत्वात्तदपि तन्निष्ठं न वाक्यद्वयं वस्तुमात्रावसितमिति शङ्कते । **नन्विति** ॥ ५९३ ॥

[1]नैवं न वक्त्रभिप्रायाच्छब्दार्थत्वं प्रकल्पते ॥
शब्दसामर्थ्यतो यस्मात्तादर्थ्यं नान्यहेतुकम् ॥ ५९४ ॥

विवक्षितस्य विध्यादेर्न शब्दार्थतेत्याह[2] । **नैवमिति** । प्रतिज्ञामेव प्रकटयति । **नेत्यादिना** । तत्र हेतुमाह । **शब्देति** । शब्दसामर्थ्यात्प्रतीयमानस्य शब्दार्थत्वं न विवक्षाकृतमित्युक्तमतो विवक्षितयोरपि विधिनिषेधयोर्न शब्दार्थतेत्यर्थः ॥ ५९४ ॥

भवद्भिरपि चैवैतदभ्युपेयं प्रयत्नतः ॥
वक्तृतन्त्रे हि शब्दार्थे न विश्वासः श्रुतेर्भवेत् ॥ ५९५ ॥

भवन्मते शब्दशक्तिप्रतीतस्य शब्दार्थत्वेऽपि विवक्षितस्यैवास्मत्पक्षे तदर्थतेत्याशङ्क्याऽऽह । **भवद्भिरिति** । शब्दशक्तिमनपेक्ष्याविवक्षितस्यैव शब्दार्थत्वे दोषं दर्शयन्नुक्तमभ्युपगमयति । **वक्त्रिति** । विवक्षाधीने शब्दार्थे वेदे वक्तुरभावात्तस्मादर्थनिश्चयो न स्यादित्यर्थः ॥ ५९५ ॥

नानाविधपुमर्थाप्तिरपि वक्तुः समीहिता ॥
तस्या अपि त्वदुक्त्यैवं शब्दार्थत्वं प्रसज्यते ॥ ५९६ ॥

तथाऽपि लोके विवक्षितस्य शब्दार्थतेत्याशङ्क्याऽऽह । **नानेति** । विवक्षाया नियमाभावात्त्वदुक्त्या शब्दार्थोऽपि विवक्षानुसारीत्येवंरूपायां शब्दार्थव्यवस्थायामव्यवस्था स्यादतो लोकेऽपि तस्या अशब्दार्थत्वात्तच्छक्त्या प्रतीयमानस्यैव तदर्थतेत्यर्थः ॥ ५९६ ॥

प्रवृत्तिं वा निवृत्तिं वा यदाऽभिप्रेत्य चेतसा ॥
किंचिज्जिज्ञास्यते ज्ञात्रा प्रत्यक्षादिप्रमाणतः ॥ ५९७ ॥
अभिप्रेताऽपि न तदा प्रवृत्तिर्यदि वेतरा ॥
प्रत्यक्षादिप्रमेयेति शक्या वक्तुं विपश्चिता ॥ ५९८ ॥

विवक्षितः शब्दार्थो नेत्यत्र दृष्टान्तमाह । **प्रवृत्तिमिति** । यथा प्रत्यक्षादेर्न विवक्षितोऽर्थो विषयस्तथा शब्दप्रमेयोऽपि न विवक्षितोऽर्थ इत्यर्थः ॥ ५९७ ॥ ५९८ ॥

इतश्चाभ्युपगन्तव्यमेतत्तुल्येऽपि वस्तुनि ॥
एकस्य हानधीस्तस्मिन्नुपादित्सा परस्य च ॥ ५९९ ॥
शब्दार्थत्वे हि सर्वेषामादानायैव धीर्भवेत् ॥
नोपेक्षायां प्रहाणे वा न चानेकार्थता मता ॥ ६०० ॥

विवक्षितः शब्दार्थो नेत्येतद्वक्ष्यमाणहेतोरपि स्वीकार्यमित्याह । **इतश्चेति** । हेत्वन्तरमेव स्फोरयति । **तुल्येऽपीति** । अयं देशो निधिमानित्युक्ते तुल्येऽपि निधिबोधे विरक्तस्य हानधीरायासासहिष्णोरुपेक्षा रागिणस्त्वादित्सा तत्राऽऽदानस्य विवक्षितत्वे शब्दार्थत्वे

१ ख. नैवं । २ ख. °ह । नैव° ।

च विरक्तादीनामपि तदर्थमेव धीः स्यान्न हानादौ हानस्योपेक्षाया वा विवक्षितत्वे शब्दार्थत्वे च सर्वेऽपि श्रोतारो हानमुपेक्षां वा प्रतिपद्येरन्नतः शब्दार्थवित्तेरैकरूप्येऽपि विवक्षितादानादौ बुद्धिवैषम्यान्न विवक्षितः शब्दार्थ इत्यर्थः । हानादीनां त्रयाणामपि श्रोतृभेदेन विवक्षिततया शब्दार्थत्वमाशङ्क्याऽऽह । **न चेति** ॥ ९९९ ॥ ६०० ॥

**न च प्रवर्तकत्वेऽपि वाक्यस्याङ्गीकृते त्वया ॥**
**शक्यो विधायिनोऽन्येषां पदानां वक्तुमन्वयः ॥ ६०१ ॥**

विध्यादिवाक्ये विध्यादेरशब्दार्थत्वाद्वस्तुनिष्ठत्वे स्थिते प्रवर्तकमेव वाक्यमिति नियमो नेत्युक्तमिदानीं नियममङ्गीकृत्यापि दोषं वक्तुं भूमिकामाह । **न चेति** ॥६०१॥

**किं स्वार्थमात्रनिष्ठत्वमुत कार्यैकनिष्ठता ॥**
**पदार्थमात्रसंसर्गपरता किं त्वितीर्यताम् ॥ ६०२ ॥**

आख्यातातिरिक्तपदानामन्वयस्य वक्तुमशक्यत्वं व्यक्तीकर्तुं विकल्पयति । **किमिति** । उत्तमवृद्धोक्तप्रवर्तकवाक्यश्रुतौ मध्यमवृद्धप्रवृत्तिं दृष्ट्वा बालः शब्दानामनन्विते स्वार्थे शक्तिमाकलयत्यतोऽसंसृष्टस्वार्थविषयं सामर्थ्यमित्यभिहितान्वयेनाऽऽद्यो विकल्पः । एकस्मिन्नन्विते कार्ये पदानां शक्तिग्रहात्तन्निष्ठता तेषामिति **द्वितीयः** । कार्येणान्विते स्वार्थे सामर्थ्यात्तन्निष्ठानि पदानीति **तृतीयः** । कार्यान्वयान्वयिनि सामर्थ्यं पदानामिति **चतुर्थः** । कार्येणाकार्येण वा योग्येन संसर्गो यस्य स्वार्थस्य तत्र तेषां शक्तिग्रहाद्योग्यान्वितस्वार्थपरता पदानामिति **पञ्चम** इति विकल्पार्थः ॥ ६०२ ॥

**स्वार्थमात्रावसायित्वे वाक्यार्थप्रत्ययः कुतः ॥**
**वैयर्थ्यं च प्रयोगस्य व्यवहाराक्षमत्वतः ॥ ६०३ ॥**

तत्राऽऽद्यमनुभाष्य दूषयति । **स्वार्थेति** । पदानामनन्वितपदार्थमात्रे सामर्थ्यमङ्गीकृत्य तन्निष्ठत्वे श्रोतुर्वाक्यार्थधीर्न स्यात्तद्धेत्वभावान्न च पदार्थास्तद्धेतवस्तदशाब्दत्वापत्तेर्न च शब्दबोधितपदार्थकृततया शाब्दत्वं चाक्षुषलिङ्गोत्थानुमितेरपि चाक्षुषत्वापत्तेरिति भावः । वाक्यमेव वाक्यार्थधीहेतुरित्याशङ्क्य तस्य पदसामर्थ्यसापेक्षत्वे विशिष्टविषयत्वायोगात्तदनपेक्षत्वे च सामर्थ्यग्रहवैयर्थ्यादन्वितस्य सामर्थ्यप्रतियोगित्वपक्षे च विशेषान्वयवतो वाक्यतात्पर्यगम्यतया तदवैयर्थ्यान्मैवमित्यभिप्रेत्याऽऽह । **वैयर्थ्यमिति** । तत्र हेतुमाह । **व्यवहारेति** । अनन्वितार्थे वचने विशिष्टविषयव्यवहारे पदानामशक्तेरन्वितपदप्रयोगायोगः समन्वितपदसमुदायात्मनो वाक्यस्य पदशक्त्यपेक्षत्वात्ततो विशिष्टव्यवहारासिद्धिर्विशिष्टार्थप्रयुक्ता हि समभिव्याहृतिर्जन इति न्यायादित्यर्थः ॥ ६०३ ॥

**पदार्थमात्रसंसर्गे कार्यार्थविरहेऽपि ते ॥**
**व्यवहारस्य संसिद्धेर्व्यर्था कार्यप्रकल्पना ॥ ६०४ ॥**

योग्येतरार्थसंसृष्टे पदसामर्थ्यमित्यन्त्यं पक्षमनूद्य साधारण्येन परमतं निरस्यति । **पदार्थेति** । मात्रचा कार्यमकार्यं वा योग्यं गृह्यते योग्यान्विते शक्तिरित्यङ्गीकारे प्रयोजकलाघवाच्छक्तिविषयतया कार्याभावेऽपि शाब्दव्यवहारसंभवादस्मत्पक्षसिद्धिर्योग्यकार्यान्विते शक्तिरित्यत्र प्रयोजकगौरवाद्यर्था ते शक्तिप्रतियोगित्वेन कार्यकल्पनेति त्वत्पक्षक्षतिरित्यर्थः ॥ ६०४ ॥

**कार्यैकव्यतिषङ्गे च वाक्याद्भूतानुवादकात् ॥**
**प्रतीतिः स्यान्न वाक्यार्थे स्यादुक्तेर्व्यर्थताऽपि च ॥ ६०५ ॥**

कार्ये त्वेकस्मिन्नन्विते पदानां सामर्थ्ये तेषां पर्यायतेति मत्वा द्वितीयं प्रत्याह । **कार्यैकेति** । तेन व्यतिषङ्गवति शक्तिरिति तृतीयमनूद्य दूषयति । **व्यतिषङ्ग इति** । कार्यान्वितेऽर्थे शक्तिपक्षे लिङ्गादिशून्याद्वाक्याद्वाक्यार्थधीः श्रोतुर्न स्याद्वक्तुश्च तथाविधप्रयोगवैयर्थ्यं परप्रत्यायनाय हि प्रयोगः परश्चेद्भूतार्थवाक्यात्तदर्थं न वेति कृतं प्रयोगेणेत्यर्थः ॥ ६०५ ॥

**कार्यान्तरस्य चाभावात्कार्यार्थैकाभिधायिनः ॥**
**संबन्धो न भवेदन्यैः साधनाद्यभिधायिभिः ॥ ६०६ ॥**

किंच कार्यपदस्य कार्यान्विते शक्तिरनन्विते वा सिद्धान्विते वा नाऽऽद्य इत्याह । **कार्यान्तरस्येति** । गामानयेत्यादौ कार्यवाचिपदस्य कार्यान्वितेऽर्थे संबन्धो न सिध्येदेकस्मिन्वाक्ये कार्यद्वयाभावादित्यर्थः । अनन्वितस्वार्थमात्रेऽपि कार्यपदस्य न संबन्धो भवेदभिहितान्वयानभ्युपगमादित्याह । **संबन्धो न भवेदिति** । सिद्धार्थान्विते स्वार्थेऽपि कार्यपदस्य न संबन्धोऽनङ्गीकारादित्याह । **संबन्धो नेति** । नापि तस्य कार्यान्वयान्वयिनि संबन्धोऽन्वयस्य विशेषणत्वेनोपलक्षणत्वेन च दुर्वचत्वादित्याह । **संबन्धो नेति** । एतेन **चतुर्थो** विकल्पो निरस्तः । विधायकपदस्य संबन्धाग्रहे तस्य नामपदैः संबन्धो न सिध्यतीति फलितमाह । **संबन्धो नेत्यादिना** । कार्यपदस्यान्यान्विते शक्तिरित्यावश्यकं नथेतरपदानामिति समुदायार्थः ॥ ६०६ ॥

**कार्यान्वयित्वे सर्वेषामपि चेह परस्परम् ॥**
**पदार्थानामसंबन्धोऽनपेक्षत्वाद्भवेद्ध्रुवम् ॥ ६०७ ॥**

कार्यान्वितार्थस्य शक्तिप्रतियोगित्वे दोषान्तरमाह । **कार्येति** । इहेति प्रयुक्तवाक्योक्तिः । सर्वेषामपि पदानां कार्यान्वितेऽर्थे सामर्थ्ये पदानां मिथः संबन्धः शाब्दो न स्यात्तेषां कार्यान्वयेन चरितार्थानां मिथोऽनपेक्षत्वादित्यर्थः ॥ ६०७ ॥

**नियोगो न प्रतीयेत विशिष्टविषयस्तथा ॥**
**तदा चैकपदार्थस्य नियोगः साध्यतामियात् ॥ ६०८ ॥**

तेषां मिथोऽनन्वयेऽपि कार्यान्वयेनैव विशिष्टव्यवहारसिद्धिरित्याशङ्क्याऽऽह ।

**नियोग इति ।** पदार्थानां मिथोऽनन्वये सति सोमेन यजेतेत्यत्र सोमविशिष्टयागविषयो नियोगो न भायादित्यर्थः । कार्यान्विते सर्वपदशक्तिरित्यत्रैव दोषान्तरमाह । **तदा चेति ।** यदा सर्वाणि पदानि कार्यान्विते शक्तिमन्ति तदा सोमस्य यागस्य च प्रत्येकं नियोगान्वयात्तस्यैकैकस्यासौ साध्यतां गच्छेत्तथा च विशिष्टयागसाध्यत्वं तस्येष्टं नष्टं स्यादित्यर्थः ॥ ६०८ ॥

**अथ सोमादिसंबद्धे यागादौ विषये मतः ॥**
**नियोगः कस्ततः पूर्वं संबन्धे हेतुरुच्यताम् ॥ ६०९ ॥**

सोममात्रेण यागमात्रेण वा साध्यनियोगाभावात्तस्य विशिष्टविषयतेति पार्ष्णिकं पदार्थानां मिथोऽन्वयमङ्गीकृत्य शङ्कते । **अथेति ।** न तावदादौ प्रत्येकं नियोगान्वयो योग्यतादिकृतपरस्परान्वयस्यैव प्राथम्यात्त्वन्मते च नियोगान्वयात्पूर्वं सोमादेर्यागादेश्चान्योन्यान्वये हेतुरस्ति न वाऽस्ति चेत्किमसौ योग्यतादिरन्यो वा नाऽऽद्यो योग्यतादिकृतेऽन्वये नियोगाभिनिवेशस्याफलत्वान्न द्वितीयः स हि क्रियातिरिक्तो वा क्रिया वाऽऽद्ये तस्य कारकफलान्यतरत्वात्तदधीनेऽन्वये नियोगवैयर्थ्यं न च कारकफलातिरिक्तं क्रियातोऽन्यन्नियोगान्वयात्पूर्वं संबन्धकारणं प्रसिद्धमिति मत्वाऽऽक्षिपति । **कस्तत इति** ॥ ६०९ ॥

**सिद्धेऽसति विशिष्टे न विषये कार्यमिष्यते ॥**
**अथ क्रियैव प्राक्कार्यात्सिद्धं नो यत्समीहितम् ॥ ६१० ॥**

संबन्धहेतोरभावपक्षे संबन्धासिद्धेर्विशिष्टो यो नियोगविषयः सिद्धस्तस्मिन्नसति नियोगो निर्विषयो न सिध्यतीत्याह । **सिद्ध इति ।** नियोगानुप्रवेशात्पूर्वं क्रियैव सोमादिसंबन्धे हेतुरिति कल्पान्तरमाह । **अथेति ।** क्रियाकारकान्वये कार्यमवधीर्याङ्गीकृतेऽन्यान्विते शक्तिरिति यदस्माकमिष्टं तत्सिद्धमित्याह । **सिद्धमिति** ॥ ६१० ॥

**तदेतरत्तदर्थमित्येवं चैतत्समञ्जसम् ॥**
**विषये यदि कार्यत्वं कार्यावगमपूर्वकम् ॥ ६११ ॥**
**कार्ये कार्यान्तराभावात्कार्यबुद्धिः कुतो भवेत् ॥**
**तदभावादनुष्ठेयो विषयोऽपि न ते भवेत् ॥ ६१२ ॥**

अन्यान्विते शक्तिरित्यत्र प्रतिपदाधिकरणगतं **भाष्यं** प्रमाणयति । **तदेति ।** तत्र किं पदेन पदेन धर्म उच्यत उत सर्वैरेक इति **संदिह्य** प्रतिपदं धर्मभेद इति प्रापय्य यदैकस्मादपूर्वं तदेतरत्तदर्थं भविष्यतीति **भाष्यकारो राद्धान्तयति** स्म तदपीतरान्विते शक्तिरित्यङ्गीकारे युक्तं स्यान्नहि पदानि योग्यान्वितार्थार्पकतां विनाऽन्यशेषतां गच्छन्तीत्यर्थः । कारकान्वयेऽपि क्रियायाः स्वगतकर्तव्यताया नियोगाधीनत्वं तस्मात्कर्तव्यतावे-

१ क. °बन्धे या° । २ ख. यतः । ३ ख. °ष्यताम् । अ° ।

शादित्यत्रोक्तं तत्र कार्यमवधीर्यान्विते शक्तिरित्याशङ्क्याऽऽह । **विषय इति ।** नियोगविषये यागादौ कार्यत्वं नियोगधीपूर्वकं चेन्नियोगेऽपि तद्धीस्तद्बुद्धिकृता स्यादविशेषान्न च नियोगे नियोगान्तरमतस्तत्र कर्तव्यत्वबुद्ध्यसिद्धिरित्यर्थः । नियोगकार्यत्वबुद्ध्यभावे लब्धं दोषमाह । **तदभावादिति** । नियोगकार्यताबुद्ध्यधीनत्वाद्धात्वर्थानुष्ठानस्येत्यर्थः ॥ ६११ ॥ ६१२ ॥

**कार्यार्थता ततश्चेष्टा हीयेतानुष्ठितिं विना ॥**
**अथ कार्यान्तराभावेऽप्यस्य कार्यत्वमिष्यते ॥ ६१३ ॥**

विषयस्यापि कार्यत्वाभावे प्राप्तं दोषमाह । **कार्यार्थतेति ।** ततस्तस्य यागादेरनुष्ठानाभावात्तदनुष्ठानं विना नियोगार्थता तस्य तवेष्टा हीयेतैवेत्यर्थः । नियोगस्य यागादौ कार्यत्वे हेतोः स्वस्मिन्नपि तद्धेतुत्वसिद्धेर्नोक्तदोषपरंपरेति शङ्कते । **अथेति** ॥ ६१३ ॥

**विषयस्यापि कार्यत्वं स्वत एव भवेत्तथा ॥**
**विषयोऽकार्यरूपत्वात्स्वसिद्ध्यै यद्यपेक्षते ॥ ६१४ ॥**
**कार्यं तदपि विषयमीक्षेतासाध्यरूपतः ॥**
**कार्येऽपि कार्यतैवं च भवेद्विषयहेतुका ॥ ६१५ ॥**

यथा स्वतो नियोगस्य कार्यत्वं तथा यागादेरपि तदस्तु कृतं नियोगेनेति दूषयति । **विषयस्येति ।** धात्वर्थस्य क्लेशात्मनः स्वतोऽकार्यत्वात्तत्कार्यतायै नियोगापेक्षेति शङ्कते । **विषय इति** । कार्यमपि स्वतोऽकार्यत्वाद्धात्वर्थमपेक्षेतान्यथा धात्वर्थवैयर्थ्यात्तदपेक्षत्वेऽपि कार्यस्य स्वतश्चेत्कार्यत्वं कार्यापेक्षत्वेऽपीतरस्य स्वतस्तत्किं न स्यादिति साम्यं मत्वाऽऽह । **तदपीति ।** नियोगस्य विषयापेक्षत्वे फलितमाह । **कार्येऽपीति** ॥ ६१४ ॥ ॥ ६१५ ॥

**अन्योन्याश्रयता च स्यान्न च कार्यप्रधानता ॥**
**पुंव्यापारव्यपेक्षायां स्वसिद्धौ कार्यमुच्यते ॥ ६१६ ॥**

नियोगस्य विषयाधीनकार्यत्वेऽपि विषयस्य कार्यत्वं नियोगाधीनमित्येतत्तावदुपगतमित्याशङ्क्याऽऽह । **अन्योन्येति ।** नियोगकार्यत्ववशाद्विषयकार्यत्वं ततश्च नियोगकार्यत्वमित्यन्योन्याश्रयतेत्यर्थः । चकारसूचितं दोषान्तरमाह । **न चेति ।** विषयस्य नियोगाधीनकार्यतावत्तस्यापि विषयाधीनकार्यत्वे प्रधानता न स्याद्यागादेरविशेषादित्यर्थः । नियोगयागयोः साम्यमुक्त्वा यागस्यैव कार्यत्वमिति विशेषं वक्तुं कार्यलक्षणमाह । **पुंव्यापारेति** । स्वोत्पत्तौ पुंव्यापारापेक्षायां सत्यां यद्भवति तत्कार्यमित्यर्थः ॥ ६१६ ॥

**यागादिः स च नो कार्यं स्वतःकार्यैकरूपतः ॥**
**कार्यस्यैव न कार्यत्वमकार्ये कार्यतेष्यते ॥ ६१७ ॥**

उक्तलक्षणस्य यागादौ भावात्तस्यैव कार्यतेत्याह । **यागादिरिति ।** अवधारणार्थेन

चकारेण भिन्नक्रमेण सूचितं व्यावर्त्यमाह । **नो कार्यमिति** । नियोगे कार्यलक्षणाभावे हेतुमाह । **स्वत इति** । नियोगस्य कार्यत्वं स्वतस्तद्वादिनामिष्टं न पुंव्यापाराधीनमन्यथा घटतुल्यत्वापातादतो नियोगस्योक्तलक्षणाभावान्न कार्यतेति भावः । तस्य कार्यत्वाभावे हेत्वन्तरमाह । **नेति** । नियोगो नाम कार्यत्वं न च तस्य तदेव कार्यत्वं स्वाश्रयापत्तेर्नापि कार्यत्वान्तरमनवस्थितेरित्यर्थः । कस्य तर्हि कार्यत्वं तदाह । **अकार्य इति** । स्वतोऽकार्यतारूपे यागादौ विधिना कार्यतेत्यर्थः ॥ ६१७ ॥

**न शौक्ल्ये शुक्लतापत्तिः पटादेः सा विधीयते ॥**
**घटकार्ययजत्यादि स्वस्वभावतया स्थितम् ॥ ६१८ ॥**

**सिद्धसाध्यादिभेदेन स्वशब्देनाभिधीयते ।**
**यदा तदा ध्वनेर्न स्यादज्ञातार्थविबोधने ॥**
**विशेषः कश्चिदित्येवं न प्रवृत्तिर्विधेर्भवेत् ॥ ६१९ ॥**

कार्यत्वाधारे कार्यत्वायोगे दृष्टान्तमाह । **न शौक्ल्य इति** । अकार्ये कार्यत्वमित्यत्र दृष्टान्तः पटादेरिति । कार्यस्य कार्यत्वासंभवाद्यागादेरेव तद्योगात्तस्मात्कर्तव्यतावेशादिति पक्षस्यायुक्तत्वात्क्रियाकारकान्वयस्य नियोगानधीनत्वात्कार्यमनपेक्ष्यान्विते शक्तिरिति स्थिते फलितमाह । **घटेति** । कार्यं नियोगो यजतिः क्रिया गुणांशावस्थादि ग्रहीतुमादिपदम् । तत्र घटो वा नियोगो वा क्रिया वा गुणादिर्वा मृदात्मत्वनित्यसाध्यत्वचलनरूपत्वद्रव्यतन्त्रत्वाद्यसाधारणरूपेण स्थितः स्ववाचकशब्देन सिद्धेन साध्येन तच्छेषेण वा योग्येनान्वितो यदोच्यते तदा भूतार्थस्य कार्यार्थस्य च वाक्यस्याज्ञातज्ञापने विशेषो न कश्चिदित्येवं स्थिते नियोगाधीना प्रवृत्तिरित्येतन्न स्यादित्यर्थः ॥ ६१८ ॥ ६१९ ॥

**अवबुद्धे तु शब्दार्थे पुरुषार्थानुरोधतः ॥**
**स्वत एव प्रवृत्तिः स्यान्न शब्दान्नार्थतस्तथा ॥ ६२० ॥**

कथं तर्हि शब्दानन्तरभाविनी प्रवृत्तिरित्याशङ्क्य नरस्यापि रागादेवेत्यत्रोक्तं स्मारयति । **अवबुद्धे त्विति** । अज्ञातेऽर्थे शब्दाज्ज्ञाते तदनुषक्तपुरुषार्थाभिलाषादेव परनिरपेक्षात्पुरुषस्य प्रवृत्तिर्न लिङादिशब्दान्नहि तच्छ्राविणामपि तदर्थधीविधुराणां प्रवृत्तिर्दृष्टा नापि सा तदर्थान्नियोगात्तस्यैवासंमतेरित्यर्थः ॥ ६२० ॥

**साधनादित्रयाद्बाह्यं पुरुषार्थबहिष्कृतम् ॥**
**क एतत्साधयेद्धीमान्किं वा रूपमितीर्यताम् ॥ ६२१ ॥**

साध्यस्वभावनियोगमङ्गीकृत्य तस्य प्रवर्तकत्वाभाव उक्त इदानीं साध्यत्वमेव तस्यासिद्धमित्याह । **साधनादीति** । करणेतिकर्तव्यताभाव्यातिरिक्तं कार्यं न कृतिव्याप्यमित्यर्थः । भाव्यादन्यत्वं साधयति । **पुरुषार्थेति** । सुखं दुःखनिवृत्तिर्वा पुमर्थस्ततोऽन्य-

त्वान्नियोगस्य न भाव्यतेत्यर्थः । फलादिविलक्षणं कार्यं बुद्धिपूर्वकारिणो निष्पादनायोग्यमिति फलितमाह । क इति । नियोगस्वरूपमपि दुर्निरूपमिति मन्वानो विकल्पयति । किं वेति । प्रेरणा वा नियोग आन्तरः प्रयत्नो वा क्रिया वा फलं वा कारकं वाऽन्यदेव वा किंचित्कालत्रयासंबन्धित्वेन वाच्यो वाऽतीन्द्रियो वा कश्चिदिति विमर्शार्थः ॥ ६२१ ॥

**न तावत्प्रेरणा कार्यं कार्यार्थविषया हि सा ॥**
**नाऽऽन्तरोऽपि प्रयत्नः स्यान्मानान्तरगतेस्तथा ॥ ६२२ ॥**

तत्राऽऽद्यं दूषयति । **न तावदिति** । शब्दव्यापारः प्रेरणा तस्या नियोगविषयत्वाद्विषयविषयिणोश्च भेदप्रसिद्धेरिति हेतुमाह । **कार्येति** । यजेतेत्युक्ते श्रोतुरान्तरो यत्नः स्वास्थ्यप्रच्युतिरूपो जायते स नियोग इति द्वितीयं प्रत्याह । **नेति** । यत्नस्य मानसत्वात्तद्रूपत्वे नियोगस्यापि तदापत्तेरपूर्वत्वायोगादनन्यलभ्यत्वाभावाच्चाशब्दार्थत्वापत्तेरिति हेतुमाह । **मानान्तरेति** ॥ ६२२ ॥

**न क्रिया कर्तृसंबन्धात्फलं नानिष्टरूपतः ॥**
**कारकं नाप्यसिद्धत्वान्नाप्यन्यदनिरूपणात् ॥ ६२३ ॥**

तृतीयं निराह । **न क्रियेति** । क्रियायाः कर्तृसंबन्धित्वान्नियोगस्य च नियोज्यान्वयात्तयोर्वैलक्षण्यादिति हेतुमाह । **कर्त्रिति** । चतुर्थं शिथिलयति । **फलं नेति** । नियोगस्यापुमर्थत्वे हेतुमाह । **अनिष्टेति** । पञ्चमं प्रत्याह । **कारकं नेति** । नियोगस्य साध्यत्वात्कारकस्य च सिद्धत्वादिति हेतुमाह । **असिद्धत्वादिति** । षष्ठं मानाभावेन प्रत्याचष्टे । **नापीति** ॥ ६२३ ॥

**न च कालत्रयास्पर्शवाच्यत्वं कार्यलक्षणम् ॥**
**घटशब्दाद्धटे मा भूत्कालास्पर्शेन कार्यता ॥ ६२४ ॥**

**सप्तमं** निराह । **न चेति** । कालत्रयासंबन्धो हि नियोगस्य शब्दतोऽर्थतो वा नाऽऽद्य इत्याह । **घटेति** । घट इत्युक्ते तस्यापि शब्दतः कालायोगान्नियोगता स्यात्सा मा भूदिति कृत्वा शब्दतो न तदस्पर्शो नियोगत्वोपयोगी नहि घटशब्दाद्धटे कालविशेषयोगो भात्यन्यथा घटोऽस्तीत्यादौ पौनरुक्त्यान्न च घटशब्दाद्धटस्य कालमात्रसंसर्गो भात्यपि तद्विशेषसंसर्गार्थमस्तीत्यादि पदमिति युक्तं घटशब्दस्य पृथुबुध्नोदराकारार्थत्वात्कालमात्रसंसर्गे वृत्त्यभावादन्यथैकस्य शब्दस्यानेकार्थत्वप्रसङ्गादाकृतेः शब्दार्थत्वेऽपि व्यक्तेर्लक्ष्यत्वान्नेतरः कालेतरस्य कालायोगिनो जडस्यासत्त्वान्न च नियोगेतरस्येत्यपि प्रयोक्तव्यं तस्यैवासंमतत्वादिति भावः ॥ ६२४ ॥

**नियोगोऽपि नियोज्यस्य व्यापारः स कथं भवेत् ॥**
**अतीन्द्रियो लिङाद्यर्थः सिद्धिश्चास्य कथं भवेत् ॥ ६२५ ॥**

**अष्टमं** निराचष्टे । **नियोगोऽपीति** । कर्तृव्यापारयागादिवन्नियोगोऽपि नियोज्यव्यापारः सन्नातीन्द्रियः पुंव्यापारत्वाद्यागवन्न च साध्यवैकल्यं विष्णुक्रमणहविष्प्रक्षेपादेरध्यक्षत्वादित्यर्थः । किं तर्हि लिङाद्यालम्बनमित्याशङ्क्य परिशेषान्नियोगादन्यो लिङाद्यर्थोऽभ्युपेय इत्याह । **लिङाद्यर्थ इति** । नियोगस्वरूपं निरस्य साधकं निरस्यति । **सिद्धिश्चेति** ॥ ६२५ ॥

**सिद्धिर्विषयसिद्धौ चेन्नैवं स्यात्कर्मणा न हि ॥**
**आप्त्युत्पत्त्यादिकं शक्यमनारोप्यस्वभावतः ॥ ६२६ ॥**

नियोगनिष्पादकं नेत्ययुक्तं निष्पन्नस्य यागादेरेव तथात्वादिति शङ्कते । **सिद्धिरिति** । परिहरति । **नैवमिति** । न हि पुंव्यापारेण नियोगस्योत्पत्त्याप्तिसंस्कारविकाराः शक्याः संपादयितुं तस्य नियोगवादिभिरनाधेयातिशयत्वाङ्गीकारादन्यथा नित्यसाध्यत्वव्याघातादिति परिहारमेव स्फोरयति । **कर्मणेति** ॥ ६२६ ॥

**कार्यं स्वेनाऽऽत्मना सिद्धं पुमर्थं साधयेद्यदि ॥**
**सर्वदा तस्य तादृक्त्वात्पुमर्थः सर्वदा भवेत् ॥ ६२७ ॥**

साधकाभावमुक्त्वा नियोगस्य साधकत्वाभावं वक्तुमुपक्रमते । तत्र क्रियासाध्ये फले स स्यादित्यत्र नियोगस्य स्वर्गादिसाधकत्वोक्तेर्न पुमर्थबहिष्कृततेत्याशङ्क्य कार्यं स्वरूपेण विद्यमानं स्वर्गादि साधयति पुंव्यापाराधीनलब्धसत्ताकं वेति विकल्प्याऽऽद्यमनुवदति । **कार्यमिति** । तदा स्वर्गादिः सदा स्यात्तद्धेतुनियोगस्य स्वरूपेण सदासत्त्वादिति दूषयति । **सर्वदेति** । न च स्वर्गादेः सामग्रीसापेक्षत्वान्न सदातनत्वं नियोगस्य स्वानुकूलनियोज्यलाभाय फलमुपनयतस्तदपेक्षितसामग्रीमाक्षिप्यैव तदाक्षेपकत्वादिति द्रष्टव्यम् ॥ ६२७ ॥

**पुंव्यापारप्रसिद्ध्याऽथ सिद्धं स्वार्थकरं मतम् ॥**
**तस्यानाधेयरूपत्वान्न कदाचित्फलं भवेत् ॥ ६२८ ॥**

कल्पान्तरमादत्ते । **पुंव्यापारेति** । नियोगस्यानाधेयातिशयतायाः कर्मणा नहीत्यादावुक्तत्वात्तस्य पुंव्यापारादसिद्धेर्न कदाचिदपि तदधीनं स्वर्गादि स्यादित्याह । **तस्येति** ॥ ६२८ ॥

**संभाव्यमानसिद्धेर्हि यागादेः कार्यता मता ॥**
**व्योमतत्पुष्पयोर्न स्यात्सिद्धात्यन्ताप्रसिद्धयोः ॥ ६२९ ॥**

नियोगस्यानाधेयातिशयत्वे हेत्वन्तरमाह । **संभाव्यमानेति** । पुंव्यापारात्संभावितोत्पत्तेर्भावस्यैव कार्यता न नियोगस्य तदसाध्यत्वादित्यर्थः । कथं नियोगस्य पुंव्यापारा-

---

१ ख. °माह । पुं° ।

साध्यत्वेनाकार्यतेत्याशङ्क्य सिद्धस्य व्योमवदकार्यतावदत्यन्तासिद्धत्वेनेष्टनियोगस्यापि तत्पुष्पवदकार्यता युक्तेत्याह । **व्योमेति** ॥ ६२९ ॥

**कर्तव्यो याग इत्येवं यागाद्भिन्ना यथेक्ष्यते ॥**
**कर्तव्यं कार्यमित्येवं ततोऽपि व्यतिरिच्यते ॥ ६३० ॥**

संभाव्यमानसिद्धेरपि यागादेर्न कार्यता स्वरूपं यागः कार्योपादानं कार्यमिति भेदप्रतीतेरतो नियोगस्यैव तत्स्वरूपमित्याशङ्क्याऽऽह । **कर्तव्य इति** । भिन्ना कार्यतेति शेषः ॥ ६३० ॥

**कार्यकर्तव्यता कार्येत्येवमेवातिरिच्यते ॥**
**तस्मान्न वस्तुधर्मोऽयं शब्दादेव प्रकर्षतः ॥ ६३१ ॥**

ननु यद्यपि नियोगस्य कार्यता न स्वरूपं तथाऽपि धर्मो यागादेस्तु दुःखात्मनो नासौ धर्मोऽपि तत्प्रतीतिस्तत्साध्यनियोगविषयेति तर्हि कार्यात्मनो नियोगस्य कार्यता कार्या न वेति विकल्प्याऽऽद्यं दूषयति । **कार्येति** । नियोगकार्यता कार्येत्युपगमे यागादेरिव नियोगादपि सा भिद्येत तदीया कार्यतेति भेदव्यपदेशात्तस्याश्च कार्यान्तरमित्यनवस्थेत्यर्थः । द्वितीये निषिद्धतुल्या नियोगकार्यता स्यादतो नियोगे कार्यतायाः स्वरूपत्वेन धर्मत्वेन वा योगात्काल्पनिकत्वमेवेति मत्वाऽऽह । **तस्मादिति** । नायं वस्तुनः स्वभावो धर्मो वेत्यत्र तमेव हेतुं स्पष्टयति । **शब्दादिति** । यागः कार्यः कार्यं कार्यमित्यादिशब्दादेव कार्यताया वस्तुनः सकाशात्पृथक्करणादित्यर्थः ॥ ६३१ ॥

**अतो यदेव साध्यार्थसाधनत्वेन गम्यते ॥**
**वेदात्तदेव साध्यत्वात्कार्यं नान्यत्ततः पृथक् ॥ ६३२ ॥**

ननु स्वर्गादेः साधनत्वेन स्वर्गकामादिवाक्यादनुष्ठेयं गम्यमानं कार्यं कथं युक्त्याऽपास्यते तस्या वाक्याद्दौर्बल्यादित्याशङ्क्य नियोगस्वरूपसाधकाद्यभावाद्बुद्धिकं कार्यं यागाद्येव तस्यावान्तरापूर्वद्वारा फलित्वोपपत्तेः साध्यत्वान्न ततोऽन्यत्कार्यमित्याह । **अत इति** । यागादिस्वरूपत्वेन ततोऽन्यत्वेन वा तस्य दुर्निरूपत्वं मत्वा पृथगित्युक्तम् ॥ ६३२ ॥

**लिङादिः प्रेरणावाची कुतः कार्यमितीर्यताम् ॥**
**विषयत्वेन नाऽऽक्षेपो भावार्थो विषयो मतः ॥ ६३३ ॥**

वैदिकलिङादिगम्यो नियोगो न युक्तिशतेनापि शक्योऽपह्नोतुं नहि निर्विषयं लिङादि न च यागादेरेव तदालम्बनं तस्य प्रकृत्यर्थत्वेऽपि प्रत्ययार्थत्वाभावादित्याशङ्क्य भाट्टमतेनाऽऽह । **लिङादिरिति** । ननु प्रेरणायाः सविषयत्वात्तद्वाचिना लिङा-

१ ख. यतः ।

दिना नियोगः स्ववाच्यविषयत्वेनाऽऽक्षिप्यते नेत्याह । **विषयत्वेनेति** । क्रियाविषयत्वात्प्रेरणाया न नियोगविषयतेत्यर्थः ॥ ६३३ ॥

**प्रेरणाऽपीह नैव स्यादज्ञातज्ञापनात्पृथक् ॥**
**समस्तकार्यदोषोक्तिप्रसङ्गान्मित्यभावतः ॥ ६३४ ॥**

**वार्तिककार**मतेन नियोगे मानाभावमुक्त्वा समीहितोपायताया लिङाद्यर्थत्वं स्वमतं वक्तुं प्रेरणायास्तदर्थत्वं दुदूषयिषुः सा किमज्ञातज्ञापनादन्याऽनन्या वेति विकल्प्याऽऽद्यं दूषयति । **प्रेरणेति** । लिङादौ नियोगवत्साऽपि नाज्ञातज्ञापनादन्या वाच्याऽस्तीत्यत्र हेतुमाह । **समस्तेति** । साधनादित्रयाद्बाह्यमित्यादीनां सर्वेषां कार्ये दर्शितदोषाणामज्ञातज्ञापनादन्यप्रेरणायामपि कथनप्रसङ्गात्त्वदिष्टप्रेरणायां प्रमाणाभावाच्च न साऽस्तीत्यर्थः ॥ ६३४ ॥

**न स्वरूपं लिङादीनां प्रेरणाज्ञापकत्वतः ॥**
**अन्योन्यरूपभेदेऽपि प्रेरणानुगमात्तथा ॥ ६३५ ॥**

किं चान्याऽपि सा लिङादीनां स्वरूपं वा या काचिच्छक्तिर्वा व्यापारविशेषो वा नाऽऽद्य इत्याह । **नेति** । लिङादीनां ज्ञापकत्वात्प्रेरणायाश्च तदभावान्न सा तत्स्वरूपमित्यर्थः । यजेत जुहोतीति लिङ्लेडादीनामन्योन्यं रूपभेदेऽपि प्रेरणायास्तदभावादेकत्वेन सर्वत्रानुगतेरेकस्य बहूनां च भेदान्न लिङादिस्वरूपं प्रेरणेति युक्त्यन्तरमाह । **अन्योन्यमिति** । लिङादीनां न स्वरूपं प्रेरणेत्येतत्तथेत्युच्यते ॥ ६३५ ॥

**शक्तेरनभिधेयत्वात्तद्व्यापारोऽपि नेष्यते ॥**
**प्रेरकाभावतो वेदे तद्व्यापारोऽपि नेरणा ॥ ६३६ ॥**

प्रेरणा लिङादिशक्तिरिति द्वितीयं निरस्यति । **शक्तेरिति** । लिङादिवाच्या प्रेरणा तद्वादिभिरिष्टा तच्छक्तित्वे च तस्याः शक्तिशक्तिमतोरभेदे न वाच्यत्वमेकत्र वाच्यवाचकत्वायोगाद्भेदेऽपि प्रयोजकत्वान्न वाच्यता नहि दाहप्रयोजकीभूता शक्तिर्दहनशब्देनोच्यते तन्न प्रेरणा लिङादिशक्तिरिति भावः । तृतीयेऽपि व्यापारविशेषो लिङादीनां वा प्रेरकस्य वा नाऽऽद्य इत्याह । **तद्व्यापारोऽपीति** । लिङादिव्यापारो हि स्पन्दो वा यत्नो वा नाऽऽद्यस्तेषां विभुत्वेन तद्गुणत्वेन वा मूर्तत्वाभावात्तदनुविधायिस्पन्दायोगान्नेतरो यत्नस्य चेतनगुणस्याचेतनेषु तेष्वसंभवान्नापि तेषां व्यापारान्तरं तज्जन्यस्तज्जन्यजनको व्यापार इति लक्षणाक्रान्तस्य तस्यानिरूपणादिति भावः । प्रेरकोऽपि पुरुषो वेदो वाऽऽद्ये वेदस्यापौरुषेयत्वात्तत्र प्रेरकाभावात्तदीयव्यापारविशेषासिद्धिस्तथा च तत्र प्रेरणाभावान्निर्विषयो लिङादिः स्यादित्याह । **प्रेरकेति** ॥ ६३६ ॥

**अतः समीहितोपायतया वस्त्ववबोधयन् ॥**
**अबुद्धं प्रेरको वेदो ज्ञापना प्रेरणा मता ॥ ६३७ ॥**

अज्ञातज्ञापनादन्या प्रेरणेत्यसंभवात्ततोऽनन्या सा प्रेरकश्च वेद इति पक्षावङ्गीक-रोति । अत इति ॥ ६३७ ॥

**तथा च वस्तुयाथात्म्यज्ञापनेन प्रमाणता ॥**
**न प्रेरकतया सा स्यात्प्रत्यक्षादेरनीक्षणात् ॥ ६३८ ॥**

अज्ञातज्ञापना प्रेरणा वेदश्च तद्धेतुरिति सिद्धेऽपि प्रवर्तकतया वेदप्रमाण्यात्कथं त्वत्पक्षसिद्धिरित्याशङ्क्याऽऽह । तथा चेति । प्रत्यक्षादेः प्रेरकत्वादर्शनादज्ञातज्ञाप-कत्वेनैव प्रामाण्यवद्वेदस्यापि प्रामाण्यं न प्रेरकत्वेनेत्यर्थः ॥ ६३८ ॥

**निष्पादितनियोगस्य वेदप्रामाण्यतो यथा ॥**
**नियमेन फलं तद्वत्साधनानुष्ठितेर्भवेत् ॥ ६३९ ॥**

नियोगप्रेरणयोर्लिङाद्यर्थत्वाभावेऽपि कथं समीहितसाधनतायास्तदर्थतेत्याशङ्क्याऽऽह । निष्पादितेति । यथा नियोगवादे धात्वर्थानुष्ठानादुत्पादितनियोगस्य स्वर्गकामादि-वाक्यात्फलमावश्यकं तथाऽनुष्ठितस्य यागादेरपि तद्बलादेवापूर्वावान्तरव्यापारद्वारा फलनियमः । अतो लिङाद्यर्थो यागादेरिष्टोपायतेति शक्यं वक्तुमित्यर्थः ॥ ६३९ ॥

**विसंवादोऽपि नाऽऽशङ्क्यो नियोगार्थे यथा तथा ॥**
**वैदिकत्वादुपायेऽपि नृतन्त्रे व्यभिचारिता ॥ ६४० ॥**

ननु यागादेः स्वर्गाद्युपायत्वं लिङाद्यर्थश्चेत्तदनुष्ठानानन्तरं स्वर्गादिना भाव्यं भुजिफ-लस्य तृप्तेरानन्तर्योपलम्भात्तत्र चानन्तरफलादर्शनात्फलोपायतायास्तदर्थत्वायोगादन्यस्य च तदर्थस्याऽनिष्टत्वादप्रामाण्यं स्वर्गकामादिवाक्यस्य स्यात्तत्राऽऽह । विसंवादोऽपीति । यथा नियोगे लिङाद्यर्थेऽनन्तरफलानुपलम्भेऽपि वैफल्यं वाक्यस्यामानत्वं वा न शङ्क्यते तथा यागादावपि तदर्थे समीहितोपाये विसंवादो नाऽऽशङ्कामर्हति तत्रोपायत्वस्य वैदि-कगम्यत्वात्तस्मात्फलोपायत्वमेवार्थो लिङादेरित्यर्थः । यागादेरुपायत्वस्य वैदिकत्वेऽपि कथं न विसंवादशङ्केत्याशङ्क्याऽऽह । नृतन्त्र इति । पौरुषेये वाक्ये फलादिव्यभिचारदृष्टे-र्लोके विसंवादशङ्कायामपि न सा वेदे युक्ता तस्यापौरुषेयस्यादोषत्वादित्यर्थः ॥ ६४० ॥

**नानन्तरफलो यागो दृष्टो लोकेऽपि हि क्वचित् ॥**
**अतः सामान्यतो दृष्टं क्रियात्वादित्यदूषणम् ॥ ६४१ ॥**

ननु यागादिक्रियाऽनन्तरफला क्रियात्वान्मर्दनवदित्यानन्तर्यं फलस्यानुमीयते तथाच तदनुपलम्भे कथं विसंवादशङ्का नावतरेन्नेत्याह । नेति । यागशब्देन क्रियोच्यते । मर्दनादौ फलानन्तर्येऽपि न सर्वा क्रियाऽनन्तरफला लोके दृष्टा सेवादावदृष्टेरित्यर्थः । तथाऽपि किमनुमानदूषणमनैकान्त्यमित्याह । अत इति । यागादौ क्रियात्वं दृष्ट्वा क्रियात्वादिति यदनुमानं तन्न दोषावहं सेवादौ व्यभिचारादित्यर्थः ॥ ६४१ ॥

---

१ ख. °स्मादत्र ।

**स्वसामर्थ्याद्यथा कार्यं कालास्पृष्टं प्रभाषते ॥**
**लिङादिर्यागमप्येवं वक्ष्यतीत्यविशिष्टता ॥ ६४२ ॥**

ननु यागादिः स्वर्गाद्युपायो लिङादिवाच्यश्चेत्तस्य कालसंबन्धोऽस्ति न वा । आद्ये भूतादिकालयोगिनो नानुष्ठेयता द्वितीये शब्दतः कालास्पर्शे घटादितुल्यताऽर्थतस्तदस्पर्शे त्वसत्त्वमुक्तमत आह । **स्वसामर्थ्यादिति** । अस्ति तावन्नियोगयागयोस्तुल्यता लिङादिना स्वशक्त्या नियोगवद्यागस्यापि कालास्पर्शिनो वचनान्न च कालायोगे यागस्यासत्त्वमिष्टोपायत्वाकारेण तदयोगेऽपि स्वरूपेण तद्योगान्नियोगस्य तु स्वरूपेणापि कालायोगितेति विशेषो न चेष्टोपायताविशिष्टयागस्य कालेतरजडस्य कालायोगादसत्त्वं तस्य स्वर्गकामादिवाक्यीयत्वान्न च नियोग एव तदीयस्तस्मिन्नलौकिके लिङादेरशक्यसंगतित्वान्न च केवलस्य वाक्यीयत्वं विशिष्टस्य पदशक्तिविषयत्वं वैपरीत्यप्रसङ्गाल्लक्षणायाश्चानिष्टत्वाल्लौकिकी तु समीहितोपायता लिङादिशक्तिविषयोऽर्थान्तरस्पृष्टा लौकिकात्मना सैव वाक्यतात्पर्यगम्येति भावः ॥ ६४२ ॥

**साक्षादेवं च संबन्धः साध्यसाधनयोर्भवेत् ॥**
**नातिरिक्तलिङाद्यर्थव्यवधानविडम्बना ॥ ६४३ ॥**

यागादेरिष्टोपायत्वस्य लिङाद्यर्थत्वे हेत्वन्तरमाह । **साक्षादिति** । यागादेरिष्टोपायत्वस्य लिङाद्यर्थत्वे सति साध्यसाधनयोरव्यवाहितः संबन्धः सिध्यति नियोगस्य तदर्थत्वे तेन यागस्वर्गयोर्व्यवधानरूपा विडम्बना स्यात्सा चायुक्ता न ह्यव्यवहिते संबन्धे व्यवहितं रोचयते गौरवादित्यर्थः ॥ ६४३ ॥

**साक्षादसति संबन्धे पारंपर्यं न तु क्वचित् ॥**
**गतौ सत्यां तदप्यत्र नान्यत्रेवोपलभ्यते ॥ ६४४ ॥**

अरुणया क्रीणातीत्यत्र व्यवहितोऽपि संबन्धः स्वीकृतस्तथा स्वर्गकामवाक्येऽपि स्यादित्याशङ्क्याऽऽह । **साक्षादिति** । अव्यवधानेन संबन्धेऽनुपपन्ने व्यवधानमिष्यते नाव्यवहितसंबन्धसंभवे क्वचिदपि पारंपर्यमिष्टं तदपि स्वर्गकामादिवाक्ये न शक्यमुपगन्तुमरुणया क्रीणातीतिवदप्रतीतेरित्यर्थः ॥ ६४४ ॥

**श्रुत्या क्रयाभिसंबन्धो व्यवच्छिद्यैव साधनम् ॥**
**अरुणः साधको दृष्टो नानपेक्षो वृथा च सः ॥ ६४५ ॥**

वैधर्म्यदृष्टान्तं प्रपञ्चयति । **श्रुत्येति** । अरुणया क्रीणातीत्यत्र तृतीययाऽरुणो गुणः क्रयणसंबन्धोऽपि साधनं पशुं विशेष्यैव सोमक्रयस्य साधकोऽवगतो न द्रव्यानपेक्षो गुणः क्रयणं साधयत्यन्यथा गुणो वृथा स्यात्तन्मात्रस्य सर्वत्रासाधकत्वात्समुच्चयः कुतो

---

१ क. °त्या क्रिया° । २ ख. °बद्धो व्य° ।

द्रव्यगुणवदित्यत्र चारुणाधिकरणमवतार्यैतत्प्रतिपादितं न चैवं स्वर्गकामादिवाक्ये व्यवधानधीरव्यवहितसंबन्धसंभवस्योक्तत्वादित्यर्थः ॥ ६४५ ॥

**यागः कार्याभिसंबन्धोऽप्यनुत्पाद्य फलं न ते ॥**
**कथंचित्साधयेत्कार्यं तच्च नास्तीत्यसाधकः ॥ ६४६ ॥**

यागादेः स्वर्गादिनाऽन्वयो न नियोगेनेत्युक्तमिदानीं नियोगेनान्वयमुपेत्यापि दोषमाह । **याग इति** । यागो नियोगान्वितोऽपि तमुत्पादयन्नवान्तरव्यापारेण रहितः सहितो वा नाऽऽद्यो निर्व्यापारकरणानङ्गीकाराद्द्वितीये फलोत्पत्तिर्वा व्यापारान्तरं वाऽवान्तरव्यापारः । आद्ये स्वर्गमनुत्पाद्य यागो न कथंचिदपि त्वदिष्टं नियोगं साधयेन्नहि निर्व्यापारं करणं कार्याय पर्याप्तं न च स्वर्गो यागानन्तरं कस्यचिद्दृष्टोऽतो [१]यागो नियोगस्यासाधकः स्यादित्यर्थः ॥ ६४६ ॥

**नचान्या व्यापृतिस्तस्य कार्यसिद्धौ त्वयेष्यते ॥**
**फलानुत्पत्तितस्तस्मान्न कार्येणापि संगतिः ॥ ६४७ ॥**

द्वितीयमाशङ्क्याऽऽह । **न चेति** । स्वर्गादिसिद्ध्यतिरेकेण नियोगसिद्धिमुद्दिश्य यागादेर्व्यापारान्तरं त्वया नेष्यतेऽन्यथा स्वर्गादेरेव ततः संभवान्नियोगवैयर्थ्यादित्यर्थः । अस्तु तर्हि फलोदयद्वारा यागादेर्नियोगसिद्धिरित्याशङ्क्य तच्च नास्तीत्युक्तं व्यनक्ति । **फलेति** । नहि तस्माद्यागादेरनन्तरं फलमुपलब्धमतस्तद्द्वाराऽपि नियोगेन यागादिः साधकतया नान्वेतीत्यर्थः ॥ ६४७ ॥

**अथ शास्त्रप्रमाणत्वाददृष्टाऽप्यभ्युपेयते ॥**
**फलोत्पत्तिर्ममाप्येवं तथा सति भविष्यति ॥ ६४८ ॥**

यागादेरनन्तरमदृष्टाऽपि फलोत्पत्तिः स्वर्गकामादिवाक्यप्रामाण्यादिष्टा तेन तद्द्वारा नियोगजनकत्वमपि तस्य युक्तमिति चोदयति । **अथेति** । शास्त्रप्रामाण्यावष्टम्भे समीहितसाधनतावादिनोऽपि तद्बलादनन्तरमदृष्टाऽपि फलोत्पत्तिर्भविष्यतीति नियोगवैयर्थ्यमित्याह । **ममेति** ॥ ६४८ ॥

**मम शास्त्रप्रमाणत्वात्पश्चादपि भवेत्फलम् ॥**
**पूर्वं तु भवतो न्याय्यं तदभावे ह्यसाधकम् ॥ ६४९ ॥**

स्वपक्षे विशेषं दर्शयन्नियोगकल्पनावैयर्थ्यं समर्थयते । **ममेति** । इष्टोपायतावादे यागादिव्यवहितकालेऽपि [४]स्वर्गादिः स्यात्स्वर्गकामादिवाक्यप्रामाण्यादित्यर्थः । नियोगवादेऽपि तत्प्रामाण्यस्य तुल्यत्वान्न विशेषसिद्धिरित्याशङ्क्याऽऽह । **पूर्वं त्विति** । नियोगोत्पत्तेरर्वाग्यागादेरनन्तरमेव फलं नियोगवादे युक्तं स्वर्गाद्यभावे यागादेरवान्तरव्यापारशून्यस्य नियोगासाधकत्वादवान्तरव्यापारान्तराङ्गीकारे च नियोगवैयर्थ्यस्योक्तत्वान्न च

१ ख. 'बद्धोऽप्य' । २ ख. 'चान्यथा' । ३ क. 'धकः ॥ ६४९ ॥ ४ क. स्वर्गादि ।

साधकहीनः स सिध्यति धात्वर्थवैयर्थ्याच्छास्त्रप्रामाण्यलम्बने च यागादेरेव फलसिद्धे-र्व्यर्था नियोगकल्पनेति भावः ॥ ६४९ ॥

**कार्यसिद्ध्या फलावाप्तावशेषफलसंभवः ॥**
**सकृत्करण एव स्यात्कार्यस्याभेदतस्तव ॥ ६५० ॥**

यागादिसिद्धया नियोगसिद्धिस्ततः स्वर्गादीति निरस्तमतमङ्गीकृत्य दोषमाह । **कार्येति** । यदा यागादिर्नियोगमुत्पादयति स च स्वर्गं तदा सकृत्करणे नियोग-सिद्धेस्तस्य चैक्यादपर्यायमेव सर्वफलसिद्धिः स्यादतो बहुकर्मानुष्ठानमेकस्याऽऽवृत्तिश्च व्यर्थेत्यर्थः ॥ ६५० ॥

**अनुबन्धाभिसंबन्धात्फलं चेत्स्याद्व्यवस्थया ॥**
**तत एव न कार्यात्स्यात्तदा तद्भावभावतः ॥ ६५१ ॥**

नियोगस्य स्वरूपेणैक्येऽपि यागाद्युपाधिभेदेन भेदात्फलव्यवस्थासंभवान्नोक्तं दूषण-मिति शङ्कते । **अनुबन्धेति** । यतो नियोगभेदस्तत एव फलं तद्व्यवस्था च स्यादनुबन्ध-भेदे तद्भावादन्यथा चाभावादतस्तस्मिन्पक्षे नियोगवैयर्थ्यमित्याह । **तत इति** ॥ ६५१ ॥

**औपाधिकश्च मिथ्या स्यात्साध्यसाधनलक्षणः ॥**
**व्यवहारः श्रुतेर्ज्ञातः परमार्थैकवादिनः ॥ ६५२ ॥**

उपाधिभेदान्नियोगं भिन्दानस्य दोषान्तरमाह । **औपाधिकश्चेति** । उपहितो नियोगः साधनं तेन स्वर्गादि साध्यमित्युक्ते स्फटिकलौहित्यवदुपहितस्य मिथ्यात्वात्तदायत्तस्वर्गा-देरपि तथात्वं परमार्थमेव सर्वमिति वादिनश्च श्रौतो व्यवहारः साध्यसाधनात्मा मृषेत्य-निष्टमित्यर्थः ॥ ६५२ ॥

**एवं ते कर्मकाण्डेऽपि कार्यं तावन्न युज्यते ॥**
**ऐकात्म्ये तु यथा नास्ति विशेषेणोच्यते तथा ॥ ६५३ ॥**

कर्मकाण्डे नियोगाभावेऽपि ज्ञानकाण्डे स्यादित्याशङ्क्य वृत्तं कीर्तयति । **एवमिति** । अपिस्तत्र नियोगासंभावनार्थः । वर्तिष्यमाणमर्थं सौकर्यार्थं संगृह्णाति । **ऐकात्म्ये त्विति** । यथा ज्ञानकाण्डे नियोगो न घटते तथा विशेषहेतुनोच्यतेऽनन्तरसंदर्भेणे-त्यर्थः ॥ ६५३ ॥

**प्रतिपत्तिविधिस्तावन्नाऽऽत्मा द्रष्टव्य इत्ययम् ॥**
**तस्य भावार्थनिष्ठत्वाद्वस्तुन्यनुपपत्तितः ॥ ६५४ ॥**

**आत्मा द्रष्टव्य** इति **श्रुतेर्न** ज्ञानकाण्डे नियोगः शक्यो निरसितुमिति चेत्तत्र वस्तुनि वा नियोगस्तज्ज्ञाने वेति विकल्प्याऽऽद्यं दूषयति । **प्रतिपत्तीति** । आत्मा द्रष्टव्य इत्ययं विधिरपि प्रतिपत्तिविषयो न वस्तुविषय इति । अत्र हेतुमाह । **तस्येति** । तत्रैव हेत्वन्तरमाह । **वस्तुनीति** ॥ ६५४ ॥

**सिद्धेऽसिद्धेऽथ वैकात्म्ये विधिर्नैवोपपद्यते ॥**
**नाऽऽकाशे नापि तत्पुष्पे पुंव्यापारानपेक्षता[1] ॥ ६५५ ॥**

अनुपपत्तिं साधयति । **सिद्ध इति** । ऐकात्म्ये नित्यसिद्धे विध्यसंभवे दृष्टान्तमाह । **नेति** । विधिरिति पूर्वेणान्वयः । ऐकात्म्यं चेदसिद्धं तथाऽपि न तत्र विधिरित्यत्र दृष्टान्तमाह । **नापीति** । उभयत्र हेतुमाह । **पुंव्यापारेति** । सतोऽसतो वा पुरुषव्यापारायोग्यत्वान्नोभयत्रापि विधिस्तद्योग्ये तदुपगतेरित्यर्थः ॥ ६५५ ॥

**न विधिर्दर्शनेऽपि स्यादन्योन्याश्रयदोषतः ॥**
**दर्शनाद्विधिसंसिद्धेर्विधेर्दर्शनसिद्धितः ॥ ६५६ ॥**

वस्तुन्यसाध्ये विध्यभावेऽपि दर्शने भावार्थे विधिरिति विकल्पान्तरमाशङ्क्य तन्मात्रे ब्रह्मविशेषिते वेति विकल्प्याऽऽद्यं प्रत्याह । **न विधिरिति** । दर्शनेऽपि तन्मात्रे न विधिर्घटादिज्ञानेऽपि प्रसङ्गादित्यर्थः । न ब्रह्मविशेषितेऽपि तस्मिन्विधिरित्यपिना प्रतिज्ञाय हेतुमाह । **अन्योन्येति** । तमेव दोषं दर्शयति । **दर्शनादिति** । ब्रह्मविशेषितदर्शनस्य विधेयत्वे ब्रह्म प्रतिपन्नं वाच्यं विशेषणाग्रहे विशिष्टादृष्टेस्तामन्तरेण तत्र विध्यसिद्धेरतो ब्रह्मणि ज्ञाते तज्ज्ञाने विधिस्ततस्तज्ज्ञानमित्यन्योन्याश्रयान्न विशिष्टज्ञाने विधिर्न च वेदान्तेषु विध्युपगमे वस्तुनि मानतोभयपरत्वे वाक्यभेदादिति भावः ॥ ६५६ ॥

**न च यूपादिवच्छक्यं वेदेनैव समर्पणम् ॥**
**ऐकात्म्यस्य स्वतः सिद्धेः साध्यत्वाद्यूपवस्तुनः ॥ ६५७ ॥**

अथ यथा यूपादिर्लौकिकोऽर्थो[2] यूपे पशुं बध्नातीत्यादिविधिशेषतया यूपं तक्षतीत्यादिनाऽर्प्यते तथा ब्रह्मणोऽपि द्रष्टव्यविधिशेषत्वेन सत्यज्ञानादिवाक्येनार्पणमिति विधिपरत्वे वेदान्तानां वस्तुमानता न च वाक्यभेदो वस्तुन्यवान्तरतात्पर्यात्तत्राऽऽह । **न चेति** । ब्रह्मणो विधिशेषत्वेनासमर्पणे हेतुमाह । **ऐकात्म्यस्येति** । यूपादेस्तच्छेषतयाऽर्पणे हेतुमाह । **साध्यत्वादिति** ॥ ६५७ ॥

**सिद्धं चेद्दर्शयेद्वेदः प्रसिद्धं दर्शनं तथा ॥**
**तन्निष्ठं च भवेद्वाक्यं व्यर्थता च विधेस्तदा ॥ ६५८ ॥**

कूटस्थनित्यं ब्रह्म विधिशेषतया वेदो नार्पयतीत्युक्तं विपक्षे स्वपक्षासिद्धिमाह । **सिद्धं चेति** । दर्शनं वेदः सिद्धमप्यर्पयतीति स्वमतमिति यावत् । यथोक्तार्थस्य विधिपरवाक्यादेव सिद्धौ कथं स्वपक्षासिद्धिस्तत्राऽऽह । **तन्निष्ठं चेति** । षड्विधलिङ्गेभ्यो ब्रह्मपरमेव सत्यादिवाक्यं न विधिपरमतो वेदान्तानामवान्तरतात्पर्यं वस्तुनीत्ययुक्तमिति भावः । वाक्यस्य वस्तुपरत्वे तज्ज्ञाने विधिवैयर्थ्यमिति फलितमाह । **व्यर्थतेति** ॥ ६५८ ॥

---

[1] ख. °क्षतः ॥ ६५५ ॥ [2] ख. °दिरलौकि° ।

**सर्वमात्मेति वाक्यस्य न च वस्तुन्यसंभवः ॥**
**येनार्थस्यासमाप्तत्वात्क्रियेताध्याहृतिः पदे ॥ ६५९ ॥**

विधिं विना वाक्यस्य वस्तुबोधित्वायोगान्न तद्वैयर्थ्यमित्याशङ्क्याऽऽह । **सर्वमिति ।** वाक्यस्य विधिं विहाय न वस्तुनि बोधकत्वासंभवो व्युत्पन्नस्य वाक्यश्रवणे तदर्थबुद्धे-रित्यर्थः । तत्रापि विधिपदमध्याहर्तव्यं तद्वतो वाक्यस्यार्थबोधकत्वदर्शनादिति चेन्नेत्याह । **येनेति ।** येन वस्तुबोधित्वासामर्थ्येन विधिविधुराद्वाक्याद्वस्तुनोऽप्रतिपत्तेरध्याहारो विधि-पदे क्रियेत न तथा विधिशून्यवाक्यस्य वस्तुबोधित्वासामर्थ्यमधिकारिणो वाक्यात्तद्धी-दर्शनादतोऽध्याहारासिद्धिरित्यर्थः ॥ ६५९ ॥

**आत्मा ब्रह्मेति विज्ञानं विधिं नैव व्यपेक्षते ॥**
**यस्मात्तच्छ्रुतवाक्यस्य स्वयमेवोपजायते ॥ ६६० ॥**

किंच ब्रह्मज्ञानं शाब्दं वा विधीयते भावनारूपं वा साक्षात्कारलक्षणं वाऽऽद्येऽपि तदुत्पत्तये वा विधिरुत्पन्नस्य विषयनिश्चयाय वा वाक्यतात्पर्याय वा ज्ञानस्य पुरुषार्थ-त्वाय वा ब्रह्मणो मानान्तरायोग्यत्वाय वा पदार्थसंसर्गाय वेति विकल्प्य प्रथमं प्रत्याह । **आत्मेति** ॥ ६६० ॥

**यजेतेतिविधिज्ञानं न विध्यन्तरमीक्षते ॥**
**विध्यन्तरेऽनवस्था स्यान्न चायं कर्मणि स्थितेः ॥ ६६१ ॥**

अधीतवेदस्य विध्यनपेक्षाद्वाक्यादेवाऽऽत्मा ब्रह्मेति ज्ञानमुत्पद्यते तत्र नार्थवान्विधि-रित्यत्र दृष्टान्तमाह । **यजेतेति ।** स्वर्गकामवाक्ये यागकार्यताज्ञानमेतद्वाक्यातिरेकेण स्वोत्पत्त्यर्थं विध्यन्तरं नापेक्षते तस्मिन्नपेक्ष्यमाणे तदर्थज्ञानार्थमपि विध्यन्तरापेक्षायाम-नवस्थानान्न चायमेव यागकार्यताविधिस्तेनापेक्ष्यते तस्य कर्मविषयत्वादतो वाक्यादेव यागकार्यताज्ञानं तथा ब्रह्मज्ञानमपीत्यर्थः ॥ ६६१ ॥

**प्रतिपन्ने विधेयार्थे प्रवृत्तिः फलमिष्यते ॥**
**प्रवृत्तेश्च विधिज्ञानमेवमन्योन्यसंश्रयः ॥ ६६२ ॥**

शाब्दं ब्रह्मज्ञानमुत्पत्तये विधेयमित्यत्र दोषान्तरमाह । **प्रतिपन्न इति ।** यागादौ धात्वर्थेऽधिगते प्रवृत्तिर्विधिफलमित्युत्सर्गः । अस्तु ब्रह्मज्ञानेऽपि तथेत्याशङ्क्याऽऽह । **प्रवृत्तेश्चेति ।** ब्रह्मणि ज्ञाते तद्विशेषिते ज्ञाने प्रतिपन्ने विधिस्ततश्च प्रवृत्तेर्विधेयज्ञानविशे-षणं ब्रह्मज्ञानमित्येवमन्योन्याश्रयान्न तत्र विधिर्न विधिर्दर्शनेऽपि स्यादित्यत्रान्योन्याश्र-यत्वमुत्पत्तावुक्तमिह तु ज्ञप्ताविति विशेष इत्यर्थः ॥ ६६२ ॥

**बोधेऽस्मिञ्शब्दतो जाते न प्रवर्त्योऽफलत्वतः ॥**
**अनुत्पन्ने च नितरां प्रवृत्तेर्हेत्वसंभवात् ॥ ६६३ ॥**

किंच ब्रह्मणि ज्ञानं शब्दाज्जायते न वाऽऽद्ये तत्र विधिना पुरुषो न प्रवर्त्यो विधि-

कृत्याभावादित्याह । **बोधेऽस्मिन्निति** । द्वितीये सुतरामेव विधिना पुरुषो न प्रवर्त्यो विषयाभावादित्याह । **अनुत्पन्ने चेति** । नितरामित्युक्तमतिशयमेवाऽऽह । **प्रवृत्तेरिति** । ज्ञानस्य प्रवृत्तिहेतुत्वात्तस्याभावान्न प्रवृत्तिर्नहि विधिरपि ज्ञानं विना प्रवर्तयतीत्यर्थः ॥ ६६३ ॥

**अथ निश्चयसिद्ध्यर्थमुत्पन्नेऽपि प्रवर्त्यते ॥**
**स निश्चयो वः किं शब्दादथान्यस्मादितीर्यताम् ॥ ६६४ ॥**

शब्दाद्ब्रह्मणि ज्ञाने जातेऽपि विषयनिश्चयाय विधिना तत्र प्रवर्त्यते पुमानिति द्वितीयमादत्ते । **अथेति** । ज्ञानफलं निश्चयो युष्माकं शब्दादेव जायते मानान्तराद्वेति वाच्यमित्याह । **स इति** ॥ ६६४ ॥

**शब्दाद्यदि तदेवेदमायातं पूर्वदूषणम् ॥**
**अन्यस्मिन्निष्यमाणे च सापेक्षत्वं प्रसज्यते ॥ ६६५ ॥**

तत्राऽऽद्यमनूद्य विधिवैयर्थ्यं स्मारयति । **शब्दादिति** । निश्चयजनके मानान्तरे तत्सापेक्षत्वं वेदस्य पुंवचोवदापतेत्तथा चानपेक्षत्वकृतमस्य स्वतः प्रामाण्यं हीयेतेति द्वितीयं दूषयति । **अन्यस्मिन्निति** ॥ ६६५ ॥

**अविवक्षितनुत्त्यर्थमथात्र विधिरिष्यते ॥**
**अयं ज्ञेयोऽर्थ इत्युक्तौ स्याद्विवक्षितधीर्यतः ॥ ६६६ ॥**

वाक्यस्य वस्तुनि तात्पर्यार्थं तज्जन्यज्ञाने विधिरिति तृतीयं निरस्यति । **अविवक्षितेति** । ज्ञाने विध्यभ्युपगमेऽपि कथमर्थे वाक्यस्य तात्पर्यधीस्तत्राऽऽह । **अयमिति** । ज्ञातव्योऽयमर्थ इत्यर्थे ज्ञानकर्तव्यत्वोक्तौ सत्यां वाक्यस्यार्थे तात्पर्यधीर्यतो भवत्यतो वाक्यीये ज्ञाने तत्तात्पर्यसिद्धये विधिरित्यर्थः ॥ ६६६ ॥

**नैवमुत्सर्गतो यस्माच्छब्दानां लोकवेदयोः ॥**
**विशिष्टार्थैकनिष्ठत्वं स्वतो न विधिहेतुतः ॥ ६६७ ॥**

विधिबलादर्थपरत्वं शब्दस्येत्येतन्निरस्यति । **नैवमिति** । पदस्य वा विधितोऽर्थपरत्वं वाक्यस्य वा नाऽऽद्य इत्याह । **उत्सर्गत इति** । पदमात्रस्य बाधकाभावे स्वारसिकमन्वितविषयत्वं न विधिकृतमित्यर्थः ॥ ६६७ ॥

**अविशिष्टश्च वाक्यार्थस्तथा लौकिकवैदिक—**
**वाक्ययोर्गम्यते यस्माद्विधिर्नातो विवक्षितः ॥ ६६८ ॥**

मन्त्राधिकरणसिद्धान्तन्यायेन द्वितीयं प्रत्याह । **अविशिष्टश्चेति** । पदमात्रस्यान्वितविषयत्ववद्वाक्यमात्रस्यापि स्वभावतो विशिष्टार्थपरत्वान्न विधितस्तात्पर्यमित्यर्थः ॥६६८॥

**अपि दृष्टार्थतैकात्म्ये कर्मस्विव न भिद्यते ॥**
**वेदाधीतिविधेस्तस्माद्विधिरत्र निरर्थकः ॥ ६६९ ॥**

किं चाध्ययनविधेर्दृष्टफलता कर्मकाण्डवज्ज्ञानकाण्डेऽपि तुल्या तथा च ततो वेदमात्रस्यार्थपरत्वे संभवति ब्रह्मज्ञाने विधिर्नोपयुज्यते तं विनैव वेदान्तानामध्ययनविधितः स्वार्थे तात्पर्यादित्याह । **अपीति** ॥ ६६९ ॥

**विधेर्विध्यन्तरेऽभीष्टे कृत्स्नोऽर्थोऽप्यविवक्षितः ॥**
**पूर्वोक्तेनैव न्यायेन नैव कल्प्यो विधिस्ततः ॥ ६७० ॥**

अध्ययनविधेर्वेदस्य स्वार्थपरत्वे तत्परत्वमौत्सर्गिकमित्युक्तं त्यक्तं स्यादित्याशङ्क्याभ्युपगमं त्यजति । **विधेरिति** । अध्ययनविधेः स्वार्थपरत्वं विध्यन्तराद्वा स्वतो वाऽऽद्येऽनवस्थानादधीतिविधेस्तात्पर्यासिद्धौ स्वाध्यायमात्रं न स्वार्थपरं स्याद्द्वितीये वेदस्यैव स्वतस्तात्पर्यमस्तु व्यर्थोऽध्ययनविधिस्ततो नैवमुत्सर्गत इत्यादावुक्तन्यायेन शब्दमात्रस्यार्थपरत्वसिद्धेर्न तात्पर्यार्थं कल्प्यो ब्रह्मज्ञाने विधिरित्यर्थः ॥ ६७० ॥

**मतं पुमर्थसिद्ध्यर्थं ज्ञानस्य विधिरिष्यते ॥**
**फलस्य विध्यधीनत्वादुपेक्षाफलताऽन्यथा ॥ ६७१ ॥**

**चतुर्थमुत्थापयति । मतमिति ।** यागादौ फलस्य विध्यधीनत्वाद्ब्रह्मज्ञानस्यापि फलवत्त्वोपगमात्पुमर्थसिद्धये तद्विषयो विधिस्तदनभ्युपगमे तस्याविवक्षितफलतेत्यर्थः ॥६७१॥

**ज्ञेयव्याप्त्यतिरेकेण न विज्ञानात्फलान्तरम् ॥**
**इष्यते कर्मवन्नातस्तदर्थं विधिकल्पना ॥ ६७२ ॥**

ज्ञानफलं विषयनिश्चयो वाऽन्यद्वा नाऽऽद्यो निश्चयाय विधिरित्यत्रोक्तदोषान्न द्वितीय इत्याह । **ज्ञेयेति** । किंच फलान्तरं ज्ञेये ज्ञातरि वा नाऽऽद्यः कर्मफलस्य कर्तृगामित्ववज्ज्ञानफलस्यापि ज्ञातृनिष्ठत्वादतो ज्ञेयगतज्ञानफलाय न विधिकल्पनेत्याह । **कर्मवदिति** ॥ ६७२ ॥

**यदाऽपि मातरि फलं तदाऽपि विधिनाऽत्र किम् ॥**
**मातृमानप्रमेयादौ तत्सिद्धेर्विधिना विना ॥ ६७३ ॥**

**द्वितीयमनूद्य** विधिवैयर्थ्यमाह । **यदाऽपीति** । तं विना ज्ञानफलस्य स्फुरणस्य मातरि साधकत्वेन सदा सिद्धेरित्यर्थः । मातृगतस्यैव फलस्य मेयादिसंबन्धार्थं ज्ञाने विधिरित्याशङ्क्याऽऽह । **मात्रिति ।** यथा संवेदनं मानफलं मातृसाधकत्वेन विधिं विना भाति तथा मानमेयकर्तृकर्मादावपि तं विना स्वतस्तस्य सिद्धेर्व्यर्था विधिकल्पनेत्यर्थः ॥ ६७३ ॥

**अथापि कार्यविरहात्सिद्धार्थमनुवादकम् ॥**
**वचो नैव प्रमाणं स्यात्तस्य मान्तरसंगतेः ॥ ६७४ ॥**

**पञ्चममवतारयति । अथापीति ।** उक्तविधचतुष्टयासंभवेऽपि विधान्तरेण विधिर्भविष्यतीति यावत् । नियोगादृते केवलं भूतार्थवचोऽनुवादकं सत्प्रमाणं नैव स्यादिति

योजना । कथं सिद्धार्थे वचोऽनुवादकं तत्राऽऽह । **तस्येति ।** कार्यास्पृष्टभूतार्थस्याऽऽगमेतरमानयोग्यत्वात्तद्वाचि वचः स्यादनुवादकमित्यर्थः ॥ ६७४ ॥

**विध्यर्थाङ्गीकृतौ त्वेतदनपेक्षं प्रमाणताम् ॥**
**अश्नुते मान्तराभावाज्ज्योतिष्टोमादिवाक्यवत् ॥ ६७५ ॥**

कथं तर्हि परित्यक्त्यानुवादकतां भूतवाचिनो वचसो मानता तत्राऽऽह । **विधीति ।** नियोगे मानान्तराभावात्तस्य लिङाद्यर्थस्य सिद्धार्थवाक्ये शेषत्वेनाङ्गीकारे स्वरूपेण मानान्तरयोग्यस्यापि सिद्धार्थस्य नियोगस्पर्शित्वेन तदयोग्यत्वात्तदर्थं वचः स्वर्गकामादिवचोवदनपेक्षं मानं तस्माद्ब्रह्मणो मानान्तरायोग्यत्वाय तज्ज्ञाने विधिरित्यर्थः ॥ ६७५ ॥

**वस्तु मान्तरयोग्यं चेद्विधौ सत्यपि तत्तथा ॥**
**अथ तन्मान्तरायोग्यं विध्यभावेऽपि तत्तथा ॥ ६७६ ॥**

ब्रह्म स्वरूपेण मानान्तरयोग्यं न वेति विकल्प्याऽऽद्यमनूद्य दूषयति । **वस्त्विति ।** विधिना वस्तुनोऽन्यथयितुमशक्यत्वाद्विधिपक्षेऽपि वस्तुवाक्यस्यानुवादित्वेनाप्रामाण्याद्व्यर्थो विधिरित्यर्थः । द्वितीयमनुभाष्य विधिवैयर्थ्येन दूषयति । **अथेति ।** तथाच विध्यस्पृष्टवस्तुवाच्यपि वचनमनपेक्षं मानमिति शेषः ॥ ६७६ ॥

**किं वाक्यस्यानुवादत्वं सिद्धेऽर्थे मान्तरेण वा ॥**
**मिते तत्र न पूर्वस्मिन्सिद्धेऽप्यर्थेऽनुवादता ॥ ६७७ ॥**

यत्तु सिद्धार्थं वचोऽनुवादकमिति तन्निराकर्तुं विकल्पयति । **किमिति ।** सत्यर्थे बोधकत्वेन प्रवृत्तवाक्यस्यानुवादकत्वं मानान्तरेण ज्ञाते वेति विकल्पार्थः । तयोर्मध्ये प्रथमे कल्पे विद्यमानेऽर्थे बोधकस्यापि वाक्यस्य नानुवादकतेत्याह । **तत्रेति** ॥ ६७७ ॥

**मानान्तरानधिगतं सिद्धं वस्त्ववबोधयत् ॥**
**मानं किं नानपेक्षं स्यात्पुमर्थश्च स्वरूपतः ॥ ६७८ ॥**

सदर्थवादिवचसोऽनुवादकत्वायोगमभिनयति । **मानान्तरेति ।** आगमेतरमानास्पृष्टं सद्वस्तु बोधयद्वचोऽध्यक्षादिवदनपेक्षं मानं स्यादेवेत्यर्थः । सप्तद्वीपा वसुमतीत्यादाविव सिद्धार्थज्ञानात्पुमर्थाभावाद्विशुद्धं सिद्धं बोधयद्वाक्यं न प्रमेति चेन्नेत्याह । **पुमर्थश्चेति ।** प्रत्यग्वस्तुनोऽनतिशयसुखत्वात्परमपुरुषार्थरूपं तत्र तद्विषयं वाक्यमप्रमेत्यर्थः ॥ ६७८ ॥

**पुंबुद्धिविषयो ह्यर्थो मानान्तरमपेक्षते ॥**
**अभावात्पुरुषस्येह न तु सिद्धोऽपि वैदिकः ॥ ६७९ ॥**

विमतमनुवादकं सिद्धार्थवाक्यत्वान्नदीतीरफलसत्तावाक्यवदित्यनुमानाद्वेदान्तानामनुवादतेत्याशङ्क्याऽऽह । **पुंबुद्धीति ।** दार्ष्टान्तिकवाक्यस्य पौरुषेयत्वाद्बुद्धिगम्यस्तदर्थो मानान्तरयोग्यत्वात्तदपेक्षते तन्मानान्तरापेक्षया स्वार्थबोधकत्वमुपाधिरिति भावः । साधन-

१ ख. °शेषित्वे° । २ ख. °दत्वा° ।

व्याप्तिं निरस्यति । **अभावादिति** । अपौरुषेये वेदे प्रणेतुरभावाद्वैदिकोऽर्थः सिद्धोऽपि मानान्तरायोग्योऽतो न वेदान्तेषु तदपेक्षया स्वार्थबोधकत्वमित्यर्थः ॥ ६७९ ॥

**न च सिद्धत्वमात्रेण शङ्क्यते मान्तरं क्वचित् ॥**
**शङ्क्यमानस्य मानस्य तुल्या सापेक्षता यतः ॥ ६८० ॥**

ब्रह्म मानान्तरगम्यं सिद्धत्वाद्घटवदित्यनुमानादुपाधेः साधनव्याप्तिरिति चेन्नेत्याह । **न चेति** । न हि घटादौ क्वचिदपि सिद्धत्वादेव प्रमान्तरं प्रविशति जडत्वस्य तत्र प्रयोजकत्वान्न च समव्याप्तिपक्षे कार्ये साध्याव्याप्तिस्तत्रापि मानान्तरप्रवेशस्य वक्ष्यमाणत्वादिति भावः । यद्यपि ब्रह्मणि मानान्तरप्रवेशोऽप्रमितस्तथापि शङ्क्यते शङ्काया निरङ्कुशत्वादतः संदिग्धा साधनव्याप्तिरित्याशङ्क्याऽऽह । **शङ्क्यमानस्येति** । शब्दस्य स्वार्थे शङ्क्यमानमानसापेक्षतावत्तस्यापि शब्दसापेक्षता तुल्या तथाच शङ्क्यमानमानान्तरापेक्षया किमिति शब्दोऽप्रमाणं शब्दापेक्षया तदेवामानं किं न स्यात्प्रत्यक्षस्य शब्दस्याशङ्कितस्य शङ्कितमानतो बलीयस्त्वादित्यर्थः ॥ ६८० ॥

**न च सापेक्षताऽप्यस्ति मितेर्मानत्वतः क्वचित् ॥**
**मान्तरानवबुद्धं हि बोधयन्मानमुच्यते ॥ ६८१ ॥**

किंच सिद्धार्थं वेदवाक्यं स्वार्थे मानं न वाऽऽद्ये सापेक्षताक्षतिर्मानत्वादेव क्वचिदपि तस्य तदभावादित्याह । **न चेति** । न द्वितीयोऽज्ञातं ज्ञापयतो वाक्यस्यामानत्वायोगादित्याह । **मान्तरेति** ॥ ६८१ ॥

**मानान्तरानपेक्षं चेन्मानं मेयं प्रबोधयेत् ॥**
**मानमेव तदा तत्स्यान्नातोऽन्यन्मानलक्षणम् ॥ ६८२ ॥**

अज्ञातज्ञापकत्वेऽपि मानत्वं मा भूदिति चेन्नेत्याह । **मानान्तरेति** । यथोक्तं वाक्यं मानमेव तल्लक्षणवत्त्वादित्यर्थः ॥ ६८२ ॥

**अथ मानान्तरापेक्षं[2] तन्मानं मेयबोधकम्[3] ॥**
**द्वयोरेकक्रियावेशात्तथाऽप्यन्यानपेक्षता ॥ ६८३ ॥**

सदर्थबोधि वाक्यमनुवादकमित्येतन्निरस्य मानान्तरेण मितेऽर्थे बोधकं वाक्यं तदपेक्षया मेयबोधित्वादनुवादकमिति द्वितीयमनुवदति । **अथेति** । ब्रह्मणि मानान्तरासंभवस्योक्तत्वाद्वक्ष्यमाणत्वाच्च न मानान्तरमिते तस्मिन्वाक्यं बोधकं कथंचित्तत्र मानान्तरावेशेऽपि शब्दतदितरमानयोरेकस्यां वस्तुबोधनक्रियायां प्रवृत्तेः शब्दस्य स्वार्थमितौ मानान्तरानपेक्षता नहि दहने प्रवृत्ताध्यक्षानुमानयोरितरेतरापेक्षेति परिहरति । **द्वयोरिति** ॥ ६८३ ॥

१ ख. शङ्कते । २ ख. °क्षं मानं । ३ ख. मेयावबो° ।

**अथानधिगताभावादुत्तरस्याप्रमाणता ॥**
**तत्सद्भावात्तु पूर्वस्य ज्ञानस्यास्तु प्रमाणता ॥ ६८४ ॥**

द्वयोरेकक्रियावेशममृष्यमाणः शङ्कते । **अथेति** । अज्ञातार्थाभावादुत्तरस्य शब्दस्यामानता चेत्तर्हि तद्विषये प्रवृत्तप्रमाणान्तरस्यापि कथं प्रमाणतेत्याशङ्क्याऽऽह । **तत्सद्भावादिति।** भाविना शब्देन पूर्वभाविनो ज्ञानस्य ज्ञातार्थताया दुर्ज्ञानत्वादज्ञातार्थसद्भावात्तस्य मानतोचितेत्यर्थः ॥ ६८४ ॥

**मातोऽनधिगतत्वस्य सिद्धिः स्यादथवाऽन्यतः ॥**
**स्वतो वा ज्ञाततायाश्च कुतः सिद्धिरितीर्यताम् ॥ ६८५ ॥**

ज्ञातत्वाज्ञातत्वयोस्त्वन्मते सेद्धुमशक्यत्वान्नायं विभाग इति वक्तुं विकल्पयति । **मात इति** । प्राक्प्रमाणप्रवृत्तेर्वस्तुन्यज्ञातत्वस्य मानतो वा नित्यानुभवाद्वा स्वप्रकाशत्वेन वा सिद्धिरिति विकल्पार्थः । ज्ञाततासाधकमेव तत्पूर्वभाविनीमज्ञाततां साधयति किमत्र विकल्पैरिति चेत्तत्राऽऽह । **ज्ञाततायाश्चेति।** नहि तत्साधकमपि सुबोधं पूर्ववद्विकल्पोपपत्तेरित्यर्थः ॥ ६८५ ॥

**अज्ञातत्वस्य माव्याप्तेः पूर्वमेव प्रसिद्धितः ॥**
**ततश्च मानतः सिद्धिर्नाज्ञातत्वस्य कुत्रचित् ॥ ६८६ ॥**

अज्ञातत्वस्य त्रिधाऽपि सिद्धिं दूषयति । **अज्ञातत्वस्येति।** न तावत्तस्याऽऽत्मन्यनात्मनि वा मानात्सिद्धिस्तत्प्रवृत्तेः प्रागेव सिद्धत्वादज्ञातेऽर्थे सिद्धे तत्र प्रमाणप्रवृत्तेरिष्टत्वात्ततो नित्यानुभवादपि न तत्सिद्धिस्त्वयाऽनभ्युपगमादन्यथा तस्य कल्पितत्वापत्तेरुक्तत्वान्न च स्वतस्तत्सिद्धिराभ्यामनभ्युपगमादित्यर्थः ॥ ६८६ ॥

**मानव्याप्तिक्षमं चेत्स्यादज्ञातत्वं घटादिवत् ॥**
**वास्तवं स्यात्तदा रूपमज्ञातं च सदा भवेत् ॥ ६८७ ॥**

तस्य मानासिद्धत्वे युक्त्यन्तरमाह । **मानेति** । तच्चेन्मानेन विषयीकर्तुं योग्यं तदा घटवन्माननिरस्यं न स्यात्तथा च वस्तुस्वरूपं मानात्प्रागिवोर्ध्वमप्यज्ञातमेव स्यादित्यर्थः । एतेन ज्ञातत्वस्यापि त्रिधा सिद्धिर्निरस्ता ॥ ६८७ ॥

**तथा संशयमिथ्यात्वबुद्ध्योरेष यथोदितः ॥**
**न्यायो वाच्यस्ततः सर्वो व्यवहारो न सिध्यति ॥ ६८८ ॥**

संशयादिवदज्ञानत्वादिसिद्धिमाशङ्क्यातिदिशति । **तथेति** । नहि संशयादि साक्षिणा स्वतो वा सिद्धमनभ्युपगमान्मेयत्वे च माननिरस्यत्वायोगस्तस्यापीत्यर्थः । मा भूदज्ञातत्वादेर्मानमेयत्वाद्घटवन्निवृत्तिरिति चेन्नेत्याह । **तत इति** । सम्यग्धीकृतो व्यवहारो वस्तुनि नाज्ञानत्वादिषु संप्लवमानेषु संभवतीत्यर्थः ॥ ६८८ ॥

**अज्ञातत्वाविशेषेऽपि मानानां यदि मानता ॥**
**ज्ञातस्याज्ञाततोऽन्यत्वात्तत्र स्यात्किं न मानता ॥ ६८९ ॥**

वस्तुन्यज्ञातत्वस्य मानात्प्रागूर्ध्वं चाविशेषेऽपि मानगतमानत्वस्याविरोधादज्ञातत्वानिवृत्तावेव मानमेयव्यवहारः सिध्यतीति शङ्कते । **अज्ञातत्वेति ।** ज्ञातत्वविशिष्टाकारस्याज्ञातत्वविशिष्टाकारादर्थान्तरत्वादज्ञातेऽर्थे मानमतिशयमकुर्वन्मानतां भजते चेन्मानान्तरेण ज्ञातेऽपि शब्दस्यातिशयमकुर्वतो मानता किं न स्यान्न च विशेषानाधायिनो मानत्वायोगोऽज्ञातमानवदुपपत्तेरिति दूषयति । **ज्ञातस्येति** ॥ ६८९ ॥

**एकार्थोपनिपातित्वात्सापेक्षत्वं यदीष्यते ॥**
**तथाच सर्वमानानां सापेक्षत्वं प्रसज्यते ॥ ६९० ॥**

प्रमाणान्तरेण ज्ञाते शब्दस्य मानत्वे दोषमाशङ्कते । **एकार्थेति ।** शब्दवन्मानान्तरेष्वपि सापेक्षत्वापत्तिरित्याह । **तथाचेति** ॥ ६९० ॥

**एकस्यामपि सत्तायां सर्वाक्षाणां प्रमाणता ॥**
**द्रव्ये त्वक्चक्षुषोस्तद्वत्प्रसज्येताप्रमाणता ॥ ६९१ ॥**

तेषामेकविषयत्वाभावे कथं सापेक्षतेत्याशङ्क्य शब्देन सिद्धार्थेन तेषामेकविषयत्वमिष्टमिति मत्वा चक्षुरादीनामेकविषयत्वमाह । **एकस्यामिति ।** त्वगादेरेकद्रव्यविषयतया सापेक्षत्वं शब्दवदित्यतिप्रसङ्गान्तरमाह । **द्रव्य इति ।** सापेक्षत्वफलमाह । **प्रसज्येतेति ।** चक्षुरादीनामेकविषयत्वेऽपि न सापेक्षत्वेनामानत्वं तथा ब्रह्मणि मानान्तरावेशेऽपि न शब्दस्य सापेक्षत्वेनामानतेति भावः ॥ ६९१ ॥

**नियोगे लौकिके चाऽपि हरीतक्यादिभक्षणे ॥**
**मानान्तरासंभवेन प्रसज्येतानपेक्षता ॥ ६९२ ॥**

ब्रह्मणः सिद्धतया तन्निष्ठं वाक्यं नानपेक्षं मानमित्येतत्प्रत्युक्तम् । यत्तु नियोगस्य मानान्तरायोग्यत्वात्तद्वाक्यं निरपेक्षमानमिति तत्र किं नियोगत्वादेव मानान्तरायोग्यत्वं किंवा वैदिकनियोगत्वादिति विकल्प्याऽऽद्ये दोषमाह । **नियोग इति ।** हरीतक्यादिभक्षणे लौकिको नियोगस्तत्रापि नियोगत्वादेव मानान्तरासंभवेनानपेक्षता प्रसज्येतेति योजना । तथाच तद्विषयं पौरुषेयमपि वाक्यमनपेक्षं मानं स्यादिति शेषः ॥ ६९२ ॥

**नैष दोषो नरज्ञानपूर्विका विनियोगधीः ॥**
**येन लोकेऽस्त्यतोऽपेक्षा वेदे तु स्याद्विपर्ययः ॥ ६९३ ॥**

द्वितीयमवतारयन्पौरुषेयवाक्यस्य नानपेक्षतेति शङ्कते । **नैष इति ।** वक्ता हि विनियोगशब्दितं साध्यसाधनसंबन्धं ज्ञात्वा हरीतकीमारोग्यकामो भक्षयेदित्यादिवाक्यं विरचयत्यतो लौकिकवाक्ये श्रोतुरवगम्यमाननियोगविषयविनियोगरूपसाध्यसाधनसंबन्धधीस्तत्र वक्तृज्ञानपूर्विका येनोपेता तेन मानान्तरसिद्धसंबन्धविषयत्वाल्लौकिकनियोगस्य

तदर्थवाक्यस्यास्त्येव मानान्तरापेक्षा । वेदे तु तदगोचरसंबन्धविषयत्वान्नियोगस्य तदर्थवाक्यस्य मानान्तरानपेक्षता तथाच वैदिकनियोगकृतमनपेक्षत्वमित्यर्थः ॥ ६९३ ॥

**नैवं सत्यनपेक्षत्वं वचसः कार्यसंश्रयात् ॥**
**पुंबुद्धिपूर्वकत्वेन यतः सापेक्षतोच्यते ॥ ६९४ ॥**

प्रतिज्ञाहान्या परिहरति । **नैवमिति** । मानान्तरगम्यविनियोगविषयलौकिकनियोगार्थवाक्यस्य सापेक्षत्वे कार्यविषयत्वाद्वचसोऽनपेक्षत्वं सिद्धार्थत्वाच्च सापेक्षतेति प्रतिज्ञाहानिः पुंधीपूर्वकत्वस्य सापेक्षताहेतुत्ववचनादतो वेदान्तेषु तत्पूर्वकत्वाभावाद्भूतार्थेष्वपि न सापेक्षतेत्यर्थः ॥ ६९४ ॥

**नैवं नियोगनिष्ठत्वाद्वेदे तेनानपेक्षता ॥**
**सापेक्षत्वं च लोके स्याद्विनियोगप्रधानतः ॥ ६९५ ॥**

प्रतिज्ञाहानिममृष्यन्नियोगवाद्याह । **नैवमिति** । वेदे लिङादेर्नियोगविषयत्वात्तेन नियोगेन मानान्तरस्यानपेक्षणाद्युक्तमनपेक्षत्वं लोके तु पौरुषेयवाक्येषु लिङादेर्विनियोगविषयत्वात्तस्य च मानान्तरयोग्यत्वात्सापेक्षत्वमतो लोकवेदयोर्मानान्तरयोग्यार्थत्वमेव सापेक्षत्वप्रयोजकमित्यर्थः ॥ ६९५ ॥

**नैवं शब्दार्थयोरैक्यं यदा स्याल्लोकवेदयोः ॥**
**तदा न शक्यते वक्तुं वैलक्षण्यं तयोरिति ॥ ६९६ ॥**

वैदिकस्य लिङादेर्नियोगविषयता लौकिकस्य विनियोगविषयतेत्येतल्लोकवेदाधिकरणविरुद्धमिति समाधत्ते । **नैवमिति** । अस्यार्थः । स्थितं **प्रमाणलक्षणे** "प्रयोगचोदनाभावादर्थैकत्वमविभागात्" [पू०मी० १।३।२७] किं य एव लौकिकाः शब्दास्त एव वैदिकास्त एव चैषामर्था उतान्य इति **संशये** लौकिका वैदिकाश्चेति व्यपदेशभेदादुभयत्र शब्दार्थभेद इति प्राप्ते लोकवेदयोर्व्यपदेशभेदस्य सापेक्षत्वानपेक्षत्वनिमित्तत्वाल्लोके ज्ञातसामर्थ्यस्यैव शब्दस्य वेदेऽपि बोधकत्वादुभयत्र शब्दार्थैक्यं तथा सति प्रयोगचोदनानां संभवादन्यथा शब्दभेदादेकोऽर्थो न प्रमीयेत न चोभयत्र विभागमेषामुपलभामहे तस्मादेकतेति **सिद्धान्तः** । तदेवं शब्दार्थयोरैक्यस्य लोकवेदयोः स्थितत्वादुक्तरीत्या तद्वैलक्षण्यं वक्तुमशक्यमिति ॥ ६९६ ॥

**स्वरूपलाभः सिद्धश्चेत्स्वतो वा यदि वाऽन्यतः ॥**
**स्वरूपेऽनुपयोगित्वान्न प्रमाणव्यपेक्षणम् ॥ ६९७ ॥**

कार्यस्य मानान्तरायोग्यत्वात्तद्वाक्यमनपेक्षमित्येतन्निरस्य सिद्धं सापेक्षमित्यत्र स्वतः परतो वा सत्तासिद्धिस्तादृशी धीर्वेति विकल्प्याऽऽद्यमादत्ते । **स्वरूपेति** । न तावद्विद्यमाने वस्तुनि मानं सत्तायामुपयुज्यते सत्त्वस्य पूर्वमेव लब्धत्वान्नापि ज्ञप्तौ शब्दस्यैव तत्र ज्ञापकत्वाभ्युपगमात्ततो मानान्तरमनुपयुक्तमित्याह । **स्वरूप इति** ॥ ६९७ ॥

**अभिव्यक्तोऽथ सिद्धोऽयं स्वतो वा यदि वाऽन्यतः ॥**
**अभिव्यक्तस्य भूयोऽपि निष्फलं मान्तरेक्षणम् ॥ ६९८ ॥**

द्वितीयमालम्बते । **अभिव्यक्तोऽथेति** । न तावदभिव्यक्तस्य पुनरभिव्यक्त्यर्थं मानान्तरापेक्षणमनवस्थानान्न च मानान्तरसाध्यं फलान्तरमस्त्यतोऽफलत्वात्तदपेक्षा नाभिव्यक्तस्यापि युक्तेत्याह । **अभिव्यक्तस्येति** ॥ ६९८ ॥

**तस्मान्न सिद्ध इत्येव संभाव्येत प्रमान्तरम् ॥**
**नरोक्तौ मान्तरापेक्षा तेन मान्तरसंभवः ॥ ६९९ ॥**

सिद्धं सापेक्षमित्येतद्दुर्निरूपमित्युक्तमुपसंहरति । **तस्मादिति** । सिद्धार्थमपि वैदिकं वचोऽनपेक्षं चेत्कस्य सापेक्षत्व तत्राऽऽह । **नरेति** । पौरुषेयवाक्यार्थे यतो मानान्तरसंभवस्तेन ज्ञातेऽर्थे परप्रत्यायनार्थं वाक्यविरचनात्तेन नरविरचिते वचसि तदपेक्षेत्यर्थः ॥ ६९९ ॥

**क्रियां विना न संसर्गः पदार्थानामथोच्यते ॥**
**क्रियैवापेक्ष्यतां तर्हि किं न सिद्धं विधिं विना ॥ ७०० ॥**

ब्रह्मणो मानान्तरायोग्यत्वाय तज्ज्ञाने विधिरिति पक्षं प्रतिक्षिप्य षष्ठमुत्थापयति । **क्रियामिति** । पदार्थसंसर्गार्थं क्रियास्वीक्रियायां तद्विषयो विधिरपि समुन्मिषेदिति प्रतिपत्तिविधिसिद्धिरिति भावः । क्रियां विना पदार्थसंसर्गश्चेत्तत्प्रयोजकत्वेन साऽपेक्ष्यतामित्यङ्गीकरोति । **क्रियेति** । प्रतिपत्तिविधेरपि क्रियावदपेक्ष्यत्वमेवकारवारितं स्फोरयति । **किं नेति** ॥ ७०० ॥

**क्रिया चापेक्ष्यमाणाऽपि न या काचिदपेक्ष्यते ॥**
**योग्यत्वहेतुतस्तर्हि साऽस्त्येवास्यादिका श्रुतौ ॥ ७०१ ॥**

प्रतिपत्तिविध्यभावेऽपि संसर्गप्रयोजिका क्रिया स्वीकृता चेत्तर्हि सैव विधेया स्वीकार्या नहि तन्मात्रमपेक्ष्यतेऽपेक्षाया योग्यत्वादिकृतत्वादिति शङ्कते । **क्रिया चेति** । योग्या चेत्क्रियाऽपेक्ष्यते तर्हि सा तत्त्वमादिश्रुतावस्यस्मीत्यादिकाऽस्ति सैव वेदान्तेष्वपेक्ष्यतामित्याह । **तर्हीति** ॥ ७०१ ॥

**अकर्मकत्वादस्यादेर्न तावत्कर्म विद्यते ॥**
**अभूतभवनं चार्थे नित्यत्वादात्मनश्च न ॥ ७०२ ॥**

ननु साऽपि क्रिया विधीयतां विधेयक्रियाधीनत्वात्फलस्येति चेत्किं तत्फलं कर्मकारकस्यातिशयः किंस्विदभूतभवनं किंवा जीवब्रह्मणोः संसर्गबोधनं नाऽऽद्योऽस्यादिक्रियायाः कर्माभावात्तद्गतातिशयायोगादित्याह । **अकर्मकत्वादिति** । न तावत्कर्म विद्यतेऽतस्तद्गतोऽतिशयो न संभवतीत्यर्थः । ब्रह्मरूपेणासतो जीवस्य तद्रूपेण भवनं विधेयक्रियाफलमिति द्वितीयं दूषयति । **अभूतेति** । **ब्रह्मैव** सन्नित्यादिश्रुतेरात्मनो ब्रह्मात्मना

सदा स्थितेरिति हेतुमाह । **नित्यत्वादिति ।** आद्यश्चकारः समुच्चये द्वितीयोऽव-धारणे ॥ ७०२ ॥

**असंसृष्टात्मबोधित्वान्नापि संसर्गधीरतः ॥**
**स आत्मेत्यभिसंबन्धान्नापि सत्ता सतोच्यते ॥ ७०३ ॥**

तृतीयं निरस्यति । **असंसृष्टेति ।** एकरसार्थपरत्वाद्वाक्यस्य विधेयास्त्यादिक्रियावशान्न जीवब्रह्मणोः संसर्गधीरित्यर्थः । **सदेव सोम्येत्यादिवाक्येन** सत्ता सामान्यं ब्रह्मोच्यते तच्चनिर्विशेषं न सामान्यमतो यथोक्तब्रह्मणो विशेषसंसर्गार्थमस्त्यादिक्रिया विधेयेत्याशङ्क्याऽऽह । **स इति ।** आत्मा निःसामान्यविशेषोऽन्यथाऽनात्मत्वापत्तेः सामान्यविशेषत्वस्य तद्व्याप्तेस्तेनाऽऽत्मना स आत्मेति सतो ब्रह्मणः संबन्धात्तदपि निःसामान्यविशेषमतः सत्ता सामान्यं सता सदेवेत्यादिना नोच्यते । तथा च न सामान्यस्य ब्रह्मणो विशेषसंसर्गार्थं विधिरित्यर्थः ॥ ७०३ ॥

**शब्दाद्यगोचरोऽर्थोऽतो लक्षणापाश्रयाच्छ्रुतौ ॥**
**सदित्यादिपदैरात्मा साक्षान्नः प्रतिपाद्यते ॥ ७०४ ॥**

यदि वाक्यस्थानि सदादिपदानि सामान्यं विशेषं च नाऽऽचक्षीरन्किं तर्हि तान्यभिदधीरन्नित्याशङ्क्याऽऽह । **शब्दादीति ।** कथं पुनरस्मान्प्रति श्रुतिपदान्यपोढसामान्यविशेषमात्मानमपरोक्षत्वेनाऽऽवेदयितुमुत्सहेरञ्जात्याद्यभावे वाच्यत्वासंभवादत आह । **अतो लक्षणेति ।** अयोग्यत्वपरामर्शार्थोऽतःशब्दः ॥ ७०४ ॥

**यदाऽपि मानयोग्यत्वं सत्त्वं तच्च प्रतीयते ॥**
**तदाऽपि वस्तुपरता नाऽऽगमस्य विहन्यते ॥ ७०५ ॥**

वस्तुस्वरूपं[1] सत्त्वमुपेत्य सच्चिदानन्दात्मनि ब्रह्मणि वेदान्तानामनपेक्षं मानत्वमुक्तमिदानीं मानयोग्यत्वं सत्त्वं तदेव वेदान्तवेद्यमित्यङ्गीकारेऽपि तेषामनपेक्षमानतोपपत्तिरिति प्रौढिमारूढो ब्रूते । **यदाऽपीति ।** मानयोग्यत्वे सत्त्वे वेदान्तवेद्ये कथं तेषां वस्तुपरतेत्याशङ्क्य मानान्तरं मेयाद्बहिर्न वेति विकल्प्याऽऽद्यं प्रत्याह । **तदाऽपीति ।** यदा मानान्तरं मेयाद्बहिस्तदा योग्यत्वस्य वस्तुरूपत्वादुक्तवस्तुपरता वेदान्तानामुपपद्यते नहि ते यथोक्तार्थार्पणे मानान्तरमपेक्षन्ते स्वयमेव शक्तत्वात्तत्तु योग्यत्वोपलक्षणतया तटस्थमित्यर्थः ॥ ७०५ ॥

**मान्तरेणापि संबद्धमर्थं वाक्यं प्रबोधयत् ॥**
**मानतां न जहात्येव जगत्याप्तवचो यथा ॥ ७०६ ॥**

द्वितीयेऽपि वाक्यमानत्वं सिध्यत्येवेत्याह । **मान्तरेणेति ।** वेदान्तवाक्यं मानान्त-

---

[1] क. °रूपस° ।

रविशिष्टमप्यर्थं बोधयत्कथं मानत्वं न जहातीत्युक्तं तत्र दृष्टान्तमाह । **जगतीति ।** यथाऽऽप्तवाक्यं प्रमितमर्थं बोधयदपि लोके मानमेवमिदमपीत्यर्थः ॥ ७०६ ॥

**ज्ञातः सोऽर्थो मयेत्यत्र नाऽऽप्तवाक्यं विहन्यते ॥**
**मानान्तरव्यपेक्षत्वाद्विहन्येतार्थनिश्चितौ ॥ ७०७ ॥**

दृष्टान्तेऽपि विप्रतिपत्तिमाशङ्क्याऽऽप्तवाक्यं वक्तृज्ञानेऽनपेक्षं मानमिति परस्य संमतं साधयति । **ज्ञात इति ।** अथास्यानपेक्षं मानत्वं वक्तृधीवदर्थेऽपि किं न स्यादत आह । **मानान्तरेति ।** अर्थनिश्चये वक्तृज्ञानापेक्षत्वादाप्तवाक्यस्य नार्थे निरपेक्षमानता । **यथाऽऽहुः**—तज्ज्ञानान्तरितत्वाच्च शब्दास्तावदुदासत इति ॥ ७०७ ॥

**मायोगेऽपि न मानत्वमनाप्तवचसः क्वचित् ॥**
**तेनाऽऽप्तवाक्यं मायोगे मानादर्थेऽपि निष्ठितम् ॥ ७०८ ॥**

तस्यार्थे मानत्वाभावश्चेदनाप्तवाक्यादविशेषः स्यादित्याशङ्क्याऽऽह । **मायोगेऽपीति ।** नहि क्वचिदनाप्तवाक्यस्याऽऽप्तवाक्यवद्वक्तृप्रमाणसंबन्धेऽपि प्रमाणतेत्युभयं मिथो विलक्षणमित्यर्थः । अनाप्तवाक्यादाप्तवाक्यस्य वैलक्षण्यमुक्तमुपजीव्य स्वमतमाह । **तेनेति ।** यस्मादाप्तवाक्यं वक्तृधीसंबन्धे मानं तस्मात्तद्द्वाराऽर्थेऽपि नहि तेन वक्तृधीमात्रं गम्यते विशिष्टधीज्ञाने त्वर्थेऽपि मानत्वं दुर्वारम् । **यथाऽऽहुः**—"प्रामाण्यस्थापनं तु स्याद्वक्तृधीहेतुसंभवात्" इति । अतो वक्तृधीद्वाराऽर्थे मानमाप्तवाक्यमित्यर्थः ॥ ७०८ ॥

**एवं च सति वेदान्ता यदि मानमलौकिकम् ॥**
**प्रबोधयन्ति विध्वस्तनिखिलद्वैतगोचरम् ॥ ७०९ ॥**
**कथं तेषाममानत्वं तदा स्यादाप्तवाक्यवत् ॥**
**अर्थसिद्धिश्च मासिद्धौ सिद्धैवेति न साध्यते ॥ ७१० ॥**

दृष्टान्ते स्थिते दार्ष्टान्तिकं प्रपञ्चयति । **एवं चेति ।** द्विविधा वेदान्ता मानं मनोवृत्तिमुत्पादयन्ति नेत्तेषाममानत्वशङ्केत्यर्थः । लोकप्रसिद्धां मनोवृत्तिमुत्पादयतां तेषामग्निर्हिमस्येत्यादिवदमानतेत्याशङ्क्याऽऽह । **अलौकिकमिति ।** प्रबोधयन्ति विकासयन्ति जनयन्तीति यावत् । अलौकिकत्वं साधयति । **विध्वस्तेति ।** विध्वस्तं निखिलं द्वैतं यस्मिंस्तदेव गोचरो यस्येति विग्रहः । यदा स्वरूपज्ञानं वा मानं तदा प्रबोधयन्तीति सुबोधम् । विध्वस्तो निखिलो द्वैताख्यो गोचरो यस्मिन्निति निष्प्रपञ्चत्वमुच्यते । विवक्षितमंशं दर्शयितुं पुनर्दृष्टान्तमादत्ते । **आप्तेति ।** यथाऽऽप्तवाक्याद्वक्तृधीसिद्धिकाले तद्विशेषणार्थसिद्धिस्तथा वेदान्तेभ्यो मानसिद्धिकाले तद्विशेषणं ब्रह्मापि सिध्यतीत्यर्थः । ब्रह्मणो मानविशेषणत्वेन वेदान्तमेयत्वे कथं तेषां तत्रानपेक्षं प्रामाण्यमिति तत्राऽऽह । **अर्थेति ।** यदोक्तं मानं वेदान्तेभ्यो जायते ज्ञायते वा तदा ब्रह्मज्ञप्तिरपि जातैवेति न

---

१ ख. °द्वस्तुप्र° ।

पुनर्ब्रह्म प्रकाशयितुं मानमर्थ्यते तस्माद्ब्रह्मण्युक्तमानजनकत्वं तज्ज्ञापकत्वमेव वा वेदान्तानामनपेक्षं मानत्वमित्यर्थः ॥ ७०९ ॥ ७१० ॥

**किंच सिद्धत्वसंबन्धादैकात्म्ये मान्तरानुमा ॥**
**यद्येवं कार्यतायोगान्नियोगेऽप्यनुमा न किम् ॥ ७११ ॥**

अङ्गीकारवादं त्यक्त्वा प्रस्तुतं वस्तुरूपं सत्त्वमाश्रित्योक्तलक्षणे ब्रह्मणि वेदान्तानामनपेक्षं मानत्वं वक्ष्यमाणहेतोरपि ग्राह्यमित्याह। **किंचेति।** सत्त्वस्य वस्तुरूपत्वे वस्तुनो विद्यमानत्वाद्घटवन्मानान्तरविषयतेत्याशङ्क्य हेत्वन्तरं स्फुटयति। **सिद्धत्वेति।** ऐकात्म्यं मानान्तरगम्यं सिद्धत्वात्संमतवदित्यनुमानवन्नियोगस्तद्गम्यः कार्यत्वात्प्रैषादिवदित्यपि संभवे नियोगवाक्यस्यानपेक्षमानत्वे वस्तुवाक्यानामपि तत्किं न स्यादित्यर्थः ॥७११॥

**नियोगस्यापि कार्यत्वं प्रेषणाध्येषणादिभिः ॥**
**समं तद्वर्त्मनैवास्य संबन्धग्रहणं यतः ॥ ७१२ ॥**

नियोगे[1] कार्यत्वहेतुं साधयति। **नियोगस्येति।** तत्रैव हेत्वन्तरमाह। **तद्वर्त्मनेति।** लोके कार्यमात्रे लिङादेः संगतिर्न तद्ग्रहो वेदे पृथगस्त्यतो नियोगस्य लिङादिना शक्तिज्ञानं कार्यत्वद्वारैवेति हेतुसिद्धिरित्यर्थः ॥ ७१२ ॥

**परायत्तात्मलाभत्वं नियोगस्येह कार्यता ॥**
**कार्यैर्मान्तरगम्यैः सा न कथंचिद्विशिष्यते ॥ ७१३ ॥**

किंच नियोगो मानान्तरगम्योऽन्याधीनसत्ताकत्वाद्घटवदित्याह। **परायत्तेति।** लोकवेदयोर्नियोगस्योत्पाद्यताप्रतीतेरपि कार्यत्वसिद्धिरित्याह। **नियोगस्येति।** घटदृष्टान्ते साधनवैकल्यं निरस्यति। **कार्यैरिति।** साध्यवैकल्यं धुनीते। **मान्तरेति।** हेतुसिद्ध्यर्थमुक्तां कार्यतां धर्मिणि निर्धारयति। **सा नेति** ॥ ७१३ ॥

**यस्त्वसाधारणं तस्य कार्यत्वमिति भण्यते ॥**
**लौकिकेष्वपि कार्येषु तन्नैव विनिवार्यते ॥ ७१४ ॥**

कृतिसाध्यत्वोपाहितं कृत्युद्देश्यत्वं कार्यत्वं नियोगस्यासाधारणं तन्न प्रैषादिष्विति पूर्वोक्तानुमाने दृष्टान्तस्य साधनविकलत्वं शङ्कते। **यस्त्विति।** कृत्युद्देश्यत्वं तावन्नियो-[2]गस्यापि न प्रामाणिकं कृतिसाध्यत्वं प्रैषादिष्वपि तुल्यमित्याह। **लौकिकेष्विति** ॥७१४॥

**अथासाधारणज्ञानपरिच्छेद्यत्वमिष्यते ॥**
**तच्च सर्वपदार्थानां न दण्डैर्विनिवार्यते ॥ ७१५ ॥**

कार्यताधीविषयत्वं नियोगस्य कार्यत्वं तन्न क्लेशात्ममु प्रैषादिष्विति शङ्कते। **अथेति।** कार्यमेव प्रैषादिव्यपदेश्यमित्यभ्युपगमात्तेषामपि कार्यताधीविषयत्वं तुल्यमित्याह। **तच्चेति** ॥ ७१५ ॥

१ ख. °योगका°। २ क. °त्व तावन्नियो°।

**प्रमाणायत्तमेतावत्स्वप्रमेयावभासनम् ॥**
**कार्यताऽकार्यता वाऽत्र मेयायत्ता न मानतः ॥ ७१६ ॥**

किंच कार्यताधीविषयत्वे नियोगस्य मानान्तरगम्यतेत्याह । **प्रमाणेति** । प्रतिपन्नो विषयः सप्तम्यर्थः । न मानतो न शास्त्रायत्तेति यावत् । एतावन्मात्रं शास्त्रायत्तं यत्स्व-विषयस्येष्टसाधनमेतदित्यनिष्टसाधनमिदमिति वा प्रकाशनं न त्विदं कार्यमिदं नेति धियौ शास्त्रायत्ते ते तु विषये समीहितोपायत्वताद्विपर्ययधीकृते मानस्यौ हितसाधनं चेत्कार्यं विपरीतं चेदकार्यमिति तस्मात्कार्यताकार्यताबुद्ध्योः शास्त्रीयत्वाभावान्नियोगस्य मानस-कार्यताधीविषयत्वे मानान्तरगम्यतेति भावः ॥ ७१६ ॥

**सिद्धत्वहेतुको योऽपि दोष ऐकात्म्य उच्यते ॥**
**नियोगस्यापि संसिद्धौ स दोषो नापनुद्यते ॥ ७१७ ॥**

ब्रह्मणि सिद्धत्वहेतुना मानान्तरगम्यत्वं वदतो नियोगेऽपि हेत्वन्तरेण तदुक्तिः सुक-रेत्युक्तम् । इदानीं येन हेतुना ब्रह्मणि मानान्तरगम्यतोच्यते तेनैव हि नियोगेऽपि सा प्राप्नोतीत्याह । **सिद्धत्वेति** । साध्यैकस्वभावे नियोगे सिद्धत्वहेतुको दोषो नेति चेत्तत्र किं क्रियानुष्ठाने स सिध्यत्युत नाऽऽद्ये सिद्धत्वसिद्धेस्तन्निमित्तो दोषः स्यादित्याह । **संसिद्धाविति** ॥ ७१७ ॥

**यागादिविषयासिद्ध्या न चासौ न प्रसिध्यति ॥**
**विध्युक्तेस्तदसंसिद्धौ निष्फलत्वं प्रसज्यते ॥ ७१८ ॥**

द्वितीयं दूषयति । **यागादीति** । तत्र हेतुमाह । **विधीति** । यागाद्यनुष्ठानान्नियो-गासिद्धावनुष्ठानवैयर्थ्याद्विधिवाक्यानर्थक्यं न च तदनुष्ठानस्य स्वर्गादिसाधकत्वेनार्थव-त्त्वात्तदर्थत्वं नियोगसिद्धिं विना तदनभ्युपगमादित्यर्थः ॥ ७१८ ॥

**ऐकात्म्यवस्तुयाथात्म्यप्रकाशनपटीयसः ॥**
**वचसस्त्वतिरेकेण किं मानं तद्धुरं वहेत् ॥ ७१९ ॥**

ब्रह्मणि मानान्तरावेशमाश्रित्य नियोगेऽपि तत्साम्यमित्युक्तम् । इदानीं तत्र तदावे-शसंभावनैव नास्तीत्याह । **ऐकात्म्येति** । ऐकात्म्यमेव वस्तुयाथात्म्यं तस्य प्रकाशन उपक्रमसंहारैकरूप्यादिना पटुतरं वचस्तत्त्वमादि ततोऽतिरेकेण नान्यत्किंचिदपि माना-न्तरं तत्प्रकाशनसमर्थमस्ति । अस्मिन्मानान्तरप्रवेशे मानाभावादित्यर्थः ॥ ७१९ ॥

**मात्रादिसव्यपेक्ष सद्यत्र ज्ञानं प्रजायते ॥**
**तत्रैव मान्तरापेक्षा न तु विध्वस्तभेदके ॥ ७२० ॥**

विमतं मानान्तरगम्यमकार्यत्वाद्धटवदित्याशङ्क्य मात्रादिसापेक्षत्वमुपाधिरित्याह ।

**मात्रादीति** । साधनव्याप्तिमाशङ्क्याऽऽह । **नत्विति** । विध्वस्तो मात्रादिभेदो यस्मिन्ब्रह्मणि तस्मिन्न ज्ञानं तदपेक्षमित्यर्थः ॥ ७२० ॥

**विध्यर्थाधीनसंसर्गाः पदार्था वैदिकोक्तिषु ॥**
**लोके मान्तरसंसिद्धसंसर्गा रचनाबलात् ॥ ७२१ ॥**

ब्रह्मणि मानान्तरावेशनिषेधेऽपि वेदान्तानां नानपेक्षं मानत्वं तेषु लौकिकवैदिकसंसर्गप्रयोजकाभावात्तज्जन्यवाक्यार्थबुद्धेर्भ्रान्तित्वादिति मत्वा तेषु वैदिकसंसर्गप्रयोजकाभावं वक्तुं तत्प्रयोजकं दर्शयन्नाशङ्कते । **विध्यर्थेति** । विधिरर्थोऽस्येति विध्यर्थो लिङादिरुच्यते । तेषु लौकिकसंसर्गप्रयोजकाभावाभिधित्सया तत्प्रयोजकमाह । **लोक इति** । पदार्था विशेष्यत्वेनानुषज्यन्ते ॥ ७२१ ॥

**रचना च पदार्थानां विवक्षापूर्विकैव तु ॥**
**प्रमाणान्तरगम्येऽर्थे विवक्षा च व्यवस्थिता ॥ ७२२ ॥**

कथं रचनानुपपत्त्या लौकिकसंसर्गस्य मानान्तराधीनत्वं तत्राऽऽह । **रचनेति** । तर्हि तद्वशाद्विवक्षैव कल्प्यतां मानान्तरकल्पना तु कथमित्याशङ्क्याऽऽह । **प्रमाणान्तरेति** । अज्ञाते विवक्षायोगान्मानान्तरेण ज्ञात्वा विवक्षित्वा परस्मै वाक्यरचनाल्लोके संसर्गस्य मानान्तराधीनतेत्यर्थः ॥ ७२२ ॥

**एवं च सति वेदान्तवाक्यार्थप्रत्ययो भ्रमः ॥**
**उत्खातविधिको लोके तोयबुद्धिरिवोषरे ॥ ७२३ ॥**

लोकवेदयोरुक्ते संसर्गप्रयोजके भवेतां तथाऽपि वेदान्तेषु किमायातमत आह । **एवं चेति** । वेदसंसर्गप्रयोजको विधिर्लोके मानान्तरमिति स्थिते वेदान्तेष्वपौरुषेयेषु मानान्तरासंभवाद्विधेश्चानभ्युपगमात्तेभ्यो वाक्यार्थधीर्भ्रान्तिर्मरुमरीचिकासु जलबुद्धिवदित्यर्थः । उत्खातविधिको निरस्तविधिकस्तदप्रयुक्त इति यावत् ॥ ७२३ ॥

**इत्युक्ते परिहाराय शृणु यद्भण्यतेऽधुना ॥ ७२४ ॥**
**पदार्थसंगतेः कस्माद्विध्यधीनत्वमादृतम् ॥**
**पदार्थान्तरतन्त्रत्वं कस्माद्धेतोर्न कल्प्यते ॥ ७२५ ॥**

वेदान्तानाममानत्वाद्ब्रह्मणि तन्मानत्वं दूरापास्तमिति प्राप्ते वैदिकसंसर्गप्रयोजकस्य तेषु संभवात्तेभ्यो वाक्यार्थबुद्धेरभ्रान्तित्वात्तन्मानत्वोपपत्तेर्युक्ता तेषां ब्रह्मणि मानतेत्याह । **इत्युक्त इति** । यदधुना भण्यते तत्त्वं शृण्विति संबन्धः । कथं वैदिकसंसर्गप्रयोजकस्य वेदान्तेषु सत्ता नहि तेषु विधिरस्तीत्याशङ्क्य परिहारं विवृणोति । **पदार्थेति** । लिङादिशब्दो विधिस्तदधीनत्वं संसर्गस्य किमिति स्वीकृतं योग्यमाकाङ्क्षितं संनिहितं च यत्पदार्थान्तरं तन्निमित्तत्वं किमिति नेष्टं नहि विधिस्तत्प्रयोजको वषट्कर्तुः

१ ख. ॰स्तत्र प्रयो॰ ।

प्रथमभक्ष इत्यादौ व्यभिचारात्तस्मादाकाङ्क्षादित्रयं प्रयोजकं तदस्ति वेदान्तेष्वपीति तेभ्योऽर्थधीर्न भ्रान्तिरित्यर्थः ॥ ७२४ ॥ ७२५ ॥

**संसर्गश्चेत्पदार्थानां विनाऽपि विधिना भवेत् ॥**
**अनर्थको भवेदेवं विधिर्निर्विषयत्वतः ॥ ७२६ ॥**

विधिवादी शङ्कते । **संसर्गश्चेदिति** । लिङादिना विनाऽपि संनिधानादिना पदार्थानां संसर्गश्चेदेवं सति विध्यानर्थक्यं स्यात्स्वविषयसंसर्गस्यान्यतोलब्धतया स्वस्याकिंचित्क-रत्वादतो विधेरर्थवत्त्वाय तन्निमित्तो वैदिकः संसर्ग इत्यर्थः ॥ ७२६ ॥

**ननु दोषः समानोऽयं विधेरन्यपदेष्वपि ॥**
**विशिष्टार्थावगत्यर्थं प्रयुज्यन्तेऽपराण्यपि ॥ ७२७ ॥**

विध्यधीने संसर्गे नामपदेषु वैयर्थ्यदोषः समः स्यादिति दूषयति । **नन्विति** । संसर्गस्यान्यनिमित्तत्वे विधिवैयर्थ्यवदितिदृष्टान्तार्थोऽपिशब्दः । नामपदानां संसर्गज्ञा-नाजनकत्वेऽपि पदार्थमात्रधीजनकतया साफल्यमित्याशङ्क्याऽऽह । **विशिष्टेति** । विधिपदवदित्यपेरर्थः ॥ ७२७ ॥

**एवं सति विधिः कस्मान्नानर्थक इतीर्यताम् ॥**
**योगक्षेमसमानत्वादविध्यर्थपदान्तरैः ॥ ७२८ ॥**

विधितादितरपदानां संसर्गसिद्ध्यर्थे प्रयोगे फलितमाह । **एवमिति** । विधेरितर-पदैर्योगक्षेमस्य समत्वाद्विधिं विना संसर्गसिद्धौ विधेरेव कस्मादनर्थकः पदान्तराण्य-न्तरेण तत्सिद्धौ तान्यपि कस्मान्नानर्थकानीति वाच्यमेवमुभयत्रापि समानार्थक्यमि-त्यर्थः ॥ ७२८ ॥

**उच्यते विधिशब्दो[1] हि मान्तराज्ञातगोचरः ॥**
**न तस्य विषयाक्षेपं मुक्त्वाऽन्यत्र कृतार्थता ॥ ७२९ ॥**

विधितादितरपदेषु वैषम्यं विधिवादी प्रतिजानीते । **उच्यत इति** । तदेव व्यक्ती-कर्तुं लिङादिस्वरूपमाह । **विधीति** । तस्य यथोक्तनियोगगोचरत्वेऽपि कथं संसर्गस्य तदधीनतेति तत्राऽऽह । **न तस्येति** । नियोगस्य विषयः संसर्गस्तस्योपस्थापनं विना निर्विषये नियोगे लिङादेरपर्यवसानाद्विध्यायत्तः संसर्ग इत्यर्थः ॥ ७२९ ॥

**मानान्तरप्रसिद्धार्थवादित्वादनुवादकम् ॥**
**विधेरन्यपदं यस्मान्नाऽऽक्षेपोऽतः प्रतीयते ॥ ७३० ॥**

विधिपदवन्नामपदान्यपि संसर्गाक्षेपमन्तरेणापर्यवसितव्यापाराणि तमाक्षिपेयुरित्याश-ङ्क्याऽऽह । **मानान्तरेति** । नामपदान्यनुवादित्वान्नाऽऽक्षेपकाणीत्यर्थः ॥ ७३० ॥

१ क. 'ब्दोऽयं मा' ।

**अव्युत्पन्नेऽपि संबन्धे विध्यर्थावगमस्तथा ॥**
**अथ विज्ञातसंबन्धं सिद्धार्थे स्याद्विधायकम् ॥ ७३१ ॥**

लिङादेर्मानान्तरागोचरनियोगार्थत्वे तस्य तेन संबन्धेऽनवगतेऽपि स तं गमयेन्न वा नाऽऽद्यस्तथा सत्यव्युत्पन्नस्यापि लिङादिश्राविणो नियोगधीपूर्वकप्रवृत्तिप्रसङ्गादिति दूषयति । **अव्युत्पन्नेऽपीति** । द्वितीयं शङ्कते । **अथेति** । ज्ञातसंबन्धस्य लिङादेर्बोधकत्वे तदपि मानान्तराधिगतार्थमनधिगते संबन्धिनि संबन्धबुद्ध्यसिद्धेरतो नामपदवद्विधिपदस्यापि नाऽऽक्षेपकतेत्याह । **सिद्धार्थमिति** ॥ ७३१ ॥

**स्वधर्मं च पदं जह्यात्संबन्धज्ञाननिह्नुतौ ॥**
**तस्माद्विज्ञातसंबन्धं पदं सर्वत्र बोधकम् ॥ ७३२ ॥**

लिङादेरज्ञातशक्तेर्बोधकत्वे दोषान्तरमाह । **स्वधर्मं चेति** । संबन्धग्रहापेक्षया स्वार्थबोधित्वं पदधर्मस्तन्निरपेक्षतया बोधकत्वे पदं स्वधर्मं त्यजेच्छक्तिज्ञानमनपेक्ष्य बोधकत्वं वाक्यधर्मं चाऽऽश्रयेदित्यर्थः । लोके ज्ञातसंबन्धस्य पदस्य बोधकत्वेऽपि वेदे नैवमित्याशङ्क्य लोकवेदाधिकरणविरोधान्नैवमित्याह । **तस्मादिति** ॥ ७३२ ॥

**इतोऽन्यथा कल्प्यमाने सर्वं स्यादसमञ्जसम् ॥**
**वाक्यवाक्यार्थयोगश्चेद्वाच्यवाचकलक्षणः ॥ ७३३ ॥**

विपक्षे दोषमाह । **इत इति** । लोके शक्तिग्रहेऽपि वेदे तदभावे पदधर्मातिक्रमो वाक्यधर्माश्रयणं लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधक इति न्यायविरोधश्चेत्यनेकमयुक्तं स्यादित्यर्थः । पदधर्मातिक्रमपरिजिहीर्षया मीमांसकमुद्रां भिन्दानः शङ्कते । **वाक्येति** । योऽयं वाच्यवाचकलक्षणः संबन्धो लोके शब्दार्थयोः सिद्धः स वाक्यस्य वाक्यार्थेन योगो न पदस्य पदार्थेन तयोर्मिथुनीभावेन लोकसिद्धत्वाद्वाक्यार्थस्तु मानान्तरागोचरो नियोगोऽतो नोक्तदोष इत्यर्थः ॥ ७३३ ॥

**तद्विशेषैकनिष्ठत्वान्न वः संबन्धधीर्भवेत् ॥**
**न विशेषान्तरे वृत्तिर्विशेषस्यास्ति गोत्ववत् ॥**
**नैराकाङ्क्ष्येण तत्सिद्धेः संबन्धोऽतो न गृह्यते ॥ ७३४ ॥**

वाक्यस्य स्वार्थे संबन्धग्रहं दूषयति । **तद्विशेषेति** । तस्य वाक्यस्य गवानयनादावेकस्मिन्नर्थविशेषे स्थितत्वात्तस्य विशेषान्तरे वृत्त्ययोगाद्गोबन्धनादौ गवानयनानुपलम्भात्प्रतिवाक्यं शक्तिग्रहापातात्तस्य वर्षशतेनापि दुःसाधनत्वान्न स युष्माकं सिध्येदित्यर्थः । सत्ताद्यपेक्षया विशेषस्यापि गोत्वस्य विशेषान्तरे खण्डादौ वृत्तिवद्वाक्यार्थस्य वाक्यार्थान्तरे वृत्तेर्वाक्यस्य स्वार्थे शक्तिः सुग्रहेत्याशङ्क्याऽऽह । **नेति** । तत्र हेतुर्नैराकाङ्क्ष्येणेति । गवानयनादिवाक्यार्थस्य गोबन्धनाद्यनपेक्षत्वेन सिद्धेर्न तस्य गोत्वेन तुल्यता न हि गोत्वं खण्डाद्यनपेक्षं गवानयनं तु वाक्यार्थान्तरानपेक्षं दृष्टमित्यर्थः । न वः संबन्ध-

धीरित्युक्तं निगमयति । **संबन्ध इति** । वाक्यस्य स्वार्थे संबन्धग्रहे तस्यापि मानान्तरगम्यताया वाच्यत्वाद्वाक्यार्थस्यापूर्वत्वानुपपत्तिस्तुल्येति वाक्यस्य संबन्धज्ञानायोगात्पदस्यैव तद्ग्राह्यं लोके पदतदर्थयोर्मिथुनीकृत्य दृष्टत्वेऽपि नाज्ञातसंबन्धं पदं स्वार्थं बोधयेदर्थान्तरेऽपि प्रसङ्गादित्यर्थः ॥ ७३४ ॥

**संबन्धं मन्यते योऽपि शब्दबोधानुसारिणीम् ॥ ७३५ ॥**
**दृष्ट्वेहां श्रोतृणां सोऽपि न सम्यगभिमन्यते ॥**
**श्रोतृस्थकार्यलिङ्गत्वात्कथं शब्दैकगोचरः ॥ ७३६ ॥**

वाक्यस्य शक्तिग्रहं निरस्य पदस्यैव तं ब्रुवता लिङ्गादेर्नियोगे तद्ग्रहे तस्य मानान्तरगोचरता तस्य तत्राव्युत्पन्नत्वे तदबोधिताऽन्यथा पदधर्मातिक्रमादिः स्यादित्युक्तमिदानीं शब्दादेव ज्ञाते नियोगे लिङ्गादेः शक्तिग्रहान्न दोष इत्येतद्यदाऽवगम्यते नान्यदित्यादिवार्तिकाभ्यामुक्तमाशङ्क्याऽऽह । **संबन्धमिति** । उत्तमवृद्धोक्तशब्दोत्थबोधानुरोधिनीं मध्यमवृद्धे श्रोतरि चेष्टां दृष्ट्वा तया तेन शब्दाधिगते नियोगे लिङ्गादेः शक्तिं बालो वेत्तीति योऽपि नियोगरागातुरो मन्यते सोऽपि न सम्यगवबुध्यते ज्ञातसंबन्धाद्धि शब्दान्नियोगधीस्ततस्तत्र तज्ज्ञानमित्यन्योन्याश्रयादित्यर्थः । मध्यमवृद्धेन शब्दाधिगते प्रवर्तके नियोगे बालेन प्रवृत्तिलिङ्गावगते शक्तिग्रहान्नैवमिति चेत्तत्राऽऽह । **श्रोतृस्थेति** । मध्यमवृद्धगतप्रवृत्तिलिङ्गगम्यत्वान्न प्रवर्तकनियोगस्य शब्दैकगोचरता तथाच कथंचिदन्योन्याश्रयनिरासेऽपि न तस्यापूर्वतेत्यर्थः ॥ ७३५ ॥ ७३६ ॥

**तस्यापि शब्दपूर्वत्वादिति चेल्लिङ्गपूर्वतः ॥**
**कस्मान्न शब्दबोधोऽपि ह्यनुमानपुरःसरः ॥ ७३७ ॥**

प्रवृत्तिलिङ्गकानुमानस्यापि शब्दावगतनियोगे प्रवृत्तेः शब्दैकगम्यत्वं तस्य सेत्स्यतीति शङ्कते । **तस्यापीति** । श्रोतुः शब्दान्नियोगबोधोऽनुमानपूर्वकस्तस्य तस्मिन्पूर्वमनुमानप्रवृत्तेरतः शब्दान्नियोगबोधोऽपि किमिति लिङ्गपूर्वको न स्यादिति शब्दानुमानयोः साम्यमाह । **लिङ्गेति** ॥ ७३७ ॥

**नियोग शब्दतो बुद्ध्वा योऽपि श्रोता प्रवर्तते ॥**
**तस्याप्यनुमितेरेव शब्दार्थप्रत्ययो भवेत् ॥ ७३८ ॥**

इदानीमनुमानस्य विशेषं दर्शयति । **नियोगमिति** । व्युत्पन्नस्य प्रवृत्तिकाले लिङ्गादिना नियोगधीर्व्युत्पत्तिकाले लिङ्गाद्यर्थे प्रवृत्त्यनुमानापेक्षा तद्द्वारं तत्प्राथम्यमित्यर्थः ॥ ७३८ ॥

**प्रत्यक्षगम्यकार्येण नियोगस्यानुमेयतः ॥**
**प्रत्यक्षकार्यवत्तस्य लौकिकत्वं प्रसज्यते ॥ ७३९ ॥**

---

१ ख °वृत्तान्° ।

नियोगविषयत्वेनानुमानस्य प्राथम्ये फलितमाह । **प्रत्यक्षेति** । प्रत्यक्षं लिङ्गं प्रवृत्त्याख्यं कार्यं तेनानुमेयत्वान्नियोगस्य घटादिवन्न शब्दैकगम्यतेत्यर्थः ॥ ७३९ ॥

**न चेत्कार्यं नियोगः स्यात्कोऽर्थो यागादिसिद्धितः ॥**
**सिद्धवस्त्ववबोधित्वं विधेरपि तदा भवेत् ॥ ७४० ॥**

नियोगस्य कालत्रयास्पर्शिनो घटादिवदनुत्पाद्यत्वादलौकिकत्वमित्याशङ्क्यते । **न चेदिति** । तस्यानुत्पाद्यत्वे यागाद्यनुष्ठानवैयर्थ्यमिति दूषयति । **कोऽर्थ इति** । न चानुष्ठानं स्वर्गार्थं नियोगं विना तादर्थ्यासिद्धेरिति भावः । किंच नियोगस्यानुत्पाद्यत्वे तस्यासत्त्वानङ्गीकारादवश्यंभाविनि नित्यसिद्धत्वे तद्बोधिलिङादेः सिद्धबोधित्वं तन्न पक्षभेद इत्याह । **सिद्धेति** ॥ ७४० ॥

**प्राथम्यं चात्र दुर्लक्ष्यं बीजतत्कार्ययोरिव ॥**
**शब्दानुमानयोर्नातः शब्दप्रथमतेष्यते ॥ ७४१ ॥**

अस्तु तर्हि नियोगस्योत्पाद्यत्वं न च घटवल्लौकिकत्वं तत्र चक्षुरादेरशब्दपूर्वत्वान्नियोगे मानान्तरस्य तत्पूर्वत्वादित्याशङ्क्य तस्यापि शब्दपूर्वत्वादित्यादि प्रपञ्चयति । **प्राथम्यं चेति** । अत्रेति नियोगोक्तिः । शब्दानुमानयोरन्यतरस्येति द्रष्टव्यम् । न हि बीजाङ्कुरयोरन्यतरस्य प्राथम्यं गम्यते । अनुमानस्यापि तस्मिन्प्राथम्यसंभवोऽतःशब्दार्थः । तत्कुतस्तस्य शब्दैकगम्यतेति शेषः ॥ ७४१ ॥

**यद्वाऽनुमानमेवात्र शब्दात्पूर्वं हि युज्यते ॥**
**नावित्तसंगतिः शब्दो गमकोऽतोऽनुवादकः ॥ ७४२ ॥**

यदा शब्दप्राथम्यस्य संभवस्तदा नियोगस्य शब्दैकगम्यत्वमपि संभावितमित्याशङ्क्य नियोगं शब्दतो बुद्ध्वेत्यादि प्रपञ्चयति । **यद्वेति** । नियोगे प्राथम्यमनुमानस्यैवेत्यत्र हेतुमाह । **नावित्तेति** । अलब्धशक्तिः शब्दो न बोधकस्तद्धीश्च लिङादेर्नियोगे तदूहापेक्षा न च शब्दादेव तद्धीरन्योन्याश्रयादित्युक्तमतोऽनुमानप्राथम्यमित्यर्थः । भवतु नियोगस्यानुमेयतेति तर्हि लिङादेस्तत्रानुवादतेत्याह । **अत इति** ॥ ७४२ ॥

**बुध्यते योऽनुमानेन शब्दबुद्धं न वेत्ति सः ।**
**भिन्ने भिन्नेऽपि मेये धीर्नानुवादोऽन्यबोद्धरि ॥ ७४३ ॥**

ननु शब्दो यस्मिन्नियोगे प्रविशति तस्मिन्प्रविशदनुमानं किमित्यनुवादकं न स्यादत आह । **बुध्यत इति** । बालो हि स्वेन शब्दादज्ञातमनुमानादवगच्छन्नानुमानमनुवादी करोतीति भावः । अथ श्रोत्रा शब्दतो ज्ञातं लिङ्गादाकलयतो बालस्य कुतोऽनुमानं नानुवादकं तत्राऽऽह । **भिन्न इति** । एकस्य बोद्धुर्बुद्धेरनन्तरमन्यस्मिन्बोद्धरि तस्मिन्न-

१ क. ज्ञातलि॰ ।

न्यस्मिन्वाऽर्थे या बुद्धिः सा नानुवादी भवति । नहि चैत्रदृष्टे घटे तत्रान्यत्र वा मैत्रज्ञानमनुवादोऽतो ज्ञातृभेदस्थज्ञानयोरन्यतरस्य नान्यतरदनुवादकमित्यर्थः ॥ ७४३ ॥

**प्रवृत्तिहेतुमात्रं च प्रवृत्त्याऽत्रानुमीयते ॥**
**लौकिकेनापि तत्सिद्धेर्नास्ति मानमलौकिके ॥ ७४४ ॥**

नियोगस्य प्रवृत्त्यनुमेयत्वमुपेत्य पदार्थान्तरतुल्यत्वमुक्तमिदानीं तस्य प्रवृत्त्यनुमेयत्वमेव नास्तीत्याह । **प्रवृत्तीति** । श्रोता सप्तम्यर्थः । व्युत्पत्तिकाले श्रोतुः प्रवृत्त्या तद्धेतुरनुमीयमानो नियोगान्नार्थान्तरमित्याशङ्क्याऽऽह । **लौकिकेनेति** । लोके स्तनपानादिस्वप्रवृत्तिसंततौ ज्ञातहेतुत्वेन हितसाधनत्वेनैव श्रोतृप्रवृत्तिसिद्धेस्तस्मिन्नेव कृतियोग्यत्वोपलक्षिते लिङादिशक्तिग्रहादलौकिकनियोगे मानाभावात्तदसिद्धिरित्यर्थः ॥ ७४४ ॥

**कार्यबुद्ध्यैव संव्याप्तिः प्रवृत्तेर्न च गम्यते ॥**
**सर्पादिवस्तुबोधेऽपि प्रवृत्तिर्वीक्ष्यते यतः ॥ ७४५ ॥**

या प्रेक्षापूर्विका प्रवृत्तिः सा कार्यधीकृतेति व्याप्तेः स्वप्रवृत्तावपीष्टोपायताधियो न हेतुतेति चेत्तत्राऽऽह । **कार्येति** । उक्तव्याप्तिभङ्गे हेतुमाह । **सर्पादीति** । न च या धीपूर्वा प्रवृत्तिः सा हितसाधनत्वधीकृतेति पक्षेऽपि व्याप्तिभङ्गस्तुल्योऽस्मादपसर्पणमनर्थध्वंसीति बुद्ध्यैव प्रवृत्तेर्न च तत्कार्यमिति धिया प्रवृत्तिस्तद्धेतुत्वेनापि विशिष्टेष्टसाधनत्वज्ञानादेव प्रवृत्तेरिति भावः ॥ ७४५ ॥

**पुंप्रवृत्तेः फलं कार्यं विध्यर्थश्चापि कारणम् ॥**
**प्रवृत्तिहेतुर्न फलं भवतैवाभिधीयते ॥ ७४६ ॥**

इतश्च नियोगस्य न प्रवर्तकतेत्याह । **पुंप्रवृत्तेरिति** । कार्यमेव प्रवर्तकं न फलमिति ते मतं तच्च विरुद्धं कार्यं हि प्रवृत्तिफलमिष्टतया साध्यत्वाद्विध्यर्थभूतं कार्यमेव प्रवृत्तिहेतुरिति चोपेतमेवमपि फलं प्रवर्तकं नेति भवतैव वक्तुं शक्यं न हि त्वत्तोऽन्यस्य विरुद्धमर्थं वक्तुं कौशलमतो भवतो विरुद्धवादित्वयोगान्न नियोगस्य प्रवर्तकतेत्यर्थः॥ ७४६॥

**अपसर्प्यस्य सर्पादेर्न च कार्यं फलं मतम् ॥**
**अनर्थाभावमात्रत्वान्नचाभावः फलं क्वचित् ॥ ७४७ ॥**

पुंव्यापारस्य कार्यं फलमित्यङ्गीकृत्य नियोगस्याप्रवर्तकतोक्ता । इदानीं तस्य प्रवृत्तिफलतैव नास्तीत्याह । **अपसर्प्यस्येति** । सर्पादेः सकाशादपसृप्तिरूपपुंव्यापारस्य न कार्यं फलमित्यत्र हेतुमाह । **अनर्थेति** । दुःखनिवृत्तिमात्रस्य तत्रेष्टत्वादित्यर्थः। कथमभावस्य फलत्वं नभोनलिनवदित्याशङ्क्याऽऽह । **न चेति** । नहि दुःखाभावः स्वरूपेण फलं किंतु सुखस्य व्यञ्जकत्वेन तत्त्वं नभोनलिनस्य त्वत्यन्तासतो न तद्व्यञ्जकत्वं दुःखनिवृत्तेस्तथात्वमग्रे व्यक्ती भविष्यतीति भावः ॥ ७४७ ॥

---

१ ख. °द्धेतोर° । २ क. °दित्वायो° ।

**नियोगोऽथ प्रमारूपो विधिशब्दप्रकाशितः ॥**
**मानान्तरानपेक्षः सन्नाक्षेपकतया प्रमा ॥ ७४८ ॥**

**विधिपदस्य** मानान्तरायोग्यनियोगार्थस्य तद्विषयसंसर्गाक्षेपकत्वेऽपास्ते नियोगस्यैव तदाक्षेपकत्वमाशङ्कते । **नियोगोऽथेति ।** लिङादिप्रतिपाद्यनियोगस्य प्रमात्वेऽपि कथं तत्र लिङादिर्नानुवादस्तत्राऽऽह । **मानान्तरेति ।** नियोगस्य मानत्वे मानान्तरानपेक्षा युक्ता तत्तु कथमित्याशङ्क्याऽऽह । **आक्षेपकतयेति ।** करणादिसंसर्गं विनाऽयुक्तो नियोगस्त-दाक्षेपकत्वेन तत्र प्रमेत्यर्थः ॥ ७४८ ॥

**आक्षेप्तृत्वं न शब्दोत्थं न च मानान्तरात्तथा ॥**
**अव्युत्पन्नप्रवृत्तिश्चेत्युक्तदोषप्रसङ्गतः ॥ ७४९ ॥**

तस्य तदाक्षेपकत्वं शब्दादन्यतो वा सिद्धं नाऽऽद्य इत्याह । **आक्षेप्तृत्वमिति ।** नहीदं लिङादिवशात्प्रतीतं तस्य नियोगबोधनेनोपक्षयादित्यर्थः । न द्वितीयो मानान्त-रस्य नियोगसंसर्गाक्षेपकत्वसाधकस्यादृष्टेरन्यथा नियोगस्यापि तद्गोचरत्वप्रसङ्गादित्याह । **न चेति ।** तथेति नियोगस्याऽऽक्षेपकत्वपरामर्शः । यत्तु मानान्तरानपेक्षः सन्निति तत्र नियोगस्य मानान्तरागम्यत्वे लिङादेस्तत्र शक्त्यग्रहादज्ञातशक्तिरपि पुरुषो लिङादिश्रव-णात्प्रवर्तेतेत्याह । **अव्युत्पन्नेति ।** चकारेण पदधर्मातिक्रमादिग्रहः । उक्तदोषसमा धित्सया नियोगो मानान्तरापेक्षश्चेत्तस्यापूर्वत्वहानिरित्याह । **इत्युक्तेति** ॥ ७४९ ॥

**स्वाभ्युपेतनयस्यैव त्यागः प्राप्नोत्यनीप्सितः ॥**
**प्रामाण्यं चास्य यत्रेष्टं श्रुतेस्तत्रास्त्वनेन किम् ॥ ७५० ॥**

अव्युत्पन्नप्रवृत्त्यभ्युपगमे का हानिस्तत्राऽऽह । **स्वाभ्युपेतेति ।** श्रुतलिङादेरव्यु-त्पन्नस्यैव प्रवृत्त्याश्रयणे शाब्दो व्यवहारो व्युत्पन्नस्यैवेति सर्वतन्त्रसिद्धान्तो विरुध्येते-त्यर्थः । नियोगस्य मानत्वमुपेत्याऽऽक्षेपकत्वाद्यपास्य प्रामाण्यमेव प्रत्याचष्टे । **प्रामाण्यं चेति** ॥ ७५० ॥

**क्व चेष्टमस्य मानत्वं न यागादौ स्वशब्दमे ॥**
**लौकिकोऽपि न संसर्गो विध्यायत्तः स्थितो यतः ॥**
**विध्यभावे हि संसर्गः श्रोतुरस्त्यविधावपि ॥ ७५१ ॥**

**किंच** तस्य मानत्वं यागादौ वा संसर्गे वा यागादेरिष्टोपायत्वे वेति विमृशति । **क्व चेति ।** आद्यं निरस्यति । **नेति ।** यागादिपदादेव तत्प्रतीतेरिति हेतुमाह । **स्वश-ब्दम इति ।** यागादिवाचकः शब्द एव मा यस्य तस्मिन्निति यावत् । द्वितीयं निराह । **लौकिकोऽपीति ।** यागादिपदार्थसंसर्गोऽपि न नियोगाधीनस्तस्य लौकिकत्वादित्यर्थः ।

१ क. °त्वेऽपि सं° ।

संसर्गस्य लौकिकत्वं साधयति । **यत इति** । राज्ञः पुमानित्यादिविधिहीनवाक्येऽपि श्रोतुः संसर्गो दृश्यतेऽतो नियोगाभावेऽपि संसर्गदृष्टेस्तस्य लौकिकत्वं न च संसर्गविशेषस्यालौकिकत्वं तस्य शब्दादेव सिद्धौ नियोगवैयर्थ्यादित्यर्थः ॥ ७५१ ॥

**फलसाधनशक्तिश्चेद्विध्यायत्ता भविष्यति ॥**
**नैवं तत्रापि शब्दस्य सामर्थ्यं केन वार्यते ॥ ७५२ ॥**

तृतीयमादत्ते । **फलेति** । धात्वर्थस्य फलं प्रति साधनशक्तिः साधनता सा नियोगकृता यदि यागादिः स्वर्गं न साधयेत्तदा तत्कामस्य तस्मिन्नियोगो न स्यादतो यागादेः स्वर्गादिसाधकत्वे नियोगो मानमित्यर्थः । तत्रापि तस्य न मानतेत्याह । **नैवमिति** । तत्रेति फलसाधनत्वोक्तिः । नियोगं दृष्टान्तयितुमपिशब्दः ॥ ७५२ ॥

**तस्मादितरतुल्यत्वान्न विध्यर्थनिबन्धनः ॥**
**संसर्गः स्यात्पदार्थानां सुस्थमेवं विधिं विना ॥ ७५३ ॥**

प्रकृत्यर्थस्येष्टसाधनत्वे प्रत्ययस्य शक्तिग्रहान्न नियोगो विधिशब्दप्रकाशितो नापि प्रमा विषयाभावादित्युक्त्वा पदार्थसंगतेः कस्मादित्यत्रोक्तमुपसंहरति । **तस्मादिति** । शाब्दे ज्ञाने षोढाऽपि विधेरपोढत्वादात्मा ब्रह्मेति शाब्दं ज्ञानं विधिं विनैव सिद्धमिति फलितमाह । **सुस्थमिति** ॥ ७५३ ॥

**तस्मात्सर्वपदार्थानामाकाङ्क्षायोग्यसंनिधेः ॥**
**परस्पराभिसंबन्धाद्विशिष्टार्थावबोधिता ॥ ७५४ ॥**

संसर्गस्य विध्यनधीनत्वे निर्निमित्तस्य तस्यासिद्धेर्न पदानां विशिष्टधीहेतुतेत्याशङ्क्य पदार्थान्तरतन्त्रत्वमित्यत्रोक्तमुपसंहरति । **तस्मात्सर्वेति** । नियोगस्य संसर्गनिमित्तत्वाभावात्कार्याकार्यात्मनां सर्वपदार्थानामाकाङ्क्षादिवशान्मिथः संबन्धाद्युक्ता पदानां विशिष्टधीहेतुतेत्यर्थः ॥ ७५४ ॥

**ननूत्पत्तिविधिर्यद्वत्कर्मबोधे व्यवस्थितः ॥**
**आत्मज्ञानविधिस्तद्वदात्मबोधेऽवतिष्ठताम् ॥ ७५५ ॥**
**कर्माधिकारवच्चात्र प्रवृत्तिरपि सेत्स्यति ॥**
**अप्रवृत्तप्रवृत्तिश्च तथा बुद्धार्थबोधनम् ॥ ७५६ ॥**

सुस्थमेवं विधिं विनेत्युक्तममृष्यन्वेदान्तेषु विधिद्वयमस्तीति शङ्कते । **नन्विति** । तत्राऽऽदौ दृष्टान्तेनोत्पत्तिविधिं तेषु साधयति । **उत्पत्तीति** । उत्पत्तिविधिरग्निहोत्रं जुहोतीत्यादिविधिरात्मज्ञानविधिरात्मा द्रष्टव्य इत्यादिविधिः । अधुना तेष्वधिकारविधिमाह । **कर्मेति** । यथोत्पन्ने कर्मणि फलशिरस्कनियोगवाक्यात्प्रवृत्तिरेवं मोक्षकामः प्रज्ञां

१ क. °योगमं° । २ ख. °धकम् । ३ क. °कामस्य प्र° ।

कुर्वीतेत्यधिकारविधेर्विहिते ज्ञाने प्रवृत्तिरित्यर्थः । अधिकारोत्पत्तिविध्योः स्वरूपं क्रमेण दर्शयति । अप्रवृत्तेति ॥ ७५५ ॥ ७५६ ॥

**एवं विधिमिहेच्छन्ति विध्ययोग्येऽपि वस्तुनि ॥**
**विधिरागवशात्केचित्तान्प्रतीदमथोच्यते ॥ ७५७ ॥**

कर्मणि प्रवृत्तियोग्ये विधियुक्तौ तदयोग्ये त्वात्मज्ञाने कथं स्यातामित्याशङ्क्याऽऽह । **एवमिति ।** आत्मज्ञाने विध्यनभ्युपगमे मुमुक्षुप्रवृत्त्यनुपपत्तिस्तत्र विध्योः साधिकेत्यर्थः । तत्र विध्यभ्युपगमे हेत्वन्तरमाह । **विधीति ।** उत्पत्त्यधिकारौ तु विनियोगप्रयोगाविनाभूताविति तावपि वेदान्तेषु संभावितावविति भावः । प्रवृत्त्यनुपपत्त्या वेदान्तेषु विधिद्वयमिति चोद्यं समाधत्ते । **तान्प्रतीति** ॥ ७५७ ॥

**कर्मस्वरूपबोधे हि व्यापारो नेष्यते विधेः ॥**
**किं तूत्पन्नस्य सापेक्ष्यादधिकारेण संगतिः ॥ ७५८ ॥**

यत्तूत्पत्तिविधिर्यद्वदित्यादि तद्दूषयति । **कर्मेति ।** कर्मोत्पत्तिविधेर्न तत्स्वरूपबोधने व्यापारो विश्राम्यति तद्बोधमात्रस्याफलत्वादित्यर्थः । कथं तर्हि तद्व्यापारविश्रान्तिरित्याह । **किं त्विति ।** उत्पत्तिविध्यधिगतकर्मस्वरूपस्य फलाकाङ्क्षत्वात्फलशिरस्कनियोगसंगतिद्वारा प्रयोगे तद्व्यापारसमाप्तिरित्याह । **उत्पन्नस्येति** ॥ ७५८ ॥

**अधिकारप्रवेशित्वं नाऽऽत्मज्ञानस्य युज्यते ॥**
**यस्याधिकारसंबन्धः स आत्मा न विधीयते ॥ ७५९ ॥**

आत्मज्ञानस्यापि द्रष्टव्यविध्युत्पन्नस्य स्यादधिकारसंगतिरित्याशङ्क्याऽऽह । **अधिकारेति ।** न तावद्विधेयत्वेनेष्टात्मज्ञानस्याधिकारविध्यनुप्रवेशित्वं तस्य मानाद्यधीनत्वादपुरुषतन्त्रस्याधिकारसंबन्धायोग्यत्वादित्यर्थः । आत्मनः स्वामित्वेनाधिकारसंबन्धात्तद्द्वारा तज्ज्ञानस्यापि स्यात्तत्संगतिरिति चेन्नेत्याह । **यस्येति ।** आत्मा संसारी परो वा तत्र संसारिणोऽधिकारसंबन्धेऽपि न स विधेयः सिद्धत्वान्नापि विधेयधीविषयो द्रष्टव्यादिवाक्यस्य तदविषयत्वात्परस्तु नाधिकारयोगी कुतस्तद्धियस्तद्द्वारा तत्संगतिरित्यर्थः ॥ ७५९ ॥

**व्रीह्यादिविषयं यद्वद्यत्नेनापि निरूपितम् ॥**
**प्रत्यक्षं नाधिकारानुप्रवेशं प्रतिपद्यते ॥ ७६० ॥**

परात्मज्ञानस्योत्पत्तिविधिविषयत्वेनेष्टस्याधिकारविध्यसंबन्धं दृष्टान्तेन स्पष्टयति । **व्रीह्यादीति ।** यथा हि व्रीह्यादिविषयं प्रत्यक्षं सुपरीक्षितमपि न दर्शपूर्णमासाधिकारानुप्रवेशं व्रीह्यादिद्वारा प्रतिलभते तथाऽऽत्मज्ञानमपि नाऽऽत्मद्वाराऽधिकारमनुप्रविशति । तथाच वेदान्तेषूत्पत्तिविधिसंभवेऽपि नाधिकारादिविधिसंभवोऽज्ञातज्ञापनेनैव पुमर्थसिद्ध्या तत्पर्यवसानादविनाभावासंप्रतिपत्तेरिति भावः ॥ ७६० ॥

**अन्योऽप्यनुभवोपायो मननध्यानलक्षणः ॥**
**सोपायो विहितोऽस्त्येव प्रतिपत्तिविधिं विना ॥ ७६१ ॥**

आत्मज्ञाने विध्यभावेऽपि तदुपायविध्यनुरोधतो मुमुक्षुप्रवृत्तिरित्यभिप्रेत्य शाब्दे ज्ञाने विधिर्निराकृत इदानीमभ्यासे विधिरिति पक्षमुत्थापयति । **अन्योऽपीति** । या शाब्दी प्रतिपत्तिस्तद्विषयो यो विधिर्दूषितस्तं विनाऽपि कश्चिदनुभवस्योपायोऽन्यो विहितोऽस्तीति संबन्धः । अनुभवः साक्षात्कारः । विहितः समाहितः पश्येदित्यादाविति शेषः । उपायस्वरूपमाह । **मननेति** । शब्दयुक्त्याम्रेडनात्मक इति यावत् । इतिकर्तव्यतारहितकरणस्य विधानेऽपि वैफल्यमाशङ्क्याऽऽह । **सोपाय इति** । शमदमादिभिरुपायैरुपेतमात्मसाक्षात्कारसाधनं प्रसंख्यानं मननादिशब्दितं पश्येदिति विहितमित्यर्थः ॥ ७६१ ॥

**दर्शनस्य विधेयत्वात्तत्संबन्धोपलक्षितः ॥**
**प्रसंख्यानात्मकोऽत्रापि प्रयत्नोऽनुभवं प्रति ॥ ७६२ ॥**

ननु पश्येदिति साक्षात्कारो विधीयते पश्यतेस्तत्कर्मणो विधिसंबन्धान्न प्रसंख्यानं तद्वाचकाभावादित्याशङ्क्य तृतीयं कल्पं प्रसंख्यानवादिमुखेन प्रतिपादयन्नाह । **दर्शनस्येति** । न तावदात्मरूपं दर्शनं विधेयं नित्यत्वान्नापि तदाकारमनोवृत्त्यात्मकं तत्साक्षात्कारत्वेन फलत्वादतोऽस्याविधेयत्वात्तेन साध्यसाधनलक्षणेन संबन्धेनोपलक्षितः प्रसंख्यानाख्यो यत्नः साक्षात्कारं प्रत्युपायत्वेन पश्येदित्यत्रापि प्रज्ञां कुर्वीतेतिवद्विधीयत इत्यर्थः । अनुभवं प्रति विहित इति संबन्धः ॥ ७६२ ॥

**शमाद्यङ्गान्वितः सर्वमात्मेतिस्तुतिभूषणः ॥**
**मननाद्यर्थवत्त्वाय पश्येदिति विधीयते ॥ ७६३ ॥**

सोपाय इत्युक्तं व्यनक्ति । **शमादीति** । प्रयत्नो विशेष्यत्वेन संबन्धनीयः । यद्विधीयते तत्स्तूयत इति न्यायं सूचयति । **सर्वमिति** । नहीदं सर्वं यदयमात्मेति मुख्यमध्यक्षादिविरोधादतस्तादृशस्तुतिमत्त्वादुक्तयत्नो दर्शादिवद्विधिमर्हतीत्यर्थः । मन्तव्यादिवाक्ये मननादेर्विधानात्किमत्र तद्विधिनेत्याशङ्क्याऽऽह । **मननादीति** । नहि मैत्रेयीब्राह्मणे तद्विधिस्तस्य वस्तुपरत्वान्न च वाक्यभेदेन विधिर्वाक्यैक्यसंभवे तदयोगान्न चाविहितं मननादि फलवदतस्तत्फलवत्त्वार्थमत्र विधिरित्यर्थः । अस्तु वा तत्रोत्पत्तिविधिस्तथाऽप्यधिकारविधिरत्रेति मत्वा पश्येदित्यत्र प्रकृत्यर्थदर्शनोपलक्षितं प्रसंख्यानं प्रत्ययेन विधीयत इति निगमयति । **पश्येदितीति** ॥ ७६३ ॥

**पश्येदिति प्रयत्नश्चेत्फलं स्याद्दर्शनं तदा ॥**
**लक्षणं न प्रयत्नस्य लक्षणं चेत्कथं फलम् ॥ ७६४ ॥**

नानेन प्रसंख्यानं विधातुं शक्यमिति सिद्धान्ती शङ्कते । पश्येदिति प्रयत्नश्चेदिति । यद्यत्र प्रसंख्यानात्मा यत्नो दर्शनोद्देशेन विधीयते । तदा दर्शनं विधीयमानयत्नसाध्यत्वात्तत्फलं स्यान्न तु तस्य विशेषणत्वेन लक्षणमसिद्धत्वात्सिद्धस्यैव तद्भावाद्दर्शनस्य यत्नलक्षणत्वे सिद्धत्वात्तत्फलत्वासिद्धिरतस्तस्य विधेययत्नफलत्वं तल्लक्षणत्वं चायुक्तमिति प्रसंख्यानविधिरत्र नावकाशवानित्यर्थः ॥ ७६४ ॥

**लोके दर्शनसंबद्धं प्रसंख्यानं समीक्षितम् ॥**
**वेदेऽपि किं तथा तत्स्यान्न वाऽतस्तद्विधीयते ॥ ७६५ ॥**

प्रसंख्यानवाद्याह । **लोक इति** । लोके शास्त्रपाठादौ दर्शनफलेन साधनतया संबद्धं प्रसंख्यानं दृष्टं तद्वद्वेदेऽपि तत्प्रसंख्यानं तथा दर्शनसाधनं न वेति विशये दर्शनादतोऽस्मात्प्रसंख्यानमुपलक्ष्य विधीयतेऽतस्तयोः संबन्धस्य लोकसिद्धत्वादुपलक्षणं तत्काले सदिति चानियमात्तथा च दर्शनफलत्वेन तदुपलक्षिते[1]ऽस्मिन्विधिरित्यर्थः ॥ ७६५ ॥

**सामान्येनौषधं यद्वज्ज्वरनाशोपलक्षितम् ॥**
**दृष्टं कष्टज्वरेऽप्येवं विशेषेणोपदिश्यते ॥ ७६६ ॥**

उक्तमर्थं दृष्टान्तेन स्पष्टयति । **सामान्येनेति** । यथौषधं कषायपानादि साधारण्येन ज्वरनिरासि लोके दृष्टं तदेव कष्टज्वरेऽपि संनिपातादिरूपे निवर्तकं न वेति संशये विवक्षितज्वरनिरासोपलक्षितं तद्धेतुतया सिद्धं विषमज्वरनाशहेतुत्वेन विधीयते । उक्तं हि—

"पाचनं शमनीयं वा कषायं पाययेत्तनुम् ।
ज्वरितं षडहेऽतीते लघ्वन्नप्रतिभोजिनम् ॥
स्तभ्यन्ते न विपच्यन्ते कुर्वते विषमज्वरम् ।
ततः साम्यबलापेक्षी भोजयेज्जीर्णतर्पणम् ॥
क्रियाभिराभिः प्रशमं न प्रयाति यदि ज्वरः ।
अक्षीणबलमांसस्य शमयेत्तं विरेचनैः" इति ॥

तथा लोके साक्षात्कारसाधनत्वेन प्रसंख्यानस्य दीर्घप्रपाठकादौ दृष्टत्वाद्वेदेऽप्येवं स्यान्नेति संदेहे स्यादेवेति विशेषेण प्रविधीयते प्रसंख्यानमित्यर्थः ॥ ७६६ ॥

**अप्यज्ञातफलं साक्षान्मान्तरैर्विधिसंश्रयात् ॥**
**अभावनिश्चयाभावात्प्रसंख्यानं फलाय नः ॥ ७६७ ॥**

अथ प्रसंख्यानं न साक्षात्कारफलं प्रसंख्यानत्वाल्लौकिकप्रसंख्यानवत्तत्राऽऽह । **अप्यज्ञातेति** । यद्यपि लोकेऽपि मानान्तरैरागमेतरैरज्ञातसाक्षात्कारफलं प्रसंख्यानं नहि

1 ख. °ते तस्मि° ।

तत्फलं साक्षात्कारो दृश्यते तथाऽपि वेदे विधिबलात्फलकल्पनात्साक्षात्कारो न प्रसंख्यानादित्यभावानिश्चयाच्च तदस्माकमभ्यासिनां तं प्रसूते ततस्तत्फलकप्रसंख्यानविधिविरुद्धमनुमानं प्रसंख्यानविधेरपौरुषेयतया पुरुषोत्प्रेक्षितानुमानतो बलीयस्त्वान्न वैपरीत्यमिति भावः ॥ ७६७ ॥

**पश्चादावेवमेव स्यात्संदिग्धेऽपि विनिश्चयः ॥**
**खपुष्पे त्वनुपायत्वान्निश्चयोऽस्ति विपर्यये ॥ ७६८ ॥**

ननु प्रसंख्यानं दृष्टफलमिष्टं तथाच कृष्यादाविवानन्तरफलादृष्टौ तदभावनिश्चयाभावादित्यसिद्धं नेत्याह । **पश्चादाविति ।** चित्रादिफले पश्चादावनन्तरमदृष्टेऽपि किं तज्जन्मान्तरे भवति न वेति वीक्षायां नेत्यभावानिश्चयाद्विधेश्च भवत्येवेति कल्प्यत एवं प्रसंख्यानफले साक्षात्कारेऽनन्तरमदृष्टेऽपि कालान्तरे तस्मात्तद्भवति न वेति चिन्तायां कृष्यादिफलवदभावानिर्धारणाद्विधेश्च कालान्तरीयफलनिश्चयोऽतो न कारीर्यादितुल्यं प्रसंख्यानं किंतु चित्रादिममित्यर्थः । संदिग्धमपि फलं विध्यनुरोधेन सिध्यति चेदाकाशकुसुमादावपि तदनुरोधेन सत्त्वं स्यादित्याशङ्क्याऽऽह । **खपुष्पे त्विति ।** तत्र तुच्छत्वादेवोपायासाध्यत्वान्न भवत्येवेति सत्त्वविपर्यये निश्चयोऽस्त्यतो न विधिबलान्नभोनलिनादेः सत्ता नापि तदीयां सत्तामुद्दिश्य कश्चिदस्ति विधिरित्यर्थः ॥ ७६८ ॥

**एवं केचिद्व्यवस्थाप्य प्रसंख्यानविधिं पुनः ॥**
**ऐकात्म्यज्ञानतात्पर्यं तस्यापीच्छन्ति युक्तिभिः ॥ ७६९ ॥**

ननु प्रसंख्याननियोगमङ्गीकुर्वता वेदान्तानां तन्निष्ठत्वमिष्टं ततो मानाभावाद्वस्त्वसिद्धौ न प्रसंख्यानविधिर्नहि वस्तुनोऽसिद्धौ शाब्दज्ञानावृत्तिस्तत्राऽऽह । **एवमिति ।** तत्त्वमाद्यभिधाश्रुतेर्वस्तुपरत्वात्प्रसंख्यानविधेश्च वक्ष्यमाणोपपत्तिभिस्तच्छेषत्वान्न वस्त्वसिद्ध्या प्रसंख्यानविध्यसिद्धिरित्यर्थः । उक्तरीत्या प्रसंख्यानविषयं विधिं स्थापयित्वा पुनर्वस्त्वसिद्धिशङ्कायामभिधाश्रुतेर्वस्तुपरत्वात्तज्जन्ये वस्तुज्ञाने तात्पर्यं प्रसंख्यानविधेरपि वक्ष्यमाणोपपत्तिभिरिच्छन्ति केचिदिति योजना ॥ ७६९ ॥

**विधिस्वातन्त्र्यपक्षे हि किलैकात्म्यं न सिध्यति ॥**
**तच्छास्त्रं विधिनिष्ठत्वान्न स्वरूपेऽर्थवादतः ॥ ७७० ॥**

ननु विधेः शेषित्वमभिधाश्रुतेः शेषत्वमिति स्थितेर्विपरीतं कुतो गुणप्रधानत्वं तत्राऽऽह । **विधीति ।** यद्यपि वेदान्तेभ्योऽन्यत्र विधेः शेषित्वमभिधा तेः शेषत्वमित्युत्सर्गस्तथाऽपीह तस्या एव प्राधान्यं तस्य गुणत्वमन्यथा वस्त्वसिद्धेरित्यर्थः । त्वयाऽपि विधिप्राधान्ये वस्त्वसिद्धिरुक्तेति मत्वाऽऽह । **किलेति ।** न च विधिप्रधानं वाक्यं वस्तुबोधकं वाक्यभेदादिति हिशब्दार्थः । कथं विधिस्वातन्त्र्ये वस्त्वसिद्धिस्तत्राऽऽह । **तच्छास्त्रमिति ।** विधिप्राधान्ये तत्त्वमादिवाक्यमैक्ये न पर्यवस्यति विधिपरत्वेनार्थवाद-

स्याध्यक्षादिविरोधे स्वार्थे मानत्वायोगादतो वस्तुसिद्धिमिच्छता विधेर्गुणत्वमभिधाश्रुतेश्च प्राधान्यं वेदान्तेषु मन्तव्यमिति भावः ॥ ७७० ॥

**अपि शास्त्रात्प्रपन्नेऽस्मिन्पारोक्ष्यानपहारतः ॥**
**तत्साक्षात्करणायैव प्रसंख्यानं विधीयते ॥ ७७१ ॥**

ननु तात्पर्यवतो वाक्यादैक्यसिद्धौ कृतं प्रसंख्यानविधिनेति तत्राऽऽह । **अपीति** । तत्त्वमादिवाक्यादैक्ये प्रतीतेऽपि तद्गतपारोक्ष्यस्य विना साक्षात्कारमध्वस्तेस्तद्ध्वंसिसाक्षात्कारसिद्धये प्रसंख्यानविधिरित्यर्थः ॥ ७७१ ॥

**मानेन विषयासिद्धौ तद्दिदृक्षावियोगतः ॥**
**प्रसंख्यानविधिर्न स्यात्सहापि मननादिभिः ॥ ७७२ ॥**

वस्तुसाक्षात्कारस्य प्रसंख्यानविध्यधीनत्वे किं शास्त्रेणेत्याशङ्क्याऽऽह । **मानेनेति** । शास्त्रेण वस्त्वसिद्धौ तत्साक्षात्कारेच्छायोगात्प्रतिपन्ने तन्नियमादन्यतश्च तदसिद्धेः साक्षात्कारमुद्दिश्य प्रसंख्यानविधिः सोपायो न स्यादतः शास्त्रेण वस्तु ज्ञातव्यमित्यर्थः ॥ ७७२ ॥

**श्रुतेर्ज्ञातात्मवृत्तान्तोऽननुभूतमपि स्वकम् ॥**
**स्थानकं वाञ्छतः शास्त्रात्प्रसंख्यानं विधीयते ॥ ७७३ ॥**

ननु शास्त्रेण तज्ज्ञानं चेदनुभूतमेव ज्ञानानुभवयोरेकत्वादन्यथा तदज्ञानमेवेति साक्षात्कारमुद्दिश्य न प्रसंख्यानविधिरत आह । **श्रुतेरिति** । यो हि पुरुषो व्युत्पन्नस्तत्त्वमादिवाक्यात्प्रतिपन्नस्वरूपविषयवार्ताप्रवृत्तिस्तेन यद्यपि स्वरूपभूतं पदं नानुभूतं तथाऽपि शास्त्रप्रामाण्यात्प्रसंख्यानात्तत्त्वानुभवो भवितेति निश्चयात्तत्कामस्य पश्येदित्यादिना प्रसंख्यानविधिर्बोध्यत इत्यर्थः ॥ ७७३ ॥

**स्वव्यापारमुखेनैव शास्त्रं स्वार्थावबोधकृत् ॥**
**न तु व्यापारविरहान्नातो द्विकरता श्रुतेः ॥ ७७४ ॥**

शास्त्रस्य वस्तुबोधित्वे प्रसंख्यानविधायित्वे च भिन्नार्थत्वाद्वाक्यभेदः स्यादित्याशङ्क्याऽऽह । **स्वव्यापारेति** । शास्त्रस्य प्रसंख्यानं व्यापारस्तद्द्वारा तस्य स्वार्थबोधित्वादर्थद्वयाभावान्न वाक्यभेद इत्यर्थः । प्रसंख्यानाख्यं व्यापारं विना न स्वार्थबोधितेति शास्त्रस्योक्तव्यापारवत्त्वं व्यतिरेकद्वारा साधयति । **न त्विति** । विधिद्वारा वस्तुबोधिनो वाक्यस्य न द्विकरतेति फलितमाह । **नात इति** । द्विकरता स्वप्रधानार्थद्वयबोधितेति यावत् ॥ ७७४ ॥

**स्वव्यापारतिरोधानं कारकाणां न च स्थितम् ॥**
**तस्मादैकात्म्यतात्पर्ये प्रसंख्यानादि सुस्थितम् ॥ ७७५ ॥**

प्रसंख्यानस्य शास्त्रव्यापारत्वे तेन व्यवहितं शास्त्रं न स्वार्थं बोधयेदित्याशङ्क्य

स्वाङ्गमव्यवधायकमिति न्यायेनाऽऽह । **स्वव्यापारेति** । प्रसंख्यानविधिं विना वस्तुसाक्षात्कारासिद्धेः शास्त्रीयां च वस्तुधियं मुक्त्वा तद्विध्ययोगात्तत्त्वमादेर्वस्तुपरत्वेऽपि प्रसंख्यानं तद्विधिस्तस्य च शेषत्वमित्यादि युक्तमित्युपसंहरति । **तस्मादिति** ॥७७५॥

**बोधयित्वाऽपि चैकात्म्यं नान्तरा पर्यवस्यति ॥**
**आ पुमर्थावधेः शास्त्रमप्रामाण्यभयात्स्फुटम् ॥ ७७६ ॥**

शास्त्रादैकात्म्यबोधे पुमर्थसिद्धेः साक्षात्कारस्याकिंचित्करत्वात्किं तदर्थेन प्रसंख्यानेनेत्याशङ्क्याऽऽह । **बोधयित्वेति** । तत्त्वमादिवाक्यमैक्यं ज्ञापयित्वा मोक्षोपायसाक्षात्कारान्तताामन्तरेणान्तराले नोपरन्तुमुत्सहते वाक्योत्थपरोक्षधीमात्रेण पुरुषार्थपरिसमाप्त्यभावात्पुमर्थावसायिताभावे च प्रामाण्यायोगान्न च स्फुटं प्रामाण्यं विना हेतुं शक्यमपह्नोतुमतो मोक्षहेतुसाक्षात्कारस्यापेक्षितत्वात्तदर्थं प्रसंख्यानविधानमित्यर्थः ॥ ७७६ ॥

**परोक्षवृत्त्या शब्दो हि वदन्स्वार्थं स्वभावतः ॥**
**संभावयन्प्रमाणत्वं युक्तिं स्वीकृत्य वर्तते ॥ ७७७ ॥**

तर्हि शास्त्रं प्रस्तुतं नियोगापेक्षया साक्षात्कारं जनयिष्यति नार्थो युक्त्येत्याशङ्क्याऽऽह । **परोक्षेति** । संसृष्टपरोक्षबोधित्वं शब्दस्वभावः स्वर्गकामादिविधिषु तद्वशादयमपि संसृष्टे परोक्षे चार्थे शब्दो वर्तते स च तया वृत्त्या स्वार्थं तादृशं वदन्नपौरुषेयत्वेनासंभावितदोषतया स्वस्य मानतां च संभावयन्फलान्ततायै विधिवद्युक्तिमपि सहायीकृत्य वस्तु साक्षात्कारयति युक्तेरपि मानाङ्गत्वादित्यर्थः ॥ ७७७ ॥

**याथात्म्यावगमेऽशक्ता धूमोऽग्नाविव साऽपि च ॥**
**स्वीकृत्यैव प्रसंख्यानं युक्तिर्वस्तुनि वर्तते ॥ ७७८ ॥**

तर्हि शास्त्रसहकारिणी युक्तिरेवास्तु शास्त्रसहकृतयुक्तेरेव तत्त्वधीसमुन्मेषात्कृतं विधिनेत्याशङ्क्याऽऽह । **याथात्म्येति** । सा युक्तिः शास्त्रसहिताऽपि वस्तुसाक्षात्कारे न क्षमते द्वयोरपि परोक्षवृत्तित्वाविशेषाद्यथा धूमो वाक्यसहायोऽपि साक्षाद्दहनं न बोधयत्येवमेव युक्तिरुक्तसहायवत्यपि न तत्त्वं साक्षात्कारयेत्तथा चैषा प्रसंख्यानविधिमपि सहकारित्वेनाऽऽदाय वस्तु बोधयतीत्यर्थः ॥ ७७८ ॥

**इत्यादिवर्त्मना शास्त्रं साक्षाद्वस्तु प्रसाधयत् ॥**
**विधिं प्रति प्रधानत्वं स्वीकृत्याभ्येति मानताम् ॥ ७७९ ॥**

शास्त्रस्य प्रसंख्यानयुक्तिवदात्माख्यपादान्तेऽपि सापेक्षत्वं विवक्षित्वा चतुष्पान्मानं निगमयति । **इत्यादीति** । शास्त्रमितिशब्दोक्ते युक्तिप्रसंख्याने आदिपदगृहीतश्चाऽऽत्मेत्यनेन सहायत्रयेण वस्तु साक्षाज्ज्ञापयद्विध्यादि प्रति प्राधान्यमादाय चतुष्पान्मानत्वमाप्नोतीत्यर्थः ॥ ७७९ ॥

**संसर्गकल्पनाशून्यमप्यैकात्म्यं प्रबोधयेत् ॥**
**अनयैव दिशा शास्त्रं संसृष्टार्थाभिधाय्यपि ॥ ७८० ॥**

**शास्त्रं** साक्षाद्वस्तु न बोधयति संसृष्टपरोक्षबोधित्वस्वरूपविरोधात्सहकारिवशादपि स्वभावत्यागायोगादित्याशङ्क्याऽऽह । **संसर्गेति** । यद्यपि शास्त्रं संसृष्टपरोक्षाभिधायकं तथाऽपि तथाविधकल्पनाहीनमसंसृष्टमपरोक्षं च तत्त्वं प्रसंख्यानादिसहायभेदेन साक्षात्कारयेत्सहकारिसंपत्त्या दधिविषादिवदस्य कार्यान्तरारम्भकत्वाविरोधादिति भावः ॥७८०॥

**यतो वाचो निवर्तन्त इति श्रुत्यैव दर्शितम् ॥**
**व्यपास्ताशेषसंसर्गकल्पनं ब्रह्म निर्भयम् ॥ ७८१ ॥**

संसर्गकल्पनाशून्यमैकात्म्यमित्यत्र मानमाह । **यत इति** । संबन्धग्रहणं पारोक्ष्योपलक्षणार्थम् । उक्तब्रह्मज्ञानस्य पुमर्थहेतुत्वमाह । **निर्भयमिति** ॥ ७८१ ॥

**शास्त्रेणानभिधाने तु नियोगेऽपि न युज्यते ॥**
**प्रवेशो विषयत्वेन तुल्यं चोद्यमतो द्वयोः ॥ ७८२ ॥**

नन्वनया श्रुत्या वस्तुनो वाचा[illegible] प्रतिपादने वस्तुनो न प्रसंख्यानविध्यनुप्रवेशस्तद्विदो विधिं विना कृतकृत्यत्वादत आह । **शास्त्रेणेति** । यत इत्यादिना शास्त्रेण वस्तुनोऽनभिधाने विधेयप्रसंख्यानविषयशाब्दधीविषयत्वेन तस्य विधिप्रवेशो न युक्तः शब्दादज्ञानस्य शाब्दधीविषयत्वव्याघातादतः शास्त्रेण वस्तुनो वचनावचनयोर्द्वयोरपि तस्य विध्यनुप्रवेशायोगे चोद्यं तुल्यं न हि शास्त्रप्रकाशितं वस्तु पुमर्थरूपं विधिमनुप्रविशति नापि तदप्रकाशितस्य तदनुप्रवेशोऽज्ञानस्य विध्यङ्गत्वज्ञानायोगान्न च शास्त्रादन्यद्वस्तुप्रत्यायकमित्यर्थः । अपिशब्दो द्वयोरित्यस्मादुपरिष्टाद्योज्यः ॥ ७८२ ॥

**विधिं विना श्रुतैकात्म्यस्तदर्थानुभवादृते ॥**
**उपायाज्ञतया कुर्याच्छास्त्रस्यार्थवादताम् ॥ ७८३ ॥**

तर्हि वस्तुनो माऽस्तु विध्यनुप्रवेशित्वं तद्विनाऽपि श्रौताद्वस्तुज्ञानात्फलसिद्धिरित्याशङ्क्याऽऽह । **विधिमिति** । प्रसंख्यानविध्यनभ्युपगमे श्रुततत्त्वोऽपि वस्तुवादिशास्त्रस्यामानतामापादयेत्प्रसंख्यानाख्यानुभवोपायस्यानभ्युपगमादितरतदुपायानभिज्ञत्वाच्छास्त्रमात्रात्तदर्थानुभवाभावाच्च तस्मात्प्रसंख्यानविधिरवैष्टव्यस्तं विना फलासिद्धेः शास्त्रामानत्वापत्तेस्तथा च शास्त्रादापातज्ञातवस्तुनो विध्यनुप्रवेशितेति भावः ॥ ७८३ ॥

**विधिनिष्ठेऽपि शास्त्रे स्यादसिद्धेर्वस्तुनो मितेः ॥**
**देवताध्यानवत्कल्प्यं फलमैकात्म्यवेदनम् ॥ ७८४ ॥**

उक्तविध्यधीने फले तस्य प्राधान्यादभिधाश्रुतिशेषत्वं कथमुक्तमित्याशङ्क्य विधिस्वातन्त्र्यपक्षे हीत्युक्तं प्रपञ्चयति । **विधीति** । प्रधानत्वे प्रसंख्यानविधेस्तत्त्वमादिशास्त्रे

१ क. 'तस्तदु' ।

च तच्छेषे तस्यान्यपरत्वात्प्रत्यक्षादिविरोधे ततो वस्तुनो मितेरसिद्धेर्विधेरैकात्म्यवेदनं फलं कल्प्यम् । यथा देवतोपास्तेस्तद्भावः फलं कल्प्यते नहि **देवो** भूत्वेत्यादिश्रुत्या तद्भावाधिगतिस्तस्यास्तदुपास्तिप्रधानत्वात्तद्बलादेव तद्भावानुवादित्वादतो वस्तुशास्त्रस्य प्रधानताविधेस्तद्गुणता यद्यपि फलहेतुतया विधिप्राधान्यं तथाऽपि तत्फलस्य वस्तुवेदनत्वाद्वस्तुविषयशास्त्रप्राधान्यं तत्क्रतुन्यायात्तु देवताध्यानस्य स्वप्राधान्यं न च प्रसंख्यानस्याप्रमाणस्य विहितस्यापि वस्तुवेदननिदानतेति नास्ति वस्तुशास्त्रस्यानुवादकत्वमित्यर्थः ॥ ७८४ ॥

**प्रतिपन्नात्मयाथात्म्यः प्रसंख्यानादि नेक्षते ॥**
**अज्ञस्तु श्रावितोऽप्यस्माद्विना नाऽऽप्नोति तत्फलम् ॥ ७८५ ॥**

शास्त्रावगतब्रह्मात्मभावस्यापि प्रसंख्यानाद्यपेक्षायां तेन ज्ञाततत्त्वोऽपि तदपेक्षेतेत्यनवस्थामाशङ्क्याऽऽह । **प्रतिपन्नेति** । प्रसंख्यानादिना ज्ञाततत्त्वो न पुनस्तदपेक्षते चेत्तर्हि शास्त्राज्ज्ञाततत्त्वोऽपि न तदपेक्षेताविशेषादित्याशङ्क्याऽऽह । **अज्ञस्त्विति** । असाक्षात्कृततत्त्वस्तत्त्वमसीति नवकृत्वः श्रावितत्त्वोऽपि प्रसंख्यानादेर्विना श्रवणफलं साक्षात्कारं नाऽऽप्नोति श्रुतवाक्यस्यापि तद्धीनस्य तदभावादिति भावः ॥ ७८५ ॥

**शास्त्रेऽस्मिन्वस्तुनिष्ठेऽपि प्रसंख्यानविधिं विना ॥**
**पुमर्थो लभ्यते नैवेत्यसावपि समाश्रितः ॥ ७८६ ॥**
**नान्वयव्यतिरेकाभ्यामैकात्म्यानुभवो भवेत् ॥**
**तत्सिद्धावेव तौ स्यातां स च ताभ्यामिति श्रयः ॥ ७८७ ॥**

वेदान्तेषु प्रसंख्यानविध्यपेक्षामुपसंहरति । **शास्त्रेऽस्मिन्निति** । अन्वयव्यतिरेकाभ्यामेव वस्तुसाक्षात्कारसिद्धौ किं प्रसंख्यानादिनेत्याशङ्क्य याथात्म्यावगमेऽशक्तेत्यत्रोक्तं विवृणोति । **नान्वयेति** । द्रष्टृदृश्यविवेकादिरूपावन्वयव्यतिरेकौ शास्त्रानपेक्षा स्वतन्त्रा युक्तिर्वस्तु नानुभावयतीत्यत्र हेतुमाह । **तत्सिद्धाविति** । तौ हि ज्ञाते भवतो न चान्यतो वस्तुज्ञानं स्वतन्त्राया युक्तेस्तद्धेतुत्वोपगमादतो वस्त्वनुभवे सत्यन्वयव्यतिरेकौ ताभ्यां चासाविति व्यक्तमन्योन्याश्रयत्वमित्यर्थः ॥ ७८६ ॥ ७८७ ॥

**यथैव विश्वजिद्यागपदे स्वार्थानुपालनम् ॥**
**कुर्वती स्वर्गकामेन गच्छतः सह मानताम् ॥ ७८८ ॥**

तर्हि शास्त्रयुक्तिभ्यामेव तत्त्वानुभवादनर्थकं प्रसंख्यानमित्याशङ्क्य तदपेक्षया ते बोधयतः स्वार्थमित्यत्र दृष्टान्तमाह । **यथेति** । अस्यार्थः । विश्वजिता यजेतेत्यत्र विश्वजिच्छब्दो गुणविधिः कर्मनाम वेति **संशये** कर्मविधाने गुणश्रुत्याऽऽनर्थक्यात्तद्विधौ तदपेक्षाश्रयविशेषार्पकतया कर्मश्रुतेरर्थवत्त्वात्तत्कर्तव्यताया मानान्तरापेक्षत्वाद्वाक्याप्रामाण्ये

१ क. °धान्यान्न च । २ ख. लक्ष्यते ।

प्राप्ते विधेर्भावार्थविषयतया स्वतन्त्वद्धि यानप्रतीतेर्विश्वजिच्छब्दस्य तन्नामत्वाद्वाक्यस्यान-पेक्षं प्रामाण्यमिति **प्रमाणलक्षणे** स्थितम् । तथा चैते पदे स्वार्थकर्मानुसारिणी स्वर्गका-मपदेन संबध्यमाने मानतां नियोगेऽश्नुवाते निरभिकारो हि विधिरिह श्रुतस्तत्र किं नियोज्योऽध्याह्रियतां न वेति **संदेहे** विषयेण कार्यस्यान्विताभिधानपर्यवसानादनध्या-हारे कार्यस्य कृतिसाध्यत्वेन तन्निरूप्यत्वात्तस्याश्च स्वसाध्यधात्वर्थनिरूप्यत्ववत्स्वाश्रय-नरनिरूप्यतायां दुर्वारत्वात्तद्द्वारा कर्तुरपि तस्मिन्नन्वयात्तस्य च स्वसंबन्धितया तद्बोद्धुरेव तत्संबन्धादभिधेयावसानार्थं नियोज्योऽध्याहार्य इति सिद्धे सर्वेषामेकस्य वाऽध्याहार इति वीक्षायामविशेषात्सर्वेषामिति प्राप्तावेकेनाऽऽकाङ्क्षाशान्तेरेकस्येति स्थिते यस्य कस्यचिद्वा स्वर्गकामस्य वेति विशयेऽविशेषादनियमे स स्वर्गः स्यात्सर्वान्प्रत्यविशि-ष्टत्वादित्यत्र स्वर्गकाम एवाध्याहार्यश्चतुर्थे निर्धारितस्तथा चानयोस्तत्संबन्धयोर्मान-तेति ॥ ७८८ ॥

**तथैव शास्त्रयुक्ती स्वाभिधेयार्थपालनम् ॥**
**कुर्वत्यौ मानतां यातः प्रसंख्यानेन नान्यथा ॥ ७८९ ॥**

दृष्टान्तस्थमर्थं दार्ष्टान्तिके योजयति । **तथेति** । यथोक्तदृष्टान्तेन शास्त्रयुक्ती वस्त्व-नुसारिण्यौ प्रसंख्यानेन सह प्रतिपद्येते मानत्वमित्यर्थः । प्रसंख्यानेन सहैव शास्त्रयु-क्त्योर्वस्तूनि मानता तत्साहित्याभावे परोक्षमर्थमावेदयन्त्यौ शब्दयुक्ती साङ्क्षत्वान्नाश्नु-वाते मानत्वमित्याह । **नान्यथेति** ॥ ७८९ ॥

**एवमैकात्म्यतात्पर्ये शास्त्रस्येष्टेऽपि युक्तिभिः ॥**
**केचित्कार्यमपीच्छन्ति तदर्थं तन्न युज्यते ॥ ७९० ॥**

प्रसंख्यानवादमुपसंहरति । **एवमिति** । शास्त्रस्य वस्तुनि तात्पर्ये स्वीकृतेऽपि पूर्वो-क्तप्रकाराभिर्युक्तिभिर्वेदान्तेषु कार्यमपि प्रसंख्यानविषयं केचिदिच्छन्तीति योजना । तद-र्थमित्यैकात्म्यानुभवार्थमित्यर्थः । प्रसंख्यानवादे दोषं संभावयति । **तन्नेति** ॥ ७९० ॥

**प्रमात्रादित्रयं यस्मात्संविन्मात्रवपुर्भृतः ॥**
**सिद्ध्यत्यसिद्धं सत्तत्सिद्धौ किमपेक्षते ॥ ७९१ ॥**

कथमिदमयुक्तमिति चेत्तत्र वस्तुसिद्ध्यर्थं वा तद्गतपारोक्ष्यनिवृत्त्यर्थं वा तदसिद्धि-निरासार्थं वा तत्तमोऽपोहार्थं वा तदापरोक्ष्यार्थं वा तस्यैव मोक्षार्थं वा प्रसंख्यानविधा-नमिति विकल्प्याऽऽद्यं दूषयति । **प्रमात्रादीनि** । तत्साधकस्यान्यानपेक्षत्वे हेतुमाह । **संविदिति** । मात्रादौ सतामस्फुरत्योराभासत्वं सूचयति । **सिद्ध्यत इति** । तस्य स्वतः-स्फूर्त्याद्यभावो जाड्यं हेतुमाह । **असत्सिद्धौ इति** ॥ ७९१ ॥

**परोक्षमपि सद्वस्तु यत्साक्ष्यात्मस्वरूपतः ॥**
**साक्षादात्मेव चाऽऽभाति तस्मिन्पारोक्ष्यधीः कथम् ॥ ७९२ ॥**

**द्वितीयं** निरस्यति[2] । **परोक्षमिति** । अहंकाराद्यनात्मवस्तु परोक्षमपि येनानुभूयमानत्वाद्यस्य च तदात्मत्वात्साक्षादिवाऽऽत्मेव च स्फुरति तस्मिन्पारोक्ष्यबुद्धेरयुक्तत्वान्न तद्गतपारोक्ष्यध्वंसार्थमपि प्रसंख्यानविधानमित्यर्थः ॥ ७९२ ॥

**अप्यज्ञानादि निःशेषप्रमेयव्यवधानकृत् ॥**
**स्वतः प्रसिद्धात्संसिध्येत्तदसिद्धिः कुतो भवेत् ॥ ७९३ ॥**

**तृतीयं** निराह । **अपीति** । आदिशब्देन संशयमिथ्याज्ञाने कथ्येते । अज्ञानादेः सर्वमेयावरणस्यापि स्वप्रकाशवस्तुवशादेव सिद्धेः साधकवस्तुसिद्धेरयोगान्न तन्निरामार्थमपि प्रसंख्यानं विधेयमित्यर्थः ॥ ७९३ ॥

**स्वमहिम्नैव यः सिद्धः सर्वप्रत्यक्तमश्च यः ॥**
**तत्तमोहतितः कार्यं किमन्यत्तत्प्रमाणजम् ॥ ७९४ ॥**

**चतुर्थं** प्रत्याह । **स्वमहिम्नेति** । देहादेः स्वप्रत्यगधीनतया सिद्धिवदात्मनोऽपि स्वान्तरवस्तुनिबन्धनसिद्धित्वान्न स्वमहिमसिद्धिरित्याशङ्क्याऽऽह । **सर्वेति** । तत्र प्रवृत्तमानजं फलं तद्गताज्ञानहानिरेवातो वस्तुगततमोध्वस्तेर्मानकार्यत्वान्न तदर्थमपि प्रसंख्यानविधानमित्याह । **तत्तम इति** ॥ ७९४ ॥

**मात्रादित्रयहानेऽपि हानसाक्षितयेक्ष्यते ॥**
**येनासावविलुप्ताक्षस्तत्पारोक्ष्यं कथं भवेत् ॥ ७९५ ॥**

**पञ्चमं** प्रत्याह । **मात्रादीति** । मात्रादेर्भोक्त्रादेः कर्त्रादेश्च भावाभावसाक्षित्वेन नित्यचित्प्रकाशः प्रत्यगात्मा येन हेतुना श्रुत्यादौ गम्यते तेन तस्य परोक्षत्वायोगादापरोक्ष्यस्य स्वरूपत्वान्न तदर्थमपि विधिरित्यर्थः ॥ ७९५ ॥

**भावनावर्त्मनैकात्म्ये विध्यर्थासंभवो यथा ॥**
**अधिकारपरीक्षायां तथा प्राक्प्रतिपादितम् ॥ ७९६ ॥**

नन्वभ्युदयवन्मुक्तिमित्यारभ्य विधिमार्गेऽधिकारस्य परीक्षा वर्तते न चांशत्रयशून्येह भावनेष्टा परीक्षकैरित्यधिकारवार्तिकेषु शाब्दबुद्ध्युत्तरभाव्यभ्यासस्य विधेयत्वमाशङ्क्य समाधिरुक्तोऽतस्तद्विधेरिहापि निरासे पुनरुक्तिरत आह । **भावनेति** ! **वार्तिककारमतेन** वेदान्तेषु विधिमाशङ्क्य तत्कृत्याभावमधिकारवार्तिकेष्वनर्थको विधिस्तस्मादित्यादाववोचमित्यर्थः ॥ ७९६ ॥

**नियोगपक्षमाश्रित्य विध्यर्थासंभवो यथा ॥**
**ऐकात्म्यसिद्धौ यत्नेन तथाऽत्र प्रतिपाद्यते ॥ ७९७ ॥**

---

१ ख. °त्साक्षात्स्वात्मरू° । २ ख. निराह ।

इह तु ब्रह्मदत्तादिमतेन ज्ञानाभ्यासे विधिमाशङ्क्य निरस्यते तन्न पुनरुक्तिरित्याह। **नियोगेति** ॥ ७९७ ॥

**ऐकात्म्यस्य स्वतो मुक्तेरज्ञानात्तस्य बद्धता ॥**
**साध्येऽर्थे साधनापेक्षा सिद्धे तन्न व्यपेक्षते ॥ ७९८ ॥**

**षष्ठं** दूषयति । **ऐकात्म्यस्येति** । न विध्यपेक्षेति शेषः । आत्मनो बद्धत्वबुद्धिस्तर्हि कथं तत्राऽऽह । **अज्ञानादिति** । आद्ये पादे फलितमाह । **साध्य इति** ॥ ७९८ ॥

**तमोमात्रान्तरायत्वादैकात्म्याख्यस्य वस्तुनः ॥**
**असाध्यसाधने तस्मिन्काऽपेक्षा भावनां प्रति ॥ ७९९ ॥**

स्वतःसिद्धतया मुक्तेः साधनानधीनत्वे ज्ञानस्यापि वैयर्थ्यमित्याशङ्क्याज्ञानादित्यादावभिप्रेतमर्थमाह । **तमोमात्रेति** । साध्यसाधनविभागशून्ये वस्तुनि विधेयाभ्यासापेक्षाभावेऽपि विरोधीभूतं तमस्तिरयितुं ज्ञानमिति भावः ॥ ७९९ ॥

**यदाऽनुभवकामस्य कार्यं साध्यं प्रतीयते ॥**
**प्रसंख्याने तदैकात्म्यतात्पर्यं कथमुच्यते ॥ ८०० ॥**

साक्षान्मोक्षोपायत्वेन प्रसंख्यानविध्यभावेऽपि तस्य ज्ञानशेषत्वात्तद्द्वारा तदुपायतेति युक्तं मोक्षार्थं विधानमिति चेन्नेत्याह । **यदेति** । साक्षात्कारमाकाङ्क्षतो यदा प्रसंख्याने विधिर्निश्चितस्तदा वेदान्तानामैकात्म्ये न तात्पर्यं तेषामुक्तविधिपरत्वादित्यर्थः ॥ ८०० ॥

**कार्यं चान्यपरं चेति द्वयमेतद्विरुध्यते ॥**
**साध्यं हि सर्वदा कार्यमन्यत्तस्य प्रसिद्धये ॥ ८०१ ॥**

प्रसंख्यानविधेर्वस्तुनिष्ठवाक्यशेषत्वात्तदेकवाक्यानामपि वेदान्तानामैक्ये पर्यवसानमुक्तमित्याशङ्क्याऽऽह । **कार्यं चेति** । भूतभव्यन्यायेन विरोधं साधयति । **साध्यं हीति** ॥ ८०१ ॥

**विशेषणं नियोज्यस्य भवन्ननुभवः फलम् ॥**
**विषयः[1] सत्प्रसंख्यानमनुभूतेर्न साधनम् ॥ ८०२ ॥**

ननु श्रवणादिवन्निदिध्यासनमपि प्रसंख्यानाख्यमनुभवसाधनत्वेन विधीयते तथा च तद्विधेस्तत्परत्वमावश्यकमित्याशङ्क्याभ्युपेत्य[2] दूषयति । **विशेषणमिति** । अनुभवकामः प्रसंख्यानं कुर्यादिति स्वीयत्वेन कार्यं जानतो नियोज्यस्य व्यावर्तको भवन्ननुभवो विहितप्रसंख्यानफलमिति त्वयोच्यते । न च नियोगस्य प्रतीत्यनुबन्धितया विषयभूतं प्रसंख्यानं वस्तु साक्षात्कारयति तस्य मानफलत्वात्प्रसंख्यानस्य चामानत्वादित्यर्थः ॥ ८०२ ॥

---

१ क. ग. विषयं । २ ख. 'धेर्वस्तुपर' ।

**भावार्थविषयं कार्यं प्रसंख्याने कथं भवेत् ॥**
**आवृत्तिर्हि प्रसंख्यानं शब्दयुक्त्योरिति स्थितम् ॥ ८०३ ॥**

प्रसंख्यानं विषयो नियोगस्येत्यङ्गीकृत्य तस्यानुभवोपायत्वमपास्तमिदानीं तस्य तद्विषयत्वमेव नास्तीत्याह । **भावार्थेति ।** तस्यापि भावार्थत्वाद्यागवत्तद्विषयतेति चेन्नेत्याह । **आवृत्तिरिति ।** श्रवणमननयोरावृत्तिस्त्वया प्रसंख्यानमित्युपेतमतस्तस्य क्रियावृत्तित्वान्न क्रियात्वमित्यर्थः ॥ ८०३ ॥

**अथ श्रवणभावार्थविषयं कार्यमिष्यते ॥**
**तदा श्रवणमेव स्याद्विशिष्टो विषयस्तव ॥ ८०४ ॥**

मा तर्हि वेदान्तेषु प्रसंख्याने विधिर्भूत्तथाऽपि श्रवणमननयोर्भावार्थत्वात्तद्विषयः स भविष्यति । तथाच कथं ते विधिमतिक्रमेरन्निति शङ्कते । **अथेति ।** तत्र प्रतिज्ञाक्षतिरित्याह । **तदेति ।** त्वया हि श्रवणमननयोरावृत्तिर्विधेयत्वेनेष्टा तत्त्यागेन श्रवणाद्येव विधेर्विशिष्टविषयतया यदेष्टं तदा ते प्रतिज्ञाहानिरिष्यते चास्माभिः श्रवणादौ विधिर्वस्तुप्रकरणेऽपि वाक्यभेदादुक्तं च मुमुक्षुप्रवृत्तेः शास्त्रीयत्वाय श्रवणादेर्विधेयत्वमिति भावः ॥ ८०४ ॥

**दाक्षायणादावावृत्तेर्यत्रापि फलमुच्यते ॥**
**सगुणात्पौर्णमासादेः फलं तत्रापि नो गुणात् ॥ ८०५ ॥**

ननु दाक्षायणादौ गुणात्फलमिष्टं **यथाऽऽहुः**—प्रकृतयोर्दर्शपूर्णमासयोर्गुणात्फलमुच्यते न यागान्तरं विधीयत इति तथा च प्रकृतेऽपि श्रवणाद्यावृत्तिगुणाद्विधिद्वारा साक्षात्कारलाभान्न प्रतिज्ञाहानिस्तत्राऽऽह । **दाक्षायणादाविति ।** यत्रापि दाक्षायणाग्निहोत्रादौ विहितावृत्तिवशात्फलमिष्यते तत्राप्यावृत्तिगुणकाद्दाक्षायणादिशब्दितदर्शादिभावार्थादेव विधीयमानादिष्टस्वर्गादिलाभो न गुणमात्रादित्यक्षरार्थः । **अयं भावः**—"अयनेषु चोदनान्तरं संज्ञोपबन्धात्" [ पू० मी० २ । ३ । ९ ] दर्शपूर्णमासयोर्दाक्षायणयज्ञेन सुवर्गकामो यजेत साकंप्रस्थायीयेन यजेत पशुकामः संक्रमणयज्ञेन प्रजाकामो यजेतेति श्रुतं तत्र कार्यान्तरं विधीयते प्रकृतयोरेव वा दर्शपूर्णमासयोर्गुणविधिरिति संशय्यायनेष्वावृत्तिगुणकेषु कर्मसु श्रुतेषु सत्सु संज्ञाभेदात्कर्मान्तरविधिरिति **पूर्वपक्षयित्वा** दक्षस्योत्साहवतो यजमानस्येमे दाक्षास्तेषामयनमावृत्तिरित्यावृत्तिगुणयोगात्प्रकृतदर्शादावेव दाक्षायणशब्दस्य वृत्तेः **स वै दक्षो** नाम तद्यदनेन सोऽग्रेऽयजत तस्माद्दाक्षायणयज्ञ इत्याख्यायत इति च **श्रुतेः** साकंप्रस्थायीयशब्दस्य च सहप्रस्थानगुणयोगात्तत्रैव वृत्तेर्न कर्मान्तरविधिरिति **भेदलक्षणे राद्धान्तितम् । उक्तं हि**—"विकारो वा प्रकरणात्" [पू०मी० २ । ३ । ८] इति । दाक्षायणयज्ञादिर्दर्शादेरेव विकारस्तथा हि प्रकरणमनगृहीतं स्यादिति

सूत्रार्थः । तदेवं प्रकृतात्कर्मणः सगुणात्फलमिति स्थिते श्रवणाद्यावृत्तिरपि केवला वस्तु-साक्षात्काराय न विधिमर्हतीति ॥ ८०५ ॥

**गुणो यत्रापि दध्यादिः कार्यावच्छेदको मतः ॥**
**धात्वर्थावेशतः सोऽपि प्राप्ते चास्मिन्न तु स्वतः ॥ ८०६ ॥**

अथ दध्ना जुहोतीत्यादौ दध्यादिगुणस्य भावार्थत्वाभावेऽपि विधेयत्ववदावृत्तेरपि भावार्थत्वं विना विधिरिष्यतामत आह । **गुण इति ।** यत्रापि वाक्ये दध्यादिर्गुणो विधेयत्वेनेष्टस्तत्रापि स धात्वर्थोपरागादेव कार्यमवच्छिनत्ति तदनुपरक्तस्य तस्य विध्यनुपलम्भादतोऽत्रापि नाक्रियावृत्तिमात्रं विशिष्टफलार्थं विधेयमित्यर्थः । श्रवणाद्यावृत्तिविधेर्दध्यादिविधेश्च वैषम्यान्तरमाह । **प्राप्ते चेति ।** अग्निहोत्रं जुहोतीति प्राप्ते जुहोत्यर्थे दध्यादिवाक्यस्थाख्यातेनानूद्यमाने तदवच्छेदकत्वेन दध्यादिर्विधीयते न त्वप्राप्ते जुहोत्यर्थे स्वतो भावार्थस्पर्शनं विना तद्विधिरित्यर्थः । स्थितं हि **द्वितीये**—"आघाराग्निहोत्रमरूपत्वात्"[पू०मी० २।२।१३]अग्निहोत्रं जुहोतीत्युक्त्वा दध्ना जुहोतीत्यादि श्रुतमाघारमाघारयतीति चोक्त्वा संततमाघारयतीत्यादि तत्र दध्ना जुहोतीति संततमाघारयतीत्यादिभिर्गुणविशिष्टानि कर्माणि विधीयन्ते तेषां चाग्निहोत्राघारशब्दौ समुदायानुवादौ किं वाऽऽभ्यामपूर्वे कर्मणी विधीयेते इति तत्रेतरे गुणविधय इति **संशये** सत्यग्निहोत्राघारयोरग्निहोत्रादिवाक्ये द्रव्यदेवताविशिष्टरूपादृष्टेर्गुणवाक्येषु च तद्दृष्टेस्तेष्वेव तद्विधिसिद्धेरग्निहोत्राघारशब्दौ समुदायानुवादाविति प्राप्ते होमाघारौ प्रयोक्तव्याविति जुहोतीत्यादिशब्दार्थस्य प्रयोगरूपत्वात्कर्मान्तरचोदनैवात्र विवक्षिता तत्संनिधानाद्गुणार्थेन दध्ना जुहोतीत्यादिना पुनः श्रुतिर्जुहोतेरुच्चारणं वाऽनुवादो गुणसंबन्धार्थः । तस्मादग्निहोत्रं जुहोत्याघारमाघारयतीति कर्मविधिस्तत्रैव दध्यादिवाक्यैर्गुणविधिरिति **राद्धान्तः ।** **उक्तं च**—"चोदना वा शब्दार्थस्य प्रयोगभूतत्वात्संनिधेर्गुणार्थत्वेन पुनः श्रुतिः"[पू०मी० २।२।१६] इति । तथाच प्राप्तभावार्थोपरागमन्तरेणाऽऽवृत्तिमात्रे कुतो विधिरिति भावः ॥ ८०६ ॥

**श्रवणादेर्न च प्राप्तिर्गुणान्न च फलं श्रुतम् ॥**
**पश्येदिति हि धात्वर्थः केवलो विषयः श्रुतः ॥ ८०७ ॥**

अस्तु तर्हि समाहितो भूत्वा पश्येदित्यत्रापि प्राप्तश्रवणाद्यनुवादेन तदावृत्तिविधिस्तत्राऽऽह । **श्रवणादेरिति ।** शान्तादिवाक्ये श्रवणादेर्न प्राप्तिस्तद्वाचिपदाभावान्न च श्रोतव्यादिवाक्ये वा पाण्डित्यादिवाक्ये वा पण्डितो मेधावीत्यादौ वा तद्विजिज्ञासस्वेत्यादौ वा प्रसिद्धश्रवणाद्यनुवादेन तद्विशिष्टावृत्तिविधिरनुवादकपदस्याऽऽवृत्तिवाचिशब्दस्य चात्राभावादित्यर्थः । आवृत्तिगुणात्फलाश्रवणादपि न तस्य विधेयत्वं दध्यादेस्तु

१ क. 'यारूपात्' ।

विशिष्टफलश्रुतेर्भावोपरक्तस्य विधेयत्वं दध्नेन्द्रियकामाधिकरणे सिद्धमित्याह । **गुणादिति** । न च विश्वजिन्न्यायेन फलकल्पना संप्रतिपन्ने गुणविधावसति न्यायानवतारान्न च दर्शनं गुणफलं तस्य श्रवणादिफलत्वान्नापि मुक्तिस्तत्फलं ज्ञानफलत्वादिति भावः । कस्य तर्हि पश्येदिति विधिः । नहि श्रवणादेरेष विधिस्तस्यान्वयव्यतिरेकसिद्धदर्शनसाधनत्वस्य विध्यनपेक्षत्वात्तदपेक्षत्वेऽपि तस्यान्यत्रैव विहितत्वान्न च शमादेरयं विधिः पश्यतेरुपरिष्टात्त्वदृष्टेर्न च दर्शनस्यैव तस्य त्वया विधेयत्वानुपगमात्तत्पारिशेष्यादावृत्तिविधिर्नेत्याह । **पश्येदिति हीति** । दर्शनस्यैव विधिविषयत्वश्रुतेरावृत्तेर्नात्र विधेयतेत्यर्थः ॥ ८०७ ॥

**नापि तल्लक्षितावृत्तिर्विधेया श्रुतहानतः ॥**
**कार्यं यन्नापि भावार्थात्तदावृत्तिगुणात्कथम् ॥ ८०८ ॥**

यत्तु दर्शनस्याविधेयत्वात्तदुपलक्षिताऽऽवृत्तिर्विधेयेति तद्दूषयति । **नापीति** । दर्शने श्रुतं विधिं विहायाश्रुतावृत्तिविधिर्न युक्तः श्रुतहान्यश्रुतकल्पनापत्तेरित्यर्थः । नन्वश्रुतमपि श्रुतस्यासंभवे स्यान्न चात्र श्रुतो दृष्टिविधिर्युक्तस्तस्याः स्वरूपत्वेन फलत्वेन च विध्यनर्हत्वस्योक्तत्वादतो नात्र श्रुतहान्यादिदूषणमत आह । **कार्यमिति** । यत्फलं क्रियातो न क्रियते तन्न तादृकक्रियावृत्तिरूपाद्गुणाद्भवति नहि शीतभीतः शिशिरतरसलिलावगाहनतो दुःखनिवृत्तिमप्रतिपद्यमानस्तदावृत्त्या तद्ध्वस्तिं प्रतिलभतेऽतः शाब्दज्ञानादनुत्पन्नः साक्षात्कारस्तदावृत्तेर्भवतीत्यमानत्वाद्दृष्टिविधेः श्रुतस्य त्यागेऽपि नाश्रुतावृत्तिः साक्षात्काराय विधेयेति भावः ॥ ८०८ ॥

**स्वयं प्रबोधितेऽप्यर्थे यदि युक्त्याद्यपेक्षते ॥**
**शास्त्रं सापेक्षमेवं स्यात्स्वतः प्रामाण्यवर्जनात् ॥ ८०९ ॥**

प्रसंख्यानस्य साक्षात्कारोपायतया विधेयत्वं निराकृत्य श्रुतेर्ज्ञातात्मवृत्तान्त इत्यादिना शास्त्रं स्वबोधितेऽप्यर्थे युक्त्याद्यपेक्षमित्युक्तमनुवदति । **स्वयमिति** । शास्त्रस्य स्वार्थे युक्त्याद्यपेक्षत्वे स्वतःप्रामाण्यहानात्पौरुषेयवाक्यवद्वेदवाक्यं सापेक्षं सदप्रमाणं स्यादिति दूषयति । **सापेक्षमिति** ॥ ८०९ ॥

**युक्त्यादि मान्तरं नो चेन्मानांशत्वेन तत्स्थितेः ॥**
**संभूय पादाः सर्वेऽपि ह्यैकात्म्यं बोधयन्ति नः ॥ ८१० ॥**

युक्त्यादेर्मानान्तरत्वाभावात्तदपेक्षणेऽपि तत्त्वमादेर्नाप्रामाण्यमिति शङ्कते । **युक्त्यादीति** । तस्य मानान्तरत्वाभावे हेतुमाह । **मानेति** । चतुष्पात्त्वं मानांशत्वेन युक्त्यादेः स्थितं साधयति । **संभूयेति** । शब्दयुक्तिप्रसंख्यानात्मानश्चत्वारोंऽशा मिलित्वैव जिज्ञासूनां वस्तु ज्ञापयन्ति । **यथोक्तम्**—

१ क. 'शान्तदृष्टे'।

"शब्दयुक्तिप्रसंख्यानैरात्मना च मुमुक्षवः ।
पश्यन्ति मुक्तमात्मानं प्रमाणेन चतुष्पदा" इति ॥

तन्न स्वतन्त्रमानता तेषामित्यर्थः ॥ ८१० ॥

**न संभूय यतः पादास्तैलवर्त्यग्नयो यथा ॥**
**मितेः स्वरूपलाभाय न तु मेयोपलब्धये ॥ ८११ ॥**

चतुर्णां पादानां संभूय वस्तुबोधित्वं दूषयति। **न संभूयेति।** यथा तैलादयो मिलित्वा दीपहेतवः स चार्थप्रकाशकस्तथा पादाश्चत्वारो मिलिता मितेः स्वरूपं लम्भयन्ति सा च मेयोपलब्धिहेतुरतो न पादा वस्तूपलम्भे कारणानीत्यर्थः ॥ ८११ ॥

**संभूय यदि सर्वाणि फलमेकं प्रतन्वते ॥**
**प्रत्येकं प्रमितेर्वृद्धिरित्येतत्स्यात्तदा मृषा ॥ ८१२ ॥**

ननु ते विषयमेवोपलम्भयन्ति तेषामिति स्वरूपहेतुत्वे हेत्वभावादिति शङ्कते । **संभूयेति** । किमेते विषयोपलब्धिमेव कुर्वन्ति किंवा प्रमाणमपि नाऽऽद्य इत्याह । **प्रत्येकमिति** । यदा पादानां विषयोपलम्भकत्वमेव तदा प्रमाणस्यैकैकस्मात्पादादभिवृद्धिरिति प्रसंख्यानवादिवचो मृषा स्यादतो भवद्वाक्यमेव पादानां प्रमाणस्वरूपहेतुत्वे हेतुरित्यर्थः ॥ ८१२ ॥

**संभूय फलकारित्वं क्रियाकारकसंगतेः ॥**
**स्वरूपलाभतो नान्यदभिव्यक्तावपेक्षते ॥ ८१३ ॥**

द्वितीयं दूषयति। **संभूयेति।** क्रिया मानं तदर्थानां कारकाणां मिथःसंगतियोग्यत्वात्तेषां मिलित्वा मानकर्तृत्वं युक्तम् । तथाच पादानां मानकर्तृत्वे नार्थोपलम्भकत्वमपर्यायेण व्यापारद्वयायोगान्न च व्यापारक्रमः शब्दादिष्वनभ्युपगमादिति भावः । ननु पादा यद्यपि मितिं कुर्वन्ति तथाऽपि तेभ्यो भूता सा सहकार्यभावे नार्थं भासयेदतो मानान्मेयबुद्धावपि पादाः सहकारिणोऽत आह । **स्वरूपेति।** मानं स्वजन्मातिरेकेण स्वार्थप्रकाशने सहायान्तरं नापेक्षते स्वयंशक्तत्वान्न च पादानां क्रमाक्रमाभ्यां व्यापारद्वयमित्युक्तमित्यर्थः ॥ ८१३ ॥

**तैलवर्त्यग्नयो यस्मात्प्रदीपोत्पत्तिकारणम् ॥**
**लब्धात्मलाभो दीपोऽर्थं स्वयमेव प्रकाशयेत् ॥ ८१४ ॥**

संभूयेत्यादिपूर्वार्धार्थे दृष्टान्तगर्भं हेतुमाह । **तैलेति** । ते मिथोयुक्ता दीपहेतवो यतो दृश्यन्तेऽतस्तेनैव न्यायेन मानहेतूनामपि शब्दादीनामन्योन्यं संगतियोग्यानां मिलितानां प्रमाजनकत्वमित्यर्थः । स्वरूपलाभतो नान्यदित्याद्युत्तरार्धे दृष्टान्तमाह। **लब्धेति ।** यथा

१ ख. प्रकुर्वते ।

स्वहेतुसमासादितस्वभावो दीपोऽन्यनिरपेक्षः सन्विषयं प्रकाशयति तथा शब्दादिभ्यो लब्धात्मकं मानं स्वयमेव स्वार्थं भासयेदित्यर्थः ॥ ८१४ ॥

**शब्देन ज्ञाप्यते यद्वत्तथैव यदि युक्तिभिः ॥**
**व्यर्थताऽथ विशेषश्चेत्संप्राप्ता भिन्नमानता ॥ ८१५ ॥**

शब्दादीनामेव मानत्वान्न तदुत्पत्तिहेतुतेति चेत्किं तेषां संभूयमानत्वं प्रत्येकं वाऽऽद्ये यावानर्थः शब्देन भास्यते तावानेव युक्त्यादिभिरपि ततोऽन्यो वा नाऽऽद्य इत्याह । **शब्देनेति** । शाब्देऽर्थे युक्त्यादीनामकिंचित्करतेत्यर्थः । कक्षान्तरमुत्थाप्य प्रत्याह । **अथेत्यादिना** । शाब्दादन्यो युक्त्यादीनामर्थश्चेन्मेयभेदात्तेषां भिन्नमानतया संभूयमानत्वासिद्धिरित्यर्थः ॥ ८१५ ॥

**स्वप्नादियुक्तिभिश्चेत्तल्लौकिकीभिः प्रसाध्यते ॥**
**अवैदिकं भवेद्वस्तु स्याच्च शास्त्रानुवादता ॥ ८१६ ॥**

प्रत्येकं तेषां मानत्वेऽपि लोकसिद्धाभिः स्वप्नादिसंबन्धाभिरन्वयव्यतिरेकाख्याभिर्युक्तिभिर्वा ब्रह्म भास्यते वेदैकगम्याभिर्वा नाऽऽद्य इत्याह । **स्वप्नादीति** । अवस्थात्रयं व्यभिचारान्मिथ्याऽऽत्मा त्वव्यभिचारादमिथ्येत्यादिलौकिकयुक्तिभिर्ब्रह्म भास्यते चेदवैदिकत्वं तत्सिद्धं ब्रह्मानुवादित्वे च तत्त्वमादेरनपेक्षप्रामाण्यासिद्धिरित्यर्थः ॥ ८१६ ॥

**वैदिकत्वेऽपि युक्तीनामागमार्थप्रबोधतः ॥**
**अनुवादत्वमेव स्यात्स्याच्च शास्त्रादभिन्नता ॥ ८१७ ॥**

द्वितीयं प्रत्याह । **वैदिकत्वेऽपीति** । वस्तुप्रकाशित्वेनेष्टयुक्तीनां वेदैकगम्यत्वेऽपि तासामागमिकार्थविषयत्वादनुवादत्वान्न मानांशतेत्यर्थः । युक्तीनां वैदिकत्वे शास्त्राद्भिन्नत्वासिद्धेर्मानस्य त्रिपात्त्वप्रसङ्गाच्चतुष्पात्त्वपक्षक्षतिरिति दोषान्तरमाह । **स्याच्चेति** । **उक्तं हि**—

"मीमांसासंज्ञकस्तर्कः सर्वो वेदसमुद्भवः ।
सोऽतो वेदोरुमाप्रासकाष्ठाम्बुलवणाप्तिवत्" इति ॥ ८१७ ॥

**आवृत्तिश्च प्रसंख्यानं कुर्यात्सातिशयं कथम् ॥**
**न ह्यावृत्तौ प्रमाणस्य प्रमेयेऽतिशयो यतः ॥ ८१८ ॥**

युक्तीनां शब्दसहायत्वमपोह्य प्रसंख्यानस्य तदपोहनादौ तदीयस्वरूपमाह । **आवृत्तिश्चेति** । सा च शब्दस्य सहायत्वेनोच्यमाना तद्विषयेऽतिशयमाधत्ते न वा नाऽऽद्य इत्याह । **कुर्यादिति** । शब्दावृत्तिः शाब्देऽर्थे नातिशयहेतुरित्यत्र हेतुमाह । **न हीति** । घटादिष्वदृष्टेरिति शेषः । यतो वैयर्थ्यं प्रसंख्यानस्य स्यादतो न द्वितीय इत्याह । **यत इति** । न च शब्दे तदावृत्तेरतिशयाधायित्वं तत्राऽऽहितातिशयस्य

१ क. ग. °प्रधानतः ।

तदीयस्पष्टताग्रहानतिरेकात्तस्य च कदाचिदावृत्तिं विनाऽपि संभवात्तत्र चाऽऽवृत्तेरर्थव-त्त्वेऽपि मेये तदानर्थक्यमेवेति भावः ॥ ८१८ ॥

**यत्रापि चान्धकारादिदोषात्क्रमविनिश्चयः ॥**
**तत्रापि भिन्नमेयत्वान्नैव संभूयमानता ॥ ८१९ ॥**

ननु मन्दान्धकारे दूरदेशे वाऽवस्थितार्थेषु मानावृत्त्या क्रमेण निश्चयादावृत्तिरर्थवती-त्याशङ्क्याऽऽह । **यत्रेति** । तस्याः साफल्येऽपि मानान्न संभूयकारिता मेयभेदात्प्रत्येकं मानत्वे चैकमानावृत्त्यभावान्न तदर्थवत्तेत्यर्थः ॥ ८१९ ॥

**पूर्वं वस्त्विति विज्ञानं प्राण्ययं मानुपस्तथा ॥**
**पुरुषोऽयमथ श्यामो डित्थ इत्यर्थभिन्नता ॥ ८२० ॥**

भिन्नमेयत्वमुदाहरति । **पूर्वमिति** ॥ ८२० ॥

**परिच्छेदफलत्वं हि मानत्वं तच्च भिद्यते ॥**
**तदभावे तु पूर्वेषामुत्तरस्यैव मानता ॥ ८२१ ॥**

तत्रार्थभेदेऽपि मानाभेदादेकमेव तदावर्त्यमानं निश्चायकमित्यावृत्त्यर्थवत्तेति चेन्ने-त्याह । **परिच्छेदेति** । प्रत्यर्थं परिच्छेदभेदात्तद्धेतुत्वस्य मानत्वस्यापि भेदान्नैकमाना-वृत्त्या निराकाङ्क्षनिश्चयोत्पत्तिरित्यर्थः । डित्थज्ञानस्यैवान्तिमस्य परिच्छेदफलत्वं न पूर्वेषामिति मानाभेदमाशङ्क्याऽऽह । **तदभावे त्विति** । प्राचीनज्ञानानां परिच्छेदफल-विकलानाममानत्वात्तत्फलवतोऽन्त्यज्ञानस्य तथात्वान्नाऽऽवृत्तिर्नापि मानानां संभूयकारि-तेत्यर्थः ॥ ८२१ ॥

**अथ मेयप्रभेदेऽपि प्रमाणैकत्वमिष्यते ॥**
**वस्तुग्राहितयाऽक्षादेरैकार्थ्येऽभिन्नमानता ॥ ८२२ ॥**

वस्त्वादिज्ञानेष्ववान्तरविषयभेदेऽपि सर्वत्र वस्तुमात्रस्याभिन्नस्यानुसंधानान्मानाभेदा-त्तच्च भिद्यत इत्ययुक्तमिति शङ्कते । **अथेति** । तथा चैकस्यैवाऽऽवृत्त्या वस्तुनिश्चयसि-द्धिरित्यर्थः । अतिप्रसक्त्या परिहरति । **वस्त्विति** । वस्तुग्राहितयेत्युभयतः संबन्धः । प्रत्यक्षादिमानपञ्चकस्यापि वस्तुविषयत्वादेकार्थत्वे सत्येकमानता स्यादित्यर्थः ॥ ८२२ ॥

**साध्यमानं प्रसंख्यानं यागवत्साधयेत्फलम् ॥**
**कारकं ज्ञापकं शास्त्रं तयोः स्यादेकता कथम् ॥ ८२३ ॥**

प्रसंख्यानस्य शब्दे तद्विषये चातिशयानाधायिनो न शब्दसहायतेत्युक्त्वा तत्रैव हेत्वन्तरमाह । **साध्यमानमिति** । कारकत्वज्ञापकत्वेन स्थितयोः प्रसंख्यानशास्त्रयोर्नै-कवाक्यतेत्याह । **तयोरिति** ॥ ८२३ ॥

---

१ ख °न्नैकं । २ क. ग. हि । ३ क. ग. °मता मता

**प्रमाताऽऽत्मा न मानांशो यद्ययं व्यावहारिकः ॥**
**परश्चेत्स प्रमेयः स्यात्कथं चानुभवः फलम् ॥ ८२४ ॥**

युक्तिप्रसंख्यानयोः शब्दसहायत्वं निराकुर्वता मानांशत्वं निरस्तं यत्पुनरात्मा च मानांश इति तत्र किमसौ संसारी किं वाऽसंसारीति विकल्प्याऽऽद्यमनूद्य दूषयति । **प्रमातेति** । यदि व्यवहारमनुसरन्नात्मा संसारी मानांशो विवक्षितस्तदा तस्य संसारिणो मानाश्रयस्य न तदंशताऽऽश्रयाश्रयिभावस्यात्यन्तभेदाभेदान्वादंशांशिनोश्च तदभावादित्यर्थः । कल्पान्तरमनुभाष्य दूषयति । **परश्चेदिति** । नहि मेयस्य मानांशता विषयविषयित्वस्यैकत्रायोगादित्यर्थः । चतुष्पान्मानमपनीय तत्फलमपनयति । **कथं चेति** ॥ ८२४ ॥

**स्वरूपं यद्यसाध्यं तत्स्वातन्त्र्येण प्रसिद्धितः ॥**
**तज्ज्ञानं चेत्प्रमाणं तत्तच्च शास्त्रान्न कार्यतः ॥ ८२५ ॥**

का पुनरत्रानुपपत्तिस्तत्रानुभवो ब्रह्मस्वरूपं वा तदाकारा वृत्तिर्वा नाऽऽद्य इत्याह । **स्वरूपमिति** । नातस्तस्य मानफलतेति शेषः । द्वितीयं प्रत्याह । **तज्ज्ञानमिति** । मानस्यापि ब्रह्मज्ञानस्य चतुष्पान्मानफलतेति चेन्नेत्याह । **तच्चेति** । तद्धि तत्त्वमादिवाक्यादेवोदेति न कर्तव्यप्रसंख्यानादेरित्यर्थः ॥ ८२५ ॥

**शास्त्रमावर्त्यमानं हि स्वभावं नैव मुञ्चति ॥**
**परोक्षवृत्तिर्युक्तिश्च कथं ते मितिवर्धने ॥ ८२६ ॥**

यत्तु पादानां प्रत्येकं प्रमितिवृद्धिहेतुत्वं तत्राऽऽह । **शास्त्रमिति** । आवर्त्यमाने शास्त्रयुक्ती परोक्षेऽर्थे बोधकत्वेन स्थिते स्वरूपं न मुञ्चतोऽतो न शब्दाद्यावृत्तेरपरोक्षमितिवृद्धिरित्यर्थः ॥ ८२६ ॥

**प्रमितेश्च प्रमेयस्य वृद्धौ वृद्धिः स्वतो न हि ॥**
**तस्य वृद्धिर्मितेर्वृद्धावित्यन्योन्यसमाश्रयः ॥ ८२७ ॥**

उक्तावृत्त्या मितिवृद्धिपक्षे दोषान्तरमाह । **प्रमितेश्चेति** । मेयस्यातिशयसिद्धौ मानस्यातिशयसिद्धिरर्थेनैव विशेषो धियां हीतिन्यायान्मानातिशयसिद्धौ च मेयातिशयसिद्धिस्तं विना तस्यामानत्वादित्यन्योन्याश्रयान्नाऽऽवृत्त्या मितिवृद्धिरित्यर्थः ॥ ८२७ ॥

**उत्पाद्यापि मितिं शास्त्रं यदि युक्त्याद्यपेक्षते ॥**
**स्वर्गादावेवमेव स्यात्सापेक्षं च भवेत्तदा ॥ ८२८ ॥**

पादानां प्रत्येकं प्रमितिवृद्धिहेतुत्वं निरस्तं संप्रति शास्त्रं युक्त्याद्यपेक्षमित्युक्तं प्रकारान्तरेण प्रत्युच्यते तत्र शास्त्रं वस्तु ज्ञापयित्वा फलसिद्ध्यर्थमन्यदपेक्षते तज्ज्ञप्तावेव वेति विकल्प्याऽऽद्यं दूषयति । **उत्पाद्यापीति** । आद्ये हि स्वर्गकामादिवाक्यमपि संबन्धबोधनद्वारा धात्वर्थे पुंप्रवृत्तिमापाद्य स्वर्गाद्युद्दिश्य युक्त्याद्यपेक्षं स्यान्न च तदृष्टमिष्टं

वेत्यर्थः । द्वितीयं प्रत्याह । **सापेक्षं चेति** । यदा वाक्यं स्वार्थमितौ युक्त्याद्यपेक्षं तदा सापेक्षत्वादमानं स्यान्न च युक्त्यादेरमानत्वाददोषो मानांशत्वात्तत्त्वसिद्धेर्वाक्यस्य च स्वार्थबोधने स्वयमेव सामर्थ्यादन्यापेक्षानिमित्ताभावादित्यर्थः ॥ ८२८ ॥

**व्यपास्तानर्थसंदर्भमात्मानमवगच्छतः ॥**
**किमाप्यमधिकं शास्त्राद्येन युक्त्याद्यपेक्षते ॥ ८२९ ॥**

शास्त्रस्य वस्तुज्ञानादधिकं फलमङ्गीकृत्य तादर्थ्येन न युक्त्याद्यपेक्षेत्युक्तमिदानीमधिकं फलमेव तस्य नेति कुतस्तदर्थमपेक्षेत्याह । **व्यपास्तेति** । शास्त्रादुक्तविशेषणमात्मानमवगच्छतो नाधिकमवाप्यमस्तीति कुतो युक्त्याद्यपेक्षेति संबन्धः ॥ ८२९ ॥

**का वा युक्तिः प्रदीपस्य सर्पाद्याकम्पनाशनम् ॥**
**रज्ज्वादितत्त्वविज्ञानं कुर्वतः स्वेन तेजसा ॥ ८३० ॥**

शास्त्रस्य स्वार्थबोधने युक्त्याद्यपेक्षाभावं दृष्टान्तेन साधयति । **का वेति** । यथा दीपस्य सर्पादेस्तन्निमित्तकम्पादेश्च नाशकं रज्ज्वादिज्ञानं स्वतेजोबलादेव जनयतो न काऽपि युक्तिरपेक्ष्यते तथा शास्त्रस्यापि स्वार्थं बोधयतोऽनपेक्षतेत्यर्थः ॥ ८३० ॥

**गुणप्रधानभावो हि विना नैवैकवाक्यताम् ॥**
**वस्तुकार्यार्थतात्पर्यभेदान्नापीह सा भवेत् ॥ ८३१ ॥**

शास्त्रस्य नैरपेक्ष्यं निरूप्य तत्प्राधान्यं प्रसंख्यानविधेर्गुणतेत्युक्तं निरस्तमेव विधान्तरेण निरस्यति । **गुणेति** । अस्तु तर्हि तत्त्वमादौ प्रसंख्यानविधौ चैकवाक्यत्वं नेत्याह । **वस्त्विति** । तत्त्वमादेर्वस्तुपरत्वात्प्रसंख्यानविधेर्नियोगपरत्वान्नैकवाक्यता न चाभिधाश्रुतेरपि नियोगपरत्वं वस्त्वसिद्धिप्रसङ्गान्नापि विधेर्वस्तुपरत्वं स्वप्रधानविरोधात्तदानियमेऽपि न्यायविरोधादतोऽर्थभेदे वाक्यभेदध्रौव्यमित्यर्थः ॥ ८३१ ॥

**न च प्रयोजनैकत्वलक्षणाऽत्रैकवाक्यता ॥**
**अङ्गप्रधानवद्येन कल्प्यतात्रैकवाक्यता ॥ ८३२ ॥**

प्रसंख्यानविधिशास्त्रयोरनेकार्थत्वेऽपि प्रयाजदर्शादिवाक्ययोरिव फलैक्यादेकवाक्यतेत्याशङ्क्य तयोरेकस्वर्गफलत्वेन वैकमोक्षफलत्वेन वैकफलतेति विकल्प्याऽऽद्यं निरस्यति । **न चेति** । प्रसंख्यानविधावभिधाश्रुतौ चैकस्वर्गफलत्वनिमित्ता नैकवाक्यतेत्यत्र व्यतिरेकदृष्टान्तमाह । **अङ्गेति** । अस्यार्थः—यदाग्नेयोऽष्टाकपालोऽमावास्यायामित्यादिना कालयुक्तान्याग्नेयादिकर्माण्याघारमाघारयतीत्यादिना चाऽऽघारादीनि कालासंयुक्तानि श्रुतानि किं तानि सर्वाणि समप्रधानानि किं वाऽऽग्नेयादीनि प्रधानान्यन्यान्यङ्गानीति संशय्य विद्वद्वाक्याभ्यां कर्मान्तरविधानात्पौर्णमास्यमावास्याशब्दयोः कालवाचित्वेनाप्रवृत्तनामत्वादधिकारवाक्यस्थोपपदस्य यजिसामानाधिकरण्येन नामत्वकल्पनात्तत्पारतन्त्र्याद्यजेश्च प्रकृतरूपवद्यागमात्रवाचित्वात्सर्वेषां प्राधान्यमिति **पूर्वपक्षयित्वा** द्वित-

द्वाक्ययोर्यजतिभ्यां प्रकृताग्नेयाद्यनुवादात्पौर्णमास्यमावास्याशब्दयोः समुदायद्वयार्थतया प्रसिद्धत्वादाधिकारिकमुपपदं तत्रैवेति तदनुरोधाद्यजेरपि तादर्थ्यादाग्नेयादीनामेवाधिकारसंबन्धात्प्राधान्यमन्येषामङ्गतेति **द्वितीये राद्धान्तितम्** । पौर्णमासाधिकरणेऽङ्गेषु च फलश्रुतेरर्थवादत्वस्य पर्णमयीत्वाधिकरणे स्थितत्वादङ्गप्रधानयोरेकफलता फलवत्संनिधावफलं तदङ्गमितिन्यायसिद्धा न चात्र तथेति प्रयाजदर्शपूर्णमासयोरेकस्वर्गफलत्वेनैकवाक्यत्ववत्तत्त्वमादौ प्रसंख्यानविधौ चैकफलत्वेनैकवाक्यत्वं न कल्प्यमित्यत्र हेतुमाह । **येनेति** । येन स्वर्गफलैक्येन शास्त्रादावेकवाक्यत्वं कल्प्येत न स्वर्गैकफलत्वमस्यास्ति त्वयैवानिष्टेरित्यर्थः ॥ ८३२ ॥

**स्वतःसिद्धस्य मोक्षस्य न साध्यमुपकारकम् ॥**
**न चान्यथाऽङ्गता दृष्टा प्रधानानुपकारिणः ॥ ८३३ ॥**

द्वितीयं दूषयति । **स्वतःसिद्धस्येति** । तत्र प्रसंख्यानादेरेकमोक्षफलत्वेनैकवाक्यतेति शेषः । किंच प्रसंख्यानविधेः शास्त्रशेषत्वे फलोपकार्यङ्गत्वं स्वरूपोपकार्यङ्गत्वं वा नाऽऽद्यः शास्त्रफले मोक्षे प्रसंख्यानविधेरनुपकारित्वस्योक्तत्वादित्याह । **न चेति** । अन्यथात्वं व्याचष्टे । **प्रधानेति** । यद्धि प्रसंख्यानं प्रधाने शास्त्रफले मोक्षे नोपकरोति न तस्य शास्त्रं प्रति फलोपकार्यङ्गत्वं फलानुपकारकस्यान्यत्र तथाविधाङ्गत्वस्यादृष्टत्वादित्यर्थः ॥ ८३३ ॥

**आत्मलाभे न शास्त्रं च नित्यत्वात्कार्यमीक्षते[2] ॥**
**स्वतोभिधानशक्तत्वान्नापि चैकात्म्यबोधने ॥ ८३४ ॥**

द्वितीयेऽपि शास्त्रस्वरूपलाभे वा प्रसंख्यानविधिरुपकारी तस्यार्थावबोधने वा नाऽऽद्य इत्याह । **आत्मलाभ इति** । न द्वितीय इत्याह । **स्वत इति** ॥ ८३४ ॥

**प्रसंख्याने च शास्त्रार्थे सकृदेव कृते भवेत् ॥**
**ऐकात्म्यानुभवो नो चेद्विसंवादादमानता ॥ ८३५ ॥**

किंच शास्त्रस्य प्रसंख्यानं शेषः शेषि वाऽस्तु सर्वथाऽप्यदृष्टार्थं दृष्टार्थं वा नाऽऽद्योऽनभ्युपगमात् । द्वितीयेऽपि सकृदसकृद्वाऽनुष्ठितं फलारम्भकं तत्राऽऽद्यं प्रत्याह । **प्रसंख्याने चेति** । समाहितः पश्येदित्यादिविधिविषये प्रसंख्याने सकृदेवानुष्ठिते यदि साक्षात्कारः फलति तदा दीर्घकालादरनैरन्तर्यवती भवदिष्टा भावना न स्यादित्यर्थः । असकृदनुष्ठितमेव फलदमिति पक्षं प्रतिक्षिपति । **नो चेदिति** । यदि सकृदनुष्ठितं प्रसंख्यानमैकात्म्यं नानुभावयति तथा सत्यसकृदनुष्ठितमपि तन्नानुभावयेत्सकृदनुष्ठिते फलानुपलम्भरूपविसंवादसंभवादतस्तद्विधायिशास्त्रस्यामानतेत्यर्थः ॥ ८३५ ॥

१ क. °मास्याधि° । २ क. ग. °मीक्ष्यते ।

न चात्र चोदितः कालः संख्या वा येन निश्चयः ॥
तद्द्वारेण भवेन्नापि संदिग्धे स्यात्प्रवर्तनम् ॥ ८३६ ॥

अग्निहोत्रादाविव चोदितकालादिबलात्प्रसंख्यानादनुभवलाभान्न विकल्पदोषावित्याशङ्क्याऽऽह । **न चेति** । न तावदग्निहोत्रे सायंप्रातःकालवत्प्रसंख्याने कश्चित्कालश्चोदितो न चाग्निहोत्रेऽपि मासमग्निहोत्रं जुह्वति यदाग्नेयोऽष्टाकपालोऽमावास्यायामित्यादाविव कालस्याननुष्ठेयत्वादविधेयत्वम् । तत्र हि काले कर्मविधानात्तदविधेयता युक्ता सायं जुहोतीत्यादौ तु होमस्याग्निहोत्रं जुहोतीत्यनेनैव विहितस्यानुवादात्कालो विधीयते तत्रापि काले कर्मविधौ तवैव दृष्टान्तासिद्धिः । नापि सप्तदश प्राजापत्यान्पशूनालभत इतिवदत्र संख्या विहिता । तत्र हि प्रवृत्त्या नियम्यमानक्रमवद्यागेषु विशेषणीभूतपशूनामुपादेयतया तदीया संख्या विधीयते पशुना यजेतेत्यत्रापि पश्चेकत्वं विधेयमिति पश्चेकत्वाधिकरणे व्युत्पादितं न चैवं प्रसंख्याने संख्याविधिरस्ति तस्मात्तद्द्वारा ततोऽनुभवनिश्चयासिद्धिरित्यर्थः । तथाऽपि ततोऽनुभवः स्यान्न वेति संदिग्धेऽपि तास्मिन्ननुभवार्थिनां कृष्यादिवत्प्रवृत्तिरित्याशङ्क्याऽऽह । **नापीति** । कृष्यादौ फलभावाभावयोर्दृष्टत्वात्संदेहेऽपि प्रवृत्तिर्युक्ता प्रसंख्याने तु नैवं ततोऽनुभवस्य क्वचिदप्यदृष्टेर्दीर्घप्रपाठकादौ विशेषणत्रयवत्या भावनायाः साफल्येऽपि प्रमेयार्थसाक्षात्कारप्रमा न ततो दृष्टचरीत्यर्थः ॥ ८३६ ॥

आरुह्याप्यथवा दूरं विसंवादपराङ्मुखः ॥
यत्किंचित्कामतः कुर्यादकृतार्थोऽथवा पतेत् ॥ ८३७ ॥

संदिग्धे तस्मिन्प्रवृत्तावपि दोषानिवृत्तिरित्याह । **आरुह्येति** । प्रसंख्याने संदिग्धे प्रवृत्त्यभावनियमनिरासार्थमथवेत्युक्तम् । असकृत्प्रसंख्यानमनुष्ठायापि तत्त्वानुभवादर्शनरूपविसंवादेन ततो विमुखीकृतो मध्ये निवृत्तो न वा निवृत्तश्चेद्यत्किंचिदिच्छातः संतन्वानो नाभीष्टसिद्धिमधिरोहेदनिवृत्तश्चेददृष्टमर्थोऽनर्थमृच्छेदन्यस्याकृतत्वादस्माच्चानुभवादृष्टेरित्यर्थः ॥ ८३७ ॥

अदृष्टफलता वाऽपि कल्प्याऽग्निष्टोमवद्भवेत् ॥
कर्माङ्गता वा कल्प्या स्यादुद्गीथविधिवत्तदा ॥ ८३८ ॥

ननु यावज्जीवं प्रसंख्यानमनुतिष्ठतो न पतनवचो युक्तं **नहि कल्याणकृत्कश्चि**दित्यादिस्मृतेस्तत्राऽऽह । **अदृष्टेति** । यदा सदा प्रसंख्यानं कुर्वतः स्मृत्या पतनाभावोऽभीष्टस्तदा तद्विधानमदृष्टार्थं ज्योतिष्टोमवत्कल्प्येत यथा वा तदङ्गमुद्गीथविधानं तथा तदपि कर्माङ्गं कल्प्यं स्यादित्यर्थः ॥ ८३८ ॥

ततश्च प्रातिलोम्येन कार्यं स्याच्छास्त्रबाधनात् ॥
अश्रद्धा च मुमुक्षूणां कार्यबाधोऽपि च स्थितः ॥ ८३९ ॥

प्रसंख्यानविधेरुद्गीथविधिवत्कर्माङ्गत्वे विवक्षितशास्त्राङ्गत्वासिद्धिरेकस्योभयाङ्गत्वायोगादित्याह । ततश्चेति । संप्रति प्रसंख्यानविधेर्ज्योतिष्टोमवददृष्टार्थत्वमिच्छन्तं प्रत्याह । प्रातिलोम्येनेति । यथोक्तो विधिरदृष्टार्थश्चेज्ज्योतिष्टोमविधिवत्तस्य शेषित्वात्तत्त्वमादेः शेषत्वात्तत्प्रामाण्यार्थं कल्पितः स वैपरीत्याय भवन्प्रतिकूलत्वेन स्थितः शास्त्रस्यान्यपरस्याध्यक्षादिविरोधे स्वार्थे मानत्वायोगादित्यर्थः । किंच प्रसंख्यानविधेरदृष्टार्थत्वे कर्माङ्गत्वे च मोक्षहेतुं तत्त्वसाक्षात्कारमिच्छतां तस्मिन्नपि ज्योतिष्टोमादिविधिवदश्रद्धा स्यात्ततः साक्षात्कारादृष्टेरतो मुमुक्षूणां तदनुष्ठानानुपपत्तेर्विध्यसिद्धिरित्याह । अश्रद्धेति । न वा मुमुक्षूणामेष विधिः साधनादित्रयाद्बाह्यमित्यादिना नियोगबाधस्य स्थितत्वात्तस्य विशिष्टस्याप्यसंभवादित्याह । कार्येति ॥ ८३९ ॥

वस्तुतत्त्वानपेक्षत्वात्कार्यमात्रप्रधानता ॥
शास्त्राच्च वस्तुनोऽलाभात्कार्यं किंविषयं भवेत् ॥ ८४० ॥

किंच प्रसंख्यानवादे तद्विधायकं वाक्यं वस्तु बोधयति तत्त्वमादिवाक्यं वा नाऽऽद्यस्तस्य नियोगमात्रनिष्ठत्वाद्वस्तुबोधित्वायोगादित्याह । वस्त्विति । न द्वितीयस्तत्त्वमादिवाक्यस्य नियोगपरत्वेनाध्यक्षादिविरोधे स्वार्थे मानत्वानुपपत्तेरित्याह । शास्त्राच्चेति । वस्तुज्ञानाभावे तदावृत्त्यनुपपत्तेर्निर्विषयो नियोगो नेति फलितमाह । कार्यमिति ॥ ८४० ॥

यदि तद्वस्तुयाथात्म्यं शास्त्रं न प्रतिपादयेत् ॥
वस्त्वसिद्धेस्ततः कार्यप्राधान्यादर्थवादता ॥ ८४१ ॥

किंच प्रसंख्यानवादे किमेकत्वशास्त्रं तत्परं सन्न प्रतिपादयत्युत प्रतिपादयति तत्राऽऽद्यमनुवदति । यदीति । तत्र तस्माद्वाक्यादैक्याप्रतीतेस्तदमानत्वं स्यात्प्रसंख्याननियोगपरस्य मानान्तरविरोधे स्वार्थे प्रमाजनकत्वाभावस्य त्वयेष्टत्वादित्याह । वस्त्विति । अर्थवादतेत्यमानत्वोक्तिः ॥ ८४१ ॥

अथैकात्म्यार्थनिष्ठं सच्छास्त्रं स्यात्प्रतिपादकम् ॥
आपरोक्ष्यात्तदा कार्यं व्यर्थं पारोक्ष्यहानिकृत् ॥ ८४२ ॥

द्वितीयमादत्ते । अथेति । तर्हि वाक्यादेव वस्त्वापरोक्ष्यात्प्रसंख्याननियोगो वस्तुपारोक्ष्यनिवर्तकत्वेनेष्टो व्यर्थः स्यादित्याह । आपरोक्ष्यादिति ॥ ८४२ ॥

शास्त्रात्कथं च तत्सिद्धिर्याथात्म्यानवबोधकात् ॥
नानश्वरूपे सिद्धेऽपि गव्यश्वस्य प्रसिद्धता ॥ ८४३ ॥

ननु शास्त्रान्न वस्त्वापरोक्ष्यं तस्य संसृष्टपरोक्षबोधनस्वाभाव्यादतस्तत्साक्षात्काराय प्रसंख्यानविधिरित्याशङ्क्य यत्साक्षादपरोक्षादिति श्रुतेर्वस्तुनोऽसंसृष्टापरोक्षत्वात्तद्याथात्म्यानवगाहिनः शास्त्रात्तदसिद्धेस्तदप्रामाण्यप्रसक्तिरित्यभिप्रेत्याऽऽह । शास्त्रादिति ।

ननु शास्त्रमसंसृष्टापरोक्षविलक्षणं वस्तु बोधयत्प्रतियोगित्वेनासंसृष्टापरोक्षमपि बोधयिष्यति । अतस्तत्प्रामाण्यमित्याशङ्क्याऽऽह । **नानश्वेति ।** अश्वविलक्षणे गवि प्रत्यक्षसिद्धेऽपि न ततोऽश्वस्य प्रसिद्धत्वमिति तथा संसृष्टपरोक्षेऽर्थे शाब्देऽपि न प्रतियोगिनः शाब्दत्वमतः शास्त्राद्वस्त्वसिद्धेस्तदप्रामाण्यमेवेत्यर्थः ॥ ८४३ ॥

**शास्त्राच्छ्रवणमात्रेण कार्याच्चानुभवो यदि ॥**
**वस्तुन्यनिश्चिते वार्ता साऽर्थवादेऽपि दृश्यते ॥ ८४४ ॥**

अथ शास्त्रादसंसृष्टापरोक्षं वस्तु सिध्यदपि श्रवणमात्रेणानुभवानारूढं सिध्यति प्रसंख्याननियोगाच्च तदनुभवोऽतो न नियोगानर्थक्यं नापि शास्त्रस्यामानतेति शङ्कते । **शास्त्रादिति ।** तत्र किं शास्त्राद्वस्तु निश्चितमनिश्चितं वा नाऽऽद्यस्तस्यानुभवानारूढत्वानुपपत्तेरबाधितानधिगतनिश्चयस्यानुभवत्वाद्द्वितीये शब्दात्तत्र ज्ञानं भवतीति वार्तैव स्याज्ज्ञानस्योक्तनिश्चयातिरिक्तस्याऽऽभासत्वात्सा चार्थशून्या सत्यर्थवादेऽपि संभाव्यतेऽतोऽर्थवादादविशेषस्तत्त्वमादेरिति दूषयति । **वस्तुनीति** ॥ ८४४ ॥

**ततश्च कार्यनिष्ठत्वं मुधैव परिवर्जितम् ॥**
**संपत्परं भवेच्छास्त्रं वस्तुतात्पर्यवर्जनात् ॥ ८४५ ॥**

तत्त्वमादेरर्थवादसाम्ये का हानिरत आह । **ततश्चेति ।** अर्थवादादविशेषे तद्वदेव तत्त्वमादेरपि कार्यनिष्ठत्वात्तत्प्रसंख्यानवादिना वृथैव त्यक्तं तत्त्यागेऽप्यर्थवादवद्वस्तुनिष्ठत्वासिद्धेरतः संपत्संज्ञप्रसंख्याननियोगनिष्ठमेव शास्त्रं वस्तुपरत्वस्यार्थवादसाम्येन त्यक्तत्वात्तथा च तत्परत्वेन शास्त्रप्रामाण्यमिच्छता ततोऽसंसृष्टापरोक्षार्थनिश्चयस्याभ्युपेयत्वान्न विधिरर्थवानित्यर्थः ॥ ८४५ ॥

**न चाप्याख्यायिकारूपमनुग्राह्यं श्रुतौ मतम् ॥**
**आदिमत्त्वादिदुष्टत्वात्पुमर्थत्वेन वर्ण्यते ॥ ८४६ ॥**

ननु तदनङ्गीकारे कथारूपत्वाद्वेदान्तानामप्रामाण्यं तदङ्गीकारे तु स्वर्गकामादिवाक्यवत्प्रामाण्यमत आह । **न चेति ।** अनेनोक्तमनेन गृहीतमिति कथारूपं श्रुतौ श्रुतमपि न विवक्षितम् । **उक्तं हि**—न ह्ययं सकलकथाप्रबन्धो विवक्षित इति शक्यं वक्तुं तत्प्रतिपत्तौ पुरुषार्थाभावादिति । अन्यथा वेदस्याऽऽदिमत्त्वादिप्रसङ्गान्न चासावदोषो **वाचा** विरूपनित्यया**ऽनादिनिधना** नित्येत्यादिश्रुतिस्मृतिविरोधादौत्पत्तिकसूत्रविरोधाच्चेति भावः । किमर्थं तर्हि श्रुतावाख्यायिकोच्यतेऽत आह । **पुमर्थत्वेनेति ।** पुरुषप्रवृत्त्यङ्गत्वेन स्वर्गापवर्गहेतुस्तावकत्वेन चेत्यर्थः ॥ ८४६ ॥

**पौनरुक्त्यभयाच्चात्र यद्यर्थान्तरकल्पनम् ॥**
**ऐकात्म्योक्तौ विधिर्व्यर्थ इति द्वैतप्रकल्पनम् ॥ ८४७ ॥**

---

१ क. 'स्याप्यर्थं' ।

इतश्च तत्त्वमादौ शास्त्रे न प्रसंख्याननियोगस्तस्यापि कर्मकाण्डवन्नियोगावलम्बित्वे काण्डयोर्नियोगस्यैव प्रतिपाद्यत्वेन पुनरुक्तिप्रसक्तेरित्याह । **पौनरुक्त्येति** । कर्मकाण्डे स्वतन्त्रो विधिर्ब्रह्मकाण्डे वस्तु प्रतिपाद्यं प्रसंख्यानविधिस्तच्छेष इति न पौनरुक्त्यमिति प्रसंख्यानवाद्याह । **अत्रेति** । यद्वा बहिःसाधनो नियोगस्तत्रोक्तोऽबहिःसाधनस्त्वत्रेति न पुनरुक्तिरित्याह । **अत्रेति** । यद्वा तत्त्वमादौ प्रसंख्याननियोगानङ्गीकारे सकृच्छ्रुताद्वाक्यादुत्पन्नज्ञानान्मुक्तिरिष्टा स्यात्तदा नवकृत्वस्तत्त्वमसीत्युपदेशोऽनर्थकस्तत्परिहारार्थं शास्त्रशेषत्वेन प्रसंख्यानविधिरिति शङ्कते । **पौनरुक्त्येति** । कर्मशास्त्रं स्वनिष्ठनियोगपरं ब्रह्मशास्त्रं वस्तुशेषत्वेन प्रसंख्याननियोगबोधीति न विभागस्तत्रापि नियोगोपगमे तत्प्राधान्यस्य भूतभव्यन्यायेनोपेयत्वात्तस्मादैक्यवाक्ये न कथमपि विधिः कर्मवाक्ये त्वसाविति काण्डयोर्भेदकल्पनमुचितं न त्वदुक्तरीत्येत्याद्यं चोद्यं परिहरति । **ऐकात्म्येति** । बहिरबहिःसाधननियोगनिष्ठत्वेनापि न तयोर्भेदो द्वितीयतृतीयाध्यायवदेकशास्त्रत्वे सत्येवोक्तविशेषसिद्धेस्तन्न तत्त्वमादौ कोऽपि विधिः स त्वितरत्रेति शास्त्रभेदकल्पनं युक्तमिति द्वितीयं प्रत्याह । **ऐकात्म्येति** । तत्त्वमसीत्यसकृदभ्यासाद्विदुषोऽपि प्रसंख्याननियोगः साध्यते चेदैक्यशास्त्रे द्वैतं विना न विधिरिति द्वैतप्रपञ्चोऽपि परमार्थोऽभ्युपेयः स च निरस्तो निरसिष्यते च न च कल्पितद्वैतापेक्षया प्रसंख्याननियोगस्तस्य ज्ञानानन्तर्यात्कल्पितद्वैतापेक्षस्य च नियोगस्याऽऽभासत्वप्रसङ्गादतो ज्ञानादूर्ध्वं स्फुरतो द्वैतस्याविद्याकार्यत्वायोगाद्वस्तुत्वं तच्चायुक्तं बाधितानुवृत्तिमात्रत्वात्तत्त्वमसीत्यभ्यासस्तु तत्तदाशङ्कानिरासितया तत्त्वज्ञानायेति **चोद्यान्तरं** निराह । **ऐकात्म्येति** ॥ ८४७ ॥

**न च मानेन विषये बोधितेऽन्वेषणं पुनः ॥**
**कार्यमुक्त्योः क्वचिद्दृष्टं स्वतःप्रामाण्यबाधनात् ॥ ८४८ ॥**

ऐक्यवाक्येऽपि विधिर्नेति वदता शास्त्रावगतेऽर्थे प्रसंख्याननियोगो नोपयोगीत्युक्तमिदानीं शास्त्रादापाततो ज्ञाते वा प्रसंख्यानाद्यपेक्षा साक्षान्निश्चिते वेति विकल्प्याऽऽद्यमङ्गीकृत्यान्त्यं दूषयति । **न चेति** । शास्त्रेण साक्षान्निश्चिते विषये नियोगयुक्त्योर्मध्ये क्वचिन्नियोगे युक्तौ वा न पुनरन्वेषणं प्रामाणिकं वस्तुसाक्षात्कारे कर्तृत्वादिभेदस्योपमर्दितत्वात्प्रमिते च शास्त्रेणान्यापेक्षणे तस्य स्वतःप्रामाण्यभङ्गाद्युक्त्यादीनामपि चतुष्पान्मानप्रवेशेन शब्दवन्मानत्वादित्यर्थः ॥ ८४८ ॥

**प्रत्यक्षेण घटे बुद्धे का युक्तिः कार्यमेव वा ॥**
**अदुष्टकारणत्वं चेत्सिद्धं वेदे नृवर्जनात् ॥ ८४९ ॥**

तत्त्वसाक्षात्कारे युक्त्याद्यपेक्षा शास्त्रस्य नास्तीत्यत्र दृष्टान्तमाह । **प्रत्यक्षेणेति** । ननु प्रत्यक्षदृष्टेऽपि किमिदं ज्ञानं दुष्टहेतुजमदुष्टहेतुजं वेति निरूप्यादुष्टहेतुजत्वनिर्णयार्थं

निकटोपसर्पणाद्यपेक्षावच्छास्त्रदृष्टेऽपि ज्ञानस्यादुष्टकारणत्वं निश्चेतुं युक्त्याद्यपेक्षा युक्तेति चोदयति । **अदुष्टेति ।** लोके काचादिहेतुदोषसंभवात्प्रत्यक्षेऽप्यर्थे ज्ञानस्यादुष्टहेतुत्वं निश्चेतुमन्यापेक्षा युक्ता वेदे त्वपौरुषेये पुरुषद्वारकदोषाभावात्तज्जन्ये ज्ञाने तद्राहित्यस्य सहजत्वान्नान्यापेक्षेति परिहरति । **सिद्धमिति** ॥ ८४९ ॥

**प्रत्यक्षादिविरोधश्च कार्यपक्षेऽपि तु स्थितः ॥**
**ऐकात्म्यानुभवो हि स्यात्कथमक्षादिबाधनात् ॥ ८५० ॥**

शास्त्रीये ज्ञाने दोषाभावं निश्चेतुं नियोगाद्यपेक्षाभावेऽपि प्रसंख्याननियोगानङ्गीकारे तत्त्वमादेर्नाद्वयार्थसाक्षात्कारहेतुत्वं प्रत्यक्षादिविरोधात्तदङ्गीकारे तु न तद्विरोधो नियोगस्य सर्वप्रमाणाद्बलवत्त्वादित्याशङ्क्याऽऽह । **प्रत्यक्षादीति ।** न हि तत्त्वमादौ नियोगोऽस्तीति मानान्तरविरोधसमाधिर्नियोगस्य सर्वतो बलवत्त्वस्य प्रतिज्ञामात्रत्वादतो वाक्यस्य नियोगपरत्वेऽप्यादित्ययूपवाक्यवन्न ततो वस्तुधीरध्यक्षादिना विरोधिना वाक्यस्य बाधान्नियोगे त्वसति विरोधेऽपि वाक्याद्वस्तुधीः सिध्यति तस्य तत्परत्वेन बलवत्त्वादित्यर्थः ॥ ८५० ॥

**तन्निषेधात्तु या सिद्धिर्न सा कार्यप्रसादतः ॥**
**प्रमाणादेव शास्त्रात्सा न मेयात्कार्यतो भवेत् ॥ ८५१ ॥**

कार्यपक्षे नाध्यक्षादिविरोधस्तन्निषेधेन नियोगाद्वस्तुसिद्धेस्तत्राऽऽह । **तन्निषेधादिति ।** प्रत्यक्षादिविरोधनिरासद्वारा वस्तुसिद्धिर्न नियोगाधीना तस्यामानत्वादित्यर्थः । कुतस्तर्हि तन्निषेधेन वस्तुसिद्धिस्तत्राऽऽह । **प्रमाणादिति ।** तत्त्वमादिवाक्यादेवाध्यक्षादिविरोधनिषेधेन वस्तुधीस्तस्य मानत्वादित्यर्थः । विरोधनिरासेन वस्तुधीर्न नियोगाधीना तस्य मेयकोटिनिविष्टत्वादित्येवकारार्थमाह । **नेति** ॥ ८५१ ॥

**का वा कार्येऽस्ति ते युक्तिः शास्त्रं चेदुभयोः समम् ॥**
**अज्ञातज्ञापनादन्यच्छास्त्रान्नेति पुरोदितम् ॥ ८५२ ॥**

शास्त्रदृष्टे न प्रसंख्याननियोगापेक्षेत्यत्र हेत्वन्तरमाह । **का वेति ।** वेदान्तशास्त्रं सिद्धेऽर्थे मानत्वेनाऽऽवयोः समं शास्त्रेणाज्ञातं ज्ञाप्यते नान्यदित्युक्तं यद्धेतुकं प्रमाणत्वमित्यादिना । एवं चेदज्ञाते ब्रह्मणि शास्त्रदृष्टे नियोगापेक्षायां नास्ति युक्तिस्तत्साध्याभावादित्यर्थः ॥ ८५२ ॥

**पुमर्थं प्रतिपाद्यापि प्रकृत्यैव श्रुतिः पुनः ॥**
**तमेव युक्तिभिः सार्धं वदन्ती स्वार्थमीक्षते ॥ ८५३ ॥**

तत्त्वमादिश्रुतिरेव स्वारस्यादानन्दमात्मानं बोधयति चेद्युक्त्युपन्यासः श्रुतिषु वृथा स्यात्र न तासां ज्ञानात्प्राक्त्वमज्ञातेऽर्थे युक्त्यनुसंधानासिद्धेस्तो नियोगानपेक्षत्वेऽपि

श्रुतेर्युक्त्यपेक्षाऽस्तीत्याशङ्क्याऽऽह। **पुमर्थमिति**। श्रुतिर्हि पुमर्थं स्वार्थं प्रकृत्या प्रतिपाद्यापि पुनरसंभावनादिशङ्कायां युक्तिभिः सह तमेवार्थं लक्षणया वदन्ती प्रतिबन्धध्वंसित्वेन युक्तीरीक्षत इति योजना। शाब्दमपि प्रत्यग्ब्रह्मज्ञानं पुरुषापराधादसंभावनाद्यभिभूतमिति श्रुतिर्युक्तिभिस्तन्निरसनीभिः सह तमेव दृष्टं स्वार्थं लक्षणया बोधयन्ती प्रतिबन्धविधुरमपरोक्षासंसृष्टं बोधयति तत्र च वाक्यीये ज्ञाने स्वोत्पत्तिमात्रेण मदविद्यातत्कार्यनिवर्तके कुतो युक्त्याद्यपेक्षेत्यर्थः ॥ ८९३ ॥

**नैतावताऽपराधेन युक्तयो मानकारणम् ॥**
**शब्दमात्रादसंसिद्धेरनपेक्षत्वहानतः ॥ ८९४ ॥**

श्रौतेऽपि ज्ञाने प्रतिबन्धध्वंसित्वेन युक्त्यपेक्षा चेत्तासामनुभवहेतुत्वात्तदपेक्षया श्रुतेः स्वतःप्रामाण्यहानिः स्यादित्याशङ्क्याऽऽह। **नैतावतेति**। श्रुतेर्युक्त्यपेक्षाऽस्तीत्येतावन्मात्रेण नोत्पन्नज्ञानस्य स्वार्थनिश्चयहेतवो युक्तयः किंतु तत्प्रतिबन्धध्वस्तिकारणमित्यर्थः। युक्तीनामर्थनिश्चायकत्वे वाक्यादेव तदसिद्धेस्तस्यानपेक्षत्वभङ्गात्पुरुषवचोवत्स्वतो मानत्वायोगात्तन्निश्चयप्रतिबन्धध्वंसित्वमेव तासामिति साधयति। **शब्देति** ॥ ८९४ ॥

**न वायोः क्षिप्रकारित्वाच्छ्वेतालम्भो विभूतये ॥**
**विध्युद्देशात्तु तत्सिद्धेः शैघ्र्यं तूक्तं प्रवृत्तये ॥ ८९५ ॥**

निश्चयप्रतिबन्धध्वस्तावेव युक्त्यपेक्षेत्यत्र दृष्टान्तमाह। **नेत्यादिना**। वायुर्वै क्षेपिष्ठा देवतेति वायोः श्रुतात्क्षिप्रकारित्वान्न श्वेतालम्भस्य विभूतिहेतुत्वं ज्ञाप्यते वायव्यं श्वेतमालभेत भूतिकाम इत्यस्मादेव तस्य तद्धेतुत्वसिद्धेरार्थवादिकं तु वायोः शैघ्र्यं पुंसो भूतिकामस्य श्वेतालम्भे प्रवृत्तिहेतुर्वायुर्हि क्षिप्रकारी तेन तद्देवताकपश्वालम्भे शीघ्रमेव फलमित्यालोच्य फलेच्छया प्रवृत्त्युन्मुखो भवत्येवमिहापि वाक्याज्ज्ञानोत्पत्तये न युक्त्युपन्यासो नाप्युत्पन्नज्ञानस्य स्वार्थनिश्चयार्थं किंतु तत्प्रतिबन्धध्वंसार्थमित्यर्थः ॥ ८९५ ॥

**जाग्रत्स्वप्नसुषुप्तेभ्यो यदि नामातिरेकतः ॥**
**व्यक्तिभ्यो गोत्ववद्दृष्टं ब्रह्मत्वेऽस्य किमागतम् ॥ ८९६ ॥**

इतश्च युक्तीनां न तत्त्वनिश्चायकतेत्याह। **जाग्रदिति**। यथा व्यक्तिभ्यो गोत्वमतिरिच्यते व्यावृत्तानुवृत्तभेदस्य मणिसूत्रयोर्दृष्टत्वात्तथाऽवस्थात्रयान्मिथो व्यभिचारिणोऽव्यभिचार्यात्मवस्तु युक्तितो व्यतिरेकतो यदि दृष्टं दृश्यतां नामास्य तु त्वमर्थस्य तदर्थत्वे वाक्यं विना युक्तिभ्यो न किंचिद्भवति **नैषा** तर्केण मतिरापनेयेति **श्रुतेरि**त्यर्थः ॥ ८९६ ॥

---

१ ख. 'हानिरित्या'। २ ख. 'युक्तिभ्यो'।

असिद्धं शास्त्रयुक्तिभ्यामावृत्त्याऽपि न सिध्यति ॥
नैव ह्यावर्तनं हेतुः प्रामाण्येऽन्येष्वनीक्षणात् ॥ ८५७ ॥

श्रुतवाक्यस्यापि ज्ञानादृष्टेर्युक्तिवद्वाक्यस्याप्यतद्धेतुत्वात्तयोरावृत्तिस्तद्धेतुरित्याशङ्क्याऽऽह । **असिद्धमिति** । आवृत्तेरमानत्वादित्यर्थः । तस्या वाक्यप्रामाण्यहेतुत्वात्तद्वारा निश्चायकत्वमाशङ्क्याऽऽह । **नैवेति** । न हि शब्दस्य प्रामाण्ये तदावर्तनं कारणी भवति प्रत्यक्षादिष्वावृत्तेः प्रामाण्यहेतुत्वादृष्टेरित्यर्थः ॥ ८५७ ॥

न चेदृशं प्रमाणत्वं दृष्टमन्यत्र कुत्रचित् ॥
अन्यादृक्षप्रमाणस्य न च नास्त्यत्र संभवः ॥ ८५८ ॥

हेतुमेव विवृणोति । **न चेति** । लौकिकमानेष्वावृत्तेरनिश्चायकत्वादिहापि तस्या न निश्चायकत्वं चेत्तर्हि लौकिकवाक्ये मसृष्टपरोक्षदृष्टिहेतुत्वदृष्टेस्तत्त्वमादावपि तथा स्यादित्याशङ्क्याऽऽह । **अन्यादृक्षेति** । अत्रामसृष्टापरोक्षे ब्रह्मात्मनि लौकिकवाक्यविसदृशस्य तत्त्वमादिमानस्य संभवो नास्तीति न शक्यं वक्तुं मानस्य वस्त्वनुसारित्वादित्यर्थः ॥ ८५८ ॥

अलौकिकार्थवादित्वादात्मब्रह्माभिधानयोः ॥
संबन्धाग्रहणादात्मा ब्रह्मेति कथमुच्यते ॥ ८५९ ॥

तत्त्वमादेर्ब्रह्मात्मनि मानतोक्ता तत्र ब्रह्मात्मानौ मानान्तरादज्ञातौ ज्ञातौ वाऽऽद्ये तयोः शब्दशक्त्यग्रहादगृहीतशक्तिशब्दस्याबोधकत्वादनुत्पत्तिरूपमप्रामाण्यमिति चोदयति । **अलौकिकेति** ॥ ८५९ ॥

ज्ञातार्थसंगतिः शब्दो वाक्यार्थावगमक्षमः ॥
ब्रह्मात्मार्थप्रसिद्धौ च लोकान्मानप्रवेशिना ॥ ८६० ॥

पदानां शक्त्यग्रहादबोधकत्वेऽपि वाक्यस्य तदनपेक्षत्वाद्बोधकत्वमाशङ्क्य समभिव्याहृतपदानामेव वाक्यत्वान्मैवमित्याह । **ज्ञातेति** । द्वितीये तत्त्वमादेरनुवादित्वेनामानत्वापत्तिरित्याह । **ब्रह्मेति** । लोकतो ब्रह्माद्यर्थस्य प्रतीतौ न तस्यापूर्वतेत्यर्थः ॥ ८६० ॥

नाऽऽत्मन्येवाऽऽत्मशब्दस्य प्रयोगात्स्यादलौकिकः ॥
ब्रह्मार्थोऽपि महत्त्वेन प्रसिद्धो व्यवहारतः ॥ ८६१ ॥

आत्मा तावदलौकिको विषयोपलब्धृत्वेन प्रसिद्धस्तस्मिन्वृद्धैरात्मशब्दप्रयोगात्तत्र तस्य शक्तिर्धीरिति परिहरति । **नाऽऽत्मनीति** । ब्रह्मार्थोऽपि नाप्रसिद्धो बृंहतिधात्वर्थानुसारेण वृद्धव्यवहारतोऽनतिशयमहत्त्वेन प्रसिद्धत्वात्तस्मिन्नात्मत्वेन च प्रसिद्धे ब्रह्मशब्दस्य शक्तिरित्याह । **ब्रह्मेति** ॥ ८६१ ॥

---

१ ख. 'दृशप्र' । २ ख. 'दृशेति । ३ ख. 'गमे क्ष' ।

**एवं पदात्परिज्ञाते पदार्थे लोकमानतः ॥**
**वाक्यार्थोऽतीन्द्रियो वेदे वाक्यात्केन निवार्यते ॥ ८६२ ॥**

तर्हि ब्रह्मात्मनोर्मानान्तरावेशात्तत्त्वमादेरनुवादकत्वं तत्राऽऽह । **एवमिति** । पदद्वयादर्थद्वये लोकव्यवहारादेव दृष्टे वाक्यार्थोऽखण्डैकरसरूपो मानान्तरागोचरो वाक्यादेव मीयमानो नानुवाद्यतां गन्तुमलमित्यर्थः ॥ ८६२ ॥

**अपूर्वदेवतास्वर्गपदार्थेष्वपि लोकतः ॥**
**सिद्धेष्वतीन्द्रियोऽप्यर्थो वाक्यादेवावगम्यते ॥ ८६३ ॥**

पदार्थे लोकसिद्धे वाक्यादेवापूर्ववाक्यार्थधीरित्यत्र दृष्टान्तमाह । **अपूर्वेति** । कृतिसाध्यं कृतिप्रधानं कार्यमत्रापूर्वं तच्च मानान्तरेणापि वेद्यमिति तथा चाल्लोकतोऽधिगतमिन्द्रादिरूपा देवताऽपि लोकतः सिद्धा वज्रहस्तमिन्द्रमालिखन्ति पाशहस्तं वरुणमिति हि प्रसिद्धं स्वर्गोऽपि सुखविशेषो लोकविशेषो वा लोकादेवावगम्यतेऽतो यथा स्वर्गापूर्वादिषु लोकसिद्धेषु तच्छब्दानां शक्तिधीर्ज्ञातशक्तिपदसंहतिरूपवाक्याच्च विशिष्टार्थदृष्टिरेवमात्माद्यर्थे लोकसिद्धेऽपि तदैकरस्यस्वरूपो वाक्यार्थो वाक्यादेव सिध्यतीत्यर्थः । अपिशब्दौ दृष्टान्तदार्ष्टान्तिकनिविष्टौ श्लिष्टार्थौ ॥ ८६३ ॥

**नापेक्षापूरणाशक्तः प्रयोगे समवायिता ॥**
**पदानां सपदार्थानां वाक्याद्व्यवहृतिर्यतः ॥ ८६४ ॥**

पदार्थेतरवाक्यार्थाभावात्तद्धियश्च पदेभ्यः संभवात्कृतं वाक्येनेत्याशङ्क्याऽऽह । **नापेक्षेति** । एकैकस्य पदस्य पदान्तरानपेक्षस्य तदर्थस्य च मध्यमवृद्धप्रवर्तकानाकाङ्क्षज्ञानोत्पादासामर्थ्यात्तदुत्पत्तये न प्रयुज्यमानताऽतो वाक्यार्थमितये वाक्यं प्रयोक्तव्यमित्यर्थः । किंच वाक्यादेवार्थं बुद्ध्वा मध्यमवृद्धस्य प्रवृत्तिदर्शनात्तदपेक्षितमित्याह । **वाक्यादिति** ॥ ८६४ ॥

**वाक्यार्थायैव वाक्यं हि सर्वदैव प्रयुज्यते ॥**
**व्यवहारेषु वृद्धानां संबन्धस्तत्र गृह्यते ॥ ८६५ ॥**

ननु पदानि पदार्थान्प्रत्याययन्ति तेभ्यः सांनिध्यादियुक्तेभ्यो वाक्यार्थधीर्न वाक्यादित्याशङ्क्याऽऽह । **वाक्यार्थायेति** । वाक्यमेव व्युत्पत्त्यवस्थायां व्युत्पन्नावस्थायां च वाक्यार्थप्रतिपत्त्यर्थं प्रयुज्यते नहि कदाचिदपि पदार्था वाक्यार्थप्रत्यायका अप्रमाणत्वाद्वाक्यार्थधियश्चाशाब्दत्वप्रसङ्गादित्युक्तमित्यर्थः । किंच वृद्धानां व्यवहारेषु वाक्यार्थज्ञाने विवक्षितेऽस्य पदस्यास्मिन्नर्थे शक्तिरिति गृह्यते संबन्धग्रहश्च विशिष्टार्थदृष्टावुपयुज्यतेऽतो वाक्यार्थप्रतिपत्त्यर्थमेव प्रयोग इत्याह । **व्यवहारेष्विति** ॥ ८६५ ॥

---

१ क. ग. 'र्थेष्विव लो' । २ क. 'ति लोक' । ३ ख. 'योगस' ।

**भागान्तरप्रवेशेन भागत्यागेन च स्फुटम् ॥**
**वाक्यवाक्यार्थयोर्भेदे पदार्थानां निमित्तता ॥ ८६६ ॥**

संबन्धग्रहोपायमावापोद्वापं दर्शयति । **भागान्तरेति ।** अनुमानादेः शक्तिग्रहोपायत्वेऽपि ततो विशेषासिद्धेरावापादिना च तत्सिद्धेरनेन स्पष्टं शक्तिज्ञानमित्याह । **स्फुटमिति ।** संबन्धो गृह्यत इति पूर्वेण संबन्धः । आवापोद्वापयोः शक्तिग्रहोपक्षयाद्वाक्यभेदस्तदर्थभेदश्च कथमित्याशङ्क्य सत्यावापादौ पदभेदाद्वाक्यभेदः पदार्थभेदाद्वाक्यार्थभेदश्चेत्याह । **वाक्येति ।** वाक्यभेदे पदानां वाक्यार्थभेदे च पदार्थानां निमित्ततेति योजना ॥ ८६६ ॥

**यद्भागस्याऽऽगमाद्योऽर्थभागः स्यादधिकः क्वचित् ॥**
**तस्य भागस्य भागोऽसौ निमित्तं स्यान्न तु प्रमा ॥ ८६७ ॥**

ननु यस्य पदस्याऽऽवेशाद्वाक्यं भिद्यते तत्पदं स्वार्थे मानं न वाऽऽद्ये तद्वत्पदान्तराणामपि प्रामाण्याद्वाक्यानुपयोगो द्वितीये तस्याप्रमाणस्य न भेदकत्वमत आह । **यद्भागस्येति ।** क्वचिद्वाक्ये यस्य पदस्य प्रवेशाद्यः पदार्थोऽधिकः स्यात्तस्य पदार्थस्य तत्पदं स्मारकं पदमभ्यधिकाभावात्स्मारकान्न विशिष्यत इति न्यायान्न तु प्रमाणं तथाऽपि भेदकं पदार्थवदन्यथा सांकर्यादिति भावः ॥ ८६७ ॥

**अत एव सभागत्वं वाक्यवाक्यार्थयोर्मतम् ॥**
**वाचकत्वेऽपि वाक्यस्य संसृष्टार्थाभिधानतः ॥ ८६८ ॥**

पदपदार्थयोरिव वाक्यवाक्यार्थयोरपि वाच्यवाचकभावात्पदतदर्थवद्वाक्यतदर्थयोः सभागत्वासंभवात्पदस्य तदर्थे शक्तिधीवद्वाक्यस्यापि स्वार्थे तत्प्रसङ्गात्पदवद्वाक्यमपि न मानमित्याशङ्क्याऽऽह । **अत एवेति ।** अतःशब्दार्थं स्पष्टयति । **वाचकत्वेऽपीति ।** वाक्यस्य वाचकत्वेऽपि संसृष्टार्थविशेषवाचकत्वाद्धेतोर्वाक्यतदर्थयोः सभागत्वमतो वाक्यभागस्य पदस्य वाक्यार्थभागे पदार्थे संगतिराकृत्युपाधौ पदसंगतेः सुग्रहत्वान्न तु पदसमुदायस्य वाक्यस्य पदार्थसमुदाये वाक्यार्थे सा युक्ता विशेषे तद्ग्रहासंभवस्योक्तत्वादित्यर्थः ॥ ८६८ ॥

**ततश्चैवं समूहस्य वाचकत्वमवस्थितम् ॥**
**भागवत्त्वं च संसिद्धं वाक्यवाक्यार्थयोरतः ॥ ८६९ ॥**

पदस्यैव स्वार्थे योग्यान्विते शक्तिधीर्न वाक्यस्येति स्थिते फलितमाह । **ततश्चेति ।** यतो वाक्यतदर्थयोरुक्तनीत्या भागवत्त्वमेवं पदस्यैव स्वार्थे योग्यान्विते शक्तिश्च स्थिता ततः समूहस्य वाक्यस्य वाचकत्वं प्रामाण्यं प्राप्तमज्ञातविषयत्वान्न पदवदप्रमाणतेत्यर्थः ॥ ८६९ ॥

**एवं च लोकतः सिद्धो वाक्यार्थः स्याच्छ्रुतावपि ॥**
**लौकिका एव शब्दार्था न्यायेनोक्ताः श्रुतौ यतः ॥ ८७० ॥**

लोके योग्यान्वितेऽर्थे पदसामर्थ्येऽपि वेदे कथं त्वदिष्टाखण्डार्थसिद्धिस्तत्राऽऽह । **एवं चेति ।** व्यवहारतो योग्यान्विते शक्तिग्रहे सति गृहीतशक्तिपदसंहतिवशाद्वाक्यार्थः संसर्गः संसृष्टो वा लौकिकवाक्येषु यः सिद्धः स वेदेऽपि स्यादविशिष्टस्तु वाक्यार्थ इति न्यायेन लोकवेदयोः शब्दतदर्थानामविशेषान्न्यायस्तु प्रागेवानुक्रान्तत्वान्नेहानुक्रम्यतेऽतो वेदान्तेष्वपि पदानि योग्यान्विते ज्ञातशक्तीनि लक्षणयाऽखण्डमर्थं बोधयन्तीत्यर्थः ॥ ८७० ॥

**नृविवक्षाव्यवायेन लोके शङ्का भवेदपि ॥**
**वेदे त्वपौरुषेयत्वात्साक्षात्स्वार्थे प्रमाणता ॥ ८७१ ॥**

अथोभयत्र वाक्यार्थाविशेषे लौकिकवाक्यार्थवदितरस्यापि मानान्तरगोचरत्वाद्वेदस्यानपेक्षतालक्षणप्रामाण्यक्षतिरत आह । **नृविवक्षेति ।** लोके पुरुषविवक्षासंबन्धात्तस्याश्च शब्दार्थधीहेतोरनियमाद्दृष्टेऽर्थे शब्दस्यामानत्वमपि शङ्क्येत वेदे त्वपौरुषेये विवक्षाव्यवधानाभावात्तद्द्वारकदोषाभावात्स्वार्थे मानत्वं साक्षादनपेक्षं सिध्यतीत्यर्थः ॥ ८७१ ॥

**न च कार्यपरत्वेऽपि पदानां संहतिः स्थिता ॥**
**अन्यत्रावगमो न स्यात्संबन्धज्ञानवर्जनात् ॥ ८७२ ॥**

वेदस्यानपेक्षमानत्वेऽपि नाखण्डार्थता संसृष्टकार्यपरत्वादित्याशङ्क्याऽऽह । **न चेति ।** वेदस्य कार्यपरत्वे त्वदिष्टेऽपि पदसंहतिस्तत्परत्वेन न स्थिता पदानां योग्यान्विते शक्तेरुक्तत्वाज्ज्ञातशक्तिपदसमुदायस्य कार्यपरत्वानियमात्कार्यवदकार्येऽपि वाक्यप्रवृत्तेरुक्तत्वाल्लक्षणया च तेषामखण्डार्थत्वस्य दर्शितत्वादिति भावः । अन्वितकार्ये वा तदन्वितस्वार्थे वा कार्यपरपदार्थान्विते वा कार्यान्वयान्वयिनि वा शक्तिनियमात्कार्यपरता वाक्यस्येति चेन्नेत्याह । **अन्यत्रेति ।** अन्विते कार्ये शक्तिनियमे नामपदेभ्यः स्वार्थधीर्न स्यात्तेषां तेषु शक्त्यग्रहात्कार्यान्विते शक्तिनियमे पुत्रजन्मादिवाक्ये पुत्रादिपदेभ्यस्तदर्थेषु न प्रतिपत्तिस्तेषु कार्यान्वितेषु तेषां संबन्धाग्रहात्कार्यपदात्तदर्थे च नावगमः कार्यस्य कार्यान्वयाभावात्तत्र तस्य संगत्ययोगात्कार्यपरपदार्थे शक्तिनियमेऽपि तत्परत्वस्य तच्छेषत्वाव्यतिरेकादुक्तदोषतादवस्थ्यं कार्यान्वयान्वयिनि शक्तिनियमेऽपि कार्यस्येतरस्य द्वयोर्वा शक्तिप्रतियोगित्वप्राप्तेरुक्तदोषतेति भावः ॥ ८७२ ॥

**यथा च कार्ये तात्पर्यं कार्यं चापि न विद्यते ॥**
**पूर्वमेव तथाऽस्माभिर्युक्तिभिः संप्रसाधितम् ॥ ८७३ ॥**

इतश्च न कार्यपरता वेदस्येत्याह । **यथेति** ॥ ८७३ ॥

---

१ ख. नाऽपि ।

**अनादिवृद्धव्यवहृद्व्युत्पत्त्यैव च तत्स्थितेः ॥**
**शब्दस्यार्थेन संबन्ध आदिमत्ता न शङ्क्यते ॥ ८७४ ॥**

कार्यवादिनि निराकृते केचिदाहुः शब्दार्थसंबन्धस्य सांकेतिकत्वादकार्यपरत्वेऽपि शब्दस्यानपेक्षमानत्वासिद्धिरिति तान्प्रत्याह । **अनादीति** । उक्तव्यवहारनिमित्तव्युत्पत्तिशब्दितशक्तिरूपेण शब्दार्थसंबन्धस्यौत्पत्तिकसूत्रे स्थितत्वात्तस्मिन्नादिमत्ता संकेतत्वेन न शङ्कनीया तद्वेदस्य संकेतद्वारा न मापेक्षतेत्यर्थः ॥ ८७४ ॥

**प्रथमश्रवणे यत्र न शब्दार्थावधारणम् ॥**
**तत्राव्युत्पन्नता हेतुः शब्दानां न त्वशक्तिता ॥ ८७५ ॥**

ननु शब्दानां शक्तिसंबन्धे गवादिशब्दश्राविणां सर्वेषामेव कुतो नार्थधीः शब्दशक्तेः सर्वान्प्रत्यविशेषान्न चाव्युत्पन्नानां शब्दार्थधीरतस्तयोः संकेतसंबन्धोऽत आह । **प्रथमेति** । अव्युत्पन्नानां शब्दश्रवणे ततोऽर्थानवधारणं शब्दानामज्ञातशक्तित्वान्न शक्त्यतिरिक्तसंकेताख्यसंबन्धाज्ञानादित्यर्थः ॥ ८७५ ॥

**चक्षुर्दृगपि बाह्यं हि न प्रकाशं विनाऽर्थदृक् ॥**
**नैतावताऽस्य सामर्थ्यं हन्यतेऽन्यस्य वा भवेत् ॥ ८७६ ॥**

संबन्धग्रहे सत्येव शब्दार्थधीश्चेद्बुद्धिसामर्थ्यं शब्दस्य हीयेत संबन्धग्रहस्यैव वा तत्स्यात्तस्यैव प्राप्ताप्राप्तविवेकेन तद्धेतुत्वादित्याशङ्क्याऽऽह । **चक्षुरिति** । यथा चक्षुर्दृष्टिशक्तियुक्तमपि बाह्यदीपादिप्रकाशं विना न रूपादिदृष्टौ व्याप्रियते न च दीपाद्यपेक्षामात्रेणास्य दृष्टिशक्तिहतिर्नापि दीपादेः सा भवत्येवं शब्दस्य संबन्धग्रहापेक्षया बोधकत्वेऽपि न बुद्धिशक्तिहानिर्नापि सा संबन्धग्रहस्येत्यर्थः ॥ ८७६ ॥

**व्युत्पत्त्या न च संबन्धः क्रियते ह्यर्थशब्दयोः ॥**
**अवस्थिते हि संबन्धे वृद्धेभ्योऽसौ प्रजायते ॥ ८७७ ॥**

किंच संकेतपक्षे स व्युत्पत्त्या क्रियते वा केनचिदसर्वज्ञेन वा सर्वज्ञेनेश्वरेण वा नाऽऽद्य इत्याह । **व्युत्पत्त्येति** । संबन्धग्रहान्न संकेतोत्पत्तिरित्यत्र हेतुमाह । **अवस्थिते हीति** । शब्दार्थसंबन्धे स्थिते वृद्धव्यवहारवशादसौ व्युत्पत्तिरुत्पद्यते ततः सा पराचीना न प्राचीनसंबन्धमुत्पादयेदित्यर्थः ॥ ८७७ ॥

**संबन्धकरणाशक्तेस्तत्कर्तुश्चास्मृतेरपि ॥**
**तद्विना व्यवहाराच्च सिद्धा संबन्धनित्यता ॥ ८७८ ॥**

न द्वितीय इत्याह । **संबन्धेति** । न ह्यसर्वज्ञः शब्दार्थसंबन्धं कर्तुमीष्टे तत्संबन्धस्यानन्तत्वात्तन्न तत्कृतः संकेत इत्यर्थः । न तृतीय इत्याह । **तत्कर्तुरिति** । संबन्धकर्तुरीश्वरस्याननुभवाद्स्मरणाच्च न सर्वज्ञकृतोऽपि स युक्तः । नहि संकेतकर्तरीश्वरे मानमस्त्य-

---

१ ख. °शक्तता । २ ख. °केतः सं° । ३ ख. °चीनं सं° ।

नुमानागमयोरतटस्थेश्वरगामित्वादिति भावः । पक्षत्रयसाधारणं दोषमाह । **तद्विनेति** । अनेनायं संबन्धः कृत इति कर्तृस्मरणमन्तरेण शाब्दव्यवहारदृष्टेश्च न तत्कृतः स इत्यर्थः । विमतः संबन्धो नित्योऽस्मर्यमाणकर्तृकत्वादात्मवदिति फलितमाह । **सिद्धेति** ॥ ८७८ ॥

**जीर्णकूपादिवत्कर्तुर्यदप्यस्मरणं न तत् ॥**
**अभावगमकं नापि संबन्धेनास्य तुल्यता ॥ ८७९ ॥**

जीर्णकूपादिष्वनैकान्त्यमाशङ्क्याऽऽह । **जीर्णेति** । तत्र सत्येव कर्तर्यस्मरणं न तस्याभावगमकं संप्रदायविच्छेदादपि तदुपपत्तेरिह तु यत्कर्तुरस्मरणं न तत्तद्वत्कर्त्रभावागमकं संप्रदायाविच्छेदविशेषितकर्त्रस्मरणस्य तदभावाव्यभिचारादित्यर्थः । किंच शब्दार्थसंबन्धेन' जीर्णकूपादेर्न तुल्यता संबन्धस्यानन्ततया दुष्करत्वादन्यस्याल्पत्वेन सुकरत्वादतोऽसंभावितकर्तृकत्वेनापि तन्नित्यत्वमनुमेयमित्याह । **नापीति** ॥ ८७९ ॥

**क्वचिज्ज्ञातेषु दूरादिकारणे संशयोऽपि च ॥**
**नात्यन्तानुपलब्धेषु त्वभावोऽतोऽस्य निश्चितः ॥ ८८० ॥**

योग्यानुपलब्ध्या कर्तुरभावनिश्चयाच्च संबन्धनित्यतेत्याह । **क्वचिदिति** । लोके क्वचिद्देशे काले च सामान्यदृष्टेष्वर्थेषु दूरान्धकारादिहेतोर्विशेषाग्रहे च स्थाणुः पुमान्वेत्यादिः संशयो दृष्टो नात्यन्तमदृष्टेषु साधारणग्रहहेत्वभावादिह तु संबन्धकर्तुः सर्वथाऽनुपलम्भान्न तत्संशयोऽपि तन्निश्चयस्तु कुतस्त्योऽतो योग्यानुपलम्भादस्याभावनिश्चयाद्युक्ता संबन्धनित्यतेत्यर्थः ॥ ८८० ॥

**संनिकृष्टार्थसंसृष्टस्वार्थमात्राभिधानतः ॥**
**तस्मात्सिद्धोऽत्र वाक्यार्थो लोके वेदे प्रमाणवान् ॥ ८८१ ॥**

संबन्धस्य संकेतत्वं निरस्य शक्तित्वं व्यवस्थाप्य योग्यान्विते शक्तिमुपेत्येष्टेऽर्थे शब्दप्रामाण्यमुपसंहरति । **संनिकृष्टेति** । संनिधानादिमताऽर्थेन संसृष्टस्य स्वार्थमात्रस्य कार्याकार्योदासीनस्य पदैरभिधानात्पदार्थसंसर्गः संसृष्टपदार्थो वा वाक्यार्थो लोकवेदयोः प्रामाणिकः सिद्ध इति योजना । समानाधिकरणे पञ्चम्यौ । एवमुत्सर्गे स्थिते वेदान्तेषु तात्पर्यमालोच्याखण्डार्थतासिद्धिरित्यर्थः ॥ ८८१ ॥

**अतोऽवबोधकत्वेन दुष्टकारणवर्जनात् ॥**
**अबाधाच्च प्रमाणत्वं वस्तुन्यक्षादिवच्छ्रुतेः ॥ ८८२ ॥**

किंच वस्तुनि शब्दस्यामानत्वमबोधकत्वाद्वा सांशयिकत्वाद्वा विपर्ययहेतुत्वाद्वा पुमर्थाभावाद्वेति विकल्प्य त्रयं क्रमेण निरस्यति । **अत इत्यादिना** । अतः श्रुतेरिति संबन्धः । अस्यास्तत्त्वमस्यादिश्रुतेरधिकृतं प्रति बोधकत्वादपौरुषेयत्वाच्च तदुत्थबोधस्यादुष्टकारण-

कत्वेन संशयविपर्ययातिरेकाद्बाधकाभावेन बाधानुपलब्धेश्च विपर्ययत्वायोगाद्युक्तमस्या वस्तुनि चक्षुरादिवत्प्रामाण्यमित्यर्थः ॥ ८८२ ॥

**पुरुषार्थोपदेष्टृत्वाद्यद्वत्कार्ये प्रमाणता ॥**
**तथैकात्म्ये विशेषाद्वा पुमर्थातिशयत्वतः ॥ ८८३ ॥**

चतुर्थं प्रत्याह । **पुरुषार्थेति** । कार्यसाम्यमैक्यस्योपेत्य शब्दस्योभयत्र प्रामाण्याविशेषमुक्त्वैक्ये श्रुतेस्तत्त्वावेदनं प्रामाण्यमित्यातिशयमाह । **विशेषाद्वेति** । अबाधितपुमर्थत्वादात्मनो मेयस्योक्तविशेषे हेतुमाह । **पुमर्थेति** । निरतिशयपुरुषार्थमज्ञातं ज्ञापयन्स्तत्त्वमादेस्तात्त्विकमानतेति भावः ॥ ८८३ ॥

**पुमानिष्टस्य संप्राप्तिमनिष्टस्य च वर्जनम् ॥**
**इच्छन्नपेक्षते योग्यमुपायमपि तत्परः ॥ ८८४ ॥**

प्रतीचो वाक्यार्थीभूतस्य पुमर्थातिशयत्वं विशदीकर्तुं तद्वैविध्यमाह । **पुमानिति** । इष्टलक्षणं फलमित्युपगमात्फलत्वं तयोः साधयति । **इच्छन्निति** । साधनाधीनं साध्यमिति न्यायं सूचयति । **अपेक्षत इति** । योग्यमुपेयोत्पादनशक्तमित्यर्थः । तत्परः फले तद्धेतौ च तात्पर्यवानिति यावत् ॥ ८८४ ॥

**ग्रामादि किंचिदप्राप्तं प्राप्तुमिष्टमिहेच्छति ॥**
**हेमादि विस्मृतं किंचित्करस्थमपि लिप्सते ॥ ८८५ ॥**

नहि द्विविधस्यापि पुमर्थस्य साधनसाध्यत्वेनानित्यत्वादात्मनि पुमर्थातिशयासिद्धिरित्याशङ्क्येष्टप्राप्तिं भिनत्ति । **ग्रामादीति** । इहेति व्यवहारभूमिरुच्यते ॥ ८८५ ॥

**परिहार्यं तथाऽनिष्टं कण्टकादि जिहासति ॥**
**रज्ज्वां सर्पादि किंचिच्च त्यक्तमेव जिहासति ॥ ८८६ ॥**

अनिष्टनिवृत्तिमपि विभजते । **परिहार्यमिति** ॥ ८८६ ॥

**नियतोपायसाध्यत्वादवाप्यपरिहार्ययोः ॥**
**विधितः प्रतिषेधाच्च साधनापेक्षता भवेत् ॥ ८८७ ॥**

अप्राप्तस्यापरिहृतस्य च प्राप्तिपरिहारयोरुपायमाह । **नियतेति** । अप्राप्तप्राप्तेरपरिहृतपरिहारस्य च शास्त्रान्वयव्यतिरेकसिद्धोपायसाध्यत्वाद्विधिनिषेधाभ्यामन्वयव्यतिरेकाभ्यां च साधनभेदं ज्ञात्वा तदनुष्ठानेन प्रेप्सितमप्राप्तं प्राप्नोत्यपरिहृतं च परिजिहीर्षितं परिहरतीत्यर्थः ॥ ८८७ ॥

**अज्ञानान्तरितत्वेन संप्राप्तत्यक्तयोः पुनः ॥**
**याथात्म्यज्ञानतो नान्यत्पुरुषार्थाय कल्पते ॥ ८८८ ॥**

अवशिष्टयोराप्तिपरिहारयोरुपायमाह । **अज्ञानेति** । प्राप्तस्य त्यक्तस्य चाज्ञाना-

च्छन्नत्वेन प्रेप्साजिहासयोर्भावे तत्त्वज्ञानमेव पुरुषार्थाय तयोराप्तिपरिहाराय समर्थी भवतीत्यर्थः ॥ ८८८ ॥

**अशेषानर्थविच्छेदं वाञ्छतः श्रुतितः श्रुतेः ॥**
**त्वं ब्रह्मेति हताशेषक्लेशो मोहप्रहाणतः ॥ ८८९ ॥**

एवं विभागेऽपि कथं वेदान्तवेद्ये पुमर्थातिशयत्वसिद्धिस्तत्राऽऽह । **अशेषेति** । मोक्षमाणस्य तत्त्वमादिवाक्यात्त्वं ब्रह्मेति ब्रह्मात्मत्वे ज्ञाते ज्ञातब्रह्मामनिरस्तसमस्तक्लेशो भवति तद्धेतोर्मोहस्याभावादतोऽनतिशयाबाधितपुमर्थे ब्रह्मात्मनि युक्तं तात्त्विकमानत्वं वेदान्तानामित्यर्थः ॥ ८८९ ॥

**वेदस्य सिद्धे प्रामाण्ये ह्यज्ञातार्थावबोधतः ॥**
**कार्ये यथा प्रमाणत्वमैकात्म्येऽप्येवमिष्यताम् ॥ ८९० ॥**

इतश्च तस्मिन्मानत्वं तेषामित्याह । **वेदस्येति** । अज्ञातार्थबोधित्वाद्वेदस्य मानत्वे स्थिते कार्यवाक्यानामज्ञातकार्यबोधिनां स्वार्थे मानत्ववदैक्यवाक्यानामप्यज्ञातं तद्बोधयतां तस्मिन्मानत्वमनधिगतगन्तृत्वाविशेषादित्यसकृदुक्तमित्यर्थः ॥ ८९० ॥

**कार्याद्यदि तु मानत्वं मानत्वात्कार्यनिष्ठता ॥**
**अन्योन्याश्रयतैवं स्यादेकस्यासिद्धितोऽन्यतः ॥ ८९१ ॥**

ननु तत्त्वमादिवाक्यं स्वार्थे मानमबुद्धबोधित्वात्कार्यवाक्यवदित्ययुक्तं वाक्यप्रामाण्ये कार्यनिष्ठत्वस्य प्रयोजकत्वात्तत्राऽऽह । **कार्यादिति** । कार्यनिष्ठत्वाद्यदि वेदस्य मानत्वमेवं सत्यन्योन्याश्रयता वेदस्य मानत्वात्कार्यनिष्ठता ततो मानतेति तयोरेकस्याप्यन्यतोऽसिद्धेरित्यर्थः । कार्यनिष्ठत्वं वेदप्रामाण्ये न प्रयोजकं व्यतिरेकासिद्धेरिति तु शब्दार्थः ॥ ८९१ ॥

**औदासीन्यान्निषेधेषु न लभ्येत प्रमाणता ॥**
**औदासीन्यं निवृत्तिर्हि स्वरूपालम्बनं च तत् ॥ ८९२ ॥**

ननु विमतं न स्वार्थे मानमकार्यनिष्ठवाक्यत्वात्संमतवदिति व्यतिरेकसिद्धिमाशङ्क्याऽऽह । **औदासीन्यादिति** । न हन्तव्यो न पिबेदित्यादिनिषेधेषु कार्यविलक्षणमौदासीन्यमर्थः कार्यमेव वेदार्थश्चेत्तेष्वमानता स्वीक्रियते न तेषामपि मानत्वमतो व्यभिचारो हेतोरित्यर्थः । औदासीन्यस्यैव कार्यत्वात्तन्निष्ठनिषेधेषु न व्यभिचार इत्याशङ्क्याऽऽह । **औदासीन्यमिति** । प्राप्तक्रियानिवृत्तिरौदासीन्यं न कार्यमित्यर्थः । निवृत्तिरेव तर्हि कार्यं नेत्याह । **स्वरूपेति** । वस्त्वेव निवृत्तिर्नहि कूटस्थाद्द्वयादन्या साऽस्त्यन्यत्वेऽपि तस्या न कार्यतेति कुतो निषेधानां तन्निष्ठतेत्यर्थः ॥ ८९२ ॥

**सोऽरोदीत्यादिवाक्यानां कार्यावेशात्प्रमाणता ॥**
**अपुमर्थोपदेष्टृत्वात्तच्च नात्रेत्यकारणम् ॥ ८९३ ॥**

प्राप्तक्रियानिवृत्त्युपलक्षितस्वास्थ्याप्रच्युतिरूपौदासीन्याकार्यावसायिनामपि निषेधानां प्रामाण्यवदैक्यवाक्यानामपि स्वार्थे तदित्युक्तम् । ननु तत्त्वमादिवाक्यं कार्यशेषे मानं विधिशून्यवेदवाक्यत्वात्संमतवदित्याशङ्क्य स्वार्थे पुमर्थराहित्यमुपाधिरित्युक्तमेव स्मारयति । सोऽरोदीति । साधनव्याप्तिं निराह । तच्चेति । नहि तत्त्वमादावपुमर्थोपदेष्टृत्वं तदर्थस्यैक्यस्य परानन्दतया पुरुषार्थत्वोक्तेरित्यर्थः । सोपाधित्वादुक्तं साधनमगमकमिति फलितमाह । इत्यकारणमिति ॥ ८९३ ॥

**न चैकात्म्याभ्युपायस्य मिथ्यात्वमिह शङ्क्यते ॥**
**उपेयाप्तौ कृतार्थत्वादुपायं प्रत्यनीक्षणात् ॥ ८९४ ॥**

विधिविधुरवेदवाक्यत्वानुमानायोगेऽपि तत्त्वमादिवाक्यजा धीर्न प्रमा मिथ्याकारणकत्वाद्भ्रमाभासोत्थज्ञानवदित्याशङ्क्याऽऽह । न चेति । तत्त्वज्ञानोपायस्य श्रुत्यादेर्मिथ्यात्वं तज्जन्ये ज्ञाने प्रमात्वाभावे न प्रयोजकत्वेनाऽऽशङ्क्यते तत्र प्रमाफलराहित्यस्योपाधित्वादित्यर्थः । साधनव्याप्तिमाशङ्क्याऽऽह । उपेयेति । उपेयस्य ज्ञानस्याऽऽप्तौ मुक्तिफलतया पुरुषस्य कृतार्थत्वादुपायं श्रुत्यादिं प्रत्यन्वेषणाभावादप्रयोजको हेतुरित्यर्थः ॥ ८९४ ॥

**ऐकात्म्यप्रतिपत्तेः प्राङ्न मिथ्या हेत्वभावतः ॥**
**पुरुषार्थावसायित्वान्नाप्यूर्ध्वमनपेक्षतः ॥ ८९५ ॥**

किंचोपायस्य मिथ्यात्वज्ञानममानत्वहेतुस्वरूपेण वा तज्ज्ञानमपि वस्तुज्ञानात्प्रागूर्ध्वं वेति विकल्प्याऽऽद्यं दूषयति । ऐकात्म्येति । वाक्यार्थज्ञानात्प्रागुपायो न मिथ्येति तत्प्रतीतौ गमकाभावादतो हेत्वसिद्धिरित्यर्थः । द्वितीयं दूषयति । पुरुषार्थेति । तत्त्वज्ञानादूर्ध्वमुपायमिथ्यात्वं ज्ञातमपि नोपेये ज्ञाने प्रमात्वं विहन्ति तत्फलस्य मोक्षस्याऽऽप्तत्वेन मानापेक्षाभावादुक्तोपाधितादवस्थ्यादित्यर्थः ॥ ८९५ ॥

**उपेयबोधनं मुक्त्वा मितेर्नान्याऽस्ति सत्यता ॥**
**सत्यादप्यनुपायत्वाद्घटान्नाग्निर्हि गम्यते ॥ ८९६ ॥**

किंचोपायस्य मिथ्यात्वे तज्जा धीर्न प्रमेति वदता मिथ्याभूतस्योपायत्वं नेति वा विवक्ष्यते सत्यस्योपायत्वमिति वा नाऽऽद्यो मिथ्याभूतस्यापि प्रतिबिम्बादेरुपायतोपगमाद्द्वितीये तूपायस्य सत्यत्वं कार्यकरत्वं वा बाधवैधुर्यं वा तत्राऽऽद्यमुपेत्य द्वितीयं दूषयति । उपेयेति । मितिशब्देन तदुपायः श्रुत्यादिर्लक्ष्यते तस्योपेयबोधनस्वरूपं कार्यकरत्वमिष्टमेवातस्तादृशमसत्यत्वशून्योपायजन्यत्वं विमते ज्ञाने नास्तीत्यसिद्धिः कार्यकरत्वं विना नोपायस्य बाधवैधुर्यरूपा सत्यताऽस्ति नेह नानेत्यादिबाधस्य स्पष्टत्वात्तथा च तथाविधतत्त्वताहीनहेतुजत्वहेतावुक्तोपाधिमत्त्वमिति भावः । किंच सत्यत्वमुपायत्वे न

---

१ क. °दादिति ।

प्रयोजकं न हि सत्यादपि घटादग्निर्गम्यते तस्य सत्यत्वेऽपि तज्ज्ञानोपायत्वाभावादित्याह । **सत्यादिति** ॥ ८९६ ॥

**धूमाभासात्तु बाष्पादेर्यदग्निर्नावगम्यते ॥**
**हेतुस्तत्रानुपायत्वमसत्यत्वं पुनर्न तु ॥ ८९७ ॥**

विमतं न मानमसत्यत्वाद्धूमाभासवदिति स्वरूपेणोपायमिथ्यात्वमप्रमात्वे प्रयोजकमिति द्वितीयं पक्षमाशङ्क्याव्यभिचरितसंबन्धराहित्यस्योपाधित्वान्मैवमित्याह । **धूमेति** ॥ ८९७ ॥

**धूमवत्परमार्थत्वमुपायत्वान्न लभ्यते ॥**
**वेदान्तानां तथैकात्म्यश्रुतिबाधः स्फुटोभवेत् ॥ ८९८ ॥**

तर्हि श्रुत्याद्यपि सत्यमुपायत्वाद्धूमवदित्याशङ्क्याऽऽह । **धूमवदिति** । तत्र हेतुमाह । **तथेति** । श्रुत्यादेः सत्यत्वे सतीति यावत् ॥ ८९८ ॥

**बाष्पवन्नापि मिथ्यात्वादनुपायत्वमिष्यते ॥**
**ऐकात्म्याबोधबाधेन सिद्धा तूपायसत्यता ॥ ८९९ ॥**

विमतमुपेयेनाव्यभिचरितसंबन्धरहितमसत्यत्वाद्बाष्पवदिति धूमाभासादित्यत्रोक्तोपाधेः साधनव्याप्तिमाशङ्क्याऽऽह । **बाष्पवदिति** । तत्र हेत्वसिद्धिं हेतुमाह । **ऐकात्म्येति** । कार्यकरत्वाख्यसत्यत्वस्येष्टत्वाद्धेत्वसिद्धिः परमार्थसत्यताभावस्य धूमादावपि भावादनैकान्तिकतेति भावः ॥ ८९९ ॥

**श्रुतेरैकात्म्यसंवित्तौ चरितार्थत्वतो मितेः ॥**
**वृथोपायपरीक्षा स्यादुत्तीर्णस्य प्लवे यथा ॥ ९०० ॥**

ऐकात्म्यबोधित्वे सत्युपायस्य सत्यत्वं तस्मिन्सति तद्बोधित्वमित्यन्योन्याश्रयत्वमाशङ्क्योदासीनश्रुत्यादेर्वस्तुप्रमितौ पुरुषस्य कृतार्थित्वादुपायान्वेषणवैयर्थ्यान्मितेरूर्ध्वं तदुपायबाधेऽप्यविरोधान्नान्योन्याश्रयतेत्याह । **श्रुतेरिति** । प्रमितौ सत्यामुपायान्वेषणं वृथेत्यत्र दृष्टान्तमाह । **उत्तीर्णस्येति** ॥ ९०० ॥

**बाह्येष्वर्थेष्वनात्मत्वात्पुनः शङ्का भवेदपि ॥**
**अत्राऽऽत्मत्वादुपेयस्य का शङ्का मानतां प्रति ॥ ९०१ ॥**

इतश्च श्रुत्यादेः सत्यत्वाभावेऽपि नाबोधकत्वमित्याह । **बाह्येष्विति** । अनात्मस्वध्यक्षादिसिद्धेष्वपि तथा न वेति मातुः शङ्का संभाव्यते तेषामनात्मत्वाच्छ्रुत्यादिमेयेऽर्थे तस्याऽऽत्मत्वादुपायमिथ्यात्वेऽपि स्वरूपबोधिनो मानत्वाभावं प्रत्याशङ्कैव नोत्तिष्ठेदित्यर्थः । यद्वा श्रुत्यादेर्मिथ्यात्वशङ्कैव नास्तीत्याह । **बाह्येष्विति** । वह्न्यादिषूपायस्यानात्मत्वान्मिथ्यात्वशङ्काऽपि स्यादैकात्म्ये तु श्रुत्याद्युपायस्याऽऽत्ममात्रत्वात्तदमानत्वं

---

१ ख. प्रतौ ।

मिथ्यात्वं प्रत्याशङ्क्याऽपि नोदेत्यतः श्रुत्यादेः स्वरूपेण सत्यत्वात्कल्पितभेदाच्चोपायत्वादुपपन्नं ब्रह्मात्मनि वेदान्तप्रामाण्यमिति भावः ॥ ९०१ ॥

**अन्यत्रेव न चाप्यत्र वाक्यार्थो भेदलक्षणः ॥**
**संसर्गलक्षणो वाऽपि ब्रह्मात्माभेदतो भवेत् ॥ ९०२ ॥**

तर्हि तस्य परेष्टवाक्यार्थत्वप्रसङ्गादखण्डत्वहानिरित्याशङ्क्याऽऽह । **अन्यत्रेति ।** गामानयेत्यत्र क्रियाकारकसंबन्धभेदो वाक्यार्थो नीलमुत्पलमित्यत्र समानविभक्तिपदोक्तपदार्थसंसर्गो वाक्यार्थो नैवं तत्त्वमादौ तत्त्वमर्थयोरैक्यार्थत्वादित्यर्थः ॥९०२॥

**ब्रह्मणोऽनात्मतारूपमब्रह्मत्वं तथाऽऽत्मनः ॥**
**अज्ञानलक्षणं शास्त्राज्ज्ञानं हन्ति समुत्पतत् ॥ ९०३ ॥**

ब्रह्मात्मानौ नाभिन्नौ मिथो विरुद्धत्वाच्छीतोष्णवदित्यनुमानात्कथमखण्डतेत्याशङ्क्य प्रामाणिकविरुद्धत्वस्यासिद्धत्वादितरस्य बिम्बप्रतिबिम्बयोरनैकान्त्यान्नैवमित्याह । **ब्रह्मण इति ।** अब्रह्मत्वादेरज्ञानकृतत्वे फलितमाह । **शास्त्रादिति** ॥ ९०३ ॥

**नेहान्यत्राऽऽत्मनो ब्रह्म तथाऽऽत्मा ब्रह्मणोऽन्यतः ॥**
**तादात्म्यमनयोस्तस्मान्नीलोत्पलविलक्षणम् ॥ ९०४ ॥**

ब्रह्मात्मनोरभेदवद्भेदस्यापि भावान्नीलोत्पलयोरिव संसर्गोऽत्र वाक्यार्थः स्यादिति चेन्नेत्याह । **नेहेति ।** शास्त्रमिहेत्युच्यते । प्रतीचो ब्रह्मान्यच्चेद्घटवदब्रह्म स्यात्सोऽपि ब्रह्मणोऽन्यश्चेत्तद्वदनात्मा स्यात्तस्मान्नीलोत्पलयोर्भेदसहाभेदवत्तयोर्न तादात्म्यं किंत्वैकरस्यमित्यर्थः ॥ ९०४ ॥

**अब्रह्मानात्मते यद्वदत्राज्ञाननिबन्धने ॥**
**आत्मताब्रह्मते नैवमन्यस्मादित्यतः स्वतः ॥ ९०५ ॥**

ब्रह्मणोऽनात्मत्वमात्मनश्चाब्रह्मत्वमाविद्यमितिवदात्मत्वं ब्रह्मणो ब्रह्मत्वं चाऽऽत्मनोऽज्ञानकृतं किं न स्यादित्याशङ्क्याऽऽह । **अब्रह्मेति ।** अत्रेत्यात्मादिनिर्देशः । अन्यस्मादित्यज्ञानोक्तिः । भेदस्यान्योन्याश्रयादिदुष्टत्वात्कल्पितत्वं नाभेदस्येति मत्वाऽऽत्मनो ब्रह्मत्वं ब्रह्मणश्चाऽऽत्मत्वं स्वाभाविकमिति फलितमाह । **इत्यत इति** ॥ ९०५ ॥

**नाम्नोरेवं च संबन्ध ऐकात्म्यात्स्यात्क्रियां विना ॥**
**षष्ठीं च न क्रियाषष्ठ्योर्विना भेदात्प्रवर्तनम् ॥ ९०६ ॥**

ब्रह्मात्मनोर्भेदलेशाभावे षष्ठीगुणक्रियादिप्रवृत्तिनिमित्ताभावात्तत्त्वंपदयोरैक्ये न प्रवृत्तिरित्याशङ्क्याऽऽह । **नाम्नोरिति ।** भेदगन्धस्याप्यभावे सति क्रियाद्यतिरेकेणैव तयोरेकार्थप्रवृत्तौ हेतुमाह । **ऐकात्म्यादिति ।** पदार्थस्यैकरस्यात्तस्मिन्भेदस्य दुर्निरूपत्वादित्यर्थः । एकरसेऽपि कथं निमित्ताभावे शब्दप्रवृत्तिरित्याशङ्क्य लक्षणयेति मत्वाऽऽह । **न क्रियेति** ॥ ९०६ ॥

**महत्ता यद्वदाकाशे घटाकाशव्यपेक्षया ॥**
**पराक्त्वापेक्षया तद्वत्प्रत्यक्ता नाऽऽत्मनीक्ष्यते[1] ॥ १०७ ॥**

प्रत्यग्ब्रह्मणोर्भेदाभावेऽपि प्रत्यगनात्मनोः स वाच्यः प्रत्यक्त्वस्य पराग्रूपापेक्षत्वात्तन्नाखण्डतेति शङ्कते । **महत्तेति** । न प्रत्यक्त्वमात्मनि पराक्त्वापेक्षं किंतु स्वाभाविकमिति समाधत्ते । **नाऽऽत्मनीति** । तत्र विद्वदनुभवं प्रमाणयति । **ईक्ष्यत[2] इति** ॥ १०७ ॥

**प्रत्यक्त्वमद्वितीयत्वं बोधवन्नान्यबन्धनम् ॥**
**अपारार्थ्यान्न बोधो हि स्यादबोधनिरासतः ॥ १०८ ॥**

तथाऽपि द्वयापेक्षत्वादद्वयस्य वस्तुनो नाखण्डतेत्याशङ्क्याऽऽह । **प्रत्यक्त्वमिति** । प्रत्यक्ताऽस्य स्वतो रूपं निष्क्रियाकारताफलमिति न्यायेन सामानाधिकरण्यमज्ञानहानिमपेक्ष्य ब्रह्मणि बोधोक्तेर्दृष्टान्तस्य साध्यशून्यतेत्याशङ्क्याऽऽह । **अपारार्थ्यादिति** । **प्रज्ञानं** ब्रह्मेत्यादिश्रुतेर्बोधस्य स्वरूपत्वान्नासौ जडपर्युदासेन ब्रह्मण्युच्यते तथाऽद्वयत्वमपि तस्य पूर्णतापर्यायमनन्यापेक्षं रूपमिति सिद्धा ब्रह्मणोऽखण्डतेत्यर्थः ॥ १०८ ॥

**आत्माऽपि सदिदं ब्रह्म मोहात्पारोक्ष्यदूषितम् ॥**
**ब्रह्मापि संस्तथैवाऽऽत्मा सद्वितीयतयेक्ष्यते ॥ १०९ ॥**

वेदान्तानामखण्डैकरसे ब्रह्मात्मनि [illegible] । **आत्माऽपीत्यादिना** ॥ १०९ ॥

**आत्मा ब्रह्मेति पारोक्ष्यसद्वितीयत्वबाधनात् ॥**
**पुमर्थे निष्ठितं शास्त्रमिति सिद्धं समीहितम् ॥ ११० ॥**

ब्रह्मणि परोक्षस्याऽऽत्मनि सद्वयत्वस्य च प्रतीतौ कथमभेदबोधनमत आह । **आत्मेति** । ब्रह्मण्यात्मसंबन्धात्पारोक्ष्यस्याऽऽत्मनि च ब्रह्मसंबन्धात्सद्वयत्वस्य निरासात्परानन्दतया परमपुरुषार्थे वाक्यमैक्ये तात्पर्येण पर्यवसितमित्यर्थः । समन्वये सिद्धे वाक्यीयैक्यज्ञानादेव मुक्तिरिति फलितमाह । **इति सिद्धमिति** ॥ ११० ॥

**ननु भेदाश्रितैर्वाक्यैर्विधायकनिषेधकैः ॥**
**अक्षादिभिश्च नैकात्म्यं बाधितत्वात्प्रमाणवत् ॥ १११ ॥**

उक्तं समन्वयमसहमानश्चोदयति । **नन्विति** । विधिनिषेधवाक्यान्यध्यक्षादीनि च भेदविषयाणि तैरैक्यस्य बाधितत्वान्न तस्य वेदान्तगम्यतेत्यर्थः ॥ १११ ॥

**न चाप्यैकात्म्यशास्त्रस्य तैर्विकल्पसमुच्चयौ ॥**
**प्रामाण्ये नापि बाध्यत्वं तेषां तेन कथंचन ॥ ११२ ॥**

वेदान्तानामप्यविशेषात्प्रामाण्ये तैरध्यक्षादिभिर्विकल्पः समुच्चयो वा वेदान्तानां

---

१ ख. °नीक्षते । २ ख. ईक्षत ।

प्रामाण्यं स्यादतो वेदान्तवेद्यं वाऽध्यक्षादिगम्यं वा द्वयमपि वा वस्त्वित्याशङ्क्याऽऽह । न चेति । षोडशिग्रहणाग्रहणवत्प्रामाण्यं शास्त्रस्येतरेषां चेति न विकल्पः । षड्यागवत्तस्य तेषां च मानतेति न समुच्चयोऽपीत्यर्थः । अस्तु तर्हि शास्त्रेणान्येषां बाध्यतेत्याह । नापीति ॥ ९१२ ॥

**विरुद्धमानभावेऽपि न हि वस्तु विकल्प्यते ॥**
**भेदाभेदौ न च स्यातां विरोधाद्युगपत्क्वचित् ॥ ९१३ ॥**

तुल्यबलविरुद्धमानसत्त्वे किमिति विकल्पो न भवतीत्याशङ्क्याऽऽह । विरुद्धेति । क्रियायामेव विकल्पो न वस्तुनि प्रामाण्यं च वस्तुत्वान्न विकल्पार्हमन्यथा तद्द्वारा वस्तुन्यपि तत्प्रसङ्गात्तस्य चायोगादित्यर्थः । समुच्चये च भेदाभेदौ स्यातां न च क्वचिदपि युगपत्तौ युक्तौ भावाभावयोरेकत्र विरोधादन्यथा तद्वार्तानवकाशादिति मत्वा प्रामाण्यसमुच्चयं प्रत्याह । भेदाभेदाविति ॥ ९१३ ॥

**भिन्नाभिन्नं न वो वस्तु येन मानाविरोधिता ॥**
**नेह नानेति भेदानां निषेधात्क्व नु भेदधीः ॥ ९१४ ॥**

ऐकात्म्यवादिनां भेदाभेदाङ्गीकारे सिद्धान्तविरोधदोषान्तरमाह । भिन्नेति । भिन्नाभिन्नार्थाभ्युपगमेनोभयविधमानानां मानत्वादविरोधिता वाच्या सा च तदभावादेव निरस्तेत्याह । येनेति । किंच तादृग्वस्तु त्वया नोपेयमुपेतश्रुतिविरोधादित्याह । नेहेति ॥ ९१४ ॥

**वर्णादिग्रहणोपायो नापीहाक्षादि बाध्यते ॥**
**संस्काराय च यच्छास्त्रमात्मज्ञानोपकारकम् ॥ ९१५ ॥**

शास्त्रस्याध्यक्षादीनां च विकल्पसमुच्चयौ प्रत्यादिश्य नापि बाध्यत्वमित्यत्र हेतुमाह । वर्णादीति । प्रत्यक्षादि तावद्वर्णपदवाक्यादिग्रहोपायो न च शास्त्रेण तद्बाधो युक्तस्तथा सति हेत्वभावाद्वस्तुनि ज्ञानासिद्धेर्मोक्षाभावप्रसङ्गादित्यर्थः । ऐक्यशास्त्रेण कर्मशास्त्रस्याबाधे हेतुमाह । संस्कारायेति । यत्कर्मकाण्डं स्वार्थानुष्ठानद्वारा बुद्धिशुद्धये भवदात्मज्ञानस्य परंपरयोत्पादकं तद्बाधे कर्माभावाज्ज्ञानाभावस्तस्मात्कर्मकाण्डमध्यक्षादि चाबाध्यमित्यर्थः ॥ ९१५ ॥

**उपचारार्थतः शास्त्रं सावकाशं जपेऽथवा ॥**
**अक्षादेरकृतार्थत्वात्कथं स्यात्तेन बाधनम् ॥ ९१६ ॥**

का तर्हि वेदान्तानां गतिस्तामाह । उपचारेति । ग्रामीणप्रधानपुंसोऽद्वयत्वोपचारवदुपचरितं ब्रह्माद्वैतमाश्रित्य शास्त्रं चरितार्थमित्यर्थः । गत्यन्तरमाह । जप इति । किंच सावकाशनिरवकाशयोर्निरवकाशं बलवदिति न्यायाद्वैतमानानामृते द्वैतादनवकाशानां दर्शितरीत्या सावकाशेन शास्त्रेण न बाध्यतेत्याह । अक्षादेरिति ॥ ९१६ ॥

उच्यते लोकतः सिद्धं भेदमाश्रित्य चोदना ॥
प्रवृत्ता पुरुषार्थाय न तु भेदावबुद्धये ॥ ९१७ ॥

द्वैतग्राहिमानविरोधान्न वेदान्तानामेकरसे ब्रह्मणि प्रामाण्यमिति प्राप्ते सिद्धान्तयति । **उच्यत इति** । तत्राऽऽदौ कर्मकाण्डविरोधं निरस्यति । **लोकत इति** । कर्मकाण्डं हि लौकिकं कर्त्रादिभेदमादायाभ्युदयार्थं प्रवृत्तं न भेदं प्रतिपादयितुं तस्यापूर्वत्वाभावात्तत्रा-तात्पर्यादित्यर्थः ॥ ९१७ ॥

भेदस्य चापुमर्थत्वात्तादर्थ्ये स्यादमानता ॥
पुमर्थत्वेन चास्येष्टं प्रामाण्यं वेदवादिभिः ॥ ९१८ ॥

भेदे शास्त्रस्यातात्पर्ये हेत्वन्तरमाह । **भेदस्येति** । द्वितीयाद्वै भयमिति श्रुतेर्भेदस्यानर्थ-त्वात्तन्निष्ठत्वे कर्मकाण्डस्याप्रामाण्यं स्यादित्यर्थः । किंच शास्त्रस्य पुमर्थापूर्वार्थनिष्ठत्वेन प्रामाण्यमिष्टं तद्विरोधस्ते कर्मशास्त्रस्य भेदनिष्ठत्वे स्यादित्याह । **पुमर्थत्वेनेति** ॥९१८॥

वस्तुस्वरूपसंस्पर्शिचक्षुरादिभ्य उत्थितम् ॥
भेदस्पृङ्नाक्षजाद्येवं न तेनैकात्म्यबाधनम् ॥ ९१९ ॥

कर्मकाण्डाविरोधेऽपि वेदान्तानामध्यक्षादिविरोधे कः समाधिस्तत्र प्रत्यक्षं विधायक-मेव वा निषेधकमेव वा विधिनिषेधव्यापारं वेति विकल्प्याऽऽद्यमादत्ते । **वस्त्विति** । उत्थितं ज्ञानमिति शेषः । विधिमात्रव्यापारत्वेऽध्यक्षस्य भेदाविषयत्वात्तेन वस्तुविषय-वाक्यस्य न बाधनमित्याह । **भेदेति** ॥ ९१९ ॥

प्रमेयविषयं मानं वस्तुनश्च प्रमेयता ॥
न च भेदस्य वस्तुत्वं वस्तुतत्त्वानपेक्षणात् ॥ ९२० ॥

प्रत्यक्षं भेदमपि वस्तुवत्किं न स्पृशेदित्याशङ्क्याऽऽह । **प्रमेयेति** । मानयोग्यत्वमपि भेदस्य किं न स्यात्तत्राऽऽह । **वस्तुनश्चेति** । वस्तुत्वमपि तस्यास्त्वेवेति चेन्नेत्याह । **न चेति** । तत्र हेतुमाह । **वस्त्विति** । वस्तुस्वरूपस्य निरपेक्षत्वाद्धर्म्यादिसापेक्षभेदस्य सर्पादिवत्कल्पितत्वान्न वस्तुतेत्यर्थः ॥ ९२० ॥

लब्धे हि भूतलेऽलब्धो घटस्तत्र निषिध्यते ॥
मानान्तरेण विज्ञातो नाज्ञातः शून्यताप्तितः ॥ ९२१ ॥

निषेधकमेवाध्यक्षमिति पक्षं प्रत्याह । **लब्धे हीति** । दृष्टे धर्मिण्यदृष्टस्यैव प्रतियो-गिनो निषेधो नेदमिति वा नेदमिहेति वा नहि प्रमितो निषेध्यः प्रमाणविरोधान्नचाज्ञा-तोऽज्ञातसर्वनिषेधप्रसङ्गात्तन्न निषेधकमेवाध्यक्षमित्यर्थः ॥ ९२१ ॥

व्यञ्जकस्य समायोगो वस्तुनो वस्तुनैव हि ॥
नाभावेन निरात्मत्वाद्व्यावृत्त्या वा मितेर्भवेत् ॥ ९२२ ॥

१ क. 'द्धर्मादि' ।

इतश्चाभावस्य भावेन त्रिधाऽपि न संबन्धोऽस्तीत्याह । **न योग इति ।** असतोरसंबन्धवन्न सदसतोरपि संबन्धो मिथो विरोधादित्यर्थः ॥ ९३२ ॥

**क्षितिदेशे घटाभावो घटवन्न प्रमीयते ॥**
**योगो वा समवायो वा नाभावक्षितिदेशयोः ॥ ९३३ ॥**

किंच भूतले घटश्चक्षुःसंयोगाद्भाति न तथा तत्राभावस्तस्यासंप्रयोगात्संयुक्तविशेषणत्वादेरतिप्रसङ्गित्वादतो नाभावस्य भूतले संयोगादीत्याधाराधेययोगेष्वित्यत्रोक्तं प्रपञ्चयति । **क्षितीति ।** योगशब्दः संयोगतादात्म्यविषयः ॥ ९३३ ॥

**सदात्मतैवं सर्वस्य नाभावात्मकता सतः ॥ ९३४ ॥**
**अप्यभावात्मकत्वेऽपि सतोऽभावात्मकत्वतः ॥**
**कुतो भेदावकाशः स्याद्भेदेऽसति कुतो युतिः ॥ ९३५ ॥**

किंच भावाभावयोस्तादात्म्येऽभावस्य भावान्तर्भावो वा भावस्याभावान्तर्भावो वाऽऽद्ये सदद्वैतापत्तिरित्याह । **सदात्मतेति ।** न द्वितीय इत्याह । **नाभावेति ।** मिथो विरोधादित्यर्थः । भावस्याभावान्तर्भावमुपेत्यापि दोषमाह । **अपीति ।** विरोधे सत्यपीत्याद्यस्यापेरर्थः । भावस्याभावात्मत्वेऽप्यभावमात्रशेषान्न तयोर्भेदः स्यात्तदभावे च न संबन्धत्रयमतो भावस्याभावत्वं नोपेयमित्यर्थः ॥ ९३४ ॥ ९३५ ॥

**यावत्किंचिज्जगत्यस्मिन्भेदकं वस्तु लक्ष्यते ॥**
**अनापन्नादिमध्यान्तं सदेव तदितीष्यते ॥ ९३६ ॥**

भावयोर्धर्मिप्रतियोगिनोर्मिथोयोगवद्भावाभावयोरपि स्यादित्याशङ्क्याऽऽह । **यावदिति ।** भेदकत्वेनेष्टस्य सर्वस्यादिमध्यावमानहीनमन्मात्रतया दृष्टान्तासिद्धेरचोद्यमेतदिति भावः ॥ ९३६ ॥

**सदेवेदमिति स्पष्टं सन्मूला इति चापरम् ॥**
**श्रुत्योदाहारि नः साक्षात्सदैकात्म्यावबुद्धये ॥ ९३७ ॥**

सर्वस्य सन्मात्रत्वे मानमाह । **सदेवेति ।** स्पष्टमिति श्रुतत्वाभिप्रायेणोक्तमपरमिति श्रुतार्थापत्तित्वविवक्षयेति विवेक्तव्यम् । वाक्यद्वयोदाहरणतात्पर्यमाह । **साक्षादिति ॥** ९३७ ॥

**मानाभावस्य मानत्वं मेयाभावस्य मेयता ॥**
**न्यायं न सहतेऽतीव यथा तदधुनोच्यते ॥ ९३८ ॥**

अभावस्य भावेन संबन्धं निरस्याभावस्याध्यक्षत्वं प्राधान्येन प्रत्युक्तमिदानीं मतान्तरमनुवदन्नेव तस्य न्यायविरुद्धत्वं प्रतिजानीते । **मानेति ॥** ९३८ ॥

---

१ ख. लभ्यते । २ ख. °नीक्ष्यताम् ॥ ९३६ ॥

**बोधकं यदबुद्धस्य तन्मानमिति हि स्थितिः ॥**
**न च प्रमाणतास्तित्वमीदृक्तस्मान्न युज्यते ॥ ९३९ ॥**

मानाभावस्य मानलक्षणाभावान्मानत्वासंभवं वक्तुं तल्लक्षणमाह। **बोधकमिति।** तदनाक्रान्तत्वं मानाभावस्याऽऽह । **न चेति ।** नहि मेयाभावस्याबुद्धत्वमसत्त्वान्नाप्यत एव मानाभावस्य बोधकतेत्यर्थः। लक्षणाभावे फलितमाह। **तस्मादिति। मान**तेति शेषः ॥ ९३९ ॥

**मेयाभावः प्रमाणानां यद्यभावेन गम्यते ॥**
**प्रमाणानामभावस्य गमकः को भविष्यति ॥ ९४० ॥**

किं चामितो वा मानाभावो मेयाभावं मिनोति मितो वा नाऽऽद्यः सभातो निर्गतदेव दत्तस्य तस्याम्भावसंदेहासंभवप्रसङ्गादिति मत्वा द्वितीयमादत्ते। **मेयेति। प्रमाणानाम**भावेन मितेनेति शेषः। मितस्य मानाभावस्य मानत्वे तत्प्रमापकं मानपञ्चकं तदभावो वेति विकल्पयति। **प्रमाणानामिति** ॥ ९४० ॥

**नाक्षादिपञ्चकं तस्य बोधकं सत्समन्वयात् ॥**
**नयतस्तदभावो वा मेयत्वेनैव तत्स्थितेः ॥ ९४१ ॥**

नाऽऽद्य इत्याह। **नाक्षादीति।** न द्वितीय इत्याह । **नयत इति ।** मानपञ्चकस्याभावस्तस्यैव नयतो न्यायतो न बोधको मानमेयत्वस्य भेदापेक्षत्वादित्यर्थः ॥ ९४१ ॥

**नीलादिवदभावस्य यद्यक्षादिविशेषणम् ॥**
**विशेषणेन तद्व्याप्तेस्तदभावः कुतो मितः ॥ ९४२ ॥**

किंचाभावः सविशेषणो निर्विशेषणो वाऽऽद्ये मानं मेयं वा विशेषणमाद्यमनुवदति। **नीलादिवदिति।** यथोत्पलादेर्नीलादिविशेषणं दृष्टं तथा प्रमाणमभावस्य विशेषणं चेदित्यनुवादार्थः। तर्हि नीलादिनोत्पलादेर्वैशिष्ट्यवदक्षादिना विशेषणेनाभावस्य वैशिष्ट्याद्विशिष्टोऽभावो नाक्षादिविषयस्तस्यांशतः स्वविषयत्वापत्तेर्नापि विशिष्टाभावो मानाभावविषयस्तस्य विषयत्वादक्षादेश्च विशेषणत्वे विशेषणेन विशेष्यस्य संबन्धनियमात्तस्य च निरस्तत्वादक्षाद्यभावो न प्रामाणिकः स्यादित्याह। **विशेषणेनेति** ॥ ९४२ ॥

**अथाविशेषणोऽभावो भवद्भिरभिधीयते ॥**
**मेयाभावस्य मानत्वमविशेषात्प्रसज्यते ॥ ९४३ ॥**

कल्पान्तरमाह। **अथेति।** तर्हि मानाभावस्य मानत्वं मेयाभावस्य मेयतेति विभागासिद्धिरित्याह। **मेयेति।** अविशेषादभावगताविशेषानभ्युपगमादित्यर्थः ॥ ९४३ ॥

**घटाद्यभाव इत्युक्तिर्न सम्यगिति मे मतिः ॥**
**पदानामसमर्थत्वाद्विरोधाद्वस्तुनोर्मिथः ॥ ९४४ ॥**

मेयमभावस्य विशेषणमिति पक्षं प्रत्याह। **घटादीति।** भावाभावपदयोरन्योन्यान्वये

सामर्थ्याभावादिति हेतुमाह । **पदानामिति** । कुतस्तदसामर्थ्यं तत्राऽऽह । **विरोधादिति** । भावाभावयोर्वस्त्ववस्तुत्वेन मिथोयोगविरोधात्तत्पदानां संसर्गासामर्थ्यमित्यर्थः ॥ ९४४ ॥

**भावाभावाख्यपदयोः सामर्थ्ये चेत्समासता ॥**
**घटादिनाऽनपेक्षत्वान्न समासः प्रसिध्यति ॥ ९४५ ॥**

भावाभावयोर्विरोधेऽपि तत्पदयोस्तमःप्रकाशपदयोरिव समाससंभवाद्घटाद्यभाव इत्युक्तिर्युक्तेत्याशङ्क्याऽऽह । **भावेति** । समर्थः पदविधिरिति स्मृतेर्घटादिना पदेन पदान्तरस्य सामर्थ्ये सत्येव समासश्चेत्तर्हि भावाभावपदयोर्न समासस्तदर्थयोर्मिथोविरोधित्वेनानपेक्षत्वाद्दृष्टान्तेऽपि तुल्यत्वादनुपपत्तेरित्यर्थः ॥ ९४५ ॥

**भावस्याभाव इत्यत्र षष्ठ्यर्थः कतमो मतः ॥**
**न कश्चिदपि संबन्धो नीरूपस्यासदात्मनः ॥ ९४६ ॥**

मा तर्हि समासो भूद्भावस्याभाव इति व्यासेनापि विशेषणविशेष्यत्वं निर्वक्ष्यति नेत्याह । **भावस्येति** । षष्ठी शेष इति स्मरणात्तदर्थः संबन्ध इत्याशङ्क्याऽऽह । **न कश्चिदिति** । नीरूपत्वं निःस्वभावत्वं तत्र हेतुरसदात्मन इति ॥ ९४६ ॥

**वस्त्वन्तरमभावश्चेदन्यदन्यद्भवेत्कथम् ॥**
**अन्योऽपि चेद्भवेदन्योऽविरोधो नीलवद्भवेत् ॥ ९४७ ॥**

वस्त्वन्तरस्याभावो वस्त्वन्तरमिति स्थितेर्निःस्वभावत्वमसिद्धमिति शङ्कते । **वस्त्वन्तरमिति** । घटोऽस्तीत्युक्ते घटास्तित्वयोरेकत्ववन्न सोऽस्तीत्युक्तेऽपि घटनास्तित्वयोरैक्यं वाच्यं तथा च घटाभावस्य पटत्वे घटः पट इत्युक्तं स्यान्नैतद्युक्तमन्यस्य स्थितस्य नष्टस्य वाऽन्यभावायोगादित्याह । **अन्यदिति** । यद्वा घटविशेषिताभावस्य पटत्वे विशेषणस्यापि घटस्य पटेऽन्तर्भावाद्यथोक्तं दूषणं द्रष्टव्यम् । विपक्षे नीलस्योत्पलात्मत्ववदन्यस्यान्यात्मत्वाविरोधादद्वैतापत्तिरित्याह । **अन्योऽपीति** ॥ ९४७ ॥

**संगतावविरोधी चेन्न संबन्धिनिवृत्तिकृत् ॥**
**न संबन्धिग्रहाभावे संबन्धोऽयं प्रसिध्यति ॥ ९४८ ॥**

अभावस्य भावेन तादात्म्यविरोधेऽपि संबन्धान्तराविरोधादुपपत्तिः षष्ठ्यर्थस्येति शङ्कते । **संगताविति** । संबन्धस्य निरस्तत्वान्नैवमित्याह । **नेति** । किंच येनाभावः संबध्यते तं निरुणद्धि न वा न चेद्भावाभावयोरविरोधाद्विरोधः सर्वत्र न स्यान्निरुणद्धि चेत्संगतावपि विरोधितेत्याह । **संबन्धीति** । किंचाभावः सप्रतियोगिको निष्प्रतियोगिको वाऽऽद्ये सति प्रतियोगिन्यभावयोगोऽसति वा नाऽऽद्यो विरोधान्नेतरः संबन्धिनोऽसत्त्वे तदग्रहे तत्राभावस्य संबन्धासिद्धेरित्याह । **न संबन्धीति** ॥ ९४८ ॥

संबन्धिविरहेऽसिद्धौ षष्ठ्यर्थत्वं न सिध्यति ॥
विरोधाद्युगपन्नापि विधानप्रतिषेधनम् ॥ ९४९ ॥

निष्प्रतियोगिकत्वपक्षे स्वातन्त्र्यमभावस्य स्याद्धर्मिसंबन्धस्यापास्तत्वादिति मत्वाऽऽह। **संबन्धीति**। प्रतियोगी संबन्धी तस्याभावे धर्मिसंबन्धस्य चासिद्धौ षष्ठ्यर्थत्वं संबन्धत्वं नाभावस्येत्यक्षरार्थः। निषेधकमेव प्रत्यक्षमित्यत्र निषेधार्थं तन्मानं च निराकार्षीद्यत्तु विधिनिषेधव्यापारं तादिति तत्रापि युगपद्वा विधिर्निषेधश्च विधिपूर्वको वा निषेधस्तत्पूर्वको वा विधिर्नाऽऽद्य इत्याह। **विरोधादिति** ॥ ९४९ ॥

क्षणिकत्वाद्धियां नापि स्थायिधर्मः क्रमो भवेत् ॥
अनीलाभावपृष्ठेन नापि नीलस्य वेदनम् ॥ ९५० ॥

न द्वितीय इत्याह। **क्षणिकत्वादिति**। द्वित्रिक्षणावस्थानेऽपि धियां जन्मातिरिक्तव्यापारासत्त्वमित्यपिशब्दार्थः। न तृतीय इत्याह। **अनीलेति** ॥ ९५० ॥

नह्यदृश्यनिषेधः स्याद्धटादेरिव भूतले ॥
नान्याभावविशिष्टत्वं कृत्स्नाभावगतौ भवेत् ॥ ९५१ ॥

पीतादिनिषेधमुखेन न नीलस्य धीरित्यत्र हेतुमाह। **नहीति**। दर्शनयोग्यस्य घटादेरनुपलम्भे निषेधो भूतलादौ दृष्टो न त्वयोग्यस्याण्वादेरेवमयोग्यस्य निषेधायोगादनीलमित्ययमेव न निषेधस्तदभावे तन्निषेधो द्वितीयो न स्यात्कुतस्तन्मुखेन नीलविधिर्न च विना तद्विधिमनीलमिति निषेधः प्रतियोगिधियं विना निषेधाप्रतीतेरतश्चक्रकापत्तेर्न निषेधपूर्वो विधिरित्यर्थः। किं चानीलस्य पीतादेरभावो नीलस्य विशेषणं स्वरूपं वा नाऽऽद्य इत्याह। **नान्येति**। सर्वस्यानीलस्य पीतादेस्तदभावस्य चावगतौ सत्यां नीलस्यान्याभावेन विशिष्टत्वं नान्यथा विशेषणादृष्टौ विशिष्टादृष्टेरतो नीलमालोचयतस्तदितरसर्वभावाभावदृष्टिप्रसङ्गात्तस्याश्चानीश्वराणामयोगान्नीलविधिरेव न स्यादित्यर्थः ॥ ९५१ ॥

अन्याभावस्य भावत्वे स्यादभावः खपुष्पवत् ॥
भावान्तरमभावश्चेत्सिद्धं[1] वस्तु ततः स्वतः ॥ ९५२ ॥

न द्वितीय इत्याह। **अन्येति**। पीताद्यभावस्य नीलरूपत्वे नीलस्याभावान्तर्भावो वा तस्य नीलान्तर्भावो वाऽऽद्ये नभोनलिनवन्नीलं तुच्छं स्यात्। द्वितीये त्वभावस्तद्वदविद्यमानः स्यादित्यर्थः। अभावस्य तुच्छत्वं परिहर्तुं परिहृतमेव चोद्यमनुद्रवति। **भावान्तरमिति**। तर्हि भावोऽभावो वोभयथाऽपि भेदाभावयोरभावात्ताभ्यामस्पृष्टं वस्तु स्वतःसिद्धमित्याह। **सिद्धमिति** ॥ ९५२ ॥

तद्ग्राहीणि च मानानि व्यावृत्तिः केन गम्यते ॥
चित्रेऽपि विषये चित्रमेकं वस्त्वेकमानतः ॥ ९५३ ॥

१ क ग. 'वस्त्वभा'।

त्वेन सिध्यति पट एव घटस्याभावस्तस्मिन्सिद्धे सत्यपटो घटः पटाभावत्वेन सिध्यतीत्यर्थः । उभयत्र फलितं दोष माह । **अन्योन्येति ।** घटपटयोरन्योन्यमभावरूपेण दृष्टेरिष्टत्वात्तत्पक्षे घटसिद्धौ पटसिद्धिः पटसिद्धौ च घटसिद्धिरित्यन्योन्याश्रयान्न किंचिदपि सिध्येदतो भेदाभावयोरभावादद्वयं वस्तु स्यादित्यर्थः ॥ ९५९ ॥

**प्रत्यक्षत्वं पृथक्त्वस्य गुणत्वाद्यैरपीष्यते ॥**
**तेषामपि गुणे मानं नीलवन्न त्ववस्तुनि ॥ ९६० ॥**

मीमांसकादिपक्षे भेदाभावयोरसिद्धिमुक्त्वा वैशेषिकादिपक्षेऽपि भेदासिद्धिं वक्तुमारभते । **प्रत्यक्षत्वमिति ।** पृथक्त्वं भेदस्तस्य गुणत्वेन वस्तुत्वात्प्रत्यक्षत्वं यैरपीष्टं तन्मतेऽपि नीलादिष्विव प्रत्यक्षं गुणे मानं तस्य वस्तुत्वात्संप्रयोगयोग्यत्वाद्भेदस्तु न गुणो गुणेऽपि भावादतो नावस्तुनि भेदे तस्य मानतेत्यर्थः ॥ ९६० ॥

**अथ वस्तु पृथक्त्वेन विशिष्टं गम्यते तदा ॥**
**शुक्लो गौरितिवन्मानं वस्तुन्येव न भेदगम् ॥ ९६१ ॥**

पृथक्त्वाख्यभेदस्य नावस्तुत्वं वस्तुविशेषणत्वाद्रूपवदिति शङ्कते । **अथेति ।** गुणादिषु च तथाविधभेदस्यैकार्थसमवायोपाधिकृतत्वादध्यक्षतेति भावः । अभावेऽपि व्यभिचारं मत्वा दोषान्तरमाह । **तदेति ।** तस्मिन्पक्षे यथा शुक्लो गौरिति धीः शुक्ले गव्येव वस्तुनि मानं तथा भिन्नो घट इत्यपि भिन्नवस्तुन्येव मानं न भेदे तस्य वस्तुविशेषणत्वेऽप्यभाववदवस्तुत्वोपपत्तेरतोऽप्रयोजको हेतुः संभवति च भेदस्य मुख्यत्वे किमित्यौपचारिकत्वमित्यर्थः ॥ ९६१ ॥

**अभेदेनैव वर्तेत पृथक्ता यदि वस्तुषु ॥**
**वस्त्वेव तत्ततोऽन्या चेदपृथग्वस्तु तर्हि ते ॥ ९६२ ॥**

शुक्लो गौरिति ज्ञानं गवि मानं भवद्विशेषणे शौक्ल्येऽपि मानं तथा भिन्नो घट इत्यपि धीर्घटवद्भेदेऽपि मानमित्याशङ्क्य पृथक्त्वभेदस्य वस्तुन्यभेदो भेदो वेति विकल्प्याऽऽद्यमादत्ते । **अभेदेनेति ।** तर्हि वस्त्वद्वैतापातस्तदतिरिक्तपृथक्त्वाभावादित्याह । **वस्त्वेवेति ।** द्वितीयमनुभाष्य दूषयति । **तत इति ।** पृथक्ता वस्तुनोऽन्या चेत्तर्हि वस्त्वपृथक्स्यात्तस्या वस्तुनो निष्कृष्टत्वात्संबन्धस्य च भेदाभेदाभ्यां दुर्वचत्वादित्यर्थः ॥ ९६२ ॥

**भावाभावपृथक्ताऽपि यद्यभिन्ना ततोऽपृथक् ॥**
**भावाभावविभिन्ना चेत्पृथक्ता न परम्परम् ॥ ९६३ ॥**

किंच भावाभावयोः पृथक्त्वमस्ति न वाऽऽद्यमनुवदति । **भावेति ।** साऽपि ताभ्यामभिन्ना भिन्ना वेति विकल्पयति । **अपीति ।** तत्राऽऽद्यं गृह्णाति । **यदीति ।** तदा भेदाभावाद्भावाभावयोरितरेतराश्रयत्वादिति वस्त्वद्वैतं स्यादित्याह । **तत इति ।** कल्पान्तरमाशङ्क्य परिहरति । **भावेति ।** पृथक्ता या भावाभावाभ्यां पृ. तस्यास्ताभ्या

संबन्धस्य दुःसाध्यत्वात्तयोर्मिथोभेदाभावादद्वैतमेव स्याद्भावाभावयोर्न पृथक्तेत्यत्रापि तदेवेति भावः ॥ ९६३ ॥

**अन्यापेक्षं पृथक्त्वं चेत्स्वयं तर्ह्यपृथग्घटः ॥**
**द्विधर्मत्वेऽपि वस्त्वेतदेकं स्यादुत्पलादिवत् ॥ ९६४ ॥**

किंच घटस्य पृथक्त्वं स्वापेक्षमन्यापेक्षं वाऽऽद्ये घटस्य शून्यतेति मन्वानो द्वितीयमनुवदति। **अन्यापेक्षमिति**। तर्हि घटः स्वयमपृथगद्वितीयः स्यादन्यापेक्षानिर्मितस्य सर्पवन्मिथ्यात्वादित्याह। **स्वयमिति**। घटः स्वरूपेण पृथक्त्वापृथक्त्वधर्मेत्युपगमात्कुतो घटाद्वैतमिति तत्राऽऽह। **द्विधर्मत्वेऽपीति**। पृथक्त्वापृथक्त्वधर्मकत्वेऽपि घटस्य ततो धर्मयोर्भेदाभेदाभ्यां दुर्वचनत्वेन कल्पितत्वादखण्डमेव तत्स्याद्यथोत्पलादेरनेकरूपादिधर्मवत्त्वेऽप्यखण्डत्वं तथाऽस्यापीत्यर्थः। अपिशब्देन राद्धान्तविरोधो भेदाभेदयोर्दूषितत्वं च सूच्यते ॥ ९६४ ॥

**धर्मबुद्धिप्रभेदेऽपि धर्म्यभेदः सदेष्यते ॥**
**अतो गवादेर्भेदेऽपि सन्मात्रमवसीयते ॥ ९६५ ॥**

पृथक्त्वमपृथक्त्वमिति धर्मभेदे भाति तदाधारतया धर्मिणोऽपि भेदात्कथमखण्डतेत्याशङ्क्याऽऽह। **धर्मेति**। धर्मेषु प्रतीतितो भेदेऽपि न धर्मिभेदो दाहादिभेदेऽपि दहने भेदाभावोपलम्भादिति भावः। धर्म्यभेदे फलितमाह। **अत इति**। गवादेर्विशेषस्य मिथो व्यभिचारेऽपि सन्मात्रमनुगतं न भिद्यते तदेव च मीयते न गवादिर्व्यभिचारादित्यर्थः। यद्वा निरस्तो गोघटादिभेदस्तस्मिन्नङ्गीकृतेऽपि नासौ मेयोऽन्योन्याश्रयादिदोषात्सन्मात्रं तु मेयं तस्मादद्वैतमेव प्रामाणिकमित्याह। **अत इति** ॥ ९६५ ॥

**गोत्वादिमेयपक्षेऽपि सद्रूपस्यानपायतः ॥**
**वस्त्वेव मेयं गोत्वादि शाबलेयादिवत्स्फुटम् ॥ ९६६ ॥**

न सन्मात्रमेव मेयं गोत्वादेरपि तद्भावादित्याशङ्क्याऽऽह। **गोत्वादीति**। यदा गोत्वादि मेयं तदा तदेव वा मेयं सद्रूपमपि वा नाऽऽद्यो घटः सन्पटः सन्निति सर्वत्रानुसंधीयमानं सद्रूपं हित्वा गोत्वादेरेव मेयत्वकल्पनानिमित्ताभावात्तस्य च सद्रूपाद्द्विक्तस्यासत्त्वाद्द्वितीये सदेव मेयं तस्योभयसंमतत्वान्न गोत्वादि व्यभिचारित्वाद्यथा शाबलेयादेर्व्यभिचारिणो न गवादिशब्दताऽऽकृतेस्तद्भावात्तथा गोत्वादेरपि मेयत्वायोगात्निःसंदिग्धतया सन्मात्रमेव तथेत्यर्थः ॥ ९६६ ॥

**सद्रूपत्वापरित्यागादवान्तरनिबन्धनाः ॥**
**व्यवहाराः प्रतीयन्ते सत्तत्त्वं तेष्ववस्थितम् ॥ ९६७ ॥**

ननु सद्रूपमपि गोत्वादिवन्न मेयमुत्तरात्रिकाद्यावृत्तत्वेन व्यभिचारित्वस्य तुल्यत्वाद-

१ ख. °साधनत्वा°।

न्यथा जात्यादीनां जातिरहितत्वाङ्गीकारविरोधान्न च तत्रापि स्वरूपसत्त्वस्वीकारात्ततः सद्रूपस्याव्यावृत्तता तस्य खण्डादिवद्व्यभिचारिणः सच्छब्दावाच्यत्वात्तत्राऽऽह । **सद्रूपेति** । स्तम्भकुम्भाद्यवान्तरपदार्थनिमित्ता ये व्यवहारास्ते सद्रूपात्यागेन प्रतीयन्ते तेन स्तम्भादिषु सद्रूपमवस्थितमास्थेयं ततो निष्कृष्टानामसत्त्वेन दृष्टादृष्टव्यवहारहेतुत्वायोगात्तथा च सन्मात्रं तत्त्वं तस्मादुद्रिक्तं तस्मिन्कल्पितं न च सर्वकल्पनाधिष्ठानात्सन्मात्रादन्यत्सामान्यं नामास्ति यदुत्तरत्रिकं व्यभिचरेन्न च द्रव्यत्वमाकाशवृत्तिजातेर्भिन्नजातित्वादित्याद्यनुमानात्तदस्तित्वं द्रव्यत्वं तद्वृत्तिव्याप्यजातेरन्यजातित्वादित्यपि वक्तुं सुकरत्वादिति भावः ॥ ९६७ ॥

**सत्तातोऽपि न भेदः स्याद्द्रव्यत्वादेः कुतोऽन्यतः ॥**
**एकाकारा हि संवित्तिः सद्द्रव्यं सन्गुणस्तथा ॥ ९६८ ॥**

ननु न सन्मात्रेऽतिरिक्तं कल्पितं द्रव्यादिसमवायान्तानां षट्पदार्थानां मिथोव्यावृत्तानां परमार्थतया कैश्चिदिष्टत्वादिति तत्र किं सामान्यविशेषौ द्वे वस्तुनी विशेषा एव वा वस्तूनि सामान्यविशेषात्मकमेकं वा वस्तु सामान्यमेव वेति विकल्प्याऽऽद्ये दोषमाह। **सत्तातोऽपीति** । सत्सामान्यादनुवृत्ताद्व्यावृत्तानां भेदोऽपि नासौ युक्तो व्यावृत्तानां ततो निष्कर्षे तुच्छत्वप्रसङ्गाद्द्रव्यादिभावपदार्थषट्कस्य मिथोभेदस्तु कुतस्त्यो भेदकाभावादभिन्नसन्मात्राभेदाच्चातो वस्तुद्वयमित्ययुक्तमित्यर्थः । द्रव्यादेः सत्तासामान्याद्भेदाभावे हेतुमाह । **एकाकारेति** । विमतं सतो न भिद्यते तदेकाकारधीत्वात्तद्वदित्यर्थः । संवित्तेरेकाकारत्वमुदाहरति । **सदिति** । सामानाधिकरण्यादेकत्वप्रतीतेर्न द्रव्यादेः सत्सामान्याद्भेदधीरिति यावत् ॥ ९६८ ॥

**समवायाच्च संबन्धे नैकरूप्यं विभिन्नयोः ॥**
**तच्चेत्ततो न विश्वासो जातावप्येकबुद्धितः ॥ ९६९ ॥**

एकत्वधीर्द्रव्यादेः सत्सामान्यस्य च भेदे सत्येव समवायकृतेत्याशङ्क्याऽऽह । **समवायाच्चेति** । नहि संबन्धकृता भिन्नयोरेकत्वधीर्दण्डीत्यत्रानुपलम्भादित्यर्थः । तत्र समवायाभावादेकत्वास्फूर्तिर्द्रव्यादेः सतश्च तद्भावात्तद्धीरिति शङ्कते । **तच्चेति** । एकत्वधीः समवायकृता वा स्वरूपैक्यकृता वेति संदेहान्न समवायात्तज्ज्ञानं निश्चेतुं शक्यमिति परिहरति । **नेति** । संशयबीजमाह । **जाताविति** । गोत्वमेकमित्येकत्वधीर्गोत्वेऽपि दृष्टा न च सा समवायकृतैकत्वस्य गोत्वे समवायानुपगमादद्रव्यस्य गुणवत्त्वायोगादतः स्वरूपैक्यकारिता सेति सद्द्रव्यमित्यादावपि तदधीना चैक्यधीः समवायाद्वेति संशयप्रसक्तिरिति भावः ॥ ९६९ ॥

१ क. 'बन्धान्नैक' ।

**संसर्गधर्मता नापि भेदेनानुपलम्भनात् ॥**
**समवायेन संबन्धे को हेतुरिति नेप्यते[1] ॥ ९७० ॥**

सतो गवादेश्च समवायमुपेत्य न तत्कृता तयोरेकत्वधीरित्युक्तमिदानीं तयोः संसर्गाख्यसमवायवत्ताऽपि न युक्ता तयोर्मिथोभेदेनादृष्टेः सत्सामान्यवद्द्रव्यादिवच्चेत्याह । **संसर्गेति** । किंच समवायः स्वतन्त्रः परतन्त्रो वा नाऽऽद्योऽयमनयोरितिषष्ठ्यनुपपत्तेर्द्वितीये समवायेन समवायिनोः संबन्धो वाच्यः स च न संयोगः समवायो वा मानाभावादित्याह । **समवायेनेति** ॥ ९७० ॥

**संयोगश्चेद्वियोगोऽपि समवायेऽनवस्थितिः ॥**
**स्वतश्चेत्कल्पना व्यर्था द्रव्यस्याप्येकता स्वतः ॥ ९७१ ॥**

संयोगस्याप्रमाणिकत्वं साधयति । **संयोगश्चेदिति** । समवायस्य समवायिनोश्च संयोगे तस्य वियोगावसानत्वात्तयोर्वियोगोऽपि कदाचित्स्यात्तथा च गुणादेः स्वतन्त्रताऽप्यापतेदित्यर्थः । समवायसमवायिनोः समवायस्य विमानत्वमुपपादयति । **समवाय इति** । नित्यद्रव्यसमवाययोरसमवेतत्वमिति मतव्याहतिश्चेति भावः । समवायस्य समवायितन्त्रत्वं स्वतःसिद्धं न तत्र संबन्धान्तरापेक्षेति शङ्कते । **स्वतश्चेदिति** । तर्हि समवायकल्पना विफलेत्याह । **कल्पनेति** । द्रव्यादेः सत्त्वेनैक्यधीप्रयोजकतया समवायकल्पनाऽर्थवतीत्याशङ्क्याऽऽह । **द्रव्यस्येति** । समवायपारतन्त्र्यस्य स्वाभाविकत्ववद्द्रव्यादेः सत्त्वेनैक्यधीरपि स्वतोऽस्तु कृतं समवायेनेत्यर्थः ॥ ९७१ ॥

**सत्तावगुण्ठिताश्चेते सर्वे भावाः सदैव हि ॥**
**व्यवहाराय कल्पन्ते भ्रान्तो भेदः सदैव तु ॥ ९७२ ॥**

द्वे वस्तुनी सामान्यविशेषाविति पक्षं प्रतिक्षिप्य विशेषा एव वस्तूनीति पक्षं प्रत्याह । **सत्तेति** । सर्वे हि विशेषा नियमेन सत्ताव्याप्ता व्यवहारकाले व्यवहारयोग्या भवन्त्यतस्तेषां सन्मात्रत्वाद्भासमानो भेदः सदैव भेदत्वाच्चन्द्रभेदवद्भ्रान्तः स्यान्न चानुगतं सत्त्वमेव नास्ति घटवृत्ति तद्वृत्तिवृत्तिसामान्यस्य प्रत्यक्षत्वान्न च सामान्यं नास्तीत्युक्तिव्याघातः सन्मात्रस्यैवात्र तच्छब्दत्वादिति भावः ॥ ९७२ ॥

**येषामपि हि सामान्यभेदवद्वस्तु गृह्यते ॥**
**तेषामपि कुतो भेदो वस्त्वैक्याद्धर्म्यभेदतः ॥ ९७३ ॥**

सामान्यविशेषात्मकमेकं वस्त्वितिपक्षं प्रत्याह । **येषामिति** । तन्मते भेदासिद्धौ हेतुमाह । **वस्त्विति** । तदेव कथं तत्राऽऽह । **धर्मीति** । धर्मिणः सामान्यविशेषात्मकस्याभेदात्तस्य च वस्तुत्वादित्यर्थः ॥ ९७३ ॥

---

[1] ख. नेक्ष्यते ।

**अपि भेदेन या बुद्धिः स्यात्सामान्यविशेषयोः ॥
साऽपि तन्मात्रनिष्ठत्वान्नैव भेदस्पृगिष्यते ॥ ९७४ ॥**

सामान्यविशेषयोर्मिथोभेददृष्टेस्तद्भेदो धर्मिण्यनुप्रविशतीत्याशङ्क्याऽऽह । **अपीति ।** सामान्यविशेषयोस्त्वन्मते वस्तुत्वाभावान्न तत्र भेदधीर्न ह्यवस्तुनि सा युक्ता तथाऽपि तयोर्भेदेन या धीरिष्टा सा सामान्यधीर्वा विशेषधीर्वोभयधीर्वा बुद्ध्यन्तरं वा तत्र पक्षत्रये सामान्यादिमात्रावसायित्वान्न सा भेदनिष्ठा बुद्ध्यन्तरमपि न भेदविषयं परस्पराश्रयादिदोषादतः सामान्यविशेषयोरपि न भेदः कुतः स धर्मिणि स्यादित्यर्थः ॥ ९७४ ॥

**एकं चेद्भिन्नता नास्ति भेदश्चेदेकता कुतः ॥
चित्रेऽप्यनुगमाभावान्न सामान्यविशेषता ॥ ९७५ ॥**

किंच सामान्यविशेषं तद्वतोऽभिन्नं भिन्नं वा नाऽऽद्य इत्याह । **एकं चेदिति ।** सामान्यं विशेषश्चेत्युभयं धर्मिणः सकाशादभिन्नं चेन्न सामान्यविशेषभावो धर्मिवदित्यर्थः । द्वितीयमनूद्य वस्तुत्रयप्रसङ्गं दोषमाह । **भेदश्चेदिति ।** एकं वस्तु द्व्यात्मकमित्युक्ते कुतोऽयं विकल्पो वस्तुनश्चित्रत्वादित्याशङ्क्याऽऽह । **चित्रेऽपीति ।** उभयात्मके वस्तुनीष्टेऽपि विशेषात्मकमेव तत्स्यान्नोभयात्मकं खण्डगोर्मुण्डगव्यन्वयाभावादन्वयिनश्च सामान्यमात्रस्यावस्तुत्वादित्यर्थः ॥ ९७५ ॥

**स्वरूपपररूपाभ्यां यदा सदसदात्मकम् ॥
वस्त्वेकं मानविषयमभावस्ते तदा कुतः ॥ ९७६ ॥**

एकं वस्तु द्व्यात्मकमित्यत्र भेदनिरासद्वारेणाभावं निरस्य पक्षान्तरमुद्भाव्याभावनिरासद्वारा भेदं निरस्यति । **स्वरूपेति ।** स्वरूपेण सदात्मकं पररूपेणासदात्मकमेकं वस्तु मानविषयत्वाक्रान्तं यदेष्टं तदा वस्तुनो नाभावो मानाभावात्तन्न तदपेक्षो भेदोऽपीत्यर्थः ॥ ९७६ ॥

**प्रत्यक्षादिनिवृत्तिश्चेत्तस्याः किं रूपमुच्यताम् ॥
स्तैमित्यमात्मनश्चेत्स्यात्तद्वस्त्वेवास्मदीहितम् ॥ ९७७ ॥**

वस्त्वभावे मानपञ्चकानुदयो मानमिति शङ्कते । **प्रत्यक्षादीति ।** तदनुत्पत्तेः स्वरूपं विकल्पयति । **तस्या इति ।** आत्मनो निर्व्यापारात्मनाऽवस्थानं वा वस्त्वन्तरज्ञानं वा भावान्तरं वा मेति विकल्पार्थः । आद्यमनूद्य कूटस्थवस्त्वतिरेकेणाभावो नेति स्वपक्षप्राप्तिमभिप्रेत्याऽऽह । **स्तैमित्यमिति** ॥ ९७७ ॥

**अथ वस्त्वन्तरज्ञानं नितरां तस्य वस्तुता ॥
भावान्तरमभावोऽपि निरूपाख्यः स नेष्यते ॥
तस्माद्वस्त्वेकनिष्ठत्वान्न भेदोऽक्षादिगोचरः ॥ ९७८ ॥**

१ क. ग. °स्पृर्गीक्ष्यते । २ ग. निरुपा° ।

द्वितीयमनूद्य निराह । **अथेत्यादिना** । तस्य ज्ञानत्वाद्भावत्वोपगमाच्चेत्यतिशयमाह । **नितरामिति** । तृतीयं प्रत्याह । **भावान्तरमिति** । भावान्तरस्य भावत्वेऽन्तरशब्दायोगादन्यत्वासिद्ध्या चान्यस्य भावस्य तद्भावासंभवादभावत्वे च भावशब्दानुपपत्तेस्तस्य चातुच्छत्वात्तदात्मनोऽभावस्यापि तदयोगाद्वस्तुत्वमेवेत्यर्थः । त्रिधाऽपि मानपञ्चकानुदयस्य वस्तुत्वात्तद्विषयस्यापि वस्तुत्वमेव नहि वस्तु वस्त्वभावं साधयति स्वाभावसाधकत्वापाताद्वस्तुभेदस्याध्याप्यसिद्धेरिति समुदायार्थः । अभावनिरासेन भेदमपि निरस्य सामान्यमेव वस्त्वितिपक्षमङ्गीकुर्वन्भेदाप्रामाणिकत्वमुपसंहरति । **तस्मादिति** । वस्तुनस्त्रैविध्यायोगात्परिशेषतः सामान्यमेव तदिति स्थितत्वात्तस्य च सन्मात्रस्य सर्वत्रैक्यान्न प्रमितो भेदोऽस्तीत्यर्थः ॥ ९७८ ॥

**घटोऽयमिति संवित्तेर्घटो मेयः प्रतीयते ॥**
**न व्यावृत्तिः पटादीनामताद्रूप्यात्तथा पटे ॥ ९७९ ॥**

ननु घटादेः सर्वतो व्यावृत्तस्य प्रत्यक्षत्वात्कुतो भेदो नाक्षादिगोचरस्तत्राऽऽह । **घट इति** । निर्विकल्पकं वा सर्वतो व्यावृत्तं घटं गोचरयेत्सविकल्पकं वा नाऽऽद्य आलोच्यते वस्तुमात्रमित्यादिन्यायविरोधान्नेतरस्तत्रापि घटमात्रस्य विषयत्वदृष्टेरितरव्यावृत्तेरप्रतीतेस्तस्यास्तद्रूपताया निरस्तत्वान्न चेतरसमस्ताग्रहे तद्व्यावृत्ततया घटः शक्यो ज्ञातुमित्युक्तम् । तस्मान्न प्रत्यक्षं तस्येतरव्यावृत्तिं प्रत्याययतीत्यर्थः । घटे दर्शितन्यायं पटादावतिदिशति । **तथेति** । घटवत्पटेऽपि व्यावृत्तिर्नाध्यक्षा पटोऽयमिति संवित्तेः पटो मेयः प्रतीयते न व्यावृत्तिर्घटादीनामताद्रूप्यादित्यस्य सर्वत्र सुवचत्वादित्यर्थः ॥ ९७९ ॥

**घटाभावो विरोधित्वान्न घटेऽर्थान्तरेऽपि न ॥**
**अपष्ठ्यर्थतया तस्माद्विकल्पोऽयं न वस्तुगः ॥ ९८० ॥**

भेदस्याध्यक्षत्वनिरासेन तदपेक्षाभावस्यापि तन्निरस्तम् । किंच घटाभावो निराश्रयः साश्रयो वाऽऽद्ये स्वातन्त्र्यं द्वितीये घटं वाऽऽश्रयतेऽर्थान्तरं वा प्रथमं प्रत्याह । **घटेति** । न हि घटप्रागभावादिर्घटे घटते समसमयसंभवाभावात् । घटान्योन्याभावस्य घटाश्रयत्वेऽपि भेदनिरासात्तद्रूपस्तदपेक्षो वा न सोऽस्तीति भावः । द्वितीयं निराह । **अर्थान्तरेऽपीति** । अर्थान्तरमभावो भावो वा नाऽऽद्योऽभावस्याभावाश्रयत्वायोगान्न द्वितीयो भावाभावयोः संबन्धाभावस्योक्तत्वादित्याह । **अषष्ठीति** । अभावप्रतीतेस्तर्हि का गतिस्तत्राऽऽह । **तस्मादिति** । विकल्पोऽपि प्रत्ययत्वात्संमतवद्वस्तु गोचरयतीत्याशङ्क्याऽऽह । **नेति** । शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति लक्षणान्न तस्य वस्तुविषयतेत्यर्थः ॥ ९८० ॥

**घटो हि संविदं कुर्वन्नात्माकारविशेषणम् ॥**
**आत्मानं लभते तद्वद्व्यावृत्तिं न पटादितः ॥ ९८१ ॥**

घटज्ञाने घटवद्भेदाभावयोरपि भानात्तद्धीर्न विकल्पमात्रमित्याशङ्क्य घटोऽयमिति संवित्तेरित्येतत्प्रपञ्चयति । **घटो हीति ।** यथा घटः स्वविशेषितां संविदं जनयन्भावो भवति नहि स जाड्याद्धित्वा संविदमात्मानमास्कन्दति न तथा पटादिव्यावृत्तिमपि कुर्वन्नात्मानं लभते तस्याः स्वरूपत्वधर्मत्वयोर्निरस्तत्वादित्यर्थः ॥ ९८१ ॥

**पटसंवेदनेऽप्येवं पटमात्रं विशेषणम् ॥**
**ईक्षतेऽत्राधिकं नान्यदभावादि यदुच्यते ॥ ९८२ ॥**

तथा पट इत्यतिदेशं विशदयति । **पटेति ।** समानाधिकरणे सप्तम्यौ । घटसंविदि घटमात्रवत्पटसंविद्यपि तन्मात्रं विशेषणं दृष्टं यत्पटादधिकमभावादि विशेषणमिष्टं तत्पटसंविद्भ्यामन्यदनन्यद्वा न सिध्यत्यन्यत्वे पटादेस्तदस्पर्शात्संबन्धस्य निरस्तत्वादनन्यत्वे च तदसिद्धेरित्यर्थः ॥ ९८२ ॥

**संदिग्धनिश्चयाद्येवं ज्ञानधर्मो विशेषयन् ॥**
**संविदं भिद्यते मेयात्प्रत्येकं भेदधीर्न तु ॥ ९८३ ॥**

अथाऽऽन्तरेषु ज्ञानादिष्विव बाह्येष्वपि घटादिषु भेदाभावौ नापह्नोतुं शक्याविति तत्राऽऽह । **संदिग्धेति ।** संदिग्धशब्दो निश्चयसांनिध्याद्भावप्रधानस्तथा च यथा संशयादिः करणव्युत्पत्त्या ज्ञानशब्दितान्तःकरणधर्मः संशयसंविन्मिथ्यासंविदिति संविदं व्यावर्तयन्मेयान्मिथः संविदश्च न भिद्यते नहि तस्मिन्भेदधीरन्यव्यावृत्तेर्दुर्ज्ञानत्वस्योक्तत्वादेवं घटादिरपि संविदं विशेषयन्न कुतश्चिद्भिद्यतेत्यर्थः ॥ ९८३ ॥

**तथाऽहमेव जानामि माता नान्य इतीदृशाः ॥**
**मातृधर्माः प्रसिध्यन्ति विशिंषन्तः स्वसंविदम् ॥ ९८४ ॥**

मात्रादिभेदवद्घटादिभेदः संशयादिभेदश्च निर्श्चीयतामित्याशङ्क्याऽऽह । **तथेति ।** माता श्रोता द्रष्टेत्यादयो मातृत्वादिरूपा धर्मा मातृज्ञानमित्यादिना स्वसाक्षिकां संविदं व्यावर्तयन्तः संविदो मेयान्मिथश्च भेदमलभमानाः संविद्यध्यस्तास्तथा संशयादयो घटादयश्च तत्राऽऽरोपिता वस्तुतो न भिद्यन्तइत्यर्थः ॥ ९८४ ॥

**संविदेका स्वतःसिद्धा प्रत्यग्रूपैकलक्षणा ॥**
**भावाभावादिरूपाय व्यवहाराय कल्पते ॥ ९८५ ॥**

ननु संविदं सर्वकल्पनाधिष्ठानं नातिष्ठामहे यतः साऽपि भिन्नत्वाद्रज्जुसर्पवत्कल्पनामर्हति तत्राऽऽह । **संविदिति ।** अधिष्ठानत्वात्तर्हि रज्जुवज्जडा सेति नेत्याह । **स्वतः सिद्धेति ।** तर्हि संविदात्मेति वस्तुद्वयस्वीकारादपसिद्धान्तो नेत्याह । **प्रत्यगिति ।** तस्याः सर्वकल्पनाधिष्ठानत्वे सर्वव्यवहारास्पदत्वं फलतीत्याह । **भावेति** ॥ ९८५ ॥

१ क. धर्मान्त । २ क. ग. न्तश्च सं ।

**अतोऽनुभवमुल्लङ्घ्य न भेदो नाप्यभिन्नता ॥**
**तत्पृष्ठेन तु मानानि विरोधः किंसमाश्रयः ॥ ९८६ ॥**

प्रत्यक्षादिविषयत्वेनेष्टौ भेदाभावौ सर्वत्र प्रत्याख्याय वेदान्तानां मानान्तराविरोधं प्रकृतमुपसंहरति । **अत इति** । कूटस्थप्रत्यगनुभवस्य सर्वाधिष्ठानत्वात्तमतिक्रम्य प्रपञ्चस्य तद्भेदादेश्चासिद्धेस्तत्त्वमस्यादीनां तादृग्वस्तु बोधयतां न विरोधो मानान्तरैरित्यर्थः । किंचानुभवानुसारेण मानानां मानत्वं तत्कथं तमनुसरन्तो वेदान्ता मानान्तरैर्विरुध्येरन्नित्याह । **तत्पृष्ठेनेति** ॥ ९८६ ॥

**अविज्ञातः प्रमाणानां विषयो वादिनां मतः ॥**
**न तस्य मानतः सिद्धिस्तत्सिद्धेः प्राक्प्रमागमात् ॥ ९८७ ॥**

किंचानुभवस्यैवाज्ञातत्वात्प्रत्यक्षादीनां तद्विषयत्वात्तत्र प्रवृत्तानां वेदान्तानां तैर्विरोधो नेति वक्तुं संमतमर्थमाह । **अविज्ञात इति** । अज्ञातत्वस्यापि तर्हि मेयत्वादनुभवस्यैव तन्नियमो भज्येत नेत्याह । **न तस्येति** ॥ ९८७ ॥

**अमानकं कथं च स्यादज्ञातत्वमिहोच्यताम् ॥**
**कथं वा तद्विना मानं विषयासंभवाद्भवेत् ॥ ९८८ ॥**

प्रमाणप्रवृत्तेः प्रागेव तस्य सिद्धत्वान्मेयत्वं नास्ति चेत्तर्हि साधकाभावादसिद्धिरेव स्यात्तद्वा किंचिद्वाच्यमिति शङ्कते । **अमानकमिति** । इहेति वस्तुनोऽज्ञातत्वस्यैवोक्तिः । अज्ञातत्वस्यासत्त्वं वा मानगम्यत्वं वा साधकान्तरं वा वाच्यमिति वोच्यते नाऽऽद्य इत्याह । **कथं वेति** । अज्ञातत्वं विना मानमेव न संभवेत्तदभावे तदुपलक्षितविषयाभावान्नहि निर्विषयं मानमस्तीत्यर्थः ॥ ९८८ ॥

**अज्ञातत्वक्षतिं कुर्वन्मानं मानत्वमश्नुते ॥**
**मानादज्ञातता चेत्स्यान्न सा तत्फलमिष्यते ॥ ९८९ ॥**

द्वितीयं परास्यति । **अज्ञातत्वेति** । मानं खल्वज्ञातत्वं निवर्तयन्न तद्विषयीकर्तुमिष्टे न हि दीपस्तमो गोचरयतीति भावः । विपक्षे दोषमाह । **मानादिति** । अज्ञातता मानाज्ज्ञाता चेन्न तत्क्षतिर्मानफलं स्यात्तद्गम्यस्यातन्निवर्त्यत्वादित्यर्थः ॥ ९८९ ॥

**अतोऽनुभवतो लब्धमज्ञातं ज्ञापयत्सदा ॥**
**प्रत्यक्षादि प्रमाणं स्यान्न स्वतो नापि चान्यतः ॥ ९९० ॥**

तृतीयं प्रत्याह । **अत इति** । पक्षद्वयासंभवोऽतःशब्दार्थः । अतोऽनुभवत इति वा सामानाधिकरण्यं सदाऽनुभवतो लब्धमिति संबन्धः । अनुदितानस्तमितानुभवसिद्धाज्ञानत्वोपलक्षितप्रत्यङ्मात्रे प्रत्यक्षादि प्रमाणमिति फलितमाह । **अज्ञातमिति** । स्वयंप्रभ-

१ क. °नाभाव° ।

त्वानभ्युपगमान्मेयत्वस्य च निरस्तत्वादनुभवसिद्धमज्ञातत्वमिति स्फुटयति । **न स्वत इति** ॥ ९९० ॥

**नाज्ञासिषमहं पूर्वमित्येवं प्रमिते घटे ॥**
**पूर्वाज्ञातत्वविषयो भूयोऽप्यनुभवो यतः ॥ ९९१ ॥**

ननु मेयत्वस्वप्रकाशत्वयोरन्यतरत्वव्याप्तमतुच्छत्वं तदितो व्यावर्तमानं स्वव्याप्यमतुच्छत्वमपि व्यावर्तयति तथा चाज्ञातत्वस्य तुच्छता नेत्याह । **नेत्यादिना** । घटे प्रमिते सत्येतावन्तं कालमहमिमं न ज्ञातवानित्येवं पूर्वं ज्ञानोत्पत्तेरज्ञातत्वेनानुभूतघटाविषयोऽनुभवो दृष्टस्तस्मात्परामर्शादज्ञातत्वमनुभवसिद्धं न तुच्छी भवत्यतुच्छत्वस्य व्याप्तिस्तु मेयत्वस्वप्रकाशत्वानुभवसिद्धत्वानामन्यतमेनेत्यास्थेयमित्यर्थः ॥ ९९१ ॥

**प्रवृत्तं विषये मानमवच्छेदफलं मतम् ॥**
**ज्ञाताज्ञाते प्रति त्वस्य न व्यापारोऽप्रमाणतः ॥ ९९२ ॥**

प्रमितेऽर्थे चेदज्ञातत्वधीस्तर्हि घटमानादेव तत्सिद्धेरनुभवसिद्धत्वकथा वृथेत्याशङ्क्याऽऽह । **प्रवृत्तमिति** । घटादौ प्रवृत्तं मानं तदनुभवावसानं चेत्तस्य स्वकालेऽर्थे ज्ञातत्वजनकत्ववत्प्राक्काले ज्ञातत्वज्ञापकत्वमिति स्यादित्याशङ्क्याऽऽह । **ज्ञातेति** । नहि मानस्य ज्ञाततायां जननव्यापारः कारकत्वेनामानत्वापत्तेर्न च ज्ञातताजनकं ज्ञापकमेवेति युक्तम् । तथाऽपि तस्य प्रकाशत्वाप्रकाशत्वयोर्वैमन्यगुक्तत्वान्नापि पूर्वकालीनाज्ञातत्वज्ञापनव्यापारोऽर्थावग्रहात्मनो मानस्य जन्मातिरिक्तव्यापारानुपगमान्मेयत्वे चाज्ञातत्वस्य मानानिवर्त्यत्वापत्तेरुक्तत्वादिति भावः ॥ ९९२ ॥

**सर्वो[3]ऽप्यनुभवात्सिद्धां बालोऽप्यज्ञाततां स्वतः ॥**
**न किंचिज्ज्ञान इत्येवं[4] पृष्टो वक्ति प्रमां विना ॥ ९९३ ॥**

किंचाज्ञातत्वस्यानुभवसिद्धत्वं सर्वजनीनमित्याह । **सर्वोऽपीति** । किं गवयमाकलयसीति केनचित्पृष्टो बालो मानवृत्तान्ताकुशलत्वात्प्राकृतोऽपि स्वतः स्वानुभवादज्ञातत्वं न जानामीत्यनेन विधिना प्रतिपादयत्यतो मानं विना सर्वोऽप्यनुभवादेव सिद्धां तामवगच्छति तत्कुतो विप्रतिपत्तिरित्यर्थः ॥ ९९३ ॥

**निःशेषकरणग्रामलयेऽप्यनुभवः स्वतः ॥**
**अलुप्तदृक्सुषुप्तेऽपि जाग्रद्बोधाविशेषतः ॥ ९९४ ॥**

नन्वज्ञातत्वस्यानुभवसिद्धत्वेऽपि मेयत्वमनुभवस्य मानकरणजत्वेन मानत्वात्तत्राऽऽह । **निःशेषेति** । स्वापे प्रमासामग्र्याविरहेऽपि नित्यसिद्धचिद्धातुरूपोऽज्ञातत्वानुभवः स्वतोऽस्त्यन्यथोत्थितस्य नावेदिषमिति परामर्शायोगादतो जागरितेऽप्यज्ञातताबोधस्य स्वापादविशेषादनुभवसिद्धा सर्वत्र सेत्यर्थः ॥ ९९४ ॥

१ ख. °त्वव° । २ ख. °तत्ता° । ३ क. ग. °र्वो ग्नु° । ४ ख. °त्येव पृ° ।

**अत्यन्ताननुभूतेषु हिमवत्पृष्ठवस्तुषु ॥**
**जाग्रतोऽनुभवोऽप्येवं सुषुप्तान्न विशिष्यते ॥ ९९५ ॥**

तत्रैव हेत्वन्तरमाह । **अत्यन्तेति** । हिमवत्पृष्ठनिष्ठानि वस्तूनि किं त्वया दृष्टानीति केनचित्काश्चित्पृष्टो नेति निश्चित्याज्ञाततां ब्रवीति । न च तत्रासौ प्रमिता सर्वथैव तेषामप्रमितेरतो नित्यानुभवादेव तेषु सा सिद्धेत्यर्थः । तथाऽपि जाग्रद्बोधाविशेषत इत्ययुक्तं स्वापे मानकारणाभावादज्ञातत्वस्यामेयत्वेऽपि जाग्रति तद्भावात्तद्रम्यत्वसिद्धेरित्याशङ्क्याऽऽह । **जाग्रत इति** । उक्तविभागे सत्यपि नोभयत्राज्ञातत्वानुभवस्य विशेषो नहि जाग्रतोऽज्ञातत्वानुभवः सुषुप्ताज्ञानत्वानुभवाद्भिद्यते तस्य मेयताया निरस्तत्वादित्यर्थः ॥ ९९५ ॥

**न चात्रानुभवो लुप्तो न जानामीति बोधनात् ॥**
**अदृष्टमपि दृष्ट्वाऽस्ति बोधो नाज्ञासिषं त्विति ॥ ९९६ ॥**

ननु क्वचिदनुभवसिद्धमज्ञानत्वमनुभवस्यैवाभावादिति तत्र जाग्रति तदभावः स्वापे वा नाऽऽद्य इत्याह । **न चेति** । जागरे त्वदुक्तमर्थं न जानामीत्यनुभवात्तदभावो नास्तीत्यर्थः । किंचादृष्टं वस्तु दृष्ट्वा नैतावन्तं कालमेतदवेदिषमितिपरामर्शाधीनो बोधोऽस्ति तत्र जागरेऽनुभवापलाप इत्याह । **अदृष्टमिति** ॥ ९९६ ॥

**पुमान्सुप्तोत्थितोऽप्येवं प्रमात्रादिलयं स्वतः ॥**
**अनुभूत्यैव संधत्ते नान्तराऽतोऽस्य लुप्तता ॥ ९९७ ॥**

न द्वितीय इत्याह । **पुमानिति** । जागरे नाज्ञासिषमितिवत्पुरुषः स्वापादुत्थितोऽपि मात्राद्यभावं तत्कालीनं स्वानुभवादेवानुसंधत्ते । उत्थितो हि न किंचिदवेदिषमिति ब्रूते तत्स्वप्नजागरान्तराले कुतोऽनुभवासत्तेत्यर्थः ॥ ९९७ ॥

**न चेदानींतनाद्बोधाद्बोधाभावगतिर्भवेत् ॥**
**सौषुप्ती नहि बोधस्य कालभेदेन भिन्नता ॥ ९९८ ॥**

किंच सौषुप्तबोधाभावधीर्जाग्रत्कालीनबोधाद्वा सौषुप्तबोधाद्वा नाऽऽद्य इत्याह । **न चेति** । तत्र हेतुर्नहीति । देशकालावस्थाभेदान्नानुभवस्य भिन्नता तत्प्रागभावाद्यसिद्धेर्नहि स्वतः परतो वा तत्सिद्धिरतोऽद्वयोऽनुभवः कूटस्थनित्योऽभ्युपेयः । एतेन द्वितीयोऽपि व्याख्यातो व्याघाताच्चेति भावः ॥ ९९८ ॥

**बोधादेव प्रसिध्यन्ति कालावस्थादयो यतः ॥**
**मातृमानादयश्चापि कुतस्तैरस्य विक्रिया ॥ ९९९ ॥**

नन्वनुभवस्य क्षीरादिवत्कालादिवशात्परिणामान्न कूटस्थता तत्राऽऽह । **बोधादिति** । न तावत्कालादि स्वतः सिध्यति जडत्वादतो बोधाधीनसत्तास्फूर्तिकात्तस्मादादावेव साध-

कत्वेन सिद्धानुभवस्य न तद्वशात्तद्विकारो नहि पुरा विकारविरही स्वरूपानुभवः पुन-र्विकारितां स्वरसतो गन्तुमर्हति स्वरूपविपरिलोपानुपपत्तेरित्यर्थः ॥ ९९९ ॥

**प्रमातृमानतन्मेयेष्वागमापायिषु त्रिषु ॥**
**अलुप्तानुदितो बोधः प्रथते प्रत्यगेकलः ॥ १००० ॥**

आत्मानुभवस्यापरिणामित्वे हेत्वन्तरमाह । **प्रमात्रिति ।** मात्रादीनामागमापायिनां तदागमापाययोश्च साधकत्वेनाऽऽगमापायशून्यः प्रत्यगेकस्वभावोऽनुभवो भात्यतो हेत्व-भावान्नास्य विक्रियेत्यर्थः ॥ १००० ॥

**अभितोऽनुभवाक्रान्ता ज्ञाताज्ञातत्वभूमिषु ॥**
**नान्यत्रार्थाः प्रसिध्यन्ति लीयन्ते नाप्यनात्मनि ॥ १००१ ॥**

मात्रादीनामाधारत्वं तेषु सप्तमीप्रयोगात्तद्बोधकस्याऽऽधेयत्वं तत्र प्रथमाप्रयोगात्त-त्कथं तस्य प्रत्यगेकत्वमित्याशङ्क्याऽऽह । **अभित इति ।** ज्ञातत्वेनाज्ञातत्वेन चाऽऽ-क्रान्तार्थगोचरव्यवहारकाले सर्वतोऽनुभवव्याप्ताः स्तम्भादयः सत्तां लभन्ते न चानुभवा-दन्यत्र ते तिष्ठन्ति नाप्यर्थान्तरे लीयन्तेऽनुभवातिलङ्घिनां जडानां सुषुप्तत्वेनोत्पत्त्यादि-व्यापारानुपपत्तेः । अतो मात्राद्यर्थानामनुभवात्मन्येवोत्पत्तिस्थितिलयभावात्तदतिरेकेणा-सत्त्वं काल्पनिकभेदादाधाराधेयतेत्यर्थः ॥ १००१ ॥

**अतोऽनुभव एवैको विषयोऽज्ञातलक्षणः ॥**
**अक्षादीनां स्वतःसिद्धो यत्र तेषां प्रमाणता ॥ १००२ ॥**

अनुभवादर्थान्तराभावे तदद्वयत्वं फलतीत्याह । **अत इति ।** स एव प्रत्यक्षादीनां विषयो विषयान्तराभावादित्याह । **विषय इति ।** तत्र युक्तिमाह । **अज्ञातेति ।** प्रमे-यत्वे स्वप्रकाशत्वहानिरित्याशङ्क्याऽऽह । **स्वत इति ।** यत्रानुभवे मानानामज्ञातत्व-निवर्तकत्वेन मानता स स्वतःस्फुरत्स्वरूपो न तत्र स्फूर्तिरन्याधीना नहि स्वप्रकाश त्वप्रमेयत्वयोर्विप्रतिषेधः संविदेकतानस्यापि स्वगताज्ञानापनयनार्थं मानापेक्षणादि-त्यर्थः ॥ १००२ ॥

**तेनानुभवसिद्धानां लोकेऽज्ञानविघातिनः ॥**
**मात्वमक्षादयो यान्ति नाज्ञातज्ञाततोऽन्यथा ॥ १००३ ॥**

अक्षादीनां नानुभवविषयत्वं घटादिविषयत्वप्रसिद्धेरिति चेत्तत्राऽऽह । **तेनेति ।** लोके खल्वज्ञातेऽनुभवेऽध्यस्तत्वेन सिद्धानां घटादीनामज्ञातत्वं निवर्तयन्तोऽक्षादयो व्यावहारिकं मानत्वमनुभवन्त्यन्यथाऽनुभवेऽध्यासं विना मानादज्ञातत्वेन सिद्धानां तेषां ज्ञापकत्वेन नाक्षादिप्रामाण्यं तेन मानसिद्धस्य मानेन निवृत्त्यसंभवेन हेतुनेत्यर्थः । **एतेन** प्रत्यक्षादीनां घटादिविषयत्वप्रसिद्धिरपि प्रतिनेतव्या ॥ १००३ ॥

**घटादयः प्रमासिद्धा मुञ्चन्त्यज्ञाततां न तु ॥**
**स्वतःसिद्धोऽपि वस्तुत्वान्मुञ्चत्यात्मा प्रमां विना ॥ १००४ ॥**

व्यवहारतस्तेषामनुभवेऽध्यस्तघटाद्यज्ञातत्वनिवर्तकत्वादज्ञातानुभवावष्टम्भात्प्रत्यक्षादिप्रामाण्येऽपि चिदात्मनः स्वप्रकाशत्वादज्ञातत्वं मानं विना निवर्तेत । तथाच न तत्र मानप्रवृत्तेरस्ति कृत्यमित्याशङ्क्याऽऽह । **घटादय इति** । यथा घटादयो व्यावहारिकमानसिद्धाः स्वगतमज्ञातत्वं त्यजन्ति न मानमनपेक्ष्य तज्जहति तथा प्रत्यगात्मा चित्स्वभावस्वप्रकाशोऽपि वस्तुसामर्थ्यादेव प्रमां विना नाज्ञाततां त्यक्तुमलं मानफलप्रकाशस्यैवाज्ञानविरोधित्वात्स्वरूपप्रकाशस्यातथात्वादित्यर्थः ॥ १००४ ॥

**प्राग्बाधकागमात्सिद्धिर्लौकिकस्यापि वस्तुनः ॥**
**वस्तुतत्त्वबलादेव तत्तमोऽव्यवधानतः ॥ १००५ ॥**

आत्मनो मानं विनाऽज्ञातत्वं न निवर्तते चेन्मानाधीनाऽस्य स्वप्रकाशतेति न स्वरूपमागन्तुकत्वादित्याशङ्क्याऽऽह । **प्रागिति** । ब्रह्माहमितिबाधकबोधोदयात्पूर्वमज्ञानव्यवहितानुभवबलादेव सर्वानात्मसिद्धेर्माननमेयादिप्रपञ्चं प्रकाशयन्नात्मा मानमनपेक्ष्यैव स्वप्रकाश इत्यर्थः । अपिशब्दः समस्तलौकिकवस्त्वभिव्याप्त्यर्थः । वस्तुतत्त्वबलादात्मस्वभावभूतचैतन्यप्रकाशवशादिति यावत् ॥ १००५ ॥

**कृत्स्नमात्राद्युपादानतमोबाधस्तु बोधतः ॥**
**तत्त्वमस्यादिवाक्योत्थात्पूर्णैकात्म्यस्वलक्षणात् ॥ १००६ ॥**

प्रत्यक्षादीनामात्मनि मानत्वे तैरेव तदज्ञाननिवृत्तेरागमवैयर्थ्यमित्याशङ्क्याऽऽह । **कृत्स्नेति** । समस्तमात्रादिनिदानाज्ञाननिरासि ज्ञानं प्रत्यक्षादिकृतं किं न स्यादित्याशङ्क्य बोधं विशिनष्टि । **पूर्णेति** ॥ १००६ ॥

**तेनाऽऽगमस्य तत्र स्यादज्ञातत्वविघातिनः ॥**
**प्रमाणत्वं पुमर्थश्च स एव विदुषां मतः ॥ १००७ ॥**

सोपाधिके तत्त्वे ज्ञानमध्यक्षादिकृतं तत्र प्रवृत्तिसंभवान्निरुपाधिके तु श्रौतं श्रुतेरेव तत्र प्रवृत्तिक्षमत्वान्न च सोपाधिकं ज्ञानमज्ञानमपनेतुमर्हति तदर्थस्याज्ञानापेक्षत्वान्निरुपाधिकं ज्ञानं तु विषयबलात्तदुन्मूलयेदतो वाक्योत्थज्ञानादेवानर्थोपादानाज्ञाननिवृत्तेस्तत्त्वमस्यादेरैक्ये सिद्धं प्रामाण्यमिति फलितमाह । **तेनेति** । श्रौतात्मज्ञानादेव तदज्ञानध्वस्तेरुक्तत्वेनेति यावत् । तत्रेति श्रुतितात्पर्यगम्यब्रह्मात्मोक्तिः । परानन्दतया पुरुषार्थत्वाच्च ब्रह्मात्मनि युक्ता तत्त्वमादेर्मानतेत्याह । **पुमर्थश्चेति** । स्रक्चन्दनादौ पुमर्थत्वप्रसिद्धेरात्मनस्तथात्वमसंप्रतिपन्नमिति चेत्तत्राऽऽह । **विदुषामिति** ॥ १००७ ॥

**ननु दुर्वारसंसारदुःखसंदर्भहानतः ॥**
**किमन्यत्सुखमिष्टं स्याद्यस्याऽऽप्तेः पुरुषार्थता ॥ १००८ ॥**

पुमर्थशब्देन ब्रह्मात्मा सुखमित्युक्तं तदयुक्तं दुःखनिवृत्तीतरसुखाभावाद्भावाभावयो-रैक्यायोगादिति जरत्तार्किकमतमाशङ्कते । नन्विति । यानि दुर्वाराणि संसारदुःखानि तेषां समूहस्य हानिरेव सुखं ततोऽन्यस्येष्टलक्षणत्वाभावादित्यर्थः । सुखनिरूपणस्याप्रस्तुतत्वं निरस्यति । यस्येति ॥ १००८ ॥

लोकेऽपि व्याधिसंतापविच्छित्तौ सुखितेक्ष्यते[1] ॥
व्यतिरिक्तसुखार्था च न प्रवृत्तिर्विरागिणाम् ॥ १००९ ॥

दुःखध्वस्तिरेव सुखमित्यत्र लोकानुभवं प्रमाणयति । लोकेऽपीति । लौकिका हि व्याध्यधीनसंतापवन्तं पुरुषमुपलभ्य बतायमतिदुःखीति वदन्तो दैवयोगादपगतरोगं तमवगच्छन्तो दिष्ट्या जातोऽयं सुखीति वदन्तीत्यर्थः । ननु दुःखध्वस्तीतरसुखार्थी विरक्तमुमुक्षुप्रवृत्तिस्तदनुपपत्त्या भावरूपसुखसिद्धिर्नहि तेषां संसारविमुखानामस्ति दुःखं यन्निविवर्तयिषितं तत्राऽऽह । व्यतिरिक्तेति । मोक्षार्था मुमुक्षुप्रवृत्तिः स च बन्धविश्लेषो बन्धश्चानर्थत्वाद्दुःखमिति तन्निवृत्त्यर्थैव तत्प्रवृत्तिरित्यर्थः ॥ १००९ ॥

असंवेद्यं सुखं नापि पुमर्थो न च कर्मता ॥
स्वरूपे वेद्यवेत्त्रायोगाद्द्वैतप्रसङ्गतः ॥ १०१० ॥

किंच भावरूपं सुखमसंवेद्यं संवेद्यं वाऽऽद्ये गृहगुहानिहितागृहीतनिधिवदपुमर्थतेत्याह । असंवेद्यमिति । द्वितीयं दूषयति । न चेति । तत्र हेतुमाह । स्वरूप इति । एकत्र विषयविषयित्वायोगात्तस्य भेदापेक्षत्वाद्द्वैतविरोधादित्यर्थः ॥ १०१० ॥

नैवं भेदेन संसिद्धे सुखदुःखे कथं तयोः ॥
ऐक्यं सुखस्य विच्छेदो दुःखं वा किं न कल्प्यते[2] ॥ १०११ ॥

दुःखध्वस्तिरेव सुखमित्येतन्निराकरोति । नैवमिति । तत्र हेतुर्भेदेनेति । संतापवतः शीतह्रदे निमग्नार्धदेहस्य युगपदेवासंकीर्णत्वेन सुखदुःखे दृष्टे तत्कुतो दुःखध्वंससुखयोरैक्यं भावाभावयोरेकत्रोपलम्भासंभवान्न च तत्र सुखदुःखयोर्भावाभावयोरपि प्रदेशभेदवर्तिनोर्युगपदविरोध आत्मनो ऽप्रदेशत्वाद्देहदेशयोश्चाचेतनत्वात्तदवच्छिन्नात्मवृत्तित्वे चावच्छेदकभेदेऽपि तद्भेदाभावादेकत्रैव तद्वृत्तेस्तयोर्भावाभावत्वासंभवादित्यर्थः । किंच दुःखाभावः सुखं चेत्सुखाभावो दुःखं किं न स्यादविशेषादिति वैपरीत्यं प्रसञ्जयति । सुखस्येति ॥ १०११ ॥

अदुःखिनोऽपि दृश्यन्ते सुखप्राप्तीच्छया यतः ॥
तदुपाये प्रवर्तन्तस्तदभेदे न युज्यते ॥ १०१२ ॥

सुखं न दुःखध्वस्तिरित्यत्र हेत्वन्तरमाह । अदुःखिनोऽपीति । दुःखहीना राजादयोऽपि सुखेच्छया तद्धेतौ नृत्यगीतादिप्रभेदे प्रवर्तमाना दृष्टा न च तद्दर्शनं दुःखध्व-

---

१ ख. °तेष्यते । २ क. कल्पते ।

स्तिसुखयोरभेदे युक्तमप्राप्तदुःखेषु तद्ध्वस्तये प्रवृत्त्ययोगात्तद्दुःखध्वस्तेरतिरिक्तं सुखमित्यर्थः । वर्ततेरात्मनेपदित्वनियमेऽपि च्छन्दोवत्तद्विदां वृत्तिरितिन्यायं द्योतयितुं प्रवर्तन्त इत्युक्तम् । प्रोपसर्गतो वा नियमभङ्गः ॥ १०१२ ॥

चन्दनादिसुखोपायसंपन्नाः सुखिनोऽप्यलम् ॥
पुत्रजन्मादिवार्ताभिः प्राप्नुवन्ति सुखान्तरम् ॥ १०१३ ॥

सुखोपाये प्रवर्तमानानामदुःखत्वमसिद्धमिति चेत्तत्राऽऽह । चन्दनेति । कथं पुनरुपायसंपत्त्या निरतिशयं सुखमासाद्य स्थितानां तत्रैवोपाये प्राप्ते प्रेप्सया प्रवृत्तिस्तत्राऽऽह । पुत्रजन्मादीति ॥ १०१३ ॥

पुत्राद्यप्राप्तिरूपं च दुःखं तत्र न कल्प्यते ॥
असंवित्तेरवेद्यं हि न दुःखं वैरिदुःखवत् ॥ १०१४ ॥

ननु यत्र पुंसि पुत्रजन्मादिश्रवणकृतं सुखं जायते तत्र पुत्राद्यप्राप्तिनिमित्तदुःखध्वस्तिरेव सुखं नेत्याह । पुत्रादीति । तत्र हेतुरसंवित्तेरिति । अननुभूयमानमपि दुःखं तत्रास्तीत्याशङ्क्याऽऽह । अवेद्यमिति । तस्यादुःखत्वे दृष्टान्तमाह । वैरीति । नो खल्वन्यस्य दुःखमन्यस्य भवति तेनाननुभूयमानत्वात्तथा तस्मादुःखे पुंसि पुत्रादिप्राप्तिप्रयुक्तसुखभाजि दुःखप्रसङ्गाभावेऽपि सुखोपलम्भात्तद्ध्वस्तेरन्यदेव तदित्यर्थः ॥१०१४॥

तिर्यञ्चोऽप्यत एवेह कामयन्ते सुखं तथा ॥
अनिष्टं विजिहासन्ति न तु जानन्ति साधनम् ॥ १०१५ ॥

तत्रैव हेत्वन्तरमाह । तिर्यञ्चोऽपीति । यतो दुःखध्वस्तिसुखे भिद्येते अतो लोके पशुशकुन्तादयोऽपि विभागेन सुखार्थिं दुःखध्वस्तिं चेच्छन्ति तदन्या दुःखध्वस्तिरन्यच्च सुखमित्यर्थः । तर्हि तिरश्चामस्माकं च सुखेप्सया दुःखजिहासया च साधनानुष्ठानमविशिष्टं स्यात्तत्राऽऽह । न त्विति । शास्त्रीयं साधनमस्माकमेवाधिगतिगोचरो नेतरेषामित्यनुष्ठानविशेषसिद्धिरित्यर्थः ॥ १०१५ ॥

वेदोऽपि शुद्धमात्मानं सुखं मुख्यं प्रदर्शयन् ॥
अनात्मानं तथा दुःखं पुमर्थत्वेन संमतः ॥ १०१६ ॥

लोके भावरूपसुखसत्त्वेऽपि नाऽऽत्मनि तदस्तीत्याशङ्क्याऽऽह । वेदोऽपीति । अशनायाद्यशेषपर्यायशून्यमात्मानमलौकिकसुखात्मकं दुःखं चाऽऽत्मास्पृष्टं ब्रुवन्पुमर्थावसायितया वेदो मानत्वेनेष्टोऽतो लोकानुसारादात्मन्यपि भावरूपमेव सुखमित्यर्थः ॥१०१६॥

तदेतत्प्रेय इत्यादिवाक्येभ्योऽनेकधा श्रुतम् ॥
तथाऽऽत्मनस्तु कामाय तस्मान्नान्यत्सुखं भवेत् ॥ १०१७ ॥

---

१ ख. °गाद्दुः° । २ ख. °पायसं° ।

**कोऽसौ** वेदो यः सुखमात्मानमाहेत्याशङ्क्याऽऽत्मनः सुखत्वे वेदवाक्यान्युदाहरति । **तदेतदिति** । श्रुतमात्मनः सुखत्वमिति शेषः । तत्र वाक्यानां तात्पर्यलिङ्गमभ्यासं सूचयति । **अनेकधेति** । आत्मशेषत्वेन सर्वस्य प्रियत्वाच्चाऽऽत्मा निरतिशयप्रियत्वेन परमसुखमित्याह । **तथेति** । इत्यस्मादपि वाक्यादात्मनः श्रुतार्थापत्त्या सुखत्वं दर्शितमिति शेषः । उक्तवाक्यवशादात्मैव सुखं नान्यदिति फलितमाह । **तस्मादिति** ॥ १०१७ ॥

**पुरुषार्थाभिसंबन्धाद्विरागित्वं यथाऽऽश्रितम् ॥**
**परानन्दाभिलाषोऽपि तथा चेत्किं निषिध्यते ॥ १०१८ ॥**

नन्वात्मनः सुखत्वे सुखरागान्मुमुक्षुप्रवृत्तेः संसारानुबन्धः स्याद्रागाधीनप्रवृत्तेस्तद्बीजत्वादत आह । **पुरुषार्थेति** । अस्यार्थः—यथा विरागित्वं मुमुक्षूणां संसारद्वेषित्वं पुरुषार्थेन मोक्षेण हेतुतया योगाद्भवद्भिराश्रितं न तु तद्द्वेषात्प्रवृत्तेस्तादृगितरप्रवृत्तिवद्बन्धबीजतेष्टा तथा परानन्दरागोऽपि पुमर्थश्चेन्न निषेद्धुं युज्यते । अतः सुखरागान्मुमुक्षुप्रवृत्तावपि न संसारप्रवृत्तिरिति ॥ १०१८ ॥

**आत्यन्तिकसुखेच्छायां यदि रागित्वमुच्यते ॥**
**विविक्तदेशसेवादाविच्छायां किं न रागिता ॥ १०१९ ॥**

अथास्मत्पक्षे बन्धद्वेषान्न प्रवृत्तिः किंतु तदुद्वेगान्न च द्वेषोद्वेगयोरैक्यं मिथ्याज्ञाननिमित्तत्वाद्द्वेषस्य संसारासारतातत्त्वदर्शननिमित्तत्वादुद्वेगस्येति तर्हीहापि न रागात्प्रवृत्तिः किंतु परानन्दश्रद्धया न च तयोरभेदो रागस्य मिथ्याज्ञानकृतत्वाच्छ्रद्धायाश्च विवेकपूर्वकत्वादिति मत्वेच्छामात्रस्य रागत्वे दोषमाह । **आत्यन्तिकेति** । तत्र हि विरागित्वमेव प्रसिद्धमिति भावः । आदिशब्देनाऽऽचार्योपासनादि गृह्यते ॥१०१९॥

**अथ ये शतमित्यादिवाक्यैरेतत्प्रपञ्चितम् ॥**
**एष ह्येवेति च व्यक्तं तैत्तिरीयश्रुतावपि ॥ १०२० ॥**

आत्मनः सुखत्वे बाधकशङ्कामवधूय तत्रैव वाक्यान्तराणि दर्शयति । **अथेति** । एतदात्मनोऽनतिशयसुखत्वमिति यावत् । एष ह्येवाऽऽनन्दयातीत्यादिरात्मन्यानन्दशब्दः स्पष्टोऽतोऽपि तस्य सुखत्वमित्याह । **एष हीति** ॥ १०२० ॥

**स्वानन्दाभिमुखः स्वापे बोध्यमानोऽत एव च ॥**
**पीड्यते स्त्र्यादिसंपर्कसुखविच्छेदतो यथा ॥ १०२१ ॥**

आत्मनः सुखत्वे सौषुप्तानुभवोऽपि मानमित्याह । **स्वानन्देति** । तत्र गमकमाह । **बोध्यमान इति** । अत एव सुखानुभवासक्तत्वादिति यावत् । सौषुप्तं सुखमनुभवतो बोध्यमानस्य पीड्यमानत्वे विषयप्रवणप्राणिसंमतं दृष्टान्तमाह । **स्त्र्यादीति** ॥ १०२१ ॥

**आनन्दैकस्वभावत्वाद्वेद्यता तत्र नार्थ्यते ॥**
**निःसंबोधेऽर्थ्यते सा हि न तु बोधैकलक्षणे ॥ १०२२ ॥**

यत्तु ब्रह्मानन्दस्य वेद्यत्वे द्वैतमवेद्यत्वे चापुमर्थतेति तत्राऽऽह । **आनन्देति ।** आत्मनः सुखैकरसत्वेऽपि किमिति तत्र वेद्यता नार्थ्यते तत्राऽऽह । **निःसंबोध इति ।** जडे हि वेद्यताऽर्थ्यते तत्र स्वतो वेदनाप्राप्तेर्नाऽऽत्मनि बोधैकरूपत्वात्तस्माद्ब्रह्मात्मनि परानन्दसंवेदने संदेकताने वेदान्तप्रामाण्यमप्रत्यूहमिति भावः ॥ १०२२ ॥

**अधिकारस्य सौलभ्यप्रतिपत्त्यर्थमीरणम् ॥**
**सर्वपुंसामिति तथा पूर्वमेव प्रपञ्चितम् ॥ १०२३ ॥**

सर्वोऽपीत्यादिभाष्यार्थः संक्षेपविस्तराभ्यां व्याख्यातः संप्रति सर्वपुरुषाणामित्यादिभाष्यतात्पर्यमाह । **अधिकारस्येति ।** सुखं मे स्याद्दुःखं मा भूदिति सर्वेषां स्वभावतोऽभिलापदर्शनादनवच्छिन्नसुखादिमात्रस्य च मोक्षत्वात्तत्कामिनो विद्याधिकारित्वात्तत्राधिकारिसौलभ्यमतो विद्यायामधिकारस्य विशिष्टपुरुषसंबन्धस्य सुलभत्वज्ञापनार्थं भाष्यमित्यर्थः । मोक्षे ज्ञातेऽज्ञाते च तत्कामनायोगात्कुतस्तत्कामोऽधिकारीत्याशङ्क्य यथा तत्सौलभ्यं तथा न युक्तं कामना मुक्तावित्यादिनोक्तमित्याह । **तथेति** ॥ १०२३ ॥

**स्वर्गादिकाम्यपि यतो मुक्तिं कामयते न तु ॥**
**मुक्तिं कामयमानोऽन्यत्कटाक्षेणापि वीक्षते ॥ १०२४ ॥**

ननु मुमुक्षोरेवान्तराले ग्रामकामस्य भोजनादाविव स्वर्गादावभिलापसंभवात्तत्परवशस्य विद्यानधिकारात्कथमिहाधिकारिसौलभ्यमत आह । **स्वर्गादीति ।** यः स्वर्गादि काङ्क्षति स कथंचिन्मोक्षमपि काङ्क्षेत्तस्य निरतिशयफलत्वाद्यस्तु मुक्तिं कामयते नासौ स्वर्गादि कथमपि कामयते तस्यात्यल्पफलत्वादतो यो मुमुक्षुर्भूत्वा भूयः स्वर्गाद्यभिलषति स पशूनां करभवदपसदो मुमुक्षूणामिति भावः ॥ १०२४ ॥

**सर्वेषामपि च नृणामधिकारोऽनिवारितः ॥**
**यतोऽतः सर्वतो नृणामिति भाष्यकृदब्रवीत् ॥ १०२५ ॥**

प्रकृतभाष्यार्थमुपसंहरति । **सर्वेषामिति ।** न च नामभाष्येण फलोक्तिद्वारा तत्कामस्याधिकारिणो वचनादनर्थकमिदं भाष्यमिति वाच्यम् । अर्थश्रुतिभ्यामुभयत्राप्यधिकारिनिर्देशादर्थभेदासिद्धेः । यद्यपि संसारव्याधिवृत्सुभ्य इत्यत्र मुखतोऽप्याधिकारी दर्शितस्तथाऽप्यत्र तत्सौलभ्यस्येष्टत्वान्नास्य वैयर्थ्यम् । न चैवं शास्त्रस्य सर्वाधिकारत्वं साधनचतुष्टयविशिष्टानामेव विद्याधिकारिणां सौलभ्योक्तेरिति द्रष्टव्यम् ॥ १०२५ ॥

**शुक्लां गामानयेत्युक्ते कांचिद्गोकार्मिकां क्रियाम् ॥**
**कुर्वाणमभिवीक्ष्याज्ञः कुरुते कारणानुमाम् ॥ १०२६ ॥**

---

१ क. गदंक

दृष्टविषयेत्यादेर्नाऽऽगमान्वेषणेत्यन्तस्य भाष्यस्यार्थं वक्तुं पूर्वपक्षयति । **शुक्लामिति ।** गामानयेत्युत्तमवृद्धोक्ते श्रोतारं गोविषयां प्रवृत्तिं कुर्वन्तं मध्यमवृद्धं बुद्ध्वा प्रवृत्तिकारणं कश्चिदज्ञो बालोऽनुमिनोतीत्यर्थः ॥ १०२६ ॥

**ज्ञातं ध्रुवमनेनैतद्यद्वोकर्मकमीक्ष्यते ॥**
**प्रागज्ञातस्य निर्वृत्तिर्न यतो वीक्ष्यते क्वचित् ॥ १०२७ ॥**

कथमनुमानं तदाह । **ज्ञातमिति ।** एतत्प्रवृत्तिकारणमनेन प्रवर्तमानेन नियोगतोऽवगतं यतो गोविषयमानयनाख्यमनुष्ठानमस्य श्रोतुर्गम्यते । न च कर्तव्यत्वेनानुष्ठानात्प्रागज्ञातस्यानुष्ठेयस्यानुष्ठानं नाम क्वचिदपि लोके दृष्टमतो विमता प्रवृत्तिः प्रवर्तकधीपूर्वा बुद्धिपूर्वप्रवृत्तित्वात्संमतवदिति बालोऽनुमिमीते तस्य च प्रवर्तकज्ञानस्य शब्दान्वयव्यतिरेकवत्तया ततो जन्म निश्चिन्वन्प्रवर्तकमात्रे शब्दमात्रस्य शक्तिं निश्चित्याऽऽवापोद्वापाभ्यां पदविशेषस्य प्रवर्तकान्वितस्वार्थे शक्तिमध्यवस्यतीत्यर्थः ॥ १०२७ ॥

**यद्यर्थं कारकाधीनं दृष्ट्वा तत्कारणानुमा ॥**
**प्रमाणान्तरगम्यत्वाल्लौकिकत्वं तदाऽऽपतेत् ॥ १०२८ ॥**

प्रवर्तकं नियोगादर्थान्तरं नियोगो वाऽऽद्ये पदानामन्यान्विते शक्तिर्स्वीकारान्नियोगैकनिष्ठत्वव्याहतिरिति मत्वा द्वितीयं दूषयति । **यदीति ।** कर्त्रादिकारकजन्यं श्रोतृप्रवृत्तिरूपमर्थं दृष्ट्वा तद्धेतुप्रवर्तकनियोगानुमा चेत्तदा तस्याऽऽनुमानिकत्वाद्घटतुल्यतया वैदिकत्वासिद्धिरित्यर्थः ॥ १०२८ ॥

**न चेत्कारकतन्त्रोऽर्थो ज्ञातस्यानुष्ठितिः कथम् ॥**
**न सिद्धो नापि चाभावः कारकापेक्ष ईक्ष्यते ॥ १०२९ ॥**

किंच लिङादेरर्थो नियोगः कारकैरसाध्यः साध्यो वा तत्राऽऽद्यमनुद्रवति । **न चेदिति ।** लिङादिना कथंचिज्ज्ञातस्यापि नियोगस्यानुष्ठानासाध्यत्वाद्धात्वर्थानुष्ठानमफलमनवकाशं स्यादित्याह । **ज्ञातस्येति ।** यद्वा नियोगस्य कारकासाध्यत्वे तद्विषयो धात्वर्थोऽपि क्लेशात्मत्वान्न साध्योऽध्यवसीयेत तथाच तदनुष्ठानासिद्धिरित्याह । **ज्ञातस्येति ।** द्वितीयेऽपि स किं सन्नुतासन्नुभयात्मको वा तत्राऽऽद्यौ दूषयति । **न सिद्ध इति ।** नहि सतोऽसतो वा कारकापेक्षत्वं मानाभावादात्मनि नरविषाणे च तदपेक्षानुपलम्भादित्यर्थः ॥ १०२९ ॥

**आरभ्ये कारकत्वे न बलात्प्रामाण्यमापतेत् ॥**
**व्यङ्ग्ये तु कार्ये वेदस्य सिद्धेऽर्थे मानता भवेत् ॥ १०३० ॥**

किंच सत्त्वपक्षे नियोगः शब्दारभ्यस्तद्व्यङ्ग्यो वाऽऽद्ये शब्दस्य कारकत्वान्मानत्वासिद्धिरित्याह । **आरभ्य इति ।** द्वितीये तु विद्यमानस्यैव व्यङ्ग्यत्वनियमात्तस्मि-

न्मानं भवतो वेदस्य सिद्धेऽर्थे मानता स्यान्नियोगस्य व्यङ्ग्यतया विद्यमानत्वेन तथा-त्वादित्याह । **व्यङ्ग्ये त्विति** ॥ १०३० ॥

**वाक्यस्य च प्रमाणत्वं नाप्यभावैकगोचरम् ॥**
**न चेदभावः कार्योऽर्थः सिद्धेऽर्थे मानता भवेत् ॥ १०३१ ॥**

किंच नियोगस्यासत्त्वे तत्र वेदस्य प्रामाण्यशङ्कैव नावतरति कस्यचिदपि ज्ञानस्या-सति मानत्वादृष्टेरित्याह । **वाक्यस्येति** । उक्तं दोषं निरसितुं नियोगस्य सत्त्वे व्यङ्ग्यत्वपक्षोक्तं दोषं स्मारयति । **न चेदिति** ॥ १०३१ ॥

**अथोभयात्मकं कार्यं सिद्धासिद्धस्वभावकम् ॥**
**उक्तदोषद्वयासक्तिर्न च वस्त्वीदृशं क्वचित् ॥ १०३२ ॥**

तृतीयमनुवदति । **अथेति** । कारकतन्त्रत्वानुपपत्तिः सिद्धेऽर्थे वेदस्य मानत्वं चेत्यु-क्तदोषानुषक्त्या दूषयति । **उक्तेति** । सदसदात्मकं वस्त्वङ्गीकृत्योक्तं तदेव नास्ति विरोधादित्याह । **न चेति** ॥ १०३२ ॥

**सिद्धस्य व्यञ्जकं मानं न मानं कारकं क्वचित् ॥**
**चोदना मानकं चेत्तत्कथं कार्यं तदुच्यताम् ॥ १०३३ ॥**

किंच नियोगाख्यं कार्यं वैदिकं लौकिकं वाऽऽद्ये तस्य सिद्धार्थत्वापत्तिरित्याह । **सिद्धस्येति** । प्रत्यक्षादेः सिद्धार्थज्ञापकत्वदृष्टेर्नियोगस्यापि वैदिकत्वे साध्यत्वासिद्धि-स्तस्याध्यक्षादिवत्सिद्धार्थज्ञापकत्वापत्तेरित्यर्थः । द्वितीयस्तु राद्धान्तविरोधादतिस्थवीया-निन्युपेक्षितः ॥ १०३३ ॥

**मतं विषयसंसिद्ध्या कार्यमित्यभिधीयते ॥**
**यागसिद्धेः पुराऽसिद्धेः कथं चोदनया मितम् ॥ १०३४ ॥**

किंच धात्वर्थानुष्ठानादूर्ध्वमेव नियोगसिद्धिः प्रागपि वा तत्राऽऽद्यमनुवदति । **मत-मिति** । नियोगाख्यं कार्यं धात्वर्थानुष्ठानद्वारा सिध्यतीत्युच्यत इति मतं यदीति योजना । तर्हि पूर्वं नियोगस्याभावान्न तस्य वेदवेद्यतेत्याह । **यागेति** । न खल्वसतो वैदिकत्वं नरविषाणवदिति भावः ॥ १०३४ ॥

**प्राक्प्रयोक्त्रभिसंसिद्धौ किं फलं यागसिद्धितः ॥**
**यागसिद्ध्याऽपि तत्सिद्धौ प्रयोज्यत्वं कुतो यजेः ॥ १०३५ ॥**

अनुष्ठानात्प्रागपि नियोगस्यानुष्ठानप्रयोक्तुः सिद्धतेति द्वितीयं शङ्कते । **प्रागिति** । तदनुष्ठानं नियोगासाधकत्वादफलमिति दूषयति । **किं फलमिति** । सिद्धस्यैव नियोगस्य यागेनापि साध्यत्वादनुष्ठानसाफल्यमिति शङ्कते । **यागेति** । सिद्धस्य सिद्ध्ययोगान्न सिद्ध्यर्थमनुष्ठानमित्याह । **प्रयोज्यत्वमिति** । यज्यर्थस्य प्रयोज्यत्वं नाम नियोगप्रयु-

क्तानुष्ठेयत्वं तन्न सिध्यति सिद्धस्य नियोगस्य सिद्ध्यनपेक्षतया धात्वर्थानुष्ठानं प्रत्यप्र-योजकत्वादित्यर्थः ॥ १०३५ ॥

**यागाद्यनुष्ठितेरस्य घटादेरिव चेन्मतः ॥**
**उपकारो नियोगस्य कथं न घटतुल्यता ॥ १०३६ ॥**

किंच यागाद्यनुष्ठानान्नियोगस्य कश्चिदुपकारोऽस्ति न वा न चेदनुष्ठानवैयर्थ्यं कल्पान्तरं प्रत्याह । **यागादीति ।** कुलालादिव्यापाराद्घटादेः सत्त्वलाभोपकारवद्धात्व-र्थानुष्ठानान्नियोगस्यापि सत्त्वप्राप्तिरूपोपकारश्चेत्तस्य घटादितुल्यता स्यादित्यर्थः ॥ १०३६ ॥

**अपुमर्थे नियोगे च तात्पर्यं स्यात्तथा सति ॥**
**प्रत्यर्थिनि पुमर्थे तत्सुधीभिर्गृह्यते कथम् ॥ १०३७ ॥**

घटतुल्यत्वं तस्य नानिष्टमिति चेत्तत्राऽऽह । **अपुमर्थ इति ।** घटतुल्यत्वे सति सुखदुःखप्राप्तिपरिहारतदुपायरूपविरहिणि नियोगे वाक्यतात्पर्यमिष्टं स्यादित्यर्थः । तत्र तात्पर्येऽपि नियोगनिष्ठत्वं वेदस्याप्रतिहतमित्याशङ्क्याऽऽह । **प्रत्यर्थिनीति ।** पुमर्थे समीहितसाधनत्वे विधिवाक्यतात्पर्यविषये परिपन्थिनि सत्यपुमर्थे नियोगे तत्तात्पर्यं विवे-किभिरशक्यं प्रतिपत्तुमित्यर्थः ॥ १०३७ ॥

**लिङादिश्रवणात्पुंसः कार्यं यत्प्रसमीक्ष्यते ॥**
**उपकाराद्यपेक्षं तद्वक्तृकर्त्रोः प्रसिध्यति ॥ १०३८ ॥**

लोके गामानयेत्यादौ लिङादिश्रवणात्पुरुषस्य कार्यधीदर्शनाद्वेदेऽपि लोकानुसारा न्नियोगाख्ये कार्ये तात्पर्यमित्याशङ्क्याऽऽह । **लिङादीति ।** विधिपदश्रवणानन्तरं कार्यं ज्ञानं श्रोतुरुत्पद्यमानं वक्तुः श्रोतुर्वा सुखाप्तिं दुःखध्वस्तिं वाऽपेक्ष्योत्पद्यतेऽतो गवानयनादि मम श्रोतुर्वक्तुर्वा समीहितहेतुरिति वाक्यतात्पर्यादवगमे कार्यमिति मानस-बुद्धिरुत्पत्तेर्नियोगाख्यकार्यताया लिङाद्यर्थत्वायोगादिष्टसाधनमेव तदर्थो निषेधवाक्ये तदभावे तात्पर्यमिति भावः ॥ १०३८ ॥

**न चेत्संभाव्यते कर्त्रा पुमर्थः कस्यचिद्विधेः ॥**
**आज्ञोक्तेरेव न तदा कश्चिज्जगति चेष्टते ॥ १०३९ ॥**
**आज्ञार्थमात्रसिद्ध्यर्थं न कश्चित्स्ववशो नरः ॥**
**दुःखात्मके मनो धत्ते यागादौ चोदनावशात् ॥ १०४० ॥**

सर्वत्र लिङाद्यर्थः समीहितहेतुरित्यत्रोपपत्तिमाह । **न चेदिति ।** गामानयेत्यादौ श्रूयमाणलिङादेः श्रोतुर्वक्तुर्वा पुमर्थहेतुत्वं श्रोत्रा नावगम्यते चेदाज्ञामात्राद्व्यवहारभूमौ बुद्धिपूर्वकारिणोऽप्रवृत्तेः प्रकृत्यर्थस्येष्टोपायत्वं ततो ज्ञात्वा पुंप्रवृत्तेर्विधिनिषेधयोः समीहितोपायस्यैव लिङाद्यर्थत्वं नञन्वयान्निषेधे तदभावधीरित्यर्थः । राजाज्ञादौ स्वपर-

फलानुसंधानविकलस्यापि परतन्त्रस्याऽऽज्ञार्थसिद्ध्यर्थं प्रवृत्तिदर्शनान्नेष्टसाधनत्वस्य लिङा-द्यर्थत्वनियतिरिति चेत्तत्राऽऽह । आज्ञेति । भृत्यादेरपि बुद्धिपूर्वकारिणो दुःखध्वस्तिफ-लानुसंधानपूर्वैव तत्र प्रवृत्तिरितीष्टसाधनताया लिङाद्यर्थत्वसिद्धिरित्यर्थः । क्लेशात्मके यागादौ फलानुसंधानं विना विध्यधीनत्वेन बुद्धिपूर्वकारिणोऽप्रवृत्तेरिष्टोपायतैव वेदेऽपि लिङाद्यर्थ इत्याह । **यागादाविति** ॥ १०३९ ॥ १०४० ॥

**पुमर्थमभिसंधाय यागादावथ चेष्टते ॥**
**फलं प्रवर्तकं प्राप्तं नियोगस्तथा सति ॥ १०४१ ॥**

तत्र फलमनुसंधाय तस्येदं साधनमिति ज्ञात्वा प्रवृत्तावपि किं ते फलतीति पृच्छति। **पुमर्थमिति**[१]। फलसाधनं यागादीति ज्ञात्वा प्रवृत्त्युपगमे सति प्रवर्तकमिष्टसाधनमित्य-स्मन्मतमायातं नियोगस्तथेति त्वन्मतं च हतमिति फलितमाह । **फलमिति** । तद्धेतुरिति यावत् ॥ १०४१ ॥

**मन्त्रोक्तेरिव लोडादेः प्रवृत्तिरिति चेन्मतम् ॥**
**प्रायश्चित्ती भवेन्नैव तत्पराधीनवृत्तितः ॥ १०४२ ॥**

प्रवर्तकत्वेऽपि नियोगस्य फलसाधनताज्ञानापेक्षस्य तन्निरपेक्षस्य वा प्रवर्तकत्वमाद्ये प्राप्ताप्राप्तविवेकेन फलोपायताज्ञानस्यैव प्रवर्तकतेति मत्वा द्वितीयमादत्ते । **मन्त्रेति** । भूताविष्टं पुरुषं दृष्ट्वा तदावेशाद्यर्थं प्राकृतं संस्कृतं वा मन्त्रमागमिकमन्त्रवित्प्रयुङ्क्ते भीतश्च नरस्तदधीनश्चेष्टते तथा लोडादिवाच्यनियोगादिष्टसाधनत्वज्ञानानपेक्षात्पुरुषस्य परवशस्य प्रवृत्तिरिति यद्युपगतमित्यर्थः । तदा[२] भीतस्य कथंचिन्मन्त्रप्रयोगमतिक्रामतोऽपि दोषा-भाववन्नियोगाधीनतया प्रवर्तमानस्य तदतिक्रमेऽप्यदोषात्प्रायश्चित्तानर्हत्वात्तद्विधिवैयर्थ्य-मिति दूषयति । **प्रायश्चित्तीति** ॥ १०४२ ॥

**प्रवर्तकत्वं मन्त्रस्य न प्रवर्त्यवशाद्यथा ॥**
**स्वत एव न यागादेः कार्यसिद्धिस्तथा भवेत् ॥ १०४३ ॥**

तदेव स्पष्टयति । **प्रवर्तकत्वमिति** । यथा प्राकृतादिमन्त्रस्य प्रवर्त्यशक्तिमनपेक्ष्य स्वशक्त्या प्रवर्तकत्वं न च तत्र तमतिक्रामन्प्रत्यवैति तथाऽत्रापि नियोगवशोऽनुतिष्ठन्दै-वयोगात्तमतिलङ्घयन्नपि न प्रायश्चित्ती भवत्यतस्तद्विध्यानर्थक्यमित्यर्थः । नियोगाति-क्रमे दोषाभावे दोषान्तरमाह । **नेति** । नियोगातिक्रमाद्दोषाभावे तद्विषययागादि न कश्चिदनुतिष्ठेत्तथा च नियोगासिद्धिरित्यर्थः ॥ १०४३ ॥

**कारकं वा क्रिया वा स्याद्यदि वा स्यात्क्रियाफलम् ॥**
**तस्य लौकिकमासिद्धेर्लौकिकत्वं प्रसज्यते ॥ १०४४ ॥**

---

१ ख. °न्नैवं त° । २ ग. °स्तदा भ° । ३ क. प्रवृत्तिश° ।

किंच कारकं वा क्रिया वा तत्फलं वा नियोगः सर्वथाऽपि तस्य मानान्तरगम्यत्वेन घटादितुल्यत्वादवैदिकत्वापत्तिरित्याह । **कारकं वेति** ॥ १०४४ ॥

**ऐकात्म्यवस्तुनिष्ठे तु यथोक्तन्यायवर्त्मना ॥**
**न कश्चिदपि दोषः स्याद्वचस्यस्मिन्मनागपि ॥ १०४५ ॥**

ननु नियोगस्य मानान्तरगम्यतया वेदस्यातन्निष्ठत्वे ब्रह्मणोऽपि सिद्धत्वान्मानान्तरगम्यत्वसंभवात्कुतो वेदप्रमाणता तत्राऽऽह । **ऐकात्म्येति** । तत्त्वमादौ वचसि वस्तुनिष्ठे सति नाऽऽत्मन्येवाऽऽत्मशब्दस्य प्रयोगादित्याद्युक्तन्यायात्तत्र प्रामाण्ये दोषो न कश्चिदपि स्यादतो नियोगब्रह्मणोर्न मनागपि साम्यमित्यर्थः ॥ १०४५ ॥

**नेति नेत्यादिवाक्येभ्यो योऽर्थोऽनन्यानुभूतिगः ॥**
**लौकिकत्वं कथं तस्य सर्वमेयातिलङ्घिनः ॥ १०४६ ॥**

यत्तु सिद्धत्वाद्ब्रह्मणो मानान्तरगम्यत्वं तद्दूषितमपि विधान्तरेण दूषयति । **नेत्यादिना** । निषेधश्रुत्यनुरोधेन निर्विशेषत्वात्प्रज्ञानादिश्रुत्यनुसारेण स्वप्रकाशत्वाच्च शब्दादिविलक्षणस्य वस्तुनो न लौकिकमानगम्यतेत्यर्थः ॥ १०४६ ॥

**इत्युक्तमभिसंधाय दृष्टादिवचनं जगौ ॥**
**लौकिकत्वप्रसिद्ध्यर्थं नियोगस्य घटादिवत् ॥ १०४७ ॥**

ब्रह्मैव वैदिकं नियोगस्तु नेत्युक्तेऽर्थे भाष्यमवतारयति । **इत्युक्तमिति** । क्रियाकारकफलकर्तव्यत्वानामन्यतमस्मिन्नियोगे मानान्तरयोग्यत्वान्नाऽऽगमोऽनुसंधेयो व्युत्पत्तिकालाधिगतद्विविधफलोपायत्वाभिमतनियोगावगमस्य मानान्तरेणापि संभवात्तन्न तस्य वैदिकतेत्युक्तम् । हृदि कृत्वा घटवत्तस्य लौकिकत्वसिद्ध्यर्थं दृष्टविषयेत्यादि भाष्यमित्यर्थः ॥ १०४७ ॥

**आस्तां वेदान्तमानत्वं त्यक्तं तत्कामतस्तव ॥**
**वस्तुन्युक्तेर्न चेन्मात्वं कर्मकाण्डेऽपि तद्भवेत् ॥ १०४८ ॥**

न चामतीत्यादिभाष्यस्य सर्वथाऽपीत्यस्मात्प्राक्तनस्य तात्पर्यमाह । **आस्तामिति** । तत्त्वमादेर्वस्तुनि मानत्वं तिष्ठतु तदस्माभिस्त्वदिच्छातस्त्यक्तं तथाऽपि सिद्धे वेदमानत्वं नेष्टं चेत्कर्मकाण्डेऽपि तदमानत्वं स्वार्थे स्याद्देहेतरात्मादिधियं विना तदप्रामाण्यात्तथा च तन्मानत्वमिच्छता सिद्धे भविष्यद्देहयोगिन्यात्मनि स्वर्गादौ च तत्प्रामाण्योपगमात्कार्ये वेदप्रामाण्यानियमाद्वेदान्तानामपि स्वार्थे प्रामाण्यसिद्धिरित्यर्थः ॥ १०४८ ॥

**भविष्यद्देहसंबन्धी वाक्यादात्मा न चेन्मितः ॥**
**मानान्तराच्च कः कुर्याददृष्टार्थाः क्रियाः सुधीः ॥ १०४९ ॥**

ननु भविष्यद्देहसंबन्ध्यात्मज्ञानं विनाऽपि विधेरदृष्टार्थक्रियासु प्रवृत्तेर्न तादृगात्मा शास्त्राद्गम्यत इत्याशङ्क्य न चेत्यादिभाष्यं व्याचष्टे । **भविष्यदिति** । देहान्तरसंब-

न्ध्यात्मा शास्त्रान्मानान्तराच्चानभ्युपगमाद्वक्ष्यमाणन्यायाच्चाप्रमितश्चेत्तदा भोक्तुरज्ञानान्न बुद्धिपूर्वकारी यागाद्यनुतिष्ठेल्लोकाय तस्य तादृगात्मास्तित्वमजानतो जन्मान्तरेष्टानिष्टाप्तिहानीच्छया वैदिकक्रियास्वप्रवृत्तेरतस्तादृगात्मास्तित्वादौ कर्मकाण्डं भाष्योक्तं शास्त्रं च प्रमाणं तत्प्रामाण्यं चौत्पत्तिकसूत्रे हेत्वविशेषादुपगतमिति भावः ॥१०४९॥

नापि सांख्यप्रमासिद्धमात्मानमवगच्छतः ॥
देहाद्यनभिसंबन्धात्प्रवृत्तिः स्यात्क्रियास्विह ॥ १०५० ॥

सांख्यास्त्वन्तःकरणे चित्प्रतिबिम्बस्तथाविधबिम्बपुरःसरः प्रतिबिम्बत्वात्संमतवदित्यनुमानादुक्तात्मानं साधयन्तस्तस्मिन्वेदप्रामाण्यं न मृष्यन्ते तान्प्रत्याह । **नापीति** । सांख्यानुमानेनाऽऽत्मानं जानतोऽपि न क्रियासु प्रवृत्तिरसङ्गोदासीनस्य तदात्मनो देहाद्यसंबन्धात्तदभावे चाप्रवृत्तेरन्यथा मुक्तस्यापि प्रसङ्गादित्यर्थः ॥ १०५० ॥

कर्मकाण्डेऽधिकार्यस्मिन्स्यादृक्संभाव्यतेऽञ्जसा ॥
तादृक्संप्रतिपत्त्यर्थं न चासतीति भण्यते ॥ १०५१ ॥

कर्माधिकारस्तर्हि कस्येत्याशङ्क्य देहाद्यतिरिक्तस्य तेनाध्यासेन संबद्धस्येत्यत्र भाष्यमवतारयति । **कर्मेति** ॥ १०५१ ॥

कर्मभ्यः फलमिच्छद्भिरदृष्टं दृष्टमेव वा ॥
देहावस्थान्तरावेशे प्रमाणं वाच्यमात्मनः ॥ १०५२ ॥

आत्मनो देहाद्यतिरिक्तस्य देहान्तरयोगिनो मानं विना स्वतःसिद्धेर्न तत्र मानमन्वेष्यं तत्कथमुक्तात्मनि शास्त्रमानतेत्याशङ्क्याऽऽह । **कर्मभ्य इति** । आत्मनः स्वतःसिद्धस्यापि वर्तमानदेहादि हित्वा देहान्तरादियोगे मानं वाच्यमन्यथा तदसिद्धेर्न च तमन्तरेण वैदिककर्मणां कर्ता भोक्ता चास्ति न च तज्ज्ञानं विना चतुर्विधचोदनावशादेव प्रवृत्तिः शास्त्रीये तु व्यवहारे यद्यपीत्याद्यनुज्ञाभाष्यविरोधादिति भावः ॥ १०५२ ॥

कथं च तस्य कर्तृत्वं व्यापित्वान्निष्क्रियत्वतः ॥
न चाकर्तुः फलं गौण्या वृत्या चेत्सुतरां न तत् ॥ १०५३ ॥

वैशेषिकादयस्तु वैदिककर्मणां कर्ताऽऽत्मा वेदाहतेऽकृताभ्यागमप्रसङ्गादितर्कवशादेव सिध्यतीति मन्यन्ते तान्प्रत्याह । **कथं चेति** । कारकाप्रयोज्यस्य तत्प्रयोक्तृत्वं कर्तृत्वं तदात्मनो नभोवद्विभुत्वादक्रियस्यायुक्तमित्यर्थः । मा भूदात्मा कर्ता तथाऽपि भोक्तेति सांख्यास्तान्प्रत्याह । **न चेति** । शास्त्रफलं प्रयोक्तरीति न्यायादित्यर्थः । किं चाऽऽत्मनो भोक्तृत्वं गौणं मुख्यं वा तत्राऽऽद्यमनुवदति । **गौण्येति** । प्रधानप्रवृत्तेरात्मार्थत्वादुपचारात्सोऽपि भोक्ता चेदित्यर्थः । तर्हि मुख्यभोक्तृत्वस्याभावादात्मनो न तदुपचरितमपि

किंच कारकं वा क्रिया वा तत्फलं वा नियोगः सर्वथाऽपि तस्य मानान्तरगम्यत्वेन घटादितुल्यत्वादवैदिकत्वापत्तिरित्याह । **कारकं वेति** ॥ १०४४ ॥

**ऐकात्म्यवस्तुनिष्ठे तु यथोक्तन्यायवर्त्मना ॥**
**न कश्चिदपि दोषः स्याद्वचस्यस्मिन्मनागपि ॥ १०४५ ॥**

ननु नियोगस्य मानान्तरगम्यतया वेदस्यातन्निष्ठत्वे ब्रह्मणोऽपि सिद्धत्वान्मानान्तरगम्यत्वसंभवात्कुतो वेदप्रमाणता तत्राऽऽह । **ऐकात्म्येति** । तत्त्वमादौ वचसि वस्तुनिष्ठे सति नाऽऽत्मन्येवाऽऽत्मशब्दस्य प्रयोगादित्याद्युक्तन्यायात्तत्र प्रामाण्ये दोषो न कश्चिदपि स्यादतो नियोगब्रह्मणोर्न मनागपि साम्यमित्यर्थः ॥ १०४५ ॥

**नेति नेत्यादिवाक्येभ्यो योऽर्थोऽनन्यानुभूतिगः ॥**
**लौकिकत्वं कथं तस्य सर्वमेयातिलङ्घिनः ॥ १०४६ ॥**

यत्तु सिद्धत्वाद्ब्रह्मणो मानान्तरगम्यत्वं तद्दूषितमपि विधान्तरेण दूषयति । **नेत्यादिना** । निषेधश्रुत्यनुरोधेन निर्विशेषत्वात्प्रज्ञानादिश्रुत्यनुसारेण स्वप्रकाशत्वाच्च शब्दादिविलक्षणस्य वस्तुनो न लौकिकमानगम्यतेत्यर्थः ॥ १०४६ ॥

**इत्युक्तमभिसंधाय दृष्टादिवचनं जगौ ॥**
**लौकिकत्वप्रसिद्ध्यर्थं नियोगस्य घटादिवत् ॥ १०४७ ॥**

ब्रह्मैव वैदिकं नियोगस्तु नेत्युक्तेऽर्थे भाष्यमवतारयति । **इत्युक्तमिति** । क्रियाकारकफलकर्तव्यत्वानामन्यतमस्मिन्नियोगे मानान्तरयोग्यत्वान्नाऽऽगमोऽनुमंधेयो व्युत्पत्तिकालाधिगतद्विविधफलोपायत्वाभिमतनियोगावगमस्य मानान्तरेणापि संभवात्तन्न तस्य वैदिकतेत्युक्तम् । हृदि कृत्वा घटवत्तस्य लौकिकत्वसिद्ध्यर्थं दृष्टविषयेत्यादि भाष्यमित्यर्थः ॥ १०४७ ॥

**आस्तां वेदान्तमानत्वं त्यक्तं तत्कामतस्तव ॥**
**वस्तुन्युक्तेर्न चेन्मात्वं कर्मकाण्डेऽपि तद्भवेत् ॥ १०४८ ॥**

न चामनीत्यादिभाष्यस्य सर्वथाऽपीत्यस्मात्प्राक्तनस्य तात्पर्यमाह । **आस्तामिति** । तत्त्वमादेर्वस्तुनि मानत्वं तिष्ठतु तदस्माभिस्त्वदिच्छातस्त्यक्तं तथाऽपि सिद्धे वेदमानत्वं नेष्टं चेत्कर्मकाण्डेऽपि तदमानत्वं स्वार्थे स्याद्देहेतरात्मादिधियं विना तदप्रामाण्यात्तथा च तन्मानत्वमिच्छता सिद्धे भविष्यद्देहयोगिन्यात्मनि स्वर्गादौ च तत्प्रामाण्योपगमात्कार्ये वेदप्रामाण्यानियमाद्वेदान्तानामपि स्वार्थे प्रामाण्यसिद्धिरित्यर्थः ॥ १०४८ ॥

**भविष्यद्देहसंबन्धी वाक्यादात्मा न चेन्मितः ॥**
**मानान्तराच्च कः कुर्याददृष्टार्थाः क्रियाः सुधीः ॥ १०४९ ॥**

ननु भविष्यद्देहसंबन्ध्यात्मज्ञानं विनाऽपि विधेरदृष्टार्थक्रियासु प्रवृत्तेर्न तादृगात्मा शास्त्राद्गम्यत इत्याशङ्क्य न चेत्यादिभाष्यं व्याचष्टे । **भविष्यदिति** । देहान्तरसंब-

न्ध्यात्मा शास्त्रान्मानान्तराच्चानभ्युपगमाद्वक्ष्यमाणन्यायाच्चाप्रमितश्चेत्तदा भोक्तुरज्ञानान्न बुद्धिपूर्वकारी यागाद्यनुतिष्ठेल्लोकाय तस्य तादृगात्मास्तित्वमजानतो जन्मान्तरेष्टानिष्टाप्तिहानीच्छया वैदिकक्रियास्वप्रवृत्तेरतस्तादृगात्मास्तित्वादौ कर्मकाण्डं भाष्योक्तं शास्त्रं च प्रमाणं तत्प्रामाण्यं चौत्पत्तिकसूत्रे हेत्वविशेषादुपगतमिति भावः ॥१०४९॥

नापि सांख्यप्रमासिद्धमात्मानमवगच्छतः ॥
देहाद्यनभिसंबन्धात्प्रवृत्तिः स्यात्क्रियास्विह ॥ १०५० ॥

सांख्यास्त्वन्तःकरणे चित्प्रतिबिम्बस्तथाविधबिम्बपुरःसरः प्रतिबिम्बत्वात्संमतवदित्यनुमानादुक्तात्मानं साधयन्तस्तस्मिन्वेदप्रामाण्यं न मृष्यन्ते तान्प्रत्याह । **नापीति ।** सांख्यानुमानेनाऽऽत्मानं जानतोऽपि न क्रियासु प्रवृत्तिरसङ्गोदासीनस्य तदात्मनो देहाद्यसंबन्धात्तदभावे चाप्रवृत्तेरन्यथा मुक्तस्यापि प्रसङ्गादित्यर्थः ॥ १०५० ॥

कर्मकाण्डेऽधिकार्यस्मिन्यादृक्संभाव्यतेऽञ्जसा ॥
तादृक्संप्रतिपत्त्यर्थं न चास्तीति भण्यते ॥ १०५१ ॥

कर्माधिकारस्तर्हि कस्येत्याशङ्क्य देहाद्यतिरिक्तस्य तेनाध्यासेन संबद्धस्येत्यत्र भाष्यमवतारयति । **कर्मेति ॥** १०५१ ॥

कर्मभ्यः फलमिच्छद्भिरदृष्टं दृष्टमेव वा ॥
देहावस्थान्तरावेशे प्रमाणं वाच्यमात्मनः ॥ १०५२ ॥

आत्मनो देहाद्यतिरिक्तस्य देहान्तरयोगिनो मानं विना स्वतःसिद्धेर्न तत्र मानमन्वेष्यं तत्कथमुक्तात्मनि शास्त्रमानतेत्याशङ्क्याऽऽह । **कर्मभ्य इति ।** आत्मनः स्वतःसिद्धस्यापि वर्तमानदेहादि हित्वा देहान्तरादियोगे मानं वाच्यमन्यथा तदसिद्धेर्न च तमन्तरेण वैदिककर्मणां कर्ता भोक्ता चास्ति न च तज्ज्ञानं विना चतुर्विधचोदनावशादेव प्रवृत्तिः शास्त्रीये तु व्यवहारे यद्यपीत्याद्यनुज्ञाभाष्यविरोधादिति भावः ॥ १०५२ ॥

कथं च तस्य कर्तृत्वं व्यापित्वान्निष्क्रियस्य वतः ॥
न चाकर्तुः फलं गौण्या वृत्या चेत्सुतरां न तत् ॥ १०५३ ॥

वैशेषिकादयस्तु वैदिककर्मणां कर्ताऽऽत्मा वेदादृतेऽकृताभ्यागमप्रसङ्गादितर्कवशादेव सिध्यतीति मन्यन्ते तान्प्रत्याह । **कथं चेति ।** कारकाप्रयोज्यस्य तत्प्रयोक्तृत्वं कर्तृत्वं तदात्मनो नभोवद्विभुत्वादक्रियस्यायुक्तमित्यर्थः । मा भूदात्मा कर्ता तथाऽपि भोक्तेति सांख्यास्तान्प्रत्याह । **न चेति ।** शास्त्रफलं प्रयोक्तरीति न्यायादित्यर्थः । किं चाऽऽत्मनो भोक्तृत्वं गौणं मुख्यं वा तत्राऽऽद्यमनुवदति । **गौण्येति ।** प्रधानप्रवृत्तेरात्मार्थत्वादुपचारात्सोऽपि भोक्ता चेदित्यर्थः । तर्हि मुख्यभोक्तृत्वस्याभावादात्मनो न तदुपचरितमपि

युक्तं न च तदात्मनो वास्तवं तस्यासङ्गोदासीनत्वादवास्तवं तदिष्टमेवेत्याह । **सुतरा-मिति** ॥ १०६३ ॥

**मुख्यकर्तृत्वपक्षेऽपि ह्यनिर्मोक्षः प्रसज्यते ॥**
**मानेन नाश्यतेऽज्ञानं ज्ञापकं हि न कारकम् ॥ १०६४ ॥**

मुख्यं चेद्भोक्तृत्वं कर्तृत्वमपि तथा स्यात्ततश्चानिर्मोक्ष इति कल्पान्तरं प्रत्याह । **मुख्येति ।** वास्तवमपि कर्तृत्वादि माननिरस्यमित्याशङ्क्याऽऽह । **मानेनेति ।** तस्य वस्त्वनिवर्तकत्वे युक्तिमाह । **ज्ञापकं हीति** ॥ १०६४ ॥

**देहान्तराभिसंबन्धो भावित्वान्नाक्षगोचरः ॥**
**लिङ्गसादृश्यविरहान्नानुमा नोपमा तथा ॥ १०६५ ॥**

सांख्यादिमतेन देहान्तरयोग्यात्माऽकर्ता भोक्ता चाज्ञातोऽपि विना वेदं मानान्तरादेव सेत्स्यतीति चेत्तत्किं प्रत्यक्षमनुमानं वोपमानं वाऽर्थापत्तिर्वाऽभावो वा नाऽऽद्य इत्याह । **देहान्तरेति ।** तस्य वर्तमानमात्रविषयत्वादित्यर्थः । द्वितीयतृतीयौ निरस्यति । **लिङ्गेति ।** अविनाभूतलिङ्गोत्थानुमानस्य तदभावादनुत्थानं सादृश्यकरणकोपमानस्य च तदभावादप्रवृत्तिरित्यर्थः ॥ १०६५ ॥

**शब्दादात्मनि संसिद्धे पूर्वोक्तन्यायतो न च ॥**
**श्रुतार्थापत्तिरप्यत्र नाभावो मानभावतः ॥ १०६६ ॥**

अर्थापत्तिरपि न तावद्दृष्टार्थापत्तिरत्र संभविनी प्रकृतमात्मानं विनाऽनुपपन्नदृष्टाभावान्नापि श्रुतार्थापत्तिर्वस्तुन्युक्तेर्न चेदित्यादिन्यायेन **योनिमन्ये** प्रपद्यन्ते शरीरत्वायेत्यादिभाष्योक्तशास्त्रादेवोक्तात्मनि सिद्धे सत्यनुपपन्नवाक्यैकदेशस्याप्रतिपन्नत्वादित्याह । **शब्दादिति ।** उक्तात्मनि शब्दस्य भावादभावोऽपि मानानुदयाख्यो न तस्मिन्भावे मानमित्याह । **नेति** ॥ १०६६ ॥

**न चाहंप्रत्ययात्सिद्धिरात्मनः स्यात्कदाचन ॥**
**बोधानुभवसंवित्तिवित्तयो ह्यात्मवाचिनः ॥ १०६७ ॥**

उक्तात्मन्यहंप्रत्ययो मानमहमित्यत्र देहाकारास्फुरणादतिरिक्तात्मास्तित्वस्य तेनैव स्फूर्त्युपपत्तेरित्याशङ्क्याऽऽह । **न चेति ।** कदाचनेत्यवस्थात्रयोक्तिः । आत्मनोऽहंप्रत्ययवेद्यत्वाभावे हेतुमाह । **बोधेति ।** बोधादिशब्दानां स्वसंवेदनगोचराणां विद्वद्व्यवहारेष्वात्मवाचित्वप्रसिद्धेः स्वप्रकाशत्वादात्मनो नाहंधीग्राह्यतेति भावः ॥ १०६७ ॥

**यस्यानुभवसिद्ध्यैव सिद्धिः स्याद्घटसिद्धिवत् ॥**
**ततोऽहंप्रत्ययात्सिद्धिर्मोक्षतेऽनुभवः कथम् ॥ १०६८ ॥**

किंचाहमिति धीर्नाऽऽत्मग्राहिका तद्ग्राह्यत्वाद्घटधीवदित्याह । **यस्येति ।** यथा घटधीर्वृत्तिरूपा जडत्वेन स्वतोऽसिद्धेरनुभवादेव सिध्यति तथा यस्याहंप्रत्ययस्य

जडत्वाविशेषादनुभवरूपस्फुरणादेव स्फूर्तिर्नासावनुभवस्ततः स्वसिद्धिमपेक्षते तस्मादनुभवैकतानस्याऽऽत्मनो नाहंप्रत्ययाधीना सिद्धिरित्यर्थः ॥ १०५८ ॥

**मानादनुभवः सिद्धो जडः स्याद्घटवन्न चेत् ॥**
**नैरपेक्ष्यं चिदात्मत्वे स्याच्चान्योन्यसमाश्रयः ॥ १०५९ ॥**

अहंज्ञानस्याऽऽत्मग्राहकत्वे घटवदात्मनो जडतेति विपक्षे दोषमाह । **मानादिति ।** मेयस्यापि जडत्वाभावं शङ्कते । **न चेदिति ।** तर्हि बलादेव चिदात्मत्वे प्राप्ते नाहंधीग्राह्यता संविद्रूपत्वात्तद्वदित्यनुमानादित्याह । **नैरपेक्ष्यमिति ।** तस्याहंग्राह्यत्वे बाधकान्तरमाह । **स्याच्चेति** ॥ १०५९ ॥

**आत्मनोऽहंधियः सिद्धिरात्मसिद्धिरहंमतेः ॥**
**अन्योन्याश्रयतैवं स्यादहंबुद्ध्यात्मनोर्ध्रुवम् ॥ १०६० ॥**

आत्मनश्चक्षुरादिवदज्ञातस्य न ज्ञानहेतुत्वं सुप्तस्य तददर्शनादहंधीकर्तृत्वे चोपकरणान्तरानपेक्षत्वात्सदा तत्करणापत्तिः प्रमितस्याऽऽत्मनो ज्ञानकर्तृत्वे सत्यहंप्रत्ययेनाऽऽत्मप्रमितिस्तेन च प्रमितेनाहंप्रत्ययोत्पत्तिरित्यन्योन्याश्रयतां विशदयति । **आत्मन इति** ॥ १०६० ॥

**अहंधीरात्मनः कार्यं कारणेनाऽऽप्यते सदा ॥**
**तया तस्य कथं व्याप्तिरव्याप्तौ मेयता कथम् ॥ १०६१ ॥**

किं चाहंप्रत्ययो नाऽऽत्मग्राहकस्तत्कार्यत्वाद्रागादिवदित्याह । **अहंधीरिति ।** किं चाऽऽत्मा नाहंधीग्राह्यस्तत्प्रकाशकत्वाद्यो यत्प्रकाशको न स तत्प्रकाश्यो यथा घटप्रकाशको दीपो घटाप्रकाश्य इत्याह । **कारणेनेति ।** अहंधिया मा भूदात्मनो व्याप्तिस्तथाऽपि तन्मेयता स्यादित्याशङ्क्याऽऽह । **अव्याप्ताविति ।** नहि तद्व्याप्तिमन्तरेण तन्मेयत्वं दृष्टचरमित्यर्थः ॥ १०६१ ॥

**क्रियाकाले गुणीभावात्क्रियासिद्धावसंभवात् ॥**
**कर्तुः प्रमेयता न स्यादहंबुद्ध्या कथंचन ॥ १०६२ ॥**

किं चाऽऽत्ममात्रस्याहंधीग्राह्यत्वं कर्तृत्वेन क्रियामारूढस्य वा नाऽऽद्यो मोक्षादावपि प्रसङ्गात्तत्र तदभावान्नेति चेत्तर्हि तत्र यथा प्रथा तथाऽन्यत्रापि स्यान्न च तत्र तत्प्रथैव नास्तीति वाच्यं तद्दृष्टेरविपरिलोपश्रवणान्न द्वितीय इत्याह । **क्रियेति ।** अस्यार्थः—कर्तुरात्मनोऽहंधीरूपक्रियाकाले वा तत्प्राक्काले वा तदुत्तरकाले वा तत्कर्मत्वं नाऽऽद्यः क्रियां प्रति कर्तुर्गुणभूतत्वात्क्रियासिद्धौ सत्यां तां प्रति कर्मत्वायोगात्कर्मणः प्रधानत्वादेकस्यैकामेव क्रियां प्रति युगपद्गुणप्रधानत्वासंभवान्नेतरौ क्रियासिद्धिप्रागुत्तरकालयोस्तदभावात्कर्तुरसंभवात्तस्मात्तस्याहंबुद्ध्या न मेयतेति कर्तुरहंधीकर्मत्वे तस्याः स्वकर्मत्वमपि स्यात्तद्विशिष्टस्यैव कर्तृत्वादिति मत्वा कथंचनेत्युक्तम् ॥ १०६२ ॥

**संविद्रूपे प्रमेये च संविदन्या फलं भवेत् ॥**
**न च संविद्व्याभासो नानुमेयं फलं क्वचित् ॥ १०६३ ॥**

किंचाहंधीग्राह्यत्वमसंविदात्मनः संविदात्मनो वा तत्राऽऽद्यमङ्गीकृत्य द्वितीयं दूषयति । **संविदिति** । अस्तु मेयभूतप्रत्यगात्मसंविदोऽन्या संवित्फलं का हानिरत आह । **न चेति** । संविदात्मनि संविदन्तरस्याननुभवेऽपि व्यवहारलिङ्गेन तदनुमेयमित्याशङ्क्यानौपाधिके स्वप्रकाशे तस्मिन्नानुमानमित्याह । **नेति** । फलस्य स्वतःस्फुरणात्फलान्तराभावादात्मन्यनात्मनि वा नानुमेयं तदा व्यवहारस्त्वात्मनः संविद्रूपत्वादपि सिध्यतीत्यर्थः ॥ १०६३ ॥

**घटाद्याकारसंविद्वच्छुद्धायामपि संविदि ॥**
**संविद्विशिष्टा संवित्स्यान्न चासावात्मनीक्ष्यते ॥ १०६४ ॥**

आद्यपादत्रयार्थं दृष्टान्तेन स्पष्टयति । **घटादीति** । संविदात्मनि संविदाकारसंवित्प्रसङ्गस्येष्टत्वमाशङ्क्याऽऽह । **न चेति** ॥ १०६४ ॥

**प्रमातरि च मेये स्यात्फलं कस्येति भण्यताम् ॥**
**न मातुस्तस्य मेयत्वान्नापि मेये फलं क्वचित् ॥ १०६५ ॥**

आत्मनि संविदन्तराभावादमेयत्वमुक्त्वा फलाभावप्रसङ्गाच्चैवमिति विवक्षुराक्षिपति । **प्रमातरीति** । मातुरेव फलित्वात्कथं तदभावस्तत्राऽऽह । **न मातुरिति** । मेयत्वेऽपि फलित्वं किं न स्यान्मेये घटादौ तस्येष्टत्वादित्याशङ्क्याऽऽह । **नापीति** । फलं प्रकाशोऽप्रकाशो वाऽऽद्ये नाप्रकाशस्य प्रकाशाश्रयत्वम् । द्वितीये तेन घटादौ नाधिकमाचरितमिति जगदान्ध्यमिति भावः ॥ १०६५ ॥

**जडत्वात्तत्र मेयस्य फलं मातरि चेन्मतम् ॥**
**मेयतो जडताऽत्रापि संविच्चेन्न प्रमाणजा ॥ १०६६ ॥**

घटादेर्मेयस्य जाड्यात्तत्र फलाभावो युक्तो मातरि मेयेऽपि तदभावात्फलमिति शङ्कते । **जडत्वादिति** । मातर्यपि मेयत्वे तस्मादेव घटवज्जाड्यात्तद्वदेव न फलितेति दूषयति । **मेयत इति** । आत्मनो घटादिवैलक्षण्यार्थं संवित्त्वेष्टेर्न जडतेति शङ्कते । **संविच्चेदिति** । तर्हि नाऽऽत्मनि मानजा संविदन्या कल्प्या संविद्व्याद्दष्टेरुक्तत्वादित्याह । **नेति** ॥ १०६६ ॥

**धर्मत्वेनाप्यहंबुद्धेर्न भेदो धर्मिणाऽऽत्मना ॥**
**रूपं द्रव्यात्मनो नान्यद्रसादेस्तद्विभिद्यते ॥ १०६७ ॥**

किं चाहंधियोऽनात्मधर्मत्वमात्मधर्मत्वं वा नाऽऽद्योऽनभ्युपगमाद्भूतचैतन्यवादापाताच्च द्वितीये धर्मिणोऽभेदे न धर्मधर्मित्वं न चैकत्र तत्त्वमिति मन्वानो भेदपक्षे दोषमाह ।

१ ग. °स्तद्भि° ।

**धर्मत्वेनेति ।** भेदे गवाश्ववद्धर्मधर्मित्वासिद्धिरिति भावः । अहंबुद्धेर्धर्मत्वेनाङ्गीकारेऽपि तस्या धर्मिणाऽऽत्मना भेदो नेति योजना । धर्मस्य धर्मिणो भेदाभावे **दृष्टान्तमाह । रूपमिति ।** अन्यथा न रूपरूपितेत्यर्थः । रूपं भिद्यमानं भातीति चेत्सत्यं धर्मान्तराद्धर्म्यन्तराच्चेत्याह । **रसादेरिति ।** एवमहंज्ञानस्याऽऽत्मधर्मत्वेनेष्टस्य भेदेऽभेदे च तदग्राहित्वमभेदे विषयविषयित्वायोगाद्भेदे च संबन्धासिद्धेरिति भावः ॥ १०६७ ॥

**द्रव्यादि चाऽऽत्मनो रूपं प्रमेयं यदुदीरितम् ॥**
**घटवत्तदहंबुद्धेः प्रत्यग्वृत्तेर्न गोचरः ॥ १०६८ ॥**

आत्मनो द्रव्यबोधरूपत्वाद्द्रव्यरूपेण मेयत्वं बोधरूपेण मातृत्वमित्येकस्यैव ग्राह्यग्राहकात्मकस्याहंधिया सिद्धिरिति केचित्तान्प्रत्याह । **द्रव्यादीति ।** द्रव्यं बोधश्चाऽऽत्मनो रूपं तत्र यद्द्रव्यं मेयमुक्तं तदहंबुद्धेर्न गोचरः प्रतीच्याश्रये वृत्तिराश्रितत्वेन तस्या यतोऽभीष्टाऽतो न सा प्रत्यग्विषया । एतदात्मनिष्ठमहमितिज्ञानं नैतदात्मविषयमेतदात्मनिष्ठसाक्षात्कारत्वात्ताद्दग्घटसाक्षात्कारवदन्यथा घटवदनात्मतेति भावः ॥ १०६८ ॥

**अस्मत्प्रत्ययसंभिन्नं प्रत्यक्कर्तरि वेदनम् ॥**
**ज्ञानस्य यदुपन्यस्तं विशेषस्तत्र नेक्ष्यते[1] ॥ १०६९ ॥**

यत्तु ग्राह्यग्राहकस्याऽऽत्मनोऽहंधीग्राह्यत्वं तत्राऽऽह । **अस्मादिति ।** अस्यार्थः—एकस्य ग्राह्यग्राहकत्वविरोधेन क्षणिकज्ञानस्याऽऽत्मत्वं त्वया निरस्यते स दोषस्तेऽपि तुल्यो यद्धि प्रतीचि ज्ञानस्य कर्तर्यहंरूपितं ज्ञानं मानत्वेन त्वयोक्तं तत्र बौद्धान्न ते विशेष एकस्य ग्राह्यग्राहकत्वायोगस्य तुल्यत्वादतो बौद्धात्ते विशेषो वाञ्छितश्चेदात्मा नाहंधीगम्य इत्येष्टव्यमिति ॥ १०६९ ॥

**ज्ञानबोधेन नैवाऽऽत्मा मितो नाप्यात्मसंविदा ॥**
**ज्ञानं न च द्वयं भेदादभेदेऽनुभवः स्वतः ॥ १०७० ॥**

इतश्च द्विरूपस्याऽऽत्मनो नाहंधीवेद्यतेत्याह । **ज्ञानेति ।** ज्ञानं बोधांशस्तस्य बोधः स्फुरणं तेनैवाऽऽत्मा द्रव्यांशो न स्फुरितस्तयोरंशयोर्मिथो[2] भेदाद्बोधांशस्फुरणस्यैवांशान्तरस्फुरणत्वे द्रव्यस्य बोधादभेदः स्यान्नापि द्रव्यांशस्याऽऽत्मनः स्फुरणेन बोधांशस्य स्फुरणं तस्य द्रव्यादभेदापत्तेरतः स्फुरणभेदान्मानभेदे द्विरूपात्मनो नैकयाऽहंधिया सिद्धिरित्यर्थः । द्रव्यबोधाख्यमेकमेवाऽऽत्मरूपं तत्राहंधीकृतमेकं स्फुरणमित्यङ्गीकारे नानुपपत्तिरित्याशङ्क्याऽऽह । **न चेति ।** न हि द्रव्यं बोधश्चेत्युभयमात्मरूपं मिथो व्यावृत्तयोरात्मत्वे तस्यापि भेदापत्तेरित्यर्थः । एकरूप्येऽप्यात्मनो नाहंबुद्धिं विना सिद्धिस्तत्कुतो बौद्धाद्विशेषस्तवापीत्याशङ्क्याऽऽह । **अभेद इति ॥** १०७० ॥

१ ख. नेष्यते । २ ख. °योर्मि° ।

**किं प्रमाणमहंरूपमुताऽऽत्मैवेति कथ्यताम् ॥**
**प्रत्यक्षत्वान्न तन्मानं नाऽऽत्मा स्वार्थजडत्वतः ॥ १०७१ ॥**

प्रकारान्तरेणाहंधीगम्यत्वमात्मनो निराकर्तुं विकल्पयति । **किमिति** । न तावत्तद-हंरूपं मानं तस्य रागादिवत्प्रत्यक्षत्वान्मानस्य चानुमेयत्वं वदता तदनभ्युपगमादित्याद्यं प्रत्याह । **प्रत्यक्षत्वादिति** । नाप्यहंरूपमात्मैव पारतन्त्र्यापारतन्त्र्याभ्यां जाड्याजा-ड्याभ्यां च भेदादिति द्वितीयं निराह । **नाऽऽत्मेति** ॥ १०७१ ॥

**न चाप्यात्मन्यविज्ञातेऽहंबुद्धेः सिद्धता तव ॥**
**येनाऽऽत्मा स्यादहंबुद्धेरनुमेया हि सा स्थिता ॥ १०७२ ॥**

किं चाहंधियो मानत्वेऽप्युभयांशस्याऽऽत्मनो न तन्मेयता तस्मिन्नदृष्टे नाहंधीदृ-ष्टिस्तद्दृष्टौ नाऽऽत्मधीरिति ज्ञप्तावन्योन्याश्रयत्वापत्तेरित्याह । **न चेति** । अक्षादिव-दज्ञातैवाहंधीरात्मानं साधयतीति चेन्नेत्याह । **येनेति** । येनाज्ञाताहंबुद्धेरात्मसाध-कत्वेनाऽऽत्मा तद्विषयः स्यान्न तथा बुद्धेरबुद्धायाः साधकत्वं प्रकाशो बुद्धिरिति न्याया-द्दीपवज्ज्ञाने सत्येव तस्याः साधकत्वसंभवादिति भावः । तथाऽप्यात्मनः सत्तामात्रेण बुद्धिसाधकत्वान्नान्योन्याश्रयतेत्याशङ्क्याऽऽह । **अनुमेयेति** । सा हि बुद्धिरनुमेया त्वयाऽऽस्थिता नानाकारामेव बुद्धिमनुमिमीमह इति स्थितेरहंबुद्ध्यनुमाने चाऽऽत्मसं-विल्लिङ्गं ततो लिङ्गज्ञाने तद्विशिष्टात्मनोऽपि तद्धर्मत्वादात्मनि ज्ञातेऽहंधीस्ततश्चाऽऽ-त्मधीरिति व्यक्तैवान्योन्याश्रयतेत्यर्थः । आत्मनोऽहंधियः सिद्धिरित्यत्राऽऽत्मप्र-मितेरहंप्रत्ययोत्पत्तेश्चान्योन्याश्रयत्वमुक्तमिह तु द्वयोरपि प्रतीतावेव तदुच्यत इति विशेषः ॥ १०७२ ॥

**निरंशस्य न चाप्यंशकल्पनाऽप्युपपद्यते ॥**
**स्वात्मतन्त्रे च विषये मानबोधः सदा भवेत् ॥ १०७३ ॥**

आत्मनोऽशद्वयमाश्रित्याहंधीगम्यत्वायोगमुक्त्वा तदेवांशद्वयं न युक्तमित्याह । **निरंशस्येति** । अपिद्वयाद्दृष्टत्वकल्प्यत्वयोरनुपपत्तिः सूच्यते । न तावदात्मनोंऽशद्वयं दृष्टं नापि कल्पयितुं शक्यं कल्पकाभावान्निष्कलादिश्रुत्या च निरंशत्ववित्तेरित्यर्थः । किं चाऽऽत्मैवाहंधियो हेतुरन्योऽपि वाऽऽद्यं प्रत्याह । **स्वात्मेति** । आत्ममात्रस्याहं-धीहेतुत्वे सामग्र्याः सदा भावात्कार्यस्यापि मानाख्यबोधस्याहंप्रत्ययस्य सदा प्रसक्तेः स्वापाद्यसिद्धिरित्यर्थः । कारणान्तरमपि सदाऽस्ति मनःसंयोगादीत्युक्तदोषतादवस्थ्यं चकारार्थः ॥ १०७३ ॥

**अज्ञातत्वं विना मानं नाहंप्रत्यय आत्मनः ॥**
**अज्ञातत्वमतो वाच्यमात्मनोऽत्र घटादिवत् ॥ १०७४ ॥**

मातुरात्मत्वाङ्गीकारेणाहंधीग्राह्यत्वं तस्य निरस्तमस्तु वा मातुरहंधीगम्यत्वं नासा-

वात्मा तन्नाऽऽत्मनस्तद्वाध्यतेत्याह । **अज्ञातत्वमिति** । आत्मनो मातुरज्ञानत्वं विना तत्राहंधीर्न मानमतो मातरि मानप्रवृत्त्यर्थमज्ञातत्वं वाच्यं तच्च स्वतः परतो वा सिध्यति नाऽऽद्योऽनभ्युपगमाद्द्वितीयेऽपि मानाद्वा मातुर्वा नित्यानुभवाद्वा तत्सिद्धिर्नाऽऽद्योऽनवस्थानान्मानादनिवृत्त्यापत्तेश्च न द्वितीयो घटवन्मेयस्य मातुरसाधकत्वादित्यर्थः ॥ १०७४ ॥

**तस्याप्यनुभवात्सिद्धिर्यद्युच्येत घटादिवत् ॥**
**सिद्ध आत्मा पृथङ्मातुर्नो चेन्माता न सिध्यति ॥ १०७५ ॥**

तृतीयमालम्बते । **तस्येति** । ज्ञातत्वस्यैवेतिदृष्टान्तार्थोऽपिशब्दः । तर्हि मातुः सकाशाद्घटादेरिवाऽऽत्मनस्तदज्ञातत्वादिसाधकस्यान्यत्वान्मातुरहंधीवेद्यत्वेऽपि नाऽऽत्मनस्तद्वेद्यतेत्याह । **घटादिवदिति** । मातुरज्ञानत्वादिसाधकमाश्यनभ्युपगमे तत्र मानाप्रवृत्तेर्नासौ सिध्येदिति विपक्षे दोषमाह । **नो चेदिति** ॥ १०७५ ॥

**प्रमाणसंप्लवोऽप्युक्तो दूरादेव निवर्तितः ॥**
**अन्यत्रापि हि मानानां नैव संप्लव इष्यते ॥ १०७६ ॥**

**वार्तिककारमते**ऽहंप्रत्ययगम्यत्वमात्मनो निरस्तं शब्दादिधीविषयत्वेन शब्दादि स्वप्रकाशत्वेन स्वरूपमाश्रयत्वेनाऽऽत्मानं च साधयतीति सर्वार्थधीरात्मनि मानमिति **गुरुमतमाशङ्क्याऽऽह** । **प्रमाणेति** । योऽपि मानानां शब्दादिज्ञानानामेकत्राऽऽत्मन्यावेशो **गुरुमतानुसारिभिरुक्तः** सोऽपि दूरतो वारितोऽहंज्ञानस्याऽऽत्मनि संभावितमानत्वस्याप्युक्तनीत्या तन्मानत्वे प्रत्युक्ते शब्दादिधियां तन्मानत्वसंभावनामात्रस्यैवाभावात्तासु चाऽऽत्मनो भानेऽर्थवत्तत्कर्मत्वं तत्र भासमानत्वस्यैव तल्लक्षणत्वादित्यर्थः । आत्मन्यध्यक्षानुमानश्रुतीनां मानत्वान्नास्य वेदैकवेद्यतेति **तार्किकास्तान्प्रत्याह** । **अन्यत्रेति** । **तार्किकमते**ऽपि नाऽऽत्मनि मानानां संभूय समावेशोऽभ्युपगन्तुं शक्यते योऽहंधियोऽप्युक्तन्यायान्न विषयः स कथमनुमानादेर्विषयः स्यान्न शब्दादिष्वपि संप्लवो दूरादेव प्रतिदेहं भिन्नेष्वात्मसु शब्दादिहीनत्वात्ततोऽपि दवीयान्ब्रह्मात्मनीत्यर्थः ॥ १०७६ ॥

**अज्ञातावगमे यद्वत्प्रमातर्यर्पितं फलम् ॥**
**न मेये पूर्वमानेन तद्वन्मानान्तरैरपि ॥ १०७७ ॥**

कथं शब्दादिषु संप्लवासत्त्वं स किं पूर्वोत्तरमानानामेकस्मिन्नर्थे फलहेतुत्वेनाऽऽवेशाद्वा तन्मात्राद्वा नाऽऽद्य इत्याह । **अज्ञातेति** । अज्ञातस्य ज्ञाने क्रियमाणे पूर्वप्रमाणेन मातरि फलमर्पितं न मेये भूतचैतन्यवादानभ्युपगमादेवमुत्तरैरपि मानैर्मात्राश्रितमेव फलमर्प्यते पूर्वस्मात्तेषामविशेषादित्यर्थः ॥ १०७७ ॥

**अतोऽनधिगतावेशात्सर्वेषां संप्लवः कुतः ॥**
**मान्तरैरवबुद्धेऽपि ज्ञातेऽप्यज्ञाततोऽन्यतः ॥ १०७८ ॥**

मानानां मातृस्थफलहेतुत्वेऽपि किं ते जातं तदाह । **अत इति ।** मेये मानानां फलानर्थकत्वात्पूर्ववदुत्तरेषामपि शुद्धे वस्तुन्यज्ञाते प्रवेशादेकस्मिन्मेये फलहेतुत्वेनाप्रवेशान्न संप्लवशङ्केत्यर्थः । कल्पान्तरं निराह । **मान्तरैरिति ।** आद्यमानदृष्टेऽर्थे मानान्तरैर्ज्ञातेऽपि न संप्लवः शक्यशङ्कोऽज्ञातात्पूर्वमानार्थाज्ज्ञातत्वविशिष्टस्योत्तरमानार्थस्यान्यत्वात्तदुत्तरेष्वपि मानेषूक्तविषयभेदस्य सुवचत्वात्तन्न द्वितीयेऽपि संप्लवोऽस्तीत्यर्थः ॥ १०७८ ॥

**अथाप्यवगमो मेये तथाऽपि स्यान्न संप्लवः ॥**
**पूर्वोऽनधिगते वृत्तः प्रत्ययोऽधिगते परः ॥ १०७९ ॥**

फलस्य मातृस्थत्वेन मेये मानानामसंप्लवमुक्त्वा मेयस्थत्वेऽपि न संप्लवस्तेषामित्याह । **अथापीति ।** अपिशब्दाभ्यामवगमस्य प्रकाशात्मनोऽर्थे संभवोऽभ्युपगमवादत्वं चास्य द्योत्यते कथमत्र संप्लवराहित्यं तत्राऽऽह । **पूर्व इति** ॥ १०७९ ॥

**पूर्वेण निश्चिते चेत्स्यान्नोत्तरस्य प्रमाणता ॥**
**तथा संदेह एकस्मादन्यस्माद्धि विनिश्चयः ॥ १०८० ॥**

विशेषणभेदेऽपि विशेष्याभेदादुर्वारा संप्लुतिरिति चेत्तथाऽपि पूर्वमाननिश्चितेऽर्थे मानान्तरस्य मानत्वममानत्वं वाऽऽद्ये न संप्लवोऽर्थाकारभेदादेव तन्निरासादिति मत्वा द्वितीयमनुवदति । **पूर्वेणेति ।** तथा सत्येकस्मादुत्तरमानतः संदेहशब्दितोऽनुवादः स्यादन्यस्माच्चाद्यमानादर्थे निश्चयोऽतो न संप्लव इत्याह । **तथेति** ॥ १०८० ॥

**निःसामान्यविशेषेषु नातः संप्लव इष्यते ॥**
**यथाऽन्यत्र तथेहापि वेदान्तेष्वभ्युपेयताम् ॥ १०८१ ॥**

शब्दादिष्वसंप्लवेऽपि प्रतिदेहं भिन्नेष्वात्मसु स स्यादित्याशङ्क्याऽऽह । **निःसामान्येति ।** यतो दर्शितविधया सामान्यविशेषवत्सु संभावितसंप्लवेष्वपि शब्दादिषु स निरस्तोऽतो निर्गतसामान्यविशेषेषु चिन्मात्रेष्वात्मस्वसौ दूरोत्सारितस्तेषु स्वप्रकाशचिन्मूर्तिष्वेकस्यापि मानस्याप्रवेशादौपनिषदत्वस्य चानन्तरमेव वेदनान्न चैवमात्मभेदस्तस्य प्रातिभासिकत्वेऽप्यवस्तुत्वादित्यर्थः । तथाऽपि ब्रह्मात्मनि संप्लवादौपनिषदत्वहानिरित्याशङ्क्य संप्लवनिरासस्य प्रकृतोपयोगमाह । **यथेति ।** शब्दादिष्वात्मसु वाऽसंप्लवाद्वेदान्तेषु प्रतिपाद्यब्रह्मात्मन्यपि तदभावोऽभ्युपेयस्तत्र मानान्तरवार्तामात्रस्याप्यभावात्तत्प्रवेशस्य च तस्मिन्नपास्तत्वादतो वेदान्तानामेव तत्र मानतेति तदौपनिषदत्वसिद्धिरित्यर्थः ॥ १०८१ ॥

**यतो मानानि सिध्यन्ति जाग्रदादित्रयं तथा ॥**
**भावाभावविभागश्च स ब्रह्मास्मीति बोध्यते ॥ १०८२ ॥**

---

१ ख. °स्माच्च त्रि° ।

ननु ब्रह्मात्मनि मानान्तरागोचरे कुतो वेदान्तमानता तत्पृष्ठेन तु मानानीत्यादौ प्रत्यक्षादीनां नित्यानुभवब्रह्मात्मविषयत्वस्योक्तत्वादित्याशङ्क्योपाधिद्वारा मानान्तराणां तद्विषयत्वस्य तत्रोक्तत्वात्केवलं ब्रह्म वेदान्तैकवेद्यमिति मत्वाऽऽह । **यत इति ।** जाड्याद्ध्यक्षादीनां स्वतोऽसिद्धेर्यद्वशात्तानि स्फुरन्ति नासौ तेषां विषयो दीपभास्यरूपादेस्तदभासित्वादित्यर्थः । मानान्तरागोचरत्वेऽपि प्रतीचो न ब्रह्मत्वमवस्थावतस्तद्धीनब्रह्मैक्यविरोधादित्याशङ्क्य तस्यावस्थासाक्षित्वान्न तद्वत्तेत्याह । **जाग्रदादीति ।** यतः सिध्यन्तीत्यन्वयार्थं तथेत्युक्तम् । तथाऽपि सद्वयस्य नाद्वयब्रह्मैक्यमित्याशङ्क्य कल्पितद्वैतसाधकस्य वास्तवाद्वयत्वमविरुद्धमित्याह । **भावेति ।** पूर्ववदन्वयार्थश्चकारः । त्वमर्थं शुद्धमनूद्य स ब्रह्मेति तदर्थत्वं तस्य बोध्यते वाक्येनाहं ब्रह्मास्मीत्यादिनेति वाक्यार्थमाह । **स ब्रह्मेति** ॥ १०८२ ॥

**यतोऽसिद्धानि सिध्यन्ति भावाभावौ यदाश्रयौ ॥**
**योऽनन्यार्थो यदर्थं च सर्वं योऽनन्यदृक्सदा ॥ १०८३ ॥**

त्वमर्थोक्तिद्वारा वाक्यार्थमुक्त्वा तदर्थोक्तिद्वाराऽपि तं कथयति । **यत इति ।** स्वतः सत्तास्फूर्तिहीनानि जडानि यत्प्रसादात्ते लभन्ते तानि च लब्धात्मकानि भावाभावरूपाणि यत्र तिष्ठन्ति यश्च सुखलक्षणाक्रान्ततया सुखत्वेन शास्त्रे कथ्यते योऽपि सदास्फुरद्रूपतया साधकान्तरं नापेक्षते तेन परात्मना साक्ष्यैक्यं वाक्यबोध्यमित्यर्थः ॥ १०८३ ॥

**प्रमेयादित्रयं यस्मात्परस्परविलक्षणम् ॥**
**आत्मानं लभते सत्यः सोऽध्यक्षोऽत्राभ्युपेयताम् ॥ १०८४ ॥**

उक्तलक्षणः साक्ष्येव नास्ति कथं तस्य ब्रह्मत्वं बोध्यते तत्राऽऽह । **प्रमेयेति ।** मात्रादित्रयं कर्त्रादित्रयं भोक्त्रादित्रयं च मिथो विलक्षणं यतः सत्त्वाद्यश्नुते यश्च स्वसत्तादौ नान्यदपेक्षतेऽबाधितकूटस्थसत्संविद्रूपत्वात्स कूटस्थो बोधोऽत्र साक्ष्ये साक्षी तस्य निराकर्तुमशक्यत्वान्नहि तन्निरासे मात्रादिभावाभावसिद्धिर्विमतमेतद्ग्राहकेन्द्रियकज्ञानातिरिक्तास्मदीयप्रत्यक्षग्राह्यं प्रत्यक्षत्वात्कुम्भवदिति च प्रयोगोपपत्तेरिति भावः ॥ १०८४ ॥

**असंकुचितचित्पद्मः प्राज्ञे स्वप्नप्रबोधवत् ॥**
**तथा प्रफुल्लबोधाब्जः प्राज्ञवत्स्वप्नबोधयोः ॥ १०८५ ॥**

तथाऽपि स्वापे बोधमूर्तिः साक्षी नास्ति तत्र तदननुभवादित्याशङ्क्य जागरादौ स्फुटानुभववत्तत्रापि स वक्तव्यो नहि द्रष्टुरित्यादिश्रुतेरात्मनस्तत्र सवितृसंनिधौ सरोजवत्प्रकटितानुभवत्वदृष्टेरित्याह । **असंकुचितेति ।** तर्हि जागरादाविव स्वापेऽपि सविशेषः स्यादित्याशङ्क्याऽऽह । **तथेति ।** स्वापे बोधसत्त्ववत्तस्याविशेषत्वमपि मन्तव्यं

१ ख. 'त्राभिर्धाय' ।

**मात्रासंसर्गस्त्वस्येति श्रुतेरतः** स्वापवदवस्थाद्वयेऽपि विषयेषु वस्तुतोऽप्रसारितप्रबोधः **प्रत्यगात्माऽसङ्गो** हीत्यादिश्रुतेरित्यर्थः ॥ १०८५ ॥

**साक्ष्यसंबन्धतः साक्षी न स्वतः साक्षिताऽऽत्मनः ॥**
**प्रत्यङ्मात्रैकदृष्टित्वाद्धियां वाचामगोचरः ॥ १०८६ ॥**

साक्षित्वाद्बोधस्य सविशेषत्वं लौकिकवदित्याशङ्क्य स्वतोऽन्यतो वा साक्षितेति विकल्प्याऽऽद्यमसिध्द्या दूषयति । **साक्ष्येति ।** अन्यतः साक्षित्वे न सविशेषत्वं न ह्यविद्याकृतं तद्वास्तवं निर्विशेषत्वं निहन्तीति द्रष्टव्यम् । तथाऽपि वागादिविषयत्वाद्बोधस्य सविशेषत्वं घटादिवदित्याशङ्क्यासिद्धिमाह । **प्रत्यगिति** ॥ १०८६ ॥

**अस्मत्पक्षे हि कर्तव्यमविद्यामात्रकल्पितम् ॥**
**तदभावान्न संसारो भूतो भावी न वर्तते ॥ १०८७ ॥**

नन्वनुभवात्मा सविशेषः कर्तृत्वाद्राजवन्न चासिद्धिः साक्ष्यसंबन्धतः साक्षीति वदना संबन्धादिकर्तृत्वाङ्गीकारात्तत्राऽऽह । **अस्मदिति ।** कर्तृत्वादिसंबन्धस्य कल्पितत्वं मोक्षशास्त्रं प्रमाणयति । **तदभावादिति ।** सर्वकल्पनाहेतोरज्ञानस्य ज्ञानाद्ध्वस्तेस्तद्धेतुको बन्धः सर्वदा ध्वस्तो भवतीत्यर्थः ॥ १०८७ ॥

**स्वाभाविक्यप्यविद्येयमनुभूत्याऽवभासिता ॥**
**तमः सूर्योदयेनेव ज्ञानेनोत्कृत्य नाश्यते ॥ १०८८ ॥**

नन्वज्ञानमनादित्वादनुभवमात्रसिद्धत्वाच्चाऽऽत्मवन्न निवर्तेत इत्याशङ्क्यानादिभावत्वमुपाधिरिति मत्वाऽऽह । **स्वाभाविकीति ।** अवभासितेत्यत्रापि पूर्वोऽपिः संबध्यते । उत्कृत्याऽऽत्मनः सकाशादुत्कृष्यावयवशः शिथिलीकृत्येति यावत् ॥ १०८८ ॥

**अनादिकालमज्ञानं ज्ञानेनाऽऽदिमता क्षणात् ॥**
**दृश्यते नाश्यमानं हि न चास्याऽऽवृत्तिरीक्ष्यते ॥ १०८९ ॥**

विद्वदनुभवविरुद्धं चानुमानमित्याह । **अनादीति ।** ज्ञानप्रागभावे चानैकान्त्यं प्रसिद्धमिति हिशब्दार्थः । अज्ञानध्वंस्यापि ज्ञानमावृत्त्यपेक्षमित्येके तथाच क्षणादित्ययुक्तमित्याशङ्क्याऽऽह । **न चेति** ॥ १०८९ ॥

**एवंभूतोऽप्ययं प्रत्यक्स्वात्मानुभवसंश्रयात् ॥**
**व्युत्पत्तेः प्रागविज्ञातः सर्वाज्ञानादिसाक्ष्यपि ॥ १०९० ॥**

शुक्त्यादिज्ञानस्याऽऽवृत्त्यनपेक्षस्याज्ञानध्वंसित्वेऽपि नाऽऽत्मन्येवं स्वप्रकाशे तस्मिन्नज्ञानायोगात्प्रमाणाप्रवृत्तेरिति चेन्नेत्याह । **एवमिति ।** सर्वबुद्धितद्वृत्तिसाक्षित्वादात्मा स्वप्रकाशोऽपि प्राक्तत्त्वज्ञानोत्पत्तेः स्वानुभवादज्ञातः सिद्धोऽतस्तत्र मानप्रवृत्तिरपि युक्तेत्यर्थः ॥ १०९० ॥

---

१ ग. सर्वज्ञा° ।

**तत्त्वमस्यादितस्तस्मादागमादेव नान्यतः ॥**
**ऐकात्म्यवस्तुनः साक्षाद्व्युत्पत्तिरविचालिनी ॥ १०९१ ॥**

आत्मनि मानोत्थाज्ज्ञानादज्ञानतत्कार्यध्वंसेऽपि मानमध्यक्षादि स्यादित्याशङ्क्याऽऽह । **तत्त्वमिति** । यस्माद्वाक्यादहं ब्रह्मेति ज्ञानात्प्रागविज्ञातं वस्तु तस्मात्तत्त्वमादेरागमादेव तस्यापरोक्षप्रमितिर्मानान्तरस्यानौपाधिकेऽस्मिन्नप्रवृत्तेरुक्तत्वात्सा च प्रमितिः सहेतुसर्वबन्धध्वंसित्वेनापुनरावृत्तिफलत्वादतिदृढेत्यर्थः ॥ १०९१ ॥

**तस्यास्य कर्मकाण्डेन संबन्ध इति यः पुरा ॥**
**प्रश्नस्तन्निर्णयार्थाय सर्वथेत्यादिरुत्तरः ॥ १०९२ ॥**

न चासतीत्यादेरनुमेयश्चाऽऽत्मेत्यन्तस्य भाष्यस्य तात्पर्यं व्याख्याय सर्वथेत्यादिभाष्यतात्पर्यमाह । **तस्येति** । तस्येत्यादिभाष्येण काण्डयोर्नियतपौर्वापर्यकृतं संबन्धं प्रतिज्ञाय तदर्थमेव सिद्धेऽर्थे वेदान्तप्रामाण्यं सर्वोऽपीत्यादिना प्रसाध्य विद्याधिकारिसौलभ्यं च प्रामाण्योपयोगित्वेन सर्वपुरुषाणामित्यादिनोक्त्वा परकीयकार्ये च वेदप्रामाण्यं दृष्टविषयेत्यादिना निराकृत्य न चासतीत्यादिना परैरपि सिद्धेऽर्थे वेदप्रामाण्यस्यैष्टव्यत्वाद्युक्तं वेदान्तानां स्वार्थनिष्ठत्वमिति प्रतिष्ठाप्य पूर्वत्र कः संबन्धः काण्डयोरिति योऽन्तर्गर्भितः प्रश्नस्तस्य कर्मभिः शुद्धबुद्धेर्वैराग्यादिद्वारा ज्ञानोत्पत्तिः संबन्ध इति निर्णयः कर्तव्यस्तदर्थं सर्वथाऽपीत्यादिभाष्यमित्यर्थः ॥ १०९२ ॥

**ननु सिद्धे यथोक्तार्थे नाऽऽरम्भे हेतुरीक्ष्यते ॥**
**कृत्स्नप्रयोजनावाप्तेः पूर्वोक्तैरेव कर्मभिः ॥ १०९३ ॥**

पुमर्थोपायविशेषार्थिनस्तज्ज्ञापनार्थं कर्मकाण्डमारब्धं चेत्तत्रोक्तकर्मभिरेवाभीष्टपुमर्थसिद्धेर्वेदान्तारम्भवैयर्थ्यान्न संबन्धोक्तिः सावकाशेति शङ्कते । **नन्विति** । इष्टानिष्टाप्तिहानिहेतुविशेषार्थिनस्तज्ज्ञापनाय कर्मकाण्डारम्भो यथोक्तोऽर्थस्तस्मिन्सिद्धे सति वेदान्तारम्भे हेत्वदृष्टेस्तदारम्भो वृथेत्यक्षरार्थः । पूर्णपुरुषार्थलाभार्थं तदारम्भमाशङ्क्याऽऽह । **कृत्स्नेति** । कर्मकाण्डोक्तकर्मभिरेव पूर्णपुरुषार्थलाभादनारम्भ्यं ज्ञानकाण्डमित्यर्थः ॥ १०९३ ॥

**नैतदेवं सुखेप्साया जिहासायाश्च दुःखतः ॥**
**निदानस्यानिषिद्धत्वात्पूर्वोक्तैः कर्मभिः पुरा ॥ १०९४ ॥**

न त्वात्मन इत्यादिभाष्यमुत्तरत्वेन व्याचष्टे । **नैतदिति** । सुखं मे स्याद्दुःखं मा भूदिति सुखदुःखाप्तिहानीच्छाहेतुरात्माज्ञानं तस्य कर्मकाण्डोक्तकर्मभिरेव पूर्वमनिषिद्धत्वात्तद्धानार्थं ज्ञानसिद्धये वेदान्तारम्भो युक्तो नहि कर्माण्यज्ञानाविरोधीन्यज्ञानं साक्षादेव क्षपयन्ति । अतो वाच्यः संबन्धोऽपि काण्डयोरित्यर्थः ॥ १०९४ ॥

**निःशेषाह्लादसंप्राप्तिः सर्वानर्थनुतिस्तथा ॥**
**सर्वेषां प्राणिनामेतत्स्वत इष्टं प्रयोजनम् ॥ १०९५ ॥**

---

१ ख. °स्तदा ॥ स° ।

ननु कथं सुखाप्त्यादाविच्छा नहि विना हेतुं कार्यमस्ति न च तत्राज्ञानमेव हेतुः कर्मादेरपि संभवात्तत्राऽऽह । **निःशेषेति** ॥ १०९५ ॥

**आत्मनस्तत्त्वमेतच्च सिद्धं चैतन्यवद्यतः ॥**
**अथैष यो वै भूमेतिश्रुतिमानानुभूतितः ॥ १०९६ ॥**

दर्शितफलाभिलाषित्वस्याशेषजनसाधारण्येऽपि न तत्र प्रत्यगज्ञानं हेतुरन्यस्य शङ्कितत्वादित्याशङ्क्याऽऽह । **आत्मन इति ।** सर्वेष्टमुभयविधं फलमात्मनः स्वरूपत्वेन चैतन्यवन्नित्याप्तं न चाऽऽप्तेः स्वारस्येनेच्छा तेन तत्राज्ञानमेवोपादानं कर्मादिनिमित्तमिति भावः । फलस्य हेत्वधीनत्वात्कथं तदात्मनस्तत्त्वमित्याशङ्क्य साध्यत्वमौपचारिकमिति मत्वोक्तं फलमात्मनस्तत्त्वमित्यत्र मानमाह । **अथेति । अथैष एव** परम आनन्द ऐषाऽस्य परम आनन्द एष ह्येवाऽऽनन्दयाति यो वै भूमा तत्सुखमित्यादि**श्रुतेः** सुखमात्मा परप्रेमास्पदत्वाद्धटवदित्यनुमानात्सौषुप्तानुभवतश्चाऽऽत्मनो द्विविधं फलं स्वरूपसिद्धमित्यर्थः ॥ १०९६ ॥

**स्वर्गशब्दाभिधश्चायं पुमर्थो यो यथोदितः ॥**
**स्वर्गमित्यादिभिर्वाक्यैस्त्रय्यन्तेष्वपि गीयते ॥ १०९७ ॥**

स्वर्गशब्दोऽप्यात्मनो वाचकस्तस्य यथोक्तफलत्वं गमयतीत्याह । **स्वर्गेति ।** यो हि प्रत्यगात्मा स्वप्रकाशत्वाद्द्वयत्वाद्युक्तं रूपमनतिक्रम्य स्थितः स स्वर्गशब्दवाच्यत्वादुभयविधफलस्वभाव इत्यर्थः । स्वर्गकामादिवाक्ये स्वर्गशब्दस्यार्थान्तरे प्रयोगवदात्मनि प्रयोगो न भाति तत्कुतोऽस्य स्वर्गशब्दवाच्यतेत्याशङ्क्याऽऽह । **स्वर्गमिति । स्वर्गं लोकमित** ऊर्ध्वो विमुक्तोऽहरहर्वा एवंवित्स्वर्गं लोकमेत्यनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठन्तीत्यादि**वाक्यै**र्वेदान्तेष्वात्मा स्वर्गशब्देनातिशयपुमर्थो विवक्षितस्तदन्यत्रेवाऽऽत्मन्यपि प्रयोगदर्शनादात्मनि प्रयोगाद्दष्टिरसिद्धेत्यर्थः ॥ १०९७ ॥

**स्वर्गं पुमर्थमुद्दिश्य सर्वप्राणभृतामियम् ॥**
**वाङ्मनःकायचेष्टा स्याद्याऽपि तत्साधनोपगा ॥ १०९८ ॥**

द्विविधोऽपि पुमर्थः स्वर्गश्चेत्कर्मभिरेव तत्सिद्धिः स्वर्गोद्देशेन यागादिविधानादतो नार्थो वेदान्तारम्भेणेत्याशङ्कते । **स्वर्गमिति ।** सर्वेषामप्यविकृतानामुक्तं स्वर्गमुद्दिश्य त्रिविधप्रवृत्तिदर्शनात्प्रवृत्तिसाध्यापूर्ववशादेव तत्सिद्धेर्नार्थो वेदान्तारम्भेणेत्यर्थः । मोक्षहेतुज्ञानयोगिश्रवणादिचेष्टया ज्ञानद्वारा मोक्षार्थं वेदान्तारम्भमाशङ्क्य तयाऽपि स्वर्गस्यैव सिद्धेस्तस्य मोक्षत्वात्तस्य च कर्मभिरेव लाभान्न वेदान्तारम्भोऽर्थवानित्याह । **याऽपीति** ॥ १०९८ ॥

**उत्पत्त्याद्यर्थनिष्ठानां सर्वेषामपि कर्मणाम् ॥**
**स्वर्गे नैवाधिकारोऽस्ति तस्य सिद्धत्वतः स्वतः ॥ १०९९ ॥**

उत्पत्त्याप्तिविकृतिसंस्कृतीनामन्यतमहेतवः सर्वाणि कर्माणि तेषां कूटस्थनित्यानतिशयानन्दात्मनि स्वर्गे न व्यापारस्तस्य स्वतःसिद्धत्वेनासाध्यत्वात्स्वर्गाभासे तु व्यापारस्तेषामिति परिहरति । **उत्पत्त्यादीति** ॥ १०९९ ॥

**स्वात्मसाध्यातिरेकेण सर्वमेव हि साधनम् ॥**
**नालं साध्यान्तरायेह किम्वसाध्यार्थसिद्धये ॥ ११०० ॥**

मुख्यस्वर्गस्यासाध्यत्वं कैमुतिकन्यायेनाऽऽह । **स्वात्मेति** । इहेति साध्यसाधनव्यवहारभूमिरुक्ता । साधनं हि सर्वमेव स्वसाध्यमर्थं साधयति न तु तदतिरेकेण साध्यान्तरसिद्धये प्रभवत्यसाध्यस्य पुनरर्थस्य मुख्यस्वर्गस्य सिद्धये साधनमशक्तमिति किमु वक्तव्यमित्यर्थः ॥ ११०० ॥

**यथोक्तपुरुषार्थस्य यद्यप्याप्तस्वभावता ॥**
**आत्मस्वभावतो नाऽऽप्तिस्तथाऽप्यज्ञानहेतुतः ॥ ११०१ ॥**

कर्मासाध्यत्वेऽपि यथोक्तपुमर्थात्मकस्वर्गस्याऽऽत्मत्वेनाऽऽप्तत्वाद्धेत्वनपेक्षत्वात्कृतं वेदान्तारम्भेणेत्याशङ्क्याऽऽह । **यथोक्तेति** ॥ ११०१ ॥

**अविद्याव्यवधानस्य नाऽऽत्मज्ञानातिरेकतः ॥**
**प्रध्वस्तिः कर्मभिः कर्तुं शक्या तेषाममानतः ॥ ११०२ ॥**

अज्ञानादुक्तपुमर्थानाप्तावपि कर्मभिरेव तन्निवृत्तेरलं वेदान्तारम्भेणेति चेन्नेत्याह । **अविद्येति** । कर्मणामतद्ध्वंसकत्वे हेतुमाह । **तेषामिति** ॥ ११०२ ॥

**व्यञ्जकं विरहय्यान्यत्साधनं कारकात्मकम् ॥**
**तदभिव्यक्तये नालं स्वतःसिद्धस्य वस्तुनः ॥ ११०३ ॥**

अमानत्वेऽपि कर्मणां वस्तुव्यञ्जकत्वादालोकवदज्ञानतमोनिवर्तकत्वमित्याशङ्क्य हेत्वसिद्धिमाह । **व्यञ्जकमिति** । कारकात्मकं कर्म हित्वाऽन्यत्साधनमक्षादिव्यञ्जकं कर्मणि व्यञ्जकत्वादृष्टेरित्यक्षरार्थः । हन्ताक्षादिरेवाऽऽत्मानं व्यञ्जयंस्तदज्ञानं निरसिष्यत्युपनिषदारम्भस्तु वृथेत्याशङ्क्याऽऽह । **तदिति** । अक्षादि सर्वनामार्थः । नहि तद्वस्तुनोऽभिव्यक्तये शक्तं तस्य स्वतःसिद्धस्य तत्साधकतया तदनपेक्षत्वादित्यर्थः ॥ ११०३ ॥

**कर्मभिर्नापनीतोऽतः प्रत्यङ्मोहोऽप्रमाणतः ॥ ११०४ ॥**
**यावच्च सम्यग्विज्ञानवह्निनाऽसौ न दह्यते ॥**
**न तावत्किंचिदप्याप्तं सुखं दुःखविवर्जितम् ॥ ११०५ ॥**

कर्मणामक्षादीनां चाऽऽत्माव्यञ्जकत्वे तदज्ञानानिवर्तकत्वं फलतीत्याह । **कर्मभिरिति** । अक्षादीनामुपलक्षणमेतत् । अतःशब्दार्थमाह । **अप्रमाणत इति** । प्रमाणत्वेऽपि न चक्षुषेत्यादिश्रुतेरक्षादीनामतद्गोचरत्वादित्यर्थः । तर्हि माऽज्ञानं निवर्तिष्ट सत्येव तस्मि-

---

१ ख. °वतः । स्वात्म° ।

न्कर्मणा मोक्षः स्यादित्याशङ्क्य यावद्धीत्यादिभाष्यतात्पर्यमाह । **यावच्चेति** । तत्त्वज्ञानादज्ञाननिवृत्त्यभावे सुखप्राप्तिर्दुःखोच्छित्तिश्चेत्येवंलक्षणो मोक्षो न सिध्यत्यज्ञाननिवृत्त्यनतिरेकात्तस्येत्यर्थः ॥ ११०४ ॥ ११०५ ॥

**नालं विमुक्तये काम्यं यदि नाम तथाऽपि तु ॥**
**पुंसो वैराग्यहेतुत्वादुपकार्येव तन्मतम् ॥ ११०६ ॥**

कर्मणामज्ञानाध्वंसित्वेन साक्षान्मोक्षाहेतुत्वे तेषामत्यन्तानुपयोगो मुक्तावित्यननुष्ठेयतेत्याशङ्क्याऽऽह । **नालमिति** । काम्यशब्देन नित्यादेरपि ग्रहः । **एतावान्वै** काम इतिश्रुतेः । कर्मणां साक्षान्मोक्षाहेतुत्वेऽपि चित्तशुद्ध्यादिद्वारा तदुपयोगितेत्यर्थः ॥ ११०६ ॥

**असह्यदुःखफलतः स्वकार्यविनिवृत्तिकृत् ॥**
**विरक्तिहेतुतः कर्म प्रतिषिद्धं यथा तथा ॥ ११०७ ॥**
**अपि काम्यं कृतं सर्वं दुःखात्मकफलत्वतः ॥**
**आविरिञ्चयात्स्वकार्येभ्यः स्यादेव विनिवृत्तये ॥ ११०८ ॥**

ननु तत्तद्विध्युद्देशस्थं फलं हित्वा कथं कर्मणां वैराग्यहेतुतेत्याशङ्क्याऽऽह । **असह्येति** । यथा निषिद्धं हननादिकर्म श्वसूकराद्याप्तिरूपसुदुःसहफलत्वान्निषेधशास्त्रार्थज्ञानवतस्ततो वैराग्यहेतुतया स्वयमननुष्ठीयमानं स्वफलात्पुंसो निवर्तकं तथा काम्यादिकमपि कर्म गर्भवासादिदुःखफलत्वात्तस्य पुंसो हिरण्यगर्भान्तफलेभ्यो वैराग्यहेतुत्वेन ससाधनकर्मत्यागद्वारा श्रवणादिपूर्वं सम्यग्ज्ञानमापाद्य मोक्षे पर्यवस्यतीत्यर्थः ॥ ११०७ ॥ ॥ ११०८ ॥

**इत्युक्तप्रतिपत्त्यर्थमाजगामोत्तरं वचः ॥**
**एकवाक्यत्वमेवं च वेदस्य स्यादसंशयम् ॥ ११०९ ॥**

सम्यग्धीरेव साक्षान्मोक्षहेतुर्न कर्म प्रनाड्या तु तदुपयोगीत्युक्तार्थपरं यावद्धीत्यादिभाष्यमिति निगमयति । **इत्युक्तेति** । कर्मणां शुद्ध्यादिद्वारा ज्ञानहेतुत्वं तस्यैव मुक्तिहेतुतेत्येवं संबन्धे सति काण्डयोरेकवाक्यत्वासिद्धिर्विधान्तरेण तदयोगस्योक्तत्वान्न चैकवाक्यत्वसंभवे तत्त्यागो युक्तोऽतस्तयोरेकवाक्यत्वार्थमुक्ता संगतिरुपेयेत्युक्तसंबन्धे प्रापकान्तरमाह । **एकवाक्यत्वमिति** ॥ ११०९ ॥

**दक्षिणोदगधोगत्या प्रत्यगज्ञानमूढधीः ॥**
**बम्भ्रमीत्यनिशं दुःखी पुमान्कर्मपुरःसरः ॥ १११० ॥**

कर्मकाण्डस्य वैराग्यद्वारा मोक्षे प्रवेशं प्रदर्श्य वैराग्यार्थं कर्मफलं प्रपञ्चयन्कर्मफलरागद्वेषादीत्यादिभाष्यार्थमाह । **दक्षिणेति** । स्वाज्ञानादविवेकी कर्म करोति तेन त्रिविधगत्या सदासंतप्तमनाः संसरतीत्यर्थः ॥ १११० ॥

---

१ ग. °विरञ्च्या° ।

**काम्यैर्दक्षिणमन्वेति ज्ञानयुक्तैस्तथोत्तरम् ॥**
**निषिद्धैश्चाप्यधोजन्म कर्मसंभारसंभृतः ॥ ११११ ॥**

उक्तामेव गतिं विभजमानस्तत्र केवलमित्यादिभाष्यार्थमाह । **काम्यैरिति** । केवलैरिष्टादिभिरिति यावत् । दक्षिणं धूमाद्युपलक्षितं पितॄणां पन्थानमित्यर्थः । उत्तरमर्चिराद्युपलक्षितं देवयानमध्वानमित्यर्थः । अन्वेतीत्यन्वयार्थं तथेत्युक्तम् । चकारः समुच्चयार्थः । पूर्ववदन्वयार्थोऽपिशब्दः । कर्मसंभारसंभृत इत्यस्य सर्वत्र संबन्धः ॥ ११११ ॥

**धर्माधर्मांशसाम्ये च मनुष्यत्वं प्रपद्यते ॥**
**ब्रह्माद्या स्थावरान्तैवं प्रत्यगज्ञानहेतुजा ॥**
**नामरूपेहचित्राऽऽद्या स्वप्नमायेन्द्रजालवत् ॥ १११२ ॥**

साम्ये चेत्यादिभाष्यं व्याचष्टे । **धर्मेति** । त्रिविधमपि कर्मफलं वैराग्यार्थं संक्षेपेणोपसंहर्तुमेवमित्यादिभाष्यं तद्विभजते । **ब्रह्माद्येति** । एषा हि संसारगतिरुक्तरीत्या निष्कृष्यमाणा ब्रह्माद्या स्थावरान्ता सैवोत्कृष्यमाणा स्थावराद्या ब्रह्मान्ता सा च सर्वा स्वाविद्याजन्या नामादिभिर्विचित्रितत्वात्संप्रतिपन्नवदित्यर्थः । ईहनमीहश्चेष्टा कर्मेति यावत् । स्वयमेव तर्हि संसारगतिरज्ञानजत्वाद्गन्धर्वनगरवन्नङ्क्ष्यतीत्याशङ्क्य विशिनष्टि । **आद्येति** । तस्या नानाविधत्वं दर्शयन्नज्ञानजत्वे दृष्टान्तमाह । **स्वप्नेति** ॥ १११२ ॥

**धर्माधर्माद्युपादानसाधना नश्वरी गतिः ॥ १११३ ॥**
**व्याकृतं नामरूपाभ्यां यद्यपीदं श्रुतौ श्रुतम् ॥**
**आत्मतत्त्वानभिव्यक्तेर्नाभिव्यक्तं तदुच्यते ॥ १११४ ॥**

धर्माधर्मसाधनकृतेत्यस्यार्थमाह । **धर्मेति** । उपादानमनुष्ठानं साधनशब्दो निमित्तपरः । त्रिविधं कर्मफलमनर्थरूपमेवाविद्याकृतत्वादित्युक्तं तत्रैव हेत्वन्तरमाह । **नश्वरीति** । ननु संसारगतेराविद्यत्वमयुक्तं प्रत्यक्षादिसिद्धत्वात्तन्नामरूपाभ्यामेव व्याक्रियतेति श्रुतौ च नामरूपात्मना जगतो व्यक्तिश्रवणान्न च प्रामाणिकस्याऽऽविद्यत्वोपपत्तिरित्याशङ्क्य तदेवेदमित्यादिभाष्यतात्पर्यमाह । **व्याकृतमिति** । प्रत्यक्षादिगम्यत्वमिदमित्यनुज्ञायते । यद्यपीत्युक्तत्वात्तथाऽपीति वक्तव्यम् । जगतः स्वरूपमात्मा तत्राध्यस्तत्वात्तस्मादात्मतत्त्वेऽनभिव्यक्ते प्रत्यक्षादिना श्रुत्या च व्यक्तमिव दृश्यमानमपि तदव्यक्तमेवेति न तस्याऽऽविद्यत्वक्षतिरित्यर्थः ॥ १११३ ॥ १११४ ॥

**अविद्यातिमिरोच्छित्तौ नानाविष्कृतमण्वपि ॥**
**कार्यकारणवद्वस्तु नानपास्तं तमोऽप्यतः ॥ १११५ ॥**

आत्मन्यव्यक्ते न कस्यचिद्व्यक्तिरित्युक्त्वा तस्मिन्व्यक्ते सर्वं व्यक्तं भवतीत्याह । **अविद्येति** । आत्मज्ञानात्तदज्ञानध्वस्तावपि न समस्तवस्तुव्यक्तिस्तदावरणस्य तमसः सत्त्वादित्याशङ्क्याऽऽत्माज्ञानस्यैव तमस्त्वान्मैवमित्याह । **नेत्यादिना** । आत्मज्ञानमतःशब्दार्थः ॥ १११५ ॥

**यत एवमतः प्रत्यग्याथात्म्यप्रतिपत्तये ॥**
**प्रारब्धेयं प्रयत्नेन वेदान्तोपनिषत्परा ॥ १११६ ॥**

यस्मादात्मनि ज्ञाते सर्वपुरुषार्थसमाप्तिरज्ञाते च सर्वानर्थप्राप्तिरिह **चेदवेदीदथ** सत्यमस्ति न चेदिहावेदीन्महती विनष्टिरितिश्रुतेस्तस्मादात्मज्ञानार्थत्वेन साधनचतुष्टय-संपन्नमधिकारिणमधिकृत्य वेदान्तारम्भः संभवतीत्येतस्माद्विरक्तस्येत्यादिभाष्यार्थमाह । **यत इति ।** प्रारम्भस्य प्रयत्नो नामाधिकार्यादिसाहित्यम् । **परेत्युषा वा** अश्वस्येत्याद्या व्याचिख्यासितेति यावत् । अस्योपनिषत्पदस्य ब्रह्मविद्यार्थत्वव्यासेधार्थं वेदान्तविशेषणम् ॥ १११६ ॥

**यथोक्तफलसिद्ध्यर्थमारब्धोपनिषद्यदि ॥**
**ब्रह्म वा इदमित्यादि कस्मान्नाऽऽरभ्यतेऽधुना ॥ १११७ ॥**

एवमुपनिषदारम्भे समर्थिते **सत्युषा वा** अश्वस्येत्यारभ्य तदारम्भमाक्षिपति । **यथोक्तेति ।** ब्रह्मज्ञानं यथोक्तं फलं तदर्थमेवोपनिषदारब्धा चेद्ब्रह्म **वा** इदमग्र आसीदित्यारब्धव्यं तस्मादारभ्य ब्रह्मज्ञानोक्तेः । **उषा** वा अश्वस्येत्यारभ्योपनिषदारम्भस्तु न युक्तः साक्षादत्र ब्रह्मविद्यानुक्तेरित्यर्थः ॥ १११७ ॥

**येषामनधिकारोऽत्र ह्यश्वमेधक्रतौ भवेत् ॥**
**इत एव तु विज्ञानात्तेषां तत्फलकीर्तनम् ॥ १११८ ॥**

अस्मादारभ्योपनिषदारम्भेऽभीष्टं फलमभिधित्समानः प्रथममश्वमेधोपासनफलवाचिनोऽस्य त्वित्यादिभाष्यस्यार्थमाह । **येषामिति ।** अश्वमेधानधिकारिणां ब्राह्मणादीनां तत्फलार्थिनामस्मादेवोपासनात्तदाप्तिरिति मत्वा श्रुतौ तदुपासनोक्तिरित्यर्थः ॥१११८॥

**कर्मगोचरतैवात्र विज्ञानस्यापि चेन्मतम् ॥**
**विकल्पश्रवणान्मैवं कर्मणा विद्ययाऽथवा ॥ १११९ ॥**

कर्मविषयत्वमित्यादिचोद्यभाष्यं विभजते । **कर्मेति ।** अश्वमेधे यदुपासनं तस्याप्यश्वादिवत्तच्छेषत्वेन पुरुषार्थत्वान्न पृथक्फलत्वमङ्गेषु स्वतन्त्रफलाभावादित्यर्थः । क्रत्वर्थमिदं ज्ञानं न पुमर्थमित्ययुक्तमश्वमेधेन कर्मणा तदुपास्त्या वा फलमिति विकल्पश्रुतेरतस्तुल्यफलत्वात्फलवत्त्वं विद्याकर्मणोः सममिति भाष्यस्थं नञर्थं वदन्नुत्तरमाह । **विकल्पेति** ॥ १११९ ॥

**यजते योऽश्वमेधेन यश्चैवं वेद तं क्रतुम् ॥**
**फलं तुल्यं तयोर्युक्तं कर्मिणो विदुषस्तथा ॥ ११२० ॥**

**सर्वं पाप्मानं** तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेदेति भाष्योक्तां **विकल्पश्रुतिमुदाहरति । यजत इति ।** एवमित्यनुष्ठानक्रमपरामर्शः । तमित्यश्वमेधोक्तिः । सति विकल्पश्रवणे फलितमाह । **फलमिति** ॥ ११२० ॥

**उपास्तेरपि कर्मत्वादश्वमेधक्रतोरिव ॥**
**नातो धियोऽर्थवादत्वं तद्विधेर्नितरां न च ॥ ११२१ ॥**

उपास्तिफलश्रुतेरर्थवादत्वमाशङ्क्य विद्याप्रकरणे चेत्यादिभाष्येण परिहरति । **उपास्तेरिति** । अश्वमेधवदुपास्तेरपि कर्मत्वाद्विहितत्वाच्च फलश्रुतेर्नार्थवादतेत्यर्थः । धियः फलश्रुतेरित्यध्याहारः । **न च य एवं वेदेति** विहितस्याप्युपासनस्य प्रयाजादिसाम्यं विकल्पश्रुत्या क्रतुतुल्यत्वदृष्टेरित्यतःशब्दार्थः । तद्विधेस्तस्या उपास्तेर्य एवं वेदेति विधानादिति यावत् । हेतुद्वयकृतो विनिश्चयो नितरामित्युक्तः ॥ ११२१ ॥

**एतावदेव चेदत्र भवतैवं विवक्षितम् ॥ ११२२ ॥**
**प्रयोजनं तत्सुकरं विध्युद्देशेऽपि भाषितुम् ॥**
**विद्याप्रकरणे तस्य त्वाम्नायः किमितीर्यताम् ॥ ११२३ ॥**

उक्तमश्वमेधोपासनं न क्रत्वर्थं किंतु पुरुषार्थं तत्र चाधिकारोऽश्वमेधक्रत्वनधिकारिणामपीत्येतावदेव चेदिष्टमेवं सत्यस्मिन्नुपासने कर्मप्रकरणस्थेऽपि त्वदिष्टं सर्वं सुकरमेव वक्तुमतोऽत्र विद्याप्रकरणे नास्याध्ययनं युक्तमिति चोदयति । **एतावदिति** ॥ ११२२ ॥ ॥ ११२३ ॥

**सोऽपि ज्ञानेन संयुक्तो हयमेधो महाक्रतुः ॥**
**संसारफल एवेति प्रवृत्त्यङ्गतयोच्यते ॥ ११२४ ॥**

सर्वेषां चेत्यादिभाष्येणोत्तरमाह । **उच्यत इति** । उच्यतेऽशेषयज्ञानां क्रतुराडेष उच्यते । **सर्वप्रायश्चित्तत्वं** सर्वभेषजत्वं सर्वपापनिवर्तकत्वमित्यादिविभूतिश्रुते**र्ब्रह्महत्या**श्वमेधाभ्यां न परं पुण्यपापयोरितिस्मृतेश्चास्य क्रतुमुख्यत्वमवधेयमित्यर्थः । अश्वमेधस्य पुण्यकर्मश्रेष्ठत्वेऽपि प्रकृते किमायातं तदाह । **सोऽपीति** । उपास्तियुक्तस्याश्वमेधस्य महत्त्वे तस्यैव मोक्षहेतुत्वमन्यथा महत्त्वानुपपत्तेरित्याशङ्क्याऽऽह । **संसारेति** । अशनाया हि मृत्युः स वै नैव रेमे सोऽबिभेदिति भयारत्यादिश्रवणादुपास्तियुक्तक्रतुफलस्य सूत्रस्य बन्धमध्यपातित्वाद्विशिष्टोऽपि क्रतुर्न मुक्तये पर्याप्नोति महत्त्वं च क्रत्वन्तरापेक्षया फलातिरेकादिति भावः । तथाऽपि किमिति विद्यारम्भे बन्धफलत्वमस्योच्यते तत्राऽऽह । **प्रवृत्तीति** ॥ ११२४ ॥

**प्रत्यग्बोधातिरेकेण साधनान्तरनिस्पृहाः ॥**
**निर्ज्ञाताशेषकर्मोत्थफलफल्गुत्वबुद्धयः ॥ ११२५ ॥**

कथमस्य बन्धफलत्वकथनं विद्यायां मुमुक्षुप्रवृत्तावुपयुज्यते तत्राऽऽह । **प्रत्यगिति** । ननु स्वर्गादिष्वभिलाषसंभवात्तद्धेतुषु वैदिककर्मस्वपि स्पृहाराहित्यायोगात्कथं साधनान्तरनिस्पृहत्वं तत्राऽऽह । **निर्ज्ञातेति** ॥ ११२५ ॥

---

१ ख. तत् ।

मुमुक्षवः प्रवर्तेरन्कथं नामाऽऽत्मवेदने ॥ ११२६ ॥
संसारफलता काममस्तु काम्यस्य कर्मणः ॥
नित्यानामफलत्वात्तु मुक्तिरेवास्तु तत्फलम् ॥ ११२७ ॥

तर्हि स्वर्गादाविव मोक्षेऽपि न स्पृहा वैदिकफलत्वाविशेषात्कुतो विद्यायां प्रवृत्तिस्तत्राऽऽह । **मुमुक्षव इति** । निश्चयेन ज्ञातानामशेषवैदिककर्मणां यानि फलानि तेषां फल्गुत्वमल्पीयस्त्वं तद्विषया बुद्धिर्येषां विवेकिनामनुमानागमाभ्यामुत्पद्यते ते यदा क्रतुप्रधानस्याश्वमेधस्योपासनसहितस्यापि संसारफलत्वं तदा स्वल्पीयसामग्निहोत्रादीनां किं वाच्यं संसारफलत्वमित्यभिसंधायास्मिन्कर्मराशौ बन्धहेतावनभिलाषिणः सन्तः साधनचतुष्टयविशिष्टा ज्ञानमपेक्षमाणास्तदुपाये श्रवणादाविव सर्वकर्मसंन्यासपूर्वके कथं प्रवर्तेरन्नित्याशयवती श्रुतिरुपासनां विद्यारम्भेऽभिदधौ तेनोषा वा अश्वस्येत्यारम्योपनिषदारम्भः संभाव्यतेऽस्य विशिष्टाधिकारिसमर्पकत्वादिति भावः । उक्ते सर्वकर्मणां बन्धफलत्वे नित्यनैमित्तिकानां न तत्फलत्वं तेषां विध्युद्देशे फलाश्रुतेर्मुक्तिफलत्वभावादिति चोदयति । **संसारेति** ॥ ११२६ ॥ ११२७ ॥

न ह्युत्सर्गेण सर्वेषां फलवत्त्वस्य संश्रवात् ॥
कर्मणा पितृलोकादि नित्यानामेव तत्फलम् ॥ ११२८ ॥

न सर्वकर्मेत्यादिभाष्यतात्पर्योक्त्या परिहरति । **न हीति** । एतावान्वै काम इति सर्वकर्मणामविशेषेण फलश्रवणात्पश्चादेश्च काम्यफलत्वश्रुतेः कर्मणा पितृलोक इति श्रुतं फलं नित्यादिकर्मणामस्त्वतस्तेषां न मोक्षफलत्वाशङ्केत्यर्थः । पितृलोकादीत्यादिपदेन तद्यथाऽऽम्रस्मृतिप्रसिद्धं फलं गृह्यते ॥ ११२८ ॥

फलवत्त्वे हि नित्यानां काम्यत्वमिति चेन्मतम् ॥
नैवं शुद्धिप्रमाणत्वाद्भोगानिष्टस्य काम्यता ॥ ११२९ ॥

नित्यादेरपि फलवत्त्वे चित्रादिवत्काम्यत्वादकरणे प्रत्यवायो न स्यादिति शङ्कते । **फलवत्त्वे हीति** । तद्वत्त्वमात्रेण न सांकर्यमित्याह । **नैवमिति** । फलवत्त्वेऽपि पापक्षयप्रधानं नित्यादि भोगप्रधानं काम्यमिति विभागः । नित्याद्यकरणं तु पूर्वसंचितदुरितद्योतीति भावः ॥ ११२९ ॥

काम्येऽपि शुद्धिरस्त्येव भोगसिद्ध्यर्थमेव सा ॥
विद्वगहादिदेहेन न ह्यैन्द्रं भुज्यते फलम् ॥ ११३० ॥

शुद्धिप्रधानत्वादिति वदता काम्येऽप्यानुषङ्गिकी साऽभ्युपगताऽन्यथा प्रधानपदविरोधात्तदाह । **काम्येऽपीति** । साऽपि नित्यादिनिमित्तशुद्धिवद्विद्योपयोगिनीत्याशङ्क्याऽऽह । **भोगेति** । एवकारो भोगप्रतिबन्धकत्वव्यावृत्त्यर्थः । शुद्धेर्भोगार्थत्वमनुभ-

१ ख. मेव । २ ख. ह । मेव ।

**श्रेयोरूपप्रसिद्ध्यर्थं प्रसिद्धिरुपवर्ण्यते ॥**
**अथो इत्यादिना धर्मविशिष्टत्वावबुद्धये ॥ १६१८ ॥**

अथो इत्यादेस्तात्पर्यमाह । **श्रेयोरूपेति** । आद्यपादार्थमेव स्फुटयति । **धर्मेति** ॥ १६१८ ॥

**आशंसते वलीयांसमबलीयानपि स्वयम् ॥**
**धर्मं बलं समाश्रित्य जेतुं लोके तथा यथा ॥ १६१९ ॥**
**राज्ञा बलेनाल्पबलो बलीयांसं कुटुम्बिनम् ॥**
**जेतुमाशंसते तस्माद्धर्मः स्याद्बलवत्तमः ॥ १६२० ॥**

धर्मवैशिष्ट्यसिद्ध्यर्थं लोकप्रसिद्धिवाद्यनन्तरवाक्यमिति तात्पर्यमुक्त्वा तद्योजयति । **आशंसत इति** । यथा राज्ञैवमित्यस्यार्थमाह । **तथेति** । धर्ममाश्रित्याल्पबलस्यापि बलवन्तं प्रति जेतुं प्रवृत्तिरस्तीति लोकप्रसिद्धिमुक्त्वा फलितमाह । **तस्मादिति** ॥ १६१९ ॥ १६२० ॥

**बलीयसाऽपि राज्ञेह स्पर्धमानोऽबलोऽपि सन् ॥**
**जेतुमुत्सहते भूपं धर्मात्मकबलाश्रयात् ॥१६२१ ॥**

यथेत्यादेरर्थान्तरमाह । **बलीयसेति** । इह विवादविषये सतीति यावत् । तथाऽन्यत्रापि धर्मस्योत्कर्षसिद्धिरिति शेषः ॥ १६२१ ॥

**एतदेव यतो ज्यायो रूपं धर्मेत्युदाहृतम् ॥**
**रूपान्तरेभ्यः सर्वेभ्यस्तद्धि सत्यात्मकं यतः ॥ १६२२ ॥**

तत्रैव हेत्वन्तरमाह । **एतदिति** । यतो धर्मसंज्ञितं रूपं सत्यात्मकमेवातस्तत्क्षत्रादिभ्यः श्रेष्ठमेवेति योजना । हिशब्दोऽवधारणे । एको यतःशब्दोऽतःशब्दपर्यायः ॥ १६२२ ॥

**तस्यास्य धर्मरूपस्य कार्यकारणतां मिथः ॥**
**यो वै स धर्म इत्युक्त्वा वक्तुं प्रवर्तते श्रुतिः ॥ १६२३ ॥**

कथं धर्मस्य सत्यत्वं धर्मो हि पुरुषधर्मो वचनधर्मः सत्यत्वमित्यवान्तरभेदादित्याशङ्क्य वाक्यान्तरमादत्ते । **तस्येति** । अतो मृद्घटवत्तयोरेकतेति शेषः ॥ १६२३ ॥

**प्रयोगलक्षणो योऽयं श्रुतिस्मृत्युदितो मतः ॥**
**स धर्म इति विज्ञेयः सत्यं शास्त्रार्थलक्षणम् ॥ १६२४ ॥**

एकत्वमनेकत्वं वा नाज्ञातयोरित्युभयविवेकपरं यथेत्यादिभाष्यं विभजते । **प्रयोगेति** ॥ १६२४ ॥

**अक्षरानुगतोऽप्यर्थो यदि संशय्यते तदा ॥**
**नित्यप्रयोगरूपोत्थविज्ञानात्तद्विनिश्चितिः ॥ १६२५ ॥**

अग्निहोत्राद्यनुष्ठीयमानं कर्म धर्मो यो यागमनुतिष्ठति तं धार्मिकमाचक्षते स च श्रुतिस्मृतिशिष्टाचारदृष्टत्वान्न प्रत्याख्यानमर्हति तदेव शास्त्रेण गम्यमानं सत्यमिति रूपविवेकेऽपि कथं तयोर्मिथो हेतुहेतुमद्भावेनैकतेत्याशङ्क्य धर्मस्य सत्यं प्रति हेतुत्वमाह । **अक्षरेति** । शास्त्रार्थसंशये शिष्टव्यवहारान्निश्चयो यथा यववराहादिशब्देषु तथाच धर्मस्य सत्यहेतुत्वसिद्धिरित्यर्थः ॥ १६२५ ॥

**प्रयोगेऽपि च संशीतौ वाक्यार्थज्ञानसंश्रयात् ॥**
**निर्णुदेत्संशयं प्राज्ञ एवमन्योन्यहेतुता ॥ १६२६ ॥**

सत्यस्य धर्मं प्रति हेतुत्वमाह । **प्रयोगेऽपीति** । धर्मविषये संशये शास्त्रार्थवशान्निर्णयो यथा चैत्यवन्दनादिव्युदासेनाग्निहोत्रादावतः सत्यस्य धर्महेतुतेत्यर्थः । वार्तिकाभ्यामुक्तं निगमयति । **एवमिति** ॥ १६२६ ॥

**यथा प्रयोगमुल्लङ्घ्य व्याख्यातुं शक्नुयात्सुधीः ॥**
**यथाशास्त्रं तथोल्लङ्घ्य कर्तुं शक्नोत्यथापरः ॥ १६२७ ॥**

अन्योन्यहेतुत्वोक्तिर्धर्मसत्ययोरैकार्थ्यमित्युक्तं तत्रैव फलान्तरं वक्तुं पातनिकां करोति । **यथेति** । शिष्टाचारमतिक्रम्य शास्त्रार्थोक्तिसामर्थ्ये बुद्धिबाहुल्यं हेतुमाह । **सुधीरिति** । अनुष्ठानमतिक्रम्य शास्त्रार्थोक्तिवदित्याह । **तथेति** । शास्त्रमनादृत्याऽऽचारे धार्ष्ट्यं हेतुरित्याह । **अथेति** ॥ १६२७ ॥

**अतथ्यान्यपि तथ्यानि दर्शयन्तीह वादिनः ॥**
**समे निम्नोन्नतानीव चित्रकर्मविदो जनाः ॥ १६२८ ॥**

ननु शिष्टाचारमुल्लङ्घ्य शास्त्रार्थोक्तिर्वा शास्त्रमुपेक्ष्यानुष्ठानं वा न युक्तं तयोर्मिथो विरुद्धत्वात्तत्राऽऽह । **अतथ्यानीति** । इहेत्यन्योन्यविवादावस्थोच्यते । तत्र प्रतिपादनकुशलत्वं हेतुमाह । **वादिन इति** । अन्यथाभूतस्यान्यथाख्यापनमन्यत्रापि दृष्टमित्याह । **समे इति** ॥ १६२८ ॥

**शास्त्रार्थस्तत्प्रयोगश्च यदा त्वन्योन्यसंश्रयात् ॥**
**प्रवर्तेते तदा कर्तुर्न प्रमादो मनागपि ॥ १६२९ ॥**

कथं तर्हि ज्ञानानुष्ठानयोर्नियमस्तदभावे पुमर्थासिद्धेस्तत्राऽऽह । **शास्त्रार्थ इति** । यदा धर्मसत्ये मिथो नियामके तदा कर्तुर्ज्ञातुश्च न दोषसंभावनेत्यर्थः ॥ १६२९ ॥

**नायं धर्म इति ज्ञेयो योऽयं सूत्रार्तिहेरितः ॥**
**क्षत्रादिनियमाशक्तेस्तस्याचैतन्यरूपतः ॥ १६३० ॥**

तच्छ्रेयोरूपमित्यादौ धर्मशब्देन प्रसिद्धोऽपूर्वाख्योऽचेतनोऽर्थो गृहीतः संप्रति न

१ ख. तत्र च क । २ ख. शास्त्रार्थेषु ।

तस्य तच्छब्देन विवक्षा किंतु सृष्टौ नियामको धर्मो न चाचेतनस्य तत्सामर्थ्यमतो न पूर्वोक्तो धर्म इत्याह । **नायमिति** । तत्र हेतुमाह । **क्षत्रादीति** ॥ १६३० ॥

**देवता तु ह्यधिष्ठात्री धर्मोऽस्मीत्यभिमानिनी ॥**
**सैवेह सृज्यते धात्रा नियमार्थप्रसिद्धये ॥ १६३१ ॥**

कस्तर्हीह धर्मशब्देनोच्यते तत्राऽऽह । **देवतेति** । तुशब्दो यथोक्ताद्धर्माद्देवतायां विशेषद्योतनार्थः । तस्याः श्रुतिस्मृतीतिहासपुराणलोकेषु प्रसिद्ध्यर्थो हिशब्दः । इह सृष्टौ नियमाख्यार्थस्य सिद्ध्यर्थमिति यावत् ॥ १६३१ ॥

**धर्मस्यैव तु रूपेण देवता रूपिणी मता ॥**
**तन्नाम्ना नामवत्येवं देवतान्तरयोजना ॥ १६३२ ॥**

ननु देवताया नामरूपहीनाया न धर्मशब्दता न हि सा शब्दातिरिक्ता चेतनाऽस्ति मानाभावान्मन्त्रादीनां च स्वार्थातात्पर्यादत आह । **धर्मस्येति** । साधितं हि देवतारूपं देवताधिकरणे त्वदिष्टस्य च धर्मस्य नामरूपे स्तो न वा स्तश्चेत्तदभिमानिदेवतायामपि ते स्तां न चेन्नामादिहीनस्य तस्य धर्मशब्दवाच्यतावद्देवतायामपि स्यादिति भावः । यथा धर्मशब्दो देवतामाह तथाऽग्न्यादिशब्दोऽपि देवतान्तरे युज्यतेऽनुग्राहकसृष्टेरत्र प्रस्तुतत्वादित्याह । **एवमिति** ॥ १६३२ ॥

**एकैव देवता तस्मान्नामरूपाद्युपाधिभिः ॥**
**आभाति बहुरूपेव तत्पराधीनचेतसाम् ॥ १६३३ ॥**

सृष्टानां देवतानामैक्यं नानात्वं वा नाऽऽद्ये सृष्टिभेदो द्वितीयेऽद्वैतहानिरित्याशङ्क्याऽऽह । **एकैवेति** । तस्मात्सदेव सोम्येत्यादेरागमादिति यावत् । भेदधियो गतिमाह । **नामेति** । किं चातत्त्वविदामेव तद्भेदधीर्नेतरेषामित्याह । **तदिति** । सद्रूपमद्वितीयं ब्रह्म तच्छब्दार्थः ॥ १६३३ ॥

**यथोक्तार्थोपसंहार उत्तरार्थविवक्षया ॥**
**ब्राह्मणस्य पुराऽनुक्तेस्तदुक्त्यर्था परा श्रुतिः ॥ १६३४ ॥**

धर्मशब्दस्य विवक्षितमर्थमुक्त्वा तदेतद्ब्रह्मेत्यादेस्तात्पर्यमाह । **यथोक्तेति** । उत्तरस्यार्थस्य विवक्षया चातुर्वर्ण्यस्योपसंहारश्चेदनेन क्रियते तर्हि कोऽसावुत्तरोऽर्थो विवक्षितस्तत्राऽऽह । **ब्राह्मणस्येति** । देवेषु क्षत्रादीनामेवोक्तत्वादथेत्यभ्यमन्थदित्यत्राग्नेरुक्तत्वेऽपि तस्य तेषु ब्राह्मणत्वस्यानुक्तत्वात्तत्कथनार्था तदग्निनैवेत्याद्या श्रुतिरित्यर्थः ॥ १६३४ ॥

**दैववर्णविभागस्य मनुष्येष्वपि भण्यते ॥**
**विनियोगो यथोक्तोऽयं वर्णानां प्रविभागशः ॥ १६३५ ॥**

---

१ ख. °स्तर्हि ध° । २ ख. भावः ।

तस्याः श्रुतेरर्थान्तरमाह । **दैवेति** । अग्निजन्मोक्त्यैव देवेषु ब्राह्मणो निर्दिष्टस्तेषु क्षत्रादिश्चेन्द्रादिरुक्तस्तथाच यथा देवेषु ब्रह्मक्षत्रादीनां विभागशो विनियोगः संबन्धो वर्णितस्तथा तस्य देवसंबन्धिवर्णविभागस्य मनुष्येष्वपि विभागशः संबन्धस्तदग्निनेत्यादिनोच्यत इत्यर्थः ॥ १६३५ ॥

**क्षत्रादीनां पुरोक्तत्वादनुक्तेर्ब्राह्मणस्य च ॥**
**को न्वेषु ब्राह्मण इति चोदिते स्यात्परा श्रुतिः ॥ १६३६ ॥**

ब्राह्मणस्य पुराऽनुक्तेरित्याद्यं पक्षं प्रपञ्चयति । **क्षत्रादीनामिति** । एषु देवेष्वित्युभयतः संबध्यते ॥ १६३६ ॥

**देवतायाः समाख्यातो विभागो वर्णसंश्रयः ॥**
**तत्पूर्वको मनुष्येषु विभागस्त्वधुनोच्यते ॥ १६३७ ॥**

द्वितीयं पक्षं विवृणोति । **देवताया इति** । तत्पूर्वको दैववर्णविभागान्वित इति यावत् । विभागो वर्णानामिति शेषः ॥ १६३७ ॥

**यदग्निनाऽभवद्ब्रह्म देवेष्वविकृतं नृषु ॥**
**ब्राह्मणेन तदेवाभूद्ब्रह्मैवाविकृतात्मना ॥ १६३८ ॥**

पक्षद्वयानुसारेण वाक्यं व्याचष्टे । **यदग्निनेति** । यत्क्षत्रादिरूपेणाविकृतं स्रष्टृ ब्रह्म देवेष्वग्निं सृष्ट्वा तदात्मनाऽभवत्तदेव मनुष्येषु ब्राह्मणात्मनाऽऽसीद्यद्ब्रह्माऽऽकाशाद्यात्मना विकृतमपि क्षत्रादिरूपेणाविकृतत्वादविकृतरूपेणैवाग्निब्रह्मभावं देवेषु मनुष्येषु चाऽऽपेदे तदेवोभयरूपेण विकृतात्मना देवेष्विव मनुष्येष्वपि क्षत्रादिरूपेणाभूदित्यर्थः ॥ १६३८ ॥

**या जातिर्ब्राह्मणत्वाख्या साऽग्निरेवेति निश्चितिः ॥**
**जातिरूपेण सा स्थित्वा जातिमेव नियच्छति ॥ १६३९ ॥**

अग्निब्राह्मणयोर्भेदोऽस्ति न वाऽऽद्येऽग्निरूपं ब्रह्मैव ब्राह्मणात्मनाऽभवदित्ययुक्तम् । द्वितीये नियन्तृनियन्तव्यत्वासिद्धिरित्याशङ्क्याऽऽह । **या जातिरिति** । अभेदे कथं नियन्तृनियन्तव्यत्वमित्याशङ्क्याधिदैवतरूपेण नियन्तृत्वमध्यात्मरूपेण च नियम्यत्वमिति मत्वाऽऽह । **जातीति** ॥ १६३९ ॥

**आग्नेयो ब्राह्मणश्चातस्तत्संबन्धाच्छ्रुतौ श्रुतः ॥**
**अनुग्रहनियन्तृत्वे ब्राह्मणस्याग्नितो यतः ॥ १६४० ॥**

अग्निब्राह्मणयोर्नियन्तृनियन्तव्यत्वे मानमाह । **आग्नेय इति** । न केवलमग्निब्राह्मणयोर्नियन्तृनियम्यत्वं किं त्वनुग्राहकानुग्राह्यत्वं चेति वक्तुं चशब्दः । यस्मादग्नेः सकाशाद्ब्राह्मणस्यानुग्रहनियन्तृत्वे तस्मात्तेन नियन्तृनियम्यत्वेनानुग्राहकानुग्राह्यत्वेन च तस्य संबन्धादाग्नेयो वै ब्राह्मण इति श्रुतौ स तथा श्रुत इति योजना ॥ १६४० ॥

**नियम्यमानो[1] देवेन[2] क्षत्रियेण मनुष्यगः ॥**
**इक्ष्वाकादिरभूत्पूर्वः क्षत्रियस्तद्वदुत्तरः ॥ १६४१ ॥**

अग्निब्राह्मणवदिन्द्रराजन्ययोरपि नियन्तृनियम्यत्वमैन्द्रो राजन्य इति श्रुत्या दर्शयति । **नियम्यमान इति** । आदिशब्देन तथैवान्येषामपि वंशद्वयप्रवर्तकानां ग्रहणम् । देवक्षत्रनियमितमनुष्यक्षत्रवद्देवविट्शूद्रनियमितमनुष्यविट्शूद्रयोर्जन्म सूचयति । **तद्वदिति** ॥ १६४१ ॥

**ब्रह्मैवाविकृतं यस्मात्पूर्वयोर्विकृतिं पुनः ॥**
**क्षत्रियादौ समापेदे तेनाग्निब्राह्मणाश्रयात् ॥ १६४२ ॥**
**कामितार्थस्य संसिद्धिः कर्मिणां कामिनामिह ॥**
**स्थित्वाऽग्नौ ब्राह्मणे चेह लोकमीप्सन्ति कर्मिणः ॥ १६४३ ॥**

अग्न्यादिनाऽविकृतस्य ब्रह्मणो विकृतस्य चेन्द्रादिनाऽवस्थानमुक्तमिदानीमविकृतब्रह्मणोऽग्न्यादिरूपेणावस्थानफलं तस्मादग्नावित्यादिवाक्यार्थोक्त्या कथयति । **ब्रह्मैवेति** । यस्मादाकाशात्मना विकृतमपि ब्रह्म क्षत्रादिरूपेणाविकृतमेवाग्न्यादौ स्थितमितरत्र त्वग्न्याद्यात्मना विकृतमेव तस्मादिहाधिकृतदेहे स्थित्वाऽग्नौ ब्राह्मणे च निमित्ते तत्संबन्धिकर्मवशादिह फलविषये कामिनां तत्प्रेरितकर्मभाजामिष्टाप्तिः स्यादित्यर्थः । लोकेऽपि कृष्यादिकर्म कृत्वा तत्फलं प्रेप्स्यते तद्युक्तमग्न्यादिसंबन्धिकर्मद्वारेष्टाप्तिरित्याह । **इहेति** ॥ १६४२ ॥ १६४३ ॥

**कर्मकार्यश्च[3] लोकोऽत्र ज्ञेयोऽग्न्यादिसमाश्रयात् ॥**
**प्रत्यग्याथात्म्यधीमात्रात्परलोकाप्तिरिष्यते ॥ १६४४ ॥**

लोक इति परात्मनोऽभिधानं मुख्यवृत्त्येति भर्तृप्रपञ्चास्तान्प्रत्याह । **कर्मेति** । प्रकृतं वाक्यमत्रेत्युक्तम् । तत्र हेतुमाह । **अग्न्यादीति** । अग्निब्राह्मणसंबन्धिकर्मसाध्यत्वश्रुतेरित्यर्थः । लोकशब्देन परस्य ग्रहेऽपि तत्साध्यत्वं किं न स्यादत आह । **प्रत्यगिति** । कर्मादिव्यावृत्त्यर्थं मात्रपदम् ॥ १६४४ ॥

**अजातशत्रुजनकसुलभादिनिदर्शनात् ॥**
**अविद्योत्थाधिकाराच्च लोकोक्तिर्न परात्मनि ॥ १६४५ ॥**

ज्ञानस्यैव परप्राप्तिहेतुत्वे श्रौतं लिङ्गमाह । **अजातेति** । अकर्मिणां सुलभादीनां ज्ञानान्मोक्षश्रुतेस्तदेव तद्धेतुरित्यर्थः । यद्वा ब्राह्मणादिसंबन्धं कर्म कृत्वैव मुक्तिरित्यनियमः । अब्राह्मणेष्वकर्मिषु च जनकादिषु ज्ञानिषु तद्दृष्टेरित्याह । **अजातेति** । लोकशब्दो नात्र परवाचीत्यत्र हेत्वन्तरमाह । **अविद्येति** । अविद्याकारणस्येदं प्रकरणं तत्र लोक-

---

[1] ग. °मान इन्द्रेण क्ष° । [2] ग. देवेन । [3] क. ग. °कार्ये च लो° ।

शब्दस्तद्विशेषमेव विषयी करोति न परस्मिन्नात्मनि वर्तितुमर्हत्यन्यथा प्रकरणविरोधः स्यादिति भावः ॥ १६४५ ॥

**अव्याकृतव्याकरणात्स्वाभिप्रायाच्च नेष्यते ॥**
**अव्याकृतव्याकरणरूपाभ्यां छाद्यते परः ॥ १६४६ ॥**

त्वदभिप्रायेणायं लोकशब्दोऽविद्याकार्याधिकारस्थो न पराभिप्रायेणेत्याशङ्क्याऽऽह । **अव्याकृतेति** । तद्धेत्याद्यविद्यासूत्रं तद्व्याख्यानमथ योऽन्यामित्यादीति भर्तृप्रपञ्चास्तेन तदभिप्रायेणाप्यविद्याकार्याधिकारस्थोऽयं लोकशब्दो न केवलमस्मदभिप्रायेणैवेत्थमुपगतिरित्यर्थः । अव्याकृततत्कार्ययोः परं प्रति व्यञ्जकत्वात्तस्य लोकशब्देन ग्रहेऽप्यविद्याकार्यप्रकरणमविरुद्धमित्याशङ्क्याऽऽह । **अव्याकृतेति** ॥ १६४६ ॥

**आविष्कृतिस्तन्निषेधादन्यदेवेति च श्रुतेः ॥ १६४७ ॥**
**उत्तरत्र स्वशब्देन लोकस्य च विशेषणात् ॥**
**कर्मणां फलमेवात्र लोकशब्देन भण्यते ॥ १६४८ ॥**

कथं तर्हि तद्व्यक्तिस्तत्राऽऽह । **आविष्कृतिरिति** । कार्यकारणनिषेधेन परस्य व्यक्तौ मानमाह । **अन्यदिति** । लोकशब्दस्यात्र कर्मफलविषयत्वे हेत्वन्तरमाह । **उत्तरत्रेति** । स्वं लोकमद्रष्ट्वा प्रैतीत्यत्रेति यावत् । लोकस्य परमात्माख्यस्येत्येतत् । अत्र तस्माद्यग्नावित्यादावित्यर्थः ॥ १६४७ ॥ १६४८ ॥

**लोकशब्देन संप्राप्तं कर्मकार्यमपेक्ष्य हि ॥**
**स्वगिराऽनात्मनो लोकाद्विशिनष्ट्यात्मरूपकम् ॥ १६४९ ॥**

पक्षान्तरेऽपि विशेषणं किं न स्यादित्याशङ्क्याऽऽह । **लोकशब्देनेति** । स्वपक्षवत्परपक्षे प्रकृतव्यावर्त्याभावादनर्थकं विशेषणमिति हिशब्दार्थः ॥ १६४९ ॥

**स्वत्वेनाव्यभिचारित्वाद्व्यभिचारादनात्मनः ॥**
**कर्मकार्यनिवृत्त्यर्थमर्थवत्स्याद्विशेषणम् ॥ १६५० ॥**

कथमिदं कर्मफलव्यावर्तकत्वेनार्थवदित्याशङ्क्याऽऽह । **स्वत्वेनेति** । स्वत्वं प्रत्यक्त्वं तेनाव्यभिचारित्वमात्मनोऽस्ति तस्य सर्वप्रत्यक्त्वमत्वादनात्मनस्तु कर्मकार्यपराचस्तद्व्यभिचारित्वमतिस्फुटमतस्तद्व्यावर्तकं विशेषणं युक्तमित्यर्थः ॥ १६५० ॥

**त्रयाणामपि वर्णानां श्रुतौ संन्यासदर्शनात् ॥**
**ब्राह्मणस्यैव संन्यास इति श्रुत्या विरुध्यते ॥ १६५१ ॥**

प्रकृतवाक्यस्थस्य लोकशब्दस्य कर्मफलवाचित्वं वदता **भाष्यकृता** ब्राह्मणस्य जातिमात्रप्राप्त्या पुरुषार्थसिद्धिरुक्ता । ननु **जप्येनैव** तु संसिध्येदित्यादिस्मृतेस्तन्मात्रादभ्युदयलाभेऽपि कुतस्ततो निःश्रेयससिद्धिस्तत्र पारिव्राज्यदर्शनाच्चेति भाष्यं तत्र

ब्राह्मणग्रहणमविवक्षितं विवक्षितं वाऽऽद्ये तन्मात्रात्पुमर्थसिद्धौ नायं हेतुर्द्वितीयश्चेत्तत्राऽऽह । **त्रयाणामिति ।** श्रुतौ ब्रह्मचर्यं समाप्येत्यादाविति यावत् ॥ १६५१ ॥

**लिङ्गं च न्यायरहितं प्रामाण्याय न कल्पते ॥**
**ब्राह्मणोक्तिबलात्तस्मात्कामितोऽर्थो न सिध्यति ॥ १६५२ ॥**

ननु ब्राह्मणाः प्रव्रजन्तीति ब्राह्मणग्रहणसामर्थ्यात्तद्विषये सामान्यश्रुतिर्नियम्यते नेत्याह । **लिङ्गं चेति । अस्यार्थः**—यद्यपि सामान्यश्रुतेर्बलीयो लिङ्गं तथाऽप्यन्यपरवाक्यस्थपदसामर्थ्यं तन्न्यायाभावे न मानं ब्रह्मचर्यादेव प्रव्रजेदितिसाधारणविधिविरोधान्न च प्रकृतेरन्यथाभावायोगो न्यायो यद्यपि क्षत्रियो राजसत्वात्प्रवृत्तिस्वभाव उपशमात्मकश्च संन्यासस्तथाऽपि न क्षत्रियत्वादेव राजसत्वं जनकादावभावाद्ब्राह्मणेष्वपि केषुचित्तद्भावान्न चैवमाचाराः शिष्टा न दृष्टास्त्वद्दर्शनस्यातिप्रसङ्गत्वात्सर्वादर्शनस्य चासर्वज्ञेन दुर्ज्ञानत्वात् । दृश्यते च **महाभारते** क्षत्रियस्यापि संन्यासाध्यवसायः—

"तस्मादेकाहमेकाहमेकैकस्मिन्वनस्पतौ ।
चरन्भिक्षां मुनिर्मुण्डश्चरिष्यामि महीमिमाम् ॥
पांशुना च प्रतिच्छन्नः शून्यागारप्रतिश्रयः ।
वृक्षमूलनिकेतो वा त्यक्तसर्वप्रियाप्रियः ॥
पौरवृद्धाश्च ये तत्र निवसन्त्यस्मदाश्रयाः ।
प्रसाद्य सर्वे वक्तव्याः पाण्डुः प्रव्रजितो वने" इति ॥

तस्मात्त्रैवर्णिकस्य सर्वस्यैव विरक्तस्य संन्यासाधिकारात्पारिव्राज्यदर्शनाच्चेति भाष्यमनर्थकमिति ॥ १६५२ ॥

**उपलक्षणं वा तद्ग्राह्यं ब्राह्मणग्रहणं श्रुतौ ॥**
**ब्राह्मणस्य प्रधानत्वाद्युक्तं तदुपलक्षणम् ॥ १६५३ ॥**

सामान्यश्रुत्या न्यायशून्यलिङ्गस्य बाधमुक्त्वा ब्राह्मणा विविदिषन्तीतिवद्ब्राह्मणा भिक्षाचर्यं चरन्तीत्यत्रापि ब्राह्मणग्रहणमुपलक्षणमित्याह । **उपलक्षणमिति ।** तत्र युक्तिमाह । **ब्राह्मणस्येति ।** न च तर्हि शूद्रस्यापि ब्राह्मणग्रहणेनोपलक्षणात्क्षत्रियादेरिव शूद्रस्य पारिव्राज्यं स्यादिति युक्तं तस्य **सशिखं** वपनं कृत्वा बहिः सूत्रं त्यजे**दिति** शिखात्यागपूर्वकोपवीतत्यागानधिकारित्वादादावेवासतः शिखादेस्त्यागायोगाद[१]पि **शूद्राधिकरणे** च वेदद्वारा विद्याधिकारं तस्य निरस्यद्भिर्वैदिकसंन्यासेऽपि तदधिकारनिरासदर्शनादिति द्रष्टव्यम् । संन्यासविषयं भाष्यं दूपयता ब्राह्मणप्राधान्यमुक्तं तन्मात्रमाश्रित्य **"मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम् । बाहुजातोरुजातानां नैष धर्मः सना-**

---

१ क. °दपशू° ।

तनः" इत्युच्यते । ब्राह्मणस्य सनातनविशेषणाच्चानित्यं तदीयं पारिव्राज्यमनुज्ञातमिति गम्यते ॥ १६५३ ॥

**ब्राह्मणत्वात्मलाभोऽपि यः स्यात्क्षत्रियवैश्ययोः ॥**
**स्वमहिम्ना तयोर्नासावग्निब्राह्मणसंश्रयात् ॥ १६५४ ॥**

ननु ब्राह्मणस्य न प्राधान्यमितरयोरपि क्रतौ ब्राह्मण्यलाभश्रुत्या प्राधान्यावगमादत आह । **ब्राह्मणत्वेति** । यस्तयोस्तल्लाभः सोऽपि न स्वमहिम्ना स्यादिति संबन्धः । तर्हि कथं तयोस्तत्प्राप्तिस्तत्राऽऽह । **अग्नीति** ॥ १६५४ ॥

**ब्राह्मणं न ह्यनाश्रित्य राजसूयादिहेतुकः ॥**
**ब्राह्मणत्वाभिसंबन्धः प्राधान्यं तेन पूर्वयोः ॥ १६५५ ॥**

ब्राह्मणाद्यपेक्षां विना राजसूयादिसामर्थ्यादेव राजादेस्तल्लाभः स्यादिति चेन्नेत्याह । **ब्राह्मणमिति** । तद्ग्रहणमग्नेरुपलक्षणम् । पूर्वयोरग्निब्राह्मणयोरित्येतत् ॥ १६५५ ॥

**वर्णान्तरगतापेक्षा नाग्निब्राह्मणयोस्तथा ॥**
**ब्राह्मणः स्वमहिम्नैव पुरुषार्थं समश्नुते ॥ १६५६ ॥**

तत्सापेक्षत्वात्क्षत्रियादेरप्राधान्ये ब्राह्मणादेरपि तदपेक्षणादप्राधान्यं तुल्यमिति चेन्नेत्याह । **वर्णान्तरेति** । क्षत्रियादेर्ब्राह्मण्यलाभायान्यापेक्षावन्न ब्राह्मणादेस्तदर्थमन्यापेक्षेत्यर्थः । तत्प्राधान्योक्तिफलमाह । **ब्राह्मण इति** ॥ १६५६ ॥

**अग्निब्राह्मणयोर्हेतुः प्राधान्ये भण्यते स्फुटः ॥**
**एताभ्यामेव रूपाभ्यां यतो ब्रह्माभवत्स्वयम् ॥ १६५७ ॥**

एताभ्यां हीत्यादत्ते । **अग्नीति** । हेतोरदोषत्वमभिधातुं स्फुट इति विशेषणम् । हेतुं व्याकरोति । **एताभ्यामिति** । ब्रह्म स्वयमेवाविकृतमग्निब्राह्मणरूपाभ्यां यतोऽभूदतस्तयोः प्राधान्यमित्यर्थः ॥ १६५७ ॥

**अग्निब्राह्मणयोर्यस्माद्ब्रह्म साक्षादभूत्पुरा ॥**
**विट्क्षत्रयोर्व्यवहितं प्राधान्यं तेन पूर्वयोः ॥ १६५८ ॥**

अविकृतब्रह्मणो द्वयोः स्थितत्वेऽपि कथं क्षत्रादेस्तत्प्राधान्यमित्याशङ्क्याऽऽह । **अग्नीति**। साक्षाद्विकारापत्तिं विनेत्यर्थः। **उक्तं हि**— विकारापत्तिरहितस्य ब्रह्मणस्तत्रावस्थानम् । पुरा पूर्वं क्षत्रादिसृष्टेरिति यावत् । व्यवहितमग्निब्राह्मणाभ्यामिति शेषः । पूर्वयोरग्निब्राह्मणयोरित्यर्थः ॥ १६५८ ॥

**ब्रह्मेति जातिरेवात्र ग्राह्या न तु पराक्षरम् ॥**
**तत्कारणत्वात्सर्वस्य हेतूक्तिस्तत्र दुर्घटा ॥ १६५९ ॥**

एताभ्यां हीत्यत्र ब्रह्म हि परमिति भर्तृप्रपञ्चास्तान्निरस्यति । **ब्रह्मेतीति** । अग्निं सृष्ट्वा तदापन्नं ब्राह्मणाभिमानिसूत्राख्यं ब्रह्मास्मिन्वाक्ये ब्रह्मशब्दं न परमित्यत्र हेतु-

माह । **तत्कारणत्वादिति** । ब्रह्मशब्देनात्र परपरिग्रहे ब्राह्मणादिप्राधान्ये हेतूक्तिरेताभ्यामित्याद्या नोपपद्येत परस्य सर्वकारणत्वात्सर्वात्मत्वेऽग्निब्राह्मणात्मनैव स्थितौ विशेषहेत्वभावादित्यर्थः ॥ १६५९ ॥

**सर्वेषां प्रत्यगात्मत्वात्पक्षपातोऽपि नेष्यते ॥**
**अग्निब्राह्मणयोर्विष्णोस्तावन्मात्रसमाप्तितः ॥ १६६० ॥**

तथाऽपि तस्य तत्पक्षपातात्प्राधान्यमित्याशङ्क्याऽऽह । **सर्वेषामिति** । पक्षपातासंभवे सर्वत्राधिष्ठानत्वेन संनिधानं हेत्वन्तरमाह । **विष्णोरिति** । आद्यपादार्थं स्फुटयति । **तावन्मात्रेति** । यद्वा परस्मिन्नात्मन्येव सर्वस्य समाप्तिकाले समाप्तत्वान्न तस्य क्वचिदपि पक्षपातसिद्धिरित्याह । **तावन्मात्रेति** ॥ १६६० ॥

**ब्रह्मैवेदं विश्वमिति साक्षादाम्नायशासनम् ॥**
**विद्याविनयसंपन्न इति च स्मृतिशासनम् ॥ १६६१ ॥**

सर्वस्य ब्रह्ममात्रत्वे मानमाह । **ब्रह्मेति** । प्रत्यक्षवदनपेक्षं प्रामाण्यमागमस्येति वक्तुं साक्षादित्युक्तम् । सर्वस्य ब्रह्मत्वे सर्वस्मिन्निव ब्रह्मणि वैषम्यानुषक्तिरित्याशङ्क्याऽऽह । **विद्येति** । उत्तमाधममध्यमेषु सर्वोपाधिषु समं निर्विशेषमेवाऽऽत्मतत्त्वं विवेकिनः पश्यन्तीत्यर्थः ॥ १६६१ ॥

**क्षत्रादाविव तुल्याग्निविप्रयोर्विकृतिर्दृशेः ॥**
**तेजोबन्नादिभूतानां तुल्या सत्कारणात्मता ॥ १६६२ ॥**

नन्वग्निब्राह्मणयोरविकृतमितरत्र विकृतमिति विशेषस्त्वयेष्टस्तत्कथं पक्षपाताभावस्तत्राऽऽह । **क्षत्रादाविति** । आकाशादिविकारद्वारैव परस्याग्निब्राह्मणापत्तिरिष्टा तथा च क्षत्रादाविव तत्रापि तुल्या विकृतिस्तद्रूपेण विकृतस्य क्षत्रादौ स्थितिवन्न तदात्मना विकृतस्याग्न्यादावित्येतावता विकृतत्वाविकृतत्वविशेषोक्तिरित्यर्थः । सर्वस्य ब्रह्मत्वे श्रुतिस्मृती प्रागुक्ते संप्रत्युपपत्तिमाह । **तेज इति** । भूतभौतिकानां सत्कार्यत्वात्तदात्मता तुल्या सन्मूला सोम्येमाः सर्वाः प्रजा इत्यादिश्रुतेर्न च कारणादन्यत्र कार्यमारम्भणाधिकरणविरोधादतः सर्वं सद्ब्रह्ममात्रमित्यर्थः ॥ १६६२ ॥

**अग्निब्राह्मणरूपेण ब्रह्म साक्षाद्व्यवस्थितम् ॥**
**तत्प्राप्तौ हेतुताऽग्न्यादेरिति निर्ह्रीकवागियम् ॥ १६६३ ॥**

हेतुवाक्यालोचनया ब्रह्म न परमित्युक्तं किं चात्रैव[2] ब्रह्मेति परग्रहे तदेव ब्राह्मणादिरूपेणाव्यवधानेन स्थितं तत्प्राप्तावग्न्यादिसंबद्धं कर्म न हेतुस्तस्याग्निब्राह्मणात्मना प्राप्तत्वाद्व्यवधेर्वस्तुत्वे ध्वस्त्ययोगादवस्तुत्वे ज्ञानादेव तद्ध्वस्तेरिति मत्वाऽऽह । **अग्नीति** । निर्ह्रीको मिथो विरुद्धं वदन्नपि निर्लज्जो वादी ॥ १६६३ ॥

---

१ क. ग. °सतत्त्वतः । २ क. चात्र ब्र° ।

**वर्णाश्रमादिसर्गोऽयं कर्मार्थो ब्रह्मणः स्मृतः ॥**
**धर्माख्यं कर्म च ज्ञेयं स्वाधिकारनियन्तृतः ॥ १६६४ ॥**

अथेत्याद्युत्तरवाक्यनिरस्यं पूर्वपक्षमाह । **वर्णेति** । आदिशब्देन तद्धर्मो भूतभौतिकात्मकमन्यच्च कार्यमुच्यते । ब्रह्मणः सकाशादित्यपादानं सर्गस्य ब्रह्मणो ब्राह्मणस्येति कर्ता वा कर्मणो निर्दिश्यते । स्मृतः शास्त्रज्ञैरनुसंहितो हेत्वभावे कर्मानुष्ठानायोगादित्यर्थः । तत्पुनरचेतनमकिंचित्करमित्याशङ्क्याऽऽह । **धर्मेति** । स्वाधिकारनियन्तृतः स्वस्मिन्कर्मण्यधिकारः स्वामित्वेन संबन्धो येषां पुरुषाणां नियन्तृत्वाच्चेतना देवतैव धर्माख्या कर्मशब्दितेत्यर्थः ॥ १६६४ ॥

**तेनैव कर्मणा मुक्तिं प्राप्स्यामः शाश्वतीं वयम् ॥**
**अज्ञात्वैव परं तत्त्वमेवं प्राप्ते परा श्रुतिः ॥ १६६५ ॥**

उक्तकर्मणः पुमर्थोपायत्वप्रसिद्धिमादाय फलितमाह । **तेनेति** । गौणीं मुक्तिं व्यावर्तयति । **शाश्वतीमिति** । ननु कुतोऽवध्रियते ज्ञानस्यापि तत्र हेतुत्वसंभवादित्याशङ्क्य समुच्चयं निरसितुं विशिनष्टि । **अज्ञात्वेति । कर्मणैव** हि संसिद्धिमित्यादि**स्मृतौ** निरपेक्षस्यैव कर्मणः संसिद्धिशब्दिते मोक्षे साधकत्वाधिगमादित्यर्थः । देवतागुणवत्कर्म मुक्तिहेतुरितिपक्षनिरासित्वेनोत्तरवाक्यमुत्थापयति । **एवमिति** ॥ १६६५ ॥

**नियन्ता चाभिमन्ता च ब्राह्मणत्वस्य हव्यवाट् ॥**
**कर्मैवाग्नेर्नियन्तृ स्यात्कर्मणो देवता तथा ॥ १६६६ ॥**

अथेत्यादिवाक्यनिरस्यं भर्तृप्रपञ्चोक्तपक्षमाह । **नियन्तेति** । अभिमन्तेत्यनुग्राहकतोक्तिः । तयोर्मिथःसमुच्चयार्थौ चकारौ । तस्यापि नियामकं देवताधिष्ठितं कर्मेत्याह । **कर्मेति** । एवकारः सजातीयनियन्तृनिरासार्थः । किं तर्हि कर्मणो नियामकमिति तदाह । **कर्मण इति** ॥ १६६६ ॥

**स्यादेतदग्निरेवैनं ब्रह्मभावाय वक्ष्यति ॥**
**अदृष्टात्मतत्त्वमपि तच्च नैवोपपद्यते ॥ १६६७ ॥**

भवतु तयोर्मिथो नियम्यनियामकत्वं तथाऽपि किं सिद्धमित्याह । **स्यादेतदिति ।** अग्निनैव देवतया ब्रह्मप्राप्तिः स एवैनं ब्रह्म वक्ष्यतीति भाष्येण फलितमाह । **अग्निरिति ।** एनं कर्मिणं वक्ष्यति प्रापयिष्यतीति यावत् । देवतावज्ज्ञानमपि ब्रह्माप्तिहेतुरित्याशङ्क्य कर्मिणं विशिनष्टि । **अदृष्टेति ।** कर्मगुणवत्या देवताया मोक्षहेतुत्वसंभवे किं ज्ञानेनेत्यर्थः । परसिद्धान्तं सूचयति । **तच्चेति ।** कर्मगुणा देवता मोक्षहेतुरिति पक्षं प्रतिक्षेप्तुमुत्तरवाक्यमित्यर्थः । देवतागुणकं कर्म मुक्तिहेतुरिति मतं दृष्टान्तयितुं चशब्दः ॥ १६६७ ॥

**व्याचक्षते परं ग्रन्थमेवंसंबन्धपूर्वकम् ॥**
**न कश्चित्फलभेदोऽत्र तस्मादुभयथाऽपि सन् ॥ १६६८ ॥**

परोक्तं संबन्धमुपसंहरति । **व्याचक्षत इति** । कतरस्तर्हि श्रेयानित्याशङ्क्याऽऽह । **न कश्चिदिति** । पक्षद्वयेऽपि ज्ञानफले मुक्तावाक्षेपसमाधानयोर्न भेदस्तस्माद्द्विधाऽपि पक्षो युक्तिमानित्यर्थः ॥ १६६८ ॥

**न कर्मणा भवेन्मुक्तिर्नापि चाग्निसमाश्रयात् ॥**
**ज्ञानादेव तु कैवल्यमज्ञानादेव नास्ति तत् ॥ १६६९ ॥**

मतद्वयानुसारेणावतारितवाक्यतात्पर्यमुभयानुसारं दर्शयति । **नेत्यादिना** । न चेत्कर्मणा देवतया वा मुक्तिः कुतस्तर्हि सा सिध्यति तत्राऽऽह । **ज्ञानादिति** । नियमे हेतुं तुशब्दसूचितमाह । **अज्ञानादिति** । स्वरूपस्थितिर्मुक्तिः सा चाज्ञानादसत्कल्पा भाति ज्ञानादेव तन्निरस्यतेऽतो ज्ञानमात्राधीना सेत्यर्थः ॥ १६६९ ॥

**आशङ्कितनिवृत्त्यर्थमथेत्यत्र प्रयुज्यते ॥**
**ह वा इति प्रसिद्ध्यर्थं मुक्तिर्न ज्ञानतोऽन्यतः ॥ १६७० ॥**

आनन्तर्याधिकारादीनामथशब्दार्थानामत्र निरवकाशत्वात्किमथशब्देनेत्याशङ्क्य निपातानामनेकार्थत्वमाश्रित्याथशब्दार्थमाह । **आशङ्कितेति** । निपातयोरर्थं प्रसिद्धमुक्त्वा स्फोरयति । **ह वा इतीति** । ज्ञानादेव मुक्तिर्न कर्मणेत्यागमप्रसिद्धमित्यर्थः ॥ १६७० ॥

**कर्म कृत्स्नं समाप्यापि तत्त्वज्ञानाद्बहिष्कृतः ॥**
**लभते निर्वृतिं नैव ज्ञानादेव हि सा यतः ॥ १६७१ ॥**

एकैकस्य कर्मणो मोक्षाहेतुत्वेऽपि सर्वं कर्म तथेत्याशङ्क्य तदेकस्य दुरनुष्ठानमित्याशयेनाऽऽह । **कर्मेति** । तत्र हेतुः । **ज्ञानादिति** । आगमप्रसिद्ध्यर्थो हिशब्दः ॥ १६७१ ॥

**अस्वैः पिण्डादिभिर्योग आ विरिञ्चादविद्यया ॥**
**प्रतीचस्तद्व्युदासार्थं स्वं लोकमिति शब्द्यते ॥ १६७२ ॥**

स्वं लोकमित्यत्र स्वशब्दकृत्यमाह । **अस्वैरिति** । प्रत्यगात्मनो हिरण्यगर्भादारभ्यानात्मभिर्देहेन्द्रियादिभिः स्तम्बपर्यन्तैः सहाहंममतालक्षणो यः संबन्धस्तस्य व्यावृत्तियोग्यत्वार्थं प्रापकमाह । **अविद्ययेति** । कर्मफललोकव्युदासार्थं विशेषणमित्याह । **तदिति** ॥ १६७२ ॥

**अज्ञानिनः स्यान्मरणं संसर्गः कारणात्मनि ॥**
**ज्ञानाद्ध्वान्तनिवृत्तिस्तु मरणं स्याद्विपश्चिताम् ॥ १६७३ ॥**

---

१ ख. 'शब्देन सू' ।

अस्मादित्याद्यवतारयितुं विद्वदविद्वन्मृतिविभागमाह । **अज्ञानिन इति** । विद्वन्मृता-वविद्वन्मृतेर्विशेषार्थस्तुशब्दः ॥ १६७३ ॥

**मृत्योर्मृत्यवपरिज्ञानादज्ञस्य मरणं तमः ॥**
**अविद्वन्मृतिसिद्ध्यर्थमस्माल्लोकादितीर्यते ॥ १६७४ ॥**

अविद्वन्मृतिं विवृणोति । **मृत्योरिति** । मृत्योरज्ञानस्य मृत्युर्वृत्त्यारूढो दृगात्मा तद-ज्ञानात्तमः संसर्गो मृतिरज्ञस्येत्यर्थः । उत्क्रान्तिमृतिद्योतकमस्माल्लोकात्प्रैतीति वाक्यमि-त्याह । **अविद्वदिति** ॥ १६७४ ॥

**अज्ञात्वैव परं देवमागमापायरूपिणः ॥**
**अस्वभूतादेहलोकान्म्रियते योऽवशो नरः ॥ १६७५ ॥**

पदानि व्याख्याय वाक्यं व्याख्याति । **अज्ञात्वेति** । यो हि परमात्मानं पारमार्थि-कमात्मत्वेनाविदित्वैवोत्पत्तिविनाशभाक्त्वादेव वस्तुतोऽनात्मनो लोकादात्मत्वेन गृहीता-देहतो म्रियते स नराभिमानं त्यजन्नविद्यापरवशः स्यादित्यर्थः ॥ १६७५ ॥

**अज्ञाततत्त्वः स परो न भुनक्ति ह्यतद्विदम् ॥**
**कैवल्यफलदानेन प्रत्यगात्माऽपि सन्परः ॥ १६७६ ॥**

ननु परमात्मैव मुक्तिदानेन पुरुषं पालयिष्यति तत्कुतोऽस्य त्यक्तदेहस्याविद्यापार-वश्यमित्याशङ्क्य स एनमित्यादेरर्थमाह । **अज्ञातेति** । ज्ञातस्यैव परस्य मुक्तिहेतुतायां श्रुतिस्मृतिप्रसिद्धत्वं हीत्युक्तम् । परो न तं पालयत्यनात्मत्वान्नाज्ञातत्वादित्याशङ्क्याऽऽह । **प्रत्यगिति** ॥ १६७६ ॥

**तद्दृष्टिमात्रतः सिद्धेर्नान्यतस्तदवाप्यते ॥**
**मोहमात्रान्तरायत्वात्तत्कर्मालं न मुक्तये ॥ १६७७ ॥**

कथमविदितः सन्नरं न रक्षति तज्ज्ञानस्य मोक्षोपायत्वानियमादत आह । **तद्दृष्टीति** । विद्यातः कैवल्यार्थो द्वितीयस्तच्छब्दः । परात्मधीमात्रान्मुक्तिसिद्धौ हेतुमाह । **मोहेति** । तदध्वंसोऽपि कर्मणा स्यात्तत्कथं नान्यतस्तदाप्यते तत्राऽऽह । **तदिति** । न हि कर्म मोह-मपहन्ति ज्ञानवत्तद्विरोधित्वाभावादित्यर्थः ॥ १६७७ ॥

**वेदस्य ग्रहणं यद्वन्न स्यादध्ययनादृते ॥**
**कृष्यादि वाऽन्यदकृतं कर्म नालं फलाय च ॥ १६७८ ॥**

यथेत्यादिवाक्यस्यार्थमाह । **वेदस्येति** । निरूपितं हि **धर्मजिज्ञासासूत्रे** विनाऽध्य-यनं न स्वाध्यायग्रहणमर्थवदिति । अन्यद्वेत्यादि व्याचष्टे । **कृष्यादीति** । अकृतं फलाय न स्यादिति संबन्धः । दार्ष्टान्तिकमाह । **कर्मेति** । अज्ञातो न पालयतीत्यत्राऽऽद्यो दृष्टान्तो द्वितीयो न कर्म मुक्तिहेतुरित्यत्रेति विभागश्चार्थः ॥ १६७८ ॥

भूरि कर्म करिष्यामि तत्फलानन्त्यसिद्धये ॥
कर्मणोऽचिन्त्यशक्तित्वान्नैवमप्युपपद्यते ॥ १६७९ ॥

यदिहेत्यादिवाक्यापोद्यं चोद्यमाह । भूरीति । अश्वमेधादिमहत्तरकर्मफलस्याक्षयत्वे हेतुमाह । कर्मण इति । यदिहेत्यादिवाक्यमुत्तरत्वेनावतारयति । नैवमिति ॥ १६७९ ॥

अप्रज्ञातात्मतत्त्वः सन्यदि नाम दिवानिशम् ॥
कल्पकोटिसहस्राणि कुर्यात्कर्म महच्छुभम् ॥ १६८० ॥
तदप्यस्य तथाभूतमन्तवत्त्वात्प्रतिक्षणम् ॥
विध्वंसमेत्यपचयात्कोष्ठागारादिवद्ध्रुवम् ॥ १६८१ ॥

तद्व्याकरोति । अप्रज्ञातेति । अज्ञः सन्ननन्ते काले यद्यहोरात्रं महदपि शुभमश्वमेधादि करोति स को ह्यज्ञं विनिवारयेदिति न्यायात्करोतु नाम तस्य तत्कर्म महत्त्वादिविशेषणमपि प्रतिक्षणं फलस्य भोगेन क्षयादन्तवत्त्वात्क्षयमेत्यतः कर्मसाध्यत्वे मुक्तेरन्तवत्त्वं स्यात्तत्साध्यस्य गृहादेस्तन्नियमात्तद्यथेह कर्मजित इत्यादिश्रुतेरित्यर्थः ॥ १६८० ॥ १६८१ ॥

कृतस्य हि क्षयोऽवश्यमकृतस्याक्षयात्मता ॥
प्रसिद्धाऽतीव जगति श्रुत्यैवं तेन भण्यते ॥ १६८२ ॥

साध्यस्यानित्यत्वमितरस्य नित्यतेत्यत्र लोकप्रसिद्धिमाह । कृतस्येति । व्याप्तिसिद्ध्यर्थो हिशब्दः । प्रसिद्धेरविगीतत्वं दर्शयितुमतीवेत्युक्तम् । तथाऽपि किमायातमित्याशङ्क्य प्रसिद्ध्यनुसारेण तद्धास्येत्यादिश्रुत्या कर्मफलस्यानित्यत्वोक्तेर्नित्यस्य मोक्षस्यासाध्यत्वसिद्धिरित्याह । श्रुत्येति ॥ १६८२ ॥

उक्तदोषापनुत्तिः स्यात्कथमस्येति चोदिते ॥
आत्मानमिति निर्वक्ति श्रुतिः परिहृतिं पराम् ॥ १६८३ ॥

आत्मानमेवेत्यादिवाक्यनिरस्यां शङ्कामाह । उक्तेति । अस्य मोक्षस्यानित्यत्वरूपोक्तदोषपरिहृतिः केन प्रकारेण स्यादिति शङ्किते सतीत्यर्थः । त्वत्पक्षेऽपि मोक्षस्य साध्यत्वादनित्यतेति चोद्योत्तरत्वेन वाक्यमवतारयति । आत्मानमिति । ज्ञानान्मोक्षे तन्नित्यतासिद्धिर्मोहापिधानहानमात्रस्य ज्ञानाधीनत्वादिति भावः ॥ १६८३ ॥

निःशेषानात्मसंदृष्टिनिराकरणसिद्धये ॥
एवेत्यवधृतिर्ज्ञेया प्रत्यङ्मात्रेक्षणाय तु ॥ १६८४ ॥

एवकारार्थमाह । निःशेषेति । सर्वस्य कार्यकारणात्मनोऽनर्थस्य तद्दृष्टेश्च निवृत्त्यर्थं प्रत्यङ्मात्रदृष्टिरेष्टव्या तदर्थमेवपदमित्यर्थः । पराग्दृष्ट्यपेक्षया प्रत्यग्दृष्टौ पुरुषार्थकृतं विशेषं दर्शयितुं तुशब्दः ॥ १६८४ ॥

---

१ ख. °द्धिमाह ।

**प्रत्यङ्मात्रदृशः पुंसो न न्याय्यः स्यात्समुच्चयः ॥**
**ब्रह्मात्मनि समाप्तस्य न तदन्यार्थशेषता ॥ १६८५ ॥**

तस्यान्ययोगव्यवच्छेदं श्रौतमर्थमुक्त्वाऽऽर्थिकमर्थमाह । **प्रत्यङ्मात्रेति** । तन्मात्रं पश्यतः समुच्चयो नास्ति कर्माभावादित्यर्थः । तस्य कर्माभावे विवक्षितं हेतुमाह । **ब्रह्मेति** । तत्र समाप्तस्तन्मात्रत्वेन स्थितो विद्वान्न तस्य तस्माद्ब्रह्मणोऽन्यस्मिंस्तत्त्वे कर्माख्ये कर्तृत्वेन शेषतोचिता तथा च समुच्चयासिद्धिरित्यर्थः ॥ १६८५ ॥

**क्षयः कर्मफलस्योक्तः कृतकत्वसमन्वयात् ॥**
**न क्षयो ज्ञानकार्यस्य कृतकत्वाद्यसंभवात् ॥ १६८६ ॥**

तस्य कर्माभावे विवक्षितसमुच्चयाभावेऽपि ज्ञानान्मुक्तिः साध्या न वाऽऽद्ये कर्मफलवदनित्यत्वं द्वितीये ज्ञानवैयर्थ्यमित्याशङ्क्याऽऽह । **क्षय इति** । उक्तस्तद्यास्ये-त्यादिवाक्याद्व्याप्त्यनुगृहीतादिति शेषः । कृतकत्वं परिच्छिन्नत्वादेरुपलक्षणम् । कृतकत्वाद्युपाधेः साधनव्याप्तिमाशङ्क्याऽऽह । **नेति** । ज्ञानकार्यस्य तत्फलस्येति यावत् । नित्या निरतिशया च मुक्तिर्मोहहानमात्रं ज्ञानाधीनमित्युक्तमित्यर्थः ॥ १६८६ ॥

**प्रत्यङ्मात्रैकयाथात्म्यात्क्षेत्रक्षेत्रज्ञवस्तुनः ॥**
**तस्मिञ्ज्ञातेऽखिलं ज्ञातं सर्वाज्ञाननिराकृतेः ॥ १६८७ ॥**

स य आत्मानमित्यादिवाक्यस्थकर्मशब्दस्य ज्ञानकार्यमर्थं गृहीत्वा वाक्यार्थः संक्षिप्तोऽधुना मुक्तेर्ज्ञानमात्रसाध्यत्ववत्समुच्चितसाध्यत्वमपि स्यादित्याशङ्क्य समुच्चयायोगे हेत्वन्तरमाह । **प्रत्यगिति** । तस्याऽऽत्ममात्रत्वादात्मनि ज्ञाते सर्वज्ञस्य कृतकृत्यस्येप्सितजिहासितयोरभावादनुष्ठानानवकाशान्न समुच्चय इत्यर्थः ॥ १६८७ ॥

**सर्वसाधनसाध्यं च सुखं यच्चाप्यभीप्सितम् ॥**
**सर्वानन्दैकहेतुत्वाद्ब्रह्माप्तौ प्राप्तमेव तत् ॥ १६८८ ॥**

विदुषो विविधसुखप्रेप्सया प्रवृत्तेः समुच्चयसिद्धिरित्याशङ्क्याऽऽह । **सर्वेति** । चकारौ चोद्यनिरासार्थौ । यन्नानाहेत्वधीनं सुखं तद्यद्यपीप्सितं तथाऽपि ज्ञानाद्ब्रह्माप्तावज्ञानध्वस्त्या तदाप्तमेवैतस्यैवाऽऽनन्दस्येत्यादिश्रुतेर्ब्रह्मणः सर्वानन्दत्वाल्लौकिकानन्देष्वनपेक्षहेतुत्वादतो ब्रह्मविदः सुखेप्सयाऽप्यप्रवृत्तेर्न समुच्चय इत्यर्थः ॥ १६८८ ॥

**यद्यत्कामयते कामी कर्मभूमाववस्थितः ॥**
**अस्मादेवाऽऽत्मविज्ञानात्तत्तत्सुखमुपाश्नुते ॥ १६८९ ॥**

कथं ब्रह्मणः सर्वानन्दैकहेतुतेत्याशङ्क्यास्माद्ध्येवेत्यादि व्याचष्टे । **यद्य-दिति** ॥ १६८९ ॥

**सहस्रदशभागर्द्ध्या सुखानन्त्यं परात्मनः ॥**
**वक्ष्यते सर्वसौख्याप्तिस्तस्मिन्दृष्टे परात्मनि ॥ १६९० ॥**

आत्मज्ञानादात्मसुखाप्तावपि कथं सर्वसुखाप्तिरित्याशङ्क्यानतिशयमनन्तमात्मसुखं तत्रान्तर्भूतमितरादिति मत्वाऽऽत्मसुखस्याऽऽनन्त्ये मानमाह । **सहस्रेति** । आ मनुष्यादा च सूत्रात्पूर्वस्मात्पूर्वस्मादुत्तरोत्तरं शतगुणवृद्ध्या परस्यानतिशयमनन्तं सुखं वक्ष्यते ततस्तत्प्राप्तौ सर्वमपि सुखं प्राप्तमेवेत्यर्थः । परस्याऽऽत्मनो दृष्टिरेव प्राप्तिरित्यभिप्रेत्य दृष्टग्रहणम् ॥ १६९० ॥

**अन्तर्भावः परानन्दे सुखानामाविरिञ्चतः ॥**
**अस्माद्ध्येवेति वाक्येन सर्वेषां नः प्रबोध्यते ॥ १६९१ ॥**

ब्रह्मानन्दे सर्वानन्दान्तर्भावस्य वक्ष्यमाणत्वेऽपि नात्र तद्धीस्तत्कथं ब्रह्मानन्दाप्तावपि तदाप्तिरित्याशङ्क्य कामितसर्वसुखस्याऽऽत्मनो जन्मश्रुतेस्तत्रैवान्तर्भावो भातीत्याह । **अन्तर्भाव इति** । आविरिञ्चतो हिरण्यगर्भावसानानां संसारनिविष्टानां सर्वेषां सुखानामिति संबन्धः । नः शास्त्राधिकृतान्प्रतीति यावत् ॥ १६९१ ॥

**स्थितेऽप्येवं प्रमाणार्थे केचिद्व्याचक्षतेऽन्यथा ॥**
**प्रमान्तरविरुद्धार्थमिमं ग्रन्थं यथोदितम् ॥ १६९२ ॥**

आत्मानमेवेत्यादिकेवलज्ञानान्मुक्तिरित्येवंपरतया व्याख्याय तत्र भर्तृप्रपञ्चव्याख्यामुत्थापयति । **स्थितेऽपीति** । प्रमाणं प्रकृतं वाक्यं तस्यार्थो ज्ञानादेव मुक्तिरिति तस्मिन्नुक्तरीत्या स्थितेऽपि तदेव वाक्यमन्यथाऽन्ये व्याकुर्वन्ति तच्च निर्विशेषैकरसप्रत्यग्ब्रह्मावेदकतत्त्वमादिविरुद्धार्थत्वात्त्याज्यमित्यर्थः ॥ १६९२ ॥

**न कर्म कारणं मुक्तेः क्षयिष्णुत्वसमन्वयात् ॥**
**कर्मस्वेव नियच्छन्ति देवताश्च न मुक्तिदाः ॥ १६९३ ॥**

तदीयमन्यथाव्याख्यानमेव व्याख्यातुं पूर्वपक्षयति । **नेत्यादिना** । किं कर्म मुक्तेर्हेतुर्देवता वा ज्ञानं वाऽऽत्मा वा नाऽऽद्यो मुक्तेरनित्यत्वापत्तेस्तद्धास्यान्तत इत्यादिश्रुतेरित्यर्थः । देवतास्तावत्कर्माधिकृताः कर्मस्वेवैनं नियच्छन्तीति भाष्येण द्वितीयं दूषयति । **कर्मस्विति** । कर्मदृष्टान्तार्थश्चकारः ॥ १६९३ ॥

**कर्माधिकृतिहेतुत्वादग्न्यादेर्देवतात्मनः ॥**
**नाप्युत्थायेह कर्मभ्यो ब्रह्म ज्ञातुं क्षमो नरः ॥ १६९४ ॥**

तासां तेष्वेव प्रेरकत्वे हेतुमाह । **कर्मेति** । तत्राधिकृतिः संप्रदानत्वयोगः स एव हेतुस्तद्भावादिति यावत् । ताभ्यो व्युत्थायाऽऽत्मदर्शनं नोपपद्यत इति भाष्येण तृतीयं दूषयति । **नापीति** । देवतानामुत्थानप्रतियोगित्वं समुच्चेतुमपिशब्दः । अधिकृतेष्विति-निर्धारणार्थमिहेत्युक्तम् । यावज्जीवादिश्रुतिविरोधान्न कर्म त्यक्तुं शक्यं न चात्यक्तकर्मणो ज्ञानं नापि देवतापरतन्त्रस्य तत्पशुत्वमत्यजतस्तदुपपन्नमतो ज्ञानाभावान्न ततो मुक्तिरित्यर्थः ॥ १६९४ ॥

**प्रत्यगात्माऽप्यसंदृष्टो मुक्त्या नैवोपतिष्ठते ॥**
**देवताज्ञाकरत्वेन ब्रह्मविद्या विरुध्यते ॥ १६९५ ॥**

आत्माऽपि त्वसंदृश्यमान आत्मत्वेन नोपतिष्ठत इति भाष्याच्चतुर्थं प्रत्याह । **प्रत्यगिति** । इत्थंभावे तृतीया । आत्मा तर्हि ज्ञातो मुक्त्यात्मना स्थास्यतीत्याशङ्क्य तज्ज्ञानं कर्मिणस्तत्त्यजो वेति विकल्प्याऽऽद्यं दूषयति । **देवतेति** । तदाज्ञाकरत्वं कर्मानुष्ठायित्वम् ॥ १६९५ ॥

**कर्मिणः कर्मशेषत्वं स्वाराज्यं ब्रह्मवेदने ॥**
**नातः समुच्चयान्मुक्तिर्नापि स्यात्सा विकल्पतः ॥ १६९६ ॥**

विरोधमेव साधयति । **कर्मिण इति** । तस्य हि सति कर्मिणि कारकभावात्तच्छेषत्वं तस्यैव ब्रह्मज्ञाने स्वाराज्यभावात्तन्निवृत्तिरिति विरोधः स्यादित्यर्थः । किंच कर्मिणो ज्ञानपक्षे समुच्चयो विकल्पो वा मुक्तिहेतुरिति विकल्प्य क्रमेण निराह । **नात इति** ॥ १६९६ ॥

**सति ज्ञाने तदुभयं तत्तु नैवोपपद्यते ॥**
**ऋणानि चानपाकृत्य कर्म त्यक्तुं न लभ्यते ॥ १६९७ ॥**

अतःशब्दोक्तं हेतुमाह । **सतीति** । ज्ञाने सत्येव समुच्चयो विकल्पो वेत्युभयं संभवति न च ज्ञानं संभवतीत्युक्तमतो नोभयथाऽपि मुक्तिरित्यर्थः । कर्मिणो ज्ञानं न चेत्तत्त्यजः स्यादिति द्वितीयमाशङ्क्याऽऽह । **ऋणानीति** । चकारोऽवधारणार्थः॥१६९७॥

**ऋणानि त्रीण्यपाकृत्येत्येवं च स्मृतिशासनम् ॥ १६९८ ॥**
**एवं न कर्मतो मोक्षः कर्मणः क्षयवत्त्वतः॥**
**ज्ञानाभावान्न विज्ञानान्नोभाभ्यां तदसंभवात् ॥ १६९९ ॥**

तत्र श्रुतिस्मृतिविरोधं हेतुमाह । **ऋणानीति** । जायमानो वै ब्राह्मणस्त्रिभिरित्यादिश्रुतिशासनं चकारार्थः । पूर्वपक्षमुपसंहरति । **एवमिति** । क्षयवत्त्वं तथाविधफलवत्त्वान्मुक्तेश्चातथात्वादित्यर्थः । नोभाभ्यां समुचिताभ्यां विकल्पिताभ्यां वा ज्ञानकर्मभ्यामिति यावत् । तदसंभवाज्ज्ञानासंभवस्योक्तत्वादित्यर्थः ॥ १६९८ ॥ १६९९ ॥

**वीक्ष्यापन्नस्य तस्यैवं सामर्थ्यं ज्ञानकर्मणोः ॥**
**उद्भिभावयिषुः साक्षात्प्रवृत्तैषा परा श्रुतिः ॥ १७०० ॥**

भर्तृप्रपञ्चसिद्धान्तमुपक्रमते । **वीक्ष्येति** । समुच्चयाद्विकल्पाच्च मोक्षे निरस्ते स कथमित्यालोचयतो मुमुक्षोः समुचितज्ञानकर्मणोर्मोक्षं प्रति सामर्थ्यं साक्षादुद्भावयितुमिच्छन्ती परा श्रुतिः प्रवृत्तेति योजना ॥ १७०० ॥

---

१ ग. मुक्त्यै । २ ख. °त्येतच्च स्मृ° । ३ क. °न्न हि ज्ञा° ।

**लोकमात्मानमेवेममुपासीताऽऽत्मविद्यया ॥**
**इति स्यादर्थवत्त्वाय समाधिज्ञानकर्मणोः ॥ १७०१ ॥**

श्रुतिं प्रकटयति । **लोकमिति** । इतिशब्दः श्रुतिशब्देन संबध्यते । तस्यास्तात्पर्यमाह । **स्यादिति** ॥ १७०१ ॥

**द्वैतैकत्वात्मिकावस्था विरिञ्चाख्या परात्मनः ॥**
**विज्ञानकर्माभिव्यङ्ग्या द्वैतत्वात्सा क्षयात्मिका ॥ १७०२ ॥**

कथमात्मोपासकस्य द्वयोरर्थवत्तेत्याशङ्क्य तदर्थं परस्य व्याकृताव्याकृतविभागेनावस्थाद्वयं वदन्व्याकृतावस्थामाह । **द्वैतेति** । तत्प्राप्त्युपायमुपदिशति । **विज्ञानेति** । सूत्रोपास्त्या नित्यादिकर्मसहितया साध्येत्यर्थः । सा च द्वैतत्वादेवाल्पस्य मर्त्यत्वश्रवणान्नश्यतीत्याह । **द्वैतत्वादिति** । **उक्तं हि**—कर्मणः क्रियमाणस्य यो लोकः फलमित्यादि ॥ १७०२ ॥

**अवस्था याऽनभिव्यक्ता तस्यैव परमात्मनः ॥**
**अविशेषात्मिका साऽस्य कारणत्वात्त्वनश्वरी ॥ १७०३ ॥**

या त्वविशेषावस्थाऽनभिव्यक्ता परमात्मावस्थैव सेति भाष्येणावस्थान्तरमाह । **अवस्थेति** । अवस्थात्वादुक्तावस्थावदेषाऽपि नङ्क्ष्यतीत्याशङ्क्य कार्यत्वोपाधिना दूषयति । **साऽस्येति** ॥ १७०३ ॥

**तत्रैवं सति लोकेऽस्मिन्द्वैताद्वैतात्मसंस्थितौ ॥**
**द्वैतावस्थामुपास्ते यस्तस्यासौ क्षीयते ध्रुवम् ॥**
**द्वैतत्वाद्यः पुनर्धीमान्कर्मावस्थां यथोदिताम् ॥ १७०४ ॥**
**अव्यक्तावस्थामापाद्य सदोपास्ते परात्मना ॥**
**न क्षीयते कर्म तस्याद्वैतत्वादेव कारणात् ॥ १७०५ ॥**

अस्त्ववस्थाद्वयं किं तेनेत्याशङ्क्य केवलद्वैतावस्थोपासकस्य दोषमाह । **तत्रेति** । द्वैतस्य क्षयत्वमद्वैतस्याक्षयत्वं च तच्छब्दार्थः । एवमुक्तरीत्या तस्मिन्नर्थे स्थिते सतीति यावत् । अस्मिँल्लोके परमात्माख्ये द्वैतरूपेणाद्वैतरूपेण च स्थितिसहिते सतीत्यर्थः । द्वैतावस्था सूत्राख्या द्वैतत्वात्परिमितत्वादित्येतत् । यः पुनरद्वैतावस्थामुपास्ते तस्याऽऽत्मैव कर्म भवतीत्यादि व्याचष्टे । **यः पुनरिति** ॥ १७०४ ॥ १७०५ ॥

**ब्रह्मोपास्तिर्भवेदेवं कर्म चानुष्ठितं भवेत् ॥ १७०६ ॥**
**व्यक्तं ससाधनं कर्म ब्रह्मभावेन पश्यतः ॥**
**न क्षीयते कर्म तस्य सदैकात्म्यावसानतः ॥ १७०७ ॥**

कर्मात्मिकां द्वैतावस्थामद्वैतात्मना पश्यता ब्रह्मोपास्तिवत्कर्मापि कृतं स्यादतो द्वयो-

---

१ ख. °त्वान्न न° ।

रर्थवत्तेति फलितमाह । **ब्रह्मेति** । कृतस्य क्षयध्रौव्यान्न हास्येत्ययुक्तमिति चेन्नेत्याह । **व्यक्तमिति** । तस्योक्तदर्शनवतो न कर्म क्षयमासादयति कर्मणो वस्तुमात्रेण पर्यवसानादित्यर्थः ॥ १७०६ ॥ १७०७ ॥

**हिरण्यगर्भविज्ञानकर्मणोः प्रथमः किल ॥ १७०८ ॥**
**समुच्चयस्ततोऽन्योऽयमव्यक्तब्रह्मविद्यया ॥**
**व्यक्तसूत्रात्मविद्यायाः परोऽप्येष समुच्चयः ॥ १७०९ ॥**

आत्मानमित्यादिसमुच्चयपरमिति परपक्षं संक्षिप्तं दूषयितुं समुच्चयं विभजते । **हिरण्यगर्भेति** । किलेत्युक्ते समुच्चये भर्तृप्रपञ्चसंमतिरुच्यते । सूत्रोपास्तेर्नित्यादिकर्मणश्चैकः समुच्चयस्ततोऽन्यो द्वितीयो यथोक्तोपास्तिकर्मणः कारणोपास्त्या समुच्चयः । एष त्वात्मानमेवेत्यत्र समुच्चयो द्वाभ्यामन्योऽनन्यो वेति विकल्पार्थः ॥१७०८॥१७०९॥

**द्वयोर्यथोक्तयोर्मध्ये कतरोऽयं समुच्चयः ॥**
**प्रथमोऽथ द्वितीयो वा न न्यायोऽस्त्युभयोरपि ॥ १७१० ॥**

अनन्यत्वपक्षे समुच्चयद्वयमत्रायुक्तमिति वक्तुं पृच्छति । **द्वयोरिति** । प्रकृतवाक्यस्थसमुच्चयद्वयेऽपि न्यायाभावं प्रतिजानीते । **नेति** ॥ १७१० ॥

**प्रथमश्चेत्त्वयैवोक्तं क्षीयेते कामकर्मणी ॥**
**निःशेषभोगभुक्तत्वात्कृत्स्नप्राप्त्या द्वयात्मनः ॥ १७११ ॥**

तदेव स्फुटयितुं सूत्रोपास्तेर्नित्यादिकर्मणश्च समुच्चयमनुवदति । **प्रथमश्चेदिति** । तत्र पूर्वापरविरोधं वक्तुमाद्यसमुच्चयफलं किमेनं न जहाति नामेत्यत्र परोक्तमनुभाषते । **त्वयेति** । आद्यसमुच्चयानुष्ठातुर्द्वैतैकत्वात्मकसूत्रत्वमाप्तस्येप्सितकृत्स्नफलाप्त्या क्रमेणाशेषभोगस्य भुक्तत्वात्तद्धेतुकामादिध्वस्तिरित्याह । **क्षीयेते इति** ॥ १७११ ॥

**विशीर्यते ततः कार्यं कृत्स्नं च कारणं तथा ॥**
**ततः क्षेत्रज्ञरूपस्य सर्वभोज्यातिलङ्घिनः ॥ १७१२ ॥**
**केवलाज्ञानमात्रेण व्यवधानं परात्मनः ॥**
**अप्राप्य परमात्मानमन्तराले व्यवस्थितिः ॥ १७१३ ॥**

तद्ध्वस्त्या देहद्वयध्वस्तिमाह । **विशीर्यत इति** । तन्नाशे सर्वस्माद्द्वैताद्व्यावृत्तस्य परात्मना स्थितियोगादाद्यसमुच्चयानुष्ठातुरितरस्मादविशेषः स्यादित्याशङ्क्याऽऽह । **तत इति** । शरीरद्वयविशरणानन्तरं परात्मनो जीवरूपमापन्नस्य सर्वमपि भोज्यमतिलङ्घ्यावसितस्याज्ञानमात्रेण यतो व्यवधिरतस्तस्य कामादिक्षयद्वारा परमप्राप्यान्तराले स्थितिराद्यसमुच्चयफलमित्यर्थः ॥ १७१२ ॥ १७१३ ॥

---

१ क. ग. 'त्मरतत्राऽऽत्म' । २ क. ग. 'षभुक्तभोगत्वा' । ३ क. ग. करणं ।

**इह त्वक्षितिरेवोक्ता भवता ज्ञानकर्मणोः ॥**
**न ह्यस्य क्षीयते कर्मेत्यस्माद्ध्येवेति चोक्तितः ॥ १७१४ ॥**

तथाऽपि कथं पूर्वापरव्याहतिरित्याशङ्क्याऽऽत्मानमित्यत्र परोक्तं वक्ति । **इह त्विति** ॥ १७१४ ॥

**पूर्वोत्तरोक्तवचसोर्व्याहतिर्वः प्रसज्यते ॥**
**अथ द्वितीयोऽभिमतो न तथाऽप्युपपद्यते ॥ १७१५ ॥**

किमेनमित्यादौ कामादिध्वस्त्याऽन्तरालस्थितिराद्यसमुच्चयफलमुच्यते । आत्मानमेवेत्यत्र तु न ह्यस्य कर्म क्षीयतेऽस्माद्ध्येवाऽऽत्मनो यद्यत्कामयते तत्तत्सृजत इति कामाद्यक्षयस्तत्फलमुच्यतेऽतस्त्वद्व्याख्याने पूर्वोक्तस्याऽऽत्मानमित्यादेरुत्तरोक्तस्य च किमित्यादेर्विरोधः स्यादिति फलितमाह । **पूर्वेति** । आत्मानमित्यत्राऽऽद्यसमुच्चये विरोधमुक्त्वा द्वितीयेऽपि तं वक्तुमनुवदति । **अथेति** । द्वितीयप्रकारेणापि समुच्चयोऽस्मिन्वाक्ये न सिध्यति पूर्वापरविरोधादित्याह । **नेति** ॥ १७१५ ॥

**फलं त्वयैव व्याख्यातं द्वितीयस्याः समुच्चितेः ॥ १७१६ ॥**
**द्वैतैकत्वधिया मृत्युं कामकर्मस्वलक्षणम् ॥**
**तीर्त्वाऽऽत्मविद्यया विद्वानमृतत्वं समश्नुते ॥ १७१७ ॥**

तमेव वक्तुं परोक्तं द्वितीयसमुच्चयफलमाह । **फलमिति** । व्याख्यानमेव दर्शयति । **द्वैतेति** । सूत्रोपास्त्या कामादिध्वस्तिः फलमात्मविद्यया त्वद्वैतावस्थोपास्त्या फलममृतत्वमिति विद्यां चाविद्यां चेत्यादावुक्तमित्यर्थः ॥ १७१६ ॥ १७१७ ॥

**न ह्यस्य क्षीयते कर्म यद्यत्कामयतेऽक्षरात् ॥**
**तत्तत्सृजत इत्युक्त्योः पूर्वोत्तरविरुद्धता ॥ १७१८ ॥**

आत्मानमित्यत्र तु न ह्यस्येत्यादिवाक्याभ्यां कामाद्यक्षयो द्वितीयसमुच्चयफलमुच्यत इत्याह । **न हेति** । अतस्त्वत्पक्षे द्वितीयसमुच्चितिफलोक्त्योः कामादिक्षयाक्षयवादिन्योः पूर्वोत्तरयोर्मिथोविरुद्धतेति फलितमाह । **उक्त्योरिति** ॥ १७१८ ॥

**कामकर्मक्षये यस्मादमृतत्वं फलं श्रुतम् ॥**
**यदा सर्वे प्रमुच्यन्त इत्येवं बहुशः श्रुतौ ॥ १७१९ ॥**

न केवलं कामकर्माक्षयं व्याचक्षाणस्य पूर्वापरविरोधः किंतु श्रुतिविरोधोऽपीत्याह । **कामेति** । तस्मात्कामादेरक्षयत्वं मोक्षे वदतोऽनेकागमविरोधः स्यादिति शेषः । कामादिक्षयद्वारा मोक्ष इत्यत्र श्रुतीनां तात्पर्यं दर्शयितुं बहुश इत्युक्तम् ॥ १७१९ ॥

**कथमेति स कैवल्यमक्षितौ कामकर्मणोः ॥**
**कैवल्यावाप्तौ च कथं तयोरक्षितिरुच्यते ॥ १७२० ॥**

मानविरोधमुक्त्वा द्वितीयसमुच्चयफले न्यायविरोधमाह । **कथमिति** । कामकर्मणी संसारस्तदक्षयो मोक्षस्तद्विरुद्धावित्यर्थः ॥ १७२० ॥

**इतश्च व्याहतिः स्पष्टा ब्रह्मविद्या विरुध्यते ॥**
**देवताज्ञाकरत्वेनेत्युक्तं यत्प्रणिधानतः ॥ १७२१ ॥**

सूत्रोपास्त्यादिकर्मणो विद्यया समुच्चये दोषान्तरमाह । **इतश्चेति** । तामेव स्पष्टयितुं पूर्ववाद्युक्तं परैः सिद्धान्ततयोपेतं स्मारयति । **ब्रह्मेति** । देवताज्ञाकरत्वेन कर्मानुष्ठानेनेति यावत् । तस्य प्रकर्षेण निधानात्तथैव स्थितेर्व्याहतिः समुच्चयेऽस्येत्याह । **प्रणिधानत इति** ॥ १७२१ ॥

**ससाधनमिदं कर्म ब्रह्मभावेन पश्यतः ॥**
**तदेव ब्रह्मविज्ञानं कथं नेह विरुध्यते ॥ १७२२ ॥**

यत्तु व्यक्तं ससाधनमित्यादि तदनुद्रवति । **ससाधनमिति** । इह कर्मण्यक्षीणे ज्ञानं विरुध्यत एवातः शीतोष्णयोरिव समुच्चयासिद्धिरित्याह । **तदेवेति** ॥ १७२२ ॥

**पूर्वं कृत्वाऽथ तत्कर्म पश्चाद्ब्रह्मात्मनेक्षते ॥**
**व्युत्थाय कर्मणः कृत्स्नान्मोक्षाशंसेति चेन्मतम् ॥ १७२३ ॥**

तयोर्विरोधसमाधिं शङ्कते । **पूर्वमिति** । अथाऽऽदौ कर्म कृत्वा पश्चात्कृतं तद्ब्रह्मात्मना पश्यति ततः सर्वस्मात्कर्मणो व्युत्थाय ज्ञानेनैव मुच्यत एवं मोक्षाशंसेति मतं चेदिति संबन्धः ॥ १७२३ ॥

**एवं समर्थ्यमानेऽपि न मुक्तिः कर्मणो भवेत् ॥**
**व्युत्थितस्यैव कर्मभ्यो मुक्त्यभ्युपगमत्वतः ॥ १७२४ ॥**

अविरोधमुपेत्य दूषयति । **एवमिति** । सप्तम्या समुच्चयो विशेष्यते । कर्मणस्तेन समुच्चिताज्ज्ञानादिति यावत् । तत्र हेतुमाह । **व्युत्थितस्येति** । मुक्त्यभ्युपगमत्वतो मुक्तेरभ्युपगमस्य सत्त्वादित्यर्थः ॥ १७२४ ॥

**अथ गार्हस्थ्य एवायं कर्मकाले विभिन्नधीः ॥**
**कर्म कृत्वाऽथ तच्छान्तौ कर्म ब्रह्मेति वेत्स्यति ॥ १७२५ ॥**

कर्मणस्तद्धेतुत्वं साधयन्नाशङ्कते । **अथेति** । अयं कर्माधिकारी कर्मानुष्ठानकाले कर्तृत्वादिधीः सन्ननुष्ठाय तद्वशाद्बुद्धिशुद्धौ गार्हस्थ्ये स्थित्वैव कर्म ब्रह्मेति पश्यत्यतोऽस्ति तस्य ज्ञानेन सह मुक्तिहेतुतेत्यर्थः ॥ १७२५ ॥

**एवं समादधानस्य कामितोऽर्थो न सिध्यति ॥**
**पराधीनमृतेर्जन्तोर्मुक्तिः स्यात्पाक्षिकी यतः ॥ १७२६ ॥**

कर्मणो मुक्तिहेतुतामेवं वदतः सैव न स्यादिति दूषयति । **एवमिति** । कथं काङ्-

क्षितमोक्षासिद्धिस्तत्राऽऽह । **पराधीनेति** । अतो ज्ञानस्य नियतफलासिद्धिरिति शेषः ॥ १७२६ ॥

**भेदं पश्यन्यदि मृतो बद्ध एव भवेन्नरः ॥**
**कर्म ब्रह्मेति संपश्यन्मृतश्चेद्ब्रह्मसाद्भवेत् ॥ १७२७ ॥**

मृतिकालानियमान्मोक्षस्य पाक्षिकत्वं चेत्त्वत्पक्षेऽपि तथा स्यादित्याशङ्क्याऽऽह । **भेदमिति** । कर्मकाले कर्त्रादिबुद्धिः सन्मृतश्चेत्संसार्येव स्याज्ज्ञानाभावात्ससाधनं कर्म ब्रह्मेति पश्यन्मृतश्चेद्ब्रह्मी भवेदिति पाक्षिकत्वं न च तुल्यो दोषो ज्ञानादेव मुक्तिनियमान्न च समुच्चयान्मुक्तिरिति परस्यापि नियमस्तस्यामानत्वादिति भावः ॥ १७२७ ॥

**भेददृष्टेर्बलीयस्त्वात्तस्याः स्वाभाविकत्वतः ॥**
**इच्छातश्चापि भाव्यत्वात्तदाऽपि स्यान्न निर्वृतिः ॥ १७२८ ॥**

गृहस्थं प्रति पाक्षिकत्वं मुक्तेरुक्तमिदानीं तं प्रति तदभावं निश्चिनोति । **भेदेति** । कर्ताऽहमित्यादिभेददृष्टेः स्वारस्येन ब्रह्मदृष्टेर्बलवत्त्वादिच्छया च सुकरत्वादितरस्यास्तदभावाद्गृहस्थावस्थायां मुक्तिर्न स्यादेवेत्यर्थः । अपिरवधारणार्थः । १७२८ ॥

**कुर्वाण एव चेत्कर्म कर्म ब्रह्मेति पश्यति ॥**
**देवताज्ञाकरत्वेन ब्रह्मविद्या विहन्यते ॥ १७२९ ॥**
**इत्युक्तिर्वो विरुध्येत पूर्वोत्तरविघाततः ॥**
**अपास्तदेवतात्यक्तद्रव्यं कर्मापि दुर्घटम् ॥ १७३० ॥**

तस्य कर्मवज्ज्ञानमप्यस्तीति सुलभा मुक्तिरिति शङ्कते । **कुर्वाण इति** । पूर्वपक्षोक्तिदोषेण दूषयति । **देवतेति** । पूर्ववादिनो योक्तिः सा भवत्पक्षेऽपि विरोधमावहति तथा पूर्वमनिरस्ततया समुच्चयस्योत्तरस्य विघातादित्यर्थः । कर्मिणो ज्ञानाभावादमुक्तिरुक्ता ज्ञाने चेत्कर्माभावादमुक्तिस्तन्मात्रात्तदनिष्टेरित्याह । **अपास्तेति** । कर्मिणो ज्ञानेऽपि कर्म ज्ञानिनो दुर्घटं यतो ज्ञानं देवताद्युपमर्दकमित्यक्षरार्थः ॥ १७२९ ॥ १७३० ॥

**त्यक्तद्रव्यादिसंभेददृष्ट्यैव नियतत्वतः ॥**
**यागादिकर्मणस्तस्मादसमीचीनमुच्यते ॥ १७३१ ॥**
**ससाधनमिदं कर्म ब्रह्मैवेति समीक्षणम् ॥**
**ईदृङ्न लोके वेदेऽपि प्रसिद्धं कर्म कुत्रचित् ॥ १७३२ ॥**

कर्त्राद्यभावे न कर्मेत्यत्र हेतुमाह । **त्यक्तेति** । ज्ञानकर्मणोः सहासंभवे फलितमाह । **तस्मादिति** । कर्त्राद्यनपेक्षमपि किंचित्कर्म ज्ञानसहभावि स्यादित्याशङ्क्याऽऽह । **ईदृगिति** । कुत्रचिदित्युभयत्रापि प्रदेशभेदवचनम् ॥ १७३१ ॥ १७३२ ॥

---

१ क. तया ।

**आत्मानमित्यतो वाक्यात्कर्मेदक्चेत्प्रसेत्स्यति ॥**
**वाक्यभेदप्रसङ्गत्वान्नैवमप्युपपद्यते ॥ १७३३ ॥**

तत्र वैदिकीं प्रसिद्धिं शङ्कते । **आत्मानमिति** । तत्र नेदं मानमस्मात्तस्या दृष्टे-र्वाक्यभेदप्रसङ्गसद्भावाच्चेति दूषयति । **वाक्येति** ॥ १७३३ ॥

**एवंविधस्य कर्मत्वमुपास्तिं चाऽऽत्मनस्तथा ॥**
**उभयं विदधद्वाक्यं भिद्येतैव न संशयः ॥ १७३४ ॥**

अर्थभेदाभावान्नैवमित्याशङ्क्याऽऽह । **एवमिति** । कर्त्रादिभेदरहितस्येति यावत् । अर्थभेदे वाक्यभेदस्याऽऽवश्यकत्वमाह । **नेति** ॥ १७३४ ॥

**ब्रह्मार्पणमिति वचो यथोक्तेनैव वर्त्मना ॥**
**निर्धारितार्थं जानीयात्स्फुटन्यायसमाश्रयात् ॥ १७३५ ॥**

यथोक्ते कर्मण्यात्मानमित्यादिवाक्यं न मानं चेद्ब्रह्मार्पणं ब्रह्म हविरित्यादि स्यादि-त्याशङ्क्याऽऽह । **ब्रह्मेति** । इदमप्यात्मानमित्यादिवद्वस्तुमात्रपरतया निश्चितार्थं नोक्त-कर्मपरमित्यत्र हेतुमाह । **यथोक्तेनेति** । वाक्यभेदप्रसङ्गेनेत्यर्थः । द्वितीयपादार्थं स्फुट-यति । **स्फुटेति** ॥ १७३५ ॥

**पूर्वाभ्यामन्य एवायं तृतीयश्चेत्समुच्चयः ॥**
**श्रुतौ स्मृतौ वा लोके वा सिद्धश्चेदस्तु नान्यथा ॥ १७३६ ॥**

अनन्यत्वपक्षे सूत्रोपास्तेर्नित्यादिकर्मणश्चैकः समुच्चयस्तदुपास्त्यादिकर्मणो विद्याया-श्चापरस्तस्मिन्नुभयस्मिन्नपि प्रस्तुतवाक्यस्य समवायिनि निरस्ते सत्यन्यत्वपक्षमादाय शङ्कते । **पूर्वाभ्यामिति** । मानाभावान्नैवमित्याह । **श्रुताविति** ॥ १७३६ ॥

**तस्मादसदिदं गीतमात्मानमिति यद्वचः ॥**
**तत्समुच्चयसिद्ध्यर्थमित्येतच्चोक्तयुक्तितः ॥ १७३७ ॥**

त्रिविधसमुच्चयायोगे फलितमुपसंहरति । **तस्मादिति** । तत्पदपरामृष्टमेव हेतुमाह । **एतच्चेति** । वाक्यभेदाद्युक्तयुक्तेः समुच्चयासत्त्वमित्यर्थः ॥ १७३७ ॥

**कार्यलिङ्गसमुच्छित्तिः फलं नाऽऽद्यसमुच्चितेः ॥**
**युक्त्या कल्पयितुं शक्यं श्रुतिवाक्यविरोधतः ॥ १७३८ ॥**

देहादिनाशमाद्यसमुच्चयफलमुपेत्य पूर्वापरविरोधादिदोषमुक्त्वा तन्नाशः साक्षाद्वा प्रणाड्या वा तत्फलमिति विकल्प्याऽऽद्यं प्रत्याह । **कार्येति** । कार्यं स्थूलो देहो लिङ्गं सूक्ष्मशरीरं तयोरात्यन्तिकध्वस्तिराद्यसमुच्चयस्य साक्षात्फलमिति न शक्यं युक्त्या कल्पयितुं तादृश्या युक्तेरभावाच्छ्रुतिविरोधाच्चेत्यर्थः ॥ १७३८ ॥

---

१ ख. भिद्यते न तु सं° । २ ख. °वान्मैव° ।

**द्वैतैकत्वात्मविज्ञानकर्मानुष्ठायिनः पितुः ॥**
**पुत्रे न्यस्तात्मभारस्य मरणात्परतः फलम् ॥ १७३९ ॥**
**पृथिव्यै चैनमित्यादि त्र्यन्नात्मावाप्तिलक्षणम् ॥**
**श्रूयते स्पष्टवचनं देहादेर्नाशनं कुतः ॥ १७४० ॥**

तमेव साधयति। **द्वैतेति**। आद्यसमुच्चित्यनुष्ठातुर्जीवस्याऽऽरब्धकर्मक्षये कृतसंप्रत्तिकस्य मृतेरूर्ध्वं त्र्यन्नात्मसूत्राप्तिफलमधिकृत्य पृथिव्यै चैनमग्नेश्च दैवी वागाविशतीत्यादि स्पष्टार्थं वचः श्रुतमतः सूत्राप्तिराद्यसमुच्चितिफलं न देहद्वयध्वस्तिः श्रुतिविरोधादित्यर्थः ॥ १७३९ ॥ १७४० ॥

**न चाप्यतिक्रमार्थत्वं जय्य इत्यस्य युक्तिमत्[1] ॥**
**तस्याऽऽविशतिवाक्येन विरोधादेव कारणात् ॥ १७४१ ॥**

ननु पुत्रेणैवायं लोको जय्य इत्यत्र जय्यशब्दस्यातिक्रमार्थत्वादाद्यसमुच्चित्यनुष्ठातुर्लोकत्रयातिक्रमवद्देहद्वयनाशोऽपि फलं स्यात्सूत्राप्तिफलानियमात्तत्राऽऽह। **न चेति**। प्राप्त्यर्थवदितिवैधर्म्यदृष्टान्तार्थोऽपिशब्दः। तस्याऽऽप्त्यर्थत्वसंभवे नातिक्रमार्थत्वमित्यत्र हेतुमाह। **तस्येति** ॥ १७४१ ॥

**मतं त्र्यन्नात्मसंप्राप्तेरूर्ध्वं भोगस्य भुक्तितः ॥**
**सामर्थ्यात्कल्प्यते कार्यं प्राणानां नाशनं पितुः ॥ १७४२ ॥**

द्वितीयं शङ्कते। **मतमिति**। भोगानन्तरं देहस्य स्थित्यनुपपत्तिः सामर्थ्यम्। प्राणशब्देन तत्प्रधानं लिङ्गमुक्तम्। भोगार्था देहस्थितिः सूत्रं प्राप्तस्य सर्वभोगानां भुक्तत्वात्फलाभावात्तदीयस्थित्ययोगात्तन्नाशः समुच्चयानुष्ठातुः सूत्राप्तिद्वारा फलं सेत्स्यतीत्यर्थः ॥ १७४२ ॥

**नैवं स्याद्ब्रह्मबोधस्य निष्फलत्वप्रसङ्गतः ॥**
**विद्याफलस्य संप्राप्तेः प्रागपि ब्रह्मबोधतः ॥ १७४३ ॥**

प्रणाड्या देहद्वयध्वस्तिराद्यसमुच्चयफलमिति पक्षं प्रत्याह। **नैवमिति**। कथं नैष्फल्यं देहद्वयविनाशफललाभात्तत्राऽऽह। **विद्येति** ॥ १७४३ ॥

**संसारानर्थनाशो हि विद्यायाः प्रार्थ्यते फलम् ॥**
**विद्यामृतेऽपि तच्चेत्स्याद्ध्रुवं विद्या निरर्थिका ॥ १७४४ ॥**

ज्ञानात्पूर्वं देहद्वयनाशेऽपि विद्या नानर्थिका संसारध्वंसार्थत्वादित्याशङ्क्याऽऽह। **संसारेति**। तथाविधफलप्रार्थना प्रत्यात्ममनुभवसिद्धेति वक्तुं हिशब्दः। प्रागपि ज्ञानाद्देहद्वयनाशश्चेदशरीरं वाव सन्तमित्यादिश्रुतेरदेहस्यासंसाराद्विद्यां विना बन्धध्वंसात्तदानर्थक्यं दुर्वारमित्यर्थः। तच्छब्देन फलं गृह्यते ॥ १७४४ ॥

---

1 ग. युक्तितः।

ध्वान्तनाशोऽथ विद्यायाः कार्यं चेदभिधीयते ॥
सर्वानर्थस्य नष्टत्वात्किमन्यत्स्यात्तमोहुतेः ॥ १७४५ ॥

अज्ञानध्वंसितया ज्ञानार्थवत्त्वं शङ्कते । **ध्वान्तेति** । अज्ञानध्वस्तिरनर्थध्वंसार्थमर्थ्यते स चेद्देहनिवृत्त्या सिद्धः किमज्ञानध्वस्त्येत्याह । **सर्वेति** ॥ १७४५ ॥

उत्खातदन्तोरगवदविद्या किं करिष्यति ॥
विद्यमानाऽपि विध्वस्ततीव्रानर्थपरंपरा ॥ १७४६ ॥

अविद्या विद्यमाना संसारं संपादयिष्यत्यतस्तद्ध्वस्त्या भाव्यमित्याशङ्क्याऽऽह । **उत्खातेति** ॥ १७४६ ॥

कामकर्मादिविध्वस्तौ नाविद्याऽनर्थभुक्तये ॥
प्रतीचोऽलमृते कार्यं कारणं न हि कारणम् ॥ १७४७ ॥

निरस्तसर्वानर्थाविद्या सत्यपि समुत्पाटितदन्तसर्पसदृशी न कार्यकरीत्यत्र हेतुमाह । **कामेति** । अविद्याकार्यं कामादि तद्विनाऽविद्याख्यं कारणं न भोगरूपं कार्यमुत्पादयतीत्याह । **ऋत इति** ॥ १७४७ ॥

विद्यमाना पुनः कामं कर्म चापि प्रवर्तयेत् ॥
अविद्येति मतं चेत्स्यान्नैवमप्युपपद्यते ॥ १७४८ ॥

अविद्या स्थिता नष्टमपि कामाद्युत्पादयत्यतस्तन्नाशेन भाव्यमिति शङ्कते । **विद्यमानेति** । दूषयति । **नैवमिति** । नष्टस्योत्पत्तावतिप्रसक्तेरित्यर्थः ॥ १७४८ ॥

अविद्या विद्यमाना चेच्छक्तोत्पादयितुं बलात् ॥
नाशकद्रक्षितुं नाशात्कथं ते कामकर्मणी ॥ १७४९ ॥

अस्ति तस्या नष्टकामादिनिर्माणे शक्तिरित्याशङ्क्याऽऽह । **अविद्येति** । बलादुत्पाद्यसामर्थ्यमनादृत्येति यावत् । यथा कामादेर्नाशप्राप्तौ स्थापनशक्तिरविद्याया नेष्टा तथा नष्टकामाद्युत्पादनेऽपि तदीयशक्तिरप्रामाणिकीत्यर्थः ॥ १७४९ ॥

अथ कारणसंसर्गो नाशशब्देन भण्यते ॥
सर्वान्प्रत्यविशिष्टत्वात्फलं तन्न समुच्चितेः ॥ १७५० ॥

किंचाऽऽद्यसमुच्चयफलत्वेनोक्तकामादिनाशो मुख्यो गौणो वा मुख्यश्चेत्सावशेषो निरवशेषो वा तत्राऽऽद्यमादत्ते । **अथेति** । अतः सत्यामविद्यायां कामाद्युत्पत्तेस्तन्नाशेन भाव्यमिति शेषः । तथाविधनाशस्य स्वापादौ सर्वान्प्रत्यविशेषेण सिद्धेर्न समुच्चयफलतेत्याह । **सर्वानिति** ॥ १७५० ॥

तस्मात्संघातविध्वंसो निर्युक्तिक इहोच्यते ॥
अथ सत्यपि संमोहे संघातश्चेद्विशीर्यते ॥ १७५१ ॥

---

१ ग. °तदंष्ट्रोर° । २ ख. ग. कार्यं ।

किंच सावशेषे कामादिनाशे देहद्वयनाशो न समुच्चयफलं कारणसंसृष्टकामादेर्भूयः संभवेन देहहेतुतोपपत्तेरित्याह । **तस्मादिति** । कारणभूतकामादेः पुनरुद्भवसंभवादिति यावत् । कामादिसमूहः संघातः । सावशेषनाशः सप्तम्यर्थः । कल्पान्तरमाह । **अथेति** ॥ १७९१ ॥

**देहहेत्वन्तराभावाद्भूयोऽपि विफलैव धीः ॥**
**आनर्थक्यं ब्रह्मधियो न च युक्तं कथंचन ॥**
**निःशेषोपनिषत्काण्डनैरर्थक्यप्रसङ्गतः ॥ १७९२ ॥**

कामादेः सर्वथा नाशश्चेद्देहहेत्वभावादनर्थनिवृत्तेरनायाससिद्धेर्विद्यावैयर्थ्यं तादवस्थ्यं सतोऽपि मोहस्याकिंचित्करत्वात्तद्ध्वस्तेरनिष्टत्वादित्याह । **देहेति** । विद्यानर्थक्यं नानिष्टमब्रह्मवादिनामित्याशङ्क्याऽऽह । **आनर्थक्यमिति** । न च स युक्तो विधिकाण्डस्यापि तत्प्रसङ्गात्तत्प्रामाण्यलक्षणविरोधादिति भावः ॥ १७९२ ॥

**अपि च ध्वस्तनिःशेषकार्यप्राणादिसाधनः ॥**
**श्रवणादि कथं कुर्याद्ब्रह्मविद्योपलब्धये ॥ १७९३ ॥**

समुच्चयान्निःशेषकामादिनाशे विद्यानर्थक्यमुक्त्वा दोषान्तरमाह । **अपि चेति** । देहद्वयं कामादिबन्धसाधनं सर्वं यस्य ध्वस्तं सोऽप्राप्य परमन्तरालावस्थः श्रवणादि विद्यार्थमनुतिष्ठतीति त्वयोच्यते तच्चायुक्तम् । न हि कार्यकरणशून्यस्य श्रवणादि सिध्यति **शरीरं** मे विचर्षणमित्यादिश्रुतेरतोऽशेषकामादिनाशे विद्योत्पत्तिरेवायुक्तेत्यर्थः॥ १७९३॥

**वैराग्यातिशयार्थत्वाद्गौणं चेन्नाशनं मतम् ॥**
**स्वव्याख्यानविरोधित्वान्नैवमप्युपपद्यते ॥ १७९४ ॥**

आद्यसमुच्चित्यनुष्ठातुर्वैराग्यातिशयात्कामादिनाशस्य तादर्थ्याद्गौणं तस्य तन्नाशनमिति कल्पान्तरमाह । **वैराग्येति** । भर्तृप्रपञ्चव्याख्याविरोधान्नैतदित्याह । **स्वव्याख्यानेति** ॥ १७९४ ॥

**अत्रैव संनिमज्जन्ति प्राणाः सर्वे स्वकारणे ॥**
**मृतः शेते स आध्मातो जीवतैतद्विरुध्यते ॥ १७९५ ॥**
**फलं चैतत्त्वयैवोक्तं प्रथमायाः समुच्चितेः ॥**
**तस्मान्न जीवतो वाच्यं गौणं विशरणं त्वया ॥ १७९६ ॥**

तदेव वक्तुं तदीयां व्याख्यां पाञ्चमिकीमाह । **अत्रेति** । तथाऽपि कथं देहद्वयस्य कामादेश्च ध्वस्तिधीस्तत्राऽऽह । **जीवतेति** । प्राणानामात्मनि मज्जनं त्यक्तप्राणस्य स्थूलदेहस्याऽऽध्मानं च देहद्वयवता सह विरुद्धं तदभावे च कामादेरसत्त्वमतस्तद्ध्वस्तिर्नाऽऽद्य-

१ ख. °र्यकार° । २ ग. चैवं त्वयै° ।

समुच्चितिफलमित्यर्थः । देहद्वयवतो गौणं देहादिनाशनं समुच्चयवादिना तत्फलत्वेन न वाच्यं स्वव्याख्याविरोधादिति फलितमाह । तस्मादिति ॥ १७५५ ॥ १७५६ ॥

अत्रैवेति फलं चोक्त्वा प्रथमायाः समुच्चितेः ॥
व्युत्थितस्याखिलाद्भोज्यान्नाममात्रावशेषिणः ॥ १७५७ ॥
परमात्मापरिज्ञानमात्रयाऽनाप्तनिर्द्वयः ॥
ब्रह्मविद्याऽत आरब्धा ब्रह्माविद्यानिवृत्तये ॥ १७५८ ॥
एतत्त्वदीयं व्याख्यानं तद्विरुद्धमिदं वचः ॥
संघातस्य विशरणं जीवतश्चेति दुःस्थितम् ॥ १७५९ ॥

आत्मनि विदुषि प्राणानां मज्जनेऽपि तस्य द्वैतयोगोऽस्ति न वाऽस्ति चेद्देहनाशस्य गौणता नास्ति चेत्तस्य परमात्ममात्रत्वाद्विद्या नाऽऽरम्भ्येत्याशङ्क्याऽऽह । अत्रेत्यादिना । अत्रैव समवनीयन्त इत्यादिनाऽऽद्यसमुच्चितेरात्यन्तिकदेहनाशं फलमुक्त्वा तद्धीनस्य द्वैतायोगात्तन्मात्राद्व्यावृत्तस्य शुकादिवन्नाममात्रधारिणः पराज्ञानमात्राविद्यया यतोऽद्वयं ब्रह्मानाप्तमिवातस्तस्याज्ञस्याज्ञानध्वस्त्यर्थं विद्याऽऽरब्धेति परव्याख्यानं पञ्चमे वृत्तं तेन विरुद्धं देहद्वयवतो देहादिसंघातस्य गौणं विशरणमितीदं वाक्यमतो दुःस्थिता देहादिनाशस्य गौणतेत्यर्थः ॥ १७५७ ॥ १७५८ ॥ १७५९ ॥

निषिद्धषड्विकारस्य श्रुत्यैव परमात्मनः ॥
अविद्या तद्विकारश्च न युक्तस्तूषरादिवत् ॥ १७६० ॥

किंचाऽऽत्मनः श्रुत्या निर्विकारत्वनिश्चयादविद्यया तज्जन्यकामादिना च वस्तुतोऽयोगाद्विद्यया निरवशेषस्य मुख्यस्यैवाविद्यादिनाशस्य संभवाद्गौणपक्षस्यायुक्ततेत्याह । निषिद्धेति । अवधारणार्थस्तुशब्दः । आत्मनो वस्तुतोऽविद्यातज्जायोगे दृष्टान्तमाह । ऊषरेति । यथोषरादेरुदकाद्यारोपविषयस्य वस्तुतो नोदकादियोगस्तथाऽऽत्मनोऽपि वस्तुतो नाविद्यादिसंगतिरस्थूलादिश्रुत्या निर्विकारत्वनिर्णयादित्यर्थः ॥ १७६० ॥

हिरण्यगर्भद्वारैव मुक्तिरित्यपि यद्वचः ॥
तस्यापि दूषणं ज्ञेयं यथोक्तन्यायवर्त्मना ॥ १७६१ ॥

आद्यसमुच्चयफलं सूत्रता न देहद्वयोच्छित्तिरित्युक्तम् । यत्तु सूत्रान्तं पदमाप्तस्यैव ज्ञानद्वारा मुक्तिरिति तद्दूषयति । हिरण्यगर्भेति । तद्यो यो देवानामित्याद्युक्तमभिप्रेत्याऽऽह । यथोक्तेति ॥ १७६१ ॥

हिरण्यगर्भवद्यस्मात्क्रिम्यादेरपि संगतिः ॥
ब्रह्मात्मलक्षणाऽसाध्वी तेनेयं कल्पना कृता ॥ १७६२ ॥

संबन्धादावुक्तमपि न्यायमार्गं स्मारयति । हिरण्यगर्भवदिति । आ सूत्रादा च क्रिमेः सर्वस्य ब्रह्मणा सहाऽऽत्मरूपा संगतिस्तत्त्वमादिश्रुतिसिद्धाऽतः सूत्रवज्जीवान्तरस्यापि ज्ञानान्मुक्तेः सूत्रीभूतस्यैव सेत्ययुक्ता कल्पनेत्यर्थः । असाध्वीति च्छेदः ॥ १७६२ ॥

**संसारिताऽविशिष्टैव मोक्षादर्वाक्षु भूमिषु ॥**
**ब्रह्मा विश्वसृजो धर्म इत्यादिवचनान्मनोः ॥ १७६३ ॥**

किंच ब्रह्मादिस्तम्बान्तजीवराशेर्बद्धता स्वाज्ञानाधीना श्रुतिस्मृतिस्वानुभवसिद्धा तस्माद्बन्धमोक्षयोरैकाधिकरण्यादन्यत्रापि सूत्रान्मुक्तिसिद्धिरित्याह । **संसारितेति ।** मानवं वचनं प्रागेव प्रतिनियतार्थम् ॥ १७६३ ॥

**विद्यां चेत्यादिमन्त्रोऽपि न समुच्चयबोधकः ॥**
**परस्परविरोधित्वान्न सहावस्थितिस्तयोः ॥ १७६४ ॥**

संबन्धादारभ्य तत्र तत्र प्रसक्तन्यायेन सूत्रान्तं पदमाप्तस्यैव मुक्तिरित्यपास्तम् । यत्तु विद्यां चेत्यादिमन्त्रस्य समुच्चयद्वयबोधित्वात्तत्फलसिद्धिरिति तदपि नेत्याह । **विद्यां चेत्यादीति ।** ज्ञानकर्मणोः समुच्चयासंभवादिति हेतुमाह । **परस्परेति ॥** १७६४॥

**क्त्वायोगात्पूर्वकालत्वमविद्यायाः प्रतीयते ॥**
**स्वाभाविकं कर्म मृत्युर्विद्या शास्त्रीयमुच्यते ॥ १७६५ ॥**

विमते न समुच्चीयेते मिथोविरुद्धत्वात्तमःप्रकाशवदिति युक्त्या श्रुत्यर्थनिरासोऽयुक्तः श्रुतेर्बलीयस्त्वादित्याशङ्क्य मन्त्रालोचनया समुच्चयायोगान्नैवमित्याह । **क्त्वायोगादिति ।** तीर्त्वेतिक्त्वाप्रयोगात्समानकर्तृकक्रिययोः पूर्वकालक्रियायां तद्विधेरविद्याया विद्यायाः सकाशात्पूर्वकालत्वदृष्टेर्न समुच्चयस्तयोरित्यर्थः । तयोरसमुच्चयेऽपि ज्ञानकर्मणोः सोऽस्तीत्याशङ्क्य मन्त्रं व्याचष्टे । **स्वाभाविकमिति ।** अविद्यया मृत्युमित्यत्र विहिताकरणं निषिद्धसेवा च मृत्युस्तद्धेतुत्वादग्निहोत्रादि शास्त्रीयं कर्म विद्यां चेत्यत्र विद्या । एतेनाविद्ययेत्यपि व्याख्यातम् । तस्य धीशुद्धिद्वारा तद्धेतुत्वात् । अशास्त्रीयं स्वाभाविकं कर्म मृत्युशब्दोक्तमविद्यां चेत्यविद्या तत्कार्यत्वान्निवर्त्यनिवर्तकभावेन च तयोः सहोक्तिरित्यर्थः ॥ १७६५ ॥

**मृत्युः स्वाभाविकं ज्ञानं शास्त्रीयं संभवस्तथा ॥**
**शास्त्रीयेणेतरत्तीर्त्वा विद्ययाऽमृतमश्नुते ॥ १७६६ ॥**

विनाशेन मृत्युं तीर्त्वेत्यत्र मृत्युशब्दार्थमाह । **मृत्युरिति ।** नग्नस्त्रीदर्शनादीति यावत् । तस्य मृत्युहेतुत्वादित्यर्थः । संभूतिं च विनाशं चेत्यत्र संभूतिशब्दार्थमाह । **शास्त्रीयमिति ।** उद्गीथादिदर्शनमिति शेषः । तस्याभ्युदयसंभवे हेतुत्वादित्यर्थः । एवं विनाशेनेत्यपि व्याख्येयम् । तत्र विनाशो मृत्युशब्दितं ज्ञानं तस्य तद्धेतुत्वात् । तयोः सहभावश्च पूर्ववदित्याह । **तथेति ।** मन्त्रद्वयेऽपि तृतीयपादस्थाविद्याविनाशाभ्यां प्रथमपादस्थविद्यासंभूतिशब्दितं शास्त्रीयं कर्म ज्ञानं चोक्तम् । चतुर्थपादस्थविद्यासंभूतिभ्यां परविद्योक्ता । एवं मन्त्रद्वयेऽपि पदार्थौ विद्यां च व्याख्याय वाक्यार्थं संगृह्णाति । **शास्त्रीयेणेति ।** विद्यां चेति विद्याशब्दितमविद्ययेत्यविद्यापदेनाऽऽकृष्टमग्निहोत्रादि

शास्त्रीयं कर्म तेनेतरदविद्यां चेत्यविद्याशब्देन मृत्युं तीर्त्वेति मृत्युशब्देन चोक्तं स्वाभाविकं कर्मातिक्रम्य केवलब्रह्मविद्यया ब्रह्माऽऽप्नोतीत्याद्यमन्त्रार्थः। संभूतिं चेति संभूतिशब्दितं सूत्रादिध्यानं विनाशेनेत्याकृष्टं शास्त्रीयं तेनेतरद्विनाशं चेति मृत्युं तीर्त्वेति चोक्तं स्वाभाविकं ज्ञानमतिलङ्घ्य संभूत्या केवलविद्यया ब्रह्म प्राप्नोतीति द्वितीयमन्त्रार्थः। तत्कुतः समुच्चय इति भावः ॥ १७६६ ॥

**नाविरतो दुश्चरितादिति चाऽऽगमिकं वचः ॥**
**तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते ॥ १७६७ ॥**

किंच निरस्तकर्मणः संन्यासिनः शुद्धबुद्धेर्ज्ञानोत्पत्तिश्रुतेर्न समुच्चय इत्याह । **नेत्यादिना।** कर्मणो ज्ञानस्य च फलभेदेन विनियोगस्मृतेश्चैवमित्याह । **तपसेति** ॥ १७६७ ॥

**तस्मात्समुच्चयाशेह कार्या नाक्षरसंश्रयात् ॥**
**अप्रमाणं ब्रुवाणस्तु नास्माभिर्विनिवार्यते ॥ १७६८ ॥**

आत्मानमित्यत्र समुच्चयायोगमुपसंहरति । **तस्मादिति।** द्वयोरन्यतरस्य तृतीयस्य वा समुच्चयस्य प्रागुक्तन्यायेनासंभवादिति यावत् । श्रुत्यक्षराण्युपेक्ष्य विना मानं समुच्चयं वदन्तं प्रत्याह । **अप्रमाणमिति।** मानाभावस्यैव तन्निवारकत्वादित्यर्थः ॥ १७६८ ॥

**तस्माद्व्युत्थाय कर्मभ्यः प्रत्यक्प्रवणबुद्धयः ॥**
**प्रत्यग्याथात्म्यविज्ञानान्निर्वान्तीत्येष निश्चयः ॥ १७६९ ॥**

परमतनिरासमुपसंहृत्य विशिष्टानां संन्यासिनामेव मोक्षो ज्ञानादिति स्वपक्षमत्र विवक्षितमुपसंहरति । **तस्मादिति।** समुच्चयस्य प्रकृतवाक्याप्रतिपाद्यत्वादिति यावत् । निर्वान्ति न्यासान्निर्व्यापाराः सन्तो निरतिशयपुरुषार्थरूपं ब्रह्म भवन्तीत्यर्थः॥१७६९॥

**अपुण्यपुण्योपरमे यं पुनर्भवनिर्भयाः ॥**
**शान्ताः संन्यासिनो यान्ति तस्मै मोक्षात्मने नमः ॥ १७७० ॥**

तत्रैव **पुराण**संमतिमाह । **अपुण्येति** ॥ १७७० ॥

**न चेह लोकशब्देन कश्चिदन्योऽभिधीयते ॥**
**परात्मनः स्वशब्देन विशेषणसमन्वयात् ॥ १७७१ ॥**

यत्त्वात्मानमेवेत्यत्र लोकशब्देन कर्मफलभूतमत्रग्रहणमिति तन्निरस्यति । **न चेति।** तत्र हेतुः स्वशब्देनेति । स्वं लोकमदृष्ट्वेति स्वशब्दार्पितविशेषणेन संबन्धो लोकशब्दार्थस्य दृष्टस्तेनात्रापि लोकशब्दः परमात्मा युक्तोऽन्यथा प्रकृतहानाप्रकृतप्रक्रियापातादित्यर्थः ॥ १७७१ ॥

**आत्मानमेवेति तथा चाऽऽत्मशब्दो विशेषणम् ॥**
**लोकस्य ग्रहणं तस्मान्न कर्मसमवायिनः ॥ १७७२ ॥**

लोकशब्देनात्र परस्यैव परिग्रहे हेत्वन्तरमाह । **आत्मानमिति** । यथा लोकस्य स्वशब्दार्थो विशेषणं तथाऽऽत्मानमित्यत्र स्वशब्दपर्यायात्मशब्दार्थस्तस्य विशेषणं दृश्यते । न च कर्मफलस्याऽऽत्मत्वं मुख्यमतो लोकशब्दः परात्मैवेत्यर्थः । हेतुभ्यां परात्मनि लोकशब्दार्थे स्थिते परस्य नेष्टसिद्धिरित्याह । **लोकस्येति** ॥ १७७२ ॥

**विद्याप्रकरणे चोर्ध्वमात्मनैव विशेषणात् ॥**
**येषां नो ह्ययमात्मेति कार्यलोकनिवृत्तये ॥ १७७३ ॥**

लोकशब्देनात्र परस्यैव ग्रहे हेत्वन्तरमाह । **विद्येति** । षष्ठे स वा एष महानित्यादिविद्याप्रकरणे येषां नोऽयमात्माऽयं लोक इत्यात्मशब्दार्थेन लोकस्य कर्मफलनिवृत्त्यर्थं विशेषणादत्रापि परात्मैव लोकोऽन्यथा पूर्वापरविरोधादित्यर्थः । संदिग्धस्य वाक्यशेषान्निर्णयो भवतीति न्यायं द्योतयितुं हिशब्दः ॥ १७७३ ॥

**अस्माद्ध्येवेति लिङ्गाच्चेल्लोकोऽन्यः स्यात्परात्मनः ॥**
**स्वलोकस्यार्थवादत्वान्नैवमप्युपपद्यते ॥ १७७४ ॥**

प्रकरणेन लोकस्य न परत्वं लिङ्गविरोधादिति शङ्कते । **अस्मादिति** । अत्र लोकशब्देन परग्रहश्चेदस्माद्ध्येवेत्ययुक्तम् । तत्र हि लोकशब्दोक्तात्कामिनः फलोत्पत्तिः श्रुता न च परस्य कारणत्वमपूर्वादिश्रुतेर्न चाविद्यया तथा त्वत्पक्षे विद्याधिकारे तदयोगादस्य च विद्यासूत्रेणैकवाक्यत्वाङ्गीकारादतो लिङ्गेन प्रकरणं बाध्यमिति भावः । अर्थवादस्थं लिङ्गं न प्रकरणाद्बलवदिति मत्वा समाधत्ते । **स्वलोकस्येति** ॥ १७७४ ॥

**साधनान्तरसंभाव्यं यावत्संभाव्यते फलम् ॥**
**कृत्स्नं तदात्मनो लोकात्सिद्धमस्येति नूयते ॥ १७७५ ॥**

अस्मादित्यादेरर्थवादत्वमेव समर्थयते । **साधनान्तरेति** । आत्मज्ञानापेक्षयाऽन्तरशब्दः । लोकाज्ज्ञानादिति शेषः । अस्येति विद्वदुक्तिः । नूयते स्तूयते स्वलोक इति शेषः ॥ १७७५ ॥

**योऽकाम इति वाक्येन ह्ययमेवार्थ उच्यते ॥**
**सर्वं कर्माखिलमिति स्मृतेरपि शुभं वचः ॥ १७७६ ॥**

परस्य प्रत्यक्त्वेन ज्ञानादखिलपुमर्थाप्तिरित्यत्र श्रुतिस्मृती दर्शयति । **योऽकाम इत्यादिना** । उक्तवाक्यसदृशानि वाक्यान्तराण्यपि भूयांसि सन्तीति हिशब्दार्थः । अखिलमनल्पं महदिति यावत् । वचसः श्रुतिमूलत्वेन प्रामाण्यं द्योतयति । **शुभमिति** ॥ १७७६ ॥

**यद्यकृत्स्नोऽपरिज्ञानाज्ज्ञानात्कार्त्स्न्यं समश्नुते ॥**
**आत्मशब्दप्रयोगोऽयं तदा लोके समञ्जसः ॥ १७७७ ॥**

मा भूदस्माद्ध्येवेत्यादिरर्थवादस्तथाऽपि तस्य सर्वात्मत्वप्रदर्शनार्थत्वाद्युक्तमत्र लोक-

शब्देन परात्मग्रहणमित्याह । **यदीति** । लोकशब्दार्थस्याज्ञानात्परिच्छेदो ज्ञानाच्चाप-रिच्छेदो यदि विवक्षितस्तदा तत्राऽऽत्मशब्दो युक्तस्तस्य त्रिधापरिच्छेदशून्यार्थवाचिताया यच्चाऽऽप्नोतीत्यादावुक्तन्यायेन सिद्धेस्तत्समानाधिकरणलोकशब्दस्यापि तदर्थत्वात्परस्यैवात्र लोकत्वमित्यर्थः ॥ १७७७ ॥

**अन्यथाऽव्याकृतावस्थाल्लोकादिति वदेच्छ्रुतिः ॥**
**ब्रह्मलोकनिरासार्थं वचः स्यात्सविशेषणम् ॥ १७७८ ॥**

यदि लोकशब्देन परं हित्वाऽपरो गृह्येत तदा सविशेषणं वाक्यं स्यान्न तथा दृष्टमतोऽपि स्वं लोकमिति प्रकृतः परमात्मैवात्रापि लोक इत्याह । **अन्यथेति** । अस्माद्ध्येवेति श्रुतिरुक्ता । अव्याकृतावस्थाल्लोकादिति विशेषणं किमिति श्रुतिर्वदेत्तत्राऽऽह । **ब्रह्मेति** । स्वं लोकमितिप्रकृतपराख्यलोकस्य त्वत्पक्षेऽनन्तरोक्तव्यक्तब्रह्मलोकस्य च व्यावृत्त्यर्थं विशेषणं वाच्यं न हि त्वया परस्मात्कामसृष्टिरिष्टा तस्यापूर्वादिश्रुतिसिद्धत्वान्नापि ब्रह्मलोकात्तत्सृष्टिः कार्यत्वादतो विशेषणमर्थवदित्यर्थः ॥ १७७८ ॥

**नान्यस्मिन्प्रकृतेऽन्योऽर्थो विरहय्य विशेषणम् ॥**
**ग्रहीतुं सुधिया शक्यो वैश्वानरवरादृते ॥ १७७९ ॥**

विशेषणं विनैवास्मादित्यत्र परापराभ्यामर्थान्तरं किं न स्यादित्याशङ्क्याऽऽह । **नान्यस्मिन्निति** । प्रकृतमतिलङ्घ्याप्रकृतेऽपि सुधियो धीरवतरेदित्याशङ्क्य देवताप्रसादादृते लोकशब्देन सूत्रं नात्र सुग्रहं न हि देवतानुग्रहं विना पूर्वापरविरोधसमाधिरस्तीत्युपसंहरति । **वैश्वानरेति** ॥ १७७९ ॥

**उक्तेन वचसा तावत्स्वाराज्यं विदुषोऽवदत् ॥**
**कथं नूपकरोत्यज्ञो देवादीनिति भण्यते ॥ १७८० ॥**

पूर्वापरपर्यालोचनयाऽऽत्मानमित्यत्र परस्यैव लोकशब्देन ग्रहणमित्युक्त्वा वृत्तं कीर्तयति । **उक्तेनेति** । आत्मानमेवेत्युक्तात्मलोकविदो मुक्तिं तावदस्माद्ध्येवेत्यनेन वाक्येनोक्तवती श्रुतिरित्यनुवादार्थः । अथो अयमित्यादिवाक्यतात्पर्यं वक्तुं पृच्छति । **कथमिति** । देवादीन्प्रत्यज्ञो यथोपकरोति तथा दर्शयितुमुत्तरो ग्रन्थ इत्याह । **भण्यत इति** ॥ १७८० ॥

**वर्णाश्रमाभिमानी सन्नतत्त्वज्ञः पराङ्मतिः ॥**
**कानेषोऽवति पशुवत्कर्मभिः कैश्च सर्वदा ॥ १७८१ ॥**

तत्र प्रश्नं प्रपञ्चयति । **वर्णेति** । य एष त्वात्मानमजानन्ननात्मप्रवणो वर्णाश्रमेष्वहंममाभिमानभागी नरः कान्प्रति पशुवदनवरतमुपकरोति कैश्च कर्मभिरितिप्रश्ननिर्णयार्थमनन्तरवाक्यमित्यर्थः ॥ १७८१ ॥

---

१ ख. ॰थं तूप॰ ।

**सर्वेश्वरेशिता तावत्पूर्वश्रुत्योपवर्णिता ॥**
**यथा त्वज्ञस्य पारार्थ्यं तथेदानीं प्रपञ्च्यते ॥ १७८२ ॥**

यथा पशुरित्यादौ निर्णीतमेतदित्याशङ्क्य तत्राज्ञस्य तान्प्रति पशुवत्पारतन्त्र्यमात्रमुक्तं न त्वेष बुभुत्सितो विशेष इत्याशयवानुक्तेन वचसेत्येतत्प्रपञ्चयति । **सर्वेति** । ब्रह्मेन्द्रादिष्वपि विदुषः स्वातन्त्र्यमस्माद्ध्येवेत्यादिनोक्तमित्यर्थः । भण्यत इत्यत्र सूचितं विशदयति । **यथा त्विति** ॥ १७८२ ॥

**अज्ञातात्मा ह्यविद्योत्थसंघोतो देहलिङ्गवान् ॥**
**आत्मलोकाभिधानाभ्यां देहान्तोऽत्राभिधीयते ॥ १७८३ ॥**

नन्वात्मशब्देन यच्चाऽऽप्नोतीत्यादिन्यायेन सर्वतोऽनवच्छिन्नस्य वस्तुनो लोकशब्देन च स्वं लोकमदृष्ट्वेत्यादावुक्तन्यायेन परस्य ग्रहादयुक्तमस्मिन्प्रकरणे शब्दद्वयमित्याशङ्क्योक्ततात्पर्यवद्वाक्यस्थात्मलोकशब्दयोरर्थं प्रकरणयोग्यमाह । **अज्ञातेति** । अविद्वानाविद्यदेहद्वयवानत्र शब्दद्वयवाच्य इत्यर्थः । अज्ञानवैशिष्ट्यं तत्कार्यवैशिष्ट्ये हेतुरिति हिशब्दार्थः । देहान्तो देहद्वयमध्यनिविष्टस्तदभेदाध्यासवानित्यर्थः । प्रकृतवाक्यमत्रेत्युच्यते ॥ १७८३ ॥

**यागादिकार्यं देवादेर्देहलिङ्गद्वयादृते ॥**
**नान्यथा युज्यते यस्मादतस्तद्वानिहोच्यते ॥ १७८४ ॥**

तत्र युक्तिमाह । **यागादीति** । न हि देहद्वयाभिमानं विना देवादेरुपकारकं कर्माशरीरस्य कल्पते तेन देहद्वयवानेवास्मिन्वाक्ये लोकादिशब्दार्थः ॥ १७८४ ॥

**कर्मणाऽनार्जितो यस्मान्न कश्चिदुपकारकृत् ॥**
**गृही देवादिभिस्तस्मादार्जितोऽभूत्स्वकर्मभिः ॥ १७८५ ॥**

परात्मैवाऽऽत्मानमित्यादाविवात्रापि लोकादिशब्दार्थः श्रुतेः श्रुतसामर्थ्याद्बलवत्त्वादित्याशङ्क्य तस्य कर्तृत्वायोगादशेषप्राणिकर्मार्जितो देहद्वयवानेव सर्वभोग्यतया लोकादिशब्दार्थ इति प्रकरणानुगृहीतं लिङ्गमङ्गीकृत्याऽऽह । **कर्मणेति** । विमतं तत्कर्मार्जितं तदुपकारकत्वात्तद्देहवदिति भावः ॥ १७८५ ॥

**देवादयोऽपि गृहिणा तद्वदेव स्वकर्मभिः ॥**
**आर्जिता एव विज्ञेयास्तन्निमित्तफलेक्षणात् ॥ १७८६ ॥**

देवादेर्गृहस्थोपकारकत्वेऽपि तत्कर्मानार्जितत्ववद्गृहस्थस्य देवाद्युपकारकस्यैव तत्कर्मानार्जितत्वं स्यादिति व्यभिचारमाशङ्क्याऽऽह । **देवादयोऽपीति** । तद्वद्देवादिभिः स्वकर्मवशाद्गृहस्थस्याऽऽर्जितत्ववदित्यर्थः । तेन तेषामार्जितत्वे हेतुमाह ।

---

१ ख. °श्यमु° । २ क. °घाते लिङ्गदेहवा° ।

**तन्निमित्तेति** । गृहिणो देवादिनिमित्तवृष्ट्याद्युपकारदृष्टेस्तेषूपकारकत्वहेतोर्न व्यभिचारः साध्यस्यापि सत्त्वादित्यर्थः ॥ १७८६ ॥

**कर्त्रेह यत्कृतं कार्यं तद्भोगायावकल्पते ॥**
**अकृताभ्यागमो यस्मात्कृतनाशश्च नेष्यते ॥ १७८७ ॥**

यद्यस्योपकारकं तत्कर्मार्जितमिति न व्याप्तिरीश्वरे व्यभिचारादित्याशङ्क्य तस्य स्वरूपेण निर्विकारस्यानुपकारकत्वाद्विशिष्टरूपेण च तत्कर्मार्जितत्वान्नैवमित्याह । **कर्त्रेति ।** इहेति भोगभूमिरुक्ता । तस्य स्वरूपेणानुपकारकत्वे युक्तिमाह । **अकृतेति ।** स चेत्स्वातन्त्र्येणोपकुर्यात्कृतनाशादिः स्यात्स च नेष्टो विधिकाण्डामानत्वापत्तेरतो न तस्य स्वरूपेणोपकारितेति न व्यभिचार इत्यर्थः ॥ १७८७ ॥

**कर्तृत्वं चास्याविद्यातो न स्वतः कर्तृताऽऽत्मनः ॥**
**कर्तैव भोक्ताऽप्यज्ञः स्याद्विद्यायां द्वयमप्यसत् ॥ १७८८ ॥**

कर्त्रेह यदिति वदता कर्तृत्वमात्मनः स्वीकृतं चेत्तादात्म्यश्रुतिविरोधः कर्त्रकर्त्रोरैक्यायोगादन्यथा कर्त्रादिकृतमित्यनुवादासिद्धिरित्याशङ्क्य कर्तृत्वस्य कल्पितत्वान्मैवमित्याह । **कर्तृत्वं चेति** । भोक्तृत्ववत्कर्तृत्वस्य स्वतस्त्वमाशङ्क्य चकारार्थमाह । **कर्तेति** । द्वयोराविद्यत्वे विद्यापोद्यत्वं हेतुमाह । **विद्यायामिति** ॥ १७८८ ॥

**अभुक्तस्याप्युपात्तस्य ह्यविद्यापिहितात्मनाम्[1] ॥**
**आत्मयाथात्म्यविज्ञानात्कर्मणोऽतः क्षयो भवेत् ॥ १७८९ ॥**

**नाभुक्तं** क्षीयते कर्मेतिस्मृतेरुपात्तकर्मणो विना भोगमक्षयाज्ज्ञाने सत्यपि भोक्तृत्वं दुर्वारमित्याशङ्क्याऽऽह । **अभुक्तस्येति** । अज्ञानोपार्जितस्याभुक्तस्यापि कर्मणो यतो ज्ञानान्निवृत्तिः शास्त्रसिद्धाऽतो ज्ञानादूर्ध्वं न भोक्तृत्वमारब्धेन तद्भीम्तु बाधितानुवृत्तिरित्यर्थः । ज्ञानात्कर्मदाहस्य श्रुतिस्मृतिप्रसिद्धत्वं दर्शयितुं हिशब्दः ॥ १७८९ ॥

**सर्वं सर्वस्य कार्यं स्यात्सर्वं सर्वस्य कारणम् ॥**
**असंहतं मिथो नालं जडं वस्तु प्रवर्तितुम् ॥ १७९० ॥**

कर्तृत्वादेराविद्यत्वात्तादात्म्यश्रुत्यविरोधात्कर्त्रा यत्कृतं तद्भोगायेत्यस्य स्थितत्वादुपकारकमुपकार्यकर्मार्जितमित्युक्तम् । तर्हि सर्वस्य सर्वत्र साक्षात्परंपरया वोपकारित्वात्कार्यकारणत्वाद्यव्यवस्थेत्याशङ्क्याव्यवस्थामङ्गीकुर्वन्नाह । **सर्वमिति** । श्रौताव्यवस्थाङ्गीकारे युक्तिमाह । **असंहतमिति ।** न हि जडं वस्तु मिथोऽसंहतं प्रवर्तितुमलं शकटादावदृष्टत्वान्न चाजडस्य प्रवृत्तिः स्वतोऽस्ति कौटस्थ्यादित्यर्थः ॥ १७९० ॥

**सर्वः सर्वस्य भोक्तैव चित्प्राधान्यविवक्षया ॥**
**बाह्योपरक्तबुद्धीनां भोगश्चिदवसानता ॥ १७९१ ॥**

---

[1] ख. °त्मनः । आ° ।

नन्वजडस्य भोक्तृत्वव्यवस्थावत्कर्तृत्वव्यवस्थाऽपि स्यादित्याशङ्क्याऽऽह। **सर्व इति**। घटादेरपि तर्हि भोक्तृतेत्याशङ्क्य चैतन्यप्राधान्येन तदभ्युपगमान्न तस्य साऽस्तीत्याह। **चिदिति**। कोऽयं भोक्तृभोगो न तावत्सुखादिसाक्षात्कारश्चिदात्मनि तदयोगादनात्मनि चानङ्गीकारान्न चान्यो भोगस्तदनिष्टेरित्याशङ्क्याऽऽह। **बाह्येति**। शब्दाद्याकारज्ञानानां बुद्धिवृत्तीनामनुभवव्याप्तत्वं भोगो नासाक्षिका सत्त्ववृत्तिर्जानातिनाऽभिधीयत इति न्यायादित्यर्थः ॥ १७९१ ॥

**मधुब्राह्मणविद्यायामिदमेव प्रवक्ष्यते ॥**
**वस्त्वैकात्म्यप्रसिद्ध्यर्थं प्राधान्येनातियत्नतः ॥ १७९२ ॥**

सर्वं सर्वस्य कारणं सर्वः सर्वस्य भोक्तेत्यत्र **मधुब्राह्मणं** प्रमाणयति। **मध्विति**। किमिति तत्रापि सर्वस्य सर्वत्र कर्तृत्वं भोक्तृत्वं च वक्तव्यमित्याशङ्क्याऽऽह। **वस्त्वैकात्म्येति**। भेदोऽपि तत्र भातीत्याशङ्क्य न तत्र श्रुतेस्तात्पर्यमित्याह। **प्राधान्येति**। अतियत्नः श्रुतेरभ्यासादिः ॥ १७९२ ॥

**एवं सत्ययमात्मेति संहतो जगदात्मना ॥**
**लोको भोज्यः पशुर्ज्ञेयो देवादेरुपकारकः ॥ १७९३ ॥**

सर्वस्य सर्वत्र कारणत्वेन कार्यत्वेन च मिथो बद्धत्वाद्देवादेर्गृहिणश्चान्योन्यकर्मार्जितत्वेऽपि प्रकृते किमायातमित्याशङ्क्य देहद्वयेन विशिष्टो गृही लोकादिशब्दोऽत्र सिध्यतीत्याह। **एवमिति** ॥ १७९३ ॥

**देवादिभिरुपात्तोऽयमित्येतद्गम्यते कुतः ॥**
**अस्यार्थस्य प्रसिद्ध्यर्थं स यदित्यादि भण्यते ॥ १७९४ ॥**

अथो अयमित्यादि व्याख्याय वाक्यान्तरमवतारयितुं पृच्छति। **देवादिभिरिति**। यद्यपि मधुब्राह्मणमनुमानं चात्र प्रमाणीकृतं तथाऽपि प्रमाणान्तरे पृष्टे सदाह। **अस्येति** ॥ १७९४ ॥



**यो देवतां समुद्दिश्य द्रव्यत्यागः स उच्यते ॥**
**याग आसेचनाधिक्याद्धोमाख्यः स्यात्स एव तु ॥ १७९५ ॥**

यजतिजुहोत्योस्त्यागार्थत्वेनाविशेषात्पुनरुक्तिमाशङ्क्य चातुर्थिकमर्थविभागमाह। **यो देवतामिति**। आसेचनं प्रक्षेपः। "यजतिचोदना द्रव्यदेवताक्रियासमुदाये कृतार्थत्वात्" [ जै० सू० ४ । २ । २७ ]। यजति ददाति जुहोतीति श्रुतयागादीनां भेदो न वेति संशये त्यागात्मत्वेनाविशेषाद्भेदो नेति प्राप्ते देवतोद्देशेन द्रव्यत्यागस्य यागत्वात्तस्यैव प्रक्षेपाधिकस्य होमत्वात्परस्वीकारपर्यन्तस्य च दानत्वाद्भेदस्तेषामिति स्थितम्। यजतिशब्दो द्रव्यादीनां समाहारं ब्रूते तस्य तत्र नैराकाङ्क्ष्यादिति सूत्रार्थः।

उक्तं च—जुहोतिरासेचनाधिकः **स्यादिति** । उक्तविभागस्य चातुर्थिकत्वद्योती तुशब्दः ॥ १७९५ ॥

**लोकत्वस्य विधेयत्वाद्यज्जुहोतीत्यनूद्यते ॥**
**नानूक्तिं केचिदिच्छन्ति देवाद्यार्जितसिद्धये ॥ १७९६ ॥**

ननु होमादेरत्र विधेयत्वात्कथं सिद्धवन्निर्देशो न च गृहिणो लोकत्वस्य विधेयत्वादन्यतः सिद्धं होमाद्यनूद्यते तल्लोकत्वस्यापि लोकतः सिद्धस्यानुवादसंभवात्तत्राऽऽह । **लोकत्वस्येति** । न च गृहिणोऽपि धर्मिग्राहकमानादेव देवाद्युपकारित्वं तस्यापि संन्यासविधायकश्रुतिस्मृतिभ्यामनुपकारत्वोपपत्तेर्यज्जुहोतीत्यादिना होमाद्यन्यत्र सिद्धमत्रानूद्यते लोकत्वं तु लोकतः सिद्धमपि विशिष्टाकारेण विधीयते न हि होमादिना देवादीन्प्रत्युपकारित्वं गृहिणोऽन्यत्र सिद्धं न च देवादिमंत्रन्यस्य होमादेरन्यत्रासिद्धिर्धर्मिग्राहिमानादेव तत्सिद्धेरिति भावः । भर्तृप्रपञ्चास्तु यज्जुहोतीत्यादेरनुवादत्वं नेच्छन्तीत्याह । **नेति** । तत्र हेतुः । **देवादीति** । यतो गृही देवादिभिरार्जितोऽतस्तादर्थ्येन होमादि तेन कार्यं वैराग्यस्यापि तैरेव प्रतिबन्धादित्यवश्यकार्यतया होमादेरत्रोच्यमानत्वाद्विधेयमेव तदिह ग्राह्यमित्यर्थः ॥ १७९६ ॥

**नावश्यकार्यता चैषां सिद्धाऽतोऽन्यत्र मानतः ॥**
**नित्यत्वाद्धेतुवचनं न युक्त्याऽतोऽवगम्यते ॥ १७९७ ॥**

तद्दूषयति । **नेति** । चकारोऽवधारणार्थो भिन्नस्थाननिवेशी । होमादीनामिहोच्यमानानामवश्यकार्यता यज्जुहोतीत्यादेरन्यत्रैव यावज्जीवादिश्रुतौ प्रसिद्धा प्रमिता तेषां नित्यत्वात्तन्नेह विधेयता किं त्वनुवाद्यतैवेति तदुपार्जितत्वहेतूक्तिरयुक्त इत्यर्थः ॥ १७९७ ॥

**यच्चाप्यहरहर्वेदमनुब्रूते प्रयत्नवान् ॥**
**ऋषीणां तेन लोकोऽयं गृहस्थो भोज्य उच्यते ॥ १७९८ ॥**

अथ यदनुब्रूते तेन ऋषीणामित्यस्यार्थमाह । **यच्चेति** । चकारः समुच्चयार्थः । दृष्टान्तार्थोऽपिकारः । अहरहर्वेदानुवचनं ब्रह्मयज्ञः । पवित्रपाणित्वप्राङ्मुखत्वादिनियमवत्त्वं प्रयत्नवत्त्वम् । लोकपदस्य व्याख्या भोज्य इति ॥ १७९८ ॥

**उत्तरेष्वपि वाक्येषु समाना योजनेक्ष्यताम् ॥**
**अक्षराणां न तत्रास्ति वस्तु किंचित्तिरोहितम् ॥ १७९९ ॥**

यत्पितृभ्य इत्यादिपूक्तन्यायमतिदिशति । **उत्तरेष्विति** । अक्षरार्थस्य समत्वेऽपि पृथक्तात्पर्यार्थो वाच्य इति चेन्नेत्याह । **न तत्रेति** ॥ १७९९ ॥

**यस्मात्सर्वाणि भूतानि सर्वदोपकरोत्ययम् ॥**
**अविनाशमतस्तानि तस्येच्छन्त्यात्मदेहवत् ॥ १८०० ॥**

यथोक्तहोमादिभिर्देवादीन्प्रत्युपकुर्वतो गृहिणो विरक्त्या प्रतिबन्धसंभवात्तदुपकारि-

त्वव्यावृत्तिरित्याशङ्क्य यथा हेत्यादि व्याचष्टे । **यस्मादिति** । सर्वाणि भूतानि देवादीन्यापिपीलिकान्तानीत्यर्थः । सर्वदा कर्मानुष्ठानयोग्यत्वावस्थायामित्येतत् । अविनाशो ब्रह्मविद्याधीनपशुत्वव्यावृत्तिराहित्यम् ॥ १८०० ॥

**स्वकर्मार्जितसंभोगदायित्वेऽस्ति न कश्चन ॥**
**देवादीनां विशेषोऽत्र गृहस्थस्वात्मदेहयोः ॥ १८०१ ॥**

सर्वैर्भूतैः स्वदेहवत्कर्मिदेहस्यापि पालने हेत्वन्तरमाह । **स्वकर्मेति** । स्वकर्मार्जितत्वे स्वसंभोगदायित्वे चेति यावत् । देवादिषूभयप्रयुक्तभोगाविशेषादित्यर्थः ॥ १८०१ ॥

**ब्रह्मविद्याहुताशेन विनाशोऽस्याप्यकर्तृता ॥**
**अयं नाशो महानस्य ह्यन्यः शक्यश्चिकित्सितुम् ॥ १८०२ ॥**

कर्माधिकारिणं देवादयो रक्षन्तीत्यत्र किमिदं रक्षणमित्याकाङ्क्षायां तदीयकर्तृत्वादिपालनमिति वक्तुं तन्नाशद्वैविध्यमाह । **ब्रह्मविद्येति** । अस्य कर्माधिकारिणो यदि विद्या तदा कर्तृत्वाद्यसंभवो नाशो द्रव्याद्यसंपत्त्या स्थावराद्याप्त्या वा यागादिकर्तृत्वाच्युतिरपि नाशस्तस्येत्यर्थः । तत्राऽऽद्यस्य नाशस्य दुश्चिकित्सत्वात्ततो देवादयो रक्षन्त्येव कर्मिणमिति मत्वाऽऽह । **अयमिति** । महत्त्वे दुश्चिकित्सत्वं हेतुं विवक्षित्वा हीत्युक्तम् । द्वितीये नाशे विशेषमाह । **अन्य इति** । द्रव्याद्यार्जनद्वारेति शेषः । तथा च तथाविधान्नाशान्न कर्मिणं ते रक्षन्तीत्यर्थः ॥ १८०२ ॥

**अतः श्रुतिवचो न्याय्यं तस्मादेषामितीरितम् ॥**
**मा भूत्सर्वस्वहानिर्नो ब्रह्मयाथात्म्यविद्यया ॥ १८०३ ॥**

विद्याकृतकर्तृत्वादिनाशस्य दुश्चिकित्सत्वे देवादीनां मनुष्यसंबन्धिन्यां तस्यामुद्वेगो लिङ्गमित्याह । **अत इति** । कर्मिणो विद्यां विद्विषतां तेषामभिप्रायमाह । **मा भूदिति** । यागादिकर्मणा कर्मिणो देवाद्युपकारितया पशुत्वादेव सर्वस्वतुल्यत्वम् ॥ १८०३ ॥

**अवश्यमृणवत्कृत्यं यावज्जीवादिवाक्यतः ॥**
**यथोक्तं विदितं वेदे तथा स्मृतिवचःसु च ॥ १८०४ ॥**

यथोक्तं कर्म कुर्वन्यद्यपि देवादीन्प्रत्युपकरोति तथाऽपि न तत्कर्तृत्वमावश्यकं मानाभावादित्याशङ्क्य तद्वा एतदित्यस्यार्थमाह । **अवश्यमिति** । यथोक्तं भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञश्चेत्येवंरूपं पञ्चमहायज्ञाख्यं कर्मेति यावत् । आदिपदेनाहरहर्भूतेभ्यो बलिं हरेदहरहर्दद्यादहरहः स्वधां कुर्यादहरहः स्वाहा कुर्यात्तस्मात्स्वाध्यायोऽध्येतव्य इत्यादिश्रुतिसंग्रहः ।

"न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते" ।
'नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः' ।

१ ख. °र्वैर्देवैः स्व° ।

'लोकोऽयं कर्मबन्धनः'। 'तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर'। 'कुरु कर्मैव तस्मात्त्वम्'।

'तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते'।
'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः'।
'ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि'।
'यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्'।
'पञ्चैतान्यो महायज्ञान्न हापयति शक्तितः।
स्वगृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते'।
'देवतातिथिभृत्यानां पितॄणामात्मनश्च यः।
न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति'।

इत्येवंविधानि स्मृतिवचांसि। अवश्यं नियमेन कर्तव्यमिति यावत्। ऋणवत्तस्य नियमेन प्रतिविधेयत्ववादित्यर्थः ॥ १८०४ ॥

अवदानविधौ तच्च विशेषेण विचारितम् ॥
ऋणं ह्येत्यर्थवादेषु तस्मात्कुर्याद्यथोदितम् ॥ १८०५ ॥

ननु श्रुतमपि विचारं विना नानुष्ठेयं न हि स्वर्गादनादि श्रुतमित्येवानुष्ठीयत इत्याशङ्क्य मीमांसितमित्यस्यार्थमाह। अवदानेति। अस्यार्थः — तदेतदवदयते यद्यजते स यदग्नौ जुहोति तद्वा येभ्यस्तदवदयते तस्माद्यत्किंचिदग्नौ जुह्वति तदवदानं नामेत्यवदानविधिप्रकरणे गृहिणा यज्ञादि देवादीन्प्रत्यृणवदवश्यकार्यमित्यर्थवादेष्वृणं ह वाव जायते जायमानो योऽस्ति स देवेभ्य ऋषिभ्यः पितृभ्यो मनुष्येभ्यः स यदेव यजेत तेन देवेभ्य ऋणं जायते तद्धि तेभ्यः करोति यदेवान्यजते यद्देवेभ्यो जुहोति। अथ यद्वेदानन्ब्रुवीत तेन ऋषिभ्य ऋणं जायते तद्धि तेभ्यः करोति यदनुब्रूत ऋषीणां निधिप इति ह्यनूचानमाचक्षते। अथ यदेव प्रजामिच्छेत तेन पितृभ्य ऋणं जायते तद्धि तेभ्यः करोति यत्प्रजामिच्छत इत्येवंप्रकारेण दृष्टत्वात्तस्यानृणित्वायावश्यकार्यं यज्ञादि सिद्धं तस्माद्यथोक्तं कर्म विशिष्टफलं नियमेन गृहिणा कार्यमन्यथा भूतहिंसाप्रसङ्गादिति ॥ १८०५ ॥

प्रवृत्तौ च निवृत्तौ च यथोक्तस्याधिकारिणः ॥
स्वातन्त्र्यं सति संसारसृती कस्मात्प्रवर्तते ॥ १८०६ ॥

आत्मैवेदमित्यादेरुत्तरस्य पातनिकां करोति। प्रवृत्तौ चेति। अथ योऽन्यामित्या विना प्रवृत्तिमार्गः सूत्रितो निवृत्तिमार्गश्चाऽऽत्मेत्येवेति सूत्रित उभयत्र त्रैवर्णिकस्य

सामर्थ्ये तुल्ये निवृत्तिमार्गे त्यक्त्वा प्रवृत्तिमार्गे कस्मादेष प्रवर्तते तत्कारणं वाच्यमित्यर्थः ॥ १८०६ ॥

**न तु विध्वस्तनिःशेषसंसारानर्थवर्त्मनि ॥**
**निवृत्तिलक्षणे वाच्यं केनायं प्रेर्यते वशः ॥ १८०७ ॥**

प्रश्नमेव व्यतिरेकमुखेण स्फुटयति। **न त्विति।** विशिष्टेऽपि निवृत्तिमार्गे केन कारणेनायं परतन्त्रवन्न प्रवर्तते तद्वाच्यमित्यर्थः ॥ १८०७ ॥

**रक्षन्ति ननु देवास्तं न विशिष्टाधिकारिणम् ॥**
**तेऽपि रक्षन्ति यत्नेन न च सामान्यमानुषम् ॥ १८०८ ॥**

यथोक्ताधिकारिणो देवादिर्भा रक्षणं प्रवृत्तिमार्गे नियमेन प्रवर्तकमिति शङ्कते। **रक्षन्तीति।** गृहस्थादिकं कर्मणि प्राप्तस्वामित्वं स्वगोचरं तेऽपि रक्षन्ति न ब्रह्मचारिणं नैष्ठिकादिसर्वाश्रमसाधारणमतो मनुष्यमात्रस्य कर्ममार्गे प्रवृत्तौ देवादिरक्षणस्याहेतुत्वाद्ब्रह्मचारिणो निवृत्तिं त्यक्त्वा प्रवृत्तिपक्षपाते कारणं वाच्यमित्याह। **नेत्यादिना।** तत्र रागाद्युपनायकत्वेन विद्यातो विमुखीकरणं यत्नः ॥ १८०८ ॥

**अन्यथा कृतनाशः स्यादकृताभ्यागमस्तथा ॥**
**सामान्यनररक्षायां तस्मादेतदनुत्तरम् ॥ १८०९ ॥**

मनुष्यमात्रं कर्मण्येव ते बलात्प्रवर्तयन्ति तेषामचिन्त्यशक्तित्वादित्याशङ्क्याऽऽह। **अन्यथेति।** तस्य व्याख्यानं सामान्येत्यादि। सर्वाश्रमसाधारणस्य ब्रह्मचारिणो नरस्य कर्मण्येव नियमनलक्षणायां देवादिरक्षायामकृतागमादिः स्यात्तेषां तत्रापि शक्तत्वात्तस्य च कर्मकाण्डप्रामाण्यवादिनोऽनिष्टत्वात्तस्मात्प्रवर्तके पृष्टे देवादिभी रक्षणमधिकारिणो नियमेन प्रवृत्त्यनुरागे हेतुरित्यनुत्तरमित्यर्थः ॥ १८०९ ॥

**नाप्यविद्येति वक्तव्यं तस्या ध्वान्तैकमात्रतः ॥**
**मिथ्याधीमात्रहेतुत्वात्प्रेरकत्वं न युक्तिमत् ॥ १८१० ॥**

प्रत्यगविद्या यथोक्ताधिकारिणो नियमेन प्रवृत्त्यनुरागे हेतुरित्याशङ्क्याऽऽह। **नापीति।** अविद्याया वस्त्वावरणमात्रत्वाद्वस्तुनि मिथ्याधीजनकत्वमेव तन्न स्वरूपेण प्रवर्तकत्वं स्वापादावदृष्टेरित्यर्थः ॥ १८१० ॥

**अनर्थपरिपाकत्वमपि जानन्प्रवर्तते ॥**
**पारतन्त्र्यमृते दृष्टा प्रवृत्तिर्नेदृशी क्वचित् ॥ १८११ ॥**

तस्याः स्वरूपेणाप्रवर्तकत्वे हेत्वन्तरमाह। **अनर्थेति।** हननादेर्नरकफलत्वं निषेधशास्त्रान्निश्चिन्वन्नपि क्रोधादिना तत्र प्रवर्तमानो दृश्यते तन्न सा स्वातन्त्र्येण प्रवर्तिके-

---

१ क. °वर्त्यते।

त्यर्थः । हेतुं विना तर्हि पुरुषस्य कर्मणि प्रवृत्तिः स्यादित्याशङ्क्याऽऽह । **पारतन्त्र्यमिति** । ईदृशी फलपर्यवसायिनीति यावत् । क्वचिदित्यनुष्ठातृपुरुषवचनम् ॥ १८११ ॥

**तस्माच्छ्रेयोर्थिनः पुंसः प्रेरकोऽनिष्टकर्मणि ॥**
**वक्तव्यस्तन्निरासार्थमित्यर्था स्यात्परा श्रुतिः ॥ १८१२ ॥**

परिशिष्टमाह । **तस्मादिति** । प्रवर्तकं विना प्रवृत्त्ययोगाद्गर्भवासादिहेतुत्वेनानिष्टाग्निहोत्रादावस्य प्रेरको वाच्यस्तद्वचनं च ज्ञात्वा श्रेयोर्थिना परिहर्तुमित्यर्थः । कर्मण्येव नियमेन प्रवर्तकस्य वाच्यत्वात्कामात्मकत्वप्रदर्शनार्थोत्तरा श्रुतिरित्याह । **इत्यर्थेति** ॥ १८१२ ॥

**प्राप्ताशेषपुमर्थोऽयं स्वत एवेह मानवः ॥**
**निरस्ताशेषानर्थश्च तन्मोहाद्विपरीतधीः ॥ १८१३ ॥**

एषणा काम इति भाष्यमाक्षिपति । **प्राप्तेति** । इह शास्त्रालोचनायामिति यावत् । अप्राप्ते हि पुमर्थे स्मरणविपरिवर्तिनि कामो भवत्यात्मा च प्राप्तपुमर्थोऽनतिशयानन्दत्वान्निरस्तसर्वानर्थत्वाच्चातो नास्य कामः संभवतीत्यर्थः । उक्तरूपस्यापि स्वाज्ञानात्तत्सिद्धिरिति समाधत्ते । **तन्मोहादिति** ॥ १८१३ ॥

**अनाप्तपुरुषार्थोऽयं निःशेषानर्थसंकुलः ॥**
**इत्यकामयतानाप्तान्पुमर्थान्साधनैर्जडः ॥ १८१४ ॥**

विपरीतधियं प्रकटयति । **अनाप्तेति** । अज्ञस्य तथा कामोत्पत्तिमाह । **इत्यकामयतेति** ॥ १८१४ ॥

**जिहासति तथाऽनर्थानविद्वानात्मनि श्रितान् ॥**
**अविद्योद्भूतकामः सन्नथो खल्विति च श्रुतिः ॥ १८१५ ॥**

अज्ञानात्प्रेप्सामुक्त्वा ततो जिहासामाह । **जिहासतीति** । आत्मनि श्रितानात्माश्रयत्वेन कल्पितानिति यावत् । कामस्याऽऽविद्यस्य प्रवर्तकत्वमाह । **अविद्येति** । प्रवर्तते कर्मण्येवेति शेषः । कामहेतुरविद्यैव प्रवृत्तिं करिष्यति किमान्तरालिकेन कामेनेत्याशङ्क्य तत्प्रवर्तकत्वे श्रुतिमाह । **अथो इति** । चकारः शङ्कानिरासार्थः । **अथो** खल्वाहुः काममय एवायं पुरुष इत्यादिश्रुतिस्तस्य प्रवृत्तौ प्राधान्यमाहेत्यर्थः ॥ १८१५ ॥

**अकामतः क्रिया काचिद्दृश्यते नेह कस्यचित् ॥**
**यद्यद्धि कुरुते किंचित्तत्तत्कामस्य चेष्टितम् ॥ १८१६ ॥**

तत्र **मनुवचनमपि** मानमित्याह । **अकामत इति** । इहेति क्रियाभूमिरुक्ता । तत्रैवान्वयमाचष्टे । **यद्यद्धीति** ॥ १८१६ ॥

**काम एष क्रोध एष इत्यादिवचनं स्मृतेः॥**
**प्रवर्तको नापरोऽतः कामादित्यवसीयते ॥ १८१७ ॥**

तत्रैव भगवद्वाक्यमादत्ते । **काम इति** । प्रामाणिकं तत्प्रवर्तकत्वमुपसंहरति । **प्रवर्तक इति** ॥ १८१७ ॥

**प्राग्दाराद्यभिसंबन्धादेकाक्येव पुमानभूत् ॥**
**ऊर्ध्वं दारादिसंबन्धात्पुत्रपौत्रादिसंयुतः ॥ १८१८ ॥**

कामस्य प्रवर्तकत्वं प्रतिपाद्याऽऽत्मेत्यादि व्याचष्टे । **प्रागिति** । भार्यादिसंबन्धात्पूर्वं सर्वं पुत्रादि ब्रह्मचारिमात्रमासीदित्यत्र हेतुमाह । **ऊर्ध्वमिति** ॥ १८१८ ॥

**विस्तारितकुटुम्बं तं कस्मैचित्कश्चिदन्तिके ॥**
**व्याचष्टे कामसंभूतं पुत्रपौत्रादिविस्तरम् ॥ १८१९ ॥**

एक एवेत्यस्यार्थं लोकप्रसिध्द्या दर्शयति। **विस्तारितेति**। तं ब्रह्मचारिणमुक्तविशेषणं दारसंग्रहादूर्ध्वं समीपे दृष्ट्वा कश्चित्कस्मैचिद्व्याकरोतीति योजना । आद्यं विशेषणं स्फुटयति । **कामेति** ॥ १८१९ ॥

**प्राग्दारोद्वहनात्कृत्स्नं कुटुम्बं यत्प्रपश्यसि ॥**
**आत्मैवैकः पुमानासीन्नाऽऽसीत्पुत्रादि किंचन ॥ १८२० ॥**
**आत्मप्रत्ययनिर्ग्राह्यं केवलं प्रागभूदिदम् ॥**
**पुत्रपौत्रादिसंभिन्नं कुटुम्बं यत्प्रपश्यसि ॥ १८२१ ॥**

व्याख्याप्रकारं प्रकटयति । **प्रागिति** । यत्कुटुम्बमस्य संप्रति पश्यसि तत्सर्वं पूर्वं विवाहादेकाकी ब्रह्मचार्येवाऽऽसीन्न पुत्रादि पृथगस्मात्किंचिदभूदित्यक्षरार्थः । तदेव मानेन द्रढयति । **आत्मेति** । अहमेकाक्यस्मीति ब्रह्मचारिणः स्वानुभवाद्दृश्यं कुटुम्बं विवाहात्प्राक्केवलं तन्मात्रमभूदित्यर्थः । इदंशब्दार्थमाह । **पुत्रेति** ॥१८२०॥१८२१॥

**कामाद्यशेषबीजात्माऽप्रज्ञातात्मैकतत्त्वकः ॥**
**सोऽतिग्रहग्रहाविष्टो विपरीतार्थनिश्चयः ॥ १८२२ ॥**

सोऽकामयतेत्यत्र सशब्दार्थमाह । **कामादीति** । कामक्रोधादेरशेषस्य बीजमज्ञानं तत्र तादात्म्याध्यासादनतिशयानन्दाद्यात्मकात्मज्ञानशून्यस्तस्मादेव कल्पितान्प्रेप्सितान्कामयमानस्तेन कामरूपातिग्रहाख्यग्रहेण ग्रस्तः शब्दादिविषयनिषण्णधीः सशब्दार्थ इत्यर्थः ॥ १८२२ ॥

**स्वतः कृत्स्नोऽप्यसंबोधादकृत्स्नो विपरीतधीः ॥**
**तृष्णया प्रहितो बालः सोऽकामयत मानवः ॥ १८२३ ॥**

---

१ क. ग. °चसः स्मृ° । २ ग. स्मृतौ । ३ ख. °थक्तस्मा° ।

विपरीतं च निश्चयं स्फोरयति । **स्वत इति** । उक्तं सशब्दार्थमनूद्याकामयतेत्यस्यार्थमाह । **तृष्णयेति** । तयोर्गूढत्वागूढत्वाभ्यां भेदः । तत्प्रेरितत्वे हेतुमविवेकमाह । **बाल इति** । विपरीतज्ञानवत्त्वमपि तृष्णावत्त्वे हेतुरित्याह । **मानव इति** ॥ १८२३ ॥

**कर्माधिकारहेतुर्मे जाया स्यात्कर्मसाधनम् ॥**
**पूर्वपूर्वस्य हेतुत्वमथशब्दैरिहोच्यते ॥ १८२४ ॥**

जाया मे स्यादित्यस्यार्थमाह । **कर्मेति** । कर्मणि स्वामित्वेन पुंसः संबन्धे कथं जाया हेतुस्तत्राऽऽह । **कर्मसाधनमिति** । उत्तरवाक्यस्थाथशब्दत्रयस्यार्थमाह । **पूर्वेति** ॥ १८२४ ॥

**अथ प्रजात्मना तस्यां जायेय स्थास्नुकर्मणे ॥**
**स पुत्रेणैवेति वचस्तथा च श्रूयते स्फुटम् ॥ १८२५ ॥**

पुत्रं प्रति जायाया हेतुत्वं वदन्नथ प्रजायेयेत्यस्यार्थमाह । **अथेति** । स्वकार्यशेषं स्वमृतेरूर्ध्वमपि पुत्रद्वारा कर्तुं तद्रूपेण पितैव जायत इत्यर्थः । **स** पुत्रेणैवास्मिँल्लोके प्रतितिष्ठतीति वाक्यमत्र प्रमाणमित्याह । **स पुत्रेणेति** ॥ १८२५ ॥

**दैवमानुषवित्तेन संपन्नोऽहमथोत्तरम् ॥**
**कर्म कुर्यां यथाप्राप्तं दृष्टादृष्टार्थसिद्धये ॥ १८२६ ॥**

अथ वित्तमित्यादि व्याचष्टे । **दैवेति** । वित्तसंपत्तेरनुष्ठानाङ्गत्वं वक्तुमथोत्तरमित्युक्तम् । यथाप्राप्तं शास्त्रदृष्टं रूपमनतिक्रम्येति यावत् । अनुष्ठानफलमाह । **दृष्टेति** ॥ १८२६ ॥

**एतावानेव कामोऽस्य नातोऽन्योऽर्थोऽवशिष्यते ॥**
**साध्यसाधनरूपे हि द्वे एवात्रैषणे यतः ॥ १८२७ ॥**

एतावान्वै काम इत्यस्यार्थमाह । **एतावानिति** । साधनं साध्यं चेत्येतावानेवाज्ञस्य कामयितव्यो विषयो नान्योऽस्तीत्यर्थः । तत्र हेतुमाह । **साध्येति** । एषणायाः सर्वं स्यात्तत्रैवान्तर्भावार्थो हिशब्दः । अत्रेति व्यवहारभूमिरुक्ता ॥ १८२७ ॥

**एषणे एव चाप्येते साध्यसाधनकल्पिते ॥**
**पुमर्थस्यानवसितेरैकान्त्यस्याप्रसिद्धितः ॥ १८२८ ॥**

अथ नानयोरेषणात्वं पुमर्थहेतुत्वेन तद्विषयत्वात्तत्राऽऽह । **एषणे इति** । वैशब्दपर्यायाच्चकारादुभयथावधारणात्तत्पुरुपार्थत्वमप्रामाणिकमित्यर्थः । पुत्रादेः स्वर्गादेश्च पुमर्थत्वप्रसिद्धेरयुक्तमेषणात्वेनानर्थत्वमन्यथा सोऽकामयतेत्युपक्रमभङ्गः स्यादित्याशङ्क्य ज्ञानं विना पुमर्थासमाप्तेराभासविषयौ प्रसिद्ध्युपक्रमावित्याह । **पुमर्थस्येति** ॥ १८२८ ॥

---

१ क. ँति च ।

कर्मसाधनरूपत्वाज्जायादेर्न पुमर्थता ॥
लोकत्रयासंगृहीतेरेतावानिति दुर्घटम् ॥ १८२९ ॥

पुत्रादेरपुमर्थत्वे क्लेशरूपं कर्म प्रति हेतुत्वे हेत्वन्तरमाह । **कर्मेति** । न हि पुरुषार्थसाधनस्य पुरुषार्थत्वमतिप्रसङ्गादित्यर्थः । साधनस्योक्तत्वात्तस्मिन्नेतावानित्युदिते कामशब्दप्रयोगादनर्थत्वं युक्तं लोकत्रयस्य पूर्वमसंग्रहादेतावानित्यननुवादात्तस्य कामशब्देनानर्थत्वमशक्यं घटयितुमिति शङ्कते । **लोकेति** ॥ १८२९ ॥

[^1]न लोकत्रयसाध्यस्य साधनैकव्यपाश्रयात् ॥
आक्षिप्तसाध्यं साध्यत्वादितरत्कर्मसाधनम् ॥ १८३० ॥

तस्य साध्यत्वादेव साधनबद्धत्वात्तदतिरेकेणायोगात्तत्तावदाक्षिप्तसाधनं साधनमपि साध्यबद्धत्वादाक्षिप्तसाध्यमतः साधनेऽभिहिते साध्यमर्थादुक्तमित्येतावानित्युभयमनूद्य तस्य कामशब्देनानर्थत्वं वक्तुं युक्तमित्याह । **नेत्यादिना** ॥ १८३० ॥

लोकत्रयफलं यस्मादुत्पत्त्याद्यात्मकं मतम् ॥
कर्मानाक्षिप्य नाऽऽत्मानं तच्चापि लभते स्वतः ॥ १८३१ ॥

लोकत्रयाख्यं साध्यं साधनाक्षेपकमित्येतद्व्यतिरेकमुखेनाऽऽह । **लोकेति** । तस्मादस्ति तस्य साधनसापेक्षत्वमिति शेषः । तस्यान्यानपेक्षस्य स्वरूपलाभाभावाच्च साधनाक्षेपकत्वमित्याह । **कर्मेति** ॥ १८३१ ॥

समाप्तिः कर्मणो नापि लोकत्रयफलादृते ॥
अन्तर्णीतफलं तस्मादिह साधनमुच्यते ॥ १८३२ ॥

साधनं साध्याक्षेपकमित्येतदपि व्यतिरेकद्वारेणाऽऽह । **समाप्तिरिति** । फलमन्तरेण साधनं न पर्यवस्यतीत्यत्र हेतुमाह । **अन्तर्णीतेति** । इहेति साध्यसाधनव्यवहारोक्तिः । तस्मात्तादृक्श्रुतमपि फलमाक्षिपतीति शेषः ॥ १८३२ ॥

एषणैकैव तेनेयमुत्तरत्राभिधास्यते ॥ १८३३ ॥
अर्थात्साध्याभिधानं स्यात्साधनाभिहितौ यथा ॥
भोजनेऽभिहिते पुंसो ह्यर्थात्तृप्तिः प्रतीयते ॥ १८३४ ॥

साध्यसाधनयोर्मिथो बद्धत्वं हेतूकृत्य वाक्यशेषप्रवृत्तिमाह । **एषणेति** । उत्तरत्रोभे ह्येते एषणे एवेत्यत्रेति यावत् । उक्ते साधने साध्यमार्थिकमेतद्दृष्टान्तेनाऽऽह । **अर्थादिति** । दृष्टान्ते लोकप्रसिद्धयर्थो हिशब्दः ॥ १८३३ ॥ १८३४ ॥

साध्यसाधनरूपे द्वे एषणे काम उच्यते ॥
अयथावस्तुरूपत्वादात्माज्ञानैकहेतुके ॥ १८३५ ॥

साधनोक्तौ साध्यस्यार्थादुक्तेरेतावानिति द्वयोरनुवादेऽपि कथमेषणात्वे तत्र काम-

[^1]: १ ख. नास्ति ।

शब्दो न हि तौ पर्यायौ न तदवाच्यत्वे तयोरनर्थतेत्याशङ्क्याऽऽह । **साध्येति** । प्रवृत्तिनिमित्तभेदाभावादेषणाकामशब्दयोरिष्टं पर्यायत्वमिति भावः । उभयोरपि कामत्वविधायिश्रुतेरभिप्रायमाह । **अयथेति** । मिथ्याधीमूलस्य कामस्यावस्त्वनुसारित्वात्तद्रूपे साध्यसाधने स्वाज्ञानमात्रनिमिते इत्यर्थः ॥ १८३५ ॥

**विश्वासोऽतोऽत्र विदुषा न कार्यः स्वप्नलाभवत् ॥**
**व्युत्थायैवैषणाभ्योऽतः प्रत्यग्ज्ञानं समाश्रयेत् ॥ १८३६ ॥**

तयोरज्ञानकृतत्वेऽपि किं स्यादत आह । **विश्वास इति** । कुत्र तर्हि स कार्यो विदुषेति तत्राऽऽह । **व्युत्थायेति** । कामस्यानर्थत्वात्साध्यसाधनयोश्च तन्मात्रत्वात्स्वर्गादौ पुमर्थताविश्वासं त्यक्त्वा स्वप्नलाभतुल्याभ्यस्तिसृभ्य एषणाभ्यो व्युत्थानं संन्यासात्मकं कृत्वा काङ्क्षितमोक्षहेतुज्ञानमुद्दिश्य श्रवणाद्यावर्तयेदित्यर्थः ॥ १८३६ ॥

**इच्छन्नपि यतो नातो भूयो विन्देदतोऽधिकम् ॥**
**तस्मादविद्याभूमिष्ठः कृत्स्न एतावता भवेत् ॥ १८३७ ॥**

एतावानेवेति कुतोऽवधारणं कामानामानन्त्यादित्याशङ्क्य नेच्छन्नित्यादेरर्थमाह । **इच्छन्निति** । अतो द्वयादधिकमिच्छन्नपि नास्मादन्यदज्ञो लभेत साधनाद्यतिरिक्तदृष्टादृष्टलाभाभावात्तद्युक्तमवधारणमित्यर्थः । यस्मात्साधनाद्यन्यकामयितव्याभावस्तस्मादविद्यावस्थायां तत्संपत्तिमात्रेण पूर्णेति फलितमाह । **तस्मादिति** ॥ १८३७ ॥

**एकैकमपि जायादेर्यावन्नाऽऽप्नोति पूरुषः ॥**
**अकृत्स्नस्तावदस्मीति जडः संभावयत्ययम् ॥ १८३८ ॥**

तस्मादपीत्यादेस्तात्पर्यमुक्त्वा स यावदित्यादि व्याकुर्वन्नज्ञस्य पुत्रादिना पूर्णेत्यत्र व्यतिरेकमाह । **एकैकमिति** । तथासंभावनायामज्ञत्वं पुंसो हेतुरिति सूचयति । **जड इति** ॥ १८३८ ॥

**यावदेते यथोद्दिष्टा आप्ताः स्युः कामपूर्वकाः ॥**
**कृत्स्नोऽस्मीति तदाऽऽत्मानं संभावयति मानवः ॥ १८३९ ॥**

तत्रैवान्वयमुपन्यस्यति । **यावदिति** । यदेत्यर्थः । कामपूर्वत्वं जायादीनां सोऽकामयतेत्युपक्रमादज्ञत्वेन मनुष्याभिमानित्वम् । तत्र हेतू करोति । **मानव इति** ॥ १८३९ ॥

**आत्मजायाप्रजावित्तविद्याभिः पञ्चभिः कृतम् ॥**
**कर्म पाङ्क्तं भवेदेवं पाङ्क्तेन च्छन्दसा मितम् ॥ १८४० ॥**

तस्यो कृत्स्नतेत्याद्यवतारयितुं पातनिकामाह । **आत्मेति** । पञ्चसंख्यायोगमुपजीव्योपास्त्युपयोगित्वेन पञ्चाक्षरा पङ्क्तिरिति श्रुतिमनुसरन्नाह । **एवमिति** ॥ १८४० ॥

**बाह्यस्य कर्मणस्तावदात्माद्यैः पाङ्क्ततोदिता ॥**
**तपःसत्त्वथ पाङ्क्त्वमुच्यतेऽध्यात्मकर्मणः ॥ १८४१ ॥**

कर्ममात्रस्य पाङ्क्तत्वमुक्त्वा तस्येत्यादिवाक्यस्य विषयपरिशेषार्थं सोऽकामयतेत्यादिना सिद्धमनुवदति । **बाह्यस्येति** । जायादिष्वसत्स्वाध्यात्मिकं ध्यानकर्मणः कथं पाङ्क्तत्वमित्यपेक्षायां तस्येत्याद्यादत्ते । **तेष्विति** । प्रागुक्तशङ्काद्योतनार्थोऽथशब्दः ॥ १८४१ ॥

**बाह्याध्यात्मिकभेदेन कर्मैतदुभयात्मकम् ॥**
**पाङ्क्तं यथा तद्भवति तथैतदभिधीयते ॥ १८४२ ॥**

तदेव प्रपञ्चयितुं कर्मद्वैविध्यमाह । **बाह्येति** । तद्बाह्यं कर्म पञ्चभिः कृतत्वाद्यथापाङ्क्तं तथैतदाध्यात्मिकध्यानकर्म पाङ्क्तमुच्यते तस्येत्यादिनेत्याह । **पाङ्क्तमिति**॥१८४२॥

**अध्यात्मं मन एवाऽऽत्मा तदायत्तत्वकारणात् ॥**
**वाग्जायादिप्रवृत्तीनां यजमानवदेव तत् ॥ १८४३ ॥**

मन एवास्याऽऽत्मेत्यस्यार्थमाह । **अध्यात्ममिति** । देहमधिकृत्य यो यज्ञस्तत्र मनसि यजमानदृष्टिः कार्येत्यर्थः । आरोपे हेतुमाह । **तदायत्तत्वेति** । अतो मनसो यजमानसाम्याद्युक्ता तत्र तद्दृष्टिरित्याह । **यजमानवदिति** ॥ १८४३ ॥

**वाक्क जायेति विज्ञेया तदधीनत्वकारणात् ॥**
**यद्ध्यायतीह मनसा वाचा वक्ति तदेव हि ॥ १८४४ ॥**

वाग्जायेत्यस्यार्थमाह । **वागिति** । वाचि जायादृष्ट्यध्यासे हेतुमाह । **तदिति** । जायाया यजमानाधीनत्ववद्वाचो मनोधीनत्वे तत्र मानमाह । **यदिति** । इहेति बुद्धिपूर्वकव्यवहारोक्तिः । यद्धि मनसा ध्यायति तद्वाचा वदतीतिवन्मनः पूर्वो वागुत्तर इतिश्रुत्यन्तरसंग्रहार्थो हिशब्दः ॥ १८४४ ॥

**संप्रधार्य मनो वाचा मन्त्रलौकिकरूपया ॥**
**अथ प्रस्पन्दतेऽत्यर्थं सा क्रिया प्राण उच्यते ॥ १८४५ ॥**

प्राणः प्रजेत्यत्र प्राणशब्दार्थमाह । **संप्रधार्येति** । मनसा विषयं निश्चित्य तत्र द्विरूपया वाचा तदेव मनोऽतिशयेन चेष्टते सा चोभयनिर्वर्त्या चेष्टा प्राण इत्यर्थः । प्राणं प्रति वाङ्मनसयोर्मातापितृत्वप्रसिद्धिं हेतूकर्तुमथेत्युक्तम् ॥ १८४५ ॥

**आगमार्थं विनिश्चित्य मनसाऽथ प्रवर्तते ॥**
**प्राणः प्रजेति तां चेष्टां प्राहुर्वेदविदो जनाः ॥ १८४६ ॥**

तमनूद्य तस्मिन्प्रजादृष्टिः कार्येति वाक्यार्थमाह । **आगमेति** । वाचा सहेति वक्तुमथेति प्रयुक्तम् । उक्तेऽर्थे वैदिकीं प्रसिद्धिमनुकूलयितुं वेदाविद इति विशेषणम् ॥ १८४६ ॥

---

१ ग. वाक्तु । २ क. ग. °या मनोधी° ।

**द्विधैवाऽऽध्यात्मिकं वित्तं कार्यभेदात्प्रचक्षते ॥**
**दैवमानुषताऽप्यस्य साधनत्वोपचारतः ॥ १८४७ ॥**

चक्षुरित्यादेरर्थं वक्तुमाध्यात्मिके वित्ते द्वैविध्यमाह । **द्विधेति** । चक्षुः श्रोत्रमित्याध्यात्मिकवित्तद्वैविध्ये हेतुमाह । **कार्येति** । चक्षुषा रूपस्य श्रोत्रेण शब्दस्योपलब्धिरिति कार्यभेदादिति यावत् । तत्र विदुषां संप्रतिपत्त्यर्थं प्रचक्षत इति प्रयोगः । चक्षुषो मानुषत्वं श्रोत्रस्य दैवत्वं च कथं श्रुत्योक्तमित्याशङ्क्याऽऽह । **दैवेति** । चक्षुः श्रोत्रं च वित्तद्वयसाधनमतोऽस्योपचाराद्दैवत्वं मानुषत्वं चेत्यर्थः ॥ १८४७ ॥

**परीक्ष्य चक्षुषा यस्माल्लभते गोधनादिकम् ॥**
**चक्षुः स्यान्मानुषं वित्तं यथाऽऽयुर्घृतमुच्यते ॥ १८४८ ॥**

अध्यात्मं वित्तभेदमुक्त्वा तस्य दैवत्वं मानुषत्वं च साधितमिदानीं चक्षुर्मानुषमित्यादि वाक्यं योजयति । **परीक्ष्येति** । चक्षुःशब्दात्पूर्वं तस्मादिति प्रयोक्तव्यम् । चक्षुष्यौपचारिकी मानुषवित्तदृष्टिरित्यत्र दृष्टान्तमाह । **यथेति** ॥ १८४८ ॥

**दैवभावाप्तितो[1] दैवं ज्ञानं वित्तमिहोच्यते ॥**
**तत्साधनत्वाच्छ्रोत्रस्य श्रोत्रमाध्यात्मिकं धनम् ॥ १८४९ ॥**

चक्षुषि मानुषवित्तदृष्टिं कृत्वा श्रोत्रे दैववित्तदृष्टिं वक्तुं तत्स्वरूपमाह । **दैवेति** । इहेति वित्तद्वयनिर्धारणार्था सप्तमी । श्रोत्रं दैवमित्यादेरर्थमाह । **तत्साधनत्वादिति** । श्रोत्रस्य श्रवणद्वारा ज्ञानहेतुत्वात्तस्मिन्नध्यात्मविषये दैववित्तदृष्टिरित्यर्थः ॥ १८४९ ॥

**बाह्यवागादिचेष्टा च या चान्तःकरणाश्रया ॥**
**देहेऽभिव्यज्यते यस्मादात्मा कर्म ततो भवेत् ॥ १८५० ॥**

आत्मैवेत्यादेरर्थमाह । **बाह्येति** । आत्मा शरीरं तत्र कर्मदृष्टिस्तत्र द्विविधकर्मव्यक्तेरित्यर्थः ॥ १८५० ॥

**संमितः संख्यया पादैः पाङ्क्तस्य च्छन्दसो यतः ॥**
**पाङ्क्तो यज्ञस्ततः सद्भिः सर्वदा समुदाहृतः ॥ १८५१ ॥**

स एष इत्यादेरर्थमाह । **संमित इति** । बाह्यश्चाऽऽध्यात्मिकश्च यज्ञः पञ्चसंख्यायोगात्पञ्चपदा पङ्क्तिरिति श्रुतस्य पाङ्क्तस्य च्छन्दसः पादैर्यतः परिमितोऽतः पाङ्क्त इत्यर्थः ॥ १८५१ ॥

**तत्कार्यत्वात्पशुः पाङ्क्तो यच्च किंचिच्चराचरम् ॥**
**तच्चापि पञ्चभूतोत्थं विद्यात्पाङ्क्तमशेषतः ॥ १८५२ ॥**

पाङ्क्तः पशुरित्यादेरर्थमाह । **तत्कार्यत्वादिति** । ननु चराचरस्य जगतो न पञ्चभिरात्मादिभिर्निर्वर्त्यत्वमिति कुतोऽस्य पाङ्क्तत्वं तत्राऽऽह । **पञ्चेति** ॥ १८५२ ॥

---

1 क. ग. देवभा° ।

**पाङ्क्तकर्मात्मको यज्ञो यज्ञकार्यमिदं जगत् ॥**
**एतद्याथात्म्यतो ज्ञात्वा तदेवाऽऽप्नोत्यशेषतः ॥ १८५३ ॥**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके प्रथमाध्यायस्य**
**चतुर्थं ब्राह्मणम् ॥ ४ ॥**

तदिदं सर्वमित्यादेरर्थमाह । **पाङ्क्तेति** । साध्यं साधनं च पाङ्क्तं सूत्रात्मना ज्ञात्वा तच्च पाङ्क्तसूत्रमात्मत्वेनानुसंदधतस्तदाप्तिरेव फलं तत्क्रतुन्यायादित्यर्थः ॥ १८९३ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां प्रथमाध्यायस्य
चतुर्थं पुरुषविधब्राह्मणम् ॥ ४ ॥

---

अथ पञ्चमं ब्राह्मणम् ।

**अथ योऽन्यामिति ग्रन्थादारभ्योरुप्रयत्नतः ॥**
**अविद्यायाः समाम्नाता आ समाप्तेर्विभूतयः ॥ १ ॥**
**अध्यायस्यात्र चाविद्वान्वर्णाद्यात्माभिमानवान् ॥**
**धर्मेण नियतात्मा सञ्जुहोत्यादिस्वकर्मभिः ॥ २ ॥**
**देवादिक्रिमिपर्यन्तं[1] बिभर्ति जगदव्ययम् ॥**
**एवमेव जगद्योनिरेकैकः कर्मकृन्नरः ॥ ३ ॥**

संगतिं वक्तुं वृत्तं कीर्तयति। **अथेति** । अविद्यासूत्रादारभ्याऽऽ तृतीयसमाप्तेरविद्याया विभूतयः प्रपञ्च्यन्त इत्युक्तमित्यर्थः । तत्र तत्र प्रासङ्गिकत्वेनार्थान्तरस्योक्तत्वेऽपि परमतात्पर्यमविद्याविभूतिविवृताविति वक्तुमुरुप्रयत्नत इत्युक्तम् । अथो अयमित्यत्रोक्तमनुवदति । **अत्रेति** । अविद्यादशायामिति यावत् । अविद्यातत्कार्यविशिष्टो धर्माधीनः स्वकर्मभिः सर्वं जगद्धारयतीत्यर्थः । अव्ययमिति क्रियाविशेषणम् । विशिष्टज्ञानक्रियाविशिष्टस्य सूत्रस्यैव जगत्कर्तृत्वं नेतरेषां ज्ञानाद्यतिशयाभावादित्याशङ्क्याऽऽह । **एवमिति** । विहिताविहितज्ञानकर्मभ्यां सूत्रवदितरेषामपि संभवति जगत्कर्तृत्वमित्यर्थः॥१॥ ॥ २ ॥ ३ ॥

**कृत्स्नेन जगता यद्वत्कर्मकृत्समुपार्जितः ॥**
**यथोक्तकर्मभिस्तेन जगत्तद्वदुपार्जितम् ॥ ४ ॥**

सूत्रवदेकैकस्य सर्वजगत्कर्तृत्वं दृष्टान्तेन साधयति । **कृत्स्नेनेति** । यथोक्तकर्मभिर्जुहोत्यादिभिः । तेन कर्मकृतेति यावत् ॥ ४ ॥

**स्वदेहवद्यतो भुङ्क्ते एकैकोऽनवशेषतः ॥**
**साधारणानि वस्तूनि तथाऽसाधारणान्यपि ॥ ५ ॥**

---

[1] ख. ॰दिकृमि॰ ।

एकैकेन सर्वं जगदार्जितमित्यत्र नियामकमाह । **स्वदेहवदिति** । स्वकर्मानार्जितस्य भोग्यत्वायोगाद्भोक्त्रा सर्वं भोज्यमार्जितमित्यर्थः । बाह्याध्यात्मिकभेदेन साधारणासाधारणविभागः ॥ ५ ॥

**स्वकर्मणाऽनुपात्तस्य न च भोगोऽत्र दृश्यते ॥**
**एकैकेनोपकारित्वात्तस्माज्जगदुपार्जितम् ॥ ६ ॥**

स्वकर्मानार्जितस्यापि भोज्यत्वं किं न स्यादित्याशङ्क्याऽऽह । **स्वकर्मणेति** । न हि व्यवहारदशायां परकीयं गृहक्षेत्रादि परस्य भोग्यं दृष्टमित्यर्थः । स्वकर्मार्जितस्य भोग्यत्वे फलितमाह । **एकैकेनेति** । तस्मादेकैकेन जगदुपार्जितमिति संबन्धः । उपकारित्वादेकैकस्मिन्भोक्तरि जगतो भोगहेतुत्वादित्यर्थः ॥ ६ ॥

**स्वभावतोऽखिलं कर्म धर्माधर्मादिलक्षणम् ॥**
**साधारणविशेषात्मफलमारभते द्विधा ॥ ७ ॥**

स्वकर्मार्जितस्यैव भोज्यत्वं चेत्प्रतिपुरुषं कर्मव्यवस्थितेस्तदसाधारणफलस्याऽऽरम्भकं न साधारणफलस्येति तदभोग्यत्वमाशङ्क्याऽऽह । **स्वभावत इति** । आदिशब्दो मिश्रार्थः ॥ ७ ॥

**गुणप्रधानभावेन साधारणविशेषतः ॥**
**सूत्रादेः कर्मणः कार्यं क्रिम्यन्तस्याभिजायते ॥ ८ ॥**

कर्मणोऽनेकफलारम्भकत्वमुक्तं व्यनक्ति । **गुणेति** । सूत्रादिकृम्यन्तजन्तुवर्गस्य[1] यत्रिविधं कर्म तत्फलमुत्कर्षनिकर्षभावेन सामान्यविशेषात्मना च सर्वतो जायत उभयथा भोग्यदृष्टेरित्यर्थः ॥ ८ ॥

**द्रव्यादिदर्शनाधीनं फलं सर्वस्य कर्मणः ॥**
**साधारणादिसंभेदभिन्नं तेन क्रियाफलम् ॥ ९ ॥**

नानाफलारम्भकं कर्मेत्यत्र हेत्वन्तरमाह । **द्रव्यादीति** । आदिपदं क्रियादिग्रहार्थम् । साधारणादीत्यादिपदं त्वसाधारणविषयम् । तेन कर्मफलनिमित्तद्रव्यादिदृष्टिचित्रत्वेनेति यावत् ॥ ९ ॥

**क्वचित्साधारणात्मैव तथाऽसाधारणं क्वचित् ॥**
**क्वचिच्चोभयथा कार्यं द्रव्यादीक्षणचित्रतः ॥ १० ॥**

तदेव दृष्टान्तेन स्वहस्तयति । **क्वचिदिति** । नृत्येक्षणादावित्यर्थः । असाधारणं क्वचिदिति स्वसुतदर्शनादावित्यर्थः । क्वचिच्चोभयथेति रम्योद्यानदर्शनादाविति यावत् । क्रियाफलवैचित्र्ये निमित्तवैचित्र्यमुक्तमेव हेतुमाह । **द्रव्यादीति** ॥ १० ॥

---

१ ख. °ये कृम्य° ।

**समासव्यासतस्तस्माद्यथोक्तज्ञानकर्मभिः ॥**
**एकैकेन जगत्कृत्स्नमुपात्तं भोगसिद्धये ॥ ११ ॥**

कर्मणः सर्वारम्भकत्वे फलितमुपसंहरति । **समासेति** । साधारणरूपेण विशेषरूपेण च भोगार्थं कर्मादिना सर्वं जगदेकैकेन भोक्त्रोपात्तमित्यर्थः । कर्मणो विविधफलारम्भकत्वसंभवस्तच्छब्दार्थः ॥ ११ ॥

**सर्वः सर्वस्य कर्ता च कार्यं चापि यथा तथा ॥**
**मधुविद्याप्रसङ्गेन विस्पष्टमभिधास्यते ॥ १२ ॥**

सर्वस्य मिथो हेतुहेतुमत्त्वमप्रामाणिकमित्याशङ्क्याऽऽह । **सर्व इति** ॥ १२ ॥

**यदजीजनत्फलं कर्ता स्वकर्मज्ञानसाधनः ॥**
**सप्तान्नप्रविभागेन तद्विभज्य प्रदर्श्यते ॥ १३ ॥**

वृत्तानुवादव्याजेनापेक्षितं पूरयित्वोत्तरब्राह्मणतात्पर्यमाह । **यदिति** । ध्यानार्थमिति शेषः । स्वकर्मादिना सृष्टस्य जगतः सप्तधा विभक्तस्य सूत्रात्मकस्य स्वात्मना ध्यानं तद्भावफलं विधातुमुत्तरं ब्राह्मणमित्यर्थः ॥ १३ ॥

**त्रीण्यन्नानि फलं कर्तुश्चत्वार्यन्नानि यानि तु ॥**
**प्रयोगसमवायित्वात्तानि स्युः कर्मसाधनम् ॥ १४ ॥**

तेष्वन्नेष्ववान्तरविशेषमाह । **त्रीणीति** । प्रयोगसमवायित्वात्कर्मानुष्ठाने कारकत्वेनान्तर्भूतत्वादित्यर्थः ॥ १४ ॥

**विज्ञानात्मा पिता तावन्न मनो न प्रजापतिः ॥**
**अविशिष्टाधिकारित्वान्न विज्ञानात्मनोऽपरः ॥ १५ ॥**

**मन** एव पितेतिश्रुतेर्मनसो वा सर्वजगत्स्रष्टृत्वात्प्रजापतेर्वा मन्त्रस्थपितृशब्दतेत्याशङ्क्याऽऽह । **विज्ञानात्मेति** । सर्वस्मिञ्जगति जीवस्य कर्मादिद्वारा साधारण्येन कारणत्वादसावेवात्र पितेत्यर्थः । न मन इत्यादि निगमयति । **नेति** ॥ १५ ॥

**सिसृक्षितत्वान्मनसस्तथा त्र्यन्नात्मनः प्रभोः ॥**
**साधारणात्मनः स्रष्टा नातः क्षेत्रज्ञतोऽपरः ॥ १६ ॥**

जीववन्मनसि प्रजापतौ च कारणत्वं किं न स्यादित्याशङ्क्याऽऽह । **सिसृक्षितत्वादिति** । द्वयोरपि सृष्टिनिविष्टत्वेन कार्यकोटिनिविष्टत्वान्न कारणत्वमित्यर्थः । सर्वस्य जगतः साधारणात्मा क्षेत्रज्ञस्ततोऽपरो न स्रष्टेति संबन्धः ॥ १६ ॥

**ग्रन्थार्थधारणाशक्तिर्मेधा यद्यपि भण्यते ॥**
**तथाऽपि ज्ञानमेवेह साधनत्वाद्विवक्षितम् ॥ १७ ॥**

मेधयाऽजनयत्पितेत्यत्र मेधां व्याचष्टे । **ग्रन्थेति** । ब्रह्मज्ञानेतरज्ञानमात्रस्यात्र मेधात्वे

---

१ ख. वा । २ ख. वाऽपि ।

हेतुमाह । **साधनत्वादिति** । सप्तान्नोद्भूतौ ज्ञानमात्रस्य हेतुत्वात्प्रसिद्धमेधायास्तदयोगादित्यर्थः ॥ १७ ॥

**शास्त्रीयलौकिकज्ञानाविशेषग्रहसिद्धये ॥**
**सामान्यज्ञानग्रहणं मेधयेत्यभिधित्सितम् ॥ १८ ॥**

तर्हि ज्ञानेन जगदजनयदित्येवं वाच्यं किं मेधयेत्यत आह । **शास्त्रीयेति** । ज्ञानेनाजनयदित्युक्ते ध्यानेनैवेति प्रकरणानुरोधी भ्रमः स्यात्तन्निवृत्त्यर्थं मेधाग्रहणं न हि सप्तान्नसृष्टावुपास्तिरेव हेतुर्निषिद्धधियोऽपि तद्धेतुत्वादित्यर्थः ॥ १८ ॥

**तपःशब्देन कृच्छ्रादि यदि नामाभिधीयते ॥**
**तथाऽपि कर्मग्रहणं सप्तान्नोद्भूतिहेतुतः ॥ १९ ॥**

तपःशब्दार्थमाह । **तपःशब्देनेति** । सप्तान्नात्मकजगज्जन्महेतुत्वात्कर्मणस्तदेवात्र तपो न कृच्छ्रादि तन्मात्रस्यातद्धेतुत्वादित्यर्थः ॥ १९ ॥

**धिया धियेति लिङ्गाच्च गृह्येते ज्ञानकर्मणी ॥**
**मेधातपोगिरा नान्ये ग्राह्ये तदफलत्वतः ॥ २० ॥**

मेधातपःशब्दाभ्यां ज्ञानकर्मग्रहे वाक्यशेषमनुकूलयति । **धियेति** । धिया धिया जनयते कर्मभिरित्यत्र वाक्यशेषे तत्कालभाविज्ञानकर्मणोर्जनकत्वाभिधानात्तयोरेवात्रापि ग्रहणं न प्रसिद्धयोर्मेधातपसोरित्यर्थः । प्रसिद्धयोर्मेधातपसोरग्रहे पूर्वोक्तं हेतुं स्मारयति । **तदफलत्वत इति** ॥ २० ॥

**पाङ्क्तं हि प्रकृतं कर्म वेदेति ज्ञानमेव च ॥**
**विहाय नातः प्रकृतं युक्तोऽप्रकृतसंग्रहः ॥ २१ ॥**

न केवलं लिङ्गमेवात्र मानं किंतु प्रकरणमपीत्याह । **पाङ्क्तं हीति** । तथा चात्र प्रसिद्धमेधातपोग्रहे प्रकृतहानिरप्रकृतप्रक्रिया च स्यातामित्यर्थः ॥ २१ ॥

**मेधातपोतिरेकेण नान्यत्स्यात्साधनं यतः ॥**
**प्रसिद्धत्वादतो हीति व्याचष्टे श्रुतिरञ्जसा ॥ २२ ॥**

यत्सप्तान्नानीत्यादिमन्त्रं व्याख्याय मेधया हीत्यादिब्राह्मणं व्याचष्टे । **मेधेति** । ज्ञानकर्मातिरिक्तसृष्टिहेत्वभावात्तस्यैव तत्र हेतुत्वप्रसिद्धेर्मेधया हीत्याद्या श्रुतिस्तेनैव पितुः स्रष्टृत्वं हिशब्देन साक्षादाहेत्यर्थः ॥ २२ ॥

**अस्य भोक्तृसमूहस्य साधारणमचीक्लृपत् ॥**
**एकमन्नं पिता सृष्ट्वा तच्चेदं यदिहाद्यते ॥ २३ ॥**

एकमस्येत्यादिमन्त्रपदस्य व्याख्यानमिदमेवास्येति ब्राह्मणं तद्व्याकरोति । **अस्येति** ।

---

१ क. °क्ते साधने° ।

सप्तान्नानि सृष्ट्वा यदेकमन्नं सर्वप्राणिसाधारणं स्रष्टा कल्पितवान्किं तदित्यपेक्षायामाह । तच्चेति ॥ २३ ॥

**यदिदं प्राणिभिर्नित्यमद्यतेऽहरहस्तृषा ॥**
**साधारणमिदं युक्तं सर्वभूतस्थितेस्ततः ॥ २४ ॥**

अन्यदेव साधारणमन्नं किं न स्यादित्याशङ्क्योक्तं व्यनक्ति । **यदिदमिति** । तृष्णया प्रत्यहं नियमेन प्राणिभिरद्यमानान्नस्यैव साधारणत्वे हेतुमाह । **सर्वेति** ॥ २४ ॥

**स य एतदुपास्तेऽन्नमसाधारणरूपतः ॥**
**पाप्मनो नैव स द्रष्टा व्यावर्तेत इहाऽऽतुरः ॥ २५ ॥**

स य एतदित्यादेरर्थमाह । **स य इति** । साधारणमन्नमसाधारणीकुर्वतो न पापाद्व्यावृत्तिरित्यर्थः । इहेत्यन्नविनियोगवचनम् । ज्ञानदौर्बल्यमातुरत्वम् ॥ २५ ॥

**उपासनं च तात्पर्यमिह श्रुत्याऽभिधीयते ॥**
**मोघमन्नमिति तथा मन्त्रे ताच्छील्यनिन्दनम् ॥ २६ ॥**

किं तदुपासनं तदाह । **उपासनं चेति** । साधारणमन्नं सतम्यर्थः । तदसाधारणीकृत्य तन्निष्ठत्वं तात्पर्यम् । ब्राह्मणोक्तेऽर्थे मन्त्रं प्रमाणयति । **मोघमिति** । **मोघमन्नं** विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्येत्यत्र मोघं विफलं देवाद्यनुपयोग्यमन्नं यदि ज्ञानदुर्बलो लभते स वधस्तस्येति साधारणेऽन्ने यदसाधारणीकरणं तस्य कुत्सितत्वान्नासाधारणीकर्तव्यमित्यर्थः । साधारणान्नस्यासाधारणीकरणं प्रामादिकं चेत्प्रायश्चित्तलाघवं मत्वा ताच्छील्यपदम् ॥ २६ ॥

**वैश्वदेवं हि नामैतद्यदन्नमुपसाध्यते ॥**
**नालमेतद्धि सर्वेषां पाप्मनां विनिवृत्तये ॥ २७ ॥**

एकमस्येत्यादिमन्त्रब्राह्मणयोः स्वपक्षमुक्त्वा भर्तृप्रपञ्चपक्षमाह । **वैश्वदेवं हीति** । यदन्नं वैश्वदेवाख्यं स्मार्तं गृहिणा देवाद्यर्थं संपाद्यते तदेवात्र साधारणमित्यर्थः । तत्र स्मृतिशिष्टाचारप्रसिद्ध्यर्थो हिशब्दः । कथं तदुपासकस्य पाप्माव्यावृत्तिवचनं न हि शास्त्रीयं वैश्वदेवं कर्म कुर्वतो दोषित्वमित्याशङ्क्याऽऽह । **नालमिति** । वैश्वदेवाख्यं कर्म केवलं किंचिदेव पापं निवर्तयेन्न सर्वमतः स्तोकपापध्वस्तिपरं वाक्यमित्यर्थः । तस्याल्पीयसो बहुतरपापनिरसनासामर्थ्यद्योतनार्थो हिशब्दः ॥ २७ ॥

**इत्येवं केचिदिच्छन्ति तत्तु युक्त्या न युज्यते ॥**
**अनूक्तेर्यदिदमिति सिद्धोऽर्थोऽनूद्यते यतः ॥ २८ ॥**

परमतं निगमयति । **इत्येवमिति** । तद्दूषयति । **तत्त्विति** । अयुक्तमेव स्पष्टयति । **अनूक्तेरिति** । अतो वैश्वदेवस्यापूर्वत्वादनुवादयोग इह च सोऽस्ति तन्न परमतं युक्तमित्यर्थः ॥ २८ ॥

**प्रात्यक्ष्यं न च तस्यास्ति शास्त्रमात्रप्रमाणतः ॥**
**यथा सर्वात्तृवक्त्रान्तस्थस्य प्रत्यक्षता तथा ॥ २९ ॥**

"वैश्वदेवस्य सिद्धस्य गृह्येऽग्नौ विधिपूर्वकम् ।
आभ्यः कुर्याद्देवताभ्यो ब्राह्मणो होममन्वहम् ॥
सायं चान्नस्य सिद्धस्य यत्नतस्तु बलिं हरेत् ।
वैश्वदेवं हि नामैतत्सायं प्रातर्विधीयते" ॥

इतिस्मृतेस्तस्यापूर्वत्वाभावादनुवादसिद्धिरित्याशङ्क्याऽऽह । **प्रात्यक्ष्यमिति** । वैश्वदेवस्याप्रत्यक्षत्वं वैधर्म्यदृष्टान्तेनाऽऽह । **यथेति** । इदमिति प्रत्यक्षान्नपरामर्शाद्वैश्वदेवस्य शास्त्रदृष्टत्वेऽप्यप्रत्यक्षस्य तदयोगात्परमते ब्राह्मणं दुर्घटमिति भावः ॥ २९ ॥

**प्रतिप्राणि ममेदं स्यादभिलाषश्च दृश्यते ॥**
**सर्वप्राण्यंशमिश्रत्वं ततोऽस्मिन्नवसीयते ॥ ३० ॥**

स्वपक्षे तस्य घटमानतामाह । **प्रतीति** । स्यादित्यस्मात्परस्तादितिशब्दो द्रष्टव्यः । अभिलाषोपलब्धिफलमाह । **सर्वेति** । सर्वप्राणभृदाद्यान्नस्य साधारणशब्देन ग्रहे तस्य प्रत्यक्षादिदमा परामृष्टुं योग्यत्वादनुवादस्य सुघटतेत्यर्थः ॥ ३० ॥

**नाऽऽत्मार्थं पाचयेदन्नमिति चापि स्मृतेर्वचः ॥**
**तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥**
**अन्नादे भ्रूणहा मार्ष्टीत्यादीह वचनं स्मृतेः ॥ ३१ ॥**

किंच साधारणशब्देन श्वादिसर्वप्राण्यन्नग्रहे साधारणमसाधारणीकुर्वतः पाप्मानिवृत्तिवाक्यं **स्मृतिवचनानि** चोपपद्यन्ते तस्मादस्मद्व्याख्यैव युक्तेति मन्वानः साधारणमसाधारणीकुर्वतो दोषित्वे स्मृतीरुदाहरति । **नाऽऽत्मार्थमिति** । **न** वृथा घातयेत्पशुम् । न चैकः स्वयमश्नीयाद्विधिवर्जं न निर्वपेदिति पादत्रयं द्रष्टव्यम् । **इष्टान्भोगान्हि** वो देवा दास्यन्ते यज्ञभाविता इत्युक्तान्देवान्परामृशति । **तैरिति** । दत्तान्भोगानिति यावत् । एभ्यो देवेभ्य इत्यर्थः । अन्नादे भ्रूणहा मार्ष्टि अनेना अभिशंसति । स्तेनः प्रयुक्तो राजनि यावन्नानृतसंकर इतिस्मृताद्यपादस्यायमर्थः । भ्रूणहा श्रेष्ठब्राह्मणघातकः । **वक्ष्यति हि—वरिष्ठब्रह्महा चेह भ्रूणहेत्यभिधीयत** इति । स स्वान्नभक्षके स्वपापं मार्ष्टि शोधयति निक्षिपतीत्यन्नदातुः पापक्षयोक्तेरितरस्यासाधारणीकृत्य भुञ्जानस्य पापितेति ।

"अदत्त्वा तु य एतेभ्यः पूर्वं भुङ्क्तेऽविचक्षणः ।
स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मनः ॥
देवानृषीन्मनुष्यांश्च पितॄन्गृह्यांश्च देवताः ।
पूजयित्वा ततः पश्चाद्गृहस्थः शेषभुग्भवेत् ॥

---

१ ख. °स्य प्रात्यक्ष्यादि° ।

अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात् ।
यज्ञशिष्टाशनं ह्येतत्सतामन्नं विधीयते ॥
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्" ।

इत्यादिवाक्यमादिशब्दार्थः । इहेति साधारणस्यान्नस्यासाधारणीकरणे दोषवत्त्वमुक्तम् ॥ ३१ ॥

**तस्यापि चान्तःपातित्वात्सर्वाद्यस्यैव युक्तिमान् ॥**
**ग्रहस्तस्य गृहीतौ तु नास्यान्तःपातिता तथा ॥ ३२ ॥**

इतश्च साधारणशब्देन सर्वप्राण्यन्नं ग्राह्यमित्याह । **तस्यापीति** । वैश्वदेवान्नस्य सर्वान्नान्तर्भावात्तद्ग्रहे ग्रहसंभवाद्व्यापकस्यैव ग्रहणमित्यर्थः । वैश्वदेवग्रहेऽपीतरग्रहः स्यादिति चेन्नेत्याह । **तस्येति** । श्वाद्यान्नस्य न ग्रहोऽस्तीति तुशब्दार्थः । तत्र हेतुर्नास्येति । तत्र वैधर्म्यदृष्टान्तस्तथेति । यथा सर्वाद्यान्नेऽन्तर्भूतं वैश्वदेवान्नं न तथा तस्मिन्नन्नान्तरमित्यर्थः ॥ ३२ ॥

**असृष्टाविनियोगत्वे प्राप्नुतस्तद्ग्रहे सति ॥**
**सर्वप्राणिभिराद्यस्य तच्चानिष्टं प्रसज्यते ॥ ३३ ॥**

परपक्षे दोषान्तरमाह । **असृष्टेति** । तच्छब्दो वैश्वदेवार्थः । प्रसङ्गस्येष्टत्वं निराचष्टे । **तच्चेति** । सर्वसृष्टेर्विनियोगस्य च विवक्षितत्वादित्यर्थः ॥ ३३ ॥

**अव्यावृत्तिश्च पाप्मभ्यो वैश्वदेवान्नसंग्रहे ॥**
**न न्याय्यं वचनं तस्य शास्त्रमात्रव्यपाश्रयात् ॥ ३४ ॥**

तत्रैव दोषान्तरमाह । **अव्यावृत्तिश्चेति** । साधारणशब्देन वैश्वदेवग्रहे तत्परस्य पाप्मभ्यो न व्यावृत्तिरिति वचो न न्याय्यमिति योजना । शास्त्रीयकर्मानुष्ठानात्पापक्षयस्यैव युक्तत्वादिति हेतुमाह । **तस्येति** ॥ ३४ ॥

**अल्पीयःपापहानिश्च नापि शब्दात्प्रतीयते ॥**
**न स पाप्मन इत्यस्मादश्रुता न च गृह्यते ॥ ३५ ॥**

यत्तु स्तोकपाप्मध्वस्तिपरमेतदिति तत्राऽऽह । **अल्पीय इति** । श्रुतहानिरश्रुतप्रक्रिया च न न्याय्येत्यर्थः ॥ ३५ ॥

**सर्वाद्यान्नगृहीतौ तु हेतुर्गमक इष्यते ॥**
**असाधारणकारित्वं तस्य साधारणात्मनः ॥ ३६ ॥**

साधारणमसाधारणं कुर्वतः पापित्वसाधको मिश्रमिति हेतुः सोऽपि सर्वान्नस्य साधारणशब्देन ग्रहं गमयतीत्याह । **सर्वेति** । अप्यर्थस्तुशब्दो हेतुशब्दानन्तरनिवेशी । कोऽसौ हेतुस्तत्स्वरूपमाह । **असाधारणेति** । मिश्रमित्यन्नस्य साधारण्यमुच्यते तस्या-

१ क. आद्यं ।

साधारण्यकारी चेदेष पुरुषस्तदा तदसाधारणकारित्वं तस्य पापानिवृत्तौ हेतुः स च साधारणपदेन सर्वान्नग्रहं सूचयतीत्यर्थः ॥ ३६ ॥

**सर्वप्राणभृदन्नस्य तस्माद्ग्रहणमिष्यते ॥**
**उक्तयुक्तिबलादत्र नान्यस्येति विनिश्चितिः ॥ ३७ ॥**

स्वपक्षमुपसंहरति । **सर्वेति ।** तस्मादित्युक्तं स्फुटयति । **उक्तेति ।** अत्रेति प्रकृतमन्त्र-ब्राह्मणोक्तिः । अनूक्तेरित्यादिनोक्ता युक्तिः । परपक्षनिरासमुपसंहरति । **नेति** ॥३७॥

**पापानिर्मोकहेतूक्तिर्मिश्रमित्यभिधीयते ॥**
**सर्वा[1]र्थस्य हि पापाय यतोऽसाधार[2]णीक्रिया ॥ ३८ ॥**

मिश्रं ह्येतदितिवाक्यं पक्षान्तरनिरासावसरे संक्षेपतो व्याख्यातमपि प्रपञ्चयितुमव-तारयति । **पापेति ।** तस्यार्थमाह । **सर्वार्थस्येति ।** साधारणस्यासाधारणीकरणे प्रत्य-वायप्रसिद्ध्यर्थो हिशब्दः । अतः साधारणं नासाधारणीकर्तव्यमिति शेषः ॥ ३८ ॥

**प्रक्षेपोऽग्नौ हुतं विद्यात्तत्पूर्वं बलिकर्म च ॥**
**प्रहुतं चेह विज्ञेयं ते देवेभ्यो ददौ पिता ॥ ३९ ॥**

द्वे देवानित्यादिमन्त्रपदस्य हुतं चेत्यादिव्याख्यानं तस्यार्थमाह । **प्रक्षेप इति** ॥ ३९ ॥

**देवेभ्योऽन्नं यतः प्रत्ते हुतप्रहुतलक्षणे ॥**
**तानुद्दिश्य ततोऽद्यापि जुह्वति प्र च जुह्वति ॥ ४० ॥**

तस्मादित्यादि व्याचष्टे । **देवेभ्य इति** ॥ ४० ॥

**यतः सूत्रपदे द्वित्वमविशेषेण चोदितम् ॥**
**श्रौतस्मार्तविभागेन तत एतद्विकल्पितम् ॥ ४१ ॥**

अथो आहुरित्यादेस्तात्पर्यमाह । **यत इति ।** द्वे देवानित्यत्र द्वित्वमात्रं श्रुतं तच्च हुतप्रहुतयोर्दर्शपूर्णमासयोश्चाविशिष्टं ततः श्रौते स्मार्ते वा देवान्ने इति विकल्पितमेतद्दे-वान्नमित्यर्थः ॥ ४१ ॥

**स्मार्ता[3]न्नानन्तरोक्तत्वात्स्मार्तत्वं स्याद्द्वयोस्तयोः ॥**
**अग्निहोत्राभिसंबन्धात्स्यातां वा श्रुतिचोदिते ॥ ४२ ॥**

विकल्पे हेत्वन्तरमाह । **स्मार्तेति ।** सर्वान्नस्य साधारणशब्देन ग्रहात्तस्मिन्नाद्यत्वेन स्मार्तान्नान्तर्भावात्तदनन्तरं द्वे देवानिति देवान्नयोरुक्तत्वात्तयोः स्मार्तत्वं वा हुतप्रहुता-त्मना स्यात्तद्यादिदमाहुरित्यत्रोक्तश्रौताग्निहोत्रसंनिधानाद्दर्शपूर्णमासाख्ये वा श्रुत्युक्ते देवान्ने स्यातामिति विकल्पो व्रीह्यादिवदित्यर्थः ॥ ४२ ॥

**मन्त्रे द्वित्वाविशिष्टत्वाद्धुतप्रहुतलक्षणे ॥**
**श्रुत्याऽतस्ते विकल्प्येते श्रौते स्मार्ते हि तुल्यवत् ॥ ४३ ॥**

---

१ क. ग. °र्वान्नस्य । २ क. ग. °रणीक्र° । ३ ख. °र्तान्त° ।

विकल्पमनूद्य सिद्धान्तं सूचयति । **मन्त्र इति**। पञ्चम्यौ समानाधिकरणे। दर्शपूर्णमासलक्षणे वेति शेषः। ते देवान्ने इति यावत्। तुल्ययोर्विकल्पस्यान्यत्रापि प्रसिद्धत्वार्थो हिशब्दः। अत एव तुल्यवदित्युक्तम्। तुल्यत्वं विकल्पहेतुः। न च श्रौतस्मार्तयोस्तुल्यत्वं श्रुतेर्बलवत्त्वादुक्तदर्शपूर्णमासयोरपि तद्भावादतो विकल्पायोगाद्दर्शपूर्णमासयोरेव देवान्नतेति मन्वानो ब्रूते। **तुल्यवदिति** ॥ ४३ ॥

**दर्शश्च पौर्णमासश्च देवान्ने ते यतः श्रुते ॥**
**प्रायस्ताभ्यां न कामाय यक्ष्यामिति गम्यते ॥ ४४ ॥**

तस्मान्नेत्यादेरर्थमाह। **दर्शश्चेति** ॥ ४४ ॥

**नेहेष्टयो निषिध्यन्ते देवप्राधान्यसिद्धये ॥**
**ताच्छीलिकोकञ्श्रवणात्तच्छीलत्वं निवार्यते ॥ ४५ ॥**

फलार्थं तयोरनुष्ठाननिषेधे स्वर्गकामवाक्यविरोधः स्यादित्याशङ्क्य ताच्छील्ये विहितस्योकञ्प्रत्ययस्य श्रवणात्काम्येष्टियजनप्रधानत्वमत्र निषिध्यते तच्च देवप्रधानयोर्दर्शपूर्णमासयोरवश्यानुष्ठेयत्वसिद्ध्यर्थं न ताः स्वतो निषिध्यन्ते न तत्स्वर्गकामवाक्यविरोध इति प्रायःशब्दसूचितमर्थमाह। **नेहेति** ॥ ४५ ॥

**प्रसक्तान्यपि नोच्यन्ते त्रीण्यन्नान्यत्र कारणात् ॥**
**तेषां फलत्वादुक्तेभ्यः साधनेभ्योऽन्यता यतः ॥ ४६ ॥**

एकमित्यादिमन्त्रयोर्व्याख्यानन्तरं त्रीणीत्यादि क्रमप्राप्तं त्यक्त्वा सप्तमं पश्वन्नं कुतो व्याख्यायते तत्र पाठक्रमातिक्रमे श्रुतेरभिप्रायमाह। **प्रसक्तानीति**। सर्वसाधारणान्नस्य देवान्नयोश्च व्याख्योत्तरकाले पाठक्रमात्कारणात्प्राप्तान्यपि त्रीण्यन्नान्यस्मिन्नवसरे न व्याख्यातानीत्यत्र हेतुमाह। **तेषामिति**। त्रयाणामन्नानां सूत्रात्मना फलत्वेन साध्यत्वात्पश्वन्नसहितोक्तान्नेभ्यः साधनेभ्यो यतोऽत्यन्तविलक्षणत्वमतः साधनभूतचतुर्विधान्नव्याख्यानन्तरमेवान्नत्रयव्याख्येति पाठक्रमातिक्रम इत्यर्थः ॥ ४६ ॥

**सौकर्यप्रतिपत्तेश्च भूयोविषयतस्तथा ॥**
**साधनैकसजातित्वादानन्तर्यमकारणम् ॥ ४७ ॥**

पश्वन्नस्य चतुर्थत्वेन व्याख्याने हेत्वन्तरमाह। **सौकर्येति**। चत्वारि साधनानि त्रीणि साध्यानीति विभज्योक्तौ वक्तॄणां श्रोतॄणां च सौकर्येण धीर्भवति ततश्च पाठातिक्रम इत्यर्थः। अथवा पश्वन्नस्य साधनत्वादुक्तसाधनत्रये तस्य बुद्धिसांनिध्याच्चतुर्थत्वेन व्याख्यानं ततोऽन्नत्रयव्याख्येत्युक्ते सौकर्येण प्रतिपत्तिरतश्च पाठानादर इत्यर्थः। किंचाध्यात्माधिभूताधिदैवविषयत्वेन विस्तीर्णविषयत्वादन्नत्रयस्यात्यल्पविषयान्नचतुष्टयानन्तर्यं युक्तमतोऽपि पाठक्रमोल्लङ्घनमित्याह। **भूय इति**। किंच पश्वन्नस्य पूर्वोक्तान्नैः

---

१ ख. °रवाद्दर्श° ।

सह साधनत्वेनैकेन साजात्याच्चतुर्थत्वेन सप्तमस्यापि व्याख्येत्याह । **साधनेति** । अर्थ-क्रमात्पाठक्रमस्य दुर्बलत्वेनाप्रयोजकत्वं निगमयति । **आनन्तर्यमिति** । यथा मुष्टी करोति वाचं यच्छति दीक्षितमावेदयतीत्यत्राऽऽनन्तर्यमप्रयोजकीकृत्य मुष्टीकरणवाग्यमनयोरावेदनार्थत्वमपास्य प्रकरणाधीतैः सर्वैरेवार्थैः संबन्धः सिद्धस्तथेहाप्यानन्तर्यमप्रयोजकमित्यर्थः ॥ ४७ ॥

**पयोऽन्नमेव प्रायेण मनुष्याः पशुभिः सह ॥**
**भुञ्जते पय एवाग्रे तेषामन्नमतोऽस्तु तत् ॥ ४८ ॥**
**भुञ्जते पय एवाग्रे क्रमेणान्यत्तृणादि हि ॥**
**अतोऽनुमीयते पित्रा तेभ्यः प्रत्तं पयः पुरा ॥ ४९ ॥**

भवतु यथोक्तयुक्त्या पश्वन्नस्य चतुर्थत्वं किं पुनस्तदन्नं यत्पशुभ्यो दत्तं पित्रेति तदाह । **पय इति** । कथमस्य पश्वन्नत्वमित्याशङ्क्य पयो हीत्यादि व्याचष्टे । **प्रायेणेति** । औत्सर्गिकत्वद्योती प्रायःशब्दः । तृणाद्यपि ते भुञ्जते तत्कथं पय एव तेभ्यो दत्तं पित्रेत्याशङ्क्याऽऽह । **भुञ्जत इति** । अग्रे जन्मोत्तरकालमिति यावत् । उक्तक्रमस्यानुभवानुसारित्वं हिशब्दार्थः । अनुमीयते दृष्टानुसारात्कल्प्यत इति यावत् । अतःशब्दस्यापि दृष्टानुसारार्थत्वम् ॥ ४८ ॥ ४९ ॥

**पशवः पय एवाग्रे भुञ्जते नापरं ततः ॥**
**कथमेतद्विजानीम इत्येतदभिधीयते ॥ ५० ॥**

तस्मात्कुमारमित्याद्यवतारयितुं पृच्छति । **पशव इति** । पशवो द्विपादश्चतुष्पादश्चेति श्रुतेर्मनुष्याणामपि पशुशब्देन संग्रहः कृतः । ततः पयसः सकाशादिति यावत् । कथमिति प्रमाणप्रश्ने प्रत्याह । **एतदिति** ॥ ५० ॥

**यत एवमतो लोके कुमारं जातमग्रतः ॥**
**जातरूपव्यवहितं लेहयन्ति घृतं जनाः ॥ ५१ ॥**

तस्मादित्याद्यवतारितं व्याकरोति । **यत इति** । पश्वन्नं पयो यस्मात्तस्मादित्यर्थः । जातरूपं हेम । पित्रादिविषयो जनशब्दः । लेहयन्त्यास्वादयन्ति प्राशयन्तीति यावत् ॥ ५१ ॥

**तस्यानु तदभावे वा पाययन्ति स्तनं शिशुम् ॥**
**पशुष्वपि तथा जातं वत्सं कश्चित्प्रपृच्छति ॥ ५२ ॥**

स्तनं वेत्यादेरर्थमाह । **तस्येति** । अथ वत्समित्यादेरर्थमाह । **पशुष्विति** । यथा मनुष्येषु जातं कुमारं घृतं स्तनं वा पाययन्ति तद्वदित्याह । **तथेति** ॥ ५२ ॥

---

१ ख. °तु तथो° ।

**कियांस्ते वयसा वत्स इत्याचष्टे वयो यथा ॥**
**अतृणाद इति तृणं नाद्याप्यत्ति मनागपि ॥ ५३ ॥**

पृच्छास्वरूपमाह । **कियानिति** । अतृणाद इति वाक्यमादाय व्याचष्टे । **आचष्ट इति** ॥ ५३ ॥

**वर्तते पयसैवासावद्यापीत्यवसीयते ॥**
**प्राण्यप्राणि जगत्सर्वं तस्मिन्नेव प्रतिष्ठितम् ॥ ५४ ॥**

कथं तर्हि तस्य प्राणधारणं तत्राऽऽह । **वर्तत इति** । तस्मिन्नित्यादिमन्त्रपदस्यार्थमाह । **प्राणीति** ॥ ५४ ॥

**पयसीदं जगन्मग्नमित्येतद्गम्यते कुतः ॥**
**प्रसिद्धेर्गम्यते न्यायाद्यतोऽसावभिधीयते ॥ ५५ ॥**

पयसि सर्वं स्थावरं जङ्गमं च प्रतिष्ठितमित्यत्र मानं पृच्छति । **पयसीति** । पयसि हीत्यादिब्राह्मणमुत्तरत्वेनाऽऽदत्ते । **प्रसिद्धेरिति** । श्रौती प्रसिद्धिरेव न्यायस्ततः सर्वं जगत्पयासि निमग्नमित्येतद्यतो गम्यते तस्मात्प्रसिद्धिरुच्यते ब्राह्मणस्थहिशब्देनेत्यर्थः ॥ ५५ ॥

**आहुतिः पय एव स्यादाज्यं वा पय एव वा ॥**
**पय एवाऽऽहुतिः सर्वमित्येतच्च श्रुतेर्मितेः ॥ ५६ ॥**

प्रसिद्धिं प्रकटयति । **आहुतिरिति** । यदाज्यं पयो वाऽऽहुतिमयं तत्सर्वं पय एव स्यादिति योजना । सर्वाहुतेः पयस्त्वं श्रुत्या विशदयति । **पय एवेति** । आहुत्यात्मकमाज्यादि सर्वं पय एवेत्येतद्गम्यते घृताहुतिं वा पयआहुतिं वोभयं त्वेतत्पय एवेति श्रुतिमानादित्यर्थः ॥ ५६ ॥

**अथैषाऽऽज्याहुतिर्यज्ञे यद्धविः सर्वरूपकम् ॥**
**पशुश्चाप्याज्यमेवैतत्करोतीत्यपि चाऽऽगमः ॥ ५७ ॥**

तत्रैव श्रुत्यन्तरमाह । **अथेति** । अथशब्दो यज्ञारम्भार्थः । आज्याहुतेस्तावत्पयस्त्वं तद्विकारत्वाद्यच्च यज्ञे सर्वरूपकं पुरोडाशाद्यात्मकं हविर्यश्च पशुरेतत्सर्वमाज्यमेवाभिघारसंस्कारात्करोति पुरुषो न हि चर्वाद्याज्यानभिघारितं होम्यं पयश्चाऽऽज्यमिति सर्वस्य पयस्त्वमित्यागमशासनमित्यर्थः । अपि चेति पूर्वश्रुत्या समुच्चयोऽस्याः श्रुतेरुच्यते॥५७॥

**आज्याभिघारसंस्कारात्सर्वमेव पयो हविः ॥**
**पयस्येव जगत्कृत्स्नमग्निहोत्रे प्रतिष्ठितम् ॥ ५८ ॥**

श्रुत्यर्थमुपसंहरति । **आज्येति** । तथाऽपि कथं सर्वस्य पयसि प्रतिष्ठितत्वं तत्राऽऽह । **पयसीति** ॥ ५८ ॥

ते वा एते इति तथा परिणामोऽखिलं जगत् ॥
अग्निहोत्राहुतेः साक्षाच्छ्रुतावेव समीरितम् ॥ ५९ ॥

अग्निहोत्रे यत्तु पयो हूयते तस्मिन्नपूर्वात्मके सर्वं जगत्प्रतिष्ठितमिति प्रतिज्ञातेऽर्थे प्रमाणमाह । **ते वा इति ।** सर्वमपि जगत्पयसि स्थितमित्यस्यानुसारेण **ते वा** एते आहुती हुते उत्क्रामतस्ते अन्तरिक्षमाविशत इत्यादिश्रुतावग्निहोत्राहुतेः पयोरूपायाः परिणामोऽशेषं जगदिति साक्षादीरितमिति योजना ॥ ५९ ॥

अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते ॥
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥ ६० ॥

तत्रैव **मनुवाक्यमुदाहरति । अग्नाविति ।** अग्निहोत्रे सायं प्रातरग्नौ प्रक्षिप्ता सम्यगाहुतिरपूर्वमयी तेजोद्वाराऽऽदित्यमुपसर्पति ततो वृष्टिरूपेण जायते ततो व्रीहियवाद्यन्नात्मना परिणमते ततश्च रेतोद्वारा प्रजाभावमापद्यते तदेवमग्निहोत्राहुत्यपूर्वपरिणामात्मकं जगदित्यर्थः ॥ ६० ॥

पयोद्रव्याहुतेश्चैतत्परिणामोऽखिलं जगत् ॥
एतच्च श्रुतितः सिद्धं विश्वमाहुतिकारणम् ॥ ६१ ॥

पयःपरिणामत्वाज्जगतस्तास्मिञ्जगन्मग्नमिति श्रुतिस्मृतिसिद्धमर्थमुपसंहरति । **पयोद्रव्येति ।** अपूर्वसंग्रहार्थमाद्यश्चकारो द्वितीयः स्मृतिसमुच्चयार्थः । सर्वमपि जगत्पयोद्रव्याहुत्यपूर्वपरिणामात्मकमिति श्रुत्यादिसिद्धत्वादाहुतिमये पयसि तन्निमग्नमिति सूक्तमित्यर्थः ॥ ६१ ॥

यथोक्तदर्शनस्तुत्यै दर्शनान्तरकुत्सनम् ॥
तस्मिन्सर्वमिति ह्यस्य दर्शनस्य विधित्सया ॥ ६२ ॥

तद्यदिदमित्यादेस्तात्पर्यमाह । **यथोक्तेति ।** दर्शनान्तरनिन्दा न तन्निषेधार्था किंतु प्रस्तुतदृष्टिस्तुत्यर्थाऽतस्तन्निन्दितुं तदनुवाद्यनन्तरवाक्यमित्यर्थः । किं तद्यथोक्तं दर्शनं किमर्था वा तस्य स्तुतिस्तत्राऽऽह । **तस्मिन्निति ।** न हि निन्दा निन्द्यं निन्दितुमपि तु विधेयं स्तोतुमितिन्यायद्योतको हिशब्दः ॥ ६२ ॥

पयसैवाग्निहोत्रं हि जुह्वत्संवत्सरं द्विजः ॥
जयत्येव पुनर्मृत्युं न भूयो मृतिभाग्भवेत् ॥ ६३ ॥

अन्यनिन्दाऽन्यस्तुतय इति न्यायेनोत्तरस्य तात्पर्यमुक्त्वा संवत्सरमित्यादि योजयति । **पयसेति ।** नैयमिकाग्निहोत्रस्य श्रुतिप्रसिद्धत्वार्थो हिशब्दः । मृत्युजयं व्याकरोति । **नेति ।** सकृन्मृत्वा पुनर्मरणाय देहं न गृह्णातीत्यर्थः ॥ ६३ ॥

---

१ ग. °श्चैत्र परि° । २ ग. मृत्युभा° ।

**संवत्सरे प्रयोगाणामग्निहोत्रे हि संख्यया ॥**
**षष्ट्युत्तराणि त्रीण्येव शतानीति विनिश्चितम् ॥ ६४ ॥**

संवत्सरपरिमिते काले पयोद्रव्येणाग्निहोत्रहोममात्रेण मृत्युजयोऽत्र प्रतीयते न दर्शनान्तरं तत्कुतस्तस्य कृत्स्नमित्याशङ्क्य विवक्षितदृष्टिहेतुसंख्यासामान्यार्थमग्निहोत्राहुतिगतां संख्यामाह। **संवत्सर इति।** संवत्सरावधिके काले सायं प्रातर्यदग्निहोत्रं हूयते तत्र स्थितानां होमानां षष्ट्यधिकानि त्रीणि शतानि संख्यया भवन्तीति प्रसिद्धमित्यर्थः ॥ ६४ ॥

**क्षपाहान्यपि तावन्ति संख्ययेह भवन्ति हि ॥**
**शतानि सप्त संख्याताः प्रयोगार्धाश्च विंशतिः ॥ ६५ ॥**

संवत्सरावयवाहोरात्राण्यपि षष्ट्यधिकत्रिशतानीति कालावयवस्थां संख्यामाह। **क्षपेति।** इहेति संवत्सरोक्तिः। त्रीणि च वै शतानि षष्टिश्च संवत्सरस्याहानीति श्रुतिप्रसिद्ध्यर्थो हिशब्दः। संवत्सरावधिकेऽग्निहोत्रे सायं प्रातराहुतिभेदेन प्रयोगभागा विंशत्यधिकसप्तशतसंख्याः सन्ति **तस्य ह वा** एतस्याग्निहोत्रस्य सप्त च शतानि विंशतिश्च संवत्सरे सायमाहुतयः सप्त चैव शतानि विंशतिश्च संवत्सरे प्रातराहुतय इतिश्रुतेरित्याह। **शतानीति।** संवत्सरस्याहोरात्राण्यपि द्वेधा विभज्य विंशत्युत्तरसप्तशतानीति चशब्दार्थः। **सप्त** च शतानि विंशतिश्च संवत्सरस्याहोरात्रा इतिश्रु**तिः**। संवत्सरात्मकचित्याग्निरूपप्रजापत्यवयवभूतयाजुष्मतीसंज्ञकेष्टकासु प्रयोगाभेदेन षष्ट्यधिकत्रिशतत्वं तद्भेदेन विंशत्यधिकसप्तशतत्वमितीष्टकास्था संख्या ॥ ६५ ॥

**याजुष्मत्योऽपि तावत्य इष्टकाः स्युः प्रजापतेः ॥**
**संवत्सराग्नेश्चित्यस्य पुंसो नाड्यस्तथैव च ॥ ६६ ॥**

**तावत्यो**ऽग्नेर्याजुष्मत्य इष्टका इतिश्रुतिमाश्रित्याऽऽह। **याजुष्मत्योऽपीति।** देहाभिमानिनः साधकस्य पुंसो नाड्यश्च देहपार्श्वादिभेदेन तद्विभागेन च पूर्वोक्तसंख्यावत्यो भवन्तीत्याह। **पुंस इति।** तथाच श्रुति**स्त्रीणीतः** पष्टिशतानि त्रिणीतस्तानि सप्तविंशतिशतानि भवन्तीति ॥ ६६ ॥

**संपदैवाऽऽहुतीर्विद्वान्संपाद्याग्नेस्तथेष्टकाः ॥**
**संवत्सरमवाप्नोति स्वनाडीसंख्यया नरः ॥ ६७ ॥**

संख्यासामान्यमुक्त्वा तत्साध्यामुपास्तिमाह। **संपदेति।** उक्तसंख्यासमान्येनैवाग्निहोत्राहुतीरग्न्यवयवभूतयाजुष्मतीसंज्ञकेष्टकाः संपाद्य तद्रूपेणाऽऽहुतीर्ध्यायन्नाहुतिमयीश्चेष्टकाः संवत्सरावयवाहोरात्राणि तेनैव संपाद्य पुरुषनाडीस्थसंख्यासामान्येन ता नाडीस्तान्येवाहोरात्राण्यापाद्य तद्रूपेणाऽऽहुतीरिष्टका नाडीश्चानुसंदधानः संवत्सरमग्निहोत्रं पयसा जुह्वत्यैव संपदा होमसहितविद्यया संवत्सरात्मकं प्रजापतिं प्राप्य मृत्युमपजयतीत्यर्थः ॥ ६७ ॥

**पुमान्संवत्सरोऽग्निश्च नाड्यहोरात्रयाजुषैः ॥**
**संपद्यन्ते समाः सर्वे तस्मात्संवत्सरश्रुतिः ॥ ६८ ॥**
**संवत्सरात्मसंपत्त्या कालात्मानं समश्नुते ॥**
**इत्येवंदृष्टयो धीरा यदाहुरसदेव तत् ॥ ६९ ॥**

उक्तविद्यामात्रसहितहोमवशान्मृत्युजयश्चेत्प्रजापतिदृष्टिरात्मनि न कार्या तद्व्यतिरेकेण फलसिद्धेरित्याशङ्क्याऽऽह । **पुमानिति ।** पुरुषादित्रयावयवभूतनाड्यादित्रयगतसंख्यासामान्येन पुरुषः संवत्सरोऽग्निरित्येते सर्वे संपदा ध्यानेन समा द्रष्टव्यास्तत्राधिकारिणः पुरुषस्य चित्यस्य चाग्नेः संवत्सरात्मकप्रजापत्यात्मना समत्वमापाद्याहमग्निः प्रजापतिरेवेत्यग्निहोत्रहोमकाले संवत्सरात्मनि प्रजापतावात्मत्वसंपादनेन वर्तमानो देहपाते कालात्मानं प्रजापतिं प्राप्य यतो मृत्युं जयत्यतः संवत्सरं पयसेत्याद्या श्रुतिरित्यर्थः । उक्तमनूद्य नेत्यादेरर्थमाह । **इत्येवमिति** ॥ ६८ ॥ ६९ ॥

**पयस्यन्तर्हितं विश्वं पश्यन्नेवं पयो नरः ॥**
**एकयैव स आहुत्या जगदात्मानमश्नुते ॥ ७० ॥**

श्रुत्युक्तस्य कथमसत्त्वमत आह । **पयसीति ।** अस्मिन्पयसि हूयमाने मग्नं जगदित्येवं पयो ध्यायन्नग्निहोत्रं तेन जुह्वदेकयैवाऽऽहुत्या जगद्रूपं प्रजापतिं प्राप्य मृत्युं जयतीत्यर्थः ॥ ७० ॥

**तत्रैवं सति को मूढो द्राघीयांसं प्रतीक्षते ॥**
**संवत्सरावधिं[1] कालं सकृदाहुतिसाधने ॥ ७१ ॥**

तस्मिन्फले मृत्युजये पूर्वोक्तविद्यानुसारेण सकृदाहुत्युपाये सति संवत्सरपरिमाणं कालं दीर्घतरमुक्तफलार्थं बुद्धिपूर्वकारी न प्रतीक्षेतातः संवत्सरं पयसेत्याद्यसदेवेति फलितमाह । **तत्रेति** ॥ ७१ ॥

**पयो द्रव्यं यथातत्त्वदर्शी चेच्छ्रद्धयाऽन्वितः ॥**
**यदेवाहर्जुहोतीत्थं हन्ति मृत्युं तदेव सः ॥ ७२ ॥**

यदहरित्यादेरर्थमाह । **पय इति ।** पूर्वोक्तश्रुतिस्मृत्यनुसारेण पयस्यन्तर्हितमित्यत्रोक्तं स्वरूपमनतिक्रम्य पयोदर्शनशीलो यदेवाहरेतत्पयो द्रव्यं श्रद्धया जुहोति तदेवाहरुक्तरीत्या विद्वान्मृत्युं जयत्येवं चेत्किं द्राघीयसा कालेनेत्यर्थः ॥ ७२ ॥

**एकयैव स आहुत्या देवेभ्योऽन्नं ह्यशेषतः ॥**
**प्रयच्छति यतो नातः प्रयोगान्तरमीक्ष्यते[2] ॥ ७३ ॥**

अत्रैव हेतुत्वेन सर्वं हीत्यादि व्याकरोति । **एकयेति ।** पयो जगदात्मकं पश्यन्पयसा जुह्वदेकयैवाऽऽहुत्या सर्वं जगद्देवेभ्योऽन्नं प्रयच्छन्देवानां तृप्तिमापादयति ते च

---

१ ख. °राधिकं का° । २ ख. °मीक्षते ।

तृप्ता गृहिणं प्रतर्पयन्तस्तस्य यतो मृत्युजयहेतवोऽतस्तज्जयस्य प्रयोगादेकस्मादेव सिद्धेर्न प्रयोगभेदापेक्षेत्यर्थः । विदुषो विद्यासामर्थ्यादेकयैवाऽऽहुत्या देवेभ्यो निखिल-जगदर्पणसामर्थ्यमस्तीति वक्तुं हिशब्दः ॥ ७३ ॥

**हुतमेवं जगत्कृत्स्नं नातोऽन्यदवशिष्यते ॥**
**यथो[१]क्तदर्शनात्तस्मात्[२]सर्वाप्त्या मृत्युजिद्भवेत् ॥ ७४ ॥**

हेत्वर्थमुपसंहरति । **हुतमिति** । अतो हुताज्जगतोऽन्यदहुतं होतव्यमिति यावत् । यथोक्तदर्शनं पयसि सर्वं जगत्प्रतिष्ठितमित्यनुध्यानं सर्वं जगदाहुत्यात्मकमात्मत्वेन ध्यात्वा स्वयमेव सर्वदेवान्नरूपेण सर्वैर्देवैरेकात्मत्वमनुभूय न पुनर्मरणभागित्यर्थः ॥७४॥

**उक्तवद्धृदि संभाव्य वक्ष्यमाणान्यपि श्रुतिः ॥**
**अन्नानि कस्मादित्याह प्रश्नवाक्यविवक्षया ॥ ७५ ॥**

ननु चत्वार्यन्नानि व्याख्यातानि त्रीणि व्याचिख्यासितानि तेष्वव्याख्यातेषु कस्मादित्या-दिप्रश्नः कस्मादित्याशङ्क्याऽऽह । **उक्तवदिति** । यद्यपि त्रीण्यन्नानि वक्ष्यमाणानि तथाऽपि तानि यथोक्तान्नचतुष्टयवदुपदिष्टान्येवेत्यभिप्रेत्य प्रश्नवचसो विवक्षया कस्मादिति श्रुतिरा-हेति योजना ॥ ७५ ॥

**अद्यमानान्यथान्नानि यथोक्तान्यत्तृभिः सदा ॥**
**कस्मात्क्षयं न संयान्ति यवपूर्णकुसूलवत् ॥ ७६ ॥**

प्रश्नवाक्यं व्याचष्टे । **अद्यमानानीति** । सप्तविधमन्नं सृष्ट्वा भोक्तृभ्यो विभज्य तत्प्रदानानन्तरमित्यथशब्दार्थः । यथोक्तानीति सप्तविधतोक्तिः । सदा प्रत्यहमद्यमाना-नीति संबन्धः । भक्ष्यमाणान्नापक्षये दृष्टान्तमाह । **यवेति** । कुसूलं धान्यगृहम् ॥ ७६ ॥

**प्रश्नस्य कस्मात्तानीति श्रुत्यैवाऽऽचार्यभूतया ॥**
**पुरुषो वा इति गिरा हेतुरुक्तोऽक्षये परः ॥ ७७ ॥**

प्रतिवचनमादत्ते । **प्रश्नस्येति** । कस्मात्तानीति प्रश्नस्योत्तरवादिन्या श्रुत्यैवाऽऽचार्य-वदवस्थितया पुरुषो वा अक्षितिरित्यादिवाक्येन यथोक्तान्नानामक्षये हेतुरबाधित उक्त इति योजना ॥ ७७ ॥

**अद्यते चेत्सदैवान्नं जन्यते न तु तत्ततः ॥**
**यथोक्तः स्यादयं दोषो न तु तन्नेह जन्यते ॥ ७८ ॥**

तस्य व्यतिरेकद्वारा तात्पर्यमाह । **अद्यते चेदिति** । ततो भोक्तुरिति यावत् । अय-मित्यन्नापक्षयः । इहेति भोगकालः । तस्मान्नान्नापक्षयशङ्केति शेषः ॥ ७८ ॥

**अन्नाक्षय[३]त्वहेतुत्वात्पुरुषोऽक्षितिरुच्यते ॥**
**स हि धीहाप्रबन्धेन सर्वदाऽन्नं करोत्यतः ॥ ७९ ॥**

---

१ ख. °थोक्तादर्श° । २ ख. °त्सर्वस्मान्मृत्यु° । ३ ख. °यस्य हे° ।

तत्राक्षितिशब्दार्थमाह । **अन्नेति** । कथं तस्य भोक्तुरन्नाक्षयहेतुतेत्याशङ्क्य स हीद-मित्यादेरर्थमाह । **स हीति** । शास्त्रीयाशास्त्रीयज्ञानकर्मसमूहेनाविद्वान्पुरुषो भोगावस्थायां भवत्यन्नस्रष्टेत्यर्थः । अतोऽक्षयहेतुत्वात्पुरुषोऽक्षितिरिति शेषः ॥ ७९ ॥

**क्रियाबुद्धिप्रबन्धेन यतो भोक्ताऽप्यहर्निशम् ॥**
**तदन्नं जनयत्येव तस्मादन्नं न हीयते ॥ ८० ॥**

उक्तमनूद्यान्नाक्षयफलमाह । **क्रियेति** ॥ ८० ॥

**भोगदस्यैव भोगेन सृज्यमानत्वहेतुतः ॥**
**अन्नाक्षयो भवेदेवं तयोरव्यतिरेकतः ॥ ८१ ॥**

भोक्ता हि भुञ्जानोऽन्नं क्षपयति कथं तस्य क्रियादिप्रबन्धेन तज्जनकतेत्याश-ङ्क्याऽऽह । **भोगदस्येति** । यज्ज्ञानं कर्म च भोगदं तस्य भोगेनैवाऽऽगामितद्धेतुरागा-द्युत्पादाद्भोगसर्गयोर्मिथोयोगान्नान्नस्य भोगेन क्षय एवं सति भोक्ता नान्नं क्षपयती-त्यर्थः ॥ ८१ ॥

**सुखदुःखादिसंवित्तिः[1] फलं पूर्वस्य कर्मणः ॥**
**रागद्वेषक्रिया तत्र स्यात्फलान्तरसिद्धये ॥ ८२ ॥**

कथं भोगो रागादिहेतुः स हि कामं विलापयतीति केचित्तत्राऽऽह । **सुखेति** । आदिपदमवान्तरभेदविषयम् । आर्जितज्ञानकर्मणोः सुखादिसाक्षात्काराख्यं फलं तच्च सजातीयविषयरागाद्युत्पादकं तत्पुनः शुभाशुभे कारयति ते च कर्तरि फलमिति प्रवाह-रूपेणान्नाक्षितिरित्यर्थः ॥ ८२ ॥

**रागादिपूर्वकं कर्म जायते फलवद्यतः ॥**
**रागादिरहितं तत्तु निष्फलं सुप्तवागिव ॥ ८३ ॥**

रागादेः सफलक्रियाहेतुत्वमन्वयव्यतिरेकाभ्यामाह । **रागादीति** । अतोऽस्ति फल-वत्क्रियाहेतुत्वं रागादेरिति शेषः ॥ ८३ ॥

**को हेतुरक्षयत्वे स्यादिति पृष्टमथाधुना ॥**
**तद्विदः फलसिद्ध्यर्थं भूयः प्रश्नोऽयमुच्यते ॥**
**अक्षितित्वं कथं पुंस इत्येतच्चाधुनोच्यते ॥ ८४ ॥**

पूर्वेणोत्तरस्यापुनरुक्त्यर्थमनुवदति । **को हेतुरिति** । अन्नानामत्तृभिः सदाऽद्यमानानां क्षयराहित्ये हेतौ पृष्टे पुरुषो वा अक्षितिरित्यादिनोत्तरमुक्तमित्यर्थः । अक्षयहेतुत्वगुण-कसप्तान्नात्मकप्रजापतिपुरुषोपासकस्य फलोक्त्यर्थं यो वैतामित्यादिवाक्यमित्याह । **अथेति** । स हीत्याद्यवतारयितुमाकाङ्क्षामाह । **भूय इति** । पुरुषो वा अक्षितिरित्य-क्षयहेतुत्वे तस्य प्रागुक्ते प्रकृते चानूदिते कथं तस्यान्नाक्षयहेतुतेति पुनरपि प्रश्नश्चेदि-

---

१ क. ग. °वित्तिफ°।

त्यर्थः । अस्योत्तरं स हीत्यादि प्रागुक्तं तदेव प्रपञ्चयते स हीत्यादिनेत्याह । **एत-च्चेति** ॥ ८४ ॥

**स हीदमन्नं कुरुते तत्तत्कालप्रसूतया ॥**
**धिया धिया हि पुरुषः कर्मभिश्चान्नमात्मनः ॥ ८५ ॥**

तद्व्याचष्टे । **स हीति** । कर्मभिश्च तत्तत्कालप्रसूतैरिति शेषः । ज्ञानकर्मणोरन्वयव्य-तिरेकसिद्धं विहिताविहितपारंपर्येण तज्जनकत्वमिति हिशब्दार्थः ॥ ८५ ॥

**भुज्यमानान्यपि ततो न क्षीयन्ते प्रबन्धतः ॥ ८६ ॥**
**यथैव पुरुषोऽन्नानां भोक्ताऽत्यन्तं तथैव सः ॥**
**कर्ताऽप्यत्यन्तमेव स्यादन्योन्याव्यतिरेकतः ॥ ८७ ॥**

तस्य ज्ञानकर्मभ्यां विहिताविहिताभ्यामन्नजनकत्वे फलितमाह । **भुज्यमानानीति ।** प्रबन्धतो भोगसर्गयोः प्रवाहरूपेण सत्त्वादिति यावत् । यद्धैतादित्यादेरन्वयद्वारा तात्प-र्यमाह । **यथेति** । तत्र हेतुमाह । **अन्योन्येति** । कर्तृत्वभोक्तृत्वयोर्मिथोबद्धत्वादि-त्यर्थः ॥ ८६ ॥ ८७ ॥

**एवं प्रबन्धरूपेण साध्यसाधनलक्षणम् ॥**
**अविद्यापटसंवीतचेतसां[1] स्थास्न्विवेक्षते[2] ॥ ८८ ॥**

**धिया** धियेत्यादिश्रुतेः स हीदमित्यत्रोक्तं परिहारं प्रपञ्चयन्त्याः सप्तविधान्नस्य कार्यत्वात्प्रतिक्षणध्वंसित्वेऽपि पुनः पुनः क्रियमाणत्वात्प्रवाहात्मना तदचलमज्ञाः पश्यन्तीत्यस्मिन्नर्थे तात्पर्यमतः प्रज्ञेत्यादिभाष्योक्तं व्यनक्ति । **एवमिति** ॥ ८८ ॥

**एतच्च भण्यते श्रुत्या पुंसो वैराग्यसिद्धये ॥**
**संसारादविरक्तस्य मुक्तीच्छा नेह कस्य चित् ॥ ८९ ॥**

किमिति प्रतिक्षणप्रध्वंसि जगदिति श्रुत्योच्यते तत्राऽऽह । **एतच्चेति** । वैराग्यमपि किमर्थं तदाह। **संसारादिति**। न हि जगति रागवतां मोक्षापेक्षा दृष्टेत्यर्थः ॥ ८९ ॥

**फलहेत्वोर्मिथोऽत्यन्तं सर्वदाऽव्यतिरेकतः ॥**
**सम्यग्ज्ञानादृते नास्ति तद्धेतूच्छित्तिकारणम् ॥ ९० ॥**

अविरक्तस्यामुमुक्षुत्वे हेतुमाह । **फलेति** । संसारस्य रागादेश्च सदैव व्याप्ते रागिणो न मुमुक्षेत्यर्थः । विरक्तस्यापि न मुक्तीच्छा मुक्तेः कर्मसाध्यत्वात्कर्मणश्च रागाधीनत्वा-दित्याशङ्क्याऽऽह । **सम्यगिति** । सहेतुबन्धध्वंसि ज्ञानमेव न कर्माप्रतिकूलत्वादि-त्यर्थः ॥ ९० ॥

**त्यक्त्वाऽन्यत्सकलं तस्मात्सम्यग्ज्ञानस्य लब्धये ॥**
**मनोवाक्तनुचेष्टाभिर्महान्तं यत्नमाचरेत् ॥ ९१ ॥**

---

१ ग. °तसा स्था° । २ ख. ग. °वेक्ष्यते ।

ज्ञानस्यैव मोक्षहेतुत्वान्मुमुक्षुर्ज्ञानार्थं संन्यस्य श्रवणाद्यावृत्तिपरः स्यादिति फलितमाह । **त्यक्त्वेति** । यथोक्तावृत्तिपरत्वस्य तत्त्वज्ञानपर्यन्तं सदैवात्याज्यत्वं महत्त्वम् ॥ ९१ ॥

**पुंसोऽक्षितित्वं यो वेद तस्येदं फलमुच्यते ॥**
**सोऽन्नमत्ति प्रतीकेन वृत्त्याऽन्नं मुख्ययाऽत्ति सः ॥ ९२ ॥**

धिया धियेत्यादि व्याख्याय यो वैतामित्यादि व्याचष्टे । **पुंस इति** । सोऽन्नमित्यादि मन्त्रपदं तस्यार्थमाह । **वृत्त्येति** ॥ ९२ ॥

**नैवंविद्गुणतामेति ह्यन्नं प्रति कदाचन ॥**
**प्रधानभूतः सन्भुङ्क्ते सर्वदाऽन्नं स कामतः ॥ ९३ ॥**

उक्तमर्थं व्यतिरेकद्वारेणाऽऽह । **नैवंविदिति** । अविदुषो विद्यासामर्थ्याभावादन्नं प्रति गुणत्वं युक्तं विदुषस्तु विद्यासामर्थ्यादन्नं प्रति प्रधानत्वमेवेति हिशब्दार्थः । कदाचन भोगात्प्रागूर्ध्वं तत्काले चेत्यर्थः । विदुषोऽन्नं प्रति गुणत्वाभावे कथं तद्भोक्तृत्वं तत्राऽऽह । **प्रधानेति** ॥ ९३ ॥

**अपि देवान्स संयाति तथोर्जं चोपजीवति ॥**
**प्रशंसैषा यथोक्तस्य विज्ञानस्येति निश्चितिः ॥ ९४ ॥**

स देवानपीत्यादेरर्थमाह । **अपि देवानिति** । सोऽन्नमत्तीत्यत्रैव देवभावादेः सिद्धेरत्रापूर्वार्थलाभाभावाद्विद्यास्तुतिरेवेत्यर्थः ॥ ९४ ॥

**अन्नत्रयं यदुत्कृष्टं तस्यायं निर्णयोऽधुना ॥**
**शरीरकार्यसंस्थस्य वर्ण्यतेऽध्यात्मरूपकम् ॥ ९५ ॥**

साधनात्मकमन्नचतुष्टयमुक्तमुक्तं चान्नाक्षयकारणमक्षितित्वगुणप्रक्षेपेण पुरुषोपासनस्य च फलमिदानीमा **ब्राह्मणसमाप्ते**रुत्तरस्य तात्पर्यमाह । **अन्नेति** । उत्कृष्टं साधनचतुष्टयात्पृथक्कृतमिति यावत् । शरीरं सूक्ष्मं कार्यं स्थूलं तदात्मना स्थितान्नत्रयस्य व्याख्यानायोत्तरो ग्रन्थ इत्यर्थः । त्रयो लोका इत्यस्मात्प्राक्तनस्य विशेषसंगतिमाह । **वर्ण्यत इति** । अन्नत्रयमादाविति शेषः ॥ ९५ ॥

**प्रयोगसमवायित्वं पूर्वेष्वन्नेषु वर्णितम् ॥**
**भोक्तारश्चापि ये तेषां तेऽपि श्रुत्योपवर्णिताः ॥ ९६ ॥**

उक्तमेव संबन्धं व्यक्तीकर्तुं प्रागुक्तमनुद्रवति । **प्रयोगेति** । पूर्वेष्वन्नेषु साधारणान्नं देवान्नं पश्वन्नमित्येतेष्विति यावत् । भोक्तारस्तेषां श्वचाण्डालादयो देवा इन्द्रादयः पशवश्चेत्यर्थः ॥ ९६ ॥

---

१ ख. तस्यैतत्फल° । २ क. ख. स ह दे° ।

**प्रयोगसमवायित्वात्पूर्वेषां कर्मणां सताम् ॥**
**मनआदित्रयं कार्यं तादर्थ्येनोत्तरा श्रुतिः ॥ ९७ ॥**

अन्नचतुष्टयं साधनमन्नत्रयं साध्यमित्युक्त्वाऽवान्तरविभागमनुवदति। **प्रयोगसमवायित्वादिति** । फलभूतान्नत्रयव्याख्यानायोत्तरग्रन्थप्रवृत्तिं प्रतिजानीते । **तादर्थ्येनेति** ॥ ९७ ॥

**उत्पाद्य त्रीण्यथान्नानि मेधया तपसा पिता ॥**
**मनो वाचं तथा प्राणमात्मार्थे तानि चाकरोत् ॥ ९८ ॥**

त्रीणीत्यादि व्याकरोति । **उत्पाद्येति** । ज्ञानकर्मभ्यां सप्तान्नानि सृष्ट्वा चत्वारि भोक्तृभ्यो विभज्य त्रीण्यात्मार्थं कृतवानित्यर्थः । अन्नसृष्टेरन्नचतुष्टयविनियोगस्य चानन्तरभावित्वमथशब्दार्थः । इतरचतुष्टयविनियोगं दृष्टान्तयितुं चकारः ॥ ९८ ॥

**मनसोऽस्तित्वसिद्ध्यर्थं श्रुत्योपन्यस्यतेऽनुमा ॥**
**सतश्च तस्य कामादिरूपाण्यपि च वक्ष्यति ॥ ९९ ॥**

अन्यत्रेत्यादेस्तात्पर्यमाह । **मनस इति** । सा त्वग्रे व्यक्ती भविष्यति । अनुमितं चेन्मनोस्तित्वं किमर्थं तर्हि कामादिवाक्यमित्याशङ्क्य तस्याऽऽपाततस्तात्पर्यमाह । **सतश्चेति** । मितस्य चेति चकारार्थः । धर्मिणा धर्मसमुच्चयार्थमपि चेत्युक्तम् ॥ ९९ ॥

**अविद्याधिकृतावस्थां धर्मधर्म्यादिसंगतिः ॥**
**अविद्याकार्यसंस्थैव न त्वसौ प्रत्यगात्मनः ॥ १०० ॥**

विवक्षितं तात्पर्यमाह । **अविद्येति** ॥ १०० ॥

**इत्येतत्प्रतिपत्त्यर्थं परो ग्रन्थोऽवतार्यते ॥**
**मा भूत्कामादिधर्मित्वमात्मनीति प्रयत्यते ॥ १०१ ॥**

कथं प्रतिज्ञामात्रेणायमर्थः सिध्यति तत्राऽऽह । **इत्येतदिति** । आत्मनो धर्मधर्मिसंबन्धो नेत्ययुक्तं कामादीनां तद्धर्मत्वप्रसिद्धेरित्याशङ्क्याऽऽह । **मा भूदिति** । आत्मनि कामादिधर्मित्वं शङ्कितं मा भूदिति कृत्वा श्रुत्या मनोधर्मत्वं तात्पर्येण कामादीनां साध्यते प्रसिद्धिस्तु प्रमाणविरुद्धा भ्रान्तिरित्यर्थः ॥ १०१ ॥

**पृष्टो जरद्गवं यान्तमद्राक्षीस्त्वमितीतरः ॥**
**ततोऽन्यत्रमना आसं नातोऽद्राक्षं त्वदीरितम् ॥ १०२ ॥**

उत्तरग्रन्थं विभज्य तस्य तात्पर्यमुक्त्वाऽन्यत्रेत्यादि व्याचष्टे । **पृष्ट इति** । इतरो वदतीति शेषः । तदीयमभिवदनप्रकारमाह । **तत इति** । जरद्गवादीत्यर्थः । जरद्गवधीहेतौ विषयादौ सत्यपि कदाचिदेव तद्धीर्जायमाना हेत्वन्तरमाक्षिपत्यन्यथाऽर्थादिसांनिध्ये कदाचिदेव ज्ञानोत्पत्त्यनुपपत्तिरित्यर्थापत्तिर्मनःसाधिकेत्यर्थः ॥ १०२ ॥

**विषयान्तरसंबद्धं मनो दृष्टं घटादिवत् ॥**
**आत्मैकसाक्षिकं तच्च ह्युक्तार्थापत्तिसंश्रयात् ॥ १०३ ॥**

तत्रैव साक्षिप्रत्यक्षमाह । **विषयान्तरेति** । उक्तार्थापत्त्यवष्टम्भात्कारणान्तरसिद्धावपि कथं मनःसिद्धिरित्याशङ्क्य पारिशेष्यादित्याह । **तच्चेति** । चकारः साक्षिप्रत्यक्षसमुच्चयार्थः । मानस्य मेयसाधकत्वं प्रसिद्धमिति हिशब्दार्थः । न च श्रोत्राद्येव तद्गम्यमिति युक्तं तदवैकल्येऽपि कदाचिदर्थधियोऽनुत्पादात्तदभावेऽपि च बधिरादेः स्मृतिदर्शनादिति भावः ॥ १०३ ॥

**अस्त्यात्मा चित्स्वभावोऽत्र चक्षुश्चाविकलं तथा ॥**
**सप्रकाशं गवाश्वं च न च पश्यति चेतनः ॥ १०४ ॥**

मनसोऽस्तित्वसिद्ध्यर्थमित्यत्रोक्तमनुमानं प्रकटयितुं हेतुमाह । **अस्तीति** । अत्र गवादौ प्रश्नविषये सतीति यावत् । ज्ञानाभावे कर्तृस्थदोषो न हेतुरित्याह । **चिदिति** । करणदोषोऽप्यकारणमित्याह । **चक्षुश्चेति** । उपकरणासत्त्वमपि न तन्निमित्तमित्याह । **सप्रकाशमिति** । सत्यां सामग्र्यां कार्यमपि स्यादित्याशङ्क्याऽऽह । **न चेति**॥१०४॥

**अतोऽनुमीयतेऽस्त्यन्यद्यस्मिन्नसति नेक्षते ॥**
**द्रष्ट्रादि संहतं सर्वं यस्मिंश्च सति वीक्षते ॥ १०५ ॥**

विमतमात्माद्यतिरिक्तापेक्षं तस्मिन्सत्यपि कादाचित्कत्वाद्धटवदित्याह । **अत इति** । संप्रतिपन्नात्मादेरन्यद्गवादिज्ञाने कारणं सिद्धमित्यनुमानफलमाह । **अस्तीति** । तत्रैवान्वयव्यतिरेकावाह । **यस्मिन्निति** । सर्वं द्रष्ट्रादि संहतं मिलितमिति कर्तृनिर्देशः । तदन्यदस्तीति संबन्धः ॥ १०५ ॥

**यत्तदस्ति मनस्तत्स्यात्प्रसिद्ध्या चास्ति तन्मनः ॥**
**अभून्मम मनोऽन्यत्र यतो नाद्राक्षमित्यतः ॥ १०६ ॥**

मनसोऽर्थान्तरं तदित्याशङ्क्याऽऽह । **यदिति** । यत्कारणान्तरं तत्पारिशेष्यात्प्रागुक्तान्मनः स्यादिति योजना । न चादृष्टमेव तदिति युक्तं तस्य दृष्टानुसारित्वात्तन्मात्रवैफल्यात्कार्यानुपपत्त्ययोगादन्यथाऽतिप्रसङ्गादिति भावः । लोकप्रसिद्धिरपि तत्र मानमित्याह । **प्रसिद्ध्येति** । इषुकारप्रसिद्धिरपि तत्र मानमित्याह । **अभूदिति** । यतोऽन्यत्रेष्वादौ मम मनो व्यापृतमासीदतो राजानं समीपे गच्छन्तमपि न बुद्धवानस्मीति प्रसिद्धिविशेषादपि तत्सिद्धिरित्यर्थः ॥ १०६ ॥

**सदप्यात्मादिकं सर्वं दर्शनादावकारणम् ॥**
**मनसैव यतो द्रष्टा गवादीह प्रपश्यति ॥ १०७ ॥**

मनसा हीत्यादेरर्थमाह । **सदपीति** । इहेत्यात्मेन्द्रियार्थसांनिध्यावस्थोच्यते । दर्शनादावित्यादिशब्देन स्पर्शनादि गृह्यते । पश्यतीति शृणोत्यादेरुपलक्षणम् । अतस्तदस्तीति शेषः ॥ १०७ ॥

**निःशेषप्रत्ययाधारधर्म्यस्तित्वं प्रसाध्य हि ॥**
**कामादिधर्मसिद्ध्यर्थं काम इत्याद्यथोच्यते ॥ १०८ ॥**

वृत्तमनूद्य वाक्यान्तरमवतारयति । **निःशेषेति** । सति धर्मिणि धर्माणां चिन्तेति न्यायं द्योतयितुं हिशब्दः । मनो विशेषगुणवन्मूर्तत्वाद्घटवादित्यनुमानानुग्राहकत्वेन श्रुतिप्रवृत्तिं सूचयति । **अथेति** ॥ १०८ ॥

**साधनान्येव मनसो बुद्धिकर्मेन्द्रियाण्यपि ॥**
**सहैवाऽऽयतनैः सर्वैः प्राधान्यं मनसस्ततः ॥ १०९ ॥**

कामादयो न मनोधर्मास्तेषां देहादिजत्वेन तद्धर्मत्वादित्याशङ्क्याऽऽह । **साधनानीति** । कामाद्युत्पादे मनसो गुणभूतानि देहादीन्यतस्तस्य प्रधानस्यैव धर्मित्वमित्यर्थः । अभिहिता व्याप्तिरपेरर्थः ॥ १०९ ॥

**विषयाभिलाषः कामः स्यान्न विशेषेऽस्ति कारणम् ॥**
**इन्द्रियालोचितार्थस्य स्यात्संकल्पोऽवधारणम् ॥ ११० ॥**

कामशब्दार्थमुक्त्वा स्त्रीव्यतिकराभिलाष इति भाष्ये विशेषोक्तिरयुक्तेत्याह । **विषयेति** । संकल्पं व्याकरोति । **इन्द्रियेति** । सामान्यतो दृष्टस्य विशेषतोऽवधारणं काममूलः संकल्प इत्यर्थः ॥ ११० ॥

**अनिश्चयात्मिका वृत्तिर्विचिकित्सेत्युदाहृता ॥**
**आस्तिक्यबुद्धिः श्रद्धा स्यादश्रद्धा तद्विरोधिनी ॥ १११ ॥**

विचिकित्सादि व्याचष्टे । **अनिश्चयेति** ॥ १११ ॥

**धृतिश्रद्धे विना न स्युः कामाद्याः कारणादृते ॥**
**यतोऽकामादयोऽप्यत्र ह्युक्ता एवार्थतो मताः ॥ ११२ ॥**

अश्रद्धादिवदकामादिरपि कुतो नोच्यते तत्राऽऽह । **धृतीति** । हेतुं विना कार्यं स्वतो न सिध्यत्यतो धृत्यादेरन्वयादिना कामादिहेतुत्वात्तस्मादृते कामाद्ययोगाद्धृत्याद्यभावोक्त्यैवार्थादकामादयोऽप्युक्ता न हि देहाद्युत्तम्भनं विषयश्रद्धां च विना कामाद्या वृत्तयः सिध्यन्तीत्यर्थः । अत्रेति प्रकृतवाक्योक्तिः । कारणमन्तरेण कार्यं न सिध्यतीति प्रसिद्ध्यर्थो हिशब्दः ॥ ११२ ॥

**धारणं च धृतिर्ज्ञेया बुद्ध्योपात्तस्य वस्तुनः ॥**
**विपर्ययोऽधृतिस्तस्या ह्रीर्लज्जेत्यभिधीयते[1] ॥ ११३ ॥**
**विज्ञानं निश्चितं धीः स्याद्भयं भीरभिधीयते ॥**
**एतत्सर्वं मनो ज्ञेयमिति तादात्म्यमुच्यते ॥ ११४ ॥**

धृतिरित्यादेरर्थमाह । **धारणं चेति** । चकारेण देहाद्युत्तम्भनमपि संगृहीतम् । न

---

१ ग. °भिलप्यते ।

च विज्ञानस्य संकल्पेन पौनरुक्त्यं सामान्यविशेषाभ्यां भेदात् । न च निमित्तनैमित्तिकत्वेन सामानाधिकरण्यं कुलालघटादावदृष्टत्वादिति मत्वा तादात्म्यग्रहणम् ॥ ११३ ॥ ॥ ११४ ॥

**बुद्धेश्च मनसश्चैक्यं विवक्षित्वोपसंहृतिः ॥**
**इन्द्रियाण्यपि सर्वाणि स्वान्तस्यैव तु वृत्तयः ॥ ११५ ॥**
**यतः स्वकार्यनिर्देशः स्वान्तस्य स्पर्शनेन्द्रिये ॥**
**मन एव ततो ज्ञेयं शरीरेन्द्रियसंहतिः ॥ ११६ ॥**

बुद्धिं हित्वा मनसा तादात्म्यं कामादीनां किमित्युच्यते तत्राऽऽह । **बुद्धेश्चेति** । उक्तप्रमाणवशात्कामादिरूपं बुद्ध्यभिन्नं मनः सिद्धमित्युपसंहारस्तस्मादित्यनेन विवक्षितं इत्यर्थः । अपिशब्दार्थमाह । **इन्द्रियाणीति** । तत्र हेतुत्वेन पृष्ठत इत्यादि व्याचष्टे । **यत इति** । यद्वा द्वयोरैक्यमादायैतत्सर्वं मन इत्युपसंहारो बुद्धिमपि संगृह्णातीत्याह । **बुद्धेश्चेति** । तस्मादित्यादिवाक्यं व्याख्यातुं भूमिकां करोति । **इन्द्रियाणीति** । तत्र हेतुत्वेन तस्मादित्यादि व्याचष्टे । **यत इति** । त्वगिन्द्रियकरणेकृतं यदात्मीयं कार्यं तस्य मनःसंबन्धित्वेन पृष्ठतः स्पृष्टो मनसा विजानातीति निर्देशो यतो दृष्टोऽतस्त्वचो मनोमात्रतेत्यर्थः । उक्तन्यायात्त्वचो मनस्त्वेऽपि देहवदिन्द्रियान्तराणि भिन्नानीत्याशङ्क्याऽऽह । **मन इति** । न्यायसाम्यं ततःशब्दार्थः ॥ ११५ ॥ ११६ ॥

**पुंसो भोगप्रसिद्ध्यर्थं वैचित्र्यं धीर्निगच्छति ॥**
**देहेन्द्रियाद्यवस्थाभिरतो धीः सर्वमेव तु ॥ ११७ ॥**

सर्वं मनोमात्रं चेद्देहेन्द्रियावैचित्र्याद्भोक्तृभोगवैषम्यमपि न स्यादित्याशङ्क्याऽऽह । **पुंस इति** । आदिपदेन सर्वाणि भोगोपकरणानि गृह्यन्ते । संघातस्य मनस्त्वेऽपवादाभावात्तं निगमयति । **अत इति** ॥ ११७ ॥

**जिघ्रन्ती भवति घ्राणं पश्यन्ती चक्षुरुच्यते ॥**
**शृण्वती भवति श्रोत्रमिति व्यासोऽप्यभाषत ॥ ११८ ॥**

चक्षुराद्यात्मना मनःस्थितौ प्रमाणमाह । **जिघ्रन्तीति** ॥ ११८ ॥

**शुक्लं कृष्णमणु स्थूलमिति धीः कर्मणो वशात् ॥**
**द्वैताधिकारमापन्ना वैश्वरूप्यं निगच्छति ॥ ११९ ॥**

विषयेभ्यो भेदवन्मनसो देहादेर्भेदमाशङ्क्याऽऽह । **शुक्लमिति** । द्वैतप्रवृत्त्युन्मुखं मनो भोक्तृकर्मवशान्नानार्थाकारेण विवर्तत इत्यर्थः ॥ ११९ ॥

**प्रत्यक्षिदेशभेदेन न हि शुक्लादिवस्तुनः ॥**
**सत्ता संभाव्यतेऽन्यत्र प्रत्यग्वद्ग्राह्यवस्तुनः ॥ १२० ॥**

---

१ क. ख. °तमित्य° । २ क. °णत्वकृ° ।

बुद्धिरेव सर्वात्मना विवर्तते चेत्सैवाद्वयेत्यात्माद्वैतविहतिरित्याशङ्क्याऽऽह । प्रत्यगिति । चैतन्यमेव प्रत्यग्भूतं सर्वकल्पनाधिष्ठानं ततो भेदेन नामरूपकर्मात्मकद्वैतस्य सत्ताऽसंभावितेत्यर्थः । तत्र वैधर्म्यदृष्टान्तमाह । अन्यत्रेति । ग्राह्याद्वस्तुनोऽन्यत्र प्रतीचो यथा सत्ता संभाव्यते न तथा तद्भेदेनानात्मनः सा सत्ता संभवत्यतो मनसः सकार्यस्य चिन्मात्रत्वात्तदद्वयतेत्यर्थः ॥ १२० ॥

**नातः शुक्लादिवस्त्वस्ति बुद्धिरेव क्रियावशात् ॥**
**शुक्लादिरूपतामेति पुरुषार्थप्रसिद्धये ॥ १२१ ॥**

अपसिद्धान्तं निरस्य शुक्लमित्यादिनोक्तं निगमयति । नात इति ॥ १२१ ॥

**धीर्विपर्ययरूपेयं यतः शुक्लादिरूपिणी ॥**
**मन एवेत्यतः प्राज्ञाः सर्वरूपं प्रचक्षते ॥ १२२ ॥**

पुंसो भोगार्थं नानारूपत्वं गच्छति धीरिति ब्रुवता रूपधेयं सर्वं धीमात्रमित्युक्तं तत्र विद्वत्प्रसिद्धिं प्रमाणयति । धीरिति । एषा हि धीर्विविधा रूपवती भूत्वा यतो विपर्ययरूपा निरूप्यतेऽतो धीरेव सर्वं रूपमिति विदुषां परिभाषा युक्तेत्यर्थः ॥ १२२ ॥

**आत्मार्थेनैव सत्यत्वं कृत्स्नात्मीयस्य वस्तुनः ॥**
**तस्य तन्मात्रयाथात्म्यादिति पूर्वमवादिषम् ॥ १२३ ॥**

मनसोऽपि तर्हि सर्वात्मत्वादात्मवत्परमार्थतेत्यद्वैतहतिः सर्वात्मद्वयायोगात्तदेव वा सर्वात्मकमित्याशङ्क्य प्रत्यक्चिद्देशभेदेनेत्यादावुक्तं स्मारयति । आत्मार्थेनेति । अधिष्ठानेनैवाऽऽरोप्यस्य रूपवत्त्वादतिरिक्तरूपाभावादात्मनैव मनआदेरनात्मनः सत्त्वमिति बहुशो दर्शितत्वान्नोक्तदोषावकाशोऽस्तीत्यर्थः ॥ १२३ ॥

**अपि सर्वाणीन्द्रियाणि मन एव यतस्ततः ॥**
**पृष्ठतोऽपि नरः स्पृष्टो मनसैव प्रपद्यते ॥ १२४ ॥**

तस्मादपीत्यादेस्तात्पर्यमुक्त्वाऽक्षरार्थमनुवदति । अपीति ॥ १२४ ॥

**पराङ्मुख उपस्पृष्टः पाणेः स्पर्शोऽयमीदृशः ॥**
**इति स्पर्शविशेषं ना मनसैव प्रपद्यते ॥ १२५ ॥**

पृष्ठतोऽपि स्पृष्टो मनो विना बाह्येन्द्रियवशादेव स्पर्शं ग्रहीष्यतीत्याशङ्क्याऽऽह । पराङिति ॥ १२५ ॥

**त्वचोपस्पृष्टिमात्रेण स्पर्शमात्रं प्रपद्यते ॥**
**स्पर्शनादिविशेषं तु मनसैव प्रपद्यते ॥ १२६ ॥**

चक्षुरादेरसंप्रयोगात्तेन स्पर्शविशेषादर्शनेऽपि संप्रयुक्तया त्वचा विनैव मनो हस्तादिस्पर्शदर्शनं स्यादित्याशङ्क्याऽऽह । त्वचेति । यद्यपि चक्षुर्वत्त्वचो द्रव्यग्राहकत्वा-

---

१ ख. °रूपं ग° । २ ख. °तद्धानिः स° ।

त्तद्विशेषस्पर्शस्तया ज्ञातुं शक्यस्तथाऽप्यसमाहितस्य हस्तादिना स्पृष्टस्य स्पर्शमा मादौ प्रतिपद्य तद्विशेषमालोच्याऽऽकलयतो मनसैव तदधिगतिरित्यर्थः ॥ १२६ ॥

**मनसैव यतोऽशेषकरणस्वार्थधीभवः ॥**
**सर्वं हि मन एवेति श्रुतिराह वचस्ततः ॥ १२७ ॥**

तस्मादपीत्यादिवाक्यार्थमुपसंहरति । **मनसेति** । सर्वकरणानां घ्राणत्वगादीः स्वार्थेषु केतकीगन्धहस्तस्पर्शादिषु ज्ञानोत्पत्तिर्यतो मनसैव भवत्यतः सर्वं करणादि मनो मात्रमिति कृत्वा श्रुतिस्तस्मादित्यादिवाक्यमाहेत्यर्थः । न च तत्तत्करणकृतार्थधी मनसः साधारणकरणत्वमेव न तत्तत्करणत्वमिति युक्तं तथा सति दर्शनस्पर्शादौ मन सेतिविशेषणवैयर्थ्यात्तदीयसाधारणकरणत्वस्य तदभावेऽपि संभवादिति हिशब्दार्थः यद्वा सर्वस्यैव करणस्य मनस्त्वे बुद्धेस्ततो भेदाभावात्तयोरैक्यं विवक्षित्वैतत्सर्वं मन एवेति वचः श्रुतिराहेति निगमयति । **मनसेति** ॥ १२७ ॥

**मनस्तावत्सुनिर्णीतं शरीरं चेन्द्रियाणि च ॥**
**तदनन्तरतो वाचो व्याख्या प्रस्तूयतेऽधुना ॥ १२८ ॥**

अन्यत्रेत्यादिना मन एवेत्यन्तेनोक्तमनूवदति । **मनस्तावदिति** । तस्मादित्यादि नोक्तं कीर्तयति । **शरीरं चेति** । मनोनिर्णयानन्तरं देहेन्द्रियसंहतिर्मनोमात्रत्वेन निर्णीतेत्यर्थः । यः कश्चेत्यादेस्तात्पर्यमाह । **वाच इति** ॥ १२८ ॥

**यः कश्चेत्यविशेषोक्तिर्नादवर्णपदोक्तिभिः ॥**
**संयोगोत्थो वियोगोत्थो यश्चापि प्रत्ययात्मकः ॥ १२९ ॥**
**वागेव स इति ज्ञेयः कुतो यस्मादियं सदा ॥**
**समानयोने रूपस्य वाक्प्रमाऽतोऽववोधिका ॥ १३० ॥**

आध्यात्मिकवाङ्निर्णयार्थमुत्तरं वाक्यमिति तात्पर्यमुक्त्वा यः कश्चेत्यनूद्य तस्यार्थ- माह । **य इति** । अविशेषेण ध्वनिमात्रोक्तौ सिद्धं वदन्वागेवेत्यस्यार्थमाह । **नादेति** । कण्ठादिना कोष्ठनिष्ठवायोः संयोगादिसमुत्थो नादाद्याकारेण यः शब्दो यश्च प्रत्यय- स्तस्मादिन्द्रियान्तरैश्चोत्पन्नः सर्वोऽपि वागेवेत्यर्थः । शब्दस्य वाक्त्वेऽपि प्रत्ययस्य कथ- मित्याक्षिपति । **कुत इति** । सेति पदमादाय परिहरति । **यस्मादिति** । प्रकाश्यप्रका- शकयोरविद्यत्वात्प्रकाशकेन तुल्योपादानस्य प्रकाश्यस्य करणद्वारा संबन्धस्यावबोधिका यतोऽत्र वागिष्टाऽतः प्रकाश्यमात्रप्रकाशकस्य वाक्शब्दत्वाच्छब्दप्रत्ययात्मिका प्रमा सर्वा सेयं वागेव सदा भवतीत्यर्थः ॥ १२९ ॥ १३० ॥

**वागेव प्रत्ययादौ स्यादित्येतद्युज्यते कुतः ॥**
**स्वाभिधेयावबोधस्य सा समार्थ्यं यतः ॥ १३१ ॥**

---

१ ग. प्रक्रिय° ।

**यतोऽत्यर्थं प्रवृत्ता वाग्घटबोधे प्रदीपवत् ॥**
**अर्थावबोधनं कार्यं वाचो नान्यदितोऽपरम् ॥ १३२ ॥**

शब्दप्रत्ययात्मना वर्तते वागेवेत्यत्र मानाभावं शङ्कते। **वागेवेति**। तत्र स्वरूपत्वेन स्थितेति शेषः। एषा हीत्याद्युत्तरत्वेन व्याचष्टे। **स्वाभिधेयेति**। वाचकस्य वाच्यार्थप्रतिपत्तिपर्यन्तं प्रवृत्तिः शाब्दव्यवहारे प्रसिद्धेतिप्रदर्शनार्थो हिशब्दः। किमत्रार्थप्रकाशकस्य वाक्त्वे मानमुक्तं तदाह। **अर्थेति**। यतोऽर्थनिश्चयपर्यन्तं वाक्प्रवृत्ताऽतोऽर्थज्ञानं तत्कार्यं न चापरं कार्यं तस्या युक्तमित्यर्थः। शब्दप्रत्ययावर्थप्रकाशकावतो न तौ वाचस्तत्त्वतो भिद्येते प्रकाशकत्वात्तद्वदिति प्रकाशकमात्रस्य वाक्त्वं युक्तमित्यर्थः ॥ १३१ ॥ १३२ ॥

**शब्दोच्चारणशक्तं हि ननु वागिन्द्रियं मतम् ॥**
**कथं तद्विषयः शब्दो वागित्यत्राभिधीयते ॥ १३३ ॥**

प्रकाशकमात्रमत्र न वाक्शब्दं वृद्धप्रसिद्धिविरोधादिति शङ्कते। **शब्देति**। प्रत्ययप्रसवसमर्थश्चेति वक्तुं हीत्युक्तम्। शब्दः प्रत्ययश्चेति द्रष्टव्यम् ॥ १३३ ॥

**सत्यमन्यत्र तद्ग्राह्यं तस्य तत्रैव योग्यतः ॥**
**इह त्वन्नत्रयस्यैव सर्वात्मत्वं विवक्षितम् ॥ १३४ ॥**

इन्द्रियविषयां प्रसिद्धिमङ्गी करोति। **सत्यमिति**। तर्हि वाक्शब्देनेन्द्रियमत्र ग्राह्यं तत्राऽऽह। **अन्यत्रेति**। प्रकृतं प्रकरणं हित्वेत्यर्थः। तत्र हेतुः। **तस्येति**। प्रकरणान्तरे वागिन्द्रियस्य वाक्शब्देन ग्रहीतुं योग्यत्वात्तत्रैव तद्ग्रहणमित्यर्थः। एकस्य पदस्यानेकार्थत्वायोगादत्रापि वाक्पदेनेन्द्रियोक्तिमाशङ्क्याऽऽह। **इह त्विति**। अन्नत्रयाधिकारे वाक्शब्देन नेन्द्रियमात्रमित्यर्थः। प्रकाशकमात्रस्यात्र वाक्शब्दत्वे हेतुमाह। **अन्नेति** ॥ १३४ ॥

**मनोऽन्तःपाति निखिलं रूपं यद्वाद्विवक्ष्यते ॥**
**तस्य प्रकाशकस्तद्वत्सर्वः शब्दो विवक्ष्यते ॥ १३५ ॥**

अत्रान्नत्रयस्य सर्वात्मत्वे विवक्षितेऽपि कथं वाक्शब्दं प्रकाशकमात्रमित्याशङ्क्याऽऽह। **मन इति**। प्रकाश्यस्य सर्वस्य मनस्यन्तर्भाववत्प्रकाशकस्यापि सर्वस्य वाच्यन्तर्भावः सिध्यतीत्यर्थः। शब्दशब्देन वागुक्ता ॥ १३५ ॥

**प्रकाशस्यैव सर्वस्य शब्दत्वप्रतिपत्तये ॥**
**एषा हि नेत्यतो वक्ति वागिन्द्रियनिवृत्तये ॥ १३६ ॥**

एषा हि नेत्यस्यार्थमाह। **प्रकाशस्येति**। सर्वस्यैव प्रकाशकस्य वाक्शब्दत्वार्थं

---

१ ख. यत्तात्पर्यं।

वागिन्द्रियनिवृत्तिरिष्टा तदर्थमेषा हि नेति श्रुतिरिन्द्रियत्वाभावं वाचो वक्त्यतो वागीं प्रकाशकमात्रमित्यर्थः ॥ १३६ ॥

**रूपात्मकं यथा चक्षू रूपस्यैव प्रकाशकम् ॥**
**वाक्क शब्दात्मिका तद्वच्छब्दस्यैवास्तु दीपिका ॥ १३७ ॥**

एषा हि नेत्यस्य भर्तृप्रपञ्चव्याख्यां वक्तुं व्यावर्त्यां शङ्कामाह । **रूपात्मकमिति । यथाऽऽहुः**—यथा रूपमात्मनैवाऽऽत्मानं व्याकुरुते शब्द आत्मानमेवं व्याकुर्यान्न परमिति ॥ १३७ ॥

**इति चोद्यं समाशङ्क्य परिहारं प्रचक्षते ॥**
**एषा हि नेति केचित्तु नेयं दीपादिवन्मता ॥ १३८ ॥**

तदीयं परिहारमवतारयति । **इति चोद्यमिति** । परिहारमेव स्फोरयति । **नेयमिति** । आदिशब्दस्याऽऽदित्यादिप्रकाशोऽर्थः । यथा दीपः सजातीयरूपप्रकाशको न तथेयं किंतु सर्वस्यैव प्रकाशिका । **यथाऽऽहुः**—एषा ह्यत्यन्तं प्रकाश्यविषया न कदाचित्प्रकाशयितव्यमन्तेरणोपलभ्यत इति । अतः प्रकाशकमात्रमत्र वाक्शब्दमित्यर्थः ॥ १३८ ॥

**श्रोत्रादिकरणग्राह्यं सर्वं तद्रूपमुच्यते ॥**
**तस्य प्रकाशिकैवेयं न प्रकाश्या प्रदीपवत् ॥ १३९ ॥**

यत्तु रूपात्मकमित्यादि तत्तु रूपं प्रसिद्धं वा प्रकाश्यमात्रं वा नाऽऽद्यश्चक्षुषस्तदात्मत्वासिद्धेरिति मन्वानो द्वितीयं प्रत्याह । **श्रोत्रादीति** । यदा प्रकाश्यमात्रं रूपमिष्टं तदा तस्यैषा वाक्प्रकाशिकैव न कदाचित्प्रकाश्या यथा दीपः प्रकाशकः प्रकाश्यश्च नैवं वागित्यर्थः ॥ १३९ ॥

**प्रकाश्यमेव चात्यन्तं मनो रूपं यथा तथा ॥**
**प्रकाशिकैव चात्यन्तं वाग्रूपस्येति निश्चितिः ॥ १४० ॥**

दीपवद्वाचोऽपि प्रकाश्यत्वं प्रकाशकत्वं च किं न स्यादित्याशङ्क्याऽऽह । **प्रकाश्यमेवेति** । मनसो रूपात्मकस्य प्रकाश्यत्वनियमवद्वाचोऽपि शब्दात्मिकाया युक्तं प्रकाशकत्वं नियन्तुमित्यर्थः ॥ १४० ॥

**प्रकाश्यमेव रूपं स्यात्प्रकाशो वाक्तथैव च ॥**
**विद्यादेतत्समासेन लक्षणं रूपसंज्ञयोः ॥ १४१ ॥**

नामरूपयोरसांकर्यार्थं लक्षणे भिनत्ति । **प्रकाश्यमिति** । यथोक्तलक्षणे प्रतिपत्तिसौकर्यमस्तीति दर्शयितुं समासेनेत्युक्तम् ॥ १४१ ॥

**नामापि गृह्यमाणं सद्रूपं भवति शौक्ल्यवत् ॥**
**रूपं च बोधयत्तद्वन्नामपक्षेऽवतिष्ठते ॥ १४२ ॥**

रूपलक्षणस्य नाम्न्यतिव्याप्तिमाशङ्क्याऽऽह । **नामेति** । नामलक्षणस्य रूपेऽतिव्याप्तिं निरस्यति । **रूपं चेति** । बोधकस्य नाम्नो रूपान्तर्भाववदित्याह । **तद्वदिति** । रूपं वा नाम वा बोध्यं चेद्रूपमेव नाम वा रूपं वा बोधकं चेन्नामैवेति नातिव्याप्तिरिति भावः ॥ १४२ ॥

**एवं वाङ्मनसे सम्यग्व्याख्याय प्रविभागशः ॥**
**तयोर्विधरणः प्राणस्त्वनिरुक्तोऽथ भण्यते ॥ १४३ ॥**

वृत्तमनूद्य प्राणादिवाक्यमवतारयति । **एवमिति** । वागादिप्रजारूपप्राणस्य कथं तद्विधारकत्वमित्याशङ्क्य कारणं विवक्षन्नाह । **अनिरुक्त इति** । धारयितव्योक्तौ धारयित्रपेक्षेतिक्रमार्थोऽथशब्दः ॥ १४३ ॥

**अन इत्यविशिष्टस्य वायोर्ग्रहणमिष्यते ॥**
**स एव प्रादिसंबन्धाद्विशेपार्थो भवेदसुः ॥ १४४ ॥**

प्राणादिशब्दार्थोक्त्यर्थं भूमिकां करोति । **अन इति** । एतच्चाग्रे व्यक्ती भविष्यति । तस्मिन्नेवानशब्दिते वायौ प्राणादिशब्दानां प्रवृत्तिमाह । **स एवेति** ॥ १४४ ॥

**उत्सर्गो मुखनासाभ्यां पिण्डस्य प्रणतिस्तथा ॥**
**प्राणो नाम मरुद्वृत्तिरपानस्त्वधुनोच्यते ॥ १४५ ॥**
**अवाग्वायोरपश्वासो देहस्यावाग्गतिस्तथा ॥**
**अपान एप कथितो व्यानः सांप्रतमुच्यते ॥ १४६ ॥**
**वीर्यवत्कर्महेतुत्वं व्याप्य देहे च वर्तनम् ॥**
**व्यानवृत्तिरियं प्रोक्ता ह्युदानाख्याऽपि कीर्त्यते ॥ १४७ ॥**
**योद्यमादिक्रियाहेतुस्तथाऽभ्युदयकर्मकृत् ॥**
**उत्कर्पहेतुर्देहे तु वृत्तिः सोदानसंज्ञिता ॥ १४८ ॥**
**समाहरति वृत्तीर्यो हृद्देशे कीलवत्स्थितः ॥**
**स समान इति ज्ञेयः सर्वकार्योपसंहृतिः ॥ १४९ ॥**

कथं प्राद्युपसर्गसंसर्गाद्वायोर्विशेषार्थतेत्याशङ्क्य प्राणादिशब्दान्क्रमेण व्याकरोति । **उत्सर्ग इत्यादिना** । पिण्डस्य प्रणतिर्देहस्य प्रणतिरुन्नतिर्द्वाभ्यामुच्छ्वासस्य तस्याश्च हेतुः प्राण इत्यर्थः । तथाशब्दो नाभिस्तनपादाङ्गुष्ठस्थानसमुच्चयार्थः । **उक्तं हि**—प्राणो नासाग्रस्तननाभिपादाङ्गुष्ठवृत्ति**रिति** । अवाग्वायोरित्यवाग्गतिरधोगमनं तस्य निश्वासस्य च हेतुरपान इति यावत् । तथेति पृष्ठादिस्थानत्वं समुच्चिनोति । **यथाऽऽह**—अपानः कृकाटिकापृष्ठपायुपार्ष्णिवृत्ति**रिति** । देहे चेति त्वग्वृत्तित्वद्योतनार्थश्चकारः । **यथोक्तम्**—व्यानस्त्वग्वृत्ति**रिति** । सर्वासाममूषां वृत्तीनां **योगशास्त्रे** प्रसिद्धिरस्तीति वक्तुं हिशब्दः ।

---

१ क. °रधःश्वा° । २ क. ग. देहं ।

उद्यमादिक्रियाहेतुरित्युत्कर्षोर्ध्वगमनादिहेतुरुत्साहपूर्वकक्रियाकारिणीति यावत् । तथेति हृदयादिस्थानत्वोक्तिः । **उक्तं च**—उदानो हृत्कण्ठतालुभ्रूमध्यमूर्धवृत्तिरिति । तस्योत्कर्षहेतुत्वं स्फुटयति । **अभ्युदयेति** । तदर्थमुत्क्रमणमभ्युदयः । उत्कर्षो देहपुष्टिः । सर्वकार्योपसंहृतिः सर्वस्याशितस्य पीतस्य च देहे समुपसंहृतिर्नयनं तद्धेतुरिति यावत् । हृद्ग्रहणं नाभ्यादेरुपलक्षणम् । **यथाऽऽहुः**—समानो हृन्नाभिसर्वसंधिवृत्तिरिति ॥१४५॥ ॥ १४६ ॥ १४७ ॥ १४८ ॥ १४९ ॥

**यस्यैता वृत्तयः प्रोक्ता वृत्तिमान्सोऽन उच्यते ॥**
**संपूर्यावस्थितो देहं शाकल्यप्रश्ननिष्ठितः ॥ १५० ॥**

अनशब्दार्थमुक्त्वा तस्य स्थानमाह । **यस्येति** । किं तस्य स्वरूपं तदाह । **शाकल्येति** । कस्मिन्नुदानः प्रतिष्ठित इति प्रश्ने समान इत्युत्तरेण निर्णीत इत्यर्थः ॥१५०॥

**प्राणशब्दः पुरा प्रोक्तो वृत्तिमात्राभिधायकः ॥**
**अन्ते वृत्तिमदर्थः स्यात्सर्वं प्राण इतीरणात् ॥ १५१ ॥**

इत्येतत्सर्वं प्राण एवेत्यत्र प्राणशब्दस्य प्रकृतवृत्तिविशेषपरामर्शित्वात्तस्य सर्वत्वानुपपत्तिरित्याशङ्क्यानन्तरोक्तानविषयत्वमाश्रित्याऽऽह । **प्राणशब्द इति** । तत्र हेतुः सर्वमिति । न हि वृत्तिमात्रस्य सर्वत्वमतः साधारणस्यानशब्दोक्तस्य प्राणशब्देन परामृश्य सर्वत्वविधिरित्यर्थः ॥ १५१ ॥

**नाम रूपं तथा कर्म संहतं सत्त्रिदण्डवत् ॥**
**मिथः संकीर्णवृत्तिस्थं देह आत्मेति चोच्यते ॥ १५२ ॥**

एतन्मयो वा अयमात्मेत्यत्राऽऽत्मशब्दार्थमाह । **नामेति** । यथा त्रयो दण्डा मिथः संहताः कुड्यादिहेतवस्तथा नामादित्रयमन्योन्यं पिण्डीभूतं देहः स चाऽऽत्माऽत्रेत्यर्थः[1] । नामादेर्मिथःसंहतत्वं व्याकरोति । **संकीर्णेति** । मिथः संकीर्णवृत्त्या पिण्डीभूतत्वेन स्थितमिति यावत् ॥ १५२ ॥

**एतावानेव संघातो देहः प्राणादिरूपकः ॥**
**वाङ्मयोऽथ प्राणमयस्तथैव च मनोमयः ॥ १५३ ॥**

एतन्मय इत्यस्यार्थमाह । **एतावानिति** । वाङ्मय इत्यादेरर्थं वदन्नेतावत्त्वं व्याचष्टे । **वाङ्मय इति** । अथशब्दः समुच्चयार्थः ॥ १५३ ॥

**नामात्र वाङ्मयं सर्वं रूपं सर्वं मनोमयम् ॥**
**तद्वत्प्राणमयं कर्म देहस्यास्यैष संग्रहः ॥ १५४ ॥**

कथमेकस्य देहस्यानेकवागादिविकारत्वमेकेनैव तन्निर्माणनिर्वाहे बहुकारणकल्पना-

---

1 क. चाऽऽत्मेत्य° ।

योगादित्याशङ्क्य दैहिकनामादिषु विभागं दर्शयति । **नामेति** । अस्येति प्रत्यक्षोक्तिः ॥ १९४ ॥

**अन्नत्रयविभागोऽयमध्यात्म उपवर्णितः ॥**
**अथाधिभूतविषये विभागस्तस्य कीर्त्यते ॥ १९५ ॥**

वृत्तमनूद्य त्रयो लोका इत्यादेस्तात्पर्यमाह । **अन्नत्रयेति** । आध्यात्मिकविभागोक्तेरनन्तरमाधिभौतिकविभागोक्तेरवसरं दर्शयति । **अथेति** ॥ १९५ ॥

**भूर्लोकं जानतर्ग्वेदं देवा माता च वागियम् ॥**
**अधिभूत इह प्रोक्ता विज्ञातं यच्च सा च वाक् ॥ १९६ ॥**

वागेवायमित्यादिवाक्यपञ्चकार्थं संगृह्णाति । **भूरिति** । या वागिहाधिभूते प्रोक्ता तां भूर्लोकमृग्वेदं च जानत । ये देवा या च माता यच्च विज्ञातं तत्सर्वं सा वागेवेति योजना । भूर्लोकर्ग्वेददेवमातृविज्ञातधीरधिभूते वाचि वचनादेव कार्येत्यर्थः ॥ १९६ ॥

**अन्तरिक्षं यजुर्वेदः पितरश्च पिता तथा ॥**
**इह यच्च विजिज्ञास्यं तन्मनोऽत्राऽऽधिभौतिकम् ॥ १९७ ॥**

मन इत्यादिवाक्यपञ्चकार्थं संक्षिपति । **अन्तरिक्षमिति** । इहेति व्यवहारभूमिः । अत्रेति प्रस्तुतलोकादिग्रहो वाङ्मनःप्राणेष्विति निर्धारणार्थो वा सप्तमी । पूर्ववदन्तरिक्षयजुर्वेदपितृपितृविजिज्ञास्यधीरधिभूते मनसि कार्येत्यर्थः ॥ १९७ ॥

**द्युलोकः सामवेदश्च मनुष्याः प्रजया सह ॥**
**यच्च किंचिदविज्ञातं प्राणोऽसावाधिभौतिकः ॥ १९८ ॥**

प्राणोऽसावित्यादिवाक्यपञ्चकार्थं संकलयति । **द्युलोक इति** । द्युसाममनुष्यप्रजाविज्ञातधीरधिभूते प्राणे यथापूर्वं कार्येत्यर्थः ॥ १९८ ॥

**यत्किंचिदिह विज्ञातं तद्वाग्रूपं प्रचक्षते ॥**
**मनोरूपं विजिज्ञास्यं प्राणस्याज्ञातमेव तु ॥ १९९ ॥**

यत्किंच विज्ञातमित्यादि व्याचष्टे । **यत्किंचिदिति** । व्यवहारभूमौ स्पष्टं ज्ञातं सर्वं वाचो रूपमित्यत्र विद्वत्प्रसिद्धिमनुकूलयति । **प्रचक्षत इति** । यत्किंच विजिज्ञास्यमित्यादेरर्थमाह । **मनोरूपमिति** । यत्किंचाविज्ञातमित्यादेरर्थमाह । **प्राणस्येति** । तुशब्देनोभयत्रापि पूर्ववदेव विद्वत्प्रसिद्धिरनुकूलेति द्योत्यते ॥ १९९ ॥

**भूर्लोकादिषु सर्वेषु मनोवाक्प्राणलक्षणम् ॥**
**यथासंभवमायोज्यमेकैकस्मिंस्त्रयं त्रयम् ॥ १६० ॥**

भूरादिष्वेकैकत्र विज्ञातादित्रयदृष्टेर्वागादेश्च व्यवस्थितत्वात्कुतो विज्ञातादेर्वागाद्यात्मतेत्याशङ्क्याऽऽह । **भूरिति** । यथासंभवं विज्ञातादित्रयमनतिक्रम्येति यावत् । आद्यं-

सप्तमीद्वयं निर्धारणार्थं तेष्वेकैकस्मिन्नेव यथासंभवं वागादिलक्षणं त्रयं त्रयमायोज्यमिति योजना ॥ १६० ॥

**अधिभूते यतोऽशक्या वक्तुं वागादिविस्तृतिः ॥**
**यत्किंचेत्युपसंहारं लक्षणोक्त्या ततोऽकरोत् ॥ १६१ ॥**

सर्वत्र विज्ञातादेर्वागादिरूपत्वे यत्किंचेतिसामान्योक्तिरनर्थिका विशेषतो हि तत्तद्रूपमुपदेष्टुमुचितमित्याशङ्क्याऽऽह । **अधिभूत इति** । उपसंहारं वागादिविस्तृतेरिति शेषः । लक्षणोक्तिः सामान्यवचनम् ॥ १६१ ॥

**लक्षणेनैव संसिद्ध आधिभौतिकसंग्रहे ॥**
**त्रय इत्यादिकोक्तिस्तु नियमार्थेति निश्चयः ॥ १६२ ॥**

यत्किंचेतिसामान्योक्त्यैवाऽऽधिभौतिकवागादिविभूतिसंग्रहे सिद्धे भूरादेरपि विज्ञातादिष्वन्तर्भावाद्वागेवायमित्याद्यनर्थकमित्याशङ्क्याऽऽह । **लक्षणेनेति** । सामान्योक्त्याऽऽधिभौतिकसंग्रहसिद्धावपि त्रयो लोका इत्यादि भूराद्यात्मना वागादि ध्येयमिति नियन्तुमित्यर्थः ॥ १६२ ॥

**व्याख्याने प्रस्तुते त्वस्मिन्नविद्यायाः समन्ततः ॥**
**कार्यकारणरूपेण तस्या एषोपसंहृतिः ॥ १६३ ॥**

यत्किंचेत्युपसंहारमित्यत्र यत्किंच विज्ञातमित्याद्याधिभौतिकवागादिविभूत्युपसंहारार्थमित्युक्तम् । संप्रति सकारणसर्वजगदुपसंहारार्थमिति तस्यैव संभावितमर्थान्तरमाह । **व्याख्यान इति** । सूत्रिताविद्याया विस्तारवत्याः सर्वात्मना स्पष्टीकरणे प्रस्तुते कतिपयविभूतिभाक्त्वेन व्याख्यातायास्तस्या द्वैराश्येन फलविवक्षया मध्ये यत्किंचेत्यादिनोपसंहृतिरित्यर्थः ॥ १६३ ॥

**प्राणात्मना तदज्ञातं ब्रह्म कारणमुच्यते ॥**
**नामात्मना तु तन्मानं मनोरूपं च मीयते ॥ १६४ ॥**

तत्र वागादिकार्यदृष्टावपि न कारणधीरित्याशङ्क्याऽऽह । **प्राणेति** । प्रकाशकयोः शब्दप्रत्यययोर्वाच्यन्तर्भावमुक्तमभ्युपेत्याऽऽह । **नामेति** । तदित्यज्ञातब्रह्मोक्तिः । प्रकाश्यस्य सर्वस्य मनस्यन्तर्भावमुक्तमुपेत्याऽऽह । **मनोरूपं चेति** ॥ १६४ ॥

**यतोऽविद्यैव सर्वेयं मनोवाक्प्राणलक्षणा ॥**
**अतस्तत्त्वसंबोधात्तां जग्ध्वाऽमृतमश्नुते ॥ १६५ ॥**

सकारणस्य जगतः साभासप्रत्यगविद्यात्वेनोपसंहारे विवक्षितं फलमाह । **यत इति** । अयमिति प्रपञ्चो निर्दिश्यते । तस्य साभासाविद्यात्मनो जगतस्तत्त्वं ब्रह्म तस्य प्रत्यक्त्वेन ज्ञानादित्यर्थः । तां सकार्यामविद्यामिति यावत् । अमृतमक्षरं परं ब्रह्म ॥ १६५ ॥

**विज्ञातादन्यदेवैतदविज्ञातात्तथा पृथक् ॥**
**ब्रह्मैतदुभयं जग्ध्वा पूर्णमेवावशिष्यते ॥ १६६ ॥**

अकार्यकारणब्रह्मात्मज्ञानान्मुक्तिरित्ययुक्तं तादृग्ब्रह्मणो मानहीनत्वादित्याशङ्क्या-न्यदेव तद्विदितादित्यादिश्रुतेर्मैवमित्याह । **विज्ञातादिति** । अतस्तत्त्वज्ञानादुक्ता मुक्तिर्युक्तेत्याह । **एतदिति** । उभयमपि विज्ञातमविज्ञातं चेत्यर्थः ॥ १६६ ॥

**विज्ञातादिविदं भोगैर्वागाद्या देवता नरम् ॥**
**विज्ञातादिस्वरूपेण तमवन्ति पृथक्पृथक् ॥ १६७ ॥**

यत्किंचेत्यादि व्याख्याय वागेनामित्यादिफलवाक्यत्रयस्यार्थमाह । **विज्ञातादीति** । विज्ञातविजिज्ञास्याविज्ञातानां वाङ्मनःप्राणानां विभूतिविदं नरं तत्तद्देवतास्तत्तद्रूपेण स्थित्वा पृथक्पृथग्भोगैरवन्तीति योजना ॥ १६७ ॥

**वागादयस्तावदुक्ताः संक्षेपेणाऽऽधिभौतिकाः ॥**
**तेषामेवाधिदैवेऽथ व्याख्या प्रस्तूयतेऽधुना ॥ १६८ ॥**

तस्यै वाच इत्यादि वृत्तमनूद्यावतारयति । **वागादय इति** । क्रमप्रतिपत्त्यर्थोऽथ-शब्दः ॥ १६८ ॥

**अध्यात्ममधिभूतं च यस्या रूपं पुरोदितम् ॥**
**अधिदैवविवक्षायां तस्या वाच इदं वपुः ॥ १६९ ॥**

तस्यै वाच इत्यादेरग्निरित्यन्तस्यार्थमाह । **अध्यात्ममिति** । आधाराधेयत्वेन द्वैवि-ध्यादाधिदैविक्या वाचः पृथिव्याधारोऽग्निराधेय इत्यर्थः ॥ १६९ ॥

**अध्यात्ममधिभूतं च व्याख्याता याऽत्र वाक्पुरा ॥**
**वाचा सर्वाधिदैविक्या संव्याप्ता साऽविभागतः ॥ १७० ॥**

तद्यावतीत्यादेरर्थमाह । **अध्यात्ममिति** । अध्यात्मादौ या वागुक्ता सा सर्वा कार्य-भूता द्विविधयाऽऽधिदैविक्या कारणभूतया वाचा तादात्म्येन व्याप्तेत्यर्थः । अत्र मध्ये वागादीनामिति यावत् । अविभागत इति च्छेदः ॥ १७० ॥

**तामसं कठिनं चोर्वी शरीरं वाच उच्यते ॥**
**अग्नेः प्रकाशरूपस्य साऽऽधारत्वेन संस्थिता ॥ १७१ ॥**

भर्तृप्रपञ्चव्याख्यानमङ्गीकर्तुमनुकीर्तयति । **तामसमिति** । **उक्तं हि**—वाचोऽधि-दैवं पृथिवी शरीरं काठिन्याद्घनत्वात्तामसमिति । ज्योतीरूपमित्यादेस्तात्पर्यमाह । **अग्नेरिति** ॥ १७१ ॥

**अग्निस्तु सात्त्विकं रूपमाधेयत्वेन स क्षितौ ॥**
**वर्तते तामसे रूपे दैव्येवं द्विविधा हि वाक् ॥ १७२ ॥**

---

१ क. ँदिवाँ ।

सैषा द्विविधेन रूपेण पार्थिवेन तैजसेन चावस्थितेति भाष्यस्य तात्पर्यमाह । **अग्निस्त्विति** । आधाराधेयविभागस्य प्रसिद्धत्वार्थो हिशब्दः ॥ १७२ ॥

**अध्यात्ममधिभूतं च वागेकैवाऽऽधिदैविकी ॥**
**सामान्यव्यक्तिभेदेन ह्येकाऽनेका च सोच्यते ॥ १७३ ॥**
**इत्येवं केचिदिच्छन्ति तथाऽन्यादृगपीष्यते[1] ॥**
**तत्रैवं सति वाग्रूपे एवंव्याख्यातरूपके ॥ १७४ ॥**

एकैव देवताऽग्निरध्यात्ममधिभूतं चेतिभाष्यार्थमाह । **अध्यात्ममिति** । अधिदैवं च सर्वमग्निरेकां देवतामुपाददद्देकैकः कृत्स्नां देवतामुपादत्त इति भाष्यार्थमाह । **सामान्येति** । जातिव्यक्तिभेदेनैकत्वमनेकत्वं च लोके प्रसिद्धमिति वक्तुं हिशब्दः । सेत्यग्निदेवतोक्ता । परपक्षमुपसंहरति । **एवमिति** । अध्यात्माधिभूताधिदैवेषु सामान्यविशेषभाववदवस्थावद्भावेनांशांशिभावेन च तैरिष्टा वाग्देवतेत्याह । **तथेति** । तद्यावतीत्यत्र तदुक्तं तच्छब्दार्थमाह । **तत्रेति** । भर्तृप्रपञ्चभाष्यस्थं तत्रेतिपदमादाय तस्यैवं सतीत्यर्थमुक्त्वा तमेव स्पष्टयति । **वागिति** । एवं सामान्याद्यात्मनेत्यर्थः ॥ १७३ ॥ १७४ ॥

**यावत्येषा च वागुक्ता तस्या इत्येवमादिना ॥**
**अध्यात्मादिपरिच्छिन्ना या वाक्सा तावती मता ॥ १७५ ॥**

यावत्येव वागध्यात्ममधिभूतं वा तावतीतिभाष्यार्थमाह । **यावतीति** । तस्यैव वाच इत्यादिना यावती वागाधिदैविकी व्याख्याता या चाध्यात्माधिभूतपरिच्छिन्ना सा तावत्याधिदैविकवागभिन्नेत्यर्थः ॥ १७५ ॥

**वागध्यात्मेऽधिभूते च तावत्येषाऽऽधिदैविकी ॥**
**तेन तेन विशेषेण देवतैव यतो भवेत् ॥ १७६ ॥**

किं कारणमित्यस्यार्थमाह । **वागिति** । यावती वागध्यात्मादौ स्थितैषा पुनराधिदैविकी तावती तदभिन्नेत्यत्र को हेतुरित्यर्थः । सैव हि पृथिवीदेवता तत्र तत्र तेन तेन व्यवतिष्ठत इति भाष्येणोत्तरमाह । **तेनेति** । अतोऽध्यात्मादिपरिच्छिन्ना वागाधिदैविकवागभिन्नेति शेषः ॥ १७६ ॥

**एकैकत्राधिकारेऽग्निः स एव व्यवतिष्ठते ॥**
**पृथिव्याग्निस्वरूपेण क्वचिद्वागात्मना भवेत् ॥ १७७ ॥**

तावानयमग्निरित्यस्यार्थमाह । **एकैकत्रेति** । अधिकारशब्दः स्थानविषयः । व्यवस्थितिमभिनयति । **पृथिवीति** । क्वचिदित्यधिदैवादिविभागोक्तिः । **उक्तं हि**—स एवायमग्निः पृथिव्यात्मना वागात्मना वैकैकस्मिन्नधिकारस्थले कार्त्स्न्येन द्रष्टव्य **इति** ॥ १७७ ॥

---

1 क. ग. °पीर्यते ।

**यथोदितमिदं योज्यं मनःप्राणात्मनोरपि ॥**
**दैव्यां वाचि यदुद्दिष्टं तुल्यव्याख्यानहेतुतः ॥ १७८ ॥**

भाष्यद्वयानुरोधेन तस्यै वाच इत्यादि व्याख्यायाथैतस्य मनसो द्यौरित्यादावुक्तन्या-यमतिदिशति । **यथेति** । यथोदितमित्येतद्व्याकरोति । **दैव्यामिति** । वाच्युक्तस्य प्राणादावतिदेशे हेतुमाह । **तुल्येति** । पूर्वोत्तरवाक्यानामिति शेषः ॥ १७८ ॥

**अध्यात्ममधिभूतं च प्रजा गीर्मनसोर्यथा ॥**
**अधिदैवेऽपि तद्वाच्यमित्यर्थः पर आगमः ॥ १७९ ॥**

तौ मिथुनमित्यादेस्तात्पर्यमाह । **अध्यात्ममिति** । मन एवास्याऽऽत्मा वाग्जाया प्राणः प्रजेत्यध्यात्मे मन एव पिता वाङ्माता प्राणः प्रजेत्यधिभूते च वाङ्मनसयोः प्राणस्य प्रजात्वमुक्तं तथाऽधिदैवेऽपि तस्य तत्प्रजात्वं वाच्यमित्येवमर्थौ तावित्याद्या श्रुतिरि-त्यर्थः ॥ १७९ ॥

**मनसश्चन्द्रभावो हि सर्वत्र श्रूयते स्फुटः ॥**
**तस्याऽऽदित्येन संबन्धः कस्मादत्राभिधीयते ॥ १८० ॥**

असावादित्य इत्यादित्यमनसोरैक्यमुक्त्वा तौ मिथुनमित्यग्न्यादित्ययोर्वाङ्मनोरूप-योर्मिथुनवचनं श्रुत्यन्तरविरुद्धमिति शङ्कते । **मनस इति** । सर्वत्र चन्द्रमा मनसो जातश्चन्द्रस्तत्राधिदैवतमित्यादावित्यर्थः । **उक्तं** च—सर्वत्र हि मनश्चन्द्रो भवतीति । एतदेव भाष्यं विवक्षित्वा हीत्युक्तम् । मनसश्चन्द्रभावस्य वाचनिकत्वं वक्तुं स्फुट इति विशेषणम् । श्रुत्यन्तरविरुद्धं वचनमिहानुचितमिति फलितमाह । **तस्येति** ॥ १८० ॥

**विवक्षितत्वादैक्यस्य मनोबुद्ध्योरतः श्रुतिः ॥**
**आदित्येनैव संधत्ते मनश्चन्द्रमसा न तु ॥ १८१ ॥**

मनोबुद्ध्योरभेदेनाऽऽत्मभूतत्वादिति भर्तृप्रपञ्चभाष्येण परिहरति । **विवक्षितत्वा-दिति** । अस्मिन्प्रकरणे मनोबुद्ध्योरैक्यं विवक्षितं तयोश्च प्रधानं बुद्धिर्निश्चयात्मत्वादतो बुद्धिदेवतयैवाऽऽदित्येन मनः संधत्ते श्रुतिर्न तु चन्द्रमसा तदभेदमभिधत्ते सविता बुद्धिदे-वतेति हि गायत्रीविदां मर्यादेति भावः ॥ १८१ ॥

**प्रसवाधिकृतेश्चात्र सावित्रः प्रसवस्ततः ॥**
**सवित्रैवाभिसंबन्धो मनसस्तेन शस्यते ॥ १८२ ॥**

आदित्येनैवात्र मनःसंबन्धे हेत्वन्तरमाह । **प्रसवेति** । ततः प्राणोऽजायतेति प्राणस्य मनसो जन्मोच्यते । तच्च सर्वं सवितृहेतुकं सवितृपदस्य सर्वप्राणिप्रसवहेतौ प्रवृत्तेरतस्ते-नैव मनसस्तादात्म्येन संगतिरित्यर्थः ॥ १८२ ॥

---

१ क. °र्वोक्तवा° ।

**अनुग्रहव्यपेक्षायां मनसश्चन्द्रमा भवेत् ॥**
**अधिदैवं तथाऽऽदित्यश्चक्षुषो देवता मता ॥ १८३ ॥**

तर्हि चन्द्रमसा मनसश्चक्षुषश्चाऽऽदित्येन संबन्धवादिवाक्यानां का गतिरित्याशङ्क्याऽऽह । **अनुग्रहेति । यथाऽऽहुः**—यत्र हि मनश्च बुद्धिश्च भेदेन विवक्ष्यते तत्र कामसंकल्पादिविषयस्य मनसश्चन्द्रमा देवताऽथ पुनर्यदा क्रियाप्रसवादिषु व्याप्रियते तदा प्रसवकर्म व्याप्नुवन्मनः सवितृदैवतं भवतीति ॥ १८३ ॥

**अग्निरेव यतः सर्वप्रकाशो जगतीष्यते ॥**
**रूपाणां प्रविभागश्च त्वष्टृपाकनिबन्धनः ॥ १८४ ॥**

आदित्यमनसोः संबन्धोक्त्या तावित्यादि व्याख्यातम् । इदानीं व्याख्यान्तरं व्याख्यातुमग्न्यादित्याभ्यामाधिदैविकवाङ्मनोरूपाभ्यां मिथो युक्ताभ्यां प्राणोत्पत्तौ निमित्तमाह । **अग्निरिति ।** प्रकाशव्याप्त्यतिरेकेण न किंचिज्जायते जन्मनो वस्तुव्यक्तित्वात्स च प्रकाशोऽग्निरेव न च जायमानानां विशेषव्यक्तिर्विना पाकं सिध्येत्पाकश्च कालात्मकादित्यकृतस्तस्मादग्न्यादित्यनिमित्ता सर्वोत्पत्तिरित्यर्थः ॥ १८४ ॥

**तयोर्गीर्मनसोरेवं प्रकाशप्रसवात्मनोः ॥**
**प्राग्यथोक्तात्मनोर्योगात्प्राणोऽभूदन्तरिक्षगः ॥ १८५ ॥**

ततः प्राणोऽजायतेत्यस्यार्थमाह । **तयोरिति ।** एवमग्न्यादित्याभ्यां सर्वजन्मेति स्थिते सतीत्यर्थः । यथोक्तात्मनोरग्न्यादित्यरूपयोरिति यावत् ॥ १८५ ॥

**प्राणोऽभवद्यथाऽध्यात्मे प्रजा वाक्स्वान्तयोस्तथा ॥**
**प्राणस्यैवाधिदैवेऽपि प्रसवोऽयमिहोच्यते ॥ १८६ ॥**

अध्यात्ममधिभूतं च प्रजा गीर्मनसोरित्यत्र प्रक्रान्तमुपसंहरति । **प्राण इति ।** अध्यात्मग्रहणमधिभूतोपलक्षणम् ॥ १८६ ॥

**नान्नत्रयं व्यपेक्ष्येह जन्म प्राणस्य कथ्यते ॥**
**किंतु पाङ्क्तक्रियापेक्षं प्राणजन्माभिधीयते ॥ १८७ ॥**

मनो वाचं प्राणमित्यत्रोक्तप्राणस्य वागादिकारणत्वान्न तत्कार्यतेत्याशङ्क्याऽऽह । **नेत्यादिना ।** प्राणोऽजायतेत्यत्र तर्हि कस्य प्राणशब्दतेत्याह । **किंत्विति ।** साधनभूतां पाङ्क्तक्रियामपेक्ष्य तत्फलस्यापि पाङ्क्तत्वं वक्तुमन्नत्रयान्तर्भूतकारणप्राणातिरेकेण कस्यचित्प्राणशब्दितस्य वायोर्वागादिप्रजात्वेनात्र जन्मोच्यत इत्याह । **पाङ्क्तेति** ॥ १८७ ॥

**स यथाऽऽध्यात्मिके देहे प्राणस्तद्वत्प्रजापतेः ॥**
**अन्तरिक्षगतः प्राणः स एष परमेश्वरः ॥ १८८ ॥**

अन्नभूतप्राणातिरेकेण फलान्तर्भावयोग्यप्राणाभावात्कथं तदुत्पत्तिरित्याशङ्क्याऽऽह ।

---

१ क. ग. °क्षाया म° । २ क. सर्वः प्र° ।

**स यथेति**। यथाऽध्यात्मेऽधिभूते च देहे प्रजापतेर्व्यष्टिभूतो वायुर्जायते तथाऽधिदैवान्नभूतप्राणस्यायं व्यष्ट्यात्मा वायुराकाशस्थो वाङ्मनसाभ्यामाधिदैविकाभ्यां भवति प्रस्तुतवाक्यप्रामाण्यादित्यर्थः। इन्द्रत्वासपत्नत्वगुणवत्तया प्रजाभूतप्राणोपास्त्यर्थं स इन्द्र इत्यादि तस्यार्थमाह। **स एष इति**॥ १८८॥

**यतोऽसपत्नस्तेनायमिन्द्र इत्यभिधीयते॥**
**ननु वाङ्मनसे स्तोऽस्य तत्कुतोऽस्यासपत्नता॥ १८९॥**

इन्द्रत्वमसपत्नत्वेन साधयति। **यत इति**। द्वितीयो हि सपत्नस्तदभावादयमसपत्नस्ततश्चेन्द्र इत्यर्थः। द्वितीयाभावादसपत्नत्वमुक्तमाक्षिपति। **नन्विति**॥ १८९॥

**नैवं वाङ्मनसे यस्मात्प्राणवृत्त्यैव जीवतः॥**
**यदनेनान्नमत्तीति तस्मादेत इतीरणात्॥ १९०॥**

प्राणाधीनत्वात्तयोरप्रतिपक्षत्वात्तस्यासपत्नतेति परिहरति। **नैवमिति**। प्रजाभूतस्य प्राणस्य पक्षपातित्वात्तदनुकूलयोर्वाङ्मनसयोस्तदनुकूलतैवेति भावः। तयोः प्राणाधीनत्वे यदनेनान्नमत्ति तेनैतास्तृप्यन्तीति वाक्यं तस्मादेत एतेनाऽऽख्यायन्ते प्राणा इति च वाक्यं प्रमाणयति। **यदनेनेति**॥ १९०॥

**प्राणस्यैव यतो वृत्ती उक्ते वाङ्मनसे अपि॥**
**प्राणस्यातोऽद्वितीयत्वं ततश्चेन्द्रत्वमेव च॥ १९१॥**

आधिदैविकप्राणाभेदात्तत्त्वतोऽन्तरिक्षगतप्राणस्यापि वागादिकारणत्वमुपेत्य प्राणाधीनत्वे तयोः सिद्धे फलितं निगमयति। **प्राणस्येति**॥ १९१॥

**न सपत्नो भवत्यस्य योऽसपत्नं विवेद हि॥**
**असपत्नमुपासीनः ससपत्नः कुतो भवेत्॥ १९२॥**

नास्येत्यादिफलोक्तिं व्याचष्टे। **नेत्यादिना**। यथागुणोपासनं फलं तं यथा यथेत्यादिशास्त्रसिद्धमिति हिशब्दार्थः। असपत्नगुणकप्राणोपासितुरसपत्नत्वं फलमित्यत्र युक्तिमाह। **असपत्नमिति**। फलस्योपासनानुसारित्वादन्यथा तद्विरोधादिति भावः॥ १९२॥

**उक्ता पाङ्क्तानुरोधेन वाङ्मनःप्राणसंश्रया॥**
**अन्नत्रयविभागेन प्रक्रिया त्वधुनोच्यते॥ १९३॥**

वाङ्मनसयोः प्राणाधीनत्वे तयोर्गुणत्वात्प्राणस्य प्राधान्यात्त एते सर्व एव समा इत्यादि कथमित्याशङ्क्योक्तमनूद्य तदवतारयति। **उक्तेति**। पाङ्क्तकर्मानुसारेण तत्फलस्य पाङ्क्तत्वं वक्तुमन्तरिक्षगतप्राणस्य तौ मिथुनमित्यादिनोत्पत्तिमुक्त्वा तस्यासपत्नगुणकस्योपास्तिरुक्ता। इदानीमन्नत्रयविभागेन स्थितवागादिविषयोपासनोच्यतेऽतस्तेषामुपासनार्थं साम्यं वदद्वाक्यमविरुद्धमित्यर्थः॥ १९३॥

**अध्यात्ममधिभूतं च तथा चैवाधिदैवतम् ॥**
**उक्ता वागादयः सर्वे समा एवेति गृह्यताम् ॥ १९४ ॥**

त एत इत्यादि व्याचष्टे । **अध्यात्ममिति** ॥ १९४ ॥

**साम्यं न प्रकारेणेत्यनन्ता इत्यतोऽवदत् ॥ १९५ ॥**
**नन्वध्यात्मेऽधिभूते च परिच्छिन्नाः पुरोदिताः ॥**
**वागादयस्त्विह कथमनन्ता इत्युदीरणम् ॥ १९६ ॥**

**सर्वेऽनन्ता** इति वाक्यमाकाङ्क्षाद्वारोपादत्ते । **साम्यमिति** । पूर्वापरविरोधं चोदयति । **नन्विति** ॥ १९५ ॥ १९६ ॥

**नैतदेवं यतोऽनन्ताः सर्वे भावा यथोदिताः ॥**
**वाचा सर्वाधिदैविक्या लोकादेरप्यनन्तता ॥ १९७ ॥**

अधिदैवात्मना तदानन्त्यमव्याहतमित्याह । **नैतदिति** । भावा वागादयः । कैमुतिकन्यायमाह । **वाचेति** । मनसा प्राणेन चेति द्रष्टव्यम् । भूरादिलोकानां तदन्तस्थदेवादीनां चाऽऽधिदैविकवागाद्यात्मना यदाऽऽनन्त्यं तदाऽध्यात्मादिपरिच्छिन्नवागादीनां तदानन्त्यं किमु वाच्यमित्यर्थः ॥ १९७ ॥

**अधिकारपरिच्छेदे सर्वं यस्मात्समाप्यते ॥**
**नासंहतायाः कर्तृत्वं देवतायाः स्वतोऽपरैः ॥ १९८ ॥**

सर्वस्य वागादेरानन्त्ये हेत्वन्तरमाह । **अधिकारेति** । अधिकृतिरधिकारो व्यापारस्तस्य परिच्छेदो निर्वृत्तिस्तत्र स्वव्यापारनिष्पत्तौ सर्वमितरत्संहन्यतेऽसंहताया देवतायाः कर्तृत्वाभावादतस्तस्याः स्वकार्यनिर्माणे सर्वेण संहतत्वाद्युक्तमानन्त्यमित्यर्थः ॥ १९८ ॥

**स्वाधिकारविनिष्पत्तौ देवता देवतागणम् ॥**
**सर्वमेवाऽऽत्मसात्कृत्वा तत्तत्कार्यं करोति हि ॥ १९९ ॥**

देवतायाः स्वकार्योत्पत्तौ देवतान्तरैः संहतत्वेऽपि परिच्छेदान्नाऽऽनन्त्यमित्याशङ्क्याऽऽह । **स्वाधिकारेति** । **यथाऽऽहुः**—यत्पृथिव्या आनन्त्यं देवतायास्तदेकैकस्मिन्नाध्यात्मिक आधिभौतिके चाधिकारपरिच्छेदे परिसमाप्यत इति । एतदेव भाष्यं हीति ध्वनितम् ॥ १९९ ॥

**आभूतसंप्लवस्थानमानन्त्यं चेह गृह्यते ॥**
**कर्मकार्यस्य हि सतो मुख्यानन्त्यं न युक्तिमत् ॥ २०० ॥**

अनन्तशब्दस्यार्थान्तरमाह । **आभूतेति** । इहेति प्रकृतवाक्यग्रहणम् । निरपेक्षं नित्यत्वमेव तत्किं न स्यात्तत्राऽऽह । **कर्मेति** । तत्र श्रुतिविरोधो हीति द्योत्यते ॥ २०० ॥

---

१ ख. °प्लवं स्था°।

**एवं सतीह योऽनन्तानुपास्ते सततोद्यतः ॥**
**सोऽनन्तमेव वागादिलोकमाप्नोति मानवः ॥ २०१ ॥**

अथ यो हैतानित्यादि योजयति । **एवमिति ।** वागाद्यानन्त्ये सिद्धे सत्यर्थक्रमेण पाठक्रमं भङ्क्त्वा सफलोपासोक्तिरिति द्रष्टव्यम् । इहेत्यधिकृतनिर्धारणार्था सप्तमी । सततोद्यत इत्युपास्तेस्त्रिविधविशेषणवैशिष्ट्यं विवक्ष्यते ॥ २०१ ॥

**उपास्तेऽन्तवतो यस्तु सोऽन्तवन्तमवाप्नुते ॥**
**लोकं यतस्ततोऽनन्तमेत्यनन्तात्मभावनात् ॥ २०२ ॥**

स यो हैतानित्यादि व्याकरोति । **उपास्त इति ।** अन्नत्रयं परिच्छिन्नापरिच्छिन्नत्वेन ध्यायतो दोषगुणावुक्त्वा श्रौतमर्थमुपसंहरति । **यत इति ।** अपरिच्छिन्नेऽन्नत्रये सूत्रात्मन्यात्मताध्यानादिति यावत् ॥ २०२ ॥

**अधिकारो द्वयोरत्र प्रकृतः पाङ्क्तकर्मणः ॥**
**प्रक्रियाऽन्नत्रयस्यापि विभागः प्रकृतस्तथा ॥ २०३ ॥**

अन्नत्रये फलवद्ध्यानविषये व्याख्याते वक्तव्याभावात्किमुत्तरग्रन्थेनेत्याशङ्क्य वृत्तं कीर्तयति । **अधिकार इति ।** अस्मिन्प्रकरणे पाङ्क्तं कर्मान्नत्रयं चेति द्वयोः फलविभागरूपोऽधिकारः प्रस्तुतोऽस्तीत्युक्त्वा तमेवाधिकारं व्याकरोति । **पाङ्क्तेति ।** प्रक्रिया फलं प्रकृतमिति यावत् । विभागो विभजनं व्याख्यानमित्येतत् । तथाशब्दः समुच्चये ॥ २०३ ॥

**तत्राधिदैवमुक्तानि त्रीण्यन्नानि विभागशः ॥**
**सोपासनानि पाङ्क्तस्य वक्तव्यमवशिष्यते ॥ २०४ ॥**

स एष इत्यादेर्विषयपरिशेषार्थमनन्तरवाक्योक्तमनुवदति । **तत्रेति ।** सप्तमी निर्धारणे । विभागशो ध्यानफलविभागेनेत्यर्थः । आधाराधेयविभागेनेति वाऽर्थः। सोपासनानि सफलानीत्यपि द्रष्टव्यम् । उत्तरवाक्यस्य विषयमाह । **पाङ्क्तस्येति** ॥ २०४ ॥

**अधिदैवे त्रयं तूक्तं मनोवाक्प्राणलक्षणम् ॥**
**पाङ्क्तस्य कर्मणः कार्यं नोक्तं वित्तं च कर्म च ॥ २०५ ॥**

पाङ्क्तकर्मफलं वक्तव्यमवशिष्टमुक्तानुवादपूर्वकं दर्शयति । **अधिदैव इति ।** यदधिदैवविषये पाङ्क्तकर्मफलं तदपि पाङ्क्तं वक्तव्यम् । तत्र मनोवाक्प्राणरूपं माता पिता प्रजेत्येवंलक्षणं त्रयमुक्तं वित्तं कर्म चेत्यनुक्तत्वाद्वक्तव्यमित्यर्थः ॥ २०५ ॥

**पाङ्क्तस्य कर्मणः कार्यं न तावदवगम्यते ॥**
**पाङ्क्तत्वसिद्धये यावन्नोच्येते वित्तकर्मणी ॥ २०६ ॥**

फलस्य पाङ्क्तकार्यत्वेऽपि न पाङ्क्तत्वमास्ते[2] व्यवस्थासंभवादतो न तत्र वित्तकर्मणी वाच्ये

---

१ ग. °प्नुयात् । लो° । २ क. °स्ति स्वव्य° ।

इत्याशङ्क्याऽऽह । **पाङ्क्तस्येति** । कार्यानुरूपत्वात्कारणस्य कार्ये पाङ्क्तत्वाभावे कारणेऽपि तदसिद्धेः पाङ्क्तकर्मफलत्वासिद्धिर्न च निमित्तनैमित्तिकयोरेषा व्यवस्था न च पाङ्क्तं कर्मापि त्र्यन्नात्मभावस्य निमित्तं तदपूर्वपरिणामो जगदित्युक्तत्वादतः फलस्य पाङ्क्तत्वार्थं वित्तादि वक्तुमुत्तरो ग्रन्थ इत्यर्थः ॥ २०६ ॥

**लोककालात्मको देवो विराट्संज्ञः प्रजापतिः ॥**
**तस्याधिलोकमात्मोक्तो योऽयमन्नत्रयात्मकः ॥ २०७ ॥**

तत्र संवत्सरपदेन प्रजापतेरुपादाने तात्पर्यमुक्तमनूद्य स एष इत्यादिवाक्यस्य गतग्रन्थेन संबन्धान्तरमाह । **लोकेति** । द्विविधस्य हि प्रजापतेस्त्र्यन्नात्मत्वनिरूपणेन लोकात्मत्वं निरूपितमित्याह । **तस्येति** ॥ २०७ ॥

**अधिकालं तु योऽस्याऽऽत्मा सोऽयं चन्द्रमसोच्यते ॥**
**पक्षमासर्तुवर्षादेः स कर्ता कर्मणोऽनिशम् ॥ २०८ ॥**

परिशिष्टं कालात्मकत्वं वक्तव्यमित्युत्तरवाक्यमित्याह । **अधिकालमिति** । प्रजापतिर्विराडित्युक्तो लोककालदेवतात्मकोऽधिगतस्तस्य लोकानधिकृत्यान्नत्रयात्मकस्तावदात्मोक्तस्तस्यैव कालमधिकृत्य य आत्मा स चन्द्रात्मना वक्तव्य इति प्रजापतेश्चन्द्रात्मनः संवत्सरपदेनोपादानमित्यर्थः । वित्तकर्मोक्त्यर्थं स एष इत्याद्युक्तं कथमत्र प्रजापतौ कालात्मके चन्द्रमसि वित्तकर्मधीरित्याशङ्क्य कर्मप्रतीतिं तावदाह । **पक्षेति** । स हि पक्षादेर्निष्पादनस्य कर्मणो नैरन्तर्येण कर्ता तेन चन्द्रमसि तन्निर्माणाख्यं कर्म भातीत्यर्थः ॥ २०८ ॥

**हानिवृद्धिस्वभावेन वित्तं चाप्यत्र लक्ष्यते ॥**
**कलाकाष्ठालवाद्यात्मा विश्वं विपरिणामयन् ॥**
**प्राणपिण्डात्मकः काल आ महाप्रलयात्स्थितः ॥ २०९ ॥**

तत्र वित्तधियं दर्शयति । **हानीति** । अत्रेति चन्द्रोक्तिः । उपचयापचयरूपत्वात्तत्र पञ्चदशतिथ्यात्मककलानां वित्तादित्वसिद्ध्यर्थमेव प्रजापतेश्चन्द्रात्मनोक्तिरिति भावः । आसां[1] च कलानां कालावयवानां जगद्विपरिणामहेतुत्वं कर्मेत्युक्तं भाष्ये तत्कथं कर्मान्तरोक्तिरित्याशङ्क्य भाष्यमनुमरन्नाह । **कलेति** । सूत्रात्मको विराडात्मकश्च कालस्तत्तद्विशेषरूपो भूत्वा जगत्परिणाममादधन्महाप्रलयपर्यन्तं स्थितस्तथा च तस्य जगत्परिणामयितृत्वं कर्मेत्यर्थः ॥ २०९ ॥

**यैकाऽवशिष्यते तस्य कला पक्षक्षये तथा ॥**
**प्रविश्य प्राणभृत्सर्वं पक्षतो जायते पुनः ॥ २१० ॥**

सोऽमावास्यामित्यादेरर्थमाह । **यैकेति** । पक्षक्षये[2] पञ्चदशकलाविलयेऽमावास्यायां

---

१ क. तासां । २ ग. पक्षतौ ।

तिथावित्यर्थः । पक्षतः शुक्लपक्षोपक्रमप्रतिपदः सकाशादित्यर्थः । पक्षत्ताविति पाठे तु सैव प्रतिपत्पक्षतिरुक्ता तत्रेत्यर्थः । स्त्री पक्षतिः पक्षमूलमिति हि **पठन्ति** । जायते द्वितीयकलायुक्तो भवतीति यावत् ॥ २१० ॥

**रात्रौ यस्मात्स एतस्यां प्रविश्याऽऽस्ते प्रजापतिः ॥**
**प्राणभृन्निखिलं तस्माद्धिंसां तस्यां परित्यजेत् ॥ २११ ॥**

तस्मादेतामित्यादि व्याकरोति । **रात्राविति** । रात्रिशब्दोऽहोरात्रविषयः । **उक्तं हि**—रात्रय एवाहोरात्राणीति ॥ २११ ॥

**कलाभिरस्तः कृत्ताभिः कृकलास इति स्मृतः ॥**
**हिंसां न कुर्यात्तस्यापि किन्वनारब्धहिंसनम् ॥ २१२ ॥**

अपि कृकलासस्येत्यस्यार्थमाह । **कलाभिरिति** ॥ २१२ ॥

**सामिप्रमापितस्यापि रात्रौ तस्यां विवर्जयेत् ॥**
**प्राणभृद्धिंसनं यत्नात्किन्वनारब्धपीडनम् ॥ २१३ ॥**

तदेव विवृणोति । **सामीति** । प्राणभृदिति कर्तृनिर्देशः । हिंसानिमित्ते सत्यपि तन्निवृत्तिर्यत्नः ॥ २१३ ॥

**कृकलासे प्रसिद्धा या हिंसा प्राणभृतां स्वतः ॥**
**तामप्यत्र न कुर्वीत किमु वक्तव्यमन्यतः ॥ २१४ ॥**

अपीत्यादौ भाष्योक्तमर्थमाह । **कृकलास इति** । अत्रेत्यमावास्योच्यते । अन्यतोऽन्यस्येति यावत् ॥ २१४ ॥

**एतस्या एव पूजायै देवताया निषेधनम् ॥**
**प्राणभृद्धिंसनस्येह नान्यदस्य प्रयोजनम् ॥ २१५ ॥**

विशेषनिषेधस्य शेषानुज्ञापरत्वान्न हिंस्यात्सर्वभूतानीत्यादिना विरोधमाशङ्क्यैतस्या एवेत्यादि व्याकरोति । **एतस्या इति** । इहेति पूर्वोक्ततिथिनिर्देशः । साधारण्येन सर्वत्र निषिद्धाऽपि हिंसा विशेषतोऽमावास्यायां निषिध्यमाना सोमदेवतापूजार्था गम्यतेऽतः शेषानुज्ञाभावान्न सामान्यनिषेधविरोध इत्यर्थः ॥ २१५ ॥

**स्मृतावपि निषिद्धेयं हिंसा पर्वसु कर्मिणाम् ॥**
**विशिष्टफलसंगत्या इहोक्तिः सत्यवद्भवेत् ॥ २१६ ॥**

सर्वत्र सामान्येन प्राणिहिंसा निषिद्धा विशेषतोऽमावास्यायामित्युक्तमिदानीं तत्र हिंसा न कार्येत्यत्र स्मृतिमनुकूलयति । **स्मृताविति** ।

"वनस्पतिगते सोमे यस्तु हिंस्याद्वनस्पतीन् ।
घोरायां भ्रूणहत्यायां युज्यते स न संशयः" ॥

"वीरुधो घातयेद्यस्तु वीरुत्संस्थे निशाकरे ।
पत्रं वा पातयत्येकं ब्रह्महत्यां स विन्दति" ॥

इत्याद्या **स्मृतिः** । कर्मिणां विधिनिषेधयोग्यानामिति यावत् । सोमदेवतापूजायै हिंसा-निषेधोऽमावास्यायामित्युक्त्वा फलान्तरमाह । **विशिष्टेति** । **अस्यार्थः**—यथा दर्शादि-प्रकरणे नानृतं वदेदित्यत्र पुरुषार्थतया प्राप्तनिषेधस्यानुवादो वा क्रत्वर्थतयाऽपूर्वस्य विधिर्वेति **संशये सत्यं** ब्रूयात्प्रियं ब्रूयादित्यादि**स्मृत्या** पुरुषार्थतया प्राप्तनिषेधस्यानुवाद इति **पूर्वपक्षे** दर्शादिप्रकरणाधीतनिषेधस्य स्ववाक्यालोचनया संनिहितक्रत्वर्थताद्दृष्टेस्ताद-र्थ्येनाप्राप्तेऽनुवादायोगाद्विधिरिति **राद्धान्तितं शेषलक्षणे**—विधिर्वा संयोगान्तरादिति । अतः सत्यवचनमविशेषेण विहितमपि क्रत्वर्थं विशेषेण विधीयते तथाऽविशेषेण निषि-द्धाऽपि हिंसाऽमावास्यायां विशेषेण निषिध्यते पापक्षयादिविशिष्टफलसिद्ध्यर्थ-मिति ॥ २१६ ॥

**केवलज्ञानमात्रेण मा भूत्र्यन्नात्मकं फलम् ॥**
**परात्मज्ञानवत्तस्मात्तस्योपासनमुच्यते ॥ २१७ ॥**

त्र्यन्नात्मभावफलस्य पाङ्क्तकर्मकार्यत्वसिद्धये पाङ्क्तत्वोक्तेर्वक्तव्याभावात्किमुत्तरग्रन्थेने-त्याशङ्क्य तस्य तात्पर्यमाह । **केवलेति** । केवलं कर्मासमुच्चितं ज्ञानमात्रं सकृदुत्पन्नमभ्या-सानपेक्षं ज्ञानमिति यावत् । न हि त्र्यन्नात्मज्ञानमात्रात्तद्ध्यानं विना तद्भावो मानाभावादत-स्तद्ध्यानं वक्तुमनन्तरवाक्यमित्यर्थः । तत्र वैधर्म्योदाहरणमाह । **परात्मेति** । तद्धि स्वरू-पलाभमात्रेणाज्ञाननिवृत्त्या फलवदिष्टं न तथेदं दर्शनमित्यर्थः ॥ २१७ ॥

**वित्तमेव कला मे स्युः कल्पयित्वा ध्रुवां स्वयम् ॥**
**इत्युपासीत यः सोऽथ कलात्मानं प्रपद्यते ॥ २१८ ॥**

त एते सर्व एव समा इत्यत्र तद्ध्यानस्योक्तत्वात्किं पिष्टपिष्टेत्याशङ्क्य तदेवाहंग्र-हेण कर्तव्यमिति विशेषं मन्वानस्तस्य वित्तमेवेत्यादेस्तात्पर्यमाह । **वित्तमिति** । याः पञ्चदश प्रजापतेश्चन्द्रमसः कलास्ता मे गवादिवित्तमेवोपचयापचयवत्त्वादिति स्ववित्ते पञ्चदशकलादृष्टिं कृत्वा ध्रुवां षोडशीं कलां स्वदेहं कल्पयित्वा षोडशकलः प्रजापतिर-हमित्युपासीनस्तद्भावमाप्नोतीत्यर्थः ॥ २१८ ॥

**यथोक्तगुणकं विद्वानुपासीत प्रजापतिम् ॥**
**आरोप्याऽऽत्मशरीरेऽस्मिंस्तत्साधर्म्येण संततम् ॥ २१९ ॥**

प्रजापतिरहमिति न ध्यानं तस्याऽऽत्मनोऽर्थान्तरत्वादहमित्यारोपायोगादित्याश-ङ्क्याऽऽह । **यथोक्तेति** ॥ २१९ ॥

**वित्तमेव कलास्तस्य तद्धान्युपचयौ क्रिया ॥**
**ध्रुवाऽस्य देह एवायं जीवन्स्यात्षोडशी कला ॥ २२० ॥**

षोडशकलत्वानन्तत्वादिगुणकं सूत्रं विद्वानात्मदेहे साधर्म्येण तदारोप्य दीर्घकालमादरनैरन्तर्याभ्यामुपासीतेत्युक्तम् । तदेव सूत्रस्योपासकस्य च साधर्म्यमारोपहेतुमाह । **वित्तमिति** । तस्य प्रजापतेर्याः पञ्चदश कलास्ता मम वित्तमेव या तस्य जगद्विपरिणामयितृत्वरूपा क्रिया सा मम वित्तस्य हान्युपचयावेव या च तस्य ध्रुवा षोडशी कला सा मम प्राणादिविशिष्टो देह एव तदेवं साधर्म्यान्मयि प्रजापतेरारोपो युक्तः सूत्रस्याऽऽत्मनोऽन्यत्वेऽपि तदात्मत्वध्यानात्तद्भावस्तं यथा यथेत्यादिश्रुतेः प्रतिमादावीश्वरबुद्ध्या फलदृष्टेश्चेति भावः ॥ २२० ॥

**सोऽकामयत जायेति साधनान्येव नः श्रुतिः ॥**
**अब्रवीन्न तु तत्साध्यं तदुक्त्यर्थं परा श्रुतिः ॥ २२१ ॥**

अन्नत्रयात्मनि प्रजापतावहंग्रहोपासनस्य सफलस्योक्तत्वाद्वक्तव्याभावादुत्तरग्रन्थवैयर्थ्यमाशङ्क्य तद्विषयमाह । **सोऽकामयतेति** ॥ २२१ ॥

**साधनोक्त्यैव तत्साध्यं यदि नामावसीयते ॥**
**विशिष्टफलसंबन्धो न तथाऽपि प्रतीयते ॥ २२२ ॥**

साधनोक्त्यैव फलमुक्तं तयोर्मिथोबद्धत्वादित्याशङ्क्य सामान्येन तत्प्रतीतावपी[1]दमस्येति नोक्तं विशे[2]षणोक्तिं विना तदप्रतीतेरतस्तदुक्त्यर्थमुत्तरा श्रुतिरित्याह । **साधनेति** ॥ २२२ ॥

**पुत्रादिसाधनानां स्यादुत्पत्त्यादिसमन्वयात् ॥**
**साध्यं लोकत्रयमतस्त्रयो वावेति च श्रुतिः ॥ २२३ ॥**

पुत्रादीनां न लोकत्रयमात्रसंबन्धो मुक्तिहेतुत्वात्तथा च कथं तेषां व्यवस्थया लोकत्रयेण संबन्धं वक्तुमुत्तरा श्रुतिरित्याशङ्क्याऽऽह । **पुत्रादीति** । तेषां लोकत्रयं साध्यमित्यत्र हेतुमाह । **उत्पत्त्यादीति** । मुक्तेरुत्पत्त्यादिविरोधित्वादतत्साध्यत्वमतःशब्दार्थः । पुत्रादिसाध्यत्वेन लोकत्रयमात्रस्येति शेषः ॥ २२३ ॥

**त्रय एव यतो लोकाः साध्याः पुत्रादिसाधनैः ॥**
**तन्मुमुक्षुरतो मुक्त्यै त्यजेत्सर्वैषणा यतिः ॥ २२४ ॥**

प्रस्तुतश्रुतिवशादेवार्थसिद्धमर्थमाह । **त्रय इति** । तेषां त्रयमात्रहेतुत्वात्तद्धेतुफलरूपसंसारान्मुक्तिमिच्छन्मुक्तिहेतुज्ञानार्थमेषणास्त्यक्त्वा श्रवणादिपरः स्यादित्यर्थः । भाविनीं वृत्तिमास्थाय यतिरित्युक्तम् ॥ २२४ ॥

**अन्यथैवाभिसंबन्धं केचिदत्र प्रचक्षते ॥**
**ज्ञानादेव पुमर्थाप्तेर्निष्फले सुतकर्मणी ॥ २२५ ॥**

त्रयो वावेत्यादिवाक्यस्य भर्तृप्रपञ्चोक्तं संबन्धमवतारयति । **अन्यथेति** । तदेव वक्तुं

१ क. °ति वि° । २ ख. °शेषणो° ।

तदीयं पूर्वपक्षमाह । **ज्ञानादिति** । त्र्यन्नात्मोपासनं ज्ञानम् । पुमर्थस्त्र्यन्नात्मत्वम् । उक्तं हि—योऽयमेवंवित्पुरुषः स एष प्रजापतिरिति ॥ २२५ ॥

**निःशेषफलसंप्राप्तेर्दर्शनादेव केवलात् ॥**
**सुतादिना न तेऽर्थो नापि स्यात्पाङ्क्तकर्मणा ॥ २२६ ॥**

पुत्रादिवैयर्थ्यं समर्थयते । **निःशेषेति** । आदिशब्दो जायावित्तविषयः । तर्हि केवलं त्र्यन्नात्मध्यानादिष्टलाभावस्थायामित्यर्थः ॥ २२६ ॥

**तयोरिहार्थवत्त्वाय त्रयो वावेति भण्यते ॥**
**परीक्ष्यैतत्परिग्राह्यं न तु निर्युक्तिकं बुधैः ॥ २२७ ॥**

तदीयं सिद्धान्तमादत्ते । **तयोरिति** । पुत्रकर्मणोर्विद्यासमुच्चितयोस्तत्फलेऽर्थवत्त्वसमर्थनायोत्तरो ग्रन्थः । समुच्चितानि पुत्रवित्तदर्शनानि सर्वात्मभावायेत्युक्तत्वादित्यर्थः । पराभिप्रायं पूर्ववादिमुखेन निराकर्तुमुपक्रमते । **परीक्ष्येति** । समुच्चयोऽसमुच्चयो वा युक्तिमानिति विचार्य युक्त्या निश्चितं ग्राह्यं विना विचारं युक्तत्वस्यानिश्चयान्न चाविचार्य युक्त्या निर्युक्तिकं बुद्धिमद्भिर्ग्राह्यमतिप्रसङ्गादित्यर्थः ॥ २२७ ॥

**स्वफलेऽन्यानपेक्षाणां साधनानां समुच्चयः ॥**
**न युक्तो निरपेक्षत्वाद्गमनेक्षणयोरिव ॥ २२८ ॥**

तर्हि परीक्षायां कस्य युक्तिमत्त्वमित्याशङ्क्यानपेक्षाणां समुच्चयः सापेक्षाणां॰ वेति विकल्प्याऽऽद्ये दोषमाह । **स्वफल इति** । तत्र दृष्टान्तमाह । **गमनेति** । अन्धस्य गतिसंभवात्पङ्गोश्च रूपादिदर्शनसिद्धेस्तयोर्निरपेक्षयोर्नैकत्र समुच्चयस्तथा निरपेक्षेषु समुच्चयो न क्वापीत्यर्थः ॥ २२८ ॥

**अन्यापेक्षाणि चेद्द्युः कर्मैकत्वं तदा भवेत् ।**
**समुच्चितिर्न चैकस्य रुद्रेणापि समर्थ्यते ॥ २२९ ॥**

कल्पान्तरं दूषयति । **अन्येति** । पुत्रादिसाधनानि मिथः सापेक्षाणि फलहेतवश्चेत्साधनैक्यान्न समुच्चय इत्यर्थः ॥ २२९ ॥

**तन्तुवीरणमृद्दारुसाधनानां पृथक्त्वतः ॥**
**पटादिकार्यनिष्पत्तौ न तेषां स्यात्समुच्चयः ॥ २३० ॥**

अनपेक्षाणाममसमुच्चये गमनेक्षणयोरिवेत्युक्तं दृष्टान्तं स्पष्टयति । **तन्त्विति** । पृथक्त्वमेकस्मिन्फले मिथोनपेक्षत्वम् ॥ २३० ॥

**तुरीवेमशलाकादेः स्वकार्येऽन्योन्यसंहतेः ॥**
**समुच्चितिरयुक्तेयं तदाऽप्येकत्वहेतुतः ॥ २३१ ॥**

सापेक्षाणां मिथः संगतानामेकत्वेनासमुच्चये दृष्टान्तमाह । **तुरीति** । संहतिरेव

१ ग. तस्यार्थो ।

समुच्चितिरित्याशङ्क्य संहतावपि न साधनसमुच्चितिः संहतस्य तत्त्वात्तस्यैक्यादित्याह । **तदाऽपीति** ॥ २३१ ॥

**लोकत्रयस्य संप्राप्तिर्विद्ययैवेति चेन्मतम् ॥**
**तस्याः सर्वाप्तिहेतुत्वान्नैतदेवं पृथक्त्वतः ॥ २३२ ॥**

समुच्चयायोगे पूर्ववादी पुत्रकर्मवैयर्थ्यमित्युपसंहरति । **लोकत्रयस्येति** । देवलोकहेतुर्विद्या कथं त्रयहेतुरित्याशङ्क्य त्र्यन्नात्मोपास्तेः सर्वलोकात्मप्रजापतित्वहेतुत्वादित्याह । **तस्या इति** । तत्र भर्तृप्रपञ्चोक्तं परिहारमाह । **नैतदिति** । **उक्तं हि**—विद्ययैव सर्वभावापत्त्या लोकत्रयाप्तिरिति न पृथक्कारणत्वादिति ॥ २३२ ॥

**प्रत्येकं भिन्नसाध्यं हि पुत्रकर्मादिसाधनम् ॥**
**एकाकिन्या न तत्साध्यं विद्ययैवेति निश्चितिः ॥ २३३ ॥**

कथं पृथक्त्वं तदाह । **प्रत्येकमिति** । पुत्रादेरेकैकस्य पृथगेव फलसंबन्धे फलितमाह । **एकाकिन्येति** ॥ २३३ ॥

**पुत्रेणैवेत्यतो वक्ति साधनान्तरनिह्नुतिम् ॥**
**ज्योतिषेत्यत्र संचोद्य परिहारं प्रचक्षते ॥ २३४ ॥**

तस्य प्रत्येकं फलसंबन्धे मानमेवकारश्रुतिरित्याह । **पुत्रेणेति** । अतः पुत्रादेरेकैकस्य व्यवस्थया मनुष्यलोकादिना संबन्धादिति यावत् । साधनान्तरं पुत्रादतिरिक्तं कर्मादि । अवधारणाक्षेपपरिहारौ परोक्तौ दर्शयति । **ज्योतिषेत्यत्रेति** । पुत्रेणैवेत्यत्र नावधारणं युक्तं ज्योतिषेमं लोकं जयतीति मनुष्यलोकजये हेत्वन्तरश्रवणादिति परिचोद्य परिहरन्तीत्यर्थः ॥ २३४ ॥

**प्राप्त्यतिक्रमसंभित्तेर्विषयप्रविभागतः ॥ २३५ ॥**
**नैतदेवं यतो नेह पुत्रोत्पत्त्यतिरेकतः ॥**
**साधनान्तरजय्योऽयं लोकोऽतश्चोदितं न सत् ॥ २३६ ॥**

परिहारं स्फोरयति । **प्राप्तीति** । ज्योतिष्टोमेनास्य लोकस्याऽऽप्तिराप्तस्य पुत्रेणातिक्रमोऽतो विषयभेदादवधारणसिद्धिरित्यर्थः । न हि पुत्रोत्पादनादन्येन मनुष्यलोकजयोऽस्तीत्यवधारणसाधकं भाष्यं व्याचष्टे । **नैतदिति** । साधननिर्धारणार्था सप्तमी । अवधारणायोगचोद्यनिषेधं प्रतिज्ञाय हेतुश्चोक्तः । तन्निराकरणं निगमयति । **अत इति** ॥ २३५ ॥ २३६ ॥

**ज्योतिष्टोमेन संप्राप्तिर्भोगायैव तु तत्कृतः ॥**
**सुतेनातिक्रमोऽप्राप्तेः प्राप्तो निर्विषयस्ततः ॥ २३७ ॥**

असत्त्वं साधयति । **ज्योतिष्टोमेनेति** । तत्कर्तुर्भोगार्थमेवास्य लोकस्य ज्योतिष्टोमे-

---

१ क. प्राप्तौ । २ ख. ॰स्तथा ॥ २३७ ॥

नाऽऽप्तिरतिक्रमस्तु पुत्रेणैवान्यतोऽप्राप्तेः सोऽप्यन्येनाऽऽप्तश्चेत्तदा पुत्रसाध्याभावाद्व्यर्थः स्यान्न च श्रौतं साधनं निर्विषयमनर्थकं युक्तमतश्चोदितमसदेवेत्यर्थः ॥ २३७ ॥

**यद्येवं तर्हि संत्याज्यं ज्योतिषेति वचः श्रुतम् ॥**
**नैवं मनुष्यलोकस्य यतस्तत्राऽऽप्तिरिष्यते ॥ २३८ ॥**
**प्राप्तस्य ज्योतिषा तस्य पुत्रेणातिक्रमो जयः ॥**
**इति निर्युक्तिकं कैश्चिद्व्याख्यानं यत्नतः कृतम् ॥ २३९ ॥**

किमिदानीं तत्प्रतिषिध्यत इतिभाष्यार्थमाह । **यदीति** । पुत्रेणैवायं लोको जय्य इतिवज्ज्योतिषेमं लोकं जयतीति श्रुतेस्तत्रापि जयोऽतिक्रमो युक्तः स चेत्पुत्रेणैव स्यात्तर्हि ज्योतिषेति वचो हेयमित्यर्थः । तत्र मनुष्यलोकप्राप्तिर्जयोऽभिप्रेत इह तु ततो व्यावृत्तिरिति विशेष इति भाष्येणोत्तरमाह । **नैवमिति** । भर्तृप्रपञ्चव्याख्याया हेयत्वं द्योतयति । **इति निर्युक्तिकमिति** । श्रुत्यक्षरबहिर्भावमभिधातुं यत्नत इत्युक्तम् ॥ २३८ ॥ २३९ ॥

**जय्य एव सुतेनायं लोक इत्यवधार्यते ॥**
**ज्योतिषाऽपि स चेज्जेयो जीयतां न निषिध्यते ॥ २४० ॥**

यत्तावत्प्राप्तिरनतिक्रमश्चेति जयविभागमुपेत्यावधारणसाधनं तद्दूषयति । **जय्य इति** । अयोगव्यवच्छित्तेरेवकारार्थत्वादन्ययोगेऽपि न क्षतिरित्यर्थः ॥ २४० ॥

**नरलोकः सुतेनायं जय्य एवेति भण्यते ॥**
**एवेत्ययोगावच्छित्तौ नान्ययोगव्यपेक्षया ॥ २४१ ॥**

यत्तु पुत्रेणैवेति साधनान्तरवारणमिति तत्राऽऽह । **नरेति** । उक्तमेव स्फुटयति । **एवेतीति** ॥ २४१ ॥

**अतिक्रमो जयार्थश्चेत्सामर्थ्यादेव सिद्धितः ॥**
**पितृलोकाद्यसंप्राप्तेस्तत्रातिक्रमगीर्वृथा ॥ २४२ ॥**

यत्तु प्राप्तस्य ज्योतिषेत्यादि तत्राऽऽह । **अतिक्रम इति** । ज्योतिष्टोमेनास्मिँल्लोके भोगेन क्षीणे तद्बलादेव पुत्रातिरेकेणातिक्रमसिद्धौ पुत्रवैयर्थ्यमित्यर्थः । तथाऽपि कर्मणेत्यादौ जयोऽतिक्रमस्तत्रार्थप्राप्तिदोषाभावादित्याशङ्क्याऽऽह । **पितृलोकेति** । कर्मणा विद्यायाश्च तत्तल्लोकातिक्रमार्थत्वे तत्प्राप्तिहेत्वभावात्तां विना चातिक्रमायोगात्तत्रातिक्रमार्थो जय्यशब्दो व्यर्थः स्यादित्यर्थः ॥ २४२ ॥

**नापुत्रस्येति निःशेषलोकाप्तौ साधनं सुतः ॥**
**श्रूयते मन्दपालादि तथा चात्र निदर्शनम् ॥ २४३ ॥**

किंच पुत्रस्य लोकाप्तिहेतुत्वं श्रुत्यन्तरसिद्धमतस्तद्विरोधान्नात्र जय्यशब्दस्यातिक्रमार्थतेति हेत्वन्तरमाह । **नेत्यादिना** । **नापुत्रस्य लोकोऽस्तीति तत्सर्वे** पशवो विदु-

**रिति श्रुत्या** व्यतिरेकद्वारा पुत्रस्याशेषलोकाप्तिहेतुत्वदृष्टेर्न तस्यातिक्रमार्थतेत्यर्थः । किंच पुत्रस्य लोकाप्तिहेतुत्वे मन्दपालपाण्डुप्रभृतिनिदर्शनं **महाभारते** प्रसिद्धमित्याह । **मन्देति** । उक्तं हि—

"स गत्वा तपसः पारं देहमुत्सृज्य भारत ।
जगाम पितृलोकाय न लेभे तत्र तत्फलम् ॥
त इमे प्रसवस्यार्थे तव लोकाः समावृताः ।
प्रजायस्व ततो लोकानुपभोक्ताऽसि शाश्वतान्" इति ।
"अप्रजस्य किल स्वर्गमद्वारं संप्रचक्षते ।
स हि संतापतप्तोऽहमप्रजश्च ब्रवीमि वः" इति च ॥ २४३ ॥

**श्रुतं साध्यं समुल्लङ्घ्य नातोऽन्यत्कामजं फलम् ॥**
**प्रत्यग्विविदिषाऽन्यत्र कर्मणां श्रूयते फलम् ॥ २४४ ॥**

लोकाप्तिहेतोरपि पुत्रस्य तदतिक्रमार्थत्वं कल्प्यतां तस्यापि पुमर्थत्वादित्याशङ्क्याऽऽह । **श्रुतमिति** । अतिप्रसङ्गादिति भावः । ननु यज्ञादीनां श्रुतं स्वर्गाद्यतिलङ्घ्य संयोगपृथक्त्वेन ब्रह्मविविदिषा त्वया फलमुच्यते तथा पुत्रस्य लोकाप्तिं विना तदतिक्रमोऽपि फलं स्याच्छ्रुतहान्यश्रुतकल्पनासाम्यान्नेत्याह । **प्रत्यगिति** । अन्यत्र विविदिषाश्रुताविति यावत् । तन्नात्र श्रुतहान्यादीति भावः ॥ २४४ ॥

**किंच भुक्त्वाऽथवाऽभुक्त्वा ज्योतिष्टोमफलं नरः ॥**
**अतिक्रामेदिमं लोकं नोभयत्रापि युज्यते ॥ २४५ ॥**

जय्यशब्दस्यातिक्रमार्थत्वाभावे युक्त्यन्तरमाह । **किंचेति** । तदेव स्फुटयितुं विकल्पयति । **भुक्त्वेति** । उभयत्रापि पुत्रस्य नातिक्रमहेतुतेत्याह । **नेति** ॥ २४५ ॥

**भुक्त्वाऽतिलङ्घनं तावद्विनाऽपि सुतजन्मना ॥**
**निःशेषकर्मकार्याणां भोगेनैव समाप्तितः ॥ २४६ ॥**

भुक्त्वाऽतिक्रमपक्षे पुत्रस्य तद्धेतुत्वासिद्धिं साधयति । **भुक्त्वेति** ॥ २४६ ॥

**परब्रह्मात्मविज्ञानजन्मनाऽपि हि कर्मणाम् ॥**
**नाभुक्त्वा फलमाप्नोति निर्वृतिं[1] परमां नरः ॥ २४७ ॥**

सर्वकर्मफलानां न भोगेन समाप्तिः किंतु क्षीयन्ते चास्येति श्रुतेर्मुक्तिहेतोर्ज्ञानादित्याशङ्क्याऽऽह । **परेति** । आगमसिद्धमाहात्म्यमपि ज्ञानं नाऽऽरब्धं कर्म नाशयति तस्य भोगादेव ध्वस्तेश्चातुर्थिकत्वादित्यर्थः । फलाध्यायसिद्धन्यायद्योतनार्थो हिशब्दः॥२४७॥

**नैरर्थक्यप्रसक्तिश्च ज्योतिष्टोमादिकर्मणः ॥**
**न चेद्भुक्तं फलं तस्य तदभावेऽपि चात्ययः ॥ २४८ ॥**

---

१ ख. निर्वृत्तिं ।

कल्पान्तरं निरस्यति । **नैरर्थक्येति** । तस्येष्टोपायत्वबोधिवाक्याप्रामाण्यप्रसङ्गश्च-कारार्थः । ज्योतिष्टोमादेर्नित्यस्याफलत्वान्न भोगाभोगचिन्तेति मतमाशङ्क्याऽऽह । **तदभावेऽपीति** । तस्याफलत्वपक्षेऽपि न पुत्रस्यैतल्लोकातिक्रमहेतुत्वं प्रापकाभावेन स्वतोऽतिक्रमसिद्धेर्न च काम्यं कर्म प्रापकं तस्य भोगात्क्षये यथोक्तदोषादित्यर्थः ॥ २४८ ॥

**चन्द्रलोकादिसंप्राप्तिः श्रूयते कर्मणः फलम् ॥**
**पुण्यलोका भवन्तीति तथाच श्रुतितः स्फुटम् ॥ २४९ ॥**

किंच न नित्यस्य फलाभावोऽपि श्रुत्यन्तरविरोधादित्याह । **चन्द्रेति** । **कर्मणा** पितृलोक इति हि **श्रुतिः** । सर्व एत इत्यादिश्रुत्यन्तरमुदाहरति । **पुण्येति** । स्फुटं श्रूयते फलमिति संबन्धः ॥ २४९ ॥

**सुतजन्मादिभिश्चेत्स्यात्सर्वकर्मफलात्ययः ॥**
**परब्रह्मैकविज्ञानं निष्फलं वः प्रसज्यते ॥ २५० ॥**

भोगाभोगयोर्न पुत्रस्य लोकातिक्रमहेतुतेत्युक्त्वा पुत्रादित्रयस्य लोकत्रयातिक्रमार्थत्वे दोषान्तरमाह । **सुतेति** ॥ २५० ॥

**अनुच्छित्तिश्च भोगेन स्पष्टं श्रुतिवचः श्रुतम् ॥**
**धिया धियेति वाक्येन भोगादेव क्रियोत्थितेः ॥ २५१ ॥**

भुक्त्वाऽतिलङ्घने भोगादशेषबन्धातिक्रममङ्गीकृत्य पुत्रादिवैयर्थ्यमुक्तमिदानीं न भोगादप्यशेषबन्धात्ययो भोगाद्भुज्यमानसजातीयार्थरागादिना क्रियातो भोगान्तरप्रसक्तेर्धिया धिया जनयते कर्मभिश्चेति वाक्यात्मनैतदर्थवादिश्रुतिवचसः स्पष्टं श्रुतेरित्याह । **अनुच्छित्तिश्चेति** ॥ २५१ ॥

**कर्मणा पितृलोकाप्तिर्नाश्रुतेरन्यसाधना ॥**
**कर्मैवोपास्तिरूपं यत्तद्विद्येत्यत्र भण्यते ॥ २५२ ॥**

भर्तृप्रपञ्चमतं निराकुर्वाणः सोऽयमित्यादि व्याख्याय कर्मणेत्यादि व्याचष्टे । **कर्मणेति** । न पुत्रादिसाध्या पितृलोकाप्तिस्तद्धेतुत्वेन तस्याश्रुतेरित्याह । **नेति** । विद्ययेत्यत्र विद्याशब्दार्थमाह । **कर्मेति** ॥ २५२ ॥

**देवलोकाप्तिसंबन्धाद्देवताविषयैव सा ॥**
**विद्या न तु निरस्तान्यप्रत्यङ्मात्रैकगोचरा ॥ २५३ ॥**

मुख्यं परमात्मज्ञानमेवात्र विद्या किं न स्यात्सा विद्या या विमुक्तय इति प्रसिद्धेरित्याशङ्क्याऽऽह । **देवेति** ॥ २५३ ॥

**मनुते यन्न मनसा मनो येन मतं सदा ॥**
**तदेव विद्धि ब्रह्मेति न त्विदं यदुपासते ॥ २५४ ॥**

उपास्तिधियोऽत्र विद्यात्वे ब्रह्मणोऽप्युपास्यत्वात्तद्धीरेव ध्यानाख्यविद्या स्यादित्याशङ्क्य ब्रह्म नोपास्यं श्रुतिविरोधादित्याह । **मनुत इति** ॥ २५४ ॥

**उपासिक्रियया व्याप्तिरब्रह्मत्वस्य लक्षणम् ॥**
**इति श्रुत्यैव निर्दिष्टं नोपास्यं ब्रह्म तेन नः ॥ २५५ ॥**

तलवकारश्रुत्यर्थं संगृह्णाति । **उपासीति** ॥ २५५ ॥

**विद्यया देवलोकाप्तिः श्रुतत्वादेव कारणात् ॥**
**नैवकाराभिसंबन्धादेवेत्यत्र न संगतिः ॥ २५६ ॥**

कर्मणाऽग्निहोत्रादिना केवलेन पितृलोको जेतव्यो न पुत्रेण नापि विद्यया तया देवलोको न पुत्रेण नापि कर्मणेति भाष्यमाश्रित्य वाक्यद्वयं व्याख्यातमिदानीं विद्याकर्मणोरेवकारं प्रक्षिप्य भाष्यकृतो व्याख्यानमयुक्तमित्याह । **विद्ययेति** । तया देवलोकस्य कर्मणा पितृलोकस्य चाऽऽप्तिर्युक्ता तयोस्तत्साधनत्वश्रुतेर्न तयोरेवकारसंबन्धाद्विद्ययैव देवलोकस्य कर्मणैव पितृलोकस्याऽऽप्तिरिति युक्तं तस्याः साधनान्तराधीनत्वस्यापि पुत्रश्चेत्यादिना वक्ष्यमाणत्वादतो विद्यादावेवकारसंगतिरसंगतेत्यर्थः ॥ २५६ ॥

**भूयःफला यतो विद्या पूर्वाभ्यां तेन सादराः ॥**
**विद्यामेव प्रशंसन्ति न तथा पुत्रकर्मणी ॥ २५७ ॥**

देवलोको वै लोकानामित्यादेरर्थमाह । **भूय इति** । पूर्वाभ्यां पुत्रकर्मभ्यामिति यावत् ॥ २५७ ॥

**लोकानां श्रेष्ठ इति च न चेदाप्तिर्विवक्षिता ॥**
**सर्वलोकेष्विदं वाक्यमत्यये दुर्घटं भवेत् ॥ २५८ ॥**

देवलोकश्रैष्ठ्यवचनं स्वपक्षे विद्यास्तुत्यर्थं परपक्षे त्वयुक्तमित्याह । **लोकानामिति** । त्रिष्वपि लोकेष्वत्यये जयशब्दार्थे सत्याप्तिस्तेषां न विवक्षिता चेद्देवलोकः श्रेष्ठ इतीदं वाक्यं देवलोकस्तावकं दुर्घटं स्यादत्येतव्यस्तुतेरयोगादित्यर्थः ॥ २५८ ॥

**अत्ययश्चेदभिप्रेतः पुत्रोत्पत्त्यादिभिस्त्रिभिः ॥**
**अपास्तर्णोऽथ स कथं कर्मस्वेष नियुज्यते ॥ २५९ ॥**

किंच पुत्रोत्पत्त्यादेरतिक्रमार्थत्वे स्वोक्तिविरोधः स्यादित्याह । **अत्ययश्चेदिति** । पुत्रादिना लोकत्रयातिक्रमे देहद्वयध्वस्तेः सर्वबन्धातिक्रमस्य त्रयाणामृणानामपाकरणस्य च सिद्धेः संक्रामितात्मभारोऽपि नाग्निहोत्रं परित्यजेदित्यपाकृतर्णस्यानुष्ठानोक्तिर्विरुद्धेत्यर्थः । लोकत्रयमतिक्रान्तस्य देहद्वयशून्यस्य निराकृतर्णत्रयस्य पुत्रे संक्रामितात्मभारस्य कर्मानुष्ठाने प्रयोजनाभावद्योतनार्थमथेत्युक्तम् ॥ २५९ ॥

**ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ॥**
**इति पूर्वाश्रमे वासो ध्वस्तर्णस्य निषिध्यते ॥ २६० ॥**

अपाकृतर्णस्य कर्मानुष्ठानं वदतः स्वोक्तिविरोधवन्मनूक्तिविरोधश्चेत्याह । **ऋणानीति** ॥ २६० ॥

**यथाऽनपाकृतर्णस्य मोक्षेच्छा वार्यते तथा ॥**
**अनधीत्य द्विजो वेदानित्यादिवचनान्मनोः ॥ २६१ ॥**

निरस्तर्णस्य गार्हस्थ्येच्छाऽपि तुच्छेत्येतमर्थं दृष्टान्तेनाऽऽह । **यथेति । अनपाकृत्य** मोक्षं तु सेवमानो व्रजत्यध इति मोक्षेच्छाऽनपाकृतर्णस्य यथा वार्यते तथाऽपाकृतर्णस्यापि गार्हस्थ्येच्छा पूर्वार्धेन वारितेत्यर्थः ।

"योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः" ॥

इति चानपाकृतर्णस्य मुमुक्षा निन्द्यते तथेतरस्य पूर्वाश्रमेच्छाऽपि निन्दितेत्याह । **अनधीत्येति** ॥ २६१ ॥

**इष्ट्वेति च तथा क्त्वान्तश्रवणात्पूर्वकालता ॥**
**नीत्वा समाप्तिं कर्माणि फलवन्त्यफलानि च ॥ २६२ ॥**
**शुद्धधीः प्रव्रजेत्पश्चाद्विरक्तः कर्मणां फलात् ॥**
**इत्यनुक्रमसंन्यासे संप्रत्तिरुपदिश्यते ॥ २६३ ॥**

इतश्चानिरस्तर्णस्यैव कर्मानुष्ठानं नेतरस्येत्याह । **इष्ट्वेति चेति** ॥

"अधीत्य विधिवद्वेदान्पुत्रानुत्पाद्य धर्मतः ।
इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत्" ॥

इत्यत्र क्त्वाप्रत्ययान्तशब्दश्रवणादृणनिरासेन शुद्धिसंपादनात्पूर्वकालता यागादेः सिद्धा समानकर्तृकयोः पूर्वकाले क्त्वेति **स्मृते**स्तथा च कर्मभिः शुद्धबुद्धेर्न तदनुष्ठानमित्यर्थः । देवलोको वै लोकानामित्येतत्प्रसङ्गागतं परपक्षं प्रतिक्षिप्याथेत्यादेस्तात्पर्यमाह । **नीत्वेति** ॥ २६२ ॥ २६३ ॥

**योऽनुक्रमेणेति तथा श्रुतौ स्पष्टमिदं वचः ॥ २६४ ॥**
**अननुक्रमसंन्यासे न संप्रत्तिक्रियेष्यते ॥**
**पुत्रे सत्येव सा यस्मान्नास्त्यसौ ब्रह्मचारिणः ॥ २६५ ॥**

क्रमसंन्यासाङ्गत्वेन संप्रत्तिरित्यत्र **काठकश्रुतिं** संवादयति । **य इति** । यथा क्रमसंन्यासाङ्गं संप्रत्तिस्तथा योऽनुक्रमेण संन्यस्यति संन्यस्तो भवति कोऽयं संन्यास उच्यते कथं संन्यस्तो भवतीत्युपक्रम्य य आत्मानं क्रियाभिः सुगुप्तं करोतीत्यादिनेतिकर्तव्यताजातमुक्त्वा सशिखान्केशान्निकृन्त्य विसृज्य यज्ञोपवीतं निष्क्रम्येति संन्यासं विधाय पुत्रं दृष्ट्वा त्वं ब्रह्म त्वं यज्ञस्त्वं लोकस्त्वं सर्वमित्यनुमन्त्रयीतेति स्पष्टमिदं संप्रत्तिवचो दृष्टं तदेषा स्यात्क्रमसंन्यासाङ्गमित्यर्थः । अस्तु तर्हि संन्यासमात्रस्यैव संप्रत्तिरङ्गं नेत्याह ।

**अननुक्रमेति** । ब्रह्मचारिणोऽपुत्रत्वात्तस्य संप्रत्त्ययोगात्तस्यास्तत्संन्यासानङ्गतेत्यर्थः ॥ २६४ ॥ २६५ ॥

**यद्यपुत्र इति वचः संभवे सति युक्तिमत् ॥**
**निरस्तदारसंबन्धे न तु स्याद्ब्रह्मचारिणि ॥ २६६ ॥**

अस्तु गृहस्थमात्रसंन्यासाङ्गं सेत्याशङ्क्य पुत्रिगृहिसंन्यासाङ्गं सेति वक्तुमपुत्रिणोऽपि तस्य संन्यासं साधयति । **यदीति** । यद्यपुत्रो भवत्यात्मानमेव सर्वं ध्यात्वाऽनपेक्षमाणः प्राचीमुदीचीं वा दिशं प्रव्रजेदित्यादिवाक्यमपुत्रस्यापि गृहिणः संन्याससंभवे घटते नान्यथेत्यर्थः । नेदमपुत्रिगृहिविषयं किंतु ब्रह्मचारिसंन्याससाधकमित्याशङ्क्याऽऽह । **निरस्तेति** । यद्यपुत्र इति प्राप्तनिषेधत्वादप्राप्तनिषेधस्यागतिकगतित्वाद्ब्रह्मचारिण्यप्राप्तेर्गृहस्थे च प्राप्तेर्न ब्रह्मचारिविषयमेतदित्यर्थः ॥ २६६ ॥

**ब्रह्मचर्यादेवेत्यादिवाक्यानि शतशः श्रुतौ[1] ॥**
**श्रूयन्ते तु ऋणवचो विरोधात्स्यादपस्मृतिः ॥ २६७ ॥**

ऋणापाकरणस्मृतेः सपुत्रस्यापुत्रस्य वा गृहस्थस्यैव संन्यासो नान्यस्येत्याशङ्क्याऽऽह । **ब्रह्मचर्यादिति** । प्रत्यक्षश्रुतिविरोधे स्मृतेरप्रामाण्यं संबन्धे साधितमिति भावः ॥ २६७ ॥

**वेदाहमितिमन्त्रोक्तेस्तमेवेत्यवधारणात् ॥**
**निषेधान्नान्य इत्युक्तेर्न मुक्तिः सुतजन्मतः ॥ २६८ ॥**

पुत्रोत्पत्त्यादिहेतोरेव मुक्तिसिद्धेर्नार्थः संन्यासेन तत्साध्यज्ञानेन चेत्याशङ्क्याऽऽह । **वेदेति** । वेदाहमेतं पुरुषमित्यारभ्य **तमेवं** विद्वानमृत इह भवतीति **वाक्यात्तमेव** विदित्वाऽति मृत्युमेती**त्यवधारणान्नान्यः** पन्था विद्यतेऽयनाये**ति** निषेधाच्च ज्ञानादेव मुक्तिरित्यर्थः ॥ २६८ ॥

**न तत्र दक्षिणा यन्ति विद्ययैव तदाप्यते ॥**
**इति न्याय्यं श्रुतेर्वाक्यं कस्मान्नाऽऽद्रियतेऽञ्जसा ॥ २६९ ॥**

तत्रैव वाक्यान्तरमाह । **नेति** । दक्षिणास्तत्प्रधानाः कर्मिणो दक्षिणमार्गगामिन इत्यर्थः । कैवल्यं तदा परामृष्टम् । अविद्याध्वस्तिर्मुक्तिर्न च सा विद्यां विना निरासितुं शक्या तयोरेव विरोधादतो विद्यातो मुक्तिं मुखतो वदद्वाक्यं न्यायवदशक्यं हातुमित्याह । **इति न्याय्यमिति** ॥ २६९ ॥

**संन्यासमेवोपक्रम्य संप्रत्तिः श्रूयते श्रुतौ ॥**
**यथाऽन्यत्र तथेहापि कस्मान्नाभ्युपगम्यते ॥ २७० ॥**

ननु पुत्रिणो गृहिणः संन्यासाङ्गं संप्रत्तिः संप्रत्तिवाक्योक्तेत्ययुक्तं न हीह तदङ्गत्वेन सोच्यते किंतूपस्थितमृतेरुपासकस्योपास्त्यङ्गत्वेन सा विधीयते तत्राऽऽह । **संन्यासमिति** ।

---

१ ख. °न वेत्या° ।

अन्यत्र योऽनुक्रमेणेत्यादावित्यर्थः । सर्ववेदान्तप्रत्ययन्यायादुपनिषदन्तरसिद्धमिहाप्य-विरुद्धमादेयमिति भावः ॥ २७० ॥

**सर्वकर्मनिवृत्तिर्हि जीवतोऽत्र विधीयते ॥**
**एकमेव व्रतमिति संन्यासिन्येव युक्तिमत् ॥ २७१ ॥**

वाक्यशेषाच्चात्र संन्यासविधिरित्याह । **सर्वेति** । एकमेव व्रतं चरेदित्यत्र जीवतः सर्वकर्मनिवृत्तिर्विधीयते तच्च व्रतं संन्यासिन्येव घटतेऽतोऽत्र तद्विधिरित्यर्थः । विधीयमानव्रतस्य सर्वकर्मनिवृत्तौ पर्यवसानादिति हिशब्दार्थः ॥ २७१ ॥

**लब्धत्र्यन्नात्मकफलो भावनाज्ञानकर्मभिः ॥**
**संन्यस्ताशेषकर्मा सन्बोध्यतेऽजातशत्रुणा ॥ २७२ ॥**

किंच गार्ग्यः सर्वं कर्म संन्यस्याजातशत्रुमुपगतो विद्यार्थमिति **चतुर्थे** श्रुतेरत्र तद्विधिरस्तीत्याह । **लब्धेति** ॥ २७२ ॥

**नामरूपक्रियादेहः सर्वोऽस्मीत्यभिमानवान् ॥**
**अतत्त्वज्ञोऽधिकार्यत्र विद्याया उपवर्ण्यते ॥ २७३ ॥**

ननु बालाकेः संन्यासित्वमसिद्धमजातशत्रूपगतेर्न हि संन्यासित्वे राजोपगतिर्युक्तेत्याशङ्क्योक्तमेव प्रपञ्चयति । **नामेति** । अत्रेति बालाक्यजातशत्रुसंवादोक्तिः । संन्यासिनो ब्राह्मणस्य क्षत्रियोपसत्त्यभावेऽपि तदनुज्ञया श्रवणादि युक्तमाधुनिककनिष्ठसंन्यासिनो ज्येष्ठसंन्यासिनस्तद्दृष्टेरिति भावः ॥ २७३ ॥

**अयं लोकश्च पुत्रेण यादृशेन च जीयते ॥**
**तादृक्पुत्रोऽत्र वक्तव्य इत्यारब्धोत्तरा श्रुतिः ॥ २७४ ॥**

संप्रत्तिवाक्यस्य स्वमतेन संबन्धमुक्त्वा भाष्योक्तमनुवदति । **अयमिति** । कर्मादिना पितृलोकादिवदित्याद्यचकारार्थः । कर्मवद्विद्यावच्चेति वक्तुं द्वितीयश्चकारः । सप्तमी निर्धारणे ॥ २७४ ॥

**पुत्रकर्मापरज्ञानत्रृपित्रमरलोकतः ॥**
**व्याख्यातो नियमोऽन्योन्यं फलसाधनसंगतेः ॥ २७५ ॥**

तमेव संबन्धं साधयितुं वृत्तमनुद्रवति । **पुत्रेति** । पुत्रादित्रयस्य लोकत्रयेण यथाक्रमं फलसाधनमित्यन्योन्यसंगतेर्नियमो व्याख्यात इति योजना ॥ २७५ ॥

**पुत्रकर्मार्थमात्रत्वान्न पृथक्साधनान्तरम् ॥**
**जाया मानुषवित्तं च कर्मैकार्थत्वकारणात् ॥ २७६ ॥**

पुत्रादिवज्जायावित्तयोरपि प्रकृतत्वात्फलविशेषे विनियोगो वाच्योऽपि नोच्यते चेन्न पुरुषार्थत्वान्वयित्वं तयोरुपपद्यत इत्याशङ्क्याऽऽह । **पुत्रेति** । साधनान्तरं स्वतन्त्रं साधनं चकारात्कर्मणो न पृथगिति संबन्धः । पुत्रकर्मणोरेव जायावित्तयोरन्तर्भावात्तयोः

सिद्धेऽपि फलसंबन्धे तदन्तर्भूतयोस्तयोरपि तत्संबन्धस्य सिद्धेस्तयोर्न स्वातन्त्र्येण फलान्वयानुकीर्तनमपेक्षितमित्यर्थः ॥ २७६ ॥

**स्वरूपलाभमात्रेण साधनत्वं निगच्छतः ॥**
**कर्मज्ञाने सुतस्तस्य साधनत्वं व्रजेत्कथम् ॥ २७७ ॥**

नन्वेवं साधनत्रयनियमेऽपि विद्याकर्मणी हित्वा किमिति पुत्रनिरूपणमित्याशङ्क्याऽऽह । **स्वरूपेति** । साधनत्वं लोकद्वयस्येति शेषः । क्रियारूपत्वादित्यर्थः । पुत्रस्तु मनुष्यलोकजये न तथा हेतुर्द्रव्यत्वान्न हि द्रव्यं क्रियानाविष्टं साधनं दृष्टमतस्तस्य लोकजये कथं साधनतेति पृच्छति । **सुत इति** । तस्य मनुष्यलोकस्येत्यर्थः ॥ २७७ ॥

**इत्येवमभिसंबन्धो वक्तुर्भाष्यकृतः स्फुटः ॥**
**अस्मदुक्ताविरोधीति तेन नेहातियत्यते ॥ २७८ ॥**

एवं चोद्ये पुत्रस्य लोकहेतुत्वज्ञापनार्थं संप्रत्तिवाक्यमित्याह । **इत्येवमिति** । नायं संबन्धः सूचितोऽपि तु मुखतो दर्शित इति वक्तुं स्फुट इति विशेषणम् । अयं संबन्धोऽस्मदुक्तसंबन्धाविरोधित्वान्न दूष्यत इत्याह । **अस्मदिति** । क्रमसंन्यासाङ्गं संप्रत्युक्तिरित्यस्मदुक्तसंबन्धस्तस्यायं भाष्योक्तः संबन्धो न विरोधी संन्यासकाले संप्रत्त्यनुष्ठाने पुत्रेणैतल्लोकजयसिद्धेस्तेन भाष्योक्ते संबन्धे न यत्यते दूषणायेत्यर्थः । आपाततोऽत्र न दोषोऽस्तीतिद्योतनार्थमतीत्युक्तम् ॥ २७८ ॥

**पुत्रश्चेदनुशिष्टः स्याल्लोकस्तेनैव जीयते ॥**
**नान्येन कर्मणाऽत्रार्थो नृलोकजयसिद्धये ॥ २७९ ॥**
**पुत्रस्यैवावधृतय एवकारो भवेदयम् ॥**
**पितृदेवलोकसंप्राप्तिः श्रुतेहान्यैश्च साधनैः ॥ २८० ॥**

भाष्योक्तसंबन्धश्चेददूष्यस्तर्हि तत्रोक्तं कर्मणा पितृलोक इत्यादेर्व्याख्यानमपीष्यतां ततश्च विद्यया देवलोकाप्तिः श्रुतत्वादेवेत्याद्ययुक्तमित्याशङ्क्य यत्रैवकारः श्रुतस्तत्रैवासाविति साधयति । **पुत्रश्चेदिति** । लोकेषु मध्ये मनुष्यलोकं निर्धारयितुमत्रेत्युक्तम् । द्विविधो हि मनुष्यलोकजयः पितुरत्राध्ययनादिकर्तव्यशेषानुष्ठानं भोगश्च तत्र पुत्रेणैतल्लोकजयबुद्ध्या पितृभिः सोऽनुशिष्टश्चेत्तेनैवाऽऽद्यो जयो न हि यथोक्तलोकजयार्थं कर्मणो विद्याया वा कश्चिदुपयोगोऽतस्तदर्थं पुत्रस्यैवोपायत्वात्तदवधारणार्थमेवकारो युक्तो द्वितीयस्तु जयो हेत्वन्तरेणापि स्याज्ज्योतिषेत्यादिश्रुतेरिममेव विभागमभिप्रेत्यायोगव्यवच्छेदकमेवकारमवादिष्मेति भावः । उत्तरवाक्ययोस्त्वेवकारानुषङ्गो न युक्तिमानित्याह । **पितृदेवेति** । न हि पितृलोकजयो नित्यादिकर्मनियतः **संकल्पादेव** तु तच्छ्रुतेरितिन्यायविरोधान्नापि विद्ययैव देवलोकजयः संन्यासाद्ब्रह्मणः स्थानमित्यादिवि-

रोधादतो लोकद्वयजयस्य हेत्वन्तरायत्तत्वसंभवादेवकारं प्रक्षिप्य वाक्ययोर्व्याख्या न युक्तेत्यर्थः ॥ २७९ ॥ २८० ॥

**व्याख्यानमिदमेवात्र विदोषं दोषवत्परम् ॥**
**इदमेव ततो ग्राह्यं न तु यद्दोषवन्मतम् ॥ २८१ ॥**

एवकारो यत्र श्रुतस्ततोऽन्यत्र नेत्येतदेव श्रुतिस्मृत्यविरोधित्वान्निर्दोषं वाक्यद्वयेऽप्येवकारानुषक्तिरिति तु तद्विरोधित्वात्सदोषं तस्मादस्मद्व्याख्यानमेव विद्वद्भिर्ग्राह्यं न भाष्यकारीयमिति फलितमाह । **व्याख्यानमिति** । कर्मणेत्यादि वाक्यमत्रेत्युक्तम् । एकस्य विदोषत्वमपरस्य सदोषत्वमिति स्थिते फलितमाह । **इदमिति** ॥ २८१ ॥

**अथानन्तरमेवोक्तात्कर्मोपासनचेष्टितात् ॥**
**अतस्तत्फलनिष्पत्तेः संप्रत्तिः संविधीयते ॥ २८२ ॥**

संप्रत्तिवाक्यसंबन्धोक्त्यवसरे प्रसङ्गागतं समाप्याथेत्यादि व्याचष्टे । **अथेति** । कर्मोपासनयोरनुष्ठानात्पूर्वोक्तादतःशब्दार्थादनन्तरमेवाऽऽरब्धावसाने द्वयोः फलार्थं तदङ्गत्वेन क्रमसंन्यासोपयोगिसंप्रत्तिविधिरिति योजना ॥ २८२ ॥

**यतो मनुष्यलोकोऽयं विशिष्टसुतसाधनः ॥**
**तस्मात्संप्रत्तिकर्मेह वक्तव्यं तत्फलार्थिने ॥ २८३ ॥**

अतःशब्दस्यार्थान्तरमाह । **यत इति** । इहेति विशिष्टपुत्रोक्तिः । तत्साध्यैतल्लोकजय[1]लिप्सत्वं तत्फलार्थित्वं तस्यार्थिनः फलसिद्ध्यर्थमित्यर्थः ॥ २८३ ॥

**विदुषैव तु कर्तव्या संप्रत्तिर्नाविपश्चिता ॥**
**यतोऽतः सूत्रिता नेयं सूत्रकृद्भिरनित्यतः ॥ २८४ ॥**

उपासकस्योपासनद्वारा संन्यासाङ्गं संप्रत्तिरित्ययुक्तं तस्याः स्वातन्त्र्यस्याग्निहोत्राद्यङ्गत्वस्य वा संभवादित्याशङ्क्याऽऽह । **विदुषेति** । स्वातन्त्र्ये कर्माङ्गत्वे वा कल्पसूत्रकारैरेषाऽपि कर्मान्तरवत्सूत्रयितव्या स्यान्न च सूत्रिता तदस्या विद्याद्वारा संन्यासाङ्गतैवेत्यर्थः । न च तदङ्गत्वमपि नियतमपुत्रस्योपासितुस्तदयोगादित्याह । **अनित्यत इति** ॥ २८४ ॥

**संप्रत्तिरिति नामैतदात्मसंस्कारकर्मणः ॥**
**प्रतिपत्तिक्रिया वा स्यादातुरन्यासदर्शनात् ॥ २८५ ॥**

संप्रत्तिशब्दार्थमाह । **संप्रत्तिरिति** । स्नानादिवदुपासितुः स्वगतसंस्कारकर्मणः संप्रत्तिसंज्ञेत्यर्थः । तस्यार्थान्तरमाह । **प्रतिपत्तीति** । तीव्ररोगाक्रान्तस्य मुमूर्षोर्गृहिणोऽर्थात्कर्मत्यागः प्राप्तस्तथाच चात्वाले कृष्णविषाणं प्रास्यतीतिवद्यादि कर्माणि

---

१ ख. °लिप्सत्वं ।

त्यज्यन्ते तदा पुत्रे समर्पणरूपेण तानि त्यजेदिति प्रतिपत्तिक्रिया संप्रत्तिरित्युच्यते । दृश्यते चापदवस्थस्य संन्यासस्तस्मात्प्रतिपत्तिकर्म संप्रत्तिरित्यर्थः ॥ २८५ ॥

**प्रैष्यन्निति च कालोऽस्य कर्मणोऽत्र विधीयते ॥**
**जातकादिपरिज्ञानाज्ज्ञातुं कालोऽपि शक्यते ॥ २८६ ॥**

कस्मिन्काले तत्कार्यमित्याशङ्क्य यदेत्यादेस्तात्पर्यमाह । **प्रैष्यन्निति चेति** । सप्तम्या वाक्यं परामृश्यते । विधिर्बोधनं न तु यागादिवत्तत्कालस्य विधिः काले कर्म विधीयेत न काल इति स्थितेरिति द्रष्टव्यम् । मृतिकालस्य दुर्ज्ञानत्वात्कथं तत्र तत्कार्यमत आह । **जातकेति** । आदिशब्देन मृतिद्योतिदुःस्वप्नादिसंग्रहः । संपदादिज्ञानं दृष्टान्तयितुमपि-शब्दः ॥ २८६ ॥

**मुमूर्षुश्च पिता पुत्रमथाऽऽहूयानुमन्त्रयेत् ॥**
**त्वं ब्रह्मेत्यादिभिर्वाक्यैः सोऽपि प्रत्याह बोधितः[1] ॥ २८७ ॥**

संप्रति तत्प्रकारमभिनयन्नथेत्यादेरर्थमाह । **मुमूर्षुश्चेति** । चकारोऽवधारणार्थः सन्नस्य कार्यान्तरं वारयति । मुमूर्षानन्तर्यमथशब्दार्थः ॥ २८७ ॥

**कर्मभ्यः प्रव्रजिष्यन्वा प्रैष्यन्नित्यभिधीयते ॥**
**धातूपसर्गयोर्मुख्यस्तथाऽर्थोऽप्याश्रितो भवेत् ॥ २८८ ॥**

क्रमसंन्यासाङ्गत्वेन संप्रत्तिविधिपक्षे प्रैष्यन्नित्यस्यार्थमाह । **कर्मभ्य इति** । भाष्योक्तं पक्षमपेक्ष्यात्रातिशयमाह । **धात्विति** । प्रैष्यन्नित्यस्य पारिव्राज्येऽर्थे सति धातोरिणो गत्यर्थस्य प्रोपसर्गस्य च मुख्योऽर्थः स्वीकृतः स्यात्प्रकर्षेण कर्मभ्यो निर्गमिष्यन्नस्मीति हि तदाऽर्थो भवेत्तथा चेयमेव व्याख्या युक्तेत्यर्थः ॥ २८८ ॥

**अहं ब्रह्मेति पितरं पूर्वमेवोपशिक्षितः ॥**
**प्रतिवक्तुं न शक्तः स्यान्न चेत्प्राक्शिक्षितो भवेत् ॥ २८९ ॥**

अहं ब्रह्मेत्यादिप्रत्युक्तितात्पर्यं सोऽपि प्रत्याहेत्यत्र संक्षिप्तं प्रकटीकर्तुमाह । **अह-मिति** । त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति पित्रा संबोधितः पुत्रः पूर्वमेव मत्कार्याध्यय-नादिशेषस्त्वया कार्य इति शिक्षितत्वादहमित्यादि पितरं प्रत्याहेत्यर्थः । पूर्वमेवं शिक्षि-तत्वं तस्य व्यतिरेकद्वाराऽऽह । **प्रतिवक्तुमिति** ॥ २८९ ॥

**पुत्रानुमन्त्रणस्यार्थं व्याचष्टे स्वयमेव नः ॥**
**श्रुतिस्तिरोहितार्थत्वान्मन्त्राणामित्यतोऽवदत् ॥ २९० ॥**

यद्वै किंचेत्याद्यवतारयति । **पुत्रेति** । अयमेवार्थो भाष्यकृतोऽपि यतोऽभिमतोऽतः स भगवान्भाष्यकृदेतस्यार्थस्तिरोहित इति मन्वाना श्रुतिर्व्याख्यानाय प्रवर्तत इत्यवोच-दित्याह । **इत्यत इति** ॥ २९० ॥

---

[1] क. ग. चोदितः ।

**अनूक्तं यदधीतं स्याद्यच्चाध्येतव्यमिष्यते ॥**
**यच्चानधीतं तस्योक्तौ ब्रह्मेत्यत्रैकता भवेत् ॥ २९१ ॥**

यदित्यादिब्राह्मणं योजयति । **अनूक्तमिति ।** अनधीतमुभयविलक्षणमिति यावत् । अध्येतव्यविलक्षणत्वमनवश्यंभावित्वात्त्वमित्यामन्त्रणं तु स्वेच्छया तदध्ययनसिद्ध्यर्थम् ॥ २९१ ॥

**त्वं ब्रह्मेतीह वाक्यार्थो ह्ययमत्र विवक्षितः ॥**
**अध्येतव्यार्थनिष्पत्तिस्[1]त्वनिष्पत्त्या[2] मया कृता ॥ २९२ ॥**

त्वं ब्रह्मेति वाक्यस्य तद्ब्राह्मणस्य च संपिण्डितमर्थमाह । **त्वमिति ।** इहशब्दो मन्त्रसमानाधिकरणः । अत्रेति ब्राह्मणोक्तिः । उक्ते वाक्यार्थे मन्त्रब्राह्मणविदां संप्रतिपत्त्यर्थो हिशब्दः ॥ २९२ ॥

**यावन्मत्कर्तृकं किंचिन्मानेन प्रतिपाद्यते ॥**
**त्वत्कर्तृकं तदस्त्वत्र पितुरे[3]वं विवक्षितम् ॥ २९३ ॥**

ये वै के चेत्यादिब्राह्मणद्वयार्थमाह । **यावदिति ।** यदितः पूर्वं मत्साध्यं यज्ञादि शास्त्रीयं तदस्मादूर्ध्वं त्वत्साध्यमस्त्वित्यर्थः । अत्रेत्युत्तरकालोक्तिः ॥ २९३ ॥

**लोकोक्त्यैव हि यज्ञानां तत्फलत्वाद्ग्रहे सति ॥**
**नित्ययज्ञगृहीत्यर्थं के च यज्ञा इतीरणम् ॥ २९४ ॥**

पुनरुक्तिं चोदयति । **लोकोक्त्येति ।** तत्फलत्वाल्लोकफलत्वात्तद्बद्धत्वेन तद्व्याप्तत्वादिति यावत् । ग्रहे सति के च यज्ञा इति पुनरुक्तिरिति शेषः । साध्यसाधनयोर्मिथोव्याप्तिद्योतनार्थो हिशब्दः । लोकग्रहे सति तद्धेतुयज्ञग्रहेऽपि नित्यानामेव यज्ञानां पुत्रेऽर्प्यमाणतया तद्ग्रहार्थं पृथग्यज्ञोक्तिरन्यथा काम्यानामेवार्पणप्रसङ्गात्तेषामेव लोकहेतुत्वसंमतेर्न च काम्यानां पुत्रे समर्पणं तेषामावश्यकत्वानुपपत्तेरित्युत्तरमाह । **नित्येति ।** न च तर्हि यज्ञग्रहे लोकगृहीतेर्ये वै के च लोका इति पुनरुक्तमिति युक्तं नित्यकर्मणामफलत्वपक्षे तदभावात्पक्षान्तरेऽपि लोकानामुपसर्जनत्वेनाविवक्षितत्वनुत्त्यर्थं पृथग्ग्राह्यज्ञानामपि तथा पृथग्ग्रहे पुनरुक्त्यभावस्येष्टत्वादिति द्रष्टव्यम् ॥ २९४ ॥

**ब्रह्मेत्यादिपदार्थोऽयमुक्तस्तावत्समासतः ॥**
**त्वं ब्रह्मेति तु वाक्यार्थः श्रुत्येदानीं विभाव्यते ॥ २९५ ॥**

ब्राह्मणत्रयार्थमनुवदति । **ब्रह्मेत्यादीति ।** एतावदित्याद्यवतारयति । **त्वमिति ।** तुशब्देन शिष्टे वाक्ये गृह्येते ॥ २९५ ॥

**एतावदेव कर्तव्यं गृहिणेहाधिकारिणा ॥**
**वेदा यज्ञाश्च लोकाश्च नातोऽन्योऽर्थोऽवशिष्यते ॥ २९६ ॥**

---

[1] ख. °त्तिरनि° । [2] ग. °स्त्वन्निष्प° । [3] ख. °रेतद्विव° ।

एतावद्वा इदं सर्वमिति भागस्यार्थमाह । **एतावदिति** । इहेति कर्ममार्गोक्तिः । कर्तव्यस्यैतावत्त्वमेव दर्शयति । **वेदा इति** । अध्येतव्या वेदा यष्टव्या यज्ञा जेतव्या लोका इति विभागः ॥ २९६ ॥

**यथोक्तार्थचिकीर्षुः संस्तन्मयस्तत्क्रतुः स्वतः ॥**
**इतोऽधिकारबन्धान्माऽभुनजत्पालयेदिति ॥ २९७ ॥**
**चेतस्याधाय वाक्यार्थमिममाह पिता सुतम् ॥**
**त्वं ब्रह्मेत्यादिवाक्यानां नातोऽन्योऽर्थो विवक्षितः ॥ २९८ ॥**

एतन्मा सर्वमित्यादेरर्थमाह । **यथोक्तेति** । कर्तव्यत्वेन[1] मया समर्पितं यज्ञादि कर्तुमिच्छन्पुत्रस्तत्प्रधानस्तत्संकल्पश्चास्मादधिकारबन्धान्मनुष्यदेहहेतोर्मां[2] पालयिष्यतीत्यर्थः । इतिशब्दसूचितमाह । **इति चेतसीति** । अर्थान्तरविवक्षां वारयति । **त्वं ब्रह्मेत्यादिवाक्यानामिति** ॥ २९७ ॥ २९८ ॥

**यत उक्तं चिकीर्षुः सन्ननुशिष्टश्च तादृशः ॥**
**अतो लोकहितार्थं तं पुत्रमाहुर्मनीषिणः ॥ २९९ ॥**

तस्मात्पुत्रमित्यत्र तच्छब्दापेक्षितमाह । **यत इति** । अनुशिष्टः सन्नुपदिष्टमध्ययनादि चिकीर्षुस्तन्मयस्तत्क्रतुश्च यस्मादित्यर्थः । तस्मादित्यादि योजयति । **अत इति** ॥ २९९ ॥

**अनुशिष्टो यतः पुत्रः पित्रैवैति समर्थताम् ॥**
**अनुशिष्टमतो लोक्यं पुत्रमाहुर्विपश्चितः ॥ ३०० ॥**

पुत्रमात्रस्य लोक्यत्वमस्तु नापुत्रस्येत्यविशेषश्रुतेः[3] किं तदनुशिष्टेत्याशङ्क्याऽऽह । **अनुशिष्ट इति** । समर्थतामध्ययनादिशेषक्रियायामिति शेषः । विपश्चितो नाम पुत्रप्रयोजनं प्रतियन्तः कर्मिणो विवक्षिताः ॥ ३०० ॥

**पितरश्चात एवैनमनुशासति सत्सुतम् ॥**
**अनुशिष्टेन पुत्रेण लोक्यः स्यामिति यत्नतः ॥ ३०१ ॥**

तस्मादेनमित्यादेरर्थमाह । **पितरश्चेति** । अत एवानुशिष्टस्यैव पुत्रस्य लोक्यत्वादिति यावत् । सुतस्य सत्त्वमनुशासनयोग्यत्वम् । अनुशास्तॄणां पितॄणामभिप्रायमाह । **अनुशिष्टेनेति** । अनुशासने तात्पर्यं यत्नः ॥ ३०१ ॥

**संक्रामितात्मभारोऽपि नाग्निहोत्रं परित्यजेत् ॥**
**इत्येतत्कर्मरागोक्तं निष्प्रमाणं न गृह्यते ॥ ३०२ ॥**

संप्रत्तिविधितदर्थवादौ व्याख्याय स एष संप्रत्तिं कृत्वा यावज्जीवति न तावदग्निहोत्रमुत्सृजेदिति भर्तृप्रपञ्चोक्तमनुवदति । **संक्रामितेति** । मानाभावेन प्रत्याह । **इत्येतादिति** ॥ ३०२ ॥

---

१ ख. कर्तृत्वे° । २ क. ख. °ति । वा° । ३ ख. °त्यवशे° ।

**संप्रत्तिलिङ्गात्संन्यासविधिरत्र विवक्षितः ॥**
**निःशेषोपनिषन्मानमेकं ज्ञानमितीष्यते ॥ ३०३ ॥**

ननु क्रतुमात्रं पुत्रे समावेशितं संसारश्चायं यजमानश्च नाग्निहोत्रादीनामुत्सर्गं प्रयोक्तुमुत्सहत इति हि वदन्ति तस्मात्कृतसंप्रत्तिकस्याग्निहोत्रादित्यागेऽपि न मानमित्याशङ्क्याऽऽह। **संप्रत्तीति।** **काठकीय**श्रुतौ संन्यासाङ्गत्वेन चोदितसंप्रत्तेरत्र दृष्टेरस्मादेव लिङ्गादङ्गी संन्यासविधिरिह विवक्षित इत्यर्थः। श्रुत्यन्तरे संप्रत्तेः संन्यासाङ्गत्वेऽपि नात्र तदङ्गता न खलु निखिलोपनिषदामेकवाक्यतेत्याशङ्क्य सर्ववेदान्तप्रत्ययन्यायेनाऽऽह। **निःशेषेति** ॥ ३०३ ॥

**त्र्यन्नात्मभावसंप्राप्तेर्जीवतैव कृतत्वतः ॥**
**साधनानां फलान्तत्वात्संन्यासः किं निवार्यते ॥ ३०४ ॥**

संप्रत्तिवाक्ये त्र्यन्नात्मोपासितुः संन्यासो विवक्षित इत्यत्र लिङ्गान्तरमाह। **त्र्यन्नात्मेति।** जीवतैव सूत्रभावस्य कृतत्वे हेतुमाह। **साधनानामिति।** उपास्तीनामुपास्यदेवताभावसाक्षात्कारपर्यन्तत्वादिति पुनरनुष्ठानफलाभावादिति यावत् ॥ ३०४ ॥

**यावज्जीवश्रुतिप्राप्तेर्न चेत्तत्त्याग इष्यते ॥**
**प्रयोगावसितेर्नैवं जरिणोऽधिकृतिर्न च ॥ ३०५ ॥**

**कुर्वन्नेवेह** कर्माणीत्यादिश्रुतिविरोधान्न संन्याससिद्धिरिति शङ्कते। **यावदिति।** कर्मणामिति शेषः। तच्छब्दोऽपि तद्विषयः। यथोक्ता श्रुतिर्न यथार्थेत्याह। **नैवमिति।** अग्निहोत्रादेर्नियतकालत्वात्कालान्तरे विच्छेददृष्टेरिति हेतुमाह। **प्रयोगेति।** जीवता यथाकालमवश्यकार्यमग्निहोत्रादीत्येवंपरा सेति चेन्नेत्याह। **जरिण इति।** अशक्तस्य जीवतोऽप्यनधिकारान्नायं नियमस्तस्मादविरक्तगृहिविषया श्रुतिर्न संन्यासविरोधिनीत्यर्थः ॥ ३०५ ॥

**प्रातर्देशावसानत्वादग्निहोत्रादिकर्मणः ॥**
**नित्यानामपि संन्यासः कर्मणां स्यात्तदैव तु ॥ ३०६ ॥**

विवेकिनः संन्यासे युक्तिमाह। **प्रातरिति।** निश्चितकालोपलक्षणं प्रातर्देशेत्युक्तम्। अग्निहोत्रादेर्नियतकाले समाप्तेश्चोदितकालादन्यत्र नित्यादीनामविवेकदशायामपि त्यागः सिद्धो विवेकदशायां तु संप्रत्तिकाले संभवतीति किं वाच्यमित्यर्थः ॥ ३०६ ॥

**संक्रामितात्मभारस्य त्वं ब्रह्मेति वचोऽर्थवत् ॥**
**तदा स्यात्सर्वकर्माणि यदि संन्यस्य तिष्ठति ॥ ३०७ ॥**

त्वं ब्रह्मेत्यादि वाक्यमपि कृतसंप्रत्तिकस्य संन्याससाधकमित्याह। **संक्रामितेति।**

---

१ क. °दङ्गिसं°। २ ख. °न्तसंप्र°।

यदि पिता कृतसंप्रत्तिको यावज्जीवति तावत्कर्माणि सर्वाणि संन्यस्यैव तिष्ठति तर्हि पुत्रे समर्पितात्मकर्तव्यताकलापस्यापि पितुस्त्वं ब्रह्मेत्यादि पुत्रं प्रति वाक्यमर्थवद्भवत्यतो यथोक्तवाक्यादपि प्रकृते संन्याससिद्धिरित्यर्थः ॥ ३०७ ॥

**सर्वात्मकार्यनिचयपुत्रसंक्रामितत्वतः ॥**
**न चेत्तित्यक्षितं सर्वं प्रतिप्रसवगीर्भवेत् ॥ ३०८ ॥**

कथं संन्यासे सत्येव वाक्यस्यार्थवत्त्वं तत्राऽऽह । **सर्वात्मेति** । कतिपयकर्मत्यागेऽपि नाग्निहोत्रादित्यागोऽत्र विवक्षित इत्याशङ्क्याऽऽह । **न चेदिति** । संप्रत्तिवाक्ये सर्वकर्म त्यक्तुं नेष्टं चेत्कृतसंप्रत्तिकेनाप्येतावत्कार्यमिति वाक्यं स्यान्न च तदस्त्यतः सर्वकर्मत्यागोऽत्रेष्ट इत्यर्थः ॥ ३०८ ॥

**कौषीतकिश्रुतौ तद्वद्गृहस्थस्यैव जीवतः ॥**
**संन्यासः श्रूयते स्पष्टः पुत्रैश्वर्ये सुखं वसेत् ॥ ३०९ ॥**

क्रमसंन्यासे संप्रत्तिवाक्यवत्काठकश्रुतौ योऽनुक्रमेणेत्याद्युक्तवाक्यवच्च ब्रह्मचारी वेदमधीत्य वेदौ वेदान्वा चरितब्रह्मचर्यो दारानाहृत्य पुत्रानुत्पाद्याग्निमाधाय यथाशक्ति यज्ञैरिष्ट्वाताननुरूपाभिर्वृत्तिभिः संविभज्य तस्य [1]संन्यासो गुरुभिरनुज्ञातस्येत्युपक्रम्यात ऊर्ध्वमनशनमपां प्रवेशनं महाप्रस्थानं वृद्धाश्रमं वा गच्छेत्पुत्रैश्वर्ये वा वसेदिति **कौषीतकिश्रुतावपि** जीवतो गृहस्थस्यैव संन्यासो निःसं[2]दिग्धः श्रूयतेऽतोऽपि न तदपह्नव इत्याह । **कौषीतकीति** । कौषीतकिश्रुतिमेव संक्षिप्याऽऽह । **पुत्रेति** ॥ ३०९ ॥

**संन्यस्य सर्वकर्माणि सर्वदोषानपानु[3]दन् ॥**
**इत्यादि मनुनाऽप्युक्तं तद्विरुद्धं च भण्यते ॥ ३१० ॥**

प्रकृतसंन्यासे **स्मृतिरपि** मानमित्याह । **संन्यस्येति** ॥

"धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥
दश लक्षणानि धर्मस्य ये विप्राः समधीयते ।
अधीत्य चानुवर्तन्ते ते यान्ति परमां गतिम् ॥
दशलक्षणकं धर्ममनुतिष्ठन्हि मानवः ।
वेदान्तान्विधिवच्छ्रुत्वा संन्यस्येदनृणो द्विजः ॥
संन्यस्य सर्वकर्माणि सर्वदोषानपानुदन् ।
नियतो वेदमभ्यस्य पुत्रैश्वर्ये सुखं वसेत् ॥
एवं संन्यस्य कर्माणि स्वकार्यपरमोऽस्पृहः ।
संन्यासेनापहत्यैनः प्राप्नोति परमां गतिम्" ॥

---

१ ख. संन्यासे । २ क. °दिग्धं श्रू° । ३ क. °नुदेत् । इ° ।

इति ब्रुवता **मनुना**ऽपि क्रमसंन्यासोऽङ्गीकृतः । यदि कृतसंप्रत्तिकस्यापि कार्यमग्निहोत्रादीत्याग्रहस्तदा श्रुतिस्मृतिविरोधः स्यादित्याह । **तद्विरुद्धं चेति** ॥ ३१० ॥

**उपास्तिफलमेवास्य पितुर्यद्वदिहोच्यते ॥**
**प्रतिप्रसूयते कस्मान्नाग्निहोत्रादिकं तथा ॥ ३११ ॥**

यद्यपि श्रुतिस्मृत्योरग्निहोत्रादित्यागो विवक्षितस्तथाऽपि नात्र तद्विवक्षानिमित्तमस्तीत्याशङ्क्य न चेत्तित्यक्षितमित्युक्तं प्रपञ्चयति । **उपास्तीति** । यथा कृतसंप्रत्तिकस्योपास्तिफलमेव पृथिव्यै चैनमित्यादावुच्यते न कार्यान्तरं तथा सर्वकर्मसंन्यासः संप्रत्तिवाक्येनाविवक्षितश्चेदग्निहोत्राद्यपि तस्यानन्तरवाक्ये प्रतिप्रसूयेतात्र च तदभावात्संन्यासो विवक्षित इत्यर्थः ॥ ३११ ॥

**एकमेवेत्यवधृतेर्युक्तं प्राणव्रतं पितुः ॥**
**संस्कारकत्वात्तस्यैव न तदन्यादिहेष्यते ॥ ३१२ ॥**

कृतसंप्रत्तिकस्य नोपास्तिफलमेवोत्तरत्रोच्यते प्राणव्रतस्यापि दृष्टेरतोऽस्ति तस्यापि कर्मेति नात्र संन्यासविधिरित्याशङ्क्याऽऽह । **एकमिति** । प्राणव्रतं हि प्राणोपास्तिर्वा प्राणनादिव्यापारमात्रं वा नोभयमपि संन्यासविरोधि तदुपास्तेर्मानसत्वेन मनोनिग्रहद्वारा सर्वव्यापारोपरमरूपपुरुषसंस्कारहेतुतया संन्यासानुगुण्यात्तद्व्यापारस्यापि जीवनहेतुत्वेन पुरुषस्थितिहेतुत्वात्तत्द्वारा तदानुकूल्यात्तस्मादेकमेवेत्यवधारणाद्युक्तमेव पितुः संन्यासिनोऽपि प्राणव्रतं न च ततोऽन्यदिह विदुषि संन्यासविरोधीष्यते तद्युक्तोऽत्र तद्विधिरित्यर्थः ॥ ३१२ ॥

**म्रियते स यदैवंवित्पुत्रसंक्रामितक्रतुः ॥**
**क्रत्वञ्जितैस्तदा प्राणैः सह पुत्रं विशत्ययम् ॥ ३१३ ॥**

कृतसंप्रत्तिकस्यापि कर्मत्यागो नेति मतं निरस्य तत्संन्यासमुपपाद्य स यदेत्यादि व्याचष्टे । **म्रियत इति** । एवं व्यन्नात्मा प्रजापतिरस्मीत्युपासीनः साक्षात्कृततद्भाव इत्यर्थः । क्रत्वञ्जितैः संकल्पसंस्कृतैरिति यावत् । सर्वस्य संकल्पस्य पुत्रे समर्पितत्वात्प्रजापतिरस्मीति संकल्पस्यैवावशिष्टत्वात्तेन संस्कृतैर्दैवैर्वागादिभिः सर्वत्र प्रविशद्भिः सह पिता प्रविशन्पुत्रं प्रति प्रविशतीति व्यपदिश्यत इत्यर्थः ॥ ३१३ ॥

**प्रागात्मक्रतुसंक्रान्तेरभूद्यादृक्क्रतुः पिता ॥**
**स तादृक्क्रतुबिम्बोऽस्य संक्रान्तः स्वसुते पितुः ॥ ३१४ ॥**

कोऽयं प्रवेशो न हि विशिष्टस्य केवलस्य वा सर्पादेर्बिलादाविव प्रवेशोऽत आह । **प्रागिति** । स्वगतकर्तव्यसंकल्पस्य पुत्रेऽर्पणात्पूर्वं पिता यादृशसंकल्पवानासीत्स तादृशः संकल्पप्रकारस्तस्मिन्प्रवेश्यमानोऽस्य विदुषः स्वसुते प्रवेश इत्युपचर्यत इत्यर्थः ॥३१४॥

---

१ क. ख. °तैर्दैवै° ।

**जलार्कस्येव संक्रान्तिः स्वाभासभ्रमकारणात् ॥**
**परोपाधिनिमित्तैव कौटस्थ्यात्प्रत्यगात्मनः ॥ ३१५ ॥**

ननु बल्यावृक्षे संक्रान्तिवन्मुख्यां संक्रान्तिं त्यक्त्वा किमित्यौपचारिकी कल्प्यते तत्राऽऽह । **जलेति** । उपाधेरुपहितस्य प्रतीचो वा मुख्या संक्रान्तिर्नाऽऽद्योऽध्यक्षविरोधान्न हि पितृगतं शरीरादि पुत्रे संक्रान्तमुपलभ्यते न द्वितीयः सवितुर्जले संक्रान्तिवदुपहितस्य पितुरपि स्वकार्यसंकल्पस्य स्वपुत्रेऽर्पणरूपाभासात्तत्र स्वप्रवेशभ्रमहेतोः संक्रान्त्युक्तेरन्यादृशसंक्रान्तेरध्यक्षविरुद्धत्वादित्यर्थः । तृतीयं प्रत्याह । **परेति** । प्रतीचः संक्रान्तिरौपाधिकी न वास्तवी कौटस्थ्यादित्यर्थः ॥ ३१५ ॥

**क्रत्वङ्क्तिधियो यद्वत्स्वात्मदेहस्य साक्षिता ॥**
**तद्वत्पुत्रादिदेहेषु मोहान्नानात्मविभ्रमः ॥ ३१६ ॥**

कौटस्थ्ये सति संक्रान्तिरौपाधिकी वाच्या न च तदस्ति विभक्तत्वेन विकारित्वादित्याशङ्क्याऽऽह । **क्रत्विति** । कार्यतासंकल्पाविष्टबुद्ध्युपलक्षितचिद्धातोः सर्वदेहसाक्षित्वेनैक्याद्भेदधीर्भ्रान्तिरित्यर्थः ॥ ३१६ ॥

**स्वाधिकारसुतावेशात्पितैवाऽऽविशतीत्यतः ॥**
**स्वयं निरधिकारस्तु दैवप्राणोऽवतिष्ठते ॥ ३१७ ॥**

मुख्यप्रवेशायोगे सिद्धमर्थमुपसंहरति । **स्वाधिकारेति** । स्वकार्यसंकल्पस्य स्वपुत्रेऽर्पणात्पितैव तत्राऽऽविशतीत्युपचार इत्यर्थः । पितुरौपाधिकप्रवेशे फलितमाह । **इत्यत इति** । निरधिकारः स्वकार्यसंकल्पशून्य इति यावत् । दैवप्राणोऽवतिष्ठते फलरूपेण तिष्ठतीत्यर्थः ॥ ३१७ ॥

**आध्यात्मिकेन देहेन न्यूनकार्यसमाप्तये ॥**
**पिता पुत्रेण कुर्वाण आस्ते तत्फलभुक्स्वयम् ॥ ३१८ ॥**

तर्हि तस्य मनुष्यलोकादात्यन्तिकी व्यावृत्तिरित्याशङ्क्याऽऽह । **आध्यात्मिकेनेति** । मृतोऽपि पिताऽनुशिष्टपुत्रात्मनाऽत्र कर्तव्यशेषसिद्धये यथाशक्त्यनुतिष्ठन्वर्तते नास्मादत्यन्तं व्यावृत्तः फलरूपेण च परत्रेत्यर्थः ॥ ३१८ ॥

**दैवसाधनसंपन्नः पुत्र एवावतिष्ठते ॥**
**पिता तु तत्फलात्मैव न तु साधनरूपभृत् ॥ ३१९ ॥**

एकस्यैव द्वैरूप्यं कथमित्याशङ्क्याऽऽह । **दैवेति** । विद्याकर्मवानपि पिता कारककोटिनिविष्टः पुत्रे तिष्ठति न च तत्रैव साधनरूपं बिभ्रदवस्थातुमर्हति किंतु फलात्मा सन्स्वरूपेण व्यवस्थातुमुत्सहतेऽतो हेतुफलभेदाद्विरूप इत्यर्थः । यद्वा विद्यादिमान्पुत्रोऽत्र

---

१ क. °ह । अत । २ ग. °पभाक् ॥ ३१९ ॥

केवलं वर्तते पिता तु यथोक्तफलात्मा परलोके न तु साधनात्मैवातः साधनफलाभ्यां पुत्रात्मना स्वेन चायं लोकद्वयसंचारीत्यर्थः ॥ ३१९ ॥

**नाकारि कार्यं यत्पित्रा स्वाधीत्यादि प्रमादतः ॥**
**तत्पूरणात्पितुस्त्राणात्पुत्र इत्यभिधीयते ॥ ३२० ॥**

स यदीत्यादेः पुत्रो नामेत्यस्यार्थमाह । **नेत्यादिना** । यत्पित्रा स्वीयमध्ययनादि प्रमादतो न कृतं तस्य तदनुशासनद्वारा करणेन पूरणात्पितुस्त्राणात्पुत्रस्य पुत्रतेत्यर्थः ॥ ३२० ॥

**संपूर्णस्वात्मकार्योऽयं पिता दैवात्मना स्थितः ॥**
**पितुः सामिकृतं कार्यं पूरयन्वर्तते सुतः ॥ ३२१ ॥**

सति कार्यशेषे फलात्मा पिता न संपूर्णः स्यादित्याशङ्क्याऽऽह । **संपूर्णेति** । तत्र हेतुः पितुरिति ॥ ३२१ ॥

**मृतेरुच्छिद्यते लोकः साधनोच्छित्तिहेतुतः ॥**
**पितुरित्यपि नाऽऽशङ्का कार्या यस्मात्स एव तु ॥**
**पुत्रेणैव शरीरेण कुर्वन्नास्ते नवं नवम् ॥ ३२२ ॥**

स पुत्रेणेत्यादेस्तात्पर्यमाह । **मृतेरिति** । लोको मनुष्यविशेषितः । साधनं शरीरादि । तत्र हेतुमाह । **यस्मादिति** । नवं नवं कर्तव्यत्वेनावशिष्टमध्ययनादीत्यर्थः ॥ ३२२ ॥

**पुत्रेणैवेत्यतो वक्ति नित्याधिकृतिसिद्धये ॥**
**जयतीमं पिता लोकमेवंभूतेन सूनुना ॥ ३२३ ॥**

उक्तार्थे वाक्यं पातयति । **पुत्रेणेति** । यतो नित्यानुष्ठानसिद्ध्यर्थं पुत्रेणैव पिताऽस्तीतिश्रुतिराहातो हेत्वनुष्ठितेर्न मृतस्यापि पितुरेतल्लोकविच्छित्तिरित्यर्थः । पुत्रेणैतल्लोकजयमुपसंहरति । **जयतीति** । एवंभूतेन यथोक्तानुशासनवतेत्यर्थः ॥ ३२३ ॥

**न त्वात्मलाभमात्रेण जयः स्याज्ज्ञानकर्मवत् ॥**
**पुत्राधिकारनुत्त्यर्थमथशब्दः प्रयुज्यते ॥ ३२४ ॥**

पुत्रस्य हेत्वन्तराद्वैलक्षण्यमाह । **न त्विति** । यथा ज्ञानकर्मणोरात्मलाभमात्रेण लोकद्वयहेतुत्वं न तथा पुत्रस्य स्वरूपलाभमात्रेण मनुष्यलोकजयहेतुत्वमविक्रियत्वादित्यर्थः । अनुशिष्टपुत्रेणैतल्लोकजयिनं पितरमधिकृत्याथैनमित्यादिवाक्यं तत्राथशब्दार्थमाह । **पुत्रेति** । पुत्रस्य प्रकृतत्वादेनमिति तन्निर्देशे शङ्किते तन्निवृत्त्यर्थमथेत्युक्तमित्यर्थः ॥ ३२४ ॥

**कृतसंप्रत्तिकं दैवाः प्राणा वागादयः समम् ॥**
**पितरं संविशन्त्युक्ताः सदातद्भावभावितम् ॥ ३२५ ॥**

---

१ क. °नुच्छित्तेर्न ।

प्रकरणविच्छेदार्थमथशब्द इति व्याख्यातमिदानीमेनमित्यादेरर्थमाह । **कृतेति** । तेषां मध्ये कस्याऽऽदौ प्रवेशः कस्य वा पश्चादित्यपेक्षायामाह । **सममिति** । उक्ता इत्यमृतत्वोक्तिः । अन्यस्यान्यत्वं विरुद्धमित्याशङ्क्याऽऽह । **सदेति** । दैवेषु सौत्रेषु प्राणेष्वात्मभावभावितमित्यर्थः ॥ ३२५ ॥

**पृथिव्यै चैनमित्यादि तद्याचष्टे यथा तथा ॥**
**हेत्वर्थो वाऽथशब्दोऽयं यस्मात्संक्रामितक्रतुः ॥ ३२६ ॥**

एनं प्रविशन्तीत्युक्तं तत्प्रकारबुभुत्सायामाह । **पृथिव्यै चेति** । तदिति प्रवेशस्वरूपं परामृश्यते । अथैनमित्यादावथशब्दस्य प्रकरणविच्छेदकत्वमुक्त्वाऽर्थान्तरमाह । **हेत्विति** । हेतुरूपमर्थं स्फोरयति । **यस्मादिति** ॥ ३२६ ॥

**तद्वियोगादतो दैवा आविशन्ति यथोदिताः ॥ ३२७ ॥**
**श्रुतिस्था या हि वाक्तस्याः पञ्चमीयं परा भवेत् ॥**
**ततो लब्धात्मलाभायाः प्रथमा जन्महेतुतः ॥ ३२८ ॥**

हेतुमनूद्यैनमित्यादेरर्थं निगमयति । **तद्वियोगादिति** । कर्तव्यतासंकल्पस्तच्छब्दार्थः । यथोदिता इत्यमृतानां प्राणानां परामर्शः । वर्तमानस्थूलदेहं हित्वा स्थितमुपासकं दैवाः प्राणा आविशन्ति तत्प्रकारं च पृथिव्यै चेत्यादि व्याकरोतीत्युक्तमिदानीं पृथिव्यग्न्योरेव दैववाक्त्वात्कथमेकत्रैव पञ्चमी प्रथमा चेत्याशङ्क्याऽऽह । **श्रुतिस्थेति** । या श्रुतिदृष्टा प्रकृता ग्राह्या वाक्पूर्वसिद्धोपास्यसूत्ररूपा तस्याः परस्तात्पृथिव्या अग्नेरिति चापादानपञ्चमी । आधाराधेयभूतोपास्यसूत्रवाग्रूपादुपादानात्प्राप्तप्रकृतोपासकफलभूतवाचः परस्ताद्दैवी वागिति प्रथमेत्यर्थः । सूत्रीभूतवाचो मनोवत्प्राणवच्चोपासकप्रसिद्धिविषयत्वं वक्तुं हिशब्दः । कथं सूत्रवाचो लब्धत्वं फलभूतोपासकवाचः सिध्यति तत्राऽऽह । **जन्मेति** ॥ ३२७ ॥ ३२८ ॥

**वाचं संश्रुत्य वाक्यस्थां चिनुते भावनामयीम् ॥**
**उपादानमतः श्रौती स्याद्वाणी भावनात्मनः ॥ ३२९ ॥**

उपासकवाचः सूत्रवाचो जन्मासिद्धिमाशङ्क्याऽऽह । **वाचमिति** । वाक्यीयां सौत्रीं वाचं वाक्यादेव ज्ञात्वा त्र्यन्नात्माऽहमित्युपासको ध्यानफलं वाचं चिनुतेऽतः श्रुतिगम्या ध्येयसूत्रवागुपादानं ध्यातृवाचो भवतीति ध्यानसाधितत्र्यन्नात्मभावमुपासकं कारणं कार्यत्वाद्वागाविशति कारणे कार्यावेशस्य युक्तत्वादित्यर्थः ॥ ३२९ ॥

**न हि वस्तु स्वतःसिद्धमन्यत्स्यात्परमात्मनः ॥**
**सदेवेत्यादिकं शास्त्रं बाधितं स्यात्तथा सति ॥ ३३० ॥**

ननु सूत्रस्य स्वतःसिद्धेस्तद्वागपि तथेति ध्यातृवाचोऽपि तदभिन्नाया जन्माभावा-

---

१ ग. °मू । अगा° । २ ख. °वागपा° ।

द्भिन्नघटदीपदीप्तिवदध्यात्मोपाधिध्वस्त्या वाचो व्यक्तिमात्रमित्याशङ्क्य सूत्रादेः स्वतः-सिद्धिं दूषयति। **न हीति**। सूत्रादि न स्वतःसिद्धमनात्मत्वाद्धटवदित्यर्थः। सूत्रादेरा-त्मवद्विद्यमानत्वे सदेव सोम्येदमित्यादिशास्त्रविरोधः स्यादिति विपक्षे दोषमाह। **सदिति** ॥ ३३० ॥

**धिया धियेति कार्यत्वं कृत्स्नस्य जगतः स्वयम् ॥**
**श्रुत्यैव स्पष्टमाख्यातं नातोऽभिव्यक्तिरिष्यते ॥ ३३१ ॥**

तस्य स्वतोसिद्धत्वे हेत्वन्तरमाह। **धियेति**। सप्तान्नात्मनः समस्तस्य जगतो **धिया** धिया जनयते कर्मभिरिति श्रुत्या स्वयमेव कार्यत्वं मुखतो दर्शितं जगदात्मकं च सूत्र-मतो न तत्स्वतःसिद्धं कार्यत्वाद्धटवदित्यर्थः। सूत्रादेः स्वतःसत्त्वाभावे ध्यातृवाचोऽपि तदभावात्तस्या न व्यक्तिरेव किंतु सूत्रवागधीनत्वेन जन्मेति फलितमाह। **नेति** ॥ ३३१ ॥

**आर्तश्रुतेश्च प्राणादि वाचारम्भणशास्त्रतः ॥**
**नाऽऽत्मवत्स्यात्स्वतःसिद्धमुत्पत्त्यादिश्रुतेस्तथा ॥ ३३२ ॥**

वागादेः स्वतोऽसिद्धौ हेत्वन्तरमाह। **आर्तेति**। वागादि न स्वतःसिद्धं स्यादिति संबन्धः ॥ ३३२ ॥

**कर्तृभिः क्रियते तस्माद्भावनाज्ञानकर्मभिः[१] ॥**
**त्र्यन्नात्मकमिदं विश्वं नातोऽभिव्यक्तिरिष्यते ॥ ३३३ ॥**

स्वतोसिद्धत्वे सिद्धमर्थमाह। **कर्तृभिरिति**। सूत्रवाचो ध्यातृवाचो व्यक्त्यनुपगम-मुपसंहरति। **नात इति** ॥ ३३३ ॥

**ब्रह्मैवेदं तथाऽऽत्मैव पुरुषश्चेति चाऽऽगमः ॥**
**एवं सत्यर्थवान्नः स्यादन्यथा स्यादनर्थकः ॥ ३३४ ॥**

आत्मैव स्वतःसिद्धो न सूत्रादिरित्यत्रैवानेकागमानुग्रहं दर्शयति। **ब्रह्मैवेति**। पुरुष एवेदं सर्वमित्यस्य पूर्वाभ्यां समुच्चयार्थश्चकारः। द्वितीयस्तु हेत्वन्तरसमुच्चये। नोऽस्माकमिति यावत्। अन्यथा कस्यचिदनात्मनोऽपि स्वतःसिद्धत्वे सती-त्यर्थः ॥ ३३४ ॥

**पुत्रकर्मापरज्ञानसाधनान्यपरे जगुः ॥**
**मनुष्यलोकपित्रमरलोकेभ्यः स्युर्निवृत्तये ॥ ३३५ ॥**

पृथिव्यै चेत्यादिवाक्यतात्पर्यमुक्त्वा तन्निरस्यमतमाह। **पुत्रेति**। पुत्रादीनि लोकत्र-यसाधनान्युक्तान्यथ त्रयो वावेत्यादिना तान्येव मुक्तिसाधनान्यृणापाकरणश्रुतिस्मृति-भ्यामुक्तवन्तो मीमांसका इत्यर्थः। मीमांसकपक्षमुक्त्वा भर्तृप्रपञ्चपक्षमाह। **मनुष्येति**। पुत्रादीनीति शेषः ॥ ३३५ ॥

---

१ क. ग. °भिः। अनात्म°। २ क. °श्चमतभा°।

**एवं मोक्षार्थतां तेषां पुत्रादीनां प्रचक्षते ॥**
**लोकव्यावृत्तिमार्गेण श्रुतिस्तेषां निषेधकृत् ॥ ३३६ ॥**

तेषां लोकेभ्यो व्यावृत्त्यर्थत्वे किं सिध्यति तदाह । **एवमिति** । पुत्रादिवशाल्लोकत्रयनिवृत्तिद्वारा देहद्वयध्वस्तौ बन्धध्वस्तिरित्यनेन क्रमेण तेषां मोक्षफलतामाहुरित्यर्थः । मतद्वयमपि पृथिव्यै चेत्यादिश्रुतिंविरुद्धमित्याह । **श्रुतिरिति** ॥ ३३६ ॥

**काम्यमेवाखिलं पाङ्क्तं कर्मेत्येवं प्रकृत्य तु ॥**
**पुत्रादीनां स्वसाध्यार्थविनियोगोपसंहृतेः ॥ ३३७ ॥**

कथं प्रथमपक्षनिषेधः श्रुत्या कृतस्तत्राऽऽह । **काम्यमिति** । सर्वमपि पाङ्क्तं कर्म काम्यमेवेत्येतावान्वै काम इत्येवं प्रक्रम्याथ त्रयो वावेत्यादिना पुत्रादीनां प्रत्येकं लोकविशेषे विनियोगेनोपसंहारान्न मुक्तिहेतुता तेषामेषितव्येत्यर्थः ॥ ३३७ ॥

**संसारफलतैवातः पुत्रादेर्गम्यते श्रुतेः ॥**
**अविद्वद्विषयैवात ऋणश्रुतिरपीष्यते ॥ ३३८ ॥**

श्रुतेरादिमध्यावसानालोचनया पुत्रादेः संसारफलत्वावगमान्न मुक्तिफलतेति फलितमाह । **संसारेति** । यदुक्तमृणापाकरणश्रुतिस्मृतिभ्यां पुत्रादेर्मुक्तिफलतेति तत्राऽऽह । **अविद्वदिति** । पुत्रादेः श्रुतं संसारफलत्वं परामृष्टुमतःशब्दः । अपिः स्मृतिसमुच्चयार्थः ॥ ३३८ ॥

**प्रजया किं करिष्याम इत्येवं च प्रवक्ष्यति ॥**
**नातो विदितवेद्यस्य कथंचित्स्यादृणश्रुतिः ॥ ३३९ ॥**

श्रुतिस्मृत्योरविरक्ताविद्वद्विषयत्वे हेत्वन्तरमाह । **प्रजयेति** । पुत्रादिविषये विदुषो नैरपेक्ष्यमतःशब्दार्थः ॥ ३३९ ॥

**व्यावृत्त्यर्थानि नैतानि पुत्रादीनि यथा तथा ॥**
**पृथिव्यै चैनमित्याद्या स्वयं निर्वक्ति नः श्रुतिः ॥ ३४० ॥**

मीमांसकमतं श्रुतिविरोधेन निरस्य तेनैव मतान्तरं निरस्यति । **व्यावृत्त्यर्थानीति** । त्र्यन्नात्मोपासितुस्तदाप्तिः पृथिव्यै चेत्यादिनोच्यते तथाच कृतसंप्रत्तिकस्य पुत्रिणस्तदुपास्त्या तद्भावश्रुतिविरुद्धं भर्तृप्रपञ्चमतमित्यर्थः ॥ ३४० ॥

**न च त्र्यन्नात्मसंप्राप्तिः कैवल्यमिति युज्यते ॥**
**तस्या मेधातपोजत्वात्पौनःपुन्येन तच्छ्रुतेः ॥ ३४१ ॥**

सूत्राप्तेरेव मुक्तित्वात्तद्धेतुकर्मादेस्तद्धेतुतेति कुतः श्रुतिविरुद्धतेत्याशङ्क्याऽऽह । **न चेति** । त्र्यन्नात्मनो ज्ञानकर्मजन्यत्वे हेतुमाह । **पौनःपुन्येनेति** । अभ्यासेन तच्छ्रुतेर्धीकर्मजन्यश्रुतेरिति यावत् । न हि कृतकस्य मोक्षत्वमनित्यत्वप्रसङ्गादिति भावः ॥ ३४१ ॥

---

१ ख. ग. °ध्यार्थ वि° ।

**तथा क्षयश्रुतेस्तस्य यद्वैतदितिवाक्यतः ॥**
**पृथिवी शरीरमित्युक्तेः शरीरित्वं प्रजापतेः ॥ ३४२ ॥**

सूत्राप्तेरमुक्तित्वे हेत्वन्तरमाह । **तथेति** । यद्वैतन्न कुर्यात्क्षीयेत हेति वाक्याज्जगद्रूपस्य त्र्यन्नात्मनोऽपि नाशश्रुतेश्च न तत्प्राप्तिर्मुक्तिरित्यर्थः । कार्यकारणवत्त्वश्रुतेरपि न सूत्रभावो मुक्तिरित्याह । **पृथिवीति** ॥ ३४२ ॥

**नामरूपक्रियात्वेन मोहकार्योपसंहृतेः ॥ ३४३ ॥**
**कस्याचिन्मुक्तयेऽलं स्यात्कस्यचित्त्र्यन्नवित्तये ॥**
**सकृच्छ्रुतं वचोऽशक्तं विधातुं द्वयमञ्जसा ॥ ३४४ ॥**

अविद्यातज्जद्वैतस्य नामादित्रयत्वेनोपसंहारात्तदात्मसूत्रभावो बन्धान्तर्भूतो न मुक्तिरिति युक्त्यन्तरमाह । **नामेति**। सूत्राप्तेरमुक्तित्वात्तदर्थं कर्मादि न मुक्त्यर्थमित्युक्तमथाविरक्तस्याज्ञस्य सूत्राप्तिफलमपि कर्मादि विरक्तस्य धीमतो मुक्तिफलमिति व्यवस्थामाशङ्क्याऽऽह । **कस्यचिदिति** । त्र्यन्नवित्तये तद्भावलाभायेति यावत् । एकस्य वाक्यस्य सकृच्छ्रुतस्य नानेकार्थत्वं भिद्यते हि तथा वाक्यमिति न्यायादित्यर्थः ॥ ३४३ ॥ ॥ ३४४ ॥

**भूर्यर्थता प्रकाशादेः प्रत्यक्षादेव कारणात् ॥**
**न त्वागमैकगम्येषु तथात्वमवसीयते ॥ ३४५ ॥**

ननु **भानूदयं** प्रपश्यामश्चोरद्भोगिदिग्दृशामित्युक्तन्यायेन प्रकाशस्यानेकार्थत्वाज्जलस्य च सा दृष्टा । **उक्तं हि**—शाल्यर्थं कुल्याः प्रणीयन्ते ताभ्यश्च पानीयं पीयत उपस्पृश्यते **चेति**। तथैकस्यापि वाक्यस्यानेकार्थता किं न स्यादत आह । **भूरीति** । तथात्वमनेकत्वमिति यावत् । यदीमे विधीयेरन्भिद्येत वाक्यमिति न्यायादेकवाक्यगम्योऽर्थो नानेको युक्त इत्यर्थः ॥ ३४५ ॥

**श्वेतोऽसौ धावतीत्यादेरनेकोक्तित्वकारणात् ॥**
**अनेकार्थावसायः स्यान्न त्वेवमिह युज्यते ॥ ३४६ ॥**

ननु श्वेतो धावतीत्येकमपि वाक्यमश्वादेः शुनश्च समासव्यासाभ्यां गन्तृत्वं गमयदनेकार्थं दृष्टं तथेहापि स्यादत आह । **श्वेत इति** । इह पृथिव्यै चेत्यादावित्यर्थः ॥ ३४६ ॥

**निःशेषभूतात्मैकः सन्नधिदैवात्मना स्थितः ॥**
**भूतपापैरसंकीर्णो दैवं सुखमुपाश्नुते ॥ ३४७ ॥**

प्रकृतेन वचसा मतान्तरं निरस्य स एवंविदित्याद्यवतारयति । **निःशेषेति** । भावनावशात्प्राजापत्येनाऽऽत्मना स्थितो निरपेक्षो निःशेषाणां भूतानामात्मा प्राणो भवतीति

---

१ क. ग. °स्तस्या य° । २ क. ख. सूत्रस्यामु° । ३ ख. °सूत्रात्मभा° ।

योजना । भूतात्मत्वे तद्दोषयोगात्प्राजापत्यं पदमनादेयमित्याशङ्क्याऽऽह । भूतेति । तद-संकीर्णत्वं चाग्रे व्यक्तीकरिष्यति ॥ ३४७ ॥

**सर्वभूतात्मभूतोऽसौ सर्वानन्यत्वदर्शनः ॥**
**जगदुत्पत्तिसंहारैः क्रीडन्निव विचेष्टते ॥ ३४८ ॥**

अवतारितं वाक्यं व्याचष्टे । **सर्वेति** । सर्वजगदात्मनि प्रजापतावहमस्मीत्यनन्य-त्वदृष्टिः सन्प्रजापत्यात्मना सर्वेषां भूतानामात्मा प्राणभूतोऽसौ विद्वान्क्रीडन्निव जगदु-त्पत्त्यादिव्यापारैर्विविधां चेष्टां कुर्वाणो मोदमानस्तिष्ठतीत्यर्थः ॥ ३४८ ॥

**वाक्क सा सर्वभूतानां श्रोत्रं त्वग्रसनं मनः ॥**
**घ्राणपादादयः सर्वे सर्वोपादानकारणात् ॥ ३४९ ॥**

न केवलं विद्वान्प्राण एव सर्वभूतानां किंतु वागाद्यात्माऽपीत्याह । **वाक्केति** । सूत्रात्मनो विदुषः सर्वकारणात्मत्वे हेतुमाह । **सर्वेति** ॥ ३४९ ॥

**ज्ञानं सप्रतिघं यद्वत्कार्यं वाऽस्मासु दृश्यते ॥**
**नैवमीशस्य सर्वत्र पूर्वोक्तादेव कारणात् ॥ ३५० ॥**

सर्वोपादानत्वेन सर्वात्मत्वमुक्त्वा तत्फलं सर्वज्ञत्वादि वैधर्म्यदृष्टान्तेनाऽऽह । **ज्ञान-मिति** । स प्रतिघं प्रतिघातसहितं प्रतिबद्धमिति यावत् । ईश्वरस्य तु ज्ञानं कार्यं वा सर्वत्राप्रतिबद्धमित्याह । **नैवमिति** । पूर्वोक्तं कारणं सर्वात्मत्वं तस्मादिति यावत् ॥ ३५० ॥

**किंच सर्वाणि भूतानि तमवन्ति यथाबलम् ॥**
**इममर्थं श्रुतिर्वक्ति दृष्टान्तेन प्रयत्नतः ॥ ३५१ ॥**

प्रस्तुतोपास्तेः फलान्तरमाह । **किंचेति** । तमित्युपासकोक्तिः । तत्र मानत्वेन स यथेत्याद्यादत्ते । **इममिति** । दृष्टान्तमवष्टभ्याभिधानादेवास्मिन्नर्थे प्रयत्नशब्दितं तात्पर्यं श्रुतेर्गम्यते ॥ ३५१ ॥

**पूर्वजन्माभिनिर्वृत्तां यथैवावन्ति देवताम् ॥**
**तथैवैवंविदं भोगैः सर्वभूतानि सर्वदा ॥ ३५२ ॥**

तद्व्याचष्टे । **पूर्वेति** । पूर्वसिद्धदेवतामिव तद्भावसाक्षात्कारवन्तमपि पुरुषं सर्वावस्थासु सर्वाणि भूतानि सर्वैर्भोगैरवन्तीति योजना ॥ ३५२ ॥

**सर्वभूतात्मतापत्तिर्यद्येवंविद इष्यते ॥**
**संगतिर्भौतिकैर्न स्यात्तस्य दुःखादिभिः कथम् ॥ ३५३ ॥**

यदु किंचेत्यादिवाक्यनिरस्यां शङ्कामाह । **सर्वेति** । तथाचैवंवित्ताऽनर्थाय स्यादिति शेषः ॥ ३५३ ॥

---

१ ख. सन्प्राजा° । २ क. °वेकर° ।

**नापरिच्छिन्नबुद्धित्वात्तस्य दुःखाद्युपप्लुतिः ॥**
**कुक्षिस्थ॑क्रिमिदुःखैर्नो न मनागपि संगतिः ॥ ३५४ ॥**

भूतपापैरित्यादिनोक्तं व्यक्तीकुर्वंश्चोदिते सर्वात्मके विदुष्ये॑कैकभूतस्थसुखदुःखादियोगो नेत्युत्तरमाह । **नेत्यादिना** । अपरिच्छिन्नधीत्वेऽपि सूत्रात्मके विदुषि सर्वभूतान्तर्भावात्तद्दुःखादियोगः स्यादेवेत्याशङ्क्याऽऽह । **कुक्षीति** । यद्यपि कुक्षिनिक्षिप्ताः सन्ति॑ क्रिमयस्तथाऽपि तद्गतैर्दुःसहैर्दुःखैर्नास्माकमीषदपि संगतिरिष्यते तथा प्रजापत्यात्मके विदुष्यन्तर्भूतेष्वपि भूतेषु स्थितदुःखैर्न विदुषः संगतिरित्यर्थः ॥ ३५४ ॥

**अस्मदाद्यभिमानित्वे तस्यास्मद्दुःखसंगतिः ॥**
**तस्य कृत्स्नाभिमानित्वान्नास्मन्मात्राभिमानता ॥ ३५५ ॥**

मैत्रस्य स्वहस्ताद्यभिमानवतस्तद्दुःखादियोगवद्विदुषः सूत्रात्मनः स्वांशसर्वभूताभिमानिनस्तद्दुःखादियुक्तिरिति वैषम्यमाशङ्क्याऽऽह । **अस्मदादीति** । मैत्रदृष्टान्तेन तदभिमानित्वं विदुषः सूत्रीभूतस्योक्तमित्याशङ्क्याऽऽह । **तस्येति** ॥ ३५५ ॥

**ईश्वरत्वाच्च तस्यास्मद्दुःखैर्न स्यात्समागमः ॥**
**अस्माकं दुःखसंप्राप्तिरनैश्वर्यकृतैव तु ॥ ३५६ ॥**

कृत्स्नाभिमानित्वे कृत्स्नदुःखादितादवस्थ्यमाशङ्क्याऽऽह । **ईश्वरत्वादिति** । तथाऽपि तस्यास्मदाद्यभिमानित्वादस्मदादिवद्दुःखादिसंगतिरित्याशङ्क्यानीश्वरत्वमुपाधिरित्याह । **अस्माकमिति** । तुशब्देन न ह वै देवानित्यादिश्रुतिविरोधो ध्वनितः ॥ ३५६ ॥

**इत्यादि हृदये कृत्वा न्या॑यं श्रुतिरुदाहरत् ॥**
**यदु किंचेति विस्पष्टं प्रजादुःखनिषेधकृत् ॥ ३५७ ॥**

उक्तेऽर्थे यदु किंचेत्यादि पातयति । **इत्यादीति** । इतिशब्देनोक्तन्यायपरामर्शः स च स्वतन्त्रत्वादिति । आदिपदेन सर्वकृत्त्वसर्वात्मत्वादिग्रहः । तस्य तात्पर्यमाह । **विस्पष्टमिति** । प्रजागतदुःखस्य प्रजापतिरूपे विदुषि निषेधं कर्तुमिदं वाक्यमित्यर्थः ॥ ३५७ ॥

**यच्छोचन्ति प्रजाः सर्वा दुःखैराध्यात्मिकादिभिः ॥**
**आसामेवाऽऽत्मभिः सार्कं तद्दुःखमुपयुज्यते ॥ ३५८ ॥**

तदक्षराणि व्याचष्टे । **यदिति** । त्रिविधैर्दुःखैः सर्वाः प्रजा यद्दूयन्ते तत्प्रजानामेवाऽऽत्मभिः सह संयुक्तमतस्तैरेव तद्भोज्यमित्यर्थः ॥ ३५८ ॥

**यथोक्तन्यायतो दुःखं न सार्धं देवतात्मना ॥**
**कृतनाशस्तथाच स्यादकृताभ्यागमस्तथा ॥ ३५९ ॥**

---

१ क. ग. °स्थक्रमि° । २ ख. °कस्य भूतस्य सु° । ३ ख. °न्ति क्रम° । ४ क. न्याय्यं ।

कथमवधारणमित्याशङ्क्याऽऽह । **यथेति** । स्वातन्त्र्यादेरित्यर्थः । संयुक्तमिति शेषः । देवताया दुःखयोगे बाधकमाह । **कृतेति** ॥ ३५९ ॥

**पुण्यमेव कृतं यस्मात्पुण्यमेवामुमेत्यतः ॥**
**पापस्याकरणादेव नैति पापं कदाचन ॥ ३६० ॥**

विपक्षे बाधकं स्फुटयन्पुण्यमित्यादेरर्थमाह । **पुण्यमिति** । न ह वै देवानित्यादि व्याचष्टे । **पापस्येति** ॥ ३६० ॥

**अग्निं न ढौकते शैत्यमग्निवस्तुस्वभावतः ॥**
**पाप्मानो देवतां तद्वद्देवतात्मस्वभावतः ॥ ३६१ ॥**

तदेव दृष्टान्तेन स्पष्टयति । **अग्निमिति** । न हि शैत्यमग्निं स्पृशति तस्योष्णस्वाभाव्यात्तथा पाप्मानो देवतां न स्पृशन्ति तस्याः सुकृतफलत्वादित्यर्थः ॥ ३६१ ॥

**सर्व एव समाः प्राणा इत्युक्तेः साम्यनिश्चितौ ॥**
**उपासने विकल्पेन प्राप्ते मीमांस्यते व्रतम् ॥ ३६२ ॥**

अथेत्यादिवाक्यस्य वक्तव्यशेषाभावादानर्थक्यमाशङ्क्य तात्पर्यमाह । **सर्व एवेति** । त एत इत्यादिवाक्याद्वाङ्मनःप्राणानां साम्यनिश्चये वाचो मनसः प्राणस्य वा विकल्पेन ध्याने प्राप्ते त्रयमपि ध्येयं न च तत्तुल्यवदुपास्यं किंतु प्राण एव प्राधान्येनेति वक्तुं कस्य कर्म व्रतत्वेन धार्यमिति विचार्य प्राणस्यैवेति ध्यानाङ्गं निश्चेतुमुत्तरं वाक्यमित्यर्थः ॥ ३६२ ॥

**दैववागादिसंपत्तिर्मृतस्य त्र्यन्नदर्शिनः ॥**
**जीवता किं व्रतं धार्यमिति मीमांस्यतेऽधुना ॥ ३६३ ॥**

तदेव स्फुटयितुं वृत्तं कीर्तयति । **दैवेति** । उक्तेति शेषः । वागादीनां मध्ये कस्य कर्म जीवता ध्यात्रा व्रतत्वेन धार्यमिति विचार्य प्राणस्यैवेत्युपास्त्यङ्गं वक्तुमुत्तरमित्याह । **जीवतेति** ॥ ३६३ ॥

**सर्वात्मकर्मसंन्यासात्प्राप्ते नैष्कर्म्यरूपके ॥**
**प्राणव्रतविधानार्थं परो ग्रन्थोऽवतार्यते ॥ ३६४ ॥**

भाष्यानुसारितात्पर्यमुक्त्वा तात्पर्यान्तरमाह । **सर्वेति** । संप्रत्तिकाले सर्वस्य सकार्यस्य कर्मणस्त्यागान्निर्वाणे प्राप्ते प्राणोपास्त्यङ्गस्य तद्व्रतस्य प्रतिप्रसवार्थमुत्तरं वाक्यमित्यर्थः ॥ ३६४ ॥

**बहूक्त्यैव तु सर्वेषां सिद्धं पूर्वमुपासनम् ॥**
**स यो हैतानिति ततो नेदं पूर्वमपेक्षते ॥ ३६५ ॥**

स्वतन्त्रस्यैव तस्य विधायकमिदं न प्राणोपास्त्यङ्गस्य प्रापकाभावादिति चेन्नेत्याह । **बहूक्त्येति** । प्राणव्रतस्य स्वातन्त्र्यशङ्कानिरासार्थस्तुशब्दः । स यो हैताननन्तानिति

बहुवचनाद्वागादित्रयोपासने सिद्धे तेनैव प्राणोपासनस्यापि सिद्धत्वात्प्राणोपासकं प्रति प्राणव्रतवाक्यं स यो हैतानित्यादिपूर्ववाक्यमपेक्षतेऽतो नास्य स्वतन्त्रव्रतविधायितेति प्रकृतप्राणध्यानधर्मविध्यर्थमेतदित्यर्थः ॥ ३६५ ॥

**वाक्स्वान्तयोः स्वरूपोक्तिर्वृथैव स्यात्पुरोदिता ॥**
**तयोरुपासनं नो चेत्प्राणवत्स्याद्विवक्षितम् ॥ ३६६ ॥**

नेदं यथोक्तमेव व्रतविधायकं वाङ्मनसयोरुपास्यत्वनिवृत्तिपरत्वादित्याशङ्क्याऽऽह । **वागिति** । प्राणोपसर्जनत्वेन तयोर्ध्यानमुपेयमन्यथा तदुक्तिवैयर्थ्यादित्यर्थः ॥ ३६६ ॥

**मृत्युना श्रमरूपेण ग्रस्ता वागादयो यतः ॥**
**म्लोचन्त्यपि च श्राम्यन्ति तेन भग्नव्रताः स्मृताः ॥ ३६७ ॥**

अथेत्यादेस्तात्पर्यमुक्त्वा तस्मादित्यादेरर्थमाह । **मृत्युनेति** । अध्यात्मं वागादयोऽधिदैवमग्न्यादयो व्याप्रियमाणाः श्राम्यन्त्यस्तं यन्ति च श्रमाख्यमृत्युग्रस्तत्वादतश्चोभयेऽपि भग्नव्रता ज्ञाता विद्वद्भिरित्यर्थः ॥ ३६७ ॥

**तद्रूपो मध्यमो वायुः श्रमास्तमयवर्जितः ॥**
**यतोऽभग्नव्रतस्तस्मात्तस्यैव व्रतमाश्रयेत्[1] ॥ ३६८ ॥**

अथेममेवेत्यादेरर्थमाह । **तद्रूप इति** । मृत्युरूप इति यावत् । अध्यात्माधिदैवभेदेन मध्यमो वायुरिति पदद्वयम् । तयोरुभयोरपि श्रमास्तमयराहित्यं तद्राहित्यायत्तं फलमनूद्य फलितमाह । **यत इति** ॥ ३६८ ॥

**प्राणे म्लोचन्ति वायौ च वागाद्यग्न्यादयो यतः ॥**
**प्राणस्यैव व्रतं धार्यमतो नान्यस्य कस्यचित् ॥ ३६९ ॥**

तस्यैवेत्यवधारणं कथमित्याशङ्क्याऽऽह । **प्राण इति** । अध्यात्मं प्राणे वागादयोऽधिदैवं च वायावग्न्यादयो यतोऽस्तं यन्ति प्राणस्य तु वायोर्नास्तमयोऽतस्तस्यैव कर्म व्रतत्वेन धार्यं न वागादेरग्न्यादेर्वेत्यर्थः ॥ ३६९ ॥

**प्राणैकालिङ्गनात्[2]प्राणा यथा तन्नामरूपिणः ॥**
**आसन्प्राणविदप्येवं प्राणात्मोपासनाद्भवेत् ॥ ३७० ॥**

तस्मादेत इत्यादिवाक्यतात्पर्यमाह । **प्राणेति** । वागादीनां प्राणैकावष्टम्भेन प्राणनामरूपत्वात्तस्यैव व्रतं धार्यं नेतरेषामतो धृतव्रतः प्राणोपासकस्तदात्मा सन्प्राणनामरूपः स्यादित्यर्थः ॥ ३७० ॥

**सर्वेन्द्रियेषु यावान्स्यात्परिस्पन्दः क्रियात्मसु ॥**
**प्राणस्यैव स विज्ञेयस्तेषां त्वर्थप्रकाशनम् ॥ ३७१ ॥**

अस्तु प्राणोपासितुस्तन्नामरूपत्वं वागादीनां कथमित्याशङ्क्याऽऽह । **सर्वेति** । क्रिया–

[1] ग. °माचरेत् । [2] ख. °णैकलि° ।

पदं प्रकाशस्याप्युपलक्षणम् । प्रकाशनशब्दो वचनादेरपि । मनःसहितेष्वेकादशेन्द्रियेषु क्रियाप्रकाशशक्तिमत्सु परिस्पन्दो यावानस्ति स तावान्प्राणस्यैव चलनस्वभावस्यैवाव सेयो वागादीनामर्थेषु कर्म चक्षुरादीनां तेषु प्रकाशनं विज्ञेयमिति योजना । एकादशस्विन्द्रियेषु साधारणचलनस्य प्राणात्मत्वात्तेषां प्राणनामरूपतेत्यर्थः ॥ ३७१ ॥

**यथा वागादयस्तद्वदधिदैवेऽपि योजयेत् ॥**
**अग्न्यादिषु परिस्पन्दो वायोरेवेति निश्चयः ॥ ३७२ ॥**

अध्यात्ममुक्तमधिदैवं दर्शयति । **यथेति** । वागादयो यथाऽध्यात्मं प्राणनामानस्तद्रूपाश्च तथाऽधिदैवमग्न्यादिषु वायुनामरूपे योजयेदिति योजना । उभयत्रविशेषाभावद्योतकोऽपिशब्दः । कथमग्न्यादीनां तन्नामरूपत्वं तत्राऽऽह । **अग्न्यादिष्विति** । तस्य चलनस्वाभाव्यादित्यर्थः ॥ ३७२ ॥

**वागाद्यनुग्रहः सिद्धस्त्वग्न्यादेः कर्म केवलम् ॥**
**सर्वेन्द्रियाणामात्मैव प्राणः सर्गो लयस्तथा ॥ ३७३ ॥**

किं तर्हि तेषामसाधारणं कर्मेति तत्राऽऽह । **वागादीति** । केवलशब्देनासाधारण्यमुक्तम् । सिद्धः श्रुतिष्विति शेषः । अग्निर्वाग्भूत्वेत्यादिश्रुतिषु योऽग्न्यादिर्वागादिष्वनुग्रहोऽधिगतस्तदेवासाधारणं तस्य कर्मेति योजना । अध्यात्ममधिदैवतं चोक्तं प्राणमाहात्म्यमुपसंहरति । **सर्वेति** । वागादीनामग्न्यादीनां चाध्यात्माधिदैवभावेन प्राणो वायुरात्मा कारणं चेत्यर्थः ॥ ३७३ ॥

**प्राणरूपाभिधानाभ्यां ख्याता वागादयो यथा ॥**
**प्राणवित्संज्ञया ख्यातिं याति विद्वत्कुलं तथा ॥ ३७४ ॥**

तेनेत्यादेरर्थमाह । **प्राणेति** ॥ ३७४ ॥

**यश्चापि प्राणवित्स्पर्धी स्पर्धामनु स मृत्युवत् ॥**
**शोषमित्वा मृतिं याति द्विष्यान्नातोऽनवेदिनम् ॥ ३७५ ॥**

य उ हेत्यादि व्याचष्टे । **यश्चेति** । मृत्युवदासङ्गपाप्मरूपो मृत्युर्मुख्यं प्राणं प्राप्य यथा प्रध्वंसते तद्वदित्यर्थः । उपासके स्पर्धमानस्य प्रत्यवायवादिवाक्यस्य तात्पर्यमाह । **द्विष्यान्नेति** ॥ ३७५ ॥

**ब्राह्मणोक्तार्थदार्ढ्याय श्लोको मन्त्रोऽनुकीर्त्यते ॥**
**यतश्चोदेति सूर्योऽसौ यत्र चास्तं निगच्छति ॥ ३७६ ॥**
**प्रश्नरूपमिदं वाक्यं यतः प्रत्युक्तिरुच्यते ॥**
**प्राणादित्यादिना भानोरुदयास्तमयौ कथम् ॥ ३७७ ॥**

अध्यात्ममधिदैवं च प्राणस्यैव वायोर्व्रतं धार्यमिति[2] विनिर्धार्याथेत्यादेरर्थमाह । **ब्राह्म-**

१ क. तदाह । २ ख. °ति नि° ।

**णेति** । ब्राह्मणानन्तरभावित्वादस्य मन्त्रस्यानुशब्दप्रयोगः । मन्त्रस्थपूर्वार्धस्य सूर्योदयास्तमयकारणप्रश्नत्वं दर्शयति । **यतश्चेति** । नात्र प्रश्नद्योतिकिमादिपदमस्तीत्याशङ्क्याऽऽह । **यत इति** । प्राणादादित्यस्योदयास्तमयौ किंमानाविति पृच्छति । **भानोरिति**॥३७६॥ ॥ ३७७ ॥

**यदा वै पुरुषः शेते प्राणमप्येति वाक्तदा ॥**
**चक्षुः श्रोत्रं मनस्तद्वज्जायते तत एव च ॥ ३७८ ॥**

प्राणादादित्योत्पत्तौ तत्र लये च मानं वक्तुमादौ वागादीनां तदुत्पत्तौ तल्लये च मानमाह । **यदेति** । शयनशब्दितस्वापस्य प्रत्यात्मानं प्रसिद्धत्वार्थो वैशब्दः ॥ ३७८ ॥

**अधिदैवतमप्येवं वायोरग्न्यादिसंभवः ॥**
**अप्ययश्च यथाऽध्यात्मं श्रेयान्प्राणस्ततोऽन्यतः ॥ ३७९ ॥**

अग्न्यादित्यादेः प्राणादुत्पत्तौ तत्र लये च यदा वा अग्निरनुगच्छति वायुं तर्ह्यनूद्वातीत्यादिवाक्यं प्रमाणयति । **अधिदैवतमिति** । वागादीनामग्न्यादीनां च तदुत्पत्तिलयहेतुत्वे प्राणस्य फलितमाह । **श्रेयानिति** ॥ ३७९ ॥

**आत्मैव प्राणशब्दः स्यात्प्राणबन्धनवाक्यतः ॥**
**असदेवेदमित्युक्तेरात्मनो भानुसंभवः ॥ ३८० ॥**

आदित्याद्युत्पत्तिलयहेतुत्वं प्रसिद्धप्राणस्य कथमुपगम्यते तस्याल्पशक्तित्वादित्याशङ्क्याऽऽह । **आत्मैवेति** । अज्ञातस्याऽऽत्मनोऽत्र प्राणशब्दत्वे नियामकमाह । **प्राणेति** । तत्र मनःशब्देन तदुपाधिर्जीवो गृह्यते न च स प्राणानां धारयिता मुख्ये प्राणे तिष्ठत्यतो जीवायतनं प्राणशब्दं परमेव ब्रह्म तथाऽत्रापीत्यर्थः । प्राणशब्देनाज्ञातात्मपरिग्रहे मानान्तरमाह । **असदेवेति** । **असदे**वेदमग्र आसीत्तत्सदासीत्तत्समभवत्तदाण्डं निरवर्तत तन्निरभिद्यते**त्यादिवाक्याद**सच्छब्देनाव्यक्तनामरूपं परमशेषहेतुं प्रक्रम्य तस्मात्पृथिव्याद्युत्पत्तिमुपदिश्य तस्मादेवाऽऽदित्योत्पत्तिरथ यत्तदजायत सोऽसावादित्य इत्युक्ता । **अग्निरहस्ये** च **यदा**ऽऽदित्योऽस्तमेति वायुं तर्हि प्रविशति वायुं चन्द्रमा वायौ दिशः प्रतिष्ठिता वायोरेवाधि पुनर्जायन्त **इति** प्राणादादित्योत्पत्तिरुच्यते । प्रकृतेऽपि **प्राणाद्वा** एष उदेतीति प्राणात्तज्जन्मोक्तम् । न च तस्मिन्विकल्पो वस्तुत्वात्तस्माच्छन्दोगश्रुत्यनुसारेणाऽऽदित्योत्पत्तिहेतुरन्यत्रापि श्रूयमाणोऽज्ञातात्मैवेति प्रत्युक्तौ प्राणशब्देन तदादानमित्यर्थः ॥ ३८० ॥

**यत एव समुत्पत्तिस्तत्रैव प्रलयोऽपि च ॥**
**मृदो जातस्य कुम्भस्य न लयो वीरणादिषु ॥ ३८१ ॥**

प्राणादित्यादि व्याख्याय प्राणेऽस्तमेतीति व्याचष्टे । **यत इति** । कुलालादुत्पन्न-

घटस्य मृदि लयवत्परस्मादुत्पन्नस्यापि सूर्यस्य ततोऽन्यत्र लयोपपत्तेरवधारणासिद्धिरित्याशङ्क्योपादानविषयत्वं नियमस्य मत्वा दृष्टान्तमाह । **मृद इति** ॥ ३८१ ॥

**वागादिगणधारित्वाद्धर्मं वायुव्रतं विदुः ॥**
**चक्रिरे दध्रिरे धर्मं धारणं प्रकृतं यतः ॥ ३८२ ॥**

मन्त्रस्य पूर्वार्धं सब्राह्मणं व्याख्याय तमित्यादि व्याख्याति । **वागादीति** । अध्यात्मं प्राणस्य वागादिजातधारित्ववदधिदैवं वायोरग्न्यादिगणधारित्वात्प्राणस्य वायोश्च व्रतं धर्ममागमिका[1] विदुरिति योजना । करणार्थस्य करोतेर्धारणार्थत्वे प्रकरणं नियामकमाह । **धारणमिति** ॥ ३८२ ॥

**अद्यापि क्रियते तैस्तत्कर्तारश्चापि तत्सुराः ॥**
**अध्रियन्त यममुर्हि तस्मिन्काले पराजिताः ॥**
**धर्मव्रतं तदेवाद्य बिभ्रत्यग्न्यादयः शुभम् ॥ ३८३ ॥**

स एवेत्यादेरर्थमाह । **अद्यापीति** । तैर्वागादिभिस्तत्प्राणव्रतं वर्तमाने काले क्रियते भविष्यत्यपि ते तत्कर्तारो देवताश्चाग्न्याद्या वायुव्रतमिदानीमिव कालान्तरेऽपि करिष्यन्तीति योजना । यद्वा एत इत्यादि ब्राह्मणं व्याकरोति । **अध्रियन्तेति** । अमुर्हीत्यस्य व्याख्यानं तस्मिन्नित्यादि स च कालो मीमांसयाऽवच्छिन्नत्वात्परोक्षतया निर्दिश्यते । शुभमित्यभग्नत्वोक्तिः ॥ ३८३ ॥

**अभग्नं मृत्युना यस्मात्प्राणस्यैव व्रतं ततः ॥**
**एकमेव व्रतं प्राणं चरेदा मरणात्सदा ॥ ३८४ ॥**

तस्मादित्यादेरर्थमाह । **अभग्नमिति** । प्राणं तत्संबन्धीति यावत् । व्रतानुष्ठानस्य मर्यादां दर्शयति । **आ मरणादिति** । तत्रापि नैरन्तर्यार्थं सदेत्युक्तम् ॥ ३८४ ॥

**प्राण्यादपान्यात्प्राणात्मा ह्युक्त्यादिष्वपि कर्मसु ॥**
**अन्तर्भावो यतोऽमीषां श्रोत्रादीन्द्रियकर्मणाम् ॥ ३८५ ॥**

प्राण्याच्चेत्यादिवाक्यं व्रतस्वरूपं दर्शयितुमादत्ते । **प्राण्यादिति** । विदुषस्तथाविधव्यापारकर्तृत्वे प्राणात्मत्वं हेतुमाह । **प्राणेति** । सर्वप्राणिनां प्राणनादिव्यापारस्य स्वारसिकत्वादिच्छयाऽनुष्ठातुमशक्यत्वात्कथं तत्र विधिरित्याशङ्क्य प्राङ्मुखभुक्तिवाक्यवद्व्यापारान्तरनिवृत्तिपरत्वाद्वाक्यस्य मैवमित्याह । **उक्त्यादिष्विति** । कथं हित्वा वागादिव्यापारं प्राणव्यापारस्यैवानुष्ठेयत्वं तत्राऽऽह । **अन्तर्भाव इति** ॥ ३८५ ॥

**प्राणकर्मणि तेनैतदेकमेव व्रतं चरेत् ॥ ३८६ ॥**
**प्राणापानात्मकं यस्माद्व्रतं प्राणैककर्तृकम् ॥**
**प्राण्यादपान्याच्च ततो नित्यमा मरणाद्बुधः ॥ ३८७ ॥**

---

[1] ग. °द्धर्ममागमिका वि° ।

प्राणोपासितुरुपास्यप्राणात्मनस्तद्व्रतमेव कार्यमित्यत्र हेत्वन्तरमाह । **प्राणेति ।** नित्यमिति निरन्तरत्वोक्तिरा मरणादिति मर्यादावचनमिति विभागः । बुधः सर्वेषु वागादिव्यापारेषु प्राणव्यापारदृष्टिस्तदुपासितेति यावत् ॥ ३८६ ॥ ३८७ ॥

**प्राणात्मनैव वागादिव्रतान्यपि चरेत्सदा ॥**
**वागाद्यासङ्गवत्तन्मां पाप्मा मा प्रापदासुरः ॥ ३८८ ॥**
**इत्येवमभिसंधिः सन्विद्वान्प्राणव्रतं चरेत् ॥**
**प्राणव्रतं चेदारब्धं चिकीर्षेत्तत्समापनम् ॥ ३८९ ॥**

एकमेवेत्यवधृतेर्वागादिव्रतस्य त्यक्तत्वात्तदुक्तिरनर्थिकेत्याशङ्क्यान्तर्भाव इत्यत्रोक्तं स्मारयति । **प्राणात्मनेति** । वागादीनामुपसर्जनत्वात्प्राणस्य प्रधानत्वादवधारणमित्यर्थः । नेदित्यादेरर्थमाह । **वागादीति ।** वैधर्म्यदृष्टान्तः । मा मामुपासितारमित्यर्थः । यावज्जीवं प्राणव्रतधारणं किमर्थमित्याशङ्क्य यदीत्यादेरर्थमाह । **प्राणेति** ॥ ३८८ ॥ ॥ ३८९ ॥

**अभ्यस्तेनाऽऽमृतेर्यस्मात्सायुज्यादि समश्नुते[1] ॥**
**त्र्यन्नात्मदे[2]व[3]तायास्तु तस्मादेवं विधीयते ॥ ३९० ॥**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके प्रथमाध्यायस्य पञ्चमं सप्तान्नब्राह्मणम् ॥ ५ ॥**

तेनेत्यादेरर्थमाह । **अभ्यस्तेनेति ।** सायुज्यादीत्यादिपदं सालोक्यादिसंग्रहार्थम् । अभ्यासतारतम्याच्च फलं विकल्पते । फलवत्त्वात्प्राणोपासकं प्रति तद्व्रते नियमविधिरित्युपसंहरति । **तस्मादिति** ॥ ३९० ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां शास्त्रप्रकाशिकाख्यायां प्रथमाध्यायस्य पञ्चमं सप्तान्नब्राह्मणम् ॥ ५ ॥

---

अथ षष्ठं ब्राह्मणम् ।

**तद्धेदमित्यविद्याया उक्तं कार्यमशेषतः ॥**
**उक्तार्थस्यैव संक्षेपस्त्रयं वा इत्यथोच्यते ॥ १ ॥**

ननु सूत्रिताया अविद्यायाः सकार्याया विवृतत्वादविद्याप्रकरणे वक्तव्याभावादध्यायसमाप्तिरेव युक्तेत्याशङ्क्य वृत्तमनूद्य ब्राह्मणान्तरमवतारयति । **तद्धेति ।** अव्याकृतवाक्ये साभासा प्रत्यगविद्या सकार्या सूत्रिता तस्याश्चाथ योऽन्यामित्यत्राऽऽकृष्टाया गतेन संदर्भेण कार्यं प्रपञ्चितं तस्य सहेतोरुपसंहारायोत्तरं ब्राह्मणमित्यर्थः । विस्तरानन्तरं संक्षेपस्यावकाशं दर्शयितुमथेत्युक्तम् । संक्षेपविस्तरौ च सुखप्रतिपत्त्यर्थमिष्टौ ॥ १ ॥

---

१ क. ख. °ते । अन्ना° । २ क. °न्नादिदे° । ३ ग. °वतोपास्तेस्तस्मा° ।

**अज्ञातैकात्म्यकार्यं तद्यदेतदभिशब्दितम् ॥**
**न तु विध्वस्तसंमोहप्रत्यङ्मात्रसतत्त्वगम् ॥ २ ॥**

किमर्थं पुनरयमुपसंहारो गतत्वादित्याशङ्क्य विज्ञातादिवाक्ये सफलोपसंहारस्येतो निष्कृष्योक्तेरिदानीमुपसंहारावसरे तत्फलं वक्तुं भूमिकां करोति । **अज्ञातेति** । यदज्ञातमैकात्म्यं तस्य तत्कार्यं यज्जगदधस्तादुक्तं तत्त्वज्ञानासंस्पर्शिवस्तुकार्यत्वेन तन्निर्देष्टुंशक्यं तस्य कूटस्थस्य स्वतस्तद्धेतुत्वासिद्धेरित्यर्थः ॥ २ ॥

**एवमुक्ते विरक्तोऽस्मान्मुमुक्षुः श्रद्धयाऽन्विनः ॥**
**ब्रह्मज्ञानेऽधिकारी स्यात्कथं नामेति भण्यते ॥ ३ ॥**

उपसंहारफलं स्फोरयति । **एवमिति** । त्र्यात्मकं जगदाविद्यमित्येवं सिद्धे सत्यस्माद्विरक्तो मुमुक्षुस्तद्धेतुं श्रद्धयाऽनुसंदधानो ब्रह्मधीहेतौ श्रवणादौ संन्यासपूर्वके कथमधिकुर्यादिति यतः श्रुतिरालोचयतेऽतोऽयमुपसंहारः क्रियते तयेत्यर्थः ॥ ३ ॥

**अविद्योत्थपुमर्थेभ्यो विमुखीभूतमानसः ॥**
**आत्मतत्त्वविजिज्ञासुस्तद्व्यावृत्तो भवेन्नरः ॥ ४ ॥**

अविरक्तोऽपि कुतूहलधिया तत्राधिकारी स्यात्कृतं विरक्त्येत्याशङ्क्याऽऽह । **अविद्येति** । अज्ञानकृतस्वर्गादिभ्यः साध्येभ्यो व्यावृत्तधीस्तद्धेतुभ्यश्च निवृत्तमनाः सन्नात्मविविदिषुर्भवति तत्कथमविरक्तस्य विद्याधिकारितेत्यर्थः ॥ ४ ॥

**बाह्यार्थबद्धधिषणः प्रत्यग्याथात्म्यवित्तये ॥**
**नालं विरोधात्पुरुषः पराञ्चीत्यागमोक्तितः ॥ ५ ॥**

तस्य विद्यायामसामर्थ्ये हेतुमाह । **बाह्येति** । विरोधादित्यनात्मासङ्गस्याऽऽत्मवेदनस्य चान्योन्यप्रत्यनीकत्वादित्यर्थः । अनात्मप्रमाणमप्यात्मानमाश्रयत्वेन प्रत्याययिष्यत्यतो न तद्धियोर्विरोधितेत्याशङ्क्याऽऽह । **पराञ्चीति** । न हि विषयधीराश्रयत्वेनाऽऽत्मानमावेदयितुमलं तस्या विषयमात्रावसायित्वादतो विरोधस्तद्धियोरित्यर्थः ॥ ५ ॥

**अविद्यामात्रहेतुत्वं न त्वैकात्म्यानुसारिता ॥**
**यथोक्तवस्तुनः कस्मादित्येतत्प्रतिपाद्यते ॥ ६ ॥**

सर्वस्य जगतोऽविद्यात्मकत्रयमात्रत्वे वैराग्यादिसिद्धिर्न च तदद्यापि सिद्धमिति चोदयति । **अविद्येति** । षष्ठी सप्तान्नात्मकजगद्विषया । तत्रोत्तरत्वेन त्रयमित्याद्यवतारयति । **एतदिति** ॥ ६ ॥

**अज्ञातादात्मनः साक्षादभिव्यक्तिः पुरोदिता ॥**
**अहेतुफलरूपस्य नामरूपक्रियात्मभिः ॥ ७ ॥**

तद्व्याख्यातुमुत्तरं स्मारयति । **अज्ञातादिति** । हेतुफलभावरहितः प्रत्यगात्मैव रूपं

---

१ क. ग. °वृत्तौ भ° ।

यस्य तस्य जगतो वा तद्भावशून्यस्याऽऽत्मनो वा नामाद्यात्मना स्पष्टा व्यक्तिरात्मनोऽज्ञातादुक्ता तद्धेत्यादावित्यर्थः ॥ ७ ॥

**नामाद्यात्मकतैवास्य ब्रह्मादेः स्थावरावधेः ॥**
**न तु वस्त्वन्तरं तत्स्याद्यथा तदिह वर्ण्यते ॥ ८ ॥**

त्रयमित्यादेस्तात्पर्यं संगृह्णाति । **नामादीति** । कथं प्रतिज्ञामात्राद्यथोक्तवस्तुसिद्धिरित्याशङ्क्याऽऽह । **यथेति** । इहेति प्रकृतब्राह्मणग्रहणम् ॥ ८ ॥

**कारणत्वसमानत्वस्वात्मलाभत्वहेतुभिः ॥**
**नामाद्यात्मकतैतस्य प्रपञ्चस्य प्रसाध्यते ॥ ९ ॥**

केन हेतुना जगतो नामाद्यात्मत्वमुच्यते तत्राऽऽह । **कारणत्वेति** ॥ ९ ॥

**अनेकभेदसंभिन्नं यदेतद्व्याकृतं जगत् ॥**
**नामरूपक्रियातत्त्वमेतत्सर्वं प्रतीयताम् ॥ १० ॥**

तात्पर्यमुक्त्वा त्रयमित्याद्यक्षराणि व्याकरोति । **अनेकेति** ॥ १० ॥

**त्रयं वा इदमित्येवं प्रतिज्ञार्थमिदं वचः ॥**
**हेतूक्तिरुत्तरो ग्रन्थस्तेषामित्यादिनोच्यते ॥ ११ ॥**

अस्यैवार्थस्य तेषां नाम्नामित्यादिनाऽपि वक्ष्यमाणत्वात्पुनरुक्तिरित्याशङ्क्याऽऽह । **त्रयमिति** । इदं वचस्त्रयमित्यादि सर्वं जगन्नामाद्यात्मकमित्येतस्य प्रतिज्ञार्थं यस्तूत्तरो ग्रन्थस्तेषामित्यादिस्तेन प्रतिज्ञातेऽर्थे हेतूक्तिरिति योजना । अथवा तेषामित्यादिना रूपेण योऽसावुत्तरो ग्रन्थः स प्रतिज्ञातेऽर्थे हेतूक्तिरिति योजना ॥ ११ ॥

**वागित्यनेन शब्देन नादमात्रं विवक्ष्यते ॥**
**अपजुह्नूषितत्वात्तु नादोत्थस्य विकारतः ॥ १२ ॥**

तेषां नाम्नामित्यादौ वाक्पदार्थमाह । **वागित्यनेनेति** । तेन शब्दविशेषाग्रहे हेतुमाह । **अपजुह्नूषितत्वादिति** ॥ १२ ॥

**एषां नामविकाराणामुक्थं नादस्तदुत्थितेः ॥**
**सर्वनाम्नामतो नाद उक्थमित्यभिधीयते ॥ १३ ॥**

एतदेषामुक्थमित्यस्यार्थमाह । **एषामिति** । सर्वे नामविशेषास्तन्मात्रात्तत्त्वतो न भिद्यन्ते तत्कार्यत्वाद्यद्यत्कार्यं तत्ततो न तत्त्वतो भिद्यते यथा मृदो घट इत्यनुमानं निगमयति । **अत इति** ॥ १३ ॥

**तथा सामान्यतो वाचो विशेषाणां तदात्मता ॥**
**न हि निष्कृष्य सामान्याद्विशेषः कश्चिदीक्ष्यते ॥ १४ ॥**

एतदेषां सामेत्यादेरर्थमाह । **तथेति** । कारणत्वाद्वाचस्तद्विशेषाणां कार्याणां तादा-

---

१ क. °तैवास्य । २ ख. प्रतीयते ।

त्म्यवदित्यर्थः। वाचः सामान्यत्वेऽपि कुतो विशेषाणां तदात्मतेत्याशङ्क्य व्याप्तिमाह। **न हीति**। सर्वे नामविशेषास्तत्सामान्ये कल्पिताः प्रत्येकं तदनुविद्धत्वाद्रज्जिवदमंशानुविद्धसर्पादिवदित्यर्थः॥ १४॥

**आत्मत्वाच्च तथा वाचो नाऽऽत्मीयोऽन्योऽवशिष्यते॥**
**कार्त्स्न्येनैवाभिसंबन्धादात्मीयस्येह वस्तुनः॥ १५॥**

एतदेषां ब्रह्मेत्यादेरर्थमाह। **आत्मत्वाच्चेति**। तथेति कारणत्वात्सामान्यत्वाच्च वाचस्तद्विशेषाणां तादात्म्यवदित्यर्थः। तस्यास्तद्विशेषेषु स्वरूपलाभहेतुत्वात्तदन्यो वाग्विशेषो नेत्येतदेव साधयति। **कात्स्न्र्येनेति**। इहेति घटाद्यात्मभूतमृदादिग्रहणम्। सर्वं नाम तत्सामान्यात्पृथङ्न वस्तुतोऽस्ति तेनाऽऽत्मवत्त्वाद्यद्येनाऽऽत्मवन्न तत्ततोऽन्यद्वस्तुतोऽस्ति यथा मृदाऽऽत्मवान्घटो न वस्तुतो ततोऽन्योऽस्तीति भावः॥ १५॥

**कार्यकारणगो भेदः प्राप्तो लोके य ईक्ष्यते॥**
**अविचारितसंसिद्धः सोऽयं श्रुत्या निषिध्यते॥ १६॥**

उक्तानुमानेष्वध्यक्षविरोधमाशङ्क्याऽऽह। **कार्येति**। सामान्यविशेषयोरात्मात्मीययोश्चेति द्रष्टव्यम्। एतदेषामुक्थमित्यादिश्रुत्या भेदस्य निषेधे हेतुमाह। **अविचारितेति**। अन्योन्याश्रयादिदोषात्कल्पितो भेदः श्रौतनिषेधयोग्योऽध्यक्षविषयोऽतस्तात्त्विकभेदनिषेधकानुमानेषु न तद्विरोधोऽस्तीत्यर्थः॥ १६॥

**एवं सति प्रमाणत्वमपूर्वार्थावबोधनात्॥**
**अन्यथाऽतोऽनुवादः स्याच्छ्रुतेर्ज्ञातार्थबोधनात्॥ १७॥**

अथेयं श्रुतिरभेदं बोधयति न भेदं निषेधयत्युभयार्थत्वे वाक्यभेदादतो भेदाभेदपरतेत्याशङ्क्याऽऽह। **एवमिति**। निषेधपरत्वे श्रुतेरज्ञातभेदाभावावबोधित्वात्प्रामाण्यसिद्धिरित्यर्थः। भेदाभेदबोधित्वे दोषमाह। **अन्यथेति**। भेदस्य लोकवादिसिद्धत्वादभेदस्य च सुवर्णं कुण्डलमित्यादिसामानाधिकरण्यधीदृष्टत्वाद्भेदाभेदवादिश्रुतेर्ज्ञातार्थत्वेनानुवादित्वादप्रामाण्यमित्यर्थः॥ १७॥

**चक्षुषो विषयश्चक्षुःशब्देनेहाभिधीयते॥**
**रूपाणामिति संबन्धाद्रूपात्मत्वात्तथैव च॥ १८॥**

अथ रूपाणामित्यत्र चक्षुःशब्दार्थमाह। **चक्षुष इति**। तत्र हेतू रूपाणामिति। रूपाणां चक्षुरुक्थमित्यत्र रूपविशेषाणां कार्यत्वं चक्षुषः कारणत्वमिति संबन्धदृष्टे रूपसामान्यं चक्षुर्युक्तं प्रसिद्धाच्चक्षुषो रूपविशेषानुत्पत्ते रूपसामान्याच्च तद्विशेषोत्पत्तेरिष्टत्वादित्यर्थः। तत्रैव हेत्वन्तरमाह। **रूपेति**। चक्षुषो रूपमात्रतेजोविकारत्वेन रूपात्मत्वाच्च चक्षुःशब्देन रूपसामान्यग्रहणमित्यर्थः॥ १८॥

**यद्यद्धि रूप्यते किंचिच्छब्दस्पर्शादिकं धिया ॥**
**तत्तद्रूपमिति ज्ञेयं तैजसत्वाविशेषतः ॥ १९ ॥**

तस्य रूपात्मत्वं साधयति । **यद्यद्धीति** । बुध्या रूप्यमाणेऽर्थे रूपशब्दप्रवृत्तेरौचित्यद्योतनार्थो हिशब्दः । रूप्यमाणकार्यमात्रस्य रूपत्वे हेतुमाह । **तैजसत्वेति** । कार्यमात्रस्य तैजसत्वाविशेषात्तस्य च रूपात्मत्वस्वीकारादित्यर्थः ॥ १९ ॥

**त्वाष्ट्रमेव हि सर्वत्र तेजो रूपादिलक्षणम् ॥**
**तस्माद्विषयसामान्यं चक्षुःशब्देन भण्यते ॥ २० ॥**

कथं तन्मात्रस्य तैजसत्वं तदाह । **त्वाष्ट्रमिति** । सर्वं हि कार्यं सावित्रेण तेजसा पच्यमानमात्मानं लभते तथाच तदेव तदित्यर्थः । चक्षुषस्तैजसत्वेन रूपात्मत्वमुक्त्वा फलितमाह । **तस्मादिति** ॥ २० ॥

**हेतुतज्जाविभागेन कार्यकारणहेतुतः ॥**
**वाचारम्भणशास्त्राच्च विकारानृततोच्यते ॥ २१ ॥**

रूपविशेषाणां तत्सामान्यस्य च कार्यकारणत्ववादिश्रुतेस्तात्पर्यमाह । **हेत्विति** । कार्यकारणयोरविभागस्य मृद्घटादौ दृष्टत्वात्प्रकृते च तद्भावहेतोस्तादात्म्यदृष्टेर्वाचारम्भणं विकार इति च कार्यानृतत्वोक्ते रूपसामान्यं विना न तद्विशेषा वस्तुतः सन्तीत्यर्थः ॥ २१ ॥

**अन्तर्भावश्च सामान्ये विशेषाणामथोच्यते ॥**
**सामान्यमेतत्सर्वेषां विशेषाणां समं हि तैः ॥ २२ ॥**

उक्थवाक्यमित्थं व्याख्यायैतदेषां सामेत्यस्यार्थमाह । **अन्तर्भावश्चेति** । हेत्वन्तरार्थोऽथशब्दः । एतद्धीत्यादेरर्थमाह । **सामान्यमिति** । रूपमात्रस्य तद्विशेषेषु सामान्यत्वं साधयति । **समं हीति** ॥ २२ ॥

**न विशेषो न सामान्यं भेदतोऽभेदतोऽस्ति नः ॥**
**तथा रूपविशेषाणां रूपमात्रात्मकत्वतः ॥**
**स्रग्वत्सर्पादिकान्यद्वद्रूपं सर्वं बिभर्ति हि ॥ २३ ॥**

रूपसामान्ये तद्विशेषाणामन्तर्भावं वदता सामान्यविशेषभावस्य वास्तवत्वमिष्टमन्यथा तद्भावस्यैवायोगात्तथा चापराद्धान्तः स्यादित्याशङ्क्याऽऽह । **नेत्यादिना** । निःसामान्यविशेषं वस्तु वदतामस्माकं न सामान्याद्भेदाभेदाभ्यां विशेषोऽस्ति नापि सामान्यं विशेषात्ताभ्यां संभवति भेदसंबन्धयोर्दुर्वचत्वादभेदे वाऽन्यतरपरिशेषादतः सामान्यविशेषत्वं कल्पितं तच्चाकल्पितंवद्व्यवहाराङ्गमित्यर्थः । एतदेषां ब्रह्मेत्यस्यार्थमाह । **तथेति** । यथा सर्पादीनां स्रङ्मात्रत्वं तथा रूपविशेषाणां रूपमात्रस्वभावत्वान्न ततो भेदेन ते

---

१ ख. °ततद्व्य° ।

वस्तुतः सन्तीत्यर्थः । एतद्धीत्यादेरर्थमाह । **सर्पादिकानिति ।** यथा स्रगधिष्ठानं सर्पादीन्बिभर्ति तथा रूपसामान्यं स्वविशेषमात्मत्वेन धारयत्यतो न तद्विशेषस्तन्मात्रात्पृथगस्तीत्यर्थः ॥ २३ ॥

**उक्तं समासतस्तावदेकत्वं नामरूपयोः ॥**
**कर्मणोऽपि तथैकत्वमधुना प्रतिपाद्यते ॥ २४ ॥**

अथ कर्मणामित्यादि वृत्तमनूद्यावतारयति । **उक्तमिति ।** नामविशेषाणां नाममात्रेण रूपविशेषाणां च तन्मात्रेणैक्यं संक्षिप्योक्तं तथैव कर्मविशेषाणां तन्मात्रेणैक्यमुच्यतेऽनन्तरेणेत्यर्थः ॥ २४ ॥

**वाक्चक्षुःशब्दतो यद्वद्गृह्यते विषयस्तयोः ॥**
**आत्मनो विषयस्तद्वदात्मशब्देन गृह्यते ॥ २५ ॥**

कथमात्मा कर्मणामुक्थमिति विशेषतो व्यपदिश्यते तस्य सर्वोपादानत्वादित्याशङ्क्याऽऽत्मशब्दार्थमाह । **वागिति ॥** २५ ॥

**सर्वेन्द्रियपरिस्पन्दो व्यज्यते नः शरीरके ॥**
**शरीरविषयस्तस्मादात्मेत्यत्राभिधीयते ॥ २६ ॥**

कथमात्मशब्दितदेहनिर्वर्त्यकर्ममात्रमत्राऽऽत्मेत्याशङ्क्याऽऽह । **सर्वेन्द्रियेति ।** शरीरविषयस्तज्जन्यपरिस्पन्द इति यावत् । सप्तम्या प्रकृतमुक्थवाक्यमुक्तम् ॥ २६ ॥

**आत्मैव त्वस्य कर्मेति तथैवाभिहितं पुरा ॥**
**अतोऽत्र कर्मसामान्यं गृह्यते देहसंश्रितम् ॥ २७ ॥**

आत्मशब्देन तद्ग्रहे हेत्वन्तरमाह । **आत्मैवेति ।** अज्ञस्य बाह्यजायाद्यापादयितुमशक्तस्य शरीरमेव कर्मेत्युक्तं पूर्वब्राह्मणे । कथमेतावताऽत्राऽऽत्मशब्देन कर्मसामान्यग्रह इत्याशङ्क्याऽऽह । **अतोऽत्रेति ।** देहस्याऽऽत्मशब्दत्वमतःशब्दार्थः । अत्राऽऽत्मशब्देन कर्मसामान्यग्रहे तात्स्थ्यादित्यादिभाष्यस्थं हेतुमाह । **देहेति ॥** २७ ॥

**नाम रूपं तथा कर्म यदेतत्त्रयमीरितम् ॥**
**एकमेव भवत्येतत्त्रयं सद्देहमात्रकम् ॥ २८ ॥**

तदेतत्त्रयमित्यादेरर्थमाह । **नामेति ॥** २८ ॥

**विकर्तृत्वेन कर्मात्र नामरूपात्मनोर्भवेत् ॥**
**कर्मणः साधनत्वेन नामरूपे व्यवस्थिते ॥ २९ ॥**

तच्चेद्देहमात्रं केन रूपेण देहे नामादीनां स्थितिरित्याशङ्क्याऽऽह । **विकर्तृत्वेनेति ।** अत्रेति देहोक्तिः । नामादीनां मिथोहेतुफलत्वेनात्र स्थितिरित्यर्थः ॥ २९ ॥

**रूपमेव प्रतिष्ठा स्यात्सर्वदा नामकर्मणोः ॥**
**न हि रूपमनाश्रित्य विद्येते नामकर्मणी ॥ ३० ॥**

इतरेतराश्रयमितिविशेषणतात्पर्यं वदन्नामकर्माश्रयत्वं रूपस्योपन्यस्यति । **रूपमिति ।** सर्वदेति दैहिकयोर्द्वयोः सत्त्वावच्छिन्नकालोक्तिः । तत्र युक्तिमाह । **न हीति ।** तयोरस्वातन्त्र्यादित्यर्थः ॥ ३० ॥

**प्राण एव प्रतिष्ठैवं सदा स्यान्नामरूपयोः ॥**
**प्राणैकात्म्याश्रयाद्यस्मादात्मलाभः सदा तयोः ॥ ३१ ॥**

प्राणस्य नामरूपाश्रयत्वमाह । **प्राण इति ।** एवं रूपस्य नामकर्माश्रयत्ववदित्यर्थः । सदाशब्दस्तु पूर्ववत् । तस्य क्रियासामान्यात्मनेतरेतराश्रयत्वे हेतुमाह । **प्राणेति ।** नामरूपयोर्देहस्थयोः सत्त्वं सदा प्राणाधीनमिति प्राणस्य तदाश्रयत्वोक्तिरित्यर्थः ॥ ३१ ॥

**तद्वद्वागाश्रयत्वं च तयोः स्याद्रूपकर्मणोः ॥**
**वाचा प्रकाश्यमाने ते प्रयुज्येते यतः सदा ॥ ३२ ॥**

नाम्नो रूपाद्याश्रयत्वमाह । **तद्वदिति ।** रूपस्य कर्मणश्च प्रत्येकमितरेतराश्रयत्ववदित्यर्थः । वाक्शब्दस्य नाममात्रस्य रूपाद्याश्रयत्वे हेतुमाह । **वाचेति ।** न हि रूपस्य कर्मणश्चाप्रकाशितस्य क्वचिद्विनियोगस्तेन प्रकाश्ययोस्तयोर्युक्तं प्रकाशकाश्रयत्वमित्यर्थः ॥ ३२ ॥

**आश्रयाश्रयिभावेन नामरूपक्रियात्मनाम् ॥**
**एकार्थानां सतां तेषां संहतिः स्याच्छरीरके ॥ ३३ ॥**

अन्योन्याश्रयत्वेन नामादीनां देहे स्थितिमुक्त्वा संहतमित्यादिभाष्यार्थमाह । **आश्रयेति ।** एकार्थानामेकस्य भोक्तुः सुखदुःखप्रदत्वेनैकशरीरारम्भकत्वेनावस्थितानामित्यर्थः । सर्वत्र शरीरसामान्याधिकृतस्य कप्रत्ययस्य कुत्सितत्वमित्यर्थः ॥ ३३ ॥

**एकः सन्नेष आत्माऽपि त्रयमेतत्प्रपद्यते ॥**
**नामरूपक्रियाभिन्नो देहोऽयं गृह्यते यतः ॥ ३४ ॥**

नामादित्रयस्य देहमात्रत्वे कथं व्यवहारासांकर्यमित्याशङ्क्याऽऽत्मो एकः सन्नित्यादेरर्थमाह । **एकः सन्निति ।** एकस्यैव देहस्य कुतस्त्रिरूपत्वमत आह । **नामेति ॥** ३४ ॥

**एतन्मयोऽयमात्मेति तथा पूर्वं प्रपञ्चितम् ॥**
**एतावद्व्याकृतं सर्वं यदेतत्संहतं त्रिभिः ॥ ३५ ॥**

देहस्य त्रयात्मत्वं न परं प्रत्यक्षं वाक्यीयमपीत्याह । **एतन्मय इति ।** तथेति देहस्य यथोक्तनामरूपकर्मसंभिन्नत्वानुरोधेनेति यावत् । कार्याणां कारणानां च भूयस्त्वात्त्रयोक्तिमात्रेण सर्वानुक्तेरुपसंहारस्य सर्वसंग्राहकत्वासिद्धिरित्याशङ्क्याऽऽह । **एतावदिति** ॥ ३५ ॥

---

१ ग. सन्नयमात्मा ।

**तदेतत्खलु वैराजं नामरूपक्रियात्मकम् ॥**
**नामरूपात्मसत्त्येन च्छन्नं प्राणामृतं तु तत् ॥ ३६ ॥**

तदेतदिति व्याकुर्वन्संहातिरूपं श्रुतिस्मृतिप्रसिद्धमित्याह । **तदिति** । अमृतमित्यादेरर्थमाह । **नामेति** । वैराजेन शरीरेण सत्त्यशब्दितेन सौत्रं शरीरममृतमावृत्तमित्यर्थः ॥ ३६ ॥

**प्राणशब्देन लिङ्गात्मा भण्यते करणात्मकः ॥**
**पिण्डस्य मरणे नैतन्म्रियतेऽतोऽमृतं मतम् ॥ ३७ ॥**

प्राणो वा अमृतमित्यस्यार्थमाह । **प्राणेति** । तस्य कथममृतत्वं तदाह । **पिण्डस्येति** ॥ ३७ ॥

**पृथिव्यबग्निभूतानि सत्संज्ञान्यत्र लक्षयेत् ॥**
**त्यत्संज्ञके तु विज्ञेये वाय्वाकाशे महात्मभिः ॥ ३८ ॥**

नामरूपे सत्त्यमित्यत्र सत्त्यशब्दस्यावयवार्थमाह । **पृथिवीति** । अत्र पञ्चसु स्थूलभूतेष्विति यावत् । महात्मभिर्महत्यात्मन्यनवच्छिन्ने चेतो धारयितुमिच्छद्भिरुपायत्वेनेति शेषः ॥ ३८ ॥

**सच्च त्यच्चेति तत्सत्त्यं पञ्चभूतात्मकं विदुः ॥**
**करणायतनं स्थूलं वैराजं यत्प्रचक्षते ॥ ३९ ॥**

तस्य समुदायार्थमाह । **सच्चेति** । पञ्चीकृतपञ्चभूतात्मकं तत्कार्यं च सर्वं सच्च त्यच्चेति व्युत्पत्तेः सत्त्यं वैराजं शरीरं कार्यमपञ्चीकृतपञ्चभूततत्कार्यात्मककरणरूपसप्तदशकलिङ्गस्य सूत्राख्यस्याऽऽयतनं विदुर्ब्रह्मविदस्तदेतदागमज्ञानामेवाभिज्ञास्पदमित्यर्थः ॥ ३९॥

**अस्याप्यन्तर्गतः प्राणो विज्ञानात्मेति यं विदुः ॥**
**आ संसारात्स्थितः स्थाणुः परिणामात्मकः सदा ॥ ४० ॥**

क्रियात्मकस्तु प्राण इत्यादिभाष्येण करणयाथात्म्यं कथयति । **अस्यापीति** । तर्हि ज्ञानरूपः परात्मैव प्राण इति नेत्याह । **आ संसारादिति** । उपाधितद्वतोरेकत्वं गृहीत्वा विज्ञानात्मेत्युक्तम् । तर्हि क्रियात्मनस्तस्य कथं यावद्बन्धभावित्वेनामृतत्वं तत्राऽऽह । **स्थाणुरिति** । क्रियाशक्तिप्रधानस्य तस्य सापेक्षममृतत्वमित्यर्थः । निरपेक्षं तद्वारयति । **परिणामेति** ॥ ४० ॥

**यथाकर्म यथाज्ञानमुपादत्ते शरीरकम् ॥**
**प्लुष्यादिना समोऽतोऽयं श्रुतावप्यभिधीयते ॥ ४१ ॥**

स्थूलदेहे गच्छत्यपि स्वयं नापगच्छति चेत्कथमस्य पुनः स्थूलदेहग्रहस्तत्राऽऽह । **यथेति** । तत्र समः प्लुषिणेत्यादिश्रुतिं प्रमाणयति । **प्लुष्यादिनेति**। स्थूलशरीरवत्प्रा-

णस्य विनाशाभावोऽतःशब्दार्थः । न केवलमत्रैव प्राणस्यामृतत्वमुच्यते किंतु पूर्वत्रापीत्यपेरर्थः ॥ ४१ ॥

**उपात्ताशेषभूतोऽयं यथोक्तोपात्तदेवतः ॥**
**कृत्स्नाविद्योत्थमानी च प्रत्यगज्ञानकारणात् ॥ ४२ ॥**

सर्वं जगद्देहद्वयात्मनोपसंहरन्त्याः श्रुतेरभिप्रायमत्रापि प्रकटयति । **उपात्तेति ।** देहद्वयगताभिमानद्वयवत्त्वे हेतुमाह । **कृत्स्नेति** ॥ ४२ ॥

**हैरण्यगर्भे तत्त्वज्ञो वैराजे च शरीरके ॥**
**आबद्धात्माभिमानोऽयं गार्ग्योऽविद्यासमन्वितः ॥ ४३ ॥**
**कृत्स्नसंसारमान्येष सर्वोऽस्मीति व्यवस्थितः ॥**
**ब्रह्मोपदेशविषयः श्रुत्यैवोत्थाप्यते जडः ॥ ४४ ॥**

तदेव स्फुटयति । **हैरण्यगर्भ इति ।** अज्ञानाद्देहद्वयाभिमानी दोषदृष्ट्या ततो विरक्तो विद्याधिकारीति वक्तुमुपसंहारश्रुतिरिति भावः । तत्राजातशत्रुब्राह्मणं गमकमाह । **गार्ग्य इत्यादिना ।** वैराग्यहेतुना विवेकेन सहितस्य बालाकेरविद्यावत्त्वं कथमित्याशङ्क्याऽऽह । **जड इति ।** तत्रापरोक्षराहित्यादित्यर्थः ॥ ४३ ॥ ४४ ॥

**नामरूपाभिमानाभ्यां मर्त्याभ्याममृतः स्वयम् ॥**
**प्राणः करणसंघातश्छन्नः संवेष्टितः सदा ॥ ४५ ॥**

उपसंहारश्रुतेस्तात्पर्यमुपसंहृत्य ताभ्यामित्यादि व्याचष्टे । **नामेति ।** सूक्ष्मं शरीरमनात्माऽपि स्थूलदेहच्छन्नत्वाद्दुर्ज्ञानं तेनापि च्छन्नं प्रत्यग्वस्तु सुतरामिति तज्ज्ञानेऽवहितैर्भाव्यमिति भावः ॥ ४५ ॥

**संप्रदायविदस्त्वत्र नानात्वैकत्ववादिनः ॥**
**भिन्नाभिन्नात्मकं ब्रह्म नामरूपादिवज्जगुः ॥ ४६ ॥**

तदेतत्त्रयमित्यादौ स्वव्याख्यानमुक्त्वा भर्तृप्रपञ्चव्याख्यानमुत्थापयति । **संप्रदायेति ।** विशेषणमुपहासार्थम् । पूर्वोक्तव्याख्यानव्यावृत्त्यर्थस्तुशब्दः । नामादित्रयमत्रेत्युक्तम् । वदन्तु ते नामादित्रयस्य भिन्नाभिन्नत्वं ब्रह्मणस्तु किं जातं तदाह । **भिन्नेति ।** नामरूपकर्मणां भिन्नाभिन्नत्वं ब्रह्मणो भिन्नाभिन्नत्वसिद्धये दृष्टान्तत्वेनोच्यते तथाच कुतो ब्रह्मैकरस्यमित्यर्थः ॥ ४६ ॥

**त्रयं सदेकमेव स्यादेकं सत्तद्यथा त्रयम् ॥**
**अनेनैवानुमानेन विद्याद्ब्रह्मापि तादृशम् ॥ ४७ ॥**

तत्र दृष्टान्तं स्पष्टयति । **त्रयमिति ।** दार्ष्टान्तिकं स्फुटयति । **अनेनेति ।** दृष्टान्ते-

---

१ ख. 'त्तदैव' ।

नेति यावत् । विमतं भिन्नाभिन्नं वस्तुत्वान्नामादिवदित्याह । **अनुमानेनेति** । उक्तं चानेन चैकत्वनानात्वदर्शनेन परमेकत्वनानात्वमनुमातव्यमिति ॥ ४७ ॥

**दृगादिशक्त्यनेकत्वेऽप्येकमेव परं विदुः ॥**
**शक्तिशक्तिमतोरैक्याद्द्वैतमिति भण्यते ॥ ४८ ॥**

ब्रह्मणो भिन्नाभिन्नत्वानुमानस्य तदैक्यागमविरोधमाशङ्क्याऽऽह । **दृगादीति** । तच्छक्तीनामवान्तरभेदेऽप्येकत्वाद्भिन्नाभिन्नस्य ब्रह्मणस्तदैक्यश्रुतिरविरुद्धेत्यर्थः । तथाऽप्यनुमाने द्वैताभावश्रुतिविरोध इत्याशङ्क्याऽऽह । **शक्तीति** । केवलद्वैतनिषेधार्था सेति भावः ॥ ४८ ॥

**सास्नादिषु यथा गोत्वमभेदेन व्यवस्थिम् ॥**
**मिथः सास्नादयो भिन्ना गोत्वाभिन्नास्तथाऽपि ते ॥ ४९ ॥**

तथाऽपि भिन्नमभिन्नमिति मिथोव्याघाताख्यतर्कविरुद्धमनुमानमित्याशङ्क्याऽऽह । **सास्नादिष्विति** । यथा खण्डादिषु गोत्वमनुवृत्तं ते च मिथो व्यावृत्ता न च तत एव तेषां गोत्वादपि व्यावृत्तिः खण्डो गौरित्याद्यभेदबुद्धेः सर्वे भावा ह्येकत्वानेकत्वव्यवस्थयाऽवस्थिता गृह्यन्त इत्युक्तेरित्यर्थः ॥ ४९ ॥

**भिन्नाभिन्नात्मता यद्वत्स्थूलेष्वर्थेषु दृश्यते ॥**
**सूक्ष्मेष्वपि तथा विद्यादनुमानबलाद्बुधः ॥ ५० ॥**

दृष्टान्तमनूद्य दार्ष्टान्तिकमाह । **भिन्नेति** । स्थूलेषु गवादिष्वित्येतत् । सूक्ष्मेषु दृगादिष्वित्यर्थः । बुधोऽनुमानप्रक्रियाकुशलो विवक्षितः ॥ ५० ॥

**परपक्षे न दृष्टान्तः कश्चिदप्युपलभ्यते ॥**
**भिन्नाभिन्नात्मकं तस्मात्सर्वं वस्त्विति निश्चयः ॥ ५१ ॥**

विमतं भिन्नाभिन्नं वस्तुत्वाद्गवादिवदित्ययुक्तं विमतं न भिन्नाभिन्नं निःसामान्यत्वादन्त्यविशेषवदित्यनुमानादित्याशङ्क्याऽऽह । **परेति** । सामान्यादन्यत्वं हेतुश्चेत्खण्डादौ व्यभिचारोऽसामान्यवत्त्वं चेद्गोत्वादौ व्यभिचारो न चात्र दृष्टान्तोऽस्त्यन्त्यविशेषाणामप्रमाणत्वादिति भावः । अनुमानस्य निर्दोषत्वे तत्फलमुपसंहरति । **भिन्नेति**। सर्वं वस्तु दृष्टान्तदार्ष्टान्तिकभूतमित्यर्थः ॥ ५१ ॥

**अनुमानैकसिद्धत्वाद्भिन्नाभिन्नात्मवस्तुनः ॥**
**आगमेनात्र किं कार्यं लिङ्गसिद्धानुवादिना ॥ ५२ ॥**

अनुमानाद्वा यथोक्तब्रह्मधीरागमाद्वेति विकल्प्याऽऽद्ये ब्रह्मणि वेदप्रामाण्यासिद्धिरिति दूषयति । **अनुमानेति** ॥ ५२ ॥

---

१ ख. °या व्यव° । २ ग. °पपद्यते ।

कथमुपयुक्तपक्षे तद्भावासिद्धिस्तत्राऽऽह । **उपयुक्तमिति** । विशेषेपूपयुक्तं न सामान्यं विशेषान्तर्भावान्न विशेषस्तस्य सामान्यापेक्षस्य तदभावेऽभावादित्यर्थः । अनुपयुक्तपक्षे तयोरसत्त्वं साधयति । **इतरस्यापीति** । अनुपयुक्तस्यापि विशेषेष्वयोगान्न सामान्यादितेत्यर्थः । उपयुक्तानुपयुक्तयोः सामान्यविशेषत्वायोगात्तादात्म्यासंभवान्न किंचिदपि भिन्नाभिन्नतां प्राप्नोतीति फलितमाह । **भिन्नेति** ॥ ६३ ॥

**वस्तुवृत्तं न सामान्यं न विशेषस्तथैव च ॥**
**अपेक्षामात्रतः सिद्धेर्व्योम्नि कार्ष्ण्यादिवृत्तवत् ॥ ६४ ॥**

किंच न तौ वस्तुतो भिन्नाभिन्नौ कल्पितत्वान्नभोनीलवदित्यनुमातुं हेतुं साधयति । **वस्त्विति** । न हि सामान्यविशेषौ परस्परापेक्षामन्तरेण सेद्धुं पारयतस्तथाच स्वतोऽभावाद्भुजंगादिवत्कल्पितत्वसिद्धिरित्यर्थः । अनुमानं सूचयति । **व्योम्नीति** ॥ ६४ ॥

**प्रत्यभिज्ञानतोऽभेदः खण्डमुण्डस्थगोत्वयोः ॥**
**एकाधिकरणज्ञानात्खण्डाद्यैस्तद्विभिन्नता ॥ ६५ ॥**

भेदाभेदवाद्याह । **प्रत्यभिज्ञानत इति** । खण्डमुण्डस्थगोत्वस्य तदेवेदमिति प्रत्यभिज्ञानादभेदो गम्यते खण्डो गौर्मुण्डो गौरिति सामानाधिकरण्याच्च व्यक्तिभिरभेदधीस्तस्मात्तद्भिन्नत्वात्तस्य भिन्नतेति तयोर्भिन्नाभिन्नतेत्यर्थः ॥ ६५ ॥

**भिन्नाधिकरणज्ञानान्नैवमप्यभिदा तयोः ॥**
**सामान्येऽभिन्नधीर्यस्माद्भिन्नेष्वेव तु भिन्नधीः ॥ ६६ ॥**

सामानाधिकरण्येऽपि तयोर्न भिन्नाभिन्नताऽनुवृत्तव्यावृत्तधियोः सामान्यविशेषविषयत्वेन व्यवस्थितत्वादिति दूषयति । **भिन्नेति** । भिन्नाधिकरणज्ञानादित्येतत्प्रपञ्चयति । **सामान्य इति** । सामानाधिकरण्यं नभोनीलवदिति भावः ॥ ६६ ॥

**प्रत्यक्षेणानुपात्तत्वान्न स्मृतिस्तादितीक्षणम् ॥**
**न हि प्रत्यक्षतोऽप्राप्तं स्मर्यते वस्तु किंचन ॥ ६७ ॥**

यत्तु प्रत्यभिज्ञानतोऽभेद इति तत्राऽऽह । **प्रत्यक्षेणेति** । खण्डादिविषयपूर्वानुभवेन न गोत्वग्रहस्तस्यानेकव्यक्तिनिष्ठस्यैकव्यक्तिग्रहकाले व्यक्त्यन्तराणामग्रहाद्ग्रहासिद्धेरतस्तदिति न गोत्वस्मृतिरननुभूते स्मृत्ययोगात्तस्यास्मृतौ च पूर्वानुभूतं स्मृत्वा तस्योत्तरत्रानुसंधानाख्यप्रत्यभिज्ञालक्षणमीक्षणं न सिध्यतीति कुतो भेदाभेदधीरित्यर्थः ॥ ६७ ॥

**सामानाधिकरण्यस्य विभिन्नार्थव्यपाश्रयात् ॥**
**अभेदधीः कथं तत्र विशेषणविशेष्ययोः ॥ ६८ ॥**

यत्तु सामानाधिकरण्याद्विशेषैः सामान्यस्याभेदधीरिति तत्राऽऽह । **सामानाधिकरण्यस्येति** । भवतु वा गोत्वस्य प्रागुक्तप्रत्यभिज्ञानादेकत्वं तथाऽपि न तस्य

---

१ क. °वृत्तिव° ।

विशेषैः सामानाधिकरण्यादभेदो नीलं पीतमितिवन्नीलं नीलमित्यदृष्टेस्तस्या भिन्नार्थत्वात्तस्मिन्प्रमाणे सति नानयोरभेदधीरतो न तद्वशादभेदसिद्धिरिति कुतो भिन्नाभिन्नतेत्यर्थः ॥ ६८ ॥

**अभिन्नवचसा भिन्नप्रतिषेधोऽभिधीयते ॥**
**प्राप्तस्य भिन्नरूपस्य शून्यताऽतः प्रसज्यते ॥ ६९ ॥**

भिन्नेऽभिन्ने वा सामानाधिकरण्यात्तद्बलाद्भिन्नाभिन्नता बलादापतेदित्याशङ्क्याभिन्नशब्दो भेदं निषेधति न वेति विकल्प्याऽऽद्यमनूद्य दूषयति। **अभिन्नेति**। प्रतिपन्नोपाधौ निषेधोऽतःशब्दार्थः। तथाच न भिन्नाभिन्नत्वमेकस्य सेद्धुमलमिति शेषः ॥६९॥

**वचो भेदनिषेधं चेन्न कुर्याद्भेदवाक्यवत् ॥**
**भिन्नाभिन्नात्मतापक्षहानिरेवं प्रसज्यते ॥ ७० ॥**

पक्षान्तरमनूद्य निरस्यति। **वच इति**। एकत्र भेदतदभावयोरनुक्तेर्भावयोर्द्वयोरेकत्रोक्तावपि प्रसिद्धाभेदार्थत्यागादिति भावः ॥ ७० ॥

**तक्रकौण्डिन्यन्यायो न चेहाप्यवसीयते ॥**
**उत्सर्गानवकाशत्वाच्छून्यतैवात आपतेत् ॥ ७१ ॥**

अभिन्नशब्दस्य भेदनिषेधित्वेऽपि न भेदस्य शून्यता सर्वत्र प्राप्तस्य कारणे निषेधाद्ब्राह्मणेभ्यो दधि दीयतामित्यार्योपाधौ प्राप्तस्य दध्नस्तक्रं कौण्डिन्यायेति कौण्डिन्ये निषेधेऽप्यशून्यतावदित्याशङ्क्याऽऽह । **तक्रेति** । तत्संबन्ध्युत्सर्गापवादन्यायो नेह प्रमाणवानित्यत्र हेतुं ब्रुवन्फलितमाह। **उत्सर्गेति**। सर्वं भिन्नाभिन्नमित्यत्रोत्सर्गापवादयोरनवकाशात्तत्तदर्थस्याभिन्नशब्देन तत्तन्निष्ठभेदनिषेधात्तस्य शून्यतैव स्यादिति भिन्नाभिन्नत्वासिद्धिरित्यर्थः ॥ ७१ ॥

**भिन्नौ जातिगुणौ द्रव्यात्स्वानुभूत्यनुरोधतः ॥**
**तद्विरोधादभिन्नत्वं कथं मानात्प्रतीयते ॥ ७२ ॥**

जात्यादौ क्वचिदेव भिन्नाभिन्नत्वाभ्युपगमात्तस्य सर्वत्रानिष्टेरुत्सर्गापवादसिद्धिरित्याशङ्क्य जात्यादेर्धर्मिणश्च भेदमुपेत्याभेदं प्रत्याह। **भिन्नाविति** ॥ ७२ ॥

**अभिन्नं सद्विभिन्नत्वं न कथंचित्प्रपद्यते ॥**
**स्वाश्रयत्वादभिन्नस्य कुतोऽस्य स्यात्पराश्रयः ॥ ७३ ॥**

संप्रत्यभेदमुपेत्य भेदं निरस्यति। **अभिन्नमिति**। तदुपपादयति। **स्वाश्रयत्वादिति**। अभेदस्य स्वरूपत्वेनान्तरङ्गस्य बलवत्त्वाद्भेदः सापेक्षस्तद्विरोधान्न वस्तुतः स्यादित्यर्थः ॥ ७३ ॥

**अन्यानपेक्षं यद्यस्य वृत्तं तत्पारमार्थिकम् ॥**
**अन्यापेक्षं यतोऽन्यत्वं तेन तद्व्योमकार्ष्ण्यवत् ॥ ७४ ॥**

अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलवदिति न्यायादभिन्ने भेदानवकाशमुक्त्वा कल्पिताकल्पितयोरकल्पितं बलवदिति वक्तुमभेदस्याकल्पितत्वमाह । **अन्येति** । भेदस्य कल्पितत्वेन दौर्बल्यमाह । **अन्यापेक्षमिति** । अतो भेदस्याभेदेन बाध्यतेति भावः ॥ ७४ ॥

**गोत्वसत्त्वप्रमेयत्ववस्तुत्वादीनि भिन्नवत् ॥**
**सामान्यानीह खण्डादौ तेनान्योन्यविरुद्धता ॥ ७५ ॥**

किंच गोत्वादीनि मिथो भिन्नान्येवाभिन्नान्येव वा भिन्नाभिन्नानि वाऽऽद्ये गोत्वाभिन्नस्य खण्डादेः सत्त्वादिना तदयोगादसत्त्वामेयत्वादिप्रसक्तिरन्यथा तेषां मिथोभिन्नत्वानुपपत्तिरिति मत्वा द्वितीये दोषमाह । **गोत्वेति** । तानि खण्डादिनिष्ठानि तद्वन्मिथो भिन्नान्येव दृश्यन्ते तथाच न तान्यभिन्नान्येवानुभवविरोधादित्यर्थः । तृतीयं निराह । **तेनेति** । तानि मिथो भिन्नाभिन्नानि चेज्जात्यादेरेव धर्मिणो भिन्नाभिन्नतेतीष्टासिद्धिस्तेन त्वदुक्त्योर्मिथोविरोधतेत्यर्थः ॥ ७५ ॥

**यदेकं तन्न नानेति नाना नैकमिति प्रमा ॥**
**योऽनुभूतिविरोध्यर्थः स कथं स्थाप्यते बलात् ॥ ७६ ॥**

तृतीये दोषान्तरमाह । **यदिति** । न तावद्यदेकं तन्नानेति प्रमाऽस्ति नापि यदनेकं तदेकमिति प्रमितिरविरोधापेक्षिणो मानस्य विरुद्धार्थत्वायोगादतो नैकत्र भिन्नाभिन्नतेत्यर्थः । तत्रैव स्वानुभवविरोधमाह । **योऽनुभूतीति** । अनुभवविरोधिनोऽर्थस्य मानं विनाऽभ्युपगतावतिप्रसक्तिरिति भावः ॥ ७६ ॥

**भेदाः सामान्यतां यान्ति सामान्यं भेदतां यदि ॥**
**लोकप्रसिद्धिबाधः स्यात्स चापि स्यादनर्थकः ॥ ७७ ॥**

गोत्वादिजातीनां मिथोभेदादीन्निरस्य तासां व्यक्तीनां चान्योन्याभेदे लोकप्रसिद्धिविरोधमाह । **भेदा इति** । साऽपि चन्द्रभेदप्रसिद्धिवद्बाध्येत्याशङ्क्यातिप्रसक्तेर्मैवमित्याह । **स चेति** ॥ ७७ ॥

**सामान्यं च विशेषश्च द्रव्यतन्त्रौ मतौ यदि ॥**
**असामान्यविशेषात्मद्रव्यवत्प्राप्नुतश्च तौ ॥ ७८ ॥**

किंच तयोर्द्रव्यादभिन्नत्वं भिन्नत्वं भिन्नाभिन्नत्वं वेति विकल्प्याऽऽद्यमनूद्य दूषयति । **सामान्यं चेति** । द्रव्यतन्त्रौ द्रव्यादभिन्नाविति यावत् । तौ हि तद्भावहीनद्रव्यमात्रत्वात्तदेवासामान्यविशेषौ स्यातां ततश्च स्वरूपाभावाद्द्रव्यादभिन्नतैवेत्यर्थः ॥ ७८ ॥

**गुणतन्त्रं यदा द्रव्यं प्रसिद्धेर्बाधनं तदा ॥**
**एकस्यानेकतापत्तिर्द्रव्यस्यापि प्रसज्यते ॥ ७९ ॥**

किंच सामान्यविशेषयोर्द्रव्यस्य चाभेदे तस्य तयोरन्तर्भावो वैपरीत्यं वेति विकल्प्याऽऽद्यं दूषयति । **गुणेति** । परतन्त्रतया सामान्यविशेषयोर्गुणशब्दस्तत्तन्त्रं तदभि-

न्नमिति यावत्। स्वतन्त्रस्य परतन्त्रान्तर्भावे प्रसिद्धिविरोधवद्दोषान्तरमाह। **एकस्येति।** द्रव्यस्य ताभ्यामभेदे तद्वदनेकता न च सा युक्ता विरोधादित्यर्थः ॥ ७९ ॥

**द्रव्येणैवाभिसंबन्धाद्गुणानां न परस्परम् ॥**
**अन्योन्यानभिसंबन्धान्न विशेषस्तथेतरत् ॥ ८० ॥**

द्रव्ये तयोरन्तर्भावं निरस्यति। **द्रव्येणेति** । तयोस्तेनैवाभेदात्तन्मात्रत्वान्नान्योन्यं भेदाभेदौ चेत्ततस्तयोर्मिथस्तद्भावेनासंबन्धात्तत्त्वच्युतिरित्यर्थः ॥ ८० ॥

**सामान्येतरतो भिन्नं द्रव्यं चेद्भवतो मतम् ॥**
**तन्निषेधेन तत्सिद्धेः कथं स्यात्तदभिन्नता ॥ ८१ ॥**

कल्पान्तरमनुवदति। **सामान्येति।** द्रव्यं सामान्यादेस्तच्च द्रव्याद्भिन्नमिति ते मतं चेदिति योजना। तदा तत्परिहारेणैव द्रव्यस्य द्रव्यपरिहारेणैव सामान्यादेः सिद्धेस्ताभ्यां तस्य नाभिन्नता तयोश्च तस्मादभिन्नत्वायोगान्निःसामान्यविशेषं तत्स्यादित्याह। **तन्निषेधेनेति** ॥ ८१ ॥

**अथाभिन्नं मतं ताभ्यां द्रव्यस्यापह्नवस्ततः[1] ॥**
**न विशेषो न सामान्यमन्योन्यासंगतेर्भवेत् ॥ ८२ ॥**

तृतीयेऽप्यभेदांशमनूद्य दूषयति। **अथेति।** द्रव्यं सामान्यविशेषाभ्यामभिन्नं सामान्यविशेषौ च द्रव्यादभिन्नावित्यथ मतमित्यनुवादार्थः। न तावेकत्रैव भेदाभेदौ विरोधाद्द्रव्यस्य च ताभ्यामभेदे तयोस्तदधीनत्वात्तदभावेऽभावादाश्रयाश्रयिभावेनासंबन्धादभावस्तयोश्च द्रव्यादभेदे तदतिरिक्तयोरभावाद्द्रव्यं निःसामान्यविशेषमेपितव्यं स्यादित्यर्थः ॥ ८२ ॥

**भिन्नाभेदादभिन्नस्य भेदः स्यात्पिण्डवद्ध्रुवम् ॥**
**पिण्डश्च सर्वगस्तद्वद्गोत्वाभेदात्प्रसज्यते ॥ ८३ ॥**

तयोर्द्रव्यस्य च भेदादि दूषयित्वा सामान्यस्य विशेषाभेदे विशेषत्वं प्रागुक्तं दोषमाह। **भिन्नेति।** विशेषस्य सामान्याभेदे दोषमाह। **पिण्डश्चेति** ॥ ८३ ॥

**अन्योन्याव्यतिरेकित्वादैकात्म्यं प्राप्नुयात्तयोः ॥**
**ततः प्रत्यक्षबाधः स्यात्तद्भेदो हि तदाश्रयः ॥ ८४ ॥**

परस्पराभेदे दोषमाह । **अन्योन्येति** । तयोरैक्यमिष्टमिति चेत्तत्राऽऽह। **तत इति।** तत्र हेतुमाह। **तद्भेदो हीति।** आश्रयो विषयः ॥ ८४ ॥

**व्यस्ताभेदात्समस्तोऽर्थो व्यस्तवन्न मनागपि ॥**
**समस्ताकारवज्ज्ञानं कुर्यात्प्रत्यक्षबाधतः ॥ ८५ ॥**

---

[1] ख. °ह्नवात्ततः।

सामान्यस्य विशेषाभेदे दोषान्तरमाह । **व्यस्तेति** । विमतं नानुवृत्तधीकारणं व्यावृत्ताभिन्नत्वात्तद्वत्तथाच सामान्यानुवृत्तधीहेतुत्वानुभवविरोधः स्यादित्यर्थः ॥ ८५ ॥

**व्यस्ताभेदेऽपि चेत्कुर्यात्समस्तधिषणां बलात् ॥**
**व्यस्तात्मनाऽसमस्तोऽपि कुर्यात्सुषिधियं गिरिः ॥ ८६ ॥**

विपक्षे दोषमाह । **व्यस्ताभेदेऽपीति** । बलाद्वस्तुवृत्तमननुसृत्येत्यर्थः । व्यस्तस्य समस्तधीहेतुत्वे तस्यापि व्यस्तधीहेतुत्वं स्यादविशेषादित्यर्थः । असमस्तोऽपीति च्छेदः ॥ ८६ ॥

**असाधारणरूपेण भेदो जगति निश्चितः ॥**
**साधारण्यं तयोर्मानात्समस्तव्यस्तयोः कुतः ॥ ८७ ॥**

किंच सामान्यं सर्वानुगतं व्यक्तिस्तु नैवं तत्स्वरूपवैलक्षण्यान्न तयोरैक्यं प्रामाणिकमित्याह । **असाधारणेति** ॥ ८७ ॥

**सर्वाभेदाच्च सर्वस्य रज्ज्वां सर्पादिबुद्धयः ॥**
**रज्जुबुद्धिवदेव स्युस्तद्धीश्चाप्यहिबुद्धिवत् ॥ ८८ ॥**

किंच सर्वत्र वा भिन्नाभिन्नत्वं सामान्यादावेव वा नाऽऽद्यो भ्रान्त्यभ्रान्तिव्यवस्थासिद्धेरित्याह । **सर्वेति** । सर्वसंकरवादे सर्वस्य सर्वाभेदादहिबुद्धिरपि रज्जुबुद्धिवदभ्रान्ती रज्जुबुद्धिश्चाहिबुद्धिवद्भ्रान्तिरिति भ्रान्त्यभ्रान्तिविपर्ययो रज्जुसर्पयोरभेदादित्यर्थः ॥८८॥

**निषेधविधिहेतूनां सर्वेषां सर्ववस्तुषु ॥**
**समाप्तेरधिकाराणामप्रवृत्तिः प्रसज्यते ॥ ८९ ॥**

तत्रैवातिप्रसङ्गान्तरमाह । **निषेधेति** । समाप्तेः सम्यगाप्तेरिति यावत् । अधिकाराणां प्रवृत्त्यादिहेतुमतामधिकारिणामित्यर्थः । अप्रवृत्तिरनिवृत्तिश्चेति द्रष्टव्यम् । **उक्तं हि**—अप्रवृत्तिनिवृत्तीदं प्राप्तं सर्वत्र हि जगदिति । सर्वेषां ब्रह्मक्षत्रादीनामधिकृतानां सर्वेषु बृहस्पतिसवराजसूयादिषु विध्यादिशब्दितप्रवृत्त्यादिहेतूनामधिकारपदवेदनीयाभिमानविशेषाणां सर्वसांकर्येण प्रवृत्तेरविशेषादप्रवृत्तिनिवृत्तिं जगदापद्येतेत्यर्थः ॥ ८९ ॥

**अभावमानक्लृप्त्यर्थो यश्चाऽऽयासः कृतो महान् ॥**
**निष्फलः सोऽभिसंवृत्तो भिन्नाभिन्नाव्यवस्थितौ ॥ ९० ॥**

किंच निरङ्कुशं भेदाभेदं वदतः सिद्धान्तविरोधः स्यादित्याह । **अभावेति** । सर्वस्य भिन्नाभिन्नस्य प्रत्यक्षादिना सिद्धत्वे भेदाभावस्याभिन्नशब्दार्थस्य योग्यानुपलब्धिं विना मानान्तरात्सिद्धेरभावमानस्य योग्यानुपलब्धेरुपन्यासो व्यर्थः स्यान्मेयाभावाच्च यस्याभावो जिवृक्षितस्तस्य धर्मभेदेन सत्त्वाद्भेदस्यापि भावादसत्त्वपक्षे योग्यानुपलब्धेरकिंचित्करत्वात्तथा च—

---

१ क. °स्तता कु° । २ क. ख. °भिन्नव्य° । ३ ख. धर्म्यभे° ।

"प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता" ।

इत्यारभ्याभावस्य चातुर्विध्यमापाद्य ।

"गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम् ।
मानसं नास्तिताज्ञानं जायतेऽन्यानपेक्षया" ॥

इत्यादिना तन्मानमुपपाद्य ।

"अभावो वा प्रमाणेन स्वान्यरूपेण मीयते ।
प्रमेयत्वाद्यथा भावात्तस्मात्पृथगिति स्थितिः" ।

इति कथा वृथा स्यादित्यर्थः ॥ ९० ॥

**स्वविशेषानुरोधित्वं सामान्यानां मतं यदि ॥**
**समस्तव्यस्ततापक्षस्तदा कुप्यति कल्पितः ॥ ९१ ॥**

द्वितीयमनुभाष्य दूषयति । **स्वविशेषेति** । सामान्यविशेषग्रहणमंशांशिगुणगुणिकार्यकारणादेरुपलक्षणम् । क्वचिद्भिन्नाभिन्नतात्यागे सर्वत्र तत्त्यागोऽर्धजरतीयस्याप्रामाणिकत्वादिति भावः ॥ ९१ ॥

**न चापि सर्वसामान्यविशेषार्थावबुद्धये ॥**
**कश्चिदप्यधिकार्यस्ति कृत्स्नेऽपि जगतीदृशः ॥ ९२ ॥**

किंच तयोर्भिन्नाभिन्नत्वं ज्ञानार्थं ध्यानार्थं वा नाऽऽद्यस्तज्ज्ञानस्याफलत्वान्न द्वितीयस्तत्रापि फलाभावस्य तुल्यत्वादित्यभिप्रेत्योभयत्र साधारणं दूषणमाह । **न चेति** । ईदृशः सर्वज्ञ इति यावत् । सर्वसामान्यादिबुद्धेरर्वाग्दृशामशक्यत्वान्न तद्भिन्नाभिन्नत्वमस्मदादिज्ञानध्यानोपयोगीति भावः ॥ ९२ ॥

**न वेदार्थो न चापीदृक्तर्केणाप्युपपद्यते ॥**
**भिन्नाभिन्नेक्षणं सर्वं यथोक्तन्यायवर्त्मना ॥ ९३ ॥**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके प्रथमाध्यायस्य षष्ठं ब्राह्मणम् ॥ ६ ॥**

***चत्वार्येव सहस्राणि श्लोकानां द्वे शते तथा ।**
**श्लोकाः पञ्चदशान्ये च तृतीयस्यैष संग्रहः ॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीसुरेश्वराचार्यविरचिते बृहदारण्यकोपनिषद्भाष्यवार्तिके प्रथमोऽध्यायः ॥ १ ॥**

**उपनिषत्क्रमेण तृतीयोऽध्यायः ॥ ३ ॥**

---

* एतच्छ्लोकनिबद्धसंख्यातो न्यूनाः श्लोका विद्यन्ते तत्कुत इति न निश्चीयते ।

भिन्नाभिन्नपक्षदूषणमुपसंहरति । **नेत्यादिना** । अनुमानैकसिद्धत्वादित्यादिनोक्तं स्मारयति । **यथोक्तेति** । सर्वं जगद्ब्रह्म च भिन्नाभिन्नमिति ज्ञेयमित्येतन्न प्रामाणिकं नापि यौक्तिकमुक्तन्यायादित्यर्थः । तदेवं तदेतत्त्रयमित्यादौ परकीयव्याख्यायोगात्त्र्यात्मकस्य जगतो देहद्वयात्मनोपसंहारात्तदभिमानिनो विवेकवशात्ततो विरक्तस्य मुमुक्षोस्तद्धेतुज्ञानोपाये संन्यासपूर्वके श्रवणादावधिकारितेति सिद्धम् ॥ ९३ ॥

वार्तिकामृतसर्वस्वमास्वादयितुमिच्छवः ।
आनन्दगिरिसंभूतां समुपाध्वं सरस्वतीम् ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां प्रथमाध्यायस्य षष्ठं ब्राह्मणम् ॥ ६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्येण भगवदानन्दज्ञानेन कृतायां सुरेश्वरवार्तिकटीकायां शास्त्रप्रकाशिकाख्यायां प्रथमोऽध्यायः ॥ १ ॥

**श्लोकानामादितः समष्ट्यङ्काः–४०९७**

॥ श्रीः ॥

# अथ द्वितीयोऽध्यायः ।

**तद्वेदमित्यविज्ञातप्रत्यक्तत्त्वादिदं जगत् ॥**
**रज्ज्वां सर्पादिवज्जातं नामरूपक्रियात्मकम् ॥ १ ॥**

सत्यं सत्यस्य यद्ब्रह्म मूर्तामूर्तविलक्षणम् ।
चिदेकतानं तदहमपूर्वानपरात्मकम् ॥ १ ॥

**तृतीयेऽध्याये** सूत्रितविद्याविद्ययोरविद्या प्रपञ्चिता संप्रति विद्यां प्रपञ्चयितुं **चतुर्थमध्यायमारभमाणो** वृत्तं कीर्तयति । **तद्धेति ।** अज्ञातात्प्रतीचो नामाद्यात्मकं जगद्रज्जुसर्पवज्जातमित्यव्याकृतप्रक्रियायामुक्तमित्यर्थः । उदाहरणं तु विवर्तवादद्योतनार्थम् ॥ १ ॥

**अनिश्चिता यथा रज्जुरन्धकारे विकल्पिता ॥**
**सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पितः ॥ २ ॥**

तत्र पूर्वोक्तमेवाऽऽप्तवाक्यं स्मारयति । **अनिश्चितेति** ॥ २ ॥

**अनर्थहेतुरज्ञानं तदुत्थं चाखिलं जगत् ॥**
**प्रतीचोऽनर्थ इत्यस्माद्भीतोऽत्यर्थं मुमुक्षति ॥ ३ ॥**

अज्ञातात्मविवर्तत्वे विश्वस्योक्ते किं फलमित्यपेक्षायामाह । **अनर्थेति** ॥ ३ ॥

**पुरुषार्थोऽखिलानर्थप्रध्वस्तिः प्रत्यगात्मनः ॥**
**सम्यक्तत्त्वपरिज्ञानं पुरुषार्थस्य कारणम् ॥ ४ ॥**

अनर्थतद्धेतू पूर्वोक्तावनूद्य तदधिगतिफलं च दर्शयित्वा पुमर्थतद्धेतू प्रागुक्तावनुवदति । **पुरुषार्थ इति** ॥ ४ ॥

**निरस्ताशेषानर्थात्मकृत्स्नाह्लादसतत्त्वकः ॥**
**स्वतो यतोऽयं संसारी तेनाज्ञो विपरीतदृक् ॥ ५ ॥**

[१]प्रत्यग्ज्ञानस्य पुमर्थहेतुत्वे हेतुमाह । **निरस्तेति ।** अयं प्रत्यग्धातुः स्वाज्ञानप्रसूतमिथ्याधीः संसरन्वस्तुतो निरस्तसर्वानर्थस्तथैव प्राप्तपरानन्दश्च यतः श्रुतिषु निश्चितस्तेन स्वज्ञानात्स्वाज्ञानध्वस्तौ तज्जध्वस्तेर्युक्तं प्रत्यग्ज्ञानस्य पुमर्थहेतुत्वमित्यर्थः ॥ ५ ॥

---

१ क. ग. °त्मनि । स° ।

**मोहमात्रान्तरायत्वात्पुरुषार्थस्य नापरम् ॥**
**अविद्याध्वंसिनो बोधात्किंचित्साधनमिष्यते ॥ ६ ॥**

सम्यग्धीस्तद्धेतुरित्युक्त्वा हेत्वन्तरनिरासं स्मारयति । **मोहेति** । अपरं साधनं प्रसंख्यानं कर्म वेति निषेध्यविवेकः ॥ ६ ॥

**आत्मेत्येवेति विद्यायाः सूत्रमित्युदितं पुरा ॥**
**उपोद्घातस्तथा तस्य प्रागुक्तः सप्रयोजनः ॥ ७ ॥**

पुमर्थस्तद्धेतुश्च कुत्रोक्तावित्याशङ्क्याऽऽह । **आत्मेतीति** । तथा विद्यासूत्रानुसारेणेति यावत् । तस्य सूत्रितात्मज्ञानस्येत्यर्थः । आक्षेपपूर्वकं प्रयोजनं तदाहुरित्यादावुक्तमित्याह । **प्रागिति** ॥ ७ ॥

**प्रतीचि साक्षाद्विज्ञाते ज्ञेयं सर्वं समाप्यते ॥**
**निःशेषतस्तमोध्वस्तेः पुमर्थश्च समाप्यते ॥ ८ ॥**

किं तत्प्रयोजनं तदाह । **प्रतीचीति** । साक्षादित्यपरोक्षत्वोक्तिः । तथाविधज्ञानस्य संशयविपर्यासानास्कन्दितत्वमुपसर्गार्थः । तदन्यार्थाभावादिति शेषः । तज्ज्ञाने यथोक्तसर्वज्ञानहेतौ सति किं स्यात्तदाह । **निःशेषेति** ॥ ८ ॥

**यत एवमतः पश्येदात्मन्यात्मानमद्वयम् ॥**
**आत्मैको ब्रह्मविद्याया विषयः श्रुतितो मतः ॥ ९ ॥**

आत्मज्ञानस्यैव परमपुरुषार्थहेतुत्वे विद्यासूत्रं प्रमाणयति । **यत इति** । मोहमात्रान्तरायत्वादित्युक्तनीत्या प्रत्यग्धियः पुमर्थहेतुत्वसिद्धेरात्मेत्येवेत्यत्र स्वमहिमस्थमात्मानमेवाऽऽत्मन्यनुसंदध्यान्मुमुक्षुरिति विवक्ष्यतेऽन्यथा सूत्रवैयर्थ्यादित्यर्थः । स्वमहिमप्रतिष्ठत्वार्थं विशिनष्टि । **अद्वयमिति** । पुमर्थतद्धेत्वनुवादं निगमयति । **आत्मेति** ॥ ९ ॥

**अथ योऽन्यामिति तथाऽविद्यां चानूद्य नश्वरीम् ॥**
**आऽध्यायावसितेः कार्यं तस्या व्याख्यातमञ्जसा ॥ १० ॥**

अनर्थतद्धेतू कुत्रोक्तावित्याशङ्क्याऽऽह । **अथेति** । तद्धेदमित्यत्र सूत्रितामविद्यामथ योऽन्यामित्यत्र न स वेदेत्यनूद्याध्यायसमाप्त्यन्तसंदर्भेण तत्कार्यं विवृतमित्यर्थः । तथा सूत्रितानूदिताविद्यानुसारेणेति यावत् । नश्वरीमिति विद्यापोद्यत्वयोग्यतोक्ता । अञ्जसेति व्याख्यानसामीचीन्यमुक्तम् ॥ १० ॥

**अध्यात्ममधिभूतं च तथा चैवाधिदैवतम् ॥**
**भूतं भवद्भविष्यं च साध्यं साधनमेव च ॥**
**जनिमत्सर्वमेवेदमविद्यायाः समुत्थितम् ॥ ११ ॥**

सप्तान्नब्राह्मणोक्तमनुवदन्नविद्याकार्यं विशिनष्टि । **अध्यात्ममिति** ॥ ११ ॥

---

१ ग. °ध्वस्तौ पु° । २ ख. °पर्ययाना° । ३ ख. °त्त्राऽऽह ।

संक्षिप्य चाप्युपन्यस्तमध्यायान्ते च तत्पुनः ॥ १२ ॥
त्रयं वा इदमित्येवं रूपं नाम च कर्म च ॥
त्रयस्यापि च संक्षेपो लिङ्गदेहात्मसंहतिः ॥ १३ ॥

उपसंहारब्राह्मणोक्तमनुभाषते । **संक्षिप्येति** । चकारावावधारणार्थाववियाकार्यवाचितत्पदादूर्ध्वं संबध्येते । उत्तरौ समुच्चयार्थौ । तदेतत्त्रयमित्यादावुक्तं संक्षेपस्यापि संक्षेपमनुकीर्तयति । **त्रयस्यापीति** । तमेवाभिनयति । **लिङ्गेति** । सूक्ष्मस्थूलदेहात्मना संहतिः कार्यकरणसंघात इति यावत् ॥ १२ ॥ १३ ॥

त्रैलोक्यात्मशरीर्येष विश्वरूपः प्रजापतिः ॥
अन्तर्णीताखिलानन्तदेवतः प्राणविग्रहः ॥ १४ ॥

तत्र कार्यस्वरूपमाह । **त्रैलोक्येति** । करणस्वरूपमाह । **अन्तरिति** । अन्तर्णीतमन्तर्भावितमखिलं जगदनन्ताश्चान्तर्णीता देवता येन स तथेति विग्रहः । तत्र हेतुः । **प्राणेति** । तत्र हि सर्वान्तर्भावो वक्ष्यते ॥ १४ ॥

अविज्ञातात्मतत्त्वः संस्तदध्यस्ताभिमानवान् ॥
पराक्प्रवृत्तेर्विरतो विद्याया विषयस्त्वयम् ॥ १५ ॥

वृत्तमनूद्यानन्तरब्राह्मणतात्पर्यमाह । **अविज्ञातेति** । तच्छब्दोऽनन्तरप्रकृतदेहद्वयपरामर्शी । यथोक्तात्माज्ञानात्प्रजापतावारोपिताहंभावस्तद्वशाद्विषयविमुखो वीतरागो विद्याधिकारी स्वयमेव श्रुत्योपस्थाप्यते तस्मै विद्यां वक्तुमजातशत्रुब्राह्मणमित्यर्थः ॥ १५ ॥

साक्षात्कृतात्मभावोऽयमेवंलक्षणवस्तुनि ॥
श्रुत्योपस्थाप्यते गार्ग्यो ब्रह्मविद्याभिधित्सया ॥ १६ ॥

उक्तं प्रपञ्चयति । **साक्षादिति** । एवंलक्षणेति त्रैलोक्यात्मशरीरीत्यादावुक्तविधे प्रजापतावित्यर्थः ॥ १६ ॥

अकृत्स्नब्रह्मवेदित्वाद्दृप्तोऽसावल्पकस्ततः ॥
न हि पूर्णपरिज्ञानः कश्चिद्दृप्यति निर्द्वयः ॥ १७ ॥

गार्ग्यो ब्रह्मवित्त्वादाचार्यः सन्कथमधिकारित्वेनोत्थाप्यते तत्राऽऽह । **अकृत्स्नेति** । अल्पको मुख्यब्रह्मज्ञानहीनत्वादाचार्यत्वेऽनधिकृत इति यावत् । तस्य मुख्यब्रह्मविद्याभावे दर्पो लिङ्गम् । अतस्तस्याऽऽचार्यत्वानुपपत्तेः शिष्यत्वमेवेत्यर्थः । मुख्यब्रह्मविदोऽपि दर्पः संप्रतितनब्रह्मविदामिव स्यादिति चेत्तत्राऽऽह । **न हीति** । न खल्वाधुनिकोऽपि ब्रह्मविद्दृप्तो युक्तो विरोधादित्यर्थः । तस्य दर्पाभावे हेतुः । **निर्द्वय इति** ॥ १७ ॥

१ क. ख. °त्येव रू° । २ ख. °षयः स्वय° ।

**समाप्ताशेषविज्ञेयपुरुषार्थस्तथा परः ॥**
**अजातशत्रुरैकात्म्याद्गार्ग्याचार्यः प्रकल्पते ॥ १८ ॥**

अजातशत्रोरपि गार्ग्यसमत्वादाचार्यान्तरेण भाव्यमित्याशङ्क्याऽऽह । **समाप्तेति ।** गार्ग्यस्यामुख्यब्रह्मविदः शिष्यत्ववदित्याह । **तथेति ।** अजातशत्रुत्वे हेतुः । **ऐका-त्म्यादिति** ॥ १८ ॥

**व्याख्यातायामविद्यायां तदुच्छित्तावथाधुना ॥**
**आत्मेत्येवेति सूत्रस्य व्याख्या प्रस्तूयते स्फुटा ॥ १९ ॥**

उक्ताविद्याकार्ये प्रजापतावात्मत्वोपास्त्या तद्देहस्य ध्वस्तरागस्य मुमुक्षोर्ब्रह्मविद्या-र्थिनस्तद्व्याख्यानार्थं ब्राह्मणमिति ब्राह्मणसंबन्धमुक्त्वाऽध्यायसंबन्धमाह । **व्याख्याता-यामिति ।** सकार्यायामविद्यायां विवृतायां सत्यां बन्धनिवृत्तावपेक्षितायां तद्धेतावाक्षि-प्यमाणे व्याख्यायते विद्यासूत्रमित्यर्थः । निषेध्योक्तेरनन्तरं निषेधकोक्तेरवसरं दर्शयति । **अथेति ।** स्फुटेत्यसंदिग्धाबाधितफलवज्ज्ञानोदयायेत्यर्थः ॥ १९ ॥

**श्रुत्या गार्ग्याद्युपन्यासशिष्याचार्यस्वरूपया ॥**
**सुखावबोधसिद्ध्यर्थमियमाख्यायिकोदिता ॥ २० ॥**

विद्यासूत्रं चेद्व्याचिख्यासितमाख्यायिका किमर्थेत्याशङ्क्याऽऽह । **श्रुत्येति ।** परम-सूक्ष्मे परवस्तुनीति शेषः ॥ २० ॥

**अन्ये त्वत्राभिसंबन्धमेवं व्याचक्षते बुधाः ॥**
**स एष इत्युपन्यस्तो विज्ञानात्मा हि यः पुरा ॥ २१ ॥**

अध्यायसंबन्धं स्वाभीष्टमुक्त्वा भर्तृप्रपञ्चाभीष्टमाह । **अन्ये त्विति ।** अत्र पूर्वोत्त-राध्याययोरिति यावत् । एवंशब्दार्थमेवाऽऽह । **स इति ।** प्रवेशवाक्ये जीवः सूत्रित इत्यर्थः । सूत्रितस्य जीवस्य लोकवेदप्रसिद्ध्यर्थो हिशब्दः ॥ २१ ॥

**गार्ग्यकाश्येतिहासेन वक्ष्यते तस्य निर्णयः ॥**
**कर्त्र्यो भोक्त्र्यश्च देहेऽस्मिन्देवता एव नापरः ॥**
**श्रुतिर्गार्ग्यात्मना सेयं पूर्वपक्षमभाषत ॥ २२ ॥**

अजातशत्रुब्राह्मणमुत्थापयति । **गार्ग्येति ।** अनिश्चयप्रसङ्गे निश्चयार्थमारम्भो युक्त-स्तत्प्रसङ्गस्तु कथमित्याशङ्क्याऽऽह । **कर्त्र्य इति ।** अपरशब्दादूर्ध्वमितिपदमध्याहृत्य पूर्वपक्षपदेन योजनीयम् । **यथाऽऽहुः**—भोक्त्र्यश्च देवताः करणाधिष्ठात्र्यश्च किमन्यद्वि-ज्ञानात्मना कार्यमस्त्येतस्मिन्दर्शने स्थितो गार्ग्यः पूर्वपक्षपरिग्रहायोत्थाप्यत **इति** ॥ २२ ॥

**आत्मनोऽस्तित्वकर्तृत्वभोक्तृत्वप्रतिपत्तये ॥ २३ ॥**

---

१ ख. तद्विच्छि° । २ शेष ।

**श्रुत्या सिद्धान्तसिद्ध्यर्थं काश्यरूपं प्रकल्पितम् ॥**
**निष्फलत्वात्स चायुक्तः प्रकृतानभिसंगतेः ॥ २४ ॥**

काश्यात्मना श्रुतिः सिद्धान्तमुक्तवतीतिभाष्याभिप्रायमाह । **आत्मन इति** । तस्यास्तित्वादिसिद्धये श्रुत्या प्रकल्पितं काश्यरूपमिति संबन्धः । तदेव संगृह्णाति । **सिद्धान्तेति** । परोक्तं संबन्धं निराकरोति । **निष्फलत्वादिति** । प्राणदेवताया भोक्तृत्वादिनिरासेनाऽऽत्मनस्तदुक्त्यर्थमुत्तरो ग्रन्थ इति यः संबन्धः सोऽयुक्त आत्मनस्तत्साधनस्याफलत्वात्तदात्मानमेवावेदित्यैक्यज्ञानान्मुक्तिरितिप्रकृतार्थासंयोगाच्च न हि जीवस्य वास्तवे कर्तृत्वादौ तत्सिद्धिरित्यर्थः ॥ २३ ॥ २४ ॥

**देवतास्तित्वपक्षेऽपि किमस्तित्वादि नेष्यते ॥**
**देहाद्भिन्नस्य विज्ञातुरिष्टं चेन्निष्फलः श्रमः ॥ २५ ॥**

निष्फलत्वादिति हेतुं साधयति । **देवतेति** । गार्ग्येष्टप्राणस्यास्तित्वादिपक्षेऽपि देहद्वयातिरिक्तस्य जीवस्य तद्द्वाराऽस्तित्वादि किमिति नेष्यते तथा चेदिष्टं तर्हि देवतायास्तन्निरासेन ज्ञातुर्वस्तुतस्तत्साधने प्रयत्नो वृथेत्यर्थः ॥ २५ ॥

**अज्ञातैकात्म्ययाथात्म्यो यदा त्विह विवक्ष्यते ॥**
**अविद्याकार्यनिष्ठः सञ्श्रुत्या गार्ग्यशरीरया ॥ २६ ॥**
**पूर्वपक्षितयाऽशेषदुःखहेतूपशान्तये ॥**
**पूर्वपक्षनिदानच्छित्काश्यः सिद्धान्तवाद्यपि ॥ २७ ॥**
**श्रुत्येहोत्थाप्यतेऽशेषवेदान्तार्थावबुद्धये ॥**
**सर्वोऽप्येष तदा यत्नः फलवान्स्यान्न चान्यथा ॥ २८ ॥**

परत्रोक्तं दोषद्वयं स्वपक्षे नास्तीत्याह । **अज्ञातेत्यादिना** । यदाऽस्यामाख्यायिकायामज्ञो गार्ग्यो विराज्यहंभावोऽशेषदुःखहेतोः स्वाज्ञानस्योपशान्त्यर्थं पूर्वपक्षितया श्रुत्या विवक्ष्यते यदा च तत्कारणमज्ञानं छेत्तुं प्रवृत्तोऽजातशत्रुरैक्यसिध्यर्थं सिद्धान्तवादी तयैवानूद्यते तदा प्राणादेरात्मत्वनिरासोऽतिरिक्तात्मोक्तिरित्यादिः सर्वोऽपि यत्नः सफलः स्यान्न चात्र मोक्षानुपपत्तिर्ज्ञानादज्ञानतज्जध्वंसे तत्सिद्धेः परत्र तु यत्नो विफलो न च प्रकृतसंगतिर्न हि कर्तृत्वादेर्वस्तुत्वे ज्ञानान्मुक्तिर्युक्ता वस्तुनस्तस्य तदनिवर्त्यत्वात्तदवस्थाने चानर्थध्वस्तिरूपाया मुक्तेरनवकाशत्वात्कल्पितत्वे च कर्तृत्वादेर्मतभेदासिद्धिरित्यर्थः ॥ २६ ॥ २७ ॥ २८ ॥

**श्रद्धाचारादिविध्यर्था[1] यदि वाऽऽख्यायिका त्वियम् ॥**
**यथोक्तदर्शनाप्तार्थो नान्यदस्तीति भावितः ॥**
**अतोऽतिदृप्तोऽविज्ञातदर्पकारणघस्मरः ॥ २९ ॥**

---

१ ख. °दिसिद्ध्यर्थ य° ।

परोक्तं संबन्धं निरस्य स्वोक्तः संबन्धः साधितस्तत्र सुखावबोधायाऽऽख्यायिकेत्युक्तम्। इदानीं फलान्तरमाह। **श्रद्धेति**। गार्ग्यकाश्ययोः श्रद्धालुताद्दष्टेर्विद्यायां श्रद्धापरं साधनमुत्तमस्याधमादनुज्ञामात्रेण तत्प्राप्तिर्नोपसत्त्येत्याचारः। शुष्कतर्कवशान्न सा लभ्येत्यादिशब्दार्थः। यदि वेति फलविकल्पार्थः। एवं संबन्धमुक्त्वा दृप्तेत्यादेरर्थमाह। **यथोक्तेति**। ऽयन्नात्मदृष्ट्याऽऽप्तमतद्भावस्ततोऽन्यन्नास्ति ब्रह्मेति मन्वानोऽप्राप्तदर्पहेत्वज्ञानध्वंसितत्त्वज्ञानो यतो गार्ग्योऽतोऽत्यन्तदृप्तः स कदाचिदासीदित्यर्थः ॥२९॥

**श्रद्धालुं वित्तसंपन्नं श्रेयोर्थिनमुपेत्य तु ॥**
**ब्रह्म तेऽहं ब्रवाणीति गार्ग्यः काश्यमभाषत ॥ ३० ॥**

स हेत्याद्यवतारयति। **श्रद्धालुमिति**। विद्यासंप्रदाने पात्रस्य योग्यत्वार्थं विशेषणानि। योग्यमधिकारिणं प्रति प्रश्नमन्तरेणापि प्रतिवचनमुचितमितिवक्ष्यमाणार्थसूचनार्थस्तुशब्दः ॥ ३० ॥

**न जातो न भविष्योऽस्ति शत्रुरैकात्म्यदर्शनात् ॥**
**अजातशत्रुः काश्योऽतो गार्ग्यबुद्धिविरुद्धधीः ॥ ३१ ॥**

काश्यस्याजातशत्रुत्वं साधयति। **नेत्यादिना**। अतःशब्दस्य पञ्चम्या संबन्धः। प्रागुक्तहेतुं विशेषणोक्त्या व्यक्तीकरोति। **गार्ग्येति** ॥ ३१ ॥

**ब्रह्म यस्मात्परं नास्ति न च वस्त्वन्तरं यतः ॥**
**ब्रवाण्युपास्यं तत्तेऽहं सर्वापध्वस्तिकारणम् ॥ ३२ ॥**

**यस्मात्परं** नापरमस्ति किंचिदित्यादिश्रुतिमाश्रित्य ब्रह्मेत्यादि व्याचष्टे। **ब्रह्मेति**। तदुपास्तिफलं कथयति। **सर्वेति** ॥ ३२ ॥

**नापृष्ट इति नन्वेतद्विरुद्धमकरोदृषिः ॥**
**यद्ब्रह्म ते ब्रवाणीति ह्यपृष्टः काश्यमब्रवीत् ॥ ३३ ॥**

"नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः।
जानन्नपि हि मेधावी जडवल्लोक आचरेत्"।

इति स्मृतिविरुद्धमृषिचेष्टितमिति शङ्कते। **नेत्यादिना**। काश्यस्य गार्ग्यं प्रति प्रथमतो न प्रश्नोऽस्तीतिप्रसिद्ध्यर्थो हिशब्दः। यच्छब्दो यस्मादर्थे तदभिव्यक्त्यर्थं हीत्युक्तम् ॥ ३३ ॥

**दर्पादिदर्शनान्नूनं वेत्त्यकृत्स्नात्मदर्शनम् ॥**
**कृत्स्नत्वार्थमतोऽप्राक्षीत्काश्यं प्रज्ञासमन्वितम् ॥ ३४ ॥**

ब्रवाणीत्येतत्पृच्छानीत्यर्थे धातूनामनेकार्थत्वात्तन्न स्मृतिविरोध इत्येकदेश्याह। **दर्पादीति**। अर्थित्वादिग्रहार्थमादिपदम्। अकृत्स्नात्मदर्शनं स्वात्मानं गार्ग्यो वेत्तीति शेषः।

कृत्स्नत्वार्थं पूर्णवस्तुविज्ञानार्थमित्यर्थः । तं प्रति सम्यग्ज्ञानार्थं प्रश्नस्य प्रवृत्तिरुचितेति सूचयितुं प्रज्ञेत्यादिविशेषणम् ॥ ३४ ॥

**श्रद्धालुरधिकारी यो जिज्ञासुर्विनयान्वितः ॥**
**अपृष्टेनापि वक्तव्या तस्मै विद्या विपश्चिता ॥ ३५ ॥**

अत्र श्रुतेरनाञ्जस्याद्यथाश्रुतमादाय स्वपक्षमाह । **श्रद्धालुरिति** । अधिकारित्वसिद्ध्यर्थानि विशेषणानि । विपाश्चिनेति वक्तुस्तदधिगतियोग्यतोक्ता ।

"अधर्मेण तु यः प्राह यश्चाधर्मेण पृच्छति ।
तयोरन्यतरः प्रैति विद्वेषं वा निगच्छति ॥
विद्या ब्राह्मणमित्याह शेवधिस्तेऽस्मि रक्ष माम् ।
असूयकाय मा मा दास्तथा स्यां वीर्यवत्तमा ॥

इत्यादिशेषादुक्तस्मृतेरनधिकारिणे विद्या न वाच्येत्येवंपरत्वान्न तद्विरुद्धमृषिचेष्टितमिति भावः ॥ ३५ ॥

**धर्मार्थौ यत्र न स्यातां शुश्रूषा वाऽपि तद्विधा ॥**
**तत्र विद्या न वक्तव्या शुभं बीजमिवोषरे ॥ ३६ ॥**

अनधिकारिणि प्रष्टर्यपि विद्या न देये त्यत्र **स्मृतिमुदाहरति** । **धर्मेति** । सप्तम्यद्वयं शिष्यविषयम् । तद्विधा विद्या देशकालसामर्थ्यानुरोधिनीति यावत् । तत्र विद्या दत्ताऽपि न फलवतीति दर्शयितुमुदाहरणम् ॥ ३६ ॥

**धर्मार्थौ यत्र च स्यातां शुश्रूषा वाऽपि तद्विधा ॥**
**वक्तव्या तत्र विद्येति निषेधादेव लिङ्ग्यते ॥ ३७ ॥**

अधिकारिण्यपृष्टेनापि सोपदेष्टव्येत्यत्र मानमाह । **धर्मार्थाविति** । ननु निषेधवचनं विना नैवंविधमस्ति स्मृतिवचनं तत्राऽऽह । **इति निषेधादिति** । अयोग्ये पात्रे विद्यादाननिषेधाद्योग्ये प्रश्नं विनाऽपि सा देयेति गम्यत इत्यर्थः ॥ ३७ ॥

**नष्टाश्वदग्धरथवन्न्यायं चाऽऽश्रित्य भूमिपम् ॥**
**प्राह मानुषवित्ताढ्यं दैववित्तसमन्वितम् ॥ ३८ ॥**

अधिकारिणे विद्यां वक्तुं गार्ग्यश्चेदुपचक्रमे तर्हि योग्यं ब्राह्मणं हित्वा किमिति राजानमुपेत्य ब्रवीति तत्राऽऽह । **नष्टेति** । **यथाऽऽहुः**—युक्तः संयोगोऽधिकारार्थेन हेतुना नष्टाश्वदग्धरथवदिति ॥ ३८ ॥

**वित्तद्वयेन संपन्नो यतोऽधिक्रियते नरः ॥**
**सर्वकर्मस्वतोऽवादीद्बालाकिः काश्यमन्तिकात् ॥ ३९ ॥**

१ ख. ग. °न्वितः ॥ ३८ ॥ २ ख. °मण्यतो° ।

उक्तनीत्या गार्ग्यकाश्यसंबन्धस्य फलं प्रकटयति । **वित्तेति** । **यथाऽऽहुः**—उभय वित्तवतोऽस्य ह्यधिकारस्तस्मादधिकारार्थेन हेतुना युक्तमुपेत्य वचनमिति ॥ ३९ ॥

**ब्रह्म तुभ्यं ब्रवाणीतिवाङ्मात्रव्यापृतावहम् ॥**
**गोसहस्रं ददाम्यद्य विनाऽप्यैकात्म्यनिर्णयात् ॥ ४० ॥**

सहस्रमित्यादेरर्थमाह । **ब्रह्मेति** ॥ ४० ॥

**गोसहस्रप्रदानस्य निमित्तं श्रुतिरभ्यधात् ॥**
**जनको जनक इति नामाभ्यासोक्तितः स्फुटम् ॥ ४१ ॥**

जनक इत्याद्यवतारयति । **गोसहस्रेति** ॥ ४१ ॥

**शुश्रूषुं जनकं सर्वे जना दित्सन्तमेव[1] च ॥**
**विवक्षवोऽभिधावन्ति[2] तमुद्दिश्य जिघृक्षवः ॥ ४२ ॥**

तद्व्याचष्टे । **शुश्रूषुमिति** ॥ ४२ ॥

**मौग्ध्यीं प्रसिद्धिमुल्लङ्घ्य गार्ग्योऽयं मामुपागतः ॥**
**नूनं दित्सुं च शुश्रूषुं संभावयाति मामपि ॥ ४३ ॥**

विवक्षूणां जिघृक्षूणां च जनकं प्रत्यभिगमनेऽपि कथं ब्रह्म ब्रवाणीति गार्गीयवाङ्मात्रमेव राज्ञो गोसहस्रदाने निमित्तमुक्तमित्याशङ्क्याऽऽह । **मौग्ध्यीमिति** । उपागन्तुराशयमनुवदति । **नूनमिति** । तथाच तदीयं वाङ्मात्रमेव निमित्तीकृत्य गोसहस्रप्रदानमुचितमिति भावः ॥ ४३ ॥

**आदित्यचक्षुर्बुद्धिस्थश्चेतनः[3] सर्वगो ध्रुवः[4] ॥**
**एतमेव सदोपासे ब्रह्मेति रविमध्यगम् ॥ ४४ ॥**

श्रोतुकामं राजानं प्रति ब्राह्मणो ब्रह्म कीदृगुक्तवानित्याशङ्क्य य एवासावित्यादेरर्थमाह । **आदित्येति** । तत्प्राधान्यार्थं रविमध्यगमित्युक्तम् । त्वमपि यथोक्तं ब्रह्मोपास्स्वेति शेषः ॥ ४४ ॥

**तथा ब्रुवाणं तं गार्ग्यं काश्यो मा मेत्यथोचिवान् ॥**
**केवलो मतिसंवादो भवदुक्तेर्ममाभवत्[5] ॥ ४५ ॥**
**न त्वपूर्वार्थविज्ञानं प्रतिज्ञातं यथा त्वया ॥**
**मा वोचोऽतो यतो वेद्मि विनाऽपि वचनात्तव ॥ ४६ ॥**

मा मैतस्मिन्नित्याद्यादत्ते । **तथेति** । गार्ग्योक्तेरज्ञातार्थज्ञापकत्वाभावज्ञापनार्थमथेत्युक्तम् । तदेव स्फुटयन्निषेधवादिनो राज्ञोऽभिप्रायमाह । **केवल इति** । संवादं कर्तुमेवोपक्रान्तमित्याशङ्क्याऽऽह । **प्रतिज्ञातमिति** । अपूर्वार्थविज्ञानं हि प्रतिज्ञातं न च तथा

१ ख. दित्सुं तमे° । २ क. °वो हि धा° । ३ ख. °स्थचेत° । ४ क. ध्रुवम् । ५ ख. °दुक्तिर्म° ।

तदुत्पादितं तथाच प्रतिज्ञाहानिस्तवेत्यर्थः । राजाशयमुक्त्वा निषेधं व्याचष्टे । **मा वोच इति** ॥ ४९ ॥ ४६ ॥

**निषेधाभ्यासो मा मेति ज्ञातब्रह्मप्रवादिनः ॥**
**आबाधितधियाऽभ्यस्तो गार्ग्यस्यानुक्तिकारणात् ॥ ४७ ॥**

द्विर्वचनमनूद्य तत्फलमाह । **निषेधेति** । गार्ग्यो हि विना स्वोपदेशं राज्ञा ज्ञातस्य ब्रह्मणः प्रकर्षेण वदनशीलस्तस्येषद्बाधितत्वबुद्ध्या निषेधो राज्ञाऽभ्यस्तस्तेन मुख्यस्य ब्रह्मणोऽनुक्तेरित्यर्थः ॥ ४७ ॥

**सुप्रसिद्धं यदस्माकं त्वच्छासनमृतेऽपि तत् ॥**
**नापेक्षते भवद्वाक्यं सिद्ध्यर्थं प्राक्प्रसिद्धितः ॥ ४८ ॥**

कथं तदुक्तिं विना राज्ञा ज्ञातं ब्रह्म तत्राऽऽह । **सुप्रसिद्धमिति** ॥ ४८ ॥

**तदुपासां न वेद्मीति मा च शङ्कां कृथा यतः ॥**
**उपासनं च वेद्म्यस्य गुणं तत्फलमेव च ॥ ४९ ॥**

अतिष्ठाः सर्वेषामित्याद्यवतारयति । **तदुपासामिति** । तद्गुणं तत्फलं चेति शेषः ॥ ४९ ॥

**अतीत्य सर्वभूतानि प्राधान्येन स्थितो यतः ॥ ५० ॥**
**अतिष्ठा इति नामास्य तेनाऽऽदित्यात्मनोऽभवत्[1] ॥**
**चक्षुरुद्दीप्तिमत्त्वाच्च[2] राजेत्येषोऽभिधीयते ॥ ५१ ॥**

गुणद्वयं विभजते । **अतीत्येति** ॥ ५० ॥ ५१ ॥

**स य एतं[3] यथोद्दिष्टमुपास्तेऽहर्निशं नरः ॥**
**यथोपासनमेवास्य फलं भवति नान्यथा ॥ ५२ ॥**

स य एतमित्यादि व्याचष्टे । **स य इति** । नान्यथेत्युपास्त्यनुसारिफलमिति शास्त्रस्थितेरित्यर्थः ॥ ५२ ॥

**मतिसंवाददोषेण काश्येनोत्सारिते[4] रवौ ॥**
**गार्ग्यो ब्रह्मान्तरं राज्ञे प्रवक्तुमुपचक्रमे ॥ ५३ ॥**

पर्यायान्तरमादत्ते । **मतीति** ॥ ५३ ॥

**चन्द्रे मनसि बुद्धौ च ब्रह्मोपासेऽहमद्वयम् ॥**
**भानुमण्डलतो यस्माद्द्विगुणं चन्द्रमण्डलम् ॥**
**बृहन्निति ततश्चन्द्रः प्रमाणेनाभिधीयते ॥ ५४ ॥**

तद्व्याचष्टे । **चन्द्र इति** । त्वं च तथोपास्स्वेति पूर्ववत् । बृहन्नित्यस्यार्थमाह । **भान्विति** । प्रमाणेन परिमाणेनेति यावत् । तथाच **पौराणिकाः**—

---

१ क. ख. °नो भवत् । २ ग. क्षुर्मुद्दी° । ३ ख. ग. एव । ४ क. ग. °रितो रवेः । गा° ।

"नवयोजनसाहस्रो विष्कम्भः सवितुः स्मृतः ।
द्विगुणस्तस्य विस्तारो मण्डलस्य प्रमाणतः ॥
द्विगुणः सूर्यविस्ताराद्विस्तारः शशिनः स्मृतः" । इति ॥ ५४ ॥

**अम्भोऽतिपाण्डरं वासो यस्माच्चन्द्राभिमानिनः ॥**
**तस्मात्पाण्डरवासाः स्यात्सोमः सौम्यत्वकारणात् ॥ ५५ ॥**
**ज्योत्स्नया राजतेऽत्यर्थं सोमो ब्राह्मणराजतः ॥**
**सोमो राजेत्यतो वक्ति तदुपासाविधित्सया ॥ ५६ ॥**

पाण्डरेत्यादिपदानि व्याचष्टे । **अम्भ इत्यादिना** । सोमो ब्राह्मणानां राजेतिश्रुतिमाश्रित्य ब्राह्मणराजत इत्युक्तम् । गुणचतुष्टयोक्तिफलमाह । **तदुपासेति** ॥ ५५ ॥ ॥ ५६ ॥

**तुल्याभिधानधर्मत्वाल्लता सोमोऽपि गृह्यते ॥**
**उभयोर्देवतैकत्वादुपास्यं तेन तद्द्वयम् ॥ ५७ ॥**

सोमशब्दस्यार्थान्तरमाह । **तुल्येति** । न केवलं चन्द्रमाः सोमः किंतु लताऽपि सोम इत्यभिधानस्य वृद्धिह्रासाख्यधर्मस्य चोभयत्र समत्वाच्चन्द्रदेवतायाश्च द्वयोरैक्यादित्यर्थः । लताग्रहोपयोगमाह । **उपास्यमिति** । प्राणात्मनैकीकृत्येति शेषः ॥ ५७ ॥

**एषैका देवता विभ्वी प्रत्यकार्थावसायिनी ॥**
**भोक्त्री कर्त्री च सर्वत्र तस्या भोज्यमतोऽपरम् ॥ ५८ ॥**

उक्तां देवतां विशिनष्टि । **एषेति** ॥ ५८ ॥

**ब्रह्मैषा सर्वसंव्याप्तेरात्मेत्येनामुपास्महे ॥**
**व्याख्या तुल्यैव विज्ञेया सर्ववाक्येषु पूर्ववत् ॥ ५९ ॥**

अन्नदृष्ट्या भोज्यमित्ययुक्तं ब्रह्मणोऽनर्थात्वादित्याशङ्क्याऽऽह । **ब्रह्मेति** । तथाऽप्यात्मनो भोक्तृत्वादि न प्राणस्येत्याशङ्क्याऽऽह । **आत्मेति** । अनन्त्वदुक्तेर्नोऽस्माकमधिका धीरिति राज्ञोऽभिप्रायः । यथोक्तन्यायं विद्युत्पर्यायादिष्वतिदिशति । **व्याख्येति** । आदित्यचन्द्रवाक्ययोर्व्याख्या तुल्योक्ता तथोत्तरेष्वित्यर्थः ॥ ५९ ॥

**गुणो यत्र हि यः पुंसो नाम्ना संभाव्यतेऽत्र तु ॥**
**फलं तदेव तस्य स्यात्सर्ववाक्येषु निर्णयः ॥ ६० ॥**

प्रतिपर्यायं गुणफलयोरपि तुल्यत्वमाशङ्क्याऽऽह । **गुण इति** । अत्रोक्तवक्ष्यमाणपर्यायेषु यस्मिन्पर्याये ध्येयस्य पुंसो यो गुणोऽतिष्ठा राजा तेजस्वीत्यादिशब्दार्पितस्तत्र तदुपासकस्य तदेव गुणोपास्त्यनुरूपमतिष्ठाः सर्वभूतानामित्यादिफलं स्यादेवं सर्ववाक्येषु

१ क. ग. सोम ।

गुणभेदः फलभेदश्चेत्यर्थः । गुणादिभेदस्य वाचनिकत्वात्तद्भेदाशङ्का नेति हिशब्दार्थः ॥ ६० ॥

भानुचन्द्रमसोस्तेजो जलदैरभिभूयते ॥
विद्युत्तत्राप्यतितरां तेजस्वी तेन विद्युति ॥ ६१ ॥

प्रतिपर्यायं तद्भेदेऽपि विद्युति निर्देशादादित्यचन्द्राग्निषु च संभवात्तेजस्विगुणश्चतुर्ष्वपि सम इत्याशङ्क्याऽऽह । भान्विति । अग्नेरपि कदाचिदुद्भूतमभिभूतं च तेजो लक्ष्यते तत्रापि जलदेषु सत्स्वपीति यावत् । अतितरां तेजस्विनीति शेषः । तेजस्वी ध्येयः पुरुषः ॥ ६१ ॥

खण्डशो न यथा मूर्तं खं पूर्णं चाप्रवर्तनात् ॥
अप्रवर्त्यक्रियावत्स्युर्व्योम्नि सर्वाः प्रवृत्तयः ॥ ६२ ॥

पूर्णमप्रवर्तीत्याकाशब्रह्मणो गुणद्वयमुक्तं तद्व्याचष्टे । खण्डश इति । यथा घटादि खण्डशो विभक्तं न तथाऽऽकाशमतस्तत्पूर्णमप्रवर्ति चाप्रवर्तकत्वादित्यर्थः । अप्रवर्तिशब्दस्यार्थान्तरमाह । अक्रियावदिति । व्योम्नि हि सर्वाः प्रवृत्तयः सन्ति न स्वयं क्रिया तद्वद्वा तस्मादप्रवर्तीत्यर्थः ॥ ६२ ॥

जिष्णुः स्याज्जयशीलत्वाज्जीयते न परैर्यतः ॥
अपराजिष्णुरित्येवं तस्मादेवाभिधीयते ॥ ६३ ॥
अन्यतो मातृतो जाता अन्यतस्त्या उदाहृताः ॥
[1]अप्यन्यतस्त्यजायी स्यात्सापत्नभ्रातृमर्दनः ॥ ६४ ॥

वायुब्रह्मोपासकस्य जिष्णुरित्यादिफलत्रयमुक्तं तद्व्याचष्टे । जिष्णुरित्यादिना ॥ ६३ ॥ ६४ ॥

जिष्णुरिन्द्रगुणोपास्तेर्वैकुण्ठगुणतः परः ॥
सेनाऽपराजितेत्यस्मोत्सपत्नानां पराजयः ॥ ६५ ॥

कथमेकोपास्तिर्बहुफलेत्याशङ्क्योपास्यगुणभेदादित्याह । जिष्णुरिति ॥ ६५ ॥

अभ्याहितमपि जगत्सहतेऽग्निर्यतस्ततः ॥
भस्मसात्करणादुक्तो विपासहिरितीश्वरैः ॥ ६६ ॥

अग्निपुरुषस्य विपासहिरिति विशेषणं तस्यार्थमाह । अभ्याहितमिति । अपिरभिव्याप्तौ । यद्धविः स्वस्मिन्विष्यते क्षिप्यते तत्सोढुं शीलमस्तीति व्युत्पत्तिः । ईश्वरैर्वेदार्थनिर्धारणसमर्थैरित्यर्थः ॥ ६६ ॥

अप्सु रेतसि बुद्धौ च पुरुषं ब्रह्म चेतनम् ॥
उपास एतमित्युक्तः काश्यः प्रत्याह पूर्ववत् ॥ ६७ ॥

य एवाप्स्वित्यादेरर्थमाह । अप्स्विति ॥ ६७ ॥

---

१ ख. अथान्य° । २ क. ख. °स्मात्साप° ।

**प्रतिबिम्बोदयः कार्यं प्रतिरूपं यतस्ततः ॥**
**प्रतिरूप उपास्योऽप्सु फलमप्यस्य तादृशम् ॥ ६८ ॥**

प्रतिरूपादिवाक्यस्थप्रतिरूपशब्दार्थमाह । **प्रतिबिम्बेति ।** कार्यमपामिति शेषः । यस्मात्प्रतिबिम्बमपां गुणस्तस्मादब्वादौ तद्गुणः पुरुषो ध्येय इत्याह । **यत इति ।** फलवाक्यार्थमाह । **फलमिति** ॥ ६८ ॥

**अन्वर्थे प्रतिशब्दोऽयं फलस्य पुरुषार्थतः ॥**
**प्रातिलोम्येन तु ज्ञेयो ह्यनर्थः स्यात्तथा सति ॥ ६९ ॥**

प्रतिरूपगुणोपासकं प्रति प्रतिरूपं फलमुपगच्छति चेत्तर्हि प्रतिशब्दादनर्थप्राप्तिः फलमिति प्रतीतेस्त्याज्योपासनेत्याशङ्क्याऽऽह । **अन्वर्थ इति ।** प्रतिशब्दस्य निपातत्वेनानेकार्थत्वसंभवात्प्रकृतोपास्त्यनुसारेणान्वर्थत्वमुचितमिति वक्तुं हीत्युक्तम् । तथा सति प्रातिकूल्यार्थत्वाभ्युपगमे सतीति यावत् ॥ ६९ ॥

**श्रुतिस्मृतिसदाचारान्प्रति यः सततोद्यतः ॥**
**प्रतिश्रुत्यादिरूपत्वात्प्रतिरूपस्ततोऽस्तु सः ॥ ७० ॥**

प्रतिरूपशब्दस्यानुरूपार्थत्वमुक्त्वा तदेव प्रकटयन्नथो इत्यादेरर्थमाह । **श्रुतीति ।** अप्सु हि पुरुषः श्रुत्यादीन्प्रति सदाऽनुरूपस्ताभिरेव श्रौतस्मार्तकर्मनिर्वृत्तेरतस्तदुपासकस्यापि तदात्मकस्य श्रुत्याद्यनुरूपत्वात्ततो जायमानः पुत्रस्तदनुरूपो भवतीत्यर्थः ॥ ७० ॥

**रोचिष्णूपनिपत्कान्तमादर्शाक्षादिबुद्धिषु ॥**
**उपास इत्यभिहिते काश्यः प्रत्याह पूर्ववत् ॥ ७१ ॥**

य एवायमित्यादेरर्थमाह । **रोचिष्ण्विति ।** देदीप्यमानगोप्यकान्तिसहितं पुरुषमादर्शे चक्षुरादिषु स्वच्छभावेषु बुद्धौ चाहमुपासे त्वं चेत्थमुपास्स्वेत्युक्ते राजा पूर्ववन्निषेधतीत्यर्थः ॥ ७१ ॥

**यत्रोपास्यबहुत्वं स्यात्फलं तत्र प्रजास्वपि ॥**
**शतहृदादर्शाद्यर्था बहवस्ते प्रसिद्धितः ॥ ७२ ॥**

रोचिष्णुर्हेत्यादिना स्वगतं प्रजागतं च फलमत्र श्रूयते विद्युदात्मवाक्ययोरपि तेजस्वी हेत्यादिनोभयत्र फलमुक्तं स्वामिगामि च तन्न्याय्यमित्याशङ्क्याऽऽह । **यत्रेति ।** स्वामिनोऽन्यत्रापि वाचनिकमविरुद्धमिति भावः । क्वाचित्कमुपास्यबहुत्वमेव स्फोरयति । **शतहृदेति** ॥ ७२ ॥

**फलं यद्गुणकं यत्र तद्गुणं स्यादुपासनम् ॥**
**फलानुमानतस्तत्र न फलं ह्यनुपासितम् ॥ ७३ ॥**

उपास्यैक्येऽपि फलबाहुल्योपपत्तेः सर्वपर्यायेषूभयत्र फलं किं न स्यादित्याश-

---

१ क. ख. °पमुपा° ।

ङ्क्याऽऽह । **फलमिति ।** यस्मिन्पर्याये यद्गुणकं फलं दृष्टं तत्र तद्गुणकमुपासनं फलेन तत्साधनस्यानुमानात्तद्वैचित्र्ये सत्युपासनवैचित्र्यस्याऽऽवश्यकत्वादित्यर्थः । अनुमानमेव व्यतिरेकद्वारा स्फोरयति । **नेति ।** तं यथा यथेत्यादिशास्त्रादिति शेषः । स एव हिशब्दार्थः ॥ ७३ ॥

**गच्छन्तमनु यः शब्दो बहिर्वच्छ्रूयतेऽध्वनि ॥**
**अध्यात्मं दैहिके शब्दे बुद्धौ चेति विनिर्दिशेत् ॥ ७४ ॥**

य एवायं यन्तमित्यादि व्याचष्टे । **गच्छन्तमिति ।** अध्वनि गच्छन्तमिति संबन्धः । तस्मिन्बाह्ये शब्दे देहस्थे चाऽऽध्यात्मिके बुद्धौ च यः पुरुषस्तमेवाहमुपासे ब्रह्मबुद्ध्येति वाक्यार्थं ब्रूयादित्यर्थः ॥ ७४ ॥

**पुंसोऽभिधावतस्तूर्णं देहदेशैः समाहतः ॥**
**प्राणो वृत्तिविशेषेण बहिर्वत्कुरुते ध्वनिम् ॥ ७५ ॥**

गच्छतः पृष्ठतः शब्दोत्पत्तौ किं कारणं तदाह । **पुंस इति ।** वृत्तिविशेषेण गतिभेदेनेति यावत् । यद्वा प्राणनादिवृत्तीस्त्यक्त्वा वृत्त्यन्तरेणेत्यर्थः ॥ ७५ ॥

**वृत्तिक्षेपादसुरयमायुषश्च तदाश्रितेः ॥**
**शतायुरेव भवति म्रियते नापमृत्युना ॥ ७६ ॥**

शाब्दपुरुषस्यासुरिति विशेषणं तस्यार्थमाह । **वृत्तीति ।** गतीनामुपात्तानां प्राणनादिवृत्तीनामेव बाह्यांशेन त्यागात्प्राणात्मा सोऽसुगुणक इत्यर्थः । स य एतमित्यादि व्याकरोति । **आयुषश्चेति** ॥ ७६ ॥

**दिक्षु द्वितीयोऽनपगः सद्वितीयः सदैव सः ॥**
**दुःसंभाव्या हि पूर्वा दिङ्मुक्त्वाऽऽशां पश्चिमां जनैः ॥ ७७ ॥**

दिक्पुरुषस्य द्वितीयोऽनपग इति विशेषणद्वयं तदनूद्य व्याचष्टे । **दिक्ष्विति ।** सद्वितीयत्वं साधयति । **दुःसंभाव्येति ।** दिशां सद्वितीयत्वं लोकप्रसिद्धमिति हिशब्दः ॥ ७७ ॥

**साधुभृत्यपरीवारः सर्वदोपासको भवेत् ॥**
**पुत्रादिगणसंतानस्थैर्यमेव सदा भवेत् ॥ ७८ ॥**

स य एतमित्यादि व्याख्याति । **साध्विति ।** उपासकबुद्ध्यनुसारित्वं साधुत्वम् । उत्तरार्धे सदेत्येतस्मात्पूर्वं तस्येत्यध्याहार्यम् ॥ ७८ ॥

**छायामये तथाऽज्ञाने बुद्धौ चैकैव देवता ॥**
**मृत्युकालात्पुरा नास्य व्याधिरप्युपसर्पति ॥ ७९ ॥**

पर्यायान्तरं व्याचष्टे । **छायेति ।** बाह्ये तमसीति यावत् । छायापुरुषस्य मृत्युरिति

---

१ क. ग. °ध्यात्मंदं° । २ क. दामृतेः । ग. °दाश्रुतेः ।

गुणस्तदुपासनाद्दीर्घायुष्यं फलं रोगाद्यभावो विशेष इति मत्वा नैनमित्यादेरर्थमाह । **मृत्युकालादिति** । मृत्योस्तु न प्रसङ्गोऽस्तीत्यपेरर्थः ॥ ७९ ॥

**विराडात्मनि देहे च बुद्धावित्यादि पूर्ववत् ॥**
**आत्मन्वीति च वश्यात्मा प्रजा चापि शमान्विता ॥ ८० ॥**

अन्तिमं पर्यायं व्याकरोति । **विराडिति** । आदिपदेन गार्ग्योक्तिशेषस्य काश्योक्तेश्च ग्रहणम् । आत्मन्वीति च गुणो विराट्पुरुषस्येति शेषः । आत्मन्वीत्यादेरर्थमाह । **वश्येति** ॥ ८० ॥

**व्यस्तानां पूर्वमुद्देशः समस्तानां त्विहोदितः ॥**
**विवक्षावसितिर्गार्ग्ये तथा सत्युपपद्यते ॥ ८१ ॥**

पूर्वोत्तरपर्यायेऽवान्तरभेदं दर्शयति । **व्यस्तानामिति** । उद्देशो ध्येयत्वेनोक्तिरित्यर्थः । अन्ते पर्याये समस्तोपदेशे नियामकमाह । **विवक्षेति** । तथा सति समस्तव्यस्तोपदेशे सतीति यावत् ॥ ८१ ॥

**प्रत्याख्यातोपदेशः सन्संवादेन पुनः पुनः ॥**
**ब्रह्मान्यदन्यदवददात्मन्वीत्यन्तमादरात् ॥ ८२ ॥**

तत्समाप्तिं प्रकटयति । **प्रत्याख्यातेति** । तदनन्तरमज्ञानादेव गार्ग्यो विवक्षारहितोऽभूदिति शेषः ॥ ८२ ॥

**विशेषाणामनन्तत्वात्समस्तं ब्रह्म सोऽवदत् ॥**
**तस्मिन्नपि निषिद्धेऽथ तूष्णीं गार्ग्यो बभूव ह ॥ ८३ ॥**

कतिपयविशेषानुक्त्वा सर्वोपसंहारं विना किमित्यन्ते समस्तब्रह्मोक्तिरित्याशङ्क्याऽऽह । **विशेषाणामिति** । अनन्तत्वात्प्रत्येकं वक्तुमशक्यत्वादिति शेषः । तत्र सर्वान्तर्भावाच्चेति भावः । स ह तूष्णीमित्यादेरर्थमाह । **तस्मिन्निति** । समस्तव्यस्तातिरिक्ते वस्तुनि गार्ग्यस्य प्रतिभानहीनत्वद्योतनार्थमथेत्युक्तम् । तस्य मौनमास्थायावाक्शिरस्त्वेनावस्थानं पार्श्वस्थानां प्रत्यक्षमिति हेतिनिपातेन द्योत्यते ॥ ८३ ॥

**यत्कृत्स्नं ब्रह्म पूर्वोक्तं तदेवेदमविद्यया ॥**
**एकधाऽनेकधा मूढैः कल्प्यते रज्जुसर्पवत् ॥ ८४ ॥**

ननु राज्ञा यथोक्तं ब्रह्म निषेधता तदब्रह्मत्वमेव साध्यते ततोऽन्यत्तदस्तीति वा नाऽऽद्यो व्येव त्वा ज्ञपयिष्यामीत्यादिशेषविरोधान्नेतरोऽन्यत्वात्तस्यापि घटवदब्रह्मत्वापत्तेरत आह । **यदिति** । यद्वाऽऽत्मेत्येव सूत्रिते मुख्ये ब्रह्मणि किमित्यादित्यादिब्रह्मान्तरं गार्ग्येणोक्तमित्याशङ्क्य पूर्वपक्षश्रुत्यभिप्रायमाह । **यत्कृत्स्नमिति** । एकधाऽनेकधा समस्तत्वेन व्यस्तत्वेन चेत्यर्थः ॥ ८४ ॥

---

१ ग. समन्विता । २ ख. सर्वैः ।

अवाक्शिरस्कमालोक्य नृपो गार्ग्यमनुत्तरम् ॥
एतावदिति तं प्राह शेषाशङ्कानिवृत्तये ॥ ८५ ॥

स हेत्यादेस्तात्पर्यमाह । **अवागिति** । प्रतिज्ञाहानिरत्र सूच्यते । उत्तरावसरे तदप्रतिपत्तिमप्रतिभामाह । **अनुत्तरमिति** । अवशिष्टस्य मुख्यब्रह्मणो गार्ग्येण ज्ञातत्वाशङ्कानिवृत्त्यर्थं राजवाक्यमित्यर्थः ॥ ८५ ॥

निगृह्यमाणयोगे च प्लुतिमत्र विनिर्दिशेत् ॥
ब्रह्म ब्रवाणीत्यात्थ त्वमेतावद्ब्रह्म तच्च ते ॥ ८६ ॥

प्रतिज्ञाहान्यादिना निगृह्यमाणगार्ग्येण प्रश्नस्य संबन्धे प्लुतिरस्मिन्वाक्ये वाच्येति प्लुतेरर्थमाह । **निगृह्यमाणेति** । उक्तं हि—निगृह्यानुयोगे चेति । निगृह्यमाणत्वमेव स्फुटयति । **ब्रह्मेति** ॥ ८६ ॥

अज्ञाते जगदज्ञातं ज्ञाते ज्ञातं च यत्र तत् ॥
तदेव ब्रह्म पूर्णत्वान्न त्वदुक्तमकृत्स्नतः ॥ ८७ ॥

ननु प्रतिज्ञातं ब्रह्माऽऽदित्यादिरूपमुपदिष्टं न च तन्न ब्रह्म ब्रह्मान्तराभावात्तत्राऽऽह । **अज्ञात इति** ॥ ८७ ॥

अव्यावृत्ताननुगतस्वतःसिद्धात्मवस्तुनि ॥
मुख्यार्थो ब्रह्मशब्दः स्यान्न त्वदुक्तेऽतथात्वतः ॥ ८८ ॥

पूर्णमेव ब्रह्मेत्यत्र निमित्तमाह । **अव्यावृत्तेति** । आदित्यादौ तस्य मुख्यार्थत्वाभावे हेतुः । **अतथात्वत इति** । त्वदुक्तादित्यादेर्व्यावृत्तादिरूपत्वादित्यर्थः ॥ ८८ ॥

यस्मादेवमतो गार्ग्यमेतावद्धीतिवादिनम् ॥
नृपो नैतावतेत्याह ब्रह्मत्वासंभवं स्फुटम् ॥ ८९ ॥

एतावद्धीत्यादेरर्थमाह । **यस्मादिति** । आदित्यादेरुक्तन्यायेनाब्रह्मत्वं हेत्वर्थः॥८९॥

अज्ञातब्रह्मतत्त्वस्य दुःसंभाव्यमिदं वचः ॥
नैतावतेति ब्रह्मातः काश्यो वेत्तीति लिङ्ग्यते ॥ ९० ॥

उप त्वाऽयानीति वदतोऽभिप्रायमाह । **अज्ञातेति** ॥ ९० ॥

गार्ग्योऽनुमाय राज्ञोऽथ प्रावीण्यं ब्रह्मवेदने ॥
उपायानीत्युवाचेमं परब्रह्मावबुद्धये ॥ ९१ ॥
परं ब्रह्म विजिज्ञासुरुपेतोऽस्म्यहमादरात् ॥
अनुशाधि यथातत्त्वमित्येवंवादिनं नृपः ॥ ९२ ॥
क्षत्रियं ब्राह्मणो जात्या यदुपेयादनापदि ॥
प्रतिलोममिदं वृत्तं धर्मशास्त्रैर्निषिद्धतः ॥ ९३ ॥

---

१ ग. °ज्ञतासं° । २ ग. °थावत्त्व° ।

उपसदनोक्तिमवतारयति । **गार्ग्य इति** । अनुमाय नैतावतेत्युक्त्या कल्पयित्वेत्यर्थः । ब्रह्मविदं प्रत्युपसत्तिरब्रह्मविदो युक्तेत्यथशब्दार्थः । इमं ब्रह्मविदं राजानमिति यावत् । उपसत्तिफलमाह । **परब्रह्मेति** । उपसत्तिवाक्यं व्याचष्टे । **उपेत इति** । कुतूहलधिया नास्तिकधिया चोपसत्तिं व्यावर्तयति । **आदरादिति** । प्रतिलोममित्यादेरर्थमाह । **इत्येवमिति** । नृपः प्राहेति शेषः । कृतकं ब्राह्मणं व्यावर्तयति । **जात्येति** । **धर्मशास्त्रैरिति** । **आपत्काले** ब्राह्मणस्याब्राह्मणाद्विद्योपयोगोऽनुगमनं शुश्रूषाऽऽसमाप्तेरिति **गौतमः** ।

"अब्राह्मणादध्ययनमापत्काले विधीयते ।
अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः ॥
नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत् ।
ब्राह्मणे चाननूचाने काङ्क्षन्गतिमनुत्तमाम्" ॥

इति **मनुः** । एवमादिभिर्निषेधाद्ब्राह्मणस्य क्षत्रियं प्रत्युपगतिरयुक्तेत्यर्थः ॥ ९१ ॥ ॥ ९२ ॥ ९३ ॥

**योगक्षेमफलार्थाय गमनं न निषिध्यते ॥**
**ब्रह्म मे वक्ष्यतीत्यर्थं निषिद्धं नृपसर्पणम् ॥ ९४ ॥**

तर्हि तस्य जीवनमेव दुर्लभमित्याशङ्क्यानापदीत्यत्र सूचितमर्थमाह । **योगेति** । अप्राप्तप्रापणं योगः प्राप्तरक्षणं क्षेमस्तदर्थं पार्थिवं प्रति ब्राह्मणस्योपसर्पणमविरुद्धम् ।

"वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च ।
उपेयादीश्वरं चैव योगक्षेमार्थसिद्धये" ॥

इति **स्मृतेरित्यर्थः** । तर्हि निषेधवाक्यानां का गतिस्तत्राऽऽह । **ब्रह्मेति** ॥ ९४ ॥

**अतोऽनुपेतमेव त्वां करविन्यस्तबिल्ववत् ॥**
**ब्रह्म विज्ञापयिष्यामि यज्ज्ञाने सर्वविद्भवेत् ॥ ९५ ॥**

ब्राह्मणस्य क्षत्रियादुत्तमत्वात्तं प्रति विद्यार्थमुपगत्यभावश्चेद्गार्ग्यस्य राज्ञो विद्या श्रोतुमशक्येत्याशङ्क्य व्येव त्वेत्यादेरर्थमाह । **अत इति** । आदित्यादिब्रह्मभ्यो वक्ष्यमाणे ब्रह्मणि विशेषमाह । **यज्ज्ञान इति** । वर्णतो गार्ग्यस्याऽऽधिक्यादुपसत्त्यभावेऽपि विद्यातो राज्ञो वैशिष्ट्यात्ततस्तद्ग्रहो युक्तः ।

"न हायनैर्न पलितैर्न वित्तैर्न च बन्धुभिः ।
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान्" ॥

इति **स्मृतेरित्यर्थः** ॥ ९५ ॥

**इत्युक्त्वा तमथो पाणौ गृहीत्वोत्थितवान्नृपः ॥**
**आजग्मतुश्च तौ सुप्तं नरं कार्यविवक्षया ॥ ९६ ॥**

---

१ ग. °मसौ पा° ।

तं पाणावित्यादेरर्थमाह । **इत्युक्त्वेति** । तौ हेत्यादि व्याकरोति । **आजग्मतुरिति** ॥ ९६ ॥

**गार्ग्योक्तब्रह्माभोक्तृत्वं तथाऽमीषामनात्मताम् ॥**
**बालाकेर्बोधयिष्यामीत्यतः सुप्तमगान्नृपः ॥ ९७ ॥**

कार्यविवक्षयेत्येतदेव स्फुटयति । **गार्ग्येति** । अमीषामादित्यादीनामिति यावत् ॥ ९७ ॥

**देवतानामभिः काश्यो गत्वा सुप्तं यथोदितैः ॥**
**आमन्त्र्यां तदा चक्रे बृहन्नित्येवमादिभिः ॥ ९८ ॥**

तमेतैरित्यादेरर्थमाह । **देवतेति** । तदा स्वापावस्थायामित्यर्थः ॥ ९८ ॥

**संबोध्यमानोऽपि तथा सुप्तो नैवोदबुध्यत ॥**
**यतोऽतो गार्ग्याभिमतो न भोक्तेत्यवगम्यते ॥ ॥ ९९ ॥**

स नोत्तस्थावित्यस्यार्थमाह । **संबोध्यमानोऽपीति** । बोधनार्थप्रयुक्तनामाश्रवणादापेषणाच्चोत्थानात्प्राणस्य व्याप्रियमाणस्यैवाभोक्तृत्वं सिध्यतीति फलितमाह । **यत इति** ॥ ९९ ॥

**जाग्रत्कालं परित्यज्य सुप्तं किमिति जग्मतुः ॥**
**स्पष्टता सर्वभावानां जाग्रत्काले हि लक्ष्यते ॥ १०० ॥**

सुप्तपुरुषगतिमाक्षिपति । **जाग्रदिति** । संनिहितं हित्वा व्यवहितगतिरयुक्तेत्यर्थः । गार्ग्येष्टात्मनो विविच्य काश्येष्टमात्मानमुपदेष्टुं तद्गतिरित्याशङ्क्याऽऽह । **स्पष्टेति** । तत्र सर्वस्याप्यादिष्टोऽर्थो विविच्य वक्तुं शक्यते न स्वापे सर्वव्यवहारलोपादतस्तद्गतिरनर्थिकेत्यर्थः ॥ १०० ॥

**प्राणानां देवतानां च पुरुषस्य च संकरात् ॥**
**बोधे न शक्यते कर्तुं विवेको भोक्तृभोज्ययोः ॥ १०१ ॥**

जाग्रति सर्वपदार्थोपलम्भेऽपि क्षीरनीरवत्तेषां सांकर्यान्नेष्टात्मविवेकदृष्टिरित्युत्तरमाह । **प्राणानामिति** ॥ १०१ ॥

**भोक्तृत्वमेव पुंसोऽस्ति भोज्यत्वं न मनागपि ॥**
**काश्याभिप्रायतोऽनस्य भोज्यतैव न भोक्तृता ॥ १०२ ॥**

कोऽसौ विवक्षितो विवेकस्तमाह । **भोक्तृत्वमिति** । साक्षित्वमिति यावत् । भोज्यत्वं साक्ष्यत्वम् । अनस्य प्राणस्येत्यर्थः ॥ १०२ ॥

**संकीर्णत्वादशक्यः स्यात्प्रबोधे भोक्तृभोज्ययोः ॥**
**कर्तुं विवेकोऽतो यातः सुप्तं पुरुषमादरात् ॥ १०३ ॥**

---

१ ग. °थोचितैः ।

अस्त्वीदृग्विवेको जाग्रत्येव किमिति सुप्तपुरुषगतिर्नेत्याह । **संकीर्णत्वादिति**। विवक्षितकार्यगौरवद्योतनार्थमादरादित्युक्तम् ॥ १०३ ॥

**तस्माद्यद्यपि सांनिध्यं प्राणादीनां प्रजागरे ॥**
**संकीर्णत्वान्मिथस्तेषां दुःशकं तद्विवेचनम् ॥ १०४ ॥**

यत्तु स्पष्टतेत्यादि तत्राऽऽह । **तस्मादिति** । यद्यपीत्यादि तच्छब्दार्थविवरणम् । तस्माद्युक्तं सुप्तपुरुषगमनमिति शेषः ॥ १०४ ॥

**आत्मनः प्रोषितत्वात्तु भोगोऽस्मै न प्रयुज्यते ॥**
**उदासतेऽखिलाः सुप्ते देवताः करणैः सह ॥ १०५ ॥**

स्वापेऽपि सांकर्यसाम्यात्कुतो विवेकधीस्तत्राऽऽह । **आत्मन इति** । भोक्तृकरणसहिताधिष्ठातृदेवतानां सुप्तावुपसंहारादसांकर्यात्तत्र विवेकसौकर्यमित्यर्थः ॥ १०५ ॥

**जाग्रद्भोगप्रयुक्तस्य कर्मणः प्रक्षयात्तदा ॥**
**शेरते करणान्यस्य सह भोक्त्राऽऽत्मनाऽऽत्मनि ॥ १०६ ॥**

सुप्तावुक्तोपसंहारे हेतुमाह । **जाग्रदिति** । तदा सुप्तावित्येतत् । आत्मन्यज्ञाते परस्मिन्नित्यर्थः ॥ १०६ ॥

**प्राण एकस्तु जागर्ति भोक्ता यो गार्ग्यसंमतः ॥**
**प्राणेन रक्षन्निति च तथोदर्के प्रवक्ष्यते ॥ १०७ ॥**

गार्ग्येष्टात्मनोऽपि तत्रोपसंहारान्न भोगप्रसक्तिरित्याशङ्क्याऽऽह । **प्राण इति** । तत्र मानमाह । **प्राणेनेति** । प्राणेन रक्षन्नवरं कुलायमित्युत्तरत्र तस्य स्वापेऽनुपसंहारो वक्ष्यत इत्यर्थः ॥ १०७ ॥

**प्राणाग्नय इति स्पष्टं तथाऽनस्तमितश्रुतेः ॥**
**अश्रान्तः प्राण एवातो जागर्त्यत्र दिवानिशम् ॥ १०८ ॥**

तत्र श्रुत्यन्तरमाह । **प्राणेति** । प्राणाग्नय एवैतस्मिन्पुरे जाग्रतीति श्रुतिरिममेवार्थमाहेत्यर्थः । न व्यथते न रिष्यति सैषाऽनस्तमिता देवतेत्यादिवाक्यादपि स्वापे तस्य नोपसंहृतिरित्याह । **तथेति** । उक्तमानफलमुपसंहरति । **अश्रान्त इति** । अत्रेति देहोक्तिः ॥ १०८ ॥

**यथा जाग्रदवस्थायां भोक्ता प्राणः पुराऽभवत् ॥**
**स्वप्नेऽप्येष तथैवाऽऽस्ते बोद्धा चेद्बुध्यतामयम् ॥ १०९ ॥**

प्राणस्य सदा जागरे लब्धमर्थमाह । **यथेति** । स्वप्नेऽपीत्यपिना स्वापः समुच्चीयते ॥ १०९ ॥

**प्राणस्येन्दोस्तथा चापां ऽयन्नात्म[illegible]विष्कृतौ यतः ॥**
**ऐक्यमुक्तमतः प्राणो बोध्यते चन्द्रनामभिः ॥ ११० ॥**

प्राणस्यासुप्तस्यैव स्वापे संबोधनशब्दाश्रवणान्न भोक्तृतेत्ययुक्तं प्राणचन्द्रमसोर्भेदात्तस्य चन्द्रनामभिः संबोधनादप्रतिबोधो नाचेतनत्वादित्याशङ्क्याऽऽह । **प्राणस्येति ।** व्यन्नात्माविष्कृतावथैतस्य प्राणस्याऽऽपः शरीरं ज्योतीरूपमसौ चन्द्र इत्यादावित्यर्थः ॥ ११० ॥

**बृहन्नित्येवमादीनि सन्तु चेहोपलक्षणम् ॥**
**अनुक्तदेवतानाम्नां सामर्थ्यात्तद्ग्रहोऽथवा ॥ १११ ॥**

अथापि कुतश्चन्द्रनामभिरेव संबोधनं प्राणस्य सर्वात्मत्वादादित्यादिनामभिरपि तत्संभवादित्याशङ्क्याऽऽह । **बृहन्नितीति ।** इहेति संबोधनवाक्योक्तिः । अतस्तैरपि संबोधितवानिति शेषः । यद्वा संबोध्यमानप्राणस्य सूत्रैक्यात्तत्सामर्थ्यादनुक्तसूत्रावयवादित्यादिनाम्नां चन्द्रनामवद्ग्रहात्तैरपि संबोधितवानित्याह । **सामर्थ्यादिति ॥ १११ ॥**

**यदि भोक्ता भवेत्प्राणो जाग्रद्वच्छब्दमागतम् ॥**
**अश्रोष्यत्स न चेद्भोक्ता नाश्रोष्यदुपलादिवत् ॥ ११२ ॥**

चन्द्रनामभिः संबोधनं प्रसाध्य तच्छब्दाश्रवणात्तदभोक्तृत्वं यथा जाग्रदवस्थायामित्यत्रोक्तमुपसंहरति । **यदीति ।** स चेन्नाश्रोष्यन्न भोक्ता स्यादिति योजना ॥ ११२ ॥

**ननु सुप्तेऽपि पुंस्यस्मिन्बोधितः सन्स्वनामभिः ॥**
**भोक्तैव भोत्स्यते शब्दं न त्वभोक्ता परो जडः ॥ ११३ ॥**

संबोधनशब्दाश्रुतेरभोक्तृतेत्यत्र शङ्कते । **नन्विति ।** यद्यपि जागरं हित्वा सुप्ते पुंसि विवेकार्थं तयोरुपगतिरुचिता तत्र च भोक्तैव संबोधितः स्वनामभिस्तच्छब्दं श्रोष्यति नाभोक्ता तस्याचेतनत्वात्तथाऽपि नेष्टविवेकधीरित्यर्थः ॥ ११३ ॥

**नैवातोऽपि विवेकः स्यादुत्थितः कोऽनयोर्द्वयोः ॥ ११४ ॥**
**नैवं गार्गीयपक्षस्य विशेषावधृतेः सदा ॥**
**अजातशत्र्वभिप्रेतब्रह्मणः प्राक्प्रमाणतः ॥ ११५ ॥**

कथमिति तत्राऽऽह । **नैवेति ।** दृष्टादपि विशेषान्न भोक्तृभोग्यविवेकः काश्यगार्ग्येष्टात्मनोरुत्थितिसंशयादित्यर्थः । संशयं निरस्यन्परिहरति । **नैवमिति ।** गार्ग्येष्टप्राणस्य काश्येष्टात्मनः सकाशाद्यो विशेषः सदा व्यापृतत्वं तस्य प्रबोधात्प्रागपि प्रमितत्वात्प्राणोत्थाने शब्दाश्रवणायोगात्पाणिपेषानुपपत्तेः स न भोक्तेत्यर्थः ॥ ११४ ॥ ११५ ॥

**योऽनस्तमित एकोऽत्र वागाद्यस्तमयेऽमृतः ॥**
**इन्द्रोऽसपत्नोऽब्देहश्च नामरूपसमावृतः ॥ ११६ ॥**

विशेषावधारणमेव दर्शयति । **योऽनस्तमित इति ।** अत्र सुप्ताविति यावत् । तत्र हेतुः । **अमृत इति ।** विशेषान्तरमाह । **इन्द्र इति ।** प्रतिपक्षाभावादैश्वर्यं काश्येष्टेऽपि स्यादित्याशङ्क्य विशेषान्तरमाह । **अब्देहश्चेति ।** प्राणस्याऽऽपः शरीरमित्युक्तेस्तस्य

तद्देहत्ववत्काश्याभीष्टात्मनो न तद्देहत्वं प्रमाणाभावादित्यर्थः । नामरूपाभ्यां सत्त्याभ्यां प्राणश्छन्नो नैवमात्मा सत्त्यस्य सत्त्यमितिश्रुतेरित्यपरं विशेषमाह । **नामेति** ॥ ११६ ॥

**अध्यात्माद्यखिलं विश्वं संव्याप्य समवस्थितः ॥**
**ओतं प्रोतं जगद्यस्मिन्नरनाभिनिदर्शनात् ॥ ११७ ॥**

त्रिविधं जगद्व्यापित्वं प्राणस्योक्तं स्मारयति । **अध्यात्मादीति** । तत्र मानं सूचयति । **ओतमिति** । स विश्वं संव्याप्य स्थित इति संबन्धः ॥ ११७ ॥

**कुर्वाणस्तुमुलं शब्दं स्वव्यापारमशेषतः ॥**
**कुर्वाण एव स्वप्नेऽपि प्राण आस्ते प्रबोधवत् ॥ ११८ ॥**

यथोक्तं रूपमात्मन्यपि सुसंपादमिति ततो न विशेषाधिगतिरित्याशङ्क्य स स्वव्यापारारूढ इत्यादिभाष्यार्थमाह । **कुर्वाण इति** । जागरादपि स्वापे प्राणप्रयुक्तशब्दस्याऽऽधिक्यदर्शनात्तुमुलमिति विशेषणम् । न केवलं शब्दमेव कुरुते किंतु सर्वमेव व्यापारमित्याह । **स्वव्यापारमिति** । योऽनस्तमित इति यच्छब्देनोपक्रमादत्र तच्छब्दो द्रष्टव्यः । स्वप्नेऽपीत्यपिः स्वापसंग्रहार्थः ॥ ११८ ॥

**न च भोक्त्रन्तरं प्राणाद्गार्ग्येणेहाभ्युपेयते ॥**
**तत्काले भिन्नकाले वा प्राणादन्यस्य भोज्यतः ॥ ११९ ॥**

प्राणस्योक्तविशेषणवतः स्वापेऽवस्थानेऽपि तस्य तदा भोगाभावस्तत्र भोक्त्रन्तरोपगमादित्याशङ्क्याऽऽह । **न चेति** । इहेति प्रकृतं स्वापग्रहणम् । तत्र हेतुः । **तत्काल इति** ॥ ११९ ॥

**तस्मादवश्यं बोद्धव्यं बोध्यं साक्षादुपस्थितम् ॥**
**प्राणेन बोद्धृरूपत्वाद्दाह्यं दग्धा यथा दहेत् ॥ १२० ॥**

तस्यैव भोक्तृत्वे फलितमाह । **तस्मादिति** । उपस्थितः संनिकर्षस्तस्याप्रतिबन्धः साक्षादित्युक्तम् । प्राप्ते विषये शक्तस्य कार्यकरत्वे दृष्टान्तमाह । **दाह्यमिति**॥ १२० ॥

**न चासौ बोध्यमानोऽपि प्रत्यबुध्यत नाम तत् ॥**
**प्राणोऽभोक्ता ततः सिद्धः स्वनामाप्रतिबोधनात् ॥ १२१ ॥**

अस्तु तस्य प्राप्तशब्दश्रुतिस्तत्राऽऽह । **न चेति** । परिशेषसिद्धमर्थमाह । **प्राण इति** । अभोक्तेति च्छेदः ॥ १२१ ॥

**स्वाख्याविशेषसंबन्धाग्रहणाच्चेन्न बुद्धवान् ॥**
**अग्रहासंभवान्नैवं सर्वज्ञा देवता यतः ॥ १२२ ॥**

तस्य स्वनामाग्रहणं संबन्धाग्रहकृतं नानात्मत्वकृतमित्याशङ्कते । **स्वाख्येति** । देवताया न संबन्धाग्रहः सर्वज्ञत्वादित्याह । **अग्रहेति** ॥ १२२ ॥

---

१ ख. मानमाह । ओ° ।

**त्वत्पक्षेऽप्यग्रहो[1] दोषस्तुल्यश्चेदिति चोद्यते ॥**
**नैवं[2] कृत्स्नाभिमानित्वादेकदेशानहंकृतेः ॥ १२३ ॥**

संबोधननामाग्रहस्तत्कृतानात्मत्वदोषश्च तुल्यस्त्वदिष्टात्मनोऽपीति शङ्कते । **त्वत्पक्षेपीति** । काश्येष्टात्मनः सर्वस्मिन्कार्यकरणसमुदायेऽभिमानित्वात्तदेकदेशे प्राणमात्रे तदभावात्तन्नामाग्रहणं न त्वभोक्तृत्वादिति परिहरति । **नैवमिति**[3] ॥ १२३ ॥

**अङ्गुल्याद्यभिधानोक्तौ न हि तद्वान्प्रबुध्यते ॥**
**कृत्स्नदेहाभिमान्येवं[4] नैकदेहाभिमानभुक्[5] ॥ १२४ ॥**

एतदेव दृष्टान्तेन साधयति । **अङ्गुल्यादीति** । यथा हस्तः पादोऽङ्गुलिरित्यादिनामोक्तौ मैत्रो नोत्तिष्ठति सर्वदेहाभिमानित्वेन तन्मात्रानभिमानित्वादेवं काश्येष्टात्मनः सर्वकार्यकरणाभिमानित्वादङ्गुलिस्थानीयप्राणमात्रे तदभावात्तन्नामाग्रहणं न त्वनात्मत्वादित्यर्थः ॥ १२४ ॥

**प्राणस्य तु समाप्तत्वात्समस्तव्यस्तवस्तुषु ॥**
**नाऽऽत्मवत्स्यादसंबोधस्तस्य सर्वाभिमानतः ॥ १२५ ॥**

चन्द्रस्यापि प्राणैकदेशत्वात्तन्नामभिः संबोधने कृत्स्नाभिमानी स नोत्तिष्ठत्यत्राप्यङ्गुल्यादिदृष्टान्तोपपत्तेरित्याशङ्क्याऽऽह । **प्राणस्येति** । गोत्ववत्तस्य सर्ववस्तुषु प्रत्येकं समाप्तेरहमिति सर्वत्राभिमानसंभवादात्मनो वैषम्याच्चन्द्रनामोक्तावप्यग्रहणमयुक्तमित्यर्थः ॥ १२५ ॥

**बोधाबोधौ चितेर्न स्तः कूटस्थज्ञप्तिमात्रतः ॥**
**परायत्तप्रबोधो ना[6] ह्यप्पात्रोत्थाद्रवेरिव ॥ १२६ ॥**

प्राणवच्चिदात्मनोऽपि पूर्णतया सर्वाभिमानसिद्धेर्बोधाबोधौ तुल्यावित्याशङ्क्याऽऽह । **बोधेति** । कूटस्थज्ञप्तिमात्रत्वे कथं ज्ञातृत्वं तत्राऽऽह । **परेति** । नेत्यमुख्यात्मोक्तिः । स चक्षुराद्यधीनबोधवत्त्वान्न मुख्यचिदात्मेत्यर्थः । तस्य ज्ञातृत्वप्रसिद्ध्यर्थो हिशब्दस्तुशब्दो वा । स एवाऽऽत्मा मुख्यो नान्योऽस्तीत्याशङ्क्याऽऽह । **अप्पात्रेति** । जलस्थादित्यान्मुख्यादित्यवच्चैतन्याभासात्कूटस्थबोधोऽन्योऽस्तीत्यर्थः ॥ १२६ ॥

**स्वसंज्ञयाऽप्यसंबोधो यथा दृष्टस्तदात्मनः[7] ॥**
**भोक्तृत्वे सत्यपि तथा प्राणेऽप्यप्रतिबोधनम् ॥ १२७ ॥**

प्रासङ्गिकं त्यक्त्वा प्रकृते चोदयति । **स्वसंज्ञयेति** ॥ १२७ ॥

**सुप्तासुप्तत्वसंभेदविशेषन्यायसंभवात् ॥**
**नैव सुप्तग्रहो युक्तो न त्वसुप्तस्य युज्यते ॥ १२८ ॥**

---

१ क. ग. °ग्रहाद्दोष° । २ ग. मैवं । ३ क. मैवमिति । ४ क. °देवाभि° । ५ क. °देवाभि° । ६ ख. ना त्वप्पा° । ७ ख. °दृस्त्वदा° ।

काश्येष्टात्मनः सुप्तत्वादितरस्य चासुप्तत्वात्सम्यग्भेदरूपविशेषात्मकन्यायसंभवान्न सुप्तस्य संबोधननामग्रह इतरस्य तु तदग्रहो न युक्त इत्याह । **सुप्तेति** ॥ १२८ ॥

**श्रोत्रादेर्गुणभूतत्वात्प्रधानं प्रति सर्वदा ॥**
**तस्मिञ्जाग्रति जागर्ति सुप्ते स्वपिति तद्वशात् ॥ १२९ ॥**

प्राणस्यापि संहतकरणत्वात्स्वनामाग्रहो नाभोक्तृत्वादित्याशङ्क्याऽऽह । **श्रोत्रादेरिति** । तद्वशाद्गुणस्य प्रधानानुवर्तित्वादित्यर्थः ॥ १२९ ॥

**नेन्द्रियाणां भवेत्स्वापो यदि प्राणप्रधानता ॥**
**नामात्याः शेरते यस्माद्राज्ञि स्वामिनि जाग्रति ॥ १३० ॥**

प्राणस्य भोक्तृत्वे करणोपसंहारासंभवं दृष्टान्तेन स्फोरयति । **नेत्यादिना** ॥ १३० ॥

**अप्रसिद्धार्थसंज्ञाभिरुक्तेश्चेदप्रबोधनम् ॥**
**देवतात्मनिषेधार्थपरत्वात्तद्ग्रहोऽर्थवान् ॥ १३१ ॥**

प्राणनामत्वेनाप्रसिद्धनामभिः संबोधनात्तदनुत्थानं नानात्मत्वादिति चोदयति । **अप्रसिद्धेति** । चन्द्रदेवताऽस्मिन्देहे भोक्त्री कर्त्री चाऽऽत्मेति गार्ग्याशयनिषेधाख्येऽर्थे देवतानामग्रहस्य तात्पर्यात्तद्ग्रहोऽर्थवानित्याह । **देवतेति** ॥ १३१ ॥

**प्राणस्याभोक्तृतासिद्धिः स्वनामाग्रहणादपि ॥**
**देवताप्रतिषेधार्थं बोध्यते चन्द्रनामभिः ॥ १३२ ॥**

केवलेत्यादिभाष्यं व्याचक्षाणो यथोक्तं विवृणोति । **प्राणस्येति** ॥ १३२ ॥

**स्मृतिज्ञानेषणादीनां संधानानुपपत्तितः ॥**
**करणानामभोक्तृत्वं देहांशानामिवेष्यते ॥ १३३ ॥**

तथाऽपीन्द्रियाणामात्मतेति केचित्तेषां प्रत्येकं वाऽऽत्मत्वं तत्समुदायस्य वेति विकल्प्याऽऽद्यं दूषयति । **स्मृतीति** । न तावदिन्द्रियाणां प्रत्येकं हस्तादिवद्भोक्तृत्वं स्मृत्यादीनां यो रूपमद्राक्षं स शब्दं शृणोमीत्यादिप्रतिसंधानस्य चानुपपत्तेरन्यस्यान्यदृष्टे तदयोगादित्यर्थः ॥ १३३ ॥

**अचैतन्यात्तथोक्तस्य कुतो भोक्तृत्वसंभवः ॥**
**चिदन्यस्य च भोज्यत्वान्नान्यस्यातोऽस्ति भोक्तृता ॥ १३४ ॥**

द्वितीयं प्रत्याह । **अचैतन्यादिति** । यथा समुदायः समुदायिभ्यो भेदाभेदाभ्यामयुक्तस्तथा चैतन्याभिन्नत्वेनोक्तस्याचेतनस्य करणवर्गस्य न भोक्तृता जडत्वाद्घटवदित्यर्थः । पक्षद्वयनिरासे साधारणीमुपपत्तिमाह । **चिदन्यस्येति** । अतश्चितः सकाशादिति यावत् ॥ १३४ ॥

---

१ क. °द्वात्मसं° ।

**दण्डापूपिकनीत्यैव करणानामभोक्तृता ॥**
**न च प्राणातिरेकेण देवताऽन्योपपद्यते ॥ १३५ ॥**

करणानामभोक्तृत्वे हेत्वन्तरमाह । **दण्डेति** । दण्डेऽपूपलग्ने गृह्यमाणे बलादपूपोऽपि गृह्यते तया नीत्या प्राणस्याऽऽत्मत्वनिरासे तद्धस्तानां करणानामप्यनात्मताऽऽर्थिकीत्यर्थः । प्राणकरणचन्द्रदेवतानामप्यभोक्तृत्वेऽपि देवतान्तरमत्र भोक्तृ स्यादित्याशङ्क्याऽऽह । **न चेति** । प्राणे सर्वदेवतान्तर्भावस्याभिधानस्य मानत्वादित्यर्थः ॥ १३५ ॥

**ननु तद्व्यतिरेकेण प्रागादित्यादिरीरितः ॥**
**देवताविषयो भेदः स कथं विनिवार्यते ॥ १३६ ॥**

तत्रोपक्रमविरोधं शङ्कते । **नन्विति** ॥ १३६ ॥

**नैवं तस्य समस्तस्य प्राण एकत्वहेतुतः ॥**
**अरनाभ्यादिदृष्टान्ताद्वायुप्राधान्यतस्तथा ॥ १३७ ॥**

समाधत्ते । **नैवमिति** । प्राणे देवताभेदस्यैक्ये हेतुमाह । **अरेति** । आदिपदेनैष उ ह्येव सर्वे देवाः कतम एको देव इत्यादि गृह्यते । अग्न्याद्यपेक्षया वायुप्राधान्याच्च तदात्मप्राणातिरेकेण नास्ति देवतेत्याह । **वाय्विति** । तच्च संवर्गविद्यायां द्रष्टव्यम् ॥ १३७ ॥

**संघात एव भोक्ताऽस्तु तस्य प्रत्यक्षसंगतेः ॥**
**न तु तद्व्यतिरिक्तस्य भोक्तृता मित्यसंभवात् ॥ १३८ ॥**

प्राणादीनामनात्मत्वमुक्त्वा स्थूलदेहस्य तद्वक्तुं पूर्वपक्षयति । **संघात इति** । भूतचतुष्टयसमाहारः स्थूलो देह इति यावत् । गौरोऽहं पश्यामीत्याद्यध्यक्षेण रूपादौ तस्य ज्ञातृत्वेन संबन्धदृष्टेरिति हेत्वर्थः । मित्यसंभवादित्यतिरिक्तात्मनोऽप्रत्यक्षत्वान्मान्तरस्य चानिष्टेरित्यर्थः ॥ १३८ ॥

**नाचेतनस्य भोक्तृत्वं कथंचिदवकल्पते ॥**
**चिदन्यस्य च भोग्यत्वात्कम्बलौदनतोयवत् ॥ १३९ ॥**

दूषयति । **नेत्यादिना** । अचेतनत्वं साधयति । **चिदिति** ॥ १३९ ॥

**न चापि चिद्विशिष्टत्वं प्रत्यक्षेणोपलभ्यते ॥**
**चित्संबन्धोपलब्ध्यर्थं तज्ज्ञाता कः प्रकल्प्यते ॥ १४० ॥**

किंच चिद्विशिष्टो देहो भोक्तेति ते स्थितिस्तद्वैशिष्ट्ये चाध्यक्षमन्यद्वा मानं नाऽऽद्यश्चितेस्तदयोग्यत्वान्नेतरोऽनुपगमादित्याह । **न चेति** । चिद्विशिष्टस्य मेयत्वेऽपि ज्ञाता देहोऽन्यो वा नाऽऽद्य एकस्य ज्ञातृज्ञेयत्वायोगान्नेतरो ज्ञात्रन्तरस्य तेऽनिष्टेरित्याह । **चिदिति** ॥ १४० ॥

नेह चिद्व्यतिरेकेण स्वार्थं किंचिदपीष्यते ॥
नापि स्वार्थातिरेकेण प्रमाणफलभाग्भवेत् ॥ १४१ ॥

तस्य न ज्ञात्रपेक्षा स्वतःसिद्धेरित्याशङ्क्याऽऽह । **नेहेति** । लोकशास्त्रयोरिहेति ग्रहणम् । किंच चितोऽन्यस्यास्वप्रकाशत्वाद्घटवन्नाऽऽत्मतेत्याह । **नापीति** । प्रमाणं प्रमितिकरणं तत्फलं ज्ञानं तदाश्रयो ज्ञाता स्वप्रकाशाच्चितो भेदेन नास्तीत्यर्थः ॥१४१॥

न ह्यचित्कं प्रमेयं सच्चिन्मितं[1] किंचिदपीक्ष्यते ॥
न चानुभूतिः[2] प्रात्यक्ष्यमन्यतोऽपेक्षते[3] जडात् ॥ १४२ ॥

किंच चित्संबन्धे ज्ञेये चितोऽपि ज्ञेयत्वात्तज्ज्ञात्रपेक्षायां चिदन्तरमचिदेव वा तत्स्यान्नाऽऽद्यश्चिद्भेदासिद्धेर्यदि द्वितीयस्तत्राऽऽह । **न हीति** । चितं मिनोतीति चिन्मिद्यज्जडं तन्मेयं यथा घटोऽतो न तच्चितोऽचितो वा ज्ञातृ स्यादित्यर्थः । किंच चित्संबन्धधीकाले चिद्ग्राहकमपि मानं वाच्यं तच्च जडमजडं वेति विकल्प्य दोषमाह । **न चेति** । जडादजडादिति वा छेदः स्वयमजडप्रकाशत्वादित्यर्थः ॥ १४२ ॥

देहात्प्रत्यक्षनिष्पत्तौ न च प्रत्यक्षमिष्यते ॥
लिङ्गस्य चाप्रमाणत्वात्कुतः प्रत्यक्षमानिता ॥ १४३ ॥

किंच चिद्विशिष्टदेहकर्तृकमध्यक्षमेकमेव मानमिति ते मतं तत्राध्यक्षमन्यद्वा मानं नाऽऽद्यस्तस्य रूपादेस्तदाधाराच्चेतराविषयत्वादित्याह । **देहादिति** । द्वितीयं दूषयति । **लिङ्गस्येति** ॥ १४३ ॥

तथाऽर्थान्तरसंबन्धे प्रत्यक्षे देहनिष्ठिते ॥
अनुसंधानसंसिद्धौ न किंचिन्मानमिष्यते ॥ १४४ ॥

किंच ते मयेदं विदितमित्यनुसंधानासिद्धिः साधकाभावादित्याह । **तथेति** । यथा देहस्य चिद्वैशिष्टे प्रत्यक्षस्य तत्कर्तृकत्वे तस्यैव मानत्वे च मानाभावस्तथाऽर्थान्तरेण शब्दादिना विषयविषयिभावसंबन्धवति प्रत्यक्षे देहाश्रिते सति मयैवं विदितमित्यादि यदनुसंधानं तत्सिद्धौ नाध्यक्षं मानं तस्य शब्दादिविषयत्वान्नान्यदनङ्गीकारादतो मानाभावादनुसंधानासिद्धेस्तन्निबन्धनस्थायिवस्त्वसिद्धिरित्यर्थः ॥ १४४ ॥

वागभिव्याहृतिश्चेयं लिङ्गप्रामाण्यवादिनः ॥
आप्रत्यक्ष्यात्परज्ञप्तिसंगतेः स्यादनर्थिका ॥ १४५ ॥

यत्त्वध्यक्षमेकमेव मानं तत्रानुमानप्रामाण्यस्याऽऽवश्यकत्वादित्याह । **वागिति** । गामानयेत्यादिवाक्योक्तेस्ते वैयर्थ्यं मा हि स्वार्था परार्था वा नाऽऽद्यः स्वोक्त्या स्वस्यापूर्वानधिगतेर्नेतरः स्ववाक्यात्परस्य तदर्थज्ञानाश्रयताया अप्रत्यक्षत्वादन्योक्त्या मम

---

1 ख. °पीष्यते । २ क. ख. °भूतिप्रा° । ३ ख. °पेक्ष्यते ।

ज्ञानवन्मदुक्त्या तस्यापि तद्भविष्यतीत्यनुमानस्याऽऽवश्यकत्वादन्यथोक्तिवैयर्थ्यं स्यादित्यर्थः ॥ १४५ ॥

**स्वात्मदृष्ट्यनुरोधेऽपि मौढ्यमेव प्रसज्यते ॥**
**व्युत्पत्तेः साधुलोकस्य न कश्चिदपि दित्सति ॥ १४६ ॥**

किंच ते स्वशास्त्रप्रणयनमेवायुक्तमनर्थकरत्वादित्याह । **स्वात्मेति** । स्वात्मनो दृष्टिर्दर्शनं शास्त्रं तस्यानुसारेऽपि मौढ्यमेव स्यात्तदर्थो हि न स्वर्गापवर्गौ नास्त्यात्मा परलोकीत्यादिस्तज्ज्ञानान्न कश्चित्किंचिदपि साधवे दातुमिच्छति किंतु तस्य स्वमादातुमतस्त्वच्छास्त्रज्ञो यागादिबहिर्मुखो नास्तिको नारकी स्यादित्यर्थः ॥ १४६ ॥

**अधर्मादिभयाभावाद्धन्युरेनमशङ्किताः ॥**
**आदद्युश्च बलाद्वित्तमेतद्व्युत्पत्तितः फलम् ॥ १४७ ॥**

किंच त्वच्छास्त्रज्ञानादधर्मादिनिमित्तभयाभावात्परहिंसाद्यर्थं शास्त्रं प्रणयन्नुन्मत्तः स्यादित्याह । **अधर्मादीति** । एनं साधुलोकमिति यावत् । आदद्युराददीरन्नित्यर्थः । न च धर्माधर्मयोः स्वर्गनरकयोश्चासत्त्वपरं शास्त्रं स्वभावप्रयुक्तं प्रतिनियतात्मविषयं नोन्मत्तोक्तितुल्यमिति युक्तं परिदृश्यमानफलवैचित्र्यस्य हेतुवैचित्र्यापेक्षत्वात्स्वभावतस्तदुपपत्तेर्दुर्वचत्वान्न हि सुखादिवैचित्र्यादेव तद्वैचित्र्यं कर्मकर्तृत्वस्य भेदापेक्षत्वान्निर्निमित्तं तद्भावश्चेदनुभवो विरुध्येत्तथाच यथोक्तं शास्त्रं प्रणयन्नुन्मत्तपक्षे निक्षिप्तः सन्नुपेक्ष्यः स्यादिति भावः ॥ १४७ ॥

**आपेषणे विशेषस्य दृष्टत्वाद्देहसंहतिः ॥**
**न भोक्त्री सुखदुःखादिफलानां स्यात्कदाचन ॥ १४८ ॥**

देहस्यानात्मत्वे हेत्वन्तरमाह । **आपेषण इति** । आदिपदं तदवान्तरभेदसंग्रहार्थम् । स्थूलदेहाख्या भूतचतुष्टयसंहतिरिति यावत् ॥ १४८ ॥

**यदि संघातमात्रस्य भोक्तृत्वमिह कल्प्यते ॥**
**संघातस्याविशिष्टत्वान्नातिशीतिर्भवेत्सदा ॥ १४९ ॥**

उक्तं व्यतिरेकद्वारा व्यनक्ति । **यदीति** । इहेति भोज्योक्तिः । संघातस्य भोक्तृत्वे तस्य पेषणापेषणयोरविशेषान्नोत्थाने विशेषः स्यान्न च तस्मिन्नपि ताभ्यां विशेषस्तदभावेऽपि प्रागुत्थाने हेत्वदृष्टेर्न च पेषणजन्यविशेषस्यैवोत्थापकत्वं नियमेन प्रागुत्थानप्राप्तेरिति भावः ॥ १४९ ॥

**ईषत्संस्पृष्टमात्रस्य बलाच्चाऽऽपेषणात्तथा ॥**
**देहादिभिन्नजातीयो भोक्ता यस्य च वादिनः ॥ १५० ॥**
**धर्मादिहेतुसंबन्धबहुत्वास्यात्समञ्जसम् ॥**
**पेषणापेषणकृतवेदनायां भवेद्भिदा ॥ १५१ ॥**

सदा संघातस्याविशिष्टत्वं स्पष्टयति । **ईषदिति** । यथा मृदुस्पर्शस्पृष्टमात्रस्य संघातस्याविशेषस्तथा बलादापेषणेऽपि तस्याविशेषात्प्रबोधे नातिशयः स्यादित्यर्थः । त्वत्पक्षेऽपि कथं पेषणापेषणयोरुत्थाने विशेष इत्याशङ्क्याऽऽह । **देहादीति** । आदिपदं तदवान्तरभेदसंग्रहार्थम् । धर्मादिहेतूनामात्मसंबन्धस्य तत्कृतदेहसंबन्धस्य च बहुत्वात्तद्धेतुकमुत्थानादि मत्पक्षे युक्तमित्यर्थः । उत्थानादेः सामञ्जस्यमेव साधयति । **पेषणेति** ॥ १९० ॥ १९१ ॥

**सुखदुःखादिहेतूनामुत्तमाधममध्यतः ॥**
**तत्प्रबोधविशेषोऽयं युक्त एव भवेत्तदा ॥ १९२ ॥**

यथोक्तवेदनायाः समुत्थानहेतोर्विशेषे हेतुमाह । **सुखेति** । सुखं दुःखं संबुद्धिरित्यादीनां समुत्थानहेतूनां हेतवो दृष्टादृष्टरूपा धर्मादयस्तत्तारतम्याद्वेदनाभिदेत्यर्थः । तद्भेदे फलितमाह । **तत्प्रबोधेति** । संघातातिरिक्तमात्मानं तच्छब्दोऽधिकरोति । तदा प्रागुक्तनीत्या प्रबोधहेतुविशेषे सतीति यावत् ॥ १९२ ॥

**अस्ति चायं विशेषोऽत्र यत्संस्पर्शनमात्रतः ॥**
**अबुध्यमानः संसुप्त आपिष्याऽऽपिष्य बोधितः ॥ १९३ ॥**

स्वपक्षे प्रबोधे विशेषसंभावनामुक्त्वा निश्चयं दर्शयति । **अस्ति चेति** । सुप्तोत्थानमत्रेत्युक्तम् ॥ १९३ ॥

**अत आपेषणाद्योऽसावुत्थितः करणैः सह ॥**
**राजेव सचिवैः सार्धं स भोक्तेहेति गम्यताम् ॥ १९४ ॥**

विशेषफलमाह । **अत इति** । इहेति देहोक्तिः ॥ १९४ ॥

**मृतकल्पमिमं देहं स्वचित्तावेशयन्निव ॥**
**ज्वलन्निव समुत्तस्थौ यः स भोक्तेति गम्यताम् ॥ १९५ ॥**

ज्वलन्निवेत्यादिभाष्यार्थमाह । **मृतेति** । न हि देहे चिद्व्याप्तिमन्तरेण वस्तुतश्चिदावेशोऽस्तीति वक्तुमिवेत्युक्तम् । न हि ज्वलनमग्नेरिव चिदात्मनोऽस्ति किंतु तथा स्फुरणं गृहीत्वा ज्वलन्निवेत्युक्तम् ॥ १९५ ॥

**क्रोधहर्षभयोद्वेगज्ञानधर्मैर्विशेषयन् ॥**
**शरीरं यः समुत्तस्थौ स भोक्तेत्यवसीयताम् ॥ १९६ ॥**

पिण्डं चेत्यादि व्याचष्टे । **क्रोधेति** ॥ १९६ ॥

**अपि प्राणस्य पारार्थ्यं संहतत्वाद्गृहादिवत् ॥**
**ततश्च भोग्यरूपस्य भोक्तृत्वं नोपपद्यते ॥ १९७ ॥**

देहादेरनात्मत्वमुक्त्वा प्राणस्यानात्मत्वे हेत्वन्तरमाह । **अपीति** । पारार्थ्यफलमाह । **ततश्चेति** ॥ १९७ ॥

---

१ ख. ग. संघात॰ ।

**देहस्यान्तर्गतः प्राणः स्थूणावद्देहभृत्सदा ॥**
**संहन्यते शरीरेण यथा वायुस्तथैव सः ॥ १५८ ॥**

कथं संहतत्वं तदाह । **देहस्येति** । वायुर्घ्राणप्राणो वा मुख्यो वा ॥ १५८ ॥

**यत एवमतः प्राणो गृहादिवदिहेष्यते ॥**
**देहाच्च देहधर्मेभ्यो विधर्मात्माऽवभुक्ततः ॥ १५९ ॥**

संहतत्वं परामृश्य पारार्थ्यं फलितमाह । **यत इति** । इहेति देहोक्तिः । इष्यते परार्थ इति शेषः । तत्पारार्थ्ये किमायातं तदाह । **देहाच्चेति** । देहादेर्भोज्यत्वादात्मनश्च भोक्तृत्वाद्विवेक इत्यर्थः । वैधर्म्ये हेतुः । **अवभुगिति** । ततःशब्दः संहतत्वफलपरामर्शी ॥ १५९ ॥

**स्वात्मांशांशिसजातीयविविक्तफलसद्मवत् ॥**
**संहतत्वात्तथा प्राणोऽसंहतात्मोपभोगकृत् ॥ १६० ॥**

प्राणस्य गृहादिवत्पारार्थ्येऽपि संहतशेषित्वं गृहादेस्तद्दृष्टेरित्याशङ्क्याऽऽह । **स्वात्मेति** । स्वात्मनो गृहादेरंशः स्तम्भादिरंशी स्वयमेव गृहादिः सजातीयमन्यद्गृहादि तेभ्यो विविक्तस्यासंहतस्य भोग्यं गृहादि तथा प्राणोऽपि संहतत्वात्स्वासंहतस्य भोग्य इत्यर्थः ॥ १६० ॥

**स्वजन्मोपचयग्लानिनाशाख्याकृतिजन्मदि—**
**ग्धर्मानपेक्षसंलब्धसत्त्वादिस्वार्थरूपकः ॥ १६१ ॥**
**तद्गोचरैकसंद्रष्टृविज्ञात्रर्थं समीक्ष्य हि ॥**
**प्राणस्य तद्गुणानां च तथार्थत्वं प्रतीयताम् ॥ १६२ ॥**

तथाऽपि चैत्रवदात्मनोऽपि शेषित्वेन संहतत्वमाशङ्क्याऽऽह । **स्वजन्मेति** । स्वस्य गृहस्य जन्म चोपचयश्च ग्लानिश्च नाशश्चाऽऽख्या चाऽऽकृतिश्च तस्या जन्म च दिक्चेत्येते धर्मास्ताननपेक्ष्यैव लब्धं सत्त्वं स्फुरणं च येन स स्वतन्त्रस्वभावः स च तेपु गृहतद्धर्मेपु गोचरेष्वेको निरपेक्षो द्रष्टा च विज्ञाता च तदर्थं वेश्म दृष्टा प्राणतद्धर्मानपेक्षलब्धसत्तास्फुरणो यस्तस्यैव द्रष्टृविज्ञात्रादिलक्षणस्तदर्थत्वं प्राणादेर्ज्ञेयमित्यर्थः । हिशब्दो हेतोरिव दृष्टान्तस्यापि साधकत्वद्योतनार्थः । विमतं स्वस्वधर्मापरामृष्टार्थशेषं संहतत्वात्संमतवदित्यनुमानादात्मनोऽर्थान्तरं प्राणादि सिध्यतीति भावः ॥ १६१ ॥ १६२ ॥

**ननु वेदान्तसिद्धान्ते न वस्त्वन्तरमिष्यते ॥**
**सांख्यराद्धान्तवत्किंचित्प्रत्यगात्मैकवस्तुनः ॥ १६३ ॥**

तस्याऽऽत्मनो भेदकावन्वयव्यतिरेकावाक्षिप्तुमाक्षिप्ता सिद्धान्तस्वरूपमाह । **नन्विति** । वैधर्म्यदृष्टान्तमाह । **सांख्येति** ॥ १६३ ॥

ऐकात्म्याविद्यया सर्वं प्रतीचि परिकल्पितम् ॥
प्राणाद्यनात्मजातं यद्रूपं नाम च कर्म च ॥ १६४ ॥

न वस्त्वन्तराभावः सत्त्वात्प्राणादेरित्याशङ्क्याऽऽह । **ऐकात्म्येति** ॥ १६४ ॥

कल्पिताकल्पितं सर्वं यदाऽऽत्मैवाभ्युपेयते ॥
अन्वयव्यतिरेकोक्तिस्तदैक्यान्नेह युज्यते ॥ १६५ ॥

कल्पिताकल्पितभावेन वस्तुभेदशङ्कां निराकुर्वन्फलितमाह । **कल्पितेति** । कल्पितत्वेन लोकसिद्धं स्वप्नाद्यकल्पितत्वेनेष्टमाकाशादि तत्सर्वं जाड्यादिना स्वतोऽसत्त्वादात्मैव यथेष्टं तदा प्रतीच्यैकरस्याद्भेदापेक्षयाऽन्वयाद्यसिद्धिरित्यर्थः ॥ १६५ ॥

नान्वयो व्यतिरेको वा कल्पितस्यानृतत्वतः ॥
अकल्पितस्य चैकत्वान्नितरां न प्रसिध्यति ॥ १६६ ॥

अकल्पितवस्त्वन्तराभावेऽपि कल्पितं तदस्तीत्याशङ्क्यान्वयादि कल्पितमकल्पितं वा कल्पिताकल्पितं वाऽऽश्रयतीति विकल्प्याऽऽद्यं दूषयति । **नेत्यादिना** । द्वितीयं प्रत्याह । **अकल्पितस्येति** । अन्वयादेर्द्वयापेक्षत्वात्तस्य चाद्वयत्वादविषयत्वाच्च तत्र तदसिद्धिरित्यर्थः । चकारस्तृतीयनिरासार्थः । कल्पिताकल्पितविषयत्वे द्वैतापातान्न तत्रान्वयादिरित्यर्थः ॥ १६६ ॥

पुंव्युत्पत्तिप्रधानत्वादन्वयादेरदोषता ॥
न त्वन्वयादिनैवेह वस्तुतत्त्वस्य संस्थितिः ॥ १६७ ॥

अन्वयाद्यङ्गीकारे वास्तवो भेदोऽङ्गीकर्तव्य इति प्राप्ते प्रत्याह । **पुमिति** । आत्मेत्युपक्रम्य कनम आत्मेत्यादिनोक्तवक्ष्यमाणान्वयादेरवास्तवं भेदमादायाऽऽत्मज्ञानार्थत्वान्नाद्वैतहानिरित्यर्थः। अन्वयादेर्ज्ञानार्थत्वे तेनैव तत्सिद्धेर्व्यर्थं वाक्यमित्याशङ्क्याऽऽह। **न त्विति** । इहेति स्वपक्षोक्तिः । संस्थितिर्निश्चितिरिति यावत् । अन्वयादेरपरमार्थत्वादिति भावः ॥ १६७ ॥

अविद्याकल्पितेऽप्यस्मिन्नात्मप्रत्ययमानभाक्[1] ॥
भोक्तेह गम्यते लोके न त्वनात्ममितिप्रमः ॥ १६८ ॥

वाक्यादात्मधीश्चेत्तच्छ्रवणात्प्रागात्मादृष्टेर्नान्वयादि सुकरं दृष्टविषयत्वात्तस्येत्याशङ्क्याऽऽह । **अविद्येति** । अस्मिन्ननात्मवर्गे स्वाविद्याकल्पिते सतीति यावत् । इह वाक्यश्रवणात्प्रागित्यर्थः । प्रागप्यात्मा दृष्टः स्वप्रकाशत्वादित्ययुक्तमर्थसिद्ध्यधीनत्वात्तत्सिद्धेरित्याशङ्क्याऽऽह । **न त्विति** । अनात्मत्वप्रसङ्गादित्यर्थः ॥ १६८ ॥

अतोऽनूद्य यथासिद्धमन्वयव्यतिरेकतः ॥
भोक्तृभोग्यविवेकेन श्रुत्यैकात्म्यं प्रबोध्यते ॥ १६९ ॥

1 ख. °नेऽप्यस्मि° ।

स्वतःसिद्धश्चेदात्मा किमन्वयादिना वाक्येन वेत्याशङ्क्याऽऽह। अत इति। यस्मादात्मनि स्वतःसिद्धेऽन्वयादिस्तस्मात्तद्वशाद्बोक्त्रादिविभागाख्यत्वमर्थशोधनेन ज्ञातं तमनतिक्रम्यानूद्य तस्य ब्रह्मैक्यं वाक्येन बोध्यते तथाच त्वमर्थशोधनार्थमन्वयादि वाक्यं चैक्यज्ञानार्थमित्युभयार्थवत्तेत्यर्थः ॥ १६९ ॥

**चिदन्वयो हि सर्वत्र तत्कार्येषु समीक्ष्यते ॥**
**व्यतिरेकोऽप्यपह्नुत्या कार्यस्येह प्रसिध्यति ॥ १७० ॥**

तर्हि कीदृशावन्वयव्यतिरेकौ याभ्यां त्वमर्थः शोध्यते तत्राऽऽह । चिदिति । साभासात्माविद्याकार्येषु सर्वेषु चितोऽनुगमो लक्ष्यते तस्य चाविद्यातज्जस्य प्रतीच्यपह्नुत्या व्यतिरेकोऽपि सिध्यत्यतोऽव्यभिचार्यात्मा सर्वसाक्ष्यनात्मा तु व्यभिचारी साक्ष्यश्चेत्येवंरूपौ तावित्यर्थः। लोके वेदे चोक्तान्वयव्यतिरेकयोरस्ति प्रसिद्धिरिति हिशब्दार्थः । इहेत्यविद्यातत्कार्यापह्नवाधिकरणस्य प्रतीचो वचनम् ॥ १७० ॥

**ऐकात्म्यसिद्धौ दोषः स्यात्तत्सिद्धिश्च न वास्तवी ॥**
**प्रामाणिकी हि तत्सिद्धिरतो नासौ विरुध्यते ॥ १७१ ॥**

यत्त्वन्वयव्यतिरेकोक्तिस्तदैक्यादित्यादि तत्रैक्ये ज्ञातेऽज्ञाते वा तदसंभव इति विकल्प्याऽऽद्यमङ्गीकरोति । ऐकात्म्येति । दोषोऽन्वयाद्यसंभवः । तर्हि स्वप्रकाशतया सदाज्ञातत्वादैक्यस्य न जात्वन्वयादिः स्यादित्याशङ्क्याऽऽह । तत्सिद्धिश्चेति । वस्तुनः स्वरूपभूता सिद्धिर्नान्वयादिविरोधिनी चेद्विरोध्यभावात्सदा तत्स्यादित्याशङ्क्याऽऽह । प्रामाणिकीति । अन्वयादिविरोधिनीति शेषः । प्रमाणज्ञानस्य तद्विरोधित्वप्रसिद्ध्यर्थो हिशब्दः । तस्य तद्विरोधित्वान्न स्वरूपसिद्धिस्तेन विरुध्यते साधकत्वादिति फलितमाह । अत इति ॥ १७१ ॥

**न चापि मानव्यापारव्यपेक्षैकात्म्यनिश्चितौ ॥**
**तत्फलस्य समाप्तत्वादपेक्षा निष्फला यतः ॥ १७२ ॥**

प्रामाणिकी तत्सिद्धिरपि न तद्विरोधिनी प्रमिते घटादौ पुनर्मानापेक्षावदैक्येपि मितेऽन्वयाद्यपेक्षासंभवादित्याशङ्क्याऽऽह । न चेति । तस्य वाक्यान्निश्चितौ तत्फलस्य सहेतुबन्धध्वस्तेः सिद्धत्वादैक्यज्ञानादनन्तरमन्वयाद्यपेक्षाया वैफल्यान्मानसहकारिणि तस्मिन्नापेक्षा तस्मात्तद्विरोधिन्येव प्रामाणिकी धीरित्यर्थः ॥ १७२ ॥

**यावत्त्वागमतः साक्षान्न वेत्त्यात्मानमद्वयम् ॥**
**अन्वयाद्यात्मबोधार्थं तावत्तत्केन वार्यते ॥ १७३ ॥**

ऐक्ये ज्ञातेऽन्वयाद्ययोगमङ्गीकृत्य द्वितीयं प्रत्याह । यावत्त्विति ॥ १७३ ॥

**अज्ञानं च तदुत्थं च ह्यात्मैवाज्ञाततत्त्वकः ॥**
**तत्तत्त्वबोधात्तद्बाधः सर्परज्ज्वादिबाधवत् ॥ १७४ ॥**

आत्मधीहेतुमानसहायत्वेनान्वयाद्युपगमश्चेत्तदपेक्षितद्वैतमपि स्यादित्याशङ्क्याऽऽह । **अज्ञानं चेति** । तस्य यथोक्तात्मतायाः श्रुतिप्रसिद्ध्यर्थो हिशब्दः । किंच सर्पादे रज्ज्वादिबोधाद्बाधवदात्मज्ञानात्सर्वद्वैतबाधोपगमान्न वास्तवद्वैतप्रसक्तिरित्याह । **तत्त-त्त्वेति** ॥ १७४ ॥

**क्लृप्तानामपि रज्ज्वादौ कल्पितान्तरसंश्रयात् ॥**
**क्लृप्तान्तरापनुत्तिः स्याद्यथा तद्वदिहाऽऽत्मनि ॥ १७५ ॥**

प्रत्यग्ज्ञानमपि बाध्यमबाध्यं वाऽऽद्ये बाधकत्वायोगो द्वितीये सर्वद्वैतबाधासिद्धिरित्या-शङ्क्याऽऽह । **क्लृप्तानामिति** । निर्धारणार्था षष्ठी ॥ १७५ ॥

**प्रत्यग्ज्ञानैकमेयोऽतो भोक्ता भोग्यं ततोऽपरम् ॥**
**भोग्यानां व्यभिचारेऽपि भोक्तैकोऽव्यभिचारवान् ॥ १७६ ॥**

प्राक्प्रमाणप्रवृत्तेः कल्पितं भेदमादायोक्तान्वयादिफलमुपसंहरति । **प्रत्यगिति** । स्वप्रकाशचिद्धातुरेवाऽऽत्मा प्राणादिर्दृश्यत्वादनात्मेति फलमुपसंहृत्यान्वयाद्युपसंहरति । **भोग्यानामिति** ॥ १७६ ॥

**बृहन्नित्यादिभिः प्राणो बोध्यमानोऽपि यत्नतः ॥**
**नैवान्वबुध्यत यदा चक्रे यत्नान्तरं तदा ॥ १७७ ॥**
**पाणिनाऽऽपिष्य बहुशः सुप्तं काश्योऽप्यबोधयत् ॥**
**आपेषोद्भूतसंक्षोभस्ततोऽसौ प्रत्यबुध्यत ॥ १७८ ॥**

अन्वयादिना देहद्वयातिरिक्तमात्मानमुपपाद्य तमित्यादिश्रुतिव्याख्यानमनुवदति । **बृहन्नित्यादिभिरिति** । पुनः पुनः संबोधनं यत्नः । तं पाणिनेत्याद्यवतार्य व्याचष्टे । **चक्र इति** । स हेत्यादेरर्थमनुवदति । **आपेषेति** ॥ १७७ ॥ १७८ ॥

**कारणानामिदं वृत्तं यन्निमित्तान्तराश्रयात् ॥**
**स्वात्मकार्यसमुद्भूतिरम्बरादभ्रभूतिवत् ॥ १७९ ॥**

उत्थानकर्तृत्वादात्मनः स्वातन्त्र्यात्कर्तुस्तल्लक्षणत्वात्किं पेषणादिनेत्याशङ्क्याऽऽह । **कारणानामिति** । आकाशमभ्रोद्भूतिकारणमपि पुरोवाताद्यपेक्षते तथाऽऽत्मोत्थानकर्ताऽपि पेषणाद्यपेक्षिष्यते कारकान्तराप्रयोज्यस्य तत्प्रयोक्तुः कर्तृत्वादित्यर्थः ॥ १७९ ॥

**आपेषालीनबुद्ध्यादिसमुत्पत्तौ परात्मनः ॥**
**घटाकाशवदुत्पत्तिर्नाञ्जसैव सदा दृशेः ॥ १८० ॥**

उत्थानमात्मनः सुप्तेरुद्बोधस्तस्य स्वरूपत्वेनानुत्पत्तेर्न हेत्वपेक्षेत्याशङ्क्याऽऽह ।

---

१ ख. °दिबोध° । २ ख. ततः प° । ३ ख. °वावबु° । ४ क. °नुपपत्ते° ।

**आपेषादिति ।** स्वापे प्रतीच्यज्ञाते लीनस्य बुद्ध्यादेर्जाग्रद्धेतुकर्मादिना परस्मादुत्पत्तौ बोधोदयो व्यवह्रियते घटोत्पत्तौ तदाकाशोत्पत्तिवन्न साक्षादेव तदुत्पत्तिरित्यत्र हेतुमाह । **सदेति** ॥ १८० ॥

**तस्मादप्रतिबोधेन प्राणोऽभोक्तेति गम्यताम् ॥**
**पुंसस्तु प्रतिबोधेन भोक्तृतैवावसीयते ॥ १८१ ॥**

स हेत्यादेरर्थमुपपाद्य तौ हेत्यादिवाक्यार्थमुपसंहरति । **तस्मादिति** ॥ १८१ ॥

**अदाहकानां दग्धृत्वं यथा दाहकसंगतेः ॥**
**भोक्तृसंयोगतस्तद्वद्भोक्तृत्वं देवतात्मनः ॥ १८२ ॥**

पुरुषस्यैव भोक्तृत्वं चेत्कथं प्राणदेवतायास्तत्प्रसिद्धिस्तत्राऽऽह । **अदाहकानामिति** ॥ १८२ ॥

**देहेन्द्रियमनोधीभ्यो विविच्याऽऽत्मानमेकलम् ॥**
**भोक्तारं दर्शयित्वाऽथ राजा गार्ग्यमपृच्छत ॥ १८३ ॥**

वृत्तमनूद्य स हेत्यादेरर्थमाह । **देहेति ।** विवेकानन्तरं वक्ष्यमाणप्रश्नस्यावकाशं दर्शयितुमथेत्युक्तम् ॥ १८३ ॥

**आपेषणेन बुबुधे यः प्राणादिविलक्षणः ॥**
**क्वाभूदयं पुरा बोधात्कुतश्चाऽऽगतवान्पुमान् ॥ १८४ ॥**

पृच्छास्वरूपमाह । **आपेषणेनेति** ॥ १८४ ॥

**अन्तःकरणसंबन्धे विज्ञानमिति कर्तरि ॥**
**प्रत्ययः करणार्थः स्यात्क्रियायां भावसाधनः ॥ १८५ ॥**

य एष विज्ञानमय इत्यत्र विज्ञानं परं ब्रह्म तद्विकारो जीवोऽतो विकारार्थो मयडिति केचित्तन्निवृत्त्यर्थं विज्ञानं भिनत्ति । **अन्तःकरणेति ।** ल्युडन्तस्य विज्ञानमितिशब्दस्यान्तःकरणेन वाचकतया संबन्धे विवक्षिते कर्तरि प्रत्ययः स्यादन्तःकरणस्य ज्ञानकर्तृत्वादतो विजानातीति विज्ञानमन्तःकरणं यदा विज्ञानपदस्य चक्षुरादिवाचित्वं तदा प्रत्ययः करणार्थः स्यात्ततो विज्ञायतेऽनेनेति विज्ञानं चक्षुरादि यदा तस्य क्रियायां संबन्धस्तदा विज्ञप्तिरिति विज्ञानं क्रिया स्यादित्यर्थः ॥ १८५ ॥

**प्रमेयार्थविवक्षायां शब्दः स्यात्कर्मसाधनः ॥**
**यथोक्तानामसद्भावात्प्रायार्थः प्रत्यगात्मनि ॥ १८६ ॥**

यदा तद्घटादिवाचि तदा विज्ञायत इति विज्ञानं घटादि स्यादित्यर्थमाह । **प्रमेयेति ।** एतेष्वर्थेषु विज्ञानशब्दप्रयोगादन्यत्र तस्यामुख्यत्वात्प्रतीचि कूटस्थे यथोक्तकर्तृत्वाद्यभावादत्रास्य कर्तृव्युत्पत्त्याऽन्तःकरणविषयत्वात्प्रतीचस्तदविकारत्वात्प्रायार्थो मयडित्याह । **यथोक्तानामिति** ॥ १८६ ॥

स्वाभासवदविद्योत्थबुद्ध्यादिव्याप्तिविभ्रमात् ॥
तदात्मत्वाभिमानित्वाद्विज्ञानमयताऽऽत्मनः ॥ १८७ ॥

प्रतीचोऽन्तःकरणविकारत्ववन्न तत्प्रायत्वमप्यसङ्गस्य बुद्ध्याद्यसंबन्धादित्याशङ्क्याऽऽह । **स्वाभासेति** । प्रत्यगाभासवती याऽविद्या तदुत्थबुद्ध्यादिव्याप्तिकृतं भ्रममेव व्याकरोति । **तदात्मत्वेति** । भ्रान्तिफलमाह । **विज्ञानेति** ॥ १८७ ॥

साक्षित्वेनोपलभ्यत्वात्साक्ष्यबुद्ध्यादिसंश्रयात् ॥
अकारकफलत्वेन तेन प्रायार्थतेष्यते ॥ १८८ ॥

मयटः प्रायार्थत्वे हेत्वन्तरमाह । **साक्षित्वेनेति** । विकारार्थत्वायोगाच्च तथेत्याह । **अकारकेति** । क्रियादिरूपत्वाभावे तत्साक्षित्वं हेतुमाह । **तेनेति** ॥ १८८ ॥

यतो विज्ञानमानी सन्सर्वं वस्त्ववगच्छति ॥
विज्ञानमयता तस्मात्प्रतीचोऽबोधकारणात् ॥ १८९ ॥

स्वतः सर्वज्ञस्य कुतो बुद्ध्यादिप्रधानतेत्याशङ्क्याज्ञानात्तत्संबन्धद्वारैव सर्वज्ञतेति युक्ता प्रायार्थतेत्याह । **यत इति** ॥ १८९ ॥

विज्ञानेन विशिष्टं वा यस्मान्मेयं प्रपद्यते ॥
प्रायार्थत्वं प्रतीचोऽतस्तदभिन्नग्रहाद्भवेत् ॥ १९० ॥

प्रकारान्तरेण प्रायार्थत्वं मयटः स्फुटयति । **विज्ञानेनेति** । प्रतीचो विज्ञानशब्दितान्तःकरणेन वृत्तिद्वारा व्याप्तार्थज्ञानान्मयटः प्रायार्थत्वमित्युत्तरार्धे संबन्धः ॥ १९० ॥

विज्ञानमय इत्युक्त्वा पृथिव्यादिमयोक्तितः ॥
षड्विकारनिषेधाच्च प्रायार्थत्वं समञ्जसम् ॥ १९१ ॥

विकारार्थत्वाभावे मयटः श्रौते लिङ्गे वदन्प्रायार्थत्वमुपसंहरति । **विज्ञानेति** । न हि पृथिव्यादिविकारत्वं प्रतीचोऽङ्गीकृतं तथाच समभिव्याहाराद्विज्ञानमयत्वमपि तस्य युक्तमस्तित्वादयश्च विकारास्तत्र श्रुतिस्मृतिभ्यां निषिध्यन्तेऽतः प्रायार्थत्वमित्यर्थः ॥ १९१ ॥

अनात्मनो यतोऽशेषान्कल्पितत्वादकल्पितः ॥
पूरयन्पुरुषः प्रत्यक्सर्पादीन्रशना यथा ॥ १९२ ॥

पुरुषशब्दार्थमाह । **अनात्मन इति** । यथा रज्जुरकल्पिता कल्पितान्भुजंगादीन्पूरयति तथाऽऽनात्मनां कल्पितत्वान्निरधिष्ठानकल्पनायोगात्तदधिष्ठानत्वेनाकल्पितः सन्नात्माऽशेषान्यतस्तान्पूरयन्वर्ततेऽतः स पुरुष इत्यर्थः ॥ १९२ ॥

व्युत्पत्तिरियमेवात्र तात्पर्यस्य समीक्षणात् ॥
स वा इति ह्युपक्रम्य नैनेनेत्यादिनिर्णयात् ॥ १९३ ॥

पुरि शयनादित्यादिभाष्यं कस्मादुपेक्ष्यतेऽत आह । **व्युत्पत्तिरिति** । पूर्णत्वात्पुरुष इत्येषैव व्युत्पत्तिरत्र ग्राह्या प्रत्यक्पूर्णत्वे वाक्यतात्पर्यदृष्टेरित्यर्थः । तत्र श्रुतितात्पर्ये

हेतुमाह । **स वा इतीति** । स वा अयं पुरुषः सर्वास्विति पुरुषमुपक्रम्य नैनेन किंच नानावृत्तमित्यादिना तत्पूर्णत्वं निर्णीयते तेन तत्पूर्णत्वे श्रुतितात्पर्यं सिद्धमित्यर्थः । संदिग्धस्य च वाक्यशेषान्निर्णयो भवतीति हिशब्दार्थः ॥ १९३ ॥

**इयं तावत्पदार्थोक्तिः संबन्धोक्तिरथाधुना ॥**
**प्रश्नस्य क्वैष इत्यादेः किमर्थोऽयमुपक्रमः ॥ १९४ ॥**

विज्ञानादिपदार्थोक्तिं वृत्तामनूद्योत्तरस्य गतेन संबन्धोक्तिं प्रतिजानीते । **इयमिति** । संबन्धोक्त्यर्थमाकाङ्क्षामाह । **प्रश्नस्येति** ॥ १९४ ॥

**चोद्यैकमूलां प्रश्नोक्तिं केचिद्व्याचक्षतेऽपरे ॥**
**याथात्म्यप्रतिपत्त्यर्थमुत्थितस्य प्रचक्षते ॥ १९५ ॥**

तत्र भर्तृप्रपञ्चप्रस्थानमाह । **चोद्येति** । तद्गर्भामिति यावत् । स्वमतं सूचयति । **अपर इति** ॥ १९५ ॥

**पुंसोऽस्य ज्ञस्वभावत्वे करणेष्वपि सत्सु च ॥**
**कादाचित्कोऽवबोधोऽस्य कुत इत्युच्यतां यथा ॥ १९६ ॥**

कथं ते चोद्यगर्भां प्रश्नोक्तिं व्याकुर्वन्तीत्याशङ्क्य भोक्तुर्ज्ञानस्वभावत्वे करणेषु विद्यमानेषु कथं कदाचित्प्रतिबोध इतितदीयभाष्यार्थमाह । **पुंसोऽस्येति** । अपवर्गादर्वाक्करणानां सदासत्वं चार्थः । बोधस्त्वात्मविषयोऽनात्मविषयश्च । अस्येति प्रत्यगात्मोक्तिः । इत्थं प्रश्ने यथाऽयमर्थस्तथोच्यतामिति योजना । चिद्रूपस्य सकरणस्याऽऽत्मनः सदा बोधप्राप्तेरसुप्तिरिति भावः ॥ १९६ ॥

**विहायैतच्छरीरं वा गतो देशान्तरं पुमान् ॥**
**विनष्टो वा कुतो भूयो देहमागादितीर्यताम् ॥ १९७ ॥**

सुप्त्युपगमेऽपि न निस्तार इत्याह । **विहायेति** । **उक्तं हि**—अथ पुनर्विहायैतदसंनिहितोऽभूद्विनष्टो वा कुतः प्रत्यागमनमिति ॥ १९७ ॥

**प्रष्टव्यमेतद्गार्ग्येण शिष्यत्वान्न त्वचूचुदत् ॥**
**नैवोदास्ते तथाऽपीनो बोधाभ्युपगमात्स्वयम् ॥ १९८ ॥**

आत्मनः शिष्यत्वस्वीकाराद्गार्ग्येण सर्वमेतत्प्रष्टव्यं तत्किमिति न पृष्टवानित्याशङ्क्याज्ञत्वादित्याह । **प्रष्टव्यमिति । यथाऽऽहुः**—तदेतद्गार्ग्येण प्रष्टव्यमासीत्स हि शिष्यश्चोदयितेति । तर्हि गार्ग्यमज्ञं निवृत्तप्रश्नं दृष्ट्वा राज्ञो युक्तमौदासीन्यमित्याशङ्क्याऽऽह । **नैवेति** । इनः स्वामी राजेति यावत् । व्येव त्वेति राज्ञा गार्ग्यस्य तत्त्वज्ञानोत्पादनस्य प्रतिज्ञातत्वादित्याह । **बोधेति** । **उक्तं च**—यदा चोदयितुः शिष्यस्य प्रतिपत्तिर्न भवत्याचार्यश्च तमर्थं व्याचिख्यासुर्भवति तदा स्वयमेव चोद्यमुत्थाप्य व्याचष्ट **इति** ॥१९८॥

**अर्थिनेऽर्थं प्रतिज्ञाय नासंपाद्य निवर्तते ॥**
**यथार्थितं सत्पुरुष इति सत्पुरुषव्रतम् ॥ १९९ ॥**

प्रतिज्ञातमपि प्रश्नाकुशलं गार्ग्यं दृष्ट्वा राजा त्यक्ष्यतीत्याशङ्क्याऽऽह । **अर्थिन इति ।** अजातशत्रोः सत्पुरुषत्वात्तदीयं वृत्तमाकलयतोऽकुशलमपि शिष्यमुपलभ्य न संभवत्यौदासीन्यमित्यर्थः ॥ १९९ ॥

**कूटस्थोऽस्यावबोधश्चेत्कादाचित्कं कुतो भवेत् ॥**
**मतोऽवबोधोऽनित्यश्चेत्कादाचित्कं तदाऽर्थवत् ॥ २०० ॥**

गार्ग्यस्य प्रश्नाकरणे राज्ञस्तत्करणे च कारणमुक्त्वा विहायैतदित्यत्र शङ्कते । **कूटस्थोऽस्येति ।** अस्य पुंसः स्वरूपभूतो बोधः कूटस्थो न कादाचित्कोऽतः कूटस्थज्ञानत्वादात्मा स्वापे न गतोऽन्यत्र नापि नष्ट इत्यर्थः । न किंचिदवेदिषमित्यनुभवविरुद्धमेतदिति पूर्ववाद्याह । **कादाचित्कमिति ।** अनुभववशेन बोधस्यानित्यत्वे तत्कादाचित्कत्वं यद्यपि युक्तं तथाऽपि पुंसोऽस्येत्यत्रोक्तज्ञानकादाचित्कत्वासंभवस्य न समाधिरित्याह । **मत इति ।** यद्वा गार्ग्ये प्रश्नमकुर्वत्यपि राज्ञस्तत्करणे हेतुमुक्त्वा प्रष्टुरभिप्रायं वदन्नात्मनो ज्ञानं नित्यमनित्यं वेति विकल्प्याऽऽद्यमादत्ते । **कूटस्थोऽस्येति ।** अनुभवविरोधेन निरस्यति । **कादाचित्कमिति ।** द्वितीयमनुवदति । **मत इति ।** तदा कादाचित्कज्ञानत्वमात्मनो युक्तं यद्यात्माऽचित्स्वभावः स्यात्तस्य चाचित्स्वभावत्वे स्वरूपहानिरिति मत्वाऽऽह । **कादाचित्कमिति** ॥ २०० ॥

**देहादिष्वभिमानोऽस्य कादाचित्कः सहेतुकः ॥**
**आगमापायिसाक्षित्वं नित्यमेवानिमित्ततः ॥ २०१ ॥**

परोक्तां चोद्यगर्भां प्रश्नोक्तिं निरस्यन्पुंसोऽस्येत्यत्रोक्तं कादाचित्कज्ञानायोगं दूषयति । **देहादिष्विति ।** अस्य देहस्थस्याऽऽत्मनस्तत्तदभिमानरूपः कादाचित्को बोधो युक्तो धर्मादिहेतुत्वात्तस्मिन्फलदानायोद्बुद्धे देहादिष्वात्माभिमानात्तदात्मनो युक्तं कादाचित्कज्ञानवत्त्वमित्यर्थः । कथं तर्हि तत्स्वभावत्वं तत्राऽऽह । **आगमेति ।** आत्मनो बुद्ध्यादिसाक्षितया बोधरूपत्वं नित्यमेव हेत्वनपेक्षत्वादित्यर्थः ॥ २०१ ॥

**इदमेव यतो वृत्तं कारणापेक्षिणां सताम् ॥**
**अभूत्वा भवनं तस्मात्कादाचित्कं न दोषभाक् ॥ २०२ ॥**

देहाद्यभिमानस्य धर्मादिकृतस्यापि सदातनत्वमस्तु धर्मादेः सदासंभवात्तत्र सुषुप्तिरित्याशङ्क्याऽऽह । **इदमिति ।** कार्याणामभूत्वा भवनस्वाभाव्याद्देहाद्यभिमानस्यापि धर्मादिकृतस्य कार्यत्वात्तत्स्वाभाव्यं धर्मादेश्च प्रवाहाविच्छेदेऽपि व्यक्तिविच्छेदान्न सदा सत्त्वं न च सति हेतौ कार्यनियमः सामग्र्यां तन्नियमादतो न सुषुप्त्यसिद्धिरिति भावः । कादाचित्कं देहाद्यभिमानस्येति शेषः ॥ २०२ ॥

**प्रतीच्येव यतश्चाभूदागाच्च प्रत्यगात्मनः ॥**
**प्रश्नार्थप्रतिकूलत्वात्प्रत्युक्तेर्नेदृगर्थता ॥ २०३ ॥**

यत्तु कूटस्थोऽस्यावबोधश्चेदित्यादि तत्राऽऽह । **प्रतीचीति** । स्वापकाले प्रतीच्येव जीवस्य स्थितिरुक्तोत्थानकाले च तस्मादेवाऽऽगमनमिति वक्ष्यमाणप्रत्युक्तेरर्थस्फूर्तेस्त्व-दुक्तरीत्या प्रश्नार्थस्य प्रत्युक्तेश्च प्रतिकूलत्वान्न परोक्तार्थता प्रश्नस्य युक्ताऽतस्त्वत्पक्षे न चोद्यगर्भप्रश्नप्रवृत्तिरित्यर्थः ॥ २०३ ॥

**गत्यादिसाधनानां च देह एव स्थितेः कुतः ॥**
**देशान्तरगतिः पुंसो नापि नाशोऽस्य युक्तिमान् ॥ २०४ ॥**

यत्तु विहायैतदित्यादि तत्राऽऽह । **गत्यादीति** । आगतिरादिपदार्थः । साधनानि पादादीनि । न हि नाशोऽस्य युक्तः पुनरुत्थानायोगादकृताभ्यागमादिप्रसङ्गाच्चेत्याह । **नापीति** ॥ २०४ ॥

**साक्षाद्ब्रह्मावबोधस्य प्रतिज्ञातत्वकारणात् ॥**
**भोक्तृभोक्तव्ययोस्तत्त्वं वक्तुं युक्तमतोऽञ्जसा ॥ २०५ ॥**

चोद्यैकमूलामित्यत्र सूत्रितं परमतं पुंसोऽस्येत्यादिनोपपाद्य देहादिष्वित्यादिना निर-स्तमिदानीमपरे याथात्म्यप्रतिपत्त्यर्थमित्यत्र स्वमतं सूचितं वक्तुं प्रक्रमते । **साक्षादिति** । व्येव त्वेत्यपरोक्षज्ञानस्य प्रतिज्ञातत्वात्तदर्थं द्रष्टृदृश्यरूपं वाच्यमतो यथावत्पदार्थे शुद्धे वाक्यार्थधीरित्यर्थः ॥ २०५ ॥

**कर्मादिहेतुजं रूपमतत्त्वं तदनन्वयात् ॥**
**अनिमित्तं स्वतस्तस्य सर्वदाऽव्यभिचारतः ॥ २०६ ॥**
**अकारकक्रियाकार्यं रूपं प्राक्प्रतिबोधतः ॥**
**बुबोधयिषितं भोक्तुरस्मद्गोचरवर्तिनः ॥ २०७ ॥**

दृश्यरूपं द्रष्टुर्विविच्य व्याचष्टे । **कर्मादीति** । कर्मज्ञानवासनादिकृतं जगदविद्या-न्तमनात्मा स्वापादावनन्वयेन व्यभिचारादित्यर्थः । द्रष्टृरूपं दृश्याद्विवेचयति । **अनि-मित्तमिति** । कूटस्थमात्मनः स्वतो रूपं तस्य निमित्तानपेक्षत्वेन सदैवाव्यभिचारादित्यर्थः। उक्तं सौषुप्तं तत्त्वं गार्ग्यासंमतमित्याशङ्क्याऽऽह । **प्रागिति** । अस्मत्प्रत्ययशब्दयोर्गो-चरोऽहंकारस्तत्र साक्षित्वेन वर्तमानस्याऽऽत्मनो निर्विकारं रूपं स्वापे गार्ग्यं प्रति राज्ञा ज्ञापयितुमिष्टमतस्तदसंमतिरप्रयोजिकेत्यर्थः ॥ २०६ ॥ २०७ ॥

**यतोऽस्य न पुरा बोधात्कर्मादेः कार्यमण्वपि ॥**
**प्रतीचो गृह्यते मानादतोऽयं तत्स्वभावकः ॥ २०८ ॥**

कथं कूटस्थाद्वयचैतन्यमात्मरूपं तत्राऽऽह । **यतोऽस्येति** । प्रत्यगात्मनोऽन्यत्कर्म-

---

१ क. पदोक्ता° ।

ज्ञानादिकार्यं द्वैतमीषदपि स्वापादौ यतो नावगम्यते मानाभावादतोऽयमात्मा पूर्वोक्तचित्स्वभावः पश्यन्वै तन्न पश्यतीति श्रुतेरित्यर्थः ॥ २०८ ॥

**क्वाभूदेष पुरा बोधात्कुतश्चायमुपागतः ॥**
**आचक्ष्वैतद्द्वयं गार्ग्य स्थितावागमनेऽवधिम् ॥ २०९ ॥**

पूर्वोत्तरसंबन्धं भाष्येष्टं शिष्ट्वा प्रश्नयोरर्थमाह । **क्वेति** । द्वयमेव व्यनक्ति । **स्थिताविति** ॥ २०९ ॥

**अभूत्प्रतीचोऽन्यत्रायमन्यस्माच्चायमागतः ॥**
**यदि चेत्कारकत्वं स्यान्नो चेद्भ्रान्तिरियं भवेत् ॥ २१० ॥**

तयोरक्षरार्थमुक्त्वा तात्पर्यार्थमाह । **अभूदिति** । यद्ययमात्मा स्वापे स्थितोऽन्यत्राभूद्यदि वाऽऽगतौ ततोऽन्यस्मादागतस्तदा क्रियाकारकफलव्यवहारो वास्तवः स्यात्स्थितावागतौ च स्वयमेवावधिर्नान्यश्चेत्तदा भ्रान्तोऽयं व्यवहारः स्यादेकत्र तदनुपपत्तेरित्यभिप्रायेण प्रश्नावित्यर्थः ॥ २१० ॥

**यत्र वा अन्यदित्येवं यत्र त्वस्येति चापरम् ॥**
**अविद्याविद्ययोः कार्यं तथाच श्रुतिरब्रवीत् ॥ २११ ॥**

क्रियादिव्यवहारस्य भ्रान्तत्वे तदभावस्य वस्तुत्वे च मानमाह । **यत्रेति** । तत्राविद्याकार्यं क्रियादिव्यवहारमस्मदुक्तमनुसरन्ती प्रथमा श्रुतिरुक्तवती द्वितीया तु श्रुतिरपरं विद्याकार्यं क्रियादिव्यवहाराभावं तथैव कथितवतीति योजना ॥ २११ ॥

**वक्तुं प्रष्टुं च बालाकिर्न यतो जज्ञिवांस्ततः ॥**
**प्रश्नयोः स्वयमेवार्थं काश्यो वक्तुं प्रचक्रमे ॥ २१२ ॥**

तदु हेत्यादि व्याचष्टे । **वक्तुमिति** । उत्तरमवतारयति । **तत इति** ॥ २१२ ॥

**पृष्टेनापि न विज्ञातं भवता तदिदं मया ॥**
**उच्यमानं यथा तत्त्वं सम्यक्त्वं श्रोतुमर्हसि ॥ २१३ ॥**

यदपृच्छामेत्यादिभाष्यार्थमाह । **पृष्टेनेति** ॥ २१३ ॥

**यत्रैष एतत्सुप्तोऽभूत्स्वनामामन्त्रणध्वनिम् ॥**
**नार्थोपीयन्निमित्तं ज्ञस्तन्निमित्तमिदं शृणु ॥ २१४ ॥**

यत्रेत्यादिवाक्यमनुवदति । **यत्रेति** । सुप्तोऽभूदित्यस्यार्थमाह । **स्वनामेति** । यत्रेति सप्तम्यर्थमाह । **यन्निमित्तमिति** । उपाध्युपसंहारेण ब्रह्मण्यवस्थानं विशेषज्ञानाभावे निमित्तमित्यर्थः । तत्प्रदर्शनार्थं तदेषामित्यादिवाक्यमित्याह । **तन्निमित्तमिति** ॥ २१४ ॥

**त्रैविध्यं लक्ष्यते यस्माद्बुद्ध्यादिप्राणभूमिषु ॥**
**तदेषामिति षष्ठीयं श्रुत्या तस्मात्प्रयुज्यते ॥ २१५ ॥**

एषामिति निर्धारणषष्ठीप्रयोगस्य तात्पर्यमाह । **त्रैविध्यमिति** । बुद्ध्यादिषु प्राणान्तेष्वर्थेष्वर्थत्रयदृष्टेरन्यतरजिघृक्षया निर्धारणषष्ठी प्रयुक्तेत्यर्थः ॥ २१५ ॥

**प्रत्यक्चिदवभासश्च कारणानुगमोऽपरः ॥**
**तथाचं करणात्मानो बाह्यगोचररञ्जिताः ॥ २१६ ॥**

किं तत्पदार्थत्रयं तदाह । **प्रत्यगिति** । प्रत्यक्चितोऽवमतो भासो नामाभास आत्मभासस्तेषां मध्ये ये प्राणास्तेषां ग्रहणार्थमेषामिति षष्ठीति भावः । करणात्मनां कारणात्मत्वं विना स्वरूपेणाभिव्यक्त्यर्थं विशिनष्टि । **बाह्येति** ॥ २१६ ॥

**बुद्ध्यादेः कृत्स्नकार्यस्य पुंस्कर्मोद्भूतिहेतुतः ॥**
**बुद्ध्याद्युत्क्षेपसंहारौ तस्मात्कर्मनिबन्धनौ ॥ २१७ ॥**

वक्ष्यमाणस्वापे कर्मादिक्षयादात्मनः स्वरूपावस्थानं वक्तुं कर्मादिकृतबन्धं विवक्षुस्तस्य कर्महेतुत्वं तावदाह । **बुद्ध्यादेरिति** । तस्योत्क्षेपसंहारावुत्थानाभिभवौ कर्म हेवेत्यादिश्रुतेरिति शेषः ॥ २१७ ॥

**स्वात्मावभासतो भोक्ता कर्ता त्वज्ञानहेतुतः ॥**
**द्वयाविविक्तो हि परो भोक्ता कर्तेति चोच्यते ॥ २१८ ॥**

चिदाभासाज्ञानयोर्बन्धहेतुत्वमाह । **स्वात्मेति** । आभासवशादन्यो भोक्ताऽन्यश्चाज्ञानात्कर्तेत्येकत्र तत्प्रसिद्धिविरोधमाशङ्क्याऽऽह । **द्वयेति** । परस्मादन्यस्य कार्यत्वेन भोज्यत्वेन वाऽवस्थानात्तस्यैव तदुभयमितिनिर्धारणार्थो हिशब्दः । भोक्तैव केवलं न कर्तेति मतं निरसितुं चकारः ॥ २१८ ॥

**जाग्रत्फलप्रयोगस्य यदा कर्म प्रहीयते ॥**
**व्युत्थानहेत्वसद्भावात्तदाऽकर्ता सुषुप्सति ॥ २१९ ॥**

तर्हि भोक्तृत्वादेः सदा भावात्कुतः सुप्तिस्तत्राऽऽह । **जाग्रदिति** । व्युत्थानं बोधः । अकर्तेति च्छेदः । अकर्तृत्वमभोक्तृत्वस्याप्युपलक्षणम् ॥ २१९ ॥

**भोक्तृप्रयुक्तं कर्तृत्वं कर्त्रा कर्म प्रयुज्यते ॥**
**कर्मप्रयुक्तो भोगश्च ततः संस्कारसंभवः ॥ २२० ॥**

तर्हि स्वापे बन्धतद्धेत्वभावान्मुक्तेरपुनरुत्थानं नेत्याह । **भोक्त्रेति**। स्वापे संसारसंस्काराज्ञानयोर्भावान्न मुक्तिरिति भावः ॥ २२० ॥

**सुखदुःखादिसंस्कारसंस्कृतोऽयं जडः पुमान् ॥**
**रागद्वेषादिनाऽऽक्षिप्तस्ततो भूयः प्रवर्तते ॥ २२१ ॥**

संस्कारस्याज्ञानस्य च रागादिद्वारा पुनःसंसारहेतुत्वमाह । **सुखेति** । अज्ञो हि पुरुषः सुखादिसंस्कृतो रागादिप्रेरितः पुनः संसरतीत्यर्थः ॥ २२१ ॥

---

१ ग. 'च कार' ।

**अन्योन्यं कार्यता चैषां कारणत्वं तथैव च ॥**
**तेनानुच्छिन्नसंस्कार आत्माऽयं प्राक्प्रबोधतः ॥ २२२ ॥**

भोक्तृत्वादीनामन्योन्यं कार्यकारणत्वमुक्तमनुवदति । **अन्योन्यमिति** । मिथो हेतु-फलत्वे फलितमाह । **तेनेति** ॥ २२२ ॥

**अविद्यानाभिसंबन्धो मिथ्याधीचक्रसंस्थितः ॥**
**आब्रह्माऽऽस्थाण्वयं योनीर्बम्भ्रमीत्यनिशं परः ॥ २२३ ॥**

ज्ञानात्पूर्वं वासनानुवृत्तौ संसारसातत्यं फलतीत्याह । **अविद्येति** । पर एव त्वात्मा स्वयमज्ञः सन्मिथ्याज्ञानमधिरूढो नानाविधासु योनिषु सर्वदा संसरतीत्यर्थः ॥ २२३ ॥

**जाग्रत्कर्मक्षये सोऽयमादायाशेषभावनाः ॥**
**असंबुद्धात्मकोद्भूतमनोबुद्ध्यादिरूपिणा ॥ २२४ ॥**
**आधिस्वभावजेनेति कर्ताऽऽदानस्य भण्यते ॥**
**प्रत्यक्चिदवभासान्तः कर्ता क्षेत्रज्ञ उच्यते ॥ २२५ ॥**

एषामित्यस्य त्रैविध्यमित्यादिनाऽर्थमुक्त्वा बुद्ध्यादेरित्यादिना तदित्यस्यार्थ उक्तः । इदानीं तदर्थमनूद्य विज्ञानमादायेत्यस्यार्थमाह । **जाग्रदिति** । बाह्यकरणानामर्थग्रहण-सामर्थ्यं भावनाख्यं सर्वं जाग्रद्भोगप्रदकर्मक्षये सति सुप्तः पुमानादायाऽऽकाशे शेते तत्राऽऽदायेत्यादानस्य कर्ता प्रत्ययेनोच्यत इत्यर्थः । तृतीयार्थमाह । **असंबुद्धेति** । तच्चाज्ञातं चैतन्यं तस्मादुद्भूतं यन्मनोबुद्ध्यादि तद्यातेनाऽऽधिस्वभावशब्दितानाद्यज्ञानजेन चिदाभासेन करणेनाऽऽदानमिति करणार्थे तृतीयेत्यर्थः । ल्यपोक्तमादानकर्तारं विवेच-यति । **प्रत्यगिति** । चिदवभासस्य तदाभासस्यान्तोऽवसानमाश्रयः सोऽयमाभासी जीवः कर्ताऽऽदानस्येत्यर्थः । चिदाभासस्वभावो वा स तथेति यावत् ॥२२४॥२२५॥

**आदीयमानं विज्ञानं सामर्थ्यं विषयोन्मुखम् ॥**
**वागादीनामिह ग्राह्यं प्राणानां विषयाञ्जनम् ॥ २२६ ॥**

प्राणानामित्यस्यार्थं वदन्नादानकर्मविज्ञानं पूर्वभावनाख्यं व्यनक्ति । **आदीयमान-मिति**। इहेति वाक्योक्तिः । विषयोन्मुखमित्यस्यार्थमाह। **विषयाञ्जनमिति**। वागादीनां विषयस्पृष्टं ग्रहणसामर्थ्यमादानकर्मेत्यर्थः ॥ २२६ ॥

**शक्तयः करणान्यत्र गृह्यन्ते कारणात्मना ॥**
**परमात्मा ग्रहीताऽत्र स्वाभासाभिन्नविग्रहः ॥ २२७ ॥**

जीवश्चिदाभासेनेन्द्रियाणामर्थग्रहणसामर्थ्यं संहृत्याज्ञाते ब्रह्मण्याकाशे शेत इति वाक्यार्थ उक्तः । इदानीमर्थान्तरमाह । **शक्तय इति** । अर्थग्रहशक्तिमन्ति समर्थानि करणानि विज्ञानानि द्वितीयोक्तानि तृतीयोक्ताज्ञातचैतन्यात्मना सुप्तावादानकर्माणि तत्र

---

१ क. °नादिसं° । २ ख. इति संबन्धः । त° ।

च स्वस्याऽऽभासो यस्मिन्नज्ञाने तेनैक्याध्यासमुपगतः स्वाभासेन वा जीवेनाभिन्नः परः कर्ता स चाऽऽकाशे शुद्धे स्वरूपे तिष्ठतीत्यर्थः ॥ २२७ ॥

**तथा संवर्गविद्यायां प्राणवाय्वात्मना श्रुतिः ॥**
**वागग्न्याद्युपसंहारं वक्ति नान्येन कारणात् ॥ २२८ ॥**

स्वापे सर्वस्य कार्यस्य कारणात्मनोपसंहारे श्रौतं लिङ्गमाह । **तथेति** । सुप्तौ कार्यलयानुसारेण संवर्गविद्याधिकारे वायुर्वाव संवर्ग इत्यारभ्य वायुर्ह्येवैतान्सर्वान्संवृङ्क्त इत्यन्तेनाग्न्यादीनां वाय्वात्मनोपसंहारमुक्त्वा प्राणो वाव संवर्ग इत्युपक्रम्य प्राणो ह्येवैतान्सर्वान्संवृङ्क्त इत्यन्तेन च वागादीनां प्राणात्मनोपसंहारं वक्ति श्रुतिः । न च कार्यस्य कारणादन्यात्मनोपसंहारोऽतो वागादीनां प्राणात्मनोपसंहारं स्वापे वदन्ती श्रुतिस्तत्र कार्यस्य कारणात्मनोपसंहारं विवक्षतीत्यर्थः ॥ २२८ ॥

**नामाद्याशावसानं च प्राणे सर्वं प्रतिष्ठितम् ॥**
**प्राणबन्धनवाक्याच्च सूक्तमेतद्यथोदितम् ॥ २२९ ॥**

भूमविद्याप्रकरणमपि यथोक्तावद्योतकमित्याह । **नामादीति** । प्राणशब्देनाज्ञातं ब्रह्मोच्यते । सर्वमपि कार्यं मनःशब्दितजीवपूर्वकमज्ञाते ब्रह्मणि प्रतिष्ठितमित्यत्रैव वाक्यान्तरमाह । **प्राणेति** । स्वापे कारणात्मना कार्यं सर्वमुपसंहृतमित्येतदुपसंहरति । **सूक्तमिति** ॥ २२९ ॥

**आविर्भूतस्वकार्यस्य संसर्गः कारणात्मना ॥**
**वागाद्यादानमत्र स्याद्बुद्बुदानां यथाऽम्भसा ॥ २३० ॥**

आदायेत्यत्र प्रत्ययार्थमुक्त्वा प्रकृत्यर्थमाह । **आविर्भूतेति** । परात्मविषयः स्वशब्दः । अत्र सुप्താविति यावत् । संसर्गस्तादात्म्यमिति वक्तुमुदाहरणम् ॥ २३० ॥

**सहार्थे वा तृतीयेयं विज्ञानेनेति या श्रुता ॥**
**सह प्रमातृज्ञानेन वागादेरुपसंहृतिः ॥ २३१ ॥**

करणेत्थंभावयोस्तृतीयां व्याख्यायार्थान्तरमाह । **सहेति** । तमेव विशदयति । **सहेति** । मात्रा तन्निष्ठार्थज्ञानेन च सह करणानां संहृतिरित्यर्थः ॥ २३१ ॥

**यदि वाऽस्तु तृतीयेयमित्थंभूतार्थवाचिनी ॥**
**प्रत्यग्ज्ञानस्वभावेन कार्यकारणसंहृतिः ॥ २३२ ॥**

तृतीयायाः शक्तयः करणानीत्यत्रोक्तार्थेऽपि न दूषणमित्याह । **यदि वेति** । तर्हि पुनरुक्तिरित्याशङ्क्य विज्ञानशब्दयोरर्थान्तरस्वीकारान्नैवमित्याह । **प्रत्यगिति** । अनुभवात्मना सहेतोर्जगतः संहारोऽत्र विवक्षितोऽतः स्वे महिम्नि तिष्ठत्यात्मेत्यर्थः ॥२३२॥

**अनन्यबोधप्रत्यक्षो य एष इति भण्यते ॥**
**तस्य संप्रतिपत्त्यर्थमन्तर्हृदयकीर्तनम् ॥ २३३ ॥**

य एष इति पदयोरर्थमाह । **अनन्येति** । स्वप्रकाशस्तदर्थो य इत्युक्तः स एव प्रत्यग्भूत एषशब्दोक्त इत्यर्थः । अन्तरित्यादेस्तात्पर्यमाह । **तस्येति** । प्रतीचो हृदयं स्थानं तदेव ब्रह्मणोऽपीत्युक्ते सत्यैक्यसिद्धिस्तस्य सम्यक्प्रतिपत्त्यर्थं हृदयेऽन्तर्ब्रह्मेति ब्रह्मणो हृदयस्थानत्वोक्तिरित्यर्थः ॥ २३३ ॥

**पराक्प्रमेयभूमिभ्यो व्युत्थाप्य मन आदरात् ॥**
**प्रत्यक्प्रवणया दृष्ट्या पश्याऽऽत्मानं त्वमञ्जसा ॥ २३४ ॥**

देहाद्यभिन्नतया बद्धत्वेन भातस्य त्वमर्थस्यासंसारिब्रह्मैक्यं कथमित्याशङ्क्य त्वमर्थस्य विवेचनीयत्वमाह । **परागिति** । मनो हि स्वारस्येन पराक्षु विषयेषु विप्रसृतं तदन्वयव्यतिरेकाभ्यां तेभ्यो निष्कृष्य प्रत्यगात्मनिष्ठं कृत्वा तत्प्रवणया दृष्ट्या निरुपाधिकमात्मानं साक्षादनुसंधेहीत्यर्थः ॥ २३४ ॥

**आत्मबुद्धिरियं पुंसां लक्ष्यतेऽव्यभिचारिणी ॥**
**व्यभिचारिणीष्वनात्मोत्थबुद्धिषु प्रत्यगात्मनि ॥ २३५ ॥**

कीदृशी विवेकधीस्तामाह । **आत्मेति** । पुंसामात्मभूता बुद्धिश्चैतन्यं तदनात्मधीषु व्यभिचारिणीषु प्रतीचि कौटस्थ्यादव्यभिचारि तस्मादव्यभिचारि चैतन्यमितरद्व्यभिचारीत्येवं विवेकधीरित्यर्थः ॥ २३५ ॥

**बुद्ध्यात्मनोऽपि सा बाह्यपदार्थज्ञानविभ्रमात् ॥**
**संकीर्यमाणेवाऽऽभाति तमसोपहतात्मनाम् ॥ २३६ ॥**

आत्मचैतन्यस्य कूटस्थाव्यभिचारित्वे कथं कर्तृत्वादिधीरित्याशङ्क्याऽऽह । **बुद्धेति** । बोधैकरसस्याऽऽत्मनो या स्वरूपदृष्टिः सा कूटस्थाव्यभिचारिण्यपि देहादिष्वात्मत्वभ्रान्त्या कर्तृत्वादिमती चाविवेकिनां भातीत्यर्थः ॥ २३६ ॥

**जग्धे कार्ये च निःशेषे कारणे चाऽऽत्मविद्यया ॥**
**अपूर्वाद्यात्मनाऽऽत्माऽयमात्मन्येवावसीयताम् ॥ २३७ ॥**

कर्तृत्वादेराविद्यत्वे फलितमाह । **जग्ध इति** ॥ २३७ ॥

**आदायाकाशशब्दाभ्यामैकात्म्यं प्रतिपाद्यते ॥**
**क्षेत्रज्ञेश्वरयोः साक्षाच्छ्रुत्येहाज्ञानहानतः ॥ २३८ ॥**

ऐक्यज्ञानार्थत्वमर्थविवेकमुक्त्वा[1] तत्फलमाह । **आदायेति** । त्वंतदर्थार्पणद्वारेणेति[2] शेषः । श्रुत्येत्याख्यातोक्तिः । इहेत्यैक्यज्ञानमुक्तम् । तस्मिन्सत्यज्ञानहानात्तदुक्तिरर्थवतीत्यर्थः ॥ २३८ ॥

**तात्स्थ्याद्धृदयशब्देन बुद्धिरत्राभिधीयते ॥**
**ऐकात्म्यप्रतिपत्त्यर्थं क्षेत्रज्ञपरमात्मनोः ॥ २३९ ॥**

---

१ क. °नार्थं त्व° । २ क. °रेति ।

अन्तर्हृदय इत्यत्र हृदयशब्दार्थमाह । **तात्स्थ्यादिति ।** पुण्डरीकाकारमांसखण्डस्यैव हृदयत्वं किं न स्यात्तत्र तच्छब्दस्य मुख्यत्वादित्याशङ्क्याऽऽह । **ऐकात्म्येति ।** जीवस्य बुद्धिस्थत्वप्रसिद्धेराकाशस्य परस्यापि तन्निष्ठत्वोक्तौ तयोरैक्यं सिध्यति तदर्थं हृदयपदेन बुद्धिग्रहणमित्यर्थः ॥ २३९ ॥

**घटाकाशो महाकाश इत्युक्तौ खैकधीर्यथा ॥**
**तथेहापि कथं नाम प्रत्यग्धीः स्यादितीर्यते ॥ २४० ॥**

तयोरैकात्म्यं तादात्म्यमैक्यं वाऽऽद्ये भेदोऽपि स्याद्द्वितीये पदान्तरवैयर्थ्यमित्याशङ्क्य तदैक्येऽपि व्यावर्त्यभेदान्न पदान्तरानर्थक्यमिति मन्वानः सन्नाह । **घटेति ।** इहेति प्रकृतवाक्योक्तिः । प्रत्यग्धीस्तदैकरस्यबुद्धिरिति यावत् । ईर्यत आदायाऽऽकाशे शेत इत्युच्यत इत्यर्थः ॥ २४० ॥

**बुद्धेरन्तः प्रतीचोऽन्यो नार्थः संभाव्यते यतः ॥**
**तस्मादाकाशशब्देन[१] प्रत्यगात्माऽभिधीयते ॥ २४१ ॥**

आकाशशब्देन रूढ्या भूताकाशोक्तेस्तस्याब्रह्मार्थत्वान्न प्रत्यग्ब्रह्मणोरत्रैक्यधीरित्याशङ्क्याऽऽह । **बुद्धेरिति ॥** २४१ ॥

**प्राणादीनां यतो जन्म वक्ष्यते प्रत्यगात्मनः ॥**
**तस्माच्चाऽऽकाशशब्देन[२] ब्रह्मैवात्राभिधीयते ॥ २४२ ॥**

भूताकाशोऽपि तदन्तः संभवति सर्वगतत्वादित्याशङ्क्यात्राऽऽकाशशब्दोक्तस्यास्मादात्मन इत्युत्तरत्राऽऽत्मशब्दाकृष्टस्य प्राणादिजन्महेतुत्वश्रुतेर्ब्रह्मैवात्राऽऽकाशमन्यथा वाक्यशेषविरोधादित्याह । **प्राणादीनामिति ।** सर्वाणि ह वा इमानि भूतान्याकाशादेवेत्यादिश्रुत्यन्तरमत्र समुच्चेतुं चशब्दः ॥ २४२ ॥

**अथाऽऽकाशो ह वै नाम सता सोम्येति च श्रुतिः ॥**
**ब्रह्माकाशात्परो नान्य आकाश इह गृह्यते ॥ २४३ ॥**

तत्रैव श्रुत्यन्तरमाह । **अथाऽऽकाश इति ।** तस्यापि भूताकाशविषयत्वमाशङ्क्याऽऽकाशोऽर्थान्तरत्वादिव्यपदेशादिति न्यायविरोधं मन्वानः श्रुत्यन्तरमाह । **सतेति ।** परमुत्कृष्टो निकृष्टो वेत्यर्थः । शयनवाक्यं सप्तम्यर्थः ॥ २४३ ॥

**स्वतोवगमरूपेऽस्मिन्कूटस्थे कारणात्मना ॥**
**कात्स्न्र्येनावसितिर्भोक्तुः शेत इत्यभिधीयते ॥ २४४ ॥**

शयनशब्दार्थमाह । **स्वत इति ।** यथोक्ते वस्तुनि भोक्तुः सर्वात्मनाऽवसाने पुनरुत्थानमनुचितमित्याशङ्क्याज्ञातवस्त्वाकारेणावसानस्वीकारान्मैवमित्याशयेन विशिनष्टि । **कारणात्मनेति ॥** २४४ ॥

---

१ क. °न ब्रह्मैवात्राभि° । २ ग °स्मादाका° ।

दृष्टान्तश्च कुमारादि तथाच घटतेऽञ्जसा ॥
प्रत्यक्चैतन्यमात्रत्वान्न तु निद्रेह युज्यते ॥ २४५ ॥

प्रसिद्धं त्यक्त्वा किमर्थमित्थं शयनोक्तिरित्याशङ्क्याऽऽह । **दृष्टान्तश्चेति** । किंच प्रसिद्धं शयनं निद्रा नाऽऽत्मनि कल्पते तस्य चिन्मात्रत्वेन तद्विरोधित्वादित्याह । **प्रत्यगिति** ॥ २४५ ॥

देहाद्यध्यक्षतां हित्वा यदाऽयं वर्तते तदा ॥
स्वात्मन्येवाऽऽस्त इत्येतत्कुतश्चेत्स्वपितीत्यतः ॥ २४६ ॥

उक्तमनूद्य हेतुं प्रश्नपूर्वकमादत्ते । **देहादीति** ॥ २४६ ॥

इतश्च प्रत्यगात्मस्थो नान्यत्रागादयं पुमान् ॥
सुषुप्ते[1] स्वपितीत्युक्तेस्तदेतदभिधीयते ॥ २४७ ॥

तमेव व्याकरोति । **इतश्चेति** । चकारः सता सोम्येत्यादिवाक्यसमुच्चयार्थः । इतःशब्दः स्वपितीत्युक्तेरित्यनेन संबध्यते । श्रुत्यन्तरसिद्धेऽर्थे तानीत्याद्यवतारयति । **तदेतदिति** ॥ २४७ ॥

अन्ये व्याचक्षते बुद्धिविज्ञानेनेति विस्मिताः ॥
वागादिज्ञानमादाय हृत्खे शेते य उत्थितः ॥ २४८ ॥

तदेषामित्यादेः स्वाभीष्टमर्थमुक्त्वा तदनुरोधेन तानीत्यादि चावतार्य भर्तृप्रपञ्चमतमाह । **अन्य इति** । अस्मद्व्याख्यानं दुष्टं स्वव्याख्यानं चादोषं पश्यन्तो विस्मयाविष्टधियो यः संप्रत्युत्थितः स समुत्थानात्पूर्वं बुद्ध्याख्यविज्ञानेन करणेन वागादिरूपं विज्ञानमादाय हृदयावच्छिन्ने भूताकाशे तिष्ठतीत्येवमेतद्वाक्यं परे व्याकुर्वन्तीत्यर्थः ॥ २४८ ॥

सुषुप्सुर्मनसैवाऽऽत्मा मनस्येव समूहति ॥
प्राणान्स्वशक्तिभिः साकं मनोऽप्यात्मनि लीयते ॥ २४९ ॥

आदायेति वागाद्युपसंहार उक्तः स केन क्रमेणेत्यपेक्षायामाह । **सुषुप्सुरिति** । मनसि सत्येवेति यावत् । समूहत्युपसंहरति मनसा तद्रूपेणेत्यर्थः । करणार्थे वा तृतीया । तदात्मन्येव तेषामुपसंहारः । प्राणा बाह्यकरणानि । स्वशक्तयो विषयग्रहणसामर्थ्यम् । आत्मा प्रत्यगर्थः । यदा मनसा मनसि वागादिलयस्तदा तदवस्थितिं शङ्कित्वोक्तम् । **मनोऽपीति** ॥ २४९ ॥

विशीर्णकरणग्रामो बुद्धिभावनया युतः ॥
हृद्याकाशात्प्रसृत्याऽऽत्मा नाडीभिः स्वप्नमश्नुते ॥ २५० ॥
मनोवागादिविज्ञानविग्रहः करणाख्यया ॥
विजानातीति कर्तृस्थे परस्मिन्भावसाधनः ॥ २५१ ॥

---

१ ग. सुषुप्तौ ।

उपसंहृतकरणश्चेदात्मा तर्हि हेत्वभावान्न स्वप्नं पश्येदित्याशङ्क्याऽऽह । **विशीर्णेति** । बुद्धिभावना जाग्रद्वासना । हृद्याकाशात्तदवच्छिन्नभूताकाशादित्यर्थः । नाडीभिः प्रसृत्येति संबन्धः । मनोवागादीन्यन्तर्बहिरिन्द्रियाणि विज्ञानानि तदुपाधिकः स्वप्नात्पूर्वमित्यर्थः । करणाख्यया विज्ञानेनेत्युक्तकरणसंज्ञितबुद्ध्येत्यर्थः । विज्ञानेनेत्यस्य कर्त्रादिविषयत्वमाशङ्क्याऽऽह । **विजानातीति** । कर्तृविषये विज्ञानशब्दे विजानातीति व्युत्पत्त्या जीवो गृह्यते परविषये ज्ञप्तिरितिव्युत्पत्तिः सान्विज्ञानशब्दो ब्रह्म ब्रूते न चेहोभयं युक्तमादायेति पृथक्कर्तृनिर्देशाद्ब्रह्मणश्चानाकाङ्क्षितत्वादतस्तेन करणमुच्यते । **यथाऽऽहुः**—उयत्रापि करणसाधन एव विज्ञानशब्द इति ॥ २९० ॥ २९१ ॥

**प्रकाशवृत्तिर्या ज्ञस्य सा हृद्धर्मानुगा सती ॥**
**उद्गच्छति यतस्तस्माद्धृद्विशेषे लयं विदुः ॥ २९२ ॥**

य एष इत्यादेस्तात्पर्यमाह । **प्रकाशेति** । ज्ञस्येति च्छेदः । तद्रूपा वृत्तिश्चैतन्यलक्षणा । हृद्धर्माः कामादयः । हृद्विशेषे तदवच्छिन्नाकाशे । लयः शयनम् । **यथोक्तम्**—तस्य हि ज्ञानात्मनो या च स्वप्रकाशवृत्तिः सा हृदयद्वारेण व्युच्चरतीति हृदयं विशेषायतनमिति ॥ २९२ ॥

**स्वगोचरोन्मुखं ज्ञानं वागादीनामशेषतः ॥**
**आदाय भावनाबुद्ध्या शेते ज्ञो हृदयाम्बरे ॥ २९३ ॥**

विज्ञानपदयोरर्थान्तरं वदन्वाक्यार्थं निगमयति । **स्वगोचरेति** ॥ २९३ ॥

**भावनारूपविज्ञानमभिव्यक्तं यदा हृदि ॥**
**क्षेत्रज्ञस्यार्थवद्भाति शेते हृदीत्यतो वचः ॥ २९४ ॥**

स्वापे हृदाकाशे जीवस्य शयनमित्यत्र युक्तिमाह । **भावनेति** । यदा जीवस्य जाग्रद्वासना हृदये स्वाप्नभोगदकर्मवशाद्व्यक्ता तदा शब्दादीनां तन्मयत्वाद्वस्तुतोऽसत्वेऽपि तदाकारा सा भाति स्वापे तु ज्ञानज्ञेययोः स्थूलयोः सूक्ष्मयोश्चासत्त्वाद्धृदयाकाशे शयनवचोऽर्थवदित्यर्थः । **यथाऽऽहुः**—तत्र हि भावनाविज्ञानं विशेषेणाभिव्यक्तमास्ते यत एवं कृत्वा तस्मिञ्शेत इत्युच्यत इति ॥ २९४ ॥

**एवं श्रुतिरियं कैश्चिद्व्याख्याताऽतिप्रयत्नतः ॥**
**परीक्ष्यैतद्द्वयं ग्राह्यं स्वयमेव परीक्षकैः ॥ २९५ ॥**

परपक्षमुपसंहरति । **एवमिति** । श्रुतितात्पर्यमतिक्रम्य स्वकीयोत्प्रेक्षया व्याख्यानस्य प्रवृत्तिरिति प्रयत्नः परकीयव्याख्यानस्याऽऽदेयत्वशङ्कां निरस्यति । **परीक्ष्येति** । द्वयमिति व्याख्यानयोरुक्तिः । ग्राह्यं निर्दोषमितरत्त्याज्यमिति शेषः ॥ २९५ ॥

**सह भावनया बुद्धेः श्रुतत्वादुपसंहृतेः ॥**
**न स्यात्तथोपसंहारस्तेनेयं कल्पना मुधा ॥ २५६ ॥**

तथाऽपि कुतो भर्तृप्रपञ्चव्याख्यानस्यैव दुष्टत्वेन त्याज्यत्वं तदाह । **सहेति** । गृहीतं मन इति सवासनस्य मनसः स्वापे संहारश्रुतेस्तेन करणेन वागादिसंहारासिद्धेः सुषुप्सुर्मनसैवेत्यादिकल्पना व्यर्था तस्माद्बुद्ध्यादिसंहारे चिदाभासस्यैव करणत्वादाभासिनश्च कर्तृत्वात्सर्वोपसंहृतावज्ञातब्रह्मणि जीवस्थितिरित्येतदेव युक्तमित्यर्थः ॥ २५६ ॥

**स्वगोचरेषूत्सृष्टानि यदा गृह्णात्ययं स्वयम् ॥**
**वागादीनि तदैवैनं स्वपितीति प्रचक्षते ॥ २५७ ॥**

तदेषामित्यादेर्व्याख्यान्तरनिरासेन स्वव्याख्यां दृढीकृत्य प्रागवतारितस्य तानीत्यादेरर्थमाह । **स्वगोचरेष्विति** । गृह्णाति स्वात्मन्युपसंहरतीत्यर्थः ॥ २५७ ॥

**समाख्यासंश्रयात्तस्मादभूत्प्राक्प्रत्यगात्मनि ॥**
**व्यभिचारोऽपि चेन्नाम्नि ततो युक्तिरपीर्यते ॥ २५८ ॥**

स्वपितिनामनिर्देशस्य फलमाह । **समाख्येति** । स्वमपीतो भवतीति श्रुत्यन्तरं तद्वशान्न स्वापे स्वरूपावस्थानमश्वकर्णादिनाम्नि स्वार्थव्यभिचारादिति शङ्कते । **व्यभिचारोऽपीति** । तर्हि नामसहायत्वेन युक्तिरपि स्वरूपावस्थाने कथ्यतेऽनन्तरवाक्येनेत्याह । **तत इति** ॥ २५८ ॥

**वागादिप्रकृतौ प्राणशब्दो घ्राणेऽवगम्यते ॥**
**मुख्यस्यानुपसंहारान्न तद्वाचक इष्यते ॥ २५९ ॥**

तद्गृहीत एव प्राणो भवतीत्यत्र प्राणशब्दं व्याकुर्वन्युक्तिमेव व्यनक्ति । **वागादीति** । प्रकरणाद्बलीयसी श्रुतिरित्याशङ्क्याऽऽह । **मुख्यस्येति** । पार्श्वस्थदृष्ट्याऽनुपसंहारो द्रष्टव्यः। स्वापे सर्वकरणसंहाराद्भेदकोपाध्यभावादसंसारिब्रह्मात्मना जीवस्थितिरिति भावः ॥ २५९ ॥

**वासनामात्रहेतुश्च स्वप्ने कर्मेन्द्रियाश्रयः ॥**
**सर्वेन्द्रियाणां लीनत्वाद्व्यापारो न प्रबोधवत् ॥ २६० ॥**

करणसंहारोऽपि स्वापे नासंसार्यात्मना स्थितिः स्वप्ने व्यभिचारादित्याशङ्क्याऽऽह । **वासनेति** । चकारो ज्ञानेन्द्रियाश्रयव्यापारसमुच्चयार्थः । अतो न तत्रासंसार्यात्मना स्थितिरित्यर्थः । व्यापारोऽर्थेन्द्रिययोगकृत इति शेषः । विलीनत्वात्सुषुप्ताविति द्रष्टव्यम् । वैधर्म्यदृष्टान्तः । **प्रबोधवदिति** ॥ २६० ॥

**वागाद्युपाधिसंबन्धे संसारित्वमिवेक्ष्यते ॥**
**ते तूपसंहृताः सर्वेऽसंसारित्वमतो दृशेः ॥ २६१ ॥**

---

१ ख. °त्तथोप° । २ ख. °न्तरं निरस्य तेन । ३ ग. °बन्धात्संसा° ।

पूर्वार्धं विवृणोति । **वागादीति** । अवस्थाद्वयमत्र विवक्षितं तत्र संसारित्वस्य कल्पितत्वं द्योतयितुमिवेत्युक्तम् । उत्तरार्धं विभजते । **ते त्विति** । असंसारित्वमिति च्छेदः। सुषुप्तिरिहाभिप्रेता ॥ २६१ ॥

**ननु स्वप्नेऽपि जाग्रद्वत्प्रत्यक्षमुपलभ्यते ॥**
**सर्वेन्द्रियवियोगेऽपि सुखिदुःखित्वमात्मनः ॥ २६२ ॥**

स यत्रेत्यादेः शङ्कामाह । **नन्विति** ॥ २६२ ॥

**मैवं मृषात्वात्स्वप्नोत्थसुखदुःखादिलक्षण—**
**संसारस्येत्यतो वक्ति श्रुतिस्तस्य मृषार्थताम् ॥ २६३ ॥**

प्रतीत्यनुसारि चोद्यं दूषयति । **मैवमिति** । कथं तस्य मृषात्वमित्याशङ्क्य श्रुतिसामर्थ्यादित्याह । **इत्यत इति** ॥ २६३ ॥

**नास्य स्वापः प्रबोधो वा कुतः स्वप्नस्य संभवः ॥**
**प्रत्यक्स्वभाव एवास्य जाग्रत्स्वप्नसुषुप्तयः ॥ २६४ ॥**

स्वप्नमिथ्यात्वं श्रुतिभाष्याभिप्रेतं विवृणोति । **नेत्यादिना** । नासङ्गस्याऽऽत्मनोऽवस्थात्रयं वस्तुतोऽस्तीति भावः । तत्प्रतिभानस्य गतिमाह । **प्रत्यगिति** । प्रतीचः स्वभावोऽविद्या **स्वभावस्तु** प्रवर्तत इति **स्मृतेः** ॥ २६४ ॥

**सुप्तः प्रबुद्ध इत्येवं स्वप्नं पश्यति चेति यः ॥**
**विकल्प एष भूतानामविद्यारात्रिशायिनाम् ॥ २६५ ॥**

अवस्थात्रयस्य मायामात्रत्वे कथं त्रित्वप्रथेत्याशङ्क्य साऽपि तथेत्याह । **सुप्त इति** ॥ २६५ ॥

**मायामात्रमिदं सर्वं जगत्स्थावरजङ्गमम् ॥**
**सर्पादेरिव रज्ज्वादिस्तत्त्वमस्यपरं पदम् ॥ २६६ ॥**

विमतं न मिथ्या व्यवह्रियमाणत्वाद्घटवदित्याशङ्क्याऽऽह । **मायेति** । निरधिष्ठानभ्रमवादं निरस्यति । **सर्पादेरिति** ॥ २६६ ॥

**चित्तसंमोहमात्रेस्मिँल्लोकोऽयं परिखिद्यते ॥**
**दिङ्मोहाकुलविज्ञानो नष्टमार्ग इवाध्वगः ॥ २६७ ॥**

दृष्टान्तस्य साध्यवैकल्यमुक्त्वा हेतोरनैकान्त्यमाह । **चित्तेति** ॥ २६७ ॥

**अस्मिन्नर्थे जगादेमौ श्लोकौ यदुकुलोद्वहः ॥**
**पुराणः शाश्वतो विष्णुः प्रपन्नाय किरीटिने ॥ २६८ ॥**

अज्ञानजं बन्धं वदता ज्ञानान्मुक्तिरित्यर्थादुक्तं तत्र मानं ब्रुवन्प्रकृतहेतोरागमविरोधमाह । **अस्मिन्निति** । देहित्वेनासर्वज्ञत्वादि निरस्यति । **पुराण इति** ॥ २६८ ॥

---

१ ख. °कृते हे° ।

**न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ॥**
**माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥ २६९ ॥**

स्वप्रकाशे ज्ञानसौलभ्यात्कुतो बन्धोऽज्ञानादित्याशङ्क्याऽऽह । **न मामिति** ॥ २६९ ॥

**दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥**
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ २७० ॥**

मायामतीत्य तर्हीश्वरं प्रपत्स्यन्ते नेत्याह । **दैवीति** । कीदृशस्तर्हि तदतिक्रमोपायस्तत्राऽऽह । **मामेवेति** ॥ २७० ॥

**आत्मैवेदं जगत्सर्वं सत्यापूर्वादिलक्षणम् ॥**
**वेत्ति यस्तत्त्वतो वाक्यात्तस्यैवेह कृतार्थता ॥ २७१ ॥**

मायातिक्रमोपायस्तु भगवत्प्रतिपत्तिस्तदुपायस्तु कः स्यादित्याशङ्क्य तदुपायतत्फले कथयति । **आत्मेति** । ब्रह्मपदमितिपदं चाध्याहृत्य योज्यम् । इहेति जीवदवस्थोक्तिः ॥ २७१ ॥

**प्रत्यक्क्रमोवसाय्येव पराग्ज्ञानमशेषतः ॥**
**प्रत्यगात्मन्यविद्येति न्वविद्यापरिकल्पना ॥ २७२ ॥**

प्रत्यक्षादेरेव तदुपायत्वं किं न स्यादित्याशङ्क्याऽऽह । **प्रत्यगिति** । सर्वमपि प्रत्यक्षादि प्रत्यगविद्याजन्ये द्वैते पर्यवस्यन्न पत्यञ्चं प्रकाशयितुमलमित्यर्थः । प्रतीचि विद्यास्वभावे कथमविद्यासंबन्धः स्यादित्याशङ्क्य संबन्धग्रन्थोक्तं स्मारयति । **प्रत्यगात्मनीति** । वस्तुवृत्त्या न तत्राविद्येति तुशब्दः ॥ २७२ ॥

**स्वार्थं प्रत्येव विज्ञेयाः सदसत्त्वादिकल्पनाः ॥**
**जाग्रत्स्वप्नभावतः सिद्धौ स्वार्थं प्रत्येव न स्वतः ॥ २७३ ॥**

अविद्यया बन्धो विद्यया मुक्तिरिति ब्रुवन्व्यवह्रियमाणत्वहेतोरागमविरोधमुक्त्वा प्रत्यनुमानमाह । **स्वार्थमिति** । विमतं मिथ्या परार्थत्वात्संमतवदिति भावः । हेतोः पक्षधर्मतामाह । **जाग्रदिति** । अतो जडत्वादिहेतोरिति यावत् ॥ २७३ ॥

**वागादिसाध्यसंदृष्टेः स्वप्नो बोधसमो यदि ॥**
**अवस्थात्रितयस्यास्य कुतः सिद्धिरितीर्यताम् ॥ २७४ ॥**

परानुमाने पक्षबाधकं वक्तुं तदनुवदति । **वागादीति** । तेन साध्यो व्यवहारस्तस्य दर्शनादिति यावत् । बोधो बोध्यमानो घटादिः । स्वप्नशब्दोऽवस्थात्रयपरस्त्रयः स्वप्ना इति श्रुतेः । इदानीं बाधकमाह । **अवस्थेति** । सत्यत्वेऽस्य स्वतः परतो वा सत्तास्फूर्ती नाऽऽद्यो जडत्वान्नेतरः संबन्धानिरूपणात्तथाच तदसिद्धिरित्यर्थः ॥ २७४ ॥

**आदायेति च क्त्वान्तोक्तेः पूर्वकालैककर्मणः ॥**
**स्वप्न एव तु संसिद्धिरादावन्ते ह्यसंभवात् ॥ २७५ ॥**

तन्मिथ्यात्वे हेत्वन्तरमाह । **आदायेति** । क्त्वाप्रत्ययान्तप्रयोगस्य समानकर्तृकक्रिययोः पूर्वकालक्रियाविषयत्वात्प्राणादेः स्वापात्पूर्वं स्वप्ने जागरे वा सत्त्वं गम्यतेऽतस्तस्मादादावन्ते च तदभावाद्व्यभिचारित्वान्मिथ्यात्वं विमतं मिथ्या व्यभिचारित्वात्संमतवदित्यर्थः ॥ २७५ ॥

**इति भूतार्थसंबोधज्ञानोन्मीलितचक्षुषाम् ॥**
**नास्ति व्याधिर्जरा नास्ति नास्ति देशपरिभ्रमः[1] ॥ २७६ ॥**

अवस्थात्रयमिथ्यात्वोक्तिफलमाह । **इति भूतेति** । उक्तमानयुक्तितो जातद्वैतमिथ्यात्वार्थनिश्चयेन पदार्थशोधने वाक्यात्तदर्थजातज्ञानानां सर्वानर्थशान्तिः फलतीत्यर्थः ॥ २७६ ॥

**नास्ति रोगो न संतापो नास्ति कामादिसंप्लुतिः ॥**
**न स्युर्हर्षभयोद्वेगहानोपचयमृत्यवः ॥ २७७ ॥**
**न शोको नारतिः काचिन्न कर्तृत्वं न कार्यता ॥**
**न ज्ञेयं नापि च ज्ञाता तदभावोऽपि नेष्यते ॥ २७८ ॥**

व्याधिर्नास्तीत्युक्तं स द्विविध आगन्तुको नैसर्गिकश्चाऽऽगन्तुकं बाह्यमाभ्यन्तरं च द्विविधमपि धुनीते । **नास्ति रोग इति** । नैसर्गिकं निरस्यति । **नास्ति कामादीति** । कामस्याऽऽदिरविद्या तत्संसर्गो विदुषो नास्तीत्यर्थः । यद्वा कामक्रोधादीनां स्पर्शाभाव उक्तः । अविद्याध्वस्तौ तत्कार्यदेहद्वयध्वस्तेस्तद्धर्मध्वस्तिरित्याह । **न स्युरिति** । द्वितीयव्याख्याने त्वादिशब्दार्थकथनमेतत् । उद्वेगस्तत्त्वधीकृतो द्वेषः । इष्टवियोगनिमित्तश्चित्तादिविकारः शोकः । असावेवेष्टाप्राप्तिनिमित्तोऽरतिरिति विभागः । कर्तृत्वादित्रयं ज्ञातृत्वादित्रयं भोक्तृत्वादित्रयं च निराचष्टे । **न कर्तृत्वमिति** । उक्तव्याध्याद्यभावस्तर्हि विदुषि स्यान्नेत्याह । **तदभावोऽपीति** । प्रतियोगिनोऽप्रामाणिकत्वादभावस्यापि न प्रामाणिकतेति भावः ॥ २७७ ॥ २८८ ॥

**इति क्षरार्थसंबन्धज्ञानेऽस्मिल्लोकचक्षुषा ॥**
**विकल्पहेत्वविद्यायाः प्रत्यग्याथात्म्यनिष्ठितः ॥**
**सम्यग्बोधाग्निना ध्वस्तौ विकल्पो नावशिष्यते ॥ २७९ ॥**

ज्ञातृत्वाद्यभावे ज्ञानस्याप्यभावात्तत्फलासिद्धिरित्याशङ्क्याऽऽह । **इति क्षरेति** । द्वैतेन बाधकतया युक्तमपि ज्ञानं तदज्ञानकल्पितश्रुत्याचार्यादिरूपलोकचक्षुषोत्पद्यते

---

[1] क. °रिक्रमः ।

तस्मिन्सत्युक्तनीत्या तत्फलसिद्धिरित्यर्थः । उक्तं विद्याफलमुपसंहरति । **विकल्पेति** । अविद्यातज्जध्वस्तौ कूटस्थात्मना विदुषः स्थितिरित्यर्थः ॥ २७९ ॥

**विजिज्ञापयिषुर्गार्ग्यमिममर्थमतो नृपः ॥**
**स यत्रेत्यादिकामाह परामुक्तिपरंपराम् ॥ २८० ॥**

स्वप्नमिथ्यात्वप्रसङ्गेन जागरादेरपि तद्युक्त्योक्त्वा तन्मिथ्यात्वे श्रुतिमवतारयति । **विजिज्ञापयिषुरिति** । यथोक्तार्थज्ञापनेच्छायां हेतुत्वमनन्तरग्रन्थप्रवृत्तावतःशब्दार्थः ॥ २८० ॥

**स्वप्ने भवत्वात्स्वप्न्येति जाग्रत्स्वापाद्विवेचनम् ॥**
**मिथ्यात्वप्रतिपत्त्यर्थं स्वप्नस्य क्रियते स्फुटम् ॥ २८१ ॥**

स्वप्न्यया चरतीति माध्यंदिनपाठमाश्रित्याऽऽह । **स्वप्न इति** । तया दर्शनाख्यया वृत्त्या चरतीत्युक्तमिति शेषः । विशेषणतात्पर्यमाह । **जाग्रदिति** । उभयतोविवेचनफलमाह । **मिथ्यात्वेति** । यदा स्वप्नो जाग्रतः स्वापाच्च विविच्यते तदा तस्य कायकारणाभ्यां सत्यत्वेन प्रसिद्धाभ्यां भेदाज्जडस्य मिथ्यात्वं स्पष्टीकृतं भवतीत्यर्थः ॥ २८१ ॥

**निशायां संप्रवृत्तायां संहृताक्षस्य निद्रया ॥**
**जाग्रत्कर्मण्युपक्षीणे स्वप्नभोग उपस्थिते ॥ २८२ ॥**

यत्रेत्युक्तं स्वप्नयोग्यं कालं कथयति । **निशायामिति** । स्वप्नस्य दृष्टं निमित्तमाह । **संहृतेति** । तस्यादृष्टप्रतिबन्धाभावापेक्षां दर्शयति । **जाग्रदिति** । तस्यैवादृष्टनिमित्तमाह । **स्वप्नेति** । भोगस्तद्धेतुः ॥ २८२ ॥

**बोधावस्थां तिरोनीय देहाद्याश्रयलक्षणाम् ॥**
**कर्मोद्भावितसंस्कारस्तत्र स्वप्नरिरंसया ॥ २८३ ॥**

कर्मदृष्टप्रतिबन्धाभावमाह । **बोधेति** । निमित्तान्तरमाह । **कर्मेति** । उद्बुद्धजाग्रद्वासनावतः पुंसस्तस्मिन्स्वप्नरतीच्छाऽपि हेतुरित्याह । **तत्रेति** ॥ २८३ ॥

**अवस्थां प्रययावन्यां मायावीवाऽऽत्ममायया ॥**
**उच्चावचान्बहूनर्थान्सोऽसृजत्सृजतेऽनृतान् ॥ २८४ ॥**
**अविद्याकामकर्मादिसाधनैः समुपार्जितान् ॥**
**बोधे साधारणा येऽस्य स्वप्ने तेऽनन्यद्रष्टृकाः ॥ २८५ ॥**

मूलकारणमाह । **अवस्थामिति** । स्वप्नस्यस्य सुषुप्तवन्निर्व्यापारत्वमाशङ्क्याऽऽह । **उच्चेति** । वस्तुतो निर्व्यापारत्वेऽपि प्रतीतितो न तथात्वं रथानित्याद्यागमविरोधादित्यर्थः । सृजते स्वस्मै भोगायेति शेषः । स्वप्नस्तर्हि सत्योऽस्तु कर्मादिसाध्यत्वाज्जाग्रद्वदित्याशङ्क्य न स सत्योऽनन्यद्रष्टृकत्वाद्रज्जुसर्पवदित्याह । **बोध इति** । नाऽऽत्मनि

व्यभिचारोऽजाड्यस्य हेतुत्वेनेष्टत्वादिति द्रष्टव्यम् । उक्तं चैतदनृतानिति ॥ २८४ ॥
॥ २८५ ॥

**लोकाः कर्मफलानीति तेषां मिथ्यात्वमुच्यते ॥**
**उतेवेत्यादिना स्पष्टमैकात्म्यप्रतिपत्तये ॥ २८६ ॥**

ते हास्येति व्याख्याय लोकशब्दार्थमाह । **लोका इति** । तदुतेत्यादाविवशब्दार्थ-माह । **तेषामिति** । कर्मफलभूतमहाराजत्वादीनां मिथ्यात्वमेकरसार्थस्य स्पष्टं दृष्ट्यर्थ-मिवशब्देनोच्यत इत्यर्थः ॥ २८६ ॥

**ननु बोधे यथा लोकास्तत्कालाव्यभिचारिणः ॥**
**स्वप्नेऽपि स्वप्नकालस्थास्तद्वत्सन्त्विवति भण्यते ॥ २८७ ॥**

विमता लोका न मिथ्या तत्कालाव्यभिचारित्वाज्जाग्रल्लोकवदिति शङ्कते । **नन्विति**
॥ २८७ ॥

**ननु जागरस्थलोकानां मिथ्यात्वं प्राक्प्रपञ्चितम् ॥**
**अविद्यामात्रहेतुत्वं पाणिपेषप्रबोधनात् ॥ २८८ ॥**

साध्यवैकल्यं वक्तुं सिद्धान्ती पाणिपेषवाक्योक्तं स्मारयति । **नन्विति** । मिथ्यात्व-मसत्त्वमनिर्वाच्यत्वं वा नाऽऽद्योऽपराद्धान्तान्नेतरोऽप्रसिद्धेरित्याशङ्क्याऽऽह । **अवि-द्येति** । प्रागित्युक्तं व्यनक्ति । **पाणीति** ॥ २८८ ॥

**तथाच सति दृष्टान्तो भवतो नोपपद्यते ॥**
**मिथ्यात्मकत्वात्सर्वस्य नैतदेवं कुतो यतः ॥ २८९ ॥**

तन्मिथ्यात्वे फलितमाह । **तथाचेति** । दृष्टान्तदार्ष्टान्तिकभेदासंभवे हेतुमाह । **मिथ्येति** । तत्र पूर्ववादी दृष्टान्तं साधयितुं चोद्यासंभवं प्रतिजानीते । **नैतदिति** । चोद्यासंभवे हेतुं पृच्छति । **कुत इति** । जिज्ञासितं हेतुमाह । **यत इति** ॥ २८९ ॥

**विवेकमात्रसिद्ध्यर्थो भोक्तृभोग्यपदार्थयोः ॥**
**पाणिपेषादिको ग्रन्थः शुद्धिस्तत्र विवक्ष्यते ॥ २९० ॥**

तमेव विवृणोति । **विवेकेति** । देहद्वयस्याऽऽत्मनश्च विवेकमात्रहेतुरेष पाणिपेषा-दिग्रन्थस्तत्र यद्यपि स्थूलोऽहमित्याद्यात्मस्थौल्यादिधीर्मिथ्येति जाग्रन्मिथ्यात्वमार्थिकं तथाऽपि तदविद्यमानं कृत्वा तद्दृष्टान्तेनोक्तचोद्योत्थानमित्यर्थः । सति चोद्ये तन्निरासेन स्वप्नमिथ्यात्वमुक्त्वा तथा जाग्रदपि मिथ्येति साधनाद्देहाभ्यां विमुक्तस्य शुद्धिः स्वप्न-वाक्येऽभीष्टेत्याह । **शुद्धिरिति** ॥ २९० ॥

**तस्मात्कृतकदृष्टान्तमुपादायाऽऽत्मनोऽञ्जसा ॥**
**आध्यात्मिकादिलेपानां विशुद्धिरिह भण्यते ॥ २९१ ॥**

उक्तं विभागमाश्रित्य सिद्धमुपसंहरति । **तस्मादिति** । वस्तुतोऽसन्तमपि दृष्टान्तं

सन्तं कृत्वा तेन स्वप्नसत्यत्वमाशङ्क्य तन्निरासेनाऽऽत्मनः सर्वप्रकारमलनिरासः स्वप्न-वाक्येनोच्यते तज्जाग्रतोऽपि तद्वन्मिथ्यात्वादात्मैकरसः शुद्धः स्यादित्यर्थः । इहेति स्वप्नवाक्यग्रहणम् ॥ २९१ ॥

**किंचित्सामान्यमाश्रित्य जामित्वं प्रतिपद्यते ॥**
**न्यायः सर्वोऽपि येनातो नैतत्साधु प्रचोदितम् ॥ २९२ ॥**

पाणिपेषवाक्ये जाग्रन्मिथ्यात्वोक्त्याऽर्थादुक्ता शुद्धिरत्रापि सैवोच्यते चेत्पुनरुक्तिरि-त्याशङ्क्याऽऽह । **किंचिदिति** । यत्किंचित्साम्यात्पौनरुक्त्यं सर्वत्र तुल्यमवान्तरभेदा-दपौनरुक्त्यं प्रकृतेऽपि समं पूर्वत्र शुद्धिद्वारस्याऽऽर्थिकत्वादिह वाचनिकत्वादिति भावः ॥ २९२ ॥

**महाराजादयो नास्य स्वप्नानुभवगोचराः ॥**
**आत्मभूता इति ज्ञेयास्तद्भेदेनोपलम्भनात् ॥ २९३ ॥**

जाग्रद्दृष्टान्तेन स्वप्नसत्यत्वचोद्यसंभवाद्वाच्यस्तस्य समाधिरिति पूर्ववादिमुखेनोक्त्वा कोऽसौ समाधिरित्यपेक्षायामाह । **महाराजादय इति** । अस्येति स्वप्नद्रष्टृग्रहणम् । विमता न द्रष्टुरात्मानो धर्मा वा तद्दृश्यत्वाद्घटवदित्यर्थः ॥ २९३ ॥

**पर्यङ्कशयिताद्राज्ञः प्रत्यक्षादिप्रमाणकात् ॥**
**बहिः समीक्ष्यते राजा स्वप्नदृग्भिर्वनं गतः ॥ २९४ ॥**

किंच स्वप्नदृष्टानां जाग्रद्दृष्टादर्थान्तरत्वेन दृष्टेर्मिथ्यात्वमित्याह । **पर्यङ्केति** । तद्ग्रा-हकप्रत्यक्षादि पार्श्वस्थानां जाग्रतामिति विवेक्तव्यम् ॥ २९४ ॥

**स्वानुभूत्यनुरोधेन राज्ञो राजाऽमृषा गृहे ॥**
**स्वप्ने प्रबुद्धस्य सतो मृषा स्याद्वनमाश्रितः ॥ २९५ ॥**

स्वप्नादर्थान्तरत्वाज्जाग्रद्दृष्टराजादेरेव मिथ्यात्वं किं न स्यादित्याशङ्क्याऽऽह । **स्वानुभूतीति** । अमृषेति च्छेदः । जाग्रद्द्रष्ट्रनुभवात्तद्दृष्टस्य सत्यत्वे स्वप्नद्रष्ट्रनुभवात्तद्दृ-ष्टस्यापि सत्यत्वं स्यादित्याशङ्क्याऽऽह । **स्वप्न इति** । तस्यामवस्थायां वनमाश्रितः सन्दृष्टो राजा तस्यैव प्रबुद्धस्य मिथ्या स्यादिति योजना ॥ २९५ ॥

**जाग्रद्दृष्टं मृषा स्वप्ने स्वप्ने सज्जागरे मृषा ॥**
**अन्योन्यव्यभिचारित्वात्स्वप्नजाग्रत्पदार्थयोः ॥ २९६ ॥**

किंच स्वप्नो जाग्रच्चेति द्वयं मिथ्या स्यान्मिथो व्यभिचारित्वात्सर्पादिवदित्यनुमाना-त्रानयोर्विशेषोऽस्तीत्याह । **जाग्रदिति** ॥ २९६ ॥

**अहः क्षपायां च कुतः संहृताक्षस्य चेक्षणम् ॥**
**मृतानां जीवनं तद्वद्वृद्धानां यौवनं कुतः ॥ २९७ ॥**

योग्यकालाभावाच्च स्वप्नो मिथ्येत्याह । **अहरिति** । योग्यदेहत्वभावाच्च तथेत्याह ।

**संहृतेति**। कुतःशब्दस्योभयत्र संबन्धः। प्रमाविरुद्धत्वाच्च मिथ्येत्याह। **मृतानामिति** ॥ २९७ ॥

**न चक्षुरादिदृष्टीनामन्तर्देहसमीक्षणम् ॥**
**हिमवत्प्रभृतीनां च कुतोऽन्तः संभवो हृदि ॥ २९८ ॥**

योग्यदेशाभावाच्च तथेत्याह। **नेति**। चक्षुरादीनां बाह्यार्थदृष्टिकरणानां देहमध्यस्थार्थेक्षणं न प्रामाणिकं नापि तद्विषयमहापरिमाणहिमवदादीनामल्पपरिमाणे हृदि संभवोऽस्तीत्यर्थः ॥ २९८ ॥

**नापि देहाद्विनिष्क्रम्य पर्वतादीन्समीक्षते ॥**
**देहं विना कथमगाद्गतिसाधनवर्जितः ॥ २९९ ॥**

देहाद्बहिरेव स्वप्नदृष्टयङ्गीकाराद्योग्यदेशसिद्धिरित्याशङ्क्याऽऽह। **नापीति**। तत्र हेतुः। **देहमिति**। स्वप्नद्रष्टा देहेन संहतोऽसंहतो वा बहिर्गच्छति नाऽऽद्यः शयनदेशे तद्दृष्टिप्राप्तेर्नेतरो निःसाधनस्य गत्ययोगाद्देहान्तरस्य चामानत्वादित्यर्थः ॥ २९९ ॥

**अन्तरेणापि देहादींस्तत्कार्यं चेत्करोत्ययम् ॥**
**व्यर्थं देहाद्युपादानमस्य प्राप्नोत्यसंशयम् ॥ ३०० ॥**

देहादि विनाऽपि तत्कार्यं गत्यादि स्यादिति विपक्षमनुवदति। **अन्तरेणेति**। अतिप्रसक्त्या दूषयति। **व्यर्थमिति** ॥ ३०० ॥

**ननु पर्यङ्क आसीनो गच्छञ्शिबिकया वनम् ॥**
**वेश्मतो बहिरात्मानं द्रक्ष्यतीति न तद्यतः ॥ ३०१ ॥**

स यथेत्यादेः शङ्कामाह। **नन्विति**। देहान्तःस्वप्नोक्तिरनुभवविरुद्धेत्यर्थः। चोद्यं निषेधद्वाक्यं हेतुत्वेनाऽऽदत्ते। **न तदिति** ॥ ३०१ ॥

**अमात्यादीन्यथाऽऽदाय स्वात्मभोगप्रसिद्धये ॥**
**नृपः स्वदेशमध्यस्थो यथेष्टं परिवर्तते ॥ ३०२ ॥**

तत्र दृष्टान्तं व्याचष्टे। **अमात्यादीनिति** ॥ ३०२ ॥

**स्वदेहराष्ट्रसंस्थोऽयं जाग्रद्भावनिरूपिणः ॥**
**प्राणानात्मा तथाऽऽदाय स्वप्नान्पश्यति कामतः ॥ ३०३ ॥**

दार्ष्टान्तिकं व्याकरोति। **स्वदेहेति**। स्वप्नवज्जाग्रत्यपि लोकानामात्मन्यविद्यारोपिततेति भावः ॥ ३०३ ॥

**असत्योपाधिभिः सोऽयं कूटस्थासङ्गविग्रहः ॥**
**अविद्यारोपितमलो विद्ययाऽऽत्मा विशोध्यते ॥ ३०४ ॥**

---

१ ख. °देहे स° । २ ख. ग. °शयः ॥ ३०० ॥ ३ ख. °हान्तरे स्व° । ४ क. °ष्ट्रनिष्ठोऽयं । ५ क. ग. °वनरू° ।

द्वयोराविद्यत्वे कथमात्मशुद्धिस्तद्धेतुविद्याहेत्वभावादित्याशङ्कयाऽऽह । असत्येति । श्रुत्याचार्यादिभिरिति यावत् ॥ ३०४ ॥

**निःसङ्गस्य ससङ्गेन कूटस्थस्य विनाशिना ॥**
**आत्मनोऽनात्मना योगो वास्तवो नोपपद्यते ॥ ३०५ ॥**

कूटस्थासङ्गत्वेनाऽऽत्मनोऽविद्यारोपितमलत्वमुक्तं तद्विशदयति । निःसङ्गस्येति ॥ ३०५ ॥

**कूटस्थादत्तानुज्ञं सत्प्रत्याख्यातं सहान्वयम् ॥**
**कारकाद्यन्यतो मोहान्नाऽऽत्मानं प्रति ढौकते ॥ ३०६ ॥**

किंचाऽऽत्मनि कर्तृत्वादिमलः स्वतः परतो वा नाऽऽद्य इत्याह । कूटस्थेति । परमपि वस्तु नेन्नेति नेत्यादिश्रुतिविरोधोऽवस्तु चेत्तस्य मोहाव्यतिरिक्तत्वात्तत्कृतं कर्तृत्वाद्यपि न वस्तु स्यादित्याह । प्रत्याख्यातमिति ॥ ३०६ ॥

**ननु कामवशादस्य त्वयोक्तं परिवर्तनम् ॥**
**द्रष्टृदृश्यादिभावश्च कथं शुद्धस्तथा सति ॥ ३०७ ॥**

स्वप्नादिमिथ्यात्वेन तद्द्रष्टुः शुद्धतामुक्त्वाऽथ यदेत्याद्यवतारयितुमुक्तं शुद्धत्वमाक्षिपति । नन्विति । अस्येति स्वप्नदृशो निर्देशः । चकारेणोक्त इत्यनुवृत्तिः सूच्यते । आदिशब्देन श्रोतव्यादिभावोक्तिः । कामादिसंबन्धे द्रष्टुर्न शुद्धतेति फलितमाह । कथमिति ॥ ३०७ ॥

**मैवं स्वतोऽवबुद्धत्वात्कुतोऽज्ञानेन संगतिः ॥**
**अज्ञानसंगतिं मुक्त्वा न स्यात्तज्जेन संगतिः ॥ ३०८ ॥**

आत्मनो न कामादियोगोऽस्तीत्याह । मैवमिति । तत्र हेतुमाह । स्वत इति । बोधैकरसस्याज्ञानासंबन्धेऽपि कामादिसंबन्धः स्यादिति नेत्त्याह । अज्ञानेति ॥ ३०८ ॥

**एवं यस्मात्स्वतः शुद्धो द्वितीयासंगतेरयम् ॥**
**आत्मा तस्मात्स्वतो मुक्तः कूटस्थज्ञप्तिमात्रतः ॥ ३०९ ॥**

द्रष्टुरज्ञानतज्जासंबन्धे फलितमाह । एवमिति । उक्तरीत्या द्वयायोगादात्मा यतः स्वतः शुद्धोऽतः स्वतो मुक्तः कूटस्थचिन्मात्रो भवतीत्यर्थः । प्रथमार्थे तसिः ॥ ३०९ ॥

**न यथा श्रोत्रविज्ञानं रूपेणेति समागमम् ॥**
**संसारेण तथैवाऽऽत्मा कौटस्थ्यान्नैति संगतिम् ॥ ३१० ॥**

आत्मनः कामाद्यसंबन्धं दृष्टान्तेन स्पष्टयति । नेत्यादिना ॥ ३१० ॥

**इत्यर्थस्यावबोधार्थं परो ग्रन्थोऽवतार्यते ॥ ३११ ॥**

---

१ ग. °टस्थद° । २ क. ग. स्यात्सबन्धेन ।

**विशुद्धिं व्यतिरेकं च स्वप्नजाग्रदवस्थयोः ॥**
**उक्त्वाऽऽत्मनोऽद्वयत्वं च सुषुप्ते चाधुनोच्यते ॥ ३१२ ॥**

तत्र मानत्वेनाथेत्यादिवाक्यमादत्ते । **इत्यर्थस्येति** । उक्तमनूद्याथेत्यादि व्याचष्टे । **विशुद्धिमिति** । अवस्थाद्वये शुद्ध्यादिकथनानन्तरं स्वापे प्रतीचोऽद्वयब्रह्मत्वं विवक्षितमित्यर्थः ॥ ३११ ॥ ३१२ ॥

**न वेदेत्यात्मनः श्रुत्या कर्तृत्वं प्रतिषिध्यते ॥**
**पश्यन्नपि यतः प्राज्ञो कौटस्थ्यान्न प्रपश्यति ॥ ३१३ ॥**

यदेत्यादौ न वेदेत्यस्यार्थमाह । **नेति** । तया ज्ञानकर्तृत्वमात्मनो न निषेद्धुं युक्तं तस्य साक्षित्वेन तत्कर्तृत्वादित्याशङ्क्याऽऽह । **पश्यन्निति** । अतो निषेधश्रुतिराविरुद्धेति शेषः ॥ ३१३ ॥

**अथ यो वेदेति तथा ज्ञातृसाक्षित्वमात्मनः ॥**
**प्रतीचोऽकारकत्वं नः सर्वत्र प्रतिपाद्यते ॥ ३१४ ॥**

ज्ञानकर्तृसाक्ष्यात्मा न तत्कर्तेत्यत्र श्रुत्यन्तरमाह । **अथेति** । त्वमर्थपरिशोधनप्रारम्भार्थोऽथशब्दः । इदं जिघ्राणीति स्थितं ज्ञातारं यो वेद स आत्मेत्यादिश्रुतावस्मदुक्तानुसारेणाऽऽत्मनो ज्ञातृसाक्षित्वोक्तेर्न कर्तृतेत्यर्थः । किंच **कर्माध्यक्षः** सर्वभूताधिवासः साक्षीत्याद्युपनिषत्सु कूटस्थत्वेनाद्वयचिन्मात्रत्वं प्रतीचो मुमुक्षून्प्रत्युच्यते तन्न तस्य कर्तृतेत्याह । **प्रतीच इति** ॥ ३१४ ॥

**क्वचित्प्रमातृवित्साक्षी क्वचित्प्रत्ययवित्परः ॥**
**क्वचिद्बाह्यार्थविच्चाऽऽत्मा तत्कर्तृत्वं निषिध्यते ॥ ३१५ ॥**

ज्ञातृसाक्षीतिविशेषणकृतं संकोचमाशङ्क्याऽऽह । **क्वचिदिति** । कदाचित्क्वचित्कुत्रचित्प्राधान्येऽपि सर्वसाक्षित्वमक्षतं चेत्कथं न वेदेतिनिषेधोक्तिस्तत्राऽऽह । **तदिति** ॥ ३१५ ॥

**परप्रयुक्तं वेत्तृत्वं यदस्य प्रत्यगात्मनः ॥**
**संबन्धजत्वात्तस्यातः कस्येत्यत्राभिधीयते ॥ ३१६ ॥**

कस्येति षष्ठीमवतारयति । **परेति** । विषयसंबन्धात्प्रतीचो यद्वेत्तृत्वं तस्यास्माद्विषयसंबन्धजत्वाद्धेतोरत्र संबन्धे कस्येति षष्ठीत्यर्थः ॥ ३१६ ॥

**कर्मोत्थत्वात्प्रमात्रादेस्तत्क्षये क्षयवत्त्वतः ॥**
**षष्ठीयं कर्मणि न्याय्या द्वयाभावविवक्षया ॥ ३१७ ॥**

तां विशेषे योजयति । **कर्मेति** । एषा षष्ठी हि कर्मण्येव न्याय्या मात्रादेः कर्म-

१ क. °प्तेऽथाधु° । ग. °प्तेऽप्यधु° । २ क. ग. कर्तृत्वं । ३ ख. तत्क्षयत्वतः ।

कार्यत्वात्कर्मणः सुप्तौ क्षये तज्जस्यापि तत्र क्षयात्सर्वद्वितीयाभावाभिप्रायेण न किंचिदपि मात्राद्यनुभवतीत्यस्यार्थस्य विवक्षितत्वादित्यर्थः ॥ ३१७ ॥

**अप्यर्थे चनशब्दोऽयमभावस्यापि वारकः ॥**
**शेषशेषितिरोभावे सुषुप्तिरिह भण्यते ॥ ३१८ ॥**

चनेत्यस्य पदद्वयत्वं व्यावर्तयति । **अप्यर्थ इति** । अपिशब्दस्य विवक्षितमाह । **अभावस्येति** । स्वापे जगद्भाववत्तदभावोऽपि निषिध्यत इत्यर्थः । भावनिषेधेऽप्यभावो न निषेध्यस्तद्भावेऽपि स्वापाविरोधादित्याशङ्क्याऽऽह । **शेषेति** । शेषोऽभावो गुणत्वाच्छेषी भावः प्रधानत्वात्तयोस्तिरोभावो विशेषज्ञानाभावोऽतोऽभावस्यापि स्वापे निषेधेन भाव्यमित्यर्थः । इहेति सप्तमी पुरुषमधिकरोति ॥ ३१८ ॥

**अथ केन क्रमेणायं सुषुप्तं प्रतिपद्यते ॥**
**इति क्रमविधानार्थं हिता नामेति भण्यते ॥ ३१९ ॥**

सुषुप्तिस्वरूपमुक्त्वाऽऽकाङ्क्षापूर्वकं तात्पर्यं वदन्वाक्यान्तरमादत्ते । **अथेति**॥३१९॥

**आ नाभितस्तथा कण्ठाद्धृदयं मध्यतः स्थितम् ॥**
**सनालं पद्मकोशाभं पञ्चच्छिद्रमधोमुखम् ॥ ३२० ॥**

तत्र हृदयस्थानमाह । **आ नाभित इति** । अधो निष्ट्या वितस्त्याऽन्ते नाभ्यामुपरि तिष्ठतीति श्रुतेरित्यर्थः । कण्ठान्नाभेश्चाऽऽरभ्य मध्यस्थहृदयस्य स्वरूपमाह । **सनालमिति** । पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखमिति श्रुतेरित्यर्थः । छान्दोग्यश्रुतिमाश्रित्य पञ्चच्छिद्रमिति विशेषणम् ॥ ३२० ॥

**स्वप्नाश्रयाणि हृन्मध्ये नीलाद्याभानि देहिनः ॥**
**स्थानानि सुरमर्त्यादिजुष्टान्यस्य भवन्त्युत ॥ ३२१ ॥**
**विलानि सुषयश्चैता जाग्रद्रत्प्रत्ययोद्भवाः ॥**
**एकोत्तरं नाडिशतं विष्वक्ताभ्यो विनिर्गतम् ॥ ३२२ ॥**

हृदयच्छिद्राणामवस्थाद्वयाश्रयत्वमाह । **स्वप्नेति** । देहिनो हृन्मध्ये यानि पञ्च विलानि तान्यवस्थयोरधिकरणानीत्यर्थः । तेषां प्रागादिक्रमेण लोहितशुक्लपिङ्गलश्यामनीलरूपवर्णविशेषमाह । **नीलादीति** । तेषामधिष्ठातृदेवतां ब्रवीति । **स्थानानीति** । देवमर्त्यादिसेवितानि च्छिद्राणि तेषामेव स्थानान्यपि भवन्ति । आदित्यश्चन्द्रोऽग्निः पर्जन्यो वियदिति देवाः । प्राणो व्यानोऽपानः समान उदान इति मर्त्याः । आदिपदेन चक्षुः श्रोत्रं वाङ्मनः पायुरिति प्राणभेदा गृह्यन्ते । ते सर्वे प्रतिहार्देषु प्राग्दक्षिणप्रत्यगुदगूर्ध्वच्छिद्रेषु यथाक्रममेकैकशो वर्तन्ते तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषय इत्युपक्रम्य य एतानेवं पञ्च ब्रह्मपुरुषान्स्वर्गस्य लोकस्य द्वारपान्वेदेत्यन्तेनास्यार्थस्य

---

१ क. ग. °र्गित म° ।

श्रुत्या प्रपञ्चितत्वादित्यर्थः । तेषां कार्यमाह । **सुषयश्चेति** । एताश्च सुषयो जाग्रदवस्थायामिव स्वप्नेऽपि शब्दाद्याकारवासनात्मकज्ञानोत्पत्तौ हेतव इत्यर्थः । सुषिभ्यो निर्गतप्रधाननाडीराह । **एकेति** । विष्वग्विविधगतित्वेनेति यावत् ॥ ३२१ ॥ ३२२ ॥

**प्रतीन्द्रियं दश दश निर्गता विषयोन्मुखाः ॥**
**नाड्यः कर्मादिहेतूत्थाः स्वप्नादिफलभुक्तये ॥ ३२३ ॥**

शतं चैका चेत्यादिश्रुत्यन्तरसिद्धनाडीसंख्यामुक्त्वा तासां विनियोगप्रकारमाह । **प्रतीन्द्रियमिति** । तासामुत्पत्तिहेतुमाह । **कर्मादीति** । तासामर्थोन्मुखेन निर्गतिफलमाह । **स्वप्नादीति** ॥ ३२३ ॥

**वहन्त्यम्भो यथा नद्यो नाड्यः कर्मफलं तथा ॥**
**अनन्तैकोर्ध्वगा नाडी तया गच्छन्विमुच्यते ॥ ३२४ ॥**

कथं भोगसाधनत्वं तदाह । **वहन्तीति** । ता हि विषयसंबन्धमापाद्य पुरुषं भोजयन्तीत्यर्थः । शतसंख्याकनाडीनां विनियोगमुक्त्वाऽवशिष्टनाडीविनियोगमाह । **अनन्तेति** । तयोर्ध्वमायन्नमृतत्वमेतीति श्रुतेरित्यर्थः ॥ ३२४ ॥

**एकैकस्याः पुनर्नाड्याः सूक्ष्मभेदाः प्रकीर्तिताः ॥**
**द्वासप्ततिसहस्रैस्ते संख्याता योगचिन्तकैः ॥ ३२५ ॥**

श्रुत्यन्तरानुरोधेन नाडीव्यवस्थायां द्वासप्ततिसहस्राणीति प्रकृतं वाक्यं कथमित्याशङ्क्याऽऽह । **एकैकस्या इति** । अत्रैतदेकशतं नाडीनां तासामेकैकस्यां द्वासप्ततिः प्रतिशाखानाडीसहस्राणीति श्रुतेरित्यर्थः । तेषां संख्यानियमे प्रमाणमाह । **ते संख्याता इति** । उक्तं हि—

"द्वासप्ततिसहस्राणि हृदयादभिनिसृताः ॥
हिता नाम हिता नाड्यस्तासां मध्ये शशिप्रभम् ।
मण्डलं तस्य मध्यस्थ आत्मा दीप इवाचलः" इति ।

यत्तु सार्धलक्षत्रयं नाडीनामिति तद्दैहिकशिराभेदाभिप्रायम् ।

"एकोनत्रिंशल्लक्षाणि तथा नव शतानि च ॥
षट्पञ्चाशद्विजानीयाच्छिरा धमनिसंज्ञिताः" ।

इति तद्भेदविषयमिति द्रष्टव्यम् ॥ ३२५ ॥

**कदम्बकुसुमोद्भूतकेसरा इव सर्वतः ॥**
**प्रसृता हृदयान्नाड्यो याभिर्व्याप्तं शरीरकम् ॥ ३२६ ॥**

प्रस्तुतं नाडीस्वरूपमाह । **कदम्बेति** । तासां व्याप्तिमाह । **सर्वत इति** । देहाद्बहिरपि तासां व्याप्तिं शङ्कित्वोक्तम् । **याभिरिति** ॥ ३२६ ॥

हितं फलं प्रयच्छन्ति यस्मात्तस्माद्धिताः स्मृताः ॥
हृदयात्ता विनिष्क्रान्ता यथाऽर्काद्रश्मयस्तथा ॥ ३२७ ॥

कथं तासां हितशब्दत्वं तत्राऽऽह । **हितमिति** । हितं कर्मिभिरर्जितमिति यावत् । हिता नामेत्यादि व्याख्याय हृदयादित्यत्र विवक्षितमाह । **हृदयादिति** ॥ ३२७ ॥

पुरीतदभिधानेन हृद्वेष्टनमिहोच्यते ॥
तत्तूपलक्षणं विद्याद्देहव्याप्तिविवक्षया ॥ ३२८ ॥

पुरीतच्छब्दवाच्यमाह । **पुरीतदिति** । इहेति व्यवहारभूमिरुक्ता । अत्र तु तेन देहो लक्ष्यते हृदयवेष्टनस्य तदुपलक्षणत्वान्नाडीनां तद्व्याप्तेश्च विवक्षितत्वादित्याह । **तत्त्विति** ॥ ३२८ ॥

स्वप्नकर्मसमुद्भूता वासना या हृदि स्थिताः ॥
नाडीभिस्ता वितत्याऽऽत्मा स्वप्नान्पश्यति कामतः ॥ ३२९ ॥

क्रियापदेऽभिप्रायमाह । **स्वप्नेति** ॥ ३२९ ॥

स्वाप्नान्भोगानशेषेण भुक्त्वा स्वप्नक्रियाक्षये ॥
ताभिरेवोपसंहृत्य प्राज्ञो याति सुषुप्तताम् ॥ ३३० ॥

ताभिरित्यादेरर्थमाह । **स्वाप्नानिति** । वासनामयानि करणानीति शेषः ॥ ३३० ॥

जाग्रत्स्वप्नक्रियोद्भूतान्भुक्त्वा भोगानशेषतः ॥
इन्द्रियाण्युपसंहृत्य शेते नाडीभिरात्मनि ॥ ३३१ ॥

स्वप्नभोगात्तत्कर्मक्षयेऽपि कथं करणसंहारद्वारा स्वापो जागरस्यापि संभवादित्याशङ्क्याऽऽह । **जाग्रदिति** ॥ ३३१ ॥

सामान्यप्रज्ञया देहं संव्याप्यान्तर्बहिः श्रमात् ॥
श्येनवत्परमं स्थानमात्माऽभ्येति सुषुप्तताम् ॥ ३३२ ॥

ननु स्वप्नजागरिते कर्मणा गच्छति न स्वापं न हि तत्कृता ब्रह्माप्तिस्तत्कथं सुप्तिस्तत्राऽऽह । **सामान्येति** । यथा श्येनो भ्रान्तः श्रान्तः स्वनीडमासाद्य निर्वृणोति तथाऽऽत्मा स्थानद्वयगतिकृतश्रान्तिध्वस्त्यै विशेषबुद्धिं हित्वा साधारणया चिन्मात्रप्रज्ञया स्वदेहं तप्तायोवदन्तर्बहिः संव्याप्य प्रत्यक्त्वेन ब्रह्म गत्वा तद्रूपेणामङ्गोदासीनतामेतीत्यर्थः ॥ ३३२ ॥

धियोऽन्तःकरणस्येह स्थानं हृदयमिष्यते ॥
तत्रेन्द्रियाणि सर्वाणि बुद्धितन्त्राणि सर्वदा ॥ ३३३ ॥

आत्मनो गत्यागती चेत्परिच्छिन्नता श्येनवदित्याशङ्क्य बुद्धिद्वारत्वात्तयोर्मैवमि-

---

१ क. ख. ग. प्राज्ञे । २ ख. ग. °नेनकशः । ३ °।

त्याह । **धिय इति** । इहेति देहोक्तिः । बाह्यकरणानां बुद्धितन्त्रत्वमाह । **तत्रेति** । बुद्धेर्हृदये स्थाने सतीति यावत् । बाह्यकरणसत्तावस्था सर्वदेत्युक्ता ॥ ३३३ ॥

**यत एवमतस्तानि नाडीभिः कर्मणो वशात् ॥ ३३४ ॥**
**प्रसारयति धीर्वृत्तीर्मत्स्यजालकवद्बहिः ॥**
**प्रसार्याऽऽयतनस्थानि तानि धीरधितिष्ठति ॥ ३३५ ॥**
**जाग्रत्काले ततो ज्ञोऽयमभिव्यक्तविशेषधीः ॥**
**व्याप्नोति निष्क्रियः सर्वान्भानुर्दश दिशो यथा ॥ ३३६ ॥**

तेषां बुद्धितन्त्रत्वे फलितमाह । **यत इति** । बुद्धिः स्वाधीनकरणानि जाग्रद्धेतुकर्मणा नाडीद्वारा विषयाभिमुखानि करोतीत्यर्थः । प्रसारणानन्तरं किं स्यात्तदाह । **वृत्तीरिति** । आयतनस्थानि करणशष्कुल्यादिस्थानस्थानानीति यावत् । तानि स्ववृत्तिद्वाराणि करणानीत्यर्थः । बहिः शब्दादिष्वित्येतत् । बुद्धेरिन्द्रियाणां च सावयवत्वसक्रियत्वाभ्यां बहिः सर्पणेऽपि निरवयवस्याऽऽत्मनो न तद्युक्तमित्याशङ्क्याऽऽह । **तत इति** । यतो बुद्धेः करणानां च बहिः सर्पणं ततः स्वतोऽनवयवोऽक्रियोऽप्यात्मा स्वाज्ञानविशिष्टो व्यक्तचैतन्याभासाख्यविशेषयुक्तधीसहितः श्रोत्रादिद्वारा सर्वानर्थान्व्याप्नोति रश्मिद्वारा सर्वव्यापकसवितृवदित्यर्थः ॥ ३३४ ॥ ३३५ ॥ ३३६ ॥

**ता एवेन्द्रियवृत्तीः स्वाश्चैतन्यखचिता यदा ॥**
**संयच्छति प्रतीच्यात्मा स्वपितीति तदोच्यते ॥ ३३७ ॥**

एवमात्मनो जाग्रद्योगे कथं सुप्तिरित्याशङ्क्याऽऽह । **ता इति** । स्वकीयेन्द्रियवृत्तीनां जागद्योगहेतूनां चैतन्याभासव्याप्तानां प्रतीच्युपसंहारे सुषुप्तिरित्यर्थः ॥ ३३७ ॥

**बुद्ध्युपाध्यनुरोधेन प्रतीचः प्रभवाप्ययौ ॥**
**विक्षेपलयहीनस्तु स्वतः कुम्भखवत्परः ॥ ३३८ ॥**

बुद्धेः संकोचविकासाभ्यामात्मनस्तावित्यत्र हेतुमाह । **बुद्धीति** । स्वाभाविकावात्मनस्तौ किं न स्यातां तत्राऽऽह । **विक्षेपेति** । न हि स्वप्रकाशे चिद्धातौ स्वतो विकाससंकोचावुचितौ तथाच कुम्भाद्युपाधेराकाशस्य संकोचादिवदात्मनोऽपि बुद्ध्याद्युपाधेस्तावित्यर्थः ॥ ३३८ ॥

**ताभिः प्रत्यवसृप्याऽऽत्मा वृत्तीर्नाडीभिरानयन् ॥**
**तत्प्रायोवच्छरीरं स्वं व्याप्य शेते स्व आत्मनि ॥ ३३९ ॥**

ताभिरित्यादेर्व्याख्यामुपसंहरति । **ताभिरिति** । आनयन्नुपसंहरन्निति यावत् ॥ ३३९ ॥

**स्वहेतुमात्रया स्थानामन्द्रियाणां न कार्यतः ॥**
**यतोऽतश्चिन्निभेनैव व्याप्तिः स्यात्कारणात्मना ॥ ३४० ॥**

---

१ ख. °णमृत्यत्र° ।

देहेन्द्रियाणां स्वापे संहारात्कुतः शरीरं व्याप्य शयनमित्याशङ्क्याऽऽह । **स्वहेत्विति** । स्वहेतुमात्रया कारणात्मनेति संबन्धः । देहेन्द्रियाणां न स्वापे स्वरूपेणावस्थितिः किंतु कारणात्मनाऽत एव तदात्मकदेहादेश्चिदाभासव्याप्तिसंभवाद्देहं व्याप्य स्वापे स्वात्मनि शयनं युक्तमित्यर्थः ॥ ३४० ॥

**सुषुप्तौ न शरीरेण संगतिः प्रत्यगात्मनः ॥**
**नापि बुद्ध्यादिभिः साक्षात्तत्स्थानासंगतेर्भवेत् ॥ ३४१ ॥**

तदा देहादेराभासव्याप्तिरिष्टा चेज्जागरादिभेदासिद्धिरित्याशङ्क्याऽऽह । **सुषुप्ताविति** । तत्र चितः सामान्यव्याप्तिरेव न विशेषव्याप्तिरतो देहे स्थूलत्वाद्यभिमानस्य बुद्ध्यादिषु ज्ञातृत्वाद्यभिमानस्य चाभावाद्विशेष इत्यर्थः । बुद्ध्यादिषु स्वापे विशेषासंबन्धे हेतुमाह । **तदिति** । तेषां बुद्ध्यादीनां स्थानं देहस्तेन विशेषासंबन्धादिति यावत् ॥ ३४१ ॥

**तीर्णो हीति तथा चैतदुत्तरत्राभिधास्यते ॥**
**सुषुप्तेऽत्र पिता चेति सर्वसंबन्धवारणम् ॥ ३४२ ॥**

तत्र मानमाह । **तीर्णो हीति** । नन्वत्र शोकसंबन्धो वार्यते न देहादिसंगतिस्तत्राऽऽह । **सुषुप्त इति** ॥ ३४२ ॥

**सर्वसंसारदुःखौघव्यतीतेयं पराऽऽत्मनः ॥**
**अवस्थेत्यत्र दृष्टान्तः स यथेत्यभिधीयते ॥ ३४३ ॥**

स यथेत्यादिदृष्टान्तश्रुतिं वृत्तानुवादपूर्वकमवतारयति । **सर्वेति** ॥ ३४३ ॥

**स्तनंधयो यथा बालो रागद्वेषविवर्जितः ॥**
**तदभावाद्विकुर्वन्ति चेतो न विषयाः सदा ॥ ३४४ ॥**

कुमारदृष्टान्तं व्याकुर्वन्बाल्यादेव तस्य रागाद्यभावमाह । **स्तनंधय इति** । स्तनं धयति पिबतीत्यत्यन्तशिशुरिति यावत् । दार्ष्टान्तिकस्थैवंशब्देन यथाशब्दस्य संबन्धः । रागाद्यभावफलमाह । **तदभावादिति** ॥ ३४४ ॥

**अप्ररूढेन्द्रियत्वाच्च रागद्वेषाद्यसंभृतिः ॥**
**मृदुकण्टकवत्तद्धीर्नालं वेद्धुं[1] स्वगोचरान् ॥ ३४५ ॥**

बालस्य बाल्यमिव रागाद्यभावे हेत्वन्तरमाह । **अप्ररूढेति** । तथाऽपि बालस्य बुद्धेर्विषयप्रवणत्वात्कुतो रागादिराहित्यमत आह । **मृद्विति** ॥ ३४५ ॥

**सर्वत्राव्याहताज्ञश्च विधेयप्रकृतित्वतः ॥**
**राजा वाऽतिसुखी लोके प्ररूढेन्द्रियवानपि ॥ ३४६ ॥**

१ क. बोद्धुं ।

महाराजदृष्टान्तं व्याचष्टे । **सर्वत्रेति** । तत्र हेतुः । **विधेयेति** । पूर्वस्माद्वैलक्षण्य-माह । **प्ररूढेति** ॥ ३४६ ॥

**विज्ञाताशेषतत्त्वो वा ब्राह्मणः कृतकृत्यतः ॥**
**आनन्दस्य परां काष्ठामतिघ्नीमेत्य निर्वृतः ॥ ३४७ ॥**

महाब्राह्मणदृष्टान्तं विभजते । **विज्ञातेति** । ब्राह्मणो विशिष्टः सन्नानन्दस्य काष्ठां परामेत्य कृतकृत्यतो निर्वृतः शयीतेति संबन्धः ॥ ३४७ ॥

**बालादित्रयमप्येतदेको दृष्टान्त इष्यते ॥**
**बालमौढ्यमदान्धत्वनिवृत्त्यर्थं तथोच्यते ॥ ३४८ ॥**

दृष्टान्तश्रुतेरक्षरार्थमुक्त्वा विवक्षितमाह । **बालादीति** । यदेतद्बालादित्रयं दृष्टान्त-त्वेनोक्तं तत्र तथा किंत्वेको महाब्राह्मणो दृष्टान्त इत्यर्थः । अपिस्तद्वीनालमित्यतो नञमनुकर्षति । दृष्टान्तेषु त्रिषु श्रौतेषु किमिति द्वयमुपेक्ष्यते तत्राऽऽह । **बालेति** । बालस्य मौढ्यं राज्ञो मदान्ध्यमितिदोषद्वयापनुत्त्यर्थमन्त्यदृष्टान्तग्रहणमित्यर्थः ॥३४८॥

**बालस्य निर्विवेकत्वात्सविवेकः क्षितीश्वरः ॥**
**तन्मदान्ध्यनिषेधार्थं महाब्राह्मण उच्यते ॥ ३४९ ॥**

तृतीयमुपपादयितुं बालं त्यक्त्वा राज्ञो ग्रहे हेतुमाह । **बालस्येति** । दृष्टान्तत्वेनो-च्यत इति संबन्धः । पूर्वत्र दोषे राज्ञो ग्रहस्तत्रापि दोषे तन्निषेधान्महाब्राह्मणग्रहादेकः स एव दृष्टान्त इत्याह । **तदिति** ॥ ३४९ ॥

**अतीत्य दुःखहेतून्या हन्ति दुःखान्यशेषतः ॥**
**आनन्दस्य परा निष्ठा तेनातिघ्नीति भण्यते ॥ ३५० ॥**

अतिघ्नीमित्यस्यार्थमाह । **अतीत्येति** । याऽऽनन्दस्य प्रकृष्टाऽवस्था तेन विदुषा श्रोत्रियत्वशान्तदर्पत्वादिना प्राप्ता सा दुःखहेतून्क्लेशानुपक्लेशांश्चातीत्य तत्कार्याणि दुःखानि सर्वात्मना यतो निर्मूलयत्यतः साऽतिघ्नीत्युच्यत इति योजना ॥ ३५० ॥

**निर्विकारात्मनां यस्माद्बालादीनां स्व आत्मनि ॥**
**अतीव जायते ह्लादो दृष्टान्तः स विवक्षितः ॥ ३५१ ॥**

दृष्टान्तभेदमुपेत्य विवक्षितमंशमाह । **निर्विकारेति** ॥ ३५१ ॥

**परसंबन्धमेत्यात्मा कार्यकारणरूपिभिः ॥**
**ऐकात्म्यलक्षणं साक्षाच्छेत इत्यभिधीयते ॥ ३५२ ॥**

दार्ष्टान्तिकस्थशयीतशब्दार्थमाह । **परेति** । अहंकारादिभिः सहाज्ञातेन ब्रह्मणा तादात्म्यमात्मा स्वापे प्राप्नोतीत्यतः साक्षाद्ब्रह्मरूपेण स्थितिस्तस्य शयनमित्यर्थः॥३५२॥

---

१ क. ग. °त्यर्थमथां ।

**अत्यन्तसंनिकृष्टानामपि भिन्नात्मनां मितेः ॥**
**लोचनस्थाञ्जनादीनां न दृष्टिपथतेष्यते ॥ ३५३ ॥**

तदा जीवो ब्रह्मैक्यं गतश्चेदहं ब्रह्मेत्यवगच्छेत्ततो न पुनरुत्तिष्ठेदित्याशङ्क्य ब्रह्मणा जीवस्यात्यन्तसंनिकर्षेऽपि स्वापे तज्ज्ञानाभावे दृष्टान्तमाह । **अत्यन्तेति** ॥ ३५३ ॥

**किमु प्रध्वस्तनिःशेषभेदहेताविहाऽऽत्मनि ॥**
**ग्राह्यग्राहकसंबन्धः सर्वभेदापनोदिनि ॥ ३५४ ॥**

अतिदूरात्सामीप्यादित्यादिन्यायेनात्यन्तसंनिकर्षो धीविरोधी न तद्धेतुरिति दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह । **किम्विति** । सौषुप्ते पुरुषे ध्वस्तः सर्वो देहाद्यभिमानो भेदहेतुरत एव स सर्वस्य भेदस्यापनोदनशीलस्तस्मिन्ग्राह्यग्राहकसंबन्धो नेत्यर्थः ॥ ३५४ ॥

**स्वस्थावस्थैव यैतेषां प्रसिद्धा जगतीक्ष्यते ॥**
**दृष्टान्तत्वेन स्वापस्य सैव साक्षाद्विवक्ष्यते ॥ ३५५ ॥**

दृष्टान्तदार्ष्टान्तिके व्याख्याते तत्र दृष्टान्ते शयीतेति श्रुत्या बालादिस्वापस्यैव दृष्टान्तित्वान्निर्विकारात्मनामित्यत्र बालादिह्लादस्तथा कथमुक्त इत्याशङ्क्याऽऽह । **स्वस्थेति** ॥ ३५५ ॥

**दार्ष्टान्तिकत्वेन यतः सुषुप्तोऽत्र विवक्षितः ॥**
**नापि बालादिस्वापस्य विशेषः कश्चिदीक्ष्यते ॥ ३५६ ॥**

बालादिस्वापस्यादृष्टान्तत्वे हेतुमाह । **दार्ष्टान्तिकत्वेनेति** । अत्रेति तद्वाक्योक्तिः । अतो न बालादिस्वापो दृष्टान्तो दार्ष्टान्तिकाभेदादिति शेषः । तत्स्वापो दृष्टान्तोऽस्मदादिस्वापश्च दार्ष्टान्तिक इति भेदमाशङ्क्याऽऽह । **नापीति** ॥ ३५६ ॥

**अव्याहतमतिर्बालः सर्वातिशयवर्जिताम् ॥**
**आनन्दस्य परां निष्ठामतिघ्नीं प्रतिपद्यते ॥ ३५७ ॥**

बालस्याविवेकान्न स्वस्थावस्था परानन्दरूपाऽस्ति तत्कथं तद्दृष्टान्तसिद्धिरित्याशङ्क्याऽऽह । **अव्याहतेति** ॥ ३५७ ॥

**यावद्यावत्प्ररूढत्वं रागादेर्जायते शिशोः ॥**
**तावत्तावत्प्ररूढत्वं दुःखस्याप्यभिजायते ॥ ३५८ ॥**

रागाद्यनुपहतधीः शिशुरतिशयानन्दावस्थां दुःखतद्धेतुहीनामाप्नोतीत्ययुक्तं तस्यापि क्षुत्पिपासादिदृष्ट्या रागाद्युपहतेरित्याशङ्क्याऽऽह । **यावदिति** । रागादिभूयस्त्वे दुःखबाहुल्यात्सुखाल्पतेत्यर्थः ॥ ३५८ ॥

**यथैव तत्तनुत्वं च यावद्यावदिहाऽऽत्मनः ॥**
**दुःखस्यापि तनुत्वं स्यात्तावत्तावत्सुखात्मनः ॥ ३५९ ॥**

उक्तमनूद्य वैधर्म्यमाह । **यथेति** । रागादिमान्द्ये दुःखाल्पतया सुखप्राचुर्यादप्ररूढ-

१ ख. यथैवं ।

रागादिशिशुरनुपहतधीरनतिशयानन्दावस्थो दृष्टान्त इत्यर्थः । इहेति व्यवहारभूमिरुक्ता ॥ ३५९ ॥

**उत्तरोत्तरवृद्ध्याऽतो दुःखहेतुक्षयाच्छ्रुतौ ॥**
**सहस्रदशभागेन निष्ठाऽऽनन्दस्य भण्यते ॥ ३६० ॥**

रागादिक्षये दुःखक्षयाद्भूयस्त्वं सुखस्येत्यत्र मानमाह । **उत्तरेति** । स एको मानुष आनन्द इत्यारभ्य स एको ब्रह्मण आनन्द इत्यन्तश्रुतौ पूर्वपूर्वभूमेः शतशतगुणोत्कर्षेणोत्तरोत्तरभूमौ वृद्ध्या ब्रह्मण्यानन्दस्यावसानमुच्यते तत्र श्रोत्रियस्य चाकामहतस्येति श्रुतेर्दुःखहेतुरागादिक्षयात्तत्कार्यदुःखध्वस्त्या सुखबाहुल्यसिद्धिरित्यर्थः ॥ ३६० ॥

**अव्यावृत्ताननुगतप्रत्यङ्मात्रसमाप्तितः ॥**
**भूम्न्येव तु परा निष्ठाऽऽनन्दस्येति श्रुतेर्वचः ॥ ३६१ ॥**

आनन्दस्य परा निष्ठा ब्रह्मणीत्यत्र श्रुत्यन्तरं संवादयति । **अव्यावृत्तेति** । सर्वस्यैकरसे प्रतीच्यवसानात्तत्रैवाऽऽनन्दस्य निष्ठेति मत्वा यो वै भूमा तत्सुखमित्यादिवाक्यमित्यर्थः ॥ ३६१ ॥

**आनन्दः स्वयमेवाऽऽत्मा भेदसंसर्गवर्जितः ॥**
**दुःखहेतुविनिर्मुक्तावतिघ्नीमित्यतः स्वतः ॥ ३६२ ॥**

आनन्दस्य भूम्नि निष्ठेत्युक्तेरानन्दात्मनोर्भेदमाशङ्क्याऽऽह । **आनन्द इति** । तस्याऽऽत्मना क्रियाकारकवन्नीलोत्पलवद्वा संगतिरित्याशङ्क्याऽऽह । **भेदेति** । आत्मानन्दैकरस्ये फलितमाह । **दुःखेति** । अतिघ्नीमानन्दस्य निष्ठामिति शेषः । अवस्थाद्वयसंचारोत्थश्रमादुपसंहृतकार्यकरणस्य विनैव ज्ञानमेषा निष्ठाऽऽप्यतेऽतो युक्तं पुनरुत्थानमिति मत्वाऽऽह । **अतः स्वत इति** ॥ ३६२ ॥

**गार्ग्यं काश्यो यदप्राक्षीत्काभूदेष तदेति तत् ॥**
**सप्रपञ्चं यथावच्च सर्वमुक्तमशेषतः ॥ ३६३ ॥**

स यथोर्णनाभिरित्यादेः संगतिं वक्तुं वृत्तं कीर्तयति । **गार्ग्यमिति** । अशेषतोऽपेक्षितविशेषप्रक्षेपेणेति यावत् ॥ ३६३ ॥

**अनेन च यथोक्तेन पाणिपेषोत्थितस्य हि ॥**
**मोहोत्थाशेषकार्येभ्यो विशुद्धिं श्रुतिरब्रवीत् ॥ ३६४ ॥**

आद्यप्रश्ननिर्णयस्य किं फलमित्यपेक्षायामाह । **अनेनेति** । अनेन त्वमर्थशोधनं कृतमित्यर्थः । तथाविधा शुद्धिरन्यत्रापि प्रसिद्धेति हिशब्दार्थः ॥ ३६४ ॥

**कुत आगादिति त्वस्य प्रश्नार्थोविविक्षिकीर्षया ॥**
**सुषुप्ताज्जाग्रदापत्तिर्यथा तदधुनोच्यते ॥ ३६५ ॥**

उत्तरस्य तात्पर्यमाह । **कुत इति** । अस्य सुप्तस्य जीवस्येति यावत् ॥ ३६५ ॥

नन्वस्थाद्यो हि यत्रेह स तस्मादन्यतो व्रजन् ॥
वेश्मतो ग्रामतो वाऽसौ तत एव व्रजेद्ध्रुवम् ॥ ३६६ ॥

पूर्वेणोत्तरस्य गतार्थत्वं शङ्कते । नन्विति । स्थित्याधारस्यैव गत्यपादानत्वं लोकसिद्धमिति हिशब्दार्थः । अन्यत इति गतिकर्मोक्तिः ॥ ३६६ ॥

तस्मात्सामर्थ्यतः सिद्ध उत्तरप्रश्ननिर्णयः ॥
तन्निर्णयार्थमारम्भो न कार्यो जामिदोषतः ॥ ३६७ ॥

स्थित्यवधिरेव निर्धारितो न त्वागत्यवधिस्तथाच तादर्थ्येनोत्तरग्रन्थप्रवृत्तिरित्याशङ्क्याऽऽह । तस्मादिति । स्थित्यवधिनिश्चयात्तद्वशादेव गत्यवधेरपि निश्चयसंभवात्तादर्थ्येनोत्तरग्रन्थारम्भो न युज्यते पौनरुक्त्यादित्यर्थः ॥ ३६७ ॥

न निमित्ताद्यर्थताऽपि पञ्चम्या उपपद्यते ॥
ऊर्णनाभ्यग्निदृष्टान्ते न निमित्तादि गम्यते ॥ ३६८ ॥

कुत इति पञ्चमी नापादानार्थेति न पुनरुक्तिः किंतु ब्रह्मणि स्थितस्य किंनिमित्तमिहाऽऽगमनमिति निमित्तप्रश्नार्था तदाक्षेपार्था वेत्याशङ्क्याऽऽह । नेत्यादिना ॥३६८॥

प्रत्युक्तौ न निमित्तादि यदि साक्षात्समीक्ष्यते ॥
अपादानार्थतैवास्तु दोषस्यान्यत्र दर्शनात् ॥ ३६९ ॥

प्रत्युक्तौ निमित्ताक्षेपयोरप्रतीतिमुपेत्य श्रौतप्रयोगस्यार्थवत्तानियमादर्थान्तरस्य चाभावादपादानार्था पञ्चमीति शङ्कते । प्रत्युक्ताविति । अन्यत्र निमित्तादाविति यावत् । दोषस्य प्रत्युक्तिविरोधस्येत्यर्थः ॥ ३६९ ॥

नन्वत्रापि समो दोषो वाक्यस्य पुनरुक्तता ॥
नैवं यतोऽखिलध्वान्तकार्यध्वंसो विवक्षितः ॥ ३७० ॥

अपादानपक्षे पुनरुक्तदोषादर्थान्तरं पञ्चम्या वाच्यमिति पूर्ववाद्याह । नन्विति । सिद्धान्तमाह । नैवमिति । तत्र हेतुं वदन्प्रथमप्रश्नेन विवक्षितमर्थमाह । यत इति । शुद्धस्त्वमर्थोऽत्र विवक्षित इत्यर्थः ॥ ३७० ॥

अव्यावृत्ताननुगतं पूर्णं ब्रह्म विवक्षितम् ॥
प्रत्यङ्मात्रैकयाथात्म्यं न दोषो जामिता ततः ॥ ३७१ ॥

द्वितीयप्रश्नेन विवक्षितमाह । अव्यावृत्तेति । सर्वाविद्यातज्जनिर्मुक्तं प्रत्यगद्वयं ब्रह्म प्रश्नद्वयव्याजेन प्रतिपिपादयिषितमिति न पुनरुक्तिरिति फलितमाह । नेति ॥ ३७१ ॥

विषयौ द्वावुपन्यस्तौ विद्याविद्यात्मनोरिह ॥
आत्मेत्येवेति विद्याया विषयः प्रागुदाहृतः ॥ ३७२ ॥

---

१ क. व्रजेत् । २ ख. °त्तः प्र° ।

**अविद्याविषयस्तावत्संसारानर्थ ईरितः ॥**
**क्रियाकारकभेदेन नामरूपक्रियात्मकः ॥ ३७३ ॥**

यथोक्तं वस्तु प्रश्नाभ्यां विवक्षितमिति कुतो ज्ञातमित्याशङ्क्य तद्वक्तुं तार्तीयमर्थमनुवदति । **विषयाविति** । इहेत्यतिक्रान्ताध्यायोक्तिः । विषयोपन्यासं विभजते । **आत्मेतीति** । संसाराख्यमनर्थमेव विशिनष्टि । **क्रियेति** ॥ ३७२ ॥ ३७३ ॥

**तत्राविद्योद्भवं कार्यं यावत्किंचिद्विवक्षितम् ॥**
**तत्प्रत्यपादि निखिलं पूर्वं श्रुत्यैव यत्नतः ॥ ३७४ ॥**

तत्राविद्याविषये वक्तव्यमित्यादिभाष्यार्थमाह । **तत्रेति** । निर्धारणार्था सप्तमी । सकार्याविद्यासूत्रमा तृतीयसमाप्तेर्व्याख्यातमित्यर्थः । संग्रहविवरणात्मको यत्नः ॥३७४॥

**अविद्याप्रतिपक्षाया विद्याया विषयोऽधुना ॥**
**प्रवक्तव्योऽतस्तद्योग्यौ प्रश्नौ द्वौ समुदाहृतौ ॥ ३७५ ॥**

विद्याविषयस्त्वात्मेत्यादेरर्थमाह । **अविद्येति** । विद्यासूत्रं न प्रपञ्चितमिति तादर्थ्येन प्रश्नयोरुत्थानमित्यर्थः ॥ ३७५ ॥

**हेतुस्वरूपकार्याणि विरोधीनि परस्परम् ॥**
**अविद्याविद्ययोर्यस्मात्तद्योग्यप्रश्नगीरतः ॥ ३७६ ॥**

कथमविद्याप्रतिपक्षा विद्येति तत्राऽऽह । **हेत्विति** । अविद्याया ज्ञापकोऽविवेकरागादिर्विद्यायास्तूत्पादको ज्ञापकश्च विवेकवैराग्यादिस्तयोः स्वरूपं प्रकाशोऽप्रकाशश्च कार्यं बन्धस्तद्ध्वंसश्चैतानि मिथो विरुद्धानि तस्मादविद्याप्रतिकूलविद्याव्याख्यानयोग्यप्रश्नद्वयप्रवृत्तिरित्यर्थः ॥ ३७६ ॥

**कारकव्यवहारोऽयमविद्याविषयः सदा ॥**
**आधाराधेययोर्भित्तौ तयोः कारकतेष्यते ॥ ३७७ ॥**

कथं यथोक्तविद्याव्याख्योपयोगित्वं प्रश्नयोरित्याशङ्क्य तयोः श्रौतमर्थं संक्षिप्याऽऽह । **कारकेति** । तत्सत्त्वावस्था सदेत्युक्ता । तत्राऽऽद्यप्रश्नार्थं संक्षिपति । **आधारेति** ॥ ३७७ ॥

**तद्वद्गच्छति यो यस्माद्भेदे सत्येव याति सः ॥**
**इत्यविद्याव्यवस्थेयं विद्यायास्तद्विपर्ययः ॥ ३७८ ॥**

द्वितीयप्रश्नार्थं संगृह्णाति । **तद्वदिति** । तयोः श्रौतमर्थमुपसंहरति । **इत्यविद्येति** । तयोर्विवक्षितं वक्तुं विद्याव्यवस्थामाह । **विद्याया इति** । अविद्याविषयाद्द्वैताद्विपरीतमेकरसं वस्तु विद्याविषयमित्यर्थः ॥ ३७८ ॥

---

१ क. ग. पूर्वश्रु° ।

**क्रियाकारकभेदाद्या लोकतः शेमुषी त्वभूत् ॥**
**यथास्थितात्मयाथात्म्यसम्यग्ज्ञानेन बाध्यते ॥ ३७९ ॥**

इत्थं विद्याविद्याव्यवस्थायां फलितमाह। **क्रियेति**। द्वैतधीरविद्या सैकरसात्मधिया बाध्यते तस्मात्तद्व्युत्पादनाय तन्निवर्त्याविद्याविषयौ प्रश्नाविति भावः ॥ ३७९ ॥

**नान्योऽयमात्माऽन्यत्राभून्नान्योऽन्यस्मात्तथैति च ॥**
**इति निःशेषतन्मोहकार्यध्वंसो विवक्षितः ॥ ३८० ॥**

संप्रति प्रत्युक्तेस्तात्पर्यमाह। **नान्य इति**। अधिकरणाधिकर्तन्यभावश्चापादान-कर्तृभावश्चाविवक्षितश्चेत्किं तर्हि विवक्षितं तदाह। **इति निःशेषेति**। क्रियाकारकभेदस्य पूर्वोक्तप्रकारेणाविवक्षितत्वे सतीत्यर्थः। तच्छब्देनाऽऽत्मोच्यते। तद्विद्याद्वारेणेति शेषः ॥ ३८० ॥

**अभेदव्यतिरेकाभ्यां वस्त्वन्तरमिहाऽऽत्मनः ॥**
**श्रुत्या निषिध्यते साक्षाद्भेदहेतोर्निषेधतः ॥ ३८१ ॥**

आधाराधेयादिभावो न विवक्षितो मोहादिध्वंसस्तु विद्ययेत्यत्र हेतुमाह। **अभेदेति**। इहेति प्रश्नप्रत्युक्तिवाक्योक्तिः। भेदहेतोरज्ञानस्येति यावत् ॥ ३८१ ॥

**ननु प्राणादिभिः सद्भिः कथं निर्भेदताऽऽत्मनः ॥**
**नाऽऽत्मन्येव तदध्यासाच्छुक्तिकारजतादिवत् ॥ ३८२ ॥**

आत्मनः सूचितं निर्भेदत्वमाक्षिपति। **नन्विति**। तैस्तस्य भेदादिति शेषः। न प्राणादीनां सत्त्वं शुक्त्यादौ रजतादिवदात्मन्यारोपादिति परिहरति। **नाऽऽत्मनीति** ॥ ३८२ ॥

**कथं तदिति दृष्टान्त ऊर्णनाभ्यादिरुच्यते ॥**
**वास्तवं वृत्तमापेक्ष्य न त्वियं सृष्टिरात्मनः ॥ ३८३ ॥**

तत्र तेषां कल्पितत्वमप्रामाणिकमित्याह। **कथमिति**। तत्रोत्तरत्वेन यथेत्याद्यवतारयति। **दृष्टान्त इति**। नन्वत्र दृष्टान्तेन प्राणादेरात्मनो वास्तवी सृष्टिरुच्यते न तस्य तस्मिन्नध्यासस्तद्द्योतकाभावान्नेत्याह। **वास्तवमिति**। कूटस्थासङ्गाद्वयमात्मरूपमपेक्ष्य प्राणादिसृष्टेरयोगात्कल्पितैव सेत्यर्थः ॥ ३८३ ॥

**नासतो जन्मना योगः सतः सत्त्वान्न चेष्यते ॥**
**कूटस्थे विक्रिया नास्ति तस्मादज्ञानतो जनिः ॥ ३८४ ॥**

किंच प्राणादेरसतः सतो वा जन्म नाऽऽद्य इत्याह। **नासत इति**। न द्वितीय इत्याह। **सत इति**। जन्यस्वरूपालोचनया जन्मायोगमुक्त्वा जनकस्वभावालोचनयाऽपि तदयोगमाह। **कूटस्थ इति**। भासमानजनेस्तर्हि का गतिस्तत्राऽऽह। **तस्मादिति** ॥ ३८४ ॥

**पुंस्प्रबोधप्रसिद्ध्यर्थं सृष्टिव्याजोऽयमुच्यते ॥**
**कौटस्थ्यात्त्वात्मनः सृष्टिर्न कथंचन युज्यते ॥ ३८५ ॥**

सृष्टिरवास्तवी चेत्किमर्थं कथ्यते तत्राऽऽह । **पुंस्प्रबोधेति** । सृष्टिश्चेत्फलवती तर्हि वास्तव्येव किं न स्यात्तत्राऽऽह । **कौटस्थ्यादिति** ॥ ३८५ ॥

**निःशेषवेदसिद्धान्तविद्वद्भिरपि भाषितम् ॥**
**गौडाचार्यैरिदं वस्तु यथाऽस्माभिः प्रपञ्चितम् ॥ ३८६ ॥**

मायामय्याः सृष्टेरात्मज्ञानार्थत्वे वृद्धसंमतिमाह । **निःशेषेति** ॥ ३८६ ॥

**मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा ॥**
**उपायः सोऽवताराय नास्ति भेदः कथंचन ॥ ३८७ ॥**

तदेवानुवदति । **मृदिति** ॥ ३८७ ॥

**सृष्टावन्यपरायां तु न चोद्यस्यास्ति संभवः ॥**
**कूटस्थात्कथमुत्पत्तिरचित्कं चेतनात्कथम् ॥ ३८८ ॥**

सृष्टिश्रुतेरैक्यपरतया सृष्ट्यादेरप्रामाणिकत्वं प्रदर्श्य तदन्यपरत्वे फलितमर्थान्तरमाह । **सृष्टाविति** । किं तदसंभावितं चोद्यं तदाह । **कूटस्थादिति** । क्रियावतो मृदादेर्घटाद्युत्पद्यते ब्रह्मणोऽविकारित्वान्न ततो विश्वोत्पत्तिरित्यर्थः । किंच सालक्षण्ये हेतुफलभावो दृष्टो न च चेतनाचेतनयोर्ब्रह्मजगतोस्तदस्त्यतो न ततो जगज्जन्मेत्याह । **अचित्कमिति** ॥ ३८८ ॥

**निःसाधनं च कार्याणि कथं कुर्यादनेकधा ॥**
**विश्वरूपसमुत्पत्तिरेकरूपात्कथं भवेत् ॥ ३८९ ॥**

ब्रह्मणो विश्वोपादानत्वानुपपत्तिमुक्त्वा तन्निमित्तत्वानुपपत्तिमाह । **निःसाधनं चेति** । अद्वयत्वान्निःसाधनत्वमेकरस्याच्च ब्रह्मणो द्विधाऽपि न हेतुतेत्याह । **विश्वेति** । एतच्चोद्यजातमयुक्तं सृष्टिश्रुतेरन्यपरत्वेन सृष्टेर्मायात्मकत्वादिति भावः ॥ ३८९ ॥

**इत्येवमादिचोद्यानां पुंस्वभावानुरोधतः ॥**
**परिहारवचः श्रौतं न च वस्त्वनुरोधतः ॥ ३९० ॥**

सा चेन्मायामयी तर्हि तत्परिहारार्थं स यथेत्यादि कथमित्याशङ्क्याऽऽह । **इत्येवमिति** । वस्त्वनुरोधं विना केवलं पुंबुद्ध्यनुसारेण पूर्वोक्तनीत्या भवतां चोद्यानां परिहारार्थं स यथेत्यादीत्यर्थः । एवंशब्दः प्रकृतवाक्यपरामर्शी । ईश्वरस्य न स्वार्था सृष्टिराप्तकामत्वान्नान्यार्थाऽद्वयत्वादिति चोद्यमादिशब्दार्थः ॥ ३९० ॥

**ऊर्णनाभिः स्वयं कर्ता प्रयुङ्क्ते कर्म चाऽऽत्मना ॥**
**तन्तूंस्वतः प्रसिद्धेन करणेन च तन्तुना ॥**
**गमिक्रियां साधयति तथैकत्रापि चाऽऽत्मनि ॥ ३९१ ॥**

एवं तात्पर्यमुक्त्वा स यथेत्यादि व्याकरोति । **ऊर्णेति** । किं तत्कर्म तदाह । **तन्तूनिति** । स्वेतरकरणाभावार्थमात्मनेत्युक्तम् । स्वातिरिक्तसाधनासत्त्वमुक्त्वा स्वाव्यतिरिक्तसाधनेनानेकधा स्रष्टृत्वमाह । **स्वत इति** । ऊर्णनाभिन्यायमात्मनि योजयति । **तथेति** ॥ ३९१ ॥

**अचेतनो यथा जाल ऊर्णनाभेः सचेतनात् ॥**
**आकाशादिजगत्कार्यमात्मनश्चेतनात्तथा ॥ ३९२ ॥**

निःसाधनं चेत्यादिचोद्यं परिहृत्याचित्कमित्यादि परिहरति । **अचेतन इति** । एतेन विश्वरूपसमुत्पत्तिरित्यादि परिहृतम् ॥ ३९२ ॥

**विस्फुलिङ्गा यथा चाग्नेर्जायन्तेऽग्निस्वभावकाः ॥**
**सुषुप्तादात्मनस्तद्वत्प्राणादीनां समुद्भवः ॥ ३९३ ॥**

कूटस्थात्कथमित्यादि परिहरन्यथेत्यादि व्याकरोति । **विस्फुलिङ्गा इति** ॥३९३॥

**सुषुप्तोदाहृतिर्येयं तया समुपलक्ष्यते ॥**
**विश्वाभिव्यक्तितः पूर्वं ब्रह्मैवानामरूपकम् ॥ ३९४ ॥**

सुषुप्तात्प्राणादीनामुत्पत्तिरित्युक्ते स्थानस्यापि कारणत्वं शङ्क्येत तत्राऽऽह । **सुषुप्तेति** । अस्मादात्मन इति सुषुप्तस्यापादानत्वोक्त्या प्राग्बोधादव्यक्तनामरूपमज्ञातं ब्रह्म लक्ष्यते तत्तदेव कारणमित्यर्थः ॥ ३९४ ॥

**सर्वासूपनिषत्स्वेवं कारणं नान्यदात्मनः ॥**
**श्रूयतेऽतः परात्मैव जगतः कारणं परम् ॥ ३९५ ॥**

किंचाज्ञातब्रह्मातिरिक्ते कारणे मानाभावात्तदेव तथेत्याह । **सर्वास्विति** । एवमित्यज्ञातब्रह्मपरामर्शः । प्रधानादि व्यावर्तयति । **नान्यदिति** । अतः श्रूयमाणत्वादिति यावत् ॥ ३९५ ॥

**ब्रह्मण्यस्तमितेऽत्यर्थं जगत्यस्मिन्नशेषतः ॥**
**जगत्प्रसूतौ को हेतुस्तदन्याव्यतिरेकतः ॥ ३९६ ॥**

स्वपक्षमुक्त्वा स्वयूथ्यं प्रत्याह । **ब्रह्मणीति** । सप्तम्यर्थे तसिः । न हि सर्वात्मना लीनस्य पुनरुदये ब्रह्मणोऽन्यो हेतुरनिष्टेर्नापि ब्रह्म कौटस्थ्यादित्यर्थः ॥ ३९६ ॥

**अस्तीशो व्यतिरिक्तश्चेत्सोऽपि केन प्रवर्तितः ॥**
**जगन्निर्मिनुयादेतत्स्वतश्चेत्सर्वदा न किम् ॥ ३९७ ॥**

तदुपादानातिरेकेणेशस्य तदधिष्ठातुः सत्त्वादुपादाने लीनस्यापि जगतस्तद्वशाज्जन्मेति तटस्थेश्वरवाद्याह । **अस्तीति** । न तावत्तटस्थः सोऽस्ति मानाभावात्सन्नपि स केनचित्प्रवर्तितः स्वतो वा जगत्कुर्यादिति विकल्पयति । **सोऽपीति** । द्वितीयमनूद्य दूषयति । **स्वतश्चेदिति** ॥ ३९७ ॥

**ऐश्वर्यं पारतन्त्र्यं च नापि संभाव्यते मितेः ॥**
**नापि कार्यं विलीनत्वात्स्वात्मोत्पत्तौ प्रवर्तते ॥ ३९८ ॥**

आद्ये दोषमाह । **ऐश्वर्यमिति** । न हि द्वयमेकस्य प्रामाणिकं मिथो विरोधादित्यर्थः। कार्यमेव स्वोत्पत्तौ व्याप्रियते न कारणापेक्षयेति स्वभाववादिनं प्रत्याह । **नापीति** । लीनस्यापि स्वोत्पत्तौ व्यापारश्चेत्तत्कालानियतिस्तस्यासत्त्वाविशेषादिति भावः ॥३९८॥

**भिन्नं चेत्कारणात्कार्यं कार्यकारणता तयोः ॥**
**पृथक्प्रसिद्धयोः केयं हिमवद्विन्ध्ययोरिव ॥ ३९९ ॥**

किंच कार्यकारणयोर्भेदोऽभेदो वा नाऽऽद्य इत्याह । **भिन्नं चेदिति** ॥ ३९९ ॥

**अथाभिन्नं तदैकत्वात्कार्यकारणता कुतः ॥**
**नापि निष्क्रियरूपं सत्कारणत्वं समश्नुते ॥ ४०० ॥**

द्वितीयमादाय निराकरोति । **अथेति** । किंच कारणं कुर्वदकुर्वद्वाऽऽद्ये कुर्वत्त्वं कादाचित्कं न वा प्रथमेऽनवस्था द्वितीये सदा कार्यं स्यादकुर्वच्चेत्तत्राऽऽह । **नापीति** । अकुर्वतोऽपि कारणत्वे सदा कार्योदयः स्यादित्यर्थः ॥ ४०० ॥

**तथाचाक्रियमाणं सत्कथं कार्यमिहोच्यते ॥**
**क्रियाशून्यं च यद्वस्तु तच्चाकारकमिष्यते ॥ ४०१ ॥**

किंच कार्यमपि क्रियमाणं न वेति विकल्पयति । **तथाचेति** । आद्ये कार्यत्वात्क्रियायामपि क्रियमाणत्वप्रसङ्गादनवस्था द्वितीयं निराह । **अक्रियमाणमिति** । आत्मादेरपि तत्प्रसङ्गादिति भावः । इहेति कार्यकारणव्यवहारभूमिरुक्ता । कारणस्याकुर्वत्त्वे कार्यस्याक्रियमाणत्वे च दोषान्तरमाह । **क्रियेति** । क्रियां कुर्वत्कारकमित्यङ्गीकारात्पक्षद्वयेऽपि स्वीकारविरोधः स्यादेवेत्यर्थः ॥ ४०१ ॥

**लयेनैव समाप्तत्वात्कालकर्मादिकारणम् ॥**
**स्वात्मोत्पत्तावशक्तं तद्व्यक्तं सामर्थ्यभाग्यतः ॥ ४०२ ॥**

ननु नास्ति कार्यकारणाव्यवस्था कालादेर्व्यवस्थापकत्वान्नेत्याह । **लयेनेति** । स संवत्सरोऽभवदिति कालस्य कार्यत्वश्रवणात्कर्मादेश्च तदिष्टेस्तस्य सर्वस्य लीयतेऽस्मिन्निति लयशब्दितहेत्वात्मनैव लयेऽवसानान्न कालादि स्वोत्पत्तावपि शक्तं स्वरूपेणासत्त्वाद्व्यवस्थापकत्वं तु दूरापेतं स्वरक्षणेऽप्यशक्तस्य को हेतुः पररक्षण इति न्यायादित्यर्थः। अजातमपि कालादि हेत्वात्मना सत्त्वाद्व्यवस्थापकं स्यादित्याशङ्क्याऽऽह । **तदिति** । अतो नाजातस्य व्यवस्थापकत्वं न हि कुलालो जनकरूपेण सन्नपि घटं करोतीत्यर्थः ॥ ४०२ ॥

**नित्यशक्तित्वपक्षेऽपि युगपत्प्रभवादिकम् ॥**
**प्राप्नोति सर्वकार्यस्य न च तद्वर्तते तथा ॥ ४०३ ॥**

कार्यत्वे कालादेस्तत्कारणमेव सर्वस्य कारणमितरत्कार्यमिति व्यवस्थामाशङ्क्य तदपि शक्तिमन्न वा न चेत्सर्वस्य सर्वत्र कारणत्वापत्तिः शक्तिमच्चेत्तदा सा नित्याऽनित्या वा नित्या चेत्तदुपेतं कारणं निरपेक्षं न वेति विकल्प्याऽऽद्यं दूषयति । **नित्येति** । कल्पान्तरं प्रत्याह । **न चेति** । न हि शक्तिमत्कारणं सापेक्षं शक्तिमत्त्वस्याकिंचित्करत्वापत्तेरित्यर्थः ॥ ४०३ ॥

**शक्त्युत्पत्त्यभ्युपेतौ च कारणं स्यादशक्तिमत् ॥**
**अथ शक्त्यन्तराच्छक्तिरनवस्था प्रसज्यते ॥ ४०४ ॥**

कल्पान्तरमनुवदति । **शक्तीति** । सा किं शक्तिं विनोत्पद्यते शक्त्यन्तराद्वाऽऽद्ये शक्तिवत्कार्यस्यापि जनिसंभवान्न शक्तिमत्कारणं कल्प्यमित्याह । **कारणमिति** । कल्पान्तरमनूद्य निरस्यति । **अथेति** ॥ ४०४ ॥

**किमपेक्ष्य व्यपेतत्वं कालोऽयं वार्तमानिकः ॥**
**यायादनागतत्वं च तस्यैक्याभागवत्त्वतः ॥ ४०५ ॥**

पूर्वक्षणस्थं कारणमुत्तरक्षणस्थं कार्यमिति व्यवस्थामाशङ्क्य कालभेदं निराचष्टे । **किमिति** ॥ ४०५ ॥

**नित्यमेकं विभु द्रव्यं यदि कालोऽभ्युपेयते ॥**
**अतीतानागतत्वादिभेदः स्यात्किंनिबन्धनः ॥ ४०६ ॥**

ऐक्याभागवत्त्वं तस्य कथमित्याशङ्क्य कालो द्रव्यं क्रिया वेति विकल्प्याऽऽद्यमनूद्य दूषयति । **नित्यमिति** । विभुत्वे न सजातीयो भेदो नभोवदित्यर्थः ॥ ४०६ ॥

**आदित्यादिगतिश्चेत्स्यात्कालोऽव्यक्तसमुत्थितौ ॥**
**आदित्यादेर्विलीनत्वान्न तदा तत्क्रियेष्यते ॥ ४०७ ॥**

कल्पान्तरमाह । **आदित्यादीति** । अज्ञानात्तर्हि ब्रह्मणस्तदुत्पत्तौ तद्गतिरूपकालसिद्धिरित्याह । **अव्यक्तेति** । भवतु का हानिस्तत्राऽऽह । **आदित्यादेरिति** । तदा प्रागादित्याद्युत्पत्तेरिति यावत् । तत्पूर्वक्षणस्थं कारणमित्यादिव्यवस्थासिद्धिरित्यर्थः ॥ ४०७ ॥

**न चावयविनो वृत्तिर्निरंशकत्वहेतुतः ॥**
**भागेषु निष्कलत्वेऽवयविनः सामान्यत्वकारणात् ॥ ४०८ ॥**

कार्यद्रव्यमवयवि कारणद्रव्याण्यवयवास्तेषु तत्समवैतीति व्यवस्थामाशङ्क्याऽऽह । **न चेति** । तस्य तेषु वृत्तिरेकदेशेन कार्त्स्न्येन वा नाऽऽद्यस्तस्य स्वारम्भकावयवान्येकदेशाभावान्नेतर एकस्यानेकत्र कार्त्स्न्येन वृत्तावेकैकत्र तत्कार्यापातादतो न तस्य तेषु वृत्तिरित्यर्थः । किंच यथाऽवयविनोऽनंशत्वमेकत्वं च तद्वद्सामान्यत्वाद्संबन्धत्वाच्च तस्य नानेकत्र वृत्तिरित्याह । **निष्कलत्वेति** ॥ ४०८ ॥

**आधारेषु निरंशेषु यद्याधेयस्तथाविधः ॥**
**भिन्नदेशेषु तेष्वेकस्तथाचावयवी कथम् ॥ ४०९ ॥**

विपक्षमनूद्य दोषमाह । **आधारेष्विति** । रूपादिषु रूपत्वादिवत्तस्यावयवित्वासिद्धिरित्यर्थः ॥ ४०९ ॥

**तस्मान्न देशकालादिभेदो वस्त्वाश्रयो मितेः ॥**
**दिग्भेदकृन्निवद्व्योम्नि भेदोऽयं तद्वदात्मनि ॥ ४१० ॥**

उक्तन्यायेन कालादिकृतो भेदो वस्तुयोगी मानतो नास्ति चेत्तर्हि भातो भेदप्रपञ्चस्य का गतिस्तत्राऽऽह । **तस्मादिति** । वच्छब्दो यद्वदित्यर्थः ॥ ४१० ॥

**जगदुत्पत्तिसंहारास्तद्वदात्मनि कल्पिताः ॥**
**वस्तुवृत्तं समालोक्य कुतः सृष्ट्यादिसंभवः ॥ ४११ ॥**

प्रपञ्चस्याऽऽत्मनि कल्पितत्वे तद्द्वारा तद्धर्माणामपि तत्र तत्सिद्धिरित्याह । **जगदिति** । तद्वज्जगद्वदिति यावत् । उत्पत्त्यादीनां कल्पितत्वे कौटस्थ्यादात्मनः सृष्टिरित्यादावुक्तां युक्तिं स्मारयति । **वस्त्विति** ॥ ४११ ॥

**कारकादिर्यथा[1] भ्रान्तिस्तथा पूर्वमवादिषम् ॥**
**सर्वमात्मेति नेतीति तथा सत्युपपद्यते ॥ ४१२ ॥**

किंच क्रियाकारकाद्यनात्मवर्गस्य कल्पितत्वं तद्धेत्यादावुक्तमित्याह । **कारकेति** । द्वैतस्य कल्पितत्वे श्रुतिं प्रमाणयति । **सर्वमिति** ॥ ४१२ ॥

**उद्भूतिस्थितिनाशाः स्युर्जगतोऽतः प्रतिक्षणम् ॥**
**अविद्यामात्रहेतुत्वान्नामीषां विद्यते क्रमः ॥ ४१३ ॥**

जगज्जन्मादीनां दृश्यत्वान्नियतक्रमवत्त्वाच्च कथमवस्तुतेत्याशङ्क्याऽऽह । **उद्भूतीति** । तेषां वस्तुतोऽसत्त्वमतःशब्दार्थः । प्रतिक्षणं दृश्याः स्युरिति शेषः । तेन जगतो दृष्टनष्टस्वभावत्वं सूचितम् । जन्मादीनां दृश्यत्वेन शङ्कितं वस्तुत्वं निरस्य द्वितीयं हेतुं निरस्यति । **अविद्येति** ॥ ४१३ ॥

**प्राणाः श्रोत्रादयोऽत्र स्युर्दश सप्त च ये मताः ॥**
**लोकावच्छेदतोऽमीषां भेदोऽध्यात्मादिलक्षणः ॥ ४१४ ॥**

एवमेवेत्यादि सोपस्कारं व्याख्याय सर्वे प्राणा इत्यत्र प्राणशब्दार्थमाह । **प्राणा इति** । पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च वायवो मनो बुद्धिश्चेतिसप्तदशकलिङ्गरूपाः श्रोत्रादयोऽत्र प्राणा विवक्षिता इत्यर्थः । तेषामध्यात्मादिभावेनानेकभेदभाजां कथं सप्तदशत्वमित्याशङ्क्याऽऽह । **लोकेति** । देहो लोकः ॥ ४१४ ॥

---

१ क. °दि यथा ।

**जरायुजादिसंभेदभिन्ना लोकाः पृथग्विधाः ॥**
**तथाऽधिदेवतात्मानो देवाः स्युर्बहुभेदकाः ॥ ४१५ ॥**

सर्वे लोका इत्यत्र लोकशब्दार्थमाह । **जरेति**। सर्वे देवा इत्यस्यार्थमाह । **तथेति**। प्रकृतादात्मनो जाता इति यावत् ॥ ४१५ ॥

**तेऽपि साधारणाः प्राणा देहेऽसाधारणास्तु ते ॥**
**भूतानां परिणामोऽयं यथाकर्म यथाश्रुतम् ॥ ४१६ ॥**

देवानां बहुभेदत्वं स्फुटयति । **तेऽपीति** । यद्यप्यादित्यादय आधिदैविकेनाऽऽत्मना समष्टयस्तथाऽप्याध्यात्मिके देहे चक्षुरादिरूपास्त एव व्यष्टयो भवन्तीत्यर्थः । तेषामात्मनः समुत्पत्तौ कथं भौतिकत्वमित्याशङ्क्य सर्वाणीत्यादेरर्थमाह । **भूतानामिति**। तद्व्यवधानेन तेषामात्मकार्यतेति भावः । तेषु सुखदुःखमोहकरत्वं क्वचित्क्वचिद्दृष्टं कथमिति तत्राऽऽह । **यथेति** ॥ ४१६ ॥

**प्राणादिजन्मना जज्ञे विस्फुलिङ्गैर्यथा शिखी ॥**
**परमात्माऽपि जज्ञे खं यथा कुम्भादिजन्मभिः ॥ ४१७ ॥**

सर्व एत आत्मानो व्युच्चरन्तीति माध्यंदिनपाठस्यार्थमाह । **प्राणादीति** । अग्नेर्विस्फुलिङ्गात्मना जन्मवत्परस्यापि तत्तद्विशिष्टचिदाभासरूपेण जन्मव्यवहारो वास्तवः स्यादित्याशङ्क्याऽऽह । **जज्ञ इति** ॥ ४१७ ॥

**प्राणाद्युद्भूतितो नान्या क्षेत्रज्ञोद्भूतिरिष्यते ॥**
**श्रुतेरेतेभ्य इति हि तथा स्पष्टं वचः श्रुतम् ॥ ४१८ ॥**

आत्मा स्वतो जायते वस्तुत्वाद्घटवदित्याशङ्क्याऽऽकाशे व्यभिचारमभिप्रेत्याऽऽह । **प्राणादीति** । उपाध्यतिरेकेणाऽऽत्मजन्मानुमाने श्रुतिविरोधश्चेत्याह । **श्रुतेरिति** । सा चाग्रे व्याकरिष्यते । नाऽऽत्माऽश्रुतेरित्यादिन्यायविरोधं दर्शयितुं हिशब्दः ॥ ४१८ ॥

**यस्मादविद्ययैवाऽऽत्मा प्राणक्षेत्रज्ञरूपभाक् ॥**
**स्वतोऽतः स परं ब्रह्म तस्योपनिषदुच्यते ॥ ४१९ ॥**
**उपासनार्थं यद्गुह्यं नामोपनिषदुच्यते ॥**
**तदस्य परमं गुह्यं तेनोपासीत तत्त्वतः ॥ ४२० ॥**

तर्हि प्राणादिरुपाधिरुपहितो जीवोऽनुपहितः परश्चेति त्रयं प्राप्तं तत्राऽऽह । **यस्मादिति**। माध्यंदिनपाठस्यापि काण्वपाठवदर्थमुक्त्वा तस्येत्यादिवाक्यमवतार्य व्याकरोति । **तस्येत्यादिना** । सत्यस्य सत्यमित्युपनिषत्प्रत्यग्ब्रह्मणो रहस्यं नाम तदुपासनार्थमैक्यप्रतिपत्त्यर्थमित्यर्थः । पूर्वार्धार्थमेव स्फोरयति । **तदस्येति** ॥ ४१९ ॥ ४२० ॥

१ ग. °रणाः श्रुतेः ॥ भ° ।

**ब्रह्मविद्याधिकारेऽस्मिन्यावत्किंचिदुपासनम् ॥**
**ब्रह्मविद्योत्थितिफलं तत्सर्वमिति निर्दिशेत् ॥ ४२१ ॥**

तस्य विद्योदयफलत्वमुदाहरणेन साधयति । **ब्रह्मेति** । यथा ब्रह्मविद्याप्रकरणे श्रुतं सर्वमुपासनं तदुत्पत्तिफलं तथेदं नामापीति वदेदित्यर्थः ॥ ४२१ ॥

**गोदोहनादिवद्विद्यादेवं सर्वमुपासनम् ॥**
**विद्याधिकारजीवित्वान्न स्वतन्त्रफलं भवेत् ॥ ४२२ ॥**

तत्प्रकरणस्थमुपासनं कथं तदुत्पत्तिफलमित्याशङ्क्याऽऽह । **गोदोहनेति** । आदिपदेनानतिदृश्नं स्तृणात्यनतिदृश्नमेवैनं प्रजया पशुभिः करोत्याहार्यं पुरीषां पशुकामस्य वेदिं कुर्यादिति गृह्यते । दर्शपूर्णमासाङ्गत्वेन स्थिताप्प्रणयनोपजीवि गोदोहनं तद्द्वारा दर्शादिनियोगनिष्पादनद्वारेण स्वर्गमपि साधयदेव पशुं साधयति । तद्धि क्रत्वर्थं पुरुषार्थं वेति संशय्योपादानानुरोधेन वाक्यादेव क्रत्वर्थप्रणयनशेषतया क्रत्वर्थमिति प्रापय्य क्रत्वपेक्षिताप्प्रणयननिर्वृत्तेर्गोदोहनकार्यताया वाक्यीयत्वेऽपि नियोगस्य विनियोगापेक्षत्वात्पशुकामपदान्वयानुसारेण पुरुषार्थत्वमपि चतुर्थे स्थितमेवं विद्याप्रकरणस्थं सर्वमुपासनं तादर्थ्येन सृष्टप्रपञ्चोपजीवित्वादुपजीव्यद्वारा विद्यां साधयत्फलान्तरमपि यथोपदेशं साधयेन्न तत्स्वतन्त्रफलमुपजीव्यविरोधात्तस्मादुपास्तिः शुद्धिद्वारा धीहेतुः प्रकरणसामर्थ्यादित्यर्थः ॥ ४२२ ॥

**सत्यस्य सत्यमिति या ब्रह्मोपनिषदुच्यते ॥**
**प्राणा वै सत्यमित्यस्या व्याख्योपनिषदः कृता ॥ ४२३ ॥**

प्राणा वै सत्यमित्यादिब्राह्मणमवतारयति । **सत्यस्येति** ॥ ४२३ ॥

**नामरूपात्मकाः प्राणाः परसत्याभिसंगतेः ॥**
**सत्यमित्यभिधीयन्ते तेषां सत्यं परं पदम् ॥ ४२४ ॥**

तस्य संक्षेपतोऽर्थमाह । **नामेति** । तेषां सत्यशब्दवाच्यत्वे हेतुमाह । **परेति** । तेन सत्येनाधिष्ठानेन स्वरूपतया संबन्धादित्यर्थः ॥ ४२४ ॥

**उक्तोपनिषदर्थस्य सम्यगाविष्कृदुत्तरम् ॥**
**यो ह वै शिशुमित्यादि भविता ब्राह्मणद्वयम् ॥ ४२५ ॥**

गतेनोत्तरब्राह्मणयोः संगतिं वदन्मध्ये कार्यान्तरं सूचयति । **उक्तेति** । तदाविष्करणमात्रस्य सिद्धतया तत्रैव विशेषविवक्षया सम्यगित्युक्तम् ॥ ४२५ ॥

**कामं ह्युपनिषद्व्याख्या भवतु ब्राह्मणद्वयम् ॥**
**संसारिब्रह्मणोः कस्य नामैतदिति भण्यताम् ॥ ४२६ ॥**

---

१ ख. °ल्मु° ।

संगतिमङ्गीकृत्य विशेषादृष्ट्या संशयानो विचारं प्रस्तौति । **काममिति** । तद्याख्यानस्य तत्र भासमानत्वं हेतूकर्तुं हिशब्दः ॥ ४२६ ॥

**पाणिपेषप्रबुद्धस्य नाम संसारिणो यदि ॥**
**तदा स एव विज्ञेयस्तज्ज्ञानादेव मुक्तता ॥ ४२७ ॥**

संदिग्धं सफलं च विचार्यमिति न्यायेन संदेहमुक्त्वा विचारप्रयोजकं फलमाद्यपक्षमनूद्य तस्मिन्नाह । **पाणीति** । यज्ज्ञानान्मुक्तिस्तस्यैव ज्ञेयता न जीवस्येत्याशङ्क्याऽऽह । **तज्ज्ञानादिति** ॥ ४२७ ॥

**ब्रह्मशब्दाभिधेयश्च संसार्येव तदा भवेत् ॥**
**तद्विद्या ब्रह्मविद्येति प्रतिपद्यामहे तदा ॥ ४२८ ॥**

ब्रह्मज्ञानादेव सा न संसारिज्ञानादित्याशङ्क्याऽऽह । **ब्रह्मेति** । यद्विद्या ब्रह्मविद्या तदेव ब्रह्म न संसारीत्याशङ्क्याऽऽह । **तद्विद्येति** ॥ ४२८ ॥

**अथासंसारिणो नाम न्यायतोऽध्यवसीयते ॥**
**संसारिणि यदुक्तं तत्तदा तत्र भविष्यति ॥ ४२९ ॥**

पक्षान्तरमनूद्य फलमाह । **अथेति** । यथोक्तनामार्थस्य तस्मिन्नेव मुख्यतार्थं बाधायोग्यत्वादिन्यायः । यदुक्तमिति विज्ञेयत्वं तज्ज्ञानादेव मुक्तिरित्यादीत्यर्थः ॥ ४२९ ॥

**भिन्नात्मनोस्तयोर्दोषो ब्रह्मत्वप्रतिपादिकाः ॥**
**कुप्येरञ्श्रुतयः सर्वा नान्यदन्यद्भवेद्यतः ॥ ४३० ॥**

अस्तु ब्रह्मोपनिषत्पक्षः शास्त्रप्रामाण्यादित्याशङ्क्य जीवब्रह्मणोर्भेदोऽभेदो वेति विकल्प्याऽऽद्ये दोषमाह । **भिन्नेति** । तमेवाऽऽह । **ब्रह्मत्वेति** । सर्वश्रुतिकोपे हेतुमाह । **नान्यदिति** । अन्यस्य स्थितस्य नष्टस्य वाऽन्यत्वायोगाज्जीवपरयोर्भेदे तदैक्यश्रुतिविरोधः स्यादित्यर्थः ॥ ४३० ॥

**ब्रह्मणोऽव्यतिरेके च तद्व्यासति दुःखिनि ॥**
**ब्रह्मविद्योपदेशस्य कैमर्थक्यं प्रसज्यते ॥ ४३१ ॥**

कल्पान्तरे तु दुःखिनोऽभावाद्ब्रह्मवदुपदेशानर्थक्यं न हि ब्रह्मणोऽसावर्थवान्नित्यमुक्तत्वादन्यस्य चाभावादित्याह । **ब्रह्मण इति** ॥ ४३१ ॥

**इति संदेहहेतुश्च विचारस्य प्रयोजकः ॥**
**तस्माद्विचारः कर्तव्य उक्तसंदेहहानिकृत् ॥ ४३२ ॥**

ब्रह्मोपनिषत्पक्षस्यापि विना विचारमयोगादुक्तो विशेषानुपलम्भः संशयहेतुः स च विचारं प्रयोजयतीति फलितमाह । **इति संदेहेति** । विचारप्रयोजकमुक्त्वा तत्कार्येनामुपसंहरति । **तस्मादिति** ॥ ४३२ ॥

**नासंसारी परोऽन्योऽस्ति पाणिपेषप्रबोधितात् ॥**
**प्राज्ञावस्थात्मकाद्यस्मादुत्पत्तिः श्रूयते श्रुतौ ॥ ४३३ ॥**

संशयादिना विचारकार्यतामवतार्य पूर्वपक्षयति । **नेत्यादिना ।** अतस्तस्योपनिषदिति शङ्कैव नेति शेषः । नान्यद्ब्रह्मेत्यत्र हेतुमाह । **पाणीति ।** आगन्तुकज्ञानवतः स्वापाव स्थात्प्राणाद्युत्पत्तिरेवमेवास्मादिति श्रूयते जगत्कारणं चेष्टं ब्रह्मातो न जीवादन्यत्तस्यै-वाऽऽगन्तुकज्ञानवत्त्वादवस्थावत्त्वाच्चेत्यर्थः ॥ ४३३ ॥

**ब्रह्म तेऽहं ब्रवाणीति प्रतिज्ञाय ततो नृपः ॥**
**सुप्तं पुरुषमभ्येत्य पाणिना बोधयन्स्वयम् ॥ ४३४ ॥**

प्रकृताद्ब्रह्मणस्तदुत्पत्तिः श्रुत्योच्यते न जीवादित्याशङ्क्याऽऽह । **ब्रह्मेति ।** ततो जीवस्यैव ब्रह्मशब्देन प्रकृतत्वमिति शेषः ॥ ४३४ ॥

**तमवस्थान्तरं नीत्वा स्वप्नदर्शनवर्त्मना ॥**
**सुषुप्ताख्यं ततस्तस्मात्प्राणाद्युत्पत्तिमब्रवीत् ॥ ४३५ ॥**

तस्य प्रकृतत्वं साधयन्कारणत्वं प्रतिजानीते । **तमिति ।** प्रबोधावस्थो जीवस्तच्छ ब्दार्थः । स्वप्नदर्शनवर्त्मनेति स यत्रैतत्स्वप्न्यया चरतीत्यादिना स्वप्नोपन्यासद्वारेणे-त्यर्थः । उक्तहेतुपरामर्शी ततःशब्दः ॥ ४३५ ॥

**संसारी प्रक्रमाच्चेह नान्यः संभाव्यते ततः ॥**
**अनूद्य च प्रियात्मानं स द्रष्टव्य इतीर्यते ॥ ४३६ ॥**

कादाचित्कज्ञानवत्त्वादिना जीवस्य प्रकृतत्वेऽपि प्राणादिकारणमन्यदेव किं न स्यादित्याशङ्क्याऽऽह । **संसारीति ।** तौ हेत्यारभ्येत्यर्थः । इहेति प्रकरणोक्तिः । उपक्रमानुसारेण संसारिणो वेद्यत्वमुक्त्वा शेषादपि तथेत्याह । **अनूद्येति ।** प्रियात्मानं प्रियैः पुत्रवित्तादिभिर्भोगोपायैरुपलक्षितं भोक्तारमिति यावत् ॥ ४३६ ॥

**वेदान्तेषु च सर्वेषु प्रत्यगात्मैव चोद्यते ॥**
**वेद्यत्वेन न तद्भिन्नं पश्येदित्यभिधीयते ॥ ४३७ ॥**

इतश्च तस्यैव वेद्यतेत्याह । **वेदान्तेष्विति** ॥ ४३७ ॥

**अवस्थान्तरसंबन्धादसंसारी भविष्यति ॥**
**संसार्यपि स्वतोऽयं चेन्नेदृग्दृष्टेरसंभवात् ॥ ४३८ ॥**

स्वापावस्थाज्जीवाज्जगज्जन्मादिश्रुतेस्तस्यैव वेद्यत्वदृष्टेर्न तद्धेतुरीशो वेदान्तवेद्योऽस्ती-त्युक्ते सेश्वरवादी शङ्कते । **अवस्थान्तरेति ।** अवस्थाद्वयसंबन्धी स्वतः संसार्येवायं जीवः स्वापाख्यमवस्थान्तरं गतः परो भवतीत्यर्थः । परस्मादेव जगज्जन्म श्रुत्योच्यते

१ क. ख. श्रुतेः ।

इति शङ्कार्थः । नावस्थाभेदाद्वस्तुभेदस्तथाऽननुभवादपराद्धान्ताच्चेति परिहरति । **नेद्द-गिति** ॥ ४३८ ॥

**नान्यजातिविशिष्टोऽर्थः स्वतो जात्यन्तरं ततः ॥**
**कश्चिदेति जगत्यस्मिन्नन्यत्रेश्वरहेतुतः ॥ ४३९ ॥**

अवस्थाभेदाद्वस्तुभेदाभावं दृष्टान्तेनाऽऽह । **नेत्यादिना** । गमनशयनाद्यवस्थाभेदादिति शेषः । ततस्तस्मादात्मन्यपि न स्वरूपभेद इत्यर्थः । सेश्वरवादे तद्वशाद्वादेर्गोत्वादिविशिष्टस्य ततो जात्यन्तरं वस्तुतः संभवति न हि किंचिदीशस्याशक्यं तत्राऽऽह । **अन्यत्रेति** । तं हेतुं हित्वा नान्यदन्यद्भवति स यदि वस्तुस्वभावमन्यथयेन्न किंचिद्व्यवस्थितं स्यादित्यर्थः ॥ ४३९ ॥

**स्वभावमपि जह्याच्चेदग्निः शीतो भवेद्ध्रुवम् ॥**
**सर्वप्रमाणकोपश्च सर्वं स्यादधरोत्तरम् ॥ ४४० ॥**

अवस्थाभेदादिना स्वरूपवैपरीत्ये न्यायविरोधमाह । **स्वभावमिति** । यो भावो यद्धर्मको मितो नासौ तद्धर्मं व्यभिचरत्यतिप्रसङ्गादित्यर्थः ॥ ४४० ॥

**सांख्यादयस्तथेशस्य ह्यभावं बहुयुक्तिभिः ॥**
**आपादयन्ति यत्नेन तेभ्योऽन्यः कोऽधिको धिया ॥ ४४१ ॥**

जागरादिविशिष्टस्यैव स्वापवैशिष्ट्यात्तस्य संसारित्वान्नेशोऽन्योऽस्तीत्युक्त्वा तदभावे वादिसंमतिमाह । **सांख्यादय इति** । तस्य देहित्वेऽस्मदादितुल्यत्वात्तदभावे मुक्तवज्जगत्कर्तृत्वायोगाज्जीवानामेवादृष्टद्वारा तत्कर्तृत्वसंभवात्तस्याकिंचित्करत्वमित्यादियुक्तिं सूचयति । **बह्विति** । आगमस्येव युक्तीनामपि साधकत्वद्योतनार्थो हिशब्दः । यत्नो युक्तिषु दोषराहित्योपन्यासः । ननु तेभ्योऽन्यो बुद्ध्याधिक्यादीशमपि साधयिष्यति नेत्याह । **तेभ्य इति** ॥ ४४१ ॥

**संसारिणोऽप्यसामर्थ्याज्जगज्जन्मादिकर्मसु ॥**
**जगद्धेतुत्वमन्याय्यमिति चेन्न श्रुतेर्बलात् ॥ ४४२ ॥**

विमतो न जगज्जन्मादिहेतुस्तत्रासमर्थत्वात्पाषाणवत्तत्रासामर्थ्यं च संसारित्वादिति शङ्कते । **संसारिणोऽपीति** । उक्तदृष्टान्तार्थोऽपिशब्दः । कालात्ययापदेशेन दूषयति । **न श्रुतेरिति** ॥ ४४२ ॥

**अक्षाद्यगोचरो यद्वच्छास्त्रादध्यवसीयते ॥**
**तद्वत्संसारिकारित्वं जगतो गम्यतां श्रुतेः ॥ ४४३ ॥**

एवमेवेत्यादिश्रुतेरपि प्रत्यक्षाद्यगोचरे संसारिणो जगद्धेतुत्वे न प्रवृत्तिरित्याशङ्क्याऽऽह । **अक्षादीनि** । धर्मादिरिति यावत् । न हि मानान्तरमपेक्ष्य श्रुतिः स्वार्थमवगमयति स्वतो मानत्वादिति भावः ॥ ४४३ ॥

**एवं तावदयं पक्षो न्यायतः प्रतिपादितः ॥**
**शास्त्रन्यायादितोऽन्योऽपि पक्षोऽथ प्रतिपाद्यते ॥ ४४४ ॥**

निरीश्वरवादमुपसंहरति । **एवमिति** । सेश्वरवादमुत्थापयति । **शास्त्रेति** ॥ ४४४ ॥

**यः सर्वज्ञः सर्वविद्योऽशनायादिविवर्जितः ॥**
**यः पृथिव्यामिति तथा नेति नेतीति चाऽऽगमः ॥ ४४५ ॥**
**अस्थूलाद्यक्षरोक्तेश्च तथाऽपूर्वादिवाक्यतः ॥**
**असंसारी परोऽस्तीशो यस्य सर्वमिदं वशे ॥ ४४६ ॥**

तत्रेश्वरविषया भाष्योक्ताः श्रुतीरुदाहरति । **यः सर्वज्ञ इति** । तासामर्थं संगृह्णाति । **असंसारीति** । ईश्वरत्वं विशदयति । **यस्येति** ॥ ४४५ ॥ ४४६ ॥

**स एव च जगत्कारी सत्यज्ञानादिलक्षणः ॥**
**तस्मादित्यात्मनश्चेति सामानाधिकरण्यतः ॥ ४४७ ॥**

श्रौते तस्मिन्कार्यलिङ्गकमनुमानमाह । **स एवेति** । तस्य स्वरूपमाह । **सत्येति** । तस्य जगत्कर्तृत्वे श्रुतिं प्रमाणयति । **तस्मादिति** । ब्रह्मविदाप्नोति परमित्यारभ्य सत्यं ज्ञानमित्यादिना लक्षणमुक्त्वा तस्मादित्यनुकृष्य तत्राऽऽत्मशब्दं प्रयुज्य ब्रह्मवाचितच्छब्दस्याऽऽत्मशब्दस्य च सामानाधिकरण्यात्प्रत्यग्ब्रह्मणः सकाशादाकाशादिसृष्टिरुक्तेत्यर्थः ॥ ४४७ ॥

**संसारिणो ननूत्पत्तिरेवमेवेति कीर्तिता ॥**
**नैवं महेश्वरस्यैव तत्राऽऽकाशत्वसंश्रयात् ॥ ४४८ ॥**

न तैत्तिरीयश्रुतेरीशो जगद्धेतुर्वाजसनेयिश्रुतिविरोधादिति शङ्कते । **संसारिण इति** । य एषोऽन्तर्हृदय आकाशस्तस्मिन्नित्यत्र परस्यैवाऽऽकाशत्वस्वीकारादेवमेवास्मादिति प्रकृतपरमात्माकाशपरामर्शात्ततो जगदुत्पत्तिरत्रोच्यते तन्न तैत्तिरीयश्रुतेर्वाजसनेयिश्रुत्या विरोध इति परिहरति । **नैवमिति** ॥ ४४८ ॥

**ब्रह्म तेऽहं ब्रवाणीति प्रकृत्य ब्रह्मबोधनम् ॥**
**अब्रह्मप्रकृतं ब्रूयात्कथं राजाऽतिपण्डितः ॥ ४४९ ॥**

प्रत्युक्तिस्थाकाशशब्दस्य परविषयत्वमसिद्धमित्याशङ्क्य प्रकरणानुसंधानपूर्वकमाह । **ब्रह्मेति** । आकाशस्याब्रह्मत्वे प्रकृतहानाप्रकृतप्रक्रिये स्यातां न च धीपूर्वकारिणोऽप्रकृतोक्तिर्युक्तेति भावः ॥ ४४९ ॥

**श्रुत्यन्तरविरोधश्च संसारी चेदिहोच्यते ॥**
**सता सोम्येति सन्नाम्ना ब्रह्म तत्र विवक्षितम् ॥ ४५० ॥**

किंच ब्रह्मान्यश्चेदाकाशः स किं संसारी भूताकाशो वेति विकल्प्याऽऽद्यं दूषयति ।

**श्रुत्यन्तरेति** । इहेति प्रत्युक्तिग्रहः । श्रुत्यन्तरस्यापि संसारिविषयत्वं किं न स्यान्नेत्याह । **सन्नाम्नेति** । अन्यथा सदेवेत्यादिप्रक्रमभङ्गादिति भावः ॥ ४९० ॥

**आकाशो ह वै नामेति ब्रह्मैवानामरूपकम् ॥**
**श्रुत्यन्तरे श्रुतं साक्षादाकाशाद्दानवत्परम् ॥ ४९१ ॥**

प्रकृताकाशस्य ब्रह्मत्वे वाक्यान्तरं प्रमाणयति । **आकाश इति** । तत्र नामरूपाभ्यामर्थान्तरत्ववद्ब्रह्मशब्दो ह्याकाशस्य ब्रह्मत्वे स्पष्टो हेतुरिति मत्वा साक्षादित्युक्तम् ॥ ४९१ ॥

**तथाचाहरहः शास्त्रं पर आत्मानि चेति यत् ॥**
**सुषुप्ते ब्रह्मणोऽन्यस्य नावकाशोऽस्ति दुःखिनः ॥ ४९२ ॥**

अवस्थात्रययोगं विनोक्ताकाशस्य ब्रह्मत्वेऽपि तद्योगिप्रकृताकाशस्य संसारित्वमेवेत्याशङ्क्याऽऽह । **तथाचेति** । यत्तद्वशादिति शेषः ॥ ४९२ ॥

**अतद्विकारतो जन्म प्रलयश्च तथाऽऽत्मनः ॥**
**भौतिकाकाशविषयो न कथंचन युज्यते ॥ ४९३ ॥**

कल्पान्तरं प्रत्याह । **अतद्विकारत इति** । अस्मादिति प्रकृतं परामृश्य प्राणादेरुत्पत्तिरुक्ता । य एष इत्यादौ भूताकाशस्य प्रकृतत्वे तस्यैवायं परामर्शः स्यान्न च तस्मात्प्राणादिजन्मलयौ तस्य भूताकाशविकारत्वाप्रसिद्धेरस्मादित्यस्याऽऽत्मशब्दसामानाधिकरण्याच्च तस्मान्नायमाकाशशब्दो भूताकाशविषय इत्यर्थः ॥ ४९३ ॥

**जगज्जन्मादिसामर्थ्यं सामग्र्यादि च दुःखिनः ॥**
**संसारिणो न संभाव्यमस्मदादेर्यथा तथा ॥ ४९४ ॥**

श्रुत्यनुमानाभ्यां जगद्धेतुमीशमुक्त्वा तत्रैवोपपत्तिमाह । **जगदिति** । सामग्री सहकारिसंपूर्तिः । आदिपदेन ज्ञानादिग्रहः ॥ ४९४ ॥

**न शक्त्याधानकृच्छास्त्रं तस्याभिव्यञ्जकत्वतः ॥**
**मानान्तरविरोधेन न हि मानं प्रवर्तते ॥ ४९५ ॥**

एवमेवेत्यादिश्रुतेर्जगज्जन्मादि संसारिणः स्यादित्युक्तं श्रुतिविरोधे च युक्तिराभासी भवतीत्याशङ्क्याऽऽह । **न शक्तीति** । शास्त्रस्य ज्ञापकत्वेनाकारकत्वेऽपि संसारिणो जगत्कर्तृत्वं तज्ज्ञापयिष्यतीत्याशङ्क्य न तत्र तस्य मानत्वं संसारिणस्तत्सामर्थ्याभावस्य प्रत्यक्षतया तद्विरोधादित्याह । **मानान्तरेति** ॥ ४९५ ॥

**परस्परानपेक्षौ चेत्संसारीशौ स्वतः स्थितौ ॥**
**ऐकात्म्यं न तयोर्युक्तं प्रकाशतमसोरिव ॥ ४९६ ॥**

---

१ ख. तदात्म° ।

भवतूक्तमानयुक्तिभ्यामीशसिद्धिस्तस्य प्रत्यग्ब्रह्मणः सत्यस्य सत्यमित्युपनिषदिति सिद्धान्तमाशङ्क्याऽऽह । **परस्परेति** ॥ ४५६ ॥

**अहं ब्रह्मेत्यतोऽयुक्तं ब्रह्म प्रत्यक्तयाऽञ्जसा ॥**
**ग्रहीतुं दुःखिनोऽन्यत्वाद्दोषभाक्स्यादतोऽन्यथा ॥ ४५७ ॥**

न तावदभिन्नौ मिथो विरुद्धत्वात्तमःप्रकाशवदित्यनुमानफलमाह । **अहमिति ।** विपक्षे दोषमाह । **दोषेति ।** अमात्यः स्वात्मानं राजानं भावयन्प्रत्यवैति तथेशमात्मानं पश्यञ्जीवः प्रत्यवेयादिति भावः ॥ ४५७ ॥

**सत्कर्मभिस्तु तं देवं जगतः कारणं परम् ॥**
**आराध्य परमोत्कर्षं तत्प्रसादात्समश्नुते ॥ ४५८ ॥**

अहं ब्रह्मेतिज्ञानाभावे न मुक्तिस्तमेवेत्यादिश्रुतेरित्याशङ्क्याऽऽह । **सत्कर्मभिरिति ।** **उक्तं हि**—मत्कर्मकृन्मत्परम इत्यादि । **पञ्चरात्रिणश्चाऽऽहुः**—

"परब्रह्मत्वमायाति मत्कर्मपरमः पुमान्" इति ।
"ये संश्रयन्ति तं भक्त्या सूक्ष्ममध्यात्मचिन्तकाः ॥
ते यान्ति वै पदं विष्णोर्जरामरणवर्जितम्" इति च ॥ ४५८ ॥

**ब्रह्मात्मैकत्वशंसीनि वाक्यान्यपि तथा सति ॥**
**अर्थवादी भविष्यन्ति विरोधः स्यादितोऽन्यथा ॥ ४५९ ॥**

ब्रह्मैक्यज्ञानाभावे तद्वाक्यानां का गतिरत आह । **ब्रह्मेति ।** तेषां मुख्यार्थत्वे लोकवादिविरोधमाह । **विरोधः स्यादिति** ॥ ४५९ ॥

**तर्कशास्त्रैस्तथा लोकन्यायैरप्यविरुद्धता ॥**
**तथा सतीति संप्राप्तावत्र प्रतिविधीयते ॥ ४६० ॥**

तेषामर्थवादत्वेन जीवब्रह्मभेदोपगमे सर्वाविरोधमाह । **तर्केति ।** ईशेशितव्यभेदादयो लोकसिद्धन्यायाः । सेश्वरवादमुपसंहरति । **इति संप्राप्ताविति ।** सिद्धान्तमारभते । **अत्रेति** ॥ ४६० ॥

**नैतदेवं यतोऽस्यैव मन्त्रब्राह्मणमानतः ॥**
**प्रवेशः श्रूयते साक्षात्परमेशस्य सर्वतः ॥ ४६१ ॥**

यत्तु तटस्थेश्वरविषयोपनिषदिति तत्राऽऽह । **नैतदिति** ॥ ४६१ ॥

**पुरश्चक्रे द्विपदः पुरः पुरुष आविशत् ॥**
**रूपं रूपं च सर्वाणि त्वं स्त्री त्वं च पुमानसि ॥ ४६२ ॥**
**इति मन्त्रसमाम्नायस्तथाच ब्राह्मणान्यपि ॥**
**इह प्रविष्ट इत्युक्तिः पुरस्ताद्ब्राह्मणोदिता ॥ ४६३ ॥**

तत्सृष्ट्वेति तथा वाक्यं तैत्तिरीयश्रुतौ श्रुतम् ॥
सेयमित्यादिकं वाक्यं छान्दोग्योपनिषद्यपि ॥ ४६४ ॥

परस्यैव प्रवेशवादिमन्त्रब्राह्मणवादानुदाहरति । **पुर इत्यादिना** ॥४६२॥४६३॥ ॥ ४६४ ॥

ब्रह्मात्मशब्दयोस्तद्वदेकाधिकरणश्रुतेः ॥
अहं ब्रह्मेत्यवसितुं* युक्तमेव भवेदतः ॥ ४६५ ॥

तयोरभेदे हेत्वन्तरमाह । **ब्रह्मात्मेति** । तयोरयमात्मा ब्रह्मेत्यादौ सामानाधिकरण्याज्जीवेशयोरैक्यमेकैकवदुपेयमित्यर्थः । यत्त्वहं ब्रह्मेति न गृह्णीयादिति तत्राऽऽह । **अहमिति** । ऐक्यस्योक्तरीत्या प्रामाणिकत्वमतःशब्दार्थः ॥ ४६५ ॥

यदा चैवं स्थितः पक्षस्तदा दोषोऽयमागमत् ॥
संसारित्वं परस्येति तदनन्यत्वकारणात् ॥ ४६६ ॥

ऐक्यपक्षे दोषमाशङ्कते । **यदा चेति** । परस्मिन्नुक्तदोषावगतौ हेतुमाह । **तदिति**। न च तस्य संसारित्वमेव तदसंसारित्वश्रुत्यादिकोपादिति भावः ॥ ४६६ ॥

अथासंसारिणैतस्य कथंचिदुपपद्यते ॥
तदोपदेशानर्थक्यं तमृतेऽप्यस्य मुक्ततः[1] ॥ ४६७ ॥

ऐक्ये दोषान्तरं वक्तुं प्रसङ्गं करोति । **अथेति** । संसार्यनन्यस्यापि परस्यासंसारित्वाभिमतोऽप्यसंसारीत्युपदेशानर्थक्यं तं विनाऽपि मुक्तिसिद्धेरित्याह । **तदेति**॥४६७॥

एवं प्रचोदिते केचित्परिहारं प्रचक्षते ॥
सृष्टेषु न परः साक्षात्प्राविशत्परमेश्वरः ॥ ४६८ ॥

दोषद्वये स्वयूथ्यसमाधिमुत्थापयति । **एवमिति** । तमेव स्फोरयति । **सृष्टेष्विति** । तस्य साक्षादप्रवेशे कार्यकारणास्पृष्टत्वं हेतुमाह । **पर इति** ॥ ४६८ ॥

विकाररूपापन्नः सन्विज्ञानात्मत्वलक्षणः ॥
ब्रह्मादिस्थावरान्तेषु भूतेषु प्राविशत्परः ॥ ४६९ ॥

कथं तर्हि तस्य कार्यं प्रवेशमत्राऽऽह । **विकारेति** ॥ ४६९ ॥

विज्ञानात्माऽपि महतः परमात्मस्वभावकात् ॥
अन्योऽनन्यश्च विज्ञेयः स्वाभाव्यात्सर्ववस्तुनः ॥ ४७० ॥

जीवस्य ब्रह्मविकारत्वेऽपि ततो भेदे नाहं ब्रह्मेति धीरभेदे ब्रह्मणोऽपि संसारितेत्याशङ्क्याऽऽह । **विज्ञानात्मेति** । सर्वस्य वस्तुनो भिन्नाभिन्नस्वभावत्वाज्जीवस्यापि वस्तुत्वाद्ब्रह्मणो भिन्नाभिन्नत्वं समुद्रतरङ्गादिवदित्यर्थः ॥ ४७० ॥

* अत्रावसातुमिति पठनीयेऽवमितुमिति चिन्त्यम् ।

1 ग. मुक्तता ।

**येनान्यस्तेन संसारी कर्माधिकृत इष्यते ॥**
**अनन्यपक्षेऽहं ब्रह्मेत्युक्तेर्ब्रह्म प्रपत्स्यते ॥ ४७१ ॥**

तथाऽपि कथं शङ्कितदोषाभावस्तत्राऽऽह । **येनेति** ॥ ४७१ ॥

**यथोक्तदोषसंबन्धो नैवं सति भविष्यति ॥**
**इतोऽन्यथा कल्पनायां यतो दोषेण संगतिः ॥ ४७२ ॥**

उक्तरीत्या व्यवस्थायां ब्रह्मणो न संसारित्वं नाप्युपदेशवैयर्थ्यमिति फलितमाह । **यथोक्तेति** । एकस्य भिन्नाभिन्नत्वं विरुद्धत्वादनिष्टमित्याशङ्क्य समुद्रतरङ्गादिन्याया-न्मैवमित्याह । **इत इति** । अत्यन्तं भिन्नत्वेऽभिन्नत्वे वा कल्प्यमाने नोपदेशार्थवत्ता नापि ब्रह्मणोऽसंसारिता तद्भिन्नाभिन्नता पारिशेष्यादित्यर्थः ॥ ४७२ ॥

**देहाद्युपाधिसंबन्धं सिद्धं मान्तरसंश्रयात् ॥**
**अनूद्य ब्रह्मता वाक्यान्न प्रविष्टाद्यतः श्रुतेः ॥ ४७३ ॥**

एकदेशिनं दूषयति । **देहादीति** । उपाधिद्वयविशिष्टं जीवं लोकतः सिद्धमनूद्य तस्य ब्रह्मत्वं तत्त्वमादिवाक्यादुच्यते तत्र फलस्याभयं प्रतिष्ठामित्यादिश्रुतेः सत्त्वान्न प्रवेशसर्गादि प्रतिपाद्यं तस्यापुमर्थत्वादतः सृष्टेषु साक्षात्परो न प्रविष्टो विकारापन्नस्तु जीवलक्षणस्तथेत्ययुक्तमित्यर्थः ॥ ४७३ ॥

**विज्ञानात्मन एताः स्युर्गतयो विक्रियां प्रति ॥**
**नानाद्रव्यसमाहारः पृथिवीवत्परो भवेत् ॥ ४७४ ॥**
**तस्य सावयवस्य स्यादेकदेशस्य विक्रिया ॥**
**विज्ञानात्मेति यं प्राहुः परिणामः स आत्मनः ॥ ४७५ ॥**

यत्तु परस्य विकारो जीव इति तद्दूषयितुं विकल्पयति । **विज्ञानेति** । जीवस्य परिणामं प्रति त्रयो विकल्पा इति प्रतिज्ञाय तिलादिराशिवदनेकेषां द्रव्याणां समुदायो वाऽनेकानि वा द्रव्याणि मिथोऽपेक्षाणि परस्तस्य सावयवस्यैकदेशो जीवत्वेन परिणत इत्येकं कल्पमाह । **नानेति** । उक्ते परिणामे वृद्धसंमतिमाह । **विज्ञानेति** ॥ ४७४ ॥ ४७५ ॥

**घटादिवत्क्षितेरस्य ह्येकदेशस्य विक्रिया ॥**
**संस्थानानुपमर्देन यद्वा केशोषरादिवत् ॥ ४७६ ॥**

तमेव दृष्टान्तेन साधयति । **घटादिवदिति** । आत्मनः सति सावयवत्वे संभवत्येक-देशस्य विक्रियेति वक्तुं हीत्युक्तम् । यथा पुरुषस्य पूर्वावस्थानुपमर्देन केशनखादिविप-रिणामो यथा वा क्षितेरूषरादिविकारस्तथा परस्य पूर्वावस्थस्यैकदेशस्थो जीवाख्यः परिणाम इति कल्पान्तरमाह । **संस्थानेति** ॥ ४७६ ॥

१ ख. °बद्धं सि° । २ ख. ग. 'शत्ववि° । ३ ख. व्याचष्टे ।

कार्त्स्न्येन वा परिणमेत्क्षीरद्रव्यादिवत्परः ॥
इयन्त एव पक्षाः स्युर्विकारे परमात्मनः ॥ ४७७ ॥

कल्पान्तरं दर्शयति । **कार्त्स्न्येनेति** । संभवति कल्पान्तरे कल्पत्रयं कुर्वतो भाष्यकृतो न्यूनत्वमाशङ्क्याऽऽह । **इयन्त इति** ॥ ४७७ ॥

भिन्नद्रव्यसमूहस्य मुख्यैकत्वं न युज्यते ॥
एकजात्यभिसंबन्धादेकत्वं गुणतो यतः ॥ ४७८ ॥

तत्राऽऽद्यं दूषयति । **भिन्नेति** । नानाद्रव्याणां समाहारो वा तानि वाऽन्योन्यापेक्षाणि परश्चेन्नैक्यं स्यान्न हि बहूनां मुख्यमैक्यं न च समाहारस्य परत्वं तस्य समुदायिभ्यो भेदाभेदाभ्यां दुर्भणत्वेन कल्पितत्वादित्यर्थः । बहूनां खण्डादीनामेकगोत्वयोगादैक्यवद्बहुष्वपि द्रव्येष्वेकजातिद्वारैक्यं स्यादित्याशङ्क्याऽऽह । **एकजातीति** । अतो मुख्यैकत्वं नेति पूर्वेण संबन्धः ॥ ४७८ ॥

तथाच सति सिद्धान्तहानिर्वः संप्रसज्यते ॥
नित्यं चायुतसिद्धांशानुगतोऽवयवी यदि ॥ ४७९ ॥
तदवस्थस्य तस्यैकदेशः संसारितामगात् ॥
प्रत्यंशावसितेस्तस्य तदाऽपि परमात्मनः ॥ ४८० ॥
स्वभागानुगतो दोषो गुणो वाऽस्य प्रसज्यते ॥
संसारिता परस्यैवं दोषः स्याद्दुर्निवारणः ॥ ४८१ ॥

मा तर्हि मुख्यमैक्यं ब्रह्मणो भूत्तत्राऽऽह । **तथाचेति** । न हि तन्नानात्वं कस्यापि संमतमिति भावः । द्वितीयमनुवदति । **नित्यं चेति** । न पूर्वोक्तरूपः परः किंतु मिथःसंबन्धेष्ववयवेष्वेकमवयविद्रव्यमनुवर्तमानं तदेकदेशपरिणामो जीव इत्यत्र दूषणमाह । **प्रत्यंशेति** । अंशिनोंऽशस्थगुणदोषस्पर्शे फलितमाह । **संसारितेति** ॥ ४७९ ॥ ॥ ४८० ॥ ४८१ ॥

निःशेषपरिणामेऽपि पयोवत्परमात्मनः ॥
श्रुतिस्मृत्युक्तिकोपः स्यात्स चानिष्टः प्रसज्यते ॥ ४८२ ॥

तृतीयमनुभाष्य दूषयति । **निःशेषेति** । श्रुत्यादिकोपस्येष्टत्वमाशङ्क्य वैदिकं प्रत्याह । **स चेति** ॥ ४८२ ॥

न जायते म्रियते वा इति षड्भावविक्रिया—
निषेधकृद्वेदवाक्यं प्रत्यग्विकृतिवारणम् ॥ ४८३ ॥

तत्र श्रुतिमुदाहृत्य तात्पर्यमाह । **नेत्यादिना** । न जायते म्रियते वा **कदाचित्** ।

---

१ क. ग. °भावान° ।

**अव्यक्तोऽयमचिन्त्योऽयमित्याद्या स्मृतिर्द्रष्टव्या** । श्रुतिस्मृत्योस्तात्पर्यं संगृह्णाति । **मत्यगिति** ॥ ४८३ ॥

**दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः ॥**
**निष्कलं निष्क्रियं शान्तं विमलं व्योमवत्स्थितम् ॥ ४८४ ॥**

न केवलमन्त्ये कल्पे श्रुत्यादिविरोधोऽपि तु त्रिष्वपीति वक्तुं श्रुतीरुदाहरति। **दिव्यो हीति** । द्योतनात्मत्वे निरवयवद्रव्यत्वं हेतुमाह । **अमूर्त इति** । अण्वादौ व्यभिचारमाशङ्क्य पूर्णत्वेन विशिनष्टि । **पुरुष इति** । नभोवदापेक्षिकं पूर्णत्वं निरस्यन्कार्यकारणाधिष्ठानत्वमाह । **सबाह्येति** । सर्व[1]विक्रियाराहित्यं कौटस्थ्यमाह । **अज इति** । निरवयवत्वमाह । **निष्कलमिति** । ततः सिद्धमर्थमाह । **निष्क्रियमिति** । असङ्गोदासीनतया स्थितमाह । **शान्तमिति** । तत्र हेतुः । **विमलमिति** । वैमल्ये दृष्टान्तः । **व्योमवदिति** ॥ ४८४ ॥

**इत्यादिशतशो वाक्यैः श्रुतिस्मृत्युदितैरमी ॥**
**सर्वे पक्षा विरुध्यन्ते त्याज्यास्तेऽतः प्रयत्नतः ॥ ४८५ ॥**

उक्तवाक्यलब्धमर्थमाह । **इत्यादीति** । आदिशब्देनाऽऽकाशवत्सर्वगतश्च **नित्यः स** वा एष महानज आत्मेत्यादि गृह्यते कूटस्थमचलं ध्रुवमविकार्योऽयमुच्यत इत्यादि **स्मृतिवाक्यं** च । विरोधफलमाह । **त्याज्या इति** ॥ ४८५ ॥

**संसारानुपपत्तिश्च कूटस्थात्मैकदेशतः ॥**
**स्वकर्मफलदेशेषु क्षेत्रज्ञस्य प्रसज्यते ॥ ४८६ ॥**

जीवस्य परैकदेशत्वे दोषान्तरमाह । **संसारेति** । तस्य स्वर्गादिषु गत्यभावापाते हेतुमाह । **कूटस्थेति** । अन्यथा परस्यापि गतिः स्यान्न हि पटावयवेषु चलत्सु पटो न चलतीति भावः ॥ ४८६ ॥

**वि[2]युक्तस्याऽऽत्मनश्चेत्स्याद्विस्फुलिङ्गादिवद्गतिः ॥**
**तथाऽपि क्षतसंप्राप्तिरव्रणस्य प्रसज्यते ॥ ४८७ ॥**

दृष्टान्तेन शङ्कते । **वि[3]युक्तस्येति**। परस्मादात्मनोऽग्नेरिव विस्फुलिङ्गः स्फुटितोंऽशो जीवस्तस्य गतिरित्येतद्दूषयति । **तथाऽपीति** ॥ ४८७ ॥

**वारिणो मत्स्यसंचारे छिद्रसंग्रथने यथा ॥**
**भ्रमत्सु तद्वज्जीवेषु प्राप्नुतः परमात्मनः ॥ ४८८ ॥**

तत्रैव दोषान्तरं सदृष्टान्तमाह । **वारिण इति** ॥ ४८८ ॥

**तथाचाव्रणवाक्येन विरोधोऽपि प्रसज्यते ॥**
**स्वकारणातिरेकेण वृत्तिः कार्यस्य नान्यतः ॥ ४८९ ॥**

---

१ क. °र्वक्रि° । २ ख. विमुक्त° । ३ ख. विमक्त° ।

परस्य च्छिद्रग्रथनयोः स्वीकारे फलितं दोषमाह । **तथाचेति** । न च स्फुटनमपि परस्मिन्युक्तं प्रागुक्तश्रुतिस्मृतिविरोधादित्यपेरर्थः । जीवस्य संसरणमङ्गीकृत्योक्तं वस्तुतस्तु नास्तीत्याह । **स्वकारणेति** ॥ ४८९ ॥

**परमात्मैकवृत्तित्वात्कुतो जीवस्य संसृतिः ॥**
**स्वप्नसंचारवत्तस्माज्जीवसंसार[1] इष्यते ॥ ४९० ॥**

उक्तं सामान्यन्यायं प्रकृते योजयति । **परमेति** । कथं तर्हि तस्य संसारधीर्भ्रान्त्येत्याह । **स्वप्नेति** ॥ ४९० ॥

**स्थास्नुष्वपि महद्दुःखं कण्टकादिषु देहिनाम्[2] ॥**
**परात्मनो महद्दुःखं जीवा[3]संचरणेऽप्यतः ॥ ४९१ ॥**

तत्संसारो वस्तुतस्त्वया नेष्टश्चेन्मयाऽपि भ्रान्त्या नोपेतस्तेन स्थास्नवस्ते ब्रह्मवदित्याशङ्क्याऽऽह । **स्थास्नुष्विति** ॥ ४९१ ॥

**अदोषो विस्फुलिङ्गादिदृष्टान्तादिति चेन्मतम् ॥**
**नैवं यथास्थितार्थानां शास्त्रस्य ज्ञापकत्वतः ॥ ४९२ ॥**

विस्फुलिङ्गादिदृष्टान्तश्रुत्या परस्य परिणामित्वादिकल्पना जीवस्य परिणामत्वादिकल्पना तच्छास्त्रसिद्धेर्नावद्यं तन्नित्यत्वादेरपि तत्सिद्धेरिति शङ्कते । **अदोष इति** । न शास्त्रात्तयोरंशांशित्वादिकल्पनेत्याह । **नैवमिति** । तत्र हेतुमाह । **यथास्थितेति**॥४९२॥

**अज्ञातज्ञापकं शास्त्रमेवंस्वाभाव्यतो मितेः ॥**
**पदार्थान्नान्यथा कर्तुं प्रवृत्तं माननिश्चितान् ॥ ४९३ ॥**

तस्य स्मृत्यादेर्विशेषमाह । **अज्ञातेति** । प्रत्यक्षादेरज्ञातज्ञापकत्वदृष्टेरिति हेतुमाह । **एवमिति** । तस्य चक्षुरादिवत्कारकत्वमाशङ्क्याऽऽह । **पदार्थानिति** ॥ ४९३ ॥

**मूर्तामूर्तादयो यद्वत्पदार्था माननिश्चिताः ॥**
**यथादृष्टानुरोध्येव दृष्टान्तैर्वस्तु बोध्यते ॥ ४९४ ॥**

तर्हि ज्ञापकत्वस्याप्यसंभवात्किमर्थं शास्त्रमित्याशङ्क्याऽऽह । **मूर्तेति** ॥ ४९४ ॥

**एवं प्रवृत्तं सर्वत्र शास्त्रं दृष्टान्तपूर्वकम् ॥**
**न प्रमान्तरसंसिद्धविपरीतात्मबोधनम् ॥ ४९५ ॥**

यथा मूर्तादयो भावा दृष्टास्तथा तेषामनुगुणमेवादृष्टं वस्तु दृष्टान्तैर्बोध्यत इति दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह । **एवमिति** । व्यावर्त्यमाह । **नेत्यादिना** ॥ ४९५ ॥

**अतिशीतोऽग्निरित्यत्र दृष्टान्तानां शतैरपि ॥**
**प्रमान्तरविरुद्धत्वान्नेन्द्रेणाप्यधिगम्यते ॥ ४९६ ॥**

दृष्टान्तवशान्मानविरुद्धस्यापि शास्त्रं बोधकमित्याशङ्क्याऽऽह । **अतिशीत इति** ।

---

१ क. ख. °संचार°। २ क. देहिनः । ३ क. जीवस° ।

अधिगम्यते वाक्यार्थ इति शेषः । एवं शास्त्रं मानविरुद्धं दृष्टान्तादपि न बोधयतीत्यर्थः ॥ ४९६ ॥

**मानान्तरविरुद्धं च न च मानं सदिष्यते ॥**
**मानान्तरेणासंव्याप्ते[1] मेये स्यान्मानता यतः ॥ ४९७ ॥**

तत्त्वमादिवाक्यमध्यक्षादिविरुद्धार्थबोधि दृष्टमित्याशङ्क्याऽऽह । **मानान्तरेति ।** तत्र हेतुर्मानान्तरेणेति ॥ ४९७ ॥

**तथा पदतदर्थांश्च लिङ्गप्रत्यक्षगोचरान् ॥**
**नानादृत्याऽऽगमेनार्थमज्ञातं वेत्ति कश्चन ॥ ४९८ ॥**

कल्पितद्वैतविषयाध्यक्षाद्यगोचरे वस्तुनि वस्तुतोऽद्वये शास्त्रप्रामाण्याद्भिन्नविषयतया विरोधसमाधिमुक्त्वा तत्रैव हेत्वन्तरमाह । **तथेति ।** तेन न विरोधो मानान्तरेण शास्त्रस्येति शेषः ॥ ४९८ ॥

**लोकप्रसिद्धन्यायार्थैरंशांशित्वादिकल्पना ॥**
**परात्मनः कल्पयितुं नातो युक्ता कथंचन ॥ ४९९ ॥**

उपजीव्यत्वादिशास्त्रं मानान्तराविरुद्धबोधीति स्थिते फलितमुपसंहरति । **लोकेति ।** लोकसिद्धा न्याया दृष्टान्ता विस्फुलिङ्गादयस्तैरर्थैरग्न्यादिवत्परस्यांशित्वादिकल्पना न स्वीकर्तुं युक्ता तन्निष्कलत्वाद्वयत्वादिशास्त्रविरोधादतो दृष्टान्तश्रुतेर्न विरुद्धार्थबोधितेत्यर्थः ॥ ४९९ ॥

**विस्फुलिङ्गाद्युपन्यासः क्षेत्रज्ञपरमात्मनोः ॥**
**ऐकात्म्यप्रतिपत्त्यर्थस्तस्मादत्र विवक्षितः ॥ ५०० ॥**

दृष्टान्तश्रुत्या तयोरंशांशित्वाद्यविवक्षितं चेत्किं तर्हि विवक्षितं तदाह । **विस्फुलिङ्गेति ।** यस्मादेवं तस्मादत्र दृष्टान्तश्रुतौ तयोरैक्यरूपोऽर्थो विवक्षित इत्याह । **तस्मादिति ॥** ५०० ॥

**उपक्रमोपसंहाराद्यथोक्तोऽर्थो विवक्षितः ॥**
**ब्रह्मादि सर्वमात्मेति प्रतिज्ञाय श्रुतिर्यथा ॥ ५०१ ॥**
**दुन्दुभ्याद्यैश्च दृष्टान्तैर्हेतुभिश्च समर्थ्यते ॥**
**अपूर्वाद्यादिभिर्वाक्यैः प्रतिज्ञार्थोपसंहृतिः ॥ ५०२ ॥**

सृष्ट्यादिवाक्यानामैक्यपरतेत्यत्र हेत्वन्तरमाह । **उपक्रमेति ।** तावेव दर्शयति । **ब्रह्मादीति ।** यथा प्रतिज्ञानुसारेणेति यावत् । तज्जन्यत्वादयो हेतवः । श्रुतिरादिमध्यावसानेष्वेकरूपा लक्ष्यतेऽतः सर्वे वेदान्ताः साक्षात्पारंपर्याभ्यामैक्ये पर्यवस्यन्तीत्यर्थः ॥ ५०१ ॥ ५०२ ॥

---

१ ख. °रेण सं° । २ ख °तमाह । लो° । ३ ख. °त्यर्थ तस्मा° ।

**सर्ववेदान्तवाक्येषु ब्रह्मैकत्वं विधीयते ॥**
**इत्यविप्रतिपत्तिर्हि व्याख्यातॄणामशेषतः ॥ ५०३ ॥**

आगमतात्पर्यविदामुक्तेऽर्थे संमतिं सूचयति । **सर्वेति** । तथाचैक्यमेवाऽऽगमार्थो वृद्धसंमतत्वादिति हिशब्दार्थः ॥ ९०३ ॥

**तद्विध्येकोक्तियोगस्य ह्यक्लेशात्संभवे सति ॥**
**सृष्ट्यादिवचसां नैव युक्ताऽर्थान्तरकल्पना ॥ ५०४ ॥**

सर्वेषां वेदान्तवाक्यानामैक्ये महातात्पर्येऽप्यवान्तरतात्पर्येण सृष्ट्यादिरपि विवक्षितस्तद्वाक्यैरित्याशङ्क्याऽऽह । **तद्विधीति** । ऐक्यविधिस्तत्त्वमादिवाक्यं तेनैकवाक्यत्वेन योगः शेषशेषित्वं तस्यानायासेन संभवे सृष्ट्यादिवाक्यानां सृष्ट्याद्यर्थत्वकल्पना न युक्ता संभवत्येकवाक्यत्वे तद्भेदस्यान्याय्यत्वादित्यर्थः । उक्तो न्याय एव हिशब्देन ध्वनितः ॥ ९०४ ॥

**न च प्रमाणं तत्रास्ति कल्प्यं च स्यात्फलान्तरम् ॥**
**ऐकात्म्यपरतैवातः सृष्ट्यादिवचसां भवेत् ॥ ५०५ ॥**

महातात्पर्यस्यैक्यस्यावान्तरतात्पर्याविरोधश्चेत्तथाऽपि सृष्ट्यादिवाक्यानां तत्परत्वे मानं फलं वा कल्पकं नाऽऽद्य इत्याह । **न चेति** । न द्वितीय इत्याह । **कल्प्यं चेति** । न च तत्कल्पयितुं शक्यं फलवत्संनिधावफलं तदङ्गमितिन्यायविरोधादिति भावः । सृष्ट्यादिवाक्यानामतत्परत्वे फलितमाह । **ऐकात्म्येति** ॥ ९०५ ॥

**आचक्षते तथाचात्र केचिदाख्यायिकां शुभाम् ॥**
**यथाभिलपितार्थोऽयं यथा संभाव्यते स्फुटः ॥ ५०६ ॥**

तत्त्वमादिवाक्यमैक्यपरं तच्छेषः सृष्ट्यादिवाक्यमित्यत्र द्रविडाचार्यप्रणीतामाख्यायिकामवतारयति । **आचक्षत इति** । उक्तार्थानुसारिणीं तस्या दर्शयति । **तथाचेति** । फलपर्यन्ततया दृष्टान्तदार्ष्टान्तिकरूपायास्तस्याः शुभत्वं व्यनक्ति । **यथेति** । ऐक्ये सर्ववेदान्तावसानमिष्टोऽर्थः । स यया निःसंदिग्धोऽबाधितः संभवति तामाचक्षत इति संबन्धः ॥ ९०६ ॥

**यथा हि कश्चित्प्रागासीच्चक्रवर्तिसुतो युवा ॥**
**व्याधियोगोपघातादेरुन्मत्तः समपद्यत ॥ ५०७ ॥**

तत्र दृष्टान्तरूपामाख्यायिकां प्रणयति । **यथा हीति** । तस्य सूनो राजसूनोः पितृभ्यां प्रकृत्या च वियोगे हेतुमाह । **व्याधीति** । आदिपदेनाऽऽगन्तुकोपघातोक्तिः ॥ ९०७ ॥

**ध्वस्तराजाभिमानः सन्मुग्धो वनमुपेयिवान् ॥**
**व्याधैः परिगृहीतश्च व्याधोऽस्मीत्यभिमन्यते ॥ ५०८ ॥**

उन्मादफलमाह । **ध्वस्तेति** । तस्य शबरगृहप्रवेशमाह । **व्याधैरिति** । तत्प्रवेश-कार्यमाह । **व्याध इति** ॥ ५०८

**तत्कर्मा तदहंकारः कालेन महताऽभवत् ॥**
**ध्वस्तराजत्वसंस्कारो वसञ्शबरसद्मनि ॥ ५०९ ॥**

उक्तमभिमानमनूद्य तत्कार्यमाह । **तत्कर्मेति** । राजाभिमानध्वंसेऽपि तत्संस्कारप्र-तिबन्धान्न शबरजात्यनुरूपकर्मानुवृत्तिरित्याशङ्क्याऽऽह । **ध्वस्तेति** । तत्र हेतुः । **वसन्निति** ॥ ५०९ ॥

**शुभौषध्युपयोगाच्च स्वस्थधीः समजायत ॥**
**स्वस्वभावानुरोधाच्च व्याधेभ्यो व्युत्थितात्मधीः ॥ ५१० ॥**
**तच्छीलरूपकर्मभ्यो व्यावृत्तधिषणः स्वतः ॥**
**केवलस्मृत्यभावाच्च न व्याधत्वं जहात्यसौ ॥ ५११ ॥**

उन्मत्तस्य कथं शबराभिमानादिसंभवस्तत्राऽऽह । **शुभेति** । स्वस्थधीरपि राजसूनु-र्व्याधभावं मन्यते चेन्न कदाचिदपि तद्भावोऽपनेतुं शक्य इत्याशङ्क्याऽऽह । **स्वस्वभा-वेति** । राजजात्यनुसारेण व्याधाभिमानादेर्व्युत्थितश्चेद्व्याधत्वं जह्यादित्याशङ्क्याऽऽह । **केवलेति** ॥ ५१० ॥ ५११ ॥

**कुतश्चिदागमाज्ज्ञात्वा तमुपेत्याप्रतारकः ॥**
**तज्जातिकर्मसंबन्धतत्त्ववित्तत्पितुः सखा ॥ ५१२ ॥**

हेत्वभावादेव तर्हि राजत्वस्मृत्यभावान्न तस्य कदाचिदपि व्याधत्वत्यागस्तत्राऽऽह । **कुतश्चिदिति** । आगमादुपदेशादिति यावत् । राजसूनुमुपगतस्य तद्बोधकस्याविप्रल-म्भकत्वेनाऽऽप्तत्वमाह । **अप्रतारक इति** । तस्य राजत्वबोधनशक्तिं दर्शयति । **तज्जातीति** । तस्य जाती राजत्वं कर्म शिष्टपरिपालनादि तयोरनेन संबन्धरूपं जान-न्निति यावत् । यद्वा राजसूनोर्व्याधजात्या तदनुगुणकर्मणा च संगतिं विद्वानित्यर्थः । राजपुत्रं प्रति राजत्वबोधनं पान्थस्य कथं कार्यमासीत्तत्राऽऽह । **तत्पितुरिति** ॥५१२॥

**प्रवृत्त्या कर्मणा जात्या चक्रवर्त्युचितैस्तथा ॥**
**लक्षणै राजपुत्रत्वं यथा कश्चित्प्रबोधयेत् ॥ ५१३ ॥**

शबरमन्दिरस्थराजसूनुज्ञाने न केवलमागमो हेतुः किंतु हेत्वन्तराण्यपि सन्तीत्याह । **प्रवृत्त्येति** । दृश्यमानव्यापारानुमितसुकृतराजत्वाभ्यां सार्वभौमप्रापकैश्च शास्त्रोक्तलक्षणै-रस्य राजपुत्रत्वं ज्ञात्वेति संबन्धः । यथा ज्ञातं तथा नासि त्वं व्याधो मुख्यराज्ञः सूनुः सन्कथंचिद्व्याधगृहं प्रविष्ट इति बोधयतीत्याह । **यथेति** ॥ ५१३ ॥

**लब्धमात्रस्मृतिः सोऽथ राजाऽस्मीत्यवबोधतः ॥**
**बाधित्वा स्वमसंबोधं हित्वा व्याधत्वमात्मनः ॥ ५१४ ॥**

राज्याभिषेकमाप्नोति प्राप्य सिंहासनं पितुः ॥
अवाप्तराजसूनुत्वात्तत्प्राप्तौ नापि चेष्टते ॥ ५१५ ॥

उपदेशफलमाह । **लब्धेति** । उपदेशे लब्धमात्रे तत्प्रभावात्प्राप्तराजस्मृतिरिति यावत् । तत्फलमाह । **अथेत्यादिना** । आप्तोपदेशस्यान्वयव्यतिरेकसिद्धे सम्यग्बोधे हेतुत्वद्योतनार्थोऽथशब्दः । ननु सुचिरं शबरसदने निवसतो राजसुतस्य पुना राजपुत्रत्वाप्तौ ज्ञानात्प्रतिबन्धध्वंसादृते व्यापारान्तरमपेक्षितं नेत्याह । **अवाप्तेति** ॥ ५१४ ॥ ५१५ ॥

मोहाध्यस्तात्मव्याधत्वान्मोहध्वंसातिरेकतः ॥
राजपुत्रत्वसंप्राप्तौ नान्यत्किंचिदपेक्षते ॥ ५१६ ॥

स्वतश्चेदाप्तं राजपुत्रत्वं कुतस्तर्हि व्याधत्वधीस्तत्राऽऽह । **मोहेति** । आरोपितव्याधत्वबाधेन राजत्वाप्त्यर्थं तज्ज्ञानमावर्तनीयमित्याशङ्क्याऽऽह । **मोहध्वंसेति** । तद्ध्वंसश्च ज्ञानादेवेति नाऽऽवृत्तिरर्थवतीत्यर्थः ॥ ५१६ ॥

यथा तथाऽयं ब्रह्मैव ब्रह्मासंबोधमात्रतः ॥
बुद्धीन्द्रियशरीरादावात्मत्वं प्रतिपादितवान् ॥ ५१७ ॥

दृष्टान्तमनूद्य दार्ष्टान्तिकमाह । **यथेति** । जीवश्चेद्ब्रह्मैव कथं तस्य बुद्ध्यादावात्मधीस्तत्राऽऽह । **ब्रह्मेति** ॥ ५१७ ॥

सोऽयं सांसारिकैरर्थैः प्रत्यक्तत्त्वाप्रबोधतः ॥
विशिनष्टि स्वमात्मानं प्रतीचीनमनात्मभिः ॥ ५१८ ॥

अनात्मन्यात्मत्वधीफलमाह । **सोऽयमिति** । स्वशब्दस्य स्वीयविषयत्वं निरसितुं विशिनष्टि । **आत्मानमिति** । आत्मशब्दस्य देहादिविषयत्वं व्यावर्तयति । **प्रतीचीनमिति** ॥ ५१८ ॥

संसारभूमावासीनं संसारस्मीत्यवस्थितम् ॥
मुमुक्षुं तत्त्वविन्साक्षात्संसारव्युत्थितैषणम् ॥ ५१९ ॥

जीवो देहद्वयाभिमानी कर्ता भोक्ताऽहमिति स्थितश्चेत्तर्हि तं प्रति किमाचार्यकृत्यं तदाह । **संसारेति** । नानाविधासु योनिषु निरन्तरं संसरन्तं बहुजन्मकृतसुकृतवशात्कथमपि गुरुचरणावनुसरन्तं साधनचतुष्टयवन्तं दूरीकृतसर्वकर्माणं पुरुषधौरेयं साक्षात्तत्त्वं बोधयति तत्त्वविद्गुरुरित्यर्थः ॥ ५१९ ॥

य आत्मेत्यादिभिर्वाक्यैरन्वयव्यतिरेकतः ॥
तत्त्वमस्यादिवाक्येन गुरुः संबोधयेत्परम् ॥ ५२० ॥

वाक्यार्थज्ञानाङ्गं बहिरन्तर्विभागेनाऽऽह । **य इति** । अन्वयव्यतिरेकतः पदार्थशोधनद्वारेति शेषः ॥ ५२० ॥

**सम्यग्ज्ञानाग्निसंप्लुष्टप्रत्यक्त्त्वमहातमाः ॥**
**हित्वा मोहोत्थमखिलं ब्रह्मैव ब्रह्म यात्यथ ॥ ५२१ ॥**

औपदेशिकज्ञानफलमाह । **सम्यगिति** । अन्यस्यान्यत्वायोगमाशङ्क्याऽऽह । **ब्रह्मैवेति** । तर्हि ब्रह्म यातीत्ययुक्तं स्वात्मनो गन्तव्यत्वायोगात्तत्राऽऽह । **हित्वेति** । ज्ञानतत्फलयोर्मध्ये कार्यान्तरवारणमथशब्दार्थः ॥ ५२१ ॥

**प्रत्यक्त्त्वतमोध्वंसव्यतिरेकेण मुक्तये ॥**
**अपेक्षते यतो नान्यत्किंचित्साधनमण्वपि ॥ ५२२ ॥**

तत्र हेतुमाह । **प्रत्यगिति** ॥ ५२२ ॥

**जन्माद्यसंभवात्तस्माद्ब्रह्मबोधातिरेकतः ॥**
**कार्यान्तरं न संभाव्यं व्यर्थं चापि भवेद्वचः ॥ ५२३ ॥**

विविदिषावाक्यस्य मुक्तिहेतुत्वेन यज्ञादिविधायित्वादस्ति तस्याः साधनान्तरमित्याशङ्क्य चतुर्विधक्रियाफलस्य तत्रायोगाद्वाक्यस्य च धीहेतुविधायित्वान्न ज्ञानं विना मुक्त्युपयोगि हेत्वन्तरमस्तीत्याह । **जन्मादीति**। यदि विविदिषावाक्यं न धीहेतुविधायकं किंतु मुक्तिसाधनमेव विधत्ते तत्राऽऽह । **व्यर्थं चेति** । तत्र विधेयक्रियाफलायोगस्योक्तत्वादिति भावः ॥ ५२३ ॥

**अंशांशित्वादि चेत्साक्षाद्ब्रह्मज्ञाने विवक्षितम् ॥**
**समुद्रादेरिव तदा नावक्ष्यच्छ्रुतिरादरात् ॥ ५२४ ॥**
**यदनभ्युदितं वाचा मनुते मनसा न यत् ॥**
**अपूर्वादि तथा वाक्यमपि सैन्धवखिल्यवत् ॥ ५२५ ॥**

तत्त्वमादीनामैक्यपरत्वात्तच्छेषत्वाच्च सृष्ट्यादिवाक्यानां न तद्वशाज्जीवेशयोरंशांशित्वादिकल्पनेत्युक्तम् । इदानीं विपक्षे श्रुत्यन्तरविरोधमाह । **अंशेति** । समुद्रतरङ्गादेरिव ब्रह्मज्ञापके सृष्ट्यादिवाक्ये ब्रह्मणो वस्तुतोऽशांशित्वादीष्टं चेत्तदा वाङ्मनसातीतत्वं तस्य तात्पर्येण श्रुतिर्न ब्रूयात्सविशेषस्य तद्विषयत्वादित्यर्थः । ब्रह्मात्मनि वस्तुतोऽशांशित्वादिकल्पने सैन्धवघनवत्प्रज्ञानैकरसमपूर्वमनपरमित्यादिवाक्यमपि विरुध्येतेत्याह । **अपूर्वादीति** । नावक्ष्यदित्येतदनुकर्षणार्थं तथाशब्दः ॥ ५२४ ॥ ५२५ ॥

**नानात्वदृष्टिनिन्दां च मृत्योरिति तथा वचः ॥**
**अंशांशित्वविवक्षायां न प्रायोक्ष्यत्तदेदृशम् ॥ ५२६ ॥**

भेददृष्ट्यपवादविरोधं चैकदेशिनो दर्शयति । **नानात्वेति** । मृत्योः स मृत्युमाप्नोतीत्यादिवचोरूपां नानात्वधीनिन्दां च त्वत्पक्षे न प्रायोक्ष्यदिति योजना । एकधैवानुद्रष्टव्यमितिवाक्यसमुच्चयार्थस्तथाशब्दः । ब्रह्मणि वस्तुतोऽशांशित्वादिविवक्षायामुक्तवाक्य-

सदृशमेकमेवाद्वितीयमित्यादि न प्रयोक्तव्यं त्वत्पक्षे तस्य विवक्षितार्थाभावादित्याह । **अंशांशित्वेति** ॥ ५२६ ॥

**एकैकरूपैकात्म्यार्थधियो दार्ढ्यप्रसिद्धये ॥**
**सृष्ट्यादिश्रुतयस्तस्मान्न तु तत्प्रत्ययाय ताः ॥ ५२७ ॥**

सृष्ट्यादिवाक्यानामनेकवाक्यविरोधान्न स्वार्थे तात्पर्यमिति स्थिते फलितमुपसंहरति । **एकेति** । भिन्नाभिन्नत्वनुत्त्यर्थमेकरूपपदम् ॥ ५२७ ॥

**न चाऽऽत्मनो निरंशस्य तथाऽसंसारिणः स्वतः ॥**
**अंशिसंसारिभावत्वं न्यायेनाप्युपपद्यते ॥ ५२८ ॥**

शास्त्रस्यांशांशित्वादावतात्पर्यात्तद्वशात्तत्कल्पना मा भूदुपादानस्य मृदादेः सावयवत्वदृष्टेर्ब्रह्मणोऽपि जगदुपादानतया तथात्वमित्यादिन्यायास्तु भविष्यन्तीत्याशङ्क्य स्वतः परतो वा तस्यांशादिकल्पनेति विकल्प्याऽऽद्यं दूषयति । **न चेति** । विरुद्धार्थबोधिन्यायाभावादुपादानत्वस्य विवर्तवादेऽपि संभवादित्यर्थः ॥ ५२८ ॥

**कल्पितोपाधिहेतुश्चेदंशिसंसारिकल्पना ॥**
**काममस्तु न तादृक्षु धीराणां सत्यधीर्भवेत् ॥ ५२९ ॥**

परतश्चेत्तत्कल्पितमकल्पितं वेति विकल्प्याऽऽद्यमङ्गी करोति । **कल्पितेति** । द्वितीयं निरस्यति । **नेत्यादिना** । अंशांशिकल्पकेष्वनात्मसु नाकल्पितत्वं विवेकिनां[1] भाति न्यायागमविरोधादित्यर्थः ॥ ५२९ ॥

**विवक्षितं चेदैकात्म्यं सर्वोपनिषदां भवेत् ॥**
**विज्ञानात्मादिसंभेदस्तद्विरुद्धः किमुच्यते ॥ ५३० ॥**

ताभ्यां जीवेशयोरंशांशित्वादिकल्पना निरस्य वेदान्तानामैक्यपरत्वमुक्त्वा तदुपगमे द्वैतासिद्धिः फलतीत्याह । **विवक्षितं चेदिति** ॥ ५३० ॥

**कर्मकाण्डप्रमाणत्वविरोधध्वस्तये किल ॥**
**विज्ञानात्मादिसंभेद इति केचित्प्रचक्षते ॥ ५३१ ॥**

किंशब्दस्य प्रश्नार्थतां मत्वा द्वैतिमतमाह । **कर्मेति** । नास्योत्थानं परिहृतत्वादिति मत्वा किलेत्युक्तम् ॥ ५३१ ॥

**ऐकात्म्यमात्रे जगति समाप्तपुरुषार्थके ॥**
**चोदनाप्रतिषेधौ वः स्यातां निर्विषयौ तदा ॥ ५३२ ॥**

वेदान्तानां परमपुरुषार्थैक्यपरत्वेऽपि तत्प्रामाण्याविरोधात्किं द्वैतेनेत्याशङ्क्याऽऽह । **ऐकात्म्येति** ॥ ५३२ ॥

---

१ ख. °ल्पनां नि° ।

स्वत एव विमुक्तत्वाद्बन्धाभावात्स्वतस्तथा ॥
वेदान्तानां तथाऽऽरम्भो निष्फलः संप्रसज्यते ॥ ५३३ ॥

केवलाद्वैतपक्षे कर्मकाण्डविरोधमुक्त्वा ज्ञानकाण्डविरोधमाह । **स्वत इति** । परस्य नित्यमुक्तत्वादन्यस्य स्वतः परतो वा बद्धस्याभावाच्छिष्याभावस्तथा चाधिकार्यभावादुपनिषदनारम्भ इत्यर्थः ॥ ५३३ ॥

इत्येवमादिचोद्यानि परिहाराश्च वर्णिताः ॥
संबन्ध एव बहुशो विचारेषु च कीर्तिताः ॥ ५३४ ॥

पुनरुक्तिमाशङ्क्य परिहरति । **इत्येवमादीति** । इतिशब्देनोक्तचोद्यपरामर्शः । एवंशब्देन वक्ष्यमाणमिथोविरोधादिसंग्रहः । आदिशब्देनोपनिषदां नियोगादिपरतया गतार्थतोक्तिः । एतानि चोद्यानि तत्परिहाराश्च संबन्धग्रन्थेष्वेवोक्ताः । अव्याकृतादिविचारेषु चासकृद्यद्यपि वर्णितास्तथाऽपि प्रकारान्तरेण परिहर्तुं चोद्योत्थापनमित्यर्थः ॥ ५३४ ॥

परस्परविरोधाच्च प्रकाशतमसोरिव ॥
कर्मकाण्डोपनिषदोर्[1]निष्प्रामाण्यं द्वयोरपि ॥ ५३५ ॥

किंच किं त्वया द्वयोरपि काण्डयोर्मानत्वमिष्टं किंवाऽन्यतरस्य नाऽऽद्यस्तमःप्रकाशवन्मिथो विरोधान्नेतरोऽन्यतरप्रामाण्यमुपेत्येतराप्रामाण्यं वदतोऽध्ययनविधिविरोधादित्याह । **परस्परेति** ॥ ५३५ ॥

सति यस्य प्रमाणत्वे प्रामाण्यं स्याद्द्वयोरपि ॥
तस्यैव कर्मकाण्डस्य प्रामाण्यमवसीयताम् ॥ ५३६ ॥

द्वयोरन्यतरस्य वा प्रामाण्यासंभवे कथं त्वत्पक्षेऽपि[2] प्रामाण्यव्यवस्थेत्याशङ्क्याऽऽह । **सतीति** । कर्मकाण्डप्रामाण्ये शिष्यशासित्रादिभेदाबाधात्तदपेक्षस्य काण्डान्तरस्यापि मानता द्वयोरपि द्वैतविषयत्वादविरुद्धा सेत्यर्थः ॥ ५३६ ॥

कर्मकाण्डप्रमाणत्वे प्रामाण्यं चेद्द्वयोरपि ॥
सर्वग्रासि तदैकात्म्यमागादिह पुनर्बलात् ॥ ५३७ ॥

तर्हि कर्मकाण्डवज्ज्ञानकाण्डस्यापि स्वार्थे मानत्वं वाच्यं न च तदर्थो द्वैतं काण्डभेदाभावप्रसङ्गादुपक्रमोपसंहारादिविरोधाच्चातो ज्ञानकाण्डमानत्वबलात्काण्डान्तरविषयद्वैतबाधकमद्वैतमेव पुनरागतमिति शङ्कते । **कर्मेति** ॥ ५३७ ॥

यद्येवमप्रमाणत्वमस्तूपनिषदां तदा ॥
मानान्तरविरोधाच्च नैतासां मानतेष्यते ॥ ५३८ ॥

---

१ ख. °दोर्न प्रामा° । २ ख. °पि प्रमाणव्य° ।

एवं तर्हीत्यादिभाष्येण परिहरति । **यद्येवमिति** । न चैवमध्ययनविधिविरोधो जपार्थं तदध्ययनसिद्धेरिति मत्वा तासाममानत्वे हेत्वन्तरमाह । **मानान्तरेति** । कर्मकाण्डविरोधसमुच्चयार्थश्चकारः ॥ ५३८ ॥

**अपि स्वार्थविघातं च करोत्युपनिषद्यतः ॥**
**अप्रामाण्यमतस्तस्याः कर्मकाण्डस्य मानता ॥ ५३९ ॥**

तत्रैव हेत्वन्तरमाह । **अपीति** । शिष्यशासित्रादिभेदमपेक्ष्य साऽद्वैतं बोधयत्यतस्तद्भावाभावाभ्यामद्वैतविहतेस्तदप्रामाण्यमिति भावः ॥ ५३९ ॥

**नोक्तोत्तरत्वात्साध्वेतद्भवता परिचोद्यते ॥**
**व्यर्थतान्यार्थते नेह यथा तत्प्राक्प्रपञ्चितम् ॥ ५४० ॥**

सिद्धान्ती पूर्वपक्षस्यासाधुतां प्रतिजानीते । **नोक्तेति** । ज्ञानकाण्डं नाफलं नान्यशेष इत्युक्तमेव स्मारयति । **व्यर्थतेति** ॥ ५४० ॥

**ब्रह्मास्मीति धियो जन्मसमकाला विमुक्तता ॥**
**यतोऽनुभूयते साक्षान्नानर्थक्यं भवेत्ततः ॥ ५४१ ॥**

तस्य फलवत्त्वमुक्तं व्यनक्ति । **ब्रह्मेति** ॥ ५४१ ॥

**वस्तुमात्रावसायित्वं संबन्धे प्राक्प्रपञ्चितम् ॥**
**यतोऽतो नोपनिषदामन्यार्थत्वं कथंचन ॥ ५४२ ॥**

अनन्यशेषत्वं संबन्धग्रन्थादिपूक्तं व्यनक्ति । **वस्त्विति** ॥ ५४२ ॥

**स्वप्रमेयप्रमोत्पत्त्यनुत्पत्त्येकहेतुके ॥**
**प्रमाणत्वाप्रमाणत्वे नान्यथा ते प्रसिध्यतः ॥ ५४३ ॥**

उक्तं स्मारयित्वोपनिषत्प्रामाण्यार्थं प्रमाणाप्रमाणलक्षणं करोति । **स्वप्रमेयेति** । स्वार्थे प्रमोत्पादकत्वं विना न प्रमाणत्वं घटादेरपि तत्प्रसङ्गान्नापि तदनुत्पादकत्वादृतेऽप्रमाणत्वं चक्षुरादेरपि रूपादौ तत्प्रसङ्गादित्युक्तं व्यतिरेकद्वारा साधयति । **नान्यथेति** ॥ ५४३ ॥

**किंचातो यदि नामैवं प्रकृतार्थोपयोगि यत् ॥**
**शृण्वेकाग्रमनाः सर्वं यदेवं सति वस्तु तत् ॥ ५४४ ॥**

यद्येवं तल्लक्षणमस्तु नाम तथाऽपि यत्प्रस्तुतोपनिषन्मानत्वोपयुक्तं तवैतावता किं सिद्धमिति पृच्छति । **किंचेति** । उक्ते तल्लक्षणे सति यन्मानत्वोपयोगि तच्छ्रुतौ समाहितेन भाव्यमित्याह । **शृण्विति** ॥ ५४४ ॥

**स्वप्रमेये प्रमां साक्षात्करोत्युपनिषद्यदि ॥**
**अप्रामाण्यं कथं तस्याः कुतोऽतो मानताऽन्यथा ॥ ५४५ ॥**

---

१ ख. °र्यानभन° । २ क. °दक वि° ।

श्रोतव्यं किमित्याशङ्क्य स्वार्थे प्रमामुपनिषत्करोति न वेति विकल्प्याऽऽद्यमनूद्य दूषयति । **स्वप्रमेय इति** ॥ ९४५ ॥

**न चेत्करोत्युपनिषत्प्रमामित्यभिधीयते ॥**
**प्रत्यक्षेण विरुद्धार्थं त्वदीयं वचनं भवेत् ॥ ५४६ ॥**

द्वितीयमनूद्य निरस्यति । **न चेदिति** ॥ ९४६ ॥

**नाग्निर्दहति काष्ठानि न तापयति भास्करः ॥**
**इति यद्वत्तथोक्तिस्ते प्रत्यक्षेण विरुध्यते ॥ ५४७ ॥**

सा न स्वार्थे प्रमां करोतीति परोक्तिरध्यक्षविरुद्धेत्येतद्दृष्टान्तेन स्पष्टयति । **नाग्नि-रिति** ॥ ९४७ ॥

**अग्निदाहादिवत्साक्षाद्वेदान्तज्ञानजं फलम् ॥**
**संसारानर्थहानाख्यं प्रत्यक्षमनुभूयते ॥ ५४८ ॥**

उपनिषदामनुत्पत्तिरूपाप्रामाण्याभावेऽपि फलाभावात्तत्तदवस्थमित्याशङ्क्याऽऽह । **अग्नीति** । यथाऽग्निदाहात्प्रत्यक्षं स्फोटाख्यं फलं यथा चोदकपानादजीर्णे तद्ध्वस्तिर-ध्यक्षा यथा मन्त्रौषधादिप्रयुक्त्या विषादिनिरासस्तथा वाक्योत्थधीफलं बन्धध्वंसलक्षणं प्रत्यक्षमित्यर्थः ॥ ९४८ ॥

**विघ्नन्ति स्वार्थमित्युक्तं यच्च तच्चापि पेलवम् ॥**
**यथा तदुच्यमानं त्वं यथावच्छ्रोतुमर्हसि ॥ ५४९ ॥**

हेत्वभावादप्रामाण्यमुपनिषदां निरस्य स्वार्थविघातकत्वेन तासां तदुक्तमनूद्य तदस-म्यक्त्वं प्रतिज्ञाय तदुपपादयितुमुपक्रमते । **विघ्नन्तीति** ॥ ९४९ ॥

**स्वप्रमेयावबोधो हि मानानां स्वार्थ उच्यते ॥**
**तं चेत्कुर्वन्ति वेदान्ताः कुतस्तेषाममानता ॥ ५५० ॥**

वेदान्तानां स्वार्थविघातकत्वं वक्तुं सामान्यतो मानानां स्वार्थमाह । **स्वप्रमेयेति** । तत्र लौकिकपरीक्षकसंप्रतिपत्त्यर्थो हिशब्दः । उक्तस्वार्थकारिणो वेदान्ता न तद्विघात-कास्तन्नामानता तेषामित्याह । **तं चेदिति** ॥ ९५० ॥

**न च वेदान्तवाक्योत्थज्ञानस्येहास्ति बाधकम् ॥**
**बाधकानामपि सतां प्रत्यग्याथात्म्यरूपतः ॥ ५५१ ॥**

बाधितबोधजनकत्वात्तेषाममानतेत्याशङ्क्याऽऽह । **न चेति** । इहेति लोकशास्त्रयोरुक्तिः । बाधकाभावे तस्याऽऽत्मातिरेकादद्वैतहानिर्न हि जन्यो बोधस्तदव्यतिरिक्तोऽस्तीत्याश-ङ्क्याऽऽह । **बाधकानामिति** । प्रत्यक्षादीनि बाधकत्वेनेष्टानि तेषां प्रत्यग्रूपत्वान्न स्वज्ञा-नबाधकता वाक्योत्थवृत्त्यवच्छिन्नस्य बोधस्य स्वरूपत्वान्न च बाध्याऽपि वृत्तिरध्यक्षा-

---

१ ख. °चातिपं । ख. °चाप्यपं ।

दिना बाध्यते तस्यैव बोधेद्धबुद्धिबाध्यत्वाद्वृत्तेरपि तेनैव बाधात्स्वपरविरोध्यनेकभावोपलम्भादिति भावः ॥ ५५१ ॥

**प्रमाणमप्रमाणं च प्रमाभासस्तथैव च ॥**
**कुर्वन्त्येव प्रमां यत्र तदसंभावना कुतः ॥ ५५२ ॥**

सर्वस्य सत्तास्फूर्ती प्रयच्छन्नात्मैव नास्तीत्याशङ्क्य तार्तीयं परिहारं स्मारयति। **प्रमाणमिति** ॥ ५५२ ॥

**किमेकविषयत्वेन किंवा विषयभेदतः ॥**
**विरोधः स्यात्प्रमाणानामित्येतदभिधीयताम् ॥ ५५३ ॥**

बाधकत्वेनेष्टाध्यक्षादीनां प्रतीचो भेदाभावान्न तन्मानबाधकतेत्युक्त्वा विरोधस्य दुर्वचत्वाच्च न मानेषु बाध्यबाधकतेति वक्तुं विकल्पयति। **किमिति** ॥ ५५३ ॥

**मानान्तरेण संवादो यदि चेदनुवादिता ॥**
**विरोधो न तु मानानां सदैकार्थसमागमे ॥ ५५४ ॥**

तत्राऽऽद्यमनूद्य दूषयति। **मानान्तरेणेति**। यदि मानस्य मानान्तरेण संवादस्तुल्यविषयत्वं तदाऽनुवादतैव न विरोधश्चेच्छब्दस्यावधारणार्थत्वादेकार्थोपनिपाते मानानां विरोधायोगादन्यथा नैकार्थत्वं रूप्यतदभावादिधीष्वदृष्टत्वादित्यर्थः ॥ ५५४ ॥

**भिन्नप्रमेयतायां च श्रोत्रादीनां यथा तथा ॥**
**परस्परानपेक्षत्वान्नितरामविरुद्धता ॥ ५५५ ॥**

कल्पान्तरं निराह। **भिन्नेति**। अर्थभेदे विरोधवार्ताऽपि नेत्याह। **नितरामिति** ॥ ५५५ ॥

**न चैकमेव सद्वाक्यं करोति न करोति च ॥**
**प्रमां तत्प्रतिषेधं च कुर्वत्क्वचिदिहेष्यते ॥ ५५६ ॥**

तत्त्वमादेरध्यक्षाद्यविरोधेऽपि स्वयमेव तद्गुरुशिष्याद्यपेक्षं[1] स्वार्थं[2] विरुद्धं वदतीत्याशङ्क्याऽऽह। **न चेति**। व्यवहारभूमौ हि लौकिकं वैदिकं वा वाक्यं प्रमां करोति न करोतीत्येवं प्रमां तन्निषेधं च कुर्वदेकमेव क्वचिन्न दृश्यते तन्न वाक्यस्य स्वार्थघातितेत्यर्थः ॥ ५५६ ॥

**अग्निः शीतस्तथोष्णश्चेत्येवमाद्युक्तितो ननु ॥**
**विरुद्धार्थावभासोऽयं[3] जायमानः समीक्ष्यते ॥ ५५७ ॥**

अनुभवमनुसृत्य शङ्कते। **अग्निरिति** ॥ ५५७ ॥

**नैकस्मान्नापि च द्वाभ्यां विरुद्धार्थोऽवसीयते ॥**
**अनूद्योक्त्येकदेशेन शीतोऽग्निरिति बाध्यते ॥ ५५८ ॥**

---

१ क. °चनत्वा°। २ ख. °पेक्ष्य स्वार्थवि°। ३ क. °वभासोऽयं।

किमग्निरुष्णः शीतश्चेत्येकं वाक्यं वाक्यद्वयं वेति विकल्प्य दूषयति । **नेत्यादिना** । एकवाक्यत्वे विरुद्धार्थदृष्टयभावं साधयति । **अनूद्येति** । अग्निरुष्णः शीतश्चेत्येकोक्तिस्तदेकदेशोऽग्निरुष्ण इति तेनाध्यक्षसिद्धोष्णाग्न्यनुवादेन शीतोऽग्निरित्येकदेशान्तरेणापूर्वः शीतोऽग्निर्बोध्यते न चानुवादकबोधकभागयोर्विरोधोऽतुल्यबलवत्त्वादित्यर्थः ॥ ९९८ ॥

**संभवत्येव शीतोऽग्निः प्रमाणान्तरगोचरः ॥**
**मानान्तरविरोधोऽपि तथाच सति नेष्यते ॥ ५५९ ॥**

शीताग्नेरसंभावितत्वात्कथमनूद्य विधिस्तत्राऽऽह । **संभवतीति** । प्रमाणान्तरं शैशिराग्निगोचरमध्यक्षम् । शीतेऽग्नौ संभाविते तद्बोधिवाक्यस्य नाध्यक्षविरोधोऽस्तीत्याह । **मानान्तरेति** । वाक्यस्य विद्यमानार्थतावदित्यपेरर्थः ॥ ९९९ ॥

**शीतवद्वा भवेच्छीतः शैत्यस्यानपहारतः ॥**
**एवमप्यविरोधः स्यादस्य मानान्तरैरपि ॥ ५६० ॥**

उष्णाग्निवदग्न्यन्तरमपि प्रत्यक्षं चेद्वाक्यांशयोरनुवादित्वेन तुल्यत्वात्कुतः शीतोऽग्निर्वाक्यीयः स्यादत आह । **शीतवदिति** । कालविशेषमाश्रित्य हेतुमाह । **शैत्यस्येति** । उपमायामपि शीतोऽग्निरित्यस्योष्णोऽग्निरित्येकदेशेनाध्यक्षादिभिश्चाविरोधः सिध्यतीत्याह । **एवमिति** ॥ ९६० ॥

**शैशिरोऽग्निर्भवेच्छीतस्तथोष्णः पार्थिवो भवेत् ॥**
**भिन्नार्थत्वावबोधित्वाद्वाक्ययोर्न विरुद्धता ॥ ५६१ ॥**

शीतोऽग्निः संभवत्येवेत्युक्तं तमेव संभवमुदाहरति । **शैशिर इति** । विद्युन्मेघादिप्रभवोऽपि दिव्योऽविन्धनः शैशिरो विवक्षितः । उष्णाग्निस्वरूपं प्रसङ्गादाह । **तथेति** । एकवाक्यत्वे विरोधाभावमापाद्य भिन्नवाक्यत्वेऽपि तदभावमापादयति । **भिन्नेति** ॥९६१॥

**ऐकार्थ्ये न विरोधोऽस्ति द्व्यर्थत्वेऽपि न माश्रयात् ॥**
**मानान्तराच्च नैवास्ति मान्तराविषयत्वतः ॥ ५६२ ॥**

वाक्यैक्ये तन्नानात्वे चाविरुद्धतेत्युक्त्वा दृष्टान्तस्थमर्थं दार्ष्टान्तिकेऽर्पयति । **ऐकार्थ्ये इति** । अस्यार्थः । तत्त्वमसिवाक्यस्यैक्यमनैक्यं वाऽऽद्येऽप्यैकार्थ्यमनैकार्थ्यं वा नोभयथाऽपि विरोधो मानमाश्रित्यैकस्यानेकस्य वाऽर्थस्य दृष्टेर्मानासिद्धस्य चाविरुद्धत्वादिति । वाक्यानेकत्वपक्षं दूषयति । **मानान्तरादिति** । न वाक्याद्वाक्यान्तरस्य विरोधोऽन्यविषयत्वादन्यथा संवादेनाविरोधादित्यर्थः ॥ ९६२ ॥

**अभ्युपेत्यैतदुदितं न तु वाक्यविदां नयः ॥**
**यदनेकार्थबोधित्वमेकस्य वचसः सतः ॥ ५६३ ॥**

१ ख. ग. ॰ग्नाग्न्यर्थावं॰ ।

वाक्यैक्ये द्व्यर्थत्वेऽपीत्येतदुपेत्य वाङ्मात्रमित्याह । **अभ्युपेत्येति** । तत्र हेतुः । **न त्विति** ॥ ९६३ ॥

**अर्थैकत्वादिति तथा वाक्यलक्षणमुच्यते ॥**
**अनेकार्थावबोधित्वे न स्याल्लक्षणवद्वचः ॥ ९६४ ॥**

कस्तर्हि तेषां नयस्तमाह । **अर्थैकत्वादिति** । यथैकस्य वाक्यस्यानेकार्थत्वाभावस्तथाऽर्थैकत्वादेकं वाक्यमित्येकवाक्यलक्षणं तज्ज्ञैरुच्यतेऽर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादित्युक्तेरित्यर्थः । एकस्यैव लौकिकस्य वैदिकस्य वा वाक्यस्य द्व्यर्थबोधित्वेन तदुक्तलक्षणाक्रान्तमिति न तदेकं वाक्यं स्यादित्याह । **अनेकेति** ॥ ९६४ ॥

**एकमेव यदा वाक्यं कृत्स्नो वेदोऽभ्युपेयते ॥**
**वाक्यान्तरासंभवतस्तदा केन विरुद्धता ॥ ९६५ ॥**

तत्त्वमादिवाक्यस्यैकार्थ्येनैकवाक्यत्वेऽपि वाक्यान्तरेण विरोधः स्यादित्याशङ्क्यैकमेव वाक्यं सर्वो वेदो वाक्यद्वयं वेति विकल्प्याऽऽद्यं प्रत्याह । **एकमिति** ॥ ९६५ ॥

**वाक्यद्वयं चेदथवा सिद्धसाध्यार्थभेदतः ॥**
**तदाऽपि न विरोधोऽत्र विभिन्नार्थावबोधिनोः ॥ ९६६ ॥**

द्वितीयमनूद्याविरोधमाह । **वाक्येति** । अत्रेति काण्डद्वयोक्तिः ॥ ९६६ ॥

**नापि स्वार्थं परार्थं वा विहन्त्युपनिषत्क्वचित् ॥**
**कथं चेदुच्यमानं तच्छृण्वेकाग्रमना यथा ॥ ९६७ ॥**

अबाधितस्वार्थबोधिनां वेदान्तानां न तद्विघातित्वं नापि मानान्तरविरुद्धतेत्युक्तमिदानीं तदेव विधान्तरेण साधयितुमारभते । **नापीति** । वाक्यभेदं पुरुषभेदं वा विवक्षित्वा क्वचिदित्युक्तम् । अद्वैतं बोधयन्ती कथमुपनिषन्न स्वार्थपरार्थौ विहन्तीति पृच्छति । **कथमिति** । तत्र समाधिं वक्तुं भूमिकामाह । **उच्यमानमिति** ॥ ९६७ ॥

**सर्वमात्मेति चेत्कुर्यात्प्रमेयविषयां प्रमाम् ॥**
**विहन्त्युपनिषत्स्वार्थमिति निर्लज्जगीरियम् ॥ ९६८ ॥**

तस्याः स्वार्थघातकत्वं नाम स्वविषयघातकत्वं वा स्वफलघातकत्वं वा नाऽऽद्य इत्याह । **सर्वमिति** ॥ ९६८ ॥

**निःशेषपुरुषार्थाप्तिः सर्वानर्थात्ययः सदा ॥**
**वेदान्तज्ञानतश्चेत्स्यात्स्वार्थोऽतोऽन्यः क्व इष्यते ॥ ९६९ ॥**

न द्वितीय इत्याह । **निःशेषेति** । एतत्फलघातित्वेऽपि स्वफलान्तरघातित्वमाशङ्क्य तदभावान्नेत्याह । **स्वार्थ इति** ॥ ९६९ ॥

**निषेधति विधत्ते वा न चाप्युपनिषत्क्रियाम् ॥**
**प्रत्यक्तत्त्वैकसंबोधे तद्वाक्योपक्षयत्वतः ॥ ९७० ॥**

तथाऽपि कर्मकाण्डप्रामाण्यघातित्वात्तस्याः परार्थघातितेत्याशङ्क्याऽऽह । **निषेधतीति** ॥ ९७० ॥

**न चापि कर्मकाण्डोक्तिः स्वार्थे न कुरुते प्रमाम् ॥**
**स्वार्थे च सा प्रमां कुर्वत्यमानं कथमुच्यते ॥ ९७१ ॥**

तस्या निर्द्वयप्रत्यगात्मोक्त्युपक्षये तद्विरोधान्न कर्मवाक्यं स्वार्थे प्रमां कुर्यादित्याशङ्क्याऽऽह । **न चेति** । स्वार्थप्रमापकत्वेऽपि तस्या विरोधादप्रामाण्यमित्याशङ्क्याऽऽह । **स्वार्थे चेति** ॥ ९७१ ॥

**प्रात्यक्ष्याच्च प्रमोत्पत्तेर्ज्योतिष्टोमादिवाक्यतः ॥**
**प्रमैवोत्पद्यते नेति वक्तुमेतन्न शक्यते ॥ ९७२ ॥**

कर्मवाक्येभ्यः स्वार्थे प्रमैव नोत्पद्यते मानाभावादित्याशङ्क्याऽऽह । **प्रात्यक्ष्यादिति** । चकारोऽङ्गीकारस्य समुच्चयार्थः ॥ ९७२ ॥

**विषयापहृतेर्नो चेद्वेदान्तोक्त्या प्रमोत्थितिः ॥**
**न प्रत्यक्षबलीयस्त्वादनुमानप्रबोधतः ॥ ९७३ ॥**

ब्रह्मवाक्येन तदैक्यं बोधयता कर्मवाक्यार्थस्यापह्नतत्वान्न तद्वाक्यात्प्रमोत्पत्तिरिति शङ्कते । **विषयेति** । विमतं न प्रमोत्पादकं प्रमाणापह्नतविषयत्वादनुष्णाग्निवाक्यवदित्यनुमानाधीनधियोऽध्यक्षस्य प्राबल्यात्तद्विरोधेऽनुमानाप्रवृत्तिरिति परिहरति । **नेत्यादिना** ॥ ९७३ ॥

**यथासिद्धान्युपादाय कामद्वेषवशानुगः ॥**
**इष्टमेव सदा मे स्यान्मा भूच्चानिष्टमण्वपि ॥ ९७४ ॥**
**साधनानीष्टलाभार्थमनिष्टार्थापनुत्तये ॥**
**आचक्षाणा श्रुतिः पुंसो नान्यार्थं वक्ति कंचन ॥ ९७५ ॥**

स्वार्थप्रमापकत्वेन कर्मकाण्डप्रामाण्ये तदर्थस्य प्रामाणिकत्वेन वस्तुत्वादुपनिषदो नाद्वयमानतेत्याशङ्क्य पूर्वोक्तहेत्वसिद्धिं मत्वाऽऽह । **यथेति** । दृष्टानि वस्तूनि तथैवाऽऽदाय तेषु शोभनाशोभनाध्यासद्वारा रागद्वेषौ कृत्वा तदधीनः सन्निष्टं मे स्यान्नानिष्टमित्यर्थयमानस्तत्साधनान्येवान्वेषते तस्य तदुक्त्यैव कर्मश्रुतिरवस्यति न तु साधनादेर्वास्तवत्वादौ व्याप्रियत इत्यर्थः ॥ ९७४ ॥ ९७५ ॥

**यथा काम्याग्निहोत्रादौ साध्यसाधनसंगतिम् ॥**
**विदधन्नानृतत्वादि कामानां वक्ति कुत्रचित् ॥ ९७६ ॥**

उक्तमर्थं दृष्टान्तेन समर्थयते । **यथेति** । काम्येषु कर्मसु प्रवृत्तं शास्त्रमज्ञातं संबन्धं

---

१ ख. ॅरसॅ । २ क. ॅपहतॅ ।

ज्ञापयत्कामानां तत्फलतदुपायानां मध्ये क्वचिदपि सत्यत्वादि न ब्रूते तथा नित्याग्निहो-त्रादावपि शास्त्रं तद्विशेषं बोधयन्न तत्सत्यत्वादि वक्तीत्यर्थः ॥ ९७६ ॥

**न चापि न प्रवर्तन्ते पुरुषाः काम्यकर्मसु ॥**
**यतोऽतत्त्वविदां कामो न कदाचिन्निवर्तते ॥ ९७७ ॥**

साधनादिसत्यत्वाद्यनुक्तौ कथमधिकारिणां कर्मसु प्रवृत्तिरित्याशङ्क्याऽऽह । **न चेति ।** अपिशब्दान्नित्यकर्मसु चेति यावत् । अज्ञानां प्रवर्तककामसद्भावादित्यर्थः ॥ ९७७ ॥

**अकामतः क्रिया काचिद्दृश्यते नेह कुत्रचित्[1] ॥**
**यद्यद्धि कुरुते किंचित्तत्तत्कामस्य चेष्टितम् ॥ ९७८ ॥**

काम्येषु फलेच्छया प्रवृत्तावपि नित्येषु तदभावादप्रवृत्तिमाशङ्क्य तत्रापि कामनिमित्ता प्रवृत्तिरित्यत्र मानमाह । **अकामत इति** ॥ ९७८ ॥

**स यथाकाम इत्यादिरेषोऽर्थश्च सविस्तरः ॥**
**वक्ष्यतेऽकामयमानश्च[2] तथाऽकुर्वन्विमुच्यते ॥ ९७९ ॥**

तत्रैव श्रुतिं प्रमाणयति । **स यथेति ।** कामवशात्प्रवृत्तिर्बन्धश्चेत्येतत्प्रसङ्गेन कामाभावान्निवृत्तिर्मुक्तिश्चेत्यथाकामयमान इत्यादिशास्त्रमाश्रित्याऽऽह । **अकामयमानश्चेति ।** अकुर्वन्निति च्छेदः ॥ ९७९ ॥

**सर्वाधिकारप्रध्वंसान्न कृत्स्नात्मावबोधिनः ॥**
**प्रवृत्तौ वा निवृत्तौ वा गुणभावः संदृप्यते ॥ ९८० ॥**

ज्ञानिनोऽकामस्यापि प्रवृत्तिदृष्टेः कथमकामस्याकुर्वतो मुक्तिरित्याशङ्क्याऽऽह । **सर्वेति ।** अधिकारो विधिपुरुषसंबन्धादिः । गुणभावः कर्तृत्वम् ॥ ९८० ॥

**अतो निर्विषयत्वादि ब्रह्मैकत्वाद्यदीरितम् ॥**
**तत्सर्वं परिहृतं ज्ञेयं यथोक्तेनैव वर्त्मना ॥ ९८१ ॥**

कर्मकाण्डस्य सत्यत्वादावुदासीनतया संबन्धबोधित्वे सिद्धे प्रकृतमनुमानदूषणमुपसंहरति । **अत इति ।** तस्य स्वार्थत्वे काण्डान्तरस्य नैरर्थक्येनामानत्वमेकत्वे निर्विषयत्ववद्गुपदेशतद्ग्रहफलाभावश्चाऽऽदिशब्दार्थः । अतःशब्दार्थमाह । **यथेति ।** अज्ञस्याविरक्तस्य कर्मणि प्रवृत्तेः संबन्धे च तद्वाक्यात्प्रमितेर्युक्तं तत्काण्डप्रामाण्यं तस्य च तत्सत्यत्वादौ ताटस्थ्यादविरुद्धोपनिषदोऽपि मानतेत्यर्थः ॥ ९८१ ॥

**न निवर्तयितुं शक्तं रागाद्याक्रष्टचेतसः ॥**
**शास्त्रं विरक्तचित्तान्वा न प्रवर्तयितुं क्षमम् ॥ ९८२ ॥**

कर्मशास्त्रं संबन्धं बोधयत्प्रवृत्त्यादिपरमतो रागादिवशात्तदयोगाच्छास्त्रीयप्रवृत्त्यादिविषयस्य सत्यत्वापत्तिरित्याशङ्क्याऽऽह । **नेत्यादिना ।** अकारकत्वादित्यर्थः॥९८२॥

---

१ ख. कस्यचित् । २ क. ग. °मयान° ।

इष्टानिष्टफलानीति साधनानि प्रकाशयेत् ॥
न निवृत्तिं प्रवृत्तिं वा पुंसः शास्त्रं करोति तत् ॥ ५८३ ॥

किं तर्हि शास्त्रं करोति तदाह । इष्टेति । व्यावर्त्यमाह । नेति ॥ ५८३ ॥

अपि शास्त्रं समुल्लङ्घ्य रागादिबलवत्तया ॥
प्रवर्तमानाः पुरुषा दृश्यन्तेऽद्यापि कामिनः ॥ ५८४ ॥

शास्त्रान्न प्रवृत्तिरित्यत्र युक्त्यन्तरमाह । अपीति ॥ ५८४ ॥

साध्यसाधनसंबन्धानिष्टानिष्टफलोदयान् ॥
शास्त्रं त्वादित्यवत्साक्षात्प्रकाशयति तान्सदा ॥ ५८५ ॥

कर्मशास्त्रकृत्यं निगमयति । साध्येति ॥ ५८५ ॥

तेषु शास्त्रैकदीपेषु साध्यसाधनवर्त्मसु ॥
यथारुचि प्रवर्तन्ते पुरुषा न तु शास्त्रतः ॥ ५८६ ॥

कामस्य प्रवर्तकत्वं न शास्त्रस्येत्युपसंहरति । तेष्विति ॥ ५८६ ॥

विधिशास्त्रस्य नैवातो वेदान्ता बाधकाः सदा ॥
न च निर्विषयं तत्स्यान्मेयभेदात्त्वगादिवत् ॥ ५८७ ॥

तस्य प्रवर्तकत्वे किं जातं तदाह । विधीति । काण्डद्वयं तच्छब्दार्थः । कल्पितकर्मादिविषयत्वात्कर्मवाक्यस्याकल्पिताद्वयार्थत्वाच्च ब्रह्मवाक्यस्य न विरोधस्तयोरित्यर्थः ॥ ५८७ ॥

केचित्तु पण्डितंमन्या विरोधीनि परस्परम् ॥
संभावयन्ति मानानि सर्वाण्यैकात्म्यवस्तुनि ॥ ५८८ ॥

स्वपक्षे सर्वविरोधनिरासद्वारा वेदान्तानां स्वार्थे प्रामाण्यमुक्त्वा तार्किकपक्षमाह । केचित्त्विति । ऐक्यवस्तुनि शास्त्रगम्ये गृहीते सतीति यावत् ॥ ५८८ ॥

श्रोत्रादिभिर्यतो भिन्ना मिथः शब्दादयस्त्वमी ॥
मीयन्ते सर्वमात्मेति प्रत्यक्षेण विरुध्यते ॥ ५८९ ॥

तत्राध्यक्षविरोधं ब्रह्मशास्त्रस्य ब्रूते । श्रोत्रादिभिरिति ॥ ५८९ ॥

शब्दाद्यर्थोपलब्धारः कर्तारश्च पृथक्पृथक् ॥
यस्मादिहानुमीयन्ते तस्माल्लिङ्गविरोधिता ॥ ५९० ॥

तस्यानुमानविरोधमाह । शब्दादीति । इह देहेषु पृथक्पृथगनुमीयन्त इति संबन्धः। स्वदेहसमवेतचेष्टातुल्यचेष्टा देहान्तरेषु दृष्टा सा यत्नवत्पूर्वा विशिष्टचेष्टात्वात्संमतवदित्यनुमानविरुद्धमैक्यशास्त्रमिति भावः ॥ ५९० ॥

१ ख. °वस्तुषु ॥ यं।

तथाऽऽगमविरोधं[1] च ग्रामकामादिभेदतः ॥
उद्भासयन्ति संहृष्टा ब्रह्मैकत्वप्रदूषकाः ॥ ५९१ ॥

तत्रैवाऽऽगमविरोधमाह । तथेति । तेषां हर्षे हेतुमाह । ब्रह्मेति ॥ ५९१ ॥

ब्रह्मैकत्वविरोधो वैः कथं भिन्नार्थबुद्धिभिः ॥
इति ब्रह्मविदोपेत्य प्रष्टव्या भेदवादिनः ॥ ५९२ ॥

मानत्रयविरोधान्न ब्रह्मैक्यमिति प्राप्ते पृच्छति । ब्रह्मैकत्वेति ॥ ५९२ ॥

किं भोः शब्दादिभेदेन खस्यैकत्वं विरुध्यते ॥
न चेद्विरुध्यतेऽथोच्चैर्विरोधः किमितीर्यते ॥ ५९३ ॥

किं तदैक्यमध्यक्षादिविरुद्धं किंवा तदद्वयत्वमिति विकल्प्याऽऽद्यं दृष्टान्तेन निराचष्टे । किमिति । अथ न विरुध्यते चेदिति संबन्धः । यथा सर्वभूतस्थमेकमाकाशमित्युक्तेर्न शब्दादिभेदग्राहिप्रत्यक्षादिविरोधो भिन्नविषयत्वात्तथा सर्वभूतस्थमेकं ब्रह्मेत्युक्तेरपि न तत्प्रत्यक्षेण विरोध इत्यर्थः ॥ ५९३ ॥

सत्परिच्छेदकैर्नापि प्रत्यक्षाद्यैर्ग्रहो भवेत् ॥
व्यावृत्तेरन्यतोभावमात्रायाः केनचित्क्वचित् ॥ ५९४ ॥

ब्रह्माद्वयत्वं तद्विरुद्धमिति पक्षं प्रत्याह । सदिति । सन्मात्रग्राहित्वादध्यक्षादीनां न तैरन्योन्याभावमात्ररूपव्यावृत्तेः कुताश्चित्क्वचित्केनचिद्ग्रहः स्यादितरेतराश्रयादिदोषादतो न तैस्तद्विरुद्धमित्यर्थः ॥ ५९४ ॥

द्वैतग्राहि यथा मानं न किंचिदपि विद्यते ॥
तथोदर्के प्रवक्ष्यामि नातो मानविरोधिता ॥ ५९५ ॥

किंच तेषां द्वैतग्राहित्वं संबन्धादौ निरस्तमित्याह । द्वैतेति । उत्तरत्रापि तद्वक्ष्यते सृष्टिविचारादावित्याह । तथेति । ब्रह्माद्वयस्याविरुद्धत्वं निगमयति । नात इति ॥ ५९५ ॥

यच्चोक्तमनुमीयन्ते प्रतिदेहं[2] पृथग्विधाः ॥
शब्दाद्यर्थोपलब्धारः कर्तारश्चापि कर्मणाम् ॥ ५९६ ॥

अनुमानविरोधमनुवदति । यच्चेति ॥ ५९६ ॥

भिन्नाः कैरनुमीयन्त इति पृष्टो वदेद्यदि ॥
अस्माभिर्लिङ्गकुशलैरित्येतच्च न युक्तिमत् ॥ ५९७ ॥

या चेष्टा सा यत्नवत्पूर्वेत्येतावता नाऽऽत्मभेदः स्वप्रयत्नपूर्वत्वस्यापि संभवात्स्वदेहचेष्टायाः स्वयत्नपूर्वत्ववत्परदेहचेष्टायास्तद्यत्नपूर्वत्वे चाऽऽदावेव स्वपरभेदः सिध्येत्स च नाध्यक्षात्परस्यानध्यक्षत्वान्नानुमानादन्योन्याश्रयादिति मत्वाऽऽह । भिन्ना इति । दोषान्तराभिधित्सया शङ्कयति । इति पृष्ट इति । तत्र दूषणमाह । एतच्चेति ॥ ५९७ ॥

---

१ ख. °विरुद्धं च । २ ख. °द्भावय° । ३ ग. वा । ४ क. °ते दाद्ध° ।

अनन्यमानमेयेऽर्थे न भेदः प्रत्यगात्मनि ॥
पराज्ञानप्रमेयाश्च नाऽऽत्मानः स्तम्भकुम्भवत् ॥ ५९८ ॥

अयुक्तिमत्त्वं प्रकटयति । अनन्येति । यस्याऽऽत्मनो भेदः साध्यः स स्वप्रकाशो दृश्यो वाऽऽद्ये तस्यागोचरत्वात्तद्भेदो न मानतः सिध्येद्द्वितीये दृश्यस्य स्तम्भादिवदनात्मत्वाद्धर्म्यसिद्धेस्तद्भेदासिद्धिरित्यर्थः ॥ ५९८ ॥

अनुमाकुशला यूयं क इत्येतद्विभाष्यताम् ॥ ५९९ ॥
देहेन्द्रियमनोबुद्धिक्षेत्रज्ञेषु पृथक्पृथक् ॥
नानुमाकौशलं तावत्प्रत्येकं तेषु विद्यते ॥ ६०० ॥
देहादिसाधनास्तस्माद्वयमात्मान एव हि ॥
भूरिसाधनसाध्यत्वात्क्रियाणां नो विभिन्नता ॥ ६०१ ॥

अस्माभिर्लिङ्गकुशलैरित्यत्रास्मदर्थं पृच्छति । अनुमेति । स स्थूलदेहो वा करणजातं वा देहद्वयान्यो वा नाऽऽद्यौ तयोरचेतनत्वादनुमातृत्वायोगान्नान्त्यस्तस्याविकारित्वादिति भावः । किंशब्दस्य प्रश्नार्थतां मत्वा पूर्ववाद्याह । देहेति । तेष्वेकैकत्रानुमातृत्वं त्वयैव निरस्तं यतस्तेषु प्रत्येकं नानुमाकौशलमतो देहादिबहुसाधनविशिष्टोऽनुमाता क्रियाणामनेककारकसाध्यत्वादेवंविशिष्टात्मककर्तृकानुमानात्प्रतिदेहमात्मभेदधीरित्यर्थः ॥ ५९९ ॥ ॥ ६०० ॥ ६०१ ॥

भूरिसाधनसाध्यत्वात्क्रियाणामिति चेद्भवेत् ॥
हेतुस्तवाप्यनेकत्वमेकस्यापि प्रसज्यते ॥ ६०२ ॥

परस्यास्मदर्थोक्तिं निरस्यति । भूरीति ॥ ६०२ ॥

आत्मादीनां क्रियास्तित्वात्प्रत्येकं कारकत्वतः ॥
अग्न्यादीनामिव तत आत्मानेकत्वमापतेत् ॥ ६०३ ॥

विशिष्टस्याऽऽत्मनोऽनुमाकर्तृत्वे क्रियाणामनेककारकसाध्यत्वादिति चेद्धेतुस्तदा तव देहादेश्चैकैकस्याप्यनेकत्वं स्यादित्युक्तं विवृणोति । आत्मादीनामिति । आत्मनो देहादीनां चानुमाकारकाणां प्रत्येकमवान्तरक्रियाऽस्ति सर्वैरेवाग्न्यादिकारकाणां तथाव्यापाराङ्गीकारात्ततश्चाऽऽत्मनोऽवान्तरक्रिया किमनेककारकसाध्या किंवा नाऽऽद्येऽप्यात्मातिरिक्तानेककारकसाध्या वा तदनतिरिक्ततत्साध्या वा नाऽऽद्योऽनवस्थानाद्द्वितीये त्वात्मनोऽनेकत्वापत्तिस्तथा च पाकहेत्वग्न्यादीनामिवानुमातर्यनेकताप्राप्तेर्नैरात्म्यं स्यादित्यर्थः ॥ ६०३ ॥

अनुमाऽपि क्रिया साक्षाद्भवतैवाभ्युपेयते ॥
शरीरेन्द्रियबुद्ध्यादेः प्रत्येकं स्यादनेकता ॥ ६०४ ॥

**बहुसाधनसाध्यत्वात्क्रियाणामितिहेतुतः ॥**
**एवंलक्षणहेतूक्तिर्मौख्र्यलिङ्गं भवेदतः ॥ ६०५ ॥**

अनुमातुरवान्तरक्रियैव नास्ति तद्धेतुष्वेव तदुपगमादनुमायाश्च ज्ञानत्वेनाक्रियात्वादित्याशङ्क्याऽऽह । **अनुमाऽपीति** । धात्वर्थत्वादित्यर्थः । **भाट्टमते** वा ज्ञानस्य क्रियात्वाङ्गीकारादित्यर्थः । आत्मन्युक्तन्यायं देहादावतिदिशति । **शरीरेति** । तस्यावान्तरक्रियाऽस्ति न वा न चेदकारकत्वमस्ति चेत्प्रत्येकमनेकत्वं त्वदुक्तहेतोस्तत्रावान्तरक्रियाया बहुकारकसाध्यत्वात्तस्यास्तदतिरिक्तानेककारकसाध्यत्वेऽनवस्थानादिति भावः । विशिष्टस्याऽऽत्मनोऽनुमातृत्वे क्रियाणामनेककारकसाध्यत्वादिति हेतुं वदन्नुक्तन्यायाद्विद्वदुपहासः स्यादित्याह । **एवमिति** ॥ ६०४ ॥ ६०५ ॥

**गुणक्रियाणां सर्वासां कर्तृमात्रव्यपाश्रयात् ॥**
**अनैकान्तिकता हेतोस्तथा वः संप्रसज्यते ॥ ६०६ ॥**

कारकावान्तरव्यापारस्यानेककारकसाध्यत्वं निरस्य पक्षान्तरं निरस्यति । **गुणेति** । कारकावान्तरव्यापाराणामनेककारकसाध्यत्वे तेषां स्वकर्तृमात्रनिष्ठत्वादनेककारकसाध्यत्वसाध्याभावेऽपि क्रियात्वहेतोः सत्त्वाद्व्यभिचारः स्यादित्यर्थः ॥ ६०६ ॥

**अपक्षधर्मता हेतोर्नामरूपाश्रयत्वतः ॥**
**धर्माभावात्प्रतीचश्च तद्भेदे हेतुना कुतः ॥ ६०७ ॥**

अनुमातुरयोगेनानुमानानुत्थानमुक्त्वा तल्लिङ्गमपि दुर्वचमिति मन्वानः सांख्येष्टजन्मादीनां प्रतिनियमादिलिङ्गं दूषयति । **अपक्षेति** । न हि पुरुषबहुत्वसाधकं जन्मादि युक्तं नामरूपात्मकदेहनिष्ठत्वेनाऽऽत्मन्यप्रवृत्तेरित्यर्थः । आत्मा द्रव्यत्वातिरिक्तापरजातीयोऽश्रवणविशेषगुणवत्त्वाद्घटवदिति तार्किकानुमानमाशङ्क्याऽऽह । **धर्मेति** । न हि प्रतीचो गुणवत्ता केवलो निर्गुणश्चेति श्रुतेः सुखादीनां च मनोधर्मत्वादेतत्सर्वं मन एवेति श्रुतेस्तस्मादात्मभेदे नोक्तगुणवत्त्वस्य हेतुताऽन्यतरासिद्धिरिति भावः ॥ ६०७ ॥

**ऐकात्म्यवन्तो देहाः स्युर्विवादो येषु वर्तते ॥**
**शरीरत्वाविशेषत्वात्प्रतिवादिशरीरवत् ॥ ६०८ ॥**

भेदानुमाने लिङ्गाभावमुक्त्वा प्रत्यनुमानमाह । **ऐकात्म्येति** । प्रतिवादिदेहान्यदेहा मदात्मना तादात्म्यवन्तो जीवद्देहत्वात्संमतवदित्यर्थः ॥ ६०८ ॥

**तथेन्द्रियमनोबुद्धिविषयेष्वपि योजयेत् ॥**
**ऐकात्म्यं सर्वभूतेषु प्रात्यक्ष्याच्चाऽऽत्मनस्तथा ॥ ६०९ ॥**

देहप्रयुक्तन्यायमिन्द्रियादिष्वतिदिशति । **तथेति** । विमतानि प्रतिवादिभोगसाधनानीन्द्रियत्वात्प्रतिवादीन्द्रियवदेवं मनोबुद्धिविषयानपक्षीकृत्यानुमातव्यं तद्देहवदिन्द्रियादि

ष्वप्यैकात्म्यमनुमानेन योजयेदित्यर्थः । भेदानुमानस्यानुमाविरोधवदध्यक्षविरोधमाह । **सर्वेति** ॥ ६०९ ॥

**आत्मप्रत्यय एकात्मा सर्वदेहेषु सर्वदा ॥**
**नानात्मवदनेकत्वं कश्चिदात्मनि वीक्षते ॥ ६१० ॥**

किं तत्प्रत्यक्षं तदाह । **आत्मेति** । सर्वेषु चराचरशरीरेष्वात्मा स्वप्रकाशश्चिदेकरसः सदा विदुषाऽनुभूयते तद्विद्वदध्यक्षविरुद्धानुमेत्यर्थः । अविद्वद्दृष्टेरनुमानुगुणत्वात्तयैव बलवत्त्वादध्यक्षं बाध्यमित्याशङ्क्याऽऽह । **नेत्यादिना** । आत्मनः स्वप्रकाशत्वे दृश्यत्वे च तद्भेदो मानतो न सिध्यतीत्युक्तमिति भावः ॥ ६१० ॥

**अनुमानादनेकत्वमात्मनो ये प्रचक्षते ॥**
**तेषां प्रत्यक्षमानेन बाधो लिङ्गधियो भवेत् ॥ ६११ ॥**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके द्वितीयाध्यायस्य प्रथमं ब्राह्मणम् ॥ १ ॥**

**श्लोकानामादितः समष्ट्यङ्काः—४७०८**

अनुमानग्राहकाध्यक्षाभावान्न तेनाध्यक्षं बाध्यं किंतु तेनैवानुमेत्युपसंहरति । **अनुमानादिति** । एवं प्रत्यगसंसारिब्रह्मणो वेदान्तप्रमाणकस्य सत्यस्य सत्यमित्युपनिषदिति स्थितम् ॥ ६११ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां
प्रथममजातशत्रुब्राह्मणम् ॥ १ ॥

---

अथ द्वितीयं ब्राह्मणम् ।

---

**जगज्जनिस्थितिध्वंसा यस्मात्सिध्यन्ति तत्परम् ॥**
**ब्रह्मेति प्राक्प्रतिज्ञाय यथावदुपदर्शितम् ॥ १ ॥**

वृत्तवर्तिष्यमाणयोः संगतिं वक्तुं वृत्तं कीर्तयति । **जगदिति** । ब्रह्म ते ब्रवाणीति प्रक्रम्य व्येव त्वेति प्रतिज्ञाय जगतो जन्मादयो यतस्तद्ब्रह्मेति यथावदुक्तमित्यर्थः ॥ १ ॥

**तस्योपनिषदित्युक्तं तद्व्याख्याऽत्राधुनोच्यते ॥**
**आ मैत्रेय्याः परब्रह्मसत्यस्य प्रतिपत्तये ॥ २ ॥**

उक्तमर्थान्तरं स्मारयित्वोत्तरब्राह्मणद्वयतात्पर्यमाह । **तस्येति** । प्रत्यग्ब्रह्म तच्छब्दार्थः । उपनिषद्व्याख्याफलमाह । **परेति** ॥ २ ॥

---

१ ख. तद्वद्वि॰ ।

सृष्टिप्रस्ताव एतस्मिन्प्राणादेर्जन्म सूत्रितम् ॥
यतोऽतः प्राणसंबन्धात्पूर्वं व्याख्या प्रपञ्च्यते ॥ ३ ॥

तत्र शिशुब्राह्मणप्राथम्ये हेतुमाह । **सृष्टीति** । सृष्टेर्यस्मिन्वाक्ये प्रस्तावस्तस्मिन्नस्मादित्यादौ प्राणानामादौ सृष्टिं शिष्ट्वा लोकादेरुपरिष्टात्तदुक्तेः प्रथमं प्राणसंबन्धोपनिषद्व्याख्या क्रियत इत्यर्थः ॥ ३ ॥

ततः परेण लोकादेरपि याथात्म्यमुच्यते ॥
अध्यात्ममधिदैवं च देवताकरणाश्रयम् ॥ ४ ॥
प्राणादि सर्वमेवेदं पञ्चभूतसतत्त्वकम् ॥
न हि भूतातिरेकेण प्रतीचः किंचिदिष्यते ॥ ५ ॥

मूर्तामूर्तब्राह्मणस्य तात्पर्यविशेषं वदन्पाश्चात्ये निमित्तमाह । **तत इति** । प्राणयाथात्म्योक्तेरनन्तरमिति यावत् । सृष्टिवाक्ये प्राणापेक्षया लोकादेरूर्ध्वमुक्तेरित्यानन्तर्ये हेतुमाह । **परेणेति** । किं तत्प्राणलोकादियाथात्म्यं तदाह । **अध्यात्ममिति** । आश्रयशब्दः स्वार्थः । एतस्मादित्यात्मकार्यत्वदृष्टेस्तस्य कथं पञ्चभूतात्मकत्वं तत्राऽऽह । **न हीति** । प्रतीचोऽज्ञानद्वारा क्रमेणाऽऽकाशादिभूतानि जायन्ते तेभ्यो द्वैतप्रपञ्चो न तु साक्षात्प्राणाद्यात्मनः संभवति न हि कूटस्थस्य कारणत्वं स्वतोऽस्तीत्यर्थः ॥ ४ ॥ ५ ॥

प्राणा वै सत्यमित्युक्तं के प्राणा इति यत्नतः ॥
व्याख्यायन्तेऽथ ते प्राणास्तथोपनिषदश्च याः ॥ ६ ॥

पूर्वेणोत्तरयोः संगतिस्तत्पौर्वापर्यं चोक्तमिदानीं प्राणसंबन्धात्पूर्वं व्याख्येत्यत्र सूत्रितं संबन्धमनूद्यानन्तरब्राह्मणमवतारयति । **प्राणा इति** । आकाङ्क्षानन्तर्यमथशब्दार्थः । संक्षेपविस्तरात्मको व्याख्याने यत्नः ॥ ६ ॥

प्राणेन मध्यमेनान्नं जग्धं वागादितर्पणम् ॥
यथा करोति तद्वाच्यं प्राणोपनिषदश्च याः ॥ ७ ॥

व्याख्यानमेव संक्षिप्याऽऽह । **प्राणेनेति** । मध्यमेन मुखनासिकासंचारिणा मुख्येनेति यावत् ॥ ७ ॥

यो ह वा इति प्रश्नोक्तिस्तस्यायमिति निर्णयः ॥
शरीरेऽभ्याहितः प्राणो मूर्ध्नि प्रत्याहितस्तथा ॥ ८ ॥

ब्राह्मणमवतार्य तमित्यतः प्राक्तनस्य विभागमाह । **यो हेति** । यो हेत्यादि वेदेत्यन्तं तस्य किमिति साध्याहारं प्रश्नवाक्यं तस्य सप्तेत्यादि फलवचनमयमित्यादि दामेत्यन्तेन सह निर्णयवाक्यमिति भेदः । साधनमित्यादि व्याचष्टे । **शरीर इति** । तथाशब्देन वक्ष्यमाणस्थूणादामसाहित्यं प्राणस्योक्तम् ॥ ८ ॥

**विषयेष्वनभिष्वङ्गाच्छिशुः प्राणोऽभिधीयते ॥**
**वागादेरिव नाऽऽसङ्गो यतः प्राणस्य विद्यते ॥ ९ ॥**

तस्य श्रौतं शिशुत्वं साधयति । **विषयेष्विति ।** हेतोरसिद्धिमाशङ्क्याऽऽह । **वागादेरिति** ॥ ९ ॥

**शीर्षण्यप्राणसंस्था ये शब्दाद्यासङ्गलक्षणाः ॥**
**भ्रातृव्यास्ते सहोत्पत्तेः प्रत्यग्दृष्ट्यपहारतः ॥ १० ॥**

यो यथोक्तविशेषणं प्राणं वेद स सप्त द्विषतो भ्रातृव्यान्नाशयतीतिफलोक्तिस्थभ्रातृव्यशब्दार्थमाह । **शीर्षण्येति ।** तेषां भ्रातृव्यत्वे हेतुः सहेति । द्वेष्टृत्वे हेतुः प्रत्यगिति ॥ १० ॥

**शरीरमस्याऽऽधानं स्याच्छरीरेऽवस्थितो यतः ॥**
**सामान्यवृत्त्या प्राणोऽयं तस्मादाधानमुच्यते ॥ ११ ॥**

तस्येदमेवाऽऽधानमित्यस्यार्थमाह । **शरीरमिति ।** सामान्यवृत्त्या साधारण्या स्पन्दरूपव्याप्त्येति यावत् ॥ ११ ॥

**शरीराश्रयिणं प्राणं यतो वागादयः श्रिताः ॥**
**अलं स्वकार्यनिष्पत्तौ न तु प्राणैकसंश्रिताः[1] ॥ १२ ॥**

तत्र हेत्वन्तरमाह । **शरीरेति ।** पञ्चधा व्युह्य देहस्थितप्राणाश्रितानि करणानि कार्यकराणि[2] न तु मूर्छादौ तद्धस्तान्यतः शरीरं तस्याऽऽधानमित्यर्थः ॥ १२ ॥

**प्रति प्रत्याहितत्वाच्च प्रत्याधानं शिरो विदुः ॥**
**शिरोदेशविशेषेषु प्रति प्रति स आहितः ॥ १३ ॥**

इदं प्रत्याधानमित्यस्यार्थमाह । **प्रतीति ।** तदेव स्फोरयति । **शिर इति** ॥ १३ ॥

**अन्नपानसमुत्था हि शक्तिः प्राणो बलं तथा ॥**
**बलावष्टम्भ एतस्मिन्प्राणो देहेऽवतिष्ठते ॥ १४ ॥**

प्राणः स्थूणेत्यत्र प्राणशब्दार्थमाह । **अन्नेति ।** बलस्य शक्तेरन्नपानसमुत्थत्वमन्वयव्यतिरेकसिद्धमिति हिशब्दार्थः । कथं तस्य स्थूणात्वं तदाह । **बलेति** ॥ १४ ॥

**अबल्यं नीत्वेति तथा प्राणोत्क्रान्तिः प्रवक्ष्यते ॥**
**उच्छ्वासादिक्रियं केचिद्वायुं स्थूणां प्रचक्षते ॥ १५ ॥**

तत्र मानमाह । **अबल्यमिति ।** यदा देहमबलभावं नीत्वा संमोहमिवाऽऽत्माऽऽप्नोति[3] तदा प्राण उत्क्रामतीति तदुत्क्रान्तिमुक्तार्थानुसारेण षष्ठे वक्ष्यतीत्यर्थः । स्थूणावाक्यस्य भर्तृप्रपञ्चव्याख्यामङ्गीकारार्थमाह । **उच्छ्वासादीति । उक्तं हि**—प्राण उच्छ्वा-

---

१ ख. °संस्थिताः । २ क. °र्यकारणानि न । ३ क. ग. °बल्यमभ्येति ।

सनिश्वासकर्मा वायुः शारीरः शरीरपक्षपाती गृह्यते । एतस्यां स्थूणायां शिशुः प्राणः करणदेवतालिङ्गपक्षपाती गृह्यते। स देवः प्राण एतस्मिन्बाह्ये प्राणे संबद्ध इति ॥१५॥

**जाठराग्न्यभिसंबन्धाज्जग्धमन्नं त्रिधा क्रमात् ॥**
**परिणामं व्रजत्येतत्स्थूलमध्यमसूक्ष्मतः ॥ १६ ॥**
**स्थूलांशः पृथिवीमेति पुरीषं मूत्रमेव च ॥**
**स्थूलदेहोपचित्यर्थो मध्यमोऽशः प्रकीर्तितः ॥ १७ ॥**
**यस्तु सूक्ष्मो रसोऽन्नस्य भागोऽमृतमितीर्यते ॥**
**स हृद्देशं समागम्य नाडीमध्यसमाश्रयः ॥ १८ ॥**
**हृदयाद्विप्रकीर्णाभिर्नाडीभिर्लिङ्गदेवताः ॥**
**प्रीणयन्नुपचिन्वंश्च दामान्नमिति भण्यते ॥ १९ ॥**

अन्नं दामेत्यस्यार्थं वक्तुमन्नं हीत्यादिपातनिकाभाष्यं व्याचष्टे । **जाठरेत्यादिना** ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥

**देहं रसादिना बद्ध्वा सूक्ष्मांशेन शिशुं तथा ॥**
**पाशद्वयाभिसंबन्धादन्नं दामेति शब्द्यते ॥ २० ॥**

कथमणिष्ठपरिणामद्वारा तस्य दामत्वमित्याशङ्क्याऽऽह । **देहमिति** । आदिपदेन त्वङ्मांसादिग्रहः । बद्ध्वा स्थितमिति शेषः ॥ २० ॥

**दाम प्रतनुतां याति यदा कर्मक्षयात्तदा ॥**
**यथास्वं यान्त्यथ प्राणा देहादुच्छिन्नबन्धनाः ॥ २१ ॥**

तस्य दामत्वेऽन्वयव्यतिरेकावाह । **दामेति** । यदा कर्मवशादन्नस्वरूपं दाम देहे दृढतामेति तदा प्राणास्तत्र बद्धास्तिष्ठन्ति यदा तु कर्मक्षयाद्दाम क्षीयते तदा ते बन्धनहीना देहान्निष्क्रम्य स्वमाधिदैविकं रूपमनतिक्रम्य तद्यान्त्यतो युक्तमस्य प्राणदामत्वमित्यर्थः । यथोक्तान्वयद्योतकोऽथशब्दः ॥ २१ ॥

**प्रत्याधानसमूढस्य शिशोस्तस्यैव काश्चन ॥**
**अक्ष्ण्युपनिषदो वाच्यास्तमेता इत्यतः श्रुतिः ॥ २२ ॥**

तमित्यादेस्तात्पर्यमाह । **प्रत्याधानेति** ॥ २२ ॥

**उपासतेऽक्षणि प्राणं रुद्राद्याः सप्त देवताः ॥**
**अक्षीणा इति ता ज्ञात्वा नान्नक्षयमुपाश्नुते ॥ २३ ॥**

तदित्यादेर्वेदेत्यन्तस्य तात्पर्यमाह । **उपासत इति** ॥ २३ ॥

**मूर्ध्नि प्रत्याहितं प्राणमृषयः प्राणसंज्ञकाः ॥**
**रुद्राद्या मध्यमं यत्नात्सततं पर्युपासते ॥ २४ ॥**

---

१ ग. स्थूलोऽशः ।

रुद्रादिशब्दानां प्रसिद्धदेवताविषयत्वमुक्त्वा प्राणविषयत्वमाह । **मूर्ध्नीति** । प्राणपदव्याख्यानं मध्यमं प्राणमिति ॥ २४ ॥

**अक्षण्येव यतः पूर्वं व्याख्यातो देवतागणः ॥**
**श्रोत्रादिकरणार्थोऽयं श्लोकस्तस्मादुदाहृतः ॥ २५ ॥**

श्लोकस्य देवताविषयत्वात्तद्विषयत्वमेव रुद्रादिशब्दानां मन्त्रब्राह्मणयोरैकार्थ्यादित्याशङ्क्य तदेष इत्यादेस्तात्पर्यमाह । **अक्षणीति** । चक्षुषि रुद्रादिगणस्योक्तत्वादिन्द्रियसंबन्धात्तस्य करणग्रामत्वप्रतीतेस्तद्विषयश्लोको न प्रसिद्धदेवताविषय इत्यर्थः ॥२५॥

**विश्वरूपं यशो ज्ञेयं शब्दाद्यर्थावभासकम् ॥**
**तेजस्तच्चाप्यनेकात्मविभिन्नार्थावभासनात् ॥ २६ ॥**

तस्मिन्नित्यादेरर्थमाह । **विश्वरूपमिति** । शब्दादिप्रकाशकं तेजःशब्दितं श्रोत्रादिकरणजातं यशस्तदेव विश्वरूपं तद्धि नानार्थबोधित्वादनेकात्मकं तद्विधोक्तं करणजातमित्यर्थः ॥ २६ ॥

**तीरे तस्याऽऽसते सप्त वायवः करणाश्रयाः ॥**
**ऋषयश्च यशश्चेति प्राणा उक्तेन हेतुना ॥ २७ ॥**

तस्येत्यादेरर्थमाह । **तीर इति** । प्राणा वै यशो विश्वरूपं प्राणा वा ऋषय इति ब्राह्मणयोरर्थं संक्षिपति । **ऋषयश्चेति** । तेषां स्पन्दात्मकत्वादृषित्वं शब्दादिव्याख्यानहेतुत्वाच्च यशस्त्वमिति भाष्योक्तं हेतुमाह । **उक्तेनेति** ॥ २७ ॥

**वक्तृत्वात्तृत्वभेदेन वाग्द्विधैकैव भिद्यते ॥**
**सप्तमी चाष्टमी चेति सैवैका प्रोच्यते ततः ॥ २८ ॥**

वागष्टमीत्ययुक्तं तस्याः सप्तमीत्वेनोक्तत्वान्न चैकस्या द्वित्वमित्याशङ्क्याऽऽह । **वक्तृत्वेति** । द्विधाभेदे वक्तृत्वेनाष्टम्यत्तृत्वेन च सा सप्तमीत्याह । **सप्तमी चेति** ॥२८॥

**वर्णनिष्पादनं वाचा तथाऽऽद्यरसवेदनम् ॥**
**भवेद्द्विकर्मसंयोगात्सप्तमी चाष्टमी च वाक् ॥ २९ ॥**

वचनस्य वागिन्द्रियकार्यत्वेऽपि रसास्वादनस्य रसनकार्यत्वात्कथं वाचो द्वैविध्यमित्याशङ्क्याऽऽह । **वर्णेति** । रसवेदनं चर्वणक्रिया ॥ २९ ॥

**विशिष्टह्वानसिद्ध्यर्थमृषीणामुत्तरा श्रुतिः ॥**
**इमावेवेति च तथा फलवत्स्यादुपासनम् ॥ ३० ॥**

इमावेवेत्यादेस्तात्पर्यमाह । **विशिष्टेति** । तेषां भरद्वाजादिनामभिरभिधानं किमर्थमिति तत्राऽऽह । **तथेति** ॥ ३० ॥

**सर्वस्येति फलोक्तिः स्यादुक्तोपासनकर्मणः ॥**
**अन्नात्तृत्वनिषेधार्थं सर्वमस्येति भण्यते ॥ ३१ ॥**

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके द्वितीयाध्यायस्य
द्वितीयं ब्राह्मणम् ॥ २ ॥

श्लोकानामादितः समष्ट्यङ्काः—४७३९

सर्वस्येत्यादेरर्थमाह । **सर्वस्येति** । सर्वमस्येत्यादि गतार्थमित्याशङ्क्य तत्तात्पर्यमाह । **अन्नेति** । उपासितुर्यद्भोज्यं तस्य तं प्रति न भोक्तृत्वं किंतु भोग्यत्वमेवेत्यर्थः ॥ ३१ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां द्वितीयाध्यायस्य
द्वितीयं शिशुब्राह्मणम् ॥ २ ॥

---

अथ तृतीयं ब्राह्मणम् ।

**प्राणोपनिषदश्चोक्ताः प्राणाश्चापि समासतः ॥**
**यत्तु तेषां परं सत्यं तदिदानीं निरूप्यते ॥ १ ॥**

संबन्धं वक्तुं वृत्तं कीर्तयति । **प्राणेति** । ब्रह्मोपनिषत्प्रसङ्गेन प्राणानामुपनिषदो विशिष्टनामोपासनाख्या व्याख्याताश्चकारात्तासामेतावत्त्वं चोक्तमित्यर्थः । के प्राणा इत्याकाङ्क्षा चापनीतेत्याह । **प्राणाश्चेति** । तेषामानन्त्यान्न ते सर्वात्मना निश्चेतुं शक्यन्ते तथाऽपि संक्षेपतः श्रोत्राद्यात्मनोक्ताश्चशब्दात्तेषां सत्यशब्देन चोक्तेत्यर्थः । उत्तरब्राह्मणतात्पर्यमाह । **यत्त्विति** ॥ १ ॥

**प्राणाः किमात्मकास्तेषां कथं सत्यत्वमिष्यते ॥**
**इत्येवमादि वक्तव्यमित्यर्थः पर आगमः ॥ २ ॥**

ननु सत्यशब्दितप्राणानां सत्यं परं ब्रह्म तन्निरूपणार्थं ब्राह्मणारम्भश्चेत्तर्हि द्वे वावेत्यादि व्यर्थं तेन तदनिरूपणादथात आदेश इत्येवाऽऽरब्धव्यमित्याशङ्क्याथेत्यतःप्राक्तनसंदर्भतात्पर्यमाह । **प्राणा इति** । ते चेतनाः स्युरचेतना वा द्वितीये कारणात्मानो विकारा वा न तावच्चेतना अनात्मत्वान्नापि कारणात्मानो जन्मश्रुतेर्विकारत्वे वाचारम्भणत्वान्न सत्या इत्याकाङ्क्षाप्रकारानुवादार्थमितिशब्दः । एवंशब्दस्तत्स्वरूपपरामर्शी । आदिपदेन तत्सत्यत्वं गृह्यते । एतदशेषमाकाङ्क्षाध्वस्त्यर्थं यस्माद्वाच्यं तस्मात्प्राणस्वरूपादिनिरूपको द्वे वावेत्यादिग्रन्थोऽर्थवानित्यर्थः ॥ २ ॥

**पञ्चभूतसतत्त्वानां शरीरकरणात्मनाम् ॥**
**स्वरूपनिश्चयार्थाय प्रारब्धं ब्राह्मणं परम् ॥ ३ ॥**

ननु तेषां स्वरूपं सत्यत्वं वा नोच्यते भूतानामेव निरूपणादित्याशङ्क्याऽऽह । **पञ्चेति** । कार्यकरणरूपाणि सत्यशब्दानि भूतान्यतस्तदात्मनां प्राणानां निरूपणात्तत्स्वरूपादि वक्तुमुत्तरवाक्यमविरुद्धमित्यर्थः । ब्राह्मणशब्दस्तदेकदेशविषयः ॥ ३ ॥

**यदुपाधिनिषेधोक्त्या नेतीति ब्रह्मणः स्फुटम् ॥**
**आविश्चिकीर्षितं तत्त्वं तदेतदधुनोच्यते ॥ ४ ॥**

सत्यस्य सत्ये ब्रह्मणि वाच्ये किमिति यथोक्तप्राणनिरूपणमनुपयोगादित्याशङ्क्याऽऽह । **यदुपाधीति** । सत्यस्य सत्यमित्यत्र षष्ठ्यन्तं सत्यशब्दितं हेयं प्रथमान्तं सत्यशब्दितमादेयं तयोराद्यस्वरूपोक्त्यर्थमथेत्यस्मात्प्राक्तनं वाक्यं तदूर्ध्वमा ब्राह्मणसमाप्तेरादेयनिरूपणार्थमिति समुदायार्थः ॥ ४ ॥

**स्वतोऽरूपं परं ब्रह्म तदविद्यादिहेतुतः ॥**
**द्विरूपमिति निर्दिष्टं वियद्वत्कुम्भसंश्रयात् ॥ ५ ॥**

असङ्गं ब्रह्म न तस्योपाधियोगः कुतस्तन्निरासेन तदाविष्कर्तुमिष्टमित्याशङ्क्याऽऽह । **स्वत इति** । आदिशब्दस्तत्कार्यग्राही । निर्दिष्टं श्रुतिस्मृतिभ्यामिति शेषः । अरूपस्यैवोपाधिद्वारा रूपवत्त्वे दृष्टान्तः । **वियद्वदिति** ॥ ५ ॥

**रूपे वा ब्रह्मणो विद्यान्मूर्तामूर्ते सवासने ॥**
**ब्रह्मैव रूप्यते ताभ्यां ब्रह्मत्वं न हि रूपवत् ॥ ६ ॥**

सोपाधिकं निरुपाधिकमिति ब्रह्मणि द्वैविध्यं सिद्धवत्कृत्य सोपाधिकस्यैव ब्रह्मणो द्वैरूप्यमाह । **रूपे वेति** । वाशब्दश्चार्थः । वासनामयं तृतीयमपि रूपमाशङ्क्याऽऽह । **सवासने इति** । कथं तयोर्ब्रह्मरूपत्वं तदाह । **ब्रह्मैवेति** । रूप्यते ज्ञायते विशेषणेति यावत् । चैतन्यादिवत्तयोर्ब्रह्मरूपत्वमाशङ्क्य निरुपाधिकं ब्रह्म विवक्षित्वाऽऽह । **ब्रह्मत्वमिति** । स्वार्थो भावशब्दोऽरूपादिश्रुतेरित्यर्थः ॥ ६ ॥

**अविद्यामात्रोपाध्येतद्ब्रह्म कारणमुच्यते ॥**
**तदेव ज्ञातृतामेति बुद्ध्युपाधिसमाश्रयात् ॥ ७ ॥**

कारणत्वं नाम रूपान्तरं ब्रह्मणोऽस्ति तत्कुतो रूपद्वयमेवेत्याशङ्क्याऽऽह । **अविद्येति** । कार्यभूतमूर्ताद्यपेक्षत्वात्कारणत्वं न स्वतन्त्रं रूपमित्यर्थः । ज्ञातृत्वं रूपान्तरमिति चेन्नेत्याह । **तदेवेति** । बुद्धेरमूर्तान्तर्भावात्तन्निमित्तं ज्ञातृत्वं न रूपान्तरमित्यर्थः ॥ ७ ॥

**तद्वृत्त्युपाधिसंस्थं सत्तज्ज्ञानमिति भण्यते ॥**
**देवतेन्द्रियसंबन्धं तत्तत्तदभिधीयते ॥ ८ ॥**

प्रमाणं रूपान्तरमिति चेन्नेत्याह । **तद्वृत्तीति** । अधिष्ठातृदेवताऽधिष्ठेयेन्द्रियं वा रूपान्तरमित्याशङ्क्याऽऽह । **देवतेति** । तदेव ब्रह्माधिष्ठातृदेवतापन्नं देवतेत्युच्यते । तदेव चाधिष्ठेयेन्द्रियोपाधि तच्छब्दनिर्देश्यमित्यर्थः ॥ ८ ॥

---

१ क. °तद्रूपाय° ।

तथा देहादिसंबन्धं दुःखजात्यादिमद्भवेत् ॥
गोधनाद्यभिमान्येवं धनी गोमानितीर्यते ॥ ९ ॥

स्थूलः सूक्ष्मो वा देहो रूपान्तरमित्याशङ्क्याऽऽह । तथेति । गोमत्त्वादि रूपान्तरमिति चेन्नेत्याह । गोधनेति ॥ ९ ॥

अन्तर्यामी तथा साक्षी सर्वज्ञश्चेत्यविद्यया ॥
मिथ्याध्यासैश्च तत्कार्यैरममेयं प्रमीयते ॥ १० ॥

अन्तर्यामित्वादि रूपान्तरमिति चेन्नेत्याह । अन्तर्यामीति । विशेषाविशेषाभ्यां वा सविकल्पकनिर्विकल्पकाभ्यां वा तयोर्भेदोऽवस्त्वेव समस्तं यथोक्तं रूपमिति वक्तुमविद्ययेत्युक्तम् । ब्रह्मणो रूपान्तरं मेयं नामास्तीत्याशङ्क्याऽऽह । मिथ्येति । तच्छब्देनाविद्योच्यते । इत्थंभावे तृतीया ॥ १० ॥

एकं तावदिदं रूपं ब्रह्मणो मोहहेतुजम् ॥
प्रत्यङ्मात्रैकधीगम्यं रूपं वास्तवमात्मनः ॥ ११ ॥

सोपाधिकं रूपमुपसंहरति । एकमिति । तस्य हेयत्वं सूचयति । मोहेति । निरुपाधिकं रूपं व्यक्तीकर्तुमारभते । प्रत्यगिति । एकरसं प्रत्यग्वस्तु सत्तास्फूर्त्योरन्यानपेक्षं ज्ञप्तिमात्रं तेन स्फुरदात्मनो वास्तवं रूपमित्यर्थः ॥ ११ ॥

अव्यावृत्ताननुगतं द्वितीयासंभवादजम् ॥
न वाक्यपदयोरर्थो भेदसामान्यवर्जनात् ॥ १२ ॥

तस्य वास्तवत्वं निःसामान्यविशेषत्वेनाऽऽह । अव्यावृत्तेति । तत्र हेतुः । द्वितीयेति । किंच यज्जायते तदेवावास्तवं यथा शुक्तिरजतमिदं तु न जायते तद्वास्तवमित्याह । अजमिति । किंच यद्वाच्यं तन्मिथ्या यथा रजतादि न चेदमुच्यते तेन वास्तवमित्याह । नेत्यादिना । अवाच्यत्वे हेतुमाह । भेदेति ॥ १२ ॥

न प्रमाणान्तरैर्गम्यं पराग्घेत्वसमन्वयात् ॥
अनपेक्षितमात्रादि तदविद्यासमन्वयात् ॥ १३ ॥

किंच यज्ज्ञायते तदेव मिथ्येदं त्वज्ञेयत्वाद्वास्तवमित्याह । नेति । प्रत्यक्षाद्यगम्यत्वे शब्दादिराहित्यं हेतुमाह । परागिति । किंच यन्मात्राद्यपेक्षं तदेव मिथ्या यथा सर्पादि । इदं तु तदनपेक्षत्वाद्वास्तवमित्याह । अनपेक्षितेति । तत्र हेतुमाह । अविद्येति । न चैवं तस्याः स्वातन्त्र्यमसत्त्वं वा संबन्धग्रन्थे समाधानादिति भावः ॥ १३ ॥

आत्मप्रत्ययमैकात्म्यं द्वितीयस्त्वात्मनो भवेत् ॥
अनात्मप्रत्ययोऽतोऽहं स्वत एकोऽस्मि केवलः ॥ १४ ॥

१ क. प्रतीय ।

मात्राद्यनपेक्षत्वे कथं तद्धीरित्याशङ्क्य प्रत्यङ्मात्रैकधीगम्यमित्युक्तं स्वप्रकाशत्वं स्मारयति । **आत्मेति** । आत्मत्वं तत्र हेतुरिति वदन्ननात्मनोऽन्याधीनप्रकाशतया रूप्यवत्कल्पितत्वमाह । **द्वितीयस्त्विति** । तस्य कल्पितत्वे फलितमाह । **अत इति** । केवलो निष्प्रपञ्चो निरपेक्षश्चेति यावत् ॥ १४ ॥

**यन्निषेधमुखेनेदं नेति नेतीति भण्यते ॥**
**अविद्यामवधिं कृत्वा द्वे रूपे ब्रह्मणस्त्विमे ॥ १५ ॥**

संगतिमुक्त्वाऽक्षरव्याख्यार्थभूमिकामारचय्य द्वे वाव ब्रह्मणो रूपे इति पदानि योजयति । **यदिति** । इदमा प्रतिपाद्यब्रह्मोक्तिः । तद्रूपत्वे मूर्तामूर्तयोश्चैतन्यवदनिषेध्यत्वमाशङ्क्याऽऽह । **अविद्यामिति** । तद्दशायां तामेवावधीकृत्य ते भवतो न तु विद्यया तस्यामपनीतायां तयोरवसरोऽतोऽविद्याविद्यमानत्वान्निषेध्यतेत्यर्थः ॥ १५ ॥

**अवधारणाय वावेति द्वे एवेति विनिश्चितौ ॥**
**समुच्चिते सजातीयैरुत्तरैस्ते विशेषणैः ॥ १६ ॥**

निपातार्थमाह । **अवधारणायेति** । ब्रह्मणो रूपे द्वे एवेति निश्चिताविष्टायां तद्द्योतनार्थो निपात इत्यर्थः । ब्रह्मणो रूपद्वयमवधार्यते चेन्मर्त्यत्वादीनि वक्ष्यमाणविशेषणान्यवधारणविरोधादयुक्तानीत्याशङ्क्य मूर्तं चेत्यादेरर्थमाह । **समुच्चिते इति** । अन्तर्णीतोत्तरविशेषणे ते द्वे एवेत्यवधार्येते तत्र शेषविरोध इत्यर्थः ॥ १६ ॥

**वावशब्दं चशब्देन प्रत्याहृत्याभिधीयते ॥**
**मूर्तमेव च तद्रूपं ब्रह्मणोऽमूर्तमेव च ॥ १७ ॥**

नन्वमूर्तमेव चेति कथं भाष्यमेवकारस्यामूर्तं चेत्यत्राश्रुतेरत आह । **वावेति** । अमूर्तं चेत्यत्र चशब्देनामूर्तं प्रति वावशब्दमाकृष्यामूर्तमेव चेति भाष्येऽभिधीयते तस्यावधारणार्थत्वादित्यर्थः । मूर्तं चेत्यादिवाक्यार्थं निगमयति । **मूर्तमिति** । प्रस्तुतं ब्रह्मणो रूपं मूर्तमेवान्तर्भावितमर्त्यत्वादिविशेषणममूर्तमेव चापरं रूपमन्तर्भावितामृतत्वादिविशेषणं न तृतीयमस्ति रूपमित्यर्थः ॥ १७ ॥

**अविद्यावत्परं ब्रह्म मूर्तामूर्तादिलक्षणैः ॥**
**विशिष्यते न धर्माणां मिथः संगतिरिष्यते ॥ १८ ॥**

मूर्तामूर्तयोर्विशेष्यत्वं मर्त्यत्वामृतत्वादीनां विशेषणत्वं मूर्ताद्युद्दिश्य तेषामुपदेशादित्याशङ्क्याऽऽह । **अविद्यावदिति** । प्रधानानुयायित्वादितरेषां ब्रह्मणश्च तद्भावादित्यर्थः । परपक्षं निषेधति । **नेति** ॥ १८ ॥

**विशेष्यार्थैकतन्त्रत्वाद्धर्माणां न परस्परम् ॥**
**तथाऽनपेक्षतस्तेषां संगतिः स्यात्कदाचन ॥ १९ ॥**

तत्र हेतुः । **विशेष्येति** । न परस्परं संगतिरिनि संबन्धः । अरुणाधिकरणे तु प्रमा-

णवशाद्विशेषणानां पौष्ठिकी मिथः संगतिरङ्गीकृतेति भावः । इहापि तर्हि तादृशी संगतिरस्तु नेत्याह । **तथेति** । नञनुकर्षार्थस्तथाशब्दः ॥ १९ ॥

**विज्ञानपुरुषान्तस्य ब्रह्मणः परमात्मनः ॥**
**तमस्विनोऽथ द्वे रूपे तदन्याव्यतिरेकतः ॥ २० ॥**

तेषां मिथोविशेषणविशेष्यत्वाभावेऽपि तटस्थं ब्रह्म विशेष्यमित्याशङ्क्याऽऽह । **विज्ञानेति** । परस्य प्रतीचोऽज्ञस्यैव रूपे विशेषणे इत्यत्राथशब्दोक्तं हेतुमाह । **तदन्येति** । तस्मादात्मनोऽन्यत्वेनेष्टस्य परस्य तस्माद्वा ब्रह्मणोऽन्यत्वेनेष्टस्याऽऽत्मनस्ततो व्यतिरेकासंभवादैक्यश्रुतेरित्यर्थः ॥ २० ॥

**क्लृप्तसर्पादिभिर्यद्वदज्ञातायाः स्रजः सदा ॥**
**वास्तवोऽवास्तवो वा न व्यतिरेको न चान्वयः ॥ २१ ॥**
**तद्वन्न व्यतिरेकेण ब्रह्मणो द्वे स्वतः सदा ॥**
**नापि चाव्यतिरेकेण ते तु ब्रह्मैव निर्द्वयम् ॥ २२ ॥**

प्रत्यग्ब्रह्मणोऽस्तु विशेष्यत्वं रूपयोश्च विशेषणत्वं तथाऽपि रूपरूपित्वेन भेदादद्वैतहानिरित्याशङ्क्याऽऽह । **क्लृप्तेति** । कल्पितसर्पादिभिः सहाधिष्ठानस्य स्रजो न वास्तवो भेदोऽभेदो वा कल्पितस्याकल्पितधर्मत्वायोगान्न च ताववास्तवौ तवानिष्टत्वादतस्तेषामधिष्ठानमात्रत्वमेवान्वयव्यतिरेकभावासंभवात्तथा ब्रह्मणो न द्वे रूपे वस्तुतोऽतिरिक्ते रूपरूपित्वायोगान्नाप्यव्यतिरिक्ते दोषसाम्यादित्यर्थः । भासमानयोस्तर्हि का गती रूपयोरित्याशङ्क्याऽऽह । **ते त्विति** ॥ २१ ॥ २२ ॥

**अण्वाद्यवयवं मूर्तं पीनं संस्थानवद्दृढम् ॥**
**तद्विरुद्धममूर्तं स्यान्निरंशं देशवन्न च ॥ २३ ॥**

मूर्तं चेत्यादौ चकारावधारणयोरर्थोक्तिपूर्वकं तात्पर्यमुक्त्वा मूर्तशब्दार्थमाह । **अण्वादीति** । सावयवं मूर्तमित्युक्ते वायावतिव्याप्तिं शङ्कित्वा विशिनष्टि । **पीनमिति** । अमूर्तशब्दार्थमाह । **तद्विरुद्धमिति** । मूर्तविरुद्धत्वमेव स्फोरयति । **निरंशमिति** । निरवयवस्यावयविनो भागवद्भागवत्त्वमाशङ्क्याऽऽह । **देशवदिति** । सावयवत्वेऽपि वायोर्न पृथिव्यादिवत्तदभिव्यक्तत्वमिति भावः ॥ २३ ॥

**मर्त्यं मरणधर्मि स्याद्यद्विनश्वरलक्षणम् ॥**
**अमृतं तद्विरुद्धं च ध्रुवं यन्न विपद्यते ॥ २४ ॥**

मर्त्यशब्दार्थमाह । **मर्त्यमिति** । पृथिव्यादौ तदयोगमाशङ्क्याऽऽह । **यदिति** । अमृतशब्दार्थमाह । **अमृतमिति** । विरोधं साधयति । **ध्रुवमिति** ॥ २४ ॥

---

१ ख. पार्ष्णिकी । २ ख. तता ।

**आश्रितं स्थितमत्र स्याद्गत्वाऽव्याप्य च तिष्ठति ॥**
**तद्विरुद्धं तथा यत्स्यादेत्येव न तु तिष्ठति ॥ २५ ॥**

स्थितं चेत्यादि व्याकरोति । **आश्रितमिति** । अत्रेति वाक्योक्तिः । गतिपूर्वकमि-त्यादिभाष्यमनुसरति । **गत्वेति** । यदिति प्रकृतोक्तिं शङ्कित्वोक्तम् । **तद्विरुद्धमिति** । स्थिताविरुद्धत्वं साधयति । **एत्येवेति** ॥ २५ ॥

**सदिति व्यक्तरूपं यद्गृह्यमाणविशेषणम् ॥**
**प्रत्यक्षं तद्विरुद्धं त्यदप्रत्यक्षं तथोच्यते ॥ २६ ॥**

सच्छब्दस्य विद्यमानार्थत्वमाशङ्क्य व्याचष्टे । **सदितीति** । सतो विरोधमेव स्फोर-यति । **अप्रत्यक्षमिति** ॥ २६ ॥

**क्षितिर्जलं तथा वह्निरित्येतन्मूर्तमुच्यते ॥**
**भूतद्वयममूर्तं च वायुश्चाऽऽकाशमेव च ॥ २७ ॥**

प्रत्यग्ब्रह्माज्ञातं मूर्तादिधर्मैर्विशेष्यमित्युक्त्वा पदार्थान्व्याख्याय भूतत्रयं मूर्तादिधर्मैः साक्षाद्विशेष्यमित्याह । **क्षितिरिति** । मूर्तग्रहणं मर्त्यादेरुपलक्षणम् । भूतद्वयममूर्तादि-धर्मैः साक्षाद्विशेष्यमित्याह । **भूतेति** । अमूर्तग्रहणममृतादेरुपलक्षणम् ॥ २७ ॥

**मूर्तं मर्त्यं स्थितं सच्च क्षित्यबग्नित्रयं विदुः ॥**
**अमूर्तामृतयच्चत्यत्तु वाय्वाकाशद्वयं स्मृतम् ॥ २८ ॥**

क्षितिरित्यादि विभजते । **मूर्तमिति** । भूतद्वयमित्यादि स्फोरयति । **अमूर्तेति** ॥ २८ ॥

**मूर्तत्वादेव मर्त्यं तन्मर्त्यत्वादेव तत्स्थितम् ॥**
**स्थितत्वादिन्द्रियग्राह्यं निर्धार्येदंतया पृथक् ॥ २९ ॥**

मूर्तत्वादिविशेषणानामादितः समारभ्य हेतुहेतुमद्भावमाह । **मूर्तत्वादिति** ॥ २९ ॥

**सोपाख्यत्वान्न तद्व्यापि क्वचिदेकांशवत्स्थितेः ॥**
**स्थितत्वाच्चापि तन्मर्त्यं मर्त्यत्वान्मूर्तमेव च ॥ ३० ॥**

तेषामेवान्तादारभ्य तद्दर्शयति । **सोपाख्यत्वादिति** । ऐन्द्रियकधीविषयत्वादित्यर्थः । तथाऽपि कथमव्यापित्वं तत्राऽऽह । **क्वचिदिति** । इन्द्रिययोग्ये देशे परिच्छिन्नाकारेण स्थितेरिति यावत् । न च मूर्तत्वादेः सत्त्वेऽपि परमाण्वादौ मर्त्यत्वाभावाद्व्यभिचारस्तस्यै-वासंमतेरिति भावः ॥ ३० ॥

**अमूर्तत्वादमर्त्यं तद्यद्व्यापि त्यदतीन्द्रियम् ॥**
**अतीन्द्रियत्वात्तद्व्यापि व्यापित्वाच्चामृतं ततः ॥ ३१ ॥**

उक्तं न्यायममूर्तत्वादिषु योजयति । **अमूर्तत्वादिति** । यदित्यस्य व्याख्या

१ ख. °यत्त्यं तु वा° ।

व्यापीति। अमूर्तत्वादारभ्य हेतुहेतुमद्भावमुक्त्वा त्यदित्यस्मादुपक्रम्य तमाह। अतीन्द्रियत्वादिति ॥ ३१ ॥

**अस्थितत्वादमूर्तं तदाकारव्यक्तिवर्जितम् ॥**
**हेतुतत्फलरूपेण मूर्तादेः संगतिर्मिथः ॥ ३२ ॥**
**अक्षसूत्रवदन्योन्यं सामर्थ्यस्याप्रहाणतः ॥**
**हेतुतद्वत्तया ज्ञेयाऽमूर्तादेरपि संगतिः ॥ ३३ ॥**

स्थितत्वं परिच्छिन्नत्वेन नाशित्वं तद्राहित्यमस्थितत्वं तस्मादविनाशित्वादित्यर्थः। मूर्तत्वादीनां मिथो हेतुहेतुमत्त्वेन संबन्धं सदृष्टान्तमुपसंहरति। **हेत्विति**। तेषां तथात्वे योग्यत्वं हेतुमाह । **सामर्थ्यस्येति**। अमूर्तत्वादीनामपि मिथः संगतिं निगमयति। **हेत्विति** ॥ ३२ ॥ ३३ ॥

**संभवेऽन्यतमस्यापि सर्वेषां संभवो यतः ॥**
**अतोऽवधारणार्थाय तत्रैवग्रहणं कृतम् ॥ ३४ ॥**

अन्योन्यसंगतौ हेतुमाह । **संभव इति**। मूर्तादिष्वमूर्तादिषु चान्यतमस्य सत्त्वे परिशिष्टं त्रयमावश्यकमित्यत्र गमकमाह। **अत इति**। तत्र मूर्तं चेत्यादौ मूर्तमात्रममूर्तमात्रं चोक्त्वा कृतमवधारणार्थमेवकारस्य ग्रहणं तदुक्तविशेषणानामुक्तनीत्याऽन्यतमभावे तदितरत्रयसत्तेत्यर्थः ॥ ३४ ॥

**तयोरुद्दिष्टयोर्मूर्तं प्रथमं तावदुच्यते ॥**
**अन्यद्वाय्वन्तरिक्षाभ्यां भूतत्रयमिहोच्यते ॥ ३५ ॥**

तदेतन्मूर्तमित्यस्यार्थमाह। **तयोरिति**। किं तन्मूर्छितावयवं घनं संहतमित्याशङ्क्य यदन्यदित्यादेरर्थमाह। **अन्यदिति** ॥ ३५ ॥

**मूर्तं संस्थानवद्ध्येतत्तथा मर्त्यं विनाशवत् ॥**
**एतत्स्थितं परिच्छिन्नमेतत्सत्सर्वविशेषणम् ॥ ३६ ॥**

एतन्मर्त्यमित्यादेरर्थमाह। **मूर्तमिति**। प्रागेव तल्लक्षितमिति वक्तुं हिशब्दः ॥ ३६ ॥

**चतुर्विशेषणस्यास्य क्षित्यबग्न्यात्मकस्य हि ॥**
**चतुष्टयरसत्वार्थं पुनरुच्चारणं कृतम् ॥ ३७ ॥**

तस्यैतस्येत्यादेरर्थमाह । **चतुर्विशेषणस्येति** । विशेषणचतुष्टयवतो भूतत्रयस्य प्रागुक्तस्य पुनरुक्तिः किमिति कृतेत्युक्ते मण्डलस्य चतुर्विशेषणभूतत्रयकार्यत्वं नैकैककार्यतेति वक्तुं पुनरुक्तिरधिकोक्तेरधिकयोनित्वादित्यर्थः। भूतत्रयस्य चतुर्विशेषणत्वं प्रमाणसिद्धमिति हिशब्दार्थः ॥ ३७ ॥

१ क. ख. ग. °तस्या° ।

**सर्वव्यापी रसो ह्येष शश्वत्तपति यो रविः ॥**
**चतुष्टयान्वयादेष भूतत्रयरसः स्मृतः ॥ ३८ ॥**

य एष तपतीत्यस्यार्थमाह । **सर्वेति** । यः सर्वव्यापी यः सर्वोपनिषदधिगत एष रविर्भूत्वा विश्वं शश्वत्तपतीति योजना । तस्य भूतत्रयरसत्वे हेतुमाह । **चतुष्टयेति** । मूर्तं मर्त्यं स्थितं सदिति चतुष्टयम् ॥ ३८ ॥

**य एष तपतीत्यत्र मण्डलं परिगृह्यते ॥**
**चतुष्टयं हि मूर्तादि मण्डले गृह्यते यतः ॥ ३९ ॥**

एषशब्दस्य चेतनविषयत्वमाशङ्क्याऽऽह । **य इति** । मण्डलग्रहे हेतुमाह । **चतुष्टयं हीति** । हिशब्दोक्तहेत्वनुवादी यत इति ॥ ३९ ॥

**चतुर्णामन्वयो हीति हेतुनाऽत्र विभाव्यते ॥**
**सतश्च ग्रहणं विद्याच्चतुर्णामुपलक्षणम् ॥ ४० ॥**

सतो हीत्यत्र हिशब्दार्थमाह । **चतुर्णामिति** । अत्रेति वाक्यमण्डलयोरन्यतरत्वोक्तिः । चतुर्णामन्वयो हेत्वर्थश्चेत्कथं सतो हीतिविशेषग्रहस्तत्राऽऽह । **सतश्चेति** । चतुर्णां मध्ये त्रयाणामनुक्तानां मूर्तादीनामिति यावत् ॥ ४० ॥

**कृष्णसारं यथा स्थानं चक्षुषः करणात्मनः ॥**
**तथा हिरण्यगर्भस्य मण्डलं करणात्मनः ॥ ४१ ॥**

एषशब्देन भूतत्रयसारतया मण्डलग्रहे तदपि चेतनमेवेत्याशङ्क्याऽऽह । **कृष्णेति** । विमतं न चेतनं करणायतनत्वात्संमतवदिति भावः ॥ ४१ ॥

**उत्सर्गाद्रूपनिर्माणे प्राधान्यं तेजसो यतः ॥**
**तस्माद्रसत्वनिर्देशः क्रियते मण्डलात्मनि ॥ ४२ ॥**

भूतत्रयस्य कार्यतया रसश्चेन्मण्डलं तर्हि तेजोरसो निरवर्ततेतिश्रुतेस्तेजःशब्दपर्यायरसशब्दस्यैव कुतो मण्डले प्रयोगोऽबादिपदस्यापि किं न स्यादित्याशङ्क्याऽऽह । **उत्सर्गादिति** । रूपमात्रस्य तेजसस्तद्विशेषसर्गे प्राधान्यस्यौत्सर्गिकत्वात्तद्विशेषे मण्डले तेजोरूपरसत्वं श्रुत्योक्तमित्यर्थः ॥ ४२ ॥

**अप्क्लिन्नः पार्थिवो धातुस्तेजसा परिपच्यते ॥**
**अङ्कुराद्यभिनिष्पत्तौ मुख्यतैवं हि तेजसः ॥ ४३ ॥**

तेजसो रूपसर्गे प्राधान्यं साधयति । **अप्क्लिन्न इति** । अद्भिर्विक्लेदं मृदुत्वमापादितः शाल्यादिः पृथिवीस्वभावस्तेजसा पच्यमानोऽङ्कुराद्युत्पत्तौ पर्याप्तस्तेन तदुत्पत्तावव्यवधानेन पूर्वभावित्वात्तत्प्राधान्यमित्यर्थः ॥ ४३ ॥

---

१ क. ग. परो ।

सारस्त्रयाणां भूतानां रसो मण्डलमुच्यते ॥
एतत्साराणि हि त्रीणि भूतान्याहुर्विपश्चितः ॥ ४४ ॥

मण्डलस्य भूतत्रयसारत्वे मानान्तरं वक्तुं त्रयाणां हीत्यादिभाष्यार्थमाह । **सार इति** । तत्रैव पूर्वोक्तश्रुतिस्मृतिसंवादार्थो हिशब्दः । विद्वत्प्रसिद्धिमाह । **एतदिति** ॥ ४४ ॥

मण्डलायतने यत्तु कारणं संश्रितं[1] विभोः ॥
विराजो देवदेवस्य तदिदानीमिहोच्यते ॥ ४५ ॥

अथामूर्तमित्यादेर्गतेन तुल्यार्थत्वादव्याख्येयत्वं मत्वा य एष इत्याद्यवतारयति । **मण्डलेति** ॥ ४५ ॥

आदित्यान्तर्गतः साक्षात्करणात्माऽभिधीयते ॥
वाय्वाकाशरसत्वेन तत्रामूर्तान्वयो यतः ॥ ४६ ॥

त्यस्यैष रस इति पूर्वेण सह तद्व्याकरोति । **आदित्येति** । मण्डलस्थकरणात्मलिङ्गस्य भूतद्वयसारत्वे हेतुमाह । **तत्रेति** । अमूर्तग्रहणममृतादित्रयोपलक्षणम् ॥ ४६ ॥

कलिङ्गारम्भसिद्ध्यर्थं वाय्वाकाशसमुद्भवः ॥
ईश्वरात्कारणाद्यस्माल्लिङ्गं तेन रसस्तयोः ॥ ४७ ॥

तस्य भूतद्वयसारत्वे हेत्वन्तरमाह । **कलिङ्गेति** । कशब्दः सूत्रार्थस्तदेव लिङ्गं तदारम्भार्थमिति यावत् । तयोर्वाय्वाकाशयोर्भूतत्रयोपसर्जनयोः स्वयंप्रधानयोरित्यर्थः ॥ ४७ ॥

वाय्वाकाशरसो ह्येष इति हेतुः प्रदर्श्यते ॥
त्यस्य ह्येष रस इति यथोक्तो मण्डलात्मनि ॥ ४८ ॥

त्यस्य हीत्यादिहेतुवाक्यार्थमाह । **वाय्वाकाशेति** । एष लिङ्गात्मा रसो भूतद्वयस्येत्यत्र त्यस्य हीत्यादिना हेतुरुच्यते । यथा मण्डलस्य त्रयसारत्वे सतो हीति चतुर्णामन्वयो हेतुरुक्तः सतश्चानुक्तोपलक्षणार्थं ग्रहणं तथाऽत्रापि चतुष्टयान्वयो हेत्वर्थस्त्यस्य च ग्रहणमनुक्तोपलक्षणार्थमित्यर्थः । उक्तहेत्वर्थद्योतकः श्रुतौ हिशब्दो हीत्यनुकृष्यते ॥ ४८ ॥

हिरण्यगर्भक्षेत्रज्ञं रसं केचित्प्रचक्षते ॥
कारणं रसशब्देन यस्मादत्राभिधीयते ॥ ४९ ॥

स्वमतमुक्त्वा भर्तृप्रपञ्चमतमाह । **हिरण्यगर्भेति** । तत्र हेतुः । **कारणमिति** । त्यस्य हीत्यादौ रसशब्देन भूतद्वयकारणमुक्तं न च तच्चेतनादन्यन्न च जीवस्तथाऽसामर्थ्यान्नापि परः कौटस्थ्यात्तस्माच्चेतनः सूत्रक्षेत्रज्ञोऽत्र रस इत्यर्थः ॥ ४९ ॥

यस्माद्धिरण्यगर्भस्य कर्म वाय्वन्तरिक्षयोः ॥
प्रयोक्तव्यक्तयोस्तस्माद्रसः क्षेत्रज्ञ उच्यते ॥ ५० ॥

---

१ ग. र्माश्रित । २ क. ग. °योक्तृव्य° ।

सोऽपि कथं भूतद्वयकारणमत आह । **यस्मादिति** ॥ ५० ॥

**भूतद्वयरसो ज्ञेयो मण्डले चेतनः पुमान् ॥**
**त्यस्य ह्येष रस इति तत्सिद्धौ कारणाभिधा ॥ ५१ ॥**

स स्वकर्मद्वारा कारणमस्थूलस्य वाय्वादेरित्युक्तं समर्थयितुं तस्यैतस्यामूर्तस्येत्यादि-वाक्यार्थं संक्षिप्याऽऽह । **भूतेति** । हेतुवाक्यमादत्ते । **त्यस्येति** । तस्यार्थं संक्षिपति । **तत्सिद्धाविति** । मण्डलपुरुषस्य भूतद्वयकारणत्वप्रतिपत्ताविति यावत् ॥ ५१ ॥

**न्यायोक्तेरेव संसिद्धेः प्रतिज्ञातस्य वस्तुनः ॥**
**क्षेत्रज्ञः कारणं कस्मादित्यत्र न्याय उच्यते ॥ ५२ ॥**

श्रौतेऽर्थे किं हेतुनेत्याशङ्क्याऽऽह । **न्यायेति** ॥ ५२ ॥

**एतस्मिन्मण्डले योऽन्तर्विज्ञानात्मत्वमागतः ॥**
**अविद्याभावनाकर्महेतुतो नान्यकारणात् ॥ ५३ ॥**

न्यायमेव दर्शयन्यो ह्येतस्मिन्मण्डले विज्ञानात्मेति भर्तृप्रपञ्चभाष्यार्थमाह । **एतस्मि-न्निति** । एष खल्वविद्याकर्मपूर्वप्रज्ञापरिष्कृतो विज्ञानात्मत्वमापद्यत इत्येतद्व्याकुर्वञ्जी-वत्वप्रापकमाह । **अविद्येति** ॥ ५३ ॥

**तस्य यत्कर्मरूपं तद्वियद्वायुप्रयोजकम् ॥**
**खत्थस्य कर्मणस्तस्य मरुत्प्रस्पन्दरूपिणः ॥ ५४ ॥**
**वाय्वाकाशमनाड्यैवं तेजसः संभवस्ततः ॥**
**जज्ञाते तेजसो भूते जलं च पृथिवी तथा ॥ ५५ ॥**

सूत्रक्षेत्रज्ञस्य भूतद्वयकारणत्वं ब्रुवाणस्तदेव तत्कर्मरूपं विज्ञानात्मनस्तद्वाय्वन्तरिक्ष-प्रयोक्तृ भवतीत्यस्यार्थमाह । **तस्येति** । तद्देहस्य पञ्चभूतात्मकत्वाद्भूतद्वयोत्पत्तावपीतर-भूतोत्पत्तिं विना न तस्य भोग इत्याशङ्क्यान्तरिक्षाधारस्य वायुपरिस्पन्दस्य कर्मणो वाय्वन्तरिक्षद्वारेणैव तेजसः संभव इत्यस्यार्थमाह । **खस्थस्येति** । तदाकाशमुत्पाद्य तद्रूपेण स्थितं तस्य मरुत्कार्यं तेन स्पन्दात्मना स्थितस्य द्वयद्वारा तेज एवं कर्मणस्त-योस्तेजसश्च जन्मेत्यर्थः । तैजसे इतरे भूते इत्यस्यार्थमाह । **जज्ञाते इति** ॥ ५४ ॥ ५५ ॥

**कर्मणा पौरुषेणैवं रसभूतेन संभवः ॥**
**वाय्वन्तरिक्षयोर्यस्माद्रसस्तेन पुमांस्तयोः ॥ ५६ ॥**

तद्यस्मात्पौरुषेण कर्मणा रसभूतेनाऽऽविष्टयोर्वाय्वन्तरिक्षयोः प्रवृत्तिरित्येतद्व्याकुर्व-न्फलितमाह । **कर्मणेति** ॥ ५६ ॥

**मेधया तपसेत्यादि तथाच प्रागुदाहृतम् ॥**
**न्यायेनानेन पुरुषो रसशब्देन भण्यते ॥ ५७ ॥**

मेधया तपसाऽजनयत्पितेति ह्युक्तमित्यस्यार्थमाह । **मेधयेति** । नैयायिकमर्थं निगमयति । **न्यायेनेति** ॥ ५७ ॥

**त्यस्य ह्येष इति ह्युक्त्या न्यायः श्रुत्याऽयमुच्यते ॥**
**नैतदेवं भवेन्मूर्तरसेनास्यासमत्वतः ॥ ५८ ॥**

श्रौतीं न्यायोक्तिमुपसंहरति । **त्यस्येति** । श्रुतेरुक्तन्यायसाधनसामर्थ्यद्योतनार्थो हिशब्दः । निराकरोति । **नैतदिति** ॥ ५८ ॥

**भूतत्रयस्य मूर्तस्य रसो मण्डलमभ्यधाः ॥**
**धर्मैश्चतुर्भिर्मूर्ताद्यैर्भूतत्रयवदन्वितम् ॥ ५९ ॥**

कथं मूर्तरसेन सह यथोक्तामूर्तरमस्यातुल्यतेत्याशङ्क्य मूर्तरसं दर्शयति । **भूतेति** । तस्य रमवता साजात्यमाह । **धर्मैरिति** । तस्य तद्वता साजात्यवदमूर्तरसस्य चेतनत्वेन तद्वता न साजात्यं तथाच तस्य मूर्तरसेनातुल्यतेति भावः ॥ ५९ ॥

**अमूर्तयोरपि रसो लिङ्गात्मा गृह्यतां तथा ॥ ६० ॥**
**वाक्यप्रवृत्तेस्तुल्यत्वान्न युक्तोऽत्रान्यथा ग्रहः ॥**
**वैरूप्यलक्षणो दोषः सत्येवं वः प्रसज्यते ॥ ६१ ॥**

तत्समाधिस्तर्हि कथमित्याशङ्क्याऽऽह । **अमूर्तयोरिति** । यथा मूर्तानामचेतनं मण्डलं तथाऽमूर्तयोरप्यचेतनमन्तःकरणं रसस्तथा च तुल्यतेत्यर्थः । अथ रसयोरसमत्वमेवास्तु किं समत्वेनेत्याशङ्क्याऽऽह । **वाक्येति** । अत्र रसयोरिति यावत् । अन्यथेत्यतुल्यत्वोक्तिः । विपक्षे दोषमाह । **वैरूप्येति** ॥ ६० ॥ ६१ ॥

**अथ मूर्तरसोक्त्याऽपि चेतनस्यैव चेद्ग्रहः ॥**
**अत्यल्पं भवताऽभाणि सर्वमात्मैव नो यतः ॥ ६२ ॥**

मूर्तामूर्तरसयोश्चेतनाचेतनभेदे वाक्यवैरूप्यमुक्तं समाधित्सुः शङ्कते । **अथेति** । अमूर्तरसवन्मूर्तरसशब्देनापि चेतनस्यैव ब्रह्मणो मण्डलापन्नस्य ग्रहणमित्येतद्दूषयति । **अत्यल्पमिति** । मण्डलस्य चेतनकार्यतया चेतनत्वे सर्वस्य तत्कार्यतया तन्मात्रत्वाद्रमयोश्चेतनतेति विशेषणानर्थक्यमित्यर्थः ॥ ६२ ॥

**न ह्यात्मव्यतिरेकेण किंचित्कारणमिष्यते ॥**
**तेन तेन स्वरूपेण प्रत्यगात्मैव कारणम् ॥ ६३ ॥**

यत्तु मूत्रक्षेत्रज्ञस्य स्वकर्मद्वारा कारणतेति तत्राऽऽह । **न हीति** । परस्यैवाज्ञातस्य कारणताया वैदिकत्वादित्यर्थः । आकाशाद्वायुरित्यादावाकाशादेरपि कारणत्वं श्रुतमित्याशङ्क्याऽऽह । **तेनेति** ॥ ६३ ॥

---

१ ग. °भ्यधात् ॥ ध° ।

**मण्डलात्मनि चाऽऽधारे लिङ्गात्मैवावसीयताम् ॥**
**करणस्यैव तत्स्थत्वाद्विज्ञानात्मा हि लिङ्गगः ॥ ६४ ॥**

यत्तु पुरुषो मण्डलाधारो विज्ञानात्मेति तत्राऽऽह । **मण्डलेति** । तत्र हेतुः । **करणस्येति** । यथा गोलकात्मनि चक्षुषि करणात्मैव तिष्ठति तथाऽऽदित्यमण्डलेऽपि तस्यैव स्थितेरित्यर्थः । तत्क्षेत्रज्ञस्तर्हि कुत्रास्ति तत्राऽऽह । **विज्ञानेति** । मण्डलस्य लिङ्गोपाधित्ववत्तस्यापि विज्ञानात्मोपाधित्वं प्रामाणिकमिति वक्तुं हिशब्दः ॥ ६४ ॥

**अज्ञातः पुरुषो यस्मात्कार्यकारणशब्दभाक् ॥**
**अज्ञातमिथ्याविज्ञानरूपत्वान्न तु तत्त्वतः ॥ ६५ ॥**

परस्यैव कारणत्वं वदता जीवस्य तन्निरस्तं तस्य लिङ्गोपाधिं विना मण्डलाधारत्वं निराकृतम् । इदानीं तस्यापि कौटस्थ्यान्न कारणतेत्याशङ्क्याऽऽह । **अज्ञात इति** । अज्ञातरूपत्वं कारणशब्दभाक्त्वे मिथ्याविज्ञानरूपत्वं च कार्यशब्दभाक्त्वे हेतुरिति भेदः । तस्मात्परस्मिन्कार्यादिभावस्याऽऽरोपान्न कौटस्थ्यादिदौस्थ्यमिति शेषः ॥ ६५ ॥

**अचेतनेषु लोकेऽस्मिन्न दृष्टा पुरुषाभिधा ॥**
**इति चेन्नैतदेवं स्यादचित्केष्वपि दर्शनात् ॥ ६६ ॥**

मण्डलाधारश्चेतनो नेत्यत्र पुरुषश्रुतिविरोधं शङ्कते । **अचेतनेष्विति** । विरोधाभावं प्रतिजानीते । **नैतदिति** । अचेतनेष्वपि पुरुषशब्ददृष्टेरदृष्टिरसिद्धेत्याह । **अचित्केष्विति** ॥ ६६ ॥

**त एतान्सप्त पुरुषानित्यादिश्रुतिवाक्यतः ॥**
**असंवित्केऽपि पक्षादौ दृश्यते पुरुषाभिधा ॥ ६७ ॥**

तदेव व्याकरोति । **त एतानिति** । ते प्राणा न शक्ता विभक्ता व्यवहारं जनयितुमिति कृतालोचनास्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणवाङ्मनोरूपानेतान्पुरुषानेकं लिङ्गात्मकं पुरुषमकुर्वन्नित्यादिवाक्यादचेतनेष्वपि तच्छब्दो दृष्ट इत्यर्थः । स वा एष पुरुषोऽन्नरसमय इत्यादिश्रुतिरप्यत्र मानमित्याह । **असंवित्केऽपीति** । पक्षादौ तदवयवभाक्षु कोशेष्विति यावत् ॥ ६७ ॥

**अध्यात्मोक्त्यवधिज्ञप्त्या अधिदैवतकीर्तनम् ॥**
**मूर्तामूर्तविभागोऽयमध्यात्ममधुनोच्यते ॥ ६८ ॥**

परकीयं व्याख्यानं प्रत्याख्यायेदानीमित्यधिदैवतमित्यस्य तात्पर्यमाह । **अध्यात्मेति** । तस्य कीर्तनमुपसंहारः । अथाध्यात्ममित्यस्यार्थमाह । **मूर्तेति** ॥ ६८ ॥

**भूतत्रयं पृथिव्यादि देहेऽपि परिगृह्यते ॥**
**मूर्तशब्देन यत्प्राणाद्व्योम्नश्चापरं च यत् ॥ ६९ ॥**

---

१ क. लिङ्गमः ।

इदमेवेत्यादि व्याचष्टे । **भूतेति** । यदन्यादित्यादेरर्थमाह । **यदिति** । त्वदित्युपलक्षणं शारीराकाशस्य विवक्षितत्वात् । एकश्चकारोऽवधारणे यदाध्यात्मिकाद्वायोराकाशाच्चान्यदेव तदाध्यात्मिकं भूतत्रयं मूर्तमित्यर्थः ॥ ६९ ॥

**चक्षू रसस्त्रयाणां स्याद्विशेषेणात्र निष्ठितम् ॥**
**तेजः सर्वशरीरस्य निर्मातृ स्यादसंशयः ॥ ७० ॥**

एतन्मर्त्यमित्यादेर्गतार्थत्वादेतस्य सत इत्यादेरर्थमाह । **चक्षुरिति** । सतो हीत्यादेस्तात्पर्यमाचक्षाणश्चक्षुषो रसत्वं साधयति । **विशेषेणेति** । शरीरमात्रस्याविशेषेण निष्पादकं तत्र सर्वत्र संनिहितमपि तेजो विशेषतश्चक्षुषि स्थितमित्यप्रतिबन्धेनाधिगतम् **'आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्'** इतिश्रुतेरतस्तेजःशब्दपर्यायरसशब्दस्य चक्षुषि प्रवृत्तिरिति भावः ॥ ७० ॥

**प्रथमा संस्कृतिरिति मन्त्रवर्णोऽपि दृश्यते ॥**
**शश्वद्वै रेतस इति तथाच श्रुतिशासनम् ॥ ७१ ॥**

तत्र प्रमाणमाह । **प्रथमेति** । **सा** प्रथमा संस्कृतिर्विश्ववारा स प्रथमो वरुणो मित्रोऽग्निरिति **मन्त्रो** देहावयवप्रधानभूतां प्रथमप्रवृत्तां दृष्टिं रसशब्दयोग्यामाहेत्यर्थः । शश्वद्वै रेतसः सिक्तस्य चक्षुषी एव प्रथमे संभवत इति ब्राह्मणमपि मन्त्रानुसारेण चक्षुषो रसत्वे मानमित्याह । **शश्वदिति** ॥ ७१ ॥

**मूर्तामूर्तविभागोऽयं यदि नामेह भण्यते ॥**
**अधिदैवं तथाऽध्यात्मं तथाऽपीयान्न गृह्यते ॥ ७२ ॥**

श्रुत्यनुसारेण विभागमुक्त्वा भर्तृप्रपञ्चमतमादेयमाह । **मूर्तेति** । इहेति श्रुत्युक्तिः । इयानुक्तमात्ररूप इति यावत् ॥ ७२ ॥

**कृत्स्नस्य ब्रह्मणो रूपे मूर्तामूर्ते विवक्षिते ॥**
**यतोऽतो नयता[1] कार्त्स्न्यं देवताध्यात्मयोर्भवेत् ॥ ७३ ॥**

श्रौतविभागानङ्गीकारे हेतुमाह । **कृत्स्नस्येति** । ब्रह्मणोऽद्वयस्य तत्त्वं निश्चेतुं मूर्तामूर्ते रूपे श्रुत्या कल्पिते तदद्वयं चाधिदैवाध्यात्मनोरुक्तविभागमात्रेण यतो न निश्चितं भवन्मूलकारणस्यासंगृहीतत्वात्तन्नायं विभागो गृह्यते श्रौतोऽपीत्यर्थः ॥ ७३ ॥

**आरब्धकार्यभूतानां गृहीतो न च संभवः ॥**
**यथोक्तलक्षणस्येह मुख्यवृत्त्योक्तभूमिषु ॥ ७४ ॥**

तदग्रहे हेत्वन्तरमाह । **आरब्धेति** । अव्याकृतोत्थानि कार्यभावेन स्थितानि भूतानि तेषामुक्तभूमिष्वध्यात्माधिदैवप्रकारासु मूर्तामूर्तशब्दाभ्यां विभागेन गृहीतावुक्तलक्षणस्येह भूतपञ्चके मुख्यवृत्त्या न संभवोऽतः श्रौतोऽपि विभागो नेष्ट इत्यर्थः ॥ ७४ ॥

---

१ क. नयतः ।

व्याप्त्यैव लक्षणं युक्तमन्यथा तदलक्षणम् ॥
निर्देशस्तु परिच्छिन्नविषयोऽत्राभिधीयते ॥ ७५ ॥

मूर्तामूर्तलक्षणस्य मुख्यवृत्त्या भूतपञ्चकेऽयोगेऽपि तदेव तच्छब्दाभ्यामुपेयं श्रुतत्यागायोगादित्याशङ्क्याऽऽह । **व्यापीति** । लक्षणस्य लक्ष्याव्यापित्वे दोषमाह । **अन्यथेति** । अस्तु तर्हि तस्य लक्ष्यव्यापितेत्याशङ्क्य मूर्तलक्षणस्य पृथिवीमात्रव्यापित्वादमूर्तलक्षणस्य चाव्याकृतमात्रविषयत्वान्नैवमित्याह । **निर्देशस्त्विति** ॥ ७५ ॥

तत्रैवं सति यत्र स्यान्मूर्ताद्युक्तं चतुष्टयम् ॥
लक्षणं तत्र संपूर्णमन्त्यकारणकार्ययोः ॥ ७६ ॥

श्रौतविभागानुपगमश्चेत्किं तर्हि युक्तं तत्राऽऽह । **तत्रेति** । श्रौते विभागे पूर्वन्यायेनायुक्ते सति यत्रान्त्ये कार्ये मूर्तमर्त्यादि चतुष्टयं यत्र चाप्यंयक्रमेणान्त्ये कारणे चतुष्टयामूर्तामृतादि तत्रोभयत्र लक्षणं पूर्णमिति यथायोगं लक्ष्यव्यवहारसिद्धिरित्यर्थः ॥ ७६ ॥

आकाशशब्दवाच्यो यः सर्वकारणकारणः ॥
मुख्यवृत्त्या समर्थं स्यात्तत्रैवामूर्तलक्षणम् ॥ ७७ ॥

अमूर्तलक्षणविषयमाह । **आकाशेति** । अव्याकृतमाकाशशब्दार्थः । सर्वस्य कारणं ब्रह्म तदेव कारणं सत्तास्फूर्तिदं यस्याव्याकृताख्यस्य भावस्येति विग्रहः । तत्र निरवयवत्वमकार्यत्वादमृतत्वं सर्वकार्यव्यापित्वं परोक्षत्वं चास्तीत्यमूर्तलक्षणस्य मुख्यतेत्यर्थः ॥ ७७ ॥

पृथिव्यां चापि तन्मुख्यं यदुक्तं मूर्तलक्षणम् ॥
उभयोरन्तरालस्था मिथःसंकीर्णलक्षणाः ॥ ७८ ॥
लक्षणं गौणमेव स्यादन्त्ययोर्मध्यभूमिषु ॥
मूर्तामूर्तव्यवहृतिस्तथा तत्रापि दृश्यते ॥ ७९ ॥

मूर्तलक्षणविषयमाह । **पृथिव्यां चेति** । मध्यवर्तिषु चतुर्षु का गतिस्तत्राऽऽह । **उभयोरिति** । कार्यकारणयोरन्त्ययोर्मध्यस्था जलादयोऽन्योन्यं यतः संकीर्णमूर्तामूर्तलक्षणा अतस्तेषु लक्षणद्वयं गौणमेवेति योजना । मध्यस्थेषूभयव्यवहाराभावे तस्य कुतो गौणतेत्याशङ्क्याऽऽह । **मूर्तेति** । तथाऽन्त्यकार्यकारणयोरिवेत्यर्थः । तत्रापि मध्यस्थेष्वपीति यावत् ॥ ७८ ॥ ७९ ॥

मुख्यवृत्तिग्रहायातो व्यापिलक्षणसिद्धये ॥
क्षित्यादिवियदन्तं स्यान्मूर्तामूर्तस्य लक्षणम् ॥ ८० ॥

भर्तृप्रपञ्चमतमुपसंहरति । **मुख्येति** । यथाश्रुतार्थस्यायुक्तत्वमतःशब्दार्थः । मूर्तादिलक्षणस्य मुख्यवृत्तिग्रहार्थं लक्ष्यव्यापित्वार्थं च पृथिव्यामेव मूर्तलक्षणस्य पूर्णत्वात्तन्मात्रं

१ क. °प्यपक्र° ।

मूर्तं वियति मूलकारणे चामूर्तलक्षणं व्यापीति तन्मात्रममूर्तमान्तरालिकेषु क्वचित्किंचिल्लक्षणमस्तीत्युभयथात्वमित्यर्थः ॥ ८० ॥

**योऽयं दक्षिणेऽक्षन्निति शास्त्रदृष्टत्वकारणात् ॥**
**दक्षिणेऽक्षणि लिङ्गस्य विशेषः कश्चिदिष्यते ॥ ८१ ॥**

आदेयं[1] परमतमुक्त्वाऽथामूर्तमित्यादेर्गतार्थत्वं मन्वानो योऽयं दक्षिणेऽक्षन्नितिविशेषोक्तेस्तात्पर्यमाह । **योऽयमिति** । शास्त्रस्य दृष्टत्वात्तेन वा दक्षिणेऽक्षिण विशेषस्य दृष्टत्वादिति हेत्वर्थः ॥ ८१ ॥

**वीर्यवद्दक्षिणं लोकेऽप्यङ्गं दृष्टं यतस्ततः ॥**
**दक्षिणेऽक्षन्निति वचः श्रुतेर्यत्नादिहेष्यते ॥ ८२ ॥**

न केवलं शास्त्रादेव तत्र विशेषः किंतु विमतमतिशयवद्दक्षिणाङ्गत्वाद्दक्षिणहस्तवदित्यनुमानाच्चेत्याह । **वीर्यवदिति** । ततःशब्देनेहशब्दस्य संबन्धः । तेन दक्षिणमक्षि निर्दिश्यते । इष्यते वीर्यवत्त्वमिति शेषः । अतः श्रुतेर्वचश्चक्षुरन्तरमपेक्ष्य दक्षिणे चक्षुष्यादरात्प्रवृत्तमित्याह । **दक्षिण इति** ॥ ८२ ॥

**पिण्डप्राणविभागेन ह्यध्यात्मे चाधिदैवते ॥**
**मूर्तामूर्तात्मनोरुक्तो विभागो ब्रह्मरूपयोः ॥ ८३ ॥**

तस्य हेत्यादेः संबन्धाभिधित्सया वृत्तमनुवदति । **पिण्डेति** । कार्यकारणरूपेणेति यावत् । अवान्तरोपाधिबहुत्वेऽपि परमेश्वरोपाधी द्वावेव प्रसिद्धाविति हिशब्दार्थः । विभागो विशेषः ॥ ८३ ॥

**अथाधुना यथोक्तस्य तस्यैव करणात्मनः ॥**
**लिङ्गस्य रूपं वक्ष्यामो वासनामयमात्मनः ॥ ८४ ॥**

संगतिमाह । **अथेति** । यथोक्तस्य पूर्वोक्तविभागयुक्तस्येति यावत् । आत्मनः स्वरूपत्वेनाऽऽरोपितस्य लिङ्गस्येति शेषः । अमूर्तरसभूतान्तःकरणस्यैव रागादिवासनेति वक्तुं तस्य हेत्यादिवाक्यमित्यर्थः ॥ ८४ ॥

**मूर्तामूर्तादिसंबन्धाद्वासना लिङ्गमाश्रिताः ॥**
**स्वाभासभ्रमदोषेण तन्मयः पुरुषो मतः ॥ ८५ ॥**

तस्यैव तदाश्रयत्वे हेतुमाह । **मूर्तेति** । अन्तःकरणस्यैव मूर्तादिसर्वविषयसंबन्धात्तन्निमित्ता रागादिवासनास्तदेवाऽऽश्रित्य प्रसरन्तीत्यर्थः । कथं तर्हि पुरुषो रागादिमयो दृश्यते तत्राऽऽह । **स्वाभासेति** । स्वस्याऽऽभासो यस्मिन्नित्यज्ञानं तथा तत्कृतो रागीत्यादिभ्रमस्तेन[2] दोषेण पुरुषो रागादिमयो भवतीत्यर्थः ॥ ८५ ॥

१ ख. °देयप° । २ ख. च ।

**अनेकवासनाचित्रं तल्लिङ्गं पटभित्तिवत् ॥**
**मायेन्द्रजालसदृशं व्यामोहास्पदमात्मनः ॥ ८६ ॥**

ननु चेतसो वासनामयत्वमारोपितमनारोपितं वा नाऽऽद्यः पुंसोऽपि तद्भावात्तच्छब्देन परामर्शप्रसङ्गान्नेतरो धर्मिणोऽपि तस्यानारोपितरूपत्वापत्तेरत आह । **अनेकेति** । स्वाभासेत्यादौ वासनासंबन्धमुक्तमात्मनो व्यक्तीकर्तुं विशिनष्टि । **व्यामोहेति** ॥ ८६ ॥

**एतावन्मात्रमेवेति यत्र भ्रान्ता निरागमाः ॥**
**विज्ञानवादिनो बौद्धास्तथा नैयायिकादयः ॥ ८७ ॥**

आत्मनो भ्रान्तेरास्पदं लिङ्गमित्येतदेव व्यक्तीकुर्वन्विज्ञानवादिभ्रान्तिमाह । **एतावन्मात्रमिति** । बुद्धिमात्रमेवाहंवृत्तिविशिष्टं स्वरसभङ्गुरं रागादिकलुषितमात्मा नान्यः स्थायी क्षणिको वेति यत्र ते भ्रान्तास्तस्य रूपं वक्ष्याम इति संबन्धः । तेषामीदृग्भ्रान्तौ हेतुमाह । **निरागमा इति** । तार्किकाणामपि बौद्धवद्भ्रान्तिमाह । **तथेति** ॥ ८७ ॥

**आत्मनो द्रव्यभूतस्य यदेतद्वासनात्मकम् ॥**
**रूपं गुणोऽस्य संसार इति वैशेषिकादयः ॥ ८८ ॥**

तदीयभ्रान्तिं प्रकटयति । **आत्मन इति** । अन्तःकरणमहंधीग्राह्यं रागादिधर्मकमात्मा तस्य द्रव्यस्य तद्वासनामयं रूपं गुणः स च संसार इति यत्र ते भ्रान्तास्तस्य रूपं वक्ष्याम इति पूर्ववदन्वयः ॥ ८८ ॥

**त्रिगुणं सत्प्रधानस्थं पुरुषार्थेन हेतुना ॥**
**प्रवर्तते स्वतन्त्रं सदिदमित्यपि कापिलाः ॥ ८९ ॥**

सांख्यानां भ्रान्तिमाह । **त्रिगुणमिति** । नान्तःकरणमेवाऽऽत्मा किंत्वन्यः सर्वगतः सर्वक्रियाशून्यः स्वप्रकाशस्तस्य भोगापवर्गानुगुण्येन हेतुना त्रिगुणं प्रधानमिष्टं तदात्मनेव स्थितमन्तःकरणं तत्सधर्मकं प्रवर्तत इति यत्र ते भ्रान्तास्तस्य रूपं वक्ष्याम इत्येव संबन्धः ॥ ८९ ॥

**अप्यौपनिषदंमन्याः केचिदत्यन्तनैपुणात् ॥**
**प्रक्रियां रचयित्वाऽऽहुर्वेदान्तार्थाविपश्चितः ॥ ९० ॥**

यत्र विचित्रा विपश्चितां भ्रान्तिस्तदन्तःकरणं तस्य हेत्यत्रोच्यते नाऽऽत्मेति स्वमतमुक्त्वा भर्तृप्रपञ्चप्रक्रियामवतारयति । **अपीत्यादिना** । वेदान्ततात्पर्यगम्येऽर्थे ज्ञानहीनत्वादौपनिषदा न भवन्त्यथ चाऽऽत्मानमौपनिषदंमन्याः स्वोत्प्रेक्षावशादेव मानयुक्तिहीनां कामपि प्रक्रियामारचय्य तस्य हेत्यादेः संगतिमाहुरिति योजना ॥ ९० ॥

**यावान्बाह्यो विकारः स्यात्क्षेत्रज्ञपरिवेष्टनः ॥**
**अध्यात्मं चाधिदैवं वा नामरूपविभागतः ॥ ९१ ॥**

---

१ ख. °तत्वा° । २ क. ख. ग. °त्र एवे° । ३ ख यद्वेत° ।

**अव्याकृताद्व्याकृतः स्यादेतावानेव सोऽत्र तु ॥**
**मूर्तो वा यदि वाऽमूर्तः सच्च त्यच्चेति भण्यते ॥ ९२ ॥**

कीदृशी प्रक्रिया कथं वा संगतिरित्याशङ्क्य प्रक्रियाया वक्ष्यमाणत्वं विवक्षित्वा संगत्यर्थं यावान्बाह्यो विकारो विज्ञानात्मपरिवेष्टनोऽध्यात्मं वाऽधिदैवं वा नामरूपविभागेन व्याकृतः सर्वोऽप्येष मूर्तो वा भवत्वमूर्तो वा सच्च त्यच्चेतितदीयवृत्तानुवादभाष्यार्थमाह । **यावानित्यादिना** । जीवोपाधित्वेन यावत्कार्यमव्याकृताज्जातं तत्सर्वमेतावदेव यदत्र पूर्वग्रन्थे सत्यशब्दितं पञ्चभूतात्मकं मूर्तामूर्तमिति व्याख्यातमित्यर्थः ॥ ९१ ॥ ९२ ॥

**प्राणानामपि सत्यत्वं भूतसत्याभिसंगतेः ॥**
**कथं यतस्त्वमी सर्वे प्राणाः क्षेत्रज्ञलक्षणाः ॥ ९३ ॥**
**अनामरूपकाः सन्तः सत्यसंयोगहेतुतः ॥**
**देहिनः प्राणवत्साक्षात्संवृत्ता नामरूपिणः ॥ ९४ ॥**
**निर्देशाय च कल्पन्ते प्राणा वा इति नान्यथा ॥**
**तदत्र निखिलं सत्यं श्रुत्या संशोधितं स्फुटम् ॥ ९५ ॥**

भूतानां सत्यत्वे प्राणा वै सत्यमिति कथमुक्तमित्याशङ्क्य तत्संबन्धात्प्राणाः सत्यमितिभाष्यार्थमाह । **प्राणानामिति** । सत्यशब्दितैर्भूतैः कारणभूतैः सह कार्यतया तादात्म्यसंबन्धात्तेषामपि सत्यत्वमतः प्राणा वै सत्यमिति श्रुतिरविरुद्धेत्यर्थः । तदेवोपपादयितुं भाष्यस्थामाकाङ्क्षामाह । **कथमिति** । न केवलमेषां सत्यत्वमेवंभूतसंबन्धाधीनं किंतु तद्गतं नामाद्यपि दिदर्शयिषुस्तत्र प्राणा विज्ञानात्मानोऽनामरूपास्तेऽन्यसंयोगात्कार्यकरणवन्तो नामरूपवन्तो निर्देशाय कल्पन्त इति भाष्येणोत्तरमाह । **यतस्त्विति** । एकादशापि प्राणा मुख्यवज्जीवोपाधयः स्वतो नामादिविरहिणोऽपि सत्याख्यभूतयोगात्कार्यकरणवन्त इव नामरूपिणो जाता अतस्ते साक्षान्निर्देशाय योग्या भवन्ति पूर्वोक्तनीत्यैव च तत्सत्यत्वोपपत्तौ प्राणा वै सत्यमिति श्रुतिर्न विधान्तरेण सा युक्ता तेषां स्वतोबाधावैधुर्यादित्यर्थः । तदेतत्सत्यं परिशोधितमिति भाष्यं योजयन्वृत्तानुवादमुपसंहरति । **तदत्रेति** । सत्यस्य सत्यमित्यत्र षष्ठ्यन्तसत्यशब्दितं सर्वं तस्य हेत्यस्मात्प्राक्तनश्रुत्या सम्यग्दर्शितमित्यर्थः ॥ ९३ ॥ ९४ ॥ ९५ ॥

**व्याविद्धसत्यराशेः स्याद्विज्ञानात्मन एव तु ॥**
**स्वरूपं यत्तदधुना वक्तव्यमवशिष्यते ॥ ९६ ॥**

उत्तरवाक्यावतितारयिषया पातनिकां कुर्वाणः सत्यान्निष्कृष्य विज्ञानात्मस्वरूपं

---

१ ख. °तः स° ।

वक्तव्यमित्यस्यार्थमाह । **व्याविद्धेति** । सत्यराशेरुक्ताद्व्यावृत्तस्य यदेव रूपं स्यात्तद्वाच्यत्वेन शिष्टमित्यर्थः ॥ ९६ ॥

**तत्रैतस्यामवस्थायां विभागो विनिवर्तते ॥**
**अयं भोक्ता विज्ञानात्मा तथा दैवतिकास्त्वमी ॥ ९७ ॥**
**विज्ञानात्मान इत्येष भेदहेतुनिवर्तनात् ॥**
**यत आधारगो ह्येष नामरूपादिलक्षणः ॥ ९८ ॥**
**विशेषो न स्वतस्तच्च नामरूपादि शोधितम् ॥**
**संशोध्य तदिदं सर्वं विज्ञानात्मा प्रदर्श्यते ॥ ९९ ॥**

तत्रैतस्यामवस्थायामयं भोक्ताऽमी विज्ञानात्मानः प्राणा इत्ययं विशेषो नास्तीति भाष्यं व्याकुर्वन्क्षेत्रज्ञस्य सत्यराशेर्निष्कर्षफलमाह । **तत्रेति** । तस्मिन्क्षेत्रज्ञे सत्यराशेर्व्यावृत्तत्वलक्षणायामवस्थायां स्थिते सति विभागनिवृत्तिरित्यर्थः । तद्योग्यं विभागमभिनयति । **अयमिति** । दैवतिका देवताधिष्ठिता वागादयो विज्ञानात्मानस्तदुपाधयः । विभागनिवृत्तौ हेतुमाह । **भेदेति** । आधारगतो ह्ययं नामरूपकृतो विशेष इति भाष्येण हेतुं साधयति । **यत इति** । भाष्यस्थहिशब्दार्थं यत इत्यनुवदति । सर्वस्य भोगस्य[1] भूतभौतिकोपाधिगतत्वादात्मनि स्वतोऽभावात्तस्य च पृथक्करणादुक्तविभागनिवृत्तिरित्यर्थः । भूमिकां कृत्वा तदिह सर्वं सत्यं परिशोध्यान्तराऽनुप्रविश्य विज्ञानात्मा निर्देश्यत इति भाष्येण तस्येत्याद्यवतारयति । **संशोध्येति** ॥ ९७ ॥ ९८ ॥ ९९ ॥

**सर्वेषामपि तेनेदं समानं लक्षणं भवेत् ॥**
**क्षेत्रज्ञानां विशेषोऽत्र यतो नैवोपपद्यते ॥ १०० ॥**

तदेतत्सर्वं विज्ञानात्मनां सामान्यमेव लक्षणार्थं भवतीत्यस्यार्थमाह । **सर्वेषामिति** । तेनेत्युक्तस्य स्फुटीकरणं विशेषोऽत्रेति । यदत्र सत्यराशेर्व्यावृत्तस्य रूपमुच्यते तदशेषजीवसाधारणं विशेषहेत्वभावादित्यर्थः ॥ १०० ॥

**एतस्य पुरुषस्येति रूपं निर्दिश्यतेऽधुना ॥**
**पुंसो रूपमुपक्षीणं मूर्तामूर्तसमाश्रयम् ॥ १०१ ॥**

तस्य हैतस्य पुरुषस्य विज्ञानात्मनो रूपं निर्दिश्यत इतिवाक्यव्याख्यानपरं भाष्यं तस्यार्थमाह । **एतस्येति** । परात्मरूपे वक्तव्ये विज्ञानात्मरूपोपन्यासोऽकाण्डताण्डवितमित्याशङ्क्योपक्षीणमेव सर्वं रूपं मूर्तामूर्तविषय इत्यस्यार्थमाह । **पुंस इति** । द्वे वावेत्यादिना परस्य रूपमुक्तमित्यर्थः ॥ १०१ ॥

**येन त्वस्य विशेषेण विज्ञानात्मत्वमिष्यते ॥**
**विभज्यमानस्य सतः परस्मादात्मनोऽद्वयात् ॥ १०२ ॥**

---

[1] क. भोगस्य ।

**अपाञ्चभौतिकं रूपमिह तन्निर्दिदिक्ष्यते ॥**
**यथेति माहारजनं वासनोपचयात्मकम् ॥ १०३ ॥**

जीवस्यापि पराभेदादुक्तमेव तदित्याशङ्क्येह तु परमात्मनः परिच्छिद्यमानस्य येन विशेषेण विज्ञानात्मत्वलाभस्तद्रूपं निर्दिदिक्षितमपाञ्चभौतिकमित्यस्यार्थमाह । **येनेति ।** भूताप्रयोज्यं सर्वजीवसाधारणं रूपमत्रोच्यमानं कीदृगित्याशङ्क्य दृष्टान्तश्रुतिमादत्ते । **यथेतीति ।** अनेन हि वाक्येन हरिद्राद्युपरक्तवस्त्रादिवन्नानाविधरागादिसमुदायात्मकं सर्वजीवसाधारणं रूपं श्रुतौ निर्देष्टुमिष्टमित्यर्थः ॥ १०२ ॥ १०३ ॥

**तस्य हैतस्य संबन्धमेवं केचित्प्रचक्षते ॥**
**तदयुक्तं यथाऽन्यायस्तथाऽयमभिधीयते ॥ १०४ ॥**

भर्तृप्रपञ्चोक्तं संबन्धमुपसंहरति । **तस्येति ।** तन्निराकरोति । **तदयुक्तमिति ।** कथ परकीयसंबन्धवचनस्य न्यायशून्यतेत्याशङ्क्याऽऽह । **यथेति ।** न्यायरहितो यथा संब- न्धस्तथाऽयं सिद्धान्तः कथ्यते श्रृयतामवहितैरित्यर्थः ॥ १०४ ॥

**पुष्पादिवासनानां हि वस्त्रादिष्वेव संगतिः ॥**
**सजातीयेषु नियता दृश्यते नान्यजातिषु ॥ १०५ ॥**

यत्तु वासनोपचयात्मकं जैवं रूपमिति तत्र किं जीवो वासनानिमित्तवस्त्रादिविजाती- यस्तत्सजातीयो वेति विकल्प्याऽऽद्ये तत्संबन्धो न तस्य सिध्यतीत्याह । **पुष्पादीति ।** दर्शनस्य व्यावहारिकप्रमाणत्वद्योतको हिशब्दः ॥ १०५ ॥

**द्रव्येऽपि न खलु व्योम्नि वासना काचिदीक्ष्यते ॥**
**अद्रव्ये चासजातीये चैतन्ये वासना कुतः ॥ १०६ ॥**

न द्वितीयः सत्यपि साजात्ये व्योमवदसङ्गस्य तत्संबन्धासिद्धेरित्याह । **द्रव्येऽ पीति ।** किंचाऽऽत्मनि चिन्मात्रे पराऽपरा वा न जातिस्तत्साजात्यस्यैवासिद्धेर्न तत्र वासनेत्याह । **अद्रव्ये चेति** ॥ १०६ ॥

**वासनाकारतां गच्छेच्चैतन्यं चेत्कपालवत् ॥**
**वासनानिष्फलत्वं स्याच्चैतन्यादपृथक्स्थितेः ॥ १०७ ॥**

किंच वासनाऽऽत्मनोऽभिन्ना भिन्ना वेति विकल्प्याऽऽद्यमनूद्य दूषयति । **वास नेति ।** मृदो घटाद्याकारतावदात्मा यदि वासनाकारतां गच्छति तदा तस्याश्चैतन्याभे- देन स्थितेर्न साऽऽत्मनः कुतश्चिद्भेदिका न हि स्वयमेवाऽऽत्मा स्वस्यान्यतो भेदमावहे- द्वासनावैयर्थ्यात्तन्न साऽऽत्माभिन्नेत्यर्थः ॥ १०७ ॥

**न हि श्रोत्रोत्थविज्ञानं रूपवासनयाऽऽप्यते ॥**
**विषयत्वाविशेषेऽपि कुतोऽसङ्गत्वतश्चितेः ॥ १०८ ॥**

द्वितीये त्वात्मना साऽसंबद्धा वा संबद्धा वाऽऽद्ये तद्वैफल्यं मत्वा कल्पान्तरं निरस्यति । **न हीति ।** श्रोत्रकरणकशब्दज्ञानं न रूपवासनया वास्यते तयोर्विषयत्वाविशेषेऽपि मिथो विषयविषयित्वाभावाच्चितस्त्वसङ्गत्वाद्विषयत्वमेव नेति न रागादिवासनासंगतिरित्यर्थः ॥ १०८ ॥

**षड्भावविक्रियाणां च निषेधश्चेतनात्मनः ॥**
**असङ्ग इति चाप्युक्तिरसकृच्छ्रूयते श्रुतौ ॥ १०९ ॥**

कौटस्थ्याच्च चितो न वासनेत्याह । **षडिति ।** असङ्गत्वेनाविषयत्वमुपपादयितुमाद्ये मानमाह । **असङ्ग इति चेति ।** तत्र श्रुतेस्तात्पर्यलिङ्गमभ्यासं दर्शयितुमसकृदित्युक्तम् ॥ १०९ ॥

**भूतसंयोगतः प्राप्तं न च तत्पाञ्चभौतिकम् ॥**
**इति ब्रुवाणो लोकेऽस्मिन्हस्यते बालकैरपि ॥ ११० ॥**

आत्मनो वासनां निरस्य तद्रूपस्यापाञ्चभौतिकत्वं परोक्तं प्रत्याह । **भूतेति** ॥ ११० ॥

**मूर्तामूर्तविभागेऽस्य विभागो विनिवर्तते ॥**
**इति स्वोक्तमविस्मृत्य वासनाभेदगीः कथम् ॥ १११ ॥**

यत्तु परस्मात्परिच्छिद्यमानस्य जीवत्वलाभो वासनयेति तत्राऽऽह । **मूर्तेति ।** जीवस्योभयात्मकसत्यराशेर्विवेके भोक्त्रादिविभागध्वस्तिरित्येतत्तत्रैतस्यामवस्थायामित्यत्र परैरुक्तं तदविस्मृत्य वासनातस्तस्य परस्मादात्मान्तराच्च भेदोक्तिरयुक्ता भोक्त्रादिविभागध्वंसे तासामपि ध्वस्तेस्तस्मात्पूर्वापरव्याहतिरित्यर्थः ॥ १११ ॥

**रचयन्ति तथाऽसाध्वीं प्रक्रियां न्यायवर्जिताम् ॥**
**मूर्तामूर्तात्मको राशिरेको बाह्यः किलेष्यते ॥ ११२ ॥**

तस्येत्यादेरन्योक्तं संबन्धं निरस्य प्रक्रियां रचयित्वेत्यत्र सूचितां तदीयां प्रक्रियामवतारयति । **रचयन्तीति ।** यथोक्तसंबन्धवदिति यावत् । असाध्वीमिति च्छेदः । तत्र हेतुः । **न्यायेति ।** राशित्रयकल्पनां वदन्नादावधमराशिमाह । **मूर्तेति ।** तत्कल्पनायाः श्रुतिबाह्यत्वद्योतनार्थं किलेत्युक्तम् ॥ ११२ ॥

**उत्तमः परमात्माख्यो राशिरत्राभिधीयते ॥**
**मध्यमोऽयं तृतीयस्तु ताभ्यां राशिः प्रयोजकः ॥ ११३ ॥**

उत्कृष्टं राशिमाचष्टे । **उत्तम इति ।** अत्र राशीनां मध्ये यद्वा द्वे वावेत्यादावित्यर्थः । राश्यन्तरमाह । **मध्यम इति ।** यथाऽऽहुस्तान्येतानि त्रीणि वस्तूनि मूर्तामूर्तं[1] माहारजनादिरूपमात्मतत्त्वमितीति । मध्यमराशेर्विशेषमाह । **प्रयोजक इति** ॥ ११३ ॥

---

[1] क. ख. °र्त्यं क° ।

पाणिपेपोत्थितेनायं कर्त्रा भोक्त्रा सहाऽऽत्मना ॥
भावनाज्ञानकर्मादिसमुदायः प्रयोजकः ॥ ११४ ॥

कोऽसावित्यपेक्षायामाह । **पाणीति** । आदिशब्दो रागादिविषयः ॥ ११४ ॥

मूर्तामूर्तादिराशिस्तु प्रयोज्यः साधनं तथा ॥
तार्किकैः सह संधिं च चिकीर्षन्ति यथाबलम् ॥ ११५ ॥

प्रयोजकत्वमुत्पादकत्वं तन्न विना विषयमिति विषयमाह । **मूर्तेति** । आदिशब्देन मर्त्यामृताद्युक्तिः । साधनं ज्ञानकर्मकारणं कार्यकरणजातं तदपि प्रयोज्यमित्याह । **साधनमिति** । यथाऽऽहुः—स एष विद्याकर्मपूर्वप्रज्ञारूपोऽस्य कर्मणो बाह्यं मूर्तामूर्तं साधनं यदुपादाय कार्यकरणवतो भोगसिद्धिरिति राशित्रयं कल्पयित्वा कल्पनान्तरमपि कुर्वन्तीत्याह । **तार्किकैरिति** ॥ ११५ ॥

अयं प्रयोजको राशिर्लिङ्गमेव किलाऽऽश्रितः ॥
इत्युक्त्वा सांख्यत्वभयात्कल्पयन्ति ततोऽन्यथा ॥ ११६ ॥

तदेव स्फोरयति । **अयमिति** । लिङ्गाश्रितस्तावत्कर्मादिरूपः प्रयोजको राशिस्तथा स्वयमभ्युपगमत्वद्योतनाय किलेत्युक्तं तस्य बुद्धिस्थत्वे सांख्यपक्षश्चेत्तर्हि तद्भयात्तस्य तात्स्थ्यादन्यथाकल्पनेत्यर्थः ॥ ११६ ॥

गन्धः पुष्पाश्रयो यद्वत्पुटमाश्रित्य तिष्ठति ॥
कुसुमापगमेऽप्येवं लिङ्गस्था वासनाऽऽत्मनि ॥ ११७ ॥

कथमिति तदाह । **गन्ध इति** ॥ ११७ ॥

वासनाकामकर्माणि लिङ्गस्थान्येव नाऽऽत्मनि ॥
लिङ्गादात्मानमायान्ति गन्धो गन्धपुटं यथा ॥ ११८ ॥

लिङ्गापगमेऽपि तद्गता वासनाऽऽत्मनि तिष्ठतीत्यत्र किं मानमित्याशङ्क्य पुष्पतैलसंयोगवत्सा वियुक्तस्यापि मनसा विद्यत एव तया मनसा कार्याणां प्रविभक्तता भवतीति परोक्तिरत्र मानमिति मत्वाऽऽह । **वासनेति** ॥ ११८ ॥

निर्गुणोऽपि परैकांशो बहिरभ्यागतेन सः ॥
कर्मणा सगुणः साक्षाद्भवतीति प्रचक्षते ॥ ११९ ॥

आत्मन्यगुणे कथं वासनादीत्याशङ्क्याऽऽह । **निर्गुणोऽपीति** । बहिर्मूर्तादिराशेः सकाशात्कार्यकरणसंनिधौ प्राप्तेन कर्मादिना सगुणवद्भवत्यात्मा साक्षान्निर्गुणोऽपीत्यर्थः ॥ ११९ ॥

ततश्च कर्ता भोक्ता च बध्यते मुच्यते तथा ॥
विज्ञानात्मेति कणभुक्छिष्यमेवं समाश्रिताः ॥ १२० ॥

---

१ क. ग. कर्ता भोक्ता स॰ । २ ख. ॰रूपस्य । ३ ख. ॰यंकार॰ ।

स परमात्मैकदेशः किलेत्यादिभाष्यं व्याख्याय स कर्तेत्यादि व्याचष्टे । **तत श्चेति** ॥ १२० ॥

**भूतराशेरगाल्लिङ्गं कर्मराशिः सकाशतः ॥**
**लिङ्गादात्मानमागात्स लिङ्गसंबन्धकारणात् ॥ १२१ ॥**

लिङ्गगतः सन्प्रयोजकराशिरात्मनि केन क्रमेण भवतीत्याशङ्क्याऽऽह । **भूतराशेरिति** । कर्मराशिर्भूतराशेः सकाशतो लिङ्गं गत्वा तस्मादात्मानं गतवानात्मनो लिङ्गेन तादात्म्यादित्यर्थः ॥ १२१ ॥

**कृष्णशक्तिरविद्याऽपि परस्मादेव सोत्थिता ॥**
**विकृत्य परमात्मांशं विज्ञानात्मनि तिष्ठति ॥ १२२ ॥**

तार्किकचित्तानुसारमेव परेषां प्रक्रियान्तरमाह । **कृष्णेति** । भगवतः शक्तिरविद्या नैसर्गिक्यपि तस्मादेव व्यक्ता सती तदेकदेशं विकृत्य तस्मिन्नेव जीवे तिष्ठतीति वदतो जीवोऽज्ञानीति मतमनुसरतीत्यर्थः ॥ १२२ ॥

**यथोपरात्मको दोषः पृथिव्या एव जज्ञिवान् ॥**
**क्ष्मैकदेशं विकृत्याऽऽस्तेऽविद्या तद्वत्परात्मनः ॥ १२३ ॥**

परस्मादविद्योत्थिता चेत्तमेवाऽऽश्रयेन्न जीवं कारणमतिक्रम्य कार्यस्यान्यत्रावृत्तेरित्याशङ्क्याऽऽह । **यथेति** ॥ १२३ ॥

**अनात्मधर्मोऽविद्येति वदन्तश्चोपरादिवत् ॥**
**इत्येवं सांख्यसिद्धान्तमनुवर्तन्ति संभ्रमात् ॥ १२४ ॥**

प्रयोजकराशेर्लिङ्गाश्रितत्वोक्त्या सांख्यानुसारित्वं प्रागुक्तमिदानीमनात्मधर्मोऽविद्येत्युक्त्या चेत्याह । **अनात्मेति** । यथोपरादिर्भूम्येकदेशधर्मो न सर्वभूधर्मस्तथाऽविद्या परस्य धर्मो नेति ब्रुवन्तो विद्याविद्ययोरनात्मधर्मतेति सांख्यमनुवर्तन्ते स्वपरपक्षविवेकाभावादित्यर्थः । अनुवर्तन्तीति च्छान्दसम् । ननु तार्किकमनुसरन्तस्तद्विरुद्धं सांख्यं कथमनुसरन्ति तत्राऽऽह । **संभ्रमादिति** ॥ १२४ ॥

**नैवं कल्पयितुं युक्तं वेदसिद्धान्तबाधनात् ॥**
**पुराऽपि चैतदुदितं यथा वेदान्तबाधनम् ॥ १२५ ॥**

परविकारे तदेकदेशो जीवेऽविद्येत्युक्तं प्रत्याह । **नैवमिति** । अस्थूलादिश्रुतिविरोधं हेतुमाह । **वेदेति** । बृहद्विचारेऽपि जीवेश्वरयोरंशांशित्वादि श्रुतिविरोधेन निरस्तमिति हेतुं साधयति । **पुराऽपीति** ॥ १२५ ॥

**सकलत्वे परस्योक्ताः संसारित्वादिलक्षणाः ॥**
**दोषाः सर्वेऽपि चाऽऽयान्ति प्रत्यगात्मानमेकलम् ॥ १२६ ॥**

तदेव स्फुटयति । **सकलत्व इति** ॥ १२६ ॥

क्षेत्रज्ञस्य च संभित्तौ परस्मादात्मनः स्वतः ॥
एकत्वासंभवोऽत्यन्तं क्षेत्रज्ञपरमात्मनोः ॥ १२७ ॥

जीवो न परस्यांशो विकारो वा किंतु तस्मादर्थान्तरं तथाच संसारित्वसव्रणत्वादयो न परस्मिन्प्रादुःप्युरित्याशङ्क्याऽऽह । **क्षेत्रज्ञस्येति** । अत्यन्तं संभित्ताविति संबन्धः । तथाच तत्त्वमादिश्रुतिविरोधः स्यादित्यर्थः ॥ १२७ ॥

अथोपचारतो देशो लिङ्गमेवाऽऽत्मनो मतः ॥
न तदा लिङ्गविध्वस्तौ वासनाऽऽत्मनि युज्यते ॥ १२८ ॥

परांशो लिङ्गोपाधिरात्मेति शङ्कते । **अथेति** । उपचारतः कल्पनयेति यावत् । लिङ्गं तदुपाधिरात्मेत्यर्थः । दूषयति । **नेति** । लिङ्गोपाधिना कल्पितः परांशो जीवात्मेत्युक्ते स्वापादौ लिङ्गध्वंसे वासना नाऽऽत्मनि स्याल्लिङ्गाभावेन तदधीनजीवाभावात्ततश्च तद्वियोगेऽपि लिङ्गस्था वासना जीवे तिष्ठतीतिप्रक्रियासिद्धिरित्यर्थः ॥ १२८ ॥

न्यायः पुरोदितो योऽत्र वासनासंश्रयं प्रति ॥
स सर्वोऽत्रानुसंधेयः पूर्वपक्षापनुत्तये ॥ १२९ ॥

औपाधिकात्मनि न वासना किंतु बिम्बकल्पे परस्मिन्नेवेत्याशङ्क्योक्तं स्मारयति । **न्याय इति** । अस्मिन्प्रकरणे पुष्पादिवासनानां हीत्यादौ वासनाधारं प्रति यो न्यायः साजात्यासंभवादिरुक्तः स सर्वोऽत्र प्रतीचि तदाश्रयत्वशङ्कानिवृत्त्यर्थमनुसर्तव्य इत्यर्थः ॥ १२९ ॥

उत्थानं चाप्यविद्यायाः परस्मादात्मनः स्वतः ॥
ऊषरादिवदित्यादिकल्पना नोपपद्यते ॥ १३० ॥

जीवेश्वरयोरंशांशित्वादि निरस्य परस्मादविद्यायाः समुत्थानं निरस्यति । **उत्थानं चेति** । आदिशब्देनाविद्याया जीवाश्रयत्वादिकल्पना गृह्यन्ते ॥ १३० ॥

अनिर्मोक्षप्रसक्तिः स्याद्यद्यविद्या परात्मनः ॥
निरात्मवादसक्तिश्च मोहोच्छेदे भवेदिह ॥ १३१ ॥

अनुपपत्तिं स्फुटयति । **अनिर्मोक्षेति** । परस्मादविद्योत्पत्तौ तस्यैव संसारः स्यात्तयोरेकाधिकरण्यादतोऽविद्यायां सत्यां न मुक्तिर्न च तस्यां नष्टायां सा कारणे स्थिते कार्यस्यात्यन्तानष्टेः कार्याविद्यानाशे तत्कारणपराभवस्तथाच मोक्षिणोऽभावान्मोक्षासिद्धिरित्यर्थः ॥ १३१ ॥

वास्यदेशातिरेकेण वासनाया न चेष्यते ॥
देशान्तरोपगमनं गुणवद्द्रव्यवर्जनात् ॥ १३२ ॥

यत्तु लिङ्गापगमेऽपि तद्गता वासनाऽऽत्मन्यस्तीति तत्राऽऽह । **वास्येति** । वास-

नाया देशान्तरागतौ दृष्टान्तः । **गुणवदिति** । न हि स द्रव्यं हित्वा स्वातन्त्र्येण स्थातुमर्हति पुष्पपुटिकायामपि पुष्पावयवानुवृत्तेर्न धर्मस्य धर्म्यतिक्रम इत्यर्थः ॥१३२॥

**सामञ्जस्येन गच्छन्ति न च श्रुत्यक्षराण्यपि ॥**
**यथोक्तकल्पनायां हि न युक्ता तेन कल्पना ॥ १३३ ॥**

आत्मनो वासनानाश्रयत्वे हेत्वन्तरमाह । **सामञ्जस्येनेति** । यथोक्तकल्पनायामात्मनो वासनाश्रयत्वकल्पनायामिति यावत् । श्रुतियुक्तिविरोधफलमाह । **नेति** । उक्तविरोधानुवादको हिशब्दः । आत्मनो वासनाश्रयत्वस्येति शेषः ॥ १३३ ॥

**कामः संकल्प इत्याद्या मनसो धर्मिणः श्रुताः ॥**
**धर्मा न त्वात्मनः शास्त्रे ह्यसङ्गो हीतिवारणात् ॥ १३४ ॥**

तत्र श्रुतीरुदाहरति । **काम इति** । मनोवदात्मनोऽपि धर्मित्वमाशङ्क्याऽऽह । **न त्विति** । तत्र हेतुः । **शास्त्रे हीति** । श्रौतो हिशब्दो हीत्यनुकृष्टस्तस्यार्थः पञ्चम्योक्तः ॥ १३४ ॥

**हृदये ह्येव रूपाणि ध्यायतीवेति चापरम् ॥**
**कामा येऽस्य हृदीत्यादि तीर्णो हीति तथा वचः ॥ १३५ ॥**

अवधारणश्रुतेश्च नाऽऽत्मनो धर्मितेत्याह । **हृदये हीति** । आत्मनि धर्मप्रतीतिर्तर्हि कथमिति तत्राऽऽह । **ध्यायतीवेति** । चित्तस्यैव कामादीत्यत्र वाक्यान्तरमाह । **कामा इति** । आत्मनो नेत्यत्रैव वाक्यान्तरमाह । **तीर्ण इति** ॥ १३५ ॥

**श्रुतादर्थान्न चान्योऽर्थो यथोक्तवचसां यतः ॥**
**सम्यक्कल्पयितुं शक्यः कल्पनाऽतो न युज्यते ॥ १३६ ॥**

उक्तश्रुतिस्थमनोहृदयादिशब्दैरात्मैवोच्यते तन्मनःसंयोगादात्मनि कामादिजन्मात्र विवक्षितमित्याशङ्क्याऽऽह । **श्रुतादिति** । आत्मनः कामाद्याश्रयत्वस्येति शेषः ॥१३६॥

**प्रत्यग्ब्रह्मत्वसिद्ध्यर्था सर्वैवोपनिषत्त्वियम् ॥**
**तावन्मात्रपरत्वेन वेदान्तानामुपक्षयात् ॥ १३७ ॥**

उक्तश्रुतीनां श्रुतान्नार्थान्तरं कल्प्यमित्यत्र हेतुमाह । **प्रत्यगिति** । प्रतीचो ब्रह्मत्वप्रमितिशेषत्वं कथमुक्तश्रुतीनामित्याशङ्क्याऽऽह । **तावन्मात्रेति** । वेदान्तास्तावदेकान्ततो ब्रह्मैकत्वे षड्विधलिङ्गानुरोधेन पर्यवस्यन्ति तन्मध्यस्थोक्तश्रुतीनामपि तत्रैव तात्पर्यान्नार्थान्तरकल्पनेत्यर्थः ॥ १३७ ॥

**राशित्रितयपक्षे च नाप्यर्थोऽत्र समञ्जसः ॥**
**क्रियते कल्पना येन सर्वन्यायविरोधिनी ॥ १३८ ॥**

लिङ्गवियोगेऽपि पुंसि वासनास्तित्वं निरस्य राशित्रयकल्पनां निरस्यति ।

**राशीति** । अत्रेति रूपोपन्यासवाक्योक्तिः । अथशब्दो वावशब्दवाची । चशब्दान्मूर्तं चैवेत्यत्रावधारणासामञ्जस्यं गृह्यते । अपिशब्दादमूर्तं चेत्यत्र चकाराकृष्टावधारणायोगः । श्रुत्यक्षरानुगुण्याभावान्न राशित्रयकल्पना कार्येत्याह । **क्रियत इति** । पूर्वार्धस्थनञोऽत्रापि संबन्धः । येन हेतुना कल्पनेयमनेकन्यायविरुद्धा वक्ष्यते तेन न कार्येति हेतुमाह । **येनेति** ॥ १३८ ॥

**द्वे एव नु यदा रूपे मूर्तामूर्ते सवासने ॥**
**ब्रह्म रूपि तृतीयं च तदा वावेति युज्यते ॥ १३९ ॥**
**ब्रह्मैकदेशभूतस्य विज्ञानात्मन एव ते ॥**
**रूपे इति तदा युक्तं कल्पनानुगुणं वचः ॥ १४० ॥**

कथं सिद्धान्तेऽपि वावशब्दादिसामञ्जस्यं तत्राऽऽह । **द्वे इति** । कथं राशित्रयपक्षे नानान्यायविरोध इत्याशङ्क्य जीवस्य रूपमध्येऽन्तर्भावो रूपिमध्ये वेति विकल्प्याऽऽद्ये निषेध्यकोटिप्रविष्टतां मत्वा द्वितीये श्रुतिं शिक्षयन्नाह । **ब्रह्मेति** । तदा रूपिमध्ये जीवान्तर्भावकल्पनायामिति यावत् ॥ १३९ ॥ १४० ॥

**विज्ञानात्ममुखेनाथ यदि वा परमात्मनः ॥**
**रूपे इति तदाऽवक्ष्यच्छ्रौती चेत्कल्पना भवेत् ॥ १४१ ॥**

अथवा यदि राशित्रयकल्पना श्रौती यदि वा जीवो रूपिमध्ये वर्तेत तदा तन्मुखेन परस्य रूपे इति श्रुतिरवक्ष्यदित्याह । **विज्ञानात्मेति** ॥ १४१ ॥

**द्विवचश्च तथाऽयुक्तं त्रैरूप्यस्येह संभवात् ॥**
**मूर्तामूर्ते च द्वे रूपे तृतीयं वासना यतः ॥ १४२ ॥**

भवतु जीवस्य रूपिमध्ये प्रवेशपक्षे द्वे वावेत्यादिश्रुतेरेवं शिक्षा का हानिरत आह । **द्विवचश्चेति** । यदि जीवो रूपिराशावन्तर्भूतस्तथा सति द्वे इति द्विवचनं वावेत्यवधारणमेवकारश्चायुक्तो रूपमध्ये त्रैविध्यसंभवादित्यर्थः । त्रैरूप्यं स्फोरयति । **मूर्तेति** ॥ १४२ ॥

**मतं मूर्तेतरे रूपे ब्रह्मणोऽभिमते सदा ॥**
**क्षेत्रज्ञस्य तु नैवैते वासनामात्ररूपिणः ॥ १४३ ॥**

विषयभेदेन द्विवचनाद्यविरोधं शङ्कते । **मतमिति** ॥ १४३ ॥

**तदाऽपि जीवद्वारेण विक्रियां व्रजतो विभोः ॥**
**वासनाद्यभिसंबन्ध इतीयं गीरनर्थिका ॥ १४४ ॥**

इत्थं व्यवस्थायां जीवद्वारा विक्रियमाणस्य परस्य रूपे मूर्तामूर्ते इत्युक्तिरयुक्ता वासनाकर्मादेरपि तद्द्वारा तत्र संबन्धादित्याह । **तदाऽपीति** ॥ १४४ ॥

**वासनानामपि यतो न विशेषो मनागपि ॥**
**क्षेत्रज्ञद्वारतायाः स्यादसत्तस्माद्विकल्पितम् ॥ १४५ ॥**

कुतो जीवद्वारा वासनानां परस्मिन्प्रसक्तिस्तत्राऽऽह । **वासनानामिति** । विशेषो मूर्तामूर्तरूपाभ्यामिति शेषः । जीवद्वारा विक्रियमाणस्य परस्य ते रूपे जीवस्य तु वासना रूपमितिव्यवस्थाकरणमस्थाने संभ्रममात्रमिति फलितमाह । **असदिति** । न च जीवद्वारतां विना परस्य ते द्वे रूपे स्तामिति वाच्यं वासनारूपस्यापि तद्वदेव तस्मिन्प्रसङ्गादिति भावः ॥ १४५ ॥

**वस्तु वस्त्वन्तरत्वेन न च विक्रियतेऽञ्जसा ॥**
**वृत्त्येह मुख्ययेत्येवं शक्यो वक्तुं जगत्यपि ॥ १४६ ॥**

अस्तु तर्हि जीवात्मना परिणतस्य परस्य वासनामयमपि रूपमित्याशङ्क्याऽऽह । **वस्त्विति** । इह जगति सर्वत्रापि वस्तुतो वस्तु वस्त्वन्तरत्वेन विक्रियत इत्येवंविधोऽर्थो वक्तुं न शक्य इत्यन्वयः । अञ्जसेत्यस्य व्याख्या मुख्यया वृत्त्येति । न हि तथाभूतं परिणमते विरोधान्नान्यथाभूतमनवस्थितेरिति भावः ॥ १४६ ॥

**वस्त्वन्तरं न च मतः क्षेत्रज्ञः परमात्मनः ॥**
**सिद्धान्तहानिरेवं च कल्पनायां ध्रुवं भवेत् ॥ १४७ ॥**

किंच जीवस्य ब्रह्मणो वस्त्वन्तरत्वमात्यन्तिकमनात्यन्तिकं वा नाऽऽद्योऽपराद्धान्तादित्याह । **वस्त्वन्तरमिति** । द्वितीयो भेदाभेदनिरासान्निरस्त इति चार्थः ॥ १४७ ॥

**आविविक्षीर्षुभिस्तस्माद्वेदान्तार्थं महात्मभिः ॥**
**ईदृशी कल्पनाऽयुक्ता कर्तुं परहितार्थिभिः ॥ १४८ ॥**

भर्तृप्रपञ्चदूषणमुपसंहरति । **आविविक्षीर्षुभिरिति** । ईदृशी राशित्रयं जीवस्य कामाद्याश्रयत्वमित्याद्येत्यर्थः । अयुक्तेति च्छेदः ॥ १४८ ॥

**दक्षिणेऽक्षन्पुमानिति लिङ्गात्मा परिगृह्यते ॥**
**अध्यात्मेऽथाधिदैवे च तस्यैव प्रकृतत्वतः ॥ १४९ ॥**

परोक्तं तस्येत्यादेः संबन्धं तदीयप्रक्रियां च प्रत्याख्याय स्वमते तच्छब्दार्थमाह । **दक्षिणेऽक्षन्निति**। तस्य हेत्यत्र तच्छब्देन लिङ्गं गृह्यते । योऽयं दक्षिणेऽक्षन्नित्यध्यात्मे य एष इत्यधिदैवे च तस्यैव प्रकृतत्वात्तच्छब्दस्य प्रकृतावलम्बित्वादित्यर्थः । तथाशब्दपर्यायोऽथशब्दः ॥ १४९ ॥

**जीवग्रहोऽत्र नन्वस्तु प्रकृतत्वाविशेषतः ॥**
**तस्यैवैतानि रूपाणि कस्मान्नेत्यभिधीयताम् ॥ १५० ॥**

प्रकृतत्वाल्लिङ्गग्रहे जीवस्यापि पाणिपेषवाक्ये तथात्वात्तस्यैवात्र तच्छब्देन ग्रहोऽ-

१ ख. °तायां स्या° । २ क. ततः ।

स्त्विति शङ्कते । **जीवेति** । प्रकृतत्वेऽपि तस्य वासनारूपित्वाभावान्न तच्छब्दार्थतेत्याशङ्क्याऽऽह । **तस्येति** ॥ १५० ॥

**नैवंरूपितया यस्मादिह श्रुत्या विवक्षितः ॥**
**क्षेत्रज्ञः करणात्मैव तस्मादिह विवक्षितः ॥ १५१ ॥**

निर्विशेषब्रह्मत्वेन जीवस्य ज्ञापयितुमिष्टत्वान्न वासनामयं संसाररूपं तस्य तत्त्वतो युक्तमित्याह । **नैवमिति** । इहेति प्रकरणोक्तिः । जीवस्य वासनारूपित्वायोगे फलितमाह । **करणेति** । तस्य हेत्यादिवाक्यमिहेत्यर्थः ॥ १५१ ॥

**वासनानुगतं लिङ्गं मृद्वन्मृद्विक्रियात्मसु ॥**
**चेत्यते साक्षिणा यस्मान्नातः क्षेत्रज्ञरूपिता ॥ १५२ ॥**

इतश्च जीवस्य न वासनारूपिता किंतु चित्तस्येत्याह । **वासनेति** ॥ १५२ ॥

**माहारजनमित्यादि रूपं चेत्साक्षिणो भवेत् ॥**
**नेति नेतीत्यथाऽऽदेशं नाकरिष्यत्तदाऽऽत्मनः ॥ १५३ ॥**

कर्तृत्वादिवासनानामात्मरूपत्वाभावे हेत्वन्तरमाह । **माहारजनमित्यादीति** । अथशब्दोऽवधारणार्थो नकारगामी ॥ १५३ ॥

**अन्यस्यासौ न चाऽऽदेशः शक्यो वक्तुं प्रमाणतः ॥**
**नेति नेतीति तस्यैव प्रक्रान्त उपसंहृतेः ॥ १५४ ॥**

नायं जीवस्याऽऽदेशः किंतु ब्रह्मणस्तटस्थस्येत्याशङ्क्याऽऽह । **अन्यस्येति** । प्रस्तावमाने विज्ञानमये कतमेत्यात्मानमुपक्रम्य स एष नेति नेत्यात्मेत्यात्मशब्दात्तस्यैवाऽऽदेशोपसंहारादिहापि तस्यैवासौ न तटस्थस्येत्यर्थः ॥ १५४ ॥

**व्येव त्विति प्रतिज्ञाया अर्थवत्त्वं तथा भवेत् ॥**
**प्राणेपानान्वितस्यैव यद्यादेशो भवेदयम् ॥ १५५ ॥**

इतश्च प्रत्यगर्थस्यैवायमादेश इत्याह । **व्येवेति** ॥ १५५ ॥

**प्राणेपानान्वितोऽन्यश्चेन्नेतीति च ततोऽपरः ॥**
**अन्योऽसाविति मिथ्या धीस्तदा स्यान्मोहकारणात् ॥ १५६ ॥**

उक्तमेव व्यतिरेकद्वारा साधयति । **प्राणेति** । धीरित्यहं ब्रह्मेति ज्ञानं तस्मात्प्रत्यगर्थस्यैवायमादेशस्ततश्चाहं ब्रह्मेति शास्त्रीयसम्यग्धीसिद्धेः प्रतिज्ञार्थवत्त्वेत्यर्थः ॥ १५६ ॥

**न स्यादात्मानमेवावेदहं ब्रह्मेति मानजा ॥**
**सम्यग्धीर्निखिलध्वान्तघातिनी मुक्तिदायिनी ॥ १५७ ॥**

अन्यो जीवोऽन्यश्चाऽऽदिश्यमानं ब्रह्मेत्यत्र तदाऽऽत्मानमेवावेदित्यादिश्रुतिविरोधदोषान्तरमाह । **न स्यादिति** ॥ १५७ ॥

१ ङ. म 'माय म'।

**करणात्मन एवातस्तस्य हेतिग्रहो भवेत् ॥**
**न तु तत्साक्षिणो युक्तस्तस्य रूपनिषेधतः ॥ १५८ ॥**

जीवस्य ब्रह्माभिन्नत्वाद्वासनारूपित्वायोगाच्चित्तमेव तद्रूपि तच्छब्दमिति फलितमाह । **करणेति** ॥ १५८ ॥

**वासना भूरिरूपास्ता लिङ्गस्था लिङ्गसाक्षिणः ॥**
**कुर्वन्ति बहुरूपत्वं मणेरास्तरणं यथा ॥ १५९ ॥**

लिङ्गस्य कर्तृत्वादिवासनारूपित्वे कथमात्मनि तद्भानमित्याशङ्क्य स्वाभासभ्रमदोषेणेत्यत्रोक्तं स्मारयति । **वासना इति** । आस्तरणमिति नीलपीताद्युपाध्युपलक्षणम् ॥ १५९ ॥

**माहारजनमित्यत्र हारिद्रं रूपमुच्यते ॥**
**इन्द्रगोपोपमानेन कौसुम्भस्य गतत्वतः ॥ १६० ॥**

तस्येत्यादि व्याख्याय यथेत्यादौ माहारजनशब्दार्थमाह । **माहारजनमितीति** । ननु कौसुम्भे तच्छब्दस्य प्रसिद्धत्वात्तस्यात्र ग्रहणं किं न स्यादुक्तं हि—स्यात्कुसुम्भं वह्निशिखं महारजनमित्यपीति तत्राऽऽह । **इन्द्रेति** ॥ १६० ॥

**पीतं वस्त्रं यथा तद्वल्लिङ्गमाभाति साक्षिणः ॥**
**आख्यादिविषयोद्भूतवासनावासितं दृशेः ॥ १६१ ॥**

पदार्थमुक्त्वा वाक्यार्थमाह । **पीतमिति** । साक्षिणो दृशेरिति संबन्धः । लिङ्गं चित्तं तस्य तथाभाने[1] निमित्तमाह । **आख्यादीति** ॥ १६१ ॥

**ईषत्पाण्डु यथोर्णादि तद्वल्लिङ्गं प्रकाशते ॥**
**इन्द्रगोपोऽतिरक्तश्च भृशं रक्तं मनस्तथा ॥ १६२ ॥**

यथा पाण्ड्वाविकमित्यस्यार्थमाह । **ईषदिति** । आदिपदेन कम्बलग्रहः । यथेन्द्रगोप इत्यस्यार्थमाह । **इन्द्रेति** ॥ १६२ ॥

**रजसः क्वचिदुद्रेकस्तमसः क्वचिदिष्यते ॥**
**सत्त्वस्यापि तथोत्कर्षः कुतश्चिदुपजायते ॥ १६३ ॥**

वासनावैचित्र्ये मनसि किं कारणमित्युक्ते गुणवैचित्र्यमित्याह । **रजस इति** । क्वचिदिति गुणोत्कर्ष्यनिमित्तविषयोक्तिः ॥ १६३ ॥

**क्वचिदेकप्रधानत्वं कस्मिंश्चिद्विषये द्वयोः ॥**
**त्रयाणामपि चान्यत्र ज्ञानकर्मादिचित्रतः ॥ १६४ ॥**

प्रतिविषयं गुणानामुत्कर्षनिकर्षत्वे[2] वा किं निमित्तमित्याशङ्क्य तद्वैचित्र्यमनूद्य तन्निमित्तमाह । **क्वचिदिति** । आदिपदेन रागादिग्रहः ॥ १६४ ॥

---

१ ग. दृशः । २ ख. °भावे नि° ।

**अग्नेरर्चिर्यथा भास्वत्सत्त्वोत्कर्षात्तथा मनः ॥**
**पुण्डरीकं यथा शुक्लं सौम्यमाह्लादकृत्तथा ॥ १६५ ॥**

वासनावैचित्र्यमुक्त्वा यथाऽग्न्यर्चिरित्यस्यार्थमाह । **अग्नेरिति** । यथा पुण्डरीकमित्यस्यार्थमाह । **पुण्डरीकमिति** । तथा मन इति शेषः ॥ १६५ ॥

**सकृद्विद्युद्यथाऽत्यन्तं घनध्वान्तापनोदकृत् ॥**
**अतीव भास्वराऽस्माकं चक्षुर्मुट्सकृदुद्गता ॥ १६६ ॥**

यथा सकृदित्यादि विभजते । **सकृदिति** । चक्षुर्मुट्चक्षुषोऽस्मदीयस्य तद्विषये प्रवृत्तिं मुष्णाति प्रतिबध्नातीत्यर्थः । तथा ज्ञानप्रकाशातिशयापेक्षया कस्यचिद्वासना सकृदेव सर्वतः प्रद्योतमानोद्गच्छतीति दार्ष्टान्तिकमाह । **सकृदुद्गतेति** ॥ १६६ ॥

**हिरण्यगर्भतत्त्वस्य जायमानस्य केशवात् ॥**
**विद्युद्वत्प्रथते रूपं किल तस्य महात्मनः ॥ १६७ ॥**

अन्त्यवासनाविशिष्टसूत्रोपास्तिविध्यर्थं तस्याः स्तुतिं चिकीर्षुराह । **हिरण्यगर्भेति** । तस्य परस्माज्जायमानत्वं भास्वरत्वं च श्रुतिस्मृतिप्रसिद्धमिति वक्तुं किलेत्युक्तम् ॥ १६७ ॥

**अतोऽनेनैव रूपेण य उपास्ते दिवानिशम् ॥**
**सर्वान्धकारहन्त्रीव विद्युत्तं श्रीः सदाऽऽश्रयेत् ॥ १६८ ॥**

उक्तवासनाविशिष्टसूत्रोपास्तिं वदन्सकृदित्यादिफलोक्तिं व्याकरोति । **अत इति** । उक्तहैरण्यगर्भरूपस्योपास्त्यर्हत्वमतःशब्दार्थः । उपास्तौ विशेषणत्रयविवक्षया दिवानिशमित्युक्तम् । दृष्टमुपास्तिफलमुक्तमदृष्टं तु तं यथेत्यादिशास्त्रीयमिति भावः ॥ १६८ ॥

**नाऽऽदिर्न मध्यं नैवान्तो नेयत्ता विद्यते यतः ॥**
**अनन्तकल्पोपचयाद्वासनानामुदाहृतिः ॥ १६९ ॥**
**माहारजनमित्यादिर्न त्वियत्ता विवक्षिता ॥**
**प्रकारदर्शनायैव तेनोदाहृतिरिष्यते ॥ १७० ॥**

परिमितदृष्टान्तोक्त्या वासनानामपि परिमितत्वं दृष्टान्तदार्ष्टान्तिकयोः साम्यादित्याशङ्क्याऽऽह । **नाऽऽदिरिति** । निषेधचतुष्टये हेतुः । **यत इति** । तस्यैव व्याख्यानम् । **अनन्तेति** । किमिति तर्हि दृष्टान्तोपादानमित्याशङ्क्योपलक्षणत्वेनेत्याह । **उदाहृतिरिति** । वासनानामियत्ताप्रदर्शनं नोदाहरणफलं चेत्किं तर्हि तत्फलमित्याशङ्क्योक्तमेव स्पष्टयति । **प्रकारेति** । इयत्तासंभवस्तच्छब्दार्थः ॥ १६९ ॥ १७० ॥

**निःशेषमेवं सत्यस्य रूपं व्याख्याय सांप्रतम् ॥**
**परमार्थसत्ययाथात्म्यनिर्देशाय प्रयत्यते ॥ १७१ ॥**

---

१ क. ॰थाऽऽत्मनः । २ ख. ॰किमर्थं ।

आ शिशुब्राह्मणादा चाऽऽदेशादवृत्तं संकीर्त्य प्रथमान्तसत्यशब्दव्याख्यानायोत्तरं वाक्यमित्याह । **निःशेषमिति** ॥ १७१ ॥

**यतो व्याख्यातमखिलं मूर्तामूर्तादि वस्त्वतः ॥**
**आदेशोऽनन्तरं तस्य क्रियतेऽनन्यमानिनः ॥ १७२ ॥**

पदद्वयमाकाङ्क्षां पूरयन्व्याकरोति । **यत इति** । प्रत्यक्षादिनाऽपि तत्सिद्धेः सुकरत्वात्किमादेशेनेत्याशङ्क्याऽऽह । **अनन्येति** ॥ १७२ ॥

**मूर्तामूर्तस्वभावस्य सत्यस्याऽऽविष्कृतेरथ ॥**
**ब्रह्मातिरेकतो नान्यद्यतो वस्त्ववशिष्यते ॥ १७३ ॥**
**आदेशो ब्रह्मणोऽतोऽयं निरादेशस्य भण्यते ॥**
**अतिमानाभिधानस्य प्रत्यङ्मात्राद्वयात्मनः ॥ १७४ ॥**

किमपेक्षयाऽऽदेशस्याऽऽनन्तर्यं तदाह । **मूर्तेति** । उक्तसत्यव्याख्यानान्तरं ब्रह्मैव कुतो निर्दिदिक्ष्यते तत्राऽऽह । **ब्रह्मेति** । आदेशापेक्षां तस्य दर्शयति । **निरादेशस्येति** । आदेशान्तरशून्यं ब्रह्मेत्यत्र हेतुमाह । **अतिमानेति** । तस्य वाङ्मनसातीतत्वे हेतुः । **प्रत्यगिति** ॥ १७३ ॥ १७४ ॥

**कर्मण्यादेशशब्दोऽयं यदि वा करणे भवेत् ॥**
**आदिष्टिरथवाऽऽदेशो नेति नेत्यद्वयात्मनः ॥ १७५ ॥**

अथातःशब्दौ व्याख्यायाऽऽदेशशब्दार्थमाह । **कर्मणीति** । आदिश्यत इति व्युत्पत्त्या ब्रह्माऽऽदिश्यतेऽनेनेति व्युत्पत्त्या शब्दो वाऽऽदिष्टिरिति व्युत्पत्त्या ज्ञानं वाऽऽदेश इत्यर्थः ॥ १७५ ॥

**नेति नेतीतिशब्दाभ्यां सत्यस्य ब्रह्मणः कथम् ॥**
**प्रमाणगोचरातीतं तत्त्वं स्यान्निर्दिदिक्षितम् ॥ १७६ ॥**

ननु कर्मभावव्युत्पत्ती न युक्ते आदेशमारभ्य नेति नेतीतिशब्दद्वयोपादानात्करणपक्षे तु शब्दद्वयमादेशो न च तेन ब्रह्म शक्यमादेष्टुं तस्य तदवाचकत्वादिति शङ्कते । **नेतीति** ॥ १७६ ॥

**शृणु सर्वं तदज्ञानसमुत्थस्य निषेधतः ॥**
**प्रत्यङ्मात्रैकरूपेण तदबोधनिराकृतेः ॥ १७७ ॥**

शब्दद्वयमवाचकमपि ब्रह्मधीनिमित्तमित्युच्यमानमतिसूक्ष्मत्वादवहितेन श्रोतव्यमित्याह । **शृण्विति** । तदेव संक्षिप्याऽऽह । **तदज्ञानेति** । प्रतीच्यध्यस्ताविद्यातज्जनिरासद्वारा धीहेतुः शब्दद्वयमित्यर्थः । ननु प्रतीचो मूर्तादिनिषेधोऽन्यश्चेदद्वयहानिरन्यथा तस्याप्यभावरूपतेति नेत्याह । **प्रत्यगिति** । स्वाज्ञानतत्कार्यध्वस्तेः स्वमात्रत्वेनावसानात्कुतः सद्वयत्वं कुतो वा प्रतीचोऽभावता निषेधस्यैव तत्प्रवेशादित्यर्थः ॥ १७७ ॥

**अमूर्तस्य परा निष्ठा कारणात्मा पुरोदितः ॥**
**मूर्तस्य च तथा पृथ्वी मध्ये संकीर्णता तयोः ॥ १७८ ॥**

निषेधेनाऽऽत्मनः सद्वयत्वाभावेऽपि तस्य सप्रतियोगित्वात्किं तदित्याशङ्क्य भर्तृ-प्रपञ्चमतमदुष्टतया पूर्वोक्तं स्मारयति । **अमूर्तस्येति** । यद्वा निषेधेन सद्वयत्वाभावेऽपि मूलकारणादिना तत्तादवस्थ्यमाशङ्क्य तस्य निषेध्यत्वान्मैवमित्याह । **अमूर्तस्येति** । मूलकारणमन्त्यकार्यं तदन्तर्वर्ति सर्वं निषेध्यमित्यर्थः ॥ १७८ ॥

**मानाभिधानयोर्यावान्कश्चिद्विषय इष्यते ॥**
**उक्तयोर्मध्यवर्त्येव कार्यकारणयोरसौ ॥ १७९ ॥**

तथाऽपि कार्यकारणातिरिक्तेनानिषेध्येन केनचिदात्मनः सद्वितीयत्वमाशङ्क्य तत्किं वाङ्मनसातीतं न वेति विकल्प्याऽऽद्ये तस्याऽऽत्मानतिरेकं मन्वानो द्वितीयं दूषयति । **मानेति** ॥ १७९ ॥

**नामरूपे तथा कर्म प्राणा लोकादयस्तथा ॥**
**कारकं वा क्रियाऽन्यद्वा कारणं कार्यमेव च ॥ १८० ॥**

नामादिना सद्वयत्वमाशङ्क्य तस्यापि कार्यकारणान्तस्थत्वेन निषेध्यत्वमाह । **नामेति** । प्राणानामनिषेध्यत्वात्तैः सद्वयत्वमिति केचित्तान्प्रत्याह । **प्राणा इति** । लोकानां तदधिष्ठातृदेवतानां चानिषेधात्तदवस्थं सद्वयत्वं नेत्याह । **लोकादय इति** । कारकादीनामनिषेध्यतया सद्वयत्वमाशङ्क्याऽऽह । **कारकं चेति** । अन्यत्फलमिति यावत् । अवान्तरकारणादिना सद्वयत्वं निरस्यति । **कारणमिति** ॥ १८० ॥

**जातिर्गुणः क्रिया द्रव्यं संबन्धो भाव एव च ॥**
**सदसत्सदसच्चेति समस्तव्यस्तमेव च ॥ १८१ ॥**

जात्यादिभिस्तदाशङ्क्याऽऽह । **जातिरिति** । संबन्धः समवायः । भावो विशेषः । सदादिकल्पनाभिः सद्वयत्वं शिथिलयति । **सदिति** ॥ १८१ ॥

**प्रमाता च प्रमाणं च प्रमेयोऽथ क्रियाफले ॥**
**इत्यादेः प्रतिषेधेन प्रत्यङ्मात्रावलम्बिना ॥ १८२ ॥**

मात्रादिभिस्तदाशङ्क्याऽऽह । **प्रमातेति** । समुच्चयार्थोऽथशब्दस्तथापर्यायः । क्रिया प्रमोत्पत्त्यनुकूलो व्यापारः । फलं प्रमा । ननु ब्रह्म ज्ञापयितुमुपक्रम्य यथोक्तनिषेधेन तज्ज्ञापितं न भवति न हि निषेधमात्रं तज्ज्ञापनं तथाच प्रतिज्ञाहानिस्तत्राऽऽह । **इत्यादेरिति** । इत्थमुक्तस्यानुक्तस्य च निषेधो नकारस्तेन सर्वं निषिध्य प्रत्यङ्मात्रमनिषिद्धमवलम्ब्य स्थितेन ब्रह्मयाथात्म्यमवगम्यते तस्य तदेव तत्त्वं तन्न प्रतिज्ञाहानिरित्यर्थः ॥ १८२ ॥

उपमदर्शकोऽशेषनामादेरितिरिष्यते ॥
तस्योपदर्शितस्याथ निषेधः क्रियते नञा ॥ १८३ ॥

निषेध्यार्पकाभावे न निषेधः प्राप्तिं विना तदयोगादित्याशङ्क्याऽऽह । उपेति । नञर्थं निगमयति । तस्येति । निषेधस्य प्राप्तिपूर्वकत्वेन संभावितत्वमथशब्दार्थः ॥ १८३ ॥

आकृष्टं रूपिणो रूपं न पृथग्व्यवतिष्ठते ॥
जगत्यकल्पितमपि किमु मोहादिकल्पितम् ॥ १८४ ॥

ब्रह्मणि निषिद्धं मोहाद्यन्यत्र स्थास्यत्यत्र निषिद्धघटवदित्याशङ्क्य कैमुतिकन्यायमाह । आकृष्टमिति ॥ १८४ ॥

घटे पटो निषिद्धोऽपि घटादन्यत्र तिष्ठति ॥
तदन्यत्रापि सद्भावादनिषिद्धस्य धर्मिणः ॥ १८५ ॥

दृष्टान्तं विघटयति । घट इति । घटादौ निषिद्धस्तत्रासन्नपि पटादिस्ततोऽन्यत्र स्थातुं युक्तस्तस्य तत्राकल्पितत्वाद्घटादि वर्जयित्वाऽपि तन्त्वादेरनिषिद्धस्य धर्मिणो भावादित्यर्थः ॥ १८५ ॥

परमार्थान्निषिद्धस्य तन्मोहोत्थस्य वस्तुनः ॥
हिरुक्स्थितिः कथं तस्य परमार्थात्मनाऽथवा ॥ १८६ ॥

दार्ष्टान्तिके वैषम्यमाह । परमार्थादिति । आत्मनो निषिद्धस्यानात्मनोऽन्यत्र भेदेनाभेदेन वा न स्थिती रजतादिवत्कल्पितत्वादित्यर्थः ॥ १८६ ॥

निषेध्यानामशेषाणामन्योन्यव्यभिचारतः ॥
प्रतीचोऽव्यभिचारोऽतस्तत्राध्यस्तं निषिध्यते ॥ १८७ ॥

कल्पितत्वासिद्धिमाशङ्क्याऽऽह । निषेध्यानामिति । विमतं कल्पितं व्यभिचारित्वात्सर्पवदित्यत्र प्रतीचि व्यभिचारमाशङ्क्याऽऽह । प्रतीच इति । तत्र कल्पितमनात्मजातं तत्र निषिद्धं नान्यत्रास्ति रजतवदिति फलितमाह । अत इति ॥ १८७ ॥

इतिशब्दोपदिष्टानां निषेधोऽनुभवात्मनि ॥
अनन्तेऽन्तवतां यत्र तद्ब्रह्मेत्यवसीयताम् ॥ १८८ ॥

प्रतीचि कल्पितमाकाशादि प्रकृतमितिशब्दोक्तं नञा निषिध्यते चेन्न ब्रह्मसिद्धिस्तद्वाचकाभावादतो निषेधवैयर्थ्यमित्याशङ्क्याऽऽह । इतिशब्देति । ब्रह्मवाचिपदाभावेऽपि निषेधस्तत्र पर्यवस्यति निरङ्कुशत्वायोगात्सर्वं हि विनश्यद्विकारजातं पुरुषान्तं विनश्यति पुरुषो विनाशहेत्वभावादविनाशीति न्यायादित्यर्थः ॥ १८८ ॥

सद्भावश्चोपलब्धिश्च स्वार्थप्रत्यक्चिदाश्रयात् ॥
मूर्तादीनामनिर्देश्यादितिर्मत्तो निवर्तते ॥ १८९ ॥

प्रकृतमितिशब्दोक्तं निषिध्यते चेद्ब्रह्मणोऽपि प्रकृतत्वेन तदुपात्ततया तदापत्तौ

शून्यतेत्याशङ्क्याऽऽह । **सदिति** । भावाभावयोः सत्तास्फूर्तिप्रदं स्वप्रकाशं वाङ्मनसातीतं प्रत्यक्त्वमितिशब्दो न वदत्यतस्तस्यानिषेधान्न शून्यतेत्यर्थः ॥ १८९ ॥

**निषेधति निषेध्यार्थं यद्बलान्नञ्चिदात्मनः ॥**
**विज्ञानेनैव हत्वाऽन्यत्पूर्णत्वेनैति चित्स्वतः ॥ १९० ॥**

किंच प्रत्यग्बलात्प्राप्तसत्तास्फुर्ति नञ्पदं मूर्तादिद्वैतं चिदात्मावसायित्वेन निषेधत्यतो न तन्निषेधकमित्याह । **निषेधतीति** । आत्मबलान्नञो द्वैतनिषेधित्वे नञात्मनोः सदाभावान्न कदाचिदपि द्वैतं भायादित्याशङ्क्य वाक्योत्थज्ञानेनैव चिदात्मा सर्वमुपमृद्य स्वाभाविकेनानविच्छिन्नत्वेन तिष्ठत्यतो ज्ञानात्प्राग्द्वैतधीसिद्धिरित्याह । **विज्ञानेनेति** ॥ १९० ॥

**प्रत्यङ्मात्रदृशि ह्यस्मिञ्जाग्रत्स्वप्नसुषुप्तिषु ॥**
**तदन्यद्यत्तदाभासं तन्नञा प्रतिषिध्यते ॥ १९१ ॥**

आत्मनोऽनिषेध्यत्वमुक्त्वा द्वैतस्य निषेध्यत्वमुपसंहरति । **प्रत्यगिति** । अवस्थात्रयेऽपि साक्षिणि सति कार्यं कारणं वा यच्चिदाभासवत्तन्निषेध्यमित्यर्थः । तस्य कल्पितत्वेन निषेधयोग्यत्वं हिशब्दार्थः ॥ १९१ ॥

**अविचारितसंसिद्धिप्रत्यङ्मोहहतौ सदा ॥**
**विस्फारिताक्षः प्रत्यग्धीर्मानान्निर्वात्यथाऽऽत्मनि ॥ १९२ ॥**

निषेधफलमाह । **आविचारितेति** । ईश्वरार्पणबुद्ध्या नित्याद्यनुष्ठानाद्विकसितचेताः श्रुताद्वाक्यात्प्रतीचि लब्धबुद्धिस्तद्बलादविद्यातज्जध्वस्तौ सदा निर्व्यापारः सन्नात्मन्येव स्वे महिम्नि तिष्ठतीत्यर्थः । अविद्यानिवृत्त्या तत्कार्यनिवृत्तौ स्वमहिमप्रतिष्ठत्वे प्रतिबन्धवैधुर्यमथेत्युच्यते ॥ १९२ ॥

**अपेक्षाज्ञानहेतूत्थं कार्यकारणवस्त्वतः ॥**
**विचार्यमाणं तन्नास्ति व्योम्नि कार्ष्ण्यमिवाऽऽत्मनि ॥ १९३ ॥**

प्रत्यग्धिया तन्मोहहतावपि कुतो जगतो ध्वस्तिर्न च तदध्वस्तौ पुमर्थसमाप्तिरित्याशङ्क्याऽऽह । **अपेक्षेति** । कारणापेक्षावत्कार्यापेक्षावच्च यज्ज्ञानं तेन हेतुना व्यक्तं कार्यादि न तदात्मनि वस्तुतोऽस्त्यतो नभसि नीलत्वमिव्या जगदपि निरूप्यमाणं विद्यापोद्यमित्यर्थः ॥ १९३ ॥

**शब्दप्रवृत्तिहेतूनां प्रत्यगात्मन्यसंभवात् ॥**
**प्रमाणगोचराणां च स्वतः सिद्धेर्न निह्नतिः ॥ १९४ ॥**

जगतो व्योमकार्ष्ण्यवन्मोहोत्थत्वान्निषेध्यत्वेऽपि न तन्निषेधेनाऽऽत्मा प्रतिपादयितुं पार्यते न हि कार्ष्ण्यनिषेधेन प्रतिपाद्यते व्योमेत्याशङ्क्याऽऽह । **शब्देति** । अगृह्य

---

१ ख. सिद्धप्र ।

प्रतीचि कूटस्थेऽद्वये षष्ठ्याद्ययोगान्न विधिमुखप्रतिपादनं तन्निषेधद्वारं तदित्यर्थः । यत्तु व्योमवदस्य निषेधद्वारा न प्रतिपादनमिति तत्राऽऽह । **प्रमाणेनेति ।** तत्खल्वनुमानादिगोचरत्वान्न निषेधद्वारा प्रतिपाद्यते प्रत्यगात्मा तु शब्दादिहीनो मानान्तराविषयो न चाऽऽगमोऽपि तस्मिन्विधिद्वारा क्रमते तन्निषेधद्वारं तत्प्रतिपादनमित्यर्थः । यन्न विधिमुखेनोच्यते तन्नास्ति यथा वन्ध्यासुतादि तदात्माऽपि विधिमुखेनानुक्तेरसन्नित्याशङ्क्याऽऽह । **स्वत इति ॥ १९४ ॥**

**मानाभिधानविषयो यावन्नाऽऽत्मानमात्मनि ॥**
**लभते प्रत्यगात्मानं न नञ्तावन्निवर्तते ॥ १९५ ॥**

अन्यानपेक्षसत्तास्फूर्तित्वात्प्रतीचो न नास्तितेत्येतदेव स्फुटयति । **मानेति ।** अयं हि व्यवहारे सोपाधिः शब्देतरमानविषयः स पुनः सर्वविशेषापोहेन परमार्थस्वरूपेण यावदवस्थानं न लभते तावदुपाधिविषयो निषेधो न निवृणोतीत्यर्थः ॥ १९५ ॥

**निरस्ताज्ञानतत्कार्ये लब्ध आत्मन्यथाऽऽत्मना ॥**
**निषेध्यहेतौ प्रध्वस्ते निषेधोऽपि निवर्तते ॥ १९६ ॥**

कथं तर्हि नञो निवृत्तिरत आह । **निरस्तेति ।** प्रथमपादार्थं स्फोरयति । **निषेध्येति ।** अज्ञानं तत्कार्यं च निषेध्यं तदेव प्रतियोगित्वेन निषेधस्य हेतुस्तस्मिन्ध्वस्ते सतीति यावत् । निषेध्यनिवृत्तौ निषेधावस्थानहेत्वभावोऽथशब्दार्थः ॥ १९६ ॥

**प्रमातृत्वादिना यावत्किंचिदत्र विवक्षितम् ॥**
**तदभावश्च तत्सर्वं नेतीति प्रतिषिध्यते ॥ १९७ ॥**

प्रतीचोऽनिषेधेऽपि द्वैतनिषेध्यस्य निषेधकान्तरमस्ति चेदनवस्था तदभावे निषेधस्थितेरात्मनः सविशेषतेत्याशङ्क्याऽऽह । **प्रमातृत्वादिनेति ॥ १९७ ॥**

**निषेध्यं सर्वमेवैतदनिषेध्यात्मवस्तुगम् ॥**
**अतो नाभावनिष्ठः स्यादभावस्यापि निह्नवात् ॥ १९८ ॥**

निषेधस्यापि निषेधे कथं नानवस्थेत्याशङ्क्याऽऽह । **निषेध्यमिति ।** एतेनाभावनिष्ठताऽपि निषेधस्यापास्तेत्याह । **अत इति ।** स्यान्निषेध इति शेषः ॥ १९८ ॥

**नेति नेतीत्यतो वीप्सा जिघृक्षितनिषेधतः ॥**
**बुभुत्सितस्य कृत्स्नस्य वीप्सैवातो निषेधनी ॥ १९९ ॥**

इतिनोपात्तद्वैतस्य प्रत्यङ्मात्रत्वेन निषेधात्प्रतीचि वाक्यार्थेऽपि किमर्थं नकारद्वयमितिद्वयं चेत्याशङ्क्याऽऽह । **नेतीति ।** यतो यद्यत्प्राप्तं तन्निषिध्यतेऽतो वीप्सेयमित्यर्थः । आकाङ्क्षादिनिवृत्तेश्चैवमित्याह । **जिघृक्षितेति ।** तदेव स्फुटयति । **बुभुत्सितस्येति ।** यतः सर्वस्याऽऽकाङ्क्षितस्य वीप्सा निषेधन्यतः सैव युक्तेत्यर्थः ॥ १९९ ॥

१ ख. °त्मना । ल° । २ ख. °त्माऽय न । ३ ख. °षेधस्य ।

ज्ञानक्रियाभ्यां व्याप्योऽयमित्याकाङ्क्षा निवर्तते ॥
अप्रमित्सित एकस्मिन्निष्ठां यात्यचिकीर्षिते ॥ २०० ॥

तत्पक्षेऽपि कथं सर्वाकाङ्क्षाशान्तिरित्याशङ्क्याऽऽह । ज्ञानेति । अयमर्थो ज्ञेयः, कार्यश्चायमित्याकाङ्क्षा वीप्सायां निवर्तते प्राप्तस्य सर्वस्य निषेधाज्ज्ञानक्रिययोरविषये च तादात्म्यरूपां निष्ठां विद्वानातिष्ठते तद्युक्ता वीप्सेत्यर्थः ॥ २०० ॥

रज्जुयाथात्म्यविज्ञानात्सर्प[1]वत्कारणात्मनः ॥
निषेधो नान्यतः शक्यः कर्तुं वर्षशतैरपि ॥ २०१ ॥

स्थूलाद्यभावधियैव द्वैततद्धेतुध्वस्तेर्ब्रह्मनिष्ठानर्थक्यादभावपक्षाद्वीप्सापक्षे न विशेष इत्याशङ्क्य ब्रह्मतत्त्वधीरेव बाधिकेत्यत्र दृष्टान्तमाह । रज्ज्वेति ॥ २०१ ॥

यद्यत्प्राप्तं जगत्यस्मिंस्तत्तत्सर्वं निषिध्यते ॥
एवं च सत्यनिर्दिष्टाशङ्काऽपि विनिवर्तते ॥ २०२ ॥

वीप्साफलमाह । यद्यदिति । निर्देश्यस्य सर्वस्य निषेधे किं जातं तदाह । एवं चेति । वाङ्मनसविषयस्याशेषस्य नञ्भ्यां निषेधे तदतीतं प्रत्यङ्मात्रं ब्रह्मेत्यर्थादादिष्टं निरवधि निषेधायोगात्तथाच तदनिर्दिष्टत्वशङ्काध्वस्तिरित्यर्थः ॥ २०२ ॥

न चेद्वीप्सा तदा वाक्यद्वयमेतद्विवक्षितम् ॥
उक्तद्वयनिषेधेन तस्य चोपक्षयाद्भवेत् ॥ २०३ ॥
अनुक्तविषयाशङ्का सर्वस्याप्रतिषेधतः ॥
यदि वाऽभावविषया न ह्यभावो निषिध्यते ॥ २०४ ॥

वीप्सापक्षे गुणमुक्त्वा पक्षान्तरे दोषमाह । न चेदिति । वाक्यद्वयपक्षे को दोषस्तत्राऽऽह । उक्तेति । मूर्तामूर्तनिषेधेन वाक्यद्वयोपरतेरशेषव्यपदेश्यानिषेधात्किंचिदनुक्तं व्यपदेश्यमेव ब्रह्मेत्याशङ्का स्यादित्यर्थः । शङ्कान्तरमाह । यदि वेति । इतिभ्यामुपनीतमूर्तामूर्तयोरेव नञ्भ्यां निषेधादभावानिषेधात्तन्निष्ठं वाक्यमिति शङ्कास्यादित्यर्थः ॥ २०३ ॥ २०४ ॥

साक्षान्मानप्रसिद्धेषु प्रतिषिद्धेतरग्रहः ॥
अप्रसिद्धे प्रसिद्धानां निषेधाच्छून्यताग्रहः ॥ २०५ ॥

तदेव साधयति । साक्षादिति । प्रमितेषु भूतलादिषु प्रमितानामेव घटादीनां धर्मित्वप्रतियोगित्वग्रहात्तदुभयं साक्षादशून्यं निष्ठति । अप्रमिते ब्रह्मणि प्रमितं जगन्निषिध्यते चेद्ब्रह्म शून्यावसायि स्याद्ब्रह्मणि मानाभावान्मितस्य जगतो निषिद्धत्वादित्यर्थः ॥ २०५ ॥

---

[1] ख. ग. °र्पवत्कारणात्मना । नि° ।

आदेश इत्युपक्रम्य प्रतिषेधोऽयमुच्यते ॥
साक्षादादिश्यते येन तादृगादेश उच्यते ॥ २०६ ॥

भवतु वाक्यस्य शून्यनिष्ठतेत्याशङ्क्याऽऽह । **आदेश इति** । ब्रह्मण आदेश इत्युक्त्वा निषेधोक्तेरयमादेशो निषेधाख्यो ब्रह्मप्रतिपादनपर एवेत्यर्थः ॥ २०६ ॥

निषेधवर्त्मना तस्मादनिषेध्यात्मसाक्षिणा ॥
ज्ञाताज्ञातं निषिध्याथ सदा दृष्टौ प्रतिष्ठति ॥ २०७ ॥

वाक्यस्य शून्यनिष्ठत्वायोगे फलितमाह । **निषेधेति** । निषेधादेशेन कार्यकारणं जगन्निषेधायोग्यसाक्षिब्रह्मरूपेण निषिध्य स्वरूपेण तिष्ठति विद्वानित्यर्थः । उपाधिनिवृत्तावनुपहितरूपेण विदुषोऽवस्थितिरुचितेत्यथशब्दार्थः ॥ २०७ ॥

यथा श्रोत्रधिया रूपं रूपहेत्वसमन्वयात् ॥
नाग्रहीन्न च गृह्णाति न ग्रहीष्यति शब्दवत् ॥ २०८ ॥
प्रत्यक्तत्त्वे विनिर्ज्ञाते नेति नेतीतिवाक्यतः ॥
तद्वत्सकारणोऽनात्मा नाभूदस्ति भविष्यति ॥ २०९ ॥

जगदेकदा निषिद्धमपि पुनः पुनरुद्भविष्यति सर्पादौ तथा दृष्टेरित्याशङ्क्य दृष्टान्तेन निराचष्टे । **यथेत्यादिना** । रूपेण हेतुना श्रोत्रस्य संबन्धाभावादिति यावत् ॥ २०८ ॥ २०९ ॥

नान्यदज्ञानतोऽस्तित्वं द्वितीयस्याऽऽत्मनो यथा ॥
निवृत्तिस्तद्वदेवास्य नावगत्यात्मनोऽपरा ॥ २१० ॥

सकारणद्वैतनिवृत्तिरात्मनोऽन्येत्याशङ्क्य पूर्वोक्तं स्मारयति । **नान्यदिति** ॥ २१० ॥

अनन्यायत्तमैकात्म्यं यदा साक्षाद्व्यवस्थितम् ॥
व्येव त्वेति प्रतिज्ञेयं तदा स्यात्सफलोदिता ॥ २११ ॥

वाक्यस्याभावनिष्ठत्वायोगाद्वीप्सया सर्वमारोपितं साक्षिरूपेण निरस्य तदात्मना तिष्ठति विद्वानित्युक्त्वा वीप्सापक्षे हेत्वन्तरमाह । **अनन्येति** ॥ २११ ॥

नेति नेतीत्यतो वीप्सासंभवादुक्तवस्तुनः ॥
कृतार्थता तथाच स्यादन्यथा नोपपद्यते ॥ २१२ ॥

तत्पक्षमुपसंहरति । **नेतीति** । वीप्साश्रयणे विवक्षितस्य प्रतिज्ञार्थवत्त्वादेर्वस्तुनः संभवादिति हेत्वर्थः । उक्तार्थसिद्धिरेव मा भूदित्याशङ्क्याऽऽह । **कृतार्थतेति** । अनन्यायत्तमैकात्म्यमित्यादेरुक्तार्थसिद्धावेव पुरुषस्य कृतार्थता **नान्यथेह** चेदवेदीदथ सत्यमस्तीत्यादिश्रुतेरित्यर्थः ॥ २१२ ॥

परागर्थेषु सक्ता धीः प्रत्यगर्थानुरञ्जनात् ॥
निषिद्धाऽतः परागर्थात्प्रतीचि लभते स्थितिम् ॥ २१३ ॥

निषेधफलमुपसंहरति । **परागिति** । मनः स्वभावतो बाह्यविषयं कथंचिद्दैववशात्प्रत्यगनुषक्तं विषयेभ्यो निषिद्धं सत्परिशेषात्प्रतीचि स्थास्यतीत्यर्थः ॥ २१३ ॥

**व्यतिरेकस्य सिद्धत्वादादेशोक्तेः पुरैव हि ॥**
**साक्षाद्ब्रह्मत्वसिद्ध्यर्थमादेशोऽयमथोच्यते ॥ २१४ ॥**

भाष्यमाश्रित्य युक्तितो निषेधवाक्यं व्याख्यातम् । इदानीमिदमेव विधिमुखेन बोधकमित्यर्थान्तरं विवक्षुरस्यानिरेकार्थतेति पक्षं प्रत्याह । **व्यतिरेकस्येति** । षष्ठीनिर्देशे व्यतिरेकसिद्धिरिति द्योतयितुं हिशब्दः । पूर्वमेव ब्रह्मणो मूर्तादेर्व्यतिरेकत्वाभावान्नाऽऽदेशोक्तिस्तदर्था चेत्तर्हि किमर्थेत्यत आह । **साक्षादिति** । पदार्थशोधनानन्तरं मुमुक्षोः साक्षादेव ब्रह्मभावं बोधयितुमादेशोक्तिरित्यर्थः ॥ २१४ ॥

**न निषेधो निषेध्यार्थो लक्षणार्थपरत्वतः ॥**
**ब्रह्मणो मान्तरासिद्धेः शून्यतैव प्रसज्यते ॥ २१५ ॥**

केचिदुक्तौ पक्षावसृशन्तो मूर्तादिनिषेधार्थतामादेशोक्तेराहुस्तान्प्रत्याह । **नेत्यादिना** । न हि निषेधादेशो निषेध्यमूर्तादिनिषेधार्थो लक्षणया तत्समर्पणपरत्वादित्यर्थः । विपक्षे दोषमाह । **ब्रह्मण इति** । प्रमितस्य मूर्तादेर्निषिद्धत्वाद्ब्रह्मणश्चाप्रमितत्वात्तात्त्विकी शून्यतैव विश्वस्य स्यादित्यर्थः ॥ २१५ ॥

**षष्ठ्युक्तेरेव संसिद्धा मूर्तादेर्ब्रह्मणोऽन्यता ॥**
**ततश्च जामितार्थोक्तितः स्यात्पारिशेष्यगीः ॥ २१६ ॥**

निषेधपक्षायोगे ब्रह्मणो मूर्तादिस्वामिभावात्पारिशेष्याद्व्यतिरेकपक्षः स्यात्तु न पूर्वतत्सिद्धिः साधकाभावादित्याशङ्क्याऽऽह । **षष्ठीति** । द्वे वावेत्यत्रैव षष्ठ्या मूर्तादेर्ब्रह्मणोऽन्यता सिद्धा तदादेशवाक्येऽपि व्यतिरेकोक्तिश्चेत्पुनरुक्तिरित्यर्थः । यत्तु पारिशेष्याद्व्यतिरेकार्थतेति तत्राऽऽह । **नेति** । निषेधोक्त्या मूर्तादेर्ब्रह्माभेदे निषिद्धे पारिशेष्याद्व्यतिरेकसिद्धिरित्युक्तिरयुक्ता षष्ठ्यैव तत्सिद्धौ पारिशेष्यानवकाशादित्यर्थः ॥ २१६ ॥

**शक्यते न निषेद्धुं च प्रत्यक्षाद्याश्रितत्वतः ॥**
**निषेधान्न पुमर्थोऽपि कश्चित्स्यात्संमर्माहितः ॥ २१७ ॥**

व्यतिरेकपक्षं निरस्य निषेधपक्षे दोषान्तरमाह । **शक्यत इति** । तदाश्रित्य तद्विषयत्वेन स्थितं मूर्ताद्यशक्यं निषेद्धुं तद्विरोधादित्यर्थः । यदि रूप्यादिर्भावदप्रत्यक्षादिरभासत्वात्तदर्थनिषेधो युक्तस्तदाऽपि नाऽऽदेशोक्तेर्निषेधार्थता तन्मात्रस्याफलत्वादित्याह । **निषेधादिति** ॥ २१७ ॥

**निषेधमात्रनिष्ठत्वे न चाऽऽदेशो भवेत्प्रभोः ॥**
**ब्रह्म मूर्तादि नेत्युक्तौ मूर्तादेर्न निषेधगीः ॥ २१८ ॥**

किंच निषेधमात्रनिष्ठं वा वाक्यं तद्वारा ब्रह्मनिष्ठं वा नाऽऽद्यः प्रक्रमविरोधादित्याह ।

**निषेधेति**। द्वितीयेऽस्मत्पक्षप्राप्तिरिति चकारार्थः। व्यतिरेकपक्षेऽपि न तन्मात्रपरं वाक्यमुपक्रमविरोधात्तद्द्वारा ब्रह्मपरं चेत्तत्राऽऽह। **ब्रह्मेति** ॥ २१८ ॥

**ततश्च ब्रह्मतासिद्धिर्द्वितीये सति वस्तुनि ॥**
**नेयत्र त्वेति प्रतिज्ञार्थो नापि चाऽऽविष्कृतो भवेत् ॥ २१९ ॥**
**पारिशेष्यादतोऽसिद्धिः स्याद्विवक्षितवस्तुनः ॥**
**यथा सिद्धिस्तथा व्याख्या कार्येहोक्तेरतोऽञ्जसा ॥ २२० ॥**

मूर्तादेरनिषेधेऽपि व्यतिरेकोक्त्या वाक्यपर्यवसाने का हानिरित्याशङ्क्याऽऽह। **ततश्चेति**। पक्षद्वयसाधारणं दोषमाह। **न्येवेति**। यदि मूर्तादिनिषेधस्तस्य वा ब्रह्माभेदे निषिद्धे पारिशेष्यात्ततोऽर्थान्तरत्वविधिस्तदादेशोक्त्या प्रतिज्ञार्थो न प्रकटितः स्यादनिषिद्धवस्त्वन्तरस्य वा निषेधस्य वा मूर्तादेर्वा द्वितीयस्य सत्त्वादद्वयार्थासिद्धेरित्यर्थः। कथं तर्हि निषेधोक्तिर्निर्वहत्यत आह। **यथेति**। पक्षद्वयेऽपि यतोऽभीष्टब्रह्मासिद्धिरतो यथा तत्सिद्धिस्तथा तस्मिन्नेव ब्रह्मणि विषये निषेधोक्तेः साक्षाद्व्याख्या कार्येति योजना ॥ २१९ ॥ २२० ॥

**सिद्धो निषेधः प्रागेव सर्वस्यानात्मवस्तुनः ॥**
**प्रत्यग्याथात्म्यविज्ञानादन्योन्यव्यभिचारतः ॥ २२१ ॥**

तामेव व्याख्यातुमादेशोक्तेरर्वागेव निषेधव्यतिरेकौ सिद्धावित्यनुवदति। **सिद्ध इति**। अनात्मनिषेधे हेतुमाह। **अन्योन्येति** ॥ २२१ ॥

**अन्योन्यव्यभिचारोऽस्य वीक्ष्यतेऽनात्मवस्तुनः ॥**
**स्वरूपव्यभिचारोऽपि सुषुप्तादौ स्वसाक्षिगः ॥ २२२ ॥**

तमनुभवेन साधयति। **अन्योन्येति**। न केवलं मिथो व्यभिचारादनात्मा कल्पितो ज्ञाननिषेध्यः किंत्वात्मव्यभिचारस्य स्वापादौ स्वानुभवसिद्धेश्चेत्याह। **स्वरूपेति**॥२२२॥

**यथा मात्रादिसत्तेयं प्रत्यक्संवित्तिसिद्धिका ॥**
**प्रमात्रादेरभावोऽपि प्रत्यग्बोधाश्रयात्तथा ॥ २२३ ॥**

अनुवादव्याजेन निषेधोक्तेरर्थान्तरं निरस्य स्वानुगुणव्याख्यामाचक्षाणो नञर्थेन प्रत्यगर्थस्य लक्ष्यत्वं विवक्षुस्तयोः साक्षिसाक्ष्यसंबन्धं दृष्टान्तेनाऽऽह। **यथेति** ॥ २२३ ॥

**अविचारितसंसिद्धिरात्माविद्यैकरूपतः ॥**
**सिद्धायतेऽखिलोऽनात्मा स्वतःसिद्धात्मसंश्रयात् ॥ २२४ ॥**

भावाभावरूपोऽनात्माऽनुभवसिद्धश्चेत्तद्वत्तस्य सत्यतेत्याशङ्क्याऽऽह। **अविचारितेति**। सर्वोऽनात्मा स्वप्रकाशात्मप्रसादाद्भासमानवद्भवति स च दुर्निरूपत्वात्प्रत्यगविद्यैकस्वभावस्तत्कृतोऽस्य सत्यतेत्यर्थः ॥ २२४ ॥

अतिरोहितसंवित्को व्यपास्ताशेषविक्रियः ॥
अनन्यमातृमानादिर्दृष्टिमात्रात्मकत्वतः ॥ २२५ ॥

कथमात्मनः स्वप्रकाशतेत्याशङ्क्य चिद्रूपत्वादित्याह । **अतिरोहितेति ।** तथाऽप्यात्माऽनात्मानं साधयति चेद्दीपवद्विकारी स्यादित्याशङ्क्याऽऽह । **व्यपास्तेति ।** संविद्रूपत्वं साधयति । **अनन्येति ।** मात्रादिरूपत्वेन नानारसत्वं शङ्कित्वाऽऽह । **दृष्टीति ।** न नानारसतेति शेषः ॥ २२५ ॥

भावाभावात्मिका सिद्धिर्येयं सर्वाऽप्यनात्मनः ॥
तद्विरुद्धात्मकान्मत्तो मय्येवासौ प्रसिध्यति ॥ २२६ ॥

रूपादिमतो दीपादेस्ताद्दग्घटादिसाधकत्वदृष्टेरात्मनोऽपि द्वैतसाधकत्वे तद्गतजाड्यादिप्रसङ्गस्तस्मादन्यत्रैव तत्साधकत्वं स्यादित्याशङ्क्याऽऽह । **भावेति ।** न हि दीपवदात्मा साधकोऽनात्मत्वापत्तेरिति भावः ॥ २२६ ॥

अनन्यानुभवेनैव भावाभावात्मभूमिषु ॥
प्रत्यक्कूटस्थ आत्मानं पश्यन्नास्ते फलात्मना ॥ २२७ ॥

स साधकान्तरापेक्षः साधकत्वाद्दीपवदित्यनवस्थामाशङ्क्याऽऽह । **अनन्येति ।** पश्यन्नित्युक्त्या दर्शनकर्तृत्वप्राप्त्या कौटस्थ्यदौस्थ्यमित्याशङ्क्याऽऽह । **फलेति** ॥ २२७ ॥

अतो मात्रादिसंभेदो यत्र यत्र निवर्तते ॥
तत्र तत्रैकलः प्रत्यक्स्वमहिम्नैव सिध्यति ॥ २२८ ॥

प्रत्यगर्थस्य कूटस्थाद्वयचिदेकरसस्य नञर्थस्य च साक्षिसाक्ष्यसंबन्धमुक्तमुपसंहरति । **अत इति ।** प्रकृतं फलात्मकत्वमतःशब्दार्थः । अवस्थाभेदो वीप्सया गृह्यते ॥ २२८ ॥

प्रमात्रादेरभावोऽतो यः सिद्धः स्वात्मबोधतः ॥
नञ्वृत्तिस्तं सदाबुद्धं लक्षयत्यपृथक्प्रमम् ॥ २२९ ॥

उक्तं संबन्धमनूद्य नञर्थस्य प्रत्यगर्थलक्षकत्वमाह । **प्रमात्रादेरिति ।** नञो वृत्तिर्वाचकत्वेन यस्मिन्निति नञ्वृत्तिर्मात्राद्यभावः स स्वसाधकं बोधैकरसं प्रत्यञ्चं लक्षयत्यतो निषेधवाक्ये नञस्त्वमर्थ इत्यर्थः । सदाबुद्धमित्येतद्विवृणोति । **अपृथक्प्रममिति** ॥ २२९ ॥

वैविक्त्यान्न च मानादेरनन्यानुभवात्मनि ॥
सहेतुकस्य वृत्तिः स्यान्नित्यबोधावबोधिनि ॥ २३० ॥

कस्मान्नञर्थेन स लक्ष्यते प्रत्यक्षादिबलादेव तत्सिद्धेरत आह । **वैविक्त्यादिति ।** मात्रादेः स्वहेत्वविद्यासहितस्य न प्रतीच्यनुभवैकरसे संभवो जडाजडयोरत्यन्तविविक्त-

---

१ क. °स्थमात्मा° । २ ख. ग. फलात्मतः ।

त्वादतो नाध्यक्षादिना प्रत्यग्धीरित्यर्थः । किंच मानादेरपि साधके साधकत्वेन न तद्वृत्तिरित्याह । **नित्येति** ॥ २३० ॥

**अविद्याद्यतिरेकेण कारणादिविधर्मकम् ॥**
**लब्धमात्मात्मकं वस्तु प्रतीचोऽनन्यमानतः ॥ २३१ ॥**

वैविक्त्यादितिहेत्वसिद्धिमाशङ्क्याऽऽह । **अविद्यादीति** । तस्यास्तज्जाड्याच्चातिरेकेण हेतुना द्वयविलक्षणं प्रतीचः स्वभावभूतं वस्तु स्वानुभवादेव लब्धमतो विविक्तताऽऽत्मानात्मनोरित्यर्थः ॥ २३१ ॥

**एतद्वस्तु स्वतःसिद्धं प्रमात्राद्यनपेक्षतः ॥**
**सर्वस्यैव ततः सिद्धेः कथं सिध्येत्तदन्यतः ॥ २३२ ॥**

अनन्यमानत्वासिद्धिमाशङ्क्याऽऽह । **एतदिति** । तत्र युक्तिमाह । **सर्वस्येति** ॥ २३२ ॥

**उक्ता प्रमेयसंसिद्धिः स्वमहिम्नैव नञ्श्रुतेः ॥**
**तस्य ब्रह्मत्वबोधाय नेति ब्रह्मेतिनोच्यते ॥ २३३ ॥**

नञर्थमनुवदति । **उक्तेति** । स्वमहिम्नैव सिद्धः प्रत्यगात्मा त्वमर्थो नञर्थोऽतो नञ्पदस्य विषयसिद्धिरुक्तेत्यनुवादार्थः । इतिशब्दार्थं वदन्वाक्यार्थमाह । **तस्येति** । साक्षिणो नञर्थस्य ब्रह्मत्वज्ञापनाय नेतीति वाक्यं प्रमाणमुच्यते इतिशब्देन मूर्तादिविशिष्टं गृहीत्वा विशेषणत्यागेन केवलं ब्रह्म लक्ष्यते तस्मादितिशब्दोपात्तं ब्रह्म नञर्थः साक्षीति वाक्यार्थः ॥ २३३ ॥

**आत्मप्रत्ययमामेयो लक्षितो यो नञाऽञ्जसा ॥**
**अविद्यादेस्तदात्मत्वादिति ब्रह्मेति बोध्यते ॥ २३४ ॥**

जीवब्रह्मणोरैक्ये नेतीति वाक्यं मानमित्ययुक्तं परिच्छिन्नस्यापरिच्छिन्नत्वायोगादित्याशङ्क्याऽऽह । **आत्मेति** । वाच्यस्य परिच्छिन्नत्वेऽपि लक्ष्यस्य तदभावात्तदन्यवस्त्वभावादितिशब्दलक्षितब्रह्म नञर्थप्रत्यङ्मात्रमिति बोध्यते वाक्येनेत्यर्थः ॥ २३४ ॥

**प्रत्यङ्मोहतदुत्थस्य प्रत्यग्याथात्म्यबोधतः ॥**
**बाधितत्वादतोऽवोचदिति ब्रह्मेति मोहनुत् ॥ २३५ ॥**

आत्ममात्रत्वमविद्यादेरयुक्तं मिथो विरोधात्तन्न प्रतीचो ब्रह्मत्वबोधि वाक्यमित्याशङ्क्याऽऽह । **प्रत्यगिति** । परिच्छेदहेत्वभावादितिशब्दलक्ष्यं ब्रह्म नञर्थः प्रत्यगात्मेत्येतमर्थं नेतिवाक्यमवदत्तच्च धीद्वारा मोहध्वंसीत्यर्थः ॥ २३५ ॥

**आदेशं प्रत्यातिमहानथात इति संभ्रमः ॥**
**तेनासदृश आदेशो नन्वयुक्तोऽयमीर्यते ॥ २३६ ॥**

आदेशवाक्यं व्याख्याय न हीत्याद्यवतारयितुं शङ्कयति । **आदेशमिति** । संभ्रमः

संरम्भस्तस्य महत्त्वं तात्पर्यपूर्वकत्वमस्य न प्रकरणान्तरेणातिशयं विवक्षित्वाऽतिशब्दः ॥ २३६ ॥

**युक्त एवायमादेशो न यतो विद्यते परः ॥**
**आदेशोऽतोऽयमेवात्र ब्रह्मण्यादेश इष्यते ॥ २३७ ॥**

प्रक्रमासादृश्येनाऽऽदेशस्यायुक्तत्वं प्रत्याह । **युक्त इति** । तत्र हेतुः । **नेति** । तस्य युक्ततां निगमयति । **अत इति** ॥ २३७ ॥

**आदिदिक्षितमेतस्य तत्त्वं यद्ब्रह्मणः परम् ॥**
**यावन्तस्तत्र निर्देश्यास्तेऽर्थाः सर्वे निवर्तिताः ॥ २३८ ॥**

कथं तस्मिन्नादेशान्तराभावो विधिरूपस्यापि संभवादित्याशङ्क्याऽऽह । **आदिदिक्षितमिति** । यत्परं तत्त्वं ब्रह्मणो निर्दिष्टमिष्टं तत्र यावन्तो मूर्तादयो निर्देशयोग्यास्तेषां नेतीति निरासान्न विधिमुखं तद्बोधनमित्यर्थः ॥ २३८ ॥

**निवृत्तिश्च यथोक्तैव तेषामैकात्म्यलक्षणा ॥**
**भिन्नदेशस्थितिस्त्वत्र वास्तवी नोपपद्यते ॥ २३९ ॥**

निषेधमुखेनापि नाद्वयबोधनं मूर्तादिनिवृत्त्या द्वैतापत्तेरित्याशङ्क्य नान्यदज्ञानतोऽस्तित्वमित्यादावुक्तं स्मारयति । **निवृत्तिश्चेति** । किंच ब्रह्मणोऽन्यत्र भावाभावस्थितिरापानतो वस्तुतो वा प्रथममङ्गीकृत्य द्वितीयं प्रत्याह । **भिन्नेति** ॥ २३९ ॥

**अव्यावृत्ताननुगतो ब्रह्मशब्दार्थ इष्यते ॥**
**मुख्योऽन्यस्मिन्सति यतो ब्रह्मार्थो नावसीयते ॥ २४० ॥**

भावाभावयोर्ब्रह्मणोऽन्यत्र वस्तुतो न स्थितिरित्यत्र ब्रह्मशब्दार्थोक्तिपूर्वकं हेतुमाह । **अव्यावृत्तेति** ॥ २४० ॥

**शब्दप्रवृत्तिहेतूनामैकात्म्येन समाप्तितः ॥**
**तथा तदभिधेयानामादेशोऽयं मतः परः ॥ २४१ ॥**

इतश्च निषेधद्वारैव ब्रह्मण्यादेशो युक्तिमानित्याह । **शब्देति** ॥ २४१ ॥

**अभिधाभिधेयसंबन्धमङ्गीकृत्य यतोऽक्षरे ॥**
**न कश्चिदपि शब्दोऽत्र साक्षाद्ब्रह्मणि वर्तते ॥ २४२ ॥**

विधिरूपादेशस्यात्रासंभवमुपसंहरति । **अभिधेति** । कूटस्थासङ्गाद्वये निमित्ताभावान्न मुख्या शब्दवृत्तिरित्यर्थः ॥ २४२ ॥

**आदेशो नेति नेत्येव तेनेह घटतेऽञ्जसा ॥**
**तदबोधप्रसूतानामाकाङ्क्षाणां निषेधनः ॥ २४३ ॥**

१ क. ग. °भासतः । २ क. ग. °शोऽयम° ।

निषेधादेशस्य तत्र घटमानत्वमुपसंहरति । **आदेश इति** । विधिमुखादेशायोगे हेतुं तेनेत्युक्त्वा हेत्वन्तरमाह । **तदबोधेति** ॥ २४३ ॥

**मूर्तामूर्तं हि सत्याह्वं प्राणाः सत्यास्तदात्मतः ॥**
**क्षेत्रज्ञस्तदुपाधित्वात्सत्य इत्यभिधीयते ॥ २४४ ॥**

न हीत्यादि व्याख्यायाथेत्यादौ षष्ठ्यन्तसत्यशब्दार्थमाह । **मूर्तेति** । सच्च त्यच्चाभवदितिश्रुत्यन्तरप्रसिद्धिमुक्तेऽर्थे द्योतयति हिशब्दः । भूतपञ्चकं तत्कार्यं तदुपाधिकं च चैतन्यं सत्यमित्यर्थः ॥ २४४ ॥

**अनिर्देश्यस्य निर्देश्या ये भेदाः कार्यलक्षणाः ॥**
**तेषु लब्धास्पदं नाम परस्मिन्नुपचर्यते ॥ २४५ ॥**

सेश्वरं सजीवं सर्वं जगदस्तु षष्ठ्यर्थस्तथाऽपि न प्रथमार्थो निरुपाधिकं ब्रह्म तत्र शब्दप्रवृत्तेर्निरस्तत्वादित्याशङ्क्य लक्षणया तत्र सत्यशब्दोत्पत्तिं प्रतिजानीते । **अनिर्देश्यस्येति** ॥ २४५ ॥

**मूर्तामूर्तात्मकं सत्यं प्राणादेः कार्यरूपिणः ॥**
**तस्याप्येतत्परं सत्यं यन्नेतीत्यवधारितम् ॥ २४६ ॥**

षष्ठ्यर्थानुवादेन विवक्षितं प्रथमार्थमाह । **मूर्तेति** ॥ २४६ ॥

**उक्तवस्त्वतिरेकेण नामीषां सत्यता यतः ॥**
**न चाप्यसत्यता तस्मात्तेषां सत्यं परं पदम् ॥ २४७ ॥**

परस्य स्वरूपेण सत्यत्ववन्मूर्तादीनामपि तद्योगात्कथमिदं सत्यस्य सत्यमित्याशङ्क्याऽऽह । **उक्तेति** ॥ २४७ ॥

**आत्मवन्तो यथा रज्ज्वा रज्जुसर्पादयस्तथा ॥**
**आत्मवन्तो निरात्मानः प्राणाद्याः प्रत्यगात्मना ॥ २४८ ॥**

ब्रह्मणा तेषां लब्धात्मता न स्वातन्त्र्येणेत्येतद्दृष्टान्तेनाऽऽह । **आत्मवन्त इति** ॥ २४८ ॥

**यत एवमतोऽन्वीक्ष्य मूर्तामूर्तादिवर्त्मना ॥**
**सत्यशब्दाभिधेयार्थं तया द्वारा परं पदम् ॥ २४९ ॥**
**व्यपदिश्यमानमैकात्म्यं सत्यस्याऽऽत्मानमद्वयम् ॥**
**द्रष्टव्यमात्मनैवैनं सत्यं पश्येद्यथोदितम् ॥ २५० ॥**

तेनैव तेषामात्मवत्त्वे फलितमाह । **यत इति** । रज्जुसर्पादेरिव सर्वस्य ब्रह्मणैवाऽऽत्मत्वान्मूर्तादिरूपेण षष्ठ्यर्थं सर्वमालोच्य तद्द्वारा प्रथमार्थमुच्यमानमकार्यकारणमैकात्म्यमादाय तदेवाद्वयं षष्ठ्यर्थस्यापि सत्तास्फूर्तिदं दृष्टियोग्यं ज्ञात्वा दर्शितरूपमनति-

---

१ क. °त्मनः । क्षे° ।

क्रम्य स्थितमेनं परात्मानं प्रथमालक्ष्यं स्वरूपत्वेनैव मुमुक्षुरनुसंदध्यादित्यक्षरार्थः ॥२४९॥ ॥ २५० ॥

**अतोऽव्याकृतयाथात्म्यं व्याकृतेनोपदिश्यते ॥**
**सत्यस्य सत्यमिति तन्नान्यथा व्यपदेशभाक् ॥ २५१ ॥**

रज्ज्वा सर्पादेरात्मवत्त्वमन्वयादिसिद्धं ब्रह्मणा सर्वस्याऽऽत्मवत्त्वे किं मानमित्याशङ्क्य तत्र सत्यशब्दप्रवृत्तिरित्याह । **अत इति** । व्याकृताव्याकृतयोर्यथोक्तं ब्रह्मयाथात्म्यमत एव तद्द्वारा सत्यस्य सत्यमिति ब्रह्मोच्यते यदि तयोर्न याथात्म्यं ब्रह्म तदा न तत्र शब्दप्रवृत्तिः स्याद्द्वारं विना साक्षादेव तस्याव्यपदेश्यत्वादित्यर्थः ॥ २५१ ॥

**व्यपदेशाय नामैतन्न स्वं नामास्य विद्यते ॥**
**ननु ब्रह्माक्षरमिति व्यपदेशोऽत्र नामभिः ॥ २५२ ॥**

मा तर्हि ब्रह्मणि व्यपदेशो भूदित्याशङ्क्याऽऽह । **व्यपदेशायेति** । स्वनामभिरेव ब्रह्मणो व्यपदेशमाशङ्क्याऽऽह । **न स्वमिति** । स्वीयनामासत्त्वमसिद्धमिति शङ्कते । **नन्विति** । अत्रेति ब्रह्मोक्तिः ॥ २५२ ॥

**कार्यकारणगे तत्त्वे नाम लब्धास्पदं यतः ॥**
**रूपाभिधेयसंबन्धमरूपाशब्दमक्षरम् ॥ २५३ ॥**
**लक्षयेन्नाञ्जसा वक्ति परं ब्रह्म कथंचन ॥**
**शब्दप्रवृत्तिहेतूनां साक्षाद्ब्रह्मण्यसंभवात् ॥ २५४ ॥**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके द्वितीयाध्यायस्य तृतीयं ब्राह्मणम् ॥ ३ ॥**

**श्लोकानामादितः समष्ट्यङ्काः—४९९३**

कार्यकारणोपाधिके ब्रह्मणि यतो नाम सावकाशमतो नोभयविलक्षणे तत्र शब्दप्रवृत्तिरिति परिहरति । **कार्येति** । द्वयविलक्षणेऽपि सत्यज्ञानादिशब्दप्रयोगोऽस्तीत्याशङ्क्याऽऽह । **रूपेति** । सोपाधिके ब्रह्मणि वाच्ये गृहीतसंबन्धं पदं विरुद्धांशत्यागेन शुद्धं लक्षयति न तु विना लक्षणां ब्रह्मणि शब्दप्रवृत्तिरित्यर्थः । तत्र मुख्यवृत्त्या शब्दाप्रवृत्तौ हेतुमाह । **शब्देति** । अतो लक्षणयैव निष्प्रपञ्चं प्रत्यग्ब्रह्म वेदान्तप्रमाणकमिति भावः ॥ २५३ ॥ २५४ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां द्वितीयाध्यायस्य तृतीयं मूर्तामूर्तब्राह्मणम् ॥ ३ ॥

अथ चतुर्थं ब्राह्मणम् ।

---

**आत्मेत्येवेति सूत्रस्य व्याख्येयं प्रस्तुता स्फुटा ॥**
**ब्रह्म तेऽहं ब्रवाणीति प्रारभ्याऽऽपूर्णवाक्यतः ॥ १ ॥**

संबन्धं वक्तुमुपयुक्तं वृत्तं कीर्तयति । **आत्मेत्येवेति** । ब्रह्म ते ब्रवाणीति व्येव त्वा ज्ञपयिष्यामीति चोपक्रम्य पूर्णवाक्यान्तो यो ग्रन्थस्तेन तार्तीयविद्यासूत्रस्य स्फुटा व्याख्या कार्येति चतुर्थादौ प्रस्तुतमित्यर्थः ॥ १ ॥

**नित्यकर्माद्यनुष्ठानसंशुद्धधिषणः पुमान् ॥**
**निःशेषकर्महेतूत्थफलसावद्यधीस्ततः ॥ २ ॥**

मुक्तिहेतुत्वेन प्रस्तुतविद्याङ्गतया संन्यासविधानायेदं ब्राह्मणमिति संबन्धं विवक्षुर्ज्ञानान्मुक्तिसिद्धौ क्रमं वदन्निहामुत्र वाऽनुष्ठितनित्यादिकर्मफलं चित्तशुद्धिरित्याह । **नित्येति** । शुद्धिफलं संसारासारतादृष्टिरित्याह । **निःशेषेति** । ततः शुद्धेरिति यावत् ॥ २ ॥

**विरक्त आग्रजात्सोऽयं तत्सावद्यसमीक्षणात् ॥**
**संसारदुःखसंस्कारस्मृतिभिः प्रेर्यमाणधीः ॥ ३ ॥**
**उद्भूततज्जिहासः संस्तद्धाने साधनस्पृहः ॥**
**त्यक्ताशेषैषणः सोऽथ प्रत्यग्याथात्म्यनिश्चयः ॥ ४ ॥**

संसारदोषदृष्टिफलमाह । **विरक्त इति** । वैराग्यफलं संसारजिहासां तज्जन्महेतूक्तिपूर्वकमाह । **संसारेति** । उत्पन्नसंसारजिहासाकार्यमाह । **तद्धान इति** । आत्यन्तिकबन्धध्वस्तौ हेतुं जिज्ञासमानः स्वाध्यायादापातेनाऽऽत्मज्ञानं तदुपायं श्रुत्वा तच्छेषत्वेन पुत्राद्येषणात्रयं त्यजतीत्याह । **त्यक्तेति** । विविदिषासंन्यासानन्तरमसकृदनुष्ठितश्रवणादिफलमाह । **अथेति** ॥ ३ ॥ ४ ॥

**वस्तुवृत्तात्मसंबोधध्वस्तसंसारकारणः ॥**
**व्याविद्धाशेषसंसारो विमुक्तो ना विमुच्यते ॥ ५ ॥**

तत्त्वज्ञानफलमाह । **वस्त्विति** । कारणध्वस्त्या कार्यध्वस्तिमाह । **व्याविद्धेति** । आत्मनः स्वतो मुक्तस्य कुतः सा हेत्वधीनेत्याशङ्क्याज्ञानाद्बन्धवज्ज्ञानाद्बद्धस्य सकार्याज्ञानध्वस्तौ सोपचर्यते ब्रह्मविदाप्नोतीत्यादावित्याह । **विमुक्त इति** ॥ ५ ॥

**यावत्किंचिदविद्यायाः कार्यं वैराग्यकारणम् ॥**
**तत्संन्यासो विरक्तत्वात्स्वत एव न शास्त्रतः ॥ ६ ॥**

ज्ञानाङ्गत्वेनोक्तसंन्यासस्य वैराग्यादेव प्राप्तेर्न तद्विध्यर्थं ब्राह्मणमारभ्यमित्याशङ्क्य

---

१ क. 'नाच्छुद्ध' ।

संन्यासस्वरूपे विध्यानर्थक्यं तस्य ज्ञानाङ्गत्वे वेति विकल्प्याऽऽद्यमङ्गी करोति । **याव-दिति** । तस्य तत्कारणत्वं दुःखबहुलत्वादवधेयम् ॥ ६ ॥

**ब्रह्मयाथात्म्यविज्ञानसाधनत्वं विनाऽऽगमात् ॥**
**संन्यासस्य न विज्ञातं तच्छास्त्रेणेह बोध्यते ॥ ७ ॥**

द्वितीयं दूषयति । **ब्रह्मेति** । इहेति वैदिकपक्षोक्तिः ॥ ७ ॥

**ब्रह्माविद्यासमुत्थानात्कार्यकारणलक्षणात् ॥**
**व्युत्थाप्य नेति नेतीति परं ब्रह्म प्रदर्शितम् ॥ ८ ॥**

संन्यासस्य ज्ञानसाधनत्वोक्त्यर्थं ब्राह्मणमिति भाष्योक्तमर्थमुक्त्वाऽर्थान्तरं वक्तुम-नन्तरब्राह्मणोक्तमनुवदति । **ब्रह्माविद्येति** ॥ ८ ॥

**तत्रैतच्छङ्क्यते चोद्यं ब्रह्मत्वासिद्धिदोषकृत् ॥**
**निषिद्धं नेति नेतीति मूर्तामूर्तादि वस्तु यत् ॥ ९ ॥**

उत्तरब्राह्मणापोद्यं चोद्यमाह । **तत्रेति** । तस्य निरस्यतामाह । **ब्रह्मेति** । चोद्यमेव विशदयितुं विकल्पविषयमाह । **निषिद्धमिति** ॥ ९ ॥

**किं तद्ब्रह्मानुगं सर्वं किं वा तस्माद्विविच्यते ॥**
**यदि ब्रह्मानुगं ब्रह्म स्यादनर्थात्मकं तदा ॥ १० ॥**

तत्किं ब्रह्मणोऽभिन्नं किंवाऽभावनिष्ठमथ भिन्नमिति विकल्पयति । **किं तदिति** । अभेदपक्षमनुभाष्य दूषयति । **यदीति** ॥ १० ॥

**अभावनिष्ठं तच्चेत्स्यान्मुख्यं ब्रह्म न सिध्यति ॥**
**अभावस्य ततोऽन्यत्वादन्वयव्यतिरेकतः ॥ ११ ॥**

अभावनिष्ठत्वपक्षमनूद्य निरस्यति । **अभावेति** । कुतो मुख्यब्रह्मासिद्धिस्तत्राऽऽह । **अभावस्येति** । मूर्तादेरभावनिष्ठत्वे तस्य ब्रह्मणोऽन्यत्वमनन्यत्वं वाऽऽद्ये तस्य तेन संयोगवियोगयोगादद्वैतासिद्धेर्मुख्यब्रह्मासिद्धिरित्यर्थः ॥ ११ ॥

**नेतीत्यपि निषेधोक्तिस्तथा सति विरुध्यते ॥**
**वैदिकश्च प्रयासोऽयं सर्वः स्यात्तुषकण्डनम् ॥ १२ ॥**

द्वितीये निषेधोक्तिरफला बोध्यब्रह्माभावादित्याह । **नेतीत्यपीति** । वक्ष्यमाणदोष-समुच्चयार्थोऽपिशब्दः । ब्रह्माभावे सर्वोपनिषदारम्भवैयर्थ्यं दोषान्तरमाह । **वैदिक-श्चेति** ॥ १२ ॥

**विविच्यते ब्रह्मणश्चेन्मैवं दोषस्तथाऽपि हि ॥**
**ब्रह्मत्वं ब्रह्मणो न स्याद्द्वितीये सति वस्तुनि ॥ १३ ॥**

भेदपक्षमनूद्य प्रत्याह । **विविच्यत इति** । तमेव प्रकटयति । **ब्रह्मत्वमिति** ॥ १३ ॥

---

१ ख. °विभाग° ।

**अव्यावृत्ताननुगतं वस्तु ब्रह्मत्वमश्नुते ॥**
**एतच्च दुर्लभं तस्य द्वितीये सति लक्षणम् ॥ १४ ॥**

सत्यपि द्वितीये तत्किं न स्यादित्याशङ्क्य ब्रह्मलक्षणमाह । **अव्यावृत्तेति** । द्वितीये सत्यपीदं लक्षणं ब्रह्मणि किं न स्यात्तत्राऽऽह । **एतच्चेति** ॥ १४ ॥

**अथाब्रह्मात्मकं वस्तु जग्ध्वा चेद्ब्रह्म तद्भवेत् ॥**
**प्रतीचो ब्रह्मणाऽत्तत्वान्न मोक्षो नापि संसृतिः ॥ १५ ॥**

सदपि द्वितीयमुपसंहृत्य ब्रह्मोक्तलक्षणं स्यादित्याह । **अथेति** । ब्रह्म द्वितीयमुपसंहरेत्तद्वज्जीवमुपसंहरति न वा नाऽऽद्य इत्याह । **प्रतीच इति** ॥ १५ ॥

**संसारिणो न चेदत्ति संसार्येव प्रसज्यते ॥**
**नाऽऽप्नोति ब्रह्मतां साक्षात्सत्सु संसारिवस्तुषु ॥ १६ ॥**

कल्पान्तरमनुवदति । **संसारिण इति** । ते ब्रह्मणोऽभिन्ना भिन्ना वेति विकल्प्याऽऽद्यं निराह । **संसारीति** । ब्रह्मेति शेषः । भेदपक्षं निरस्यति । **नाऽऽप्नोतीति** ॥ १६ ॥

**संसारे चापि जग्धेऽस्मिन्ब्रह्मणा निखिले सति ॥**
**ऋतेऽपि ब्रह्मविज्ञानात्सर्वे स्युर्मुक्तबन्धनाः ॥ १७ ॥**

संसारिब्रह्मणोरभेदेऽपि न ब्रह्मणः संसारस्तस्य तेन ग्रस्तत्वादित्याशङ्क्यातिप्रसङ्गमाह । **संसारे चेति** ॥ १७ ॥

**अन्वयादिनिषेधाय सर्वमात्मेति वाक्यतः ॥**
**मैत्रेयीत्यादिको ग्रन्थस्तस्मादारभ्यते परः ॥ १८ ॥**

एतदुत्तरत्वेन ब्राह्मणमवतारयति । **अन्वयादीति** । अन्वयव्यतिरेकाभावपरिहाण्या सर्वमात्मेति वाक्यात्प्रत्यङ्मात्रं जगदिति वक्तुमुत्तरो ग्रन्थो यस्मादारभ्यते तस्मान्नोक्तदोषप्रसक्तिरित्यर्थः ॥ १८ ॥

**सर्वाब्रह्मनिषेधेन तदर्थो वेह निश्चितः ॥**
**तस्य संसिद्धिविषयमैकात्म्यमधुनोच्यते ॥ १९ ॥**

चोद्योत्तरत्वेन ब्राह्मणमवतार्यार्थान्तरमाह । **सर्वेति** । इहेत्यनन्तरब्राह्मणमुक्तम् । मूर्ताद्यनात्मनिरासेन तदर्थो निर्धारितस्तस्य त्वमर्थेनैक्यं मुक्त्यालम्बनमत्र निर्धार्यत इत्यर्थः ॥ १९ ॥

**नेतीति ब्रह्मणोऽन्यत्र मूर्तामूर्तव्यवस्थितौ ॥**
**प्रसक्ते सांख्यसिद्धान्ते सर्वमात्मेति वोच्यते ॥ २० ॥**

प्रकारान्तरेण ब्राह्मणमुत्थापयति । **नेत्यादिना** । निषेधोक्तेर्ब्रह्मणोऽन्यत्र द्वैतसं-

१ क. °हरत्त° । २ ख. ग. चोच्यते ।

भावनायां द्वैतिमतमाशङ्क्य कल्पितस्य सर्वस्याऽऽत्ममात्रत्वं वक्तुमनन्तरब्राह्मणमित्यर्थः ॥ २० ॥

**सत्यपि ब्रह्मवेदित्वे नासंत्यक्तैषणो यतिः ॥**
**मुक्तिभागिति चेहोक्तः[1] संन्यासेन समुच्चयः ॥ २१ ॥**

तस्यार्थान्तरमाह । **सत्यपीति** । संन्यासस्य सम्यग्ज्ञानाङ्गत्वख्यापनायाऽऽरम्भः प्रागुक्तोऽधुना ज्ञानस्य तेन समुच्चयविधानायेति भेदः ॥ २१ ॥

**निरस्तातिशयज्ञानो याज्ञवल्क्यो यतो गृही ॥**
**कैवल्याश्रममास्थाय प्राप तद्वैष्णवं पदम् ॥ २२ ॥**

ज्ञाने सत्यपि संन्यासाभावादमुक्तेरदृष्टेर्न मुक्तौ समुच्चयस्तत्राऽऽह । **निरस्तेति** । अतः संन्यासज्ञानयोर्युक्तो मुक्तौ समुच्चय इति शेषः ॥ २२ ॥

**त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम् ॥**
**त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम् ॥ २३ ॥**

तत्समुच्चितविद्यो मुक्तिहेतुत्वे न केवलं लिङ्गमेव मानं किंतु स्मृतिरपीत्याह । **त्याग इति** । तर्हि त्यागस्यैव मुक्तिहेतुता न तत्समुच्चितज्ञानस्येत्याशङ्क्याऽऽह । **त्यजतेति** ॥ २३ ॥

**मुक्तेश्च बिभ्यतो देवा मोहेनापिदधुर्नरान् ॥**
**ततस्ते कर्मसूद्युक्ताः प्रावर्तन्ताविपश्चितः ॥२४ ॥**

तत्रैव श्रुतिं दर्शयितुं कर्मणां मोहमात्रोत्थत्वं साधयति । **मुक्तेश्चेति** ॥ २४ ॥

**मोहमात्रैकहेतूनि तस्मात्कर्माण्यशेषतः ॥**
**संन्यस्यैकात्म्यसंबोधाच्छित्त्वा मोहं विशुद्धधीः ॥**
**ज्ञानमेवाऽऽत्मनाऽऽत्मानमुपासीनोऽमृतो भवेत् ॥ २५ ॥**

तेषां तन्मात्रजत्वेऽपि विवेकपूर्वाद्वैराग्यात्तत्त्यागेन समुच्चितात्तत्त्वबोधादबोधध्वस्तौ सकार्यं तं हित्वा शुद्धब्रह्मणि स्थिरधीस्तदेव स्वरूपत्वेन सदाऽनुसंदधानो जीवन्मुक्तो विदेहकैवल्यं गच्छतीति फलितमाह । **मोहेति** ॥ २५ ॥

**इति प्रमाणमत्रार्थे वचनं भाल्लविश्रुतौ ॥**
**सर्वः संन्यस्तकर्मैव ज्ञानात्कैवल्यमश्नुते ॥ २६ ॥**

प्रमाणमुपसंहरति । **इति प्रमाणमिति** । प्रमेयमुपसंहरति । **सर्व इति** ॥ २६ ॥

**ब्रह्मचर्याद्गृहाच्चैव वनाच्चापि विधीयते ॥**
**निःशेषकर्मसंन्यासो यतोऽतो नर्णबद्धता ॥ २७ ॥**

---

१ ख. वेहोक्तः ।

**श्रुत्या जाबालशाखायां तथाचानधिकारिणाम् ॥**
**संन्यासस्य विधानाच्च कार्योऽतोऽसौ मुमुक्षुभिः ॥ २८ ॥**

ऋणापाकरणश्रुतिस्मृतिविरोधात्संन्यासायोगे कुतस्तत्समुच्चयसिद्धिरित्याशङ्क्याऽऽह । **ब्रह्मचर्यादिति** । न विधिविरोधेऽर्थवादश्रुतिस्मृत्योः स्वार्थे मानतेति संबन्धग्रन्थे साधितामिति भावः । अथ जाबालश्रुतौ कर्मानधिकृतान्धादिविषयः संन्यासविधिः । **यथाऽऽहुः**—

"तत्रैवं शक्यते वक्तुं येऽन्धपङ्ग्वादयो नराः ।
गृहस्थत्वं न शक्ष्यन्ति कर्तुं तेषामयं विधिः ॥
नैष्ठिकब्रह्मचर्यं वा परिव्राजकताऽपि वा ।
तैरवश्यं ग्रहीतव्या तेनाऽऽदावेतदुच्यते" ॥

इति तत्राऽऽह । **तथाचेति** । अथ पुनरव्रती वेत्यादिना पृथगनधिकृतानां संन्यासविधानात्पूर्वमधिकृतविषयमेवेति भावः । ऋणश्रुत्याद्यविरोधे फलितमाह । **कार्य इति** ॥ २७ ॥ २८ ॥

**नरलोकादिकामानां सुतोत्पत्त्यादि साधनम् ॥**
**तेभ्यो व्युत्थितचित्तानां संन्यासस्त्वात्मकामिनाम् ॥२९ ॥**

ऋणप्रमाणाविरोधेऽपि मोचकज्ञानाङ्गत्वेन संन्यासो न कार्यः सुतादिसाधनात्तत्समुच्चितज्ञानाद्वा तत्सिद्धेरित्याशङ्क्याऽऽह । **नरेति** ॥ २९ ॥

**इममर्थं श्रुतिर्वक्ति सर्वकर्मानपेक्षिणी ॥**
**प्रजादिना करिष्यामः किं तत्फलवितृष्णतः ॥ ३० ॥**

पुत्रादेः स्वतन्त्रस्य परतन्त्रस्य वा न मुक्तिहेतुतेत्यत्र श्रुतिमाह । **इममिति** । पुत्रादिना मनुष्यलोकादिसिद्धेरिष्टत्वादाक्षेपानुपपत्तिरित्याशङ्क्याऽऽह । **तत्फलेति** ॥३०॥

**उत्पत्त्यादिविरुद्धोऽयं लोको येषामकर्मजः ॥**
**मोहमात्रान्तरायत्वाज्ज्ञानमात्रमपेक्षते ॥ ३१ ॥**

तद्वैतृष्ण्ये हेतुमाह । **उत्पत्त्यादीति** । ते वयं तत्फलवितृष्णेत इति संबन्धः । मोक्षः सुताद्यनपेक्षश्चेत्किमपेक्ष्य भवति तत्राऽऽह । **मोहेति** ॥ ३१ ॥

**प्रवृत्तिलक्षणो योगो ज्ञानं संन्यासलक्षणम् ॥**
**तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् ॥ ३२ ॥**

पुत्रादेरन्यत्र विनियुक्तत्वात्केवलस्य समुच्चितस्य वा मुक्तिहेतुत्वायोगाज्ज्ञानस्यैव तद्धेतुत्वात्तदङ्गत्वेन संन्यासविधिरित्युक्तं संप्रति तस्य ज्ञानहेतुत्वे स्मृतिमाह । **प्रवृत्तीति** ॥ ३२ ॥

---

१ ख. °सश्चाऽऽत्म° । २ ख. °ष्णतः ॥ ३० ॥ ३ क. ख. °ष्णत इ° ।

**भावितैः करणैश्चायं बहुसंसारयोनिषु ॥**
**आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे ॥ ३३ ॥**

क्रमसंन्यासविषयमिदं वाक्यमित्याशङ्क्याऽऽह । **भावितैरिति** ॥ ३३ ॥

**तमासाद्य तु मुक्तस्य दृष्टार्थस्य विपश्चितः ॥**
**त्रिष्वाश्रमेषु को न्वर्थो भवेत्परमभीप्सतः ॥ ३४ ॥**

ब्रह्मचर्यादेव प्रव्रजितस्यापि पुनरिच्छया गार्हस्थ्यादौ प्रवृत्तिः स्यादित्याशङ्क्याऽऽह । **तमिति** ॥ ३४ ॥

**श्रुतयः स्मृतयश्चैवमस्मिन्नर्थे सहस्रशः ॥**
**प्रत्यक्षा एव विद्यन्ते संन्यासप्रतिपादिकाः ॥ ३५ ॥**

संन्यासस्यै ज्ञानाङ्गत्वे मानभूतस्मृतिमूलभूताः श्रुतयो भूयस्यः सन्तीति प्रमाणमुपसंहरति । **श्रुतय इति** ॥ ३५ ॥

**मुख्यार्थता वा प्रागुक्ता ब्रह्मेत्यस्य सदादृशि ॥**
**प्रतीच्यथाऽऽत्मशब्दस्य मुख्यार्थो ब्रह्मणीर्यते ॥ ३६ ॥**

ज्ञानस्य स्वरूपे फले वोपकारित्वेन संन्यासं विधातुं ब्राह्मणमित्युक्त्वाऽर्थान्तरविवक्षया पूर्वब्राह्मणार्थमनुवदति । **मुख्येति** । तदर्थस्य त्वमर्थपर्यन्तता विहितेत्यर्थः । वक्ष्यमाणं ब्राह्मणार्थं संक्षिपति । **अथेति** । त्वमर्थस्य तदर्थपर्यन्तताऽनन्तरमुच्यत इत्यर्थः ॥ ३६ ॥

**ततस्तदेतदिति च ब्रह्मात्मपदवाच्ययोः ॥**
**मधुकाण्डार्थसर्वस्वं वाक्येन प्रतिपाद्यते ॥ ३७ ॥**

ब्राह्मणद्वयं पदार्थोपक्षीणं चेद्वाक्यार्थस्तर्हि केनोच्यत इत्याशङ्क्य मधुब्राह्मणेनेत्याह । **तत इति** । तदेतद्ब्रह्मापूर्वमित्यादिना वाक्येनेति संबन्धः । ब्रह्मादिपदवाच्ययोस्तद्द्वारा लक्ष्ययोरिति यावत् । मधुकाण्डार्थसर्वस्वमैक्यमित्यर्थः ॥ ३७ ॥

**प्रत्यग्याथात्म्यविज्ञानजन्मनेऽतः श्रुतिः स्वयम् ॥**
**विधित्सन्तीह संन्यासं मैत्रेयीति प्रवर्तते ॥ ३८ ॥**

ब्राह्मणार्थमनेकधोक्त्वा संन्यासस्य ज्ञानाङ्गत्वपक्षे ब्राह्मणमवतारयन्सुखप्रतिपत्त्यर्थामाख्यायिकामुत्थापयति । **प्रत्यगिति** । संन्यासस्य ज्ञानाङ्गत्वपरामर्शार्थोऽतःशब्दः । इहेति विरक्ताधिकारोक्तिः ॥ ३८ ॥

**भार्याद्यनुज्ञापूर्वो हि संन्यासो विहितः श्रुतौ ॥**
**अतोऽनुज्ञार्थमेवाऽऽह मैत्रेयीमृषिपरात्मनः ॥ ३९ ॥**

---

१ ख. °स्य सम्यग्ज्ञाना° ।

विरक्तः सन्नुपेक्षाकाले किमिति भार्यां मुनिः संबोधितवानित्याशङ्क्य संबोधनतात्पर्यमाह । **भार्यादीति** । संन्यासशब्देन क्रमसंन्यासो गृह्यते । **मातरं** पितरं भार्यां पुत्रान्सुहृदो बन्धूनेताननुमोदयित्वा ये चास्यर्त्विजस्तान्सर्वान्पूर्ववद्वृणीत्वा वैश्वानरीमिष्टिं कृत्वा सर्वस्वं दद्यादिति **कौषीतकिश्रुति**माह । **श्रुताविति** । हिशब्दापेक्षितं पूरयति । **अत इति** ॥ ३९ ॥

**उद्यास्यन्वा अरे स्थानादस्माद्गार्हस्थ्यलक्षणात् ॥**
**चिकीर्षवे मे संन्यासमनुज्ञां दातुमर्हसि ॥ ४० ॥**

ऋषिवाक्यं व्याकरोति । **उद्यास्यन्निति** । भवतु किं ततो मया कार्यमिति भार्याशङ्कां प्रत्याह । **चिकीर्षव इति** ॥ ४० ॥

**युक्तमाह भवानस्माननुरूपं चिकीर्षति ॥**
**यदेवं सति कर्तव्यं तत्क्षिप्रमनुशाधि माम् ॥ ४१ ॥**

हन्तेत्यादेर्भूमिकां करोति । **युक्तमिति** । अनुरूपं भवतो ज्ञानस्य वयसो देशकालयोश्चेति वाक्यशेषः । कर्तव्यं मयेति शेषः ॥ ४१ ॥

**अनुज्ञातोऽथ तामाह हन्तेत्यादि परं वचः ॥**
**कात्यायन्या सपत्न्या ते विभागं करवाण्यहम् ॥ ४२ ॥**

हन्तेत्याद्यवतार्य व्याकरोति । **अनुज्ञात इति** । अनुज्ञायाः समनन्तरवाक्यप्रवृत्तिहेतुत्वद्योतकोऽथशब्दः ॥ ४२ ॥

**निःस्वा स्त्री स्ववता पुंसा नियुक्ता कर्मसंपदि ॥**
**मयि प्रव्रजिते तस्माद्युवयोर्नार्थसंगतिः ॥ ४३ ॥**

ननु त्वया संन्यासश्चिकीर्षितश्चेत्क्रियतां किमित्यावयोर्द्रव्यविभागेन विच्छेदश्चिकीर्ष्यत आवामेव त्वत्संन्यासोत्तरकालं द्रव्यं विभज्य विच्छेदं करिष्यावस्तत्राऽऽह । **निःस्वेति** ।

"भार्या पुत्रश्च दासश्च त्रयस्ते निर्धनाः स्मृताः ।
यं ते समधिगच्छन्ति यस्य ते तस्य तद्धनम्" ॥

इति **स्मृते**रित्यर्थः । कथं तर्हि सा कर्मण्यधिक्रियते तत्राऽऽह । **स्ववतेति** ॥ ४३ ॥

**स्ववानेव पुरा न्यासाद्युवयोः स्वेन सांप्रतम् ॥**
**विभागं करवाणीति भार्यां तेनाभ्यचोदयत् ॥ ४४ ॥**

तवापि विरक्तस्य संन्यसतः समानं निःस्वत्वमित्याशङ्क्याऽऽह । **स्ववानिति** ॥ ४४ ॥

**वृत्तिभिः संविभज्य स्वान्संन्यसेदिति चोद्यते ॥**
**यतः शास्त्रेण तेनायं विभागः क्रियते मया ॥ ४५ ॥**

संन्यासात्पूर्वं स्वस्वामित्वेऽपि तं चिकीर्षुणा द्रव्येणाऽऽवयोर्विभागो न कार्यो निया-

१ क. ख. °तकी श्रु° ।

मकाभावादित्याशङ्क्य तेनेत्युक्तं व्यनक्ति । **वृत्तिभिरिति** । ताननुरूपाभिर्वृत्तिभिः संविभज्य संन्यसेदिति शास्त्रमत्र नियामकमित्यर्थः ॥ ४५ ॥

**युक्तमेतद्व्यवसितं यद्वित्तं न मदित्सति ॥**
**भवत्संन्यासवत्रूनमस्माद्धितकरं धनम् ॥ ४६ ॥**

तत्र मैत्रेयी ब्रूते । **युक्तमिति** । तत्र हेतुः । **भवदिति** ॥ ४६ ॥

**महानुभावसंपर्कः कस्य नोन्नतिकारणम् ॥**
**अशुच्यपि पयः प्राप्य गङ्गां याति पवित्रताम् ॥ ४७ ॥**

ननु जीवनार्थं धनं विना हितसाधने धने न तेऽधिकारः स्त्रीणां पापयोनित्वेनाशुचिराशित्वाद्येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रा इति स्मृतेरतो न ते हितकरं धनं देयमिति तत्राऽऽह । **महानुभावेति** । महापुरुषसंपर्कस्योत्कर्षहेतुत्वे दृष्टान्तमाह । **अशुचीति** ॥ ४७ ॥

**भगवत्संगतेर्नान्यः पुरुषार्थोऽमृतत्वतः ॥**
**पृच्छाम्यतोऽमृतत्वस्य साधनं स्यात्कथं धनम् ॥ ४८ ॥**

यन्विित्याद्यवतारयति । **भगवदिति** । त्वत्संबन्धादेव मोक्षादन्यो न पुमर्थोऽस्तीति यतो मे भात्यतो मोक्षस्य साधनं धनं कथं स्यादिति त्वां पृच्छामीति योजना ॥ ४८ ॥

**सारेण यदि नामेयं पूर्णा स्याद्वसुना मही ॥**
**तावताऽप्यमृताऽहं स्यां किंवा नेत्युच्यतां यथा ॥ ४९ ॥**

पृच्छामेव स्फुटयन्वाक्यं योजयति । **सारेणेति** ॥ ४९ ॥

**सत्तामात्रोपकारीणि धनानि धनिनां न हि ॥**
**क्रियाद्वारोपकारीणि यतोऽतः पृच्छ्यते क्रिया ॥ ५० ॥**

धनं मोक्षसाधनं न वेतिप्रश्नप्रतीतेः पृथिवी पूर्णवित्तसाध्येन कर्मणेत्यादिभाष्यं कथमित्याशङ्क्याऽऽह । **सत्तेति** ॥ ५० ॥

**प्रत्याह पृष्टः स्वां जायां नामृतत्वं धनादिति ॥ ५१ ॥**
**वित्तं चेन्नामृतत्वाय कस्माद्दित्सति तद्भवान् ॥**
**इति पृष्टोऽब्रवीद्वित्तसाधनस्य प्रयोजनम् ॥ ५२ ॥**

नेतीत्यादेरर्थमाह । **प्रत्याहेति** । यथेत्याद्याकाङ्क्षापूर्वकमुत्थापयति । **वित्तं चेदिति** ॥ ५१ ॥ ५२ ॥

**क्षयिष्णुसाधनाधीनं जीवितं स्याद्यथा नृणाम् ॥**
**तथैव तव वित्तेन जीवितं नामृतात्मता ॥ ५३ ॥**

तद्याचष्टे । **क्षयिष्ण्विति** ॥ ५३ ॥

---

१ ग. °क्तः । अ° ।

**अविद्यामात्रविध्वंसाज्ज्ञानादेवामृतं यतः ॥**
**अमृतत्वस्य नाऽऽशाऽपि वित्तसाध्येन कर्मणा ॥ ५४ ॥**

अमृतत्वस्येत्यादि व्याकरोति । **अविद्येति** ॥ ५४ ॥

**कुतोऽमृतत्वसंप्राप्तिर्ज्ञानमात्रैकहेतुना ॥**
**न कर्म कारणं मुक्तेर्नाग्निस्तापस्य भेषजम् ॥**
**कर्मभ्यो जन्म नियतं जन्म चेन्निर्वृतिः कुतः ॥ ५५ ॥**

उक्तमर्थं प्रश्नपूर्वकं समर्थयते । **कुत इति** । कर्मणां मुक्तिप्रातिकूल्यं स्फुटयति । **कर्मभ्य इति** ॥ ५५ ॥

**स्वभावादेव साधूनां प्रवृत्तिरुपकारिणी ॥**
**अपकारिण्यपि जने किमु भक्तजनं प्रति ॥ ५६ ॥**

उपालम्भं तस्या दर्शयन्सामान्यन्यायमाह । **स्वभावादिति** ॥ ५६ ॥

**नूनं ममापराधोऽयं यद्भवन्तोऽपि मां प्रति ॥**
**प्रतिलोमं चिकीर्षन्ति कोऽन्यः स्याद्धितकृन्मम ॥ ५७ ॥**

तस्य स्वविषयेऽपराधशङ्कां सूचयति । **नूनमिति** । सर्वभूतेष्वनुग्रहकर्तारोऽपीत्यपेरर्थः । यदि वयं ते प्रतिकूलं चिकीर्षवस्तर्हि योऽन्यस्तेऽनुकूलकर्ता तमनुगच्छेत्याशङ्क्याऽऽह । **क इति** ॥ ५७ ॥

**अनुरक्तां प्रियां साध्वीं बद्ध्वा वित्तेन मां कथम् ॥**
**कामोच्छित्तिमकृत्वा च संन्यसन्ति भवद्विधाः ॥ ५८ ॥**

अस्माकं संन्यासकाल उपस्थितस्ते हितकरणे नावसरोऽस्तीत्याशङ्क्याऽऽह । **अनुरक्तामिति** ॥ ५८ ॥

**वित्ताच्चेदमृतत्वं स्यात्तत्त्यक्षा न युज्यते ॥**
**वित्ताच्चेन्नामृतत्वं स्याद्वद तेन ममापि किम् ॥ ५९ ॥**

इदमेव दीयमानं वित्तं तवामृतत्वसाधनं किं साधनान्तरेणेत्याशङ्क्य येनेत्यादेस्तात्पर्यमाह । **वित्तादिति** । तेन मे नामृतत्वमिति तत्त्यागेच्छेत्याशङ्क्याऽऽह । **वित्ताच्चेदिति** ॥ ५९ ॥

**यद्यस्त्यनुजिघृक्षैवं करुणा वा मयीष्यते ॥**
**यदेव भगवान्वेद तेन संविभजस्व माम् ॥ ६० ॥**

उपालम्भेन तर्केण च भर्तारं वशीकृत्य विनयं दर्शयति । **यदीति** । संविभजस्व कात्यायन्याः सपत्न्याः सकाशादिति शेषः ॥ ६० ॥

---

१ ख. ग. °तुका । न । २ ग. °मु ग्क्त° । ३ क. °न्यस्यन्ति ।

यद्विज्ञानात्परित्यज्य निःशेषं वित्तसाधनम् ॥
स्वाराज्यमीप्सति भवांस्तदेव वसु देहि मे ॥ ६१ ॥

ममापि नास्ति मुक्तिसाधनं ज्ञानं तत्कथं तद्देयमित्याशङ्क्याऽऽह । यदिति ॥ ६१ ॥

नाऽऽदिर्नान्तो न मध्यं वा यस्य वित्तस्य विद्यते ॥
भोगे न च क्षयं याति तदेव वसु दीयताम् ॥ ६२ ॥

मदीयं ज्ञानसाधनं तुभ्यं दातुमशक्यमपचयप्रसङ्गादित्याशङ्क्याऽऽह । नाऽऽदिरिति ॥ ६२ ॥

अनन्तवित्तो हि भवानन्तवद्दीयते कुतः ॥
असतः कीदृशं दानं सदेवातः प्रदीयताम् ॥ ६३ ॥

किंचान्तवद्वित्तं न त्वया मह्यं दातुं शक्यं तव तदभावान्न चासतो दानमाकाशपुष्पवदित्याह । अनन्तेति । अतो ज्ञानमेव मह्यमुपदिश्यतामिति फलितमाह । सदेवेति ॥ ६३ ॥

संसारपुरुषार्थेभ्यो यतो नाव्युत्थितात्मने ॥
मुक्त्येकसाधनं ज्ञानं दातुं शक्यमिदं मया ॥ ६४ ॥
अमुमुक्षुत्वमाशङ्क्य भवत्यै तत्प्रदित्सितम् ॥
संसाराच्चद्विरक्ताऽस्मि गृहाणानुत्तमामृतम् ॥ ६५ ॥

स होवाचेत्यस्य तात्पर्यमाह । संसारेति । यतो नाविरक्तस्य मुक्तिहेतुज्ञानेऽधिकारोऽस्ति वैराग्याभावान्न मुमुक्षुत्वमनधिकारमाशङ्क्य जीवनार्थमेव धनं त्वदर्थं दातुमिष्टमित्यर्थः । ततोऽहं विरक्तेति मुमुक्षुत्वाद्विद्याधिकारिणी स्यामित्याशङ्क्याऽऽह । संसारादिति ॥ ६४ ॥ ६५ ॥

स्त्रीणां यदुचितं वाक्यं प्रतिलोमं न भाषसे ॥
पूर्ववत्त्वनुकूलं त्वमिदानीमपि भाषसे ॥ ६६ ॥

प्रियेत्यादेस्तात्पर्यमाह । स्त्रीणामिति । इदं हि स्त्रीणामुचितं वाक्यं यद्भर्तारं प्रत्यनुकूलवचनम् । यथाऽऽहुः—

"कुशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः ।
पूजनीयः स्त्रिया साध्व्या सततं देववत्पतिः ॥
पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा ।
पतिलोकमभीप्सन्ती नाऽऽचरेत्किंचिदप्रियम्" इति ।

तदेवं त्वं संसारदशायामिव मोक्षावस्थायामपि भाषसे न तु समयमतिक्रम्य प्रतिकूलमभिसंदधासीत्यर्थः ॥ ६६ ॥

मोक्षं यान्तं नरं सर्वे मुञ्चन्ति सहजा अपि ॥
अतिभक्तितया मां त्वं मोक्षेऽपि न जिहाससि ॥ ६७ ॥

अर्धो वा एष आत्मनो यत्पत्नीतिश्रुतेरहं सहजा सदैव तेऽनुकूला तन्न मे त्वत्प्रतिकूलोक्तिप्रसक्तिरित्याशङ्क्याऽऽह । **मोक्षमिति** ॥ ६७ ॥

**विभागमसहन्तीव मदतिस्नेहकारणात् ॥**
**मुक्तावनुयियासि त्वं मदैकात्म्यपरीप्सया ॥ ६८ ॥**

न केवलं मां हातुं नेच्छसि किंतु मदासीच्छया मुक्तावपि मामनुगच्छसीत्याह । **विभागमिति** । असहन्त्यसहमानेति यावत् । क्रियापदे छान्दसः सकारलोपः ॥६८॥

**अतिस्नेहाऽपकृष्टोमा देहार्धे शूलिनः श्रिता ॥**
**त्वं तु सर्वात्मनाऽऽत्मानं कृत्स्नं मामाप्तुमिच्छसि ॥ ६९ ॥**

न केवलं प्राकृतसर्वस्त्रीपुंसेभ्यस्तवोत्कर्षः किंतु पार्वत्याः सकाशादपीत्याह । **अतिस्नेहेति** ॥ ६९ ॥

**यत एवमतस्तुभ्यं वक्ष्याम्यमृतसाधनम् ॥**
**निदिध्यासस्व चेतोऽतो व्याचक्षाणस्य तन्मम ॥ ७० ॥**

प्रियेत्यादि व्याकुर्वता तस्या वैराग्यं दृष्ट्वा तुष्टस्य पत्युस्तद्विषया स्तुतिरिष्टेत्युक्तम् । इदानीमेहीत्यादेस्तात्पर्यमाह । **यत इति** । यतो ममेव तवापि वैराग्यं मुमुक्षुत्वं चेक्ष्यतेऽतो वैराग्योक्तिपूर्वकं मोक्षोपायं ज्ञानं वक्ष्यामि तच्च व्याचक्षाणस्य मे तद्विषयं वाक्यमेकाग्रं चेतः स्वीकृत्यार्थतो निश्चयेन ध्यातुमिच्छ गम्भीरार्थत्वादित्यर्थः ॥ ७० ॥

**आ ब्रह्मणोऽस्मात्संसाराच्छुद्धधीर्न विरज्यते ॥**
**यावत्तावन्न विद्याया अधिकारी भवेन्नरः ॥ ७१ ॥**

न वा अरे पत्युरित्यादेस्तात्पर्यं दर्शयन्नविरक्तस्य विद्यानधिकारमाह । **आ ब्रह्मण इति** ॥ ७१ ॥

**वैराग्यहेतावप्यस्मिन्नक्तो धर्मादिहेतुतः ॥**
**यतोऽतः कर्मशुद्धात्मा भवादस्माद्विरज्यते ॥ ७२ ॥**

दृष्टनष्टस्वभावत्वाद्बन्धस्य तस्मिन्नासङ्गहेत्वभावात्स्वतस्ततो वैराग्यसिद्धेरलं तत्प्रतिपादकश्रुत्येत्याशङ्क्याऽऽह । **वैराग्येति** ॥ ७२ ॥

**वैराग्यहेतून्संसारे तस्माद्यत्नादियं श्रुतिः ॥**
**न वा अर इति ह्युक्त्वा वक्तुं समुपचक्रमे ॥ ७३ ॥**

कर्मभोगवासनावशात्पुरुषः संसारे यस्माद्रक्तस्तस्मात्कर्मभिः शुद्धधियस्तस्मिन्वैराग्यसिद्धये तद्धेतूंक्षयिष्णुत्वादीन्न वा अर इत्यादिना वक्तुमेषा श्रुतिस्तात्पर्येण प्रवृत्तेति श्रुतिमवतारयति । **वैराग्यहेतूनिति** । तद्धेतुप्रतिपत्तौ तदावश्यकत्वद्योतको हिशब्दः ॥ ७३ ॥

**यस्मिन्नेव परा सक्तिस्तस्मिन्नेव निरादरम् ॥**
**कर्म कृत्वा परं यत्नादन्यस्यार्थयते फलम् ॥ ७४ ॥**

शुद्धबुद्धेर्वैराग्यसिद्धये संसारासारत्वमुच्यते चेत्केन प्रकारेणानुष्ठितानि कर्माणि शुद्धिं भावयन्तीत्याशङ्क्याऽऽह । **यस्मिन्निति ।** यत्र स्वर्गादौ संसारिणः सक्तिरनतिशया यस्मिन्काम्यानुष्ठानादानुषङ्गिकशुद्धेरादरराहित्यं यथा स्यात्तथेश्वरार्पणबुद्ध्या नित्यादि कृत्वा शुद्धधीर्भूत्वा विरक्तो ज्ञानस्य निरतिशयं फलमर्थयमानो ब्रह्म जिज्ञासुर्भवतीत्यर्थः ॥ ७४ ॥

**किमिक्षो रसमाप्नोति यत्नान्निष्पीडयन्न ना ॥ ७५ ॥**
**तीव्रदुःखोद्भवो बुद्धौ संस्कारो यावदेव तु ॥**
**तद्विपक्षः सुखं तावदल्पं तत्संक्षये क्षयः ॥ ७६ ॥**

नित्याद्यनुष्ठानेऽपि शुद्धिद्वारा ब्रह्मविविदिषा न भवत्यस्मदादिष्वदर्शनादित्याशङ्क्याऽऽह । **किमिति ।** यथा यन्त्रादिषु निष्पीडयन्पुरुष इक्षुंस्तद्रसमाप्नोति तथेश्वरार्पणबुद्ध्या नित्यादि कुर्वन्निहामुत्र वा तत्फलं विविदिषां लभते येन केनचनेत्यादिश्रुतेरित्यर्थः । नित्याद्यनुष्ठानान्न शुद्धिद्वारा जिज्ञासा संसारेऽपि सुखदृष्टेर्वैराग्यायोगादित्याशङ्क्याऽऽह । **तीव्रेति ।** सुखहेत्वनुष्ठानायासस्तीव्रं दुःखं तज्जा वासना यावद्बुद्धौ वर्तते तावदेव तद्दुःखविरोधि वैषयिकं सुखमनुवर्तते तच्चाल्पं दुःखक्षये च क्षीयते तदविनाभावादतस्तस्यासारत्वाद्युक्तं तत्र वैराग्यमित्यर्थः ॥ ७५ ॥ ७६ ॥

**शीतमल्पं सुखं ग्रीष्मे तापोऽल्पः शिशिरे सुखम् ॥**
**तदेव दुःखकृद्भूरि तद्धेत्वोरनवस्थितेः ॥ ७७ ॥**

सुखदुःखहेत्वोरनवस्थितत्वाच्च सहेतुकं सुखं दुःखवदनादेयमिति वैराग्ये हेत्वन्तरमाह । **शीतमिति ।** सुखदुःखहेत्वोरनवस्थितत्वे हेतुमाह । **तद्धेत्वोरिति ।** तयोर्हेतू धर्माधर्मौ तयोरुद्भवानुद्भवकालानियमादित्यर्थः ॥ ७७ ॥

**शब्दोऽस्ति न प्रियः कश्चिदप्रियो वा स्वतस्तथा ॥**
**रक्तद्विष्टमनो हेतुः शब्दाद्यर्थे प्रियाप्रिये ॥ ७८ ॥**

शब्दाद्यर्थस्य कस्यचित्प्रियत्वमेव कस्यचिद्वैपरीत्यमितिनियमदृष्टेस्तद्धेत्वोर्व्यवस्थेत्याशङ्क्याऽऽह । **शब्दोऽस्तीति ।** कथं तर्हि व्यवस्थाप्रतीतिरत आह । **रक्तेति ।** शब्दादौ शोभनाशोभनाध्यासपूर्वकं रागादिकलुषितं मनस्तत्र प्रियादिदृष्टिहेतुरित्यर्थः ॥ ७८ ॥

**स्वतोऽखिलोऽप्रियोऽनात्मा प्रत्यङ्मोहैकहेतुतः ॥**
**प्रत्यगाह्लादकारित्वादप्रियोऽपि प्रियो मतः ॥ ७९ ॥**

प्रियत्वमप्रियत्वं वाऽनात्मसु न स्वतोऽस्तीत्युक्तमिदानीं प्रत्यगविद्याजत्वात्तेषु स्वतोऽप्रियत्वमित्याह । **स्वत इति ।** प्रियत्वं शोभनाध्यासादित्युक्त्वा हेत्वन्तरमाह । **प्रत्यगिति ।** प्रागुक्तन्यायादप्रियोऽपि स्वतोऽनात्मा प्रत्यक्चित्स्वरूपभूतानन्दाभिव्यञ्जकधीवृत्तिविषयत्वात्प्रियो व्यवह्रियत इत्यर्थः ॥ ७९ ॥

**जायादिरप्रियः सर्वः स्वत आद्यन्तदुःखकृत् ॥**
**तद्धेतोरात्मनः प्रीतेर्जायादिः प्रिय उच्यते ॥ ८० ॥**

स्वभावतोऽनात्मनोऽप्रियत्वे हेत्वन्तरमाह । **जायादिरिति ।** तर्हि कथं तत्र प्रियत्वधीरित्याशङ्क्य प्रत्यगाह्लादकारित्वादित्युक्तं व्यनक्ति । **तद्धेतोरिति** ॥ ८० ॥

**न कस्यांचिदवस्थायामात्मा लोकेऽप्रियो मतः ॥**
**प्रियोऽप्रियश्च जायादिर्यथाऽनात्मा मुहुर्मुहुः ॥ ८१ ॥**

आत्मनोऽपि प्रियत्वमनवस्थितं कदाचित्तदुच्छेदेच्छाया दृष्टेरित्याशङ्क्याऽऽह । **नेत्यादिना ।** व्याध्याद्युपद्रुतस्य देहोच्छेदेच्छायामपि स्वरूपप्रीतेरव्यभिचारादात्मनः सुखत्वमित्यर्थः । अप्रिय इति च्छेदः । तत्र प्रीतिनियमे वैधर्म्यदृष्टान्तमाह । **प्रिय इति** ॥ ८१ ॥

**स्वत एवाप्रियोऽनात्मा ह्यात्मप्रीत्यर्थसाधनात् ॥**
**जायादिः स्यात्प्रियो भक्त्या बन्धक्याः कामुको यथा ॥ ८२ ॥**

तस्य स्वतोऽप्रियत्वं चेदात्मार्थत्वेनापि न प्रियत्वमन्यस्यान्यभावायोगादित्याशङ्क्याऽऽह । **स्वत इति ।** माणवकस्य स्वतोऽनग्नेरपि तद्गुणयोगादग्नित्वव्यवहारस्य भाक्तस्य दर्शनादिति हिशब्दार्थः । बन्धकी बन्धहेतुः पुंश्चलीति यावत् । **उक्तं हि**—पुंश्चली धर्षणी बन्धक्यसती कुलटेत्वरीति । वर्धकीपाठेऽप्ययमेवार्थः ॥ ८२ ॥

**निर्हैतुकी स्वतः प्रीतिरात्मन्येव यतस्ततः ॥**
**भाक्तं प्रियं परित्यज्य मुख्यं प्रियमुपाश्रयेत् ॥ ८३ ॥**

आत्मनः स्वतः प्रियत्वमनात्मनः स्वतोऽप्रियत्वमिति स्थिते फलितमाह । **निर्हैतुकीति** ॥ ८३ ॥

**क्षयान्ता निचयाः सर्वे पतनान्ताः समुच्छ्रयाः ॥**
**संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥ ८४ ॥**

वैषयिकसुखतद्धेत्वोरनवस्थितत्वस्य **वेदव्यासो**क्तत्वाच्च तत्र वैराग्यं कार्यमित्याह । **क्षयेति** ॥ ८४ ॥

**न तदस्ति सुखं लोके यन्न दुःखकरं भवेत् ॥**
**तदसंप्राप्तिविच्छेदक्षयेष्वसुखकृद्यतः ॥ ८५ ॥**

शीतमल्पं सुखमित्यत्र सुखहेतोर्दुःखकरत्वमुक्तमिदानीं तस्यापि तदस्तीत्याह । **नेत्यादिना** ॥ ८५ ॥

**एवं चेत्साधनोद्भूतं यावत्किंचित्सुखं मतम् ॥**
**तन्निःशेषं परित्यज्य सुखमात्यन्तिकं श्रयेत् ॥ ८६ ॥**

भवतु किं तावतेति तत्राऽऽह । **एवं चेदिति** । सुखं यावत्किंचिद्धेतुकं तदेव दुःखकृन्मतं चेदिति योजना ॥ ८६ ॥

**सांसारिकसुखस्यास्य दुःखत्वादुक्तहेतुतः ॥**
**निष्कृष्यातस्ततः प्रीतिं प्रतीच्येव निवेशयेत् ॥ ८७ ॥**

विषयसुखे प्रीतिरनपायिनी या प्रीतिरविवेकानां विषयेष्वनपायिनीतिस्मृतेस्तद्विषयप्रीतिरप्रत्याख्येयेत्याशङ्क्याऽऽह । **सांसारिकेति** । उक्तहेतुनोऽनात्मप्रपञ्चस्य प्रत्यग्मोहप्रसूतत्वादेरित्यर्थः । अतःशब्दस्य प्राच्या पञ्चम्या संबन्धः । ततः सांसारिकसुखपरामर्शी निष्कर्षापादनमाचष्टे ॥ ८७ ॥

**स्रजि दण्डादयो यद्वत्स्रगज्ञानैकहेतुकाः ॥**
**पतिजायासुताद्येवं प्रत्यगज्ञानहेतुजम् ॥ ८८ ॥**

तस्य स्वाज्ञानकार्यत्वमेव दृष्टान्तेन स्पष्टयति । **स्रजीति** ॥ ८८ ॥

**सर्वानर्थनिवृत्तिश्च सर्वाह्लादाप्तिरेव च ॥**
**प्रतीचि ज्ञानमात्राचेत्तदन्यत्प्रार्थ्यते कथम् ॥ ८९ ॥**

न केवलमज्ञानजत्वादेवानात्मनि प्रीत्यभावः किंत्वात्मधीमात्रादुभयविधपुमर्थसिद्धेश्चानात्मानं त्यक्त्वाऽऽत्मन्येव प्रीतिं कुर्यादित्याह । **सर्वेति** ॥ ८९ ॥

**यस्य संबन्धमाश्रित्य ह्यप्रियोऽपि प्रियायते ॥**
**प्रियोऽप्यप्रियतां याति यस्य संगतिकारणात् ॥ ९० ॥**

आत्मनोऽनात्मप्रीतिहेतुत्वेन पुमर्थत्वाच्च तस्मिन्नेव सा युक्तेत्याह । **यस्येति** । अग्निव्याप्तस्य लोहपिण्डस्य तदाकारत्वदर्शनादिति हिशब्दार्थः । अनात्मनस्त्वात्माप्रीतिहेतुत्वेनापुमर्थत्वात्तस्मिन्नप्रीतिरेवोचितेत्याह । **प्रियोऽपीति** ॥ ९० ॥

**दृष्ट्वाऽनुभवतस्तत्त्वमात्मानात्मपदार्थयोः ॥**
**उपादित्सा जिहासा च तत्कृतैवानुपाल्यताम् ॥ ९१ ॥**

उक्तेऽर्थेऽनुभवं प्रमाणयन्फलितमाह । **दृष्ट्वेति** । उक्तरीत्याऽऽत्मानात्मनोः स्वरूपमनुभूयाऽऽत्मनि पुमर्थत्वधीकृतोपादित्साऽन्यत्र चापुमर्थत्वधीकृता जिहासा कार्येत्यर्थः ॥ ९१ ॥

---

[illegible] । [illegible] ॥ ९१ ॥

**नानाप्रकार आसङ्गो विषक्तो योऽस्य बाह्यतः ॥**
**यथोक्तकारणात्सर्वं प्रतीच्येव निवेशयेत् ॥ ९२ ॥**

अवान्तरप्रकृतं निगमयति । **नानेति** । यथोक्तकारणादात्मन्येव पुमर्थत्वं नान्यत्रेत्यादेरित्यर्थः ॥ ९२ ॥

**नरकादिव निर्विण्णो यावन्नाऽऽब्रह्मणो नरः ॥**
**न तावदधिकारोऽस्ति कैवल्यज्ञानवर्त्मनि ॥ ९३ ॥**

अनात्मसु कार्या विरक्तिरित्युक्त्वा तद्धीनस्य विद्यानधिकारमुपसंहरति । **नरकादिति** । आ ब्रह्मणः सर्वस्मात्संसाराद्यावन्नरो नरकादिव न निर्विण्णस्तावदस्य मुक्त्युपाये ज्ञाने नाधिकारोऽस्तीति योजना ॥ ९३ ॥

**सर्वासङ्गविनिर्मुक्तो मोक्षमात्रप्रयोजनः ॥**
**अतोऽधिक्रियते प्रत्यग्ज्ञानोत्पत्तौ न रागवान् ॥ ९४ ॥**

विरक्तस्य विद्याधिकारमुपसंहरति । **सर्वेति** । वैराग्यस्य ज्ञानोत्पत्त्यनुगुणत्वं रागस्य तत्प्रतिकूलत्वं चातःशब्दार्थः ॥ ९४ ॥

**आत्मा प्रत्यक्प्रसिद्धेः स्यात्तत्रैवाऽऽत्मानुभूतितः ॥**
**इति प्रमेयनिर्देशो द्रष्टव्य इति तत्प्रमा ॥ ९५ ॥**

नन्वा अरे पत्युरित्यारभ्य द्रष्टव्यवाक्यात्प्राक्तनसंदर्भो व्याख्यातः । संप्रति तद्वाक्यस्थात्मशब्दार्थमाह । **आत्मेति** । प्रतीच्यात्मशब्दस्य प्रसिद्धिं साधयति । **तत्रेति** । वाच्यमर्थमुक्त्वा विवक्षितमाह । **इतीति** । द्रष्टव्यशब्दार्थमाह । **द्रष्टव्य इतीति** । प्रतीच्यात्मनि प्रमेये वैदिकं दर्शनं मानमित्येतदत्र विवक्षितमित्यर्थः ॥ ९५ ॥

**आत्मबुद्धिरियं तावत्सर्वेषां जायते स्वतः ॥**
**अप्राप्ता सर्वमात्मेति सैवातो धीर्विधीयते ॥ ९६ ॥**

तव्यप्रत्ययो विधायकोऽधिगतः स च लोके प्रसिद्धात्मदर्शनं विधत्ते ब्रह्माऽऽत्मेति ज्ञानं वेति विकल्प्याऽऽद्यं विधिवादी दूषयति । **आत्मेति** । द्वितीयमङ्गी करोति । **अप्राप्तेति** ॥ ९६ ॥

**द्रष्टृद्रष्टव्ययोर्भेदे सत्येवं धीर्विधीयते ॥**
**नियोज्यविषयाभेदे घटते न विधिर्यतः ॥ ९७ ॥**

सिद्धान्तवाद्याह । **द्रष्टृिति** । अज्ञाते ब्रह्मात्मत्वे तज्ज्ञाने विधिर्ज्ञाते वा नाऽऽद्यो विषयाभावान्नेतरो नियोज्यादिभेदाभावादित्यर्थः ॥ ९७ ॥

**उत्तरोत्तरभूयांसि नामादीनि यथाक्रमम् ॥**
**उपन्यस्याऽऽत्मयाथात्म्यं तत्त्वं प्राब्रवीच्छ्रुतिः ॥ ९८ ॥**

---

१ क. काम ।

ब्रह्मात्मत्वे ज्ञाते भेदाभावं श्रुत्या साधयति । **उत्तरेति** । नामादीनि प्राणान्तानि तत्त्वान्यादाय पाठक्रममनतिक्रम्य पूर्वस्मात्पूर्वस्मादुत्तरमुत्तरं महत्त्वेनोक्त्वा तेषां स्वरूपं भूमशब्दितमात्ममात्रमुक्तवती **भूमा** त्वेव विजिज्ञासितव्य इत्याद्या श्रुतिरित्यर्थः ॥९८॥

**भूम्नश्च लक्षणं चक्रे यत्र नान्यदिति स्वयम् ॥**
**अथ यत्रेति चाल्पस्य प्राणान्तस्य च लक्षणम् ॥ ९९ ॥**

कोऽसौ भूमा तमाह । **भूम्नश्चेति** । प्राणादावतिव्याप्तिमाशङ्क्याऽऽह । **अथेति** । एकश्चकारः समुच्चये द्वितीयः शङ्कानिरासे ॥ ९९ ॥

**अथात इति वाक्येन ह्यहमेवेति निश्चितः ॥**
**निषिध्यानात्मरूपं यस्ततोऽहंकारनिह्नुतिः ॥ १०० ॥**
**आत्मैवेत्यादिवाक्येन पूर्णब्रह्मावबोधिना ॥**
**नाविध्वस्तं तमोऽतोऽस्ति न च ज्ञानमनुत्थितम् ॥ १०१ ॥**
**नानिवृत्तस्तथाऽनर्थो नानवाप्तं सुखं तथा ॥**
**कार्यद्वयसमाप्तिः स्यात्प्रत्यग्याथात्म्यबोधतः ॥ १०२ ॥**

नामादिप्राणान्तं जगद्भूममात्रं स चाद्वयोऽनस्तज्ज्ञाने नियोज्यादिभेदाभावान्न विधिरित्युक्त्वा विध्यभावे हेत्वन्तरमाह । **अथेति** । अथातोऽहंकारादेश इत्यादिना ब्रह्माहमेवेत्यहंकारमात्रत्वनिश्चयाद्यदनात्मरूपं तत्सर्वं निषिध्याथात आत्मादेश आत्मैवाधस्तादित्यादिनाऽद्वयात्मधीद्वाराऽहंकारस्यापि बाध उक्तोऽतो ब्रह्मज्ञानाद्ध्वस्ताहंकारो न विधियोग्य इत्यर्थः । अहमेवाधस्तादित्यादिनाऽहंकारस्य सर्वात्मत्वेन ब्रह्मत्वायोग्यत्वं हिशब्दार्थः । न केवलमैक्यधियाऽहंकारध्वस्तिरेव किन्त्वशेषपुमर्थाप्तिरित्याह । **नेत्यादिना** । अतो ज्ञानादिति यावत् । तत्फलं संक्षिप्याऽऽह । **कार्येति** ॥१००॥१०१॥ ॥ १०२ ॥

**सर्वासूपनिषत्स्वेवं प्रमात्रादेरनात्मनः ॥**
**प्रत्यङ्मात्रैकयाथात्म्यं श्रूयते सोपपत्तिकम् ॥ १०३ ॥**

छान्दोग्यश्रुत्युक्तेऽर्थे सर्वोपनिषत्संमतिमाह । **सर्वास्विति** । ब्रह्मैवेदममृतमित्याद्यास्विति यावत् । एवं छान्दोग्यश्रुतिवदित्यर्थः । श्रुतेरुपक्रमणोपबृंहितत्वेन प्रामाण्याविसंवादं सूचयति । **सोपपत्तिकमिति** ॥ १०३ ॥

**इहापि नेति वाक्येन प्रतीचोऽनन्यस्वभावकम् ॥**
**व्युत्थापितमनूद्याऽऽह सर्वमात्मेति नः श्रुतिः ॥ १०४ ॥**

तत्रैव बृहदारण्यकसंवादमाह । **इहेति** ॥ १०४ ॥

**भावाभावात्मना स्थानं न निषेध्यस्य वस्तुनः ॥**
**यतोऽतः सर्वमात्मैव प्राब्रवीच्छ्रुतिरञ्जसा ॥ १०५ ॥**

तस्यास्तात्पर्यमाह । **भावेति** ॥ १०५ ॥

**नाव्युत्थितमनाः कश्चित्प्रतीचोऽन्यत्प्रपश्यति ॥**
**व्युत्थितात्माऽपि चाऽऽत्मानं पश्यन्नेवान्यदीक्षते ॥ १०६ ॥**

ब्रह्मणि ज्ञातेऽज्ञाते च तद्धीर्न विधेयेत्यापाद्य लौकिकात्मज्ञानस्याविधेयत्वे हेत्वन्तरमाह । **नेत्यादिना** । अव्युत्थितमनाः स्वविषयत्वेनाप्रवृत्ताहंप्रत्ययः सुप्त इति यावत् । तं प्रति न विधिस्तस्य स्वेतरज्ञानाभावादिति शेषः । व्युत्थितात्माऽवस्थाद्वयसंबन्धी स्वविषयाहंप्रत्ययवानिति यावत् । तं प्रत्यपि न विधिर्विधिं विनैव तस्य स्वधीसिद्धेरिति शेषः ॥ १०६ ॥

**स्वातन्त्र्यं यत्र कर्तुः स्यात्तत्र कर्ता नियुज्यते ॥**
**अन्वयव्यतिरेकाभ्यामात्मानात्मविवेचने ॥ १०७ ॥**

द्वयोरात्मधियोरविधेयत्वे तव्यप्रत्ययविधेयत्वं कस्येत्याशङ्क्य सामान्यन्यायमाह । **स्वातन्त्र्यमिति** । प्रकृते विधिविषयमाह । **अन्वयेति** । विधिरिति शेषः ॥ १०७ ॥

**वचोर्थप्रतिबोधस्य पदार्थाज्ञानमेव तु ॥**
**यतोऽन्तरायस्तद्धानौ तेन तत्र नियुज्यते ॥ १०८ ॥**

वाक्यादेव तदर्थज्ञानादन्वयादिना पदार्थशोधने किं विधिनेत्याशङ्क्याऽऽह । **वचोर्थेति** । तद्धानौ पदार्थाज्ञानस्य वाक्यार्थधीप्रतिबन्धकस्य ध्वस्ताविष्टायामिति यावत् । तत्र पदार्थशोधने तेन विधिनेत्यर्थः ॥ १०८ ॥

**एवं ज्ञातपदार्थः सन्यथा पूर्वमवादिषम् ॥**
**ब्रह्म वा इदमित्यत्र न्यायेनैकात्म्ययायिना ॥ १०९ ॥**
**निरन्तरायो वाक्यार्थं वाक्यादेवावगच्छति ॥**
**अव्यावृत्ताननुगतप्रत्यक्तत्त्वसमीक्षणात् ॥ ११० ॥**

तर्हि ज्ञातपदार्थस्यान्वयादिनैव वाक्यार्थधीरपि सेत्स्यति किं वाक्येनेत्याशङ्क्याऽऽह । **एवमिति** । ऐक्यानुसारिन्यायेन ब्रह्मकण्डिकायां पदार्थशोधनं यथोक्तं तथा ज्ञातपदार्थोऽधिकारी सामान्यविशेषशून्यत्वमर्थनिश्चयात्तदज्ञानाख्यप्रतिबन्धहीनो वाक्यादेव वाक्यार्थं वेत्ति सम्यग्धियोऽमानादन्वयादेरनुदयादित्यर्थः ॥ १०९ ॥ ११० ॥

**नित्यमुक्तत्वविज्ञानं वाक्यादेवाञ्जसा भवेत् ॥**
**वाक्यार्थस्य च विज्ञानं पदार्थस्मृतिपूर्वकम् ॥ १११ ॥**
**अन्वयव्यतिरेकाभ्यां पदार्थः स्मर्यते ध्रुवम् ॥**
**एवं निर्दुःखमात्मानमक्रियं प्रतिपद्यते ॥ ११२ ॥**

उक्तेऽर्थे भाष्यकारसंमतिमाह । **नित्येति** । तर्हि किमित्यन्वयादिना पदार्थशोधनमित्याशङ्क्याऽऽह । **वाक्यार्थस्येति** । तज्ज्ञानफलं सूचयति । **एवमिति** । तत्त्वमर्थधीद्वारा वाक्यार्थज्ञाने कूटस्थं वस्त्ववशिष्टमित्यर्थः ॥ १११ ॥ ११२ ॥

**प्रत्यङ्मोहोद्भवानात्मप्राधान्येन तमोन्वयात् ॥**
**आत्माऽऽत्मानं पुराऽज्ञासीद्वाक्यार्थज्ञानजन्मतः ॥ ११३ ॥**

पदार्थधियो वाक्यार्थधीहेतुत्वेऽपि तद्धियो नान्वयाद्यपेक्षाऽहमित्यात्मधियः सदा सिद्धेरित्याशङ्क्याऽऽह । **प्रत्यगिति ।** वाक्यार्थज्ञानात्पूर्वमज्ञानसंबन्धात्तज्जदेहादिवैशिष्ट्येनाऽऽत्मानमात्मा ज्ञातवान्न वाक्यार्थान्वययोग्यत्वेनेत्यर्थः ॥ ११३ ॥

**अनात्मनोऽत आत्मानमन्वयव्यतिरेकतः ॥**
**निष्कृष्याऽऽत्मन्यथाऽऽत्मानं सर्वमात्मेति पश्यति ॥ ११४ ॥**

यस्मादन्वयादिना विना शुद्धमात्मानं न स बुध्यते तस्मात्तेन देहादेस्तं निष्कृष्य स्वमहिमस्थं ज्ञात्वा सोऽहं ब्रह्मेति वाक्यादनुभवतीति फलितमाह । **अनात्मन इति ।** अथशब्दो ज्ञानानन्तरं सकार्याविद्याध्वस्तिपरामर्शार्थः ॥ ११४ ॥

**अज्ञातज्ञापनं चातो विधिरत्राभिधीयते ॥**
**अप्रवृत्तप्रवृत्तिश्च न्यायाभावान्न युज्यते ॥ ११५ ॥**

अन्वयादिकृते पदार्थशोधने विधिरुक्तः संप्रति वाक्यार्थज्ञानेऽप्यज्ञातज्ञापनविध्युपगमे न दोष इत्याह । **अज्ञातेति ।** चकारोऽन्वयादिकृतपदार्थशुद्धिदृष्टान्तार्थः । अतःशब्दोक्तं हेतुमाह । **अप्रवृत्तेति** ॥ ११५ ॥

**नित्यं न भवनं यस्य यस्य वा नित्यभूतता ॥**
**न तस्य क्रियमाणत्वं खपुष्पाकाशयोरिव ॥ ११६ ॥**

कथं न्यायाभावस्तत्राप्रवर्तनविधौ ज्ञानस्य वा ज्ञेयस्य वा द्वयोर्वा विधेयत्वं नाऽऽद्योऽज्ञाते ज्ञाते वा तज्ज्ञाने विध्ययोगस्योक्तत्वादिति मत्वा द्वितीयं निरसितुं सामान्यन्यायं सदृष्टान्तमाह । **नित्यमिति** ॥ ११६ ॥

**उत्पत्त्यादि स्वतो यस्य यस्य चात्यन्तमेव न ॥**
**क्रियानपेक्षसिद्धत्वात्स्वतःसिद्धं तदुच्यते ॥ ११७ ॥**

तद्दार्ष्टान्तिके योजयति । **उत्पत्त्यादीति ।** यस्य घटादिवदुत्पत्त्यादि स्वतो नास्ति यस्य चाऽऽकाशादिवदुपाधितोऽपि न तद्विद्यते तदात्मवस्तु क्रियानपेक्षसत्ताकं स्वतो विद्यमानमतो न तत्रावकाशो विधेरित्यर्थः । यद्वोत्पत्तिगादिर्यस्य सत्त्वस्य तद्यस्य स्वतोऽस्ति यस्य च सर्वथैव न सत्त्वं तदाकाशं तत्पुष्पं च स्वतो विद्यमानमविद्यमानं चेति क्रियानपेक्षत्वाद्विध्ययोग्यमिति पूर्वस्यैव प्रपञ्चः ॥ ११७ ॥

**उत्पत्त्यादौ तु यच्छक्तं हेतुमात्रमपेक्षते ॥**
**साफल्यं कर्मणस्तत्र तदभिव्यक्तिकृद्धि तत् ॥ ११८ ॥**

---

१ ग. °त्मनः ॥ ११३ ॥ २ ख. °क्यान्व° । ३ क. °त्मतोऽत । ४ क. °त्मत द° । ५ क. विधेर° । ६ ग. °त्तिस्तु न्या° ।

कुत्र तर्हि विधिरित्याशङ्क्य क्रियायामित्यभिप्रेत्य तदुपयुक्तं स्थलमाह । **उत्पत्त्यादाविति** । यत्तच्छब्दौ फलार्थौ । कर्म पुरुषव्यापारः । तत्र हेतुः । **तदभिव्यक्तिकृदिति** । कर्मविषयो द्वितीयस्तच्छब्दः ॥ ११८ ॥

**कार्यं कारणतन्त्रं स्यात्ततस्तस्याऽऽत्मलाभतः ॥**
**अन्यकार्यमकार्यं च नान्यत्कारणमीक्ष्यते ॥ ११९ ॥**

आत्मतद्धियोर्विधिं दूषयितुं संमतमर्थमाह । **कार्यमिति** । उक्तेऽर्थे व्यतिरेकमाह । **अन्येति** ॥ ११९ ॥

**सर्वमात्मेति या बुद्धिः सा प्रमेयबलाद्भवेत् ॥**
**प्रमातृतन्त्रा सा चेत्स्यान्माभूल्लोकाग्निबुद्धिवत् ॥ १२० ॥**

तथाऽप्यात्मतज्ज्ञानयोर्विध्यभावे किं जातं तदाह । **सर्वमिति** । ब्रह्मात्मनोऽकार्यत्वान्न विध्यपेक्षा तद्बुद्धिरपि मानादिवशाद्भवन्ती न पुरुषतन्त्रा तन्न विध्यधीनपुरुषेच्छायत्नसाध्येत्यर्थः । तद्बुद्धेरपुरुषतन्त्रत्वमसिद्धमित्याशङ्क्याऽऽह । **प्रमात्रिति** ॥ १२० ॥

**अतोऽपुरुषतन्त्रत्वान्नाऽऽत्मज्ञाने विधिर्भवेत् ॥**
**अन्वयादिक्रिया त्वस्य तत्तन्त्रत्वाद्विधीयते ॥ १२१ ॥**

द्युलोकादावग्निधीवदात्मधियो न मानत्वं परिच्छेदकत्वादिति मत्वाऽऽह । **अत इति** । आत्मनि तज्ज्ञाने चेत्यर्थः । ज्ञानादौ विध्यसंभवं प्रसाध्य स्वातन्त्र्यं यत्रेत्युक्तं विधिविषयमुपसंहरति । **अन्वयादीति** । अस्यान्वयादिव्यापारस्येत्यर्थः ॥ १२१ ॥

**श्रवणं मननं तद्वत्तथा शमदमादि यत् ॥**
**पुमाञ्शक्नोति तत्कर्तुं तस्मादेतद्विधीयते ॥ १२२ ॥**

तमेव विशिनष्टि । **श्रवणमिति** । अन्वयादिक्रिया नृतन्त्रत्वाद्विधीयत इत्येतदेव स्फुटयति । **पुमानिति** ॥ १२२ ॥

**विशिष्टेहानुभूतिश्च सर्वमानफलं यतः ॥**
**फलं च न विधेयं स्यादतो नेदं विधीयते ॥ १२३ ॥**

आत्मनो विधेयत्वाभावे हेत्वन्तरमाह । **विशिष्टेति** । सर्वेषां मानानां फलभूताऽनुभूतिः सत्यानन्दादिलक्षणा ब्रह्मात्मनि स्वरूपं न च फलं स्वर्गवद्विधिमर्हत्यतो नाऽऽत्मा विधेय इत्यर्थः ॥ १२३ ॥

**प्रमाणमप्रमाणं च प्रमाभासं च यद्भवेत् ॥**
**चैतन्याकारमेवैतत्प्रथते सर्वमेव तत् ॥ १२४ ॥**

तत्रैव युक्त्यन्तरमाह । **प्रमाणमिति** । यत्प्रमाणादि तदेतत्सर्वं स्फुरतीति चैतन्ये कल्पितं भात्यतः सर्वत्राधिष्ठानत्वेन संनिहितं चिद्वस्तु न विधियोग्यमित्यर्थः ॥ १२४ ॥

नानाकारानुपादत्ते चैतन्याकारमेव सत् ॥
प्रतीच्यव्यभिचार्येकं तदन्ये व्यभिचारिणः ॥ १२५ ॥

तत्रैव हेत्वन्तरमाह । **नानेति** । सद्वस्त्वखण्डं चिद्रूपमेवमनेकविशेषालम्बनमतस्तस्य स्वतो निर्विशेषस्य न विध्यर्हतेत्यर्थः । तत्रैवोपपत्त्यन्तरमाह । **प्रतीचीति** । आत्मनि स्वरूपचैतन्यमेकरसं न व्यभिचारि स्वरूपतो मिथश्चानात्मानो व्यभिचारिणोऽतः सदैकरूपे न विधिरित्यर्थः ॥ १२५ ॥

मात्रादिव्यभिचारेऽपि संविदव्यभिचारिणी ॥
मिथः कृत्स्नेऽपि जगति तदन्यद्व्यभिचारि तु ॥ १२६ ॥

आत्मचैतन्यमपि स्वापादौ व्यभिचारीत्याशङ्क्याऽऽह । **मात्रादीति** । तत्साधकत्वादित्यर्थः । तदव्यभिचारे हेत्वन्तरमाह । **मिथ इति** । सर्वस्मिञ्जगत्यनात्मवस्तु मिथः स्वरूपतश्च व्यभिचार्येव दृश्यतेऽतस्तत्साधिका चिदव्यभिचारिणीत्यर्थः ॥ १२६ ॥

उत्पन्नमपि सज्ज्ञानं प्रमातृत्वाद्युपग्रहात् ॥
तदनुत्पन्नवद्भाति तद्व्युत्पत्तेः पुरा नृणाम् ॥ १२७ ॥

आत्मा चिद्रूपश्चेत्तज्ज्ञानं सदा सिद्धमिति तदर्थश्रवणादिविध्यानर्थक्यमित्याशङ्क्याऽऽह । **उत्पन्नमिति** । प्रतीचि सदा सिद्धमपि ज्ञानं मातृत्वादियोगात्परिच्छेदाभिमानाद्विहितश्रवणादिना ज्ञानोत्पत्तेः पूर्वं सर्वेषामप्यप्राप्तवद्भात्यतो वैधं श्रवणाद्यनुष्ठेयमित्यर्थः ॥ १२७ ॥

व्युत्पाद्यते यदा साक्षाद्यथोक्तन्यायवर्त्मना ॥
उत्पन्नमेव विज्ञानं तदा प्रागपि मन्यते ॥ १२८ ॥

तदनुष्ठानफलमाह । **व्युत्पाद्यत इति** । श्रवणादिना मातृत्वादियोगजमभिमानं त्यक्त्वाऽद्वयात्मना यदा त्वमर्थो बोध्यते तदा पूर्वमपीदं ज्ञानमात्मतयाऽऽप्तमेव मायावृतं तच्चाऽऽवरणमधुनाऽपनीतमिति निश्चिनोतीत्यर्थः ॥ १२८ ॥

स्वसाक्षिकैव सर्वस्य न वेद्मीत्यपि या मतिः ॥
किमु वेद्मीति बुद्धिः स्याच्चिदतोऽव्यभिचारिणी ॥ १२९ ॥

व्युत्पादनात्पूर्वं विशिष्टज्ञानादृष्टेरूर्ध्वं च तद्दृष्टेरागन्तुकमेव स्वरूपज्ञानं नाव्यभिचारीत्याशङ्क्याऽऽह । **स्वसाक्षिकेति** । ज्ञानत्वाज्ञानत्वसाधकत्वमतःशब्दार्थः ॥ १२९ ॥

आत्मेति मेयनिर्देशो वैशब्दस्तत्स्मृताविह ॥
प्रमातृक्रियया व्याप्तिर्द्रष्टव्य इति भण्यते ॥ १३० ॥
शब्दानुरोधतस्तावदीदृगत्रोपजायते ॥
श्रुतेरनुभवः साक्षाद्यथावस्तु न वेति वा ॥ १३१ ॥

---

१ क. ग. तत् ।

**विचार्यमाणोऽनुभवो रूप्यशुक्त्यनुभूतिवत् ॥**
**प्रमाणमप्रमाणं वा मेयसंगत्यसंगतेः ॥ १३२ ॥**

द्रष्टव्यवाक्यस्य विधिपरत्वं पराकृत्य शब्दताडितमर्थं निराकर्तुमनुवदति । **आत्मेतीति** । इहेति वाक्योक्तिः । अत्रेत्युक्तमेयोक्तिः । आपातिकमर्थं निरस्यति । **यथेति** । ब्रह्मात्मनि मात्रादिभेदधीः शब्दशक्त्या दृश्यमाना रूप्यस्य शुक्तौ धीवन्मिथ्येत्यर्थः । शुक्तिरूप्यधियो बाधान्मिथ्यात्वेऽपि तदभावान्मात्रादिभेदधियो न मिथ्यतेत्याशङ्क्य वादिसंमतमर्थमाह । **प्रमाणमिति** । अबाधिताबुद्धार्थबोधि मानमन्यथाबोधि चामानमित्यर्थः ॥ १३० ॥ १३१ ॥ १३२ ॥

**प्रमातृमेयभेदोऽत्र न तावद्गम्यते मितेः ॥**
**प्रत्यग्धीमात्रगम्योऽर्थो यस्मादात्मेति निश्चितः ॥ १३३ ॥**

अस्तु प्रस्तुते किं जातं तत्राऽऽह । **प्रमात्रिति** । अत्र ब्रह्मात्मनीत्येतत् । तस्याद्रयत्वादिति शेषः । विमता मिथ्याऽप्रामाणिकत्वात्संमतवदिति भावः । आत्मनि भेदधियो मिथ्यात्वे हेत्वन्तरमाह । **प्रत्यगिति** । प्रत्यगेव धीश्चैतन्यं तन्मात्रेण गम्यः स्वप्रकाशो यस्मादात्मेति निश्चयस्तस्मात्तस्मिन्मात्रादिधियो मिथ्यात्वमित्यर्थः ॥ १३३ ॥

**प्रत्यग्धीगोचरो नो चेदनात्माऽसौ घटादिवत् ॥**
**ब्रह्मादिमध्यपातित्वं ततश्चास्य प्रसज्यते ॥ १३४ ॥**

स्वप्रकाशत्वमात्मनोऽसिद्धमित्याशङ्क्याऽऽह । **प्रत्यग्धीति** । अनात्मत्वे कल्पितत्वापत्तिरित्याह । **ब्रह्मादीति** ॥ १३४ ॥

**विभिन्नद्रष्टृदृष्ट्याप्तिर्घटादेरिव नाऽऽत्मनः ॥**
**न चाभेदेऽस्ति संव्याप्तिरैकात्म्यादेव कारणात् ॥ १३५ ॥**

यत्तु प्रमातृक्रियया व्याप्तिरित्यादि तदपि स्वप्रकाशत्वेन प्रत्युक्तमित्याह । **विभिन्नेति** । किंचाऽऽत्मनो दृष्टिक्रियाव्याप्तौ स्वयमेव द्रष्टाऽन्यो वा नाऽऽद्य इत्याह । **न चेति** । विषयत्वेन विषयित्वेन वा समाप्तिरिति हेत्वर्थः ॥ १३५ ॥

**न च द्रष्टाऽऽत्मनोऽन्योऽस्ति द्रष्ट्रन्तरनिषेधनात् ॥**
**न च द्रष्ट्रोर्द्वयोर्लोके द्रष्टृदृश्यत्वसंगतिः ॥ १३६ ॥**

द्वितीयं दूषयति । **न चेति** । नान्योऽतोऽस्तीत्यादिश्रुतेरिति शेषः । द्रष्टृभेदमङ्गीकृत्याऽऽह । **न चेति** । तयोः समत्वमसमत्वं वा नाऽऽद्यो दीपयोरिव विषयविषयित्वायोगान्नेतरश्चेतनगतगुणप्रधानत्वसाधकाभावादिति भावः ॥ १३६ ॥

**क्रियाविरोधः प्राप्नोति द्रष्टुः स्वात्मसमीक्षणे ॥**
**तद्दृष्टेर्नित्यसंप्राप्तेर्विध्यानर्थक्यसंगतिः ॥ १३७ ॥**

स्वयमेव द्रष्टेत्यत्र दोषान्तरमाह । **क्रियेति** । एकस्यामेव क्रियायां कर्तृत्वेन गुणत्वं

कर्मत्वेन प्राधान्यमिति विरोध इति यावत् । तत्रैव दोषान्तरमाह । **तद्दृष्टेरिति ।** स्वकर्तृकस्वदृष्टेः स्वाधीनतया विधिं विना सदा सिद्धेस्तत्राकिंचित्करो विधिरित्यर्थः ॥ १३७ ॥

**संसार्यात्मनि दृष्टेऽपि न च किंचित्प्रयोजनम् ॥**
**अयमेव च नोऽनर्थो यत्संसार्यात्मदर्शनम् ॥ १३८ ॥**

स्वकर्तृकाऽपि स्वदृष्टिः स्वोत्पत्त्यर्थं विधिमपेक्षतामित्याशङ्क्य संसारिणोऽसंसारिणो वा सा विधेयेति विकल्प्याऽऽद्यं दूषयति । **संसारीति ।** न केवलं तद्दृष्टिविधिवैफल्यं प्रत्युतानर्थाप्तिरित्याह । **अयमेवेति** ॥ १३८ ॥

**तदन्यस्याप्रसिद्धेश्च कथं स्यात्तत्समीक्षणम् ॥**
**अथ प्रसिद्धोऽसावात्मा तद्दृष्टिः किं विधीयते ॥ १३९ ॥**

कल्पान्तरं प्रत्याह । **तदन्यस्येति ।** लोकतोऽप्रसिद्धावपि शास्त्रात्प्रसिद्धिमाशङ्क्याऽऽह । **अथेति** ॥ १३९ ॥

**द्रष्टृदर्शनदृश्यानां प्रात्यक्ष्यान्नाऽऽगमेक्षणम् ॥**
**द्रष्टुरात्मा पृथक्तस्यात्पृथगात्मेति दुर्वचः ॥ १४० ॥**

संसार्यात्मदृष्टेरविधेयत्वे हेत्वन्तरमाह । **द्रष्टृेति ।** न हि लोकसिद्धेऽर्थे तद्दृष्टिः शास्त्रीयविध्यपेक्षेत्यर्थः । द्रष्टुर्लोकसिद्धत्वेऽप्यात्मनस्तदभावात्तद्दृष्टिविधिमाशङ्क्याऽऽह । **द्रष्टुरिति ।** विभक्तस्य घटवदनात्मतेति भावः ॥ १४० ॥

**न चाऽऽत्मन्यप्रसिद्धे स्यात्संसारस्य प्रसिद्धता ॥**
**न ह्यप्रसिद्धसंबन्धी संबन्धः क्वचिदिष्यते ॥ १४१ ॥**

तस्यैवाऽऽत्मत्वेऽप्यशनायाद्यतीतस्यालौकिकत्वात्तद्दृष्टौ शास्त्रीयो विधिरित्याशङ्क्याऽऽह । **न चेति ।** संसारस्य परतन्त्रतया प्रसिद्धिस्तत्संबन्धित्वेनाऽऽत्मनोऽपि प्रसिद्धिरित्यर्थः । संबन्धशब्दः संसारविषयः ॥ १४१ ॥

**न चेदात्माभिसंबन्धः संसारोऽयं समीक्ष्यते ॥**
**तन्मुमुक्षुत्वमायातं कुतो हेतोरितीर्यताम् ॥ १४२ ॥**

परतन्त्रोऽपि सोऽन्तःकरणगतो नाऽऽत्मगामीति सांख्यास्तान्प्रत्याह । **न चेदिति ।** आत्मनोऽसंसारित्वे मुमुक्षुत्वासिद्धिः संसारमोक्षयोरेकाधिकरणत्वान्न बुद्धिद्वाराऽऽत्मन्यपि तत्संभवोऽसङ्गस्य तदयोगात्कल्पिते तु संबन्धे मायावादापत्तिरिति भावः॥ १४२॥

**अनृतत्वे विधिर्नष्टो वन्ध्यापुत्रोद्भवे यथा ॥**
**मातृतन्त्रे तथैवायं न विधिः प्रत्यगीक्षणे ॥ १४३ ॥**

संसार्यसंसार्यात्मधियोरविधेयत्वेऽपि तत्त्वापाद्याऽऽत्मधियोऽपुंस्तन्त्रत्वान्न विधेयतेत्याह त्वदृष्टा

---

१ ख. 'दन्यत्वात्' । २ क. 'क्षणात् ॥ १४३ ॥

न्तेन साधयति । **अनृतम्न इति** । विपक्षेऽपि विधिवैधुर्यतादवस्थ्यमाह । **मात्रिति** । नित्यप्राप्तेरित्यर्थः ॥ १४३ ॥

**नानाद्रव्यसमायोगे वियोगे च घटात्मनः ॥**
**वियत्संपूर्णता नित्या वियत्सक्तेरवर्जनात् ॥ १४४ ॥**
**शब्दादिबाह्यसंबन्धे विभागे च तथा धियः ॥**
**प्रत्यक्चैतन्यसंबन्धो नित्यो नित्यात्मसाक्षिकः ॥ १४५ ॥**

अपूर्वविध्यभावेऽपि नियमपरिसंख्ययोरन्यतरः स्यादित्याशङ्क्याऽऽत्मधियो नित्यप्राप्तिं दृष्टान्तेनाऽऽह । **नानेत्यादिना** । तन्नित्यत्वे मानमाह । **नित्यात्मेति** ॥ १४४ ॥ ॥ १४५ ॥

**यतोऽतः पाक्षिकी प्राप्तिर्नेहास्त्यैकात्म्यदर्शने ॥**
**नियमः परिसंख्या वा न तेनेहोपपद्यते ॥ १४६ ॥**

तन्नित्यप्राप्तिफलमाह । **यत इति** । यथोक्तनीत्याऽऽत्मज्ञाने नित्याप्तेर्यतो न पाक्षिकी प्राप्तिरतो नात्र नियमो नियमः पाक्षिके सतीति स्थितेः सति तस्मिन्नान्यत्र प्रसङ्गस्तेन तन्निवृत्तिस्तन्नात्र परिसंख्याऽपि तत्र चान्यत्र च प्राप्तौ मेति न्यायादित्यर्थः ॥ १४६ ॥

**कर्मकाण्डे यथा मानं तथैवोपनिषत्स्वपि ॥**
**विधिस्त्वानपेक्षत्वात्सापेक्ष्यान्नाभिधाश्रुतिः ॥ १४७ ॥**

शब्दादेव ज्ञानोत्पत्तेस्तज्जन्मार्थं विध्यभावेऽपि प्रामाण्यार्थो विधिरित्याशङ्कते । **कर्मेति** । यथा विधिकाण्डे विधिवाक्यमेव मानमन्यत्तच्छेषतयोपयुक्तं तथा ज्ञानकाण्डेऽपि विध्यर्थस्य मानान्तरायोग्यत्वात्तन्निष्ठवाक्यस्यानपेक्षप्रामाण्यासिद्धेरयमात्मेत्यादि तु विधिहीनं न सिद्धेऽर्थे मानं तस्य मानान्तरयोग्यत्वात्तन्निष्ठस्य सापेक्षत्वात्तद्वेदान्तेषु प्रामाण्यार्थमेव विधिरित्यर्थः ॥ १४७ ॥

**मैवं मानान्तराप्राप्तसम्यगैकात्म्यबोधतः ॥**
**अभिधाश्रुतेः प्रमाणत्वं सुप्तोत्थापकवाक्यवत् ॥ १४८ ॥**

अभिधाश्रुतेरमानतेत्येतत्प्रत्याह । **मैवमिति** । ऐक्यस्य सिद्धत्वेऽपि रूपाद्यभावेन मानान्तरायोग्यत्वात्तद्बोधिवाक्यस्य प्रामाण्यं सुप्तबोधिलौकिकवाक्यवद्युक्तमित्यर्थः ॥ १४८ ॥

**अकारकैकात्म्यमात्रे मेयं वस्त्विष्यते यतः ॥**
**तदन्यस्य यतो मानाद्व्यतिरेको न लभ्यते ॥ १४९ ॥**

ऐक्यस्य नाभिधाश्रुतिमेयत्वं मात्रादिभावाभावयोस्तदयोगादित्याशङ्क्याऽऽह । **अका-**

१ क. ख. ॰वृत्तेस्त॰ ।

रकेति । मात्रादेर्भावत्वेऽप्यप्रामाणिकत्वात्कूटस्थमेकरसं तत्त्वमभिधावाक्यीयमित्यर्थः । एको यतःशब्दोऽतःशब्दपर्यायः ॥ १४९ ॥

मुक्त्वैकात्म्यस्य चाज्ञानं नान्तरायान्तरं यतः ॥
विधितन्त्रस्य कार्यत्वान्नाज्ञाने प्रभविष्णुता ॥ १५० ॥

वेदान्तेषु प्रामाण्याय विध्यभावेऽपि ब्रह्मात्मनोर्व्यवधानभङ्गार्थं विहितज्ञानापेक्षणात्तत्र विधिरित्याशङ्क्याज्ञानादन्यत्तदेव वा व्यवधानमिति विकल्प्याऽऽद्यं दूषयति । मुक्त्वेति । अतस्तद्भङ्गाय न ज्ञाने विधिरिति शेषः । द्वितीयं प्रत्याह । विधीति । अज्ञानं चेद्व्यवधिस्तदा विध्यधीनधियोऽप्रमात्वान्न तन्निरासमसमर्थेत्यर्थः ॥ १५० ॥

यथास्थितात्मवस्तूत्थज्ञानं मुक्त्वा तमोहृतौ ॥
नान्यो हेतुर्यतस्तस्मान्न त्रय्यन्ते विधिः प्रमा ॥ १५१ ॥

अज्ञानाख्यव्यवधेस्तर्हि किं निवर्तकं तदाह । यथेति । व्यवधिध्वंसार्थत्वेनापि विध्य संभवे फलितमाह । यत इति ॥ १५१ ॥

नियोज्यस्य च नैश्वर्यं धीसम्यक्त्वं प्रतीप्यते ॥
तस्य मेयैकहेतुत्वान्नैव स्यान्मातृतन्त्रता ॥ १५२ ॥

विधितन्त्रस्याप्रमात्वान्नाज्ञानध्वंसितेत्ययुक्तं विहिते ज्ञाने प्रामाण्यस्य बुद्धिमता क्रियमाणत्वादित्याशङ्क्याऽऽह । नियोज्यस्येति । तर्हि किंप्रयुक्तं धीसम्यक्त्वं तदाह । तस्येति ॥ १५२ ॥

विधेरिवानपेक्षत्वं वेदान्तेष्वभिधाश्रुतेः ॥
अनृतत्वसामान्यात्तथाऽतीन्द्रियबोधनः ॥ १५३ ॥

यत्तु सिद्धार्थत्वादभिधाश्रुतिः सापेक्षत्वादमानमिति तत्राऽऽह । विधेरिति । कर्मज्ञानवाक्ययोरनपेक्षत्वस्य तुल्यत्वे हेतुमाह । अनृतत्वेति । अपौरुषेयत्ववन्मानान्तरायोग्यार्थबोधित्वं हेत्वन्तरमाह । तथेति ॥ १५३ ॥

अक्षाद्यविषयं प्रत्यक्स्वतः सिद्धमसाधनम् ॥
अभिधा बोधयन्तीयं नान्यत्किंचिदपेक्षते ॥ १५४ ॥

पृथिव्यादिवद्ब्रह्मात्मनोऽपि मानान्तरयोग्यत्वात्कथमतीन्द्रियत्वेत्याशङ्क्याऽऽह । अक्षादीति । रूपादिहीनं स्वप्रकाशं साधकानपेक्षं प्रत्यक्षाद्ययोग्यं ब्रह्म तद्विषयाऽभिधाश्रुतिर्विध्यनपेक्षेत्यर्थः ॥ १५४ ॥

तस्माद्विधेः प्रमाणत्वं साध्यसाधनबोधने ॥
अतीन्द्रिये तदन्येन ज्ञातुं शक्यं न तद्यतः ॥ १५५ ॥

---

१ ख. विधेयं ।

सिद्धेऽर्थे विधिप्रामाण्यस्यानिष्टेर्नियोगे तत्प्रामाण्यस्य संबन्धे निरासादिष्टसाधनवत एव तन्मानतेति प्रासङ्गिकमर्थमाह । **तस्मादिति** । इष्टोपायस्य विधिं विनाऽपि प्राप्तेर्न तत्र तत्प्रामाण्यमित्याशङ्क्याऽऽह । **तदन्येनेति** । अतो विधेरेव समीहितसाधने प्रामाण्यमिति शेषः ॥ १५५ ॥

**साध्यसाधनसंबन्धो न शक्योऽभिधया यथा ॥**
**प्रतिपत्तुं स्वतः सिद्धोऽशक्यो विधिगिरा तथा ॥ १५६ ॥**

विमतं विधिमानकं शास्त्रार्थत्वादग्निहोत्रवदित्याशङ्क्याऽऽह । **साध्येति** । अभिधाश्रुतेर्ब्रह्मण्यबाध्याबुद्धासंदिग्धबोधधीविरुद्धाऽनुमेति भावः ॥ १५६ ॥

**ऐकात्म्यस्य स्वतः सिद्धेर्न क्रियाऽपेक्ष्यते यतः ॥**
**ततश्च भावनाभावो भावनायाः क्रियाश्रयात् ॥ १५७ ॥**
**विरहे भावनायाश्च न विधेस्तत्र मानता ॥**
**स्वतःसिद्धार्थबोधित्वादभिधायास्तु मानता ॥ १५८ ॥**

सिद्धेऽर्थे विध्यमानत्वे हेत्वन्तरमाह । **ऐकात्म्यस्येति** । यत्र क्रिया तत्र भावना तस्याः साध्यक्रियाविषयत्वाद्यत्र च सा तत्र विधिर्न च सिद्धे क्रियाद्यस्ति तन्न तत्र विधिमानतेत्यर्थः । अभिधाऽपि तत्र न मानं वेदवाक्यत्वात्संमतवदित्याशङ्क्याऽऽह । **स्वत इति** ॥ १५७ ॥ १५८ ॥

**सापेक्षत्वादमानं चेदभिधा लोकवर्त्मना ॥**
**अभिधा तत्त्वमस्यादि सरित्तीरफलोक्तिवत् ॥ १५९ ॥**

प्रत्युक्तमपि चोद्यं दृष्टान्तवशादुत्थापयति । **सापेक्षत्वादिति** । तदेव व्यनक्ति । **अभिधेति** । तत्त्वमस्याद्यभिधा सापेक्षत्वादमानमिति संबन्धः ॥ १५९ ॥

**संहत्यनुपपत्तिश्च पदानामभिधाश्रुतौ ॥**
**आख्यातपदहेतुत्वात्सर्वत्र पदसंहतेः ॥ १६० ॥**

न केवलं वेदान्तेषु प्रामाण्यार्थमेव विधिः किंतु पदानां मिथोऽन्वयार्थं चेत्याह । **संहतीति** ॥ १६० ॥

**नाऽऽख्यातपदसद्भावात्स्यादेव पदसंहतिः ॥**
**अस्यस्म्याद्याख्यातपदमस्त्येवेहाभिधाश्रुतौ ॥ १६१ ॥**

पदान्वयार्थं विधिरित्येतद्दूषयति । **नेति** । तर्हि विधिपदोपगतेरस्मत्पक्षासिरित्याशङ्क्याऽऽह । **असीति** । आदिपदं वेद भवतीत्यादि ग्रहीतुम् ॥ १६१ ॥

**सरित्तीरे फलानीति युक्ताऽपेक्षाऽभिधाश्रुतेः ॥**
**प्रत्यक्षमानग्राह्यत्वात्फलतीरार्थसंगतेः ॥ १६२ ॥**

---

१ ख. °बन्मता । अ° ।

यत्तु सरित्तीरफलोक्तिवदिति तत्र मानान्तरगम्यार्थत्वमुपाधिरित्याह । **सरिदिति** ॥ १६२ ॥

**प्रत्यक्षग्राह्य एषोऽर्थो न तदन्यप्रमाणकः ॥**
**यतोऽतो नाऽऽगमादेव तादृशेऽर्थे[1] विनिश्चितिः ॥ १६३ ॥**

उपाधेरसंभवं निरस्यति । **प्रत्यक्षेति** । फलतीरसंबन्धाख्यार्थस्य वक्तृप्रत्यक्षत्वात्तदपेक्षवाक्यस्यानुवादितया तत्रामानतेत्यर्थः ॥ १६३ ॥

**अपूर्वादिवचोऽर्थे तु न प्रत्यक्षाद्यपेक्षते ॥**
**प्रत्यक्षाद्यप्रमेयत्वादैकात्म्याख्यस्य वस्तुनः ॥ १६४ ॥**

साधनव्याप्तिं प्रत्याह । **अपूर्वादीति** । यदपूर्वमनपरमित्यादिवचस्तन्न स्वार्थे प्रत्यक्षाद्यपेक्षं स्वार्थस्य तदयोग्यत्वान्न साधनव्याप्तिरित्यर्थः ॥ १६४ ॥

**अपौरुषेयवाक्यत्वं समानमभिधाश्रुतेः ॥**
**अतीन्द्रियार्थबोधित्वं समानं चोदनोक्तिभिः ॥ १६५ ॥**

किंच वेदान्ताः स्वार्थे मानमपौरुषेयत्वाद्विधिवाक्यवदिति प्रत्यनुमानमाह । **अपौरुषेयेति** । अग्निर्हिमस्येत्यादौ व्यभिचारमाशङ्क्य वेदान्ताः स्वार्थे मानं संवादादिहीनार्थबोधित्वात्संमनवदित्याह । **अतीन्द्रियेति** ॥ १६५ ॥

**सिद्धसाध्यप्रमेयत्वभेदो यदि परं तयोः ॥**
**प्रामाण्ये त्वतिशीतिस्तु न काचिदपि दृश्यते ॥ १६६ ॥**

सापेक्षत्वानुमादोषमुपसंहरति । **सिद्धेति** । तयोरिति कर्मज्ञानकाण्डयोरुक्तिः ॥ १६६ ॥

**प्रमोपजायते तावदहं ब्रह्मेत्यलौकिकी[3] ॥**
**तत्त्वमस्यादिवाक्येभ्यः श्रवणात्समनन्तरम् ॥ १६७ ॥**

वेदान्तानां प्रमाजनकत्वमेवासिद्धमिति कथं प्रामाण्यमित्याशङ्क्याऽऽह । **प्रमेति** । अधिकारिणो वाक्यीया प्रमितिर्न प्रत्याख्यानमर्हतीति भावः ॥ १६७ ॥

**एवं चेदप्रमाणत्वं किमिवेहाभिधाश्रुतेः ॥**
**विधेरपीह मानत्वं नोक्तन्यायातिरेकतः ॥ १६८ ॥**

तथाऽपि तेषां मात्रादिवदप्रामाण्यमित्याशङ्क्याऽऽह । **एवं चेदिति** । स्वार्थे प्रमितिकरणत्वे तस्या नाप्रमाणत्वं हेत्वभावादित्यर्थः । विपक्षे विधेरप्यप्रामाण्यं स्यादित्याह । **विधेरिति** । प्रमाजनकत्वमुक्तन्यायः । इहेति स्वार्थोक्तिः ॥ १६८ ॥

**स्वशक्तिः सर्वमानानां यथा वस्त्ववबोधने ॥**
**अभिधायाश्च साऽस्त्येव किमिति स्यादमानता ॥ १६९ ॥**

---

1 ग. 'र्थेऽस्ति नि' । २ ख. 'यत्वाद्वेदो । ३ क. ग. 'किके । त' ।

किंच वेदान्ताः स्वार्थे मानं तद्धीसमर्थत्वादध्यक्षवदित्याह । **स्वशक्तिरिति** ॥१६९॥

**नाप्यर्थेऽतीन्द्रिये सिद्धे मानं लिङ्गाद्यपेक्षते ॥**
**योगिप्रत्यक्षमानं वा तयोरविषयत्वतः ॥ १७० ॥**

प्रत्यक्षायोग्येऽपि ब्रह्मण्यनुमादिसंभवात्तदपेक्षा वेदान्ता न स्वार्थे मानमित्याशङ्क्याऽऽह । **नापीति** । सोपाधिकेऽर्थे लिङ्गादिप्रवृत्तावपि निरुपाधिके न तत्प्रवृत्तिरित्यर्थः । ब्रह्मास्मदध्यक्षाद्यगोचरोऽप्यस्मद्विशिष्टानां योगिनां प्रत्यक्षं स्यादित्याशङ्क्याऽऽह । **योगीति** । वाशब्दो नञ्क्रियापदयोरनुकर्षणार्थः । तत्र हेतुः । **तयोरिति** ॥ १७० ॥

**नेतीत्यस्थूलमित्यादिवाक्याद्योऽर्थोऽवगम्यते ॥**
**योगिप्रत्यक्षगम्योऽयं न तत्प्रत्यक्त्वहेतुतः ॥ १७१ ॥**

हेतुं साधयति । **नेत्यादिना** । योगिप्रत्यक्षपदं लिङ्गाद्युपलक्षणार्थम् । तत्प्रत्यक्त्वहेतुतः प्रत्यक्षानुमानादेः सत्तास्फूर्तिप्रदत्वेनाऽऽत्मनस्तत्स्वरूपत्वादिति यावत् ॥१७१॥

**प्रत्यक्षानवताराच्च नानुमानेन मीयते ॥**
**धर्मधर्म्यभिसंबन्धे नागृहीतेऽनुमा यतः ॥ १७२ ॥**

तस्यानुमानागम्यत्वे हेत्वन्तरमाह । **प्रत्यक्षेति** । प्रत्यक्षद्वयाविषयत्वेऽप्यनुमानविषयत्वं किं न स्यान्न हि मानं मानान्तरमपेक्षते तत्राऽऽह । **धर्मेति** । अतोऽप्रत्यक्षादग्राह्यान्नानुमानमङ्गाभावादिति शेषः ॥ १७२ ॥

**यज्जातीयैः प्रमाणैस्तु यज्जातीयार्थदर्शनम् ॥**
**भवेदिदानीं लोकस्य तथा कालान्तरेऽप्यभूत् ॥ १७३ ॥**

वर्तमानकल्पवर्तिनामप्रत्यक्षमपि ब्रह्म कल्पान्तरस्थानां तद्योग्यं स्यात्तत्प्रत्यक्षस्यातिशयादित्याशङ्क्याऽऽह । **यदिति** । विमतं न ब्रह्मग्राहीन्द्रियत्वात्संमतवदित्यर्थः ॥१७३॥

**यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् ॥**
**दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता ॥ १७४ ॥**

अस्मदिन्द्रियेष्वतिशयाभावाद्ब्रह्माविषयत्वमाशङ्क्येतरत्राप्ययोग्यविषये तुल्यमतिशयशून्यत्वमिति मत्वा वार्तिकमुदाहरति । **यत्रेति** । धर्मब्रह्मादिविषयेऽपि केषांचिदिन्द्रियं प्रवर्तते चेत्तेषां रूपेऽपि श्रोत्रस्य प्रवृत्तिः स्यादित्यतिप्रसक्तिमाह । **नेति** ॥ १७४ ॥

**योगिप्रत्यक्षमानादेर्न चेदैकात्म्यमेयता ॥**
**तत्प्राप्तमपि किं कुर्यात्स्वात्मायोग्यासु भूमिषु ॥ १७५ ॥**

उक्तन्यायाद्ब्रह्मात्मनो योगिप्रत्यक्षाद्यविषयत्वेऽपि तत्र तस्यातिशयवत्त्वेन प्रसङ्गमाशङ्क्य तस्याकिंचित्करत्वमाह । **योगीति** ॥ १७५ ॥

**अक्षादिमेयासारूप्यादैकात्म्यं स्यान्न तत्समम् ॥**
**यथा विधेयासारूप्यान्नैकात्म्यं स्याद्विधेस्तथा ॥ १७६ ॥**

ब्रह्मात्मन्युक्तन्यायात्प्रत्यक्षाद्यनवतारेऽपि तस्मिन्विधिवाक्यगम्ये कुतो वेदान्ता निरपेक्षतया मानमित्याशङ्क्याऽऽह । **अक्षादीति** ॥ १७६ ॥

**संभाव्यते चेदक्षादि ह्यैकात्म्यार्थे फलादिवत् ॥**
**न तद्वारयितुं शक्यं लोके विधिशतैरपि ॥ १७७ ॥**
**नासमीक्ष्य स्वसामर्थ्यं पुमान्विधिशतैरपि ॥**
**प्रवर्ततेऽनपेक्षत्वं कुतो विधिवचःस्वतः ॥ १७८ ॥**

किंच ब्रह्मात्मनि वेदान्तानामनपेक्षं मानत्वं वक्तुं तज्ज्ञाने विधिमिच्छता वाच्यमैक्ये नदीतीरफलादाविव मानान्तरं संभावितं न वेत्याद्ये न तद्विधिनाऽपि शक्यं निरासितुमिति तत्पक्षेऽप्यनपेक्षप्रामाण्यासिद्धिर्द्वितीये विनाऽपि तं तादृक्प्रामाण्यसिद्धेर्व्यर्थो विधिरित्याह । **संभाव्यत इति** । प्रमाणोपनीतस्य निवारणे प्रमाणविरोधः स्यादिति हिशब्दार्थः । वेदान्तानामनपेक्षप्रामाण्यमुक्त्वा विधिष्वेव सापेक्षतेत्याह । **नेत्यादिना** ॥ १७७ ॥ १७८ ॥

**अपाक्येषु नियुक्तोऽपि कृष्णलान्श्रपयेदिति ॥**
**न तच्छक्तिं विना कश्चित्पुमांस्तत्र चिकीर्षति ॥ १७९ ॥**

विधेरधिकारिगतप्रवृत्तिशक्तिमापेक्षत्वं दृष्टान्तेन स्पष्टयति । **अपाक्येष्विति** । यथा कृष्णलान्श्रपयेदिति विक्लित्त्ययोग्येषु कृष्णलेषु नियुक्तः स्वशक्तिमनपेक्ष्य न विपक्षति किंतु स्वसामर्थ्यमनुसृत्य तेषां विक्लित्त्ययोग्येऽपि तत्पाके संतापनमात्रे कृते श्रपयतीत्युक्तिसामर्थ्याददृष्टार्थी प्रवर्तते तथा सर्वत्र विधिविषये पुरुषशक्तिरपेक्षितेत्यर्थः ॥ १७९ ॥

**एवं चेदनपेक्षत्वं विधेः किमिति भण्यते ॥**
**न भावनानपेक्षोऽसौ विधिर्यस्मात्प्रवर्तते ॥ १८० ॥**

इष्टमेव पुरुषशक्तिमापेक्षत्वं विधेरित्याशङ्क्याऽऽह । **एवं चेदिति** । विधेरधिकारिशक्त्यपेक्षतया प्रवर्तकत्वान्नानपेक्षं प्रामाण्यमित्युक्त्वा तत्रैव हेत्वन्तरमाह । **नेति** । तस्मादपि निरपेक्षप्रामाण्यासिद्धिरिति शेषः ॥ १८० ॥

**न भावनान्तरमियं न च मानान्तरं तथा ॥**
**अपेक्ष्याभिधयैकात्म्यमवबोधयति श्रुतिः ॥ १८१ ॥**

तत्त्वमसादावपि तुल्यमुक्तशक्त्यपेक्षत्वमधिकारिणः प्रमितिजनको वेद इति स्थितेरित्याशङ्क्याऽऽह । **नेत्यादिना** । पुरुषशक्तिसापेक्षत्वमुभयत्र तुल्यं करणशक्तौ भावनायां च विधिष्वेव सापेक्षतेत्यतिशयस्तथाऽपि मानान्तरापेक्षाभावाद्विधीनामनपेक्षप्रमाण-

तेत्याशङ्क्याऽऽह । **न चेति ।** नियोगस्य जाड्यात्तत्र मानान्तरं संभवत्यन्यथा शक्तिग्रहायोगादात्मा तु स्वप्रकाशत्वादमेयः शक्तिग्रहस्तत्रोपपादितोऽतः श्रुतिर्विधिरहितवाक्यैनैक्यं बोधयन्ती ब्रह्मनिष्ठतां विनाऽनुष्ठानान्तरं मानान्तरं प्रवृत्तिशक्तिं वा नापेक्षते किंतु स्वमहिम्नैवाधिकारिणं प्रति तद्बोधयतीत्यर्थः ॥ १८१ ॥

**अतोऽनपेक्षता युक्ता सर्वदैवाभिधाश्रुतेः ॥**
**अभिधानाभिधेयार्थज्ञानमेव व्यपेक्षते ॥ १८२ ॥**

विधिभ्यो वेदान्तेषु भेदमुपसंहरति । **अत इति ।** सर्वदैवानपेक्षतेति ब्रुवता शक्तिग्रहेऽप्यपेक्षाभावेष्टेरव्युत्पन्नस्यापि तत्त्वमादिनैक्यधीरिष्टा स्यादित्याशङ्क्याऽऽह । **अभिधानेति ।** शक्तितात्पर्यवतः शब्दस्य मानत्वात्तस्य चानपेक्षत्वादनपेक्षत्ववाचोयुक्तिरिति भावः ॥ १८२ ॥

**ज्ञानक्रिया प्रमातृस्था न यथावस्तुबोधकृत् ॥**
**प्रमेयकर्तृकैवासौ यथावस्त्ववबोधिनी ॥ १८३ ॥**

विधीनामनपेक्षत्वायोगात्तदुपगमेन सापेक्षत्वापरिहारात्तं विनैव वेदान्तानामनपेक्षं प्रामाण्यमित्युपपाद्य विहितज्ञानस्याप्रामाण्येनार्थासाधकत्वाच्च न ज्ञाने विधिरित्याह । **ज्ञानेति ।** प्रमातृस्था तत्तन्त्रेति यावत् । योषिदग्न्यादिधीवदित्यर्थः । प्रमेयकर्तृका मानमेयाधीनेति यावत् । असाविति ज्ञानक्रियोक्ता ॥ १८३ ॥

**न चान्यदीयव्यापारे ह्यन्योऽशक्तेर्नियुज्यते ॥**
**न ह्यग्निसाध्ये शोषादौ नियोगो घटतेऽम्भसः ॥ १८४ ॥**

तादृश्यपि ज्ञाने पुंसो नियोगः किं न स्यादित्याशङ्क्याऽऽह । **न चेति ।** पितृव्यापारे पुत्रस्य नियोगेऽपि पुंसो यत्र न स्वातन्त्र्यं तत्र नियोगो नेति हिशब्दार्थः । मानादिव्यापारे पुंसो न नियोगोऽशक्तेरित्यत्र दृष्टान्तमाह । **न हीति** ॥ १८४ ॥

**ब्रह्मणोऽविद्यया योऽपि स्यादवच्छेद आत्मनः ॥**
**तदवच्छेदविध्वस्तौ न साधनमपेक्षते ॥ १८५ ॥**

वैधं ज्ञानं फलवदिति ज्ञाने विधिमाशङ्क्य तत्फलं भेदध्वस्तिर्वाऽविद्यानिवृत्तिर्वा जीवस्य ब्रह्मप्राप्तिर्वाऽन्यद्वा किंचिदिति विकल्प्य जीवब्रह्मभेदस्य विहितज्ञानाद्ध्वस्तेर्ज्ञाने विधिरित्याद्यः स किमाविद्यो वा वास्तवो वाऽऽद्ये विधिवैयर्थ्यमित्याह । **ब्रह्मण इति ।** साधनं विधिर्ज्ञानादेव तत्सिद्धेरित्यर्थः ॥ १८५ ॥

**अनवच्छिन्नयाथात्म्यब्रह्मैकात्म्यादविद्यया ॥**
**अवच्छिन्नवदाभाति क्षेत्रज्ञो रज्जुसर्पवत् ॥ १८६ ॥**

द्वितीयं दूषयति । **अनवच्छिन्नेति** ॥ १८६ ॥

न चाविद्यानिरास्यत्र प्रत्यग्याथात्म्यबोधतः ॥
साधनं किंचिदापेक्ष्यं स्वर्गे यागादिवत्क्वचित् ॥ १८७ ॥

अविद्याध्वस्त्या तज्जदेहध्वस्तावप्यविद्याध्वंसार्थं विहितज्ञानापेक्षणात्तत्र विधिरिति द्वितीयमाशङ्क्याऽऽह । **न चेति** । अत्र प्रतीचीति यावत् । क्वचिद्देशे काले वेत्यर्थः । बोधतोऽन्यदिति शेषः ॥ १८७ ॥

न चापि मुख्यया वृत्त्या साध्येऽसति जगत्यपि ॥
किंचित्साधनमित्येवं भण्यते लोकवेदयोः ॥ १८८ ॥

जीवस्य ब्रह्मत्वसिद्धिर्विहितज्ञानादिति ज्ञाने विधिरिति तृतीयमाशङ्क्याऽऽह । **न चेति** । ब्रह्मत्वं विद्यया साध्यमपि न मुख्यया वृत्त्या साध्यं न चासति मुख्ये साध्ये सर्वत्रापि व्यवहारे साधनमिति किंचिदुच्यते तस्मात्साध्याभावान्न विधिरित्यर्थः ॥ १८८ ॥

साध्यं च लोकतः सिद्धमुत्पत्त्यादिचतुष्टयम् ॥
प्रमाणस्य न तन्न्याय्यं सिद्धार्थव्यञ्जकत्वतः ॥ १८९ ॥

उक्तसाध्येभ्योऽन्यदेव तद्विधेः साध्यमिति चतुर्थमाशङ्क्य तदभावं वक्तुं साध्यस्वरूपमाह । **साध्यं चेति** । उत्पत्त्यादीनामेकं विहितज्ञानस्यापि साध्यमित्याशङ्क्याऽऽह । **प्रमाणस्येति** ॥ १८९ ॥

नाऽऽत्मलाभातिरेकेण व्यञ्जकस्य मनागपि ॥
संभाव्यतेऽपरं रूपमज्ञातत्वापनोदकृत् ॥ १९० ॥

शाब्दे ज्ञाने विधिं निरस्याभ्यस्यमानस्य तस्याविद्याध्वंसित्वात्तदभ्यासे विधिरित्याशङ्क्याऽऽह । **नाऽऽत्मेति** । अपरमभ्यासादिष्टमिति यावत् । उत्पन्नमात्रादेव ज्ञानादज्ञानध्वस्तिसंभवादित्यर्थः ॥ १९० ॥

आत्मासामान्यरूपोत्थं न चाभूत्वोपजायते ॥
घटादिज्ञानवज्ज्ञानं भिन्नहेत्वनपेक्षतः ॥ १९१ ॥

माने तदभ्यासे वा विधिर्मा भूत्स्वरूपज्ञाने तु स्यादित्याशङ्क्य दोषान्तरमाह । **आत्मेति** । यदभ्यासाधारणं रूपं तेनाभिव्यक्तं ज्ञानं हेत्वनपेक्षत्वादकार्यं न विधेयमित्यर्थः ॥ १९१ ॥

स्थास्त्वनुभवमात्रत्वात्कार्यकारणवस्तुनः ॥
अभूतभूतिर्नैवातो युज्यतेऽनुभवात्मनि ॥ १९२ ॥

कथं स्वातिरिक्तहेत्वनपेक्षत्वं तत्राऽऽह । **स्थास्न्विति** । अतःशब्दस्य पञ्चम्या संबन्धः ॥ १९२ ॥

---

१ क. 'मात्रिष्ठ' ।

**प्रत्यगज्ञानहेतूत्था भावनेयं न तु स्वतः ॥**
**प्रत्यग्याथात्म्यजिज्ञासोः कथं सा विषयो भवेत् ॥ १९३ ॥**

किंच ब्रह्म जिज्ञासोस्तद्विदो वा विधिराद्येऽपि तस्य ज्ञानोपायेऽन्यत्र वाऽमाविति विकल्प्याऽऽद्यमङ्गीकृत्य द्वितीयं दूषयति । **प्रत्यगिति** । ज्ञानार्थिनस्तदुपायादन्यत्र न यत्नस्तदनर्थित्वादित्यर्थः ॥ १९३ ॥

**क्रियाकारकभेदोऽयमज्ञातैकात्म्यवस्तुनः ॥**
**तज्ज्ञानेऽसावसंभाव्यस्तद्धेतूच्छित्तिकारणात् ॥ १९४ ॥**

कल्पान्तरं प्रत्याह । **क्रियेति** ॥ १९४ ॥

**न चाविद्यासमुच्छित्तिर्ज्ञानोत्पत्त्यतिरेकतः ॥**
**संसारनाशोऽविद्याया नाशान्न व्यतिरिच्यते ॥ १९५ ॥**

भेदहेतोरविद्याया नोच्छेदोऽनुत्पन्नायाः प्राप्त्यभावेनानिवर्तकत्वादुत्पन्नायाश्चाविरोधेनोत्पन्नत्वादित्याशङ्क्य दीपात्तमोध्वस्तिवत्तदुपपत्तेर्मैवमित्याह । **न चेति** । ज्ञानोदयनान्तरीयकत्वेनाज्ञानध्वंसेऽपि तत्कार्यध्वस्त्यर्थं ज्ञानाभ्यासे विधिरित्याशङ्क्याऽऽह । **संसारेति** ॥ १९५ ॥

**न चाप्यविद्यानाशोऽत्र संसर्गः कारणात्मनि ॥**
**तद्ध्वस्तेर्वस्तुवृत्तत्वान्मृदि लोष्टादिनाशवत् ॥ १९६ ॥**

यथा लोष्टादिनाशो मृदि संसर्गस्तथा सकार्याविद्यानाशोऽप्यात्मन्यन्वयस्तत्तस्या निरन्वयनाशार्थमभ्यासे विधिरित्याशङ्क्याऽऽह । **न चापीति** । सकार्याविद्याध्वस्तेरकार्यकारणात्ममात्रत्वादित्यर्थः ॥ १९६ ॥

**आदाय वास्तवं वृत्तं ज्ञानमज्ञाननाशकृत् ॥**
**वस्तुयाथात्म्यवृत्तेन तमोऽपह्नूयते सदा ॥ १९७ ॥**

कथं तस्या यथोक्तात्ममात्रतेत्याशङ्क्याऽऽह । **आदायेति** । वस्तुस्वरूपानुसारेण ज्ञानस्याज्ञानध्वंसित्वान्न वस्त्वतिरेकेण शिष्टमस्तीत्यर्थः । तत्र विद्वदनुभवं प्रमाणयति । **वस्त्विति** ॥ १९७ ॥

**अज्ञातज्ञापनं तस्माद्विधिरत्रोपपद्यते ॥**
**अकृतस्य क्रिया त्वत्र विधिर्नैवोपपद्यते ॥ १९८ ॥**

वेदान्तेष्वप्रवृत्तप्रवर्तनात्मकं विधिं निरस्याज्ञातज्ञापनं चातो विधिरित्यत्रोक्तमुपसंहरति । **अज्ञातेति** । अत्रेति वेदान्तोक्तिः । तच्छब्दार्थं हेतुमाह । **अकृतस्येति** ॥ १९८ ॥

**द्वैविध्यं चाप्यविद्याया न च युक्त्याऽवसीयते ॥**
**ऐकात्म्यमात्रवस्तुत्वादविधेयैव युज्यते ॥ १९९ ॥**

अग्रहान्यथाग्रहाभ्यां द्विविधाऽविद्या तत्राऽऽद्याया जन्ममात्रान्निवृत्तिर्द्वितीयस्या

विहितज्ञानादित्येके तान्प्रत्याह । **द्वैविध्यं चेति** । तत्स्वरूपवदित्यपेरर्थः । युक्त्या मानं समुच्चेतुं चकारः । एकत्वमपि न तस्या मानयुक्त्यभावादित्याशङ्क्याऽऽह । **ऐकात्म्येति** । आश्रयविषयभेदाभावाद्भेदकाभावे तदैक्यमित्यर्थः ॥ १९९ ॥

**प्रमेयभेदभिन्नत्वं ज्ञानानामिव भेदकम् ॥**
**नाविद्याया यतोऽस्तीह द्वैविध्यं तेन दुर्घटम् ॥ २०० ॥**

तत्रैव दृष्टान्तेन साधयति । **प्रमेयेति** । इह प्रतीचीत्येतत् ॥ २०० ॥

**प्रत्यगज्ञानमेवेह तदन्यद्वस्तुकारणम् ॥**
**तदन्यकारणासत्त्वाद्द्वैविध्यं तमसः कुतः ॥ २०१ ॥**

आत्माज्ञानं तमाच्छादयन्न जगद्धेतुरेकस्य द्विकरत्वायोगादतो जगत्कारणमज्ञानान्तरं तद्ध्वस्तिर्विहितज्ञानादित्याशङ्क्याऽऽह । **प्रत्यगिति** । इन्द्रो मायाभिरित्यादिश्रुतेर्यदनात्मवस्तु तस्मिन्कारणं प्रत्यगज्ञानमेवैकस्य द्विकरत्वविरोधस्तु कुल्यादिदृष्टान्तेन निरस्य इत्यर्थः । इहेति व्यवहारभेदोक्तिः । प्रत्यगज्ञानातिरिक्तकारणाभावे फलितमाह । **तदन्येति** ॥ २०१ ॥

**न चाभ्यासाद्यपेक्षाऽपि स्वतोमुक्तत्वकारणात् ॥**
**न घटादेर्घटत्वादि घटाद्यभ्याससंश्रयम् ॥ २०२ ॥**

मा भूदविद्याद्वैविध्यं तथाऽपि मुक्तत्वमात्मनो ज्ञानाभ्यासादिति तद्विधिमाशङ्क्याऽऽह । **न चेति** । आदिपदेन योगाद्युक्तिः । नित्यमुक्तस्य मुक्तत्वं नाभ्यासापेक्षमित्यत्र दृष्टान्तमाह । **नेत्यादिना** ॥ २०२ ॥

**न चाविषयविज्ञानमनाकारं च भाव्यते ॥**
**भावकप्रत्यगात्मत्वादाकृतेश्च निषेधतः ॥ २०३ ॥**

किंच सविषयं साकारं च गरुडादिज्ञानमभ्यस्यतेऽन्यथा त्वात्मज्ञानं तेन तदभ्यासायोगान्न तत्र विधिरित्याह । **न चेति** । अविषयत्वमात्मनः साधयति । **भावकेति** । भावकोऽभ्यासकर्ता । आत्मधियोऽनाकारत्वे हेतुमाह । **आकृतेश्चेति** । अशब्दमित्यादिश्रुतेरित्यर्थः ॥ २०३ ॥

**नेन्द्रियेण ग्रहोऽस्यास्ति शब्दाद्यर्थानुपातिना ॥**
**दुःखादिवच्च नेवाऽऽत्मा चितेः स्वार्थैकरूपतः ॥ २०४ ॥**

किंचाध्यक्षस्यैव गरुडादेर्ज्ञानमभ्यस्यत आत्मज्ञानमप्यभ्यस्यते चेदात्मनोऽध्यक्षत्वे वाच्ये तस्य बाह्येन्द्रियेण मनसा वा ग्राह्यतेति विकल्प्याऽऽद्यं प्रत्याह । **नेति** । द्वितीयं निराह । **दुःखेति** । ग्राह्यो मनसेति शेषः । तत्र हेतुः । **चितेरिति** । स्वप्रकाशत्वात्स्वानन्याच्चेत्यर्थः ॥ २०४ ॥

**भावनोपचितं चेतो न च कैवल्यकारणम् ॥**
**तस्येहैव समुच्छेदात्तद्धेत्वज्ञानहानतः ॥ २०५ ॥**

केचित्तु विहिताभ्याससहितं मनो मुक्तिहेतुरिति ज्ञानाभ्यासे विधिमिच्छन्ति तान्प्रत्याह । **भावनेति** । तद्धि तत्रोपादानं निमित्तं वा नाऽऽद्य इत्याह । **तस्येति** । इहेति ज्ञानसत्त्वावस्थोच्यते ॥ २०५ ॥

**स्वकार्यार्थानुगामित्वं भावनाज्ञानकर्मणाम् ॥**
**अकार्यकारणात्मत्वात्कैवल्येऽनुगतिः कुतः ॥ २०६ ॥**

न द्वितीय इत्याह । **स्वकार्येति** । अनुगतिर्निमित्तत्वेनेति शेषः ॥ २०६ ॥

**साक्षादात्मप्रसिद्धौ च नाभ्यासस्तत्फलस्थितेः ॥**
**ज्ञानाभावादसिद्धौ च क न्वभ्यासव्यपेक्षणम् ॥ २०७ ॥**

किंचापरोक्षत्वेनाऽऽत्मन्यवगतेऽभ्यासविधिरनवगते वेति विकल्प्याऽऽद्यं प्रत्याह । **साक्षादिति** । द्वितीयं निरस्यति । **ज्ञानेति** । न चाऽऽत्मनि परोक्षज्ञाने तदापरोक्ष्यायाभ्यासविधिः परोक्षाभ्यासादापरोक्ष्यायोगादिति चकारार्थः ॥ २०७ ॥

**आत्मासामान्यरूपोत्थं ज्ञानमज्ञानमात्मनि ॥**
**सकृज्जातं न चेद्धन्ति ज्ञानमेव न तद्भवेत् ॥ २०८ ॥**

सकृज्जाता धीर्नाज्ञानध्वंसिनीत्यभ्यासे विधिरित्याशङ्क्याऽऽह । **आत्मेति** । ज्ञानाज्ञानयोर्मिथोविरोधप्रसिद्धेरित्यर्थः ॥ २०८ ॥

**सम्यग्ज्ञानं यदाश्रित्य तन्मोहोऽपि तदाश्रयः ॥**
**अबाधितं तमोऽत्राऽऽस्त इत्युक्तिर्जडवक्तृका ॥ २०९ ॥**

जन्ममात्रेणाज्ञानाध्वंसित्वेऽपि कदाचित्तद्भावाज्ज्ञानस्य ज्ञानत्वमित्याशङ्क्याऽऽह । **सम्यगिति** । न हि यस्मिन्देशे प्रकाशस्तत्रैव तमोऽव्यावृत्तं दृष्टचरमित्यर्थः । विपक्षे दोषमाह । **अबाधितमिति** । अत्र विदुषीति यावत् ॥ २०९ ॥

**इत्येवमादि यच्चोक्तं पूर्वमेवातिविस्तरात् ॥**
**तत्कृत्स्नमनुसंधेयं सर्वावकारहानिकृत् ॥ २१० ॥**

ननु वेदान्तेषु सर्वो विधिः संबन्धादौ निरस्तः स किमित्यत्र निरस्यते पिष्टपिष्टेरित्याशङ्क्याऽऽह । **इत्येवमिति** । आदिपदेन शाब्दे ज्ञाने षोढा विधिनिराकरणं गृह्यते । अनुसंधानफलमाह । **सर्वेति** । अवकारः शङ्क्यमानो विधिप्रकारः । निरस्तोऽपि विधिरत्र निरस्यते प्रसङ्गादिति समुदायार्थः ॥ २१० ॥

**सर्वमात्मेत्यतः पश्येदात्मानात्मविभागवित् ॥**
**आत्मा द्रष्टव्य इत्युक्त्या ह्येषोऽर्थोऽत्राभिधीयते ॥ २११ ॥**

उक्तरीत्या विध्यभावे द्रष्टव्यवाक्यस्य का गतिरित्याशङ्क्य तदर्थं निगमयति ।

**सर्वमिति** । तत्र वाक्यमवतारयति । **आत्मेति** । स सर्वस्मादिष्टत्वात्परानन्दो द्रष्टव्यस्तं ब्रह्मेति विवेकी पश्यतीत्यर्थोऽस्यां श्रुतावनेन वाक्येन भातीत्यर्थः । प्रागुक्तमर्थान्तरासंभवं हेतुं कर्तुं हिशब्दः ॥ २११ ॥

**सर्वमानप्रसक्तौ च सर्वमानफलाश्रयात् ॥**
**श्रोतव्य इत्यतः प्राह वेदान्तावरुरुत्सया ॥ २१२ ॥**

द्रष्टव्यवाक्ये तव्यो न विधायकः किंत्वर्हार्थोऽतश्चाऽऽत्मा दर्शनार्ह इति वाक्यार्थमुक्त्वा श्रोतव्यवाक्यमवतारयति । **सर्वेति** । प्रस्तुतमानफलभूतदृष्ट्यवष्टम्भादात्मनि सर्वस्य मानस्य तत्कारणत्वेन प्रसक्तावौपनिषदत्वाभावे शङ्किते तन्निरासार्थं वेदान्तानामेवाऽऽत्मदृष्टिहेतुत्वेन स्वीकारेच्छया श्रोतव्य इत्येतदाह श्रुतिस्तस्मात्तदौपनिषदत्वसिद्धिरित्यर्थः ॥ २१२ ॥

**दर्शनस्याविधेयत्वात्तदुपायो विधीयते ॥**
**वेदान्तश्रवणं यत्नादुपायस्तर्क एव च ॥ २१३ ॥**

श्रोतव्यवाक्यार्थमाह । **दर्शनस्येति** । विधीयमानश्रवणस्याग्निहोत्रवदसकृदनुष्ठेयत्वं यत्नादिति श्राव्यते । मन्तव्यवाक्यमादत्ते । **उपाय इति** ॥ २१३ ॥

**श्रुतिलिङ्गादिको न्यायः शब्दशक्तिविवेककृत् ॥**
**आगमार्थविनिश्चित्यै मन्तव्य इति भण्यते ॥ २१४ ॥**

तयोः[1] श्रवणस्वरूपमाह । **श्रुतीति** । श्रुत्यादिभिः शक्तितात्पर्यनिश्चायकैर्न्यायैर्ब्रह्मात्मनि वेदान्ततात्पर्यनिरूपणं श्रवणमित्यर्थः । मननस्वरूपमाह । **आगमेति** । श्रुत्यादिना ज्ञातस्य तत्त्वस्यासंभावनादिनिरासेन निश्चयार्थं द्वैतमिथ्यात्वसाधको यस्तर्कस्तदनुसंधानं मन्तव्य इत्युच्यत इत्यर्थः ॥ २१४ ॥

**वस्तुतत्त्वविवक्षेह मन्तव्य इतिशासनात् ॥**
**योऽपिदग्न्यादिदृष्टौ हि नैव मन्तव्यताविधिः ॥ २१५ ॥**

वेदान्ता न वस्तुपराः किं तूपास्तिविधिपरा इति केचित्तान्प्रत्याह । **वस्त्विति** । कथं वेदान्तेषु वस्तुनि तात्पर्यं मननविधिना ज्ञातं तत्राऽऽह । **योऽपिदिति** । यत्र दृष्टिमात्रमिष्टं न वस्तु तत्र तस्य श्रुतस्य न मन्तव्यादिविधिरत्र तु तद्विधेर्वस्तुनि तात्पर्यं सिद्धमित्यर्थः । दृष्टान्ते मननविध्यभावसंप्रतिपत्त्यर्थो हिशब्दः ॥ २१५ ॥

**वेदशब्दानुरोध्यत्र तर्कोऽपि विनियुज्यते ॥**
**वाच्यवाचकसंबन्धनियमे तस्य हेतुता ॥ २१६ ॥**

मननाख्यतर्कस्य भूयस्त्वात्तस्य सर्वस्यात्रोपायत्वे नैषा तर्केणेत्यादि विरुद्धमित्याशङ्क्याऽऽह । **वेदेति** । अत्रेति श्रुतार्थनिश्चयोक्तिः । नैषेत्यवैदिकतर्कनिन्दा तदनुसा-

---

1 ख. तयोर्मध्ये श्र॰।

रितर्काङ्गीकारेऽविरुद्धेत्यपेरर्थः । वैदिकशब्दस्यैव तत्त्वनिश्चायकत्वात्तर्कस्य कुत्रोपयोगस्तत्राऽऽह । **वाच्येति ।** त्वंपदवाच्यं न देहादि किंतु तत्साक्षी चिदात्मा तत्पदवाच्यमपि न प्रधानादि किंतु सच्चिदानन्दात्मकमद्वयं ब्रह्मेत्येवंविधो वाच्यवाचकसंबन्धनियमस्तत्र तस्य तर्कस्य विनियोगो यद्यपि शब्दस्तत्त्वनिश्चायकस्तथाऽप्यसंभावनादिध्वस्त्या मननाख्यतर्कोऽपीतिकर्तव्यत्वेनोपयुज्यते सेतिकर्तव्यताकस्य करणत्वादित्यर्थः ॥ २१६ ॥

**अपरायत्तबोधोऽत्र निदिध्यासनमुच्यते ॥**
**पूर्वयोरवधित्वेन तदुपन्यास इष्यते ॥ २१७ ॥**

निदिध्यासनस्वरूपमाह । **अपरेति ।** श्रवणमनने शमादियुक्ते कृत्वा स्थितस्य वाक्यार्थज्ञानान्तरायहीनस्यानायासेन वाक्यीयो वाक्यार्थबोधो निदिध्यासनवाक्ये निदिध्यासनमित्युच्यते । द्रष्टव्यवाक्ये तु विचारप्रयोजकमापातिकं ज्ञानमुक्तमेतदेव वा साधनं विधातुमनूदितमिति भावः । निदिध्यासनोक्तिफलमाह । **पूर्वयोरिति** ॥ १२७ ॥

**श्रवणादिक्रिया तावत्कर्तव्येह प्रयत्नतः ॥**
**यावद्यथोक्तं विज्ञानमाविर्भवति भास्वरम् ॥ २१८ ॥**

तस्य शमादिसहितश्रवणाद्यवसानभूमित्वमेव स्फोरयति । **श्रवणादीति ।** इहेत्यात्मोक्तिः । प्रयत्नः शमादिसाहित्यं तत्राऽऽवृत्तिं सूचयति । **यावदिति ।** भास्वरत्वं फलशिरस्कत्वम् ॥ २१८ ॥

**आगमाद्दर्शनं पूर्वमागमाचार्यतो मतिः ॥**
**त्रयाणामपि संगानाच्छास्त्राचार्यात्मनां स्थिरम् ॥ २१९ ॥**

पाठक्रमेण दर्शनादीनां क्रममनुक्रामति । **आगमादिति ।** अङ्गैः सहाधीताद्वेदादादौ विचारप्रयोजकं ज्ञानं जायते तदन्वागमादाचार्याच्च श्रवणं ततो मतिर्मननं ततः शास्त्रादिप्रयुक्तश्रवणस्याऽऽत्मधीहेतुत्वेनाऽऽत्मशब्दितमननस्य च संगानात्पूर्णतयाऽनुष्ठानादसंभावनादिशून्यं स्थिरं ब्रह्मज्ञानं निदिध्यासनाख्यं भवतीत्यर्थः ॥ २१९ ॥

**प्रतिपत्तिः पुरा शाब्दी यावन्न मनुते श्रुतम् ॥**
**श्रुत्वा मत्वाऽथ तं साक्षादात्मानं प्रतिपद्यते ॥ २२० ॥**

न श्रौतोऽयं क्रमः किंत्वार्थोऽपीत्याह । **प्रतिपत्तिरिति ।** यावन्न श्रुतं मनुते तावच्छृणोतीति शेषः । विशिष्टस्य श्रवणादेः साक्षादात्मप्रतिपत्तौ सामग्रीत्वं द्योतयितुमथशब्दः ॥ २२० ॥

**अनन्यायत्तविज्ञाने श्रवणादेरुपायतः ॥**
**जाते नापेक्षते किंचित्प्रतीचोऽनुभवात्परम् ॥ २२१ ॥**

---

१ ख. स्थितं ।

तस्यां शब्दादुदितायामपि श्रवणाद्यपेक्षते चेत्तर्हि ततो जाते विज्ञाने किंचिदपेक्षेत तन्न केवला धीर्मुक्तिहेतुरित्याशङ्क्याऽऽह । **अनन्येति ।** स्वतःसिद्धात्माकारे ज्ञाने ततो लब्धे प्रत्यगापरोक्ष्यस्य लब्धेरनन्तरं न किंचिद्विद्वानपेक्षत आत्मलाभस्मृतेरित्यर्थः ॥ २२१ ॥

**साध्यसाधनसंबन्धे शास्त्रापेक्षैव नापरा ॥**
**लिङ्गापेक्षाऽनुमेयेऽर्थे नरापेक्षा नरोचिते ॥ २२२ ॥**

किंच ज्ञाने जाते सापेक्षत्वं मोक्षस्य तस्य वेति विकल्प्याऽऽद्यं दूपयति । **साध्येति ।** यद्यत्र योग्यं तदेव तत्रापेक्ष्यमिति नियमान्मोक्षे ज्ञानमेवापेक्ष्यमिति भावः ॥ २२२ ॥

**भिन्नमात्रादिविज्ञाने सापेक्षैव विनिश्चितिः ॥**
**एकमात्रादिके त्वस्मिन्कः किं कस्मादपेक्षते ॥ २२३ ॥**

द्वितीयं निरस्यति । **भिन्नेति ।** भिन्नो मातृमानादिर्यस्यानात्मनस्तस्य ज्ञाने मात्राद्यपेक्षया निश्चयफलं जायते यस्य त्वेको व्यतिरिक्तो न मात्रादिरात्मनस्तस्मिन्वाक्या-ज्ज्ञाने[2] मात्राद्यभावान्नापेक्षा युक्ता तद्धियो जन्मनैव मात्राद्युपमर्दितत्वादित्यर्थः ॥ २२३ ॥

**प्रमाणरूपावष्टम्भात्प्रमा पूर्वं प्रजायते ॥**
**पश्चात्प्रमेयनिष्ठेव प्रमेयार्थानुरोधिनी ॥ २२४ ॥**

अनात्मधियो मात्राद्यनुपमर्देन जन्मोपपादयति । **प्रमाणेति ।** कारणानुसारादादौ जाता प्रमा विषयमनुसरन्ती तन्निश्चयफला पश्चान्मात्राद्यनुपमर्देनैव तिष्ठतीत्यर्थः ॥ २२४ ॥

**आत्माऽऽत्मानं विजानाति यत्र वाक्यादिमानतः ॥**
**तत्र मात्रादिसंभेदो न मनागपि लभ्यते ॥ २२५ ॥**

आत्मधियो मात्राद्युपमर्देन जन्म व्यनक्ति । **आत्मेति ।** यत्रेति बुद्धिशुद्ध्यवस्थोक्ता । तत्रेति तत्फलावस्था ॥ २२५ ॥

**पदार्थविषयस्तर्कस्तथैवानुमितिर्भवेत् ॥**
**वाक्यार्थप्रतिपत्तिस्तु वाक्यादेवाभिजायते ॥ २२६ ॥**

वाक्यादिमानत इत्यादिशब्दान्मानान्तरस्याऽऽत्मनि संभवादौपनिषदत्वव्याहतिरित्याशङ्क्याऽऽह । **पदार्थेति ।** वेदान्ताविरोधि परकीयमनुमानमनुमितिः । तथैवेति पदार्थविषयत्वोक्तिः । तन्मात्रविषयत्वे तर्कादेरात्मनो युक्तमौपनिषदत्वमित्याह । **वाक्यार्थेति** ॥ २२६ ॥

**आत्मानात्मत्वमात्रं हि लिङ्गाद्वस्तुषु गम्यते ॥**
**सर्वमानातिवर्त्यात्मा वाक्यादेवावगम्यते ॥ २२७ ॥**

---

१ ख. दूपयति । २ क. °ने कर्त्राद्य° ।

कथं पदार्थमात्रविषयत्वं तर्कादेरिति तत्राऽऽह । **आत्मेति** । अविशेषदृष्टेषु वस्तुषु कस्यचिदात्मत्वमनात्मत्वं कस्यचिदिति विवेकमात्रं किमिति तर्कादिना गम्यते ततो वाक्यार्थोऽपि किं न गम्यते तत्र हिसूचितमर्थमाह । **सर्वेति** । न हि पदार्थस्य तद्विषयेति वाक्यार्थस्यापि तथाऽस्याखण्डैकरसस्य तदयोग्यत्वादित्यर्थः ॥ २२७ ॥

**नन्वकृत्स्नं भवेज्ज्ञानं यद्यात्मैव समीक्ष्यते ॥**
**केवलोऽनात्मनोऽदृष्टेः प्रतीचोऽन्यस्य वस्तुनः ॥ २२८ ॥**

वाक्यादेवाऽऽत्मज्ञानेऽपि तदनात्मानमपि गोचरयत्यात्मानमेव वा नाऽऽद्य आत्मनः सविशेषत्वापत्तेरिति मत्वा द्वितीयमादाय दूषयति । **नन्विति** । ज्ञानस्य परिच्छिन्नविषयत्वेनासम्यक्त्वे हेतुरनात्मन इति ॥ २२८ ॥

**नायमन्योऽथवाऽनन्यः प्रत्यगज्ञानजत्वतः ॥**
**दण्डसर्पादिवद्रज्ज्वां स्वतोऽपूर्वादिमान्यतः ॥ २२९ ॥**

प्रतीचोऽनात्मनोऽन्यत्वानन्यत्वासिद्धेर्नैवमित्याह । **नायमिति** । तत्र हेतुः । **प्रत्यगिति** । तत्र दृष्टान्तः । **दण्डेति** । आत्माज्ञानमेवानात्मनस्तत्त्वमित्येतत्समर्थयते । **स्वत इति** । यतः स्वतोऽपूर्वानपरादिमानात्माऽतो द्वैतमाविद्यमित्यर्थः ॥ २२९ ॥

**यतोऽतो दृष्ट एतस्मिन्प्रत्यगात्मनि केवले ॥**
**नास्ति ज्ञानमनुत्पन्नं नाप्यध्वस्तं तथा तमः ॥ २३० ॥**

आत्माऽद्वयो द्वैतं चाऽऽविद्यमिति सिद्धे फलितमाह । **यत इति** । कैवल्यं निरुपाधित्वम् ॥ २३० ॥

**प्रत्यङ्मात्रैकयाथात्म्यात्कार्यकारणवस्तुनः ॥**
**तज्ज्ञानात्किं तमोऽध्वस्तं किंवाऽज्ञानं वदाऽऽत्मनः ॥ २३१ ॥**

यतःशब्दोक्तं हेतुं स्फोरयति । **प्रत्यगिति** । अत इत्यादिभागं विभजते । **तज्ज्ञानादिति** । अध्वस्तमज्ञानमिति च च्छेदः ॥ २३१ ॥

**अनुवादे यथोक्तानां प्रक्रान्ते दर्शनादिषु ॥**
**विज्ञानेनेत्यथ कथं निदिध्यासनमुच्यते ॥ २३२ ॥**

द्रष्टव्यादिवाक्ये व्याख्यातेऽनुवादवाक्ये दर्शनादिषु स्वशब्दानूदितेषु विज्ञानशब्देन निदिध्यासनानुवादे फलं पृच्छति । **अनुवाद इति** ॥ २३२ ॥

**ध्यानाशङ्कानिवृत्त्यर्थं विज्ञानेनेति भण्यते ॥**
**निदिध्यासनशब्देन ध्यानमाशङ्क्यते यतः ॥ २३३ ॥**

तत्र फलमाह । **ध्यानेति** । निदिध्यासितव्य इत्युक्ते ध्यानं तदित्याशङ्कायां तन्नि-

१ क. ग. °नं तदा° ।

रासार्थं विज्ञानशब्देन तदनूद्यते संदिग्धस्य वाक्यशेषान्निर्णयादक्ताः शर्करा उपदधातीतिवदित्यर्थः । निरस्यशङ्काप्रातिमाह । **निदिध्यासनेति** ॥ २३३ ॥

**विज्ञानोत्पत्तिहेतुत्वं ध्यानादेः प्रागवादिषम् ॥**
**स्वार्थमेव तु विज्ञानं मुक्तिमात्रफलं स्मृतम् ॥ २३४ ॥**

श्रवणादिसमभिव्याहारान्निदिध्यासनं ध्यानमिति शङ्किते तन्निरासेन वाक्यार्थधीग्रहार्थं विज्ञानशब्देन तदनुवादश्चेन्निदिध्यासितव्य इति ध्यानस्य साधनत्वानुक्तेस्तत्साधनत्वमुपेक्षितमित्याशङ्क्याऽऽह । **विज्ञानेति** । संबन्धग्रन्थादारभ्य तत्र तत्रेत्यर्थः । न च विध्यभावे तत्साधनत्वासिद्धिः समाहितो भूत्वेत्यादिश्रुतेस्तत्सिद्धेर्निदिध्यासितव्य इति च ध्यानसहितश्रवणादिफलभूतवाक्यार्थज्ञानोक्तेरिति द्रष्टव्यम् । ध्यानस्य साधनत्वमिष्टं चेदत्रापि तदेव किं नोच्यते तन्न वाक्यशेषविरोधादित्याह । **स्वार्थमिति** । यन्मुक्तिमात्रफलं स्वतन्त्रं ज्ञानं तदेव निदिध्यासनं स्मृतमिति संबन्धः ॥ २३४ ॥

**ऐकात्म्याज्ञानविध्वंसव्यतिरेकेण नेष्यते ॥**
**ऐकात्म्यविज्ञानफलं प्राप्तमेव हि तत्स्वतः ॥ २३५ ॥**

तस्य मुक्तिफलत्वे मुक्तेः साधनाधीनत्वादनित्यतेत्याशङ्क्याऽऽह । **ऐकात्म्येति** । अज्ञानध्वंसान्यज्ञानफलानुपगमे हेतुमाह । **प्राप्तमिति** । ऐकात्म्यं कैवल्यं नित्यप्राप्तमतस्तदावरकाज्ञानस्य ज्ञानान्निरासान्मुक्तेस्तत्कार्यत्वमौपचारिकमित्यर्थः ॥ २३५ ॥

**यतोऽनवयवेनैव रज्जुसर्पादिवत्तथा ॥**
**आत्माऽयं संगतिं याति तन्मोहाध्यस्तरूपिणा ॥ २३६ ॥**

सकार्याविद्यानिवृत्तेरात्मनोऽन्यत्वे द्वैतापत्तेरनन्यत्वे तदवस्थमात्मनः साधनाधीनत्वमित्याशङ्क्याऽऽह । **यत इति** । रज्जुरिव सर्पादेरात्मैव सकार्याज्ञानस्य तत्त्वमतस्तद्ध्वस्तिरपि नाऽऽत्मनो भिद्यते न चैतावताऽऽत्मनो ज्ञानकार्यत्वं तदधीनध्वस्तेरात्मानतिरेकान्न हि ज्ञानाधीनसर्पादिध्वस्तौ रज्जुत्वेऽपि तस्यास्तत्कार्यतेति भावः ॥ २३६ ॥

**आत्मा तत्त्वं विभक्तस्य प्रमात्रादेरनात्मनः ॥**
**स्वतः सिद्धस्तदज्ञानसमुत्थस्य मृषात्मनः ॥ २३७ ॥**

आत्मनोऽनात्मना सहानवयवेन संगतिस्तादात्म्यं कथमात्मा कल्पितस्य तत्त्वं तदाह । **आत्मेति** । विभक्तत्वादनात्मत्वाच्चाऽऽत्माज्ञानजस्य मिथ्यारूपस्य मात्रादेरात्मैव रूपं तस्यानन्याधीनसिद्धेः सर्वकल्पनाधिष्ठानत्वसंभवादित्यर्थः ॥ २३७ ॥

**आत्मज्ञानप्रमेयाच्च नान्यस्तज्ज्ञानकृद्यतः ॥**
**अनन्यमातृमानोऽतः प्रत्यगात्मा तमोपनुत् ॥ २३८ ॥**

सकार्याज्ञानध्वस्त्या सद्वयत्वाभावेऽपि ज्ञाता ततो भिन्नोऽभिन्नो वा भिन्नश्चेन्नाऽऽत्माऽद्वयोऽभिन्नश्चेत्कौटस्थ्यदौस्थ्यमित्याशङ्क्याऽऽह । **आत्मेति** । अतो नाद्वैतहानि-

र्नापि कौटस्थ्यदौस्थ्यमज्ञानदशायां ज्ञातृत्वादित्यर्थः । तथाऽपि ज्ञानमात्मनो भिन्नमभिन्नं वा नाऽऽद्योऽद्वैतहानेर्द्वितीये सदाज्ञानभावात्सदाऽज्ञानध्वस्तिः स्यादित्याशङ्क्याऽऽह । **अनन्येति** । प्रत्यगेवाद्वयो वाक्योत्थधीफलकारूढः स्वाज्ञानं सकार्यं दहत्यतो नोक्तदोषापत्तिरित्यर्थः ॥ २३८ ॥

**अज्ञानोत्थमनूद्यातो मिथ्याक्रमशेषतः ॥**
**इदं ब्रह्मेति वचसा सर्वमात्मेति नोऽवदत् ॥ २३९ ॥**

आत्मैवाद्वयः सर्वस्य तत्त्वमित्यत्र वक्ष्यमाणवाक्यं प्रमाणयति । **अज्ञानेति** । यतः सर्वस्याऽऽत्मा तत्त्वमतस्तदज्ञानजमेतदेव मिथ्येत्युक्तं तदिदं ब्रह्मेत्यादिनाऽनूद्याऽऽत्ममात्रमिति श्रुतिरस्मान्प्रत्याहेत्यर्थः ॥ २३९ ॥

**आत्मधीमात्रगम्यार्थाद्यस्तदन्योऽवभासते ॥**
**तद्दर्शननिषेधार्थं ब्रह्मेत्याह परा श्रुतिः ॥ २४० ॥**

अनुवादवाक्यतात्पर्यमुक्त्वा ब्रह्म तमित्यादेः सर्वं वेदेत्यन्तस्य तात्पर्यमाह । **आत्मेति** । स्वप्रकाशादात्मनो योऽन्यस्तादृशोऽर्थो भाति तस्य दर्शनं निषेद्धुं ब्रह्मेत्यादिवाक्यमुत्तरा श्रुतिराहेत्यर्थः ॥ २४० ॥

**समस्तव्यस्तता तस्मान्नैवेह श्रुतिमानतः ॥**
**अनात्मबुद्धिविषयं यतो यत्नान्निषेधति ॥ २४१ ॥**

अनात्मदृष्टिनिषेधेन स्वयूथ्यकल्पनाऽपि निरस्तेति निषेधफलमाह । **समस्तेति** । इहेत्यात्मोक्तिः । तच्छब्दार्थं स्फोरयति । **अनात्मेति** ॥ २४१ ॥

**कार्यात्मा कारणात्मा च द्वावात्मानौ परात्मनः ॥**
**प्रत्यग्याथात्म्यमोहोत्थौ तन्नाशे नश्यतस्ततः ॥ २४२ ॥**

निषेधाभ्यासो यत्नः स तस्मिन्निषेद्धुमशक्यस्तस्य कार्यकारणात्मना भेदादित्याशङ्क्याऽऽह । **कार्येति** । तयोर्मोहोत्थत्वफलमाह । **तन्नाश इति** । ततो वस्त्वैकरस्यमिति शेषः ॥ २४२ ॥

**अपूर्वानपरोक्तेर्हि कार्यकारणताऽऽत्मनः ॥**
**कुतः प्रमाणात्संभाव्या कार्यकारणघस्मरे ॥ २४३ ॥**

तयोरज्ञानोत्थत्वमसिद्धमित्याशङ्क्याऽऽह । **अपूर्वेति** । प्रमाणविरुद्धमर्थं न प्रमाणमुपस्थापयत्यविरोधापेक्षितत्वात्प्रमापकत्वस्येति हिशब्दार्थः ॥ २४३ ॥

**नैतस्माज्जायते किंचिन्नायं जातः कुतश्चन ॥**
**आत्मेत्येवं श्रुतिर्वक्ति कारणादिनिषेधकृत् ॥ २४४ ॥**

अपूर्वादिवाक्योक्ते कार्यादिग्रसनशीले केवले ब्रह्मणि न सा प्रामाणिकीत्यत्र न जायते म्रियते वेत्यादि मानमित्याह । **नैतस्मादिति** ॥ २४४ ॥

**ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ॥**
**अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ २४५ ॥**

तत्रैव **स्मृतिमाह । ज्ञेयमिति ।** तत्प्रवचनफलमाह । **यदिति ।** किं तज्ज्ञेयं तदाह । **अनादिमदिति ।** तस्य मूर्तामूर्तवैलक्षण्यमाह । **न सदिति ।** कार्यकारणनिर्मुक्तत्वं चानेनोच्यते ॥ २४५ ॥

**यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ॥**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ २४६ ॥**

तत्रैव वाक्यान्तरमाह । **यस्मादिति ।** स उत्तमः पुरुष इति श्रुतिर्वेदशब्दार्थः ॥ २४६ ॥

**यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ॥**
**स सर्वविद्भजति मां सर्वभावेन भारत ॥ २४७ ॥**
**इति वेदात्मनः साक्षाद्वचनं श्रुतिसंमतम् ॥**
**सर्वान्तर्यामिणः शौरेर्नोपेक्ष्यं तद्भवादृशैः ॥ २४८ ॥**

उक्तोऽर्थो विवक्षितस्तज्ज्ञानस्य फलवत्त्वादित्याह । **यो मामिति ।** उक्तस्मृतिप्रामाण्यमाप्तोक्तत्वेन सूचयति । **वेदेति ।** वेदमूलत्वाच्च तत्प्रामाण्यमित्याह । **श्रुतीति ।** तस्यानुपेक्ष्यत्वे हेतुमाह । **सर्वेति ।** भगवद्वाक्यमपि केचिदुपेक्षन्ते तत्राऽऽह । **भवादृशैरिति ।** वैदिकैरित्यर्थः ॥ २४७ ॥ २४८ ॥

**तत्रैवं सति यो मूढः कार्यकारणदर्शनः ॥**
**पराङ्मुखं निदध्यात्तमात्माकृत्स्नत्वदर्शिनम् ॥ २४९ ॥**

ब्रह्मेत्यादेस्तात्पर्यमुक्त्वाऽक्षरार्थं संक्षिप्याऽऽह । **तत्रेति ।** तस्मिन्नात्मन्युक्तरीत्या द्वैतनिर्मुक्ते स विवेकशून्यः स्वगतत्वेन कार्यं च कारणं च पश्यति तं भेददर्शिनमज्ञं ब्रह्मक्षत्रादि मिथ्यादृष्टं पुमर्थात्पराकरोतीत्यर्थः ॥ २४९ ॥

**ब्रह्मेति जातिनिर्देशः क्षत्रसंनिधिकारणात् ॥**
**ब्रह्मजातिः परादध्यादसम्यग्दर्शिनं नरम् ॥ २५० ॥**

ब्रह्मशब्दस्य परविषयत्वमाशङ्क्य संनिधिविरोधमाह । **ब्रह्मेतीति ।** जातिनिर्देशलब्धं वाक्यार्थमाह । **ब्रह्मेति ।** पराकरणे हेतुमाह । **असम्यगिति** ॥ २५० ॥

**यदस्ति तन्न जानाति यन्नेहास्ति तदीक्षते ॥**
**इत्येवमपराधोत्थकोपाविष्टेव वालिशम् ॥ २५१ ॥**

असम्यग्दृष्टिं विवृणोति । **यदस्तीति ।** ब्रह्मजातिः समभ्यर्थः । यदस्तीत्यात्मत्वं यन्नास्तीत्यनात्मत्वं बालिशं विवेकाकुशलमित्यर्थः ॥ २५१ ॥

**कैवल्यात्तं पराकुर्याद्विप्रजातिः पराङ्मुखम् ॥**
**अजातिब्रह्मतत्त्वं मां योऽयं जात्यात्मनेक्षते ॥ २५२ ॥**

पराकरणप्रतियोगिनमाह । **कैवल्यादिति** । पराकर्त्रभिप्रायमाह । **अजातीति** । तं पुरुषार्थात्पराकरोमीत्यभिप्रैतीति शेषः ॥ २५२ ॥

**किं तेन न कृतं पापं[1] चोरेणाऽऽत्मापहारिणा ॥**
**योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ॥ २५३ ॥**

तत्पराकरणमुचितमित्यत्र व्याससंमतिमाह । **किं तेनेति** । कोऽसावात्मापहारी तमाह । **योऽन्यथेति** ॥ २५३ ॥

**यो न वेदाऽऽत्मयाथात्म्यं वेद जात्यादिमत्तया ॥**
**स यद्यतोऽतो जातिस्तं परादध्याज्जडं नरम् ॥ २५४ ॥**

द्वितीयभागं विभजते । **यो नेति** । यो हि कश्चिदात्मनो याथात्म्यं न वेद स यदि ब्रह्मक्षत्रादियुक्ततयाऽऽत्मानं जानीयात्तदा सा मिथ्यादृष्टा जातिस्तमयथादर्शिनमस्मात्कैवल्याच्यावयेदतो नाऽऽत्मापहारो युक्त इत्यर्थः ॥ २५४ ॥

**सर्वदाऽव्यभिचार्येकं व्यभिचार्यर्थबुद्धिषु ॥**
**यत्तत्त्वं गम्यते प्रत्यक्तदेवानात्मवस्तुनः ॥ २५५ ॥**

ब्रह्मक्षत्रादेरात्मनो भेदेऽद्वैतहानिरभेदे तद्वत्त्वेऽनात्मदृष्टिरित्याशङ्क्याऽऽह । **सर्वदेति** । अनात्मतद्धियोर्मिथः स्वरूपतश्च व्यभिचाराद्यदेकं तत्र सदैवाव्यभिचारि दृष्टं तदनात्मनः प्रत्यक्तत्त्वं न हि तदतिरेकेणानात्माऽस्तीत्यर्थः ॥ २५५ ॥

**अन्तर्मेयबलाज्ज्ञानं प्रत्यङ्मोहजसंश्रयम् ॥**
**बाधतेऽव्यभिचारित्वाद्व्यभिचारि तमोन्वयम् ॥ २५६ ॥**

सर्वस्य तत्त्वमात्मा चेत्किमिति वाक्योत्थज्ञानेनेतरद्बाध्यते तेन कालादिना तदेव कुतो न बाध्यमविशेषादित्याशङ्क्याऽऽह । **अन्तर्मेयेति** । अद्वयानन्दप्रत्यगात्मबलात्तदाकारं ज्ञानं तदविद्योत्थसाभासबुद्धिस्थं प्रामाण्याव्यभिचारित्वाद्व्यभिचारि द्वैतं बाधते तद्वाक्यजं ज्ञानमर्थतो बलवदित्यर्थः ॥ २५६ ॥

**प्रत्यक्तमोजयाथात्म्यमात्राभिजनहेतुतः ॥**
**कालादौ तदभावोऽतो न ज्ञानस्यापवादकृत् ॥ २५७ ॥**

कालादेरपि तुल्यमेतन्न हि तस्य प्रत्यगतिरिक्तं स्वरूपमस्तीत्याशङ्क्याऽऽह । **प्रत्यगिति** । तदभावोऽन्तर्मेयबलाभावः । अज्ञानजत्वाविशेषेऽपि कालादेर्मेयबलाभावोऽतःशब्दार्थः ॥ २५७ ॥

---

१ ख. ग. °पं चौरे° ।

**न बाध्यजन्यपेक्षं हि ज्ञानं बाधकमिष्यते ॥**
**तयोर्मिथो विरोधित्वात्सम्यग्ज्ञानं तमोपनुत् ॥ २५८ ॥**

अज्ञानजत्वाविशेषे नैतद्वैषम्यं युक्तमित्याशङ्क्याऽऽह । **न बाध्येति** । ज्ञानस्याज्ञानोत्थत्वं न साधकत्वे प्रयोजकं शुक्तिरूप्यादिधियां बाधकत्वादृष्टेरतस्तज्ज्ञेयबलाद्बाधकं कालादेस्तदभावात्तदसिद्धिर्न चाज्ञानजत्वान्मेयवैषम्यासिद्धिः पार्थिवेष्वपि पाषाणेष्ववान्तरवैषम्यदृष्टेरिति भावः । उक्तदृष्टिद्योतनार्थो हिशब्दः । इतश्च ज्ञानमेव बाधकमित्याह । **तयोरिति** । न च विरोधित्वाविशेषाद्वैपरीत्यं दृष्टानुसारान्न हि प्रकाशोऽपनुद्यते तमसेति भावः ॥ २५८ ॥

**आत्मानं यो यथा वेत्ति सम्यग्वा यदि वाऽन्यथा ॥**
**यथादर्शनमेवासौ फलमाप्नोति मानवः ॥ २५९ ॥**
**इति ब्रह्म तमित्यादेः संक्षेपार्थः समीरितः ॥**
**संसरत्यन्यथाज्ञानात्सम्यग्ज्ञानाद्विमुच्यते ॥ २६० ॥**

आत्मैव सर्वस्य तत्त्वमित्येतत्प्रसङ्गेन प्राप्तं चोद्यमपनुद्य ब्रह्मेत्यादिवाक्यमुपसंहरति । **आत्मानमिति** । यथाज्ञानं फलमित्युक्तं व्यनक्ति । **संसरतीति** ॥ २५९ ॥ २६० ॥

**अपोदितत्वाद्ब्रह्मादिदर्शनस्येति किं पुनः ॥**
**द्रष्टव्यमित्यतो वक्ति त्विदं ब्रह्मेति नः श्रुतिः ॥ २६१ ॥**

इदमित्यादि प्रश्नपूर्वकमादत्ते । **अपोदितत्वादिति** । इतिशब्दो ब्रह्मेत्यादिवाक्यपरामर्शार्थः । द्वितीयस्तु प्रश्नसमाप्त्यर्थः ॥ २६१ ॥

**प्रत्यक्त्वेन य आभाति प्रत्यग्बुद्धिप्रमाणकः ॥**
**तावन्मात्रकयाथात्म्यं ब्रह्मेत्युक्तं प्रतीयताम् ॥ २६२ ॥**

द्रष्टव्यं दर्शयन्नवतारितवाक्यार्थमाह । **प्रत्यक्त्वेनेति** ॥ २६२ ॥

**एवं श्रोतव्य आत्माऽयं समाप्तः श्रवणे विधिः ॥**
**अथ मन्तव्य इत्यस्य प्रपञ्चः पर उच्यते ॥ २६३ ॥**

स यथा दुन्दुभेरित्यादि वृत्तानुवादपूर्वकमवतारयति । **एवमिति** । अयमात्मा श्रोतव्य इति यः श्रवणे विधिः स यथोक्तनीत्या समाप्तोऽनिवृत्तो हि शक्तितात्पर्यानुसारी विचारोऽनन्तरं मन्तव्य इति मननविधेर्विस्तारः परः संदर्भः स यथेत्यादिरारभ्यते स युक्त्यनुसारीत्यर्थः ॥ २६३ ॥

**नामरूपादिसंभिन्नं जगदेतत्कथं पुनः ॥**
**आत्मैव सर्वमित्येवं द्रष्टुं शक्यमिहाञ्जसा ॥ २६४ ॥**

---

१ ख. ब्रह्माधर्त्तं ।

उत्तरग्रन्थमवतार्येदं सर्वमित्यादौ प्रत्यक्षादिविरोधं शङ्कते । **नामेति** । इहेति मानव्यवहारभूमिरुक्ता । सर्वशब्दो जगच्छब्दगामी ॥ २६४ ॥

**अव्यावृत्तविसंवादिप्रत्यग्धीव्याप्तिकारणात् ॥**
**एतद्विरुद्धबुद्धीनामेवमेव हि शक्यते ॥ २६५ ॥**

परिहरति । **अव्यावृत्तेति** । निर्विशेषाबाधितप्रत्यग्बोधव्याप्तेर्जगतो न तदतिरेकेण सत्त्वमित्यर्थः । सर्वं चिन्मात्रमिति धीरस्मदादेरशक्यत्वान्नोदेतीत्याशङ्क्याऽऽह । **एतदिति** । एतस्माद्द्वैताद्विरुद्धे प्रतीच्यद्वये येषां प्रवणा धीस्तेषां सर्वं चिन्मात्रमित्येवमेव ज्ञातुं शक्यमतः सर्वं जगन्नित्यबोधमात्रमित्यर्थः ॥ २६५ ॥

**व्यभिचारिषु बोधेषु यो बोधोऽव्यभिचारवान् ॥**
**तत्प्रमाणार्पितो मेयो ग्रहीतुं शक्यतेऽञ्जसा ॥ २६६ ॥**

न केवलं विद्वदनुभवसिद्धं सर्वस्य चिन्मात्रत्वं किं त्वस्मदादेरपि सुज्ञानमित्याह । **व्यभिचारिष्विति** । सर्वेषु बोधेषु व्यभिचारिषु यो बोधोऽव्यभिचारी तेनाव्यभिचारिणा प्रमाणोपनीतार्थोऽकल्पितत्वात्परमार्थो व्यभिचारिबोधार्पितस्तु व्यभिचारित्वेन कल्पितत्वादवस्तु न च कल्पितस्याकल्पितातिरेकेण सत्त्वं तत्सर्वं जगच्चिन्मात्रमिति साक्षाज्ज्ञातुं शक्यमित्यर्थः ॥ २६६ ॥

**यथा दुन्दुभिशब्दत्वसामान्यादुत्थितान्पृथक् ॥**
**नाऽऽदातुं शक्नुयात्कश्चिद्विशेषानसिकोशवत् ॥ २६७ ॥**

सर्वं चिन्मात्रं तद्विना दुर्ज्ञानमित्यस्मिन्नर्थे दृष्टान्तं व्याचष्टे । **यथेति** । दुन्दुभेर्हन्यमानस्येति शब्दत्वं लक्ष्यते ततो जाता विशेषा बाह्याः शब्दास्तान्निष्कृष्यासिरिव कोशाद्गृहीतुं सुशिक्षितोऽपि नालमतस्ते सामान्ये कल्पिताः सर्पादिरिव रज्ज्वामित्यर्थः ॥ २६७ ॥

**तद्वदात्मातिरेकेण नाऽऽत्मीयार्थो मनागपि ॥**
**यतः समीक्षितुं शक्यस्तेनासौ रज्जुसर्पवत् ॥ २६८ ॥**

दार्ष्टान्तिकमाह । **तद्वदिति** ॥ २६८ ॥

**विशेषैरन्वयो नापि सामान्यान्वयवत्क्वचित् ॥**
**सामान्यस्याविशेषत्वान्नातः सामान्यधीग्रहः ॥ २६९ ॥**

दृष्टान्ते सामान्यविशेषभावाद्दार्ष्टान्तिकेऽपि स स्यात्तयोस्तुल्यत्वादित्याशङ्क्य तद्भावं निराचिकीर्षुः सामान्यस्य विशेषैरभेदो भेदो वेति विकल्प्याऽऽद्यं दूषयति । **विशेषैरिति** । विशेषाणां सामान्येन तादात्म्यवन्न क्वचिदपि तस्य तैस्तदस्ति तस्य तत्कल्पनाधिष्ठानस्य कल्पितविशेषमात्रत्वायोगादन्यथा सामान्याभावात्तद्धिया तद्ग्रहो न स्यादनस्तदपेक्षा न विशेषाः स्युरिति नाभेद इत्यर्थः ॥ २६९ ॥

**विशेषैरन्वयो नो चेदिभाखुव्यक्तिवन्मिथः ॥**
**खण्डवत्स्याद्विशेषादौ यत्सामान्यमितीरितम् ॥ २७० ॥**

द्वितीयमनुभाषते । **विशेषैरिति** । सामान्यस्य तेभ्यो व्यावृत्तत्वे यत्तेषु तदिष्टं तस्य खण्डादिवद्विशेषत्वमेव स्याद्व्यावृत्तत्वादतो धर्म्यभावाद्भेदासिद्धिरिति परिहरति । **खण्डवदिति** । विशेषादौ विशेषेष्वित्यर्थः ॥ २७० ॥

**द्विष्ठत्वादन्वयस्यापि व्याप्यव्यापकयोर्मिथः ॥**
**व्यतिरेकमतो मुक्त्वा मिथो व्याप्तिर्न सिध्यति ॥ २७१ ॥**

सामान्यविशेषयोर्भेदाभेदौ निरस्य व्याप्तिं परेष्टां निराचष्टे । **द्विष्ठत्वादिति** । व्याप्तो विशेषो व्यापकं सामान्यं तयोर्भेदं विना नान्योन्यं व्याप्तिस्तद्रूपसंबन्धस्य द्विष्ठत्वेन भेदापेक्षत्वादतो भेदनिरासान्न व्याप्तिर्नापि संबन्धान्तरं तयोरिति कल्पितस्तद्भाव इत्यर्थः ॥ २७१ ॥

**प्रत्यग्बोधानिरस्तोऽर्थः प्रत्यग्वन्न हि सिध्यति ॥**
**न चाभावमुखोऽनात्मा नान्वयेनाप्यतो दृशि ॥ २७२ ॥**

स न कल्पितो भासमानत्वादात्मवदित्याशङ्क्याऽऽह । **प्रत्यगिति** । **अस्यार्थः**— अनात्मा सन्नसन्वा सत्त्वे नित्यबोधादन्योऽनन्यो वाऽन्यत्वे स्वतः परतो वा सिद्धिर्नाऽऽद्यो न हि नित्यबोधादन्यस्तद्वत्स्वतः सिध्यति जाड्यहानान्नापि परतः कल्पनां विना परस्य तदसंबन्धान्न चानात्मनोऽसत्त्वमपरोक्षधीविरोधान्नापि सन्नित्यबोधादनन्यो जडाजडयोरभेदायोगादतोऽन्वयव्यतिरेकाभावादात्मनि कल्पितं तन्मात्रं जगदिति ॥२७२॥

**प्रत्यङ्मात्रैकरूपत्वादात्मा नानात्मतां स्वतः ॥**
**सहते नापि चानात्मा स्वार्थादन्यत्र सिध्यति ॥ २७३ ॥**

आत्मनोऽनात्मनोऽन्वयाद्ययोगेऽप्यनात्मनः सकाशादात्मनोऽन्वयादिः स्यादित्याशङ्क्यान्वयं निरस्यति । **प्रत्यगिति** । आविद्यं देहाद्यात्मत्वं तस्यानुमोदते । **स्वत इति** । व्यतिरेकं निराह । **नापीति** । स्वतः परतो वा तदसिद्धेरुक्तेरित्यर्थः ॥ २७३ ॥

**अनात्मवस्तुनः प्रत्यक्प्रत्यक्त्वान्नातिरिच्यते ॥**
**पराङ्नान्वेति चाऽऽत्मानं व्यतिरेकात्मकत्वतः ॥ २७४ ॥**

अनात्मस्वभावालोचनया व्यतिरेकमात्मनस्ततो निरस्य स्वस्वभावालोचनयाऽपि तस्य ततस्तदयोगमाह । **अनात्मेति** । आत्मनोऽनात्मनः सकाशादन्वयव्यतिरेकौ निराकृत्यान्वयायोगे हेत्वन्तरमाह । **पराङिति** । आत्मा चेदनात्मानमन्वेति सोऽपि तमन्वियादन्यथाऽऽत्मनस्तदन्वयायोगान्न चाऽऽत्मन्यनात्मनोऽन्वयः पराक्प्रतीचोर्वस्तुतस्तद्योगादिति भावः। आत्मन्यनात्मनो वस्तुतोऽनन्वये हेत्वन्तरमाह । **व्यतिरेकेति** । प्रतीचि पराचोऽध्यस्तत्वादित्यर्थः ॥ २७४ ॥

**दुन्दुभ्यन्वितशब्दस्य सर्वत्राव्यभिचारतः ॥**
**पुंप्रयत्नादिलब्धात्मव्यभिचारिरवात्मसु ॥ २७५ ॥**

दृष्टान्तदार्ष्टान्तिके प्राप्तं सामान्यविशेषभावं निरस्य दुन्दुभेर्हन्यमानस्येत्यत्र शब्दत्वग्रहे युक्तिमाह । **दुन्दुभीति** । सर्वत्रेत्यस्यार्थमाह । **पुंप्रयत्नेति** । प्रकृते वाक्ये सामान्योपादानमिति शेषः ॥ २७५ ॥

**उच्चनीचादिभेदेषु मिथः स व्यभिचारिषु ॥**
**दुन्दुभिध्वनिरेवैकः सर्वत्राव्यभिचारवान् ॥ २७६ ॥**

दुन्दुभिप्रयुक्तशब्दत्वसामान्यस्य तद्विशेषेष्वव्यभिचारं स्फोरयति । **उच्चेति** ॥२७६॥

**दुन्दुभिध्वनिसामान्यव्यतिरेकेण तेन ते ॥**
**निरात्मका न शक्यन्ते तद्विशेषाः समीक्षितुम् ॥ २७७ ॥**

तस्याव्यभिचारे तेषां व्यभिचारे च फलितमाह । **दुन्दुभीति** । सामान्यातिरेकेण विशेषाणामनुपलम्भे हेतुमाह । **निरात्मका इति** ॥ २७७ ॥

**दुन्दुभिध्वनिरित्येतत्कुतो लब्धं विशेषणम् ॥**
**दुन्दुभेर्ग्रहणेनेति लब्धमेतद्विशेषणम् ॥ २७८ ॥**

दुन्दुभेर्हन्यमानस्येत्यत्र दुन्दुभिमात्रश्रुतेर्ध्वनिविशेषणं प्रापकाभावादयुक्तमिति शङ्कते । **दुन्दुभीति** । विशेषणप्रापकमाह । **दुन्दुभेरिति** । वाक्यशेषात्तल्लाभो न हि दुन्दुभिशब्दितकाष्ठग्राहाच्छब्दविशेषग्रहस्तयोर्भेदात्तत्र दुन्दुभिशब्देन ध्वनेर्लक्षणावत्प्रकृतेऽपीत्यर्थः । हन्यमानस्येति विशेषणाच्च तल्लाभोऽधिगन्तव्यः ॥ २७८ ॥

**दुन्दुभेस्तु रवा एत इत्येवं ग्रहणे सति ॥**
**गृहीतास्तद्विशेषाः स्युस्तेषां तादात्म्यकारणात् ॥ २७९ ॥**

स यथेत्यादि ग्रहणायेत्यन्तं व्याख्याय दुन्दुभेस्तु ग्रहणेनेत्यस्यार्थमाह । **दुन्दुभेस्त्विति** ॥ २७९ ॥

**भेर्याघातग्रहाद्वाऽपि तद्विशेषग्रहो भवेत् ॥**
**वीरादिरससंयुक्तो दुन्दुभ्याघात उच्यते ॥ २८० ॥**

दुन्दुभ्याघातस्येत्यादि व्याचष्टे । **भेरीति** । शब्दत्वावान्तरसामान्यग्रहाद्वा तद्विशेषाणां ग्रह इत्यर्थः । दुन्दुभ्याघातमेव व्याकरोति । **वीरादीति** । नवरसान्यतमयुक्तः संग्रामादिगतो भेर्यादिध्वनिरत्र दुन्दुभ्याघातस्तद्ग्रहे तद्विशेषग्रहस्तादात्म्यादित्यर्थः ॥ २८० ॥

**उपलब्धोऽस्ति सन्कुम्भो लम्बोष्ठो देशकालवान् ॥**
**पूर्वपूर्वातिरेकेण नोत्तरोऽर्थोऽनुभूयते ॥ २८१ ॥**

दृष्टान्तं व्याख्याय दार्ष्टान्तिकमाह । **उपलब्धोऽस्तीति** ॥ २८१ ॥

**एवं चिदन्वयात्सर्वस्तदध्यस्तः समीक्ष्यते ॥**
**सामान्यं वा विशेषो वा चिदसंबोधहेतुतः ॥ २८२ ॥**

चेत्यस्य चिदतिरेकेणाभावश्चेत्कथं व्यतिरेकप्रथेत्याशङ्क्याऽऽह । **एवमिति** । वस्तुतश्चितश्चेत्यस्य भेदाभावे सत्यज्ञानात्तत्राध्यस्तः समस्तः सामान्यादिस्तत्तादात्म्याद्भातीत्यर्थः ॥ २८२ ॥

**प्रत्यग्रूपस्य संसिद्धौ प्रतीचोऽन्यन्न कारणम् ॥**
**अनात्मवत्तदप्यात्मविशेषणतया भवेत् ॥ २८३ ॥**

अनात्मा चेच्चिदात्मना भाति सोऽप्यन्यतो भायाद्दीपवदित्यनवस्थामाशङ्क्याऽऽह । **प्रत्यगिति** । अनात्मसिद्धावन्यत्प्रमातृरूपं साधकमस्ति न तथाऽऽत्मसिद्धावित्याह । **अनात्मवदिति** । अनात्मसाधकार्थान्तरस्वीकारश्चेदात्मनः सर्वसाधकत्वसिद्धान्तहानिरित्याशङ्क्याऽऽह । **तदपीति** । यदनात्मसाधकं प्रमातृरूपं तदात्मोपसर्जनत्वेनैव तत्साधकमात्मैव हि तदापन्नोऽनात्मसाधकस्तन्न सिद्धान्तहानिरित्यर्थः ॥ २८३ ॥

**कर्तृत्वकञ्चुको यद्वदात्माऽनात्मानमीक्षते ॥**
**कूटस्थदृष्टिमात्रत्वान्न तथाऽऽत्मानमीक्षते ॥ २८४ ॥**

तर्हि मातृत्वापन्नः स्वात्मानमप्यात्मा साधयेदविशेषादित्याशङ्क्याऽऽह । **कर्तृत्वेति** ॥ २८४ ॥

**संहतो गम्यतेऽनात्मा प्रत्यक्षेण यथा सदा ॥**
**गम्यतेऽसंहतस्तद्वदात्मा प्रत्यग्धियाऽऽत्मना ॥ २८५ ॥**

कूटस्थदृष्टिमात्रत्वमसिद्धं मातृत्वादियोगादित्याशङ्क्याऽऽह । **संहत इति** । स्थूलः सद्वयश्चानात्मा प्रत्यक्षस्तथा सूक्ष्मो निष्क्रियश्चाऽऽत्मा स्वरूपचैतन्यसिद्ध इत्यर्थः ॥ २८५ ॥

**दार्ष्टान्तिकार्थासंभित्तेरेकेनैव कृतार्थतः ॥**
**दृष्टान्तेन बहूनां तु किमर्थोक्तिरितीर्यते ॥ २८६ ॥**

अनेकदृष्टान्तोक्तिमाक्षिपति । **दार्ष्टान्तिकेति** । सर्वस्याऽऽत्ममात्रत्वं दार्ष्टान्तिकोऽर्थः । तस्यैक्यादेकेनैव दृष्टान्तेन सिद्धेर्दुन्दुभिशङ्खवीणामु दुन्दुभ्यादिरवा दुन्दुभ्याघातादिवाद्यशब्दाश्चेति बहूनामुक्तिरफलेत्यर्थः । तत्फलं प्रतिजानीते । **ईर्यत इति** ॥ २८६ ॥

**महासामान्य एकस्मिन्विशेषाणामशेषतः ॥**
**विलयः स्यात्कथं नाम व्यावृत्तान्वयरूपिणाम् ॥ २८७ ॥**

तत्प्रकटयति । **महासामान्येति** । एकस्मिन्ब्रह्मणि महासामान्यस्थानीये विशेषाणां सामान्यस्योभयेषां च क्रमेण लयं वक्तुं नानादृष्टान्तोक्तिरित्यर्थः ॥ २८७ ॥

**महासामान्यदृष्टान्तो दौन्दुभो रव उच्यते ॥**
**सामान्येतररूपस्य दुन्दुभ्याघात इष्यते ॥ २८८ ॥**

लयक्रमं दर्शयितुं दृष्टान्तत्रयस्य दार्ष्टान्तिकत्रयेणान्वयमाह । **महासामान्येति ।** दुन्दुभ्यादिप्रयुक्तशब्दसामान्यादि विना तद्विशेषाभाववन्मूलकारणस्याप्यकार्यकारण-ब्रह्मातिरेकेणाभावान्महासामान्यस्थानीयस्य कारणस्याद्वये ब्रह्मणि लये दृष्टान्तोऽवान्त-रसामान्यावसानभूमिर्दुन्दुभ्यादिशब्दमात्रमित्यर्थः । दुन्दुभ्याघातशब्देन तदाहननकृतः शब्दत्वव्याप्यः सामान्यविशेषो गृह्यते स च शब्दविशेषसमाप्तिदेशः सामान्यविशेषा-त्मकभूतपञ्चकस्य मूलकारणेऽवसानमित्यत्र निदर्शनमित्याह । **सामान्येति** ॥ २८८ ॥

**बाह्यानिति तथाचोक्तिर्विशेषाणां तु केवलम् ॥**
**इत्युक्तार्थप्रसिद्ध्यर्थमित्युदाहरणत्रयम् ॥ २८९ ॥**

अन्त्यकार्याणां भौतिकानां भूतेष्वनुवृत्तव्यावृत्तेष्वेव निष्ठेत्यत्र बाह्याञ्शब्दानित्यु-क्तिर्दृष्टान्तस्ते हि दुन्दुभ्याघाते शब्दत्वावान्तरसामान्यविशेषे लीयन्त इत्याह । **बाह्या-निति ।** तथा चेति महासामान्यादिदृष्टान्तवदित्यर्थः । कारणस्याद्वये ब्रह्मणि भूतानां कारणे भौतिकानां तेष्ववसानमित्युक्तार्थसिध्यर्थं दृष्टान्तत्रयमित्युपसंहरति । **इत्यु-क्तेति** ॥ २८९ ॥

**अन्वयव्यतिरेकाभ्यामभाववपुषाऽथवा ॥**
**सद्धीगम्याद्भिदुग्वस्तु न मानेनावसीयते ॥ २९० ॥**

अनेकदृष्टान्तस्य फलोक्त्या सर्वस्य ब्रह्ममात्रत्वमुक्त्वा तदेव दृष्टान्तान्तरेण साध-यितुं तदाह । **अन्वयेति ।** सद्विशेषाख्यं वस्तु तत्सामान्यात्पृथगुच्यमानं तेन भेदेनाभे-देन शून्यतया वा मानतो न सिध्यत्यत्यन्तभेदेऽभेदे वा सामान्यविशेषत्वासिद्धेः शून्यत्वे च सदद्वैतापत्तेरित्यर्थः ॥ २९० ॥

**षष्ठ्यर्थासंभवोऽतः स्याद्द्वितीयासंभवात्सतः ॥**
**यथा सति तथा विद्यात्प्रतीच्यनन्यमानके ॥ २९१ ॥**

तदद्वयत्वे किं स्यादित्याशङ्क्यानेकव्यक्त्यभावे तदसंबन्धात्सामान्यविशेषत्वासिद्धि-रित्याह । **षष्ठीति ।** दृष्टान्तमनूद्य दार्ष्टान्तिकमाह । **यथेति ।** सत्यद्वयत्वमसङ्गत्वं च यथोक्तं तथा स्वप्रकाशे प्रतीच्यपि तज्ज्ञेयमित्यर्थः ॥ २९१ ॥

**सामान्यभेदरूपाणां विशेषाणामशेषतः ॥**
**महासामान्य एकत्र भूयसां स्याद्यथा तथा ॥ २९२ ॥**
**मिथोभिन्नपदार्थानां नामरूपक्रियात्मभिः ॥**
**स्थूलाद्यनभिसंबन्धे कार्यकारणरूपिणाम् ॥ २९३ ॥**

दृष्टान्तमुपसंहरति । **सामान्येति ।** सद्विशेषाणां सर्वेषामेकस्मिन्सत्सामान्ये यथाऽव-

सानमित्यर्थः । दार्ष्टान्तिकं विवृणोति । **तथेति** । उक्तदृष्टान्तानुसारेण नामादिभिर्मिथो-भिन्नार्थानां कार्यादीनामस्थूलादिके ब्रह्मणि लयात्प्रत्यगनुभवोऽद्वयोऽसङ्गः स्यादिति योजना ॥ २९२ ॥ २९३ ॥

**सूक्ष्मताव्यापिते ज्ञेये भूम्यादेरुत्तरोत्तरम् ॥**
**प्रत्यगात्मावसानेषु पूर्वपूर्वप्रहाणतः ॥ २९४ ॥**

सर्वस्य विकारस्य प्रतीचि क्रमेण लय इत्यत्र भाष्यकारसंमतिमाह । **सूक्ष्मतेति** । पृथिवीमारभ्याऽऽत्मान्तेष्वर्थेषु पूर्वपूर्वभूम्यादित्यागेनोत्तरोत्तरस्याबादेः सौक्ष्म्यादि ज्ञेयमिति योजना ॥ २९४ ॥

**नामादीनि च तत्त्वानि प्राणान्तानि तथाऽऽत्मनि ॥**
**पूर्वपूर्वप्रहाणेन यान्त्यस्तं केवलाद्वये ॥ २९५ ॥**

तत्रैव च्छान्दोग्यसंमतिमाह । **नामादीनीति** । तथेत्यनन्तरन्यायोक्तिः ॥२९५॥

**दृष्टान्तत्रितयं तावत्स्थितिकाल उदाहृतम् ॥**
**महासामान्यवत्प्रत्यक्सर्वानात्माप्ययः स्वतः ॥ २९६ ॥**

स यथा दुन्दुभेरित्यादि व्याख्याय स यथाऽऽर्द्रैधाग्नेरित्याद्यवतारयितुं वृत्तं कीर्तयति । **दृष्टान्तेति** । स्थितिकाले क्रमेण सर्वस्याऽऽत्ममात्रत्वे दुन्दुभ्यादिदृष्टान्तेषु प्रत्येकं त्रितयमुक्तमित्यनुवादार्थः । दृष्टान्तत्रयोक्तिफलमुक्तमनुवदति । **महासामान्यवदिति** । एकत्र सत्त्वे सद्विशेषाणां निष्ठावत्प्रतीच्येकस्मिन्ननात्मनः सर्वस्य लयान्न प्रत्यगतिरिक्तं किंचिदस्तीत्यर्थः ॥ २९६ ॥

**स्थितिकाले यथैकात्म्यं शक्यते ज्ञातुमञ्जसा ॥**
**यथोक्तन्यायतस्तद्वदुत्पत्तावपि शक्यते ॥ २९७ ॥**

उत्तरवाक्यतात्पर्यमाह । **स्थितीति** । दृष्टान्तत्रयं न्यायः ॥ २९७ ॥

**धूमार्चिर्विस्फुलिङ्गादि यथापूर्वं विभागतः ॥**
**अग्निरेव न धूमादिभेदः कश्चन लक्ष्यते ॥ २९८ ॥**

अवतारितदृष्टान्तवाक्याक्षरार्थमाह । **धूमेति** ॥ २९८ ॥

**प्राणलोकादिरप्येवमनात्मा प्राग्विभागतः ॥**
**अपूर्वानपरानन्तप्रत्यगात्मैव केवलः ॥ २९९ ॥**

दार्ष्टान्तिकमाह । **प्राणेति** । विभागपदेनोभयत्र जन्मोक्तिः ॥ २९९ ॥

**एकजातौ हि भिन्नानां शब्दानां शब्द एव तु ॥**
**दृष्टमैक्यं न भिन्नानां भिन्नजातौ तथेति चेत् ॥ ३०० ॥**

स यथेत्यादिवाक्यस्य तात्पर्यान्तरं वक्तुं चोदयति । **एकेति** । शब्दमात्रे तद्विशेषा-

णामैक्यं दृष्टं न तथा भिन्नजातीयघटादीनां वीरणादावतो नामादिभिन्नस्य जगतो नाऽऽत्मन्यैक्यं वैजात्यादित्यर्थः ॥ ३०० ॥

**धूमादिभेदभिन्नानां यथैकत्वं विभावसौ ॥**
**नामरूपादिभिन्नानामैकात्म्यं तद्वदात्मनि ॥ ३०१ ॥**

उत्तरत्वेन दृष्टान्तं व्याचष्टे । **धूमादीति** । दार्ष्टान्तिकं व्याकरोति । **नामेति** ॥ ३०१ ॥

**बोधाविशेषादथवा भेद एव न विद्यते ॥**
**कार्यकारणयोस्तत्त्वमुभयोरविलक्षणम् ॥ ३०२ ॥**

नामरूपादिभिन्नानामिति वदता तेषां मिथो व्यावृत्तिरिष्टा संप्रति सैव नास्तीत्याह । **बोधेति** । चिन्मात्रत्वात्तेषां न मिथो व्यावृत्तिरित्यर्थः । हेतुं साधयति । **कार्येति** । उभयोरपि तयोः स्वरूपमकार्यकारणचिन्मात्रमेकरूपमतस्तयोर्मिथोभेदाभावान्न मिथो भेदः कार्याणामपीत्यर्थः ॥ ३०२ ॥

**स्वार्थसाधनयत्नादीननपेक्ष्योत्सृजेद्यथा ॥**
**धूमादीन्हुतभुक्तद्वत्प्राणादीन्प्रत्यगीश्वरः ॥ ३०३ ॥**

परस्य कारणत्वे फलेन भाव्यं बुद्धिपूर्वकारिणो विफलप्रवृत्त्ययोगान्न चासहायस्यायत्नादिमतः कारणतेति साधनमपि किंचिद्वाच्यं तथाचाऽऽप्तकामत्वादिहानिरिति केचित्तान्प्रत्येतदेव वाक्यमुत्तरमिति तात्पर्यमाह । **स्वार्थेति** ॥ ३०३ ॥

**श्रोतव्यः श्रुतिवाक्येभ्य इत्यत्राऽऽशङ्क्यते यतः ॥**
**प्रयत्नानन्तरः शब्दोऽनित्यः कुम्भादिवद्भवेत् ॥ ३०४ ॥**

निःश्वसितपदव्यावर्त्यां शङ्कामाह । **श्रोतव्य इति** । वेदवाक्यवशादात्मा श्रोतव्य इति यदुक्तं तत्राऽऽशङ्क्यते न श्रोतव्यः श्रुत्यादिवशादात्मेति । तत्र हेतुः । **यत इति** । वेदस्येश्वरकृतत्वे बुद्धाद्युक्तिवदनित्यत्वादनपेक्षमानत्वायोगादिति हेत्वर्थः ॥ ३०४ ॥

**इत्यस्य परिहारार्थं निःश्वासोदाहृतिस्त्वियम् ॥**
**अप्रयत्नोत्थितो वेदो नित्यः स्याद्व्योमवत्स्वतः ॥ ३०५ ॥**

उत्तरत्वेन निःश्वासश्रुतिमादत्ते । **इत्यस्येति** । परिहारं स्फोरयितुं तस्या विवक्षितमर्थमाह । **अप्रयत्नेति** । न हि सोऽनित्यो विद्यमानस्यैव कूपाकाशादिवत्परस्मादयत्नेन व्यक्तेरतः स स्वतश्चिदात्मना नित्यः स्यादित्यर्थः ॥ ३०५ ॥

**अबुद्धिपूर्वकत्वाच्च यथावस्त्वनुरोध्यपि ॥**
**बुद्धिवन्नाप्रमाणत्वं वेदस्येहोपपद्यते ॥ ३०६ ॥**

यत्तु कृतकत्वेनानित्यत्वान्नानपेक्षं प्रामाण्यमिति तत्राऽऽह । **अबुद्धीति** । न हि नित्यत्वं प्रामाण्ये हेतुराकाशे तदभावान्नाप्यनित्यत्वमप्रामाण्ये हेतुश्चक्षुरादेरपि

प्रामाण्यादतोऽज्ञातार्थपरिच्छेदिनो वेदस्यानपेक्षप्रामाण्यसिद्धिरिति भावः । शब्दार्थसंबन्धस्य सांकेतिकत्वाद्वेदस्य स्वशक्त्या चक्षुरादिवद्बोधकत्वात्संकेतयितृबुद्ध्यपेक्षत्वादप्रामाण्यमित्याशङ्क्याऽऽह । **यथेति** । न हि वेदो धीपूर्वकस्तदर्थे मानान्तरायोगादैशज्ञानं तत्र भवदपि न वेदरचनायामुपयुज्यते निःश्वसितश्रुतेरतो वेदवत्तदर्थसंबन्धोऽपि शक्तिलक्षणश्चक्षुरादेरिव विद्यमानः परस्माद्व्यज्यते न सांकेतिकस्तद्वस्त्वनुसारी वेदोऽध्यक्षादिवन्मानमित्यर्थः । वेदसंबन्धयोर्नित्यत्वे फलितमाह । **बुद्धिवदिति** । बुद्धादिवाक्योत्थधीवद्वेदाप्रामाण्यं तन्नित्यत्वादौ स्थिते सत्ययुक्तमित्यर्थः । वेदः स्वार्थे मानमज्ञातज्ञापकत्वात्परेष्टेश्वरधीवदिति वाऽर्थः ॥ ३०६ ॥

**सर्वथा यदनेनोक्तं तच्छ्रद्धेयं बुभूषता ॥**
**भानुप्रकाशवच्छब्दो नित्योऽयं न तु कृत्रिमः ॥ ३०७ ॥**

तत्प्रामाण्ये सिद्धमर्थमाह । **सर्वथेति** । अनुष्ठेयत्वेन ज्ञेयत्वेन वेत्यर्थः । बुभूषता भवितुमिच्छता श्रेयोर्थिनेत्यर्थः । तस्य निश्वासवत्प्रवृत्तत्वेऽपि कृतकत्वान्न नित्यतेत्याशङ्क्याऽऽह । **भान्विति** । ईश्वरविवर्तत्वेन तदात्मको वेदः सवितृकिरणवन्नित्यःस्यादित्यर्थः ॥ ३०७ ॥

**पर एवाऽऽत्मनाऽऽत्मानं प्रतिपाद्य नरं श्रुतिः ॥**
**कार्यकारणवत्पीत्वा स्वात्मनैवावतिष्ठते ॥ ३०८ ॥**

ईदृङ्नित्यत्वस्यान्यत्रापि सत्त्वाद्विशेषणवैयर्थ्यमाशङ्क्य वेदे विशेषमाह । **पर इति** । मनुष्यत्वाद्यभिमानिनं त्वमर्थमन्वयादिना शोधितमद्वयब्रह्मरूपेण प्रतिपाद्य ज्ञानद्वारा जगद्बाधित्वा स्वेनैवं ब्रह्मात्मना श्रुतिरवशिष्यते तद्यद्यपि सर्वमानमेयादि परात्मैव तथाऽपि श्रुतावतिशयोऽस्तीत्यर्थः ॥ ३०८ ॥

**वेदामात्वप्रसक्तौ वा सर्वमात्मेतिवाक्यतः ॥**
**वेदामात्वापनुत्त्यर्थं स यथेत्यागमः परः ॥ ३०९ ॥**

स यथेत्यादि त्रेधा व्याख्याय तस्यैवार्थान्तरमाह । **वेदेति** । इदं सर्वं यदयमात्मेति वाक्याद्वेदस्याप्रामाण्यं प्राप्तं न हि मिथ्यात्वं विना सर्वस्याऽऽत्मत्वं तन्मिथ्यात्वे तदन्तस्थवेदस्यापि तद्भावाद्भ्रमाभासवदमानत्वं तन्निरासार्थं वाक्यमित्यर्थः ॥ ३०९ ॥

**तदयुक्तं पुमर्थस्य तदुक्त्यैव समाप्ततः ॥**
**सर्वोपायोऽनुपायः स्यादुपेयावसितौ यतः ॥ ३१० ॥**
**स्वोपेयार्थप्रसिद्धौ च नोपायानामुपायता ॥**
**न चोत्सर्गापवादोऽपि साक्षाद्वेदग्रहश्रवात् ॥ ३११ ॥**

तन्निरासस्तर्हि कथमित्याशङ्क्य तदमानत्वायोगं प्रतिजानीते । **तदयुक्तमिति** । न मिथ्यात्वममानते हेतुः प्रतिबिम्बादौ व्यभिचारादनुत्पत्त्यादि तथा तदत्र नास्ति श्रुत-

वाक्यस्य बुद्ध्युत्पादात्संशयादेश्चाभावादिति भावः । तथाऽपि मिथ्यावेदोत्थबुद्धेरफलत्वात्तदप्रामाण्यमित्याशङ्क्य श्रुत्यनुभवविरोधान्मैवमित्याह । **पुमर्थस्येति** । प्रत्यगद्वयं सच्चिदानन्दं वस्तु तच्छब्दार्थः । सर्वमात्मेति श्रुतेर्वेदस्य पृथगभावात्कथं मानतेत्याशङ्क्य ज्ञानात्पूर्वमूर्ध्वं वा पृथगभावो नाऽऽद्योऽनुभवविरोधादिति मत्वा द्वितीयं प्रत्याह । **सर्वेति** । चक्षुरादिरूपोपायो घटादिनिश्चितौ सत्यामुपायत्वाद्यतो निवर्ततेऽतो वेदवाक्यानामपि स्वमेयात्मज्ञप्तावुपायत्वनिवृत्तिरिष्टैवेत्यर्थः । सर्वमात्मैवेति श्रुत्योत्सर्गतः सर्वस्याऽऽत्मत्वमुक्तं स यथेत्यादिना तस्य वेदेऽपवादोऽग्नेर्धूमादिवदात्मनस्तस्य पृथग्व्यक्तिकथनादतो न तस्यामानत्वाद्याशङ्केत्याशङ्क्याऽऽह । **न चेति** । इमे वेदा इति साक्षाद्वेदं गृहीत्वेदं सर्वं यदयमात्मेति षष्ठे श्रवणान्न तस्मिन्नपवाद इत्यर्थः ॥ ३१० ॥ ३११ ॥

**बालोन्मत्तोक्तिवच्चाहं वक्तुं दूषणमादरात् ॥**
**जिह्रेमि बहुशोऽत्रोक्तौ तस्मादेवोपरम्यते ॥ ३१२ ॥**

उत्सर्गापवादपक्षे वक्ष्यमाणवाक्यविरोधवत्त्वत्पक्षेऽपि निःश्वसितश्रुत्या वेदस्याधीपूर्वत्वोपगमे प्रामाण्यविरोधो बालोक्तिवदित्याशङ्क्याऽऽह । **बालेति** । विप्रलम्भकाद्युक्तिसमो वेद इत्यस्यामुक्तावसंदिग्धाबाधिताज्ञातधीहेतुः सन्न तत्सम इत्यादि वक्तुं लज्जामहे संबन्धादारभ्य तत्र तत्रासकृत्तात्पर्येण तु प्रामाण्योक्तेरित्यर्थः । किंच नित्यस्तु स्याद्दर्शनस्य परार्थत्वादिति न्यायेन बहुभिरत्र पराक्रान्तत्वादस्माभिरस्मिन्विषये न क्रियते पराक्रम इत्याह । **तस्मादिति** । **उक्तं हि—**

"तस्मादकृत्रिमः शब्दो न कदाचिद्विनश्यति ।
नित्येन नित्यसंबन्धादाकाशपरमाणुवत्" इति ॥

न च नित्यत्वे निश्वसितश्रुतिविरोधोऽधीपूर्वकत्वस्य विवक्षितत्वात् । **यथाऽऽहुः—**
'यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता' इति ॥ ३१२ ॥

**ऋग्वेदादिगिरोच्यन्ते ऋग्यजुःसामलक्षणाः ॥**
**अथर्वाङ्गिरसस्तद्वन्मन्त्राः स्युर्ब्राह्मणोद्धृताः ॥ ३१३ ॥**
**इतिहासादिसंभेदभिन्नं ब्राह्मणमेव तु ॥**
**ग्राह्यमत्र प्रसिद्धस्तु नेतिहासादिरिष्यते ॥ ३१४ ॥**

निश्वसितमित्येतदन्तं व्याख्याय यदृग्वेद इत्यादि व्याचष्टे । **ऋग्वेदादीति** । अपौनरुक्त्यर्थं ब्राह्मणोद्धृता इत्युक्तम् । अत्रेति प्रकृतवाक्यग्रहणम् । प्रसिद्धेतिहासादिग्रहे निश्वसितश्रुतिप्रातिकूल्यमभिप्रेत्याऽऽह । **प्रसिद्धास्त्विति** ॥ ३१३ ॥ ३१४ ॥

**अभिधेयार्थजन्मापि ह्यभिधासंभवोक्तितः ॥**
**द्रष्टव्यं नाभिधानं स्यादभिधेयमृते क्वचित् ॥ ३१५ ॥**

---

१ ख. °ध्याऽतः पु° ।

कस्मान्नामप्रपञ्चसृष्टिरेवोक्ता नार्थप्रपञ्चसृष्टिरित्याशङ्क्याऽऽह । **अभिधेयेति** । अभिधानाभिधेययोर्व्याप्तेरिति हिशब्दार्थः । व्याप्तिमेव व्यनक्ति । **नेति** ॥ ३१५ ॥

**मन्त्रब्राह्मणयोर्वेदनामधेयत्वकारणात् ॥**
**ऋग्वेदादिगिरा तस्मान्मन्त्रब्राह्मणयोर्ग्रहः ॥ ३१६ ॥**
**यथासिद्धमितिहासपुराणाद्यपि गृह्यते ॥**
**लोकप्रसिद्धिमुल्लङ्घ्य यतोऽन्याय्योऽन्यथाग्रहः ॥ ३१७ ॥**

भाष्यानुसारेण यदृग्वेद इत्यादि व्याख्यायार्थान्तरमाह । **मन्त्रेति** । इतिहासादिशब्दैस्तर्हि कथमष्टविधं ब्राह्मणं भाष्ये गृहीतमित्याशङ्क्य दूषयति । **लोकेति** । बाधकाभावे वृद्धप्रसिद्धिर्नातिक्रमणीयेति भावः ॥ ३१६ ॥ ३१७ ॥

**इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ॥**
**इत्यादिमनुनाऽप्युक्तं कथं तत्त्यागमर्हति ॥ ३१८ ॥**

ऋगादिसंनिहितेतिहासादिशब्देनापि प्रसिद्धग्रहे स्मार्तं लिङ्गमाह । **इतिहासेति** । बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यतीति भागान्तरम् । **आदिमनुना** वृद्धमनुनेति यावत् । अत्रिणाऽपीत्यपेरर्थः ॥ ३१८ ॥

**इतिहासपुराणादेर्वेदमूलत्वकारणात् ॥**
**प्रामाण्यं नान्यथा तस्य प्रामाण्यमुपपद्यते ॥ ३१९ ॥**

इतिहासादिना वेदार्थनिरूपणं चेत्तदपेक्षया तत्प्रामाण्यादनपेक्षप्रामाण्यक्षतिरित्याशङ्क्य वैपरीत्यान्मैवमित्याह । **इतिहासेति** । न हि व्याख्यानतो विशेषप्रतिपत्तिरिति न्यायाद्व्याख्यातृवाक्याद्वेदार्थनिर्णये तदपेक्षया वेदोऽनपेक्षं प्रामाण्यं जहातीति भावः ॥ ३१९ ॥

**प्रत्यक्षवेदवचनविरुद्धं तेषु यद्वचः ॥**
**वुद्धवाक्यादिवत्तादृक्त्याज्यं श्रुतिविरोधतः ॥ ३२० ॥**

इतिहासादेरपि वेदवत्प्रामाण्ये कुतस्तदपेक्षा स्वत एव तद्योगादित्याशङ्क्याऽऽह । **प्रत्यक्षेति** ॥ ३२० ॥

**न चेश्वरातिरेकेण कश्चित्स्रष्टाऽभ्युपेयते ॥**
**इतिहासपुराणादेस्तदन्यस्येह कार्यतः ॥ ३२१ ॥**

कथमत्र प्रसिद्धेतिहासादिग्रहे कर्त्रन्तरस्मृतिरीश्वरस्यात्र कर्तृत्वश्रुतेरित्याशङ्क्याऽऽह । **न चेति** । इहेति च सिद्धान्तोक्तिः ॥ ३२१ ॥

**कारणत्वं प्रमाणेन यस्य साक्षाद्विनिश्चितम् ॥**
**अपि तत्कार्यकर्तृत्वे तदेवाभ्युपगम्यते ॥ ३२२ ॥**

---

१ ख. °म्यताम् ॥ ३२२ ॥

परस्यैव व्यासादिरूपेण पुराणादिकारणत्वं साधयति । **कारणत्वमिति** । परस्याज्ञानद्वारा सर्वकारणतायाः श्रुत्यादिसिद्धत्वात्तत्कार्यव्यासादेरितिहासादौ कर्तृत्वस्मृतेरपि तदेव ब्रह्म तत्र तत्र तद्रूपेण कारणं **को ह्यन्यः** पुण्डरीकाक्षान्महाभारतकृद्भवेदित्युक्तेरित्यर्थः ॥ ३२२ ॥

**बीजमेवाङ्कुरादीनां यथा कारणमिष्यते ॥**
**अङ्कुराद्यात्मना तद्वद्बीजमेव तु कारणम् ॥ ३२३ ॥**

ब्रह्मैव व्यासाद्यात्मना तत्तत्कारणमित्येतद्दृष्टान्तेनाऽऽह । **बीजमिति** । आद्यबीजस्याङ्कुरादिहेतुत्वे पत्रपुष्पादिहेतुत्वमङ्कुरादेरप्यस्तीत्याशङ्क्याऽऽह । **अङ्कुरादीति** । तदात्मना बीजमेव कारणं पत्रपुष्पादेरपीति शेषः । तथा ब्रह्मैव तत्तदात्मना तत्र तत्र कारणमित्याह । **तद्वदिति** ॥ ३२३ ॥

**आद्यन्तयोर्यतो बीजं प्रत्यक्षेणावसीयते ॥**
**तस्मात्तन्मध्यकार्येषु बीजमेवास्तु[1] कारणम् ॥ ३२४ ॥**

बीजस्यैवाङ्कुराद्यात्मना पत्रादिहेतुतेत्यत्र नियामकापेक्षायां दृष्टान्तं प्रपञ्चयति । **आद्यन्तयोरिति** ॥ ३२४ ॥

**न च वेदोक्तितो वेदः श्रद्धेयार्थ इहेष्यते ॥**
**किंत्वमानत्वहेतूनां वेदवाक्येष्वसंभवात् ॥ ३२५ ॥**

कर्त्रन्तरस्मृत्यविरोधोऽपि नेतिहासादेः सापेक्षं प्रामाण्यं निश्वसितश्रुतेर्वेदवदबुद्धिपूर्वकत्वादित्याशङ्क्याऽऽह । **न चेति** । **अस्यार्थः**—निश्वसितमिति वेदवचनेनाधीपूर्वोक्त्या वेदोऽनपेक्षप्रमाणं नेष्यते किंतु मानान्तरदृष्टार्थत्वादीनामप्रामाण्यहेतूनां तत्राभावादितिहासादेस्तु वेदोपबृंहकत्वात्तद्दृष्टार्थस्य नानपेक्षता न चेतिहासादिविषये निश्वसितश्रुतिविरोधः परस्माद्व्यासादिरूपादनायासेन तद्व्यक्तिविषयत्वादिति ॥ ३२५ ॥

**प्रामाण्यं वेदवाक्यानां न च मानान्तराश्रयात् ॥**
**अक्षादेरपि मानत्वं यथोक्तादेव कारणात् ॥ ३२६ ॥**

लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधक इति न्यायाद्वेदस्य मानान्तरादृष्टार्थत्वमसिद्धमित्याशङ्क्याऽऽह । **प्रामाण्यमिति** । पदानां शक्तिधियो मानान्तरापेक्षत्वेऽपि न वाक्यप्रामाण्यं तदपेक्षं तस्याज्ञातार्थत्वनियमादित्यर्थः । अज्ञातार्थत्वं प्रामाण्यप्रयोजकमिति कथं निश्चीयते प्रसिद्धप्रमाणेषु तथादृष्टेरित्याह । **अक्षादेरिति** ॥ ३२६ ॥

**प्रज्ञानव्यतिरेकेण यथैव स्थितिसर्गयोः ॥**
**वस्त्वन्तरं न संभाव्यं प्रलयेऽपि तथोच्यते ॥ ३२७ ॥**

स यथा सर्वासामित्यादेः संगतिमाह । **प्रज्ञानेति** ॥ ३२७ ॥

---

१ क. °मेव त का°।

विभिन्ननामरूपाणां सरितां सागरो यथा ॥
अभिन्ननामरूपैकः प्रलयोऽयनमेकता ॥ ३२८ ॥

तत्र दृष्टान्तं व्याचष्टे । विभिन्नेति । अयनशब्दस्य गतिमात्रविषयत्वं व्यावर्तयति । प्रलय इति । शून्यं निषेधयति । एकतेति ॥ ३२८ ॥

स्पर्शादिज्ञानभेदानां त्वगाद्येकायनं तथा ॥
स्वान्ते त्वगादयस्तद्वद्बुद्धौ च मनसस्तथा ॥ ३२९ ॥
कर्मक्षयात्तथा बुद्धिः कारणत्वेन तिष्ठति ॥
एष साधारणस्तावत्प्रलयोऽबुद्धिपूर्वकः ॥ ३३० ॥

एवं सर्वेषामित्यादिदार्ष्टान्तिकं पूर्वपक्षत्वेन व्याचष्टे । स्पर्शादीति । दृष्टान्तानुसारेणार्थज्ञानानामिन्द्रियाणि लयस्थानानि तेष्वर्थधीलयवत्तेषामपि मनसि लयस्त्वगादिवत्तस्यापि संकल्पाद्यात्मनोऽध्यवसायात्मनि बुद्धौ लयो मनोवत्साऽपि कारणात्मना लीयते स्वपरिणामहेत्वदृष्टक्षयादित्यर्थः । द्विविधो हि लयः साधारणोऽसाधारणश्च तत्राऽऽद्यो दर्शित इत्याह । एष इति । तस्य स्वाभाविकत्वेन स्वापादौ सत्त्वमाह । अबुद्धीति ॥ ३२९ ॥ ३३० ॥

प्रत्यग्याथात्म्यविज्ञानाद्वस्तुवृत्तानुरोधतः ॥
प्रलयोऽज्ञानविध्वंसाद्यस्त्वसौ बुद्धिपूर्वकः ॥ ३३१ ॥

द्वितीयमाह । प्रत्यगिति । वस्त्वनुसारिमानवशादुत्पन्नप्रत्यग्ज्ञानादज्ञानध्वंसाद्योऽर्थादिलयः स बुद्धिपूर्वकोऽसाधारण इति योजना ॥ ३३१ ॥

अब्धिरेकायनं यद्वत्सर्वासां सरितां तथा ॥
त्वग्गोचराणां स्पर्शानां त्वगेवैकायनं परम् ॥ ३३२ ॥

स्पर्शादिधियां त्वगादिषु लयोक्तिद्वारा प्रकृतिपर्यन्तं लयं संक्षिप्य स्पर्शादीनां तेषु तद्द्वारा तमेव प्रपञ्चयन्दृष्टान्तेन स्पर्शस्य त्वचि लयमाह । अब्धिरिति ॥ ३३२ ॥

स्पर्शशब्देन विषयस्त्वग्ग्राह्योऽत्राभिधीयते ॥
तथा गन्धादिशब्देन घ्राणादिविषयो मतः ॥ ३३३ ॥

दार्ष्टान्तिकस्थस्पर्शशब्दार्थं विशदयति । स्पर्शेति । एवं सर्वेषां गन्धानामित्यादौ गन्धादिशब्दार्थमाह । तथेति । पूर्वोक्तं दृष्टान्तयितुं तथाशब्दः ॥ ३३३ ॥

गन्धादिसंहतिः पृथ्वी रसान्तानां तथा जलम् ॥
तेजस्त्रयाणां वायुस्तु द्वयोरेकात्मकं नभः ॥ ३३४ ॥

अत्रार्थानामिन्द्रियेषु तेषां मनसि तस्य बुद्धौ तस्याः कारणे लयं विवक्षता तेषां

---

१ ख. समस्तमा ।

तद्धियामिन्द्रियाणां च क्रमेण कारणान्तो लय उक्तः । इदानीं भूतलयार्थं तेषां प्रागवस्थामाह । **गन्धादीति** ॥ ३३४ ॥

**एवं लक्षणतः पञ्च भूतान्येतानि निर्दिशेत् ॥**
**मूर्तामूर्ताविष्करणं गुणाविष्कृतिरिष्यते ॥ ३३५ ॥**

भूतान्येव प्रसिद्धानि न तेषामुक्तरूपतेत्याशङ्क्य व्याख्यानतो विशेषधीरित्याह । **एवमिति** । गन्धादिशब्दान्तपञ्चगुणानामुपचयापचयास्थितानां संघातो भूतपञ्चकमित्यप्रसिद्धं किमिति व्याख्यायते तत्राऽऽह । **मूर्तेति** । या यथोक्तगन्धादीनां कारणाद्व्यक्तिः सैव मूर्तामूर्ताख्यभूतपञ्चकस्य स्वकारणादुत्पत्तिर्गुणलयश्च भूतलयश्च हेताविति लघीयस्या रीत्या व्युत्पादयितुमित्थं व्याख्येत्यर्थः ॥ ३३५ ॥

**संहतोक्तविशेषाणां भूतानां कारणात्मता ॥**
**तत्र स्पर्शग्रहेणैव वायोरंशोऽत्र गृह्यते ॥ ३३६ ॥**
**तेजसस्तु तृतीयांशश्चतुर्थोऽपां तथा भुवः ॥**
**पञ्चमस्तद्गुणैर्भेदस्तथा स्पर्शे समीक्ष्यताम् ॥ ३३७ ॥**
**गन्धादिषु तथा योज्यो भेदोऽयं गुणभेदतः ॥**
**पृथिव्यंशस्य बाहुल्यात्कर्कशः स्पर्श उच्यते ॥ ३३८ ॥**
**शीतश्च पिच्छिलश्चापां बाहुल्यात्स्पर्श इष्यते ॥**
**भूयस्त्वात्तेजसश्चोष्णः सुकुमारस्तथा मरुत् ॥ ३३९ ॥**
**बाहुल्यादिति विज्ञेयो यथोक्तगुणसंश्रयात् ॥**
**ध्वस्ताशेषविकारस्य ब्रह्मणोऽविद्ययाऽऽत्मनः ॥ ३४० ॥**
**स एष परिणामः स्यात्तेजोबन्नाद्युपक्रमः ॥**
**स्पर्शनाद्यात्मनाऽत्यन्तं परं काठिन्यमागतः ॥ ३४१ ॥**

गुणशब्देन तन्मात्रग्रहात्तज्जनिलयौ भूतजन्मलयाविति न युक्तं किंतु भूतलयः स्वकारणसंसर्गो वैशेषिकादिवदित्याशङ्क्याऽऽह । **संहतेति** । संगृहीतो यथोक्तो गन्धादिसंहतिः पृथ्वीत्यादिविशेषो यैस्तेषां भूतानां कारणमात्रता लयो नान्यस्तस्याप्रामाणिकत्वात्स्थित्यवस्थायामपि कारणसंसर्गस्य तुल्यत्वादित्यर्थः । स्पर्शादिगुणानामेवात्र श्रुतेरश्रुतभूतलयस्याविवक्षामाशङ्क्य गुणगुणिभेदमुपेत्य गुणग्रहो गुण्युपलक्षणमित्याह । **तत्रेति** । सर्वेषां स्पर्शानामितिश्रुतावित्यर्थः । अत्रेति भूतनिर्धारणार्था सप्तमी । स्पर्शशब्देनैव तेषां ग्रहे स्पर्शात्मनां कथं मिथो भेदस्तत्राऽऽह । **तद्गुणैरिति** । तैरुपचितापचितैर्गुणैर्भूतानां मिथोभेदधीरित्यर्थः । गुणभेदाद्भूतभेदवत्तद्भेदाद्गुणस्याप्येकैकस्य भेदमाह । **तथेति** । गुणास्तन्मात्राणि । भूतोपचयापचयकृतं गुणविभागं प्रतिज्ञायाऽऽदौ

---

१ ग. इष्यते ।

स्पर्शस्थं विशेषमाह । **पृथिवीति** । अत्रापि गुणशब्दो भूतार्थः । विज्ञेयः स्पर्शभेद इति शेषः । केचित्तु स्पर्शाद्यात्मकपृथिव्यादिरूपेण परस्य परिणाममाहुस्तान्प्रत्याह । **ध्वस्तेति** । प्रत्यक्कूटस्थब्रह्मणोऽविद्यां विना परिणामायोगात्तदाविद्यं जगदित्यर्थः । तस्य परिणामस्य व्यवहारयोग्यतार्थं स्थूलत्वं दर्शयति । **स्पर्शनादीति** । स्थौल्याभावे परिणामस्य सत्त्वमेव स्यान्न व्यवहारयोग्यतेत्याह । **परमिति** ॥ ३३६ ॥ ३३७ ॥ ॥ ३३८ ॥ ३३९ ॥ ३४० ॥ ३४१ ॥

**उद्भूतस्पर्शविज्ञानस्त्वचा तस्य समागमात् ॥**
**स्पर्शभेदपरिज्ञानं ततोऽभिव्यज्यते दृशेः ॥ ३४२ ॥**

स्पर्शादिपरिणामस्य कथं[2] प्रथेत्याशङ्क्याऽऽह । **उद्भूतेति** । स्पर्शोऽयमित्यादिज्ञानमुद्भूतं यस्य पुंसः स तथा स्पर्शादिविषयस्य त्वगादिना संबन्धादुत्पन्नज्ञानेन स्पर्शादिधीरित्यर्थः । तत्पुनरैन्द्रियकं ज्ञानं कथं प्रथेतेत्याशङ्क्य नित्यानुभवादित्याह । **स्पर्शेति** ॥ ३४२ ॥

**स्पर्शादिभेदविज्ञानं स्यादचेतनमेव तु ॥**
**स्पर्शादिवत्परार्थत्वात्स्वार्थं तन्न तु साक्षिवत् ॥ ३४३ ॥**

अननुमेयत्वेऽपि नेदं साक्षिवेद्यं स्वप्रकाशत्वादिति केचित्तान्प्रत्याह । **स्पर्शादीति** । अचेतनत्वं साधयति । **स्पर्शादिवदिति** । परार्थत्वं समर्थयते । **स्वार्थमिति** । अन्यथा साध्यव्यतिरेकापत्तेरिति भावः । न चेदं मानसमनवस्थानादिति तुशब्दार्थः ॥ ३४३ ॥

**अतीव कठिनं ज्ञानं त्वचातोऽस्य समागमात् ॥**
**मनसा तस्य संयोगे ततः स्वच्छेव धीर्भवेत् ॥ ३४४ ॥**

आविद्यस्य जगतो नित्यानुभवसिद्धत्वेऽपि कथं लयप्रक्रियेत्याशङ्क्याऽऽह । **अतीवेति** । त्वगादिना स्पर्शादेः संबन्धजं ज्ञानमतिस्थूलमर्थेन्द्रियसंयोगजत्वादित्यर्थः । तस्य सार्थस्य सेन्द्रियस्य मनसा तादात्म्ये स्थौल्यत्यागाद्भवति सौक्ष्म्यमित्याह । **मनसेति** ॥ ३४४ ॥

**ततोऽपि सूक्ष्मं विज्ञानं बुद्धिसंयोगजं भवेत् ॥**
**यावद्बुधिग्संव्याप्तिः शरीरे तावदेव तु ॥ ३४५ ॥**
**बुद्धेः सामान्यवृत्त्येह व्याप्तिरादेहसंक्षयात् ॥**
**चैतन्याभासवत्प्राणस्तां वृत्तिं व्याप्य तिष्ठति ॥ ३४६ ॥**

तदेव ज्ञानं मनोमात्रं बुद्ध्या तादात्म्येन निरूप्यमाणं सूक्ष्मतरं स्यान्मनसोऽपि बुद्धेः सूक्ष्मत्वादित्याह । **ततोऽपीति** । बुद्धेरुपसंहारं वक्तुं देहे व्याप्तिमाह । **यावदिति** । सामान्यवृत्तिश्चैतन्याख्या वा प्राणाख्या वा तां बुद्धिसाभासां कारणात्मा व्याप्नोत्यतः

१ क. °गादा° । २ ख. °थं स्थूलत्व तद्दर्शयति । ३° । ३ क. ग. त्वचा । ४ क. बुद्धि सा° ।

सा तन्मात्रं स्यादित्याह । **चैतन्येति** । साभासप्राणाख्यकारणस्य वृत्तिमतीं बुद्धिं व्याप्य स्थितेस्तस्यास्तन्मात्रतेत्यक्षरार्थः ॥ ३४५ ॥ ३४६ ॥

**अकार्यकारणस्त्वात्मा तमपह्नुत्य तिष्ठति ॥**
**कण्टकादिसमायोगे शरीरे विक्रिया यदा ॥ ३४७ ॥**
**तदाऽधर्मादितो दुःखं विक्रियातोऽभिजायते ॥**
**देहैकदेशगं दुःखं विशिनष्टि स्वदेशगाम् ॥ ३४८ ॥**
**धियं तद्देशदुःखित्वाद्दुःखित्वं जायते धियः ॥**
**तस्यावच्छित्तये वृत्तिर्दुःखभूत्यैव जायते ॥ ३४९ ॥**

कारणमप्यकार्यकारणप्रत्यङ्मात्रमित्याह । **अकार्येति** । स्पर्शादीनां क्रमेण प्रत्यगन्तं लयमुक्त्वा स्वाभाविकेऽपि तस्मिन्न बन्धो बुद्धिपूर्वके तु स नेति किं वाच्यमिति वक्तुं लयात्प्राक्प्रतीचः संसारप्रकारमाह । **कण्टकेति** । अधर्मादिवशादनिष्टार्थयोगे देहदेशे यदा विकारस्ततस्तद्देशव्यापि दुःखं संभवतीत्यर्थः । देहदेशस्थं दुःखमुत्पन्नं चेत्कथं तस्य बुद्धिस्थत्वधीरित्याशङ्क्याऽऽह । **देहेति** । कथमन्यगं दुःखमन्यविशेषणं तत्राऽऽह । **तद्देशेति** । देहदेशे दुःखस्य सत्त्वात्तत्र बुद्धेर्भावात्तस्या देहव्यापित्वादाश्रयद्वारा तस्य तात्स्थ्यं न चाणवश्चेति न्यायात्परमाणुतुल्या धीस्तस्याः सौक्ष्म्यस्य तत्र विवक्षितत्वादित्यर्थः । केचिद्दुःखस्य स्वसत्तायां प्रकाशाव्यभिचारात्स्वप्रकाशत्वमाहुस्तान्प्रत्याह । **तस्येति** । अधर्माद्युपनीतानिष्टार्थयोगाद्देहदेशे दुःखोत्पत्त्या सहैव तस्य स्वसमानाश्रयबुद्धिस्थत्वेन दृष्ट्यर्थं काचित्तद्वृत्तिरुदेत्यतस्तस्य प्रकाशाव्यतिरेको न स्वप्रकाशत्वादित्यर्थः ॥ ३४७ ॥ ३४८ ॥ ३४९ ॥

**भोक्तृभोग्याभिसंबन्धस्तन्निमित्तोऽयमात्मनः ॥**
**बुद्धेः सेयमहंवृत्तिर्दुःखावच्छेदिनी[२] सती ॥ ३५० ॥**
**परिच्छिनत्ति बोद्धारं बोद्धाऽप्याभासमात्मनः ॥**
**न बहिर्विक्रियां मुक्त्वा देहेऽहंवृत्तिसंभवः ॥ ३५१ ॥**

उक्तधीवृत्तिकार्यं वदन्नात्मनः स्वाभाविकभोक्तृत्वपक्षं प्रत्याह । **भोक्त्रिति** । कथं धीस्था वृत्तिस्तत्रोक्तं संबन्धमादधीत न हि घटादिवृत्तिरीदृशीत्याशङ्क्याऽऽह । **बुद्धेरिति** । स्वस्य लोकस्य च प्रसिद्धा धीस्था दुःखविशिष्टा वृत्तिरहमित्येवंरूपा वृत्तिमदन्तःकरणं बोद्धृशब्दितं विशिनष्टि तच्च साभासं जीवाख्यं स्वदुःखेन योजयति स च साक्षिणि तदर्पयत्येवमात्मनि दुःखख्यातिरित्यर्थः । कण्टकादियोगजविक्रियातो दुःखकाले वृत्तेरहमित्यस्या जन्मेत्ययुक्तं कालान्तरेऽपि तज्जन्मसंभवादित्याशङ्क्याऽऽह । **नेत्यादिना** ॥ ३५० ॥ ३५१ ॥

---

१ ग. °ग्यादिसं° । २ ग. °र्दुःखविच्छे° ।

**स्वस्थेन्द्रियमनोबुद्धेर्नैवाहमिति वीक्ष्यते ॥**
**पुत्राभिमानजे त्वस्मिन्न देहांशविशिष्टता ॥ ३५२ ॥**

तत्र हेतुः । **स्वस्थेति** । समाहितधियोऽहंवृत्त्यदृष्टेरित्यर्थः । कण्टकादिकृतदुःखस्य देहदेशद्वारा धीगामित्वमुक्त्वा पुत्रादीष्टाभिमानजदुःखे विशेषमाह । **पुत्रेति** ॥ ३९२ ॥

**तत्तद्वस्तु समुद्दिश्य दुःखित्वं तत्र मानिनः ॥**
**अज्ञानादभिमानोऽयं बुद्ध्यादौ विषयावधौ ॥ ३५३ ॥**

तर्हि कुत्र पुत्राभिमानजं दुःखं तत्राऽऽह । **तत्तदिति** । तत्र तत्राभिमानवतस्तत्तत्पुत्रादि विषयीकृत्य बुद्धौ जातं दुःखं प्रणाड्या साक्षिण्यारोपितमित्यर्थः । ममाभिमानस्य वस्तुत्वात्तज्जं दुःखमपि तथेत्याशङ्क्याऽऽह । **अज्ञानादिति** ॥ ३९३ ॥

**न तु निःसङ्गकूटस्थप्रतीचः स्यादहंमतिः ॥**
**न कार्यप्रलयो दृष्टो यस्मादन्यत्र कारणात् ॥ ३५४ ॥**
**त्वगारम्भकसामान्यं त्वगिगऽतोऽत्र गृह्यते ॥**
**कार्यत्वान्नेन्द्रियेष्वेव विषयप्रलयो भवेत् ॥ ३५५ ॥**

अहमभिमानवन्ममाभिमानस्यापि वस्तुत्वमाशङ्क्याऽऽह । **न त्विति** । स्पर्शादिज्ञानभेदानामित्यादिना भर्तृप्रपञ्चपक्षमुक्त्वा तत्र विरुद्धांशं दूषयन्विषयाणां धियां चेन्द्रियेषु लयं दूषयति । **न कार्येति** । अत्रेति दार्ष्टान्तिकवाक्योक्तिः । त्वगादीनामपि स्पर्शादिषु कारणत्वायोगाद्यथाश्रुतं गृहीत्वा विषयाणामिन्द्रियेष्वेव लयो गृह्यतामित्याशङ्क्याऽऽह । **कार्यत्वादिति** । तेषां विषयकार्यत्वात्तान्प्रत्यप्रकृतित्वादित्यर्थः ॥ ३९४॥ ॥ ३९९ ॥

**न मृदोऽन्यत्र कुम्भादेः शरावे प्रलयो यतः ॥**
**तस्मात्त्वगादयः शब्दास्त्वगाद्यारम्भकाभिधाः ॥ ३५६ ॥**
**सर्वत्र प्रतिपत्तव्या नान्यत्र प्रलयो यतः ॥**
**गन्धशब्देन कृत्स्नाऽपि पृथिवी परिगृह्यते ॥ ३५७ ॥**

तथाऽपि तेषु विषयलये को दोषस्तत्राऽऽह । **न मृद इति** । कारणादन्यत्रापि कार्यलयश्चेत्कुम्भादेः शरावादावपि स स्यादतो विषयाणामिन्द्रियेषु लयासिद्धिरित्यर्थः । कार्यस्याकारणे लयायोगे श्रुते यथाश्रुतार्थस्वीकारो नेति फलितमाह । **तस्मादिति** । सर्वत्रेति तत्तद्वाक्योक्तिः । तच्छब्दार्थमेव स्फुटयति । **नान्यत्रेति** । सर्वेषां स्पर्शानामित्यादि व्याख्याय सर्वेषां गन्धानामित्यत्र गन्धशब्दार्थं प्रकटयति । **गन्धेति** । शब्दादिपञ्चकसंहतिरूपा स्थूला पृथिवी गन्धशब्दितेत्यर्थः ॥ ३९६ ॥ ३९७ ॥

**यदि वा परभागोऽस्या गन्धस्यानेकभेदतः ॥**
**गन्धो गुरुः क्षितिप्रायो ह्लादी शीतोऽप्प्रधानतः ॥ ३५८ ॥**
**तेजोभूयस्तया तीक्ष्णो लघुर्वायुप्रधानतः ॥**
**शान्तोऽथ विशदो व्यापी स्याद्व्योम्नोऽथ प्रधानतः ॥ ३५९ ॥**

तस्याः सूक्ष्मो वा भागस्तच्छब्दार्थस्तस्यानेकरूपत्वादित्याह । **यदि वेति** । कथं गन्धस्यानेकभेदवत्त्वं तदाह । **गन्ध इति** । प्रथमोऽथशब्दश्चशब्दपर्यायः समुच्चयार्थो द्वितीयस्तु तथाशब्दपर्यायो दृष्टान्तार्थः ॥ ३५८ ॥ ३५९ ॥

**पार्थिवाप्यांशयोस्तेजःपरिक्लेदात्तथाऽधमः ॥**
**दुर्गन्धो जायते गन्धः पापकर्मप्रबोधतः ॥ ३६० ॥**

एवं भूतानुरोधाद्गन्धभेदेऽपि कथं तस्य सौरभ्यासौरभ्यभेदधीरित्याशङ्क्यासुरभिगन्धजन्मप्रकारमाह । **पार्थिवेति** । तथेत्यनुभवानुसारोक्तिः । दृष्टनिमित्तमुक्त्वाऽदृष्टमाह । **पापेति** । अधर्मो दुःखहेतुः ॥ ३६० ॥

**समांशपरिणामे तु सुरभिर्जायते शुभः ॥**
**पुण्यकर्मप्रयुक्तः सञ्जन्तोरासङ्गकृत्तथा ॥ ३६१ ॥**

सुरभिगन्धजन्म दृष्टादृष्टाभ्यां ब्रुवाणस्तत्कार्यमाह । **समेति** । समानां पृथिव्याद्यंशानां तेजसा समे पाके सतीत्यर्थः । शुभत्वं सुखकरत्वम् ॥ ३६१ ॥

**रसरूपरवेष्वेवं यथोक्तं प्रतिपादयेत् ॥**
**प्रधानगुणभावेन गुणानां भूरिरूपता ॥ ३६२ ॥**

स्पर्शगन्धयोरुक्तं नानात्वं सर्वेषां रसानामित्यादिवाक्यस्थरसादिष्वतिदिशति । **रसेति** । प्रतिपादनप्रकारमाह । **प्रधानेति** । गुणानां भूतानामुपचयापचयवशादनेकरूपता रसादीनामपीत्यर्थः ॥ ३६२ ॥

**असाधारणगन्धादिग्राहकत्वानुमानतः ॥**
**ग्राह्यभूतप्रधानत्वं घ्राणादिष्वपि निर्दिशेत् ॥ ३६३ ॥**

गन्धादिषु यथोक्तभेदे श्रौतप्रक्रियासिद्धेऽपि त्वगारम्भकसामान्यमित्यादिना तेषां घ्राणाद्यारम्भकत्वं कथमुक्तमित्याशङ्क्याऽऽह । **असाधारणेति** । अनुमानतो लिङ्गादिति यावत् । प्रधानत्वं सारत्वं कार्यमित्यर्थः । अपिर्दृष्टान्तार्थः । विमतं पार्थिवं गन्धादिषु गन्धस्यैव व्यञ्जकत्वात्कुङ्कुमगन्धाभिव्यञ्जकघृतवद्विमतमाप्यं रसादिषु रसस्यैव व्यञ्जकत्वादास्योदकवद्विमतं वायवीयं स्पर्शादिषु स्पर्शस्यैव व्यञ्जकत्वाद्व्यजनवायुवत् । विमतं नाभसं शब्दादिषु शब्दस्यैव व्यञ्जकत्वाद्वेणुविवरवदित्यर्थः ॥ ३६३ ॥

**स्वग्राह्यार्थसजातीयमिन्द्रियं स्यात्प्रदीपवत् ॥**
**रूपस्यैवावभासित्वान्न चेत्स्याच्छ्रोत्ररूपवत् ॥ ३६४ ॥**

चक्षुषस्तैजसत्वमाह । **स्वग्राह्येति** । विमतं तैजसं रूपादिषु रूपस्यैव व्यञ्जकत्वाद्दी-पवदित्यर्थः । चक्षुषो ग्राह्यरूपासाजात्ये श्रोत्रेण रूपाग्रहवत्तेनापि तन्न गृह्येतेति बाध-कमाह । **न चेदिति** ॥ ३६४ ॥

**न चेदर्थसजातीयं सर्वार्थग्रहणं भवेत् ॥**
**एकैकस्येन्द्रियस्येह मनोबुद्ध्योर्यथा तथा ॥ ३६५ ॥**

उक्तानुमानेषु विपक्षे बाधकमाह । **नेत्यादिना** । इहेति व्यवहारभूमि-रुक्ता ॥ ३६५ ॥

**सर्वभूतात्मकत्वात्तु सर्वार्थग्रहणं तयोः ॥**
**मनोबुद्ध्योरिति ज्ञेयमन्यथा तदसंभवात् ॥ ३६६ ॥**

तयोरपि सर्वार्थग्रहणं कथमित्याशङ्क्य भूतपञ्चकारब्धत्वादित्याह । **सर्वेति** । विमतं भूतपञ्चकजातीयं तद्ग्राहकत्वाद्यद्यद्ग्राहकं तत्तथा यथा रूपग्राहको दीपस्तज्जातीयो न च हेत्वसिद्धिर्मनोबुद्ध्योरगोचरस्यानात्मनोऽसत्त्वात्साजात्यं च द्रव्यत्वावान्तरजात्येष्टमिति न सिद्धसाध्यता तद्ग्राहकत्वं च तत्कारणतेति नादृष्टादौ व्यभिचार इति भावः । अनु-भवसिद्धहेत्वनुपपत्तिं विपक्षे बाधकत्वेनाऽऽह । **अन्यथेति** ॥ ३६६ ॥

**त्वगादिज्ञानशक्तीनां बुद्धिः सामान्यमुच्यते ॥**
**प्राण एव क्रियाशक्तिसामान्यं तद्वदुच्यते ॥ ३६७ ॥**

त्वगादीनां भौतिकत्वमुक्त्वा प्रकाशाख्यं साधारणं रूपमाह । **त्वगादीति** । ज्ञानेन्द्रियाणां तच्छक्तियुक्तानां प्रकाशः साधारणं रूपमित्यर्थः । कर्मेन्द्रियाणामितरव-द्भौतिकत्वं मत्वा साधारणं रूपमाह । **प्राण इति । अस्यार्थः**—वाङ्नभोविकारो विवरप्रा-धान्ये सति शब्दव्यञ्जकत्वाच्छ्रोत्रवद्धस्तौ वायवीयौ **नियमे**नाऽऽलोकानपेक्षस्पर्शवद्ग्राह-कासाधारणकरणत्वात्त्वग्वद्वायुरूपस्य बलस्य तत्र दृष्टेश्च **प्राणो** वै बलमिति हि **श्रुतिः** । पादौ तैजसौ प्रायेणोष्णस्पर्शत्वाद्दीपवत् । पायुराप्यं स्निग्धत्वात्संमतवदुपस्थः पार्थिवो गन्धवत्त्वात्संमतवत् । एवं भौतिकानामेषां क्रियाशक्तिमतां साधारणं रूपं त्वगादीनां प्रकाशवत्क्रियेति । **तेजोमयी** वागित्यादिश्रुतेर्वाक्तैजसी हस्तौ पूर्ववद्वायवीयावेव पायुः पार्थिवो गन्धवत्त्वाद्**धस्तिरेव** रयिरित्यादिश्रु**तेः** प्रजननमाप्यं परिशेषात्पादौ नाभसाविति वाऽर्थः ॥ ३६७ ॥

**शब्दादिभोगसिद्ध्यर्थं श्रोत्राद्या ज्ञानशक्तयः ॥**
**तद्वत्कर्मोपभोगार्थं वागाद्याः कर्मशक्तयः ॥ ३६८ ॥**

किमर्थानि ज्ञानेन्द्रियाणि तत्राऽऽह । **शब्दादीति । उक्तं हि**—रूपादिषु पञ्चाना-मालोचनमात्रमिष्यते वृत्तिरिति । किमर्थानि कर्मेन्द्रियाणि तत्राऽऽह । **तद्वदिति** । **उक्तं च**—वचनादानविहरणोत्सर्गानन्दाश्च शेषाणामिति ॥ ३६८ ॥

**यथोक्तशक्तिविक्षेपो मनोबुद्धिपुरःसरः ॥**
**संकल्पाध्यवसायाभ्यां तयोर्भेदोऽपि च द्विधा ॥ ३६९ ॥**

सर्वाणि तानि केन प्रयुक्तानि व्याप्रियन्ते तत्राऽऽह । **यथोक्तेति** । शक्तिशब्देन शक्तिमन्ति द्रव्याणि गृहीतानि । कथं मनोबुद्ध्योर्भेदोऽन्तःकरणमेव हि द्विधोच्यते तत्राऽऽह । **संकल्पेति** ॥ ३६९ ॥

**योग्येन्द्रियस्य या यस्य ततोऽन्यत्रापि लक्षिता ॥**
**वृत्तिस्तस्यैव सा ज्ञेया न स्वभावविपर्ययः ॥ ३७० ॥**

यत्तु शब्दव्यञ्जकत्वेन श्रोत्रादेराकाशविकारत्वं तदयुक्तं तैजसे चक्षुष्यपि तद्व्यञ्जकत्वदृष्टेश्चक्षुःश्रवाः सर्प इति हि प्रसिद्धिः । यच्च हस्तत्वचोः स्पर्शवदादानसाधनत्वाद्वायवीयत्वं तदसत्पादादौ व्यभिचारान्न चासति प्रतिबन्धे विशिष्टस्पर्शित्वात्पादादेस्तैजसत्वं हस्तादावपि तद्भावान्न च स्निग्धत्वात्पाय्वादेराप्यत्वं घृतादौ व्यभिचाराच्च च गन्धवत्त्वादुपस्थादि पार्थिवं पाय्वादावपि तद्भावादतो नेन्द्रियाणां कार्यव्यवस्थया भौतिकत्वमित्यत आह । **योग्येति** । यस्य श्रोत्रादेर्या योग्या श्रवणाद्या वृत्तिः सा चक्षुरादौ दृष्टाऽपि तस्यैव श्रोत्रादेर्ज्ञेया स्वभाववैपरीत्यायोगात्स्थानभेदाभावेऽपीन्द्रियभेदस्य कार्यभेदगम्यस्य दुरपह्नवत्वादित्यर्थः ॥ ३७० ॥

**एवं ज्ञानक्रियाशक्तिविक्षेपाज्जगदात्मनः ॥**
**करणायतनत्वाय देहाविर्भूतिरात्मनः ॥ ३७१ ॥**

इत्थं करणव्यवस्थायामपि देहसृष्टिरश्लिष्टा तदभावेऽपीन्द्रियव्यापारादात्मनो बन्धसिद्धेरित्याशङ्क्याऽऽह । **एवमिति** । उक्तनीत्या द्विविधेन्द्रियव्यापाराद्यो जगदात्मा संसारी तस्य करणाश्रयत्वाय देहसृष्टिर्न चाधिष्ठानमन्तरेणेन्द्रियव्यापारः संभवतीति हि **वृद्धाः** । देहश्च पाञ्चभौतिकः शब्दादिपञ्चकस्य तत्रोपलम्भादिति भावः ॥ ३७१ ॥

**एवं च सति यद्यस्मात्कार्यमाविरभूत्पुरा ॥**
**तत्तु तत्रैव विलयं कार्यमेति स्वकारणे ॥ ३७२ ॥**

कार्य[1]करणयोर्भौतिकत्वे भूतेषु लयभावात्फलं लम्भयति । **एवं चेति** ॥ ३७२ ॥

**मूलकारण एवैषां सर्वेषां विलयो भवेत् ॥**
**तत्कारणत्वात्कार्याणां न तु कार्यान्तरे लयः ॥ ३७३ ॥**

भूतेषु कार्यकरणलयेऽपि तेषां ब्रह्मणोऽन्यत्र स स्यादिति चेत्तत्राऽऽह । **मूलेति** । तत्कारणत्वान्मूलकारणकार्यत्वाद्भूतानामित्यर्थः । तथाऽपि ततोऽन्यत्र तल्लयः स्यादित्याशङ्क्य तस्य कार्यानतिरेकात्कार्ये च कार्यान्तरलयायोगान्नैवमित्याह । **कार्याणामिति** ॥ ३७३ ॥

---

१ क. 'र्यकार' ।

**[1]पिण्डादिष्वेव प्रात्यक्ष्याद्घटादीनां लयादियम् ॥**
**भ्रान्तिः पूर्वेषु कार्येषु लयोऽयमिति मोहतः ॥ ३७४ ॥**

न ब्रह्मण्येव सर्वकार्यलयो मृदादौ कुम्भलयोपलब्धेः कार्यकरणानां च भूतेषु लयस्य त्वयैवेष्टत्वात्तथा च कार्यान्तरेऽपि कार्याणां लयः स्यादित्याशङ्क्याऽऽह । **पिण्डादिष्विति** । मृदादिभावमापन्ने मूलकारणे घटादिलयाङ्गीकारान्न कार्ये कार्यान्तरलयस्तथाऽपि पिण्डादिकार्येषु घटादिलयस्य प्रात्यक्ष्याद्ब्रह्मणोऽर्वाक्षु मृदादिष्वेव कार्यान्तरलय इति भ्रान्तिरविवेकाद्भवतीत्यर्थः ॥ ३७४ ॥

**एवं त्वगादिवाच्यासु स्पर्शादीनां यथायथम् ॥**
**स्पर्शादिमात्रासु लयस्तासामपि लयस्तथा ॥ ३७५ ॥**
**मनोविषयसामान्ये तस्यापि प्रलयो धियः ॥**
**स्वगोचरैकसामान्ये सरितां सागरे यथा ॥ ३७६ ॥**
**बुद्धेर्विषयविज्ञानसामान्यमपि चाऽऽत्मनि ॥**
**परस्मिँल्लयविक्षेपरहितेऽपरिणामिनि ॥ ३७७ ॥**

मूलकारणे ब्रह्मणि भूतभौतिकलयं प्रतिपाद्यैवं सर्वेषां स्पर्शानामित्यादिभाष्यमुक्तार्थे योजयति । **एवमिति** । यथायथमिति त्वग्वाच्यस्पर्शमात्रायां स्पर्शविशेषाणां चक्षुर्वाच्यरूपमात्रायां रूपविशेषाणां लय इत्यादि ज्ञेयमित्यर्थः । आत्मन्यपरिणामिनि लीयत इति शेषः । तदपरिणामित्वसिद्धये लयेत्यादि विशेषणम् ॥ ३७५ ॥ ३७६ ॥ ॥ ३७७ ॥

**वदनादिस्वसामान्यविषयेषु तथा लयः ॥**
**कर्मेन्द्रियाणां सर्वेषां तत्सामान्येषु पञ्चसु ॥ ३७८ ॥**

स यथा सर्वासामित्यारभ्यैवं सर्वेषां कर्मणामित्यस्मात्प्राक्तनसंदर्भः संक्षेपविस्तराभ्यां व्याख्यात इदानीमेवं सर्वेषां कर्मणामित्यादेस्तात्पर्यमाह । **वदनादीति** । कर्मेन्द्रियाणां तद्विषयाणां च वदनत्वादिसामान्येषु लयस्तेषां च प्राणे तस्यापि कारणात्मनीत्यर्थः । यथा बुद्धीन्द्रियाणां तदर्थानां च तत्सामान्येषु स्पर्शत्वादिषु पञ्चसु लयस्तथा कर्मेन्द्रियाणां तदर्थानां च वदनादिषु वागादिगोचरीभूतसामान्यात्मसु विषयेषु लय इति योजना ॥ ३७८ ॥

**परिस्पन्दः प्रकाशश्च ज्ञानशक्तेषु विद्यते ॥**
**केवलस्तु परिस्पन्दः कर्मशक्तेषु [2]निष्प्रभः ॥ ३७९ ॥**

प्राणश्चेत्यादिभाष्यतात्पर्यं वक्तुं भूमिकामाह । **परिस्पन्द इति** । केवलशब्दार्थमाह । **निष्प्रभ इति** ॥ ३७९ ॥

१ क. ग. पुस्तकयोः । २ ख. निष्प्रभः ।

**सर्वोऽप्येष परिस्पन्दो बुद्धीन्द्रियसमाश्रयः ॥**
**प्राणात्मक इति ज्ञेयो हन्तास्यैवेति च श्रुतेः ॥ ३८० ॥**

प्राणश्च ज्ञानमात्रमेवेतिभाष्यतात्पर्यमाह । **सर्वोऽपीति** । परिस्पन्दस्य प्राणात्मकत्वाद्द्विविधेन्द्रियाणां च परिस्पन्दात्मकत्वाद्यो वै प्राणः सा प्रज्ञेति श्रुतेश्च प्राणबुद्ध्योरैक्यादुभयविधेन्द्रियाणां सिद्धं प्राणत्वमित्यर्थः । तेषां प्राणत्वे मानमाह । **हन्तेति** ॥ ३८० ॥

**पड्वीशशङ्कुदृष्टान्तात्प्राणस्यैव तु शक्तयः ॥**
**कर्मेन्द्रियाणि सर्वाणि तथा बुद्धीन्द्रियाण्यपि ॥ ३८१ ॥**

द्विविधेन्द्रियाणां तदात्मत्वे श्रुत्यन्तरं प्रमाणयति । **पड्वीशेति** । यथा पादबन्धनकीलभूतशङ्कुनपर्यायेण चतुरोऽपि जात्योऽश्वः समुत्पाटयत्येवं प्राणो वागादीनुत्खिदतीति श्रुत्युक्तेन्द्रियाणि प्राणाधीनतया तद्रूपाणीत्यर्थः ॥ ३८१ ॥

**आपीतकरणग्रामे पुंसि स्वात्मन्यवस्थिते ॥**
**तथा प्राणाग्नयः शुद्धा जाग्रतीति श्रुतेर्वचः ॥ ३८२ ॥**

तेषां प्राणाधीनतया तदात्मत्वेन लये वाक्यान्तरमाह । **आपीतेति** । यथोक्तेन्द्रियलयानुरोधेनेति यावत् ॥ ३८२ ॥

**सहैव कर्मशक्त्याऽतो ज्ञानशक्तिर्विलीयते ॥**
**प्राणात्मनि श्रुतिश्चाऽऽह कस्मिन्निति च सादरा ॥ ३८३ ॥**

तेषां प्राणतादात्म्ये फलितमाह । **सहैवेति** । प्राणस्य परस्मिन्प्रलयमभिप्रेत्य तस्य तत्कारणत्वे कस्मिन्न्वहमुत्क्रान्तो भविष्यामीत्यादि मानमाह । **श्रुतिश्चेति** । प्राणविषयानुभवसमुच्चयार्थश्चकारः । द्वितीयस्तु स प्राणमसृजतेत्यादिवाक्यान्तरार्थः ॥ ३८३ ॥

**साधारणोऽयं विलयः समानान्तोऽभिधीयते ॥**
**स्वहेतुमात्रसंसर्गान्नायमात्यन्तिको लयः ॥ ३८४ ॥**

किंच सर्वप्राणिसाधारणो योऽत्र प्राकृतो लयः स समानशब्दितकारणान्तः सन्पञ्चमान्तेऽपि वक्ष्यते तदत्र वाक्यशेषानुगुण्यमस्तीत्याह । **साधारण इति**। चातुर्थिकस्य पाञ्चमिकस्य चास्य लयस्य साधारणत्वे हेतुमाह । **स्वहेत्विति** ॥ ३८४ ॥

**ज्ञानशक्तिक्रियाशक्तिविभुत्वात्परमक्षरम् ॥**
**व्युह्याऽऽत्मानं जगत्त्वेन स्वात्मन्येव समूहति ॥ ३८५ ॥**

कथं पञ्चमान्ते कारणान्तो लय उक्तस्तत्राऽऽह । **ज्ञानेति** । ब्रह्म सर्वशक्तित्वादात्मानमेव प्रपञ्चतया विस्तार्य स्वात्मनि तमुपसंहृत्य स्वयमेव तिष्ठतीति पञ्चमशेषे भविष्यतीत्यर्थः ॥ ३८५ ॥

---

१ क. ग. तदा । २ क. ग. यतः ।

**निरुह्येति तथा श्रुत्या कारणात्माऽभिधीयते ॥**
**अत्यक्रामदिति त्वस्य निर्बीजावस्थतोच्यते ॥ ३८६ ॥**

तत्र प्राणादिकार्यवाचिशब्दसत्त्वेऽपि कारणवाची शब्दो नास्तीत्याशङ्क्याऽऽह । **निरुह्येतीति** । प्राणादीन्प्रसार्याऽऽत्मानं च तत्र प्रवेश्य स्थित इत्युक्तार्थानुसारेण कारणमुक्तमित्यर्थः । तर्हि तदेवास्तु वास्तवं तत्त्वं नेत्याह । **अत्यक्रामदितीति** ॥३८६॥

**यत एवमतोऽशेषज्ञानशक्तिलयात्परम् ॥**
**सर्वकार्योपसंहारी प्राण एकोऽवतिष्ठते ॥ ३८७ ॥**

यस्मादत्र निरुह्येत्येवं मूलकारणमुक्तं तस्मादेव पञ्चमस्थया **कस्मिन्नु** त्वं चाऽऽत्मा च प्रतिष्ठितावित्यादिश्रुत्या संहारक्रमः कथ्यते तथाच तत्र कारणोक्तावपि कुतस्तदन्तलयोक्तिरिति नाऽऽशङ्क्येत्याह । **यत इति** ॥ ३८७ ॥

**प्राणोऽपाने तथाऽपानो व्यानात्मनि विलीयते ॥**
**व्यानोऽप्युदानमप्येति ह्युदानोऽपि समानगः ॥ ३८८ ॥**

प्राणो वृत्तिविशेषोऽपाने लयश्रुतेर्मुख्यस्य तदयोगान्न च तस्य सर्वकार्यसंहर्तृत्वायोगः सर्वव्यवहारान्वयव्यतिरेकवत्त्वादित्याह । **प्राण इति** । प्राणस्यापाने लयवदपानस्य व्याने व्यानस्योदाने तस्यापि समाने लयो भवतीत्याह । **तथेति** । अस्यार्थस्य पञ्चमे सिद्धत्वार्थो हिशब्दः ॥ ३८८ ॥

**कारणात्मैव जगतः समानोक्त्याऽभिधीयते ॥**
**सर्वसाधारणः सोऽयं प्राकृतः प्रलयो मतः ॥ ३८९ ॥**

समानशब्दस्यापि प्राणादिशब्दवद्वृत्तिविशेषार्थत्वमाशङ्क्याऽऽह । **कारणात्मेति** । प्रकृतानुगुणवाक्यशेषार्थं संक्षेपतो व्युत्पाद्य स्वाभाविकं लयमुपसंहरति । **सर्वेति** ॥३८९॥

**प्रज्ञानघनताऽप्यस्य न बुद्धिप्रज्ञयोच्यते ॥**
**प्रत्यक्प्रज्ञोत्थिताभाससंबन्धात्प्राज्ञ उच्यते ॥ ३९० ॥**

ननु प्राकृतलये सर्वकार्यलयोऽस्ति न वा न चेन्न सुषुप्तेः स्वप्नाद्विशेषः कतिपयकार्यलयस्य स्वप्नेऽपि भावादस्ति चेत्प्राज्ञः कारणबद्धस्त्वानन्दभुक्तथा प्राज्ञ इत्यादि विरुध्येत तत्तद्बुद्धेर्लीनत्वात्तत्तद्वृत्तिप्रज्ञाभावे प्राज्ञतायोगादत आह । **प्रज्ञानेति** । प्राकृतलयस्य बुद्ध्यधीनत्वाभावं दृष्टान्तयितुमपिशब्दः । कथं तर्हि श्रौतं प्राज्ञत्वं तदाह । **प्रत्यगिति** ॥ ३९० ॥

**यन्निमित्तं प्रमाणानि प्रामाण्यमिह बिभ्रति ॥**
**तदविज्ञातयाथात्म्यमेतत्कारणमुच्यते ॥ ३९१ ॥**

आत्माभासयोगात्कारणस्य प्राज्ञत्वे कारणात्मनोर्भेदात्ते सिद्धान्तहानिरित्याशङ्क्याऽऽह । **यन्निमित्तमिति** । यदज्ञानमात्मतत्त्वं विषयीकृत्य व्यवहारभूमौ प्रत्यक्षा-

दीनि प्रामाण्यं लभन्ते तज्जगत्कारणमिति श्रुतिस्मृतिवादेषूच्यते तत्कुतो द्वैतमित्यर्थः ॥ ३९१ ॥

**यस्मिञ्ज्ञाते भवेज्ज्ञातं जगदेतच्चराचरम् ॥**
**अज्ञाते च तथाऽज्ञातमेतदेव तदुच्यते ॥ ३९२ ॥**

आत्मैवाज्ञानद्वारा कारणमित्यत्रैकविज्ञानेन सर्वविज्ञानश्रुतिं प्रमाणयति । **यस्मिन्निति** । यज्ज्ञाने ज्ञातं सर्वं यदज्ञाने चाज्ञातं तदेवैतत्कारणमुपनिषदधिगतमुपादानातिरिक्तोपादेयाभावादिति भावः ॥ ३९२ ॥

**नन्विह प्रलयः श्रुत्या विषयस्यैव भण्यते ॥**
**करणस्य तु नैवोक्तस्तत्कस्मादिति भण्यते ॥ ३९३ ॥**

यद्यपि प्राकृते लये बुद्ध्यादिलयस्त्वया साध्यते तथाऽपि नासौ श्रौतस्तत्र को हेतुरिति पृच्छति । **नन्विति** । करणलयस्येष्टस्यापि श्रुत्या मुखतोऽनुक्तौ हेतुं प्रतिजानीते । **भण्यत इति** ॥ ३९३ ॥

**स्वगोचरसजातीयं करणं मन्यते श्रुतिः ॥**
**विषयस्य लयोक्त्याऽन्तःकरणप्रलयोक्तता ॥ ३९४ ॥**

तदेव प्रकटयति । **स्वगोचरेति** । तत्साजात्यं करणस्य प्रागेव व्यक्तीकृतम् । साजात्यफलं दर्शयति । **विषयस्येति** ॥ ३९४ ॥

**एवं मन्तव्य आत्माऽयं तर्कतः प्राग्यथोदितः ॥**
**दुन्दुभ्याद्युक्तदृष्टान्तन्यायमार्गेण यत्नतः ॥ ३९५ ॥**
**आत्मसामान्यसंभूतिलयहेतुसमाश्रयात् ॥**
**आत्मैव सर्वमित्येष प्रतिज्ञार्थः समर्थितः ॥ ३९६ ॥**

मननविधिप्रपञ्चमुपसंहरति । **एवमिति** । यथाऽयमात्मा तर्कतो मन्तव्य एवं प्रागुक्त इति योजना । उक्तं तं प्रकारमेव दर्शयति । **दुन्दुभ्यादीति** । अनेकदृष्टान्तद्वारेणानेकहेतूपन्यासो यथोक्तार्थसमर्थने यत्नः ॥ ३९५ ॥ ३९६ ॥

**स्वाभाविकोऽयं प्रलय इति पौराणिका जगुः ॥**
**बुद्धिपूर्वस्तु विलयः सम्यग्ज्ञानैकपूर्वकः ॥ ३९७ ॥**

स यथेत्यादेर्वाक्यार्थधीप्रकटनार्थस्य विषयपरिशेषार्थमुक्ते लये पौराणिकसंमतिमाह । **स्वाभाविक इति** । नैमित्तिकस्वाभाविकात्यन्तिकभेदात्त्रिविधो लयः । **उक्तं हि**—

"सर्वेषामेव भूतानां त्रिविधः प्रतिसंचरः ॥
नैमित्तिकः प्राकृतिकस्तथैवाऽऽत्यन्तिको लयः" इति ॥

तत्राऽऽद्यो ब्रह्मकर्तृकोऽवान्तरलयः । **यथाऽऽह**—ब्राह्मो नैमित्तिकस्तेषां कल्पान्ते **प्रतिसंचर इति** । द्वितीयस्तु कार्याणां प्रकृताववसानम् । आत्यन्तिको ज्ञानाधीनो

मोक्ष इत्याह । बुद्धिपूर्वस्त्विति । उक्तं च—आत्यन्तिकश्च मोक्षाख्यः प्राकृतो द्विपरार्धिक इति ॥ ३९७ ॥

**शक्तिमात्रात्मना स्थानं कार्याणां यत्स्वकारणे ॥**
**इत्यनात्यन्तिकलयो भूयोजन्मकृतक्षणः ॥ ३९८ ॥**

स्वाभाविकलयस्य धीपूर्वलयाद्विशेषमाह । **शक्तीति** । स्वाभाविके लये कार्याणां कारणे शक्त्यात्मनाऽवस्थानमिति यस्मादास्थितं तस्मादसावनात्यन्तिक इति योजना । अनात्यन्तिकत्वं विशदयति । **भूय इति** । पुनरपि जन्मार्थं कृतावकाशत्वात्प्राकृतोऽयमित्यर्थः ॥ ३९८ ॥

**अतीतानागतेहत्यजन्मनाशादिहेतुनुत् ॥**
**यस्तु धीपूर्वको ध्वंसस्तदर्थेयं परा श्रुतिः ॥ ३९९ ॥**

ततो धीपूर्वलये विशेषं ब्रुवाणस्तदर्थमुत्तरवाक्यमवतारयति । **अतीतेति** । त्रैकाल्यजन्मादिहेत्वज्ञानध्वस्तिर्हि बुद्धिपूर्वो ध्वंसस्तदुपायधीप्रदर्शनायोत्तरा श्रुतिरित्यर्थः ॥ ३९९ ॥

**यथोक्तवस्तुसिद्ध्यर्थं दृष्टान्तोऽयमिहोच्यते ॥**
**यथा सैन्धवखिल्योऽस्तः स्वयोनावुदधाविह ॥ ४०० ॥**
**कठिनोदकविलयमनु खिल्यो विलीयते ।**
**विलीनस्याद्य उद्धृत्य ग्रहणाय न कश्चन ॥ ४०१ ॥**
**निपुणोऽपि नरः शक्तः खिल्यरूपेण पूर्ववत् ॥**
**सामुद्ररूपान्नान्येन ग्रहीतुं कश्चन क्षमः ॥ ४०२ ॥**

तामविशेषेणावतार्य विशेषतो दृष्टान्तश्रुतिमवतारयति । **यथोक्तेति** । कार्यकारणप्रपञ्चस्य तद्विलक्षणे ब्रह्मणि ज्ञानाद्विलयो यथोक्तं वस्तु तत्प्रतिपादनाय श्रुतौ दृष्टान्तोक्तिरित्यर्थः । तदक्षराणि व्याचष्टे । **यथेति** । दार्ष्टान्तिकस्यैवंशब्देन यथाशब्दस्यान्वयो यः सैन्धवखिल्यः स्वयोनावुदके क्षिप्तः कठिनोदकलयानन्तरं लीयत इति योजना । न हास्येत्यादेरर्थमाह । **विलीनस्येति** । पूर्ववत्खिल्यस्योदके प्रक्षेपात्प्रागवस्थायामिवेत्यर्थः । तत्र हेतुं वक्तुं प्रतिज्ञामनुवदति । **सामुद्रेति** । तद्रूपं सलिलमात्रम् ॥ ४०० ॥ ॥ ४०१ ॥ ४०२ ॥

**आददीत समुद्राम्भस्तं जिघृक्षुर्यतो यतः ॥**
**ततस्ततस्तल्लवणं वेत्ति खिल्यं न कुत्रचित् ॥ ४०३ ॥**

यतो यतस्त्वित्यादिहेतुवाक्यार्थमाह । **आददीतेति** । तं जिघृक्षुः खिल्यग्रहेच्छावानित्यर्थः ॥ ४०३ ॥

**सामुद्रमम्भः खिल्यत्वं याति भानुविपाकतः ॥**
**सिन्धोरायातः स यतस्तस्मात्सैन्धव उच्यते ॥ ४०४ ॥**

दृष्टान्तवाक्यार्थं संक्षिप्य प्रपञ्चयन्खिल्यत्वे निमित्तमाह । **सामुद्रमिति** । सैन्धव-शब्दार्थमाह । **सिन्धोरिति** ॥ ४०४ ॥

**असंभिन्नस्वावयवः खिल्यः सोऽथ निगद्यते ॥**
**सोऽयं सैन्धवखिल्योऽस्तो यथैवेह महोदधौ ॥ ४०५ ॥**

खिल्यपदार्थमाह । **असंभिन्नेति** । स्वावयवानामसंभिन्नत्वं मिथःसंसृष्टतया दार्ढ्यम् । अथेति स्वयोनावुदके प्रक्षेपात्प्रागवस्थायामित्यर्थः । पदयोरर्थमुक्त्वा वाक्यार्थमाह । **सोऽयमिति** । यन्निमित्तमुदकं खिल्यरूपेण परिणतं तद्विरोधिनीं प्रकृतिं प्राप्य तदेव खिल्यरूपं तेजो जहातीत्यर्थः । अथशब्दो विरोधिप्राप्तेस्तेजसम्त्यागहेतुत्वद्योत-नार्थः ॥ ४०५ ॥

**तेजो विरोधिनीं प्राप्य प्रकृतिं विजहात्यथ ॥**
**तेजोवियोगात्काठिन्यं ध्वस्ती भवति तद्धनम् ॥ ४०६ ॥**

पाचके तेजसि त्यक्तेऽपि खिल्यरूपस्थितिमाशङ्क्याऽऽह । **तेज इति** ॥ ४०६ ॥

**काठिन्यकारणध्वस्तौ खिल्यस्येह महोदधौ ॥**
**कठिनोदकविध्वंसमनु खिल्यो विलीयते ॥ ४०७ ॥**

एतदेव स्फुटयति । **काठिन्येति** । खिल्यस्य महोदधौ क्षिप्तस्य काठिन्यहेतुतेजःसं-पर्कध्वस्तौ कठिनोदकध्वंसद्वारा खिल्यस्यापि ध्वस्तिरित्यर्थः ॥ ४०७ ॥

**यदेवाकृत्रिमं रूपं तदेवास्यावशिष्यते ॥**
**तेजोवयवसंबन्धसमुत्थं विनिवर्तते ॥ ४०८ ॥**

अवशिष्टमर्थमाह । **यदेवेति** । अस्य खिल्यस्येति यावत् । तच्चोदकमात्रम् । अकृ-त्रिमत्वं काठिन्येऽपि तुल्यमित्याशङ्क्याऽऽह । **तेज इति** ॥ ४०८ ॥

**तेजआद्यभिसंबन्धः कारणं खिल्यरूपिणः ॥**
**तद्भावभावतस्तस्य तद्ध्वस्तौ ध्वंसतस्तथा ॥ ४०९ ॥**

तर्हि तद्योगमात्रं खिल्यताहेतुरिति व्यर्थं पृथिव्यादीत्याशङ्क्याऽऽह । **तेजआदीति** । तेजोवत्पृथिव्यादेरपि तद्धेतुत्वे हेतुमाह । **तद्भावेति** । अन्वयव्यतिरेकाभ्यां हि कारणं कल्पते तौ च तेजसीव पृथिव्यादावपि तुल्यौ तेनाविशिष्टं कारणत्वमित्यर्थः ॥ ४०९ ॥

**एवं वा अर इत्यस्य कार्यकारणरूपतः ॥**
**प्रतीचो वास्तवं वृत्तं विरुद्धमभिधीयते ॥ ४१० ॥**

दृष्टान्तं संक्षेपविस्तराभ्यामुक्त्वा दार्ष्टान्तिकं व्याख्यास्यन्नेवमित्यादेरर्थमाह । **एव-**

**मिति** । एतद्वाक्यस्येदमाऽस्य प्रतीचः कारणादिविरुद्धं वास्तवं रूपमुच्यत इत्यक्षरार्थः ॥ ४१० ॥

**अव्यावृत्तानुगतब्रह्मत्वप्रतिपत्तये ॥**
**महदित्यभिधानं स्यात्कौटस्थ्यार्थं च भूतगीः ॥ ४११ ॥**

महद्भूतमितिपदद्वयस्यार्थमाह । **अव्यावृत्तेति** ॥ ४११ ॥

**वास्तवं वृत्तमाश्रित्य प्रतीचः प्राक्प्रबोधतः ॥**
**स्वतःसिद्धस्य विज्ञप्त्यै महदित्यादि भण्यते ॥ ४१२ ॥**

प्रतीचो महत्त्वादि मोक्षदशायामेवेत्याशङ्क्याऽऽह । **वास्तवमिति** । प्रागपीत्यपिशब्दोऽध्याहर्तव्यः । स्वतःसिद्धस्य महदित्यादिरूपस्येति शेषः ॥ ४१२ ॥

**कारणस्य निषेधोक्तिरनन्तमिति यद्वचः ॥**
**अपारमिति कार्यस्य पारः कार्यस्य कारणम् ॥ ४१३ ॥**

अनन्तमपारमित्यनयोरर्थमाह । **कारणस्येति** । कथमपारपदेन परस्य कार्यत्वं निरस्यते तत्राऽऽह । **पार इति** । अपूर्वमिति कारणे निषिद्धे कार्यत्वमस्य निरसितुं सुशकमित्यर्थः ॥ ४१३ ॥

**कारणस्य तथा कार्यमन्तोऽनादेः प्रसिद्धितः ॥**
**जात्यन्तरनिषेधाय विज्ञानघनगीरपि ॥ ४१४ ॥**

तथाऽपि कथमनन्तपदेन कारणत्वमस्य निषिध्यते तत्राऽऽह । **कारणस्येति** । अनादि हि कारणमन्यथाऽनन्वयादनवस्थानाच्च तस्य कार्यमन्तस्तत्रान्तत्वप्रसिद्धेर्न हि मृदादि घटाद्यापन्नं शरावादि करोति ततोऽनपरामिति कार्यनिरासात्कारणत्वं परस्य निषेद्धुं शक्यमित्यर्थः । विज्ञानघनपदार्थमाह । **जात्यन्तरेति** । ज्ञप्तेरर्थान्तरं जात्यन्तरम् ॥ ४१४ ॥

**क्षेत्रज्ञाकाशयोरेवं कार्यकारणसंगतिः ॥**
**अब्धिस्थानीयमैकात्म्यं प्राप्योक्तेर्विनिवर्तते ॥ ४१५ ॥**

एवकारार्थमाह । **क्षेत्रज्ञेति** । तत्त्वमादिवाक्याज्जीवेश्वरयोरैक्यं ज्ञात्वा तद्बलात्कार्यकारणाख्यं जगन्निवर्तत एवं सत्यैकरस्यमेव पर्यवस्यतीत्यर्थः ॥ ४१५ ॥

**कार्यकारणविध्वस्तौ ब्रह्मैकात्म्यप्रबोधतः ॥**
**न विशेषात्मलाभोऽस्ति खिल्यस्येव महोदधौ ॥ ४१६ ॥**

ज्ञानात्कार्यकारणध्वस्तौ ध्वस्तमपि जीवत्वं पुनरुदेष्यतीत्यानिर्मोक्षप्रसक्तिमाशङ्क्याऽऽह । **कार्येति** । न हि भूयो जीवभावो हेत्वभावान्न खलु खिल्यस्य महोदधौ क्षिप्तस्य ध्वस्तस्य तस्यैव पुनरुद्भवोऽस्तीत्यर्थः ॥ ४१६ ॥

तेजःसंबन्धमासाद्य यथाऽम्भः खिल्यतामगात् ॥
तथैवाज्ञानभूतेभ्यः परः क्षेत्रज्ञतां ययौ ॥ ४१७ ॥

ज्ञानादज्ञानस्यैव ध्वस्तिर्न कार्यकारणत्वस्य जीवत्वस्य चेत्याशङ्क्य सर्वस्यानात्मनोऽज्ञानजत्वाज्ज्ञानात्तद्ध्वस्तौ ध्वस्तिः फलतीति ब्रुवन्नेतेभ्य इत्याद्यवतारयति । **तेज इति** ॥ ४१७ ॥

कार्यात्माऽपचयं गच्छन्यत्र निष्ठां निगच्छति ॥
तानि भूतान्यविद्येति प्राहुस्त्रय्यन्तनिष्ठिताः ॥ ४१८ ॥

भूतशब्दस्य महाभूतेषु रूढत्वात्कथं परस्य क्षेत्रज्ञत्वमज्ञानरूपभूतेभ्योऽभिधीयते तत्राऽऽह । **कार्यात्मेति** । यत्र सर्वं कार्यं लीयते तन्मूलकारणमविद्याभूतशब्देनोच्यते यदाहाऽऽचार्यवाचस्पतिर्नामरूपबीजशक्तिभूतमव्याकृतं भूतसूक्ष्ममिति प्रसिद्धभूतानां क्षेत्रज्ञोत्थापकत्वानुपपत्तेरित्यर्थः ॥ ४१८ ॥

परः कारणकार्येभ्य आत्मा पूर्णत्वकारणात् ॥
एतेभ्योऽविद्याभूतेभ्यः कार्यकारणतामगात् ॥ ४१९ ॥

तर्हि तदुत्थापकानि कार्यकारणान्येवात्र भूतानीत्याशङ्क्याऽऽह । **पर इति** । आत्मा पूर्णत्वात्परिच्छिन्नकारणादिविलक्षणः सोऽविद्यात्मकभूतवशात्तद्भावं गतो मूलाविद्याऽत्र कार्यादिभूता भूतशब्देत्यर्थः ॥ ४१९ ॥

यतोऽविद्यैव तद्धेतुस्तदुच्छित्तावतो न सन् ॥
कार्यकारणभेदोऽयं ब्रह्मात्मैक्यविबोधतः ॥ ४२० ॥

सर्वस्यानात्मनोऽविद्याजत्वे फलितमाह । **यत इति** ॥ ४२० ॥

तस्मिन्ध्वस्तेऽथ संबोधात्कैवल्यैकात्म्यशेषतः ॥
विशेषसंज्ञा नास्त्यस्य पूर्णप्रज्ञप्तिमात्रतः ॥ ४२१ ॥

केचित्तु कार्यनिवृत्तिं शून्यतावसायिनीमाहुस्तान्निवर्तयन्भेदनिवृत्तिफलमाह । **तस्मिन्निति** । ऐक्यसंबोधस्याऽऽविद्यबन्धध्वंसे हेतुत्वसमर्थनार्थोऽथशब्दः । संज्ञाभावे कैवल्यस्यापुमर्थत्वमाशङ्क्योक्तम् । **अस्येति** ॥ ४२१ ॥

अविचारितसिद्धीनि यान्यविद्येत्यवादिषम् ॥
एतेभ्यो हेतुभूतेभ्यो भूतेभ्योऽकार्यकारणः ॥ ४२२ ॥
कार्यकारणवद्रूपं समुत्थायेति शब्द्यते ॥
अविद्यासंततेरस्य जायतेऽनेकरूपवान् ॥ ४२३ ॥

भूतशब्दार्थमनूद्य समुत्थायेत्यस्यार्थमाह । **अविचारितेति** । योऽकार्यकारणः पर-

---

१ ख. °णबोधोऽयं ।

स्तस्य यथोक्तभूतेभ्यो भवत्तत्तद्विशिष्टरूपमुत्थायेत्यत्र समुत्थानमित्यर्थः । तत्प्रपञ्चयन्नात्मनोऽविद्ययाऽनेकाकारावाप्तिमाह । अविद्येति ॥ ४२२ ॥ ४२३ ॥

**चेतनाचेतनाभास आत्मानात्मत्वलक्षणः ॥**
**कार्यकारणरूपेण मिथोपेक्षाश्रयं तमः ॥ ४२४ ॥**

अनेकरूपवन्तं स्वभावं विशदीकुर्वाणश्चिदाभासवैशिष्ट्यं तस्याऽऽचष्टे । **चेतनेति** ॥ ४२४ ॥

**कार्यकारणतां यात आत्माऽप्येवं तमोवशात् ॥**
**स्वाभासैर्बहुतामेति मनोबुद्ध्याद्युपाधिभिः ॥ ४२५ ॥**

अविद्यायामेवमनेकरूपत्वेऽपि प्रतीचि किमायातमित्याशङ्क्याऽऽह । **कार्येति** । न केवलमात्माऽज्ञानवशात्कार्यकारणतां गतः किंतु स्वाभासविशिष्टाविद्याकृतबुद्ध्याद्युपाधिवशान्मातृत्वादिभावं चाऽऽसवानित्याह । **स्वाभासैरिति** ॥ ४२५ ॥

**तमोहेतु समुत्थानं न वेद्मीत्यग्रहात्मकम् ॥**
**मिथ्याज्ञानं तमः कुर्वदीदृगेव करोति तत् ॥ ४२६ ॥**

समुत्थानमित्थमुक्त्वा तत्र क्रममाह । **तम इति** । सर्वमात्मनः समुत्थानमज्ञानजमिति न विवादस्तच्च तमोऽज्ञानमादौ न वेद्मि मूढोऽस्मीत्यग्रहात्मकं मिथ्याज्ञानं कुर्वदेव तत्सदृशमिथ्याज्ञानान्तरं करोतीत्यर्थः ॥ ४२६ ॥

**अविद्याकार्यबुद्धिस्थप्रत्यगाभासरूपवत् ॥**
**बोद्धेत्यादिसमुत्थानं भण्यते परमात्मनः ॥ ४२७ ॥**

अविद्यामात्रनिमित्तमुत्थानमुक्त्वा तत्कार्यबुद्ध्यादिकृतं तदाह । **अविद्येति** । आदिशब्देन भोक्तृत्वाद्युक्तिः ॥ ४२७ ॥

**श्रोता स्प्रष्टेतिरूपः स्यात्तथैवेन्द्रियवृत्तिभिः ॥**
**दुःखी गौरो द्विजश्चेति शरीरोत्थानतः परः ॥ ४२८ ॥**

इन्द्रियनिमित्तमुत्थानमाह । **श्रोतेति** । इन्द्रियाण्येव वा तद्वाह्यिका या वृत्तयस्ताभिरिति यावत् । स्थूलदेहकृतं तदाह । **दुःखीति** ॥ ४२८ ॥

**धनी गोमान्दरिद्रो वा धनाद्यर्थात्मसंगतः ॥**
**अतद्वानपि संमोहाद्यथोक्तात्मकतामगात् ॥ ४२९ ॥**

देहवतो धनादिसंबन्धकृतं तदाह । **धनीति** । आत्मशब्दो देहविषयः । आत्मनो मिथ्याभूतमुत्थानमुपसंहरति । **अतद्वानिति** ॥ ४२९ ॥

**प्रत्यग्याथात्म्यमोहोत्था विरिञ्चाद्युपक्रमा मृषा ॥**
**क्षेत्रक्षेत्रज्ञभेदेन या स्थाणावस्थितिर्दृशेः ॥ ४३० ॥**

तान्येवेत्यादि व्याख्यातुं वृत्तं कीर्तयति । **प्रत्यगिति** । आ विरिञ्चादा च स्थाणोर्द्विविधोत्थानस्य मोहोत्थत्वमेव मृषात्वे हेतुरिति द्योतयितुं हिशब्दः ॥ ४३० ॥

**यथावस्तु यदा बोधो वेदान्तोक्तिश्रुतेर्भवेत् ॥**
**तदा नश्यन्ति भूतानि येभ्यः क्षेत्रज्ञतां गतः ॥ ४३१ ॥**

तद्व्याचष्टे । **यथेति** । वेदान्तवाक्यश्रवणाद्वस्त्वनुसारी बोधो यदा भवति तदा भूतान्यविद्याशब्दितानि नश्यन्ति ततो हेत्वभावात्क्षेत्रज्ञत्वाद्युत्थानमपि नश्यतीत्यर्थः ॥ ४३१ ॥

**स्वरूपलाभमात्रेण सम्यग्बोधोऽखिलं तमः ॥**
**यतो हन्ति ततो नासावभ्यासं प्रति वीक्षते ॥ ४३२ ॥**

अभ्यासमपेक्ष्य बोधोऽविद्यातज्जध्वंसीत्येकदेशिमतं प्रसङ्गात्प्रत्याह । **स्वरूपेति** ॥ ४३२ ॥

**व्यङ्ग्येष्वर्थेषु नाऽऽवृत्त्या व्यञ्जको हन्ति तत्तमः ॥**
**व्यञ्जकस्य स्वभावोऽयं न प्रयोगमपेक्षते ॥ ४३३ ॥**

ज्ञानमावृत्त्यनपेक्षमज्ञानादिध्वंसीत्येतद्दृष्टान्तेनाऽऽह । **व्यङ्ग्येष्विति** । विमतमावृत्त्यनपेक्षं तमोनिवर्तकं व्यञ्जकत्वाद्दीपवदित्यर्थः । उक्तस्य हेतोर्व्याप्तिं विवक्षित्वा ब्रूते । **व्यञ्जकस्येति** ॥ ४३३ ॥

**मोहतत्कार्यनीडो यस्तस्याज्ञानसमन्वयात् ॥**
**प्रत्यगात्माऽपि तद्ब्रह्म परोक्षमभवन्मृषा ॥ ४३४ ॥**

ऐक्यज्ञानादज्ञानहानिश्चेदैक्यस्य सदाभावाद्ब्रह्मणि प्रत्यगभिन्ने पारोक्ष्यं ब्रह्माभिन्ने चाऽऽत्मनि संसारित्वं कथमित्याशङ्क्य ब्रह्मणि पारोक्ष्यमज्ञानकृतमित्याह । **मोहेति** । तद्ब्रह्मापरोक्षं प्रत्यक्चिदेकतानमपि मोहात्परोक्षं भवति मोहतत्कार्याश्रितार्थस्य मोहेनान्वयव्यतिरेकवत्त्वाद्वस्तुतो वस्तुन्यसंभवात्तस्माद्यत्साक्षादित्युक्तलक्षणे ब्रह्मणि पारोक्ष्यं मृषेत्यर्थः ॥ ४३४ ॥

**तद्वदद्वयतत्त्वोऽपि तदसंबोधहेतुतः ॥**
**आत्मा संसारितां यातो यथा कार्ष्ण्यं वियत्तथा ॥ ४३५ ॥**

तस्मिन्पारोक्ष्यवदात्मनि ब्रह्माभिन्नेऽपि संसारित्वस्याऽऽविद्यत्वं दृष्टान्तेनाऽऽह । **तद्वदिति** ॥ ४३५ ॥

**आत्मनो ब्रह्मता यस्माद्ब्रह्मणोऽप्यात्मता स्वतः ॥**
**तमोमात्रान्तरायत्वात्तद्ध्वस्तावेव साऽऽप्यते ॥ ४३६ ॥**

तान्येवेत्यादेस्तात्पर्यमुपसंहरति । **आत्मन इति** । तस्मान्नार्थभेदोऽस्तीति शेषः ।

१ ख. ति । ज्ञानमा ।

कथं तर्हि मिथोभेदधीरित्याशङ्क्याऽऽह । **तमोमात्रेति** । ज्ञानादज्ञानध्वस्तौ सविशेषत्वं हित्वा ब्रह्मात्मना तिष्ठतीत्यर्थः ॥ ४३६ ॥

**सर्वमात्मेतिसम्यग्धीजन्मनैवाखिलं तमः ॥**
**ध्वंसमेति ततः संज्ञा नाविद्योत्थाऽवशिष्यते ॥ ४३७ ॥**

न प्रेत्येत्यादेरर्थमाह । **सर्वमिति** ॥ ४३७ ॥

**सदोत्पन्नाऽऽत्मनि मितिरुत्पाद्याऽकारणादिधीः ॥**
**कारणादिधियः पूर्वं प्रतीचि ब्रह्मधीस्ततः ॥ ४३८ ॥**

कथं सा नावशिष्यते प्रतीचि ब्रह्मधियस्तदुत्थायाः शेषादित्याशङ्क्याऽऽह । **सदेति** । अकारणादिधीरिति च्छेदः । आत्मनि कर्तृत्वादिधीरौत्सर्गिकी वाक्यादकर्तृत्वादिधीराधेया तथाच वाक्यीयादैक्यज्ञानात्कर्तृत्वादिधियः पूर्वं ध्वंसस्ततो निरिन्धनाग्निवत्प्रतीचि ब्रह्मधीरपि ध्वंसमेतीत्यर्थः ॥ ४३८ ॥

**अपास्ताशेषभेदस्य यद्रूपं भेदवद्गतम् ॥**
**तज्ज्ञानेनैव तज्ज्ञातं तदन्यानवशेषतः ॥ ४३९ ॥**

तथाऽप्याकाशादिभेददृष्टौ सत्यां कथमविद्योत्थसंज्ञानवशेषस्तत्राऽऽह । **अपास्तेति** । एकरसस्य प्रतीचो यदाकाशादिभेदवद्रूपमधिगतं तत्प्रत्यग्ज्ञानेनैव ज्ञातं तदविद्याविलसितस्य तन्मात्रत्वादतः प्रत्यग्ज्ञानात्कर्तृत्वादिध्वस्तिकाले भेदधीरपि ध्वस्तेत्यर्थः ॥ ४३९ ॥

**अहेतुफलरूपेण प्रतीचा तद्विलक्षणम् ॥**
**कार्यकारणवज्जग्ध्वा दृष्ट्वैकोऽवशिष्यते ॥ ४४० ॥**

विशेषसंज्ञाध्वस्तौ शिष्टमर्थमाह । **अहेत्विति** । नानारूपं जगदेकरूपप्रत्यङ्मात्रत्वेनोपसंहृत्य चिदात्मैवैकः शिष्टो भवतीत्यर्थः ॥ ४४० ॥

**प्रत्यङ्मात्रेक्षणादात्ममोहतज्जनिराकृतेः ॥**
**असंभवाद्द्वितीयस्य स्यामपूर्वादिमानहम् ॥ ४४१ ॥**

एकत्वसंख्यावत्त्वात्प्रतीचि कार्यकारणवत्त्वसंभवादहेतुफलरूपेणेत्ययुक्तमित्याशङ्क्याऽऽह । **प्रत्यगिति** ॥ ४४१ ॥

**व्यपेततमसस्तत्त्वमागमापायसाक्षिणः ॥**
**ज्ञानेन गम्यते साक्षात्तावन्मात्रानुरोधिना ॥ ४४२ ॥**

संज्ञामात्रस्याज्ञानात्मतया निरस्यत्वाविशेषे किमिति प्रत्यगीक्षणान्मोहादिनिराकृतिर्घटादिज्ञानात्किं न स्यादित्याशङ्क्य विशेषमाह । **व्यपेतेति** ॥ ४४२ ॥

**दृष्टिमात्रात्मयाथात्म्यात्कार्यकारणवस्तुनः ॥**
**नाज्ञातं किंचिदप्यस्ति नानपास्तं तमोऽप्यतः ॥ ४४३ ॥**

घटादिज्ञानात्प्रत्यग्ज्ञाने दर्शितविशेषकृतं फलमाह । **दृष्टीति** । अतःशब्देन प्रत्यग्ज्ञानोक्तिः ॥ ४४३ ॥

**क्षेत्रज्ञेश्वरभेदेन संज्ञा नैवेह विद्यते ॥**
**तद्धेतौ तमसि ध्वस्ते कुतः संज्ञाऽनिमित्ततः ॥ ४४४ ॥**

नेत्यादेरर्थमुपसंहरति । **क्षेत्रज्ञेति** । इहेति विद्यावस्थोक्तिः । तदेव स्फुटयति । **तद्धेताविति** । अनिमित्तत इति च्छेदः । कुतो वा निमित्ततः संज्ञेति संबन्धः ॥ ४४४ ॥

**संज्ञा प्रेत्याऽऽत्मनो नास्तीत्येतच्छ्रुत्वा त्वचूचुदत् ॥**
**शङ्कमानाऽऽत्मनो नाशं मैत्रेयी पतिमादरात् ॥ ४४५ ॥**

निवर्त्यसंज्ञागतमविद्योत्थत्वविशेषणमप्रतीत्य सा हेत्यादेरर्थमाह । **संज्ञेति** ॥ ४४५ ॥

**विज्ञानैकघनोक्त्या च निःसंज्ञवचसा तथा ॥**
**उक्त्योर्मिथोविरुद्धत्वादात्मा मोमुह्यते मम ॥ ४४६ ॥**

अत्रेत्यादेस्तात्पर्यमाह । **विज्ञानेति** । उक्तिभ्यामात्मनो मोहे हेतुमाह । **उक्त्योरिति** ॥ ४४६ ॥

**अविरुद्धं सुविस्पष्टं मया तुभ्यं प्रभाषितम् ॥**
**स्वापराधात्तु मद्वाक्यं विरुद्धार्थं त्वमीक्षसे ॥ ४४७ ॥**

विशेषणं प्रकटीचिकीर्षुः स हेत्यादेस्तात्पर्यमाह । **अविरुद्धमिति** । कथं तर्हि विरोधधीस्तत्राऽऽह । **स्वापराधादिति** ॥ ४४७ ॥

**विज्ञानैकघनोक्त्याऽहं कृत्स्नैकात्म्यं तवाब्रुवम् ॥**
**संज्ञानाशेन चाविद्याहेतूत्थापह्नुतिं तथा ॥ ४४८ ॥**

विज्ञानघन एवेत्युक्त्वा संज्ञा नास्तीति वदता कथमविरुद्धमुक्तमित्याशङ्क्याऽऽह । **विज्ञानेति** ॥ ४४८ ॥

**विशेषसंज्ञा याऽस्याभूद्विज्ञानात्मादिलक्षणा ॥**
**सम्यग्धीध्वस्तमोहस्य सा कृत्स्ना विनिवर्तते ॥ ४४९ ॥**

उत्तरार्धार्थं प्रपञ्चयति । **विशेषेति** ॥ ४४९ ॥

**यत्त्वपारमनन्तं च वास्तवं ज्ञानमात्मनः ॥**
**कूटस्थं तत्स्वतःसिद्धेस्तत्कस्माद्विनिवर्तते ॥ ४५० ॥**

पूर्वार्धोक्तं व्यक्ती करोति । **यत्त्विति** । कौटस्थ्ये हेतुमाह । **स्वतःसिद्धेरिति** । तत्फलमाह । **तत्कस्मादिति** ॥ ४५० ॥

**इतीममर्थं भार्यायै याज्ञवल्क्योऽभ्यभाषत ॥ ४५१ ॥**

---

१ क. °त्वान्मनो मो° ।

**कार्यकारणनाशेऽपि स्वतःसिद्धमनन्यमम् ॥**
**यद्वस्तु तदलं स्वात्मसंवित्त्यै निरपेक्षतः ॥ ४९२ ॥**

स हेत्यादेरर्थमुपसंहरति । **इतीममिति** । विज्ञानात्मादिसंज्ञा ध्वस्ता चेत्कथं वस्तुज्ञानं हेत्वभावादित्याशङ्क्यालमित्यादेरर्थमाह । **कार्येति** । स्वतःसिद्धत्वसिद्ध्यर्थमनन्यममित्युक्तम् ॥ ४९१ ॥ ४९२ ॥

**यत्राज्ञातात्मतत्त्वात्माऽविद्यासंवीतशेमुषिः ॥**
**तत्र मिथ्याग्रहग्रस्तो द्रष्टृदृश्यादिभेदधीः ॥ ४९३ ॥**

यत्र हीत्यादेस्तात्पर्यमाह । **यत्रेति** । अज्ञातात्मकं तत्त्वमेवाऽऽत्मा यस्य स तथा ॥ ४९३ ॥

**यत्राज्ञातात्मयाथात्म्यस्तत्तमोपिहितेक्षणः ॥**
**तत्राविद्योत्थबुद्ध्यादिगुणभूतात्मविभ्रमः ॥ ४९४ ॥**

यदा स्वरूपमविद्योपहतधीरात्मा न वेद तदा स द्वैतदर्शीत्युक्तं प्रपञ्चयति । **यत्रेत्यादिना** ॥ ४९४ ॥

**अविद्यामात्रशेषत्वं जगतः प्रागवादिषम् ॥**
**नर्तेऽविद्यां कार्यमिदं हीति हेतावतः पदम् ॥ ४९५ ॥**

तात्पर्यमुक्त्वाऽक्षराणि व्याचक्षाणो हिशब्दार्थमाह । **अविद्येति** । अव्याकृतविचारादौ । उक्तेऽर्थे हेतुमन्वयव्यतिरेकाभ्यमाख्याति । **नेति** । अविद्यामात्रं द्वैतमिति पूर्वोक्तस्यैव प्रतिपादके हेतौ हीति पदमनन्तरयुक्तमित्याह । **हीतीति** ॥ ४९५ ॥

**सतोऽभिव्यञ्जकं मानं स्वभावोऽयं मितेर्भवेत् ॥**
**अविद्यायाः स्वभावोऽयं यदसत्करणं मृषा ॥ ४९६ ॥**

ननु प्रपञ्चोऽस्ति न वाऽऽद्ये नाविद्योपयोगो द्वितीयेऽपि कथमसन्तमविद्याऽपि दर्शयितुमलमित्याशङ्क्य दृष्टान्तेनाऽऽह । **सत इति** ॥ ४९६ ॥

**उक्तहेत्वर्थदीप्येतद्धीति तस्य निपाततः ॥**
**द्वीतं द्विधेतमेकं सत्तद्भावो द्वैतमुच्यते ॥ ४९७ ॥**
**उपमार्थ इवेत्येतद्भवतीति क्रियापदम् ॥**
**तत्रैवाविद्यावस्थायां संज्ञेयं युज्यते मृषा ॥ ४९८ ॥**

द्वैतस्याऽऽविद्यत्वेऽपि तद्धेतुद्योतित्वं हिशब्दस्य कथमित्याशङ्क्याऽऽह । **उक्तेति** । दृश्यत्वादिहेतुतो जगतो रजतादिवदविद्यामात्रत्वात्तद्धेतुद्योतकं हीत्येतत्पदमित्यर्थः । हिशब्दस्य यथोक्तहेतुवाचित्वमेव किं न स्यादत आह । **तस्येति** । निपातानां द्योतक-

---

१ ख. °सत्कार° ।

त्वमेवेति हि वैयाकरणसमयः । द्वैतमित्यादि व्याकरोति । द्वीतमिति । इवशब्दार्थसमर्थनार्थं यत्र हीत्यादिवाक्यस्य पर्यवसितमर्थमाह । तत्रेति ॥ ४५७ ॥ ४५८ ॥

**ननु द्वैतमिवेत्येतदुपमानं कथं भवेत् ॥**
**द्वैतं वस्तु न चेदस्ति सर्वस्यैकात्म्यमात्रतः ॥ ४५९ ॥**

द्वैतमस्ति न वा नाऽऽद्य ऐकात्म्यविरोधान्न द्वितीय एकत्रोपमानोपमेयत्वायोगादिवशब्दासिद्धेरिति शङ्कते । नन्विति ॥ ४५९ ॥

**नैष दोषो यतो दृष्ट एकस्मिन्नपि वस्तुनि ॥**
**उपमेयोपमाभावो दिग्धीरिव विहायसि ॥ ४६० ॥**

आत्मेतरद्वैताभावेऽपीवशब्दस्य नोपमार्थत्वासिद्धिरुपमानोपमेयभावस्यैकत्रापि दृष्टेरित्याह । नेत्यादिना । दृष्टिमेव व्याचष्टे । दिग्धीरिति । नाऽऽकाशादर्थान्तरं दिगस्ति मानाभावात्तथाऽपि दिगिव तद्भातीति सादृश्यधीराकाशे दृश्यते तथाऽऽत्मान्यद्वैताभावेऽपि द्वैतमिव स भवतीत्युक्तिसिद्धिरित्यर्थः ॥ ४६० ॥

**रामरावणयोर्युद्धं रामरावणयोरिव ॥**
**यथा प्रसिद्धो जगति तथैवेहापि गम्यताम् ॥ ४६१ ॥**

एकस्मिन्नुपमानोपमेयत्वसंभवमुदाहरणान्तरेणाऽऽह । रामेति ॥ ४६१ ॥

**अद्वैतात्परमार्थाद्वा मायाद्वैतमपीष्यते ॥**
**तेनोपमार्थसंसिद्धेर्यथा स्वप्नेन्द्रजालयोः ॥ ४६२ ॥**

नात्रोपमानोपमेयविवक्षा युद्धमनयोरनुपममित्यस्मिन्नर्थे तात्पर्यादित्याशङ्क्य विधान्तरेणोपमानं समर्थयते । अद्वैतादिति । इवशब्दः संभवतीति शेषः । कल्पितद्वैतेनोपमासिद्धिं स्फुटयति । यथेति । स्वप्ने महेन्द्रजाले च स्वप्नदृशा मायाविना च कृतद्वैतवदात्मा स्वाविद्योत्थकर्त्रादिद्वैतरूपो भातीत्यर्थः ॥ ४६२ ॥

**मिथ्येव भाति सत्योऽपीत्यपि लोकेऽभिधीयते ॥**
**मिथ्याभावो न नास्तीति वक्तुं कश्चिदपि क्षमः ॥ ४६३ ॥**

मिथ्यास्वप्नादिद्वैतस्य कथं सत्यात्मदृष्टान्ततेत्याशङ्क्याऽऽह । मिथ्येति । यथा मिथ्यार्थः सत्यवद्भाति तथा वक्तुं प्रथमोऽपिशब्दः । द्वितीयस्तु शास्त्रसमुच्चयार्थः । यदृश्यं तत्सत्यमिति व्याप्तेर्मिथ्यापदार्थस्यैवासत्त्वे कुतस्तस्य दृष्टान्ततेत्याशङ्क्याऽऽह । मिथ्याभाव इति । भ्रान्तिबाधप्रसिद्धिविरोधादिति भावः ॥ ४६३ ॥

**समस्तव्यस्ततारूपं यो वक्तीहाऽऽत्मनः श्रुतेः ॥**
**तत्पक्षस्य निषेधोऽयं यत्र हीत्यादिनोच्यते ॥ ४६४ ॥**

यत्र हीत्यादेस्तात्पर्यमविद्यादशायामेव द्वैतदर्शनं नान्यदेत्युक्त्वा तत्फलमाह । समस्तेति । एष हि द्रष्टेत्यादिवाक्यमिदं सर्वं यदयमात्मेत्यादि च श्रुतिरित्युच्यते । परी-

क्षकनिर्धारणार्थमिहेत्युक्तम् । आत्मनस्तथाविधं रूपमवास्तवं चेदविरुद्धं वास्तवं चेदविद्यावस्थायामेव द्वैतदर्शनवादिनी श्रुतिर्विरुध्येतेति भावः ॥ ४६४ ॥

**तस्यामविद्यावस्थायां स्वप्नावस्थां गतो यथा ॥**
**घ्रातेतरः सन्नितरं गन्धं घ्राणेन जिघ्रति ॥ ४६५ ॥**

तदित्यादि व्याचष्टे । **तस्यामिति** ॥ ४६५ ॥

**घ्रातृघ्रेयाभिसंबन्धाद्घ्राणाद्याहृतिरिष्यते ॥**
**जिघ्रतीत्यपि निर्देशः क्रियातत्फलयोर्भवेत् ॥ ४६६ ॥**

कर्तृकर्मक्रियार्पकपदानामेव श्रवणाद्घ्राणेनेत्ययुक्तमित्याशङ्क्येतर इतरमिति कारकप्रदर्शनार्थमितिभाष्यतात्पर्यमाह । **घ्रात्रिति** । आदिशब्देन घ्राणस्यार्थयोगप्रयोजकं सर्वं गृह्यते । तथाऽपि फलमिह नाभिलप्यते तद्वाचकाभावादित्याशङ्क्याऽऽह । **जिघ्रतीत्यपीति** । यथा कारकाणामितर इतरमिति निर्देशस्तथेत्यपेरर्थः ॥ ४६६ ॥

**उत्तरेष्वपि वाक्येषु योजनेयं यथोदिता ॥**
**प्रत्यगज्ञानमात्रोत्थं ग्राहकाद्यत्र भण्यते ॥ ४६७ ॥**

तदितर इतरं पश्यतीत्यादिषु पूर्वोक्तन्यायमतिदिशति । **उत्तरेष्विति** ।यत्र हीत्यादिवाक्यार्थमुपसंहरति । **प्रत्यगिति** ॥ ४६७ ॥

**क्रियाकारकसंज्ञाया विषयोऽयं समीरितः ॥**
**अतोऽविद्यासमुच्छित्ताविय्ं संज्ञा निवर्तते ॥ ४६८ ॥**

तदनुवादेन फलितमाह । **क्रियेति** । अत इत्यविद्याकृतत्वोक्तिः ॥ ४६८ ॥

**विज्ञानघन इत्युक्तेर्विषयोऽयमथोच्यते ॥**
**यत्र वा इति वाक्येन ध्वस्ताविद्ये विपश्चिति ॥ ४६९ ॥**

यत्र वा अस्येत्याद्यवतारयति । **विज्ञानेति** । एतेभ्य इत्यादिवाक्यस्य यत्र हीत्यादिना व्याख्यानानन्तरमित्यर्थः । अक्षराणि व्याकरोति । **ध्वस्तेत्यादिना** । विदुषि निवृत्ताविद्ये सति यत्र सर्वमात्मैवाभूत्तत्र कः कर्ता केन करणेन किं कर्म जिघ्रेत्तत्कर्त्रादिकं वदेति संबन्धः ॥ ४६९ ॥

**यत्र त्वस्याऽऽत्मनोऽज्ञस्य शास्त्राचार्यप्रसादतः ॥ ४७० ॥**
**प्रत्यग्याथात्म्यविज्ञानभास्वद्भास्करदीधिति—**
**संप्लुष्टनिखिलाविद्ये तत्र कः केन किं वद ॥**
**जिघ्रेदैकात्म्यमात्रेण सर्वस्यास्याऽऽत्ममात्रतः ॥ ४७१ ॥**

तदेव स्फुटयति । **यत्रेति** । अज्ञस्याऽऽत्मनः शास्त्रादिवशादुत्पन्नतत्त्वज्ञानाद्ध्वस्ता-

---

१ ख. °यार्थक° । २ क. °यमिहोच्य° ।

विद्ये स्वरूपे सति यस्यां विद्यादशायां सर्वमात्मैव भवति तत्रेति पूर्ववदन्वयः। सर्वमात्मैवाभूदित्यस्य हेतुरूपमर्थमाह। **ऐकात्म्येति** ॥ ४७० ॥ ४७१ ॥

**षष्ठगोचरवत्सर्वं कार्यकारणवज्जगत् ॥**
**ध्वस्तात्मान्ध्यस्य विदुषः सम्यग्ज्ञानोदये भवेत् ॥ ४७२ ॥**

सर्वस्य कर्त्रादेरात्ममात्रत्वे तद्वदेव सत्त्वमाशङ्क्य सर्वमित्यादेस्तात्पर्यमुपसंहरति। **षष्ठेति** ॥ ४७२ ॥

**अव्यावृत्ताननुगतमतिहेतु सदैकलम् ॥**
**विज्ञानघनमानन्दमैकात्म्यं व्यवतिष्ठते ॥ ४७३ ॥**

द्वैतस्य तुच्छत्वे तदभेदादद्वैतस्यापि तथात्वमित्याशङ्क्याऽऽह। **अव्यावृत्तेति**। निःसामान्यविशेषं स्वप्रकाशमेकस्वभावं विज्ञप्तिमात्रं परमपुरुषार्थात्मकमैकात्म्यमवशिष्यते तत्र शून्यतावसानं द्वैतमित्यर्थः ॥ ४७३ ॥

**ग्राहकादिविभागोऽत्र नास्ति तद्धेत्वसंभवात् ॥**
**चिन्मात्रस्य स्वतः सिद्धेर्विज्ञानघनगीरतः ॥ ४७४ ॥**

यत्सिध्यति तन्मात्रादिविभागादेवेति नियमात्कुतः स्वप्रकाशत्वादीत्याशङ्क्याऽऽह। **ग्राहकादीति**। अत्रेति विद्यावस्थोक्ता ॥ ४७४ ॥

**आत्माविद्यामनाश्रित्य कारकत्वं न लभ्यते ॥**
**कारकं चानपाश्रित्य न क्रियेह प्रसिध्यति ॥ ४७५ ॥**

को ग्राहकादिविभागहेतुस्तदसंभवो वा कथमित्याशङ्क्य प्रथमं कारकहेतुत्वमविद्याया दर्शयति। **आत्मेति**। कारकस्य क्रियाहेतुत्वमाह। **कारकं चेति**। क्रियाकारकव्यवहारः सप्तम्यर्थः ॥ ४७५ ॥

**अन्तरेण क्रियां तद्वत्फलं नैव प्रसिध्यति ॥**
**कारकाद्यात्मना सेयमविद्यैव प्रकाशते ॥ ४७६ ॥**

फलहेतुत्वं तस्या निर्दिशति। **अन्तरेणेति**। तर्हि बहूनां हेतूनामुपगमादात्माविद्यैव हेतुरितिपक्षक्षतिरित्याशङ्क्याऽऽह। **कारकादीति** ॥ ४७६ ॥

**यत एवमतोऽविद्यासमुच्छित्ताविदं जगत् ॥**
**व्याकृताव्याकृतं कृत्स्नमात्मतामेति बोधतः ॥ ४७७ ॥**

ग्राहकादिविभागहेतुमुक्त्वा ज्ञानात्तद्ध्वस्तावात्ममात्रत्वेन विभागध्वस्तिमाह। **यत इति** ॥ ४७७ ॥

**भूयोऽपि लभते संज्ञां लीनं सत्कारणात्मनि ॥**
**जगदेतद्यथा तद्वन्नाविद्याविलये भवेत् ॥ ४७८ ॥**

विमतं पुनः समुत्थास्यत्यात्ममात्रेण समाप्तत्वात्स्वापादौ तथा समाप्तग्राहकादिवदित्याशङ्क्य कारणवत्त्वमुपाधिमाह । **भूयोऽपीति** ॥ ४७८ ॥

**ज्ञानोत्पत्तौ न संज्ञाऽस्तीत्यास्तां तावदिहाऽऽत्मनः ॥**
**अपि सत्यामविद्यायां न संज्ञाऽस्त्यात्मनीदृशी ॥ ४७९ ॥**

येनेत्यादेस्तात्पर्यमाह । **ज्ञानेति** । ईदृशी ग्राहकादिविभागोद्ग्राहिणीत्यर्थः ॥४७९॥

**ग्राहकादि जगत्सर्वं येन कूटस्थसाक्षिणा ॥**
**लोकः सर्वो विजानाति जानीयात्केन तं वद ॥ ४८० ॥**

कैमुतिकन्यायपरं वाक्यमित्युक्त्वा तस्मिन्नर्थे तद्योजयति । **ग्राहकादीति** । अविद्यावस्थायामपि सर्वसाक्षी नान्यापेक्षः किमु विद्यावस्थायामित्यर्थः ॥ ४८० ॥

**अचेतने जगत्यस्मिन्साक्ष्येवैकोऽत्र चेतनः ॥**
**ग्राहकादिर्न तत्रापि साक्षिसिद्धावपेक्ष्यते ॥ ४८१ ॥**

जगदपि साक्षिवदनपेक्षं सेत्स्यत्यविशेषात्तत्कथं कूटस्थसाक्षिणा लोको जगज्जानातीत्युक्तमित्याशङ्क्याऽऽह । **अचेतन इति** । अत्रेति व्यवहारदशोक्तिः । साक्षिणोऽपि तर्हि साधकान्तरापेक्षा किं न स्याच्चिद्रूपस्यापि पुरुषान्तरज्ञानस्य पुरुषान्तरापेक्षया सिद्धिदृष्टेरित्याशङ्क्याऽऽह । **ग्राहकादिरिति** । न हि निरुपाधिके चिदात्मन्यन्यापेक्षासिद्धिरनवस्थितेरिति भावः ॥ ४८१ ॥

**संज्ञेयं किमु विध्वस्तसंसारानर्थकारणे ॥**
**उदितैकात्म्ययाथात्म्यसम्यग्ज्ञानदिवाकरे ॥ ४८२ ॥**

तत्रापीत्यपिना सूचितं येनेत्यादिवाक्यीयन्यायमुपसंहरति । **संज्ञेति** । साक्षिणोऽन्यस्य चेतनस्याभावादविद्यावस्थायामपि नाऽऽत्मनि ग्राहकादिभेदधीः किं पुनर्विद्यावस्थायामित्यर्थः ॥ ४८२ ॥

**बोद्धारमपि चापेक्ष्य न संज्ञा प्रत्यगात्मनि ॥**
**बोद्धृतज्ज्ञानविषयैर्न बोद्धा गृह्यते यतः ॥ ४८३ ॥**

विज्ञातारमित्यादेस्तात्पर्यमाह । **बोद्धारमिति** । मातारमपेक्ष्य तत्रापि न ग्राहकादिभेदधीः किमुत साक्षिणीत्यर्थः । मातरि ग्राहकादिभेदज्ञानाभावे हेतुमाह । **बोद्धिति** ॥ ४८३ ॥

**अविचारितसंसिद्धिः प्रमात्रादिस्वलक्षणा ॥**
**संज्ञेयं प्रथते मोहान्नत्वसौ वस्तुनिश्रिता ॥ ४८४ ॥**

कुत्र तर्हि ग्राहकादिभेदधीरिष्टेत्याशङ्क्यानात्मनिश्रितेत्याह । **अविचारितेति** ॥ ४८४ ॥

यत एवमतः सिद्धं दर्शनं प्रत्यगात्मनः ॥
श्रुत्यादिसाधनं साक्षात्सर्वमात्मेत्युदीरितम् ॥ ४८९ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके द्वितीयाध्यायस्य
चतुर्थं ब्राह्मणम् ॥ ४ ॥

श्लोकानामादितः समष्ट्यङ्काः—५४७८

ब्राह्मणार्थमुपसंहरति । यत इति । अविद्यावस्थायामेव भेदव्यवहारो नान्यत्रेत्येवं यतो निश्चितमतः सर्वमात्मेति यत्प्रतीचः साक्षाद्दर्शनं श्रवणादिसापेक्षमुक्तं तन्मोक्षसाधनं संन्याससहितं सिद्धमित्यर्थः ॥ ४८९ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां द्वितीयाध्यायस्य चतुर्थं
मैत्रेयीब्राह्मणम् ॥ ४ ॥

---

अथ पञ्चमं ब्राह्मणम् ।

---

नमोऽसाधारणज्ञातृज्ञानज्ञेयात्मबोधिने ॥
जग्धाशेषमहाविद्यातज्ज्ञानर्थाय विष्णवे ॥ १ ॥

शास्त्रस्याऽऽद्यन्तयोर्मङ्गलाचरणं कर्तव्यमिति शिष्टाचारं प्रमाणयन्मधुकाण्डसमाप्तौ देवतां प्रणमति । नम इति । यद्वा ब्राह्मणद्वयेन पदार्थौ व्याख्याय वाक्यार्थं व्याख्यातुकामो वाक्यार्थे श्रद्धातिशयकार्यतार्थं देवतां प्रणमति । नम इति । यद्वा मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाण्यायुष्मत्पुरुषाणि चेति न्यायादादिमध्यावसानेषु कृतमङ्गला ग्रन्थाः प्रचारिण इति मत्वा मध्येऽपि मङ्गलमाचरति । नम इति । साधारणा ज्ञातृज्ञानज्ञेया यस्य न सन्ति यस्य चाऽऽत्मनैवाऽऽत्मानं बोधयितुं शीलं यश्च वाक्योत्थधीव्यक्तो ग्रस्तसमस्ताविद्यातत्कार्यस्तस्मै परस्मै व्यापिने प्रतीचे त्रिविधोऽपि प्रह्वीभावोऽस्त्विति योजना ॥ १ ॥

प्रत्यग्ध्वान्तसमुच्छेदि ज्ञानमैकात्म्यनिष्ठितम् ॥
संन्याससाधनं प्रोक्तममृतत्वैकसाधनम् ॥ २ ॥

देवतानातिरूपं मङ्गलं कृत्वा वृत्तं कीर्तयति । प्रत्यगिति । यथोक्तं ज्ञानमज्ञानमुच्छिददभ्यासापेक्षमित्याशङ्क्याऽऽह । अमृतत्वेति ॥ २ ॥

हेतवोऽपि च तत्सिद्धौ श्रवणादिपुरःसराः ॥
उक्ता यथावत्तत्रैव श्रोतव्यः श्रुतिवाक्यतः ॥ ३ ॥
मन्तव्यो हेतुभिः सूक्ष्मैरुक्तदृष्टान्तबोधितैः ॥
चित्सामान्यचिदुत्पत्तिचिदेकप्रलयात्मभिः ॥ ४ ॥

कथमिदमुदेति न हि संन्यासादेव केवलात्तदुदयोऽत आह । **हेतवोऽपीति** । तत्रैवेति पूर्वब्राह्मणोक्तिः । के ते श्रवणादयोऽत आह । **श्रोतव्य इति** ॥ ३ ॥ ४ ॥

**आशङ्क्य हेत्वसिद्धत्वं मधुब्राह्मणमुच्यते ॥**
**कुतोऽसिद्धत्वमिति चेच्छृणु तद्वदतो मम ॥ ५ ॥**

वृत्तमनूद्य ब्राह्मणयोः संगतिमाह । **आशङ्क्येति** । श्रौतहेतोरसिद्ध्याशङ्का न युक्तेत्याक्षिप्य समाधत्ते । **कुत इति** ॥ ५ ॥

**निःसामान्यविशेषत्वाच्चित्सामान्यं कथं भवेत् ॥**
**चिदुत्पत्तिलयासिद्धिः सांख्यादीन्प्रति वादिनः ॥ ६ ॥**

जगतः स्थितिकाले चित्सामान्यत्वं यदुक्तं तस्यासिद्धिं साधयति । **निःसामान्येति** । चिदुत्पत्तिलयाख्यहेत्वंशस्यासिद्धिं विशदयति । **चिदिति** । ते हि प्रधानादेस्तज्जन्मलयाविच्छन्ति न च त्वयाऽपि चितो जगज्जन्मलयावेष्टुं शक्यौ कूटस्थासङ्गाद्वयत्वोपगमादित्यर्थः ॥ ६ ॥

**ऐकात्म्यवस्तुतात्पर्यं हेत्वादिच्छद्मनोच्यते ॥**
**वेदे यतो न हेत्वादि लोकवत्स्याद्विवक्षितम् ॥ ७ ॥**

किं चित्सामान्यादिरूपो हेतुर्वस्तुतो नास्ति यथाकथंचिद्वेति विकल्प्याऽऽद्यमङ्गीकरोति । **ऐकात्म्येति** । लोकशब्दस्तर्कशास्त्रस्याप्युपलक्षणम् ॥ ७ ॥

**चित्तत्त्वं सदविद्यावत्कारणत्वं निगच्छति ॥**
**चित्सामान्याद्यतः सिद्धं प्रागप्येतत्प्रसाधितम् ॥ ८ ॥**

न द्वितीयोऽज्ञाते ब्रह्मणि चित्सामान्यादिसंभवात्तद्धेदमित्यादौ चोक्तत्वादित्याह । **चित्तत्त्वमिति** ॥ ८ ॥

**अभ्युपेत्याप्यसिद्धत्वं तत्सिद्धत्वाभिधित्सया ॥**
**मधुब्राह्मणमारब्धमियमित्याद्यथोत्तरम् ॥ ९ ॥**

चित्सामान्यादि साधितं चेदसिद्धिशङ्काभावात्किमनेन ब्राह्मणेनेत्याशङ्क्याऽऽह । **अभ्युपेत्येति** । अनन्तरब्राह्मणस्याऽऽशङ्कितहेत्वसिद्धिनिरासे सामर्थ्यद्योतनार्थमथेत्युक्तम् ॥ ९ ॥

**प्रतिदेहं लयोत्पत्तिश्रुतेर्ह्यात्मनि शङ्क्यते ॥**
**भेदोऽतस्तन्निवृत्त्यर्थं मधुत्वेनैकतोच्यते ॥ १० ॥**

हेत्वसिद्धिशङ्कां परिहर्तुं ब्राह्मणमिति संगतिमुक्त्वा प्रकारान्तरेण तामाह । **प्रतिदेहमिति** । स वा अयं पुरुषो जायमान इत्यादिना प्रतिदेहमात्मनो जन्मलयश्रुतेस्तस्मिन्भेदः शङ्कितोऽतस्तन्निवृत्त्यर्थमनेन ब्राह्मणेन सर्वस्य मधुत्वेनाऽऽत्मनैक्यं कथ्यत इत्यर्थः ॥ १० ॥

**उपकार्योपकारित्वभिन्नं यज्जगदीक्ष्यते ॥**
**उपकार्योपकारित्वात्तत्स्यादेकात्मतत्त्वकम् ॥ ११ ॥**

कथमिह सर्वस्य मधुत्वोक्त्याऽऽत्ममात्रत्वगीरित्याशङ्क्याऽऽह । **उपकार्येति ।** विमतमेकात्मकमुपकार्योपकारित्वात्स्वप्नद्वैतवदित्यर्थः । प्रथमार्धेन हेतुः साधितः ॥११॥

**प्रतिज्ञायार्थवैकात्म्यं हेतूनुक्त्वोक्तसिद्धये ॥**
**निगमायोत्तरो ग्रन्थः प्रतिज्ञाया विवक्षितः ॥ १२ ॥**

ब्राह्मणस्य संबन्धान्तरमाह । **प्रतिज्ञायेति ।** उक्तसिद्धये प्रतिज्ञातैकात्म्यसिद्ध्यर्थ-मिति यावत् । प्रतिज्ञाया हेतुसहिताया इत्यर्थः ॥ १२ ॥

**प्रतिज्ञातार्थसिद्ध्यर्थं हेतूनुक्त्वा पृथग्विधान् ॥**
**हेतोर्निगमनं पश्चात्क्रियतेऽथोत्तरोक्तिभिः ॥ १३ ॥**

तथाहीत्यादिभाष्यतात्पर्यमाह । **प्रतिज्ञातेति ।** हेतोस्तत्सहितप्रतिज्ञातार्थस्येति यावत् । निगमनस्यापि साधनाङ्गताया वादिभिरिष्टत्वादित्यथशब्दार्थः ॥ १३ ॥

**निदिध्यासनसिद्ध्यर्थं केचिद्याचक्षते परम् ॥**
**मधुब्राह्मणमेतत्तु न युक्तं प्रतिभाति नः ॥ १४ ॥**

भर्तृप्रपञ्चानां ब्राह्मणारम्भप्रकारमनूद्य निरस्यति । **निदिध्यासनेति ।** श्रवणादि-त्रयं प्रकृत्य श्रवणमनने व्याख्याय निदिध्यासनं व्याख्यातुमेतद्ब्राह्मणमिति मतमयुक्तमि-त्यर्थः ॥ १४ ॥

**श्रुत आगमतो योऽर्थस्तर्केणापि समर्थितः ॥**
**स एवार्थस्तु निष्णातो निदिध्यासनमुच्यते ॥ १५ ॥**

अयुक्ततां स्फोरयति । **श्रुत इति ।** श्रवणादिफलं वाक्यार्थज्ञानं निदिध्यासनमत्रे-ष्टमित्यर्थः ॥ १५ ॥

**शास्त्राचार्यानुभवनैर्हेतुभिश्च समर्थितः ॥**
**ईदृगैकात्म्यसंबोधो निदिध्यासनमुच्यते ॥ १६ ॥**

कथं ध्यानवाची शब्दोऽन्यथा व्याख्यायते तत्राऽऽह । **शास्त्रेति ।** निदिध्यासनस्य वाक्यार्थज्ञानत्वं पूर्वब्राह्मणे साधितमिति भावः ॥ १६ ॥

**निदिध्यासनसिद्ध्यर्थो यत्नोऽतोऽयमनर्थकः ॥**
**प्रत्यग्याथात्म्यसंबोधमात्रत्वादेव हेतुतः ॥ १७ ॥**

अस्तु निदिध्यासनं वाक्यार्थज्ञानं किं तावतेत्याशङ्क्याऽऽह । **निदिध्यासनेति ।** अतःशब्दार्थं व्याकरोति । **प्रत्यगिति ।** तस्य च श्रवणादिनैव सिद्धेरिति शेषः ॥ १७ ॥

---

१ ख. °वार्थः मुनि° । २ ग. °मन्वितः ।

क्रियाफलोपभोगार्थं सर्वैरेव स्वकर्मभिः ॥
जन्तुभिः पृथिवी सृष्टा मधु तेषां ततो मही ॥ १८ ॥

परोक्तं संबन्धं निरस्येयमित्यादि व्याचष्टे । **क्रियेति** ॥ १८ ॥

पृथिव्याऽप्यात्मभोगार्थं सृष्टाः सर्वेऽपि जन्तवः ॥
पृथिव्या अपि कार्यत्वान्मधु तेऽपि भवन्त्यतः ॥ १९ ॥

अस्या इत्यादि व्याकरोति । **पृथिव्येति** । सर्वैर्जन्तुभिर्यथा पृथिवी सृष्टा तथेति प्रथमोऽपिशब्दः । द्वितीयोऽपिरभिव्याप्त्यर्थः । तृतीयो जन्तूनां पृथिवीवदिति दृष्टान्तार्थः । चतुर्थस्तु पृथिवीं दृष्टान्तयितुमेव ॥ १९ ॥

पार्थिवानि शरीराणि सर्वेषां देहिनां यतः ॥
पृथिव्या तानि सृष्टानि पृथिव्यन्वयदर्शनात् ॥ २० ॥

तया सर्वेषां सृष्टत्वे युक्तिमाह । **पार्थिवानीति** । पार्थिवत्वे हेतुः । **पृथिवीति** ॥ २० ॥

भूतानां च पृथिव्याश्च मिथःकार्यत्वहेतुतः ॥
भोग्यभोक्तृत्वसंबन्धस्तस्मात्सिद्धः परस्परम् ॥ २१ ॥

भूतानां पृथिव्याश्च कार्यकारणत्वे श्रुतियुक्तिसिद्धे फलितमाह । **भूतानामिति** ॥ २१ ॥

भोग्यता प्रथमान्तेन पृथिव्यादेरिहोच्यते ॥
कर्तृता भोक्तृता चैषां षष्ठ्यन्तेनाभिधीयते ॥ २२ ॥

कर्तृकार्यत्वयोर्भोक्तृभोग्यत्वयोश्च किमत्र द्योतकमित्याशङ्क्याऽऽह । **भोग्यतेति** । कार्यतेत्यपि वाच्यम् ॥ २२ ॥

अचेतनांशप्राधान्यात्कार्यकारणतोच्यते ॥
भोक्तृभोग्याभिसंबन्धश्चेतनाचेतनात्मनोः ॥ २३ ॥

कथं मिथोविरुद्धमेकस्मिन्पृथिव्यादौ चतुष्टयमित्याशङ्क्यावान्तरभेदमाह । **अचेतनेति** । पृथिव्यादेरचेतनांशप्राधान्यात्कार्यत्वादित्रयं चेतनांशप्राधान्याच्च भोक्तृतेत्यविरोध इत्यर्थः ॥ २३ ॥

सर्वेषामपि भूतानां कार्यकारणसंगतेः ॥
सर्वभूतात्मकत्वं स्याद्यथा सर्वात्मनस्तथा ॥ २४ ॥

वाक्याभ्यां सिद्धमुपसंहरति । **सर्वेषामिति** । यथा मूलकारणं सर्वात्मकं तथा सर्वं सर्वात्मकं सर्वकारणत्वादतो भेदाभावादात्ममात्रं सर्वमितिनिगमनौचित्यमित्यर्थः ॥ २४ ॥

---

१ ख. °योऽयं तु शब्दः पृ° । २ ख. °तुना । भो° ।

संहृत्य स्थूलमाधारं भूतानां च क्षितेस्तथा ॥
तदाधेयोपसंहृत्यै यश्चायमिति शब्द्यते ॥ २५ ॥

वृत्तमनूद्य वाक्यान्तरमादत्ते । **संहृत्येति** । पृथिव्या भूतानां च स्थूलदेहभागं [1]चतुर्धा संक्षिप्य तस्मिन्नेव स्थूले यदाधेयं लिङ्गं तस्य चतुर्धासंक्षेपार्थमुत्तरं वाक्यमित्यर्थः ॥ २५ ॥

अस्यां पृथिव्यां यश्चासौ भास्वद्विज्ञानविग्रहः ॥
अमृतो नित्य एवातो न नाशी स्थूलदेहवत् ॥ २६ ॥

तदक्षराणि व्याकरोति । **अस्यामिति** । आत्मवन्नित्यत्वं व्यावर्तयति । **अतो नेति** । स्थूलोपाधिवैलक्षण्यमतःशब्दार्थः ॥ २६ ॥

स चापि मधु सर्वेषां भूतानां तानि तस्य च ॥
मधु सर्वाणि भूतानि यथा पूर्वमत्रादिषम् ॥ २७ ॥

चकारसूचितमर्थमाह । **स चेति** । आद्यवाक्यद्वयोक्तं दृष्टान्तयति । **यथेति** ॥ २७ ॥

सहाध्यात्माधिदैवं हि साधिभूतमिदं जगत् ॥
एकैकस्याऽऽत्मनः कृत्स्नं भोग्यत्वेनावतिष्ठते ॥ २८ ॥

कथं चकारस्योक्तार्थसूचकत्वमित्याशङ्क्यानुभवमनुसृत्याऽऽह । **सहेति** । उक्तार्थेऽनुभवं प्रमाणयितुं हिशब्दः ॥ २८ ॥

सर्वः सर्वस्य कार्यं स्यात्सर्वः सर्वस्य भोजकः ॥
एवं सति भवेत्सिद्धं यथा पूर्वं प्रपञ्चितम् ॥ २९ ॥

मानान्तरं वक्तुमनुवदति । **सर्व इति** । सर्वस्य कार्यकारणभावे मिथो भोक्तृभोज्यत्वे चाऽऽत्ममात्रत्वं यथा पूर्वब्राह्मणे प्रपञ्चितं तथा तत्सिद्धं भवेत्तस्मादिदं सर्वमित्यादिवाक्यं चकारस्यार्थानुग्राहकमित्याह । **एवं सतीति** ॥ २९ ॥

अध्यात्मं यश्च शारीरः पार्थिवांशसमाश्रयः ॥
स चापि मधु सर्वेषां सर्वभूतानि तस्य च ॥ ३० ॥

यश्चेत्यादि व्याख्याय यश्चायमध्यात्ममित्यादेरर्थमाह । **अध्यात्ममिति** । शारीरस्य जीवत्वं व्यावर्तयति । **पार्थिवेति** । चार्थमाह । **स चेति** ॥ ३० ॥

कार्यकारणरूपेण भोज्यभोक्तृतयोदितम् ॥
चतुष्टयं पृथिव्यादि तस्य तत्त्वमथोच्यते ॥ ३१ ॥

अध्यात्मादिविभागोक्तचतुष्टयमनूद्यायमित्यादिवाक्यतात्पर्यमाह । **कार्येति** ॥ ३१ ॥

चतुष्टयविभागेन स्वार्थोऽप्यात्मा विभज्यते ॥
अविभागोऽपि तादर्थ्याद्धोक्ताऽतः सोऽत्र गृह्यते ॥ ३२ ॥

---

१ ख. °हरूपं भा° । २ ख. पूर्वमवादिषम् ।

कथमात्मा चतुष्टयस्य स्वरूपमात्मनः स्वार्थत्वादविभागत्वाच्च तद्वैलक्षण्यादित्याशङ्क्याऽऽह । **चतुष्टयेति** । आत्मनः स्वाविद्यया चतुष्टयात्मनाऽवस्थानाद्विभागसिद्धिरित्यर्थः । आत्माविद्याविवर्तत्वेनाऽऽत्मार्थत्वाच्चतुष्टयस्यात्र चतुष्टये स भोक्ताऽऽत्मा तत्त्वं गृह्यत इति फलितमाह । **तादर्थ्यादिति** ॥ ३२ ॥

**प्रत्यक्तया यः प्रथते चतुष्टयविलक्षणः ॥**
**प्रात्यक्ष्यात्सोऽयमित्येवं प्रत्यक्साक्ष्यभिधीयते ॥ ३३ ॥**

अयंशब्दार्थमाह । **प्रत्यक्तयेति** । यः सशब्दार्थाच्चतुष्टयाद्विलक्षणः सन्प्रत्यग्भावेन भाति स साक्षी प्रत्यगात्मा प्रात्यक्ष्यादयमित्येवमुच्यत इति संबन्धः ॥ ३३ ॥

**अयमेव स इत्युक्त्वा सामानाधिकरण्यतः ॥**
**प्रत्यङ्मात्रैकयाथात्म्यं चतुर्धोक्तस्य बोध्यते ॥ ३४ ॥**

सामानाधिकरण्यार्थमाह । **अयमेवेति** । चतुर्धेति भोक्तृभोग्यकर्तृकार्यत्वेनाध्यात्माधिदैवयोः प्रत्येकमाधाराधेयत्वेन वेत्यर्थः ॥ ३४ ॥

**पृथिव्यादिषु यः पूर्वं व्याख्यातोऽन्तरबाह्यतः ॥**
**आत्मैव स इति ज्ञेयस्तदबोधप्रसूतितः ॥ ३५ ॥**

सशब्दार्थं वदन्वाक्यार्थं प्रपञ्चयति । **पृथिव्यादिष्विति** । अन्तरमाधेयादि बाह्यमाधारादि । चतुष्टयस्याऽऽत्ममात्रत्वे हेतुः । **तदबोधेति** ॥ ३५ ॥

**अयमित्यस्य शेषः स्याद्योऽयमित्यादिकः परः ॥**
**एवेत्यवधृतावेतत्संसर्गप्रतिषेधकृत् ॥ ३६ ॥**

योऽयमात्मेतिशेषस्यायंशब्देन पुनरुक्तिमाशङ्क्याऽऽह । **अयमित्यस्येति** । अयमित्युक्त आकाङ्क्षा स्यात्तन्निवृत्त्यर्थं विशेषणं योऽयमित्यादि । सामानाधिकरण्यस्य नीलोत्पलवदखण्डार्थत्वं विना संसर्गमात्रविषयत्वेनोपपत्तेर्न चतुष्टयस्य प्रत्यङ्मात्रतेत्याशङ्क्याऽऽह । **एवेतीति** ॥ ३६ ॥

**तत्त्वं चतुष्टयस्यास्य प्रत्यगात्मैव केवलः ॥**
**अव्यावृत्ताननुगतध्वस्ताविद्यातदुद्भवः ॥ ३७ ॥**

कथमवधारणं चतुष्टयस्याऽऽत्मनि संसर्गनिषेधकं संसर्गपक्षेऽप्ययोगव्यवच्छेदित्वेनोपपत्तेस्तत्राऽऽह । **तत्त्वमिति** । केवलशब्दार्थं स्फुटयति । **अव्यावृत्तेति** । अयोगव्यवच्छेदे तु चतुष्टयस्याऽऽत्मनो व्यावृत्ततया निःस्वरूपस्य संसर्गानुपपत्तिरिति भावः ॥ ३७ ॥

**प्रकृतात्माभिधानं वा स इत्येतत्पदं भवेत् ॥**
**अयमित्युच्यते साक्षात्संनिकर्षाच्चतुष्टयम् ॥ ३८ ॥**

---

१ ख. यः श॰ । २ ख. ॰मित्यादिना । अ॰ ।

अयमेवेत्यादेरुद्धाप्यार्थमुक्त्वा भाष्यानुसारेणार्थमाह । **प्रकृतेति** । मैत्रेयीब्राह्मणे प्रकृतत्वमात्मनो द्रष्टव्यम् ॥ ३८ ॥

**स एवायमिति ज्ञेयो यो द्रष्टव्यतयोदितः ॥**
**यच्चामृतं स्वभार्यायै याज्ञवल्क्येन भाषितम् ॥ ३९ ॥**

पदार्थभेदवद्वाक्यार्थभेदोऽपि स्यादित्याशङ्कयाऽऽह । **स एवेति** । आत्मा वा अरे द्रष्टव्य इत्युक्तो यः स एवायं चतुष्टयात्माऽभेद इत्यक्षरार्थः । इदममृतमित्यस्यार्थमाह । **यच्चेति** । तदेवेदं चतुष्टयामिति शेषः ॥ ३९ ॥

**ब्रह्मेति ध्वस्तसंभेदं यन्नेतीति पुरोदितम् ॥**
**सर्वं समभवत्कृत्स्नं यद्याथात्म्यावबोधतः ॥ ४० ॥**

इदं ब्रह्मेत्यस्यार्थमाह । **ब्रह्मेतीति** । ब्रह्म ते ब्रवाणि व्येव त्वा ज्ञपयिष्यामीत्यध्यायादौ प्रस्तुत्य मूर्तामूर्तब्राह्मणे नेति नेतीति निर्विशेषं यद्ब्रह्मोक्तं तदेवेदं चतुष्टयमित्यर्थः । इदं सर्वमित्यस्यार्थमाह । **सर्वमिति** । यत्स्वरूपज्ञानात्सर्वं जगत्पूर्णं ब्रह्माभवदित्युक्तं तृतीये तदेवेदमित्यर्थः ॥ ४० ॥

**पृथिवीं पार्थिवं चांशं शरीरं साधिदैवतम् ॥**
**जानीयात्सर्वमात्मेति नेति नेत्युपलक्षणम् ॥ ४१ ॥**

वाक्यत्रयार्थमुपसंहरति । **पृथिवीमिति** । आधिदैवाध्यात्मयोः स्थूलद्वयं सूक्ष्मद्वयं चेति चतुष्टयं सर्वविशेषाभावोपलक्षितात्ममात्रमिति द्रष्टव्यमित्यर्थः ॥ ४१ ॥

**उत्तरेष्वपि वाक्येषु यथोक्तेनैव वर्त्मना ॥**
**इममेव तु वाक्यार्थं व्याचक्षीताविचारयन् ॥ ४२ ॥**

इयं पृथिवीत्यादावुक्तमर्थमिमा आपः सर्वेषामित्यादिपर्यायान्तरेष्वतिदिशति । **उत्तरेष्विति** । निराकार्यस्याऽऽदेयस्य चार्थभेदस्याभावादुक्तव्याख्याने संशयो नास्तीति सूचयति । **अविचारयन्निति** ॥ ४२ ॥

**पृथिव्यादीनि भूतानि तदंशाश्च समीरिताः ॥**
**हिरण्यगर्भलिङ्गांशास्तथा पूर्वोक्तमूर्तयः ॥ ४३ ॥**

अयं धर्म इत्यस्यार्थं वक्तुं वृत्तमनुवदति । **पृथिव्यादीनीति** । भूतानि पञ्चोक्तानि तेषामंशाश्च शरीरादयः सूत्रांशाश्च भूतशरीराधारा भूतानां शरीरादीनां च मूर्तयः स्वरूपभूताः पुरेव सूत्रांशा इत्यर्थः ॥ ४३ ॥

**यथोक्ता येन सर्वेऽपि प्रयुक्ताः स्वात्मकर्मभिः ॥**
**उपकुर्वन्ति नः सर्वान्स धर्म इति संज्ञितः ॥ ४४ ॥**

---

१ ख. पुनरे ।

धर्मशब्दार्थमाह । **यथोक्ता इति** । प्रयुक्ता भूतादय इति यावत् । स्वात्मकर्मभिः स्वानुरूपाचरणादिभिरित्यर्थः ॥ ४४ ॥

**तस्य कार्यं द्विधेहोक्तं सामान्यात्मविशेषतः ॥**
**पृथिव्यादीह सामान्यं विशेषः पिण्डमात्रकम् ॥ ४५ ॥**

तस्य शास्त्रैकगम्यत्वेन पारोक्ष्यादयमितिनिर्देशानर्हत्वशङ्कां परिहर्तुं पातनिकामाह । **तस्येति** । शास्त्रं सप्तम्यर्थः । सामान्यविशेषभावेन कार्यद्वैविध्यं स्फोरयति । **पृथिव्यादीति** । इहेति धर्मादि निर्दिश्यते ॥ ४५ ॥

**तत्कार्यस्येह प्रात्यक्ष्यात्तदभेदोपचारतः ॥**
**प्रत्यक्षवदयं धर्मस्तस्मादेवाभिधीयते ॥ ४६ ॥**

तथाऽपि प्रस्तुते किमिति तत्राऽऽह । **तत्कार्यस्येति** । धर्मकार्यस्य पृथिव्यादेर्व्यवहारभूमौ प्रात्यक्ष्यं तेन कारणस्याभेदमौपचारिकमादाय प्रत्यक्षघटादिवद्धर्मोऽयमित्युच्यते तस्मादयमित्युक्तिरविरुद्धेत्यर्थः ॥ ४६ ॥

**साधारणः पृथिव्यादिकारी धर्मोऽभिधीयते ॥**
**यश्चायमिति वाक्येन तथाऽसाधारणाभिधा ॥ ४७ ॥**
**यश्चायमध्यात्ममिति योऽयं मद्देहकृन्मतः ॥**
**साधारणविशेषात्मा यदपूर्वं तदुच्यते ॥ ४८ ॥**

अस्मिन्पर्याये बहवो धर्मशब्दास्तेषामर्थभेदं वक्तुं यश्चायमस्मिन्धर्म इत्यत्र धर्मशब्दार्थमाह । **साधारण इति** । वाक्येन तद्गतधर्मशब्देनेत्यर्थः । यश्चायमध्यात्मं धार्म इत्यत्राऽऽत्मनो देहाद्यारम्भकः प्रत्यात्ममसाधारणो धर्म इत्याह । **तथेति** । यो वै स धर्मः सत्यं वैतदिति सत्यधर्मयोरभेदोक्तेरिदं सत्यमिति पुनरुक्तिशङ्कां परिहर्तुमयं धर्म इत्यत्र विवक्षितधर्मशब्दार्थमाह । **साधारणेति** । उच्यते प्रथमधर्मशब्देनेति शेषः ॥ ४७ ॥ ४८ ॥

**प्राजापत्यमपूर्वं यत्सर्वभूतप्रयोजकम् ॥**
**अध्यात्मं पिण्डकृच्चच सोऽयं धर्माभिधोदितः ॥ ४९ ॥**

किं तदुभयात्मकमपूर्वं तदाह । **प्राजापत्यमिति** । तस्य साधारणाकारं दर्शयति । **यदिति** । असाधारणं रूपमाह । **अध्यात्ममिति** । प्राथमिकधर्मशब्दार्थं निगमयति । **सोऽयमिति** ॥ ४९ ॥

**तथैवाऽऽचाररूपेण प्रत्यक्षेण यदीक्ष्यते ॥**
**स एव धर्मः सत्यं स्याद्व्यवस्थाप्रयोजकम् ॥ ५० ॥**

इदं सत्यमित्यत्र सत्यशब्दस्यार्थमाह । **तथेति** । यथा हैरण्यगर्भमपूर्वं जगदारम्भकं

---

१ क. ॅव्यक्ष्यास्तेन ।

तथा तदेव प्रत्यक्षदृष्टेनानुष्ठीयमानाचारेण यत्प्रतीयते स एवापूर्वशब्दार्थो धर्मः सत्यमित्युच्यते लोके हि वर्णाश्रमव्यवस्थापकं सत्यमिति प्रसिद्धमित्यर्थः ॥ ५० ॥

**साधारणविशेषाभ्यां धर्मवत्तदपि द्विधा ॥**
**साधारणविशेषार्थव्यवस्थाकारणत्वतः ॥ ५१ ॥**

अत्रापि बहवः सत्यशब्दास्तेषामर्थं भेत्तुं तद्द्वैविध्यमाह । **साधारणेति** । द्वैविध्ये हेतुमाह । **साधारणविशेषेति** । यश्चायमस्मिन्सत्य इत्यत्र सामान्यरूपं यश्चायमध्यात्मं सात्य इत्यत्र विशेषरूपमिदं सत्यमित्यत्र मिलितं ग्राह्यमिति भेदः ॥ ५१ ॥

**धर्मसत्यप्रयुक्तोऽयं लिङ्गपिण्डस्वलक्षणः ॥**
**विराड्ढिरण्यगर्भश्च सर्वजातिसमन्वितः ॥ ५२ ॥**

इदं मानुषमित्यस्यार्थमाह । **धर्मेति** । शरीरद्वयं धर्मादिप्रयुक्तं सूत्रादिशब्दितं यज्जातिविशिष्टं सर्वव्यवहारक्षमं सा जातिः सर्वा मानुषशब्दितेत्यर्थः ॥ ५२ ॥

**मनुष्यजातेर्ग्रहणं सर्वजात्युपलक्षणम् ॥**
**इदं मानुषमित्येवं व्याख्या तस्यास्तु पूर्ववत् ॥ ५३ ॥**

इदं मानुषमिति विशेषणान्न सर्वजात्यन्वितत्वमिति चेत्तत्राऽऽह । **मनुष्येति** । इदं मानुषमित्येवं मनुष्यजातेर्ग्रहणमिति संबन्धः । साऽपि बाह्याध्यात्मिकभेदेन धर्मादिवद्द्विधा निर्दिश्यते तेनेदं मानुषमिति मिलितसर्वजातेर्यश्चायमस्मिन्निति बाह्यभेदस्य यश्चायमध्यात्ममित्याध्यात्मिकभेदस्योक्तिरित्याह । **व्याख्येति** ॥ ५३ ॥

**पृथिवी[1] शारीर इत्येवं खण्डशो यः पुरोदितः ॥**
**विराड्ढिरण्यगर्भश्चेत्ययमात्मेति तद्वचः ॥ ५४ ॥**

अयमात्मेति पर्यायस्य तात्पर्यमाह । **पृथिवीति** । इयं[2] पृथिवीत्यारभ्य मानुषपर्यायपर्यन्तेन संदर्भेण विराट्सूत्रमित्युच्यमानावयविनः पृथिवी शारीर इत्यनेन क्रमेणावयवशो विभाग उक्तस्तद्वतोऽवयविनो निर्देशोऽयमात्मेत्यादिना क्रियत इत्यर्थः ॥ ५४ ॥

**हिरण्यगर्भभेदानां भूतानां च पृथक्पृथक् ॥**
**उक्तं मधुत्वं येनातस्तत्सामस्त्यमथोच्यते ॥ ५५ ॥**

आद्ये पर्याये शारीरशब्देनैवास्य गतत्वात्पौनरुक्त्यमित्याशङ्क्याऽऽह । **हिरण्यगर्भेति** ॥ ५५ ॥

**अयमात्मेति निर्देशो विराजः प्रथमो मतः ॥**
**सप्तम्यन्तेन तत्प्रत्यङ्लिङ्गात्माऽतोऽभिधीयते ॥ ५६ ॥**

अयमात्मेत्यत्राऽऽत्मशब्दार्थमाह । **अयमिति** । विराजः सूत्रस्य च यन्मिलितं रूपं तस्यायमात्मेत्यत्राऽऽत्मशब्दः प्रथमान्तो वाचक इत्यर्थः । यश्चायमस्मिन्नात्मनीत्यत्र

---

१ क °वीशरी° । २ क. °वीशरी° ।

सप्तम्यन्तात्मशब्देन विराज एवोक्तिरित्याह । **सप्तम्यन्तेनेति ।** निर्देशो विराज इति पूर्वेण संबन्धः । विराजोऽभ्यन्तरो लिङ्गात्मा तेजोमयादिशब्देनोच्यत इत्याह । **तत्प्रत्यङ्ङिति ।** अतस्तेजोमयादिशब्दादिति यावत् ॥ ५६ ॥

**कार्यात्मा कारणात्मा च यदर्थौ भवतः सदा ॥**
**यश्चायमात्मेत्यत्रोक्तो विज्ञानात्मेति यं विदुः ॥ ५७ ॥**

यश्चायमात्मेत्यत्राऽऽत्मशब्दस्य चैतन्याभासजीववाचित्वमाह । **कार्येति ।** सोऽत्राऽऽत्मशब्देनोक्तः शेषीति शेषः । शेषिणोऽप्रसिद्धिं निरस्यति । **विज्ञानेति** ॥५७॥

**यस्मिन्नात्मनि विध्वस्तव्याकृताव्याकृतात्मके ॥**
**खिल्यदृष्टान्तवचसा विज्ञानात्मा प्रवेशितः ॥ ५८ ॥**

स वा अयमात्मेत्यत्राऽऽत्मशब्दस्यार्थमाह । **यस्मिन्निति ।** अन्त्ये पर्याये यश्चायमात्मेति श्रुतो जीवो यस्मिन्परस्मिन्नविद्यातज्जहीने यथा सैन्धवखिल्य इत्यादिदृष्टान्तपूर्वादेवं वा अर इत्यादिवाक्यादैक्येन बोधितः सोऽत्राऽऽत्मेत्यर्थः ॥ ५८ ॥

**ब्रह्मविद्याहतध्वान्ते तस्मिन्ब्रह्मणि निष्ठिते ॥**
**तमस्तदुत्थकार्याणामत्यन्तासंभवादतः ॥ ५९ ॥**

अविद्यातज्जहीनं ब्रह्म जीवो विपरीतस्तत्कथमैक्यमित्याशङ्क्याऽऽह । **ब्रह्मेति ।** तस्मिञ्जीवे ब्रह्मणि निश्चयेन स्थिते तद्विद्यया निरस्ताज्ञाने सति सर्वात्मना कार्यकारणास्पर्शात्प्रतिबन्धाभावाद्युक्तं तस्य स्वाभाविकं ब्रह्मैक्यमित्यर्थः ॥ ५९ ॥

**योऽसावविद्यया देही संसारीवाप्यभूत्पुरा ॥**
**सोऽयं साक्षात्परं ब्रह्म विद्यया वर्ततेऽधुना ॥ ६० ॥**

आत्मार्थमुक्त्वा स वा अयमितिपदत्रयार्थमाह । **योऽसाविति ।** अधुना विद्यादशायामित्यर्थः ॥ ६० ॥

**ध्वस्ताज्ञानतदुत्थोऽयं संविन्मात्रमनन्तकः ॥**
**अनन्तापार आत्मैवं स्वमहिम्नि व्यवस्थितः ॥ ६१ ॥**

विद्याफलभूतमात्मानमनन्तरोक्तं प्रपञ्चयति । **ध्वस्तेति** ॥ ६१ ॥

**अपूर्वानपरमध्यप्रत्यग्याथात्म्यवित्तये ॥**
**स वा इत्यादिको ग्रन्थः सदृष्टान्तोऽभिधीयते ॥ ६२ ॥**

उक्तेऽर्थे वाक्यमवतारयति । **अपूर्वेति** ॥ ६२ ॥

**ब्रह्मास्मीतिपरिज्ञानध्वस्तध्वान्तत्वकारणात् ॥**
**गर्जति गर्जनाद्ब्राम्त्वदविलुप्तात्मदर्शनात् ॥ ६३ ॥**

---

१ क. ग. °गं नात्यं । २ क. ख. °वभोभ° ।

तद्गतराजशब्दार्थमाह । **ब्रह्मेति** । ज्ञानादज्ञाननिरासादप्रतिबन्धस्वरूपस्फुरणेन भानाद्ब्रह्मविद्राजेत्युक्तिमर्हतीत्यर्थः ॥ ६३ ॥

**तथाऽधिपतिशब्देन स्वातन्त्र्यमभिधीयते ॥**
**स्वार्थः प्रत्यक्तदर्थत्वात्सहेतोर्जगदात्मनः ॥ ६४ ॥**

अधिपतिशब्दस्य राजशब्देन पौनरुक्त्यमाशङ्क्याऽऽह । **तथेति** । राजशब्देन राजनवदित्यर्थः । स्वातन्त्र्यं साधयति । **स्वार्थ इति** ॥ ६४ ॥

**प्रत्यग्विज्ञप्तिमात्रेण समाप्तिं जगदात्मनः ॥**
**आविश्चिकीर्षुः साक्षान्नस्तद्यथेति परा श्रुतिः ॥ ६५ ॥**

तद्यथेत्यादेस्तात्पर्यमाह । **प्रत्यगिति** । कार्यकारणप्रपञ्चस्य ब्रह्ममात्रेणावसानमाविष्कर्तुमिच्छन्ती परा श्रुतिर्दृष्टान्तद्वारा प्रवृत्तेत्यर्थः ॥ ६५ ॥

**चक्रनाभौ यथा प्रोताश्चक्रनेमौ च बाह्यतः ॥**
**अराः प्राणादयस्तद्वदोताः प्रोताः परात्मनि ॥ ६६ ॥**

तत्पदानि व्याचष्टे । **चक्रेति** ॥ ६६ ॥

**व्याचक्षतेऽन्यथैवेमं दृष्टान्तं केचिदात्मनः ॥**
**समस्तादिप्रतिज्ञार्थसिद्ध्ये ब्रह्मवादिनः ॥ ६७ ॥**

तद्यथेत्यादिवाक्यस्य भर्तृप्रपञ्चव्याख्यामुत्थापयति । **व्याचक्षत इति** । दृष्टान्तग्रहणं दार्ष्टान्तिकोपलक्षणम् । अन्यथाव्याख्यानफलं सूचयति । **आत्मन इति** । सप्रपञ्चोऽयमात्मेति प्रतिज्ञेदं सर्वं यदयमात्मेत्यत्र स्थिता तदर्थसिद्ध्यर्थमन्यथाव्याख्यानमित्यर्थः ॥ ६७ ॥

**एकीकृत्य स्वमात्मानमक्षरे परमात्मनि ॥**
**चक्रनाभिवदात्मानं कल्पयित्वा विचक्षणः ॥ ६८ ॥**
**शरीरं नेमिवच्चैतद्देवताद्यरवज्जगत् ॥**
**कल्पयित्वा निदिध्यासेत्तद्भावाविष्टधीः सदा ॥ ६९ ॥**

तदेव स्फुटयति । **एकीकृत्येति** । न तावदात्मा परस्माद्भिद्यत ऐक्यश्रुतेः स च चक्रनाभिस्थानीयो देहं पञ्चभूतात्मकं चक्रनेमिस्थानीयं देवतादि जगदरवदात्मनि भूतेषु चार्पितं कल्पयित्वा तत्रैव कल्पितेऽर्थे स्थिरबुद्धिः सदा ध्यानं कुर्यादित्यर्थः ॥ ६८ ॥ ६९ ॥

**अनेन ध्यानमार्गेण ध्यायमानस्य सर्वदा ॥**
**तप्तलोहवदेकत्वं भवत्यावृत्तिदुर्लभम् ॥ ७० ॥**

---

१ ग. स्वार्थप्र° । २ ख. कल्पयेत ।

किमनेन ध्यानेनेत्याशङ्क्याऽऽह । **अनेनेति** । सदातनमेकत्वं न ध्यानफलमित्याशङ्क्य बन्धध्वस्तिस्तस्येति मत्वा विशिनष्टि । **आवृत्तीति** ॥ ७० ॥

**एतामवस्थामापन्नो ध्यातृत्वाद्विनिवर्तते ॥**
**अविद्यातिमिरान्धानां ध्येयत्वमधिगच्छति ॥ ७१ ॥**

एकत्वमापन्नोऽपि ध्यानमातनुयादिति चेन्नेत्याह । **एतामिति** । न केवलमैक्यफलं ध्यातृत्वनिवृत्तिः किंतु ध्येयत्वाप्तिरपीत्याह । **अविद्येति** ॥ ७१ ॥

**निश्चित्याचिन्त्यमेतद्यो योगिनां निलयं परम् ॥**
**यं प्राप्य न निवर्तन्ते निर्वाणं परमं गताः ॥ ७२ ॥**

ध्येयस्वरूपं निरूपयति । **निश्चित्येति** । यं ज्ञात्वा मुक्ताः सन्तो न पुनः संसरन्ति तं प्रकृताचिन्त्यं परमात्मानं ज्ञानिनामयनं प्रत्यक्तया निश्चित्य यः स्थितः स ध्येयत्वमज्ञान्प्रत्याप्नोतीत्यर्थः ॥ ७२ ॥

**प्रत्येकं प्राणिनां ह्येतद्ब्रह्मचक्रमवस्थितम् ॥**
**असंबोधात्तु तैः सर्वैः प्राणिभिर्नानुभूयते ॥ ७३ ॥**

चक्रक्लृप्तिध्यानं तत्फलं चेति परेषां प्रक्रियां प्रदर्श्य तेषामेव प्रक्रियान्तरमाह । **प्रत्येकमिति** । ब्रह्मणः सर्वप्राणिहृदयसंनिधानमशेषश्रुतिस्मृतिप्रसिद्धमिति हिशब्दार्थः । यदि ब्रह्माख्यं चक्रं सर्वप्राणिनां हृदि सर्वदा स्थितं किमिति तर्हि सर्वैर्नानुभूयते तत्राऽऽह । **असंबोधादिति** ॥ ७३ ॥

**वैश्वानरवरात्केचिदेवं व्याचक्षते स्फुटम् ॥**
**अक्षरानन्वयात्त्याज्या व्याख्येयं साध्वपीदृशी ॥ ७४ ॥**

पूर्वपक्षमुपसंहरति । **वैश्वानरेति** । आपातरमणीयाऽपीयं व्याख्या न स्वीकार्या श्रुत्यक्षरबाह्यत्वादित्याह । **अक्षरेति** । ईदृशी यथोक्तप्रक्रियाविशिष्टेति यावत् ॥ ७४ ॥

**सामर्थ्यादपि संप्राप्तो न चेदक्षरपूर्वकः ॥**
**तादृङ्नोपास्य एवेति प्राहुरागमवेदिनः ॥ ७५ ॥**

दृष्टान्तसामर्थ्यादात्मनो नानारसत्वदृष्टेरस्मदिष्टोऽर्थो न श्रुतिबाह्य इत्याशङ्क्याऽऽह । **सामर्थ्यादिति** । यद्यपि दृष्टान्तसामर्थ्यात्त्वदिष्टोऽर्थो भाति तथाऽपि नासौ श्रौतोऽस्मिन्प्रकरणे तद्वाचकपदाभावादपूर्वादिवाक्यविरोधाच्चातो नाऽऽत्मनोऽनेकरूपत्वाय दृष्टान्तस्तथाचाऽऽर्थिकोऽप्यर्थो नाऽऽदेयो यश्चार्थार्दर्थो न स चोदनार्थ इति स्थितेरन्यथा चातिप्रसक्तिरित्यर्थः ॥ ७५ ॥

**प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि ॥**
**अदृष्टशतभागोऽपि न कल्प्यो निष्प्रमाणकः ॥ ७६ ॥**

किंच ब्रह्मणोऽन्यदपि न नानारसं कल्पकाभावादन्यथाऽतिप्रसङ्गादित्याह । **प्रमाणवन्तीति** ॥ ७६ ॥

**यथोक्तचक्रविन्यासो न श्रुतोऽक्षरपूर्वकः ॥**
**न चाप्युपासनपदं कृत्स्नेऽपि ब्राह्मणे श्रुतम् ॥ ७७ ॥**

ननु न ब्रह्म समस्तादिरूपं कल्प्यते किंतु चक्रविन्यासः श्रुत्यैवं श्राव्यते नेत्याह । **यथोक्तेति** । यत्तु निदिध्यासेदिति तत्राऽऽह । **न चेति** ॥ ७७ ॥

**नाभिनेमिद्वयस्थाने दृष्टान्तत्वेन संमते ॥**
**दार्ष्टान्तिकोक्तावात्मैव यतः साक्षादिह श्रुतः ॥ ७८ ॥**

किंच दृष्टान्तस्थस्य न सर्वस्य दार्ष्टान्तिकेऽन्वयस्तद्भावविरोधादतो न ब्रह्म समस्तादिरूपमित्याह । **नाभीति** ॥ ७८ ॥

**समर्पितत्वं प्राणादेः श्रूयते प्रत्यगात्मनि ॥**
**भूतेषु देवतादेस्तदश्रुतं गृह्यते कथम् ॥ ७९ ॥**

यत्तु चक्रनाभिस्थानीये प्रतीचि चक्रनेमिस्थानीयदेहात्मकभूतेषु च देवतादि जगदरवदर्पितमिति तत्राऽऽह । **समर्पितत्वमिति** ॥ ७९ ॥

**वहिरन्तर्विभागोऽस्य कार्यकारणता तथा ॥**
**तदेतदिति वाक्येन प्रतीचोऽत्रैव वार्यते ॥ ८० ॥**

प्रधानवाक्यविरोधाच्च न समस्तादिरूपं ब्रह्मेत्याह । **वहिरिति** ॥ ८० ॥

**अथ योऽन्यामिति तथा भेददृष्टिनिराकृतेः ॥**
**उपास्योपासनविधिर्न सम्यगिति मे मतिः ॥ ८१ ॥**

इतश्च ब्रह्म न समस्तादिरूपमित्याह । **अथेति** । ननु देवतान्तरे दृष्टिर्निन्दितत्वान्नेष्टा ब्रह्मदृष्टिस्त्वनिन्दितोपपद्यते तत्तस्मिन्नुपास्तिविधिप्रवृत्तेः सप्रपञ्चत्वं न हि निष्प्रपञ्चमुपास्यते तत्राऽऽह । **उपास्येति** । न हि भेदं विनोपास्यादिप्रकारसंभवः प्रकृते च भेददृष्टिरपोद्यते तन्नात्रोपास्तिविधिरित्यर्थः ॥ ८१ ॥

**अज्ञानमात्रव्यवधेर्ब्रह्मैकात्म्यफलस्य च ॥**
**ब्रह्मविद्यातिरेकेण तत्प्राप्तौ नापरा क्रिया ॥ ८२ ॥**

ब्रह्म सप्रपञ्चमुपास्यत्वात्प्राणवदित्यत्रासिद्धिमुक्त्वा तदुपास्तिरात्मनो ब्रह्मत्वाय फलान्तराय वेति विकल्प्याऽऽद्यं दूषयति । **अज्ञानेति** । न द्वितीयः फलान्तराभावान्न हि जीवस्याविद्याध्वस्तौ ब्रह्माप्तिं विनाऽन्यदिष्टं ज्ञानादेव च तत्सिद्धेर्व्यर्था तदुपासेति चार्थः ॥ ८२ ॥

**यद्वाचाऽनभ्युदितं मनुते मनसा न यत् ॥**
**तदेव ब्रह्म विद्धि त्वं न त्विदं यदुपासते ॥ ८३ ॥**

उपास्यत्वहेतोरुपास्तिप्रयुक्तफलवत्त्वोपाधिना व्याप्यत्वासिद्धिमुक्त्वा श्रुतिविरोधमाह । **यदिति** ॥ ८३ ॥

**उपासिक्रियया व्याप्तिरब्रह्मत्वस्य लक्षणम् ॥**
**श्रुत्याऽकारि यतस्तादृक्कथं ब्रह्मेत्युपास्यते ॥ ८४ ॥**

नन्वसंस्कृतवागाद्यगोचरत्वेनोपास्यत्वनिषेधेऽपि ब्रह्मणः संस्कृततद्गम्यत्वेनोपास्यत्वमविरुद्धमित्याशङ्क्य श्रुत्यर्थमाह । **उपासीति** । तादृगित्युपासिक्रियाव्याप्तमिति यावत् । उपास्यतेऽनुश्रीयतेऽङ्गी क्रियत इत्यर्थः ॥ ८४ ॥

**दृश्यते त्वग्र्यया बुद्ध्या मनसैवेति यद्वचः ॥**
**तदात्मविद्याविध्यर्थं नोपासनविधायकम् ॥ ८५ ॥**

ननु ब्रह्मोपास्तिविधिरपि क्वचिदस्ति तथाच श्रुत्यैव श्रुतेरपसारितत्वादुपास्यं ब्रह्मेति तत्राऽऽह । **दृश्यते त्विति** ॥ ८५ ॥

**रजस्तमोनुविद्धेन यतो न ब्रह्म गम्यते ॥**
**शुद्धचेतस्तया तस्माद्विद्याद्ब्रह्मान्तरात्मनि ॥ ८६ ॥**

विद्याविधानस्य प्रागपहस्तितत्वात्कथमस्य तदर्थतेत्याशङ्क्याऽऽह । **रज इति** । ब्रह्मविद्यार्थं बुद्धिशुद्धिविध्यर्थं यथोक्तं वाक्यमित्यर्थः ॥ ८६ ॥

**यद्वाऽनात्माभिसंबन्धात्पूर्वमैकात्म्यनिष्ठिता ॥**
**सर्वमाणभृतां बुद्धिरित्यर्थो वचसो भवेत् ॥ ८७ ॥**

यथोक्ते वाक्ये शुद्धिविधिवाचकाभावात्कथं तदर्थतेत्याह । **यद्वेति** । विषयानुषङ्गात्प्रागेव सर्वेषां धीर्जन्ममात्रेण चिदाकारेत्येषोऽर्थो वाक्यस्येष्यतेऽग्र्ययेतिविशेषणानुगुण्यादित्यर्थः ॥ ८७ ॥

**एषोऽर्थो वचसस्तस्य न तूपासाविधिर्भवेत् ॥**
**प्रध्वस्तभेद ऐकात्म्ये नोपासनविधिर्यतः ॥ ८८ ॥**

ब्रह्मोपास्तिविधायकत्वेन शङ्कितश्रुतेर्गत्यन्तरमुपसंहरति । **एष इति** ॥ ८८ ॥

**चक्रकृप्तिरतोऽसाध्वी श्रुत्यादिमितिवाध्यतः ॥**
**तदेतदितिवाक्यार्थो ग्राह्योऽतः संभवान्मितेः ॥ ८९ ॥**

ब्रह्मणः समस्तादिरूपत्वे मानाभावात्तद्विरोधाच्चायुक्ता भर्तृप्रपञ्चव्याख्येति निगमयति । **चक्रेति** । परपक्षस्योपेक्ष्यत्वमुक्त्वा स्वपक्षस्याऽऽदेयत्वमाह । **तदिति** । तदेतद्ब्रह्मापूर्वमित्यादिवाक्यस्यार्थस्तद्यथेत्यादिवाक्ये विवक्षितो ग्राह्यः पक्षान्तरायोगोक्तेरैकरस्यावेदकागमभावाच्चेत्यर्थः ॥ ८९ ॥

**तदाहुरिति वाक्येन ब्रह्मविद्याप्रयोजनम् ॥**
**साक्षेपं प्रागुपन्यस्तं तस्यायं निर्णयः कृतः ॥ ९० ॥**

तस्मात्तत्सर्वमभवदिति विद्याफलमुक्तं तृतीये तदत्रोपसंह्रियत इति पक्षान्तरमाह । **तदिति** ॥ ९० ॥

**आत्मेत्येवेति सूत्रस्य व्याख्येयं सम्यगात्मनः ॥**
**पञ्चभिर्ब्राह्मणैः श्रुत्याऽकारि कृत्स्नात्मबुद्धये ॥ ९१ ॥**

तद्यथेत्यादि व्याख्यायेदं वैतदित्याद्यवतारयितुं वृत्तमनुद्रवति । **आत्मेतीति** । 'विद्यासूत्रं तृतीये प्रस्तुतं तस्येयं व्याख्या पञ्चभिरतीतब्राह्मणैः श्रुत्या सम्यगेव कृता सा च त्वमर्थस्याऽऽत्मनो यत्कृत्स्नं पूर्णं तदर्थो ब्रह्म तदात्मत्वसाक्षात्कारहेतुरिति योजना ॥ ९१ ॥

**समाप्ता ब्रह्मविद्येयं कैवल्यावाप्तयेऽखिला ॥**
**यामवोचत्स्वभार्यायै याज्ञवल्क्योऽतिविस्तरात् ॥ ९२ ॥**

व्याख्यातेऽपि सूत्रे ब्रह्मविद्या नाद्यापि स्पष्टीकृतेत्याशङ्क्याऽऽह । **समाप्तेति**॥९२॥

**यथोक्तब्रह्मविद्याया इत आरभ्य भण्यते ॥**
**आख्यायिकेयं स्तुत्यर्था प्रवृत्त्यङ्गतया परा ॥ ९३ ॥**

सा सफला समाप्ता चेदुत्तरग्रन्थवैयर्थ्यमित्याशङ्क्याऽऽह । **यथोक्तेति** । स्तुतेर्वैफल्यमाशङ्क्याऽऽह । **प्रवृत्तीति** ॥ ९३ ॥

**आख्यायिकार्थं मन्त्राभ्यां व्याचष्टे श्रुतिरादरात् ॥**
**श्रुतिमन्त्रस्तुतो ह्यर्थ आदेयत्वं निगच्छति ॥ ९४ ॥**

ब्रह्मविद्यां स्तोतुमानीता याऽऽख्यायिका तदर्थे वक्तव्ये तस्या इत्यादि भाष्यं व्याचष्टे । **आख्यायिकार्थमिति** । मन्त्रौ वक्ष्यमाणौ । श्रुत्युक्तार्थस्य मन्त्राभ्यामुक्तिरनर्थिकेत्याशङ्क्याऽऽह । **श्रुतीति** । आदेयत्वे स्तुत्यतिरेको हेतुरितिद्योतको हिशब्दः ॥९४॥

**अवाप्तपुरुषार्थोऽपि यामरक्षच्छचीपतिः ॥**
**प्रत्यग्विद्यैव तेन स्यादुदारफलसाधनम् ॥ ९५ ॥**

स्तुतिस्तर्हि कीदृशीत्याशङ्क्याऽऽह । **अवाप्तेति** । सैव प्रत्यग्विद्येति योज्यम् । तेन कृतकृत्यस्यापि तत्पालनेनेत्यर्थः ॥ ९५ ॥

**महता च यतोऽश्विभ्यामायासेनार्जिता पुरा ॥**
**ब्रह्मविद्या ततो नास्या मुक्तौ स्यात्साधनं परम् ॥ ९६ ॥**

विद्यायाः स्तुत्यन्तरमाह । **महता चेति** ॥ ९६ ॥

**निःशेषपुरुषार्थानां कैवल्योत्तमता यथा ॥**
**साधनानामपि तथा तद्विद्योत्तमसाधनम् ॥ ९७ ॥**

स्तुत्यन्तरमाह । **निःशेषेति** ॥ ९७ ॥

**अश्व्याथर्वणयोर्वृत्तं ब्रह्मविद्याप्तिकारणात् ॥**
**यत्प्रागाविष्कृतिस्तस्य मन्त्राभ्यां क्रियतेऽञ्जसा ॥ ९८ ॥**

विद्यास्तुतिप्रकारं प्रदर्श्याऽऽख्यायिकार्थं मन्त्राभ्यामित्यत्रोक्तमनुवदति । **अश्वीति** ॥ ९८ ॥

अश्विभ्यां प्रार्थितोऽथर्वा मधुविद्यामिमां किल ॥
तावथर्वाऽब्रवीदिन्द्रश्छिन्द्यान्मे ब्रुवतः शिरः ॥ ९९ ॥
अतो भयादिमां विद्यां युवाभ्यां न ब्रवीम्यहम् ॥
तमूचतुः पुरैवाऽऽवामिन्द्रच्छेदनतः शिरः ॥ १०० ॥
छित्त्वा तवाऽश्व्यं संधाय शिरः श्रोष्यावहे ततः ॥
ब्रूह्यतोऽश्व्येन शिरसा मधुविद्यां विमुक्तये ॥ १०१ ॥
एवमस्त्वित्यनुज्ञाते छित्वा तस्याथ तच्छिरः ॥
समधत्तां शिरोऽश्वस्य तेन विद्यामुवाच सः ॥ १०२ ॥
पुनश्छिन्नेऽथ शिरसि तेनेन्द्रेणाश्विनावपि ॥
समधत्तां शिरस्तस्य विद्यां स्वशिरसाऽथ सः ॥ १०३ ॥
शेषामवोचदश्विभ्यामृतायन्नात्मनो वचः ॥
यत एवमतस्तस्मात्सत्यं रक्ष्यं प्रयत्नतः ॥ १०४ ॥

मन्त्राभ्यामाविष्क्रियमाणमाख्यायिकार्थं संक्षिपन्प्रवर्ग्यप्रथमाध्यायस्थाख्यायिकाश्रुतेरर्थमाह । **अश्विभ्यामित्यादिना** । किलेति श्रुतिमात्रसिद्धतया स्वार्थस्य परोक्षत्वोक्तिः । ततोऽश्वीयशिरोवशादिति यावत् । इन्द्रप्रयुक्तभयाभावोऽतःशब्दार्थः । ब्राह्मणानुज्ञानन्तरं तदीयशिरश्छेदस्यानुज्ञाधीनतया निर्दोषत्वार्थोऽथशब्दः । विद्याप्रपञ्चनोपक्रमानन्तर्यं पुनःशब्दार्थः । शिरश्छेदानन्तर्यमथशब्दार्थः । स्वशिरःसंधानानन्तरमतिहृष्टिर्विद्याशेषदानहेतुरथेत्युच्यते । किमर्थं ब्राह्मणो जीवितसंदेहे प्रवृत्तस्तत्राऽऽह । **ऋतायन्निति** । तस्य तात्पर्यमाह । **यत इति** । प्राणसंशयमापन्नोऽपि यस्मादृषिः सत्यं रक्षितवांस्तस्माज्जीवितादपि सत्यं रक्ष्यं श्रेयोर्थिभिरित्यर्थः । असत्यप्रसङ्गेऽपि तदकरणं प्रयत्नः ॥ ९९ ॥ १०० ॥ १०१ ॥ १०२ ॥ १०३ ॥ १०४ ॥

इदं वै तन्मधु प्रोक्तं यत्तत्प्रकरणान्तरे ॥
दध्यङ् ह वा आभ्यामिति श्रूयते ब्राह्मणोक्तितः ॥ १०५ ॥
मधुब्राह्मणमेतत्तद्यत्प्रागुक्तमभूत्स्फुटम् ॥
दध्यङ्ङाथर्वणोऽश्विभ्यां यदुवाचाऽऽत्मबोधनम् ॥ १०६ ॥
अश्व्याथर्वणयोरेतत्कर्म पश्यन्नृचाऽब्रवीत् ॥
ऋषिरार्षेयदृष्ट्यैव तदेतदभिधीयते ॥ १०७ ॥

आख्यायिकार्थं व्याख्यायेदमित्यादि व्याचष्टे । **इदमिति** । यत्प्रवर्ग्यप्रकरणे मधु सूचितं न व्यक्तीकृतं तदिदमेव यदियं पृथिवीत्यादिनोक्तमित्यर्थः । कथं प्रकरणान्तरेण मधु सूचितमत आह । **दध्यङ्ङिति** । आभ्यामित्यादि ब्राह्मणोक्तितः श्रूयते प्रथमेऽ-

---

१ क. °प्रवचनो° । २ ग. यत्न प्रक° ।

ध्याये मधुब्राह्मणमिति संबन्धः । तर्हि तेन गतार्थत्वात्किमनेन मधुब्राह्मणेनेत्याशङ्क्याऽऽह । **एतदिति ।** यदात्मज्ञानसाधनं मधुब्राह्मणं ब्राह्मणोऽश्विभ्यां प्रवर्ग्यसंनिधावव्यक्तमुक्तवांस्तदेतदेव यदियमित्यादिना स्फुटमुक्तमित्यर्थः । तदेतद्दषिरित्यादेरर्थमाह । **अश्वीति ।** आर्षदृष्टिः सूक्ष्मार्था प्रकृष्टधर्मजा प्रतिभा तया मन्त्रद्रष्टा प्रकृतं कर्म शिष्याचार्यसंबन्धं पश्यन्मन्त्रेणावोचदित्यर्थः । तत्र तद्वामित्यादिकामृचमवतारयति । **तदेतदिति ।** तत्कर्म वृत्तमेतद्दृष्टिदृष्टं मन्त्रेणोच्यत इत्यर्थः ॥ १०५ ॥ १०६ ॥ १०७ ॥

आविष्करोमि तत्कर्म युवयोरद्य हे नरौ ॥
लाभाय सनये क्रूरं चक्रथुर्यद्रहस्यगौ ॥ १०८ ॥
वृष्टेरागमनं यद्वत्स्तनयित्नुः प्रबोधयेत् ॥
रहस्यं युवयोः कर्म तद्वदाविष्करोम्यहम् ॥ १०९ ॥
अश्वस्य शिरसा वां यदवोचन्मध्वसावृषिः ॥
दधीचोऽश्व्यं शिरश्छित्वा निकृत्यास्य शिरोऽश्विनौ ॥११०॥
संधत्तां सोऽश्वशिरसा युवाभ्यां मध्वथाब्रवीत् ॥
ऋतायन्सत्यमात्मानं कर्तुमिच्छन्नसावृषिः ॥ १११ ॥
प्राणसंशयमापन्नस्तस्माच्चैवावसीयते ॥
आत्मनो मरणेनापि सत्यं रक्ष्यं प्रयत्नतः ॥ ११२ ॥

तद्वामित्यादिमन्त्रपदानि व्याकरोति । **आविष्करोमीत्यादिना ।** यदवोचत्तदप्याविष्करोमीति संबन्धः । अथर्वणायेत्यादिमन्त्रान्तरं व्याचष्टे । **दधीच इत्यादिना ।** प्रतिज्ञापालनं प्रज्ञावतामावश्यकमितिद्योतनार्थोऽथशब्दः । प्राणसंशयमापन्नोऽप्यात्मानं सत्यं कर्तुमिच्छन्मध्वब्रवीदिति संबन्धः । ऋतायन्नित्यस्य तात्पर्यं यत एवमित्यत्रोक्तमवसरप्राप्तावनुवदति । **तस्माच्चेति** ॥ १०८ ॥ १०९ ॥ ११० ॥ १११ ॥ ११२ ॥

आदित्यविषयं त्वाष्ट्रं मध्ववोचदथर्वणः ॥
हे दस्रावपि कक्ष्यं यत्प्रत्यग्याथात्म्यदर्शनम् ॥ ११३ ॥

त्वाष्ट्रमित्यादि व्याचष्टे । **आदित्येति ।** यत्तदप्यवोचदिति संबन्धः ॥ ११३ ॥

उपक्षयकरौ व्याधेर्दस्रौ स्यातामतोऽश्विनौ ॥
न केवलं त्वाष्ट्रमेव कक्ष्यमप्यब्रवीन्मधु ॥ ११४ ॥

दस्रशब्दार्थमाह । **उपक्षयेति ।** अपिशब्दार्थमाह । **नेति** ॥ ११४ ॥

प्रवर्ग्याध्याययोरेवं त्वाष्ट्रज्ञानोपसंहृतिम् ॥
मन्त्रद्वयेन कृत्वाऽथ कक्ष्यज्ञानोपसंहृतिः ॥ ११५ ॥
क्रियतेऽध्याययोरेवं मधुकाण्डं समाप्यते ॥
श्रुतिमन्त्रोपदिष्टोऽर्थो यस्मादाद्रियते ततः ॥ ११६ ॥

पुर इत्याद्यवतारयितुं वृत्तमनुवदति । **प्रवर्ग्येति** । अनन्तरमन्त्रयोस्तात्पर्यमाह । **अथेति** । त्वाष्ट्रज्ञानस्य कक्ष्यज्ञानं प्रति हेतुत्वं द्योतयितुमथेत्युक्तम् । अध्यायैर्ज्ञानद्वये निर्दिष्टे फलितमाह । **एवमिति** । अध्यायाभ्यामुक्तार्थस्य किमिति मन्त्राभ्यामुपसंहृति-स्तत्राऽऽह । **श्रुतीति** । तस्मादुपसंहारो मान्त्रो युक्त इति शेषः ॥ ११५ ॥ ११६ ॥

**पुरश्चक्रे शरीराणि द्विपदः पक्षिमानुषान् ॥**
**चतुष्पदोऽथ पशवः पुरश्चक्रे स्वमायया ॥ ११७ ॥**
**पुरो भुक्तशरीरात्स पक्षी लिङ्गमिहोच्यते ॥**
**पुरो नवशरीराणि प्राविशज्जलचन्द्रवत् ॥ ११८ ॥**

**पुर इति** । अथशब्दस्तथाशब्दपर्यायः । कूटस्थस्य शरीरनिर्माणे हेतुमाह । **स्वमा-ययेति** । पक्षी सूक्ष्मभोगवानित्यर्थः । अज्ञस्य स्थूलदेहत्यागानन्तरं सूक्ष्मदेहप्राप्तिस्तत-श्चाभिनवस्थूलशरीरप्राप्तिरिति पारंपर्यं यावदज्ञानमवश्यंभावीत्यथशब्दार्थः । वास्तवं देहयोगं व्यासेद्धुमुदाहरणम् ॥ ११७ ॥ ११८ ॥

**कस्मात्पुरुष इति चेत्पुरुषार्थं श्रुतिः स्वयम् ॥**
**स वा इत्यादिनाऽऽचष्टे सर्वैकात्म्यावबुद्धये ॥ ११९ ॥**

स वा अयमित्यादिवाक्यस्याऽऽकाङ्क्षापूर्वकं तात्पर्यमाह । **कस्मादिति** । पुरुष-शब्दार्थोक्तिफलमाह । **सर्वेति** ॥ ११९ ॥

**पुरुषोऽयं भवेदात्मा यतः शेते स पूःषु ॥**
**सर्वासु तेन लोकेऽस्मिन्पुरुषोऽयमितीर्यते ॥ १२० ॥**

तात्पर्यमुक्त्वा पदानि व्याकरोति । **पुरुषोऽयमिति** । तदर्थं निगमयति । **तेनेति** ॥ १२० ॥

**परिच्छेदप्रसङ्गश्चेन्नैवं यस्मादिदं जगत् ॥**
**नैनेनानावृतं किंचिन्नाव्याप्तं द्योततन्तुवत् ॥ १२१ ॥**

आधाराधेयनिर्देशाद्भेदं शङ्कते । **परिच्छेदेति** । नेत्यादिवाक्येनोत्तरमाह । **नैव-मिति** । तद्व्याचष्टे । **नाव्याप्तमिति** ॥ १२१ ॥

**नासंवृतं तथा किंचित्प्रोततन्तुवदात्मना ॥**
**पूर्णत्वात्पुरुषः सोऽयं ब्रह्मैकं पुरुषस्ततः ॥ १२२ ॥**

वाक्यान्तरस्य पुनरुक्तिं परिहरन्नर्थमाह । **नेत्यादिना** । दृष्टान्ताभ्यां वाक्ययोरर्थ-कथने पुनरुक्तिसमाधेर्व्यक्ततेति वक्तुं हिशब्दः । ओतप्रोतत्वेन सर्वं जगदात्मव्याप्तमि-त्यक्षराधिकरणन्यायेन स्थिते फलितमाह । **पूर्णत्वादिति** । ब्रह्म पूर्णं कथं पुरुषस्य तद्भावस्तत्राऽऽह । **ब्रह्मेति** ॥ १२२ ॥

१ ख. °गे मन्त्रोपप° ।

यस्मात्परं नापरमस्ति किंचि-
यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ॥
वृक्ष इव स्तब्धो दिवि तिष्ठत्येक-
स्तेनेदं पूर्णं पुरुषेण सर्वम् ॥ १२३ ॥

पूर्णमेकरसं ब्रह्मेत्यत्र मन्त्रान्तरमाह । **यस्मादिति** । कार्यं कारणमन्तर्बहिरिति विशेषो यत्र नास्तीत्यर्थः । कश्चिदिति च्छान्दसम् । तस्य कौटस्थ्यमाह । **वृक्ष इति** । स्वमहिमप्रतिष्ठिततामाह । **दिवीति** । फलितमाह । **तेनेति** ॥ १२३ ॥

आवृतं ज्ञप्तिमात्रेण सर्वमात्मीकृतं जगत् ॥
संवृतं प्रतिषिद्धं तद्यदनात्मेव लक्ष्यते ॥ १२४ ॥

नेनेनेत्यादिवाक्यस्यार्थान्तरमाह । **आवृतमिति** । द्वितीयवाक्यस्य व्याख्यान्तरमाह । **संवृतमिति** ॥ १२४ ॥

तन्नास्ति कारणं कार्यं यन्नानेनाऽऽत्मसात्कृतम् ॥
तन्नास्ति कारणं कार्यं यन्नानेनाऽऽत्मना हुतम् ॥ १२५ ॥

आवृतमित्यादि व्यतिरेकद्वारा विवृणोति । **तन्नेति** । संवृतमित्याद्यपि तथैव द्वारा विशदयति । **तदिति** ॥ १२५ ॥

रूपं रूपं प्रति ह्येष प्रतिरूपो बभूव ह ॥
देहं देहं प्रविष्टः संस्तद्देहाकारतामगात् ॥ १२६ ॥

मन्त्रान्तरमादाय व्याकरोति । **रूपमित्यादिना** । अनेकरूपत्वं लोकवाद्यनुभवानुसारीति वक्तुं निपातद्वयम् ॥ १२६ ॥

मायाभिः प्रत्यगज्ञानैर्यदि वाऽनृतबुद्धिभिः ॥
गम्यते पुरुरूपोऽज्ञैरेकोऽपि जलसूर्यवत् ॥ १२७ ॥

परस्यानेकरूपत्वे किं कारणमित्याशङ्क्योपादानं निमित्तं वा पृष्टमिति विकल्प्याऽऽद्यं प्रत्याह । **मायाभिरिति** । एकस्मिन्बहुवचनायोगमाशङ्क्य प्रकारभेदात्तदुपपत्तिं मत्वा पक्षान्तरं वदन्द्वितीयं निराह[3] । **यदि वेति** ॥ १२७ ॥

प्रत्यग्याथात्म्यबोधार्थं रूपं मायामयं विभोः ॥
शास्त्राचार्यादिना नर्ते ज्ञातुं वस्त्विह शक्यते ॥ १२८ ॥

किमर्थमिदं बहुरूपत्वमित्याशङ्क्य पाठक्रमादर्थक्रमस्य बलवत्त्वात्तदस्येत्यादेरर्थमाह । **प्रत्यगिति** । मायाकृतं रूपं विनाऽपीदं स्वतो ज्ञातुं शक्यमित्याशङ्क्याऽऽह । **शास्त्रेति** ॥ १२८ ॥

---

१ क. किंचित् । २ क. ग. हुतम् । ३ ख. निरस्यति ।

**कुतोऽस्य बहुरूपत्वमिति हेतुरिहोच्यते ॥**
**युक्ता ह्यस्येति वचसा मिथ्याज्ञानैकहेतुतः ॥ १२९ ॥**

यदि वेत्यत्र परस्य बहुरूपत्वे निमित्तमुक्तं तदेव साधयितुमाकाङ्क्षापूर्वकं युक्ता हीत्याद्यादत्ते । **कुतोऽस्येति ।** अस्य प्रतीचो हरिशब्दितानीन्द्रियाणि ज्ञानात्प्रागज्ञानतः संबद्धानि स च संबन्धः संबन्धीन्द्रियोत्थमिथ्याज्ञानादेकस्माद्धेतोरात्मनो बहुरूपभाक्त्वे भवति निमित्तमिति हेतुवचो व्याचष्टे । **मिथ्येति** ॥ १२९ ॥

**स्रजस्तत्त्वापरिज्ञानाद्युक्ता दण्डादयो यथा ॥**
**प्रत्यक्तत्त्वापरिज्ञानादात्मनो हरयस्तथा ॥ १३० ॥**

अज्ञानादिन्द्रियसंबन्धं प्रतीचो दृष्टान्तेनाऽऽह । **स्रज इति** ॥ १३० ॥

**इन्द्रियाण्येव हरयो हरणाद्विषयान्प्रति ॥**
**दश तानि सहस्राणि शतानि प्राणिभेदतः ॥ १३१ ॥**

हरीणामात्मसंबन्धेऽज्ञाननिबन्धनेऽपीन्द्रियसंबन्धे किमायातमित्याशङ्क्याऽऽह । **इन्द्रियाणीति ।** शता दशेत्यस्यार्थमाह । **दशेति ।** तान्येकादशेत्यङ्गीकारविरोधमाशङ्क्याऽऽह । **प्राणीति** ॥ १३१ ॥

**नान्यो हेतुरविज्ञानादिन्द्रियादेरिहाऽऽत्मनि ॥**
**यतोऽयमेव हरयो यावत्संख्या तदाश्रया ॥ १३२ ॥**

युक्ता हीति संबन्ध उक्तस्तत्कथमयमित्यादिना तद्विरुद्धं तादात्म्यमुच्यते तत्राऽऽह । **नान्य इति ।** अज्ञानविलासत्वादिन्द्रियाद्यात्ममात्रं न हि संबन्धोऽपि तत्र वास्तवोऽस्तीत्यर्थः । तथा संख्यासंख्येययोरात्मगतत्वेन तन्मात्रत्वाद्युक्तं तादात्म्यवचनमित्यर्थः ॥ १३२ ॥

**अयमेवेन्द्रियत्वेन देहत्वेन च कल्पितः ॥**
**तथा शतसहस्रादिसंख्याभेदेन चाप्ययम् ॥ १३३ ॥**

इन्द्रियादेरज्ञानजत्वे कारणाज्ञानमात्रत्वं युक्तं नाऽऽत्मत्वमित्याशङ्क्य तत्तदिन्द्रियादिरूपेणाऽऽत्मन एवाविद्यया कल्पितत्वाद्युक्तमिन्द्रियादेस्तन्मात्रत्वमित्याह । **अयमेवेति** ॥ १३३ ॥

**नामरूपक्रियाभेदैर्यथा पूर्वमवादिषम् ॥**
**अयमेव तथाऽरूपः कल्पितोऽविद्ययाऽद्वयः ॥ १३४ ॥**

अद्वयोऽप्यात्मा देहाद्यात्मना कल्पितोऽविद्ययेत्युक्तं दृष्टान्तेन स्पष्टयति । **नामेति ।** यथाऽव्याकृतप्रक्रियादौ नामाद्यनात्मप्रपञ्चात्मना प्रत्यगात्मैव कल्पित इत्यवादिष्म तथैवासावरूपोऽद्वयोऽप्यविद्यया देहाद्यात्मना कल्पित इत्यर्थः ॥ १३४ ॥

**तदेतत्कल्पितं सर्वं सहेतु फलवज्जगत् ॥**
**प्रत्यगात्मात्मकं भास्वत्प्रज्ञानघनतत्त्वकम् ॥ १३५ ॥**

प्रतीचः स्वाविद्यया जगदात्मना कल्पितत्वे सर्वस्य तन्मात्रत्वं फलतीत्युपसंहरति । **तदेतदिति** ॥ १३५ ॥

**निःशेषोपनिषत्सारस्तदेतदिति सांप्रतम् ॥**
**उक्त्याऽऽविष्क्रियते साक्षात्करविन्यस्तबिल्ववत् ॥ १३६ ॥**

वाक्यार्थव्याख्यार्थमित्थं भूमिकां गतेन संदर्भेणाऽऽरचय्य तत्परस्य तदेतदित्यादिवाक्यस्य तात्पर्यमाह । **निःशेषेति** ॥ १३६ ॥

**अज्ञातं संशयज्ञातं मिथ्याज्ञातमिदं जगत् ॥**
**तदेतदित्यनूद्यैतत्तत्त्वमवबोध्यते ॥ १३७ ॥**

पदद्वयस्यार्थमाह । **अज्ञातमिति** । कार्यकारणात्मकं त्रिविधं जगत्तच्छब्देनानूद्य तस्य वास्तवं रूपमेतच्छब्देनोक्त्वा सामानाधिकरण्यादैकरस्यं द्योत्यत इत्यर्थः ॥१३७॥

**ब्रह्मेति वास्तवं वृत्तं तावदस्यावबोध्यते ॥**
**ज्ञानात्पुराऽपि ब्रह्मैव नातो ज्ञानफलं भवेत् ॥ १३८ ॥**

तदेव तत्त्वं दर्शयन्ब्रह्मशब्दार्थमाह । **ब्रह्मेतीति** । ब्रह्मत्वस्य ज्ञानफलत्वेन तत्साध्यत्वात्कथं सर्वस्य तत्त्वं ब्रह्मेति तत्राऽऽह । **ज्ञानादिति** । पूर्वमपि ज्ञानोत्पत्तेः सर्वं ब्रह्मैव सामानाधिकरण्यश्रुतेरतो न तस्य ब्रह्मत्वं ज्ञानकार्यमित्यर्थः ॥ १३८ ॥

**अपूर्वमिति कार्यत्वनिषेधायाभिधीयते ॥**
**कारणत्वनिषेधाय तथाऽनपरगीरियम् ॥ १३९ ॥**

अपूर्वमित्यादि व्याचष्टे । **अपूर्वमिति** ॥ १३९ ॥

**अनन्तरमिति तयोरन्ध्रस्य प्रतिषेधनम् ॥**
**कार्यकारणयोर्बाह्यमबाह्यमिति वार्यते ॥ १४० ॥**

कार्यकारणयोर्ब्रह्मणो भेदेन स्थितिशङ्कां निरस्यति । **अनन्तरमिति** । तयोरन्वयव्यतिरेकाभावश्चेदभावस्तर्हीत्याशङ्क्याऽऽह । **कार्येति** । बाह्यपदेनाभावो विवक्षितः ॥ १४० ॥

**सत्ता वाऽनन्तरगिरा ब्रह्मणः प्रतिषिध्यते ॥**
**विशेषोऽबाह्यशब्देन ततो वाक्यार्थरूपकम् ॥ १४१ ॥**

ब्रह्मणो निःसामान्यत्वं निश्चेतुमनन्तरपदमित्यर्थान्तरमाह । **सत्तेति** । सामान्यं हि भेदापरपर्यायमन्तरमपेक्षते ब्रह्म त्वनन्तरमतो न सामान्यमित्यर्थः । निर्विशेषत्वं वक्तुमबाह्यपदमित्याह । **विशेष इति** । कार्यकारणयोरन्वयव्यतिरेकाभावपरिहाराय निःसामान्यविशेषब्रह्ममात्रत्वे तदैकरस्यं फलतीत्याह । **तत इति** ॥ १४१ ॥

नाऽऽत्मनोऽन्यत्र संभाव्यमपूर्वादि यदीरितम् ॥
ब्रह्माऽऽत्मैवेत्यतो वक्ति श्रुतिरैकात्म्यसिद्धये ॥ १४२ ॥

अस्तु यथोक्तलक्षणं ब्रह्म प्रतीचस्तु किमायातमित्याशङ्क्योत्तरवाक्यमवतारयति । **नेत्यादिना** ॥ १४२ ॥

पारोक्ष्यप्रतिषेधार्थं ब्रह्माऽऽत्मैवेति भण्यते ॥
ब्रह्मैवाऽऽत्मेति च तथा संसारित्वनिवृत्तये ॥ १४३ ॥

पाठक्रममतिक्रम्यानुवदन्नात्मब्रह्मणोरन्योन्यैक्यमत्रेष्टमिति मन्यते किमर्थमन्योन्यैक्यबोधनमित्यपेक्षायामाह । **पारोक्ष्येति** ॥ १४३ ॥

भिन्नं ब्रह्मापरिज्ञानात्संसारित्वं तथाऽऽत्मनः ॥
तत्त्वज्ञानात्तमोध्वस्तौ नेतीत्यात्माऽवशिष्यते ॥ १४४ ॥

कथं तर्हि तयोर्ब्रह्मात्मस्थयोश्चैतन्यवन्निवृत्तिरित्याशङ्क्याज्ञानजत्वं तावदाह । **भिन्नमिति** । तथेत्यपरिज्ञानमनुकर्षति । पारोक्ष्यादेरज्ञानजत्वफलमाह । **तत्त्वेति** ॥ १४४ ॥

सर्वोऽनुभव एवायमतः सर्वानुभूः परः ॥
कार्त्स्न्यात्सर्वो भवेदेष चिन्मात्रत्वात्तथाऽनुभूः ॥ १४५ ॥

सर्वानुभूरित्यस्यार्थमाह । **सर्व इति** । कथं परस्य सर्वत्वमनुभवत्वं च तदाह । **कार्त्स्न्यादिति** ॥ १४५ ॥

इतीत्युक्तपरामर्शो वेदाज्ञा चानुशासनम् ॥
कर्तव्यमेतद्विज्ञानमिति वेदानुशासनम् ॥ १४६ ॥

इत्यनुशासनमित्यस्यार्थमाह । **इतीत्युक्तेति** । वाक्यार्थमाह । **कर्तव्यमिति** ॥ १४६ ॥

अस्यातिलङ्घने दोषः संसारानर्थसंगतिः ॥
कुर्वतश्च महाल्लाँभ आत्मनः कृतकृत्यता ॥ १४७ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके द्वितीयाध्यायस्य
पञ्चमं ब्राह्मणम् ॥ ५ ॥

श्लोकानामादितः समष्ट्यङ्काः—५६२५

ऐक्यज्ञानं संन्यासपूर्वकश्रवणादिद्वारा कार्यमितिवेदाज्ञातिलङ्घनपालनयोर्दोषगुणौ प्रवृत्त्यर्थत्वेनाऽऽह । **अस्येति** ॥ १४७ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां द्वितीयाध्यायस्य
पञ्चमं मधुब्राह्मणम् ॥ ५ ॥

---

१ ख. °र्यमिष्ट° । २ क. °मर्शो वे° ।

अथ षष्ठं ब्राह्मणम् ।

---

**स्तुत्यर्थं ब्रह्मविद्याया ब्रह्मविद्वंश उच्यते ॥**
**जपोऽयं ब्रह्मविज्ञानजन्मने चोद्यते श्रुतौ ॥ १ ॥**

ब्रह्मविद्यां संक्षेपविस्तराभ्यां प्रतिपाद्य वंशब्राह्मणतात्पर्यमाह । **स्तुत्यर्थमिति ।** परमर्षिपरिगृहीता हि ब्रह्मविद्या तेन सा महाभागधेयेति स्तुतिरत्र विवक्षितेत्यर्थः । मन्त्रश्चेत्यादिभाष्योक्तमर्थान्तरमाह । **जपोऽयमिति** ॥ १ ॥

**पुंमत्यूहोत्थिताशङ्कानिवृत्त्यर्थं यथोदितम् ॥**
**ब्रह्मज्ञानस्य वा वंशो यत्नाच्छ्रुत्याऽयमुच्यते ॥ २ ॥**

प्रकृतब्रह्मज्ञानस्य पुरुषबुद्ध्युत्प्रेक्षितत्वशङ्कानिवृत्त्यर्थं ब्राह्मणमित्यर्थान्तरमाह । **पुंमतीति ।** वंशोपन्यासस्य यत्नो बहुशो वचनम् ॥ २ ॥

**यस्यानुशासनं तस्य स्वयंभोः प्रतिपत्तये ॥**
**पौतिमाष्यादिको ग्रन्थः श्रुत्याऽथ प्रतिपाद्यते ॥ ३ ॥**

अनन्तरब्राह्मणेनावान्तरसंबन्धं दर्शयन्नर्थान्तरमाह । **यस्येति ।** परस्य वेदात्मनो यस्यैक्यज्ञानात्मकमनुशासनं तत्प्रतिपत्त्यर्थमुत्तरं ब्राह्मणमित्यर्थः ॥ ३ ॥

**अग्रात्प्रभृति वंशोऽयमावेदब्रह्ममूलतः ॥**
**भिन्नहेतुनिषेधार्थं स्वयंभु ब्रह्म शब्द्यते ॥ ४ ॥**

कथं तत्प्रतिपत्त्यर्थत्वमस्येति तत्राऽऽह । **अग्रादिति ।** शिष्यावसानोपलक्षणभूतात्पौतिमाष्यादारभ्य तदादिर्वेदाख्यब्रह्ममूलपर्यन्तोऽयमाचार्यपरंपराक्रमो वंश इत्युच्यते तेन ब्रह्मपर्यन्तत्वादस्य तत्प्रतिपत्तिरत्र विवक्षितेत्यर्थः । प्रथमान्तः शिष्यः पञ्चम्यन्तो गुरुरिति मत्वा ब्रह्मणः स्वयंभुविशेषणस्य कृत्यमाह । **भिन्नेति ।** परस्य वेदद्वारा सूत्रभावमापन्नस्यास्मदादीनामिव भिन्नाचार्यादिप्रयुक्तं विज्ञानमित्येतन्निषेद्धुं विशेषणमित्यर्थः ॥ ४ ॥

**यस्मादपरतन्त्रोऽयं वेदात्मा ब्रह्म भण्यते ॥**
**मनोवाक्कर्मभिस्तस्माद्भक्त्या तस्मै नमः सदा ॥ ५ ॥**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके द्वितीयाध्यायस्य**
**षष्ठं ब्राह्मणम् ॥ ६ ॥**

**[१]शतानि दश पञ्चैव श्लोकाः सप्तदशापरे ॥**
**श्लोकसंख्याऽत्र विज्ञेया चतुर्थाध्यायवार्तिके ॥**

---

१ क. नगैकतिथियुक्तसांख्यः श्लोको न लिखितः कुतः । श्लोकसंख्या त्विहाध्याये ब्रमीष्विन्दुमिता यतः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीसुरेश्वराचार्यविरचिते बृहदारण्यकोपनिषद्भाष्यवार्तिके द्वितीयोऽध्यायः ॥ २ ॥

उपनिषत्क्रमेण चतुर्थोऽध्यायः ॥ ४ ॥

कारणोक्तिपूर्वकं त्रिविधं प्रह्वीभावं नमःशब्दार्थं दर्शयन्ब्रह्मणे नम इत्यस्यार्थमाह। **यस्मादिति।** अयं हि वेदस्वभावश्चिद्धातुः सत्तास्फूर्त्योः स्वतन्त्रो यतोऽनुभूयतेऽतोऽसौ ब्रह्मैवोच्यते स्वतन्त्रवस्त्वन्तराभावादेतेन वेदानामनित्यत्वमपि प्रत्युक्तं तस्मात्तस्मै ब्रह्मणे वेदात्मने श्रेयोर्थिभिस्त्रिधाऽपि नमो भक्तिश्रद्धाभ्यां सदा कार्यमित्यर्थः। तदनेनाध्यायेन ब्रह्मविद्यासूत्रं ब्राह्मणपञ्चकेन प्रपञ्चितं विद्याविषयस्य मधुकाण्डस्योत्प्रेक्षितत्वशङ्काऽपि पराकृता भवति ॥ ९ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां द्वितीयाध्यायस्य षष्ठं वंशब्राह्मणम् ॥ ६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दभगवत्पूज्यपादशिष्यश्रीमद्भगवदानन्दज्ञानकृतायां श्रीमत्सुरेश्वरवार्तिकटीकायां शास्त्रप्रकाशिकाख्यायां द्वितीयोऽध्यायः ॥ २ ॥

श्लोकानामादितः समष्ट्यङ्काः—५६३०



प्यस्येति सर्वनामश्रुतेः संनिहिते विदुषि पुरुषशब्दः स्थास्यतीत्याशङ्क्यायमित्यस्येति च विभक्तिभेदान्न सर्वनामश्रुतिः संनिहितार्था यदाग्नेय इतिवत्प्रसिद्धाविद्वद्विषयैवेत्याशयेनाऽऽह । **प्रकृताया इति** ॥ १२३ ॥

**यत्रास्याविदुषः पुंसो मृतस्याऽऽयुष्परिक्षयात् ॥**
**ऽग्निं वाक्समप्येति वातं प्राणोऽनुगच्छति ॥ १२४ ॥**

पुरुषशब्दार्थमुक्त्वा यत्रेत्यादि योजयति । **यत्रेति** । तस्मिन्काले क्वायं पुरुषो भवतीत्युत्तरत्र संबन्धः ॥ १२४ ॥

**अग्न्यादिदेवतांशा ये भोगार्थं कर्मणाऽर्जिताः ॥**
**वागादिशब्दैरुच्यन्ते त एवात्र न पौरुषाः ॥ १२५ ॥**

अविदुषो वागादिलयाभावाद्वाङ्मनसि दर्शनादित्यादिन्यायात्तस्य चात्र श्रुतेर्विद्वानेव पुरुषस्तदीयकलाविलयस्य गताः कलाः पञ्चदशेत्यादावुक्तेरित्याशङ्क्याऽऽह । **अग्न्यादीति** । पुरुषेण भोक्त्राऽधिष्ठिताः करणात्मानो भावा वागादिशब्दा न भवन्तीत्येवकारार्थमाह । **नेति** ॥ १२५ ॥

**पुंसः कर्मक्षये स्वांशान्संहरन्ति यथायथम् ॥**
**अग्न्यादिदेवताः सोऽयमुपसंहार उच्यते ॥ १२६ ॥**

अग्न्याद्यंशा वागादिशब्दैरुच्यन्तां तेषामपि भोगार्थं कर्मार्जितानां तदर्थे कर्माणि सन्ति कथमप्ययः को वा तदप्ययकर्ता कश्चांशानामंश्यभिन्नानामप्ययस्तत्राऽऽह । **पुंस इति** ॥ १२६ ॥

**पुंसो देहग्रहे भूयो देहस्थानेषु देवताः ॥**
**अंशं निदधति स्वं स्वं कर्मभोगप्रसिद्धये ॥ १२७ ॥**

वर्तमानदेहपाते देवतांशानामुपसंहारश्चेद्देहान्तरग्रहे करणान्यधिष्ठातृदेवताशून्यानि भोगसाधनानि न स्युरित्याशङ्क्याऽऽह । **पुंस इति** ॥ १२७ ॥

**हृद्याकाश इहाऽऽमेति स्यादाकाशाप्ययत्वतः ॥**
**प्रश्नस्य विषयत्वेन विज्ञानात्मोपयोगतः ॥ १२८ ॥**

वागादिशब्दार्थमुक्त्वाऽऽकाशमात्मेत्यत्राऽऽत्मशब्दार्थमाह । **हृदीति** । मुख्यमात्मानं हित्वाऽऽत्मशब्देन हार्दाकाशग्रहे हेतुमाह । **आकाशेति** । आत्मनो भूताकाशे लयश्रुतेर्मुख्यस्य चातत्प्रकृतित्वेन तदयोगादित्यर्थः । किंच क्वायमितिप्रश्नविषयत्वेनोपयोगादात्मनो न तस्यात्राऽऽत्मशब्दतेत्याह । **प्रश्नस्येति** ॥ १२८ ॥

**अधिष्ठातृवियुक्तानि न्यस्तदात्रोपमानि हि ॥**
**वागादिकरणानीति नालं पुंभोगसिद्धये ॥ १२९ ॥**

---

१ ख. कर्मनिर्वर्तिता° ।

स्थूलदेहविगमेऽपि मोक्षादर्वाग्जीवस्य लिङ्गाश्रयत्वात्क्वायमितिप्रश्नानुपपत्तिरित्याशङ्क्याऽऽह । **अधिष्ठात्रिति** । यद्यपि जीवो लिङ्गमाश्रितस्तथाऽपि स्थूलदेहाभावे तदधिष्ठातृहीनं न भोगदमिति सतोऽपि तस्यासत्समत्वाद्भोगहेत्वाश्रयप्रश्नो युक्त इत्यर्थः । चेतनस्याधिष्ठातुः सत्त्वेऽपि स्थूलदेहं विना लिङ्गस्य भोगौपयिकत्वं नास्तीति हिशब्दार्थः ॥ १२९ ॥

**विदेहदेवतः क्वायं भवत्येष पुमानिति ॥**
**आश्रयं केति पुंसोऽसावप्राक्षीन्मुनिसत्तमम् ॥ १३० ॥**

प्रश्नवाक्यमवतार्य व्याकरोति । **विदेहेति** । अयमित्यस्य व्याख्यानमेष इति ॥ १३० ॥

**किं कारणात्मतामेति किंवा केनचिदात्मना ॥**
**अवतिष्ठत एवायं किंवा कर्मैव संश्रितः ॥ १३१ ॥**
**गुणान्वा यदि वेशानं कालं वा दैवमेव वा ॥**
**यदृच्छां संततिं शून्यं विनाशं वेति भण्यताम् ॥ १३२ ॥**

प्रश्नमेव प्रपञ्चयति । **किमित्यादिना** । स्थूलदेहं हित्वा स्थितो जीवः साभासप्रत्यगविद्यालक्षणकारणरूपतामेति जीवस्यापि कार्यत्वमिच्छन्तः स्वयूथ्या वदन्ति त्यक्ते स्थूले देहे प्रतिबन्धकाभावादसाधारणेन स्वेन रूपेणैव स तिष्ठतीत्येक एष संप्रसादोऽस्माच्छरीरादित्यादिश्रुतेरित्यर्थः । **मीमांसकसांख्यतार्किकमतान्याह** । **किंवेति** । ज्योतिर्विदां प्रक्रियामाह । **कालं वेति** । देवताकाण्डाभिप्रायमाह । **दैवमिति** । **लोकायतयोगाचारमाध्यमिकमतान्याह** । **यदृच्छामित्यादिना** । प्राक्सतो जीवस्य ध्वंसो विनाशस्तं स यातीति **जीवकार्यत्ववादिनो** मतान्तरमाह । **विनाशमिति** । उक्ताधिकरणेषु विवक्षितं वाच्यमिति प्रश्नं निगमयति । **इति भण्यतामिति** ॥ १३१ ॥ १३२ ॥

**प्रश्नेन भावितस्तुष्टः पाणिमस्याग्रहीदृषिः ॥**
**अन्यासाधारणं प्रश्नमप्राक्षीदिति विस्मितः ॥ १३३ ॥**

आहरेत्यादेरर्थमाह । **प्रश्नेनेति** । भावितो वशीकृत इति यावत् । तुष्टत्वं पाणिग्रहणे हेतुमुक्त्वा हेत्वन्तरमाह । **अन्येति** ॥ १३३ ॥

**असाधारण्यसिद्ध्यर्थमावामेवेत्यतोऽवदत् ॥**
**विद्यागुप्तिश्च बहुशः श्रुतावपि समीक्ष्यते ॥ १३४ ॥**

आवामित्यादेस्तात्पर्यमाह । **असाधारण्येति** । प्रश्नप्रत्युक्त्यर्थज्ञानस्य प्रष्टृप्रतिवक्तृमात्रनिष्ठत्वार्थमिति यावत् । अतः पाणिग्रहानन्तरमित्यर्थः । किमर्थं ज्ञानस्यासाधारण्यं न हि तद्गोप्यं मानाभावादत आह । **विद्येति** । "विद्या ह वै ब्राह्मणमाजगाम तवाहु-

१ क. ख. °त्तमः ॥ १३० ॥ २ ख. व्याकरोति ।

मस्मि त्वं मां पालयस्वानर्हते मानिने नैव माऽदाः । गोपाय मा श्रेयसी तेऽहमस्मि विद्यया सार्धं म्रियेत न विद्यामूषरे वपेत । ब्रह्मचारी धनदायी मेधावी श्रोत्रियः प्रियो विद्ययो वा विद्यां यः प्राह तानि तीर्थानि षण्मम" इति श्रुतिः ॥

"आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः ।
शक्तोऽर्थदोऽर्थी स्वः साधुरध्याप्यादेशधर्मतः ॥
विद्ययैव समं कामं मर्तव्यं ब्रह्मवादिना ।
आपद्यपि च घोरायां न त्वेनामीरिणे वपेत् ॥
विद्या ब्राह्मणमेत्याऽऽह शेवधिस्तेऽभिरक्ष माम् ।
असूयकाय मा मा दास्तथा स्यां वीर्यवत्तमा" ॥

इति स्मृतिरप्यर्थः ॥ १३४ ॥

**आवयोरेव विज्ञानं यथेदं प्रागभूदितः ॥**
**आवामेव तथैवोर्ध्वं वेदिष्यावो यथोदितम् ॥ १३५ ॥**

आवामित्यादिवाक्याक्षराणि योजयति । **आवयोरिति** । इदं विज्ञानमिति प्रयोजकगोचरमुच्यते । एतस्य प्रयोजकविज्ञानस्य यथोदितं स्वरूपमित्यर्थः ॥ १३५ ॥

**सजने प्रश्न एतस्मिन्व्याप्यमाने त्वयोदिते ॥**
**न सिध्येदावयोरुक्तं प्रयोजनमिदं ध्रुवम् ॥ १३६ ॥**

न नावित्यादेस्तात्पर्यमाह । **सजन इति** । नानाजनसमूहसहितेऽस्मिन्देशे त्वत्प्रश्ने व्याख्यायमाने बन्धनिबन्धनं ज्ञानं नाऽऽवयोरसाधारणं स्यादिति सजनान्निर्गन्तव्यमित्यर्थः ॥ १३६ ॥

**न त्वन्योक्तिपरित्रासाद्याज्ञवल्क्योऽब्रवीदिदम् ॥**
**जल्पे वाद्यतिरेकेण नान्यो वक्ति यतस्ततः ॥ १३७ ॥**

प्रयोजकज्ञानस्यासाधारण्यार्थं न ततो निर्गमनं किंत्वन्येऽपि मध्ये प्रक्ष्यन्ति तथाचाशक्यो निर्णयः स्यादिति भयादित्याशङ्क्याऽऽह । **न त्विति** । इदमिति प्रकृतवाक्योक्तिः । अन्यप्रश्नप्रयुक्तत्रासाभावे हेतुमाह । **जल्प इति** । विजिगीषुस्तत्राधिक्रियते । यथाऽऽह—विजिगीषुणा सह जल्पवितण्ड इति । तथाच तदीयशक्तिनिर्णयपर्यन्तं नान्यप्रवृत्तिरित्यर्थः ॥ १३७ ॥

**परिशिष्टानपि प्रश्नानुत्क्रम्य व्याकरोदसौ ॥**
**सजनादिति नातः स्यादन्योक्तिभयकारणम् ॥ १३८ ॥**

सजनान्निर्गमनं नान्योक्तिभयादित्यत्र हेत्वन्तरमाह । **परिशिष्टानिति** । सजनाद्दे-

---

१ क. वपेत् । २ ख. °या वि° ।

शादुत्क्रम्य निर्गत्याऽऽर्तभागप्रश्नं व्याकरोद्दपिरिति यत्तन्नान्योक्तिभयकारणं यतस्तमेव देशमेत्य[1] शिष्टान्भुज्युप्रभृतिप्रश्नानस्मै व्याकृतवानतो भयाद्बहिरगतेः प्रयोजकज्ञानासाधारण्यार्थमेव गमनमिष्टमन्यथा तस्माद्देशादुत्क्रम्य परिशिष्टानपि प्रश्नान्न व्याकरिष्यन्न चैवं व्याकरोति च तस्मान्नान्योक्तिभयकृतं गमनमित्यर्थः ॥ १३८ ॥

**साध्वेतादिति संभाव्य सजनादुत्ससर्पतुः* ॥**
**याज्ञवल्क्यार्तभागौ तावुत्क्रम्य च जजल्पतुः ॥ १३९ ॥**

तौ हेत्यादेरर्थमाह । **साध्विति** ॥ १३९ ॥

**सजनात्तावथोत्क्रम्य मिथस्तत्र यदूचतुः ॥**
**तत्सर्वं श्रुतिराचख्यावस्मत्प्रियचिकीर्षया ॥ १४० ॥**

तौ ह यदित्यादेरर्थमाह । **सजनादिति** । [2]श्रोतॄणामनुजिघृक्षानन्तर्यमथशब्दार्थः । तत्रेत्येकान्तदेशोक्तिः । न हि तौ होत्क्रम्येत्यादि प्रष्टुर्वक्तुर्वा वाक्यं[3] किंतु श्रुतेः श्रोत्रनुग्रहार्थमित्यर्थः ॥ १४० ॥

**कर्मादिपरतन्त्रत्वात्स्वाश्रयो नायमिष्यते ॥**
**संसारभूमिवर्तित्वान्न चाऽऽत्मा कारणाश्रयः ॥ १४१ ॥**

स्वमतशुध्यर्थं केनचिदात्मनेत्यादिपक्षं दूषयति । **कर्मादीति** । यत्तु कारणात्मतामेतीति तत्राऽऽह । **संसारेति** । भोगभूमिष्ठत्वेन भोक्तृत्वादित्यर्थः ॥ १४१ ॥

**अचित्कत्वात्प्रधानादि पुंसो न स्थानमिष्यते ॥**
**न कर्म तत्फलं वेत्ति न च कस्यैति[4] संगतिम् ॥ १४२ ॥**

यत्तु गुणान्वा कालं वा दैवमेव वेति तत्राऽऽह । **अचित्कत्वादिति** । न हि जडं स्वातन्त्र्येण भोक्तुर्भोगायतनमित्यर्थः । यदपि कर्मैव संश्रित इति तत्राऽऽह । **न कर्मेति** । किंच कस्येदं फलमिति फलफलिसंबन्धमपि कर्म न बुध्यतेऽतो न तदाश्रयो भोक्तुरित्याह । **न चेति** । यद्वा कर्मफलवेत्ता हिरण्यगर्भो भोक्तुराश्रय इत्याशङ्क्याऽऽह । **न चेति** । विदेहदेवतो जीवः सूत्रमाश्रित्य देहान्तरमाप्नोतीत्यत्र मानाभावादिति भावः ॥ १४२ ॥

**न चेश्वरे स्थितिस्तस्य शास्त्रानारम्भसक्तितः ॥**
**कृतनाशाकृतप्राप्ती प्राप्नुतो नुस्तथा सति ॥ १४३ ॥**

यत्तु यदि वेशानामिति तत्राऽऽह । **न चेति** । ईशस्य बन्धप्रयोजकत्वे स्वर्गापवर्गयोस्तदधीनत्वात्तस्य च स्वातन्त्र्यादनुपयोगिशास्त्रमनारम्भ्यं स्यादित्यर्थः । तत्रैव दोषा-

---

* अत्र गुणश्चिन्त्यः ।

---

१ ख. देशं समेत्य । २ ख. तु । ३ क. ख. °र्वाक्यं । ४ ख. कस्यैति ।

न्तरमाह । कृतेति । भोक्तुरीश्वराश्रयत्वे सति तद्वशादेव भोगसिद्धेर्दोषद्वयं दुर्वारमित्यर्थः ॥ १४३ ॥

दैवाधिष्ठित एवायं कर्मकालवशानुगः ॥
प्रवर्तेतां चेत्पुरुषो नैवमप्युपपद्यते ॥
जडत्वादिति पूर्वोक्तो दोषोऽत्रापि च विद्यते ॥ १४४ ॥

ईशाधिष्ठितो भोक्ता कालकर्माश्रयः संसरत्यतो न कृतहानादीति शङ्कते । दैवेति । केवलयोर्वा सदैवयोस्तयोराश्रयत्वमीशप्रधानयोर्वेति विकल्प्याऽऽद्यं दूषयति । नैवमिति । अग्न्यादिदेवतानां चैतन्येऽपि स्वातन्त्र्याभावात्तद्युक्तस्य कालादेर्न भोक्त्राश्रयत्वमित्यर्थः ॥ १४४ ॥

सदेवताकं पूर्वोक्तं समर्थमिति चेन्मतम् ॥ १४५ ॥
प्रवृत्तिरप्रवृत्तिर्वा देवतैश्वर्यतः सदा ॥
नियमे हेत्वसद्भावान्न स्यान्नैयमिकी स्थितिः ॥ १४६ ॥

द्वितीयमनुभाषते । सदेवताकमिति । कालकर्माख्यद्वयमग्न्यादिदेवतासहितमीशप्रधानं पुंस्प्रवृत्तौ शक्तमित्यर्थः । अतिप्रसक्त्योत्तरमाह । प्रवृत्तिरिति । ईशो देवताशब्दार्थः । कदाचित्प्रवृत्तिः कदाचिन्निवृत्तिरिति व्यवस्था तत्स्वातन्त्र्येऽपि किं न स्यादत आह । नियम इति ॥ १४५ ॥ १४६ ॥

न चापि केवलं कर्म पुंसः स्यादाश्रयो यतः ॥
अचेतनत्वानित्यत्वदोषदुष्टं पुरोदितम् ॥ १४७ ॥

मा भूदीशप्रधानं कर्मादि प्रयोजकं केवलं तु स्यादित्याशङ्क्य न कर्मेत्यत्रोक्तं स्मारयति । न चेति ॥ १४७ ॥

मयाऽयमनुयातव्यः कर्ता चायं ममाभवत् ॥
कालादिविषयं ज्ञानं ध्वंसिनः कर्मणः कुतः ॥ १४८ ॥

न च कस्येत्यादिनोक्तं हेत्वन्तरं स्फोरयति । मयेति ॥ १४८ ॥

यत एवमतः सर्वे कालदैवेश्वरादयः ॥
कर्मप्रधानाः पुंसः स्यादाश्रयोऽयमनुत्तमः ॥ १४९ ॥

एकैकस्य समुदितस्य च प्रयोजकत्वायोगे कथं तन्निर्धारणमित्याशङ्क्य स्वमतमाह । यत इति ॥ १४९ ॥

हठो यदृच्छा नियतिः कारणत्वेन नाऽऽश्रिताः ॥
संततौ चानवस्थानान्नाऽऽश्रयत्वं प्रमाणतः ॥ १५० ॥

---

१ ख. °श्रयात्संस° । २ क. न केवलस्ये° ।

यदृच्छासंततिशून्यपक्षेष्वदूषितेषु कथं स्वपक्षसिद्धिरित्याशङ्क्य यदृच्छापक्षं प्रत्याह । **हठ इति** । एते शब्दाः स्वभाववाचिनः स च न प्रवर्तको नियतहेतूपादानानर्थक्यादि-त्यर्थः । योगाचारं प्रत्याह । **संततौ चेति** । न हि ज्ञानसंतानो बन्धप्रयोजको मानाभा-वात्तस्यावस्तुत्वेन च स्थित्ययोगादित्यर्थः ॥ १९० ॥

**न कर्म पूर्वस्कन्धेषु नष्टत्वादुपपद्यते ॥**
**न चेह परिणामः स्यादुत्तरस्कन्धसंगतौ ॥ १९१ ॥**

संतानोऽपि ज्ञानस्कन्धो वस्तुत्वात्कर्मद्वारा प्रयोजकः स्यादिति चेत्तत्र कर्म साश्रयं निराश्रयं वा प्रथमेऽपि क्षणिकस्कन्धाश्रयं तादितरास्थिराश्रयं वाऽऽद्ये पूर्वोत्तरत्वेन वर्त-मानस्कन्धमध्ये पूर्वस्कन्धेषु कर्मोत्तरस्कन्धेषु वेति विकल्प्याऽऽद्यं दूषयति । **न कर्मेति** न हि वर्तमानं कर्म देहत्यागात्पूर्वभाविषु स्कन्धेषु सिध्यति तेषां नष्टत्वादाश्रयत्वायोगा-दित्यर्थः । द्वितीयं प्रत्याह । **न चेति** । उत्तरस्कन्धेष्वाश्रितत्वेन कर्मणः संगतौ वर्त-मानक्षणे तस्य नोत्पत्तिः स्यान्निराश्रयकर्मोत्पत्त्ययोगात्तदैवाऽऽश्रयसत्त्वे च क्षणिकता-क्षतिरित्यर्थः ॥ १९१ ॥

**अनिश्रितं न कर्मापि फलायालं भवेत्क्वचित् ॥**
**न चैकत्रैकदा स्थानं विरोधाज्जन्मनाशयोः ॥ १९२ ॥**

निराश्रयत्वपक्षं निराह । **अनिश्रितमिति** । क्वचिदनाश्रितं कर्मैव न सिध्यति नित्य-पारतन्त्र्यस्वाभाव्यात्सिध्यदपि न फलवत्स्यादित्यर्थः । विज्ञानस्कन्धानां क्षणिकत्वमा-श्रित्य कर्माश्रयत्वायोगमुक्त्वा क्षणिकत्वमेवायुक्तमित्याह । **न चेति** । तथाच क्षण-भेदेन जन्मनाशयोरेकत्रावस्थानावश्यंभावात्तदाश्रयस्य क्षणद्वयसंबन्धान्न विवक्षितक्षणि-कत्वसिद्धिरित्यर्थः ॥ १९२ ॥

**न च स्कन्धातिरेकेण स्थिरः कश्चिदपीष्यते ॥**
**भोगमोक्षाभिसंबन्धी यं प्रत्येतत्प्रवर्तते ॥ १९३ ॥**

क्षणिकस्कन्धाश्रयमनाश्रयं वा कर्मेति पक्षौ प्रतिक्षिप्य पक्षान्तरं[3] प्रत्याह । **न चेति** । एतदिति कर्मोक्तिः क्षणभङ्गभङ्गेनापराद्धान्तादिति भावः ॥ १९३ ॥

**अनारम्भश्च शून्येऽपि यथाऽयमुपलभ्यते ॥**
**मितेश्चासंभवाच्छून्यं सर्वथा नोपपद्यते ॥ १९४ ॥**

शून्यनाशपक्षौ दूषयति । **अनारम्भश्चेति** । शून्ये नाशे वा प्रयोजके शास्त्रारम्भो न युक्तः कृत्याभावादित्यर्थः । दोषान्तरमाह । **यथेति** । यथाऽयं प्रपञ्चो दृश्यते न तथा शून्यं जीवनाशश्च न चोभयत्र मानान्तरमस्तीति जीवनाशधीस्त्वौपाधिकी व्याख्याता

१ क. °तानी विज्ञा° । २ ख. °स्य पक्षद्व° । ३ क. °न्तरमाह ।

तत्र शून्यनाशौ प्रयोजकावित्यर्थः । शून्यग्रहणं जीवनाशोपलक्षणम् । सर्वथा प्रमाणतो युक्तितश्चेत्यर्थः ॥ १९४ ॥

**यत एवमतो न्याय्यं कर्मैवास्य समाश्रयः ॥**
**संसारभूमौ पुंसः स्यात्कालादेस्तत्प्रधानतः ॥ १९५ ॥**

बाह्यपक्षान्प्रतिक्षिप्य स्वपक्षमुपसंहरति । **यत इति** । क्रियापदादुपरिष्टादितिशब्द-मध्याहृत्यान्वयो द्रष्टव्यः । कालादेरपि सत्त्वादवधारणायोगमाशङ्क्याऽऽह । **काला-देरिति** ॥ १९५ ॥

**कर्मप्राधान्यमेवातः स्वयमेवाब्रवीच्छ्रुतिः ॥**
**कालदैवेश्वरादिभ्यः कालादेस्तत्प्रयुक्तितः ॥ १९६ ॥**

उक्तेऽर्थे तौ हेत्यादिश्रुतिमवतारयति । **कर्मेति** । अतःशब्दार्थं स्पष्टयति । **काला-देरिति** ॥ १९६ ॥

**सति कर्मणि वैचित्र्यं भूतानामुपपद्यते ॥**
**कर्मशब्देन विद्या च भावना कर्म चोच्यते ॥ १९७ ॥**

कर्मप्रयुक्तत्वे कालादेर्युक्तिमाह । **सतीति** । कालादीनां प्रवर्तकत्वादिवैचित्र्यं विचित्रे कर्मणि सत्येव प्रयोजके युक्तमन्यथा प्रवृत्तिरप्रवृत्तिर्वेत्युक्ताऽव्यवस्था स्यादि-त्यर्थः । कर्म हैवेत्यत्र कर्मशब्दार्थमाह । **कर्मेति** ॥ १९७ ॥

**देहारम्भे न शुद्धस्य कर्मणः शक्तिरिष्यते ॥**
**तस्मात्त्रितयमप्येतत्कर्मशब्देन भण्यते ॥ १९८ ॥**

केवलमेव कर्म कर्मशब्दं किं न स्यात्तत्राऽऽह । **देहेति** । यथा कर्मेत्यादिश्रुतेरि-त्यर्थः । कर्मशब्दार्थमुपसंहरति । **तस्मादिति** ॥ १९८ ॥

**एवं तौ संप्रधार्यैतदुक्तदोषानभिप्लुतम् ॥**
**यियासोः परलोकाय कर्मैवाऽऽश्रयमूचतुः ॥ १९९ ॥**

वाक्यार्थं निगमयति । **एवमिति** । परपक्षेपूक्तदोषास्पृष्टं कर्मेति यावत् ॥ १९९ ॥

**कारणानां यथोक्तानां यच्च तौ प्रशशंसतुः ॥**
**कर्मैवोक्तेषु सर्वेषु प्रशशंसतुरादरात् ॥ १६० ॥**

अथेत्यादेरर्थमाह । **कारणानामिति** ॥ १६० ॥

**कारणत्वाविशेषेऽपि किं प्रधानमितीक्षणे ॥**
**कर्मणः स्यात्प्रशंसैवं तत्प्राधान्योपपत्तितः ॥ १६१ ॥**

अविशिष्टे बहूनां कारणत्वे किमिति कर्मप्रशंसेत्याशङ्क्याऽऽह । **कारणत्वेति** । तुल्येऽपि सर्वेषां कारणत्वे किं प्रधानं किं वाऽप्रधानमिति वीक्षायां कर्मप्रशंसादृष्टेस्त-त्प्राधान्योपपत्तेः साऽर्थवतीत्यर्थः ॥ १६१ ॥

वशीकृत्येश्वरादीनि कारणानि स्वतन्त्रवत् ॥
कर्म सिध्यद्यतो दृष्टं प्रधानं कर्म तेन तत् ॥ १६२ ॥
क्रियां प्रत्यगुणीभूतं नेश्वराद्यपि सिध्यति ॥
कर्मातस्तेषु सर्वेषु प्रधानमिति भण्यते ॥ १६३ ॥

तत्प्राधान्येऽन्वयव्यतिरेकावपि प्रमाणयति । **वशीकृत्येति ।** उक्तं हि वैषम्यनैर्घृण्ये न सापेक्षत्वादिति । उक्तप्रमाणफलं निगमयति । **कर्मात इति** ॥ १६२ ॥ १६३ ॥

यस्मादेवमतः प्रेतो देवताविरहेऽपि ना ॥
देहादस्मात्परिभ्रष्टः कर्मप्राधान्यसंश्रयात् ॥ १६४ ॥
पुण्यः पुण्येन भवति पापः पापेन कर्मणा ॥
इति श्रौतं वचो ज्ञेयमागमैकप्रमाणतः ॥ १६५ ॥

श्लोकानामादितः समष्ट्यङ्काः—५८५४

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके तृतीयाध्यायस्य
द्वितीयमार्तभागब्राह्मणम् ॥ २ ॥

पुण्यो वै पुण्येनेत्यादेः सोपस्कारमर्थमाह । **यस्मादिति ।** कर्मप्रयुक्तं ग्रहातिग्रहात्मककार्यकरणोपादानमित्येवं यतः सिद्धमतः स्थूलदेहान्निर्गतो मृतः पुमानधिष्ठातृदेवताभागाभावेऽपि कालादिसहकृतकर्मबलात्पौनःपुन्येन संसरतीत्यत्र मानमुपसंहरति । **इतीति ।** कर्मैव कालादिसहकृतं मृतस्य बन्धप्रयोजकमित्यस्यालौकिकत्वेनाऽऽगममात्रगम्यत्वादस्मिन्नर्थे यथोक्तं वचो मानमित्यर्थः ॥ १६४ ॥ १६५ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां शास्त्रप्रकाशिकाख्यायां
तृतीयाध्यायस्य द्वितीयमार्तभागब्राह्मणम् ॥ २ ॥

---

अथ तृतीयं ब्राह्मणम् ।

---

संसारान्मुच्यमानानां तथा संसरतामिह ॥
देहादिनाशे तुल्येऽपि तत्रैकेषां पुनर्भवः ॥ १ ॥
देहाद्यात्यन्तिकी हानिरन्येषां यत्र कारणे ॥
सति चासति चैवं स्यात्तत्प्रयोजकमीरितम् ॥ २ ॥

संगतिं वक्तुं वृत्तं कीर्तयति । **संसारादिति ।** जीवन्मुक्तानाममुक्तानां च मृतिकाले कार्यकारणनाशे समेऽपि तेषां मध्ये जीवन्मुक्तातिरिक्तानां पुनर्देहादिग्रहो यस्मिन्सति

---

१ ख. °न्यदर्शनात् । २ क °र्यकार° । ३ क. °र्यकर° ।

स्यान्मुक्तानां चासति यस्मिन्देहादेरात्यन्तिकी हानिस्तद्भावाभावाभ्यां बन्धमोक्षप्रयोजकं किमित्यपेक्षायामुक्तरीत्या विद्यावासनासहितं कर्मैव तदिति विचार्य निर्णीतमित्यर्थः ॥ १ ॥ २ ॥

**ग्रहातिग्रहरूपस्य मृत्योः कर्मेति निश्चितम् ॥**
**कियती कर्मणस्तस्य व्याप्तिः स्यादिति भण्यते ॥ ३ ॥**

तत्प्रयोजकमीरितमित्येतदेव व्यनक्ति । **ग्रहेति ।** अर्थेन्द्रियात्मकबन्धनस्य प्रयोजकं विद्यासहितं कर्मेत्युक्तमित्यर्थः । आकाङ्क्षापूर्वकं संगतिमाह । **कियतीति ।** प्रयोजकत्वेन प्रकृतकर्मणः फलपरिमितिर्व्याप्तिः सा कियतीत्यपेक्षायां तन्निरूपणायानन्तरब्राह्मणमित्यर्थः ॥ ३ ॥

**साधारण्यविशेषाभ्यां कर्मणश्च व्यवस्थितिः ॥**
**विशेषावस्था प्रागुक्ता सामान्यं त्वधुनोच्यते ॥ ४ ॥**

वैदिककर्मफलपरिमाणं प्रागेवोक्तं तत्किमनेनेत्याशङ्क्यास्यापुनरुक्तं विषयं वक्तुं कर्मफलं भिनत्ति । **साधारण्येति ।** कर्मणः समष्टिरूपेण व्यष्टिरूपेण च द्विधा फलस्थितिरित्यर्थः । व्यष्टिरूपेण तत्फलस्थितिरुद्गीथब्राह्मणे सोऽग्निरभवदित्यादिनोक्तेति परिशेषार्थं स्मारयति । **विशेषेति ।** अथास्यापुनरुक्तं विषयमाह । **सामान्यं त्विति ।** कर्मफलं समष्टिरूपं सौत्रं निरूपयितुमेतदित्यर्थः ॥ ४ ॥

**संसारे कियती व्याप्तिरभिव्यक्तस्य कर्मणः ॥**
**सामान्यात्मविशेषाभ्यामित्येतद्भुज्युनोच्यते ॥ ५ ॥**

ननु वैदिककर्मफलं सौत्रं संसाररूपमिहोच्यते तच्च समष्टिव्यष्ट्यात्मकमिति नोक्ता व्यवस्था युक्ता न च व्यष्ट्यंशमुपदिश्य समष्ट्यंशमुपदेष्टुमिदमिति श्लिष्टं तस्यापि मृत्युरस्याऽऽत्मा भवतीत्युक्तत्वादत आह । **संसार इति ।** द्वयोरवस्थयोरुक्तत्वेऽप्यारब्धकर्मणः समष्टिव्यष्टिरूपेण कियती फलव्याप्तिरित्याशङ्कायां तत्परिमाणं संसारेऽन्तर्भूततया तन्मात्रमेवेत्येतदनेन भुज्युब्राह्मणेनोच्यते तदर्थविशेषसिद्धिरित्यर्थः ॥ ५ ॥

**प्रत्यग्याथात्म्यमोहस्य कार्ययत्तेह भण्यते ॥**
**एतस्यां सम्यगुक्तायां नानुक्तमवशिष्यते ॥ ६ ॥**

ननु पूर्वमपि संसारात्मकमेव कर्मफलमुक्तं तस्य सूत्रस्य मृत्योरशनायादिमत्त्वश्रुतेरित्याशङ्क्य बिवक्षितमर्थविशेषमाह । **प्रत्यगिति ।** साध्यं सर्वं स्वाविद्योत्थमेवेत्यास्मिन्ब्राह्मणे कथ्यतेऽतोऽर्थभेदादगतार्थतेत्यर्थः । मोहकार्ये यत्नोक्तिफलमाह । **एतस्यामिति ।** अनुक्तं द्वैतान्तःपातीति शेषः ॥ ६ ॥

---

१ ख. ॰णस्तस्य । २ ख. ॰न क॰ ।

**भ्रूणहत्याश्वमेधाभ्यां न परं पापपुण्ययोः ॥**
**इत्येवं धर्मकाराणामपि वाक्यानि कोटिशः ॥ ७ ॥**

वैदिककर्मफलस्याविद्योत्थबन्धमध्यपातित्वमेवेति वक्तुमेतद्ब्राह्मणमित्युक्तं कथं सर्वमपि कर्मफलं संसारत्वेनात्र विवक्षितमित्याशङ्क्याऽऽह । **भ्रूणेति** । भवतां पापानां पुण्यानां च मध्ये ब्रह्मवधोऽश्वमेधश्च महान्तौ तथाऽपि कथं सर्वं कर्मफलं संसारस्तत्राऽऽह । **इत्येवमिति** । इतिशब्देनोक्तब्रह्मवधादिपरामर्शः । एवंशब्देन तत्सदृशपुण्यापुण्यप्रकारोक्तिः । तथाच ब्रह्मवधेन तत्सदृशैश्च पापैरश्वमेधेन तत्तुल्यपुण्यैश्च संसारः क्रियते । **यथाऽऽहुः**—

"श्वसूकरखरोष्ट्राणां गोजाविमृगपक्षिणाम् ।
चण्डालपुल्कसानां च ब्रह्महा योनिमृच्छति" **इति** ॥
"धर्मरज्ज्वा व्रजेदूर्ध्वं पापरज्ज्वा व्रजेदधः" **इति** च ।

अपिना तद्य इह रमणीयचरणा इत्यादिश्रुतीनामपीत्यर्थः ॥ ७ ॥

**पापस्य कर्मणः कार्यमन्यत्रापि मितं यतः ॥**
**नेहातो भण्यते भूयोऽनर्थत्वाच्चाप्यनादरः ॥ ८ ॥**

अस्तु कर्मफलं संसारस्तथाऽपि पुण्यफलवदत्र पापफलमपि तथा वाच्यमन्यथा ततो विरागायोगादित्याशङ्क्याऽऽह । **पापस्येति** । पश्वादिषु प्रेतादिषु च नानादुःखानुभवाख्यपापफलस्य लोकसिद्धत्वेनापूर्वत्वाभावान्न तन्निरूपणमित्यर्थः । किंच पुमर्थार्थं श्रुतिराद्रियते पापफलस्य चाधिकानर्थत्वान्न तत्राऽऽदरः श्रुतेरित्याह । **भूय इति** ॥ ८ ॥

**स्वतश्च तज्जिहासायाः सिद्धत्वान्नेह कीर्त्यते ॥**
**परमोदारफलता त्वश्वमेधाख्यकर्मणः ॥ ९ ॥**

अधर्मोऽपि जिज्ञास्यः परिहारायेति न्यायादनर्थस्यापि तस्य जिहासया निरूपणमुचितमित्याशङ्क्याऽऽह । **स्वतश्चेति** । तर्हि कर्मफलत्वाविशेषादश्वमेधफलेऽप्यनादरः श्रुतेरुचितो नेत्याह । **परमेति** । अश्वमेधादेरनतिशयफलवत्त्वात्ततः स्वतोवैराग्यायोगात्तदर्थं तस्य संसारत्वेनानर्थकोटिप्रविष्टत्वं प्रकटनीयमिति भावः ॥ ९ ॥

**निःशेषपुरुषार्थानां पुण्यं कर्म हि साधनम् ॥**
**इत्याहुः श्रुतयः सर्वाः स्मृतयश्चाप्यनेकशः ॥ १० ॥**

शास्त्रीयं कर्म सर्वमपि संसारफलमेवेति वक्तुं ब्राह्मणमित्युक्त्वा शङ्कोत्तरत्वेनावतारयितुं पातनिकामाह । **निःशेषेति** । हिशब्दसूचितां प्रसिद्धिमाह । **इत्याहुरिति** । स्वर्गकामवाक्यं विविदिषावाक्यमित्येवं द्विधा श्रुतयो **धर्मात्सुखं** च ज्ञानं च **कर्मणैव** हि संसिद्धिमास्थिताः **कर्मयोगो** विशिष्यत इत्याद्याः **स्मृतय**स्तासां तत्र तात्पर्यमाह । **अनेकश इति** ॥ १० ॥

पुरुषार्थत्वसामान्यात्स्वर्गादिपुरुषार्थवत् ॥
पुण्यसाधनताशङ्का मुक्तेरपि यतस्ततः ॥
तदाशङ्कानिवृत्त्यर्थं प्रारब्धैषोत्तरा श्रुतिः ॥ ११ ॥

इदानीं शङ्कामनूद्योत्तरत्वेन ब्राह्मणं प्रवर्तयति । **पुरुषार्थत्वेति** ॥ ११ ॥

ज्ञानोपबृंहितस्यापि क्रतुराजस्य कर्मणः ॥
संसारविषयैवाऽऽप्तिर्मुक्तौ सा न मनागपि ॥ १२ ॥

कथं शङ्कानिवृत्तिस्तत्राऽऽह । **ज्ञानेति** । सत्याप्तिरुक्ता । ज्ञानसहितमपि कर्म संसारफलमेवेत्यस्मिन्ब्राह्मणे व्यक्तीं भविष्यतीत्यर्थः ॥ १२ ॥

प्रत्यग्याथात्म्यसंमोहः क्रियाकारकरूपवान् ॥
प्रथतेऽपास्तनिःशेषक्रियाकारकवस्तुनि ॥ १३ ॥

आविद्यसंसारस्तत्र तत्रेष्यते स चेदत्र कर्मफलत्वेनोच्यते कथं पूर्वापरविरोधो न स्यात्तत्राऽऽह । **प्रत्यगिति** । निर्विशेषे चिदात्मनि तदविद्या कर्माद्यात्मना विजृम्भते तथाच बन्धस्य कर्मजत्वेऽपि नाविद्याजत्वहानिरित्यर्थः ॥ १३ ॥

अनिर्ज्ञातात्मयाथात्म्यैर्यत्तु कैश्चिदिहोच्यते ॥
फलाभिसंधिरहितं विद्येतं कर्म मुक्तये ॥ १४ ॥

विद्यासहितमपि कर्मसंसारफलं विद्यैव मोक्षार्थेतिस्वपक्षशुद्ध्यर्थं विचारयन्पूर्वपक्षयति । **अनिर्ज्ञातेति** । उक्तरीत्या स्थितं ब्राह्मणारम्भमिहेति परामृशति । विद्येतं विद्यासमुच्चितम् ॥ १४ ॥

बन्धहेत्वपि मोक्षाय विरुद्धफलकृद्यथा ॥
विषदध्यादिवदिति तथोदाहृतिरुच्यते ॥ १५ ॥

बन्धहेतुः कर्म कथं मोक्षहेतुर्विरोधादित्याशङ्क्याऽऽह । **बन्धेति** । यद्यपि कर्म बन्धहेतुः **कर्मणा** बध्यते जन्तुरिति **स्मृतेस्तथाऽपि** विद्यासहितं बन्धविरुद्धं तद्धानिरूपफलकरं सद्यथा मोक्षार्थं तथा भाष्ये विषदध्यादिवदित्युदाहरणमुच्यतेऽतो यथा केवलं विषदध्यादि मरणज्वरादिकरमपि मन्त्रशर्करादियुक्तं जीवनपुष्ट्याद्यारभते तथा स्वतो बन्धफलमपि कर्म समुच्चितं मोक्षाय क्षममित्यर्थः ॥ १५ ॥

इत्युक्तपरिहारार्थं नैतत्सम्यगितीर्यते ॥
अनारभ्यत्ववचनं तद्धेतुप्रतिपत्तये ॥ १६ ॥

सिद्धान्तमाह । **इत्युक्तेति** । अनारभ्यत्वान्मोक्षस्येति भाष्यमवतारयति । **अनारभ्यत्वेति** ॥ १६ ॥

आरभ्यत्वाभ्युपगमे मुक्तेस्तत्स्याद्यथोदितम् ॥
अनारभ्या त्वियं मुक्तिस्तत्सिद्धेर्ज्ञानहेतुतः ॥ १७ ॥

तद्व्याकरोति । **आरभ्यत्वेति** । मुक्तेः साध्यत्वाङ्गीकारे समुच्चितकर्मसाध्यत्वं स्यान्न तु तस्याः साध्यत्वं धीमात्रायत्तत्वादित्यर्थः ॥ १७ ॥

**ब्रह्म वा इदमित्युक्तेः प्रागपि ज्ञानजन्मतः ॥**
**जगद्ब्रह्मात्मसंसिद्धेर्नातो मुक्तिः क्रियोद्भवा ॥ १८ ॥**

धीसाध्यत्ववत्क्रियासाध्यत्वमपि स्यादित्याशङ्क्य दृष्टान्तं प्रत्याह । **ब्रह्मेति** । ज्ञानोत्पत्तेः प्रागपि जगतः संसारिणो ब्रह्मत्वं सिद्धं **ब्रह्म** वा इदमग्र आसीदित्यादिश्रुतेरतो न ज्ञानसाध्या मुक्तिस्तद्दृष्टान्ताभावान्न क्रियासाध्याऽपीत्यर्थः ॥ १८ ॥

**यदि वस्तु स्वतो मुक्तं परतो बद्धमिष्यते ॥**
**मोक्षाय यत्नः फलवांस्तदा स्यान्न विपर्यये ॥ १९ ॥**

किंच मुक्तिरसाध्या तथाहि किं प्रत्यग्वस्तु स्वतो मुक्तं परतो बद्धं किंवा स्वतो बद्धं परतो मुक्तं तत्राऽऽद्यमनुवदति । **यदीति** । तत्र बन्धहेतोः परस्यावस्तुत्वं वस्तुत्वं वा प्रथमं प्रत्याह । **मोक्षायेति** । बन्धहेतोरवस्तुत्वे सहेतुबन्धध्वस्तेः सुकरत्वादनायाससिद्धा मुक्तिर्न कर्मापेक्षेत्यर्थः । बन्धहेतोर्वस्तुत्वे प्रतीचः स्वतोबद्धत्वे च मोक्षार्थप्रवृत्तेरफलतेति कल्पद्वयं दूषयति । **नेति** ॥ १९ ॥

**विद्याऽभिव्यञ्जिकैवेयं स्वतः सिद्धस्य वस्तुनः ॥**
**आरम्भकत्वं जगति तस्या नैवोपपद्यते ॥ २० ॥**

मुक्तेर्विद्यासाध्यत्वाभावे हेत्वन्तरमाह । **विद्येति** । किमिति व्यञ्जकत्वं तस्या नियम्यते तत्राऽऽह । **आरम्भकत्वमिति** । कारकत्वे न प्रकाशकत्वं मृदादिवदित्यर्थः ॥ २० ॥

**अज्ञानमात्रव्यवधौ वस्तुनि व्यापृतिर्मितेः ॥**
**आरभ्येऽर्थेऽफलं ज्ञानं व्यञ्जकत्वात्प्रदीपवत् ॥ २१ ॥**

स्वतः सिद्धे[1]र्व्यञ्जकत्वमप्ययुक्तं व्यक्तेः सहजत्वादित्याशङ्क्याऽऽह । **अज्ञानेति** । व्यक्तिः स्वतःसिद्धाऽपि प्रतीच्यविद्याव्यवहिते वाक्योत्थधीवृत्तिरूपविद्याप्रवेशात्तद्व्यक्तिरिव तथा व्यवह्रियत इत्यर्थः । मोक्षस्यासाध्यत्वे हेत्वन्तरमाह । **आरभ्य इति** । मोक्षलक्षणे फले साध्ये स्वीकृते तत्र ज्ञानस्याप्रवेशात्तदनर्थकं स्यात्तस्य हि दीपवद्व्यञ्जकत्वाद्व्यङ्ग्ये प्रवेशो न साध्ये तस्मात्तत्फलवत्त्वानुपपत्त्याऽपि न मुक्तेः साध्यतेत्यर्थः ॥ २१ ॥

**न चाविद्यातिरेकेण मुक्तेर्बन्धोऽन्य इष्यते ॥**
**निवृत्तिः क्रियते यस्य विद्ययेनेह कर्मणा ॥ २२ ॥**

---

१ क. द्धे व्यञ्ज ।

मा भूद्धीसाध्या सा तत्सहितकर्मसाध्या तु स्यादज्ञानान्यतद्व्यवधानस्य समुच्चयापास्यत्वादित्याशङ्क्याऽऽह । **न चेति** । बन्धः प्रतिबन्धो व्यवधिरिति यावत् । विद्येतेन विद्यासहितेनेत्यर्थः । इहेति प्रत्यगर्थोक्तिः ॥ २२ ॥

**अविद्यानाशमात्रश्च मोक्ष आत्मन इष्यते ॥**
**यतस्ततोऽतिरेकेण मोक्षोऽनित्यो भवेद्ध्रुवम् ॥ २३ ॥**

मुक्तेः समुच्चयासाध्यत्वे युक्त्यन्तरमाह । **अविद्येति** । अविद्यानाशातिरेकेण मोक्षः साधनाधीनो भवन्ध्रुवमनित्यो भवत्यतः प्रतीचि स्वाविद्याध्वस्तिरेव मुक्तिरिति न समुच्चयावकाश इत्यर्थः ॥ २३ ॥

**सम्यग्ज्ञानातिरेकेण न चान्येनास्ति निह्नुतिः ॥**
**प्रयङ्मोहस्य नातः स्याज्ज्ञानकर्मसमुच्चयः ॥ २४ ॥**

सैव समुच्चयसाध्येत्याशङ्क्याऽऽह । **सम्यगिति** ॥ २४ ॥

**निर्ज्ञातविषयत्वाच्च कर्मशक्तेर्जगत्यपि ॥**
**दृष्टं हि कर्मणः कार्यमुत्पत्त्यादिचतुष्टयम् ॥ २५ ॥**

तदसाध्या चेन्मुक्तिस्तर्हि केवलकर्मसाध्या स्यादित्याशङ्क्याऽऽह । **निर्ज्ञातेति** । चकारोऽवधारणे । सर्वत्रापीत्यपेरर्थः । न मुक्तेस्तत्साध्यतेति शेषः । तस्या निर्ज्ञातविषयत्वं विशदयति । **दृष्टं हीति** ॥ २५ ॥

**उत्पत्त्याप्तिविकारा हि संस्कारश्च क्रियाफलम् ॥**
**नातोऽन्यत्कर्मणः कार्यं नातो मुक्तौ तदिष्यते ॥ २६ ॥**

तदेव स्पष्टयति । **उत्पत्तीति** । पञ्चममपि किंचित्कर्मकार्यं स्यादित्याशङ्क्य हिशब्दसूचितमाह । **नेति** । चतुर्विधकर्मफलमतःशब्दार्थः । कर्मकार्यत्वायोगो द्वितीयेनातःशब्देनोच्यते । कर्म तच्छब्दार्थः ॥ २६ ॥

**न चान्यतम एतेषां मोक्षो युक्त्योपपद्यते ॥**
**उत्पत्त्यादिप्रकाराणामनित्यत्वसमन्वयात् ॥ २७ ॥**

अन्यस्यालोकवेदसिद्धत्वेऽपि मुक्तौ कर्म हेतुस्तस्याश्चतुर्णामन्यतमत्वादित्याशङ्क्याऽऽह । **न चेति** । कथं युक्तितोऽन्यतमत्वासंभवस्तत्राऽऽह । **उत्पत्त्यादीति** । अथवोत्पत्त्यादिप्रकाराणामेतेषामिति संबन्धस्तदाऽवशिष्टो हेतुः ॥ २७ ॥

**अविद्यामात्रव्यवधिर्यतो मोक्षोऽभ्युपेयते ॥**
**तदन्यव्यवधाने हि प्रमाणं नोपपद्यते ॥ २८ ॥**

नित्यस्तर्हि मोक्षोऽस्तु का क्षतिस्तत्राऽऽह । **अविद्येति** । अतः स्वरूपभूतः सन्नानित्यो मुक्त इति शेषः । व्यवधानान्तरस्यापि संभवान्नाविद्यामात्रं व्यवधिरित्याशङ्क्य समाध्यन्तरमाह । **तदन्येति** । प्रागुक्तसमाधानद्योतनार्थो हिशब्दः ॥ २८ ॥

**विनाशिफलवत्त्वं चेत्केवलस्यैव कर्मणः ॥**
**विद्येतस्य तु तस्यैव फलं ध्रौव्यं भवेदिति ॥ २९ ॥**

संक्षेपतश्चोद्यसमाधानं कृत्वा चोद्यं विवृणोति । **विनाशीति ।** चेच्छब्दस्येतिशब्देन संबन्धः ॥ २९ ॥

**पूर्वशक्तिनिरासेन शक्त्यन्तरसमुद्भवः ॥ ३० ॥**
**वस्त्वन्तरसमायोगाद्विषादेर्दृश्यते यतः ॥**
**प्रमाणासंभवान्नैवं वोचो लौकिकवस्तुवत् ॥ ३१ ॥**

कथमेषा व्यवस्था तत्राऽऽह । **पूर्वेति ।** अतः कर्मणोऽपि विद्यासंबन्धात्पूर्वशक्तिनिरासेन शक्त्यन्तरस्योद्भवः स्यादिति शेषः । समाधत्ते । **प्रमाणेति ।** विषदध्यादिवत्कर्मणः सहकारिभेदान्न कार्यान्तरारम्भकत्वं मानाभावादित्यर्थः ॥ ३० ॥ ३१ ॥

**नाऽऽगमादपरं मानं मुक्तावभ्युपगम्यते ॥**
**विषदध्यादिवत्तस्मान्नैतत्सूक्तं भवेद्वचः ॥ ३२ ॥**

ज्ञानयुक्तं नित्यं कर्म मोक्षारम्भकमित्यत्र मानाभावं वक्तुं पातनिकामाह । **नाऽऽगमादिति ।** अलौकिकत्वाद्धर्मवदित्यर्थः । मानान्तराभावे फलितमाह । **विषेति ।** मुक्तौ मानान्तराभावाद्विषदध्यादिवदित्यादिवचोऽयुक्तं न हि दृष्टान्तमात्रायत्ता सेत्यर्थः ॥३२॥

**उक्तकार्यातिरेकेण विषदध्यादिवन्मितिः ॥**
**कार्यान्तरसमुत्पत्तौ कर्मणोऽपि न विद्यते ॥ ३३ ॥**

पातनिकां कृत्वा कर्मसाध्या मुक्तिरित्यत्र मानाभावं साधयति । **उक्तेति ।** उक्तं कार्यमुत्पत्त्यादि तदतिरेकेण कार्यान्तरस्य मोक्षाख्यस्योत्पत्तौ कर्मणो नित्यस्य समुच्चितस्यासमुच्चितस्य वा सामर्थ्यास्तित्वे न मितिरस्ति विषादेस्तु कार्यान्तरोत्पत्तौ तदस्तित्वे तदेव दृष्टत्वान्मानमित्यर्थः ॥ ३३ ॥

**साध्यावृत्त्यात्मकं ज्ञानं कर्मैवावस्तुतन्त्रतः ॥**
**ज्ञानं हि वस्तुतन्त्रं स्यान्न तु तत्कारकाश्रितम् ॥ ३४ ॥**

किंचोपास्त्या मानेन वा कर्मसमुच्चयस्तत्राऽऽद्ये ज्ञानकर्मसमुच्चयाभावं वक्तुमुपास्तेर्ज्ञानत्वाभावमाह । **साध्येति ।** साध्यं ध्येयं वस्तु तत्र प्रत्ययावृत्तिरूपोपास्तिरवस्तुतन्त्रत्वात्कर्मैवेत्यर्थः । वस्तुतन्त्रत्वाभावेऽपि ज्ञानत्वं शङ्कित्वाऽऽह । **ज्ञानं हीति ।** मानवस्तुतन्त्रं हि ज्ञानं न कर्तृतन्त्रमुपास्तिस्तु कर्तृतन्त्रा तन्न ज्ञानमित्यर्थः ॥ ३४ ॥

**कर्मैतं कर्म तेनेदृग्विद्येतं न कथंचन ॥**
**क्रियासमुच्चयोऽतोऽयं न तु विद्यासमुच्चयः ॥ ३५ ॥**

---

१ ख. °कान्वित° ।

तस्या ज्ञानत्वाभावे फलितमाह । **कर्मेति** । ईदृगित्युपास्तियुक्तं कर्मोच्यते । उक्त-मेव फलितं स्फुटयति । **क्रियेति** । अतःशब्देनोपास्तेर्मानसक्रियात्वमाह ॥ ३५ ॥

**साध्यसाधनसंबन्ध आगमैकप्रमाणकः ॥**
**मुक्तेश्च साधनत्वेन कर्म नैव श्रुतं श्रुतौ ॥ ३६ ॥**

किंच समुच्चितमसमुच्चितं वा कर्म मुक्तिहेतुरित्यत्राध्यक्षादि मानमागमो वा प्रथमं प्रत्याह । **साध्येति** । पारलौकिक इति शेषः । द्वितीयं दूषयति । **मुक्तेश्चेति** । **अपाम सोममित्यादि** तु कर्मस्तावकत्वान्न स्वार्थे मानं मानान्तरविरोधादिति भावः ॥ ३६ ॥

**अज्ञानहानं नो मुक्तिस्तस्याः कर्म न साधनम् ॥**
**न हि कर्म तमो हन्ति तमसीवोत्थितं तमः ॥ ३७ ॥**

मुक्तेरकर्मसाध्यत्वे हेत्वन्तरमाह । **अज्ञानेति** । किमिति कर्माज्ञानहानेर्न हेतुरि-त्याशङ्क्य सम्यग्ज्ञानातिरेकेणेत्यत्रोक्तं दृष्टान्तेन स्पष्टयति । **न हीति**। तमसि रज्ज्व-ज्ञाने समुत्पन्नं तमो भुजंगादिज्ञानमिति यावत् ॥ ३७ ॥

**अविद्यैकोद्भवत्वं स्याद्यद्यपि ज्ञानकर्मणोः ॥**
**मेयैकात्म्यानुरोधित्वं तथाऽप्यतिशयो धियः ॥ ३८ ॥**

कर्म नाज्ञानं निवर्तयत्यज्ञानजत्वाद्रज्जुसर्पधीवदित्ययुक्तं ज्ञानेऽपीत्थमनुमानसंभवा-दित्याशङ्क्य वस्त्वननुसारित्वमुपाधिरित्याह । **अविद्येति** ॥ ३८ ॥

**नाऽऽत्माविद्यामतिक्रम्य कर्मैकात्म्यानुरोधि हि ॥**
**तमोमात्राभिजनतो नातोऽविद्यां निहन्ति तत् ॥ ३९ ॥**

उपाधेरसंभवमाशङ्क्याऽऽह । **नाऽऽत्मेति** । हिशब्दोपात्तं हेतुमाह । **तमोमा-त्रेति** । न हि कर्तृत्वाद्यभिमानं विना कर्म ज्ञानं पुनस्तदुपमर्दीतिविशेषसिद्धिरित्यर्थः । कर्मणो वस्त्वननुसारित्वे फलितमाह । **नात इति** ॥ ३९ ॥

**स्वतःसिद्धात्मवस्त्वेकमात्रोत्थानत्वकारणात् ॥**
**ज्ञानं हन्ति तमोऽशेषं न तु कर्म तमोन्वयात् ॥ ४० ॥**

उपाधेः साधनव्याप्तिमाशङ्क्याऽऽह । **स्वत इति** । स्वप्रकाशसच्चिदानन्दात्माका-राखण्डैकरसवस्त्वाकारेण वाक्याज्ज्ञानमुत्पद्यते तदशेषं तमो निवर्तयतीत्यर्थः । उपाधि-फलं निगमयति । **न त्विति** । तमोनुसारित्वाद्वस्त्वननुसारित्वान्न कर्म तमोध्वंसीति यावत् ॥ ४० ॥

**अज्ञानादित्रयं प्रत्यगाभासं यद्यपीष्यते ॥**
**ज्ञानवज्ज्ञानसंभूतेनैव प्रागभ्युपेयते ॥ ४१ ॥**

---

१ क. ख. °ह । न त्विति ॥ ३५ ॥

ननु यद्वस्त्वनुसारि तदज्ञानध्वंसीति न व्यतिरेकोऽज्ञानादौ व्यभिचारादतो व्यतिरेकाशुद्धेर्नोपाधिरत आह । अज्ञानादीति । अज्ञानं मिथ्याज्ञानं संशयज्ञानमिति त्रयं ज्ञानवच्चैतन्यानुविद्धमपि प्राग्ज्ञानोत्पत्तेः सहेतुबन्धध्वंसहेतु नेष्यते तस्य चैतन्याकारभाक्त्वेऽपि विपरीतप्रथाहेतुत्वेन वस्त्वनुसारित्वाभावादतो न व्यतिरेकाशुद्धिर्विमतमज्ञानध्वंसि वस्त्वनुसारित्वाद्रज्जुज्ञानवदित्यनुमानादित्यर्थः ॥ ४१ ॥

**कर्मातः कारणं मुक्तेर्न कथंचन युज्यते ॥**
**साक्षादविद्याप्रध्वस्तौ पारंपर्यात्तु युज्यते ॥ ४२ ॥**

उक्तोपाधिसंभवात्प्रत्यनुमानायोगात्पूर्वोक्तानुमानं स्थितमिति फलितमाह । कर्मेति । कर्मणां साक्षान्मोक्षानुपयोगे कथं विविदिषावाक्यादि निर्वहतीत्याशङ्क्याऽऽह । अविद्येति ॥ ४२ ॥

**मुक्तौ च कर्मसाध्यायां किमेकैकं विमुक्तिदम् ॥**
**किंवा संभूय सर्वाणि कर्माणि घ्नन्ति संसृतिम् ॥ ४३ ॥**

प्रत्यनुमानाभावेऽप्यज्ञानकार्यत्वहेतुर्ज्ञाने व्यभिचरतीति चेन्नैवमप्रकाशत्वस्य हेत्वर्थत्वादित्यभिप्रेत्य कर्मणां मुक्तिहेतुत्वं विकल्पयति । मुक्तौ चेति ॥ ४३ ॥

**सकृद्भूयःप्रयोगाद्वा यावज्जीवप्रयोगतः ॥**
**एकादिदक्षिणास्वेवं विकल्पस्तुल्य इष्यते ॥ ४४ ॥**

पक्षद्वयेऽप्यनुष्ठाने विकल्पत्रयमाह । सकृदिति । मुक्तिरिति शेषः । अनुष्ठानवद्दक्षिणामपि विकल्पयति । एकादीति । एकस्य वा बहूनां वा सर्वस्य वा गवादेर्दक्षिणायां मुक्तिरिति विकल्पार्थः ॥ ४४ ॥

**काम्यैर्वा यदि वा नित्यैः सर्वैर्वा मुक्तिरिष्यते ॥**
**श्रौतैर्वा यदि वा स्मार्तैर्यदि वोभयकर्मभिः ॥ ४५ ॥**

अनुष्ठीयमानकर्मस्वेव विकल्पान्तराणि करोति । काम्यैर्वेति ॥ ४५ ॥

**तेषां च ज्ञानसंयोगे प्रधानगुणभेदतः ॥**
**त्रिधा विकल्पो विज्ञेयो विमुक्तिफलसिद्धये ॥ ४६ ॥**

केवलानि कर्माणि विकल्प्य समुच्चितानि विकल्पयति । तेषां चेति । मोक्षार्थं कर्मणां ज्ञानसमुच्चये सत्युभयोः समप्रधानत्वेन गुणप्रधानत्वेन च भेदाद्विकल्पत्रयं ते हि समप्रधाने वा कर्म प्रधानं तद्गुणो ज्ञानमिति वा वैपरीत्यं वेत्यर्थः ॥ ४६ ॥

**एकैकं मुक्तिकृच्चेत्स्याद्यवव्रीह्यादिहोमवत् ॥**
**एकेनैव कृतार्थत्वान्नानुतिष्ठेत्ततोऽपरम् ॥ ४७ ॥**

एकैकं कर्म मुक्तिदमित्याद्यनुवदति । एकैकमिति । यथैकैको व्रीहियवादिहोमोऽ-

---

१ क. °द्यमनु° ।

पूर्वहेतुस्तथाऽग्निहोत्रादिकर्मैकैकं विकल्पेन मुक्तिहेतुरित्यर्थः । तत्र कर्मान्तरवैयर्थ्यमिति दूषयति । **एकेनेति** । न च व्रीह्यादिवद्विकल्पेनार्थवत्त्वं मोक्षमुद्दिश्य कर्मसु तदश्रुतेरगत्या च तदाश्रयणादिति भावः ॥ ४७ ॥

**प्रयोगे दक्षिणायां च समानोऽयं परिक्रमः ॥**
**अथ संभूय सर्वाणि मुक्तिं कर्माणि कुर्वते ॥ ४८ ॥**
**ऐककर्म्यं ध्रुवं प्रापत्सर्वेषामपि कर्मणाम् ॥**
**दर्शादिवत्फलैकत्वात्तच्चानिष्टं प्रसज्यते ॥ ४९ ॥**

सकृत्प्रयोगादेकदक्षिणायां च मुक्तिरिति पक्षयोरुक्तं दोषमतिदिशति । **प्रयोग इति** । न हि तत्र प्रयोगान्तरं दक्षिणान्तरं वा सार्थकमित्यर्थः । कल्पान्तरमनूद्य दूषयति । **अथेति** । ऐककर्म्ये हेतुमाह ।[१]**फलैकत्वादिति** । दृष्टान्तस्तु प्रागेव विवृतः । ऐककर्म्ये का हानिस्तत्राऽऽह । **तच्चेति** । न हि बृहस्पतिसवराजसूयादीनां भिन्नाधिकारिणामैककर्म्यमिति भावः । असकृद्वा यावज्जीवं वा प्रयोगाद्बहूनां वा गवादीनां सर्वस्य वा दक्षिणायां मोक्षो न सेत्स्यत्येकस्यैवासकृद्यावज्जीवं वा प्रयोगे मुक्तिश्चेत्कर्मान्तरप्रयोगवैयर्थ्यात्सर्वकर्मप्रयोगस्त्वेकस्याशक्यो न च बहूनां सर्वस्य वा दक्षिणा मोक्षहेतुरिति मानमस्ति न च **हिरण्यदा** अमृतत्वं भजन्त इति श्रुतिर्मानं दानप्रशंसापरत्वादन्यथा निषेधश्रुतिविरोधादिति चार्थः ॥ ४८ ॥ ४९ ॥

**अन्यद्धि मुक्तिफलतः काम्यानां श्रूयते फलम् ॥**
**तेषां मुक्तिफलत्वं तु न श्रुतेर्नापि चान्यतः ॥ ५० ॥**

काम्यैर्वेति पक्षं प्रत्याह । **अन्यदिति** । काम्यानां स्वर्गादिफलत्वे श्रुतेऽपि मोक्षफलत्वं न विरुध्यते दध्यादेर्नित्यार्थे काम्यार्थे च श्रवणादित्याशङ्क्याऽऽह । **तेषामिति** । अश्रुतमपि स्मृतेर्न्यायाद्वेष्यतामित्याशङ्क्याऽऽह । **नापीति** ॥ ५० ॥

**न च गोदोहनन्यायः काम्यकर्मसु युज्यते ॥**
**तेषां मुक्तिफलत्वे हि न मानं विद्यते यतः ॥ ५१ ॥**

ननु यथा गोदोहनेन पशुकामस्य प्रणयेदित्यत्र क्रत्वपेक्षितप्रणयननिर्वृत्त्या गोदोहनं पशुफलं दृष्टं तत्र हि दृष्टद्वारा क्रतुनियोगेन प्रयुक्तिः शीघ्रमवतरति नियोगार्थत्वाद्विनियोगस्य कामपदमपि प्रकृतमधिकारं लक्षणयाऽनुवदति तथाचोपादानानुरोधेन वाक्यमेव क्रत्वर्थप्रणयनशेषतया गोदोहनं विनियुङ्क्ते तदाश्रित्य विधानात्पुरुषार्थमपि क्रत्वर्थम् । **यथाऽऽहुः**—अन्यार्थमपि संनिहितमन्येन संबध्यत **इति** । तथा काम्यान्यपि कर्माणि स्वर्गादिद्वारा मोक्षार्थानि तत्राऽऽह । **न चेति** । **अयं भावः**—कामपदस्य लक्षणया[२] प्रकृताधिकारपरत्वेऽनुवादत्वप्रसङ्गाद्विनियोगतस्तावन्नियोगान्तरं प्रतीयते तच्च

१ ख. दक्षिणया । २ क. ँणवदिँ ।

स्वात्मानं फलं च प्रति गोदोहनस्य शेषत्वमापादयतीत्यौपादानिकमस्य पुरुषार्थत्वं न चोपादानवशाद्विनियोगभङ्गस्तदपेक्षत्वादात्मोपकाराय हि विधिः साधनं प्रयुङ्क्ते । उपकारविशेषावगमश्च विनियोगात्क्रत्वपेक्षितप्रणयननिवृत्तिरपि गोदोहनायत्तेति वाक्यादेवावगम्यते तथा च विनियोगापेक्षो नियोगस्तदपेक्षश्चेत्कामपदान्वयो न शक्यस्त्यक्तुमित्याश्रित्य विहितमपि गोदोहनं पुरुषार्थम् । तदुक्तं नैमित्तिके विकारत्वात्क्रतुप्रधानमन्यत्स्यादिति । नैवं काम्यकर्मणां स्वर्गादिफलानां मोक्षफलत्वं मानाभावादिति न्यायशब्दः पूर्वपक्षन्यायविषयस्तेषामित्यादिनोक्तहेतुसाधकत्वमुक्तं सिद्धान्तन्यायस्य द्योतयितुं हिशब्दः ॥ ९१ ॥

**सर्वं चाप्यप्रमाणं स्याद्यदुक्तं भेदलक्षणम् ॥**
**मुक्तिं सर्वाणि कर्माणि यदि संभूय कुर्वते ॥ ९२ ॥**

यदि वा नित्यैरिति पक्षमग्रे दूषयिष्यति संप्रति सर्वैर्वेत्यादिपक्षचतुष्टयं निराचष्टे । **सर्वं चेति । अस्यार्थः**—नित्यानां काम्यानां श्रौतानां स्मार्तानां सर्वेषां वा कर्मणां मोक्षफलत्वे प्राच्यां मीमांसायां शब्दान्तराभ्यासप्रक्रियानामधेयादिभेदकं यदुक्तं सर्वं तदप्रमाणं स्यात्फलैकत्वे कर्मभेदानुपपत्तेरतो मोक्षफलत्वे सर्वकर्मणामैककर्म्याद्भेदलक्षणविरोधः स्यादिति ॥ ९२ ॥

**साध्यसाधनबुद्धिर्नो वचनात्पारलौकिकी ॥**
**न चाश्रौषं श्रुतेर्वाक्यात्कर्म मोक्षफलं क्वचित् ॥ ९३ ॥**

एकैकं कर्म मोक्षदमित्यादिसर्वपक्षेषु साधारणं दोषमाह । **साध्येति** ॥ ९३ ॥

**न तत्र दक्षिणा यन्ति विद्ययैव तदाप्यते ॥**
**वेदाहमिति मन्त्रश्च ज्ञानान्मार्गान्तरापनुत् ॥ ९४ ॥**

मानाभावं स्मारयित्वा केवलकर्मणां मोक्षहेतुत्वे मानविरोधमाह । **न तत्रेति ।** सप्तम्या प्रथमया च कैवल्यं परामृश्यते । मन्त्रे तु तमेवं विद्वानिति शेषोऽनुसंधेयः ॥ ९४ ॥

**न कर्मणा कनीयस्ता वृद्धिर्वा नान्तरात्मनः ॥**
**नित्योऽस्य महिमेत्येवमुदर्केऽपि प्रवक्ष्यते ॥ ९५ ॥**

प्रत्यग्भूते मोक्षे कर्मणोऽतिशयानाधायकत्वाच्च तदसाध्येत्याह । **न कर्मणेति ।** वाक्यशेषादपि तदसाध्या मुक्तिरित्याह । **नित्योऽस्येति** ॥ ९५ ॥

**क्षयी कर्मार्जितो लोको नित्यो ज्ञानजितस्तु यः ॥**
**इति स्पष्टं श्रुतेर्वाक्यं कस्मान्नाऽऽद्रियते त्वया ॥ ९६ ॥**

अतश्च नित्या सा न साध्येत्याह । **क्षयीति** ॥ ९६ ॥

---

१ ख. ॰मध्येया॰ ।

**समुच्चयश्चाप्यसकृत्पुरैव सुनिराकृतः ॥**
**भूयोऽपीह प्रवक्ष्यामः प्रसङ्गान्नातिविस्तरात् ॥ ५७ ॥**

केवलकर्मणो मोक्षहेतुत्वं निरस्य तेषां च ज्ञानसंयोग इत्यत्रोक्तं त्रेधासमुच्चयं निरस्यति । **समुच्चयश्चेति** । पुरेति संबन्धोक्तिः । उत्तरत्रापि प्रसङ्गात्तन्निराकरणं वक्ष्यामः । इहापि नातिविस्तरात्तन्निराकरणं संक्षेपतस्तु ब्रूम इति योजना ॥ ५७ ॥

**संनिपत्य न च ज्ञानं कर्माज्ञानं निरस्यति ॥**
**साध्यसाधनभावत्वादेककालानवस्थितेः ॥ ५८ ॥**

अत्रापि समुच्चयं निरस्यामो नातिविस्तरादित्युक्तमेव दर्शयन्प्रमाणज्ञानस्य कर्मणश्चाङ्गाङ्गित्वेन समुच्चयं निरस्यति । **संनिपत्येति** । कर्मणोऽङ्गत्वेन संनिपत्यज्ञानं नाविद्यां निरस्यति तत्र हेतुमाह । **साध्येति** । शुद्धिद्वारा कर्म साधनं ज्ञानं साध्यं तथाच पूर्वोत्तरकालयोरेककालास्थितेर्नाङ्गाङ्गित्वं न च तत्साध्यस्य तदङ्गत्वमेकप्रयोगानारूढत्वाज्जन्मान्तरीयस्यापि कर्मणो ज्ञानोपायत्वाङ्गीकाराच्चेति भावः ॥ ५८ ॥

**बाध्यबाधकभावाच्च पञ्चास्योरणयोरिव ॥**
**एकदेशानवस्थानान्न समुच्चयता तयोः ॥ ५९ ॥**

समप्रधानतया समुच्चयं प्रत्याह । **बाध्येति** । पञ्चास्यः सिंहः । उरणो मेषः । एकदेशानवस्थानादेकस्मिन्नाश्रये सहास्थितेरित्यर्थः ॥ ५९ ॥

**बाध्यबाधकभावेन काममस्तु समुच्चितिः ॥**
**स्वशक्त्यनपहारेण दाह्यदाहकयोरिव ॥ ६० ॥**

ननु ज्ञानकर्मणोः संबन्धोऽस्ति न वाऽऽद्ये समुच्चयसिद्धिर्द्वितीये बाध्यबाधकत्वासिद्धिस्तत्राऽऽह । **बाध्येति** । ज्ञानगतबाधकत्वशक्तेः कर्मगतबाध्यत्वशक्तेश्चात्यागेन तयोर्बाध्यबाधकत्वेन संगतेः समुच्चितिश्चेत्सा काष्ठाग्न्योरिवेष्टैवेत्यर्थः ॥ ६० ॥

**अयथावस्त्वविद्या स्याद्विद्यैतस्या विरोधिनी ॥**
**समुच्चयस्तयोरेवं रविशार्वरयोरिव ॥ ६१ ॥**

उक्तं समुच्चयं सोपपत्तिकमुदाहरणान्तरेण दर्शयति । **अयथेति** ॥ ६१ ॥

**वस्त्वधीना भवेद्विद्या कर्त्रधीना क्रिया तथा ॥**
**कर्त्रादि चाऽऽत्ममोहोत्थं स्वतोऽकारकताऽऽत्मनः ॥ ६२ ॥**

समुच्चयाभावे हेत्वन्तरमाह । **वस्त्विति** । कथमेतावता तदभावस्तत्राऽऽह । **कर्त्रादीति** । आत्मनः कौटस्थ्येन कर्तृत्वादेराविद्यत्वात्तज्ज्ञाने सत्ययोगान्न समुच्चय इत्यर्थः ॥ ६२ ॥

**बृहस्पतिसवे यद्वत्क्षत्रियो न प्रवर्तते ॥**
**ब्राह्मणत्वानहंमानी विप्रो वा क्षत्रकर्मणि ॥ ६३ ॥**

किंच ज्ञानिनो न नियोगस्तदभिमानशून्यत्वात्तत्कुतः समुच्चय इति वक्तुं दृष्टान्तमाह । **बृहस्पतीति** । क्षत्रियत्वानहंमानिनं वक्तुं वाशब्दः ॥ ६३ ॥

**विदेहो वीतसंदेहो नेति नेत्येव[1] बोधितः ॥**
**देहाद्यनात्मदृक्तद्वत्तत्क्रियां वीक्षतेऽपि न ॥ ६४ ॥**

दार्ष्टान्तिकमाह । **विदेह इति** । स्थूलदेहाभिमानहीनो विदेहः संशयादिधर्मकसूक्ष्मदेहाभिमानशून्यश्च वीतसंदेहस्तत्र हेतुः । **नेतीति** ॥ ६४ ॥

**मृत्स्नेभके यथेभत्वं शिशुरध्यस्य वल्गति ॥**
**अध्यस्याऽऽत्मनि देहादीन्मूढस्तद्वद्विचेष्टते ॥ ६५ ॥**

देहादौ मिथ्याभिमानवत एव कर्मसु प्रवृत्तिर्न तद्धीनस्येति कुतः समुच्चय इत्येतमर्थं दृष्टान्तान्तरेणाऽऽह । **मृत्स्नेति** । संस्कृतमृन्निर्मिते हस्तिनीति यावत् । वल्गति चेष्टते ॥ ६५ ॥

**स्थाणुं चोरधियाऽऽलाय भीतो यद्वत्पलायते ॥**
**बुद्ध्यादिभिस्तथाऽऽत्मानं भ्रान्तोऽध्यारोप्य चेष्टते ॥ ६६ ॥**

कथं संनिपत्येत्यादिना समुच्चयो निरस्यते यदेव विद्यया करोति ज्ञात्वा कर्माणि कुर्वीतेत्यादिना विरोधादित्याशङ्क्य यत्र निमित्तनैमित्तिकभावस्तत्र वा समुच्चयः सर्वत्र वेति विकल्प्याऽऽद्यं दृष्टान्तद्वारा स्वीकरोति । **स्थाणुमिति** । आलायाऽऽदाय गृहीत्वा ॥ ६६ ॥

**स्थाणोः सतत्त्वविज्ञानं यथा नाङ्गं पलायने ॥**
**आत्मनस्तत्त्वविज्ञानं तद्वन्नाङ्गं क्रियाविधौ ॥ ६७ ॥**

कल्पान्तरं दृष्टान्तेन निराचष्टे । **स्थाणोरिति** ॥ ६७ ॥

**यद्धि यस्याविरोधेन स्वभावमनुवर्तते ॥**
**तत्तस्य गुणभूतं स्यान्न प्रधानाद्गुणो यतः ॥ ६८ ॥**

प्रधानत्वेनेष्टकर्मध्वंसित्वादपि न ज्ञानं तदङ्गतया समुच्चीयत इत्याह । **यद्धीति** । प्रधानमत्तीति प्रधानाद्यत्प्रधानाविरोधि न तत्तदङ्गमतो ज्ञानमपि कर्मविरोधित्वान्न तदङ्गमित्यर्थः[2] ॥ ६८ ॥

**अज्ञानमनिराकुर्वज्ज्ञानमेव न सिध्यति ॥**
**विपन्नकारकग्रामं ज्ञानं कर्म न ढौकते ॥ ६९ ॥**

समुच्चयमिच्छताऽपि ज्ञानस्य प्रमाणत्वात्स्वार्थाज्ञानध्वंसित्वमेष्टव्यं तत्कुतः समुच्चय इत्याह । **अज्ञानमिति** । तथाऽपि समुच्चये किमायातं तदाह । **विपन्नेति** । यस्य कर्मणो विपत्तिमापादितो ज्ञानेन कारकसमुदायस्तन्न ज्ञानं स्पृशति कारकाभावेऽभावान्नहि तन्निरपेक्षा क्रियाऽऽत्मानं बिभर्तीत्यर्थः ॥ ६९ ॥

---

१ ख. नेत्यवबो॰ । २ ख. ॰तदर्थं ।

**हेतुस्वरूपकार्याणां प्रकाशतमसोरिव ॥**
**मिथो विरोधतो नातः संगतिर्ज्ञानकर्मणोः ॥ ७० ॥**

त्रिधासमुच्चयाभावे युक्त्यन्तरमाह । **हेत्विति** । ज्ञानस्य मानं हेतुः स्वरूपं वस्तुप्रकाशकत्वं कार्यमविद्याध्वस्तिः कर्मणो हेतुरविद्यारागादि स्वरूपमप्रकाशकत्वं कार्यमुत्पत्त्यादि तेषां मिथो विरोधात्तमःप्रकाशवन्नानयोः संगतिरित्यर्थः ॥ ७० ॥

**सकृत्प्रवृत्त्या मृद्नाति क्रियाकारकरूपभृत् ॥**
**अज्ञानमागमज्ञानं सांगत्यं नास्त्यतोऽनयोः ॥ ७१ ॥**

ज्ञानस्य स्वोत्पत्तिमात्रेणाज्ञानध्वंसित्वात्कर्मभिरसमुच्चय इत्ययुक्तं वाक्योत्थज्ञानोत्तरभाविभावनोत्कर्षजन्यसाक्षात्काराख्यज्ञानान्तरेणाज्ञानध्वस्तेरभ्यासावस्थायां समुच्चयसिद्धेरित्याशङ्क्याऽऽह । **सकृदिति** । भावनायाश्चित्तैकाग्र्यहेतुतया विक्षेपध्वंसेन ज्ञानोत्पत्तावुपक्षयाज्जातमात्रमागमिकं ज्ञानं सकार्यमज्ञानं निवर्तयतीति नावसरः समुच्चयस्येत्यर्थः ॥ ७१ ॥

**सर्वथा नैव घटते ज्ञानकर्मसमुच्चयः ॥**
**विद्ययैव तमोहानादकार्ये कर्म किंफलम् ॥ ७२ ॥**

तदसंभवमुपसंहरति । **सर्वथेति** । त्रेधाऽपीत्यर्थः । किंच ज्ञानोत्पत्तौ वा समुच्चयस्तत्फले वा नाऽऽद्योऽङ्गीकाराद्द्वितीयेऽप्यविद्याध्वस्तौ स्वरूपस्थितौ वा नाऽऽद्य इत्याह । **विद्ययेति** । न द्वितीय इत्याह । **अकार्य इति** ॥ ७२ ॥

**न मानं किंचिदप्यस्ति ज्ञानकर्मसमुचितेः ॥**
**प्रत्यक्कैवल्यसंसिद्धौ ज्ञानादेव तमोहतेः ॥ ७३ ॥**

मेयाभावमुपसंहृत्य मानाभावमुपसंहरति । **न मानमिति** । प्रतीचो मुक्तिप्राप्तौ हेतुत्वेनेष्टसमुचितेर्मानमपि न किंचिदस्तीति योजना । अज्ञाननिवृत्त्यन्यथानुपपत्तिरत्र मानमित्याशङ्क्यान्यथोपपत्तिमाह । **ज्ञानादिति** ॥ ७३ ॥

**उत्पत्त्याद्यतिरेकेण संसारविनिवृत्तये ॥**
**कर्मणोऽपि तथा मानं न किंचिदुपपद्यते ॥ ७४ ॥**

यदि वा नित्यैरित्येतदतिरिक्तानां पक्षाणां मुखतो निरासादवशिष्टं पक्षं मुखतो निराचष्टे । **उत्पत्त्यादीति** ॥ ७४ ॥

**अस्ति मानं यतो नित्यं कर्म सर्वत्र चोद्यते ॥**
**न चोत्पत्त्यादिमत्किंचित्तत्र साक्षात्फलं श्रुतम् ॥ ७५ ॥**

नित्यस्यापि कर्मणश्चतुर्विधान्यतमफलापोहेन मोक्षार्थत्वे काम्यस्येव न मानमित्ययुक्तं तत्राध्यक्षाद्यभावेऽपि श्रुतार्थापत्तेर्भावादिति शङ्कते । **अस्तीति** । सर्वासु श्रुतिषु यावज्जीवमग्निहोत्रं जुहुयादित्याद्यासु नित्यं कर्म विधीयते न चान्तरेण फलं तद्विधिर्न हि

महायासे कर्मण्यफले प्रेक्षावत्प्रवृत्तिरतः श्रुतनित्यचोदनानुपपत्तिर्नित्यकर्मणो मोक्षार्थत्वे मानमित्यर्थः । नित्यकर्मविधिरुत्पत्त्यादिमदन्यतमफलत्वेनापि स्यादित्यन्यथोपपत्तिमाशङ्क्याऽऽह । **न चेति ।** तत्र नित्यचोदनायामिति यावत् । कर्मणा पितृलोक इति तत्फलं श्रुतमित्याशङ्क्य नित्यकर्मप्रकरणेऽश्रवणान्नैवमित्याह । **साक्षादिति** ॥ ७५ ॥

**विश्वजिद्वन्न सामर्थ्यं तत्र संभाव्यतेऽण्वपि ॥**
**उत्पत्त्यादिफलोद्भूतौ मुक्तिरस्तु ततः फलम् ॥ ७६ ॥**

ननु विश्वजिति श्रुताधिकाराभावेऽपि निरधिकारत्वं निरस्य साधिकारत्वमुक्तं तत्रापि सर्वफलार्थिनामधिकारशङ्कामपास्य बहुकल्पनायामप्येककल्पनस्याऽऽवश्यकत्वात्तावतैवापेक्षाशान्तेरेकस्यैवाधिकारः साधितस्तत्रापि स्वर्गकामस्यैव स निरूपितस्तथा नित्यानामपि कर्मणां कैवल्यविलक्षणं फलं कल्प्यते नेत्याह । **विश्वजिद्वदिति ।** यथा विश्वजिति स्वर्गोद्भूतौ सामर्थ्यमिति स्वर्गकामो नियोज्यो नैवं नित्यकर्मसूत्पत्त्यादिमत्फलोत्पत्तावीषदपि सामर्थ्यमिति न स नियोज्यो जीवञ्जुहुयादिति जीवनविशिष्टस्य नियोज्यस्य तत्र लाभादित्यर्थः । ननु जीवतोऽनुष्ठानात्फलकल्पनायामपि जीवनस्यापरिहार्यत्वेनाधिकारिविशेषणत्वं युक्तं तथाऽपि विधेयप्रयुक्तिकल्पनायां पुंसां कामप्रवृत्तित्वात्फलार्थिनामेवाधिकारो यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितमिति स्मृतेस्तन्नित्यानामपि कर्मणां स्यादुत्पत्त्यादिमत्फलं नेत्याह । **मुक्तिरिति ।** यद्यप्यविवेकिनो नाऽऽत्यन्तिकदेहोच्छेदलक्षणो मोक्षोऽपेक्षितस्तथाऽपि विवेकिनो मुमुक्षवो नित्यकर्माधिकारिण इति युक्ता मुक्तेस्तत्फलतेति भावः ॥ ७६ ॥

**पुरुषार्थेऽसति फले विधानं नोपपद्यते ॥**
**नित्यानां कर्मणां तस्मिन्सत्येव घटते यतः ॥ ७७ ॥**

नित्यानां श्रुतं फलं नास्ति चेदफलान्येव तानि स्युर्विहितत्वाच्चानुष्ठीयेरन्नित्याशङ्क्याऽऽह । **पुरुषार्थ इति ।** फलं विना विध्यसंभवे हेतुमाह । **तस्मिन्निति** ॥ ७७ ॥

**दुःखात्मकेषु नित्येषु समीक्षापूर्वकारिणः ॥**
**पुरुषा न प्रवर्तेरन्न चेत्तेभ्यः फलं भवेत् ॥ ७८ ॥**

फले सत्येव कथं विधेर्घटमानत्वं तत्राऽऽह । **दुःखात्मकेष्विति ।** प्रवृत्तिफलो विधिर्न च विना फलं प्रवृत्तिर्न च नित्येषु फलान्तरमतो मुक्तिस्तत्फलमित्यर्थः ॥ ७८ ॥

**नैवं वाक्यात्फलं यस्मान्न किंचिदपि लभ्यते ॥**
**तत्सामर्थ्यश्रवाभावात्फले नातो मितिश्च नः ॥ ७९ ॥**

यावज्जीवादिवाक्यवशाद्वा तदर्थसामर्थ्याद्वा नित्यानां मुक्तिफलतेति विकल्प्याऽऽद्यं दूषयति । **नैवमिति ।** न हि यावज्जीवादिश्रुतिसामर्थ्यान्मोक्षोऽन्यद्वा नित्यकर्मफलं

---

१ क. विधेः प्रं ।

लभ्यते तत्फलसंबन्धबोधसामर्थ्यवतः पदस्यात्राश्रुतेरर्थानुपपत्तिश्च निरसिष्यते तन्नित्यानां मोक्षलक्षणे फले न मानमस्ति तस्य स्वरूपत्वेन स्वतस्तत्सिद्धेस्तद्व्यवध्यज्ञानध्वस्तेश्च धीमात्राधीनत्वादित्यर्थः ॥ ७९ ॥

**प्रमाणबलतः प्राप्तमपि भूरि न वार्यते ॥**
**अणुमात्रं न तद्ग्राह्यं वस्तु यन्निष्प्रमाणकम् ॥ ८० ॥**

नित्यानां मुक्तिफलत्वस्याप्रमाणत्वे फलितमाह । **प्रमाणेति** ॥ ८० ॥

**पुमाशयवशाच्चेयं फलक्लृप्तिस्त्वयोच्यते ॥**
**अन्यानपेक्षं सन्मानं प्रमेयार्थसमर्पकम् ॥ ८१ ॥**

अथ काम्यनिषिद्धवर्जनादुत्तमाधमयोरप्राप्तेर्नित्यनैमित्तिकानुष्ठानात्प्रत्यवायहेतेर्वर्तमानदेहपाते मुमुक्षोर्देहान्तरग्रहे हेत्वभावादनायाससिद्धा मुक्तिरत आह । **पुमाशयेति** । मानाभावान्नेयं कल्पना ग्राह्येत्यर्थः । अस्मदुत्प्रेक्षामपेक्ष्य यावज्जीवादिवाक्यमेतमर्थमर्पयति तत्कुतो मानराहित्यमित्याशङ्क्याऽऽह । **अन्येति** । उत्प्रेक्षानपेक्षमेव तन्नित्यकर्मणो नित्यकर्तव्यत्वं बोधयन्नोक्तकल्पनायां मानमित्यर्थः ॥ ८१ ॥

**प्रत्यवायाद्यभावश्च फलं नित्यस्य कर्मणः ॥**
**क्लृप्तं सत्कल्प्यते कस्माद्विमुक्तिर्नित्यकर्मणः ॥ ८२ ॥**

नित्यकर्मफलं मुक्तिरित्यत्र वाक्याप्रामाण्यमुक्त्वा तदर्थानुपपत्तिं प्रत्याचष्टे । **प्रत्यवायादीति** । आदिपदं तत्फलार्थं न चोत्पत्त्यादिमत्किंचिदित्याद्येतेन प्रत्युक्तम् ॥ ८२ ॥

**तावतैव कृतार्थत्वाद्विधेर्नित्यस्य कर्मणः ॥**
**विमुक्तिफलसंबन्धे न मानं विद्यते ततः ॥ ८३ ॥**

क्लृप्तकल्प्यमानयोः क्लृप्तं बलवदितिन्यायविरोधमर्थापत्तेरुक्त्वाऽन्यथैवोपपत्तिमाह । **तावतेति** । प्रत्यवायध्वस्त्यादिफलेनेति यावत् । ततो न नित्यकर्मफलं मुक्तिरिति शेषः ॥ ८३ ॥

**अन्यथाऽनुपपत्त्या चेद्विश्वजिद्वत्प्रकल्प्यते ॥**
**फलं कथं नु न भवेद्विश्वजिन्न्याय ईर्यताम् ॥ ८४ ॥**

यत्तु विश्वजिद्वन्न सामर्थ्यमिति तत्राऽऽह । **अन्यथेति** । विध्यनुपपत्त्या नियोज्यलाभाय विश्वजितीव फलं कल्प्यते चेत्तर्हि विश्वजिन्न्याय एव स्वीकृत इत्यर्थः ॥ ८४ ॥

**काम्याग्निहोत्रवन्नित्यं काम्यं चापि प्रसज्यते ॥**
**फलेनास्याभिसंबन्धान्निष्कामं नित्यमुच्यते ॥ ८५ ॥**

यत्तु नित्येषु जीवनविशिष्टनियोज्यलाभान्नासौ न्याय इति तत्र तेषां फलवत्त्वमङ्गीकृत्य वा न्यायाभावस्तदनङ्गीकृत्य वोच्यते नाऽऽद्यो नित्यकाम्यवैषम्यासिद्धेरित्याह । **काम्येति** । फलसंबन्धेऽपि नित्यानित्यफलभेदान्नित्यकाम्यवैषम्यं किं न स्यादित्याश-

ङ्कच कामप्रयुक्तत्वेऽपि चित्राज्योतिष्टोमवत्काम्यविशेषत्वापत्तेर्नैत्यत्वानुपपत्तिरित्याह । **निष्काममिति** ॥ ८५ ॥

**मतं चेन्न फलत्वेन मोक्षो नित्योऽभ्युपेयते ॥**
**प्रतिज्ञातार्थहानात्स्यैवमप्युपपद्यते ॥ ८६ ॥**

नित्येषु फलकल्पनायां विश्वजिन्न्यायो न च तेषु तत्कल्प्यते मोक्षस्य स्वरूपस्थितित्वेनास्यानुत्पाद्यस्याफलत्वादिति द्वितीयं शङ्कते । **मतमिति** । उत्तरमाह । **प्रतिज्ञातेति** ॥ ८६ ॥

**आरभ्यमाणता मुक्तेः प्रत्यज्ञायि त्वयैव सा ॥**
**विरुध्यतेऽफलोक्त्यैवमारभ्यं स्याद्यतः फलम् ॥ ८७ ॥**

कथं प्रतिज्ञा कथं वा तद्धानिरत आह । **आरभ्यमाणतेति** । सत्यं मुक्तेरारभ्यमाणता प्रतिज्ञाता न तु सा विरुध्यते फलत्वस्यैव तस्या निरासादत आह । **आरभ्यमिति** । कर्मारभ्यं हि तत्फलं तस्मान्मोक्षस्य तत्फलत्वे निषिद्धे तदारभ्यतैव निषिद्धेति प्रतिज्ञाहानिरित्यर्थः ॥ ८७ ॥

**मुक्तेश्च कर्मकार्यत्वे विशेषो भवतोच्यताम् ॥**
**स्वर्गादिभ्यो विनाशादौ मोक्षे तेऽनिर्वृतिर्यतः ॥ ८८ ॥**

कर्मारभ्यत्वं मुक्तेरुपेत्य प्रतिज्ञाहानिमुक्त्वा तस्यास्तदारभ्यत्वं मुख्यममुख्यं वेति विकल्प्याऽऽद्यं दूषयति । **मुक्तेश्चेति** । कर्मकार्यत्वे मुक्तेः स्वर्गादिभ्यो यतो विशेषो वक्तुं न शक्योऽतस्तद्वत्तत्रापि नाशापकर्षादौ प्राप्ते संसारवत्तत्र सुखं नेति न ते मुमुक्षा स्यादित्यर्थः ॥ ८८ ॥

**अथोपचारतो मोक्षः कार्यं स्यान्नित्यकर्मणः ॥**
**ज्ञानकार्यवदित्येवं मतं चेन्नैवमिष्यते ॥ ८९ ॥**
**अज्ञानध्वंसकारित्वान्मोक्षो ज्ञानस्य भण्यते ॥**
**उपचारात्कार्यमिति तदसत्त्वान्न कर्मणः ॥ ९० ॥**

द्वितीयमुत्थाप्य निरस्यति । **अथेत्यादिना** । कर्मणोऽपि व्यवधिनिरासित्वान्मुक्तिस्तत्कार्यत्वेनोपचर्यतामिति चेन्नेत्याह । **तदसत्त्वादिति** । कर्मणो व्यवधानाध्वंसित्वान्न मुक्तिस्तत्कार्यत्वेनोपचारार्हेत्यर्थः ॥ ८९ ॥ ९० ॥

**व्यवधानापनुज्ज्ञानं न कर्माज्ञानहानिकृत् ॥**
**यतोऽतो नोपचारेण कर्मणो मुक्तिकार्यता ॥ ९१ ॥**

ज्ञानमपि तर्हि न व्यवधिध्वंसि कुतस्तत्कार्यत्वेन सोपचर्यते तत्राऽऽह । **व्यवधानेति** ॥ ९१ ॥

**न चाज्ञानातिरेकेण व्यवधानान्तरं मतम् ॥**
**निवर्त्यत्वेन मोक्षस्य कर्मणा यन्निवर्त्यते ॥ ९२ ॥**

ज्ञानवत्कर्मणोऽपि तद्ध्वंसिता स्यादिति चेत्किं तद्व्यवधानमज्ञानादर्थान्तरमज्ञानं वेति विकल्प्याऽऽद्यं निराह । **न चेति** ॥ ९२ ॥

**विरोध्यन्तरविध्वंसो दृष्टो लोके विरोधिना ॥**
**तमःप्रकाशवत्कर्म नाज्ञानेन विरुध्यते ॥ ९३ ॥**

द्वितीयं प्रत्याह । **विरोध्यन्तरेति** ॥ ९३ ॥

**मतमज्ञानमेवैतत्कर्म नाशयतीति चेत् ॥**
**नाविरोधात्तमो हन्ति कर्म किंचित्कदाचन ॥ ९४ ॥**

उक्तमेव चोद्यसमाधिभ्यां विभजते । **मतमिति** ॥ ९४ ॥

**अज्ञानमनभिव्यक्तिर्बोधोऽभिव्यक्तिरात्मनः ॥**
**बाध्यबाधकभावोऽयं विरोधाद्घटते तयोः ॥ ९५ ॥**

कर्माज्ञानयोरविरोधान्न निवर्त्यनिवर्तकत्वं चेत्तर्हि ज्ञानेऽप्यविरोधात्तथेत्याशङ्क्याऽऽह । **अज्ञानमिति** ॥ ९५ ॥

**विरुद्धधर्मकत्वं तु मिथो नाज्ञानकर्मणोः ॥**
**बाध्यबाधकभावोऽयं न तयोर्युज्यते ततः ॥ ९६ ॥**

तयोरिवाज्ञानकर्मणोर्विरुद्धता किं न स्यादित्याशङ्क्याऽऽह । **विरुद्धेति** । अलोकवेदसिद्धत्वादिति शेषः । विरुद्धत्वाभावफलं कथयति । **बाध्येति** ॥ ९६ ॥

**कर्मणोऽदृष्टसामर्थ्यं यद्यज्ञानापनुन्मतम् ॥**
**ज्ञानेनाज्ञानविध्वस्तेः प्रात्यक्ष्यात्तदसद्वचः ॥ ९७ ॥**

कर्मणो विरोधाभावादज्ञाननिवर्तकत्वं नान्वयव्यतिरेकसिद्धं किंत्वदृष्टमिति शङ्कते । **कर्मण इति** । दृष्टे सत्यदृष्टकल्पनाऽन्याय्येति परिहरति । **ज्ञानेनेति** ॥ ९७ ॥

**तुषतण्डुलनिर्मोके प्रत्यक्षे ह्यवघातजे ॥ ९८ ॥**
**सामर्थ्यात्तद्विनिष्पत्तिर्नाग्निहोत्रादिकर्मणः ॥**
**कल्प्यते तद्वदेवेह प्रत्यक्षेणावबोधतः ॥ ९९ ॥**
**प्रत्यगज्ञानविध्वंसे सामर्थ्यान्नित्यकर्मणः ॥**
**न युक्तोऽज्ञानविध्वंसो बलात्कल्पयितुं त्वया ॥ १०० ॥**

तत्र दृष्टान्तमाह । **तुषेति** । तुषस्य तण्डुलस्य च विश्लेषे व्रीह्याद्यवघातजन्ये प्रत्यक्षे सत्यग्निहोत्रादिसामर्थ्यादुक्तकार्यजन्म न कल्प्यत इति योजना । दार्ष्टान्तिकमाह । **तद्वदिति** । बलान्मानं विनेत्यर्थः ॥ ९८ ॥ ९९ ॥ १०० ॥

**कर्मभिश्चाविरुद्धं यद्देवताद्रव्यतत्त्वगम् ॥**
**समुच्चीयेत तज्ज्ञानं न तु कर्मविरोधि यत् ॥ १०१ ॥**

अस्तु ज्ञानादज्ञानध्वस्तिः किंतु **यदेव** विद्ययेत्यादिश्रुतेः समुच्चितकर्मवत्तत्समुच्चितं ज्ञानमपि फलातिशयवदित्याशङ्क्याऽऽह । **कर्मभिश्चेति** । यदेव विद्ययेत्यादौ देवतादिज्ञानस्याविरोधित्वाद्युक्तः समुच्चयस्तत्त्वमस्यादिवाक्योत्थज्ञानस्य तु कर्मविरोधित्वान्न समुच्चयोऽतस्तत्केवलमेवाज्ञानध्वंसीत्यर्थः ॥ १०१ ॥

**कल्प्ये चादृष्टसामर्थ्ये नित्यानां कर्मणां त्वया ॥**
**विरुद्धं कर्मभिः किंवा यदुत्पत्त्यादिवर्जितम् ॥ १०२ ॥**

नित्यकर्मणां समुच्चितानामसमुच्चितानां च स्वरूपस्थितौ मोक्षे तत्प्रतिबन्धकाज्ञानध्वस्तौ वा नादृष्टं सामर्थ्यं कल्प्यमित्युक्तमिदानीमदृष्टसामर्थ्यमङ्गीकृत्यापि मोक्षे न तत्कल्पनेत्याह । **कल्प्ये चेति** । मोक्षे न तत्कल्प्यमिति शेषः । तदर्थं विचारयति । **विरुद्धमिति** । विरोधमभिनयति । **यदिति** ॥ १०२ ॥

**न जन्यं जनकं वस्तु न द्रव्यगुणकर्मभिः ॥**
**जन्यते यत्फलं तादृक्कल्प्यतां नित्यकर्मणः ॥ १०३ ॥**

तदेवाकार्यकारणत्वेन व्यनक्ति । **नेति** । तदेव कथं तत्राऽऽह । **न द्रव्येति** । द्रव्यादिविलक्षणत्वात्तज्जन्यत्वाभावाच्चाकार्यकारणमुत्पत्त्यादिचतुष्टयातिरिक्तं कर्मभिर्यद्विरुद्धं मोक्षाख्यं फलं तत्किं नित्यानां फलं कल्प्यमित्यक्षरार्थः ॥ १०३ ॥

**किंवोत्पत्त्यादिमत्किंचित्सामर्थ्यं यत्र कर्मणः ॥**
**तादृक्फलं प्रकल्प्यं स्याद्यथा न्याय्यं तथाऽस्त्विह ॥ १०४ ॥**

पक्षान्तरमाह । **किंवेति** । विचारे कथं निर्णयस्तत्राऽऽह । **यथेति** ॥ १०४ ॥

**अवश्यं चेत्प्रकल्प्यं स्यात्पुंस्प्रवृत्तिप्रयोजकम् ॥**
**तदुत्पत्त्यादिमत्स्वेव युक्तं कल्पयितुं फलम् ॥ १०५ ॥**

न्यायानुसारिणं निर्णयं दर्शयति । **अवश्यमिति** । विरोधमवधूय हि कल्पना सत्यपि विरोधे कल्पनायामतिप्रसङ्गादिति भावः ॥ १०५ ॥

**अर्थापत्तेश्च तत्रैव क्षीणत्वान्मोक्षकल्पने ॥**
**न सामर्थ्यं यतस्तस्मान्न युक्ता मुक्तिकल्पना ॥ १०६ ॥**

नित्यकर्मचोदनानुपपत्तिर्मुक्तिफलकल्पिकेत्युक्तत्वात्तत्कथमवधारणमित्याशङ्क्याऽऽह । **अर्थापत्तेश्चेति** । तत्रेत्युत्पत्त्यादिमदन्यतमफलवचनम् ॥ १०६ ॥

**नित्यस्य कर्मणः कार्यं पारिशेष्यसमाश्रयात् ॥**
**युक्ता कल्पयितुं मुक्तिरन्यस्यासंभवो यतः ॥ १०७ ॥**

यद्यपि केवला सा नित्यकर्मणो मुक्तिफलं न कल्पयति तथाऽपि पारिशेष्यसहिता कल्पयिष्यतीति शङ्कते । **नित्यस्येति** ॥ १०७ ॥

**मोक्षात्फलान्तरैर्योगः काम्यानां स्याच्छ्रुतत्वतः ॥**
**नित्यकर्माभिसंबन्धो मुक्तेः स्यात्पारिशेष्यतः ॥ १०८ ॥**

कथं फलान्तराभावेन पारिशेष्यं तत्राऽऽह । **मोक्षादिति** । विध्युद्देशे फलाश्रुतेरफलस्य च विधेरयोगादिति हेतुमाह । **पारिशेष्यत इति** ॥ १०८ ॥

**मैवं कर्मफलव्यक्तेरानन्त्यादुपपद्यते ॥**
**पारिशेष्यनयद्वारा मुक्तेः कर्मफलात्मता ॥ १०९ ॥**

परिहरति । **मैवमिति** ॥ १०९ ॥

**पुंस्कामविषयाणां तु नेयत्तेहोपपद्यते ॥**
**काम्यकर्मफलानां हि तथा तत्साधनस्य च ॥ ११० ॥**

पारिशेष्यासंभवार्थं कर्मफलव्यक्त्यानन्त्यमुक्तं व्यनक्ति । **पुंस्कामेति** । इहेति कर्मफलभूमिरुक्ता । विषयाणामित्यस्य व्याख्या काम्यकर्मफलानामिति । फलानन्त्ये स्वानुभवमनुकूलयितुं हीत्युक्तम् । फलवत्फलसाधनस्यापि नेयत्तेत्याह । **तथेति** ॥ ११० ॥

**देशकालाद्यनियमात्पुमिच्छानामनन्तता ॥**
**तथा तत्साधनानां च काम्येष्टार्थप्रयुक्तितः ॥ १११ ॥**

द्वयोरानन्त्ये हेतुमाह । **देशेति** । इच्छानन्त्ये हेत्वन्तरमाह । **तथेति** । तत्साधनानामिच्छोपायानां शोभनाध्यासभेदानामिति यावत् । तथेत्यानन्त्योक्तिः । इच्छातद्धेतुभेदात्तद्विषयफलभेदेऽपि कथं तदुपायकर्मभेद एकमेव प्रकृष्टं कर्म सर्वमिष्टं किं न साधयेदित्याशङ्क्याऽऽह । **काम्येति** । इष्टमनुस्मृत्य हि साधनानि प्रयुज्यन्ते तेन तद्भेदे साधनभेदोऽन्यथा तद्भेदस्याऽऽकस्मिकत्वापत्तेरिति भावः ॥ १११ ॥

**प्रतिप्राणि च वैचित्र्याद्देशकालादिहेतुतः ॥**
**इच्छातत्साधनानां च स्यादानन्त्यं तथा सति ॥ ११२ ॥**
**पारिशेष्यनयो न स्यात्सर्वज्ञस्याप्यनन्ततः ॥**
**न च कर्मफलत्वेन पारिशेष्यं प्रसिध्यति ॥ ११३ ॥**
**नित्यकर्मफलत्वेन मुक्तेरपि परिग्रहात् ॥**
**न पारिशेष्यसंसिद्धिस्तथाऽपीहोपपद्यते ॥ ११४ ॥**

इच्छानामिष्यमाणफलतत्साधनानां चाऽऽनन्त्ये हेत्वन्तरमाह । **प्रतिप्राणीति** । सर्वेषु प्राणिषु देशादिवशादिच्छादीनां वैचित्र्यादानन्त्येऽपि प्रकृते किं स्यात्तदाह । **तथेति** । कैमुतिकन्यायार्थोऽपिशब्दः । तथा सतीत्युक्तमेव हेतुं व्यनक्ति । **अनन्तत इति** । इच्छाफलहेतूनामानन्त्येऽपि कर्मफलत्वस्य सर्वेषु तुल्यत्वान्मुक्तेश्चाकर्मफलत्वेन

शिष्टत्वाद्युक्तं पारिशेष्यमित्याशङ्क्याऽऽह । **न चेति** । तदसिद्धिं साधयति । **नेत्यादिना** । इहेति मोक्षोक्तिः । तथाऽपीति कर्मफलत्वस्य स्वर्गादिषु सर्वेषु तुल्यत्वेऽपीत्यर्थः ॥ ११२ ॥ ११३ ॥ ११४ ॥

**नित्यकर्मफलत्वं चेन्मुक्तेरप्यभ्युपेयते ॥**
**कर्मकार्यसजातित्वात्पारिशेष्यनयः कुतः ॥ ११५ ॥**

मोक्षादन्यत्र काम्यकर्मफलत्वस्य सत्त्वान्मोक्षे तदभावात्पारिशेष्यमित्याशङ्क्याऽऽह । **नित्येति** ॥ ११५ ॥

**अर्थापत्तिक्षयोऽतः स्यादन्यथाऽप्युपपत्तितः ॥**
**उत्पत्त्यादेरन्यतमो न च मोक्ष इहेष्यते ॥ ११६ ॥**
**उत्पत्त्यादिविरुद्धत्वान्मोक्षरूपस्य नित्यतः ॥**
**नोत्पाद्यो वा विकार्यो वा विकारप्रतिषेधतः ॥ ११७ ॥**

पारिशेष्यासंभवे तत्सहकृतार्थापत्तिर्नित्यस्य मुक्तिफलत्वं कल्पयतीत्येतदपि निरस्तमिति फलितमाह । **अर्थापत्तीति** । उत्पत्त्यादीनां चतुर्णामन्यतमफलत्वेनापि नित्यचोदनोपपत्तेर्न मुक्तेस्तत्फलत्वसाधिकाऽर्थापत्तिरित्यर्थः । सत्यं नित्यानामुत्पत्त्याद्यन्यतमफलत्वं किंतु मोक्षोऽपि तेषामन्यतम इत्याशङ्क्य न चान्यतम एतेषामित्यत्रोक्तं व्यनक्ति । **उत्पत्त्यादेरिति** । इहेति मोक्षशास्त्रोक्तिः । विरुद्धत्वे हेतुः । **नित्यत इति** । उत्पाद्यत्वविकार्यत्वयोरभावे हेत्वन्तरमाह । **नेति** । विकारप्रतिषेधतः श्रुतिस्मृत्योरिति शेषः ॥ ११६ ॥ ११७ ॥

**व्रीहिपात्रादिवन्नापि मोक्षः संस्कार्य इष्यते ॥**
**असाधनत्वान्नाप्याप्यः प्रत्यङ्मात्रस्वभावतः ॥ ११८ ॥**

संस्कार्यत्वाभावे हेत्वन्तरम् । **व्रीहीत्यादि** । आप्यत्वाभावे हेत्वन्तरम् । **नापीत्यादि** ॥ ११८ ॥

**नित्यस्य सर्वकर्मभ्यो वैलक्षण्याच्च कारणात् ॥**
**कारणानुविधायित्वात्फलमप्यस्तु चेत्तथा ॥ ११९ ॥**

अग्निहोत्रादिनित्यकर्मणो नित्यत्वसमाख्यया कर्मान्तरवैलक्षण्यात्तत्फलेऽपि नित्यतेति संज्ञावशेन शङ्कते । **नित्यस्येति** ॥ ११९ ॥

**नैवं कर्मत्वसारूप्यात्सालक्षण्यं भवेन्न किम् ॥**
**काम्यकर्मफलैर्नित्यफलस्येत्यभिधीयताम् ॥ १२० ॥**

समाख्यान्तरेण समाधत्ते । **नैवमिति** ॥ १२० ॥

---

१ ख. 'विरोधित्वा' ।

**वैलक्षण्यं निमित्ताच्चेन्न नैमित्तिकतुल्यतः ॥**
**क्षामवत्यादिवन्नित्यं कस्मान्न स्यात्सलक्षणम् ॥ १२१ ॥**

नाग्निहोत्रादिषु नित्यत्वसमाख्यया वैलक्षण्यं येन कर्मत्वसमाख्यान्तरेण तेषु फलसालक्षण्यमुच्येत किंतु जीवनादिनिमित्तवशादिति शङ्कते । **वैलक्षण्यमिति । सत्यपि** निमित्तकृते वैलक्षण्ये न नित्यानां मोक्षफलता नैमित्तिकैस्तुल्यफलत्वेनातत्फलत्वादित्याह । **नेति ।** कथं तेषां नैमित्तिकतुल्यत्वं तत्राऽऽह । **क्षामेति । अस्यार्थः**—यस्याऽऽहिताग्नेरग्निर्गृहान्दहेदग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेदित्यत्र दहेदिति विधिविभक्त्या प्रसिद्धार्थयच्छब्दोपहितया गृहदाहाख्यनिमित्तपरामर्शेनाग्नये क्षामवते पुरोडाशमित्यादिना क्षामवती विधीयते यस्योभयं हविरार्तिमार्छेत्स ऐन्द्रं पञ्चशरावमोदनं निर्वपेदित्यत्र वाऽऽर्छेदिति विधिविभक्त्या निर्वपेदितिविधास्यमाननिर्वापनिमित्तं हविरार्तिमनूद्य निर्वापो विधीयते भिन्ने जुहोति स्कन्ने जुहोत्यथ यस्य पुरोडाशौ क्षायतस्तं यज्ञं वरुणो गृह्णाति यदा तद्धविः संतिष्ठेताथ तदेव हविर्निर्वपेद्यज्ञो हि यज्ञस्य प्रायश्चित्तमिति च भेदनादिनिमित्तं प्रायश्चित्तमुक्तं न च तन्मुक्तिफलं तथा निमित्तभेदेऽपि न नित्यं मुक्तिफलमिति ॥ १२१ ॥

**न हि लौकिकचक्षुर्भिर्वैलक्षण्यात्समर्थ्यते ॥**
**उलूकचक्षुषोऽरूपाद्रसादिग्रहणं क्वचित् ॥ १२२ ॥**

नित्यं कर्म कर्मान्तराद्विलक्षणमपि न मोक्षफलमित्यत्र दृष्टान्तमाह । **न हीति ।** अरूपात्तद्वर्जनादित्यर्थः ॥ १२२ ॥

**रसादिग्रहणे शक्तिर्लोके दृष्टा न चक्षुषः ॥**
**सामर्थ्यस्याग्रहात्तस्मान्न विरुद्धा प्रकल्प्यते ॥ १२३ ॥**

तत्र हेतुः । **रसादीति ।** विरुद्धा रसादिविषया शक्तिरिति शेषः ॥ १२३ ॥

**सामर्थ्यं यस्य यत्रैव दृष्टं तत्रैव तस्य तत् ॥**
**सुदूरमपि गत्वेह ह्यतिशीतिरपीष्यते ॥ १२४ ॥**

कथं तर्हि सामर्थ्यव्यवस्था तत्राऽऽह । **सामर्थ्यमिति ।** सुदूरमपि मनुष्यान्विहायोलूकादौ गत्वाऽपीत्यर्थः । आलोकानपेक्षमुलूकादिचक्षुरस्मदादिचक्षुर्वत्कथं कार्यं कुर्यादत आह । **इहेति ।** आलोकानपेक्षस्याप्युलूकादिचक्षुषः स्वगोचरे रूपादावेव शक्त्यतिशयो न रसादावित्यर्थः । तत्र चक्षुषः शक्त्यग्रहादित्युक्तहेतुपरामर्शार्थो हिशब्दः ॥ १२४ ॥

**कर्मकार्यान्तरं नित्यं विषदध्यादिवद्ध्रुवम् ॥**
**यदारभत इत्युक्तं तच्चाप्यस्तु स्वगोचरे ॥ १२५ ॥**

दार्ष्टान्तिकमाह । **कर्मेति** । आलोकानपेक्षोलूकादिचक्षुर्वज्ज्ञानसंयुक्तमपि कर्म स्वगोचरे चतुर्णामन्यतमं आरम्भकमिति भावः ॥ १२५ ॥

**यदेव विद्ययेत्यादि श्रुतेरपि वचस्तथा ॥ १२६ ॥**
**देवयाजिसकाशाच्च विशेषश्चाऽऽत्मयाजिनः ॥**
**तदाहुरिति विस्पष्टं[2] श्रूयते श्रुतिवाक्यतः ॥ १२७ ॥**

विद्यासंयोगस्य वैयर्थ्यमाशङ्क्य विशिष्टकार्यारम्भोपयोगान्नैवमिति मत्वा तत्र मानमाह । **यदेवेति** । विद्यासंयुक्तं कर्म विशिष्टकार्यकरमित्येतदनुसारेण **शातपथश्रुति**माह । **देवेति** । तदाहुरित्युपक्रम्य देवयाजी श्रेयानात्मयाजीत्यादिवाक्यात्काम्यकर्तुर्देवयाजिनः सकाशादात्मशुद्ध्यर्थं कर्म कुर्वन्नात्मयाजी श्रेयानिति तस्य विशेषोऽस्ति स्पष्टो निर्दिष्ट इत्यर्थः । सर्वक्रतुयाजिनामात्मयाजी विशिष्यत इति**स्मृतिसमुच्चय**श्चार्थः ॥ १२६ ॥ १२७ ॥

**मनुनाऽप्यात्मयाजीति यदुक्तं परदर्शने ॥**
**तत्रापि च समं पश्यन्नात्मयाजी भवत्ययम् ॥**
**समदृष्टिप्रशंसैषा यदि वा भूतपूर्वतः ॥ १२८ ॥**

ननु मनुना—

"नैःश्रेयसं कर्मविधिं विप्रस्येमं निबोधत" इत्यारभ्य—

"वेदाभ्यासस्तपो ज्ञानमिन्द्रियाणां च संयमः ।
अहिंसा गुरुसेवा च नैःश्रेयसकरं परम्" ॥

इत्यादिना कर्मविशेषानुक्त्वा—

"श्रेयस्करतरं ज्ञेयं सर्वदा कर्म वैदिकम्"

इति चाऽऽदिश्य—

"सर्वभूतेषु चाऽऽत्मानं सर्वभूतानि चाऽऽत्मनि ।
संपश्यन्नात्मयाजी वै स्वाराज्यमधिगच्छति"

इति वदता विद्यायुक्तस्य कर्मणो मुक्तिफलत्वमिष्टमत आह । **मनुनाऽपीति** । यद्यधिकृतः पुरुषः समं पश्यन्भवेत्तदा परेणाऽऽत्मनैकीभूतः स्वराड्भवत्यात्मज्ञानस्तुतिरत्र विवक्षितेत्यर्थः । परदर्शनवत्यात्मयाजिशब्दस्य गत्यन्तरमाह । **यदि वेति** । भूता या पूर्वस्थितिस्तामपेक्ष्याऽऽत्मयाजिशब्दो विदुषीत्यर्थः ॥ १२८ ॥

**आत्मसंस्कृतये कर्म यः करोति यथाविधि ॥**
**आत्मयाजीति मनुना स एवेहाभिधीयते ॥ १२९ ॥**

एतत्प्रपञ्चयति । **आत्मेति** । इहशब्देन समं पश्यन्नित्यादिवाक्योक्तिः ॥ १२९ ॥

---

१ क. ख. °मस्मिन्नार° । २ ख. °ति हि स्प° ।

**सुसंस्कृतधियः पुंसो यथोक्तैः कर्मभिः समम् ॥**
**इह वाऽमुत्र वा ज्ञानं जायते मोक्षकृद्ध्रुवम् ॥ १३० ॥**

**मनो**रभिप्रायमुक्त्वा तत्रैव तद्वाक्यं व्याचष्टे । **सुसंस्कृतेति** । ऐहिकैरामुष्मिकैर्वा कर्मभिः शुद्धबुद्धेः श्रवणादिवशादेकरसाकारं ज्ञानं मुक्तिफलमुदेतीत्येतन्मनुवाक्ये विवक्ष्यते—

"महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः" ।

इति तेनैवोक्तेरित्यर्थः ॥ १३० ॥

**ब्रह्मा विश्वसृजोवाक्याद्देवसार्ष्व्यतिरेकतः ॥**
**भूतापीतिं मनुः साक्षाद्दर्शयत्यविनश्वरीम् ॥ १३१ ॥**

किंच—

"सत्त्वं रजस्तमश्चेति त्रीन्विद्यादात्मनो गुणान्" ।

इति प्रस्तुत्य—

सत्त्वं ज्ञानं तमोऽज्ञानं रागद्वेषौ रजः स्मृतौ ॥

इत्यादि तल्लक्षणमुक्त्वा—

"त्रयाणामपि च तेषां गुणानां यः फलोदयः ।
अग्र्यो मध्यो जघन्यश्च तं प्रवक्ष्याम्यशेषतः" ॥

इत्यादिना च तत्फलोदयं विभज्योक्त्वा—

"त्रिविधा त्रिविधैवैषा विज्ञेया गौणिकी गतिः ।
अधमा मध्यमाऽग्र्या च कर्मविद्याविशेषतः" ॥

इति च त्रैविध्यमभिधाय तामसीं राजसीं च गतिं त्रिधा त्रिधोपदिश्य सात्त्विकीमपि जघन्यां मध्यमां च गतिमाख्याय तामेवोत्तमाम् '**ब्रह्मा** विश्वसृजो धर्मो महान्' इत्यादिनोपन्यस्य—

"एष सर्वः समुद्दिष्टस्त्रिप्रकारस्य कर्मणः ।
त्रिविधस्त्रिविधः कर्मसंसारः सार्वभौतिकः" ॥

इत्युपसंहरन्विद्यायुक्तस्य कर्मणः संसारफलत्वमेवेति मन्यते **मनु**रित्याह । **ब्रह्मेति** ।

किंच—

"प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ।
इह वाऽमुत्र वा काम्यं प्रवृत्तमिह कीर्त्यते ॥
निष्कामं ज्ञानपूर्वं च निवृत्तमुपदिश्यते ।
प्रवृत्तं कर्म संसेव्य देवानामेति सार्ष्टिताम् ॥

इति कर्मफलभूतदेवतासदृशैश्वर्याप्त्यतिरेकेण भूतेषु व्यक्ताव्यक्तेषु पञ्चसु समुच्चयानुष्ठायिनः सापेक्षाविनाशोपेतमप्ययम्—

'निवृत्तं सेवमानस्तु भूतान्यप्येति पञ्च च'।

इति साक्षादाह तन्न समुच्चयस्य मुक्तिफलतेत्याह । **देवेति** ॥ १३१ ॥

**अत्येतीति तु ये पाठं कुर्वते तेऽविपश्चितः ॥**
**यथोक्तदोषदुष्टत्वान्नात्ययो बोधतोऽन्यतः ॥ १३२ ॥**

निवृत्तं सेवमानस्तु भूतान्यत्येति पञ्च चेति पाठान्मुक्तिरेव समुच्चयानुष्ठानाद्विवक्षितेति चेत्तत्राऽऽह । **अत्येतीति त्विति** । नान्यः पन्था अयनायेत्यादिश्रुतिविरोधं सूचयति । **अविपश्चित इति** । किंच न कर्मणा भूतात्ययस्तदविरोधित्वादतो ज्ञानादेव तत्सिद्धेः समुच्चयायोगाद्भूतान्यप्येतीत्येव पाठस्तदनुसारीत्यभिप्रेत्याऽऽह । **यथोक्तेति** । एतदेव यथोक्तदोषदुष्टत्वं यत्कर्मणो मोहतत्कार्याविरोधित्वम् ॥ १३२ ॥

**स्पष्टार्थमुत्तरं भाष्यं न व्याख्यानमपेक्षते ॥**
**यतोऽत उत्तरो ग्रन्थः सम्यग्व्याख्यायतेऽधुना ॥ १३३ ॥**

किंचान्यदित्यादिभाष्ये व्याख्याते न चेत्यादिभाष्यव्याख्याप्राप्तावाह । **स्पष्टेति** । स्पष्टत्वान्न व्याक्रियते तर्हि समाप्तिरेव ब्राह्मणस्य युक्ता किमनन्तरसंदर्भेणेत्याशङ्क्य सर्वस्य कर्मफलस्य संसारत्वप्रदर्शनाय ब्राह्मणारम्भे स्थिते तदक्षरव्याख्याभाष्यमाश्रित्योत्तरसंदर्भ इत्याह । **यत इति** ॥ १३३ ॥

**प्रयोज्यस्य हि बन्धस्य प्रयोजकमिहोदितम् ॥**
**प्राधान्येनेह कर्मैव तदन्यत्तूपसर्जनम् ॥ १३४ ॥**

समुचितमसमुचितं वा सर्वं कर्म बन्धार्थं सम्यग्धीरेव मुक्त्यर्थेति वक्तुं ब्राह्मणमितिविचारद्वारा संबन्धमुक्त्वा विचारव्यवधानाद्विस्मृतिर्मा भूदिति वृत्तं स्मारयति । **प्रयोज्यस्येति** । तस्य प्रयोजकापेक्षाध्रौव्यार्थो हिशब्दः । इहेत्यार्तभागग्रन्थोक्तिः । किं तत्प्रयोजकं न हि बहुषु संप्लवमानेषु तत्तद्विशेषनिर्णयस्तत्राऽऽह । **प्राधान्येनेति** । इहेति निर्धारणे । कालाद्यपि प्रयोजकमिति कुतोऽवधारणं तत्राऽऽह । **तदन्यत्त्विति** ॥ १३४ ॥

**परिच्छिन्नापरिच्छिन्नं तच्च कर्म स्वभावतः ॥ १३५ ॥**
**परिच्छिन्नस्य संव्याप्तिर्व्याख्याता पूर्वमेव तु ॥**
**अपरिच्छिन्नसंव्याप्तिर्भुज्युप्रश्नेन भण्यते ॥ १३६ ॥**

कर्मणो व्यावृत्तानुवृत्तत्वेन द्वैविध्यं स्मारयति । **परिच्छिन्नेति** । तत्र व्यावृत्तस्य कर्मणो व्याप्तिरादित्याद्या ब्रह्माण्डान्तस्था प्रागेवोद्गीथग्रन्थे दर्शितेति वाच्यपरिशेषार्थमाह । **परिच्छिन्नस्येति** । वृत्तं संक्षिप्य ब्राह्मणतात्पर्यमाह । **अपरिच्छिन्नेति** ॥ १३५ ॥ १३६ ॥

**ब्रह्माण्डाद्बहिरन्तश्च समष्टिव्यष्टिरूपिणः ॥**
**व्याप्तिर्हिरण्यगर्भस्य बन्धज्ञानाय भण्यते ॥ १३७ ॥**

द्विविधस्यापि कर्मणो व्याप्तिरुच्यमाना कुत्रोपयुज्यते न हि सा भोगापवर्गयोरुपकरोति तत्राऽऽह । **ब्रह्माण्डादिति** । इयान्हि बन्धो नाधिको न्यूनो वेत्यन्यव्यवच्छेदेन बन्धपरिमाणपरिच्छेदार्थं द्विविधकर्मव्याप्तिरुच्यते तत्परिच्छेदश्च वैराग्यद्वारा मुक्तिहेतुरित्यर्थः ॥ १३७ ॥

**वैषम्यप्रतिपत्त्यर्थं प्रश्नस्य त्रासजन्मने ॥**
**प्रतिवादिधियो यत्नाद्भुज्युनाऽऽख्यायिकोच्यते ॥ १३८ ॥**

ब्राह्मणस्यैवं प्रवृत्तावपि किमिति भुज्युः स्वस्य निर्वृत्तां कथामाहेत्याशङ्क्याऽऽह । **वैषम्येति** । समष्टिव्यष्ट्यात्मदृष्टिफलविषयप्रश्नस्य वैषम्यमलौकिकार्थत्वं तत्प्रतिपत्त्यर्थं भुज्युना निर्वृत्ता कथोपादीयते तया याज्ञवल्क्यबुद्धिव्यामोहार्थं च जल्पे परपराजयेनाऽऽत्मजयस्येष्टत्वादित्यर्थः । यत्नादित्याख्यायिकाप्रवचनस्योपोद्धातत्वं सूच्यते ॥ १३८ ॥

**लोकानामवसानानि पर्यपृच्छाम तं यदा ॥**
**गन्धर्वं तत्र काले तमथाब्रूम क्व तेऽभवन् ॥ १३९ ॥**

ब्राह्मणाख्यायिकयोस्तात्पर्यमुक्त्वा तं यदेत्यादिवाक्याक्षराणि व्याचष्टे । **लोकानामिति** । अथशब्दार्थस्तत्र काल इति । भुवनकोशपरिमाणज्ञानार्थं प्रवृत्तेषु बहुष्वात्मानं श्लाघयन्तो वयं क्व पारिक्षिता अभवन्नित्यश्वमेधयाजिनां गतिं गन्धर्वं पृष्टवन्तः स च सर्वमस्मभ्यमभ्यधादतो गन्धर्वाद्यज्ज्ञानं लब्धमस्माभिस्तत्ते नेति प्रतिज्ञाहानिस्तस्मिन्पृष्टे तदुक्तेस्तवाशक्तेरिति भावः ॥ १३९ ॥

**अप्रसिद्धाभिधानोक्त्या वादिव्यामोहसिद्धये ॥**
**अश्वमेधकृतो वक्ति भुज्युः पारिक्षिता इति ॥ १४० ॥**

अश्वमेधयाजिनां गतिरत्र प्रष्टुमिष्टा चेत्तेषां प्रसिद्धां संज्ञां हित्वा किमित्यप्रसिद्धसंज्ञोपादानमित्याशङ्क्याऽऽह । **अप्रसिद्धेति** । परितः क्षीयते सर्वं ब्रह्महत्यादि येन स परिक्षिदश्वमेधस्तद्याजिनः पारिक्षिता इति द्रष्टव्यम् ॥ १४० ॥

**पारिक्षिताः क्व तेऽभूवन्नित्युक्तिस्त्रिरिहोदिता ॥**
**त्रिरुक्तेरुपयोगोऽयं विभागेनोपवर्ण्यते ॥ १४१ ॥**

क्व पारिक्षिता अभवन्निति त्रिरुक्तिरनर्थिका पुनरुक्तेरिति शङ्कते । **पारिक्षिता इति** । इहेति प्रकृतसंदर्भोक्तिः । उत्तरम् । **त्रिरुक्तेरिति** ॥ १४१ ॥

**प्रश्नार्था प्रथमोक्तिः स्यात्प्रत्युक्त्यर्था तथा परा ॥**
**तृतीया याज्ञवल्क्यार्थं तिस्रोऽप्युक्तीरितीरयेत् ॥ १४२ ॥**

विभागेनोपयोगं दर्शयति । **प्रश्नार्थेति** । आद्या तावत्क्व ते पारिक्षिता अभवन्नित्यु-

क्तिर्गन्धर्वं प्रति प्रश्नार्था द्वितीया तदनुरूपप्रतिवचनार्था यो हि क्व पारिक्षिता अभव-न्निति प्रश्नो गन्धर्वं प्रति कृतस्तस्य प्रत्युक्तिं सर्वां सोऽस्मभ्यमब्रवीदिति तत्र विवक्ष्यते तृतीया तु मुनिं प्रति प्रश्नार्थेति त्रिरुक्तेर्विभागान्न पौनरुक्त्यमित्यर्थः ॥ १४२ ॥

**भानुस्यन्दनगत्याऽध्वा मितो यावानहर्निशम् ॥**
**द्वात्रिंशद्गुणितस्तावान्व्याप्तो भानुगभस्तिभिः ॥ १४३ ॥**

मुनिस्तेषां गतिविवक्षया भुवनकोशपरिमाणं निरूपयति । तत्र द्वात्रिंशतमित्यादेरर्थ-माह । **भान्विति** । अहोरात्रमादित्यरथगत्या यावान्पन्था मितस्तावान्देशो द्वात्रिंशद्गु-णितस्तत्किरणव्याप्तः स च चन्द्ररश्मिव्याप्तेन देशेन साकं पृथिवीत्युच्यते ।

"रविचन्द्रमसोर्यावान्मयूखैरवभास्यते ।
ससमुद्रसरिच्छैला तावती पृथिवी स्मृता" ॥

इति भावः ॥ १४३ ॥

**द्वात्रिंशद्भिरहोरात्रैर्यावन्तं देशमुद्व्रजन् ॥**
**मण्डली कुरुते भानुस्तावाँल्लोकरवेरितः ॥**
**शरीरमेतद्वैराजं देवताकरणं महत् ॥ १४४ ॥**

अयं लोक इत्यत्र लोकं व्याचष्टे । **द्वात्रिंशद्भिरिति** । लोकरवो लोकशब्दस्तेनेरित उक्तो विषयीकृत इति यावत् । अयं लोको लोकालोकगिरिपरिवेष्टितस्तत्र लोकरूप-माह । **शरीरमिति** । अग्निर्मूर्धेत्यादिश्रुतिमाश्रित्य विशिनष्टि । **देवतेति** । महत्त्वं तस्य स्थूलसमष्टित्वम् ॥ १४४ ॥

**इयानेव तु देशोऽयं प्राणिनां भोगसिद्धिकृत् ॥**
**अग्न्यादिदेवतानां च व्याप्तिरेतावती मता ॥ १४५ ॥**

तस्यैव भोगभूमित्वं दर्शयति । **इयानेवेति** । प्राणिनामिति विशेषणात्ततोऽन्यत्रापि देवताव्याप्तिमाशङ्क्योक्तम् । **अग्न्यादीति** ॥ १४५ ॥

**लोकात्परं निरालोकः सर्वप्राणिविवर्जितः ॥**
**पर्येति लोकं द्विस्तावत्पृथिवी पूर्वमानतः ॥ १४६ ॥**

अलोकरूपमाह । **लोकादिति** । तस्य भोगभूमित्वं व्यावर्तयति । **सर्वेति** । तं समन्तमित्यादेरर्थमाह । **पर्येतीति** । लोकपरिमाणाद्द्विगुणपरिमाणा पृथिवी सा लोकं परितो व्याप्नोति न च रविचन्द्रमसोरित्यादिना विरोधस्तत्र तद्भागस्योक्तेरिति भावः ॥ १४६ ॥

**लोकालोकगिरेर्भागः सर्वप्राणिविवर्जितः ॥**
**समुद्रो द्विगुणो भूमेः परस्तादवतिष्ठते ॥ १४७ ॥**

लोकात्परमित्यत्रोक्तं प्रकटयन्नस्य लोकवेष्टनस्य पृथिवीभागस्याभोगभूमित्वं व्यनक्ति। **लोकेति** । तामित्यादेरर्थमाह । **समुद्र इति** ॥ १४७ ॥

**यं घनोदमिति प्राहुः पुराणज्ञा विपश्चितः ॥**
**ब्रह्माण्डसंपुटस्तस्मात्परेणाभ्येति सर्वतः ॥ १४८ ॥**

तत्र **पौराणिक**संमतिमाह । **यमिति** । **उक्तं हि**—

"अण्डस्यास्य समन्तात्तु संनिविष्टोऽमृतोदधिः ॥
समन्ताद्धनतोयेन धार्यमाणः स तिष्ठति ।
बाह्यतो घनतोयस्य तिर्यगूर्ध्वानुमण्डलम् ॥
धार्यमाणः समन्तात्तु तिष्ठते घनतेजसा ।
अयोगुडनिभो वह्निः समन्तान्मण्डलाकृतिः" इति ।

तद्यावतीत्याद्यवतारयितुं भूमिकामाह । **ब्रह्माण्डेति** । तस्माद्घनोदशब्दितसमुद्रादिति यावत् ॥ १४८ ॥

**पृथिव्यनन्तरं साक्षात्समुद्रः श्रूयते श्रुतौ ॥**
**अण्डाद्बहिः पुराणे तु विरोधे स्मृतिबाधनम् ॥ १४९ ॥**

ननु **पौराणिका** ब्रह्माण्डाद्बहिरेव घनोदाख्यं समुद्रं वदन्तस्तन्मध्यपतितानि बहूनि ब्रह्माण्डान्युन्मज्जननिमज्जनान्यनुभवन्तीति मन्यन्ते । **उक्तं हि**—

"भूतेभ्योऽण्डं महाबुद्धे बृहत्तदुदकेशयम्" इति ।
"एतदण्डकटाहेन तिर्यगूर्ध्वमधस्तथा ॥
कपित्थस्य यथा बीजं सर्वतो वै समावृतम् ।
दशोत्तरेण पयसा मैत्रेयाण्डं च तद्वृतम्" इति च ।

तत्कथमत्र **पौराणिक**संमतिस्तत्राऽऽह । **पृथिवीति** । तां समन्तमित्यादिना पृथिव्यनन्तरमण्डान्तरे च समुद्रः श्रूयते चेत्तर्हि **पुराणे** तस्य बहिः श्रवणान्मिथो विरोधः श्रुतिस्मृत्योरित्याशङ्क्याऽऽह । **विरोध इति** । **अस्यार्थः—औदुम्बरी** सर्वा वेष्टयितव्येति **स्मृतिरौदुम्बरीं** स्पृष्ट्वोद्गायेदिति **श्रुत्या** विरुद्धा सा श्रुतिमूला भ्रान्तिमूला वेति **संशये** कर्तृसामान्यादष्टकादिस्मृतिवदत्रापि श्रुत्यनुमानादनुमितप्रत्यक्षश्रुत्योर्विरोधात्प्रत्यक्षाप्रत्यक्षत्वेनातुल्यत्वाच्च विकल्पायोगाद्द्वयोरप्रामाण्यमिति **पूर्वपक्षे** प्रत्यक्षश्रुतिविरोधे बह्वाविवानुण्णानुमानानुदयादष्टकादिस्मृतीनां श्रुतिमूलत्वं तद्विरुद्धस्मृतीनां च भ्रान्तिमूलतेति विभागात्सर्ववेष्टनस्मृतिः स्पृष्टिश्रुत्या बाध्येति **राद्धान्तितं** प्रमाणलक्षणे विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमित्यत्र तथेहापि **पौराणिकं** वचः श्रुतिविरोधे बाध्यतामिति ॥ १४९ ॥

**व्याख्येह संप्रवृत्तेयमश्वमेधकृतां पथः ॥**
**स चैवं शक्यते वक्तुं लोकालोकादिमानतः ॥ १९० ॥**

अश्वमेधयाजिनां गतिरत्र विवक्षिता चेत्सैवोच्यतां किं भुवनकोशेनेत्याशङ्क्याऽऽह । **व्याख्येति ।** यद्यपि श्रुतावश्वमेधयाजिनामध्वनो व्याख्या प्रकृता तथाऽपि लोकस्यालोकस्य लोकालोकस्य पृथिव्यादेश्च परिमाणतो भुवनकोशनिर्णये स शक्यो निश्चेतुमतस्तद्वचनं प्रकृतोपयोगीत्यर्थः ॥ १९० ॥

**यथोक्तपरिमाणेन ध्यानकर्मविवक्षया ॥**
**लोकालोकादिकार्याणां परिमाणवचस्ततः ॥ १९१ ॥**

भुवनकोशोक्तेर्विधान्तरेण फलमाह । **यथोक्तेति ।** लोकस्यालोकस्य लोकालोकस्य तदन्तस्थपृथिव्यादेश्चोक्तपरिमाणेन तदात्मसूत्रध्यायिनो ध्यानविवक्षया द्वात्रिंशतमित्याद्या श्रुतिस्ततश्च भुवनकोशवचोऽर्थवदित्यर्थः ॥ १९१ ॥

**अस्ति तावदयं लोको यथोक्तपरिमाणवान् ॥**
**भानुप्रकाशसंव्याप्तो विराजो विस्तृतिस्त्वियम् ॥ १९२ ॥**

अयं लोक इत्यस्यार्थमनुवदति । **अस्तीति ।** भानुशब्दश्चन्द्रमसोऽपि भवत्युपलक्षणम् ॥ १९२ ॥

**ततो लोकाद्विनिष्क्रम्य द्विगुणा पृथिवी स्थिता ॥**
**समन्ताद्द्विगुणोऽब्धिश्च संवेष्ट्य पृथिवीं स्थितः ॥ १९३ ॥**

तामित्यादेरर्थमनुद्रवति । **तत इति** ॥ १९३ ॥

**तं समुद्रं समुत्तीर्य यदन्यत्परतस्ततः ॥**
**गन्तव्यमुपमानोक्तिः क्रियते तस्य सांप्रतम् ॥ १९४ ॥**

तद्यावती क्षुरस्येत्याद्यवतारयति । **तमिति ।** प्रस्तुतं समुद्रमतिक्रम्य लोकादेरन्यदण्डाद्बहिः स्थितं यद्गन्तव्यं तद्गत्युपयुक्ताण्डकपालसंधिच्छिद्रस्योपमानमनेनोच्यत इत्यर्थः ॥ १९४ ॥

**कपालसंधिगं व्योम सामर्थ्यात्परिमाणतः ॥**
**यावतीत्युपमोक्तेह श्रुत्याऽऽविष्क्रियतेऽनया ॥ १९५ ॥**

तावानित्याकाशान्तरमेवोच्यते न कपालच्छिद्रं नियामकाभावादतो न तस्येयमुपमेत्याशङ्क्याऽऽह । **कपालेति ।** समुद्रात्परस्तादण्डकपालच्छिद्रातिरेकेणातिसूक्ष्मार्थानुपपत्तेरण्डकपालसंधिस्थमेव व्योम तावानित्यादिनोच्यतेऽतः संधिस्थमेव नभो दृष्टान्तश्रुत्या परिमाणविशिष्टतया स्फुट्यते नाऽऽकाशान्तरमर्थापत्तिविरोधादित्यर्थः ॥ १९५ ॥

**तेन पारिक्षितान्खेन चित्यात्मत्वमुपागतान् ॥**
**अन्तः संस्थाप्य नयति समष्टिव्यष्टितामसुः ॥ १५६ ॥**

तानिन्द्र इत्यस्य विवक्षितमाह । **तेनेति** ॥ १५६ ॥

**चित्यात्माऽत्र सुपर्णः स्यादादित्यात्माऽथवोच्यते ॥**
**इमं देशं यतः प्राप्तानादित्याद्युक्तवर्त्मना ॥ १५७ ॥**

सुपर्णशब्दार्थमाह । **चित्येति** । अस्मिन्वाक्ये विराट्सूत्रं वा सुपर्णः स्यादित्यत्र हेतुमाह । **इममिति** । अर्चिराद्युक्तमार्गेण ब्रह्मलोकं प्राप्याण्डकपालसमीपदेशं प्राप्तानश्वमेधवतो बहिर्नेतुं शक्तिर्यतः सूत्रविराजोरेवातस्तयोरन्यतरस्यैव सुपर्णतेत्यर्थः ॥ १५७ ॥

**एवं पारिक्षितान्सर्वानग्निरिन्द्रो वियत्पथा ॥**
**निर्गमय्याण्डतः प्रादाद्वायवे सूक्ष्मरूपिणे ॥ १५८ ॥**

सूत्रस्यान्तरिव बहिरपि व्याप्तेर्बहिर्नयनसामर्थ्येऽपि विराजोऽन्तरेव सत्त्वात्कथं तच्छक्तिरित्याशङ्क्येन्द्रशब्दार्थं वदन्वायवे प्रायच्छदित्यस्यार्थमाह । **एवमिति** । इन्द्रस्य चित्यात्मनो विराट्सूत्ररूपस्य बहिर्गमयितृत्वयोगाद्वायवे स तानदादित्यर्थः। ननु सूत्रस्य वायोश्च **वायुर्वै** गौतम तत्सूत्रमित्यैक्यश्रुतेः सूत्रात्मा कुतो बहिरण्डतो निर्गमय्य तान्वायवे प्रादादिति तत्राऽऽह । **सूक्ष्मेति** । ज्ञानशक्तिमतः सूत्रस्य क्रियाशक्तिमन्तं स्वात्मानमेव वायुं प्रति क्रियाज्ञानवतां नयनमुचितमिति भावः ॥ १५८ ॥

**अश्वमेधमखापूर्वं देवताऽग्निरिहोच्यते ॥**
**वायुवेष्टनमेतच्च यदपूर्वमिहोदितम् ॥ १५९ ॥**

अथेन्द्रस्य यथोक्तस्यापि कथमश्वमेधयाजिषु फलदातृतेत्याशङ्क्य प्रकृतमग्निशब्दार्थं विशदयति । **अश्वमेधेति**। इहेति प्रकृतवाक्योक्तिः । अग्निरूपा देवता चेदश्वमेधजन्यापूर्वत्वेनोच्यते तर्हि तदेव **धर्मं** जैमिनिरिति **न्यायेन** फलदमस्तु कृतं वायुनेत्याशङ्क्याऽऽह । **वायुवेष्टनमिति** । यदत्रापूर्वं तद्वायुशरीरमेवेति यावत् ॥ १५९ ॥

**वायुरेव ततोऽपूर्वमभिव्यक्ततनुर्मतः ॥**
**अनन्तरमपूर्वस्य कार्यं निर्दिश्यतेऽधुना ॥ १६० ॥**

वायुः शरीरी शरीरमपूर्वमिति भेदादेकस्यैव फलदत्वसंभवे किं द्वाभ्यामित्याशङ्क्याऽऽह । **वायुरिति** । अश्वमेधान्निर्वृत्तमपूर्वं फलदानार्थमभिव्यक्तप्रभावो वायुरेवेति नानयोर्भेद इत्यर्थः । तानित्यादेस्तात्पर्यमाह । **अनन्तरमिति** । अश्वमेधकृतां वायवे प्रदानादिति शेषः । कार्यं फलम् ॥ १६० ॥

**पारिक्षितानथाऽऽदाय वायुः स्वात्मसमाश्रयान् ॥**
**आपाद्य गमयामास तत्र प्राणैकरूपिणः ॥ १६१ ॥**

---

१ ग. 'पूर्वदे' ।

अश्वमेधकृतो यत्र पूर्वे तस्थुरितो गताः ॥
वाय्वात्मा गमयामास समष्टिव्यष्टितात्मये ॥ १६२ ॥

अक्षराणि व्याचष्टे । पारिक्षितानिति । विराजा सूत्रेण वा प्रदानानन्तर्यमथशब्दार्थः । कुत्र गमितवानित्यपेक्षायामाह । तत्रेति । प्राणैकरूपिण इत्युपास्त्या देवभावमापन्नत्वं देवो भूत्वेत्यादिश्रुतेर्दर्शयति । तत्र गतिमनूद्य तत्फलमाह । वाय्वात्मेति ॥ १६१ ॥ १६२ ॥

अश्वमेधमखापूर्वफलप्रकथनेन या ॥
प्रवृत्ताऽऽख्यायिका सेयं समाप्ताऽनवशेषतः ॥ १६३ ॥

एवमित्याद्यवतारयितुं भूमिकामाह । अश्वमेधेति ॥ १६३ ॥

प्रश्नशेषमथेदानीं स्वयमेव श्रुतिर्जगौ ॥
यदि वा याज्ञवल्क्योक्तिरेवमेवेति यद्वचः ॥ १६४ ॥
तस्मादित्यादिकं वाक्यं श्रुतेरिति च निर्दिशेत् ॥
वायुमेव स गन्धर्वः प्रशशंसातिविस्मितः ॥ १६५ ॥

आख्यायिका समाप्ता चेत्किमुत्तरेणेत्याशङ्क्याऽऽह । प्रश्नेति । पूर्वेऽश्वमेधयाजिनो यत्र जग्मुस्तत्र वायुराधुनिकानपि गमितवानित्येतावन्मात्रोक्तौ पूर्वे कुत्र तस्थुरिति जिज्ञासायां क्वेत्यादिप्रकृतप्रश्नस्यैव शेषमिमं विशेषमेवमित्यादिश्रुतिः स्वमुखेनाऽऽहेत्यर्थः । तदक्षराणि योजयति । वायुमिति ॥ १६४ ॥ १६५ ॥

वायुं मुक्त्वा बहिर्यस्मान्नान्यस्या विद्यतेऽबहिः ॥
देवताया गतिस्तस्माद्वायुर्ज्यायानिहैकलः ॥ १६६ ॥

अग्न्यादिष्वपि विद्यमानेषु कुतो वायोरेव प्रशंसेति तत्राऽऽह । वायुमिति । अण्डाद्बहिरबाहिश्च वायुवद्देवतान्तरस्य यतो न गतिः किंत्वण्डान्तरेवातो देवतानां मध्ये वायुरेव महानिति तत्प्रशंसेत्यर्थः ॥ १६६ ॥

यत एवमतो ज्ञेयो वायुरेव न चापरः ॥
व्यष्टिः समष्टिरित्येवमण्डादन्तर्बहिश्च सः ॥ १६७ ॥

तस्मादित्यादेरर्थमाह । यत इति । वायोर्ज्यायस्त्वेन प्रशस्यमानत्वादसावेव बहिर्व्याप्त्या समष्टिरन्तर्व्याप्त्या व्यष्टिश्चेत्यर्थः । व्यष्टिसमष्टिपदयोर्व्याख्यानमण्डादित्यादि ॥ १६७ ॥

व्याप्तिर्विशेषरूपेण व्यष्टिरित्यभिधीयते ॥
सामान्येन समष्टिश्च वायुरेव द्विधा स्थितः ॥ १६८ ॥

---

१ क. रिह च ।

वायुरेवेत्यादेरर्थमाह । व्याप्तिरिति । सामान्येन व्याप्तिरिति पूर्वेण संबन्धः । पदार्थमुक्त्वा वाक्यार्थमाह । वायुरेवेति ॥ १६८ ॥

**वस्तु यल्लक्ष्यते किंचिज्जगत्यस्मिंश्चराचरे ॥**
**सामान्येन विशेषेण वायुरेव तदीक्ष्यते ॥ १६९ ॥**

अन्यस्याप्युभयात्मनः संभवात्कुतोऽवधारणमित्याशङ्क्याऽऽह । वस्त्विति॥१६९॥

**न सामान्यविशेषाभ्यां वायोरन्यस्य वस्तुनः ॥**
**संबन्धो वायुरेवेति सावधारणवाक्यतः ॥ १७० ॥**

कथमेतदर्थसिद्धिरित्याशङ्क्यावधारणवशादित्याह । नेत्यादिना ॥ १७० ॥

**अन्ययोगव्यवच्छेदे प्रशंसेयमसोर्भवेत् ॥**
**न त्वयोगव्यवच्छेद उत्कर्षस्तादृगिष्यते ॥ १७१ ॥**

अथायोगव्यवच्छेदेनापि तद्धटिष्यते नेत्याह । अन्येति । तादृगित्यन्ययोगव्यवच्छेदकृतोत्कर्षवदित्यर्थः ॥ १७१ ॥

**अश्वमेधक्रतोरेष समष्टिव्यष्टिलक्षणः ॥**
**महिमाऽऽविष्कृतः श्रुत्या विद्यायुक्तस्य संभ्रमात् ॥ १७२ ॥**

वायोरुभयरूपत्वनिरूपणं प्रकृतप्रश्नप्रत्युक्त्यनुपयुक्तं तेन तत्प्रशंसाऽपि वृथेत्याशङ्क्य विशिष्टाश्वमेधफलस्यैव श्रुत्योच्यमानत्वान्नैवमित्याह । अश्वेति । आख्यायिकातोऽपसृत्य स्वेनाऽऽत्मना श्रुतिर्यथोक्तं महिमानमाहेति तस्यास्तत्र तात्पर्यं सूचयति । संभ्रमादिति ॥ १७२ ॥

**समष्टिव्यष्टिरूपं यो वायुमात्मेति संश्रितः ॥**
**सोऽपहन्ति पुनर्मृत्युं मृत्युमात्मानमेत्यसौ ॥ १७३ ॥**

**श्लोकानामादितः समष्ट्यङ्काः—६०२७**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके तृतीयाध्यायस्य**
**तृतीयं भुज्युब्राह्मणम् ॥ ३ ॥**

अप पुनरित्यादेरर्थमाह । समष्टीति । उपासकस्य सकृन्मृत्वा पुनर्मरणाय देहग्रहाभावे हेतुमाह । मृत्युमिति ॥ १७३ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां तृतीयाध्यायस्य
तृतीयं भुज्युब्राह्मणम् ॥ ३ ॥

---

१ ख. तदीक्ष्यताम् ।

अथ चतुर्थं ब्राह्मणम् ।

**ऐकात्म्यानवबोधस्य कार्यमुक्तमशेषतः ॥**
**तन्मूलध्वस्तयेऽथोर्ध्वं परो ग्रन्थोऽवतार्यते ॥ १ ॥**

ब्राह्मणत्रयार्थं संक्षिप्यानुद्रवति । **ऐकात्म्येति** । अनर्थमूलाज्ञानध्वंसिज्ञानार्थत्वेनोत्तरब्राह्मणषट्कारम्भं प्रतिजानीते । **तन्मूलेति** । उक्तेऽनर्थे सहेतुतद्ध्वंसिहेत्वपेक्षाऽस्तीत्यथशब्दार्थः । ऊर्ध्वमित्यनन्तरब्राह्मणमात्रग्रहव्यावृत्तिः ॥ १ ॥

**पुण्यापुण्यप्रयुक्तः सन्ग्रहातिग्रहबन्धनः ॥**
**आब्रह्माऽऽस्थाणु चाजस्रं यः संसरति मूढधीः ॥ २ ॥**
**सोऽयमुक्तस्तथोत्कर्षः परः पुण्यस्य चोदितः ॥**
**मुमुक्षुरस्ति नास्तीति परो ग्रन्थोऽवतार्यते ॥ ३ ॥**

अध्यायशेषस्य संबन्धमुक्त्वोक्तब्राह्मणार्थोक्त्यर्थं वृत्तं कीर्तयति । **पुण्येति** । योऽज्ञानादारोपितमातृभावोऽविद्यादियुक्तो ग्रहातिग्रहगृहीतो नानायोनिषु जायमानो म्रियमाणश्च सदा बध्यते स पूर्वमुक्तः कर्मफलं संसर्तुरेवेति चोक्तमित्यर्थः । उत्तरब्राह्मणतात्पर्यमाह । **मुमुक्षुरिति** । मातृसाक्षी तद्द्वाराऽऽत्मन्यध्यस्तसंसारो मुमुक्षुस्त्वमर्थोऽत्र निर्धार्येत इत्यर्थः ॥ २ ॥ ३ ॥

**देहेन्द्रियमनोबुद्धिवेदनाव्यतिरेकतः ॥**
**अस्तित्वे तस्य संसिद्धे तन्मुक्त्यै यत्यते यतः ॥ ४ ॥**

मुमुक्षोरपेक्षितो मोक्षो वक्तव्यस्तदस्तित्वनिर्धारणं त्वनिबन्धनमत आह । **देहेति** । वेदना दुःखाद्यात्मिका धीवृत्तयः । साक्ष्यातिरेकेण साक्षिणः सत्त्वे निश्चिते तस्य तस्मान्मुक्त्यर्थं यत्नसंभवात्तदस्तित्वं वाच्यमित्यर्थः ॥ ४ ॥

**भविष्यल्लोकसंबन्धी येषामागमतो मतः ॥**
**न तान्प्रति समारम्भः सिद्ध एव हि तान्प्रति ॥ ५ ॥**

कस्य तर्हि देहातिरिक्तत्वमस्तित्वं चोच्यते मातुरन्यस्य वा नाऽऽद्यस्तस्य कर्मकाण्डप्रामाण्यादेव सिद्धेर्नेतरस्तस्याप्रसिद्धस्य बुद्धिमनारोहतोऽशक्यप्रतिपादनत्वादित्याशङ्क्याऽऽद्यं दोषमङ्गी करोति । **भविष्यदिति** । स्थूलदेहाद्यतिरिक्तः परलोकी कर्मकाण्डवशादेव येषां सिद्धो न तान्प्रति प्रमातृसाधनार्थमिदं ब्राह्मणं तस्य तान्प्रति सिद्धत्वादित्यर्थः ॥ ५ ॥

**कर्त्रात्मनः पुरा सिद्धेर्बुद्ध्याद्यव्यतिरेकतः ॥**
**कर्त्रादेरिह साक्ष्यात्मा दृष्टेर्द्रष्टोच्यतेऽधुना ॥ ६ ॥**

द्वितीयं दोषं निरस्यति । **कर्त्रेति** । बुद्ध्यादिवैशिष्ट्येन कर्मकाण्डे मातुः सिद्धेस्त-

त्साक्षी समनन्तरब्राह्मणे विद्याधिकारित्वेन निरूप्यते न च तस्याप्रसिद्धत्वादशक्यप्रतिपाद्यत्वं मात्रादिभावाभावसाधकत्वेन सामान्यतो धर्मवत्प्रसिद्धस्य विशेषाकारेण प्रतिपादनाविरोधादिति भावः ॥ ६ ॥

**विषयो ब्रह्मविद्याया योग्यः क इति चिन्त्यते ॥**
**विषयेऽवधृते यस्मादुपदेशोऽर्थवान्भवेत् ॥ ७ ॥**

आब्रह्मस्तम्बपर्यन्तैरित्यादि वदद्भिराचार्यैः सुलभोऽधिकारी दर्शितस्तथाच न्यायवार्तिकं शमाय शास्त्रं जगतो जगादेति तत्र किमधिकारिचिन्तयेत्याशङ्क्याऽऽह । **विषय इति** । आब्रह्मेत्यादावधिकारिसत्त्वमात्रं विवक्षितं न सर्वाधिकारित्वं न हि किमपि शास्त्रं सर्वाधिकारमतो ब्रह्मविद्याया योग्यमधिकारिणं निरूपयितुं ब्राह्मणमिति भावः । विद्योपदेशे स्वयमेव श्रद्धावान्प्रवर्तिष्यते किमधिकारिचिन्तयेत्याशङ्क्याऽऽह । **विषय इति** । अधिकारिणं प्रत्येव तद्योगादन्यत्र तद्वैफल्यात्तच्चिन्ताऽर्थवतीत्यर्थः ॥ ७ ॥

**ब्रह्मणो वोपदेशः स्यादथवाऽब्रह्मणो भवेत् ॥**
**ब्रह्मत्वस्य स्वतः सिद्धेर्ब्रह्मणि स्यादनर्थकः ॥ ८ ॥**

कस्तर्हीह योग्योऽधिकारीति विकल्पयति । **ब्रह्मणो वेति** । आद्ये वैयर्थ्यमुपदेशस्येत्याह । **ब्रह्मत्वस्येति** ॥ ८ ॥

**उपदेशशतेनापि ब्रह्मत्वं न कथंचन ॥**
**स्वतोऽब्रह्मत्वतस्तस्य नातोऽब्रह्मण इष्यते ॥ ९ ॥**

द्वितीयं प्रत्याह । **उपदेशेति** ॥ ९ ॥

**सर्वस्यैकात्म्ययाथात्म्यान्न चाब्रह्मेह लभ्यते ॥**
**क्षेत्रज्ञेश्वरसंभेदशङ्कानुत्त्यर्थमुच्यते ॥ १० ॥**

पक्ष एवायमनुपपन्न इत्याह । **सर्वस्येति** । शास्त्रं समस्त्यर्थः । नन्वाधिकारिणं निरूपयितुं ब्राह्मणमारभ्यमिति प्राप्तं तत्राऽऽह । **क्षेत्रज्ञेति** । प्रत्यग्ब्रह्मणोर्वास्तवभेदशङ्कानिरासेन ब्रह्मैवाविद्याव्यवहितं विद्यायोग्यमिति निश्चेतुं ब्राह्मणं न च ब्रह्मकण्डिकया गतार्थत्वमस्य तद्विवरणत्वादित्यर्थः ॥ १० ॥

**यदित्यनेन निर्देशो विशेष्यस्य विवक्षितः ॥**
**सामान्यमात्रविज्ञानाद्विशेषस्याप्रतीतितः ॥ ११ ॥**

पदार्थव्याख्यामारभमाणो यदित्यस्यार्थमाह । **यदित्यनेनेति** । तत्र हेतुः **सामान्येति** । यत्पदं विशेष्यवाचि ततः सामान्यमात्रदृष्टेर्विशेषादृष्टेश्चेत्यर्थः ॥ ११ ॥

**साक्षादित्यादिकं सर्वं तद्विशेषणमुच्यते ॥**
**विशिष्टार्थावबोधित्वान्नीलरक्तोत्पलादिवत् ॥ १२ ॥**

---

१ ख. °मतत्त्वं° ।

पदपञ्चकस्य तात्पर्यमाह । **साक्षादित्यादिकमिति** । किमर्थमित्थं विभागस्तत्राऽऽह । **विशिष्टेति** । नीलोत्पलादिपदवदेषां पदानां विशिष्टार्थवाचित्वादेष विभाग इत्यर्थः ॥ १२ ॥

**यदित्यादिपदानां च सामानाधिकरण्यतः ॥**
**विशेषणविशेष्यत्वं श्रुत्यैवेहावसीयते ॥ १३ ॥**

विशिष्टार्थबोधित्वं साधयन्नुक्तविभागे हेत्वन्तरमाह । **यदित्यादीति** । श्रुत्या मुखत इति यावत् । इहेति पदार्थोक्तिः । पदेषु सामानाधिकरण्यं तदर्थेषु विशेषणविशेष्यत्वगमकमित्यर्थः ॥ १३ ॥

**साक्षादित्यभिधानेन प्रत्यक्षोऽर्थोऽभिधीयते ॥**
**मनसोऽग्रहणं तस्य न दृष्टेरिति वारणात् ॥ १४ ॥**

पदविभागमुक्त्वा साक्षादित्यस्यार्थमाह । **साक्षादितीति** । यत्पदार्थः साक्षात्पदेन प्रत्यक्षो विवक्ष्यते चेदात्मनो मनोग्राह्यत्वमिष्टं स्यादित्याशङ्क्याऽऽह । **मनस इति** । अग्रहणमिति च्छेदः ॥ १४ ॥

**यदि वा द्रष्टरि प्राप्ते साक्षादिति विशेषणात् ॥**
**तत्प्रसङ्गनिवृत्त्यर्थमपरोक्षादितीर्यते ॥ १५ ॥**

अपरोक्षादित्यस्यार्थमाह । **यदि वेति** । वक्ष्यमाणेन विकल्पः साक्षात्पदात्प्रत्यक्षे दृष्टिकर्तरि प्रसक्ते तन्निरासार्थमपरोक्षादित्युक्तं न हि तस्यागौणं प्रात्यक्ष्यं साक्षिवेद्यत्वादित्यर्थः ॥ १५ ॥

**द्रष्टृदर्शनदृश्यार्थप्राप्तावाद्यविशेषणात् ॥**
**लोकवत्तन्निषेधार्थमपरोक्षादितीर्यते ॥ १६ ॥**

यदि वेत्यत्र सूचितं पक्षान्तरमाह । **द्रष्टृति** । लोके द्रष्ट्रादित्रयस्य प्रात्यक्ष्यप्रसिद्धेस्तदनुसारेणात्रापि साक्षादित्युक्ते त्रितयप्राप्तौ तन्निवृत्त्यर्थमपरोक्षादित्युक्तं न हि त्रितयमगौणं प्रत्यक्षमित्यर्थः ॥ १६ ॥

**द्रष्टृदर्शनदृश्यार्थसंभेदाविषयस्य हि ॥**
**निषेधायापरोक्षाद्यैरभिन्नार्थग्रहाय तु ॥ १७ ॥**

त्रितयप्रात्यक्ष्यनिषेधायापरोक्षात्पदं चेत्तन्निषेधफलं वाच्यमित्याशङ्क्य निषेधानुवादेन तत्फलमाह । **द्रष्टृति** । तद्विषयस्य दर्शनस्येति सूचयितुं हीत्युक्तम् ॥ १७ ॥

**द्रष्टृदर्शनदृश्यार्थसंभेदस्य निषेधतः ॥**
**दृष्टिमात्रं स्वतः सिद्धं विशेषणफलं भवेत् ॥ १८ ॥**

किं तन्निषेधफलमभिन्नार्थग्रहशब्दितं तदाह । **द्रष्टृदर्शनेति** । संभेदस्य दर्शनस्येति शेषः । विशेषणमपरोक्षात्पदम् ॥ १८ ॥

एकं सदेकरूपं च यदि नामोक्तलक्षणम् ॥
निर्द्वयं सद्वयं वेति नोक्तहेतोस्तदीक्ष्यते ॥ १९ ॥
यतोऽतोऽद्वयसिद्ध्यर्थं ब्रह्मेत्येतद्विशेष्यते ॥
अव्यावृत्ताननुगतं वस्तु ब्रह्मेति भण्यते ॥ २० ॥

ब्रह्मपदं शङ्काद्वारोत्थापयति । एकमिति । यद्येकं साधारणं वस्तु प्रतीयते तच्चापरोक्षैकरसं पदाभ्यां यदि नाम भाति तथाऽपि तदुक्तं वस्त्वद्वयं सद्वयं वेति पदत्रयाद्यतो न निश्चितमतः संदेहे तन्निरासेनाद्वयमेव तदिति निश्चेतुं ब्रह्मपदेन यत्पदवाच्यं विशेष्यत इत्यर्थः । ब्रह्मपदं व्याकरोति । अव्यावृत्तेति ॥ १९ ॥ २० ॥

अपुमर्थमिदं प्राप्तं न चेदात्मैव तद्भवेत् ॥
यतोऽत आत्मरूपार्थमात्मेत्येवं विशेष्यते ॥ २१ ॥

यच्छब्दोपात्तं विशेष्यं य इत्यनूद्याऽऽत्मेति विशेष्यते तस्याभिप्रायमाह । अपुमर्थमिति । न हि स्वर्गादेरात्यन्तिकपुमर्थत्वमतो यथोक्तं ब्रह्माऽऽत्मेति निश्चयेन तस्यानतिशयपुमर्थत्वनिर्धारणार्थमात्मविशेषणमित्यर्थः ॥ २१ ॥

सजातीयासजातीयद्वितीयार्थानभिप्लुतम् ॥
सांख्यराद्धान्तपुंवत्तत्प्राप्तं नानात्वदर्शनात् ॥ २२ ॥

विशेषणान्तरव्यावर्त्यमाह । सजातीयेति । सर्वप्रकारानात्मास्पृष्टं सांख्यीयात्मवद्यत्पदाभिधेयं तथा च परिच्छिन्नत्वान्न ब्रह्मेति प्राप्तं न चानात्मैव नास्ति तद्धीविरोधादित्यर्थः ॥ २२ ॥

यतोऽतस्तन्निषेधार्थं सर्वान्तर इतीरणम् ॥
सर्वेषामान्तरो योऽर्थो नाना स कथमुच्यते ॥ २३ ॥

शङ्कामनूद्य तन्निवर्तकं विशेषणमादत्ते । यत इति । सर्वान्तरत्वेऽपि परिच्छिन्नत्वमाशङ्क्याऽऽह । सर्वेषामिति ॥ २३ ॥

स्रग्वत्सर्पादिक्लृप्तानां प्रत्यङ्मात्रैकरूपतः ॥
प्रत्यग्वस्तूपरोधेन नानार्थो नावशिष्यते ॥ २४ ॥

सर्वेषामित्युक्त्वा परिच्छेदाभावं वदतो व्याहतिरित्याशङ्क्याऽऽह । स्रग्वदिति । सर्पादीनां क्लृप्तानां स्रगेकरूपत्ववदनात्मनां प्रत्यङ्मात्रमेवानपेक्षरूपमतोऽधिष्ठानप्रत्यगनुसारेण द्वैतानवशेषान्न परिच्छेद इत्यर्थः ॥ २४ ॥

प्रत्यग्रूपावबोधस्य भावाभावात्मवस्तुषु ॥
सर्वत्राव्यभिचारित्वादात्मा सर्वान्तरो भवेत् ॥ २५ ॥

नानार्थाभावे कथं सर्वान्तरत्वमित्याशङ्क्य कल्पितं द्वैतमादाय तदुपपत्तिमाह । प्रत्यगिति ॥ २५ ॥

यत्साक्षादपरोक्षाद्यां ब्रह्म वेह विशिष्यते ॥
सर्वान्तरगृहीत्या च प्रत्यगर्थस्य संगतिः ॥ २६ ॥

यत्पदं विशेष्यवाचि पदान्तराणि विशेषणार्पकाणीत्युक्त्वा पक्षान्तरमाह । **यदिति**। अस्मिन्वाक्ये यद्ब्रह्मेति विशेष्योक्तिस्तस्य विशेषणे साक्षादपरोक्षादिति य आत्मेति विशेष्यान्तरं तस्य सर्वान्तर इति विशेषणं न चैवमर्थभेदाद्वाक्यभेदः पदार्थविषयावान्तरैवाक्यभेदेऽपि वाक्यार्थविषयमहावाक्यस्यैक्यादिति भावः ॥ २६ ॥

साक्षादित्यव्यवहितमगौणमपरोक्षतः ॥
इति द्वयं प्रतीच्येव संभाव्यं ब्रह्मणीरितम् ॥ २७ ॥

ब्रह्मविशेषणयोरर्थमाह । **साक्षादिति** । अथोभयं प्रतीचः संभाव्यते तत्कथमिदं ब्रह्मविशेषणमित्यत आह । **इति द्वयमिति** । यद्यपि यथोक्तं द्वयं प्रतीच्येव संभावितं तथाऽपि ब्रह्मणि विशेषणमुक्तमिति यावत् ॥ २७ ॥

तथा सर्वान्तरत्वस्य भेदवृत्तिविरोधतः ॥
संभावनाऽद्वितीयत्वाद्ब्रह्मण्येवाऽऽत्मसंस्थितेः ॥ २८ ॥

कथं सर्वान्तरत्वं प्रतीचो विशेषणं तस्याद्वये ब्रह्मण्येव संभवात्तत्राऽऽह । **तथेति** । ब्रह्मणोऽद्वयत्वाद्भेदस्थितिविरोधित्वाद्यद्यपि तस्मिन्नेव सर्वान्तरत्वस्य संभावना तथाऽप्यात्मनि विशेष्ये तस्य स्थितेस्तथा तस्यैव तद्विशेषणमिष्टमित्यर्थः ॥ २८ ॥

यतोऽत एकवाक्यत्वे ब्रह्मात्माख्यपदार्थयोः ॥
द्वैतसंसर्गबाधेन पूर्णं वस्तु प्रतीयते ॥ २९ ॥

किमर्थमित्थं व्यत्यासेन विशेषणोपादानं तत्राऽऽह । **यत इति** । यत्साक्षादित्यादेर्य आत्मेत्यादेश्चैकवाक्यत्वे सति ब्रह्मात्मनोर्भेदसंसर्गनिरासेनाखण्डत्वं यतो वाक्येन बोध्यतेऽतोऽनवच्छिन्नमेव वस्तु महावाक्यतात्पर्यात्सिध्यतीत्यर्थः ॥ २९ ॥

यदि वैकविशेष्येण विशेषणतया युतिः ॥
साक्षादित्यादिकानां स्यान्मिथोऽन्योन्यानपेक्षतः ॥ ३० ॥

ब्रह्मात्मनोर्विशेष्यत्वमितरेषां यथायोगं विशेषणत्वमित्युक्तं संप्रति साक्षादित्यादि सर्वं सर्वस्य विशेषणं विशेष्यं चेत्याह । **यदि वेति** । साक्षादित्यादिपदार्थाना मध्ये विशेषणतयैकैकेन विशेष्येण मिथः संगतिः स्यादिति योजना । एकैकस्य विशेष्यत्वे हेतुः । **अन्योन्येति** ॥ ३० ॥

एकवस्त्ववसायित्वादन्योन्यार्थानुरोधतः ॥
विशेषणानि सर्वाणि विशिंषन्त्युत्पलादिवत् ॥ ३१ ॥

---

१ क. ख. °क्षाभ्यां ब्र° । २ ख. ब्रह्मवेह । क. ब्रह्म चेह । ३ ख. °रमं° । ४ ख. °मिष्य° ।

मिथोनपेक्षत्वोक्त्या प्रत्येकं प्राधान्यं लक्ष्यते चेत्कथं तर्हि मिथो विशेषणत्वं तत्राऽऽह । **एकेति** । एतान्यन्योन्यार्थानुसारेणाखण्डेऽर्थेऽवसानाद्भवन्ति मिथो विशेषणान्यतो यथा नीलादीन्युत्पलादीनि विशिंषन्ति तथेमान्यपि मिथो व्यावर्तकान्यन्योन्यार्थानुरोधं विनैकार्थावसानायोगादित्यर्थः ॥ ३१ ॥

**उपात्तस्वविशेष्याणि साक्षादित्यादिकानि हि ॥**
**परस्परोपरोधेन स्वविरुद्धार्थहानतः ॥ ३२ ॥**

मिथो विशेषणविशेष्यत्वं चेदर्थभेदेन वाक्यभेदान्न साक्षादित्यादीनामखण्डार्थतेत्याशङ्क्य वाक्यस्य स्वार्थबोधनप्रकारमाह । **उपात्तेति** । साक्षादित्यादीनि स्वस्वविशेष्यसंसृष्टानि तत्तद्विशेष्यानुसारेण वाक्यार्थान्वयविरोधिस्वगतभागत्यागेन लक्षणयाऽखण्डार्थे पर्यवस्यन्तीत्यर्थः । तेषामखण्डार्थत्वं लक्षणया वाक्यतात्पर्यवशादावश्यकमिति वक्तुं हिशब्दः ॥ ३२ ॥

**स्वार्थसंत्यागमार्गेण नानासंसर्गबाधनात् ॥**
**भेदहेतुतमोघातिप्रत्यग्याथात्म्यशेमुषी—**
**जन्मनैवाऽऽप्तमाप्नोति स्वतोऽमेयं वचःश्रवात् ॥ ३३ ॥**

साक्षादित्यादिपदैर्वाक्यार्थो लक्ष्यते चेद्गङ्गापदलक्ष्यतीरस्यागङ्गात्ववदस्यापि प्रत्यक्षत्वादि न स्यादित्याशङ्क्याऽऽह । **स्वार्थेति** । शोणादिपदवदमूनि स्वार्थमादायैव वाक्यार्थे पर्यवस्यन्तीत्यर्थः । यद्येतानि स्वार्थस्मृतिद्वारा वाक्यार्थं लक्षयन्ति तर्हि गामानय नीलमुत्पलमितिवद्भेदः संसर्गो वा लक्ष्यमाणो वाक्यार्थः स्यादित्याशङ्क्याऽऽह । **नानेति** । न हि भेदादिरिह वाक्यार्थोऽबुभुत्सितत्वादपुमर्थत्वाच्चातो युक्तमखण्डेऽर्थे पर्यवसानमित्यर्थः । ननु वाक्यार्थज्ञानं स्वर्गकामादिवाक्यार्थज्ञानवदनुष्ठानं विना विफलमिति नेत्याह । **भेदेति** । प्रत्यक्त्वेनाऽऽप्तमेव कैवल्यमज्ञानव्यवहितं वाक्यश्रवणात्समूलसंसारघातिज्ञानोत्पत्तिमात्रेण व्यवधिध्वस्तौ विद्वानाप्नोतीत्युच्यते न स्वतो यागादिफलवदिदं साध्यं नित्यत्वश्रुतेरित्यर्थः ॥ ३३ ॥

**सामानाधिकरण्योक्तेर्विशेषणविशेष्यतः ॥**
**लक्ष्यलक्षणगत्याऽतो यथोक्तार्थं प्रपद्यते ॥ ३४ ॥**

अन्त्यपक्षमुपसंहरति । **सामानाधिकरण्येति** । यस्मादित्थं वाक्यार्थज्ञानं फलवत्तस्मात्पदानां सामानाधिकरण्यात्तदर्थानां विशेषणविशेष्यभावात्प्रत्यङ्मात्रस्य तेषां च लक्ष्यलक्षणसंबन्धादखण्डमात्मानं मुमुक्षुर्यदित्यादिवाक्यान्निश्चिनोतीत्यर्थः ॥ ३४ ॥

**सर्वार्थं यदि वाऽऽद्यं स्यात्साक्षादिति विशेषणम् ॥**
**अपरोक्षान्तमथवा ब्रह्मान्तं वोत्तरस्य तु ॥ ३५ ॥**

साक्षादिति विशेषणं सर्वस्य व्यावर्तकं सर्वमितरद्विशेष्यमिति पक्षान्तरमाह । **सर्वा-**

र्थमिति । साक्षादपरोक्षादिति विशेषणे ब्रह्मात्मसर्वान्तरा विशेष्या इति विधान्तरमाह । अपरोक्षान्तमिति । आत्मसर्वान्तरौ विशेष्यौ सर्वमितरद्विशेषणमिति कल्पान्तरमाह । ब्रह्मान्तं वेति ॥ ३५ ॥

**यत्साक्षाच्चापरोक्षाच्च ब्रह्मणः स्तो विशेषणे ॥**
**वाक्याद्ब्रह्माभिसंबन्धात्तदन्यस्य तथाऽश्रवात् ॥ ३६ ॥**

कथमेकस्मिन्वाक्येऽर्थभेदो भिद्येत हि तथा वाक्यमित्याशङ्क्य संभावनोपनीतमर्थबाहुल्यमिति मन्वानो विवक्षितं पक्षमाह । यदिति । अत्र हि ब्रह्मणो द्वे विशेषणे चकाराभ्यामात्मा सर्वान्तर इति तस्यैव विशेषणे समुच्चिते प्रकृतवाक्यादेतद्विशेष्यत्वेन परस्यैव संबन्धात्तदन्यस्य ब्रह्मवदत्र विशेष्यत्वेनाश्रवणादित्यर्थः ॥ ३६ ॥

**यदव्यवहितं द्रष्टुर्व्यवधानेन केनचित् ॥**
**प्रत्यङ्मात्रस्वभावत्वाद्ब्रह्मणोऽव्यवधानता ॥ ३७ ॥**

परोक्षं व्यवहितं ब्रह्म तत्कथं साक्षादित्युक्तमत आह । यदिति । तद्याचक्ष्वेति संबन्धः । अव्यवहितत्वं साधयति । प्रत्यगिति ॥ ३७ ॥

**अव्यावृत्ताननुगतं ब्रह्मागौणं प्रचक्षते ॥**
**अपरोक्षाद्भवेत्ताद्दङ्नातोऽन्यादृक्कथंचन ॥ ३८ ॥**

अपरोक्षाद्विशेषणस्य ब्रह्मण्येव संभवमाह । अव्यावृत्तेति ॥ ३८ ॥

**सर्वानात्मनिषेधेन बोध आत्मन्यथैकले ॥**
**परमार्थं त्वसंप्राप्य निषेधो नेष्यते यतः ॥ ३९ ॥**

कथं सति द्वैते ब्रह्माव्यावृत्ताननुगतं तत्राऽऽत्मविशेषणेनोत्तरमाह । सर्वेति । प्रमितानात्मनिषेधेऽविशेषादात्मनोऽपि तत्प्रसङ्गान्निर्विषयो बोधो न स्यादिति शङ्कते । अथेति । निरवधिकनिषेधायोगान्नैवमित्याह । परमार्थमिति । अतोऽवधित्वेनाऽऽत्मा शेष इति शेषः ॥ ३९ ॥

**व्यतिरेकान्वयाभावैः कार्यं वस्त्वभिलप्यते ॥**
**कारणत्वनिषेधेन ब्रह्माऽऽत्मानं प्रपद्यते ॥ ४० ॥**

किंच कार्यस्यैवान्वयादयो न च प्रत्यग्ब्रह्म कार्यमतस्तदव्यावृत्ताननुगतमित्याह । व्यतिरेकेति । ब्रह्माकार्यं चेत्कारणं तर्हीति तदवस्थमन्वयादीत्याशङ्क्याऽऽह । कारणत्वेति । ब्रह्म कार्यत्वादिनिषेधेनाऽऽत्मत्वमापद्यते तन्न तत्रान्वयादि सावकाशमित्यर्थः ॥ ४० ॥

**एतावन्मात्रयाथात्म्यात्कार्यकारणवस्तुनः ॥**
**अव्यावृत्ताननुगतं ब्रह्माऽऽत्मैव ततो भवेत् ॥ ४१ ॥**

---

१ ग. °क्षादप° । २ क. °याभ्यां वै का° ।

निषेध्यं कार्यादि भिन्नं चेन्नाव्यावृत्तं ब्रह्माभिन्नं चेत्तस्यापि निषेध्यता कारणत्वाद-नुगतिः कार्यत्वाद्व्यावृत्तिश्चेत्याशङ्क्याऽऽह । **एतावदिति** । सर्पादिवदारोपितस्य निषे-धादधिष्ठानैकरस्यादद्वयं ब्रह्म प्रत्यग्भूतं सिध्यतीति भावः ॥ ४१ ॥

**यश्चाऽऽत्मैव भवेत्प्रत्यक्सर्वान्तरतमस्तथा ॥**
**तमेवंलक्षणं मह्यं यथावद्वक्तुमर्हसि ॥ ४२ ॥**

यदित्यादि व्याख्याय तमित्यादि व्याचष्टे । **यश्चेति** । एवंलक्षणं साक्षात्त्वादिवि-शेषणं ब्रह्मात्मानमित्यर्थः । यथावद्यथा शृङ्गे गृहीत्वा लोको गां दर्शयति तथा सोऽ-यमिति ब्रह्मात्मानं प्रत्यक्षं दर्शयेत्यर्थः ॥ ४२ ॥

**सामानाधिकरण्योक्तेर्ब्रह्मात्मार्थाभिधायिनोः ॥**
**ऐकार्थ्यमेतयोरन्योन्यं मिथोर्थावसितेस्तथा ॥ ४३ ॥**

ब्रह्मात्मभेदप्रात्यक्ष्यात्तदैक्यपृच्छा न युक्तेत्याशङ्क्याऽऽह । **सामानाधिकरण्येति** । ब्रह्मात्मपदयोः सामानाधिकरण्यात्तदर्थयोरभेदो भिन्नप्रवृत्तिनिमित्तशब्दैकार्थवृत्तेस्तथा-त्वोपगमादित्यर्थः । नाम ब्रह्मेत्यादाविव गौणमैक्यमादायापि तत्स्यादित्याशङ्क्याऽऽह । **मिथ इति** । तथेत्यैक्यस्यागौणत्वोक्तिः ॥ ४३ ॥

**ब्रह्माऽऽत्मैकस्वभावेन साक्षादिति विशेष्यते ॥**
**असंभवात्तदन्यत्र ब्रह्मत्वस्य यतस्ततः ॥ ४४ ॥**

कथं ब्रह्मशब्दार्थस्याऽऽत्मनि पर्यवसानं तत्राऽऽह । **ब्रह्मेति** । आत्मनोऽन्यत्र भिन्नत्वेन ब्रह्मत्वायोगादात्मनैव ब्रह्म साक्षादिति यतो विशेष्यते ततो ब्रह्मार्थस्याऽऽ-त्मन्येवावसानमित्यर्थः ॥ ४४ ॥

**आत्माऽपि ब्रह्मणोऽन्यत्र नैव संभाव्यते यतः ॥**
**सामानाधिकरण्योक्तिस्तस्माद्ब्रह्मात्मशब्दयोः ॥ ४५ ॥**

आत्मशब्दार्थस्य ब्रह्मण्येवावसानं साधयति । **आत्माऽपीति** । अन्यस्य घटादिव-दनात्मत्वादित्यर्थः । ब्रह्मात्मशब्दयोः स्वार्थस्यान्योन्यावसाने सामानाधिकरण्यं मुख्यैक्य-मिष्टमिति फलितमाह । **यत इति** ॥ ४५ ॥

**विशेषणविशेष्यत्वे मिथो ब्रह्मात्मनोरतः ॥**
**अब्रह्मानात्मापह्नुत्याऽसंसर्गैकात्म्यधीर्भवेत् ॥ ४६ ॥**[1]

तथाऽपि कथं वाक्यादेकरस्यधीरात्मन्यब्रह्मत्वस्य ब्रह्मणि चानात्मत्वस्य च दृष्टेरि-त्याशङ्क्याऽऽह । **विशेषणेति** । सामानाधिकरण्यस्य मुख्यत्वादर्थयोर्विशेषणविशेष्यत्वे सति ब्रह्मविशेषणार्पकात्मपदसामर्थ्यादात्मन्यब्रह्मत्वस्याऽऽत्मविशेषणार्पकब्रह्मपदवशाद्ब्र-ह्मण्यनात्मत्वस्य च ध्वस्त्या भेदसंसर्गहीनं तदैक्यमधिकृत्य वाक्याद्धीरुदेतीत्यर्थः ॥ ४६ ॥

---

१ क. ग. 'कात्मधी' ।

**ब्रह्मणोऽप्यात्मनो मोहादब्रह्मत्वं न वस्तुतः ॥**
**आत्मनोऽपि परोक्षत्वं ब्रह्मणोऽपि तमोन्वयात् ॥ ४७ ॥**

आत्मन्यब्रह्मत्वस्य ध्वस्तियोग्यत्वमाह । **ब्रह्मणोऽपीति** । ब्रह्मण्यनात्मत्वस्यापि तद्योग्यत्वमाह । **आत्मनोऽपीति** ॥ ४७ ॥

**तमसो ज्ञानविध्वस्तावब्रह्मानात्मताहतेः ॥**
**अपूर्वाद्यात्मकं ब्रह्म निःसंसर्गं प्रपद्यते ॥ ४८ ॥**

द्वयोराविद्यत्वेन बाधयोग्यत्वे फलितमाह । **तमस इति** । निःसंसर्गं निर्भेदमित्यपि द्रष्टव्यम् । प्रपद्यते विद्वानिति शेषः ॥ ४८ ॥

**प्रत्यग्याथात्म्यविज्ञानात्तत्तमोनात्मबाधतः ॥**
**प्रत्यङ्मात्रावशेषत्वात्स्यामपूर्वादिमानहम् ॥ ४९ ॥**

अब्रह्मत्वादिध्वस्तेः शून्यतान्तत्वात्कथमेकरसार्थधीरित्याशङ्क्याऽऽह । **प्रत्यगिति** । बाधतो बाधस्येति यावत् ॥ ४९ ॥

**प्रणिधायाऽऽत्मनि दृष्टिं प्रत्यग्बोधैकरञ्जिताम् ॥**
**प्रतिवक्त्येष इति तं याज्ञवल्क्योऽप्युदारधीः ॥ ५० ॥**

प्रश्नवाक्यं संक्षेपविस्तराभ्यां व्याख्याय प्रत्युक्तिमादत्ते । **प्रणिधायेति** । तं प्रष्टारमुषस्तं प्रति । उदारमुत्कृष्टं ब्रह्म ॥ ५० ॥

**आत्मप्रमातृमानादेरनेकस्येह संभवात् ॥**
**प्रत्यक्षार्थस्यैष इति न विद्मः को विवक्षितः ॥ ५१ ॥**

एषशब्दार्थं निर्णेतुं पृच्छति । **आत्मेति** । प्रत्यक्षव्यवहारभूमिरिहेत्युक्ता ॥ ५१ ॥

**विवक्षितार्थविज्ञप्त्यै त आत्मेति ततोऽवदत् ॥**
**सर्वान्तरगृहीतिस्तु तत्पूर्वोक्तोपलक्षणम् ॥ ५२ ॥**

उत्तरत्वेन पदद्वयमादत्ते । **विवक्षितेति** । एषशब्दस्येति शेषः । आकाङ्क्षानन्तर्यं ततःशब्दार्थः । सर्वान्तर इति विशेषोक्त्या प्रश्नस्थविशेषणान्तरानास्थामाशङ्क्याऽऽह । **सर्वान्तरेति** ॥ ५२ ॥

**क्षोण्युपक्रममाकाशान्तषष्ठ्यन्तेनाभिधीयते ॥**
**आत्मेति च प्रमात्रादेरागमापायसाक्ष्यपि ॥ ५३ ॥**

त इतिषष्ठ्यर्थमाह । **क्षोणीति** । पृथिव्याद्याकाशान्तं सकारणं जगदत्र षष्ठ्यन्तपदगम्यमित्यर्थः । आत्मशब्दार्थमाह । **आत्मेति चेति** । अपिरवधारणार्थः ॥ ५३ ॥

**मातृमानप्रभेदेऽपि प्रतिदेहं न भिद्यते ॥**
**साक्षी बाह्यार्थवद्यस्मात्त आत्मेत्युच्यते ततः ॥ ५४ ॥**

कथं प्रसिद्धं मातारं हित्वाऽऽत्मशब्देन साक्षी गृह्यते तत्राऽऽह । **मात्रिति** । न हि भिन्नस्य मातुर्घटादिवदात्मत्वं तथाचाद्वितीयसाक्ष्येवाऽऽत्मेत्यर्थः ॥ ५४ ॥

**व्यभिचारो मिथो यद्वत्प्रमात्रादेः स्वसाक्षिकः ॥**
**सर्वमात्राद्यभावार्थसाक्षित्वान्न तथाऽऽत्मनः ॥ ५५ ॥**

तस्यापि प्रतिदेहं व्यभिचारित्वान्मात्रादिवद्भिन्नत्वमाशङ्क्य हेत्वसिद्धिमाह । **व्यभिचार इति** । भावाभावसाक्षिणो व्यभिचारायोगान्न तस्य प्रतिदेहं भेदस्तस्यापि साक्षित्वादित्यर्थः ॥ ५५ ॥

**साक्षादित्यादिभिः प्रत्यक्प्रत्यग्दृष्ट्या यदेक्ष्यते ॥**
**प्रत्यग्वस्त्वतिरेकेण नान्यदात्मा तदेक्ष्यते ॥ ५६ ॥**

तर्हि मात्रादेः साक्ष्यत्वादात्मनः साक्षित्वाद्द्वैतापत्तिरित्याशङ्क्याऽनुभवमनुसृत्याऽऽह । **साक्षादित्यादिभिरिति** ॥ ५६ ॥

**प्रत्यङ्मात्रैकयाथात्म्यादात्माविद्यातदुत्थयोः ॥**
**तावन्मात्रावसायित्वं सम्यग्बोधादतस्तयोः ॥ ५७ ॥**

प्रत्यगतिरेकेणानुपलम्भेऽपि कुड्यादिव्यवहितकुम्भादिवत्तत्सत्तासंभवाद्द्वैततादवस्थ्यमित्याशङ्क्याऽऽह । **प्रत्यगिति** ॥ ५७ ॥

**आत्मनोऽनवशेषेण तदन्यार्थस्य संगतेः ॥**
**साक्षादित्यादिकं सर्वं संभाव्यं स्याद्विशेषणम् ॥ ५८ ॥**

सकार्यं कारणं प्रत्यङ्मात्रमिति कुतः सिद्धं तत्राऽऽह । **आत्मन इति** । आत्मनोऽर्थान्तरत्वेनेष्टस्य तेन सह सर्वात्मना संगतेस्तन्न पृथगस्त्यात्मान्यस्य निःस्वरूपत्वात्तत्प्रत्यङ्मात्रमेव जगतो याथात्म्यमित्यर्थः । किंच पूर्वोक्तं विशेषणमन्यथाऽनुपपत्त्या ब्रह्मात्मनोऽद्वयत्वं साधयतीत्याह । **साक्षादित्यादिकमिति** ॥ ५८ ॥

**प्रत्यक्तयैवावसितेः प्रतीचोऽन्यस्य वस्तुनः ॥**
**व्यतिरेकैकरूपस्य व्यतिरेको न लभ्यते ॥ ५९ ॥**

तथाऽप्यनात्मप्रतियोगिको भेदः स्यादित्याशङ्क्याऽऽह । **प्रत्यक्तयेति** ॥ ५९ ॥

**विरोधादन्वयो नास्य खण्डादौ गोत्ववत्तथा ॥**
**व्यतिरेकोऽपि नैकात्म्ययाथात्म्यादुपपद्यते ॥ ६० ॥**

भेदभेदिस्वरूपस्य प्रतीचो भेदो दुर्लभश्चेत्तदभेदाज्जडतेत्याशङ्क्याऽऽह । **विरोधादिति** । जातेर्व्यक्त्यभेदवत्प्रतीचो नानात्माभेदश्चिदाचित्त्वेन विरोधात्तद्भेदवदभेदोऽपि न तयोरित्यर्थः । तर्हि द्वैतस्य तुच्छतैव परिशिष्यते नेत्याह । **व्यतिरेकोऽपीति** । व्यतिरेकः शून्यता ॥ ६० ॥

**प्रत्यङ्मात्रतयैवातोऽनात्माऽऽत्मनि विलीयते ॥**
**तवाऽऽत्मेत्यपि निर्णीतौ नैव स्यात्प्रश्ननिर्णयः ॥ ६१ ॥**

का तर्हि जगतो गतिस्तत्राऽऽह । **प्रत्यगिति ।** अन्वयव्यतिरेकाभावासंभवादित्यतः-शब्दार्थः । एष इत्यादेरर्थमुक्त्वा कतम इत्यादिप्रश्नमवतारयितुं भूमिकामाह । **तवेति** ॥ ६१ ॥

**ममाऽऽत्मनामनेकेषां संभवादप्रबोधतः ॥ ६२ ॥**
**पिण्डान्तस्तावदात्मैको लिङ्गान्तस्तु तथा परः ॥**
**बुद्धिसाक्षी तृतीयः स्याद्योऽयं संदिह्यते तथा ॥ ६३ ॥**

निर्णयभावेऽपि निर्णयो नेति व्याहतिमाशङ्क्याऽऽह । **ममेति ।** अनेकात्मसंभवमेवाबोधोत्थं प्रपञ्चयति । **पिण्डान्त इति ।** स्थूलसूक्ष्मदेहसाक्षिभेदेन नानात्वमित्यर्थः ॥ ६२ ॥ ६३ ॥

**यत एवमतो ब्रूहि कतमोऽत्र विवक्षितः ॥**
**साक्षादित्यादिमानात्मा निर्धार्येदंतयाऽन्यतः ॥ ६४ ॥**

प्रश्नस्वरूपमाह । **यत इति ।** यस्मादनेकात्मसंभवस्तस्मात्तेषां मध्ये कतमः साक्षादित्यादिमान्विवक्षितस्तमन्यतो निष्कृष्य गवादिवत्प्रत्यक्षतया वदेत्यर्थः ॥ ६४ ॥

**याज्ञवल्क्योऽपि तं प्राह यः प्राणेनेति लिङ्गतः ॥**
**प्राणादेः प्रत्यगात्मानं बुबोधयिषुरञ्जसा ॥ ६५ ॥**

यः प्राणेनेत्यादिप्रत्युक्तिमादत्ते । **याज्ञवल्क्योऽपीति** ॥ ६५ ॥

**प्राणनाद्यनुमानेन ग्राहयित्वा धियः परम् ॥**
**ततोऽवबोधयिष्यामि यथोपात्तविशेषणम् ॥ ६६ ॥**
**इत्येतद्धृदये कृत्वा याज्ञवल्क्यो निराह तम् ॥**
**यः प्राणेनेति वचसा न लिङ्गादुक्तबोधनम् ॥ ६७॥**

साक्षादित्यादिविशेषणमात्मानं साक्षाद्बोधयितव्यमुपेक्ष्य किमिति लिङ्गेन तं बोधयितुं प्रवर्तते तत्राऽऽह । **प्राणनादीति ।** अनुमानेन त्वमर्थं परिशोध्य तस्य ब्रह्मत्वमुक्तविशेषणं विशदयिष्यामीति मन्वानो यः प्राणेनेत्यादि प्रणीतवानित्यर्थः । पदार्थशुद्धिवद्वाक्यार्थधीरपि लिङ्गादेवेति चेन्नेत्याह । **नेति ।** वाक्यैकगम्यत्वादैक्यस्येत्यर्थः ॥ ६६ ॥ ६७ ॥

**मुखसंचारिणाऽप्राणो यः प्राणनानिरीक्षिता ॥**
**सर्वप्रत्यक्तमः सोऽयमात्मा सर्वान्तरावधिः ॥ ६८ ॥**

१ ख. 'न्तश्च त' ।

प्रतिवचनं साभिप्रायमादाय तदक्षराणि व्याचष्टे । **मुखेति** । अप्राण इति च्छेदः । सर्वान्तरत्वेन सर्वावसानभूमित्वार्थं सर्वप्रत्यक्तम इत्युक्तम् ॥ ६८ ॥

**सुप्तेऽस्मिन्करणग्रामे योऽसुप्तोऽलुप्तदृष्टितः ॥**
**वासनारूपकान्पश्यन्प्राणान्प्राणिति वायुना ॥ ६९ ॥**

चक्षुरादिसमुदायादेवानात्मनः प्राणनादिसंभवात्कथं यः प्राणेनेत्यादि तत्राऽऽह । **सुप्त इति** ॥ ६९ ॥

**अनात्मत्वमतः सिद्धं प्राणादेः करणोक्तितः ॥**
**प्राणात्मत्वाच्च बुद्ध्यादेः पिण्डान्तस्याप्यनात्मता ॥ ७० ॥**

प्राणादिवशात्प्राणनादिक्रियायामपि कथं विवेकसिद्धिरित्याशङ्क्याऽऽह । **अनात्मत्वमिति** । अतः करणोक्तित इति संबन्धः । प्राणादिरनात्मा करणत्वाद्दीपवन्न च हेत्वसिद्धिस्तृतीयाश्रुत्या तदुक्तेरित्यर्थः । बुद्ध्यादौ व्यभिचारमाशङ्क्याऽऽह । **प्राणेति** । बुद्धेस्तावदस्ति तादात्म्यं **यो वै** प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राण इति **श्रुते**रस्ति चेन्द्रियाणां **तस्मादे**[1]तेनाऽऽख्यायन्ते प्राणा इति **श्रुते**रस्ति च देहस्य तदधीनत्वात्तादात्म्यं **प्राण** एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयतीति **श्रुते**स्तत्प्राणशब्दत्वात्संप्रतिपन्नवद्बुद्ध्यादीनामनात्मतेत्यर्थः ॥ ७० ॥

**दृश्यत्वाद्धटवद्देहः प्राणादेः करणत्वतः ॥**
**अनात्मत्वप्रसिद्धिः स्याल्लिङ्गपिण्डात्मनोरतः ॥ ७१ ॥**

देहस्यानात्मत्वे युक्त्यन्तरमाह । **दृश्यत्वादिति** । प्राणादेरनात्मत्वे हेतुमनूद्य देहद्वयानात्मत्वमुपसंहरति । **प्राणादेरिति** ॥ ७१ ॥

**प्राणादिकार्यकरणैः स्वतोऽसंहत**[2] **एकलः ॥**
**तच्चेष्टां कुरुतेऽकुर्वन्नयस्कान्तो मणिर्यथा ॥ ७२ ॥**

एवं विवेकेऽपि प्राणनादिहेतु[3]श्चेदात्मा संहतः सक्रियश्च स्यादित्याशङ्क्याऽऽह । **प्राणादीति** । अकुर्वन्निति च्छेदः । संनिधिमात्रेणान्यत्र क्रियाहेतुत्वे दृष्टान्तः । **अयस्कान्त इति** ॥ ७२ ॥

**लोकेऽनधिष्ठितस्येह केनचिच्चेतनावता ॥**
**न दृष्टा नियता चेष्टा रथादेर्जडरूपिणः ॥ ७३ ॥**

संघातातिरिक्तो नास्ति चिदात्मा कुतस्तस्याक्रियत्वादीत्याशङ्क्याऽऽह । **लोक इति** । अचेतनप्रवृत्तिश्चेतनाधिष्ठातृपूर्विकाऽचेतनप्रवृत्तित्वाद्रथादिवदित्यर्थः ॥ ७३ ॥

---

१ ख. °देत एते° । २ क. °संगत । ३ ख. °तुश्चाऽऽत्मा ।

**देहेन्द्रियमनोबुद्धिप्राणादेर्नियतेक्ष्यते ॥**
**प्रवृत्तिर्येन तेनैभ्यो ज्ञात्माऽन्योऽभ्युपगम्यताम् ॥ ७४ ॥**

पक्षधर्मतोक्तिपूर्वकमनुमिनोति । **देहेति** । विमता प्रवृत्तिश्चेतनाधिष्ठातृपूर्विकाऽचेतनप्रवृत्तित्वात्संमतवदित्यर्थः । दृष्टान्ते नियतपदं रथादिप्रवृत्तेश्चेतनाधिष्ठातृपूर्वकत्वसंमत्यर्थं दार्ष्टान्तिके तु साध्यस्य स्पाष्ट्यायेति द्रष्टव्यम् ॥ ७४ ॥

**प्रतिज्ञाय पुरा साक्षाद्गामहं दर्शयामि ते ॥**
**अशक्नुवंस्तथा कर्तुं लिङ्गेन प्रतिबोधयेत् ॥ ७५ ॥**
**यथा कश्चित्तथैव त्वं प्रतिज्ञाय परात्मनः ॥**
**साक्षात्त्वं तदसंपाद्य लिङ्गेनाऽऽवेदयस्यमुम् ॥ ७६ ॥**

यथेत्यादिप्रश्नं व्याचष्टे । **प्रतिज्ञायेति** । तथा कर्तुं प्रतिज्ञानुसारेण प्रत्यक्षायितुमिति यावत् । लिङ्गेन धावनादिनेत्यर्थः । दार्ष्टान्तिके लिङ्गेनेति प्राणनादिनेति यावत् ॥ ७५ ॥ ७६ ॥

**यथाप्रतिज्ञमेवातो यथा पृष्टं तथैव तत् ॥**
**मह्यं प्रतिवचो वाच्यं दोषस्तु स्यात्ततोऽन्यथा ॥ ७७ ॥**

यदेवेत्यादेस्तात्पर्यमाह । **यथाप्रतिज्ञमिति** । त्वत्प्रतिज्ञानुसारेण मत्प्रश्नानुरोधेन च मदर्थं प्रतिवचस्त्वया वाच्यमन्यथा प्रतिज्ञाहानिरनवधेयवचनता च स्यात्तत्प्रतिज्ञाप्रश्नावनुसर्तव्यावित्यर्थः ॥ ७७ ॥

**यथाप्रतिज्ञं प्रत्युक्तिमवोचामासकृत्तव ॥**
**ततोऽप्यपरितुष्टस्त्वमन्यथैव बुभुत्ससे ॥ ७८ ॥**

प्रत्युक्तेस्तात्पर्यमाह । **यथेति** । प्रतिज्ञां प्रश्नं चानुसृत्य ते प्रत्युक्तिमेष त आत्मा यः प्राणेनेति चासकृदब्रवं तेनाविषयतयैवाऽऽत्मा ज्ञातुं शक्यो नान्यथेत्यर्थः । असकृदुक्तादपि वाक्यादतुष्टस्त्वमात्मानं विषयतयैव घटादिवद्बोद्धुमिच्छसीत्याह । **ततोऽपीति** ॥ ७८ ॥

**उक्तवर्त्मातिरेकेण नाऽऽत्मवस्तु घटादिवत् ॥**
**शक्यते प्रतिनिर्देष्टुं प्रमाणागोचरत्वतः ॥ ७९ ॥**

मद्बुभुत्सानुसारेणैव वाच्यतामित्याशङ्क्याऽऽह । **उक्तेति** । उक्तं चाऽऽत्मनः प्रत्यक्त्वेनाविषयतया ज्ञानं तदतिरेकेणाऽऽत्मवस्तु विषयतया वक्तुमशक्यमित्यत्र हेतुमाह । **प्रमाणेति** ॥ ७९ ॥

**वेद्मीति यद्बलादात्थ न वेद्मीत्यपि यद्बलात् ॥**
**तद्दृष्ट्यैवेह तं दृष्ट्वा ब्रह्मवत्त्वं यदीक्षसे ॥ ८० ॥**

तज्ज्ञानानुपपत्तेस्तद्विषयेत्वं कथमिति चेन्नेत्याह । **वेद्मीतीति** । यस्य कूटस्थानुभ-

वस्य प्रसादाज्ज्ञानाज्ञाने शब्दादिविषये कालभेदेन प्रवर्तेते तस्य स्वरूपद्रष्टा तमेव द्रष्टा यद्यात्मनि विषयत्वदोषमीक्षसे तर्हि ब्रूहि न चोक्तदृष्टिरूपेणाऽऽत्मदृष्टौ विषयत्वावसर इत्यर्थः ॥ ८० ॥

अप्रमेयं हि यद्वस्तु न तच्छक्यं प्रमाणतः ॥
कुम्भवत्प्रतिनिर्देष्टुं यथा तदभिधीयते ॥ ८१ ॥

कस्मादविषयं विषयीकर्तुमशक्यमित्याशङ्क्य वस्तुस्वाभाव्यादिति भाष्यमवतारयति । **अप्रमेयमिति** । स्वभावविपरिलोपासंभवो हिशब्दार्थः । तथा तदभिधीयते भाष्येणेति शेषः ॥ ८१ ॥

द्रष्टृदर्शनदृश्यानां संहतानां परस्परम् ॥
साक्षित्वमात्मनो नित्यं वस्तुस्वाभाव्यमुच्यते ॥ ८२ ॥

किं तदित्यपेक्षायां द्रष्टादिद्रष्टृत्वमिति भाष्यं व्याचष्टे । **द्रष्टृति** ॥ ८२ ॥

प्रमात्रादिप्रवृत्तेः प्राक्सदानस्तमितोदिता ॥
अकारकात्मना तस्थौ प्रत्यग्दृष्टिरसंगतः ॥ ८३ ॥

ननु साक्षिणोऽपि वस्तुत्वादस्ति मात्रादिग्राह्यत्वमिति कुतो मात्रादेस्तद्ग्राह्यत्वं नेत्यत[1] आह । **प्रमात्रादीति** । प्रत्यग्दृष्टिः सदैवोदयास्तमयवर्जिता कूटस्था तथाच प्रागपि मात्रादिप्रवृत्तेः स्वापादौ तस्याः स्फुरणान्न सा तद्ग्राह्येत्यर्थः । साक्षित्वे प्रतीचो लौकिकसाक्षिवत्सक्रियत्वान्न कौटस्थ्यमित्याशङ्क्य स्वतः परतो वा क्रियावत्त्वायोगात्कौटस्थ्यात्मना प्रत्यग्दृष्टेः सर्वासु श्रुतिस्मृतिषु स्थितेरसङ्गत्वाच्च मैवमित्याह । **अकारकेति** ॥ ८३ ॥

अकार्यकारणात्मैतद्वास्तवं रूपमात्मनः ॥
सकृद्विभातमैकात्म्यं वितमस्कमभेदकम् ॥ ८४ ॥

कार्यकारणेतरत्वाच्च प्रतीचोऽक्रियत्वमित्याह । **अकार्येति** । यजमानत्वमप्यात्मा सक्रियत्वात्प्रपद्यत इत्यात्मनः सक्रियत्वमुक्तमिति चेन्नौपाधिकस्य तद्भावेऽप्यन्यस्य तदभावादिति मत्वाऽऽह । **एतदिति** । किंच प्रकाशार्था वा ब्रह्माप्त्यर्था वा तमोध्वस्त्यर्था वा भेदध्वस्त्यर्था वाऽऽत्मनः क्रिया नाऽऽद्य इत्याह । **सकृदिति** । न द्वितीय इत्याह । **ऐकात्म्यमिति** । न तृतीय इत्याह । **वितमस्कमिति** । न चतुर्थ इत्याह । **अभेदकमिति** ॥ ८४ ॥

एतत्तमोभिसंबन्धात्साक्षित्वं प्रतिपद्यते ॥
तमोमात्रैकहेतुश्च मोहसंगतिरात्मनः ॥ ८५ ॥

---

१ क. ख. नेत्याह ।

तस्य साक्षित्वं कुतस्त्यमिति चेत्तत्राऽऽह । **एतदिति** । तथाऽऽत्मनस्तमःसंबन्धो वस्तुतोऽस्ति न वा नाऽऽद्योऽसङ्गत्वविरोधान्नेतरोऽनवस्थानादवास्तवे हि तमःसंबन्धे तमोन्तरमभ्युपेयमत आह । **तमोमात्रेति** । अनवस्था संबन्धे निरस्तेति भावः ॥ ८५ ॥

**कूटस्थदृष्टितन्मोहौ दृष्ट्याभासश्च तत्रयम् ॥**
**कारणं जगतः साक्षी नियन्तेति च भण्यते ॥ ८६ ॥**

साक्षित्वमपि कारणत्वादिवद्वास्तवमेवेति चेत्तत्राऽऽह । **कूटस्थेति** । त्रितयं मिथो गुणप्रधानत्वेन त्रिधोच्यते तथाच कारणत्वादि चाऽऽविद्यमित्यर्थः ॥ ८६ ॥

**कारणत्वं न कौटस्थ्यात्तन्मोहविरहाद्भवेत् ॥**
**जाड्यान्वयाच्च बुद्ध्यादेर्युक्ता तत्कारणानुमा ॥ ८७ ॥**

परिणामवादिनस्तु ब्रह्मणः शुद्धस्य कारणत्वमिच्छन्तो वास्तवं तदाहुस्तान्प्रत्याह । **कारणत्वमिति** । केवलस्य चिदात्मनोऽकारणत्वे कारणान्तरमाह । **जाड्येति** । कार्यस्य जाड्यात्कारणेऽपि जाड्यांशोऽनुमेयः कारणानुसारित्वात्कार्यस्यातो जडशक्तिविशिष्टस्यैव तद्भावान्न तद्वास्तवमित्यर्थः ॥ ८७ ॥

**प्रमात्राद्यतिरेकोऽपि वस्तुनो बोधरूपिणः ॥**
**अज्ञातस्य प्रमेयस्य युक्तः स्वध्वान्तसाक्षिणः ॥ ८८ ॥**

आत्मनो मात्रादेर्भेदोऽभेदो वा वस्तुनोऽस्ति चेदस्तु साक्षित्वाद्यपि तथा नास्ति चेन्मात्रादिवदात्मनोऽप्यनिर्वाच्यतेत्याशङ्क्याऽऽह । **प्रमात्रादीति** । अपिरनतिरेकसमुच्चयार्थः । वस्तुनश्चिन्मात्रस्यानाद्यनिर्वाच्याज्ञानशबलस्य मात्रादिभेदाभेदौ कल्पितौ न शुद्धस्य तौ निरुपाध्यवस्थायामभावादतो भेदाद्यपि कल्पनामात्रमित्यर्थः । अज्ञातस्य मेयत्वं चेदज्ञानस्यापि विशेषणत्वेन मेयतेत्याशङ्क्याज्ञानस्योपलक्षणत्वान्नेति मत्वा विशिनष्टि । **स्वेति** ॥ ८८ ॥

**कूटस्थदृष्टेः साक्षित्वं जडस्येव न युज्यते ॥**
**साक्ष्यार्थानभिसंबन्धात्तस्मिन्सत्यपि नोचितेः[1] ॥ ८९ ॥**

किंच चेतनस्याचेतनस्य वा साक्षित्वमाद्ये शुद्धस्याज्ञस्य वा नाऽऽद्य इत्याह । **कूटस्थेति** । पक्षान्तरं प्रत्याह । **तस्मिन्निति** । साक्ष्यवस्तुसंबन्धेऽपि नाचेतनस्य साक्षित्वं घटवदित्यर्थः ॥ ८९ ॥

**तस्मात्परस्य साक्षित्वं स्वमोहाभासवर्त्मना ॥**
**कार्यकारणसंबन्धे चिदाभासस्य संगतेः ॥ ९० ॥**

अज्ञस्येति पक्षमङ्गी करोति । **तस्मादिति** । कथं परस्य स्वमोहस्याभासद्वारा साक्षि-

---

१ क. ख. नोऽचितेः ।

त्वमर्थासंबन्धात्तत्राऽऽह । **कार्येति** । पारतन्त्र्यात्कार्यादेरेव संबन्धस्तत्राऽऽभासानुप्रवेशादात्मा साक्षीत्यर्थः ॥ ९० ॥

**प्रमात्राद्यभिसंबन्धो यथाऽनुभवसिद्धिकः ॥**
**तथैव तदभावोऽपि सिद्धोऽनुभवमात्रतः ॥ ९१ ॥**

मात्रादिभावस्य साक्षिवेद्यत्वमुक्त्वा तदभावस्यापि तदाह । **प्रमात्रादीति** । अभिसंबन्धो भावः ॥ ९१ ॥

**अनन्यहेतुकं तावत्त्रयमेतद्यथोदितम् ॥**
**प्रमात्रादिपदार्थस्तु धर्माधर्मादिहेतुकः ॥ ९२ ॥**

साक्षित्वमन्तर्यामित्वं कारणत्वं च नाऽऽविद्यं किंतु धर्मादिकृतमित्याशङ्क्याऽऽह । **अनन्येति** । परस्य धर्माद्ययोगादज्ञानमात्रकृतं चेत्रितयं तर्हि कुत्र धर्मादेरुपयोगस्तत्राऽऽह । **प्रमात्रादीति** । अधर्मादीत्यादिपदं रागादिग्रहार्थं मात्रादेरुपादानमज्ञानं निमित्तं धर्मादीत्यर्थः ॥ ९२ ॥

**बुद्ध्यादेरभिसंबन्धो जन्मनैव चिदात्मना ॥**
**घटाद्यर्थाभिसंबन्धो धर्माधर्मादिकारणः ॥ ९३ ॥**

मात्रादिस्वरूपवत्तस्याऽऽत्मसंबन्धोऽपि धर्मादिकृतस्तेन सन्नपि स कदाचिदात्मासंबन्धः स्यादिति चेन्नेत्याह । **बुद्ध्यादेरिति** । चिदाकारता तस्य सदाऽस्ति चेद्घटाद्याकारताऽपि तथाऽस्तु तथा च घटादेर्न भानाभानव्यवस्थेत्याशङ्क्याऽऽह । **घटादीति** । बुद्ध्यादेर्घटादिसंगतिरागन्तुकी हेतुमपेक्षते सत्यां च तस्यां सुखादिदृष्टेर्धर्मादि तत्र कारणमित्यर्थः ॥ ९३ ॥

**प्रमातृदृष्टिरेकाऽत्र शब्दाद्यर्थावलेहिनी ॥**
**भूरिसाधनसापेक्षा सुखदुःखफलप्रदा ॥ ९४ ॥**

वस्तुत्वाभाव्यादिति भाष्यं व्याख्यातं यत्त्वात्माविषयत्वार्थं दृष्टेर्द्रष्टा ह्यात्मेति तदयुक्तं न हि सोऽस्मीति सौगतास्तान्प्रति दृष्टिरिति द्विधेत्यादिभाष्यं तत्र लौकिकीं दृष्टिं व्याचष्टे । **प्रमात्रिति** । लौकिकपरमार्थदृष्ट्योर्मध्ये साभासबुद्धिपरिणामो लौकिकी दृष्टिरित्यर्थः । मा नाऽऽत्मानं न विषयी करोति विषयान्तरेण चरितार्थत्वादित्याह । **शब्दादीति** । पारमार्थिकदृष्टितो लौकिकदृष्टेर्विषयतो विशेषमुक्त्वा हेतुतोऽप्याह । **भूरीति** । फलतो विशेषमाह । **सुखेति** ॥ ९४ ॥

**क्षणप्रध्वंसिनी चेयं तद्धेतोर्भङ्गुरत्वतः ॥**
**प्रतिदेहं विभिन्ना च त्वसाधारणकारणात् ॥ ९५ ॥**

स्वरूपतोऽप्याह । **क्षणेति** । तद्धेतुर्लौकिकदृष्टिहेतुविषयानुषङ्गादिः । विधान्तरण

वैलक्षण्यमाह । **प्रतिदेहमिति** । पारमार्थिकदृष्टौ नेदमस्तीति वक्तुं तुशब्दः । तत्र हेतुः । **असाधारणेति** । प्रत्येकं चैत्रादिकृतधर्मादिजन्यत्वस्वीकारादित्यर्थः ॥ ९५ ॥

**क्रियाकारकरूपेयमक्रियाऽकारकात्मना ॥**
**तावन्मात्रैकयाथात्म्यात्तया व्याप्तैव जायते ॥ ९६ ॥**

विशेषान्तरमाह । **क्रियेति** । क्रिया हि दृष्टिः कर्त्रादिभिर्निरूप्येत्यर्थः । पारमार्थिकी दृष्टिर्न क्रिया कूटस्थात्मना स्थितेरिति द्वितीयां दृष्टिं व्याकरोति । **अक्रियेति** । तर्हि दृष्टिद्वयेष्टेरद्वैतहानिस्तत्राऽऽह । **तावन्मात्रेति** । परमार्थदृष्टिरेव लौकिक्या दृष्टेर्वास्तवं रूपमतस्तया व्याप्तैव लौकिकी दृष्टिर्भवन्ती तस्यामन्तर्भवतीति न द्वैतापत्तिरित्यर्थः॥९६॥

**कात्स्न्र्येन यत्र वृत्तिः स्याद्व्याप्यव्यापकवस्तुनोः ॥**
**व्याप्तिस्तत्रैव मुख्या स्याद्रज्जुसर्पादिवस्तुवत् ॥ ९७ ॥**

एकत्र व्याप्यव्यापकत्वायोगाद्धूमाग्न्योरिव दृष्ट्योर्भेदः स्यादित्याशङ्क्याऽऽह । **कात्स्न्र्येनेति** । द्विविधा व्याप्तिर्मुख्याऽमुख्या चाऽऽद्या रज्जुसर्पयोरिव व्याप्यव्यापकयोस्तादात्म्यरूपा सा दृष्ट्योरेवेति नाद्वैतहानिरित्यर्थः ॥ ९७ ॥

**देशकालादिसंभेदादसाधारणतत्त्वयोः ॥**
**व्याप्तिर्न घटते साक्षाद्धिमवद्विन्ध्ययोरिव ॥ ९८ ॥**

अमुख्यव्याप्तिस्थलमाह । **देशेति** । स्वरूपतो भिन्नयोर्देशाद्यभेदाद्या व्याप्तिः सा न मुख्याऽत्यन्तभिन्नयोस्तदद्दृष्टेरतो धूमादौ व्याप्तिर्न मुख्येत्यर्थः ॥ ९८ ॥

**प्रमात्रादिव्यपेक्षेयं लौकिकी दृष्टिरात्मनः ॥**
**तत्प्रत्यगात्मदृष्टिस्तु विज्ञेया पारमार्थिकी ॥ ९९ ॥**
**परमार्थात्मदृष्ट्येयं लौकिकी दृष्टिरात्मनः ॥**
**षड्भावविक्रियामेति व्याप्तैवाऽऽकाशकुम्भवत् ॥ १०० ॥**
**धर्माधर्मानपेक्षत्वाच्चैतन्याभासतां प्रति ॥**
**घटाद्याभासवत्तस्मान्नाऽऽत्माभासो विनश्वरः ॥ १०१ ॥**

ननु तयोरिव दृष्ट्योरपि वास्तवो भेदो न रज्जुसर्पवत्कल्पितस्तत्कथं मुख्या व्याप्तिस्तत्राऽऽह । **प्रमात्रादीति** । आत्मनो लौकिकी दृष्टिः सापेक्षत्वात्सर्पादिवत्कल्पितेति न वास्तवस्तत्र भेदोऽस्तीत्यर्थः । तर्हि दृष्टित्वादितराऽपि कल्पितेति शून्यतेत्यत आह । **तदिति** । कल्पितत्वेऽनात्मत्वं प्रयोजकमिति भावः । दृष्ट्योरुक्ते विभागे रज्जुसर्पवन्मुख्या व्याप्तिस्तत्र युक्तेति फलितमाह । **परमार्थेति** । व्याप्तैवेत्यवधारणमयुक्तं लौकिकदृष्टेरर्थव्याप्तिवदात्मव्याप्तेरपि नश्वरत्वादित्याशङ्क्याऽऽह । **धर्मेति** । लौकिक्या दृष्टेरात्मव्या-

१ ख. °तः ॥ ९° । २ क. °त ॥ १०० ॥ तद्व्यापिका नित्य दृष्टिनित्या जन्मादिवर्जनात् ॥ परमार्थदृशाऽतोऽन्या सदा व्याप्तैव जायते ॥ घ° ।

प्तिरर्थव्याप्तिश्चास्ति तत्राऽऽद्या स्वाभाविकी द्वितीया धर्मादिकृता तद्धर्मादेर्नाशित्वाद-र्थव्याप्तेर्नाशो यावद्दृष्टिभाविनी चैतन्यव्याप्तिरित्यर्थः ॥ ९९ ॥ १०० ॥ १०१ ॥

**निष्क्रियश्चेतनः साक्षी सक्रियोऽचेतनः पराङ् ॥**
**व्यावृत्तश्च प्रमात्रादेः सिद्धः साक्षी सुषुप्तगः ॥ १०२ ॥**

लौकिक्या दृष्टेर्भेदेन नेतरा दृष्टिरदृष्टेरित्याशङ्क्यानुभवतो भेदं साधयति । **निष्क्रिय इति** ॥ १०२ ॥

**न चेदनुभवव्याप्तिः सुषुप्तस्याभ्युपेयते ॥**
**नावेदिषं सुषुप्तेऽहमिति धीः किंबलाद्भवेत् ॥ १०३ ॥**

कथं सौषुप्तः साक्षी मात्रादिव्यावृत्तोऽनुभूयते न तत्रानुभवो हेत्वभावादिति शङ्कते । **न चेदिति** । अस्ति तावदुत्थितस्य नावेदिषमिति धीः मा परामर्शत्वात्पूर्वानुभवमाकाङ्क्ष-त्यतः सौषुप्तनित्यानुभवानुपगमे तदसिद्धेर्मात्रादिव्यावृत्तः साक्षी सौषुप्तः सिद्ध इत्याह । **नेत्यादिना** ॥ १०३ ॥

**बुद्ध्यादेः प्रविलीनत्वाद्देहादेश्च जडत्वतः ॥**
**लोष्टादेरिव नैव स्यान्नाज्ञासिषमितीक्षणम् ॥ १०४ ॥**

परामर्शाधीना सौषुप्तधीर्बुद्ध्यादिनिबन्धनैव स्यादित्याशङ्क्याऽऽह । **बुद्ध्यादेरिति** । न देहद्वयकृतं सौषुप्तं ज्ञानमित्यत्र हेत्वन्तरमाह । **देहादेश्चेति** । अतः सौषुप्तनित्यानु-भवाभावे परामर्शासिद्धिरिति फलितमाह । **नैवेति** ॥ १०४ ॥

**चिदाभासैकमात्रेण तमःसिद्धिर्न मातृतः ॥**
**संवित्तन्मोहचिद्बिम्बैः प्रात्यक्ष्यं कर्तृरूपिणः ॥ १०५ ॥**

नित्यानुभवादृते परामर्शायोगोक्त्या सुषुप्ताख्याज्ञानस्य मेयत्वमप्यपास्तमित्याह । **चिदिति** । चैतन्यतदाभासाभ्यामज्ञानसिद्धिमुक्त्वा मातृसिद्धिप्रकारमाह । **संविदिति** । चैतन्यतदाभासाज्ञानैरापरोक्ष्यं मातुरित्यर्थः ॥ १०५ ॥

**स्मृतिनिश्चितिसंशीतिरागादिहिरुगात्मसु ॥**
**अहंरूपेण योऽन्वेति स प्रमाता परो मतः ॥ १०६ ॥**

कोऽसौ माता तत्राऽऽह । **स्मृतीति** । ज्ञानादिवृत्त्याश्रयो मातेत्यर्थः । **अन्विष्टः** स्यात्प्रमातैव पाप्मदोषादिवर्जित इति **न्यायेना**ऽऽह । **पर इति** ॥ १०६ ॥

**स्मरणादिविभागेन ज्ञातर्येकत्र यत्पृथक् ॥**
**प्रथतेऽनेकरूपाभं तज्ज्ञानं ज्ञातृकर्तृकम् ॥ १०७ ॥**

किं तर्हि ज्ञानं तदाह । **स्मरणादीति** । स्वरूपेण पृथक्त्ववद्विषयतोऽपि तदस्ती-त्याह । **अनेकेति** । तत्रानुभवं प्रमाणयति । **प्रथत इति** । एकत्र ज्ञातरि या ज्ञान-

स्थितिः सा ज्ञात्रन्तरेऽपि तुल्येति सूचयति । **ज्ञातृकर्तृकमिति** । अर्थविशेषितं प्रकाशरूपं कर्तृनिष्ठं ज्ञानमिति समुदायार्थः ॥ १०७ ॥

**विभिन्नो बहिराभाति जातिरूपक्रियादिमान् ॥**
**विभिन्नोऽनुभवादेव ज्ञातुर्ज्ञानात्स गोचरः ॥ १०८ ॥**

कीदृशो विषयस्तत्राऽऽह । **विभिन्न इति** । ज्ञानादिव्यावृत्त्यर्थं बहिरिति विभिन्नत्वं साधयति । **जातीति** । भिन्नो भातीत्युक्तं व्यनक्ति । **विभिन्न इति** । साक्ष्यनुभवं व्यावर्तयति । **ज्ञातुरिति** । ज्ञातृक्रियारूपज्ञानाद्यो ज्ञात्रादेरन्यो भाति स विषय इत्यर्थः ॥ १०८ ॥

**संवित्तन्मोहधीवृत्तिशरीरादिविशेषणम् ॥**
**भोक्तरीह यदाभाति तत्प्रमाणफलं स्मृतम् ॥ १०९ ॥**

प्रसङ्गान्मानफलस्वरूपमाह । **संविदिति** । चैतन्यं स्फुरतीत्यादिना चैतन्यादिविशेषितं यदात्म निस्फुरणं भाति तत्फलमित्यर्थः ॥ १०९ ॥

**कर्तृत्वं करणत्वं च कर्मत्वं चाऽऽत्मसाक्षितः ॥**
**व्यतिरेकेण कर्त्रादेः सिद्धेर्नाऽऽत्मत्वमस्त्यतः ॥ ११० ॥**

उक्तचतुष्टयस्य नित्यानुभवसिद्धतामाह । **कर्तृत्वमिति** । एकश्चकारः फलसमुच्चयार्थः । आभातीति पूर्वेण संबन्धः । मात्रादेः साक्ष्यत्वे फलितमाह । **व्यतिरेकेणेति** । अतः साक्षिण इति प्रतियोग्युक्तिः ॥ ११० ॥

**साक्षित्वेनाऽऽत्मनः सिद्धिर्मात्रादिव्यतिरेकतः ॥**
**न कर्तृता प्रमात्रादेः साक्ष्यत्वेनैव तत्क्षयात् ॥ १११ ॥**

प्रतीचः साक्षित्वे फलितमाह । **साक्षित्वेनेति** । मात्रादेः साक्ष्याद्भेदेन प्रतीचः साक्षित्वात्तस्याऽऽत्माधीना सिद्धिरतः साक्षिताफलमात्मनेत्यर्थः । मात्रादेः साक्ष्यत्वमुपसंहरति । **नेति** । नाऽऽत्मतेत्यर्थः ॥ १११ ॥

**प्रत्यङ्मोहजबुद्ध्यादिजडरूपप्रधानतः ॥**
**कर्तृत्वमात्मनो युक्तं चित्प्राधान्याच्च भोक्तृता ॥ ११२ ॥**

तर्हि मात्रादिरेकस्तत्साक्षी चान्यः कूटस्था दृष्टिरपरेति भेदः स्यात्तत्राऽऽह । **प्रत्यगिति** । आत्मनः स्वाज्ञानोत्थबुद्ध्यादिप्राधान्येन मातृत्वादि स्वाभासप्राधान्येन साक्षिता स्वतस्तु कूटस्थतेति न वास्तवो भेद इत्यर्थः ॥ ११२ ॥

**अव्याकृतव्याकरणे यदुक्तं सर्वमेव तत् ॥**
**अनुसंधेयमत्रापि वस्तुतत्त्वविशुद्धये ॥ ११३ ॥**

दृष्टिरिति द्विधेत्यादिभाष्यं व्याख्यायोक्तेऽर्थे तार्तीयन्यायस्यानुग्राहकत्वमाह ।

**अव्याकृतेति** । वस्तुतत्त्वं वस्तुस्वाभाव्यादित्यादिभाष्यार्थस्तस्य विशुद्धिर्निर्धारणं तदर्थमिति यावत् ॥ ११३ ॥

**स्वमहिम्ना न संसिध्येत्स्वतोऽनवगमात्मकम् ॥**
**भावाभावौ न वस्त्वेति प्रत्याख्यातं यदात्मना ॥ ११४ ॥**

तत्रोक्तमेव बुद्धिसौकर्यार्थं स्मारयति । **स्वमहिम्नेति** । न तावज्जडं स्वतः सिध्यति जडत्वात्तदेव च जन्मविनाशवद्दृश्यते न प्रत्यग्वस्तु यस्मात्तेन तदुभयं निरस्तं तस्मात्कूटस्थं तदित्यर्थः ॥ ११४ ॥

**तस्मादजायमानैव जायमानेव लक्ष्यते ॥**
**संवित्तिस्तदसंबोधहेतूत्थानात्मजन्मना ॥ ११५ ॥**
**तद्विनाशेऽपि तत्साक्ष्याद्विनश्यन्तीव लक्ष्यते ॥**
**यतोऽतः कार्यतां तस्या नेश्वरोऽपि प्रसाधयेत् ॥ ११६ ॥**

अनात्मन्येव जन्मादि चेत्कथमात्मनि तद्धीरित्याशङ्क्योपाधिवशादित्याह । **तस्मादित्यादिना** । चिदात्मनो जन्मादेर्मिथ्यात्वे फलितमाह । **यत इति** ॥ ११५ ॥ ११६ ॥

**अज्ञानभूमिगं वस्तु मानसंगतिमाप्नुवत् ॥**
**मेयत्वं लभते नान्यच्चैव त्यक्तक्षितिद्वयम् ॥ ११७ ॥**

संविद्रूपस्याऽऽत्मनोऽकार्यत्वेऽपि ज्ञेयत्वाज्जाड्यं ततश्च कारणतेत्याशङ्क्याऽऽह । **अज्ञानेति** । क्षितिशब्देन कार्यैकदेशवाचिना कारणमपि लक्ष्यते ॥ ११७ ॥

**हेतोः कार्यसमुत्पत्तेः सिद्धेः प्रागपि संविदः ॥**
**कार्यकारणताहीना तस्मात्संवित्प्रतीयताम् ॥ ११८ ॥**

कार्यकारणान्यतरकोटिव्यतिरेकेण संवित्सत्त्वे मानाभावात्कथमजडोभयविलक्षणा सेति तत्राऽऽह । **हेतोरिति** । हेतुहेतुमद्विभागात्पुराऽपि स्वापादौ संविदः सिद्धेस्तत्साधिका या द्वयबहिर्भावादजडा सा निश्चितेत्यर्थः ॥ ११८ ॥

**शून्यस्यापि हि शून्यत्वं तत्साक्षिणि सतीक्ष्यते ॥**
**असाक्षिकं चेच्छून्यत्वं साक्षिवत्स्यादसाक्षिकम् ॥ ११९ ॥**

शून्यवादिनस्तु तामेव न सहन्ते तत्कथं तस्या हेत्वादिराहित्यमत आह । **शून्यस्येति** । यद्यपि सर्वप्रमाणप्रकोपप्रसङ्गान्न शून्यं नाम संभवति तथाऽपि तस्याभ्युपगमे तत्त्वं साक्षिसापेक्षं साधकमन्तरेण तदसिद्धेरित्यर्थः । ननु तत्साधकत्वेन साक्षी नेष्यते तं विनाऽपि तत्प्रथासंभवात्तर्हि स्वप्रकाशं न वेति विकल्प्याऽऽद्यं प्रत्याह । **असाक्षिकमिति** । साक्षिणं विना शून्यं प्रकाशते चेत्तदाऽसाक्षिकत्वेनेष्टं परेष्टसाक्षिवत्स्वप्रकाशं स्यात्ततो नास्ति विप्रतिपत्तिरित्यर्थः ॥ ११९ ॥

---

१ ख. 'यन्नेत्युक्तं क्षि' ।

**साक्ष्यसाक्ष्यपि संसिध्येत्स्वार्थत्वान्न तु शून्यता ॥**
**पारार्थ्यात्स्वार्थविरहे षष्ठगोचरवद्भवेत् ॥ १२० ॥**

कल्पान्तरं निरस्यति । **साक्ष्येति** । अस्मदिष्टः साक्ष्यसाक्षी निरपेक्षोऽपि सिध्यति स्वप्रकाशकत्वेन स्वतन्त्रत्वान्न त्वदिष्टा शून्यता तथा तस्या जाड्येनाजडसाधकापेक्षत्वादतः स्वतन्त्रसाधकाभावे शून्यमेव शून्यं स्यादिति सदेकरसा कूटस्था संविदास्थेयेत्यर्थः ॥ १२० ॥

**देहान्तः प्रत्यगात्माऽयं पञ्चधा गम्यते मितेः ॥**
**एककारणसाक्षित्वकर्तृदुःखित्वरूपतः ॥ १२१ ॥**

यथोक्तसंवित्सत्त्वेऽपि कथं तदेकरस्यमित्याशङ्क्य तद्गतभेदापवादार्थं पञ्चधा तदवस्थानमाह । **देहेति** । स्थूलदेहमारभ्याव्याकृतपर्यन्तं जगन्मध्ये योऽस्ति प्रत्यग्धातुः सोऽयं पञ्चधाऽनुभूयत इति यावत् । मितिरनुभवः । तदेव पञ्चधात्वं प्रकटयति । **एकेति** । तत्रैक्यं वास्तवमितरदाविद्यमिति विभागः ॥ १२१ ॥

**श्रुतितो लिङ्गतः साक्षात्कार्यकारणसंगतिः ॥**
**यतोऽनुभूयते तस्मात्कारणत्वं परात्मनः ॥ १२२ ॥**

न कारणत्वं प्रत्यग्भूतस्य परस्य युक्तं वादिविप्रतिपत्तेरिति चेन्नेत्याह । **श्रुतित इति** । पञ्चम्यौ समानाधिकरणे । लिङ्गं ज्ञापकं कार्यमाकाशादि जगतः कारणभूतं ब्रह्मेति ब्रह्मजगतोः संबन्धश्रुतेर्ब्रह्मैव कारणमित्यर्थः ॥ १२२ ॥

**प्रत्यक्साक्ष्यतिरेकेण नाभावोऽपि प्रसिध्यति ॥**
**किमु भावो जगत्यस्मिन्साक्षी चानन्यसिद्धिकः ॥ १२३ ॥**

तथाऽपि कथं साक्षित्वं मातारं विना तदप्रतीतेिस्तत्राऽऽह । **प्रत्यगिति** । मातृभावाभावसाधकः साक्षी मातृव्यतिरिक्तः सिध्यतीत्यर्थः । मातृवत्साक्षिणोऽपि साधकान्तरापेक्षयाऽनवस्थेत्याशङ्क्याऽऽह । **साक्षी चेति** ॥ १२३ ॥

**यथोक्तानुभवारूढो बुद्ध्यन्तोऽपि प्रसिध्यति ॥**
**माता मातरि मानं च मानान्मेयं प्रसिध्यति ॥ १२४ ॥**

तर्हि साक्षी माता चेति द्वैतप्रसक्तिरित्याशङ्क्य प्रतीचः स्वाविद्याकृतं ज्ञानकर्तृत्वमाह । **यथोक्तेति** । कारणत्वादिदृष्टान्तार्थोऽपिशब्दः । तस्यैवाविद्यया दुःखित्वं वक्तुं पातनिकामाह । **मातरीति** । अनुभवारूढत्वमाक्रष्टुं चशब्दः ॥ १२४ ॥

**सुखी गौरो धनी गोमान्बाह्यमेयसमाश्रयात् ॥**
**प्रमाणभूमौ स्थित्वैतदुक्तं सर्वं प्रसिध्यति ॥ १२५ ॥**

दुःखित्वस्योपलक्षणत्वमुपेत्य मेयापेक्षं स्वरूपमाह । **सुखीति** । पञ्चधास्थितिमुपसंहरति । **प्रमाणेति** ॥ १२५ ॥

**प्राक्प्रमात्रादिसंभूतेर्यत्प्रमात्रादिकारणम् ॥**
**अनन्यानुभवात्माभं तत्प्रमाणं सदादृशेः ॥ १२६ ॥**

अस्तु कारणत्वाद्याविद्यं वस्तु चाद्वयं तथाऽपि व्यवहारकाले मात्रादिरूपेण तत्सिद्धावपि स्वापादौ न तत्सिद्धिर्मानाभावात्तत्राऽऽह । **प्रागिति** । स्वापाद्यवस्थास्वप्यज्ञानं स्फुरत्यन्यथोत्थितस्य नावेदिषमितिपरामर्शायोगात्तस्मादज्ञानमिद्ध्यनुपपत्तिस्तत्साधकमात्मानं तासु साधयतीत्यर्थः ॥ १२६ ॥

**मेयमानप्रमात्रादिविभागस्तत्र नेक्ष्यते ॥**
**प्रत्यग्बोधैकयाथात्म्यवस्तुमात्रोपरोधतः ॥ १२७ ॥**

अर्थापत्तिरात्मनि मानं चेत्तत्र मात्रादिना भाव्यं नेत्याह । **मेयेति** । तत्र हेतुः प्रत्यगिति ॥ १२७ ॥

**ईदृगेव फलं चात्र मानमेयादिकं तथा ॥**
**कुतो भेदावकाशः स्याद्द्वयैकप्रमात्मनि ॥ १२८ ॥**

श्रौतज्ञानादात्मनि फलमिष्टं न वाऽऽद्ये मानादिविभागोपगमो द्वितीये मुक्त्यसिद्धिरित्याशङ्क्याऽऽह । **ईदृगिति** । रज्जुसर्पादिमदृशं काल्पनिकमिति यावत् । तथेति कल्पितत्वोक्तिः । वस्तुतो विभागाभावे हेतुः । **कुत इति** ॥ १२८ ॥

**प्रमाणवर्त्मनाऽऽयातमिदं मोहापनुत्तये ॥**
**वस्तुवृत्तेन नैवालं शास्त्रानारम्भसक्तितः ॥ १२९ ॥**

आत्मा प्रमास्वभावश्चेत्स्वयमेव स्वाज्ञानं नुदेत्किं काल्पनिकेन मानेनेत्यत आह । **प्रमाणेति** । अद्वयचैतन्यमिदमा परामृष्टम् । यदीदं स्वरूपतो मोहं नुदेन्न तदोपनिषदारम्भस्तदुत्थधियो निवर्त्याभावे वैफल्यादित्याह । **वस्त्विति** ॥ १२९ ॥

**उक्तार्थापरिहारेण तदज्ञानजभूमिषु ॥**
**व्यवहारः प्रमात्रादेः स्वप्नमायेन्द्रजालवत् ॥ १३० ॥**

किंच सर्वव्यवहारस्यानुभवाधीनत्वात्तस्य स्वरूपेणाज्ञानादिसाधकत्वान्मानं विना न तद्ध्वंसितेत्याह । **उक्तार्थेति** । संविदात्मा प्रत्यगात्मोक्तार्थस्तन्मात्रेण स्वाज्ञानानिरासेनेति यावत् । यथा स्वप्नादिषु मात्रादिकृतो व्यवहारस्तद्द्रष्टृनिमित्तो दृष्टस्तथेहापि स्वाविद्योत्थमात्रादिव्यवहारस्तदधीनो युक्तस्तथाच प्रतीतिः स्वाज्ञानादिसाधकस्य न स्वरूपेण तद्ध्वंसितेत्यर्थः ॥ १३० ॥

**अविचारितसंसिद्धितमोवत्स्यात्तदुद्भवम् ॥**
**कृत्स्नं जगदतो मोहध्वस्तौ ध्वस्तं भवेच्चितिः[1] ॥ १३१ ॥**

---

१ ग. ग. चितिं ॥ १३१ ॥

दृष्टान्तवैषम्यमाशङ्क्याऽऽह । **अविचारितेति** । कार्यकारणात्मकद्वैतस्य कल्पितत्वे फलमाह । **अत इति** । वाक्योत्थाद्वयाकारधीवृत्तेः सहेतुबन्धध्वस्तौ चिन्मात्रमवशिष्ट-मित्यर्थः ॥ १३१ ॥

**भिन्नमानप्रमात्रादौ कार्यकारणवस्तुनि ॥**
**अभिन्नमातृमानादिरात्मैवैकोऽद्वयः स्वतः ॥ १३२ ॥**

अज्ञानध्वस्तेरूर्ध्वं तदवशेषश्चेत्पूर्वमर्थान्तरस्यापि सत्त्वाच्चिदद्वैतासिद्धिरित्याश-ङ्क्याऽऽह । **भिन्नेति** । स्वतश्चितोऽद्वयत्वं न विहन्यते कदाचिदपीत्यर्थः ॥ १३२ ॥

**न देशकालावस्थादावपेक्षाऽस्त्यात्मनः स्वतः ॥**
**अनन्यापेक्षसंसिद्धेर्देशादेस्तदपेक्षतः ॥ १३३ ॥**

चिदात्मा स्वसिद्धौ देशाद्यपेक्षते न वाऽऽद्ये घटादिवत्सद्वयत्वं द्वितीये नियतभाना-नुपपत्तिरित्याशङ्क्याऽऽह । **नेति** । तत्र हेतुः । **स्वत इति** । आत्मनो देशादिसत्ता-स्फूर्तिहेतुत्वाच्च न तदपेक्षेत्याह । **देशादेरिति** ॥ १३३ ॥

**देशकालनिमित्तादिव्यपेक्षं वस्तु यद्भवेत् ॥**
**तदेव तदपेक्षं स्यान्न तु देशादिसिद्धिदम् ॥ १३४ ॥**

किं तर्हि तत्सापेक्षं तदाह । **देशेति** ॥ १३४ ॥

**कारकादिवशाद्यावत्किंचिद्वस्तूपलभ्यते ॥**
**क्रियाफलं तद्विज्ञेयमनपेक्षिततत्त्वकम् ॥ १३५ ॥**

तर्हि किंचिद्देशाद्यपेक्षं किंचिन्नेति द्वैतापत्तिर्नेत्याह । **कारकादीति** । कार्यस्य सर्वस्य रज्जुसर्पवत्कल्पितत्वान्न द्वैतं वस्तुतोऽस्तीत्यर्थः ॥ १३५ ॥

**वस्त्वधीना यतो विद्या कर्त्रधीना क्रियाऽखिला ॥**
**कर्त्रादि चाऽऽत्ममोहोत्थं वस्तु सिद्धं स्वतोऽद्वयम् ॥ १३६ ॥**

क्रियाकारकयोरिव तत्फलस्यापि कल्पितत्वं किं न स्यादित्याशङ्क्याऽऽह । **वस्त्विति** । विद्याया वस्त्वनुसारित्वात्क्रियाकारकयोश्चाऽऽविद्यत्वाद्विद्यया तद्ध्वस्तौ तत्कार्यक्रियादिध्वस्तेरात्मवस्तु कूटस्थं स्वतोऽद्वयं स्यादित्यर्थः ॥ १३६ ॥

**कारकाण्युपमृद्नाति विद्या बीजमिवोषरम् ॥**
**तत्कारणोपमर्दित्वाज्जन्मनैव न कारकम् ॥ १३७ ॥**

विद्ययाऽविद्यानिवृत्त्या तत्कार्यकारकादिनिवृत्तिं दृष्टान्तेन स्पष्टयति । **कारकाणीति** । विद्या वस्तु व्यनक्त्येव न भावमभावं वा करोति तत्कथमज्ञानादि निवर्तयतीत्याश-ङ्क्याऽऽह । **जन्मनेति** । सा हि स्वोत्पत्तिमात्रेण वस्तु स्फुटयन्ती तदज्ञानं नान्तरी-यकतया निवर्तयति न व्यापारान्तरेणेत्यर्थः ॥ १३७ ॥

---

१ क. ग. °द्या बुद्धिमिवोषरे ॥ त° । ख. °द्याऽबुद्धिमिवोषरे ॥ त° । २ क. कारकात् ।

**प्रमातृपरिणामत्वात्प्रमासिद्धिः प्रमातरि ॥**
**प्रमात्रव्यवधानेन संविदैव न वृत्तिभिः ॥ १३८ ॥**

अथाज्ञानादिध्वंस्यपि विज्ञानमात्माश्रयमित्यात्मनः सविशेषता तत्राऽऽह । **प्रमात्रिति** । प्रमासिद्धिः संविदेति संबन्धः । ज्ञानस्य फललिङ्गानुमेयत्वान्न साक्षिवेद्यतेति केचित्तान्प्रत्याह । **प्रमात्रव्यवधानेनेति** । साभासमन्तःकरणं तद्गतं ज्ञानं च नित्यानुभवसिद्धमित्यर्थः ॥ १३८ ॥

**मात्रन्तरे व्यपेक्षायां मातुर्मानान्तरे मितेः ॥**
**दुर्वारत्वात्प्रसङ्गस्य ह्यनवस्था प्रसज्यते ॥ १३९ ॥**

प्रमातृमानयोर्मेयत्वाभावं साधयति । **मात्रन्तेर इति** । मातुर्मात्रन्तरे मानस्य च मानान्तरे व्यपेक्षायां तत्र तत्र प्रसङ्गस्य दुर्वारत्वाद्विधाऽनवस्थेत्यर्थः । फलस्य फलान्तरापेक्षायामपि तुल्याऽनवस्थेति वक्तुं हिशब्दः ॥ १३९ ॥

**प्रमात्रतिशयेनैव कारणं स्यात्प्रमात्रपि ॥**
**विज्ञानातिशयं सिध्येन्मानं निश्चयवत्तथा ॥ १४० ॥**

वस्तुस्वाभाव्यादित्यादिभाष्यार्थोपयोगित्वेनाव्याकृतप्रक्रियोक्तमनुस्मार्य संप्रति वस्तुस्वाभाव्यमेवाऽऽश्रित्य तद्गतमविद्याकृतं रूपं व्याख्यातुं व्यवहारदशायां प्रमाणप्रक्रियामाह । **प्रमात्रिति** । साभासमन्तःकरणं प्रमातृज्ञानं प्रति करणत्वान्यथानुपपत्तिकल्पितान्यथाभावाख्यातिशयेनैव तस्य कारणमतिशयोत्पत्त्यनन्तरं तदेव प्रमातृ ज्ञानाख्यातिशयविशिष्टं सिध्यति ततो ज्ञानशब्दितं मानं विषयनिश्चयफलशिरस्कं भवतीत्यर्थः । अपिरवधारणे । तथेति क्रियाऽनुकृष्यते ॥ १४० ॥

**मेयासाधारणात्मोत्थरूपवान्निश्चयो यथा ॥**
**बाह्यमेयप्रधानत्वे सत्यसाधारणार्थधीः ॥ १४१ ॥**

निश्चयस्याऽऽकारोक्तिपूर्वकं तेन तुल्याकारत्वं ज्ञानस्याऽऽह । **मेयेति** । घटादेर्मेयस्यासाधारणेनाऽऽत्मनाऽभिव्यक्ताकारविशिष्टो यथा मानफलभूतो निश्चयस्तथा ज्ञानस्य घटादि प्रधानं कृत्वा प्रवृत्तत्वे सति घटोऽयं पटोऽयमिति घटाद्यसाधारणाकारैव धीरुदेतीति मानतत्फलयोस्तुल्याकारतेत्यर्थः ॥ १४१ ॥

**मानव्यापारकाले स्याद्बाह्यमेयोपसर्जनम् ॥**
**आभासादिप्रमाणान्तं तद्विशिष्टफलोत्थितेः ॥ १४२ ॥**

कदा विषयस्य प्राधान्यं मानादेश्चोपसर्जनत्वं तदाह । **मानेति** । यदा मानं स्वफलमुत्पादयितुं व्याप्रियते तदा तन्मानं तत्कर्ता तद्गताभासश्चेत्येतद्घटादि प्रधानीकृत्य तद्गुणतया तत्प्रवणं भवति घटादिविशिष्टत्वेन फलोत्पत्तेरिष्टत्वादित्यर्थः ॥ १४२ ॥

---

१ क. ख. ग. 'न्तरव्य' । २ क. ख. 'न्तरेति ।

**प्रमाणव्यापृतेस्तूर्ध्वं वासनाधानकारणात् ॥**
**मेयोपसर्जना बुद्धिः स्मृत्या साक्षात्प्रतीयते ॥ १४३ ॥**

कदा विषयस्याप्राधान्यं बुद्धेश्च प्राधान्यं तदाह । **प्रमाणेति** । प्रमाणं स्वफलनिश्च-यजननव्यापारानन्तरं कृतार्थतया निवर्तमानं स्वाश्रये मातरि वासनामाधाय तद्रूपेण तिष्ठति तच्च तदात्मना स्थितमदृष्टादिभिरुद्बोधितं स्मृतिरूपेणोत्पद्यते स्मरणकाले मेयमु-पसर्जनीकृत्य बुद्धिर्भवतीति तत्प्राधान्यं मेयस्य च गुणतेत्यर्थः ॥ १४३ ॥

**साक्षात्कुर्वत्स्वमात्मानं यदालम्बनतां व्रजेत् ॥**
**कार्यकारणरूपस्य तदेवाऽऽलम्बनं मतम् ॥ १४४ ॥**

कदाचिज्ज्ञेयस्य ज्ञानस्य च कदाचित्प्राधान्यं चेत्तदा कथमेकमेव वस्तु प्रधानमिति स्वमतसिद्धिस्तत्राऽऽह । **साक्षादिति** । सवृत्तिकमन्तःकरणं साभासं प्रमातृशब्दितं स्वविषयं साक्षात्कारं कूटस्थचैतन्यतादात्म्यारोपादापादयत्कूटस्थापरोक्षचैतन्यमाश्रय-त्वेन स्वीकृत्याऽऽश्रिततां गच्छति तदेव यथोक्तं चैतन्यं कार्यकारणप्रपञ्चस्य रज्जुरिव सर्पादेरधिष्ठानं तस्य तदविद्याविलसितत्वात्तस्मादेकमेव प्रधानमिति पक्षस्य न क्षति-रित्यर्थः ॥ १४४ ॥

**पूर्वोपलम्भसंस्कारसमुत्थस्मृतिविभ्रमात् ॥**
**वस्तुवृत्तातिवर्त्येष व्यापारः सार्वलौकिकः ॥ १४५ ॥**

अनेकप्रधानोपगमकृतदोषाभावेऽपि मेयोपसर्जना बुद्धिरिति वदता स्मृतेर्मेयाङ्गीका-रादनालिङ्गितबाह्यार्था स्मृतिरिति स्वमतं त्यक्तमिति चेन्नेत्याह । **पूर्वेति** । स्वविषयानु-भवजन्यसंस्कारोत्था स्मृतिर्भ्रान्त्या सविषयेव भात्यतः सर्वः स्मार्तो व्यवहारो वस्तुतो न वस्तुस्वरूपानुसारीति न सिद्धान्तहानिरित्यर्थः ॥ १४५ ॥

**मेयाभिसंगतेः पूर्वं ज्ञानं ज्ञातृसमाश्रयम् ॥**
**ज्ञातृत्वसिद्धये ज्ञानं ज्ञातृत्वं तत्कृतं यतः ॥ १४६ ॥**

स्मृतेर्बाह्यार्थशून्यत्वे ज्ञानत्वाविशेषान्मानमपि तद्धीनं स्यादित्याशङ्क्याऽऽह । **मेयेति** । अर्थयोगात्पूर्वं ज्ञातृगतज्ञातृत्वसिद्ध्यर्थं ज्ञातारमाश्रित्य ज्ञानं तिष्ठति ज्ञातृ-त्वस्य तत्कृतत्वान्न चार्थासंबद्धं ज्ञानमेव नास्त्युपादानात्मना सतो विशेषेण व्यज्यमा-नस्य तत्संबन्धान्न चार्थव्यवहारस्तद्योगं विना ज्ञानकृतः सिध्यतीति बाह्यार्थेना तस्येति भावः ॥ १४६ ॥

**वासनाबलतः स्पष्टं बहिर्वद्यन्मतां स्थितम् ॥**
**भावनागोचरं ज्ञानं बाह्यवस्त्ववलम्बनम् ॥ १४७ ॥**

१ क. ग. मानं ।

तर्हि स्मृतेरपि बाह्यार्थता ज्ञानत्वान्मानवदन्यथा तस्यास्तदर्थत्वविरोधस्तत्राऽऽह । **वासनेति** । यज्ज्ञानमनुभवाख्यं स्वकाले बाह्यविषयमुत्पन्नं तत्स्वकृतसंस्कारात्सूक्ष्माकारेण बुद्धौ स्थितमदृष्टाद्युद्बोधकानुरोधेन स्पष्टमुद्बुद्धं स्मृतिरूपेण जायमानं पूर्वानुभूतार्थसंस्कारगोचरं बहिर्विषयमिव भवत्यतो वस्तुतोऽर्थाभावादनालिङ्गितबाह्यार्थेत्यादेरविरोधाद्वासनावशाच्चार्थवत्त्वधीसिद्धेर्न किंचिद्दौस्थ्यमित्यर्थः ॥ १४७ ॥

**अपेक्षावृत्तवद्वस्तु यावत्किंचिदिहेक्ष्यते ॥**
**मातृमात्राश्रयं तत्स्यान्न स्वतःसिद्धिनिष्ठितम् ॥ १४८ ॥**

अविद्याकाले मानस्थितिमुक्त्वा वस्तुस्वाभाव्यमुक्तमुपसंहरति । **अपेक्षेति** । सर्वमपि सापेक्षं जडं जगन्मातुर्माता साक्षी तन्मात्राश्रयं सिध्यति न तु तज्जडत्वादेव स्वतः सेद्धुमर्हत्यतश्चिन्मात्रमद्वयमवेद्यं पारमार्थिकं सर्वमितरन्मायिकमित्यर्थः ॥ १४८ ॥

**अन्तःकरणवृत्तिर्या चक्षुरादिसमाश्रया ॥**
**रूपादिविषयाभासा लौकिकी दृष्टिरुच्यते ॥ १४९ ॥**

वस्तुस्वाभाव्यादित्यादि पारमार्थिकी चेत्यन्तं भाष्यं व्याख्याय तत्रेत्यादि विभजते । **अन्तःकरणेति** । बुद्धिपरिणामश्चक्षुरादिकरणको रूपादिविषयो लौकिकदृष्टिरित्यर्थः ॥ १४९ ॥

**तस्याश्च क्रियमाणत्वाज्जन्मनाशाभिसंगतिः ॥**
**आत्मदृष्टिस्त्वियं नित्या जन्मनाशादिवर्जिता ॥ १५० ॥**

सा क्रियत इत्यादिभाष्यार्थमाह । **तस्याश्चेति** । या त्वित्यादिभाष्यं व्याकरोति । **आत्मेति** । पूर्वस्या दृष्टेरस्या विशेषार्थस्तुशब्दः ॥ १५० ॥

**कार्यकारणयोस्तत्त्वं प्रत्यगात्मा चितिर्यतः ॥**
**तस्मान्नित्याश्चिदाभासो बुद्धौ तत्प्रत्ययेषु च ॥ १५१ ॥**

नित्यत्वे हेतौ जन्मादिराहित्ये हेतुमाह । **कार्येति** । अथ सा न नित्या दृष्टित्वाद्बुद्ध्यादिगतदृष्टिवदन्यथा घटादिगताऽपि नित्या स्यादत आह । **तस्मादिति** । बुद्ध्यादिस्थाऽपि सा दृष्टिपदलक्षिता नित्यैवेति साध्यवैकल्यं न च घटादिस्थदृष्टेर्नित्यत्वप्रसङ्गो बाध इष्टत्वाद्व्यञ्जकाभावात्तु कदाचिन्न व्यज्यते न च वाच्या दृष्टिर्दृष्टान्तो दृष्टित्वस्यापि तद्वाच्यत्वे हेत्वसिद्धेस्तल्लक्ष्यत्वे साधनवैकल्यादेवं प्रसङ्गोऽपि प्रतिपत्तव्यस्तस्माच्चित्प्रकाशः सर्वत्र नित्य एवेत्यर्थः ॥ १५१ ॥

**प्रत्यक्चिदुपरक्तायां बुद्धौ धर्मादिहेतुकः ॥**
**आकारो जायतेऽनित्यो दुःखशब्दादिलक्षणः ॥ १५२ ॥**

आत्मदृष्टेर्नित्यत्वेऽपि लौकिकी दृष्टिरनित्येति दृष्टिविशेषणाद्वृत्त्यन्तरस्य नित्यत्व-

प्राप्तिरित्याशङ्कयाऽऽह । प्रत्यगिति । दृष्टिग्रहणस्योपलक्षणत्वाद्बुद्धिवृत्तिः सर्वाऽनित्येत्यर्थः ॥ १९२ ॥

**स्थास्नौ प्रत्यक्चिदाकारे बाह्यहेतुनिबन्धनः ॥**
**आकारो जायते बुद्धेरागमापायधर्मवान् ॥ १९३ ॥**

बुद्धेः शब्दाद्याकारपरिणामवच्चिदुपरागोऽपि धर्मादिकृतः स्यादित्याशङ्क्योक्तमेव व्यनक्ति । स्थास्नाविति ॥ १९३ ॥

**उपाधिभूतया दृष्ट्या हानोपादानरूपया ॥**
**एकाश्रयत्वतः स्थास्न्वी संसृष्टेवोपजायते ॥ १९४ ॥**

लौकिक्या दृष्टेरनित्यत्वेऽपि पारमार्थिकी दृष्टिरात्मैवेत्ययुक्तं द्रष्टेत्युक्तेर्भेदव्यपदेशस्यायोगप्रसङ्गादित्याशङ्क्य सेत्यादिभाष्यार्थमाह । उपाधीति । एकाश्रयत्वं दृष्ट्योरेकबुद्धिस्थत्वम् । साक्ष्यधीतद्वृत्तिस्थं कर्तृत्वं क्रियात्वं चाऽऽरोपान्नित्यदृग्रूपे व्यवह्रियते तेन व्यपदेशाविति शेषः ॥ १९४ ॥

**बुद्धितद्वृत्तिसाक्षित्वाद्बुद्धितत्प्रत्ययैरजः ॥**
**गृह्यतेऽविद्ययाऽभिन्नो मणिर्यद्वदुपाश्रयैः ॥ १९५ ॥**

नित्यदृष्टित्वे कथं पश्यति न पश्यति जायते नश्यतीत्यादिव्यपदेशस्तत्राऽऽह । बुद्धीति । यथोपाधिभिः स्फटिकस्तत्तदाकारः क्रियते तद्वदभिन्नोऽप्यात्मा स्वाविद्यया बुद्ध्यादिसाक्षित्वात्तद्वशाद्दर्शनादिविक्रियाशाली व्यवह्रियत इत्यर्थः ॥ १९५ ॥

**कर्तृकार्यावभासित्वात्कर्तृकार्याभिधायिभिः ॥**
**लक्ष्यते नामभिः साक्षी साक्षान्न त्वभिधीयते ॥ १९६ ॥**

कस्मादात्मदृष्टेरनित्यदृष्टियोगादनित्यत्वं शब्दविषयतया स्वत एव किं न स्यादित्याशङ्क्य वाच्यत्वं लक्ष्यत्वं वा हेतुरिति विकल्प्याऽऽद्यं दूषयति । कर्त्रिति ॥ १९६ ॥

**तज्जन्मनाशसाक्षित्वादजोऽनाशी स्वयंप्रभः ॥**
**जायते नश्यतीत्येवं तत्साक्ष्यप्यभिधीयते ॥ १९७ ॥**

द्वितीयं निराह । तज्जन्मेति । लक्ष्यत्वेऽपि न वस्तुतो जन्मादिसिद्धिस्तद्दृष्टेरौपाधिकत्वोक्तेरिति भावः । एतेन दृष्टित्वहेतुर्निरस्तः ॥ १९७ ॥

**दृष्टेर्जडस्वभावायाः परार्थायाः स्वतश्चितिम् ॥**
**न पश्येः प्रत्यगात्मानं द्रष्टारं दृश्ययाऽनया ॥ १९८ ॥**

न दृष्टेरित्यादिवाक्यतात्पर्यमुक्त्वा तदक्षराणि व्याचष्टे । दृष्टेरिति ॥ १९८ ॥

**दिदृक्षितपरिच्छिन्नपराग्रूपाद्यपेक्षया ॥**
**तद्विरुद्धं कथं पश्येद्दृष्ट्या तत्कर्मभूतया ॥ १९९ ॥**

दृश्यविलक्षणत्वाच्च तस्य तया विषयीकरणानुपपत्तिरित्याह । दिदृक्षितेति ॥ १९९ ॥

**द्रष्टुर्हि व्यापृतिर्दृष्टौ दृष्टे रूपादिकर्मणि ॥**
**ताभ्यां तत्प्रत्यगात्मानं कथं पश्येच्छितिं स्वतः ॥ १६० ॥**

द्रष्टुर्दृष्टिविषयत्वाभावे युक्त्यन्तरमाह । **द्रष्टुरिति** । क्रियायां कर्तुरुत्पादकत्वं तस्याश्च विषये फलाधायकत्वं कर्तृक्रियाफलप्रत्यग्भूतस्य न क्रियाव्याप्यत्वं न हि प्रतीचः स्वतश्चितो दृग्व्याप्यत्वमित्यर्थः । उक्तेऽर्थे सर्वसंमतिद्योतको हिशब्दः ॥ १६० ॥

**नाकारकं समीक्षेत द्रष्टृदर्शनगोचरान् ॥**
**कारकत्वमृतेऽविद्यां कूटस्थस्याऽऽत्मनः कुतः ॥ १६१ ॥**

आत्मा नित्यदृष्टिर्बुद्ध्यादिसाक्षीत्युक्तम् । इदानीं तत्कर्तृत्वमपि तस्यैवेत्याह । **नेत्यादिना** । कूटस्थं चैतन्यमुदासीनत्वान्न द्रष्ट्रादि द्रष्टुमीष्टे तत्तस्य कारकत्वमस्तीत्यर्थः । तर्हि वास्तवं कर्तृत्वं नेत्याह । **कारकत्वमिति** ॥ १६१ ॥

**कारकं सत्तथैकात्म्यं न कथंचन वीक्षते ॥**
**अविद्यानन्वयाद्भास्वत्प्रत्यग्ज्योतिःसतत्त्वतः ॥ १६२ ॥**

कर्तृत्वस्याऽऽविद्यत्वेऽपि तत्संबन्धकृतं स्वपरेक्षणं वास्तवमित्याशङ्क्याऽऽह । **कारकमिति** । यथैकात्म्यमारोपितकर्तृत्वेन द्रष्ट्रादिकमीक्षते तथाऽकारकं भूत्वा स्वपरदृष्टिं न करोत्यविद्यासंबन्धस्यापि वस्तुतोऽभावादित्यर्थः । तत्र हेतुः । **भास्वदिति** । प्रतिबन्धविधुरस्फुरणमात्रत्वादित्यर्थः ॥ १६२ ॥

**येन चक्षुरिदं दृष्टं चक्षुषा यन्न पश्यति ॥**
**ब्रह्म विद्धि तदेव त्वं न तु तद्यदुपासते ॥ १६३ ॥**

न दृष्टेरितिश्रुत्यर्थे श्रुत्यन्तरं संवादयति । **येनेति** ॥ १६३ ॥

**मनसा मनुते यन्न येन चाऽऽहुर्मनो मतम् ॥**
**ब्रह्म विद्धि तदेव त्वं न त्विदं यदुपासते ॥ १६४ ॥**

बाह्येन्द्रियाविषयत्वेऽपि मनोविषयता स्यादित्याशङ्क्य न मतेरित्यादौ श्रुत्यन्तरसंमतिमाह । **मनसेति** ॥ १६४ ॥

**इत्येवमादिवाक्यानि यथोक्तार्थसमर्थने ॥**
**श्रौतानि शतशः सन्ति दृगमेयत्वसिद्धये ॥ १६५ ॥**

श्रुत्यन्तरसंवादं निगमयति । **इत्येवमादीति** । यथोक्तार्थसमर्थन इत्यस्यैव व्याख्या दृगिति ॥ १६५ ॥

**एतन्मोहसमुत्थत्वात्प्रमात्रादेर्मनागपि ॥**
**नैकात्म्यं शक्यते वेक्तुं क्रमहेतोरबाधया ॥ १६६ ॥**

---

१ ख. तत्र तस्य । २ क. ग. द्रष्टुं ।

आत्मनोऽमेयत्वे श्रुतिमुक्त्वा युक्तिं समुच्चिनोति । **एतदिति** । रूपं मात्रादि तस्य हेतुरज्ञानं तस्याबाधया ब्रह्मात्मत्वं मात्रादिना न ज्ञातुं शक्यमज्ञानादिप्रतिबन्धान्नष्टे त्वज्ञाने तदुत्थमात्राद्यभावान्न तत्तेन सुज्ञानं तदमेयं प्रत्यग्ब्रह्मेत्यर्थः ॥ १६६ ॥

**दृष्टिभेदमकृत्वैव दृष्टेरित्यादिकां श्रुतिम् ॥**
**केचिद्व्याचक्षते धीराः प्रसादाज्जातवेदसः ॥ १६७ ॥**

न दृष्टेरित्यादि भाष्यानुसारेण व्याख्याय भर्तृप्रपञ्चव्याख्यामनुवदति । **दृष्टीति** ॥ १६७ ॥

**दृष्टेः कर्तारमात्मानं न पश्येः क्रियमाणया ॥**
**दृष्ट्या रूपानुपातिन्या न क्रिया कर्तृकर्मिका ॥ १६८ ॥**

कथं तद्व्याख्येत्याशङ्क्य नेत्यादिश्रुत्यक्षरार्थं तदिष्टमाह । **दृष्टेरिति** । दृष्टिर्हि चक्षुर्द्वारा जाता धीवृत्ती रूपं गोचरयति तया दृष्ट्या न शक्यो विषयीकर्तुमिति हेतुमाह । **रूपेति** । किंच न सा तं विषयी करोति तत्क्रियात्वाद्गतिरिव गन्तारमित्याह । **नेति** ॥ १६८ ॥

**दृष्टेरिति च षष्ठीयं क्रियमाणत्वहेतुतः ॥**
**कर्मण्येव तु विज्ञेया नासावर्थान्तरे यतः ॥ १६९ ॥**

एवं व्याकुर्वतामभिप्रायमाह । **दृष्टेरिति चेति** । कर्मण्येव षष्ठीत्यत्र दृष्टेरात्मना निष्पाद्यत्वं हेतुमाह । **क्रियमाणत्वेति** । सकर्मिकायां क्रियायां कर्मणोऽन्तरङ्गत्वं गमयितुं तुशब्दः । एवकारार्थमाह । **नेति** । क्रियमाणाया दृष्टेः शेषरूपस्यार्थान्तरस्य बहिरङ्गत्वादित्याह । **यत इति** ॥ १६९ ॥

**दृष्टिकर्तृत्वमाचष्टे तृजन्तेन तथाऽऽत्मनः ॥**
**यतोऽतः कर्मदृष्ट्या तं द्रष्टारं नानुपश्यति ॥ १७० ॥**

षष्ठीं व्याख्याय द्वितीयां व्याचष्टे । **दृष्टीति** । उक्तं षष्ठ्यर्थं दृष्टान्तयितुं तथेत्युक्तम् । अस्तु कर्मदृष्टिर्द्रष्टा च कर्ता किं ततो जातं तदाह । **यत इति** ॥ १७० ॥

**कर्मेप्सिततमं रूपं दृष्टेः कार्यत्वहेतुतः ॥**
**चक्षुर्मनो वा बुद्धिर्वा कर्तुः करणमिष्यते ॥ १७१ ॥**

कर्मत्वं दृष्टेः स्पष्टयति । **कर्मेति** । यथाऽऽहुर्दृष्टिः क्रिया तस्या यद्रूपं तत्कर्म तद्धीप्सिततममिति । आत्मनः सा कर्म चेत्किं करणमित्युक्ते चक्षुर्मनो बुद्धिरिति करणानीति तद्भाष्यमनुसृत्याऽऽह । **चक्षुरिति** ॥ १७१ ॥

**विज्ञानात्मा तु कर्ताऽत्र स्वातन्त्र्यात्सर्वकर्मसु ॥**
**फलं रूपोपलब्धिश्च कर्तुर्दृष्ट्यवसानजम् ॥ १७२ ॥**

जीवः परो वा द्रष्टेति संदिहानं प्रत्याह । **विज्ञानेति** । दृष्टिः सप्तम्यर्थः । तत्र

हेतुः । **स्वातन्त्र्यादिति** । कारकान्तराप्रयोज्यस्य तत्प्रयोक्तृत्वं स्वातन्त्र्यं तदस्ति जीवस्य सर्वासु क्रियास्विति युक्ता दृष्टिकर्तृतेत्यर्थः । विज्ञानात्मनिर्वृत्ताया दृष्टिक्रियायाः फलं रूपोपलब्धिरिति तदुक्त्या तद्दृष्टिफलमाह । **फलमिति** ॥ १७२ ॥

**साधनत्वेन कर्ताऽत्र दृष्टाववसितिं गतः ॥**
**क्रियासिद्ध्युत्तरे काले फलं कस्यापि चेष्यते ॥ १७३ ॥**

इत्थं व्यवस्थायां द्रष्टुर्दृष्टिविषयत्वं स्पष्टीकर्तुं कर्तृतया गुणत्वेन दृष्टौ पर्यवसानमाचष्टे । **साधनत्वेनेति** । **उक्तं हि** क्रियासाधनत्वेन विनियुक्त **इति** । क्रियायां कर्तृत्वेन गुणत्वमुक्त्वा फलित्वेन प्राधान्यमाह । **क्रियेति** । **उक्तं हि** क्रियासिद्ध्युत्तरकाले फलं कस्यापि भविष्यतीति ॥ १७३ ॥

**स्वामिनो यदि वाऽन्यस्य कर्म प्रत्येव च क्रिया ॥**
**कर्म दर्शयितव्यं स्याद्दृष्ट्या द्रष्टा न दृश्यते ॥ १७४ ॥**

किंशब्दार्थं प्रकटयति । **स्वामिन इति** । स्वामी जीवोऽन्यस्तदुपाधिर्माता साभासबुद्ध्याख्यस्तयोरन्यतरस्य रूपाद्युपलब्धिः फलमित्यर्थः । फलवत्क्रियाऽपि रूपस्याऽऽत्मनो वेति विकल्प्यतामित्याशङ्क्याऽऽह । **कर्मेति** । क्रिया हीप्सिततमं कर्म प्रत्यभिमुखीभूतेत्युक्तत्वाज्ज्ञानं संवेदनफलकं क्रिया सा रूपादिविषया नाऽऽत्मविषयेत्यर्थः । तदेव स्फोरयति । **कर्मेति** । यथाऽऽहुस्तद्दर्शयितव्यं न कर्तेति ॥ १७४ ॥

**तत्रैवं सति तं दृष्टेर्द्रष्टारं कर्मभूतया ॥**
**दृष्ट्या पश्येः स्वमात्मानं न कथंचन कर्तृतः ॥ १७५ ॥**

उक्तरीत्या स्थिते विभागे फलितमुपसंहरति । **तत्रेति** ॥ १७५ ॥

**व्याख्यानमेतन्महतां न साधु प्रतिभाति नः ॥**
**न्यायाक्षरानुपात्तत्वाद्यथा तदभिधीयते ॥ १७६ ॥**

उक्तां परव्याख्यां प्रत्याख्यातुं प्रक्रमते । **व्याख्यानमिति** ॥ १७६ ॥

**यथाप्रश्नमियं तावत्प्रत्युक्तिर्नोपपद्यते ॥**
**यतो द्रष्टर्यसंभाव्यं कृत्स्नं प्रश्नविशेषणम् ॥ १७७ ॥**

तत्र श्रुत्यक्षरानुपात्तत्वमुपपादयति । **यथेति** । दृष्टिकर्तारमधिकृत्य प्रवृत्ता न दृष्टेरित्यादिप्रत्युक्तिर्यत्साक्षादित्यादिप्रश्नानुसारिणी नेत्यत्र हेतुमाह । **यत इति** ॥१७७॥

**साक्षादित्यादिकं यस्मान्न मनागपि युज्यते ॥**
**विशेषणं यथोक्तं तत्कारके दृष्टिकारिणि ॥ १७८ ॥**

प्रश्नवाक्यस्थविशेषणजातस्य दृष्टिकर्तरि कथमसंभवस्तत्राऽऽह । **साक्षादित्यादि-**

---

१ ख. 'कल्पता' ।

कमिति। यथोक्तं सर्वान्तरत्वं तस्मान्न प्रश्नानुसारि परमते प्रतिवचनमिति शेषः॥१७८॥

**क्षेत्रज्ञपरमात्मानौ नापि प्रश्ने विवक्षितौ ॥**
**एकार्थयोगाद्वाक्यस्य नैकोक्तौ स्याद्‌द्व्यर्थता ॥ १७९ ॥**

ननु प्रश्ने परापरौ विवक्षितौ तत्र यथायोगं विशेषणोपपत्तिस्तत्राऽऽह। **क्षेत्रज्ञेति।** तत्र हेतुः। **एकार्थेति।** अर्थैकत्वादेकं वाक्यमिति न्यायादित्यर्थः ॥ १७९ ॥

**न चेप्सिततमत्वं स्याद्द्रष्टुर्दृष्टेरसंभवात् ॥**
**दृष्ट्यन्तरस्य द्रष्टुश्च न च द्रष्ट्रन्तरं तथा ॥ १८० ॥**

यत्तु दृष्टेरिति षष्ठी कर्मणीत्यङ्गीकृत्य क्रियमाणत्वेन कर्मत्वं दृष्टेरादिष्टं तन्निराकुर्वन्परव्याख्याया न्यायानुपात्तत्वमाह। **न चेति।** द्रष्टुरिव दृष्टेरपि न कर्मत्वं दृष्टिविषयदृष्टेरसंभवादित्यर्थः। दृष्टान्तं साधयति। **द्रष्टुश्चेति।** तथेति दार्ष्टान्तिकोक्तिः ॥ १८० ॥

**तदभ्युपगमे वैः स्यादनवस्थाऽनिवारणा ॥**
**दृष्ट्यन्तरेण संव्याप्तिर्नातो दृष्टेः कथंचन ॥ १८१ ॥**

उभयत्र दृष्टिद्रष्ट्रन्तराभ्युपगमे को दोषस्तत्राऽऽह। **तदिति।** तस्या मूलक्षयकरीत्वेन दूषणत्वं प्रकटयितुमनिवारणेति विशेषणं तत्फलमाह। **दृष्ट्यन्तरेणेति।** द्रष्ट्रन्तरेणेत्यपि द्रष्टव्यं दृष्टेरित्यपि द्रष्टुरुपलक्षणम् ॥ १८१ ॥

**तथा द्रष्टृगृहीत्यैव कामितार्थसमाप्तितः ॥**
**निरर्थकमिदं च स्याद्दृष्टेरिति यदुच्यते ॥ १८२ ॥**

यत्तु दृष्टिकर्तृत्वमित्यादि तन्निरौह। **तथेति।** यथा दृष्टेरिति षष्ठी न कर्मणीत्युक्तं तथा द्रष्टेत्यपि कर्तरि न संभवतीति यावत्। द्रष्टारमिति दृष्टिकर्तृत्वविवक्षायामिष्टोऽर्थो दृष्टिकर्तृत्वं तस्य द्रष्टृपदेनैव सिद्धेर्दृष्टेरित्यनर्थकमित्यर्थः। अवधारणार्थश्चकारः॥१८२॥

**सदैवाव्यभिचारित्वाद्दृष्टिद्रष्ट्रोः परस्परम् ॥**
**विशेषणविशेष्यत्वं व्यभिचारे सतीष्यते ॥ १८३ ॥**

परपक्षे दृष्टिविशेषणमधिकमित्यत्र हेत्वन्तरमाह। **सदेति।** नीलोत्पलयोर्मिथो व्यभिचारे सत्युत्पलस्य नीलेन विशेष्यत्वं दृष्टं न तथा द्रष्टृदृष्ट्योरन्योन्यं व्यभिचारो न हि द्रष्टा दृष्टिं व्यभिचरति तं वा दृष्टिरतो दृष्टेरित्यनर्थकमित्यर्थः ॥ १८३ ॥

**न च प्रमादपाठोऽयं सर्वेषामविगानतः ॥**
**विध्यशेषत्वतो नापि चार्थवादत्वमिष्यते ॥ १८४ ॥**

सत्यमनर्थकमपि प्रमादात्पठितमित्याशङ्क्याऽऽह। **न चेति।** सर्वेषामित्युभयेषां शाखिनामित्यर्थः। अर्थवादत्वेन तर्हीदमुपात्तं नेत्याह। **विधीति** ॥ १८४ ॥

---

१ क. 'दृष्टृदृष्टे'। २ क. च। ३ ख. 'राकरोति। त'।

**अहंदृष्ट्यधिगम्यत्वमपि द्रष्टुरिहेष्यते ॥**
**प्रत्यक्षमाविरुद्धत्वं तथाचोक्तेः प्रसज्यते ॥ १८५ ॥**

यत्तु कर्म दर्शयितव्यं न कर्तेति तत्राऽऽह । **अहमिति** । द्रष्टुरहंधीगम्यत्वे लौकिकपरीक्षकसंमतेऽपि न दृष्टेरित्यादिश्रुतौ तस्य दृष्टिविषयत्वं निरसितुं शक्यमित्याशङ्क्याऽऽह । **प्रत्यक्षेति** ॥ १८५ ॥

**मेयमानप्रमातॄणां प्रात्यक्ष्यं प्रागपीरितम् ॥**
**व्याख्या व्यरोधि तेनेयं दृष्टेरित्यत्र या कृता ॥ १८६ ॥**

परस्य प्रमाणन्यायविरोधमुक्त्वा स्वोक्तिविरोधमाह । **मेयेति** । दृष्टेरहंधीगम्यत्वं यथेदानीमुक्तं तथेत्यपेरर्थः । ईरितं भर्तृप्रपञ्चैरिति शेषः ॥ १८६ ॥

**यथोक्तादात्मनोऽन्यद्यत्कार्यकारणरूपकम् ॥**
**आर्तं विनाशि तत्तुच्छं शुक्तिकारजतादिवत् ॥ १८७ ॥**

न दृष्टेरित्यादिवाक्यस्य परकीयव्याख्यां निरस्य स्वव्याख्यानं व्यवस्थाप्यातोऽन्यदार्तमित्यस्यार्थमाह । **यथोक्तादिति** । कारणसंसर्गरूपं विनाशित्वं निवर्तयति । **तुच्छमिति** । अपसिद्धान्तं परिहरति । **शुक्तीति** ॥ १८७ ॥

**एतदेवमनार्तं स्यात्स्वतःसिद्धत्वकारणात् ॥**
**सदैकानुदितालुप्तप्रत्यग्दृष्टिसतत्त्वकम् ॥ १८८ ॥**

शब्दार्थमुक्त्वाऽऽर्थिकमर्थमाह । **एतदिति** । उक्तं ह्येतदेवैकमनार्तमविनाशि कूटस्थमिति ॥ १८८ ॥

**हेतूक्तिरथवाऽतः स्यादुक्तवस्तुस्वभावतः ॥**
**तदन्यभावासंसिद्धेरार्तत्वं हेतुमद्भवेत् ॥ १८९ ॥**

**श्लोकानामादितः समष्ट्यङ्काः—६२१६**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके तृतीयाध्यायस्य चतुर्थमुषस्तब्राह्मणम् ॥ ४ ॥**

अतःशब्दमनूद्यार्थान्तरमाह । **हेतूक्तिरिति** । हेतुरूपमर्थं व्यनक्ति । **उक्तेति** । साक्षात्त्वादिविशेषणवतो वस्तुनः सर्वत्र प्रत्यक्त्वेन स्वभावत्वात्तदुद्रिक्तस्य सत्त्वासिद्धेरर्थान्तरत्वेन भासमानं सर्वं तुच्छमेव स्यादेवमनात्मप्रपञ्चस्याऽऽर्तत्वमतःशब्दोक्तहेतुसहितमुपपन्नमित्यर्थः ॥ १८९ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां तृतीयाध्यायस्य चतुर्थमुषस्तब्राह्मणम् ॥ ४ ॥

---

अथ पञ्चमं ब्राह्मणम् ।

---

आदावभिहितं सर्वं बन्धनं सप्रयोजकम् ॥
अस्तित्वव्यतिरिक्तत्वे बद्धस्य च विनिश्चिते ॥ १ ॥

संगतिं वक्तुं वृत्तमनुद्रवति । आदाविति । ब्राह्मणत्रयेण कर्मादिप्रयोजकसहितः संसार उक्तश्चतुर्थेन कूटस्थबोधः प्रत्यगात्मा मुमुक्षुर्निश्चित इत्यर्थः ॥ १ ॥

संसारानर्थसंप्राप्तिहेतोर्विध्वस्तयेऽधुना ॥
संन्यासैकसहायात्मयाथात्म्यज्ञानमुच्यते ॥ २ ॥

उत्तरब्राह्मणतात्पर्यमाह । संसारेति । सहेतुबन्धध्वंसि ससंन्यासं सम्यग्ज्ञानं वक्तुं पञ्चमं ब्राह्मणमित्यर्थः ॥ २ ॥

उत्पन्नसम्यग्ज्ञानस्य संन्यासो लक्षणं यतः ॥
साधनं च तदुत्पत्तौ संन्यासोऽतोऽत्र भण्यते ॥ ३ ॥

ननु ज्ञानमेव वाच्यं तस्याज्ञानध्वंसित्वान्न संन्यासस्तस्य ज्ञानात्प्रागूर्ध्वं चानुपयोगात्तत्राऽऽह । उत्पन्नेति । साधनं च ज्ञानस्येति शेषः । अत्रेति प्रकृतज्ञानप्रकरणोक्तिः ॥ ३ ॥

प्रवृत्तिलक्षणो योगो ज्ञानं संन्यासलक्षणम् ॥
तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् ॥ ४ ॥

तस्य तत्साधनत्वे मानमाह । प्रवृत्तीति ॥ ४ ॥

उषस्तप्रश्न एवायं कहोलेनापि पृच्छयते ॥
तत्किमर्थं पुनः प्रश्नः स एव कृतनिर्णयः ॥ ५ ॥

स्वाभिप्रेतां संगतिमुक्त्वा भर्तृप्रपञ्चाभिप्रेतां वक्तुं पूर्वपक्षयति । उपस्तेति । तत्त्रार्थभेदाभावे सतीति यावत् ॥ ५ ॥

प्रष्टृभेदाददोषश्चेन्मैवं प्रत्युक्तिभेदतः ॥
एकार्थप्रश्नवाक्यस्य ह्येका प्रत्युक्तिरिष्यते ॥ ६ ॥

पुनरुक्तिपरिहारं शङ्कते । प्रष्टृभेदादिति । दूषयति । मैवमिति । एकार्थस्य प्रश्नस्य भिन्नकर्तृकस्यापि प्रतिवचनमेकमेव युक्तं प्रतिवक्तृभेदाभावादिह तु न दृष्टेर्योऽशनायेत्यादिप्रत्युक्तिभेदोऽस्त्यतो न प्रष्टृभेदः पुनरुक्तिं परिहरेदित्यर्थः ॥ ६ ॥

पुनरुक्तं न च न्याय्यमेकप्रवचने क्वचित् ॥
न चेह लौकिको जल्पः प्रष्टृभेदो यतो भवेत् ॥ ७ ॥

---

१ क. जिज्ञासोरिति । २ ख. पृष्टः । ३ क. °दोऽस्ति यतो ।

अस्तु तर्हि पुनरुक्तिरेव दृश्यते हि शाखाभेदे पुनर्वचनं नेत्याह । **पुनरुक्तमिति ।** प्रवचनशब्दः शाखाविषयः । प्रष्टृभेदात्पुनरुक्तिपरिहारो नेत्यत्र हेत्वन्तरमाह । **न चेति ।** न हि श्रुतौ लोकप्रसिद्धो जल्पोऽस्ति येन प्रष्टृभेदः पुनरुक्तिपरिहाराय स्यादपौरुषेयायां श्रुतौ वास्तवस्यं प्रष्टृभेदस्यानिष्टत्वात्कल्पितस्याकल्पितपुनरुक्तिपरिहारानुपयोगित्वादित्यर्थः ॥ ७ ॥

**समानशब्दौ तेनेमौ स्यातां भिन्नार्थवाचकौ ॥**
**कहोलोषस्तवक्त्रोक्तौ प्रश्नाविति विनिर्णयः ॥ ८ ॥**

सिद्धान्तयति । **समानेति ।** एकार्थत्वे पुनरुक्तिस्तच्छब्दार्थः ॥ ८ ॥

**क्षेत्रज्ञात्मानमप्राक्षीदुषस्तो न परं पदम् ॥**
**अप्राक्षीत्परमात्मानं कहोलोऽपि न दुःखिनम् ॥ ९ ॥**

कथं तयोर्भिन्नार्थत्वं तत्राऽऽह । **क्षेत्रज्ञेति । यथाऽऽहुः** पूर्वः प्रश्नः परमात्मविषयोऽयं विज्ञानात्मविषय इति । माध्यंदिनशाखया भाष्ये पौर्वापर्यमुन्नेयम् ॥ ९ ॥

**एकदेश उपन्यासादैकार्थ्यमवसीयते ॥**
**मिथःसंकीर्णधर्मोक्तौ यथायोगं व्यवस्थितिः ॥ १० ॥**

अस्य हि विज्ञानात्मनः परमात्मन्यप्ययो वक्तव्य इति वदद्भिस्तयोरैक्यमिष्टं तन्न प्रश्नयोर्भिन्नार्थत्वे युक्तमित्याशङ्क्याऽऽह । **एकेति ।** एकस्मिन्प्रकरणे द्वयोरुक्त्या प्राकरणिकं तदैक्यं तत्रोषस्तप्रकरणे वाक्यार्थावयवो विज्ञानात्मा निरुच्यते कहोलप्रकरणे तु तद्भागः परस्तयोः समानदेश उपन्यासात्समानकार्यतेत्युक्तत्वादित्यर्थः । वाक्यार्थभागौ जीवपरौ प्रश्नविषयावित्युक्तं प्रश्नयोर्धर्मव्यत्यासादेकार्थत्वदृष्टेरित्याशङ्क्याऽऽह । **मिथ इति** ॥ १० ॥

**यदन्तरतमत्वं प्रागुक्तं तत्परमात्मनि ॥**
**तदेकदेशाभिहितेर्विज्ञानात्मानमेष्यति ॥ ११ ॥**

यद्यपि जीवपरधर्मौ परस्परसंकीर्णावुच्येते तथाऽपि यथासंभवं व्यवस्थितत्वेनैष्टव्यावित्येतदेव दर्शयति । **यदिति ।** कहोलवाक्ये परमात्मधर्मत्वेनोक्तं सर्वान्तरत्वं विज्ञानात्मधर्मत्वात्तमेवोपस्तपृष्टगतं गमिष्यत्येकस्मिन्प्रकरणे द्वयोरुक्तेरन्तरतमत्वं परमात्मन्युच्यमानं विज्ञानात्मनि सिद्धं भविष्यतीति तदुक्तेरित्यर्थः ॥ ११ ॥

**शोकमोहाद्यतीतत्वं प्रकाशात्मकता तथा ॥**
**विज्ञानात्मनि चोक्ताऽपि परमात्मानमेष्यति ॥ १२ ॥**

परमात्मधर्मे दर्शितं प्रकारं विज्ञानात्मधर्मेऽपि योजयति । **शोकेति ।** यद्यपि शोका-

---

१ ख. °स्य शब्दभे° । २ ख. °स्तस्मात्तयोः ।

द्यतीतत्वं स्वप्रकाशत्वं च ज्योतिर्ब्राह्मणे जैवमुक्तं तथाऽपि तत्पाञ्चमिकं परं गमिष्यति तस्य तद्धर्मतया तेनैव संबन्धाच्छोकमोहाद्यतीतता प्रकाशमात्ररूपता च विज्ञानात्मन्युच्यमाना परमात्मनि सिद्धा भविष्यतीति तदुक्तेरित्यर्थः ॥ १२ ॥

**पञ्चमाध्यायशेषेण परमात्मविनिर्णयः ॥**
**षष्ठे तु वक्ष्यतेऽध्याये विज्ञानात्मविनिर्णयः ॥ १३ ॥**

प्रश्नयोर्विषयभेदमुक्त्वा पञ्चमशेषस्य कहोलप्रकरणेनैकवाक्यतामाह । **पञ्चमेति** । **उक्तं हि** पञ्चमाध्यायशेषेण परमात्मनो निर्णयो वक्ष्यमाण इति । ज्योतिर्ब्राह्मणादेरुषस्तप्रकरणेनैकवाक्यतामाह । **षष्ठे त्विति । यथाऽऽहुः**—षष्ठेन विज्ञानात्मन इति ॥ १३ ॥

**उपन्यासो द्वयोरत्र विज्ञानात्मपरात्मनोः ॥**
**व्यज्ञाप्यपुनरुक्तत्वं न्यायमार्गसमाश्रयात् ॥ १४ ॥**

प्रश्नयोर्भिन्नार्थत्वे गमकमाह । **उपन्यास इति** । तदुक्तमपुनरुक्तेन हि द्वितीयेन प्रश्नेन भवितव्यमिति ॥ १४ ॥

**इति व्याचक्षते केचित्प्रश्नावेतौ यथोदितौ ॥**
**न सम्यगेतद्व्याख्यानं यथा तदभिधीयते ॥ १५ ॥**

परपक्षमुपसंहरति । **इति व्याचक्षत इति** । ब्राह्मणद्वयेनार्थद्वयं विवक्षितमित्येतदयुक्तमित्याह । **न सम्यगिति** ॥ १५ ॥

**प्रत्युक्तेरप त इति प्रश्नयोरुभयोरपि ॥**
**क्षेत्रज्ञपरमात्मानौ नात्राऽऽत्मानौ विवक्षितौ ॥ १६ ॥**

असम्यक्त्वं व्यनक्ति । **प्रत्युक्तेरिति** ॥ १६ ॥

**प्रश्नोक्तिरेकरूपा च प्रत्यभिज्ञायतेऽञ्जसा ॥**
**प्रत्युक्तिश्च तवाऽऽत्मेति भिन्नार्थे वचसी कथम् ॥ १७ ॥**

प्रत्युक्तेरिव प्रश्नयोरेकरूपत्वप्रत्यभिज्ञानाच्च न भिन्नार्थतेत्याह । **प्रश्नोक्तिरिति** । प्रश्नप्रत्युक्त्योरेकरूपत्वे फलं निगमयति । **प्रत्युक्तिश्चेति** । प्रश्नैकरूप्यसमुच्चयार्थश्चकारः ॥ १७ ॥

**एकत्र च न संभाव्यावात्मानौ द्वौ शरीरके ॥**
**आत्मप्रत्यय एकार्थस्तथा श्रुतिवचांस्यपि ॥ १८ ॥**

इतश्च वाक्ययोर्न भिन्नार्थतेत्याह । **एकत्रेति** । नन्वेकत्र भोक्तृद्वयायोगेऽपि भोक्तृभोक्त्रोर्नायोगो गुहाधिकरणन्यायादुषस्तकहोलयोश्च संघातभेदादात्मभेदोऽत आह । **आत्मेति** । आत्मेति प्रत्ययस्तावदेकविषयस्तस्य वस्तुनो भिन्नविषयत्वे मानाभावादित्यर्थः । **एको** देवः सर्वभूतेष्वित्यादिश्रुतिविरोधाच्च वस्तुतो नाऽऽत्मभेदोऽस्तीत्याह । **तथेति** ॥ १८ ॥

एकात्मकाः सर्वदेहा विवादो येषु वर्तते ॥
शरीरत्वाविशेषत्वात्प्रतिवादिशरीरवत् ॥ १९ ॥

आत्मैक्यसाधकानुमाविरोधाच्च तद्भेदो नेति बृहद्विचारोक्तं स्मारयति । **एकेति**॥१९॥

सर्वान्तरावसानस्य साक्षादित्यादिकस्य च ॥
ऐकार्थ्यात्प्रश्नवाक्यस्य नाऽऽत्मानौ द्वौ विवक्षितौ ॥ २० ॥

आत्मैक्ये सिद्धे प्रश्नद्वयस्याऽऽत्मद्वयविषयत्वायोगमुक्तमनुवदति । **सर्वेति** ॥ २० ॥

अगौणाव्यवधानादिविशेषणविशेष्यता[1] ॥
नानेकस्याऽऽत्मनो न्याय्या तदसंभवहेतुतः ॥ २१ ॥

प्रश्नयोर्भिन्नार्थत्वायोगे हेत्वन्तरमाह । **अगौणेति**। एतैर्विशेषणैर्विशेष्यतेति यावत् । अनेकस्यागौणत्वसर्वान्तरत्वादेरसंभवादिति हेतुमाह । **तदसंभवेति** ॥ २१ ॥

व्यर्थोपनिषदारब्धिर्यदि[2] भेदो भवेत्तयोः ॥
अनिर्मोक्षप्रसक्तिश्च क्षेत्रज्ञपरमात्मनोः ॥ २२ ॥

प्रश्नार्थात्मभेदे दोषान्तरमाह । **व्यर्थेति** । ब्रह्मात्मैक्यं ज्ञातुमुपनिषदारम्भो वस्तुतस्तद्भेदे न साऽऽरभ्या भिन्नयोरैक्यज्ञानायोगात्कल्पितभेदे प्रश्नयोर्न भिन्नार्थतेत्यर्थः । किंच जीवेश्वरयोर्वस्तुनो भेदे जीवस्य ब्रह्मत्वाख्यो मोक्षो न स्यान्न चाविद्याक्षयस्तस्यापि त्वत्पक्षे हेत्वभावादेवायोगादतोऽफलं शास्त्रमनारभ्यमित्याह । **अनिर्मोक्षेति** ॥ २२ ॥

अकृत्स्नदृष्टिविषयो निषेधोऽपि न युज्यते ॥
प्रविष्टस्य न चेत्कार्त्स्न्यं विज्ञानात्मन इष्यते ॥ २३ ॥

वास्तवात्मभेदाभावे हेत्वन्तरमाह । **अकृत्स्नेति** । **स योऽत** एकैकमुपास्ते न स वेदाकृत्स्नो ह्येष **इत्यादि** निषेधः ॥ २३ ॥

वस्तुवृत्तानुरोधेन नातो भेदोऽस्ति कुत्रचित् ॥
वस्तुवृत्तानभिज्ञानाद्भेदः स्वप्नेन्द्रजालवत् ॥ २४ ॥

आत्मभेदं निरस्य प्रसङ्गादनात्मभेदमपनुदति । **वस्त्विति** । आत्मापरिच्छिन्नत्वमतःशब्दार्थः । वस्तु चेदपरिच्छिन्नं कथं परिच्छेदभानं तत्राऽऽह । **वस्त्विति** ॥ २४ ॥

एक एव ततः प्रश्नो न प्रश्नद्वयमिष्यते ॥
कंचिद्विशेषमापेक्ष्य पृष्टो भूयोऽपि पृच्छयते ॥ २५ ॥

आत्माभेदे प्रश्नैक्यं फलमाह । **एक इति** । पुनरुक्तिस्तर्हि तदवस्थेति तत्राऽऽह । **कंचिदिति** ॥ २५ ॥

उपदेशस्य विषयः प्रश्नप्रत्युक्तिवाक्ययोः ॥
निरधारि पुरा तस्य याथात्म्यं त्वत्र पृच्छयते ॥ २६ ॥

---

१ ख. °गौणव्य° । २ ख. ग. °दि भित्तिर्भवे° ।

तमेव विशेषं दर्शयति । **उपदेशस्येति** ॥ २६ ॥

**बुद्ध्यन्ताद्व्यतिरिक्तोऽस्ति साक्षी प्रश्नस्य गोचरः ॥**
**योग्यः प्रत्यङ्ङिति ज्ञेयः पूर्वप्रश्नार्थसंग्रहः ॥ २७ ॥**

पादत्रयोक्तमाद्यप्रश्नविषयं विशदयति । **बुद्ध्यन्तादिति ।** प्रमातृव्यतिरिक्तस्तत्साक्षी साक्षादित्यादिप्रश्नस्य योग्यो विषयः प्रत्यगात्मा मुमुक्षुरस्तीति पूर्वत्र प्रश्नप्रत्युक्तिभ्यां निर्धारितमित्यर्थः ॥ २७ ॥

**अशनायाद्यतीतत्वं पूर्वोक्तस्यैव वस्तुनः ॥**
**द्वितीयेनोच्यते तत्त्वं प्रत्यङ्मोहनिवृत्तये ॥ २८ ॥**

तस्येत्यादिनोक्तं व्यनक्ति । **अशनायादीति ।** तत्त्वप्रपञ्चनफलमाह । **प्रत्यगिति** ॥ २८ ॥

**यथाप्रश्नं प्रतिवचो न सम्यगुदितं पुरा ॥**
**इति मत्वाऽथवाऽप्राक्षीत्पृष्टमर्थं पुनर्कुपिम् ॥ २९ ॥**

पूर्वप्रश्नस्य विशेषजिज्ञासया प्रश्नान्तरप्रवृत्तिमुक्त्वा प्रकारान्तरेण तत्प्रवृत्तिमाह । **यथेति** ॥ २९ ॥

**साक्षादित्यादिना पृष्टं साक्षादित्यादिलक्षणम् ॥**
**यथा संभाव्यते नेदृक्प्रत्युक्तौ किंचिदीक्ष्यते ॥ ३० ॥**

कथं यथाप्रश्नं प्रतिवचो नोक्तं तत्राऽऽह । **साक्षादिति** ॥ ३० ॥

**असंतोषात्कहोलोऽत उपस्तप्रश्नमेव तु ॥**
**भूयोऽप्राक्षीन्मुनिं विद्वान्याथात्म्यार्थावबुद्धये ॥ ३१ ॥**

असंतोषहेतुमुक्त्वा तत्फलमाह । **असंतोषादिति ।** यथाप्रश्नं प्रतिवचो नोक्तं चेदुषस्तेनैव प्रष्टव्यं कथमन्यः पृच्छति तत्राऽऽह । **विद्वानिति ।** कहोलप्रश्नस्य प्रयोजनमाह । **याथात्म्येति** ॥ ३१ ॥

**एष आत्मेति प्रत्युक्तिर्यः प्राणेनेति चापरा ॥**
**तावन्मात्रोक्तितो नासौ प्रश्नार्थोऽवधृतो भवेत् ॥ ३२ ॥**

असकृत्प्रत्युक्त्योपस्तप्रश्नस्य निर्णीतत्वान्नासंतोषहेतुरस्तीत्याशङ्क्याऽऽह । **एष इति ।** तथाच पृष्टस्यार्थस्य सम्यगनिर्धारितत्वात्तन्निर्दिधारयिषया भूयस्तत्रैव प्रश्नोपपत्तिरिति शेषः ॥ ३२ ॥

**नन्वूर्मिषट्कातीतत्वं दुःखित्वं चाद्वयात्मनि ॥**
**एकदैकत्र न स्यातां प्रकाशतमसी यथा ॥ ३३ ॥**

एकमेवाऽऽत्मतत्त्वमधिकृत्य प्रश्नावित्यत्र चोदयति । **नन्विति** ॥ ३३ ॥

---

१ क. ग. °कुपिः ॥ २९ ॥ २ ख. तदाह । ३ ख. °न्मुनीन्विद्वा° । ४ ख. चापरः ।

**नैष दोषस्तदज्ञानमिथ्याधीभ्रमहेतुतः ॥**
**संसारिताऽऽत्मनः क्ळृप्ता कृष्णिमेव नभस्तले ॥ ३४ ॥**

प्रश्नार्थौ मिथो भिन्नौ विरुद्धधर्मत्वात्तमःप्रकाशवदित्यत्र मानतो वा विरुद्धधर्मत्वं भानतो वा नाऽऽद्योऽसिद्धेरित्याह । **नेति** ॥ ३४ ॥

**बृहद्विचारे सम्यक्च प्रागप्येतद्विचारितम् ॥**
**विरुद्धागमविषयप्रविवेकप्रसङ्गतः ॥ ३५ ॥**

प्रत्यगज्ञानजभ्रमादात्मनः संसारिता कल्पितेति कथं सिद्धवदुच्यते तत्राऽऽह । **बृहदिति** । विचारान्तरेष्वपि तत्र तत्र प्रसङ्गादेतदुक्तमेवेति वक्तुं चकारापिकारौ । किंच सविशेषत्वनिर्विशेषत्वश्रुत्योर्विषयविभागोक्तिप्रसङ्गेन संसारित्वस्य मिथ्यात्वं मधुब्राह्मणान्ते दर्शितमित्याह । **विरुद्धेति** । एतद्विचारितमिति पूर्वेण संबन्धः ॥ ३५ ॥

**रज्जुत्वाहित्वयोर्यद्वदेकस्मिन्नपि वस्तुनि ॥**
**स्वतस्तन्मोहतश्चैव संभवस्तद्वदात्मनि ॥ ३६ ॥**
**मुक्तत्वं च सितत्वं च परस्परविरुद्धयोः ॥**
**धर्मयोः समवायः स्यान्न तु नीलोत्पलादिवत् ॥ ३७ ॥**

कल्पान्तरमुत्थापयति । **रज्जुत्वेति** । सितत्वं चेत्यस्मादूर्ध्वमितिशब्दाध्याहारः । मुक्तत्वबद्धत्वयोरेकत्र वस्तुतो नाऽऽवेशोऽस्तीत्यत्र वैधर्म्यदृष्टान्तः । **न त्विति** ॥३६॥ ॥ ३७ ॥

**एवं विरुद्धधर्मत्वे न च दोषोऽस्ति कश्चन ॥**
**नामरूपादिसद्भावो दोषश्चेदिह चोद्यते ॥ ३८ ॥**

प्रातिभासिकविरुद्धधर्मत्वहेतौ साध्यो भेदः कल्पितोऽकल्पितो वा नाऽऽद्यः सिद्धसाध्यत्वाद्द्वितीये रज्ज्वादावनैकान्त्यमिति मत्वा दूषयति । **एवमिति** । निरुपाधिकरूपेणासंसारित्वं सोपाधिकरूपेण संसारित्वमित्यविरोध उक्तः । इदानीमुपाध्युपगमे सद्वयत्वं सत्यस्यैव घटादेरुपाधित्वदृष्टेरिति शङ्कते । **नामेति** । इहेत्यद्वैतपक्षोक्तिः ॥ ३८ ॥

**नेह नानेति वचनादेकमेवेति चोक्तितः ॥**
**नैवं परिहृतस्तस्य मृदृष्टान्तादियुक्तिभिः ॥ ३९ ॥**

तेन सद्वयत्वे किं स्यादत आह । **नेहेति** । उक्तितो विरोध इति शेषः । मृदाद्यतिरेकेण तद्विकाराः शरावादयो नेतिदृष्टान्ताख्ययुक्तिबलादाविद्यनामरूपरचितकार्यकारणसंघातस्याविद्यामात्रत्वात्तस्याश्च विद्यया निरासान्नैवमिति परिहरति । **नैवमिति** ॥३९॥

**अगृह्यमाणं सत्तत्त्वं विपरीतमिवेक्ष्यते ॥**
**यथावस्त्वीक्ष्यमाणं तु यथावस्त्वेव वीक्ष्यते ॥ ४० ॥**

परिहारमेव स्फोरयति । **अगृह्यमाणमिति** । कुतो विपरीतमिवेत्युच्यते सद्वयमेव

तत्त्वं किं न स्यादत आह । **यथावस्त्विति** । अनिर्वाच्याज्ञानविलसितनामरूपकृतसंसारोऽतो नाद्वैतहानिरिति भावः ॥ ४० ॥

**यदत्र चोद्ये वक्तव्यं तत्पुरैवासकृद्बहु ॥**
**सम्यगुक्तं तदखिलमिह स्मर्तव्यमादृतैः ॥ ४१ ॥**

ये तु संसारस्याऽऽविद्यत्वममृष्यन्तः सद्वयमेव तत्त्वमाहुस्तान्प्रत्युक्तं स्मारयति। **यदत्रेति** । तत्प्रासङ्गिकत्वादविवक्षितमित्याशङ्क्याऽऽह । **असकृदिति** । संबन्धादौ तत्र तत्रोक्तस्याल्पत्वाद्बुद्ध्यसौकर्यमाशङ्क्याऽऽह । **बह्विति** । तस्याबाधं सूचयति । **सम्यगिति** । इहेति द्वैतसत्यत्वशङ्का परामृश्यते ॥ ४१ ॥

**अविचारितसंसिद्धिमोहोपहतचेतसाम् ॥**
**अप्यद्वयं परं ब्रह्म द्वयवत्प्रथते मृषा ॥ ४२ ॥**

किं तदुक्तं समाधानमित्याकाङ्क्षायां संक्षिपति । **अविचारितेति** ॥ ४२ ॥

**यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः ॥**
**संकीर्णमिव मात्राभिश्चित्राभिरुपलक्षयेत् ॥ ४३ ॥**

**तथेदममलं ब्रह्म निर्विकारमविद्यया ॥**
**कलुषत्वमिवाऽऽपन्नं भेदरूपं प्रकाशते ॥ ४४ ॥**

वार्तिवैयर्थ्यशङ्काहेतुं द्वैतधियं दृष्टान्तेनान्यथयति । **यथेत्यादिना** । मात्राभिर्मीयमाननीलपीतादिविषयैरिति यावत् ॥ ४३ ॥ ४४ ॥

**तस्यैकमपि चैतन्यं बहुधा प्रविभज्यते ॥**
**अङ्गाराङ्कितमुत्पाते वारिराशेरिवोदकम् ॥ ४५ ॥**

एकस्यैव ब्रह्मणो नानारूपेणाविद्यया प्रकाशमानत्वं दृष्टान्तान्तरेणाऽऽह। **तस्येति**। अङ्गाराङ्कितमङ्गारवदाचरितं तथाप्रतिपन्नमिति यावत् ॥ ४५ ॥

**बाध्य एवाऽऽत्मसंमोहो न त्वसौ बाधको यतः ॥**
**प्रत्यग्याथात्म्यविज्ञानं न बाध्यं बाधकं यतः ॥ ४६ ॥**

ब्रह्मणोऽविद्यया द्वयवद्भानेऽपि तस्यां लब्धपदायां विद्यायोगान्नानर्थध्वस्तिरित्याशङ्क्याऽऽह । **बाध्य इति** । नियमे हेतुः । **न त्विति** । अविद्यायास्तमोवद्बाध्यत्वनियमे ज्ञानस्य प्रकाशवद्बाधकत्वनियमः फलतीत्याह । **प्रत्यागिति** । यतो ज्ञानं न बाध्यमतो बाधकमेवेति योजना। न हि सति तमसि सविता नोदेति तद्वद्विद्यमानायामविद्यायां विद्या नानवकाशा तथाच सा स्वोदयनान्तरीयकत्वेनाबोधं धुन्वती तज्जमपि धुनोतीति भावः ॥ ४६ ॥

---

१ ख. °सिद्धमो° ।

**स्वभावानपहारेण संगतिः स्यात्ततस्तयोः ॥**
**इति चेतसि संधाय सर्वयोगेश्वरेश्वरः ॥ ४७ ॥**

अनुभवसिद्धे विद्याविद्ययोर्बाध्यबाधकभावे भगवद्वाक्यमवतारयितुं पातनिकामाह । **स्वभावेति** । ततःशब्दोऽनुभवसिद्धपरामर्शी ॥ ४७ ॥

**मोहापनुत्तये प्राह प्रपन्नाय किरीटिने ॥**
**बाध्यबाधकरूपं च न व्येतीति प्रकाशयन् ॥ ४८ ॥**

ज्ञानाज्ञानयोः स्वभावानपहारेण संगतिरित्येतद्वाचिपदं वक्ष्यमाणवाक्ये नास्तीत्याशङ्क्याऽऽह । **मोहेति** ॥ ४८ ॥

**या निशा सर्वभूतानां तस्यां जागर्ति संयमी ॥**
**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ४९ ॥**

किं पुनर्भगवानाह तदाह । **या निशेति** । अविदुषां निशेव ब्रह्मावस्था तत्र विद्वाञ्जागर्ति यत्राविद्यायां सर्वाणि भूतानि जाग्रति सा ब्रह्मविदो न भाति विद्यया ध्वंसादित्यर्थः ॥ ४९ ॥

**ज्ञानाज्ञाने ततोऽपेक्ष्य व्यवहारोऽयमात्मनि ॥**
**शास्त्रीयो लौकिकश्चातो विरोधोऽत्र न शङ्क्यते ॥ ५० ॥**

ज्ञानाज्ञानयोः स्वभावानपहारेण संबन्धे फलितमाह । **ज्ञानेति** । तयोरुक्तसंबन्धस्ततःशब्दार्थः । ज्ञानमपेक्ष्याहं ब्रह्मेति व्यवहार इतरः सर्वोऽप्यज्ञानमपेक्ष्येति भेदस्तदस्मत्पक्षे न केनचिदपि व्यवहारेण विरोधोऽस्तीत्यर्थः ॥ ५० ॥

**उत्पन्नात्मप्रबोधानामात्मविद्यातदुद्भवम् ॥**
**सम्यग्ज्ञानाग्निना नित्यं दह्यमानं प्रजायते ॥ ५१ ॥**

ज्ञानिनोऽपि सर्वव्यवहारदृष्टेरहं ब्रह्मेति व्यवहारादन्यो व्यवहारः कथमज्ञानकृतः प्रतिज्ञायते तत्राऽऽह । **उत्पन्नेति** । तदीयसर्वव्यवहारस्य बाधितत्वेनानुवृत्तिरसकृदुक्तेति भावः ॥ ५१ ॥

**ऐकात्म्यवस्तुयाथात्म्यमभिप्रेत्यात उत्तरः ॥**
**साक्षादित्यादिकः प्रश्नो यदेवेतिपुरःसरः ॥ ५२ ॥**

ज्ञानाज्ञानाभ्यां द्विविधं व्यवहारमुक्त्वा ब्राह्मणारम्भमुपसंहरति । **ऐकात्म्येति** । यतः सर्वमाविद्यमशनायाद्यतस्तदतीतं वस्तुप्रतिपादनाय ब्राह्मणमित्यर्थः । उत्तरो ग्रन्थ इति शेषः । ब्राह्मणमवतार्य प्रश्नमवतारयति । **साक्षादित्यादिक इति** ॥ ५२ ॥

**प्रत्याहैष त आत्मेति याज्ञवल्क्योऽपि पूर्ववत् ॥**
**संभाव्यते यतोऽत्रैव साक्षादित्यादिलक्षणम् ॥ ५३ ॥**

प्रत्युक्तिमादत्ते । **प्रत्याहेति** । पूर्वस्मिन्नुषस्तप्रश्ने यथोत्तरं तथाऽत्राप्यादावाहेत्यर्थः । पूर्ववत्प्रत्युक्तौ हेतुः । **संभाव्यत इति** । अत्रेत्यात्मोक्तिः ॥ ५३ ॥

**निःशेषनिर्णयोक्तीच्छुः कहोलोऽप्याह पूर्ववत् ॥**
**कतमो याज्ञवल्क्येति स तं प्रत्याह शुद्धधीः ॥ ५४ ॥**

द्वितीयप्रश्नतात्पर्यमाह । **निःशेषेति** । अशनायाद्यतीतवस्तुविषयोऽयं प्रश्न इत्यर्थः । योऽशनायेत्यादिवाक्यमादत्ते । **स तमिति** । शुद्धे निरुपाधिके ब्रह्मण्यशनायाद्यतीते सदाबुद्धिमत्त्वात्कहोलाभिप्रेतमेवोत्तरं विवक्षुराहेत्यर्थः ॥ ५४ ॥

**योऽशनायापिपासादीन्धर्मान्सर्वान्विरोधतः ॥**
**अतीत्य वस्तुवृत्तेन स्वमहिम्नि व्यवस्थितः ॥ ५५ ॥**

तस्यार्थं संक्षिपति । **योऽशनायेति** । असङ्गत्वाविक्रियत्वादिस्वरूपेण विरोधादूर्मिषट्कस्य तेनैव स्वाभाव्येन तदतिक्रम्य यः स्वरूपेण स्थितः स सकारणसंसाररहितः प्रत्यगात्मा सर्वान्तरत्वादिस्वरूप इत्यर्थः ॥ ५५ ॥

**अशनायापिपासे यस्तद्धेतोरत्ययात्सदा ॥**
**अत्येति वस्तुवृत्तेन स साक्षादिति गृह्यताम् ॥ ५६ ॥**

प्रत्युक्तेः समुदायार्थमुक्त्वा प्रतिपदमर्थं विवक्षुर्योऽशनायापिपासे इत्यस्यार्थमाह । **अशनायेति** ॥ ५६ ॥

**शोकादासङ्गबीजाद्धि जज्ञाते ते यथोदिते ॥**
**इच्छाविशेषास्ताभ्यां च जज्ञिरेऽन्ये सहस्रशः ॥ ५७ ॥**

हेतोरत्ययात्तदत्ययश्चेत्को हेतुस्तयोरिति तमाह । **शोकादिति** । **सङ्गात्संजायते काम इति स्मृतेरासङ्गकार्याच्छोकादिशब्दितात्कामादशनायापिपासे** जायेते इति योजना । यथोक्तस्मृतिद्योती हिशब्दः । तयोः कार्यं प्रसङ्गादाह । **इच्छेति** ॥ ५७ ॥

**आत्माऽत्येतीति संबन्धो योऽशनायादिलक्षणान् ॥**
**क्रियार्थोऽत्येतिशब्दश्चेन्न क्रियार्थो विवक्षितः ॥ ५८ ॥**

क्रियापदार्थकथनार्थमादावन्वयमाह । **आत्मेति** । अशनायादीन्धर्मान्योऽत्येति स आत्मेति संबन्ध इति योजना । क्रियार्थश्चेदत्येतिशब्दस्तर्हि कर्तुरात्मनः सक्रियत्वं नेत्याह । **न क्रियेति** ॥ ५८ ॥

**औष्ण्यं शैत्यं यथाऽत्येति वस्तुवृत्तेन सर्वदा ॥**
**गर्ताद्यत्ययवत्त्वत्र न मानादुपपद्यते ॥ ५९ ॥**

कथं तर्हि क्रियापदप्रयोगो न हि निर्विषयं पदमस्ति नित्यानुवादेनेत्याह । **औष्ण्यमिति** । चैत्रो गर्तमत्येतीतिवदत्येतिर्मुख्यः किं न स्यान्न हि संभवति मुख्ये गौणोऽर्थो

१ ख. °दायाऽऽह° । २ ख. °न्विशेषतः ।

युक्तस्तत्राऽऽह । **गर्तादीति** । अत्रेत्यशनायादिर्विषयो गृह्यते । अनुपपत्तौ हेतुः । **मानादिति** । आत्मनोऽक्रियस्यावेदकमानसंभवादित्यर्थः ॥ ५९ ॥

**अशनायापिपासे द्वे एव नात्येति केवले ॥**
**शोकश्च यस्तयोर्बीजं तमप्येषोऽतिवर्तते ॥ ६० ॥**

अशनायाद्यत्ययमुक्त्वा शोकाद्यत्ययमाह । **अशनायेति** । यद्वा कथं तदत्ययो हेत्वत्ययादुक्तस्तस्यात्राप्रतीतेरित्याशङ्क्याऽऽह । **अशनायेति** ॥ ६० ॥

**शोकोऽत्रारतिमात्रं स्याच्चेतसो याऽनवस्थितिः ॥**
**मोहं चात्येति वैचित्यं विषयापहृतिं धियः ॥ ६१ ॥**

तस्य स्वरूपमाह । **शोकोऽत्रेति** । अरतिं व्याकरोति । **चेतस इति** । शोकाद्यत्ययवन्मोहात्ययं प्रतिजानीते । **मोहं चेति** । तस्य स्वरूपमाह । **वैचित्यमिति** । किंच तद्विपरीतचित्तत्वं तदाह । **विषयेति** । तत्तदिन्द्रियसंबद्धैरर्थैरपहारो बुद्धेरात्मनो विमुखीकृत्य स्वप्रवणत्वापादनमित्यर्थः ॥ ६१ ॥

**स्वतोऽनानात्मकेऽज्ञानाद्यन्नानात्मसमीक्षणम् ॥**
**मिथ्याज्ञानमनात्माभं मोह इत्युपदिश्यते ॥ ६२ ॥**

उक्तमोहरूपं प्रपञ्चयति । **स्वत इति** । अद्वये सद्वयज्ञानमतस्तस्मिंस्तद्धीत्वान्मिथ्याज्ञानं तदत्र स्वाज्ञानकार्यं मोहशब्दितमित्यर्थः ॥ ६२ ॥

**सर्वग्रःप्राणधर्मत्वादशनायापिपासयोः ॥**
**समासेनाभिधानं स्याद्यदि वा शोककार्यतः ॥ ६३ ॥**

अशनायापिपासयोः समासे हेतुमाह । **सर्वेति** । सर्वं ग्रसति वागादिकं संहरतीति प्राणः सर्वग्रस्तदेकधर्मत्वोच्छोकमूलत्वाद्वा तयोः समासस्तत्रोपादानं प्राणः कामो निमित्तमिति भावः ॥ ६३ ॥

**असमासेन निर्देशो भिन्नकार्यत्वकारणात् ॥**
**प्रवृत्तिररतेः कार्यं मोहस्यानर्थसंप्लुतिः ॥ ६४ ॥**

तयोरिव शोकमोहयोरपि समासे प्राप्ते किमिति व्यासोक्तिस्तत्राऽऽह । **असमासेनेति** । कथं भिन्नकार्यत्वं तदाह । **प्रवृत्तिरिति** ॥ ६४ ॥

**जरेति परिणामः स्याद्वलीपलितलक्षणः ॥**
**देहस्य मृत्युर्विच्छेदो वियोगो देहलिङ्गयोः ॥ ६५ ॥**

जरामृत्युशब्दयोरर्थभेदमाह । **जरेति** । विच्छेदं स्फुटयति । **वियोग इति** ॥ ६५ ॥

**प्राणाधिकरणे पूर्वे शोकमोहौ मनोगतौ ॥**
**जरामृत्यू तु देहस्य धर्मावि[3]ति विनिश्चयः ॥ ६६ ॥**

---

१ ख. °हृतिर्धियः । २ क. °त्वाद्वाक्यमेक° । ख. °त्वाद्वाक्यमैक्यम्° । ३ क. °ति हि नि° ।

उक्तस्य षट्कस्याऽऽश्रयविशेषं दर्शयति । **प्राणेति** । उक्तविनिश्चयस्यानुभवानुसारित्वद्योती[1] तुशब्दः ॥ ६६ ॥

**अशनायादिसंबन्धो नाऽऽत्मनो वास्तवो मतः ॥**
**अनिर्मोक्षप्रसक्तिः स्यात्तस्य चासङ्गरूपतः ॥ ६७ ॥**

ननु तेषामात्मधर्मत्वान्न धीप्राणादिधर्मत्वं न हि ते चेतनादन्यत्र भान्त्यत आह । **अशनायादीति** । विपक्षे दोषमाह । **अनिर्मोक्ष इति** । इतश्चाऽऽत्मन्यशनायादिसंबन्धो न वस्तुतोऽस्तीत्याह । **तस्य चेति** ॥ ६७ ॥

**यत एवमतः प्रत्यग्याथात्म्यानवबोधतः ॥**
**अशनायादिसंबन्धः सम्यग्बोधादतो ह्नुतिः ॥ ६८ ॥**

त्वत्पक्षे वा कथं मुक्तिस्तत्राऽऽह । **यत इति** । आत्मनि वस्तुतोऽशनायाद्यभावात्तस्य मोहजत्वाज्ज्ञानात्तद्ध्वस्तौ मुक्तिः सुकरेत्यर्थः ॥ ६८ ॥

**यः स्वकारणसंसर्गः कार्याणामत्ययो भवेत् ॥**
**अनात्यन्तिकरूपत्वादत्ययोऽसौ न गृह्यते ॥ ६९ ॥**

यः कार्यात्ययो नाशः स स्वकारणसंसर्गस्तदशनायादेरपि स्वकारणसंसर्ग एवात्यय इत्याशङ्क्याऽऽह । **य इति** ॥ ६९ ॥

**तत्कारणनिषेधो यः स्वमहिम्नैव वस्तुनः ॥**
**तमत्ययं मोक्षविधौ तद्विद्वांसः प्रचक्षते ॥ ७० ॥**

लोकप्रसिद्धश्चेदत्ययोऽत्र न गृह्यते तर्हि कीदृशो विवक्षितस्तत्राऽऽह । **तत्कारणेति** । तच्छब्देनाशनायाद्युच्यते । मोक्षविधौ तत्प्रतिपादने विवक्षिते सतीत्यर्थः । तद्विद्वांसो मोक्षविदः ॥ ७० ॥

**अशनायापिपासाभ्यां तस्मात्तत्कारणग्रहः ॥**
**संवर्गात्मातिवर्तित्वात्तत्कार्यातिगतिस्ततः ॥ ७१ ॥**

कारणात्ययादृते कार्यस्याऽऽत्यन्तिकात्ययायोगादशनायादिशब्देन तत्कारणं लक्षितमित्याह । **अशनायेति** । कार्यवाचिशब्देन कारणग्रहे फलितमाह । **संवर्गेति** । अशनायाद्यत्ययोक्त्या तत्कारणप्राणातिक्रमस्य सिद्धत्वात्तत्कार्याशनायादेरपि ध्वस्तेर्युक्तं कारणग्रहणमित्यर्थः ॥ ७१ ॥

**मृत्युनेत्युपक्रम्य तथाच श्रुतिरब्रवीत् ॥**
**लक्षणं ह्यशनायेति प्राणमृत्युमबुद्धये ॥ ७२ ॥**

अशनायादिना तद्धेतुग्रहे वाक्योपक्रमोऽप्यनुगुणो भवतीत्याह । **मृत्युनेति** । कार-

---

१ क. °ती द्विश° । २ ख. °कदुष्टत्वा° । ग. °कदृष्टत्वा° ।

णमत्र लक्ष्यमित्यस्यानुसारेण मृत्युनैवेदमावृतमासीदित्युपक्रम्य कोऽसौ मृत्युरित्यपेक्षायां प्राणस्य मृत्योर्ग्रहार्थमशनाया हि मृत्युरिति तल्लक्षणं श्रुतिरुक्तवती तद्युक्तमत्र कारणोपादानमित्यर्थः ॥ ७२ ॥

**अविचारितसंसिद्धप्रत्यगज्ञानलक्षणम् ॥**
**अशनायापिपासादिधर्मिणं प्राहुरीश्वरम् ॥ ७३ ॥**

किमत्र लक्ष्यमवान्तरकारणं मूलकारणं वेति वीक्षायामाह । **अविचारितेति** । अनिर्वाच्याज्ञानोपाधिकमीश्वरमशनायादिधर्मवन्तमत्राशनायादिपदलक्ष्यमाचक्षते तन्मूलकारणमत्र ग्राह्यमित्यर्थः ॥ ७३ ॥

**तत्प्रत्यगात्मयाथात्म्यभास्वज्ज्ञानोदयात्तमः ॥**
**प्रध्वस्याऽऽत्माऽयमत्येति तदुत्थं वस्तुवृत्ततः ॥ ७४ ॥**

अथेशस्येप्सितत्वादत्ययाभावात्तत्कार्याशनायाद्यत्ययायोगादलमनेन कारणग्रहेणेत्यत आह । **तत्प्रत्यगिति** । निरुपाधिकं नित्यप्राप्तमज्ञानादनाप्तं प्राप्स्यति तच्चाज्ञानं ज्ञानादपनीयते तथाच तदुपाधिकेश्वरस्वभावात्ययात्तत्कार्याशनायाद्यत्ययोऽपि सिध्यतीत्यर्थः । ननु ज्ञानमज्ञानात्मकमज्ञानतत्कार्यं नापनेतुमर्हति तत्राऽऽह । **वस्त्विति** ॥ ७४ ॥

**आत्माऽसामान्यचैतन्यरूपोत्थेनाऽऽत्मगं तमः ॥**
**जग्ध्वा मानेन निःशेषं प्रत्यङ्पूर्णोऽवशिष्यते ॥ ७५ ॥**

आत्मा कार्यकारणे चेदत्येति शून्यनिष्ठं स्यादित्याशङ्क्याऽऽह । **आत्मेति** । प्रत्यङ्ङात्मेति संबन्धः । असामान्येति च्छेदः । अव्यावृत्ताननुगतवस्त्वात्मप्रवृत्तवाक्यीयज्ञानेनाऽऽत्मगतमज्ञानमशेषं सकार्यं स्वात्मन्येव विलाप्य प्रत्यगात्मा पूर्णो भवति तथाच कुतः शून्यतेत्यर्थः ॥ ७५ ॥

**यस्मादेष स्वतो बुद्धो निरविद्यः स्वतस्ततः ॥**
**शुद्धश्चातोऽद्वितीयत्वात्प्रत्यङ्मुक्तः स्वतस्ततः ॥ ७६ ॥**

पूर्णत्वं वर्णयितुं प्रतीचः स्वरूपं हेतुहेतुमद्भावेनाऽऽह । **यस्मादिति** ॥ ७६ ॥

**एवं ध्वस्तात्ममोहस्य कुतोऽविद्योत्थवस्तुभिः ॥**
**प्रतीचोऽस्त्यभिसंबन्धो ह्यशनायादिलक्षणैः ॥ ७७ ॥**

उक्ततत्त्वज्ञानात्तदज्ञानतज्जध्वंसे पूर्णत्वं तस्य सुस्थं भवतीति ज्ञानफलमाह । **एवमिति** । उक्तवस्तुप्रकारज्ञानेनेति यावत् । कारणध्वस्तौ कार्यध्वस्तिर्व्यक्तेति वक्तुं हिशब्दः ॥ ७७ ॥

**यथा विशुद्धमाकाशं सति वाऽसति वा मले ॥**
**नीहारादौ तथैवाऽऽत्मा कार्यकारणवस्तुनि ॥ ७८ ॥**

सकार्याज्ञानध्वस्तेरात्मा पूर्णश्चेत्पूर्वं परिच्छिन्नत्वादशुद्धः स्यादित्याशङ्क्याऽऽह । **यथेति** ॥ ७८ ॥

**प्रत्यग्याथात्म्यदृष्ट्याऽऽत्मा कारणं स्वतमोवधि ॥**
**बाधित्वाऽज्ञानसंसारौ यात्यपूर्वादिरूपताम् ॥ ७९ ॥**

आत्मा सदा शुद्धश्चेन्न तस्य कारणत्वं नो चेदपूर्वादिरूपत्वासिद्धिरित्याशङ्क्याऽऽह । **प्रत्यगिति** ॥ ७९ ॥

**शोकमोहावतः स्यातां सूत्रकार्योपलक्षणम् ॥**
**जरामृत्यू विराजश्च सर्वकार्योपसंहृतिः ॥ ८० ॥**

अशनायादिना तत्कारणं गृहीत्वा ज्ञानात्तन्नाशे पूर्णावशेषो दर्शितः संप्रति शोकादिनाऽपि तत्कारणं ग्राह्यमित्याह । **शोकेति** । अतःशब्देन शोकादेरशनायादिना तुल्यवाक्योपात्तत्वोक्तिः । मूलकारणापेक्षया सूत्रस्य कार्यत्वम् । जरादिनाऽपि तत्कारणं लक्ष्यमित्याह । **जरेति** । उपलक्षणफलमाह । **सर्वेति** । सर्वस्य कार्यस्य सहेतोरुपसंहृतिरस्मिन्पक्षे लभ्यते तद्युक्तमुपलक्षणमित्यर्थः ॥ ८० ॥

**अध्यात्माद्यधियज्ञादेराधिदैवतरूपता ॥**
**पुरोक्ताऽर्थवती चैवं सति सर्वा भवेद्ध्रुवम् ॥ ८१ ॥**

अशनायादिशब्दैर्मूलकारणसूत्रविराजां ग्रहे कारणात्ययात्कार्यस्याऽऽत्यन्तिकात्ययसिद्धेर्मुक्तिसिद्धिरित्युक्त्वा तत्रैव श्रौतं लिङ्गमाह । **अध्यात्मादीति** । नानारूपेण स्थितस्य वागादेरग्न्यादिकारणात्मत्वं सोऽग्निरभवदित्यादिना यदुक्तं तत्सर्वं कारणात्ययादात्यन्तिके कार्यात्यये सफलं स्याद्वागादिकार्यस्य हि कारणाग्न्यादिभाववचनं कारणात्ययात्कार्यात्ययं सूचयति विद्याप्रकरणस्थोद्गीथोपासनं च तत्फलेनैव फलवन्न च वागादेरात्यन्तिकनाशाभावे तद्युक्तं नापि सति कारणे तदात्यन्तिकनाशोऽतो वागादेः स्वकारणापत्तिद्वारा तद्ध्वस्त्याऽऽत्यन्तिकध्वस्तौ क्रममुक्तिरुद्गीथोपास्तिफलमिति वागाद्यग्न्यादिभाववचनं कारणात्ययादात्यन्तिककार्यात्ययद्योतीत्यर्थः ॥ ८१ ॥

**सर्वाण्युपासनान्येवं ब्रह्मविद्याभिसंगतेः ॥**
**विद्याधिकार उक्तत्वादर्थवन्तीति निश्चितिः ॥ ८२ ॥**

उद्गीथोपास्तिवदुपास्त्यन्तराण्यपि विद्याप्रकरणस्थानि तद्योगात्तत्फलेनैव फलवन्ति कारणात्ययात्कार्यात्ययं प्रकरणाद्गमयन्तीत्याह । **सर्वाणीति** ॥ ८२ ॥

**प्रतीचोऽसम्यग्याथात्म्यान्मोहादेश्चाप्यवस्तुनः ॥**
**प्रत्यङ्मात्रावशेषत्वात्कुतः षष्ठ्यर्थसंभवः ॥ ८३ ॥**

---

१ ख. ग. °मृत्यु वि° । २ क. ग. °हृतेः ॥८०॥ ३ ख. °त्याशङ्क्याऽऽह । ४ ग. °नादित्युक्तं न च ।

योऽशनायेत्यादिवाक्यस्य कार्यकारणातीतप्रत्यक्परत्वमुक्त्वा तस्य वस्तुतोऽशनायाव्यत्यये हेत्वन्तरमुक्तहेत्वनुवादपूर्वकमाह । **प्रतीच इति।** षष्ठ्यर्थः संबन्धः स नैकस्मिन्युक्तो द्विष्ठत्वादित्यर्थः ॥ ८३ ॥

**हेतुहेतुमदुक्त्यैतद्व्याख्येयं त्रयमात्मनि ॥**
**आनन्दवद्वा शङ्क्योक्तिर्योऽशनायेतिपूर्विका ॥ ८४ ॥**

मूलकारणादत्ययैरशनायादिसंगतिरात्मनो वस्तुतो नेत्येतदत्र प्रतिपाद्यमस्तु तथाऽपि तदत्ययानां परस्परं कः संबन्धो येनैकवाक्योपात्ततेत्याशङ्क्याऽऽह । **हेत्विति ।** कारणात्ययात्सूत्रात्ययस्ततो विराडत्यय इत्यर्थः । मा भूदशनायादीनामात्मधर्मत्वं तद्रूपत्वं तु स्यादानन्दादिवदित्याशङ्क्येदमेव वाक्यमवतारयति । **आनन्दवदिति** ॥ ८४ ॥

**स्वाभाविकत्वं मा प्रापच्छोकादेरात्मसौख्यवत् ॥**
**यस्मिन्सत्येव यत्सत्स्यात्तस्मिंस्त्वसति तन्न सत् ॥ ८५ ॥**

शङ्कोत्तरस्य श्रुतेस्तात्पर्यमाह । **स्वाभाविकत्वमिति ।** शोकादेरात्मरूपत्वाभावे युक्तिमाह । **यस्मिन्निति ।** अज्ञानान्वयव्यतिरेकित्वात्तदात्मकं शोकादि तन्नाऽऽत्मरूपं रज्जुसर्पवदित्यर्थः ॥ ८५ ॥

**अशनायादिकांस्तस्मात्कार्यकारणलक्षणान् ॥**
**तद्विरुद्धात्मविज्ञानाद्ध्वंसित्वाऽऽत्मैकलो भवेत् ॥ ८६ ॥**

अशनायादीनामात्मधर्मत्वतद्रूपत्वाभावे फलितं वाक्यार्थमुपसंहरति । **अशनायादिकानिति** ॥ ८६ ॥

**परमात्मस्वभावोऽयं स्वयं श्रुत्या प्रपञ्चितः ॥**
**एतमेव तमात्मानं विदित्वोक्तेन वर्त्मना ॥**
***व्युत्थाय ब्राह्मणा यत्नाद्भिक्षाचर्यं चरन्ति हि ॥ ८७ ॥**

व्याख्यातवाक्यार्थमनुवदति । **परमात्मेति ।** उक्तस्वभावस्याऽऽर्थत्वं व्युदस्य शाब्दत्वं वक्तुं स्वयमित्युक्तम् । तज्ज्ञानार्थं संन्यासं विधातुमुत्तरं वाक्यं तदादत्ते । **एतमिति ।** कार्यकारणात्ययद्वारा तमात्मानमेतं विदित्वा व्युत्थाय भिक्षाचर्यं चरन्तीति योजना ॥ ८७ ॥

**अधिकारिविशेषस्य ज्ञानाय ब्राह्मणग्रहः ॥**
**न संन्यासविधिर्यस्माच्छ्रुतौ क्षत्रियवैश्ययोः ॥ ८८ ॥**

संन्यासविधायके वाक्ये किमित्यधिकारिणि ब्राह्मणपदं तत्राऽऽह । **अधिकारीति ।** किमिति तस्यैव संन्यासेऽधिकारो ज्ञाप्यते तत्राऽऽह । **नेति** ॥ ८८ ॥

---

* इदमर्धं क. ग. पुस्तकयोर्न विद्यते ।

---

१ ख. °त्तस्मिन्नस° ।

**त्रयाणामविशेषेण संन्यासः श्रूयते श्रुतौ ॥**
**यदोपलक्षणार्थं स्याद्ब्राह्मणग्रहणं तदा ॥ ८९ ॥**

भाष्याभिप्रायमुक्त्वा स्वाभिप्रायेण ब्राह्मणग्रहणस्यार्थमाह । **त्रयाणामिति** । ब्रह्मचर्यादेव प्रव्रजेदित्यादिश्रुतौ वर्णत्रयस्य सामान्येन संन्यासः श्रूयते न च ब्राह्मणग्रहानुसारेण सामान्यश्रुतिर्विशेषे नियम्यते—

"ब्राह्मणः क्षत्रियो वाऽपि वैश्यो वा प्रव्रजेद्गृहात्" ।

इतिविशेषस्मृत्यनुगृहीतसामान्यश्रुतेः संकोचायोगाद्यदा ब्राह्मणवत्क्षत्रियवैश्ययोरपि संन्यासाधिकारस्तदा विशेषणमुपलक्षणार्थमाचाराद्दृष्टिस्तु प्रत्युक्तेति भावः ॥ ८९ ॥

**कर्माधिकारविच्छेदि ज्ञानं चेदभ्युपेयते ॥**
**कुतोऽधिकारनियमो व्युत्थाने क्रियते बलात् ॥ ९० ॥**

संन्यासे ब्राह्मणाधिकारनियमासंभवे युक्तिमाह । **कर्मेति** । कुतो बलादिति संबन्धः । फलात्मा संन्यासः साक्षात्काराधीनत्वान्न विधेयः साधनरूपस्तु प्रयोजकज्ञानाधीनो वा परोक्षज्ञानकृतो वा यद्यपि विधेयस्तथाऽपि ज्ञाने त्यागहेताविष्टे न तत्राधिकारनियमो हेत्वभावादित्यर्थः ॥ ९० ॥

**प्रत्यग्याथात्म्यविज्ञानस्वभावश्चेत्समर्थ्यते ॥**
**व्युत्थानं यस्य यस्य स्यात्स स व्युत्थातुमर्हति ॥ ९१ ॥**

कुतो हेत्वभावस्तत्राऽऽह । **प्रत्यगिति** । यथोक्तान्यतरज्ञानस्वभावः संन्यासं प्रयोजयतीति साध्यते चेत्तर्हि यस्य ब्राह्मणादीनामन्यतमस्य व्युत्थापकं ज्ञानं स्यात्स व्युत्थानेऽधिकारीतीष्टनियमासिद्धिरित्यर्थः ॥ ९१ ॥

**एवं चेद्ब्राह्मणोक्तिः स्याद्ध्वस्ताविद्यगृहीतये ॥**
**स ब्राह्मण इति स्पष्टं श्रुतिरन्ते च वक्ष्यति ॥ ९२ ॥**

त्रैवर्णिकस्य संन्यासाधिकारश्चेद्ब्राह्मणग्रहणं किमर्थमित्याशङ्क्योपलक्षणार्थत्वाद्गत्यन्तरमाह । **एवं चेदिति** । त्रैवर्णिकाधिकृतं चेद्व्युत्थानं तदा तत्पूर्वकसाक्षात्कारफलभूताविद्यारहितस्वरूपानुवादार्थं ब्राह्मणपदं युक्तं च विशेषावस्थायां क्षत्रियादेरपि ब्राह्मण्यं राजसूयादौ तत्रापि तच्छब्दादिति भावः । कथं ब्राह्मणपदेन फलावस्थोच्यते वाक्यशेषादित्याह । **स इति** ॥ ९२ ॥

**प्राणस्वान्ततनूधर्मा अशनायादिलक्षणाः ॥**
**य एते सर्वभूतेषु वर्तन्तेऽम्भःप्रवाहवत् ॥ ९३ ॥**

एतमित्यादिवाक्ये संन्यासविधिपरे ब्राह्मणग्रहणस्य तात्पर्यमुक्तमिदानीमात्मपदार्थं

---

१ क. °त्थानम° ।

संसारनिर्मुक्तमुक्त्वा तज्ज्ञानात्ततो विरक्तस्य व्युत्थानमिति वक्तुं संसाररूपमनुवदन्नशनायादिसाश्रयमनुवदति । **प्राणेति** । तस्य सर्वप्राणिषु स्रोतोभावेन नैरन्तर्यमाह । **य एत इति** । अशनायादयो ये पूर्वत्रोक्ता एते भूतेषु तोयस्रोतोवद्वर्तन्ते सदेति योजना ॥ ९३ ॥

**संसारोऽनर्थ इत्येष प्रत्यङ्मोहैकहेतुकः ॥**
**यतो बिभ्यति भूतानि परोत्कर्षगतान्यपि ॥ ९४ ॥**

बन्धरूपमनूद्यते चेत्किमशनायाद्यनुवादेनेत्याशङ्क्याऽऽह । **संसार इति** । न तस्य संसारत्वेनानर्थत्वं वस्तुत्वादिति चेन्नेत्याह । **प्रत्यगिति** । कथं संसारोऽनर्थो न हि सर्वस्पृहणीयस्य तस्य तथात्वमत आह । **यत इति** । अतिशयपदवीमापन्नान्यपि ब्रह्मादीनि भूतानि यन्निमित्ततया भयभाञ्जि भवन्ति स कथं नानर्थोऽविवेकिनो हि तस्मै स्पृहयन्त्यन्ये तु तं तित्यक्षन्तीत्यर्थः ॥ ९४ ॥

**कारणं प्रत्यगज्ञानं कार्यं संसार उच्यते ॥**
**तद्विरुद्धात्मकः प्रत्यङ्ब्रह्मापूर्वादिवाक्यतः ॥ ९५ ॥**

उक्तं संसारं विभजते । **कारणमिति** । कार्यं सूत्रादि तदुभयं संसार एवेति भावः । संसाररूपमनूद्याऽऽत्मशब्दार्थमाह । **तद्विरुद्धेति** । कार्यकारणात्मकबन्धविपरीतरूपः प्रत्यङ्ङित्यत्र प्रमाणमाह । **ब्रह्मेति** ॥ ९५ ॥

**एतं तमिति वाक्येन दृष्ट्यादेः साक्षिणं श्रुतिः ॥**
**अनूद्यापेतदुःखेन साक्षात्संगतिमब्रवीत् ॥ ९६ ॥**

आत्मपदार्थमुक्त्वा तमेतमितिपदयोरर्थोक्तिपूर्वकं सामानाधिकरण्यलब्धमर्थमाह । **एतमिति** । तमिति त्वमर्थमनूद्य तस्य तदर्थेनैतमिति परामृष्टेन साक्षादेकरसतया संगतिं सामानाधिकरण्यवाक्येन श्रुतिरवोचदिति योजना । यद्वैतमिति त्वमर्थस्य तमिति तदर्थस्योक्तिः ॥ ९६ ॥

**तं दृष्ट्यादिदृशं साक्षादात्मानं कल्पितात्मनाम् ॥**
**तमेतमिति विज्ञाय यथाव्याख्यातलक्षणम् ॥ ९७ ॥**

विदित्वेत्यस्यार्थमाह । **तमिति** । पूर्वार्धेन त्वमर्थानुवादः । एतं यथाव्याख्यातमशनायाद्यतीतमिति तदर्थानुवादः । तमेतमापाततो विज्ञाय व्युत्तिष्ठन्तीत्यर्थः । इतिशब्दो व्युत्थानपरामर्शी ॥ ९७ ॥

**उपस्तोक्तो विशेष्योऽत्र कहोलोक्तो विशेषणम् ॥**
**एवं संसारविध्वस्तिस्तद्धेतोर्ज्ञानहानितः ॥ ९८ ॥**

एतं तमित्यत्र विशेषणविशेष्यत्वव्यवस्थामाह । **उपस्तेति** । इत्थं विशेषणविशेष्यत्वे प्रतीचो ब्रह्मतत्त्वज्ञानात्तदज्ञानध्वस्त्या तज्जबन्धध्वस्तिफलमाह । **एवमिति** ॥ ९८ ॥

घटाकाशो महाकाश इत्युक्तेः केवलं वियत् ॥
यथाऽधिगम्यते तद्वत्साक्षादित्यादिलक्षणः ॥ ९९ ॥
भेदसंसर्गहीनोऽर्थस्तद्धेतुध्वंसवर्त्मना ॥
एतस्मादेव विज्ञेयो वाक्यान्नान्यप्रमाणतः ॥ १०० ॥

विशेषणविशेष्यत्वे तत्त्वमर्थयोर्नीलोत्पलवद्वाक्यार्थो नाखण्डः स्यादित्याशङ्क्याऽऽह । घटेति । तस्य सिद्धत्वेन मानान्तरयोग्यतया वाक्यतात्पर्यागम्यतेति चेन्नेत्याह । तद्धे-त्विति । भेदादिहेत्वज्ञानध्वंसद्वारा वाक्यादेवाखण्डार्थो ज्ञातुं शक्यस्तत्र मानान्तरासं-भवस्यासकृदुक्तेरित्यर्थः ॥ ९९ ॥ १०० ॥

साक्षादित्यादिकं सर्वमुपस्तप्रश्नगोचरः ॥
योऽशनायेति चात्रोक्तौ संभाव्यं तदशेषतः ॥ १०१ ॥

इतश्च कहोलोक्तस्य विशेषणतेतरस्य विशेष्यतेत्याह । साक्षादित्यादिकमिति । तस्मादस्मदुक्तं विशेषणविशेष्यत्वमेष्टव्यमिति शेषः ॥ १०१ ॥

सामान्यमात्रमत्युक्तेर्न यथापृष्टवस्तुधीः ॥
पूर्वत्राभूद्यथा साक्षादिति प्रत्युक्तितो मतिः ॥ १०२ ॥

नन्वनपेक्षितं कहोलवाक्यमुपस्तवाक्यमेवाऽऽत्मयाथात्म्यं यः प्राणेनेत्यादिना वेदय-त्यतो नेदं विशेषणविशेष्यत्वमत आह । सामान्येति । तथाच तदपेक्षमुपस्तवाक्यमिति युक्ता यथोक्तव्यवस्थेति शेषः ॥ १०२ ॥

पौर्वापर्यं यथायोगं क्त्वान्तयोः पदयोर्द्वयोः ॥
पूर्वं यदि विदित्वेति तदा द्वेधा प्रकल्पनम् ॥ १०३ ॥

एतमित्यादि व्याख्याय विदित्वा व्युत्थायेति यथाश्रुतं वा पौर्वापर्यमन्यथा वेति संदिहानं प्रत्याह । पौर्वापर्यमिति । तत्र पाठक्रमोऽनुस्त्रियते चेत्तदा वेदनं द्विविधं संभवतीत्याह । पूर्वमिति ॥ १०३ ॥

ज्ञानस्वभावाद्व्युत्थानं ज्ञेयवस्तुपरोधनः ॥
व्युत्थाने चोदनापेक्षा नाधिकारोपमर्दतः ॥ १०४ ॥

कथं तर्हि तत्त्वसाक्षात्करणं वा प्रयोजकज्ञानं वा तत्राऽऽद्यं प्रत्याह । ज्ञानेति । साक्षात्कारवशाद्व्युत्थानं वस्तुस्वरूपमनुसृत्य तदात्मनैव स्थितिस्तन्न तत्र विधिः स्वरूपे फलात्मनि विध्यभावात्साक्षात्कारेण विधिपुरुषसंबन्धस्य निरासादधिकार्यभावा-च्चेत्यर्थः ॥ १०४ ॥

शाब्दी वा प्रतिपत्तिः स्याद्व्युत्थानादेः प्रयोजिका ॥
विध्यर्थो ह्यपि बाल्यादिस्तथाऽध्वर्मापि दृश्यते ॥ १०५ ॥

---

१ ख. °न्तरायो° । २ ख. °तगत° । ३ ख. ग. °दितः प्र° ।

द्वितीयं प्रत्याह । **शाब्दीति ।** अधीतसाङ्गस्वाध्यायस्य शब्दोत्था संन्यासपूर्वकश्रवणादिप्रयोजिका धीर्यदि विदित्वेत्युच्यते तदा साक्षात्कारार्थं संन्यासादिविधिर्युक्त इत्यर्थः । नास्मिन्वाक्ये विधिरस्ति लिङाद्यश्रवणात्तत्कथमिह संन्यासादिविधिरित्याशङ्क्याऽऽह । **विधीति ।** यद्यपीह विधिर्न दृश्यते तथाऽपि बाल्यादिर्विधेयः सहकार्यन्तरविधिरिति न्यायात्तिष्ठासेदिति चोत्तरत्र विधिः स्पष्ट इत्यर्थः । उक्तन्यायद्योती हिशब्दः ॥ १०५ ॥

**व्युत्थायाथ विदित्वेति पौर्वापर्यं यदेष्यते ॥**
**व्युत्थानसाधना विद्येत्ययमर्थो भवेत्तदा ॥ १०६ ॥**

पाठक्रमपक्षे वेदनं विभज्य व्यवस्थामुक्त्वा श्रौतात्क्रमादर्थक्रमो बलवानिति पौर्वापर्यान्तरमाह । **व्युत्थायेति ।** श्रौतक्रमव्यवच्छेदकोऽथशब्दः । तत्र ज्ञानस्य श्रवणादिद्वारा संन्यासः साधनमित्युक्तं भवतीत्याह । **व्युत्थानेति** ॥ १०६ ॥

**विदित्वा कथमित्यस्य प्रत्युक्त्यर्था परा श्रुतिः ॥**
**तस्मादित्यादिका योज्या न्यासहेतुत्वसिद्धये ॥ १०७ ॥**

पाठक्रमे संन्यासस्य धीसाधनत्वासिद्धेर्नासावनुसरणीय इत्याशङ्क्याऽऽह । **विदित्वेति ।** विदित्वा व्युत्थानमिति मते कथं संन्यासस्य वेदनसाधनत्वं न हि पश्चाद्भावी पूर्वसिद्धस्य हेतुरिति चोद्यं परिहर्तुं तस्माद्ब्राह्मणः पाण्डित्यमित्याद्या श्रुतिस्तत्र हि प्रयोजकज्ञानवतः संन्यासिनः पाण्डित्यादि विधीयतेऽतः संन्यासस्य धीहेतुत्वार्थं विपरीतक्रमवद्यथाक्रमेऽपि नावद्यमित्यर्थः ॥ १०७ ॥

**तस्मादेवंविदित्येवं तथाचोर्ध्वं प्रवक्ष्यति ॥**
**निःशेषकर्मसंन्यासं विद्यायाः साधनं श्रुतिः ॥ १०८ ॥**

पौर्वापर्यद्वयेऽपि संन्यासस्य श्रवणद्वारा ज्ञानोपायत्वमुक्तं तत्र वाक्यशेषं प्रमाणयति । **तस्मादिति ।** एवं श्रुतिरिति संबन्धः । तत्रोपरतशब्देन विद्यासाधनतया संन्यासो विधास्यते ॥ १०८ ॥

**संन्याससाधनं ज्ञानं निर्वक्त्यत्रापि च श्रुतिः ॥**
**यथा तथा परोक्षात्र श्रुतयः सन्ति कोटिशः ॥ १०९ ॥**

न केवलं बृहदारण्यकश्रुतावेवाऽऽत्मधीसाधनतया संन्यासविधिः किंतु श्रुत्यन्तरेऽपीत्याह । **संन्यासेति ।** अपिकारचकारौ पूर्वोत्तरवाक्यपरामर्शार्थौ तावग्रे लेशतो दर्शयिष्यति ॥ १०९ ॥

**ज्ञानानुरोधिनी यद्वत्प्रवृत्तिः प्राणिनामिह ॥**
**तथेहापि श्रुतिर्वक्ति प्रत्यग्याथात्म्यवेदिनाम् ॥ ११० ॥**

---

१ ख. ग. °रा श्रुत ।

ननु प्रामाणिकोऽपि संन्यासः कस्मात्प्रयोजकज्ञानवताऽऽद्रियते कर्मानुष्ठानादभिलषितलाभात्तत्राऽऽह । **ज्ञानेति** । यथेह कर्मणि कामिनां श्रौतज्ञानात्प्रवृत्तिस्तथा तत्त्यागेऽपि प्रयोजकज्ञानवतां प्रवृत्तिं वक्ति श्रुतिस्तथाच कर्मणीव संन्यासे प्रवृत्तिरवश्यंभाविनी विवेकिनामित्यर्थः ॥ ११० ॥

**पुत्रोत्पत्तिं समुद्दिश्य दारान्परिजिघृक्षति ॥**
**यतो दारार्थ उद्योगस्ततः पुत्रैषणोच्यते ॥ १११ ॥**

विदित्वा व्युत्थायेति यथायोगं क्रममुक्त्वा व्युत्थानप्रतियोगिप्रदर्शनार्थं पुत्रैषणायाश्चेत्यादौ पुत्रैषणाशब्दार्थमाह । **पुत्रेति** ॥ १११ ॥

**पुरुषार्थाय यन्नालं लब्धात्माऽपि कुठारवत् ॥**
**अप्रविश्य प्रयोगं तद्वित्तमित्युपदिश्यते ॥ ११२ ॥**

वित्तैषणायाश्चेत्यत्र वित्तशब्दार्थमाह । **पुरुषार्थायेति** । न हि कुठारः स्वरूपेण सन्नपि विना व्यापारावेशं दारु विदारयति तद्वद्विद्यमानमपि नानुष्ठानादृते फलमङ्कुरयति तद्गवादि वित्तं प्रसिद्धमित्यर्थः ॥ ११२ ॥

**यत्त्वात्मलाभमात्रेण पुरुषार्थसमाप्तिकृत् ॥**
**व्युत्थानं तद्बलादेव न तु यत्स्याद्गवादिवत् ॥ ११३ ॥**

वित्तशब्देनोपास्तिमपि गृहीत्वा ततो व्युत्थानं भाष्योक्तमयुक्तं तद्बलाद्धि व्युत्थानं ततो व्युत्थाने हेत्वभावात्तदस्थाने स्यादिति भर्तृप्रपञ्चमतमाशङ्क्याऽऽह । **यत्त्विति** । आत्मधीबलादेव व्युत्थानं नोपास्तिवशात्तस्या गवादिवदात्मलाभमात्रेण पुरुषार्थाहेतुत्वात्ततो गवादेरिव ततोऽपि व्युत्थातव्यमित्यर्थः ॥ ११३ ॥

**प्रत्यगज्ञानसंभूतकामोत्थं साधनात्मकम् ॥**
**दैवतादिपरिज्ञानं मन्त्रवद्वित्तमुच्यते ॥ ११४ ॥**

वित्तादत्र व्युत्थानं श्रूयते न चोपास्तौ वित्तपदप्रसिद्धिस्तत्कथं ततो व्युत्थानमत आह । **प्रत्यगिति** । मन्त्रादिकारकवदुपास्तेर्मानुषवित्तत्वाभावेऽपि दैववित्तत्वात्ततोऽपि व्युत्थानमेष्टव्यमित्यर्थः ॥ ११४ ॥

**नाऽऽत्मानं लभते कर्म यतो वित्तमृते ततः ॥**
**वित्तैषणेयं कर्मार्थी न लोकार्थेति निश्चितिः ॥ ११५ ॥**

वित्तशब्दस्यार्थान्तरं वक्तुं भूमिकां करोति । **नाऽऽत्मानमिति** । न लोकार्था साक्षादिति शेषः ॥ ११५ ॥

**नित्यकर्मप्रसिद्ध्यर्थमतो वित्तमिहेष्यते ॥**
**न चेज्जामि भवेद्वाक्यं पृथग्लोकैषणाग्रहात् ॥ ११६ ॥**

---

१ क. °रःम° ।

एवमपि कथं वित्तशब्दस्यार्थान्तरं तदाह । **नित्येति** । यतो वित्तं विना न कर्म लौकिकसामर्थ्यविरहादतो नित्यकर्मप्रतिपत्त्यर्थमस्मिन्वाक्ये वित्तपदं यदि तेन लोकसाधनमेव गवादि गृह्येत न नित्यं कर्म तदा वित्तैषणायाः सकाशात्पृथगेव लोकैषणाग्रहाल्लोकशब्देनैव तत्साधनवित्तस्य गृहीतत्वाद्वित्तैषणायाश्चेत्यत्रापि तन्मात्रग्रहे पुनरुक्तिः स्यादतो वित्तैषणाशब्देन नित्यकर्मार्थमुद्यमो विवक्षित इत्यर्थः ॥ ११६ ॥

**लोकानुद्दिश्य यः कामस्तत्साधनसमाश्रयः ॥**
**लोकैषणेति तामाहुः काम्यकर्मार्थमुद्यमम् ॥ ११७ ॥**

लोकैषणायाश्चेत्यत्र लोकैषणाशब्दार्थमाह । **लोकानिति** । फलेच्छया तद्धेतुविषयो यः कामः स लोकैषणेत्युच्यते तां च काम्यकर्मार्थमारम्भमाहुरिति योजना ॥ ११७ ॥

**यतोऽसाधनसाध्यं तं प्रत्यगात्मानमात्मना ॥**
**साक्षादित्यादिनाऽज्ञासीद्विरुद्धं साध्यसाधनैः ॥ ११८ ॥**

व्युत्थानप्रतियोग्येषणात्रयमुक्त्वा तत्प्रयोजकमनुवदति । **यत इति** । तृतीयाद्वयमित्थंभावे । असाध्यसाधनत्वं साधयति । **विरुद्धमिति** । सिद्धत्वात्परमपुरुषार्थत्वाच्चेत्यर्थः ॥ ११८ ॥

**साध्यसाधनरूपाभ्यस्तस्मादुक्तार्थवेदिनः ॥**
**व्युत्तिष्ठन्त्येषणाभ्यस्ते तद्विरुद्धात्मकत्वतः ॥ ११९ ॥**

यतःशब्दापेक्षितं पूरयन्प्रयोज्यं व्युत्थानं सप्रतियोगिकं निगमयति । **साध्येति** । क्रियाकारकादिविलक्षणात्मदर्शिनां कथमेषणाभ्यो व्युत्थानं तस्याप्याविद्यत्वेनैषणात्वादित्याशङ्क्य ज्ञातस्वरूपवशादित्याह । **तद्विरुद्धेति** । आपातदर्शिनामेषणासहिष्णुदृष्टस्वरूपसाक्षाच्चिकीर्षया व्युत्थानमित्यर्थः ॥ ११९ ॥

**अज्ञानकामजन्यत्वं वाङ्मनःकायकर्मणाम् ॥**
**सोऽकामयत इत्येवं पुराऽप्युक्तं तमस्विनः ॥ १२० ॥**

इतश्च विरक्तस्य जिज्ञासोर्युक्तमेषणाभ्यो व्युत्थानमित्याह । **अज्ञानेति** । त्रिविधमपि कर्माज्ञानपूर्वकात्कामाज्जायते तद्विरक्तस्य विविदिषोर्युक्तमेषणाभ्यो व्युत्थानमित्यर्थः । विरक्तो व्युत्तिष्ठति चेत्कस्तर्हि कर्मण्यधिकारीति तत्राऽऽह । **सोऽकामयतेति** । अज्ञस्याविरक्तस्य देवानां पशोः कर्माधिकारस्तृतीये व्याख्यात इत्यर्थः । अपिरविरक्तसमुच्चयार्थः ॥ १२० ॥

**यदज्ञानात्प्रवृत्तिर्या तज्ज्ञानात्सा कुतो भवेत् ॥**
**प्रत्यग्ज्ञानोदयेऽतः स्यान्निवृत्तिः सर्वकर्मणाम् ॥ १२१ ॥**

---

१ क. ॰स्य क॰ ।

ज्ञानिनोऽपि कर्मदर्शनात्कथमज्ञस्य कर्माधिकारो दृश्यन्ते हि ज्ञानिनोऽपि कर्मिणो जनकादयस्तत्राऽऽह । यदज्ञानादिति । ज्ञानाज्ञानयोर्मिथो विरोधाज्ज्ञाने सत्यज्ञानायोगात्तन्निमित्तप्रवृत्तिरप्ययुक्ता तर्ह्यस्तु बाधितानुवृत्त्येत्यसकृदुक्तमित्यर्थः । ज्ञानिनोऽकर्माधिकारे फलितमाह । प्रत्यगिति ॥ १२१ ॥

जिज्ञासुरपि चैतस्य यथोक्तस्याऽऽत्मवस्तुनः ॥
सर्वैषणानिवृत्त्यैव तज्ज्ञानं समवाप्नुयात् ॥ १२२ ॥

अस्तु ज्ञानिनो व्युत्थानं ज्ञानस्येत्याशङ्क्य विरक्तस्याविरक्तस्य वेति विकल्प्याऽऽद्यं दूषयति। जिज्ञासुरिति। अज्ञस्यापि विरक्तस्य ज्ञानार्थं व्युत्थानं कार्यमित्यर्थः॥१२२॥

यस्तु त्यक्तुं न शक्नोति रागादिप्रबलत्वतः ॥
रागादिहेतुनाशार्थं कार्यं कर्मैव तेन तु ॥ १२३ ॥

कल्पान्तरं प्रत्याह । यस्त्विति ॥ १२३ ॥

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ॥
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ १२४ ॥

अविरक्तस्य कर्माधिकारे मानमाह । आरुरुक्षोरिति । योगश्चित्तशुद्धिः । उक्तं हि योगश्चित्तवृत्तिनिरोध इति । विरक्तस्य संन्यासाधिकारे मानमाह । योगेति॥१२४॥

न्याय्यां वृत्तिं समुल्लङ्घ्य तद्विरुद्धतया स्थितिः ॥
व्युत्थानमिति तामाहुर्व्युत्थानज्ञा महाधियः ॥ १२५ ॥

किं तद्व्युत्थानं यद्विरक्तस्य कर्तव्यं तदाह । न्याय्यामिति । एषणानुगुणतया स्थितिमतिक्रम्य तत्प्रतिकूलत्वेन या स्थितिस्तां व्युत्थानमिति विवेकिनो वदन्तीत्यर्थः ॥ १२५ ॥

सामन्तो व्युत्थितो राज्ञा विरोधेन व्यवस्थितौ ॥
व्युत्थानशब्दो लोकेऽपि प्रसिद्धोऽत्र तथैव सः ॥ १२६ ॥

तत्र लोकप्रसिद्धं प्रमाणयति । सामन्त इति । राज्ञा सह विरोधेन तत्प्रतिकूलतया सामन्तस्य स्थितौ सत्यामसौ व्युत्थित इत्ययं व्युत्थानशब्दो लोके प्रयुज्यतेऽत्रापि वाक्ये स व्युत्थानशब्दो लोकवदेव नेयो लोकवेदयोः शब्दार्थाविशेषादविशिष्टस्तु वाक्यार्थ इति न्यायादेषोऽत्र व्युत्थानमेषणाप्रातिकूल्येन निर्व्यापारतयाऽवस्थानमित्यर्थः ॥ १२६ ॥

भिक्षया लक्ष्यते चर्या ह्याकिंचन्यैकसंश्रया ॥
अममापरिग्रहोक्तेर्निष्कर्मा मुनिरुच्यते ॥ १२७ ॥

---

१ क. ग. राज्ञा ।

अथ भिक्षाचर्यमित्यत्र भिक्षाशब्दस्य विवक्षितमर्थमाह । **भिक्षयेति** । तदीयचर्यया लोकशास्त्रप्रसिद्ध्यर्थो हिशब्दः । अकिंचनमात्रसंबन्धा वृत्तिर्भिक्षाशब्देन लक्ष्यते मामाकिंचन्यं तु न जानीमस्तत्राऽऽह । **अममेति** ॥ १२७ ॥

**एषणा कामपर्यायः कामश्चाप्राप्तगोचरः ॥**
**अवाप्ताशेषकामेऽसौ भवंस्तन्मोहतो भवेत् ॥ १२८ ॥**

मुनिशब्दितस्याकिंचनस्य श्रुतिवशान्नैष्कर्म्यमुक्त्वा तत्रैवोपपत्तिं वक्तुं पातनिकामाह । **एषणेति** । आत्मन्याप्तकामे भवन्कामस्तन्मोहजो न वस्तुतोऽस्ति कामाभावे चानुष्ठानाभावान्नैष्कर्म्यमित्यर्थः ॥ १२८ ॥

**आनन्दैकस्वभावत्वान्नाऽऽत्मनः सुखकामिता ॥**
**विरोधात्सुखरूपस्य न दुःखेन समागमः ॥ १२९ ॥**

आत्मनोऽनात्मकामाभावेऽपि परमानन्दे सोऽस्तीति तत्प्रयुक्तमनुष्ठानमपि स्यादित्याशङ्क्याऽऽह । **आनन्देति** । तर्हि दुःखनिवृत्तीच्छाकृतमनुष्ठानं तत्राऽऽह । **विरोधादिति** ॥ १२९ ॥

**बुभुक्षादिनिषेधोऽयं तथाऽप्यात्मन उच्यते ॥**
**सर्वानर्थैकमूलस्य प्रत्यङ्मोहस्य हानये ॥ १३० ॥**

आत्मनि दुःखाभावश्चेद्योऽशनायेत्यादिना तत्राशनायादिप्रतिषेधोऽप्राप्तनिषेधः स्यादित्याशङ्क्याऽऽह । **बुभुक्षादीति** । यद्यपि वस्तुतो नाऽऽत्मनो दुःखतद्धेतुस्तथाऽपि तस्याशनायादिसंबन्धो मोहकृतोऽतस्तद्धेतुमोहनिरासार्थं योऽशनायेत्यादिना षडूर्मिनिषेधो नाप्राप्तनिषेध इत्यर्थः ॥ १३० ॥

**निरेषणैकयाथात्म्ये न यथावस्तुकामधीः ॥**
**निरेषणात्मसंबोधाद्बाध्यैवेयमतो भवेत् ॥ १३१ ॥**

कारणनिषेधात्प्रतीचि षडूर्मिनिषेधमुक्त्वा स्वरूपेण बाधयोग्यत्वाच्च तन्निषेध इत्याह । **निरेषणेति** ॥ १३१ ॥

**फलार्थैषणयैकत्वप्रसिद्ध्यर्थमतः श्रुतिः ॥**
**प्रवक्तुमुपचक्राम पुत्रवित्तैषणैकताम् ॥ १३२ ॥**

आत्मनो निरेषणत्वे मोक्षेऽप्यप्रवृत्तिरेषणाभावे तदयोगादित्याशङ्क्य या हीत्यादेस्तात्पर्यमाह । **फलेति** । एकत्वप्रतिपत्त्यर्थं साधनैषणाया इति शेषः । तत्र श्रुतिवशादेकैवैषणेत्यर्थः ॥ १३२ ॥

**यतो धनाभिलाषोऽयं कृतदारस्य सार्थकः ॥**
**पुत्रैषणाऽतोऽभिन्नैव ज्ञेया वित्तैषणात्मनः ॥ १३३ ॥**

या हीत्यादेः सोपपत्तिकमर्थमाह । **यत इति** । न हि धनमनुष्ठानं विना पुरुषार्थे न चानुष्ठानमृते दारसंग्रहादतस्तयोरुक्तसंबन्धादैक्यमित्यर्थः ॥ १३३ ॥

**साधनत्वाविशेषत्वात्पुत्रवित्तैषणात्मनोः ॥**
**एवं चैकत्वमनयोरिह व्याख्येयमादृतैः ॥ १३४ ॥**

तत्र हेत्वन्तरमाह । **साधनत्वेति** । एकत्वमिति संबन्धः । तन्निगमयति । **एवं चेति** । इहेति प्रकृतश्रुत्युक्तिः । मिथो हेतुहेतुमद्भावाद्दृष्टफलहेतुत्वसाम्याच्च पुत्रवित्तैषणयोरैक्यं दृष्टफलसाधनत्वतुल्यत्वादित्युक्तेरित्यर्थः ॥ १३४ ॥

**साध्यैषणाप्रयुक्तत्वात्पुत्रवित्तैषणात्मनः ॥**
**एका लोकैषणैवेयं त्रिधाऽतो व्यपदिश्यते ॥ १३५ ॥**

या वित्तैषणेत्यादेरर्थमाह । **साध्येति** । या पुत्रैषणेत्यादिना त्रिधोक्ता सेयमेकैव लोकैषणेतरस्यास्तत्प्रयुक्तत्वादिति योजना । **उक्तं** हि सर्वफलार्थप्रयुक्त एव हि सर्वसाधनमुपादत्त इति ॥ १३५ ॥

**स्वमहिम्नैव निष्पत्तिर्न विना साधनं यतः ॥**
**साध्यस्य साधनादानमतः साध्यानुरोधतः ॥ १३६ ॥**

उभे हीत्यादेरर्थमाह । **स्वमहिम्नेति** । न हि साध्यस्य साधनं विना स्वभावादुत्पत्तिः स्वभाववादनिरासादतः साध्यानुसारि साधनमेष्टव्यमिति मत्वोभे हीत्यादि प्रवृत्तमित्यर्थः ॥ १३६ ॥

**अपास्ताशेषानर्थाप्तपुरुषार्थत्वतः स्वतः ॥**
**तन्मोहमात्रजे तस्मादेषणे प्रत्यगात्मनि ॥ १३७ ॥**

अस्त्वेषणाद्वयं तथाऽपि तन्नाऽऽत्मनि युक्तं तस्य निरेषणत्वोक्तेरतो मोक्षासिद्धिरित्याशङ्क्याऽऽह । **अपास्तेति** । अज्ञानकृतैषणावशान्निरेषणस्याप्यात्मनो मुमुक्षेति भावः ॥ १३७ ॥

**ब्रह्माज्ञानं यतो हेतुरेषणानां न वस्तुतः ॥**
**परमार्थविदां न स्युरेषणा या यथोदिताः ॥ १३८ ॥**

किमित्यज्ञानकृतत्वमेषणानां वास्तवत्वमेव किं न स्यादत आह । **ब्रह्मेति** । अन्वयव्यतिरेकाभ्यामज्ञानमेषणाहेतुस्तन्न वास्तव्यस्ता इत्यर्थः । न वस्तुत इत्युक्तं व्यतिरेकं व्याकरोति । **परमार्थेति** ॥ १३८ ॥

**आप्ताशेषपुमर्थत्वान्नापेक्षा साधनं प्रति ॥**
**साध्यत्वेऽपि हि सिद्धस्य किंत्वसाध्यस्य वस्तुनः ॥ १३९ ॥**

---

१ क. ग. °त्वादुक्तावि° । २ ग. °त्रजा त° । ३ ग. °षणा प्र° ।

अज्ञानजत्वादेषणानां तत्त्यागेऽपि कर्मत्यागायोगात्कुतस्त्वदिष्टव्युत्थानमित्याशङ्क्य ज्ञानिनो जिज्ञासोर्वा कर्मत्यागानुपपत्तिरिति विकल्प्याऽऽद्यं दूषयति । **आप्तेति** । कृतकृत्यत्वाज्ज्ञानिनो नापेक्षेत्येतत्कैमुतिकन्यायेनाऽऽह । **साध्यत्वेऽपीति** । ग्रामादेः साध्यत्वे सत्यपि सिद्धस्य तस्य नोपायापेक्षा स्वतस्त्वसाध्यस्य मोक्षस्य न साधनं प्रत्यपेक्षेति किं वाच्यमतो ज्ञानिनो युक्तः कर्मत्यागः कृतकृत्यत्वादित्यर्थः ॥ १३९ ॥

**सर्वोपाया निवर्तन्त उपेयावसितौ यतः ॥**
**चरितार्थत्वतोऽमीषां नापेक्षा सिद्धवस्तुनः ॥ १४० ॥**

सिद्धवस्तुनो न साधनापेक्षेत्युक्तं समर्थयते । **सर्वेति** । साध्यस्यापीष्टस्याऽऽप्तौ कृत्याभावादुपाया यतो नापेक्ष्यन्तेऽतः स्वतःसिद्धस्यार्थस्य तदपेक्षा सुतरां नास्तीत्यर्थः ॥ १४० ॥

**अप्यज्ञातात्मयाथात्म्यो जिज्ञासुर्योऽत्र वस्तुनि ॥**
**सर्वकर्मपरित्यागो ज्ञानाप्त्यै तस्य साधनम् ॥ १४१ ॥**

कर्मत्यागेऽपि ज्ञानिनो जिज्ञासोर्न तत्त्यागस्तस्य हि कर्म ज्ञानहेतुर्विविदिषाश्रुतेरिति द्वितीयमाशङ्क्याऽऽह । **अपीति** । तस्यापीति संबन्धः ॥ १४१ ॥

**तस्मादेवंविदित्यत्र श्रुतिः स्पष्टं यथोदितम् ॥**
**निःशेषकर्मसंन्यासं स्वयमेव प्रवक्ष्यति ॥ १४२ ॥**

जिज्ञासोः संन्यासो ज्ञानसाधनमित्यत्र तस्मादेवंविदित्येवं तथाचोर्ध्वमित्यत्र प्रमाणीकृतं वाक्यशेषं स्मारयति । **तस्मादिति** ॥ १४२ ॥

**प्रत्यग्याथात्म्यविज्ञानसाधनत्वप्रसिद्धये ॥**
**श्रुत्यन्तरेषु तद्वच्च सन्ति वाक्यान्यनेकशः ॥ १४३ ॥**

संन्यासस्य ज्ञानसाधनत्वार्थं श्रुत्यन्तरं दर्शयन्संन्याससाधनं ज्ञानं निर्वक्त्यत्रापि च श्रुतिरित्यत्रोक्तमनुसंदधाति । **प्रत्यगिति** । संन्यासस्येति शेषः । पूर्वोक्तश्रुतिवदेवेत्यर्थः ॥ १४३ ॥

**मुक्तेश्च बिभ्यतो देवा मोहेनापिदधुर्नरान् ॥**
**प्रावर्तन्त ततो भीताः कर्मस्वज्ञाततत्त्वकाः ॥ १४४ ॥**

तान्युदाहरति । **मुक्तेश्चेति** ॥ १४४ ॥

**सर्वकर्माण्यतस्त्यक्त्वा प्रत्यक्प्रवणबुद्धयः ॥**
**मोहं भित्त्वाऽऽत्मसंबोधाद्ययुः कैवल्यमुत्तमम् ॥ १४५ ॥**

अस्त्वज्ञानात्कर्मसु प्रवृत्तिः किं तावतेति तदाह । **सर्वेति** ॥ १४५ ॥

---

१ ख. ग. 'हं हित्वाऽऽत्म' ।

**इति भाल्लविश्रुतिवचः सम्यग्ज्ञानस्य जन्मने ॥**
**संन्यासं साधनं वक्ति वाङ्मनःकायकर्मणाम् ॥ १४६ ॥**

उक्तश्रुतितात्पर्यमाह । **इति भाल्लवीति** ॥ १४६ ॥

**पराञ्चि खानीति तथा पराक्प्रवणसाधनम् ॥**
**निषेधत्यात्मविज्ञाने मन्त्रवर्णोऽपि काठके ॥ १४७ ॥**

संन्यासस्य ज्ञानसाधनत्वे काठकवाक्यमपि मानमित्याह । **पराञ्चीति** । एष हि मन्त्रो ज्ञाने विषयप्रवणमिन्द्रियं निषेधयन्विषयप्रावण्याविशेषात्कर्मापि निषेधत्यतस्तत्त्यागस्य तत्साधनत्वं विवक्षतीत्यर्थः ॥ १४७ ॥

**वेदान्तविज्ञानसुनिश्चितार्थाः**
**संन्यासयोगाद्यतयः शुद्धसत्त्वाः ॥**
**मन्त्रोऽपि चैकात्म्यविनिश्चयाय**
**निःशेषकर्मोज्झितिमाह साक्षात् ॥ १४८ ॥**

तत्रैव मन्त्रान्तरमाह । **वेदान्तेति** । अनेकजन्मसु नित्याद्यनुष्ठानात्परिशुद्धधियः संयतेन्द्रियाः संन्यासपूर्वकवेदान्तश्रवणादिजन्यसम्यग्धीसाक्षात्कृतात्मतत्त्वा मुच्यन्त इत्यर्थः । तस्य तात्पर्यमाह । **मन्त्रोऽपीति** ॥ १४८ ॥

**ब्रह्मचर्यं समापय्य गृही तस्माद्भवेद्द्विजः ॥**
**गृहाश्रमं समाप्याथ वानप्रस्थं समापयेत् ॥ १४९ ॥**

संन्यासं ज्ञानसाधनं सामान्येन श्रुतिभिर्दर्शयित्वा क्रमसंन्यासस्य तत्साधनश्रुतिमाह । **ब्रह्मचर्यमिति** । वैराग्यरूपप्रतिबन्धकाभावद्योतकोऽथशब्दः ॥ १४९ ॥

**यथोक्ताश्रमवासार्थं सामर्थ्यान्नियमो भवेत् ॥**
**एवं सति समर्थः स्यात्सर्वाश्रमसमुच्चयः ॥ १५० ॥**

श्रौतक्रमव्यवस्थापकमाह । **यथोक्तेति** । प्रव्रजेदित्युक्तमोक्षाश्रमे वाससिद्ध्यर्थं रागादिसामर्थ्यात्पूर्वाश्रमेषु गृही भवेदित्यादिना नियमोऽभ्युपगतोऽविरक्तस्य संन्यासानधिकारात्तथाच पूर्वाश्रमेषु स्थित्वा तत्र तत्र विहितानुष्ठानेन रागादिनिरासे सति त्रयाणामाश्रमाणां क्रमेण समुच्चयो वैराग्यमापाद्य चतुर्थाश्रमवासं साधयितुं समर्थः स्यादित्यर्थः ॥ १५० ॥

**वानप्रस्थाश्रमादूर्ध्वं प्रव्रजेदविचारयन् ॥**
**प्रत्यक्षश्रुतिमूलोऽयं सर्वाश्रमसमुच्चयः ॥ १५१ ॥**

आश्रमत्रयविहितकर्मानुष्ठानफलं वैराग्यं तत्फलं संन्यासावश्यंभावं दर्शयति । **वानप्रस्थेति** । उक्तरीत्या चतुर्णामाश्रमाणां ज्ञाने समुच्चयो यथोक्तस्पष्टश्रुतिदृष्टत्वाददुष्ट इत्युपसंहरति । **प्रत्यक्षेति** ॥ १५१ ॥

**कषायं पाचयित्वा च श्रेणीस्थानेषु च त्रिषु ॥**
**प्रव्रजेच्च परं स्थानं पारिव्राज्यमनुत्तमम् ॥ १९२ ॥**

क्रमसंन्यासे स्मृतिं दर्शयति । **कषायमिति** । चकारोऽवधारणे । मध्यमोऽप्यर्थो भिन्नक्रमः ॥ १९२ ॥

**इति व्यासस्मृतौ वाक्यं प्रत्यक्षश्रुतिबन्धनम् ॥**
**तथाऽन्यान्यपि विद्यन्ते वाक्यान्यत्र सहस्रशः ॥ १९३ ॥**

आप्तोक्तेन तत्प्रामाण्यं सूचयति । **इति व्यासेति** । औदुम्बरीसर्ववेष्टनादिस्मृतिवैलक्षण्यमाह । **प्रत्यक्षेति** । क्रमसमुच्चयवाक्यान्तराण्यपि श्रौतस्मार्तान्यनुसंधेयानि तानि संबन्धे लेशतो दर्शितानीत्याह । **तथेति** ॥ १९३ ॥

**ब्रह्मचर्याश्रमादेव यदि वा प्रव्रजेद्द्विजः ॥**
**गृहाच्च प्रव्रजेत्तद्वत्प्रव्रजेच्च वनात्तथा ॥ १९४ ॥**

क्रमसंन्यासं श्रुतिस्मृतिभ्यामुक्त्वा क्रमस्यावश्यंभावभङ्गार्थमक्रमश्रुतिमाह । **ब्रह्मचर्येति** । त्रैवर्णिकाधिकारद्योतनार्थं द्विजग्रहणम् ॥ १९४ ॥

**विकल्पेनैव व्याख्यात एकद्वित्रिसमुच्चयः ॥**
**कषायपक्तिमापेक्ष्य विकल्पोऽयं त्रिधोदितः ॥ १९५ ॥**

श्रुतेरर्थमाह । **विकल्पेनेति** । विकल्पप्रयोजकमाह । **कषायेति** ॥ १९५ ॥

**परीक्ष्य लोकानित्यादि तथाचाऽऽथर्वणे वचः ॥**
**विरक्तः कर्मभूमिभ्यो ज्ञानं प्रति नियुज्यते ॥ १९६ ॥**

क्रमेणाक्रमेण वा विरक्तस्यैव संन्यासो ज्ञानहेतुरित्यत्र श्रुत्यन्तरमाह । **परीक्ष्येति** । तस्य तात्पर्यमाह । **विरक्त इति** ॥ १९६ ॥

**सर्वकर्मपरित्यागात्संत्यक्ताशेषसाधनः ॥**
**श्रुत्युक्तोऽत्र परिव्राट्स्यादैकात्म्यज्ञानजन्मने ॥ १९७ ॥**

भवतूक्तप्रमाणकः संन्यासो ज्ञानहेतुस्तथाऽपि व्युत्थायेत्यत्र श्रौतः स्मार्तो वा कः संन्यासो ज्ञानहेतुरिष्टस्तत्राऽऽह । **सर्वेति** ॥ १९७ ॥

**मुण्डोऽपरिग्रहश्चेति प्रत्यक्षश्रुतिवाक्यतः ॥**
**तद्विरुद्धं स्मृतेर्वाक्यं नापेक्ष्यं दुर्बलत्वतः ॥ १९८ ॥**

नन्वाश्रमान्तराणि लक्षयित्वा त्रिदण्डेन यतिश्चैवेति मोक्षाश्रमं लक्षयता दक्षेण शिखायज्ञोपवीतादित्यागरूपं पारिव्राज्यं पराकृतमतः शिखादिशालिनस्त्रिदण्डिनः सर्वस्मृतिप्रसिद्धाः संन्यासिनस्तेषामेवात्रापि ग्रहणं तत्र स्मार्तसंन्यासस्य श्रुतिविरोधे सत्त्वमेव नास्तीत्याह । **मुण्ड इति** ॥ १९८ ॥

**विगीता च विरुद्धा च दृष्टार्था दृष्टकारणा ॥**
**इति वेदविदाऽप्युक्तं तदप्रामाण्यकारणम् ॥ १५९ ॥**

किंच मिथो विरोधात्स्मृतयो न प्रमाणं यथा क्षणिकविशुद्धविज्ञानस्मृतिः सर्वशून्यतास्मृतिश्च तथेहापि त्रिदण्डादिधारणस्य तत्त्यागस्य च स्मृतत्वात्परस्परविरोधादप्रामाण्यमित्याह । **विगीतेति** । किंच वेदविरुद्धाः स्मृतयो न प्रमाणं **यथौदुम्बरी** सर्वा वेष्टयितव्याऽष्टाचत्वारिंशद्वर्षाणि वेदव्रतं **क्रीतराजको**ऽभोज्यान्न इत्याद्या **स्मृतिरौदुम्बरीं** स्पृष्ट्वोद्गायेत्**कृष्णकेशो**ऽग्नीनादधीताग्नीषोमीये संस्थितेऽहनि यजमानस्य गृहेऽशितव्यमित्यादिश्रुतिविरोधादप्रमाणं तथेहापि **मुण्डो**ऽपरिग्रह इत्यादिश्रुतिविरोधा**त्रिदण्डेन** यतिश्चेदित्यादि**स्मृति**र्न मानामित्याह । **विरुद्धेति** । **यथा**ऽऽहुरशक्यत्वाद्व्यामोह इत्यवगम्यत **इति** । किंच दृष्टफलविप्रलम्भादिमूला **स्मृतिर्न** प्रमाणम् । **उक्तं हि**—

"रागद्वेषमदोन्मादप्रमादालस्यलुब्धताः ।
क्व वा नोत्प्रेक्षितुं शक्याः स्मृत्यप्रामाण्यहेतवः" ॥

इति त्रिदण्डादिविषया च स्मृतिर्जीवनमात्रफला लोभादिमूला । **यथा**ऽऽहुर्भिक्षाचर्यं चरन्तीत्युक्त्वा स्मार्तं लिङ्गं केवलमाश्रममात्रशरणानां जीवनसाधनं पारिव्राज्यव्यञ्जकमिति । तद्युक्तं त्रिदण्डादिस्मृतेरप्रामाण्यमित्याह । **दृष्टार्थेति** । किंच भ्रान्त्यादिदृष्टकारणवती स्मृतिर्नादृष्टवेदमूलतया प्रमाणं दृष्टे सत्यदृष्टकल्पनायोगात् । **उक्तं हि**—

"क्वचिद्भ्रान्तिः क्वचिल्लोभः क्वचिद्युक्तिविकल्पनम् ।
प्रतिभाकरणत्वेन निराकर्तुं न शक्यते" इति ॥

प्रकृते प्रत्यक्षश्रुतिविरोधे भ्रान्त्यादिमूलसंभवादप्रामाण्यमित्याह । **दृष्टकारणेति** । उक्तेऽर्थे विरोधाधिकरणं प्रमाणयति । **इति वेदविदेति** । न चैवं सर्वस्मृत्यप्रामाण्यं समूलत्वनिर्मूलत्वाभ्यां तन्नियमात् । **उक्तं च** तत्र यावद्धर्ममोक्षसंबन्धि तद्वेदप्रभवं यत्त्वर्थसुखविषयं तल्लोकव्यवहारपूर्वकमिति विवेक्तव्यमिति । न च त्रिदण्डादिस्मृतीनामपि वेदमूलतया प्रामाण्यं मोक्षसाधनज्ञानाङ्गत्वेन त्रिदण्डादिधारणसंन्यासविधायिवेदानुपलम्भात् । स हि ब्रह्मलोकादिप्राप्तिहेतुः । **उक्तं हि**—तद्व्यतिरेकेण चास्त्याश्रमरूपं पारिव्राज्यं ब्रह्मलोकादिप्राप्तिसाधन**मिति** । अतो न त्रिदण्डादिस्मृतीनां मोक्षाश्रमविषयतया प्रामाण्यं तदाभासविषयतया तु तदाभासतेति भावः ॥ १५९ ॥

**क्रियमाणानि कर्माणि यथा स्युः फलसिद्धये ॥**
**तदक्रियोक्ता श्रुत्येह तथाऽऽत्मज्ञानजन्मने ॥ १६० ॥**

स्मार्तः संन्यासो ज्ञानहेतुर्मा भूत्तथाऽपि कथं श्रौतस्तद्धेतुरुपपत्त्यभावादित्याशङ्क्य ज्ञानानुरोधिनी यद्वत्प्रवृत्तिरित्यत्रोक्तं स्मारयति । **क्रियमाणानीति** । इहेत्यध्यात्मप्रकरणोक्तिः ॥ १६० ॥

सत्यानृते सुखदुःखे वेदाँल्लोकद्वयं तथा ॥
संन्यस्याऽऽत्मानमन्विच्छेदित्यदुष्टं स्मृतेर्वचः ॥ १६१ ॥

सर्वकर्मसंन्यासोऽपि संन्यासत्वादितरसंन्यासवन्न धीहेतुरित्याशङ्क्य श्रुतिविरोधमुक्त्वा स्मृतिविरोधमाह । **सत्येति** । त्रिदण्डस्मृतिवदिदमपि न मानमित्याशङ्क्य प्रत्यक्षश्रुतिमूलत्वान्नैवमित्याह । **इत्यदुष्टमिति** ॥ १६१ ॥

त्यज धर्ममधर्मं च तथा सत्यानृते त्यज ॥
उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज ॥ १६२ ॥

आपस्तम्बोक्तेऽर्थे व्यासवाक्यमपि मानमित्याह । **त्यजेति** ॥ १६२ ॥

नैष्कर्म्यसाधनेष्वेवं श्रुतयः स्मृतिभिः सह ॥
मुमुक्षुं विनियुञ्जन्ति सदाऽऽत्मज्ञानजन्मने ॥ १६३ ॥

विदुषः संन्यासः श्रुतिस्मृत्यभिप्रेतो न विविदिषोरित्याशङ्क्य संन्यासप्रकरणमुपसंहरति । **नैष्कर्म्येति** । शमदमोपरमादिष्विति यावत् ॥ १६३ ॥

तथाऽनधिकृतानां च संन्यासस्य विधानतः ॥
काणकुब्जादिविषया न्यासक्लृप्तिरतोऽशुभा ॥ १६४ ॥

कर्मानधिकृतान्धादिविषयाः संन्यासश्रुतयः स्मृतय इति चेन्नेत्याह । **तथेति** । तस्माद्यथोक्तश्रुतिस्मृतयोऽधिकृतविषया एवेत्यतःशब्दार्थः ॥ १६४ ॥

सत्सु प्रत्यक्षविधिषु यथोक्तेष्वफलः श्रमः ॥
भिक्षाचर्यं चरन्तीतिविध्यर्थः क्रियते महान् ॥ १६५ ॥

एतमित्याद्यर्थवादं व्याकुर्वता श्रवणादिद्वारा ज्ञानाङ्गत्वेन संन्यासः समर्थितः । भाष्यकृतस्तु व्युत्थायेति संन्यासविधिर्भिक्षाचर्यं चरन्तीति तद्धर्मविधिरिति पूर्वोत्तरपक्षाभ्यामुक्तवन्तस्तत्राऽऽह । **सत्स्विति** । अफलः प्रौढवादारूढत्वातिरिक्तफलहीन इति यावत् । महत्त्वं पूर्वोत्तरपक्षसाहित्यम् ॥ १६५ ॥

तिष्ठासेदिति चात्रापि प्रत्यक्षः श्रूयते विधिः ॥
तस्मिन्सति वृथा कस्माज्जनोऽयं परिखिद्यते ॥ १६६ ॥

एतमित्यादिर्नार्थवादस्तच्छेषिविध्यश्रवणादित्याशङ्क्याऽऽह । **तिष्ठासेदिति चेति** । अत्रेति वाक्यशेषोक्तिः । शेषिविध्यभावाशङ्कानिषेधार्थोऽपिशब्दः । ज्ञानसाधनविषयविधौ प्रत्यक्षे सार्थवादे संन्यासादिविधिसमर्थनार्थं श्रमो वृथेति फलितमाह । **तस्मिन्निति** । जनशब्दो भाष्यकारविषयः ॥ १६६ ॥

---

१ ख. ग. संत्यज्याऽऽत्मा° । २ क ग. °नेऽप्येवं । ३ ख. °कुण्ड्यादि° । ग. °कुण्ठादि° ४ क. °सज्ञप्ति° ।

**साध्यसाधनरूपाभ्यां विरुद्धं प्रत्यगीक्षणम् ॥**
**यतो यथोक्तं तत्सिद्धौ तस्मादेतद्विधीयते ॥ १६७ ॥**

अथोत्तरवाक्ये श्रवणादिद्वारा प्रत्यग्धीर्विधीयते न संन्यासोऽतो व्युत्थायेति तद्विधिस्तत्राऽऽह । **साध्येति** । तत्सिद्धौ प्रत्यग्धीप्राप्तावुद्देश्यायामिति यावत् । एतत्साधनसाध्यत्यागरूपं पारिव्राज्यमित्यर्थः ॥ १६७ ॥

**व्युत्थायातो यथोक्ताभ्य एषणाभ्यो निरेषणः ॥**
**पाण्डित्यमथ निर्विद्य बाल्यं परिसमापयेत् ॥ १६८ ॥**

तस्मादित्यादिवाक्यमादत्ते । **व्युत्थायेति** । आत्मज्ञानस्य कर्मतत्फलाभ्यां विरुद्धत्वात्तत्त्यागो यतो विधेयोऽतः संन्यस्य ज्ञानार्थं श्रवणादि कुर्यादित्यर्थः । संन्यासस्य श्रवणादावङ्गत्वद्योतकोऽथशब्दः ॥ १६८ ॥

**पदार्थाधिगतिः पूर्वं ततस्तदभिसंगतिः ॥**
**विरुद्धार्थहुतिः पश्चात्ततो वाक्यार्थबोधनम् ॥ १६९ ॥**

पाण्डित्यपदार्थमाह । **पदार्थेति** । अधीतस्वाध्यायस्य तत्त्वमादिपदश्रवणे तच्छक्तिनिरूपणायां प्रथमं पदार्थज्ञानं ततः समानाधिकृतपदवाच्यार्थानां विशेषणविशेष्यत्वेन संबन्धस्ततो विरोधस्फूर्तौ विरुद्धांशस्य कर्तृत्वादेर्ध्वस्तिरित्थं पदसामर्थ्यादर्थत्रयज्ञानानन्तरं वाक्यस्य स्वार्थबोधनं तात्पर्यनिर्धारणमिति ब्रह्मात्मनि वेदान्तानां शक्तितात्पर्यनिश्चयरूपं चतुर्विधं ज्ञानं श्रवणाख्यं पाण्डित्यमित्यर्थः ॥ १६९ ॥

**एकैकश्येन नीत्वाऽथ निष्ठां पाण्डित्यलक्षणाम् ॥**
**बाल्यं चैव यथायोगमन्वयव्यतिरेकतः ॥ १७० ॥**

निर्विद्येत्यस्यार्थमाह । **एकैकश्येनेति** । चतुर्विधज्ञानरूपां निश्चयेन स्थितिं क्रमेण कृत्वा स्थितस्यानन्तरं बाल्यं कर्तुं सामर्थ्यमित्यर्थः । बाल्येनेत्यादेस्तात्पर्यमाह । **बाल्यं चेति** । कृतपाण्डित्यो ज्ञानपदार्थादिविषये चतुर्विधान्वयव्यतिरेकबलाज्ज्ञानबलभावं यथासंभवं नीत्वा स्थातुमिच्छेदित्यर्थः ॥ १७० ॥

**अद्वितीयार्थनिष्ठत्वमात्मप्रत्ययशब्दयोः ॥**
**तथाचाऽऽत्मैकनिष्ठत्वमद्वितीयस्य मानतः ॥ १७१ ॥**

अन्वयादिफलं दर्शयन्बाल्यं विवृणोति । **अद्वितीयेति** । तस्मादन्यस्य घटवदनात्मत्वादित्यर्थः । आत्मधीशब्दयोर्ब्रह्मनिष्ठत्ववद्ब्रह्मधीशब्दयोरप्यात्मनिष्ठतेत्याह । **तथेति** । अनात्मनो ब्रह्मत्वानुपपत्तेरित्याह । **मानत इति** ॥ १७१ ॥

**ऐकार्थ्यान्नेह संसर्गस्तद्विरुद्धार्थयोरिव ॥**
**अशनायाद्यतिक्रान्तदृष्टिद्रष्टृपदार्थयोः ॥ १७२ ॥**

पदार्थविषयं बाल्यमुक्त्वा वाक्यार्थविषयमाह । **ऐकार्थ्यादिति** । वाक्यार्थान्वय-

विरोधी कर्तृत्वादिः परोक्षादिश्च तयोरसंसर्गवदिहापि ब्रह्मात्मनोरशनायाद्यतीतद्रष्टा-दिसाक्षिणोर्न संसर्गो भेदो वा तयोरेकरसस्वभावत्वादतस्तदखण्डतेत्यनुसंधानं वाक्यार्थे बाल्यमित्यर्थः ॥ १७२ ॥

**पण्डेति बुद्धिनामैतत्सा जाता यस्य मानतः ॥**
**तं पण्डितमिति प्राहुः सोऽत्र श्रुत्या नियुज्यते ॥ १७३ ॥**

बाल्यपाण्डित्ये संक्षेपतो व्याख्याते कथं चतुर्विधं ज्ञानं पाण्डित्यमप्रसिद्धेरित्याशङ्क्य पाण्डित्यशब्दस्य प्रकृतिप्रत्ययभेदेनार्थमाह । **पण्डेतीति** । अधीतवेदान्तस्य मुमुक्षोस्तस्मादुत्पन्नं विचारप्रयोजकं ज्ञानं पण्डा साऽस्य जातेति पण्डितस्तस्य कर्म पाण्डित्यं चतुर्विधं ज्ञानं तत्र प्रयोजकज्ञानी तस्मादित्यादिश्रुत्या नियुज्यत इत्यर्थः ॥१७३॥

**यत्पण्डितस्य कर्म स्यात्तत्पाण्डित्यं प्रचक्षते ॥**
**अप्राप्ततत्त्वनिष्ठोऽतः पाण्डित्ये विनियुज्यते ॥ १७४ ॥**

अत्रेत्यस्यार्थं स्फुटयति । **यदिति** । उक्तरूपे पाण्डित्ये तत्त्वज्ञानिनो नियोगमभ्यासवादिनो वदन्ति तान्प्रत्याह । **अप्राप्तेति** । प्रयोजकज्ञानं पण्डेत्येतदतःशब्देनोच्यते ॥ १७४ ॥

**शास्त्राचार्यात्मतो निष्ठां नीत्वाऽऽत्मप्रत्ययं यतिः ॥**
**तिष्ठासेदथ बाल्येन कृत्स्नानात्मधियो हृतिः ॥ १७५ ॥**
**बाल्यशब्दाभिधेया स्यात्तां समापय्य शुद्धधीः ॥**
**मुनिभावं ततो त्यक्त्वा ब्रह्मैव ब्राह्मणो भवेत् ॥ १७६ ॥**

पाण्डित्यं निर्विद्येत्यस्यार्थमनूद्यानन्तरवाक्यार्थं प्रपञ्चयितुं वाक्यमादत्ते । **शास्त्रेति** । पाण्डित्यस्य बाल्यं प्रति हेतुत्वं द्योतयितुमथेत्युच्यते । बाल्यं हि बालस्य कर्म तिष्ठन्मूत्रत्वादि तत्कथं पदार्थादिज्ञानबलभावे तत्पदं प्रयुक्तमित्याशङ्क्याऽऽह । **कृत्स्नेति** । भवति हि बालस्य कर्म सर्वानात्मधीविधुर्यमप्ररूढेन्द्रियं हि बालमाहुरनाविष्कुर्वन्नन्वयादिति न्यायाद्भवति च पदार्थादिज्ञानबलभावो बाल्यमतो यथोक्तज्ञानबलरूपा सर्वानात्मधीध्वस्तिर्युक्त्यधीना बाल्यमुच्यते बलं नामाऽऽत्मविद्ययाऽशेषविषयदृष्टितिरस्करणमतस्तद्भावेन बाल्येन तिष्ठासेदित्युक्तेरित्यर्थः । बाल्यं चेत्यादेरर्थमाह । **तामिति** । अथ मुनिरित्यस्यार्थमाह । **शुद्धधीरिति** । अमौनं चेत्यादेरर्थमाह । **मुनीति** । पाण्डित्यबाल्यनिर्वर्त्यानन्तर्यं ततःशब्दार्थः । अथ ब्राह्मण इत्यस्यार्थमाह । **ब्रह्मैवेति**॥१७५॥ ॥ १७६ ॥

**निःशेषमात्मसंबोधं कुर्यादिति विधीयते ॥**
**तिष्ठासेदिति संबन्धः सर्वत्र विधिना भवेत् ॥ १७७ ॥**

---

१ ख. वाक्यार्थो । २ ख. °स्यार्थमाह । य° । ३ ख. °ति । न भवति बा° ।

**समाप्यामौनमखिलं बाल्यपाण्डित्यलक्षणम् ॥**
**निर्विद्य च तथा मौनं पदार्थद्वयसंगतिम् ॥ १८९ ॥**

श्रवणमनननिदिध्यासनानि पाण्डित्यबाल्यमुनिपदैरादावुक्तानि ततस्तैरेव पदार्थयोः शुद्धिः शुद्धयोर्विशेषणविशेष्यत्वमित्यर्थान्तरमुक्तमिदानीममौनं चेत्यादेरर्थमनुवदति । **समाप्येति** । पदार्थद्वयसंगतिर्निदिध्यासनं तज्ज्ञानत्वात्तद्धेतुत्वाद्वा संगतिं निर्विद्य ब्राह्मणो भवतीति संबन्धः ॥ १८९ ॥

**अथ ब्राह्मण इत्युक्त्या फलावस्थाऽस्य भण्यते ॥**
**भेदसंसर्गहीनोऽर्थः स्वमहिम्नि व्यवस्थितः ॥**
**साक्षादित्यादिरूपोऽथ ब्रह्म ब्राह्मण उच्यते ॥ १९० ॥**

अथ ब्राह्मण इत्यस्य तात्पर्यमाह । **अथेति** । अस्येति विद्वदुक्तिः । काऽसौ फलावस्था तामाह । **भेदेति** । तत्त्वसाक्षात्कारानन्तर्यं फलावस्थाया वक्तुमथशब्दः ॥ १९० ॥

**इमामवस्थां संप्राप्य सर्वो ब्राह्मण उच्यते ॥**
**ब्राह्मण्यं गौणमन्यत्र पूर्वभूमिषु नाञ्जसा ॥ १९१ ॥**

जातिविषयो ब्राह्मणशब्दः कथमस्यां फलावस्थायां प्रयुज्यतेऽस्ति हि क्षत्रियादेरपि ज्ञानिनो यथोक्ता फलावस्था तत्राऽऽह । **इमामिति** । ज्ञानवति मुक्ते तद्रहिते च बद्धे कथमेको ब्राह्मणशब्दः सत्यां गतावेकस्यानेकार्थत्वायोगादित्याशङ्क्याऽऽह । **ब्राह्मण्यमिति** । ज्ञानहीनेषु ब्रह्मचार्यादिषु स्थिते ब्राह्मणत्वे गौणो ब्राह्मणशब्दः परमहंसपरिव्राजके ज्ञानिनि मुक्ते मुख्योऽतो नैकस्यानेकार्थता शक्तिभेदाभावादित्यर्थः ॥ १९१ ॥

**केनाथ ब्राह्मणः स स्यादिति प्रश्नमपृच्छत ॥**
**उक्तोपायातिरेकेण पृच्छ्यते साधनान्तरम् ॥ १९२ ॥**

स ब्राह्मणः केन स्यादिति वाक्यं प्रश्नपरत्वेनावतारयति । **केनेति** । ज्ञानस्य ब्राह्मण्यं प्रति साधनत्वस्य सिद्धत्वात्तद्विषयप्रश्नायोगादित्याशङ्क्याऽऽह । **उक्तेति** ॥ १९२ ॥

**यज्ञादिलक्षणं तावत्पारंपर्येण साधनम् ॥**
**निर्ज्ञातमागमात्तस्मात्पृच्छ्यते साधनान्तरम् ॥ १९३ ॥**

अस्तु तर्हि यज्ञादि प्रश्नगोचरस्तत्राऽऽह । **यज्ञादीति** । आगमाद्विविदिषावाक्यादिति यावत् । साधनं मुक्तेरिति शेषः । अग्निहोत्रादि तु तत्कार्यायैवेत्यादिन्यायादित्यर्थः ॥ १९३ ॥

**चतुर्णां कतमेनेति न तु प्रश्नोऽत्र युज्यते ॥**
**कैवल्याश्रममादाय ब्राह्मण्यस्य समाप्तितः ॥ १९४ ॥**

---

१ ख. ग. र्थः स्वे म° । २ ख. सप्राप्तः ।

आश्रमस्तर्हि मुक्तिं प्रत्युपायतया पृच्छ्यते नेत्याह । **चतुर्णामिति** । मुक्तिः सप्तम्यर्थः ॥ १९४ ॥

**न चाऽऽश्रमान्तरं युक्तं मुनेर्व्युत्थायिनः सतः ॥**[1]
**कृतार्थस्याकृतार्थस्य तस्य नैवाऽऽश्रमान्तरम् ॥ १९५ ॥**

कुतो विशेषणमाश्रमान्तरेणापि मुक्तिसिद्धेरित्याशङ्क्याऽऽह । **न चेति** । कृतार्थः साक्षात्कृतब्रह्मा मुनिस्तस्य त्यक्तैषणस्य नाऽऽश्रमान्तरं मोक्षोपायो न खल्वेषणाभ्यो व्युत्थितेनाऽऽश्रमान्तरमाश्रयितुं शक्यम् । अकृतार्थस्तु प्रयोजकज्ञानी तस्यापि नाऽऽश्रमान्तरं मुक्तिहेतुरन्यत्र श्रवणादिद्वारा ज्ञानायोगान्नाविरक्ताय संसारादित्यादिन्यायादित्यर्थः ॥ १९५ ॥

**प्रश्नोऽयं साधनज्ञप्त्यै ब्राह्मणस्येह पृच्छ्यते ॥**
**किंसाधनो ब्राह्मणः स्यादिति साधनमुच्यताम् ॥ १९६ ॥**

तर्हि विषयाभावात्प्रश्नो मा भूत्क्षेपस्तु स्यान्नेत्याह । **प्रश्नोऽयमिति** । इहेति वाक्योक्तिः । नायं क्षेपो हेत्वभावादिति मत्वा प्रश्नप्रकारमभिनयति । **किमिति** ॥ १९६ ॥

**प्रश्नप्रतिवचस्तेन ब्राह्मणः स्याद्यथोदितः ॥**
**येनानवाप्तज्ञानोऽपि भवेदीदृश एव ना ॥ १९७ ॥**

सम्यग्ज्ञानाद्यज्ञादेराश्रमान्तराच्चातिरिक्ते मुक्तिहेतौ पृष्टे येनेत्याद्युत्तरमाह । **प्रश्नेति** । अनुत्पन्नज्ञानोऽपि पुरुषो येन साधनेन निर्व्यापारो भवति तेन मुख्यं ब्राह्मण्यं लभ्यत इत्यर्थः ॥ १९७ ॥

**उक्तब्राह्मणसादृश्यं सर्वकर्मनिरासतः ॥**
**नैष्कर्म्यसाधनेनैव ब्राह्मणः स्याद्यथोदितः ॥ १९८ ॥**

किं तदिति तदाह । **उक्तेति** । सर्वव्यापारोपरमात्मकनैष्कर्म्यं पारमहंस्यं ज्ञानादन्यत्तेनैव मुख्यो ब्राह्मणो भवति तच्च साधनं सर्वकर्मत्यागतो लभ्यते तस्य ब्राह्मण्यं प्रति साधनत्वं तेन सारूप्यत्वादुभयोरपि निर्व्यापारत्वाविशेषाद्धेतुफलयोरैकरूप्यस्य न्याय्यत्वादित्यर्थः ॥ १९८ ॥

**इत्येषोऽर्थो विधेयोऽत्र येनेति वचसा श्रुतेः ॥**
**स्मृतयोऽपीममेवार्थं तत्र तत्र प्रचक्षते ॥ १९९ ॥**

कथं नैष्कर्म्यमधिगतं तदाह । **इत्येष इति** । अत्रेत्युद्देश्यमोक्षोक्तिः । परमहंसाश्रमो नैष्कर्म्यं तस्य धीसमुच्चितस्य मोक्षोपायत्वे मानमाह । **स्मृतयोऽपीति** । अपिशब्दः श्रुतिसंग्रहार्थः ॥ १९९ ॥

---

१ ख. °गिनरततः ।

लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ॥
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥ २०० ॥

तत्राऽऽदौ स्मृतीरुदाहरन्भगवद्वाक्यमाह । **लोकेऽस्मिन्निति** । प्राणिनिकायो लोकः । पुरेति द्वितीयाध्यायोक्तिः सर्गादिकालो वा पुरेत्युक्तिः । के ते निष्ठे तत्राऽऽह । **ज्ञानेति** । सांख्याः सम्यग्धीप्रधानास्तेषां परमहंसानां ज्ञानयोगो निर्व्यापाररूपं नैष्कर्म्यं तेनैव निष्ठा कर्मिणो योगिनस्तेषां कर्मयोगस्तदनुष्ठानं तेनैव निष्ठेति वदन्भगवान्नैष्कर्म्यस्य ज्ञानोपेतस्य मुक्तिसाधनत्वमभिप्रेतवानित्यर्थः ॥ २०० ॥

इमौ द्वावेव पन्थानौ कर्मतत्त्यागलक्षणौ ॥
सजातीयाद्विनिष्क्रान्तावनुक्रान्ततराविमौ ॥ २०१ ॥

तत्रैव व्यासवाक्यमाह । **इमाविति** । अन्ययोगव्यवच्छेदेनोक्तौ पुमर्थमार्गौ विशिनष्टि । **कर्मेति** । तयोर्मिथो वैजात्यमाह । **सजातीयादिति** । श्रुतिषु तयोरसकृदुक्तत्वेन प्रामाणिकत्वमाह । **अनुक्रान्तेति** ॥ २०१ ॥

संन्यास एव ताभ्यां च विशेषेणातिवर्तते ॥
तथा किं प्रजयेत्यादिः पन्थाः कर्मत्यजां श्रुतः ॥ २०२ ॥

समभिव्याहारात्तयोरैकरूप्यमाशङ्क्याऽऽह । **संन्यास इति** । संन्यासिनां स्मृताविव श्रुतावपि नैष्कर्म्यमार्गो दृष्ट इत्याह । **तथेति** ॥ २०२ ॥

ब्रह्मचर्याश्रमादेव प्रव्रजेदिति भूरिशः ॥
संन्यासमेव ब्रुवते मुक्तये सर्वकर्मणाम् ॥ २०३ ॥
श्रुतयः स्मृतयश्चोच्चैः शुद्धन्यायसमाश्रयात् ॥
सर्वकर्मनिरासेन ब्राह्मण्यं लभते ततः ॥ २०४ ॥

ननु क्रमेण संन्यस्यतो यथोक्तो मार्गोऽत्र विवक्षितः प्रथमाश्रमे तु संन्यासमेव न मृष्यामस्तत्राऽऽह । **ब्रह्मचर्येति** । इतिशब्दः पन्थाः श्रुतः श्रुतावित्यनेन संबध्यते । **त्यागेनैके** अमृतत्वमानशुरिति श्रुतेः कस्यचित्कर्म कस्यचित्त्यागो मुक्तिहेतुरिति विकल्पमाशङ्क्याऽऽह । **संन्यासमिति** । उच्चैरित्युक्ततात्पर्यद्योतनार्थमभ्यासाख्यं लिङ्गं दर्शयति । **भूरिश इति** । न च तासामन्यार्थत्वमबाधितन्यायानुग्रहादित्याह । **शुद्धेति** । आत्मस्वरूपभूतमुक्तेरसाध्यत्वादि न्यायः । ज्ञानातिरिक्तं नैष्कर्म्याख्यं मुक्तिहेतुमुपपाद्य येनेत्यादेरर्थमुपसंहरति । **सर्वेति** ॥ २०३ ॥ २०४ ॥

केनेति यदि वाऽऽक्षेप उत्पत्त्यादेरसंभवात् ॥
साधनानामिहैकान्त्यं तथाच प्रागवादिषम् ॥ २०५ ॥

स इत्यादेरर्थान्तरमाह । **केनेति** । आक्षेपं स्फोरयति । **उत्पत्त्यादेरिति** । मोक्षे

ज्ञानातिरिक्तकर्मादिहेतूनां केनेत्याक्षेपस्तस्य चतुर्विधकर्मकार्यत्वायोगात्तदयोगश्च संबन्धादावुक्त इत्यर्थः ॥ २०५ ॥

**साधनेनैतदैकात्म्यं येन येन चिकीर्ष्यते ॥**
**तेन तेनेदृगेवाऽऽत्मा नातिशीतिर्मनागपि ॥ २०६ ॥**

ज्ञानेतरसर्वहेत्वाक्षेपमुपेत्य येनेत्यादेरर्थमाह । **साधनेनेति** । अग्निहोत्राद्यनुष्ठानात्प्रागूर्ध्वं च मुक्तेराकाशवदेकरूप्यादज्ञानध्वस्तेश्च ज्ञानमात्रायत्तत्वान्नैष्कर्म्यस्य च ज्ञानाद्वा तत्फलाद्वा तद्धेतोर्वाऽनतिरेकान्न मुक्त्यर्थं हेत्वन्तरं मृग्यमित्यर्थः ॥ २०६ ॥

**अथवा लक्षणोक्तिः स्याद्यथोक्तब्रह्मवेदिनः ॥**
**येनेदृगेव चिह्नेन ब्राह्मणस्तेन लक्ष्यताम् ॥ २०७ ॥**

स इत्यादेर्विधान्तरेण प्रश्नरूपमर्थमाह । **अथवेति** । विदुषो मुक्तस्य लक्षणं केनेति पृच्छ्यत इत्यर्थः । उक्तिशब्दः प्रश्नवचनः । येनेत्यादेरर्थमाह । **येनेति** । मुक्तस्य स्वरूपमेव लक्षणं न लक्षणान्तरमस्तीत्यर्थः ॥ २०७ ॥

**देहेन्द्रियमनोबुद्धिधर्मानिषोऽप्यवर्तत ॥**
**प्रत्यगैकात्म्यसंबोधात्तद्धर्मैर्लक्ष्यते कथम् ॥ २०८ ॥**

ननु पृथिव्यादेर्गन्धवत्त्वादि स्वातिरिक्तं लक्षणं तत्कथं मुक्तस्य न लक्षणान्तरं तत्र किं शमादिर्वा संसाराभावो वा तस्य लक्षणान्तरमिति विकल्प्याऽऽद्यं प्रत्याह । **देहेति** । देहादेस्तद्धर्माच्च तत्त्वज्ञानेनातीतो मुक्तो नास्य बुद्ध्यादिधर्मः शमादिर्लक्षणं वैयधिकरण्यादित्यर्थः ॥ २०८ ॥

**सर्वसंसारभावोऽस्य न यथा लक्षणं तथा ॥**
**सर्वाभावोऽपि नैव स्याल्लक्षणं ब्रह्मवेदिनः ॥ २०९ ॥**

द्वितीयं दूषयति । **सर्वेति** ॥ २०९ ॥

**वेद्यानुरोधतो यस्मात्तद्विदो न्यायलक्षणम् ॥**
**भावाभावद्वयध्वंसि ब्रह्म वेद्यं च तद्विदः ॥ २१० ॥**

तत्र हेतुः । **वेद्येति** ॥ २१० ॥

**येनेदृगेव तेनेति तस्मादाह श्रुतिः स्फुटम् ॥**
**मुमुक्षोर्लक्षणं तादृक्श्रद्दधाना यदब्रुवन् ॥ २११ ॥**

अथ तद्यथाऽहिनिर्ल्वयनी सचक्षुरचक्षुरिवेत्यादिश्रुतेः स्थितप्रज्ञगुणातीतलक्षणस्मृतेश्च विदुषो मुक्तस्य लक्षणमुक्तं तत्कुतो न लक्षणान्तरं तत्राऽऽह । **येनेति** । प्रतिवचो हि लक्षणान्तराभावादेव प्रवृत्तं श्रुतिस्मृती तु विदुषो व्यवहारदृष्ट्या लक्षणमाचक्षाते न वस्तुतो

---

१ ख. 'संबन्धात्त' । २ ख. ग. न्याय्यल' ।

वस्तुतस्तद्राहित्यमिह विवक्षितमिति भावः । ननु शमादिर्ज्ञानात्पूर्वं साधनमूर्ध्वं ज्ञानिलक्षणमिति संप्रदायविदो न तदन्यथयितुं युक्तमत आह । **मुमुक्षोरिति** । सांप्रदायिका यदास्तिकाः सन्तः शमादिलक्षणमाचचक्षिरे तत्सर्वं व्यवहारावस्थस्यैव न तदतीतस्येत्यर्थः ॥ २११ ॥

**सुषुप्तेऽप्यतिमूढस्य सर्वसंसारनिह्नुतिः ॥**
**गम्यते लक्षणं तादृङ्न चासौ ब्रह्मविन्मतः ॥ २१२ ॥**

संसाराभावस्य मुक्तलक्षणत्वाभावे हेत्वन्तरमाह । **सुषुप्तेऽपीति** । अब्रह्मविदोऽपि संसाराभावानुभवान्न तन्मुक्तलक्षणं न चाज्ञानाभावस्तल्लक्षणं तस्य स्वरूपत्वे लक्षणान्तरत्वायोगादस्वरूपत्वे संसाराभावादविशेषादिति भावः ॥ २१२ ॥

**आत्मनो ब्रह्मतेहोक्ता न त्वनात्मन ईरिता ॥**
**यथोक्तज्ञानतो ध्वस्तिरार्तश्रुत्याऽत उच्यते ॥ २१३ ॥**

मुक्तस्य लक्षणान्तराभावेऽपि कथमतोऽन्यदार्तमित्युक्तं मुक्तादन्यस्यैवासत्त्वेन वाक्यस्य निर्विषयत्वादित्याशङ्क्याऽऽह । **आत्मन इति** । पाण्डित्यादिवाक्यमिहेति परामृष्टम् ॥ २१३ ॥

**अतो ब्राह्मण्यतोऽन्यद्यत्क्रियाकारकलक्षणम् ॥**
**आर्तं विनाशि तज्ज्ञेयं ब्रह्मानार्तं यतस्ततः ॥ २१४ ॥**

**श्लोकानामादितः समष्ट्यङ्काः—६४३०**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके तृतीयाध्यायस्य**
**पञ्चमं कहोलब्राह्मणम् ॥ ५ ॥**

अतोऽन्यदित्यादिश्रुतेरर्थान्तरमाह । **अत इति** । अन्यस्य नाशित्वे हेतुमाह । **ब्रह्मेति** । यद्वा यतोऽन्यदार्तमतो ब्रह्मैवानार्तमिति फलोक्तिः ॥ २१४ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां तृतीयाध्यायस्य
पञ्चमं कहोलब्राह्मणम् ॥ ५ ॥

---

अथ षष्ठं ब्राह्मणम् ।

---

**यः सर्वान्तर इत्युक्तस्तन्निर्णयविवक्षया ॥**
**आ शाकल्यात्परो ग्रन्थ इतो व्याख्यायतेऽधुना ॥ १ ॥**

पूर्वब्राह्मणयोरात्मनः सर्वान्तरत्वमुक्तं तन्निर्णयार्थमुत्तरब्राह्मणत्रयमिति संगतिमाह । **य इति** ॥ १ ॥

**विशेषणस्य सर्वस्य साक्षादित्यादिकस्य च ॥**
**सर्वान्तरविनिर्णीतौ निर्णयः स्यात्कथं न्विति ॥ २ ॥**

ननु विशेषणान्तराण्यपि प्रकृतानि तानि विहाय किमिति सर्वान्तरत्वं निर्णीयते तत्राऽऽह । **विशेषणस्येति** । आत्मनः सर्वान्तरत्वनिर्णये साक्षात्त्वादि यतो निर्णीतमेव भवत्यतस्तस्य कथं सर्वान्तरत्वमिति विशेषतो निरूप्यत इत्यर्थः ॥ २ ॥

**अशनायाद्यतिक्रान्त्या प्रश्नार्थाविष्कृतिः कृता ॥**
**न सम्यगिति मन्वाना गार्ग्यपृच्छदतः पुनः ॥ ३ ॥**

तन्निर्णयात्तदविनाभूतसाक्षात्त्वादिनिर्णयेऽपि योऽशनायेत्यादिना सर्वान्तरत्वादेर्निर्णीतत्वात्किं पुनरारम्भेणेत्याशङ्क्याथेत्यादिप्रश्नं प्रस्तौति । **अशनायादीति** ॥ ३ ॥

**क्षित्यादेर्वियदन्तस्य यावन्नैकात्म्यमुच्यते ॥**
**निर्णीतार्थो न तावत्स्यात्प्रश्नः साक्षादितीरितः ॥ ४ ॥**

यत्साक्षादित्यादिप्रश्नार्थस्य योऽशनायेत्यादिना कृताऽऽविष्कृतिः कथं न सम्यगित्याशङ्क्याऽऽह । **क्षित्यादेरिति** ॥ ४ ॥

**बुभुक्षाद्येकदेहस्थनिषेधादनिषेधतः ॥**
**क्षित्यादेर्वियदन्तस्य नातः प्रश्नार्थनिर्णयः ॥ ५ ॥**

अशनायादिनिषेधेनैव भूतपञ्चकमपि प्रतिषिध्य प्रत्यङ्मात्रस्य निर्णीतत्वात्कथं प्रश्नार्थानिर्णयस्तत्राऽऽह । **बुभुक्षादीति** ॥ ५ ॥

**य एते पार्थिवा भावा लोष्टकुम्भादयो मताः ॥**
**तेषामन्तर्बहिर्व्याप्तिः पृथिव्यैवेह लक्ष्यते ॥ ६ ॥**

प्रश्नस्य सम्यगनिर्णीतत्वबुद्ध्या गार्गी पृच्छतु तत्पृच्छा तु किंमूलेत्याशङ्क्य व्याप्तिमूलेति वक्तुं लोकप्रसिद्धां व्याप्तिमाह । **य एत इति** ॥ ६ ॥

**यथैव पार्थिवा भावाः पृथिव्यैवं धरित्र्यपि ॥**
**अद्भिरन्तर्बहिश्चेयं व्याप्तैवेह समीक्ष्यते ॥ ७ ॥**

पृथिव्या व्यापकत्वेऽपि कीदृशी त्वदिष्टा व्याप्तिस्तत्राऽऽह । **यथेति** ॥ ७ ॥

**एवं दृष्टं यतस्तस्माद्गार्गी पप्रच्छ लिङ्गतः ॥**
**प्रश्नं यदिदमित्येवं याज्ञवल्क्यं महाधियम् ॥ ८ ॥**

यदनात्मत्वे सति व्यापकं तदन्यव्याप्यं यथा पृथिवीति व्याप्तिमुक्त्वा तन्मूलं प्रश्नं दर्शयति । **एवमिति** । तं प्रत्येव प्रश्ने हेतुः । **महाधियमिति** । पृष्टनिष्टङ्कनशक्तिमत्त्वं महाधीत्वम् ॥ ८ ॥

---

१ ख. त्विति । २ ग. 'धनम् । क्षि' ।

**ओतप्रोतात्मना कार्यं येन येन समाप्लुतम् ॥**
**तस्य तस्यान्यसंव्याप्तिर्दृष्टा लोके क्षितेर्यथा ॥ ९ ॥**

लिङ्गशब्दितमनुमानं वक्तुं व्याप्तिं स्मारयति । **ओतेति** । कार्यं स्थूलं परिच्छिन्नं च येन कारणेन सूक्ष्मेण व्यापकेनान्तर्बहिर्व्याप्तं तस्यानेन सूक्ष्मतरेण व्याप्तिर्लोके दृष्टा यथा पृथिव्यां लोष्टादिव्यापिकायां व्याप्तिरद्भिरन्यथा सक्तुमुष्टिवद्विसरणापत्तेरित्यर्थः ॥ ९ ॥

**अद्भिश्चेयं क्षितिर्व्याप्ता तस्मात्तासामपीष्यते ॥**
**अन्येन केनचिद्व्याप्तिर्व्यापकत्वाद्यथा भुवः ॥ १० ॥**

व्यापकत्वहेतोः[1] पक्षधर्मतामाह । **अद्भिश्चेति** । अनुमानमाह । **तस्मादिति** ॥ १० ॥

**प्रत्युक्तिर्गार्गि वायावित्येवमेवोत्तरेष्वपि ॥**
**वाक्येषु प्रतिपत्तव्या प्रत्युक्तिप्रश्नयोर्गतिः ॥ ११ ॥**

अपां व्यापके पृष्टे प्रत्याह । **प्रत्युक्तिरिति** । प्रथमपर्यायोक्तन्यायमुत्तरपर्यायेष्वतिदिशति । **एवमेवेति** ॥ ११ ॥

**पार्थिवाप्यौ समाश्रित्य तेजोऽभिव्यज्यते यतः ॥**
**धातू न तु स्वतन्त्रं सद्भावदत्तेजसीत्यतः ॥ १२ ॥**

अग्नेराप इति श्रुतेरग्नाविति वक्तव्ये वायावित्ययुक्तमिति चेत्तत्राऽऽह । **पार्थिवेति** । अग्नेरुदकव्यापकत्वेऽपि काष्ठविद्युदादिपारतन्त्र्यात्स्वतन्त्रेण[2] केनचिदपां व्याप्तिर्वाच्येत्यग्निं हित्वा तत्कारणवायावित्युक्तं वायोश्च स्वकारणतन्त्रत्वेऽपि नोदकतन्त्रतेति तद्व्यापकत्वसिद्धिरित्यर्थः ॥ १२ ॥

**सूक्ष्मताव्यापिते ज्ञेये भूम्यादेरुत्तरोत्तरम् ॥**
**अक्षरात्मावसानानां पूर्वपूर्वप्रहाणतः ॥ १३ ॥**

उत्तरोत्तरेण पूर्वपूर्वव्याप्तौ युक्तिमाह । **सूक्ष्मतेति** । भूम्यादेरारभ्य प्रत्यगन्तानां मध्ये पूर्वपूर्वत्यागेनोत्तरोत्तरस्य सूक्ष्मत्वादि ज्ञेयमिति योजना ॥ १३ ॥

**आरम्भकबहुत्वाच्च बहूक्तिरिह गृह्यते ॥**
**आत्मनोऽन्यद्यतः सर्वं पञ्चभूतात्मकं विदुः ॥ १४ ॥**

अन्तरिक्षलोकेष्वित्यादि बहुवचोऽयुक्तं प्रत्येकमन्तरिक्षादेरेकत्वादित्याशङ्क्याऽऽह । **आरम्भकेति** । तेषु तद्बहुत्वमेवायुक्तमात्मनः स्वाविद्यया तत्कारणत्वादित्याशङ्क्याऽऽह । **आत्मन इति** । **उक्तं हि** न च परमात्मनोऽर्वाक्तद्व्यतिरेकेण वस्त्वन्तरमस्तीति ॥ १४ ॥

**द्वात्रिंशद्गुणितो मार्गो रथगत्या विवस्वतः ॥**
**य उक्तस्तस्य संस्थित्या तस्थुरिन्द्रान्तदेवताः ॥ १५ ॥**

---

१ ख. °हेतोर्जले प° । २ ख. °न्त्र्यात्स्वातन्त्र्येण ।

पृथिव्यादीनामिन्द्रान्तानामोतप्रोतत्वेनोक्तानां लोकालोकपर्यन्तलोकान्तर्वर्तित्वमेवेत्यवान्तरविशेषमाह । द्वात्रिंशदिति ॥ १५ ॥

**स्थूलसूक्ष्मात्मना सर्वास्तारतम्येन संस्थिताः ॥**
**व्याप्यव्यापितयाऽन्योन्यं सर्वतःपरिमण्डलाः ॥ १६ ॥**

तासां च लोकान्तर्वर्तिदेवतानामुत्तरोत्तरापेक्षया पूर्वत्र पूर्वत्र स्थौल्यं व्याप्यत्वं च पूर्वपूर्वापेक्षयोत्तरत्रोत्तरत्र सौक्ष्म्यं व्यापित्वं चेत्याह । **स्थूलेति** । तासां च लोकमध्ये सर्वत्राप्रतिहतगतित्वं सर्वतःपरिमण्डलत्वम् ॥ १६ ॥

**प्रजापतिर्विराडत्र योऽण्डस्यान्तर्व्यवस्थितः ॥**
**ओतप्रोतानि तत्त्वानि तेन पूर्वाणि सर्वशः ॥ १७ ॥**

प्रजापतिलोकेष्वित्यत्र प्रजापतिं व्याचष्टे । **प्रजापतिरिति** । अण्डव्यापिविराजो यथोक्तदेवताभ्यो विशेषमाह । **ओतेति** ॥ १७ ॥

**तस्योतप्रोतभावोऽयं ब्रह्मलोकेषु भण्यते ॥**
**अण्डारम्भकभूतानां ब्रह्मलोकाभिधेष्यते ॥ १८ ॥**

ब्रह्मलोकेष्विति व्याकुर्वन्ब्रह्मलोकशब्दार्थमाह । **तस्येति** ॥ १८ ॥

**तदेतल्लोकनिर्माणमोतप्रोतात्मनोदितम् ॥**
**अण्डान्तमेव व्याख्यातं किमन्यदवशिष्यते ॥ १९ ॥**

प्रश्नान्तरार्थं भूमिकामाह । **तदेतदिति** । पृथिव्यादीनामन्तर्बहिर्व्याप्ततया यदेतदवस्थानं पृष्टं तदुक्तप्रकारेण ब्रह्मलोकान्तं स्फुटीकृतं न चाण्डादुपरिष्टादनुमानेन प्रष्टव्यमित्यर्थः ॥ १९ ॥

**समष्टिव्यष्टिभावेन वायुः सर्वाश्रयः पुरा ॥**
**व्याख्यातो यः स वक्तव्यस्तदर्थः प्रश्न उत्तरः ॥ २० ॥**

उक्ताभिप्रायाज्ञानैकृतप्रश्नविषयमाह । **समष्टीति** । पुरेति भुज्युप्रश्नोक्तिः ॥ २० ॥

**ओताः प्रोताश्च कस्मिन्नु ब्रह्मलोका इतीर्यताम् ॥**
**इति पृष्टोऽब्रवीद्गार्गि माऽतिप्राक्षीः कथंचन ॥ २१ ॥**

सूत्रविषयत्वं प्रश्नस्योक्त्वा तदक्षराणि व्याकरोति । **ओता इति** । प्रत्युक्तिमादत्ते । **इति पृष्ट इति** ॥ २१ ॥

**माऽतीत्य प्रश्नविषयं गार्गि माक्षीः कथंचन ॥**
**मा ते मूर्धा व्यपप्तेति त्वामहं वारयाम्यतः ॥ २२ ॥**

तां व्याचष्टे । **माऽतीत्येति** । आनुमानिकप्रश्नविषयमिन्द्रादिकमतिक्रम्य सूत्रमधिकृत्यानुमानेन सर्वथैव प्रश्नं मा कार्षीरित्यर्थः । मा ते मूर्धा व्यपप्तदित्यस्य तात्पर्यमाह । **मा त इति** । व्यपप्तेति व्यपप्तदित्यस्यांशोक्तिर्माङ्योगादटो लोपेऽपि तदभावश्छान्दसः ॥ २२ ॥

---

१ क. °पर्वतलो° । २ क. °त्तरोत्त° । ३ ख. °व्यापकेन व्याप्त° । ४ ख. °नप्रकृ° ।

उचितोऽस्या भवेत्प्रश्नो देवता येन पृच्छ्यते ॥
वर्तते यस्तमुल्लङ्घ्य सोऽतिप्रश्नोऽनुमोच्यते ॥ २३ ॥

अनतिप्रश्न्यामित्यादेरर्थं वक्तुमतिप्रश्नशब्दार्थमाह । **उचित इति** । सूत्रस्याऽऽगमैकगम्यत्वात्तेन प्रश्नो योग्यस्तमतिक्रान्तोऽतिप्रश्नोऽनुमेत्यर्थः ॥ २३ ॥

या तमर्हति पूर्वोक्ता साऽतिप्रश्न्येह देवता ॥
तदन्यत्वादिमां त्वाहुरनतिप्रश्न्यनामिकाम् ॥ २४ ॥

प्रत्ययार्थमाह । **या तमिति** । अण्डान्तर्वर्तिनी देवताऽतिप्रश्न्येत्यर्थः । नातिप्रश्न्येत्यनतिप्रश्न्या सूत्रदेवता केवलागमगम्यत्वादित्याह । **तदन्यत्वादिति** ॥ २४ ॥

तामेतामनतिप्रश्न्यामतिप्रश्नेन साहसात् ॥
पृच्छन्त्या मूर्धपातस्ते स्यादेव स्वापराधतः ॥ २५ ॥

अस्त्वनतिप्रश्न्या सूत्रदेवता किं तावतेत्याशङ्क्य वाक्यार्थमाह । **तामिति** ॥ २५ ॥

स्थूलान्यनुमया युक्तं प्रष्टुं तत्त्वानि कामतः ॥
इयं तु न तथा स्थूला यां त्वं पृच्छसि देवताम् ॥ २६ ॥

इन्द्रादिवदनुमानेन सूत्रप्रश्ने कोऽपराधो देवतात्वाविशेषादित्याशङ्क्याऽऽह । **स्थूलानीति** ॥ २६ ॥

अचिन्त्या चाप्रतर्क्या च प्राणभावेन च स्थिता ॥
नातोऽन्येन प्रमाणेन प्रष्टव्या देवताऽऽगमात् ॥ २७ ॥

गार्गीत्यादिनिगमनस्य तात्पर्यमाह । **अचिन्त्येति** । तदभावशङ्कां वारयति । **प्राणेति** ॥ २७ ॥

एतस्मादेव हेतोस्तां तर्कशास्त्रेषु तार्किकाः ॥
नैवानुमिन्वते त्रासात्पृथिव्यादीन्यथा तथा ॥ २८ ॥

अप्रतर्क्यत्वं समर्थयते । **एतस्मादिति** । त्रासान्मूर्धपातभयादिति यावत् ॥ २८ ॥

प्राणोऽयमनिरुक्तो हि कस्तं निर्वक्तुमर्हति ॥
मानान्तरेणाऽऽगमतो मा प्राक्षीरित्यतो वचः ॥ २९ ॥

श्लोकानामादितः समष्ट्यङ्काः—६४५९.

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके तृतीयाध्यायस्य
षष्ठं गार्गिब्राह्मणम् ॥ ६ ॥

प्राणस्य सूत्रात्मनः श्रुतिष्वनिरुक्तत्वप्रसिद्धेश्च नानुमेयतेत्याह । **प्राणोऽयमिति** । निगमनवाक्यार्थमुपसंहरति । **मानान्तरेणेति** ॥ २९ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां तृतीयाध्यायस्य
षष्ठं गार्गिब्राह्मणम् ॥ ६ ॥

अथ सप्तमं ब्राह्मणम् ।

---

यत्पिपृच्छिषितं गार्ग्या समष्टिव्यष्टिलक्षणम् ॥
लिङ्गेनोद्दालकः सूत्रं तदपृच्छदथाऽऽगमात् ॥ १ ॥

पूर्वस्मिन्ब्राह्मणे सूत्रादर्वाक्तनं व्यापकमुक्तमिदानीं सूत्रं तदन्तर्गतमन्तर्यामिणं च विवक्षन्नथ हैनमित्यादेरर्थमाह । यदिति । अथेति प्रश्नवाक्यप्रतीकग्रहणम् ॥ १ ॥

तथा च तन्नियन्तारं जगज्जन्मादिकारणम् ॥
आगमाद्गौतमोऽप्राक्षीद्याज्ञवल्क्यमुदारधीः ॥ २ ॥

न केवलं सूत्रमेवाप्राक्षीत्किंतु तदन्तर्गतमन्तर्यामिणं चेत्याह । तथाचेति । ज्ञातेऽज्ञाते वाऽर्थे न प्रश्नो वैयर्थ्यादशक्यत्वाच्चेत्याशङ्क्याऽऽद्ये परीक्षार्थं तदुपपत्तिमभिप्रेत्याऽऽह । उदारेति ॥ २ ॥

सूत्राद्यागमसंप्राप्तिं सोऽथाऽऽख्यानैकवर्त्मना ॥
व्याचख्यौ गौतमः साक्षाद्गन्धर्वाल्लब्धवानिति ॥ ३ ॥

ब्राह्मणतात्पर्यमुक्त्वाऽथाऽऽख्यायिकातात्पर्यमाह । सूत्रादीति । सूत्रान्तर्यामिज्ञानस्योपदेशात्प्राप्तिमाख्यानद्वारा स्वस्योक्तवानित्यर्थः । तज्ज्ञानस्याऽऽनुमानिकत्वासंभवं हेतूकर्तुमथशब्दः । व्याख्याप्रकारमाह । साक्षादिति । सूत्रादिज्ञानं गन्धर्वोपदेशादहं साक्षात्प्राप्तवानित्यूचिवानित्यर्थः ॥ ३ ॥

ब्रह्मेह परमात्मोक्तो लोका भूरादयस्तथा ॥
देवास्त्वग्न्यादयो ज्ञेया वेदाश्चैव प्रसिद्धितः ॥ ४ ॥

ब्राह्मणादितातपर्यमुक्त्वा स ब्रह्मविदित्यादौ ब्रह्मादिपदार्थानाह । ब्रह्मेत्यादिना ॥ ४ ॥

ब्रह्मादीनि च भूतानि ग्रथितान्यक्षसूत्रवत् ॥
सूत्रेण ध्रियमाणानि सदैवेशयतानि च ॥ ५ ॥

स भूतविदित्यस्यापुनरुक्तमर्थमाह । ब्रह्मादीनीति । यः सूत्रान्तर्यामिणौ जानाति स यथोक्तानि भूतानि वेदेत्यर्थः । ईशयतानीश्वरेण नियमितानीति यावत् ॥ ५ ॥

सूत्रेण विधृतं चान्तर्यामिणा संयतं तथा ॥
आत्मानं वेद भोक्तारं वेद सर्वं जगत्तथा ॥ ६ ॥

स आत्मविदित्यादेरर्थमाह । सूत्रेणेति ॥ ६ ॥

सूत्रान्तर्यामिरूपेण यो वेदैतान्पुरोदितान् ॥
स एव ब्रह्मलोकान्तान्वेदेत्येषोऽस्य संग्रहः ॥ ७ ॥

---

१ ख. °दाश्चापि प्र° ।

स सर्वविदित्यस्य पूर्वेण पुनरुक्तिमाशङ्क्य तात्पर्यमाह। **सूत्रेति** । सूत्रेण विधृतानन्तर्यामिणा च नियमितान्पूर्वब्राह्मणोक्तान्ब्रह्मलोकान्तान्पृथिव्यादीन्यो वेद स एवोक्तं सर्वं ब्रह्मादि वेदेत्येषोऽस्य स ब्रह्मविदित्यादेः संदर्भस्य संक्षेपः स सर्वविदित्युच्यते तन्न पौनरुक्त्यमित्यर्थः ॥ ७ ॥

**अभ्यन्तरतमं सूत्रं ब्रह्मलोकावधेरपि ॥**
**सूक्ष्मं हि तदतीवोक्तं सर्वसत्त्वसमाश्रयम् ॥ ८ ॥**

सूत्रादिज्ञाने प्रस्तुतेऽपि तन्नानुमानेन प्रष्टव्यमागमैकगम्यत्वादिति कुतस्तत्राऽऽह । **अभ्यन्तरतममिति** । सर्वान्तरत्वादतिसूक्ष्मत्वाच्चाऽऽगमैकगम्यं सूत्रमित्यर्थः । हेतुद्वयं कथमिति चेदेष सर्वभूतान्तरात्मेत्यादिवाक्यादित्याह । **उक्तमिति** । तस्य सूत्रत्वं साधयति । **सर्वेति** ॥ ८ ॥

**सर्वसाधारणं कर्म यदभिव्यक्तमिष्यते ॥**
**वाय्वात्मना परिच्छिन्नं तदास्ते कारणात्मनि ॥ ९ ॥**

वायुर्वै गौतमेत्यत्र वायुशब्दार्थं वक्तुं स्थलशुद्धिं करोति । **सर्वसाधारणमिति** । यद्धि सर्वप्राणिसाधारणं सूत्रेण यजमानावस्थायां निर्वर्तितं सामान्यविशेषात्मकं कर्मापूर्वं यजमानदेहान्ते फलदानार्थमभिव्यक्तं तत्प्रलयकाले सूत्रात्मना परिच्छिन्नं तद्रूपेण स्थितं मूलकारणे तिष्ठतीत्यर्थः ॥ ९ ॥

**नाऽऽत्मानं लभते कर्म यतोऽसंश्रित्य साधनम् ॥**
**वाय्वाश्रितमतः कर्म स्वरूपं प्रतिपद्यते ॥ १० ॥**

किमिति प्रलये वाय्वात्मना परिच्छिन्नं कर्मेति विशेष्यते तत्राऽऽह । **नाऽऽत्मानमिति** । कर्म हि कारकमनाश्रित्य स्वातन्त्र्येण नाऽऽत्मानं धारयति साध्यमानरूपत्वादतो वायोस्तत्कारणत्वात्तदाश्रितं तदात्मानं लभते न हि स्पन्दस्यासाधारणं प्राणादृते कारणमस्ति तद्विशेषणमर्थवदित्यर्थः ॥ १० ॥

**साधारणस्य यो वायुर्विशिष्टस्य च धारकः ॥**
**समष्टिव्यष्टिभावेन कर्मणः सर्वदेष्यते ॥ ११ ॥**
**तं वायुं तच्च कर्मेह य उपेत्य व्यवस्थितः ॥**
**वायुकर्माभिमानी सन्पुमान्वायुः स उच्यते ॥ १२ ॥**

अस्त्वेवं प्रस्तुते किं जातं तदाह । **साधारणस्येति** । यो वायुः सामान्यविशेषात्मकस्य कर्मणस्तद्भावेनाऽऽश्रयः सदा मानादवगतो न हि क्रियाशक्तिमन्तं वायुमतिक्रम्यान्यत्र क्रिया युक्ता तं कर्माश्रयं वायुं तच्चाऽऽश्रितं कर्म संबन्धित्वेन प्राप्य पुंसां मध्ये यः स्थितः स तयोरात्मीयाभिमानी जीवोऽत्र फलरूपो वायुरित्यर्थः ॥ ११ ॥ १२ ॥

---

१ ख. 'मातममा'। २ ख. सन्पुंसां वायुः । ३ ख. 'रात्माऽऽत्मा' ।

**स एष वायुः सूत्रात्मा देवः सर्वाश्रयः प्रभुः ॥**
**देवतालिङ्गकर्मादि सर्वमत्रैव संश्रितम् ॥ १३ ॥**

तत्सूत्रमित्यत्र सूत्रं व्याचष्टे । **स एषेति** । कथं वायोः सूत्रत्वं तत्राऽऽह । **सर्वाश्रय इति** । देवत्वं साधयति । **प्रभुरिति** । सर्वाश्रयत्वं व्यनक्ति । **देवतेति** ॥ १३ ॥

**अनेन विधृतं जन्म वायुनेदं शरीरकम् ॥**
**यच्चोत्पित्सु परं जन्म धृतं तदपि वायुना ॥ १४ ॥**

वायुनेत्यादेरर्थमाह । **अनेनेति** ॥ १४ ॥

**विष्टम्भकं पृथिव्यादेः सूक्ष्ममाकाशवत्स्थितम् ॥**
**यदात्मकमिदं लिङ्गं यत्सप्तदशमुच्यते ॥ १५ ॥**

सर्वाणि चेत्यादि व्याचष्टे । **विष्टम्भकमिति** । किं तदाकाशवदवस्थितं तदाह । **यदात्मकमिति** । लिङ्गं विशिनष्टि । **यदिति** ॥ १५ ॥

**यस्याऽऽवहादयो भेदाः सागरस्योर्मयो यथा ॥**
**वासनानां च सर्वासामाश्रयो यस्तु कथ्यते ॥ १६ ॥**

वायोरेव विशेषणान्तरम् । **यस्येति** । आवहप्रवहनिवहसंवहोद्वहा इत्यादयः । वायुः सूत्रं वायुना सूत्रेणेत्यनयोरर्थभेदं निरसितुमुक्तकर्माश्रयत्वं स्मारयति । **वासनानामिति** । तदेतद्वायुतत्त्वं सर्वविधारकं सूत्रमिति शेषः ॥ १६ ॥

**यत एवमयं लोकः परश्चायं च सर्वतः ॥**
**भूतानि चैव सर्वाणि वायुना ग्रथितान्यतः ॥ १७ ॥**

वायुनेत्यादिवाक्यार्थमुपसंहरति । **यत इति** । अयं वायुरुक्तरीत्या सर्वस्य यतो धारकोऽतो वायुनाऽयं लोकः परश्च लोकः सर्वाणि च भूतानि सर्वतो ग्रथितानीति योजना ॥ १७ ॥

**तस्यापसर्पणेऽङ्गानि नालं स्युः कर्मणे मृतौ ॥**
**इत्यर्थे लोकसंसिद्धां प्रसिद्धिं श्रुतिरब्रवीत् ॥ १८ ॥**

तस्मादित्यादेस्तात्पर्यमाह । **तस्येति** । प्राणात्मनो वायोरिति यावत् ॥ १८ ॥

**वायुनैव धृताङ्गानीत्यत्र लोकेऽपि विद्यते ॥**
**प्रसिद्धिरिति तामाह तस्मादित्येवमादिना ॥ १९ ॥**

प्रसिद्ध्यनुवादिनीं श्रुतिमादत्ते । **वायुनेति** । धृताङ्गानि भूतानीति शेषः ॥ १९ ॥

**वायुनैव धृतं यस्माल्लिङ्गदेहादिकं ततः ॥**
**ज्ञातयः पुरुषं प्रेतमाहुः कार्यं मृतेरिदम् ॥ २० ॥**

---

१ ख. 'त्यपि लो' ।

तस्मादित्यस्यार्थमाह । **वायुनेति** । पुरुषमित्यादेरर्थमाह । **ज्ञातय इति** । वायोः सर्वाधारत्वात्प्रेतं पुरुषं दृष्ट्वा प्राणत्यागस्य लिङ्गमेतदाहुरित्यर्थः ॥ २० ॥

**यथाऽस्याङ्गानि लक्ष्यन्ते विस्रस्तानि न पूर्ववत् ॥**
**मृतमेनं तथा मन्ये नेदृक्किद्धं मृतिं विना ॥ २१ ॥**

किं तदित्यपेक्षायां व्यस्त्रंसिषतेत्यादेरर्थमाह । **यथेति** । ज्ञातीनां प्रत्येकं मृतं प्रति वचनमिति दर्शयितुमुत्तमपुरुषैकवचनप्रयोगः ॥ २१ ॥

**वायुनैव यथाऽङ्गानि संदृब्धानि यदा तदा ॥**
**कर्मण्यानि भवन्त्यस्य न तु तानि तथा यतः ॥ २२ ॥**
**तस्मात्प्रवसितप्राणो मृतोऽयं नात्र संशयः ॥**
**यथोक्तसूत्रसद्भावे प्रसिद्धिर्गौतमेदृशी ॥ २३ ॥**

उक्तं मृतिलक्षणं प्रपञ्चयति । **वायुनेति** । यदाऽङ्गानि प्राणेन धृतानि तदा यथा तानि स्वव्यापारक्षमाणि न तथेदानीमस्याङ्गानि कर्मार्हाण्यतोऽयमप्राणो मृत इति चाऽऽहुरित्यर्थः । वायुना हीत्यादिप्रसिद्धिनिगमनतात्पर्यमाह । **यथोक्तेति** ॥ २२ ॥ २३ ॥

**सम्यगुक्तमिदं सूत्रं याज्ञवल्क्य यथा तथा ॥**
**तदन्तर्गतमात्मानं ब्रूह्यन्तर्यामिणं मम ॥ २४ ॥**

एवमेवेत्यादेरर्थमाह । **सम्यगिति** । यथा सूत्रमुक्तं तथा तदन्तर्गतं ममाऽऽत्मानमिति संबन्धः ॥ २४ ॥

**सूत्रादप्यन्तरतमस्त्वन्तर्याम्यधुनोच्यते ॥**
**कार्यकारणभावोऽयं यस्मिन्नुक्ते समाप्यते ॥ २५ ॥**

यः पृथिव्यामित्यादिसंदर्भस्य तात्पर्यमाह । **सूत्रादिति** । तस्मिन्नुक्तेऽपि वक्तव्यशेषमाशङ्क्याऽऽह । **कार्येति** । सोऽयमुच्यत इति पूर्वेण संबन्धः ॥ २५ ॥

**तिष्ठन्पृथिव्यां योऽत्र स्यात्सोऽन्तर्यामीति गृह्यताम् ॥**
**इत्युक्तावतिसंव्याप्तिप्रसक्तावुत्तरं वचः ॥ २६ ॥**

यः पृथिव्यामित्याद्यक्षराणि योजयति । **तिष्ठन्निति** । पृथिव्यां तिष्ठन्नन्तर्यामीत्युक्ते सर्वोऽपि तथेति सर्वान्तर्यामित्वप्रसङ्गादुत्तरं वाक्यमित्याह । **इत्युक्ताविति** ॥ २६ ॥

**अन्तरो यः पृथिव्याः स्यात्क्षितेरभ्यन्तरो हि यः ॥ २७ ॥**
**पृथिवी देवता तर्हि त्वदुक्तार्थसमन्वयात् ॥**
**इतिदोषापनुत्त्यर्थं यं न वेदेति भण्यते ॥ २८ ॥**

तदादाय व्याकरोति । **अन्तर इति** । क्षितेरचेतनत्वेन नियन्त्रपेक्षां सूचयितुं **हि**-शब्दः । सोऽन्तर्यामीति संबन्धः । यं पृथिवीत्यादि शङ्कापूर्वकमादत्ते । **पृथिवीति** । त्वदुक्तार्थस्य क्षितेरान्तरत्वस्य तद्देवतायाः सत्त्वादित्यर्थः ॥ २७ ॥ २८ ॥

**सूत्रेण ध्रियमाणेयं महाभूतशरीरिणी ॥**
**अहमस्मि पृथिव्येका बिभर्मि जगदव्ययम् ॥**
**इत्येवमभिमाना या नान्तर्यामीति सोच्यते ॥ २९ ॥**

पृथिवीशब्दार्थोक्तिपूर्वकं तस्या नान्तर्यामितेति प्रतिजानीते । **सूत्रेणेति**। अव्यय-मिति क्रियाविशेषणम् ॥ २९ ॥

**पृथिव्यपि च यं देवं न वेद स्वात्मनि स्थितम् ॥**
**सोऽन्तर्यामीति मन्तव्यो न त्वियं देवता क्षितिः ॥ ३० ॥**

तदेव वाक्ययोजनया द्रढयति । **पृथिवीति** ॥ ३० ॥

**क्षितौ करणवत्यां किमन्योऽपि करणादिमान् ॥**
**नैवं यतः पृथिव्येव शरीरं यस्य नापरम् ॥ ३१ ॥**

यस्य पृथिवी शरीरमित्यस्य शङ्कामाह । **क्षिताविति**। सा हि कार्यकरणवती तस्यामन्यो नियन्ता चेत्सोऽपि राजादिवत्तद्वान्वाच्यस्तथाच नासावीशोऽस्मदादिवदि-त्यर्थः । ईशस्य न स्वतस्तद्वत्तेत्याह । **नैवमिति** । तत्र हेतुत्वेन वाक्यमादत्ते । **यत इति** ॥ ३१ ॥

**क्ष्माकार्यकरणेनैव कार्यवान्करणी च यः ॥**
**न कार्यं करणं चास्य किंचिदात्मीयमिष्यते ॥ ३२ ॥**

तद्व्याचष्टे । **क्ष्मेति**। सोऽन्तर्यामीति शेषः । स्वाभाविकमस्य तद्वत्त्वं किं न स्यादि-त्याशङ्क्य न तस्य कार्यं करणं चेति श्रुत्यन्तरेणाऽऽह । **नेति** ॥ ३२ ॥

**अन्तर्यामी परः साक्षादशरीरोऽगुणोऽद्वयः ॥**
**विलक्षणोऽतो विज्ञेयः पृथिवीदेवतात्मनः ॥ ३३ ॥**

तथाऽपि कुतः स देवतातोऽर्थान्तरं तत्राऽऽह । **अन्तर्यामीति** ॥ ३३ ॥

**स्वकार्यभूतां तामेव पृथिवीं मोहवर्त्मना ॥**
**तत्र लब्धविशेषः संस्तामेवायं नियच्छति ॥ ३४ ॥**

यः पृथिवीमित्यादेरर्थमाह । **स्वकार्येति** । परो हि पृथिवीं स्वमोहद्वारैव करोति कृत्वा च तामेव प्रविश्य तत्र प्राप्तकार्यकरणः सन्नियच्छतीति योजना ॥ ३४ ॥

**अदाहकोऽपि वह्निः सन्दाह्यद्रव्यसमाश्रयात् ॥**
**तत्र लब्धात्मकस्तस्य दग्धा दाह्यस्य न स्वतः ॥ ३५ ॥**
**यथा ज्ञातैवमेवाऽऽत्मा देवताद्यात्मकार्यगः ॥**
**देवतादिशरीराद्यैर्देवतादीन्नियच्छति ॥ ३६ ॥**

---

१ ख स स पृथिवीदे° । २ ग. °वाऽन्तर्निय° ।

ननु परस्य स्वतो नियन्तृत्वं न वाऽऽद्ये नियम्यकार्यकरणापेक्षानुपपत्तिर्द्वितीये तदपेक्षयाऽपि तदसिद्धिरित्याशङ्क्य दृष्टान्तमाह । **अदाहकोऽपीति** । तत्र काष्ठादाविति यावत् । लब्धात्मकत्वं जाज्वल्यमानत्वम् । दार्ष्टान्तिकमाह । **ज्ञातेति** । उक्तदृष्टान्तानुसारेण चिद्धातुर्नियन्तव्यदेवताभूतादिस्वमोहकृतकार्यगतो देवतादीनि तदीयकार्यकरणैरेव नियच्छतीति योजना ॥ ३९ ॥ ३६ ॥

**स्वतस्त्वकरणोऽदेहो निर्गुणोऽभेद एव च ॥**
**चिदाभासस्वमोहोत्थकार्यैस्तद्वानिवेक्ष्यते ॥ ३७ ॥**

स्वकीयकरणादिभिर्नियन्तृत्वसंभवे किं परापेक्षयेत्याशङ्क्याऽऽह । **स्वतस्त्विति** । स्वतः कार्यादिहीनश्चेत्कथं तद्वत्त्वधीस्तत्राऽऽह । **चिदिति** ॥ ३७ ॥

**चतुर्धा प्रविभज्यैनं सात्वताः पर्युपासते ॥**
**तथा हैरण्यगर्भीयास्तथा पाशुपतादयः ॥ ३८ ॥**

उक्तेऽन्तर्यामिणि **पञ्चरात्रिणां** संमतिमाह । **चतुर्धेति** । वासुदेवसंकर्षणप्रद्युम्नानिरुद्धात्मनेति यावत् । **उक्तं हि**—

'परं ब्रह्म परं धाम चतुरात्मकमव्ययम्' इति ।
'प्रीणयेद्वासुदेवं च मूर्तित्रयसमन्वितम्' इति च ॥

**अन्योऽप्याह**—

"या वै सर्वेश्वरी शक्तिरीश्वराख्या नियामिका ।
ज्ञानादिभेदभिन्नेन आद्येन चतुरात्मना" इति ॥
"अन्तर्यामी च सर्वेषां देवानां पुरुषोत्तमः" इति च ।

**भागवतवद्योगशास्त्रविदो**ऽपि स्वशास्त्रोक्तक्रमेण कार्यकारणादिभावेन तं विभज्य ध्यायन्तीत्याह । **तथेति** । **उक्तं** हीश्वरप्रणिधानाद्वा क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरस्तत्र निरतिशयं सर्वज्ञबीजं स पूर्वेषामपि गुरुरित्यादि । तत्रैव **माहेश्वरसं**मतिमाह । **तथेति** । **यथोक्तम्**—

"निरञ्जने परे व्योम्नि नित्यस्थः कारणोऽव्ययः ।
साञ्जनं शक्तिकरणैरधितिष्ठति शंकरः[1] ॥
स्थितौ स कारकानेतान्समाक्रम्य स्वतेजसा ।
युनक्ति स्वार्थसिद्ध्यर्थं भूतैरनभिलक्षितः" इति ॥

आदिशब्देन सर्वे सेश्वरवादिनो गृह्यन्ते ॥ ३८ ॥

**कृष्णद्वैपायनो व्यासो वेदात्मा ध्वान्तहानिकृत् ॥**
**प्राहेममेव बहुशः प्राणिनां हितकाम्यया ॥ ३९ ॥**

१ ख. 'यंकरः' ।

तत्रैव **व्याससंमतिमाह । कृष्णेति ॥ ३९ ॥**

**नारायणः परोऽव्यक्तादण्डमव्यक्तसंभवम् ॥**
**अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी ॥ ४० ॥**

कथमाहेति तदाह । **नारायण इति** । कथं तर्हि तस्य कारणत्वमज्ञानद्वारेत्याह । **अण्डमिति** । भूरादिलोकानां हेत्वन्तरं वारयति । **अण्डस्येति** । तानेव विशेषतो दर्शयति । **सप्तेति** । चशब्दोऽनुक्तलोकसमुच्चयार्थः ॥ ४० ॥

**तस्मै नमोऽस्तु देवाय निर्गुणाय गुणात्मने ॥**
**नारायणाय विश्वाय देवानां परमात्मने ॥ ४१ ॥**

किमित्यन्तर्यामी नारायणो निर्दिश्यते सर्वपुरुषार्थहेतुप्रकटीभावविषयत्वेनेत्याह । **तस्मा इति** ॥ ४१ ॥

**एतमेव समुद्दिश्य मन्त्रो नारायणस्तथा ॥**
**वेदविद्भिर्महाप्राज्ञैः पुरुषैर्विनियुज्यते ॥ ४२ ॥**

न केवलं पुराणागमाभ्यामेव सोऽधिगम्यते किंतु श्रुत्यक्षरैरपीत्याह । **एतमेवेति** । **सहस्रशीर्षं** देवं विश्वाक्षं विश्वशंभुवम् । विश्वं नारायणं देवमक्षरं परमं पदमित्यादि-**मन्त्रो** वेदार्थविद्भिरन्तर्यामिणमुद्दिश्य विनियुक्तोऽतः स वैदिक इत्यर्थः ॥ ४२ ॥

**प्रत्यग्ध्वान्तं चिदाभासं स्वकार्यनियमात्मकम् ॥**
**तदुपाधिर्नियन्तैष परः प्रोक्तो न तु स्वतः ॥ ४३ ॥**

केचित्तु निरुपाधिकमेव परमन्तर्यामिणमाहुस्तान्प्रत्याह । **प्रत्यगिति** । चिदाभासाक्रान्तं प्रत्यगज्ञानं स्वकीयविवर्तनियमनरूपमिष्टमेव तदुपहितश्च परमात्मा नियन्तोच्यते न स्वतस्तस्य नियन्तृत्वं निर्व्यापारत्वादित्यर्थः । सोपाधिकस्यैवान्तर्यामित्वं स्फुटी करिष्यति ॥ ४३ ॥

**सर्वज्ञः सर्वशक्तिश्च सर्वात्मा सर्वगो ध्रुवः ॥**
**जगज्जनिस्थितिध्वंसहेतुरेष सदेश्वरः ॥ ४४ ॥**

निरुपाधिकस्य सर्वज्ञत्वादिवदन्तर्यामित्वमपि किं न स्यादित्याशङ्क्य दृष्टान्तासिद्धिमाह । **सर्वज्ञ इति** । सर्वात्मत्वादौ हेतुः । **जगदिति**। अत्र च सर्वज्ञत्वादि हेतुः । सदाशब्दः सर्वत्र संबध्यते ॥ ४४ ॥

**स एषोऽभ्यन्तरो देवः सर्वकारणकारणः ॥**
**नियच्छति क्षितिं देवीं सर्वावस्थासु सर्वदा ॥ ४५ ॥**

यः पृथिवीमित्यादेरर्थमुक्त्वैष त आत्मेत्यादेरर्थमाह । **स एष इति** । सर्वस्य

---

१ क. °प्रत्नीभा° । २ ख. °श्वाख्यं वि° । ३ ख. °श्वसंभव° ।

कारणं सूत्रं तस्यापि कारणत्वेन स्थितो देवः सर्वासु स्वव्यापारस्थितिषु सदा पृथिवीं देवतामभ्यन्तरः सन्यो नियच्छति स त्वया बुभुत्सितोऽन्तर्यामी स च सर्वेषामात्मेत्यर्थः ॥ ४५ ॥

तेजःसामान्यमात्रं स्यात्तदधिष्ठातृदेवता ॥
एवं तमस्यपि ज्ञेयं क्षेत्रज्ञश्चाऽऽत्मसंज्ञितः ॥ ४६ ॥

प्रथमपर्यायस्योत्तरपर्यायाणां तुल्यत्वादव्याख्येयत्वं मत्वा यस्तेजसीत्यत्र तेजःशब्दस्य प्रकाशसामान्यविषयत्वमाह । तेज इति । यत्तेजो न वेदेत्यत्र विवक्षितमाह । तदिति । यस्तमसीत्यत्र तमःशब्देन तेजोविपरीतमप्रकाशमात्रं गृह्यते । यं तमो न वेदेति च तदधिष्ठातृदेवतेत्याह । एवमिति । य आत्मनि तिष्ठन्निति माध्यंदिनास्तत्राऽऽत्मशब्दार्थमाह । क्षेत्रज्ञश्चेति ॥ ४६ ॥

देवतास्थानकरणत्रयं प्राणगिरोच्यते ॥
नियच्छति यतो गन्धे त्रयमप्येतदीश्वरः ॥ ४७ ॥

यः प्राणे तिष्ठन्नित्यत्र प्राणं व्याचष्टे । देवतेति । प्राणशब्देन घ्राणग्रहणम् । देवतादेरपि ग्रहे हेतुमाह । नियच्छतीति । एतेन यो वाचीत्यादि व्याख्यातम् ॥ ४७ ॥

पृथिवी यं न वेदेति यदुक्तं तस्य निर्णयः ॥
अदृष्टोऽश्रुत इत्युक्त्या क्रियते ज्ञानशुद्धये ॥ ४८ ॥

अदृष्टो द्रष्टेत्यादेस्तात्पर्यमाह । पृथिवीति । यं पृथिवी न वेदेत्यादिना पृथिव्यादिक्षेत्रज्ञो नान्तर्यामिणं जानातीत्युक्तम् । स हि महाभागधेयः स्वात्मनिष्ठमन्तर्यामिणं कुतो न विद्यादित्याशङ्क्य तस्याविषयत्वमनन्तरश्रुत्या निश्चीयते विनाऽपि विषयत्वं तत्स्वरूपं ज्ञातुं शक्यमिति ज्ञापयितुमित्यर्थः ॥ ४८ ॥

द्रष्टृदर्शनदृश्यानां प्रत्यग्दृष्टिसमीक्षणे ॥
जाड्यपारार्थ्यहेतुभ्यां शक्तिर्नास्ति मनागपि ॥ ४९ ॥

कस्मादस्मदादिवदन्तर्यामी न विषयस्तत्राऽऽह । द्रष्ट्रिति ॥ ४९ ॥

न द्रष्ट्रोर्दृश्ययोर्नापि तथा दर्शनयोर्मिथः ॥
ग्राह्यग्राहकसंबन्धस्तत्साक्षी न च वीक्ष्यते ॥ ५० ॥

किंच द्रष्ट्रादेरन्योन्याग्राह्यत्वेनान्तर्यामिग्राह्यत्वान्न तस्य तैर्ग्राह्यतेत्याह । नेत्यादिना । द्रष्ट्रोर्वा दृश्ययोर्वा दर्शनयोर्वा न मिथो ग्राह्यग्राहकत्वं समत्वात्तेषां द्रष्ट्रादीनां साक्ष्यन्तर्यामी तैश्च विषयैर्न दृश्यत इत्यर्थः ॥ ५० ॥

रूपादिदर्शनान्तस्थ[1] आगमापायसाक्ष्यसौ ॥
नित्यात्मदृष्टिश्चिन्मात्रः पश्येत्तं पृथिवी कथम् ॥ ५१ ॥

---

१ क. ग. 'र्शनोऽन्त' ।

रूपेषु मधुकाण्डोक्ततत्त्वमाद्यर्थनिर्णयदृष्टेर्युक्तं तेषां पूर्वेणैकवाक्यत्वमित्यर्थः। काण्डयो-र्द्वयोरेकवाक्यत्वं निगमयति। **तदिति**। तदा परामृष्टमेकवाक्यत्वम् ॥ १७ ॥

**यदिदं कर्मणोऽशेषसाधनं मृत्युनाऽऽप्लुतम् ॥**
**स्वामिमन्त्रर्त्विगग्न्यादि त्वभिपन्नं वशीकृतम् ॥ १८ ॥**

काण्डादिसंगतीरुक्त्वा पदार्थव्याख्यामारभते । **यदिदमिति**। आप्लुतं व्याप्तमिति यावत् । तस्य कर्मणः ससाधनस्य कर्ता यजमानः केन मृत्योराप्तेर्मुक्तो भवतीति शेषः ॥ १८ ॥

**परिच्छेदकृदज्ञानं सासङ्गं मृत्युसंज्ञितम् ॥**
**केनायं यजमानोऽतो मृत्योराप्तेर्विमुच्यते ॥ १९ ॥**

को मृत्युर्येन ससाधनं कर्म संसृष्टं वशीकृतं च यस्य चाऽऽप्तेर्मुमुक्षेत्यत आह। **परिच्छेदेति**। ब्रह्मक्षत्रादिभेदकारणं भ्रान्तिज्ञानं रागादिसहितं मृत्युरित्यर्थः। केने-त्यादिवाक्यमादत्ते। **केनेति** ॥ १९ ॥

**यन्मर्त्यसाधनं साध्यं मर्त्यं तदपि जायते ॥**
**साधनानुमितं साध्यं मुक्तिः केनात उच्यते ॥ २० ॥**

यथोक्तमृत्युनाशे ससाधनं सर्वमेव कर्म त्यक्तं स्यान्न चानतिशयपुमर्थहेतुकर्मत्या युक्तस्ततो नायं प्रश्नो युज्यते तत्राऽऽह। **यन्मर्त्येति**। हेतोर्नाशित्वेऽपि फलस्या शित्वं मोक्षवदित्याशङ्क्याऽऽह। **साधनेति**। कारणानुसारित्वात्कार्यस्य मुक्तेश्चाव त्वान्नाशित्वं साध्यस्यावश्यंभावीति भावः। सहेतुफलस्य कर्मणो नाशित्वेन त्य त्वात्तद्व्यापकस्य मृत्योरत्ययोपायो वाच्य इति प्रश्नं निगमयति। **मुक्तिरिति** ॥ २

**होत्रर्त्विजाऽग्निना वाचा मृत्योराप्तेर्विमुच्यते ॥**
**इति प्रश्नप्रतिवचो याज्ञवल्क्योऽप्युवाच तम् ॥ २१ ॥**

परिहारमवतारयति। **होत्रेति**। तमित्यश्वलस्य निर्देशः ॥ २१ ॥

**प्रवक्ता याज्ञवल्क्योऽत्र तं पृच्छन्त्यश्वलादयः ॥**
**सराजके समाजेऽयं विचारः क्रियते महान् ॥ २२ ॥**

अथाश्वलो याज्ञवल्क्यं जेतुं जल्पेन प्रवृत्तस्तत्र तेनापि तेनैव च्छलादि प्रयोक्तुं ...हृदयवाचामहृदया एव प्रतिवाचो भवन्तीति न्यायादतो यथातत्त्वं प्रतिवचनमनु- ... तत्त्वनिर्णयफलत्वानुपपत्तेस्तत्राऽऽह। **प्रवक्तेति**। अत्रेति जल्पकथोक्तिः। ...निर्णयफलत्वम्। ज्ञानवतामेवाश्वलादीनां जयादिविवक्षया प्रश्न- ...न्येषा जल्पकथा साऽपि कदाचिन्महाजनपरिगृहीता

रूपेषु मधुकाण्डोक्ततत्त्वमाद्यर्थनिर्णयदृष्टेर्युक्तं तेषां पूर्वेणैकवाक्यत्वमित्यर्थः। काण्डयो-र्द्वयोरेकवाक्यत्वं निगमयति। तदिति। तदा परामृष्टमेकवाक्यत्वम्॥ १७॥

**यदिदं कर्मणोऽशेषसाधनं मृत्युनाऽऽप्लुतम्॥**
**स्वामिमन्त्रर्त्विगग्न्यादि त्वभिपन्नं वशीकृतम्॥ १८॥**

काण्डादिसंगतीरुक्त्वा पदार्थव्याख्यामारभते। **यदिदमिति**। आप्लुतं व्याप्तमिति यावत्। तस्य कर्मणः ससाधनस्य कर्ता यजमानः केन मृत्योराप्तेर्मुक्तो भवतीति शेषः॥ १८॥

**परिच्छेदकृदज्ञानं सासङ्गं मृत्युसंज्ञितम्॥**
**केनायं यजमानोऽतो मृत्योराप्तेर्विमुच्यते॥ १९॥**

को मृत्युर्येन ससाधनं कर्म संसृष्टं वशीकृतं च यस्य चाऽऽप्तेर्मुमुक्षेत्यत आह। **परिच्छेदेति**। ब्रह्मक्षत्रादिभेदकारणं भ्रान्तिज्ञानं रागादिसहितं मृत्युरित्यर्थः। केने-त्यादिवाक्यमादत्ते। केनेति॥ १९॥

**यन्मर्त्यसाधनं साध्यं मर्त्यं तदपि जायते॥**
**साधनानुमितं साध्यं मुक्तिः केनात उच्यते॥ २०॥**

यथोक्तमृत्युनाशे ससाधनं सर्वमेव कर्म त्यक्तं स्यान्न चानतिशयपुमर्थहेतुकर्मत्या युक्तस्ततो नायं प्रश्नो युज्यते तत्राऽऽह। **यन्मर्त्येति**। हेतोर्नाशित्वेऽपि फलस्या शित्वं मोक्षवदित्याशङ्क्याऽऽह। **साधनेति**। कारणानुसारित्वात्कार्यस्य मुक्तेश्चात्र त्वान्नाशित्वं साध्यस्यावश्यंभावीति भावः। सहेतुफलस्य कर्मणो नाशित्वेन त्य त्वात्तद्व्यापकस्य मृत्योरत्ययोपायो वाच्य इति प्रश्नं निगमयति। **मुक्तिरिति**॥

**होत्रर्त्विजाऽग्निना वाचा मृत्योराप्तेर्विमुच्यते॥**
**इति प्रश्नप्रतिवचो याज्ञवल्क्योऽप्युवाच तम्॥ २१॥**

परिहारमवतारयति। **होत्रेति**। तमित्यश्वलस्य निर्देशः॥ २१॥

**प्रवक्ता याज्ञवल्क्योऽत्र तं पृच्छन्त्यश्वलादयः॥**
**सराजके समाजेऽयं विचारः क्रियते महान्॥ २२॥**

अथाश्वलो याज्ञवल्क्यं जेतुं जल्पेन प्रवृत्तस्तत्र तेनापि तेनैव च्छलादि प्रयोक्तुं ...गहृदयवाचामहृदया एव प्रतिवाचो भवन्तीति न्यायादतो यथातत्त्वं प्रतिवचनमनु- ... नत्त्वनिर्णयफलत्वानुपपत्तेस्तत्राऽऽह। **प्रवक्तेति**। अत्रेति जल्पकथोक्तिः। ...निर्णयफलत्वम्। ज्ञानवतामेवाश्वलादीनां जयादिविवक्षया प्रश्न- ...न्येपा जल्पकथा साऽपि कदाचिन्महाजनपरिगृहीता

तत्त्वनिर्णयं फलति। उक्तं हि—तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवदिति। वात्स्यायनश्चाऽऽह—तानि हि प्रयुज्यमानानि परपक्षविघातेन स्वपक्षं रक्षन्तीति। अन्योऽप्याह—तत्त्वसंरक्षणार्थत्वान्नासदाचार इति। अतो वादवज्जल्पोऽपि कदाचित्तत्त्वनिर्णायक इति भावः॥ २२॥

**यजमानस्य येयं वाग्घोता चैतद्द्वयं यदा॥**
**अधिदैवात्मना वेत्ति स होतैवंविधो भवेत्॥ २३॥**

वाग्वै यज्ञस्येत्यादेरर्थमाह। **यजमानस्येति**। अध्यात्मं यजमानस्य वागधियज्ञं होता चेति द्वयमग्निरूपेण यदा होता ध्यायति तदा स यजमानस्याऽऽत्मनश्च मृत्युनाशे हेतुः स्यादित्यर्थः॥ २३॥

**अनन्तविग्रहः सोऽग्निर्होता मृत्योर्यथोदितात्॥**
**यजमानस्य मुक्तिः स्यादतिमुक्तिस्तथैव च॥ २४॥**

स मुक्तिरित्याद्यवतारयति। **अनन्तेति**॥ २४॥

**आसुरात्साधनाद्दैवप्राप्तिर्मुक्तिरिहोच्यते॥**
**साध्यादप्यासुराद्दैवसाध्याप्तिरतिमुक्तिता॥ २५॥**

मुक्तिपदार्थमाह। **आसुरादिति**। ज्ञानहीनात्केवलात्पापमिश्रिताद्वा पुण्यात्कर्मणः द्याप्तिहेतोः समुच्चयस्याऽऽप्तिरत्र मुक्तिरित्यर्थः। अतिमुक्तिशब्दार्थमाह। **ादिति**। आसुरसाधनफलात्स्वर्गादेर्दैवसाधनफलस्य सूत्रादेराप्तिरत्रातिमुक्तिरिदा॥ २५॥

**यथोक्तोपासनादेव कैवल्यं चेद्विवक्ष्यते॥**
**ब्रह्मविद्या किमर्थेयं नान्यन्मुक्तेः फलं ततः॥ २६॥**

तु सूत्रोपास्तेः समुच्चितायाः साक्षान्मुक्तिरित्यस्मिन्नर्थे साऽतिमुक्तिरिति वाक्यं तान्प्रत्याह। **यथेति**। सा कर्मशेषतया तत्फलेति चेन्नेत्याह। **नान्यदिति**। ब्रह्मविद्यावशादिति यावत्। विद्याकर्मणोः शेषशेषित्वं दूषितमिति भावः॥ २६॥

**आसुरात्कर्मणो मृत्योरतिमुक्तिरिहोदिता॥**
**कालात्कर्मातिरेकेण मृत्योर्मुक्तिरिहोच्यते॥ २७॥**

यदिदमित्याद्युत्तरवाक्यतात्पर्यं वक्तुं वृत्तमनुवदति। **आसुरादिति**। उत्तरं वाक्यमवतारयति। **कालादिति**। कर्मणो मुक्तिरुक्ता चेत्कालादपि सोक्तैव तस्य जगतो भावेन मृत्युत्वादित्याशङ्क्याऽऽह। **कर्मेति**॥ २७॥

**प्रयोगसमवाय्येव द्रव्यकर्त्रादिसाधनम्॥**
**तत्प्रयोगावसाने च सर्वं तदप[illegible]भः॥ २८॥**

[illegible]ऽऽह। एष इति॥ २८॥

तन्निरपेक्षतया कालस्य मृत्युत्वं वक्तुं भूमिकां करोति । **प्रयोगेति** । तस्य शेषिणो विनाशे स्वरूपेण सतोऽपि कर्त्रादेस्तच्छेषत्वनाशादपवर्गवाचोयुक्तिः ॥ २८ ॥

**प्रयोगावसितेस्तूर्ध्वं कालः प्राक्च प्रयोगतः ॥**
**क्षपयन्वर्ततेऽजस्रं सर्वं तत्कर्मसाधनम् ॥ २९ ॥**

कालस्य मृत्युत्वमु""ादयति । **प्रयोगावसितेरिति** ॥ २९ ॥

**तस्मा कर्मातिरेकेण कालो मृत्युः प्रतीयताम् ॥**
**ततोऽपि मुक्तिर्वक्तव्येत्यत आरभ्यते परः ॥ ३० ॥**

तस्य तत्क्षपयितृत्वे फलितमाह । **तस्मादिति** । तस्य मृत्युत्वे सिद्धे किं जातं तदाह । **ततोऽपीति** । कर्मदृष्टान्तार्थोऽपिशब्दः ॥ ३० ॥

**कालश्च द्विविधः प्रोक्त एकोऽहोरात्रलक्षणः ॥**
**तिथ्यादिलक्षणश्चान्यस्ताभ्यां मुक्तिरिहोच्यते ॥ ३१ ॥**

उत्तरग्रन्थस्थप्रश्नयोर्विषयं भेत्तुं कण्डिकाद्वयमादत्ते । **कालश्चेति** ॥ ३१ ॥

**उपस्थापयतः कर्म तथा क्षपयतो यतः ॥**
**अहोरात्रे ततो मृत्युस्ताभ्यां मुक्तिः कुतो भवेत् ॥ ३२ ॥**

अहोरात्रयोर्मृत्युत्वोक्तिपूर्वकं ताभ्यां मुक्तिहेतुं पृच्छन्नाद्यं प्रश्नं विभजते । उपस्थापयत इति ॥ ३२ ॥

**अध्यात्मं चक्षुरध्वर्युरधियज्ञं द्वयं रविः ॥**
**साक्षादनन्तदेहोऽयमिति ध्यायन्विमुच्यते ॥ ३३ ॥**

परिहारतात्पर्यमाह । **अध्यात्ममिति** । यजमानस्याध्यात्मं चक्षुरधियज्ञम त्युभयमनवच्छिन्नः सवितैवेति साक्षाद्ध्यायन्नध्वर्युः स्वयमहोरात्राख्यान्मृत्योर्मुच्य मानं च मोचयतीत्यर्थः ॥ ३३ ॥

**आत्मावयव एवायं सूर्यश्चक्षुर्ममांशुमान् ॥**
**अध्वर्युरहमेवेति साक्षात्कृत्वा विमुच्यते ॥ ३४ ॥**

चक्षुर्वै यज्ञस्येत्यादेस्तात्पर्यं वदन्नुक्तं व्यनक्ति । **आत्मेति** । ममाध्वर्योः संबधी योऽयमात्मा यजमानस्तदवयवश्चक्षुरहं चाध्वर्युरित्युभयमंशुमानेवेति साक्षाद्ध्यानं कृत्वा ऽध्वर्युस्तिष्ठति तदा यजमानोऽध्वर्युश्चाहोरात्राख्यमृत्योर्मुच्यत इत्यर्थः ॥ ३४ ॥

**कलावृद्धिक्षयाभ्यां तु पक्षयोरुभयोस्तथा ॥**
**कर्तेह तत्प्राप्त्या पक्षाभ्यां विप्रमुच्यते ॥ ३५ ॥**

ब्रह्मणर्त्विजा मनसा चन्द्रेणेति माध्यंदिनश्रुत्या तावदु-

त्तरमाह । **कलेति** । चन्द्रमसि वृद्धिह्रासयोर्भावात्पक्षयोरपि तयोः सत्त्वात्सादृश्यात्स तत्कर्ताऽतश्चन्द्रात्मना ब्रह्मणो मनसश्च ध्यानात्पक्षद्वयात्मकमृत्योर्यजमानो ब्रह्मा च मुच्यत इत्यर्थः ॥ ३५ ॥

**ह्रासवृद्ध्योर्यतः कर्ता वायुश्चन्द्रमसस्ततः ॥**
**वायुनैवोपसंहारः प्राणोद्गात्रोरयं कृतः ॥ ३६ ॥**

उद्गात्र्र्त्विजा वायुना प्राणेनेति काण्वश्रुतेस्तात्पर्यमाह । **ह्रासेति** । सूत्रात्मवायुः स्वावयवस्य चन्द्रमसो वृद्ध्यादौ कारयिता तद्यजमानप्राणस्योद्गातुश्च वाय्वात्मनैवोपसंग्रहः काण्वश्रुतौ कृतोऽतो वाय्वात्मनैवोद्गात्रोदर्ध्यानात्पक्षद्वयात्मकमृत्योरुद्गाता यजमानश्च मुच्यत इत्यर्थः ॥ ३६ ॥

**मनोऽध्यात्मं यदस्याभूद्ब्रह्मा चैवाधियज्ञगः ॥**
**तस्याधिदेवता चन्द्र इति माध्यंदिनश्रुतिः ॥ ३७ ॥**

किमिदं विरुद्धं ध्यानद्वयमनुष्ठेयमित्याशङ्क्य शाखाभेदेनोदितानुदितहोमवद्विकल्पमभिप्रेत्य कलावृद्धिक्षयाभ्यामित्यत्रोक्तं स्मारयन्नाह । **मन इति** ॥ ३७ ॥

**कर्मतः कालतो मृत्योर्मुक्तोऽयं स्वर्गमेष्यति ॥**
**तं प्रयास्यति केनायमाक्रमेणेति पृच्छयते ॥ ३८ ॥**

यदिदमन्तरिक्षमित्यादिप्रश्नं वृत्तमनूद्यावतारयति । **कर्मत इति** ॥ ३८ ॥

**स्वर्गलोकगतावत्र साधनं पृच्छयते यतः ॥**
**अन्तरिक्षमनाधारं गतौ हेतुनिषेधनम् ॥ ३९ ॥**

दा आक्रमशब्दार्थं दर्शयन्प्रश्नविषयं विशदयति । **स्वर्गेति** । तत्र हेतुः । **यत इति** । न्या रिक्षमनाधारमिति गतौ हेतोर्निषेधनं यतो भात्यतो गतिसाधनप्रश्नमर्हतीति योजना ९ ॥

**न तु देहग्रहे प्रश्नः सति गन्तरि पृच्छयते ॥**
**अग्न्यादिदृष्टिभिश्चास्य देहः प्राक्प्रतिपादितः ॥ ४० ॥**

भर्तृप्रपञ्चास्त्वारम्बणाक्रमणशब्दयोः शरीरविषयत्वमिच्छन्तो देहग्रहविषयमिमं प्रश्नं व्याचक्षते तान्प्रत्याह । **न त्विति** । तत्र हेतुः । **सतीति** । गन्तरि सत्येव केनेति पृच्छयते न च विना देहं गन्तृत्वमतो गतिबलात्तद्योग्यदेहलाभान्न तद्ग्रहे प्रश्नसिद्धिरित्यर्थः । किंच सोऽग्निरभवदित्यादिना चक्षुरादीनामग्न्यादिदृष्ट्या द्रष्टुर्देहस्योद्गीथब्राह्मणे सिद्धत्वाददेहस्य द्रष्टृत्वायोगान्न तद्ग्रहे प्रश्न इत्याह । **अग्न्यादीति** ॥ ४० ॥

---

१ ख. ग. °भूद्ब्रह्मर्त्विग्योऽधि° । २ ख. °दिनी श्रु° । ३ ख. पृच्छाति ।

मनोऽधियज्ञं ब्रह्मैव ब्रह्मा चन्द्रोऽधिदैवतम् ॥
चन्द्रेण मनसा लोकमवष्टम्भेन यास्यति ॥ ४१ ॥

परपक्षं निराकृत्य ब्रह्मणेत्यादिपरिहारतात्पर्यमाह । **मन इति ।** यदध्यात्मं यजमानस्य मनस्तदधियज्ञमृत्विग्ब्रह्मैव स चाधिदैवश्चन्द्रोऽतश्चन्द्रात्मना दृष्टेन मनसा ब्रह्मणाऽवष्टम्भेन ब्रह्मलोकं यजमानो ब्रह्मा च प्राप्स्यतीत्यर्थः ॥ ४१ ॥

अध्यात्मं प्राण एव स्यादुद्गाता योऽधियज्ञगः ॥
स वायुरिति पाठे स्याद्व्याख्या माध्यंदिने त्वियम् ॥ ४२ ॥

काण्वश्रुत्योत्तरमुक्त्वा माध्यंदिनश्रुत्याऽपि तदाह । **अध्यात्ममिति ।** योऽध्यात्मं यजमानस्य प्राणः सोऽधियज्ञमुद्गाता स्यात्स च वायुरिति दृष्टा ब्रह्मलोकप्राप्तिरित्युद्गात्रर्त्विजा वायुना प्राणेनेति माध्यंदिनपाठे व्याख्या शाखाभेदेन च विकल्प इत्यर्थः ॥ ४२ ॥

यजमानश्रुतेरत्र पूर्वोद्गीथै[2]कवाक्यतः ॥
यजमानो जपस्तत्र ज्ञानं नेत्यवसीयताम् ॥ ४३ ॥

किमिदमुपास्तिजातं याजमानमार्त्विज्यं वेति वीक्षायामाह । **यजमानेति ।** उद्गीथब्राह्मणे यजमानस्वामिकस्तत्कर्तृकश्च जपो ज्ञानं तु तत्स्वामिकमपि न तत्कर्तृकं किंत्वार्त्विज्यमित्युक्तं तथाऽत्रापि यजमानश्रुतेस्तत्स्वामिकमेव ज्ञानमृत्विक्कर्तृकमित्यवसेयमुद्गीथवाक्येनास्य वाक्यैकवाक्यत्वादित्यर्थः ॥ ४३ ॥

संभाव्यते न यत्तत्र यजमानस्य मानतः ॥
अस्तु कामं तदुद्गातुर्नतु तद्यजमानगम् ॥ ४४ ॥

स्वसुवर्णादिज्ञानवदुद्गीथादिज्ञानमपि किमित्युद्गातृस्वामिकं न स्यादित्याशङ्क्या[1]ह । **संभाव्यत इति ।** तत्रेत्युपासनान्युक्तानि तेषु यज्ज्ञानं सुवर्णादिविषयं यजमानतोऽसंभावितं तदौद्गातृकमेव यत्तु यजमानगतमुद्गीथादिज्ञानं न तदार्त्विज्यमि-त्यर्थः ॥ ४४ ॥

इतीत्युक्तपरामर्शो ह्यतिदेशार्थ उच्यते ॥
इतोऽन्यत्रातिमोक्षा ये तेऽप्येवमिति वीक्ष्यताम् ॥ ४५ ॥

प्रकृतज्ञानस्योद्गात्रादिकर्तृत्वं यजमानस्वामिकमित्युक्त्वोत्तरवाक्यस्थेतिशब्दार्थमाह । **इतीत्युक्तेति ।** तत्फलं हिशब्दसूचितमाह । **अतिदेशार्थ इति ।** अतिमोक्षा इत्यस्यार्थं वदन्नतिदेशप्रकारमाह । **इतोऽन्यत्रेति ।** यथा वागादयोऽन्याद्यात्मना दृष्टा मृत्योरतिमोक्षहेतवस्तथाऽनुक्तास्त्वगादयोऽपि वाय्वादिरूपेण दृष्टास्तद्धेतवो द्रष्टव्या इत्यर्थः ॥ ४५ ॥

---

१ क. म तमाह । २ ख. ग. °नं °पस° ।

तत्रैव हेत्वन्तरमाह । **रूपादीति ।** स्वीयरूपादिज्ञानसाक्षित्वात्तदागमापायसाक्षित्वादान्तरत्वाच्चिन्मात्रतया नित्यात्मदृष्टित्वाच्चान्तर्यामिणं पृथिव्यादिक्षेत्रज्ञो न क्षमो वीक्षितुमित्यर्थः ॥ ९१ ॥

**मागोचरातिवर्तित्वादसाधारणदृष्टितः ॥**
**द्रष्टुरन्यस्य चाभावान्न तं पश्यन्ति देवताः ॥ ९२ ॥**

इतश्चास्याविषयतेत्याह । **मागोचरेति ।** शब्दादिहीनत्वात्स्वप्रकाशत्वाद्द्रष्ट्रन्तराभावाच्च न साक्षिणो ग्राह्यतेत्यर्थः ॥ ९२ ॥

**दृष्टेर्द्रष्टारमित्यत्र यः साक्षी मागुदाहृतः ॥**
**अन्तर्यामीति सोऽत्रापि नातोऽन्योऽस्तीति भण्यते ॥ ९३ ॥**

अदृष्टो द्रष्टेतिवाक्यार्थमुक्त्वाऽन्ये नियन्तव्या विज्ञातारोऽन्यो नियन्ताऽन्तर्यामीति भेदशङ्कायां नान्योऽतोऽस्तीत्याद्यवतारयति । **दृष्टेरिति ॥** ९३ ॥

**बुद्ध्यन्तः पर एवाऽऽत्मा विज्ञानात्मेति भण्यते ॥**
**बुद्ध्यागमापायसाक्षी नियन्तैवोच्यते परः ॥ ९४ ॥**

भेदो नास्ति चेत्कस्तर्हि ज्ञाता तत्राऽऽह । **बुद्ध्यन्त इति ।** परश्चेद्बुद्ध्युपाधिर्ज्ञाता कथं सोऽन्तर्यामी नियन्तव्याभावात्तत्राऽऽह । **बुद्धीति ।** एवशब्दः परशब्दसंबन्धी ॥ ९४ ॥

**अव्यावृत्ताननुगतः पूर्णः स्वात्मन्यवस्थितः ॥**
**संसारहेत्वसंबन्धः सर्वो ब्रह्मेति भण्यते ॥ ९५ ॥**

कथं तर्हि तस्य निर्विशेषत्वं तत्राऽऽह । **अव्यावृत्तेति ।** कर्तृत्वनियन्तृत्वादिष्वुदासेन सर्वाश्चिद्धातुरनवच्छिन्नब्रह्मरूपेण स्वमहिमस्थितो यदेष्टस्तदा बन्धतद्धेतुसंबन्धशून्यश्चिदात्मा निर्विशेषं ब्रह्मेति व्यपदेशमर्हतीत्यर्थः ॥ ९५ ॥

**कार्यकारणरूपस्य संसारस्य मृषात्मनः ॥**
**अपूर्वानपरानन्ततत्त्वं ब्रह्मैव वाक्यतः ॥ ९६ ॥**

बन्धाद्यसंबन्धीत्युक्तत्वात्तस्य पृथगवस्थानमाशङ्क्याऽऽह । **कार्येति ।** इदं सर्वमित्यादिवाक्यादित्यर्थः ॥ ९६ ॥

**पृथिव्यादेश्च द्रष्टृत्वं तथाऽन्तर्यामिणः श्रुतम् ॥**
**दृष्टृभेदः प्रसक्तोऽतो नान्योऽतोऽस्तीति भण्यते ॥ ९७ ॥**

नेत्यादिवाक्यतात्पर्यं निगमयति । **पृथिव्यादेश्चेति ।** अतः कार्यकारणात्मकजगतो ब्रह्मातिरेकेणाभावादित्यर्थः ॥ ९७ ॥

**एष एवैकलो द्रष्टा कारकादिविवर्जितः ॥**
**संभाव्यते तदज्ञानकार्यमात्रस्तमस्विभिः ॥ ९८ ॥**

द्रष्ट्रादेरन्यस्याभावे कथं तद्भेदधीस्तत्राऽऽह । **एष इति ॥** ९८ ॥

मां प्रत्येवैतीह यथाऽसाधारण्येन भास्करम् ॥
संभावयन्ति द्रष्टारस्तथाऽज्ञास्तदबोधजैः ॥ ५९ ॥

अद्वयश्चिद्धातुः स्वाज्ञानजबुद्ध्याद्यवच्छिन्नो बहुधाऽऽरोपितो मूढैरित्येतद्दृष्टान्तेन साधयति । **मामिति** । यथा लोके सवितुः सर्वसाधारण्येऽपि मां प्रत्येवाभिमुखस्तिष्ठति स्वासाधारण्येन तमारोपयन्ति द्रष्टारस्तथा मूढाः स्वाविद्योत्थबुद्ध्यादिभिरात्मानं बहुधा कल्पयन्तीत्यर्थः ॥ ५९ ॥

दृष्टिरेकैव सर्वत्र सर्वानात्मविलक्षणा ॥
आभाति बहुधैवेयं तदविद्योत्थहेतुभिः ॥ ६० ॥

श्लोकानामादितः समष्ट्यङ्काः—६५१९

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके तृतीयाध्यायस्य
सप्तममन्तर्यामिब्राह्मणम् ॥ ७ ॥

अद्वया प्रत्यग्दृष्टिरविद्ययाऽनेकधा भातीत्युक्तमुपसंहरति । **दृष्टिरिति** ॥ ६० ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां तृतीयाध्यायस्य
सप्तममन्तर्यामिब्राह्मणम् ॥ ७ ॥

---

अथाष्टमं ब्राह्मणम् ।

---

अशनायादिनिर्मुक्तं साक्षादित्यादिलक्षणम् ॥
अतोऽक्षरं प्रवक्तव्यं निरुपाध्यात्मनि स्थितम् ॥ १ ॥

पूर्वस्मिन्ब्राह्मणे सूत्रान्तर्यामिणौ प्रश्नप्रत्युक्तिभ्यां निर्धारितौ संप्रत्युत्तरब्राह्मणतात्पर्यमाह । **अशनायादीति** । सोपाधिकत्वेनान्तर्यामिरूपस्य हेयत्वात्तज्ज्ञानात्पुमर्थामप्राप्तेर्निरुपाध्यक्षरज्ञानादेव तत्समाप्तेरप्रपञ्चमक्षरं साक्षात्त्वादिविशेषणं वाक्यार्थरूपं वाच्यमित्यक्षरब्राह्मणोत्थानमित्यर्थः ॥ १ ॥

यदुद्दिश्य प्रवृत्तैषा व्याख्या सर्वान्तरं प्रति ॥
तदक्षरं प्रवक्तव्यमित्यर्थैषोत्तरा श्रुतिः ॥ २ ॥

सर्वान्तर्यामिणि[1] व्याख्याते व्याख्येयं नावशिष्यते तदन्याक्षराभावादित्याशङ्क्य संगृहीतं विवृणोति । **यदुद्दिश्येति** ॥ २ ॥

गौतमेन पुरा पृष्टे सूत्रान्तर्यामिवस्तुनी ॥
ओतप्रोतात्मनां गार्गी तयोरेवान्वपृच्छत[2] ॥ ३ ॥

---

१ ख. 'र्वान्तरेऽन्त' । २ ख. ग. 'न गार्गी' ।

पूर्वेणोत्तरस्यागतार्थत्वमाह । **गौतमेनेति** । सूत्रादिस्वरूपमेव प्राङ्निर्णीतं न तत्र व्याप्यव्यापकभावः संप्रति सूत्रस्याव्याकृतमाकाशान्तस्य चाक्षरं व्यापकमिति निर्णीयते तदर्थभेदसिद्धिरित्यर्थः ॥ ३ ॥

**दिवो यदूर्ध्वं वस्तु स्यात्सद्वाऽसद्वा विशेषितम् ॥**
**अर्वाग्यच्च कपालात्स्यान्मध्ये यच्च कपालयोः ॥ ४ ॥**

ब्राह्मणस्य तात्पर्यमगतार्थत्वं चोक्त्वा यदित्यादेरर्थमाह । **दिव इति** । तत्सर्वं सूत्रात्मकं कस्मिन्नोतं च प्रोतं चेति संबन्धः ॥ ४ ॥

**ऊर्ध्वं दिवः कपालाद्यदधो यच्चाधरात्पुटात् ॥**
**यस्य मध्ये कपाले ते यच्च भूतादिलक्षणम् ॥ ५ ॥**

ऊर्ध्वादिशब्दस्य तत्तद्देशस्थार्थविषयत्वमुक्त्वा देशाविषयमर्थान्तरमाह । **ऊर्ध्वमिति** । अत्रापि पूर्ववदन्वयः ॥ ५ ॥

**पदार्थगतिमेवं वा व्याचक्षीताविरोधतः ॥**
**भूतं यत्समतिक्रान्तं भवद्यदधुनातनम् ॥ ६ ॥**
**भविष्यच्च यदागामि नातीतं नापि वर्तते ॥**
**इत्याचक्षत इत्युक्त्याऽनुमादोषोऽपनुद्यते ॥ ७ ॥**

न द्वितीयोऽर्थो भाष्येऽनुक्तेरित्याशङ्क्याऽऽह । **पदार्थेति** । भाष्यानुक्तोऽपि पदार्थो वाक्यार्थाविरोधित्वाद्दृश्यते चेन्न क्षतिरित्यर्थः । यच्च भूतादिलक्षणमित्युक्तं व्यनक्ति । **भूतमिति** । अन्वयस्तु पूर्ववत् । इत्याचक्षत इत्यस्यार्थमाह । **इतीति** ॥ ६ ॥ ७ ॥

**एतदेवंविधं सूत्रमागमज्ञाः प्रचक्षते ॥**
**ओतं प्रोतं च तत्कस्मिन्निति पृष्टो ब्रवीहि मे ॥ ८ ॥**

आगमैकगम्यस्य सूत्रस्यानुमेयत्वं प्रजापतिलोकादिवदयुक्तमितिशङ्कितदोषनिरासार्थमेतदिति तात्पर्यमुक्त्वा तदक्षरार्थमाह । **एतदिति** । श्रुत्यर्थं जानन्तः सर्वं जगद्भूतादिरूपं सूत्रमिति वदन्तीत्यर्थः । कस्मिन्नित्यादेरर्थमाह । **ओतमिति** । ब्रवीहीति च्छान्दसं ब्रूहीत्येतत् ॥ ८ ॥

**सूत्रे तावदिदं सर्वमोतं च प्रोतमेव च ॥**
**वर्तमाने जगत्काल इति तावत्सुनिश्चितम् ॥ ९ ॥**

ससूत्रस्य जगतोऽत्राऽऽश्रयः पृच्छ्यते स च प्रश्नो वर्तमानकाले वाऽतीतानागतयोर्वेति संशये द्वितीयमादातुमाद्यं दूषयति । **सूत्र इति** । प्राणाख्यसूत्रस्य देहादपसर्पणे देहाङ्गानां विस्रंसनदृष्टेरन्वयव्यतिरेकाभ्यां ततोऽर्वाक्तनस्य तदाश्रयत्वं तस्य च सदाश्रयत्वं वर्तमानकाले तावन्निश्चितं वायौ सद्बुद्धिदर्शनादतो नाऽऽद्यकल्पोपपत्तिरित्यर्थः । प्रतिज्ञाद्योती द्वितीयस्तावच्छब्दः ॥ ९ ॥

**जगच्चाप्यनभिव्यक्तमाविर्भवति सांप्रतम् ॥**
**व्यक्तिश्चेयं सतो युक्ता नासतो घटते यतः ॥ १० ॥**

कालान्तरेऽपि जगदाश्रयो न प्रष्टव्यो नाशादूर्ध्वं प्रागुत्पत्तेश्च तस्यासत्त्वादित्याशङ्क्याऽऽह । **जगच्चेति** । प्रागुत्पत्तेः सदपि जगदव्यक्तं जन्मकाले नामरूपाभ्यां व्यज्यतेऽतो न भूतकाले तदसत्तेत्यर्थः । असदेव व्यज्यतामिति चेन्नेत्याह । **व्यक्तिश्चेति** ॥ १० ॥

**अभिव्यक्तं च सदिदं पुनरव्यक्ततामितम् ॥**
**वायुना विधृतं तस्य रूपं यद्वार्तमानिकम् ॥ ११ ॥**

प्रागुत्पत्तेरत्यन्तासत्त्वाशङ्कां जगतो निरस्य नाशादूर्ध्वमपि तां निरस्यति । **अभिव्यक्तं चेति** । अतीतानागतकालयोर्जगतः सत्त्वमुक्त्वा फलितं प्रश्नं वक्तुं पूर्वोक्तमनुवदति । **वायुनेति** ॥ ११ ॥

**अतीतानागतयोस्तु कालयोर्जगदात्मनः ॥**
**सत्ता येनाऽऽत्मना कस्मिन्नोता प्रोतेति भण्यताम् ॥ १२ ॥**

कालद्वयेऽपि जगदाश्रयप्रश्नं परिशिष्टमाचष्टे । **अतीतेति** । वर्तमानकाले जगतः सत्ता येन सूत्रात्मना विहिता सा तेन सहावर्तमानकाले कस्मिन्नोतप्रोतत्वेन स्थितेति प्रश्नार्थः ॥ १२ ॥

**प्रत्युच्चार्याथ गार्ग्योक्तमाकाशे प्राब्रवीदृषिः ॥**
**ओतप्रोतकतां वायोर्जगतोऽसौ प्रयत्नतः ॥ १३ ॥**

प्रत्युक्तिमादत्ते । **प्रत्युच्चार्येति** । अनुवादाभावे निग्रहप्रसक्तेरनुवादस्याऽऽवश्यकत्वं दर्शयितुमथेत्युक्तम् । प्रयत्नस्तु प्रश्नाभ्यामद्वारा प्रत्युक्तेरभ्यासः ॥ १३ ॥

**क्ष्माद्येतत्सूत्रपर्यन्तं नाशादूर्ध्वं जनेः पुरा ॥**
**आकाशे तदविज्ञातं सत्तामात्रेण विद्यते ॥ १४ ॥**

तां विभजते । **क्ष्मादीति** ॥ १४ ॥

**यावद्धि जनिमत्किंचिन्नामादिप्रविभागवत् ॥**
**आकाशस्तस्य सर्वस्य तत्त्वमत्र विवक्षितम् ॥ १५ ॥**

तस्या विवक्षितमर्थमाह । **यावद्धीति** । नामरूपकर्मात्मनो जनिमतो जगतोऽतिरिक्तं कार्यमप्रसिद्धमिति हिशब्दार्थः ॥ १५ ॥

**व्यतिरेकं सतो नेदं लभतेऽनात्मकत्वतः ॥**
**नाप्यन्वयं तदव्याप्तेर्नाप्यभावः सतीष्यते ॥ १६ ॥**

अज्ञातं ब्रह्मैव जगतस्तत्त्वमित्येतदुपपादयितुं कल्पितत्वं तस्य साधयति । **व्यतिरे-**

---

१ ख. ग. °गार्ग्युक्त° । २ क. ग. °प्रोतार्थतां । ३ ख. ग. तिष्ठति ।

**कमिति** । अनात्मकत्वतो निःस्वरूपप्रसङ्गादिति यावत् । तदव्याप्तेर्जडस्याजडेन तादात्म्यायोगान्मिथो विरोधादित्यर्थः । अतुच्छत्वे दृश्यत्वं हेतुः ॥ १६ ॥

**सदतो जनिमत्तत्त्वं सर्पादे रशना यथा ॥**
**सत्तत्त्वव्यतिरेकेण नान्या जनिमतो गतिः ॥ १७ ॥**

अन्वयव्यतिरेकाभावपरिहारेण सदेव जगतस्तत्त्वमिति फलितमाह । **सदिति** । अतःशब्दार्थं स्पष्टयति । **सत्तत्त्वेति** ॥ १७ ॥

**सदेवेदमतः सर्वमुद्भूतिस्थितिहानिषु ॥**
**सदेवेति तथा स्पष्टं छान्दोग्योपनिषद्वचः ॥ १८ ॥**

स्थितिकाले जगतः सद्रूपत्वेऽपि कालान्तरे नैवमित्याशङ्क्याऽऽह । **सदेवेति** । गत्यन्तराभावोऽतःशब्दार्थः । कालत्रयेऽपि जगतः सदेव तत्त्वमित्यत्र मानमाह । **सदिति** ॥ १८ ॥

**अर्वागेवाक्षराज्ज्ञेया सत्तेयं जगतो निधिः ॥**
**कार्यकारणनिर्मुक्तमक्षरं वक्ष्यते यतः ॥ १९ ॥**

अज्ञातं सदेव जगतस्तत्त्वं चेत्तस्मात्परं तत्त्वं नास्तीत्याशङ्क्याऽऽह । **अर्वागिति** । निधिर्निदानम् ॥ १९ ॥

**सर्वशक्तिरियं शक्तिर्या सदित्यभिधीयते ॥**
**न च सत्तेति सामान्यं प्रत्ययार्थासमीक्षणात् ॥ २० ॥**

न सत्ता जगतो निधिस्तस्यास्तद्धेतुत्वे मानाभावादित्याशङ्क्याऽऽह । **सर्वशक्तिरिति** । सदेव सोम्येत्यारभ्य या शक्तिः सच्छब्दवाच्या तेजोबन्नानामीक्षणपूर्वं स्रष्टृत्वेनोच्यते सा सर्वस्य जगतः शक्तिरुपादानमागमप्रामाण्यादित्यर्थः । सतो भावः सत्तेति व्युत्पत्तेः सत्तायाः सामान्यात्मत्वेनोपादानत्वायोगादागमस्यान्यपरतेत्याशङ्क्याऽऽह । **न चेति** ॥ २० ॥

**न सतो व्यतिरेकेण सतोऽन्यो भाव ईक्ष्यते ॥**
**अप्यभावो न लभते किमु भावोऽतिरेकताम् ॥ २१ ॥**

प्रत्ययार्थो भावस्तस्य सदतिरिक्तस्यासमीक्षणं कथमिति तत्राऽऽह । **नेति** । सदन्यभावाभावेऽनुभवाभावं हेतुमुक्त्वा युक्तिमाह । **अप्यभाव इति** ॥ २१ ॥

**सदन्यबुद्धिगम्यस्य श्रुतिस्तस्मादनेकशः ॥**
**अब्रवीद्भ्रान्तिमात्रत्वं मृत्तिकादिनिदर्शनैः ॥ २२ ॥**

तदनुग्राह्यं मानं सूचयति । **सदिति** । घटादेर्मृदाद्यतिरेकेणाभाववज्जगतो मूलकारणाद्भेदेनाभावं वदन्ती वाचारम्भणश्रुतिर्भावाभावात्मकस्य सदतिरेकाद्यसंभवाद्भ्रान्तिमात्रत्वमाहेत्यर्थः ॥ २२ ॥

**आकाशवचसाऽऽत्मैव ज्ञेयो नान्योऽत्र कश्चन ॥**
**सर्वान्तरत्वं नान्यस्य युज्यतेऽनात्मनो यतः ॥ २३ ॥**

आकाशे तदोतं चेत्यत्राऽऽकाशशब्देनाज्ञातं ब्रह्म विवक्षितमित्युक्तमन्ये त्वाकाशशब्देनाव्याकृतमादाय ततोऽभ्यन्तरमन्तर्यामिणं कल्पयन्तस्ताभ्यामन्यत्तत्त्वान्तरं परमात्मानमाहुस्तान्प्रत्याह । **आकाशेति** । जगतः ससूत्रस्याऽऽन्तरत्वेन श्रुतमाकाशं नाज्ञाताद्ब्रह्मणोऽर्थान्तरं सर्वान्तरत्वस्यान्यत्रायोगादित्यर्थः ॥ २३ ॥

**आकाशो वा इति तथा ब्रह्मैव श्रुतिरब्रवीत् ॥**
**कारणं चाऽऽत्मनो नान्यत्रय्यन्तेषूपलभ्यते ॥ २४ ॥**

अथ भूताकाशे रूढाकाशश्रुत्या सर्वान्तरत्वलिङ्गं बाधित्वा तस्यैवेह ग्रहो युक्तस्तत्राऽऽह । **आकाश इति** । आकाशो वै नाम नामरूपयोर्निर्वहितेत्यत्रापि भूताकाशविषयत्वमाकाशशब्दस्य किं न स्यादित्याशङ्क्याऽऽह । **कारणं चेति** । अत्र हि कारणत्वमाकाशस्योच्यत आत्मैवाज्ञातस्तथेति च वेदान्तस्थितिस्तथाच सर्वकारणत्वनामरूपास्पृष्टत्वलिङ्गाभ्यां तद्ब्रह्मेति श्रुतेश्चाऽऽकाशशब्दस्य श्रुत्यन्तरे ब्रह्मविषयत्वस्याऽऽकाशोऽर्थान्तरत्वादिव्यपदेशादित्यत्रोक्तत्वात्प्रकृतेऽपि तद्विषयता न हि सति संभवे सर्वान्तरत्वं बाधितुमुचितमाकाशशब्दस्तु प्रयोगबाहुल्याद्ब्रह्मण्यपि संभवतीति दहराधिकरणे चिन्तितमाकाशस्तल्लिङ्गादिति चोक्तमिति भावः ॥ २४ ॥

**जगज्जनिस्थितिध्वस्तिनियमाद्यर्थकार्यपि ॥**
**नाऽऽत्मनः कारणादन्यः कश्चित्संभाव्यते श्रुतेः ॥ २५ ॥**

आकाशशब्दोऽज्ञातब्रह्मविषयोऽपि नान्तर्यामिविषयस्तस्य ततोऽन्यत्वादित्याशङ्क्याऽऽह । **जगदिति** ॥ २५ ॥

**एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ ॥**
**माण्डूकेयश्रुतिवच इति स्पष्टमधीयते ॥ २६ ॥**

कारणान्तर्यामिणोर्भेदे मानाभावमुक्त्वा तदभेदे श्रुतिं प्रमाणयति । **एष इति**॥२६॥

**नातोऽन्तर्यामिणः कल्प्यमन्यदव्याकृतं बुधैः ॥**
**अक्षरान्तेषु तत्त्वेषु नाव्याकृतवचो यतः ॥ २७ ॥**

एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानामितिश्रुतिप्रसिद्धं फलमाह । **नात इति** । भेदे मानाभावादभेदे तद्भावाच्चेत्यतःशब्दार्थः । अन्तर्यामिणोऽन्यन्नाव्याकृतमित्यत्र युक्त्यन्तरमाह । **अक्षरान्तेष्विति** । ब्राह्मणत्रयेऽपि पृथिव्याद्यक्षरान्तेष्वव्याकृतशब्दाश्रवणात्ससूत्रजगदधिष्ठानत्वेनाऽऽकाशं निर्दिष्टं नान्तर्यामिणोऽर्थान्तरमव्याकृतमिति शक्यं कल्पयितुमित्यर्थः ॥ २७ ॥

तद्धेदमिति चात्रापि जगदेवाभिधीयते ॥
अव्याकृतगिरा तस्य व्याकृताव्याकृतत्वतः ॥ २८ ॥

अत्राव्याकृतशब्दाभावेऽपि तद्धेदमित्यत्र श्रुतमव्याकृतमिहाऽऽकाशशब्देनाऽऽकृष्यान्तर्याम्यव्याकृताक्षरभेदसिद्धिरित्याशङ्क्याऽऽह । तद्धेति । न त्वदिष्टमन्तर्याम्यक्षरातिरिक्तं तत्त्वमित्येवार्थो जगतो व्यक्तस्य व्याकृतशब्दत्वमेव नाव्याकृतशब्दत्वमित्याशङ्क्याऽऽह । तस्येति ॥ २८ ॥

सर्वस्यैष वशीत्युक्त्वा यतस्तस्यैव वेद्यताम् ॥
यत्नात्प्राह श्रुतिस्तस्माद्यन्ताऽव्याकृतमुच्यते ॥ २९ ॥

तद्धेत्यत्राव्याकृतशब्देन कारणावस्थं जगदुक्तं चेदत्रापि तदेवाऽऽकाशशब्देनोक्त्वा तत्र कार्यावस्थं जगदोतं प्रोतं चास्तु तथाऽपि तनोऽर्थान्तरमन्तर्यामीत्याशङ्क्याऽऽह । सर्वस्येति । सर्वस्य वशी सर्वस्येशानः स न साधुनेत्यादिना नियन्तारमुक्त्वा तस्यैव विविदिषावाक्येन वेद्यत्वं श्रूयते न च तदज्ञातत्वं विना युक्तमज्ञातमव्याकृतमिति च पर्यायोऽतोऽन्तर्याम्येवाव्याकृतमित्यर्थः ॥ २९ ॥

विद्या कर्म च संस्काराः[1] प्रत्यगज्ञानतत्त्वकाः ॥
देहग्रहणहेतुत्वं येषां नः श्रुतिरब्रवीत् ॥ ३० ॥

भर्तृप्रपञ्चप्रस्थानेनापि नाव्याकृतान्तर्यामिभेद इति वक्तुं कर्मादीनां स्वाविद्याविलसितत्वमाह । विद्येति । तेषामकिंचित्करत्वात्किं तदाविद्यत्वोक्त्येत्याशङ्क्याऽऽह । देहेति । तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चेत्याद्या श्रुतिः ॥ ३० ॥

अविचारितसंसिद्धिप्रत्यगज्ञानसंस्थितिः ॥
त्रयमेतत्सदा ग्राह्यं न कार्यं कारणं विना ॥ ३१ ॥

तथाऽपि तेषां कथमाविद्यत्वं तत्राऽऽह । अविचारितेति । सत्त्वादिना दुर्निरूपमपि त्रयं किमिति स्वाज्ञानकार्यमिष्टं तत्राऽऽह । नेति । न हि स्वाज्ञानातिरेकित्रयानुरूपं कारणमस्तीत्यर्थः ॥ ३१ ॥

कर्मैवैतत्त्रयं तच्च नाऽऽत्मानं लभते यतः ॥
कारकाणि विनोत्पत्तौ प्रयोगमनुरुध्यते ॥ ३२ ॥

त्रयस्याऽऽविद्यत्वमुक्त्वा प्रकृतोपयोगं दर्शयन्भर्तृप्रपञ्चमतमाह । कर्मैवेति । यथाऽऽहुः—सर्वान्तरं विज्ञानात्मरूपं महारजनादिलक्षणं त्रयमप्येतत्कर्मैवेति । कर्म च कारकाधीनत्वात्तद्व्यापारं स्वोत्पत्तावाकाङ्क्षतीत्याह । तच्चेति ॥ ३२ ॥

प्रयोगरूपेणैवातो वेष्टितं कर्म तिष्ठति ॥
कारेणात्मनि संसृष्टं नान्यथाऽतोऽस्य[3] संस्थितिः ॥ ३३ ॥

---

१ ख. तेषां । २ ग. °रकात्म° । ३ ख. °तोऽस्ति सं° ।

न केवलं जन्मकाले कारकाधीनतया कर्मानुष्ठानमपेक्षते किंतु स्थितिकालेऽपीत्याह । **प्रयोगेति** । अतः कर्मणः कारकाधीनत्वनियमादिति यावत् । कारकासंसृष्टत्वे तस्य स्वरूपासत्त्वं दोषमाह । **नेति** । यथोक्तं कर्मणः पुनर्बाह्येन विशेषेणापरिगृहीतस्याव-स्थानं नास्तीत्युत्पत्तिसहभुवा प्रयोजकरूपेण भौतिकेन परिष्कृतमास्ते स्वप्रयोगकाल इति ॥ ३३ ॥

**सम्प्रयोगगणः सर्वः सौक्ष्म्येण परमेण तु ॥**
**प्राक्फलोद्भवतो नैष्ठ्या प्रतीचि व्यवतिष्ठते ॥ ३४ ॥**

कर्मणो जन्मस्थितिकालयोः कारकाधीनत्वेऽपि न नाशकाले तदस्ति स्वयमभावादि-त्याशङ्क्य विनाशोत्तरकालं परेण सौक्ष्म्येण व्यवतिष्ठतेऽस्तित्वमात्रेणेति परोक्तिमाश्रि-त्याऽऽह । **सम्प्रयोगेति** । सर्वो हि कर्मराशिः सह कारकगणैरव्यक्तस्थूलरूपः फला-त्मना व्यक्तेः पूर्वमपूर्वात्मना प्रतीचि तिष्ठत्यतो न कदाचिदपि तस्य कारकानधीनत्व-मित्यर्थः ॥ ३४ ॥

**प्रत्यक्संवित्तिवस्तुस्थः प्रमाणविरहादयम् ॥**
**न ज्ञातः कुम्भवन्नापि चित्स्थत्वात्खरशृङ्गवत् ॥ ३५ ॥**

नाशादूर्ध्वमप्यात्मनि तिष्ठति चेत्किमिति पूर्ववन्न ज्ञायते तत्राऽऽह । **प्रत्यगिति** । तर्हि मानाभावान्नास्त्येवेत्याशङ्क्य साक्षिसिद्धेर्मैवमित्याह । **नापीति** ॥ ३५ ॥

**न चायं नेति नेतीति कारणत्वादिहोच्यते ॥**
**विशेषस्याग्रहात्तद्वद्गृह्यते नेदमित्यपि ॥ ३६ ॥**

चिदात्मस्थस्यापि द्वैतस्य निषेधवाक्यान्निषेधवत्तद्वतोऽपि कर्मराशेर्निषिध्यतामित्या-शङ्क्याऽऽह । **न चेति** । नेति नेतीति द्वैतनिषेधवत्प्रतीचि कर्मराशेर्निषेधो नोच्यते तस्योत्तरकार्यं प्रति कारणत्वेन स्थितेस्तस्मिन्नेतीति व्यपदेशो नोपपद्यते विशेषतोऽवि-द्यमानत्वादित्युक्तेरित्यर्थः । प्रतीचि स्वरूपेण प्रलयादावपि कर्म तिष्ठति चेत्कुतस्तदग्रहः साक्षिणैव तत्प्राप्तेरित्याशङ्क्याऽऽह । **विशेषस्येति** । स्वापादौ कारणवत्कर्मापि सवि-कल्पकत्वेन न गृह्यतेऽहंरूपविशेषस्य तदा ग्रहाभावान्निर्विकल्पकत्वेन तद्ग्रहस्त्वस्त्येव नापीदं तदिति व्यपदेशोऽस्ति विशेषस्यागृह्यमाणत्वादिति हि भाष्यमित्यर्थः ॥ ३६ ॥

**क्षित्यादिसूत्रपर्यन्तं नियम्यापेक्षयोच्यते ॥**
**नियन्ता कारणं चेति न तु सूत्रान्तिकेऽसति ॥ ३७ ॥**

परमतमुक्त्वा तस्य प्रकृतोपयोगमुपसंहरति । **क्षित्यादीति** । सति साभासे प्रत्य-गज्ञाने सूत्रान्तिकशब्दे नियम्यकार्यापेक्षया नियन्तृकारणत्वव्यपदेशो नान्यथेति मर्तृप्रप-

---

१ ख. ग. नेष्ट्या । २ ख. °विषयस्य ।

श्वानामपि मतं त्रयमपि कर्मैवेति हि वदन्ति तच्च कारकाधीनमाविद्यमिति साधितमतो मतान्तरेऽपि स्वाविद्याधीनकर्मकार्यजगदपेक्षत्वान्नियन्तृत्वादेर्नान्तर्यामिकारणाक्षरभेद इति भावः ॥ ३७ ॥

**स्वात्मानुभवतन्त्रत्वात्सत्याख्यातुं न शक्यते ॥**
**व्यावृत्तिविधिरूपाभ्यां सुषुप्तिरनुभूयते ॥ ३८ ॥**

ननु प्रतीच्यविद्यैव नोपपद्यते स्वप्रकाशत्वात्तत्राऽऽह । **स्वात्मेति** । अविद्येति शेषः । स्वप्रकाशे प्रतीचि कथमज्ञानस्यानुभवस्तत्राऽऽह । **व्यावृत्तीति** । सुषुप्तिरविद्या ॥ ३८ ॥

**व्यावृत्तः शुक्लपीतादेरन्धकारोऽनुभूयते ॥**
**तथा विधिमुखेनापि द्विरेफोदरवत्तमः ॥ ३९ ॥**

व्यावृत्तिरूपेणानुभवे दृष्टान्तमाह । **व्यावृत्त इति** । विधिरूपेणानुभवे तमाह । **तथेति** ॥ ३९ ॥

**स्वप्नबोधात्तदा तद्वद्विविक्तोऽर्थोऽनुभूयते ॥**
**मूढोऽस्मीत्यपि साक्षाच्च मोहोऽयमनुभूयते ॥ ४० ॥**

व्यावृत्तिरूपेण दृष्टिं दार्ष्टान्तिके ब्रूते । **स्वप्नेति** । तदेति स्वापोक्तिः । विधिरूपेणापि धियं दार्ष्टान्तिके दर्शयति । **मूढोऽस्मीत्यपीति** ॥ ४० ॥

**मूढोत्पत्तेः पुरा मोहः प्रत्यग्वस्त्वनुरोध्यभूत् ॥**
**तदुत्पत्तौ ससंवित्को मोहो मूढप्रधानकः ॥ ४१ ॥**

अनुभवात्प्रतीच्यज्ञानं साध्यते चेन्न लयादौ तत्सिद्धिस्तदाऽनुभवाभावादित्याशङ्क्याऽऽह । **मूढेति** । अहंकारो मूढस्तदुद्भवात्पूर्वं व्यवहाराक्षमत्वेनाज्ञानमासीत्तदुत्तरकालं दृश्यमानं तत्क्षमं भवति तस्याहंकारनिबन्धनत्वादित्यर्थः ॥ ४१ ॥

**सोऽयमैकात्म्यगर्भः सन्मोहः सर्वस्य कारकः ॥**
**धर्मी च सर्वधर्माणां न परोक्षस्ततोऽश्ववत् ॥ ४२ ॥**

प्रतीच्यज्ञाने सिद्धे फलितमाह । **सोऽयमिति** । ऐकात्म्यस्य गर्भे मध्ये स्थितः सन्नित्येतत् । सर्वधर्माणां नियन्तृत्वसर्वज्ञत्वादीनामिति यावत् । स्वानुभवावसेयसाभासप्रत्यगनवबोधस्य जगद्धेतुत्वे सिद्धे कार्यलिङ्गानुमेयो जगद्धेतुरिति यदाहुस्तदपि निरस्तमित्याह । **नेति** । तत्र वैधर्म्यदृष्टान्तः । **अश्ववदिति** । यत्रेदमुच्यते—

"पश्यतः श्वेतिमारूपं हेषाशब्दं च शृण्वतः ।
खुरनिष्पेषशब्दं च श्वेतोऽश्वो धावतीति धीः" इति ।

तत्र विशिष्टाश्वाव्यभिचारादेते चार्थास्तमनुमापयन्ति नैवं जगत्कारणं परोक्षमि-

त्यर्थः । गवाश्वादिर्यथा न परोक्षस्तथा जगद्धेतुरिति साधर्म्यदृष्टान्तो वाऽस्तु । अज्ञोऽहमित्यज्ञानस्य प्रत्यक्षत्वं ततःशब्दार्थः ॥ ४२ ॥

**यन्तृत्वहेतुविध्वस्तावेष संपद्यतेऽक्षरम् ॥**
**कूटस्थस्य द्वितीयेन संबन्धोऽबोधकारितः ॥ ४३ ॥**

चिदात्मैको नियन्ता कारणं चेति स्थितौ कथं साभासाज्ञानस्य तथात्वमित्याशङ्क्याऽऽह । **यन्तृत्वेति** । प्रतीचो नियन्तृत्वं कारणत्वं चाज्ञानकृतं तस्य ज्ञानाद्ध्वंसे सोऽकार्यकारणमक्षरं संपद्यते तथाच कल्पितमात्मनो नियन्तृत्वादि न वस्तुतोऽस्तीत्यर्थः । प्रतीचो नियम्यकार्यसंबन्धस्य कल्पितत्वाच्च कल्पितत्वं नियन्तृत्वादेरित्याह । **कूटस्थस्येति** ॥ ४३ ॥

**प्रश्नोऽयं न तृतीयः स्यात्प्रतिज्ञातत्वतो द्वयोः ॥**
**पूर्वोक्तस्यैव दार्ढ्यार्थं प्रश्नोऽयं पृच्छ्यते पुनः ॥ ४४ ॥**

आकाशे तदोतं चेत्यादेरर्थमुक्त्वा यदूर्ध्वमित्यादि द्वितीयं वाक्यं प्रश्नान्तरमिति शङ्कां प्रत्याह । **प्रश्नोऽयमिति** । द्वौ प्रश्नौ प्रक्ष्यामि द्वाभ्यां प्रश्नाभ्यामुपोदस्थामित्युपक्रमादित्यर्थः । पृष्टस्यैव पुनर्वचनं किमर्थमित्याशङ्क्याऽऽह । **पूर्वोक्तस्येति** ॥४४॥

**पृष्टं भूयोऽपि चापृच्छदुक्तधीदृढनिश्चितौ ॥**
**परायत्तप्रबोधोऽपि शक्तो वक्तुं यतस्ततः ॥ ४५ ॥**

तदेव स्पष्टयति । **पृष्टमिति** । उक्तेऽर्थे दृढा धीरस्यास्तीति निश्चयमुद्दिश्य पुनः प्रश्नो नोपपद्यते प्राचीनप्रतिवचनादेव तन्निश्चयादित्याशङ्क्याऽऽह । **परायत्तेति** । भूतप्रेताद्यधीनत्वेनापि प्रत्युक्तिमात्रं यतः संभवत्यतो न तद्वशादुक्तेऽर्थे धीदार्ढ्यं दृश्यन्ते हि शूद्रादयोऽपि भूतावेशादपूर्वमपि शास्त्रमधीयाना इत्यर्थः ॥ ४५ ॥

**एवंत्यवधृतेर्यद्वा पूर्वप्रश्नार्थशेषता ॥ ४६ ॥**
**किमनेकत्र लीनिः स्यात्सूत्रस्यापि क्षितेरिव ॥**
**आकाश एव किंवा स्यादित्येवं पूर्वशेषता ॥ ४७ ॥**

उक्तस्यैव दार्ढ्याय प्रश्नप्रत्युक्तिरूपा पुनरुक्तिरित्युक्त्वा पुनरुक्तेरर्थान्तरमाह । **एवंत्यवधृतेरिति** । पूर्वप्रश्नार्थमनूद्य कथमुत्तरवाक्यस्य तच्छेषताऽवधारणादभिगतेति तत्राऽऽह । **किमिति** । यथा पारंपर्येण पृथिव्यादेराकाशे लयस्तथा सूत्रस्यापि किंवा साक्षादित्यभिप्रेत्य पुनः प्रश्ने पृथिव्यादिवदनेकत्र सूत्रस्य न लयः किंत्वाकाश एव साक्षादित्यवधारणेन पूर्वशेषतोत्तरस्य सिद्धेत्यर्थः ॥ ४६ ॥ ४७ ॥

**मोहाच्छ्रान्तिर्यथावस्तुसम्यग्ज्ञानप्रसूतितः ॥**
**सम्यग्ज्ञानप्रसिद्ध्यर्थमतः प्रश्नोऽयमुत्तरः ॥ ४८ ॥**

कस्मिन्नु खल्वाकाश इत्यादिप्रश्नस्य तात्पर्यमाह । **मोहेति** ॥ ४८ ॥

**सूत्रादिक्षितिपर्यन्तमर्वाग्यन्तुरचेतनम् ॥**
**निष्प्रमाणं यतस्तस्मात्पृच्छ्यते सप्रमाणकम् ॥ ४९ ॥**

पूर्वप्रश्नस्यापि तादर्थ्यं तुल्यमित्याशङ्क्याऽऽह । **सूत्रादीति** । निष्प्रमाणं मिथ्याधीगम्यमिति यावत् । सप्रमाणकं सम्यग्धीगम्यमित्यर्थः ॥ ४९ ॥

**सूत्रं तावत्सुदुर्ज्ञानमाकाशस्तु ततोऽप्यति ॥**
**तस्मात्परतरं तत्त्वं दुर्वचोऽपि बृहस्पतेः ॥ ५० ॥**

विवक्षितं तात्पर्यमुक्त्वा स्थूलं तात्पर्यमाह । **सूत्रमिति** ॥ ५० ॥

**सूत्रान्तं वस्तु निर्देश्यमनिर्देश्ये प्रवेशितम् ॥**
**यन्तरि व्योम्नि तदपि दुर्वाच्यमतिसूक्ष्मतः ॥ ५१ ॥**

सूत्राकाशयोर्दुर्ज्ञानत्वं साधयति । **सूत्रान्तमिति** । अपिस्तन्निवेशितसूत्रसंग्रहार्थः ॥ ५१ ॥

**सर्वमानातिवर्त्येकमुक्तं प्रत्यक्चिदात्मकम् ॥**
**अव्यावृत्ताननुगतं ततोऽप्यक्षरसंज्ञितम् ॥ ५२ ॥**

अक्षरस्य दुर्ज्ञानत्वमापादयति । **सर्वेति** । एतानि विशेषणानि प्रत्येकमक्षरस्य दुर्ज्ञानत्वनिमित्तानि । ततोऽपि सूत्रादेः सूक्ष्ममिति शेषः ॥ ५२ ॥

**अज्ञातज्ञाततोऽन्यत्वान्निर्देश्यं न तदक्षरम् ॥**
**साक्षादित्यादिरूपत्वान्नापि स्यात्तदपह्नुतिः ॥ ५३ ॥**

अक्षरस्यानिर्देश्यत्वे कार्यकारणवैलक्षण्यं हेत्वन्तरमाह । **अज्ञातेति** । अनिर्देश्यत्वे नैःस्वाभाव्यमित्याशङ्क्याऽऽह । **साक्षादित्यादीति** ॥ ५३ ॥

**अपि चेद्वक्त्यनिर्देश्यं कथंचिन्मोहविभ्रमात् ॥**
**तथा विप्रतिपत्तिः स्यादनुक्तौ च पराजितः ॥ ५४ ॥**
**इति चेतसि संधाय याज्ञवल्क्यमपृच्छत ॥**
**गार्ग्यक्षरमनिर्देश्यं तां चासावब्रवीदिदम् ॥ ५५ ॥**

स्थूलं तात्पर्यमुपसंहरति । **अपि चेदिति** । मोहविभ्रमाद्वोतृष्णाबलादिति यावत् । प्रत्युक्तिमवतारयति । **तां चेति** ॥ ५४ ॥ ५५ ॥

**एतद्वै तदिति प्राह प्रत्यक्साक्षिकमक्षरम् ॥**
**अपास्ताशेषनिर्देशं यदनन्यप्रमाणकम् ॥ ५६ ॥**

इदंशब्दार्थमाह । **एतदिति** । एतत्पदार्थं कथयति । **प्रत्यगिति** । तस्य वाच्यत्वं वारयति । **अपास्तेति** । तत्र हेतुः । **यदनन्येति** ॥ ५६ ॥

**यत्साक्षाच्चापरोक्षाच्च ब्रह्मात्मेति विशेषितम् ॥**
**प्रत्यक्तया तदैकात्म्यं स्वयमेव प्रतीयताम् ॥ ५७ ॥**

तत्साधयति । यत्साक्षादिति ॥ ५७ ॥

**न व्यावृत्तं विशेषेभ्यो नानुवृत्तं च गोत्ववत् ॥**
**अव्यावृत्ताननुगतं चैतन्यं संविदीक्ष्यताम् ॥ ५८ ॥**

वस्तुत्वादैकात्म्यमपि घटवन्मेयमित्याशङ्क्य वैषम्यमाह । **नेत्यादिना** ॥ ५८ ॥

**यस्मात्प्रसिद्धं नास्त्यन्यत्प्रसिद्धं यच्च कस्यचित् ॥**
**अनन्यममपष्ठ्यर्थं वैशब्दस्तत्प्रसिद्धये ॥ ५९ ॥**

उषस्तप्रश्नोक्तं साक्षिचैतन्यं त्वंपदलक्ष्यमेतत्पदेनात्र विवक्षितमित्युक्त्वा **वैशब्दार्थ**माह । **यस्मादिति** । स्वेतरप्रसिद्ध्यभावेऽपि स्वस्य प्रसिद्धतया लौकिकत्वमाशङ्क्याऽऽह । **प्रसिद्धमिति** । तर्हि शून्यता नेत्याह । **अनन्यममिति** । तत्र हेतुः । **अषष्ठ्यर्थमिति** । कार्यकारणनिर्मुक्तमद्वयं स्वप्रकाशमसङ्गं वस्तु द्योतयितुं वैशब्द इत्यर्थः ॥ ५९ ॥

**साक्षादित्यादिवाक्येन योऽशनायादिना तथा ॥**
**प्रत्यङ्ङभिहितो यत्नात्तद्गिरा सोऽत्र युज्यते ॥ ६० ॥**

तच्छब्दार्थमाह । **साक्षादिति** । यत्नात्तज्ज्ञानोपायोपन्यासादिति यावत् । कहोलप्रश्नोक्तस्तत्पदार्थोऽत्र तच्छब्दार्थ इत्यर्थः ॥ ६० ॥

**प्रत्यक्षासन्ननिष्ठत्वादेतच्छब्दस्य कुम्भवत् ॥**
**यदेतदिति तत्साक्षाद्यथावत्प्रतिपद्यताम् ॥ ६१ ॥**

अथोषस्तोपन्यस्तस्य तच्छब्देन कहोलोक्तस्य चैतच्छब्देनोपादानं किं न स्यात्तत्राऽऽह । **प्रत्यक्षेति** । यत्साक्षादित्यादिना यदुषस्तप्रश्ने त्वंपदलक्ष्यमुक्तं तदेवात्रैतच्छब्देन ज्ञेयं तस्य कुम्भवदपरोक्षत्वेन संनिहितत्वादेतच्छब्दस्य चैवमर्थत्वान्न त्वत्र तच्छब्दस्त्वमर्थमुषस्तोक्तं गोचरयति तस्य परोक्षवृत्तेः कहोलोक्ततदर्थविषयत्वस्य युक्तत्वादित्यर्थः ॥ ६१ ॥

**प्रत्यक्षैकप्रमाणोऽर्थो लौकिकोऽपि न शक्यते ॥**
**प्रत्यक्षवद्बोधयितुं किमु प्रत्यङ्निरञ्जनम् ॥ ६२ ॥**

प्रत्यगक्षरं संनिहितं चेद्घटवदिदमिति निर्दिश्येतेत्याशङ्क्याऽऽह । **प्रत्यक्षेति** । लौकिकोऽपि मात्रादिः कूटस्थानुभवगम्यो न घटवन्निर्देष्टुं शक्य आन्तरत्वेनायोग्यत्वात्प्रत्यगात्मा त्विदमिति न शक्यो बोधयितुमिति । किं वाच्यं तस्य सर्वान्तरस्यासङ्गस्य सर्वमानाविषयत्वादित्यर्थः ॥ ६२ ॥

**क्षरादिरुद्धधर्मत्वादक्षरं ब्रह्म भण्यते ॥**
**कार्यकारणवद्वस्तु क्षरमत्र निषिध्यते ॥ ६३ ॥**

तद्विरुद्धं दर्शयन्नक्षरपदं व्याचष्टे । **क्षरादिति** । नञो मुख्यमर्थमाह । **कार्येति** ॥ ६३ ॥

**हानिवृद्धिस्वभावेन कारणात्मैव वर्तते ॥**
**तत्प्रत्यगात्मा तद्धीनः कूटस्थोऽनन्यमानगः ॥ ६४ ॥**

कार्यस्य क्षरत्वेऽपि नैवं कारणस्येति चेत्तत्राऽऽह । **हानीति** । प्रतीचोऽपि कारणतया तत्संभावनामाशङ्क्याऽऽह । **तदिति** ॥ ६४ ॥

**ब्राह्मणास्तद्वदन्तीति स्वापराधनिषेधगीः ॥**
**नाऽऽत्माज्ञानाय सा युक्ता स हि साक्षात्तदीक्षते ॥ ६५ ॥**

यदुक्तमपि चेद्वक्तीत्यादि तत्राऽऽह । **ब्राह्मणा इति** । अवाच्योक्तौ विप्रतिपत्तिरनुक्तावप्रतिपत्तिरिति स्वापराधस्तन्निवृत्त्यर्थं नेदं वाक्यं किंतु स्वाज्ञानं द्योतयितुमित्याशङ्क्याऽऽह । **नाऽऽत्मेति** । अन्यथा त्वक्षरविषययाज्ञवल्कीयवाक्यशेषविरोधादित्यभिप्रेत्य हेतुमाह । **स हीति** ॥ ६५ ॥

**निर्देश्यत्वानुमादोषप्रसङ्गविनिवृत्तये ॥**
**आगमैकप्रमाणत्वे वदन्तीत्यभिशब्दनम् ॥ ६६ ॥**[1]

आख्याताभिप्रायमाह । **निर्देश्यत्वेति** ॥ ६६ ॥

**एतावदेव प्रत्यक्षं सर्वयाथात्म्यवेदिनाम् ॥**
**ब्राह्मणानामतो युक्तं फलपर्यवसायिनाम् ॥ ६७ ॥**

आगमैकगम्यत्वे ब्राह्मणा वदन्तीति कथं वक्तृग्रहणं न हि ते स्वाविषयं वक्तुमलं तत्राऽऽह । **एतावदिति** । सर्वस्य जगतो याथात्म्यमक्षरं ब्रह्म तत्प्रत्यक्त्वेन जानतां तस्मिन्नेव परमपुरुषार्थे समाप्तानां ब्राह्मणानामेतावत्प्रत्यगक्षरं शास्त्रात्प्रत्यक्षमेवातो युक्तं वक्तृग्रहणमित्यर्थः ॥ ६७ ॥

**ध्वस्तात्माज्ञानतत्कार्याः प्रत्यग्याथात्म्यबोधतः ॥**
**वदन्ति ब्राह्मणास्तेऽतस्त्यक्तसर्वैषणास्पदम् ॥ ६८ ॥**[2]

फलावसायित्वं साधयन्पदद्वयार्थं निगमयति । **ध्वस्तेति** । अतो न वाच्यत्वादिदोषशङ्केति शेषः ॥ ६८ ॥

**एतदेव तु विज्ञाय व्युत्तिष्ठन्त्येषणात्रयात् ॥**
**यतोऽतस्तत्स्वसंवेद्यं गार्ग्यक्षरमिदं ध्रुवम् ॥ ६९ ॥**

एतदित्यादेर्गार्गीत्यन्तस्यार्थमुपसंहरति । **एतदिति** । त्वंपदार्थमापाततो ज्ञात्वा तत्र जिज्ञासया यतः संन्यस्यन्त्यतस्तेषां श्रवणादिपराणां तत्पदार्थरूपमक्षरं प्रत्यग्भावेन स्वानुभवयोग्यं भवतीत्यर्थः ॥ ६९ ॥

**तेषां चेत्स्यात्स्वसंवेद्यं निर्देश्यं तद्घटादिवत् ॥**
**अस्थूलत्वान्न तच्छक्यं निर्देष्टुमिति सोऽब्रवीत् ॥ ७० ॥**[3]

---

१ ख. °शब्दितम् । २ क. ग. °षणाः पद° । ३ ख. °ष्टुमपि सो° ।

अस्थूलपदस्य शङ्कापूर्वकमर्थमाह । तेषामिति ॥ ७० ॥

अक्षरं यदि न स्थूलमणु तर्हि तदिष्यताम् ॥
यतस्तत्प्रतिषेधार्थमनण्विति जगाद ताम् ॥ ७१ ॥

अनणुविशेषणं शङ्काद्वारा व्याकरोति । अक्षरमिति ॥ ७१ ॥

परिमाणमहाभूतप्राणनामान्वयादयः ॥
कारणाद्या निषिध्यन्ते क्रमेण प्राप्त्यपेक्षया ॥ ७२ ॥

अह्रस्वमित्यादीनां तात्पर्यं संगृह्णाति । परिमाणेति । आद्येनाऽऽदिपदेन रसादिग्रहो द्वितीयेन तेजोमुखाद्युक्तिः । क्रमेण निषेधे हेतुमाह । प्राप्तीति ॥ ७२ ॥

प्रसज्यपर्युदासाभ्यां नञर्थः कोऽत्र गृह्यते ॥
स्थूलापह्नुतिरेकत्र पर्युदासे तदन्यता ॥ ७३ ॥

सर्वेषु विशेषणेषु पूर्ववादी नञर्थं विकल्पयति । प्रसज्येति । प्रसज्यप्रतिषेधपक्षे वाक्यस्याभावनिष्ठत्वमाह । स्थूलेति । द्वितीये त्वद्वैतहानिः स्थूलादीनामक्षरादन्यत्वादित्याह । पर्युदास इति ॥ ७३ ॥

स्थूलापह्नुतिरत्र स्याद्वस्तु यत्पारमार्थिकम् ॥
नाभावनिष्ठोऽन्यत्रापि निषेधः किमुताक्षरे ॥ ७४ ॥

सिद्धान्ती प्रथमपक्षं समाधत्ते । स्थूलेति । सप्तम्यर्थं स्फुटयति । वस्त्विति । तर्हि वाक्यस्याभावनिष्ठत्वं नेत्याह । नाभावेति ॥ ७४ ॥

पर्युदासेऽपि क्लृप्तानां न पृथक्त्वेन संस्थितिः ॥
रज्जुसर्पादिवत्तस्मान्नोभयत्रापि दोषता ॥ ७५ ॥

द्वितीये समाधिमाह । पर्युदास इति । वाक्यस्याभावनिष्ठत्वमद्वैतहानिर्वा नेति निगमयति । तस्मादिति ॥ ७५ ॥

दृष्टोऽपवादो लोकेऽस्मिन्नुत्सर्गविषये सति ॥
स्थूलादेरपवादोऽयं निर्द्वये घटते कथम् ॥ ७६ ॥

प्रथमपक्षमाक्षिपति । दृष्ट इति । न हिंस्यादित्युत्सर्गविषये सत्यग्नीषोमीयं पशुमालभेतेत्यपवादो दृष्टो न च तद्विषयभेदोऽद्वयेऽस्त्यतः स्थूलादेर्नापवाद इत्यर्थः ॥ ७६ ॥

उत्सर्गस्यास्ति विषयो योऽनिर्ज्ञातात्मतत्त्वकः ॥
अपवादस्य विषयो ज्ञातात्मैकसतत्त्वकः ॥ ७७ ॥

वस्तुनोऽद्वयत्वेऽपि तत्रोत्सर्गापवादव्यवस्था युक्तेति परिहरति । उत्सर्गस्येति । प्रतीच्यज्ञाते प्राप्तं स्थूलादि तस्मिन्नेव ज्ञाने निषिध्यते दृश्यते च रज्ज्वामज्ञातायां प्राप्तस्य सर्पादेस्तस्यां ज्ञातायां निषेधस्तत्प्रसज्यप्रतिषेधः साधीयानित्यर्थः ॥ ७७ ॥

---

१ क. 'प्राणनामन्व' । २ ख. 'त्पर्यमाह । प' । ३ क. 'यो ऽनि' ।

अध्यस्तादिङ्निषेधश्च व्योम्न्येकस्मिन्यथा तथा ॥
उत्सर्गापवादविधिनिषेधा एकलात्मनि ॥ ७८ ॥

एकत्रैवाऽऽत्मनि प्राप्तिप्रतिषेधौ स्थूलादेरित्येतद्दृष्टान्तेन स्पष्टयति । अध्य-स्तेति ॥ ७८ ॥

यदि वाऽक्षरयाथात्म्यं स्थूलादेरिह भण्यते ॥
स्रग्याथात्म्यमहेर्यद्वत्तथाऽस्याक्षरमात्रतः ॥ ७९ ॥

प्रसज्यप्रतिषेधानुरोधेनास्थूलादिवाक्यस्यार्थमुक्त्वा पर्युदासमनुसृत्यार्थान्तरमाह । यदि वेति । तदेव दृष्टान्तेनाऽऽह । स्रगिति । स्थूलादिजगतोऽद्वयत्वावेदनपरं वाक्यं न निषेधपरमित्यर्थः ॥ ७९ ॥

स्थूलादिहेतोर्दाहो वा ध्वान्तस्य प्रत्यगात्मनि ॥
अस्थूलोक्तिसमुत्थात्मयाथात्म्यज्ञानवह्निना ॥ ८० ॥

प्रतीचि स्थूलादिहेत्वबोधस्य वाक्योत्थबोधेन बाधपरं वा वाक्यमित्याद्यमेव कल्प-माश्रित्यार्थान्तरमाह । स्थूलादीति ॥ ८० ॥

क्षित्यादौ वियदन्तेऽस्मिन्स्थूलादेः संभवो ननु ॥
तदोतप्रोतवाक्येन तच्च सर्वं निराकृतम् ॥ ८१ ॥

निषेधपक्षे पुनरर्थान्तरं वक्तुं पूर्वपक्षयति । क्षित्यादाविति । अस्तु तर्हि पृथिव्या-दावव्याकृतान्ते स्थूलादिनिषेधो नेत्याह । तदिति । यदिदं सर्वमप्स्वित्यादिना पृथि-व्याद्यव्याकृतान्तमक्षरातिरेकेण नेत्यवधारणान्न तत्र स्थूलादिनिषेधो धर्म्यभावादि-त्यर्थः ॥ ८१ ॥

तस्याक्षरे कः प्रसङ्गो यतस्तत्प्रतिषिध्यते ॥
अपि खे तदसंभाव्यं किमु तत्प्रत्यगात्मनि ॥ ८२ ॥

अक्षरे तर्हि तन्निषेध्यतामुक्तदोषाभावादित्याशङ्क्य प्राप्त्यभावान्नैवमित्याह । तस्येति । प्राप्त्यभावं कैमुतिकन्यायेनाऽऽह । अपीति । खमव्याकृतम् ॥ ८२ ॥

समस्तव्यस्ततां केचिद्ब्रह्मणः प्रतिजानते ॥
यतोऽतस्तन्निषेधार्थं निषिद्धं सन्निषिध्यते ॥ ८३ ॥

एवमाक्षेपे स्वयूथ्यमतनिरासपरत्वेन वाक्यस्यार्थवत्त्वमाह । समस्तेति ॥ ८३ ॥

व्यक्तावस्थाऽथवैतेषां निषिद्धा कारणात्मनि ॥
शक्त्यवस्थानिषेधोऽयं क्रियते त्वक्षरात्मनि ॥ ८४ ॥

कारणनिषेधफलोक्त्यर्थं स्थूलादिहेतोर्दाहो वेत्युक्तमनुवदति । व्यक्तेति । यदिदं

---

१ क. ग. °त्रता ॥ ७९ ॥ २ क. ग. न तु ।

सर्वमित्यादिना व्यक्तावस्था स्थूलादीनां कारणे निरस्ता तेषामेव शक्त्यवस्था कार्यकारणविलक्षणेऽक्षरे निरस्या तदर्थमस्थूलादिवाक्यमित्यर्थः ॥ ८४ ॥

**एवं च सति तत्पूर्णं ब्रह्म कृत्स्नं च युज्यते ॥**
**अन्यथाऽकृत्स्नमेव स्यादनिर्मोक्षश्च सज्यते ॥ ८५ ॥**

कारणनिषेधे किं फलति तदाह । **एवं चेति** । कार्यकारणनिषेधे सति प्रतीचि श्रुतं ब्रह्मादिपदं मुख्यार्थं स्यात्तदनिषेधे वस्तुपरिच्छेदाद्गौणार्थमेवाखण्डवस्त्वात्मनाऽवस्थानाख्यो मोक्षश्च न सिध्येत्ततो मोक्षशास्त्रबाधः स्यादित्यर्थः ॥ ८५ ॥

**न वा निषेधः स्थूलादेस्तस्य प्रागेव सिद्धितः ॥**
**तन्निषेधानुवादेन प्रतीचि ब्रह्म बोध्यते ॥ ८६ ॥**

तत्त्वमादिवद्विधिमुखेन बोधकमस्थूलादिवाक्यमित्यर्थान्तरं वदन्निषेधपरत्वं त्यजति । **न वेति** । ओतप्रोतवाक्येन स्थूलादिनिषेधस्य सिद्धत्वादिति हेत्वर्थः । निषेधपरत्वाभावे किंपरं वाक्यं तदाह । **तन्निषेधेति** ॥ ८६ ॥

**स्थूलादिमेयमामातृनिषेधफलगं स्वभम् ॥**
**विद्धि सर्वान्तरं ब्रह्म साक्षादित्यादिलक्षणम् ॥ ८७ ॥**

स्थूलादिनिषेधमनूद्य तत्साक्षिणि त्वमर्थे ब्रह्मत्वबोधनप्रकारमभिनयति । **स्थूलादीति** । स हि त्रेधा स्थितस्तन्निषेधस्य फलं स्फुरणं तदात्मना गम्यमानं स्वप्रकाशं त्वंपदलक्ष्यमात्मानमुक्तविशेषणं ब्रह्म विद्धीति योजना ॥ ८७ ॥

**सर्वेषामपि चोद्यानामेवं सति न संभवः ॥**
**नेति नेतीतिवद्व्याख्या सर्वाऽपीह समीक्ष्यताम् ॥ ८८ ॥**

विधिमुखेन बोधकत्वे वाक्यस्याभावनिष्ठत्वमक्षरस्य सद्वयत्वमित्यादि चोद्यमनवकाशमिति लाभं दर्शयति । **सर्वेषामिति** । कथं नञ्वति वाक्ये विधिमुखेन बोधकत्वं तत्राऽऽह । **नेत्यादिना** ॥ ८८ ॥

**स्थूलादिपरिमाणं हि द्रव्यमात्रव्यपाश्रयम् ॥**
**तस्माद्द्रव्यनिषेधोऽयं परिमाणनिषेधतः ॥ ८९ ॥**

वाक्यस्यानेकधा तात्पर्यमुक्त्वा विशेषणचतुष्टयस्यावान्तरतात्पर्यमाह । **स्थूलादीति** । हिशब्दोपात्तं हेतुमनूद्य फलितमाह । **तस्मादिति** ॥ ८९ ॥

**सर्वथाऽपि तु यत्किंचिद्वाचो गोचरतां गतम् ॥**
**प्रमाणस्य च तत्सर्वमक्षरे प्रतिषिध्यते ॥ ९० ॥**

अक्षरे द्रव्यत्वनिषेधेऽपि गुणत्वादिप्राप्तिरलोहितमित्यादिना तन्निषेधे विशेषान्तर-

१ क. 'लक्षणमा' ।

मत्रानिषिद्धं भविष्यतीत्याशङ्क्याऽऽह । **सर्वथाऽपीति** । उक्तविशेषनिषेधोऽनुक्तविशेषनिषेधोपलक्षणमिति भावः ॥ ९० ॥

**विशेषप्रतिषेधे च क्रम आश्रीयते ध्रुवम् ॥**
**सामर्थ्यादेव नान्यस्मात्कारणादिति निश्चयः ॥ ९१ ॥**

तर्हि युगपदशेषनिषेधसंभवाद्यर्थमनेकविशेषणोपादानं तत्राऽऽह । **विशेषेति** । क्रमाश्रयणे हेतुः । **सामर्थ्यादिति** । वाचः क्रमवर्तित्वादपर्यायेण सर्वनिषेधासिद्धेरित्यर्थः ॥ ९१ ॥

**पूर्वोत्तरनिषेध्यानां सामर्थ्यादेव च क्रमः ॥**
**पूर्वस्मिन्प्रतिषिद्धेऽन्यः सामर्थ्यादेव ढौकते ॥ ९२॥**

निषेध्यक्रमाच्च निषेधक्रमोऽनुसर्तव्य इत्याह । **पूर्वेति** । सामर्थ्यमेव दर्शयति । **पूर्वस्मिन्निति** । विरोधिनिषेधानुपपत्त्या तद्विरोधिप्राप्तिस्ततश्च क्रमो निषेध्यानामित्यर्थः ॥ ९२ ॥

**अस्थौल्यादणु तत्प्राप्तं तन्नानणु यतोऽक्षरम् ॥**
**ह्रस्वं नैव यतोऽह्रस्वं नापि दीर्घं यतोऽक्षरम् ॥**
**अदीर्घमित्यतो द्रव्यं न स्यादक्षरमव्ययम् ॥ ९३ ॥**

स्थौल्यनिषेधेनावशिष्टनिषेधोपलक्षणाद्विशेषणान्तराणि क्रमनिषेधबोधकान्यनर्थकानीत्याशङ्क्य स्थौल्यादौ निषेधेऽर्थादणुत्वादौ प्राप्ते तन्निषेधार्थं तान्यर्थवन्तीति मन्वानो विशेषणचतुष्टयार्थं निगमयति । **अस्थौल्यादिति** ॥ ९३ ॥

**आदित्यवर्णवचनादस्तु तद्वोहितात्मकम् ॥**
**नैवं यतोऽलोहितं तत्सर्वरूपादिवर्जितम् ॥ ९४ ॥**

अलोहितपदं शङ्काद्वारा व्याकरोति । **आदित्येति** ॥ ९४ ॥

**अपां गुणोऽत्र स्नेहः स्याच्छायाऽदीप्तिरिहेष्यते ।**
**तमो ध्वान्तमिति ज्ञेयमतमोऽक्षरमुच्यते ॥ ९५ ॥**

अस्नेहमित्यत्र स्नेहशब्देन रागविशेषग्रहं व्यावर्तयति । **अपामिति** । छायातमःशब्दयोरर्थभेदं वदन्पदद्वयं व्याचष्टे । **छायेति**। अदीप्तिरिति च्छेदः । निषेधविधिभ्यां प्रतियोगिभेदात्प्रतिषेधभेद इति भावः ॥ ९५ ॥

**न भूतं तत्पृथिव्यादि नापि भूतगुणास्तथा ॥**
**सर्वान्तराधिकाराद्धि तथोभयनिषेधतः ॥ ९६ ॥**

अवाय्वनाकाशमित्यनयोरर्थमाह । **न भूतमिति** । अरसमगन्धमित्यनयोरर्थमाह ।

---

१ ग. तन्नान । २ ख. रूपादिव ।

**नापीति** । वाय्वाकाशयो रसगन्धयोश्च निषेधः श्रुतस्तत्कथं भूतमात्रस्य तद्गुणमात्रस्य च निषेधो व्याख्यातस्तत्राऽऽह । **सर्वान्तरेति** । अक्षरस्य हि सर्वान्तरस्येदं प्रकरणमतस्तस्य सर्वान्तरत्वसमर्थनार्थमुक्तवाय्वादिनिषेधस्यानुक्तभूततद्गुणनिषेधोपलक्षणत्वादक्षरं सर्वप्रत्यक्तमं सर्वभूततद्धर्महीनमखण्डं युक्तमित्यर्थः ॥ ९६ ॥

**अस्तु सङ्गात्मकं तर्हि वासनासङ्गदर्शनात् ॥**
**नैतद्यतोऽसङ्गमिदमसङ्गो हीति वक्ष्यति ॥ ९७ ॥**

असङ्गमित्यस्य व्यावर्त्यमाह । **अस्त्विति** । सूक्ष्मस्य रागादेरात्मनि दृष्टेस्तदन्वयवानसावित्यर्थः । वाक्यशेषमाश्रित्य परिहरति । **नैतदिति** ॥ ९७ ॥

**नापीन्द्रियमिदं ज्ञेयं यतोऽचक्षुष्कमक्षरम् ॥**
**नेन्द्रियाण्यस्य विद्यन्ते नापि तत्स्वयमिन्द्रियम् ॥ ९८ ॥**

अचक्षुष्कमित्यादिपदचतुष्टयं व्याचष्टे । **नापीति** । समासद्वयेनेन्द्रियसंबन्धतादात्म्ये निरस्यति । **नेत्यादिना** ॥ ९८ ॥

**विज्ञानलक्षणं तेजोऽतेजस्कमिति वार्यते ॥**
**कस्मादेतन्न तत्सर्वं यतोऽप्राणं तदक्षरम् ॥ ९९ ॥**

तेज एवेति वक्ष्यमाणत्वात्कुतोऽतेजस्कमित्यत्राऽऽह । **विज्ञानेति** । आगन्तुकज्ञानात्मकं न भवतीत्यर्थः । आकाङ्क्षापूर्वकमुक्तेऽर्थे हेतुत्वेनोत्तरं पदमादत्ते । **कस्मादिति** ॥ ९९ ॥

**कारणप्रतिषेधेन कृत्स्नकार्यनिषेधनः ॥**
**पूर्णं तदक्षरं ज्ञेयं साक्षादित्यादिलक्षणम् ॥ १०० ॥**

तद्व्याकरोति । **कारणेति** ॥ १०० ॥

**अक्षरं येन रूपेण स्थूलं वस्तु निषेधति ॥**
**तेनैवाण्वादि निःशेषं तस्य सर्वविरोधतः ॥ १०१ ॥**

प्रतीचि स्थौल्यादिनिषेधात्तत्तन्निषेध्यविरुद्धानेकाकारत्वप्राप्तेरेकरस्यं न स्यादित्याशङ्क्याऽऽह । **अक्षरमिति** ॥ १०१ ॥

**अन्येनान्येन रूपेण विरुद्धान्हन्ति पावकः ॥**
**विरोधिना यथा तद्वदिह स्थूलाद्यपाक्रिया ॥ १०२ ॥**

तदेव वैधर्म्यदृष्टान्तेन स्पष्टयति । **अन्येनेति** । जठरकुहरविपरिवर्तित्वं काष्ठपृष्ठनिष्ठत्वमित्यादिनेत्यर्थः । इहेत्यक्षरोक्तिः ॥ १०२ ॥

**मानित्वादिनिषेधः स्यादर्थैकक्रियरूपतः ॥**
**प्रत्यक्कूटस्थरूपेण तथा सर्वनिषेधकृत् ॥ १०३ ॥**

---

१ ख. ग. वक्ष्यते । २ ख. साधर्म्यति । ३ क. °र्थैकाक्र° ।

किं तदक्षरे सर्वविरोध्येकरूपमित्याशङ्क्य साधर्म्यदृष्टान्तेनाऽऽह । मानित्वादीति । प्रत्यगिति कर्तृनिर्देशः ॥ १०३ ॥

**कूटस्थबोधपूर्णत्वं प्रत्यक्त्वं वस्तुनः स्वतः ॥**
**एतदस्य विरोधित्वं कार्यकारणवस्तुभिः ॥ १०४ ॥**

कथं तस्योक्तरूपेण सर्वविरोधित्वं तत्राऽऽह । कूटस्थेति । कूटस्थबोधस्य त्वंपदलक्ष्यस्याद्वयत्वं तस्य च तत्पदलक्ष्यस्य यथोक्तप्रत्यक्त्वं यत्तत्त्वमादिवाक्याधिगतमेतदक्षरस्य कार्यकारणरूपसर्वविशेषविरोधीत्यर्थः ॥ १०४ ॥

**द्वारं मुखं प्रतीकं वा यदि वा लिङ्गमुच्यते ॥**
**निषेधोऽमुखमित्येवं त्रयस्याप्यभिधीयते ॥ १०५ ॥**

अमुखमित्यत्र मुखशब्दार्थमाह । द्वारमिति । छिद्रालम्बनचिह्नेषु मुखशब्दप्रयोगदृष्टेरित्यर्थः । नञर्थमाह । निषेध इति ॥ १०५ ॥

**मात्रेति मानमिच्छन्ति मेयोऽर्थस्तेन मीयते ॥**
**अक्षरे तदसंभाव्यममात्रं तद्यतस्ततः ॥ १०६ ॥**

अमात्रमित्यस्यार्थमाह । मात्रेतीति ॥ १०६ ॥

**मात्रादिलक्षणा यत्र सामग्री वस्तुनीष्यते ॥**
**तत्प्रमेयमिति न्याय्यं न तु वस्त्वद्वयं स्वतः ॥ १०७ ॥**

अक्षरे मानायोगादमेयत्वं चेत्कुत्र तर्हि मेयत्वं तत्राऽऽह । मात्रादीति ॥ १०७ ॥

**व्याप्यव्यापकसंबन्धो न चाप्यक्षरवस्तुनि ॥**
**न तदश्नातिवाक्येन यतस्तद्वार्यते द्वयम् ॥ १०८ ॥**

न तदश्नातीत्यादेस्तात्पर्यमाह । व्याप्येति । तत्राऽऽद्यवाक्येन व्यापकत्वस्य निषेधो द्वितीयेन व्याप्यत्वस्येति भेदः ॥ १०८ ॥

**निषिद्धमखिलं वस्तु यत्किंचिज्जगतीक्ष्यते ॥**
**अवशिष्टं च यत्तच्च न प्रमाणोपपादितम् ॥ १०९ ॥**

उक्ते निर्विशेषत्वे शून्यत्वापत्तिं शङ्कते । निषिद्धमिति । अक्षरस्य शिष्टत्वान्न शून्यतेति चेन्नेत्याह । अवशिष्टं चेति ॥ १०९ ॥

**एवं चेदक्षरं तादृक्कथमस्तीति गम्यते ॥**
**न हि प्रमाणविरहादस्ति वस्त्विति वीक्ष्यते[1] ॥ ११० ॥**

कुड्यादिव्यवहितघटादिवदप्रमितमपि तदस्तीत्याशङ्क्याऽऽह । एवं चेदिति । सर्वथैवाप्रमितस्यावस्तुत्वे हेतुमाह । न हीति ॥ ११० ॥

---

१ ग. वीक्षते ।

सिद्धसाध्यत्वतो नैवं तथाचोक्तोत्तरत्वतः ॥
भावाभावातिरेकित्वादभ्युपेतं त्वयोच्यते ॥ १११ ॥

किमक्षरस्यामेयत्वमेव साध्यते किंवा नास्तित्वमपीति विकल्प्याऽऽद्यमङ्गीकृत्य सिद्धान्तयति । **सिद्धेति** । द्वितीयं दूषयति । **तथाचेति** । अप्रमेयत्वेऽपि नाक्षरस्यासत्त्वं स्वप्रकाशतया सिद्धेरसकृदुक्तेरित्यर्थः। सिद्धसाध्यत्वं साधयति। **भावेति**॥१११॥

मानाभावे च तन्नेति व्यतिरेकः कुतोऽन्वयम् ॥
मानाभावं किमद्राक्षीर्येनैवमभिधीयते ॥ ११२ ॥

इतश्च मानाभावादक्षराभावोक्तिरयुक्तेत्याह । **मानेति** । आक्षेपं विशदयति । **मानाभावमिति** । स हि दृष्टोऽदृष्टो वा नाऽऽद्येऽक्षराभावो भावाभावसाधकस्यैव तत्त्वाद्द्वितीयेऽपि न तदभावस्तत्साधकमानाभावस्यादृष्टत्वादिति भावः ॥ ११२ ॥

सर्वं हि मानं लोकेऽस्मिन्वस्त्वभिव्यक्तिसाधनम् ॥
तदभावेऽनभिव्यक्तं वस्तु नास्तीति दुर्वचः ॥ ११३ ॥

मानाभावे मेयाभावमुपेत्योक्त्वोपेत्यवादं त्यजति। **सर्वं हीति**। न हि दीपाभावे तदभिव्यङ्ग्यं घटादि तमसाऽऽवृतं नास्तीति सुवचनमिति हिशब्दार्थः ॥ ११३ ॥

स्थूलाद्यनेकधर्माणां निषेधायासकारणात् ॥
अस्तित्वमक्षरस्येह सिद्धं तावद्दृगात्मनः ॥ ११४ ॥

अथ तदस्तीत्यपि दुर्वचं निश्चायकाभावादत आह । **स्थूलादीति** । निषेध्यकल्पनानुपपत्त्या तन्निषेधानुपपत्त्या चाधिष्ठानत्वेनावधित्वेन च स्वप्रकाशमक्षरं सिद्धमित्यर्थः ॥ ११४ ॥

स्वमहिम्ना त्वभावोऽपि सिद्धं नैवाऽऽत्मवत्क्षमः ॥
तत्पारार्थ्यजडत्वाभ्यां मित्यभावस्तथा समः ॥ ११५ ॥

अक्षरस्य स्वप्रकाशत्ववन्मानमेयाभावयोरपि तद्योगान्मानाभावे चेत्याद्ययुक्तमिति[३] चेत्तत्राऽऽह । **स्वमहिम्नेति**। अभावो मेयस्येति शेषः। तथेति पारार्थ्याद्यनुक्रमः। समो मेयाभावेनेत्यर्थः ॥ ११५ ॥

मामेयमात्रसद्भावात्तेभ्योऽत्यन्तनिवृत्तितः ॥
स्वमहिम्ना प्रसिद्धेश्च कुतोऽभावस्य संभवः ॥ ११६ ॥

अक्षरसाम्यं मानाद्यभावस्य जाड्यादिनाऽपोह्याक्षरस्यासत्त्वाभावे युक्त्यन्तरमाह । **मामेयेति** । असङ्गोदासीनतया मात्रादिभ्योऽतिशयेन निवृत्तत्वादक्षरे तेषामप्राप्तेस्तस्य स्वप्रकाशत्वाच्च नासत्त्वाशङ्केत्यर्थः ॥ ११६ ॥

---

१ क. ख. 'मानाच त' । २ ख. 'मेयघ्नम्' ।

**स्वतो माफलरूपत्वान्न माकार्यं प्रमाणतः ॥**
**नास्तीति तु विना मानं न सिध्येत्कुम्भवत्स्वतः ॥ ११७ ॥**

विमतं मेयं वस्तुत्वाद्घटवदित्याशङ्क्य जडत्वोपाधिना निरस्यति । **स्वत इति** । संविद्रूपत्वादात्मनो मानेन संविदन्तरं तत्र कार्यमिति न मानतः शक्यं वक्तुमित्यर्थः । अक्षराभावोऽपि न मानाधीनप्रकाशोऽक्षरतदभावयोरन्यतरत्वादक्षरवदित्याशङ्क्याऽऽह । **नेत्यादिना** । विमतं मेयं जडत्वाद्घटवदन्यथा स्वरूपहानिरिति भावः ॥ ११७ ॥

**कुम्भ आरोप्यते यद्वत्प्रकाशो भानुसंगतेः ॥**
**भानुप्रकाशसंबन्धे भानोर्नान्यदपेक्षते[1] ॥ ११८ ॥**

अक्षरास्तित्वं स्वतः सिद्धं तदभावस्तु नैवमित्यत्र दृष्टान्तमाह । **कुम्भ इति** । कुम्भे हि भानुसंबन्धात्प्रकाशतेऽसावित्यारोप्यते प्रकाशो नैवं भानोरेष प्रकाशत इति स्वप्रकाशसंबन्धे कुम्भाद्यपेक्षते यथेत्यर्थः ॥ ११८ ॥

**स्वतोऽवगतिसंबन्धात्तथाऽभावोऽवगम्यते ॥**
**तथाऽवगतिसंबन्धे नापेक्षाऽवगतेः स्वतः ॥ ११९ ॥**

दार्ष्टान्तिकमाह । **स्वत इति** । उक्तदृष्टान्तादभावो भावश्चावगतियोगाद्गम्यते न स्वतोऽवगतेस्त्ववगन्तव्यवदवगतिसंबन्धे नान्यापेक्षा किंतु स्वत एवावगतिरित्यर्थः । उत्तरार्धे स्थितं नञ्पदं पूर्वार्धेऽपि संबध्यते ॥ ११९ ॥

**अतोऽवगत्यभावोऽपि न स्वतोऽवगतिं विना ॥**
**सिध्यतीह ततोऽस्तित्वं स्वत एवाक्षरात्मनः ॥ १२० ॥**

अवगतेः स्वतस्त्वे तदभावोऽपि स्वतः स्यात्तद्भावाभावयोरन्यतरत्वात्तद्भाववदित्याशङ्क्योपजीव्यभावविरोधान्नेत्याह । **अत इति** । विपक्षे त्ववगत्यभावाज्जगत्यान्ध्यप्रसक्तिरित्याह । **अवगतिमिति** । फलितं निगमयति । **तत इति** ॥ १२० ॥

**उक्तो निरन्वयोऽभावो न[2] बौद्धादिसमाश्रयात् ॥**
**तत्त्वमस्यादिवाक्योत्थविज्ञानविरहात्क्वचित् ॥ १२१ ॥**

अक्षरस्य स्वतः सिद्धेस्तदभावस्य दुर्वचनत्वान्न स्थूलादिनिषेधेऽपि शून्यतेत्यापाद्य तत्रैव हेत्वन्तरमाह । **उक्त इति** । वाक्यीयवस्त्वाकारं ज्ञानं विना न क्वचिदपि स्थूलादावात्यन्तिकोऽभावो बाह्यवदस्माभिरुच्यते तन्न शून्यतेत्यर्थः ॥ १२१ ॥

**नान्यदज्ञानतोऽस्तित्वं द्वितीयस्याऽऽत्मनो यथा ॥**
**निवृत्तिस्तद्वदेवास्य नावगत्यात्मनोऽपरा[3] ॥ १२२ ॥**

स्थूलाद्यभावस्याऽऽत्मत्वे सैव शून्यताऽनात्मत्वे त्वद्वैतहानिरित्याशङ्क्याऽऽह । **नान्यदिति** ॥ १२२ ॥

---

१ ख. °पेक्ष्यते । २ क. न बाह्यादि° । ३ ख. ग. °नोऽन्यतः ॥ १२२ ॥

अकार्यकारणं साक्षादित्यादिगुणलक्षणम्[1] ॥
कूटस्थमक्षरं ध्वान्तध्वस्तौ स्यान्नो निरन्वयम् ॥ १२३ ॥

अज्ञानस्याऽऽत्मानतिरेके तस्याजाड्यमतिरेके तेनैव सद्वयतेत्याशङ्कयाऽऽह । **अकार्येति** । सम्यग्ज्ञानान्निःशेषतयाऽज्ञाननिवृत्तावद्वयमेव वस्तु स्यादित्यर्थः ॥ १२३ ॥

नास्यास्तित्वे यथा मानमेकत्वादक्षरात्मनः ॥
तन्नास्तित्वेऽपि च तथा तयोस्तस्मात्प्रसिद्धितः ॥ १२४ ॥

तस्य मानानातिरेके मेयसंबन्धादसङ्गताहतिरातिरेके च सैवाद्वैतहानिरित्याशङ्कयाऽऽह । **नास्येति** । अक्षरस्य सत्त्वेऽसत्त्वे वा न मानमस्ति सर्वत्र सत्त्वासत्त्वयोरक्षरादेव सिद्धेर्न च तस्य प्रकाशत्वेऽपि दीपवन्मानापेक्षा संविदेकरसत्वादज्ञानध्वंसित्वेनापेक्षितमपि न द्वैतमावहति मृतमारणाल्लज्जन्ती सा भावमपि निर्दहेदिति न्यायादित्यर्थः ॥ १२४ ॥

सत्त्वं वा यदि वाऽसत्त्वं कार्यकारणवस्तुनः ॥
अतद्बोध एवैतत्सिध्यतीव न तु स्वतः ॥ १२५ ॥

सर्वस्यानात्मनोऽकार्यकारणे प्रतीचि चिद्धातौ कल्पितत्वाच्च नाद्वैतहानिरित्याह । **सत्त्वं वेति** ॥ १२५ ॥

यत एवमतो नेह कश्चिद्विप्रतिपद्यते ॥
अक्षरात्मनि नास्तित्वे तस्माद्धेतूक्तिरिष्यते ॥ १२६ ॥

उक्तरीत्या प्रत्यगक्षरस्य यतोऽस्तित्वं सिद्धमतोऽस्मिन्वादिनामविवादात्तदस्तित्वे वक्ष्यमाणहेतूक्तिर्नेष्यते तथाचानुमानोपन्यासपरोऽनन्तरसंदर्भो वृथेति शङ्कते । **यत इति** ॥ १२६ ॥

यतो विप्रतिपद्यन्ते त्वन्तर्यामिणि वादिनः ॥
तत्सिद्ध्येऽनुमायत्नः क्रियतेऽतः परोक्तिभिः ॥ १२७ ॥

निरुपाख्यक्षरविषयत्वेनानुमोक्तिवैयर्थ्येऽपि सोपाधिकतद्विषयतया तदर्थवत्तेति समाधत्ते । **यत इत्यादिना** ॥ १२७ ॥

ईशितव्यार्थसंबन्धादन्तर्याम्येतदक्षरम् ॥
चैतन्याभासमोहाख्यवर्त्मनैव न तु स्वतः ॥ १२८ ॥

अक्षरमेवान्तर्यामीत्युक्तत्वात्तयोरनुमाविषयत्वं तदविषयत्वं वा तुल्यं व्यवस्थायां भेदात्पूर्वापरविरोध इत्याशङ्कयाऽऽह । **ईशितव्येति** ॥ १२८ ॥

अनुमानश्रुतिस्तस्मादागात्तस्यैव सिद्धये ॥
कारणात्मनि संसिद्धे सर्वं सिद्धं भवेद्यतः ॥ १२९ ॥

---

[1] ख. °लक्षितम् ।

काल्पनिको भेदो वस्तुतश्चाभेद इति स्थिते कल्पितभेदमन्तर्यामिणमधिकृत्यानुमान-प्रवृत्तिरिति फलितमाह । **अनुमानेति** । अन्तर्यामिण्यनुमानसिद्धेऽपि कथमनुमानादक्ष-रसिद्धिस्तत्राऽऽह । **कारणेति** । जगत्कारणस्योपलक्षणताया **जन्मादिसूत्रे** स्थितत्वात्त-त्सिद्धौ सर्वं पूर्णमनौपाधिकमक्षरं सिध्यतीति तटस्थलक्षणद्वारा ब्रह्मणि स्वरूपलक्षणसि-द्धेरतोऽन्तर्यामिण्यनुमा प्रकृतोपयोगिनीत्यर्थः ॥ १२९ ॥

**एतस्य वा अक्षरस्य प्रशासनविधौ सति ॥**
**सर्वतःस्थिरमर्यादं जगदेतद्विवर्तते ॥ १३० ॥**

अनुमानश्रुत्यक्षराणि व्याकरोति । **एतस्येति** ॥ १३० ॥

**प्रशासने यथा राज्ञोऽभिन्नमर्यादिकाः प्रजाः ॥**
**पृथिव्याद्यास्तथैवेमा अक्षरस्य प्रशासने ॥ १३१ ॥**

उक्तमर्थं दृष्टान्तेन स्फोरयति । **प्रशासन इति** । अभिन्नेति च्छेदः ॥ १३१ ॥

**विवादगोचरापन्ना यन्तृपूर्वा जगत्स्थितिः ॥**
**व्यवस्थितत्वाल्लोकस्य राजपूर्वा स्थितिर्यथा ॥ १३२ ॥**

उक्तमर्थमनुमानारूढं करोति । **विवादेति** ॥ १३२ ॥

**सूर्याचन्द्रमसौ तज्ज्ञकार्याभिज्ञपुरःसरौ ॥**
**सर्वप्राण्युपकारित्वात्प्रासादस्थप्रदीपवत् ॥ १३३ ॥**

सूर्याचन्द्रमसावित्यादौ विवक्षितमनुमानमाह । **सूर्येति** ॥ १३३ ॥

**सूर्याचन्द्रमसावीशौ मर्यादां नातिगच्छतः ॥**
**येनेह विधृतौ नित्यं सोऽन्तर्यामीति गम्यताम् ॥ १३४ ॥**

तत्फलमाह । **सूर्याचन्द्रमसाविति** ॥ १३४ ॥

**कुसूलवन्न भिद्येते सांशत्वात्पततोऽपि न ॥**
**गुरुत्वाल्लोहवत्पृथ्वी द्यौरपीत्यतिविस्मयः ॥ १३५ ॥**

एतस्येत्यादिद्वितीयपर्याये विवक्षितमाह । **कुसूलवदिति** । स्फुटनपतनप्राप्तावपि द्यावापृथिव्योस्तदुभयमदृष्टमित्यर्थः ॥ १३५ ॥

**चेतनावत्स्वतन्त्रत्वाद्देवतात्मत्वकारणात् ॥**
**नान्तरेण नियन्तारं तयोरेषा व्यवस्थितिः ॥ १३६ ॥**

अचेतनत्वादस्वतन्त्रत्वाच्च तयोरस्फुटनादीत्याशङ्क्य देवतात्वाच्चेतनावत्त्वं स्वातन्त्र्यं च तयोरस्ति तथाऽपि व्यवस्था दृष्टेत्याह । **चेतनावदिति** । तथाऽपि कथं नियन्तृसि-

१ ख. °णत्वस्यैवोप° । २ क. °स्य चाक्ष° । ३ ग. वाऽक्ष° । ४ क. ग. °रस्येति प्र° । ५ क. °स्थितम° । ६ ख. ग. °रेवं व्य° ।

द्धिस्तत्राऽऽह । नान्तरेणेति । पृथिव्यादिव्यवस्था विना नियन्तारमनुपपन्ना तत्कल्पिकेत्यर्थः ॥ १३६ ॥

संयुक्तयोर्वियोगोऽपि न तयोरीक्ष्यते क्वचित् ॥
प्रशासनमृते शास्तुर्न व्यवस्थेदृशी भवेत् ॥ १३७ ॥
द्यावापृथिव्योर्लोकेऽस्मिन्नान्यथेयं समीक्ष्यते ॥
स्वभावमतिलङ्घ्यैते तिष्ठतः शास्तृशासने ॥ १३८ ॥

अर्थापत्त्यन्तरमाह । संयुक्तयोरिति । प्रशासनमिति प्रशब्दः शास्तुरित्यनेनापि संबध्यते । ईदृशी वियोगप्राप्तावपि तदभावरूपेत्यर्थः । संयोगस्य वियोगावसानत्वेऽपि द्यावापृथिव्योः संयुक्तयोर्वियोगादर्शनं नियन्तारं विनाऽनुपपद्यमानं तत्कल्पकमित्यर्थः । लोकानुभवादपि नियन्तृसिद्धिरित्याह । लोकेऽस्मिन्निति । इयमिति व्यवस्थोक्तिः । अनुभवार्थापत्तिसिद्धं निगमयति । स्वभावमिति । अतोऽस्ति प्रशास्तेति शेषः । असंज्ञायां शास्तृशब्दे प्रोपसर्गो द्रष्टव्यः । विमते प्रयत्नवता धृते गुरुत्वे सत्यपातित्वाद्धस्तन्यस्तपाषाणादिवदिति भावः ॥ १३७ ॥ १३८ ॥

निमेषादिविभक्तानां कालांशानां व्यवस्थितिः ॥
या स्वलिङ्गाजहद्वृत्त्या तदीशस्य प्रशासनम् ॥ १३९ ॥

तृतीये पर्याये विवक्षितमाह । निमेषादीति । स्वलिङ्गस्य निमेषादिव्यापारस्य कलयितृत्वस्याजहद्वृत्त्या त्यागं विनेति यावत् । निमेषादयो नियन्तृपूर्वकाः कलयितृत्वात्संप्रतिपन्नवदिति भावः ॥ १३९ ॥

नियतैव प्रवृत्तिश्च स्रोतसां महतामपि ॥
नान्तरेण नियन्तारं संभाव्येत्यवसीयताम् ॥ १४० ॥

चतुर्थपर्यायार्थमाह । नियतेति । विमता नियन्तृपूर्विका नियतप्रवृत्तित्वाद्भृत्यादिप्रवृत्तिवदिति भावः ॥ १४० ॥

दुःखार्जितधनत्यागिनुतिश्च जगतीक्ष्यते ॥
नेयं युक्ताऽप्रसिद्धेशे तत्कर्मफलदायिनि ॥ १४१ ॥

पञ्चमपर्यायार्थमाह । दुःखेति । अप्रसिद्धेति च्छेदः ॥ १४१ ॥

दातृप्रतिग्रहीत्रोश्च क्रियात्यक्तव्ययोस्तथा ॥
अन्वक्षमेव विलयो दृश्यते सार्वलौकिकैः ॥ १४२ ॥

दाता प्रतिग्रहीता दानं देयं वा फलं दास्यति किमीशेनेत्याशङ्क्याऽऽह । दात्रिति ॥ १४२ ॥

---

१ ख. ग. 'योर्वीक्ष्य' । २ ख. 'त्यागे नु' ।

**तथाऽपि तान्प्रशंसन्ति दुःखार्जितधनत्यजः ॥**
**अपि सम्यक्प्रमाणज्ञास्तच्च नर्ते महेश्वरम् ॥ १४३ ॥**

तर्हि फलदातुरभावात्स्वार्थभ्रंशो हि मूर्खतेति न्यायाद्दातृप्रशंसैव मा भूदित्याशङ्क्याऽऽह । **तथाऽपीति** । अप्रामाणिकप्रशंसा न प्रामाणिकैः स्वीकार्येत्याशङ्क्याऽऽह । **अपि सम्यगिति** । तथाऽपि कथमीश्वरसिद्धिस्तत्राऽऽह । **तच्चेति** । नष्टानां फलदानासामर्थ्यात्प्रशंसादृष्टेश्च फलदात्रेश्वरेण भाव्यमित्यर्थः ॥ १४३ ॥

**दानादिकर्मणः साक्षात्पश्यन्तः फलसंगतिम् ॥**
**प्रमाणज्ञाः प्रशंसन्ति यच्च तच्च सतीश्वरे ॥ १४४ ॥**

तदनुमानेन द्रढयति । **दानादीति** । कथं कर्मतत्फलसंगतौ पश्यतिप्रयोगः पारलौकिकसाध्यसाधनभावस्य श्रौतत्वादित्याशङ्क्याऽऽह । **प्रमाणज्ञा इति** । विमतं विशिष्टविज्ञानवद्दातृकं कर्मफलत्वात्सेवाफलवदिति भावः ॥ १४४ ॥

**शास्तर्यसति तत्कर्मफलवैचित्र्यवेदिनि ॥**
**सर्वज्ञेऽनुपपन्नं स्यात्कर्मज्ञानफलप्रदे ॥ १४५ ॥**

तत्रैवार्थापत्तिं मत्वाऽऽह । **शास्तरीति** । तद्धि दातृप्रशंसनं विशिष्टे नियन्तर्यसत्यनुपपन्नं तत्कल्पकमित्यर्थः ॥ १४५ ॥

**नाप्यनीशमपूर्वं च प्रकल्प्यं फलसंगतौ ॥**
**यतोऽपूर्वस्य संसिद्धौ प्रमाणं नोपपद्यते ॥ १४६ ॥**

अपूर्वस्यैव फलदातृत्वात्कृतमीश्वरेणेति केचित्तान्प्रत्याह । **नापीति** । स्वयमचेतनं चेतनेनानधिष्ठितं चापूर्वं न फलदातृ कल्प्यमित्यर्थः । जीवात्मना चेतनेनाधिष्ठितं तत्फलदातृ स्यादिति चेन्नेत्याह । **यत इति** । अतो न तत्फलदातृ स्यादिति शेषः । पराक्रान्तं चात्र संबन्धादौ ॥ १४६ ॥

**नियन्तुरपि चेन्मैवं श्रुतेर्वस्तुन्यपि ध्रुवम् ॥**
**प्रामाण्यस्य पुरोक्तत्वात्तत्सिद्धेश्चानुमानतः ॥ १४७ ॥**

ईश्वरद्वेषिणः शङ्कामुत्थाप्य शिथिलयति । **नियन्तुरित्यादिना** । संसिद्धौ प्रमाणं नोपपद्यत इति संबन्धः । इतश्च नियन्तृसिद्धौ मानादृष्टिरसिद्धेत्याह । **तत्सिद्धेश्चेति** ॥ १४७ ॥

**अर्थापत्तेरपूर्वस्य कल्पनाऽपि न युज्यते ॥**
**अन्यथाऽप्युपपन्नत्वादर्थापत्तेः क्षयो यतः ॥ १४८ ॥**

कर्मविधिर्हि फलदात्रतिरेकेण नोपपद्यते न कर्माऽऽशुतरविनाशि कालान्तरभाविफलानुकूलं तदर्थापत्तिसिद्धेऽपूर्वे कथं मानासिद्धिरित्याशङ्क्याऽऽह । **अर्थापत्तेरिति** । अपूर्वातिरेकेण फलप्राप्तिरन्यथोपपत्तिः ॥ १४८ ॥

**सेव्यात्सेवाफलप्राप्तिदर्शनाच्च त्वपूर्वतः ॥**
**सेवायाश्च क्रियात्मत्वाद्दानयागादि च क्रिया ॥ १४९ ॥**

तामेव साधयति । **सेव्यादिति** । ईश्वरात्फलप्राप्तिसंभवादर्थापत्तेरन्यथोपपत्तेरिति शेषः । कथमीशाधीना फलप्राप्तिस्तत्राऽऽह । **सेवायाश्चेति** । सेवाफलवद्दानादिफलमिति शेषः ॥ १४९ ॥

**दानादिफलसंप्राप्तिः सेव्याद्भवितुमर्हति ॥**
**क्रियात्मकत्वाद्दानादे राजसेवाफलाप्तिवत् ॥ १५० ॥**

तत्रानुमानमाह । **दानादीति** । विमता विशिष्टज्ञानवता दीयमानफलवती विशिष्ट-क्रियात्वात्संमतवदित्यर्थः ॥ १५० ॥

**सर्वकर्मफलप्राप्तिरीश्वरादेव नान्यतः ॥**
**इत्याह भगवान्व्यासः सर्वज्ञोऽपि महामतिः ॥ १५१ ॥**

ईश्वरो न वैदिकक्रियाफलदातेश्वरत्वाल्लौकिकेश्वरवदित्याशङ्क्य स्मृतिविरोधमाह । **सर्वेति** ॥ १५१ ॥

**यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ॥**
**स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ १५२ ॥**

व्यासप्रणीतं भगवद्वाक्यमुदाहरति । **यत इति** ॥ १५२ ॥

**अपि दृष्टक्रियाधर्मसामर्थ्यमनिरस्य तु ॥**
**फलाप्तिकल्पनासिद्धावपन्यायोऽन्यथा भवेत् ॥ १५३ ॥**

ननु सेवाफलं सेव्याद्युक्तं दृष्टत्वाद्दानादिफलं तु नेश्वरादप्रसिद्धेरित्याशङ्क्याऽऽह । **अपि दृष्टेति** ॥ १५३ ॥

**लोकदृष्टक्रियाधर्मसामर्थ्यत्यागलक्षणः ॥**
**अपन्यायो न युक्तोऽतो न्यायवर्त्मासमन्वयात् ॥ १५४ ॥**

अपन्यायं स्फोरयति । **लोकेति** । दृष्टं सेवाया धर्मत्वेन सामर्थ्यं सेव्यात्फलप्रापकत्वं तदनुसृत्य दानादौ फलप्राप्तिसंभवे तन्निरासेनापूर्वात्तत्कल्पना न न्याय्या दृष्टानुसा-रिण्यां कल्पनायां तद्विरोधकल्पनायोगादित्यर्थः ॥ १५४ ॥

**कल्पनाधिक्यतश्चैतदपूर्वं नोपपद्यते ॥**
**कल्प्य ईशोऽथवाऽपूर्वं किं कल्प्यमुपपद्यते ॥ १५५ ॥**

अर्थापत्तेरन्यथैवोपपत्तिमुक्त्वाऽपूर्वस्य फलहेतुत्वे दोषान्तरमाह । **कल्पनेति** । तदा-धिक्यं वक्तुं परामृशति । **कल्प्य इति** ॥ १५५ ॥

**सेव्यात्क्रियाफलप्राप्तिर्दृष्टेयं न त्वपूर्वतः ॥**
**नाप्यपूर्वं क्वचिद्दृष्टं तन्मानासंभवादिह ॥ १५६ ॥**

नापूर्वं कल्प्यं कॢप्तत्वात्तन्न कल्पनाधिक्यमित्याशङ्क्याऽऽह । सेव्यादिति । इहेति शास्त्रलोकयोर्ग्रहणम् ॥ १९६ ॥

अपूर्वं निष्प्रमाणं च दातुं शक्तिरथास्य च ॥
फलदातृत्वसामर्थ्ये दानं चाभ्यधिकं तथा ॥ १५७ ॥

भूमिकां कृत्वा कल्पनाधिक्यं स्फुटयति । अपूर्वमिति ॥ १९७ ॥

इह त्वीशातिरेकेण नान्यत्किंचित्प्रकल्प्यते ॥
परिशिष्टस्य कल्प्यस्य सेव्ये दृष्टत्वकारणात् ॥ १५८ ॥

स्वन्मतेऽपि तुल्या कल्पनेत्याशङ्क्याऽऽह । इह त्विति । तस्य फलदानसामर्थ्यं तस्मिन्सति दानं च कल्प्यमित्याशङ्क्याऽऽह । परिशिष्टस्येति । स्वपक्षे धर्मिमात्रं कल्प्यं परपक्षे धर्मी धर्मश्चेत्याधिक्यं तस्मात्फलमत उपपत्तेरिति न्यायेन परस्यैव फलदातृतेति भावः ॥ १९८ ॥

देवाश्च पितरश्चैव मनुष्याणामधीनताम् ॥
नाऽऽप्नुयुर्हव्यकव्यार्थं यदि नाभूत्प्रशासिता ॥ १५९ ॥

ददत इत्यादि व्याख्याय यजमानमित्यादि व्याचष्टे । देवाश्चेति । देवादीनामीश्वराणामपि हव्याद्यर्थित्वेन मनुष्याधीनत्वाख्यहीनवृत्तिभाक्त्वं नियन्तृकल्पकमित्यर्थः ॥ १९९ ॥

यदज्ञानाज्जगत्यस्मिंस्तीव्रानर्थपरंपरा ॥
ज्ञानाच्च मुक्तिः संसारात्कथं नास्ति प्रशास्तृ तत् ॥ १६० ॥

ईश्वरास्तित्वे युक्त्यन्तरमाह । यदज्ञानादिति ॥ १६० ॥

ननु क्रियात एवेयं संसारोच्छित्तिरिष्यते ॥
नैवं यतो न कर्मभ्यो मुक्तिः संभाव्यतेऽश्रुतेः ॥ १६१ ॥

ज्ञानान्मुक्तिं सिषाधयिषुश्चोदयति । नन्विति । परिहरति । नैवमिति । असंभवे हेतुः । अश्रुतेरिति ॥ १६१ ॥

यथा च कर्मणा मुक्तिर्न कथंचन युज्यते ॥
तथोक्तत्वात्पुरा नेह भूयो वक्तव्यमिष्यते ॥ १६२ ॥

न परमश्रुतेरेव तेभ्यो मुक्त्ययोगः किंतु न्यायविरोधाच्चेति प्रागुक्तं स्मारयति । यथा चेति ॥ १६२ ॥

असंभवो यथा मुक्तेः क्रियासाधनसंश्रयात् ॥
[1]तथेयं श्रुतिरप्याह यो वा इत्यादिवाक्यतः ॥ १६३ ॥

न कर्मभ्यो मुक्तिरित्यत्रैवानन्तरवाक्यमवतारयति । असंभव इति ॥ १६३ ॥

---

१ ख. तथेह ।

उदारफलदायीनि बहुशोऽनुष्ठितान्यपि ॥
क्षयिष्णुफलवन्त्येव कर्माणि यदबोधतः ॥ १६४ ॥

तदक्षराणि व्याकरोति । उदारेति । यस्याज्ञानादसकृदनुष्ठितानि विशिष्टफलान्यपि सर्वाणि कर्माणि संसारमेव फलयन्ति तदज्ञातं वस्तु नास्तीत्ययुक्तं संसाराभावप्रसङ्गादित्यर्थः ॥ १६४ ॥

तथाच यत्परिज्ञानात्कृत्स्नकार्पण्यनिःसृतिः ॥
कथमेवंविधं गार्गि नास्तीत्यक्षरमुच्यते ॥ १६५ ॥

कर्मभ्यो मोक्षायोगादक्षराज्ञानाच्च बन्ध इति स्थिते फलितमाह । तथाचेति ॥ १६५ ॥

सर्वे कार्पण्ययुक्ताः स्युर्यदि न स्यात्तदक्षरम् ॥
ईक्ष्यन्ते चाप्यकृपणास्तच्च सत्येव यन्तरि ॥ १६६ ॥

अक्षरास्तित्वे हेत्वन्तरमाह । सर्व इति । इष्टापत्तिमाशङ्क्याऽऽह । ईक्ष्यन्ते चेति ॥ १६६ ॥

यो वा एतदिति स्पष्टं श्रुतिरप्याह यत्नतः ॥
अक्षराज्ञानतः पुंसां कार्पण्येनावियुक्तताम् ॥ १६७ ॥

उत्तरवाक्ययोस्तात्पर्यमुक्त्वाऽनन्तरवाक्यस्याक्षरार्थमाह । यो वा इति । स्पष्टं वाचकशब्दप्रयोगपूर्वकमित्यर्थः । तत्त्वज्ञानात्कार्पण्यनिवृत्तिरित्याभिप्रायो यत्नः ॥ १६७ ॥

अक्षरं यो विदित्वाऽस्माल्लोकाद्गार्गि प्रमीयते ॥
निवर्तते स कार्पण्यात्तज्ज्ञानाद्ध्वान्तबाधतः ॥ १६८ ॥

अथेत्यादिवाक्याक्षराणि व्याकरोति । अक्षरमिति । अस्माल्लोकाद्देहादिति यावत् । प्रमीयते हिंस्यते म्रियत इत्यर्थः ॥ १६८ ॥

यस्त्वक्षरपरिज्ञानान्मृत्युमृत्युः प्रमीयते ॥
स एव ब्राह्मणो नान्यो जगत्यध्यवसीयताम् ॥ १६९ ॥

अक्षरविदो युक्तमकार्पण्यं कार्पण्यहेत्वज्ञानस्याक्षरज्ञानादपनयाद्ब्राह्मण्यं त्वन्यस्यापि[1] तुल्यमिति कथं फलत्वेनोक्तमित्याशङ्क्याऽऽह । यस्त्विति ॥ १६९ ॥

सर्वज्ञः सर्वकृच्चासौ निरस्ताशेषसंसृतिः[2] ॥
प्राप्ताशेषपुमर्थश्च ब्राह्मणोऽत्राभिधीयते ॥ १७० ॥

तस्य मुख्यं ब्राह्मण्यं प्रकटयति । सर्वज्ञ इति ॥ १७० ॥

ज्ञेयत्वसिद्धये प्राह यथोक्तेश्वरवर्त्मना ॥
अक्षरस्य श्रुतिः साक्षात्तद्वा इत्येवमादिना ॥ १७१ ॥

---

१ क. ग. °नापि यु°। २ ख. ग. °तिः । आप्ता°।

सोपाधिकस्य सर्वज्ञत्वादिमतोऽक्षरस्य ज्ञानान्मुक्तिश्चेन्निरुपाध्यक्षरं नास्त्येवेत्याशङ्कयानन्तरवाक्यमादत्ते । ज्ञेयत्वेति । अकार्यकारणप्रत्यगक्षरस्य स्वस्मिन्नारोपितेश्वरत्वादिनिरासद्वारेणापरोक्षतया प्रतिपत्त्यर्थं तद्वा इत्यादिवाक्येन श्रुतिरनौपाधिकं तदाहेत्यर्थः ॥ १७१ ॥

एतदस्य प्रशास्तृत्वं स्वमोहाभासहेतुकम् ॥
नेति नेत्यादिवाक्येभ्यो दृष्टिमात्रात्मवस्तुनः ॥ १७२ ॥

अग्नेरिव प्रकाशकत्वं स्वाभाविकमक्षरस्येश्वरत्वं तत्कथं तन्निरासद्वारा निरुपाध्यक्षरसिद्धिस्तत्राऽऽह । एतदिति । ईश्वरत्वादेरारोपितत्वे गमकमाह । नेतीति ॥१७२॥

इत्येतत्प्रतिपत्त्यर्थं तद्वा एतदिति श्रुतिः ॥
मागोचरातिवर्तित्वाददृष्टं स्यात्तदक्षरम् ॥ १७३ ॥

तस्याध्यस्तत्वे सिद्धे तन्निरासेन निरुपाध्यक्षरदृष्ट्यर्थमनन्तरश्रुतिर्युक्तेत्याह । इत्येतदिति । तात्पर्यमुक्त्वाऽदृष्टमिति पदं व्याचष्टे । मागोचरेति ॥ १७३ ॥

अभावत्वनिषेधार्थं द्रष्ट्रक्षरमिहोच्यते ॥
कूटस्थदृष्टिमात्रत्वान्न तु द्रष्टृत्वमुच्यते ॥ १७४ ॥

अमेयत्वादसत्त्वे प्राप्ते द्रष्टृपदमादत्ते । अभावत्वेति । दृष्टिकर्तृत्वात्तर्हि क्रियावत्त्वं तत्किं स्वविषयमन्यविषयं वा दर्शनमाद्यं दूषयति । कूटस्थेति ॥ १७४ ॥

ओतप्रोतगिराऽशेषदृश्यवस्तुनिराकृतेः ॥
अकारकाद्वयत्वाभ्यां द्रष्टृत्वं नाक्षरात्मनः ॥ १७५ ॥

द्वितीयं प्रत्याह । ओतेति । पक्षयोरसंभवे हेत्वन्तरमाह । अकारकेति ॥ १७५ ॥

बहुद्रष्टृनिषेधार्थं नान्यदित्याद्युदीरणम् ॥
विजातीयसजातीयवस्त्वन्तरनिषेधतः ॥
कूटस्थमेकं चैतन्यं सिद्धं श्रुत्यनुसारतः ॥ १७६ ॥

नेत्यादिवाक्यस्य तात्पर्यमाह । बह्विति । प्रकरणार्थमुपसंहरति । विजातीयेति । ओतप्रोतवाक्येन प्रत्यगतिरिक्तं जडं निरस्तं नान्यदित्यादिना चाजडं तस्मादखण्डं वस्तु श्रुतितात्पर्यगम्यं सिद्धमित्यर्थः ॥ १७६ ॥

एतस्मिन्नक्षरे गार्गि स्रजि क्लृप्तफणीन्द्रवत् ॥
ओतः प्रोतश्च निःशेष आकाशोऽकारणात्मनि ॥ १७७ ॥

एतस्मिन्नित्यादिवाक्याक्षराणि योजयति । एतस्मिन्निति । निःशेषः सकार्यः ॥ १७७ ॥

अक्षरं स्वात्मसंमोहात्कारणत्वं निगच्छति ॥
तथा कार्यत्वमप्येतन्निरवद्यं तदेकलम् ॥ १७८ ॥

अकारणात्मनीत्यक्षरस्य कथं कार्यकारणवैलक्षण्यं तस्य सर्वाश्रयत्वाश्रयणादित्याशङ्क्याऽऽह । **अक्षरमिति** ॥ १७८ ॥

**सर्वस्याक्षरमात्रत्वान्न किंचिन्नोपसंहृतम् ॥**
**प्रत्यग्विरोधतस्तद्वन्न किंचिन्नापि निह्नुतम् ॥ १७९ ॥**

निरवद्यमेकलमित्येतदेव स्फुटयति । **सर्वस्येति** । न तावदक्षरेणासंगृहीतमर्थान्तरमस्ति सर्वस्य तादितरस्वरूपाभावान्न च तदभेदेन तद्वर्तते प्रत्यक्पराञ्चोर्विरोधात्तद्युक्तं तदैकरस्यमित्यर्थः ॥ १७९ ॥

**तथा ज्ञेयस्य सर्वस्य ज्ञाताज्ञातविभागिनः ॥**
**उक्ताक्षरात्मावसितेर्न किंचिदवशिष्यते ॥ १८० ॥**

प्रतीचो भेदाभेदाभ्यां कार्यकारणयोरभावेऽपि वस्त्वन्तरं स्यादित्याशङ्क्याऽऽह । **तथेति** । तद्धि ज्ञेयं न वाऽऽद्ये कारणाद्यन्तर्भावाद्भेदाभेदाभ्यां तद्वदभावो द्वितीये स्वतः स्फूर्तावक्षरान्तर्भावोऽन्यथा मानाभावात्तदसत्त्वेत्यर्थः ॥ १८० ॥

**नानुत्पन्नमितो ज्ञानात्किंचिदप्यवशिष्यते ॥**
**नाप्यध्वस्तं तथाऽज्ञानं कृत्स्नज्ञेयसमाप्तितः ॥ १८१ ॥**

**श्लोकानामादितः समष्ट्यङ्काः—६७००**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके तृतीयाध्यायस्याष्टमं ब्राह्मणम् ॥ ८ ॥**

उत्पिपादयिषितं ज्ञानं वस्त्वन्तरमिति चेन्नेत्याह । **नानुत्पन्नमिति** । निराचिकीर्षितमज्ञानं तर्हि वस्त्वन्तरं नेत्याह । **नापीति** । न चेदमाकाशाधिकरणमक्षरं वर्णविशेषात्मकमक्षराधिकरणविरोधादिति भावः ॥ १८१ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां तृतीयाध्यायस्याष्टमं ब्राह्मणम् ॥ ८ ॥

---

अथ नवमं ब्राह्मणम् ।

---

**सूत्रादिकार्यमार्गेण यन्तृत्वं कारणात्मनः ॥**
**यदभ्यधायि प्राक्श्रुत्या तदेवानूद्य पूर्ववत् ॥ १ ॥**
**साक्षादित्यादि याथात्म्यं भूयोऽप्यात्मन उच्यते ॥**
**नियम्यदेवताभेदव्याससंक्षेपवर्त्मना ॥ २ ॥**

यत्साक्षादित्यादि प्रस्तुत्य सर्वान्तरत्वनिरूपणद्वारा साक्षात्त्वादिकमार्थिकं ब्राह्मणत्रयेण निर्धारितमधुना साक्षादेव तन्निर्धारणार्थमिदं ब्राह्मणमिति संगतिमाह । **सूत्रादीति** ।

यदन्तर्यामिब्राह्मणे यः पृथिव्यामित्यादिश्रुत्या नियम्यसर्वापेक्षया कारणस्याऽऽत्मनो नियन्तृत्वमुक्तं तदत्र पूर्वोक्तप्रकारानुसारेण प्राणसमानशब्दाभ्यामनूद्य तदेवाऽऽलम्ब्य नियम्यदेवताविशेषविस्तारसंकोचोक्तिद्वारा साक्षात्त्वादिरूपमात्मसंबन्धितया प्रागुक्तमपि पुनर्निर्णेतुमेतद्ब्राह्मणमित्यर्थः ॥ १ ॥ २ ॥

**चिदाभासं स्वमज्ञानं संनिपत्य तदक्षरम् ॥**
**कारणं सत्स्वकार्येषु नियन्तृत्वं प्रपद्यते ॥ ३ ॥**

कूटस्थासङ्गाद्वयस्याऽऽत्मनो नियन्तृत्वायोगमाशङ्क्योक्तमनुवदति । **चिदिति** ॥३॥

**सुषुप्तप्रलयावस्थप्राणात्माऽक्षरमुच्यते ॥**
**स ब्रह्म त्यदिति तथा श्रुतिरप्याह तत्स्फुटम् ॥ ४ ॥**

उक्तलक्षणमक्षरं साभासाज्ञानोपाधिकारणं भूत्वा नियन्तृ भवतीत्ययुक्तं प्राणं तर्हि वागप्येतीत्यादौ प्राणस्यैव स्वापाद्यवस्थापन्नस्य कारणत्वश्रुतेरित्याशङ्क्य प्राणाक्षराभेदान्नैवमित्याह । **सुषुप्तेति** । तयोरभेदे वाक्यशेषं प्रमाणयति । **स ब्रह्मेति** । स ब्रह्म त्यदित्याचक्षत इति श्रुतिरपि सशब्देन प्राणमनुकृष्य तत्र ब्रह्मशब्दं प्रयुञ्जाना प्राणाख्यकारणस्य ब्रह्मणश्चास्मदुक्तानुसारेणैक्यं स्फुटमाहेत्यर्थः ॥ ४ ॥

**इत्यन्तर्याम्यवस्थायां स्थित्वैकां प्राणदेवताम् ॥**
**सूत्राद्यवच्छेदवशात्सर्वमेतन्नियच्छति ॥ ५ ॥**

प्राणाख्यकारणैक्यादक्षरस्यैव कारणत्वेऽपि केन क्रमेण तस्य नियन्तृत्वमित्याशङ्क्याऽऽह । **इत्यन्तर्यामीति** । उक्तरीत्या साभासाज्ञानोपाध्यक्षरस्य कारणत्वे स्थिते तदेव नियन्त्रवस्थायां स्थित्वा प्रथमं प्राणदेवताख्यं साभासमज्ञानं नियच्छति ततस्तत्कार्यसूत्राद्यवच्छेदात्तदात्मना स्थित्वा तत्तन्नियमयत्येवं सर्वजगन्नियन्तृताऽक्षरस्येत्यर्थः ॥ ५ ॥

**नानात्वैकत्वरूपाभ्यां सा पुनः प्राणदेवता ॥**
**स्थिता जगदिदं व्याप्य प्राणिकर्मवशादियम् ॥ ६ ॥**

यस्य क्रमेण नियन्तृत्वं तदेवोत्तरप्रश्नविषयविवेकार्थमनुभाषते । **नानात्वेति** । नियन्तुः सर्वजगद्व्याप्तौ हेतुमाह । **प्राणीति** ॥ ६ ॥

**तस्या विक्षेपसंहारौ शाकल्यः पर्यपृच्छत ॥**
**नियन्तव्यनियन्तृत्वसंबन्धस्य प्रसिद्धये ॥ ७ ॥**

उक्तप्राणदेवतास्वरूपविषयं प्रश्नमुत्थापयति । **तस्या इति** । देवताविकाससंकोचप्रश्नफलमाह । **नियन्तव्येति** । स्थूलरूपस्य नियम्यत्वं सूक्ष्मरूपस्य नियन्तृत्वमित्येवंविधं संबन्धं ज्ञातुं पृष्टवानित्यर्थः ॥ ७ ॥

---

१ क. ग. °वस्थं प्रा° ।

**देवसंख्यां स संपृष्टो निविदैव प्रपेदिवान् ॥**
**देवा निविदि यावन्तो वैश्वदेवस्य संश्रिताः ॥ ८ ॥**
**तावन्त एव सोऽसुः स्याज्जगत्यस्मिंश्चराचरे ॥**
**आनन्त्यं बहुशब्देन देवानां प्राब्रवीन्मुनिः ॥ ९ ॥**

स हेत्यादेरर्थमाह । **देवेति** । निविदा निवेद्यते देवतासंख्या यया मन्त्रपदरूपया वाचा तयेति यावत् । यावन्त इत्यादेरर्थमाह । **देवा इति** । या निविद्वैश्वदेवशस्त्रसंबद्धा तत्र यावत्संख्याकाः शस्यमानत्वेन स्थितास्तावन्तो देवा इत्यर्थः । कथं तर्हि प्राणैक्यं प्रतिज्ञायते तत्राऽऽह । **सोऽसुरिति** । देवताभेदः प्राण एवेति तदैक्यप्रतिज्ञेत्यर्थः । त्रयश्चेत्यादिनिवित्पदेषु बहुवचनस्य तात्पर्यमाह । **आनन्त्यमिति** ॥ ८ ॥ ९ ॥

**त्रयस्त्रिंशत्प्रभृत्येषां षडादिषु यथाक्रमम् ॥**
**संहृतिः प्रातिलोम्येन व्यूहस्त्वागणनाक्षयात् ॥ १० ॥**

त्रयस्त्रिंशदित्यादेस्तात्पर्यं वदन्देवानां संकोचविकासावधिमाह । **त्रयस्त्रिंशदिति** । षडधिकत्रिशताधिकत्रिसहस्रसंख्यानां देवानां त्रयस्त्रिंशद्देवेषु तानारभ्य षट्सु तेषां त्रिषु तेषां द्वयोस्तयोरध्यर्धे तस्य प्राणे पाठक्रमेणोपसंहारस्तद्विपरीतक्रमेण विस्तारोऽनन्तदेवपर्यन्त इत्यर्थः ॥ १० ॥

**कतम इति पृष्टोऽथ वस्वादीन्प्रत्यपद्यत ॥**
**वसूनप्यथ संपृष्टः सोऽग्न्यादीन्प्राब्रवीद्वसून् ॥ ११ ॥**

कतमे त इत्यादेरर्थमाह । **कतम इति** । कतमे वसव इत्यादेरर्थमाह । **वसूनिति** । त्रयस्त्रिंशद्देवानां गणशो निर्णयानन्तरमित्यथशब्दार्थः ॥ ११ ॥

**संहृतात्मप्रभेदा हि सैवैका प्राणदेवता ॥**
**वसुत्वमष्टधा भिन्ना बिभर्ति जनिमत्स्थितौ ॥ १२ ॥**

अन्ये तर्हि वसवोऽन्या च प्राणदेवतेति तदैक्यविरोधमाशङ्क्याऽऽह । **संहृतेति** । देवतायाः संकोचविकाससंभवो हिशब्दार्थः ॥ १२ ॥

**वसु कर्मफलं चाऽऽहुः कर्मणः साधनं वसु ॥**
**यस्मात्तदेषु निहितं तस्मात्ते वसवः स्मृताः ॥ १३ ॥**

एतेषु हीत्यादौ वसुशब्दार्थमाह । **वस्विति** । तस्मादित्यादि व्याचष्टे । **यस्मादिति** । तदधीनत्वात्कर्मादेरित्यर्थः ॥ १३ ॥

**पुरुषे ये दश प्राणा इन्द्रियाणि सहाऽऽत्मना ॥**
**मनसैकादशात्रैतान्रुद्रानित्याचचक्षिरे ॥ १४ ॥**

एकादशेत्यादेरर्थमाह । **पुरुष इति** । प्राणशब्दार्थमाह । **इन्द्रियाणीति** । आत्म-

शब्दार्थमाह । मनसेति । इत्येकादश ये पुरुषाकारे देहे सन्ति तानत्र रुद्रान्वदन्तीति योजना ॥ १४ ॥

रोदयन्तो द्रवन्त्येते रुदन्ति च यतस्ततः ॥
रुद्रा इत्यभिधीयन्ते प्राणा एकादशोदिताः ॥ १५ ॥

ते यदेत्यादेरर्थमाह । रोदयन्त इति ॥ १५ ॥

आददाना यतो यन्ति मर्त्यानां स्थितिकारणम् ॥
मासाभिमानिनो देवा आदित्यास्तेन ते स्मृताः ॥ १६ ॥

एते हीत्यादेरर्थमाह । आददाना इति ॥ १६ ॥

आयुर्वीर्यं स्मृतिं प्रज्ञां सौकुमार्यं वपुःश्रियम् ॥
आददाना यतो यन्ति तेनाऽऽदित्या अमी स्मृताः ॥ १७ ॥

तेषां स्थितिकारणं व्याकुर्वन्नुक्तं विवृणोति । आयुरिति ॥ १७ ॥

इन्द्रश्च देवता ज्ञेया मेघनादाभिमानिनी ॥
स्तनयित्नुरिह ज्ञेयस्तथा यज्ञः प्रजापतिः ॥ १८ ॥

स्तनयित्नुरित्यादेरर्थमाह । इन्द्रश्चेति । अत्र स्तनयित्नुरेवेन्द्रो ज्ञेयः स्तनयित्नुश्च मेघनादाभिमानिनी देवता ज्ञेयेति योजना । यथाऽत्रेन्द्रः स्तनयित्नुरुक्तस्तथा प्रजापतिरिह यज्ञः स्यादिति योजनीयम् ॥ १८ ॥

वीर्यं वज्रोऽशनिरिरिति स्तनयित्नुरिहोच्यते ॥
पशुसाधनको यस्माद्यज्ञस्तस्मात्पशुः स्मृतः ॥ १९ ॥

अशनिशब्दार्थमाह । वीर्यमिति । यद्यपि पूर्वं स्तनयित्नुर्मेघनादाभिमानिनी देवतोक्ता तथाऽप्यत्र वीर्यादिशब्दितोऽसावित्यभिप्रायेणेहशब्दप्रयोगः । पशव इत्यस्यार्थमाह । पशिवति ॥ १९ ॥

अग्न्यादिषु यतः षट्सु यथोक्ताः सर्वदेवताः ॥
षट्संख्यामेव संयान्ति षडग्न्याद्यास्ततः स्मृताः ॥ २० ॥

एते हीदमित्यादि व्याकरोति । अग्न्यादिष्विति । अन्तर्भूताः सत्य इति शेषः ॥ २० ॥

आधाराधेययोरैक्यात्पृथिव्यग्न्यादिषु त्रिषु ॥
त्रयो देवास्ततोऽग्न्याद्याः कृत्स्नान्तर्भावकारणात् ॥ २१ ॥

इम एवेत्यादि व्याकरोति । आधारेति । एषु हीत्यादि व्याचष्टे । कृत्स्नेति । ततःशब्दस्तु प्राच्या पञ्चम्या योज्यः ॥ २१ ॥

---

१ क. 'स्तथाऽग्न्या' । २ ख. व्याकरोति ।

अन्नं प्राणश्च देवौ द्वौ द्वयोरेष विनिर्णयः ॥
एतावन्मात्रयाथात्म्यं सर्वस्य जगतस्ततः ॥ २२ ॥

अन्नं चेत्यादेरर्थमाह । **अन्नमिति** । कथमेतावेव द्वौ देवौ तत्राऽऽह । **एतावन्मात्रेति** ॥ २२ ॥

योऽयं पवत इत्युक्तिरध्यर्धस्य विनिर्णये ॥
एकत्वात्पवमानस्य तदाहुरिति चोदना ॥ २३ ॥

योऽयमित्यादि व्याचष्टे । **योऽयमिति** । तदित्यादेस्तात्पर्यमाह । **एकत्वादिति** ॥ २३ ॥

एकसंख्यैव नान्याऽस्ति द्विसंख्याया यतस्ततः ॥
पृष्टोऽध्यर्ध इति प्राह सोपहासमृषिः सुधीः ॥ २४ ॥

यदित्यादिप्रत्युक्तिमवतारयति । **एकेति** । द्वितीयसंख्यायाः सकाशादर्वागेकत्वसंख्यैवास्ति न च संख्यान्तरमतोऽध्यर्धशब्दस्य संख्याविषयत्वायोगेऽपि तद्विषयत्वमुपेत्य कथमयमेकः सन्नध्यर्धः स्यादिति पृष्ट एष मुनिरयोग्यविषयत्वं प्रश्नस्य पश्यन्नुपहासपूर्वकं यदस्मिन्नित्याद्युक्तवानित्यर्थः ॥ २४ ॥

वायुर्वा देवता कृत्स्ना तदन्यस्य तदात्मनः ॥
अर्धत्वं स्यात्कनीयस्त्वाद्व्याप्यस्याग्न्यादिरूपिणः ॥ २५ ॥

अध्यर्धशब्दस्य संख्याविषयत्वमुपेत्य श्रुतेर्बहिः समाधिमाह । **वायुर्वेति** ॥ २५ ॥

ऋद्धिं प्राप्नुयतः सर्वं वायौ सति चराचरम् ॥
तस्मादध्यर्ध इत्येवं वायुमाचक्षते बुधाः ॥ २६ ॥

यदस्मिन्नित्यादिश्रुत्यक्षराणि व्याचष्टे । **ऋद्धिमिति** ॥ २६ ॥

संख्याप्राधान्यमध्यर्धे विदग्धेन विवक्षितम् ॥
सर्वमृध्नोति यत्प्राणे तेनेति श्रुतिहृद्गतम् ॥ २७ ॥

प्रकरणादध्यर्धशब्दस्य संख्याविषयत्वे कथमुपहासोक्तिरत आह । **संख्येति** । कथं तर्हि यौगिकार्थोक्तिस्तत्राऽऽह । **सर्वमिति** । शाकल्यस्य मिथ्यावादिनो मतमपास्य सम्यग्ज्ञानिनो मुनेर्मतमुपास्यमित्यर्थः । प्राणे सति सर्वं जगदृद्धिं यस्मादाप्नोति तेनाध्यर्धः स इति श्रुतेर्मतमिति योजना ॥ २७ ॥

अन्नाशितृत्वसिद्ध्यर्थं यथा व्युत्पत्तिरुच्यते ॥
अन्नेनाश्नुत इत्येवमध्यर्धस्यापि योजना ॥ २८ ॥

अध्यर्धशब्दस्य यौगिकत्वं दृष्टान्तेनाऽऽह । **अन्नेति** । ऐतरेयके[3] प्राणस्यान्नाशितृत्व-

---

१ क. °प यतः । २ क. वायुं प्राप्य च° । ३ ख. °के तस्याग्निरन्नोऽन्नमशीत य इति प्रा° ।

मुक्तं तत्सिद्ध्यर्थमन्नेन हीदं सर्वमश्नुते प्राण इत्येवंप्रकारेण व्युत्पत्तिर्यथोच्यते तथाऽध्यर्धशब्दस्यापि व्युत्पत्तिरित्यर्थः ॥ २८ ॥

**जनिमत्सर्वभूतानां प्राणेऽन्तर्भावहेतुतः ॥**
**प्राणो देवोऽत एवैकस्तस्यैव महिमा परः ॥ २९ ॥**

प्राणशब्दार्थमाह । जनिमदिति ॥ २९ ॥

**भरणात्सर्वकार्याणां प्राणो ब्रह्मेति भण्यते ॥**
**त्यदित्याचक्षते तस्मात्प्राणं ब्रह्म परोक्षतः ॥ ३० ॥**

स ब्रह्मेत्यादेरर्थमाह । भरणादिति ॥ ३० ॥

**साक्षान्निर्देशनुत्त्यर्थं कारणत्वावबुद्धये ॥**
**प्राणं ब्रह्म त्यदित्याहुः पारोक्ष्येण महाधियः ॥ ३१ ॥**

प्राणस्य ब्रह्मत्वं परोक्षत्वं च कस्मादुक्तं तत्राऽऽह । साक्षादिति । प्राणस्य साक्षान्निर्देशनिरासार्थं त्यदिति पारोक्ष्येण तन्निर्दिशति तस्य कारणत्वप्रतिपत्त्यर्थं ब्रह्मेति तद्विदस्तं वदन्तीत्यर्थः ॥ ३१ ॥

**करणेष्वेषु सर्वेषु तथा कार्यात्मकेषु च ॥**
**अध्यात्मादिषु कार्त्स्न्येन तेषु तेष्ववतिष्ठते ॥ ३२ ॥**

पृथिव्येवेत्याद्यवतारयितुं प्राणस्य सर्वात्मत्वमनुवदति । करणेष्विति ॥ ३२ ॥

**अष्टधाऽतः पुनस्तस्य भेदोऽयमुपवर्ण्यते ॥**
**अधिकारविशेषेण पृथिवीत्यादिनाऽधुना ॥ ३३ ॥**

कार्यकरणेष्वध्यात्मादिभिन्नेषु स्थूलसूक्ष्मोपाधिषु सर्वेषु स्वरूपत्वेन प्राणस्तिष्ठतीत्युक्तमनूद्योत्तरवाक्यतात्पर्यमाह । अष्टधेति । सर्वात्मत्वमतःशब्दार्थः । ननु प्राणस्य संकोचविकासाभ्यामैक्यमानन्त्यं चोक्तं तत्कथमष्टधात्वं तत्राऽऽह । अधिकारेति । एकस्यापि प्राणस्य पृथिव्यादौ स्वामित्वेन संबन्धविशेषादष्टधात्वमित्यर्थः ॥ ३३ ॥

**अनन्तभेदभिन्नस्य पुनरप्यष्टधोच्यते ॥**
**देवतासमुदायस्य भेदः संक्षेपलक्षणः ॥ ३४ ॥**

अनन्तभेदे प्राणे व्याख्याते तस्याष्टधा भेदोऽप्युक्त एवेति किं पुनरुक्त्येत्याशङ्क्योक्तं प्रपञ्चयति । अनन्तेति । देवतासमुदायस्य सर्वदेवतात्मकस्य प्राणस्येत्यर्थः । ध्यानसौकर्यार्थं संक्षेपोक्तिरिति भावः ॥ ३४ ॥

**पृथिव्यायतनं यस्य तत्स्थोऽग्निर्लोक एव च ॥**
**तस्याऽऽलोकनहेतुः स्यादग्निर्देवस्य सर्वदा ॥ ३५ ॥**

पृथिवीत्यादेरक्षरार्थमाह । पृथिवीति । चकाराद्यस्येति संबन्धः । तं यो विद्यात्स[1]

---

१ ख. 'त्सर्वदे'।

वेदितेत्युत्तरत्र संबन्धः । कथमग्निरस्य लोकस्तत्राऽऽह । तस्येति । अतः स लोकोऽग्नि-रिति शेषः ॥ ३५ ॥

मनश्च ज्योतिर्विज्ञानं संकल्पादिस्वलक्षणम् ॥
स्वरूपं वा मनोज्योतिर्यस्य देवस्य भण्यते ॥ ३६ ॥

मनोज्योतिरिति व्याचष्टे । मनश्चेति । संकल्पादिरूपं मनो ज्योतिःशब्दितं विज्ञाने प्रति यस्य कारणं तं विद्वान्वेदितेत्यर्थः । अस्यार्थान्तरमाह । स्वरूपमिति । यस्य मनोरूपं ज्योतिः स्वरूपं तं विद्वान्वेदितेति यावत् ॥ ३६ ॥

क्षितिर्देहोऽग्निनयनो मनःसंकल्पसाधनः ॥
यः पृथिव्यभिमान्यत्र सर्वस्यैव परायणम् ॥ ३७ ॥
आध्यात्मिकस्य सर्वस्य कार्यस्य करणस्य च ॥
परायणमवष्टम्भ आत्मनः स्यात्तथाविधम् ॥ ३८ ॥
याज्ञवल्क्येह यो विद्याद्वेदिता स्यात्स एव तु ॥
पण्डितो न त्वनेवंविद्यथा त्वं पण्डितायसे ॥ ३९ ॥

वाक्यत्रयार्थं संक्षिपति । क्षितीति । पृथिव्यस्मीत्यभिमानी पूर्वोक्तो यो देवस्तं विद्वा नत्र विद्वानित्यर्थः । सर्वस्येत्यादि व्याचष्टे । सर्वस्यैवेति । यो वै तमित्यादेरर्थमाह । तथेति । इहेत्यधिकृतनिर्धारणार्था सप्तमी । वैशब्दस्य स एवेत्युक्तमवधारणार्थत्वं विवृ-दयति । न त्विति ॥ ३७ ॥ ३८ ॥ ३९ ॥

इयता यदि पाण्डित्यं लभ्यते वेद तर्हि तम् ॥
शारीरः पार्थिवेंऽशेऽत्र देवोऽध्यात्माभिमानवान् ॥ ४० ॥

वेदेत्यादेरर्थमाह । इयतेति । य एवायं शारीर इत्यत्र शारीरशब्दार्थमाह । शारीर इति । अत्र पार्थिवेंऽशे मातृजे मांसादित्रितये यस्तन्मयो भवति सोऽध्यात्माभिमाना-न्देवः शारीर इति योजना ॥ ४० ॥

पृथिव्येवाहमित्येवं योऽभिमानी व्यवस्थितः ॥
लोमत्वङ्मांससंघातः कार्यं तस्यायमेव तु ॥ ४१ ॥

पृथिवीशारीरवाक्ययोरर्थभेदमाह । पृथिवीति । तत्र हि सामान्यायतनो देवः शाकल्येनोक्तोऽत्र विशेषायतनो देवो मुनिनोच्यत इति भेदः ॥ ४१ ॥

स एष देवो यः पृष्टो वद भूयोऽप्यहल्लिक ॥
यतोऽसमाप्तमेवेदं दर्शनं ते विवक्षितम् ॥ ४२ ॥

स एष इत्यस्यार्थमाह । स इति । वदैवेत्यादेरर्थमाह । वदेति । [illegible] छेवेति

---

१ क. वेदेत्य° । २ क. ख. ग. °तिस्तस्य । ३ क. °विधः ॥ ३८ ॥ या°।

यावत् । प्रश्नस्य कार्यत्वे हेतुः । यत इति । उक्तदेवसंबन्धित्वेन वाच्यस्य हेतोरपृष्ट-त्वादित्यर्थः ॥ ४२ ॥

तस्य का देवतेत्येनमप्राक्षीत्क्षोभितो रुषा ॥
तं प्रत्याहामृतमिति याज्ञवल्क्योऽपि देवताम् ॥ ४३ ॥

तस्येत्यादिप्रश्नमवतारयति । तस्येति । प्रत्युक्तिमादत्ते । तं प्रतीति ॥ ४३ ॥

यतो यो लभते सिद्धिं तस्यासावेव देवता ॥
विवक्षितेह विज्ञेयाऽमृतमित्यादिलक्षणा ॥ ४४ ॥

देवताशब्दार्थमाह । यत इति । इहेति प्रकरणोक्तिः ॥ ४४ ॥

योषिज्जग्धस्य योऽन्नस्य रसः स्यात्परिणामजः ॥
मातृजस्यासृजो हेतुरमृतं सोऽत्र भण्यते ॥ ४५ ॥

अमृतं व्याचष्टे । योषिदिति । प्रकृतं वाक्यमत्रेत्युक्तम् ॥ ४५ ॥

रसाच्छोणितनिष्पत्तिः शोणिताद्बीजसंश्रयात् ॥
शरीरं जायते साक्षाद्येन शारीर उच्यते ॥ ४६ ॥

कथमिदममृतं शारीरस्य हेतुस्तत्राऽऽह । रसादिति । साक्षादिति प्रत्यक्षयो-ग्यत्वमुच्यते ॥ ४६ ॥

अन्येऽमृतमिदं प्राहुर्दिव्यं चान्द्रमसं पयः ॥
तत्पर्जन्यादिना जातं दार्ढ्यकृत्क्षितिदेहयोः ॥ ४७ ॥

अमृतशब्दस्यार्थान्तरमाह । अन्य इति । कथं तस्य देहहेतुत्वं तत्राऽऽह । तदिति । पर्जन्यादिनेत्यादिशब्दो वृष्ट्यादिविषयः ॥ ४७ ॥

उत्तरेष्वपि वाक्येषु यथोक्तमुपपादयेत् ॥
न्यायः साधारणं सर्वं विशेषस्तु प्रवक्ष्यते ॥ ४८ ॥

उक्तन्यायमुत्तरपर्यायेष्वतिदिशति । उत्तरेष्विति । तत्र हेतुः । न्याय इति । तर्हि शाकल्येति होवाचेत्याद्यनन्तरं व्याख्यातव्यं किमिति कामादिपदव्याख्यानमित्याश-ङ्क्याऽऽह । विशेषस्त्विति ॥ ४८ ॥

योषित्समागमेच्छेह काम इत्यभिधीयते ॥
हृदयं बुद्धिरालोकः सर्वं तेन हि पश्यति ॥ ४९ ॥

काम एव यस्येत्यादि व्याकुर्वन्विशेषमाह । योषिदिति । इहशब्देन कामपर्यायो गृह्यते । तस्याऽऽलोकत्वे हेतुः । सर्वमिति ॥ ४९ ॥

स च काममयो देवः कामभावनयाऽञ्जितः ॥
देवताऽस्य स्त्रियो ज्ञेयाः कामः स्त्रीतो हि जायते ॥ ५० ॥

---

१ ख. ग यातं ।

य एवायमित्यादेरर्थमाह । **स चेति** । यस्त्वया कामायतनो देवः पृष्टः स कामवासनाख्यविशेषायतनवानेष एवेत्यर्थः । तस्येत्यादेरर्थमाह । **देवतेति** । स्त्रीणां काममयपुरुषं प्रति हेतुत्वमनुभवतः साधयति । **काम इति** ॥ ९० ॥

**शुक्लादीन्यत्र रूपाणि भास्वराण्युत्तरत्र तु ॥**
**सावित्रः पुरुषस्तस्य चक्षुः सत्यं च देवता ॥ ९१ ॥**

रूपाण्येवेत्यादिद्विरुक्तेरपौनरुक्त्यमाह । **शुक्लादीनीति** । य एवासावादित्य इत्यादेरर्थमाह । **सावित्र इति** । साधारणरूपायतनो देवः[1] सवितृमण्डलरूपविशेषायतनवांस्तस्य च सत्यशब्दितं चक्षुः कारणमधिष्ठेयं तन्निष्पत्तौ तदपेक्षयाऽधिष्ठात्रादित्योत्पत्तेरित्यर्थः ॥ ९१ ॥

**रूपभास्करसत्येषु त्रिधैषोऽपि[2] व्यवस्थितः ॥**
**पूर्ववच्चोत्तरत्रापि सर्वत्रैव त्रिधा त्रिधा ॥ ९२ ॥**

रूपाणीत्यादिप्रथमपर्यायतात्पर्यमुपसंहरति । **रूपेति** । अपिरवधारणे । सामान्यायतनत्वेन विशेषायतनत्वेन कारणत्वेन चायमेव देवो व्यवस्थितो रूपादिष्विति श्रुत्यर्थः । आकाश एवेत्यादावुक्तमतिदिशति । **पूर्ववदिति** । यथा पूर्वपर्याये च सामान्यायतनादिना देवस्त्रिधोक्तस्तथाऽऽकाशादिपर्यायेष्वपि[3][4] सामान्यायतनं विशेषायतनं कारणं चेति त्रिधा त्रिधा स द्रष्टव्य इत्यर्थः ॥ ९२ ॥

**प्रतिश्रवणवेलायां श्रोत्रे यः संनिधीयते ॥**
**स त्वयेहाभिनिर्दिष्टो दिशस्तस्यापि देवता ॥ ९३ ॥**

य एवायं श्रौत्र इत्यादेरर्थमाह । **प्रतिश्रवणेति** । आकाशायतनदेवस्य प्रतिश्रवणयुक्तं श्रोत्रं विशेषायतनं दिशः कारणमित्यर्थः । इहेत्याकाशपर्यायोक्तिः । अपिस्तु पूर्ववदवधारणे ॥ ९३ ॥

**अन्धकारस्तमो ज्ञेयं तथा छायामयः पुमान् ॥**
**मृत्युश्च देवता तस्य तमसैव मृतिर्यतः ॥ ९४ ॥**

तम एवेत्यत्र तमःशब्दार्थमाह । **अन्धकार इति** । शार्वरान्धकारायतनस्य विशेषायतनच्छायाख्यमज्ञानमिति वदन्य एवेत्यादेरर्थमाह । **तथेति** । मृत्युरित्यादेरर्थमाह । **मृत्युश्चेति** । कथमज्ञानायतनस्य कारणं मृत्युस्तत्राऽऽह । **तमसेति** । दृढतराबोधेन व्याप्ता यतो लोके मृतिर्दृष्टाऽतः कारणानुमानान्मृत्योरज्ञानायतनपुरुषहेतुत्वं युक्तमित्यर्थः ॥ ९४ ॥

**रूपायतनदेवस्य प्रतिबिम्बोदयाश्रयः ॥**
**विशेषकार्यं प्राणोऽसुस्तस्यापीहाधिदेवता ॥ ९५ ॥**

---

१ ख. 'वः सावित्रम' । २ ख. ग. 'त्रैष त्रि' । ३ क. ख. 'स्तत्राऽऽका' । ४ ख. 'येष्विति सा' ।

रूपाणीत्यादिद्वितीयपर्यायस्य तात्पर्यं संक्षिप्याऽऽह । **रूपेति** । भास्वररूपात्मकसामान्यायतनस्य प्रतिबिम्बोदयाश्रयभूतमादर्शादि विशेषायतनं प्राणः कारणं तेनाऽऽदर्शादौ घृष्यमाणे प्रतिबिम्बोदयादित्यर्थः । इहापिशब्दौ पूर्ववत् ॥ ५५ ॥

**सामान्याम्मयदेहस्य विशिष्टाः कार्यमस्य ताः ॥**
**वरुणो देवता तस्य वरुणाद्धि स जायते ॥ ५६ ॥**

आप एवेत्यादेस्तात्पर्यमाह । **सामान्येति** । अस्य हि जलमात्रायतनस्य देवस्याऽऽपो विशिष्टा वाप्यादिनिषिष्टा विशेषायतनानि तस्य चाऽऽयतनद्वयवतो वरुणशब्दितमुदकं कारणमित्यर्थः । किं तद्वरुणशब्दितं तदाह । **वरुणादिति** । मूत्रलोहिताद्यात्मकादुदकादेष संघातो भवति स च वाप्याद्यपां पुरुषद्वारा हेतुरित्यर्थः । संघातस्य लोहितादेर्निष्पत्तिरिति प्रसिद्धेति वक्तुं हिशब्दः ॥ ५६ ॥

**शुक्रस्नाय्वस्थिमज्जानो भवन्ति पितृतो यतः ॥**
**प्रजापतित्वं पितरि तस्मादेतदिहोच्यते ॥ ५७ ॥**

रेतःसामान्यायतनस्य विशेषायतनं पुत्रस्तस्य च कारणं प्रजापतिरिति मत्वा तच्छब्दार्थमाह । **शुक्रेति** । इहेति रेतःपर्यायग्रहणम् ॥ ५७ ॥

**यावत्किंचिद्विजानाति शाकल्यः सर्वमेव तत् ॥**
**पर्यपृच्छद्यथाशक्ति मुक्त्वा दिग्ज्ञानमात्रकम् ॥ ५८ ॥**

शाकल्येत्यादेस्तात्पर्यं वक्तुं भूमिकामाह । **यावदिति** ॥ ५८ ॥

**अवशिष्टं यदप्यस्य तन्मां पृच्छतु कामतः ॥**
**इति चेतसि संधाय याज्ञवल्क्योऽभ्यभाषत ॥ ५९ ॥**

तस्य तात्पर्यमाह । **अवशिष्टमिति** । शाकल्येनानुक्तोऽपीत्यपेरर्थः ॥ ५९ ॥

**अतिनिर्बन्धतो वाऽपि निषेध्योऽयं प्रमादवान् ॥**
**इत्येतद्धृदये कृत्वा कारुण्यात्तमथाब्रवीत् ॥ ६० ॥**

तात्पर्यान्तरमाह । **अतिनिर्बन्धत इति** । तस्य प्रमादवत्त्वप्रतिपत्त्यानन्तर्यमथशब्दार्थः ॥ ६० ॥

**मय्यग्नौ शिशुवन्मोहात्प्रविशन्तं न कश्चन ॥**
**त्वां वारयति यत्नेन साधुब्राह्मणसंसदि ॥ ६१ ॥**

त्वां स्विदित्यादेस्तात्पर्यमाह । **मयीति** । सभातो बहिर्नयनादि यत्नः ॥ ६१ ॥

**सर्वेषामपि नूनं त्वं हन्तव्यत्वेन संमतः ॥**
**अक्रत त्वां यतो विप्राः संदंशं मयि पावके ॥ ६२ ॥**

---

१ ख. तत्राऽऽह । २ क. तु ।

**तस्माद्बुध्यस्व शाकल्य महद्भयमुपस्थितम् ॥**
**अतिनिर्मथनादग्निश्चन्दनादपि जायते ॥ ६३ ॥**

अनिवारणे कारणमाह । **सर्वेषामिति** । त्वामित्याद्यक्षराणि व्याकरोति । **अक्रतेति** । उपशान्तक्रोधारातिर्ब्रह्मविद्भवानतो न भवन्निमित्तं भयमिति चेत्तत्राऽऽह । **अतिनिर्मथनादिति** ॥ ६२ ॥ ६३ ॥

**विषायतेऽमृतमपि यथा पथ्यं मुमूर्षतः ॥**
**तथैव नाग्रहीत्सूक्तं शाकल्यः कालचोदितः ॥ ६४ ॥**

याज्ञवल्क्येत्यादिवाक्यमवतारयति । **विषायत इति** ॥ ६४ ॥

**ब्राह्मणैर्घातयिष्यामि मां जिघांसन्तमाश्विमम् ॥**
**ईत्यर्थे कोपकृद्वाक्यं शाकल्यो मुनिरब्रवीत् ॥ ६५ ॥**

तस्य तात्पर्यमाह । **ब्राह्मणैरिति** । **जिघांसन्तं** जिघांसीयान्न तेन भ्रूणहा भवेदिति **न्यायं** सूचयति । **जिघांसन्तमिति** । शापदानात्प्रागेवेत्याशुशब्दार्थः । कोपकृद्याज्ञवल्क्यस्य ब्राह्मणानां चेति शेषः ॥ ६५ ॥

**अङ्गारावक्षयणोक्त्या विद्वान्किं ब्रह्म श्रेयसः ॥**
**अत्यवादीस्त्वमज्ञः सन्का विद्या फलिनी तव ॥ ६६ ॥**

यदिदमित्यादेरर्थमाह । **अङ्गारेति** । त्वामङ्गारावक्षयणं कृतवन्तो ब्राह्मणा मयीत्युक्त्या किं ब्रह्म विद्वानत्यन्तश्रेयोरूपान्ब्राह्मणानधिक्षिप्तवानसि किं वा त्वमज्ञः सन्ब्राह्मणान्धिक्कृतवानज्ञत्वे त्वयि नोत्तरं ब्रह्मवित्पणभूता गावस्तु त्वया नाज्ञेनापहर्तुं शक्या विद्वांश्चेत्का तर्हि ते फलवती विद्येति वाच्यमित्यर्थः ॥ ६६ ॥

**दिग्विभागाधिकारेण यथोक्ता एव देवताः ॥**
**पञ्चधेहोपदिश्यन्ते तदेतदनुवर्ण्यते ॥ ६७ ॥**

दिशो वेदेत्यादेस्तात्पर्यमाह । **दिगिति** । पृथिव्येवेत्यादावष्टधा भिन्नत्वेन देवतानां ध्यानमुक्त्वा प्राच्यादिविशेषसंबन्धेन पञ्चधा देवता ध्यानार्थमेवात्रोच्यन्ते तच्चानन्तरमेव व्युत्पाद्यत इत्यर्थः ॥ ६७ ॥

**का विद्या सफला साक्षात्त्वेतिप्रश्नवादिनम् ॥**
**सदेवाः सप्रतिष्ठाश्च दिशो वेदेत्यथाब्रवीत् ॥ ६८ ॥**

तात्पर्यं संदर्भस्योक्त्वा दिशो वेदेत्यादिवाक्यमादत्ते । **का विद्येति** । प्रश्नानन्तर्यमथशब्दार्थः ॥ ६८ ॥

**सदेवसप्रतिष्ठादिशरीरं प्रतिजज्ञिवान् ॥**
**आत्मानं स मुनिः पृष्टो यतस्तं पर्यपृच्छत ॥ ६९ ॥**

---

१ ख. अत्यर्थे ।

यद्दिशो वेत्थेत्यादिप्रश्नं संगृह्णाति । सदेवेति । आदिशब्देन दिशामुक्तिः । यतः शाकल्येन पृष्टो मुनिर्देवताप्रतिष्ठासहितदिगात्मकमात्मानं प्रतिज्ञातवानतो मुनिं पुनरस्यां किंदेवतोऽसीति शाकल्योऽप्राक्षीदित्यर्थः ॥ ६९ ॥

सदेवाः सप्रतिष्ठैता दिशोऽहमितिवादिनम् ॥
प्राच्यां किंदेवतोऽसीति विदग्धस्तमपृच्छत ॥ ७० ॥

प्राच्या दिशः का देवतेति वाच्ये प्राच्यां दिशि किंदेवतोऽसीति कथं मुनिविशेषणत्वेन देवता पृच्छ्यते तत्राऽऽह । सदेवा इति ॥ ७० ॥

पूर्वदिगात्मभूतं मां त्वं विद्ध्यादित्यदेवतम् ॥
इत्युक्ते तमृषिं भूयः स प्रतिष्ठामपृच्छत ॥ ७१ ॥

आदित्येत्यादि व्याचष्टे । पूर्वेति । स आदित्य इत्यादेरर्थमाह । इत्युक्त इति ॥ ७१ ॥

सर्वरूपात्मकः सूर्यश्चक्षुष्येव प्रतिष्ठितः ॥
सर्वरूपेषु चक्षुश्च रूपाणि हृदये तथा ॥ ७२ ॥

चक्षुषीत्यस्यार्थमाह । सर्वेति । कस्मिन्नित्यादेरर्थमाह । सर्वरूपेष्विति ॥ ७२ ॥

रूपारब्धमिदं चक्षू रूपाणामेव तद्ग्रहात् ॥
अभिव्यङ्ग्यसजातीयो व्यञ्जको रूपदीपवत् ॥ ७३ ॥

कथं चक्षुषो रूपप्रतिष्ठत्वमित्याशङ्क्य चक्षुषेत्यादेस्तात्पर्यमाह । रूपेति । चक्षू रूपारब्धं रूपग्राहकत्वादित्यत्र व्याप्तिमाह । अभिव्यङ्ग्येति । तद्भूमिं दर्शयति । रूपेति ॥ ७३ ॥

अशेषविषयात्मत्वं मनोबुद्ध्योर्विनिर्दिशेत् ॥
सर्वगोचरभासित्वात्तादात्म्ये तच्च युज्यते ॥ ७४ ॥

रूपादिग्राहित्वेऽपि मनोबुद्ध्योस्तदारब्धत्वाभावान्न व्याप्तिरिति चेन्नेत्याह । अशेषेति । रूपदीपयोः साजात्येऽप्यारम्भकारभ्यत्वाभावात्साध्यविकलतेति चेन्नेत्याह । तादात्म्य इति । विषयविषयिणोः साजात्यं तादात्म्ये सत्येव स्याद्विधान्तरेण तस्य दुर्वचत्वादित्यर्थः ॥ ७४ ॥

एष एवानुसंधेयो न्यायो योऽयमिहोदितः ॥
वक्ष्यमाणासु सर्वासु दिक्षु प्रत्येकशः क्रमात् ॥ ७५ ॥

किंदेवतोऽस्यामित्यादावुक्तन्यायं किंदेवतोऽस्यां दक्षिणायामित्यादावतिदिशति । एष इति । इहेति प्राच्यां दिशीति यावत् ॥ ७५ ॥

---

१ क. रूपग्रा॰ ।

**प्राच्यां रूपोपसंहारो दिक्त्रये कर्मसंहृतिः ॥**
**ध्रुवायां संहृतिर्नाम्नो हृद्येवं सर्वसंहृतिः ॥ ७६ ॥**

दिशो वेदेत्यादिश्रुत्या दिग्विभागेन पञ्चधात्वं ध्यानार्थं देवस्योक्तम् । इदानीमेवंविभागवादिन्याः श्रुतेराशयमाह । **प्राच्यामिति** । आद्यपर्यायेण हृदये रूपप्रपञ्चोपसंहारो दर्शितो हृदये ह्येव रूपाणीति श्रुतेर्दक्षिणायामित्यादिपर्यायत्रयेण तत्रैव कर्मोपसंहार उक्तो ध्रुवायामित्याद्यन्त्यपर्यायेण तस्मिन्नेव नामसंहारोऽग्निप्रतिष्ठाया वाचो हृदये प्रतिष्ठितत्वोक्तेरेवं नामरूपकर्मात्मकस्य सर्वस्य जगतः संहृतिर्हृदये प्रस्तुतश्रुत्युक्तेत्यर्थः ॥ ७६ ॥

**केवलं कर्म याम्यायां प्रतीच्यां पुत्रजन्म च ॥**
**ज्ञानयुक्तमुदीच्यां च कर्मैवमुपसंहृतम् ॥ ७७ ॥**

दिक्त्रये कर्मसंहृतिरुक्ता तत्रावान्तरविभागमाह । **केवलमिति** । दक्षिणायामित्यादिना केवलं कर्म हृदि संहृतं गम्यते यज्ञस्य दक्षिणादिद्वारा हृदये प्रतिष्ठितत्वोक्तेः प्रतीच्यामित्यादिना च पुत्रजन्माख्यं कर्म तत्रोपसंहृतं हृदये ह्येव रेतः प्रतिष्ठितमिति श्रुतेरुदीच्यामित्यादिना च ज्ञानयुक्तं कर्म परिशेषात्तत्र संहृतं सोमदेवताया दीक्षादिद्वारा तत्प्रतिष्ठितत्वश्रुतेरेवं दिक्त्रये सर्वं कर्म हृदि संहृतमित्यर्थः ॥ ७७ ॥

**नाम्नश्चाप्युपसंहारो ध्रुवायां हृदि वर्णितः ॥**
**एवं क्रमेण निःशेषं जगद्धृद्युपसंहृतम् ॥ ७८ ॥**

ध्रुवायामित्यादि विवृणोति । **नाम्नश्चेति** । एवं सर्वसंहृतिरित्युक्तं निगमयति । **एवमिति** ॥ ७८ ॥

**सामर्थ्याच्च मनोऽप्यत्र विज्ञेयमुपसंहृतम् ॥**
**रूपादिपञ्चकं यस्मात्तद्द्वारेणाऽऽश्रितं हृदि ॥ ७९ ॥**

निःशेषं जगदुपसंहृतं हृदीत्ययुक्तमस्मिन्प्रकरणे मनसो हृद्युपसंहाराश्रुतेरित्याशङ्क्याऽऽह । **सामर्थ्याच्चेति** । सामर्थ्यं स्फुटयन्मनसो हृदि संहारे हेतुमाह । **रूपादीति** । रूपरसगन्धस्पर्शशब्दाख्यमर्थपञ्चकं मनोविकल्पितं तद्द्वारा हृदि संहृतं न च मनसस्तत्र संहारं विना तद्विकल्पितस्य स युक्तोऽतो मनोऽपि हृदये संहृतमित्यर्थः ॥ ७९ ॥

**निःशेषं ब्रह्मलोकान्तं संहृत्य हृदयात्मना ॥**
**याज्ञवल्क्यं स्थितं भूयो विदग्धः पर्यपृच्छत ॥ ८० ॥**

कस्मिन्नु हृदयमित्यादिप्रश्नमुत्थापयति । **निःशेषमिति** । ब्रह्मलोकान्तं जगदिति शेषः ॥ ८० ॥

**सर्वोपसंहृद्धृदयं ब्रूहि कैतत्प्रतिष्ठितम् ॥**
**इत्युक्तोऽहँल्लिकेत्येवं संबोध्योत्तरमब्रवीत् ॥ ८१ ॥**

प्रश्नप्रकारं दर्शयन्वाक्यं योजयति । **सर्वेति** । अहँल्लिकेत्यादिवाक्यमादत्ते । **इत्युक्त इति** ॥ ८१ ॥

**अहँल्लिकेति वचसा नाऽऽधारान्तरमुच्यते ॥**
**आद्युदात्तत्वलिङ्गेन ह्यभिधानं विदग्धवत् ॥ ८२ ॥**

यथा हृदयपदेन नामाद्यधिकरणमुक्तं तथाऽहँल्लिकशब्देनापि हृदयाधारो विवक्षितो वाक्यच्छायासाम्यादित्याशङ्क्याऽऽह । **अहँल्लिकेतीति** । तर्हि कोऽर्थस्तस्येत्याशङ्क्य तं वक्तुमादौ संज्ञात्वमाह । **आद्युदात्तत्वेति** । अहनि लीयत इति विगृह्य क्विप्चेति क्विपि कृते साधनं कृता बहुलमिति समासे तोर्लीति लत्वे संज्ञायां कन्निति कनि केऽण इति ह्रस्वत्वे च ञ्नित्यादिर्नित्यमित्युदात्तस्तथाचाहँल्लिकशब्दोऽस्य संज्ञेत्यर्थः । तत्र दृष्टान्तः । **विदग्धवदिति** । दहतेः कर्मणि क्तप्रत्यये विशब्देन गतिसमासे गतिरनन्तर इति पूर्वप्रकृतिस्वरे विदग्ध इत्येतदाद्युदात्तं तदपि तस्याभिधानं भाष्ये तथोक्तेरित्यर्थः । उभयोः संज्ञात्वे यथोक्तां व्याकरणप्रसिद्धिमनुकूलयितुं हिशब्दः ॥ ८२ ॥

**प्रेतीभूतोऽसि नूनं त्वं प्रेतवद्भाषसे यतः ॥**
**लीयतेऽहनि रात्रौ च व्यज्यतेऽहँल्लिकस्ततः ॥ ८३ ॥**

अहँल्लिकसंज्ञाया विषयमाह । **प्रेतीभूतोऽसीति** । कथमेषा संज्ञा प्रेतविषया येन तद्भाषणं दृष्ट्वा तस्येदं नाम स्यादित्याशङ्क्याऽऽह । **लीयत इति** ॥ ८३ ॥

**मत्तः शरीरात्क्वान्यत्र मय्येवातः प्रतिष्ठितम् ॥**
**अस्मदन्यत्र मन्वीथा यत्रेदं हृदयं क्वचित् ॥ ८४ ॥**

यत्रेत्यादेस्तात्पर्यमाह । **मत्त इति** । देहे हृदयं प्रतिष्ठितमित्यर्थः । वाक्यस्थाक्षराणि व्याचष्टे । **अस्मदिति** । तस्मिन्काले शरीरं मृतं स्यादिति शेषः ॥ ८४ ॥

**यद्येतद्देहतोऽन्यत्र हृदयं स्यादवस्थितम् ॥**
**हृद्वियुक्तं तदा देहमद्युः श्वानो मृतं ध्रुवम् ॥ ८५ ॥**

यद्धीत्यादेरर्थमाह । **यदीति** ॥ ८५ ॥

**न त्वयं मृत इत्यस्मात्कारणादवसीयताम् ॥**
**वनसिंहवदेवैतद्द्वयमन्योन्यसंश्रयम् ॥ ८६ ॥**

हृदयस्य देहस्थत्वे श्रौतं लिङ्गमाह । **न त्विति** । देहस्थत्वं हृदयस्येति शेषः ॥ कुत्र प्रतिष्ठितो देहस्तत्राऽऽह । **वनेति** ॥ ८६ ॥

**नर्ते लिङ्गं शरीरस्य स्थितिः काचिदिहेष्यते ॥**
**न शरीरं विना लिङ्गं कस्मैचित्कर्मणे क्षमम् ॥ ८७ ॥**

हृदयदेहयोरन्योन्याश्रयत्वं स्पष्टयति । नर्त इति । ननु स्थूलस्य सूक्ष्मदेहमुपेक्ष्य स्थित्यभावेऽपि स्थूलं विनैतद्यावन्मोक्षं स्थास्यति तन्नान्योन्याश्रयतेत्याशङ्क्याऽऽह । नेत्यादिना ॥ ८७ ॥

**न ह्यन्योन्यातिरेकेण संहतानां क्वचित्स्थितिः ॥**
**संहतं च प्रतीचोऽन्यज्जगदेतच्चराचरम् ॥ ८८ ॥**

किंच हृदयदेहावन्योन्यप्रतिष्ठितौ संहतत्वात्संमतवदित्याह । **न हीति** । हेत्वसिद्धिं धुनीते । **संहतं चेति** ॥ ८८ ॥

**कार्यत्वाद्द्वयमप्येतद्यतो न स्वाश्रयं ततः ॥**
**तत्प्रतिष्ठामथाप्राक्षीच्छाकल्यो निर्णयेच्छया ॥ ८९ ॥**

कस्मिन्नु त्वं चेत्यादिप्रश्नं सहेतुमुत्थापयति । **कार्यत्वादिति** ॥ ८९ ॥

**द्वावप्येतौ ममाऽऽत्मानौ प्राण एव प्रतिष्ठितौ ॥**
**प्राणोऽपाने स च व्यान उदाने व्यान आश्रितः ॥ ९० ॥**
**समाने च तथोदानः सूत्रात्मनि समाश्रितः ॥**
**एवमेष समानान्तः शाकल्यप्रश्ननिर्णयः ॥ ९१ ॥**

प्राण इत्यादेरर्थमाह । **द्वावित्यादिना** । सूत्रात्मनि सूत्रस्याऽऽत्मा मूलकारणं तस्मिन्नित्यर्थः । वाक्यार्थमुपसंहरति । **एवमिति** ॥ ९० ॥ ९१ ॥

**देहहृद्वायवोऽन्योन्यप्रतिष्ठाः संहतत्वतः ॥**
**प्रयुक्ताः कर्मणा पुंसां वर्तन्ते भोगसिद्धये ॥ ९२ ॥**

कस्मिन्हृदयमित्यादेः समानान्तग्रन्थस्य तात्पर्यं संक्षिपति । **देहेति** । तेषां प्रवर्तकं प्रवृत्तिफलं च दर्शयति । **प्रयुक्ता इति** ॥ ९२ ॥

**सकारणमिदं सर्वमाकाशान्तं यथोदितम् ॥**
**ओतं प्रोतं च यत्रेदं तदक्षरमथोच्यते ॥ ९३ ॥**

स एष इत्यादेस्तात्पर्यमाह । **सकारणमिति** । यथोदितमेकत्वेनानेकत्वेनाष्टधा पञ्चधोक्तमिति यावत् । द्वितीयमिदंपदमक्षरविषयम् ॥ ९३ ॥

**विहायाऽऽख्यायिकारूपं स्वेनैव वचसा श्रुतिः ॥**
**पुरुषार्थं समापित्सुः स एष इति चावदत् ॥ ९४ ॥**

ननु शाकल्ययाज्ञवल्क्ययोः संवादात्मिकेयमाख्यायिका न चात्र शाकल्येनाक्षरं पृष्टं तत्कथं तत्कथनार्थं याज्ञवल्क्यस्य प्रवृत्तिरत आह । **विहायेति** । विज्ञानादिवाक्ये पुरुषार्थसमाप्तेर्वक्ष्यमाणत्वात्कुतोऽत्र तादर्थ्येन निर्विशेषार्थोक्तिरित्याशङ्कायां श्रुतेरेषा त्वरा वस्तुनीति वक्तुं चशब्दः ॥ ९४ ॥

**प्रशासन इदं तस्थौ यस्यान्तर्यामिरूपिणः ॥**
**स एष नेति नेतीति मधुकाण्डेऽपि वर्णितः ॥ ९५ ॥**

पदयोरर्थमाह । **प्रशासन इति** । यस्य कूटस्थदृष्टिमात्रस्यान्तर्यामित्वकल्पनाधिष्ठानस्याज्ञानवशात्प्रशासने द्यावापृथिव्यादि स्थितं स परमात्मैष प्रत्यगात्मैवेत्यर्थः । निषेधद्वयं मूर्तामूर्तब्राह्मणे व्याख्यातमित्याह । **नेतीति** । तस्यैव कूर्चब्राह्मणे वक्ष्यमाणत्वमप्यर्थः ॥ ९५ ॥

**ननु ब्रह्माधिकारत्वात्कथमात्मेत्यनूद्यते ॥**
**नैष दोषोऽतिरेकेण नाऽऽत्मनो ब्रह्मता यतः ॥ ९६ ॥**

आत्मशब्दमाक्षिपति । **नन्विति** । अक्षरमिति शेषः । परिहरति । **नेत्यादिना** ॥ ९६ ॥

**ग्राह्यत्वं शरणं सङ्गो भयं चाज्ञानकारणम् ॥**
**तदत्ययाद्भयान्तानि न सन्ति प्रत्यगात्मनि ॥ ९७ ॥**

अगृह्य इत्यादीनि पदानि व्याचष्टे । **ग्राह्यत्वमिति** । शरणं शैथिल्यं भयं व्यथानाशौ ॥ ९७ ॥

**निरविद्योऽसितो भास्वदविलुप्तचिदात्मकः ॥**
**यत एवमतो नास्य नाशान्ता विक्रियाऽऽत्मनः ॥ ९८ ॥**

तदत्ययादित्युक्तं प्रकटयति । **निरविद्य इति** । अविद्यातिक्रमफलमाह । **यत इति** ॥ ९८ ॥

**कार्यधर्मानतीत्यैतांस्तद्धेतोरप्यतिक्रमात् ॥**
**अपूर्वानपराद्येकः पूर्णः स्वात्मन्यवस्थितः ॥ ९९ ॥**

कारणातिक्रमात्कार्यातिक्रमेऽपि कुतोऽनतिशयपुमर्थसिद्धिस्तत्राऽऽह । **कार्येति** ॥ ९९ ॥

**श्रुतिः स्वेनैव वचसा साक्षादित्यादिलक्षणम् ॥**
**समापय्याऽऽत्मविज्ञानं भूयोऽप्याख्यानरूपकम् ॥ १०० ॥**
**गृहीत्वा परिपप्रच्छ शाकल्यमभिमानिनम् ॥**
**याज्ञवल्क्यात्मिका भूत्वा ह्यतिनिर्बन्धकारिणम् ॥ १०१ ॥**

एतानष्टावित्यादिवाक्यस्य पूर्वेणासंगतिमाशङ्क्य परिहरति । **श्रुतिरिति** । विद्याभिमानित्वादतिनिर्बन्धकारित्वाच्च शाकल्यं प्रति प्रष्टुं युक्तमिति वक्तुं हिशब्दः । ॥ १०० ॥ १०१ ॥

**धनं निसृष्टं राज्ञेह ब्रह्मिष्ठोद्देशतो यतः ॥**
**प्रष्टुं नैवाधिकारोऽतोऽब्रह्मिष्ठस्येह विद्यते ॥ १०२ ॥**

शाकल्योऽत्र प्रष्टा कथं तं प्रति प्रश्नोऽन्यस्येत्याशङ्क्य शाकल्यस्य प्रश्नाधिकारं निराचष्टे। **धनमिति**। इहेति बहुदक्षिणयज्ञोक्तिः। अब्रह्मिष्ठस्येति च्छेदः। द्वितीयस्त्विहशब्दो ब्रह्मवित्सभाविषयः ॥ १०२ ॥

**अब्रह्मिष्ठत्वसिद्ध्यर्थमतोऽप्राक्षीद्रुषाऽन्वितः ॥**
**स याज्ञवल्क्यः शाकल्यं सापराधत्वसिद्धये ॥ १०३ ॥**

कथं शाकल्यस्याब्रह्मिष्ठत्वं तत्राऽऽह । **अब्रह्मिष्ठत्वेति**। अब्रह्मिष्ठस्य प्रश्नानधिकारोऽतःशब्दार्थः । प्रश्नानधिकारिणोऽपि शाकल्यस्य प्रश्ने प्रवृत्तेस्तस्मिन्नयुक्तकारिणि कोपान्वितश्चेन्मुनिस्तर्हि तत्र शापमदत्त्वा किमिति तस्याब्रह्मिष्ठत्वसिद्ध्यर्थमपृच्छदित्याशङ्क्य शापहेतुज्ञापनार्थमित्याह । **सापराधत्वेति** ॥ १०३ ॥

**स एष नेति नेत्याद्यः प्रश्नो वाऽयं समीक्ष्यताम् ॥**
**मध्ये वाक्यच्छिदोऽभावादितिशब्दस्य पूर्ववत् ॥ १०४ ॥**

स एष इत्यादि श्रौतं वाक्यमेतानीत्यादिप्रश्नवाक्यमित्युक्तो विभागः । इदानीमेकवाक्यत्वमाश्रित्याऽऽह । **स इति** । एकवाक्यत्वे हेतुः । **मध्य इति** । कस्मिन्नु हृदयमित्यादौ सति वाक्यभेदे तद्धेतुरितिशब्दो मध्ये दृष्टो न च न रिष्यत्येतान्यष्टावित्यत्र मध्ये वाक्यच्छिदितिशब्दो दृश्यते तदेकमिदं प्रश्नवाक्यमित्यर्थः ॥ १०४ ॥

**समासव्यासरूपेण शाकल्यो यदपृच्छत ॥**
**ततः परस्ताच्छाकल्यं याज्ञवल्क्योऽप्यपृच्छत ॥ १०५ ॥**

वाक्यैक्येऽपि शाकल्यप्रश्ने निर्दिधारयिषिते नान्यस्य प्रश्नोऽवकाशवानित्याशङ्क्याऽऽह । **समासेति** । ततः परस्ताच्छाकल्यप्रश्ननिर्णयादूर्ध्वमित्यर्थः ॥ १०५ ॥

**ऐकात्म्ये सर्वमेवेदं कार्यकारणलक्षणम् ॥**
**समापनीयं निःशेषं समासव्यासवर्जिते ॥ १०६ ॥**

शाकल्यस्याब्रह्मिष्ठत्वं प्रकटीकृत्य सापराधत्वमापाद्य शापं ददतो मुनेरपि कोपावेशादब्रह्मिष्ठता स्यादित्याशङ्क्य प्रष्टुरभिप्रायमाह । **ऐकात्म्य इति** ॥ १०६ ॥

**अपि शास्त्रार्थसंबन्ध उत्तरस्याः श्रुतेरयम् ॥**
**तदनुक्तौ यतः पूर्वं सर्वं स्यात्तुषकण्डनम् ॥ १०७ ॥**

उक्तमभिप्रायमुपपत्त्या साधयति । **अपीति** । पूर्वोत्तरश्रुतेरयमेव शास्त्रार्थसंबन्धो यदेकरसे प्रतीचि सर्वसमाप्तिस्तद्विशेषतेत्यर्थः । मा भूत्पूर्वोत्तरश्रुतेः शास्त्रार्थसंबन्धस्तत्राऽऽह । **तदनुक्ताविति** । पूर्वमुत्तरं चेति द्रष्टव्यं न हि शास्त्रार्थसंबन्धानुक्तौ पूर्वोत्तरश्रुत्योरर्थवत्त्वं तथाच तयोस्तत्त्वज्ञानशेषतया साफल्यार्थं प्रष्टुरभिप्रायो युक्तिमानित्यर्थः ॥ १०७ ॥

**अष्टावायतनान्यत्र पृथिव्यादीनि निर्दिशेत् ॥**
**अग्न्यादयस्तथा लोका अमृताद्याश्च देवताः ॥ १०८ ॥**

प्रष्टुरभिप्रायमुक्त्वैतानीत्यादि व्याचष्टे । **अष्टाविति** । अत्रेत्यायतनादिनिर्धारणार्थी सप्तमी । पृथिव्यादीनीत्यादिपदेन कामरूपाकाशतमोरूपोदकरेतांसि गृह्यन्ते । अष्टौ लोका इत्यस्यार्थमाह । **अग्न्यादय इति** । आदिपदेन हृदयचक्षुःश्रोत्रहृदयचक्षुर्हृदयहृदयानि गृहीतानि । अष्टौ देवा इत्यस्यार्थमाह । **अमृताद्या इति** । अत्राऽऽद्यशब्देन स्त्रियः सत्यं दिशो मृत्युरसुर्वरुणः प्रजापतिरित्येता देवता विवक्षिताः॥१०८॥

**शारीरप्रमुखास्तद्वदष्टौ ज्ञेया यथोदिताः ॥**
**पुरुषाः सर्व एवामी पुनर्दिक्षूपसंहृताः ॥ १०९ ॥**
**दिशश्च हृदये सर्वाः समाने हृदयादिकम् ॥**
**एवं समाने संक्षेपो विकासोऽनन्तदेवताः ॥ ११० ॥**

अष्टौ पुरुषा इत्यस्यार्थमाह । **शारीरेति** । शारीरः प्रमुखो येषामिति षष्ठ्या काममयादित्यपुरुषौ श्रौत्रः प्रातिश्रुत्कश्छायामयो दर्पणादिस्थप्रतिबिम्बो वापीकूपाद्यभिमानी पुत्रमयश्चेत्यवशिष्टाः सप्तोक्ताः । स यस्तानित्यादेस्तात्पर्यमाह । **सर्व एवेति** । आयतनादयोऽष्टधा निर्दिष्टाश्चतुष्टयेऽपीत्यर्थः । हृदयादिकमित्यादिपदेन देहो गृह्यते । कारणान्तमेव शाकल्यज्ञानं न तस्मादुपरिष्टादित्युपसंहरति । **एवमिति** ॥ १०९ ॥ ११० ॥

**प्रत्यग्याथात्म्यमोहस्य महिमैष त्वयोदितः ॥**
**यतोऽविद्यैव प्रथते कार्यकारणरूपिणी ॥ १११ ॥**

इदं च शाकल्यज्ञानमज्ञानजं मिथ्याज्ञानमिति सूचयति । **प्रत्यगिति** ॥ १११ ॥

**स्वात्माविद्यानुरोध्येव समासव्यासतामगात् ॥**
**आत्मा स्वतस्तु भास्वच्चिन्मात्रः पूर्णो निरञ्जनः ॥ ११२ ॥**

परस्यैव कार्यकारणरूपेण प्रथनादविद्यैवेत्यवधारणायोगमाशङ्क्याऽऽह । **स्वात्मेति** । अत्यक्रामदित्यस्य विवक्षितमाह । **स्वतस्त्विति** ॥ ११२ ॥

**यः स एतांस्त्वया पृष्टांश्चतुरोऽप्यष्टकानिह ॥**
**निरुह्य कार्यतां नीत्वा प्रत्युह्याथाऽऽत्मकारणे ॥ ११३ ॥**

स यस्तानित्यादेस्तात्पर्यमुक्त्वाऽक्षरार्थमाह । **यः स इति** । श्रौतस्य पुरुषशब्दस्य देवतालोकायतनोपलक्षणत्वाच्चतुरोऽपीत्युक्तम् । इहेत्यविद्याभूमिग्रहः । निरुह्येत्यस्यार्थमाह । **कार्यतामिति** । अविद्याभूमौ स्थित्वा यथोक्तायतनादिभिर्लोकस्थितिमुपपाद्येत्यर्थः । स्वकारणेऽन्तर्यामिणि सर्वं जगदुपसंहृत्य यः स्थितस्तं पृच्छामीति संबन्धं मत्वा प्रत्युह्येतिपदमनूद्यार्थमाह । **प्रत्युह्येति** । अथेति संसारावस्थाद्योतनार्थम् ॥ ११३ ॥

विभज्य कारणादुच्चैर्नीत्वा कार्यात्मतां मुहुः ॥
वस्तुवृत्तेन निःशेषान्कार्यकारणलक्षणान् ॥ ११४ ॥
योऽत्यक्रामदनानात्वो भेदसंसर्गवर्जितः ॥
तं त्वौपनिषदं देवं साक्षादित्यादिलक्षणम् ॥ ११५ ॥

पदद्वयार्थमुक्तमनुभाषते । विभज्येति । साभासाज्ञानादायतनादिविभागं कृत्वा तस्य लोकस्थितिहेतुतां प्रतिपाद्य पुनस्तत्सर्वं स्वात्मन्येव संहृत्य यः स्थितस्तं पृच्छामीत्यर्थः । अत्यक्रामदित्यस्यार्थं स्फुटयति । वस्त्विवति । तं पृच्छामीत्युत्तरत्र संबन्धः । न मुख्यमतिक्रमणमिति वस्तुवृत्तत्वविशेषणाद्विज्ञातम् । तत्र हेतुः । अनानात्व इति । तं त्वेत्यादिवाक्यमादत्ते । तमिति । अत्रापि पृच्छामीति संबन्धः ॥ ११४ ॥ ११५ ॥

आस्वेवोपनिषत्स्वेनं यतो व्याचक्षते बुधाः ॥
कर्मकाण्डे विरोधित्वान्नैवैनं व्याचचक्षिरे ॥ ११६ ॥

औपनिषदपदं व्याचष्टे ।आस्वेवेति । अवधारणे हेतुमाह । कर्मेति। तस्मादौपनिषद इति शेषः ॥ ११६ ॥

तं त्वौपनिषदं धीरा ब्रह्मात्मानं प्रचक्षते ॥
तं त्वा पृच्छामि शाकल्य तं मह्यं ब्रूहि तत्त्वतः ॥ ११७ ॥

अत्र विद्वत्प्रसिद्धिं प्रमाणयति । तं त्वेति । पदार्थमुक्त्वा वाक्यं योजयति । तं त्वेति ॥ ११७ ॥

न चेद्वक्ष्यसि तं मे त्वं मूर्धा ते विपतिष्यति ॥
न विजज्ञौ च शाकल्यस्तमात्मानं यथोदितम् ॥ ११८ ॥

तं चेदित्यादेरर्थमाह । न चेदिति । तं हेत्यादि व्याचष्टे । नेति । खेदार्थो निपातः ॥ ११८ ॥

ततः स याज्ञवल्क्योत्थशापवाक्याख्यवह्निना ॥
दग्धः सद्यो ममारैव ब्रह्मविद्विड्ज्वरान्वितः ॥ ११९ ॥

तस्य हेत्यादेरर्थमाह । तत इति ॥ ११९ ॥

कर्मप्रकरणे नायं श्रुतः पूर्वं कदाचन ॥
नित्यं ह्युपनिषत्स्वेव श्रूयते वैदिकीष्वयम् ॥ १२० ॥

यदौपनिषदत्वं पुरुषस्योक्तं तदयुक्तं कर्मकाण्डेऽपि तत्प्रसिद्धेर्न चास्य कर्मविरोधित्वं कर्तृत्वेन तदानुगुण्यात् । यथाऽऽहुः—यस्यैतच्छरीरं सोऽपि तैर्यज्ञायुधैर्यज्ञायुधीति । तत्राऽऽह । कर्मेति ॥ १२० ॥

कर्मकाण्डादपाच्छिद्य तेनात्रैवैष भण्यते ॥
अपि प्राप्तं कर्मकाण्डे तद्विरोधात्तु नाब्रवीत् ॥ १२१ ॥

कर्तृत्वेन तत्रापि श्रुतेर्नेति चेत्तत्राऽऽह । **कर्मकाण्डादिति ।** यद्यपि कर्मकाण्डे कर्तृत्वेन प्राप्तं पुरुषरूपं तथाऽपि तदसंसारित्वादिलक्षणं तत्र नोपयुक्तं तस्य कर्मविरोधित्वाद्यथोक्तमनुपयोगादधिकारविरोधाच्चेति तेन कर्मकाण्डाद्यावर्त्योपनिषत्स्वेवायं निर्दिश्यत इति युक्तमस्यौपनिषदत्वमित्यर्थः । किंचौत्पत्तिकसूत्रे स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं जयतीत्यत्र देहाद्यतिरिक्तात्मनि साधिते तत्सतत्त्वं वाच्यत्वेन प्राप्तमपि तज्ज्ञानस्य कर्मविरोधित्वादेव भाष्यकृन्नोचिवांस्तस्मादौपनिषदत्वं पुंसो मीमांसकैरपीष्टमित्याह । **अपि प्राप्तमिति । उक्तं हि**—दृढत्वमेतद्विषयश्च बोधः प्रयाति वेदान्तनिषेवणेनेति ॥ १२१ ॥

**प्रत्यग्ज्ञानस्य नैवातः कर्मणा स्यात्समुच्चयः ॥**
**ऐकात्म्यवस्तुविज्ञानं कर्मभिर्हि विरुध्यते ॥ १२२ ॥**

एतेन समुच्चयोऽपि प्रत्युक्त इत्याह । **प्रत्यगिति ।** अतःशब्दितं हेतुं स्पष्टयति । **ऐकात्म्येति** ॥ १२२ ॥

**अपरे पण्डितंमन्याः सम्यग्ज्ञातात्मतत्त्वकाः ॥**
**कर्मव्यध्वेषु कुर्वन्ति यथावस्त्वात्मबोधनम् ॥ १२३ ॥**

कुतः पुनः समुच्चयस्य प्रसङ्गो येन निरस्यते तत्राऽऽह । **अपर इति ।** समुच्चयं वदन्तीति शेषः । कर्मचोदितकालादन्यत्र वस्त्वनुसृत्य ज्ञानमभ्यस्यन्ति चोदितकाले कर्म कुर्वन्तीति समुच्चयोपपत्तिमाह । **सम्यगिति** ॥ १२३ ॥

**वस्तुतन्त्रं न हि ज्ञानं कर्तृतन्त्रं क्रिया यथा ॥**
**कर्मव्यध्वोपरोधेन ह्यन्यथात्वं प्रपद्यते ॥ १२४ ॥**

तं निराकरोति । **वस्त्विति ।** वस्तुतन्त्रं हि ज्ञानं न क्रियावत्कर्तृतन्त्रं यदि कर्मणो विहितकालात्कालान्तरे ज्ञानाभ्यासस्तदा तद्वस्तुतन्त्रत्वं जह्यात्तथाच योषिदग्निदृष्टिवज्ज्ञानत्वासिद्धिरित्यर्थः । अवस्तुतन्त्रत्वे ज्ञानस्य क्रियावज्ज्ञानत्वानुपपत्तिरितिव्यक्तेति हिशब्दाभ्यासः ॥१२४ ॥

**यत्कर्तुमन्यथा कर्तुमकर्तुं वाऽपि शक्यते ॥**
**स्वातन्त्र्यात्तत्र भवता क्रियतां तद्यथेष्टकम् ॥ १२५ ॥**

किंचाभ्यासस्य ज्ञानस्य वा कर्मणा समुच्चयस्तत्राऽऽद्यं प्रत्याह । **यत्कर्तुमिति ।** अभ्यासस्य क्रियात्वात्कर्मसमुच्चयेऽपि न क्षतिरिति भावः ॥ १२५ ॥

**वस्तुवृत्तानुरोध्येव यत्तु ज्ञानं भवेदिह ॥**
**व्यभिचारं न तद्याति पुरुषेच्छावशात्क्वचित् ॥ १२६ ॥**

द्वितीयं निराह । **वस्तुवृत्तेति ।** इहेत्यधिकारिग्रहणं क्वचिदिति व्यभिचारप्रतियोग्यर्थकथनं तत्त्वज्ञानस्यापुंस्तन्त्रत्वान्नोक्तरीत्या समुच्चय इति भावः ॥ १२६ ॥

उपवादिनेह विदुषो न भाव्यं कस्यचित्क्वचित् ॥
एवंविदपि सञ्शत्रुरुपवादादभूद्यतः ॥ १२७ ॥

प्रासङ्गिकं समाप्य तस्मान्नोपवादी स्यादितिभाष्योपात्तं वाक्यं व्याकरोति । **उपवादिनेति** । परिभवकर्त्रेति यावत् । इहेति जगति क्वचिद्देशे काले वेत्यर्थः । उत हीत्यादेरर्थमाह । **एवंविदिति** ॥ १२७ ॥

दग्धक्रोधनिदानः सन्याज्ञवल्क्योऽपि शत्रुताम् ॥
शाकल्यस्यापि संयात उपवादैकदोषतः ॥ १२८ ॥

हेत्वर्थं प्रपञ्चयति । **दग्धेति** । ब्राह्मणस्यापीति द्वितीयस्यापेरर्थः ॥ १२८ ॥

तस्मान्नैवोपवादी स्याद्याज्ञवल्क्योऽपि शत्रुताम् ॥
यस्मादगात्कष्टतरं नोपवादादतः परम् ॥ १२९ ॥

हेतुमनूद्य प्रतिज्ञातार्थं निगमयति । **तस्मादिति** । अतो वाक्कायाभ्यां परिभवात्कष्टतरं नास्तीति परिभवत्यागपरः स्यादिति शिष्यशिक्षार्थमाह । **कष्टतरमिति** ॥ १२९ ॥

परलोकविनाशोऽपि विद्वद्विद्वेषकारणात् ॥
अग्निहोत्राग्निसंस्कारं यतो नावाप शापतः ॥ १३० ॥

अपि हेत्यादेरभिप्रायमाह । **परलोकेति** । प्राप्तः शाकल्यस्येति शेषः । तत्र हेतुः । **विद्वदिति** । अग्निहोत्राग्निना पुत्रादिभिर्यथाविधिसंस्काराद्द्वेषकृतपापनिर्हरणात्तस्य परलोकसिद्धिरित्याशङ्क्याऽऽह । **अग्निहोत्रेति** । पुरेऽतिथ्ये मरिष्यसीत्यादिशापदर्शनादित्यर्थः । अतोऽस्य परलोकविनाश इति शेषः ॥ १३० ॥

परिमोषिणो यतोऽस्थीनि धनशङ्काप्रचोदिताः ॥
तान्यप्यस्यापजह्रुस्ते ब्रह्मविद्वेषहेतुतः ॥ १३१ ॥

अपीत्यादिपदानि व्याचष्टे । **परिमोषिण इति** । अतो ब्रह्मविद्वेषो न कार्य इति शेषः ॥ १३१ ॥

अनात्मार्थनिषेधेन यो नेतीति पुरोदितः ॥
विधिद्वारेण तस्यैव निर्देशार्थं परा श्रुतिः ॥ १३२ ॥
मूलं च जगतो वाच्यमत आख्यानतोऽपि च ॥
जित्वा देया द्विजान्गाव इत्यर्थं चोत्तरा श्रुतिः ॥ १३३ ॥

शाकल्ययाज्ञवल्क्यसंवादाख्यायिकां समाप्याथ हेत्यादेः समाप्त्यन्तसंदर्भस्य तात्पर्यमाह । **अनात्मेति** । जगतो मूलं वाच्यमतश्च परा श्रुतिरिति संबन्धः । आख्यायिका किमर्थेत्यत आह । **आख्यानतोऽपीति** । ततो हि कथ्यमानं सुबोधमतश्च सा स्यादेवार्थवतीत्यर्थः । तस्याः स्थूलं तात्पर्यमाह । **जित्वेति** ॥ १३२ ॥ १३३ ॥

---

१ ख. नं संबो ।

**साधर्म्ये सति वैधर्म्यं शक्यं प्रष्टुं यतस्ततः ॥**
**साधर्म्यमुच्यते श्रुत्या तद्वनस्पतिमर्त्ययोः ॥ १३४ ॥**

यथेत्यादिमन्त्रस्य तात्पर्यमाह । **साधर्म्य इति** । अन्वयसापेक्षत्वाद्व्यतिरेकस्याऽऽदौ साधर्म्यवचनमुचितमित्यर्थः ॥ १३४ ॥

**बीजाद्वनस्पतेर्जन्म मूलाच्चेहोपलभ्यते ॥**
**मर्त्यस्य जन्ममूलं यत्तद्ब्रूत ब्राह्मणा मम ॥ १३५ ॥**

यदित्यादेस्तात्पर्यमाह । **बीजादिति** ॥ १३५ ॥

**रेतो मूलं न वो वाच्यं जीवतस्तद्धि जायते ॥**
**न मृतस्येह रेतोऽपि विद्यते कस्यचित्क्वचित् ॥ १३६ ॥**

रेतस इति मा वोचतेत्यस्यार्थमाह । **रेत इति** । उत्तरं हेतुत्वेनावतारयति । **जीवत इति** । तस्यार्थं व्यतिरेकद्वारा दर्शयति । **नेति** ॥ १३६ ॥

**अपि धानारुहो वृक्षो बीजात्तज्जन्मदर्शनात् ॥**
**मृतस्य बीजस्थानीयं न च किंचिदिहेक्ष्यते ॥ १३७ ॥**

अस्तु तर्हि धानादेर्वृक्षजन्मवज्जीवत्पुरुषस्थरेतोवशादितरस्य मृतस्य जन्मेत्याशङ्क्य धानारुह इत्यादेरर्थमाह । **अपीति** । काण्डरुहोऽपीत्यपेरर्थः । सर्वस्मिञ्जगति लीने पुनस्तज्जन्मकारणस्य पृष्टत्वाद्रेतसोऽपि कार्यमध्यपातिनो न तद्धेतुता कथं वा जायमानपुरुषासिद्धौ पुरुषान्तरासिद्धेस्तद्गतरेतसो जगद्धेतुतेति भावः ॥ १३७ ॥

**धानारुहो यथा वृक्षः साक्षादव्यवधानतः ॥**
**मर्त्यजन्म तथा साक्षाद्यतस्तदभिधीयताम् ॥ १३८ ॥**

अञ्जसेत्यादेस्तात्पर्यमाह । **धानेति** ॥ १३८ ॥

**यथाऽनुभूतशक्तीह बीजं वृक्षस्य दृश्यते ॥**
**न च तादृङ्मृतस्यास्ति यस्मात्तस्य पुनर्भवः ॥ १३९ ॥**

अनुभवानुरोधी जगद्धेतुरेष्टव्यस्तन्निर्देशो वृथेत्याशङ्क्याऽऽह । **यथेति** ॥ १३९ ॥

**दृष्टः काण्डरुहोऽपीह वृक्षस्तद्वचनेष्यते ॥**
**हस्तपादादितश्छिन्नान्न मृतस्य पुनर्भवः ॥ १४० ॥**

बीजानुपलम्भेऽपि च्छिन्नस्य वृक्षस्य पुनरुद्भवोऽनुभूयते तद्वन्मृतस्य विना बीजं जन्म किं न स्यादित्याशङ्क्याऽऽह । **दृष्ट इति** । दार्ष्टान्तिकं प्रपञ्चयति । **हस्तेति** ॥ १४० ॥

**मूलाद्बीजाच्च वृक्षस्य साक्षाद्यद्वत्समुद्भवः ॥**
**तद्वन्मृतस्य वक्तव्यं न तु पुत्रप्रपौत्रवत् ॥ १४१ ॥**

---

१ ख. °षस्य रे° । २ ग. °यते ॥ १३८ ॥

धानारुह इत्यादेरर्थमुपसंहरति । मूलादिति । पित्रादे रेतसः सकाशात्पुत्रादिवन्मृतस्य न रेतसो जन्म तद्धेतोरेव पृष्टत्वादिति व्यावर्त्यमाह । न त्विति ॥ १४१ ॥

**समूलबीजं चेद्वृक्षमावृहेयुस्तदोभयम् ॥**
**मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति ॥ १४२ ॥**

ननु वृक्षस्यापि नष्टस्य कदाचिदनुत्पादो दृष्टस्तथा जगतोऽपि मृतस्य पुनरुत्पत्तिर्माभूत्तथाच कृतं तत्कारणचिन्तयेत्याशङ्क्य यत्समूलमित्यादेरर्थमाह । समूलबीजमिति । वृक्षाख्यं कार्यं सकारणमुत्पाटितं चेन्न वृक्षस्तत्कारणं वा स्यादेवं जगदपि यदि सकारणं सम्यग्बोधबाधितं न तर्हि भूयो भवति यदा त्वबाधितं तदा कारणमस्याऽऽवश्यकमित्यर्थः ॥ १४२ ॥

**मतं न जायमानोऽस्ति जातत्वादेव कारणात् ॥**
**पुंमाञ्जनिष्यमाणो वा संसारस्य प्रवाहतः ॥ १४३ ॥**

जात एवेत्यस्यार्थमाह । मतमिति । कथं तर्हि संसारधीस्तत्राऽऽह । संसारस्येति ॥ १४३ ॥

**प्रवाहरूपी संसारो दीपार्चिर्वदवस्थितः ॥**
**न जायते जनिष्यन्वा तस्मादस्तीह कश्चन ॥ १४४ ॥**

तस्य प्रवाहरूपेण सदा सत्त्वं दृष्टान्तेन स्पष्टयति । प्रवाहेति । स्वभाववादं निगमयति । नेति ॥ १४४ ॥

**जात एवेत्यतोऽसाधु यदुक्तं पूर्वपक्षिणा ॥**
**जनित्वा म्रियते सर्वो मृत्वा भूयश्च जायते ॥ १४५ ॥**

श्रुतिस्थनञर्थमाह । जात इति । जायत इति पदं हेतुत्वेन व्याकुर्वन्पूर्वार्धस्थातःशब्दार्थं स्फुटयति । जनित्वेति ॥ १४५ ॥

**निर्बीजस्य च जन्मेह नाऽऽगमान्न च युक्तितः ॥**
**ब्रूताता जगतो मूलं यतो भूयोऽभिजायते ॥ १४६ ॥**

तथाऽपि कारणं विना जन्मनाशौ स्यातामिति चेन्नेत्याह । निर्बीजस्येति । चकारो नाशसमुच्चयार्थः । सदेव सोम्येत्यादिश्रुतेर्विपरीतश्रुतेश्चानभिव्यक्तनामरूपकारणविषयत्वादकारणयोश्च जन्मनाशयोरव्यवस्थितेर्न स्वभाववादो युक्त इत्यर्थ. । तदसंभवे फलितं वदन्को न्वेनमित्यादेस्तात्पर्यमाह । ब्रूतेति । अमृषा वनस्पतिपुरुषयोः साधर्म्यमवितथं व्यवहाराङ्गमङ्गीकृतमुत्पाटिका वृक्षसंलग्ना बाह्या त्वगुक्ता वृक्षस्योत्पटो नाम तदीयत्वचः सकाशादुद्गच्छन्निर्यासः शकराणि शकलानि किनाटं काष्ठान्तसंलग्नमतिसूक्ष्मं वल्कलरूपं चर्मेति श्रुतिपदानामर्थो विवेचनीयः ॥ १४६ ॥

---

१ ख. पुनर्जनि ।

**तत्पृष्टं जगतो मूलं न विदुर्ब्राह्मणा यतः ॥**
**अतो जिता हृता गावो याताः सर्वे यथायथम् ॥ १४७ ॥**

तन्नेत्यादिभाष्यं विभजते । **तदिति** ॥ १४७ ॥

**पृष्टं यद्याज्ञवल्क्येन न विदुर्ब्राह्मणाश्च यत् ॥**
**श्रुत्या स्वतन्त्रया तन्नो ब्रह्माऽऽविष्क्रियते परम् ॥ १४८ ॥**

विज्ञानमित्याद्यवतारयति । **पृष्टमिति** । आख्यानतो व्युत्थितिः स्वातन्त्र्यम् ॥१४८॥

**साक्षादित्यादिना प्रोक्तस्तथा सर्वान्तरश्च यः ॥**
**अस्थूलोऽनणुरित्येवमक्षरात्माऽवधारितः ॥ १४९ ॥**
**नेति नेतीति यश्चोक्त इहौपनिषदः पुमान् ॥**
**तस्य साक्षादयं श्रुत्या निर्देशः क्रियतेऽधुना ॥ १५० ॥**

तत्तात्पर्यं वृत्तमनूद्य स्फुटयति । **साक्षादित्यादिनेति** । यद्विधिमुखेन निषेधमुखेन चोक्तं प्रत्यग्ब्रह्म तस्य पुनरपि विधिद्वारा निर्णयार्थमिदं वाक्यमित्यर्थः ॥ १४९ ॥ ॥ १५० ॥

**विज्ञानमिति चैतन्यं कूटस्थमभिधीयते ॥**
**न कारकं न धात्वर्थो नापि यत्स्यात्क्रियाफलम् ॥ १५१ ॥**

विज्ञानशब्दार्थमाह । **विज्ञानमिति** । कथं कूटस्थमित्युच्यते तत्राऽऽह । **नेत्यादिना** ॥ १५१ ॥

**न चापि तदभावश्च नेत्यस्थूलादिशास्त्रतः ॥**
**अभावस्यापि तत्साक्ष्यात्तदभावः कुतो मितेः ॥ १५२ ॥**

कारकादिरूपत्वाभावे तदभावत्वं भावाभावयोरन्योन्यप्रतिस्पर्धित्वादित्याशङ्क्याऽऽह। **न चेति** । कारकादिभावं दृष्टान्तयितुमपिशब्दः । भावाभावयोरन्योन्यप्रत्यनीकत्वेन विधान्तरवैधुर्यं तु नास्माकं संमतमिति वक्तुं चशब्दः । भावाभावद्वैतनिषेधेन श्रुत्या ज्ञापितत्वाच्चितो युक्तं कौटस्थ्यमित्यर्थः । चैतन्यस्यैवाभावात्कथं कूटस्थत्वविशेषितविज्ञानार्थो न हि न प्रेत्य संज्ञाऽस्तीति श्रुतेश्चैतन्यं नामास्तीत्याशङ्क्याऽऽह। **अभावस्येति** । श्रुतिस्तु मैत्रेय्यां निर्णीतेति भावः ॥ १५२ ॥

**एतावन्मात्रयाथात्म्यात्कार्यकारणवस्तुनः ॥**
**अतस्तत्त्वमसीत्युक्त्या तादात्म्यं प्रतिपाद्यते ॥ १५३ ॥**

इतश्च कूटस्थं चैतन्यमस्तीत्याह । **एतावन्मात्रेति** । न हि निरधिष्ठाना कल्पनेत्यसकृदुक्तमित्याशयः । यद्वा सत्यपि चैतन्ये तस्य कार्यकारणयोरन्यतरत्वान्न कौटस्थ्यमित्याशङ्क्य तयोस्तत्राऽऽरोपादुभयविलक्षणं तदित्याह। **एतावन्मात्रेति** । उक्तयुक्त्या

कूटस्थचैतन्यसत्त्वे तत्त्वमसिवाक्यं प्रमाणयति । अत इति । यद्वाऽस्तु कूटस्थचैतन्यं प्रतीचस्तु किमायातमत आह । अत इति ॥ १९३ ॥

**निर्धूताशेषदुःखौघहेतुत्वात्सुखमेव तत् ॥**
**अथैष एव परमो यो वै भूमेतिशास्त्रतः ॥ १९४ ॥**

आनन्दशब्दार्थमाह । **निर्धूतेति** । आनन्दशब्दस्य वैषयिकसुखार्थत्वात्कथं प्रकृतं विज्ञानमेव सुखमित्याशङ्क्य तस्य परानन्दत्वे मानमाह । **अथेति** ॥ १९४ ॥

**विषयेन्द्रियसंबन्धाद्यत्तु दुःखं सुखायते ॥**
**आद्यन्तवत्त्वात्तद्दुःखं दुःखसंस्कारजं तथा ॥ १९५ ॥**

यत्त्वानन्दो वैषयिकं सुखमिति तत्राऽऽह । **विषयेति** । वैषयिकं सुखं दुःखानुविद्धतया दुःखत्वादाभासो न मुख्यमित्युक्त्वा दुःखत्वे हेत्वन्तरमाह । **आद्यन्तेति** । तत्रैव हेत्वन्तरं समुच्चिनोति । **दुःखेति** । साधनानुष्ठानक्लेशो दुःखसंस्कारस्तदधीनं लौकिकं सुखं दुःखमेवेत्यर्थः ॥ १९५ ॥

**अव्यावृत्ताननुगतभास्वद्विज्ञानमात्रतः ॥**
**निरविद्याद्वयत्वाच्चत्साक्षाद्ब्रह्मेति शब्द्यते ॥ १९६ ॥**

उक्तविशेषणे हेतूकृत्य प्रत्यग्ब्रह्म विशेष्यं वक्तुं ब्रह्मपदमित्याह । **अव्यावृत्तेति** । निरविद्याद्वयत्वमविद्यातत्कार्यदुःखसंस्पर्शित्वाभावोपलक्षिताखण्डसुखैकतानत्वम् ॥ १९६ ॥

**साविद्यः प्रत्यगात्मा यो वियद्योनिरुदाहृतः ॥**
**अन्तर्याम्यादिरूपेण स एव प्रथते मृषा ॥ १९७ ॥**

कथं तर्हि तस्य कारणादिभावस्तत्राऽऽह । **साविद्य इति** । यः प्रत्यगात्मा पूर्वोक्तलक्षणः सोऽविद्यावशाज्जगद्धेतुरुक्तो वेदान्तेष्वतः सोऽन्तर्यामी सर्वज्ञः सर्वशक्तिरित्यादिना मिथ्यैवाऽऽभातीत्यर्थः[1] ॥ १९७ ॥

**अदृष्टफलसंप्रेप्सोर्दृष्टकर्मफलत्यजः ॥**
**रातेर्धनस्य दातुस्तद्ब्रह्मेदं स्यात्परायणम् ॥ १९८ ॥**

रातिरित्यादेरर्थमाह । **अदृष्टेति** ॥ १९८ ॥

**अस्मिन्प्रशास्तरि सति क्रियातत्फलसंगतेः ॥**
**नियमो युक्तिमानेष कर्मिणामुपपद्यते ॥ १९९ ॥**

कर्मणः स्वफलदातृत्वसंभवात्किमिति तत्फलदातृ ब्रह्मोच्यते तत्राऽऽह । **अस्मिन्निति** । अचेतनस्य कर्मणो नियामकत्वायोगात्सर्वज्ञे सर्वेश्वरे नियन्तरि कर्मिणां कर्मतत्फलयोगनियमो युक्तोऽतस्तत्फलदातृ ब्रह्मेत्यर्थः ॥ १९९ ॥

---

१ ख. 'थ्यैव भा' ।

**एवं संसरतस्तावत्परं ब्रह्म परायणम् ॥**
**जगतश्चाप्युपादानं स्वात्माविद्यासमन्वयात् ॥ १६० ॥**

तिष्ठमानस्येत्यादि व्याकर्तुं वृत्तं कीर्तयति । **एवमिति** ॥ १६० ॥

**निर्विवित्सोस्तु संसारान्मुनेस्त्यक्तैषणस्य च ॥**
**तद्विदस्तिष्ठमानस्य समाप्तिः स्यात्परायणम् ॥ १६१ ॥**

सोपस्कारं तदादत्ते । **निर्विवित्सोरिति** । विरक्तस्य कृतसंन्यासस्य श्रवणाद्यभ्यस्यतस्तत्त्वं संविदानस्य तस्मिन्निष्ठावतो ब्रह्म परायणं परिसमाप्तिरित्यर्थः ॥ १६१ ॥

**दग्धमोहान्धकारस्य प्रत्यग्बोधाग्निना मुनेः ॥**
**ऐकात्म्ये वर्तमानस्य ब्रह्मात्माऽस्य परायणम् ॥ १६२ ॥**

उक्तं प्रपञ्चयति । **दग्धेति** ॥ १६२ ॥

**तद्विदो ब्रह्मणश्चेह भेदहेतोरसंभवात् ॥**
**ब्रह्मैव ब्राह्मणः साक्षादुपचारात्परायणम् ॥ १६३ ॥**

विदुषो ब्रह्मात्मता चेत्कथं परायणमभेदादित्याशङ्क्याऽऽह । **तद्विद इति** । इहेति मोक्षशास्त्रोक्तिः ॥ १६३ ॥

**यत्र वा अन्यदित्येवं यत्र त्वस्येतिवाक्यतः ॥**
**इत्युक्त्यर्थोपरोधेन व्याचक्षीत परायणम् ॥ १६४ ॥**

कर्मिणां भेदेन परायणं ब्रह्म विदुषस्त्वभेदेनेत्ययुक्तमेकस्य परायणशब्दस्यार्थभेदायोगादित्याशङ्क्याऽऽह । **यत्रेति** । अविद्यादशायां भेदो विद्यादशायां तदभावश्चेति शेषः । वाक्यद्वयावगतभेदाभेदानुसारेणोभयविधं परायणत्वं वाच्यमिति फलितमाह । **इत्युक्तीति** ॥ १६४ ॥

**तस्मात्तमस्विनो ब्रह्म भेदेनैव परायणम् ॥**
**ध्वस्ताविद्यस्य चैकात्म्यात्कैवल्येन परायणम् ॥ १६५ ॥**

द्विविधं परायणमुपसंहरति । **तस्मादिति** ॥ १६५ ॥

**ब्रह्मण्यानन्दशब्दोऽयं प्रयुक्तः सुखवाचकः ॥**
**संवेद्ये च सुखे लोक आनन्दाख्या प्रयुज्यते ॥ १६६ ॥**

सच्चिदानन्दात्मकं ब्रह्माविद्याविद्याभ्यां बन्धमोक्षास्पदमित्युक्तमिदानीं ब्रह्मानन्दं विचारयितुकामः संमतमर्थमाह । **ब्रह्मणीति** । नन्वानन्दशब्दे ब्रह्मणि प्रयुक्ते ब्रह्मणो विवक्षितमानन्दत्वं सिध्यति मैवं तस्य वेद्यविषयत्वाद्ब्रह्मणश्चावेद्यत्वादित्याह । **संवेद्ये चेति** ॥ १६६ ॥

**विशेषणतयाऽऽनन्दशब्दोऽन्यत्रापि दृश्यते ॥**
**वेदान्तेष्वत आनन्दो विचार्योऽयं प्रयत्नतः ॥ १६७ ॥**

न केवलमत्रैवाऽऽनन्दशब्दो ब्रह्मविशेषणार्पकत्वेन श्रुतः किंतु श्रुत्यन्तरेऽपीत्याह। विशेषणतयेति। अन्यत्र तैत्तिरीयादिष्विति यावत्। संप्रतिपत्तिमुक्त्वा विचारकार्यतामाह। अत इति। वेद्यानन्दस्यावेद्यब्रह्मविशेषणत्वश्रुतेरित्यर्थः ॥ १६७ ॥

आनन्दो ब्रह्मेति तथा तैत्तिरीयश्रुतौ श्रुतम् ॥
अथैष एव इति च तथोदर्के प्रवक्ष्यते ॥ १६८ ॥

श्रुत्यन्तरेऽपि ब्रह्मविशेषणार्पकत्वेनाऽऽनन्दशब्दोऽस्तीत्युक्तं स्फुटयति। आनन्द इति। आनन्दं ब्रह्मणो विद्वानित्यादिवाक्यान्तरसमुच्चयार्थस्तथाशब्दः। एतच्छ्रुतिदृष्टान्तार्थो वा। वाक्यशेषेऽपि ब्रह्मविशेषणत्वेनाऽऽनन्दश्रुतिर्दृष्टेत्याह। अथेति। छान्दसं विसंधिकरणम् ॥ १६८ ॥

भूमा तत्सुखमित्येवं छान्दोग्योपनिषद्वचः ॥
संवेद्योऽयं किमानन्दः किंवा नेति विचार्यते ॥ १६९ ॥

यो वै भूमेत्यादिवाक्यमादत्ते। भूमेति। आनन्दो विचार्यो ब्रह्मणीत्युक्तं तत्र विचारस्वरूपमाह। संवेद्योऽयमिति ॥ १६९ ॥

ब्रह्मण्यानन्दः संवेद्यो लौकिकानन्दवद्यदि ॥
युक्ताः शब्दास्तदैते स्युर्ब्रह्मण्यानन्दवाचकाः ॥ १७० ॥

उभयत्र फलं दिदर्शयिषति। ब्रह्मणीति। अन्यथा लोकवेदयोः शब्दार्थभेदादविशिष्टवाक्यार्थन्यायविरोध इति भावः। असंवेद्यत्वे त्वद्वैतश्रुतिरविरुद्धेति द्रष्टव्यम् ॥ १७० ॥

संवेद्यानन्दरूपं तद्वाक्याच्चेत्परिनिश्चितम्[1] ॥
प्रमाणावगतस्तत्र किं चिन्त्यमिति चेन्मतम् ॥ १७१ ॥

विचारमाक्षिपति। संवेद्येति। तदिति ब्रह्मोक्तिः। वाक्यमुदाहृतम्। तत्रेत्यानन्दो निर्दिश्यते ॥ १७१ ॥

नान्योन्यातिविरुद्धार्थवाक्यानां तत्र दर्शनात् ॥
अतिप्रमाणविषयं ब्रह्म सर्वत्र विश्रुतम् ॥ १७२ ॥

न तावन्न कार्यो विचारस्तस्मिन्ब्रह्मणि मिथोऽत्यन्तविरुद्धार्थानां वाक्यानां दृष्टेस्तदर्थनिर्णयार्थं तस्य कार्यत्वादित्याह। नेत्यादिना। कथं ब्रह्मणि विरुद्धार्थवाक्यदृष्टिस्तत्राऽऽह। अतिप्रमाणेति। तद्विषयत्वमतीत्य वर्तमानं ब्रह्म सर्वश्रुतिषु श्रुतं वेद्यत्वं च तस्मिन्नानन्दशब्दाद्भातीत्यर्थः ॥ १७२ ॥

यत्र त्वस्येति वचनं न दृष्टेरिति चापरम् ॥
विदिताविदिताभ्यां तदन्यदेवेति[2] च श्रुतिः ॥ १७३ ॥

---

१ ग. °र्निश्चित°। २ क. °यम°।

तदेव श्रवणं विविनक्ति । यत्रेति । अविषयत्वद्योतिनामानन्दस्य वेद्यत्वद्योतिनां च वचसां ब्रह्मणि प्रयोगादागमविप्रतिपत्तेर्विचारकार्यतेति भावः ॥ १७३ ॥

**निरानन्दं तथा केचित्कैवल्यं प्रतिजानते ॥**
**तेषामपि निषेधार्थं कर्तव्याऽतो विचारणा ॥ १७४ ॥**

वादिविप्रतिपत्तिस्तत्कार्यतायां बीजान्तरमाह । **निरानन्दमिति** । अन्ये सानन्दमिति तथाशब्दार्थः । विप्रतिपत्तिफलमाह । **तेषामिति** । निरानन्दमुक्तिवादिनां निराकार्यत्वे श्रुतिविरोधं दृष्टान्तयितुमपिशब्दः । विप्रतिपत्तेः संशयादित्यतःशब्दार्थः ॥ १७४ ॥

**विकल्पासंभवश्चात्र वस्तुवृत्तत्वकारणात् ॥**
**क्रियायां स्याद्विकल्पोऽयं न तु वस्तुन्यसंभवात् ॥ १७५ ॥**

विप्रतिपत्तिभ्यां कार्या विचारणेत्ययुक्तमुदितानुदितहोमवद्विकल्पोपपत्तेरित्याशङ्क्याऽऽह । **विकल्पेति** । अत्रेति मुक्त्यानन्दोक्तिः । वस्तुत्वेऽपि किमित्यानन्दे विकल्पो नेष्यते तत्राऽऽह । **क्रियायामिति** । असंभवो वस्तुनो व्यवस्थितत्वेन विकल्पायोग्यत्वम् ॥ १७५ ॥

**वादिविप्रतिपत्तेश्च केचिदिच्छन्ति वादिनः ॥**
**असंवेद्यं सुखं मोक्षे केचिन्नेति प्रचक्षते ॥ १७६ ॥**

विप्रतिपत्तिभ्यां विचारकार्यतामापाद्य तत्रैव हेत्वन्तरमाह । **वादीति** ॥ १७६ ॥

**कर्तव्योऽतो विचारोऽत्र युक्तिमार्गेण यत्नतः ॥**
**सम्यङ्निश्चयसिद्ध्यर्थं पक्षयोरुभयोरपि ॥ १७७ ॥**

पूर्वत्रापि तद्विप्रतिपत्तेरुक्तत्वात्पौनरुक्त्यमित्याशङ्क्य ब्रह्मण्यानन्दोऽस्ति न वेति विप्रतिपत्तेर्गतत्वादानन्दस्तस्मिन्वेद्योऽवेद्यो वेत्यनतिवृत्तत्वात्तदनुसारेण संशये विचारकार्यतेति मत्वाऽऽह । **कर्तव्य इति** । ब्रह्मानन्दः सप्तम्यर्थः । परपक्षनिराकरणं यत्नः । पूर्वोत्तरावुभौ पक्षौ तत्र पूर्वपक्षे निश्चयस्य सम्यक्त्वमनादेयत्वमितरत्राऽऽदेयत्वमिति विभागः ॥ १७७ ॥

**संवेद्यानन्दकं तावद्ब्रह्मेतीहावसीयताम् ॥**
**जक्षत्क्रीडन्रममाण इत्यादिश्रुतिवाक्यतः ॥ १७८ ॥**

सप्रयोजकफलं विचारं कार्यमुक्त्वा पूर्वपक्षयति । **संवेद्येति** । इहेति मुक्तिरुक्ता ॥ १७८ ॥

**नन्वेकत्वे विभागोऽत्र नास्ति कारकसंश्रयः ॥**
**भूरिकारकसाध्या च क्रिया लोकेऽपि दृश्यते ॥ १७९ ॥**

सिद्धान्ती शङ्कते । **नन्विति** । ब्रह्मण्यद्वयत्वे सति कारकविभागाभावेऽपि वेद्यत्वश्‌काऽनुपपत्तिस्तत्राऽऽह । **भूरीति** । अपिरभिव्याप्त्यर्थः । चकारोऽवधारणे ॥ १७९

**विज्ञानस्य क्रियात्वाच्च न सिद्धिः कारकैर्विना ॥**
**नातः संवेद्य आनन्दो ब्रह्मणीहोपपद्यते ॥ १८० ॥**

कारकभेदसाध्यत्वेऽपि क्रियाया ज्ञानस्य किमायातं तदाह । **विज्ञानस्येति** । चकारं विज्ञानस्यापीत्यर्थे । मुक्तौ ज्ञानासंभवे फलितमाह । **नात इति** ॥ १८० ॥

**नैष दोषोऽस्ति विज्ञानं स्यादेवाऽऽनन्दगोचरम् ॥**
**विज्ञानमानन्दमितिशब्दप्रामाण्यकारणात् ॥ १८१ ॥**

श्रुतिप्रमाणमाश्रित्य पूर्ववाद्याह । **नेत्यादिना** ॥ १८१ ॥

**ननु सत्स्वपि वाक्येषु नैतदध्यवसीयते ॥**
**प्रत्यर्थिनि श्रुतेर्वाक्ये सत्यैकात्म्यावबोधिनि ॥ १८२ ॥**

अद्वये ब्रह्मणि श्रुतिप्रामाण्यादानन्दज्ञानमुक्तमाक्षिपति । **नन्विति** । विज्ञानादिवाक्येषु सत्स्वपि नाऽऽनन्दविषयं ज्ञानं तेषामानन्दज्ञानैक्ये तात्पर्यादित्यर्थः । किंच ब्रह्मणो विषयत्वेऽस्थूलादिवाक्यविरोधः स्यादित्याह । **प्रत्यर्थिनीति** । किंच तत्त्वमादिवाक्ये प्रत्यगेकरसस्य बोधके कुतस्तस्मिन्विषयतेत्याह । **सतीति** ॥ १८२ ॥

**मानान्तरविरोधेन न हि लोकेऽपि किंचन ॥**
**मानं प्रवर्तते तस्मान्नैतदध्यवसीयते ॥ १८३ ॥**

किंच ग्राह्यग्राहकयोर्भेदः प्रत्यक्षस्तदभेदमात्मनि वदतस्तद्विरोधोऽतो न स्वरूपानन्दविषयं ज्ञानमित्याह । **मानान्तरेति** । लोकेऽपीत्यपिरभिव्याप्तौ वदद्दृष्टान्तार्थो वा । ब्रह्मण्यानन्दस्य संवेद्यत्वमेतदित्युच्यते ॥ १८३ ॥

**व्यञ्जकत्वाच्च मानानां सिद्धवस्तुप्रयोज्यता ॥**
**कारकत्वेऽप्यकार्यत्वाद्दुःसंभाव्यं त्वयोदितम् ॥ १८४ ॥**

किंच मानं बोधकं कारकं वा प्रथमं प्रत्याह । **व्यञ्जकत्वाच्चेति** । बोधकत्वे स्वोत्पत्तेः प्रागेव सिद्धमविषयं विषयं वा तथैव मानं भासयेत्तथाच प्रत्यग्ब्रह्माऽऽनन्दात्मकं विषयतया न शक्यं प्रकाशयितुमविषयत्वश्रुतेस्तन्न ब्रह्मानन्दो वेद्य इत्यर्थः । द्वितीयं दूषयति । **कारकत्वेऽपीति** । मानस्य कारकत्वे ब्रह्मतया सिद्धानन्दस्यासाध्यत्वान्न मानं ब्रह्मानन्दं कुर्यादतस्तद्वेद्यत्वं त्वदिष्टं न सिध्यतीत्यर्थः । मानस्य कारकत्वमेवायुक्तममानत्वप्रसङ्गादित्यपिशब्दार्थः ॥ १८४ ॥

**ननु मुख्यहमस्मीति विज्ञानमनुभूयते ॥**
**प्रतीच्यानन्दविषयं न प्रत्यक्षं विरोध्यतः ॥ १८५ ॥**

१ ख. तत्राऽऽह । २ ख. 'त्यक्षवि' ।

पूर्ववाद्याह । नन्विति । आनन्दस्य वेद्यतायाः स्वानुभवसिद्धेस्तद्वेद्यत्वे नाध्यक्षादिविरोधः शङ्कनीयो न हि स्वानुभवविरोधे मानान्तरमुद्भवतीत्यर्थः ॥ १८५ ॥

**नैतदेवं यतो मोक्षे विज्ञानं नोपपद्यते ॥**
**देहाभावो हि मोक्षोऽयं करणानि न सन्त्यतः ॥ १८६ ॥**

आनन्दो वेद्यो ब्रह्मणीति चोदिते सिद्धान्तयति । **नैतदिति** । आगन्तुकमनागन्तुकं वा ज्ञानं मुक्तावानन्दं गोचरयति नाऽऽद्य इत्याह । **यत इति** । तत्राऽऽगन्तुकज्ञानायोगे हेतुमाह । **देहेति** । अतो हेत्वभावात्तत्र कादाचित्कज्ञानासिद्धिरिति शेषः ॥ १८६ ॥

**करणाद्यनपेक्षः[1] सन्न च विज्ञानसंभवः ॥**
**तथा सति शरीरादेरुपादानमनर्थकम् ॥**
**तथैकत्वविरोधान्न संवेद्यानन्दकं परम् ॥ १८७ ॥**

कार्यकरणयोरभावेऽपि[2] मोक्षे ब्रह्मानन्दज्ञानं जनिष्यते संसारे हि हेत्वपेक्षेत्याशङ्क्याऽतिप्रसङ्गेन निरस्यति । **करणादीति** । द्वितीयं दूषयति । **तथेति** । यथा ब्रह्मानन्दस्याऽऽगन्तुकज्ञानाविषयत्वं तथैवानागन्तुकज्ञानाविषयत्वं न हि ब्रह्म स्वेनैव वेद्यानन्दरूपं विषयविषयिणोर्भेदादित्यर्थः ॥ १८७ ॥

**यद्यानन्दात्मकं ब्रह्म नित्यमात्मानमात्मना ॥**
**तद्विज्ञानस्य नित्यत्वाज्जानीयान्नित्यमेव तत् ॥ १८८ ॥**

किंच ब्रह्म वा मुक्तो वा संसारी वा ब्रह्मानन्दं गोचरयेदाद्यमनुवदति । **यदीति** । तद्ब्रह्म सदाऽऽनन्दरूपमात्मानं स्वेनैव सर्वावस्थासु जानाति स्वज्ञानस्य सदा सत्त्वादित्यर्थः ॥ १८८ ॥

**जले जलं यथा तस्मिन्संसार्यप्येकतां गतः ॥**
**सर्व एकी भवन्तीति न पृथक्त्वेन संस्थितः ॥ १८९ ॥**

**तदानन्दात्मकब्रह्मविज्ञानाय मनागपि ॥**
**न तदेकत्वतो वेत्ति ब्रह्माऽऽनन्दं स्वकं तथा ॥ १९० ॥**

**मुक्तोऽपि न च संसारी तयोरेकत्वहेतुतः ॥**
**मुक्तो वेत्ति परानन्दमिति तस्माद्वचो मृषा ॥ १९१ ॥**

द्वितीयेऽपि मुक्तो ब्रह्मणोऽभिन्नो भिन्नो वाऽभेदपक्षमनुवदति । **जल इति** । यथा जले जलं प्रक्षिप्तं न पृथगस्ति तथा पूर्वं संसार्यपि मोक्षे ब्रह्मण्येकतां गतो मुक्तो न तस्मात्पृथक्त्वेन तदानन्दं ज्ञातुं कथमपि स्थितः किंत्वभिन्नो ब्रह्मानन्दं वेत्ति परेऽव्यये सर्व एकी भवन्तीति श्रुतेरित्यर्थः । तत्र ब्रह्मणः स्वानन्दविषयीकारं दूषयति । **न**

---

१ क. °पेक्षस्य न च । २ क. °र्यकार° ।

**तदिति** । तद्ब्रह्म स्वरूपानन्दं न वेत्ति तेनैक्यादेकत्र विषयविषयित्वानुपपत्तेरित्यर्थः । उक्तन्यायेन मुक्तस्य ब्रह्माभिन्नस्य तदानन्दविषयीकारं निरस्यति । **तथेति** । तृतीयं निराह । **न चेति** । मुक्तसंसारिणोरैक्यान्मुक्तवदितरस्यापि ब्रह्मत्वात्कर्मकर्तृविरोधान्न ब्रह्मानन्दवेत्तृतेत्यर्थः । पक्षत्रयायोगमुपसंहरति । **मुक्त इति** । तदुक्तिः संसारिब्रह्मणो-रुपलक्षणम् ॥ १८९ ॥ १९० ॥ १९१ ॥

**ब्रह्मानन्दमथान्यः सन्वेद मुक्तो घटादिवत् ॥**
**ब्रह्मत्वमन्यो वेदेति तदैकत्वं विरुध्यते ॥ १९२ ॥**

मुक्तस्य ब्रह्मणो भेदपक्षमनुवदति । **ब्रह्मेति** । तत्त्वमादिश्रुतिविरोधेन प्रत्याह । **ब्रह्म-त्वमिति** ॥ १९२ ॥

**प्रेत्य संज्ञेह नास्तीति श्रुतिरेव निषेधति ॥**
**मुक्तौ विभागविज्ञानमेकत्वादेव कारणात् ॥ १९३ ॥**

इतश्च मोक्षे ब्रह्मानन्दस्याऽऽगन्तुकज्ञानाविषयतेत्याह । **प्रेत्येति** ॥ १९३ ॥

**स्त्रीपुंदृष्टान्तवचनं यद्वै तदिति चापरम् ॥**
**ज्ञात्राद्यसंभवं वक्ति कूटस्थैकत्वकारणात् ॥ १९४ ॥**

तत्रैव वाक्यान्तरमाह । **स्त्रीति** । तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नाऽऽन्तरमित्यादि स्त्रीपुंदृष्टान्तवचनम् । यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यतीत्यादि **वाक्यान्तरम्** । तयोरर्थं संक्षिपति । **ज्ञात्रादीति** ॥ १९४ ॥

**नेति नेत्यादिभूयांसि विरुध्यन्ते वचांस्यपि ॥**
**कारकाद्यभ्युपगतौ मुक्तौ ब्रह्मणि केवले ॥ १९५ ॥**

ब्रह्मणि क्रियाकारकभेदाभावे हेत्वन्तरमाह । **नेतीति** ॥ १९५ ॥

**विज्ञानानन्दयोश्चैक्यादसंयोगविभागतः ॥**
**आनन्दज्ञानविषया कल्पनेयं वृथा श्रमः ॥ १९६ ॥**

नन्वागन्तुकज्ञानेन मुक्तावानन्दाननुभवादुक्तश्रुत्यविरोधान्नित्यसिद्धज्ञानेनैव ब्रह्माऽऽ-त्मानन्दं वेत्तीत्युपगमे तद्वेद्यत्वलाभादन्यत्र कर्मकर्तृविरोधेऽपि सर्वज्ञे ब्रह्मणि तदभावा-न्नास्ति दौस्थ्यमत आह । **विज्ञानेति** । ज्ञानानन्दयोः सामानाधिकरण्यानुरोधेन ब्रह्मा-भेदान्मिथोऽपि तयोर्भेदायोगादानन्दं ब्रह्म जानातीत्यानन्दज्ञानयोर्विषयविषयित्वक-ल्पना न युक्ता न हि क्वचिद्विरोधोऽन्यत्राविरोधो भवति न च सर्वज्ञमसन्तं सन्तं करो-तीति भावः ॥ १९६ ॥

**अज्ञानान्यार्थविज्ञानप्रसक्तावेव युज्यते ॥**
**वेत्ति ब्रह्म सुखमिति न तु ज्ञानघनात्मनि ॥ १९७ ॥**

---

१ ख. ंज्ञत्वमं ।

ब्रह्मणा स्वानन्दस्यावेद्यत्वे हेत्वन्तरमाह । **अज्ञानेति** ॥ १९७ ॥

**अज्ञानान्यार्थविज्ञानप्रसङ्गाङ्गीकृतावपि ॥**
**जाड्यं जन्मादिबद्धत्वं ब्रह्मणः प्राप्नुयाद्ध्रुवम् ॥ १९८ ॥**

ब्रह्मणो ज्ञानघनस्याप्यज्ञानान्यार्थज्ञाने स्तः स्वप्रकाशात्मनः सवितुरप्रकाशान्यप्रकाशयोर्दर्शनात्तद्ब्रह्म स्वानन्दं वेत्तीति नायुक्तमित्याशङ्क्याऽऽह । **अज्ञानेति** ॥१९८॥

**तस्माद्विज्ञानमित्यादि यथावस्थितवस्तुनः ॥**
**वचोऽन्वाख्यायकं ग्राह्यं न ज्ञानादिविधायकम् ॥ १९९ ॥**

आनन्दज्ञाने ब्रह्मणि विषयविषयित्वायोगश्चेत्कथं विज्ञानादिवाक्यमित्याशङ्क्योपसंहरन्नाह । **तस्मादिति** । ज्ञानस्य विषयित्वमानन्दस्य विषयत्वं ब्रह्मणो गुणित्वमितरयोर्गुणत्वमित्यादेर्न बोधकमिति व्यावर्त्यमाह । **नेति** ॥ १९९ ॥

**जक्षदित्यादि यच्चोक्तं तच्चापि न विरुध्यते ॥**
**सर्वात्मकत्वाद्विदुषः सर्वतःपाणिपादवत् ॥ २०० ॥**

जक्षत्क्रीडन्नित्यादिश्रुतेर्मोक्षे ब्रह्मानन्दो वेद्य इत्युक्तमनूद्य परिहरति । **जक्षदित्यादीति** । यथा सर्वतःपाणिपादं तत्सर्वतोक्षिशिरोमुखमिति सर्वात्मतोच्यते तथाऽत्रापि विदुषः सर्वात्मताया विवक्षितत्वादानन्दावेद्यत्वमविरुद्धमित्यर्थः ॥ २०० ॥

**योगिदेवादिदेहेषु जक्षणाद्युपपत्स्यते ॥**
**सर्वात्मकत्वाद्विदुषः स्याद्विमुक्तिस्तुतीरणम् ॥ २०१ ॥**

विदुषः सर्वात्मनोऽपि कथं जक्षणादि श्रुतं निर्वहेदत आह । **योगीति** । प्राप्तजक्षणाद्यनुवादफलमाह । **स्यादिति** ॥ २०१ ॥

**मतं जक्षणवन्मुक्तौ सर्वात्मत्वात्परात्मनः ॥**
**दुःखित्वमपि संप्राप्तं कुम्भीपाकादिदेहिषु ॥ २०२ ॥**

विदुषः सार्वात्म्येन योग्यादिषु प्राप्तजक्षणाद्यनुवादे स्यादतिप्रसक्तिरिति शङ्कते । **मतमिति** ॥ २०२ ॥

**नैवं नामादिसंभूतिपिण्डप्राणादिसंश्रय—**
**संपर्कजनितभ्रान्तिदुःखित्वाध्यस्तिहेतुतः ॥ २०३ ॥**

आविद्यनामरूपरचितोपाधिद्वयसंबन्धनिबन्धनमिथ्याज्ञानाधीनदुःखिताध्यासवशादात्मनि बन्धप्रतीतेर्न तत्र वस्तुतो दुःखित्वं न च जक्षणाद्यपि वास्तवमाविद्यस्यैव मुक्तिस्तुतयेऽनुवादाद्दुःखित्वस्याऽऽविद्यस्यापि नानुवादो हीनत्वात्तेरिति परिहरति । **नैवमिति** ॥ २०३ ॥

१ ख. 'पद्येत । २ ख, 'भूतपि' ।

**विषयप्रविभागश्च विरुद्धवचसां मिथः ॥**
**प्रागेवास्माभिरुक्तोऽसौ यथावदुपपत्तिभिः ॥ २०४ ॥**

यत्तु विरुद्धश्रुतिदृष्टेरागमार्थोऽनिर्णीत इति तत्राऽऽह । **विषयेति** । प्रागिति मधुब्राह्मणोक्तिः ॥ २०४ ॥

**आनन्दब्रह्मविज्ञानपदार्थैकत्वहेतुतः ॥**
**नीलोत्पलादिवन्नातः संसर्गो ब्रह्मणीष्यते ॥ २०५ ॥**

विज्ञानादिवाक्यीयब्रह्मानन्दस्यावेद्यत्वमुक्तं केचिद्वाक्यार्थः संसर्गो विशिष्टो वेतीच्छन्तो विज्ञानादिवाक्यं नाखण्डार्थं मृष्यन्ते तान्प्रत्याह । **आनन्देति** । एतानि हि पदान्येकस्मिन्नेव बुभुत्सिते ब्रह्मप्रातिपदिकार्थे प्रकृष्टादिपदवत्पर्यवस्यन्ति तथाच लक्षणया संसर्गासङ्गिसम्यग्धीहेतुत्वादखण्डार्थत्वमन्यथा त्वबुभुत्सितबोधिनो वाक्यस्याप्रामाण्यादिति भावः । अतःशब्दः पूर्वपञ्चम्या संबध्यते । संसर्गग्रहणं विशिष्टोपलक्षणार्थम् ॥ २०५ ॥

**मर्त्याच्छतगुणेनात उत्तरोत्तरवृद्धितः ॥**
**कार्यकारणरूपस्य निष्ठाऽऽनन्दः परो मतः ॥ २०६ ॥**

ब्रह्मानन्दस्यावेद्यसंविदेकरसस्य परमत्वमाह । **मर्त्यादिति** । आनन्दस्तावत्कर्मफलत्वाज्जायते ततोऽपि रागादिद्वारेणाऽऽनन्दान्तरं न हि वैशेषिकवद्वैदिकानां सुखादिषु विजातीयारम्भनियमस्तथाच कार्यकारणरूपस्याऽऽनन्दस्य मानुषानन्दादारभ्योत्तरोत्तरभूमिषूत्कर्षादतिशयवतो ब्रह्मानन्दे सर्वभेदशून्ये पर्यवसानात्परमोऽसौ श्रुतिषु मत इत्यर्थः ॥ २०६ ॥

**साधनादिव्यपेक्षैव सुखसंवित्तिरिष्यते ॥**
**लौकिकी नश्वरी साऽपि दुःखसंस्कारजा तथा ॥ २०७ ॥**
**कैवल्ये न तु सापेक्षा सर्वसाधननिःस्पृहा ॥**
**आत्मैवाऽऽनन्दयाथात्म्यं नातो ज्ञानादिसाधनम् ॥ २०८ ॥**

उक्तानन्दस्यावेद्यत्वे तत्साक्षात्कारार्थं साधनानुष्ठानं न स्यादित्याशङ्क्य धीवृत्तिरूपा लौकिकसुखसंवित्तिरेव कारकापेक्षा नाशशीला रागादिजन्या चेष्यत ऐकात्म्ये तु न कारकेष्वपेक्षा तत्र सुखसंवित्तेरनाद्यनन्तायाः सर्वानपेक्षत्वादनुष्ठानस्य च प्रतिबन्धमात्रध्वंसित्वादित्याह । **साधनादीत्यादिना** । साधयित्रादिसंग्रहार्थमादिपदम् । दुःखसंस्कारो रागादिः । मोक्षे सुखसंवित्तिरनपेक्षेत्यत्र हेत्वन्तरमाह । **आत्मैवेति** । अतो ज्ञाने सुखे वा न साधनमपेक्षितव्यमित्युपसंहरति । **नात इति** ॥ २०७ ॥ २०८ ॥

**न जडं ज्ञानरूपत्वादानन्दत्वान्न निःसुखम् ॥**
**नान्तवद्ब्रह्मरूपत्वादिति वाक्यप्रमाणतः ॥ २०९ ॥**

विज्ञानादिवाक्यस्य यथोक्तार्थपरत्वे तस्यैकेनैव पदेन सिद्धेर्व्यर्थं पदान्तरमित्याशङ्क्य विज्ञानादिपदानां लक्ष्यार्थैक्येऽपि व्यावर्त्यभेदादर्थवत्त्वोपपत्तिरित्यभिप्रेत्याऽऽह । **न जडमिति ।** सिद्धमखण्डं ब्रह्मेति शेषः ॥ २०९ ॥

**आनन्दैकस्वभावोऽस्य सुषुप्तेऽध्यवसीयते ॥**
**व्यावृत्ताशेषमात्रादेरनन्यानुभवात्मना ॥ २१० ॥**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके तृतीयाध्यायस्य नवमं ब्राह्मणम् ॥ ९ ॥**

**त्रयोदशैव ज्ञेयानि पञ्चमेऽस्मिन्समासतः ॥**
**शतानि वार्तिकग्रन्थे षष्ठे वक्ष्याम्यतः परम् ॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीसुरेश्वराचार्यविरचिते बृहदारण्यकोपनिषद्भाष्यवार्तिके तृतीयोऽध्यायः ॥ ३ ॥**

**उपनिषत्क्रमेण पञ्चमोऽध्यायः ॥ ५ ॥**

ब्रह्मानन्दस्यावेद्यत्वे हेत्वन्तरं वदन्ब्राह्मणार्थमुपसंहरति । **आनन्देति ।** उत्थितस्य परामर्शान्मात्रादिव्यावृत्तेरागन्तुकज्ञानाभावेऽपि स्वापे सुखानुभवादनतिशयानन्दं चिदेकतानं वस्तु सिद्धमित्यर्थः ॥ २१० ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां तृतीयाध्यायस्य नवमं ब्राह्मणम् ॥ ९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यश्रीमद्भगवदानन्दज्ञानविरचितायां सुरेश्वरवार्तिकटीकायां शास्त्रप्रकाशिकाख्यायां तृतीयोऽध्यायः ॥ ३ ॥

---

**श्लोकानामादितः समष्ट्यङ्काः[1]—६९१०**

---

१ क. खखाग्निभूमिताः श्लोकाः केनचिद्गणिताः पुरा । तेऽध्यायेऽस्मिन्न सन्त्यत्र सन्ति खाष्टद्विभू १२८० मिताः ॥

# अथ चतुर्थोऽध्यायः ।

**आनन्दं ब्रह्म विज्ञानं साक्षादित्यादिलक्षणम् ॥**
**पञ्चमान्ते विनिर्णीतं जल्पन्यायेन सांप्रतम् ॥ १ ॥**
**वागादिदेवताद्वारा भूयस्तस्यैव वित्तये ॥**
**षष्ठ आरभ्यतेऽध्यायो वादन्यायेन यत्नतः ॥ २ ॥**

अस्ति प्रत्यगुपाधिवर्गविधुरं शुद्धं परं भास्वरं
पूर्णानन्दमपास्तभेदविभवं ब्रह्मेति निर्ज्ञायते ।
तस्मिन्नस्मि सदा निषण्णधिषणो धीशब्दयोनौ पदे
वेदान्तैरधिगम्यमानमहिमन्यात्मावबोधे मयि ॥ १ ॥

पूर्वाध्याये सच्चिदानन्दं प्रत्यग्ब्रह्म निर्धार्याध्यायान्तरमारभमाणो वृत्तमनुद्रवति । **आनन्दमिति ।** पञ्चमान्तशब्दो बुद्धान्तादिशब्दवत्पञ्चमावसानविषयो वा । जल्पन्यायेन चतुरङ्गनिर्वर्त्यजयपराजयप्रधानन्यायेनेति यावत् । उत्तराध्यायतात्पर्यमाह । **सांप्रतमिति ।** वागाद्यधिष्ठात्रीष्वग्न्यादिदेवतासु ब्रह्मदृष्टिद्वारेत्यर्थः । तस्यैव पाञ्चमिकस्य ब्रह्मणः साक्षादित्यादिलक्षणस्येत्यर्थः । वादन्यायेन शिष्याचार्यक्रमेण तत्त्वनिर्णयप्रधानन्यायेनेत्यर्थः । परमतनिरासेन स्वमतसाधनं यत्नः ॥ १ ॥ २ ॥

**योग्यकालाववबोधार्थमासांचक्र इतीरणम् ॥**
**कल्पं बुद्ध्वाऽथ तमृषिराजगाम महीपतिम् ॥ ३ ॥**

परपराजयमात्मविजयं च न्यायतो लब्धवतस्तत्त्वनिर्धारणे बुद्धिस्वास्थ्यं भवतीत्यध्याययोरुत्थाप्योत्थापकरूप[1] संबन्धमुक्त्वा ब्रह्मात्मज्ञानोपदेशेन[3] तदुपायविशेषबुभुत्सायां तदुक्त्यर्थमेतदिति ब्राह्मणसंबन्धं भाष्योक्तमुपेत्य पदार्थान्व्याचिख्यासुरासांचक्र इत्यस्य विवक्षितमाह । **योग्येति ।** राजानं द्रष्टुकामानां तद्दृष्टियोग्यावसरज्ञापनार्थमास्थायिकामर्थिभ्यो राजा दत्तवानिति वाक्ये जनको हेत्यादौ विवक्षितमित्यर्थः । अथेत्यादेरर्थमाह । **कल्पमिति ।** दर्शनयोग्यं कालं ज्ञात्वेति यावत् । श्रुत्यनुकारार्थोऽथशब्दः ॥ ३ ॥

**पशूनिच्छन्किमागास्त्वं प्रश्नान्वा सूक्ष्मनिर्णयान् ॥**
**वक्तुं किमागतोऽसीति नृपः पप्रच्छ तं मुनिम् ॥ ४ ॥**

तं हेत्यादि व्याचष्टे । **पशूनिति ।** सूक्ष्मार्थनिर्णयफलान्प्रश्नान्मत्तः श्रुत्वा तेषामुत्तरं वक्तुं वा त्वदागमनमित्यण्वन्तानित्यस्यार्थ उक्तः ॥ ४ ॥

१ क. घ. °रूपम° । २ घ. °त्मकज्ञा° । ३ ख. °देशात° । घ. °देशे त° ।

धनार्थं ब्राह्मणा यान्ति राजानमिति युज्यते ॥
न त्वनापदि विद्यार्थं तं यान्तीह द्विजोत्तमाः ॥ ५ ॥

केचिद्याज्ञवल्क्यस्य योगक्षेमार्थं विद्यार्थं च राजगमनमिच्छन्तः सूक्ष्मार्थनिर्णयान्तान्प्रश्नान्कृत्वा मत्तो निर्धारयितुं वा त्वदागमनमित्येवमण्वन्तानित्यस्यार्थमाहुस्तान्प्रत्याह । **धनार्थमिति** । उपेयादीश्वरं चैव योगक्षेमार्थसिद्धय इति स्मृतेरित्यर्थः । ननु गार्ग्यप्रभृतयो ब्राह्मणा राजानमपि विद्यार्थं गच्छन्तो दृश्यन्ते नेत्याह । **न त्विति** । शास्त्रीयव्यवहारभूमिरिहेत्युक्ता ॥ ५ ॥

नान्यत्र क्षत्रियाद्विद्या यत्र संभाव्यते क्वचित् ॥
उपसीदन्ति तत्रैव ब्राह्मणाः क्षत्रियान्सदा ॥ ६ ॥

अनापदीतिविशेषणतात्पर्यमाह । **नान्यत्रेति** । यत्र क्षत्रियादन्यत्र क्वचिदपि विद्या सदैव न संभाव्यते तत्र ब्राह्मणा विद्यार्थिनः सन्तो विदुषः क्षत्रियानुपसीदन्तीति योजना ॥ ६ ॥

याज्ञवल्क्यस्य शिष्यत्वे ग्रन्थच्छायाऽपि नेष्यते ॥
जनकस्यैव शिष्यत्वे ग्रन्थच्छायोपलक्ष्यते ॥ ७ ॥

अथात्र कस्मिंश्चिद्देशे गुरुरपि मुनिर्जनकस्य शिष्यो भविष्यति । उक्तं चाऽऽचार्यत्वं हित्वेति, नेत्याह । **याज्ञवल्क्यस्येति** । न च तस्य शिष्यत्वे योग्यत्वं सर्वज्ञत्वादित्यपेरर्थः । तच्छृणवामेति श्रुतेस्तस्य शिष्यत्वं भातीत्याशङ्क्याऽऽह । **जनकस्येति** । एकवचनबहूक्तिभ्यां राज्ञो मुनेश्च शिष्याचार्यत्वे भासेते संभवति चाऽऽचार्यस्यापि शिष्यबुद्धिशोधनार्थं तं प्रति प्रश्नवाक्यमिति भावः ॥ ७ ॥

अण्वन्तानिति शब्दोऽयं न स्यात्पशुविशेषणम् ॥
उभयं त्वित्यतः शेषाद्द्वयं पृष्टमतो भवेत् ॥ ८ ॥

पशूनण्वन्तानिति सामानाधिकरण्यादण्वन्तपदस्य पशुविशेषणार्पकत्वान्नात्र विकल्पधीरित्याशङ्क्याऽऽह । **अण्वन्तानिति** । तत्र वाक्यशेषं हेतुमाह । **उभयमिति** । राजवाक्ये विकल्पद्योतिवाशब्दाभावेऽपि शेषान्मुनिवचनादत्र विकल्पदृष्टिः संदिग्धस्योपक्रमे शेषान्निर्णयप्रसिद्धेरित्यर्थः । अण्वन्तशब्दस्य पशुविशेषणानर्पकत्वे फलितमाह । **द्वयमिति** ॥ ८ ॥

तद्धेतुहेतुमत्त्वस्य प्रसिद्ध्यर्थमथावदत् ॥
इच्छाम्युभयमप्येतदित्येवं ह्यन्यथा वदेत् ॥ ९ ॥

उभयमेवेत्यादेस्तात्पर्यमाह । **तद्धेत्विति** । प्रश्नवचनं पशुग्रहणं न तच्छब्दोऽपि-

---

१ ग. °स्यापि । २ ग. °ब्दार्थो नर्ता° ।

स्तयोर्यथाक्रमं हेतुत्वस्य हेतुमत्त्वस्य च प्रतिपत्त्यर्थमिच्छापदव्युदासेनोभयमेवेति मुनिरुक्तवानित्यर्थः । प्रश्नालोचनया प्राप्तमपीच्छापदं फलविशेषविवक्षया त्यक्तमितिद्योतनार्थोऽथशब्दः । इच्छापदप्रयोगे हेतुहेतुमत्त्वं तयोः सिध्यति तन्न प्राप्तं क्रियापदं त्याज्यमित्याशङ्क्याऽऽह । **इच्छामीति** । यद्येतदुभयमपीच्छामीत्येवं वदेत्तदा द्वयोरपीच्छाकर्मत्वेन प्राधान्याद्धेतुहेतुमद्भावो न स्यान्न हि गुणप्रधानत्वादृते तत्सिद्धिरित्यर्थः ॥ ९ ॥

**वाग्देवताऽग्निरत्र स्यात्तथाऽऽयतनमिन्द्रियम् ॥**
**ब्रह्माऽऽकाशः प्रतिष्ठा च नामोपनिषदुच्यते ॥ १० ॥**

वाग्वै ब्रह्मेत्यत्र वाक्पदार्थमाह । **वागिति** । वागेवाऽऽयतनमित्यत्र पूर्ववद्देवतां व्यावर्तयति । **तथेति** । आकाशः प्रतिष्ठेत्यस्यार्थमाह । **ब्रह्मेति** । प्रज्ञेत्येतदुपासीतेत्यस्यार्थमाह । **नामेति** ॥ १० ॥

**करणायतनान्देवान्स्वप्रतिष्ठान्व्रजेत्तु सः ॥**
**प्रज्ञाद्युपनिषत्कान्यो ध्यानाद्देवो भवेदिह ॥ ११ ॥**

देवो भूत्वेत्यादेरर्थमाह । **करणेति** । इहेति जीवदवस्थोच्यते ॥ ११ ॥

**देवतायतने चैव प्रतिष्ठोपनिषत्तथा ॥**
**षट्स्वप्येतेषु विज्ञेयमेतदेव चतुष्टयम् ॥ १२ ॥**

प्रथमपर्यायवदुत्तरेष्वपि पञ्चसु पर्यायेषु देवतादिचतुष्टयमुपास्यत्वेन ज्ञेयमित्याह । **देवतेति** । पर्यायषट्केऽपि तुल्यं चतुष्टयमित्युपसंहरति । **षट्स्विति** ॥ १२ ॥

**मातृमानिति हेतूक्तिः सम्यग्वक्तृत्वसिद्धये ॥**
**सम्यक्त्वप्रतिपत्त्यर्थं तथैव स्यात्परं वचः ॥ १३ ॥**

मातृमानित्यादेस्तात्पर्यमाह । **मातृमानितीति** । वागादिब्रह्मवादिनां शैलिनिप्रभृतीनां सम्यगेव वक्तृत्वमित्यस्य ज्ञापनार्थं मातृमानित्यादिवाक्यमित्यर्थः । अवदतो हीत्यादि तत्रैव हेत्वन्तरत्वेनाऽऽदत्ते । **सम्यक्त्वेति** । जित्वादीनां वक्तृत्वस्येति शेषः ॥ १३ ॥

**यस्मादवदतो लोके पुरुषार्थो न कश्चन ॥**
**दृष्टो वा यदि वाऽदृष्टो वाग्ब्रह्मातः प्रतीयताम् ॥ १४ ॥**

तद्व्याचष्टे । **यस्मादिति** ॥ १४ ॥

**न चेदायतनाद्युक्तमेकपाद्ब्रह्म तर्हि तत् ॥**
**असमस्तमिदं ब्रह्म न युक्तं समुपासितुम् ॥ १५ ॥**

---

१ घ. 'च्छामिप' ।

एकपादित्यादेरर्थमाह । न चेदिति । तादृगपि ब्रह्मध्यानं फलमुत्पादयिष्यतीति चेन्नेत्याह । असमस्तमिति ॥ १५ ॥

स त्वं जानंश्चतुष्पान्मे ब्रह्म व्याख्यातुमर्हसि ॥
वागेवाऽऽयतनमिति याज्ञवल्क्योऽप्युवाच तम् ॥ १६ ॥

स वै नो ब्रूहीत्यादेरर्थमाह । स त्वमिति । मुनेरनुग्रहशीलत्वं सर्वनाम्ना सूच्यते । वागेवेत्याद्यादत्ते । वागिति ॥ १६ ॥

वागेवाऽऽयतनं तस्य वागेव करणं भवेत् ॥
ब्रह्माऽऽकाशः प्रतिष्ठा स्यात्प्रज्ञाऽस्योपनिषत्तथा ॥ १७ ॥

उक्तं तदर्थं स्मारयति । वागेवेति ॥ १७ ॥

प्रज्ञेयं किं ततो भिन्ना प्रतिष्ठायतने यथा ॥
किंवाऽभिन्नेति मे ब्रूहि प्रज्ञोपनिषदं स्फुटम् ॥ १८ ॥

का प्रज्ञेति प्रश्नं विभजते । प्रज्ञेति ॥ १८ ॥

स्वयमेव तु वाक्प्रज्ञा ब्रह्मणो न तु भिद्यते ॥
कुतः प्रज्ञात्वसंसिद्धिर्वाच इत्येतदुच्यते ॥ १९ ॥

वागेवेत्यादेरर्थमाह । स्वयमिति । वाचेत्यादेस्तात्पर्यमाह । कुत इति ॥ १९ ॥

यत एवमतो वाचं परं ब्रह्मेति चिन्तयेत् ॥
विराड्गृहीतिरत्र स्यात्साधारकरणग्रहात् ॥ २० ॥
तथा देवतया सूत्रं नियन्ताऽपि वियद्गिरा ॥
कारणाद्यखिलं विश्वं देवतावधि भण्यते ॥ २१ ॥
यतो वागाद्युपास्त्यत्र तस्मात्सर्वं विवक्षितम् ॥
एनं भूतानि सर्वाणीत्युपासनफलाभिधा ॥ २२ ॥

वाग्वै सम्राडित्यादि व्याचष्टे । यत इति । उक्तरीत्या वाचो वैशिष्ट्यं यस्माद्दृष्टं तस्मादित्यर्थः । षट्स्वपि पर्यायेष्ववान्तरविभागान्तरमाह । विराडिति । एतेषु पर्यायेषु वागेवाऽऽयतनमित्यादिना करणस्याऽऽधारेण देहेन सह ब्रह्माद्विराडात्मा गृह्यते स हि स्थूलकार्य[2]करणात्मको वाग्वै[3] ब्रह्मेत्यादिना सूत्रात्मोच्यते स हि सूक्ष्मोपाधिरग्न्यादित्यादिदेवतारूप आकाशः प्रतिष्ठेत्यन्तर्यामिग्रहः स च प्रागेव प्रतिपन्न इत्यर्थः । इत्थं विभागे फलितमाह । कारणादीति । कार्यकारणात्मकं सर्वं जगद्देवतामात्रत्वेन यस्मादुच्यते तस्मादग्न्यादिदेवतासु ब्रह्मदृष्ट्या सर्वं जगदुपास्यत्वेनास्मिन्प्रकरणे विवक्षितं न त्वेकदेशावच्छिन्नोपास्तिरित्यर्थः । सर्वाणीत्यादेरर्थमाह । एनमिति ॥ २० ॥ ॥ २१ ॥ २२ ॥

---

१ ख. °पास्त्याऽत्र । २ घ. °र्यकार° । ३ क. घ. °ग्वै ब्रह्म चक्षुर्वै ब्र° ।

**देवो भूत्वेति देवान्हि प्रधानफलकीर्तनम् ॥**
**विद्वान्य एवमित्युक्त्या साध्यसाधनसंगतिः ॥ २३ ॥**

उपासनस्य द्विविधं फलं दृष्टमदृष्टं च दृष्टमुक्त्वाऽदृष्टं व्याचष्टे । **देव इति** । भावनोपचयस्य देवताभावसंपादनसामर्थ्यद्योतनार्थो हिशब्दः । य एवमित्यादेस्तात्पर्यमाह । **विद्वानिति** । ज्ञानफलयोरुच्यत इति शेषः ॥ २३ ॥

**देवो भूत्वेति जीवन्सन्भावनोपचयान्नरः ॥**
**वैलक्षण्यमुपास्तीनां भण्यते ब्रह्मबोधतः ॥ २४ ॥**

देवो भूत्वेत्यादेस्तात्पर्यान्तरं वक्तुमक्षरार्थमनुवदति । **देव इति** । विवक्षितं तात्पर्यमाह । **वैलक्षण्यमिति** । ब्रह्मधीवदुपास्तिरनभ्यस्ता न फलवतीत्यर्थः ॥ २४ ॥

**तथैव वचसोक्तिः स्याद्देवो भूत्वेति संभवात् ॥**
**प्रतिवाक्यं बहूक्तिश्च षण्णामेकत्वसिद्धये ॥ २५ ॥**

अत्र श्रुत्यक्षरानुगुण्यमाह । **तथेति** । उक्ततात्पर्यानुसारेण देवो भूत्वेति वचसा देवभावफलस्योक्तिर्युक्ता तस्य साध्यत्वसंभवादित्यर्थः । कथं प्रतिपर्यायं देवानिति बहूक्तिरग्न्यादेरेकैकस्यैवोपास्यत्वदृष्टेरित्याशङ्क्याऽऽह । **प्रतिवाक्यमिति** । पर्यायषट्कसंबद्धोपास्तेरैक्यद्योतनार्थं सर्वत्र बहुवचनं प्रतिपर्यायमुपास्तिभेदे देवमप्येतीति स्यादेकैकोपास्तेरनेकदेवताप्त्ययोगादतः सर्वत्र देवानिति श्रुतेरेकपर्यायस्थोपास्तिरन्यपर्यायस्थोपास्त्यभिन्नेत्यर्थः ॥ २५ ॥

**प्रागपि ब्रह्मविज्ञानाद्ब्रह्मैवाभूद्यथा तथा ॥**
**देवोपासनतः पूर्वं नाभूद्देव उपासकः ॥ २६ ॥**

सर्वपर्यायेषूपास्त्यैक्येऽपि किमिति सा ब्रह्मधीवन्न फलदेत्याशङ्क्य तयोरधिकारिद्वारा वैलक्षण्यमाह । **प्रागपीति** । मुमुक्षुर्ज्ञानात्पूर्वमपि ब्रह्मैवाज्ञानं तु व्यवधानमुपासकस्तु प्रागुपास्तेर्देवो नाभूत्तद्भावस्य साध्यत्वादित्यर्थः ॥ २६ ॥

**भावनोपचयाद्देवो भूत्वा विद्वानिहैव तु ॥**
**देवानप्येति सोऽग्न्यादीञ्शरीरत्यागतः परम् ॥ २७ ॥**

फलद्वाराऽपि वैषम्यमाह । **भावनेति** । जीवदवस्थायां देवभावस्तत्तादात्म्यसाक्षात्करणं मृतेरूर्ध्वं तदप्ययस्तदैक्यमिति विवेक्तव्यम् । व्यवहितफलोपास्तिराप्रायणादावृत्त्यपेक्षत्वाद्ब्रह्मधीर्नैवं ब्रह्म वेद ब्रह्मैव भवतीति ज्ञानफलयोर्नैरन्तर्यादिति भावः ॥ २७ ॥

**उत्पत्त्याद्यात्मकं कार्यं साध्यं सर्वस्य कर्मणः ॥**
**उपासनं च कर्मैव युक्तमुक्तमिदं ततः ॥ २८ ॥**

इतश्च फलवैषम्यं तयोरित्याह । **उत्पत्तीति** । कर्मणो हि फलमुत्पत्त्याद्यन्यतमं साध्यं च ज्ञानस्य तद्विलक्षणं नित्यसिद्धमित्यर्थः । स्वरूपतोऽपि वैषम्यमाह । **उपासनं चेति** । मानसी क्रियोपास्तिर्नैवं धीरपुंस्तन्त्रत्वादित्यर्थः । भिन्नार्थविषयोपास्तिरेकरसविषया धीस्तद्विषयद्वाराऽपि वैषम्यमिति मत्वोक्तं वैषम्यं निगमयति । **युक्तमिति** ॥ २८ ॥

**ब्रह्म वा इदमित्येवं तथा ब्रह्मैव सन्निति ॥**
**प्रागपि ब्रह्मविज्ञानात्सिद्धं तादात्म्यमुच्यते ॥ २९ ॥**

ज्ञानात्प्रागपि मुमुक्षुर्ब्रह्मैव चेत्किं तादात्म्योक्त्येत्याशङ्क्याऽऽह । **ब्रह्मेति** । अतो ज्ञानादज्ञाननिवृत्तिः फलतीति शेषः ॥ २९ ॥

**हस्त्यृषभमिति चोक्त्या भण्यते गुरुदक्षिणा ॥**
**स च तां नाग्रहीद्दत्तां पिता म इति हेतुगीः ॥ ३० ॥**

हस्तीत्यादि व्याचष्टे । **हस्तीति** । शिष्यं कृतार्थमकृत्वा ततो दक्षिणा न ग्राह्येति पितुर्मम चाभिप्रायो न च त्वमद्यापि कृतार्थः परधीविरहादतस्त्वत्तो दक्षिणा न ग्राह्येत्याह । **पितेति** ॥ ३० ॥

**नन्वनुशिष्ट एवायं पूर्वोक्तैरनुशासनैः ॥**
**पितृव्रतोपरोधोऽत्र नातः कश्चन विद्यते ॥ ३१ ॥**

राजदत्तगोधनादानेऽपि पितृव्रतभङ्गो नास्तीति शङ्कते । **नन्विति** ॥ ३१ ॥

**नाऽऽत्मविद्यातिरेकेण पितुर्वस्त्वन्तरे यतः ॥**
**असमाप्तेः पुमर्थस्य मतं नास्यानुशासनम् ॥ ३२ ॥**

तत्त्वज्ञानादन्यत्र पुमर्थासमाप्तेस्तस्मादेव मुक्तिलाभात्तदनुशासनं पितुर्विवक्षितं तन्नोक्तानुशासनात्ते कृतार्थतेति परिहरति । **नाऽऽत्मेति** ॥ ३२ ॥

**यस्मिञ्ज्ञातेऽखिलं ज्ञातं कृतमाप्तं च कामितम् ॥**
**तित्यक्षितं च संत्यक्तं पितुस्तदनुशासनम् ॥ ३३ ॥**

पितुरिष्टमनुशासनमेव स्पष्टयति । **यस्मिन्निति** ॥ ३३ ॥

**यतो वस्त्वन्तरं नान्यदात्मनो विद्यते परम् ॥**
**सम्यक्तज्ज्ञानमेवातस्तदन्यत्र मृषा मतिः ॥ ३४ ॥**

न केवलं पितुरेवैतन्मतं किंतु ममापीत्याह । **यत इति** । आत्मनोऽन्यद्वस्तु स्वतन्त्रं परमपरं वा यतो नास्त्यतस्तद्धीरेव सम्यग्धीस्तदन्यत्र दृष्टिर्मिथ्या धीरिति ममापि मतमतस्तवाऽऽत्मज्ञानेनैवकल्यान्न कृतार्थतेत्यर्थः ॥ ३४ ॥

**आत्मज्ञानोदयायैव याज्ञवल्क्योऽप्यतोऽवदत् ॥**
**उपासनान्यशेषाणि तथा कर्माण्यशेषतः ॥ ३५ ॥**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके चतुर्थाध्यायस्य**
**प्रथमं षडाचार्यब्राह्मणम् ॥ १ ॥**

**श्लोकानामादितः समष्ट्यङ्काः—६९४५**

तर्हि तदेवोपदेष्टव्यं किमित्युपासनानि मुनिरनुमोदते तत्राऽऽह । **आत्मज्ञानेति ।** यथा सर्वाणि कर्माणि विविदिषाश्रुतेर्ज्ञानोदयार्थानि तथैवैतान्यप्युपासनान्यतस्तान्यनुमोदितवानित्यर्थः ॥ ३५ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां चतुर्थाध्यायस्य
प्रथमं षडाचार्यब्राह्मणम् ॥ १ ॥

---

अथ द्वितीयं ब्राह्मणम् ।

---

**अनुशिष्यापि स नृपं यदा नैच्छद्धनं नृपात् ॥**
**अननुशिष्टहेतूक्त्या मती राज्ञस्तदाऽभवत् ॥ १ ॥**

पूर्वब्राह्मणे कानिचिदुपासनानि ज्ञानसाधनान्युक्त्वा तैर्ज्ञेयस्य ब्रह्मणो जागरादिद्वारा ज्ञानार्थं ब्राह्मणान्तरमवतारयन्नाख्यायिकातात्पर्यमाह । **अनुशिष्येति** ॥ १ ॥

**यथोक्ता नानुशिष्टिश्चेत्कीदृक्तदनुशासनम् ॥**
**संभावितानुशिष्ट्यर्थं तं राजोपससाद ह ॥ २ ॥**

मतिमेवानुवदति । **यथोक्तेति** । तथाविधबुद्धिजन्मानन्तरं राजा किं कृतवानत आह । **संभावितेति ।** आसनविशेषादुत्थाय राजा संभावितोपदेशलाभार्थं मुनिमासाद्य तदीयपादयोर्निपतितवानतो जिज्ञासुना मदमानादि त्यक्त्वाऽऽचार्यसेवा कार्याऽऽचार्यवान्पुरुषो[1] वेदेति श्रुतेरित्यर्थः । आचार्योपासनस्य ज्ञानार्थत्वमाचार्योपासनं शौचमित्यादिस्मृतावपि प्रसिद्धमिति वक्तुं हेति निपातः ॥ २ ॥

**उपासनानां सर्वेषामैकात्म्यज्ञाननिष्ठता ॥**
**ब्रह्मविद्याधिकारत्वादित्येतदधुनोच्यते ॥ ३ ॥**

आख्यायिकातात्पर्यमुक्त्वा ब्राह्मणार्थं संक्षिपति । **उपासनानामिति ।** ब्रह्मविद्याप्रकरणस्थोपास्तीनां तद्द्वारा मुक्तिफलत्वं वक्तुमिदं ब्राह्मणमित्यर्थः ॥ ३ ॥

**कूर्चादुत्थाय विधिना तं राजोपससाद ह ॥**
**भगवन्ननुशाधीति यथेहाभिमतं तव ॥ ४ ॥**

---

१ क. 'दिश्रुता' ।

द्वयोस्तात्पर्यमुक्त्वा जनको हेत्यादेरक्षरार्थमाह । कूर्चादिति । आसनविशेषादिति यावत् । विधिना गुरूपसदनं श्रुतिस्मृतिप्रसिद्धमिति वक्तुं निपातः । इहेति परमपुरुषार्थोक्तिः ॥ ४ ॥

**यथा जिगमिषुः पान्थो रथं वा नावमेव वा ॥**
**आददीताऽऽप्तिसिद्ध्यर्थं गन्तव्यस्य तथैव च ॥ ५ ॥**
**यथोक्तोपनिषद्भिस्त्वं संस्कृतात्माऽसि भावितः ॥**
**एवं वृन्दारकः पूज्य आढ्यो मानुषवित्तवान् ॥ ६ ॥**
**तथैवाधीतवेदश्च युक्तः साधनसंपदा ॥**
**गतिसाधनवत्त्वाच्च गन्तव्यमनु[२]मीयते ॥ ७ ॥**

द्वयं मुमुक्षवे वाच्यं ज्ञानं तद्धेतुश्च तत्र ज्ञानहेतुस्तवास्तीति न तदुक्तिरित्यभिप्रेत्य यथेत्यादिदृष्टान्तं व्याचष्टे । यथेति । जलस्थलयोः साधनविकल्पः । दार्ष्टान्तिकं [३]व्याकरोति । तथेति । प्रज्ञा प्रियमित्याद्युपनिषद्भिः सहोक्तरीत्या ब्रह्मोपास्तीः कुर्वन्नुपास्तिभिरत्यन्तं संस्कृतधीत्वाद्ब्रह्मविषये समाहितचेता राजेत्यर्थः । एवमित्यादेरर्थमाह । एवमिति । उक्तोपनिषत्क इत्यस्यार्थमाह । युक्त इति । आचार्यैरुक्तास्तुभ्यमुपनिषदोऽतो मुक्तिफलज्ञानसामग्र्या युक्तत्वान्न त्वं साधनमधिकृत्य प्रष्टव्योऽसीत्यर्थः । अस्तु तर्हि साध्यमधिकृत्य प्रश्नस्तत्रा[४]पि न तन्मात्रे सोऽस्तीत्याह । गतीति ॥ ५ ॥ ॥ ६ ॥ ७ ॥

**अध्यात्मादिव्यवच्छेदान्मुच्यमान उपासनैः ॥**
**आवि[६]रिश्चादितो भूप यास्यासि क्वेति भण्यताम् ॥ ८ ॥**

[७]परिशेष्येण साध्यविशेषे प्रश्नं वदन्नित इत्यादेरर्थमाह । अध्यात्मेति ॥ ८ ॥

**पप्रच्छ याज्ञवल्क्योऽत इतस्त्वं क्व गमिष्यसि ॥**
**सर्वस्यैवाऽऽत्मभूतत्वाद्गन्तव्यं न स पश्यति ॥ ९ ॥**

स्वयं जानन्मुनी राजानमज्ञं किमिति पृच्छति तत्राऽऽह । पप्रच्छेति । गन्तव्यं राजा न जानाति चेत्तं प्रति तद्व्याख्यातव्यमित्यभिप्रायोऽतःशब्दार्थः । नाहमित्यादेस्तात्पर्यमाह । सर्वस्येति । उक्तोपास्तिफलस्याग्न्यादिभावस्य स्वरूपत्वादन्यस्य चाज्ञानादित्यर्थः ॥ ९ ॥

**ननूक्तोपनिषद्भिर्हि गन्तव्यं प्राक्प्रबोधितम् ॥**
**देवो भूत्वेति वचसा तत्कस्मादिह पृच्छ्यते ॥ १० ॥**

---

१ घ. 'स्त्वाद्यक्ष' । २ ग. 'नुभूय' । ३ ख. व्याचष्टे । ४ क. 'पि त' । ५ ग. 'भानानुपा' । ६ क. ख. 'रिश्च्यादि' । ७ क. परिशेषेण । ८ घ. तद्व्याचर्याभ' ।

गन्तव्यप्रश्नमाक्षिपति । **नन्विति** । गतिहेतूनां गन्तव्यमन्तरेणापर्यवसानद्योतनार्थो हिशब्दः ॥ १० ॥

**नाहं वेदेति च नृपो जानन्नप्यब्रवीत्कथम् ॥**
**नैष दोषो यतोऽप्राक्षीद्याज्ञवल्क्यो नराधिपम् ॥ ११ ॥**
**पूर्वभूमेर्मुच्यमान उत्तरां कां गमिष्यसि ॥**
**देवतोपासनाद्येतज्ज्ञानोत्पत्त्यै विवक्षितम् ॥ १२ ॥**

न जानामीति प्रत्युक्तिरपि न युक्तेत्याह । **नाहमिति** । प्रश्नप्रत्युक्त्योराक्षेपं परिहरति । **नैष इति** । आक्षेपाभावे वक्ष्यमाणं हेतुमाह । **यत इति** । तत्र प्रश्नाक्षेपं परिहर्तुं प्रश्नस्वरूपमनुवदति । **अप्राक्षीदिति** । उपास्तीनां देवभावः साक्षात्फलं तत्पूर्वमेवोक्तं ज्ञानं च न च तत्र प्रश्नप्रत्युक्ती ज्ञानद्वारा ब्रह्मभावोऽपि तासां फलं तदिदानीं पृच्छ्यते मुनिनेत्यर्थः । कथं तासां धीद्वारा मुक्तिफलत्वं तदाह । **देवतेति** । आदिपदेन शुद्धिद्वारा धीसाधनं कर्म गृह्यते ॥ ११ ॥ १२ ॥

**उपासनानि सर्वाणि परविद्याधिकारतः ॥**
**क्रममुक्तिफलानीति क्व गमिष्यसिगीरतः ॥ १३ ॥**

प्रश्नोपपत्तिं निगमयति । **उपासनानीति** ॥ १३ ॥

**राज्ञस्तु तदविज्ञानान्नाहं वेदेति युज्यते ॥**
**अन्ये गतिविवक्षार्थं मुनेः प्रश्नं प्रचक्षते ॥ १४ ॥**

प्रतिवचनोपपत्तिमाह । **राज्ञस्त्विति** । तदविज्ञानाद्ब्रह्मभावफलाज्ञानादित्यर्थः । इत इत्यादेरर्थं स्वपक्षे दर्शयित्वा भर्तृप्रपञ्चमतमाह । **अन्य इति** । जनकं प्रति ब्रह्मप्राप्तिमार्गं वक्तुमित्यर्थः ॥ १४ ॥

**साक्षाद्ब्रह्मविदप्येष नाऽऽत्मप्राप्तौ गतिविन्नृपः ॥**
**परमात्मैव गन्तव्यः परमात्मविदा ननु ॥**
**अथ कः संशयो येन स तेनैवं नियुज्यते ॥ १५ ॥**

किमिति तं प्रति गतिर्वक्तव्या तस्य ब्रह्मवित्त्वात्तत्प्राप्तिमार्गावगतेरपि संभवादित्याशङ्क्याऽऽह । **साक्षादिति** । परोक्तं प्रश्नाक्षेपमुत्थापयति । **परमात्मैवेति** । अथेत्येवं सतीत्यर्थः । सशब्दो राजविषयः । तेनेति मुनिनेत्यर्थः ॥ १५ ॥

**गतिर्न विदिता तस्य तां स तस्मै विवक्षति ॥**
**एवमर्थमुपोद्धातमेवं स कृतवान्मुनिः ॥ १६ ॥**

तदीयं परिहारमाह । **गतिरिति** । उक्तं हि यज्जनको वेद तत्त्वं न तत्प्रतिपत्तौ

१ ख. च । २ ख. तत्प्र° ।

मार्गं स तु तद्दर्शनेन परिशोध्य इति गतिर्विवक्षिता चेत्सैवोच्यतां किं प्रश्नेनेत्याशङ्क्याऽऽह । एवमिति । गतिकथनार्थं क्व गमिष्यसीत्येवं पृष्टवानित्यर्थः ॥ १६ ॥

श्रुतौ यद्यपि नैतस्यां श्रूयते गतिचोदना ॥
तथाऽपि गतिरेवेयमुत्तरत्र स्फुटं हि तत् ॥ १७ ॥

मार्गं वक्तुमुपोद्धातः प्रश्न इत्ययुक्तमिन्धो हेत्यादिप्रतिवचने गत्यनिर्देशादित्याशङ्क्याऽऽह । श्रुताविति । सैव पृच्छ्यमानेत्यत्र हेतुमाह । उत्तरत्रेति । यैषा हृदयादूर्ध्वा नाड्युच्चरतीत्यत्र गतिवचनस्य स्पष्टत्वादित्यर्थः ॥ १७ ॥

गतिविज्ञानवैकल्यात्परमात्मविदप्यसौ ॥
न जाने क्व गमिष्यामि कथं[1] वेत्यब्रवीन्नृपः ॥ १८ ॥

नाहमित्यादिवाक्यस्य परोक्तमर्थमाह । गतीति । यथाऽऽहुर्जानन्नपि परमात्मानं दर्शनमार्गस्य परोक्षत्वादाहेति ॥ १८ ॥

इति व्याचक्षते केचिद्ग्रन्थमेतं महाधियः ॥
श्रुत्यक्षरानुसारेण नायमर्थोऽत्र लभ्यते ॥ १९ ॥

परपक्षमुपसंहरति । इति व्याचक्षत इति । श्रुतेरनुपपत्तेर्वा गतिप्रश्नकल्पना नाऽऽद्य इत्याह । श्रुतीति । क्व गमिष्यसिवाक्यमत्रेति परामृश्यते ॥ १९ ॥

ब्रह्मवित्त्वं तु राज्ञोऽस्य मितिं[2] नोपलभामहे ॥
ग्रन्थे नानन्तरे यस्मादात्मज्ञानं समीरितम् ॥ २० ॥

ब्रह्मविद्गन्तव्यं ब्रह्म राजा जानात्यतस्तत्प्रश्नानुपपत्तेर्गतिप्रश्न इति द्वितीयमाशङ्क्याऽऽह । ब्रह्मेति । पूर्वब्राह्मणमेवात्र प्रमाणमित्याशङ्क्याऽऽह । ग्रन्थ इति ॥ २० ॥

गत्यर्थो नापि च प्रश्नः क्व गमिष्यसिलक्षणः ॥
गन्तव्यं पृच्छ्यते यस्मान्न पिपृच्छिषिता गतिः ॥ २१ ॥

कथं श्रुत्यक्षरानुरोधेन गतिप्रश्नासिद्धिर्वाक्यशेषात्तदुपपत्तेरुक्तत्वादित्याशङ्क्याऽऽह । गत्यर्थ इति । अपिचशब्दाववधारणे । उक्तमर्थमक्षरानुसारेण स्फोरयति । गन्तव्यमिति ॥ २१ ॥

यत्साक्षादित्युपक्रम्य य आत्मेत्युपसंहृतेः ॥
तदन्यस्य तदात्मत्वाद्ब्रह्मणि स्यात्कथं गतिः ॥ २२ ॥

ब्रह्मात्मनोरैक्यं श्रुतं तद्विरोधात्तद्विषयगत्यनुपपत्तेश्च न गतिप्रश्नोपपत्तिरित्याह । यदिति ॥ २२ ॥

गतिगन्तव्यगन्त्रादेरोतप्रोतात्मवर्त्मना ॥
ब्रह्मात्मनि समाप्तत्वाद्गतिः[3] का परमात्मनि ॥ २३ ॥

---

१ क. ग. 'थं चेत्य' । २ क. मतिं । ३ ख. 'प्तेग' ।

ब्रह्मणोऽन्यच्चेदस्ति तस्य तर्हि तादात्म्यं विरुद्धं स्थितस्य नष्टस्य वाऽन्यस्यान्यत्वायोगात्तत्कथं ब्रह्मणि गत्यनुपपत्तिस्तत्राऽऽह । **गतीति** ॥ २३ ॥

**अब्देशा पृथिवी कृत्स्ना तेजोदेशं तथा जलम् ॥**
**वायुदेशं तथा तेजो वियद्देशोऽनिलोऽखिलः ॥ २४ ॥**

ओतप्रोतरूपेण ब्रह्मणि सर्वस्य समाप्तिं यदिदं सर्वमप्स्वित्यादिनोक्तां स्मारयति । **अब्देशेति** ॥ २४ ॥

**स्वार्थदेशः परार्थोऽर्थः स्वप्नदर्शनवद्यतः ॥**
**आत्ममात्रैकयाथात्म्यान्न मुक्तौ स्याद्गतिस्ततः ॥ २५ ॥**

भूतानामोतप्रोतभावेन नभसि पर्यवसानेऽपि कथं ब्रह्मणि गत्यभावस्तत्राऽऽह । **स्वार्थेति** । स्वप्नाख्ये दर्शने दृश्यस्य द्रष्टुरविद्योत्थस्य तदतिरेकेणाभाववद्यतोऽनात्मा प्रतीचि कल्पितोऽतोऽधिष्ठानात्ममात्रस्यैव तद्रूपत्वान्न नित्यमुक्ते परस्मिन्गतिर्युक्तेत्यर्थः ॥ २५ ॥

**ब्रह्मैव सन्नवाप्नोति ब्रह्मेति वचनं स्फुटम् ॥**
**गन्तृगन्तव्ययोर्भेदे विरुध्येत न संशयः ॥ २६ ॥**

श्रुतिविरोधाच्च तस्मिन्न गतिरित्याह । **ब्रह्मैवेति** ॥ २६ ॥

**क्रियाकारकभेदे हि गतिः सर्वत्र दृश्यते ॥**
**गन्तव्य आत्मनि कुतः क्रियाकारकसंभवः ॥ २७ ॥**

प्रत्यग्ब्रह्मणि गत्ययोगे हेत्वन्तरमाह । **क्रियेति** । दृष्टेरविगानद्योतनार्थो हिशब्दः ॥ २७ ॥

**नैवात्र गतिरस्तीति स्पष्टमागमशासनम् ॥**
**सर्वमात्मैव ब्रह्मैव तथाच श्रुतिशासनम् ॥ २८ ॥**

न तस्येत्यादिना गतिनिषेधाच्च न तस्मिन्गतिरित्याह । **नैवेति** । इदं सर्वं यदयमात्मा ब्रह्मैवेदं सर्वमित्यादिश्रुतिविरोधाच्च न ब्रह्मात्मनि गतिरित्याह । **सर्वमिति** ॥ २८ ॥

**तमोमात्रातिरेकेण व्यवधानान्तरं न च ॥**
**यस्मादस्ति ततो मुक्तौ नाऽऽत्मनो गतिरिष्यते ॥ २९ ॥**

किंच ब्रह्मात्मनोरज्ञानमेव व्यवधानं तच्च ज्ञानादपनीयते तत्कुतोऽत्र गतिरित्याह । **तमोमात्रेति** ॥ २९ ॥

**अध्यात्मादिपरिच्छेदाद्यथोक्तोपासनाश्रयात् ॥**
**विमुच्यमानः क्वतस्त्वं गमिष्यसि वदाऽऽशु मे ॥ ३० ॥**

भर्तृप्रपञ्चपक्षं निराकृत्य स्वपक्षमनुवर्तयन्निति इत्यादिवाक्यार्थमुक्तमनुवदति । अध्यात्मादीति । निःसंदिग्धमुत्तरं श्रोतुः सुखकरमिति दर्शयितुमाशुशब्दः ॥३०॥

**नाहं तद्भगवन्वेद यत्र यास्याम्यतः परम् ॥**
**देवतावर्त्मना नाहं गन्तव्यं वेद्मि किंचन ॥ ३१ ॥**

प्रत्युक्तिमादत्ते । **नाहमिति** । तां व्याचष्टे । **देवतेति** । तदुपास्तिद्वारेत्यर्थः ॥३१॥

**देवतावाप्तिमात्रं हि त्वत्तः प्राक्श्रुतवानहम् ॥**
**उक्तोपासाफलं नातो गन्तव्यं वेद्मि किंचन ॥ ३२ ॥**

तदुक्तमपि कस्मान्न बुध्यसे तत्राऽऽह । **देवतावाप्तीति** । भवता तावन्मात्रस्योक्तत्वादिति हिशब्दार्थः । तदतिरिक्तमपि परंपरयोपास्तिफलं ब्रह्मत्वाख्यं मया विवक्षितमित्याशङ्क्याऽऽह । **नात इति** । अभिप्रायमात्रेण विनोक्तिमतिगम्भीरं वस्तु दुर्ज्ञानमिति भावः ॥ ३२ ॥

**इत्युक्तवन्तं प्रत्याह तद्वक्ष्यामि तवाधुना ॥**
**मुच्यमानोऽथ यत्र त्वं गमिष्यसि नराधिप ॥ ३३ ॥**

अथेत्याद्यादत्ते । **इत्युक्तवन्तमिति** । राज्ञो जिज्ञासानन्तर्यमथशब्दार्थः ॥ ३३ ॥

**अविद्यामात्रविध्वस्तौ यतोऽनाप्तवदाप्यते ॥**
**गमिष्यसीत्यतो वक्ति स्वास्थ्यं यातो यथा तथा ॥ ३४ ॥**

गमिष्यसीत्युक्तिरयुक्ता परविषये गतेरपास्तत्वादित्याशङ्क्याऽऽह । **अविद्येति** । तत्र लौकिकदृष्टान्तमाह । **स्वास्थ्यमिति** । स्वतः सिद्धमेव स्वास्थ्यं ज्वरादिप्रतिबद्धमौषधादिना तद्विगमे तत्प्राप्तश्चैत्रो व्यपदिश्यते तथा ब्रह्म नित्याप्तमपि व्यवधानाविद्यानिरासात्प्राप्स्यसीति मुनिनोक्तो राजेत्यर्थः ॥ ३४ ॥

**अतोऽवगतिरेवात्र गतित्वेन विवक्ष्यते ॥**
**प्राप्तोऽस्मीति यतो ज्ञानजन्ममात्रं प्रवक्ष्यति ॥ ३५ ॥**

अविद्याध्वंसाद्ब्रह्माप्तिश्चेत्कथं गतिशब्दप्रयोगस्तत्राऽऽह । **अत इति** । प्रसिद्धाया गतेरयोगादित्यर्थः । प्रकृतं वाक्यं सप्तम्यर्थः । गतिशब्देन ज्ञानोक्तौ वाक्यशेषमनुग्राहकमाह । **प्राप्त इति** ॥ ३५ ॥

**इन्धो नामैष पुरुषो दक्षिणेऽक्षणि यः स्थितः ॥**
**आदित्यान्तर्गतो देवो व्याख्यातायतनादिकः ॥ ३६ ॥**

अथेत्यादिना गन्तव्योक्तिं प्रतिज्ञाय तां विना किमिति जागरिताद्युक्तिरित्याशङ्क्य तादर्थ्येनेति मत्वा जाग्रदभिमानिनं विश्वं दर्शयति । **इन्धो नामेति** । चक्षुरेवाऽऽयतनमित्यादिनेति शेषः । आदिपदात्प्रतिष्ठोपनिषदावुक्ते ॥ ३६ ॥

---

१ क. ख. ग. °णेऽक्षिणि ।

**इध्यतेऽहर्निशं यस्मादिन्धनामा ततः पुमान् ॥**
**श्रुत्येह दृष्टोऽतिशयः कश्चित्स्याद्दक्षिणेऽक्षणि[1] ॥ ३७ ॥**
**अन्नं वा वीर्यवद्दृष्टं पुंसां प्रायेण दक्षिणम् ॥**
**दक्षिणाक्षिग्रहस्तस्माद्भोक्तृत्वप्रतिपत्तये ॥ ३८ ॥**

विश्वे जागरिताभिमानिनि कथमिन्धशब्दस्तत्राऽऽह । **इध्यत इति** । स्थूलार्थभोक्तृत्वेन सदा जागरे स्फूर्तेरित्यर्थः । दक्षिणेऽक्षन्निति विशेषे निमित्तद्वयमाह । **श्रुत्येति** । विश्वस्य पुरस्वामिनो भोक्तृत्वं लौकिकवत्क्वचिद्व्यक्तस्य वक्तव्यं दक्षिणे चक्षुषि तद्व्यक्तिः श्रुत्यनुभवसिद्धा तेन तद्भोक्तृत्वसिद्धये विशेषोक्तिरिति फलितमाह । **भोक्तृत्वेति** ॥ ३७ ॥ ३८ ॥

**दक्षिणेऽक्ष्णीन्धनामाऽयं पुमान्भोक्तेति यं विदुः ॥**
**इन्धं सन्तं तमात्मानमिन्द्रनाम्ना प्रचक्षते ॥ ३९ ॥**
**प्रत्यक्षनामग्रहणं परिहृत्य परोक्षतः ॥**
**परोक्षनामग्रहणप्रिया देवा यतस्ततः ॥ ४० ॥**

तमित्याद्यवतारयन्नेतमित्यस्यार्थमाह । **दक्षिण इति** । अथ वाक्यमादाय व्याकरोति । **इन्धमिति** । परोक्षप्रिया इत्यादेरर्थमाह । **परोक्षेति** । तस्मादिन्द्रनाम्ना प्रचक्षत इति संबन्धः ॥ ३९ ॥ ४० ॥

**परोक्षनामग्रहणे प्रीयन्ते देवता यतः ॥**
**तस्मादाचक्षते नाम पारोक्ष्येणैव[2] मानवाः ॥ ४१ ॥**

अत्र लोकप्रसिद्धिं हिशब्दोपात्तामाह । **परोक्षनामेति** ॥ ४१ ॥

**मा ज्ञासिष्ट कथं नाम नामतत्त्वं बहिर्जनः ॥**
**परोक्षनामग्रहणं तेन देवस्य रोचते ॥ ४२ ॥**

केनाभिप्रायेण परोक्षनामग्रहणं देवता रोचयन्ते तत्राऽऽह । **मा ज्ञासिष्टेति** ॥ ४२ ॥

**प्रत्यक्षनामग्रहणं प्रद्विषन्ति जगत्यपि ॥**
**श्रेयांसोऽमुकमिश्रास्त इत्युक्तिं कामयन्ति च ॥ ४३ ॥**

प्रत्यक्षद्विष इत्यस्यार्थमाह । **प्रत्यक्षेति** । देवतावदित्यपेरर्थः । परोक्षनामग्रहणे च तेषामस्ति प्रीतिरित्याह । **अमुकेति** ॥ ४३ ॥

**तस्यैवान्नपतेर्जाया येयं सव्येऽक्ष्णि संस्थिता ॥**
**भोग्यत्वात्सा विराडुक्ता तद्भोक्ता दक्षिणाक्षिगः ॥ ४४ ॥**

अथैतदित्यादेरर्थमाह । **तस्येति** । अन्नपतित्वं भोक्तृत्वमत एव तद्भोक्तेत्युक्तम् । पत्न्या विराट्पदवाच्यत्वे हेतुमाह । **भोग्यत्वादिति** ॥ ४४ ॥

---

१ क. ख. °णेऽक्षिणि । २ ग. परोक्षेणैव ।

एकस्यैव हि देवस्य विभागः स्थानदेवतः ॥
अग्नीषोमात्मना श्रुत्या ध्यानार्थमिह भण्यते ॥ ४५ ॥

इन्द्रेन्द्राण्योस्तर्हि भोक्तृभोग्ययोर्भेदः स्वीकृतो नेत्याह । **एकस्येति** । स्थानं चक्षुर्द्वयमवस्थाद्वयं च स्थानभेदादौपाधिके भेदे प्रसिद्धिं वक्तुं हिशब्दः । विभागोक्तिफलमाह । **अग्नीति** ॥ ४५ ॥

नानयोर्व्यतिरेकोऽस्ति भोक्तृभोग्यात्मनोः क्वचित् ॥
प्रधानगुणभावेन सर्वत्रैते व्यवस्थिते ॥ ४६ ॥

भेदो ध्यानार्थश्चेत्किमिति स स्वतो न स्यादित्याशङ्क्याऽऽह । **नानयोरिति** । वस्तुतो भेदाभावेऽपि तत्प्रतीतिरौपाधिकभेदवशादित्याशयेनाऽऽह । **प्रधानेति** । सर्वत्रेत्यवस्थाद्वयमुच्यते ॥ ४६ ॥

तयोः समागमश्चास्मिन्हृद्यन्तस्थे सुषौ मिथः ॥
संस्तुतोऽत्रेति संस्तावो हृद्याकाश इहोच्यते ॥ ४७ ॥

तयोरित्यादि व्याचष्टे । **तयोरिति** । अतश्च हृदयाकाशः संस्ताव इति शेषः । कथं तस्य तत्त्वं तदाह । **संस्तुत इति** । मिथः संगतिं गच्छत इति यावत् ॥ ४७ ॥

ऊर्ग्रसो लोहितस्यात्र पिण्डो यः सोऽन्नमेतयोः ॥
अन्नं दामेति यत्पूर्वं व्याख्यातं शिशुबन्धनम् ॥ ४८ ॥

अथैनयोरित्यादेरर्थमाह । **ऊर्ग्रस इति** । अत्रेति हृदयोक्तिः । इन्द्रेन्द्राण्योरग्नीषोमयोर्विश्वतैजसयोरन्नं शिशुब्राह्मणेऽप्युक्तमित्याह । **अन्नमिति** । तदेवात्रोक्तमन्नमिति संबन्धः ॥ ४८ ॥

मिथो नाडीशतानद्धं तयोः प्रावरणं तथा ॥
तज्जालकमिवाऽऽभाति बहुच्छिद्रत्वसाम्यतः ॥ ४९ ॥

अथैनयोरित्यादि[1] व्याचष्टे । **मिथ इति** । यथोक्तमन्नं यथा तयोः स्थितिकरं तथा बहुनाडीयुक्तं तदेव परिधानस्थानीयमपि शतं चैका चेत्यादिश्रुतेरित्यर्थः । लोहितपिण्डस्य गवाक्षवद्भाने हेतुमाह । **बह्विति** । प्रसिद्धं हृदयस्य बहुच्छिद्रत्वं तस्य ह वा एतस्य हृदयस्येत्यादिश्रुतेरित्यर्थः ॥ ४९ ॥

तयोः संचरतोर्मार्गो यैषोर्ध्वा हृदयाद्गता ॥
जाग्रद्देशाक्षये ज्ञेया नाडी स्वप्नाख्यभूमितः ॥ ५० ॥

अथैनयोरेषेत्यादि व्याकरोति । **तयोरिति** । संचरणफलाभावान्मार्गवैयर्थ्यमित्याशङ्क्याऽऽह । **जाग्रदिति** । अथैतदित्यादिना तैजसस्य व्याख्यानमितो मन्तव्यम् ॥ ५० ॥

---

१ घ. 'योरेतदित्या' ।

**अन्नस्य प्रविवेकार्थं भोक्तुः सौक्ष्म्यार्थमेव च ॥**
**नाडीनां परिणाहोऽथ सम्यक्श्रुत्येह वर्ण्यते ॥ ५१ ॥**

यथेत्यादेस्तात्पर्यमाह । **अन्नस्येति** । विश्वतैजसयोरन्नविशेषो भोक्तुः सूक्ष्मतेत्येतदुक्त्यर्थं नाडीपरिमाणं दृष्टान्तेनाऽऽहोत्तरा श्रुतिरित्यर्थः । विश्वतैजसयोरुक्त्यानन्तर्यमथशब्दार्थः । इहेति प्रकृतवाक्यकथनम् ॥ ५१ ॥

**नाड्योऽतिसूक्ष्माः पुंसोऽस्य व्यवहारप्रसिद्धये ॥**
**सहस्रभेदसंभिन्नकेशैकांशसमा हिताः ॥ ५२ ॥**

तदक्षराणि व्याचष्टे । **नाड्य इति** । व्यवहारः स्वप्नजाग्रद्गमनादिः । समासे हिता इति व्याख्यानमसमासे तासां सूक्ष्मत्वप्रसिद्ध्यर्थो हिशब्दः ॥ ५२ ॥

**नोपमेह यतस्तासां सौक्ष्म्ये जगति विद्यते ॥**
**तस्मात्केशविभागोऽयं नाडीसौक्ष्म्यार्थमुच्यते ॥ ५३ ॥**

केशस्यातिसौक्ष्म्यात्कथं सहस्रधा भेदः कथंतरामेकस्य भेदस्य नाडीसौक्ष्म्ये दृष्टान्तता तत्राऽऽह । **नोपमेति** । उच्यते कल्प्यत इति यावत् ॥ ५३ ॥

**यथा संचरणी नाडी प्रोक्तेयं देवतात्मनोः ॥**
**देवतानां तथाऽन्यासां नाड्यो ज्ञेयाः सहस्रशः ॥ ५४ ॥**

यैषेत्यादिना नाडीमेकामुपक्रम्य कथं भूयस्यस्ता दृष्टान्तेनोच्यन्ते तत्राऽऽह । **यथेति** ।
**उक्तं हि—**

"एकोनत्रिंशल्लक्षाणि तथा नव शतानि च ।
षट्पञ्चाशद्विजानीयात्सिरा धमनिसंज्ञिताः" इति ।

देवतात्मनोरिन्द्रेन्द्राण्योर्विश्वतैजसयोरित्येतत् । देवतानां चक्षुरादिकरणानामित्यर्थः ॥ ५४ ॥

**शब्दाद्यन्नवहाः सूक्ष्माः श्रोत्रादिकरणाश्रयाः ॥**
**देवता देवतात्मानं तर्पयन्तीह ताः सदा ॥ ५५ ॥**

नाडीनामुपयोगप्रकारमाह । **शब्दादीति** । ताः सूक्ष्मा नाड्यः करणाश्रिता विषयान्भोक्तारं प्रापयन्त्यः स्वाश्रयकरणानि तद्द्वाराऽन्तःकरणं तदवच्छिन्नमात्मानं व्यवहारभूमौ प्रीणयन्तीत्यर्थः ॥ ५५ ॥

**अतिसूक्ष्माभिरेताभिर्जग्धमन्नं समास्रवत् ॥**
**देवता आस्रवत्येतद्व्याप्नोत्येतद्यथोदितम् ॥ ५६ ॥**

एताभिरित्यादि व्याचष्टे । **अतिसूक्ष्माभिरिति** । एतद्धि जग्धमन्नं त्रेधा परिणमते

---

१ ग. भण्यते । २ घ. 'ख्यातम' ।

तत्र पूर्वोक्तं सूक्ष्ममेतदन्नमुक्ताभिर्नाडीभिर्देहं व्याप्नुवद्यथोक्ताः सर्वदेवता व्याप्नोतीत्यर्थः। आस्रवतीत्यस्य व्याख्या व्याप्नोतीति ॥ ५६ ॥

**सर्वास्वेव हितास्वासु सर्वा अध्यात्मदेवताः ॥**
**चरन्त्यूर्ध्वसपूर्णासु भोगार्थं पुरुषस्य तु ॥ ५७ ॥**

उक्तान्नरसस्य देवताव्यापित्वे तासामेव भोक्तृत्वं स्यादित्याशङ्क्याऽऽह । **सर्वास्विति** । हितासु नाडीष्विति शेषः ॥ ५७ ॥

**स्वचिदाभाससंव्याप्तिः पुंभोगः सुखदुःखयोः ॥**
**सोऽप्यस्य देवतातन्त्रो देवताश्चान्नसंश्रयाः ॥ ५८ ॥**

पुंसोऽविक्रियस्य कुतो भोगो यथाऽऽह—"मण्डलं तस्य मध्यस्थ आत्मा दीप इवाचलः" इति, तत्राऽऽह । **स्वेति** । किंकारणो भोगो दर्शितस्तत्राऽऽह । **सोऽपीति** । इन्द्रियाणां किं कारणं तत्राऽऽह । **देवताश्चेति** ॥ ५८ ॥

**अन्नं नाड्याश्रयं सूक्ष्मं तच्छ्रुत्येहोपवर्ण्यते ॥**
**एताभिरित्यतो यावच्छारीरादिति चोदना ॥ ५९ ॥**

तदाश्रयान्नस्याऽऽश्रयमाह । **अन्नमिति** । उक्तान्नविषयत्वेन श्रुतिं पातयति । **तदिति** । तदन्नमिह तैजसे स्थितिकरमेताभिरित्यारभ्य यावच्छारीरादात्मन इत्यन्तं वाक्यं तावतोच्यत इत्यर्थः ॥ ५९ ॥

**प्रविविक्ततरोऽन्नांशस्तर्पयन्प्राणदेवताः ॥**
**प्राप्नोति लिङ्गमाहारः स तस्येत्यभिधीयते ॥ ६० ॥**

तस्मादित्यादेरर्थमाह । **प्रविविक्तेति** । यो यथोक्तान्नांशः स प्राणदेवताः करणान्यन्तःकरणं च लिङ्गाख्यं यस्मात्प्रीणयति तस्माद्यस्य प्रविविक्ततरो भवत्याहारः स लिङ्गात्मा तैजसस्तथेति बहुव्रीहिणा लिङ्गस्याऽऽहारः स इति गम्यत इत्यर्थः ॥ ६० ॥

**चीयमानादितो देहाद्रसाद्यन्नेन भौतिकात् ॥**
**प्रविविक्तताहारो लिङ्गात्माऽयं पुरोदितात् ॥ ६१ ॥**

अस्मादित्यादेरर्थमाह । **चीयमानादिति** । रसाद्यन्नेन तद्धेतुना तेनेति यावत् ॥ ६१ ॥

**रसादिः प्रविविक्तः स्यात्पुरीषादिव्यपेक्षया ॥**
**रसादेरपि सूक्ष्मोऽयमाहारो लिङ्गतृप्तिकृत् ॥ ६२ ॥**

कथमन्नस्य प्रविविक्तत्वं तदाह । **रसादिरिति** । तथाऽपि कथं प्रविविक्ततरत्वं तदाह । **रसादेरिति** ॥ ६२ ॥

**यत एवमतः प्राह तल्लिङ्गं स्थूलदेहतः ॥**
**प्रविविक्तताहारं श्रुतिः सूक्ष्मान्नसंस्थितेः ॥ ६३ ॥**

---

१ ख. पठति ।

तस्य प्रविविक्ततरत्वे फलितमाह । यत इति । अतःशब्दार्थं स्फुटयति । सूक्ष्मेति ॥ ६३ ॥

**यतोऽतिसूक्ष्मो लिङ्गात्मा नातोऽयं स्थूलदेहवत् ॥**
**देहाद्देहान्तरं गच्छन्केनचित्प्रतिहन्यते ॥ ६४ ॥**

लिङ्गस्यापि स्थूलवद्देहत्वान्न सूक्ष्मता तत्कुतोऽस्य प्रविविक्ताहारतरतेत्याशङ्क्य तत्सौक्ष्म्ये गमकमाह । यत इति ॥ ६४ ॥

**इवेत्यनर्थकं केचिदेवार्थेन विरोधतः ॥**
**एवार्थस्योपमामन्य इवार्थे चावधारणम् ॥ ६५ ॥**

प्रकृतवाक्यस्थमिवशब्दं व्याख्यातुं पूर्वपक्षमाह । इवेत्यनर्थकमिति । तत्र भर्तृप्रपञ्चोक्तं सिद्धान्तमाह । एवार्थस्येति । लिङ्गात्मा प्रविविक्ताहारतर एवेत्यवधार्यते तस्योपमामिवशब्दार्थमाहुरिति योजना । उक्तं हि—यथा खलु बाह्यस्य पिण्डस्योपचयार्थमाहारस्तथो तस्यापीत्येतस्मात्सामान्यात्प्रविविक्ताहारतर इवैवेति । इवैव भवतीत्यस्य स्वाभिप्रेतमर्थमाह । इवार्थे चेति । एवेत्यवधारणमिवेत्यस्मिन्नर्थे द्रष्टव्यम् । तथाच यथा प्रविविक्ताहारो विश्वस्तथाऽयमपि तैजसो न प्रविविक्ताहार एव किंतु प्रविविक्ताहारतर इव यथाच कारणात्मा प्रविविक्ताहारतर एव न तथा लिङ्गात्मा किंतु प्रविविक्ताहारतर इवेति द्वयोरिवैवशब्दयोरर्थः ॥ ६५ ॥

**लिङ्गाहारादप्यणीयान्यतः प्राज्ञात्मनस्ततः ॥**
**उपमार्थमिवेत्येतत्पदमत्र प्रयुज्यते ॥ ६६ ॥**

किमिति कारणात्मवत्तैजसस्य न प्रविविक्ताहारतरत्वमेव तत्राऽऽह । लिङ्गेति । प्राज्ञात्मन आहार इति शेषः । ततो न लिङ्गस्य प्रविविक्ताहारतरत्वमेवेत्यर्थः । इवशब्दार्थवत्त्वं निगमयति । उपमार्थमिति ॥ ६६ ॥

**कदम्बपुष्पवत्सैषा देवता हृदयाश्रया ॥**
**बहिर्गतासु नाडीषु विषक्ता हृदयादधि ॥ ६७ ॥**

उक्तसूत्रस्य सर्वजगद्व्याप्तिं भर्तृप्रपञ्चप्रक्रिययाऽऽचक्षाणः सैषा सूक्ष्मा देवताऽन्तर्हृदये कदम्बगोलकवद्धृदयान्नाडीषु समन्तान्निःसृतासु विषक्तेति तद्भाष्यं विभजते । कदम्बेति ॥ ६७ ॥

**यथेयं देवता सर्वास्तथाऽन्या अपि देवताः ॥**
**साधारणत्वात्सर्वासां कार्यस्य करणस्य च ॥ ६८ ॥**

एवमेकैका देवतेतिभाष्यार्थमाह । यथेति । यथा हृदयादारभ्य बहिर्विप्रसृतासु नाडीषु सूत्राख्यदेवता विषक्तोक्ता तथा सर्वा अप्यन्या देवतास्तासु विषक्ता भवन्तीत्यर्थः ।

---

१ क. घ. 'रवे' । २ घ 'थाऽस्या' । ३ घ. 'त्राद्या दे' ।

सर्वेषां कार्यकरणस्य साधारणत्वादितिहेतुभाष्यार्थमाह । **साधारणत्वादिति ।** करणशब्देन गोलकादिस्थानं देवताशब्देनेन्द्रियाण्युक्तानि ॥ ६८ ॥

**तत्रैकस्या यदा कार्यं दृष्ट्यादि स्यादुपस्थितम् ॥**
**गुणभावं तदा यान्ति सर्वास्तां प्रति देवताः ॥ ६९ ॥**

सर्वेन्द्रियाणां सर्वदेहव्यापित्वे रूपादिज्ञानं संकीर्णं स्यादित्याशङ्क्य यस्या देवताया यदा यद्दर्शनादि कार्यं तदा सर्वासामितरासां तदङ्गत्वमिति भाष्यं व्याचष्टे । **तत्रेति** ॥ ६९ ॥

**नाड्यन्तरेष्वपि तथा सर्वासां संहतत्वतः ॥**
**एष एव क्रमो ज्ञेयः प्राधान्यगुणभावयोः ॥ ७० ॥**

नाड्यन्तरेऽपि या यदा देवताऽपेक्ष्यते सा तदा कृत्स्नदेवताविभवमङ्गीकृत्योपतिष्ठत इतिभाष्यार्थमाह । **नाड्यन्तरेष्विति ।** अनुक्तेन्द्रियेष्विति यावत् ॥ ७० ॥

**एवं च सति यावत्यो नाड्यो हृदयबन्धनाः ॥**
**संवत्सराश्च तावन्तस्ते प्रजापतयोऽग्नयः ॥ ७१ ॥**

अध्यात्मनाडीद्वारा देवताव्याप्तिमुक्त्वा हृदयबन्धनतया नाडीप्रसङ्गेन प्रदेशान्तरस्थामुपास्तिं स्मारयति । **एवं चेति ।** हृदयबन्धनत्वेन नाडीप्रसङ्गे[1] तास्वहोरात्रात्मना दृष्टासु प्रजापतिरूपाग्निशब्दितेष्टकादृष्टिः कार्या यावन्तो नाडीभेदास्तावन्तः कृत्स्नाः संवत्सराः प्रजापतयोऽग्नय इत्युक्तेरित्यर्थः ॥ ७१ ॥

**प्रतिभागं समाप्तत्वात्पूर्वोक्तस्येह वस्तुनः ॥**
**देवताऽतो यथाऽध्यात्ममधिभूतं तथैव सा ॥ ७२ ॥**
**अधिदैवं च विभ्वीयं द्वैतैकत्वेने विष्ठिता ॥**
**यथाऽस्य नाड्यः पुंसः स्युरध्यात्मं सर्वतो गताः ॥ ७३ ॥**
**अधिभूतं तथाऽस्यैव वायुमय्यः समन्तगाः ॥**
**एतस्मादेव निःसृत्य शरीरात्सर्वतो गताः ॥ ७४ ॥**

प्रासङ्गिकीमुपास्तिं ब्रह्मविद्यायै स्मारयित्वा पूर्वोक्तामध्यात्मदेवताव्याप्तिं दृष्टान्तीकृत्याधिभूताधिदैवयोरपि तद्व्याप्तिमाह । **प्रतिभागमिति ।** वस्तुनः सूत्रस्येति शेषः । उक्तां देवताव्याप्तिं निगमयति । **विभ्वीति । यथाऽऽहुः**—प्रत्यवयवं कृत्स्नस्य परिसमाप्तत्वात्सैषा यथाऽध्यात्ममेवमधिभूतमधिदैवं चेत्यादि । तदेवं देवतायाः सर्वव्याप्तिमुक्त्वा नाडीनामध्यात्ममुक्तव्याप्तिदृष्टान्तेनाधिभूतादावपि व्याप्तिमाह । **यथेति । उक्तं हि**— यथाऽध्यात्मं नाड्यः समन्ताच्छरीरवर्तिन्य एवमस्यैव पुरुषस्याऽऽध्यात्मिकस्याधिदैवात्मना वक्ष्यमाणस्य प्राणैर्नाड्यो वायुमय्य इति । उत्तरार्धं प्रपञ्चयति । **एतस्मादिति ।**

१ घ. 'ङ्गेनाऽऽस्व' । २ क. ग. 'न धिष्ठि' । ३ घ. 'धिभूताधिदैवतात्म' । ४ ख. 'णस्य ना' ।

उक्तं च—एतस्मादेव शरीरादभिनिःसृत्य सर्वं जगदापूर्यावस्थिता इति ॥ ७२ ॥ ७३ ॥ ॥ ७४ ॥

अधिभूतात्मनैवायं नाडीलक्षणवर्त्मना ॥
आपूर्येदं जगत्सर्वं स्थित आध्यात्मिकः पुमान् ॥ ७५ ॥

नाडीनां देहाद्बहिर्व्याप्तिः किमर्थेत्याशङ्क्य तद्द्वारा क्षेत्रज्ञस्य व्याप्त्यर्थमित्याह[1] । अधिभूतेति ॥ ७५ ॥

नाड्य आध्यात्मिकस्येव ह्यधिदैवात्मनस्तथा ॥
विराजो रश्मयो ज्ञेयाः प्रत्यंशावसितास्तथा ॥ ७६ ॥

आध्यात्मिकस्य पुंसो नाडीवदाधिदैविकस्यापि नाडीस्थानीयरश्मीनां व्याप्तिमाह । नाड्य इति । युक्ता च विराजो रश्मीनां सर्वतो व्याप्तिस्तदंशादित्यरश्मीनां व्याप्तिदर्शनादिति हिशब्दार्थः । प्रत्येकं सर्वासु व्यष्टीषु वैराजरश्मीनां समाप्तिरपि ज्ञेयेत्याह । प्रत्यंशेति ॥ ७६ ॥

आध्यात्मिकस्येव पुंसः कृत्स्नाऽध्यात्माधिभूतयोः ॥
अनन्ताभिन्नकार्येषु समाप्तिर्देवतात्मनः ॥ ७७ ॥

आध्यात्मिकस्य पुंसो नाडीद्वारा सर्वव्याप्तिवदाधिदैविकस्यापि सा रश्मिद्वारेत्युपसंहरति । आध्यात्मिकस्येति । यथाऽऽहुः—यथैवाऽऽध्यात्मिकस्य प्रत्यवयवं कार्त्स्न्येन समाप्तिरेवं वैराजस्याप्यात्मनः प्रत्यवयवमाध्यात्मिकाधिभूताधिदैविकेष्विति ॥ ७७ ॥

आध्यात्मिकं परिच्छेदमुक्तदर्शनवर्त्मना ॥
देवतासूपसंहृत्य विराज्यपि च देवताः ॥ ७८ ॥
विराजं चोपसंहृत्य प्राणविज्ञानविग्रहे[2] ॥
हिरण्यगर्भे तं चापि सर्वकारण आत्मनि ॥ ७९ ॥

परप्रक्रियामादेयामुक्त्वा स्वमते विश्वाद्युक्तेर्ज्ञानहेतुताक्रमं दर्शयति । आध्यात्मिकमिति । उक्तव्याप्तिद्वारा शारीरं परिच्छेदमग्न्यादिदेवतासु ताश्च विराजि तं च सूत्रे तच्च कारणे तदप्यद्वये प्रतीच्युपसंहृत्य पूर्णात्मना तिष्ठेदित्यर्थः ॥ ७८ ॥ ७९ ॥

अध्यात्मदेवताः सर्वा हृदि नीत्वाऽऽत्मनस्ततः ॥
हृदयादुक्तनाडीभिः संदध्यात्सूर्यरश्मिभिः ॥ ८० ॥
रविहृन्मध्यगं यायात्ततो रश्मिभिरावृतः[3] ॥
हिरण्यगर्भमात्मानं ततस्तत्कारणं बुधः ॥ ८१ ॥

उक्तमेव प्रपञ्चयन्विश्वस्य[4] वैश्वानरादिशब्दितस्य विराजस्तैजसे सूत्रात्मन्युपसंहार-

१ क. ख. °र्थमाह । २ क. ख. °हे । हैर° । ३ ख. °राहतः । ४ ख. °श्वस्यैव वै° ।

क्रममाह । **अध्यात्मेति** । चक्षुरादिसहितादित्यादिदेवता हृदये प्रजापतिरूपे संहृत्य ततो निर्गतनाडीभी रश्मिभिश्चान्योन्यात्मभूतैः करणै रविस्थं हृदयस्थं च लिङ्गमेकत्वेनानुसंदध्यात्ततस्तात्पर्यवानुक्तनाडीरश्मिद्वारा विवेकबुद्ध्या[1] मण्डलहृदयस्थं सूत्रमात्मानं गच्छतीत्यर्थः । आत्मनो हृदयादिति संबन्धः । विश्वस्य तैजसमात्रत्वानुसंधानानन्तरं तत्कारणमव्याकृतादिशब्दं विवेकी गच्छतीति तैजसस्य प्राज्ञे लयमाह । **तत इति** ॥ ८० ॥ ८१ ॥

**वैश्वानरात्तदात्मानं[3] प्राप्तस्य हृदि तैजसम् ॥**
**हिरण्यगर्भे तं चापि प्राणात्मन्युपसंहरेत् ॥ ८२ ॥**

उक्तं क्रमं बुद्धिसौकर्यार्थं संक्षिपति । **वैश्वानरादिति** । तच्छब्दो वैश्वानरवाची । प्राप्तस्याध्यात्मादिपरिच्छेदो निवर्तते मुमुक्षोरिति शेषः । स च सूत्रस्य कारणे संहृतो द्रष्टव्यः ॥ ८२ ॥

**प्राणशब्देन चाप्यत्र कारणात्माऽभिधीयते ॥**
**बीजं कार्यस्य सर्वस्य प्राज्ञश्चेति निरुच्यते ॥ ८३ ॥**

प्राणात्मन्युपसंहारोऽत्र सूत्रस्योच्यते न कारणात्मनीत्याशङ्क्य प्राणशब्दार्थमाह । **प्राणशब्देनेति** । तैजसस्य प्राज्ञे लयाङ्गीकारात्कथं कारणे तल्लयस्तत्राऽऽह । **बीजमिति** ॥ ८३ ॥

**कार्याणां कारणं मुक्त्वा नान्यत्रास्त्यप्ययो यतः ॥**
**तस्मात्कारणसंप्राप्त्या यायान्नेतीत्यकारणम् ॥ ८४ ॥**

तुरीयस्य सुवर्णघनवद्विज्ञानघनस्याऽऽप्तेरिष्टत्वात्तदेवोच्यतां कृतं स्थूलसूक्ष्मजगद्रूपविश्वतैजसयोः प्राज्ञे लयोक्त्येत्याशङ्क्याऽऽह । **कार्याणामिति** ॥ ८४ ॥

**साश्रयैः करणैर्हीनो ग्रस्ताध्यात्माधिदैवतः ॥**
**प्राणात्मा एक एवाऽऽस्ते प्रज्ञानघनविग्रहः ॥ ८५ ॥**

अकार्यकारणं तुरीयं प्राप्तस्य विदुषः स्वरूपं प्रपञ्चयति । **साश्रयैरिति** । प्राणस्य कारणस्याऽऽत्मा सत्तास्फूर्तिद इति यावत् । छान्दसास्तु विसंधिमपि क्वचिदिच्छन्ति ॥ ८५ ॥

**निर्विभागात्मनस्तस्य प्राञ्चः प्राणाः पुराऽस्य ये ॥**
**प्राची दिगेव संवृत्तास्तदवच्छेदहानतः ॥ ८६ ॥**
**दक्षिणा दक्षिणे प्राणाः प्रत्यञ्चश्चापि पश्चिमाः ॥**
**उदीची दिगुदञ्चश्च सर्वे सर्वा दिशस्तथा ॥ ८७ ॥**

विश्वतैजसप्राज्ञतुरीयाण्युक्तानि तत्राऽऽद्यावेव श्रुत्युक्तौ न प्राज्ञादीत्याशङ्क्य तस्य

---

१ घ. °वेकं बुद्ध्वा म° । २ घ. °त्मा ग° । ३ क. °त्तमात्मा° ।

प्राचीत्याद्यवतार्य व्याकरोति । **निर्विभागेति** । अध्यात्मादिपरिच्छिन्नाः प्राणाः सर्वासु दिक्षु स्थिताः प्राणशब्दाः । विदुषो हि कारणरूपस्य परिच्छेदनाशात्तत्प्राणरूपं तत्तद्दिङ्मात्रं संवृत्तं ताश्च चरमपर्यायोक्तप्राणे मूलकारणे प्राज्ञे लीयन्ते कारणं तुरीये प्रतीचीत्यर्थः ॥ ८६ ॥ ८७ ॥

**यत्साक्षिकी तमःसिद्धिस्तत्कार्यस्य च लक्ष्यते ॥**
**तद्भावाभावयोरात्मा न कार्यं नापि कारणम् ॥ ८८ ॥**

कारणस्य न प्रतीचि लयस्तस्यैव कारणत्वात्स्वस्मिन्नेव स्वलयायोगादित्याशङ्क्याऽऽह । **यदिति** ॥ ८८ ॥

**तेनैव ह्यात्मनाऽशेषं तद्ध्वान्तं ध्वान्तजं तथा ॥**
**जग्ध्वा नित्यात्मना विद्वान्पूर्णदृष्ट्याऽवशिष्यते ॥ ८९ ॥**

अज्ञानतज्जयोस्तद्भावाभावयोश्च यतः सिद्धिस्तस्य प्रतीचस्तद्वैलक्षण्ये सिद्धे फलितमाह । **तेनैवेति** । एतेन स एष नेति नेत्यादि व्याख्यातम् ॥ ८९ ॥

**एष मार्ग उपन्यस्त ऐकात्म्यज्ञानजन्मने ॥**
**न त्वर्चिरादिवत्तस्य प्राप्तये गतिकल्पना ॥ ९० ॥**

विश्वाद्युक्तिफलमुपसंहरति । **एष इति** । तद्द्वारा मोक्षायेत्यर्थः । मुख्यमार्गं व्यावर्तयति । **न त्विति** ॥ ९० ॥

**आत्मत्वादाप्ततत्त्वोऽयं न देशाद्यन्तरायवान् ॥**
**ज्ञानं मुक्त्वा ततः प्राप्तौ नान्यत्किंचिदपेक्षते[२] ॥ ९१ ॥**

परविदोऽपि गतिरर्चिराद्या वाच्येति केचित्तथा[३]च तदनुगुणा नाडी श्राविेतेत्याशङ्क्याऽऽह । **आत्मत्वादिति** । विद्वानत्र विशेष्यते । तर्हि ज्ञानमपि नापेक्षितव्यमित्याशङ्क्य व्यवधानभङ्गार्थं तदपेक्षेति विवक्षित्वाऽऽह । **ज्ञानमिति** ॥ ९१ ॥

**प्रत्याय्यैवं परात्मानं मुनिराह नराधिपम्[४] ॥**
**प्राप्तोऽस्यभयमित्येवं भयहेतुविनाशतः ॥ ९२ ॥**

जागरादिद्वारा निर्विशेषं ब्रह्म ज्ञापितमिदानीमभयमित्यादेरर्थमाह । **प्रत्याय्येति** ॥ ९२ ॥

**भयहेतुरविद्यैव सा च दुःस्थितसिद्धिका ॥**
**प्रागप्यैकात्म्यविज्ञानादविचारितसिद्धिका ॥ ९३ ॥**

कोऽसौ भयहेतुस्तत्राऽऽह । **भयेति** । विद्याभावं व्यावर्तयति । **सा चेति** । ज्ञानादूर्ध्वं दुःस्थितत्वेऽपि न प्राक्तथेति चेन्नेत्याह । **प्रागपीति** ॥ ९३ ॥

**यतोऽतः प्रत्यग्याथात्म्यभास्वद्विज्ञानभास्कर—**
**प्रसूतिमात्रादेवास्या ध्वस्तिरात्यन्तिकी भवेत् ॥ ९४ ॥**

---

१ ग. लभ्यते । २ ख. 'पेक्ष्यते । ३ घ. 'थाऽत्र त' । ४ क. ख. 'यमात्मानं भ' ।

अविद्यायाः सदा दौस्थ्ये फलितमाह । यत इति ॥ ९४ ॥

**प्राप्तोऽसीति च निर्देशाज्ज्ञानमेवाऽऽत्मनो गतिः ॥**
**ज्ञानादन्या गतिश्चेत्स्यात्प्राप्स्यसीत्येव तं वदेत् ॥ ९५ ॥**

प्राप्तोऽसीति निर्देशस्य तात्पर्यमाह । प्राप्त इति । अर्चिरादिगतिपक्षेऽप्येवं निर्देशः स्यादिति चेत्तत्राऽऽह । ज्ञानादिति । तं राजानमित्येतत् ॥ ९५ ॥

**ज्ञानतुल्याममन्वानो दक्षिणां गुरवे नृपः ॥**
**अभयं त्वामिति प्राह याज्ञवल्क्यं स पार्थिवः ॥ ९६ ॥**

स हेत्यादेरर्थमाह । ज्ञानेति ॥ ९६ ॥

**उचिता दक्षिणैषैव योक्तेहाभयलक्षणा ॥**
**सम्यग्ज्ञानाख्यदानस्य तदन्या संसृतिर्यतः ॥ ९७ ॥**

दक्षिणान्तरेषु सत्सु कथं ज्ञानयोग्यदक्षिणाभावस्तत्राऽऽह । उचितेति । इहेत्याचार्यग्रहणम् । दक्षिणान्तरस्यानौचित्यमाह । तदन्येति । न हि सगुणायामपि विद्यायां योग्या दक्षिणाऽस्ति किमु वक्तव्यमितरस्यां यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूय इति श्रुतेरिति भावः ॥ ९७ ॥

**यच्चाभयं वेदयस इति प्रत्यूचिवान्नृपः ॥**
**तत्तमोध्वस्तितः कार्यं नान्यदस्तीति लिङ्ग्यते ॥ ९८ ॥**

यो न इत्यादेस्तात्पर्यमाह । यच्चेति । ज्ञानस्याज्ञाननिवृत्त्यतिरेकिफलं देशान्तरप्राप्त्यार्यत्तं नास्ति तन्न गतिरिति वर्तमानापदेशात्सिद्धमित्यर्थः ॥ ९८ ॥

**अभयस्य प्रदातृत्वान्नन्वत्राप्ताभयो गुरुः ॥**
**अभयं त्वामिति कथं राज्ञाऽऽशीस्तं प्रतीर्यते ॥ ९९ ॥**

राज्ञा प्रयुक्तामाशिषमाक्षिपति । अभयस्येति ॥ ९९ ॥

**इत्यस्य परिहारोक्तिं केचिदाचक्षते बुधाः ॥**
**शब्दादवाप्तमभयं न तु साक्षाच्चकार तत् ॥ १०० ॥**

भर्तृप्रपञ्चोक्तं परिहारमाह । इत्यस्येति । तामेव व्यनक्ति । शब्दादिति ॥ १०० ॥

**साक्षात्करणसिद्ध्यर्थमतो राजाऽब्रवीन्मुनिम् ॥**
**अभयं त्वामिति वचस्तद्ध्यस्याप्राप्तमुच्यते ॥ १०१ ॥**

परोक्षज्ञानित्वे गुरो राजाशीः सफलेति फलितमाह । साक्षादिति । तदपि तेन प्राप्तमेवाऽऽचार्यत्वात् "उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः" इति स्मृतेरित्याशङ्क्याऽऽह । तद्धीति । नास्याभयं साक्षादाप्तमन्यथा मुक्तस्यानुशासनायोगात् ।

---

१ ख. 'यत्तन्नास्ति । २ घ. मुक्तेर्ज्ञानस्या' ।

उक्तं हि—प्राप्तमभयं याज्ञवल्क्येन नाप्राप्तं न तु साक्षात्कृतमिति । अतो राजाशी-रुचितेत्यर्थः ॥ १०१ ॥

**यदि वा द्विविधो मोक्षो जीवत्येव शरीरके ॥**
**एकः साक्षात्कृतब्रह्मा मृतेरूर्ध्वं च तल्लयः ॥ १०२ ॥**

तैरेवोक्तं परिहारान्तरमाह । **यदि वेति** । यथाऽऽहुर्द्विविधो मोक्षोऽस्मिन्नेव शरीरे साक्षात्कृतब्रह्मा मुक्त इत्युच्यते न ब्रह्मणि लीनस्तस्य शरीरपातोत्तरकालं ब्रह्मणि लयो द्वितीयो मोक्षः स त्वाशासितव्य इति ॥ १०२ ॥

**एवं परिजिहीर्षन्ति न तु न्यायोक्तिरीदृशी ॥**
**प्राप्तोऽसीति मुनेरुक्तेः परिहारो न युज्यते ॥ १०३ ॥**

आत्यान्तिके मोक्षे साधनान्तरेणाऽऽशीर्वादादिना भाव्यमिति मत्वा परोक्तं परिहा-रमुपसंहरति । **एवमिति** । निराकरोति । **न त्विति** । कथं न्यायबाह्या द्विधापरिहा-रोक्तिस्तत्राऽऽह । **प्राप्तोऽसीति** ॥ १०३ ॥

**तज्ज्ञानमात्रमेवोक्त्वा प्राप्तोऽसीति यतोऽवदत् ॥**
**तत्साक्षात्करणान्नान्यस्तल्लयो वाऽत इष्यते ॥ १०४ ॥**

तथाऽपि कथं परिहारयोरन्याय्यत्वं तत्राऽऽह । **तज्ज्ञानेति** । प्रतीचो ब्रह्मत्वस्य स्वतः सिद्धेस्तज्ज्ञानादज्ञानहानिव्यतिरेकेण ब्रह्मसाक्षात्कारस्तल्लयो वा न संभवत्यतो नाऽऽशीर्वादाद्युपायान्तरापेक्षा मोक्षस्यास्तीत्यर्थः ॥ १०४ ॥

**शाब्दविज्ञानमात्रेण नाऽऽचार्यत्वे नियुज्यते ॥**
**श्रोत्रियं ब्रह्मनिष्ठं च गुरुं यायादिति श्रुतेः ॥ १०५ ॥**

यत्तु मुनिना शब्दात्प्राप्तमेव पारोक्ष्येणाभयं ब्रह्म न साक्षात्कृतमिति तत्राऽऽह । **शाब्देति** । परोक्षज्ञानमात्रेणाऽऽचार्यत्वाभावे श्रुतिं प्रमाणयति । **श्रोत्रिय-मिति** ॥ १०५ ॥

**अभयं वेदयसीत्येतन्न चासाक्षात्कृते परे ॥**
**शाब्दमात्रपरिज्ञाने राज्ञो युक्तं प्रभाषितुम् ॥ १०६ ॥**

इतश्च मुनिः साक्षात्कृतब्रह्मैवेत्याह । **अभयमिति** । ब्रह्म वेदयसीत्युक्ते राज्ञस्ता-वत्तत्साक्षात्कारोऽवगम्यते वेदनस्यानुभवत्वात्तेनैव गुरोरपि सोऽनुमीयते भगवता तस्य तत्त्वदर्शित्वविशेषणादित्यर्थः ॥ १०६ ॥

**असाधारणधर्मोत्थं विज्ञानं वस्तुनि प्रमा ॥**
**शब्दमात्रप्रमोत्थं तु न मानं वस्त्वसंश्रयात् ॥ १०७ ॥**

वेदयसीति शाब्दं परोक्षज्ञानमेव ब्रह्मविषयं किं नोच्यते तत्राऽऽह । **असाधार-**

१ ख. 'न्यत्तल्ल' ।

णेति । एवमुत्सर्गेऽपि प्रस्तुते किं जातं तदाह । शब्देति । न हि परोक्षं ज्ञानं वस्त्वनुसरति तस्य साक्षादपरोक्षादित्यादिलक्षणत्वादित्यर्थः ॥ १०७ ॥

साक्षात्कृतैकतत्त्वस्याप्यैकात्म्यमलयं प्रति ॥
किं समाशङ्क्यते येन तदाशीः संप्रयुज्यते ॥ १०८ ॥

यत्तु देहपातोत्तरकालं ब्रह्मणि लयो द्वितीयो मोक्षः स चाऽऽशंसितव्य इति तत्राऽऽह । साक्षादिति । तदाशीर्ब्रह्मणि लयं प्रत्याशीरिति यावत् ॥ १०८ ॥

ज्ञानानुरूपामेवातो दक्षिणां दित्सुरब्रवीत् ॥
अभयं त्वामिति नृपो यथोक्तज्ञानलिङ्गनम् ॥ १०९ ॥

परपक्षासंभवमुक्त्वा स्वपक्षमाह । ज्ञानेति । प्राप्ताभये मुनौ किमित्येवं राजोक्तवान्दक्षिणान्तरं तु देयं तदभावे मौनमुचितमित्याशङ्क्याऽऽह । यथोक्तेति । पूर्वोक्ते ब्रह्मात्मनि ममानुभवान्तं ज्ञानं जातमिति ज्ञापनायैवमुक्तवानित्यर्थः ॥ १०९ ॥

साक्षाज्ज्ञानातिरेकेण नालमन्यद्विमुक्तये ॥
यथा तथाऽसकृत्पूर्वमवोचाम पदे पदे ॥ ११० ॥

यत्त्वात्यन्तिके मोक्षे साधनान्तरेणाऽऽशीर्वादादिना भाव्यमिति तद्दूषयति । साक्षादिति ॥ ११० ॥

भवानप्यहमेवेति यदा साक्षाद्विनिश्चयः ॥
विदेहादि तदा विश्वं त्वत्तः कस्येति कथ्यताम् ॥ १११ ॥

इमे विदेहा इत्यादेरर्थमाह । भवानपीति । त्वत्तोऽन्यस्येति शेषः ॥ १११ ॥

ममेव भवतोऽपीदं न च किंचिदसंगतम् ॥
अभावाच्च त्वदन्यस्य सर्वमात्मनि शासनात् ॥ ११२ ॥

व्यवहारदृष्ट्येदमुक्तं तत्त्वतस्तु नैवमिति राज्ञोऽभिप्रायमाह । ममेति । इदमा परामृष्टमर्थान्तरमङ्गीकृत्योक्तं तदेव नास्तीत्याह । अभावाच्चेति ॥ ११२ ॥

अहं ममेत्यविद्याधीः सहेतुर्नाशिता यदा ॥
पूर्णात्मनि तदा दृष्टे कः कस्मै किं प्रदित्सति ॥ ११३ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके चतुर्थाध्यायस्य
द्वितीयं कूर्चब्राह्मणम् ॥ २ ॥

श्लोकानामादितः समष्ट्यङ्काः—७०५८

त्वं हि मह्यमिमे विदेहा इत्यादिना दक्षिणां दित्समि कथमिदानीमन्यथोक्तिरित्याशङ्क्योक्तं प्रपञ्चयति । अहमिति । अतो व्यवहारदृष्टिमेवावष्टभ्येमे विदेहा इत्यादि राज्ञो वचनमिति शेषः ॥ ११३ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां चतुर्थाध्यायस्य
द्वितीयं कूर्चब्राह्मणम् ॥ २ ॥

---

१ क. ग. 'दित्सामि' । २ ग. प्रणनाम ।

अथ तृतीयं ब्राह्मणम् ।

---

**नामरूपादिमत्कार्यं यः प्रविष्टः स्वमोहजम् ॥**
**जलार्कवदकृत्स्नत्वमापेदेऽविद्यया परः ॥ १ ॥**

जागराद्युक्तिद्वारा राजा याज्ञवल्क्येनाभयं प्रापितस्तत्र किमवशिष्यते यदर्थमुत्तरं ब्राह्मणमित्याशङ्क्य वृत्तं कीर्तयति । **नामेति** । यो[१]ऽधिकृतः परः स्वाज्ञानजबुद्ध्याद्यनुप्रविष्टः स स्वाविद्यया परिच्छिन्नत्वमापन्न इत्युक्तं तन्न पश्यतीत्यादावित्यर्थः ॥ १ ॥

**तदविद्यापनुत्त्यर्थं गार्ग्यकाश्यादिच्छद्मना ॥**
**अपूर्वादिस्वभावोऽयं प्रविष्टः प्रतिपादितः ॥ २ ॥**

अनुप्रवेशो तद्द्वारेणाकात्स्न्यें च जलार्कवदित्युदाहरणं तार्तीयमनूद्य चातुर्थिकमनुवदति । **तदविद्येति** । काश्यादीत्यादिशब्देन याज्ञवल्क्यादिग्रहणम् ॥ २ ॥

**आगमादेवमात्मानं प्रतिपाद्याथ तर्कतः ॥**
**स एव पञ्चमेऽप्युक्तः साक्षाज्जल्पैकवर्त्मना ॥ ३ ॥**

मधुकाण्डार्थमुक्त्वा मुनिकाण्डप्रवृत्तिमुक्तां स्मारयति । **आगमादिति** । तर्कस्य मानानुग्राहकत्वात्तदानन्तर्यमुचितमितिसूचनार्थोऽथशब्दः । तं प्रतिपादयितुं मुनिकाण्डं प्रवृत्तमिति शेषः । पाञ्चमिकमर्थमनुद्रवति । **स एवेति** । साक्षादित्यात्मा विशेष्यते । साक्षादपरोक्षादित्यादिनोक्तलक्षण इत्यर्थः ॥ ३ ॥

**वादन्यायेन तस्यैव प्रतिपत्त्यर्थमञ्जसा ॥**
**षष्ठे क्रमादुपन्यस्तं जाग्रदादिचतुष्टयम् ॥ ४ ॥**

षष्ठप्रवृत्तिमुक्तां स्मारयति । **वादेति** । षष्ठे प्रक्रान्ते सतीति शेषः । अतीतब्राह्मणयोरर्थमनुक्रामति । **क्रमादिति** । वागादिदेवतासु ब्रह्मदृष्टिद्वारा जागराद्युक्त्याऽवगन्तव्यं ब्रह्मोक्तमित्यर्थः ॥ ४ ॥

**इन्धतैजससौषुप्ततुरीयाण्येव सांप्रतम् ॥**
**संश्रित्य पूर्व एवार्थ इह साक्षाद्विभाव्यते ॥ ५ ॥**

वृत्तमनूद्योत्तरब्राह्मणसंबन्धमाह । **इन्धेति** ॥ ५ ॥

**विसंवादनिरासेन सद्भावश्चाऽऽत्मनः पुनः ॥**
**व्यतिरिक्तत्वशुद्धत्वस्वयंज्योतिष्ट्वनित्यता ॥ ६ ॥**
**स्वतोनतिशयानन्दस्वाभाव्यैकात्म्यनित्यता ॥**
**दृष्टिमात्राद्वयत्वं च तर्केण महताऽऽत्मनः ॥ ७ ॥**

---

१ घ. योऽविकृ° । २ ख. घ. °श्यन्तीत्या° ।

विभाव्यते सुविस्पष्टं वादन्यायेन यत्नतः ॥
विद्यायाः संप्रदानादिविध्यर्थाऽऽख्यायिकाऽत्र च ॥ ८ ॥

पूर्वस्यैव पुनर्विभावनमनुपयोगि न च साक्षात्त्वं विशेषः पूर्वस्यानुपयोगप्रसङ्गादित्याशङ्क्याऽऽह । **विसंवादेति ।** पूर्वमेवाऽऽत्मनः सद्भावादि साधितमपि तत्त्वनिर्णयफलन्यायमवलम्ब्याबाधितासंकुचिततर्केण वादिविवादव्युदासेन तात्पर्येण प्रकाश्यते तथाच यथोक्तात्मनि मुमुक्षूणामतिस्फुटा मतिरवतरेदित्यर्थः । नित्यता कूटस्थता । ऐकात्म्यनियता तस्य सदासत्ता । ब्राह्मणतात्पर्यमुक्त्वाऽऽख्यायिकातात्पर्यमाह । **विद्याया इति ।** आदिपदेन प्रदातृप्रदानादि गृह्यते । विधिर्बोधनं विद्यास्तुतये चेति चार्थः । अत्रेति ब्राह्मणोक्तिः ॥ ६ ॥ ७ ॥ ८ ॥

याज्ञवल्क्योऽथ जनकं योगक्षेमार्थमभ्यगात् ॥
न वदिष्ये नृपेणाहमिति बद्ध्वा व्रतं किल ॥ ९ ॥

द्वयोस्तात्पर्यमुक्त्वा जनकं हेत्याद्यक्षराणि व्याचष्टे । **याज्ञवल्क्य इति ।** राजदर्शनयोग्यकालज्ञानानन्तर्यमथशब्दार्थः । स मेने न वदिष्य इत्यस्यार्थमाह । **नेत्यादिना ।** उक्तार्थस्य परोक्षत्वद्योतनार्थं किलेत्युक्तम् । वदतेर्निरुपपदस्य परस्मैपदित्वात्किलेत्यसंतोषो वा ॥ ९ ॥

संवदिष्ये नृपेणाहमिति वा तं जगाम सः ॥
समित्यस्याभिसंबन्धा[1]देनेनेत्येवमुच्यते ॥ १० ॥

तस्यैवार्थान्तरमाह । **संवदिष्य इति ।** विकल्पस्य व्रतं बद्ध्वेत्यनेन संबन्धः । द्वितीयव्याख्या न वाक्यानुसारिणीत्याशङ्क्याऽऽह । **समित्यस्येति ।** अभिसंबन्धात्क्रियापदेनेति शेषः ॥ १० ॥

अविवक्षुरपि प्राह यत्पृष्टं जनकेन सः ॥
तत्र हेत्वभिधानार्थं वरदानं श्रुतिर्जगौ ॥ ११ ॥

नन्वाद्ये व्याख्याने मुनी राज्ञा यद्यत्पृष्टं तत्तद्वक्तीत्ययुक्तं व्रतभङ्गप्रसङ्गादित्याशङ्क्याथ हेत्यादेस्तात्पर्यमाह । **अविवक्षुरिति ।** न हि कामप्रश्नाख्यं वरं प्राप्य पृष्टवति राजनि मुनेर्दत्तवरस्य तूष्णींभावः संभवति मिथ्यावादित्वापत्तेरतो व्रतभङ्गमपि सत्यसंरक्षणार्थं न गणय[2]ति ऋतायन्निति श्रुतेरिति भावः ॥ ११ ॥

एनेन संवदिष्येऽहमिति व्याख्यायते यदा ॥
तदाऽऽख्यायिकया हेतुस्तयोः संवाद [3]इष्यते ॥ १२ ॥

द्वितीयेऽपि व्याख्याने हेतुमाह । **एनेनेति ।** अग्निहोत्रे जनकस्य श्वेतकेतुसोमशु-

१ क. ॰दनेने॰ । २ ख. ॰ति म क॰ । ३ ख. उच्यते ।

ष्मम्यामिव याज्ञवल्क्येन जनको ह वैदेहो ब्राह्मणैर्धावयद्भिः समाजगामेत्याद्याख्यायिकया संवादो वृत्तस्तत्र च मुनी राज्ञोऽग्निहोत्रविज्ञानातिशयं दृष्ट्वा तुष्टो वरं ददौ स च कामप्रश्नमेव वृतवानित्युक्तं तथाच संवदिष्ये राज्ञेति संकल्प्य तं मतवानिति व्याख्याने कामप्रश्नवरदानाख्यो हेतुरित्यर्थः ॥ १२ ॥

राजैव पूर्वं पप्रच्छेत्येतस्माद्गम्यते शुभा ॥
लिङ्गाद्व्याख्योत्तरा पूर्वा न साध्वीत्यप्रमाणतः ॥ १३ ॥

कतरत्तर्हि व्याख्यानमादेयं तदाह। राजेति। तं हेत्यादिवाक्यात्कामप्रश्नवरलाभो राज्ञो विज्ञायते न हि तं विना तूष्णींभूतं मुनिमेनमभिप्रायज्ञो राजा प्रष्टुमीष्टे तत्सामर्थ्यालिङ्गाद्द्वितीया व्याख्या साध्वी नाऽऽद्येति गम्यते तत्र मानाभावादित्यर्थः ॥ १३ ॥

न वदिष्येऽहमित्यत्र व्रते हेतुर्न वीक्ष्यते ॥
यतोऽसंतोषतस्तस्मात्कृता व्याख्योत्तरा शुभा ॥ १४ ॥

तं साधयति। नेत्यादिना। न हि राज्ञि कामप्रश्नं दत्तवतो न संवदिष्ये तेनेति संकल्पोऽवकल्पतेऽनाप्तत्वापत्तेस्तस्मादाद्यव्याख्याने मानाभावादनुपपत्तेश्च द्वितीयमेवाऽऽदरणीयं संवादावृत्तेरनेनेतिच्छेदसिद्धेरित्यर्थः ॥ १४ ॥

नाप्राक्षीत्तत्र यद्राजा वरदानादनन्तरम् ॥
प्रश्नानुक्तिर्विरुद्धत्वाद्विद्यायाः कर्मभिः सह ॥ १५ ॥

नन्वग्निहोत्रप्रकरणे कामप्रश्नो वरो दत्तश्चेत्किमिति तत्रैवाऽऽत्मयाथात्म्यप्रश्नप्रतिवचने नासूचिषातां तत्राऽऽह। नाप्राक्षीदिति। तत्राग्निहोत्रप्रकरणे वरदानानन्तरं राजा न पृष्टवानात्मयाथात्म्यं मुनिश्च न प्रत्युक्तवानिति यत्सा प्रश्नाद्यनुक्तिः कर्मभिर्विद्याया विरुद्धत्वादिति योजना ॥ १५ ॥

स्वोत्पत्तावेव विद्येयं हेत्वन्तरमपेक्षते ॥
प्रत्यगात्मतमोध्वस्तौ नासावन्यदपेक्षते ॥ १६ ॥

ननु सर्वापेक्षाधिकरणन्यायेन विद्या कर्माण्यपेक्षते तत्कथं तैर्विरुध्येत किं तस्याः स्वोत्पत्तौ तदपेक्षा स्वफले वेति विकल्प्याऽऽद्यमङ्गी करोति। स्वोत्पत्ताविति। अत एव चाग्नीन्धनाद्यनपेक्षेति न्यायेन द्वितीयं दूषयति। प्रत्यगात्मेति ॥ १६ ॥

स्वरूपलाभमात्रेण यतोऽविद्यां निहन्त्यतः ॥
प्रयोगमपि विद्येयं नोपरुध्यति दात्रवत् ॥ १७ ॥

तत्र हेतुः। स्वरूपेति। कर्मविरोधं विद्याया निगमयति। अत इति। उत्पन्ना सा कमपि व्यवहारं नानुसरतीत्यत्र वैधर्म्यदृष्टान्तो दात्रवदिति। तद्धि जातमपि लवने प्रयोगमपेक्षते न तथा विद्येत्यर्थः ॥ १७ ॥

---

१ क. पूर्वः। २ ख. 'माभि'।

व्यवहर्तुमशक्तोऽयं देहो मृत्पिण्डवत्स्वयम् ॥
परतन्त्रव्यवहृतिः स्वतोजाड्यस्वभावतः ॥ १८ ॥

कर्मप्रकरणे विद्याप्रश्नप्रत्युक्त्योरयोग्यतामुक्त्वा याज्ञवल्क्येत्यादिप्रश्नं वक्तुं भूमिकां करोति । व्यवहर्तुमिति । देहः स्वतो न व्यवहारक्षमोऽचेतनत्वान्मृत्पिण्डवदित्यर्थः । किंचायं पराधीनव्यवहारवाञ्जडत्वाद्रथादिवदित्याह । परतन्त्रेति ॥ १८ ॥

पृथिव्याद्यध्यवस्यायं स्वयंज्योतिरनुग्रहात् ॥
कर्माऽऽसनादि कुरुते तस्माच्च फलसंगतिः ॥ १९ ॥

देहस्याचेतनत्वमसिद्धं पृथिव्यादिनिश्चयद्वारा व्यवहर्तृत्वदृष्टेरित्याशङ्क्याऽऽह । पृथिव्यादीति । सुखादिफलवत्त्वेन तच्चैतन्यमाशङ्क्याऽऽह । तस्माच्चेति । स्वयंज्योतिरनुग्रहादेवेत्यर्थः ॥ १९ ॥

यत एवमतोऽप्राक्षीद्याज्ञवल्क्यं नगाधिपः ॥
किंज्योतिरयमित्येवं प्रत्यग्ज्योतिर्बुभुत्सया ॥ २० ॥

प्रत्यग्ज्योतिर्बलादेव देहस्य कर्म तत्फलं चेत्येवं संभाव्य राजा तज्जिज्ञासया पृष्टवानिति प्रश्नमुत्थापयति । यत इति ॥ २० ॥

करणानि च देहश्च पुरुषोऽत्र विवक्षितः ॥
आसनादिक्रियाकारी पीठक्षेत्रादि कर्म च ॥ २१ ॥

तत्र पुरुषशब्दार्थमाह । करणानीति । कार्यकरणसंघातस्य पुंसो ज्योतिरपेक्षामाह । आसनादीति । तत्तदर्थापेक्षयैव तत्तत्क्रियासिद्धौ कृतं ज्योतिषेत्याशङ्क्याऽऽह । पीठेति । आसनगमनादिक्रियायाः कर्म कारकं पीठक्षेत्रादि तच्च जाड्याज्ज्योतिरपेक्षमिति न तन्मात्रात्क्रियेत्यर्थः ॥ २१ ॥

किं स्वावयवसंघातभिन्नजात्यानिरंकिणा ॥
ज्योतिषा व्यवहार्येषोऽसंहतेन पुमानिति ॥ २२ ॥
किंवा तद्विपरीतेन ज्योतिषेत्यभिधीयताम् ॥
किंचातो यदि नामैवं शृण्वतो यत्प्रसिध्यति ॥ २३ ॥

प्रश्नवाक्यं विभजते । किमित्यादिना । कार्यकरणसंघातात्तदवयवेभ्यस्तेषां समुदायाच्च भिन्नं मनुष्यत्वादिजात्यसंस्पृष्टं यदसंहतं ज्योतिस्तेनेति यावत् । असंहतेन संहतेन वा ज्योतिषा पुरुषो व्यवहारभागिति विकल्पार्थः । यद्याद्यस्तदा किं नाम फलं यदि द्वितीयस्तदा किं छिन्नमिति पृच्छति । किंचेति । यदाद्यपक्षात्फलति यद्वेतरस्माद्धीयते तदुच्यमानमवहितेन श्रोतव्यमित्याह । शृण्विति ॥ २२ ॥ २३ ॥

**तयोः पूर्वोक्तरूपेण ज्योतिषाऽनुग्रहो यदि ॥**
**अप्रत्यक्षेऽपि[1] तस्मिंस्तत्पुंस्क्रियालिङ्गदर्शनात् ॥ २४ ॥**
**अनुमास्यामहे ज्योतिस्तादृगेव तदा वयम् ॥**
**अथ तद्विपरीतेन संगतिर्ज्योतिषेक्ष्यते ॥ २५ ॥**
**तथाभूतं तदा ज्योतिरनुमास्यामहे वयम् ॥**
**अथोभयात्मताऽदृष्टा तदाऽपि स्यादनिश्चितिः ॥ २६ ॥**

तत्राऽऽद्यमनूद्य फलमाह । **तयोरिति** । प्रकृतज्योतिषोर्मध्ये व्यतिरिक्तेन ज्योतिषा पुंसोऽनुग्रहो व्याप्तिग्रहकाले निश्चितश्चेद्यत्र स्वप्नादौ ज्योतिरप्रत्यक्षं पुंस्प्रवृत्तिश्च दृष्टा तत्रापि व्यतिरिक्तमेव ज्योतिरनुमेयमतो राद्धान्तसिद्धिरित्यर्थः । कल्पान्तरमनूद्य हानिमाह । **अथेत्यादिना** । व्याप्तिग्रहकाले व्यवहर्तुरव्यतिरिक्तेनैव ज्योतिषाऽनुग्रहो गृह्यते चेत्तदा स्वप्नादावव्यतिरिक्तमेव व्यवहारलिङ्गेन तदनुमेयं ततः सिद्धान्तहानिर्देहादेरेवाऽऽत्मत्वप्राप्तेरित्यर्थः । अथानियम इत्यादिभाष्यार्थमाह । **अथेति** । अदृष्टेति च्छेदः । व्यतिरेकोऽव्यतिरेको वा ज्योतिषो व्याप्तिग्रहकाले[3] संदिग्धश्चेदनुमातोऽपि तन्निश्चयासिद्धिरित्यर्थः ॥ २४ ॥ २५ ॥ २६ ॥

**इत्येतदभिसंधाय पप्रच्छ जनको मुनिम् ॥**
**स च पृष्टो यथाप्रश्नं प्रत्युत्तरमभाषत ॥ २७ ॥**

प्रश्नार्थं निगमयति । **इत्येतदिति** । आदित्यज्योतिरित्याद्यवतारयति । **स चेति** । व्यतिरिक्तज्योतिर्बुभुत्सया प्रश्नमनतिक्रम्येति यावत् ॥ २७ ॥

**नन्वेवं कौशले राज्ञः किमर्थं पृष्टवान्मुनिम् ॥**
**स्वयमेवानुमायेदृग्ज्योतिः किं न प्रपद्यते ॥ २८ ॥**

उक्तरीत्या गुणदोषज्ञाने राजा शक्तश्चेदनुमानेऽपि शक्तस्तेन स्वयमेवेष्टं ज्योतिर्ज्ञास्यति कुतो मुनिमनुसरति को हि स्वाधीनेऽर्थे धीपूर्वकारी परमनुसरेदिति प्रश्नमाक्षिपति । **नन्विति** ॥ २८ ॥

**सत्यमेवं तथाऽप्येष नृपः पप्रच्छ तं मुनिम् ॥**
**लिङ्गलिङ्ग्यभिसंबन्धदुर्ज्ञेयत्वात्सुसूक्ष्मतः ॥ २९ ॥**

राज्ञो नैपुण्येऽपि भाव्यं मुनिनेति समाधत्ते । **सत्यमिति** । किमिति मुनिना भाव्यं तत्राऽऽह । **लिङ्गेति** । व्याप्यव्यापकयोस्तत्संबन्धस्य चातिसूक्ष्मत्वादेकेन दुर्ज्ञानत्वात्तज्ज्ञापको मुनिरिष्ट इत्यर्थः ॥ २९ ॥

**बहूनामपि संमोहो लिङ्गादिषु समीक्ष्यते ॥**
**किमुतैकस्य वक्तव्यं पर्यपृच्छदतो नृपः ॥ ३० ॥**

---

१ ग. 'क्षे तु त'। २ क. तथा। ३ ख. 'ले लिङ्गसं'। ४ क. घ. 'तिरेकज्यो'। ५ क. घ. शक्तेस्ते'।

कथमतिसौक्ष्म्यं व्याप्त्यादीनामित्याशङ्क्याऽऽह । बहूनामिति । दृश्यन्ते हि धूमाभासदर्शिनोऽपि धूमध्वजमनुमिन्वन्तस्तद्विवेकानिश्चयादित्यर्थः । लिङ्गादिज्ञानस्य प्रयत्नलभ्यत्वे फलितमाह । पर्यपृच्छदिति ॥ ३० ॥

सूक्ष्मधर्मविवेकार्थमत एवाब्रवीन्मनुः ॥
दशावरा पर्षदिति ह्यपेक्षन्ते च सद्धियः ॥ ३१ ॥

तेषामतिसौक्ष्म्ये मनुवाक्यं प्रमाणयति । सूक्ष्मेति । कुशलस्यापि सूक्ष्मार्थनिर्णये पुरुषान्तरापेक्षायाः सत्त्वमतःशब्दार्थः ।

"धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः ।
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥
दशावरा वा परिषद्यं धर्मं परिचक्षते ।
त्र्यवरा वाऽपि वृत्तस्थास्तं धर्मं न विचारयेत् ॥
त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः ।
त्रयश्चाऽऽश्रमिणः पूर्वे पर्षदेषा दशावरा ॥
ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च ।
त्र्यवरा परिषज्ज्ञेया धर्मसंशयनिर्णये" ॥

इत्येतल्लक्षयति । दशेति । धर्मशास्त्रकृतामन्येषामपि यथोक्तेऽर्थे संमतिरस्तीतिद्योतनार्थो हिशब्दः । किंचाधुनाऽपि सूक्ष्मार्थनिर्णये बहवः सूक्ष्मदृष्टयोऽपेक्षमाणा दृश्यन्ते लिङ्गादीनां दुर्बोधत्वादित्याह । अपेक्षन्ते चेति ॥ ३१ ॥

याज्ञवल्क्यादिरूपेण श्रुतिरेवाथवा स्वयम् ॥
अनुमावर्त्मना ज्योतिः साक्षान्नः प्रत्यपीपदत् ॥ ३२ ॥

अनुमाकौशलेऽपि राज्ञः सूक्ष्मार्थनिर्णयार्थं मुनिं प्रति पृच्छा युक्तेत्युक्त्वा पक्षान्तरमाह । याज्ञवल्क्येति ॥ ३२ ॥

नृपाभिप्रायवित्प्राह याज्ञवल्क्योऽपि तं नृपम् ॥
यथोक्तज्योतिषः सिद्धावादित्यज्योतिरित्ययम् ॥ ३३ ॥

प्रश्नोपपत्तौ प्रतिवचनोपपत्तिं मत्वा पूर्वोक्तमेव प्रतिवचनमनुभाषते । नृपेति । व्यतिरिक्तज्योतिरभिप्रायेण राजा पृच्छति मुनिरपि तत्सिद्धिं निमित्तीकृत्य प्रतिवक्तीत्यर्थः ॥ ३३ ॥

देहावयवसंघातजातिसंस्थानतत्क्रिया—
देशाद्यत्यन्तसंभिन्नतद्विलक्षणभास्वर—
स्वप्रतिष्ठैकभान्वाख्यज्योतिषैव पुमानयम् ॥
आस्ते पल्ययते कर्म कृत्वा भूयो निवर्तते ॥ ३४ ॥ ३५ ॥

विवक्षितज्योतिर्दृष्टान्तत्वेनोत्थापितप्रत्युक्त्यक्षराणि व्याकरोति । **देहेति** । देहश्च तदवयवाश्च तेषां संघातश्च देहगता जातिश्च स्थानं च तस्यैव क्रिया च देशकालौ च तेभ्योऽत्यन्तभिन्नं तद्विसदृशं प्रभूतप्रकाशमपरतन्त्रं प्रकाशान्तरानपेक्षं यद्भानुलक्षणं ज्योतिस्तेनेति योजना ॥ ३४ ॥ ३५ ॥

**मध्ये जडस्वभावोऽयं ज्योतिषोर्वर्तते[1] पुमान् ॥**
**बुद्ध्यादिविषयान्तो हि प्रत्यक्चैतन्यबिम्बितः[2] ॥ ३६ ॥**

यथोक्तादित्यज्योतिर्वशादेव देहादिव्यवहारादलमात्मज्योतिषेत्याशङ्क्याऽऽह । **मध्य इति** । जडस्वभावं पुमांसं जडाजडज्योतिर्द्वयमध्यस्थं विशिनष्टि । **बुद्ध्यादीति** । चैतन्याभासानुरञ्जनं विना बुद्ध्यादिसिद्ध्यनुपपत्तिद्योतको हिशब्दः ॥ ३६ ॥

**प्रत्यगेकस्वयंज्योतिःस्थिरासंहतनिष्क्रिय—**
**तद्विरुद्धरवीन्द्वादिज्योतिषोर्मोह[3]हेतुकः ॥ ३७ ॥**
**मातृमानप्रमेयात्मा कर्तृसाधनकार्यवान् ॥**
**अशनायादिसंसारधर्मापायागमात्मकः ॥ ३८ ॥**

के ते ज्योतिषी तत्राऽऽह । **प्रत्यगिति** । सर्वान्तरस्य सर्वभेदरहितस्य चिदेकतानस्यासङ्गोदासीनस्य प्रतीचः स्थिरत्वं कौटस्थ्यं तत्र हेतुर्निष्क्रियेति तद्विरुद्धं ततो यथोक्तज्योतिषो विपरीतं पराग्भूतमनेकं पराधीनप्रकाशं प्रकाश्यसंसृष्टं परिणामीत्यर्थः । मध्ये वर्तत इति पूर्वेण संबन्धः । पुरुषशब्दितबुद्ध्यादेरादित्यादिज्योतिरतिरिक्तज्योतिरपेक्षत्वे को हेतुरिहोक्त इत्यपेक्षायामुक्तं पुरुषं विशिनष्टि । **मोहेति** । आत्माज्ञानजो बुद्ध्यादिर्मातृमानमेयकर्तृकर्मकार्यभोक्तृभोगभोग्यात्मा जन्मनाशवानजडज्योतिरपेक्षते स्वतोभानायोगादित्यर्थः ॥ ३७ ॥ ३८ ॥

**तद्विरुद्धात्मकेनैव ज्योतिषोद्दीपितेक्षणः ॥**
**आदित्येन सदैवाऽऽस्ते यात्यायाति करोति च ॥ ३९ ॥**

अजडज्योतिषैव तर्हि बुद्ध्यादिव्यवहारसिद्धेरलमितरेणेत्याशङ्क्य दृष्टत्वान्नैवमित्याह । **तद्विरुद्धेति** । बुद्ध्यादिसंघाताद्व्यवहर्तुर्विपरीतं यदादित्याख्यं ज्योतिस्तेनोत्पादितपरिणामविशेषो बुद्ध्यादिर्व्यवहरतीत्यर्थः ॥ ३९ ॥

**आदित्यात्परमेवेति नाऽऽदित्यस्यावधारणे ॥**
**पिण्डप्राणादिधर्मेभ्यो वैधर्म्यावधृतौ यतः ॥ ४० ॥**

आदित्येनैवायमित्यादित्यात्परस्तादेवकारश्रुतेरासनादिहेतुत्वं तस्यावधार्यते तत्राऽऽदित्यज्योतिरतिरिक्तानुग्राहकज्योतिःसिद्धिरित्याशङ्क्याऽऽह । **आदित्यादिति** । तर्हि

---

१ क. ख. ग. 'षो वर्त' । २ ख. 'बिम्बतः । ३ ग. 'षो मोह' । ४ क. ख. दृष्टान्तत्वा' । ५ ख. 'घातव्यव' । ६ घ. 'कप्रत्यग्ज्योतिः' ।

किमेवकारेण क्रियते तदाह । पिण्डेति । अनुग्राह्यादनुग्राहकं ज्योतिरतिविलक्षणमिति निर्धारयितुमेवकारो नाऽऽदित्यमवधारयितुमित्यर्थः ॥ ४० ॥

आदित्यावधृतिश्चेत्स्याच्चन्द्रादेः स्यादनुग्रहः ॥
तस्मात्पिण्डादिवैधर्म्यमेवेतीहावधार्यते ॥ ४१ ॥

विपक्षे दोषमाह । आदित्येति । विवक्षितमेवकारार्थं निगमयति । तस्मादिति ॥ ४१ ॥

नृपस्त्वेवेति संश्लेषादादित्यस्यावधारणम् ॥
मत्वाऽस्तमित इत्येवं मुहुर्विभ्रमचूचुदत् ॥ ४२ ॥

न चेदादित्यमवधारयितुमेवकारस्तर्हि तस्मिन्नुपरतेऽपि ज्योतिरन्तरेणाऽऽसनादिसिद्धेरुत्तरप्रश्नानुपपत्तिरित्याशङ्क्याऽऽह । नृपस्त्विति । भ्रान्तिप्रयुक्ता समनन्तरप्रश्नप्रवृत्तिरिति भावः ॥ ४२ ॥

आत्मैव ज्योतिरथवा रविसोमाग्न्युपाधिगम् ॥
अवध्रियत एवेति तमेव इति च श्रुतेः ॥ ४३ ॥

एवकारस्य पर्यायचतुष्टयनिविष्टस्यार्थान्तरमाह । आत्मैवेति । आत्मज्योतिषः सर्वावभासकत्वात्तदेवाऽऽदित्यादिरूपेणापि भासकं नान्यदित्यत्र तमेव भान्तमनुभाति सर्वमितिश्रुतिं संवादयति । तमिति ॥ ४३ ॥

रवीन्द्वादिपदार्थेभ्यो ह्यनुमानैकवर्त्मना ॥
स्वार्थं विज्ञापयिष्यामि विभज्यातः परा श्रुतिः ॥ ४४ ॥

आदित्याद्यात्मनाऽऽत्मज्योतिरेव सर्वावभासकं चेत्पूर्वपर्यायैरेव प्रत्यग्ज्योतिःसिद्धेरात्मैवास्येत्यादिश्रुतिरनर्थिकेत्याशङ्क्याऽऽह । रवीति । आदित्यादिभ्यो विभज्य स्वतन्त्रमात्मज्योतिर्ज्ञापयिष्यामीति मुनिर्मन्यतेऽतः श्रुतिरात्मेत्याद्या परा प्रवृत्तेति योजना ॥ ४४ ॥

ज्योतिषोऽत्यन्तवैधर्म्यप्रसिद्ध्यर्थं विशेषणम् ॥
आस्त इत्यादि सुबहु श्रुत्योपन्यस्तमादरात् ॥ ४५ ॥

आदित्येनैवेति श्रुतमेवकारं व्याख्यायाऽऽस्त इत्यादेस्तात्पर्यमाह । ज्योतिष इति । आसनादीनामेकैकव्यभिचारे देहस्यान्यथाभावेऽपि नानुग्राहकं ज्योतिरन्यथा भवत्यतस्तदनुग्राह्यादत्यन्तविलक्षणमित्येतदर्थमनेकविशेषणग्रहणमित्यर्थः ॥ ४५ ॥

भूयसां चाप्युपन्यासो बाह्यानां ज्योतिषामिह ॥
लिङ्गस्याव्यभिचारार्थं बुद्धिवाक्कायकर्मणः ॥ ४६ ॥

आदित्याद्यनेकपर्यायोपादानं किमर्थमेकेनैव व्याप्तिग्रहसिद्धेरित्याशङ्क्याऽऽह । भूयसां

चेति । देहेन्द्रियमनोव्यापाररूपं कर्म लिङ्गं तस्य व्यतिरिक्तज्योतिरव्यभिचारसाधनार्थमनेकपर्यायोपन्यासो बहवो हि दृष्टान्ता व्याप्तिं द्रढयन्तीत्यर्थः ॥ ४६ ॥

**आदित्येनैव चेत्पुंसोऽनुग्रहो भवतोच्यते ॥**
**तस्मिन्नस्तंगते पुंस आसनादिः कुतो भवेत् ॥ ४७ ॥**

चतुर्णां पर्यायाणां तात्पर्यं वदता प्रथमपर्यायस्थाक्षराणि व्याख्यातान्यधुना द्वितीयं प्रश्नं व्याकरोति । आदित्येनेति ॥ ४७ ॥

**चन्द्रमा एव पुंसोऽस्य तदा ज्योतिरनुग्रहे ॥**
**तस्याप्यस्तमयेऽग्निः स्यादासनादिप्रवृत्तये ॥ ४८ ॥**

तत्र प्रत्युक्तिमाह । चन्द्रमा इति । तृतीयपर्यायार्थमाह । तस्यापीति ॥ ४८ ॥

**आदित्यादित्रयं ज्ञेयं ज्योतिषामुपलक्षणम् ॥**
**मण्यादीनां प्रवृत्तिर्हि पुंसां तैरपि दृश्यते ॥ ४९ ॥**

मण्यादिज्योतिषामपि प्रवर्तकानां सत्त्वे किमित्यादित्यादित्रयमेवोच्यते तत्राऽऽह । आदित्यादीति । तेषामुपलक्ष्यमाणत्वे हेतुमाह । प्रवृत्तिरिति ॥ ४९ ॥

**तेष्वप्यस्तमितेष्वस्य पुंसो वाग्ज्योतिरिष्यताम् ॥**
**वाक्च शब्दोऽत्र विज्ञेयो ज्योतिष्कार्यसमन्वयात् ॥ ५० ॥**

चतुर्थपर्यायार्थमाह । तेष्वपीति । इन्द्रियं व्यावर्तयति । वागिति । शब्देन श्रोत्रसंस्कारात्तदधिष्ठातृमनोविवेकेन बाह्या चेष्टा तद्युक्तमत्र वागिति शब्दग्रहणमित्यर्थः । तस्य कथं ज्योतिष्ट्वमत आह । ज्योतिरिति । तन्निमित्तकार्यसंबन्धश्च वाचस्तस्माद्वै सम्राडित्यादावुक्तः ॥ ५० ॥

**स्पर्शादिविषयाणां वागिह स्यादुपलक्षणम् ॥**
**यतः स्पर्शादिनाऽप्येषां प्रवृत्तिर्दृश्यते नृणाम् ॥ ५१ ॥**

विषयान्तरेष्वपि प्रवृत्तिहेतुषु सत्सु कुतः शब्दस्यैव ग्रहस्तत्राऽऽह । स्पर्शादीति । तेषामुपलक्ष्यत्वे हेतुर्यत इति ॥ ५१ ॥

**बाह्यादित्यादिज्योतिर्भिः पुमान्संदीपितेन्द्रियः ॥**
**प्रत्यक्चैतन्यसंदीप्तः सर्वाश्चेष्टाः प्रपद्यते ॥ ५२ ॥**

प्रश्नान्तरार्थं वृत्तं कीर्तयति । बाह्येति ॥ ५२ ॥

**सर्वेष्वेतेषु शान्तेषु ज्योतिःषूक्तेषु कर्मणे ॥**
**पुमान्किंज्योतिरेवायं तमस्यन्धेऽभिधीयताम् ॥ ५३ ॥**

तदादत्ते । सर्वेष्विति ॥ ५३ ॥

---

१ ख. °नादि कु° ।

सर्वचेष्टानिरोधोऽस्य पुंसः प्राप्तस्तदाऽसति ॥
यथोक्तज्योतिषि ततो न स्युश्चेष्टा यथोदिताः ॥ ५४ ॥

प्रसिद्धज्योतिरुपरमे किमिति ज्योतिरन्तरं पृच्छयते चेष्टा तु पुंसः स्वतो भविष्यति नेत्याह । सर्वेति । जाग्रदवस्थायामसत्यसंहते ज्योतिष्यासनाद्यभावः पुंसः सिद्धस्ततः स्वप्नादावादित्यादिज्योतिरुपरतौ प्रत्यग्ज्योतिष्यसति यथोक्तासनादिचेष्टायोगात्तद्धेतुत्वेन प्रष्टव्यं प्रत्यग्ज्योतिरित्यर्थः ॥ ५४ ॥

स्मृतिस्वप्नसमाधाने पुरुषस्य समीक्ष्यते ॥
चेष्टाऽतः पूर्ववत्तस्य ज्योतिस्तत्रानुमीयते ॥ ५५ ॥

प्रसिद्धज्योतिरभावे प्रवृत्तिरेव नास्ति नातस्तद्धेतुत्वेन ज्योतिरन्तरं प्रश्नमर्हतीत्याशङ्क्याऽऽह । स्मृतीति । चेष्टादृष्टिपरामर्शार्थोऽतःशब्दः । पूर्ववज्जागरादिवत् । स्वप्नादौ प्रसिद्धज्योतिरभावेऽपि पुरुषचेष्टाया दृष्टत्वात्तद्धेतुत्वेन ज्योतिरनुमाय पृच्छयत इत्याह । तस्येति ॥ ५५ ॥

बोद्धुः कर्तुश्च पुंसोऽस्य प्रवृत्तिर्येह काचन ॥
यथोक्तज्योतिर्विरहे नासौ दृष्टा कदाचन ॥ ५६ ॥

अनुमातुमादौ व्याप्तिमाह । बोद्धुरिति । यो व्यवहारः सोऽसंहतज्योतिर्निमित्तो यथाऽऽदित्याद्यधीनश्चैत्रादिव्यवहार इत्यर्थः ॥ ५६ ॥

भान्वाद्युद्दीपिताक्षः सन्प्रमात्रादिः प्रसिध्यति ॥
ततः कर्त्रादिसंसिद्धिः प्रमाकर्मफलं ततः ॥ ५७ ॥

व्याप्तिभूमिं प्रपञ्चयति । भान्वादीति । आदित्याद्यनुगृहीतेन्द्रियस्तदधिष्ठातृमनोवच्छिन्नः सन्प्रमाता ततश्च कारकप्रयोज्यत्वे सति तत्प्रयोक्तृतया कर्ता प्रमातृसिद्धौ प्रमातत्फलयोः कर्तृसिद्धौ क्रियातत्फलयोश्च सिद्धिरतो मैत्रस्य ज्ञानगत्यादिव्यवहारोऽतिरिक्तज्योतिर्निमित्त इत्यर्थः । प्रमेत्यादिरादिशब्दयोरर्थः ॥ ५७ ॥

कूटस्थानित्ययोर्भासोर्मध्यवर्ती पुमानयम् ॥
वाङ्मनःकायकर्माणि सर्वदैव प्रपद्यते ॥ ५८ ॥

या प्रवृत्तिः सा बाह्यज्योतिर्निमित्ता यथा जाग्रत्प्रवृत्तिरिति विपरीतव्याप्तिमाशङ्क्य किं सा तन्निमित्तैव किंवा तन्निमित्ताऽपीति विकल्प्याऽऽद्ये साध्यवैकल्यमाह । कूटस्थेति । द्वितीये व्यभिचारः स्वप्नादिव्यवहारे तददृष्टेरिति द्रष्टव्यम् ॥ ५८ ॥

ध्वान्तादिविषयान्तोऽर्थो जडत्वाभाऽऽत्मसिद्धिकृत् ॥
आत्मज्योतिरभावेऽतो नाभावमपि विन्दति ॥ ५९ ॥

---

१ ग. °कान्तगप्र° । २ ग. मदेव प्रतिप° । ३ ख. तद्दृष्टे° ।

किंच भावाभावव्यवहारानुपपत्त्या प्रत्यग्ज्योतिःसिद्धेरर्थापत्तिविरोध इत्याद्ये दोषान्तरमाह । **ध्वान्तादीति** । अतो जडत्वादिति संबन्धः । कैमुतिकन्यायार्थोऽपिशब्दः ॥ ५९ ॥

**आगमापायिज्योतिर्भिर्धर्माधर्मनिबन्धना ॥**
**संगतिः पुरुषस्यास्य निर्हेतुः प्रत्यगात्मना ॥ ६० ॥**

नन्वादित्यादिज्योतिषां पुरुषप्रवृत्तिहेतुत्वं युक्तं प्रवर्त्यसंबन्धान्नाऽऽत्मज्योतिषस्तदभावात्तत्राऽऽह । **आगमेति** ॥ ६० ॥

**कुम्भस्य वियता यद्वन्निर्हेतुः संगतिः सदा ॥**
**विनश्वरी सहेतुश्च जलक्षीरादिसंगतिः ॥ ६१ ॥**

बुद्ध्यादेरजडप्रकाशसंगतिः स्वाभाविकीत्यत्र दृष्टान्तमाह । **कुम्भस्येति** । तस्य जडप्रकाशसंबन्धः सहेतुरित्यत्र दृष्टान्तो विनश्वरीति ॥ ६१ ॥

**यथेहासंहतान्येव भान्वादीनि प्रकुर्वते ॥**
**अनुग्राह्येण पुंसेह सर्वदाऽनुग्रहं मुहुः ॥ ६२ ॥**

विवक्षितज्योतिषः स्वाभाविके कार्य[2]कारणसंबन्धे तद्धर्मता स्यात्तद्गतरूपादिवदित्याशङ्क्याऽऽह । **यथेति** । इहेति व्यवहारभूमिरुक्ता । इह प्रवर्त्ये पुंसीत्यर्थः । असंहतानि प्रवर्त्यधर्मत्वरहितानीत्यर्थः । मुहुरिति[3] क्रियापदेन सर्वदेत्यसंहतानीत्यनेन संबध्यते । तद्वदजडं ज्योतिरपीति शेषः । विमतो नानुग्राह्यधर्मश्चक्षुराद्यतिरिक्तत्वे सत्यनुग्राहकत्वादादित्यादिवन्न च स्वाभाविके तस्य संघातसंबन्धेऽसङ्गताहतिरविद्यया तदङ्गीकारादिति भावः ॥ ६२ ॥

**अकारकात्मकान्येव पुंसः कारकरूपिणः ॥**
**नाकृत्वा तानि कुर्वन्ति प्रकाशं गतिवद्यतः ॥ ६३ ॥**

प्रत्यग्ज्योतिर्नानुग्राहकं सक्रियत्वापत्तेरिति विशेष्यासिद्धिमाशङ्क्याऽऽह । **अकारकेति** । व्यञ्जकान्येवाऽऽदित्यादीन्यकृत्वा क्रियामप्राप्य पुरुषस्य प्रकाशाख्यमनुग्रहं कुर्वन्ति न तु तिष्ठतो विकारद्वारा गतिवदेतान्यनुग्राहकाण्यतो विवक्षितज्योतिष्यनुग्राहकत्वेऽपि न सक्रियतेत्यर्थः ॥ ६३ ॥

**व्यञ्जकानां हि सर्वेषां न स्वरूपातिरेकतः ॥**
**व्यङ्ग्येष्वतिशयो दृष्टस्तिष्ठतो नु गतिर्यथा ॥ ६४ ॥**

वैधर्म्यदृष्टान्तं स्पष्टयन्नुक्तं प्रपञ्चयति । **व्यञ्जकानामिति** । तिष्ठतो हि जन्तोः स्वरूपातिरेकेणातिशयमपेक्ष्य गतिर्दृष्टा नैवमभिव्यङ्ग्येष्वभिव्यक्तिरभिव्यञ्जकसंनिधानातिरिक्तं विकारमपेक्षते तत्संनिधिसत्तामात्रेण तदभिव्यक्तिदर्शनादित्यर्थः ॥ ६४ ॥

---

१ ग. ॰पायज्यो॰ । २ ख. ॰र्यकृ॰ । ३ क. घ. विमतं ।

आत्मज्योतिस्तथैवेदं सदानस्तमितोदितम् ॥
भान्वादिष्वपि सर्वेषु तदेव प्राग्विवक्षितम् ॥ ६५ ॥

दार्ष्टान्तिकं निगमयति । आत्मेति । किंचाऽऽदित्यादिवन्नाऽऽत्मज्योतिषः सान्नियत्वं तत्रापि तदसिद्धेरात्मैव ज्योतिरथवेत्यत्र तेष्वपि प्रत्यग्ज्योतिष एव भासकत्वेनावस्थानोक्तेरित्याह । भान्वादिष्विति ॥ ६५ ॥

पुंस्प्रवृत्तिरियं लिङ्गं यथोक्तज्योतिषो भवेत् ॥
सर्वत्राव्यभिचारित्वात्तथा स्वप्नादिभूमिषु ॥ ६६ ॥

पुंव्यापारस्यातिरिक्तज्योतिषा व्याप्तिं विपरीतव्याप्तिनिरासेनोक्त्वा व्याप्तिफलमाह । पुंस्प्रवृत्तिरिति । सर्वत्र देशे काले पुंसि चेत्यर्थः । व्याप्तस्य लिङ्गस्य पक्षधर्मतामाह । तथेति । पुंस्प्रवृत्तिर्दृष्टेति शेषः ॥ ६६ ॥

जाग्रत्काले नरस्यास्य भान्वादिज्योतिषा यदा ॥
चक्षुराद्यनुगृह्येत स्फुटा व्यवहृतिस्तदा ॥ ६७ ॥

उक्तां व्याप्तिं जाग्रद्विषये हीत्यादिभाष्यार्थतया स्फुटयति । जाग्रदिति ॥ ६७ ॥

एवं जागरिते तावदादित्याद्युक्तलक्षणम् ॥
विभिन्नासंहतज्योतिरनुग्रहपुरःसरः ॥
पुंव्यापारः सदक्षोत्थप्रमाणप्रमितः स्फुटः ॥ ६८ ॥

व्याप्तिमुपसंहरति । एवमिति । उक्तलक्षणत्वमेव स्फुटयति । विभिन्नेत्यादिना । सदक्षेति निर्दुष्टकरणजन्यतया यत्प्रमारूपं ज्ञानं तेन प्रमितत्वादतिस्फुटोऽयमुक्तरूपो व्यापार इत्यर्थः ॥ ६८ ॥

लिङ्गलिङ्ग्यभिसंबन्धो यस्मादेवं[3] मितस्ततः ॥
सर्वज्योतिरभावेऽपि तादृगेवानुमीयते ॥ ६९ ॥
ज्योतिर्जागरिते यद्वद्रवीन्द्वादि समीक्ष्यते ॥
नरव्यापारलिङ्गेन धूमाग्निवदसंशयम् ॥ ७० ॥

इदानीमनुमानमाह । लिङ्गेति । तादृगसंहतमिति यावत् । विमतो व्यवहारोऽसंहतज्योतिर्निबन्धनो व्यवहारत्वात्संमतवदित्यर्थः ॥ ६९ ॥ ७० ॥

लिङ्गात्सामान्यतो ज्ञाते विशेषेणाप्यनीक्षिते ॥
भान्वादिवदतो राजा भूयः पप्रच्छ तं गुरुम् ॥ ७१ ॥

नन्वनेनासंहते ज्योतिषि सिद्धे प्रश्नो नावकल्पते न हि स्वाधीने परापेक्षा तत्राऽऽह । लिङ्गादिति । विशेषतोऽनिरीक्षणे वैधर्म्यदृष्टान्तो भान्वादिवदिति । अनुमानस्य विशिष्टविषयतया निष्कृष्टविशेषबुभुत्सया प्रश्नोपपत्तिरित्याह । अत इति ॥ ७१ ॥

---

१ क. °क्षण: ॥ वि° । २ ख. घ. स्फुट्यते । ३ क. ग. °देव मि° ।

शान्तेषु सर्वज्योतिःषु पूर्वोक्तेष्वस्य देहिनः ॥
किंज्योतिरिति मे ब्रूहि पुंव्यापारानुभूतितः ॥ ७२ ॥

प्रश्नप्रकारमभिनयति । शान्तेष्विति । सर्वज्योतिरुपरमे प्रवृत्तेरभावात्किं प्रश्नेनेत्याशङ्क्याऽऽह । पुंव्यापारेति ॥ ७२ ॥

सर्वज्योतिरुपरतौ भूरिव्यापारकारणम् ॥
स्वयंज्योतिष्कमपि तं राजा पप्रच्छ मोहतः ॥ ७३ ॥

आत्मनः स्वप्रकाशत्वेन स्वतः स्फुरणान्न तस्मिन्प्रश्नो न हि स ज्ञाते युक्तस्तदविश्रान्तेरित्याशङ्क्याऽऽह । सर्वेति ॥ ७३ ॥

यत्प्रसादादविद्यादि सिध्यतीव दिवानिशम् ॥
तमप्यपह्नुतेऽविद्या नाज्ञानस्यास्ति दुष्करम् ॥ ७४ ॥

अज्ञानादपि स्वप्रकाशे न प्रश्नस्तस्यैव स्वसाधके प्रतीच्यसिद्धेरित्याशङ्क्याऽऽह । यत्प्रसादादिति । कुर्यान्मेरावणुधियमित्यादौ चाज्ञानस्य निरङ्कुशत्वमादर्शितमिति भावः ॥ ७४ ॥

स्वतो बुद्धं स्वतः शुद्धं स्वतो मुक्तं निरात्मिका ॥
अविचारितसंसिद्धिरविद्या लिङ्गते कथम् ॥ ७५ ॥

तस्य दुष्करं नास्ति चेत्प्रतीचि स्वसंबन्धमपि वास्तवं प्रापयेदित्याशङ्क्याऽऽह । स्वत इति ॥ ७५ ॥

निःसङ्गस्य ससङ्गेन कूटस्थस्य विकारिणा ॥
पूर्णस्यानात्मना योगो वास्तवो नोपपद्यते ॥ ७६ ॥

अविद्यात्मनोर्वास्तवासंबन्धे पूर्वोक्तां युक्तिं स्मारयति । निःसङ्गस्येति ॥ ७६ ॥

सर्वज्योतिरुपरमे किंज्योतिरिति चोदिते ॥
आत्मैवास्येति जनकं याज्ञवल्क्योऽप्युवाच ह ॥ ७७ ॥

आत्मज्योतिषि प्रश्नमुक्त्वा प्रत्युक्तिमादत्ते । सर्वज्योतिरिति । आत्मज्योतिषः सर्वसाधकत्वं प्रसिद्धमिति निपातार्थः ॥ ७७ ॥

आत्मप्रत्यय आत्मैको द्वितीयः पुनरात्मनः ॥
अनात्मप्रत्ययोऽतोऽहं स्वत एवास्मि केवलः ॥ ७८ ॥

आत्मशब्दार्थमाह । आत्मेति । स्वप्रकाशोऽद्वयोऽत्राऽऽत्मेत्यर्थः । स्वप्रकाशत्वं साधयति । द्वितीय इति । अनात्मत्वमस्वप्रकाशत्वैमव्यापकमितो व्यावर्तमानं स्वव्याप्यं तदपि व्यावर्तयतीति भावः । अद्वयत्वमुपपादयति । अतोऽहमिति । अनात्मनो जाड्येन कल्पितत्वादात्मा स्वतोऽद्वय इत्यर्थः ॥ ७८ ॥

---

१ ख. °प्यपि दे° । २ ख. °माह । स° । ३ क. ख. °त्वव्या° ।

**न सामान्यं विशेषं वा प्रत्यग्धीरवगाहते ॥**
**तद्याथात्म्यात्प्रतीचोऽतः सम्यग्दृष्ट्या न वीक्ष्यते ॥ ७९ ॥**

आत्मप्रत्ययो नाद्वयविषयः सामान्यविशेषविषयत्वात्खण्डो गौरितिज्ञानवदित्याशङ्क्य हेत्वसिद्धिमाह । **नेत्यादिना** । प्रत्यगात्मैव सामान्यादेर्वास्तवं रूपमतो रजतादिवत्तस्य पृथगभावान्न सम्यग्धीविषयत्वं प्रत्यग्धीविषयत्वं तु दूरनिरस्तमित्याह । **अत इति** ॥ ७९ ॥

**नाविद्याद्यस्मरैकात्म्यसम्यग्दृष्ट्या समीक्ष्यते ॥**
**आत्माविद्या तदुत्थो वा बाध्यत्वाद्रज्जुसर्पवत् ॥ ८० ॥**

तयोः सम्यग्धीविषयत्वाभावं साधयति । **नाविद्येति** । ज्ञातमैकात्म्यमविद्याया नाशकं तद्यथा सम्यग्धियाऽनुभूयते नैवं द्वैतं तन्निरस्यत्वात्तद्वेद्यत्वायोगात् । न हि रज्ज्वां सर्पो विद्यानिरस्यस्तद्वेद्य इत्यर्थः ॥ ८० ॥

**आध्यात्मिकस्य नेत्रादेर्बाह्यज्योतिरसंगतौ ॥**
**तद्द्वारेण प्रकाशोऽयं न मनस्युपजायते ॥ ८१ ॥**

उक्तरूपश्चेदात्मा तर्हि तदतिरिक्तज्योतिरभावात्प्रश्नप्रत्युक्त्योर्निर्विषयत्वं न चाऽऽत्मैव विषयस्तस्याविषयत्वान्न च मोहाद्विषयो राज्ञो मोहात्प्रश्नेऽपि मुनेस्तदभावात्प्रत्युक्त्ययोगान्न च केवलस्याऽऽत्मनो व्यवहारहेतुतेष्टेत्याशङ्कां परिहर्तुं भूमिकां करोति । **आध्यात्मिकस्येति** । सत्यपि यथोक्तात्मनि जागरे चे चक्षुरादेरादित्याद्यनुग्रहाभावे तद्द्वारा मनसि विवेकानुपपत्तेर्व्यवहाराभावो दृष्ट इत्यर्थः ॥ ८१ ॥

**भान्वाद्यनुग्रहाभावे तस्मादेष पुमानिह ॥**
**प्राप्तोऽद्रष्टा तथाऽश्रोता स्मृतिस्वप्नादिभूमिषु ॥ ८२ ॥**

उक्तन्यायं स्वप्नादावपि योजयति । **भान्वादीति** । जागरिते कदाचिद्व्यवहाराभावदर्शनं तत्पदेन परामृश्यते ॥ ८२ ॥

**मनसैवेक्षते यस्मात्सर्वानिन्द्रियगोचरान् ॥**
**तदभावे पुमानेष किंज्योतिरिति कथ्यताम् ॥ ८३ ॥**

जाग्रति स्वप्नादौ वा मनसि प्रकाशाभावे किमित्यद्रष्टृत्वादिप्राप्तिः स्वभावतस्तात्सिद्धेरित्याशङ्क्य प्रश्नविषयमाह । **मनसेति** । तदभावे पुमानित्यत्र तस्मादिति वक्तव्यं यस्मादित्युपक्रमात्तच्छब्दश्च मनोविषयः । यद्यपि स्वप्ने मनोऽस्ति तथाऽपि तस्य विषयत्वान्न प्रकाशकतेति वक्ष्यते ॥ ८३ ॥

**आत्मैवास्य तदा ज्योतिर्भवतीत्यभ्यधादृषिः ॥**
**आत्मनैव तदा चेष्टां ज्योतिषा संप्रपद्यते ॥ ८४ ॥**

---

१ घ. चक्षु° । २ घ. °नुत्पत्ते° ।

आत्मोक्तरूपस्तदन्यज्ज्योतिश्च नास्ति तथाऽप्यनिर्धारणात्प्रश्ननिर्धारणार्थं परिहारमाह । **आत्मैवेति** । तदा सर्वज्योतिरुपरमावस्थायामित्यर्थः । मुनेर्मोहाभावात्प्रत्युक्त्यविषयत्वेऽप्यात्मनो यथाप्रश्नं प्रत्युक्तिद्वारा स्वप्रकाशत्वेनाविषयत्वं स्थाप्यत इति भावः । परिहारोक्तिं व्याकरोति । **आत्मनेति** । स्वप्नादौ वासनारूपा धीरात्मज्योतिर्दीपिता स्वव्यापारं करोतीत्यर्थः ॥ ८४ ॥

**प्रत्यक्षाद्युपलब्धौ[1] यो बुद्धौ संस्कार आहितः ॥**
**कर्मणोद्भावितः सोऽयं स्मृतिरूपेण जायते ॥ ८५ ॥**

कोऽसौ व्यापारो बुद्धेरित्याशङ्क्य स्वप्नादिभाविन्यः स्मृतीच्छादिवृत्तयः सर्वा इत्याह । **प्रत्यक्षादीति** ॥ ८५ ॥

**आत्मा स्वाभाससचिवो धियमिच्छादिरूपिणीम् ॥**
**अनुगृह्णाति कर्मोत्थां प्रत्यगज्ञानकारणात् ॥ ८६ ॥**

बुद्धेरिच्छादिव्यापारवत्त्वेऽपि कथमात्मा निर्व्यापारस्तदनुग्राहकस्तत्राऽऽह । **आत्मेति** । स्वाज्ञानवशादात्मा बुद्ध्यादावुद्भूतः[2] स्वाभाससहायो बुद्ध्यादि स्वसंनिधिमात्रेण प्रकाशयतीत्यर्थः ॥ ८६ ॥

**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ॥**
**क्षेत्रं क्षेत्री तथा कृत्स्नं व्यनक्तीति तथा स्मृतिः ॥ ८७ ॥**

तत्र भगवद्वाक्यं प्रमाणयति । **यथेति** ॥ ८७ ॥

**नानासंस्कारसंसर्गिप्रत्यगज्ञानमेव तत् ॥**
**बुद्ध्यादिस्मृतिरूपेण प्रथते कर्मणो वशात् ॥ ८८ ॥**

इच्छादिरूपिणीं धियमात्मा भासयतीति वदता बुद्धिकार्यत्वमिच्छादेरुक्तं तदयुक्तमज्ञानस्य सर्वकारणत्वोपगमादित्याशङ्क्याऽऽह । **नानेति** । तदज्ञानमेव नानाभावनादिसहितं बुद्ध्यादिरूपेण तत्परिणामात्मना च प्राणिकर्मवशाद्विवर्तते तन्नाभ्युपगमहानिरित्यर्थः ॥ ८८ ॥

**भान्वादिवदतो बुद्धिं स्वाभासैकसहायवान् ॥**
**अनुगृह्णाति कूटस्थः स्वात्माविद्यानुरोधतः ॥ ८९ ॥**

अज्ञानस्य सर्वकारणत्वे बुद्ध्याद्यनुग्राहकत्वमात्मनस्तद्वशादित्युक्तं युक्तमिति फलितमाह । **भान्वादिवदिति** ॥ ८९ ॥

**अनुग्राह्याभिसंबन्ध एकजातिसमन्वयात् ॥**
**आदित्यादेरिहावाप्तिरात्मनोऽज्ञानवर्त्मना[3] ॥ ९० ॥**

---

१ ख. ॰लब्धो यो । २ ख. घ. ॰द्भूतस्वा॰ । ३ ख. ॰रिवेहाऽऽप्ति॰ ।

रूपादेर्भान्वादेश्च भौतिकत्वैकजातियोगादनुग्राह्यानुग्राहकत्वं युक्तं बुद्ध्यादेरात्मनश्च जाड्याजाड्यवैषम्यान्नैवमित्याशङ्क्याऽऽह। अनुग्राह्येति । इह बुद्ध्यादावज्ञानद्वाराऽऽत्मनस्तादात्म्यसंगतिरतः साजात्याभावेऽपि साक्षित्वलक्षणमनुग्राहकत्वमित्यर्थः ॥ ९० ॥

**चिदाभाविषयैवाऽऽत्मा कूटस्थोऽप्येति साक्षिताम् ॥**
**आगमापायिरूपेषु स्थितोऽनेकेषु चैकलः ॥ ९१ ॥**

कूटस्थस्य कथं साक्षित्वं तत्राऽऽह । **चिदाभेति**। व्यभिचारिष्वव्यभिचारितया चितः साक्षित्वं साधयति । **आगमेति** ॥ ९१ ॥

**दृश्यार्थवदभिन्नोऽयं द्रष्टृदर्शनसाक्ष्यपि ॥**
**द्रष्टृदर्शनभेदेऽपि न भेदोऽस्य मनागपि ॥ ९२ ॥**

अनेकेष्वेकत्वमयुक्तं रूपादिविषयभेदादिन्द्रियभेदवत्साक्ष्यभेदात्साक्षिभेदप्राप्तेरित्याशङ्क्याऽऽह । **दृश्येति** । यथा प्रकाश्यभेदेऽपि प्रकाशकः सविता न भिद्यते यथा वा सितासितादिभेदेऽपि चक्षुरेकं तथा साक्षी साक्ष्यभेदेऽपि भेदं नार्हतीत्यर्थः । दार्ष्टान्तिकं प्रपञ्चयति । **द्रष्ट्रिति** ॥ ९२ ॥

**कारणान्वयवद्बुद्धेश्चिदाभासोऽपि सर्वदा ॥**
**चिदाभासातिरेकेण बुद्धेः परिणतिर्यथा ॥ ९३ ॥**

साक्षित्वस्य सदाभावात्तद्धेतुरविद्या सदा स्यात्तथाच कुतो मुक्तिरित्याशङ्क्य यदा चिदाभासस्तदैव साक्षितेति विवक्षन्बुद्ध्यादिष्वाभासानुवृत्तिं साधयति । **कारणेति**। बुद्ध्यादेः स्वसत्तायां चिदाभासाव्यभिचारे युक्तिमाह । **चिदाभासेति**। तस्या जडतया स्वतःसाधकत्वायोगादित्यर्थः ॥ ९३ ॥

**विषयः प्रत्यगात्मा च स्वाभासेन विशेद्धियम् ॥**
**स्वाभासवत्स्वयं साक्षाद्धियत्कुम्भादिगं यथा ॥ ९४ ॥**

तस्यास्तद्व्याप्तावपि नाऽऽत्मनः साक्षित्वं विषयासंबन्धादित्याशङ्क्याऽऽह । **विषय इति**। घटादिरात्मा च स्वाकारवद्वृत्तिद्वारा बुद्धिस्थावतस्तयोर्योगात्तत्साक्षितेत्यर्थः । घटादेर्बाह्यस्यैं बुद्ध्यनुप्रवेशेगौणत्ववदात्मनोऽपि तस्य गौणत्वं मुख्यसंबन्धाभावात्कुतः साक्षितेत्याशङ्क्याऽऽह । **स्वाभासेति**। यथा घटादिकमाकाशः साक्षाद्व्याप्नोति यथा वा चिदाभासो बुद्धिमज्ञानस्य तद्धेतोरव्यवधायकत्वात्स्वाङ्गमव्यवधायकमिति न्यायादेवमात्मा साक्षादेव बुद्ध्यादिषु व्याप्तस्तत्प्रत्यक्त्वात्तद्युक्ता तस्याविद्यादिसाक्षितेत्यर्थः ॥ ९४ ॥

---

१ क. ख. °त्वं बु° । २ ग. °पायरू° । ३ घ. °त्मसा° । ४ घ. °स्य गौणबु° । ५ घ. °शत्र°। ६ क. °त्प्रयुक्तत्वात्त° । ख. °त्प्रत्यक्तत्वात्त° ।

**योऽप्यविद्यादिसंबन्धः सोऽप्यविद्याप्रकल्पितः ॥**
**वास्तवस्त्वभिसंबन्धो नोपपत्त्याऽऽत्मनो यतः ॥ ९५ ॥**

आत्मनोऽविद्यादिसंबन्धस्याऽऽविद्यत्वेऽनवस्थानाद्वास्तवत्वमाशङ्क्याऽऽह । **योऽपीति** । अनवस्था तु परकीयसमवायादाविव समाधेयेति भावः । अपिभ्यां संबन्धे समाहितत्वमस्या द्योत्यते । संबन्धस्य कल्पितत्वे हेतुमाह । **वास्तवस्त्विति** । असङ्गत्वाद्वितीयत्वादिरुपपत्तिः ॥ ९५ ॥

**यथा ज्ञानप्रकाशाभ्यां संभृतावेव नान्यथा ॥**
**कुम्भादेः कर्मयोग्यत्वं स्यादेवं धिषणादिषु ॥ ९६ ॥**

बुद्धेश्चिदाकारेण बाह्याकारेण च संबन्धोऽस्तीत्युक्तं दृष्टान्तेन साधयति । **यथेति** । बुद्धिवृत्तिरूपज्ञानेनाऽऽदित्यादिप्रकाशेन च संबन्धे सत्येव घटादेर्व्यापारयोग्यत्वं दृष्टमेवं बुद्ध्यादिष्वाकारद्वयसंबन्धे सत्येव तद्योग्यत्वं स्यादित्यर्थः ॥ ९६ ॥

**चिद्बाह्याकृतिसंबन्धे कर्मणेऽलं भवेन्मतिः ॥**
**तयोर्भिन्नाश्रयत्वे तु दुःख्यस्मीति न सिध्यति ॥ ९७ ॥**

दार्ष्टान्तिकं विवृणोति । **चिदिति** । चिद्विषयाकारयोरेकधीनिष्ठत्वाभावे दोषमाह । **तयोरिति** ॥ ९७ ॥

**कौटस्थ्याद्विक्रियाभावान्निश्चित्कत्वाद्विकारिणः ॥**
**आत्मनः स्यादिदं विश्वमन्धकारमनृत्तवत् ॥ ९८ ॥**

तत्र हेतुः । **कौटस्थ्यादिति** । आत्मनः कौटस्थ्यादित्यर्थः । दुःखीत्यादिप्रत्ययाभावे सर्वव्यवहारहानिमाह । **स्यादिति** ॥ ९८ ॥

**घटाद्याभासवत्तस्मान्मोहादेरभ्युपेयताम् ॥**
**चिदाभासोऽपि सर्वत्र न वेद्मीत्यनुभूतितः ॥ ९९ ॥**

बाह्याकारस्य वृत्तिद्वारा धीसंक्रान्तिवच्चिदाभासव्याप्तिः सर्वावस्थासु मोहादेरस्तीति फलितमाह । **घटादीति** । तस्माच्चिदाभासविषयाकारयोरेकाश्रयत्वध्रौव्यादिति यावत् । घटः स्फुरतीत्याद्यनुभवात्तस्य चिदाभासव्याप्तावपि कथमज्ञानस्य बुद्ध्यादेश्च तद्व्याप्तिस्तत्राऽऽह । **सर्वत्रेति** ॥ ९९ ॥

**एषोऽस्यानुग्रहः श्रुत्या प्रतीचोऽत्र विवक्षितः ॥**
**भान्वनुग्रहवत्पुंस आसनादिप्रसिद्धये ॥ १०० ॥**

बुद्धितद्वृत्तिषु चिदाभासव्याप्तावपि कथं तदनुग्राहकत्वमात्मज्योतिषः श्रौतं सिध्यति तत्राऽऽह । **एषोऽस्येति** । श्रुत्याऽऽत्मनैवायमित्याद्ययेति यावत् । अत्र बुद्ध्यादावित्यर्थः । प्रत्यगनुग्रहे दृष्टान्तः । **भान्विति** ॥ १०० ॥

---

१ ख. °त्वेनान° । २ क. °प्रदीपव° । ग. °प्रद्योत्तव° ।

**आत्मेति प्राणपिण्डादितदंशसमुदायतः ॥**
**तज्जात्याकृतिसंबन्धगुणकर्मविलक्षणः ॥ १०१ ॥**

आत्मज्योतिषोऽनुग्राहकत्वं पुंस्याभासोदयरूपं प्रतिपाद्याऽऽत्मपदार्थं प्रपञ्चयति । **आत्मेतीति** । प्राणात्पिण्डादिन्द्रियादेस्तदंशेभ्यस्तत्समुदायात्तस्य पिण्डादेर्जात्याकृतिभ्यां संबन्धात्तद्गतगुणकर्मभ्यां च विलक्षणो यश्चिद्धातुः सोऽत्राऽऽत्मेत्यर्थः ॥ १०१ ॥

**तत्सतत्त्वं तदात्मत्वादज्ञानाद्यवभासयत् ॥**
**ज्योतिरेकात्मकं नित्यमसाधारणमानगम् ॥ १०२ ॥**

कथं कार्यकरणतत्संघाततद्धर्मविलक्षणस्याऽऽत्मत्वं तत्राऽऽह । **तत्सतत्त्वमिति** । तद्वस्तु यथोक्तं तस्य पिण्डादेर्वास्तवं रूपं तत्प्रत्यक्त्वादिति यावत् । तस्य कथं तज्ज्योतिष्ट्वं तदाह । **अज्ञानादीति** । आदित्यादेर्विशेषमाह । **एकेति** ॥ १०२ ॥

**तदन्यस्य जडत्वाच्च नान्यप्रत्यक्षमिष्यते ॥**
**तथाऽनतिशयत्वात्स्यान्न पुमन्तरगोचरः ॥ १०३ ॥**

असाधारणमानगम्यमित्ययुक्तं प्रत्यक्षादिविषयत्वादित्याशङ्क्याऽऽह । **तदन्यस्येति** । आत्मनोऽन्यस्य जाड्यादजडस्यान्यस्याभावाच्च नान्यदीयप्रत्यक्षादिगम्यमात्मज्योतिरित्यर्थः । अजडस्यान्यस्य सत्त्वेऽपि न तद्गम्यं दीपयोरिवाविशेषादित्याह । **तथेति** ॥ १०३ ॥

**शब्दादिगुणहीनत्वात्प्रत्यक्त्वासंहतत्वतः ॥**
**दृष्टिमात्रस्वभावाच्च नाऽऽत्मा दर्शनमर्हति ॥ १०४ ॥**

तस्याध्यक्षाद्यगम्यत्वे युक्त्यन्तरमाह । **शब्दादीति** ॥ १०४ ॥

**देशान्तराद्यसंबन्धान्मोहाद्यव्यवधानतः ॥**
**न च मोहादिवत्प्रत्यक्तथा दर्शनमर्हति ॥ १०५ ॥**

अनुमानागम्यत्वे हेत्वन्तरमाह । **देशान्तरादीति** । किंचाज्ञानसंशयविपर्ययगास्पृष्टत्वादात्मनो न तस्मिन्मानप्रवृत्तिस्तदौपनिषदत्वं तु लक्षणयेति मत्वाऽऽह । **मोहादीति** । तस्य तदव्यवधानेऽपि दृश्यत्ववदात्मनोऽपि स्यादित्याशङ्क्याऽऽह । **न चेति** । प्रतीचः सर्वसाक्षित्वान्नाज्ञानादिसाम्यादृश्यमित्याह । **तथेति** ॥ १०५ ॥

**नाऽऽदित्यादिसजातीयमात्मज्योतिरितीष्यताम् ॥**
**तन्मानानवगम्यत्वादादित्यादेश्च तद्ग्रहात् ॥ १०६ ॥**

अथेदं भौतिकमनुग्राहकत्वादादित्यवदित्यनुमानान्नास्य स्वप्रकाशता तत्राऽऽह । **नाऽऽदित्यादीति** । आत्मज्योतिरित्यनेन तच्छब्दः संबध्यते । विमतमभौतिकममेयत्वाद्यद्भौतिकं तन्मेयं यथाऽऽदित्यादीति व्यतिरेकादिति भावः ॥ १०६ ॥

---

१ घ. 'यंकार' । २ ग. 'णमंघा' । ३ क. ग. 'न्यत्प्रत्य' । ४ ख. 'पर्यासादृ' ।

**अनुग्राह्यसजातीयं यच्च ज्योतिरिहेष्यते ॥**
**तच्चक्षुरादिकरणग्राह्यं दृष्टं घटादिवत् ॥ १०७ ॥**

विमतमनुग्राह्यसजातीयं ज्योतिष्ट्वादादित्यवदित्याशङ्क्य मेयत्वोपाधिना दूषयति । **अनुग्राह्येति** ॥ १०७ ॥

**न चाप्रमेयमिति तच्छशशृङ्गादिवन्मतम् ॥**
**तदनन्यमिति व्याप्तेः प्रत्यक्त्वाद्दिनकृद्यथा ॥ १०८ ॥**

आत्मज्योतिष्यपि तुल्यं मेयत्वमन्यथा शशशृङ्गवदसत्त्वापत्तेरित्युपाधेः साधनव्याप्तिमाशङ्क्याऽऽह । **न चेति** । नामेयत्वमसत्त्वे निमित्तं किंतु जाड्यमिति मत्वाऽऽह । **तदनन्यमिति** । तस्याऽऽत्मनः स्वाभिन्नप्रकाशव्याप्तेर्नासत्तेत्यर्थः । जडत्वस्यापि साधनव्याप्तिमाशङ्क्यानात्मत्वोपाधिना दूषयति । **प्रत्यक्त्वादिति** । प्रकाशरूपत्वे दृष्टान्तमाह । **दिनकृदिति** ॥ १०८ ॥

**प्रत्यक्षमानगम्यत्वं विषाणस्यावधारितम् ॥**
**स्वभावस्तमृते शृङ्गं स्वभावमतिवर्तते ॥ १०९ ॥**

आत्मज्योतिषो मेयत्वादृते सत्त्वे शशशृङ्गस्यापि[1] किं न स्यात्तत्राऽऽह । **प्रत्यक्षेति** । मानयोग्यस्य तदविषयत्वे युक्तमसत्त्वमिति भावः ॥ १०९ ॥

**मानपादोपजीवित्वं स्वभावोऽनात्मवस्तुनः ॥**
**मात्रादिसिद्धिदस्यैष स्वतःसिद्धेर्न सर्वदा ॥ ११० ॥**

आत्मनोऽपि मानयोग्यत्वं स्वभावो वस्तुत्वाद्विषाणवत्तदभावे त्वसत्त्वमित्याशङ्क्याऽऽह । **मानेति** । तत्राप्यनात्मत्वमुपाधिरिति भावः । नन्वात्मैवाज्ञातः सर्वप्रमाणयोग्यो नार्थान्तरमिति ते मतं तत्कथमन्यथोच्यते तत्राऽऽह । **मात्रादीति** । सर्वसाधकस्याऽऽत्मनो नैष स्वभावो यन्मानयोग्यत्वं निरपेक्षतया सदास्फूर्तेस्तत्रोपाधिं पुरोधाय प्रवर्तमानान्यपि मानानि न तं विषयी कुर्वन्त्यन्यदेव तद्विदितादित्यादिश्रुतेस्तस्यैव मानयोग्यत्वोक्तिरपि तदन्यावस्तुत्वद्योतनार्था न तद्विषयत्वार्थेति भावः ॥ ११० ॥

**अस्तं यातेषु सर्वेषु ज्योतिःषूक्तेषु वासनाः ॥**
**ज्योतिः प्रत्यक्स्वयं दृष्टमासनाद्याः प्रकाशयेत् ॥ १११ ॥**

आत्मज्योतिषः स्वप्रकाशत्वं ज्योतिःशब्दार्पितमुक्त्वाऽऽत्मनैवायमित्यादेरर्थमुपसंहरति । **अस्तमिति** । उक्तेषु ज्योतिःषु सर्वेष्वस्तं यातेषु स्वयं दृष्टं प्रत्यग्ज्योतिरासनाद्या वासनाः प्रकाशयेदिति योजना । स्वप्नादावासनादीनां वासनामात्रत्वेनाऽऽभासत्वमित्यभिप्रेत्य वासनापदम् ॥ १११ ॥

---

१ घ. °पि तर्कि न

एष आत्मा स्वयंज्योती रविसोमाग्निवाक्षु यः ॥
यातेष्वस्तं दृशैवाऽऽस्ते भासयंश्चित्तचेष्टितम् ॥ ११२ ॥

आत्मज्योतिः स्वयं दृष्टमित्यश्लिष्टं भासकत्वाद्दीपवदन्यभास्यत्वप्रसक्तेरित्याशङ्क्याऽऽह । **एष इति ।** सर्वेषु ज्योतिःष्वस्तं गतेषु स्वरूपदृशैव चित्तं तच्चेष्टितं च भासयन्यो वर्तत एष स्वयंज्योतिरात्मा न तस्य भासकान्तरापेक्षा जडवैलक्षण्यादित्यर्थः ॥ ११२ ॥

आत्मप्रत्ययमामेयः सर्वेषामपि देहिनाम् ॥
यतोऽतोऽनात्मयोगोऽस्य न मानादवसीयते ॥ ११३ ॥

नन्वात्मनो देहादिव्यतिरिक्तत्वं स्वप्रकाशत्वं च ब्रह्माभेदार्थं न च तदभेदः कर्तृत्वादियोगादत आह । **आत्मेति ।** स्वप्रकाशत्वादेवाऽऽत्मनो न कर्तृत्वाद्यनात्मयोगः स्वप्रकाशे मानात्तदसिद्धेस्तस्य तदविषयत्वात्तस्यापि स्वतःसिद्धावनतिरेकादित्यर्थः ॥ ११३ ॥

न चेदात्मेतिधीमानात्प्रतीचोऽन्योऽर्थ ईक्ष्यते ॥
प्रमान्तराविरोधेन य आत्मेत्युपपद्यते ॥ ११४ ॥

किंचाऽऽत्मनः कर्तृत्वाद्यसंबन्धे य आत्माऽपहतपाप्मेत्यादिवाक्यमनुग्राहकमित्याह । **न चेदिति ।** आत्माकारप्रत्ययप्रयोगाभ्यामात्मनोऽन्यः कर्तृत्वादिर्न गृह्यते चेत्कर्ताऽहमित्यादिप्रतीतेर्भ्रमत्वात्तद्विरोधाभावाच्च आत्माऽपहतपाप्मेत्याद्युपपन्नं य आत्मा सर्वान्तर इति चैक्यपरं वाक्यं समञ्जसमित्यर्थः ॥ ११४ ॥

आत्मा ब्रह्मेति वाक्येभ्यस्तथाचेदं प्रतीयते ॥
प्रत्यक्षाद्यनवष्टब्धमैकात्म्यं बाधवर्जितम् ॥ ११५ ॥

उक्तयुक्तिमानाभ्यामात्मनि कर्तृत्वाद्यसंबन्धे तत्त्वमादिवाक्यमपि युक्तमित्याह । **आत्मेति ।** इदमैकात्म्यमिति संबन्धः । प्रतीतेरनुवादत्वं व्युदस्यति । **प्रत्यक्षादीति ।** संशयविपर्ययबहिर्भावं दर्शयति । **बाधेति** ॥ ११५ ॥

ननु देहाद्यभिन्नत्वादात्मनो मुक्तता कुतः ॥
प्रत्यक्षेण विरुद्धत्वादैकात्म्यं चापि न श्रुतेः ॥ ११६ ॥

आत्मैवास्य ज्योतिरित्यत्राऽऽत्मा देहाद्यतिरिक्तः स्वयंज्योतिरशेषकर्तृत्वादिशून्यो ब्रह्मैवेत्युक्ते देहात्मवादी चोदयति । **नन्विति ।** आत्मनो वक्ष्यमाणप्रत्यक्षेण देहादिमात्रत्वात्तस्य च कर्तृत्वादिसंभवात्तद्रूपस्य न तन्निर्मोकसिद्धिरित्यर्थः । यत्त्वयमात्मा ब्रह्मेत्यादिश्रुतेस्तद्ब्रह्मत्वं तत्राऽऽह । **प्रत्यक्षेणेति ।** कर्ताऽहमित्याद्यध्यक्षविरोधे त्वदिष्टश्रुतेः

१ ग. आत्मा प्र° ।

स्वार्थे तात्पर्यासिद्धेर्नाऽऽत्मनस्ततो ब्रह्मत्वं न च श्रुतिर्नाम मानं प्रत्यक्षस्यैव तद्भावात्तथाच बन्धध्वस्तेर्ब्रह्मत्वस्य वा विवक्षितमोक्षस्यासिद्धिरिति भावः ॥ ११६ ॥

**तथा हि क्षितितोयाग्निमरुतां योगजं मतम् ॥**
**प्रत्येकं शक्त्यभावेऽपि चैतन्यं मदशक्तिवत् ॥ ११७ ॥**

यस्य चैतन्यं तस्यैवाऽऽत्मत्वाद्देहादेस्तदभावात्कथमात्मत्वं तत्राऽऽह । **तथा हीति ।** पृथिव्यप्तेजोवायवस्तत्त्वानीति स्थितेस्तेषामेकैकस्य चिच्छक्त्यभावेऽपि यो योगः संघातो देहस्ततो जातं चैतन्यं तद्धर्मो यथा किण्वादीनां प्रत्येकमसत्यपि मदशक्तिः संघाताद्भवति तद्युक्ता देहस्याऽऽत्मतेत्यर्थः ॥ ११७ ॥

**अहं मनुष्य इत्येवं सामानाधिकरण्यतः ॥**
**प्रत्यक्षबुद्धिर्देहेऽस्मिञ्जायते कृष्णसर्पवत् ॥ ११८ ॥**

चैतन्यदेहयोर्धर्मधर्मित्वे प्रत्यक्षं प्रमाणयति । **अहमिति ।** कृष्णः सर्प इति सामानाधिकरण्यात्कार्ष्ण्यसर्पयोर्धर्मधर्मित्ववन्मनुष्योऽहमिति सामानाधिकरण्यादहमश्चैतन्यस्य मनुष्यत्वजातिमति देहे धर्मत्वविषयप्रत्यक्षरूपा धीरुदेतीत्यर्थः ॥ ११८ ॥

**न चाहंबुद्धिगम्योऽर्थो दृष्टो देहातिरेकतः ॥**
**सर्पादेरिव कार्ष्ण्यादिर्देहधर्मस्ततश्चितिः ॥ ११९ ॥**

चैतन्यविशिष्टदेहस्याऽऽत्मत्वे प्रत्यक्षमुक्त्वा परेष्टात्मनि मानाभावमाह । **न चेति ।** देहस्यैवाऽऽत्मत्वे प्रमाणभावे तदतिरिक्तात्मनि तदभावे च फलितमाह । **सर्पादेरिति** ॥ ११९ ॥

**ननु युक्ता पराग्भूते प्रमातुर्व्यतिरेकतः ॥**
**सर्पादौ धर्मसंबन्धप्रमा नाऽऽत्मन्यभेदतः ॥ १२० ॥**

कृष्णसर्पवच्चैतन्यदेहयोर्धर्मधर्मित्वमाक्षिपति । **नन्विति ।** सर्पात्तद्धर्माच्चातिरेकतस्तयोर्धर्मधर्मित्वस्य ग्रहीतुर्मातुर्भावादनात्मनि सर्पादौ कार्ष्ण्यादिसंबन्धप्रमेति युक्तं न त्वात्मनि चैतन्ये धर्मधर्मित्वप्रमा तदतिरिक्तमात्राभावादित्यर्थः ॥ १२० ॥

**जडस्वभावतश्चापि कार्ष्ण्यादेर्धर्मतेष्यते ॥**
**स्वसंविदितमात्रत्वान्न त्वेवंरूपता चितेः ॥ १२१ ॥**

चिद्देहयोर्धर्मधर्मित्वाभावे हेत्वन्तरमाह । **जडेति ।** एवंरूपता धर्मता ॥ १२१ ॥

**यथैकबुद्धिनिर्ग्राह्यं द्रव्येणेह विशेषणम् ॥**
**नैवं चित्काययोः सिद्धिश्चिच्छक्त्याविषयत्वतः ॥ १२२ ॥**

नन्वजडत्वेऽपि चितो धर्मता जडात्मनि देहे किं न स्यादित्याशङ्क्याऽऽह । **यथेति ।** एकबुद्धिबोध्ययोर्धर्मधर्मित्वं यथा रूपिणैकधीग्राह्यं रूपं[2] तद्धर्मत्वेन तद्विशेषणं नैवं

१ ख. युक्तं । २ ख. घ. °पं धर्मं° ।

चिद्देहयोरेकस्यां संविदि भानं चितोऽविषयत्वादतो न तयोर्धर्मधर्मितेत्यर्थः ॥ १२२ ॥

नैवं येनैव मानेन सत्ता संविद इष्यते ॥
तेनैव धर्मता तस्याः कार्ष्ण्यादेरिव मीयते ॥ १२३ ॥

देहात्मवादी दूषयति । नैवमिति । युक्त्या हि त्वया चैतन्यदेहयोर्धर्मधर्मिता निरस्यते सा चाध्यक्षविरोधादाभासश्रितः सत्ताऽनुभवादिष्टा तद्धर्मतामपि साधयति तत्पारतन्त्र्यप्रसिद्धेरित्यर्थः ॥ १२३ ॥

ननु देह इदंबुद्धिर्घटादाविव जायते ॥
प्रत्यग्बुद्धिस्त्वहंभागे नानयोर्धर्मधर्मिता ॥ १२४ ॥

इदमनिदंधीग्राह्ययोर्देहचितोर्न धर्मधर्मिता विरोधादिति शङ्कते । नन्विति ॥१२४॥

यथैव पारिहार्यादि हेमैकद्रव्यनिष्ठितम् ॥
अलब्धात्मकमन्यत्र लब्धात्मकमिवेक्ष्यते ॥ १२५ ॥
तथैव वस्तुस्वाभाव्याच्चिच्छक्तिर्भूतनिष्ठिता ॥
अहमित्यादिबुद्धीनां व्यवहाराय कल्पते ॥ १२६ ॥

पूर्ववादी दृष्टान्तेन परिहरति । यथैवेति । रुचकस्वास्तिकादि हेमविकारत्वात्तद्गत-मन्यत्रालब्धसत्ताकमपि ततो भिन्नमिव प्रयोगप्रत्ययावलम्बनं दृष्टं तथा चैतन्यं भूतसं-घातकार्यत्वस्वभाववशाद्देहधर्मत्वादन्यत्रालब्धात्मकमप्यहमात्मेत्यादिशब्दबुद्धीनां स्वत-न्त्रवदालम्बनं नैतावता तस्यादेहधर्मता पारिहार्यादेर्हेमधर्मत्ववत्तस्य धर्मत्वाविरोधादि-त्यर्थः ॥ १२५ ॥ १२६ ॥

चैतन्यं देहधर्मश्चेन्मृतावविकलस्य तत् ॥
कस्मान्न गम्यते साक्षाज्जीवद्देहगतं यथा ॥ १२७ ॥

तत्रापि देहः स्फुरतीति तदीयतया भात्येव चैतन्यमित्याशङ्क्याऽऽह । साक्षा-दिति ॥ १२७ ॥

नैष दोषश्चतुर्णां हि भूतानां संहतिस्तनुः ॥
ततो वायावपक्रान्ते चैतन्यमपि नश्यति ॥ १२८ ॥

तस्य संयोगादिवेद्यावदाश्रयभाविनोऽपि धर्मत्वसिद्धेर्नैवमिति पूर्ववाद्याह । नेत्या-दिना । पृथिव्यादिचतुष्टयसंघातो देहो मृतिकाले वायोरपायादविकलसंघाताभावात्त-त्कार्यचैतन्यमपि नश्यति संयोगादिवत्तस्य देहधर्मतोऽविरुद्धेत्यर्थः । समूहकार्यस्य समू-हिनामन्यतमाभावेऽपि न सत्तेत्यधिगतं सभायामिति वक्तुं हिशब्दः ॥ १२८ ॥

स्वप्नदेहादिसंबन्धिप्रत्यभिज्ञाबलान्ननु ॥
व्यतिरेकश्चितेः सिद्धो भूतेभ्यो जाग्रतोऽप्यतः ॥ १२९ ॥

---

१ घ. 'यल' । २ घ 'वदा' । ३ ख. 'ता चावि' ।

प्रत्यभिज्ञामाश्रित्य शङ्कते । स्वप्नेति । जाग्रद्देहान्मनुष्यरूपाद्व्याघ्रादिरूपः स्वाप्नो देहो भिद्यते तथाऽपि यः सुप्तः सोऽहमित्युभयदेहस्थचैतन्यप्रत्यभिज्ञानाद्देहान्तरधर्मस्य चान्यदेहान्वितत्वेन प्रत्यभिज्ञानाभावाच्चैतन्यस्य देहद्वयारम्भकभूतेभ्यस्तदारब्धदेहद्वयाच्च व्यतिरेकः सिद्धोऽतो देहो नाऽऽत्मेत्यर्थः ॥ १२९ ॥

देहान्तरविनिर्माणं जाग्रच्चैतन्यवद्ध्रुवम् ॥
करोति भूतसंघातः स्वप्ने बालयुवादिवत् ॥ १३० ॥

पूर्ववाद्याह । देहान्तरेति । यथा बालदेहविशिष्टचैतन्यान्वितमेव युवशरीरं तद्विशिष्टचैतन्यविशिष्टं स्थविरशरीरमारभते भूतसमुदायो न त्ववस्थाभेदेऽपि तत्र चैतन्यभेदस्तथा जाग्रद्देहगतचैतन्यविशिष्टमेव स्वप्ने देहान्तरं स करोत्यतश्चैतन्यस्य देहधर्मत्वेऽप्युभयत्रैक्यात्प्रत्यभिज्ञानमविरुद्धमित्यर्थः ॥ १३० ॥

न चात्र प्रत्यभिज्ञाऽस्ति मिथ्यापरिणतेस्तव ॥
नैव बाल्यादिवद्यस्मात्स्वप्ने देहः प्रतीयते ॥ १३१ ॥

स्वप्नादिदेहस्थचैतन्यविषयेप्रत्यभिज्ञाप्रामाण्यमुपेत्य देहात्मवादेऽपि तत्संभवमुक्त्वा तत्प्रामाण्यमेव नास्तीत्याह । न चेति । अत्रेति स्वप्नदेहस्थचैतन्योक्तिः । तत्र हेतुमाह । मिथ्येति । मायावादे मायामात्रं तु कार्त्स्न्येनेत्यादिन्यायेन स्वप्नस्य मिथ्यात्वात्तद्गतचैतन्यस्यापि तथात्वात्प्रत्यभिज्ञा भ्रान्तिरित्यर्थः । स्वपक्षेऽपि स्वप्नमिथ्यात्वे हेतुमाह । नैवेति । तस्मान्मिथ्येति शेषः ॥ १३१ ॥

जातिस्मरणदृष्टान्तादात्मा नित्यो मतो यदि ॥
व्रणं पूर्वकृतं दृष्ट्वा देहः किं नोच्यते ध्रुवः ॥ १३२ ॥

ननु कश्चित्पूर्वजातिं स्मरति पूर्वत्राहं शूद्रोऽभूवं संप्रति ब्राह्मणोऽस्मीति न च देहद्वयवर्तिनि स्मर्तर्येकस्मिन्नसत्येषा युक्ता तद्देहद्वयातिरिक्तात्मासिद्धौ तद्दृष्टान्तेन सर्वत्राप्यात्मैवंलक्षणः स्यादिति शङ्कते । जातीति । परस्य मतेऽपि जातिस्मृतिर्युक्तेत्याह । व्रणमिति । पूर्वस्मिञ्जन्मनि कस्यचिद्यस्मिन्देहदेशे शस्त्रादिकृतं व्रणमासीत्तत्प्रदेशे तद्युक्तमेव शरीरं तस्येदानीमनुभूयते तथा च शरीरमेव नित्यमात्मा चेत्यस्मत्पक्षसिद्धिरित्यर्थः ॥ १३२ ॥

प्रत्यभिज्ञानतस्तत्र ध्रौव्यं चेदात्मनो मतम् ॥
स्वप्नात्मप्रत्यभिज्ञेयं मृषार्था साऽपि पूर्ववत् ॥ १३३ ॥
सशल्यदेहशायीनि भूतान्येव तथाविधम् ॥
देहान्तरं करिष्यन्ति प्रत्यभिज्ञा यदीष्यते ॥ १३४ ॥

किंच जातिस्मरणं स्मृतिर्वा प्रत्यभिज्ञा वा नाऽऽद्यस्ततस्तन्नित्यत्वासिद्धेः स्मृतेरप्रामा-

१ ख. 'न्यधर्मदे' । २ क. 'यकप्र' ।

ण्यादित्यभिप्रेत्य द्वितीयं शङ्कते । प्रत्यभिज्ञानत इति । तत्र पूर्वोत्तरदेहयोरिति यावत् । यः सुप्तः सोऽहमितिप्रत्यभिज्ञावदेषाऽपि प्रत्यभिज्ञा भ्रान्तिरेव तत्र जातिस्मृतिर्देहातिरिक्तात्मसाधनमिति दूषयति । स्वप्नेति । कारणदोषबाधधियोरभावान्नेयं भ्रान्तिरित्याशङ्क्याऽऽह । पूर्ववदिति । यदि यथोक्तन्यायात्प्रत्यभिज्ञेष्यते तर्हि यथा पूर्वत्र स्वप्नजाग्रद्देहस्थचैतन्यविशिष्टं देहान्तरमारभन्ते भूतानीति प्रत्यभिज्ञा परस्यापि सुप्रतिपादा तथा सव्रणदेहारम्भकतया तद्गतानि भूतानि तदेव शरीरं सव्रणमारभन्तेऽतो न प्रत्यभिज्ञया देहादिव्यतिरिक्तात्मसिद्धिरित्यर्थः ॥ १३३ ॥ १३४ ॥

तान्येवैतानि भूतानीत्येवं यद्वत्प्रजायते ॥
प्रत्यभिज्ञा स एवाहमिति यद्वद्भवेन्न किम् ॥ १३५ ॥

पूर्वदेहः सव्रणो भस्मीभूतो नेदानींतनप्रत्यभिज्ञाविषयो भवेदित्याशङ्क्याऽऽह । तान्येवेति । सव्रणदेहारम्भकभूतेषु तव प्रत्यभिज्ञावन्ममापि तदारब्धे देहे तत्सिद्धिः । न हि पूर्वमसन्नेव देहः संप्रति भवत्यतिप्रसङ्गात्तस्माच्चैतन्यविशिष्टं शरीरमेवाऽऽत्मेत्यर्थः ॥ १३५ ॥

यच्चैतदात्मज्योतिष्ट्वं व्यतिरिक्ततयोदितम् ॥
आदित्यादिलयेनेह भौतिकं त्वेव तद्भवेत् ॥ १३६ ॥

आदित्यादिनिमित्तव्यवहारवद्व्यवहारत्वलिङ्गेन स्वप्नादिव्यवहारस्यातिरिक्तज्योतिर्निमित्तत्वानुमानात्कुतो देहात्मेत्याशङ्क्याऽऽह । यच्चेति । आत्मज्योतिष्ट्वं तद्रूपज्योतिषः सत्त्वमिति यावत् । व्यतिरिक्ततया संघाताद्व्यवहर्तुरिति शेषः । आदित्यादिलयेन प्रसिद्धसर्वज्योतिरस्तमयेऽपि दृश्यमानस्वप्नादिव्यवहारलिङ्गेनेत्यर्थः । आत्मज्योतिषो देहाद्यतिरेकेऽपि तद्भौतिकत्वमेव ज्योतिष्ट्वादादित्यवदित्याह । भौतिकमिति ॥ १३६ ॥

उपकारि सजातीयमुपकार्यस्य वस्तुनः ॥
जगत्यस्मिन्यतो दृष्टमादित्यश्चक्षुषो यथा ॥ १३७ ॥

तत्रानुमानान्तरं वक्तुं व्याप्तिमाह । उपकारीति । यतःशब्दस्योत्तरवार्तिकस्थातःशब्देन संबन्धः ॥ १३७ ॥

शब्दादिभिर्हि घ्राणादेर्नोपकारः समीक्ष्यते ॥
विजातीयैरतो ज्योतिर्भूतजातीयमिष्यताम् ॥ १३८ ॥

यदुपकारकं तदुपकार्यसजातीयमित्यन्वयमुक्त्वा व्यतिरेकमाह । शब्दादिभिरिति । अन्वयव्यतिरेकयोरुभयसंप्रतिपत्त्यर्थो हिशब्दः । विमतं देहादिजातीयमुपकारकत्वादादित्यवदिति फलितमाह । अत इति ॥ १३८ ॥

१ ख. °तिकत्वं च त° । २ क. ख. °त्मेति शङ्कते । य° । ३ ख. °कत्वाम° । ४ ख. °र्हि घ्राणा° ।

**भौतिकस्यैव कुम्भादेर्भौतिकैरेव वीक्ष्यते ॥**
**उपकारो जगत्यस्मिन्नादित्याद्यैर्यथा तथा ॥ १३९ ॥**

आत्मज्योतिषो देहादिसाजात्येऽपि कथं भौतिकत्वमत आह । **भौतिकस्येति** । तथा भौतिकेनैवाऽऽत्मज्योतिषा भौतिकस्य देहादेरुपकारो वाच्य इति शेषः ॥१३९॥

**देहादेर्यदि नामेदं ज्योतिरर्थान्तरं मतम् ॥**
**तथाऽपि नासजातीयं व्यञ्जकत्वात्प्रदीपवत् ॥ १४० ॥**

विमतं देहादिसजातियं व्यञ्जकत्वाद्दीपवदित्यनुमानान्तरमाह । **देहादेरिति** ॥१४०॥

**ननु देहासजातीयमन्तस्थातीन्द्रियत्वतः ॥**
**यद्यद्देहसजातीयं ज्योतिर्दृष्टं तदिन्द्रियैः ॥ १४१ ॥**

विमतं देहादिविलक्षणमन्तस्थत्वादतीन्द्रियत्वाच्च व्यतिरेकेणाऽऽदित्यवदिति शङ्कते । **नन्विति** । विपक्षे हेत्वनुपपत्तिमाह । **यद्यदिति** । अनन्तस्थं चेति शेषः । तस्मादात्मज्योतिरपि देहादिसजातीयं चेदैन्द्रियकमनन्तस्थं च स्यादित्यर्थः ॥ १४१ ॥

**मैवं नैकान्तिको हेतुश्चक्षुरादीन्द्रियैः स्फुटम् ॥**
**अन्तस्थानि यतोऽक्षाणि प्रत्यक्षाणि न चाऽऽत्मवत् ॥ १४२ ॥**

विरुद्धतया हेतुद्वयं निरस्यति । **मैवमिति** । विरुद्धत्वं स्फोरयति । **अन्तस्थानीति** । यथा तवाऽऽत्मा देहादेर्भिन्नोऽन्तस्थोऽतीन्द्रियश्च तथेन्द्रियाण्यपि गोलकवैलक्षण्योपगमाद्देहान्तस्थान्यतीन्द्रियाणि च त्वयेष्टानि तथाऽपि देहसजातीयानीति स्फुटा विरुद्धतेत्यर्थः ॥ १४२ ॥

**आदित्यादिसजातीयमात्मज्योतिरतीन्द्रियम् ॥**
**अन्तस्थातीन्द्रियत्वाभ्यां चक्षुरादीन्द्रियं यथा ॥ १४३ ॥**

किंच विमतं देहसजातीयमन्तस्थत्वादतीन्द्रियत्वाच्च चक्षुरादिवदिति प्रत्यनुमानमाह । **आदित्यादीति** । आदित्यादिसजातियदेहस्य तत्सजातीयं विमतमिति प्रतिज्ञार्थः ॥ १४३ ॥

**विशेषेऽनुगमाभावः सामान्ये सिद्धसाध्यता ॥**
**इत्यादिदोषदुष्टत्वान्न च नोऽनुमितिः प्रमा ॥ १४४ ॥**

किंचानुमानप्रामाण्यमुपेत्योक्तं वस्तुतस्तु न तन्मानमित्याह । **विशेष इति** । पर्वतनितम्बवर्तिनि वह्निविशेषे साध्ये महानसे तदभावादृष्टान्तस्य साध्यविकलता वह्निमात्रे साध्ये तस्य क्वापि सिद्धतया सिद्धसाध्यत्वादाश्रयासिद्धिर्धूमविशेषे च हेतौ साधनवैकल्यमसिद्धिर्वेति दोषदुष्टत्वान्नानुमानं मानमित्यर्थः । व्यक्त्योर्वा व्याप्तिर्जात्योर्वा तदाक्रान्तविशेषयोर्वा धूमवत्त्ववह्निमत्त्वयोर्वा नाऽऽद्यः सर्वोपसंहारासिद्धेर्न द्वितीयस्तयोः

---

१ क. 'त्वात्स्याच्चक्षु' ।

स्वरूपभेदाद्धर्मिभेदाच्च न तृतीय उक्तदोषान्न चतुर्थ औपाधिकधर्मस्य स्वरूपातिरिक्तस्यानिरूपणादित्यादिशब्दार्थः ॥ १४४ ॥

**अनुमानबलेनैव देहादिव्यतिरेकतः ॥**
**प्रत्यगात्मा स्वयंज्योतिः साध्यते तच्च नानुमा ॥ १४५ ॥**

देहाद्यतिरिक्तमात्मानं साधयतो नानिष्टमनुमानाप्रामाण्यं मानान्तरात्तत्सिद्धेरित्याशङ्क्याऽऽह । **अनुमानेति** । तच्चानुमानं नानुमानमिति यावत् ॥ १४५ ॥

**प्रत्यक्षैकप्रमाणेन देहे चिद्धर्मकेऽञ्जसा ॥**
**गृह्यमाणेऽनुमानेन न तच्छक्यं प्रबाधितुम् ॥ १४६ ॥**

यत्तु देहो नाऽऽत्मा भौतिकत्वात्कुम्भवदिति तत्राऽऽह । **प्रत्यक्षेति** । अनुष्णतानुमानवदध्यक्षविरोधाद्देहानात्मत्वानुमानानुत्थानमिति भावः ॥ १४६ ॥

**दर्शनादिक्रियां कुर्वन्सर्वदाऽव्यभिचारतः ॥**
**प्रत्यक्षेणैव दृष्टोऽयं देहो नातस्ततोऽपरः ॥ १४७ ॥**

देहः स्वव्यतिरिक्तद्रष्टृको दृश्यत्वाद्घटवदित्याशङ्क्य प्रागुक्तदोषसाम्यान्मैवमित्याह । **दर्शनादीति** ॥ १४७ ॥

**दर्शनादिक्रियाकारी देहश्चेदभ्युपेयते ॥**
**कस्मादविकलस्यैव दृष्ट्यादिर्न तथेक्ष्यते ॥ १४८ ॥**

देहो नाऽऽत्मा चैतन्यव्यभिचारित्वाद्घटवदिति शङ्कते । **दर्शनादिक्रियेति** । तथा स्वापमूर्छाद्यवस्थास्वपि पूर्ववदित्यर्थः ॥ १४८ ॥

**नैष दोषो भवेदत्र प्रत्यक्षप्रमितत्वतः ॥**
**न हि दृष्टं समुल्लङ्घ्य ततोऽन्यद्बलवन्मतम् ॥ १४९ ॥**

स्वभाववाद्याह । **नेत्यादिना** । अत्रेति देहोक्तिः । कादाचित्कदर्शनादर्शनयोरिति शेषः । दृष्टमपि न्यायविरोधे त्याज्यमित्याशङ्क्याऽऽह । **न हीति** ॥ १४९ ॥

**भास्वराभास्वरत्वं च प्रत्यक्षेणैव वीक्ष्यते ॥**
**खद्योतस्यानुमानेन न हेत्वन्तरकल्पनम् ॥ १५० ॥**

कथं कादाचित्कस्य दर्शनादेः स्वभावत्वं वस्त्वस्ति स्वभावश्चापगच्छतीत्ययोगात्तत्राऽऽह । **भास्वरेति** । ननु खद्योतस्यापि भास्वरत्वादि हेत्वन्तरकृतं कादाचित्कत्वाद्घटवदित्याशङ्क्याऽऽह । **अनुमानेनेति** । प्रत्यक्षविरोधादिति भावः ॥ १५० ॥

**हेत्वन्तरेऽनुमेये च किंचित्सामान्यगन्धतः ॥**
**सर्वं सर्वस्य लिङ्गं स्यात्तच्चानिष्टं प्रसज्यते ॥ १५१ ॥**

कादाचित्कत्वेन स्वभावातिरिक्ते हेतावनुमेये वह्निरनुष्णो वस्तुत्वाज्जलवदित्यपि

---

१ क. °गात्मस्व° । २ क. °हेततः प° ।

स्यात्प्रत्यक्षविरोधस्य तुल्यत्वादित्यतिप्रसङ्गं दोषान्तरमाह । **हेत्वन्तर इति ।** न च वह्नेरनुष्णत्वं युक्तं प्रमितपदार्थव्यवस्थादौस्थ्यप्रसङ्गादित्याह । **तच्चेति** ॥ १९१ ॥

**न च नास्ति पदार्थानां लोकेऽसाधारणः क्वचित् ॥**
**स्वभावोऽग्न्यादिकानां हि नोष्णत्वाद्यन्यहेतुतः ॥ १९२ ॥**

पदार्थानां स्वभावो नाम नास्ति तत्कथं कादाचित्कदर्शनादेः स्वभावतेत्याशङ्क्याऽऽह । **न चेति ।** असाधारण इति च्छेदः । तथाविधस्वभावसत्त्वमनुभवानुसारेणोदाहरति । **अग्न्यादिकानामिति** ॥ १९२ ॥

**प्राणिधर्माद्यपेक्षं चेदुष्णत्वादि हविर्भुजः ॥**
**नैवं तत्रापि दोषस्य प्रसक्तेरनिवृत्तितः ॥ १९३ ॥**

उष्णत्वाद्यपि न स्वभावो धर्मादिकृतत्वादिति शङ्कते । **प्राणीति ।** धर्मादेरौष्ण्यादिहेतुत्वं स्वभावो न वा स्वभावश्चेदग्नेरेव सोऽस्तु लाघवादस्वभावश्चेत्तत्राऽऽह । **नैवमिति ।** धर्मादावपि धर्माद्यन्तरसापेक्षत्वप्रसक्तेर्दुर्वारत्वादयुक्तोऽस्वभाववाद इत्यर्थः ॥ १९३ ॥

**तदप्यस्त्विति चेन्मैवं धर्मादेरप्रसिद्धितः ॥**
**धर्माभ्युपगमे दोषो ह्यनवस्था प्रसज्यते ॥ १९४ ॥**

धर्मादेरग्न्यादिष्वौष्ण्यादिसंपादनद्वारा फलदातृत्वे धर्माद्यन्तरापेक्षत्वेऽपि न क्षतिरिति शङ्कते । **तदपीति ।** न हि धर्मादि प्रत्यक्षं त्वयाऽनभ्युपगमान्नापि प्रमाणान्तरगम्यमस्मन्मते तदभावादतस्तस्यैवाभावे धर्माद्यन्तरापेक्षत्वं दूरनिरस्तमिति परिहरति । **मैवमिति ।** धर्मादेर्धर्माद्यन्तरसापेक्षत्वे दोषान्तरमाह । **धर्मेति ।** धर्मान्तरेऽपि प्रथमधर्मादाविव सापेक्षत्वसाम्यादिति हिशब्दार्थः ॥ १९४ ॥

**न चानवस्थया सिद्धिरभिप्रेतस्य वस्तुनः ॥**
**तदलं क्षितितोयाग्निमरुतां परिणामजे ॥**
**चेतोवत्यक्षसंवेद्ये कष्टकल्पनयाऽनया ॥ १९५ ॥**

अनवस्थाया मूलक्षयाभावाददोषत्वमाशङ्क्याऽऽह । **न चेति ।** अभिप्रेतस्याग्न्यौष्ण्यादिद्वारा सुखादेर्धर्मादिकृतत्वस्येति यावत् । पूर्वपक्षमुपसंहरति । **तदलमिति ।** चैतन्यविशिष्टे भूतचतुष्टयसंघातात्मना परिणते देहे प्रत्यक्षे सत्यतिरिक्तात्मकल्पना न मानफलवतीत्यर्थः ॥ १९५ ॥

**सर्वतीर्थदृशां सिद्धिः स्वाभिप्रेतस्य वस्तुनः ॥**
**यदभ्युपगमादेव तत्सिद्धिर्वर्ण्यते कुतः ॥ १९६ ॥**

किंचिन्मानमिच्छद्भिः सर्वैर्वादिभिर्देहाद्यतिरिक्तस्वप्रकाशो निर्विकारोऽभ्युपगन्तव्य-

---

१ ग. °पि तद्दोषप्र° ।

श्चिद्धातुरिति सिद्धान्तयति । **सर्वतीर्थैति** । सर्वेषां शास्त्रकृतामभिमताऽज्ञातत्वादिधी- र्नित्यानुभवबलादिति कृत्वा तादृगद्वितीयानुभवोऽभ्युपेयस्तैरित्यर्थः ॥ १९६ ॥

**प्रत्यक्षेण विरुद्धत्वं न तावदुपपद्यते ॥**
**विषयाभावतस्तस्य प्रामाण्यं दुर्लभं यतः ॥ १९७ ॥**

यत्तु प्रत्यक्षविरोधादैकात्म्यं न सिध्यतीति तत्राऽऽह । **प्रत्यक्षेणेति** । अद्वयानुभ- वातिरिक्तविषयाभावात्प्रत्यक्षस्य प्रामाण्यायोगान्न तद्विरोधः श्रुतेरित्यर्थः ॥ १९७ ॥

**सर्वतीर्थदृशां तावत्सामान्यं मानलक्षणम् ॥**
**अज्ञातार्थाधिगमनं त्वदुक्ते तन्न युज्यते ॥ १९८ ॥**

कथं तस्यातिरिक्तविषयासत्त्वं स्तम्भादीनां तद्विषयत्वादित्याशङ्क्य तस्यातिरिक्ता- र्थासत्त्वं वक्तुं साधारणं मानलक्षणमाह । **सर्वेति** । त्वदिष्टेऽध्यक्षे न तल्लक्षणमज्ञातत्व- साधकाभावादज्ञातविषयासिद्धेरित्याह । **त्वदुक्त इति** ॥ १९८ ॥

**प्राक्प्रमाणसमुत्पत्तेर्देहादेर्विषयस्य ते ॥**
**प्रमाणहेतोः केन स्यादज्ञातत्वमितीर्यताम् ॥ १९९ ॥**

कथं तत्साधकाभावो मानस्यैव साधकत्वादित्याशङ्क्याऽऽह । **प्रागिति** । नित्यानु- भवविद्विषस्ते देहादिविषयस्य मानं प्रति कर्मतया हेतोर्मानोत्पत्तेः पुरा नाज्ञातत्वधीस्त- द्विषयाभावान्न प्रमाणप्रवृत्तिरित्यर्थः ॥ १९९ ॥

**स्वतः सिद्धोऽथवाऽसिद्धो देहादिस्ते भवन्भवेत् ॥**
**प्रमाणानां प्रमाणत्वं नोभयत्रापि लभ्यते ॥ १६० ॥**

अज्ञातार्थाभावात्प्रत्यक्षाप्रामाण्यमुक्त्वा प्रकारान्तरेण तत्प्रामाण्यं प्रत्याख्यातुं विक- ल्पयति । **स्वत इति** । देहादेर्भवनमेव सतोऽसतो वा न युक्तमित्यरुचिं सूचयति । **भवन्निति** । पक्षयोर्दोषसत्त्वं प्रतिजानीते । **प्रमाणानामिति** ॥ १६० ॥

**प्रमाणान्यन्तरेणापि देहादिश्चेत्प्रसिध्यति ॥**
**वद प्रमाणैः को न्वर्थो न हि सिद्धस्य साधनम् ॥ १६१ ॥**

तद्विशदयन्नाद्यमनुद्रवति । **प्रमाणानीति** । तत्र प्रमाणवैयर्थ्यं दोषमाह । **वदेति** । देहादिप्रकाशनं तत्कृत्यमित्याशङ्क्याऽऽह । **न हीति** । साधनापर्यवसानादि- त्यर्थः ॥ १६१ ॥

**स्वतोऽसिद्धेऽप्रमेये च नासतो व्यञ्जिका प्रमा ॥**
**नाभिव्यनक्ति सविता खरशृङ्गं स्फुरन्नपि ॥ १६२ ॥**

द्वितीये स्वतोऽसिद्धस्य शशशृङ्गवदसत्त्वान्न तत्र प्रमाणानां प्रामाण्यमित्याह ।

१ ग. ततः । २ ग. °ता न° ।

**स्वत इति** । अप्रमेये चेति च्छेदः । प्रमाणं प्रकाशकत्वादसतोऽपि व्यञ्जकमित्याशङ्क्याऽऽह । **नेत्यादिना** ॥ १६२ ॥

**प्रमाणव्यतिरेकेण नाप्यसत्त्वं प्रसिध्यति ॥**
**सत्त्ववन्नापि चाभेदे मानमेयौ प्रसिध्यतः ॥ १६३ ॥**

प्रमाणं चेदसतो न व्यञ्जकं तत्तर्हि स्वप्रकाशमिति चेन्नेत्याह । **प्रमाणेति** । तर्हि सत्त्ववदसत्त्वस्यापि प्रमाणादेव सिद्धिस्तत्खल्वसत्त्वमपि तद्रूपेण प्रकाशयति तत्कथमसतो न व्यञ्जकं मानं तत्र किं मानमेययोरभेदो भेदो वाऽऽद्यं दूषयति । **नापीति** ॥ १६३ ॥

**यदि मानातिरिक्तार्थोऽमितः संभाव्यते तदा ॥**
**तं बोधयंश्चवेन्मानं न तु तत्कुर्वदिष्यते ॥ १६४ ॥**

द्वितीयमादत्ते । **यदीति** । प्राक्प्रमाणोत्पत्तेरज्ञातो मानाद्भिन्नो मेयः संभाव्यते यदीत्यनुवादार्थः । अमित इति च्छेदः । तत्रापि मानं मेयबोधकं वा कारकं वा प्रथमं प्रत्याह । **तदेति** । किंतु त्वन्मते न बोधकत्वमज्ञातार्थाभावादिति शेषः । द्वितीयं दूषयति । **न त्विति** ॥ १६४ ॥

**अबुद्धबोधनं मुक्त्वा नान्यत्कार्यं क्वचिद्यतः ॥**
**सत्त्वं वा यदि वाऽसत्त्वं नातो मेये प्रमाणतः ॥ १६५ ॥**

तत्र हेतुः । **अबुद्धेति** । मानस्य कारकत्वायोगं निगमयति । **सत्त्वं वेति** । अज्ञातज्ञापनस्वाभाव्यादित्यतःशब्दार्थः ॥ १६५ ॥

**मानव्यापारतः पूर्वं सिद्धामेवावबोधयत् ॥**
**शुक्तिकां मानतां याति नासिद्धं रजतादिकम् ॥ १६६ ॥**

कथं तेऽपि तस्य मानत्वं तत्राऽऽह । **मानेति** । प्रागेव मानोत्पत्तेरज्ञातत्वेन नित्यानुभवसिद्धशुक्त्यादिबोधकमस्मन्मते मानं नाविद्यमानशुक्तिरजतादिबोधकमसति तस्मिन्नज्ञातत्वाद्यभावादित्यर्थः ॥ १६६ ॥

**शुक्तौ रजतविज्ञानाच्छुक्तिवन्नामितं यतः ॥**
**रजतं विद्यते किंचिद्विज्ञातं चाऽऽत्मवस्तुवत् ॥ १६७ ॥**

शुक्तिरजताद्यपि स्वज्ञानात्प्रागज्ञातमस्तीति तत्रापि प्रमाणप्रवृत्तिः सुकरेत्याशङ्क्याऽऽह । **शुक्ताविति** । यथा शुक्तिरज्ञाता पूर्वं मानप्रवृत्तेरस्ति नैवं रजतमज्ञातं शुक्तौ तज्ज्ञानात्प्रागवतिष्ठते तत्र रजतज्ञानस्यातस्मिंस्तद्बुद्धितया भ्रमत्वेनाज्ञातासाधकत्वान्न चाऽऽत्मवज्ज्ञातं तदस्ति बाध्यत्वादतस्तज्ज्ञातमज्ञातं वा नास्तीत्यर्थः ॥ १६७ ॥

---

१ ख. 'यन्भवे' ।

**नातिरेकान्वयाभ्यां यद्वस्तु संभाव्यते कथम् ॥**
**तत्प्रति स्यात्प्रमाणत्वं शुक्तिकारजते यथा ॥ १६८ ॥**

मा भूदुभयथा रजतं शुक्तिस्तु ज्ञानात्प्रागज्ञाता पश्चाज्ज्ञातेत्युक्तेर्जडे प्रमाणमिच्छतस्ते सिद्धान्तहानिरित्याशङ्क्याऽऽह । **नातिरेकेति** । न हि शुक्तावारोपिते रजते मानस्य मानत्वं तस्याज्ञातत्वज्ञातत्वयोरयोगात्तथा जडस्य कल्पितत्वान्मानायोग्यत्वात्तद्विषयत्वेनानुभवोऽभ्युपेय इत्यर्थः ॥ १६८ ॥

**किं मानसंगतेरर्थे जातेयमवबुद्धता ॥**
**किंवा प्रागपि संबन्धाद्बुद्धोऽर्थोऽभून्न मानतः ॥ १६९ ॥**

तस्योपेयत्वे हेत्वन्तरं विमर्शपूर्वकमाह । **किमिति** । आद्ये मानसंबन्धादर्थे ज्ञातेऽज्ञाततासाधकोऽनुभवोऽभ्युपेयः साधकान्तराभावाद्द्वितीये मानवैयर्थ्यमित्यर्थः । संबन्धान्मानप्रतियोगिकादिति शेषः ॥ १६९ ॥

**बोधात्मकत्वं च मितेः किमासीन्मेयसंगतेः ॥**
**प्राग्वा मेयाभिसंबन्धान्मितेर्बोधात्मता भवेत् ॥ १७० ॥**

इतश्चानुभवोऽभ्युपगन्तव्य इत्याह । **बोधेति** । आद्ये मेयसंबन्धाधीनमानगतबोधकत्वसाधकत्वेनानुभवो मन्तव्यो न हि तदीयमवबोधकत्वं मेयादिना सिध्यति तस्य जडत्वेनासाधकत्वाद्द्वितीये मेयसंबन्धवैयर्थ्यमित्यर्थः ॥ १७० ॥

**नार्थानधिगतत्वं च प्रमाणेभ्यः प्रसिध्यति ॥**
**रूपानधिगतत्वं नो न श्रोत्रादेः प्रमाणतः ॥ १७१ ॥**

घटादिज्ञातत्वस्य तन्मानबोधकत्वस्य च साधकत्वेनानुभवस्योपेयत्वमुक्त्वा तदज्ञातत्वसाधकत्वेनापि तस्योपेयत्वमाह । **नार्थेति** । विषयस्थाज्ञातत्वस्यामेयत्वे दृष्टान्तमाह । **रूपेति** । न च रूपगतमज्ञातत्वं चक्षुषा ज्ञायते तस्य तज्ज्ञातत्वहेतुत्वान्न च स्वप्रवृत्तेः पूर्वं तदज्ञातत्वं ज्ञापयति तस्य वर्तमानमात्रग्राहित्वादिति भावः ॥ १७१ ॥

**मानव्यापारतश्चेत्स्यान्मेयानधिगतिस्तदा ॥**
**तद्व्यापारात्पुरा मेयः स्यात्स्वतोधिगतात्मकः ॥ १७२ ॥**

मानं विषयस्थमज्ञातत्वं न ज्ञापयति किंतूत्पादयतीति शङ्कामनुभाष्य दूषयति । **मानेति** ॥ १७२ ॥

**यत एवमतोऽवश्यं प्रमाणव्यापृतेः पुरा ॥**
**मेयोऽनधिगतः सिद्धो ह्यभ्युपेयोऽवबुद्धवत् ॥ १७३ ॥**

मानस्याज्ञातत्वज्ञापकत्वोत्पादकत्वाभावे फलितमाह । **यत इति** । अवबुद्धवन्मानादूर्ध्वमिति शेषः । मानात्पूर्वोत्तरकालयोरज्ञातत्वज्ञातत्वसाधकत्वमनुभवस्यैवेतिद्योतनार्थो हिशब्दः ॥ १७३ ॥

**न चानाहितसन्मानस्वतश्चिन्मात्रविग्रहात् ॥**
**प्रत्यगैकात्म्यतोऽन्यत्र यथोक्तां धुरमुद्वहेत् ॥ १७४ ॥**

भवतु मानात्प्रागज्ञातत्वं पश्चाच्चार्थस्य ज्ञातत्वं तथाऽपि कथं तदुभयसाधकत्वेनानुभवसिद्धिस्तत्राऽऽह । **न चेति** । अनाहितं विषयीकर्तुं न प्रवर्तितं निर्दुष्टं मानं यत्र स्वतश्चिन्मात्ररूपे तत्प्रत्यग्भूतमैकात्म्यं तदातिरेकेण प्रमाणबलान्नाज्ञातत्वादि सिध्यतीत्यर्थः । यद्वा यदनाहितमनाद्यनन्तं सदेकतानं सर्वसाधकं स्वतश्चिन्मात्रशरीरं प्रत्यग्भूतमैकात्म्यं तदतिरेकेण न प्रमाणतोऽज्ञातत्वादि सिध्यतीत्यर्थः ॥ १७४ ॥

**न ह्यज्ञाते यथा ज्ञाते विशेषणविशेष्यता ॥**
**ततश्च नैतत्संसिध्येदज्ञानादि प्रमाणतः ॥ १७५ ॥**

तन्न प्रमेयमित्यत्र युक्त्यन्तरमाह । **न हीति** । अज्ञाते घटे घटो ज्ञात इति न विशेषणविशेष्यताधीर्विशेषणग्रहं विना विशिष्टाग्रहादेवं घटे ज्ञातेऽपि नाज्ञातो घट इति युक्तं तस्मिन्मानप्रवृत्तावज्ञातत्वनिवृत्तेस्तस्मादज्ञातत्वं न मेयं नापि ज्ञातत्वमनवस्थितेरित्युभयमप्रामाणिकमनुभवगम्यमात्रमित्यर्थः ॥ १७५ ॥

**प्रमाणाच्चानधिगतौ तन्निवृत्तिः कुतो भवेत् ॥**
**न दाहज्वरनुत्त्यर्थमग्निना स्याद्भिषक्क्रिया ॥ १७६ ॥**

अज्ञातत्वस्य प्रामाणिकत्वे दोषान्तरमाह । **प्रमाणाच्चेति** । अज्ञातत्वसाधकमेव मानं तन्निवर्तकमपि स्यादिति नेत्याह । **न दाहेति** । तद्धेतोस्तन्निवर्तकत्वमदृष्टत्वादनिष्टमित्यर्थः ॥ १७६ ॥

**साक्ष्यमातृप्रमारूपं मानभूमौ यथेक्ष्यते ॥**
**नाज्ञातेऽनुभवादेषां कश्चिदन्यस्तथेक्ष्यते ॥ १७७ ॥**

मा तर्हि मानादज्ञातत्वादि विज्ञायि तथाऽपि कथं तस्यानुभवसिद्धतेत्याशङ्क्याऽऽह । **साक्ष्येति** । यथा मानभूमौ साक्ष्यादीनां रूपमनुभवादनुभूयतेऽन्यथाऽनवस्थानात्तथैषां मात्रादीनामज्ञानभूमावज्ञातरूपेऽपि नानुभवादन्यः साधकोऽस्त्युक्तदोषसाम्यात्तस्मादुभयमनुभवायत्तमित्यर्थः ॥ १७७ ॥

**प्रमाणव्यापृतेरूर्ध्वं ज्ञाताज्ञातद्वयं मिथः ॥**
**संधत्तेऽनुभवेनैव न तदन्येन केनचित् ॥ १७८ ॥**

इतश्चोभयं तदायत्तमित्याह । **प्रमाणेति** । एतावन्तं कालं योऽज्ञातोऽर्थस्तमिदानीं जानामीति मानव्यापारोत्तरकालमनुभवेनैव ज्ञाताज्ञाताख्यद्वयं परस्परमेकमनुसंधत्ते तेन तदुभयमनुभवसिद्धमेवेत्यर्थः ॥ १७८ ॥

**यदि नाम न मानानि व्याप्रियन्ते विनिश्चितेः ॥**
**प्राक्तथाऽप्यपलापोऽस्या नानुभूतेर्घटादिवत् ॥ १७९ ॥**

१ क. ग. 'पोऽस्य नानुभूतघटा' ।

ननु योऽनुभवो ज्ञातत्वादिसाधकस्तत्र मानं व्याप्रियते न वाऽऽद्येऽनुभाव्यतापातो द्वितीये त्वसत्तापत्तिस्तत्राऽऽह । यदीति । प्रमाणगोचरीभावविरहिणां घटादीनामपलापवदनुभूतेश्च निश्चयात्प्राक्तादर्थ्येन प्रमाणव्यापाराभावेऽपि नापलापो युक्तः स्वतः सिद्धेरित्यर्थः ॥ १७९ ॥

एवं सिद्धेऽप्यनुभवे स्वमहिम्ना पुरा मितेः ॥
प्रमाणोत्पत्तिरन्वेष्या प्रत्यग्ध्वान्तापनुत्तये ॥ १८० ॥

मानं विनाऽनुभवः सिद्धश्चेत्तत्र मानवैकल्यमित्याशङ्क्याऽऽह । एवमिति । अज्ञातत्वादिसाधकत्वप्रकारेणेत्यर्थः । अन्वेष्योत्पाद्यमानफलमाह । प्रत्यगिति । यद्यपि न प्रमाणमनुभवसाधकं तथाऽपि तद्गताज्ञाननिवर्तकत्वेन भवति तदर्थवदित्यर्थः ॥ १८० ॥

अवबुद्धस्वभावोऽपि सहतेऽनवबुद्धताम् ॥
वस्तुत्वान्न तमो हन्ति तथाऽपि प्रमितिं विना ॥ १८१ ॥

अनुभवात्मनि नाज्ञानं विरोधात्तत्कथं तद्ध्वंसार्थं मानमन्विष्यते तत्राऽऽह । अवबुद्धेति । वस्तुत्वात्तर्हि स्वयमेवाज्ञानमवस्तुरूपमनुभवो नाशयतु किं मानेनेत्याशङ्क्याऽऽह । नेति ॥ १८१ ॥

प्रमाणफलकारूढं स्वतमो हन्ति नान्यथा ॥
वस्तु मेयाभिसंबद्धं मानं तद्वत्तमोपनुत् ॥ १८२ ॥

तर्हि मितिरेवाज्ञानं निवर्तयतु किं वस्तुनेत्याशङ्क्याऽऽह । प्रमाणेति । वस्तुनो मानस्य वा न स्वतोऽज्ञाननिवर्तकत्वं नित्यनिवृत्तिप्रसङ्गाज्जडत्वाच्चातो बुद्धीद्धो बोधो बोधेद्धा वा बुद्धिरज्ञानध्वंसिनीत्युभयमर्थवदित्यर्थः ॥ १८२ ॥

प्रत्यक्षमानसिद्ध्यर्थं तस्मात्प्रत्यक्षवादिना ॥
प्राग्मानादभ्युपेयोऽर्थो योऽज्ञातत्वादिसिद्धिकृत् ॥ १८३ ॥

अज्ञातेऽर्थे प्रत्यक्षप्रामाण्यमज्ञातत्वं च नित्यानुभवायत्तमिति तत्प्रामाण्यमिच्छता कूटस्थोऽनुभवोऽभ्युपेय इत्युपसंहरति । प्रत्यक्षेति ॥ १८३ ॥

वागादिव्यापृतेः कर्ता शब्दादिगुणलाञ्छितः ॥
प्रत्यक्षो गम्यते मात्रा प्रतीचोऽत्यन्तभेदतः ॥ १८४ ॥

अनुभवस्याज्ञातत्वादिसाधकत्वेनोपगमेऽपि ततोऽन्यस्यैवाऽऽत्मतेत्याशङ्क्य स किं स्थूलो देहः सूक्ष्मो वेति विकल्प्याऽऽद्यं दूषयति । वागादीति । स्थूलो देहो वचनादानादि कुर्वाणः शब्दादिविशिष्टो ममेति प्रतीचो भेदेन प्रमात्रा प्रत्यक्षी क्रियते तन्न तस्याऽऽत्मत्वं प्रत्यक्षविरोधान्मनुष्योऽहमिति धीरयो दहतीतिवन्नेयेति भावः ॥ १८४ ॥

श्रोत्रादिव्यापृतो माता दुःखादिगुणवान्पराङ् ॥
कर्तेवानुभवेनैव प्रतीचा गम्यतेऽञ्जसा ॥ १८५ ॥

१ ख. °राङ् ॥ क° । २ क. ग. प्रतीचो ।

द्वितीयं प्रत्याह । श्रोत्रादीति । श्रोत्रनेत्रादिना शब्दरूपादौ श्रुतिदृष्ट्यादि कुर्वन्दुःखरागादिविशिष्टो माता प्रतीचाऽनुभवेन स्वस्माद्बाह्यो गृह्यते यथा कर्ता देहान्तो बुध्यन्तेन मात्रा प्रतीचो बहिर्गृहीतस्तथा सोऽपि ततः स्वतो बहिर्गम्यते तत्र तस्याऽऽत्मतेत्यर्थः ॥ १८५ ॥

अनन्यानुभवः प्रत्यङ्न प्रमात्रादिगोचरः ॥
यतोऽपहतपाप्मादि युक्तं स्यात्तद्विशेषणम् ॥ १८६ ॥

अनुभवोऽपि नाऽऽत्मा मात्रादिविषयत्वाद्देहवदित्याशङ्क्याऽऽह । अनन्येति । आदिपदेन साक्षी गृह्यते । ऐकात्म्यश्रुतेर्न प्रत्यक्षविरुद्धतेत्युपक्रान्तमुपसंहरति । यत इति । पापादिरशेषो विशेषो यतो देहद्वयधर्मो यतश्चाऽऽत्मा तद्व्यतिरिक्तोऽतोऽपहतपाप्मेत्याद्यात्मनो विशेषणं युक्तमिति ब्रह्मत्वेन तद्बोधयद्वाक्यं नाध्यक्षविरुद्धं तादृशेऽर्थे तदप्रवृत्तेरित्यर्थः ॥ १८६ ॥

लोकायतस्य बौद्धस्य कणभोज्याक्षपादयोः ॥
प्रत्यक्षेणैव मानेन विमुखीकरणं कृतम् ॥ १८७ ॥

ननु लोकायतिकवैनाशिकौ नित्यानुभवं नाङ्गी कुर्वाते वैशेषिकनैयायिकौ पुनस्तमङ्गीकुर्वन्तावपि तस्येश्वरगुणत्वेनानात्मत्वमाचक्षते तत्कथं तस्यानुभवस्याऽऽत्मत्वं तत्राऽऽह । लोकायतस्येति ॥ १८७ ॥

प्रमाणफलयोर्भेदस्तथा मानप्रमेययोः ॥
स्वतःकूटस्थचित्सिद्धेरैकात्म्यं चानुभूतितः ॥ १८८ ॥

कथं प्रत्यक्षेण तेषां विमुखीकरणमित्याशङ्क्याऽऽद्यौ प्रत्याह । प्रमाणेति । मानादिभेदभानमन्यथाऽनुपपत्त्या नित्यानुभवं साधयच्चार्वाकादिवैमुख्ये हेतुः । न हि तद्भानं प्रामाणिकमनवस्थितेरित्यर्थः । द्वितीयौ प्रत्याह । ऐकात्म्यं चेति । विद्वदनुभवादागमाद्यनुगृहीतादात्मनो नित्यानुभवमात्रत्वसिद्धेर्वैशेषिकादिवैमुख्यमित्यर्थः । तादृगात्मत्वसिद्धौ मीमांसकादेरपि विमुखतेति चार्थः ॥ १८८ ॥

प्रत्यक्षं मानमेवेदमिति यस्मात्प्रसिध्यति ॥
प्रत्यक्षदृक्स्वयंज्योतिस्तदात्मेत्यभ्युपेयताम् ॥ १८९ ॥

तद्वैमुख्ये हेत्वन्तरमाह । प्रत्यक्षमिति । प्रमाणमेव प्रत्यक्षमिति सर्वाविवादं न च तत्स्ववेद्यमनिष्टत्वादयुक्तत्वाच्चातस्तत्साधकमात्मज्योतिर्नित्यमेष्टव्यमित्यर्थः ॥ १८९ ॥

मेयादींस्तदभावं च संशयानृतनिश्चयान् ॥
विविच्य योऽनुगृह्णाति शब्दादींश्च जडान्पृथक् ॥ १९० ॥

---

१ घ. 'त्स्वसंवे' ।

देहेन्द्रियमनोबुद्धीः सुखादींश्च घटादिवत् ॥
तमेकमन्तरात्मानमप्रत्यक्षं प्रपश्य भोः ॥ १९१ ॥

प्रत्यक्षदृगिति विशेषणादात्मज्योतिषः सर्वदृक्त्वोपगमहानिरित्याशङ्क्याऽऽह । **मेयादीनिति** । तस्यैतेषु सर्वेषु प्रकाशकत्वे तेषां जाड्येन प्रकाशान्तरापेक्षत्वं हेतुरित्याह । **जडानिति** । यत्तु देहादन्यो नाऽऽत्मा दृष्ट इति तत्राऽऽह । **तमिति** ॥ १९० ॥ १९१ ॥

द्रष्टृदर्शनदृश्यांश्च यः स्वप्ने प्रसमीक्षते ॥
तदभावं सुषुप्ते च स आत्मेत्यभ्युपेयताम् ॥ १९२ ॥

प्रपश्येत्युक्त्या दर्शनविषयत्वप्रतीतेरप्रत्यक्षविशेषणायोगमाशङ्क्याऽऽह । **द्रष्ट्रिति** । स्वप्नशब्देन जागरितमपि गृहीतं तत्रापि श्रुतौ स्वप्नशब्ददर्शनाद्दर्शनादिभावाभावसाधकं स्वयंज्योतिरात्मा न दर्शनादिविषयः स्वानुभवसिद्धेरित्यर्थः ॥ १९२ ॥

चक्षुरादीन्द्रियाणां च न च स्वप्नेऽस्ति संभवः ॥
सुषुप्ते चानुभूतिस्तु तयोरव्यभिचारिणी ॥ १९३ ॥

स्वप्नादौ मात्रादिवशादेव दृश्यादिभावाभावानुभवसंभवान्नेष्टात्मसिद्धिरित्याशङ्क्याऽऽह । **चक्षुरादीति** । स्वप्नस्वापयोर्वासनां हित्वा मात्रादेरभावाद्वासनायाश्च स्वापे कारणातिरेकिण्याः सत्त्वानङ्गीकारान्नित्यानुभवास्यात्मवशादेव तत्र भावाभावभानमन्यथाऽवस्थाभेदानुपपत्तिरित्यर्थः । तत्रानुभवोऽपि चक्षुरादिवन्नास्तीत्याशङ्क्याऽऽह । **अनुभूतिस्त्विति** । अन्यथा तदसिद्धेः परामर्शासिद्धेरिति भावः ॥ १९३ ॥

प्रमाणं मेयविषयं तत्फलं मातृसंश्रयम् ॥
यत्साक्षिकं द्वयं सिध्येत्स आत्मेत्यभ्युपेयताम् ॥ १९४ ॥

इतश्चाऽऽत्मा नित्यानुभवात्मकोऽभ्युपेय इत्याह । **प्रमाणमिति** ॥ १९४ ॥

मानस्य हि फलं यत्र न तन्मानस्य गोचरः ॥
तस्य मेयैकनिष्ठत्वात्फलं तु स्यात्प्रमातरि ॥ १९५ ॥

मानवशाद्द्वयं सेत्स्यति किं त्वदिष्टानुभवेनेत्याशङ्क्याऽऽह । **मानस्येति** । फलस्याऽऽश्रयमापेक्षत्वद्योतको हिशब्दः । तस्य मेयमात्रविषयत्वेऽपि फलस्य मेयाश्रितत्वायुक्ता तदाश्रयस्य मानविषयतेत्याशङ्क्याऽऽह । **फलं त्विति** ॥ १९५ ॥

प्रत्यक्षं वर्तते यत्र तत्फलं तत्र नेष्यते ॥
तत्फलं वर्तते यत्र मानं तत्र न वर्तते ॥ १९६ ॥

अस्तु तर्हि मातृरपि मानविषयत्वं किं मेयविषयत्वनियमेनेति तत्राऽऽह । **प्रत्यक्षमिति** । न हि विषयनिष्ठं संवेदनं तस्य चेतनत्वप्रसङ्गाच्च माता मानगोचरोऽनवस्थानादित्यर्थः ॥ १९६ ॥

**एवं सति प्रमामातृफलमेयात्मनां तव ॥**
**कुतः प्रत्यक्षतासिद्धिर्यदि नाऽऽत्माऽभ्युपेयते ॥ १९७ ॥**

मात्रादेर्मानाविषयत्वे तत्साधकत्वेन नित्यानुभवाख्यात्मज्योतिरेष्टव्यमिति फलितमाह । **एवं सतीति** ॥ १९७ ॥

**व्यभिचारिषु सर्वेषु प्रत्यगात्मैकसाक्षिषु ॥**
**प्रत्यक्प्रत्यय एवैकः सर्वत्राव्यभिचारवान् ॥ १९८ ॥**

विमतो न नित्योऽनुभवत्वाद्धटानुभववदित्यनुमानादिष्टसिद्ध्यभावमाशङ्क्याऽऽह । **व्यभिचारिष्विति** । व्यभिचारिसिद्ध्यनुपपत्तिरव्यभिचारिणमनुभवं साधयन्ती त्वदनुमानस्य बाधिकेति भावः ॥ १९८ ॥

**एवं प्रत्यक्षतस्तावद्देहादिव्यतिरेकतः ॥**
**तथाऽनुभवतः साक्षादात्माऽयं प्रतिपादितः ॥ १९९ ॥**

उक्तं संक्षिप्योपसंहरति । **एवमिति** । नित्यानुभवाख्यात्मवशादज्ञातत्वसिद्धेरज्ञाते चार्थे प्रत्यक्षप्रामाण्यात्तद्बलाद्विद्वदनुभवाच्चायमात्मा देहाद्यतिरिक्तः सर्वतीर्थदृशामित्याद्युक्तनीत्या साक्षात्तावत्प्रतिपादित इत्यर्थः ॥ १९९ ॥

**यच्चैतत्कृष्णसर्पादिदृष्टान्ताद्भवतोदितम् ॥**
**अहं मनुष्य इत्यादि तत्र प्रतिविधीयते ॥ २०० ॥**

लोकायतव्याजेन कूटस्थोऽनुभवोऽद्वयः स्वप्रकाशः सर्वानेव वादिनः प्रत्युक्त इदानीमहं मनुष्य इत्येवमित्यादिना परेणोक्तमनुभाष्य तत्र दोषसत्त्वं प्रतिजानीते । **यच्चेति** ॥ २०० ॥

**चैतन्यं कायधर्मश्चेन्मनुष्योऽसाविति प्रमा ॥**
**असाधारणतो न स्यादहं वेद्मीतिवत्तदा ॥ २०१ ॥**

दोषमेव दर्शयति । **चैतन्यमिति** । यद्यहंरूपं चैतन्यं देहधर्मस्तदा घटमहं वेद्मीति स्वदेहेऽहंधर्मवत्यहंबुद्धिवत्परदेहेऽपि सा स्यात्सर्वदेहेष्वहमश्चैतन्यस्य साधारणधर्मत्वादतो मनुष्योऽसाविति प्रमा स्वदेहवद्देहान्तरेऽपि न स्याद्यथा शुक्लेषु पटेषु सर्वत्र शुक्लबुद्धिरेवं चैतन्यधर्मकेषु सर्वदेहेष्वहंबुद्धिरेव युक्ता चैतन्यस्याहमोऽन्यत्वेऽपि देहधर्मत्वे स्वदेहवदितरत्रापि तद्धीः स्यान्न चैवमस्त्यतो न देहधर्मश्चैतन्यमित्यर्थः ॥ २०१ ॥

**समवेतं हि यद्यत्र चैतन्यं स्याच्छरीरके ॥**
**तस्यैव तद्भवेत्साक्षान्नान्यदेहाश्रितस्य तत् ॥ २०२ ॥**

स्वदेहे स्वस्याहंधीवत्परदेहेऽपि परस्य तद्भावादविरुद्धा सर्वदेहेषु तद्धीरित्याश-

१ क. 'मातृत्वफ' ।

क्त्वाऽऽह । समवेतं हीति । यत्र देहे यच्चैतन्यं समवेतं तस्यैव देहस्य चैतन्यविशिष्टस्य तद्विशेषणमहमिति साक्षाद्भवेद्देहान्तराश्रितस्य तु चैतन्यस्य नान्याश्रितं तत्साक्षाद्भवत्यतो बहवो देहाश्चैतन्यविशिष्टा न प्रत्यक्षतः शक्या द्रष्टुमिति प्रत्यक्षैकप्रमाणवादिनश्चैतन्याद्वैतसिद्धेर्न तत्र तत्राहंबुद्धिव्यवस्था स्यादित्यर्थः ॥ २०२ ॥

करणव्यापृतिं चर्ते मनुष्योऽस्मीति धीर्भवेत् ॥
पूर्ववन्न तु तत्ताग्देहाद्भिन्ना तताश्रितिः ॥ २०३ ॥

यद्यन्याश्रितस्यापि चैतन्यस्य देहान्तराश्रितं तत्साक्षाद्भवति तत्राऽऽह । करणेति । यथा पूर्वमात्मत्वेन गृहीते स्वदेहे मनुष्योऽहमिति करणव्यापारादृते धीरुदेति तथा परदेहेष्वपि तस्यैवैकस्य विना करणव्यापारं चैत्रोऽहं मैत्रोऽहमिति धीः स्यान्न तु तत्रान्यदेहेषु तादृक्प्रत्ययोऽस्यास्ति तन्न देहधर्मश्चैतन्यमित्यर्थः ॥ २०३ ॥

न चाहंबुद्धिनिर्ग्राह्यमिदंधीग्राह्यगोचरः ॥
विरोधान्न हि शीतत्वमुष्णस्याग्नेर्विशेषणम् ॥ २०४ ॥

तत्र हेत्वन्तरमाह । न चेति । अहंधीग्राह्यं चैतन्यमिदंधीग्राह्यस्य देहस्य धर्मत्वेन न विशेषणमहमिदंधीग्राह्ययोर्मिथोविरोधाद्धर्मधर्मित्वायोगादित्यर्थः । तत्र दृष्टान्तमाह । न हीति ॥ २०४ ॥

कायस्यापि न चैतन्यमेवमेव विशेषणम् ॥
विरोधिना जडत्वेन व्याप्तेः किमु परस्य तत् ॥ २०५ ॥

दार्ष्टान्तिकमाह । कायस्येति । तत्रोक्तमेव हेतुं स्मारयति । विरोधिनेति । चैतन्यविरोधिजाड्येन देहस्य व्याप्तेर्न तत्तद्विशेषणं स्यादित्यर्थः । देहेऽहंबुद्ध्युत्पत्तेश्चैतन्यस्य तद्धर्मत्वं शङ्क्यते शब्दादिषु तदभावान्न तच्छङ्काऽपीत्याह । किम्विति ॥ २०५ ॥

विशेष्यमपि नाऽऽप्नोति धर्मान्तरविशेषितम् ॥
विशेष्यमात्रनिष्ठत्वादन्यत्र स्यात्कथं नु तत् ॥ २०६ ॥

तदेव प्रकटयति । विशेष्यमिति । मनुष्योऽहमितिधीदृष्टेश्चैतन्यस्य विशेष्यत्वेन प्राप्तमपि देहं न तद्विशेषणत्वेन व्याप्नोति स्वविरोधिना जाड्येन तस्य विशेषितत्वात्तच्छब्दादिष्वहंधीहीनेषु न कथंचित्स्यादतो विशेष्यं स्वप्रधानं चिद्रूपं तस्मिन्स्वमहिम्नि स्थितत्वान्न तस्य क्वापि धर्मतेत्यर्थः ॥ २०६ ॥

विशेषणविशेष्यत्वे संगतिश्चेद्भवेत्तयोः ॥
एकप्रत्ययगम्यत्वं स्यात्तदा कृष्णसर्पवत् ॥ २०७ ॥

चैतन्यदेहयोरधर्मधर्मित्वे युक्त्यन्तरमाह । विशेषणेति । न चैकधीवेद्यत्वं चैतन्यस्यावेद्यत्वादिति शेषः ॥ २०७ ॥

---

१ क. ख. 'स्मिन्स्वे म' । २ ख. 'प्यतत्त्व' ।

आविद्वदङ्गनाबालं देहादौ घटवन्मतिः ॥
पृथक्त्वेन भवन्तीयं कथं स्याच्चिद्विशेषिता ॥ २०८ ॥

किंच देहस्यानात्मत्वप्रसिद्धेर्न तद्धर्मश्चैतन्यमित्याह । आविद्वदिति । न हि मम शरीरमिति विद्वदविद्वत्प्रसिद्धं शरीरमात्मा भवितुमलं घटादावपि प्रसङ्गात्तत्राहंबुद्धिस्तु प्रागेव प्रतिनीतेति भावः ॥ २०८ ॥

मातारमपि नाऽऽप्नोति यत्प्रमेयैकनिष्ठितम् ॥
प्रत्यक्षं तस्य का शक्तिः स्वार्थायां चिति वर्तितुम् ॥ २०९ ॥

किंच रूपादेर्वेद्यस्यैव देहधर्मत्वं दृष्टं चैतन्यस्य तदभावान्न तद्धर्मतेत्याह । मातारमिति । प्रत्यक्षस्य प्रमात्रविषयत्वे हेतुमाह । प्रमेयेति ॥ २०९ ॥

असाधारणरूपोत्थज्ञानेनैव प्रमीयते ॥
यथा घटस्तथैवाऽऽत्मा नानात्मप्रत्ययप्रमः ॥ २१० ॥

स्वार्था निरपेक्षत्वेन स्फुरन्ती चितिरित्येवमर्थं वैधर्म्यदृष्टान्तेन साधयति । असाधारणेति ॥ २१० ॥

स्वार्थं सन्न परार्थस्य स्वातन्त्र्यात्स्याद्विशेषणम् ॥
न च चैतन्यमित्किंचिच्चैतन्याल्लभ्यते पृथक् ॥ २११ ॥

किंच चैतन्यस्य स्वार्थत्वान्न परार्थविशेषणत्वं स्वतन्त्रस्य परतन्त्रं प्रति विशेषणत्वायोगादित्याह । स्वार्थमिति । कथं चैतन्यं स्वतन्त्रं ग्राहकतन्त्रत्वादित्याशङ्क्याऽऽह । न चेति ॥ २११ ॥

ग्रहीत्रेव हि चैतन्यमात्मनोऽनात्मनस्तथा ॥
ग्रहीतुर्ग्राह्यता लोके न न्यायेनोपपद्यते ॥ २१२ ॥

तस्य ग्राहकत्वान्न तत्तन्त्रमित्युक्तेऽर्थे हेतुमाह। ग्रहीत्रिति। अत एव न ग्राह्यताऽन्यथाऽनवस्थानादित्याह । ग्रहीतुरिति ॥ २१२ ॥

प्रत्यक्तया विभिन्नस्य चैतन्यस्य विशेषणम् ॥
पराक्त्वान्नापि कायः स्याच्छीततेव विभावसोः ॥ २१३ ॥

चैतन्यस्य स्वातन्त्र्याद्देहाविशेषणत्वेऽपि तस्य पारतन्त्र्यात्तद्विशेषणत्वं स्यादित्याशङ्क्याऽऽह। प्रत्यक्तयेति। देहस्य चिद्विशेषणत्वाभावे दृष्टान्तमाह । शीतेति ॥२१३॥

पारिहार्यादिगं[1] हेम्नि प्रमाणं मेयनिष्ठितम् ॥
कथमात्मचितौ तत्स्यात्तद्विरुद्धार्थसिद्धये ॥ २१४ ॥

चिद्देहयोर्मिथो विरोधान्न धर्मधर्मितेत्युक्तमिदानीं यथैव पारिहार्यादीत्यादिनोक्तं विष-

1 ग. 'दिकं हे' ।

टयति । **पारिहार्यादीति** । हेम्नि कारणे स्थितं स्वस्तिकादिकार्यं तद्विषयं प्रमाणमत-स्तत्र पृथगेव प्रयोगप्रत्ययौ युक्तावात्मनि चिद्रूपे स्वरूपभेदप्रतिपत्त्यर्थं न प्रमाणं भवति तद्धि मेयमात्रमधिकरोतीति न पारिहार्यादिसाम्यं चैतन्यस्येत्यर्थः ॥ २१४ ॥

**भूतेभ्यश्च चिदुत्पत्तिर्न प्रत्यक्षप्रमाणिका ॥**
**भूतान्वयस्य चासत्त्वान्नापि लिङ्गात्प्रसिध्यति ॥ २१५ ॥**

तथा हि क्षितितोयेत्यादिनोक्तं प्रत्याह । **भूतेभ्यश्चेति** । प्रत्यक्षा चिदुत्पत्तिरनुमेया वा नाऽऽद्यस्तादृगध्यक्षाभावान्न द्वितीयोऽनङ्गीकारान्न च तदुत्पत्तिसाधकं लिङ्गं गम्यते किंच भूतानामन्वयस्य संघाताख्यस्यासंभवः । न हि स भूतेभ्यो भेदाभेदाभ्यां शक्यो वक्तुमित्यर्थः ॥ २१५ ॥

**मृतोऽस्मीत्यपि संवित्तिश्चैतन्यापगमे कुतः ॥**
**जाड्यात्स्यान्नापि कायस्य चिदभावश्चितेः कुतः ॥ २१६ ॥**

भावत्वे सति नाशित्वाच्चैतन्यं जायते घटवदित्याशङ्क्याऽऽह । **मृत इति** । यश्चै-तन्यस्येष्टो नाशानुभवः स चैतन्यस्य देहस्य वा नाऽऽद्यस्तस्य नाशाश्रयणान्न हि स्वयं स्वनाशं वेत्ति न द्वितीयस्तस्य जाड्यादित्यर्थः । द्वितीयपादार्थं स्फुटयति । **चिदिति** ॥ २१६ ॥

**नापि स्वप्नानुभूतेश्च मिथ्यात्वं स्वप्नवन्मतम् ॥**
**बोधानुभववत्तस्या बाधको नेक्ष्यते यतः ॥ २१७ ॥**

संहतेभ्यो भूतेभ्यश्चैतन्यमुद्भवति तत्रैव लीयते चेत्येतन्निरस्य न चात्र प्रत्यभिज्ञाऽस्ती-त्यादिनोक्तं निरस्यति । **नापीति** । स्वप्नवत्तदनुभूतेरपि मिथ्यात्वं नैवेष्टमित्यत्र हेतुमाह । **बोधेति** । जाग्रद्धीः स्वप्नबाधिकेति तान्मिथ्यात्वं नैवं स्वप्नानुभूतेर्बाधकोऽस्ति मानाभा-वात्तथाच तद्देहस्य मृषात्वात्तद्गतं चैतन्यमपि तथेति तत्प्रत्यभिज्ञाया भ्रमत्वमित्ययुक्त-मित्यर्थः ॥ २१७ ॥

**वायोरपि समुत्क्रान्तिः प्रत्यक्षान्नावसीयते ॥**
**चितेस्तद्भावभावित्वाद्वायुरेवास्तु चेतनः ॥ २१८ ॥**

यत्तु वायावपक्रान्ते चैतन्यं नश्यतीति तत्राऽऽह । **वायोरिति** । तस्याप्रत्यक्षत्वात्तदु-त्क्रान्तेरपि तद्भावासंभवान्न च मानान्तरात्तदधिगतिरनभ्युपगमादित्यर्थः । यथाकथंचित्त-दपक्रान्तिनिश्चयेऽपि भूतचतुष्टयसंहतिरूपदेहात्मत्वासिद्धिरित्याह । **चितेरिति** ॥ २१८ ॥

**चैतन्यं भूतकार्यं चेत्कायवत्तिष्ठतां चितिः ॥**
**चितिवन्नश्यतां यद्वा कायोऽयं हेतुनाशतः ॥ २१९ ॥**

---

१ ख. 'मोरेव स' ।

किंच चैतन्यदेहयोर्भूतकार्यत्वाविशेषाद्वाय्वपगमे स्थितिगती तुल्ये स्यातामित्याह । **चैतन्यमिति** ॥ २१९ ॥

जाग्रच्छरीरवच्चेत्स्यात्स्वप्नकायोऽपि भूततः ॥
सत्यभूतैकहेतुत्वान्मिथ्यात्वं तस्य किंकृतम् ॥ २२० ॥

नापि स्वप्नानुभूतेश्चेत्यत्र देहस्य मिथ्यात्वमुपेत्य तदनुभूतेरमिथ्यात्वमुक्तमिदानीं परमते तस्यापि न मिथ्यात्वमित्याह । **जाग्रदिति** ॥ २२० ॥

सत्यो वा यदि वा मिथ्या स्वप्नदेहोऽभ्युपेयते[1] ॥
चितेरव्यभिचारित्वात्तथाऽपीष्टं प्रसिध्यति ॥ २२१ ॥

किंच स्वप्नदेहो यथा तथाऽस्तु तथाऽपि मदिष्टात्मसिद्धिर्जाग्रत्स्वप्नदेहयोर्मिथोव्यभिचारेऽपि चैतन्यस्याव्यभिचारित्वेनातिरिक्तात्मत्वोपपत्तेरित्याह । **सत्यो वेति** ॥ २२१ ॥

तस्मान्नृहस्तिदेहादौ जाग्रत्स्वप्नादिभूमिषु ॥
भिन्नः शरीरतः सिद्धः प्रमाता प्रत्यभिज्ञया ॥ २२२ ॥

यः सुप्तः सोऽहं जागर्मीति प्रत्यभिज्ञाया भ्रान्तित्वायोगे फलितमाह । **तस्मादिति** । स्वप्नादीत्यादिशब्देन स्मृतिसमाधानसंग्रहः ॥ २२२ ॥

देशकालवयोजातिरूपशक्त्यादिभेदतः ॥
देहे न प्रत्यभिज्ञा स्याज्जाते स्मर्तरि युज्यते ॥ २२३ ॥

यत्तु सशल्यदेहशालिनीत्यादिना परस्यापि जातिस्मरणप्रत्यभिज्ञासंभवान्न ततोऽतिरिक्तात्मसिद्धिरिति तत्राऽऽह । **देशेति** । देशादिभेदेन जाते देहे न प्रत्यभिज्ञा व्यक्तिभेदादुभयगतजातेश्चानुसंधातुरेकस्याभावादित्यर्थः । स्वपक्षे तदुपपत्तिमाह । **स्मर्तरीति** । देहातिरिक्तात्मन्यतीतजातिस्मर्तरीष्टे प्रत्यभिज्ञा युक्तेति यावत् ॥ २२३ ॥

अनुग्राह्यसजातीयं न च प्रत्यक्षमानिनः ॥
ज्योतिः साधयितुं युक्तमनुमानद्विषः सतः ॥ २२४ ॥

यत्तूपकारि सजातीयामित्यादिना ग्राह्यजातीयमात्मज्योतिरिति तत्राऽऽह । **अनुग्राह्येति** । प्रत्यक्षमेव मानमस्येति प्रत्यक्षमानी लोकायतिकस्तस्यानुमानं विद्विषतो मते ज्योतिरात्मरूपमनुग्राह्यजातीयं नानुमातुं शक्यमनुमानानुत्थानादित्यर्थः ॥ २२४ ॥

सजातीयगिरा चात्र भवता किं विवक्षितम् ॥
सामान्यमथवा व्यक्तिर्यदि सामान्यमुच्यते ॥ २२५ ॥
सजाति नास्ति सामान्यमनवस्था तथा सति ॥
निःसामान्यानि तेनाऽऽहुः सामान्यानीति वादिनः ॥ २२६ ॥

---

[1] ग. 'होऽभ्युपे' ।

पूर्वोक्तानुमानस्यानुत्थानमुक्त्वा साध्यं विकल्पयति । सजातीयेति । अत्रेति परोक्तानुमानोक्तिः । आद्यमनूद्य दूषयति । यदीति । सजातीयं नाम तुल्यजात्याक्रान्तं तद्यदि सामान्यं तदा सामान्यं सामान्यवदिति न युज्यते जातिमतः सामान्यस्य क्वाप्यभावादित्यर्थः । जातिमत्सामान्यस्वीकारे सति जात्यविश्रान्तिदोषमाह । अनवस्थेति । सामान्यस्य जातिमत्त्वं वदतो वादिप्रसिद्धिविरोधश्चेत्याह । निःसामान्यानीति । तेनानवस्थाप्रसङ्गेनेति यावत् । उक्तं हि—सामान्यविशेषेषु सामान्यविशेषाभावात्तत एव ज्ञानमिति ॥ २२५ ॥ २२६ ॥

भौतिकत्वेन चेज्ज्योतिर्देहानुग्राहकं मतम् ॥
देहेऽपि तस्य सद्भावान्नापेक्षा स्यात्तदा रवौ ॥ २२७ ॥

द्वितीयमादत्ते । भौतिकत्वेनेति । भौतिकदेहस्य व्यक्तेस्तथात्वेन स्थिता ज्योतिर्व्यक्तिरनुग्राहिका तथाच तुल्यजात्याक्रान्ता व्यक्तिः सजातीयशब्दार्थश्चेदित्यर्थः । तदा तस्या ज्योतिर्व्यक्तेश्चक्षुरादिकाया देहेऽपि भावाद्व्यतिरिक्ते ज्योतिष्यादित्यादौ दृश्यमानापेक्षा न स्यादित्यनुभवविरोधेन दूषयति । देहेऽपीति ॥ २२७ ॥

विशेषश्चेदपेक्ष्यः स्याद्यो देहेऽस्मिन्न विद्यते ॥
नानुग्राह्यसजातित्वं तस्यानुग्राहकत्वतः ॥ २२८ ॥

अनुग्राह्यदेहान्तस्थचक्षुरादिरूपानुग्राहकज्योतिर्व्यक्तिसंभवेऽपि व्यतिरिक्तादित्यादिज्योतिर्व्यक्तिरनुग्राहिका प्रत्यक्षतोऽपेक्ष्यतेति शङ्कते । विशेषश्चेदिति । तथाऽपि साजात्यासिद्धिरित्याह । नानुग्राह्येति । न खल्वादित्यादिज्योतिरपेक्ष्यमाणं देहसजातीयं तस्यानुग्राहकत्वादितरस्यानुग्राह्यत्वादुभयत्रोभयरूपाभावाद्वैलक्षण्यस्य स्फुटत्वाद्भौतिकत्वेन साजात्ये तुच्छव्यावृत्तत्वेन तत्प्रकृतेऽपि तुल्यमित्यर्थः ॥ २२८ ॥

देहात्स्याद्भिन्नजातीयं वस्तु देहावभासि यत् ॥
विवादगोचरापन्नं भास्वरत्वाद्रवीन्दुवत् ॥ २२९ ॥

आदित्यादेरनुग्राहकस्यानुग्राह्यदेहादेर्वैलक्षण्योक्त्या दृष्टान्तस्य साध्यविकलतामुक्त्वा प्रत्यनुमानमाह । देहादिति । न च साध्यविकलताऽऽदित्यादेर्भौतिकत्वेन तुल्यजातीयत्वेऽप्यनुग्राहकत्वेनानुग्राह्याद्वैलक्षण्यस्य दर्शितत्वादिति भावः ॥ २२९ ॥

नानुग्राह्यसजातीयं नाप्यनुग्राहकं तथा ॥
घटो घटं रविर्वेन्दुं नानुगृह्णाति कुत्रचित् ॥ २३० ॥

किंचानुग्राह्यानुग्राहकत्वस्य साजात्यस्य च समा विषमा वा व्याप्तिरिति विकल्प्याऽऽद्यं दूषयति । नेत्यादिना । न हि यत्रानुग्राह्यानुग्राहकत्वं तत्र साजात्यं यत्र च साजात्यं तत्रानुग्राह्यानुग्राहकत्वमिति नियमो घटादौ व्यभिचारादित्यर्थः ॥ २३० ॥

---

१ क. ख. °सथा १° ।

**सजातीयासजातीयैर्देहोपकृतिरिष्यते ॥**
**क्ष्माबग्निवायुभिः साक्षान्नातो नियम इष्यते ॥ २३१ ॥**

द्वितीयं निराकरोति । **सजातीयेति** । भूतसंघातो देहस्तस्य कदाचिद्दृश्यते पृथिव्योपकारो जलादिना कदाचित्तत्र पृथिवी देहस्थपार्थिवांशस्य सजातीया विजातीयांऽशान्तरस्य जलाद्यपि दैहिकस्य स्वभागस्य सजातीयं विजातीयं च भागान्तरस्यातः सजातीयासजातीयैर्देहस्योपकाराद्यत्रोपकार्योपकारकत्वं तत्र साजात्यं यत्रासाजात्यं तत्रेतरासत्त्वमिति न व्याप्तिरित्यर्थः ॥ २३१ ॥

**विजातीयोपकारश्चेद्भवता नाभ्युपेयते ॥**
**चतुर्भूतात्मको देह इत्येतत्कथमुच्यते ॥ २३२ ॥**

पृथिवी देहस्थं स्वांशं प्रत्येवोपकरोति तथा जलाद्यपीति नियमादुक्तव्याप्तिसिद्धिरित्याशङ्क्याऽऽह । **विजातीयेति** । पृथिव्यादिर्देहस्यैवोपकरोति तत्र तत्तत्कृतोपकारोपलब्धेर्न च समुदायस्य समुदायिभिः साजात्यं समस्तव्यस्तभावेन वैषम्याधिगतेरित्यर्थः ॥ २३२ ॥

**अभावोऽप्युपकुरुते लोकेऽस्मिन्भाववद्यतः ॥**
**नातोऽनुग्राहकत्वादिनियमोऽयं समञ्जसः ॥ २३३ ॥**

इतश्च व्याप्त्यसिद्धिरित्याह । **अभावोऽपीति** । अमित्वा कण्टकाभावं चरणं न्यस्यते कथमिति न्यायादालोकादिवद्गमनादौ कण्टकाद्यभावस्योपकारित्वाद्यत्रानुग्राहकत्वादि तत्र साजात्यमिति न व्याप्तिरित्यर्थः ॥ २३३ ॥

**पार्थिवैः पार्थिवस्याग्नेरुपकारो यथेन्धनैः ॥**
**वैद्युतस्य तथैवाद्भिरुपकारः समीक्ष्यते ॥ २३४ ॥**

परेष्टव्याप्त्यभावे हेत्वन्तरमाह । **पार्थिवैरिति** ॥ २३४ ॥

**अद्भिः काष्ठैश्चोपकारः पावकस्यैव वीक्ष्यते ॥**
**अग्न्यम्बुभिश्च शमनं तथाऽग्नेरेव दृश्यते ॥ २३५ ॥**

यद्यपि काष्ठैर्भौमस्य तेजसो दिव्यस्य चाद्भिरुपकारो दृष्टस्तथाऽपि कथं तावता न साजात्यमनुग्राह्यानुग्राहकयोरिति तत्राऽऽह । **अद्भिरिति** । उपकार्योपकारकयोः साजात्यनियमं निरस्यापकार्यापकारकयोरपि वैजात्यनियमं निरस्यति । **अग्नीति** । वैद्युतोऽग्निर्भौमाग्निसंपर्कादुपशाम्यतीति प्रसिद्धम् । भौमश्चाग्निरद्भिरुपशान्तिमुपगच्छन्नुपलभ्यते ॥ २३५ ॥

**सजातीयासजातीयनियमोऽतो न युज्यते ॥**
**उपकारापकारत्वे पूर्वोक्तेनैव वर्त्मना ॥ २३६ ॥**

उक्तं व्याप्तिभङ्गमुपसंहरति । **सजातीयेति** । उपकारसत्त्वे न साजात्यनियमो न

चापकारसत्त्वे वैजात्यनियम इत्यत्रातःशब्दोक्तं हेतुमेवाऽऽह । **पूर्वेति** । नियमभङ्गप्रदर्शनेनेत्यर्थः ॥ २३६ ॥

**यच्चाप्यक्षैरनैकान्त्यं हेतोरभिहितं पुरा ॥**
**तच्चाप्यसत्त्वयाऽभाणि धर्मित्वेन परिग्रहात् ॥ २३७ ॥**

**सेन्द्रियस्यास्य देहस्य पुरुषोक्त्या परिग्रहात् ॥**
**न ह्येकदेशः साध्यस्य दृष्टान्तत्वाय कल्पते ॥ २३८ ॥**

आत्मज्योतिरनुग्राह्यसजातीयमिति निरस्तमिदानीमतीन्द्रियत्वादन्तस्थत्वमुक्त्वाऽभौतिकत्वे हेतुद्वयमन्तस्थत्वातीन्द्रियत्वाख्यमात्मज्योतिषो विवक्षितं चक्षुरादिभिरनैकान्तमित्युक्तमनुवदति । **यच्चेति** । न तावदन्तस्थत्वे साध्ये चक्षुरादिभिरतीन्द्रियत्वमनैकान्तं किंज्योतिरयं पुरुष इत्यत्र पुरुषशब्देन कार्यकरणसंघातं गृहीत्वाऽऽत्मज्योतिषस्तदन्तस्थत्वोक्तौ सेन्द्रियस्य देहस्य धर्मित्वेन तदन्तस्थत्वरूपविशिष्टसाध्यकोटिनिविष्टत्वेनेष्टत्वादित्याह । **तच्चेति** । साध्यकोटिनिवेशेऽपि साध्यवत्त्वं विना हेतुसत्त्वे कथं न विरुद्धतेत्याशङ्क्याऽऽह । **न हीति** । साध्यैकदेशो न व्यभिचारोदाहरणं तस्य पक्षनिक्षिप्तस्य विपक्षत्वानुपपत्तेर्न चातीन्द्रिये परमाण्वादावनन्तस्थे विरुद्धतातादवस्थ्यं ज्योतिष्ट्वेन हेतोर्विशेषणादित्यर्थः । यद्वाऽऽत्मज्योतिषोऽन्तस्थत्वातीन्द्रियत्वहेतुभ्यामभौतिकत्वे साध्ये चक्षुरादिष्वनैकान्त्यमिति तत्रापि नान्तस्थत्वमनैकान्तमित्याह । **तच्चेति** । अनुग्राह्यान्तस्थत्वं हि हेतुस्तथाच चक्षुरादेरनुग्राह्यत्वधर्मित्वेन स्वीकारात्ततोऽन्तस्थत्वाभावान्न तत्र व्यभिचार इत्याह । **धर्मित्वेनेति** । कथमनुग्राह्यत्वधर्मित्वेन चक्षुरादेर्ग्रहणं पुरुषस्यैव तथात्वश्रुतेरित्याशङ्क्याऽऽह । **सेन्द्रियस्येति** । विशिष्टातीन्द्रियत्वहेतोर्व्यभिचारं परिहरति । **न हीति** । कार्यकरणसंघाताद्वैलक्षण्ये साध्ये तदेकदेशश्चक्षुरादिर्न व्यभिचारोदाहरणं न हि पक्षस्य विपक्षतेत्युक्तं न च संघातैकदेशस्य तदन्तस्थत्वमास्थातुं शक्यमतीन्द्रियत्वेन चाग्राह्यत्वस्य विवक्षितत्वान्न विरुद्धतेति भावः । यद्वा नान्तस्थत्वे साध्येऽतीन्द्रियत्वमक्षेष्वनैकान्तं तेषां ग्राह्यत्वधर्मित्वेनेष्टत्वादग्राह्यत्वस्य चातीन्द्रियत्वादित्याह । **धर्मित्वेनेति** । कुतस्तेषां ग्राह्यत्वमत आह । **सेन्द्रियस्येति** । पुरुषो हि प्रकाश्यत्वेन प्रकृतस्तदन्तर्भूतान्यक्षादीन्यपि तथा तन्न तेषु विरुद्धतेत्यर्थः । एतेनाभौतिकत्वे साध्येऽप्यतीन्द्रियत्वस्य विरुद्धतोद्धृता । यत्तु तस्मिन्साध्येऽन्तस्थत्वं विरुद्धमिति तत्राऽऽह । **न हीति** । प्रत्यग्ज्योतिरभौतिकमिति पक्षः साध्यशब्दार्थः । तस्यान्तस्थत्वमेकदेशस्तद्धि कार्यकरणसाक्षित्वेन तत्प्रत्यक्त्वं न च तादृशो हेतुरक्षेषु व्यभिचारोदाहरणत्वाय योग्यस्तेषां तत्साक्षित्वाभावादित्यर्थः ॥ २३७ ॥ २३८ ॥

**लिङ्गस्य मान्त्वसंसिद्धौ दूषणं दूषणं भवेत् ॥**
**विशेषेऽनुगमाभाव इत्यादि यदुदीरितम् ॥ २३९ ॥**

अनुमानं मानमेव नेत्युक्तमनूद्य निरस्यति । लिङ्गस्येति । व्याप्त्यभावः सिद्धसाध्यतेत्यादि यद्दूषणं तदनुमानस्य मानत्वसिद्धौ दूषणं स्याद्व्याप्तिभङ्गादिहेतुबलादनुमानामानत्वं साध्यते हेतुश्चानुमानतया मानमन्यथा साधकत्वायोगात्प्रत्यक्षानन्तर्भावाच्चेत्यर्थः ॥ २३९ ॥

**सामान्येतररूपत्वात्साध्यस्याग्न्यादिरूपिणः ॥**
**अपि दोषद्वयं न स्यादेकरूपे हि शङ्क्यते ॥ २४० ॥**

तर्हि कथमननुगमादिसमाधिस्तत्राऽऽह । सामान्येति । यदि हि साध्यमेकरूपमिष्टं तदा दोषद्वयमाशङ्कामर्हति न च तदेकरूपमिष्टं तस्योभयात्मत्वाङ्गीकारात्तथाच साध्यस्य सामान्यरूपत्वान्नाननुगतिर्विशेषरूपत्वाच्च न च सिद्धसाध्यतेत्यर्थः ॥ २४० ॥

**न चेन्द्रियाणि ते सन्ति प्रत्यक्षैकप्रमाणिनः ॥**
**अनुमानादृते तेषां संसिद्धिर्नेष्यते[1] यतः ॥ २४१ ॥**

एकस्य द्वैरूप्यायोगाद्व्याप्तेश्च निरस्तत्वात्कथमनुमानप्रामाण्यमित्याशङ्क्य तात्त्विकाप्रामाण्येऽपि व्यावहारिकं तत्प्रामाण्यमित्यभिप्रेत्याऽऽह। न चेति । अस्यार्थः—अनुमानप्रामाण्यमनिच्छतो नाध्यक्षमपि सिध्येदिन्द्रियाणामनुमानं विनाऽसिद्धेर्न च तानि गोलकात्मकानि नानुमामपेक्षन्ते सत्स्वपि तेष्वर्थानुपलब्धेस्तद्धीकरणत्वेनेन्द्रियान्तरकल्पना तदध्यक्षवादिना तदुपयोगित्वेनानुमानप्रामाण्यमेष्टव्यमिति ॥ २४१ ॥

**ग्राहकग्रहणग्राह्यभावाभावविभागवित् ॥**
**स्वार्थमन्यानपेक्षं सच्चैतन्यं नाक्षमानगम् ॥ २४२ ॥**

इतश्चाध्यक्षेतरन्मानमस्तीत्याह । ग्राहकेति । न हि प्रत्यक्षं प्रकृतं यथोक्तं चैतन्यं गोचरयितुमर्हति तेन तदवगाहित्वेनाऽऽगमवचनमनुसंधेयमित्यर्थः ॥ २४२ ॥

**न च तद्भावभावित्वं व्यतिरेकाप्रसिद्धितः ॥**
**देहाभावे ह्यभावोऽस्याश्रितेः स्यात्किंप्रमाणकः ॥ २४३ ॥**

किंच देहभावे भावात्तदभावे चाभावात्तद्धर्मश्चैतन्यमिति वदता बलादनुमानप्रामाण्यमुपेयमित्याह । न चेति । तच्छब्दो देहविषयः । तदभावे सत्यभावित्वमपि[2] चैतन्यस्योपलक्ष्यते । व्यतिरेकासिद्धिं साधयति। देहेति । न हि तदभावे तदभावस्य प्रत्यक्षं प्रमाणं तस्य सदर्थावगाहित्वान्न च तस्मिन्प्रमाणान्तरमनभ्युपगमादित्यर्थः ॥ २४३ ॥

**अनुमानाप्रमाणत्वं न प्रत्यक्षेण साध्यते ॥**
**लिङ्गेनापि च तत्सिद्धौ त्वदुक्त्यैव विरुद्धता ॥ २४४ ॥**

किंचानुमानामानत्वेऽध्यक्षमनुमानं वा मानं नाऽऽद्य इत्याह । अनुमानेति । रूपा-

---

१ ग. °नेक्ष्यते । २ ख. °पि न चै° ।

दिमद्विषयत्वात्तस्येत्यर्थः । न द्वितीय इत्याह । **लिङ्गेनेति** । तथा सति लिङ्गप्रामाण्यस्याऽऽवश्यकत्वादित्यर्थः ॥ २४४ ॥

**त्वदशेषप्रवृत्तीनां निरोधश्च प्रसज्यते ॥**
**लिङ्गस्येहाप्रमाणत्वे निश्चेष्टं स्याज्जगत्तथा ॥ २४५ ॥**

अनुमानप्रामाण्ये हेत्वन्तरमाह । **त्वदिति** । **उक्तं हि**—सामान्यतो दृष्टस्यानुमानस्याप्रामाण्ये पानभोजनादिसर्वव्यवहारलोपप्रसङ्ग इति । इहेति व्यवहारावस्थोक्ता । न केवलमनुमानाप्रामाण्ये त्वत्प्रवृत्तीनामेव निरोधः किंतु विश्वमेवाप्रवृत्तिनिवृत्ति स्यादित्याह । **निश्चेष्टमिति** । इष्टानिष्टोपायतानुमानाधीनत्वात्प्रवृत्तिनिवृत्त्योरित्यर्थः ॥२४५॥

**वागभिव्याहृतिश्चेयमपि ते न प्रसिध्यति ॥**
**नैवाऽऽत्मप्रतिपत्त्यर्थं भारत्युच्चार्यते त्वया ॥ २४६ ॥**

किंच परैः संव्यवहारार्थं भवतो वाक्योच्चारणदर्शनादनुमानप्रामाण्यमेष्टव्यमित्याह । **वागिति** । तदप्रामाण्ये परस्याप्यभिव्याहृतिरयुक्तेत्यपिशब्दार्थः । परप्रयुक्तशब्दश्रवणानन्तरमात्मनो ज्ञानमुपलभ्य स्वदृष्टान्तादितरस्यापि स्वकीयश्रोतुः स्वप्रयुक्तशब्दश्रवणादर्थज्ञानमनुमाय स्वयं शब्दं प्रयुङ्क्ते तदनुमानं प्रमाणमन्यथा वाक्यप्रयोगानर्थक्यान्न हि स्वप्रतिपत्त्यर्थं तदुच्चार्यते । एतेन वाक्यस्यापि प्रामाण्यं प्रत्येतव्यमिति भावः ॥२४६॥

**विवादगोचरापन्ना प्रमाणमनुमेष्यताम् ॥**
**अनुमानत्वतो लिङ्गाद्दूपणानुमितिर्यथा ॥ २४७ ॥**

तन्मानत्वे मानमाह । **विवादेति** । भागे सिद्धसाध्यत्वमुद्धर्तुमाद्यं विशेषणम् । नाऽऽत्मा देहातिरिक्तस्तदतिरेकेणानुपलब्धत्वात्खरविषाणवदित्यनुमितिवदित्याह । **दूपणेति** । न च साध्यवैकल्यं परपक्षस्यादुष्टत्वे स्वपक्षासिद्धेर्वस्तुनि विकल्पायोगादिति भावः ॥ २४७ ॥

**खद्योतादिप्रकाशस्य यच्चानित्यत्वमुच्यते ॥**
**पक्षादिव्यवधानत्वात्तच्चास्माकं न तान्प्रति ॥ २४८ ॥**

अनुमानप्रामाण्यं प्रसाध्य तद्बलादात्मज्योतिषो देहाद्यतिरेक उक्त इदानीं कादाचित्कमपि दर्शनादि स्वभावो देहस्येत्यत्र भास्वरत्वाभास्वरत्वं चेत्यादिनोक्तं दृष्टान्तं विघटयति । **खद्योतादीति** । तत्प्रकाशानित्यत्वं खद्योतादीन्प्रति न भवति किंत्वस्माकमेव तद्भाति तत्प्रकाशस्यास्मान्प्रति पक्षाद्यवयवव्यवहितत्वादतः सति धर्मिणि कादाचित्कस्य स्वभावत्वे दृष्टान्तो नास्तीत्यर्थः ॥ २४८ ॥

**भावाभावग्रहो नापि सिध्येत्प्रत्यक्षमानतः ॥**
**विद्यमानार्थसंबन्धात्प्रत्यक्षस्येह सर्वतः ॥ २४९ ॥**

---

१ क. मार्गे ।

किंचाभास्वरत्वमदर्शनमित्यादिरभावो न परस्य सिध्यत्यतो दृष्टान्ते दार्ष्टान्तिके वा न कादाचित्कस्य स्वभावतेति वक्तुमभावे प्रत्यक्षं मानमन्यद्वेति विकल्प्याऽऽद्यं दूषयति । **भावेति** । अपिना मानान्तरमभावे निरस्यते तस्य तेनानङ्गीकारात् । प्रत्यक्षेणाभावाग्रहे हेतुमाह । **विद्यमानेति** । उक्तं च सतश्चैतन्यादुपलम्भनं नासत इति । **भावांशेनैव** संबन्धो योग्यत्वादिन्द्रियस्य हीति च ॥ २४९ ॥

**अथाभावोऽपि तद्ग्राह्य इति चेदभिधीयते ॥**
**प्रत्यक्षाभावसंसिद्धौ किं प्रमाणमितीर्यताम् ॥ २५० ॥**

निर्घटं भूतलमित्यादिप्रत्यक्षेण शङ्कते । **अथेति** । अर्थाभावस्य प्रत्यक्षत्वमुपेत्य परिहरति । **प्रत्यक्षेति** । न हि प्रत्यक्षं स्वाभावं साधयत्यतुल्यकालत्वान्नापि मानान्तरं तदवगाहि संभवत्यनभ्युपगमादित्यर्थः ॥ २५० ॥

**प्रमातृमानाभावोऽपि भवता प्रतिपाद्यते ॥**
**यद्भावेऽपि न यन्मानं तदभावेऽपि तत्कथम् ॥ २५१ ॥**

किंच मात्राद्यभावस्याध्यक्षत्वासिद्धेस्तद्ग्राहकं मानान्तरमेष्टव्यमित्याह । **प्रमात्रिति** । तत्राध्यक्षस्यामानत्वं कैमुतिकन्यायेनाऽऽह । **यद्भावेऽपीति** । न हि मातरि माने वाऽध्यक्षं मानं तस्य स्वाश्रये स्वात्मनि वा प्रवृत्तौ स्वप्रवृत्तिप्रसङ्गान्नापि तदग्रहे तदभावग्रहस्तयोस्त्वन्मते तुल्यधीग्राह्यत्वादन्यथा मानान्तरापातादिति भावः ॥ २५१ ॥

**व्यावर्तते स्वभावश्चेदित्येतदतिदुर्घटम् ॥**
**स्वभावो वस्तुनस्तत्त्वं तत्त्वात्तत्त्वं न हीयते ॥ २५२ ॥**

अदर्शनादेः स्वभाववादेऽसिद्धेर्न तस्य कादाचित्कस्य स्वभावतेत्युक्त्वा स्वभावस्याकादाचित्कत्वे हेत्वन्तरमाह । **व्यावर्तत इति** । स्वभावश्चेत्सति वस्तुनि व्यावर्तत इत्ययुक्तं स्वभावो हि वस्तुनः स्वरूपं न च तत्सत्येव वस्तुनि नश्यति व्याघातादित्यर्थः ॥ २५२ ॥

**धर्मादेः फलदातृत्वं स्वभावोऽवश्यमेव तत् ॥**
**अभ्युपेयस्त्वयाऽपीह यथा तदपि मे शृणु ॥ २५३ ॥**

स्वभाववादसाधनार्थं धर्मादेः फलदातृत्वं स्वभावः सिद्धान्तेऽपीत्युक्तमनुवदति । **धर्मादेरिति** । तत्फलदातृत्वमिति संबन्धः । ननु मया धर्मादौ फलदातृत्वाख्यः स्वभावो नेष्यते पूर्वपूर्वधर्मादिवशादुत्तरोत्तरधर्मादेस्तद्धेतुत्वासिद्धेस्तत्राऽऽह । **अभ्युपेय इति** । प्रकारवाचि वाक्यं तदर्थः । इहेति धर्माद्युक्तिः ॥ २५३ ॥

---

१ ख. तस्यान॰ । २ घ. संबोधो । ३ ग. अथ भा॰ । ४ ग. ॰पि न ग्राह्य॰ । ५ ग. ॰वे तु त॰ । ६ ख. घ. स्वप्र॰ । ७ ख. ॰दपि दु॰ ।

क्रियातः स्तुतिनिन्दादेः सुखदुःखादिलक्षणम् ॥
धर्माधर्मफलं साक्षात्प्रत्यक्षेणानुभूयते ॥ २५४ ॥

श्रोतव्यमेव दर्शयति । क्रियात इति । आदिशब्देन पुरस्कारतिरस्कारसंग्रहः । द्वितीयेनाऽऽदिपदेन तत्तत्प्रभेदो गृह्यते । न हि प्रत्यक्षसिद्धे विवादो न च स्तुत्यादिक्रियावशादेव सुखादिसिद्धिरन्यथाऽपि दर्शनादतस्तदपेक्षया धर्मादेरेव तद्धेतुत्वं न च तस्य धर्मापेक्षया फलदातृत्वमनवस्थानात्तथाच यथा तस्य फलदातृत्वं ते स्वभावस्तथा चैतन्यमपि मे देहस्येति भावः ॥ २५४ ॥

आगमैकप्रमाणत्वात्कथं धर्माद्युदाहृतिः ॥
अथाभ्युपगमाद्युक्तं वेदाभ्युपगतिस्तथा ॥ २५५ ॥

आगममनिच्छतस्ते नेदमुदाहरणमिति परिहरति । आगमेति । उक्तं हि—चोदनालक्षणोऽर्थो धर्म इति । त्वदिष्टं धर्माद्युपेत्य मयोदाहृतमिति शङ्कते । अथेति । तर्हि वेदप्रामाण्यमपि मदुपगत्यनुसारेण स्वीकार्यं न हि प्रत्यक्षं धर्मादि गोचरयत्यनिमित्तं विद्यमानोपलम्भनत्वादितिन्यायविरोधात्प्रत्यक्षपूर्वकत्वाच्चानुमानोपमानार्थापत्तीनामनिमित्तत्वमिति हि वृद्धाः । औत्पत्तिकसूत्रे च तस्य ज्ञानमुपदेश इत्युक्तेरित्याह । वेदेति ॥ २५५ ॥

मानान्तराभ्युपगमाद्भवतश्च तथा सति ॥
स्वसिद्धान्तविरोधोऽयं बलादायात्यनीप्सितः ॥ २५६ ॥

धर्मादेस्तत्प्रमाणस्य चोपगमे का हानिस्तत्राऽऽह । मानान्तरेति ॥ २५६ ॥

दग्धृत्वादिस्वभावोऽग्नेः शक्तिश्चेद्भवतोच्यते ॥
प्रत्यक्षात्तदसंसिद्धेर्विरोधस्तेऽनुमाश्रितेः ॥ २५७ ॥

न च नास्ति पदार्थानामित्यादिना दग्धृत्वादिस्वभावोऽग्नेरित्युक्तं तत्र तत्कार्यं तच्छक्तिर्वा स्वभावो नाऽऽद्यः कार्यस्य सत्यप्यग्नौ विनाशित्वात्स्वभावत्वायोगादिति मत्वा द्वितीयमनूद्य दूषयति । दग्धृत्वादीति । न हि प्रत्यक्षगम्या शक्तिस्तस्याः कार्योन्नेयत्वात्तथाचानुमानाङ्गीकारादपसिद्धान्तः स्यादित्यर्थः ॥ २५७ ॥

मदभ्युपगमो यद्वद्भवतोऽपि तथा यदि ॥
सर्वमानाभ्युपगमान्न किंचिन्नोऽस्ति दुःस्थितम् ॥ २५८ ॥

त्वयेव मयाऽपि प्रामाण्यमनुमितेराश्रितमतो न विरोधोऽस्तीति गत्यन्तरमपश्यतः शङ्कामनूद्य निरस्यति । मदिति । मदीयं पन्थानमनुसरता सर्वस्यैव मानस्य व्यवहाराङ्गस्याङ्गीकारादात्मनो देहातिरेकादिसिद्धिरित्यर्थः ॥ २५८ ॥

---

१ ग. क्रियते । २ घ. क्रियत ।

**त्वदभ्युपगमार्थाय यत्नोऽयं क्रियते मया ॥**
**अभ्युपेतो मदुक्तश्चेत्सिद्धं नः स्यात्प्रयोजनम् ॥ २५९ ॥**

उक्तमेव व्यनक्ति । **त्वदिति ।** अनुमानाद्यपि त्वया मानत्वेनोपेयमिति साधयितुं मया यत्यते यदि त्वयैवानुमानाद्युपेतं तर्हि देहाद्यतिरिक्तमात्मज्योतिरित्यनुमानवशादस्मदिष्टं सिध्यतीत्यर्थः ॥ २५९ ॥

**अनवस्थेति योऽप्युक्तः सोऽपि दोषो निराकृतः ॥**
**सर्वमानाभ्युपगमान्नानवस्था ततो बलात् ॥ २६० ॥**

धर्मादेर्धर्माद्यन्तरवशात्फलदातृत्वोपगमेऽनवस्थेत्युक्तं दूषयति । **अनवस्थेतीति ।** वेदादिप्रामाण्योपगमे सत्यनादित्वादिना[1] परिहर्तुं शक्यत्वादित्यर्थः ॥ २६० ॥

**देहादिव्यतिरिक्तोऽत आत्मा सिद्धो यथोदितः ॥**
**आदित्याद्यसजातीयः पूर्वोक्तादनुमानतः ॥ २६१ ॥**

शरीरं नाऽऽत्मा शरीरादन्यदात्मेति शरीरप्रतिषेधेनैवाऽऽत्मोपदिश्यत इति **शाबर**भाष्यमाश्रित्योपसंहरति । **देहादीति ।** अनुमानमानत्वस्य सिद्धत्वमतःशब्दार्थः । पूर्वोक्तादतीन्द्रियत्वादिहेतोरिति यावत् ॥ २६१ ॥

**दर्शनादिक्रियावांश्चेद्देह एवाभ्युपेयते ॥**
**दृष्टस्यैव स्मृतौ न स्यात्स्वप्ने चार्थस्य दर्शनम् ॥ २६२ ॥**

अनुमानतोऽतिरिक्तमात्मानमुक्त्वा तत्रैव हेत्वन्तरमाह । **दर्शनादीति ।** देहो द्रष्टा चेद्दृष्टस्यैवार्थस्य स्मृतौ दर्शनं न स्याच्चक्षुष्मता हि घटो दृष्टः स पुनर्विचक्षुषा स्मर्यते न च द्रष्टृस्मर्त्रोर्भेदोऽन्यदृष्टेऽन्यस्मृत्यदृष्टेर्यथाऽऽह नान्यदृष्टमन्यः स्मरतीति । अतो दृष्टस्यैव स्मृतौ दृष्ट्यनुपपत्त्या देहातिरिक्तस्यैव द्रष्टृत्वादि तदात्मगुणसद्भावादप्रतिषेध[2] इत्यक्षपादसूत्रादित्यर्थः । देहस्यैव द्रष्टृत्वाद्यङ्गीकारे दृष्टस्यैव स्वप्ने दृष्ट्यनुपपत्तिश्चातिरिक्तस्य द्रष्टृत्वादि कल्पयतीत्याह । **स्वप्ने चेति ॥** २६२ ॥

**बाह्यादित्यादिविरहे करणव्यापृतिं विना ॥**
**जाग्रद्वदीक्षते स्वप्ने दृष्टपूर्वं यतो नरः ॥ २६३ ॥**

तत्र दृष्टस्यैव दृष्टिरसिद्धेति कुतस्तदनुपपत्त्या यथोक्तात्मसिद्धिरित्याशङ्क्याऽऽह । **बाह्येति ।** अतो देहस्य न द्रष्टृतेति शेषः ॥ २६३ ॥

**सामग्र्या स यया पूर्वमद्राक्षीच्छिखरं गिरेः ॥**
**तया विनैव स्वप्ने तदात्मा पूर्ववदीक्षते ॥ २६४ ॥**

कथमादित्याद्यभावे दृष्टस्य स्वप्ने दृष्टिर्न हि सामग्रीं विना कार्यं युक्तं तत्राऽऽह

---

१ ख. °दित्यादिना । २ क. ख. °रिक्तं द्र° ।

सामग्र्येति । ननु मनः स्वप्ने पूर्वदृष्टाकारपरिणतं साक्षिप्रत्यक्षं चेत्तर्हि तत्पूर्वादृष्टाकारपरिणतमपि कुतो न साक्षिविषयस्तत्राऽऽह । पूर्ववदिति । अतो दृष्टस्य तत्सजातीयस्य वा स्वप्ने दृष्टिनियमाज्जाग्रत्स्वप्नयोरनुयायी देहातिरिक्तो द्रष्टा न खल्वन्यो जागर्त्यन्यः स्वपितीति शेषः ॥ २६४ ॥

उत्खातनयनश्चायमनुत्खाताक्षवद्घटम् ॥
स्वप्ने समीक्षते नात आत्मनोऽन्यः प्रपश्यति ॥ २६५ ॥

अतिरिक्तस्यैव द्रष्टृत्वमित्यत्र हेत्वन्तरमाह । उत्खातेति ॥ २६५ ॥

ततश्चैतद्भवेत्सिद्धं यः स्वप्ने कुम्भमीक्षते ॥
विचक्षुः प्रागपि घटं स एवैक्षिष्ट चक्षुषा ॥ २६६ ॥

आत्मनः स्वप्नद्रष्टृत्वेऽपि जाग्रत्यन्यो द्रष्टेति द्रष्टृभेदमाशङ्क्याऽऽह । ततश्चेति । जाग्रत्स्वप्नयोरेकाधिकरणत्वं ततःशब्दार्थः । न हि तत्र द्रष्टृभेदः प्रत्यभिज्ञाविरोधादित्यर्थः ॥ २६६ ॥

मृतौ चाविकलस्यैव दर्शनादेरसंभवात् ॥
न स्याद्देहस्य तच्चापि देहो द्रष्टा भवेद्यदि ॥ २६७ ॥

देहस्याद्रष्टृत्वे हेत्वन्तरमाह । मृतौ चेति । यदि देहो द्रष्टा तर्हि सत्यामपि मृतावविकलस्यैव तस्य दर्शनादिक्रिया स्यात्तदभावात्तस्य द्रष्टृत्वमपि न स्यादिति योजना ॥ २६७ ॥

नेक्षितृत्वेऽक्षबुद्ध्यादेः प्रत्यभिज्ञोपपद्यते ॥
न भिन्नद्रष्टृकं यस्मात्प्रतिसंधानमर्हति ॥ २६८ ॥

मा भूद्देहस्याऽऽत्मत्वमिन्द्रियाणां तु स्यात्तेष्वहंधीदर्शनादित्याशङ्क्य सव्यदृष्टस्येतरेण प्रत्यभिज्ञानादित्यक्षपादसूत्रमनुसृत्याऽऽह । नेत्यादिना ॥ २६८ ॥

यमद्राक्षं पुरा कुम्भं तमेवाद्य स्पृशाम्यहम् ॥
इत्येतत्प्रतिसंधानं न भिन्नद्रष्टृकं भवेत् ॥ २६९ ॥

सव्येन खलु चक्षुषा दृष्टमर्थमितरेणापि चक्षुषा दृष्ट्वा प्रत्यभिजानाति यमद्राक्षं तमेवैतर्हि पश्यामीतीन्द्रियचैतन्ये च नान्यदृष्टमन्यः प्रत्यभिजानातीति प्रत्यभिज्ञानुपपत्तिरितिन्यायभाष्यमाश्रित्योक्तेऽर्थे यदहमद्राक्षमित्यादिभाष्यार्थं योजयति । यमद्राक्षमिति ॥ २६९ ॥

प्रतिसंधानकृत्तर्हि मनः संस्कारसंश्रयात् ॥
नैवं तस्यापि मनसो विषयत्वेन दर्शनात् ॥ २७० ॥

नाऽऽत्मप्रतिपत्तिहेतूनां मनसि संभवादित्यक्षपादसूत्रानुसारेण शङ्कते । प्रतिसंधानेति । तस्य प्रतिसंधातृत्वे हेतुमाह । संस्कारेति । एकत्वान्मनसः पूर्वानुभवोत्थसं-

स्कारात्प्रत्यभिज्ञोपपत्तेर्दर्शनस्पर्शनाभ्यामेकार्थग्रहादीनां च तत्र संभवादात्मतेत्यर्थः । ज्ञातुर्ज्ञानसाधनतोपपत्तेः संज्ञाभेदमात्रमिति **न्यायसूत्रेण** परिहरति । **नैवमिति** । मनसोऽपीत्यादिभाष्योक्तं परिहारमाह । **तस्यापीति** ॥ २७० ॥

**शब्दादिखचितं साक्षात्स्मृतिस्वप्नगतं मनः ॥**
**कुम्भवद्वीक्ष्यते यस्मान्नात आत्मा मनोऽपि नः ॥ २७१ ॥**

कथं तस्य विषयत्वादनात्मत्वं तत्राऽऽह । **शब्दादीति** ॥ २७१ ॥

**भावाभावौ प्रमात्रादेस्तद्विलक्षणरूपभृत् ॥**
**प्रत्यक्समीक्षते नित्यं नातो द्रष्टृ भवेन्मनः ॥ २७२ ॥**

मनो दृश्यत्वाद्घटवदनात्मेत्ययुक्तं द्रष्टृभावादित्याशङ्क्याऽऽह । **भावेति** ॥२७२ ॥

**भोग्यत्वं चास्य देहस्य प्रत्यक्षैकप्रमाणकम् ॥**
**प्रत्यक्षाप्रमितं कस्माद्भोक्तृत्वं तस्य कल्प्यते ॥ २७३ ॥**

देहद्वयस्यानात्मत्वे हेत्वन्तरमाह । **भोग्यत्वमिति** । विमतमनात्मा भोग्यत्वात्कुम्भवदित्यर्थः । केचिद्देहद्वयस्य भोक्तृत्वमिच्छन्तो भोग्यत्वाध्यक्षं मानं न मन्यन्ते तान्प्रत्याह । **प्रत्यक्षेति** । न च भुञ्जेऽहमिति प्रत्यक्षस्य तत्र प्रमाणत्वात्तदप्रमितिरसिद्धेति वाच्यं तस्यातिरिक्तात्मविषयत्वान्न च मानान्तरं तद्भोक्तृत्वं गृह्णदिष्टमित्यर्थः ॥ २७३ ॥

**अयंरूपेण भोग्योऽर्थो ह्यहंरूपेण भोजकः ॥**
**विरुद्धरूपौ प्रत्यक्षाद्गम्येते भोज्यभोजकौ ॥ २७४ ॥**

किंच देहात्मानौ मिथो भिन्नौ विरुद्धधर्मत्वात्संप्रतिपन्नवदित्याह । **अयमिति**॥२७४॥

**इत्यलं शुष्कतर्कोत्थवाङ्मात्राक्षेपदूषणैः ॥**
**पुंसां पुमर्थसिद्ध्यर्थं प्रक्रान्तमभिधीयते ॥ २७५ ॥**

परमतदूषणमुपसंहरति । **इत्यलमिति** । देह एवाऽऽत्मा नान्योऽस्तीत्येवंप्रकारा देहेऽहंबुद्ध्युत्पत्तेरन्यस्य चानुपलब्धेरित्यादिनिर्मूलतर्कोत्पन्ना वाङ्मात्ररूपाक्षेपास्तेषां दूषणैः सर्वतीर्थदृशामित्यारभ्योक्तैरलमिति योजना । **अयं भावः**—अन्नस्याशितस्य विकारो देहः स चेदात्मा तस्यैव स्थूलो भागः किमित्यात्मा नोच्यतेऽहंबुद्ध्यभावादिति चेत्तुल्यो विवेकिनामितरस्मिन्नपि तदभावो दृश्यत्वजडत्वादिभ्यश्च सोऽनात्मा तस्मिन्नहंधीश्चाविवेकिनां स्थूलोऽहमितिवन्नेया देहात्प्रागूर्ध्वं चाऽऽत्मस्थितेर्नासावात्मा । उक्तं च पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसंप्रतिपत्तेरिति । एवं देहात्मवादे बहूनि दूषणानीत्यात्मा संघातादर्थान्तरमिति । उत्तरसंदर्भमवतारयति । **पुंसामिति** । मुमुक्षूणां सम्यग्ज्ञानार्थं श्रुतिव्याख्यानमेवानुवर्त्यत इति यावत् ॥ २७५ ॥

---

१ क. द्रष्टृभा° । २ ग °णतः ॥ प्र° । ३ ख. घ. °पा ये क्षे° । ४ ख. घ. हि ।

आत्मैवास्येत्युपक्रम्य पूर्वोत्तरविरुद्धताम् ॥
आशङ्क्य जनकोऽप्राक्षीदात्माऽयं कतमो न्विति ॥ २७६ ॥

प्रकृतं दर्शयन्प्रश्नमुत्थापयति । आत्मेति ॥ २७६ ॥

देहादिसंहतावत्र नामात्मेति ह्यभिधाधियौ ॥
सुप्रसिद्धे जगत्यस्मिन्नायोषिद्बालपण्डितम् ॥ २७७ ॥

कथं पूर्वोत्तरविरुद्धत्वाशङ्का यन्मूला प्रश्नप्रवृत्तिरित्याशङ्क्य तदर्थं प्रथमं प्रसिद्धिं दर्शयति । देहादीति । उक्तप्रसिद्धेरविगीतत्वार्थो हिशब्दः ॥ २७७ ॥

पुंव्यापारस्य संबन्धो देहादिव्यतिरेकिणा ॥
ज्योतिषाऽनात्मना पूर्वं लिङ्गेन प्रतिपादितः ॥ २७८ ॥

तथाऽपि कथं पूर्वोत्तरविरुद्धतेत्याशङ्क्य पूर्वोक्तमनुद्रवति । पुंव्यापारस्येति ॥ २७८ ॥

आत्मैवास्येति वचनात्पूर्वोत्तरविरोधतः ॥
संजातसंशयो राजा याज्ञवल्क्यमपृच्छत ॥ २७९ ॥

अथ विरोधमुद्भावयन्प्रश्नोपपत्तिमाह । आत्मेति । आत्मत्वेन प्रसिद्धं देहं हित्वाऽनात्मना ज्योतिरन्तरेण पुंव्यापारः स्यादित्यादित्यज्योतिः सम्राडित्यादौ संबन्ध उक्तः । संप्रत्यात्मैवास्य ज्योतिरित्याद्युक्त्याऽऽत्मना तस्य संबन्ध उच्यते ततः पूर्वोत्तरवाक्ययोर्विरोधादात्मन्युत्पन्नसंशयो राजा तन्निर्दिधारयिषया पृच्छतीत्यर्थः ॥ २७९ ॥

अर्थान्तरं चेद्देहादेरात्मज्योतिर्विवक्षितम् ॥
पूर्वोत्तरविरोधोऽयं तदा नैवेह ढौकते ॥ २८० ॥

विरोधशङ्कया संशयात्प्रश्नमुक्तमाक्षिपति । अर्थान्तरमिति । आत्मैवास्येत्यादावात्मशब्देन देहग्रहे पूर्वोत्तरविरोधः शङ्कनीयो देहातिरिक्तज्योतिषा पूर्वं पुंव्यापारस्याधुना च देहेन संबन्धोक्तेरात्मशब्देनार्थान्तरग्रहे त्वविरोधस्तस्माद्विरोधशङ्काधीनसंशयमूलप्रश्नासिद्धिरित्यर्थः ॥ २८० ॥

आत्मशब्दश्च लोकेऽस्मिन्प्रसिद्धोऽनेकवस्तुषु ॥
साक्षिबुद्धिशरीरान्तेष्वात्मबुद्धिसमन्वयात् ॥ २८१ ॥

समाधत्ते । आत्मशब्दश्चेति । प्रश्नानुत्थानशङ्काध्वंसार्थश्चकारः । प्रसिद्धिं स्फुटयति । साक्षीति ॥ २८१ ॥

डतमच्प्रत्ययस्तस्माद्बह्वर्थस्यात्र संभवात् ॥
कतमो भवताऽऽत्मेति ज्योतिष्ट्वेन विवक्षितः ॥ २८२ ॥

यस्मादात्मशब्देऽनेकार्थसंभवस्तस्माद्बहूनामेकस्य निर्धारणेऽपेक्षिते कतम इति डतमच्प्रयोग इत्युक्तेऽर्थे लिङ्गमाह । डतमजिति । आत्मशब्दस्यानेकेषु प्रयोगं दृष्ट्वा

संशयानः पृच्छतीति फलितमाह । **कतम इति** । यो भवता ज्योतिष्ट्वेनाऽऽत्मा विवक्षितः स कतम इति योजना ॥ २८२ ॥

**इति पृष्टोऽनुमानेनाविरुद्धं प्रत्यपीपदत् ॥**
**आत्मज्योतिः सुविस्पष्टं राजानं योऽयमित्यतः ॥ २८३ ॥**

उत्तरमाह । **इति पृष्ट इति** । पूर्वोक्तानुमानाविरुद्धमात्मज्योतिर्योऽयमित्यादिना मुनी राजानं प्रति स्पष्टमुक्तवानिति योजना ॥ २८३ ॥

**भान्वादिज्योतिषा तावद्व्यवहर्तुरनुग्रहः ॥**
**कृष्णसारादिदेशेषु स्वान्तस्यानुग्रहस्ततः ॥ २८४ ॥**

उत्तरमवतार्यातिरिक्तात्मज्योतिःसमर्थनार्थं जडाजडज्योतिषोरनुग्रहप्रकारं स्मारयञ्जडज्योतिरनुग्रहप्रकारमनुवदति । **भान्वादीति** । कृष्णसारादिदेशेषु चक्षुर्गोलकादिप्रदेशविशेषेष्विति यावत् । बाह्येन्द्रियद्वारा मनसो भान्वाद्यनुग्रहाद्विवेकशालितेत्याह । **स्वान्तस्येति** ॥ २८४ ॥

**मनःप्रधानः संघात आत्मचैतन्यबिम्बितः ॥**
**अभिव्यक्तस्मृतिः सोऽथ बाह्यां चेष्टां प्रपद्यते ॥ २८५ ॥**

जडज्योतिरनुग्रहमुक्त्वेतरज्योतिरनुग्रहमनुकीर्तयति । **मन इति** । तस्याऽऽत्मचैतन्याभासव्याप्तत्वे शब्दादिविषयानुसंधानशक्तिर्भवतीत्याह । **अभिव्यक्तेति** । उत्पन्नार्थानुसंधानमर्थप्रवृत्तिहेतुरित्याह । **अथेति** । **यथाऽऽहुः** स्मृत्याश्रयाश्च प्राणभृतां सर्वे व्यवहारा **इति** ॥ २८५ ॥

**पिण्डस्तावदिहाऽऽत्मैको द्वितीयो लिङ्गसंज्ञितः ॥**
**चिद्बिम्बितावधिश्चान्यश्चतुर्थो नेति नेति यः ॥ २८६ ॥**

ज्योतिर्द्वयवादोऽद्वयवादेऽयुक्त इत्याशङ्क्य कल्पनयोपपत्तिरित्याशयेनाऽऽत्मनि कल्पितं भेदमादायाऽऽत्मशब्दश्च लोकेऽस्मिन्नित्येतत्प्रपञ्चयति । **पिण्ड इति**[२] । चिद्बिम्बितावधिरित्यन्तर्यामी साक्षी चोच्यते ॥ २८६ ॥

**बाह्यान्तर्ज्योतिषोर्मध्ये देहो बुद्ध्यादिसंहतः ॥**
**वर्तते वाङ्मनःकायक्रियाकारी सुखादिमान् ॥ २८७ ॥**

कालपनिकभेदेन ज्योतिर्द्वये सिद्धे संघातस्य क्रियातत्फलभाजस्तन्मध्ये वर्तनमुक्तं युक्तमित्याह । **बाह्येति** ॥ २८७ ॥

**भान्वादिज्योतिषा सोऽयं सम्यक्संदीपितेक्षणः ॥**
**तद्द्वारेद्धमनाः स्मृत्वा बाह्यां चेष्टां प्रपद्यते ॥ २८८ ॥**

---

१ क. ज्योतिःशब्देना° । २ क. ख. घ. पिण्डेति ।

कथं तयोः संघातानुग्राहकत्वं तत्र बाह्यज्योतिराश्रित्याऽऽह । भान्वादीति । सोऽयमिति व्यवहर्ता संघातो गृह्यते । अन्तर्ज्योतिरधिकृत्याऽऽह । तद्द्वारेति । आदित्याद्यनुगृहीतेन्द्रियद्वारा जातसमुल्लासमानसश्चैतन्याभासव्याप्तो विषयाननुसंधाय पुरुषस्तेषु योग्यां चेष्टां करोतीत्यर्थः ॥ २८८ ॥

धर्माधर्मसमुत्थोऽस्य बाह्यज्योतिरनुग्रहः ॥
हेत्वन्तरानपेक्षस्तु प्रत्यग्ज्योतिरनुग्रहः ॥ २८९ ॥

ज्योतिर्द्वयानुगृहीतः प्रवर्तते पुमानित्युक्तं स्मारयित्वा बाह्यज्योतिःसंबन्धो धर्मादिकृतोऽन्यः स्वाभाविक इत्युक्तमधिकविवक्षयाऽनुभाषते । धर्मेति ॥ २८९ ॥

देहैकदेश एवास्य देवतानुग्रहस्ततः ॥
कृत्स्नाध्यात्माधिदैवादावात्मज्योतिरनुग्रहः ॥ २९० ॥

विवक्षितमधिकमाह । देहेति । आदित्याद्यनुग्रहोऽस्य पुंसो गोलकादिस्थानेष्वेवाऽऽत्मज्योतिरनुग्रहस्तु सर्वत्रेत्युक्तविभागात्फलतीत्यर्थः ॥ २९० ॥

न तत्र सूर्यो भातीति तथाचाऽऽथर्वणे वचः ॥
यथा प्रकाशयत्येक इति चाप्यैश्वरी स्मृतिः ॥ २९१ ॥

आत्मज्योतिषः सर्वानुग्राहकत्वं सर्वावभासकत्वमिति मन्वानस्तत्र श्रुतिस्मृती प्रमाणयति । न तत्रेति । सप्तम्यनुकृत्याधिकरणे विषये व्याख्याता ॥ २९१ ॥

अस्थास्नुत्वाच्च धर्मादेः प्रयोज्यं साधिदैवतम् ॥
अध्यात्ममधिभूतं च तेनास्थास्न्वात्मसाक्षिकम् ॥ २९२ ॥

अनुग्राहकात्मज्योतिर्वदनुग्राह्यमपि देहादि नित्यमेव तयोर्मिथः संबन्धादित्याशङ्क्याऽऽह । अस्थास्नुत्वादिति । प्रयोजकधर्मादेरनित्यत्वात्प्रयोज्यदेहादेश्च कार्यत्वादनित्यमेव तत्सर्वमित्यर्थः । तर्हि तद्वदात्मज्योतिरप्यनित्यमित्याशङ्क्याऽऽह । तेनेति । यस्मादनित्यं सर्वमात्मसाक्षिकं तस्मात्तत्साधकतया सदातनमात्मज्योतिरिति यावत् ॥ २९२ ॥

बाह्यज्योतिरभावेऽतो वाङ्मनःकायहेतुके ॥
स्वप्नादिव्यवहारेऽस्मिञ्ज्योतिरात्मैव नापरम् ॥ २९३ ॥

पुंसो ज्योतिर्द्वयानुगृहीतस्य प्रवृत्तिश्चेत्कथं स्वप्नादौ तत्प्रवृत्तिरनुग्राहकबाह्यज्योतिरभावादित्याशङ्क्याऽऽह । बाह्येति । ज्योतिर्द्वयानुग्रहो जाग्रत्येवेत्यतःशब्दार्थः ॥ २९३ ॥

देहेन्द्रियमनोबुद्धिव्यतिरेकप्रसिद्धये ॥
योऽयमित्युच्यते प्रत्यग्ज्योतिषो भानुवद्वचः ॥ २९४ ॥

---

१ ग. 'नोधीध्यो ध्य' ।

लोकायतविचारव्यवहितं सर्वं सोपस्कारं स्मारयित्वा योऽयमित्यादेरवतारितस्य तात्पर्यमाह । **देहेति** । भानोरनुग्राह्यातिरेकवदात्मज्योतिषोऽपि देहाद्यतिरेकार्थं योऽयमित्यादि वचः श्रुत्योच्यत इति योजना ॥ २९४ ॥

**स्वयंप्रमाणकस्तावत्साक्ष्यन्तोऽर्थो व्यवस्थितः ॥**
**भावाभावौ प्रमात्रादेस्तत्प्रसादात्प्रसिध्यतः ॥ २९५ ॥**

आत्मज्योतिषोऽतिरेकार्थं सत्त्वं तावदाह । **स्वयमिति** । साक्षी खल्वाभासान्तः स्वप्रकाशस्तस्य सर्वसाधकत्वाद्यद्वा साक्षिपर्यन्तः प्रमात्रादिः स्वयंप्रमाणकः स्वयमात्मा प्रमाणमस्येति व्युत्पत्तेस्तदस्य नासत्त्वाशङ्केत्यर्थः । कथं सर्वसाधकत्वं तत्राऽऽह । **भावेति** ॥ २९५ ॥

**तदाभासानुविद्धेन प्रमात्राऽहंवपुर्भृता ॥**
**प्रमाणादेः प्रसिद्धिः स्यान्मेयस्यापि प्रमाणतः ॥ २९६ ॥**

चित्प्रसादान्मात्रादिसिद्धिक्रममाह । **तदाभासेति** । आदिपदेनाज्ञानाद्युक्तिः॥२९६॥

**प्रमाणव्यापृतिफलप्रसिद्धिश्च प्रमातरि ॥**
**अवगत्यवसाना स्यात्प्रमातुः प्रत्यगात्मनि ॥ २९७ ॥**

मानफलसिद्धिप्रकारमाह । **प्रमाणेति** । मातरि मानाख्यव्यापारात्फलसिद्धिर्मातुर्यः प्रत्यगात्मा तस्मिन्नात्मभूता याऽवगतिस्तदवसानैव सा प्रतिबिम्बस्य बिम्बावसानत्वादेवं माता तन्मानादि च सर्वमनुभवादेव सिध्यतीत्यर्थः ॥ २९७ ॥

**यतोऽवगतिरेवात्र प्रमात्रादिविशेषणा ॥**
**साक्षात्प्रमाफलं न्याय्यं प्रत्यगात्मैकसाक्षिकम् ॥ २९८ ॥**

मानफलं स्वप्रकाशं नानुभववेद्यमित्याशङ्क्याऽऽह । **यत इति** । लोके स्वरूपावगतिरेव मात्रादिसंसृष्टा सती फलत्वेन व्यवह्रियते तेनोपहितं मानफलमनुभवगम्यं युक्तमित्यर्थः । साक्षादवगतिरिति संबन्धः ॥ २९८ ॥

**प्रत्यक्चिदाकृतिर्बुद्धौ मेयार्थाकृतिवत्स्थिता ॥**
**बुद्धिः कारणसंस्थैव कृत्स्नव्यवहृतिक्षमा ॥ २९९ ॥**

मानफलस्योपहितत्वं साधयति । **प्रत्यगिति** । प्रथमं चिदाभासो बुद्धिस्थो भवति तस्याः स्वच्छत्वेन चित्प्रतिबिम्बसंभवात्ततो घटाद्याकारपरिणततद्वृत्तिगतः सम्यगवगम्यतेऽन्यथा तदसिद्धेस्तन्मानफलमित्युच्यते तेनोपहितं तदित्यर्थः । यद्वा मेयोऽर्थो घटादिस्तदाकारो यथा चक्षुरादिद्वारा बुद्धिस्थो भवति तथा चिदाभासोऽपीति द्रष्टव्यं तद्रूपं फलमुपहितमित्यर्थः । यस्यां बुद्धौ चैतन्याभासः सा स्वतन्त्रेत्याशङ्क्याऽऽह । **बुद्धिरिति** । न हि कार्यं स्वतन्त्रं व्यवहाराय पर्याप्तं कार्यत्वव्याघातादित्यर्थः ॥ २९९ ॥

**यः पृष्टः स पराग्वृत्तिप्रमामेयातिलङ्घितः ॥**
**प्रत्यक्षेणैव मानेन स्वयमित्यभिधीयते ॥ ३०० ॥**

आत्मज्योतिषः सर्वसाधकस्य देहादिव्यतिरेकं साधयितुं योऽयमित्यादीति तात्पर्यमुक्त्वा पदयोरर्थमाह । **यः पृष्ट इति** । पराचि विषये वृत्तिर्यस्याः प्रमायास्तस्या मेयत्वमतिलङ्घ्य स्थितः स्वरूपसाक्षात्कारेणैव सिद्धोऽयमित्युच्यते यस्त्वया कतम इति पृष्टः स तावदेष इत्यर्थः ॥ ३०० ॥

**पराङ्गीति च मन्त्रोक्तिः साक्षादात्मेति च श्रुतिः ॥**
**पराञ्चानाप्रमेयत्वमात्मनः प्रत्यबूबुधत् ॥ ३०१ ॥**

प्रत्यक्षाद्यविषयत्वं प्रतीचो यदुक्तं तत्र मानमाह । **पराङ्गीति** । स्वरूपचैतन्येन प्रत्यक्षत्वे पूर्वोक्तं प्रमाणमाह । **साक्षादिति** । मन्त्रोक्तेस्तात्पर्यमाह । **पराङिति** ॥ ३०१ ॥

**कुम्भाकारेण कुम्भार्थो यथा प्रत्यक्ष ईक्ष्यते ॥**
**विज्ञानेन तथा प्रत्यक्त्वात्माकारेण गृह्यते ॥ ३०२ ॥**

आत्मनः स्वरूपचैतन्यप्रत्यक्षत्वेऽपि कथमयमितिशब्दभाक्त्वमित्याशङ्क्य तदर्थमुक्तमर्थं दृष्टान्तेन साधयति । **कुम्भेति** । आत्माकारेण विज्ञानेनेति संबन्धः ॥ ३०२ ॥

**घटासामान्यरूपोत्थप्रत्यक्षैकप्रमाणकः ॥**
**घटार्थोऽव्यभिचारित्वात्तयोर्मानप्रमेययोः ॥ ३०३ ॥**

दृष्टान्तं विवृणोति । **घटेति** । घटस्योक्तप्रत्यक्षगम्यत्वे हेतुमाह । **अव्यभिचारित्वादिति** ॥ ३०३ ॥

**आत्मासाधारणात्मोत्थभास्वच्चैतन्यरूपिणा ॥**
**प्रत्यक्षेणेक्ष्यते नित्यमात्मनाऽऽत्मा त्वकारकः ॥ ३०४ ॥**

दार्ष्टान्तिकं प्रपञ्चयति । **आत्मेति** । प्रत्यक्षेणाऽऽत्मनेति संबन्धः । स्वेनाऽऽत्मा सदेक्ष्यते चेत्तस्मिन्कर्तृकर्मकरणत्वप्रसक्तिरित्याशङ्क्याऽऽह । **अकारक इति** ॥ ३०४ ॥

**अनात्माकारमानेषु ह्यन्योन्यव्यभिचारिषु ॥**
**प्रत्यक्प्रत्यय एवैकः सर्वत्राव्यभिचारवान् ॥ ३०५ ॥**

आत्मनः स्वरूपचैतन्यासिद्धतया न स्वप्रकाशत्वं व्यभिचारित्वाद्रज्जुसर्पवदस्तीह स्वापादौ तद्व्यभिचारितेत्याशङ्क्याऽऽह । **अनात्मेति** । स्वापादिष्वपि साधकत्वेन स्वरूपचैतन्यस्य स्थितेर्न व्यभिचारितेत्यर्थः। न हि द्रष्टुरित्यादौ तत्र चैतन्यस्थितिर्वक्ष्यमाणेतिद्योतनार्थो हिशब्दः ॥ ३०५ ॥

---

१ क. घ. 'न्यस्थि'।

यत एवमतः प्रत्यक्प्रत्ययेनोपदिश्यते ॥
तदन्यधीगृहीतौ स्याद्यतोऽनात्मत्वमात्मनः ॥ ३०६ ॥

आत्मनः स्वरूपचैतन्यसिद्धत्वमनूद्य फलितमाह । यत इति । प्रत्यक्प्रत्ययः स्वरूपचैतन्यं तेन सिद्धत्वादात्माऽयमित्युच्यते तद्योग्यत्वादित्यर्थः । केचित्त्वात्मनः स्वरूपचैतन्यसिद्धत्वममृष्यन्तो वेद्यत्वमाहुस्तान्प्रत्याह । तदन्येति । अतो न वेद्यतेति शेषः ॥ ३०६ ॥

अपास्तान्यव्यपेक्षं चेदात्मदृष्ट्या समीक्षितम् ॥
जगदात्मैव कृत्स्नं स्यान्न ह्यज्ञातोऽवशिष्यते ॥ ३०७ ॥

आत्मनोऽतिरिक्तधीग्राह्यत्वं निषेधता धीतद्विषयावात्मातिरिक्ताविष्टावित्याशङ्क्याऽऽह । अपास्तेति । सत्तास्फूर्त्योरन्यानपेक्षं यथा स्यात्तथा सर्वं जगत्कृत्स्नात्मदृष्टिरूपेण दृष्टं चेत्तदा बुद्धिर्बोध्यं चाऽऽत्ममात्रं स्यादात्मनि ज्ञाते सत्यज्ञातानवशेषात्तस्मादज्ञानदशायां बुद्ध्यादिभावेऽपि न ज्ञानादूर्ध्वं तदस्तीत्यर्थः ॥ ३०७ ॥

अयमित्यभिधायोग्यबहोरर्थस्य संनिधिः[1] ॥
विज्ञानमय इत्युक्तिस्तदवच्छित्तये यतः[2] ॥ ३०८ ॥

पदान्तरमवतारयति । अयमितीति । अयमित्युक्तेस्तद्वाच्यत्वेन प्रत्यक्षस्य घटाद्यनेकार्थप्रसङ्गात्तस्मादयंशब्दार्थव्यावृत्त्यर्थं विज्ञानमयविशेषणं ततो न घटादिरत्रायंशब्दाभिधेय इत्यक्षरार्थः ॥ ३०८ ॥

विज्ञानमय इत्यस्माद्व्यपदेशान्निवर्तते[3] ॥
ज्योतिरात्मा जडाद्देहात्तस्याचैतन्यरूपतः ॥ ३०९ ॥

आत्मज्योतिरधिकाराद्घटादिव्यवच्छेदस्य तल्लभ्यत्वात्किं विशेषणेनेत्याशङ्क्य तत्तात्पर्यमाह । विज्ञानेति । देहस्य जाड्यं भौतिकत्वात्कुम्भवदित्याह । तस्येति॥३०९॥

विज्ञानमित्यनेनात्र बुद्धिरेवाभिधीयते ॥
बुद्ध्युपाध्यविविक्तश्च विज्ञानमय उच्यते ॥ ३१० ॥

अनेनेति मयटो वक्ष्यमाणं प्रायार्थत्वं सिद्धवत्कृत्य समुदायार्थमाह । बुद्धीति ॥३१०॥

बुद्धिविज्ञानसंपृक्तो यस्मादेष प्रमीयते ॥
राहुवच्चन्द्रसंपृक्तः प्रत्यग्ज्ञानमयस्ततः ॥ ३११ ॥

असङ्गोदासीनस्य प्रतीचो बुद्ध्यसंबन्धान्न विज्ञानमयतेत्याशङ्क्याऽऽह । बुद्धिविज्ञानेति । न हि राहुः स्वरूपेण प्रत्यक्षो मीयते चन्द्रादित्ययोस्तु प्रत्यक्षगोचरस्तथाऽयमात्मा बुद्ध्यादिसंबन्धादेव यतो मीयते ततो विज्ञानमयोऽसाविति योजना । वस्तुतस्तदसंबन्धेऽपि सविकल्पकप्रतीतिस्तत्संपर्कादेवेति तन्मयतेत्यर्थः ॥ ३११ ॥

---

[1] ख. संनिधेः । ग. संनिधौ । [2] क. ततः । [3] ख. °वर्त्यते ।

र्थसंबन्धिना शाखान्तरीयेणाऽऽग्नेयं चतुर्धा करोतीति विशेषविषयतया निश्चितार्थेनाऽऽग्नेय एव पुरोडाशे व्यवस्थाप्यते यथा चाक्ताः शर्करा उपदधातीत्यत्र केनाक्तत्वमिति संदेहे तेजो वै घृतमिति शेषान्निर्णयस्तथेहापीत्यर्थः। आत्मनो विकारत्वे मोक्षानुपपत्त्याद्यबाधितन्यायाद्वा विज्ञानमयपदार्थनिश्चयः। तदुक्तं **प्रमाणलक्षणे**—अर्थाद्वा कल्पनैकदेशत्वादिति। स्रुवेणावद्यति स्वधितिनाऽवद्यति हस्तेनावद्यतीत्यत्र स्रुवादीनां सर्वावदानेषु विनियोगादनियमो वा सामर्थ्यालोचनया स्रुवस्वधितिहस्तानां यथाक्रमं द्रवमांससंहतद्रव्यादानेषु नियमो वेति संदेहे विनियोगाविशेषादनियमे प्राप्ते विनियोगस्यानुष्ठानार्थत्वात्तस्य सामर्थ्याधीनत्वात्तदनुरोधेन व्यवस्थायाः शास्त्रप्रामाण्यमिति स्थितम्। वाशब्दोऽनियमव्यासेधार्थः। अर्थात्सामर्थ्याद्योग्यतावशादेकैकस्य स्रुवादेरेकैकस्मिन्द्रवादौ देशे संबन्धार्हत्वान्नियम इत्यक्षरार्थः। तथेहाप्यनात्मनो ब्रह्मविकारत्वमात्मनस्तु तन्मात्रत्वं शास्त्रप्रामाण्यादिति व्यवस्थेत्यभिप्रेत्याऽऽह। **न्यायाद्वेति** ॥ ३२३ ॥

**देहादिवेन्द्रियेभ्योऽपि व्युत्थापनचिकीर्षया ॥**
**प्राणेष्विति श्रुतिर्वक्ति प्राणाः पञ्चदशोदिताः ॥ ३२४ ॥**

विज्ञानमयपदं व्याख्याय प्राणेष्वित्यस्य विवक्षितमाह। **देहादिति**। तत्र प्रकृतिभागस्यार्थमाह। **प्राणा इति** ॥ ३२४ ॥

**तेभ्यो निर्धारणार्थाय सप्तमीयं प्रयुज्यते ॥**
**प्राणेषु योऽर्थोऽनुगतः स आत्मेत्यवधार्यताम् ॥ ३२५ ॥**

मनसो हृदीति वक्ष्यमाणत्वाद्धीकर्मेन्द्रियाणि दश वायवश्च पञ्चेति पञ्चदशत्वं प्रत्ययार्थमाह। **तेभ्य इति**। निर्धारणमात्मनो निष्कर्षो विभजनम्। प्रकृतिप्रत्ययात्मकपदस्यापेक्षितं पूरयन्नर्थमाह। **प्राणेष्विति** ॥ ३२५ ॥

**प्राणेष्वात्मीयरूपेषु प्रत्यक्त्वेनावभाति यः ॥**
**स एवाऽऽत्मेति विज्ञेयस्तेषु सर्वेष्वनात्मसु ॥ ३२६ ॥**

तेषामात्मत्वे संभाविते किमिति साक्षित्वेन तेष्वनुगतस्याऽऽत्मत्वं तत्राऽऽह। **प्राणेष्वित्यादिना**। न हि करणेषु दीपवदात्मत्वसंभावनेत्यर्थः ॥ ३२६ ॥

**मतं प्राणसजातीया धीरेवाऽऽत्मेति चेन्न तत् ॥**
**यतो धीर्व्यतिरेकार्थं हृदीति श्रुतिरभ्यधात् ॥ ३२७ ॥**

हृदीतिपदं शङ्कोत्तरत्वेनाऽऽदत्ते। **मतमिति** ॥ ३२७ ॥

**हृच्छब्देन च धीरेव तात्स्थ्यादत्राभिधीयते ॥**
**स्वार्थस्तस्यां य आभाति स आत्मा बुद्धिवृत्तिदृक् ॥ ३२८ ॥**

हृदीत्युक्तेस्तनोऽर्थान्तरत्वे भात्यपि कथमात्मनो धीर्व्यतिरेकित्वमित्याशङ्क्याऽऽह। **हृच्छब्देनेति**। पद्मकोशप्रतीकाशं हृदयमिति श्रुतेर्मांसखण्डविशेषे प्रसिद्धस्य तस्य

कथं धीविषयत्वमित्याशङ्क्योपचारादित्याह । **तात्स्थ्यादिति** । सप्तम्यर्थमपेक्षितं पूरयन्नाह । **स्वार्थ इति** ॥ ३२८ ॥

**हृदीत्याधारनिर्देशाद्धीस्था आत्मेति शङ्क्यते ॥**
**वृत्तयोऽतो निवृत्त्यर्थमन्तरित्युपदिश्यते ॥ ३२९ ॥**

विशेषणान्तरस्य तात्पर्यमाह । **हृदीति** ॥ ३२९ ॥

**देवताविषयप्राणबुद्धितद्वृत्तितः परः ॥**
**प्रत्यक्तया यः प्रथते ज्योतिरात्मा स ईक्ष्यताम् ॥ ३३० ॥**

आत्मशब्दस्य बहुषु प्रयोगं दृष्ट्वा संशयात्पृष्टवन्तं प्रति दर्शितरीत्या कीदृशो निर्णय उक्तस्तत्राऽऽह । **देवतेति** । विराड्ब्रह्मादिश्च देवताविषयशब्दौ यः कतम आत्मेति पृष्टः स बुद्ध्यादिभ्योऽतिरिक्तः स्वप्रकाशो ज्ञेयस्तस्यापि प्रत्यक्तया दृष्टेरित्यर्थः ॥ ३३० ॥

**ग्राहकग्रहणग्राह्यरूपोऽनात्मा प्रवाहवान् ॥**
**बुद्ध्यादिर्विषयान्तोऽर्थो यत्साक्षिक इवेक्ष्यते ॥ ३३१ ॥**

बुद्ध्यादेरात्माऽतिरिक्तश्चेत्तर्हि प्रतियोग्येष्टव्योऽन्यथाऽतिरेकासिद्धेरित्याशङ्क्य कल्पितं तं गृहीत्वाऽऽह । **ग्राहकेति** । सोऽनात्मत्वाज्जाड्याच्च साक्ष्यपेक्षो यस्मिन्कल्पितः सिध्यति स ततोऽन्य इत्यर्थः । जन्मादिमत्त्वेनानात्मनः सादित्वमाशङ्क्याऽऽह । **प्रवाहवानिति** । न हि ग्राहकादिव्यक्तीनामन्यतमव्यक्तिरहिता पूर्वकालकोटिरस्ति तेन प्रवाहात्मना तदनादीत्यर्थः ॥ ३३१ ॥

**भूत्वाऽभवंस्तथाऽभूत्वा भवंश्चेहातथात्मना ॥**
**अज्ञातोऽलुप्तदृष्टिर्यः स आत्मा ज्योतिरुच्यते ॥ ३३२ ॥**

आत्मन्यपि जन्मादिदृष्टौ कथं बुद्ध्यादिसाक्षितेत्याशङ्क्य नाऽऽत्माऽश्रुतेरित्यादिन्यायमाश्रित्याऽऽह । **भूत्वेति** । इहाविद्यादशायामतथात्मना कल्पितरूपेणैव जन्मनाशवत्त्वादनुदितानस्तमितज्ञप्तिस्वभावो यश्चिदात्मा स स्वप्रकाशो बुद्ध्यादिसाधको विद्वद्भिरिष्ट इत्यर्थः ॥ ३३२ ॥

**आगमापायितासिद्धिर्बुद्ध्यादेर्यत्समाश्रयात् ॥**
**साक्षादात्मेति तं पश्य प्रत्यग्दृष्ट्यैकमात्मनि ॥ ३३३ ॥**

निर्णयमुपसंहरति । **आगमेति** । इत्थंभावे तृतीया तया च पश्येत्युक्तिप्राप्तद्राष्टिककर्तृत्वादि निरस्यते ॥ ३३३ ॥

**परागर्थानुसारिण्यो यतो धीवृत्तयस्ततः ॥**
**विशेषणादन्तरिति व्यावर्त्यन्ते पराक्त्वतः ॥ ३३४ ॥**

---

१ क. ख. अजातोऽ° । २ क. ग. °वर्तन्ते ।

प्रश्ननिर्णयार्थं वाक्यार्थं संक्षिप्योपसंहृत्य ज्योतिरित्यादि व्याचिख्यासुरन्तर्विशेषणा-द्वृत्तीनां व्यावृत्तिरित्युक्तेऽर्थे हेतुमाह। परागिति। कथमेतावता तासां प्रतीचो व्यावृत्तिरत आह। पराक्त्वत इति। प्रतीच इति शेषः॥ ३३४॥

**कारणं तर्हि बुद्ध्यादेरात्मेत्यत्र प्रसज्यते॥**
**कार्यस्यान्तर्यतो दृष्टं सर्वत्रैव च कारणम्॥ ३३५॥**

ज्योतिर्विशेषणव्यावर्त्यमाह। कारणमिति। अत्र सर्वत्रेति संबन्धः॥ ३३५॥

**जाड्यं चाऽऽत्मन इच्छन्ति कणभुङ्मतजीविनः॥**
**तेषां विप्रतिपत्त्यर्थं ज्योतिरित्यभिधीयते॥ ३३६॥**

बुद्ध्यादेर्जाड्याज्जडमेव किंचित्कारणं युक्तं कथमात्मा तथेत्याशङ्क्याऽऽह। जाड्यं चेति। विशेषणमवतारयति। तेषामिति॥ ३३६॥

**योऽयमित्यादिना यद्वा यथोक्तस्याऽऽत्मवस्तुनः॥**
**प्रकृतज्योतिःसंबन्धो ज्योतिरित्यभिधीयते॥ ३३७॥**

ननु प्रागेव निर्णयं व्याकुर्वता जाड्यस्याऽऽत्मनो व्यावर्तितत्वात्कथमित्थमर्थवज्ज्योतिर्विशेषणमित्याशङ्क्य तस्य तात्पर्यान्तरमाह। योऽयमित्यादिनेति। प्रस्तुतवाक्योक्तात्मवस्तुनः प्रकृतेनाऽऽत्मनैवायं ज्योतिषेत्यादावुक्तेन ज्योतिषा संबन्धो वाच्यस्तेन विशेषणमित्यर्थः॥ ३३७॥

**उपादानं हि बुद्ध्यादेरात्माविद्येति भण्यते॥**
**सकृद्विभातं चिन्मात्रं ज्योतिरित्युपदिश्यते॥ ३३८॥**

यत्तु बुद्ध्यादिकारणं जडमात्मवस्त्वित्येतन्निषेधार्थं विशेषणमिति तद्युक्तयन्बुद्ध्यादि-कारणस्वरूपमाह। उपादानमिति। बुद्ध्यादेरविद्यायाश्च जडत्वेन सारूप्यादुचितमुपादानोपादेयत्वमितिसूचनार्थो हिशब्दः। तत्र विद्वत्प्रसिद्धिं प्रमाणयति। इति भण्यत इति। आत्मनि प्रयुक्तज्योतिःशब्दस्यैतद्व्यावर्तनसामर्थ्यमाह। सकृदिति॥ ३३८॥

**वस्तुवृत्तेन प्रध्वस्तनिःशेषाज्ञानमात्मनः॥**
**ज्योतीरूपमिदं भास्वत्प्रत्यङ्मात्रमतत्त्वकम्॥ ३३९॥**

अज्ञोऽहमिति ज्ञायमानस्य प्रतीचो यथोपदिष्टज्योतिष्ट्वमसिद्धमिति चेत्तत्राऽऽह। वस्तुवृत्तेनेति। आत्मनो रूपमित्युक्ते भेदमाशङ्क्याऽऽह। भास्वदिति॥ ३३९॥

**ज्योतिः संविच्चितिः प्रत्यङ्ङात्मेति व्यपदिश्यते॥**
**स्वार्थं यत्प्रथते नित्यं जाग्रत्स्वप्नसुषुप्तिषु॥ ३४०॥**
**बुद्ध्यादिषु परार्थेषु ह्यागमापायिवस्तुषु॥**
**स्वयं रूपेण यो भाति स्थाणुः स्वार्थः स भण्यते॥ ३४१॥**

---

१ ख. °त्याह। २ घ. °तोऽमिद°।

**ज्योतिरित्यस्य बुद्ध्यादेरागमापायसिद्धिदः ॥**
**स्वयंमात्रक एवायमात्मत्वादेव कारणात् ॥ ३४२ ॥**

ज्योतिःशब्दस्यान्यत्र रूढेर्नाऽऽत्मविषयतेत्याशङ्क्य ज्योतिर्दर्शनादिति न्याये-नाऽऽह । **ज्योतिरिति** । पुरुषशब्दाद्यनुगृहीतप्रकरणात्प्रकृतज्योतिषोऽपकृष्याऽऽत्मन्येवायं शब्दो नियम्यत इति भावः । आत्मनो ज्योतिष्ट्वे युक्त्यन्तरमाह । **स्वार्थमिति** । अवस्थात्रयेऽपि सर्वत्र जडे जन्मनाशवति यदनपेक्षं सदा भाति तज्ज्योतिरित्यर्थः । आत्मत्वादेवाऽऽत्मज्योतिषः स्वार्थत्वमनात्मनश्चानात्मत्वादेव परार्थत्वमिति वक्तुं हिशब्दः । कथं पुत्राद्यर्थत्वदृष्टेरात्मनः स्वार्थत्वं तत्राऽऽह । **स्वयमिति** । स्वयं ज्योतिरिति कृत्वा यः स्वरूपेण भाति स स्यास्नुः स्वार्थश्चेति योजना । विशिष्टस्य पारार्थ्यं नान्यस्येति भावः । उक्तं स्वप्रकाशत्वं साधयति । **अस्येति** ॥ ३४० ॥ ॥ ३४१ ॥ ३४२ ॥

**अनेनैव यथोक्तेन ज्योतिषा सकलं जगत् ॥**
**षड्भावविक्रियामेति निर्विकारेण भास्वता ॥ ३४३ ॥**

आद्यं पक्षमुपपाद्य द्वितीयं समर्थयते । **अनेनेति** ॥ ३४३ ॥

**अचेतनोऽपि बुद्ध्यादिश्चेतनावानिवेक्ष्यते ॥**
**देहेन्द्रियमनोबुद्धिसंघातो वायुभिः सह ॥ ३४४ ॥**

आत्मज्योतिर्भास्यं सर्वमित्यत्र गमकमाह । **अचेतनोऽपीति** । बुद्ध्यादिशब्दार्थं विशदयति । **देहेति** । अनेनैव ज्योतिषेक्ष्यत इति पूर्वेण संबन्धः ॥ ३४४ ॥

**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ॥**
**क्षेत्रं क्षेत्री तथा कृत्स्नं व्यनक्तीति स्मृतेर्वचः ॥ ३४५ ॥**

आत्मज्योतिषः सर्वावभासकत्वे भगवद्वाक्यं प्रमाणयति । **यथेति** ॥ ३४५ ॥

**आत्मच्छायं पयोऽशेषं यथा मारकतो मणिः ॥**
**परीक्षणाय प्रक्षिप्तः कुर्यादात्मा तथैव च ॥ ३४६ ॥**

**बुद्ध्यादिदेहपर्यन्तं प्रत्यगज्ञानहेतुकम् ॥**
**जडस्वभावकं नित्यमवभासयति स्वयम् ॥ ३४७ ॥**

तस्य सर्वावभासकत्वं दृष्टान्तेन स्पष्टयति । **आत्मच्छायमिति** । बुद्ध्यादेर्भासकापेक्षत्वे हेतुमाह । **जडेति** ॥ ३४६ ॥ ३४७ ॥

**बुद्ध्यादिष्वपि सूक्ष्मेषु यत्सूक्ष्मतममुच्यते ॥**
**बुद्ध्यादिकारणं नित्यमात्माविद्येति भण्यते ॥ ३४८ ॥**

---

१ घ. °णात्प्राक्° ।

जडत्वार्थं प्रत्यगज्ञानहेतुकमित्युक्तं किं तत्प्रत्यगज्ञानमित्युक्ते तस्य विक्षेपकं रूपमाह । **बुद्ध्यादिष्विति** । जात्मज्योतिर्व्यावृत्त्यर्थं विशिनष्टि । **बुद्ध्यादीति** । कारणत्वसिद्ध्यर्थं तन्नित्यमित्यनादित्वमुक्तम् ॥ ३४८ ॥

**अपि कूटस्थवपुषः प्रतीचः सङ्गकारकम् ॥**
**तत्त्वमस्यादिवाक्योत्थज्ञानबाध्यं च यद्विदुः ॥ ३४९ ॥**

तस्यैवाऽऽच्छादकं रूपमाह । **अपीति** । उभयरूपे तस्मिन्वाक्यीयज्ञानस्यार्थवत्त्वानुपपत्तिं प्रमाणयति । **तत्त्वमिति** ॥ ३४९ ॥

**यन्निमित्तं च साक्षित्वं कारणत्वं तथाऽऽत्मनः ॥**
**सर्वकार्यविनाशेऽपि यद्बीजमवशिष्यते ॥ ३५० ॥**

आत्मनः साक्षित्वाद्यनुपपत्तिरपि तदाक्षेपिकेत्याह[2] । **यन्निमित्तमिति** । प्रलयादौ लीनस्य कार्यस्य पुनरुत्पत्त्यनुपपत्तिरपि तत्कल्पिकेत्याह । **सर्वेति** । यद्बीजमुत्पत्तिस्थितिभङ्गानामिति संबन्धः ॥ ३५० ॥

**तदात्मज्योतिषेद्धं सन्नित्यमेवावतिष्ठते ॥**
**उत्पत्तिस्थितिभङ्गानां न वेद्मीति च साक्षितः ॥ ३५१ ॥**

तस्य स्वातन्त्र्यं व्यावर्तयति । **तदात्मेति** । अनुभवसिद्धत्वान्न साधकान्तरापेक्षेत्याह । **नेति** । साक्षितः स्वानुभवाद्भातीति शेषः ॥ ३५१ ॥

**कूटस्थ एव साक्ष्यत्र स्वमोहाभासहेतुतः ॥**
**अविचारितसंसिद्धि तमोऽनुभवसंश्रयात् ॥ ३५२ ॥**

साक्षित्वस्य वस्तुत्वाद्यन्निमित्तं च साक्षित्वमिति कथमुक्तं तत्राऽऽह । **कूटस्थ इति** । यद्वा परिणामिनः साक्षित्वान्न तत्राज्ञानापेक्षेत्याशङ्क्याऽऽह । **कूटस्थ इति** । अत्र परिणामिबुद्ध्यादाविति यावत् । तस्य साक्षित्वे हेतुमाह । **स्वमोहेति** । मोहस्य वस्तुत्वान्न तत्कृतमपि तथेत्याशङ्क्याऽऽह । **अविचारितेति** । प्रामाणिकस्य कुतोऽविचारितत्वं तत्राऽऽह । **अनुभवेति** ॥ ३५२ ॥

**निःसाक्षिके न वेद्मीति न कथंचित्प्रसिध्यति ॥**
**तथा कूटस्थसंविन्के नितरां ननदिप्यते ॥ ३५३ ॥**

अनुभवादेव तमःसिद्धिं साधयति । **निःसाक्षिक इति** । तमसि साक्ष्यनपेक्षे न वेद्मीति न तद्भानं न हि मानादेव भानं तस्य स्वनिवर्त्यासाधकत्वादित्यर्थः । आत्मा चेदज्ञानसाक्षी तर्हि यथा स्वरूपेण स तत्साक्षी तथाऽन्यत्रापि स्यादित्याशङ्क्याऽऽह ।

१ ख. °रणम् । २ ध. °तिस्तदा° । ३ घ. °त्वात्तत्क° ।

**तथेति ।** यथा साक्षिणोऽभावे तमसोऽसिद्धिस्तथा निर्विकारचिद्रूपे तमोनपेक्षे साक्षिणि सुतरामेतत्तमो न सिध्यति ।

'स्वयं सेद्धुमसामर्थ्यात्साधकान्तरहानतः ।
बाधकस्य च सद्भावात्तमसा साक्षिता चितेः' ॥

स्वपरनिर्वाहकत्वं च तस्योक्तमिति भावः ॥ ३९३ ॥

**ऐश्वर्यं कारणत्वं च साक्षित्वमपि चाऽऽत्मनः ॥**
**सदेशितव्यकार्यार्थसाक्ष्यार्थेनास्य संगतः ॥ ३५४ ॥**

साक्षित्वादेराविद्यत्वमुपसंहरति । **ऐश्वर्यमिति ।** न हि सापेक्षं स्वरूपं स्वाभाविकमस्वाभाविकं चाऽऽविद्यं रजतवदित्यर्थः । ये तु केचिदैश्वर्यमनारोपितमाश्रयन्ते ते पुनरैश्वर्यं कारणत्वं चेत्यादिवार्तिकार्थं नाऽऽलोचयन्ते ॥ ३९४ ॥

**आत्माज्ञानमतः प्रत्यक्चैतन्याभासवत्सदा ॥**
**आत्मनः कारणत्वादेः प्रयोजकमिहेष्यते ॥ ३५५ ॥**

स्वाज्ञानं साक्षित्वादिनिर्वाहकमनुवदति । **आत्मेति ।** आत्मनोऽसङ्गत्वादिरतःशब्दार्थः । इहेति कार्याद्युक्तिः ॥ ३९९ ॥

**चैतन्याभासवत्प्रत्यङ्मोहान्तात्प्रत्यगात्मनः ॥**
**बुद्ध्यादेर्विषयान्तस्य सिद्धिः स्यात्साक्षिणस्ततः ॥ ३५६ ॥**

साक्षित्वमाविद्यमुक्त्वा ततः सर्वबुद्ध्यादिसिद्धिरित्युक्तं निगमयति । **चैतन्येति ।** यश्चैतन्याभासवान्प्रत्यङ्मोहस्तदन्तः साक्षी तस्माच्च प्रतीचो बुद्ध्यादेः सिद्धिरिति यावत् ॥ ३९६ ॥

**स्वकारणाभिसंबन्धाच्चैतन्याभासता धियः ॥**
**जायतेऽतोऽभिमानोऽस्यां जायते महतामपि ॥ ३५७ ॥**

आत्मज्योतिरधीनं सर्वं सिध्यति चेत्तत्संबन्धाविशेषात्किमित्यादौ सर्वेषां बुद्धावेवाऽऽत्मधीरित्याशङ्क्याऽऽह । **स्वकारणेति ।** धीहेतावज्ञाने चैतन्याभाससंबन्धादनन्तरमव्यवधानेन तस्यां चैतन्याभासता जायते तदस्यामादावात्मधीः । **उक्तं** हि—अहमिति तावत्प्रथमोऽध्यास **इति ।** तत्र विद्वद्भ्रान्तिरपि साधनमित्यर्थः ॥ ३९७ ॥

**कारणानन्तरत्वाच्च तथा स्वच्छस्वभावतः ॥**
**चैतन्याभासवत्येषा धीः पूर्वमभिजायते ॥ ३५८ ॥**

उक्तेऽर्थे बुद्धिस्तावदित्यादिभाष्यं व्याचष्टे । **कारणेति ॥** ३९८ ॥

**तस्मादात्माभिमानो हि बुद्धौ जनिमतां सदा ॥**
**जायते सर्वभूतानामपि सर्वविदामिह ॥ ३५९ ॥**

तस्याश्चिदाभासत्वे भ्रान्तिं प्रमाणयति । **तस्मादिति ।** तादृगभिमाने सर्वाविसंवाद-

---

१ घ. 'स्मात्प्रर्ता' । २ ग. 'र्वमुपजा' ।

द्योतनार्थो हिशब्दः । अविदुषामीदृगभिमानो न विदुषामित्याशङ्क्याऽऽह । अपीति ॥ ३९९ ॥

चिदाभासोऽथ मनसि बुद्ध्यानन्तर्यकारणात् ॥
मनःसंबन्धतश्चैवमिन्द्रियेष्वभिजायते ॥ ३६० ॥

मनस्यात्मबुद्धिस्तर्हि कथमित्याशङ्कायामाह । चिदिति । तत्र हेतुः । बुद्धीति । इन्द्रियेषु कथं तद्धीरिति तत्राऽऽह । मन इति । एवं चैतन्याभासद्वारेणाहंधीरित्यर्थः ॥ ३६० ॥

मनःकरणसंबन्धाद्देहेऽप्यस्योपजायते ॥
एवमाभासयत्यात्मा कृत्स्नं कार्यं सकारणम् ॥ ३६१ ॥

देहे तद्धियमुपपादयति । मनःकरणेति । मनसा करणैश्च संबन्धादस्याऽऽत्मनः स्थूले देहे चिदाभासात्तद्धीरित्यर्थः । उक्तं निगमयति । एवमिति ॥ ३६१ ॥

सौक्ष्म्यस्य तारतम्येन स्थितस्य विषयावधि ॥
आत्माभिमानधीः पुंसां जायते नियता ततः ॥ ३६२ ॥

तत्र हेतुः । सौक्ष्म्यस्येति । बुद्ध्यादेर्विषयान्ततया स्थितस्य यत्सौक्ष्म्यं तस्य तरतमत्वहेतुनेति यावत् । ततो बुद्ध्यादिषु पूर्वोक्तात्क्रमादित्येतत् ॥ ३६२ ॥

नित्योऽनित्यानामिति च येन सूर्यस्तथा परः ॥
न तत्र सूर्यो भातीतिमन्त्राम्नायो ह्यनेकशः ॥ ३६३ ॥

आत्मज्योतिषः सर्वावभासकत्वे कठश्रुतिं प्रमाणयति । नित्य इति । नाशिनामयमनाशी चेतनाश्चेतयितारो ब्रह्मादयस्तेषामयमेव चेतनो यथोदकादीनामनग्नीनामग्निनिमित्तं दाहकत्वं तथा चैतन्यनिमित्तमेव चेतयितृत्वमन्येषामित्यर्थः । तत्रैव येन सूर्यस्तपति तेजसेद्ध इत्यादिमन्त्रं पठति । येनेति । नावेदविन्मनुते तं बृहन्तमित्युत्तरत्र संबन्धः । तत्रैव श्रुत्यन्तरमाह । न तत्रेति । तत्रेति विषयसप्तमी प्रकृतं ज्योतिषां ज्योतिर्ब्रह्माधिकरोति । आत्मज्योतिषः सर्वावभासकत्वे यथा प्रकाशयतीत्याद्या स्मृतिरधस्तादेव दर्शितेति हिशब्दार्थः ॥ ३६३ ॥

आत्मन्येवं प्रबुद्धेऽस्मिञ्ज्योतिषि ध्वान्तनाशतः ॥
सर्वस्यैवाऽऽत्मयाथात्म्यादात्मा पुरुष उच्यते ॥ ३६४ ॥

ज्योतिःशब्दं व्याख्याय पुरुषशब्दार्थमाह । आत्मनीति । एवमुक्तश्रुतिस्मृतिन्यायैरिति यावत् ॥ ३६४ ॥

आत्माज्ञानसमुच्छित्तौ तज्ज्ञस्य न हि वस्तुनः ॥
प्रत्यग्रूपात्पृथग्रूपं संभाव्यं केनचित्क्वचित् ॥ ३६५ ॥

१ क. ख. वधः । आ ।

ज्ञानादज्ञानध्वंसेऽपि जगतोऽध्वस्तेर्न पूर्णत्वेन पुरुषतेत्याशङ्क्याऽऽह । **आत्मेति** ॥ ३६५ ॥

**स्रगज्ञानसमुच्छित्तौ न तज्जस्यान्यतः स्रजः ॥**
**रूपं संभाव्यतेऽह्यादेरेवमात्मस्वरूपतः ॥ ३६६ ॥**
**न कार्ये कारणे वाऽपि तदभावेऽथवाऽन्यतः ॥**
**प्रत्यङ्मात्रैकयाथात्म्याद्रूपं संभाव्यतेऽण्वपि ॥ ३६७ ॥**

तद्दृष्टान्तेन स्पष्टयति । **स्रगिति** । आत्मस्वरूपतोऽन्यत इति संबन्धः । ततोऽन्यत्राणुमात्रस्यापि कार्यादिरूपस्यासंभवे हेतुमाह । **प्रत्यगिति** ॥ ३६६ ॥ ३६७ ॥

**अव्यावृत्तानुगतप्रत्यङ्मात्रावशेषतः ॥**
**पूर्णत्वात्पुरुषो ज्योतिरात्मैवैकोऽभिधीयते ॥ ३६८ ॥**

पुरुषशब्दार्थमुपसंहरति । **अव्यावृत्तेति** । तथाविधज्योतिरिति संबन्धः । तस्य पुरुषत्वे हेतुः । **प्रत्यङ्मात्रेति** । ज्योतिषो यथोक्तरूपत्वेऽपि किमात्मनः स्यात्तदाह । **आत्मेति** ॥ ३६८ ॥

**सद्भावेऽपि च भान्वादेः पारार्थ्याद्देहवन्न तत् ॥**
**स्वार्थस्य ज्योतिषोऽभावे भावत्वायापि च क्षमम् ॥ ३६९ ॥**

योऽयमित्यादि व्याख्याय स समानः सन्नित्याद्यवतारयितुमुक्तमात्मज्योतिरनुग्रहमनुभाषते । **सद्भावेऽपीति** । जागरे भान्वादेः सत्त्वेऽपि जाड्यादजडज्योतिरभावे सत्त्वायापि तन्नालं दूरे प्रकाशयितुं न हि जडः स्थूलो देहः स्वातिरिक्तज्योतिरभावे सत्तास्फूर्ती लभते तथा भान्वाद्यपि स्वसाधकात्मज्योतिरभावे तथा च तस्य तत्प्रदमजडं ज्योतिरेष्टव्यमित्यर्थः ॥ ३६९ ॥

**देहादेर्व्यापृतिश्चेत्स्याज्जडादित्यादिहेतुतः ॥**
**भवेन्निःसाक्षिकैवेयमन्धकारप्रनृत्तवत् ॥ ३७० ॥**

तत्र[1] हेत्वन्तरमाह । **देहादेरिति** । अजडज्योतिरभावे देहादिव्यापारस्याऽऽदित्यादिप्रयुक्तस्य साधकाभावादसिद्धिप्रसङ्गादजडज्योतिरनुसर्तव्यमित्यर्थः ॥ ३७० ॥

**स्वार्थात्मज्योतिषैवातो भावाभावात्मतां जगत् ॥**
**लभते तमृते यस्मान्नेयात्संभावनामपि ॥ ३७१ ॥**

फलितमाह । **स्वार्थेति** । अतःशब्दार्थं स्फुटयति । **तमिति** । स्वार्थं ज्योतिरात्मानमित्यर्थः ॥ ३७१ ॥

**यदेतद्धृदयमिति तथाचाऽऽगमशासनम् ॥**
**प्राणिव्यवहृतिः सर्वा प्रत्यगात्माभिमानतः ॥ ३७२ ॥**

---

१ ख. ºन्वादयोऽपि । २ घ. तत्रैव ।

यथोक्तज्योतिषोऽशेषभासकत्वे श्रुत्यन्तरमाह । **यदिति** । हृदयं मनश्चैतदुभयं संविदवभासितत्वात्संविन्मात्रमित्यैतरेयकवाक्यमात्मज्योतिषः सर्वभासकत्वानुसारीति यावत् । किंचाचेतनानां कार्यकरणानां चेतनत्वप्रसिद्ध्यनुपपत्त्या सदा चिदात्मन्यातिरेष्टव्येत्याह । **प्राणीति** । **उक्तं हि**—स्वाभिमानो हि सर्वप्राणिनां संव्यवहार इति ॥ ३७२ ॥

**सर्वाभिमानहेतुं च चिदाभासं पुराऽब्रवम् ॥**
**सम्यङ्ङारकतद्दृष्टान्तदर्शनेनाऽऽत्मवस्तुनः ॥ ३७३ ॥**

कथं प्रतीचः सर्वत्र बुद्ध्यादावहंमानोऽमङ्गत्वादित्याशङ्क्याऽऽह । **सर्वेति** । आत्मवस्तुनश्चिदाभासं सर्वत्राभिमानहेतुं विशिष्टदृष्टान्तप्रदर्शनेन पुरा सम्यगब्रवमिति संबन्धः ॥ ३७३ ॥

**यद्यप्येवमिदं वस्तु *यथोक्तमहिमं परम् ॥**
**तथाऽपि तज्जागरिते शक्यं दर्शयितुं न तु ॥ ३७४ ॥**

वृत्तमनुभाष्यानन्तरवाक्यमवतारयति । **यद्यपीति** । परं हीदं वस्तु सर्वावभासकत्वाव्याख्यातमहिमोपेतं यद्यपि श्रुतिस्मृतिप्रमितं तथाऽपि न तज्जागरे दर्शयितुं शक्यमिति श्रुतिः स्वप्नं प्रस्तौतीत्यर्थः ॥ ३७४ ॥

**आत्मबुद्धिमनश्चक्षुर्विषयालोकसंकरात् ॥**
**जाग्रद्भूमौ न तच्छक्यं ज्योतिर्दर्शयितुं ततः ॥ ३७५ ॥**
**स्वप्ने बुद्ध्याद्युपरतौ वासनामात्रशेषतः ॥**
**ज्योतिर्दर्शयितुं शक्यं स समान इतीर्यते ॥ ३७६ ॥**

किमिति जाग्रति तद्दर्शयितुमशक्यं तदर्शनो हि सर्वो व्यवहारस्तत्रोक्तस्तत्राऽऽह । **आत्मेति** । स्वप्नेऽपि तद्दर्शयितुमशक्यं न्यायसाम्यादित्याशङ्क्याऽऽह । **तत इति** । तस्य चतुर्थपादेन संबन्धः । स्वप्ने मुञ्जेषीकावद्बुद्ध्योर्दीनिष्कृष्याऽऽत्मज्योतिर्वक्तुमुत्तरं वाक्यमित्यर्थः ॥ ३७५ ॥ ३७६ ॥

**कथं चैवंस्वभावस्य तदज्ञानजधर्मिषु ॥**
**व्यवहारः प्रतीचोऽस्य स समानादितो वचः ॥ ३७७ ॥**

ससमानवाक्यस्य संबन्धान्तरमाह । **कथं चेति** । आत्मनो नित्यमुक्तस्य संसारित्वमविद्ययेति वक्तुमुत्तरो ग्रन्थ इत्यर्थः ॥ ३७७ ॥

**ज्योतिर्भ्यो देहतो लिङ्गाद्बुद्ध्यन्ताच्चातिरेकतः ॥**
**योऽऽत्मा दर्शितस्तस्य विशुद्ध्यै चोत्तरं वचः ॥ ३७८ ॥**

*अत्र समासान्ताभावश्छान्दसः

तस्यैव संबन्धान्तरमाह । ज्योतिर्भ्य इति । लिङ्गं सूक्ष्मो देहः । देहाद्यतिरिक्तस्याऽऽत्मनः शुद्धिप्रतिपादनायोत्तरग्रन्थ इत्यर्थः ॥ ३७८ ॥

**स्वयंज्योतिः शरीरादेर्बुद्ध्यन्तादनुमानतः ॥**
**निष्कृष्याभिहितो योऽत्र स समानः स्वमोहतः ॥ ३७९ ॥**

सशब्दार्थोक्तिपूर्वकं समानपदमादत्ते । **स्वयमिति** । अनुमानतो व्यवहारलिङ्गादिति यावत् । अत्रेत्यनन्तरपूर्वग्रन्थः संसारावस्था वोच्यते । समानत्वे हेतुमाह । **स्वमोहत इति** ॥ ३७९ ॥

**समान एकः सन्नात्मा स्वात्माविद्यातदुद्भवैः ॥**
**अज्ञानमिथ्याविज्ञातप्रत्यक्त्वादात्मवस्तुनः ॥ ३८० ॥**

समानशब्दार्थमपेक्षितं पूरयित्वा दर्शयति । **समान इति** । एकः सन्ननुसंचरतीति संबन्धः । आत्मनः स्वाज्ञानतत्कार्यैरैक्ये हेतुमाह । **अज्ञानेति** ॥ ३८० ॥

**केनैक इत्यपेक्षायां हृदयेनेति भण्यते ॥**
**सधीरिति श्रुतेरत्र हृदीति प्रकृतत्वतः ॥ ३८१ ॥**

समानपदस्य सापेक्षत्वात्तस्यानुक्तत्वात्कथमेतद्व्याख्येयमित्याशङ्क्याऽऽह । **केनेति** । भण्यते भाष्यकृतेति शेषः । आत्मनो बुद्ध्यैक्ये माध्यंदिनश्रुतिं प्रमाणयति । **सधीरिति** । तत्रैव संनिधिमाह । **अत्रेति** ॥ ३८१ ॥

**अविचारितसंसिद्धि यत्तु बुद्ध्यादिकारणम् ॥**
**कूटस्थात्मैकचैतन्यबिम्बितं सत्स्वदोषतः ॥ ३८२ ॥**
**स्वात्माविद्यावधिः सोऽयं परः कारणमुच्यते ॥**
**साक्षी चेता जगद्बीजमन्तर्यामीति च श्रुतौ ॥ ३८३ ॥**

श्रुतिभाष्ययोरात्मनो बुद्ध्यैक्ये कथ्यमाने किमिति स्वाविद्यया तदैक्यमुच्यते तत्राऽऽह । **अविचारितेति** । यद्बुद्ध्यादिकारणमनिर्वाच्यमज्ञानं तत्सत्त्वगुणप्रधानं स्वगतस्वाच्छ्याच्चिदाभासाक्रान्तं तदुपाधिः सोऽयं परः पुरुषः कारणत्वादिरूपेण श्रुतावुच्यतेऽतस्तदैक्यं तस्याऽऽविद्यं कारणत्वादिसिद्ध्यर्थमुक्तमित्यर्थः । स्वदोषतो यथोक्तस्वाच्छ्यादिति यावत् । ईक्षणकर्तृत्वं निराकर्तुं विशिनष्टि । **चेतेति** । कारणमिति परस्य निमित्तत्वमुक्त्वोपादानत्वमाह । **जगदिति** ॥ ३८२ ॥ ३८३ ॥

**बुद्ध्यादिकार्यसंस्थस्य कूटस्थासङ्गरूपिणः ॥**
**सर्वं स्यात्कारणत्वादि तदाभासैकवर्त्मना ॥ ३८४ ॥**

अज्ञानात्तस्य कारणत्वादि चेन्नापरमपेक्ष्यमित्याशङ्क्याऽऽह । **बुद्ध्यादीति** ।

---

१ ख. 'तं स्यात्स्व' । २ क. ग. 'द्याविधिः ।

तत्कार्यं यस्याज्ञानस्य तस्मिन्नैक्याध्यासेन स्थितस्येति यावत् । तत्राऽऽभासापेक्षां प्रतिजानीते । तदाभासेति ॥ ३८४ ॥

चैतन्याभासवपुषा कूटस्थैकत्वमिष्यते ॥
कारणस्य स्वकार्यैश्च तदबोधसमन्वयात् ॥ ३८५ ॥

कथमित्याशङ्क्य कारणत्वस्य तदपेक्षां साधयति । चैतन्येति । अज्ञानस्याऽऽभासद्वारा कूटस्थैक्ये तस्य कारणत्वमिष्टं स्वतस्तदयोगादित्यर्थः । अज्ञानसंबन्धवच्चिदात्मनस्तत्कार्यबुद्ध्यादिसंबन्धेऽप्याभासापेक्षामज्ञानद्वारा दर्शयति । स्वकार्यैश्चेति । परस्यांज्ञस्याज्ञानजबुद्ध्यादिभिः संबन्धस्तेषामबोधे तेषु वा तस्य संबन्धादिति यावत् ॥३८५॥

प्रतीचोऽनवशेषेण कार्यकारणसंगतिः ॥
तयोस्तु सावशेषेण प्रतीचा संगतिस्त्वियम् ॥ ३८६ ॥

कार्यकारणात्मनां मिथः संगतिरुक्ता तत्र तस्य ताभ्यां कीदृशी संगतिरित्युक्ते यथा कार्यं कारणं च पृथङ्न तिष्ठति तथा तस्य ताभ्यां संगतिरित्याह । प्रतीच इति । तेन तयोः संगतिरपि तादृशीति नेत्याह । तयोस्त्विति । यथाऽऽत्मा पृथक्तिष्ठति तथा ते नेतरे संबध्येते इत्यर्थः । प्रथमस्तुशब्दो विशेषणार्थो द्वितीयोऽवधारणार्थः सावशेषेणेत्यत्र संबध्यते ॥ ३८६ ॥

नाऽऽत्मत्वाद्व्यतिरेकोऽस्य कार्यकारणभूमितः ॥
न सामान्यं विशेषो वा कार्त्स्न्यादात्मा ततो भवेत् ॥ ३८७ ॥

तर्हि ताभ्यामात्मनो भेदस्तत्राऽऽह । नाऽऽत्मत्वादिति । कारणाद्भेदाभावादात्मनः सामान्यत्वमनुवृत्तं कारणमिति स्थितेः कार्याद्भेदाभावाद्विशेषत्वं व्यावृत्तस्य तद्भावादित्याशङ्क्याऽऽह । नेत्यादिना । ततःशब्दस्य कार्त्स्न्यादित्यनेन संबन्धः ॥ ३८७ ॥

अनात्मनस्तु या सिद्धिः सा सर्वाऽव्यतिरेकतः ॥
जाड्यात्स्वापेक्षतः साऽतो मृषासिद्धिरुदाहृता ॥ ३८८ ॥

अद्वयस्याऽऽत्मनो द्विरूपत्वाभावेऽपि सद्वयस्याऽऽत्मनः स्यादित्याशङ्क्याऽऽह । अनात्मनस्त्विति । अव्यतिरेकत इति च्छेदः । चितः सकाशादिति शेषः । तस्य स्वतःसिद्धिसंभवे किमित्यात्माव्यतिरेकस्तत्राऽऽह । जाड्यादिति । कथं तर्हि पृथक्प्रथेत्याशङ्क्याऽऽह । साऽत इति । जाड्यात्पृथक्प्रथायोगोऽतःशब्दार्थः ॥ ३८८ ॥

किं पुनः स्यात्समानत्वमात्मबुद्ध्यादिवस्तुनोः ॥
विवेकतोऽननुभवो ग्रहाङ्गारवत्तयोः ॥ ३८९ ॥

---

१ ख. °स्याज्ञा° । २ ख. तितो° ।

कार्यकारणाभ्यामैक्यमात्मनः समानतेत्ययुक्तं तयोस्तस्य च जाड्याजाड्याभ्यां विरोधादिति मत्वाऽऽह। **किमिति**। अश्वमहिषवदित्यादिभाष्येणोत्तरमाह। **विवेकत इति** ॥ ३८९ ॥

**यत्तत्तयोः समानत्वं रज्जुसर्पादिवन्मतम् ॥**
**आत्माविद्यैव संबन्धस्तस्मादात्मन इष्यते ॥ ३९० ॥**

उक्तसमानत्वस्य मिथ्यात्वमाह। **यत्तदिति**। मिथ्यात्वे फलितमाह। **आत्मेति**। अनात्मनेति शेषः ॥ ३९० ॥

**अकारकस्वभावस्य परमार्थात्मवस्तुनः ॥**
**अविद्याकल्पितैव स्यात्संगतिः खेऽसितादिवत् ॥ ३९१ ॥**

कल्पिता तयोः संगतिरित्येतद्दृष्टान्तेन साधयति। **अकारकेति** ॥ ३९१ ॥

**कूटस्थात्मचिदाभेऽस्य प्रत्यग्ध्वान्ते हि तद्भवैः ॥**
**विषयान्तैर्भवेद्भ्रान्तिः सामानाधिकरण्यतः ॥ ३९२ ॥**

तस्यास्तथात्वेऽपि प्रतीचो बुद्ध्यादिसमानत्वं कथं कल्पितं तत्राऽऽह। **कूटस्थेति**। स्वाज्ञाने साभासे निमित्ते प्रतीचस्तत्कार्यैर्मनुष्योऽहमित्यादिसामानाधिकरण्यात्तादात्म्यभ्रान्तिस्तद्युक्ता समानत्वस्य मिथ्यातेत्यर्थः ॥ ३९२ ॥

**विकारिणः प्रकाशस्य नीलरक्तादिसंगतेः ॥**
**नीलादिविक्रिया युक्ता परिणामस्य न त्वसौ ॥ ३९३ ॥**

आदित्याद्यालोकस्य नीलादियोगे तत्तदाकारविकारवदात्मज्योतिषोऽपि बुद्ध्यादियोगे विकारित्वं ज्योतिष्ट्वाविशेषादित्याशङ्क्याऽऽह। **विकारिण इति** ॥ ३९३ ॥

**परिणामो हि मोहादेश्चिदाभासः सदेष्यते ॥**
**परिणामान्तरप्राप्तिस्तस्यापीति न युज्यते ॥ ३९४ ॥**

कथमपरिणामत्वमात्मनो बुद्ध्याद्यभिन्नस्योच्यते तत्राऽऽह। **परिणामो हीति**। अविद्याया बुद्ध्यादेश्च परिणामस्य सदा चिदात्मप्रकाश्यत्वात्तस्य परिणामविशेषप्राप्तिरयुक्ता साक्षिणः साक्ष्यत्वानुपपत्तेस्तदसौ कूटस्थ एवेत्यर्थः ॥ ३९४ ॥

**सुखिदुःखित्वसाक्षित्वं दुःस्थितं स्यात्तथा सति ॥**
**सुखाद्यनुगमात्तस्य व्यतिरेकः सुदुर्लभः ॥ ३९५ ॥**

रूपप्रकाशकस्यापि सवितू रूपित्ववत्परिणामसाक्षिणोऽपि परिणामित्वमित्याशङ्क्याऽऽह। **सुखीति**। दौस्थ्ये हेतुः। **तथेति**। दुःखित्वादौ सति तत्सांकर्यादात्मनः साक्ष्याद्दुःखादेर्भेदो दुर्ज्ञानो न चैकत्वे तद्भावो विरोधाद्दृष्टान्तस्तु प्रत्यक्षत्वादविरुद्धो न चात्र विक्रियावत्त्वे मानं तद्युक्तमविक्रियत्वमित्यर्थः ॥ ३९५ ॥

---

१ ख. घ. साक्षाद्दुः°।

**नर्ते स्याद्विक्रियां दुःखी साक्षिता का विकारिणः ॥**
**धीविक्रियासहस्राणां साक्ष्यतोऽहमविक्रियः ॥ ३९६ ॥**

अविक्रियत्वेऽपि कुतो न दुःखादिमत्त्वं तत्राऽऽह। **नेति**। विक्रियावत्त्वे दोषमाह। **साक्षितेति**। साक्षी चेतेत्यादिश्रुतिमाश्रित्य फलितमाह। **धीविक्रियेति** ॥ ३९६ ॥

**परिणाम्यात्मनोऽप्येवं कूटस्थावगतेरिव ॥**
**न युक्तः परिणामोऽयं लौकिकस्यापि नेष्यते ॥ ३९७ ॥**

मातृवदात्मनः सक्रियत्वमाशङ्क्याऽऽह । **परिणामीति**। द्रव्यत्वात्पयोवन्माता परिणामीत्यनुमानात्कुतः साध्यवैकल्यं तत्राऽऽह। **लौकिकस्येति**। न हि तथाभूतस्य परिणामस्तथाभावविरोधान्नान्यथाभूतस्यानवस्थितेस्तथा च क्षीरादिपरिणामोऽपि प्रामाणिको न भवतीति भावः ॥ ३९७ ॥

**धीस्वान्तेन्द्रियसंघाते चिदाभासैकवर्त्मना ॥**
**सर्वात्मकत्वं संयात आत्माऽविद्यावशादतः ॥ ३९८ ॥**

समानत्वं निगमयति। **धीस्वान्तेति**। वस्तुतःसमानत्वायोगोऽतःशब्दार्थः ॥३९८॥

**समानः कारणात्मा वा यत्र सर्वोपसंहृतिः ॥**
**कारणात्मा हि[२] संवर्त्य कार्यान्मत्वं प्रपद्यते ॥ ३९९ ॥**

समानशब्दस्यार्थं भाष्योक्तमुक्त्वाऽर्थान्तरमाह । **समान इति**। अवान्तरकारण-व्यावृत्त्यर्थं पाश्चमिकं कारणात्मानं विशिनष्टि । **यत्रेति**। उभौ[३] लोकावित्यादिशेषस्य कथमत्रोपपत्तिर्न हि मूलकारणं व्यापकं संचरितुमर्हत्यत आह। **कारणात्मेति**। कार्य-कारणयोस्तादात्म्यं प्रसिद्धमिति हिशब्दार्थः ॥ ३९९ ॥

**अपेक्षाज्ञानमात्रैकहेतूत्थानत्वकारणात् ॥**
**न कार्ये कारणे वाऽतो वस्तुतत्त्वं समीक्ष्यते ॥ ४०० ॥**

उभयात्मत्वे प्रतीचोऽशुद्धिमाशङ्क्याऽऽह । **अपेक्षेति**। कार्यमपेक्ष्य कारणज्ञानं तदपेक्ष्येतरज्ञानं तन्मात्रस्यैकं स्वरूपमज्ञानं तेन हेतुनोत्पन्नत्वात्कार्यादौ न वस्तुत्वं प्रामाणिकमतस्तत्कल्पनाधारस्याऽऽत्मनः शुद्धिरविरुद्धेत्यर्थः ॥ ४०० ॥

**अन्वयव्यतिरेकाभ्यां नातो वाक्यार्थबोधनम् ॥**
**वस्तुतत्त्वावसायोऽतो वाक्यादेव प्रमाणतः ॥ ४०१ ॥**

शुद्धमप्यात्मतत्त्वमन्वयव्यतिरेकाभ्यामेव ज्ञायते न वाक्यादिति व्यर्था तच्चिन्तेति चेन्नेत्याह। **अन्वयेति**। कार्यादेरवस्तुत्वेनाऽऽत्मनोऽद्वयत्वादन्वयाद्ययोगोऽतःशब्दार्थः। तर्हि वाक्यस्यापि तथैवाप्रवृत्तेर्न ततो वाक्यार्थधीस्तत्राऽऽह। **वस्त्विति**। कल्पितवा-

१ ख. °घातचि° । २ ख. हि मन्मर्त्यत्वं° । ३ ख. °दिविशे° ।

क्यस्य वस्तुबोधित्वसंभवोऽतःशब्दार्थः । कल्पितमन्वयाद्येव तद्बोधि किं न स्यात्तत्राऽऽह । **प्रमाणत इति ।** कल्पितत्वाविशेषेऽपि प्रमाणतया वाक्यस्य वस्तुबोधित्वमितरस्य तदभावात्तदबोधितेति भावः ॥ ४०१ ॥

**अतः सर्वविकल्पानामविद्यामात्रहेतुतः ॥**
**विषयत्वं समापेदेऽविकल्पोऽपि स्वतः परः ॥ ४०२ ॥**

स समानः सन्नित्यस्यार्थमुपसंहरति । **अत इति ।** कारणत्वादिविकल्पविषयत्वस्य स्वतोयोगोऽतःशब्दार्थः । अविकल्पोऽपीति च्छेदः ॥ ४०२ ॥

**समान एव सल्लोँकौ प्राप्तप्राप्तव्यलक्षणौ ॥**
**अनुक्रमेणाविद्यावान्सदा संचरतीश्वरः ॥ ४०३ ॥**

उभावित्यादेरर्थमाह । **समान इति ।** संचरतो जीवस्य वस्तुतो न परस्मादन्यतेत्याह । **ईश्वर इति** ॥ ४०३ ॥

**देहेन्द्रियाद्युपादानत्यागसंतानलक्षणः ॥**
**प्रबन्धशतसंपातैः संचरत्येष न स्वतः ॥ ४०४ ॥**

संचारं[1] प्रपञ्चयति । **देहेति** ॥ ४०४ ॥

**कार्यैकनीडमेवास्य चिदाभासैकहेतुतः ॥**
**संसारित्वं यतो नातः स्वतः संसारिताऽऽत्मनः ॥ ४०५ ॥**

स्वतो नेत्युक्तं समर्थयते । **कार्येति ।** बुद्ध्यादिगतमेव संसारित्वं प्रतीचः स्वाभासद्वारा कल्पितमतस्तस्य स्वतोऽसंसारितेत्यर्थः ॥ ४०५ ॥

**अकार्यकरणोऽप्यात्मा बुद्धिप्राणादिहेतुगः ॥**
**अविद्यया चिदाभासः संसारीवावभासते ॥ ४०६ ॥**

कार्यस्थं तत्कारणे कल्प्यमात्मा त्वद्वयस्तत्कथं बुद्ध्यादिस्थं संसारित्वमाभासद्वारा तत्राऽऽरोप्यते तत्राऽऽह । **अकार्येति ।** आत्मा वस्तुतोऽद्वयोऽपि स्वाविद्यया बुद्ध्यादौ संसारहेतौ स्थितः स्वाभासद्वारा संसारित्वाभासमनुभवतीत्यर्थः ॥ ४०६॥

**असंभवः स्वतो यस्मात्तदबोधाच्च संभवः ॥**
**क्रियाकारकरूपस्य तस्माच्छ्रुत्याऽभिधीयते ॥ ४०७ ॥**
**क्रियाकारकरूपस्य मिथ्यात्वं प्रत्यगात्मनि ॥**
**ध्यायतीत्यादिवाक्येन प्रत्यक्कौटस्थ्यवित्तये ॥ ४०८ ॥**

ध्यायतीवेत्यादिवाक्यमादत्ते । **असंभव इति ।** तन्मिथ्यात्वोक्तेरुपयोगमाह । **प्रत्यगिति** ॥ ४०७ ॥ ४०८ ॥

---

१ ख. घ. संचरणं ।

ध्यायतीव स कौटस्थ्यात्तथा लेलायतीव च ॥
ध्यानादिकारिसाक्षित्वान्नाऽऽत्मा ध्यानादिकार्यवान् ॥४०९॥

अवतारितवाक्यस्थाक्षराणि व्याचष्टे । **ध्यायतीवेति** । साक्षादेवास्य ध्यानादिमत्त्वं किं न स्यात्तत्राऽऽह । **कौटस्थ्यादिति** । तत्रैव हेत्वन्तरमाह । **ध्यानादीति** ॥४०९॥

निःशेषबुद्धिवृत्तीनां ध्यानं स्यादुपलक्षणम् ॥
लेलायनं क्रियाणां च सर्वासामुपलक्षणम् ॥ ४१० ॥

अस्तु ध्यानमात्मन्यौपाधिकं तथाऽपि दर्शनादि स्वाभाविकं पञ्चमे दृष्टादिस्वाभाव्यस्योपदिष्टत्वादत आह । **निःशेषेति** । चैतन्यमात्रस्यैव स्वाभाव्यं तत्रोक्तमिति भावः । चलनस्यौपाधिकत्वेऽपि वचनादीनामनौपाधिकत्वं वदन्वागित्यादिश्रुतेरित्याशङ्क्याऽऽह । **लेलायनमिति** । न हि तत्र तत्तत्क्रियास्वाभाव्यमभिमतं तत्तत्साक्षित्वेन वागादित्वोपचारादिति भावः ॥ ४१० ॥

ध्याता ध्यानं तथा ध्येयं त्रयं स्वात्मैकसाक्षिकम् ॥
करणं कर्म कर्ता च नातो ध्यात्रादिसाक्षिणि ॥ ४११ ॥

तथाऽपि ध्यातृत्वादि वस्तुतोऽस्तीत्याशङ्क्याऽऽह । **ध्यातेति** । नकारेण स्वात्मैकसाक्षिकमित्यनुकृष्यते । तत्साक्षित्वेन तादात्म्यमतःशब्दार्थः ॥ ४११ ॥

बोद्धुः कर्तुश्च संबन्धो ज्ञानेन क्रियया यथा ॥
कूटस्थसाक्षिसंबन्धो बोद्धकर्त्रोस्तथैव च ॥ ४१२ ॥

ध्यात्रादेर्न साक्षिवेद्यत्वं तदसंबन्धात्तद्वत्स्वतःसिद्धत्वासिद्धेरित्याशङ्क्याऽऽह । **बोद्धुरिति** । जडयोस्तयोः साक्षिणा कल्पितसंबन्धात्तद्वेद्यतेत्यर्थः ॥ ४१२ ॥

सर्वस्य प्रत्यगात्मत्वात्कूटस्थैकचिदात्मनः ॥
अतोऽस्यानभिसंबन्धः सर्वप्रत्यक्त्वहेतुतः ॥ ४१३ ॥

ध्यात्रादेः साक्षिणा संबन्धे तस्यापि स तेन स्यान्न च तस्य कल्पितत्वे हेतुरित्याशङ्क्याऽऽह । **सर्वस्येति** । यद्यपि कूटस्थोऽद्वयश्चिदात्मा सर्वप्रत्यगात्मा तथाऽपि किमित्यस्य न संबन्धस्तत्राऽऽह । **सर्वेति** । संबन्धस्य द्विष्ठत्वादेकत्रायोगादिति भावः ॥ ४१३ ॥

एकनीडत्वहेतुत्था साक्षिणः साक्ष्यसंगतिः ॥
न तु मोहान्धचिद्धस्त्वहेतुप्रवृत्त्यपेक्षया ॥ ४१४ ॥

वास्तवसंबन्धाभावे कथं साक्षित्वं तत्राऽऽह । **एकेति** । एकस्मिन्कूटस्थचैतन्ये स्थितत्वमज्ञानादिसाक्ष्यस्याऽऽभासस्य चास्ति तदन्तश्च साक्षी तस्मादेकाश्रयत्वात्संगतेर्युक्ता

१ ख. °दिस्वभावस्यो° । २ ध. °वस्य प्र° । ३ क. °दित्यर्थः ॥ ४१३ ॥

साक्षितेत्यर्थः । विधान्तरेण संबन्धं धुनीते । **न त्विति** । अज्ञानकृतश्चिदाभासस्तस्य हेतुश्चैतन्यं तत्स्वरूपापेक्षया न साक्षित्वं किंत्वविद्यातज्जयोश्चैतन्याभासानुवृत्त्येत्यर्थः ॥ ४१४ ॥

**कूटस्थात्मैकहेतूत्थचिद्बिम्बो मोहगस्तु यः ॥**
**स्वोपादानानुरोधित्वात्केनचिन्नास्य संगतिः ॥ ४१५ ॥**

किंचाऽऽभासस्यापि वस्तुतो न केनचिद्योगः किमु चैतन्यस्यातोऽविद्योत्थसंगतेरेव साक्षितेत्याह । **कूटस्थेति** । स्वोपादानं कूटस्थमसङ्गमात्मवस्तु तदनुरोधित्वादिति यावत् ॥ ४१५ ॥

**चिदाभासाश्रयाज्ञानात्कार्यसंगतिहेतुतः ॥**
**स्वाभासान्तः परोऽप्यात्मा ध्यायतीवेति वीक्ष्यते ॥ ४१६ ॥**

ध्यातृत्वादेः साक्षिणि वस्तुतोऽसत्त्वमुक्त्वा ध्यायतिवाक्यार्थमनुवदति । **चिदाभासेति** । तदाश्रयादज्ञानात्कार्यप्रपञ्चेन साक्ष्येण संबन्धात्परोऽप्यात्मा स्वाभासविशिष्टो ध्यायतीव लेलायतीवेति प्रतीतो भवतीत्यर्थः ॥ ४१६ ॥

**प्रत्यङ्मोहैकमात्रोत्थं ध्यानलेलायनादिकम् ॥**
**तन्मिथ्याप्रतिपत्त्यर्थमिवेति व्यपदिश्यते ॥ ४१७ ॥**

इवशब्दार्थमाह । **प्रत्यङ्ङिति** ॥ ४१७ ॥

**अभ्रयानं यथाऽज्ञानाच्छशभृत्यध्यवस्यति ॥**
**क्रियाकारकवद्बुद्धिं तथा तत्साक्षिणीक्षते ॥ ४१८ ॥**

इवशब्दद्योतितं तन्मिथ्यात्वं दृष्टान्तेन स्पष्टयति । **अभ्रेति** । अज्ञानादिति च्छेदः ॥ ४१८ ॥

**धर्मधर्म्यभिसंबन्धोऽन्यथा मोहैकसंश्रयात् ॥**
**अस्पृशन्नपि नीलं खमिति संभावयेत्तथा ॥ ४१९ ॥**
**आत्मप्रत्ययगम्येऽर्थे निष्क्रियेऽकारकेऽफले ॥**
**क्रियाकारकवद्वस्तु संभावयति तज्जडः ॥ ४२० ॥**

चन्द्रमसः स्वतोऽपि गतिः संभवति प्रतीचो नैवमिति मन्वानो दृष्टान्तान्तरमाह । **धर्मेति** । दार्ष्टान्तिकमाह । **तथेति** ॥ ४१९ ॥ ४२० ॥

**तस्मात्संभावनामात्रः संसारः प्रत्यगात्मनि ॥**
**उक्तेऽर्थे संशयश्चेत्स्यात्प्रत्यग्दृष्ट्या समीक्ष्यताम् ॥ ४२१ ॥**

इवशब्दार्थमुपसंहरति । **तस्मादिति** । वस्तुतःसंसारसंस्पर्शासंभवस्तच्छब्दार्थः । तत्र विद्वदनुभवं प्रमाणयति । **उक्त इति** ॥ ४२१ ॥

---

१ ग. 'थाऽज्ञानश्श' । २ घ. अज्ञानान्निति । ३ ख. 'न्धान्यथा ।

**आत्ममात्रावसायित्वान्नानात्मार्थस्पृगीक्ष्यते ॥**
**आत्मधीरात्मसंबन्धो नातोऽनात्मन इक्ष्यते ॥ ४२२ ॥**

ननु प्रत्यग्दृष्टिरपि संसारं प्रतीचि गोचरयति सुख्यहं दुःख्यहमिति प्रतीतेस्तत्कुतोऽसंसारित्वं तत्राऽऽह । **आत्मेति** । ननु साऽऽत्ममात्रमवगाहमानाऽपि तन्निष्ठं सुखादि नान्तरीयकत्वेनावगाहते घटदृष्टिरिव तन्निविष्टं रूपं तत्राऽऽह । **आत्मसंबन्ध इति ।** न हि केवलमात्मानं स्पृशन्ती धीरर्थान्तरं स्प्रष्टुमीष्टे तद्धीत्वव्याघातान्न चाऽऽत्मनि दुःखादियोगे कैवल्यं घटदृष्टिस्तु विशिष्टमेव विषयी करोतीति वैषम्यमिति भावः ॥ ४२२ ॥

**ससमानोक्तिसंबन्धमन्यथाऽन्ये प्रकुर्वते ॥**
**धीमनश्चक्षुरादीनि भिन्नरूपाणि सर्वथा ॥ ४२३ ॥**
**नानाज्योतींषि सिद्धानि संहतानि मिथस्तथा ॥**
**विलक्षणानामपि सतां सामान्यं संहतात्मनाम् ॥ ४२४ ॥**

स समानः सन्नित्यादिवाक्यस्य भाष्योक्तां व्याख्यामुक्त्वा भर्तृप्रपञ्चव्याख्यामादेयत्वेन वदन्नादौ प्रसङ्गमाह । **ससमानेति** । कथमन्यथात्वं संबन्धस्येत्युक्ते तद्व्यक्तुं तदीयं पूर्वपक्षमाह । **धीमन इति** । एकादशेन्द्रियाण्यादित्यादिज्योतिरनुगृहीतानि विलक्षणानि प्रसिद्धानि तथाऽपि मिथःसंहत्यकारिणीष्टानीत्यर्थः । कथं विलक्षणानां संहत्यकारित्वं तत्राऽऽह । **विलक्षणानामिति ।** उत्कर्षात्या मिथो विलक्षणानामपि चक्षुरादीनामेकदेहस्थत्वेन सालक्षण्यमप्यस्त्यतः संहतात्मनामर्थक्रियाकारित्यर्थः ॥ ४२३ ॥ ४२४ ॥

**सालक्षण्येऽपि च सति बुद्धेरेव विलक्षणः ॥**
**भोक्तृत्वं नाम धर्मः स्याच्चक्षुषो दर्शनं यथा ॥ ४२५ ॥**

तेषामेवं सालक्षण्येन संहतात्मनामर्थक्रियाकारित्वे फलभाक्त्वव्यवस्था कथमित्याशङ्क्याऽऽह । **सालक्षण्येऽपीति । उक्तं** हि सालक्षण्येऽपि सत्येव बुद्धेरेव धर्मो विलक्षणोऽस्य भोक्तृत्वमिति ॥ ४२५ ॥

**बुद्ध्यादिव्यतिरेकोऽयं नैवं सत्युपपद्यते ॥**
**प्रतीच उपपन्नस्तु स समान इतीर्यते ॥ ४२६ ॥**

तत्र कथं व्यतिरिक्ततोपपद्यत इतिस्त्योक्तिभाष्यार्थमाह । **बुद्ध्यादीति** । तदीयसिद्धान्तमाह । **उपपन्नस्त्विति** । आत्मनो बुद्ध्याद्यव्यतिरेकाशङ्कां निरसितुं वाक्यमित्यर्थः ॥ ४२६ ॥

**समानः सन्नुभौ लोकौ स्वप्नबुद्धान्तसंज्ञितौ ॥**
**जन्मेदं च परं चैव संसरत्येष न स्वतः ॥ ४२७ ॥**

तदक्षराणि व्याचष्टे । **समानः सन्निति** । सन्नित्यस्मादस्मादेवकारः संबध्यते ॥ ४२७ ॥

**बुद्ध्यादिव्यतिरिक्तोऽयं न चेदात्मा भवेत्तदा ॥**
**भूतमात्राविशेषत्वादुभयोरपि लोकयोः ॥ ४२८ ॥**
**उभयत्रापि युगपद्भोगः स्यान्न तु दृश्यते ॥**
**तद्भावभावतस्तस्मादन्यज्ज्योतिरितीक्ष्यताम् ॥ ४२९ ॥**

कथमात्मनो बुद्ध्यादिव्यतिरेकः साधितस्तत्राऽऽह । **बुद्ध्यादीति** । **उक्तं च स एष यदि व्यतिरिक्तो न स्यादुभयोरपि** लोकयोर्भूतसमुदायाविशेषादुभयत्रापि भोग उत्पद्येत न तु भवतीति । अतोऽवगम्यतेऽस्ति किंचिद्व्यतिरिक्तं यद्भावाद्भवति यदभावान्न भवतीतिभाष्येण फलितमाह । **तद्भावेति** । व्यतिरिक्तात्मज्योतिषो भावे भोगस्य भावादन्यथा चाभावाद्व्यतिरिक्तमात्मज्योतिरित्यर्थः । यस्माद्बुद्ध्यादिसमानस्तावुभौ लोकौ संचरति पर्यायेण तस्माद्व्यतिरिक्त इत्युक्तम् ॥ ४२८ ॥ ४२९ ॥

**पर्यायेण समानः सँल्लोकौ यस्माद्व्रजत्ययम् ॥**
**आत्मा बुद्ध्यादितस्तस्माद्व्यतिरिक्तोऽवसीयताम् ॥ ४३० ॥**

व्यतिरेके हेत्वन्तरमाह । **पर्यायेणेति** ॥ ४३० ॥

**देवताभोगशङ्का च विद्यते नेह काचन ॥**
**उत्क्रान्तिस्वप्नकालेषु ताः प्रयान्ति यथागतम् ॥ ४३१ ॥**

बुद्ध्यादेर्भोक्तृत्वं निराकृत्य करणानुग्राहकदेवतानामस्मिन्देहे भोक्तृत्वमाशङ्क्य प्रस्तुतवाक्येनैव निरस्यति । **देवतेति** । तद्भोगपक्षे स्वप्नादौ भोक्त्रभावः स्यात्तदा तासामाध्यात्मिकपरिच्छेदं हित्वाऽऽधिदैविकात्मनाऽवस्थानादतस्तदन्यो भोक्तेत्यर्थः ॥४३१॥

**ईश्वराणां न च न्याय्यो भोगः प्रत्यवरस्तथा ॥**
**देवताभ्योऽन्यदेवातो ज्योतिरात्मेति गम्यताम् ॥ ४३२ ॥**

तत्रैव हेत्वन्तरमाह । **ईश्वराणामिति** ॥ ४३२ ॥

**विभुत्वाद्देवतानां च भोगः स्यादैककालिकः ॥**
**न चासावस्ति तेनान्यदात्मज्योतिः प्रतीयताम् ॥ ४३३ ॥**

युक्त्यन्तरमाह । **विभुत्वादिति** । आत्मनो विभुत्वेऽपि सहायवशाद्भोगव्यवस्था नैवं देवतानां स्वातन्त्र्यात्कर्मपारवश्ये तत्त्वव्याघातान्न चेश्वरो भोक्ता भोक्त्रीणां देवतानामुदाहरणं न च भोक्तृत्वे कर्मपारवश्यमावश्यकं तथाऽप्यनेकभोक्तृप्रसक्त्या नास्मिन्देहे तद्भोक्तृत्वमिति भावः ॥ ४३३ ॥

**स्वार्थचिन्मात्रभोक्तुश्च प्रात्यक्ष्यात्तद्विरोधिनः ॥**
**न भोक्तृत्वं विना मानादाशङ्का निष्प्रमाणिका ॥ ४३४ ॥**

करणसमुदायस्य देवतासमुदायस्य वाऽत्र भोक्तृत्वमतिरिक्ते तस्मिन्मानाभावादित्या-

---

१ घ. °त्वमिति न तद्गति° ।

शङ्कयाऽऽह । **स्वार्थेति** । तद्विरोधिनश्चिन्मात्रविरोधिनो देवतासमुदायस्य करणसमुदायस्य वेत्यर्थः । तथाऽपि शङ्कयते व्यतिरिक्तस्य भोक्तृत्वं नेत्याह । **विनेति** । निष्प्रमाणिका परिमितिहीनाऽतिप्रसङ्गिनीति यावत् ॥ ४३४ ॥

**अभिव्यञ्जकधर्मा वा परिस्पन्दात्मकास्तथा ॥**
**नाऽऽत्मनोऽस्य स्वतः सन्ति तत्साक्षित्वात्तु ते मृषा ॥ ४३५ ॥**

ससमानवाक्यस्य परोक्तां व्याख्यामुक्त्वा ध्यायतिवाक्यस्य तदिष्टं तात्पर्यमाह । **अभिव्यञ्जकेति** । ध्यानचलनोपलक्षिता दर्शनवचनादयो नाऽऽत्मनः स्वतो विद्यन्ते तत्साक्षित्वेनात्यन्तवैलक्षण्यात्तस्मात्तस्मिन्भासमानो ध्यानादिसंसारो मिथ्यैवेत्यर्थः॥४३५॥

**बुद्धिस्थश्चलतीवाऽऽत्मा ध्यायतीव च कल्प्यते ॥**
**नौगतस्य यथा वृक्षास्तद्वत्संसारविभ्रमः ॥ ४३६ ॥**

ध्यायतिवाक्याक्षराणि व्याचष्टे । **बुद्धिस्थ इति** । इवशब्दार्थं सदृष्टान्तमाह । **नौगतस्येति** । यथा नौस्थस्य तीरस्था वृक्षा नावि चलन्त्यां चलन्तो दृश्यन्ते तथा बुद्धिस्थस्य तच्चलनादिकं मत्वाऽऽत्मनि तद्भ्रान्तिर्वस्तुतो न चलनाद्यस्तीत्यर्थः ॥४३६॥

**तटस्थनरवन्नावो नौस्थो नेक्षते गतिम् ॥**
**नौगत्यंशप्रयुक्तत्वान्नाव्येकाग्रेक्षणोऽपि सन् ॥ ४३७ ॥**

ननु नौस्थस्तीरगेषु तरुषु गतिं पश्यन्नपि नाऽऽत्मनि पश्यति तत्कथं धीसाक्षिणः स्वात्मनस्तद्गतसंसारोपलब्धिरत्राऽऽह । **तटस्थेति** । यथा तीरस्थो नरो नावो गतिमीक्षते नैवं नौगतो नावि समाहितचक्षुरपि तद्गतामेव गतिमवगच्छति किंतु तद्गतिप्रयुक्त्या स्वात्मन्यपि तामारोप्याहं गच्छामीति निश्चिनोतीत्यर्थः ॥ ४३७ ॥

**यथैवं धिषणैकत्वे ध्यानलेलायने धियः ॥**
**साक्षी स्वात्मातिरेकेण न पश्येन्नौस्थवत्पृथक् ॥ ४३८ ॥**

दृष्टान्तमनूद्य दार्ष्टान्तिकमाह । **यथेति** । बुद्धिसाक्षी तदैकयाऽऽत्म्ये सति तद्गतमेव ध्यानाद्यात्मातिरेकेण केवलबुद्धिस्थतया न पश्यति किंत्वात्मस्थतयेत्यर्थः । तत्रोक्तदृष्टान्तं स्मारयति । **नौस्थवदिति** । यथा नौस्थो नरः स्वस्मात्पृथङ्नौस्थामेव गतिं न पश्यति तद्वदिति यावत् ॥ ४३८ ॥

**तटस्थनरवद्यस्माद्ध्यानकम्पादिधर्मिकाम् ॥**
**धियं साक्षीक्षते तस्मात्सत्यं ध्यानादिवर्जितः ॥ ४३९ ॥**

तर्हि तद्वदात्मनः स्वगतमपि ध्यानादि स्यादित्याशङ्कयाऽऽह । **तटस्थेति** । यथा तटस्थो नरो नद्यां गत्यादिधर्मकं नावादि पश्यन्न तद्धर्मो तथा ध्यानादिधर्मवतीं बुद्धिमीक्षमाणः साक्षी वस्तुतो न तद्धर्मीत्यर्थः ॥ ४३९ ॥

---

१ ख. °रगेषु । २ क. ख. घ. °त्मनि तद्° । ३ ख. °धर्मवत् ॥ धि° ।

**नौप्रयुक्तातिरेकेण न नौस्थस्य गतिस्थिती ॥**
**यतोऽतस्ते न जानाति नावो नौस्थस्तटस्थवत् ॥ ४४० ॥**

तटस्थनरवदित्युक्तं व्यनक्ति । **नौप्रयुक्तेति** । नौगतिस्थित्यतिरेकेण नौस्थस्य ते यतो न स्तो न हि तस्यामवस्थायां तस्य गत्यादौ स्वातन्त्र्यमतस्तटस्थवन्नौस्थो न नौगते स्थितिगती प्रत्येति किंत्वात्मन्यप्यारोप्य ते भ्राम्यतीति योजना ॥ ४४० ॥

**नौसतत्त्वापरिज्ञानाद्विपरीतप्रकल्पना ॥**
**नौः स्थिता तीरजा वृक्षा द्रुतं यान्तीति निश्चितिः ॥ ४४१ ॥**

दृष्टान्तमुपसंहरति । **नाविति** । तदेवोदाहरति । **नौरिति** ॥ ४४१ ॥

**चैतन्याभासपर्यन्तं साक्षिणः परमात्मनः ॥**
**बुद्ध्याद्यव्यतिरेके हि न स्याद्धीवृत्तिसाक्षिता ॥ ४४२ ॥**

दार्ष्टान्तिकमाह । **चैतन्येति** । बुद्ध्याद्यभेदे न साक्षितेत्यत्र बुद्ध्यादिदृष्टान्ताव-द्योती हिशब्दः । परमात्मैव स्वाभासान्तः साक्षी तस्य बुद्ध्याद्यनतिरेके न तत्साक्षित्व-मतिरेकेऽपि तदज्ञानाद्ध्यानादिकल्पनेत्यर्थः ॥ ४४२ ॥

**निःशेषधीविकाराणां यस्मात्साक्षित्वमात्मनः ॥**
**वैलक्षण्यमतः सिद्धं विकारिभ्योऽस्य साक्षिणः ॥ ४४३ ॥**

परपक्षमादेयमुपसंहरति । **निःशेषेति** ॥ ४४३ ॥

**साक्षितत्त्वापरिज्ञानात्तद्विरुद्धार्थकल्पनम् ॥**
**साक्षिसाक्ष्यादिमिथ्याधीस्तत्त्वज्ञानान्निवर्तते ॥ ४४४ ॥**

आत्मनि संसारस्य कल्पितत्वमनुवदति । **साक्षीति** । तत्कल्पनाफलमाह । **साक्षि-साक्ष्यादीति** । भोक्तृभोग्यादिसंग्रहार्थमादिपदम् ॥ ४४४ ॥

**कुतः पुनरिदं ज्ञानं धीसमानाश्रयत्वतः ॥**
**लोकसंचरणाद्यस्य तत्साक्षित्वान्न तु स्वतः ॥ ४४५ ॥**

स हीत्याद्यवतारयितुं चोदयति । **कुत इति** । संचरणादीत्यादिशब्देन ध्यानदर्श-नादि वदनादि च गृह्यते ॥ ४४५ ॥

**स हीतिहेतुनिर्देश उक्तसिद्ध्यर्थमिष्यते ॥**
**स आत्मा यः स्वयंज्योतिरनुमानेन दर्शितः ॥ ४४६ ॥**

बुद्ध्या सहैक्याध्यासादस्याऽऽत्मनो लोकद्वयसंचारादि न स्वतस्तत्साक्षित्वादित्ये-तज्ज्ञानं कुतो जातमितिचोद्योत्तरत्वेन वाक्यमादत्ते । **स हीतीति** । तत्र हीत्ययं

---

१ क. ग. °युक्त्यति° । २ क. किंचाऽऽत्म° । ३ ख. °ल्पनम् । नौः । ४ ग. °र्यन्तसा° । ५ ख. ज्ञातं ।

हेतोर्निर्देश इति यावत् । उक्तसिद्ध्यर्थं बुद्ध्यविवेकादात्मनः संचरणादिनिश्चयार्थमित्यर्थः । हिशब्दार्थं प्रतिज्ञाय सशब्दार्थमाह । स इति ॥ ४४६ ॥

**प्रत्यङ्ङविषया यां यामवस्थामभिमन्यते ॥**
**तत्तन्नामाप्युपादत्ते स्वप्नो भूत्वेत्यतो वचः ॥ ४४७ ॥**

कथं तत्र स्वप्नशब्दो रूढियोगयोरभावादत आह । प्रत्यङ्ङिति ॥ ४४७ ॥

**बुद्धिजागरणे यद्वज्जागर्मीत्यभिमन्यते ॥**
**बुद्धिस्वापेऽपि तत्सांक्ष्यात्स्वप्नो भूत्वेति मोहधीः ॥ ४४८ ॥**

उक्तमर्थं दृष्टान्तेनाऽऽह । बुद्धीति । तज्जाग्रत्स्वापयोरात्मनि तदभिमाने हेतुमाह । तत्सांक्ष्यादिति । मोहादात्मनि स्वप्नधीरिति फलितमाह । स्वप्न इति ॥ ४४८ ॥

**इमं लोकमिदं जन्म स्वप्नो भूत्वाऽतिवर्तते ॥**
**स्वाप्नान्भोगांस्ततो भुङ्क्ते जाग्रद्भावनयाऽञ्जितः ॥ ४४९ ॥**

इमं लोकमित्यादि व्याकरोति । इममिति । इदं जन्म जागरितावच्छिन्नमित्यर्थः । जागरितमतिक्रान्तस्य सुषुप्तवद्भोगाभावमाशङ्क्याऽऽह । स्वाप्नानिति । जागरात्तर्हि स्वापे न वैषम्यं नेत्याह । जाग्रदिति ॥ ४४९ ॥

**धर्मादिकारणोद्भूतवासनाराशिसाक्षिता ॥**
**आत्मनोऽकारकस्यैव भोग इत्यभिधीयते ॥ ४५० ॥**

कथं भोक्तृत्वे शुद्धतेत्याशङ्क्य भोगस्वरूपमाह । धर्मादीति ॥ ४५० ॥

**जाग्रल्लोकं यतो हित्वा स्वप्नलोकं प्रपद्यते ॥**
**तस्मादसङ्गोऽकर्ता च स्वयंज्योतिरिति वीक्ष्यताम् ॥ ४५१ ॥**

प्रकृतवाक्यस्थहिशब्दद्योतितं हेतुं स्फुटयति । जाग्रदिति । स्वतः संसारित्वे जागरं नातिक्रामेत्स्वभावत्यागायोगात्तत्त्वतोऽसंसारितेति भावः ॥ ४५१ ॥

**आत्माविद्यैव मृत्युः स्यान्नित्यस्यापि मृतेस्ततः ॥**
**मृत्युर्वै तम इत्याह श्रुतिरप्यात्मनिह्नवात् ॥ ४५२ ॥**

मृत्यो रूपाणीत्यत्र मृत्युशब्दार्थमाह । आत्मेति । तत्र हेतुमाह । नित्यस्येति । मृतेस्तदभिमानादिति यावत् । अविद्याया मृत्युशब्दत्वे श्रुतिमाह । मृत्युरिति । श्रौतेऽर्थे युक्तिमुक्तां स्मारयति । आत्मेति । तमःशब्दिताऽविद्या नित्यसिद्धमप्यात्मानं निह्नुते प्रमाणं वस्तुतत्त्व परमात्मैव निघ्नतीति न्यायादतोऽसौ मृत्युरित्यर्थः ॥ ४५२ ॥

---

१ ख. 'त्साक्षात्स्व' । २ ख. 'त्साक्षादि' । ३ ख. ग. 'ता । राऽऽत्म' । ४ ख. ग. 'संसा' । ५. क. ख. 'वात् ॥ ४५२ ॥

**स्वतोमृतस्य मरणं नाविद्यातो यतोऽन्यतः ॥**
**अविद्यामात्मनो मृत्युं तस्मादाहुर्विपश्चितः ॥ ४९३ ॥**

आत्मनो मृतिहेतौ मृत्युशब्देऽपि तमःशब्दो गुणविशेषवाचीत्याशङ्क्याऽऽह । **स्वत इति** । तत्रैव विद्वत्प्रसिद्धिमाह । **अविद्यामिति** ॥ ४९३ ॥

**प्राणोत्क्रान्तिनिषेधोक्तिर्यत आत्मावबोधतः ॥**
**सम्यग्ज्ञानस्य बाध्योऽर्थस्तस्मान्मृत्युरितीर्यते ॥ ४९४ ॥**

आत्माविद्यैव मृत्युरित्यत्र हेत्वन्तरमाह । **प्राणेति** । न तस्य प्राणा उत्क्रामन्तीति विदुषो मरणं निषिध्यते न च सम्यग्ज्ञानमज्ञानादन्यन्निवर्तयत्यतस्तन्निवर्त्यो मृत्युरज्ञानमेवेत्यर्थः ॥ ४९४ ॥

**रूप्यते यैरसौ मृत्युः कार्याणि करणानि च ॥**
**तानि रूपाणि भण्यन्ते मृत्योस्तस्य परात्मनः ॥ ४९५ ॥**

रूपशब्दार्थमाह । **रूप्यत इति** । परात्मनस्तदुपाधेः साभासस्याज्ञानस्येति यावत् ॥ ४९५ ॥

**विषमस्थं यतः सर्वं प्राणव्यापत्तिकारणम् ॥**
**तुषाग्रमात्रमपि हि मृत्युः सर्वमिदं ततः ॥ ४९६ ॥**

आत्माविद्या मृत्युस्तस्य रूपाणि कार्यकरणानीत्युक्त्वा सर्वमनात्मजातं मृत्युरिति प्रकारान्तरमाह । **विषमस्थमिति** । कण्ठादिनिष्ठस्योर्ध्वमधश्च निर्गन्तुमसमर्थस्याल्पीयसोऽप्यन्नपानादेर्मृतिहेतुत्वमनुभवसिद्धमिति हिशब्दार्थः ॥ ४९६ ॥

**मौढ्यं जाड्यमविद्या स्यान्नित्यबुद्धात्मवस्तुनः ॥**
**अनात्मनि च तद्दृष्टं तेन मृत्युरिदं जगत् ॥ ४९७ ॥**

तत्र हेत्वन्तरमाह । **मौढ्यमिति** । अज्ञानं हि मौढ्यापरपर्यायं मृत्युरित्युक्तं मौढ्यं चानात्मन्यपि स्वरूपतया दृश्यते तेन सोऽपि मृत्युरित्यर्थः ॥ ४९७ ॥

**न हि प्रमाणतो मृत्युः शक्यो दर्शयितुं ततः ॥**
**रूपाणि मृत्योस्तेन स्युः कार्याणि करणानि च ॥ ४९८ ॥**

किमित्येवंरूपस्य मृत्यो रूपाणि कार्यकरणान्युच्यन्ते तत्राऽऽह । **न हीति** । प्रमाणनिरस्यत्वं ततःशब्दार्थः । मृत्योर्मानगम्यत्वायोगे तद्धर्मकत्वेन रूपोपन्यास इति फलितमाह । **रूपाणीति** ॥ ४९८ ॥

**अतिक्रामति तान्यात्मा जाग्रत्स्थानाश्रयाण्यतः ॥**
**क्रियाफलाश्रयाण्येष तस्माच्छुद्धो ध्रुवश्च सः ॥ ४९९ ॥**

प्रकृतं वाक्यार्थमुपसंहरति । **अतिक्रामतीति** । अतःशब्दो यस्मादर्थः । जागरास्वप्नावेशे यस्मात्तान्यतिक्रामति तस्मात्कूटस्थो निर्मलश्च प्रत्यग्धातुरित्यर्थः ॥ ४९९ ॥

---

१ क. °कृतवा° ।

अस्ति शुद्धो ध्रुवश्चाऽऽत्मा स चैक इति यत्स्थितम् ॥
अस्यैवार्थस्य दार्ढ्यार्थं पूर्वपक्ष उदीर्यते ॥ ४६० ॥

आत्मा कूटस्थत्वादिरूपः सिद्धश्चेत्किमुत्तरग्रन्थेनेत्याशङ्क्याऽऽह । अस्तीति । पूर्वपक्षं कृत्वा तन्निरासे यथोक्तोऽर्थो दृढो भवति पूर्वपक्षविशुद्धा हीति न्यायात्तदुत्तरग्रन्थोऽर्थवानित्यर्थः ॥ ४६० ॥

ननु धीव्यतिरेकेण धीसाक्षी नाधिगम्यते ॥
धिया समान इत्येवं यः प्रागात्मोपपादितः ॥ ४६१ ॥

पूर्वपक्षं विवृणोति । नन्विति ॥ ४६१ ॥

तत्सद्भावे न नो मानं प्रत्यक्षानुमयोर्यतः ॥
किंचिदप्यस्ति तत्सिद्धिरतः स्यान्निष्प्रमाणिका ॥ ४६२ ॥

तत्र हेतुमाह । तत्सद्भाव इति । प्रत्यक्षमनुमानं चेति द्वयमेव मानं सर्वज्ञवचनार्थाविसंवादिज्ञानं प्रमाणमित्युक्त्वा तद्विविधं प्रत्यक्षमनुमानं चेत्युक्तेर्न च ताभ्यामन्यतरेण परेष्टात्मदृष्टिरतस्तदसत्त्वमित्यर्थः ॥ ४६२ ॥

पूर्वधीव्यतिरेकेण तत्कालीना परा यथा ॥
न धीः प्रत्यक्षगम्यैवं नाऽऽत्मा प्रत्यक्षगोचरः ॥ ४६३ ॥

तत्राध्यक्षाभावं स्पष्टयति । पूर्वेति । यथैकस्मिन्संताने पूर्वज्ञानातिरेकेण ज्ञानान्तरं तत्तुल्यकालं न प्रत्यक्षं तथाऽऽत्माऽपि धीव्यतिरिक्तो न प्रत्यक्ष इत्यर्थः ॥ ४६३ ॥

न चानुमानतस्तस्य सद्भावोऽप्यवधार्यते ॥
सति धर्मिणि धर्माणां चिन्तयमुपपद्यते ॥ ४६४ ॥

यद्दृश्यं तत्स्वातिरिक्तदृश्यं यथा घटो दृश्या चेयं धीरित्यनुमानात्तत्सिद्धिरित्याशङ्क्य साध्यवैकल्यमभिप्रेत्याऽऽह । न चेति । प्रत्यक्षतो यथेत्यपेरर्थः । प्रमाणादतिरिक्तात्मासिद्धौ तस्य शुद्धत्वादि दूरोत्सारितमित्याह । सतीति ॥ ४६४ ॥

व्यङ्ग्यव्यञ्जकयोर्यन्नु सादृश्यभ्रमकारणात् ॥
तद्विवेकापरिज्ञानाद्युक्तं तच्चाभ्युपेयते ॥ ४६५ ॥

यौ भास्यभासकौ तौ मिथो भिन्नौ यथा घटालोकौ भास्यभासकौ च बुद्ध्यात्मानावित्यनुमानात्तयोर्भेद इत्याशङ्क्याऽऽह । व्यङ्ग्येति । घटालोकयोः संश्लिष्टयोः सादृश्यात्तादात्म्यभ्रान्तिहेतोर्विवेकाग्रहादभेदधीर्वस्तुतस्तु भेदस्तथा बुद्ध्यात्मनोरपीति यदुक्तं सममानवाक्ये तत्रोदाहरणमुपेतमित्यर्थः ॥ ४६५ ॥

व्यङ्ग्यव्यञ्जकयोर्भेदस्तत्संबन्धात्पुरा यतः ॥
प्रमान्तरोपलब्धोऽतः काममस्तु तयोर्भिदा ॥ ४६६ ॥

---

१ घ. 'पक्षे वि' । २ क. ग. 'दृश्यं भ्र' ।

तत्र हेतुः । **व्यङ्ग्येति** । तत्संबन्धात्तयोर्मिथः संश्लेषादिति यावत् । प्रमान्तरं तादात्म्यधीविरोधिप्रत्यक्षम् ॥ ४६६ ॥

**सादृश्यतस्त्वभिन्नोऽयमिति भ्रान्तिरियं मता ॥**
**तद्भेदस्योपलब्धत्वात्तद्योगात्प्राक्प्रमाणतः ॥ ४६७ ॥**

संश्लिष्टयोर्घटालोकयोस्तर्हि कथमभेददृष्टिस्तत्राऽऽह । **सादृश्यतस्त्विति** । तद्भ्रान्तित्वे पूर्वोक्तमेव हेतुमाह । **तद्भेदस्येति** । तद्योगाद्घटालोकयोर्मिथःसंश्लेषादिति यावत् । तद्भेदस्याध्यक्षत्वात्तदभेदो भ्रान्तस्ते बुद्ध्यात्मभेदेऽनुमानाभावात्स एव भ्रान्तोऽभेदस्तु परमार्थ इत्यर्थः ॥ ४६७ ॥

**धीरेव चित्स्वरूपेयं प्रथते ग्राहकात्मना ॥**
**तथा विषयरूपेण सैवैका प्रथते द्विधा ॥ ४६८ ॥**

कथं सत्युक्तेऽनुमाने भेदस्य भ्रान्तत्वमित्याशङ्क्याध्यक्षविरोधं[1] मत्वाऽऽह । **धीरिति** ॥ ४६८ ॥

**नातो धीव्यतिरेकेण प्रत्यगात्मोपलभ्यते ॥**
**प्रत्यक्षतोऽनुमानाद्वा यो धीसाक्षीति भण्यते ॥ ४६९ ॥**

बुद्धेरेव द्विधाभाने फलितमाह । **नात इति** ॥ ४६९ ॥

**यश्च पूर्वमुपन्यस्तो दृष्टान्तो भेदसिद्धये ॥**
**व्यङ्ग्यव्यञ्जकवद्भेदः साक्षिसाक्ष्यार्थयोरिति ॥ ४७० ॥**

व्यङ्ग्यव्यञ्जकयोर्भेदमुपेत्य बुद्ध्यात्मनोः स नेत्युक्तमिदानीं तयोरपि स नास्तीति साध्यवैकल्यं वक्तुमुक्तमनुवदति । **यश्चेति** । यथा घटालोकयोर्भेदस्तथा बुद्ध्यात्मनोरपीति तद्भेदसिद्ध्यर्थं यो दृष्टान्तः पूर्वमुपन्यस्त इति योजना ॥ ४७० ॥

**त्वदभ्युपगमादेव तदभ्युपगतं मया ॥**
**परमार्थेन तत्रापि[3] नैव भेदोऽस्ति कश्चन ॥ ४७१ ॥**

तद्दृष्टान्तेऽभ्युपगमवादं दर्शयति । **त्वदिति** । उदाहरणं तदर्थः । दृष्टान्ते भेदस्याध्यक्षत्वान्नाभ्युपगममात्रमित्याशङ्क्याऽऽह । **परमार्थेनेति** । दार्ष्टान्तिकं दृष्टान्तयितुमपिशब्दः ॥ ४७१ ॥

**अवभासात्मकः कुम्भः क्षणमात्रस्थितिर्यतः ॥**
**अन्योऽन्यश्च प्रबन्धेन यतस्तत्रापि जायते ॥ ४७२ ॥**

घटालोकयोस्तु वस्तुतो भेदाभावे फलितमाह । **अवभासेति** । कथं घटस्याऽऽलोकसंसृष्टस्यापि तदात्मत्वं तत्राऽऽह । **क्षणेति** । यतः सालोको घटः क्षणमात्रमेव तिष्ठ-

१ ख. °रोधमाह । २ घ. °भावेन फ° । ३ ग. नश्चापि । ४ क. ख. °त्रमवति° ।

त्यतस्तयोर्भेदस्य दुर्ग्रहत्वादभेद एवेत्यर्थः । सालोको घटः क्षणमात्रवृत्तिश्चेत्तत्र कथं स्थायित्वधीस्तत्राऽऽह । अन्योऽन्यश्चेति । तत्रेति दृष्टान्तोक्तिः । अतः साध्यविकलतेति शेषः ॥ ४७२ ॥

**विज्ञानमात्रमथवा वस्तु स्यात्पारमार्थिकम् ॥**
**क्षणभङ्गि घटाभासं कृशानेकविशेषणम् ॥ ४७३ ॥**

बाह्यार्थवादेनानुमानं दूषयित्वा विज्ञानवादमादत्ते । विज्ञानेति । सिद्धान्ताद्विशेषमाह । क्षणेति । व्यवहारार्थं विशिनष्टि । घटेति । कथं तर्हि घटादिव्यवहारस्तत्राऽऽह । कृशेति ॥ ४७३ ॥

**एवं च सति दृष्टान्तो भवतो नोपपद्यते ॥**
**सर्वस्य ज्ञानमात्रत्वात्तदन्यासंभवत्वतः ॥ ४७४ ॥**

किमस्मिन्पक्षे यथोक्तानुमानदूषणं तदाह । एवं चेति । विज्ञानमात्रे तत्त्वे सतीति यावत् । आश्रयहीनत्वादिति भावः । अनुपपत्तिं स्फुटयति । सर्वस्येति । यद्ग्राह्यं तद्ग्राहकधीमात्रं यथा धीग्राह्यं च घटादीत्युक्तं समर्थयते । तदन्येति ॥ ४७४ ॥

**तस्यैव ज्ञानमात्रस्य ग्राह्यग्राहकलक्षणम् ॥**
**मलं प्रकल्प्य तत्स्वास्थ्यं शुद्धिं व्याचक्षतेऽपरे ॥ ४७५ ॥**

ग्राह्यग्राहकभेदस्याध्यक्षत्वादुक्तानुमानस्य तद्विरोधमाशङ्क्याऽऽह । तस्येति । तत्स्वास्थ्यं तस्य स्वरसभङ्गुरस्य विज्ञानमात्रत्वमिति यावत् । अपर इति विज्ञानवादिनामवोक्तिः ॥ ४७५ ॥

**अभिन्नोऽपि हि बुद्ध्यात्मा विपर्यासितदर्शनैः ॥**
**ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥ ४७६ ॥**

ग्राह्यग्राहकभावस्य कल्पितत्वं न बौद्धराद्धान्तस्य स्वत्वेकत्र विज्ञाने तद्भावं वास्तवमिच्छन्तीत्याशङ्क्य तत्कल्पितत्वे कीर्तिवाक्यमुदाहरति । अभिन्नोऽपीति । तस्मान्न वस्तुतो ग्राह्यग्राहकभेदोऽस्तीति शेषः ॥ ४७६ ॥

**तस्यापि शुद्धरूपस्य शान्तिमन्ये प्रचक्षते ॥**
**मलवत्संवृतं रूपं यस्मात्तस्यापि कल्पितम् ॥ ४७७ ॥**

विज्ञानवादमुक्त्वा शून्यवादं दर्शयति । तस्यापीति । तत्र हेतुः । मलवदिति । अस्यार्थः—अर्थाभावे कथं ज्ञानं ज्ञायतेऽर्थोऽनेनेति व्युत्पत्तेः ।

"पररूपं स्वरूपेण यया संव्रियते धिया ।
एकार्थप्रतिभासिन्या भावानाश्रित्य भेदिनः ॥
तया संवृतनानात्वाः संवृत्या भेदिनः स्वयम् ॥

अभेदिन इवाऽऽभान्ति" इति न्यायाद्रागादिमलवत्संवृतिकल्पितार्थवशाज्ज्ञानाविरोधश्चे-त्तर्हि तत्कल्पितमेव ज्ञानमस्तु लाघवात्सर्वस्यापि शब्दार्थस्य वैकल्पिकत्वात् । **यथाऽऽह**—

"अनादिवासनोद्भूतविकल्पपरिनिर्मितः ।
शब्दार्थस्त्रिविधो ज्ञेयो भावाभावोभयाश्रयः" इति ॥ ४७७ ॥

**आत्माद्यर्थे च संवादाभावाद्वाक्यस्य नेष्यते ॥**
**प्रत्यक्षवत्प्रमाणत्वं नापि प्रत्यक्षतो गतिः ॥ ४७८ ॥**

पक्षत्रयेऽपि नातिरिक्तोऽस्त्यात्मा मानाभावादित्युक्तम् । इदानीमागमादिष्टा-त्मसिद्धिमाशङ्क्याऽऽह । **आत्मादीति** । आदिपदेन धर्मोक्तिः । प्रत्यक्ष-मात्मादौ न ते मानं नाप्यनुमानमनङ्गीकारान्निरस्तत्वाच्चातस्तन्मानत्वेनाभिमताग-मस्य संवादाभावात्स्वतःप्रामाण्यस्य चाप्रमाणकत्वान्न तन्मानतेत्यर्थः । तत्र संमतं दृष्टान्तमाह । **प्रत्यक्षवदिति** । न हि तदात्मादौ ते मानं तस्याऽऽगमैकगम्यत्वा-ङ्गीकारात्तथा सोऽपि न तन्मानं संवादाधीनत्वान्मानत्वस्य तस्य चासत्त्वादित्यर्थः । अहमित्यध्यक्षादिष्टात्मदृष्टेरलं मानान्तरेणेत्येके तान्प्रत्याह । **नापीति** । अहंधीः स्वालम्बनमात्रं काङ्क्षति न तस्य बुद्ध्याद्यतिरेकं स्थायित्वं चेति भावः ॥ ४७८ ॥

**अनुमानविरोधाच्च न नित्यात्मादिसंभवः ॥**
**प्रमान्तरविरोधेन न प्रमेहास्ति काचन ॥ ४७९ ॥**

वक्ष्यमाणक्षणिकत्वानुमानविरोधाच्च नेष्टात्मसिद्धिरित्याह । **अनुमानेति** । आत्म-नोऽनात्मनो वा प्रत्यभिज्ञया नित्यत्वसिद्धेर्न क्षणिकत्वं नेत्याह । **प्रमान्तरेति** । प्रत्य-भिज्ञा केशादाविव भ्रान्तत्वादनुमानविरोधे न प्रमा । **यथाऽऽह**—

"स्मृतिः पूर्वानुभूतेऽर्थे दर्शनं वार्तमानिके ।
तयोरत्यन्तभेदे च कस्याभेदः प्रतीयताम् ॥
शब्दौ भिन्नौ स्वरूपेण वाच्योऽर्थोऽप्यतिभेदवान् ।
स इत्येष परोक्षार्थे प्रत्यक्षे चायमित्यपि ॥
तस्मान्मिथ्या विकल्पोऽयं भिन्नेष्वेकार्थताग्रहः" इति ।

न च तद्भ्रान्तत्वपक्षेऽनुमानाप्रामाण्यं त्वन्मते स्वतोमानत्वादस्मन्मते च ज्वालादौ क्षणिकत्वप्रत्यक्षसंवादात्तत्प्रामाण्यादतस्तद्विरोधान्न प्रत्यभिज्ञा मानमित्यर्थः ॥ ४७९ ॥

**प्रत्यक्षस्यार्थसंवादादनुमित्यविरोधतः ॥**
**सौगतं दर्शनं पथ्यं दोषवत्त्वन्यदर्शनम् ॥ ४८० ॥**

---

१ घ. 'कतोति ने' ।

सिद्धान्ते मानाभावस्तद्विरोधश्चोक्तः संप्रति स्वमते तदुभयं नास्तीत्याह । **प्रत्यक्षस्येति** । **अस्यार्थः**—अस्ति प्रत्यक्षस्य क्षणिकादावर्थे सर्वज्ञोक्तिसंवादः । **यथाऽऽह**—सर्वज्ञवचनार्थेषु क्षणिकनैरात्म्यादिषु यत्संशयविपर्यासरहिततयोपदर्शितार्थप्रापकं ज्ञानं तत्सर्वज्ञवचनार्थाविसंवादीत्युच्यत **इति** । तद्धि वर्तमानं गृह्णदवर्तमानव्यावृत्तमेव गृह्णाति । **उक्तं हि**—तस्य विषयः स्वलक्षणमिति । वक्ष्यमाणक्षणभङ्गानुमानेन च तस्य संवादस्तस्मात्क्षणवादः श्रेयान्वादान्तरं त्याज्यमिति ॥ ४८० ॥

**कल्पनेतरतः सर्वं सम्यङ्मिथ्येति मानतः ॥**
**सर्वशून्यस्य मोक्षन्वादनावृत्तिश्च सेत्स्यति ॥ ४८१ ॥**

कथं सर्वस्य क्षणिकत्वे स्थायित्वव्यवहारस्तत्राऽऽह । **कल्पनेति** । सम्यङ्मिथ्यापदाभ्यां स्थायित्वास्थायित्वे कथ्येते तत्र कल्पनया सर्वं सम्यगिति व्यवहारः स्थायित्वे मानाभावात् । न हि प्रत्यक्षमनुमानं वा तत्र मानं ग्राह्यप्राप्यभेदेन क्षणिकादेरेव तद्विषयत्वोपगमात् । **यथाऽऽह**—चतुर्विधस्य प्रत्यक्षस्य स्वभावयोगितया स्वलक्षणाख्यश्चतुरर्थः सत्यस्वभावो ग्राह्यो विषयस्तदन्यग्रहणे प्रयोजनाभावात्प्राप्यं तु सत्येषु नैरात्म्यादीति । अनुमानस्य तु यथोक्तनैरात्म्यादि[2]सामान्यलक्षणमेव विषयः प्राप्यं च तदेवेति च । सर्वं मिथ्येत्यकल्पनया व्यवहारः सर्वस्य क्षणिकत्वे मानस्य सत्त्वादित्यर्थः । कथं तर्हि मोक्षसिद्धिर्बन्धमोक्षान्वयिनोऽभावादित्याशङ्क्याऽऽह । **सर्वेति** । सर्वेषां संसारिक्षणानां निरन्वयतो नाशादसंसारिक्षणानां चोत्पत्तेरनावृत्तिशब्दिता मुक्तिर्युज्यते तत्सर्वस्य क्षणिकत्वाद्ग्राह्यग्राहकभेदस्य मृषात्वादध्यक्षविरुद्धता प्रागुक्तानुमानेऽसिद्धेत्यर्थः ॥ ४८१ ॥

**ग्राह्यग्राहकयोर्भेदो ननु भेदानुभूतितः ॥**
**भेदस्यैवं च मिथ्यात्वं प्रत्यक्षेण विरुध्यते ॥ ४८२ ॥**

घटमहं जानामीति ग्राह्यग्राहकभेदस्य प्रत्यक्षत्वात्तदसत्त्वं तद्विरुद्धमिति प्रत्यक्षविरुद्धतातादवस्थ्यमाशङ्कते । **ग्राह्येति** ॥ ४८२ ॥

**ग्राह्यादिभेदवद्रूपं प्रत्यक्षं लिङ्गसंमतम् ॥**
**एकस्योभयरूपत्वं पण्डितैः सुनिराकृतम् ॥ ४८३ ॥**

प्रत्यक्षं भेदे न प्रमाणं संवादकाभावादित्याशङ्क्यानुमानं संवादकमाह । **ग्राह्यादीति** । यो ग्राह्यः सोऽन्यग्राह्यो यथा घटो ग्राह्या चेयं धीरित्यनुमानेनापि सम्यगवगतं प्रत्यक्षवेद्यं भिन्नं रूपमित्यर्थः । भेदस्य मानद्वयवेद्यत्वेन न सत्त्वं ज्ञानस्यैव ग्राह्यग्राहकत्वेन मानस्य धीरिव चित्स्वरूपेत्यादावुक्ते दृष्टान्तस्य साध्यवैकल्यात्प्रत्यक्षस्य च संवादाभावादित्याशङ्क्याऽऽह । **एकस्येति** । पण्डितैः **शबरस्वामिप्रमुखैरिति** यावत् ।

---

१ घ. ॰णत्क्ष॰ । २ घ. ॰दिति सा॰ । ३ क. घ. ॰स्यैव च । ४ घ. ॰न मानभा॰ ।

यथाऽऽहुः—यदि विज्ञानादन्यो नास्ति कथं तर्हि जानातीत्युच्यते जानातीति ज्ञानस्य कर्तुरभिधानं शब्देनोपलभ्यते तत्रैव शब्दोऽर्थवान्कल्पयितव्य इति ॥ ४८३ ॥

**ज्ञानाभेदात्तु तत्सिद्धिस्तदध्यासात्तथा परम् ॥**
**प्रथते भेदवज्ज्ञानं न क्वचिद्वस्तुसंश्रयात् ॥ ४८४ ॥**

ज्ञानव्यतिरिक्तमात्मानं कल्पयाम इति पूर्ववादी दूषयति। **ज्ञानेति । अस्यार्थः**—चतुर्विधं प्रत्यक्षमिद्रियप्रत्यक्षं मानसं स्वसंवेदनं योगिप्रत्यक्षं च तत्र प्राग्जातस्थितचक्षुरादिपञ्चकमाश्रित्य प्राग्जातस्थितरूपादिपञ्चकमालम्ब्य तत्साक्षात्कार्युत्पन्नं ज्ञानपञ्चकमिन्द्रियप्रत्यक्षं मानसप्रत्यक्षं[1] कर्मफलोपस्थितत्रैकालिकातीन्द्रियषडालम्बनसाक्षात्कारिमनोद्वारकजनितविपाकविज्ञानं सर्वचित्तचैत्यानामात्मसंवेदनं स्वसंवेदनं समाधिप्रज्ञाभावनाप्रकर्षपर्यन्तजं भूतार्थसाक्षात्कारिज्ञानं योगिप्रत्यक्षम् ।तच्च सर्वं द्विविधं निर्विकल्पकं सविकल्पकं च तत्राऽऽद्ये ग्राहकज्ञानाभेदेन नीलपीतादेर्ग्राह्यस्य सिद्धिस्तस्मिन्नेव ज्ञानेऽध्यासाद्ग्राह्यग्राहकभेदाख्यमपरमध्यवसेयं रूपं सविकल्पकं भाति न च क्वचिदपि सविकल्पकं वस्त्वालम्ब्य जायते तथाच तस्मिन्प्रमाणाभासे भेदभानात्प्रमाणे चेतरस्मिन्नभेदस्फूर्तेर्भेदस्यासत्त्वमिति ॥ ४८४ ॥

**ग्राह्यग्राहकमित्येवं नैव तत्प्रथते यतः ॥**
**नीलपीतादिविज्ञानं नीलमित्येव तद्यतः ॥ ४८५ ॥**

कथं निर्विकल्पके ज्ञानाभेदेन नीलादेर्ग्रहस्तत्राऽऽह । **ग्राह्येति ।** तद्धि निर्विकल्पकं नीलादिविज्ञानं ग्राह्यस्य नीलादेर्ग्राहकमित्येवं नैव प्रथते किंतु नीलमित्येव यतस्तद्भात्यतो ज्ञानाभेदेनैव निर्विकल्पके ग्राह्यसिद्धिरित्यर्थः । अत इत्यर्थे द्वितीयो यतःशब्दः ॥ ४८५ ॥

**अतस्मिंस्तद्ग्रहात्सर्वं मिथ्या स्यात्सविकल्पकम् ॥**
**असंपृक्तस्य सम्यक्त्वं स्वरूपेणावभासते ॥ ४८६ ॥**

ज्ञानेऽध्यासाद्ग्राह्यग्राहकभेदः सविकल्पके चकास्ति तन्न वस्तुस्पर्शीति कथमुक्तं तस्यापीतरवन्मानत्वात्तद्विषयभेदस्य वस्तुत्वसिद्धेरित्याशङ्क्याऽऽह । **अतस्मिन्निति ।** सर्वेषां चित्तानां चैत्यानां चाऽऽत्मा वेद्यते येन स्वरूपेण तत्स्वसंवेदनं प्रत्यक्षं कल्पनापोढमभ्रान्तं चेति स्थितेः प्रकाशैकरसे क्षणभङ्गुरे ज्ञाने सर्वभेदवर्जितेऽपि भेदस्य सविकल्पकेन ग्रहान्मिथ्याज्ञानलक्षणाक्रान्तं तद्भ्रान्तिरेवेति न तद्विषयस्य वस्तुतेत्यर्थः । तर्हि प्रत्यक्षत्वाविशेषान्निर्विकल्पकमपि भ्रान्तिः स्यान्नेत्याह । **असंपृक्तस्येति ।** ग्राह्यग्राहकभेदास्पर्शिनो ज्ञानस्य स्वरसभङ्गुराख्यं सम्यग्रूपं स्वेनैवाऽऽकारेण निर्विक-

---

१ ख. 'क्षं सविकल्पकं क' । २ क. ख. 'ल्पके भा' ।

ल्पके भाति न च स्वसंवेदनत्वे विषयविषयित्वेनाऽऽत्मसंवित्तेर्ग्राह्यग्राहकभेदस्य स्वस्मिन्नेव सत्त्वेन स्वात्मनि विक्रियाविरोधोऽनादिस्वोपादानबललब्धजडवैलक्षण्येन रूपाद्यर्थप्रकाशकस्वभावस्य जायमानज्ञानस्य स्वासंपृक्तस्यैव स्वसंवेदनत्वव्यवस्थापनात् । यथाऽऽह—

"विज्ञानं जडरूपेभ्यो व्यावृत्तमुपजायते ॥
इयमेवाऽऽत्मसंवित्तिरस्य याऽजडरूपता" इति ।

तथाचाविषयत्वात्तस्य न भ्रान्तिता तद्विज्ञानवादिमतं श्रद्धेयमित्यर्थः ॥ ४८६ ॥

**ननु विज्ञानमात्रेऽस्मिन्सम्यङ्मिथ्यात्वधीगतिः ॥**
**निर्विकल्पे कथं ते स्याद्‌द् भेदोऽत्र किंकृतः ॥ ४८७ ॥**

तन्मते सत्यमिथ्याविभागमाक्षिपति । **नन्विति** । निर्विकल्पके सविकल्पके च ज्ञानमात्रे स्वीकृते निर्विकल्पके सम्यक्त्वमन्यत्र मिथ्यात्वमिति धियोर्व्यवस्था न युक्ता ज्ञानमात्रे तद्धेत्वभावादित्यर्थः ॥ ४८७ ॥

**ज्ञानरूपं यथा शुद्धं क्षेणं चैवावभासते ॥**
**विकल्पकं तथैव स्याद्विभागस्तेन दुष्करः ॥ ४८८ ॥**

हेतुं साधयति । **ज्ञानेति** । यथा ज्ञानरूपं विषयोपप्लवविकलं स्वरसभङ्गुरं पारमार्थिकं निर्विकल्पकेऽनुभूयते तथा ज्ञानव्यतिरिक्तं ग्राह्यं घटादि सविकल्पके भासमानं पारमार्थिकमेव युक्तमुपलब्धेरबाधाच्चातः सविकल्पकनिर्विकल्पकयोरुक्तविभागासिद्धिरित्यर्थः ॥ ४८८ ॥

**इदं मिथ्येति चैतस्मान्मिथ्यात्वस्य कथं ग्रहः ॥**
**विकल्पश्चेन्न मिथ्यात्वान्न चान्या गतिरस्ति वः ॥ ४८९ ॥**

किंच घटादि मिथ्येति ज्ञानं विज्ञानवादिनो न युक्तमत्र हि सम्यक्त्वं मिथ्यात्वं वाऽऽद्ये सविकल्पकमात्रस्य न मिथ्यात्वमस्य सम्यक्त्वाद्द्वितीये त्वेतन्मिथ्यात्वस्य ग्राहकाभावादग्रहो न च स्वेनैव ग्रहो वृत्तिविरोधान्न च ग्राहकान्तरमनवस्थितेरित्यभिप्रेत्याऽऽह । **इदमिति** । उक्तज्ञानस्य विकल्पमात्रत्वात्तस्य सम्यक्त्वं मिथ्यात्वं चेति विकल्पस्य[३] दोषावनवकाशाविति शङ्कते । **विकल्पश्चेदिति** । दूषयति । **नेति** । शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति स्थितेरिदं मिथ्येति ज्ञानस्य विकल्पत्वे घटादि मिथ्येत्यस्यासत्त्वापत्तेरिति हेतुमाह । **मिथ्यात्वादिति** । यथा ते ग्राह्यं नात्यन्तमसद्भासमानत्वान्नापि सदेव बाधात्तथा ममापीति चेन्नेत्याह । **न चेति** । न हि ते ग्राह्यस्य सत्त्वासत्त्वाभ्यामन्या गतिरनिर्वाच्यत्वानिष्टेरिति भावः ॥ ४८९ ॥

१ क. 'ग्राह्य' । २ ख. स्वयं । ३ घ. विकल्पे ।

**मिथ्यामिथ्याविकल्पो हि स्थायित्वे वस्तुनो भवेत् ॥**
**क्षणवादे विनष्टानां कस्य किं केन गृह्यते ॥ ४९० ॥**

किंच सर्वत्र क्षणभङ्गे सम्यङ्मिथ्याधीविभागासिद्धिर्ग्राह्यग्राहकाद्ययोगादित्याह । **मिथ्येति** । उक्तहेतुद्योती हिशब्दः । विनष्टानामिति निर्धारणे षष्ठी ॥ ४९० ॥

**मैवं बाधात्तु मिथ्यात्वसिद्धिः स्यान्मृगतोयवत् ॥**
**बाह्यस्याप्यग्रहो बाधान्न तु स्थिरतया मतः ॥ ४९१ ॥**

पूर्ववाद्याह । **मैवमिति** । बाधो मिथ्यात्वे प्रयोजको न स्थिरत्वं मृगतृष्णिकादौ तथोपलब्धेर्बाह्यश्चार्थः स्तम्भादिः स्वावयवेभ्यो भेदाभेदाभ्यां दुर्भणत्वाद्बाध्यते तेन मिथ्येत्यर्थः । दृष्टान्ते बाधस्य मिथ्यात्वप्रयोजकत्वं परस्यापीष्टमित्याह । **बाह्यस्येति** । ज्ञानान्यत्वेनेष्टतोयाद्यर्थस्य बाधादनुपादानं बाह्यार्थवादिनोऽपि मतं न ग्राहकादेः स्थिरत्वेन तन्मिथ्यात्वमतस्तम्भादावपि क्षणिकज्ञानातिरिक्ततया दुर्निरूपे बाधान्मिथ्यातेत्यर्थः ॥ ४९१ ॥

**ननु ध्वस्तस्य मिथ्यात्वसिद्धिः कथमिहेष्यते ॥**
**नैवं दृष्टत्वतः सिद्धेर्दृष्टे नानुपपन्नता ॥ ४९२ ॥**

क्षणवादे विनष्टानामित्यत्रोक्तं चोद्यमादत्ते । **नन्विति** । भ्रान्तार्थग्राहको बाधधीकालेऽपि नष्टोऽनष्टो वा नाऽऽद्योऽसतस्तन्मिथ्यात्वबुद्ध्यसिद्धेर्न चान्यस्य तद्धीरदृष्टे रजतादावन्यस्यौदासीन्यान्न द्वितीयः क्षणभङ्गभङ्गादित्यर्थः । बाधान्मिथ्यात्वं तोयादौ दृष्टत्वादेष्टव्यं न हि दृष्टेऽनुपपन्नं नाम दृष्टैवानुपपत्तेरपहस्तितत्वादिति समाधत्ते । **नैवमिति** ॥ ४९२ ॥

**बाह्यवादेऽपि मिथ्यात्वं ज्ञानबाधेन जायते ॥**
**स्थिरस्यैव हि मिथ्यात्वं न चेदं राजशासनम् ॥ ४९३ ॥**

बाधान्मिथ्यात्वस्य तेऽपि संमतत्वाच्च नानुपपत्तिरुद्भाव्येत्याह । **बाह्येति** । बाधान्मिथ्यात्वं स्थिरस्येति विशेषमाशङ्क्याऽऽह । **स्थिरस्येति** । एकसंततिपतितज्ञानानां कल्पितैकत्वाङ्गीकाराद्भ्रान्ततोयादेर्बाधकाले कल्पितैकत्वभाङ्गिज्ञानेन मिथ्यात्वं सिध्यति न च तादृशज्ञानत्वे सति स्थिरत्वाभावकृतो मिथ्यात्वबुद्ध्यभावस्तस्मात्क्षणिकत्वेऽपि ग्राहकादेर्घटादिमिथ्यात्वमविरुद्धमिति भावः ॥ ४९३ ॥

**इत्यादिकल्पनाः प्रत्यगैकात्म्याज्ञानहेतुजाः ॥**
**विभीषिका इमाः सर्वा वेदवर्त्मानुगामिनाम् ॥ ४९४ ॥**

पूर्वपक्षमुपसंहरति । **इत्यादीति** । इतिशब्दो यथोक्तकल्पनापरामर्शार्थः । सर्वे हि

१ ख. स्थिरत्वे । २ क. ख. °र्थबाधको । ३ क. घ. °स्तस्मिन्मि° । ४ ख. °स्यैवेह मि° । ५ क. ख. °त्वभागिज्ञा° । ६ घ. °ने मि° ।

स्कन्धपञ्चकात्मकं संस्कृतं क्षणिकं च । रूपविज्ञानवेदनासंज्ञासंस्काराः स्कन्धाः । न च स्थायी कश्चिद्भावोऽध्यक्षानुमानाभ्यां तत्क्षणिकत्वसिद्धेः । अध्यक्षं तावद्वर्तमानग्राहिपूर्वोत्तरव्यवच्छेदकम् । **यथाऽऽह**—

"वस्तुतां हि परिच्छिन्ददवच्छिन्ददवस्तुताम् ।
तद्बाह्यासंभवं शंसद्वस्तुज्ञानं प्रवर्तते" इति ॥

अनुमानमपि तन्निश्चायकम् । **उक्तं हि**—

"यत्सत्तत्क्षणिकं सर्वमिति व्याप्तिः प्रतीयते ।
सत्त्वमक्षणिके बाधात्क्षणिकं नियतं यतः" इति ॥

आत्मानात्मप्रकाशनशक्तिः प्रमाणमस्यार्थप्रमितिः फलं तयोर्न वस्तुतो भेदो न च क्रिया करणादतिरिच्यते । **यथाऽऽह**—

"क्षणिकाः सर्वसंस्कारा अस्थिराणां कुतः क्रियाः ।
भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते" इति ॥

अनुमानं द्विविधं स्वार्थं परार्थं च । त्रिरूपलिङ्गादनुमेयज्ञानं स्वार्थं त्रिरूपलिङ्गाख्यानं परार्थम् । अन्वयव्यतिरेकपक्षधर्मताख्यत्रिरूपवन्ति चत्वारि लिङ्गानि कार्यकारणस्वभावानुपलब्ध्याख्यानीत्येवंप्रकाराः कल्पना आदिशब्देनोच्यन्ते । तासां मूलमाह । **प्रत्यगिति** । किंच वेदा न प्रमाणं मिथोविरुद्धार्थत्वान्न च शब्दार्थसंबन्धः संकेतादन्योऽस्ति । **यथाऽऽह**—

"शब्दाः संकेतितं प्राहुर्व्यवहाराय स स्मृतः" इति ।

न चाऽऽकृतिः शब्दार्थस्तदभावान्न व्यक्तेर्भेदाभेदाभ्यां सा संभवत्यपोहस्तु तदर्थः । **उक्तं हि**—

"धियं वस्तुपृथग्भावमात्रबीजमनर्थिकाम् ।
जनयत्यथ तत्कारिपरिहाराङ्गभावतः ॥
वस्तुभेदाश्रयाच्चार्थे न विसंवादिका मता ।
ततोऽन्यापोहविषया तत्कर्त्राश्रितभावतः" इति ॥

न च तन्नित्यत्वमपौरुषेयत्वं च वाक्यत्वेन वैपरीत्यादिकल्पनाभेदानभिप्रेत्य पूर्वपक्षे दोषं संभावयति । **विभीषिका इति** ॥ ४९४ ॥

**विभीषिकानिषेधार्थमत्र प्रतिविधीयते ॥**
**बाह्यार्थवादिदोषोक्तिस्तत्र तावदिहोच्यते ॥ ४९५ ॥**

संभावितदोषप्रकटनं प्रतिजानीते । **विभीषिकेति** । तत्र सौत्रान्तिकवैभाषिकयोगाचारमाध्यमिकानां मध्ये यौ बाह्यार्थवादिनावाद्यौ तौ प्रति दोषोक्तिस्तावत्क्रियते न स्वात्मानवभासकत्वाद्घटादेरित्यादिभाष्येणाऽऽह । **बाह्येति** ॥ ४९५ ॥

स्वात्मावभास्यः कुम्भादिर्दीपादिश्चापि नान्यतः ॥
इत्यादेर्न्यायबाह्यत्वं यथा तदभिधीयते ॥ ४९६ ॥

यत्तु मानाभावाद्बुद्ध्यतिरिक्तो नाऽऽत्माऽस्तीति तन्निरसितुं बाह्यार्थवादस्यायुक्तत्वं प्रतिजानीते । **स्वात्मेति** । ज्ञानावभास्योऽपि दीपादित्यादिः स्वात्मनाऽवभास्यते कुम्भादिश्च सालोकस्तद्भास्योऽपि स्वेनावभास्यो नाऽऽलोकान्तरमपेक्षते तथा बुद्धिरपि स्वभास्यैवेत्यतिरिक्तात्मासिद्धिः प्रत्यक्षमनुमानं च प्रमाणे न शब्दादीत्यस्य पक्षस्य न्यायशून्यत्वमादौ प्रदर्श्यत इत्यर्थः । आदिपदं दार्ष्टान्तिकार्थम् ॥ ४९६ ॥

स्वात्मावभास्यो बाह्योऽर्थ इत्येतदसमञ्जसम् ॥
नानन्यव्यञ्जकत्वं स्याद्यस्मात्कुम्भादिवस्तुनः ॥ ४९७ ॥

कथमयं पक्षो न्यायहीन इत्याशङ्क्य भाष्यस्थनञर्थमाह । **स्वात्मावभास्य इति** । बाह्यार्थ आलोकव्याप्त इति शेषः । तत्र हेतुमाह । **नेति** ॥ ४९७ ॥

तमस्यवस्थितः कुम्भः स्वात्मना नावभासते[1] ॥
तदन्यदीपयोगे तु नियमेनावभासते[2] ॥ ४९८ ॥

यदवभास्यं तत्स्वातिरिक्तावभास्यमिति व्याप्तिं घटे प्रकटयति । **तमसीति** । तस्यानवभास्यत्वं स्वरूपमिति चेन्नेत्याह । **तदन्येति** ॥ ४९८ ॥

संश्लिष्टयोरपि तयोरन्यत्वमिति निश्चयः ॥
संयोगे च वियोगे[3] च विशेषस्य समीक्षणात् ॥ ४९९ ॥

सालोको घट इति संश्लेषदर्शनान्नातिरिक्तावभास्यत्वं तस्येत्याशङ्क्याऽऽह । **संश्लिष्टयोरिति** । तयोरन्यत्वनिश्चये हेतुमाह । **संयोगे चेति** ॥ ४९९ ॥

अन्यत्वमेव विज्ञेयमालोकघटयोस्ततः ॥
रज्जुकुम्भादिवन्नैक्यं विशेषस्य समीक्षणात् ॥ ५०० ॥

व्याप्तिं निगमयति । **अन्यत्वमिति** । ततो विशेषस्य समीक्षणादिति संबन्धः । कुम्भस्याऽऽलोकसंयोगवियोगौ ततःशब्दार्थौ । यद्भास्यं तत्स्वातिरिक्तभास्यं यथा घटो भास्या चेयं धीरित्यनुमानं विवक्षति । **रज्ज्वति** । नैक्यं बुद्धितदवभासकयोरिति शेषः । विशेषस्यावभासकसंबन्धे तदसंबन्धे च बुद्धिनिष्ठस्येत्यर्थः ॥ ५०० ॥

ननु दीपः स्वमात्मानं स्वात्मनैवावभासयन् ॥
दृष्टो दीपप्रकाशार्थं न हि दीपान्तराहृतिः ॥ ५०१ ॥

व्यभिचारं शङ्कते । **नन्विति** । स्वात्मावभासकत्वं विशदयति । **दीपेति** ॥ ५०१ ॥

नावभास्यत्वतुल्यत्वाद्दीपस्यापि घटादिभिः ॥
घटवन्नाऽऽत्मनाऽऽत्मानं प्रकाशयति दीपकः ॥ ५०२ ॥

---

1 ख. ग. °भास्यते । 2 ख. ग. °भास्यते । 3 ख. ग. विभागे ।

व्यभिचारं वारयति । नेत्यादिना ॥ ५०२ ॥

घटप्रदीपयोस्तावद्व्यङ्ग्यव्यञ्जकसंगतिः ॥
तदन्यात्मैकनिर्ग्राह्या प्रत्यक्षेणानुभूयते ॥ ५०३ ॥

यो भास्यः स स्वेतरभास्यो यथा घटो भास्यश्चायमित्युक्ते दृष्टान्ते विप्रतिपत्तिमाशङ्क्योक्तं स्मारयति । घटेति ॥ ५०३ ॥

व्यतिरिक्तात्मविज्ञानव्यङ्ग्यत्वं घटवन्न सः ॥
दीपो व्यभिचरत्यत्र तच्चाप्यनुभवाश्रयात् ॥ ५०४ ॥

प्रत्यक्षतो दृष्टान्तं संसाध्य दार्ष्टान्तिकमाह । व्यतिरिक्तेति । अत्रेति व्यवहारदशोक्तिः । यथा घटादेः स्वेतरालोकभास्यत्वं प्रत्यक्षं तथा तस्यापि स्वान्यज्ञानभास्यत्वं ततो निश्चितमित्याह । तच्चेति ॥ ५०४ ॥

एवं च सति दीपादेर्भिन्नजातीयचेतन—
व्यङ्ग्यत्वं घटवत्तावदवश्यंभावि गम्यताम् ॥ ५०५ ॥

व्याप्तिसिद्धावुक्तमनुमानं युक्तमिति फलितमाह । एवं चेति ॥ ५०५ ॥

ननु कुम्भादिवैधर्म्यं प्रदीपस्य समीक्ष्यते ॥
नाऽऽत्माभिव्यक्तये दीपो ह्यन्यमापेक्षते स्वतः ॥ ५०६ ॥

दीपस्य स्वेतरावभास्यत्वेऽपि तेनैव भास्यतेत्यनियमाद्व्यभिचारतादवस्थ्यमिति शङ्कते । नन्विति । वैधर्म्यं विभजते । नाऽऽत्मेति । स्वतोऽन्यमिति संबन्धः । न हि प्रकाशस्य प्रकाशान्तरसापेक्षत्वं समत्वादिति हिशब्दार्थः ॥ ५०६ ॥

व्यनक्ति नाऽऽत्मनाऽऽत्मानं प्रदीपो घटवत्सदा ॥
स्वतो वा परतो वाऽस्य विशेषाभावहेतुतः ॥
विशेषेऽसत्यसाध्वेतद्भवतोदाहृतं वचः ॥ ५०७ ॥

न स्वत इत्यादिभाष्येणोत्तरमाह । व्यनक्तीति । दीपस्य स्वावभासनात्पूर्वमसन्विशेषो ह्युत्तरकाले स्यात्तदा स स्वात्मानं भासयतीति युक्तं न च दीपे स्वस्मादन्यस्माद्वा स्वावभास्यत्वोपयोगी विशेषो दृष्टोऽस्ति च तस्मिन्दीपः स्वात्मानं भासयतीति वचो मृषेत्यर्थः ॥ ५०७ ॥

दीपस्य घटवद्यस्माद्भिन्नविज्ञानगम्यता ॥
घटाद्यर्थाविशिष्टत्व यत्त्वेतदभिधीयते ॥ ५०८ ॥
दीपोऽयमात्मनाऽऽत्मानं व्यनक्तीति न तच्छुभम् ॥
प्रागूर्ध्वं तदभिव्यक्तेर्विशेषस्यासमीक्षणात् ॥ ५०९ ॥

दीपस्य स्वेनाभास्यत्वे हेत्वन्तरमाह । दीपस्येति । तस्मान्न स्वप्रकाश्यतेति शेषः ।

दीपस्य स्वभास्यत्वाभावे परोक्तेरसाधुत्वं युक्तमिति निगमयति । **यत्त्विति** । तत्रोक्तमेव हेतुमाह । **प्रागिति** ॥ ५०८ ॥ ५०९ ॥

**प्रदीपासंनिधौ यद्वत्कुम्भस्य प्रसमीक्ष्यते ॥**
**संनिधौ च विशेषो न प्रदीपे तद्वदीक्ष्यते ॥ ५१० ॥**

विशेषादृष्टिं वैधर्म्यदृष्टान्तेन स्पष्टयति । **प्रदीपेति** । दीपासंनिधावसन्कुम्भस्य तत्संनिधौ च सन्विशेषस्तमोध्वंसो न तथा दीपे विशेषो मानाभावादित्यर्थः ॥ ५१० ॥

**आत्मत्वान्न हि दीपस्य कुम्भादेरिव संनिधिः ॥**
**असंनिधिर्वा न्याय्योऽयं भेदेऽसौ द्रव्ययोर्यतः ॥ ५११ ॥**

दीपस्य स्वात्मसंनिध्यसंनिधी विशेषान्तराभावेऽपि विशेषावित्याशङ्क्याऽऽह । **आत्मत्वादिति** । कुत्र तर्हि संनिधिरसंनिधिर्वा स्यादिति तत्राऽऽह । **भेद इति** । द्रव्ययोर्दीपघटयोरित्यर्थः । अतो नैकत्रैव ताविति शेषः ॥ ५११ ॥

**एकाभिव्यक्तेर्न यथा दाह्यदग्धृत्वसंगतिः ॥**
**द्वयोरपि समानत्वाद्व्यङ्ग्यव्यञ्जकता तथा ॥ ५१२ ॥**

दीपस्य दीपान्तरभास्यत्ववद्बुद्धेरपि सजातीयभास्यत्वोपपत्तेर्नेष्टात्मसिद्धिरित्याशङ्क्याऽऽह । **एकाग्नीति** । अपिशब्दो नञाकर्षणार्थः ॥ ५१२ ॥

**यत एवमतोऽसाधु भवतैतदुदाहृतम् ॥**
**अभिव्यनक्ति दीपोऽयमात्मनाऽऽत्मानमस्ववत् ॥ ५१३ ॥**

दीपस्य स्वेनान्येन वा स्वस्मिन्विशेषाभावे फलितमुपसंहरति । **यत इति** । अस्ववत्स्वेतरघटादिवदित्यर्थः ॥ ५१३ ॥

**विज्ञानमपि तद्भिन्नजातिचिद्ग्राह्यमिष्यताम् ॥**
**व्यञ्जकत्वाविशेषत्वाद्रविचन्द्रप्रदीपवत् ॥ ५१४ ॥**

व्यभिचारं निरस्य भास्यत्वानुमानं संसाध्यानुमानान्तरमाह । **विज्ञानमिति** । यद्व्यञ्जकं तत्स्वविजातीयव्यङ्ग्यं यथा सूर्यादि व्यञ्जकं चेदमित्यर्थः ॥ ५१४ ॥

**संचेत्यते यथा दीपो विज्ञानमपि तत्तथा ॥**
**संशयो निश्चयश्चायमित्येतच्चानुभूतितः ॥ ५१५ ॥**

यद्ग्राह्यं तद्ग्राहकान्तरग्राह्यं यथा दीपो ग्राह्यं चेदमित्यनुमानान्तरमाह । **संचेत्यत इति** । न च भास्यत्वेन पुनरुक्तिर्ज्ञानप्रकाश्यत्वस्यात्र हेतुत्वात्प्रकाश्यत्वमात्रं तु भास्यतेति भावः । तस्य संचेत्यमानत्वं साधयति । **संशय इति** ॥ ५१५ ॥

**चिद्व्यङ्ग्यत्वे च बोधस्य साक्षादवधृते सति ॥**
**किं ग्राह्यज्ञानगम्यत्वं किंवा ग्राहकगम्यता ॥ ५१६ ॥**

ग्राह्यत्वेऽपि तस्य कथं त्वदिष्टग्राहकसिद्धिरित्याशङ्क्य विमृशति । चिदिति । प्रकृतं ज्ञानं बोधशब्दार्थः ॥ ५१६ ॥

**तत्र संदिह्यमानेऽर्थे यथालोकं विनिश्चितिः ॥**
**लोके सिद्धा च दीपादेर्भिन्नग्राहकगम्यता ॥ ५१७ ॥**

कथं तर्हि निर्णयस्तत्राऽऽह । तत्रेति । अस्तु लोकानुसारी निश्चयो लोकस्तु कथमित्याशङ्क्याऽऽह । लोक इति ॥ ५१७ ॥

**ग्राहकग्रहणग्राह्यभावाभावविभागवित् ॥**
**ग्रहणादेश्च यो भिन्नः स आत्मेत्यवगम्यताम् ॥ ५१८ ॥**

विज्ञानस्यान्यचैतन्यग्राह्यत्वेऽपि कथमिष्टसिद्धिस्तत्राऽऽह । ग्राहकेति ॥ ५१८ ॥

**ननु ज्ञानादिगम्यत्वे ज्ञानाद्यन्तरसंश्रयात् ॥**
**अनवस्थेति दुर्वारा नैष दोषः कुतो यतः ॥ ५१९ ॥**

अनवस्थाचतुष्टयमाशङ्कते । नन्विति । दूषयति । नेति । तत्र हेतुं पृच्छति । कुत इति । यतो वक्ष्यते हेतुरतो न सेत्याह । यत इति ॥ ५१९ ॥

**स्वतो हि ग्राहकादीनां ग्राहकत्वादिसिद्धितः ॥**
**ग्राहकाद्यन्तरापेक्षा नैव स्यादविशेषतः ॥ ५२० ॥**

हेतुं स्पष्टयति । स्वत इति । स्वस्मात्कूटस्थबोधात्प्रतीचो मात्रादीनां स्वरूपस्फूर्तिर्न मात्रादेरेव तत्सिद्धिरालोकवदतिशयाभावान्नानवस्था साक्षिणः स्वप्रकाशस्य साधकान्तरानपेक्षत्वादित्यर्थः ॥ ५२० ॥

**स्वमहिम्नैव चेन्न स्याद्ग्राहकादि ततोऽन्यतः ॥**
**न स्यादतिशयाभावाद्ग्राहकाद्यन्तरादपि ॥ ५२१ ॥**

कूटस्थचैतन्यवशादेव मात्रादिसिद्धिर्न मात्राद्यन्तरादविशेषादित्युक्तं प्रकटयति । स्वमहिम्नेति । स्वस्य प्रतीचो महिमा तदाभासस्तेन चेद्ग्राहकादि न सिध्येन्न ग्राहकाद्यन्तरादपि समानत्वेनातिशयाभावादित्यर्थः ॥ ५२१ ॥

**ननु ज्ञानस्य तद्भिन्नग्राहकग्रहणे सति ॥**
**करणान्तरस्यापेक्षायामनवस्था प्रसज्यते ॥ ५२२ ॥**

ग्राहकग्रहणद्वारकमनवस्थाद्वयं परिहृत्य करणद्वारिकामनवस्थामुद्भावयति । नन्विति । चक्षुरादिकरणकं ज्ञानमन्यज्ज्ञेयं चेत्तस्य करणान्तरं वाच्यं तस्यापि ज्ञानस्यान्यज्ञेयत्वेऽन्यत्करणं च वक्तव्यं ग्राह्यग्राहकाभ्यामर्थान्तरस्य करणस्याऽऽवश्यकत्वान्न च चिदाभासस्तदनपेक्षस्तस्यास्वरूपत्वे तदपेक्षाध्रौव्यादित्यनवस्थेत्यर्थः ॥ ५२२ ॥

१ क. 'कत्वास' । २ ध. 'ण त' ।

**नियमाभावतो नासावनवस्था प्रसज्यते ॥**
**ग्राह्यग्राहकसंबन्धे नियमो न हि वीक्ष्यते ॥ ५२३ ॥**

परिहरति । **नियमेति** । नियमाभावे मानाभावं हेतुमाह । **ग्राह्येति** । नियमोऽतिरिक्तकरणस्येति शेषः ॥ ५२३ ॥

**ग्राह्यग्राहकसंभिन्नं[1] दीपवत्करणान्तरम् ॥**
**यथा सर्वत्र नैवं स्याद्ग्राह्यग्राहकसंगतौ ॥ ५२४ ॥**

उक्तं वैधर्म्यदृष्टान्तेन स्पष्टयति । **ग्राह्यग्राहकेति** । घटाच्चक्षुषश्च विलक्षणं दीपाख्यं करणं घटचक्षुःसंबन्धे यथोपलक्ष्यते नैवं सर्वत्र ग्राह्यग्राहकयोः संबन्धे करणान्तरं नियन्तुं शक्यं पदार्थवैचित्र्यादित्यर्थः । वतिः स्वरूपविषयः ॥ ५२४ ॥

**घटस्य दर्शनं तावत्प्रदीपादिपुरःसरम् ॥**
**प्रदीपवीक्षणे नैव प्रदीपान्तरमार्गणम् ॥ ५२५ ॥**

कथं पदार्थवैचित्र्यान्नियमभञ्जनमित्याशङ्क्याऽऽह । **घटस्येति** ॥ ५२५ ॥

**तस्मान्नैवानवस्थेह कथंचिदपि शङ्क्यते ॥**
**करणद्वारिका नापि ग्राहकद्वारिका तथा ॥ ५२६ ॥**

अनवस्थाभावमुपसंहरति । **तस्मादिति** । इहेति बुद्ध्यादेः साक्षिवेद्यत्वोक्तिः । कथंचिदपीत्युक्तं व्यनक्ति । **करणेति** । कार्यद्वारिकामनवस्थां समुच्चेतुमपिशब्दः । फलद्वारिकां तां समुच्चेतुं तथेत्युक्तम् ॥ ५२६ ॥

**ग्राहकाद्यतिरेकेण तद्विरुद्धात्मवस्तुनः ॥**
**सद्भावं प्रागवोचाम प्रत्यक्षैकप्रमाणतः ॥ ५२७ ॥**

ज्ञात्रादिचतुष्टयातिरिक्तस्तत्साक्षी मानाभावान्नास्तीत्याशङ्क्याऽऽह । **ग्राहकादीति** । प्रागिति संबन्धग्रन्थाद्युक्तिः । प्रत्यक्षं स्वानुभवः ॥ ५२७ ॥

**प्रत्यक्षादनुमानाच्च तथा चैवाऽऽगमादपि ॥**
**ग्राहकाद्यतिरिक्तश्चित्सिद्धस्तत्साक्ष्यतः परः ॥ ५२८ ॥**

तत्र विवदमानं प्रत्याह । **प्रत्यक्षादिति** । विद्वदनुभवाद्ब्राह्मणादावुक्तानुमानात्तत्र तत्र व्याख्यायमानागमाच्च ज्ञात्राद्यतिरिक्तस्तत्साक्षी परश्चित्स्वभावः सिद्धोऽतो न तस्मिन्विवदितव्यमित्यर्थः ॥ ५२८ ॥

**लोकायतविचारेऽपि प्रत्यक्षैकप्रमाणतः ॥**
**स्वतोऽलुप्तदृशोऽस्तित्वं प्राक्साक्षात्प्रतिपादितम् ॥ ५२९ ॥**

अनुमानादावपि विप्रतिपन्नं प्रत्याह । **लोकायतेति** । प्रत्यक्षस्यैकस्येष्टमानस्य मान-

---

१ क. ग. 'भिन्नदी' ।

त्वासिद्ध्यर्थं तदर्थाज्ञातत्वसाधको नित्यानुभवोऽभ्युपेय इति साधितं सर्वतीर्थदृशामित्यादावित्यर्थः । अनुमानादिविवादश्च निरस्तस्तत्रैवेति वक्तुं द्वितीयोऽपिशब्दः ॥ ५२९ ॥

अन्तरेणापि मानानि प्रमातृत्वादिसाक्षितः ॥
कूटस्थदृष्टेरस्तित्वं प्रागपि प्रतिपादितम् ॥ ५३० ॥

मानगम्यत्वे घटादिवन्न साक्षितेत्याशङ्क्याऽऽह । **अन्तरेणेति** । मानमन्तरेणापि कूटस्थदृष्टेरस्तित्वं मात्रादिसाक्षितया स्वतः सिद्धेरित्यव्याकृतविचारादावुक्तं वक्ष्यते चेत्यर्थः ॥ ५३० ॥

बाह्यार्थवादिनि ध्वस्ते तद्वद्विज्ञानवाद्यथ ॥
ननु नास्त्येव बाह्योऽर्थ इति प्रत्यवतिष्ठते ॥ ५३१ ॥

बाह्यार्थवादिनिरासेनाऽऽत्मा बुद्ध्यतिरिक्तः साधितोऽधुना विज्ञानवादमवतारयति । **बाह्येति** । सौत्रान्तिकादिप्रत्यवस्थानस्य निरस्यत्ववद्योगाचारस्य प्रत्यवस्थानस्यापि तुल्यं निरस्यत्वमिति द्योतयितुं तद्वदित्युक्तम् । शारीरकेऽपि बाह्यार्थवादे निरस्ते विज्ञानवादनिरासात्प्रत्यवस्थानक्रमसिद्धिरितिक्रमप्रतिपत्त्यर्थोऽथशब्दः ॥ ५३१ ॥

ननु नास्त्येव बाह्योऽर्थो घटदीपादिलक्षणः ॥
विज्ञानव्यतिरेकेण तस्य मानासमीक्षणात् ॥ ५३२ ॥

प्रत्यवस्थानं प्रकटयति । **नन्विति** । तत्र हेतुः । **तस्येति** ॥ ५३२ ॥

यद्धि यद्व्यतिरेकेण वस्तु नेहोपलभ्यते ॥
तावदेवास्तु तद्वस्तु स्वप्नभूमिगवस्तुवत् ॥ ५३३ ॥

व्यतिरेके मानाभाववदव्यतिरेकेऽपि तदभावमाशङ्क्याऽऽह । **यद्धीति** । इहेति जाग्रद्व्यवहारोक्तिः । यद्यद्व्यतिरेकेणानुपलब्धं तत्तन्मात्त्वतो न भिन्नं यथा स्वाप्नोऽर्थो ज्ञानातिरेकेणानुपलब्धश्च बाह्योऽर्थ इत्यर्थः ॥ ५३३ ॥

स्वप्नविज्ञाननिर्ग्राह्यं स्वप्नज्ञानातिरेकतः ॥
नास्ति वस्तु यथा तद्वज्जाग्रद्बाह्यार्थवस्त्वपि ॥ ५३४ ॥

साध्यवैकल्यमाशङ्क्याऽऽह । **स्वप्नेति** । अनुमानं निगमयति । **तद्वदिति** । जाग्रज्ज्ञानातिरेकेणानुपलब्धत्वात्ततोऽन्यन्नास्तीति शेषः ॥ ५३४ ॥

जाग्रत्कुम्भादिकं वस्तु जाग्रज्ज्ञानातिरेकतः ॥
न सत्यं ग्राह्यतः स्वप्नज्ञानग्राह्यघटादिवत् ॥ ५३५ ॥

ग्राह्यत्वहेतुकमनुमानान्तरमाह । **जाग्रदिति** । यद्ग्राह्यं तन्न वस्तुतो ज्ञानातिरिक्तं यथा स्वप्नग्राह्यं ग्राह्यं चेदमित्यनुमानान्न जाग्रज्ज्ञानातिरिक्तं कुम्भादि वस्त्वस्तीत्यर्थः ॥ ५३५ ॥

---

१ क. ख. 'वादीन' । २ क. ख. तुल्यमि' ।

**एवं च सति विज्ञानव्यतिरेकेण कुम्भवत् ॥**
**अपि प्रतीचोऽसत्त्वं स्याज्ज्योतिषः स्थास्नुरूपिणः ॥ ५३६ ॥**

घटाद्यर्थो ज्ञानातिरिक्तो मा भूदात्मा त्वतिरिक्तो भविष्यतीत्याशङ्क्याऽऽह । **एवं चेति** । ज्ञानमात्रं सर्वमिति स्थिते सति घटादिवत्क्षणिकज्ञानातिरेकेणाऽऽत्माऽपि स्थायी नास्तीत्यर्थः ॥ ५३६ ॥

**बाह्यार्थेऽपहृते चैवं प्रदीपादेरसंभवात् ॥**
**दृष्टान्तो भवतः कः स्यात्कामितार्थप्रसिद्धये ॥ ५३७ ॥**

ननु धीः स्वातिरिक्तभास्या भास्यत्वाद्दीपवदित्युक्तानुमाने जाग्रति कथमात्माऽतिरिक्तोऽपह्नूयते तत्राऽऽह । **बाह्येति** । कामितार्थो बुद्ध्यतिरिक्तः प्रत्यगात्मा तद्दृष्ट्यर्थमिति यावत् ॥ ५३७ ॥

**वस्त्वन्तराभ्युपगमाज्ज्ञानतो ज्ञानवत्त्वया ॥**
**दृष्टान्तोऽस्त्येव नो भूयान्न चेन्न भवतोऽप्यसौ ॥ ५३८ ॥**

सिद्धान्तयति । **वस्त्वन्तरेति** । यथा त्वया बाह्यार्थातिरिक्तं ज्ञानमिष्टं तथा ज्ञानातिरिक्तस्य घटदीपादेरप्यभ्युपगमादस्माकमतिरिक्तात्मसाधने दृष्टान्तः सुलभोऽस्त्येव ज्ञानादन्योऽर्थस्त्वया नेष्यते चेज्ज्ञानमात्रं सर्वं स्वप्नवदिति भवतोऽपि न सिध्यति दृष्टान्ताभावादित्यर्थः ॥ ५३८ ॥

**धीमानाज्ज्ञानमेवेदमभ्युपेत्य ततोऽपरम् ॥**
**जाग्रत्स्वप्नादिकं वस्तु तन्मिथ्येति निषिध्यते ॥ ५३९ ॥**

कथं विज्ञानवादिना वस्त्वन्तरमिष्टं तत्राऽऽह । **धीमानादिति** । ततो ज्ञानादन्यद्भासमानं जागरादिकं वस्तु यथाभानमुपेत्य धीरूपान्मानाज्ज्ञानमेवेदं[1] वस्त्विति प्रसाध्य बहिर्भासमानं मिथ्येति भवता बाह्यं वस्तु निषिध्यते । **उक्तं हि—**

"तस्यां यद्रूपमाभाति बाह्यमेकमिवान्यतः ।
व्यावृत्तमिव निस्तत्त्वं परीक्षानङ्गभावतः" इति ।

न हि ज्ञानस्यैव तन्मात्रत्वं मिथ्यात्वं वो साध्यते सिद्धसाध्यत्वाद्बाधाच्च तदन्यस्य मिथ्यात्वं तदस्त्यतिरिक्तमित्यर्थः ॥ ५३९ ॥

**भावो वा यदि वाऽभावो ज्ञानवन्माननिश्चितः ॥**
**नास्तीति ब्रुवतो लज्जा धार्ष्ट्यादेव न जायते ॥ ५४० ॥**

बाह्यार्थस्य मिथ्यात्वमसत्त्वमतो न तदस्तितेत्याशङ्क्याऽऽह । **भावो वेति** । ज्ञानवज्ज्ञानविषयतया तद्भासमानो घटदीपादिर्भावोऽभावो वाऽस्तु स प्रत्यक्षो नास्तीति ब्रुवन्नात्मनो निर्लज्जत्वं प्रकटयति ज्ञानस्यापि नास्तित्वप्रसङ्गात् । **यथाऽऽह—**

---

१ घ. °मेव चेदं । २ घ. च ।

"धर्मधर्मिव्यवस्थानं भेदोऽभेदश्च यादृशः ।
असमीक्षिततत्त्वार्थो यथा लोके प्रतीयते" इति ।

तन्न बाह्यार्थापलाप इत्यर्थः ॥ ५४० ॥

**अपि ज्ञानातिरेकेण बाह्योऽर्थोऽभ्युपगम्यते ॥**
**दीपकुम्भादिको बुद्धैर्व्यवहारप्रसिद्धये ॥ ५४१ ॥**

इतश्च न तदपलाप इत्याह । **अपीति** । बुद्धैरपीति संबन्धः ॥ ५४१ ॥

**सर्वस्य ज्ञानमात्रत्वान्ननु नाभ्युपगम्यते ॥**
**मया ज्ञानातिरेकेण तन्मानासंभवादिह ॥ ५४२ ॥**

अभ्युपगममाक्षिपति । **सर्वस्येति** । इहेति मानभूमिरुक्ता । **उक्तं हि**—

"ज्ञानाद्व्यतिरिक्तं च कथमर्थान्तरं व्रजेत् ।
तस्मान्मिथ्याविकल्पोऽयमर्थेष्वेकात्मताग्रहः" इति ॥ ५४२ ॥

**ज्ञानं घटो दीप इति शब्दार्थज्ञानभित्तये ॥**
**अवश्यमभ्युपेयोऽत्र भेदो मानप्रमेययोः ॥ ५४३ ॥**

दूषयति । **ज्ञानमिति** । अत्रेति व्यवहारदशोक्तिः । अन्यथा शब्दार्थभेदाभावान्मिथोव्यवहारसंकरप्रसक्तौ दहनादिपदोदाहरणे देहदाहादि स्यादिति भावः ॥५४३॥

**प्रमाणं भवता वाच्यं भेदाभेदत्वसिद्धये ॥**
**नाऽऽवयोर्निष्प्रमाणोक्तं यतः संगच्छते सुधीः ॥ ५४४ ॥**

इतश्च भेदस्तयोरिति वक्तुं भूमिकामाह । **प्रमाणमिति** । ज्ञानार्थयोर्भेदं वदता सिद्धान्तिना तत्र मानं वाच्यं भवताऽपि तदभेदवादिना तत्र तथैवेत्यर्थः । तत्र हेतुः । **नाऽऽवयोरिति** ॥ ५४४ ॥

**मामेयसंगतिफलभित्त्यभ्युपगमस्त्वया ॥**
**कार्य ऐक्ये यतोऽमीषां व्यवहारो न सिध्यति ॥ ५४५ ॥**

अभेदे मानाभावं मन्वानो भेदे तदाह । **मामेयेति** । मानमेययोस्तद्विषयविषयित्वकृतफलस्य मातुश्च मिथो भेदस्त्वयेष्टव्यस्तेषामैक्ये सत्यसंकीर्णव्यवहारासिद्धेरतस्तदनुपपत्तिस्तद्भेदे मानम् । **यथाऽऽह**—

"तत्तथैव समाश्रित्य साध्यसाधनसंस्थितिः ।
परमार्थावताराय विद्वद्भिरवकल्प्यते" इति ।

तदुपेयो भेदस्तेषामित्यर्थः ॥ ५४५ ॥

**उपादित्सन्ति मानानि ह्यज्ञातार्थोपलब्धये ॥**
**अतोऽभ्युपेयोऽज्ञातोऽर्थः प्रमाणत्वप्रसिद्धये ॥ ५४६ ॥**

---

१ घ. 'दव्यतिरिक्तश्च क' ।

तत्र हेत्वन्तरं वक्तुं संमतमर्थमाह । **उपादित्सन्तीति** । तदेतद्बहुशो दर्शितमिति हिशब्दार्थः । संमतमुक्त्वा विमतं हठादुपगमयति । **अत इति** । अज्ञातेऽर्थे मानप्रवृत्तिरतःशब्दार्थः । अज्ञात इति च्छेदः ॥ ५४६ ॥

**न च प्रमाणतः सिद्धिरज्ञातत्वस्य शक्यते ॥**
**अन्योन्याश्रयतादोषः सत्येवं प्रसजेद्यतः ॥ ५४७ ॥**

तस्य मेयत्वमाशङ्क्याऽऽह । **न चेति** । अज्ञातत्वस्य मेयत्वे सति मानप्रवृत्त्यर्थमज्ञातत्वमादौ ज्ञातव्यं तज्ज्ञानं च मानादिति दुरुत्तरमितरेतराश्रयत्वमित्याह । **अन्योन्येति** ॥ ५४७ ॥

**प्रमाणाच्च न तत्सिद्धिस्तस्य मानविरोधतः ॥**
**मानैश्चेदविरोधः स्यात्कुतोऽज्ञातत्वनिह्नुतिः ॥ ५४८ ॥**

तस्यामेयत्वे हेत्वन्तरमाह । **प्रमाणादिति** । मानविरोधं व्यतिरेकद्वारा साधयति । **मानैरिति** ॥ ५४८ ॥

**न स्वरूपेऽथवा स्वांशे मानमेयत्वसंभवः ॥**
**सर्वदाऽतिशयाभावाद्बोधाच्चाव्यतिरेकतः ॥ ५४९ ॥**

मानमेयभेदं साधयता कूटस्थोऽनुभवोऽज्ञातत्वादिसाधकोऽभ्युपेय इत्युक्तं तत्र न मानमेयभेद एकस्मिन्नेव ज्ञाने तदंशे वा मानमेयत्वयोगादिति बाह्यार्थापलापवादी मन्यते तं प्रत्याह । **नेत्यादिना** । आद्यप्रतिज्ञायां हेतुमाह । **सर्वदेति** । द्वितीयस्यां युक्तिमाह । **बोधाच्चेति** । अंशयोर्ज्ञानादभेदो भेदो वा नाऽऽद्यो मानमेयव्यवस्थासिद्धेर्न द्वितीयस्तद्भेदापत्तेरित्यर्थः ॥ ५४९ ॥

**प्रमाणं यदि विज्ञानं मेया नीलादिरूपता ॥**
**मिथस्तयोरपेक्षा का यत उक्तं प्रसिध्यति ॥ ५५० ॥**

मानमेयव्यवस्थामाशङ्कते । **प्रमाणमिति** । तर्हि तयोरन्योन्यमभेदाकाङ्क्षाभावाद्भेदाकाङ्क्षायाश्च सत्त्वात्त्वदुक्तमैक्यं न सिध्यतीत्याह । **मिथ इति** ॥ ५५० ॥

**आकारतद्वतोर्भेदो यदि नामाभ्युपेयते ॥**
**अस्तु कामं प्रमामेयसंगतिर्गम्यते कुतः ॥ ५५१ ॥**

व्यवहारावस्थायां नीलाद्याकारस्याऽऽकारिज्ञानस्य च भेदोपगतिमाशङ्कते । **आकारेति** । वयमपि तत्र तद्भेदमिच्छामो न परमार्थावस्थायां तदा तयोरभावादतोऽस्तूपगतिरित्यनुजानाति । **अस्त्विति** । व्यावहारिके भेदे स्वीकृते कथमिष्टात्मसिद्धिस्तत्राऽऽह । **प्रमेति** । नीलतद्धियोर्मानमेयत्वसंगतिरस्ति न सा स्ववेद्या ज्ञानमात्रत्वाभावान्नापि

---

१ क. ग. शङ्क्यते । २ घ. न स पं ।

स्वांशज्ञानसिद्धा तस्य स्वमात्रविषयत्वान्नापि ज्ञानान्तरात्सिद्धा ज्ञानस्यापि विशेषणत्वेन तद्विषयत्वे स्वसंवेदनत्वहानात्सर्वावित्तचैत्यानामात्मना संवेदनं स्वसंवेदनमित्युपगमात्त-स्मात्तत्साधककूटस्थबोधोपगतिरिति भावः ॥ ५५१ ॥

कार्यांशाद्यभिसंबन्धान्मानमेयत्वसंगतिः ॥
अन्यैव तु विभिन्नात्मा वस्तुनोर्मानमेययोः ॥ ५५२ ॥

नीलतद्धियोराकाराकारित्वं कार्यकारणत्वमंशांशित्वं वा मानमेयत्वसंगतिर्नाम सा च ज्ञानाभेदेन सेत्स्यति कृतं तत्साधकेन साक्षिणेत्याशङ्क्याऽऽह । कार्येति । मृद्धटयो-स्तन्तुपटयोर्दीपतदर्थयोश्च मानमेयत्वादृष्टेस्तत्संगतेरर्थान्तरत्वात्तत्साधकसाक्षिणा भाव्य-मित्यर्थः । किंच मानमेयत्वसंगतेस्तदन्यतमत्वेऽपि तत्साधकेन भाव्यं न हि ज्ञानाभेदेन तत्सिद्धिस्तस्यास्तन्मात्रत्वाभावादित्याह । विभिन्नेति । संगतिरन्यैवेति संबन्धः ॥५५२॥

मानांशो यस्य मेयः स्यान्मेयांशो वा भवेत्प्रमा ॥
संबन्धाभावतस्तस्य मानमेयौ न सिध्यतः ॥ ५५३ ॥

मानमेयसंगतिसाधकं साक्षिणं साधयता ज्ञानातिरिक्तो ग्राहको ग्राह्यश्चेत्युक्तम् । इदानीं मानमेयभेदे हेत्वन्तरमाह । मानेति । तयोरभेदे मानांश एव मेयो मेयांश एव मानमित्युक्तं स्यात्तदा मानमेयत्वासिद्धिरेकत्रासंबन्धादंशांशिनोरैक्यात्तस्माद्भेदस्तयोरि-त्यर्थः ॥ ५५३ ॥

मानमेयत्वयो रूपं यस्मान्नैवेह गम्यते ॥
मानमेयत्वसंसिद्धिर्नातस्तत्रोपपद्यते ॥ ५५४ ॥

यस्य तदभेदस्तस्य कथं भेद एकत्र तद्भावाभावानुपपत्तेरित्याशङ्क्योक्तं स्पष्टयति । मानमेयत्वयोरिति । सप्तमीभ्यां ज्ञानं गृह्यते ॥ ५५४ ॥

एकस्मिन्नपि चेन्मानमेयत्वादिप्रकल्पना ॥
साध्यानां साधनैकत्वादसाध्यासाधनात्मना ॥ ५५५ ॥

ज्ञानार्थभेदे हेत्वन्तरमाह । एकस्मिन्निति । आदिशब्देन कार्यकारणत्वांशांशित्व-कल्पना गृह्यते । साध्यसाधनयोरैक्ये साध्यस्य साध्यत्वं साधनस्य च साधनत्वं न सिध्यत्यन्योन्याभेदादित्यर्थः ॥ ५५५ ॥

फलानां साधनानां च भेदाभावे प्रसज्यते ॥
शास्त्रोपदेशानर्थक्यं तत्कर्तुश्चापि मूढता ॥ ५५६ ॥

साध्यसाधनाभेदे दोषान्तरमाह । फलानामिति । इदमस्य साधनमेतत्फलमिति भेदोपदेशास्तदभेदे निर्विषयस्तथाच योगिप्रत्यक्षं प्रकम्प्येतच्च सर्वं भवति निर्मूलं

१ घ. °त्वासिद्धिर्न° । २ क. ध. °स्यार्थे° । ३ क. ध. °मस° । ४ ख. ध. °यत्वसं° । ५ ग. °मेये न । ६ घ. °शित्वादिक°।

सर्वभवविरुद्धधर्मसाक्षात्कारित्वादिति प्रमत्तगीतमसदर्थोपदेशकर्ता चानाप्तः स्यादतः सर्वज्ञवचनार्थाविसंवादिज्ञानं प्रमाणमिति प्रलापमात्रमित्यर्थः ॥ ५५६ ॥

**विज्ञानव्यतिरेकेण प्रतिवाद्यादिवस्तुनः ॥**
**त्वदभ्युपगतेर्भेदः स्यात्प्रमाणप्रमेययोः ॥ ५५७ ॥**

मानमेयभेदं प्रसाध्य बाह्यार्थापलापायोगे हेत्वन्तरमाह । **विज्ञानेति** ॥ ५५७ ॥

**न ज्ञानमात्रमेवेदं भवताऽप्यभ्युपेयते ॥**
**प्रतिवाद्यादिकं वस्तु तस्य दूष्यत्वकारणात् ॥ ५५८ ॥**

तस्य तदतिरेकेण मदुपगतिरसिद्धेत्याशङ्क्याऽऽह । **नेति** । भवताऽपीति स्वदृष्टान्तार्थोऽपिशब्दः ॥ ५५८ ॥

**प्रतिवाद्यादिदूष्यस्य न स्वांशांशित्वसंगतौ ॥**
**निराकर्तुमभिप्रायः सुमूढस्यापि जायते ॥ ५५९ ॥**

दूष्यत्वेऽपि ज्ञानाभिन्नत्वमाशङ्क्याऽऽह । **प्रतिवाद्यादीति** । स्वशब्देनाऽऽत्मोच्यते । अंशत्वं स्वकीयत्वम् । अंशित्वं स्वरूपत्वम् । सुमूढस्यापीति कैमुतिकन्यायद्योतनम् ॥ ५५९ ॥

**भिन्नग्राहकसंवेद्यं घटदीपादि सद्ध्रुवम् ॥**
**जाग्रद्भूमिष्वतस्तस्य जाग्रत्स्थप्रतिवादिवत् ॥ ५६० ॥**

स्वरूपत्वेन स्वीयत्वेन वा संबन्धे दूष्यत्वानुपपत्तिमुक्त्वा फलितमनुमानमाह । **भिन्नेति** । स्वातिरिक्तग्राहकग्राह्यत्वसत्त्वेऽपि स्थायित्वं चेति प्रतिज्ञा द्रष्टव्या ॥ ५६० ॥

**संतत्यन्तरवद्यद्वा विज्ञानान्तरवत्तथा ॥**
**इत्येवमादि सौलभ्यं दृष्टान्तानामिहेष्यते ॥ ५६१ ॥**

किंच चैत्रसंतानेन मैत्रसंतानो व्यवहारादनुमीयते सर्वज्ञज्ञानेन चासर्वज्ञज्ञानानि ज्ञायन्ते तत्र भेदस्य तेऽपि सिद्धेस्तद्दृष्टान्तान्नीलादेस्तद्धियश्च भेदः शक्योऽनुमातुमित्याह । **संततीति** । इतिनाऽनन्तरोक्तदृष्टान्तद्वयं परामृष्टम् । एवमादिशब्देन पूर्वोक्तप्रतिवाद्यादिदृष्टान्तप्रकारोक्तिः । अतो दृष्टान्तानां ज्ञानार्थभेदे साध्ये यथोक्तनीत्या सौलभ्यमिति योजना ॥ ५६१ ॥

**विज्ञानव्यतिरेकेण नातो विज्ञानवादिना ॥**
**कूटस्थदृष्टिरात्मैको निषेद्धुं शक्यते परः ॥ ५६२ ॥**

अनुमानफलमाह । **विज्ञानेति** । ज्ञानार्थभेदस्य प्रामाणिकत्वादस्मदिष्टात्मा बुद्ध्यतिरिक्तो निषेद्धुं शक्यो न भवतीत्यर्थः ॥ ५६२ ॥

**ननु स्वप्ने न वस्त्वस्ति विज्ञानव्यतिरेकतः ॥**
**न जाग्रद्वस्तुवत्तस्याज्ज्ञानमात्रस्वरूपतः ॥ ५६३ ॥**

ज्ञानार्थभेदोक्त्या प्रत्यगात्माऽपि ज्ञानातिरिक्त उक्तः संप्रति विमतं ज्ञानाभिन्नं ग्राह्यत्वात्स्वप्नग्राह्यवदित्युक्तमनुवदति । **नन्विति** । दृष्टान्तासंमतिमाशङ्क्याऽऽह । **नेति** । न हि स्थायिवादिनोऽपि जाग्रद्वस्तुवत्स्वप्नवस्त्वस्ति तथाच तत्र तस्य ज्ञानमात्रत्वात्तद्दृष्टान्तादन्यदपि नातिरेक्यस्ति ग्राह्यत्वादित्यर्थः ॥ ९६३ ॥

**विभागं लभते ज्ञानाज्ज्ञानवत्स्वप्नवस्तु चेत् ॥**
**स्वमहिम्नैव तत्सिद्धेः कथं नास्तीति भण्यते ॥ ९६४ ॥**

स्वप्नवस्तु ज्ञानाद्भेदेन दृश्यते न वेति विकल्प्याऽऽद्यमादाय दूषयति । **विभागमिति** । ज्ञेयाज्ज्ञानभेदवज्ज्ञानाज्ज्ञेयभेदः स्वप्ने दृश्यते चेत्स्वदृष्ट्यैव स्वाप्नस्य ज्ञानातिरेकिणः सिद्धेस्तदपलापायोगाद्दृष्टान्तस्य साध्यविकलतेत्यर्थः ॥ ९६४ ॥

**ज्ञानस्यैवार्थरूपं तद्बोधवच्चेत्प्रकल्प्यते ॥**
**परमार्थसतोऽसत्त्वं किंमानमिति भण्यताम् ॥ ९६५ ॥**

द्वितीयमनूद्य दूषयति । **ज्ञानस्येति** । स्वाप्नं वस्तु ज्ञानाद्भेदेन न दृश्यते किंतु तन्मात्रमेवेत्यत्र न तदपलापस्तस्य ज्ञानाभिन्नत्वाज्ज्ञानवदतो जाग्रद्वस्तुनोऽपि स्वरूपापह्नवो नास्तीत्यर्थः ॥ ९६५ ॥

**विज्ञानव्यतिरेकेण नीलादिविषयो यदि ॥**
**भावो वा स्यादभावो वा सोऽस्त्येवेति विनिश्चितिः ॥ ९६६ ॥**

न स्वप्नजाग्रद्वस्तुनोः स्वरूपमेवापलापमस्तयोस्तु ज्ञानातिरेकं तस्मादसदुपालम्भोऽयमित्याशङ्क्याऽऽह । **विज्ञानेति** । अवस्थाद्वयेऽपि यथाप्रतीति बाह्यार्थो ग्राह्योऽन्यथा प्रथाप्रकोपादित्यर्थः ॥ ९६६ ॥

**स्वप्नादौ भवतैवायं जाग्रद्वदनुभूयते ॥**
**घटादिज्ञानविषयः स कथं नेष्यते त्वया ॥ ९६७ ॥**

जागरे ज्ञानार्थभेदेऽपि न स्वप्ने तद्भेदस्तद्ग्राहकचक्षुराद्यभावादित्याशङ्क्याऽऽह । **स्वप्नादाविति** । आदिपदेन स्मृतिसमाधानाद्युक्तिः । तत्र चक्षुराद्यभावेऽपि मनोऽस्ति तच्च समनन्तरप्रत्ययोऽन्यद्वेति चिन्तान्तरमिति भावः ॥ ९६७ ॥

**यद्वस्त्वनुभवप्राप्तं तच्चेन्नास्तीति भण्यते ॥**
**ज्ञानेऽपि स्यादनाश्वासस्तस्यानुभवसिद्धितः ॥ ९६८ ॥**

द्वयोरवस्थयोरनुभवाद्बाह्यार्थसत्त्वमुक्त्वा विपक्षे दोषमाह । **यद्वस्त्विति** ॥ ९६८ ॥

**ज्ञानादतिशयो यद्वन्नास्तीतीह तथैव सन ॥**
**घटोऽन्यो ह्यनुभूतः सन्नास्तीति कथमुच्यते ॥ ९६९ ॥**

---

१ ख. 'त्स्वप्नद' । २ घ. निरस्यति । ३ ग. 'भूते स नास्ती' ।

ज्ञानार्थभेदे युक्त्यन्तरमाह । **ज्ञानादिति** । यथा व्यवहारदशायां ज्ञानादन्यो नास्त्यर्थस्तथैवास्त्यर्थोऽनुभूयमानत्वादतोऽस्त्यर्थोऽन्यो नास्तीति दुर्वचनमित्यर्थः । अतिशयशब्दोऽन्यविषयः ॥ ५६९ ॥

**तदन्यकालासंदृष्टेरिति चेदसदुच्यते ॥**
**क्षणान्तरे क्षणादृष्टेरसत्त्वं वः प्रसज्यते ॥ ५७० ॥**

अस्त्यर्थस्य घटादेर्ज्ञानकाल[2] एवोपलम्भात्कालान्तरे चानुपलम्भादन्यत्वासिद्धिरिति शङ्कते । **तदन्येति** । अतिप्रसङ्गेन दूषयति । **क्षणान्तर इति** । अतिरिक्तास्त्यर्थासत्त्वं कालान्तरे स्वकाले वा नाऽऽद्योऽभ्युपगमान्नेतरः स्वक्षणे सत्त्वेन दृष्टस्य कालान्तरेऽनुपलम्भात्स्वक्षणेऽप्यसत्त्वे तेऽपि क्षणशब्दितैकज्ञानस्य ज्ञानान्तरक्षणेऽदृष्टेः स्वक्षणेऽप्यसत्त्वापत्तेः सर्वशून्यता स्यादित्यर्थः ॥ ५७० ॥

**हेमन्तेऽनुपलब्धत्वाद्ग्रीष्मधर्मापनिह्नुतिः ॥**
**प्रतिज्ञातुमशक्या स्यात्तथा शून्यत्वमापतेत् ॥ ५७१ ॥**

स्वकाले सतोऽन्यदाऽनुपलम्भात्तत्राप्यसत्त्वमिति प्रतिज्ञा न निर्वहतीत्यत्र हेत्वन्तरमाह । **हेमन्त इति** । ग्रीष्मे सत्त्वेन दृष्टानामौष्ण्यादीनां हेमन्तेऽदृष्टेर्ग्रीष्मेऽप्यपह्नुतिः स्यात्सा च प्रतिज्ञातुमशक्या दृष्टिविरोधात्तथा सति स्वकाले सर्वस्य यथाप्रतीति सत्त्वमेवेत्यर्थः । अशून्यत्वमिति च्छेदः । अथवा दृष्टिमनादृत्यासत्त्वप्रतिज्ञायां सर्वशून्यता स्यादिति विपक्षे दोषमाह । **तथेति** ॥ ५७१ ॥

**देशकालादिगावस्थाभेदेनैवाखिलं यतः ॥**
**वस्तु सिद्धं जगत्यस्मिंस्तदपह्नूयते कथम् ॥ ५७२ ॥**

इतश्च बाह्यार्थाशून्यतेत्याह । **देशेति** । विपक्षे विभागधीर्विरुध्येतेत्यर्थः ॥ ५७२ ॥

**विज्ञानव्यतिरेकेण घटो नास्तीति जल्पतः ॥**
**नास्त्यर्थोऽपि कथं जीवेदस्त्यर्थविरहादिह ॥ ५७३ ॥**

बाह्यार्थापलापिनो व्याघातापत्तेश्च तदपलापासिद्धिरित्याह । **विज्ञानेति** । भावाभावव्यवहारभूमिरिहेत्युक्ता ॥ ५७३ ॥

**अस्त्यर्थवत्स्वमात्रेण नाभावोऽस्ति विना सता ॥**
**यथाऽस्ति तव विज्ञानमेवं कुम्भाद्यपीष्यताम् ॥ ५७४ ॥**

कुतो व्याहतिर्यथाऽस्त्यर्थो नास्त्यर्थानपेक्षस्ते सिध्यति तथा सोऽप्यस्त्यर्थानपेक्षः सेत्स्यतीत्याशङ्क्याऽऽह । **अस्त्यर्थवदिति** । व्याघातफलमाह । **यथेति** । अस्त्यर्थानङ्गीकारे निष्प्रतियोगिको नास्त्यर्थो न सिध्येत्तदङ्गीकारे सर्वबाह्यार्थापलापासिद्धिस्तज्ज्ञानवज्ज्ञेयस्यापि सत्त्वमित्यर्थः ॥ ५७४ ॥

---

१ ख. घ. 'चमि' । २ क. ख. 'देर्भेदो ज्ञान' ।

अस्त्यर्थव्यतिरेके हि न किंचिदपि सिध्यति ॥ ५७५ ॥
अस्त्यर्थव्यतिरेकेण विज्ञानादि यदीष्यते ॥
अब्राह्मणादिवत्तत्स्यादसदेवेति निश्चितिः ॥ ५७६ ॥

अस्त्यर्थं नास्त्यर्थं वा नेच्छामो विज्ञानमेव तु स्वरसभङ्गुरमविरलोदयमाद्रियामहे तत्र किंचिदनुपपन्नमित्याशङ्क्याऽऽह । **अस्त्यर्थेति** । कथं तदभावे सर्वासिद्धिर्ज्ञानवत्क्षणिकादेरस्त्यर्थादन्यत्वेन सिद्धेरित्याशङ्क्याऽऽह । **अस्त्यर्थव्यतिरेकेणेति** । न हि ब्राह्मणादेरन्यस्य ब्राह्मणादिभावस्तथा सतोऽन्यस्य न सत्तेत्यर्थः ॥ ५७५ ॥ ५७६ ॥

प्रतिक्षणविनाशीनि द्रव्याणीत्यवगम्यताम् ॥
तेषामन्ते विनाशित्वात्प्रदीपादिविनाशिवत् ॥ ५७७ ॥

बाह्योऽर्थो विज्ञानवदास्थेयः स च स्थायीत्युक्तम् । इदानीं क्षणभङ्गवादी तदीयस्थायितामसृष्यमाणश्चोदयति । **प्रतिक्षणेति** । द्रव्याणि ज्ञानज्ञेयवस्तूनि यदन्ते विनाशि तत्प्रतिक्षणविनाशि यथा दीपोऽन्ते विनाशि च सर्वमित्यनुमानार्थः । दृष्टान्तस्य साध्यसाधनवत्त्वद्योतनार्थं तत्र विनाशिपदम् ॥ ५७७ ॥

वैधर्म्येण च दृष्टान्तः प्रतिज्ञातार्थसिद्धये ॥
प्रतिसंख्यानिरोधोऽत्र सर्वं सुस्थं भवेत्ततः ॥ ५७८ ॥

दीपादौ स्वरसभङ्गुरत्वलक्षणक्षणिकत्वस्यासंप्रतिपत्तेः साधर्म्यदृष्टान्तायोगमाशङ्क्याऽऽह । **वैधर्म्येणेति** । यो न प्रतिक्षणविनाशी स नान्ते विनाशी यथा प्रतिसंख्यानिरोधो न चान्ते न विनाशी घटादिरित्यर्थः । अत्र घटादौ प्रतिज्ञातार्थस्य प्रतिक्षणविनाशित्वस्य सिद्धये वैधर्म्यदृष्टान्तः प्रतिसंख्यानिरोधः स च बुद्धिपूर्वको भावनाशोऽतः सर्वं क्षणिकमित्यस्मन्मतं सुस्थमिति योजना ॥ ५७८ ॥

अनुमानप्रयोगेऽस्मिन्प्रतिज्ञार्थः सुदुर्लभः ॥
आवृत्तिवीप्सासद्भावात्क्षणिकोक्तेः प्रमाणतः ॥ ५७९ ॥

निराकरोति । **अनुमानेति** । विमतं प्रतिक्षणविनाशीति प्रतिज्ञातार्थासिद्धौ हेतुमाह । **आवृत्तीति** । प्रतिशब्दात्प्रतीतयोरावृत्तिवीप्सयोस्त्वन्मते मानेनासद्भावात्सर्वस्य क्षणिकत्वोक्तेरित्यर्थः ॥ ५७९ ॥

अनेकव्यापृतिमती ह्यावृत्तिर्जगतीक्ष्यते ॥
एकस्मिन्देवदत्तादौ सा च बौद्धस्य नेष्यते ॥ ५८० ॥

कथं क्षणिकेषु तयोरनुपपत्तिरित्याशङ्क्याऽऽवृत्त्यसंभवार्थं तत्स्वरूपमाह । **अनेकेति** । एकजातीयैककर्तृकानेकव्यापारस्था तावदावृत्तिर्लोके प्रसिद्धा यथैकस्मिन्मैत्रादा-

१ ख. घ. 'णिकत्वादे' । २ ख 'नाशव' । ३ घ. 'नाशप' । ४ ख. ज्ञातार्थः ।

वेकजातीयानेकभोजनव्यापारगता प्रतिक्षणं भुङ्क्त इत्यावृत्तिर्गम्यत इत्यर्थः । नैवं बौद्ध-राद्धान्ते नाशक्रियाया आवृत्तिरेष्टुं शक्यैकस्यानेकनाशक्रियावतोऽनुपगमादित्याह । **सा चेति** ॥ ९८० ॥

**निर्व्यापाराः सर्वभावाः क्षणिकाश्चेति निश्चितेः ॥**
**गतः प्रत्यागतश्चेति साऽऽवृत्तिः स्यात्सुदुर्लभा ॥ ९८१ ॥**

तदुपपादयति। **निर्व्यापारा इति। यथाऽऽह**—क्षणिकाः सर्वसंस्कारा अस्थिराणां कुतः क्रिया इति ॥ ९८१ ॥

**नानार्थवाचिनां लोक आश्रयाश्रयिणामिह ॥**
**व्याप्तिः क्रियागुणाभ्यां या सा वीप्सेत्यभिधीयते ॥ ९८२ ॥**
**युगपत्साऽपि बौद्धस्य न कथंचन युज्यते ॥**
**कर्तृक्रियादिसादृश्यात्साऽन्यत्वेऽपीति चेन्मतम् ॥ ९८३ ॥**

परमते क्रियाधर्मस्याऽऽवृत्तेरयोगमुक्त्वा वीप्सायाः शब्दधर्मस्यायोगं वक्तुं तत्स्वरूपमाह । **नानेति** । नानाभूतान्धर्मधर्मिणोऽर्थान्वक्तुं शीलवतां शब्दानां वाच्या ये वृक्षग्रामनदेशादयोऽर्थास्तेषामाश्रयाश्रयित्वेन स्थितानां क्रियया गुणेन वा व्याप्तिरत्र वीप्सा प्रसिद्धा यथा पर्जन्यो वृक्षं वृक्षं परिषिञ्चतीति सर्ववृक्षाणां तत्तद्देशस्य च सेचन-क्रियया युगपद्व्याप्तिर्यथा च ग्रामो ग्रामो रमणीय इति सर्वग्रामाणां तद्देशस्य च युग-पद्रमणीयत्वगुणेन व्याप्तिरेवमन्यत्रापि वीप्सा द्रष्टव्येत्यर्थः । अस्त्वेवं प्रस्तुते किमिति चेत्तत्राऽऽह । **साऽपीति ।** उक्तरूपा वीप्सा परमते न सिध्यति नाशक्रिययाऽनेक-द्रव्याणां युगपद्व्याप्त्यनुपगमात्तद्यौगपद्यादृष्टेर्धर्मधर्मिव्यवस्थानमित्यादिना च धर्मधर्मित्व-स्यानिष्टेरित्यर्थः । क्षणभङ्गपक्षेऽपि कर्तृक्रियागुणगुणिसादृश्यादावृत्तिवीप्सयोः सिद्धि-रिति शङ्कते । **कर्त्रिति** ॥ ९८२ ॥ ९८३ ॥

**भूयोऽपि भुञ्जते गेहे ब्राह्मणा इति दर्शनात् ॥**
**एतच्चानुपपन्नं स्यादुपचारपरिग्रहात् ॥ ९८४ ॥**

यथा भोक्तृभेदेऽपि भूयो भूयो भुञ्जते ब्राह्मणा इति प्रयोगो न हि तत्र पूर्वकाले भुक्त्वोत्थिता एवोत्तरकाले भोक्तारस्तथा पदार्थानां प्रतिक्षणं भेदेऽपि वीप्सादेरुपपत्ति-रित्याह। **भूयोऽपीति।** दृष्टान्ते तस्यौपचारिकत्वान्नैवमित्याह । **एतच्चेति** ॥ ९८४ ॥

**मुख्यस्यासंभवे यस्मादुपचारो न युज्यते ॥**
**अभ्युपेतार्थहानं च तदभ्युपगमे सति ॥ ९८५ ॥**

दार्ष्टान्तिकेऽपि वीप्सादेरौपचारिकत्वाद्दृष्टान्तानुगुणतेत्याशङ्क्याऽऽह । **मुख्यस्येति ।**

---

१ ग. 'ष्यादन्य' । २ ग. 'ल्यस्य सं' ।

यथोपचारिताग्निर्माणवको मुख्याग्निव्यतिरेकेण न घटते तथा वीप्सादेरुपचारो मुख्यवीप्साद्यभावे यस्मान्न युक्तस्तस्मान्मुख्यं तदेष्टव्यमित्यर्थः। इष्यतां तर्हि मुख्यं तादिति चेत्तत्राऽऽह। **अभ्युपेतेति** ॥ ५८५ ॥

**क्षणिकाः सर्वसंस्कारा इत्याद्यभ्युपगम्यते ॥**
**क्षणिकाः सर्वसंस्कारा इत्यादिवचनैरियम् ॥**
**वीप्सा व्याहन्यतेऽतश्च क्षणिकोक्तिर्न युज्यते ॥ ५८६ ॥**

अभ्युपेतमर्थं दर्शयति। **क्षणिका इति**। आदिपदेनास्थिराणां कुतः क्रिया, भूतिर्येषां क्रिया सैव कारकं सैव चोच्यत इत्येतद्गृह्यते। अन्यच्च स्कन्धपञ्चकात्मकं संस्कृतं क्षणिकं सर्वं समेत्य संभूय हेतुप्रत्ययैः कृतं संस्कृतं सकलमेव वस्तुजातं क्षणिकमुत्पत्तिक्षण एव केवले सत्त्वादिति गृहीतम्। उक्तस्याभ्युपगमस्यात्यागे वीप्सादेर्मुख्यत्वायोगादुपचारोऽपि न सिध्यतीति मत्वाऽऽह। **क्षणिका इति**। संस्कारा वासनापरपर्याया ज्ञानात्मानो भावा इति यावत्। आदिपदमुक्तार्थम्।

"यावद्यावच्च भावोऽयं प्रत्यक्षेण प्रतीयते।
तावत्स वर्तमानस्थो नान्यकालविशेषणः ॥
एकक्षणश्च कालोऽयं वर्तमानो व्यवस्थितः।
तस्मात्प्रत्यक्षं तत्सर्वं क्षणिकत्वं मतं मम" ॥

इत्येवंविधा परोक्तिर्बहुवचनार्थः। वीप्सेत्यावृत्तेरुपलक्षणम्। तयोर्मुख्ययोरुपचरितयोर्वा क्षणिकेष्वसंभवे प्रतिज्ञानार्थदौर्लभ्यमुपसंहरति। **अतश्चेति**। क्षणिकोक्तिस्तत्साधिका प्रतिक्षणविनाशीनि द्रव्याणीति प्रतिज्ञेति यावत् ॥ ५८६ ॥

**अथापि क्षणिकानीति मत्वर्थोऽत्र विवक्ष्यते ॥**
**सिद्धसाध्यत्वमेवं स्यादिष्टैव क्षणसंगतिः ॥ ५८७ ॥**

उक्तरीत्याऽऽवृत्तिवीप्सयोरसंभवेऽपि विमतानि क्षणिकानीति प्रतिज्ञायां न दूषणमित्याह। **अथापीति**। किं क्षणिकत्वं क्षणसंबन्धित्वं किंवा क्षणे निराभावो यद्वा नाशित्वमथवा स्वोत्पत्त्यव्यवहितोत्तरक्षणवर्तिध्वंसप्रतियोगित्वं तत्राऽऽद्यमनूद्य दूषयति। **मत्वर्थोऽत्रेति** ॥ ५८७ ॥

**स्थिरस्य वस्तुनोऽवश्यं निमेषक्षणलक्षणैः ॥**
**कालभागैर्भवेद्योग इति नः सिद्धसाध्यता ॥ ५८८ ॥**

सिद्धसाध्यत्वं साधयति। **स्थिरस्येति** ॥ ५८८ ॥

**क्षणिकार्थस्तिरोभाव इति चेदभिधीयते ॥**
**अभ्युपेतार्थहानिः स्यात्तथाऽपीष्टं न सिध्यति ॥ ५८९ ॥**

---

१ घ. 'त्सक्षतः सर्वक्ष' । २ क. तथाऽपि । ३ क. 'ह । तथा' ।

द्वितीयमनुद्रवति । क्षणिकेति । तत्र सत्ताक्षणे क्षणान्तरे वा तिरोभावो नाऽऽद्य-स्तत्र ज्ञानात्मनां भावानां प्रकाशोपगतिविरोधाज्जगदान्ध्यप्रसङ्गाच्चेत्याह । अभ्युपेतेति । न द्वितीय इत्याह । तथाऽपीति । क्षणान्तरतिरोहितभावेऽपीत्यर्थः ॥ ९८९ ॥

**व्यक्तधर्मनिवृत्तिर्या कारणात्मतयेष्यते ॥**
**स्थिरस्य धर्मिणः सेह तिरोभावगिरोच्यते ॥ ९९० ॥**

इष्टासिद्धिं स्पष्टयितुं तिरोभावं व्याकरोति । व्यक्तेति । धर्मशब्देन कार्यं लक्ष्यते । यथोक्ते तिरोभावे साध्ये स्वापेक्षितक्षणिकताक्षतिरिति भावः ॥ ९९० ॥

**यद्युत्पन्नानि नश्यन्ति स्यात्तदा सिद्धसाध्यता ॥**
**यस्मादादिमतां नाशः सर्वैरेवाभ्युपेयते ॥ ९९१ ॥**

तृतीये किमुत्पन्नस्य नाशित्वं किंवाऽनुत्पन्नस्याथवोत्पद्यमानस्येति विकल्प्याऽऽद्य-मादत्ते । यदीति । तत्रापि किमुत्पन्नस्य यदाकदाचिन्नाशः किंवोत्पत्तिक्षणे द्वितीय-क्षणे वाऽन्त्यक्षणे वा प्रथमं दोषमाह । स्यादिति ॥ ९९१ ॥

**यतो जनिमताऽवश्यं विनंष्टव्यं तदन्ततः ॥**
**तथाऽभ्युपगतार्थस्य हानिः स्याद्वो न संशयः ॥ ९९२ ॥**

आदिमतां सर्वैरेव नाशाश्रयणे युक्तिमाह । यत इति । तदन्ततो भावस्याऽऽदिमनोऽन्ततोऽवसाननियमादित्यर्थः । ईदृशे क्षणिकत्वे साध्ये त्वयाऽपि तत्स्वीकारे मत्पक्षसिद्धिरित्याशङ्क्याऽऽह । तथेति । अभ्युपगतार्थस्य क्षणभङ्गुरत्वस्येत्यर्थः ॥ ९९२ ॥

**अथोत्पत्तिक्षणे नाशो भवताऽभ्युपगम्यते ॥**
**सर्गनाशौ तदैकस्मिन्काले प्रसजतो ध्रुवम् ॥ ९९३ ॥**

कल्पान्तरमाह । अथेति । अतिप्रसङ्गेन दूषयति । सर्गेति ॥ ९९३ ॥

**ततश्च कार्यानुत्पत्तिर्यदि वा सर्वदाऽस्तिता ॥**
**तद्विरोधाविरोधाभ्यां ध्रुवं प्राप्नोत्यनीप्सितम् ॥ ९९४ ॥**

प्रसङ्गस्य दोषपर्यवसायितामाह । ततश्चेति । भावाभावयोस्ते विरोधोऽविरोधो वाऽऽद्ये न कदाचित्तदुत्पत्तिस्तस्य वा स्थायिना युगपदुपगतयोर्भावाभावयोर्विरोधे सत्यभावाद्भावस्य ततो वेतरस्यानुपपत्तेर्द्वितीयेऽप्ययमेव दोषस्तयोरविरुद्धयोः सह संभवादित्यर्थः ॥ ९९४ ॥

**विरुद्धयोश्च क्रिययोरिष्टत्वादेककर्तरि ॥**
**एककाले विरुद्धत्वात्सर्वलोको विरुध्यते ॥ ९९५ ॥**

विरोधे दोषान्तरमाह । विरुद्धयोरिति । एकस्मिन्वस्तुन्येकदैवोत्पत्तिनाशयोर्विरुद्धयोरिष्टत्वात्सर्वलोकव्यवहारो व्यवस्थितो न सिध्येत्कचिदपि विरुद्धशब्दार्थाभावादित्यर्थः ॥ ९९५ ॥

---

१ घ. सदा ।

अथाज्ञातानि नश्यन्ति जायमानानि वेति चेत् ॥
तथाऽप्यसन्प्रतिज्ञार्थो न ह्यभावस्य नाशिता ॥ ५९६ ॥

उत्पन्ननाशो यदाकदाचिद्वा जन्मक्षणे वेति द्वयं निरस्य द्वितीयतृतीयावनुवदति। **अथेति**। तत्राजातस्य नाशं दूषयति। **तथाऽपीति**। अजातानि नश्यन्तीति प्रतिज्ञातार्थो न युक्तोऽजातस्यासत्त्वादसतश्च संतानस्येवानाशादित्यर्थः ॥ ५९६ ॥

काऽतिशीतिरजातस्य विनाशागमने सति ॥
प्रतिज्ञापदयोश्चात्र विरोधः स्यात्परस्परम् ॥ ५९७ ॥

तस्यानाशे हेत्वन्तरमाह। **केति**। नाशो नामार्थासत्त्वहेतुर्विकारोऽजातस्तु तेऽसन्नेवातोऽनाशादनतिशयान्न स तस्येत्यर्थः। जायमाननाशस्तु जन्मक्षणे तन्निरासेनैव निरस्तो भेदाभावादिति मत्वा दोषान्तरमाह। **प्रतिज्ञेति**। चकारो वक्ष्यमाणविरोधसमुच्चयार्थः ॥ ५९७ ॥

नश्यत्युत्पद्यमानोऽर्थ इत्येतन्मुग्धभाषितम् ॥
सर्वलोकविरुद्धत्वान्मानैश्चापि विरुध्यते ॥ ५९८ ॥

विरोधं प्रकटयति। **नश्यतीति**। उत्पद्यमानत्वं हि सत्तया संबध्यमानत्वं नश्यमानत्वं च तद्राहित्यमिति प्रतिज्ञापदयोः स्पष्टो विरोध इत्यर्थः। विरोधान्तरमाह। **सर्वेति**। लोकविरुद्धमपि ब्रह्माद्वितीयत्वादि त्वयेष्यते तथैतन्मयाऽपीति चेत्तत्राऽऽह। **मानैश्चेति** ॥ ५९८ ॥

अथोत्पन्नस्य नाशोऽयं द्वितीये स्यात्क्षणे यदि ॥
प्रत्यभिज्ञामृते नायं प्रतिज्ञार्थः प्रसिध्यति ॥ ५९९ ॥

उत्पन्ननाशित्वपक्षे तृतीयमादत्ते। **अथेति**। तत्र दोषं वक्तुं भूमिकां करोति। **प्रत्यभिज्ञामिति** ॥ ५९९ ॥

य एव जायते कर्ता स एवायं विनश्यति ॥
क्षणद्वये यथा स्थायी तद्वदस्तु क्षणान्तरं ॥ ६०० ॥

तत्स्वरूपमाह। **य एवेति**। उक्तप्रत्यभिज्ञायाः क्षणद्वयवर्तित्वे का हानिस्तत्राऽऽह। **क्षणेति**। स्थायी जन्मनाशकर्तेति शेषः ॥ ६०० ॥

मतमुत्पद्यते नासौ नापि साक्षाद्विनश्यति ॥
आदिमध्यान्तहेतूत्थविकल्पपरिहृतोऽपि वा ॥ ६०१ ॥

उत्पत्तिनाशक्षणद्वयसंबन्धाभिज्ञेन क्षणान्तरसत्त्वापत्तिरिति शङ्कते। **मतमिति**। आद्यन्तमध्यतत्प्रयुक्तसर्वविकल्पहीनश्च बोधो निर्विकल्पकः सर्वविकल्पविकलतया तस्याधिगतेरित्याह। **आदीति**। उक्तं हि—

---

१ क. ख. घ. 'मानं हि। २ घ. मत्तायां। ३ घ. तथेदमपी'।

संसृज्यन्ते न भिद्यन्ते स्वतोऽर्थाः पारमार्थिकाः ।
रूपमेकमनेकं च तेषु बुद्धेरुपप्लव इति ॥

वाशब्दो यथोक्तार्थस्य पूर्वोक्तार्थे हेतुत्वद्योतनार्थः ॥ ६०१ ॥

**हेतुप्रतिज्ञयोः स्पष्टो विरोधः स्यात्तथा सति ॥ ६०२ ॥**
**मतमन्ते विनाशश्चेत्कोऽयमन्तस्त्वयोच्यते ॥**
**क्षणस्यान्तर्बहिर्वेति न तथाऽप्युपपद्यते ॥ ६०३ ॥**

तर्हि पूर्वोक्तानुमानानुत्थानमिति दूषयति । **हेत्विति** । सर्वविकल्पशून्ये बोधे सत्यन्ते विनाशित्वादिति हेतोः क्षणिकत्वप्रतिज्ञायाश्च त्वदुक्त्या विरोधादनुमानानुदयस्तस्य सर्वविकल्पराहित्ये चास्मन्मतानुमतिरित्यर्थः । चतुर्थमुत्थापयति । **मतमिति** । आदिमतामन्ते नाशित्वस्य सिद्धतया सिद्धसाध्यता साध्याविशिष्टता चेति मन्वानो दोषान्तरं वक्तुमन्तं विकल्पयति । **कोऽयमिति** । पक्षद्वयेऽप्यनुपपत्तिं प्रतिजानीते । **नेति** ॥ ६०२ ॥ ६०३ ॥

**क्षणान्तश्चेद्भवेन्नाशः क्षणिकत्वं विहन्यते ॥**
**क्षणान्तरेऽपि नाशोऽयं पूर्वाभावान्न युज्यते ॥ ६०४ ॥**

कथमनुपपत्तिरित्यपेक्षायामन्तशब्दस्य क्षणमध्यवाचित्वे तामाह । **क्षणेति** । एकस्मिन्पूर्णे क्षणे क्षणिकस्य स्थितिरिष्टा सा च क्षणमध्ये नाशे न सिध्यतीत्यर्थः । द्वितीयं प्रत्याह । **क्षणान्तर इति** । क्षणस्य बहिर्नाम क्षणान्तरं तत्र नाशो न क्षणस्य युक्तः पूर्वक्षणवर्तिनो ज्ञानस्योत्तरक्षणसंबन्धानुपगमात्सर्वमेव वस्तुजातं क्षणिकमुत्पत्तिक्षण एव केवले सत्त्वादिति स्थितेरित्यर्थः ॥ ६०४ ॥

**उत्तरक्षणविध्वस्तौ न हि पूर्वो नियुज्यते ॥**
**तस्योत्तरक्षणसद्भावाद्ध्रौव्यं च स्यात्तथा सति ॥ ६०५ ॥**

हेतुं साधयति । **उत्तरेति** । तत्क्षणवर्तिध्वंसक्रियायां पूर्वो भावो न कर्तृत्वेन नियुज्यते पूर्वस्योत्तरक्षणे सत्त्वाभावादसतश्च कर्तृत्वायोगात् । **यथाऽऽह—**

"असतो भासनायोगादुत्पादस्य च हानितः ।
कार्यकारणयोरित्थं वस्तुत्वं केन वार्यते" इति ।

तस्माद्धेतुसिद्धिरित्यर्थः । पूर्वस्योत्तरक्षणसत्त्वे दोषमाह । **ध्रौव्यं चेति** ॥ ६०५ ॥

**आदिमध्यान्तभागत्वे निरंशत्वं च दुर्घटम् ॥**
**क्षणस्य संततौ चापि सिद्धसाध्यत्वमुच्यते ॥ ६०६ ॥**

किंचान्ते नाशश्चेदन्तस्याऽऽदिमध्यापेक्षत्वादंशत्रयवत्त्वे ज्ञानस्य क्षणिकत्वक्षतिर्न च

---

१ घ. 'त्तार्थेहे' । २ क. 'न्पूर्णे क्ष'

**निरंशतेत्याह । आदीति ।** क्षणस्य ज्ञानस्येति यावत् । तत्प्रवाहे परमादिमध्यान्तभागो न सर्वविकल्पहीने तस्मिन्नित्याशङ्कामनूद्य ज्ञानादन्यत्र विकल्पानां सत्त्वेऽपि ज्ञाने तदभावाज्ज्ञानमनाद्यनन्तमित्यस्मन्मतस्थितिरिति दूषयति । **संततौ चेति ।** यदि विकल्पाः संततिमनुपतन्तो न ज्ञानमनुपतन्ति तदा विज्ञानं सर्वविकल्पविकलमिति सिद्धमेव त्वया साध्यते ज्ञानादन्यत्र विकल्पानामस्माभिरपि कथ्यमानत्वादिति योजना ॥ ६०६ ॥

**असतश्च समुत्पत्तावन्ते च क्षयसंगतेः ॥**
**द्विविनाशप्रसक्तिः स्यात्क्षणिकत्वं च हीयते ॥ ६०७ ॥**

चतुर्थेऽपि किमुत्पत्तिः सतोऽसतो वा नाऽऽद्य उत्पत्तिर्हि सत्तासंबन्धो न च सतस्तत्संबन्धः कारणाधीनात्मलाभश्चेत्सोऽपि न सतः प्रागेव लब्धरूपत्वादिति मत्वा द्वितीयं प्रत्याह । **असतश्चेति ।** यदा त्वसज्ज्ञानोत्पत्तिस्तदा तदसत्त्वं नश्यति न वा नाऽऽद्यो ज्ञानस्यापि नाशप्रसङ्गादसत्त्वाभेदाद्भेदे तद्धर्मित्वेन प्रागपि स्थित्यापत्तेर्द्वितीये तदुत्पत्तिर्व्यर्था तदसत्त्वतादवस्थ्यात्तस्मादुत्पत्तिकालेऽसत्त्वनाशे तदभिन्नं ज्ञानमपि नश्यति किंचासतो ज्ञानस्य सद्रूपेणोत्पत्तावुत्तरकाले नाशस्त्वयेष्टस्तथा चैकस्य ज्ञानस्य द्वयोर्नाशयोरापत्तेरक्षणिकत्वं च ध्वस्तस्य च ध्वंसे तदवस्थानप्रसङ्गादित्यर्थः ॥ ६०७ ॥

**न चेदुत्पत्तिरसतो न विनाशः सतस्तथा ॥**
**कूटस्थवादसक्तिः स्यान्मिथ्यासंगतितस्तयोः ॥ ६०८ ॥**

असतोऽनुत्पत्तेः सतश्चानाशादुत्पत्तिनाशसदसत्त्वविकल्पानास्पदमेकरसं ज्ञानमिति गत्यन्तरमपश्यन्नाशङ्कते । **न चेदिति ।** तर्हि मदीयं पन्थानमागतोऽसीत्याह । **कूटस्थेति ।** तयोः सत्त्वासत्त्वयोरुत्पत्तिनाशयोश्च ज्ञाने कल्पितसंबन्धेऽपि वस्तुतस्तदभावादित्याह । **मिथ्येति ।** मिथोऽसंगतिस्तयोरिति पाठे तयोरिति ज्ञानविकल्पयोरुक्तिः ॥ ६०८ ॥

**अन्त्यो नाशो महांश्चेत्स्यान्नाशः सातिशयो यतः ॥**
**विशेषाभावतो नैवं तस्यानतिशयत्वतः ॥ ६०९ ॥**

क्षणिकत्वस्य दुर्निरूपतया साध्यासंभव उक्तः संप्रति घटस्य क्षणिकत्वे मुसलाभिघातादूर्ध्वमिव प्रागपि नष्टः स इति दृष्टिः स्यात्सदा तस्य नाशाविशेषादिति वदन्तं सिद्धान्तिनं प्रति परो विशेषमाह । **अन्त्य इति ।** मुसलाभिघातात्पूर्वं स्वतो नष्टेऽपि घटे तत्प्रवाहोऽनष्टः परस्तात्तु घटस्तत्प्रवाहश्चोभयमपि नश्यति तथा च पराचीनो नाशो महान्प्राचीनोऽल्पीयानिति न पूर्वत्र नष्टव्यवहारः परत्र तद्व्यवहार एवं नाशो यतः सातिशयोऽतो न क्षणभङ्गे कश्चिद्भङ्गोऽस्तीत्यर्थः । दूषयति । **विशेषेति ।** उत्कर्षात्या

१ ख. 'स्याऽऽदि' । २ घ. 'न्धः का' । ३ घ. 'स्तवदध्वंसे । ४ क. ग. 'मिथोऽस' । ५ क. ख. 'संहति' ।

घटे व्यवहारव्यवस्था न निर्वोढुं शक्या मुसलाभिघातात्प्रागूर्ध्वं च तस्मिन्नाशाविशेषादित्यर्थः । प्रवाहनाशानाशाभ्यां घटनाशे महत्त्वाल्पत्वाख्यो विशेषो दर्शित इत्याशङ्क्याऽऽह । **तस्येति** । यद्यपि प्राक्प्रवाहो न नष्टः पश्चान्नङ्क्ष्यति तथाऽपि घटनाशे विशेषाभावादुभयत्र नष्टव्यवहारः स्यादिति पक्षे बाधकपराहतिरित्यर्थः ॥ ६०९ ॥

**मत्वर्थानुपपत्तेश्च क्षणिकत्वाद्यसंभवः ॥**
**द्रव्यतन्नाशयोर्यस्मान्नैवेहास्त्येककालता ॥ ६१० ॥**

इतश्च प्रतिज्ञा न निर्वहतीत्याह । **मत्वर्थेति** । आदिशब्देन नाशित्वादि गृह्यते । क्षणोऽस्यास्तीत्यादिलक्षणस्य मत्वर्थस्य परपक्षेऽनुपपत्तिरित्यत्र हेतुमाह । **द्रव्येति** । द्रव्यस्य तन्नाशादेश्चैककालत्वे मतुबर्थसिद्धिर्न चैककालत्वं क्षणभङ्गात्क्षणस्य च कालविशेषस्य न द्रव्येणैककालत्वमनभ्युपगमात्कालस्य कालान्तराभावाच्च तत्र क्षणिकत्वप्रतिज्ञेत्यर्थः ॥ ६१० ॥

**न च नाशस्य कालोऽस्ति क्षणमध्ये तथा बहिः ॥**
**क्षणान्तरं बहिर्यस्मात्क्षणमध्ये ध्रुवत्वतः ॥ ६११ ॥**

नाशस्य कालसंबन्धमुपेत्य द्रव्येणैककालत्वं निरस्तमिदानीं परमते तस्य कालसंबन्ध एव नास्तीत्याह । **न चेति** । न तावद्द्रव्यस्य स्वक्षणमध्ये नाशस्तस्य पूर्णे स्वक्षणे भावान्नापि ततो बहिस्तन्नाशः क्षणान्तरे द्रव्यस्याप्राप्तेरतो न तन्नाशस्य कालसंगतिरित्यर्थः ॥ ६११ ॥

**धन्यासीदिति दृष्टश्चेन्न लक्षणविरोधतः ॥**
**लक्षणे वर्तमानस्य कालस्य श्रवणं यतः ॥ ६१२ ॥**

मत्वर्थानुपपत्तिमुक्तामाक्षिपति । **धनीति** । धनादेर्देवदत्तस्य चैककालत्वाभावेऽपि मतुप्प्रयोगो धनी गोमानिति दृश्यते तथा द्रव्यस्य नाशादेश्चानेककालत्वेऽपि स भविष्यतीत्यर्थः । दूषयति । **नेत्यादिना** । लक्षणविरोधं साधयति । **लक्षण इति** । तदस्यास्त्यस्मिन्निति मतुबिति लक्षणे वर्तमानकालस्यास्तीति श्रवणाद्भूते भाविनि वा न तत्प्रयोग इत्यर्थः ॥ ६१२ ॥

**त्रिकाललक्षणार्थं चेदस्तीति यदि भण्यते ॥**
**तादर्थ्ये कारणाभावान्नैतदप्युपपद्यते ॥ ६१३ ॥**

लक्षणे यदस्तीति श्रवणं तत्कालत्रयोपलक्षणमिति शङ्कते । **त्रिकालेति** । चेच्छब्दो निश्चयार्थः । अस्तित्वस्योपलक्षणत्वे हेत्वभावान्नैतदिति दूषयति । **तादर्थ्य इति** । धन्यासीदित्यादिप्रयोगस्तु भूते काले धनादेर्मैत्रस्य चैककालत्वमुपेत्य सिध्यतीति भावः । न कदाचिदपि नाशनाशिनोरेककालतेत्यपरर्थः ॥ ६१३ ॥

---

१ क. 'वात्र त' ।

**प्रत्यक्षेण विरोधाच्च न क्षणस्य विनाशिता ॥**
**प्रत्यक्षानुमयोर्नापि विरुद्धाव्यभिचारिता ॥ ६१४ ॥**
**सिद्धसाध्यत्वमथवा नङ्क्ष्यतीति मतं यदि ॥**
**क्षणिकत्वस्य हानिः स्यात्किं नश्छिन्नं तथा सति ॥ ६१५ ॥**

प्रतिज्ञाया दुर्घटत्वादनुमानानुत्थानमुक्त्वा प्रत्यभिज्ञाविरोधाच्च तदनुत्थानमित्याह । **प्रत्यक्षेणेति** । यत्तु मिथ्या विकल्पोऽयं भिन्नेष्वेकार्थताग्रह इति किं तेन प्रत्यभिज्ञाया व्यवहाराङ्गत्वं न्यासेध्यते किंवा तत्त्वावेदकत्वं नाऽऽद्यो व्यवहारविरोधान्नेतरोऽभ्युपगमविरोधादिति चार्थः । प्रत्यक्षं द्रव्यस्य स्थायित्वं साधयत्यनुमानं क्षणिकत्वं तथाचैकस्मिन्धर्मिणि विरुद्धार्थाव्यभिचारात्प्रामाण्यमप्रामाण्यं वा तयोस्तुल्यमित्याशङ्क्याऽऽह । **प्रत्यक्षेति** । प्रत्यक्षस्यानुमानोपजीव्यतया बलीयस्त्वात्तेन बाधितमनुमानममानं यद्यपि प्रकृतमनुमानं न प्रत्यभिज्ञामुपजीव्योत्तिष्ठति तथाऽपि तज्जातीयोपजीवित्वादुपजीव्यजातीया प्रत्यभिज्ञा प्रबलेति भावः । कुम्भादिनाशग्राहिप्रत्यक्षानुगृहीतं क्षणिकत्वानुमानं प्रत्यभिज्ञातो बलवदित्याशङ्क्य विकल्पयति । **अथवेति** । किं तत्प्रत्यक्षं जातस्य कुम्भादेर्यदाकदाचिन्नाशं गोचरयत्यथवा स्वसत्तायामिति विकल्पार्थः । आद्यमनुवदति । **नङ्क्ष्यतीति** । जातं कुम्भादि यदाकदाचिन्नष्टं भविष्यतीत्येवमर्थं प्रत्यक्षं यदीष्टमित्यर्थः । तथा सिद्धसाध्यत्वं स्थायिनोऽपि जातस्य यदाकदाचिन्नाशादित्याह । **सिद्धेति** । स्वसत्तायां नाशं गृह्णाति प्रत्यक्षं कुम्भादेरिति पक्षं प्रत्याह । **क्षणिकत्वस्येति** । तथा सति शून्यतापत्तिरित्यर्थः । प्रत्यक्षस्य वर्तमानक्षणे सत्ताग्राहित्वादवर्तमानकालेऽप्रवृत्तेर्न क्वचिन्नाशग्राहितेत्याशङ्क्याऽऽह । **किमिति** ॥ ६१४ ॥ ६१५ ॥

**अर्थक्रियादिलिङ्गेन विरोधित्वाच्च नेष्यते ॥**
**क्षणिकाः सर्वभावाः स्युरिति यत्त्वाक्समीरितम्[1] ॥ ६१६ ॥**

प्रत्यक्षविरोधेन क्षणिकत्वानुमानं निरस्यार्थापत्तिविरोधेनापि निरस्यति । **अर्थेति** । आदिशब्देन जन्मादि गृह्यते लिङ्गशब्देनानुपपत्तिः ॥ ६१६ ॥

**शाल्याद्युद्वहनादि[2] स्यादुत्पित्सोर्वा जनिस्तथा ॥**
**अर्थक्रिया न मानं तस्तेन चैव विरोधतः ॥ ६१७ ॥**

किं तदर्थक्रियादिलिङ्गं कथं वा तेन विरोधस्तत्राह । **शालीति** । शालियवादेरानयनं तादर्थ्येन गमनादि जन्मोन्मुखस्य जन्म जातस्य नाशादि चार्थक्रियादिरूपं लिङ्गं तेनान्यथाऽनुपपद्यमानेन त्वदिष्टक्षणिकत्वानुमानस्य[3] विरोधादमानतेत्यर्थः ॥ ६१७ ॥

**क्षणिकत्वं न भावानां कथंचिदपि युज्यते ॥**
**नष्टेन नश्यता वाऽपि[4] न शाल्याद्याहृतिक्रिया ॥ ६१८ ॥**

१ ग. लक्ष्यस्य । २ ख. 'नादिः स्या' । ३ क. ग. 'याऽनुमा' । ४ ख. 'स्तत्राऽऽह ।

तदमानत्वे फलितमाह । **क्षणिकत्वमिति** । कथंचिदपीति स्वरसभङ्गुरत्वेन द्वित्रक्षणावस्थायित्वेन वेत्यर्थः । क्षणिकस्यापि शाल्याद्यानयनकर्तृत्वसंभवादर्थक्रियोपपत्तेर्नोक्तदूषणमित्याशङ्क्य नष्टेन वा नश्यता वा संतत्या जायमानेन वा सा कार्येति विकल्प्याऽऽद्यौ निराचष्टे । **नष्टेनेति** । तयोरसत्त्वादिति शेषः ॥ ६१८ ॥

**संतत्योत्पद्यमानैश्चेत्फलहेत्वात्मभिर्भवेत् ॥**
**भावैरर्थक्रिया सर्वा यथा दीपादिभिस्तथा ॥ ६१९ ॥**

तृतीयमुत्थापयति । **संतत्येति** । यथा दीपविद्युदादिभिः स्वरसनाशिभिर्नैरन्तर्येण जायमानैरर्थप्रकाशादि क्रियते तथा संतत्या जायमानैः कार्यकारणात्मकैः क्षणिकैर्भावैरर्थक्रिया सर्वा शाल्याहरणादिरूपा निर्वर्त्यते तत्रार्थापत्तिविरोधोऽनुमानस्येत्यर्थः॥६१९॥

**उत्पित्स्वजातं सञ्जातमनष्टं वाऽभ्युपेयते ॥**
**निनङ्क्षु नश्यन्नष्टं च प्रत्यभिज्ञामृते कथम् ॥ ६२० ॥**

उत्पित्साद्यनुपपत्तिरूपार्थापत्त्या विरोधमनुमानस्य साधयति । **उत्पित्स्विति** । अष्टक्षणत्वं हि भावानामावश्यकं प्रत्यभिज्ञया क्षणेष्वष्टस्वेकस्यैवानुसंधानादुक्तं चैतद्घटविचारे तस्मादुत्पित्साद्यन्यथानुपपत्तिस्तदनुमानस्य प्रत्यभिज्ञावद्बाधिकेत्यर्थः॥६२०॥

**प्रबन्धेनार्चिषो धर्मा धर्मिण्यग्नौ व्यवस्थिते ॥**
**अर्थक्रियां वर्तमानाः कुर्युर्ग्रामाद्यवाप्तिवत् ॥ ६२१ ॥**

अर्थक्रियानुपपत्तिविरोधसिद्ध्यर्थं परोक्तं दृष्टान्तं विघटयति । **प्रबन्धेनेति** । यथा गमनादयः मति मैत्रे संतत्या वर्तमाना ग्रामाप्त्यादि कुर्वन्ति तथाऽर्चिषो दीपस्य ज्वालाख्या धर्माः क्षणिकत्वेनेष्टाः सन्तोऽपि स्थायिन्यग्नौ स्थिते तदाश्रिताः प्रवाहरूपेण वर्तमाना दाहाद्यर्थक्रियां कुर्युरिति युक्तमित्यर्थः ॥ ६२१ ॥

**दीपादिवदसंभाव्या भवतोऽर्थक्रिया यतः ॥**
**क्षणिकत्वे न सा युक्ता तद्धेतुविरहात्सदा ॥ ६२२ ॥**

दार्ष्टान्तिके वैषम्यमाह । **दीपादिवदिति** । उक्तनीत्या दीपादेरर्थक्रिया यथा संभवति न तथा क्षणभङ्गपक्षे शाल्याहरणाद्यर्थक्रिया यतः संभाव्या तदाश्रयानवस्थानात्संततेश्चावस्तुत्वादर्थक्रियायाश्चास्वातन्त्र्यादर्थाद्दृश्यमानार्थक्रियाविरोधान्न यथोक्तमनुमानं मानमित्यर्थः । कथमसंभवस्तत्राऽऽह । **क्षणिकत्व इति** । मैत्रादेस्तु स्वतो भङ्गुरत्वे न कदाचिदपि शाल्याहरणाद्यर्थक्रिया युक्ता तत्कर्तुरभावादित्यर्थः ॥ ६२२ ॥

**नानुत्पन्नस्य हेतुत्वमुदकाद्याहृतौ भवेत् ॥**
**उत्पित्सूत्पद्यमानाभ्यामसत्त्वात्तद्वदेव न ॥ ६२३ ॥**

---

१ क. ख. घ. द्वित्रिक्ष° । २ ख. °क्तरीत्या ।

कथं तद्धेतुविरहस्तत्र किमनुत्पन्नस्य तद्धेतुत्वमुत्पित्सोर्वोत्पद्यमानस्य वा नष्टस्य वा नश्यतो वा स्वक्षणे स्थितस्य वेति विकल्प्याऽऽद्यं दूषयति । **नेति** । द्वितीयतृतीयौ प्रत्याह । **उत्पित्स्विति** । नोदकाद्याहृतिरिति संबन्धः । असत्त्वादिति पूर्वत्रापि तुल्यो हेतुस्तद्वदेवेत्यनुत्पन्नं दृष्टान्तयति ॥ ६२३ ॥

**कूर्मलोमादिवत्तद्वन्नापि तत्स्याद्विनश्यता ॥**
**म्रियमाणो न शक्नोति पुत्रं जनयितुं क्वचित् ॥ ६२४ ॥**

चतुर्थं निरस्यति । **कूर्मेति** । यथाऽनुत्पन्नादीनामलब्धात्मत्वान्नार्थक्रिया तथा कूर्मक्षीरादिवदत्यन्तासत्त्वान्नष्टस्यापि न सेत्यर्थः । पञ्चमं पराकरोति । **नापीति** । तत्र दृष्टान्तः । **म्रियमाण इति** ॥ ६२४ ॥

**हेतुत्वं लभते नापि तथैवावस्थितः क्वचित् ॥**
**आ कार्यावसितेः स्थाने सिद्धान्तस्ते विनश्यति ॥ ६२५ ॥**

षष्ठं दूषयति । **हेतुत्वमिति** । उत्पन्नं द्रव्यं स्वक्षणे स्थितमर्थक्रियां तत्रैव वा कुर्यात्क्षणान्तरे वा नाऽऽद्योऽनुत्पन्नादिवत्तस्यापि स्वक्षणे कार्यकरत्वानिष्टेरन्यथा शृङ्गयोरिव हेतुफलभावासिद्धेर्न द्वितीयस्तद्धि यावत्कार्यं तिष्ठति न वा न चेदसत्त्वान्न हेतुत्वं तिष्ठति चेत्स्वरूपेण संतत्याऽऽत्मना वाऽऽद्ये क्षणिकतार्क्षतिरित्यर्थः ॥ ६२५ ॥

**विनाशक्रियया व्याप्तमुत्पन्नं चेद्विनश्यति ॥**
**फलहेतुप्रबन्धेनेत्येवं सुस्थमिदं भवेत् ॥ ६२६ ॥**

कल्पान्तरमादत्ते । **विनाशेति** । हेतुफलप्रवाहेण जातं पुनर्नाशक्रियया व्याप्तं नश्यतीत्येवं संतत्या कार्यपर्यन्तद्रव्यस्थित्युपगमे क्षणिकत्वमक्षतमेव द्रव्यव्यक्तेस्तदभावादित्यर्थः ॥ ६२६ ॥

**संतानानुपपत्तेश्च नैवमप्युपपद्यते ॥**
**संतनोतीति संतानः कर्ता चेदभिधीयते ॥ ६२७ ॥**
**तस्य चैकत्वनाशित्वात्संतानो नोपपद्यते ॥**
**नाप्यपादानतः सिध्येन्न वाऽधिकरणाश्रयात् ॥ ६२८ ॥**

संततिं निराकुर्वन्नुत्तरमाह । **संतानेति** । संतानिनां क्षणिकत्वेन पूर्वोत्तरासंबन्धात्संतानस्य चावस्तुत्वान्न हेतुफलतेत्यर्थः । कथं तदनुपपत्तिः स हि स्थूलात्मनां संतानिनां नैरन्तर्यप्रतिभास इति वदन्ति तत्र किं संतानशब्दः कारकं भावं वा ब्रूते । आद्येऽपि कर्तारं वाऽपादानं वाऽधिकरणं वा कर्म वा करणं वा संप्रदानं वेति विकल्प्याऽऽद्यमनूद्यानुपपत्तिमाह । **संतनोतीति** । द्वितीयतृतीयौ दूषयति । **नापीति** । संतनोत्यस्मादस्मिन्निति वा संतान इति पक्षावयुक्ताविति यावत् ॥ ६२७ ॥ ६२८ ॥

---

१ क. ग. 'स चाधि' ।

**न चान्यस्मिन्विभक्त्यर्थे यथोक्तेनैव हेतुना ॥**
**संतानो यदि धात्वर्थो भावश्चेदभिधीयते ॥ ६२९ ॥**

अवशिष्टं पक्षत्रयं निराचष्टे । **न चेति** । संतन्यत इति वा संतन्यतेऽनेनेति वा संतन्यतेऽस्मा इति वा कर्मकरणसंप्रदानरूपे विभक्त्यर्थे कर्त्रादेरन्यस्मिन्नपि संतानशब्दो न संभवतीत्यर्थः । पक्षपञ्चकासंभवे हेतुमाह । **यथोक्तेनेति** । एकत्वनाशित्वेनेति यावत् । कल्पान्तरमाह । **संतान इति** । चेच्छब्दो निश्चये ॥ ६२९ ॥

**भवितारमपेक्ष्यैव भावः सिध्येन्न सोऽन्यथा ॥**
**न चासौ लभ्यते तादृग्भविता हि विनश्वरः ॥ ६३० ॥**

संततिः संतान इति पक्षे भविताऽस्ति न वेति विकल्प्य नास्तिपक्षं प्रत्याह । **भवितारमिति** । क्रियायाः स्वातन्त्र्यानभ्युपगमादित्यर्थः । अस्तिपक्षे स स्थायी क्षणिको वाऽऽद्यं दूषयति । **न चेति** । तादृगिति स्थायी निर्दिश्यते । तत्र हेतुः । **भविता हीति** । अन्यथा क्षणिकाः सर्वसंस्कारा इतिप्रतिज्ञाहानिरिति भावः ॥ ६३० ॥

**नित्यं भवितृतन्त्रत्वात्संतानस्याप्यनित्यता ॥**
**धातूपसर्गयोरर्थस्त्वत्पक्षे न च लभ्यते ॥ ६३१ ॥**

द्वितीयं निराह । **नित्यमिति** । क्षणिकस्य भवितृत्वे भावस्य नियमेन भवित्रधीनत्वात्तस्यापि क्षणिकता स्यात्ततश्च स्थूलात्मनां संतानिनां नैरन्तर्यप्रतिभास एव संतानप्रतिभास इति प्रलापमात्रमित्यर्थः । अखण्डं संतानशब्दमाश्रित्यानुपपत्तिमुक्त्वा तं विभज्य दूषयति । **धात्विति** ॥ ६३१ ॥

**नैकीभावो न विस्तारः क्षणिकत्वेऽस्ति युक्तिमान् ॥**
**अतीतानागतानां च मिथः कालासमागमात् ॥ ६३२ ॥**
**वर्तमानस्य चैकत्वात्संतानो नोपपद्यते ॥**
**संतानिभ्यश्च संतानोऽभिन्नो भिन्नोऽथवा द्विधा ॥ ६३३ ॥**

तनुधातोः समित्युपसर्गस्य च क्षणभङ्गे नार्थसिद्धिरित्येतत्प्रकटयति । **नेत्यादिना** । सर्वस्य क्षणिकत्वे धात्वर्थो विस्तारो नोपपद्यत एकस्यानेकव्याप्तेर्विस्तारस्य त्वत्पक्षेऽनुपपत्तेः समुपसर्गार्थश्च धात्वर्थस्य सम्यक्त्वपर्यायो नैरन्तर्यात्मैकीभावः सर्वस्य क्षणिकत्वे न सिध्यतीत्यर्थः । ननु पूर्वापरीभूतानां क्षणानां साक्षादुपादानोपादेयभावेनोत्पादः संतानो नामेति स्थितेर्नोक्ताऽनुपपत्तिरत आह । **अतीतेति** । स हि न स्वतन्त्रः संतानिनिष्ठत्वेनैवोपलम्भान्न च ते संतानिनामेकदेशकालस्थितिः स्वरसभङ्गुरत्वादतो न तदाश्रयसंतानसिद्धिरित्यर्थः । विधान्तरेण संतानं दूषयितुं त्रेधा विकल्पयति । **संतानिभ्यश्चेति** ॥ ६३२ ॥ ६३३ ॥

**अभेदेऽनित्यतासक्तिः स्थास्नुर्भेदे प्रसज्यते ॥**
**कार्यकारणभावश्च न च वः स्यादभीप्सितः ॥ ६३४ ॥**

अभेदपक्षे दोषमाह । **अभेद इति** । क्षणिकसंतान्यभेदे संतानस्यापि क्षणिकता स्थायिसंतानाभेदे संतानिनामपि स्थायिता स्यादित्यर्थः । द्वितीयं प्रत्याह । **स्थास्नुरिति** । संतानिवत्संतानोऽपि स्वतन्त्रः परमार्थश्च स्यात्संसारिसंतानश्च क्षणिकसंतानिभ्यो भिन्नतया स्थितिशीलः स्यादित्यमुक्तिरित्यर्थः । पक्षद्वये साधारणं दोषान्तरमाह । **कार्येति** । एकसंतानारूढानां संतानिनां मिथो हेतुफलभावो भवद्भिरिष्टः । यथाऽऽह— संतानश्च पूर्वापरीभूतानां क्षणानां साक्षादुपादानोपादेयभावेनोत्पाद एवोच्यत इति । स च न सिध्येद्भेदे संतानिनां संतानान्तरेष्विवैकसंतानारोहासिद्धेरभेदेऽपि संतानस्य संतानिनां चाभावादेव तदसिद्धेरित्यर्थः ॥ ६३४ ॥

**भिन्नाभिन्नत्वपक्षोऽपि विरोधान्न च युज्यते ॥**
**स्वसिद्धान्तस्य च ध्वस्तिर्न च संगच्छते जैनः ॥ ६३५ ॥**

तृतीयं प्रत्याह । **भिन्नेति** । भेदाभेदयोरेकत्र विरोधासिद्धिमाशङ्क्य दोषान्तरं चकारसूचितमाह । **स्वसिद्धान्तस्येति** । किंच यस्य यस्माद्भेदस्तस्य तस्मादभेदे प्रयोजकाकारैक्ये भेदाभेदयोरैक्यापत्तिस्तद्भेदे तत्रापि भेदाभेदाभ्यामनवस्थेत्याह । **न चेति** ॥ ६३५ ॥

**संतानिनां स्वसंतानाद्भिन्नाभिन्नत्वकल्पने ॥**
**वाच्या दोषा यथायोगं संतानार्थानुरोधतः ॥ ६३६ ॥**

संतानस्य संतानिभ्यो भेदादि निरस्य संतानिनां ततो भेदादि विकल्प्य निरस्यति । **संतानिनामिति** । संतानशब्दार्थस्य संतानिभ्यो भेदादिपक्षोक्तदोषानुरोधेन संतानिनां संतानाद्भेदादिपक्षेष्वपि यथासंभवं दोषा वाच्या भेदे संतानस्यानन्याश्रयापत्तिरभेदे क्षणिकत्वादिहानिर्भेदाभेदे सिद्धान्तविरोध इत्यर्थः ॥ ६३६ ॥

**अवाच्यमिति पक्षश्चेन्नैवं तस्याप्यसंभवात् ॥**
**अन्यानन्योभयात्मत्वकल्पनं ह्यसदेव तत् ॥ ६३७ ॥**

संतानस्वरूपमवाच्यमिति स्थितेरुक्तदोषाप्राप्तिरिति शङ्कते । **अवाच्यमिति** । अवाच्यत्वं संतानस्य धर्मः स्वरूपं वाऽऽद्येऽपि वक्तुमयोग्यत्वं वाच्यत्वाभावो वेति विकल्प्य प्रथमं प्रत्याह । **नैवमिति** । न हि संतानस्यानिर्वाच्यत्वं त्वदिष्टं भिन्नाभिन्नत्ववत्तस्यापि त्वत्पक्षेऽनुपपत्तेरित्यर्थः । द्वितीयं विकल्प्य दूषयति । **अन्येति** । संतानस्य संतानिभ्योऽन्यत्वेनानन्यत्वेनान्यानन्यत्वेन वा वाच्यत्वाभावकल्पने त्रयमपि न युक्तमिति यावत् ॥ ६३७ ॥

---

१ क. जैनः । २ ग. 'र्मोद्भव' । ३ ख. 'ताहा' ।

**अवाच्यं यद्यनन्यत्वे ह्यन्यत्वे वाच्यमेव तत् ॥**
**अथावाच्यं तदन्यत्व इतरत्रास्तु वाच्यता ॥ ६३८ ॥**

हिशब्दसूचितं प्रकटयन्ननन्यत्वपक्षमनूद्यायुक्तत्वं व्यनक्ति । **अवाच्यमिति** । संतानस्य संतानिभ्योऽनन्यत्वे सति तेनाऽऽकारेणावाच्यं चेत्तद्रूपं तदा तस्य तेभ्योऽन्यत्वे विषये वाच्यमेव रूपं स्यात्परस्परविरोधे हि न प्रकारान्तरस्थितिरिति स्थितेरित्यर्थः । अन्यत्वपक्षं प्रत्याह । **अथेति** । तच्चेत्संतानरूपं संतानिभ्योऽन्यत्वे सति तेनाऽऽकारेणावाच्यं तर्हि तस्येतरत्र संतान्यभिन्नत्वे विषये वाच्यताऽस्तु प्रागुक्तन्यायात्तस्मात्पक्षद्वये वाच्यत्वाभावो न धर्मस्तस्येत्यर्थः ॥ ६३८ ॥

**अन्यानन्यत्वयोश्चात्र वाच्यावाच्यत्वयोस्तथा ॥**
**परस्परविरोधित्वान्न स्यादेकत्र संगतिः ॥ ६३९ ॥**

कल्पान्तरं निरस्यति । **अन्यानन्यत्वयोरिति** । अत्र संताने संतानिभ्योऽन्यानन्यत्वे सति तेनाऽऽकारेणावाच्यत्वं चेदेकैकेनाऽऽकारेण वाच्यत्वस्यापि प्राप्तेरेकत्रैव संताने वाच्यत्वावाच्यत्वे स्यातां न चैकदैकत्रान्यानन्यत्वयोर्वाच्यावाच्यत्वयोश्च संभवो विरोधादन्यथा जगति तदुच्छेदादित्यर्थः ॥ ६३९ ॥

**वाच्यं वा यदि वाऽवाच्यं कस्मादित्यभिधीयताम् ॥**
**परबुद्धौ समारोप्यमवश्यं वस्तु चेद्भवेत् ॥ ६४० ॥**

किंच संतानस्वरूपं वाच्यमवाच्यं वा किमर्थं कल्प्यत इति पृष्टे तद्वाच्यमित्याह । **वाच्यं वेति** । तस्य वाच्यत्वे हेतुमाह । **परेति** । न हि प्रश्नानन्तरं तूष्णींभावो युक्तः शिष्यस्य प्रतिवादिनो वा प्रष्टुर्बुद्धौ पृष्टस्यार्थस्यावश्यं व्युत्पाद्यत्वात्कथमपि परबुद्धौ संतानो व्युत्पाद्यते चेत्संतानिवद्वस्तु स्यादवस्तुनो बुद्ध्यनारोहादित्यर्थः ॥ ६४० ॥

**न चावाच्यं भवत्पक्षे किंचिद्वस्त्वभ्युपेयते ॥**
**वक्त्यभावं भवान्यत्र तत्र वस्तुनि का कथा ॥ ६४१ ॥**

वस्तुत्वेऽपि वाच्यत्वाभावः संतानस्य धर्मः स्यादिति चेत्तत्राऽऽह । **न चेति** । तत्र कैमुतिकन्यायमाह । **वक्तीति** । आकाशः प्रतिसंख्यानिरोधश्चेत्यभावमपि भवान्यदा वदति तदा संताने वस्तुनि वाच्यत्वाभावकथाऽपि न ते युक्तेत्यर्थः ॥ ६४१ ॥

**तद्रूपं चेदवाच्यत्वं भवताऽभ्युपगम्यते ॥**
**नैवं साधारणत्वात्स्यात्पुद्गलादेरपीप्यते ॥ ६४२ ॥**

धर्मपक्षं निरस्य पक्षान्तरमाह । **तद्रूपमिति** । तन्निरस्यति । **नैवमिति** । तस्य साधारण्ये हेतुमाह । **पुद्गलादेरिति** । परमाण्वादेर्बाह्यार्थस्यावाच्यतायास्त्वयेष्टत्वादित्यर्थः ॥ ६४२ ॥

---

१ क. ग. °यते ॥ प°।

अतोऽसाधारणं वाच्यं रूपं संतानवस्तुनः ॥
अथावाच्यत्वमेवास्य रूपमित्यभिधीयते ॥ ६४३ ॥

साधारणमप्यवाच्यत्वं संतानस्य स्वरूपं किं न स्यात्तत्राऽऽह । **अत इति** । अवाच्यत्वस्य साधारणत्वादसाधारणं किंचिदस्य रूपं वाच्यमसाधारणरूपवतो घटादेर्द्रव्यत्वादिसाधारणरूपदृष्टेरित्यर्थः । अवाच्यत्वस्य साधारण्यमसिद्धमिति शङ्कते । **अथेति** । अस्यैवावाच्यत्वं रूपं नान्यस्येत्येतदसाधारणं संतानस्य भवति न ह्येतदीयमवाच्यत्वमन्यस्येत्यर्थः ॥ ६४३ ॥

उक्तं तर्हि त्वया रूपं संततेर्घटरूपवत् ॥
यदसाधारणं यस्य रूपं तत्तस्य भण्यते ॥ ६४४ ॥

तत्र दोषं वक्तुं पातनिकामाह । **उक्तमिति** । अवाच्यत्वस्य संतानरूपत्वं साधयति । **यदिति** ॥ ६४४ ॥

ततश्चावाच्यमिति ते प्राप्ता स्वोक्तिविरुद्धता ॥
तथा संतानविच्छिन्नकल्पनाऽपि न युज्यते ॥ ६४५ ॥

अस्तु संतानस्यावाच्यत्वमसाधारणं रूपं किं तावतेति तत्राऽऽह । **ततश्चेति** । किंच संतानोऽनित्यो नित्यो वा तत्रानित्यत्वपक्षं प्रत्याह । **तथेति** । भिन्नत्वादिकल्पनावदिति यावत् । न तावदनित्यः संतानो युज्यते विज्ञानवत्प्रतिक्षणध्वंसितया स्वपक्षहानादिति भावः ॥ ६४५ ॥

संतानस्याव्यवच्छित्तौ सर्वदैव समज्यते ॥
सभागसंततिः सा हि नाविच्छेदमृते यतः ॥ ६४६ ॥

नित्यत्वपक्षं दूषयति । **संतानस्येति** । अस्यार्थः । यदि संतानस्य नित्यता तदा सदैव सजातीयक्षणानामहमित्येवंविधानां घटादिरूपाणां च संततिः स्यात्सा हि संतानस्याविच्छित्तिरुक्तक्षणानामविच्छेदमृते यतो न संगच्छते स्थूलात्मना संतानिनां नैरन्तर्यप्रतिभास एव संतानप्रतिभास इति स्थितेस्तथा चानुष्ठितमोक्षोपायस्यापि संसारो न नश्येन्न च सुषुप्त्यभिघाताद्घटसंततिर्ध्वंस्येतेति ॥ ६४६ ॥

अनित्यत्वमसत्त्वाच्च न सतो संततिर्भवेत् ॥
इत्युक्तेन प्रकारेण संतानासंभवो ध्रुवः ॥ ६४७ ॥

किंच संतानः सत्त्वमसत्त्वेति विकल्प्याऽऽद्ये दोषमाह । **अनित्यत्वेति** । चकारोऽनङ्गीकारसमुच्चयार्थः । संतानदूषणमुपसंहरन्नसत्त्वपक्षं प्रत्याह । **इत्युक्तेनेति** ॥ ६४७ ॥

फलहेतुनिषेधाच्च न युक्तं सर्वथा वचः ॥
संतत्या जायमानैस्तैरिति यत्प्राहृतं पुरा ॥ ६४८ ॥

---

[illegible]

किंच पूर्वापरीभूतानां क्षणानामुपादानोपादेयभावेनोत्पादस्यैव संतानत्वस्वीकारादुत्तरोत्पादे च पूर्वनिरोधादिति न्यायेन क्षणानां तद्भावस्य निषिद्धत्वात्कुतः संतानसिद्धिरित्याह । **फलेति** । संताननिराकरणस्य प्रकृतोपयोगमाह । **नेति** । कार्यकारणप्रबन्धेन दीपादिवदुत्पाद्यमानैर्भावैः शाल्याद्याहृतिरिति त्वदीयं वचो न कथंचिदुचितमिति संततिनिरासादेव स्थितमित्यर्थः ॥ ६४८ ॥

**यच्च दीपप्रकाशादिक्रियावदिति चोदितम् ॥**
**साध्यार्थेन समानत्वात्तदप्युक्तमशोभनम् ॥ ६४९ ॥**

प्रबन्धेनार्चिषो धर्मा धर्मिणीत्यत्र क्षणिकत्वमङ्गीकृत्य दीपादिदृष्टान्ते वैषम्यमुक्तमिदानीमङ्गीकारं त्यक्त्वा दृष्टान्तं विघटयति । **यच्चेति** । क्षणिकस्यापि दीपस्य संतत्या जायमानस्य प्रकाशदाहाद्यर्थक्रियावत्क्षणिकस्यैव प्रबन्धेन जायमानस्य शाल्याहरणादिक्रियेति यच्चोदितं तदयुक्तं दृष्टान्तस्यापि पक्षतुल्यतया क्षणिकत्वासंमतेरित्यर्थः ॥६४९॥

**अर्थक्रिया यथा नास्ति रथादेरुक्तहेतुतः ॥**
**दीपादेरपि नैवासावस्ति तेनैव हेतुना ॥ ६५० ॥**

पक्षतुल्यत्वमुपपादयति । **अर्थक्रियेति** । उक्तहेतुतः क्षणिकत्वादिति यावत् । उक्तो हेतुस्तेनेति परामृश्यते ॥ ६५० ॥

**क्षणिकत्वं यथा नास्ति रथादेर्येन[1] हेतुना ॥**
**दीपादेरपि तेनैव क्षणिकत्वाद्यसंभवः ॥ ६५१ ॥**

रथादेरर्थक्रिया दृश्यमाना दुरपह्नवेत्याशङ्क्याऽऽह । **क्षणिकत्वमिति[2]** । येनार्थक्रियाकारित्वेनेति यावत् । न हि संतानस्यार्थक्रिया निरस्तत्वान्न च संवृते[3] तत्र सा संवृतेः[4] सत्त्वे संतानिवदविद्यात्वव्याघातादसत्त्वे संतानवत्तदयोगान्न च विधान्तरमिष्टं न च संतानिष्वर्थक्रियेत्युक्तमतोऽर्थक्रियाकारित्वे रथादेर्न क्षणिकतेति भावः । क्षणिकत्वादीत्यादिपदेन संतत्या जन्मोच्यते ॥ ६५१ ॥

**एककालौ मतौ यच्च नाशोत्पादौ तुलान्तवत् ॥**
**अहेतुफलतासक्तेर्न चैतदुपपद्यते ॥ ६५२ ॥**

दीपादिदृष्टान्तेन क्षणिकस्यैव रथादेरर्थक्रियेत्ययोगात्तदनुपपत्तिविरुद्धं क्षणिकत्वानुमानमित्युक्तमिदानीं नानुपमृद्य प्रादुर्भावादिति क्षणिकत्वानुमाने परोक्तमनुकूलं तर्कमनुवदति । **एकेति** । उपमृदितबीजादेरङ्कुराद्युदयदर्शनात्पूर्वक्षणनाशोऽनन्तरक्षणोत्पादश्चैककालगतौ दृष्टावतो हेतुफलयोः क्षणिकत्वं न हि बीजे स्थितेऽङ्कुरो जायते नष्टादेव तस्मात्तद्दृष्टेरिति यन्मतमित्यर्थः । तद्दूषयति । **तुलान्तवदिति** । यथा तुलाकोट्योरे-

१ क. ग. °देस्तेन । २ घ. °ति । तेना° । ३ क. संवृत्ते । ४ क. संवृत्तेः ।

ककालयोः शृङ्गयोरिव न हेतुफलता तथा विनश्यदविनश्यतोर्विनाशोत्पादयोर्वा सत्येकक्षणवर्तित्वे न कार्यकारणत्वमतश्च पूर्वोक्तमयुक्तमित्यर्थः ॥ ६९२ ॥

जनकव्यापृतेः पश्चाज्जन्यो निष्पद्यतेऽङ्कुरः ॥
कार्यकारणताभेदस्तयोः स्याद्भिन्नकालतः ॥ ६९३ ॥

भिन्नकालवर्तिनोरेव कार्यकारणत्वस्य दृष्टत्वाच्च न तन्मतमित्याह । जनकेति । बीजाङ्कुरयोर्हेतुफलभावे दृष्टेऽपि किं तयोस्तद्भावे प्रयोजकमित्याशङ्क्य नियतपूर्वोत्तरक्षणवर्तित्वमिति मत्वाऽऽह । कार्येति ॥ ६९३ ॥

न चेत्कारकभेदोऽत्र कालभेदोऽथवेक्ष्यते ॥
कुतो हेतुफलत्वं स्यात्सव्येतरविषाणवत् ॥ ६९४ ॥

बीजाङ्कुरयोः स्वरूपभेदो वा कालभेदो वा नास्ति मानाभावाद्दृष्टेश्चासंमतेरिति शङ्कते । न चेदिति । अत्राङ्कुरादिजन्मनीति यावत् । किमेवं हेतुफलत्वं निराक्रियते किंवैककालयोस्तदापाद्यते नाऽऽद्योऽभ्युपगमभङ्गाद्दृष्टिविरोधाच्च न द्वितीय इत्याह । कुत इति ॥ ६९४ ॥

न च हेतुफलत्वं स्यादेककालीनयोस्तयोः ॥
वैनाशिकेन सत्त्वेन त्वयाऽभ्युपगमात्तयोः ॥ ६९५ ॥

किंचैककालीनयोर्हेतुफलत्वाभावो नास्माभिः साध्यस्तवापि संमतेरित्याह । न चेति । तयोर्बीजाङ्कुरयोरेककालयोर्नैव हेतुफलत्वं स्याद्वैनाशिकेन त्वया तयोरेकस्मिन्क्षणे सत्त्वेनाभ्युपगमाद्विषाणवत्कार्यकारणत्वाभावस्येष्टत्वादिति योजना ॥ ६९५ ॥

न विकारो न चाऽऽरभ्यं बौद्ध कार्यमसंभवात् ॥
विकारे सांख्यसिद्धान्त आरम्भेऽत्यन्तभिन्नता ॥ ६९६ ॥

किंच ते कार्यमारभ्यं परिणामो वेति विकल्प्योभयत्रायोगं प्रतिजानीते । नेत्यादिना । बौद्धेति परः संबोध्यते । यदि वा बौद्धस्याभिमतं कार्यम् । असंभवं साधयति । विकार इति ॥ ६९६ ॥

सत्त्वाद्विनिष्ठितार्थश्च संत्स्रोतोन्तरनिष्ठितः ॥
घटस्तम्भादिवच्चापि मृद्वत्परिणमेत्स्वयम् ॥ ६९७ ॥

अत्यन्तभिन्नत्वं कार्यकारणयोरिष्टमेवेति चेत्तत्राऽऽह । सत्त्वादिति । घटो हि सत्त्वशब्दिताद्घटसंतानाद्विनिष्क्रम्य निश्चयेन स्थितस्तत्संतानवर्तिस्वकारणत्वाभिमतपूर्वघटादत्यन्तभिन्नत्वात्पटादिवत्सच्छब्दवाच्ये संतत्यन्तरे तिष्ठेदतश्च कार्यकारणयोरत्यन्त-

---

१ घ. वा कारणकारकभे । २ क. ग. न वा । ३ ग. न वाऽऽर । ४ ख. निर्गतोऽर्थ । ५ क. म स्रोतो । ख. मन्स्रोतो । ६ घ. त एव का ।

भेदे तद्भावस्यैवायुक्तिरित्यर्थः । अस्तु तर्हि परिणामवादस्तत्राऽऽह । नापीति । युज्यते हि कथंचिन्मृदः सावयवत्वात्परिणामो नैवं विज्ञानं निरवयवं परिणाममर्हति क्षणिकत्वाच्च ब्रह्मणो वैषम्यादित्यर्थः ॥ ६९७ ॥

**नापि चाऽऽरभते कार्यं पुरतः कुम्भकारवत् ॥**
**असत्त्वान्न द्वयं तेऽस्ति सांख्यकाणादपक्षवत् ॥ ६९८ ॥**

आरम्भवादस्तर्हि भविष्यति न च तत्रात्यन्तभेदात्कार्यकारणत्वायोगः कुलालघटयोरिव तत्सिद्धेरित्यत आह । नापीति । यथा कुलालो मृदादिसामग्रीवशाद्घटाद्यारभते स्थायित्वात्तथा क्षणिको न सहकारिवशादपि कार्यमारभते तत्संबन्धायोगात्कार्यक्षणे स्वयमसत्त्वाच्च कार्यस्यापि तथात्वोपगमादारम्यत्वासिद्धिरिति भावः । पक्षद्वयेऽपि साधारणमपसिद्धान्तमाह । न द्वयमिति ॥ ६९८ ॥

**इत्यादिदूषणान्यत्र वक्तव्यानि सहस्रशः ॥**
**न च प्रमाणसद्भावः सर्वस्य ज्ञानमात्रतः ॥ ६९९ ॥**

क्षणभङ्गवादे दोषजातमुक्तमुपसंहरन्दोषान्तरसद्भावं सूचयति । इत्यादीति । यदुच्यते यत्सत्तत्क्षणिकमिति तदसत्सत्त्वस्य सामान्यस्यानुपगमाद्भिन्नेष्वेकार्थताग्रहस्य भ्रमत्वस्वीकारात्स्वरूपस्य च व्यावृत्तत्वे व्याप्तेरननुगमादनुवृत्तस्य च पूर्ववदनिष्टत्वान्न चार्थक्रियाकारित्वं सत्त्वमर्थक्रियायास्तदभावेऽपि सत्त्वादसत्त्वे च तथाविधसत्त्वासिद्धिर्न च कार्यकारणभावादृतेऽर्थक्रियाकारित्वलाभस्तद्भावश्च निरस्तः सत्त्वस्य च क्षणिकाद्भेदे स्थायित्वेऽभेदे न व्याप्यव्यापकभावः क्षणिकत्वस्य च भावस्वरूपत्वे क्षणिको भाव इति पर्यायता धर्मत्वे भेदेऽभेदे च तद्भावासिद्धिरित्येवंविधानि दूषणान्यादिपदोक्तानि । यत्तु वेदा न प्रमाणं नाप्यपौरुषेया नित्या वा संकेतश्च संबन्ध इति तत्र प्रमाणलक्षणे प्रतिविहितत्वादित्यभिप्रेत्याऽऽह । दूषणानीति । किंच क्षणिको भावः स्वक्षणे स्वकार्यं कर्तुं शक्तोऽशक्तो वाऽऽद्ये क्षेपायोगात्तदैव कार्यपरंपरा स्यात् । द्वितीये कदाचिदपि कार्यं न स्याद्द्वितीयक्षणे स्वयमसत्त्वान्न च स्थिरस्येव सहकारिसमवधानसमये कार्यमारभते क्षणिको भावस्तत्समवधानपर्यन्तमनवस्थानात्किंच सहकारिणस्तत्रोपकुर्वन्ति न वाऽऽद्ये तत्कृतोपकारस्ततो भिन्नश्चेत्तत्संबन्धे क्षणिकत्वहानिस्तदसंबन्धे सहकारिवैयर्थ्यम् । एतेनानुपकारकत्वं प्रत्युक्तम् । अभेदे तस्यैव तत्कृतत्वापत्तौ सहकारित्वानुपपत्तिरित्येवंविधानि दूषणान्यत्र भूयांसि वक्तुं योग्यानि तथाऽपि नोद्भाव्यन्ते ग्रन्थभूयस्त्वभयादित्यभिप्रेत्याऽऽह । वक्तव्यानीति । विज्ञानवादिनं प्रति दोषान्तरमाह । न चेति । योगाचारमते सर्वस्य ज्ञानमात्रत्वादतिरिक्तप्रमाणाभावो न चैकस्मिन्नेव मानमेयत्वं विरोधादतस्तन्मतमयुक्तमित्यर्थः ॥ ६९९ ॥

---

१ क. 'त्वाद्ब्रह्म' । २ घ. 'र्यकर' । ३ घ. 'त्वभे' । ४ ख. 'स्य चाभा' । ५ घ. स्थितस्यैव ।

शून्यत्वमपि नैव स्यादेतस्मादेव कारणात् ॥
अहंप्रत्ययगम्यत्वमेकत्वादात्मनो न च ॥ ६६० ॥

उक्तं न्यायं माध्यमिकमतेऽप्यातिदिशति । **शून्यत्वमिति** । सर्वस्येति शेषः । एतस्मात्प्रमाणाभावादिति यावत्[1] । मीमांसकं प्रत्याह । **अहमिति** । एतस्मादेकस्य ग्राह्यग्राहकताया निरस्तत्वादित्यर्थः । एकत्वादिति पाठेऽप्ययमेवार्थः ॥ ६६० ॥

अंशांशित्वेऽपि नैव स्यात्पूर्वोक्तादेव कारणात् ॥
क्षणभङ्गे च भावानां प्रत्यभिज्ञाद्यसंभवः ॥ ६६१ ॥

भाट्टा हि द्रव्यबोधरूपमात्मानमिच्छन्तो द्रव्यांशस्य ग्राह्यत्वं बोधांशस्य ग्राहकत्वमिति व्यवस्थापयन्ति तदेकस्मिन्नात्मनि ग्राह्यग्राहकत्वोपपत्तिरित्याशङ्क्याऽऽह । **अंशेति** । न तावदात्मन्यंशांशित्वं निरंशत्वश्रुतेस्तद्भावेऽपि नैकत्र ग्राह्यग्राहकत्वं तस्य द्वयोर्व्यवस्थितत्वात्तयोरात्माभेदादेकस्मिन्नेव तद्भावे पूर्वोक्तो विरोधः स्यादतो न मीमांसकमतसिद्धिरित्यर्थः । सिंहावलोकनन्यायेन बौद्धं प्रति दोषान्तरमाह । **क्षणेति** । आदिशब्देन स्मरणशेषकर्मानुष्ठानादि गृह्यते ॥ ६६१ ॥

पूर्वदृष्टे पुनः सोऽयमिति बुद्धिर्न युज्यते ॥ ६६२ ॥
भेदः स एवायमिति कालरूपादिभेदतः ॥
यदि नाम तथाऽप्यैक्यं तयोरनुभवाश्रयात् ॥ ६६३ ॥

ननु संततौ संस्काराधानपूर्वकं पूर्वेण चित्तक्षणेन विशिष्टतरस्तमोत्तरोत्तरचित्तक्षणजननं तज्ज्ञानं प्रत्यभिज्ञानं नचानादिकार्यकारणसमर्थचित्तक्षणान्तरोत्पादाद्व्यतिरिक्तं तेन च संतानैक्यधीरिति क्षणभङ्गपक्षेऽपि प्रत्यभिज्ञासिद्धिस्तत्राऽऽह । **पूर्वेति** । दृष्टस्य द्रष्टुश्चैकस्याभावात्संततेश्च निरस्तत्वान्न परस्य प्रत्यभिज्ञा प्रकल्प्यते न च पूर्वोत्तरचित्तक्षणेन तत्र ज्ञानोत्पत्तिरेव सा तथा लोके प्रसिद्ध्यभावादेकस्योभयकालसंबन्धग्राहिज्ञाने तत्प्रसिद्धेरित्यर्थः । सिद्धान्तेऽपि न सा वस्त्वैक्यं साधयति देशकालावस्थाभेदेन चैत्रादिभेददृष्टेरित्याशङ्क्याऽऽह । **भेद इति** । कालादिभेदाच्चैत्रादिभेदो यदि गम्यते गम्यतां नाम तथाऽपि पूर्वोत्तरकालोपलक्षितयोरैक्यं स एवायमित्यनुभूयमानं दुर्वारमिति योजना ॥ ६६२ ॥ ६६३ ॥

सादृश्यात्प्रत्यभिज्ञानं कृत्तकेशनखादिवत् ॥
इति चेन्नैतदेवं स्यात्सादृश्यासंभवात्तव ॥ ६६४ ॥

स्वपक्षे प्रत्यभिज्ञोपपत्तिं विधान्तरेण शाक्यः शङ्कते । **सादृश्यादिति** । प्रकृता

१ ख. 'मेतस्माद' । २ ग. 'कस्माद' । ३ क. ख. 'द्र । आंशा' । ४ क. एकस्मा' । ५ ख. 'त्तर चि' । ६ ख. 'कल्प्यते । ७ ग. तज्ज्ञानं' । ८ ख. 'पलक्षित' ।

प्रत्यभिज्ञा सादृश्यनिमित्ता भ्रान्तिरित्येतन्निमित्तनिराकरणेन निराकरोति । **नैत-दिति** ॥ ६६४ ॥

**सादृश्यासंभवश्चापि सर्वस्य क्षणिकत्वतः ॥**
**नाप्यनेकार्थदर्श्यस्ति सादृश्यं स्याद्यतस्तव ॥ ६६५ ॥**

तन्मते सादृश्यासंभवं साधयति । **सादृश्येति** । भूयोवयवसामान्ययोगो हि सादृश्यं न च सर्वक्षणिकत्वे तत्सिद्धिः क्षणिकानां क्षणानामत्यन्तविलक्षणत्वादित्यर्थः । तदसंभ-वमुक्त्वा तत्प्रतीत्यसंभवमाह । **नापीति** । सादृश्यं दृश्यं स्यादिति शेषः ॥ ६६५ ॥

**सादृश्यान्न च केशादौ स एवायमितीक्षणम् ॥**
**केशादिजातेरेकत्वाद्धीरियं तन्निबन्धना ॥ ६६६ ॥**

दृष्टान्तं विघटयति । **सादृश्यादिति** । कथं तर्हि प्रत्यभिज्ञा तत्राऽऽह । **केशा-दीति** ॥ ६६६ ॥

**न हि लूनोत्थितेष्वेषु विना जातिसमाश्रयम् ॥**
**त एवामी इति मतिः कस्यचिद्व्यक्तिहेतुजा ॥ ६६७ ॥**

किमिति जातिनिमित्तैषा धीर्व्यक्तिनिमित्तैषा किं न स्यादत आह । **न हीति** । केशादिव्यक्तीनामनेकत्वस्य प्रामाणिकत्वात्तद्विरोधान्न व्यक्तिकृता प्रत्यभिज्ञे-त्यर्थः ॥ ६६७ ॥

**अभ्रान्तस्य हि केशादौ यदा सदृशधीस्तदा ॥**
**पूर्ववालैरिमे वालाः सदृशा इति जायते ॥ ६६८ ॥**

किंच भ्रान्तस्य सादृश्यात्प्रत्यभिज्ञानमभ्रान्तस्य वा नाऽऽद्योऽङ्गीकारान्न द्वितीय इत्याह । **अभ्रान्तस्येति** । उक्तेऽर्थे सर्वाविसंवादार्थो हिशब्दः ॥ ६६८ ॥

**त एवामी इति मतिर्जायते न तु कस्यचित् ॥**
**एकजातिनिमित्ताऽतः प्रत्यभिज्ञेयमिष्यते ॥ ६६९ ॥**

अथ सादृश्यादभ्रान्तस्यापि कदाचिद्भवत्यैक्यधीर्नेत्याह । **त एवेति** । केशादि-ष्वभ्रान्तस्यैव प्रत्यभिज्ञा दृश्यमाना कथमपह्नूयते तत्राऽऽह । **एकेति** । व्यक्तिनिमि-त्तत्वासंभवोऽतःशब्दार्थः ॥ ६६९ ॥

**प्रत्यक्षं च तदेवेदमित्येतद्वस्तुकर्मकम् ॥**
**उल्लिखज्जायते साक्षादतीतेऽहन्यधर्मकम् ॥ ६७० ॥**

दार्ष्टान्तिके वैषम्यमाह । **प्रत्यक्षं चेति** । तदेवेदमित्येतत्प्रत्यक्षं परोक्षत्वापरोक्षत्व-धर्मोपलक्षितं घटादिकर्मभूतं साक्षाद्विषयीकुर्वदुत्पद्यते तद्वैषम्यमित्यर्थः ॥ ६७० ॥

**इदमेव तदेवेदमित्येषोऽनुभवो दृढः ॥**
**प्रत्यक्षो बाध्यते नायमनुमानेन केनचित् ॥ ६७१ ॥**

क्षणिकत्वानुमानबाधितत्वाद्भ्रान्तं प्रत्यक्षमित्याशङ्क्याऽऽह । **इदमेवेति ।** अग्न्यनुष्णतानुमानवत्प्रत्यक्षविरोधे क्षणिकत्वानुमानं नोदेतीति भावः । विपरीतं बाध्यबाधकत्वं प्रत्याह । **प्रत्यक्ष इति** ॥ ६७१ ॥

**प्रत्यक्षेण विरोधे हि लिङ्गमाभासतां व्रजेत् ॥**
**यतोऽतो नानुमानेन प्रत्यक्षस्यास्ति बाधनम् ॥ ६७२ ॥**

न हि दहने शैत्यानुमानादौष्ण्यानुभवो बाध्यते तथा प्रकृतेऽपीत्यत्र हेतुमाह । **प्रत्यक्षेणेति ।** अबाधितविषयत्वस्याप्यनुमित्यङ्गत्वादिति भावः । उक्तमुपजीव्य फलितमाह । **यत इति** ॥ ६७२ ॥

**विज्ञातपूर्वकुम्भस्य पुनः कुम्भान्तरेक्षणे ॥**
**सादृश्यप्रत्ययो युक्तो न त्वसौ क्षणिकात्मसु ॥ ६७३ ॥**

सादृश्यप्रत्ययानुपपत्तेश्चेत्यादिभाष्यं व्याकुर्वाणो नाप्यनेकार्थदर्शीत्यत्रोक्तमधिकविवक्षयाऽनुवदति । **विज्ञातेति** ॥ ६७३ ॥

**पूर्वं दृष्ट्वाऽपि चेत्तिष्ठेद्यावदागामिदर्शनम् ॥**
**सादृश्यधीप्रसिद्ध्यर्थमित्यभ्युपगमेऽपि च ॥ ६७४ ॥**
**सिद्धा सादृश्यधीरेवं क्षणिकत्वं तु नश्यति ॥**
**स्वरूपमात्रसंबोधि नाऽऽत्मनोऽपि क्षयोदयौ ॥ ६७५ ॥**
**ज्ञानं प्रत्यभिजानाति ध्वंसमित्वान्नापि चापरम् ॥**
**सादृश्यक्षणिकत्वे द्वे त्वादिष्टे न प्रसिध्यतः ॥ ६७६ ॥**

विवक्षितमधिकं दर्शयति । **पूर्वमिति ।** परामिप्रायमनूद्य क्षणवादहानिदोषमाह । **इत्यभ्युपगमेऽपीति ।** एवं पूर्वार्थदर्शिनो भविष्यदर्थदर्शनपर्यन्तमवस्थाने मतीत्यर्थः । तेनेत्यवोपक्षीणं स्मातिज्ञानामिदमित्यवोपक्षीणं च वार्तमानिकमतस्तेनेदं सादृश्यमित्येकं ज्ञानं नास्तीति चेत्तदा सादृश्यक्षणिकत्वयोरसिद्धिरित्याह । **स्वरूपेति ।** ज्ञानस्य स्वप्रभत्वान्न स्वस्यापि जन्मनाशौ साधयति नापि सादृश्यमन्यविषयत्वान्नाशप्रस्तत्वाच्चातस्तदीयसादृश्याद्यसिद्धिरित्यर्थः ॥ ६७४ ॥ ६७५ ॥ ६७६ ॥

**न च स्मृतिस्तदेवेदमित्येवमनुभूतितः ॥**
**वस्तूल्लेखी ह्यनुभवो नीलरक्तोत्पलादिवत् ॥ ६७७ ॥**

परमते सादृश्याद्यसिद्धस्तदेवेदमित्यध्यक्षस्य सादृश्यनिमित्तभ्रान्तित्वायोगात्तद्बलाद्वस्तु स्थायीति स्थितमथ तदेवेदमिति ज्ञानं न प्रमा किंतु स्मृतिरनुभूतविषयत्वादतो न ततः स्थायित्वमत आह । **न चेति ।** तत्र हेतुः । **अनुभूतित इति ।** हेतुं साधयति ।

---

१ घ. ज्ञानं स्वप्रभवत्वा° । २ क. ध. °भवयोर्° ।

वस्त्विति । यद्वाऽनुभूतिम इत्यपरोक्षत्वं हेतूक्तनं संप्रति तस्यापरोक्षत्वानुभवत्वे स्थायित्वसाधकत्वं फलितमाह । वस्त्विति । तस्यानुभवत्वं स्फोरयति । नीलेति । यथा नीलमुत्पलमित्याद्यभिज्ञानमनुभवस्तथा तदेवेदमिति प्रत्यभिज्ञानं विशेषाभावादनुभवत्वेन वस्तुसाधको भवत्येवेत्यर्थः ॥ ६७७ ॥

नीलोत्पलानुभववत्तदेवेदमितीक्षणम् ॥
अपूर्वार्थपरिच्छेदात्स्मृतिर्नातो भवेदियम् ॥ ६७८ ॥

विमतमनुभवोऽज्ञातार्थत्वात्संमतवन्न हि तत्तेदंतोपलक्षितमैक्यं तत्तायां ज्ञातायामपि ज्ञातमतस्तदेवेदमिति ज्ञानमिष्टसाधकमित्युक्तमर्थमनुमानेन द्रढयति । नीलोत्पलेति । उक्तप्रतीतेरनुभवत्वेन साधकत्वे सिद्धे फलितमाह । स्मृतिरिति ॥ ६७८ ॥

मिथोविभिन्नरूपत्वात्सादृश्यं चेह दुर्घटम् ॥
तदेवेदमिति मतौ वियन्नकुलयोरिव ॥ ६७९ ॥

यत्तु सादृश्याधीनत्वेन मिथ्याधीत्वादिदमसाधकमिति तत्राऽऽह । मिथ इति । क्षणिकत्वेनात्यन्तवैलक्षण्यादिति यावत् । इह मतौ सादृश्यं निमित्तमिति दुर्घटमिति संबन्धः । न हि वियतो नकुलस्य वा किंचिदस्ति सादृश्यं तथा तदेवेदमित्यस्यां बुद्धौ नैव निमित्तभूतं सादृश्यं घटयितुं शक्यं तत्तेदंतयोल्लेखिनोरर्थयोः स्वरसभङ्गुरत्वेन विलक्षणत्वादित्यर्थः ॥ ६७९ ॥

असाधारणरूपेण विभिन्नानां परस्परम् ॥
क्षणानां क्षणिकानां वः सादृश्यं केन हेतुना ॥ ६८० ॥

क्षणिकानां भावानां सादृश्यासंभवं प्रपञ्चयति । असाधारणेति ॥ ६८० ॥

तेनेदं सदृशं वस्तु त्विति चापि न युक्तिमान् ॥
व्यपदेशः पदार्थानां क्षणिकत्वात्स्वभावतः ॥ ६८१ ॥

परपक्षे दोषान्तरमाह । तेनेति । तत्र हेतुः । पदार्थानामिति । स्वरसतो वस्तूनां क्षणिकत्वेन विलक्षणतया सादृश्याश्रयत्वायोगादित्यर्थः ॥ ६८१ ॥

इदं दृष्टमदोऽद्राक्षमिति नैवोपपद्यते ॥
व्यपदेशः स्वभावेन व्यपदेष्टुर्विनष्टतः ॥ ६८२ ॥

तत्रैव व्यपदेशान्तरानुपपत्तिमाह । इदमिति ॥ ६८२ ॥

व्यपदेशक्षणाभावात्पूर्वदृष्टैव संक्षयात् ॥
उत्तरानभिसंबन्धाद्व्यपदेष्टुः कुतो भवेत् ॥ ६८३ ॥
व्यपदेशो विना योगमतीतानागतार्थयोः ॥
तत्स्थास्नुत्वाभ्युपगतौ क्षणिकत्वं विनश्यति ॥ ६८४ ॥

१ ख. °क्षान्° । २ ज. °क्षितमैक्यं ।

दृष्टवत इत्यादिभाष्यमाश्रित्योक्तं व्यनक्ति । **व्यपदेशेति** । तत्र हेतुः । **पूर्वेति** । पूर्वक्षणद्वारा तत्रस्थो द्रष्टा व्यपदेशक्षणेऽपि संबध्यतामिति चेन्नेत्याह । **उत्तरेति** । पूर्वक्षणस्येति शेषः । व्यपदेष्टुर्व्यपदेशक्षणासंबन्धेऽपि किं स्यादिति तत्राऽऽह । **व्यपदेष्टुरिति** । अस्तु तर्हि व्यपदेष्टा स्थायी नेत्याह । **तदिति** ॥ ६८३ ॥ ६८४ ॥

**जात्यन्धवन्न चादृष्ट्वा कश्चिद्व्यपदिशेदिह ॥**
**सादृश्यधिषणां चेह न कश्चित्कर्तुमर्हति ॥ ६८५ ॥**

एकसंततिपतितं विज्ञानं स्वेनादृष्टमपि व्यपदेष्टुमीष्टे तथा च द्रष्टुरेव व्यपदेष्टृतेत्यनियमाद्व्यपदेशस्यानवद्यत्वमित्याशङ्क्याऽऽह । **जातीति** । अद्रष्टुरपि सादृश्यप्रत्ययवद्व्यपदेशोऽपि स्यादिति चेन्नेत्याह । **सादृश्येति** । इहेत्युभयत्रापि व्यवहारदशोच्यते । कश्चिदित्युभयोरपि प्राचीनदर्शनशून्यो विवक्ष्यते ॥ ६८५ ॥

**प्रमाणविरहात्सिद्धा सेयमन्धपरंपरा ॥**
**रक्ताम्बराणां सिद्धान्तस्तथाऽभ्युपगमात्स्वयम् ॥ ६८६ ॥**

फलितमुपसंहरति । **प्रमाणेति** । किंच स्वयमपि बुद्धस्य संमतं स्वसिद्धान्तस्याप्रामाणिकत्वेन हेयत्वमित्याह । **तथेति** । अस्यार्थः । बुद्धो हि विरुद्धार्थप्रतिपत्त्या वेदविमुखं लोकं व्याकुलीकृत्याधो निपातयितुमिमं मार्गं निर्मितवान्बाह्यार्थोपगमः शुद्धस्वरसभङ्गज्ञानमात्रविधिः सर्वशून्यतावादश्चेत्यन्योन्यविरुद्धार्थसमर्थनात्तथा च स्वयमेव तेन स्वसिद्धान्तस्याप्रामाणिकत्वेन हेयत्वामोहार्थत्वेष्टिरन्यपरंपरात्वमस्याभ्युपगतम् । **यथाऽऽह—**

"रिक्तस्य जन्तोर्जातस्य गुणदोषमपश्यतः ।
विलब्धा वत केनामी सिद्धान्तविषमग्रहाः" इति ॥ ६८६ ॥

**निरोधकाले चित्तस्य वासकत्वं न युज्यते ॥**
**क्षणिकत्वादसंबन्धात्संतानान्तरबुद्धिवत् ॥ ६८७ ॥**

क्षणभङ्गपक्षे प्रत्यभिज्ञासंभवादिरुक्तोऽधुना विनश्यद्विज्ञानं स्वगतरूपादिवासनयोत्तरविज्ञानं संक्रम्य नश्यतीति परोक्तिं निरस्यति । **निरोधेति** । वासकत्वमुत्तरबुद्धाविति शेषः । पूर्वबुद्धेरुत्तरबुद्ध्या संबन्धाभावे दृष्टान्तः । **संतानान्तरेति** । भिन्नसंतानवर्तिन्योर्बुद्ध्योर्मिथःसंबन्धाभाववदित्यर्थः ॥ ६८७ ॥

**अकृताभ्यागमो दोषः कृतनाशश्च ते भवेत् ॥**
**तस्माद्यः कर्मणां कर्ता स भुङ्क्ते कर्मणः फलम् ॥ ६८८ ॥**

यदेतत्पूर्वं ज्ञानं नश्यदुत्तरं ज्ञानं संक्रम्य नश्यतीतीष्यते तदायुक्तमित्येवमर्थतया न चेत्यादिभाष्यं व्याख्यायाकृताभ्यागमेत्यादिभाष्यार्थमाह । **अकृतेति** । क्षणभङ्गवा-

---

१ क. ले। २ क. वो।

दिनां कर्तुरेव भोक्तृत्वस्य वक्तुमयुक्तत्वादित्यर्थः । दोषद्वयनिरासायास्मदिष्टस्थाय्यात्माऽऽस्थेय इति फलितमाह । **तस्मादिति** । कर्मकर्तरि तत्फलभोक्तरि च स्थायिन्यात्मन्यास्थिते नाकृताभ्यागमादिर्न व्यपदेशानुपपत्तिर्न प्रत्यभिज्ञाद्यसंयोग इति सर्वं निर्मलमित्यर्थः ॥ ६८८ ॥

**यस्मिन्नेव तु विज्ञान आहिता कर्मवासना ॥**
**फलं तत्रैव संताने कार्पासे रक्तता यथा ॥ ६८९ ॥**

स्थाय्यात्माभावेऽपि नाकृताभ्यागमादिरिति शङ्कते । **यस्मिन्निति** । यथा कार्पासबीजेऽलक्तकादिरसावसिक्ते ततो जायमानाङ्कुरादावत्यन्तभिन्नेऽपि रक्तताऽनुवर्तते तथा यत्रैव विज्ञानसंताने चैत्यवन्दनाद्यनुष्ठानकृतवासनाऽऽहिता तत्रैव तत्फलमिति नियमे कुतोऽकृताभ्यागमादिरित्यर्थः ॥ ६८९ ॥

**इत्यस्मिन्नपि सिद्धान्ते प्रसङ्गो न निवर्तते ॥**
**संतानिव्यतिरेकेण यस्मान्नैव स विद्यते ॥ ६९० ॥**

दूषयति । **इत्यस्मिन्निति** । अकृताभ्यागमादेरिति शेषः । कथमिति चेत्तत्र संताने कर्तृत्वभोक्तृत्वे वदन्प्रष्टव्यः स सत्यो मिथ्या वेत्याद्येऽपि स स्वसंतानिव्यतिरिक्तोऽव्यतिरिक्तो वेति विकल्प्याऽऽद्यं दूषयति । **संतानीति** । व्यतिरेके स्वातन्त्र्यादिदोषस्योक्तत्वादित्यर्थः । तस्मान्न व्यतिरेकपक्षोपपत्तिरिति शेषः ॥ ६९० ॥

**संतानिनस्तु संस्कारा विद्यन्ते परमार्थतः ॥**
**मिथश्चासंगतस्तेषामतो दोषान्न मुच्यते ॥ ६९१ ॥**

द्वितीयं प्रत्याह । **संतानिनस्त्विति** । यद्यपि वस्तुतः संतानिनः सन्ति तथाऽपि ते वासनामात्ररूपाः स्वरमभङ्गुराः स्वीक्रियन्ते तथाच तेषां मिथोऽयोगात्तदभेदाच्च संतानस्यैकत्र कर्तृत्वाद्यसिद्धेरकृताभ्यागमाद्यनिवृत्तिरित्यर्थः ॥ ६९१ ॥

**मानाभावाच्च चेदिष्टा संततिर्येह कल्पिता ॥**
**दोषोक्तिमात्रतस्तर्हि न पक्षः सिद्धिमश्नुते ॥ ६९२ ॥**

द्वितीयमालम्बते । **मानेति** । इह संतानिषु भेदेनाभेदेन वा वास्तवी संततिर्नेष्टा तत्सत्त्वे मानाभावात्कल्पिता तु सेष्यते तदवष्टम्भेन क्षणिकसंतानिषु कर्तृत्वभोक्तृत्वासिद्धिरित्यर्थः । दूषयति । **दोषेति** । संततिश्चेत्कल्पिता न तर्हि सा कर्त्री भोक्त्री वा न च संतानिनां तत्संभवः क्षणिकत्वान्न च संततिद्वारा तेषु तत्सिद्धिः कल्पितसंततेरवस्तुत्वादतः स्वपक्षे स्वयमेव बुद्धेन दोषोक्तेर्गुणानुक्तेश्च स्वपक्षासिद्धिरित्यर्थः ॥ ६९२ ॥

**कार्पासबीजसंस्थैव योक्ता रक्तादिवासना ॥**
**स्वाकारकार्यकृत्सैव न कार्यं कार्यकृन्मतम् ॥ ६९३ ॥**

---

१ क. °संस्थेव । २ ख. ग. °कृत्सैव ।

यत्तु कार्पासे रक्तता यथेति तत्राऽऽह । **कार्पासेति** । या रक्तादिवासना कार्पासबीजस्था दृष्टान्तत्वेनोक्ता सा स्थायिन्येव स्वाकारमङ्कुरादिकार्यं करोति न क्षणिकं कार्यकरं दृष्टं तत्कारणताया निरस्तत्वादतो नासौ क्षणिकेषु संतानिषु हेतुफलत्वे दृष्टान्त इत्यर्थः ॥ ६९३ ॥

**मिथः क्षणानां संबन्धः शृङ्खलाकटकादिवत् ॥**
**सादृश्यव्यपदेशादि सर्वं सुस्थं भवेत्ततः ॥ ६९४ ॥**
**इत्येवं चेन्न तद्युक्तं क्षणिकत्वस्य हानितः ॥**
**क्षणत्रयस्य संव्याप्तेः शृङ्खलाकटकादिवत् ॥ ६९५ ॥**

अकृताभ्यागमादौ साधिते सादृश्याद्यनुपपत्तिमुक्तां परिहर्तुं शङ्कते । **मिथ इति** । यथा शृङ्खलास्थकटकशब्दितवलयानां पटादिमध्यगतनन्त्वादीनां च मिथो भिन्नानामपि संबन्धो दृष्टस्तथा क्षणिकत्वेऽपि भावानां पूर्वापरीभूतानामन्योन्यं संबन्धो हेतुहेतुमद्भावश्च संभवत्यतो व्यपदेशसादृश्यप्रत्यभिज्ञादेः सिद्धिरकृताभ्यागमादिदोषद्वयं चेत्थं सुपरिहरमित्यर्थः । अपसिद्धान्तेन दूषयति । **न तदिति** । क्षणिकत्वहानिं साधयति । **क्षणेति** । शृङ्खलास्थकटकादेर्मध्यवर्तिनः पूर्वापरकटकादिसंबन्धवन्मध्यस्थक्षणस्य पूर्वोत्तरक्षणसंबन्धे सत्येकस्य क्षणत्रयस्य व्याप्त्या क्षणिकत्वक्षतिरित्यर्थः ॥६९४॥६९५॥

**मम तर्वत्यवच्छेदव्यवहारश्च शुध्यति ॥**
**संबन्धाभावतस्तेषां क्षणानामपरस्परम् ॥ ६९६ ॥**

तर्हि तेषां मिथः संबन्धो मा भूदित्याशङ्क्याऽऽह । **ममेति** । पूर्वोक्तसादृश्यादिव्यवहारश्चशब्देन समुच्चितः ॥ ६९६ ॥

**ज्ञानस्य च विशुद्धस्य स्वसंविन्मात्ररूपिणः ॥**
**अन्यस्य तादृशोऽभावात्कुतो दुःखादिसंप्लुतिः ॥ ६९७ ॥**

यत्तु विज्ञानस्य सुखदुःखादिधर्मित्वं तत्प्रत्याह । **ज्ञानस्येति** । शुद्धत्वात्तत्संसर्गदृष्टभावाच्च न ज्ञानस्य दुःखादिसंप्लवः स्वसंवेद्यत्वाङ्गीकाराच्च स्वस्य तदसाधकत्वादित्यर्थः ॥ ६९७ ॥

**न चानेकस्वभावांशवत्त्वं ज्ञानस्य संमतम् ॥**
**स्वच्छैकरूपतस्तस्य दाडिमादिफलं यथा ॥ ६९८ ॥**

ननु ज्ञानस्य शुद्धैकस्वाभाव्यमसिद्धं दाडिमादिवन्नानाविधदुःखाद्यंशवत्त्वाश्रयणादित्याशङ्क्याऽऽह । **न चेति** । यथा दाडिमादिफलमनेकरसमनुभूयते तथा ज्ञानस्यानेकस्वभावदुःखाद्यंशवत्त्वं न ते संमतं स्वच्छैकस्वाभाव्याभ्युपगमाद्वस्तुतो दुःखाद्यंशवत्त्वासंभवादित्यर्थः ॥ ६९८ ॥

**प्रमेयत्वानुभूतेश्च न विज्ञानांशता तथा ॥**
**अनित्यदुःखशून्यादेः पृथुबुध्नादिरूपवत् ॥ ६९९ ॥**

तत्रैव हेत्वन्तरमाह । **प्रमेयत्वेति** । यन्मेयं न तज्ज्ञानांशो यथा घटादि मेयं च दुःखादि न च ज्ञानस्य मेयत्वेऽपि तदंशत्वान्न तद्वदेव दुःखादेस्तन्मात्रत्वं तथा सति ज्ञानं दुःखादिसंप्लवायोग्यं नापि साध्यवैकल्यं ज्ञानांशत्वे तत्प्रकाशत्वानुपपत्तेरित्यर्थः ॥ ६९९ ॥

**ज्ञानमात्रमिदं सर्वं न ज्ञेयं विद्यते पृथक् ॥**
**स्वप्नादिज्ञानदृष्टान्तात्प्रत्ययत्वादिहेतुतः ॥ ७०० ॥**

दृष्टान्तमाक्षिपति । **ज्ञानमात्रमिति** । यज्ज्ञानं तत्स्वातिरिक्तार्थशून्यं यथा स्वप्नज्ञानं ज्ञानं चेदं यद्वा यद्ग्राह्यं तज्ज्ञानाभिन्नं यथा स्वप्नग्राह्यं ग्राह्यं चेदमित्यनुमानाद्बाह्यार्थाभावात्पृथुबुध्नादिरूपवदित्ययुक्तमित्यर्थः ॥ ७०० ॥

**प्रतिज्ञाहेतुदृष्टान्तभेदस्तावत्परस्परम् ॥**
**ज्ञानमात्रस्वभावत्वाद्भवता नाभ्युपेयते ॥ ७०१ ॥**

सर्वस्य ज्ञानमात्रत्वे प्रतिज्ञादिभेदाभावादनुमानानुत्थानमिति प्रागुक्तं स्मारयन्दूषयति । **प्रतिज्ञेति** ॥ ७०१ ॥

**पक्षश्चायं प्रमाणेन प्रत्यक्षेण विरुध्यते ॥**
**शरीराद्दशभेदेन भासन्तेऽर्था घटादयः ॥ ७०२ ॥**

दोषान्तरमाह । **पक्षश्चेति** । विरोधं स्फोरयति । **शरीरादिति** ॥ ७०२ ॥

**अभ्रान्तं चेन्द्रियज्ञानं तेषु चैवोपजायते ॥**
**भिन्नाभिन्नविकल्पार्हं त्वत्प्रत्यक्षं च नेष्यते ॥ ७०३ ॥**

प्रत्यक्षस्य भ्रान्तत्वान्नानुमानविरोधितेति चेन्नेत्याह । **अभ्रान्तं चेति** । ऐन्द्रियकं ज्ञानं कारणदोषबाधवैधुर्यादभ्रान्तं तच्च ज्ञानातिरिक्तेष्वेवार्थेषु जायते तेन विरुद्धमनुमानममानमित्यर्थः । ननु निर्विकल्पकं प्रत्यक्षं ज्ञानार्थभेदं गृह्णदुक्तानुमानानुग्राहकं सविकल्पकं तु तद्भेदं गृह्णदप्यप्रमाणत्वान्नानुमानं बाधते तन्नाध्यक्षविरोधोऽनुमानस्येति नेत्याह । **भिन्नेति** । अस्यार्थः । न तावत्ते विवक्षितं निर्विकल्पकमस्त्यागोपालाविपालपण्डितं ज्ञानमात्रस्य किंचिच्छब्देरूपितस्यैवोत्पत्तेस्तदङ्गीकारेऽपि न तदर्थस्य भेदमभेदं वा कलयति निर्विकल्पकत्वभङ्गान्न च त्वया तद्विकल्पकमिष्टमतस्तद्बलार्थराशेर्ज्ञानमात्रत्वासिद्धेर्न तदनुमानानुग्राहकमिति ॥ ७०३ ॥

**दूरे स्थितं प्रपश्यामि यन्न दृष्टमिदं तथा ॥**
**एवंप्रकारं प्रत्यक्षं स्वसंवेद्यं न बाध्यते ॥ ७०४ ॥**

---

१ घ. 'ब्दानिरूपित' । २ ख. कल्पय' । ३ ख. यत्नादष्ट' । क. यत्नाद' ।

यत्तु सविकल्पकं भेदं गृह्णदप्यमानत्वान्नानुमानबाधकमिति तत्राऽऽह । दूर इति । न हि सविकल्पकस्याप्रामाण्यं तत्प्रामाण्ये बाधकाभावात्स्वयमपि प्रत्यक्षस्य चातुर्विध्यं ब्रुवाणस्तत्प्रामाण्यमनुमन्यते तेन तद्विरोधादनुमानानुत्थानं स्थितमित्यर्थः ॥ ७०४ ॥

**दुःखाद्यात्मकमेवेदं विज्ञानं चेत्त्वयोच्यते ॥**
**तद्वियोगाद्विशुद्धं तदिति वः कल्पना कथम् ॥ ७०५ ॥**

दृष्टान्तं प्रसाध्य पक्षमनूद्य दोषमाह । दुःखादीति ॥ ७०५ ॥

**यतः संयोगिनिर्मुक्तौ वस्तु शुद्धमिहेष्यते ॥**
**स्वरूपस्य तु निर्मुक्तौ किमन्यदवशिष्यते ॥ ७०६ ॥**

स्वभाववियोगादपि शुद्धिसिद्धेः साध्वी कल्पनेत्याशङ्क्याऽऽह । यत इति । अतो न स्वभाववियोग इति शेषः । विपक्षे दोषमाह । स्वरूपस्येति । स्वभावभङ्गे वस्त्वेव नास्तीति कुतः शुद्धिसिद्धिरित्यर्थः ॥ ७०६ ॥

**स्वाभाविकगुणध्वस्तौ रागाद्यागन्तुकात्मता ॥**
**दृष्टा पुष्पेष्विति वचो यच्चापि समुदाहृतम् ॥ ७०७ ॥**

पुष्पस्य स्वाभाविकोऽपि शौक्ल्यादिर्द्रव्यान्तरेण पुष्पकारणे संस्क्रियमाणेऽपग-च्छति रागादिश्चोत्पद्यते तथा ज्ञानस्यापि चतुर्विधभावनाप्रभावाद्दुःखादि स्वाभाविकमेव वियुज्यते शुद्धिश्चोत्पद्यत इति पक्षमनुभाषते । स्वाभाविकेति । समुदाहृतं कार्पासादेः सरक्तता यथेत्यत्र सूचितमित्यर्थः ॥ ७०७ ॥

**सम्यग्दृनिरस्तं तत्पूर्वं वियोगाच्चापि लिङ्गतः ॥**
**संयोगपूर्वता तस्य लिङ्ग्यते मेषयोरिव ॥ ७०८ ॥**

आत्मा कर्त्रादिरूपश्चेदित्यादौ स्वरूपे स्थिते स्वभाववियोगस्य निरस्तत्वान्नैवमि-त्याह । सम्यगिति । कुतो दृष्टेरनुपपत्तिरित्याशङ्क्य दृष्टान्तं निराचष्टे । वियोगा-दिति । यथा मेषयोर्वियोगः संयोगपूर्वकस्तथा पुष्पगुणयोरपि वियोगस्य संबन्धपूर्वता वियोगादेव गम्यते । न हि पुष्पस्य गुणः स्वभावः सत्यपि पुष्पे वियुज्यमानत्वान्मलव-दतः स्वभाववियोगे नासौ दृष्टान्त इत्यर्थः ॥ ७०८ ॥

**द्रव्यान्तराच्छादनाद्वा सहजस्याप्यनीक्षणम् ॥**
**तद्द्रव्यसंक्षये यस्मात्पूर्ववत्सहजेक्षणम् ॥ ७०९ ॥**

अस्तु वा पुष्पस्य स्वाभाविकः शौक्ल्यगुणस्तथाऽपि नासौ स्वभाववियोगे दृष्टान्त इत्याह । द्रव्यान्तरेति । पुष्पशौक्ल्यस्य स्वाभाविकस्यापि द्रव्यान्तरेण च्छन्नत्वाददृ-ष्टिर्नासत्त्वादित्यत्र हेतुमाह । तद्द्रव्येति । दृश्यते हि वस्त्रादौ हरिद्रादिरागापगमे यथा-पूर्वं शौक्ल्यमिति भावः ॥ ७०९ ॥

---

**ग्राह्यग्राहकरूपेण यच्चापि मलकल्पनम् ॥**
**अन्यसंसर्ग्यभावात्तत्तुषकण्डनवद्वृथा ॥ ७१० ॥**

दुःखादेर्ज्ञानयोगित्वकल्पनां निरस्य कल्पनान्तरमनूद्य निरस्यति । **ग्राह्येति** । अन्यसंपर्कादागतस्य मलत्वप्रसिद्धेस्त्वत्पक्षे च ज्ञानादन्यस्यानिष्टेस्तत्प्रयुक्ततया तत्र तदयोगात्तस्य स्वभावो ग्राह्यग्राहकत्वमित्यर्थः ॥ ७१० ॥

**फलाश्रयस्य चाभावान्निर्वाणादि स्वलक्षणम् ॥**
**फलं च घटते नेह युक्तिभिः शाक्यपुङ्गवे ॥ ७११ ॥**

बन्धकल्पनां निराकृत्याभ्युदयनिःश्रेयसकल्पनां निराकरोति । **फलेति** । द्वितीयश्चकारोऽवधारणार्थो नञा संबध्यते । आदिपदेनाभ्युदयोक्तिः ॥ ७११ ॥

**शल्यविद्धस्य तच्छल्यनिष्कर्षोत्थं सुखं फलम् ॥**
**शल्यविद्धमृतौ कस्य फलं स्यादिति कथ्यताम् ॥ ७१२ ॥**

फल्यभावेऽपि फलत्वं स्वर्गादेः स्यादित्याशङ्क्याऽऽह । **शल्येति** ॥ ७१२ ॥

**न संयोगो वियोगो वा यस्य केनचिदिष्यते ॥**
**विनाशितः स्वतस्तस्य कीदृशी फलसंगतिः ॥ ७१३ ॥**

दार्ष्टान्तिकमाह । **नेत्यादिना** ॥ ७१३ ॥

**भवत्पक्षेऽपि तुल्यं चेन्नाविद्यामात्रहेतुतः ॥**
**कारकादिविभागस्य वस्तु पूर्णं स्वतो यतः ॥ ७१४ ॥**

दोषसाम्यं शङ्कते । **भवदिति** । वस्तुनोऽद्वयत्वात्तस्यासङ्गस्य केनचिदपि संयोगवियोगात्फलित्वासंभवे मोक्षासंभवादि चोद्यं तुल्यमित्यर्थः । यद्यपि पूर्णं वस्तु वस्तुतोऽसङ्गमङ्गी क्रियते तथाऽपि क्रियाकारकफलभेदस्याप्यविद्यामात्रकृतत्वादस्मन्मते सर्वो व्यवहारो यतो घटतेऽतो न साम्यमित्याह । **नाविद्येति** ॥ ७१४ ॥

**पुरुषार्थात्मकं वस्तु कूटस्थं तत्स्वतो यतः ॥**
**अविद्यया तथाभूतं तद्ध्वस्तौ किमपेक्षते ॥ ७१५ ॥**

कारकादिविभागोऽभ्युपगतश्चेद्वास्तवोऽस्तु किमित्याविद्यः स्वीकृतस्तत्राऽऽह । **पुरुषार्थेति** । अतोऽविद्ययेत्यतःशब्दो द्रष्टव्यः । तथापि न पूर्णत्वमविद्याध्वस्तावुपायापेक्षत्वादित्याशङ्क्याऽऽह । **तद्ध्वस्ताविति** । वास्तवोपायापेक्षत्वाभावान्न पूर्णताहानिरित्यर्थः ॥ ७१५ ॥

---

१ क. ग. °सर्गभा° । २ क. °शल्य स्व° । ख. °शश्व स्व° । ३ घ. °स्तुतोऽद्व° । ४ क. °तस्वभावतः । ५ ख. ग. तद्धानौ । ६ ख. तद्धानादि° । ७ ख. घ. °पेक्षाभा° ।

**अनुमानेन तादृक्षं वस्तु प्राक्प्रतिपादितम् ॥**
**न चानुमाने दोषोऽपि तत्र कश्चिद्विभाव्यते ॥ ७१६ ॥**

कूटस्थासङ्गाद्वयं वस्त्वेव मानाभावादसिद्धं न चाऽऽगमात्तत्सिद्धिस्तत्प्रामाण्ये विवादादित्याशङ्क्याऽऽह । **अनुमानेनेति ।** विमतो व्यवहारोऽसंहतज्योतिर्निमित्तो व्यवहारत्वादादित्यादिकृतव्यवहारवदित्यनुमानाद्ब्राह्मणादौ यथोक्तं वस्तु साधितमित्यर्थः । कथमुक्तानुमानस्योक्तवस्तुसाधकतेत्याशङ्क्य निर्दोषत्वादित्याह । **न चेति ।** असिद्ध्यादिरनुमानदोषो[3]ऽननुगमादिस्तु शङ्कितुमप्यशक्यो लोकायतविचारे निरस्तत्वादित्यपेर्थः । तत्रेति प्रकृतानुमानोक्तिः ॥ ७१६ ॥

**सहोपलम्भसंस्कारात्पुनर्धीर्यैकदर्शनात् ॥**
**साऽनुमा संभवस्तत्र व्यभिचारस्य चेन्न हि ॥ ७१७ ॥**

कथमस्यानुमानस्य निर्दोषत्वमविभाव्यमानत्वं तु सत्त्वेऽपि दोषस्य संभवतीत्याशङ्क्यानुमानलक्षणाक्रान्तत्वान्निर्दोषतेति वक्तुं तल्लक्षणमाह । **सहेति ।** व्याप्यव्यापकयोः संयोगोपलम्भाद्भवति संस्कारस्ततश्च कालान्तरे तयोरेकस्य व्याप्यस्य दर्शनादुद्बुद्धसंस्कारस्यापरस्मिन्नज्ञाते व्यापके या धीर्जायते साऽनुमा सा च व्यापके व्याप्यस्य व्यभिचाराभावे सति प्रमाणम् । **उक्तं हि—**

"संबन्धो व्याप्तिरिष्टाऽत्र लिङ्गधर्मस्य लिङ्गिना ।
व्याप्यस्य गमकत्वं च व्यापकं गम्यमिष्यते ॥
यो यस्य देशकालाभ्यां समो न्यूनोऽपि वा भवेत् ।
स व्याप्यो व्यापकस्तस्य समो वाऽभ्यधिकोऽपि वा ॥
तेन व्याप्ये गृहीतेऽर्थे व्यापकस्तस्य गृह्यते" इति ।

अस्ति चोक्तानुमानेऽपि व्याप्यव्यापकयोः सहोपलम्भकृतसंस्कारसमुद्बोधवतः समयान्तरे व्याप्यदर्शनादसंनिकृष्टव्यापकधीत्वं न च व्यभिचारादिप्रतिबन्धकसत्त्वमित्यदोषतया तस्य मानतेत्यर्थः ॥ ७१७ ॥

**ननु चाव्यभिचार्येव संबन्धो गमको भवेत् ॥**
**सहोपलम्भमात्रेण न यतः पितृसूनुवत् ॥ ७१८ ॥**

संभवस्तत्र व्यभिचारस्य चेन्न हीति वदता गमकत्वमव्यभिचारस्योक्तं तदमृष्यमाणः शाक्यः स्वभावादेर्गमकत्वं विवक्षुश्चोदयति । **नन्विति ।** तत्राऽऽदौ सिद्धान्तिनोऽभिप्रायमनुवदति । **अव्यभिचारीति ।** व्याप्यस्य धूमादेर्व्यापकेनाग्न्यादिना सहाव्यभिचारी संबन्धो गमको न व्यभिचारी । **उक्तं हि** व्याप्तेश्च दृश्यमानायाः कश्चिद्धर्मः प्रयोजक इति । स चाव्यभिचारः सकृत्सहोपलम्भमात्रान्न सिध्यति यथा पितापुत्रौ

१ ख. 'दृश्च व' । २ क. ग. 'मानतां' । ३ ग. 'षोऽनुग' ।

शिष्याचार्यौ वा सह सकृद्दृष्टवतोऽन्यतरदर्शनेऽन्यतरबुद्धिर्नोत्पद्यते व्यभिचारस्यापि संभवात्तथाऽन्यत्रापि यतो न सहोपलब्धिमात्रेणाव्यभिचारसिद्धिरतो व्यतिरेकोऽप्यग्न्यभावे धूमाभावोऽन्वयवज्ज्ञातव्य इत्यर्थः ॥ ७१८ ॥

**अस्त्वेवं शङ्क्यते नो चेद्व्यभिचारः स्वगोचरे ॥**
**प्रार्थ्यते व्यभिचारो हि जाताशङ्के न गोचरे ॥ ७१९ ॥**

विमतं कस्यचित्प्रत्यक्षं मेयत्वात्कुम्भवदित्यत्रान्वयस्यैव गमकत्वाङ्गीकारात्कृतं व्यतिरेकेणेत्याशङ्क्याऽऽह । **अस्त्विवति** । अनुमानविषये व्यापके व्याप्यस्य व्यभिचारो न शङ्क्यते चेत्तर्हि त्वदभिप्रायेण केवलान्वयिन्यन्वयमात्रस्य स्यादेव गमकत्वं तथाऽप्यनुमानान्तरे नान्वयमात्रस्य तथात्वं व्यापके व्याप्यस्योत्पन्नव्यभिचारशङ्कावतां पुंसां तन्निरासार्थं व्यतिरेकस्यापि प्रार्थनीयत्वाद्द्वावपि चान्वयव्यतिरेकावर्थनीयावनुमेयसत्त्वमेव निश्चेतुं सपक्ष एव सत्त्वमपक्षे चासत्त्वमेव निश्चितमिति बौद्धैरुक्तत्वादित्यर्थः । उक्तेऽर्थे परोक्तं वाक्यं हिशब्देन द्योत्यते ॥ ७१९ ॥

**सहोपलम्भमात्रेण सा तु सर्वत्र जायते ॥**
**धियो नो विषये शङ्का व्यभिचारानुसारिणी ॥ ७२० ॥**

अन्वयदर्शनसंस्कारवतो व्यभिचारशङ्कैव नोदेति तत्र व्यतिरेकप्रार्थनाऽर्थवतीत्याशङ्क्याऽऽह । **सहेति** । शिष्याचार्यादावन्वयोपलम्भेऽपि व्यभिचारदर्शनादित्यर्थः । मात्रपदेन व्यतिरेकदृष्टिव्यावृत्तिः । सर्वत्र व्याप्यव्यापकेष्विति यावत् । अस्तु व्यभिचारशङ्का का हानिरत आह । **धिय इति** । अस्यार्थः । अनुमानविषये व्यापके व्याप्यस्य व्यभिचारानुसारिणी या शङ्काऽस्माकमुत्पद्यते सा गमकत्वविरोधिनी ।

"यावच्चाव्यतिरेकित्वं शतांशेनापि शङ्क्यते ।
विपक्षस्य कुतस्तावद्धेतोर्गमनिकाबलम्" इति न्यायादिति ॥७२० ॥

**तदाशङ्कानिवृत्त्यर्थमतः कार्यं प्रयत्नतः ॥**
**साध्याभावेन तद्धेतोरभावपरिमार्गणम् ॥ ७२१ ॥**

व्यभिचारशङ्काया दोषत्वे तन्निवृत्त्यर्थं व्यापकाभावेन व्याप्याभावो ज्ञातव्य इति फलितमाह । **तदाशङ्केति** । क्वचिद्व्यतिरेकावधारणेऽपि सर्वासु व्यक्तिषु तत्सामान्योपाधौ तन्निर्धारणार्थमुत्साहवता भवितव्यमिति वक्तुं प्रयत्नत इत्युक्तम् ॥ ७२१ ॥

**साध्याभावे कथं हेतोरभाव इति कथ्यताम् ॥**
**ज्ञानलक्षणसंप्राप्तावथवाऽप्यविशेषतः ॥ ७२२ ॥**

अन्वयव्यतिरेकयोर्गमकत्वं सैद्धान्तिकमनुभाष्य व्यतिरेकं दूषयितुं विकल्पयति । **साध्येति** । कथमितिसूचितं कल्पद्वयं विशदयति । **ज्ञानेति** । व्यापकज्ञाने लक्षणानि

---

१ ख. नु । २ ग. ँयो विषयशङ्का या व्यं ।

कारणानि तेषां साकल्येनोदये सत्यनुपलब्ध्या व्यापकाग्न्यभावं ज्ञात्वा तेन व्याप्यधूमाभावो ज्ञातव्योऽथवा विशेषं विना व्यापकाग्न्यनुपलब्धिमात्रेण तदभावं प्रतीत्य तेन धूमाभावोऽधिगन्तव्य इति विकल्पार्थः ॥ ७२२ ॥

**यदि मालक्षणाप्तस्य साध्याभावादि भण्यते ॥**
**तदा भ्राष्ट्राद्यदूरस्थे साध्याभावादि सज्जते ॥ ७२३ ॥**

आद्यमनुवदति । **यदीति** । मानकारणेषु सत्सु प्रतिपत्तुं प्राप्तस्यैव व्यापकस्याग्नेरनुपलब्ध्या तदभावं बुद्ध्वा तेन धूमाभावज्ञानमुच्यते यदीत्यनुवादार्थः । तत्र दूषणमाह । **तदेति** । भ्राष्ट्रो लोष्टविशेषः । **यथाऽऽह**–क्लीबेऽम्बरीषं भ्राष्ट्रो ना कन्दुर्वा स्वेदनी स्त्रियामिति । तत्र संनिकृष्टे लोष्टादौ योग्यानुपलब्धेः साध्याग्न्यभावं बुद्ध्वा तेन धूमाभावधीस्त्वन्मते स्यान्न चेष्यते लोष्टादावग्न्यभाववद्धूमाभावस्यापि सुज्ञानत्वादतो योग्यानुपलब्धिसिद्धाग्न्यभावस्य न धूमाभावलिङ्गतेत्यर्थः ॥ ७२३ ॥

**प्रत्यक्षगोचरे साध्याभावश्चेत्प्रतिपाद्यते ॥**
**प्रत्यक्षेणैव सिद्धत्वादनुमैवं वृथा भवेत् ॥ ७२४ ॥**

न संनिकृष्टे लोष्टादौ व्यापकाग्न्यभावो योग्यानुपलब्ध्या गम्यते किंतु प्रत्यक्षेणेति प्रत्यक्षाभाववादिमतं शङ्कते । **प्रत्यक्षेति** । तदा साध्याभाववद्धूमाभावस्यापि प्रत्यक्षत्वात्साध्याभावलिङ्गेन धूमाभावानुमानमनर्थकमिति दूषयति । **सिद्धत्वादिति** ॥ ७२४ ॥

**अधित्यकादौ देशे तु ह्युपलब्धेरसंभवात् ॥**
**मा भूदग्न्याद्यभावेऽपि कदाचिद्धूमसंभवः ॥ ७२५ ॥**

कल्पान्तरं निरस्यति । **अधित्यकादाविति** । यद्यनुपलब्धिमात्रेणाग्न्यभावं ज्ञात्वा तेन धूमाभावधीस्तदा परोक्षे पर्वतदेशे व्यापकाग्न्युपलम्भासंभवात्तदनुपलब्धिमात्रात्तदभावनिश्चयः स्यान्न च तेन तस्मिन्धूमाभावः शक्योऽनुमातुमुपरि देशे धूमस्य प्रत्यक्षत्वादतो व्यापकाग्न्याद्यभावेऽपि व्याप्यधूमादेः कदाचित्संभवः स मा भूदित्यनुपलब्धिमात्रान्न व्यापकाभावज्ञानमित्यर्थः । उपत्यकाऽद्रेरासन्ना भूमिरूर्ध्वमधित्यकेत्युक्तत्वात्पर्वतस्योपरिभूमिरधित्यकेति द्रष्टव्यम् । आदिपदेनोपत्यका गृह्यते । न खल्वनुपलब्धिमात्रादभावधीरविशेषेण तत्प्रसङ्गादिति हिशब्दार्थः ॥ ७२५ ॥

**यद्येवमन्वयोऽप्यत्र नैव प्राप्नोति तत्कथम् ॥**
**अन्यत्र यदि नाम स्याद्धूमभावेऽग्निभावता ॥ ७२६ ॥**

व्यतिरेकं निराकृत्यान्वयं निराकर्तुमारभते । **यदीति** । दर्शितरीत्या व्याप्यव्यापकयोर्व्यतिरेको नास्तीत्यङ्गीकृतं चेत्तर्हि तयोरन्वयोऽपि न सिध्यतीति यावत् । यत्र धूम-

१ क. ग. 'रस्थसा'।

स्तत्राग्निरिति महानसे दृष्टत्वादन्वयोऽशक्योऽपह्नोतुमिति शङ्कते । **तत्कथमिति** । महानसे धूमाग्न्योरन्वयसत्त्वमङ्गी करोति । **अन्यत्रेति** । सपक्षः सप्तम्यर्थः ॥ ७२६ ॥

**दर्शनादस्तु सा कामं दर्शनाधीनसिद्धितः ॥**
**अधित्यकादौ देशे तु यावत्साक्षान्न दर्शनम् ॥ ७२७ ॥**
**तावन्नावसितुं* शक्यं भवितव्यमिहाग्निना ॥**
**इति धूमोपलम्भत्वाद्धाष्ट्रधूमोपलम्भवत् ॥ ७२८ ॥**

अङ्गीकारमेव स्फोरयति । **दर्शनादिति** । सेति धूमवत्त्वेऽग्नेः सत्तोक्ता । दृष्टस्याङ्गीकारे हेतुमाह । **दर्शनेति** । सर्वस्येति शेषः । अन्वयनिरासस्तर्हि कथमिति तत्राऽऽह । **अधित्यकादाविति** । असंनिकृष्टे देशे धूमाग्न्योर्यावन्नाध्यक्षेणान्वयदृष्टिस्तावत्तत्राग्निना भाव्यमिति न निश्चेतुं शक्यमन्वयस्यागृहीतत्वादित्यर्थः । अथोपरि देशे धूमं दृष्ट्वा तेनात्राग्निरस्तीति निश्चयः सिध्यति तत्राऽऽह । **धूमेति** । अयं हि धूमोपलम्भोऽग्निं व्यभिचरति विशिष्टधूमोपलम्भत्वाल्लोष्टादिनिविष्टधूमदृष्टिवत्तस्मान्नोपलम्भ्यमानेन धूमेनाग्निसत्त्वमनुमातुं शक्यमन्वयव्यतिरेकयोर्दुर्ज्ञानत्वादित्यर्थः ॥ ७२७ ॥ ७२८ ॥

**इदं तावद्वदत्वत्र लिङ्गलक्षणतत्त्ववित् ॥**
**धूमादिलिङ्गेनेहार्थो भवता कोऽनुमीयते ॥ ७२९ ॥**

अन्वयव्यतिरेकाख्यं गमकं निराकृत्य गम्यं निराकर्तुं विकल्पयति । **इदं तावदिति** । अत्रेत्यनुमानभूमिरुक्ता । इहेति धर्मी पर्वतादिः । किमग्निरनुमेयः किंवा पर्वतादिर्देश[1]विशेषोऽथवा तयोः संबन्धो यद्वा तन्मात्रमिति विकल्पार्थः ॥ ७२९ ॥

**नाग्निस्तस्य प्रसिद्धत्वान्नापि देशः प्रसिद्धितः ॥**
**न च संबन्धमात्रं स्याद्यथोक्तादेव कारणात् ॥ ७३० ॥**

नाऽऽद्य इत्याह । **नाग्निरिति** । न द्वितीय इत्याह । **नापीति** । न तृतीयः संबन्धस्य संबधिभ्यां भेदाभेदाभ्यां दुर्भणत्वादित्यभिप्रेत्य चतुर्थं प्रत्याह । **न चेति** । स्यादनुमेय इति शेषः । यथोक्तं कारणं प्रसिद्धत्वेन सिद्धसाध्यत्वम् ॥ ७३० ॥

**तस्मान्नैवानुमा नाम मानं युक्तिमदिष्यते ॥**
**मेयाभावादिति प्राप्तावत्र प्रतिविधीयते ॥ ७३१ ॥**

गम्यगमकयोर्दुर्निरूपकत्वे फलितमुपसंहरति । **तस्मादिति** । मेयाभावो गमकाभावस्योपलक्षणम् । सिद्धान्त्यभिप्रेतगम्यगमकाभावेनानुमानप्रामाण्यायोगादनुपलब्धिस्वभावकार्याणां त्रिरूपहेतुद्वारा गमकत्वं गम्यत्वं च स्वरसभङ्गुरस्य वाऽन्यापोहस्य वा तद्वतो वेति पूर्वपक्षमुपसंहरति । **इति प्राप्ताविति** । सिद्धान्तमवतारयति । **अत्रेति** ॥ ७३१ ॥

---

* अवसितुमिति च्छान्दसमवसातुमित्येतत् ।

---

१ घ. °दिदेश° । २ क. ख. °मकभा° ।

**सहोपलब्धिसंस्कारवशाद्धूमादिदर्शनात् ॥**
**अग्न्यादौ विप्रकृष्टेऽर्थे निश्चिता जायते मतिः ॥ ७३२ ॥**

यत्तावदनुमानप्रामाण्यं दुष्प्रतिपादमिति तत्र संदिग्धत्वाद्वा विपर्यस्तत्वाद्वाऽनुत्पन्नत्वाद्वा योग्यसामग्रीराहित्याद्वा वैफल्याद्वा तदप्रामाण्यं नाऽऽद्यः कोटिद्वयास्पर्शित्वात्तस्येति मत्वाऽऽह । **सहेति** । व्याप्यव्यापकयोः सहोपलम्भाद्भवति संस्कारस्तस्माच्च कालान्तरे व्याप्यदर्शनवशादुद्बुद्धादज्ञाते व्यापके धीरसंदिग्धा जायते तथाच संदिग्धतया न तदप्रामाण्यमित्यर्थः ॥ ७३२ ॥

**लिङ्गात्तावदिदं ज्ञानं जातं बाधकवर्जितम् ॥**
**उत्पन्नत्वात्तदुत्पन्नं नानुत्पन्नं कथंचन ॥ ७३३ ॥**

द्वितीयं प्रत्याह । **लिङ्गादिति** । तृतीयं निराह । **उत्पन्नत्वादिति** । लिङ्गाल्लिङ्गिज्ञानस्योत्पन्नत्वप्रतीतेरिति हेत्वर्थः ॥ ७३३ ॥

**जातं किमविनाभावसंबन्धेनेदमीदृशम् ॥**
**किंवा नेति परीक्षेयं जातत्वात्स्यादपार्थिका ॥ ७३४ ॥**

चतुर्थं शिथिलयति । **जातमिति** । इदं व्यापकज्ञानमीदृशं व्याप्यधीसमुत्थं किं तयोरव्यभिचरितसंबन्धेन जातं किंवा व्यभिचरितसंबन्धादिति निरूपणा विफलैव व्यापकधियो जातत्वाद्दृष्टतदीयजन्मवशाद्योग्यसामग्र्यस्य कल्प्यत्वात्तस्य विशेषतो दुर्निरूपत्वस्येष्टत्वात्प्रसिद्ध्या व्यवहारो न तस्या मूलमस्तीति स्थितेरित्यर्थः ॥ ७३४ ॥

**सर्वथा फलवज्ज्ञानं जातत्वान्न तदन्यथा ॥**
**तस्मात्प्रत्यक्षवत्किंचिद्व्यभिचारकृदञ्जसा ॥ ७३५ ॥**
**यावन्नेक्षामहे तावन्नाप्रमाणमितीर्यते ॥**
**तदपह्नवमानस्य तवात्यन्तमसंभवात् ॥ ७३६ ॥**

पञ्चमं प्रत्याह । **सर्वथेति** । संबन्धमात्रादव्यभिचारिसंबन्धाद्वा यथाकथंचिद्व्यापकज्ञानं जातं चेत्तर्हि तदसंदिग्धाविपर्यस्ततया जातत्वाद्विषयाभिव्याप्तिफलवदेव न तद्विफलमित्यर्थः। किंचानुमानस्य तात्त्विकं प्रामाण्यमपह्नूयते व्यावहारिकं वा नाऽऽद्योऽभ्युपगमादिति मन्वानो द्वितीयं निराह । **तस्मादिति** । अनुमानस्य व्यवहाराङ्गत्वोपलम्भस्तच्छब्दार्थः । तस्य व्यावहारिकप्रामाण्ये प्रत्यक्षवदित्युदाहरणम् । किंचिदित्युपाध्यादिकथनम् । व्यभिचारकृद्व्याप्यस्य व्यापकेनेति शेषः । यावत्तावदिति प्रामाण्यस्वतस्त्वं सूच्यते ।

"अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः ।
दृष्टैरपि न तैरिष्टा व्यापकांशावधारणा" ॥

---

१ ख. ग. °तीक्ष्यते ।

इति न्यायादनौपाधिकव्याप्तिनिश्चयादेवानुमाप्रवृत्तिरिति चेन्नोपाधेर्दुरधिगमत्वात्साधनाव्यापकः साध्यव्यापकः स इति चेन्न व्याप्त्युपाधिधियोरन्योन्याश्रयत्वादुपाधेः साध्येन व्यभिचारानुपलम्भमात्रेण न त्वनौपाधिकी व्याप्तिरिति चेत्तर्हि हेतोरपि तन्मात्रेण गमकता स्यान्न चैवं हेतुतदाभासाव्यवस्था तत्तल्लक्षणाक्रान्तत्वेन प्रतीत्या तद्व्यवस्थासिद्धेरिति भावः । यत्तु साध्यस्य दुर्निरूपत्वादनुमानाप्रामाण्यमिति तत्राऽऽह । तदिति । तस्यानुमानप्रामाण्यस्यापह्नवे मानोऽभिमानो यस्य तस्य तवानुमाप्रामाण्यमत्यन्तमेवापह्नुवानस्य भोजनादौ प्रवृत्तेरसंभवाज्जीवनदौर्लभ्यं न च साध्यं दुर्वचं संदिग्धस्य प्रमित्सितस्य तद्भावात्तस्माद्धर्मविशिष्टस्य धर्मिणः स्यात्प्रमेयतेत्युक्तेरित्यर्थः ॥ ७३५ ॥ ॥ ७३६ ॥

**अत्राऽऽह यदि विज्ञानजन्ममात्रात्प्रसिध्यति ॥**
**प्रतिज्ञामात्रतः सिद्धेर्वृथा स्याद्धेतुकीर्तनम् ॥ ७३७ ॥**

प्रत्यक्षवदनुमानस्य प्रामाण्ये दोषं शङ्कते । **अत्राऽऽहेति** । तमेव वक्तुं सिद्धान्तमनुवदति । **यदीति** । प्रामाण्यमिति शेषः । विवक्षितं दोषमाह । **प्रतिज्ञेति** । सिद्धेर्व्यापकज्ञानस्येति शेषः ॥ ७३७ ॥

**बाढमेवं भवेदेतदाशङ्काकारणं न चेत् ॥**
**किंचित्तत्रोपलभ्येत ह्यनवद्यं भवेद्वचः ॥ ७३८ ॥**

सहोपलम्भसंस्कारोद्बोधवतो व्याप्यदर्शनादज्ञाते व्यापके बुद्धिरनुमानमिति स्थितेरेवंविधानुमानस्य प्रतिज्ञामात्रादसिद्धेरुपयुक्तं परार्थानुमाने हेतुकीर्तनं स्वार्थानुमाने तु तद्दर्शनं परार्थानुमानं त्रिरूपलिङ्गाख्यानं स्वार्थं तु त्रिरूपाल्लिङ्गादनुमेये ज्ञानमित्युपगमादिति मत्वा प्रकारान्तरेण परिहरति । **बाढमिति** । एतद्व्यापकज्ञानमेवं प्रतिज्ञामात्राद्भवेन्नात्र विगानमित्यङ्गीकारार्थः । तमेव व्याकरोति । **आशङ्केति** । प्रतिज्ञावाक्यार्थे व्यापके प्रतिपन्ने विशेषादर्शनादि संशयकारणं न दृश्यते चेत्प्रतिज्ञावाक्यं निर्दोषं हेत्वनपेक्षमेव व्यापकं निश्चाययतीत्यर्थः । वचसो निर्दोषस्य निश्चायकत्वं निर्दोषत्वादेपितव्यमिति हिशब्दार्थः ॥ ७३८ ॥

**पुरुषादिनिमित्तस्तु जायते यत्र संशयः ॥**
**अन्वयव्यतिरेकाभ्यां हेतोः स्यात्तत्र निश्चयः ॥ ७३९ ॥**

कुत्र तर्हि हेतुरुपयुज्यते तत्राऽऽह । **पुरुषादीति** ।[1] ...उक्तृश्रोतृकरणविषयादिप्रयुक्तो यत्र प्रतिज्ञार्थे संशयस्तत्र हेतोरन्वयादिवश... शिंशपेति ...ान्वयादिरयुक्तो[2] यत्र धूमस्तत्राग्निरित्यन्वयस्य महानसे व्यक्तत्वाल्लो...भावस्येष्टत्वादतः शिं...न्न व्यभिचारो यत्र नाग्निर्न तत्र धूमोऽपीति व्यतिरेकस्य शीतह...पायाः स्वभावो वृक्षतेत्य योग्यानुपलम्भा-

---

१ क. ख °दन्यार्ति° । २ क. °दिरयुक्त° ।

भावान्नाग्न्यभावनिश्चितिरिति नासौ व्यतिरेकभूमिर्न च पक्षस्यैव व्यतिरेकस्थलत्वमतो हेतोरन्वयादिना व्यापकनिश्चयोऽन्वयव्यतिरेकपक्षधर्माख्यत्रिरूपवन्ति चत्वारि लिङ्गानि कार्यकारणस्वभावानुपलब्ध्याख्यानीति परैरिष्टत्वादिति भावः ॥ ७३९ ॥

**उत्पन्न एव ज्ञानेऽतस्तत्संदेहनिवृत्तये ॥**
**अन्वयव्यतिरेकौ स्तो न ताभ्यामनुमेयधीः ॥ ७४० ॥**

प्रतिज्ञावाक्यार्थनिश्चयोऽन्वयादिमद्धेत्वपेक्षश्चेत्प्रतिज्ञावाक्यस्यान्वयाद्यपेक्षया स्वार्थनिश्चायकत्वात्परतः प्रामाण्यापत्तेः स्वतः सर्वप्रमाणानां प्रामाण्यमिति गृह्यतामित्यादिन्यायविरोधः स्यादित्याशङ्क्याऽऽह । **उत्पन्न इति** । प्रतिज्ञावाक्याद्व्यापकज्ञाने जाते सत्येव पुरुषापराधादिहेतूत्थतत्संशयध्वंसार्थावन्वयव्यतिरेकौ न साक्षाद्व्यापकधीहेतू तदनुमेयज्ञानस्य प्रतिज्ञावाक्यादेव सिद्धेः संशयनिरासद्वारा चान्वयादेस्तत्रोपयोगान्न किंचिदवद्यमिति भावः ॥ ७४० ॥

**संदेहनिर्णयादन्यत्स्वभावादि यदुच्यते ॥**
**तस्यानुमित्यनङ्गत्वात्प्राप्तं तत्तुषकण्डनम् ॥ ७४१ ॥**

अन्वयव्यतिरेकवतो हेतोः संशयध्वंसद्वारा गमकत्वं सामान्येतररूपत्वादित्यादिन्यायेनाग्न्यादेर्गम्यत्वमिति सिद्धान्तमुक्त्वा परेष्टं गमकमनुवदति । **संदेहेति** । प्रतिज्ञावाक्याज्जाते व्यापकज्ञाने पुरुषादिनिमित्तो यः संशयस्तद्ध्वंसिनिर्णयकृदन्वयादिमद्धेतोरतिरिक्तस्वभावकार्यानुपलब्धिरूपं त्रितयं गमकमिति यद्बुद्धेनोच्यते तत्रैवाविनाभावात्तद्वतश्च गमकत्वादित्यर्थः । तत्र दूषणहेतुमाह । **तस्येति** । प्रतिज्ञातो व्यापकज्ञानादन्वयादिमता च हेतुना संशयादिध्वंसात्त्वदिष्टस्वभावादेः साक्षात्परंपरया वाऽनुमानाङ्गत्वाभावान्न तदर्थवदित्यर्थः ॥ ७४१ ॥

**अविनाभावसिद्ध्यर्थं नन्विदं वर्ण्यते त्रयम् ॥**
**त्रिष्वेव त्वविनाभावाद्भद्रं तैरपि कीर्तितम् ॥ ७४२ ॥**

तदवैयर्थ्यं शङ्कते । **अविनाभावेति** । अविनाभूतं हि गमकं स्वभावादि चाविनाभावसिद्ध्यर्थमिष्टं तन्न व्यर्थमित्यर्थः । स्वभावादेरविनाभावसाधकत्वं बौद्धैरपि व्याख्यातमित्याह । **त्रिष्वेवेति** । यत्र स्वभावाद्यस्ति तत्राविनाभावो यथा शिंशपावृक्षादिष्वतः स्वभावाद्यविनाभावद्वारा व्यमित्यङ्गत्वादर्थवदिति तैरुक्तम् । **यथाऽऽह** कीर्तिः—

"पक्ष [illegible] व्याप्तो हेतुस्त्रिधैव सः ।
[illegible]अ परप्रयुक्तानां व्यातांभासस्ततोऽपरः" इति ।

तदादेयं स्वभा[illegible]रपि न तैरिष्टा व्यापका

---

१ ख. ग. °र्तं [illegible] °णमा° ।

**स्वभावादविनाभावे स्यादौष्ण्यस्याग्निलिङ्गता ॥**
**स्वभावो[1]ऽथाविनाभावात्कार्ये प्राप्ता स्वभावता ॥ ७४३ ॥**

कथं स्वभावस्याविनाभावार्थत्वं किं स्वभावस्याविनाभूतत्वं किंवाऽविनाभूतस्य स्वभावत्वं तत्राऽऽद्ये दोषमाह । **स्वभावादिति** । वृक्षोऽयं शिंशपात्वादितिवदग्निरयमौष्ण्यादित्यपि स्यान्न च तस्याग्निगमकत्वं व्याप्यव्यापकभावाभावे गम्यगमकत्वाभावाद्व्याप्यस्य गमकत्वं च व्यापकं गम्यमिष्यत इति न्यायादित्यर्थः । द्वितीयमनूद्य दूषयति । **स्वभाव इति** । अविनाभूतस्य स्वभावत्वं चेदग्निरत्र धूमादित्यत्रापि स्वभावत्वमविनाभूतत्वाद्भवेत्तत्र द्वौ वस्तुसाधनावेकः प्रतिषेधहेतुरितिस्थितिहतिरित्यर्थः ॥ ७४३ ॥

**औष्ण्यस्वभावो दृष्टोऽग्निस्तस्यान्यत्राऽपि दर्शनात् ॥**
**क्षितितोयाग्निमरुतां दृष्टा स्पर्शस्वभावता ॥ ७४४ ॥**

यदाद्येऽग्निलिङ्गत्वमौष्ण्यस्योक्तं तदिष्टमेव न चैकत्र गम्यगमकत्वायोगः सर्व एवायमनुमानानुमेयव्यवहारो बुद्ध्यारूढेन धर्मधर्मिभेदेनेत्युक्तत्वादित्याशङ्क्याऽऽह । **औष्ण्येति** । यद्यप्यग्निरौष्ण्यस्वभावो दृष्टस्तथाऽपि न तस्य तेनाविनाभूतत्वमादित्यादावपि दृष्टत्वादतः स्वभावस्य नाविनाभूतत्वं न च बुद्ध्यारूढेन धर्मधर्मिभेदेनानुमानानुमेयव्यवहारो गम्यगमकत्वयोः साध्यसाधननिष्ठयोरबाध्यत्वान्न च व्यवस्थया बुद्धावारोहादयमदोषो व्यवस्थापकदोषस्यापि बुद्ध्यारूढस्य तदेनातिरिक्तस्य तथैव व्यवस्थापकत्वायोगादित्यर्थः । इतश्च न स्वभावस्याविनाभूततेत्याह । **क्षितीति** । वायुस्वभावस्यापि स्पर्शस्यान्यत्र दृष्टेर्न तस्याविनाभूततेत्यर्थः ॥ ७४४ ॥

**मतं चेदस्वभावोऽसौ यो नैकार्थप्रवृत्तिमान् ॥**
**धवादावपि तद्वृत्तेर्वृक्षात्मा शिंशपा न हि ॥ ७४५ ॥**

औष्ण्यादिर्न स्वभावोऽनेकवृत्तित्वात्संयोगवदिति शङ्कते । **मतमिति** । वृक्षत्वं शिंशपायाः स्वभावस्त्वयोच्यते वृक्षोऽयं शिंशपात्वादिति स्वभावहेतोरुदाहरणात्तच्च वृक्षत्वं धवखदिरादिष्वपि वर्तते तथाच शिंशपाया वृक्षत्वं स्वभावो न स्यादिति दूषयति । **धवादाविति** ॥ ७४५ ॥

**शिंशपा वृक्ष एवेति ह्यविनाभावकारणात् ॥**
**क्षणिकत्वं न भावानां स्वभावः स्यात्तथा सति ॥ ७४६ ॥**

अनेकवृत्तित्वं नास्वभावत्वे हेतुर्वृक्षत्वे व्यभिचारादित्ययुक्तं[3] तत्र साध्यस्यापि हेतुवद्भावादित्याशङ्क्याऽऽह । **शिंशपेति** । वृक्षस्वभाव एव शिंशपेति त्वयेष्यते यत्र शिंशपात्वं तत्र वृक्षत्वमित्यविनाभावकारणत्वेन स्वभावस्येष्टत्वादतः शिंशपाया न स्वभावो वृक्षतेति वदतः स्वमतहानिरित्यर्थः । शिंशपायाः स्वभावो वृक्षतेत्यत्र परपरिग्रहपरि-

---

१ ख. °वोऽप्यवि° । २ घ °दन्यार्ति° । ३ क. °दित्युक्तं ।

द्योती हिशब्दः । अनेकवृत्तित्वहेतोर्व्यभिचारान्तरमाह । क्षणिकत्वमिति । तथा सत्यनेकवृत्तेरनेकस्वभावत्वे सतीति यावत् ॥ ७४६ ॥

**तस्यानेकार्थशायित्वादहेतुत्वं प्रसज्यते ॥ ७४७ ॥**
**क्षणिकत्वं यदैकस्य तदाऽसाधारणात्मता ॥**
**हेतोः साधारणात्मत्वं यदाऽनेकस्य तन्मतम् ॥ ७४८ ॥**

तस्यास्वभावत्वापत्तौ हेतुमाह । तस्येति । न च तस्यास्वभावत्वमेव भावानां स्थायित्वस्वाभाव्यापत्त्या राद्धान्तविरोधादित्यवधेयम् । क्षणिकत्वस्य स्वभावत्वेनेष्टस्यानेकवृत्तित्वमसिद्धमिति कुतो व्यभिचारस्तत्राऽऽह । अहेतुत्वमिति । अनेकवृत्तित्वाभावे तस्याहेतुत्वप्रसङ्गं प्रकटयति । क्षणिकत्वमिति । विमतं न सुखं क्षणिकत्वाद्दुःखवदित्यत्र क्षणिकत्वमेकस्यैवानेकस्य वा नाऽऽद्यः सति सपक्षे तदप्रवेशादसाधारणत्वापत्तेर्द्वितीये प्रकृतहेतोरनैकान्तिकतेत्यर्थः ॥ ७४७ ॥ ७४८ ॥

**अग्नेर्धूमाच्च धूमस्य कार्यत्वस्य समीक्षणात् ॥**
**अनैकान्तिकता हेतोः कार्यत्वस्येह सज्जते ॥ ७४९ ॥**

स्वभावस्य गमकत्वं निरस्य कार्यस्य तन्निरस्यति । अग्नेरिति । धूमस्य कार्यत्वमग्निकृतं पूर्वधूमक्षणकृतं च दृष्टं पूर्वोत्तरक्षणानां हेतुफलभावोपगमादतो धूमादत्राग्निरिति न शक्यमनुमातुं कार्यत्वस्य धूमाग्न्यविनाभावहेतोर्व्यभिचारित्वान्न हि धूमाग्न्योरन्वयव्यतिरेकौ धूमादपि परस्य तत्सिद्धेरित्यर्थः । धूमलिङ्गकानुमानमिहेत्युक्तम् ॥ ७४९ ॥

**यदि नाम सदा स्पर्शो वाय्वादावपि वर्तते ॥ ७५० ॥**
**नैतावता भवेल्लोके गौरस्पर्शस्वभाविका ॥**
**भुवो हि स्पर्शवत्त्वस्य लोकेऽस्मिन्सुप्रसिद्धितः ॥ ७५१ ॥**

द्वयोर्गमकत्वं निराकृत्य स्वभावपक्षे दोषान्तरं वक्तुमुक्तमनुवदति । यदीति । न हि स्वभावस्याविनाभूतत्वं नियतं क्षितिस्वभावस्यापि स्पर्शस्य पवनपाथस्तेजःसु दृष्टेरित्यर्थः । गौः पृथिवी तस्याः स्वाभाविकः स्पर्श इत्यत्र हेतुमाह । भुवो हीति ॥ ७५० ॥ ७५१ ॥

**किंचाप्यव्यभिचारेण स्वभावत्वं विवेक्षतः ॥**
**स्वभावान्नैव संसिध्येद्वस्तुनोऽव्यभिचारिता ॥ ७५२ ॥**

स्वभावस्याविनाभूतत्वे दोषमुक्तमनुभाष्याविनाभूतस्य स्वभावत्वे कार्यस्यापि स्वभावत्वापत्तिरित्येतदेव न दूषणं किंत्वन्यदप्यस्तीत्याह । किंचेति । दूषणान्तरं स्फुटयति । स्वभावादिति । अविनाभूतत्वात्स्वभावत्वं चेत्स्वभावादप्यविनाभूतत्वं वस्तुनो न सिध्यतीति यावत् ॥ ७५२ ॥

---

१ ख. ग. सज्यते । २ क. ख. ग. °वक्षितः ।

**त्रिष्वेव त्वविनाभावादिति यद्धर्मकीर्तिना ॥**
**प्रत्यज्ञायि प्रतिज्ञेयं हीयेतासौ न संशयः ॥ ७५३ ॥**

मा भूदविनाभावः स्वभावाधीनः का हानिस्तत्राऽऽह । **त्रिष्वेवेति** । तदधीनाविनाभावानुपगमे त्रिष्वेव त्वविनाभावात्त्रिविधो हेतुरिति च प्रतिज्ञाहानिरित्यर्थः ॥७५३॥

**तथैवाव्यभिचारेण स्वभावत्वं विवक्षतः ॥**
**पुरैवाव्यभिचारस्य संसिद्धेः किं ततोऽपरम् ॥**
**स्वभावहेतुना साध्यं वद यत्ते विवक्षितम् ॥ ७५४ ॥**

अविनाभूतत्वाधीनं स्वभावत्वमित्यत्र दोषान्तरमाह । **तथेति** । स्वभावादविनाभावासिद्धौ प्रतिज्ञाहानिवदिति यावत् । स्वभावहेतुना तावदव्यभिचारः साध्यते तेनैव स्वभावत्वं साधयतस्तत्सिद्धेः पूर्वमेवाव्यभिचारस्य सिद्धत्वान्न स्वभावहेतुना साध्यं किंचिदस्ति तन्नाविनाभूतत्वाधीना स्वभावतेत्यर्थः ॥ ७५४ ॥

**अग्नेश्चाव्यभिचारित्वात्कार्यस्यापि स्वभावता ॥**
**धूमस्याऽऽप्नोति भेदो वा द्वयोर्हेत्वोर्निवर्तते ॥ ७५५ ॥**

अविनाभूतत्वात्स्वभावतेत्यत्रैवोक्तदोषानुवादपूर्वकं फलितं दोषान्तरमाह । **अग्नेश्चेति** । यद्यव्यभिचारेण स्वभावः साध्यते वृक्षोऽयं शिंशपात्वादिति तदा धूमस्याग्निकार्यस्यापि तत्स्वभावता स्यादव्यभिचारस्य सत्त्वात् । **यथाऽऽह**—कार्यस्यापि स्वभावप्रतिबन्धे तत्स्वभावस्य तदुत्पत्तेरिति । ततश्च स्वभावकार्यहेत्वोर्भेदध्वस्तेस्त्रिष्विविति प्रतिज्ञायोगात्त एते कार्यस्वभावानुपलब्धिलक्षणास्त्रयो हेतव इति कथा वृथेत्यर्थः । वाशब्दश्चार्थः ॥ ७५५ ॥

**कार्यत्वेऽपि च धूमादेर्न सोंऽशोऽनुमितौ मतः ॥**
**व्यभिचाराच्छराच्छृङ्गाच्छरस्योत्पत्तिरीक्ष्यते ॥ ७५६ ॥**

स्वभावस्यागमकत्वं विशेषतो दर्शयित्वा कार्यस्यागमकत्वे हेत्वन्तरमाह । **कार्यत्वेऽपीति** । धूमादेरग्न्यादिकार्यत्वेऽपि कार्यत्वाकारो नाग्न्याद्यनुमितावुपयुज्यते तस्य नियतेन कारणाकारेण व्याप्त्यभावादित्यर्थः । तं दृष्टान्ते निवेशयति । **शरादिति** । पूर्वापरीभूतशरक्षणानां मिथोहेतुफलभावाभ्युपगमाद्गवादिशृङ्गाच्च विपिनविपतितात्पृथिवीपाथस्तेजःश्वसनादिसहकृतात्तदुत्पत्तेर्दृष्टत्वादेवेष्टत्वान्न कार्याकारस्य कारणाकारेण नियमस्तथाच न तस्य गमकतेत्यर्थः ॥ ७५६ ॥

**कार्यत्वान्नैव धूमादिरेति निश्चयहेतुताम् ॥**
**व्यभिचारहेत्वसद्भावादग्नेर्हेतुत्वमेत्यसौ ॥ ७५७ ॥**

कार्यस्यागमकत्वे कथं धूमादिनाऽग्न्याद्यनुमानं तत्राऽऽह । **कार्यत्वादिति** ।

---

१ क. यतः

अग्न्यादेरिति शेषः । कथं तर्हि धूमोऽग्निं गमयति तत्राऽऽह । **व्यभिचारेति ।** अव्यभिचारसंबन्धादेव धूमोऽग्नेर्गमको न कार्यत्वादित्यर्थः ॥ ७५७ ॥

**अनेककारणं कार्यं यस्माद्दृष्टं शरादिकम् ॥**
**तस्मादव्यभिचारेण कार्यमप्येति हेतुताम् ॥ ७५८ ॥**

धूमे कार्यत्वमव्यभिचारश्चास्ति तत्र कथं प्रयोजकनिश्चयस्तत्राऽऽह । **अनेकेति ।** कार्यस्य कारणमात्रगमकत्वेन[1] तद्विशेषागमकत्वं तद्विशेषात्तद्विशेषधीस्तु न कार्यत्वकृता किंत्वव्यभिचाराधीना तन्मात्रात्तन्मात्रधीरपि तथैवेति भावः ॥ ७५८ ॥

**अपेक्षाऽप्यत्र लिङ्गोक्तेः कार्यादौ नैव जायते ॥**
**अकार्यश्चास्वभावश्च नालिङ्गं कृत्तिकोदयः ॥ ७५९ ॥**

स्वभावकार्ययोरगमकत्वे हेत्वन्तरमाह । **अपेक्षेति ।** अयं कृत्तिकोदयो रोहिण्युदयप्रत्यासन्नः कृत्तिकोदयत्वात्पूर्वानुभूतकृत्तिकोदयवदित्यत्र स्वभावाद्यपेक्षा नास्तीत्यत्र हेतुमाह । **अकार्यश्चेति ।** रोहिण्युदयप्रत्यासत्तेरिति शेषः । कार्यत्वाद्यभावेऽपि तस्य गमकत्वदृष्टेरित्यर्थः ॥ ७५९ ॥

**कृत्तिकात्वादिति ह्युक्तेर्नैव कार्यस्वभावयोः ॥**
**अपेक्षा जायते किंतु ह्यन्वयेतरमात्रतः ॥ ७६० ॥**

यथोक्तहेतोः स्वभावाद्यपेक्षाभावे कुत्रापेक्षा तत्राऽऽह । **कृत्तिकात्वादितीति ।** तसिः सप्तम्यर्थे । द्वाभ्यां हिशब्दाभ्यामुक्तेऽर्थे लौकिकपरीक्षकसंप्रतिपत्तिर्द्योत्यते ॥ ७६० ॥

**अकार्यत्वास्वभावत्वादविनाभावमात्रतः ॥**
**उदयः कार्तिको लिङ्गं प्रत्यासत्तेर्भवेद्ध्रुवम् ॥ ७६१ ॥**
**रौहिणस्योदयस्यातो न स्वभावाद्यपेक्षते ॥**
**यतोऽतो न स्वभावादेर्हेतुत्वमुपपद्यते ॥ ७६२ ॥**

स्वभावादावपेक्षाभावे हेतुः । **अकार्यत्वेति ।** रोहिण्युदयं प्रति कृत्तिकोदयस्य स्वभावत्वाद्यभावे कुतो गमकत्वं तत्राऽऽह । **अविनाभावेति ।** कृत्तिकोदयस्याव्यभिचारादेव रोहिण्युदयप्रत्यासत्तिलिङ्गत्वे फलितमाह । **अत इति ।** कृत्तिकोदयेन[2] रोहिण्युदयप्रत्यासत्त्यनुमाने स्वभावादेर्मा भूद्गमकत्वं शिंशपात्वादिना वृक्षत्वाद्यनुमाने तु भविष्यत्यत आह । **यत इति ।** स्वभावादेर्गमकत्वं क्वचिद्व्यभिचारि चेन्नान्यत्र तत्कल्पनाहेतुस्तत्राप्यव्यभिचारादेव साध्यसिद्धेरिति भावः ॥ ७६१ ॥ ७६२ ॥

**नाऽऽत्मनि स्यात्स्वशब्दोऽत्र विरुद्धा स्वात्मनि क्रिया ॥**
**कार्यस्यापि स्वभावत्वं भवेदात्मीयवाचके ॥ ७६३ ॥**

---

१ ख. घ. °त्वे न तद्विशेषा° । २ घ. °दये रो° ।

किंच स्वभावस्य गमकत्वे स्वशब्दस्याऽऽत्मवाचित्वमात्मीयवाचित्वं वेति विकल्प्याऽऽद्ये दोषमाह । **नाऽऽत्मनीति** । स्वभावो गमक इत्यत्र स्वशब्दस्तावदात्मनि गम्यस्वरूपे न युक्तः स्वात्मनि क्रियाविरोधात् । **उक्तं हि**—

"स एव चोभयात्माऽयं गम्यो गमक एव च ।
असिद्धेनैकदेशेन गम्यः सिद्धेन बोधकः" इति ॥

न चैकस्मिन्नेव ज्ञानादौ निरंशे सिद्धत्वं साध्यत्वं च विरुद्धं सिध्यति तस्मादाद्यानुपपत्तिरित्यर्थः । द्वितीयमनूद्य दूषयति । **कार्यस्येति** । आत्मीयवाचके **स्वशब्दे** धूमस्यापि स्वभावत्वं स्याद्व्यापकाग्निसंबन्धित्वात् । **यथाऽऽहुः**—

"न ह्यन्यथा भवत्येषा व्याप्यव्यापकता तयोः" इति ।

तथाच सैव प्रतिज्ञाहानिरित्यर्थः ॥ ७६३ ॥

**किमात्मैव स्वशब्देन किं वेहाऽऽत्मीय उच्यते ॥**
**स्वभाव आत्मनो भाव इति चेद्भवतो मतम् ॥ ७६४ ॥**

स्वभावे दोषान्तरं वक्तुमुक्तं कल्पद्वयमनुभाषते । **किमात्मेति** । स्वभावो गमक इति वाक्यमिहशब्दार्थः । द्वितीयं स्फुटयति । **स्वभाव इति** । आत्मनो व्यापकस्य स्वकीयो व्याप्यो भावः स्वभाव इति ते मतं चेदिति यावत् ॥ ७६४ ॥

**स्व एवाऽऽत्मा स्वभावश्चेत्तदाऽन्यस्य ह्यसंभवात् ॥**
**व्यतिरिक्तस्य मेयस्य स्यादात्मैवाऽऽत्मनोऽनुमा ॥**
**तथाच पक्षहेत्वादेरनन्यत्वं प्रसज्यते ॥ ७६५ ॥**

आद्यं स्पष्टयति । **स्व एवेति** । गम्यस्वरूपमेव गमकमित्यत्रोक्तं दोषमनुद्रवति । **तदेति** । तस्य प्रागुक्तत्वप्रकटीकरणार्थो हिशब्दः । तत्रैव दोषान्तरमाह । **तथाचेति** । गमकस्य गम्यमात्रत्वे पक्षादेरपि गमकान्तर्भूतस्य गम्याभिन्नत्वादनुमानाप्रवृत्तिस्ततश्च पक्षधर्मस्तदंशेन व्याप्तो हेतुरिति व्यर्थं स्यादित्यर्थः ॥ ७६५ ॥

**अथ स्वस्य स्वभावश्चेदात्मीयोऽर्थो विवक्षितः[2] ॥**
**आत्मीयः शिखिनो धूमस्तस्यापि स्यात्स्वभावता ॥ ७६६ ॥**

कल्पान्तरमनुवदति[1] । **अथेति** । स्वस्य भावः स्वभाव इति व्युत्पत्त्या स्वशब्देन गम्यसंबन्धी गमकोऽर्थो विवक्षितश्चेदिति यावत् । तत्रोक्तमेव दोषमाह । **आत्मीय इति** । तथाच स्वभावकार्ययोर्भेदासिद्धौ गमकत्रैविध्यासिद्धिरिति शेषः ॥ ७६६ ॥

**संवित्तिभावयोर्भेदो यथैवं तदभावयोः ॥**
**न भेदोऽनुपलब्धिर्वो नातो लिङ्गं कथंचन ॥ ७६७ ॥**

स्वभावकार्ययोर्गमकत्वं निरस्यानुपलब्धेस्तान्निरस्यति । **संवित्तीति** । यथा त्वन्मते

---

१ घ. °नुवदाति । २ ख. ग. विवक्ष्यते ।

संवित्संवेद्ययोर्न भेदो गम्यते सत्त्वमुपलब्धिरेव वस्तुयोग्यतालक्षणेति स्थितेस्तथा तदभावयोरपि न भेदः सिध्यति प्रतियोगिभेदं विनाऽभावभेदाभावादतो युष्मत्पक्षे संविदभावो न संवेद्याभावे लिङ्गमेकस्मिन्नेव लिङ्गलिङ्गित्वायोगात्तथाच प्रदेशविशेषे क्वचिन्न घट उपलब्धिलक्षणप्राप्तस्यानुपलब्धेरिति प्रमत्तगीतमिति भावः ॥ ७६७ ॥

**एवं लौकिकतादात्म्यतदुत्पत्ती प्रतीरितम् ॥**
**अथ स्वप्रक्रियाक्लृप्तं स्वभावादि परीक्ष्यते ॥ ७६८ ॥**

गमकत्रयमप्रामाणिकमिति प्रतिपाद्य वृत्तवर्तिष्यमाणयोरपुनरुक्ततायै वृत्तं कीर्तयति । **एवमिति** । लोकसिद्धे तादात्म्यतदुत्पत्ती स्वभावकार्यते । **यथाऽऽह**—स्वभावप्रतिबन्धे हि सत्यर्थोऽर्थं न व्यभिचरति स च तदात्मत्वादिति । कार्यस्यापि स्वभावः प्रतिबन्धस्तत्स्वभावस्य तदुत्पत्तेरिति च । ते प्रत्युक्तरीत्या तावदुक्तं तयोरनुपलब्धिसहितयोर्गमकत्वं नास्तीति साधितमिति यावत् । उत्तरसंदर्भस्य तात्पर्यमाह । **अथेति** । स्वभावस्तादात्म्यं शिंशपावृक्षत्वं कार्यमग्निक्षणादुत्पद्यमानो धूमक्षणोऽनुपलब्धिरुपलब्धिलक्षणप्राप्तस्यासत्त्वं सा चाष्टधा त्रिधेति वोच्यते[1] । एवं बौद्धप्रक्रियासिद्धस्वभावाद्यप्यगमकमिति निरूप्यतेऽनन्तरसंदर्भेणेत्यर्थः । द्वेधा हि तस्य प्रक्रियाऽन्यापोहस्य गम्यत्वं गमकत्वं चेत्येका । **यथाऽऽह**—

"तस्मादपोहविषयमिति लिङ्गं प्रकीर्तितम् ।
अन्यथा धर्मिणः सिद्धावसिद्धं किमतः परम्" इति ॥

तद्विशिष्टस्य तथात्वमित्यन्या । **उक्तं हि**—

"तद्व्यवच्छेदविषयं सिद्धं तद्वत्ततोऽपरम्" इति ॥
"तत्रापि चान्या व्यावृत्तिरन्यो व्यावृत्त इत्यपि ।
शब्दाश्च निश्चयाश्चैव[2] संकेतमनुरुन्धते" इति च ॥ ७६८ ॥

**अन्यापोहनपक्षेऽपि शब्दव्यावृत्तिभेदतः ॥**
**न हेतोः स्यात्स्वभावत्वं क्रियात्वं च न विद्यते ॥ ७६९ ॥**

तत्राऽऽद्यां संक्षेपतोऽनुवदति । **अन्येति** । अशिंशपाव्यावृत्तिः शिंशपाशब्दार्थभूता व्याप्याऽवृक्षव्यावृत्तिर्वृक्षशब्दवाच्या व्यापिकेति ते मतमित्यर्थः । तत्रापि स्वभावादेर्न गमकत्वमित्याह । **शब्देति** । शिंशपाशब्दार्थाशिंशपाव्यावृत्तेर्वृक्षशब्दार्थावृक्षव्यावृत्तेश्च मिथो भेदादशिंशपाव्यापोहस्य हेतुत्वेनेष्टस्य हेतुमत्त्वेनेष्टावृक्षापोहस्य च न स्वभावत्वं नापि कार्यत्वं न हि मिथो भिन्नयोर्घटपटयोः स्वभावत्वं कार्यत्वं वाऽस्ति तेनात्यन्तभिन्नयोरुक्तापोहयोः स्वभावत्वाद्यभावेऽपि गम्यगमकत्वोपगमादनुपलब्धेश्च तत्रानिष्टः स्वभावादेर्गमकत्वे[3] व्यभिचार इत्यर्थः ॥ ७६९ ॥

---

१ घ. चोच्यते । २ ख. °श्चैवं सं° । ३ घ. °कत्वव्य° ।

**वृक्षोऽयं शिंशपेत्यत्र त्ववृक्षार्थविविक्तकम् ॥**
**वृक्षव्यक्तिषु सर्वत्र रूपमस्ति किलेदृशम् ॥**
**अशिंशपाविविक्तं च तद्वदेवाभिधीयते ॥ ७७० ॥**

अन्यापोहनपक्षेऽपीति संक्षिप्तं पक्षं प्रपञ्चयितुमादावविगीतमर्थमाह। **वृक्षोऽयमिति।** वृक्षो धवो वृक्षः खदिरो वृक्षः शिंशपेत्येवं प्रयोगे वृक्षव्यक्तित्वेनेष्टधवादिषु सर्वेष्ववृक्षार्थाद्धटादेर्व्यावृत्त्यात्मकं रूपमन्यापोहलक्षणमस्तीत्यविवादमावयोरित्यर्थः। कः स्वार्थे। भावे निष्ठा। किलशब्दः संप्रतिपत्तिद्योतनार्थः। संप्रतिपन्नमर्थान्तरमाह। **अशिंशपेति।** वृक्षः शिंशपेत्यस्मिन्प्रयोगे शिंशपाव्यक्तिष्वशिंशपापोहात्मकं रूपं शिंशपाशब्देनोच्यते वृक्षशब्देन वृक्षव्यक्तिष्ववृक्षापोहोक्तिवदित्येतदपि संमतमित्यर्थः। निष्ठा पूर्ववत् ॥ ७७० ॥

**तत्रावृक्षविविक्तेऽर्थे संकेतो वृक्षसंज्ञया ॥**
**अशिंशपाविविक्ते च संकेतः शिंशपेति च ॥ ७७१ ॥**

अविगीतमुक्त्वा फलितमाह। **तत्रेति।** अवृक्षव्यावृत्तिरशिंशपाव्यावृत्तिश्चेत्यनयोर्मध्ये या तावदवृक्षव्यावृत्तिस्तत्र वृक्षसंज्ञया संकेतो गृह्यते। अशिंशपाव्यावृत्तौ च शिंशपेति संज्ञया तद्ग्रहः शब्दप्रवृत्तिभेदस्तु संकेतादित्युक्तेरित्यर्थः। एकश्चकारः समुच्चये द्वितीयोऽवधारणे ॥ ७७१ ॥

**वृक्षोऽयं शिंशपेयं च भवेद्व्यवहृतिस्ततः ॥**
**शब्दार्थारोपणेनैव सविकल्पधियो जनिः ॥ ७७२ ॥**

संकेतग्रहफलमाह। **वृक्षोऽयमिति।** ततः संकेतग्रहादिति यावत्। **यथाऽऽह**—ते यथा व्यतिरिक्तेऽव्यतिरिक्ते वा प्रयोक्तुमिष्यन्ते तथा नियुक्तास्तमर्थमप्रतिबन्धेन प्रकाशयन्तीति। सविकल्पकप्रत्यक्षादेवायं व्यवहारो विना संबन्धग्रहादिति चेत्तत्राऽऽह। **शब्देति।** शब्दार्थयोरारोपणं संबन्धज्ञानं तेनैव सर्वत्र सविकल्पकोत्पत्तिर्न ह्यगृहीतसंबन्धस्य वृक्षोऽयमित्यादिसविकल्पकधीरतः संबन्धज्ञानमर्थवदित्यर्थः ॥ ७७२ ॥

**शब्दार्थापोह्योर्लिङ्गे ज्ञेया गमकगम्यता ॥**
**स्वभावकार्ये लिङ्गे स्तः स्वाभाव्यादि च लिङ्ग्यते ॥ ७७३ ॥**

तथाऽपि कथं प्रकृतयोरपोहयोर्गम्यगमकत्वं तत्राऽऽह। **शब्दार्थेति।** शिंशपावृक्षशब्दार्थयोरपोहयोर्मध्ये शिंशपाशब्दार्थेनाशिंशपापोहेन वृक्षशब्दार्थस्यावृक्षापोहस्य लिङ्गशब्दितेऽनुमाने विवक्षिते सत्यशिंशपापोहस्य गमकत्वमवृक्षापोहस्य च गम्यत्वं ज्ञेयमित्यर्थः। तथाऽपि कथं स्वभावादेर्गमकत्वं तत्राऽऽह। **स्वभावेति।** न हि शिंशपाव्यक्ताववृक्षव्यावृत्तेरशिंशपाव्यावृत्तिरतिरिच्यतेऽधूमव्यावृत्तिश्चानग्निव्यावृत्तेर्जायते तेन स्वभावकार्ये लिङ्गे युज्येते स्वाभाव्यं कारणं च गम्यमित्यस्मन्मतस्थितिरित्यर्थः ॥ ७७३ ॥

**न तत्र तावद्विज्ञानं तद्ग्राह्योऽस्तीह वस्तुनि ॥**
**स्वभावो वाऽथवा कार्यं विकल्पोऽयं मतो यतः ॥ ७७४ ॥**

शब्दव्यावृत्तिभेदत इत्यादिसिद्धान्तं प्रपञ्चयितुं प्रक्रमते । **न तत्रेति** । तत्र वस्तुनि स्वाभाव्यादौ ताभ्यां स्वभावकार्याभ्यां ग्राह्यत्वेनेष्टे ततो ज्ञानं नोत्पद्यते तस्मादिह स्वभावादेर्गमकत्वं व्यभिचरतीत्यर्थः । कथं तत्र स्वभावादेर्ज्ञानं न भवति तत्राऽऽह । **स्वभावो वेति** । तयोरपोहत्वे विकल्पमात्रत्वेनावस्तुत्वान्न गमकतेत्यर्थः ॥ ७७४ ॥

**न वस्तुस्पृग्विकल्पत्वाच्छब्दालम्बनमात्रतः ॥**
**शब्दाः सन्तः कथं तेऽर्था ह्यर्हन्ति भवितुं क्वचित् ॥ ७७५ ॥**

अशिंशपापोहादेर्विकल्पत्वेऽपि वस्तुस्पर्शितया गमकत्वमिति नेत्याह । **न वस्त्विति** । न तावदशिंशपापोहः स्वयं वस्तु नापि वस्तु स्पृशति विकल्पत्वेन शब्दमात्रालम्बनत्वादतः शिंशपादिशब्दार्थाशिंशपादिव्यावृत्तेरसत्त्वादशिंशपाद्यपोहाः शिंशपादिशब्दमात्रतया स्थिताः सन्तो न तदर्था भवितुमर्हन्ति तत्कुतस्तेषु गम्यगमकत्वाशेत्यर्थः । शब्दज्ञानानुपातीत्यादियोगसूत्रेऽपि विकल्पस्य वस्तुसंस्पर्शित्वं नास्तीति प्रसिद्धमिति हिशब्दार्थः ॥ ७७५ ॥

**स्वभावकार्यतासिद्धिरनुमानसमाश्रयात् ॥**
**ताभ्यां चाप्यनुमासिद्धिरेवमन्योन्यसंश्रयः ॥ ७७६ ॥**

किंचाशिंशपाद्यपोहस्ते प्रत्यक्षोऽनुमेयो वा नाऽऽद्योऽवृक्षाद्यपोहस्यापि तत्सिद्धेरनुमावैयर्थ्यान्न द्वितीय इत्याह । **स्वभावेति** । अशिंशपाद्यपोहात्मिकायाः स्वभावतायाः कार्यतायाश्च सिद्धिरनुमानाच्चेदितरेतराश्रयताऽनुमानात्स्वभावादिसिद्धिस्ततश्चानुमानासिद्धिरिति तन्नाशिंशपाद्यपोहानुमेयतेत्यर्थः ॥ ७७६ ॥

**अशिंशपानिवृत्तिर्हि न स्वभावो भवेद्यतः ॥**
**अवृक्षापोहरूपस्य तयोरत्यन्तभेदतः ॥ ७७७ ॥**

स्वभावादेरगमकत्वे हेत्वन्तरमाह । **अशिंशपेति** । स्वभावपदं कार्योपलक्षणार्थम् । अतो न स्वभावादेर्गमकता तदभावेऽपि गम्यगमकत्वोपगतेरिति शेषः । उक्तापोहयोरकार्यत्वास्वभावत्वे हिशब्दोपात्तं हेतुमाह । **तयोरिति** ॥ ७७७ ॥

**अप्यधूमनिवृत्तिश्चानग्निव्यावृत्तिरूपिणः ॥**
**न कार्यं स्यात्स्वभावो वा तयोरत्यन्तभेदतः ॥**
**तद्व्यक्तेरग्निकार्यत्वान्न सा कार्यं भवेदतः ॥ ७७८ ॥**

इतश्च स्वभावादेर्न गमकतेत्याह । **अपीति** । चकारोऽवधारणार्थो नञा युज्यते । तत्र प्रागुक्तमेव हेतुं स्मारयति । **तयोरिति** । अधूमव्यावृत्तेरनग्निव्यावृत्तिकार्यत्वाभावे

१ क. घ. कथमत्र । २ क. °श्रयात् ॥ ७७६ ॥ ३ ख. °मानत्वं° । ४ क. °वेद्यतः ।

हेत्वन्तरमाह । तद्व्यक्तेरिति । धूमव्यक्तेरग्निव्यक्तिकार्यत्वादधूमव्यावृत्तिरनग्निव्यावृत्तिकार्यं न भवति न हि तयोरेवातद्व्यावृत्तित्वं कल्पनागौरवादतद्व्यावृत्तिपदवैयर्थ्यापत्तेस्ततोऽधूमापोहस्यानग्न्यपोहस्य चाकार्यकारणत्वे गम्यगमकत्वाङ्गीकारात्कार्यस्य गमकत्वव्यभिचार इत्यर्थः ॥ ७७८ ॥

**अथान्यापोहवद्वस्तु गम्यं गमकमेव च ॥**
**वक्तव्यं तत्र किं मानमदृष्टौ न त्रिरूपता ॥ ७७९ ॥**

अन्यापोहस्य गम्यत्वं गमकत्वं चेति प्रक्रियां प्रतिषिध्य तद्वतस्तथात्वमिति प्रक्रियान्तरमाह । अथेति । तत्प्रत्याचष्टे । वक्तव्यमिति । अपोहवद्वस्तुनो गमकत्वे तस्मिन्किं मानमिति पृष्टे त्वया वाच्यं मानेन गमकस्यादृष्टौ तस्य पक्षधर्मत्वं सपक्षे सत्त्वं विपक्षाद्व्यावृत्तिरितित्रिरूपतासिद्धिरनुमानं हि त्रिरूपाल्लिङ्गतोऽर्थज्ञानार्थमिति स्थितं न हि धर्मिण्यप्रमिते धर्मप्रमितिः । तथा च—

“ हेतोस्त्रिष्वपि रूपेषु निश्चयस्तेन वर्णितः ।
असिद्धविपरीतार्थव्यभिचारिविपक्षतः” ॥

इत्युपेक्षितमिति भावः ॥ ७७९ ॥

**अशिंशपानिवृत्त्यात्मरूपं वस्त्वेव चेन्मतम् ॥**
**अवृक्षापोहरूपं च तयोर्गमकगम्यता ॥ ७८० ॥**

अन्यापोहवदिति पक्षं प्रपञ्चयन्गम्यगमकस्वभावं तावदाह । अशिंशपेति । अशिंशपानिवृत्तिरूपविशिष्टं रूपं शिंशपावस्त्वेव गमकमिष्टमवृक्षापोहरूपविशिष्टं रूपं वृक्षवस्त्वेव गम्यं च तयोरेवमपोहवतोः शिंशपावृक्षयोर्यथाक्रमं गमकता गम्यता चेति मतं चेदित्यर्थः ॥ ७८० ॥

**अशिंशपानिवृत्यात्म स्वभावाद्गमकं भवेत् ॥**
**अवृक्षात्मनिवृत्त्यात्म गम्यं च स्यात्तदेव तु ॥ ७८१ ॥**

कथमनयोः स्वभावादि विना गमकत्वादिस्वीकारोऽन्यथेष्टप्रयोजकव्यभिचारस्तत्राऽऽह । अशिंशपानिवृत्तीति । अशिंशपातो निवृत्तिविशिष्टशिंशपात्मनो वृक्षस्वभावत्वादपोहविशिष्टं शिंशपावस्तु वृक्षस्य गमकमवृक्षरूपतो व्यावृत्तिविशिष्टवृक्षात्मना तदेव शिंशपात्मकं वस्तु गम्यं च तत्स्वभावादपोहवतोर्वृक्षशिंशपावस्तुनोर्गम्यगमकत्वान्न प्रयोजकव्यभिचार इत्यर्थः ॥ ७८१ ॥

**स्वपक्षसिद्धयेऽप्येवं क्लिश्यतोऽपि न सिध्यति ॥**
**पक्षोऽयं बुद्धभक्तस्य यथा तदभिधीयते ॥ ७८२ ॥**

वक्तव्यं तत्रेत्यादिनोक्तं सिद्धान्तं प्रकटयति । स्वपक्षेति । अशिंशपाव्यावृत्तिमतः शिंशपाशब्दार्थस्य गमकत्वमवृक्षव्यावृत्तिमतो वृक्षशब्दार्थस्य गम्यतेतिबौद्धसिद्धान्त-

सिद्ध्यर्थमुक्तरीत्या यतमानस्यापि बुद्धस्निग्धस्य तवायं पक्षो यथा न सिध्यति तथा तत्सर्वमस्माभिरुच्यत इति योजना ॥ ७८२ ॥

**अशिंशपानिवृत्तिर्वः कुतोऽज्ञायि प्रमाणतः ॥ ७८३ ॥**
**प्रत्यक्षेण न तावत्सा तस्य सद्वस्तुमानतः ॥**
**लिङ्गान्तरस्य चाभावान्नापि लिङ्गात्प्रसिध्यति ॥ ७८४ ॥**

प्रतिज्ञातं प्रकटयितुं विकल्पयति । **अशिंशपेति** । सा खल्वपोहवादे गमककोटिनिविष्टा द्रष्टव्या सा कुतो मानतो ज्ञाता किं प्रत्यक्षादुत लिङ्गादाहो शब्दादथानुपलब्धेरिति विकल्पार्थः । आद्यं दूषयति । **प्रत्यक्षेणेति** । सा प्रकृताऽशिंशपानिवृत्तिर्ज्ञातेति शेषः । प्रत्यक्षस्य विद्यमानोपलम्भनत्वं प्रत्यक्षसूत्रे स्थितमिति मत्वाऽऽह । **तस्येति** । द्वितीयं दूषयति । **लिङ्गान्तरस्येति** । अशिंशपानिवृत्तिविशिष्टशिंशपावस्तुनस्त्वया गमकत्वाङ्गीकारादशिंशपानिवृत्तेरपि गमककोटिनिवेशात्तल्लिङ्गत्वेनेष्टं यल्लिङ्गान्तरं तस्याशिंशपाव्यावृत्तिव्याप्तस्याभावादनुमानायोगान्न ततोऽपि सा सिध्यतीत्यर्थः ॥ ७८३ ॥ ७८४ ॥

**उपलप्स्यामहे शब्दादेवैनामिति चेन्मतम् ॥**
**अनादिमद्व्यवहृतेः संबन्धस्य च सिद्धितः ॥ ७८५ ॥**
**किंमानपूर्वकोऽस्यार्थसंबन्ध इति नोच्यते ॥**
**सिध्यत्येवं भवत्पक्षो दोषोऽपि स्यादनीप्सितः ॥ ७८६ ॥**

तृतीयमनुवदति । **उपलप्स्यामह इति** । शब्दाच्छिंशपाशब्दादिति यावत् । एनामशिंशपाव्यावृत्तिमित्यर्थः । शिंशपाशब्दादशिंशपाव्यावृत्तिर्ज्ञायते चेत्तस्यार्थेन संबन्धो ग्राह्योऽगृहीतसंबन्धस्य शब्दस्याबोधकत्वान्न चाज्ञाते संबन्धिनि संबन्धधीरतस्तन्मूलं मानं वाच्यं तदभावान्न शब्दादप्यशिंशपाव्यावृत्तिधीरित्याशङ्क्याऽऽह । **अनादिमदिति** । वृद्धव्यवहारमूलतया शब्दार्थसंबन्धाधिगमान्न तन्निमितं मानमन्वेष्यं वृद्धव्यवहारो हि मूलं बालानां व्युत्पत्तेरिति तेऽपि स्थितेरित्यर्थः । शिंशपाशब्दादशिंशपाव्यावृत्तिसिद्धिं वदतोऽपोहवतो गमकत्वेऽपि स्वसिद्धान्तविरोधः स्यादिति दूषयति । **सिध्यतीति** ॥ ७८५ ॥ ७८६ ॥

**एवं यतोऽभ्युपगतौ लिङ्गं स्याच्छब्द एव तु ॥**
**न स्वभावोऽथवा कार्यं प्रतिज्ञा च मृषा भवेत् ॥ ७८७ ॥**

कथमपसिद्धान्तप्रसक्तिस्तत्राऽऽह । **एवमिति** । शिंशपाशब्दादशिंशपाव्यावृत्तिधी[२]रित्युपगमे शिंशपाशब्द एवाशिंशपाव्यावृत्तौ यतो लिङ्गं स्यादतो न त्वदिष्टं स्वभावादि लिङ्गं भवेदित्यर्थः । [३]तस्यालिङ्गत्वे दोषमाह । **प्रतिज्ञेति** ॥ ७८७ ॥

१ ख. °स्यार्थे सं° । २ घ. °त्तिरि° । ३ क. ख. तस्य लि° ।

**त्रिष्वेव त्वविनाभावादिति योक्ता प्रयत्नतः ॥**
**प्रतिज्ञार्थस्य संत्यागो न युक्तः शाक्यभिक्षुभिः ॥ ७८८ ॥**

तत्स्वरूपमाह । **त्रिष्वेवेति** । त्रिष्वेवाविनाभावो नान्यत्रेति प्रसाधनं प्रयत्नः । तन्मृषात्वमिष्टमेवेत्याशङ्क्यातिप्रसङ्गमभिप्रेत्याऽऽह । **प्रतिज्ञार्थस्येति** ॥ ७८८ ॥

**ननु चाशिंशपाद्यर्थविविक्तोऽर्थः प्रतीयते ॥**
**शब्दादेव तु तज्ज्ञानादवृक्षार्थमतिर्भवेत् ॥ ७८९ ॥**

सिद्धान्तविरोधसमाधिं शङ्कते । **नन्विति** । अशिंशपादेरर्थाद्घटादेर्व्यावृत्तोऽर्थः शिंशपारूपस्तच्छब्दादेव प्रतीयते ततो ज्ञानादशिंशपाव्यावृत्तिविशिष्टादवृक्षव्यावृत्तिविशिष्टे वृक्षार्थे ज्ञानमुत्पद्यते । तेन शब्दादशिंशपाव्यावृत्तिप्रतिपत्तावपि नास्मत्पक्षक्षतिरित्यर्थः ॥ ७८९ ॥

**अशिंशपानिवृत्तिर्या काऽसाविह भवन्मता ॥**
**नाभावोऽसौ यतोऽभावो मतो योऽनुपलब्धितः ॥ ७९० ॥**

दूषयितुं विकल्पयति । **अशिंशपेति** । इहेति बौद्धपक्षोक्तिः । अशिंशपानिवृत्तिर्भावोऽभावो वेति विकल्पार्थः । न तावद्भावस्तथा सति शिंशपाशब्दस्य भावार्थत्वेनान्यापोहार्थत्वाभावप्रसङ्गात्कल्पनागौरवादित्यभिप्रेत्य द्वितीयं प्रत्याह । **नाभाव इति** । तत्र हेतुमाह । **यत इति** । भवत्पक्षे खल्वभावोऽनुपलब्धिबोध्यः । यथाऽऽह—एकः प्रतिषेधहेतुरिति । अशिंशपाव्यावृत्तिस्तु शाब्दीष्टा तथाच तस्या नान्याभावतेत्यन्यापोहवतोऽपि गमकत्वाद्ययुक्तमित्यर्थः ॥ ७९० ॥

**शिंशपानुपलब्धिश्चेदन्यव्यावृत्तिरूपतः ॥**
**ततोऽभावात्तथा सिद्धोऽवृक्षाभावोऽपि सर्वदा ॥ ७९१ ॥**

चतुर्थमुत्थापयति । **शिंशपेति** । शिंशपायामशिंशपानुपलब्धिरस्ति शिंशपायाः सर्वस्मादशिंशपार्थाद्व्यावृत्तत्वादेवेत्याशिंशपाव्यावृत्तिरूपे शिंशपार्थे भवदुक्तानुपलब्धिमानं ततः शिंशपायामशिंशपानुपलब्धिरूपादभावादशिंशपापोहः शिंशपाशब्दार्थो ज्ञातस्तस्माच्चान्यापोहवतोऽवृक्षाभावविशिष्टो वृक्षार्थोऽपि सदा सिध्यति तथा सत्यस्मन्मते नावद्यमित्यर्थः ॥ ७९१ ॥

**उपलब्ध्यभावतो नैवं यथा तदभिधीयते ॥**
**कोऽभावानुपलब्ध्योर्वो भेदः स्यादिति कथ्यताम् ॥ ७९२ ॥**

ज्ञानाभावाज्ज्ञेयाभाव इत्येवं यथा दुर्ज्ञानं तथा तत्सर्वमस्माभिरुच्यत इति प्रतिज्ञानीते । **उपलब्धीति** । प्रतिज्ञातं स्फुटयितुं संवित्तिभावयोर्भेदो[2] यथेत्यत्रोक्तं स्मारयति ।

---

१ क. ख. नादिभा° । २ क. ख. घ. °योर्यथे° ।

**क इति** । ज्ञेयाभावस्य ज्ञानाभावस्य च भेदायोगाद्गम्यगमकभावो नेत्युक्तमित्यर्थः ॥ ७९२ ॥

**ननूपलब्ध्यभावो योऽनुपलब्धिः स उच्यते ॥**
**भावाभावस्त्वभावोऽपि प्रसिद्धं जगति द्वयम् ॥ ७९३ ॥**

तदयोगममृष्यन्प्रसिद्धिमाश्रित्य शङ्कते । **नन्विति** ॥ ७९३ ॥

**सत्यमेवं तथाऽप्यत्र प्रष्टव्यमवशिष्यते ॥**
**किंचोपलब्ध्यभावेन सा सिद्धा किं ततोऽन्यतः ॥ ७९४ ॥**

तयोर्भेदो लोकप्रसिद्ध इत्येतदङ्गी करोति । **सत्यमिति** । कथं तर्हि तयोर्गम्यगमकत्वे[1] निषेधस्तत्राऽऽह । **तथाऽपीति** । अत्रेत्यनुपलब्धिरुक्ता । प्रश्नमवोभिनयति । **किंचेति** । सा खल्वनुपलब्धिरसिद्धा सिद्धा वा ज्ञेयाभावं ज्ञापयेन्नाऽऽद्य इन्द्रियातिरिक्तानां ज्ञात[2]करणत्वाङ्गीकारादनुपलब्धेः सत्तामात्रेण गमकत्वे चातिप्रसङ्गाद्द्वितीयेऽपि सा किमुपलब्ध्यभावेन सिद्धा किंवोपलब्ध्येति प्रश्नार्थः ॥ ७९४ ॥

**घटाभावं घटो यद्वद्घटाभावत्वकारणात् ॥**
**मिनोति नाऽऽत्मनोऽभावमुपलब्धिस्तथैव च ॥ ७९५ ॥**

द्वितीयं प्रत्याह । **घटेति** । किं[3] सैवोपलब्धिः स्वाभावं प्रमिणोत्युपलब्ध्यन्तरं वा न तावदुपलब्ध्यन्तरमुपलब्धिभेदासिद्धेर्नापि स्वयमेव सा हि विद्यमानाऽविद्यमाना वा स्वाभावमवगच्छेदाद्येऽपि स्वसत्ताकाले कालान्तरे वा नाऽऽद्यस्तदा स्वाभावाभावान्नेतरः स्वाभावकाले स्वयमभावादेतेनाविद्यमानोपलब्धिः स्वाभावं प्रमिणोतीति प्रत्युक्तं न हि स्वक्षणे सतोऽपि दीपस्य क्षणान्तरे स्वाभावगमकतेति भावः ॥ ७९५ ॥

**माभावस्याप्यभावेऽस्मिन्संसिद्धेरनुभूतितः ॥**
**सैवातोऽनुपलब्ध्युक्त्या भवद्भिरुपवर्ण्यते ॥ ७९६ ॥**

अनुपलब्धिरुपलब्ध्यभावेन सिद्धा ज्ञेयाभावं ज्ञापयतीत्यत्र सा किमनुपलब्ध्यन्तरेण सिध्यति स्वरूपेण वा नाऽऽद्योऽनवस्थानादिति मन्वानो द्वितीयं प्रत्याह । **माभावस्येति** । अस्मिन्मेयाभावे मानत्वेनेष्टमानाभावरूपानुपलब्धेरपि स्वरूपेणैवास्मदिष्टोपलब्धेरिव सिद्धेरुपगतिश्चेदेकलक्षणत्वादनुपलब्धेरनुभूतिमात्रत्वापत्तेरनुपलब्धिरुपलभ्याभावे मानमित्युक्त्या सैवानुभूतिरुच्यते तथाच त्वत्पक्षासिद्धिरित्यर्थः । एतेनैतदपोढं **यदाह कीर्तिः**—"यदा पुनरेवंविधानुपलब्धिरेवासतामसत्ता तदाऽसिद्धेऽपि विषये मोहाद्विषयिणो[5]ऽसज्ज्ञानशब्दव्यवहारात्प्रति[6]पद्यमानो विषयप्रदर्शनेन समये प्रवर्त्यते[7]" इति ॥ ७९६ ॥

**भावाभावोऽपि किंचातः शृण्वतो यद्भविष्यति ॥ ७९७ ॥**

---

१ घ. °त्वेन नि° । २ घ. °तकार° । ३ घ. किंचोप° । ४ ख. °द्भिरपि व° । ५ ख. °णोऽस्मज्ज्ञा° । ६ क. °तिपाद्य° । ७ ख. °वर्तते ।

उपलब्ध्या विनाऽभावाद्यभावः प्रसिध्यति ॥
तदोपलब्ध्यभावोऽसौ यो भावो भवतोच्यते ॥ ७९८ ॥

उक्तनीत्या विषयसिद्धेरयोगान्मायया तत्सिद्धावस्मन्मतप्रवेशादुपलभ्याभावस्य पृथग्भावात्त्वदिष्टाद्वयानुभूत्यसिद्धेस्त्वत्पक्षोऽपि न सिध्यतीत्याशङ्क्याऽऽह । भावेति । उपलब्ध्यभाववदुपलभ्याभावोऽपि पृथङ्नास्त्यभावत्वाविशेषात्तस्मादुपलब्धिरेवोपलभ्याभावोक्त्याऽपि त्वयोच्यते विधान्तरेण तदसिद्धेरित्यर्थः । भवत्वनुपलब्धेरुपलभ्याभावस्य चोपलब्धिमात्रत्वं किं तावता तवेति पृच्छति । किंचेति । फलसत्त्वं प्रतिजानीते । शृण्विति । तदेव स्फुटयति । उपलब्ध्येति । मानमेयप्रतियोगिकादभावाद्विना यद्युपलब्धिरूपेण मेयाभावो मानाभावश्च सिध्यति तदा यस्तावदुपलब्ध्यभावो यश्चोपलभ्याभावः सर्वैर्व्यवह्रियते स सर्वोऽप्यसावुपलब्धिरेवेत्यद्वयोपलब्धिः फलत्युपलभ्यस्य त्वयैव पृथगनुपगमाज्जन्मादीनां च तत्र स्वतः परतश्चासिद्धेरित्यर्थः । यद्वा यद्युपलब्धिं विना मानाभावान्मेयाभावः सिध्यति तदा मानाभावो मानं मेयाभावो मेय इत्येतद्युज्येत त्वया तयोरुपगमान्न तु विनोपलब्ध्या किंचिदपि सिध्यत्यन्यस्य जाड्यादजडोपलब्ध्यपेक्षत्वान्न चोपलभ्यमुपलब्धेरर्थान्तरमिष्टं तदद्वयोपलब्धिः सिद्धेत्यर्थः ॥ ७९७ ॥ ७९८ ॥

यदि तद्व्यतिरेकेण तदा वक्तव्यमेव ते ॥
किंभूतं ते तदा चित्तमभावप्रसमीक्षणे ॥ ७९९ ॥
उपलब्ध्यभावं मुक्त्वेह नान्यादृक्चित्तमीक्ष्यते ॥
किंचोपलब्धितः सर्वसिद्धिमाप्नोति नान्यथा ॥ ८०० ॥

विपक्षे दोषमाह । यदीति । कूटस्थाद्वयानुभूत्यतिरेकेण मानमेययोरभावसिद्धिश्चेत्तदा तवेदं दूषणं वक्तव्यमेवेत्यर्थः । किं तदिति तदाह । किंभूतमिति । यदाऽनुभूतिर्नेष्टा तदा ते मानमेयाभावोपलम्भे चित्तं स्वानुभवरूपं कथंभूतमिति पृच्छामो न हि मानाद्यभावोपलम्भकाले तदाकारं चित्तं हित्वाऽन्यादृशं तत्साधकं गम्यते तदनुभवादृते मानाद्यभावसिद्धिं वदतः स्वानुभवविरोधः स्यादित्यर्थः । इतश्चानुभवादेवाभावसिद्धिरित्याह । किंचेति । सर्वमपि जगदुपलब्धिबलादेव सिध्यति न स्वतोऽन्यतो वा तदभावस्य तदधीनैव सिद्धिरित्यर्थः ॥ ७९९ ॥ ८०० ॥

न तादात्म्यतदुत्पत्ती मिथोऽयोगादपोहयोः ॥
न स्वलक्षणयोस्तद्वन्नाप्यपोहवतोस्तयोः ॥ ८०१ ॥

अनुपलब्धेरभावधीहेतुत्वं निराकृत्य द्वयोर्गमकत्वाभावमुपसंहरति । नेत्यादिना

---

१ ख. °त्तरीत्या ।

अपोहयोरन्योन्यमस्पृष्टत्वान्न स्वभावस्वभाविभावः कार्यकारणभावो वाऽपोहरहितकेवलार्थस्वरूपयोरपि स्वरसभङ्गुरयोर्न स्वभावादिर्युक्तो मिथोभेदोपगमात्तयोरेवापोहविशिष्टयोरपि न स्वभावादिसंभवो भेदाभ्युपगमात्तथाऽपि वृक्षत्वशिंशपात्वयोर्गम्यगमकत्वोक्तेर्न स्वभावादेर्गमकतेत्यर्थः ॥ ८०१ ॥

नासत्सद्व्यतिरेकेण नासता च सदन्वितम् ॥
सति नासदभावोऽपि ह्युक्तं तादात्म्यमागमात् ॥ ८०२ ॥

स्वमतमुपसंहरति । नासदिति । असच्छब्देन परमार्थसद्विलक्षणं जगदुक्तं न हि सतो भेदेनैतदस्त्यन्यस्य तुच्छत्वाद्व्यवहारधीविरोधान्न च तेन तदभिन्नं मिथो विरुद्धयोरैक्यायोगान्न च सति तस्यात्यन्ताभावो व्यवहादिविरोधस्योक्तत्वादतः सन्मात्रं सर्वं जगदेष्टव्यं सदेवं सोम्येदमित्यादेरागमाच्चैतत्सिद्धमित्यर्थः । सन्मात्रं सर्वं जगदित्येतत्तत्र तत्रोपपादितमिति वक्तुं हिशब्दः ॥ ८०२ ॥

यथाऽसत्सति संवित्तौ सदप्येवं प्रतीयताम् ॥
तदेतदिति[2] च स्पष्टं श्रुतिरैकात्म्यमब्रवीत् ॥ ८०३ ॥

कूटस्थाद्वयोपलब्धिरित्युक्त्वा सदद्वयमिति वदतो न कथं पूर्वापरविरोधः स्यादित्याशङ्क्याऽऽह । यथेति । अन्वयव्यतिरेकाभावपरिहारेणासच्छब्दितं तद्यथा सति पर्यवसितं तथा सदप्यनुभवमात्रे प्रतिष्ठितं तदेतद्ब्रह्मेत्युपक्रम्यायमात्मा ब्रह्म सर्वानुभूरित्यनुभवैकरूपं यतः श्रुतिरुक्तवती तत्त्वमित्यर्थः ॥ ८०३ ॥

न च भेदमनाश्रित्य स्वभावादि प्रसिध्यति ॥
योगस्य भेदनिष्ठत्वान्न च भेदः पुरोक्तितः ॥ ८०४ ॥

स्वभावादिनिरासे हेत्वन्तरमाह । न चेति । संबन्धस्य भेदापेक्षत्वात्तमनाश्रित्य स्वभावादिः संबन्धत्वेनेष्टो न सिध्यति न च भेदः परस्पराश्रयादिना निरस्तत्वादतोऽपि न स्वभावादेर्गमकतेत्यर्थः ॥ ८०४ ॥

स्रजि सर्पादिकः क्लृप्तो नाभिन्नो भिन्न एव वा ॥
यथोक्तन्यायमार्गेण स्वभावादि ततः कुतः ॥ ८०५ ॥

उक्तं भेदासंभवं दृष्टान्तेन स्मारयन्फलितमाह । स्रजीति । यथा स्रजि कल्पितः सर्पादिस्ततो भिन्नत्वादिना दुर्निरूपस्तथा पूर्वोक्तान्योन्याश्रयादिना भिन्नत्वादिभिरवाच्यो द्वैतप्रपञ्चश्चिदात्मनि कल्पितो न वस्तुतोऽस्त्यतस्त्वदिष्टः स्वभावादिर्न वास्तवः सिध्यतीत्यर्थः ॥ ८०५ ॥

एवमागमतः सिद्ध ऐकात्म्येऽनुभवाश्रयात् ॥
नान्यसिद्धान्तसंसिद्धिर्लभ्यते सर्वतार्किकैः ॥ ८०६ ॥

---

१ क. घ. °व सौम्ये° । २ ग. °ति विस्प°

ननु यद्यपि संबन्धग्रन्थे मीमांसकसमयो निरस्तो यद्यपि चात्र लोकायतसुगतमते निरस्ते अत्रापि मीमांसकनिरासः संक्षेपतः स्मारितस्तथाऽपि सिद्धान्तान्तरेषु सत्सु भवत्सिद्धान्तासिद्धिः। तथा हि स्यादस्ति स्यान्नास्तीत्यादिन्यायेन स्याद्वादिनो जीवाजीवादिसप्तपदार्थान्परमार्थानाहुः। काणादास्तु द्रव्यादयः पदार्थाः परमार्थाः षडेवेति मानयुक्तिभ्यामुपयन्ति। प्रमाणादयो निग्रहस्थानान्ताः षोडशैव पदार्था वस्तूनीति नैयायिकाः। मूलप्रकृतिप्रभृतीनि पञ्चविंशतिस्तत्त्वानीति सांख्याः। शैवा वैष्णवाश्च स्वीयं स्वीयमागममाश्रित्य द्वैतं बहु मन्यन्ते तत्कुतस्त्वन्मतावतारस्तत्राऽऽह। **एवमिति**। श्रुत्यनुभवविरोधे तर्कागमयोराभासत्वान्न दिगम्बरादिसिद्धान्तसिद्धिस्तत्प्रवृत्तिश्च भ्रान्तिमूलेति स्थितं तर्कपादे तदद्वैतसिद्धान्तो वज्रलेपायत इति भावः ॥ ८०६ ॥

**स्वोक्त्यैवापह्नुतेः कृत्स्नवस्तुनोऽतो न यत्यते ॥**
**निराचिकीर्षया शून्यवादिनोऽविषयत्वतः ॥ ८०७ ॥**

ननु बाह्यार्थवादो विज्ञानवादश्च निराकृतौ शून्यवादो निराकर्तव्योऽपि कस्मान्न निराक्रियते तत्राऽऽह । **स्वोक्त्येति**। समस्तस्य वस्तुनः सत्त्वेन भानान्मानानां च सर्वेषां सद्विषयत्वाच्छून्यस्य चाविषयतया प्राप्त्यभावेन निराकरणानर्हत्वात्तद्विषयत्वे च शून्यवादिनैव विषयनिराकरणोक्त्या शून्यस्यापह्नवात्तस्य च स्फुरणास्फुरणयोः सर्वशून्यत्वायोगात्तद्वादिनश्च सत्त्वासत्त्वयोस्तदनुपपत्तेः संवृतेश्चाऽऽश्रयाभावादसंभवात्तदाश्रयत्वे च शून्यस्य स्वरूपहानान्निराश्रयत्वे चासंवृतित्वान्नास्माभिस्तद्वादनिरासायाऽऽदरः क्रियते तत्सिद्धं बुद्ध्याद्यतिरिक्तं नित्यसिद्धमत्यन्तशुद्धं कूटस्थमद्वयमात्मज्योतिरिति भावः ॥ ८०७ ॥

**न मृत्यवः स्वभावोऽस्य कार्याणि करणानि च ॥**
**कुतस्तदिति चेदाह स वा इति परा श्रुतिः ॥ ८०८ ॥**

प्रसङ्गागतं बौद्धराद्धान्तं प्रत्याख्याय श्रुतिव्याख्यामेवानुवर्तयन्नादौ वृत्तं कीर्तयति । **नेत्यादिना**। देहेन्द्रियादि मृत्युरूपमात्मनः स्वरूपं धर्मो वा नेत्युक्तमित्यर्थः । तत्र हेतुं पृच्छति। **कुत इति**। तेषामस्वभावत्वं तदा परामृश्यते। उत्तरं वाक्यमुत्थापयति। **आहेति** ॥ ८०८ ॥

**स्वप्नो भूत्वा यथाऽत्येति मृत्यो रूपाण्यसङ्गतः ॥**
**आत्मैकस्मिन्नपि तनौ म्रियमाणस्तथैव सः ॥ ८०९ ॥**

श्रुतेस्तात्पर्यमाह। **स्वप्न इति**। यदोपाधिभूता धीः स्वप्नाकारा भवति तदा स्वयमप्यात्मा स्वप्नो भूत्वा कार्यकरणान्यभिमानतो गृहीतान्यासङ्गाभावादेकस्मिन्नेव देहे स्थिते यथाऽत्येति तथा देहभेदेऽपि म्रियमाणो वर्तमानं जन्म त्यजञ्जन्मान्तरं चोपाद-

---

१ ख. °मुदाहरति ।

दानः कार्यकरणान्यतिक्रामत्यतः स्वप्नजागरितसंचाराद्देहाद्यतिरेकवदिहलोकपरलोकसंचारोक्त्याऽपि तदतिरेकस्तस्योच्यतेऽनन्तरवाक्येनेत्यर्थः ॥ ८०९ ॥

**शरीरमिति वाक्येन जायमानविशेषणम् ॥**
**क्रियते न स्वतस्तस्य जन्माद्यैः संगतिर्यतः ॥ ८१० ॥**

जायमानः शरीरमभिसंपद्यमान इत्यत्र पौनरुक्त्यमाशङ्क्याऽऽह । **शरीरमिति** । जायमान इत्युक्ते घटादिवदात्मनो जन्मादिशङ्कायां तन्निरासार्थं शरीरमित्यादिना जायमान इत्यस्य यतो विशेषणमतो नाऽऽत्मनः स्वतो जन्मादिसंगतिरित्यर्थः ॥ ८१० ॥

**मोहाल्लिङ्गात्मनोत्क्रान्तः श्रुतकर्मानुरूपतः ॥**
**मिथ्याभिमानतो देहं यदाऽऽस्मेत्यभिमन्यते ॥ ८११ ॥**
**देहं संपद्यमानोऽजस्तदाऽऽत्मा जायते खवत् ॥**
**घटादिजन्मना तद्वत्तन्नाशे म्रियतेऽमरः ॥ ८१२ ॥**

देहसंपत्त्या किमित्यात्मनो जन्मोच्यते स्वाभाविकं किं न स्यादित्याशङ्क्याऽऽह । **मोहादिति** । स्वाज्ञानात्प्राणाख्योपाधिना पूर्वस्थूलदेहादुत्क्रान्तः सन्कर्मादिवशादपूर्वं देहमात्मत्वेन मिथ्याभिमानादेव यदाऽभिमन्यते तदोक्तरीत्या देहं प्राप्नुवन्वस्तुतोऽज एव जात इत्युच्यते । यथा घटाद्युपाधिजन्मानुसारेण तत्रस्थमाकाशमजमपि जायमानमभिलप्यते तथाऽजोऽप्यात्मा देहादिजन्मना जायमानोऽभिधीयते न वस्तुतः श्रुत्यादिविरोधादित्यर्थः । उपाधिजन्मना जन्मवदुपाध्युत्क्रमणे म्रियमाणत्वमस्योच्यते न वस्तुतस्तदयोग्यत्वादन्यथोक्तश्रुतिस्मृतिविरोधादित्याह । **तद्वदिति** ॥ ८११ ॥ ८१२ ॥

**संपद्यमान एवाऽऽत्मा जायते म्रियते यतः ॥**
**न तत्पूर्वं तदूर्ध्वं वा तेन वा अवधारणम् ॥ ८१३ ॥**

वैशब्दार्थमाह । **संपद्यमान इति** । शरीरमिति शेषः । म्रियते तत्परित्यजन्नेवेति योज्यम् । तदेव व्यतिरेकमुखेनाऽऽह । **नेति** । न हि देहसंबन्धात्पूर्वं जन्म तत्संबन्धादूर्ध्वं वा तन्नाशोऽतोऽन्यतोऽसौ व्यवह्रियते ॥ ८१३ ॥

**पाप्मेति देहसंबन्धहेतुमात्रमिहोच्यते ॥**
**आ विरिञ्चात्तथाऽऽ स्थाणोः सर्वं कर्मात उच्यते ॥ ८१४ ॥**

पाप्मप्रातिपदिकार्थमाह । **पाप्मेतीति** । आ विरिञ्चादा च स्थाणोर्देहसंबन्धे हेतुर्धर्मादिस्तन्मात्रमत्र वाक्ये पाप्मप्रातिपदिकार्थः । तल्लक्षणया कर्ममात्रं पाप्मशब्दितमित्यर्थः ॥ ८१४ ॥

**ब्रह्मादीनां शरीराणि श्वसूकरशरीरवत् ॥**
**यतो जिहासितान्येव तस्माद्धर्मेऽपि पाप्मगीः ॥ ८१५ ॥**

उत्कर्षहेतोर्धर्मस्य पाप्मशब्देन न ग्रहो धर्मकार्याणां ब्रह्मादिदेहानां सर्वस्पृहणीयत्वादित्याशङ्क्याऽऽह । **ब्रह्मादीनामिति** ॥ ८१५ ॥

**दुःखाभावः सदेहस्य नैवास्तीति श्रुतेर्वचः ॥**
**तस्माद्दैवोऽप्यनर्थः स्याद्देहो नाशाच्च सर्वदा ॥ ८१६ ॥**

धर्मफलस्यापि देहस्य जिहासितत्वे हेतुमाह । **दुःखेति** । न ह वै सशरीरस्येत्यादिश्रुतेर्ब्रह्मादिदेहस्यापि दुःखायतनत्वेन दृष्टेर्जिहासितत्वमित्यर्थः । तत्रैव हेत्वन्तरमाह । **नाशाचेति** । सर्वदेत्यनर्थपदेन संबध्यते ॥ ८१६ ॥

**कर्म नाऽऽरभते यावद्दुःखादिफलमात्मनः ॥**
**असत्समं भवेत्तावत्तदपूर्वात्मना स्थितम् ॥ ८१७ ॥**

पाप्मशब्दस्य कर्ममात्रविषयत्वेऽपि कथं देहसंबन्धहेतुविषयत्वं कर्मणस्तद्धेतुत्वासिद्धेर्भोगवासनायास्तथात्वादित्याशङ्क्याऽऽह । **कर्मेति** । कर्तृभोगार्थं कर्म तदनारम्भे मानाभावादतिसूक्ष्मस्य तस्यासत्त्वप्रसङ्गान्न च देहं विना भोगस्तस्माददेहस्य देहसंबन्धहेतुराविद्यं सवासनं कर्मेत्यर्थः ॥ ८१७ ॥

**शरीरं पाप्मनां कार्यं धर्माधर्मात्मनामिदम् ॥**
**तस्मिन्नात्माभिमानो यः सा संपत्तिरविद्यया ॥ ८१८ ॥**

पाप्मभिरित्यत्र प्रातिपदिकार्थमुक्त्वा विभक्त्यर्थं संघातकर्तृत्वाख्यं कथयति । **शरीरमिति** । संसर्गशब्दार्थमाह । **तस्मिन्निति** ॥ ८१८ ॥

**देहकर्मक्षये देहपातश्चास्य यदा तदा ॥**
**पाप्मनः कर्मकार्याणि विजहात्यमृतोऽव्ययः ॥ ८१९ ॥**

स उत्क्रामन्नित्यादेरर्थमाह । **देहेति** । यदा देहारम्भकं कर्म भोगेन क्षीयते वर्तमानदेहपातश्च तदा पाप्मशब्देन लक्षितलक्षणया गृहीतानि कार्यकरणानि सर्वविक्रियाशून्यः सन्नात्मा त्यजतीत्यर्थः ॥ ८१९ ॥

**जहाति मृत्यो रूपाणि मृतिस्वप्नादिभूमिषु ॥**
**न तु मृत्युमृते ज्ञानाज्जहात्यात्मा निजं तमः ॥ ८२० ॥**

ननु मृत्युकार्यं देहादि ज्ञानं विना त्यजति चेन्मृत्युमपि तथा त्यक्ष्यति तथाच ज्ञानवैयर्थ्याच्छास्त्रारम्भो वृथा स्यादित्याशङ्क्याऽऽह । **जहातीति** । नैसर्गिकमज्ञानं मृत्युस्तस्य ज्ञानं विना न त्यागो विरोध्यन्तराभावादित्यर्थः ॥ ८२० ॥

**पाप्मादि[2]प्रकृतादानत्यागाभ्यामनिशं यथा ॥**
**धिया समानः सन्नात्मा संसरत्या विमोक्षतः ॥ ८२१ ॥**

---

१ ग. मृत्युस्त° । २ ख. °दिप्राक्छ° ।

स वा इत्यादिवाक्यस्थाक्षरार्थमुक्त्वा तत्तात्पर्यमुपसंहरन्दृष्टान्तं निगमयति। **पाप्मादीति**। पाप्मादिप्रकृतिकस्य देहादेः स्वीकारत्यागाभ्यामिति यावत् ॥ ८२१ ॥

**परलोकेहलोकौ च तथैवायमविद्यया ॥**
**मृतिजन्मप्रबन्धेन संसरत्या विमोक्षतः ॥ ८२२ ॥**

स्वप्नादिसंचारदृष्टान्तस्य दार्ष्टान्तिकमाह । **परलोकेति** ॥ ८२२ ॥

**यत एवमतः सिद्धा देहादिभ्योऽन्यताऽऽत्मनः ॥**
**तत्संयोगवियोगाभ्यां स्रग्वस्त्राभरणादिवत् ॥ ८२३ ॥**

क्रमेण लोकद्वयसंचारफलमाह । **यत इति**। देहादिर्नाऽऽत्मस्वभावस्तद्धर्मो वा तत्संयोगित्वाद्वियोगित्वाच्च स्रगादिवदित्यर्थः ॥ ८२३ ॥

**न हि च्छिन्नेन कर्णेन तद्वानस्मीति मन्यते ॥**
**यथैवमवशिष्टेन तद्विशेषणहेतुतः ॥ ८२४ ॥**

स्थूलस्य देहादेरात्मत्वाद्यभावेऽपि सूक्ष्मस्याव्यभिचारित्वात्तस्यादित्याशङ्क्याऽऽह। **न हीति**। चैत्रो हि च्छित्त्वा त्यक्तेन हस्तादिना तद्वानस्मीत्यात्मानं नाभिमन्यते तथाचावशिष्टेनापि नाऽऽत्मनः संबन्धस्त्यक्तवदत्यक्तस्यापि देहस्य विशेषणत्वाविशेषादतः सूक्ष्मोऽपि देहो नाऽऽत्मा तदीयो वा तदुपाधित्वात्स्थूलवदित्यर्थः ॥ ८२४ ॥

**आभिमानिक एवास्य येन येन विशेष्यते ॥**
**आत्माऽविशेषणोऽतः स्यात्स्रगाभरणवस्त्रवत् ॥ ८२५ ॥**

कथं तर्हि देहादिष्वात्मनः संबन्धभानं तत्राऽऽह । **आभिमानिक इति**। येन येन देहादिनाऽऽत्मा विशेष्यते तेन तेनास्य संबन्धो मिथ्याभिमानरूपो न वास्तवोऽस्तीत्यर्थः। आत्मनो वस्तुतो देहासंबन्धे फलितमुपसंहरति। **आत्मेति**। देहद्वयस्याऽऽत्मत्वतद्धर्मत्वायोगोऽतःशब्दार्थः। स्रगादेरात्मात्मीयत्वाभाववद्देहादेरपि तदभावादात्मा निर्विशेषणश्चिदेकतानः सिद्ध इत्यर्थः ॥ ८२५ ॥

**ननु न स्तोऽस्य लोकौ द्वौ यावात्मा संचरत्ययम् ॥**
**मृत्युजन्मप्रबन्धेन जाग्रत्स्वप्नाख्यलोकवत् ॥ ८२६ ॥**

तस्येत्यादिवाक्यव्यावर्त्यां शङ्कामाह। **नन्विति** ॥ ८२६ ॥

**स्वप्नजागरितौ लोकौ यथा प्रत्यक्षमानतः ॥**
**परलोकेहलोकौ तु न तथा मानगोचरौ ॥ ८२७ ॥**

स्वप्नादिवदिहलोकादेरपि किं नाङ्गीकारः स्यादित्याशङ्क्याऽऽह । **स्वप्नेति** ॥ ८२७ ॥

---

१ ग. मृतिज॰।

**प्रात्यक्ष्यादस्य लोकस्य नास्त्याशङ्काऽस्ति तां प्रति ॥**
**परलोकेऽपि नाऽऽशङ्का तत्सिद्धेरागमात्सदा ॥ ८२८ ॥**

भाष्योक्तामाशङ्कामनूद्याऽऽक्षिपति । **प्रात्यक्ष्यादिति** । इहलोकस्य प्रत्यक्षत्वादस्तिता निश्चिता परलोकस्य स्वर्गकामादिवाक्यसिद्धत्वान्न तत्रापि नास्तित्वाशङ्का तेन तन्निरासार्थं नोत्तरग्रन्थारम्भ इत्यर्थः ॥ ८२८ ॥

**प्रत्यक्संवित्प्रमाणत्वं परलोकेहलोकयोः ॥**
**स्वप्नवन्नान्यमानत्वमित्यस्तित्वं विवक्षितम् ॥ ८२९ ॥**
**इत्याशङ्क्योत्तरो ग्रन्थस्तस्य वा इति भण्यते ॥**
**इत्येष तावत्संबन्धस्तथाऽन्योऽप्यभिधीयते ॥ ८३० ॥**

शङ्कासमर्थनपूर्वकं समाधत्ते । **प्रत्यगिति** । प्रतीचः संवित्स्वानुभवाख्यं प्रत्यक्षं तत्प्रमाणकत्वं यथा स्वप्नजागरितयोस्तथेहलोकपरलोकयोरपि प्रत्यक्षप्रमाणकमस्तित्वं वाच्यं नाऽऽगमादिमानान्तरगम्यं तदास्तित्वमिति विवक्षितं न च परलोकास्तित्वं प्रत्यक्षं तस्मात्परलोको नास्तीत्याशङ्क्य प्रत्यक्षेणैव तत्समर्थनार्थमुत्तरो ग्रन्थ इत्यर्थः । भाष्योक्तं संबन्धं निगमयति । **इत्येष इति** । भर्तृप्रपञ्चोक्तं संबन्धमुत्थापयति । **तथेति** ॥ ८२९ ॥ ८३० ॥

**आत्मा ज्योतिरिति ह्येकः समान इति चापरः ॥**
**पाप्मनो विजहातीति पदार्थाः सूत्रितास्त्रयः ॥ ८३१ ॥**

तं वक्तुं वृत्तं कीर्तयति । **आत्मेति** । यथाऽऽहुस्तान्येतानि त्रीणि वस्तून्युपन्यस्तानीति । तथोदाहृततदीयभाष्यावद्योती हिशब्दः ॥ ८३१ ॥

**स्वप्नेन निर्णयो वाच्य एतेषामित्यतोऽधुना ॥**
**तस्येति वर्ण्यतेऽथेदं विधिना येन तच्छृणु ॥ ८३२ ॥**

तस्येत्यादेरिष्टं संबन्धमाह । **स्वप्नेनेति** । आत्मज्योतिरादीनां त्रयाणां स्वप्नदृष्टान्तेन निर्णयो वाच्य इत्यतो हेतोस्तस्येति वाक्यं प्रवृत्तमित्यर्थः । कथमत्र त्रयाणां निर्णयस्तत्राऽऽह । **वर्ण्यत इति** । उक्तचोद्यावद्योतनार्थोऽथशब्दः । इदं त्रयं येन विधिना तस्येतिवाक्ये वर्ण्यते तद्विधानमुच्यमानं शृण्विति योजना । वाक्यव्याख्याने त्रयाणां निर्णयो व्यक्तो भवतीति भावः ॥ ८३२ ॥

**अयं चाप्यभिसंबन्धस्तथा चान्योऽपि वर्ण्यते ॥**
**स्वयंज्योतिरयं आत्मोक्तस्तस्याविद्याक्रियोद्भवाः ॥ ८३३ ॥**
**कर्मोपभोगसिद्ध्यर्थं वर्ण्यन्ते भूमयोऽधुना ॥**
**इदं जन्म परं चैव स्वप्नस्तन्मध्यगस्तथा ॥ ८३४ ॥**

---

१ ख. °ति । यथो° ।

उक्तं संबन्धमनुजानाति । **अयं चेति** । भाष्योक्तं संबन्धं दृष्टान्तयितुमपिशब्दः । स्वाभीष्टं संबन्धान्तरमाह । **तथाचेति** । तदेव स्फुटयति । **स्वयमिति** । इदं चेत्यादि-वाक्यमादाय भोगभूमीरेव दर्शयति । **इदमिति** । चकारसूचितमर्थमाह । **स्वप्न इति** ॥ ८३३ ॥ ८३४ ॥

**भावि यज्जन्म यच्चेदं प्रत्यक्षमनुभूयते ॥**
**एते एव विभोः स्थाने द्वे एवेत्यवधारणात् ॥ ८३५ ॥**

उक्तमनूद्य तस्येत्यादेरर्थमाह । **भावीत्यादिना** ॥ ८३५ ॥

**ननु स्वप्नोऽपि लोकोऽस्य कथं स्यादवधारणम् ॥**
**द्वे एवेति न संध्यत्वात्स्वप्नस्य स्थानयोर्द्वयोः ॥ ८३६ ॥**

संध्यमित्यादेर्व्यावर्त्यां शङ्कामादर्शयन्नवधारणमाक्षिपति । **नन्विति** । देहद्वयाति-रिक्तः स्वप्नदेहोऽपि पुंसोऽस्तीत्यवधारणानुपपत्तिरिति चोद्यं निरस्यति । **नेत्यादिना** । ऐहिकामुष्मिकदेहयोः संधौ भवः स्वप्नस्तदपेक्षया न तृतीयो न हि ग्रामयोः संधिस्तावे-वापेक्ष्य तृतीयो भवत्यतोऽवधारणासिद्धिरित्यर्थः ॥ ८३६ ॥

**संध्यं तृतीयमित्युक्तिः पूरणप्रत्ययश्रुतेः ॥**
**न स्थानान्तरनिह्नुत्यै यत्तूक्तमवधारणम् ॥ ८३७ ॥**
**तदयोगव्यवच्छित्त्यै नान्ययोगव्यपेक्षया ॥**
**तस्मिन्संध्य इतीदं च तथा सति समञ्जसम् ॥ ८३८ ॥**

भाष्योक्तमर्थमुक्त्वाऽर्थान्तरमाह । **संध्यमिति** । संध्यं तृतीयमित्यत्र संध्यमित्यु-क्तिरैहिकामुष्मिकदेहाभ्यां न स्थानान्तरनिरासार्थं त्रयाणां पूरणं तृतीयमितिपूरणप्रत्य-यश्रवणादित्यर्थः । एवकारविरोधात्पूरणप्रत्ययश्रुतिरेव हेयेत्याशङ्क्याऽऽह । **यत्त्विति** । एवकारेणाऽऽत्मनः स्थानद्वयासंबन्धो व्युदस्यते न स्थानान्तरसंबन्धस्तस्मादन्यथासिद्धा-वधारणश्रुतेरनन्यथासिद्धपूरणप्रत्ययश्रुतिर्बलवतीत्यर्थः । स्वप्नस्य स्थानान्तरत्वे वाक्यशे-षोऽप्यनुगृहीतः स्यादित्याह । **तस्मिन्निति** ॥ ८३७ ॥ ८३८ ॥

**स्वप्नेहलोकयोस्तावत्सत्त्वं प्रत्यक्षगोचरम् ॥**
**परलोकस्य सद्भावे किं प्रमाणमितीर्यताम् ॥ ८३९ ॥**

उत्तरं वाक्यमवतारयितुं पूर्वोक्तं चोद्यमनुद्रवति । **स्वप्नेति** ॥ ८३९ ॥

**अस्मिन्नेव तु स स्वप्ने स्थाने तिष्ठन्प्रपश्यति ॥**
**इमं लोकं परं चाऽऽत्मा कर्मज्ञानादिसंस्कृतः ॥ ८४० ॥**

स्वप्नप्रत्यक्षं परलोकसद्भावे मानमिति वक्तुं वाक्यमवतार्य व्याचष्टे । **अस्मिन्निति** । आदिपदं वासनार्थम् ॥ ८४० ॥

भूतजन्मानि यद्भुक्तं कर्म तद्भावनाञ्चितः ॥
पौर्वदैहिकमेवातो वयस्याद्येऽभिवीक्षते[1] ॥ ८४१ ॥

कथं स्वप्नप्रत्यक्षं परलोकं गोचरयतीत्याशङ्क्य बाल्ययौवनवार्धकभेदेन संघातस्य तिस्रोऽवस्थास्तत्र बाल्यावस्थायां परलोकविषयः स्वप्नः संभवतीत्याह । भूतेति । न हि तस्यामवस्थायामैहिकपुत्रादिविषयस्वप्नस्तस्याद्याप्यनिर्वृत्तेर्न च तस्य स्वप्नो नास्त्येव तस्य निद्राणस्य क्रन्दनादिदृष्टलिङ्गानुमितस्वप्नस्याप्रत्याख्येयत्वात्तस्मादस्ति पारलौकिकस्वप्नो बालस्येति भावः ॥ ८४१ ॥

मध्ये वयसि कार्कश्यात्कारणानामिहाऽऽर्जिताः ॥
प्रायेण वीक्षते स्वप्ने वासनाः कर्मणो वशात् ॥ ८४२ ॥

तर्हि यूनोऽपि परलोकविषयः स्वप्नोऽस्तु नेत्याह । मध्य इति । कार्कश्यं स्थूलार्थग्रहणसामर्थ्यम् । इहेति वर्तमानजन्मोक्तिः । कर्मणो वशादार्जिता वासना इति संबन्धः । इहासंभावितमपि स्वप्ने कदाचिददृष्टवशात्पश्यतीति प्रायेणेत्युक्तम् ॥ ८४२ ॥

यियासुः परलोकं तु कर्मविद्यादिसंवृतः ॥
भाविनो जन्मनो रूपं स्वप्ने प्रायेण पश्यति ॥ ८४३ ॥

अन्तिमे वयसि स्वप्नदर्शनस्य परलोकविषयत्वमाह । यियासुरिति । दृष्टेरनियमार्थं प्रायेणेत्युक्तम् । अस्मिञ्जन्मन्यसंभावितार्थस्य स्वप्ने दर्शनं परलोकसत्त्वे मानमिति समुदायार्थः ॥ ८४३ ॥

भुक्तत्वादविवक्षेह व्यतिक्रान्तस्य जन्मनः ॥
परलोकेहलोकौ तु[2] गृह्येते संध्यसिद्धये ॥ ८४४ ॥

अस्तु स्वप्नप्रत्यक्षं तत्र मानं तथाऽपि कथं स्वप्नस्य संध्यत्वं प्रत्यक्षेण वर्तमानदेहग्रहेऽपि द्वितीयापेक्षायां भूतो भावी वा को देहो ग्राह्यस्तस्य संध्यत्वार्थमित्याकाङ्क्षायामाह । भुक्तत्वादिति । इहेति स्वप्नस्य संध्यत्वसिद्धावित्यर्थः ॥ ८४४ ॥

सुखेन दर्शनं तावदैहिकस्येह जन्मनः ॥
यथा तु परलोकस्य तथाऽथेत्यभिधीयते ॥ ८४५ ॥

लोकद्वयस्य ग्राह्यत्वाविशेषे कस्मादिहलोकं त्यक्त्वा परलोको व्युत्पाद्यत इत्याशङ्क्याथेत्यादेस्तात्पर्यमाह । सुखेनेति ॥ ८४५ ॥

स्वप्नस्थानं समाश्रित्य परलोकं प्रपश्यति ॥
विधिना केन किंचाऽऽत्मा समाश्रित्य प्रपश्यति ॥ ८४६ ॥
अथैतदुच्यते स्पष्टं तद्यथावत्प्रतीयताम् ॥
येनाऽऽक्रामत्यमुं लोकं सोऽस्याऽऽक्रम इहोच्यते ॥ ८४७ ॥

---

[1] ख. ग. °वीक्ष्यते । [2] ख. नु ।

अथशब्दार्थमाह । **स्वप्नेति** । एतच्चोद्यमथेत्युच्यत इति यावत् । यथाक्रमोऽयमित्याद्यवतारयति । **एतदिति** । प्रतीतेर्यथावत्त्वं पुनःप्रश्नानपेक्षत्वम् । आक्रमशब्दार्थमाह । **येनेति** । श्रुतिः सप्तम्यर्थः ॥ ८४६ ॥ ८४७ ॥

**यादृक्साधनमस्येह परलोकाप्तये चितम् ॥**
**आक्रमः स यथा यस्य सोऽयमात्मा यथाक्रमः ॥ ८४८ ॥**

समासं दर्शयन्यथाक्रमशब्दार्थमाह । **यादृगिति** । इह जन्मन्यस्य पुरुषस्य परलोकार्थं यादृग्ज्ञानादि साधनमार्जितं स तादृगाक्रमो यस्य स यथाक्रम इति योजना । यथा यस्येत्यत्र यथाशब्दस्तादृगर्थो यादृगित्युपक्रमाद्विद्या कर्म पूर्वप्रज्ञा चाऽऽक्रमस्तद्वान्यथाक्रम इत्यर्थः ॥ ८४८ ॥

**यथाक्रमो यथोपायो विद्याकर्मादिलक्षणः ॥**
**परलोकोन्मुखीभूतं तमाश्रित्याऽऽक्रमं स्वकम् ॥ ८४९ ॥**
**स्थानं निर्माय संध्याख्यं विपाकानुभयानयम् ॥**
**अधर्मधर्मयोरात्मा दुःखानन्दान्प्रपश्यति ॥ ८५० ॥**

तमाक्रममित्यादि व्याख्यातुं वृत्तं कीर्तयति । **यथेति** । यथाक्रम इत्यस्यैवार्थमाह । **यथोपाय इति** । उपायं विशिनष्टि । **विद्येति** । तमित्यादि व्याचष्टे । **परलोकेति** । अधर्मधर्मयोर्विपाकानिति संबन्धः । तानेव स्फोरयति । **दुःखानन्दानिति** ॥ ८४९ ॥ ॥ ८५० ॥

**पाप्मनोऽधर्मकार्याणि तथाऽऽनन्दांश्च धर्मजान् ॥**
**आगमादन्यतः साक्षान्न तु पापादिदर्शनम् ॥ ८५१ ॥**

उक्तमेव व्यक्ती करोति । **पाप्मन इति** । प्रपश्यतीति पूर्वेण संबन्धः । किमिति पाप्मशब्देन प्रसिद्धार्थं हित्वा तत्कार्यं गृह्यते तत्राऽऽह । **आगमादिति** । साक्षादिति प्रत्यक्षेणेत्यर्थः ॥ ८५१ ॥

**धर्माधर्मप्रयुक्तो वा देवतानुग्रहात्तथा ॥**
**आनन्दान्पाप्मनश्चित्रान्स्वप्न आत्मा प्रपश्यति ॥ ८५२ ॥**

धर्माधर्मफलयोः सुखदुःखयोः स्वप्ने दर्शनं किंकृतं तत्राऽऽह । **धर्मेति** । वाशब्दश्चार्थः ॥ ८५२ ॥

**इह जन्मन्यसंभाव्यं स्वप्ने यस्मात्प्रपश्यति ॥**
**परलोकाश्रयं तादृक्तस्मात्स्वप्नसमीक्षणम् ॥ ८५३ ॥**

स्वप्ने तद्दर्शनेऽपि कथं परलोकस्य प्रत्यक्षतेत्याशङ्क्य प्रागुक्तं स्मारयति । **इहेति** ॥ ८५३ ॥

**संध्यस्वप्नविधिस्तावदेवं समुपवर्णितः ॥**
**परलोकप्रसिद्ध्यर्थं तस्य वा इति वाक्यतः ॥ ८५४ ॥**

तस्येत्यादिनोक्तमुपसंहरति । **संध्येति** । तदुपवर्णनफलमाह । **परलोकेति** । स्वाप्न-प्रत्यक्षेण परलोकप्रमित्यर्थं तस्येत्यादिना स्वप्नप्रकारोक्तिरित्यर्थः ॥ ८५४ ॥

**यदुक्तं विरहेऽशेषसूर्यादिज्योतिषामयम् ॥**
**पुमान्व्यवहरत्यात्मज्योतिषैवेति लिङ्गतः ॥ ८५५ ॥**

स यत्रेत्याद्यवतारयितुं व्यवहितं वृत्तं कीर्तयति । **यदुक्तमिति** । लिङ्गत इत्यादि-त्यादिज्योतिरभावेऽपि दृष्टस्वप्नादिगतवासनादिव्यवहारवशादित्यर्थः । तत्र चोद्यमुल्लस-तीति शेषः ॥ ८५५ ॥

**भान्वादिसर्वज्योतिर्भ्यो विविक्तोऽयं पुमानिति ॥**
**क्व सिद्ध इति वक्तव्यं यथोक्तार्थप्रसिद्धये ॥ ८५६ ॥**

अनन्तरवाक्यार्थमाकाङ्क्षापूर्वकं संक्षिप्याऽऽह । **भान्वादीति** । आदित्यादिज्यो-तिरस्पृष्टश्चिदात्मा कुत्र सिद्ध इति पृष्टे जिज्ञासितं स्थानं यस्माद्वाच्यं तस्माद्बाह्यज्यो-तीरहितस्य स्थानस्य यथोक्तार्थस्य प्रदर्शनार्थं स यत्रेत्यादिवाक्यमिति योजना ॥ ८५६ ॥

**स्वयंज्योतिःप्रसिद्धिर्वा पूर्वमुक्ताऽनुमानतः ॥**
**साक्षादव्यवधानेन तत्प्रसिद्धिरथोच्यते ॥ ८५७ ॥**

संबन्धान्तरमाह । **स्वयमिति** । आत्मैवास्येत्यादौ व्यवहारलिङ्गानुमानतः स्वप्रका-शश्चिदात्मोक्तः । अथापरोक्षानुभवात्प्रत्यग्भावेन तत्सिद्धिर्वाच्येत्युत्तरं वाक्यमि-त्यर्थः ॥ ८५७ ॥

**स स्वयंज्योतिरात्मैव बाह्यज्योतिर्विवर्जितः ॥**
**यथा भवति साक्षाच्च तथेदमभिधीयते ॥ ८५८ ॥**

उक्तं संबन्धद्वयमेकीकृत्य सुखप्रतिपत्त्यर्थं संगृह्णाति । **स इति** । स खल्वात्मा बाह्यैर्ज्योतिर्भिरस्पृष्टः स्वयमेव यथा ज्योतिर्भवति तथेदं स्वयंज्योतिष्ट्वं साक्षादनुभवयोग्यं स्वप्नदृष्टान्तेनोच्यते । **उक्तं हि**—स्वयंज्योतिरित्युपन्यस्तमात्मज्योतिरित्यनेनाभिधाना-न्तरेण तन्निर्णयार्थं स्वप्नदृष्टान्त उपादीयत इति । सर्वथाऽपि स्वप्रकाशात्मनिर्णयार्थ-मुत्तरं वाक्यमित्यर्थः ॥ ८५८ ॥

**यत्र यस्यामवस्थायां स्वपितीत्यभिधीयते ॥**
**पुरुषोऽजं स्वमात्मानं तदाऽपीतो भवत्ययम् ॥ ८५९ ॥**

स यत्र प्रस्वपितीत्यस्याक्षरार्थमाह । **यत्रेति** ॥ ८५९ ॥

जाग्रत्कर्मक्षयादात्मा बाह्यदेहाभिमानतः ॥
व्युत्थाय स्वप्रधानः सन्स्वप्नमायां समीक्षते ॥ ८६० ॥

स्वपितिशब्दस्य सुषुप्तिविषयत्वमङ्गीकृत्य स्वमात्मानमजमपीतो भवतीत्युक्तं संप्रति प्रकृतानुसारेण तस्य स्वप्नाख्यमर्थमाह । जाग्रदिति । स्थूलो देहो जाग्रदवस्थो बाह्यो देहः स्वप्रधानत्वं तदभिमानशून्यतया तत्पारतन्त्र्यराहित्यम् ॥ ८६० ॥

प्रवृत्तं फलदानाय यदिदं जन्म वर्तते ॥
अस्येति लोकशब्देन तदेतदभिधीयते ॥ ८६१ ॥

अस्य लोकस्येत्यत्र लोकं व्याचष्टे । प्रवृत्तमिति ॥ ८६१ ॥

जुहोत्यादिक्रियाद्वारा यस्मात्सर्वमवत्ययम् ॥
सर्वावानिति तेनायमात्मा देहान्त उच्यते ॥ ८६२ ॥

सर्वावत इत्यस्यार्थमाह । जुहोत्यादीति । अयं हि बुद्ध्यादिर्देहान्तः कर्ता संघातः पुरुषो यागादिद्वारा सर्वं देवादि यतो रक्षति तेनायं लोक्यमानः सर्वावानित्युच्यत इत्यर्थः ॥ ८६२ ॥

कृत्स्नं जगदुपादाय क्रियैकैकस्य सिध्यति ॥
जुहोत्यादिर्जगद्धेतुः सर्वावानुच्यते ततः ॥ ८६३ ॥

कथं जुहोत्यादिद्वाराऽस्य सर्वावत्त्वमित्याशङ्क्याऽऽह । कृत्स्नमिति । एकैकस्य संघातस्य व्यापारः सर्वजगदुपादानं विना नेत्युक्तं मधुब्राह्मणे न च सर्वोपादानं तत्फलं विनेत्यतो जुहोत्यादिः सर्वस्य जगतो हेतुरिति क्रियाश्रयो लोकः सर्वावानित्युच्यत इत्यर्थः ॥ ८६३ ॥

अध्यात्मादिविभागेन सर्वा वाऽस्याऽऽत्मनो यतः ॥
भूतभौतिकमात्राः स्युः सर्वावानुच्यते ततः ॥ ८६४ ॥

सर्वावत इत्यस्यार्थान्तरमाह । अध्यात्मादीति ॥ ८६४ ॥

सर्वावतोऽस्य देहस्य स्वप्नभोगप्रसिद्धये ॥
आदाय वासनामात्रां स्वप्नमायां तनोत्ययम् ॥ ८६५ ॥

मात्रामित्यादि व्याचष्टे । सर्वावत इति । अस्य देहस्य सर्वावत्त्वेनोक्तस्य वासनारूपां मात्रामादाय स्वप्नाख्यां मायां तद्भोगार्थमयं पुरुषस्तनोतीति संबन्धः ॥ ८६५ ॥

अध्यात्मादिविभागेन मात्रा जागरिते यथा ॥
भोगेनेहापचीयन्ते प्रचीयन्ते च कर्मभिः ॥ ८६६ ॥

वासनानां स्वप्नभोगेन क्षयादन्तवत्त्वोपपत्तेः सुप्तस्य मुक्तिः स्यादित्याशङ्क्य दृष्टान्तमाह । अध्यात्मादीति ॥ ८६६ ॥

---

१ घ. 'मर्थान्तरमा' ।

**स्वप्नभूमावपि तथा कर्मणोत्थापिता इमाः ॥**
**क्षयवृद्धिप्रबन्धेन मात्राः स्युर्वासनात्मिकाः ॥ ८६७ ॥**

दार्ष्टान्तिकमाह । **स्वप्नेति** ॥ ८६७ ॥

**धिया धियेति च तथा प्रागेतदुपपादितम् ॥**
**ह्रासवृद्धिप्रबन्धेन यथेदं वर्तते जगत् ॥ ८६८ ॥**

उक्तार्थोपोद्बलकत्वेन **सप्तान्नब्राह्मणोक्तं** स्मारयति । **धियेति** ॥ ८६८ ॥

**स्वयमेव विहत्येति देवताप्रतिषेधकृत् ॥**
**विशेषणं स्वयमिति देहपातेऽस्य भण्यते ॥ ८६९ ॥**

स्वयं विहत्येत्यत्र स्वयमितिविशेषणफलमाह । **स्वयमेवेति** । अस्याऽऽत्मनो देहपाते देवतानां कर्तृत्वशङ्कानिषेधकमत्र स्वयमितिविशेषणमित्यर्थः ॥ ८६९ ॥

**स्वात्मापसर्पणाद्देहं निःसंबोधं करोति यः ॥**
**सुषुप्सुः कर्मणां ध्वस्तौ विहत्येत्युच्यते ततः ॥ ८७० ॥**

विहत्येत्यस्यार्थमाह । **स्वात्मेति** । यः सुषुप्सुर्जाग्रद्धेतुकर्मध्वस्तौ स्वस्याऽऽत्मीयाद्देहादपसर्पणाद्धेतोः सुनिश्चेष्टं करोति स ततो देहनिःसंबोधताहेतुत्वाद्विहत्येति कर्तृत्वेनोच्यत इत्यर्थः ॥ ८७० ॥

**भान्वाद्यनुग्रहाद्बोध आत्मनश्चक्षुरादिषु ॥**
**देहस्य व्यवहारार्थं देहव्यवहृतिस्तथा ॥ ८७१ ॥**

कर्मक्षये देहादपसर्पणेऽपि कथमात्मनो देहविहतिकर्तृतेत्याशङ्क्याऽऽह । **भान्वादीति** । आत्मनो हि करणेषु देवतानुग्रहाद्देहचेष्टायै रूपादिबोधो जागरिते जायते तथा सति देहचेष्टा दृष्टेत्यर्थः ॥ ८७१ ॥

**आत्मकर्मप्रयुक्तैव धर्मादिफलभुक्तये ॥**
**कर्मणः फलभोगान्ते देहो यस्मात्पतत्ययम् ॥ ८७२ ॥**

देहव्यवहारोऽपि केन प्रयुज्यते किमर्थो वेत्याशङ्क्याऽऽह । **आत्मेति** । तथाऽपि कथमात्मनस्तद्विहतिकर्तृतेत्याशङ्क्याऽऽह । **कर्मण इति** । तस्मात्परंपरया देहपाते हेतुरात्मेति शेषः ॥ ८७२ ॥

**निर्मायेति स्वयं तद्वदात्मकर्मव्यपेक्षया ॥**
**स्वप्नप्रपञ्चनिष्पत्तिर्यस्मात्तस्माद्विशेषणम् ॥ ८७३ ॥**

स्वयं निर्मायेत्यस्यार्थमाह । **निर्मायेतीति** । यथा स्वयं विहत्येत्यत्र स्वयमिति विशेषणं तथा स्वयं निर्मायेत्यत्रापि तद्देवताशङ्कानिवृत्त्यर्थं यस्मादात्मकर्मापेक्षया स्वप्नोत्पत्तिस्तस्मादात्मनो निर्माणकर्तृत्वमप्यविरुद्धमित्यर्थः ॥ ८७३ ॥

---

१ घ. °धहे° ।

**अपास्ताशेषकरणदैवतस्यापि चाऽऽत्मनः ॥**
**क्रियाकारकसिद्ध्यर्थं भावनैवास्य कारणम् ॥ ८७४ ॥**

आत्मकर्माधीनां स्वप्नोत्पत्तिमुक्त्वा वासनामयमितिभाष्यपदाभिप्रायमाह । **अपास्तेति** । एवकारो भावनाप्राधान्यार्थः ॥ ८७४ ॥

**निर्मातव्योऽथ भोक्तव्यो यो लोकोऽभूदिहाऽऽत्मनः ॥**
**तेन तेन स्वरूपेण भावना व्यवतिष्ठते ॥ ८७५ ॥**

तर्हि क्रियाकारकमात्रसिद्ध्यर्था भावनाऽस्तु न सा सर्वस्वप्ननिर्माणे हेतुर्नेत्याह । **निर्मातव्य इति** । अथशब्दस्तथाशब्दपर्यायः । इहेति जागरोक्तिः ॥ ८७५ ॥

**अपेतकारकत्वोऽपि कर्मोत्थापितभावनः ॥**
**भावनाकारकेक्षित्वादात्मैकः कारकायते ॥ ८७६ ॥**

विहत्य निर्मायेति च कर्तृत्वमात्मनो न युक्तं न हि कूटस्थाद्वयस्य कर्तृतेत्याशङ्क्याऽऽह । **अपेतेति** । एकविशेषणादुपरिष्टादप्यपिर्द्रष्टव्यः ॥ ८७६ ॥

**जाग्रतो यदुपात्तं प्राग्भावनालक्षणं स्वयम् ॥**
**भास्वद्धीसंश्रयं ज्ञानं भाःशब्देन तदुच्यते ॥ ८७७ ॥**

स्वेन भासा स्वेन ज्योतिषेत्यत्र भाज्योतिषोरैक्यात्पौनरुक्त्यमाशङ्क्य भाःशब्दार्थमाह । **जाग्रत इति** । जाग्रदवस्थस्य पुंसो यत्तस्यामेवावस्थायामार्जितं भावनाख्यं स्वयंज्ञानं तत्प्रकाशात्मकान्तःकरणवृत्तिरूपं भाःशब्दितमित्यर्थः ॥ ८७७ ॥

**बुद्ध्यादिकरणोत्थाया[1] व्यावृत्त्यर्थं विशेषणम् ॥**
**स्वेनेति भासः प्रत्यक्चिदभिव्यक्तिकृतोऽभिधा ॥ ८७८ ॥**

किमर्थं स्वेनेति विशेषणं तत्राऽऽह । **बुद्ध्यादीति** । स्वेनेत्यभिधारूपं विशेषणं प्रत्यक्चैतन्याभिव्यक्तिहेतोर्भासः स्वप्नावस्थागताया बुद्ध्यादिद्वारा प्रवृत्तायाः कूटस्थबोधाज्ज्योतिष्ट्वेन प्रस्तुताद्व्यावृत्त्यर्थं भवति हि भावनामयी भाः स्वप्नस्था प्रत्यगभिव्यक्तिकरी तत्साक्षित्वेन तत्स्वयंज्योतिष्ट्वसाधनादित्यर्थः ॥ ८७८ ॥

**स्वशब्दाविह विज्ञेयावात्मीयात्मार्थवाचिनौ ॥**
**भाज्योतिरनुरोधेन सामर्थ्यादेव कारणात् ॥ ८७९ ॥**

कथं स्वशब्देन कूटस्थज्योतिषो भासो व्यावृत्तिः स्वेन ज्योतिषेति ज्योतिषोऽपि विशेषणादित्याशङ्क्य स्वशब्दयोर्विशेष्यवशादर्थभेदाद्भाविशेषणेनाऽऽत्मज्योतिषस्तद्व्यावर्तनं युक्तमित्याह । **स्वशब्दाविति** । इहेति प्रकृतवाक्योक्तिः । कथं तदनुरोधेऽपि स्वशब्दयोरित्थमर्थव्यवस्थेत्याशङ्क्याऽऽह । **सामर्थ्यादिति** ॥ ८७९ ॥

---

१ क. ग. 'दिकार' । २ ख. प्रकृतायाः ।

**परार्था भावना यस्मात्स्वार्थे[1] ज्योतिश्चिदात्मनः ॥**
**उक्तार्थवाचिनौ तस्मात्स्वशब्दौ समुदाहृतौ ॥ ८८० ॥**

कथं तयोः सामर्थ्यं तत्राऽऽह । **परार्थेति** ॥ ८८० ॥

**स्वयंज्योतिरिति प्रोक्तो निष्क्रियोऽकारकोऽफलः ॥**
**यः स एव स्वयंज्योतिर्ज्योतिःशब्देन भण्यते ॥ ८८१ ॥**

स्वेन ज्योतिषेत्यत्र ज्योतिःशब्दार्थमाह । **स्वयमिति** ॥ ८८१ ॥

**निःशेषलोकधीवृत्तिसाक्षिणैवाविकारिणः[2][3] ॥**
**प्रतीच ईदृशी वृत्तिः स्वपितीत्याभिधीयते ॥ ८८२ ॥**

प्रस्वपितीत्यस्यार्थमाह । **निःशेषेति** ॥ ८८२ ॥

**पीताध्यात्मादिकज्योतिर्जाग्रच्छब्दादिवर्जितः[4] ॥**
**वासनोपाधिरात्मैकः स्वयंज्योतिरितीर्यते[5] ॥ ८८३ ॥**

स्वापस्य सुषुप्तेः सकाशाद्विशेषार्थं स्वेन ज्योतिषेत्यस्यार्थं प्रपञ्चयति । **पीतेति ।** आदित्यादिज्योतिरभावे कुतः शब्दादिधीरित्याशङ्क्याऽऽह । **जाग्रदिति** । स्थूलार्थाभावेऽपि तद्धीरस्तीत्याशङ्क्य विशिनष्टि । **वासनेति** ॥ ८८३ ॥

**मातृमानप्रमेयादिसामग्री वासनात्मिका ॥**
**स्वप्ने भाःशब्दवाच्याऽस्य स्वयंज्योतिष आत्मनः ॥ ८८४ ॥**

आत्मनि मानादिसामग्रीप्रवृत्तेर्न स्वयंज्योतिष्ट्वमित्याशङ्क्य स्वेन भासेत्यस्यार्थं प्रपञ्चयति । **मात्रिति ।** स्वप्ने मात्रादिसामग्र्या वासनात्मिकाया भासः प्रत्यग्विषयत्वान्न तदीयस्वप्रकाशत्वहानिरित्यर्थः ॥ ८८४ ॥

**प्रमातृत्वादिका सर्वा प्रथते विषयात्मना ॥**
**भावना स्वार्थरूपस्य प्रतीचोऽलुप्तचक्षुषः ॥ ८८५ ॥**

कथं सा स्वप्ने प्रतीचो विषयस्तत्राऽऽह । **प्रमातृत्वादिकेति ।** स्वार्थरूपत्वे हेतुमाह । **अलुप्तेति** ॥ ८८५ ॥

**मातारं मेयसंबद्धं[6] जाग्रद्भूमौ यथेक्षते ॥**
**निष्क्रियो वासनाराशिं स्वप्नभूमौ तथेक्षते ॥ ८८६ ॥**

स्वाप्नी भावना प्रत्यग्विषयत्वेन भातीत्येतद्दृष्टान्तेनाऽऽह । **मातारमिति** ॥ ८८६ ॥

**स्वयंज्योतिरयं प्रत्यङ्[7]सर्वसाधननिस्पृहः ॥**
**कूटस्थो वासनाः स्वप्ने चिदाभासाः करोत्ययम् ॥ ८८७ ॥**

---

१ ख. ग. °त्स्वार्थज्यो° । २ क. ग. °धीनृत्तसा° । ३ ख. °रिणा । प्र° । ४ ख. °दिकं ज्यो° । ५ ख. °र्यताम् ॥ ८८३ ॥ ६ ख. ग. °बन्धं जा° । ७ क. ख. °त्यक्सर्व° ।

ईक्षते चेत्करणापेक्षत्वं तद्विरहिणोऽकर्तृत्वादित्याशङ्क्याऽऽह । **स्वयमिति** । कथं तर्हि स्वप्ने रथादिप्रथेत्यत्राऽऽह । **कूटस्थ इति** ॥ ८८७ ॥

**तत्संनिधौ चिदाभत्वं कार्यकारणवस्तुनः ॥**
**यत्तदस्याऽऽत्मनो मोहाद्द्रष्टृत्वमुपचर्यते ॥ ८८८ ॥**

करोति चेन्न कौटस्थ्यमित्याशङ्क्याऽऽह । **तत्संनिधाविति** । द्रष्टृत्वं तत्तदर्थविषयदृष्टिकर्तृत्वमिति यावत् ॥ ८८८ ॥

**ज्योतिषाऽकारकेणाऽऽत्मा वर्ततेऽसंस्पृशन्परम् ॥**
**चिदाभा वासनाश्चैवं संगतिर्न तयोर्मिथः ॥ ८८९ ॥**

मोहकृतं द्रष्टृत्वमुपपादयति । **ज्योतिषेति** । अकारकेणासंस्पृशन्निति च्छेदः । कूटस्थबोधेन वर्तमानोऽसङ्गः सन्नात्मा स्वप्ने वासनाभिरपि न संसृज्यते तत्कुतोऽस्य मुख्यं द्रष्टृत्वमित्यर्थः । तर्हि वासनानां स्वातन्त्र्यान्नामुख्यमपि तद्द्रष्टृत्वं नेत्याह । **चिदाभा इति** । वासना हि जायमानाश्चिदाभासव्याप्ता जायन्त आत्मा तु स्वतन्त्रो न केनचिदपि संबध्यतेऽतस्तयोरात्मवासनयोरन्योन्यसंगत्यभावाद्वासनानामात्मनि धीद्वाराऽऽरोपितत्वाच्चाऽऽरोपितमात्मनस्तद्द्रष्टृत्वमित्यर्थः ॥ ८८९ ॥

**यथा जात्यमणेः शुद्धा ज्वलन्ती निश्चला शिखा ॥**
**संनिध्यसंनिधानेषु घटादीनामविक्रिया ॥ ८९० ॥**

आत्मनो विक्रियाभावाच्चाऽऽरोपितैव द्रष्टृतेति वक्तुमक्रियत्वे दृष्टान्तमाह । **यथेति** । जात्यो जातौ भवः शुद्धो मणिस्तस्येति यावत् ॥ ८९० ॥

**निःशेषबुद्धिसाक्ष्येवं परमात्मप्रदीपकः ॥**
**संनिध्यसंनिधानेषु धीवृत्तीनामविक्रियः ॥ ८९१ ॥**

दार्ष्टान्तिकमाह । **निःशेषेति** ॥ ८९१ ॥

**न प्रकाशक्रिया काचिदस्य स्वात्मनि विद्यते ॥**
**उपचारात्क्रिया साऽस्य यः प्रकाश्यस्य संनिधिः ॥ ८९२ ॥**

साक्षिणोऽपि प्रकाशार्था विक्रियाऽस्तीति चेत्सा किं स्वप्रकाशार्था किंवाऽर्थप्रकाशार्थेति विकल्प्याऽऽद्यं दूषयति । **नेति** । स्वयमेवं प्रकाशत्वादित्यर्थः । द्वितीयं निराह । **उपचारादिति** ॥ ८९२ ॥

**यदेवं वर्तनं श्रुत्या स्वपितीति तदुच्यते ॥**
**इत्थंभूते तृतीयाऽतः स्वेन भासेति गृह्यते ॥ ८९३ ॥**

कूटस्थप्रकाशैकरसस्य कथमात्मनः स्वपितीति व्यपदेशस्तत्राऽऽह । **यदिति** । बुद्धिस्थवासनासाक्षित्वेनाऽऽत्मनो यदवस्थानं तदेव प्रस्वपितीति श्रुत्या स्वापत्वेनोच्यते

१ क. °दि तत्रा° । २ ख. °पपद्यते । ३ क. ख. °व स्वप्र° ।

न ज्ञानविपरिलोप इत्यर्थः । तृतीयाचतुष्टयार्थमाह । **इत्थमिति** । वासनासाक्षितया वर्तनमात्मनो यतः स्वापोऽतः स्वेन भासा स्वेन ज्योतिषेति तृतीया सर्वा कूटस्थप्रत्यग्ज्योतिरात्मना स्वकीयवासनाराशिसाक्षित्वेन तिष्ठतीत्थंभूतेऽर्थे ज्ञेयेत्यर्थः ॥ ८९३ ॥

**सामग्र्यभावान्नैवेह कर्तृत्वादि विवक्ष्यते ॥**
**आत्मनोऽकारकत्वं च प्राधान्येन विवक्षितम् ॥ ८९४ ॥**

रामेण शरेणेतिवत्कर्तरि करणे वा सा किं न स्यात्तत्राऽऽह । **सामग्रीति** । कार्यकारणादिलक्षणा[1] सामग्री न हि वासनातिरिक्ता साऽस्ति । इहेति स्वप्नोक्तिः । इतश्चात्र कर्तृत्वाद्यविवक्षितमित्याह । **आत्मन इति** ॥ ८९४ ॥

**भान्वादिबाह्यज्योतिर्भिः संकीर्णः प्रागभूदयम् ॥**
**अन्यस्य ज्योतिषोऽभावात्स्वयंज्योतिः पुमानयम् ॥ ८९५ ॥**

अत्रेत्यादेरर्थमाह । **भान्वादीति** । प्राग्जाग्रति संप्रति स्वप्नावस्थायामिति शेषः ॥ ८९५ ॥

**नान्यत्र कारणाद्वृत्तिः कार्याणां जागरेऽपि हि ॥**
**कारणं च तमस्त्व्यात्मा नातः स्वप्ने मनस्थितिः ॥ ८९६ ॥**

ज्योतिरन्तराभावः स्वप्ने नास्ति मनसो ज्योतिषस्तत्र सत्त्वादन्यथा सुषुप्तादविशेषप्रसङ्गादतो न तत्र स्वयंज्योतिष्ट्वमित्याशङ्क्य संमतमर्थमाह । **नान्यत्रेति** । अवस्थान्तरेऽपीत्यपेरर्थः । कार्याणां स्वातन्त्र्येण दुर्निरूपितत्वादितिहेत्वर्थो हिशब्दः । अस्त्वेवं प्रस्तुते किं जातं तदाह । **कारणं चेति** । अज्ञातो हि प्रत्यगात्मा जगद्धेतुस्तथाच कार्यस्य मनसः स्वकारणाधिनत्वान्न स्वप्ने स्वतन्त्रतया स्थितिः स चाऽऽत्मा तत्साधको नाऽऽत्मसाधकं तद्युक्तं पराधीनत्वेन सर्पवज्जडत्वादित्यर्थः ॥ ८९६ ॥

**ननु जाग्रच्छरीरादेर्मात्रोपादानमीरितम् ॥**
**तस्मिन्सति स्वयंज्योतिः कथमात्माऽभिधीयते ॥ ८९७ ॥**

अत्रेत्यादिनोक्तमाक्षिपति । **नन्विति** । जाग्रद्वासनावशादेवाऽऽत्मसिद्ध्युपपत्तेर्न तस्य स्वयंज्योतिष्ट्वसिद्धिरित्यर्थः ॥ ८९७ ॥

**सत्यमेवं तथाऽपीदं मात्रादानं परात्मनः ॥**
**सर्वदा विषयीभूतं गन्धर्वनगरादिवत् ॥ ८९८ ॥**

स्वप्ने मात्रोपादानमङ्गी करोति । **सत्यमिति** । तर्हि स्वीकृतवासनानुसारादात्मासिद्धेर्न स्वयंज्योतिष्ट्वमत आह । **तथाऽपीति** । न हि वासनाजातमात्मनः स्वप्रकाशत्वबाधकमात्मविषयत्वेनैव स्फूर्तेरित्यर्थः ॥ ८९८ ॥

---

१ क. °येकर° । २ घ. °रूपत्वा° ।

**एतस्मिन्ननृतोपाधौ शक्यो दर्शयितुं परः ॥**
**वासनालक्षणे साक्षात्स्वयंज्योतिःस्वभावकः ॥ ८९९ ॥**

वासनाराशेः स्वयंज्योतिष्ट्वाबाधकत्वमुक्त्वा तत्साधकत्वमेवेत्याह । **एतस्मिन्निति ।** तत्साधकत्वेनापरोक्षत्वसंभवादिति हेतुः साक्षादित्युच्यते ॥ ८९९ ॥

**सर्वोपाधिविनिर्मुक्तौ नैव शक्यः स ईक्षितुम् ॥**
**सुषुप्त इव तेनासन्मात्रादानमिदं कृतम् ॥ ९०० ॥**

वासनाख्यमिथ्योपाध्यतिरेकेणापि स्वयंज्योतिरात्मा शक्यो दर्शयितुमित्याशङ्क्याऽऽह । **सर्वेति ।** न हि स्थूलोपाधिसत्त्वे जागरितवदशेषोपाध्यसत्त्वे च सुषुप्तवदात्मा स्वयंज्योतिः शक्यो दर्शयितुं तथाच स्वप्ने कृतं मिथ्याभूतवासनादानमात्मस्वयंज्योतिष्ट्वसाधनोपयुक्तमित्यर्थः । असच्छब्दो मिथ्यार्थः ॥ ९०० ॥

**ननु जाग्रद्वदीक्ष्यन्ते ग्रहीतृग्रहणादयः ॥**
**स्वयंज्योतिः कथं तेषु सत्सु स्वप्नेऽभिधीयते ॥ ९०१ ॥**

आत्मनः स्वप्ने स्वयंज्योतिष्ट्वं विधान्तरेणाऽऽक्षिपति । **नन्विति** ॥ ९०१ ॥

**नैतदेवं कुतो जाग्रद्वैलक्षण्यात्मकत्वतः ॥**
**स्वप्नस्य देहबुद्ध्यादेः स्वप्नवृत्तावसंभवात् ॥ ९०२ ॥**

जाग्रत्स्वप्नयोरैकरूप्यमसिद्धमित्याह । **नैतदिति ।** त्वयाऽपि स्वीकृतं तदैकरूप्यमिति मत्वा हेतुं पृच्छति । **कुत इति ।** व्यावहारिकं वैलक्षण्यमुपेत्योत्तरमाह । **जाग्रदिति ।** तदेव साधयति । **देहेति** ॥ ९०२ ॥

**आत्मबुद्धिमनश्चक्षुरालोकार्थादिलक्षणम् ॥**
**जाग्रदेव न तु स्वप्नो भावनामात्रशेषतः ॥ ९०३ ॥**

उक्तमर्थं जागरिते हीत्यादिभाष्येण प्रपञ्चयति । **आत्मेति ।** आदिशब्देन करणभेदो विषयभेदश्च गृह्यते ॥ ९०३ ॥

**आविश्चिकीर्षुः साक्षादिममर्थं च श्रुतिः परा ॥**
**न तत्रेति प्रवृत्तैषा प्रत्यगात्मविशुद्धये ॥ ९०४ ॥**

तत्रानन्तरवाक्यं पातयति । **आविरिति ।** प्रत्यगर्थविशुद्ध्यर्थं स्वप्नस्य जाग्रतो वैलक्षण्यलक्षणमर्थं साक्षादाविष्कर्तुमिच्छन्ती न तत्रेत्याद्या श्रुतिः प्रवृत्तेति योजना ॥९०४॥

**कर्मकृद्धिपणान्तो यः कामाविद्यासमन्वितः ॥**
**स्वापबोधाविमौ तस्य न तु तत्साक्षिणो दृशेः ॥ ९०५ ॥**

तद्विशुद्धिरसिद्धा बुद्ध्यादिवदवस्थावत्त्वादित्याशङ्क्याऽऽह । **कर्मेति ।** विशिष्टस्य लक्षितस्य वाऽशुद्धिर्नाऽऽद्यः सिद्धत्वादिष्यते हि बुद्धिविशिष्टस्याविद्यास्मितादिदोषवतो

धर्माधर्मकर्तुरवस्थावत्त्वेनाशुद्धत्वं नेतरो हेत्वसिद्धेरित्यर्थः । साक्षिणो दृष्टिकर्तृत्वमाशङ्क्याऽऽह । **दृशेरिति** ॥ ९०५ ॥

**कूटस्थज्योतिषैवाऽऽस्ते स्वप्नस्थानेऽक्रियोऽद्वयः ॥**
**चिदाभया वासनया तत्साक्षित्वं प्रकल्पते ॥ ९०६ ॥**

तस्यावस्थावत्त्वाभावे हेतुमाह । **कूटस्थेति** । स्वप्नादौ सर्वक्रियारहितो द्वैताभावोपलक्षितो निर्विकारचैतन्यमात्रत्वेनाऽऽत्माऽवतिष्ठते तत्कुतोऽस्यावस्थावत्त्वमित्यर्थः । कूटस्थाद्वयस्य कुतः साक्षित्वं सक्रियस्य सद्वयस्यैव च लोके तद्दृष्टेरित्याशङ्क्याऽऽह । **चिदाभयेति** । कूटस्थाद्वयस्यैव चैतन्याभासव्याप्तजाग्रद्वासनानुसारेण स्वप्ने प्रतीचः साक्षित्वं तथाऽवस्थान्तरेऽपि काल्पनिकं स्वयंज्योतिषस्तदविरुद्धमित्यर्थः ॥ ९०६ ॥

**तत्प्रयोक्तृक्रियाभावाद्बुद्ध्यादिज्योतिषामिह ॥**
**न व्यापृतिरतः प्रत्यङ्ज्योतिषा स्वेन वर्तते ॥ ९०७ ॥**

अवस्थासाक्षितयाऽऽत्मनः शुद्धत्वमुक्त्वा प्रकृतश्रुतेस्तात्पर्यं निगमयति । **तदिति** । बुद्ध्यादीनां तत्प्रेरककर्मणां च स्वप्ने वासनानतिरेकात्तन्मयानां तेषामात्मप्रकाश्यत्वात्तस्मिन्प्रकाशकत्वेन न प्रवृत्तिरतः स्वयमेव ज्योतिस्तत्राऽऽत्मेत्यर्थः ॥ ९०७ ॥

**जाग्रद्वस्तूनि सर्वाणि भावनामात्ररूपताम् ॥**
**जाग्रत्कर्मक्षये यान्ति स्वप्नकर्मोद्भवे सति ॥ ९०८ ॥**

स्वप्ने बुद्ध्यादीनां वासनातिरेकेणाभावमुक्तं व्यनक्ति । **जाग्रदिति** ॥ ९०८ ॥

**ता भावना उपादाय प्रत्यङ् स्वप्ने रिरंसया ॥**
**करोत्येष रथाद्यर्थं स्वप्नभोगप्रसिद्धये ॥ ९०९ ॥**
**करणं कर्म कर्ता च कर्मैतत्कारकात्मकम् ॥**
**प्रत्यङ्मोहैकनिष्ठं सच्चिदाभत्वात्तदात्मनि ॥ ९१० ॥**

अथ रथानित्यादेस्तात्पर्यमाह । **ता इति** । आत्मा स्वप्ने रथादि करोति चेद्बुद्ध्याद्यपि करिष्यति तथाच स्वकृतबुद्ध्यादिप्रकाश्यतया न स्वयंज्योतिष्ट्वमित्याशङ्क्याऽऽह । **स्वप्नेति** । करणादिकारकरूपं वासनात्मकं सर्वं प्रतीचः स्वप्नभोगार्थं कर्मत्वेन प्रथते तेन न तत्प्रत्यक्प्रकाशकमित्यर्थः । कथं तर्हि बुद्ध्यादेरात्मविषयत्वप्रतीतिस्तत्राऽऽह । **प्रत्यगिति** । तद्धि बुद्ध्यादि साभासाज्ञाने कल्पितं चिदाभासवत्त्वादज्ञानेन सहाऽऽत्मनि कल्प्यते तेन तद्विषयत्वधीरित्यर्थः ॥ ९०९ ॥ ९१० ॥

**कार्यकारणरूपेण कर्मैतत्प्रथते जगत् ॥**
**आत्मन्येतत्समध्यस्तमात्माविद्यैकहेतुतः ॥ ९११ ॥**

---

१ क. °कल्प्यते । २ ख. स्वयंज्यो° । ३ ग. स्वप्नारि° । ४ क. ग. °दानन्दाद्वयात्म° । ५ ख. कल्पते ।

करणं कर्मेत्यत्रोक्तमनूद्य प्रत्यब्बोहेत्यादिनोक्तमर्थं साधयति । कार्येति । कर्म विषयभूतमिति यावत् ॥ ९११ ॥

सर्वस्य कर्मणोऽत्यन्तमात्माऽकर्ता विलक्षणः ॥
तत्संहतः स्वयं त्वात्माऽसंहतो निर्गुणः शुचिः ॥ ९१२ ॥

अविद्ययाऽऽत्मन्यध्यस्तं जगदित्यत्र फलितमाह । सर्वस्येति । कर्मणो जगतो विषयस्येति यावत् । अत्यन्तं विलक्षण इति संबन्धः । अकर्तेति च्छेदः । अविद्यातज्जसंबन्धादात्मनश्च सगुणत्वाद्याप्तिमाशङ्क्याऽऽह । तदिति ॥ ९१२ ॥

अविद्यया स्वमात्मानमशुद्धं मन्यते यदा ॥
जाग्रत्स्वप्नसुषुप्तानि तदैतानि प्रपद्यते ॥ ९१३ ॥

आत्मा शुद्धश्चेत्कथं तस्यावस्थावत्त्वप्रथेत्यत आह । अविद्ययेति ॥ ९१३ ॥

रथा दार्वाद्यसद्भावान्न सन्ति स्वप्नदर्शने ॥
न सन्त्यश्वादयस्तद्वद्रथयोगाः सवर्त्मकाः ॥ ९१४ ॥
रथादीन्सृजतेऽथात्र जाग्रत्कर्मादिहेतुकान् ॥
अविद्याकामकर्माणि सृष्टिबीजमिदं दृशेः ॥ ९१५ ॥

न तत्रेत्यादेः स हि कर्तेत्यन्तस्य तात्पर्यमुक्त्वा नेत्यादेरक्षरार्थमाह । रथा इति । अत्रेति स्वप्नोक्तिः । दार्वादिहेत्वभावे कथं रथादिसृष्टिरित्याह । अथेति । तत्रोत्तरम् । जाग्रदिति । कर्मादे रथादिसृष्टिहेतुत्वे कथमात्मा स्रष्टोच्यते तत्राऽऽह । अविद्येति ॥ ९१४ ॥ ९१५ ॥

कर्मणो गमनस्येह साधनाभावहेतुना ॥
स्वप्ने मृषात्वमाहैवं गमनादेः श्रुतिः स्वयम् ॥ ९१६ ॥

रथादि सृज्यते चेत्कथं स्वप्ने तदभावोक्तिरित्याशङ्क्याऽऽह । कर्मण इति । गमनाख्यकर्महेतुरथादिनिरासेन स्वप्ने गमनादेर्मिथ्यात्वं स्वयमेव श्रुतिर्दर्शयत्येवं सर्वस्यापि स्वप्नस्य मिथ्यात्वमत्र विवक्षितं मायामात्रं त्विति न्यायादित्यर्थः ॥ ९१६ ॥

न कर्मफलमप्यत्र स्वप्ने तद्धेत्वसंभवात् ॥
नाऽऽनन्दा अपि तत्रेति ह्यतः श्रुतिरभाषत ॥ ९१७ ॥

न तत्राऽऽनन्दा इत्यादेस्तात्पर्यमाह । न कर्मेति । स्वप्ने कर्माभावात्तत्फलाभाव इत्यत्र श्रुतिमवतारयति । नेति । हेत्वभावे फलाभावं हिशब्दोपात्तमतःशब्देनानुवदति ॥ ९१७ ॥

आह्लदाः स्युरिहाऽऽनन्दा हर्षाश्चात्र मुदस्तथा ॥
प्रकर्षगुणसंबन्धाः प्रमुदो मुद एव तु ॥ ९१८ ॥

पल्वलास्त्विह वेशान्ताः प्रसिद्धार्थं तथोत्तरम् ॥
इत्येवमसतामेव स्रष्टाऽऽत्मा स्वात्ममायया ॥ ९१९ ॥

आनन्दादिपदानामपुनरुक्तमर्थमाह । **आह्लादाः स्युरिति** । इहेत्यत्रेति च प्रकृतवाक्योक्तिः । आनन्दाः सुखसामान्यानि । मुदः पुत्रादिनिमित्ता हर्षाः । प्रमुदस्तु हर्षा एव प्रकर्षविशिष्टा इति भेदः । पल्वलाः क्षुद्राणि सरांसि । उत्तरं स हीत्यस्मात्प्राक्तनं वाक्यम् । न तत्रेत्यादिवाक्यार्थमुपसंहरति । **इत्येवमिति** ॥ ९१८ ॥ ९१९ ॥

चिदाभकारकोद्भूतवासनाकर्महेतुकः ॥
स्वयं निर्माय सृजत इत्यकर्मापि भण्यते ॥ ९२० ॥

आत्मनो मायया स्रष्टृत्वे युक्तिमाह । **चिदाभेति** । चैतन्याभासव्याप्तबुद्ध्यादिकारकाकारेणाभिव्यक्तवासनाप्रयोजकस्वप्नभोगहेतुकर्मस्वविषयया हेतुत्वाद्वस्तुतो निर्व्यापारोऽप्यात्मा तत्र कर्तोच्यते । तत्र कूटस्थस्य मायिकमेव स्रष्टृत्वमित्यर्थः ॥ ९२० ॥

अविचारितसंसिद्धं क्रियाकारकलक्षणम् ॥
जाग्रद्भूमावपि मतं किमु स्वप्नैकनीडगम् ॥ ९२१ ॥

स्वप्नसृष्टेर्मायामयत्वे कैमुतिकन्यायमाह । **अविचारितेति** ॥ ९२१ ॥

रथादिवासनानीडचित्तवृत्तिसमुद्भव—
कर्महेतुत्वतः कर्ताऽकर्ताऽप्यात्माऽभिधीयते ॥ ९२२ ॥

स हि कर्तेत्यस्यार्थमाह । **रथादीति** । जाग्रद्दृष्टरथाद्याकारवासनाश्रयचित्तस्थप्रकाशरूपपरिणामव्यञ्जककर्महेतुत्वाद्वस्तुतोऽकर्ताऽप्यात्मा कर्तेत्युच्यते न तस्य स्रष्टृत्वादिरित्यर्थः ॥ ९२२ ॥

अकर्तुरपि कर्तृत्वं स्वात्माज्ञानैकहेतुतः ॥
तदन्यस्येह कार्यत्वात्कर्ताऽऽत्मैव तमोवधिः ॥ ९२३ ॥

अकर्ता चेदात्मा न कर्महेतुर्विरोधादित्याशङ्क्याऽऽह । **अकर्तुरिति** । आत्मनः कर्तृत्वमज्ञानकृतं चेदन्यो वस्तुतोऽस्तु कर्तेत्याशङ्क्याऽऽह । **तदन्यस्येति** । शास्त्रीयो व्यवहारः सप्तम्यर्थः ॥ ९२३ ॥

स्वप्नवृत्तावुपादानं साधनं वा न विद्यते ॥
रथादेरसतस्तस्माद्द्रष्टैवाऽऽत्मा न कारकः ॥ ९२४ ॥

आत्मनोऽपि[3] कथमाविद्यं रथादिकर्तृत्वं स्वप्ने तदुपादानस्य दार्वादेस्तदुपकरणस्य परश्वादेश्चासत्त्वादित्याशङ्क्याऽऽह । **स्वप्नेति** ॥ ९२४ ॥

अस्ति यत्राप्युपादानं साधनं वाऽस्य जागरे ॥
तत्राप्यात्मचिदाभासमनोबुद्ध्यादिकारकैः ॥ ९२५ ॥

१ ख. °तुतः ॥ स्व° । २ क. ख. ध. °व्यक्तावा° । ३ क. °त्मनः क° ।

रथादिवासनीनाडधीवृत्त्युद्भवकारणम् ॥
कर्म निर्वर्त्यते तेन स हि कर्तेति भण्यते ॥ ९२६ ॥

स्वप्ने रथादेरात्मा साक्षी चेत्कथं कर्तेत्युक्तिरित्याशङ्क्याज्ञानतः स्वप्नहेतुकर्मनिर्वर्तकत्वादित्याह । **अस्तीति** । अस्येति रथादिनिर्देशः ॥ ९२५ ॥ ९२६ ॥

भान्वादेरिव कर्तृत्वं कर्त्राद्यर्थावभासनात् ॥
बुद्ध्यादिकर्तृसाक्षित्वात्कर्तृत्वाद्यात्मनो भवेत् ॥ ९२७ ॥

एवमात्मा कर्ता चेद्द्रष्टैव न कारक इति कथमुक्तं तत्राऽऽह । **भान्वादेरिति** । कर्त्राद्यर्थावभासात्मत्वादादित्यादेरवभासकर्तृत्वं यथोपचर्यते तथाऽऽत्मनोऽपि बुद्ध्यादिकारकसाक्षित्वात्कर्तृत्वाद्युपचरितामित्यर्थः ॥ ९२७ ॥

क्रियाकर्तृत्वमेवास्य हेतुर्बुद्ध्यादिसंगतौ ॥
यथावस्त्वपरिज्ञानाद्धीति हेतावतः पदम् ॥ ९२८ ॥

स हीत्यत्र हिशब्दार्थमाह । **क्रियेति** । प्रत्यगज्ञानाद्बुद्ध्यादिसंबन्धाधीनं यदात्मनो धर्मादिकर्तृत्वं जाग्रति जातं तदेवास्य स्वप्ने रथादिनिर्माणे हेतुरिति हेतौ हीति पदं तस्माद्युक्तमात्मनो मायिकं स्वप्ने स्रष्टृत्वमित्यर्थः ॥ ९२८ ॥

स्वयंज्योतिष्ट्वमस्योक्त्वा बुद्ध्यादेश्चातिरेकताम् ॥
मन्त्राञ्जगादाथात्रार्थे ब्राह्मणोक्तेरनन्तरम् ॥ ९२९ ॥

तदेत इत्यादेरर्थमाह । **स्वयमिति** । अथशब्दस्यैवार्थो ब्राह्मणोक्तेरित्यादि ॥९२९॥

स्वप्नवृत्त्या विहत्येमं जाग्रद्देहं क्रियाक्षयात् ॥
असुप्तो भावनारूपान्सुप्तान्प्राणान्प्रपश्यति ॥ ९३० ॥

स्वप्नेनेत्यादेरर्थमाह । **स्वप्नवृत्त्येति** । विहत्य निश्चेष्टमापाद्येति यावत् । तत्र हेतुः । **क्रियेति** । जाग्रद्धेतुकर्मक्षयात्स्वप्नहेतुकर्मोद्भूतेश्चेत्यर्थः । असुप्तः सुप्तानित्यादेरर्थमाह । **असुप्त इति** ॥ ९३० ॥

असुप्तोऽकर्महेतुत्वात्सुप्तान्प्राणान्क्रियोत्थितेः ॥
कूटस्थदृष्टिस्वाभाव्यात्स्वप्न आत्मा प्रपश्यति ॥ ९३१ ॥

कथमात्मनोऽसुप्तत्वं तत्राऽऽह । **असुप्त इति** । स्वात्मबोधस्य कर्महेतुत्वाभावाद्बोधहेतुकर्मक्षयेऽप्यात्मनोऽसुप्ततेत्यर्थः । कथं प्राणानां सुप्तत्वं तत्राऽऽह । **सुप्तानिति** । कर्मनिमित्तत्वात्प्राणप्रवृत्तेः क्षीणे कर्मण्युपसंहृतानेतान्पश्यतीति यावत् । पश्यतीत्युक्त्या दृष्टिकर्तृत्वप्राप्तावुक्तम् । **कूटस्थेति** ॥ ९३१ ॥

प्राणादिशुक्रमादाय कृत्वा तद्भावनामयम् ॥
लोकमात्माऽक्रियः स्वस्थश्चाकशीत्यभिपश्यति ॥ ९३२ ॥

शुक्रमादायेत्यस्याभिचाकशीत्यनेन संबन्धं दर्शयन्नर्थमाह । **प्राणादीति** । प्राणो

घ्राणमिन्द्रियाणां प्रकृतत्वात्तदेव शुक्रं दीप्तिमत्त्वात्तस्य वा शुक्रं ज्योतिष्मदर्थग्रहणसामर्थ्यम् । आदातृत्वे द्रष्टृत्वे सक्रियत्वोक्तिमाशङ्क्योक्तम् । **अक्रिय इति** । तथाऽपि तत्प्रयुक्तं दुःखं शङ्कित्वा साक्षित्वेन प्रत्याचष्टे । **स्वस्थ इति** ॥ ९३२ ॥

**क्षीणस्वप्नोत्थसंभोगो जाग्रद्भोगाश्रयं पुनः ॥**
**याति बुद्ध्यादिकं स्थानं पुमान्हंसाभिधो ध्रुवः ॥ ९३३ ॥**

पुनरित्यादि व्याचष्टे । **क्षीणेति** ॥ ९३३ ॥

**पर्यायेण यतश्चोभौ लोकौ हन्त्येकलः स्वतः ॥**
**एकहंस इति प्रोक्तः पुराणज्ञैस्ततः प्रभुः ॥ ९३४ ॥**

कथं पुंसो हंसाभिधत्वमित्याशङ्क्यैकहंस इत्यस्यार्थमाह । **पर्यायेणेति** । हन्तिरत्र गत्यर्थो हन हिंसागत्योरिति **स्मृतेः** । पुराणज्ञैरनाद्यनन्ततत्त्ववेदिभिरिति यावत् । प्रसिद्धार्थो वा पुराणशब्दः । **उक्तं हि**—

"एकं पादं नोत्क्षिपति सलिलाद्धंस उच्चरन् ।
स चेदुदखिदत्पादं न मृत्युर्नामृतं भवेत् ॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्" इति ।
"मरीचिर्दमनो हंसः" "एको नैकः सवः" इति च ॥
"अनन्तमचलं मेरुं हंसं नारायणं प्रभुम् ।
धातारमजरं नित्यं तमाहुः परमव्ययम्" इति च ॥ ९३४ ॥

**हिरण्यं ज्योतिर्विज्ञानं तावन्मात्रसतत्त्वकः ॥**
**हिरण्मयस्ततो देवः स्वार्थेऽत्र मयडिष्यते ॥ ९३५ ॥**

हिरण्मयपदं व्याचष्टे । **हिरण्यमिति** । मयटो विकारार्थत्वं व्यावर्तयति । **स्वार्थ इति** ॥ ९३५ ॥

**परस्य पुरुषस्यायं तदबोधप्रकल्पनात् ॥**
**साक्षिमात्रादिकस्तस्मात्पौरुषोऽयमितीर्यते ॥ ९३६ ॥**

हिरण्मयः पौरुष एकहंस इति माध्यंदिनास्तत्र पौरुषशब्दार्थमाह । **परस्येति** । आदिपदेन मेयं कर्ता कर्मेत्यादिर्विभागो गृहीतः ॥ ९३६ ॥

**पूरणान्निखिलस्यास्य कार्यकारणवस्तुनः ॥**
**पुरुषोऽयं भवेदात्मा पूर्णत्वाद्वाऽद्वयात्मनः ॥ ९३७ ॥**

हिरण्मयः पुरुष इति काण्वास्तत्र पुरुषशब्दार्थमाह । **पूरणादिति** । सर्वपूरकत्वे हेतुः । **आत्मेति** । पूर्णत्वे हेतुः । **अद्वयेति** ॥ ९३७ ॥

---

१ ख. 'तिर्ज्योतिष्म' ।

**हानेनाङ्गविकल्पानां नवानां संचयेन च ॥**
**हंसत्वमृषयः प्राहुरात्मनः पारदर्शिनः ॥ ९३८ ॥**

एक एव गच्छतीत्येकहंस इति व्याख्यातम् । इदानीमर्थान्तरमाह । **हानेनेति** । अङ्गविकल्पानां देहविशेषाणामिति यावत् । **उक्तं च**—

"हानेन गतकालानां नवानां संचयेन च ।
शरीराणामजस्याऽऽहुर्हंसत्वं पारदर्शिनः" इति ॥ ९३८ ॥

**प्राणेन ह्यवरं रक्षन्मरणाद्देहकं परः ॥**
**बहिर्देहं चरित्वाऽथ पुनरैति यथागतम् ॥ ९३९ ॥**

प्राणेनेत्यादेरर्थमाह । **प्राणेनेति** । देहस्य रक्षणं प्राणप्रयुक्तमितिप्रसिद्ध्यर्थो हिशब्दः । अवरत्वस्फुटीकरणार्थो देहे कप्रत्ययः । यदि परः स्वप्ने प्राणेन देहं न रक्षेत्तदा मृतभ्रान्तिः स्यादित्यर्थः । बहिरित्यादेरर्थमाह । **बहिरिति** । यद्यपि देहस्थः स्वप्नं पश्यति तथाऽपि मिथ्याभिमानाभावाद्बहिरित्युक्तम् । अपेक्षितं पूरयति । **अथेति** । जाग्रत्कर्मोद्भवानन्तरमित्यर्थः । पुनःशब्देन स्वप्नहेतुकर्मक्षयानन्तर्यमुच्यते ॥ ९३९ ॥

**नाडीस्त्यक्त्वा यतः स्वप्ने जाग्रद्भोगप्रदाः पुमान् ॥**
**स्वप्नभोगप्रदा याति बहिर्नाडादतस्तदा ॥ ९४० ॥**

द्रष्टा स्वप्ने देहाद्बहिरित्येतत्प्रतिपादयति । **नाडीरिति** ॥ ९४० ॥

**कर्मणोद्भाविता यत्र वासना कामरूपिणी ॥**
**तामादायैति देहं स्वं हंस आत्माऽमृतोऽव्ययः ॥ ९४१ ॥**

स ईयत इत्यादेरर्थमाह । **कर्मणेति** । स्वप्नहेतुकर्मव्यक्तार्थविशेषस्थवासनां कामात्मिकामाश्रित्य तन्मयं स्वकर्मोचितं देहमात्मा स्वप्ने गच्छतीत्यर्थः । हंसश्चेदात्मा तर्हि गमनवत्त्वान्नाशापक्षयभागी स्यादित्याशङ्क्याव्यय इत्युक्तं स्मारयति । **अमृत इति** ॥ ९४१ ॥

**कर्मज्ञानानुरूपेण रूपमुच्चावचं मुहुः ॥**
**स्वप्नमायाप्रपञ्चस्थ आत्माऽऽप्नोतीव निष्क्रियः ॥ ९४२ ॥**

स्वप्नान्त इत्यादेरर्थमाह । **कर्मेति** । इवशब्दप्रयोगे हेतुमाह । **निष्क्रिय इति**॥ ९४२॥

**नर्मार्थो जक्षतिर्ज्ञेयो हर्षार्थो मोदतिस्तथा ॥**
**अविद्यया भयं चेह स्वप्ने तद्धेत्वसंभवात् ॥ ९४३ ॥**

उतेव स्त्रीभिरित्यादेरर्थमाह । **नर्मार्थ इति** । परिहासो नर्मशब्दार्थः । स्वप्ने व्याघ्रादिकृतं भयं कथमाविद्यमिति तत्राऽऽह । **तद्धेत्विति** । अविद्येतरव्याघ्राद्यभावात्तत्कृतमेव तत्र भयमित्यर्थः ॥ ९४३ ॥

आराममेव मायोत्थं स्वप्ननिर्माणलक्षणम् ॥
मायिनस्तस्य पश्यन्ति न तं पश्यति कश्चन ॥ ९४४ ॥

आराममित्यादेरर्थमाह । **आराममिति** ॥ ९४४ ॥

बुद्ध्यादेर्व्यतिरिक्तत्वं स्वयंज्योतिष्ट्वमागमात् ॥
आत्मनः प्रतिपाद्याथ लोकतोऽपि विभाव्यते ॥ ९४५ ॥

तं नाऽऽयतमित्यादि वृत्तानुवादद्वाराऽऽदत्ते । **बुद्ध्यादेरिति** । लोकागमयोरेकार्थत्वमत्र हेतूकर्तुमथशब्दः ॥ ९४५ ॥

सुप्तं न बोधयेद्गाढमिति वादो हि लौकिकः ॥
किमर्थमिति चेत्तत्र लोकः कारणमीक्षते ॥ ९४६ ॥

तद्याचष्टे । **सुप्तमिति** । तत्र सर्वलोकसंप्रतिपत्त्यर्थो हिशब्दः । भृशं सुप्तं सहसा न बोधयेदित्यत्र प्रश्नपूर्वकं हेतुमाह । **किमर्थमिति** ॥ ९४६ ॥

प्रबोधनाडीस्त्यक्त्वाऽऽत्मा स्वप्ननाडीरयं गतः ॥
इति लोकप्रसिद्धत्वात्तस्मिँल्लोकोऽनुशास्ति तत् ॥ ९४७ ॥

तदेव कारणं स्पष्टयति । **प्रबोधेति** । तस्मिन्सुप्ते पुंसीति यावत् । तस्मादिति पाठे व्यक्तार्थता । तदित्यनुशासनवचनम् ॥ ९४७ ॥

नाडीव्यत्यासगमनशङ्कयैवानुशासति ॥
सुप्तं न बोधयेद्गाढमिति तद्दोषदर्शिनः ॥ ९४८ ॥

नाड्यन्तरे प्रवेशप्रसिद्धावपि गाढं सुप्तं झटिति न बोधयेदिति कस्मादनुशास्ति लोकस्तत्राऽऽह । **नाडीति** ॥ ९४८ ॥

यथायोगमयं नाडीर्गाढं सुप्तः प्रबोधितः ॥
न प्रपद्येत तेनायं स्यात्सुदुःखभिषक्क्रियः ॥ ९४९ ॥

व्यत्यासगतौ दोषं दर्शयन्दुर्भिषज्यमित्यादि व्याकरोति । **यथेति** । तेनाऽऽन्ध्यबाधिर्यादिप्रसङ्गेनेति यावत् ॥ ९४९ ॥

देहप्रवेशनिर्याणहेतोर्देहाद्गृहादिवत् ॥
बुद्ध्यादिव्यतिरिक्तत्वमात्मनोऽस्यावसीयताम् ॥ ९५० ॥

लोकप्रसिद्धिमन्त्रब्राह्मणवादेभ्यः सिद्धमर्थमुपसंहरति । **देहेति** । यथा गृहे प्रविशन्निर्गच्छंश्च चैत्रस्ततो भिद्यते तथा देहे प्रवेशान्निर्गमाच्चाऽऽत्मा ततो भिन्नस्तस्मात्तस्य बुद्ध्याद्यतिरिक्तत्वं स्वप्रकाशत्वं च लोकप्रसिद्ध्यादिना निश्चितमित्यर्थः ॥ ९५० ॥

अध्यात्मादिपदार्थेभ्यो विविक्तं स्वात्मनि स्थितम् ॥
तं न पश्यत्यहो कष्टं दौर्भाग्यं दुष्टचेतसाम् ॥ ९५१ ॥

मन्त्रब्राह्मणादिनाऽतिरिक्तं स्वप्रकाशमात्मानं वदता न तं पश्यति कश्चनेतिमन्त्रभा-

गोऽवतारितोऽपि न व्याख्यातस्तस्याधुना तात्पर्यमाह । अध्यात्मादीति । व्यवहितत्वाददर्शनमिति शङ्कां वारयति । स्वात्मनीति ॥ ९११ ॥

**प्रत्यक्षगोचरं देवं लोकं चातिप्रमादिनम् ॥**
**दृष्ट्वा श्रुतिः शिरस्ताडमनुक्रोशति दुःखिता ॥ ९१२ ॥**

तस्य दृष्टयोग्यत्वेनादृष्टिसंभवान्न दुष्टचेतस्तया लोकानां दौर्भाग्यमित्याशङ्क्याऽऽह । प्रत्यक्षेति । अतिप्रमादित्वं नामाऽऽत्मानमतीत्यानात्मप्रवणत्वम् ॥ ९१२ ॥

**प्रत्यक्षतममप्येनं वितमस्कं स्वयंस्थितम्[1] ॥**
**अहो कष्टं न पश्यन्ति कं याम शरणं वयम् ॥ ९१३ ॥**

स्वप्रकाशस्य स्वमहिमप्रतिष्ठस्य प्रत्यक्षयोग्यस्यापि प्रतिबन्धाददर्शनमाशङ्क्यानुक्रोशं विवृणोति । प्रत्यक्षतममिति । व्यवहितत्वप्रयुक्तमदर्शनमाशङ्क्याऽऽह । स्वयमिति ॥ ९१३ ॥

**स्वयंज्योतिष्ट्वमारभ्य यच्छ्रुत्योक्तमिहाऽऽत्मनि ॥**
**उच्यते पूर्वपक्षोऽयं तस्य सिद्धान्तरूपिणः ॥ ९१४ ॥**

अथो खल्वित्यादिवाक्यस्य पूर्वेणासंगतिमाशङ्क्याऽऽह । स्वयंज्योतिष्ट्वमिति । स यत्र प्रस्वपितीत्याद्या श्रुतिः ॥ ९१४ ॥

**स यत्रेति ह्यतः पूर्वं पूर्वपक्षत्वहेतुतः ॥**
**अथो खल्वाहुरित्यादिग्रन्थं पश्येत्तथा क्रमात् ॥ ९१५ ॥**

उक्तं स्वयंज्योतिष्ट्वं प्रत्यस्य पूर्वपक्षत्वे कथमत्र प्राप्तिरित्याशङ्क्याऽऽह । स यत्रेति । पूर्वपक्षत्वेऽपि कथमयं क्रमस्तत्र हिशब्दसूचितमर्थमाह । तथेति । पूर्वपक्षानन्तरभावी सिद्धान्त इति क्रमस्योचितत्वादर्थक्रमेण पाठक्रमस्याग्निहोत्रयवागूपाकवद्भङ्गादित्यर्थः ॥ ९१५ ॥

**स्वप्नस्य जाग्रत्स्थानत्वमथो खल्वितिवाक्यतः ॥**
**यानि ह्येवेति हेतूक्तिः प्रतिज्ञातार्थसिद्धये ॥ ९१६ ॥**

क्रमं दर्शयित्वा पूर्वपक्षं विभजते । स्वप्नस्येति । वाक्यतः प्रतिज्ञायत इति शेषः ॥ ९१६ ॥

**जाग्रत्समीक्षणं यासु पुंसो नाडीषु तास्विदम् ॥**
**स्वप्नेक्षणं विजानीयान्नान्यत्रेति विनिश्चयः ॥ ९१७ ॥**

हेतूक्तिं व्याचष्टे । जाग्रदिति ॥ ९१७ ॥

**स्वप्ने तमेव चाऽऽत्मानं सुप्तोऽयमभिमन्यते ॥**
**यमनस्तप्रबोधस्थं[3] न ततोऽन्यं कदाचन ॥ ९१८ ॥**

---

१ ख. ग. 'यं स्वतः । अ' । २ क. ग. यामः । ३ क. 'धस्तं न ।

जाग्रत्स्वप्नयोरेकस्थानत्वमुक्त्वा द्रष्ट्रैक्ये हेतुमाह । स्वप्न इति ॥ ९५८ ॥

**जाग्रद्वन्धुपुरामपग्रश्वारामादिलक्षणान् ॥**

**स्वप्ने प्रत्यभिजानाति तानेव न ततोऽपरान् ॥ ९५९ ॥**

तयोर्विषयैक्यमाह । जाग्रदिति ॥ ९५९ ॥

**अपूर्वमेव सं पश्येत्स्वप्नदृग्जाग्रतो यदि ॥**

**उक्तस्वप्नो भवेदन्यो यथा पूर्वंगतस्तथा ॥ ९६० ॥**

अधिकरणद्रष्टृविषयैक्यात्तयोरैक्यमुक्तं व्यतिरेकद्वारा व्यनक्ति । अपूर्वमिति । यथा देशोद्देशान्तरं गतोऽपूर्वं करभादि पश्यति तथा यदि स्वप्नदृग्जागरितादपूर्वं पश्येत्तदा स्वप्नस्ततोऽन्यो युज्येत न चैवं पश्यत्यतो जाग्रदेव स्वप्न इत्यर्थः । समुपसर्गो भवेदित्यनेन संबध्यते ॥ ९६० ॥

**इत्येवमाहुः केचित्तु न तु तद्युक्तिमद्वचः ॥**

**अयुक्तिमद्यथा चैतत्तत्पूर्वं प्रतिपादितम् ॥ ९६१ ॥**

पूर्वपक्षमुपसंहरति । इत्येवमिति । यदा जाग्रदेव स्वप्नस्तदा तत्र स्वयंज्योतिष्ट्वं दुर्वचं चेत्तुल्यं स्वप्नेऽपि दुर्वचत्वमिति तेषामाशयः । तदसादिति प्रतिजानीते । न त्विति । तदेव प्रकटयति । अयुक्तिमदिति । न तत्र रथा इत्यादावित्यर्थः ॥ ९६१ ॥

**अत्रायमित्यनेनात्र पूर्वपक्षनिराक्रिया ॥**

**न्यायेनोक्तेन पूर्वेण वक्ष्यमाणेन च ध्रुवम् ॥ ९६२ ॥**

श्रुतेर्बहिरेव परिहृत्यात्रेत्यादिवाक्यमवतार्य तात्पर्यमाह । अत्रेति । समनन्तरश्रुतौ प्राप्तस्य पूर्वपक्षस्यानेन वाक्येनोक्तवक्ष्यमाणन्यायानुसारिणा ध्रुवं निराक्रियेति योजना ॥ ९६२ ॥

**न जाग्रद्देशगः स्वप्नो जाग्रत्सामग्र्यभावतः ॥**

**अध्यात्माद्यर्थविरहे यतः स्वप्नान्प्रपश्यति ॥ ९६३ ॥**

उक्तवक्ष्यमाणन्यायं संक्षिप्य स्मारयति । नेत्यादिना । तत्र हेतुं साधयति । अध्यात्मादीति ॥ ९६३ ॥

**स्वयंज्योतिष्ट्वमस्योक्तं स्वप्ने चाकारकात्मता ॥**

**मृत्युरूपात्ययश्चैवं प्रतीचः पूर्ववाक्यतः ॥ ९६४ ॥**

अत ऊर्ध्वमित्याद्यवतारयितुं वृत्तं कीर्तयति । स्वयमिति । अत्रायं पुरुषः स्वयंज्योतिर्न तत्र रथा अतिक्रामति मृत्यो रूपाणीत्यादिवाक्यादित्यर्थः ॥ ९६४ ॥

**कामादयः स्वभावोऽस्य मृत्यवोऽथ न वा भवेत् ॥**

**इत्याशङ्क्य नृपो दोषं याज्ञवल्क्यमपृच्छत ॥ ९६५ ॥**

---

१ ख. पूर्वं ग° । २ ख. घ. °शान्त° । ३ ग. °श्चैव प्र° ।

उत्तरवाक्यमादत्ते । **कामादय इति ।** मृत्यो रूपाण्यतिक्रामतीत्युक्तत्वात्कामकर्मादिमृत्युरात्मनः स्वभावो न वेत्याशङ्क्याऽऽद्ये मोक्षायोगं मन्वानो राजाऽद्वितीयनिश्चयार्थमत इत्यादिना मुनिमपृच्छदित्यर्थः ॥ ९६५ ॥

**पृष्टं वस्तु सुनिर्णीतं मयेतिप्रकृतोक्तितः ॥**
**निविवृत्सुं नृपो विप्रं भूयोऽपृच्छद्विमुक्तये ॥ ९६६ ॥**

कतम आत्मेति प्रष्टारं राजानं प्रति निर्णेतुं प्रवृत्तो मुनिर्न तं विना निवर्तते तत्कथं राज्ञा सभामध्ये नियुज्यते तत्राऽऽह । **पृष्टमिति ।** यद्धि राज्ञा पृष्टमात्मवस्तु तद्यथावदेव योऽयमित्यादिवचनवशान्निर्धारितमिति बुद्ध्या प्रत्युक्तितो निवृत्त्युन्मुखं मुनिमुपलभ्य पुनरपि मोक्षार्थं राजा पृष्टवानित्यर्थः ॥ ९६६ ॥

**स्वयंज्योतिष्ट्वमुदितं मुक्तेरङ्गममन्यत ॥ ९६७ ॥**
**न चाङ्गनिर्णयोक्त्यैव निर्णयं मन्यतेऽङ्गिनः ॥**
**यतोऽतो मोक्षमुद्दिश्य याज्ञवल्क्यमपृच्छत ॥ ९६८ ॥**

बुद्ध्याद्यतिरिक्तस्याऽऽत्मनः स्वयंज्योतिष्ट्वोक्तेरेव मुक्तिसिद्धेस्तदर्थो न प्रश्नो युक्तिमानित्याशङ्क्याऽऽह । **स्वयमिति ।** तर्हि मोक्षाङ्गस्वयंज्योतिष्ट्वनिर्णयादेवाङ्गिमोक्षनिर्णयसिद्धेरलं तदर्थप्रश्नेनेत्याशङ्क्याऽऽह । **न चेति ।** अङ्गिनि हि दर्शादौ[1] निर्णीते ग्राहकग्रहणसामर्थ्यादैदमर्थ्येनाङ्गानि निर्णीयन्ते श्रुत्यादीनि तु द्वारार्पकाणि न त्वङ्गनिर्णयादेवाङ्गिनिर्णयो न्यायाभावादिति भावः ॥ ९६७ ॥ ९६८ ॥

**आसङ्गप्रविवेकार्थं स वा इत्यादि भण्यते ॥**
**कामादिप्रविवेके हि मोक्षयोग्यत्वमात्मनः ॥ ९६९ ॥**

प्रश्नतात्पर्यमुक्त्वा प्रत्युक्तितात्पर्यमाह । **आसङ्गेति ।** किमिति तत्प्रविवेको मोक्ष एवापेक्षितो व्याख्यायतामित्याशङ्क्याऽऽह । **कामादीति ।** अतस्तत्प्रविवेको युक्त इति शेषः ॥ ९६९ ॥

**कामाद्यात्मगुणश्चेत्स्यादनिर्मोक्षः प्रसज्यते ॥**
**न हि गुण्यविनाशेन तद्गुणस्य निराकृतिः ॥ ९७० ॥**

उक्तमर्थं व्यतिरेकद्वारा स्फुटयति । **कामेति ।** कथमेतावता मोक्षासिद्धिरात्मगुणस्यापि तस्य निरासेन तत्सिद्धेरित्याशङ्क्याऽऽह । **न हीति ।** सत्यात्मनि तदीयवास्तवगुणस्य सर्वात्मना ध्वंसानुपपत्तेः सहाऽऽत्मना ध्वंसे च फल्यभावादमुक्तिरित्यर्थः ॥९७०॥

**रूपाण्येवायमात्माऽत्र मृत्योः स्वप्नेऽतिवर्तते ॥**
**न तु मृत्युं यतः स्वप्ने मोदत्रासादि दृश्यते ॥ ९७१ ॥**

---

[1] क. दर्शनादौ ।

कामादेरात्मस्वभावत्वाभावेऽपि तत्प्रविवेकार्थं नोत्तरं वाक्यमतिक्रामति मृत्यो रूपाणीत्यत्रैव सिद्धत्वादित्याशङ्क्याऽऽह । **रूपाणीति** ॥ ९७१ ॥

**मोदत्रासादिको मृत्युः स्वभावो न यथाऽऽत्मनः ॥**
**तथाऽत ऊर्ध्वं प्रब्रूहि भगवन्मे विमुक्तये ॥ ९७२ ॥**

प्रश्नप्रतिवचनयोस्तात्पर्यमुक्त्वा प्रश्नं योजयति । **मोदेति** । अतः स्वयंज्योतिष्ट्वनिर्णयादिति यावत् ॥ ९७२ ॥

**सहस्रदानं तूक्तस्य स्वयंज्योतिष्ट्ववस्तुनः ॥**
**निर्णयाघाटविज्ञप्त्यै नाशेषप्रश्ननिर्णयात् ॥ ९७३ ॥**

प्रश्नशेषोऽवशिष्टश्चेत्कथं सहस्रदानं तत्राऽऽह । **सहस्रेति** । निर्णयाघाटो निर्दिष्टेऽर्थे स्वीयनिर्णयस्य दृढता तज्ज्ञापनायेति यावत् । प्रश्नशेषाभावादेव सहस्रदानं किं न स्यादित्याशङ्क्य पुनःप्रश्नदर्शनान्नैवमित्याह । **नाशेषेति** ॥ ९७३ ॥

**स्वयंज्योतिः स वा एष यः पुरा प्रतिपादितः ॥**
**स्वप्नभूमावसङ्गोऽसौ संप्रसादे प्रसीदति ॥ ९७४ ॥**

प्रश्नाक्षराणि व्याख्याय प्रतिवचनं व्याचिकीर्षुः स एष एतस्मिन्संप्रसाद इतिपदानामपेक्षितं पूरयन्नर्थमाह । **स्वयंज्योतिरिति** । योऽसौ पुरा स्वयंज्योतिरात्मा प्रतिपादितः स एवैष स्वप्नावस्थायामसङ्गो भूत्वा संप्रसादावस्थायां प्रसन्नो भवतीति योजना । संप्रसादपदेन सुषुप्तिरुक्ता ॥ ९७४ ॥

**अपां कतकसंपर्काद्यथाऽत्यन्तप्रसन्नता ॥**
**अपास्ताशेषसंसारभावनस्यैवमात्मनः ॥ ९७५ ॥**
**स्वास्थ्यं प्रसन्नतैतस्मिन्सुषुप्ते भवतीत्यतः ॥**
**संप्रसादमिमं प्राहुः सुषुप्तं तद्विदो जनाः ॥ ९७६ ॥**

तत्र निमित्तं दृष्टान्तेनाऽऽह । **अपामिति** । **उक्तं हि** संप्रसाद इति सुषुप्तस्थानमुच्यते सम्यक्प्रसीदत्यस्मिन्निति निर्वचनादिति ॥ ९७५ ॥ ९७६ ॥

**मात्रादानं यदकरोदात्मा स्वप्नरिरंसया ॥**
**तत्क्षये स निरासङ्गः स्वात्मन्येव प्रसीदति ॥ ९७७ ॥**

इतश्च संप्रसादपदस्य सुषुप्तिविषयतेत्याह । **मात्रेति** । जाग्रद्वासना मात्रास्तासामादानं यदात्मा स्वप्नभोगार्थं कृतवांस्तस्य स्वप्नहेतुमात्रादानस्य निवृत्तौ स पुनरात्मा कामादिरहिते स्वात्मन्येव प्रसन्नो भवतीति योजनीयम् ॥ ९७७ ॥

**जाग्रद्व्यपेक्षया स्वप्ने किंचिच्छेषः प्रसीदति ॥**
**तस्याप्यस्तमयात्प्राज्ञे समिति स्याद्विशेषणम् ॥ ९७८ ॥**

प्रसादपदेनैव सुषुप्तिलाभे किमिति समितिविशेषणमित्याशङ्क्याऽऽह । **जाग्रदिति ।** शेषः संस्कारस्तस्यापि लये सुषुप्तौ सर्वात्मना प्रसीदति तेनोपसर्गोऽर्थवानित्यर्थः ॥९७८॥

**केवलाज्ञानमात्राधिरिह प्रत्यङ्‌ व्यवस्थितः ॥**
**कारणात्मा यतस्तस्माज्जाग्रत्स्वप्नाख्यकार्यकृत् ॥ ९७९ ॥**

संप्रसादशब्दार्थमुक्त्वा तदभिमानिनं प्राज्ञं दर्शयति । **केवलेति** । स्थूलकार्यासाहित्यं कैवल्यम् । वासनाराहित्यं मात्रार्थः । इहेति संप्रसादोक्तिः । कारणात्मत्वं साधयति । **तस्मादिति** । स्वोपाधिभूतादज्ञानादिति यावत् । उक्तं च—

'सुषुप्ताख्यं तमोऽज्ञानं बीजं स्वप्नप्रबोधयोः' इति ॥ ९७९ ॥

**कथं केन क्रमेणात्र प्रत्यगात्मा प्रसीदति ॥**
**इत्येतदधुनाऽऽचष्टे रत्वेत्यादिगिरा श्रुतिः ॥ ९८० ॥**

स वा इत्यादि व्याख्यायानन्तरं वाक्यमाकाङ्क्षापूर्वकमादत्ते । **कथमिति ।** कथं संप्रसन्न इतिभाष्यस्थं पदमनूद्य तदर्थोक्तिः केनेति । अत्रेति सुषुप्तिरुक्ता ॥ ९८० ॥

**स्वप्नभूमावयं रत्वा क्रीडां कृत्वाऽऽत्ममायया ॥**
**चरित्वा च विहृत्याऽऽत्मा वासनामात्रसाधनः ॥ ९८१ ॥**

जाग्रत्स्वप्नक्रमेण स्वापे प्रसन्नत्वमात्मनो वक्तुमुत्तरं वाक्यमिति तात्पर्यमुक्त्वा पदार्थान्व्याचष्टे । **स्वप्नेति ।** वासनामात्रसाधनः सन्नात्मा मायया स्वप्नभूमौ रत्वा चरित्वा प्राज्ञे प्रसीदतीत्युत्तरेण संबन्धः । स्वप्नस्य स्मृतित्वं परिहरति । **आत्ममाययेति ।** क्रीडा स्त्रीपुत्रादिसापेक्षा मनोवाक्कायचेष्टा विहरणमितस्ततो गमनमिति भेदः ॥ ९८१ ॥

**दृष्ट्वैवेत्येवशब्देन कारकत्वं निवार्यते ॥**
**पुण्यपापफलं चेह पुण्यपापगिरोच्यते ॥ ९८२ ॥**

दृष्ट्वेत्यादेरर्थमाह । **दृष्ट्वेति** ॥ ९८२ ॥

**अस्य जाग्रदवस्थायामिन्द्रियार्थादिसंभवात् ॥**
**क्रिया निर्वर्त्यते सा च सुखादिफलदाऽऽत्मनः ॥ ९८३ ॥**

कथं कारकत्वनिवारणं स्वप्नेऽपि जाग्रद्वत्क्रियानिर्वृत्तेरित्याशङ्क्य दृष्टान्तं विघटयति । **अस्येति** ॥ ९८३ ॥

**स्वप्ने तु कारकाभावान्न क्रियासिद्धिरात्मनः ॥**
**चिदाभं वासनामात्रं प्रथतेऽतोऽविकारिणः ॥ ९८४ ॥**

दार्ष्टान्तिके वैषम्यमाह । **स्वप्ने त्विति ।** कथं तर्हि तत्र क्रियाप्रतीतिस्तत्राऽऽह । **चिदाभमिति ।** कारकाभावोऽतःशब्दार्थः । अविकारिण इति च्छेदः ॥ ९८४ ॥

---

१ ख. 'न्तरवा' । २ क 'आत्ममा' । ३ क. ख. 'त्मात्म' । ४ ग. 'त्रं प्राप्यते' ।

**यतोऽत्र न क्रिया तस्मादेवदध्रे श्रुतिः स्वयम् ॥**
**दृष्ट्वैवाऽऽत्मा न कृत्वेति प्रत्यङ् तस्मान्न कारकः ॥ ९८५ ॥**

एवकारार्थमुपसंहरति । **यत इति** । स्वप्नः सप्तम्यर्थः । दृष्ट्वैवाऽऽद्रवतीति संबन्धः । करणाभावफलं कौटस्थ्यमाह । **प्रत्यङ्ङिति** ॥ ९८५ ॥

**पुण्यपापफलं चेह पुण्यपापाभिधं मतम् ॥**
**कार्यं कारणवत्तस्मादुपचारात्समीरितम् ॥ ९८६ ॥**

पुण्यपापफलं चेत्यत्रोक्तमनूद्योपपत्तिमाह । **पुण्येति** । सर्वमपि कार्यं कारणव्याप्तं यस्माद्दृष्टं तस्मात्कारणवाचिपुण्यपापशब्दाभ्यां तत्फलमुपचारादुक्तं गोभिः श्रीणीतेतिवदित्यर्थः ॥ ९८६ ॥

**स्वप्नकर्मव्युपरमे ततः प्राज्ञे स्वयंप्रभः ॥**
**प्रसीदति परो देवः प्रतीच्येव परे पदे ॥ ९८७ ॥**

रत्वेत्यादिवाक्यार्थमुपसंहरति । **स्वप्नेति** । परो देव इति विशेषणं विज्ञानात्मा परस्मादन्यो नेति ज्ञापनार्थं सुषुप्त्यवस्थायां परेणाऽऽत्मनाऽऽत्मनोऽवस्थानमस्तीति वक्तुं प्रतीच्येवेत्यादिपदम् ॥ ९८७ ॥

**पुराऽप्यसकृदात्माऽयं स्थानात्स्थानान्तरं गतः ॥**
**यतोऽतः पुनरित्येवं संप्रसादाश्रितोऽभिधा ॥ ९८८ ॥**

पुनःशब्दार्थमाह । **पुराऽपीति** । यतः संप्रसादाश्रितः स्थानादयमात्मा स्वप्नाख्यं स्थानान्तरमनेकवारं पुरा गतवानतः पुनरित्येवमभिधा प्रयुक्तेति योजना ॥ ९८८ ॥

**आनुलोम्यं सुषुप्ताप्तिरेवमुक्तेन वर्त्मना ॥**
**तद्व्युत्थानं प्रातिलोम्यं स्वप्नादिस्थानसंचरः ॥ ९८९ ॥**

प्रतिशब्दार्थं वक्तुं भूमिकां करोति । **आनुलोम्यमिति** । एवमित्यस्यैव व्याख्योक्तेनेति । जाग्रतः स्वप्नं गच्छति ततः सुषुप्तमित्युक्तक्रमेणेत्यर्थः । प्रतिशब्दार्थमाह । **तदिति** । तस्मात्प्रकृताद्वैपरीत्येनोत्थानं प्रातिलोम्यं तदौत्सर्गिकं प्रतिशब्दवाच्यमित्यर्थः । न्यायशब्दार्थमाह । **स्वप्नादीति** ॥ ९८९ ॥

**प्रातिलोम्यार्थ एवातः प्रतिशब्दोऽयमिष्यते ॥**
**विपरीताऽऽगतिः स्वप्ने प्रतिस्थानं तथैत्यजः ॥ ९९० ॥**

प्रतिरूपो बभूवेतिवत्प्रतिशब्दस्याऽऽनुलोम्यार्थत्वमाशङ्क्याऽऽह । **प्रातिलोम्येति** । अतःशब्देनोक्तं हेतुमाह । **विपरीतेति** । स्वापाद्विपरीता हि स्वप्नजागरितयोरागतिरतोऽत्र प्रतिशब्दो नाऽऽनुलोम्यार्थ इत्यर्थः । प्रतियोन्याद्रवतीत्यस्यार्थं संक्षिपति । **प्रतिस्थानमिति** । यथा संप्रसादं गच्छति तथा स्वप्नादिभोगस्थानं प्रत्येव भोगार्थमायाति परः पुमानिति यावत् ॥ ९९० ॥

**यथार्थे प्रतिशब्दोऽयं निश्चयार्थे निरित्ययम् ॥**
**अयनं गमनं च स्यादायो धातोरिणो घञि ॥ ९९१ ॥**

प्रतिन्यायमित्यस्यावयवशोऽर्थमाह । **यथार्थ इति** । यथाऽऽनुलोम्येन सुप्तास्ति-स्तथा प्रातिलोम्येनाऽऽगमने विवक्षिते सतीति यावत् । आयशब्दं व्याकरोति । **अयन-मिति** । तन्निष्पत्तिं सूचयति । **धातोरिति** । इणो धातोर्गत्यर्थात्परतो भावेऽर्थे घञि विहिते घकारञकारयोरित्संज्ञायां लोपे सत्यकारे चावशिष्टे पूर्ववृद्धावायशब्दनिष्पत्ति-रित्यर्थः ॥ ९९१ ॥

**श्रोत्रादिकरणान्यत्र मात्रादानस्य कारणम् ॥**
**योनिशब्दाभिलप्यं स्याज्जाग्रद्देहसमाश्रयम् ॥ ९९२ ॥**

स वा एष एतस्मिन्स्वप्नान्ते रत्वेत्युपक्रम्य प्रतियोन्याद्रवति बुद्धान्तायैवेति माध्यं-दिनास्तदनुसारेण योनिशब्दार्थमाह । **श्रोत्रादीति** । जाग्रद्देहस्थं करणजातं रूपाद्यर्थ-धीवासनास्वीकारकारणभूतं योनिशब्दितमित्यर्थः । अत्रेति जाग्रतो वाक्यस्य वा ग्रहः ॥ ९९२ ॥

**मात्रादानस्य या यस्य योनिरासीत्पुराऽऽत्मनः ॥**
**तामेवायं पुनर्योनिं स्वप्न आत्मा प्रपद्यते ॥ ९९३ ॥**

योनिशब्दार्थमनूद्य प्रतिशब्दस्याऽऽद्रवतिशब्दस्य चार्थमाह । **मात्रेति** । यस्याऽऽ-त्मनो रूपादिभोगवासनास्वीकारस्य या योनिश्चक्षुरादिलक्षणा जाग्रदवस्थायां स्थिता तामेव स्वाश्रयां योनिं स्वप्नस्थः सोऽयं पुरुषस्तत्कर्मक्षये जाग्रद्धेतूद्भवे च पुनः प्रतिपद्यत इत्यर्थः । स्वप्नस्तद्गतः पुमान् ॥ ९९३ ॥

**यथाऽऽदानं कृतं पूर्वं मात्राणां स्वप्नसर्जने ॥**
**स्वप्न आदाय ता मात्राः स्वाप्नीं योनिं प्रपद्यते ॥ ९९४ ॥**

प्रतियोन्याद्रवति स्वप्नायैवेति काण्वपाठस्यार्थमाह । **यथेति** । पूर्वं जागरे स्वप्नसर्गे प्रस्तुते मात्राणां वासनानां यथोपादानं कृतं तथैव ता मात्राः स्वीकृत्य स्वप्नस्थस्तत्कर्म-क्षये ततः सुप्तिं गतः स्वप्नकर्मोद्भवे कारणात्मना स्थितवासनाभिव्यक्तस्तन्निर्मितदेहं तन्मयकरणायतनं स्वाप्नयोनिशब्दितं भजतीत्यर्थः ॥ ९९४ ॥

**प्रतिन्यायगिरा चास्य यथावन्माभिधीयते ॥**
**प्रतियोनिरवेणैव यथास्थानमिहोच्यते ॥ ९९५ ॥**

पाठद्वयानुसारेण प्रतिन्यायशब्दार्थमाह । **प्रतीति** । तस्यास्य सुप्तेः स्वप्नं गच्छतः स्वप्नाद्वा जागरितमित्यर्थः । पाठद्वयानुसारिणं प्रतियोनिशब्दार्थमनुद्रवति । **प्रतियोनीति ।** यथा पूर्वं स्वप्ने वासनामयं स्थानमस्याऽऽसीत्तथा सुप्तेः स्वप्नं गच्छन्नपि तादृशमेव स्थानं

---

१ ख. °र्थमाह । प्र° । २ घ. °नुवर्तते ।

गच्छति । यथा पूर्वं जागरे मात्रादानैकरणं करणायतनं शरीरमस्याभूत्तथा स्वप्नाज्जागरं गच्छन्नपि तथाविधं देहं गच्छतीत्यर्थः । इहेति प्रकृतवाक्योक्तिः ॥ ९९५ ॥

**यस्माद्यस्मादुपादाय मात्राः स्वप्नं चकार सः ॥**
**तत्र तत्रैव ता धत्ते मात्राः स्वात्मांशुभिः सह ॥ ९९६ ॥**

माध्यंदिनं पाठमनुसृत्य वाक्यार्थमुपसंहरति । **यस्मादिति** । जागरे यतो यतश्चक्षुरादिनिमित्तो रूपादिवासनाः स्वीकृत्याऽऽत्मा स्वप्नं कृतवांस्तत्र तत्रैव जाग्रद्देहस्थे चक्षुरादौ ता रूपादिवासनाशक्तीश्चैतन्याभासैः सह स्वप्नाज्जागरं गच्छन्दधातीत्यर्थः ॥ ९९६ ॥

**येनैव वर्त्मना यातः पुनस्तेनैव वर्त्मना ॥**
**याति मात्राः समादाय कर्मवायुसमीरितः ॥ ९९७ ॥**

काण्वपाठे वाक्यार्थमुपसंहरति । **येनेति** । येनैव कामकर्मादिना मार्गेण जागरात्स्वप्नं तत्कर्मक्षये च स्वापं गतस्तेनैव स्वप्नकर्मोद्भवे तत्प्रेरितः सन्कारणस्था वासनाः स्वीकृत्य स्वापात्स्वप्नं यातीत्यर्थः । स्वप्नगतिवर्त्म कर्मादीत्येतत्प्रकटयितुं गन्तारं विशिनष्टि । **कर्मेति** ॥ ९९७ ॥

**स आत्मा पुण्यपापोत्थं फलं नानाप्रभेदकम् ॥**
**तत्र स्वप्नविधौ तिष्ठन्पश्यतीह समीक्षते ॥ ९९८ ॥**

स्वप्नायैवेत्येतदन्तं वाक्यं व्याख्याय स यत्तत्रेत्यादेरर्थमाह । **स आत्मेति** । तत्रेत्यस्य व्याख्यानं स्वप्नविधाविति । तेनैवेहशब्दोऽपि संबध्यते ॥ ९९८ ॥

**नैनं स्थानान्तरं प्राप्तं ग्रामाद्ग्रामान्तरं यथा ॥**
**शुभाशुभं यदद्राक्षीत्तत्साक्षादनुगच्छति ॥ ९९९ ॥**

अनन्वागतस्तेनेत्यादि व्याचष्टे । **नैनमिति** । यथैकस्मिन्ग्रामे कृतं शुभादि ग्रामान्तरस्थमपि कर्तारमनुगच्छति तथा स्वप्ने यत्कर्म दृष्टवान्न तज्जागरस्थमनुगन्तुमुत्सहते न हि स्वाप्नगुणदोषाभ्यां जाग्रद्द्रष्टा साक्षादेव स्पृश्यत इत्यर्थः ॥ ९९९ ॥

**शुभाशुभक्रियैवेह पश्यतीत्याभिधीयते ॥**
**न तु यद्वास्तवं वृत्तं पश्यतीत्यक्रियात्मनः ॥ १००० ॥**

पश्यतीति ज्ञानकर्तृत्वोक्तेर्देवतादर्शनकृतसुकृतवदन्त्यजातिदृष्टिनिमित्तदुष्कृतवच्च स्वप्नेऽपि दृश्यमानशुभादिना द्रष्टुरन्वयः स्यादित्याशङ्क्याऽऽह । **शुभेति** । या शुभादिक्रिया तत्फलं वा तत्साक्षित्वादेवास्मिन्वाक्ये पश्यतीत्यात्मोच्यते तन्न साक्ष्यस्थगुणदोषौ साक्षिणि भवत इत्यर्थः । एवकारव्यावर्त्यमाह । **न त्विति** । यदात्मनो वास्तवं

---

१ घ. ॰नकार॰ । २ ख. ॰त्ताद्रूपा॰ । ३ क. ख. ग. ॰भिक्ष्यते ।

रूपं तत्पश्यतीति दृष्टिकर्तृत्वेन नोच्यते तस्य कूटस्थस्वभावस्य तदयोगादित्यर्थः ॥ ॥ १००० ॥

**तेनानन्वागत इतिप्रतिज्ञातार्थसिद्धये ॥**
**असङ्गो हीति हेतूक्तिः प्रतिज्ञार्थोऽथवा भवेत् ॥ १००१ ॥**

अनन्वागतवाक्यं प्रतिज्ञा तस्य हेतुरसङ्गवाक्यमिति विभागमाह । **तेनेति** । असङ्गवाक्यं प्रतिज्ञेति प्रकारान्तरमाह । **प्रतिज्ञार्थ इति** ॥ १००१ ॥

**यदैवं पूर्वमेव स्यात्तदा हेतुवचः स्फुटम् ॥**
**तेनानन्वागत इति प्राक्कृतेनैव कर्मणा ॥ १००२ ॥**

तस्मिन्पक्षेऽनन्वागतवाक्यस्य हेतुत्वमाह । **यदेति** । प्रागिति जाग्रदपेक्षया पूर्वकालीनः स्वप्नो गृह्यते । तेन कर्मणाऽनन्वागत इति पूर्वमेव वाक्यं हेतुवच इति संबन्धः ॥ १००२ ॥

**सासङ्गत्वं समाशङ्क्य प्रवृत्तैषा यतः श्रुतिः ॥**
**अनन्वागत इत्यस्य हेतुत्वं हिगिरोच्यते ॥ १००३ ॥**

अस्य पक्षस्य गमकमाह । **सासङ्गत्वमिति** । कामादिसङ्गत्वमात्मनः शङ्कित्वा स वा एष एतस्मिन्संप्रसाद इत्याद्या श्रुतिर्यस्मात्प्रवृत्ता तस्मादसङ्ग इति प्रतिज्ञा युक्तेत्यर्थः । असङ्गवाक्यस्य हिशब्दाद्धेतुत्वे गम्यमाने कथं प्रतिज्ञात्वं तत्राऽऽह । **अनन्वागत इति** । यतः स्वाप्नेन शुभादिना जागरादिगतो न स्पृश्यतेऽतोऽसङ्गोऽवस्थात्रयेऽपीत्यनन्वागतत्वस्यासङ्गत्वे हेतुत्वं हिशब्देन द्योत्यत इत्यर्थः ॥ १००३ ॥

**न कर्म कुरुते स्वप्ने कारकाणामसंभवात् ॥**
**फलमात्रमयं तत्र भुङ्क्ते स्वाभासवर्त्मना ॥ १००४ ॥**

वाक्ययोर्विभागमुक्त्वाऽनन्वागतवाक्यार्थं प्रपञ्चयति । **न कर्मेति** । किं तर्हि तत्र द्रष्टा करोति तत्राऽऽह । **फलेति** । भोगे चिदाभासस्य बुद्धिगतस्य द्वारत्वं दर्शयति । **स्वाभासेति** ॥ १००४ ॥

**न हि निष्पद्यते स्वप्ने क्रिया जागरिते यथा ॥**
**कर्त्रादिकारकस्थाने नातोऽन्वेत्यक्रियात्मनः ॥ १००५ ॥**

स्वप्ने क्रियाभावं वैधर्म्यदृष्टान्तेनानुवदति । **न हीति** । तत्र तदभावे हेतुमाह । **कर्त्रादीति** । कर्त्रादीनां कारकाणां स्थानं जागरितं तत्रस्थमात्मानं स्वाप्नी क्रिया नान्वेत्यतस्तस्य कूटस्थस्य नास्ति तत्र क्रियेत्यर्थः ॥ १००५ ॥

**यदि स्थानान्तरं प्राप्तमन्वियात्स्वप्नजा क्रिया ॥**
**शास्त्रारम्भो वृथैव स्यात्स्वप्ने को नापराध्यति ॥ १००६ ॥**

विपक्षमनुभाष्य दूषयति । **यदीति** । तद्वैयर्थ्ये हेतुमाह । **स्वप्न इति** । सर्वापराधवि-

धुरो हि शास्त्रेऽधिक्रियते स्वप्ने च ब्रह्मवधादिबहुविधापराधसंभवात्तस्य जागरानुगामित्वे शास्त्राधिकार्यभावात्तदनारम्भ इति भावः ॥ १००६ ॥

**अपेतसाधनस्यापि पश्यतः स्वप्नविभ्रमम् ॥**
**बिभर्ति वासनैवास्य क्रियाकारकरूपताम् ॥ १००७ ॥**

स्वप्ने चेदात्मा न करोति कथं तस्य कर्तृत्वादिधीस्तत्राऽऽह । **अपेतेति** ॥१००७॥

**फलसंभोगमात्रं च यस्मात्स्वप्ने समीक्ष्यते[1] ॥**
**फलान्तरारम्भविधिर्नातः स्यादक्रियात्मनः ॥ १००८ ॥**

कर्तृत्वादिदृष्टेस्तत्र वासनामात्रत्वे फलितमाह । **फलेति** । प्रतीत्यतिरिक्तं स्वप्ने सुखादि निष्क्रियस्याऽऽत्मनो न सिध्यतीत्यर्थः ॥ १००८ ॥

**न करोति यतः स्वप्ने क्रियामिव समीक्षते[2] ॥**
**प्रक्रियाफलसंयोगो नातो बोधेऽस्य वीक्ष्यते ॥ १००९ ॥**

क्रियाकारकदृष्टिवत्फलदृष्टिरतिस्पष्टेत्याशङ्क्याऽऽह । **न करोतीति** । स्वप्ने वस्तुतः क्रियाऽस्ति चेज्जागरेऽपि तत्फलयोगो दृश्येत न च दृश्यते तन्नास्ति वस्तुतस्तत्र क्रियेत्यर्थः ॥ १००९ ॥

**तृप्तः स्वप्नेऽथ संबुद्धः क्षुत्परीतः प्रबुध्यते ॥ १०१० ॥**
**यस्मादनृतमेवेदं यत्किंचिदिह वीक्ष्यते ॥**
**प्रत्यङ्ङकारकस्तस्माल्लिप्यते न क्रियाफलैः ॥ १०११ ॥**

स्वाप्नं क्रियादि मिथ्येत्यत्रोपपत्त्यन्तरमाह । **तृप्त इति** । सुप्तस्य प्रबोधकार्यकारणसंपत्तिरथशब्दार्थः । प्रकृतः स्वप्नः सप्तम्यर्थः । तन्मिथ्यात्वे फलितमुपसंहरति । **प्रत्यङ्ङिति** ॥ १०१० ॥ १०११ ॥

**स्वप्नस्कन्ननिमित्तं तु प्रायश्चित्तं यदुच्यते ॥**
**सत्येन्द्रियविकारत्वात्तच्चापि न निराश्रयम् ॥ १०१२ ॥**

ननु प्रत्यङ्ङात्मा स्वाप्नक्रियाद्यस्पृष्टश्चेत्कथं स्वप्ने रेतस्खलननिमित्तं प्रायश्चित्तमुच्यते—

"स्वप्ने चेन्द्रियदौर्बल्यात्स्त्रियं दृष्ट्वा क्षरेद्यदि ।
प्रायश्चित्तं तु तस्योक्तं प्राणायामास्तु षोडश" ॥

इति तत्राऽऽह । **स्वप्नेति** । सत्येन्द्रियाधाराद्रेतसो निर्गतत्वात्तन्निमित्तं प्रायश्चित्तविधानं न निरालम्बनमित्यर्थः ॥ १०१२ ॥

**स्वप्नस्कन्नं यथा स्वप्ने तथा बोधेऽपि वीक्ष्यते ॥**
**आत्मचैतन्यवत्तस्मात्प्रायश्चित्तं तदुद्भवम् ॥ १०१३ ॥**

---

[1] ख. ग. °मीक्षते । [2] ख. °मीक्ष्यते ।

इतश्च तद्विधानं युक्तमित्याह । **स्वप्नस्कन्नमिति** । तदुद्भवं स्वप्नकालीनं रेतः स्कन्नं जागरितेऽपि प्रतिपन्नं निमित्तीकृत्य प्रायश्चित्तमित्यर्थः ॥ १०१३ ॥

**एका तावदियं व्याख्या यथोक्तैषोपवर्णिता ॥**
**व्याचक्षतेऽन्यथा चेदं वाक्यमेतद्यथोदितम् ॥ १०१४ ॥**

अनन्वागतादिवाक्यस्य स्वव्याख्यामुपसंहरति । **एकेति** । इयं तावदनन्वागतवाक्यस्यैका व्याख्या यथाचैषा भाष्ये संक्षिप्योक्ता तथाऽस्माभिर्विपञ्चितेत्यर्थः । भर्तृप्रपञ्चव्याख्यामवतारयति । **व्याचक्षत इति** । आदेयत्वं तस्याः सूचयति । **एतदिति** । अस्मदुक्तं व्याख्यानमनुसृत्यैतद्व्याख्यानं तेनाऽऽदेयमित्यर्थः ॥ १०१४ ॥

**अनन्वागतवाक्येन विवेकः कर्मणः कृतः ॥**
**असङ्गवचसा त्वस्य कामनिर्मोक उच्यते ॥ १०१५ ॥**

तत्रानन्वागतवाक्यस्य तदिष्टं तात्पर्यमाह । **अनन्वागतेति** । असङ्गवाक्यतात्पर्यमाह । **असङ्गेति** ॥ १०१५ ॥

**ननु नैव क्रिया साक्षाद्धानवृद्धी प्रतीप्यते ॥**
**अपि जागरितस्थाने कामो हेतुर्यतस्तयोः ॥ १०१६ ॥**

कामस्य कर्मणां च विवेकार्थं वाक्यद्वयमित्युक्त्वाऽसङ्गवाक्यनिरस्यां शङ्कामाह । **नन्विति** । जागरितेऽपि कर्मणो भाविफलहेतोरवयवोपचयापचयौ प्रति नाव्यवधानेन क्रियाहेतुः कामस्य तद्धेतुत्वादतः स्वप्नेऽपि कामस्य प्रवृत्तिहेतुत्वादात्मा नासङ्गो भवितुमलमित्यर्थः । **यथाऽऽहुः**—जागरितदेशेऽप्युपचयापचये न क्रियैव हेतुः किं तर्हि कामो हेतुरिति ॥ १०१६ ॥

**अकामस्य क्रिया यस्मान्निष्फलैव समीक्ष्यते ॥**
**स यथाकाम इत्यादि तथा चोर्ध्वं प्रवक्ष्यते ॥**
**इत्यस्य परिहारार्थमसङ्गो हीति भण्यते ॥ १०१७ ॥**

अकामस्यापि प्रवृत्तिदृष्टेस्तस्य तन्मूलत्वमनियतमित्याशङ्क्याऽऽह **अकामस्येति** । तस्मात्फलवती क्रिया कामनिमित्तेति शेषः । कर्मोपचये कामो मूलं न क्रियामात्रमित्यत्र वाक्यशेषं प्रमाणयति । **स यथेति** । स चास्योपचयमूलमनुच्छिन्नः कामः स्वप्ने तस्माद्भवितव्यमुपचयेन स्वप्नेऽपीत्युक्तेरात्मनः कामसंबन्धो वास्तव इति पूर्वपक्षे परिहारत्वेनासङ्गवाक्यमादत्ते । **इत्यस्येति** ॥ १०१७ ॥

**यमासङ्गमिह स्वप्ने कामं त्वमनुपश्यसि ॥**
**स्वपतो न भवेत्काम इत्येतदभिधीयते ॥ १०१८ ॥**

---

१ ख. °तीक्ष्यते । २ ख. °तो नास्त्यसौ काम ।

**असङ्गो हीति वाक्येन तद्वतोऽसंभवादिह ॥**
**ग्रस्तमत्र मनः कामि वासनामात्रशेषतः ॥ १०१९ ॥**

कथमसङ्गत्वमित्युक्ते वाक्यतात्पर्यमाह । **यमिति । उक्तं हि** यं काममासङ्गमुपचयमूलं वृत्तिरूपं पश्यसि तेन विमुक्तश्चायमस्मिन्काल इति । स्वप्ने कामाभावे हेतुमाह । **तद्वत इति ।** कामाधारस्य मनसः स्वप्ने सत्त्वाभावान्न तत्र कामसत्तेत्यर्थः । स्वप्ने बाह्येन्द्रियोपरमेऽपि मनसोऽनुपरमात्कथं कामाधिकरणं मनस्तत्र नास्ति तत्राऽऽह । **ग्रस्तमिति ।** कारणेनेति शेषः । मनसोऽभावे सुषुप्तवत्कथं स्वप्नधीस्तत्राऽऽह । **वासनेति** ॥ १०१८ ॥ १०१९ ॥

**यतोऽतोऽसङ्ग एवायं पुरुषः स्वप्नभूमिगः ॥**
**बहिः कुलायादित्युक्तं पाप्मनो विजहाति च ॥ १०२० ॥**

तत्र मनोसत्त्वे फलितमाह । **यत इति ।** कामस्य वासनात्मनः स्वप्नेऽपि संभवात्कथमसङ्गत्वं तत्राऽऽह । **बहिरिति** ॥ १०२० ॥

**देहाश्रयादृते कामाः सन्ति नान्यत्र कुत्रचित् ॥**
**स्वप्नप्रपञ्चः सर्वोऽपि वासनामात्रमेव तु ॥ १०२१ ॥**

स्वप्नावस्थस्याऽऽत्मनो देहकर्मभ्यामसंबन्धेऽपि कथं कामासंबन्धस्तत्राऽऽह । **देहेति । यथाऽऽहुः** शरीरसंबन्धिनश्च कामा मृत्यो रूपाणि प्रविभक्तश्चायं शरीरेण भवतीति । इतश्च स्वप्ने कामो नेति वक्तुं तन्मिथ्यात्वं प्रतिजानीते । **स्वप्नेति**॥१०२१॥

**व्याचक्षाणो यतः स्वप्नं ज्ञानमात्रं प्रभाषते ॥ १०२२ ॥**
**जाने पुत्रायुतं जातं जाने पितरमागतम् ॥**
**तथाचेवगिरा युक्तान्स्वप्नान्व्याचक्षते जनाः ॥ १०२३ ॥**

वासनामात्रत्वे हेतुमाह । **व्याचक्षाण इति ।** तत्प्रकारमभिनयति । **जान इति ।** स्वप्नस्य प्रतिभासमात्रत्वाद्योग्यविषयाद्यभावान्मिथ्यात्वमुक्त्वा तत्रैव प्रसिद्धिं प्रमाणयति । **तथाचेति ।** हस्तिनोऽद्य घटीकृता धावन्तीव दृष्टा मयेत्येवमिवशब्दसंयुक्तान्पार्श्वस्थेभ्यः स्वप्नानुत्थिता व्याकुर्वन्ति तत्सिद्धं तन्मिथ्यात्वमित्यर्थः ॥ १०२२ ॥ ॥ १०२३ ॥

**रथादेरसतो यद्वत्स्वप्ने निर्माणमीक्ष्यते ॥**
**शरीरेन्द्रियकामादेरसतस्तद्वदेव तु ॥ १०२४ ॥**

विमतं मिथ्या स्वप्ननिर्माणत्वात्तद्गतरथादिनिर्माणवदिति स्वप्नदेहादिनिर्माणस्य मिथ्यात्वमनुमिनोति । **रथादेरिति । यथाऽऽहुः**—यथैव रथादीनामसतां निर्माणं बाह्यानां तथा शरीरेन्द्रियाणां चाऽऽन्तराणामिति ॥ १०२४ ॥

रथेन्द्रियादिवत्तस्मात्कामोऽप्यत्र समीक्ष्यताम् ॥
स्वप्नेऽतोऽयं निरासङ्गः पुमानभ्युपगम्यताम् ॥ १०२५ ॥

तथाऽपि कथं स्वप्ने कामप्रविवेकस्तत्राऽऽह । रथेति । तस्मात्स्वप्ननिर्माणत्वाविशेषादिति यावत् । समीक्ष्यतामवस्तु सन्निति शेषः । उक्तं हि यथैव सर्वस्यासतो विनिर्माणमसतो दर्शनमेवमासङ्गस्यापि शरीरेन्द्रियपक्षभूतस्यासतो दर्शनमिति । कामस्यासत्त्वे फलितं निगमयति । अतोऽयमिति ॥ १०२५ ॥

कौटस्थ्यं यदि वा पुंसोऽसङ्गशब्देन भण्यते ॥
क्रियाश्लेषमृते यस्मान्नाध्यक्षफलसंगतिः ॥ १०२६ ॥

असङ्गपदस्यार्थान्तरमाह । कौटस्थ्यमिति । उक्तं च शुद्धोऽयं पुरुष इति । असङ्गपदस्य कौटस्थ्ये व्युत्पत्त्यभावात्कथमित्थमित्याशङ्क्याऽऽह । क्रियेति । क्रियायोगं विना तत्साक्षिणो न तत्फलयोगस्तस्मात्कौटस्थ्यासङ्गत्वयोरव्यभिचाराद्युक्तमसङ्गशब्देन कौटस्थ्यं वक्तुमित्यर्थः ॥ १०२६ ॥

ननु कर्ता पुमानेष स हि कर्तेतिवाक्यतः ॥
नैवं स्वप्ने यतः पुंसः कर्तृत्वं भावनाकृतम् ॥ १०२७ ॥

कौटस्थ्यमाक्षिपति । नन्विति । स्वप्ने कर्तृत्वस्य वासनोत्थत्वेनावस्तुत्वान्न कौटस्थ्यदौस्थ्यमित्याह । नैवमिति ॥ १०२७ ॥

कर्तृकार्यावभासित्वाज्जाग्रत्कालेऽपि चाऽऽत्मनः ॥
कर्तृत्वं न स्वतः स्वप्ने किमु वक्तव्यमिष्यते ॥ १०२८ ॥

स्वप्ने कर्तृत्वं मिथ्येत्येतत्कैमुतिकन्यायेनाऽऽह । कर्त्रिति ॥ १०२८ ॥

अविद्यास्रोतसैवास्य क्रियाकारकताऽऽत्मनः ॥
तत्स्थचैतन्यबिम्बेन भुङ्क्तेऽसौ कर्मणः फलम् ॥ १०२९ ॥

अविद्यान्वयव्यतिरेकित्वाच्च तन्मिथ्येत्याह । अविद्येति । भोक्तृत्ववत्तत्सत्यत्वमाशङ्क्याऽऽह । तत्स्थेति । तच्छब्देनाविद्या गृह्यते । न हि तदस्य क्रियाफलसाक्षित्वातिरिक्तं क्रियापेक्षमस्तीत्यर्थः ॥ १०२९ ॥

कर्त्रादिसाक्षिणोऽस्याभूत्कर्तृत्वं यत्पुराऽऽत्मनः ॥
स हि कर्तेति तस्यैव वचनं स्यात्पुनःश्रुतिः ॥ १०३० ॥

कर्तृत्वभोक्तृत्वयोर्वस्तुतोऽभावश्चेत्कथं स हि कर्तेत्युक्तं तत्राऽऽह । कर्त्रादीति । पुरेति जागरोक्तिः । पुनःश्रुतिरनुवादमात्रं न स्वप्ने कर्तृत्वबोधकमित्यर्थः ॥ १०३० ॥

नन्वस्यैव तु तत्कर्म भावनापेक्षयाऽखिलम् ॥
प्रवर्तते कथं तस्य कर्तृत्वं विनिवार्यते ॥ १०३१ ॥

---

१ क. ग. 'याशेष' । २ ख. 'कक्कतत्वा' ।

वाक्यादात्मनो न वास्तवं कर्तृत्वं किंत्वर्थापत्तेरिति शङ्कते । **नन्विति** । सर्वमपि कर्म कामापेक्षयाऽऽत्मनः सुखादि दातुं प्रवर्तते न च फलमकर्तृस्थं मुक्तिं विना सिध्यति शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वादितिन्यायात्तस्मादात्मनः फलदानार्थं कर्मप्रवृत्त्यनुपपत्तिर्वास्तवं कर्तृत्वं कल्पयतीत्यर्थः ॥ १०३१ ॥

**कामं प्रवर्ततां कर्म न च दोषोऽत्र कश्चन ॥**
**भावनेयं यतः कर्मगुण एव सती सदा ॥**
**स्वसाक्षिणं भावयन्ती न त्वसावात्मनो गुणः ॥ १०३२ ॥**

कल्पितकर्तृत्वेन कर्मप्रवृत्तिसिद्धेरर्थापत्तेरन्यथोपपत्तिरिति मत्वा सिद्धान्तयति । **काममिति** । फलदानाय कर्मप्रवृत्तावप्यात्मनि कर्तृत्वदोषाभावे हेतुमाह । **भावनेति** । एषा कर्मसहकारिणी यतस्तत्रैव सती सदा स्वसाक्षिणमात्मानं स्वेन संस्करोत्यतस्तत्र कल्पनया कर्तृत्वधीरित्यर्थः । एवकारव्यावर्त्यमाह । **न त्विति** । **यथाऽऽहुः**—भावना हि कर्मगुण एव सती पुरुषं भावयतीति ॥ १०३२ ॥

**पुष्पगन्धः पुटस्थोऽपि पुष्पस्यैव यथा तथा ॥**
**बुद्ध्यादिकारकस्थस्य भावना कर्मणो गुणः ॥**
**आत्मनस्तूपचारात्स्यान्न तु साक्षाद्गुणो भवेत् ॥ १०३३ ॥**

भावना चेदात्मानं भावयेत्कथं न तद्गुणस्तत्राऽऽह । **पुष्पेति** । **उक्तं हि** यथा पुष्पगन्धः पुटं भावयति स पुष्पगुण एव न पुटगुण एवं भावना कर्मगुण एव नाऽऽत्मगुण इति । कथं तर्हि प्रतीचि तद्भानं तत्राऽऽह । **आत्मन इति** । **यथाऽऽहु**र्भावनानुरञ्जिते विज्ञानात्मविज्ञाने कर्तृत्वोपचार इति ॥ १०३३ ॥

**उत्पत्तौ भोगकाले च कर्माऽऽदायैव भावनाम् ॥**
**स्वात्मानं लभते यस्मात्तां विना तदनर्थकम् ॥ १०३४ ॥**

मा भूदात्मनो भावना गुणस्तथाऽपि न सा कर्मगुणस्तस्यागुणत्वादित्याशङ्क्याऽऽह । **उत्पत्ताविति** । **उक्तं च** तामेवानुरञ्जनां कर्तृत्वेनाङ्गी कुरुते कर्मोत्पत्तिभोगकालयोरिति । कर्मणः स्वोत्पत्तौ फलदाने चोपकरणत्वाद्भावनायास्तत्तन्त्रतोक्तिर्न रूपादिवदाश्रयत्वात्तदाश्रयस्त्वन्तःकरणमेवेति भावः ॥ १०३४ ॥

**कर्मणोऽपि तथाऽत्यन्तं प्रयोगैकसमाश्रयात् ॥ १०३५ ॥**
**बुद्ध्याद्यर्थाभिसंबन्धपक्षतैवावसीयते ॥**
**न त्वात्मगुणता तस्य कर्मणः स्यात्कदाचन ॥ १०३६ ॥**

भवतु भावना कर्मगुणस्तत्त्वात्मगुणो भविष्यति नेत्याह । **कर्मणोऽपीति** । भावनावत्पुण्यपापादृष्टस्यापि नियमेन क्रियापेक्षत्वाद्बुद्ध्यादिकारकस्थतैव नाऽऽत्मस्थतेत्यर्थः ।

तदुक्तं कर्मणोऽप्यत्यन्तं प्रयोगाश्रितत्वाद्बुद्ध्यादिसंनिकर्षपक्षतैव न कदाचनाऽऽत्मगुणतेति ॥ १०३५ ॥ १०३६ ॥

प्रयोगापेक्षमेवाऽऽस्ते कर्म बुद्ध्यादिसंक्षये ॥ १०३७ ॥
स्वात्मनः प्रतिलाभाय न त्वात्मानमपेक्षते ॥
सभावनमतः कर्म प्रतीचः प्रविविच्यते ॥ १०३८ ॥

[1]मरणकाले बुद्ध्यादिलयात्कर्मणस्तात्स्थ्यानुपपत्तेरक्षीणं पारलौकिकं कर्माऽऽत्मस्थमेवेत्याशङ्क्याऽऽह । प्रयोगेति । बुद्ध्यादिकारकजातमतिसूक्ष्मं प्रयोगशब्दार्थः । उक्तं हि बुद्ध्यादिक्षयेऽपि कर्म प्रयोगापेक्षमेवाऽऽस्ते स्वात्मलाभाय नाऽऽत्मानमपेक्षत इति । बुद्ध्यादेः स्थूलरूपक्षयेऽपि मरणाद्यवस्थायां सूक्ष्मरूपाश्रितमेव कर्म नाऽऽत्माश्रितमित्यर्थः । भावनाकर्मणोरात्मगुणत्वाभावे फलितमाह । सभावनमिति ॥ १०३७ ॥ ॥ १०३८ ॥

तस्मात्कर्मगुणस्यैव कर्मस्थस्यैव सर्वदा ॥
साक्ष्यात्मा भावनारूपकामस्य स्वप्नसद्मनि ॥ १०३९ ॥

कामादिप्रविवेकफलमुपसंहरति । तस्मादिति । कर्मगुणस्य कर्मोपकरणभूतस्येति यावत् । कर्मस्थस्यान्तःकरणाश्रितस्येत्यर्थः । तदाहुस्तस्मादयमेतस्मिन्स्वप्ने कर्मगुणस्यैवाऽऽसङ्गस्य कर्मस्थस्य द्रष्टा प्रविविक्त आत्मा निरासङ्ग इति ॥ १०३९ ॥

आसङ्ग आत्मनश्चेत्स्यात्साक्षाच्चैतन्यवद्गुणः ॥
न पश्येदात्मवत्कामं कर्मस्थं स्वप्नबोधयोः ॥ १०४० ॥

किंच कामो नाऽऽत्मगुणस्तद्दृश्यत्वाद्रूपवदित्याह । आसङ्ग इति ॥ १०४० ॥

एवं चावस्थिते पक्षे श्रुत्याऽकारि समञ्जसम् ॥
प्रसिद्धवदुपादानमसङ्गो हीति सादरम् ॥ १०४१ ॥

आत्मनः सर्वकामनिर्मोके सिद्धवद्धेतूपादानमपि गमकमित्याह । एवं चेति । अभ्यासं तात्पर्यलिङ्गं द्योतयति । सादरमिति ॥ १०४१ ॥

न कर्मोपचयोऽतोऽत्र स्वप्ने जाग्रद्वदिष्यते ॥
सर्वासङ्गविनिर्मोकाद्वासनामात्रशेषतः ॥ १०४२ ॥

स्वप्ने कामाभावेऽपि कथं कर्माभावस्तत्राऽऽह । न कर्मेति । अतःशब्दार्थमेवाऽऽह । सर्वेति । उक्तं च यस्माच्चाऽऽसङ्गोऽतो न कर्मोपचयः स्वप्न इति । सुषुप्ताद्विशेषं दर्शयति । वासनेति ॥ १०४२ ॥

नायं कर्ममयो यस्मान्न च काममयः स्वतः ॥
प्रत्यगज्ञानतस्तस्मात्तन्मयत्वमिवेक्ष्यते ॥ १०४३ ॥

---

१ क. ख. प्रलयकाले ।

आत्मनि स्वप्ने कामकर्माभावमुक्त्वा तद्दृष्टेर्गतिमाह । **नायमिति** । तन्मयत्वं प्राप्त इवेति शेषः ॥ १०४३ ॥

**नानासाधनसंबन्धात्कर्तृत्वं जगतीक्ष्यते ॥**
**अयं त्वसङ्गो येनातो न करोति न लिप्यते ॥ १०४४ ॥**

आत्मनो वस्तुतः कर्तृत्वाद्ययोगमिवशब्दसूचितमुक्त्वाऽसङ्गत्वहेतुना द्रढयति । **नानेति** ॥ १०४४ ॥

**मूर्तामूर्ताद्यपह्नुत्या ह्यात्मनस्तत्त्वमब्रवीत् ॥**
**नातोऽनात्माभिसंबन्धः कूटस्थैकात्म्यहेतुतः ॥ १०४५ ॥**

असङ्गत्वे हेत्वन्तरमाह । **मूर्तेति** । अब्रवीन्नेति नेत्यस्थूलमित्याद्या श्रुतिरिति शेषः । हिशब्दापेक्षितं पूरयति । **नात इति** । आत्मनोऽनात्माभिसंबन्धो नेत्यत्र हेतुद्वयमाह । **कूटस्थेति** ॥ १०४५ ॥

**सुषुप्ते नन्वसंबोधाद्रत्वादि कथमुच्यते ॥**
**न त्वित्यपि तथा वाक्यं न बाह्यं चेति वक्ष्यति ॥ १०४६ ॥**

परमतमुपपाद्योपसंहृत्य संप्रसादे रत्वेत्यादि यथाश्रुतमाश्रित्य शङ्कते । **सुषुप्त इति** । असंबोधात्पुत्रादिद्वितीयवस्त्वदृष्टेरिति यावत् । कथं तत्र द्वितीयादृष्टिस्तत्राऽऽह । **नेति** । न तु तद्द्वितीयमस्ति न बाह्यं किंचन वेदेति वाक्याभ्यां तत्र द्वितीयादृष्टिः सिद्धेत्यर्थः ॥ १०४६ ॥

**स्वप्ने रत्वाद्यथ मतं नैवमप्युपपद्यते ॥**
**अनन्वागतगीः कुप्येत्स्वप्नेऽन्वेत्येव तत्कृतम् ॥ १०४७ ॥**

स्वप्नात्सुषुप्तं प्रविविक्षुः स्वप्नावस्थ एव रत्याद्यनुभूय संप्रसादे प्रसीदतीत्युपगमान्नानुपपत्तिरिति शङ्कते । **स्वप्न इति** । पूर्ववाद्याह । **नैवमिति** । स्वप्ने रत्यादि दृष्टं चेत्स यत्तत्रेत्यादि विरुध्येत तत्र कृतस्य तद्द्रष्टृगामित्वादित्यर्थः ॥ १०४७ ॥

**यथा जाग्रत्कृतं कर्म कर्तारमनुगच्छति ॥**
**जाग्रत्स्थं स्वप्नकर्मैवं स्वप्ने समधिगच्छति ॥ १०४८ ॥**

यथा स्वप्नकृतमवस्थान्तरस्थं नानुगच्छत्येवं स्वप्नस्थमपि द्रष्टारं नानुगच्छेदित्याशङ्क्याऽऽह । **यथेति** ॥ १०४८ ॥

**इत्येवं चोदिते केचित्परिहारं प्रचक्षते ॥**
**पदच्छेदेन कुशला अरत्वेत्येवमादिना ॥ १०४९ ॥**

उक्तं चोद्यमनूद्य स्वयूथ्यसमाधिमुत्थापयति । **इत्येवमिति** । संप्रसादेऽरत्वाऽचरित्वाऽदृष्ट्वेति नञन्वयपदच्छेदेन वाक्ये व्याख्यायमाने नावद्यमित्यर्थः ॥ १०४९ ॥

---

१ ग. 'तीप्यते । २ क. ख. 'त्र न द्वितीयद' । ३ ख. रत्वादि ।

स यत्तत्रेत्यसङ्गोक्तेर्नेदमप्युत्तरं भवेत् ॥
दृष्टिं तत्रापि चाध्यस्य परिहारं प्रचक्षते ॥ १०५० ॥

वाक्यशेषानुपपत्त्या दूषयति । **स यदिति** । न च स्वप्नायैवेतिप्रस्तुतस्वप्नस्य तत्रेति परामर्शादविरोधः शेषस्येति वाच्यं तच्छब्दस्य प्रकृतविप्रकृष्टपरामार्शित्वादन्यथोत्तरत्र स्वप्नोपन्यासवैयर्थ्यान्न च जाग्रत्यसङ्गत्वप्रतिपादनार्थस्तदुपन्यासस्तथा सति बुद्धान्तोपन्यासानर्थक्यान्न च तच्छब्देन संप्रसादपरामर्शस्तत्र पश्यतेरयोगात्तत्परिशेषाद्वाक्यशेषविरोध इति भावः । अन्येऽपि स्वप्नवत्सुप्तेऽपि दृष्ट्याद्यारोप्य नञन्वयं विनैव पदं छिन्दन्तः स यत्तत्रेति सुप्तिपरामर्शाद्वाक्यशेषं चोपपन्नं मन्वानाः परिहरन्तीत्याह । **दृष्टिमिति** ॥ १०५० ॥

अस्ति भोगः सुषुप्तेऽपि तथाचाऽऽनन्दभुक्श्रुतः ॥
ऐश्वरो वाऽत्र भोगोऽस्ति सर्वस्थानाभिमानतः ॥ १०५१ ॥

स्वापे रत्याद्यारोपे तत्फलोपलब्धिर्निमित्तमित्याह । **अस्तीति** । तत्र भोगास्तित्वे मानमाह । **तथाचेति** । आनन्दभुक्तथा प्राज्ञ इति वृद्धैरिष्टत्वादस्ति सुप्तौ सुखभोग इत्यर्थः । तत्र रत्याद्यारोपे निमित्तान्तरमाह । **ऐश्वरो वेति** । अस्ति हि तत्र कारणरूपेश्वरात्मना स्थितस्य जीवस्य तदीयो भोग एतस्यैवाऽऽनन्दस्येत्यादिश्रुतेरतो रत्याद्यारोप इत्यर्थः । उक्तमुपपादयति । **सर्वेति** । सर्वकारणत्वादीश्वरोऽवस्थात्रयमात्मीयं मन्यते तेन स्वापे तदात्मना स्थितो जीवस्तद्भोगभागीत्यर्थः ॥ १०५१ ॥

कार्यभूमिगतो ह्यात्मा सुषुप्तं प्रसमीक्ष्यते[3] ॥
कार्यस्य कारणव्याप्तेर्न सुषुप्तपरोक्षता ॥ १०५२ ॥

तत्र दृष्ट्याद्यारोपे तस्यावस्थान्तरादविशेषप्रसक्तिरित्याशङ्क्य परिहारान्तरमाह । **कार्येति** । सुषुप्तात्कारणादुत्थितः स्वप्ने जागरे वा कार्यभूमौ स्थितः पुमान्कार्यस्य कारणेन व्याप्तेस्तत्र च स्वप्नादौ रत्यादिदृष्टेस्तल्लिङ्गेन कारणं सुषुप्तं तद्युक्तमेवानुमीयते तेन तत्र रत्वादिवाचोयुक्तिरित्यर्थः । अनुमानात्सुषुप्तिसिद्धौ परोक्षत्वेन तत्सिद्धेः स यत्तत्र किंचित्पश्यतीतिशेषानुपपत्तिरित्याशङ्क्याऽऽह । **नेति** । सुषुप्तं नामाऽऽत्माज्ञानं बुद्धेः कारणात्मनाऽवस्थानं तदिति स्थितेस्तच्च न किंचिदवेदिषमिति व्युत्थितस्य परामर्शादपरोक्षं तन्न शेषानुपपत्तिरित्यर्थः ॥ १०५२ ॥

यदि वा स्वप्न एवास्तु रत्वादि यदुदीरितम् ॥
स्वप्नयोरभितः प्राज्ञादनन्वागतताऽप्यतः ॥ १०५३ ॥

सुषुप्ते रत्यादिविशिष्टेऽनुमानादिष्टेऽपि तस्यावस्थान्तरादविशेषापत्तिस्तदवस्थेत्याशङ्क्य सिद्धान्तमाह । **यदि वेति** । स्वप्ने रत्याद्युच्यते चेत्तत्र कृतशुभादीनां तत्स्थस्या-

---

१ ख. °त्यसंगीतेर्न° । २ क. ख. °गात्प° । ३ क. °मीक्षते ।

नुगतेरनन्वागतवाक्यविरोधः स्यादित्युक्तं तत्राऽऽह । स्वप्नयोरिति । प्राज्ञः सुषुप्तिस्थानं तस्मात्पूर्वमूर्ध्वं च यौ स्वप्नौ तयोरनन्वागतता सिध्यति स्वप्नात्सुषुप्तं गतस्ततः स्वप्नं गच्छति न च सुषुप्तात्प्राग्भाविस्वप्नस्थकर्मणा पश्चाद्भाविस्वप्नं गतोऽनुगम्यते न च पाश्चात्यस्वप्नस्थकर्मणा प्राचीनस्वप्नस्थो लिप्यते तथा स्वप्नस्थेन शुभादिना सुषुप्तजागरयोरनन्वागतत्वमतोऽविद्ययाऽनुगमावगमेऽपि वस्तुनोऽवस्थात्रयेऽपि तदभावादनन्वागतवाक्यमविरुद्धमित्यर्थः ॥ १०५३ ॥

त्रिधा त्रिधा वा क्लृप्तेः स्यादेकैकस्येत्यदोषता ॥
जाग्रत्स्वप्नसुषुप्तानां जाग्रत्स्वप्नसुषुप्ततः ॥ १०५४ ॥

संप्रमादे रत्वादि कथमित्यत्र समाध्यन्तरमाह । त्रिधेति । जाग्रदादीनां मध्ये प्रत्येकं जाग्रदादिभेदेन त्रैविध्यकल्पनात्सुषुप्तस्थजाग्रत्स्वप्नावपेक्ष्य सुप्तावेव रत्वादेरदोषतेति स्यादित्यर्थः ॥ १०५४ ॥

कार्याकार्यादि यत्साक्षात्प्रमाणात्प्रसमीक्षते[1] ॥
जाग्रज्जागरितं तादृक्तत्स्वप्नो यन्मृपेक्षणम् ॥ १०५५ ॥
कामादिविषयासक्तेर्न[2] किंचिद्विविनक्ति यत् ॥
जाग्रत्सुषुप्तं तादृक्स्यान्निर्विवेकस्वभावतः ॥ १०५६ ॥

कथं प्रत्येकं त्रैविध्यं तत्र जागरस्य तद्दर्शयति । कार्येति । आदिशब्देन ज्ञेयाज्ञेयभक्ष्याभक्ष्यादि गृह्यते । तच्छब्देन जाग्रदुच्यते । तस्य सुषुप्तत्वे प्रसिद्धसुषुप्तिसाधर्म्यं हेतुमाह । निर्विवेकेति ॥ १०५५ ॥ १०५६ ॥

सुप्तोऽपि कर्म कुरुते नरः स्वप्ने प्रबोधवत् ॥
स्वप्नजाग्रत्तथारूपं स्वप्नः स्वप्नात्मकोऽत्र यः ॥ १०५७॥
दृष्ट्वाऽपि यत्समाख्यातुं प्रबुद्धो नैव शक्नुयात् ॥
तादृक्स्वप्नसुषुप्तं स्यात्सुषुप्तं च त्रिधोच्यते ॥ १०५८ ॥
सुषुप्तजाग्रन्मूढः स्याच्छान्तोऽसौ स्वप्न उच्यते ॥
ऐकात्म्यतत्त्वासंबोधः सुषुप्तः प्राज्ञ उच्यते ॥ १०५९ ॥

स्वप्नं त्रेधा विभजते । सुप्तोऽपीति । अत्र स्वप्ने यः स्वप्नात्मकोऽनुभवः स स्वप्नस्थः स्वप्न इत्यर्थः । सुषुप्तं त्रैविध्येन योजयति । सुषुप्तं चेति ॥ १०५७ ॥ ॥ १०५८ ॥ १०५९ ॥

त्रिविधत्वात्सुषुप्तस्य सर्वं रत्वादि युज्यते ॥
दृष्टान्तः संप्रसादो वा स्वप्नजाग्रदवस्थयोः ॥ १०६० ॥

तत्रैविध्यस्य प्रकृतोपयोगमाह । त्रिविधत्वादिति । सुषुप्तस्योक्तरीत्या त्रैविध्या-

---

१ क. ख. 'मीक्ष्यते । २ ख. यानादि' ।

त्तद्गतस्वप्नाद्यपेक्षया तत्र रत्वाद्युपपत्तिरित्यर्थः । कार्यकरणनिर्मुक्तस्वप्रकाशात्मनः कर्मादिविवेकार्थं सुप्तिरुक्ता संप्रति तदुक्तेस्तात्पर्यान्तरमाह । **दृष्टान्त इति** ॥१०६०॥

**यथा रत्वाद्यसंभाव्यं संप्रसादे तथैव चै ॥**
**इतरत्रापि विज्ञेयं तत्र वस्त्वसमीक्षणात् ॥ १०६१ ॥**

दृष्टान्तदार्ष्टान्तिकत्वं स्पष्टयति । **यथेति** । कथं तर्हि स्वप्नादौ रत्वादिदृष्टिस्तत्राऽऽह । **तत्रेति** । तत्त्वपाठे तु तदेव वस्तु तस्यासमीक्षणादवस्थाद्वये रत्वादीति योज्यम् ॥ १०६१ ॥

**यत एवमतः कर्मकामदोषविवर्जितः ॥**
**पुरुषोऽयं स्वतः सिद्धो यथोक्तेनैव वर्त्मना ॥ १०६२ ॥**

प्रकरणार्थमुपसंहरति । **यत इति** । एवंशब्दार्थं दर्शयति । **यथोक्तेनेति** । कामः कर्मगुणस्तच्च प्रयोगद्वारा कारकाश्रितमित्याद्युक्तमार्गेणेति यावत् । यतोऽयं सर्वदोषरहितोऽतः स्वतोऽकर्ता सिद्ध इति योजना ॥ १०६२ ॥

**असङ्गत्वादकर्तेति नन्वसिद्धोऽयमुच्यते ॥**
**स्वप्ने कामस्य दृष्टत्वाद्यत्र काममिति श्रुतेः ॥ १०६३ ॥**

असङ्गो हीत्यसङ्गत्वमनन्वागतत्वे कारणमुक्तं तदसिद्धिं चोदयति । **असङ्गत्वादिति** । अयमिति हेतुनिर्देशः । तत्र हेतुः । **स्वप्न इति** । स ईयते मृतो यत्र काममिति श्रुतेः स्वप्ने कामस्य दृष्टत्वात्कामासङ्गयोश्च पर्यायत्वान्नासङ्गतेत्यर्थः ॥१०६३॥

**इत्यस्य परिहारार्थं स वा इत्यादिकं वचः ॥**
**पुनः स्वप्नसमारम्भो गतत्वात्किमितीर्यते ॥**
**बुद्धान्तादेर्यथा तद्वन्नातः स्यात्पुनरुक्तता ॥ १०६४ ॥**

स वा एष एतस्मिन्स्वप्ने रत्वेत्याद्युत्तरत्वेनाऽऽदत्ते । **इत्यस्येति** । स हि स्वप्नो भूत्वेत्यादिनाऽस्य स्वप्नोपन्यासस्य पौनरुक्त्यं शङ्कते । **पुनरिति** । अर्थभेदं वदन्परिहरति । **बुद्धान्तादेरिति** । यथा जाग्रत्सुषुप्त्योरर्थभेदात्पुनः पुनरुक्तिस्तथा स्वप्नस्याप्यसकृदुक्तिरविरुद्धा स हि स्वप्नो भूत्वेत्यत्र कार्यकरणातिरेकार्थमात्मनः स्वप्न उक्तः स यत्तत्र प्रस्वपितीत्यत्र स्वयंज्योतिष्ट्वार्थं संप्रसादे रत्वेत्यत्र कर्मविवेकार्थमत्र कामविवेकायेत्यर्थभेदान्न पौनरुक्त्यमित्यर्थः ॥ १०६४ ॥

**निशायां संप्रवृत्तायां संहृताक्षस्य निद्रया ॥**
**अवस्थां तैजसीं भुक्त्वा स्वापो भवति देहिनः ॥ १०६५ ॥**

स्वप्नात्सुषुप्तिप्राप्तिमुक्तामधिकोक्त्यर्थमनुद्रवति । **निशायामिति** । तैजसीमवस्थां

---

१ ख. °यैकार° । २ ख. °स्वादि सं° । ३ ख. तु । ४ क. घ. °यैकार° । ५ घ. °नुवदति ।

स्वप्नाख्यामिति यावत् । अक्षाणि सर्वाणीन्द्रियाणि । भुक्त्वा स्थितस्येति शेषः । स्वापः सुषुप्तिरित्येतत् ॥ १०६५ ॥

**स आनन्दः परो ज्ञेयः सुखदुःखविवर्जितः ॥**
**सततं सर्वभूतानां तिष्ठत्येष पुरीतति ॥ १०६६ ॥**

सा च परानन्द इत्यधिकमभिधित्सितमाह । **स इति** । तस्य परत्वं स्फोरयति । **सुखेति** । तस्यावस्थाविशेषयोगादागन्तुकत्वमाशङ्क्य विशिनष्टि । **सततमिति** । तस्य सर्वप्राणिसंबन्धितया व्यापित्वमाह । **सर्वेति** । प्रत्यक्त्वेनात्यन्तसांनिहितत्वमाह । **एष इति** । पुरीतद्द्वारा ब्रह्मरूपेण स्थितिमाह । **पुरीततीति** ॥ १०६६ ॥

**तत्र रत्वा यथाकामं कंचित्कालं यदृच्छया ॥**
**तामवस्थां तिरश्चक्र आयियासुस्ततोऽपराम् ॥ १०६७ ॥**

यथोक्तं स्वापमारूढस्तर्हि मुक्तवन्नावस्थान्तरं गच्छेदित्याशङ्क्याऽऽह । **तत्रेति** । रत्वा पूर्वोक्तं परमानन्दं निर्विकल्पेनानुभूयेति यावत् । कंचित्कालमवस्थान्तरहेतुकर्मानभिव्यक्त्यवस्थायामित्यर्थः । यद्यपि यदृच्छाशब्दो विना नियामकं यदाकदाचित्कार्योदयार्थस्तथाऽप्यत्र स्वप्नहेतुभूतमुद्भूतं कर्म यदृच्छेति द्रष्टव्यम् । तामवस्थामिति सुषुप्तिरुक्ता । अपरामिति स्वप्नोक्तिः ॥ १०६७ ॥

**भावनाविग्रहो भूत्वा तत्र स्वप्नरिरंसया ॥**
**उच्चावचानि वस्तूनि भावनातः करोति सः ॥ १०६८ ॥**

स्वप्नं गत्वा किं करोत्यात्मेत्यपेक्षायामाह । **भावनेति** । स्वप्ने जाग्रद्वासनानिर्मितं देहं गृहीत्वा तत्र रतीच्छया हस्त्यादिपदार्थान्भावनावशान्निर्वर्तयत्यतः स मिथ्येत्यर्थः ॥ १०६८ ॥

**गतौ प्राणवियोगः स्याद्यथाकालस्य चेक्षणम् ॥**
**तदसंभाव्यदेशादौ दर्शनात्तन्मृषात्मता ॥ १०६९ ॥**

तन्मिथ्यात्वे युक्त्यन्तरमाह । **गताविति** । स्वप्ने हि द्रष्टा विप्रकृष्टं पश्यति यदि चेतो देहाद्गत्वाऽवगच्छेत्तदाऽत्र प्राणवियोगान्मृतिः स्यात्तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीति श्रुतेर्न चात्रापि सत्त्वाददोषो विशिष्टस्यातथात्वात्तस्मादन्तरेण गतिमतिविप्रकृष्टदृष्टेः स्वप्नो मिथ्येत्यर्थः । तत्रैव हेत्वन्तरमाह । **यथेति** । योग्यकालवतोऽर्थस्य स्वप्ने दृष्टिरस्ति न च तत्र[1] संयोगो विद्यते न हि क्षणमात्रेण सुप्तोत्थितस्यानेकाहोरात्रनिर्वर्त्यार्थाप्तिदृष्टौ योग्यकालसंभावनाऽस्त्यतः स्वप्नो मिथ्येत्यर्थः । आर्द्रमरीचादिर्यत्र देशे काले वा न संभाव्यते तत्र तस्य स्वप्ने दृष्टेश्च तन्मिथ्यात्वमित्याह । **तदसंभाव्येति** ॥ १०६९ ॥

---

१ ख. 'त्र स योग्यो वि' ।

**यावत्स्वप्नेऽस्ति वक्तव्यं प्राक्तदुक्तमशेषतः ॥**
**तस्मान्नाऽऽसङ्गगन्धोऽपि स्वप्ने पुंसोऽस्य विद्यते ॥ १०७० ॥**

किंच तन्मिथ्यात्वं स्वप्नप्रपञ्चः सर्वोऽपि वासनामात्रमेव त्वित्यादावुक्तमित्याह । **यावदिति** । स्वप्नमिथ्यात्वे फलितमाह । **तस्मादिति** । वासनात्मकोऽपि कामो न स्वप्नेऽस्तीति वक्तुं गन्धपदम् ॥ १०७० ॥

**असङ्गत्वादसंबन्धो यथेह स्वप्नकर्मभिः ॥**
**जाग्रत्यपि न कर्ताऽयमेतस्मादेव कारणात् ॥ १०७१ ॥**

स वा एष एतस्मिन्स्वप्ने रत्वेत्यादेस्तात्पर्यमुक्त्वा स वा एष एतस्मिन्बुद्धान्ते रत्वे-त्यादेस्तात्पर्यमाह । **असङ्गत्वादिति** । स्वप्नः सप्तम्यर्थः । एतस्मादेवासङ्गत्वादिति यावत् ॥ १०७१ ॥

**असज्जाग्रदवस्थेयं जाग्रद्रूपत्वकारणात् ॥**
**स्वप्ने जाग्रदवस्थावत्तथाचाऽऽद्यन्तवत्त्वतः ॥ १०७२ ॥**

तयोर्बाधाबाधाभ्यां वैषम्याज्जागरे कर्तृत्वादि वास्तवमिति चेन्नेत्याह । **असदिति** । असच्छब्देन सद्विलक्षणवाचिना मिथ्यात्वं कथ्यते । अनुमानान्तरमाह । **तथा चेति** । विमतं मिथ्याऽऽद्यन्तवत्त्वात्संमतवदित्यर्थः ॥ १०७२ ॥

**अज्ञानोत्थमिदं जाग्रज्जडरूपसमन्वयात् ॥**
**तथाऽपेक्षात्मकत्वाच्च मृगतृष्णोदकादिवत् ॥ १०७३ ॥**

विमतं मिथ्या जडत्वाद्रज्जुसर्पवदित्याह । **अज्ञानेति** । विमतमाविद्यं सापेक्षत्वात्सं-मतवदित्याह । **तथेति** । जागरितस्याज्ञानोत्थत्वं तथेत्यनुकृष्यते । जाड्येन हेतुरुन्नेयः ॥ १०७३ ॥

**निरासङ्गः पुमानेष स्वप्नबुद्धान्तयोरपि ॥**
**संप्रसादे किमङ्गायं यत्र किंचिन्न वीक्ष्यते ॥ १०७४ ॥**

स्वप्नादावसङ्गत्वमुक्त्वा सुषुप्ते तदभावात्कर्मराहित्यासिद्धिमाशङ्क्याऽऽह । **निरा-सङ्ग इति** । आसङ्गहेतुसंभवेऽपीत्यपेरर्थः । स्वापे पुरुषस्य निरासङ्गत्वं किमु वक्तव्य-मित्यत्र हेतुमाह । **यत्रेति** ॥ १०७४ ॥

**ननु जाग्रदवस्थायां दृष्टैवेत्युच्यते कथम् ॥**
**प्रत्यक्षकर्तृता तत्र यत आत्मन ईक्ष्यते ॥ १०७५ ॥**

आत्मनोऽवस्थात्रयेऽप्यसङ्गत्वादकर्तृत्वमुक्तं तत्र जाग्रदवस्थमकर्तृत्वमाक्षिपति । **नन्विति** ॥ १०७५ ॥

**नैवं कर्त्रादिसाक्षित्वात्तच्चिदाभासतस्तथा ॥**
**कर्तृत्वमात्मनो बोध उपचाराद्यतस्ततः ॥ १०७६ ॥**

तत्रापि तन्न वस्तुतोऽस्तीति परिहरति । **नैवमिति** । कर्त्रादीनां चिदाभासव्याप्ते-श्चिदात्मनि[२] कारकत्वधीरित्याह । **तदिति** । यदा जागरे काल्पनिकं कर्तृत्वं ततोऽवधा-रणाधीनमकर्तृत्वं युक्तमिति फलितमाह । **कर्तृत्वमिति** ॥ १०७६ ॥

**आत्मनैवायामिति च ध्यायतीवेति च श्रुतेः ॥**
**नाऽऽत्मनः कारकत्वं स्यात्सर्वावस्थातिलङ्घिनः ॥ १०७७ ॥**

औपाधिकं कर्तृत्वं स्वतोऽकर्तृत्वमित्यत्र प्रमाणमाह । **आत्मनैवेति** । इतश्चाऽऽ-त्मनो न कारकत्वमवस्थावतस्तद्भावादित्याह । **सर्वेति** ॥ १०७७ ॥

**वेदात्माऽपि तथाचाऽऽह प्रपन्नाय किरीटिने ॥**
**संसारहेतुनिबिडध्वान्तोच्चिच्छित्सयाऽऽदरात् ॥ १०७८ ॥**

तत्र स्मृतिं प्रमाणयितुं पातनिकामाह । **वेदेति** । आत्मनि कारकत्वमादरादात्मन-श्चावस्थावत्त्वाभावान्निरस्यतो भगवतोऽभिप्रायमाह । **संसारेति** ॥ १०७८ ॥

**अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः ॥**
**शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ १०७९ ॥**

किं तद्भगवानाहेति तदाह । **अनादित्वादिति** । स्वरूपतो धर्मतो वा परस्याऽऽ-त्मनो व्ययाभावेऽपि शरीरस्थतया कर्तृत्वभोक्तृत्वे स्यातामित्याशङ्क्य स्वतः सतस्तयो-रसत्त्वं मत्वाऽऽह । **शरीरेति** ॥ १०७९ ॥

**स्वप्नबुद्धान्तवाक्याभ्यां मृत्योरासङ्गलक्षणात् ॥**
**विविक्ततैवं यत्नेन निर्णीता प्रत्यगात्मनः ॥ १०८० ॥**

महामत्स्यवाक्यस्य संगतिं वक्तुं वृत्तं कीर्तयति । **स्वप्नेति** । प्रतिज्ञाहेतुविभागवि-वेचनं यत्नः ॥ १०८० ॥

**अन्योन्यपरिहारेण स्वप्नजाग्रदवस्थयोः ॥**
**कामकर्मात्मकासङ्गविविक्तत्वमिहोदितम् ॥ १०८१ ॥**

आसङ्गलक्षणादिति विशेषणात्कामविवेको विवक्षितो न कर्मविवेक इत्याशङ्क्याऽऽह । **अन्योन्येति** । अवस्थाद्वयस्य मिथो व्यभिचारादेकत्र कृतस्यान्यत्राननन्वयात्कामकर्मा-त्मकादासङ्गान्मृत्योर्विविक्तत्वमात्मनि पूर्वत्र दर्शितामित्यर्थः ॥ १०८१ ॥

**यथोदितार्थ एतस्मिन्दृष्टान्तोऽप्यधुनोच्यते ॥**
**निरासङ्गत्वसिद्ध्यर्थं प्रत्यगात्माख्यवस्तुनः ॥ १०८२ ॥**

---

१ ख. °स्तदा । क° । २ क. ख. °नि न का° । ३ ख. ग. °तियायिनः । ४ घ. °रात्रि° । ५ घ. स्वत° ।

महामत्स्यवाक्यमवतारयति । यथेति । कामकर्मात्मकासङ्गनिर्मुक्ते प्रत्यगात्मनीति यावत् । दृष्टान्तोक्तिफलमाह । निरासङ्गत्वेति ॥ १०८२ ॥

**स्वातन्त्र्यप्रतिपत्त्यर्थं महानिति विशेषणम् ॥**
**नादेयस्रोतसाऽहार्यो मत्स्यो दृष्टान्त उच्यते ॥ १०८३ ॥**

महांश्चासौ मत्स्यश्चेत्यत्र विशेषणकृत्यमाह । स्वातन्त्र्येति । सति तस्मिन्सिद्धमर्थमाह । नादेयेति । यो मत्स्योऽसङ्गे प्रतीचि दृष्टान्तः स स्वतन्त्रो नदीप्रवाहेणाकम्प्यः सिध्यतीत्यर्थः ॥ १०८३ ॥

**यथा सिन्धोर्महामत्स्य उभे कूले मिथः पृथक् ॥**
**अनुक्रमेण संचरन्मत्स्योऽन्यः कूलतो मतः ॥ १०८४ ॥**

विशेषणार्थमुक्त्वा दृष्टान्तं व्याचष्टे । यथेति । महामत्स्यो नद्या द्वे कूले परस्मादपरमपरस्माच्च परमित्यनुक्रमेण संचरन्द्वाभ्यां कूलाभ्यां यथा पृथग्भवतीत्यर्थः । तदेव स्पष्टयति । अनुक्रमेणेति ॥ १०८४ ॥

**कूलाभ्यां क्रमसंबन्धाद्व्यतिरेकाच्च कूलतः ॥**
**स्रोतोमध्ये द्वयाप्राप्तेरसङ्गोऽयं तिमिर्यथा ॥ १०८५ ॥**
**जाग्रत्स्वप्नकुलायाभ्यां क्रमसंबन्धतस्तथा ॥**
**व्यतिरेको द्वयाप्राप्तेरसङ्गोऽयं पुमानपि ॥ १०८६ ॥**

मत्स्यस्य ससङ्गित्वात्कथमसङ्गे प्रतीचि दृष्टान्तस्तत्राऽऽह । कूलाभ्यामिति । द्वयाप्राप्तेर्द्वयोरपि कूलयोः स्रोतोमध्ये प्राप्त्यभावान्मध्यस्थो मत्स्योऽसङ्गो भवतीति यावत् । उक्तदृष्टान्तमनूद्य दार्ष्टान्तिकं व्याचष्टे । यथेत्यादिना । द्वयाप्राप्तेर्द्वयोः स्थूलसूक्ष्मदेहयोः सुषुप्ते प्राप्त्यभावादित्यर्थः ॥ १०८५ ॥ १०८६ ॥

**युगपत्स्याद्द्वयोर्भोगो जाग्रत्स्वप्नकुलाययोः ॥**
**भूतमात्राविशेषत्वात्ताभ्यामात्मा न चेत्पृथक् ॥ १०८७ ॥**

देहात्मवादी तु जाग्रत्स्वप्नदेहातिरिक्तमात्मानमनङ्गीकुर्वन्नसङ्गत्वं तस्य नाङ्गी कुरुते तं प्रत्याह । युगपदिति । ननु जाग्रद्देहकाले न स्वप्नदेहोऽस्त्यारम्भकाभावात्तत्कुतो भोगयौगपद्यमत आह । भूतेति । यद्यात्मा देहद्वयान्न पृथगिष्टस्तदा तदारम्भकाविशेषाद्भोगयौगपद्यमापद्येतेति योजनीयम् । नच जाग्रद्देहारम्भकाणामेव भूतानां स्वप्नदेहारम्भकत्वात्तद्रूपावरुद्धानां तदैवान्यदेहारम्भकत्वासंभवस्तथा सति पार्श्वस्थैः सुप्तस्य पूर्वदेहानुपलब्धिप्रसङ्गात्तदारम्भकाणां ततोऽपसृत्य देहान्तरात्मनाऽसंहतेरिति भावः ॥ १०८७ ॥

**संबन्धं कुर्वते केचिदन्यथैव महाधियः ॥**
**महामत्स्यादिवाक्यस्य स यथोक्तस्तथोच्यते ॥ १०८८ ॥**

---

१ ख. ग. सचागन्त । २ क. ननु ।

महामत्स्यवाक्यं भाष्यानुसारेण व्याख्यातमधुना तद्वाक्यादिसंदर्भस्य भर्तृप्रपञ्चोक्तं संबन्धमाह । **संबन्धमिति** । महामत्स्यवाक्यमादिर्यस्य स्त्रीवाक्यान्तवाक्यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः । कथं तस्य भाष्योक्तसंबन्धाद्विधान्तरेण संबन्धस्तैरुक्तस्तत्राऽऽह । **स इति** ॥ १०८८ ॥

**बाह्यं कर्मास्य बुद्ध्यादिप्रयोगाश्रितमेव हि ॥**
**पुंसः किल ततोऽभ्येत्य भावनाऽऽप्नोति देहिनम् ॥ १०८९ ॥**
**तस्या विवेको व्याख्यातो यथोक्तवचसाऽऽत्मनः ॥**
**अविद्या त्वात्मविज्ञानसंश्रितैव न साऽन्यतः ॥ १०९० ॥**

अन्यथासंबन्धोक्तिं प्रकटयन्नादौ तदीयवृत्तानुवादं दर्शयति । **बाह्यमिति** । अस्य पुंसो बाह्यमसंसर्गि शुभादिकर्मेत्यत्र हेतुमाह । **बुद्ध्यादीति** । बुद्ध्यादिलक्षणः सूक्ष्मोपाधिरेव प्रयोगहेतुत्वात्प्रयोगस्तदाश्रितत्वात्कर्मणो नाऽऽत्मस्थतेत्यर्थः । **यथाऽऽहुः—** अस्य हि पुरुषस्य बाह्यं कर्म बुद्ध्यादिप्रयोगाश्रितमिति । कर्मविवेके कामविवेकस्यापि सिद्धत्वात्किमित्यसङ्गवाक्यमित्याशङ्क्याऽऽह । **पुंस इति** । कर्मकृता भावना तदाश्रये बुद्ध्यादावध्यासे सा तस्मादात्माभिमुख्येनाऽऽगत्य तं किलाऽऽश्रयत्यतस्तस्याः कर्मसहितायाः पुंसः सकाशाद्विवेकोऽसङ्गो हीत्यादिनोक्त इत्यर्थः । **तदुक्तं** ततः कर्मणो भावना समेत्यैनमास्कन्दति तयोर्विवेको व्याख्यात इति । कामकर्मविवेकं कृतमनूद्य वक्ष्यमाणसंबन्धोपयोगित्वेनाविद्यावृत्तमाह । **अविद्येति** । आत्मनो विज्ञानं चैतन्यं तदाश्रितैवाविद्या न त्वन्याश्रिताऽऽश्रयान्तराभावान्नापि स्वतन्त्रा स्वरूपविरोधादविद्या पुनः स्वविज्ञानाश्रयैवेति चोक्तमित्यर्थः ॥ १०८९ ॥ १०९० ॥

**यत्तद्विज्ञानमात्मीयं तद्विकृत्यावतिष्ठते ॥**
**मिथ्याज्ञानग्रहायासावविद्या प्रत्यगात्मनः ॥ १०९१ ॥**

आत्माश्रिताविद्यायाः कार्यद्वयमाह । **यत्तदिति** । **उक्तं च** तदेव विज्ञानं विकृत्य विपरीतग्रहाय प्रकल्पयतीति ॥ १०९१ ॥

**अविद्याविषसंदष्टं तज्ज्ञानं परमात्मनः ॥**
**पारंपर्येण बुद्ध्यादौ स्थूलीभावं निगच्छति ॥ १०९२ ॥**

अविद्याकृतचैतन्याविकारस्वरूपं निरूपयति । **अविद्येति** । तत्खल्वात्मचैतन्यमविद्याग्रस्तं बुद्ध्यादिद्वारा शब्दादिप्रवणं भवतीत्यर्थः ॥ १०९२ ॥

**स्थूलीभूता बहिः सेयं प्रकाशत्वाय कल्पते ॥**
**एवं बहिरविद्येयं निष्क्रामत्यात्मनः पृथक् ॥ १०९३ ॥**

संप्रत्यविद्योत्थमिथ्याज्ञानस्वरूपमाह । **स्थूलीभूतेति** । सेयमविद्या बुद्ध्यादिद्वारा

१ घ. °ध्यास्ते सा। २ क. ग. °षयं दष्टं ।

शब्दादिभावमापन्ना चैतन्यस्य विषयप्रकाशनहेतुः स चार्थप्रकाशो मिथ्याधीरित्यर्थः । उक्तं हि स विज्ञानविशेषो बुद्ध्यादिपरंपरया स्थूलीभूतो बाह्यः प्रकाशो व्यवहाराय कल्पत इति । उक्तमविद्यावृत्तं निगमयति । **एवमिति** । उक्तरीत्या चैतन्यमविद्या चोभयं मिथोबद्धमात्मनो बहिर्नानामुखं निर्गच्छतीत्यर्थः ॥ १०९३ ॥

**स्वप्ने विवेको व्याख्यातः कर्मणोऽस्याऽऽत्मनोऽधुना ॥**
**अविद्याप्रविवेकोऽयं वक्ष्यतेऽस्यात उत्तरम् ॥ १०९४ ॥**

महामत्स्यादिग्रन्थस्य संबन्धं वक्तुं पातानिकां कृत्वा तमाह । **स्वप्न इति** । कर्मग्रहणं कामोपलक्षणम् । संबन्धस्यैवं सत्त्वादुपपन्नमुत्तरं ग्रन्थजातमित्याह । **अत इति** । यदाहुः—य आसङ्गकृतः संसर्गस्तेन विवेको व्याख्यातो यस्त्वविद्याकृतः संसर्गस्तेन विवेको व्याख्यातव्य इति ॥ १०९४ ॥

**कर्मणा निर्मितं लोकमात्मा पश्यत्यविद्यया ॥**
**तयोर्विवेकादुभयोः स्वाभाव्यं प्रतिपद्यते ॥ १०९५ ॥**

कर्मविवेके सति कृतमविद्याविवेकेनेत्याशङ्क्याऽऽह । **कर्मणेति** । द्वयोर्विवेकादात्मनो मुक्तिर्न कर्ममात्रविवेकादविद्याविवेकाभावे ततोऽनर्थोदयादित्यर्थः ॥ १०९५ ॥

**रूपादिविषयासङ्गः करणैश्चक्षुरादिभिः ॥**
**अनुप्रविश्य भोक्तारं रञ्जयित्वाऽवतिष्ठते ॥ १०९६ ॥**

तर्हि तयोरेव विवेकोऽस्तु किं कामविवेकेनेत्याशङ्क्य तस्यापि कार्यार्थं कामस्यानर्थहेतुत्वमाह । **रूपादीति** ॥ १०९६ ॥

**विज्ञानं पौरुषं शुद्धं तेनाऽऽसङ्गेन दूषितम् ॥**
**तमेवाऽऽसृत्य[1] निर्गम्य बाह्यतो व्यवतिष्ठते ॥ १०९७ ॥**

करणद्वारकस्य कामस्य भोक्तरि रञ्जितत्वेऽपि कथमनर्थहेतुत्वं तत्राऽऽह । **विज्ञानमिति** । यथाऽऽहुः[2]—आसङ्गस्तु विषयेन्द्रियद्वारेण बहिष्ठः समागम्याऽऽत्मानमनुप्रविशतीति । चैतन्यस्य कामकलुषितत्वे प्राप्तां दशामाह । **तमेवेति** । विषयप्रवणमासङ्गमनुसृत्य चैतन्यमात्मनो निर्गम्य विषयाधीनं सुखदुःखाद्यनर्थभाग्भवतीत्यर्थः ॥ १०९७ ॥

**आसङ्गाविद्ययोरेवमन्योन्याश्रयतोदिता ॥**
**अभावादनयोरात्मा स्वात्मस्थः संप्रसीदति ॥ १०९८ ॥**

अविद्ययाऽऽत्मनो विषयप्रावण्यमुक्तं त्यक्त्वा कथं कामवशात्तदुच्यते तत्राऽऽह । **आसङ्गेति** । अविद्याद्वारा तस्याऽऽत्मसंबन्धस्तत्रानर्थाधायकत्वं चेत्येवमनयोर्गुणप्रधानत्वेन मिथोयोगान्न पूर्वापरविरोध इत्यर्थः । कामाविद्ययोरनर्थहेतुत्वे तदभावादात्मनो मुक्तिरिति तद्विवेकः कार्य इत्याह । **अभावादिति** ॥ १०९८ ॥

---

१ ख. °वाऽऽश्रित्य । २ घ. यदाहुः ।

**प्रसिद्धमेतल्लोकेऽपि यदि रोगादिसंगतिः ॥**
**न भवत्यथ जल्पन्ति स्वस्थोऽयमिति लौकिकाः ॥ १०९९ ॥**

अनर्थहेतुयोगाभावे स्वास्थ्यमित्यत्र लोकप्रसिद्धिमाह । **प्रसिद्धमिति** ॥ १०९९ ॥

**निरासङ्गस्य विदुषस्तस्मान्मुक्तिं प्रतीमहे ॥**
**स्यादन्यतरवैकल्ये न वेत्येतदनिश्चितम् ॥ ११०० ॥**

कामाविद्ययोर्विवेकस्य कार्यत्वमुपसंहरति । **निरासङ्गस्येति** । अध्ययनार्थस्य धातो-रिङोऽध्युपसर्गस्याधिकार्थशून्यस्योपलक्षणत्वमुपेत्य प्रतीत्युपसर्गः । तथाच प्रतीमहे विशिष्टस्याधिकारिणो जानीमोऽध्ययनवशान्मुक्तिरित्यर्थः । तस्मादासङ्गादिराहित्या-दिति यावत् । अविद्याविवेकादेव मुक्तिसिद्धौ कृतं कामकर्मविवेकेनेत्याशङ्क्याऽऽह । **स्यादिति** । कामकर्मविवेकयोरन्यतरस्याप्यसत्त्वेनाविद्याविवेको मुक्तिर्वा न निर्धार्यते किमु द्वयोरविवेके तस्मादविद्याविवेकार्थमेव तयोर्विवेकः कार्य इत्यर्थः ॥ ११०० ॥

**तद्यथा श्येन इत्यस्माद्यावत्स्त्रीब्राह्मणादिति ॥**
**अविद्याप्रविवेकार्थमेवमेतावदुच्यते ॥ ११०१ ॥**

अविद्याविवेकस्य मोक्षार्थतया फलवत्त्वेऽपि तदर्थमुत्तरं ग्रन्थजातमित्ययुक्तमुत्तरत्रा-विद्याविवेकस्य क्वाप्यदृष्टेरित्याशङ्क्याऽऽह । **तद्यथेति** । आ श्येनवाक्यादा च स्त्रीवा-क्याद्यावत्परिमाणपरिमितमेतद्वाक्यमेतावत्सर्वमविद्यायाः सकाशात्प्रतीचो विवेकार्थमि-त्येवमुच्यते विद्वद्भिरित्यर्थः ॥ ११०१ ॥

**स्वप्नजाग्रत्प्रचारेऽस्मिन्नात्मा श्येनः पतन्निव ॥**
**परिश्रान्तः सुषुप्ताख्यं नीडं धावत्यथाऽऽत्मनः ॥ ११०२ ॥**

श्येनवाक्ये कथमविद्याविवेकस्य मोक्षार्थतया धीरित्याशङ्क्य तदर्थं तद्व्याचष्टे । **स्वप्नेति** । यथा यत्र तत्र पतन्नाकाशे श्येनः श्रान्तो भूत्वा तत्परिहारार्थं स्वकीयं नीड-मुपसर्पति तथाऽयमात्माऽवस्थाद्वयसंचारे सति तत्प्रयुक्तं श्रममनुभूय सुषुप्ताख्यमज्ञातं ब्रह्म स्वस्याऽऽयतनमासाद्य निर्वृणोतीत्यर्थः । सुषुप्त्यवस्थायां ब्रह्मप्राप्त्या श्रमनिवृत्ति-रनुभवसिद्धेति द्योतयितुमथशब्दः ॥ ११०२ ॥

**कर्माविद्याविनिर्मुक्त एतस्मिन्नेव लक्ष्यते ॥**
**सर्वशोकातिगः स्वस्थः स्तिमितः स्वात्मनि स्थितः ॥११०३॥**

स्वप्नजागरिते हित्वाऽऽत्मा श्रमनिरासार्थं सुषुप्तं गच्छतीत्येतावदत्र प्रतीयते नावि-द्यादिविवेक इत्याशङ्क्याऽऽह । **कर्मेति** । शोकशब्देन कामो गृह्यते[1] । स्वापे मूलावि-द्यासत्त्वेऽपि तन्निर्मोकस्तन्निमित्तविक्षेपाभावादिति द्रष्टव्यम् । सुषुप्ते श्येनवाक्येनोक्तल-क्षणः प्रत्यगात्मा ज्ञायत इत्यर्थः ॥ ११०३ ॥

---

१ घ. 'ते हि श्ये' ।

इति व्याचक्षते केचिन्महामत्स्यादि[1]कां श्रुतिम् ॥
तन्न्याय्यमथवाऽन्याय्यं यत्नान्न्यायैः परीक्ष्यताम् ॥११०४॥

परपक्षमुपसंहरति । इति व्याचक्षत इति । महामत्स्यादिकायाः स्त्रीवाक्यान्तायाः श्रुतेरविद्या[2]विवेकार्थतेत्येवं संबन्धमाहुरित्यर्थः । तत्र दोषं संभावयति । तन्न्याय्यमिति । परकीयसंबन्धवचनं तदा परामृष्टम् । परीक्षायां न्यायाभासनिरासो यत्नः ॥ ११०४ ॥

आत्मवस्त्वतिरेकेण नास्ति वस्त्वन्तरं यदि ॥
बाह्यान्तःप्रविभागोऽयं किमाश्रित्य प्रक[3]ल्प्यते ॥ ११०५ ॥

यत्तावद्बाह्यं कर्मास्येत्यादि तत्राऽऽत्मातिरिक्तं वस्तु नास्त्यस्ति वेति विकल्प्याऽऽद्य-मनूद्य दूषयति । आत्मेति ॥ ११०५ ॥

विषयेन्द्रियादि यद्वस्तु नाविद्याव्यतिरेकि तत् ॥
वस्त्वन्तरस्य सद्भाव ऐकात्म्यं बाध्यते यतः ॥ ११०६ ॥

द्वितीयेऽपि तद्वास्तवमवास्तवं वा प्रथमं प्रत्याह । विषयेति । तस्याविद्याव्यतिरेके हेतुमाह । वस्त्वन्तरस्येति । न च तद्बाध्यमेव नानाविधश्रुतिस्मृतिन्यायविरोधादतो नाऽऽत्मातिरिक्तं वस्तु वास्तवमस्ति द्वितीये पूर्वोक्तकामकर्मविभागकल्पना न प्रमाणव-त्यविद्याद्वारा तज्जस्य सर्वस्याऽऽत्मगामित्वादिति भावः ॥ ११०६ ॥

आसङ्गस्याऽऽगतिरतो विषयेन्द्रियवर्त्मना ॥
न्यायाभावादयुक्तै[4]व नाप्यविद्या तमानयेत् ॥ ११०७ ॥

यत्तु ततोऽस्येत्येत्यादि तत्राऽऽत्मनि कामाप्तिर्विषयादिद्वारा स्यादविद्याद्वारा वा नाऽऽद्य इत्याह । आसङ्गस्येति । वस्तुतो विषयाद्यभावोऽतःशब्दार्थः । कल्पित-विषयादिवशादात्मन्यासङ्गागतिमाशङ्क्याऽऽह । न्यायेति । अविद्यया विषयादेः कल्पितत्वं चेदात्मन्येव तत्कल्पनात्तन्निमित्तासङ्गस्यापि तत्रैव कल्पनान्न बहि[5]ष्ठकामाग-तिकल्पना युक्तेत्यर्थः । कल्पनान्तरं निराह । नापीति । तमासङ्गमिति यावत् ॥ ११०७ ॥

मिथ्याज्ञानमृते नान्यत्कार्यं किंचिदपीष्यते ॥
अविद्याया यतो नात आसङ्गाद्याहृतिः स्वतः ॥ ११०८ ॥

तत्र हेतुः । मिथ्येति । न हि वास्तवं कामाद्याहरणमात्मन्याविद्यं युक्तं भ्रमस्यैव तत्कार्यत्वात्तस्य चावस्तुत्वाङ्गीका[6]रेऽबहिष्ठो नाऽऽत्मनि तदाहृतिस्तत्रैव कल्पनस्योक्त-त्वादित्यर्थः ॥ ११०८ ॥

१ क. ग. °यैः समीक्ष्य° । २ घ. °द्यादिवि° । ३ ग. °कल्पते । ४ ख. ग. °क्तैवं ना° । ५ क. घ. °हिष्ठः का° । ख. °हिष्ठा का° । ६ क. ख. घ. °रे ब° ।

आत्माविद्याप्रसिद्ध्यैव ह्यविद्याऽप्यात्मनो यतः ॥
न स्वतः परतो वाऽतो वस्तुतः प्रत्यगात्मनि ॥ ११०९ ॥

यत्त्वविद्या त्वात्मविज्ञानसंश्रितेति तत्राऽऽह । आत्मेति । तस्याविद्यायोगः प्रातीतिकः प्रामाणिको वाऽऽद्येऽभ्युपगमो न द्वितीयः प्रामाणिकाविद्यासंबन्धे प्रमाणासिद्धेरिति भावः । आत्मनि प्रातिभासिकाविद्यासंबन्धाङ्गीकारद्योतको हिशब्दः । तस्मिन्नागमादिप्रसिध्या चैतन्याङ्गीकारवदित्यपेरर्थः । स्वतो वा हेतुतो वा तत्र वस्तुतोऽविद्यासंबन्धे मानाभावो यत इति सूचितोऽतःशब्देन परामृश्यते ॥ ११०९ ॥

निःशेषविक्रियावर्गप्रतिषेधश्रुतेस्तथा ॥
आत्मज्ञानं विकृत्याऽऽस्तेऽविद्येत्येतच्च दुर्भणम् ॥ १११० ॥

यत्तु यत्तद्विज्ञानमात्मीयमित्यादि तत्राऽऽह । निःशेषेति । तथेत्यात्माविद्यायोगस्य प्रामाणिकताया दुर्वचत्ववदित्यर्थः ॥ १११० ॥

प्रत्यक्चिदाभाविद्याऽतो ह्यविचारितसिद्धिका ॥
सिद्धायते प्रतीचीयं प्राक्सम्यग्ज्ञानजन्मनः ॥ ११११ ॥

तर्हि त्वत्पक्षेऽपि कथं प्रतीच्यविद्योच्यते तत्राऽऽह । प्रत्यगिति । आत्मनो निर्विकारत्वमतःशब्दार्थः । अनिर्वाच्यत्वमविद्यायाश्चिदाभासव्याप्तत्वं तत्त्वज्ञानात्प्रागेव प्रतीचि मिथ्याभासत्वमपरोक्षत्वं चानुभवयुक्तिसमधिगतमिति हिशब्दार्थः ॥ ११११ ॥

जाग्रत्स्वप्नविवेकोऽतो वाक्यार्थप्रतिपत्तये ॥
वाक्यार्थप्रतिपत्त्यैव प्रत्यगज्ञाननिह्नुतिः ॥ १११२ ॥

यत्त्वविद्याविवेकार्थमुत्तरमिति तत्राऽऽह । जाग्रदिति । स्थानत्रये क्रमाक्रमसंचाराज्जागरादौ कामकर्मनिर्मोकात्परिशुद्धस्त्वमर्थो वाक्यार्थस्य ब्रह्मात्मत्वस्य प्रतिपत्त्यर्थमिष्टः पदार्थज्ञानं विना वाक्यार्थज्ञानायोगात्तज्ज्ञानाच्चाज्ञानध्वस्तिरतस्त्वमर्थशुद्ध्यधीनवाक्यार्थज्ञानादज्ञानध्वस्तेर्न पृथगविद्याविवेकोऽपेक्ष्यते यद्यप्यविद्यातज्जविविक्तपदार्थधीर्वाक्यार्थदृष्टावुपयुक्ता तथाऽपि नाविद्याविवेकः श्येनवाक्ये क्रियतेऽज्ञातब्रह्मलक्षणकारणरूपसुप्तिप्राप्तेस्तत्र प्रतीतेरिति भावः ॥ १११२ ॥

जाग्रत्स्वप्नसुषुप्तेषु संचारोऽयं प्रमान्तरात् ॥
सिद्धो यस्मादतस्तस्मिन्वाक्यं स्यादनुवादकम् ॥ १११३ ॥

अवस्थात्रये प्रवृत्तसंदर्भो नान्यशेषः स्वार्थावसानादित्याशङ्क्याऽऽह । जाग्रदिति । अवस्थात्रयसंचारविषयं प्रमान्तरं प्रतिसंधानरूपमुन्नेयम् ॥ १११३ ॥

क्रमसंचारिणस्तस्य जाग्रत्स्वप्नसुषुप्तिषु ॥
ब्रह्मत्वं नान्यतोऽज्ञायि वाक्यं तत्प्रतिपत्तिकृत् ॥ १११४ ॥

---

१ ग. क्रम° ।

महावाक्यमपि जागरादिवाक्यवन्न स्वार्थपरं तदर्थस्यापि सिद्धत्वेन मानान्तरयोग्यत्वादित्याशङ्क्याऽऽह । **क्रमेति** ॥ १११४ ॥

**आत्मनो ब्रह्मता साक्षाद्ब्रह्मणोऽप्यात्मता स्वतः ॥**
**तत्त्वमस्यादिवाक्यस्य विषयोऽयमिहोदितः ॥ १११५ ॥**

ब्रह्मात्मत्वस्य मानान्तरासिद्धत्वं साधयति । **आत्मन इति** । सप्तम्या शास्त्रं परामृश्यते । प्रत्यक्षादेर्निर्विशेषे ब्रह्मात्मैक्येऽप्रवृत्तेर्वाक्यैकगम्यं तदित्यर्थः ॥ १११५ ॥

**महामत्स्याख्यदृष्टान्तः स्वप्नजाग्रदवस्थयोः ॥**
**व्याख्यातोऽप्यन्यथा त्वन्ये दृष्टान्तं व्याचचक्षिरे ॥ १११६ ॥**

महामत्स्यवाक्यादेः स्त्रीवाक्यान्तस्य संदर्भस्य परोक्तं संबन्धं दूषयित्वा महामत्स्यवाक्यव्याख्यानं तदीयमुद्भावयति । **महामत्स्येति** । आत्मनः स्वप्नादौ कामादिविवेके दृष्टान्तो भाष्ये महामत्स्याख्यो व्याख्यातो भर्तृप्रपञ्चास्तु तमेव विधान्तरेण व्याचख्युरित्यर्थः ॥ १११६ ॥

**विज्ञानं प्रस्तुतं तस्मिन्संदेहो नः प्रजायते ॥**
**किमेतद्भौतिकं ज्ञानं भूतेभ्योऽन्यस्य चाऽऽत्मनः ॥ १११७ ॥**

विधान्तरं दर्शयितुं विचारं करोति । **विज्ञानमिति** ॥ १११७ ॥

**विज्ञानं भौतिकं तावद्भूतसंसर्गजन्मनः[1] ॥**
**यथैव बाह्यनयनप्रकाशार्थाभिसंगतेः ॥ १११८ ॥**
**विषयज्ञानजन्मैवमात्मनो भूतसंगतेः ॥**
**बुद्धीन्द्रियादिसंसर्गादभिव्यक्तिः समीक्ष्यते ॥ १११९ ॥**
**संविज्ज्ञानविशेषस्य तथा सति न किंचन ॥**
**व्यतिरिक्तस्य विज्ञातुर्विज्ञानेऽस्ति प्रयोजनम् ॥ ११२० ॥**

पूर्वपक्षयति । **विज्ञानं भौतिकमिति** । उक्तं हेतुं दृष्टान्तेन स्पष्टयति । **यथेति** । **बुद्धीन्द्रियादी**त्यादिपदमर्थसंग्रहार्थम् । संविदेव ज्ञानविशेषो विषयोपलम्भस्तस्येति यावत् । उक्तं हि यथैव बाह्यचक्षुषः प्रकाशार्थयोः संसर्गाद्विशेषप्रकाशनाभिव्यक्तिरेवं बुद्धीन्द्रियसंसर्गादुपलब्धिविज्ञानाभिव्यक्तिरिति । तस्य भौतिकत्वे फलितमाह । **तथेति** । ॥ १११८ ॥ १११९ ॥ ११२० ॥

**इत्येवं चोदिते कैश्चिदत्र प्रतिविधीयते ॥**
**व्यतिरिक्तो न चेज्ज्ञाता भूतेभ्योऽभ्युपगम्यते ॥ ११२१ ॥**

देहात्मवादमनूद्य परिहरति । **इत्येवमिति** । प्रतिविधानं प्रकटयन्विज्ञानस्य भौतिकत्वमनुद्रवति । **व्यतिरिक्त इति** ॥ ११२१ ॥

---

१ ख. ग. °न्मतः ॥ य° ।

**तुल्यत्वाद्भूतमात्राणां स्वप्नजाग्रदवस्थयोः ॥**
**विज्ञानजन्म युगपत्तदा प्राप्नोति ते ध्रुवम् ॥ ११२२ ॥**

तत्र दोषमाह । **तुल्यत्वादिति** । **यथाऽऽहुः**—यदि व्यतिरिक्तो विज्ञाता न स्यात्तेन स्वप्नकाले भौतिकस्यैव ज्योतिषोऽविशेषारम्भे सति स्वप्नबुद्धान्तयोर्भूतमात्राणामविशेषेण विद्यमानत्वाद्यौगपद्येनोभयत्रोपलब्धिः स्यादिति ॥ ११२२ ॥

**क्रमवृत्तेस्तु बोधस्य न बोधो भौतिकस्ततः ॥**
**अन्यस्यैव हि संवित्स्यात्स्वप्नबुद्धान्तनीडतः ॥ ११२३ ॥**
**इत्यस्यार्थस्य विज्ञप्त्यै दृष्टान्तोऽत्राभिधीयते ॥**
**क्रमेण संचरन्नद्यां महामत्स्यो यथा बली ॥ ११२४ ॥**

प्रसङ्गस्येष्टत्वमाशङ्क्याऽऽह । **क्रमवृत्तेरिति** । प्रसङ्गफलमाह । **नेति** । तदुक्तं[1] न तु भवतीति । विज्ञानस्याभौतिकत्वे फलितमाह । **अन्यस्येति** । तच्चोक्तमुभयोरप्यनयोः कुलाययोः स्वप्नबुद्धान्तयोरन्यो व्यतिरिक्तः परिद्रष्टेति । यथोक्तभर्तृप्रपञ्चभाष्यद्योती हिशब्दः । तत्र वाक्यमवतारयति । **अस्येति** । दृष्टान्तभागस्यार्थमाह । **क्रमेणेति** । संचरन्वर्तत इति शेषः । नादेयस्रोतसा कम्प्यताराहित्यं बलीयस्त्वम् ॥ ११२३ ॥ ॥ ११२४ ॥

**मत्स्याभिसंगतिर्यद्वत्पर्यायेणेह कूलयोः ॥**
**क्रमेण ज्ञातृसंबन्धस्तद्वत्स्वप्नप्रबोधयोः ॥ ११२५ ॥**

दृष्टान्ते विवक्षितमनूद्य दार्ष्टान्तिकमाह । **मत्स्येति** । नदी सप्तम्यर्थः ॥ ११२५ ॥

**व्यापित्वादात्मनोऽप्येवं युगपज्ज्ञातृतेति चेत् ॥**
**भूतमात्रावदित्येवं समानं चोद्यमावयोः ॥ ११२६ ॥**

स्वप्नजागरयोर्ज्ञानयौगपद्याद्[2]देहातिरिक्तो द्रष्टेत्युक्तमिदानीं देहात्मवादे दर्शितप्रसङ्गस्यातिरिक्तात्मवादेऽपि साम्यं शङ्कते । **व्यापित्वादिति** । देहस्याऽऽत्मत्वे स्वप्नजाग्रद्देहद्वये युगपद्भोगाप्तिरिति यदुच्यते तद्देहातिरिक्तत्वेऽपि तुल्यमात्मनो देहद्वयव्यापित्वेन युगपज्ज्ञातृत्वसंभवादित्यर्थः । आत्मनोऽपि व्यापित्वे स्वप्नबुद्धान्तयोः सांनिध्याद्यौगपद्येनोपलब्धिविज्ञानेन भवितव्यमिति हि वदन्ति । यथा देहात्मवादे देहद्वयारम्भकभूतमात्राणामविशेषादवस्थाद्वये भोगयौगपद्यं स्यादित्यापाद्यते तथा त्वन्मतेऽपि प्रागुक्तनीत्या स्यादिति चोद्यसाम्यं निगमयति । **भूतेति** ॥ ११२६ ॥

**कस्तर्हि क्रमहेतुः स्याद्दैवताहेतुकोऽस्तु सः ॥**
**क्रमेण वृत्तिस्तासां स्यादधिष्ठातृत्वकारणात् ॥ ११२७ ॥**

देहकृतं वा तदतिरिक्तात्मकृतं वा स्थानद्वये ज्ञाना[3]यौगपद्यं नेष्यते चेत्तर्हि ज्ञानक्रमे

---

१ क. यदुक्तं । २ क. घ. °र्ज्ञानायौ° । ३ ख. ज्ञानयौ° ।

को हेतुरिति पृच्छति । **कस्तर्हीति** । देवतात्मवाद्याह । **देवतेति** । आदित्यादिप्रयुक्तो ज्ञानक्रमस्तत्र कथं प्रतिज्ञायते तत्राऽऽह । **क्रमेणेति** । **तदाहुस्तासां चाधिष्ठात्रीणां** पर्यायेण वृत्तिरुपपद्यत इति ॥ ११२७ ॥

**अत्रापि युगपज्ज्ञानमुक्तयोः पक्षयोर्यथा ॥**
**व्यापित्वाद्देवतानां स्यात्स्वप्नजाग्रदवस्थयोः ॥ ११२८ ॥**

देवतापक्षेऽपि ज्ञानयौगपद्यं दुर्वारमिति दूषयति । **अत्रापीति** ॥ ११२८ ॥

**असंभवात्प्रयत्नस्य युगपद्देवतात्मनः ॥**
**नातः स्याद्युगपज्ज्ञानमिति चेन्न तथाऽपि तत् ॥ ११२९ ॥**

धर्मादिप्रयत्नापेक्षया देवताया ज्ञानहेतुत्वं स च युगपन्न संभवत्यतो व्यापित्वेऽपि तस्यास्तत्प्रयुक्तं ज्ञानमवस्थाद्वयेऽपि क्रमभावीति देवतावाद्याह । **असंभवादिति** । कर्मादिप्रयत्नकृतेऽपि ज्ञानक्रमे देवतायास्तत्र न प्रयोजकतेति दूषयति । **नेति** ॥ ११२९ ॥

**प्राहाऽऽत्मपक्षवाद्यत्र सिद्धं नो यत्समीहितम् ॥**
**कुतस्तदिति चेन्मत्तः शृणु सर्वं यथोच्यते ॥ ११३० ॥**

तदेवोपपादयति । **प्राहेति** । धर्मादेर्ज्ञानायौगपद्यहेतुत्वे कथं त्वदिष्टसिद्धिरित्याह । **कुत इति** । परिहरति । **मत्त इति** ॥ ११३० ॥

**सर्वत्र यौगपद्यं स्याद्विभुत्वाद्देवतात्मनः ॥**
**ऐश्वर्याच्च प्रयत्नोत्थकार्येष्वस्याऽऽत्मनो न तु ॥ ११३१ ॥**

स्वपक्षसिद्धिं दर्शयितुं देवतापक्षेऽनुपपत्तिमाह । **सर्वत्रेति** । यौगपद्यं देवताकृतस्य ज्ञानस्येति शेषः । यद्यपि विभ्वी देवता तथाऽपि धर्माद्यपेक्षया क्रमकारिणीत्युक्तं तत्राऽऽह । **ऐश्वर्यादिति** । धर्मादौ तत्कृतकार्येषु च स्वातन्त्र्याद्देवताया न धर्मादितन्त्रतेत्यर्थः । आत्मनि विशेषमाह । **अस्येति** । आत्मनो धर्मादौ तत्कार्येषु चानैश्वर्यात्तत्तन्त्रतया क्रमज्ञातृत्वसिद्धिरित्यर्थः । **उक्तं** हि देवताया विभुत्वात्प्रयत्नकार्येषु यौगपद्यं न तु विज्ञानात्मन इति ॥ ११३१ ॥

**अधिष्ठेयेन्द्रियाणां हि स्वप्नभूमावसंभवात् ॥**
**व्यापारो नास्त्यतः स्वप्ने देवतानां मनागपि ॥ ११३२ ॥**

इतश्च स्वप्नादौ देवताया न ज्ञानक्रमहेतुतेत्याह । **अधिष्ठेयेति** । स्वप्नभूमाविन्द्रियाणामसंभवप्रसिद्धिद्योतको हिशब्दः । अधिष्ठेयमन्तरेणाधिष्ठातृत्वायोगोऽतः शब्दार्थः ॥ ११३२ ॥

---

१ क. ंति । प्रं । २ घ. ंपद्यादें । ३ ख. घ. ंभवे प्रं ।

**अतो भोक्ता स्वयंसिद्धो यथोक्तेनैव हेतुना ॥**
**प्रयत्नायौगपद्येन स्वप्नजाग्रद्द्वयाद्धिरुक् ॥ ११३३ ॥**

तस्या ज्ञानक्रमहेतुत्वायोगे फलितं निगमयति । **अत इति** । देहदेवतापक्षयोर्ज्ञानक्रमायोगात्क्रमभाविधर्माद्यपेक्षया चाऽऽत्मनस्तत्संभवादात्मा स्वप्नजाग्रद्देहद्वयव्यतिरिक्तो भोक्ता सिद्ध इत्यर्थः । **यथाऽऽहुरनेन** भोक्तृत्वप्रयुक्तत्वेन हेतुना प्रयत्नायौगपद्येन व्यतिरिक्तद्रष्टृग्रहणसिद्धिरिति ॥ ११३३ ॥

**आत्मनो भोक्तृतासिद्धिर्ज्ञातृत्वं च प्रसिध्यति ॥**
**व्यापित्वेऽप्यस्य यत्नो य आत्मनः कर्तृतां प्रति ॥ ११३४ ॥**
**न संभवत्यसौ यत्नो यौगपद्येन नीडयोः ॥**
**द्रष्टृत्वात्परिपाट्या स्यात्तस्माद्वृत्तिरिति स्थितम् ॥ ११३५ ॥**

आत्मनो व्यापित्वाद्देहद्वये प्रयत्नयौगपद्यसंभवात्तदयौगपद्यहेतुरसिद्ध इत्याशङ्क्याऽऽह । **आत्मन इति** । व्यापित्वेऽप्यात्मनो भोक्तृत्वादि क्रमेण सिध्यति भोगज्ञानकर्तृतां प्रति तस्य हेतुभूतधर्मादिप्रयत्नस्य यौगपद्यायोगात्स्वप्नजाग्रद्देहयोर्ज्ञानादिक्रमहेतोर्धर्मादेः क्रमेणैव कार्यानुपपत्तिसिद्धत्वात्तस्मादात्मनो देहद्वये क्रमेणैव ज्ञातृत्वादिस्थितिरिति[1] सिद्धं भवतीत्यर्थः । **यथोक्तं** तस्य हि स्वप्नान्तबुद्धान्तयोर्व्यापित्वेऽपि योऽसौ द्रष्टृत्वेन कर्तृत्वं प्रति यत्नो न स यौगपद्येन संभवति तस्मात्तस्य पर्यायेण द्रष्टृत्वे प्रवृत्तिरित्यवस्थितं भवतीति ॥ ११३४ ॥ ७७३५ ॥

**अयौगपद्यदर्शित्वमात्मास्तित्वेऽनुमेष्यते ॥**
**तथा तद्व्यतिरिक्तत्वे जाग्रत्स्वप्नकुलायतः ॥ ११३६ ॥**

देहात्मवादिना सहाऽऽत्मवादिनश्चोद्यसाम्यं समाधायातिरिक्तात्मास्तित्वे किमत्र मानं विवक्षितमित्यपेक्षायामाह । **अयौगपद्येति** । विमतो देहादेरतिरिच्यते क्रमद्रष्टृत्वाद्गन्धरसादिद्रष्टृदेवदत्तवद्विपक्षे दृष्टिक्रमानुपपत्तिरित्यर्थः । **तदुक्तम्**—उपलब्ध्ययौगपद्यमात्मास्तित्वे लिङ्गमिति ॥ ११३६ ॥

**न च स्वप्नविनिर्माणे देवताव्यापृतिर्भवेत् ॥**
**यथास्वं स्थानमायान्ति ता मृतिस्वापयोर्यतः ॥ ११३७ ॥**

व्यतिरिक्तात्मपक्षे ज्ञानक्रममापाद्य देवतायास्तद्धेतुत्वाभावे स्वप्ने तस्या व्यापाराभावमधिष्ठेयेन्द्रियाणां हीत्यत्रोक्तमनुवदति । **न चेति** । तत्र हेत्वन्तरमाह । **यथास्वमिति** । **यथाऽऽहुः**—न हि देवतानां स्वप्नकाले स्वव्यापारस्ता उच्चिक्रमिषोर्लोकान्तरं प्रति विशेषकार्याण्याध्यात्मिकानि हित्वा स्वानि स्थानानि प्रतिपद्यन्तेऽग्निं वागप्येतीत्यादिश्रुतेस्तथा स्वप्नकार्यं प्रतिपित्सोर्देवता अपक्रान्ता भवन्तीति ॥ ११३७ ॥

---

1 घ. 'दिसिद्धिरि' ।

मतं यथा मृतौ देवास्त्यक्त्वा स्वं स्वमनुग्रहम् ॥
देहारम्भे पुनर्देवा यथास्वं कुर्वते क्रियाम् ॥ ११३८ ॥
तद्वत्सुषुप्सोरुत्क्रम्य देवताः स्वाधिकारतः ॥
स्वप्नसर्गे पुनस्ताः स्वमधिकारं प्रकुर्वते ॥ ११३९ ॥

देवताभिरनधिष्ठितस्य स्वप्नकार्यासिद्धेर्न तत्प्रयुक्तं ज्ञानमित्युक्ते दृष्टान्तेन शङ्कते । **मतमिति** ॥ ११३८ ॥ ११३९ ॥

इत्येवं चोदितेऽथात्र परिहारोऽभिधीयते ॥
लिङ्गकार्यानभिव्यक्तेर्नालं कार्याय देवताः ॥ ११४० ॥

परिहारमवतारयति । **इत्येवमिति** । चोद्यस्य परिहारोत्थापकत्वमथशब्दार्थः । तमेव विशदयति । **लिङ्गेति** । स्वप्नेऽपि देवताः समागच्छन्त्योऽपि न जागरवदागन्तुं पारयन्ते किंतु हैरण्यगर्भेण प्राणात्मना लिङ्गभावभाजो भवन्ति न च देवतारूपस्य लिङ्गस्य स्वप्ने कार्योन्मुखत्वेनाभिव्यक्तिर्जागरादविशेषप्रसङ्गात्तन्न स्वप्ने देवताः कार्याय पर्याप्नुवन्तीत्यर्थः । **यथोक्तं** न हि देवता कदाचिल्लिङ्गं जहाति सा त्वनभिव्यक्ते लिङ्गे नालं विशेषकार्यायेति ॥ ११४० ॥

कारणान्यसमर्थानि यथा देहमृते मृतौ ॥
स्वकार्यस्याभिनिष्पत्तौ तथा स्वप्नेऽपि देवताः ॥ ११४१ ॥
करणान्यनपाश्रित्य नालं स्वाधिकृतिं प्रति ॥
स्वप्ने च करणाभावः श्रुत्यैव प्रतिपादितः ॥ ११४२ ॥

उक्तमर्थं दृष्टान्तेन स्पष्टयति । **करणानीति** । अस्तु तान्याश्रित्यैव देवतानां स्वप्ने स्वाधिकारनिर्वाहकत्वं तत्राऽऽह । **स्वप्ने चेति**। श्रुत्या प्राणं तर्हि वागप्येतीत्याद्ययेति यावत् ॥ ११४१ ॥ ११४२ ॥

यत एवमतः स्वप्ने नाऽऽशङ्का देवताः प्रति ॥
अधिकारो यतस्तासामात्मनो देहसंगतौ ॥ ११४३ ॥

देवतायाः स्वप्ने व्यापाराभावे सिद्धे तस्या ज्ञानक्रमहेतुत्वशङ्काऽपि नास्तीत्याह । **यत इति** । तर्हि देहे देवतानां वैयर्थ्यमित्याशङ्क्याऽऽह । **अधिकार इति** । अतो न तासामिह वैयर्थ्यमिति शेषः ॥ ११४३ ॥

मुक्त्वैव देहसंबन्धं स्वप्नोऽयं प्रत्यगात्मनः ॥
बहिष्कुलायवचनादेतच्चाध्यवसीयते ॥ ११४४ ॥

अस्तु तर्हि स्वप्नेऽप्यात्मनो देहसंबन्धे सति देवतानां व्यापारो नेत्याह । **मुक्त्वेति** । आत्मनः स्थूलदेहसंबन्धं विना स्वप्न इत्यत्र मानमाह । **बहिरिति** ॥ ११४४ ॥

---

१ घ. साधनाभि॰ । २ ख. प्रतिपाद्यते ।

**नातो भौतिकमेतत्स्यान्नापि स्याद्देवताकृतम् ॥**
**चैतन्यं स्वप्नगं स्वार्थं शरीरद्वयवर्जनात् ॥ ११४५ ॥**

परपक्षं निराकृत्य स्वपक्षमुपसंहरति । **नात इति** । चैतन्यस्य स्वार्थत्वे हेतुमाह । **शरीरेति** । सूक्ष्मदेहस्य स्वप्ने सत्त्वेऽपि कार्यकरत्वाभावादितरवद्विलीनतेष्टेति भावः ॥ ११४५ ॥

**निरनुग्रहं निष्करणं वासनोपाधिमात्रकम् ॥**
**स्वप्नदर्शनमेतत्स्यात्प्रत्यग्धीवस्तुसंश्रयम् ॥ ११४६ ॥**

देवतानामपि तत्र लिङ्गातिरेकेण लीनत्वमाह । **निरनुग्रहमिति** । करणानामपि तत्र संह्तत्वमाह । **निष्करणमिति** । सुषुप्ताद्विशेषार्थं विशिनष्टि । **वासनेति** । तस्य साक्षिवेद्यत्वमाह । **प्रत्यगिति** । तद्रूपा धीरेव वस्तु तत्रस्थं तद्बलादेव स्वप्नदर्शनं सिध्यतीत्यर्थः । **उक्तं हि**—उभयोः कालयोर्व्यतिरेकाव्यतिरिक्तो द्रष्टा न भौतिकं दर्शनं नापि देवताकृतमिति ॥ ११४६ ॥

**पृथक्त्वे वाऽपृथक्त्वे वा भूतेभ्यो देवतात्मनः ॥**
**किमर्थं देवताशङ्का क्रियते हिरुगात्मनः ॥ ११४७ ॥**

महामत्स्यवाक्यस्य भर्तृप्रपञ्चव्याख्योक्ता तत्र देहात्मवादापोहार्थं तत्प्रवृत्तिमङ्गीकृत्य देवताया ज्ञानकर्महेतुत्वमाशङ्क्य निराकरणमयुक्तमित्याह । **पृथक्त्वे वेति** । अस्यार्थः । देवताया भूतेभ्यो भेदोऽभेदो वाऽऽद्ये तस्या आत्मनः सकाशात्पृथग्ज्ञानकर्महेतुत्वमाशङ्क्य न शक्यते निराकर्तुमात्माव्यतिरिक्तया तस्यास्तद्धेतुत्वस्येष्टत्वाद्द्वितीये तस्या देहाव्यतिरेकाद्देहवादनिराकरणेनैव निराकरणान्न पृथगाशङ्का निराकरणं वा तेन देवताया ज्ञानकर्महेतुत्वशङ्कानिरासौ परस्यायुक्ताविति ॥ ११४७ ॥

**मत्स्यदृष्टान्तवचस एतावत्फलमिष्यते ॥**
**मृत्युरूपमिदं सर्वं कार्यं च करणानि च ॥ ११४८ ॥**

परेषां मत्स्यवाक्यव्याख्यानमनुभाष्य तत्र युक्तमुपेत्यायुक्तं निरस्तं संप्रति श्येनवाक्यस्य भाष्योक्तं संबन्धं वक्तुं वृत्तं कीर्तयति । **मत्स्येति** । किं तत्फलं तदाह । **मृत्युरूपमिति** । कामकर्मसहितः संघातो मृत्युरूपो नाऽऽत्मधर्म इत्यर्थः ॥ ११४८ ॥

**ताभ्यां विलक्षणस्त्वात्मा स्वप्ने योऽयं प्रपञ्चितः ॥**
**स्थूलसूक्ष्मशरीराभ्यां केवलश्चेतनोऽक्रियः ॥ ११४९ ॥**

तस्मिन्नात्मत्वप्रसिद्धेरात्मनस्तदन्तर्भावमाशङ्क्याऽऽह । **ताभ्यामिति** । देहद्वयविलक्षणं रूपं ज्ञेयत्वार्थं विशिनष्टि । **केवल इति** ॥ ११४९ ॥

---

१ घ. 'वादापो' ।

तथैव कामकर्मभ्यामत्यन्तं स्याद्विलक्षणः ॥
प्रयोजकाभ्यां देहस्य तथैव करणस्य च ॥ ११५० ॥

देहद्वयविलक्षणस्यापि तत्प्रयोजकयोगे पुनः कार्यकरणादानमाशङ्क्याऽऽह । **तथै-वेति** । प्रयोज्याभ्यां देहाभ्यामिवेति यावत् ॥ ११५० ॥

अविद्याकृतमेवातः संसारित्वं न तु स्वतः ॥
अतोऽविद्यासमुच्छित्तौ मुक्तिः स्यात्परमात्मनः ॥ ११५१ ॥

देहद्वयेन सप्रयोजकेन वस्तुनोऽसंबन्धे फलितमाह । **अविद्येति** । संसारित्वस्याऽऽ-विद्यत्वेनावस्तुत्वे किं स्यात्तदाह । **अत इति** ॥ ११५१ ॥

इत्युक्तः पूर्ववाक्येन समुदायार्थ ईदृशः ॥
पौर्वापर्यं समीक्ष्याऽऽत्मा निष्क्रियः केवलोऽद्वयः ॥ ११५२ ॥

वृत्तानुवादं निगमयति । **इत्युक्त इति** । पूर्ववाक्येन स वा अयं पुरुषो जायमान इत्यारभ्य मत्स्यवाक्यान्तवाक्येनेति यावत् । ईदृशः कार्यकरणाभ्यां सप्रयोजकाभ्या-मन्यः स्वयंज्योतिः स्वतोऽसंसारी प्रत्यगात्मेत्यर्थः । समुदायार्थमेव सौकर्यार्थं संक्षिपति । **पौर्वापर्यमिति** । पूर्वत्र व्याख्यातवाक्यानां पूर्वापरीभावमालोक्य कर्मणा कामेन देहद्व-येन च विविक्तः प्रत्यग्धातुर्नित्यशुद्धत्वादिरूपोऽधिगत इत्यर्थः ॥ ११५२ ॥

अपास्तकार्यकरणकर्मासङ्गो न तु क्वचित् ॥
आत्मोपपादितः साक्षाद्वचस्येकत्र यत्नतः ॥ ११५३ ॥

वृत्तमनूद्योत्तरग्रन्थमवतितारयिषुर्भूमिकामाह । **अपास्तेति** । कामादीनामन्यतमवि-मोके सत्यर्थादितरविनिर्मोकः सिध्यतीत्यभिप्रेत्योक्तं साक्षादिति । निःशेषविशेषशून्ये प्रतीचि दृष्टान्तोपन्यासो यत्नः ॥ ११५३ ॥

सासङ्गश्च समृत्युश्च सकार्यकरणस्तथा ॥
अविद्यया यतो बोध आत्माऽयमुपलक्ष्यते ॥ ११५४ ॥

एतदेवोपपादयति । **सासङ्गश्चेति** । अतो जागरितविषये वाक्ये पूर्वोक्तः प्रत्यगात्मा न प्रतिपादित इति शेषः ॥ ११५४ ॥

स्वप्ने तु वासनाकामसंयुक्तो मृत्युवर्जितः ॥
संप्रसादे प्रसन्नश्च तथाऽसङ्गोऽपि वीक्ष्यते ॥ ११५५ ॥

स्वप्नवाक्ये तर्हि तत्सिद्धिरित्याशङ्क्याऽऽह । **स्वप्ने त्विति** । तर्हि सुषुप्तिवाक्ये तत्सिद्धिर्नेत्याह । **संप्रसाद इति** । न च मा तर्हि भूदात्मा यथोक्तरूप इति वाच्यमे-कवाक्यतया पूर्ववाक्येभ्यस्तत्सिद्धेर्न च तैरेवोक्तात्मसिद्धेरलमुत्तरेणेति युक्तं न हि पूर्वत्र

---

१ ख. °स्तुतोऽसं° ।

कार्यकरणकामकर्मादिनिर्मुक्तमात्मरूपमेकस्मिन्वाक्ये पुञ्जीकृतं न चैकत्र तत्पुञ्जीकरण-मनुपयोगि सुखप्रतिपत्त्यर्थत्वादिति भावः ॥ ११५५ ॥

तद्वा अस्यैतदित्यत्र यथोक्तं रूपमात्मनः ॥
वक्ष्यमाणमतस्तस्य दृष्टान्तोऽयमिहोच्यते ॥ ११५६ ॥

पातनिकां कृत्वा श्येनवाक्यमादत्ते । तद्वा इति । तद्वा अस्यैतदतिच्छन्दा अपहत-पाप्मेत्यादावेकत्र पुञ्जीकृत्य वक्ष्यमाणात्मरूपस्य दृष्टान्तार्थं श्येनवाक्यमित्यर्थः । तदेव वाक्यमिहेत्युच्यते ॥ ११५६ ॥

स्वतो बुद्धं च शुद्धं च मुक्तं रूपमिहाऽऽत्मनः ॥
एकवाक्योपसंहारे न पुञ्जीकृत्य दर्शितम् ॥ ११५७ ॥

उक्तां संगतिं व्यक्तीकर्तुं भूमिकामनुभाषते । स्वत इति । एकवाक्यतयोपसंगृह्य-माणपदसमुदाये नित्यशुद्धत्वादिकमात्मरूपं नाधस्तात्पिण्डीकृत्योक्तमिति यावत् ॥ ११५७ ॥

तद्यथा श्येन इत्युक्त्या तद्दृष्टान्तप्रदर्शनात् ॥
शुद्धबुद्धादिकं रूपमात्मनः संप्रदर्श्यते ॥ ११५८ ॥

अथोक्तं संबन्धमनुवदति । तद्यथेति । तदात्मनो यथोक्तं रूपं तद्वा अस्येत्याद्ययो-क्त्या यतः सम्यक्प्रदर्श्यतेऽतस्तस्यार्थस्य दृष्टान्तप्रदर्शनं निमित्तीकृत्य तद्यथेत्यादिश्ये-नवाक्यं प्रवृत्तमित्यर्थः ॥ ११५८ ॥

स्वप्नबुद्धान्तयोर्वेह दृष्टान्तः संप्रदर्शितः ॥
संप्रसादस्य दृष्टान्तः श्येनेनाथाधुनोच्यते ॥ ११५९ ॥

भाष्योक्तं संबन्धमनूद्य संबन्धान्तरमाह । स्वप्नेति । दृष्टान्तो महामत्स्याख्य इति शेषः । महामत्स्यवाक्योक्तमनूद्य श्येनवाक्यमादत्ते । संप्रसादस्येति ॥ ११५९ ॥

श्येनः शशादो विज्ञेयो बृहत्कायश्च रोहितः ॥
क्षिप्रः श्येनः सुपर्णस्तु बलवानल्पविग्रहः ॥ ११६० ॥

श्येनसुपर्ण[२]पदयोरर्थभेदोक्त्या पुनरुक्तिं परिहरति । श्येन इति ॥ ११६० ॥

श्येनः श्रान्तो यथाऽऽकाशे भक्ष्यहेतोः परिभ्रमन् ॥
पक्षौ वितत्य नीडं स्वमेति हि श्रमहानये ॥ ११६१ ॥

दृष्टान्तभागं योजयति । श्येनः श्रान्त इति । वितत्य विस्तृत्य श्रान्तिमनुभूया-[१]तस्तौ संगमय्य स्वनीडागमनाभिमुख्यं तयोरापाद्येत्यर्थः । श्रान्तस्य पक्षिणः श्रमनिरा-सार्थं स्वनीडागमनं लोकप्रसिद्धमिति हिशब्दार्थः ॥ ११६१ ॥

---

१ ख. °क्त्वा दृष्टान्तस्य प्र° । २ घ. °र्णशब्दयो° ।

**यथा तथाऽयमप्यात्मा जाग्रत्स्वप्नौ परिभ्रमन् ॥**
**श्रान्तस्तच्छ्रमहानार्थं ब्रह्मनीडं प्रपद्यते ॥ ११६२ ॥**

दृष्टान्तमनूद्य दार्ष्टान्तिकमाह । **यथेति** । अन्ताय धावतीत्यस्यार्थमाह । **ब्रह्मेति** ॥ ११६२ ॥

**अन्ताय धावतीत्युक्तं तस्यान्तस्य विशेषणम् ॥**
**यत्र सुप्तो न कमिति जाग्रत्स्वप्ननिषेधकृत् ॥ ११६३ ॥**

कथमन्तशब्देन ब्रह्मग्रहणमित्याशङ्क्योक्तानुवादपूर्वकं विशेषणद्वयमादत्ते । **अन्तायेति** । तस्य कृत्यं दर्शयति । **जाग्रदिति** ॥ ११६३ ॥

**सुप्तास्तिसृष्ववस्थासु सामान्येन यतस्ततः ॥**
**विशिनष्ट्यात्मनः स्वापं यत्र सुप्तगिरा स्फुटम् ॥ ११६४ ॥**

सुप्तविशेषणेनैव जाग्रन्निवृत्तेर्न कंचन काममित्याद्यनर्थकमित्याशङ्क्याऽऽह । **सुप्त इति** । प्रत्येकमवस्थानां त्रैविध्योक्तेः सामान्येनाऽऽत्माऽवस्थात्रयेऽपि सुप्तो वर्तते तस्माद्यत्र सुप्त इत्युक्तमात्मनः स्वापं न कंचनेत्यादिगिरा स्पष्टीकृत्य विशिनष्टीति योजना ॥ ११६४ ॥

**न कंचनेति कामो यः स्वप्नजाग्रदवस्थयोः ॥**
**निषिध्यते सुषुप्तेऽसौ तथा स्वप्नोऽपि यस्तयोः ॥ ११६५ ॥**

अस्त्वात्मस्वापस्येदं विशेषणं तथाऽपि तेन कामस्यैव निषेधाज्जाग्रत्स्वप्ननिषेधकृदित्ययुक्तमत आह । **नेत्यादिना** । अवस्थाद्वयस्थकाममात्रस्य स्वापे निषेधादवस्थाद्वयमपि तत्र निषिध्यते चेद्विशेषणान्तरानर्थक्यमित्याशङ्क्याऽऽह । **तथेति** । स्वप्नजागरयोः स्वप्नः सुषुप्ते द्वितीयेन विशेषणेन निषिध्यते तेन तदप्याद्यविशेषणवदर्थवदेव पूर्वत्र कामप्राधान्येनावस्थाद्वयनिषेध उत्तरत्र स्वप्नप्राधान्येनेति भावः ॥ ११६५ ॥

**स्वप्ने वा कामविरहाद्यथोक्तेनैव वर्त्मना ॥**
**जाग्रत्कामनिषेधोऽतस्तत्र कामादिसंभवात् ॥ ११६६ ॥**

आद्यविशेषणस्यार्थान्तरमाह । **स्वप्ने वेति** । यथोक्तेनासङ्गो हीत्युक्तमार्गेणेति यावत् । असङ्गत्वन्यायेन जाग्रत्यपि रागादिराहित्यं तुल्यमित्याशङ्क्याऽऽह । **तत्रेति** । सति मातरि बाधविधुरो जाग्रति कामादिः स्वप्ने तु नैवमित्यर्थः ॥ ११६६ ॥

**एकैकस्यामवस्थायां जाग्रत्स्वप्नसुषुप्तिभिः ॥**
**यदि वा विद्यते भेदः कंचनेति च लिङ्गतः ॥ ११६७ ॥**

द्वितीयविशेषणस्यार्थान्तरमाह । **एकैकस्यामिति** । तत्र हेतुमाह । **कंचने-**

---

१ क. ख. ग. °स्या इति ।

तीति । न कंचन स्वप्नं पश्यतीत्यत्र कंचनेतिभेदद्योतिविशेषणादुक्तभेदसिद्धिरित्यर्थः ॥ ११६७ ॥

**त्रय आवसथा इति तथा च श्रुतिशासनम् ॥**
**जाग्रत्स्वप्नसुषुप्तानां त्रैविध्यप्रतिपादकम् ॥ ११६८ ॥**

अवस्थानां प्रत्येकं त्रैविध्यसाधकं वाक्यान्तरं चास्तीत्याह । **त्रय इति** ॥११६८॥

**तत्र त्रयाणां स्थानानां जाग्रत्स्वप्ननिषेधनम् ॥**
**न कंचनेति वाक्येन तयोरेव ग्रहः श्रुतेः ॥ ११६९ ॥**

सिद्धे त्रैविध्ये किं प्रकृते सिध्यति तदाह । **तत्रेति** । स्थानानां त्रयाणां प्रत्येकं त्रैविध्ये सिद्धे त्रिविधस्य जागरस्याऽऽद्येन त्रिविधस्य च स्वप्नस्य द्वितीयेन विशेषणेन निषेधः सिध्यतीत्यर्थः । तत्र हेतुः । **तयोरिति** । कामस्वप्नशब्दाभ्यां तयोरेव जाग्रत्स्वप्नयोः श्रुत्या ग्रहात्तयोः सर्वप्रकारयोर्निषेधोऽत्र विवक्षित इत्यर्थः ॥ ११६९ ॥

**स्वप्नं न कंचनेत्युक्त्या सर्वस्वप्ननिषेधनम् ॥**
**इति प्रबोधस्वप्नाभ्यां विविक्तं स्थानमुच्यते ॥ ११७० ॥**

विशेषणद्वयार्थमनुवदति । **स्वप्नमिति । कामं न कंचनेत्युक्त्या सर्वजाग्रन्निषेधन**मित्यपि द्रष्टव्यम् । तथाऽपि प्रकृते किं सिध्यति तदाह । **इति प्रबोधेति** ॥११७०॥

**जाग्रत्स्वप्नात्मकौ पक्षौ वितत्याऽऽत्माऽऽत्ममोहवान् ॥**
**भुक्त्वा भोगानथ श्रान्तः पक्षौ संहृत्य चाऽऽत्मनि ॥ ११७१ ॥**

विशेषणार्थमुक्त्वाऽन्ताय धावतीत्यस्यार्थमुपसंहरति । **जाग्रदिति** । अन्तशब्दवाच्यब्रह्मनीडार्थं गच्छतीति शेषः । श्रान्तस्याऽऽश्रयगमनापेक्षाद्योतनार्थोऽथशब्दः ॥ ११७१ ॥

**अविद्यायामवस्थानं तदुद्भूतस्य वस्तुनः ॥**
**संहत्यपक्षोपमया श्रुत्येह प्रतिपाद्यते ॥ ११७२ ॥**

संहत्यपक्षदृष्टान्तेन दार्ष्टान्तिके विवक्षितमंशमाह । **अविद्यायामिति** । पक्षौ संहत्य स्वात्मन्येव संकुचितावयवावापाद्य स्वाश्रये श्रमध्वंसार्थं श्येनस्तिष्ठतीति दृष्टान्तश्रुत्या साभासायामविद्यायां जगतोऽवस्थानं विवक्षितमित्यर्थः । इहाविद्यायामिति संबन्धः ॥ ११७२ ॥

**संलयायेति यच्छुद्धं रूपं स्यात्प्रत्यगात्मनः ॥**
**प्रत्यक्किदाभ आगत्य ध्रियते प्रत्यगात्मने ॥ ११७३ ॥**

संलयदृष्टान्तेन दार्ष्टान्तिके विवक्षितमाह । **समिति** । श्येनो हि सम्यङ्निलयनार्थं स्वनीडायाऽऽत्मानं धारयतीति दृष्टान्तश्रुत्या शुद्धबुद्धादि यत्प्रतीचो रूपं तद्विवक्षितं स्यात्तस्मै प्रत्यगात्मने प्रत्यक्चिदिव भासमानः संसारी प्रत्यगज्ञाने साभासे स्वोपाधि-

बुद्ध्याद्युपसंहारे सत्युपहितो हिरुगवस्थातुमशक्नुवन्बिम्बस्थानीयायाऽऽगत्याऽऽत्मानं बिभर्तीत्यर्थः ॥ ११७३ ॥

**बुद्ध्यादिकार्यसंहारे प्रत्यक्चैतन्यरूपिणः ॥**
**चिद्बिम्बस्यापि संहारो जलार्कप्रविलापवत् ॥ ११७४ ॥**

उक्तमर्थं दृष्टान्तेन स्पष्टयति । **बुद्ध्यादीति ।** चिद्बिम्बस्य चित्प्रतिबिम्बस्येति यावत् । जीवस्योपसंहारे भावत्वे सति नाशित्वाज्जन्मापि स्यात्तथाच नाऽऽत्माऽश्रुते-रित्यधिकरणविरोध इत्याशङ्क्याऽऽह । **जलेति ।** उपाधिलये सत्युपहितस्यानुपहित-मात्रत्वेनावस्थानाल्लयोक्तिर्न वस्तुत इत्यर्थः ॥ ११७४ ॥

**अविद्यावान्पुरा योऽभूदविद्याकार्यगश्चितिः ॥**
**अविद्यया विभागोऽस्य चिद्बिम्बस्योपजायते ॥ ११७५ ॥**

सुषुप्तावात्मनो ब्रह्मण्यवस्थानेऽप्यवस्थान्तरे ततो भेदमाशङ्क्याऽऽह । **अविद्यावा-निति ।** पुरेत्यवस्थाद्वयोक्तिः ॥ ११७५ ॥

**प्रत्याख्यातैव साऽविद्या सकार्या सर्वदाऽऽत्मना ॥**
**प्रत्याचष्टे तु नाविद्या निरात्मत्वाच्चिदात्मनः ॥ ११७६ ॥**

तथाऽपि विभागहेत्वविद्याध्वस्तावेव तस्य ब्रह्मत्वं न सदेति चेन्नेत्याह । **प्रत्या-ख्यातेति ।** किमित्यविद्यामात्मा निराकरोति वैपरीत्यं किं न स्यात्तत्राऽऽह । **प्रत्या-चष्टे त्विति ।** न हि साऽऽत्मानं निरस्यति स्वातन्त्र्येण स्वरूपाभावादात्मा तु तां वार-यति सदा चिदात्मत्वेन विरोधित्वादित्यर्थः । यद्वा चिदात्मनोऽन्यत्राविद्याया नैरात्म्यान्न सो तं निरसितुमर्हतीत्यर्थः ॥ ११७६ ॥

**अविद्यातज्जकार्याभ्यामात्माऽन्यानवशेषतः ॥**
**संबध्यते स्वतोऽसङ्ग आत्मत्वादेव कारणात् ॥ ११७७ ॥**

आत्माऽपि नाविद्यां सकार्यां निरस्येदसङ्गतया तदसंबन्धादित्याशङ्क्याऽऽह । **अविद्येति ।** अन्यानवशेषतः संबन्धे हेतुमाह । **आत्मत्वादिति** ॥ ११७७ ॥

**अविद्या यच्च तत्कार्यमात्मानं स्वात्मसिद्धये ॥**
**संबिभत्सत्यनात्मत्वादात्मा तन्नानुमन्यते ॥ ११७८ ॥**

असङ्गः संबध्यते चेति विरुद्धमित्याशङ्क्याऽऽह । **अविद्येति ।** अविद्यादि स्वरू-पलाभार्थमात्मानं संबद्धुमिच्छति स्वातन्त्र्येण तल्लाभायोगादात्मा त्वसङ्गश्चिदेकरसो न सकार्यामविद्यां मृष्यते तेन तस्याविद्याकृतसंबन्धेऽपि न वास्तवासङ्गताहतिरित्यर्थः ॥ ११७८ ॥

---

१ ख. 'म्बस्योप' । २ क. ख. घ. सा तन्निर' ।

**निःसङ्गस्य ससङ्गेन कूटस्थस्य निरात्मना ॥**
**आत्मनोऽनात्मना योगो वास्तवो नोपपद्यते ॥ ११७९ ॥**

संबन्धस्याऽऽविद्यत्वं पूर्वत्रापि बहुशः साधितमिति स्मारयति । **निःसङ्गस्येति ।** निरात्मना निश्चलस्वभावरहितेनेति यावत् ॥ ११७९ ॥

**प्रत्याख्याताऽऽत्मनैवेयं प्रत्यगात्मानमेकलम् ॥**
**अविद्याऽऽलिङ्गते वह्निं घृतपिण्ड इवोल्बणम् ॥ ११८० ॥**

आत्मना सकार्याऽविद्या प्रत्याख्याता चेत्कथं तयोरवास्तवोऽपि संबन्धस्तत्राऽऽह । **प्रत्याख्यातेति ।** सकार्याऽविद्या निराकृतैरूपेणैवाऽऽत्मानमालिङ्गते तस्यासङ्गकूटस्थचिदेकरसत्वेन संबन्धासहिष्णुत्वादित्यर्थः । अनात्मनो निवर्त्यत्वेनाऽऽत्मना संबन्धे दृष्टान्तः । **वह्निमिति** ॥ ११८० ॥

**अविचारितसंसिद्धा संगतिः परमात्मनः ॥**
**अविद्यातज्जकार्याभ्यामेवमेवेति गम्यताम् ॥ ११८१ ॥**

दार्ष्टान्तिकमाह । **अविचारितेति** ॥ ११८१ ॥

**एवं सत्यस्य बाधः स्यात्परमार्थात्मसंश्रयात् ॥**
**संसारानर्थसंबन्धहेतोरात्मप्रमाणतः ॥ ११८२ ॥**

अविद्यादेरात्मनश्च यथोक्तसंबन्धे सति तत्त्वमस्यादेरात्मप्रमाणादबाध्यात्माकारबुद्धिवृत्त्यवष्टम्भादस्य संसारहेतोरज्ञानस्य बाधान्मुक्तिरिति फलितमाह । **एवमिति** ॥ ११८२ ॥

**प्रत्यग्धीमात्रतः प्रत्यङ्ङद्वयत्वविशेषणः ॥**
**निःसंबन्धात्मसंबन्धादनात्मा त्वात्मवन्न सन् ॥ ११८३ ॥**

परिशिष्टं परमार्थरूपं विशदयति । **प्रत्यगिति ।** तत्परिशेषे तदभिन्नत्वादनात्माऽपि तिष्ठेदित्याशङ्क्याऽऽह । **निःसंबन्धेति** ॥ ११८३ ॥

**समस्तव्यस्ततामेवं सति व्याचक्षतेऽत्र ये ॥**
**कर्षन्ति नासिकाग्रेण कर्णमूलं सुखेन ते ॥ ११८४ ॥**

अनात्मा बाध्योऽबाध्यश्चाऽऽत्मेति स्थिते[3] भर्तृप्रपञ्चमतमपि निरस्तमित्याह । **समस्तेति ।** अत्रेत्यात्मोक्तिः । असंभावितार्थवादिनां भ्रान्तत्वं दृष्टान्तेनाऽऽह । **कर्षन्तीति** ॥ ११८४ ॥

**आत्मवस्त्वतिरेकेण नान्यद्वस्त्वस्ति मानतः ॥**
**तन्मानमिति चेन्मैवं यतस्तत्प्राक्प्रबोधतः ॥ ११८५ ॥**

---

१ क. °तस्वरू° । २ ख. भण्यते । ३ ख. °तेभर्तृ° ।

समस्तव्यस्ततापक्षस्यासंभावितत्वे हेतुमेवं सतीति सूचितं स्फुटयति । **आत्मेति** । अनात्मवस्तु मानतो नास्तीत्ययुक्तं यतस्तस्मिन्प्रसिद्धमध्यक्षादि मानमिति शङ्कते । **तदिति** । दूषयति । **मैवमिति** । किं तज्ज्ञानात्पूर्वमेवानात्मप्रमापकं किंवोर्ध्वमप्याद्ये तत्प्रत्यगज्ञानाविजृम्भितं तज्ज्ञानात्तदज्ञानध्वस्तौ ध्वंसेतेति कुतः समस्तव्यस्तता न द्वितीयो ज्ञानादूर्ध्वमपि मानमेयादिसत्त्वे तद्वैफल्यादिति मत्वाऽऽह । **यत इति** ॥ ११८५ ॥

**अस्तु वस्त्वन्तरं चान्यत्तस्याप्यात्माभिसंगतौ ॥**
**को हेतुरिति वक्तव्यं नाविद्याऽकारकत्वतः ॥ ११८६ ॥**

अनुभवसिद्धमनात्मवस्त्वङ्गी करोति । **अस्त्विति** । तर्हि समस्तव्यस्तताऽपि स्वीकर्तव्येति तत्र किमात्मनाऽनात्मवस्त्वसंबद्धं संबद्धं वा नाऽऽद्य आत्मनः समस्तत्वाद्यसिद्धेरिति मन्वानो द्वितीयं प्रत्याह । **तस्यापीति** । न तावदात्मनः स्वतोऽनात्मयोगोऽसङ्गत्वान्नापि परतोऽविद्यातिरिक्तसंबन्धघटकाभावादित्यर्थः । अविद्यैव तं घटयतीति चेन्मैवं तस्या वास्तवकार्यकरत्वाभावादवास्तवे चाऽऽत्मानात्मसंबन्धे न वास्तवी समस्तव्यस्ततेत्यभिप्रेत्याऽऽह । **नाविद्येति** । अकारकत्वत इति च्छेदः ॥ ११८६ ॥

**समस्तव्यस्तताव्याख्या तस्मादन्धपरंपरा ॥**
**वैश्वानरवरादेव न तु न्यायानुसारतः ॥ ११८७ ॥**

कथं तर्हि द्वैताद्वैतविषयत्वात्तस्येति समस्तव्यस्ततामात्मनो भर्तृप्रपञ्चा व्याचख्युस्तत्राऽऽह । **समस्तेति** । अनात्मार्थस्याऽऽत्मनि कृतो[2] विघटनाभावस्तुशब्दार्थः ॥ ११८७ ॥

**अस्य हि द्वैतविषये विज्ञानं भानुरश्मिवत् ॥**
**विकीर्णं बोधदेशीयं समन्तात्प्रथते दृशेः ॥ ११८८ ॥**

श्येनवाक्यं भाष्यानुसारेण व्याख्यातमधुना भर्तृप्रपञ्चोक्तं तद्व्याख्यानं वक्तुं भूमिकामाह । **अस्येति** । आत्मनश्चैतन्यं जाग्रद्देशस्थमिथ्याज्ञानं भूत्वाऽऽदित्यरश्मिवद्द्वैतविषये प्रसृतं सर्वतो भातीत्यर्थः । **तदुक्तमस्य हि** द्वैतविषये विशेषविज्ञानमादित्यरश्मिवद्विकीर्णं जागरितेदेशवत्समन्तादवभासत **इति** । यथोक्तभाष्यद्योतको हिशब्दः ॥ ११८८ ॥

**तत्र कर्मप्रसूतोऽयं कामः सर्वप्रवृत्तिकृत् ॥**
**जाता कर्मण एवे[3]यं भावनाऽस्यान्तरात्मनः ॥ ११८९ ॥**

आत्मचैतन्यस्याऽऽपन्नमिथ्याज्ञानत्वस्य द्वैतविषयत्वे सति किं सिध्यति तदाह । **तत्रेति** । आत्मज्ञाने द्वैतविषये सति कर्मोपचीयते तस्मात्कामभावने कामश्च सर्वप्रवृत्तिहेतुरित्यर्थः । **उक्तं हि** तत्र कामः कर्मणः फलं कर्मण एव तु वासनेति ॥ ११८९ ॥

१ क. घ. 'त्वासि' । २ ख. विद्यमाना' । ३ क. ग. 'यं वासना' ।

**यथालक्षणया कर्म कृतं भावनयाऽऽत्मना ॥**
**फलं तादृग्विधं दातुमेकी भवति साऽऽत्मनः ॥ ११९० ॥**

सर्वप्रवृत्तिहेतुतया कर्मणः सकाशात्कामो जायतां भावना तु तज्जा किमर्थेत्याशङ्क्याऽऽह । **यथेति । यथोक्तं** यथालक्षणयैव भावनया तत्कर्म कृतं तथालक्षणमेव फलं तस्य विज्ञानात्मनः सा भावना तदेव स्वप्रयुक्तं फलं प्रत्येकीभूता भवतीति ॥ ११९०॥

**तयाऽनुरञ्जित इव ह्यात्मा कामान्परीप्सति ॥**
**वासनालक्षणः कामः स्वप्नसर्गाय जायते ॥ ११९१ ॥**

भावनायाः स्वानुरूपफलासिद्धारत्वे सत्यात्मनो भोक्तृत्वं फलतीत्याह । **तयेति । तदाहुः**—तदनुरञ्जितो विज्ञानात्मा कामं कामयत इत्येतद्भवतीति । उक्तभाष्यार्थो हिशब्दः । जाग्रदवस्थामुक्त्वा स्वप्नावस्थामाह । **वासनेति** ॥ ११९१ ॥

**सुखादिफलभोगाय स्वप्नः क्षुद्रस्य कर्मणः ॥**
**परिच्छेदेन निर्मातृज्ञानं च प्रत्यगात्मनः ॥ ११९२ ॥**

किमर्था स्वप्नदृष्टिस्तत्राऽऽह । **सुखादीति । यथाऽऽहुस्तत्र** कौमतः स्वप्ननिर्माणं सुखदुःखं दर्शयतीति । कथं तर्हि स्वप्नधीरत आह । **परिच्छेदेनेति ।** प्रतीचो ज्ञानमर्थस्य वासनोत्थस्य निश्चायकमित्यर्थः ॥ ११९२ ॥

**विज्ञानानुविधायी हि विकारः कर्मणो यतः ॥**
**विज्ञानं विपरीतार्थदर्शनं चेह भण्यते ॥ ११९३ ॥**

तस्यायुक्तं परिच्छेदकत्वं कर्मणोऽपि कर्तृत्वोपगमादित्याशङ्क्याऽऽह । **विज्ञानेति । उक्तं हि** विज्ञानं पुनर्भावनापरिच्छेदविनिर्मातृ विज्ञानानुविधायिनी हि कर्मणो विक्रियेति । भाष्यानुकारो हिशब्दार्थः । अर्थोपलब्धिं विना कर्मफलभोगायोगात्तद्विक्रिया भवति ज्ञानानुविधायिनी ततो युक्तं ज्ञानस्य परिच्छेदकत्वमित्यर्थः । विज्ञानमप्येतद्विपरीतदर्शनमविद्येति भाष्येण तत्स्वरूपमाह । **विज्ञानमिति ।** इहशब्दः स्वप्नविषयः ॥ ११९३ ॥

**साऽविद्या सति बाह्येऽर्थे द्रष्टव्येऽलं न चासति ॥**
**कामः स एव *बोधेऽस्य विज्ञानात्मन इष्यते ॥ ११९४ ॥**

मिथ्याज्ञानं विज्ञानं चेत्तस्य यथार्थत्वे मिथ्याज्ञानत्वायोगादयथार्थत्वे बाह्यार्थापलापः स्यादित्याशङ्क्याऽऽह । **सेति ।** सत्येव बाह्ये द्रष्टव्येऽर्थे तत्परिच्छित्तिरूपकार्यनिर्माणसमर्थं मिथ्याज्ञानाख्यं विज्ञानमतो न सोऽर्थोऽपलापमर्हतीत्यर्थः । **यथोक्तं** साऽपि सति द्रष्टव्ये विपरीतं ग्राहयेदिति । प्रकृतानामविद्यादीनामात्मत्वं तद्धर्मत्वं वा

* बाह्योऽस्येति स्यात् ।

१ क. ग. स्वप्न । ख. स्वप्नक्षु° । २ ख. कामः ।

न शङ्कनीयमित्याह । काम इति । जाग्रत्स्वप्नयोर्जीवस्य यः कामोऽविद्यादिसहितः स ततो बहिरेवेष्यतेऽसङ्गो हीति श्रुतेरित्यर्थः । तदाहुः स एष बाह्यो विज्ञानात्मन इत्युक्तमिति ॥ ११९४ ॥

**प्रयोक्त्री भावना तत्र कर्म त्वस्य[1] विकारकृत् ॥**
**विपरीतग्रेहाय[2] स्यादन्यथे[3]ति विनिश्चितिः ॥ ११९५ ॥**

आत्मबाह्यानां कामादीनां मिथोऽसंकरार्थं कार्यभेदमाह । **प्रयोक्त्रीति** । तत्रेति निर्धारणार्था सप्तमी । कामो भावना पुरुषं विषयेषु प्रवर्तयति कर्म तस्य सुखादिविकारकारि । अन्यथा विनिश्चितिर्मिथ्याज्ञानं तद्विपरीतग्रहहेतुर्न यथार्थं परिच्छेत्तुमलमित्येषां कार्यभेद इत्यर्थः । तदुक्तं तत्र प्रयोक्त्री भावना कर्म विकर्त्रीति ॥ ११९५ ॥

**कामेहाभावनाज्ञानपदार्थानां यथाक्रमम् ॥**
**परस्परव्यपेक्षत्वादेवं स्यादेकवाक्यता ॥ ११९६ ॥**

तर्हि कामादीनां मिथोऽनपेक्षत्वेनायःशलाकाकल्पत्वमत आह । **कामेति** । एवमित्यस्यार्थो यथाक्रममिति । उक्तं हि—एवं कामकर्मभावनाविज्ञानानां परस्परापेक्षत्वादेकार्थतेति ॥ ११९६ ॥

**तत्र भावनयैवाऽऽत्मा कामान्कामयते तथा ॥**
**†विद्यया वीक्षते चार्थानविद्योत्थापितानिह ॥ ११९७ ॥**

कथं तर्हि तेषां कार्यभेदस्तत्राऽऽह । तत्रेति । यथाऽऽहुस्तत्र भावनया कामयते *विद्यया पश्यति द्वैतविषयमिति । सप्तमी निर्धारणे । तथाशब्दो भावनादृष्टान्तार्थः । इहेति द्वैतावस्थोक्ता ॥ ११९७ ॥

**संप्रसादे तु बाह्यस्य वस्तुनोऽसंभवादिदम् ॥**
**कर्म निस्पन्दमेवाऽऽस्ते भावनाऽपि च शाम्यति ॥ ११९८ ॥**

जाग्रत्स्वप्नावुक्त्वा सुषुप्तिमवतारयति । **संप्रसादे त्विति** । यथोक्तमद्वैतविषये पुनः सुषुप्तस्थाने बाह्यस्य प्रयोज्यस्याभावात्कर्म निस्पन्दमास्ते विज्ञानात्मगताऽपि भावना कार्याभावाच्छाम्यतीति ॥ ११९८ ॥

**प्रयोज्यविरहात्कर्मकार्यस्यासंभवात्तथा ॥ ११९९ ॥**
**विद्याऽपि विपरीतस्य प्रविभक्तस्य वस्तुनः ॥**
**अभावादविशेषात्मज्ञानोऽयं व्यवतिष्ठते ॥ १२०० ॥**

सुषुप्ते कामकर्मणोरभावेऽपि विद्याप्रयुक्तं कार्यं स्यादित्याशङ्क्याऽऽह । **प्रयोज्येति** । विद्याऽपि शाम्यतीति संबन्धः । प्रयोज्यविरहमेव स्फोरयति । **विपरीतस्येति** । स्वापे

† अविद्ययेति च्छेदोऽपेक्षितो न वेति विचारणीयं विद्वद्भिः । * खपुस्तकेऽविद्ययेति च्छेदः ।

[1] ख. चास्य । [2] क. ग. 'ग्रहो यस्मान्न्य' । [3] ख. स्यान्न्य' ।

विद्योपशमे द्रष्टृविपरिलोपश्रुतिविरोधः स्यादित्याशङ्क्याऽऽह । **अविशेषेति** । तदाहुर्विद्याऽपि विपरीतस्य प्रविभक्तस्य ग्राहयितव्यस्याभावान्न विक्षेपविज्ञानाय कल्पत इति ॥ ११९९ ॥ १२०० ॥

**दाह्याभावाद्यथा वह्निः स्वात्मन्येवोपशाम्यति ॥**
**कर्मण्यस्तमिते तद्वत्प्रत्यङ्ङास्ते स्वभावतः ॥ १२०१ ॥**

उक्तं सौषुप्तमात्मरूपं दृष्टान्तेनाऽऽह । **दाह्येति** ॥ १२०१ ॥

**एवं कृत्वेदमत्राऽऽह श्रुतिः कामं न कंचन ॥**
**कामकर्मादिनिर्मुक्तं सुषुप्ते रूपमात्मनः ॥ १२०२ ॥**

तत्र श्रुतिमवतारयति । **एवमिति** । उक्तरीत्या सुषुप्ते कामादिध्वस्तिरस्तीति कृत्वा न कंचनेत्याद्या श्रुतिरत्र सुप्ते प्रतीचो रूपमिदं कामादिरहितं शान्तमाहेत्यर्थः ॥ १२०२ ॥

**इत्येवं श्येनदृष्टान्तः कैश्चिद्व्याख्यायि सादरः ॥**
**तत्र युक्तमयुक्तं वा श्रुतिवाक्यानुसारतः ॥ १२०३ ॥**
**न्यायैर्जगति संसिद्धैः स्वयमेव विचार्यताम् ॥**
**अपक्षपातपतितैर्विद्वद्भिर्वस्तुसिद्धये ॥ १२०४ ॥**

श्येनवाक्यस्य परोक्तं तात्पर्यमुपसंहरति । **इत्येवमिति** । तत्र दोषं सूचयति । **तत्रेति** । न्यायानामलौकिकत्वं वारयति । **जगतीति** । चित्तैकाग्र्यप्रसिद्ध्यर्थं स्वयमेवेत्युक्तम् । भर्तृप्रपञ्चव्याख्याने युक्तिमत्त्वं तच्छिष्यैर्न्यायतो निश्चितं तत्किं विचार्यमित्याशङ्क्याऽऽह । **अपक्षेति** । यस्य यत्र रुचिः स तद्व्याख्यानं ग्रहीष्यति किं विचारेणेत्याशङ्क्य पुरुषाभिरुचिवैचित्र्यात्तदनुरोधेन व्याख्यानसंग्रहे वस्तुनि विकल्पप्रसङ्गाद्व्यवस्थितं वस्तु न सिध्येदित्याह । **वस्त्विति** । जाग्रत्स्वप्नयोर्द्वैतविषयत्वं सुषुप्तस्याद्वैतविषयत्वमिति विभागोऽयुक्तोऽवस्थात्रयस्य वस्तुत्वेऽवस्तुत्वे च तदयोगादाद्ये द्वैतस्यैव भावाद्द्वितीयेऽद्वैतस्यैव सत्त्वात्समस्तव्यस्तताया निरस्तत्वादिति भावः ॥ १२०३ ॥ ॥ १२०४ ॥

**एतदस्य स्वतो रूपं यदत्रोपप्रदर्शितम् ॥**
**अविद्याकामकर्मादिविविक्तं यत्सुषुप्तगम् ॥ १२०५ ॥**

श्येनवाक्येनाऽऽत्मनः सौषुप्तं रूपमुक्तमिदानीं नाडीखण्डस्य संबन्धार्थं वृत्तं कीर्तयति । **एतदिति** । किं तदात्मनः स्वतो विद्यमानं रूपं तदाह । **यदिति** । किं पुनः श्येनवाक्ये प्रत्यक्त्वेनोक्तं रूपं तदाह । **अविद्येति** । आदिपदं तत्कार्यसंग्रहार्थम् । एतदेवाऽऽत्मनः स्वाभाविकं रूपं यदप्रपञ्चं सच्चिदानन्दैकतानमित्यर्थः ॥ १२०५ ॥

**इतोऽन्यथा तु यद्रूपं जाग्रत्स्वप्नस्वलक्षणम् ॥**
**तदस्य परतो ज्ञेयमात्माज्ञानैकहेतुकम् ॥ १२०६ ॥**

रूपान्तरमपि स्वप्नादिगतं कर्तृत्वादिलक्षणमस्य भाति तत्कथमवधारणमित्याशङ्क्याऽऽह । **इतोऽन्यथेति** । तृतीयपादार्थं स्फुटयति । **आत्मेति** ॥ १२०६ ॥

**यद्धेतुकमिदं रूपं साऽविद्याऽनर्थकारिणी ॥**
**सा स्वतः परतो वाऽस्येत्येतदत्राधुनोच्यते ॥ १२०७ ॥**

उत्तरवाक्यमवतारयन्विचारविषयमाह । **यद्धेतुकमिति** । कर्तृत्वादि यद्रूपं तस्यानर्थहेतुरविद्या[1] प्रस्तुतेत्यर्थः । विचारस्वरूपमाह । **सेति** । अविद्या खल्वात्मनः स्वभावश्चेतन्यवदस्वभावो वा कर्मादिवदिति विचार्यास्वभावत्वमनन्तरग्रन्थेन[2] कथ्यत इत्याह । **एतदिति** ॥ १२०७ ॥

**न त्वागन्तुरविद्येयमनिर्मोक्षप्रसङ्गतः ॥**
**आत्मस्वभावोऽविद्येयं न वेत्येतद्विचार्यते ॥ १२०८ ॥**

अविद्याऽऽत्मनः स्वभावोऽस्वभावोऽवेति नात्र चिन्त्यते किंतु सा सादिरनादिर्वेत्येतन्निरूप्यते कामकर्मादिवदागन्तुकत्वमिति भाष्ये कोट्यन्तरोक्तेरित्याशङ्क्याऽऽह । **न त्विति** । अविद्या चेदागन्तुकी तदा तस्या हेत्वभावे मोक्षेऽपि पुनरुन्मज्जनसंभवादनिर्मोक्षः सहेतुत्वेऽप्यात्मातिरिक्तहेत्वभावात्तद्धेतुत्वेन ततो मोक्षेऽप्यविद्योदयसंभवात्स एव दोषस्तस्मादागन्तुकत्वाद्ययोगादविद्यायाः सादिरनादिर्वेति विचारो न विवक्षित इत्यर्थः । नन्वविद्यायाः स्वभावत्वेऽपि तन्निवृत्त्याऽऽत्मनो मुक्तेरसंभवस्य तुल्यत्वान्न त्वदभिमतोऽपि विचारो युज्येतेत्याशङ्क्याऽऽत्मनोऽजडत्वमिच्छतां मुक्तेरविद्यानिवृत्तेरतिरिक्तत्वान्नैवमित्यभिप्रेत्य विवक्षितं विचारं निगमयति । **आत्मेति** । भाष्येऽप्येवंविधो विचारोऽभिप्रेतः स्वाभाविकत्वपक्षमादाय तत्प्रतिपक्षत्वेनाऽऽगन्तुकत्वं वदता तच्छब्देनास्वभावत्वस्येष्टत्वादन्यथा तत्र मोक्षप्रतिपादनमुक्तन्यायेनानवकाशमिति भावः ॥ १२०८ ॥

**अविद्याकामकर्मादिप्रविविक्तमिहाऽऽत्मनः ॥**
**रूपं पूर्वमुपन्यस्तं तस्य साक्षाच्चिकीर्षया ॥ १२०९ ॥**

नन्वविद्यायाः सादित्वपक्षेऽपि मोक्षस्याविद्याक्षयादर्थान्तरत्वात्तदा तदूर्ध्वेऽपि नानिर्मोक्षप्रसक्तिरित्यस्मदिष्टविचारसिद्धिरित्याशङ्क्याविद्यायाः सादित्वे तद्धेतोरन्वेष्यत्वात्कूटस्थस्याऽऽत्मनो विनाऽविद्यामतद्धेतुत्वात्पूर्वाविद्यायाश्चोत्तराविद्यानुपादानत्वादनाद्यविद्यात्मनस्तदुपादानत्वात्तदुक्तविचारायोगात्प्राचीनविचारसिद्धिरिति मत्वा विचारप्रयोजकमाह । **अविद्येति** । आत्मनो रूपमविद्यादिहीनं सुषुप्ते पूर्वत्रोक्तं तस्य प्रत्यक्षेण प्रतिपादनेच्छया विचारद्वाराऽनन्तरग्रन्थारम्भ इत्यर्थः ॥ १२०९ ॥

---

[1] घ. 'र्थस्य हे' । [2] घ. 'न्थे क' ।

**अविद्यायाश्च यत्कार्यं तच्च वाच्यमशेषतः ॥**
**इत्याविष्कृतिसिद्ध्यर्थं परो ग्रन्थोऽवतार्यते ॥ १२१० ॥**

नाडीवाक्यस्याभिप्रायान्तरमाह । **अविद्यायाश्चेति** । यदविद्याकार्यं तदप्यशेषतो वाच्यमेव विवेकोपयोगादिति कृत्वा तदाविष्करणार्थमुत्तरो ग्रन्थ इत्यर्थः ॥ १२१० ॥

**नाड्यायत्ता यतोऽविद्याकार्यदृष्टिरतः परम् ॥**
**नाडीनां स्यादुपन्यासस्ता वा अस्येतिवाक्यतः ॥ १२११ ॥**

अविद्याकार्यं चेद्विदर्शयिषितं तदेवोच्यतां कृतं नाड्युपन्यासेनेत्याशङ्क्याऽऽह । **नाडीति** । अविद्योत्थकर्तृत्वादिधीर्नाडीकृता तदभावे स्वापादाविव तदनुपपत्तेरतस्तद्दृष्ट्युपयोगिनाड्युपन्यासस्तद्दृष्टिश्च व्यवहारार्थेत्यर्थः ॥ १२११ ॥

**यद्वा मृषात्वसिद्ध्यर्थं नाड्युपन्यास इष्यते ॥**
**अत्यन्ततनुतो ह्यन्तर्विन्ध्यादेरीक्षणं कुतः ॥ १२१२ ॥**

तदुपन्यासस्य फलान्तरमाह । **यद्वेति** । कुतोऽवस्थाद्वयस्य मिथ्यात्वार्थं नाड्युपन्यासस्तत्राऽऽह । **अत्यन्तेति** । नाडीनामतिसौक्ष्म्यात्तासु महापरिमाणस्य विन्ध्यादेरीक्षणं स्वाप्नं मिथ्यैवोचितदेशाभावात्तद्दृष्टान्ताज्जाग्रतोऽपि मिथ्यातेत्यर्थः ॥ १२१२ ॥

**अविद्याकार्यमेतच्चेदविद्यावन्मृषेष्यते ॥**
**अतो मृषात्वसिद्ध्यर्थं तनुनाडीपरिग्रहः ॥ १२१३ ॥**

पृष्टं मत्वा शङ्कते । **अविद्येति** । अघटमानं घटयत्यविद्येति न्यायादतः सूक्ष्मनाडीष्वतिमहतो विन्ध्यादेर्दृष्टिरविद्योत्थेति शङ्कार्थः । तर्हि मत्पक्षसिद्धिरित्याह । **अविद्यावदिति** । अवस्थयोर्मिथ्यात्वार्थं नाड्युक्तिरिति निगमयति । **अत इति** । कारणस्य मिथ्यात्वे कार्येऽपि तद्भावनियमादिति यावत् ॥ १२१३ ॥

**ता वा अस्य हिता नाम नाड्यः सूक्ष्मा हृदि स्थिताः ॥**
**अपकर्षेतरौ याभिः कार्यस्याऽऽत्मा समीक्षते ॥ १२१४ ॥**

नाडीखण्डस्य संबन्धमुक्त्वा तदक्षराणि व्याचष्टे । **ता वा इति** । चतुर्थे प्रकृताः षष्ठादौ च संनिहिताः संघातसंबन्धिन्यो हिता इत्येवंनामवत्यो हृदयाद्विप्रसृतत्वात्तत्र प्रतिष्ठिताः परमसूक्ष्मा भूयस्यो नाड्यः प्रसिद्धा इत्यर्थः । अस्य नाड्य इति पुंसो नाडीनां च कथं संगतिरित्याशङ्क्याऽऽह । **अपकर्षेति** । कर्मज्ञानफलस्योत्कर्षापकर्षावेष कर्ता याभिरनुभवति तास्तदीयत्वादस्येति षष्ठीमर्हन्तीत्यर्थः ॥ १२१४ ॥

**सहस्रतमभागेन केशस्य परिणाहतः ॥**
**नाड्योऽणिम्ना समानास्ता नानान्नरससंभृताः ॥ १२१५ ॥**

---

१ क. ग. नाडीयं ।

यथेत्यादेरर्थमाह । **सहस्रेति** । परिणाहतो विस्तारतः परिमाणेनेति यावत् । **शुक्ल**-
स्येत्यादेरर्थं संक्षिपति । **नानेति** ॥ १२१५ ॥

**तास्वन्नरसपूर्णासु स आत्माऽविद्ययाऽऽत्मनः ॥**
**रक्तपीतादिरूपत्वं मन्यते स्वप्नमध्यगः ॥ १२१६ ॥**

नाडीनां शुक्लनीलादिरूपान्नरसपूर्णत्वेऽपि किमात्मनो जातं तदाह । **तास्विति** ।
स स्वप्नमध्ये द्रष्टृत्वेन स्थितो नाडीष्वन्नरसपूर्णास्वात्मा तदुपाधिः स्वस्यापि रक्तादिरू-
पतामविद्यया कल्पयतीत्यर्थः ॥ १२१६ ॥

**रसवर्णानुरोधेन रक्तपीतादिरूपताम् ॥**
**प्रतीचो भोगसिद्ध्यर्थं देवतैति मृषात्मिकाम् ॥ १२१७ ॥**

अथाऽऽत्मनो रसगतरक्तादिरूपभजनं केन द्वारेण संपद्यते किमर्थं चेति तत्राऽऽह ।
**रसेति** । भुक्तस्यान्नस्य रसो नाडीषु प्रसृतो धातुसंबन्धान्नानावर्णो भवति तदनुसारेण
नाडीस्था देवता लिङ्गादिशब्दा मिथ्याभूतां रक्तादिरूपतां गच्छति तदुपाधिरात्माऽपि
स्वभोगार्थमुक्तरूपभाग्भवतीत्यर्थः ॥ १२१७ ॥

**बौद्धविज्ञानविक्षेपसंहारकथनाय तु ॥**
**चतुर्थे नाड्युपन्यासो विज्ञानात्मविशुद्धये ॥ १२१८ ॥**

ननु नेयं व्यवस्था चतुर्थे षष्ठादौ च नाडीनामुक्तत्वादत्र पुनरुक्त्या तदुक्तेरेवायो-
गादित्याशङ्क्य चातुर्थिकनाड्युपन्यासफलमाह । **बौद्धेति** । ज्ञानस्य धीपरिणामस्य
जागरादौ विकासः सुषुप्ते संकोचस्तयोरुक्त्यर्थं चतुर्थे नाड्युपन्यासो धीवृत्तिरूपज्ञानसं-
कोचविकासौ हि द्वारभूता नाडीराकाङ्क्षेते न च तद्विकासादिवचनमकिंचित्करं त्वम-
र्थशुद्ध्यर्थत्वात्तत्कथनेन हि तत्साक्षितयाऽऽत्मा शुद्धः स्यादित्यर्थः ॥ १२१८ ॥

**देवतान्नरसाणुत्वज्ञानाय च पुनर्ग्रहः ॥**
**षष्ठादौ सूक्ष्मनाडीनां तद्द्वाराऽऽत्मावबुद्धये ॥ १२१९ ॥**

कूर्चब्राह्मणेन नाड्युक्तिफलमाह । **देवतेति** । षष्ठादौ सूक्ष्मनाडीग्रहो देवताया
लिङ्गस्य स्थितिकरान्नरसस्यातिसूक्ष्मत्वज्ञापनार्थं न च तदफलं प्रविविक्ताहारतरतैजस-
शब्दितदेवताद्वारा त्वमर्थे दृष्टयर्थत्वान्न हि विश्वादिज्ञानादृते त्वमर्थो वाक्यान्वयी शक्यो
ज्ञातुं न च विना नाडीस्तैजसस्य सूक्ष्मान्नरससंबन्धस्य सिद्धिस्तद्युक्तमादौ नाडीवचन-
मित्यर्थः ॥ १२१९ ॥

**भोक्तुः स्वरूपविज्ञप्त्या इह नाडीपरिग्रहः ॥**
**क्रियते कामकर्मादिविवेकस्य विवक्षया ॥ १२२० ॥**

अत्र नाड्युपन्यासस्य कृत्यमाह । **भोक्तुरिति** । त्वमर्थज्ञापनार्थं कामादिविवेक-

१ ख. °द्विज्ञानस्य वि° ।

विवक्षयाऽत्र नाडीग्रहस्तद्गतो लिङ्गात्मा कामादिशाली संस्तदुपाधावात्मन्यारोप्यतेऽत-स्तत्रे[१] तत्र द्वारभेदेन नाड्युपन्यासस्त्वमर्थशुद्ध्यर्थ इत्यर्थभेद इत्यर्थः ॥ १२२० ॥

**न विज्ञानात्मनो रूपं चैतन्यादन्यदिष्यते ॥**
**स्वात्माविद्यैकहेत्वेव तस्य रूपान्तरं यतः ॥ १२२१ ॥**

न कामादेरात्मविवेकस्तद्रूपत्वाच्चैतन्यवदित्याशङ्क्यासङ्गो हीत्यादिनोक्तां हेत्वसिद्धिं स्मारयति । **नेत्यादिना** । आत्मनि कामादि स्वाभाविकमबाधितानुभवात्तद्दृष्टिपराहत-श्रुतिरन्यार्थेत्याशङ्क्याऽऽह[२] । **स्वात्मेति** । कामाद्यात्मनोऽविद्याकृतं तदन्वयव्यतिरेकव-त्त्वादतस्तद्गततया तद्दृष्टेर्भ्रमत्वान्न तद्वशेन श्रुतिरन्यथयितव्येत्यर्थः ॥ १२२१ ॥

**विज्ञानपुरुषाणां हि सर्वेषामेकरूपता ॥**
**चैतन्यात्मतया ज्ञेया तदबोधात्तु भिन्नता ॥ १२२२ ॥**

आत्मनो भेदवदविद्यां विना कामाद्यपि रूपं स्यादिति चेन्नेत्याह । **विज्ञानेति** । बुद्ध्युपाधिकाः पुरुषा जीवास्तेषां चिदात्मत्वेनैकरूपतैव तदज्ञानकृतान्तःकरण[३]बलाद्भि-न्नता भात्यतो दृष्टान्तस्य साध्यविकलतेत्यर्थः ॥ १२२२ ॥

**अध्यात्मादिविभागोऽयं न स्वतः प्रत्यगात्मनः ॥**
**तदबोधैकहेतुत्वादप्राप्तैकात्म्यवस्तुकः ॥ १२२३ ॥**

तदबोधात्तु भिन्नतेत्यस्यासिद्धिमाशङ्क्याऽऽह । **अध्यात्मादीति** । न हि प्रत्यगात्मा कूटस्थासङ्गाद्वयः स्वाज्ञानं विना विभज्यते[४] तद्विभागोऽज्ञानोत्पन्नत्वान्न वस्तु स्पृशती-त्यर्थः ॥ १२२३ ॥

**लिङ्गमेव ततो रूपमात्माविद्यैकहेतुकम् ॥**
**कर्मोत्था भावना याश्च रूपं ता अपि लिङ्गवत् ॥ १२२४ ॥**

भेदरूपं तर्हि क्वावतिष्ठतां तत्राऽऽह । **लिङ्गमिति** । स्वाज्ञानोत्थं भेदाख्यं रूपं तज्जबुद्ध्याश्रितमेव ततो नाऽऽत्मनि भेदावसरोऽस्तीत्यर्थः । कर्तृत्वादिवत्कामादेः स्वाभा-विकत्वमाशङ्क्याऽऽह । **कर्मेति** । या हि कर्मोत्थकर्तृत्वादिवासनास्ता लिङ्गस्यैव धर्मतया रूपं तद्गतभेदरूपवदतश्च कामादेः स्वाभाविकत्वे न कर्तृत्वाद्युदाहरणमित्यर्थः ॥ १२२४ ॥

**लिङ्गं चाप्यतिसूक्ष्मं तन्नाडीमध्यगतिक्षमम् ॥**
**स्वामिकर्मवशात्तच्च रूपं गृह्णाति दैवतम् ॥ १२२५ ॥**

कर्तृत्वादि लिङ्गनिष्ठं चेत्किमिति तथाविधं लिङ्गं स्थूलदेहवन्नोपलभ्यते तत्राऽऽह । **लिङ्गं चेति** । तस्यातिसौक्ष्म्यादध्यक्षायोग्यत्वमुक्त्वा हेतुं साधयति । **नाडीति** । ननु तच्चेतनमचेतनं वाऽऽद्ये नामान्तरेणाऽऽत्मैवोक्तः स्याद्द्वितीये तस्य विषयरूपभजनमस्ति[५]

---

१ घ. °त्र द्वा° । २ घ. °रन्यथेत्या° । ३ घ. °णवत्त्वाद्भि° । ४ क. ख. °भजते । ५ घ. °ष्टेते त° ।

न वा नास्ति चेत्प्रतीचो भोगासिद्धिरस्ति चेदचेतनस्य स्वतस्तदयोगात्तन्निमित्तं वाच्यं तत्राऽऽह । **स्वामीति** । तच्च देवतात्मकं लिङ्गं जीवस्यादृष्टवशाच्छब्दादिरूपं भजतीत्यर्थः ॥ १२२५ ॥

**भोगमात्रप्रसिद्ध्यर्थं चैतन्याभासमात्रतः ॥**
**नानात्मरूपमात्माऽयं किंचिदन्यदपेक्षते ॥ १२२६ ॥**

लिङ्गस्य तद्भजने निमित्तमुक्त्वा फलमाह । **भोगेति** । आत्मनो भोगादृते लिङ्गस्यार्थाकारभजनस्य नान्यत्फलमित्यर्थः । आत्मनो भोगे सक्रियत्वं चैत्रवदित्याशङ्क्याऽऽह । **चैतन्येति** । भोगस्याऽऽभासमात्रस्थत्वान्नाऽऽत्मनि शुद्धे विक्रियेत्यर्थः । विना लिङ्गमात्मैव भोगार्थमर्थाकारं ग्रहीष्यति लाघवादित्याशङ्क्याऽऽह । **नेति** । अन्यदात्मनोऽन्यत्वेन व्यवह्रियमाणमिति यावत् । अत्रासङ्गत्वं हेतुः ॥ १२२६ ॥

**विज्ञानपुरुषः सोऽयमधिदैवादिवासनः ॥**
**लिङ्गदेहानुरोधी सँल्लिङ्गे कर्त्रादिविक्रियाम् ॥**
**अविद्योपहतात्मा सन्नात्मत्वेनाभिमन्यते ॥ १२२७ ॥**

कथं तर्हि भोगस्तत्राऽऽह । **विज्ञानेति** । सोऽयमविद्याच्छादितस्वभावो बुद्ध्युपाधिरात्मा सूक्ष्मदेहानुसारी नानासंस्कारसंस्कृतः स्वोपाधिस्थकर्तृत्वादिविकारमात्मीयत्वेनाभिमन्यते तदाऽविद्योपाधिद्वाराऽऽत्मनोऽर्थाकारभजनादाभासद्वारको भोग इत्यर्थः ॥ १२२७ ॥

**लिङ्गस्य विक्रिया याऽपि सा रसानुविधायिनी ॥ १२२८ ॥**
**अधिदैवादिदेहस्य रसहेतुः स्थितिर्यतः ॥**
**एताभिर्वा इति तथा तेनैता इति च श्रुतिः ॥ १२२९ ॥**

लिङ्गद्वाराऽऽत्मनो विक्रियावत्त्वे लिङ्गस्य सा स्वतः स्यादित्याशङ्क्याऽऽह । **लिङ्गस्येति** । अन्नरसानुसारिणि तद्विक्रियेत्यत्र हेतुमाह । **अधिदैवादीति** । नानाविशेषात्मकस्य लिङ्गस्यान्नरसो यतः स्थितिहेतुरतस्तदनुसारिणी तद्विक्रिया युक्तेत्यर्थः । तस्यान्नरसः स्थितिहेतुरित्यत्र मानमाह । **एताभिरिति** ॥ १२२८ ॥ १२२९ ॥

**रसोऽपि चायं जग्धान्नपरिणाममपेक्षते ॥**
**यतोऽतो वातपित्तादीन्धातून्सोऽप्यनुरुध्यते ॥ १२३० ॥**

रसाद्देहस्थितिश्चेत्कथं तत्प्रवृत्तिर्न स्वतो भुजिक्रियर्थ्यादित्याशङ्क्याऽऽह । **रसोऽपीति** । भुक्तभक्तविकारस्य कथं प्रादुर्भावस्तत्राऽऽह । **यत इति** । यस्मादन्नपरिणामो रसहेतुत्वेनापेक्ष्यते तस्मात्ततो जातः सोऽपि धातूननुसरतीत्यर्थः ॥ १२३० ॥

---

१ घ. 'भिक्र' ।

धातुरूपानुरोधी सन्रसो रक्तादिमेत्यथ ॥
तं वर्णं देवतादेहो यथोक्तमनुरुध्यते ॥ १२३१ ॥

तत्र हेतुः । धातुरूपेति । अन्नपाकजो रसो रक्तादिरूपं भजते तद्धात्वनुसारी नान्यथा तद्रूपाप्तिरित्यर्थः । तयोर्हेतुफलभावोऽथशब्दार्थः । रसस्थरक्तादिरूपमनुसरति लिङ्गं नाडीस्थतया तेन तुल्याश्रयत्वादित्याह । तमिति ॥ १२३१ ॥

आत्मनोऽविक्रियस्यैव लिङ्गे स्वाभासवर्त्मना ॥
दर्शनं शुक्लपीतादेर्जायते कर्मणो वशात् ॥ १२३२ ॥

तथाऽपि किं प्रतीचो जातं तदाह । आत्मन इति । वस्तुतोऽक्रियस्यैवाऽऽत्मनः स्वोपाधौ सूक्ष्मे देहे स्वाभासद्वारा पीतादिधीरदृष्टवशाज्जायते ततो भोगसिद्धिरित्यर्थः ॥ १२३२ ॥

आत्मन्येष यतः सर्वस्तदविद्यैकहेतुकः ॥
अध्यात्मादिप्रपञ्चो हि शुक्तिकारजतादिवत् ॥ १२३३ ॥

कर्मणा दृष्टिश्चेद्दृश्यस्य वस्तुत्वं स्यात्तत्राऽऽह । आत्मनीति । अतः स मिथ्येति शेषः । प्रसिद्धं च तन्मिथ्यात्वं श्रुत्यादाविति हिशब्दार्थः ॥ १२३३ ॥

सत्यानृतविभागोऽयं तथाऽप्यनृतवस्तुनि ॥
जाग्रद्धर्मो प्रसिद्धोऽस्य[1] लोके स्वप्ने यथा तथा ॥ १२३४ ॥

सर्वस्य मिथ्यात्वे घटादि सत्यं शुक्तिरूप्याद्यसत्यमितिविभागायोगमाशङ्क्याऽऽह । सत्येति । सर्वस्यानृतत्वेऽपि स्वप्ने सत्यानृतविभागवज्जाग्रत्यपि मिथ्यावस्तुन्येवायं विभागोऽतो लोकप्रसिद्धेः स विभागो न विरुध्यत इत्यर्थः ॥ १२३४ ॥

चित्स्वभावातिरेकेण नाविद्यादेः प्रसिध्यति ॥
सत्यत्वमिव मानेन मिथ्यात्वमपि वस्तुनः ॥ १२३५ ॥

जगतो मिथ्यात्वेऽपि तदात्मनो भिन्नमभिन्नं वा नाऽऽद्योऽद्वैतविरोधान्नेतरस्तस्यापि मृषात्वप्रसङ्गादित्याशङ्क्याद्वैतविरोधं प्रत्याह । चित्स्वभावेति ॥ १२३५ ॥

चिन्मात्रतैव तेनास्य कार्यकारणवस्तुनः ॥
श्रुत्येहोच्चैः प्रत्यपादि तत्त्वमस्यादिरूपया ॥ १२३६ ॥

आत्मनो मृषात्वप्रसङ्गं प्रत्याह । चिन्मात्रेति । अविद्यादिवस्तुनाश्रितोऽतिरेकेण सत्यत्वासत्यत्वयोर्मानतोऽसिद्धत्वेनेत्येतत्तेनेति परामृश्यते । इहेति मोक्षशास्त्रोक्तिः । तेनाभेदे चिन्मात्रावशेषेण तन्मिथ्यात्वाप्रसक्तिरित्यर्थः ॥ १२३६ ॥

मिथ्याभावनमात्रोधेर्[2]निरस्ताविकृतेरिह ॥
प्रतीचो दर्शनं स्वप्ने श्रुत्या मिथ्येति वर्ण्यते ॥ १२३७ ॥

---

१ ख. 'सिद्धः स्याल्लोके। २ ख. 'त्रादेर्नि'।

जाग्रन्मिथ्यात्वमित्थमुक्त्वाऽथ यत्रैनमित्यादिश्रुत्यवष्टम्भेन स्वप्नस्यापि तत्प्रतिजानीते। **मिथ्येति**। अनुभवानुसारिस्वप्ने सिद्धमिथ्यात्वे न विप्रतिपत्तिरित्यर्थः ॥ १२३७ ॥

**शुक्लं स्यात्कफभूयस्त्वे वातपित्तसमागमात् ॥**
**नीलं कृष्णं च वातस्य परिणामं प्रचक्षते ॥ १२३८ ॥**

ता वा अस्येत्यादेस्तात्पर्यार्थो विवृतः संप्रति शुक्लस्येत्यादेस्तात्पर्यं धातुरूपानुरोधीत्यत्र संगृहीतं प्रपञ्चयति। **शुक्लमिति**। श्लेष्मबाहुल्ये वातपित्तयोर्गुणत्वेन संसर्गाद्भुक्तमन्नं नाडीस्थं श्वेतं स्यादित्यर्थः। वातभूयस्त्वे सतीतरयोर्गुणत्वाद्भुक्तान्नपरिणामं नाडीस्थं नीलं वदन्तीत्याह। **नीलमिति**। तद्व्याख्या कृष्णमिति ॥ १२३८ ॥

**पिङ्गलं पित्तबाहुल्याद्धरितो मन्दपित्तकः ॥**
**इति वैषम्यतो वर्णो धातुसाम्येऽतिलोहितः ॥ १२३९ ॥**

पित्तबाहुल्यादितरयोरुपसर्जनत्वे जग्धान्नपरिणामं नाडीस्थं पिङ्गलमाहुरित्याह। **पिङ्गलमिति**। वातश्लेष्माधिक्ये मन्दपित्तकृतो नाडीस्थान्नरसो हरितो भवतीत्याह। **हरित इति**। धातूनां गुणप्रधानत्ववैषम्यप्रयुक्ततयोक्तमन्नरसवर्णमुपसंहरति। **इति वैषम्यत इति**। तेषां समप्राधान्येऽन्नरसो नाडीस्थोऽत्यन्तलोहितो जायत इत्याह। **धात्विति** ॥ १२३९ ॥

**इत्येवमादि बहुधा परिणामं प्रचक्षते ॥**
**चिकित्साशास्त्रतत्त्वज्ञा जग्धस्यान्नस्य नाडिगम् ॥ १२४० ॥**

तत्र वैद्यशास्त्रं प्रमाणयति। **इत्येवमादीति**। आदिपदेन वातादिमान्द्ये नीलादिरूपमान्द्यमन्नरसे विवक्ष्यते सर्वश्चानुक्तो नाडीतद्गतान्नरसरूपभेदः। **उक्तं हि** तासां यथास्वं तुरीयांशविभागेन पञ्चसप्तत्यधिकशतमनिलरक्तं भवति। एष एव विभागः पित्तश्लेष्मशुद्धरक्तेष्वपि। यथास्थिता ह्येव देहमनुगृह्णन्ति दोषा व्यत्ययेन तु पीडयन्ति। तत्र श्यामारुणाः प्रतिस्पन्दिन्यः सूक्ष्माः क्षणेन पूर्णारिक्तवातरक्तं वहन्ति नीलपीतासिताः स्पर्शोष्णाः क्षिप्रस्राविण्यः पित्तरक्तं गौर्यः स्निग्धाः स्थिराः शीताः कण्डुमत्यः कफरक्तं लक्षणसंसर्गे संनिपातरक्तं समाग्रन्थाः स्थिरा रोहिण्यः शुद्धरक्तमिति। **सुश्रुतोऽप्याह—**

"अरुणाः शिरा वातवहा नीलाः पित्तवहाः शिराः।
असृग्वहास्तु रोहिण्यो गौर्यः श्लेष्मवहाः शिराः" इति ॥

**याज्ञवल्क्यश्चाऽऽह—**

"अनन्ता रश्मयस्तस्य दीपवद्यवस्थिता हृदि।
सितासिताः कण्डुनीलाः कपिलाः पीतलोहिताः" इति ॥ १२४० ॥

---

१ क. ग. वर्णा। २ क. ख. घ. 'मनील'। ३ ख. घ. भवन्ति।

अथैतस्मिन्नन्नरसपरिणामे यथोदिते ॥
प्रत्यङ्मोहस्य यत्कार्यमधुना तत्प्रपञ्च्यते ॥ १२४१ ॥

अथेत्यादिवाक्यतात्पर्यमाह । **अथेति** । निमित्ते सप्तमी ॥ १२४१ ॥

जगदात्मनि निर्माय साधिभूताधिदैवतम् ॥
शुक्लाद्याकृतिनाडीस्थमात्मा पश्यत्यविद्यया ॥ १२४२ ॥

स्वप्ने नाविद्याकार्यमस्ति न तत्र रथा इत्यादिश्रुतेस्तत्कथं तत्प्रपञ्चयितुं वाक्यमित्याशङ्क्याऽऽह । **जगदिति** । अविद्यया नानाविधं वासनामयं जगन्निर्मायाऽऽत्मा पूर्वोक्तनाडीगतत्वादेव पश्यतीति संबन्धः ॥ १२४२ ॥

अविद्यायाः परा काष्ठाऽथेदानीमुच्यते स्फुटम् ॥
तत्कार्यतारतम्येन साऽविद्या भिद्यते यतः ॥ १२४३ ॥

अथ योऽन्यामित्यारभ्याविद्याकार्यं प्रपञ्चितं तत्किमुत्तरवाक्येनेति तत्राऽऽह । **अविद्याया इति** । जाग्रद्धेत्वविद्या[1]विभूतिस्तत्रोक्ताऽत्र स्वप्नहेतोस्तस्या वर्ण्यते कार्यमिति[2] विशेषः । एकैवाविद्येत्यु[3]पगच्छता कथं तद्भेदो[4]ऽप्युपगम्यते तत्राऽऽह । **तत्कार्येति** । अतस्तद्भेदोपगतिरविरुद्धेति शेषः ॥ १२४३ ॥

लिङ्गादिकार्यभेदेन साऽविद्या भिद्यते सदा ॥
स्वतस्त्वविद्याभेदोऽत्र मनागपि न विद्यते ॥ १२४४ ॥

स्वयूथ्यास्तु स्वाभाविकमविद्याभेदमाहुस्तान्प्रत्याह । **लिङ्गादीति** । अत्रेत्यात्मोच्यते । न हि स्वतोऽविद्याभेदो मानाभावान्न च प्रत्यात्मं तद्भेदोऽनुभूयते तद्भेदस्यैवासिद्धेर्न च मायाभिरिति बहूक्त्या तत्सिद्धिः कार्यभेदलब्धतद्भेदानुवादित्वादन्यथा मायां तु प्रकृतिमित्येकवचनविरोधान्न च व्यक्त्यैक्ये संभवति जात्यैक्यं तदर्थः[5] । एतेन यावन्ति ज्ञानानीत्यादि व्याख्यातमिति भावः ॥ १२४४ ॥

तल्लिङ्गं वासनानीडं सूक्ष्मं स्वच्छस्वभावकम् ॥
नाडीगतरसोपाधिसंसर्गात्स्फटिकादिवत् ॥ १२४५ ॥

अविद्योत्थलिङ्गस्य जगद्रूपेणावस्थितिं वदन्नादौ नानाकार्योपलम्भोपयोगित्वेन तस्य भूयो भावनाश्रयत्वमाह । **तदिति** । तस्य घटादिवदग्रहे हेतुमाह । **सूक्ष्ममिति** । वासनाधारत्वे निमित्तमाह । **स्वच्छेति** । ननु नाडीनामेव नानारसपूर्णानां तत्र नीलपीतादिवासनाधारत्वमुचितं न तु लिङ्गस्येत्याशङ्क्याऽऽह । **नाडीगतेति** । स्वाच्छ्ये दृष्टान्तः स्फटिकादिवदिति । तस्यानेकवर्णभाक्त्वे वा हेतुमाह । **नाडीति** ॥ १२४५ ॥

---

१ घ. °द्याभू° । २ क. ख. °ति शे° । ३ क. °द्येत्यवग° । ४ घ. °दोऽभ्युप° । ५ क. तदित्यर्थः ।

**धर्मादिप्रेरकोद्भूतरथस्त्रीहस्तिलक्षण—**
**नानाकृतिरसाद्यात्म ह्यात्मनोऽलुप्तचक्षुषः ॥**
**प्रथते पुरतोऽविद्यामात्रतत्त्वं विनश्वरम् ॥ १२४६ ॥**

उक्तरूपं लिङ्गमनूद्य तत्र साक्षिप्रत्यक्षं प्रमाणयति । **धर्मादीति** । जाग्रद्भोगदादृष्टादिजन्यरथादिनानाकारोपेतमशितादिपाकोत्थरससहकृतं कामाद्यात्मकं लिङ्गमात्मनो विषयत्वेन भातीत्यर्थः । तस्य जडत्वादस्ति साक्ष्यपेक्षेति वक्तुं हिशब्दः । तस्य प्रकाशान्तरापेक्षां वारयति । **अलुप्तेति** । लिङ्गस्य वस्तुत्वं परिहरति । **अविद्येति** । तत्र हेतुः । **विनश्वरमिति** ॥ १२४६ ॥

**एवं तावदविद्यैकनीडानामुदितो विधिः ॥**
**भावनानां विनिष्पत्तौ बोधे स्वप्नेऽथ भण्यते ॥ १२४७ ॥**

अथेत्यादेस्तात्पर्यार्थं प्रतिज्ञाय लिङ्गस्य जाग्रद्रूपेणावस्थानमविद्याकार्यमुक्त्वा तदनूद्य स्वप्ने तत्प्रपञ्चयितुं वाक्यमित्युक्तं तात्पर्यं निगमयति । **एवमिति** ॥ १२४७ ॥

**अथ यत्राऽऽत्ममोहोत्थं घ्नन्तीवैनमितीक्षणम् ॥**
**जिनन्तीवैनमिति च मृषैवमभिमन्यते ॥ १२४८ ॥**

अथ यत्रैनमित्याद्यक्षराणि व्याकरोति । **अथेति** । जाग्रदनन्तरं स्वप्न उच्यत इति यावत् । यस्मिन्काले केचिदागत्यैनमाघ्नन्तीति ज्ञानमिव जायते स स्वप्न इत्येतत् । इवशब्दार्थं ज्ञानस्याऽऽभासत्वं स्फोरयति । **आत्ममोहोत्थमिति** । केचिदुपेत्य मामेवं वशी कुर्वन्तीति च धीरिव यत्र भवति स स्वप्न इत्याह । **जिनन्तीति** । तत्रापीवशब्दार्थमाह । **मृषेति** ॥ १२४८ ॥

**नास्त्यत्र हन्ता जेता वा किंत्वज्ञानोत्थमेव तत् ॥**
**वासनाविष्टविज्ञानो हननाद्यभिमन्यते ॥ १२४९ ॥**

स्वप्नेऽपि जागरावस्थायामिव हन्त्रादि भाति कुतो हननादिधीर्मृषेत्याशङ्क्याऽऽह । **नास्तीति** । कथं तर्हि तत्सत्यत्वधीस्तत्राऽऽह । **किं त्विति** । हननाद्यभिमानस्यातिदृढत्वान्मैवमित्याशङ्क्याऽऽह । **वासनेति** । विज्ञानं मनः ॥ १२४९ ॥

**अधर्मादिप्रकर्षोत्थं गर्तादिपतनादिकम् ॥ १२५० ॥**
**प्रतीचो दर्शनं स्वप्ने मूढस्येहोपजायते ॥**
**मिथ्यात्वकारणं प्राह यदेवेति श्रुतिः स्वयम् ॥ १२५१ ॥**

हस्तीवेत्यादेरर्थमाह । **अधर्मादीति** । आदिपदेनाविद्याप्रकर्षो गर्तादीत्यादिशब्देनाग्निप्रवेशादिः पतनादिकमिति च धावनादि गृह्यते । सर्वं चेदमर्थाकाराभासं दर्शना-

१ क. ग. °क्षणः । ना° । ख. °क्षणम् । ना° । २ क. ख. ग. °द्यात्मा ह्या° । ३ घ. °द्भोगादद° । ४ क. °द्यैकं नाडीना° । ५ घ. °ब्दार्थंशा° । ६ घ. °भासद° ।

भासमित्याह । **प्रतीच इति** । यदेवेत्यादिवाक्यतात्पर्यमाह । **मिथ्यात्वेति** । स्वप्नमिथ्यात्वे बुभुत्सितं हेतुं श्रुतिः स्वयमेव वक्ष्यतो नास्माभिस्तन्मिथ्यात्वं साध्यमित्यर्थः ॥ १२५० ॥ १२५१ ॥

**जाग्रद्विषय एवायं यदैक्षिष्ट पुराऽप्यसत् ॥**
**तदत्र स्वप्नेऽसंभाव्यं मन्यतेऽविद्ययैव सः ॥**
**नाविद्या नापि तत्कार्यं यस्मादात्मसमीक्षणे ॥ १२५२ ॥**

तात्पर्यमुक्त्वा पदानि व्याचष्टे । **जाग्रदिति** । यद्यथादि जाग्रदवस्थायां पुरुषो दृष्टवांस्तत्तत्रापि मिथ्यैव वस्तुनोऽद्वयत्वात्तदेव वासनामयं स्वप्नेऽसंभावितमपि स्वाविद्यया संभावितं मन्यते तदाविद्यत्वात्स्वप्नो मिथ्येत्यर्थः । जागरे स्वप्ने च हस्त्यादेरविद्यां विनाऽसंभावितत्वमुक्तं संभावयति । **नाविद्येति** । आत्मनः सम्यगीक्षणे वाक्यीये सकार्याज्ञानस्यात्यन्तध्वस्तेस्तदसंभावनेत्यर्थः ॥ १२५२ ॥

**भयं त्वेकान्ततोऽविद्याकार्यमाहुर्विपश्चितः ॥**
**यतो विज्ञाततत्त्वानां भीतिर्नास्ति कुतश्चन ॥ १२५३ ॥**

अवस्थयोराविद्यं भयमित्युक्तेऽर्थे विद्वत्प्रसिद्धिमाह । **भयं त्विति** । तत्रैवान्वयव्यतिरेकावाह । **यत इति** । आत्मानमजानतामेव भीतिर्न तु जानतां हेत्वभावादतोऽसावविद्याकृतेत्यर्थः ॥ १२५३ ॥

**एतदुक्तं भवत्यत्र पूर्वोपात्तस्य कर्मणः ॥**
**फलं प्रबोधे यद्भुक्तं तच्छेषो भावनोच्यते ॥ १२५४ ॥**

यदेव जाग्रद्भयमिति विशेषणाद्भयस्याऽऽविद्यत्वेऽपि स्वप्ने कर्तृत्वादेर्न तथात्वमित्याशङ्क्य वाक्यस्य विवक्षितमाह । **एतदिति** । जाग्रद्भोगदं यदार्जितं कर्म तस्य यत्फलं तत्र भुक्तं तस्य लेशो वासना सा च स्वप्ने व्यज्यत इत्याह । **पूर्वेति**॥ १२५४॥

**यदि नामावसितार्था फलं दत्त्वेह भावना ॥**
**पुंभोगसमये कर्म प्रयुङ्क्ते सा पुनर्नवम् ॥ १२५५ ॥**

जाग्रद्भोगदस्य कर्मणस्तदा भुक्तत्वात्तद्वासनानां च स्वप्नभोगेनावसन्नत्वादुत्थानमुत्थितस्यानुष्ठानं च न स्याद्धेत्वभावादित्याशङ्क्याऽऽह । **यदीति** । यद्यपि स्वप्ने पुंसो भोगकाले जाग्रद्वासना व्यक्ता फलं दत्त्वा समाप्तस्वभावा तथाऽपि पुनर्जागरेऽपरा वासना नूतनं कर्म कारयति न हि सत्यामविद्यायामुत्थानानुपपत्तिर्वासनानां च कासांचित्स्वाप्नभोगदत्वमन्यासां जाग्रत्कर्महेतुतेत्युत्थानमुत्थितस्यानुष्ठानसिद्धिरित्यर्थः ॥ १२५५ ॥

---

१ क. 'मभोगहे' ।

**उत्पत्तिभोगयोरेवं भावना कर्मणः सदा ॥**
**प्रयोक्त्री भावनैवाऽऽत्मकर्तृभोक्तृत्वयोर्मृषा ॥ १२५६ ॥**

जागरे स्वप्ने च कर्मोत्पत्तौ तत्फलभोगे च नानावासना प्रयोजिकेत्युक्तं निगमयति। **उत्पत्तीति**। आत्मस्थकर्तृत्वादेरपि कर्मादिद्वारा सैव प्रयोजिकेत्याह । **भावनेति**। प्रयोक्त्रीति संबन्धः । सा चेत्तत्र प्रयोक्त्री प्रयोजिकाऽविद्याभ्युपगमभङ्गस्तत्राऽऽह । **मृषेति** ॥ १२५६ ॥

**एवं सति प्रबोधे यद्भुक्तं प्राक्कर्मणः फलम् ॥**
**तस्यानुवासना धीस्था भावनेत्यभिधीयते ॥ १२५७ ॥**

आत्मैव भावनाधिकरणमिति मतमपाकर्तुमाह । **एवमिति**। अविद्याद्वारा भावनया कर्मप्रवृत्तौ कर्तृत्वादिसिद्धिरिति सिद्धे यत्कर्मफलं जागरे भुक्तं तस्य फलभोगानन्तर-भाविनी या वासना भावनाख्या साऽन्तःकरणस्थेत्युच्यते नाऽऽत्मस्थेत्यर्थः ॥१२५७॥

**आत्मचैतन्यबिम्बेन बिम्बिता धीर्यथा तथा ॥**
**कर्मोत्थफलबिम्बेन बिम्बितेयं मतिः सदा ॥ १२५८॥**

वासना धीस्थेत्युक्तं दृष्टान्तेन साधयति। **आत्मेति**। न हि धीः स्वसत्तायां चैतन्या-भासं व्यभिचरति तस्याः साक्षिसापेक्षत्वात्तथैव सा सर्वदा फलवासनावासितेत्यर्थः ॥ १२५८ ॥

**अविद्याग्रथितः सोऽयं परमात्माऽशरीरतः ॥**
**कर्ता भोक्तेव चाऽऽभाति स्वप्नजाग्रदवस्थयोः ॥ १२५९ ॥**

धीस्थाऽपि सा कर्तृत्वादेर्न प्रयोक्त्री तस्याऽऽत्मनि स्वाभाविकत्वादित्याश-ङ्कयाऽऽह। **अविद्येति**। अशरीरत्वादात्मा स्वतो न कर्ता भोक्ता च किंत्ववस्थाद्वयेऽ-प्यविद्याशबलस्तथाऽऽभातीत्यर्थः ॥ १२५९ ॥

**न चाविद्यातिरेकेण कौटस्थ्यात्प्रत्यगात्मनः ॥**
**हेतुमन्यं प्रपश्यामः कर्तृत्वादिप्रसिद्धये ॥ १२६० ॥**

अशरीरस्यापि स्वाभाविककर्तृत्वाभ्युपगमे का हानिस्तत्राऽऽह। **न चेति** ॥१२६०॥

**रजोधूमतुषाराभ्रनीहाराद्यन्वितं वियत् ॥**
**संभाव्यते यथा मूढैरात्मैवं कर्तृतादिभिः ॥ १२६१ ॥**

आत्मन्याविद्यं कर्तृत्वादीत्येतद्दृष्टान्तेन स्पष्टयति । **रज इति**। तुषारपदेन हिम-स्योक्तत्वान्नीहारशब्देन तमो गृह्यते ॥ १२६१ ॥

**धर्मधर्म्यभिसंबन्धा नेक्ष्यन्ते मानतो यथा ॥**
**वियत्येवं न वीक्ष्यन्ते प्रत्यग्दृष्ट्या यथोदिताः ॥ १२६२ ॥**

---

१ क. घ. षा। २ क. ख. 'त्वाद्येत'।

दृष्टान्ते विप्रतिपत्तिमाशङ्क्योक्तं प्रपञ्चयति । **धर्मेति । उक्तं हि**—

"आकाशमेकं हि यथा घटादिषु पृथग्भवेत् ।
तथाऽऽत्मैकोऽप्यनेकश्च जलाधारेष्विवांशुमान्" इति ।

न चाऽऽकाशस्यैव शब्दसंयोगादिषड्गुणत्वं तद्दृष्ट्या तस्य धर्मित्वे दृष्टान्ताभावात्तस्यासङ्गोदासीनत्वात्कालदेश्च तत्तुल्यत्वात्तत्प्रमाणस्य च स्थूलाकाशविषयत्वादेवमात्मनोऽपि तद्दृष्ट्या कर्तृत्वादयो न प्रमीयन्ते न हि तस्मिन्नसङ्गोदासीने तत्प्रमितिरस्तीति द्रष्टव्यम् ॥ १२६२ ॥

**चैतन्याभाससंमोहं भावनेयं समाश्रिता ॥**
**सत्य आत्मनि कूटस्थ आश्रिता इति भण्यते ॥ १२६३ ॥**

आत्मनि कर्तृत्वाद्यज्ञानोत्थं चेत्कथं तत्प्रयोक्त्री भावनेत्युक्तं तत्राऽऽह । **चैतन्येति** । चिदाभासव्याप्तमात्मनो मोहमाश्रिता सती भावना सत्ये प्रत्यगात्मनि सर्वक्रि[1]याहीने समाश्रितेति कथ्यते मोहस्याऽऽत्मस्थत्वाद्भावनायाश्च तन्निष्ठत्वात्ततो मोहमयी सा प्रतीचि कर्तृत्वादिप्रयोक्त्रीत्यभ्युपगमात्कर्तृत्वादेरुभयकृतत्वमविरुद्धमित्यर्थः । भावनेयमित्यारभ्याऽऽश्रिता इति बहूक्तिर्जातिव्यक्तिभ्यां तद्भेदाभेदौ गृहीत्वेति द्रष्टव्यम् ॥ १२६३ ॥

**स्वामिन्येव यतः सर्वं समवैति क्रियाफलम् ॥**
**ममाहमितिहेतूत्थं स्वामित्वं चाप्यबोधजम् ॥ १२६४ ॥**

कर्तृत्वादेराविद्यत्वे हेत्वन्तरं वदन्सामान्यन्यायमाह । **स्वामिनीति** । तत्र हेतुः । **ममेति** । अहमित्यादौ परिच्छेदाभिमानस्ततो ममेदमिति धीस्ताभ्यामिदं सर्वं कर्म यस्मादुत्तिष्ठत्यतस्तत्फलं ममेति स्थिते स्वामिन्येव युक्तं स्वामित्वकर्तृत्वभोक्तृत्वानामेकाश्रयत्वादित्यर्थः । क्रियातत्फलयोः स्वामिगामित्वेऽपि कथं कर्तृत्वादेराविद्यत्वं तत्राऽऽह । **स्वामित्वं चेति** ॥ १२६४ ॥

**देशकालादिहीनस्य ह्यनवच्छिन्नवस्तुनः[2] ॥**
**अहं[3] ममेत्यवच्छेदो नाऽऽत्माविद्यामृते यतः ॥ १२६५ ॥**

अहंममेत्यभिमानोत्थस्वामित्वं कथमज्ञानजं प्रतिज्ञायते तत्राऽऽह । **देशेति** । तद्धीनत्वमन्यत्र धर्मादित्यादौ प्रसिद्धमिति वक्तुं हिशब्दः । अतोऽवच्छेदद्वयस्याऽऽविद्यत्वात्तत्कृतं कर्तृत्वाद्यपि तथैवेति शेषः ॥ १२६५ ॥

**वासनैकाधिकरण[4]श्चिदाभासोऽभिधीयते ॥**
**भावनारञ्जितज्ञानो भवतीति न निर्द्वयः ॥ १२६६ ॥**

इतश्चाऽऽत्मनो वस्तुतो न कर्तृत्वादीत्याह । **वासनेति** । विविधया भावनया रञ्जितं

---

१ घ. °र्वैविक्रि° । २ ख. ग. °तेऽन्यतः । ३ घ. °नोत्थं स्वा° । ४ क. ग. °णचिदा° ।

ज्ञानमन्तःकरणं तद्यस्यास्ति स चिदाभासो वासनया कर्तृत्वादिरूपया सहैकस्मिन्नधिकरणे तिष्ठत्यतः संसारी भवतीत्युच्यतेऽद्वयस्त्वात्मा न तथेत्यर्थः ॥ १२६६ ॥

**भावनारञ्जितमतिसाक्षित्वादात्मवस्तुनः ॥**
**भावनाश्रयवद्भाति प्रत्यङ्ङ्जडधियामतः ॥ १२६७ ॥**

नन्वात्मनि वासनाधारे संसारिणि भाति किं कष्टकल्पनयेत्यत आह । **भावनेति** । अतःशब्दस्य प्राच्या पञ्चम्या संबन्धः ॥ १२६७ ॥

**बहुनाऽत्र किमुक्तेन यदेवायं समीक्षते ॥ १२६८ ॥**
**बोधे हस्त्यादिकं स्वप्ने तदेवाविद्ययाऽऽत्मनि ॥**
**संभावयति मिथ्यैव नभो नीलं यथा तथा ॥ १२६९ ॥**

यदेवेत्यादेरर्थमुपसंहरति । **बहुनेति** । स्वतोऽविद्यमानस्याविद्यया संभावनां दृष्टान्तेन दर्शयति । **नभ इति** ॥ १२६८ ॥ १२६९ ॥

**कार्यमेतदविद्यायाः प्रोद्भूतायाः प्रदर्शितम् ॥**
**अथापकृष्यमाणायाः कार्यतः कार्यमुच्यते ॥ १२७० ॥**

अथ यत्र देव इवेत्यादेर्वृत्तानुवादेन तात्पर्यमाह । **कार्यमिति** । कार्यतोऽपकृष्यमाणाया इति संबन्धः ॥ १२७० ॥

**देवादिविषयोद्भूतवासनाऽस्य यदा तदा ॥**
**जाग्रद्भूमावथ स्वप्ने जायते सैव भावना ॥**
**देवो राजेव चास्मीति स्वप्नकर्मवशाद्विभोः ॥ १२७१ ॥**

तात्पर्योक्त्याऽथशब्दार्थमुक्त्वा यत्रेत्यादेरर्थमाह । **देवादीति** । यदा जागरे देवादिविषया विद्याऽस्य द्रष्टुर्जाता तदा तदनुसारिणी वासना जायते ततः स्वप्नभोगहेतुकर्मवशादस्य सैव पूर्वोत्पन्ना वासना देवोऽस्मीत्यादिदृष्टिरूपा[3] स्वप्ने संपद्यते सा चेवशब्दान्मिथ्येत्यर्थः । जाग्रद्धेतुकर्मक्षयानन्तर्यमथशब्दार्थः । विभुत्वं करणस्वामित्वेन भोक्तृत्वम् ॥ १२७१ ॥

**ध्वस्तात्ममोहतत्कार्यः स्यात्प्रबोधे यदा तदा ॥**
**सर्वमस्म्यहमेवेदमिति स्वप्नेऽभिमन्यते ॥ १२७२ ॥**

अहमेवेदमित्यादेरर्थमाह । **ध्वस्तेति** ॥ १२७२ ॥

**अहमेवेति चिन्मात्रमात्मनोऽत्रावधार्यते ॥**
**इदंशब्देन चाविद्याकार्यमत्र विवक्षितम् ॥ १२७३ ॥**

संगृहीतं विवरितुं पदत्रयार्थमाह । **अहमिति** । सप्तम्या प्रकृतवाक्योक्तिः ॥ १२७३ ॥

---

१ क. ग. 'नाश्रय' । २ क. 'त्यग्जड' । ३ क. 'दिरू' ।

**अविद्यायाः समुच्छित्तावलमेवमिदं वचः ॥**
**सर्वः कृत्स्नोऽहमस्मीति तदेतदुपपद्यते ॥ १२७४ ॥**

वाक्यार्थं फलोक्तिपूर्वकमाह । **अविद्याया इति** । उक्तरीत्या पदानामर्थे गृहीते समानाधिकृतपदत्रयात्मकं वाक्यं चिन्मात्रं बोधयदविद्यां सकार्यामुच्छेत्तुं शक्तं स्यादित्यर्थः । तत्र वाक्यशेषानुग्रहमाह । **सर्व इति** । उक्तवाक्यार्थोपगमे सर्वोऽस्मीति पूर्णत्वमुच्यमानमात्मनो युज्यते परिच्छेदकाभावादित्यर्थः ॥ १२७४ ॥

**एषोऽस्य परमः पूर्णः कृत्स्नो लोकस्तु विद्यया ॥**
**इतोऽपरे तु ये लोकास्तेऽस्याविद्याप्रकल्पिताः ॥ १२७५ ॥**

सोऽस्येत्यादेरर्थमाह । **एषोऽस्येति** । परमशब्दार्थमाह । **पूर्ण इति** । तस्य सापेक्षत्वं व्यावर्तयति । **कृत्स्न इति** । विद्यया लभ्यत इति शेषः । स्वर्गादिलोकानां सत्त्वे कुतोऽस्य पूर्णतेत्याशङ्क्याऽऽह । **इत इति** ॥१२७५ ॥

**देवो राजेवं यत्स्वप्ने दर्शनं प्रत्यगात्मनः ॥**
**विद्याफलं न तन्न्याय्यमिवशब्देन संगतः ॥ १२७६ ॥**

देवत्वादिज्ञानस्य पुमर्थतया विद्याफलत्वान्न तस्य पूर्णतेति चेत्तत्राऽऽह । **देव इति** ॥ १२७६ ॥

**घ्नन्तीवाविद्यया यद्वन्मन्यते स्वप्नभूमिगः ॥**
**देवो राजेव चास्मीति मोहादेवं क्रियाफलम् ॥ १२७७ ॥**

सर्वस्य चिन्मात्रत्वं पूर्णमेव विद्याफलमिति स्थिते स्वप्ने दृश्यमानदेवत्वादेर्गतिमाह । **घ्नन्तीवेति** । यथा स्वप्नद्रष्टा हननादिकर्मफलमविद्ययाऽनुभवत्येवं देवत्वाद्यपि तत्फलं मोहादेव पश्यत्यतो न तस्य विद्याफलतेत्यर्थः ॥ १२७७ ॥

**अहमेवेति न स्वप्नः साक्षादत्राऽऽत्मवस्तुनः ॥**
**बोधेऽविद्यासहायत्वमिह त्वात्मैव निर्द्वयः ॥ १२७८ ॥**

तर्हि सर्वस्य चिन्मात्रत्वमपि न तत्फलं स्वप्नदृष्टत्वात्तद्दृष्टहननादिवदित्याशङ्क्याऽऽह । **अहमिति** । यत्सर्वस्य चिन्मात्रत्वमत्र स्वप्ने भाति न तदितरस्वप्नवन्मिथ्येवशब्दं विना साक्षादेव सर्वभावश्रवणात्तस्य चाऽऽत्मत्वेन वस्तुत्वादित्यर्थः । जाग्रति दृष्टदेहात्मत्ववदत्रापि दृष्टं सर्वात्मत्वं मिथ्येति चेन्नेत्याह । **बोध इति** । जागरे हेतुभूताविद्यासाहित्यं देहात्मत्वस्यास्ति स्वप्ने केवलमात्मैव विद्याफलभूतो वर्तते वासनारूपाविद्याभानेऽपि स्थूलाविद्याया जाग्रद्वदभानादतो नात्र मिथ्याशङ्केत्यर्थः । यद्वा जाग्रति बाधकबोधसाहित्यं देहात्मत्वादेरस्ति स्वप्ने त्वात्मैव केवलो बाधकविधुरस्तिष्ठत्यतः स्वाप्नः सर्वभावो न मिथ्येत्यर्थः ॥ १२७८ ॥

---

१ ख. तदेत॰ । २ ख. ग. ॰व यः स्वप्ने । ३ ग. ॰क्षादेवाऽऽत्म॰ ।

यावत्किंचिदविद्योत्थमिदमा तदनूद्यते ॥
यथाव्याख्यातमैकात्म्यमहमित्यभिधीयते ॥ १२७९ ॥

सोऽस्येत्यादि व्याख्यायाहमेवेत्यादिवाक्यार्थं सोपस्कारमधिकविवक्षयाऽनुवदन्नादौ पदद्वयार्थमनुवदति । **यावदिति** । यथाव्याख्यातं पूर्णत्वेनोक्तमित्यर्थः ॥ १२७९ ॥

शरीरान्तमिन्दं रूपं साधिभूताधिदैवतम् ॥
प्रतीच्यविद्ययाऽध्यस्तमहमैतद्विशेष्यते ॥ १२८० ॥

कथमिह विशेषणविशेष्यतेत्याशङ्क्याहमो विशेषणत्वमिदमश्च विशेष्यतेत्याह । **शरीरान्तमिति** ॥ १२८० ॥

अन्वयव्यतिरेकाभ्यां यथोक्ताभ्यां पदार्थयोः ॥
विज्ञातयोरिदं वाक्यमहमेवेदमित्यतः ॥ १२८१ ॥

किमर्थं विशेषणविशेष्यार्थज्ञानं तत्राऽऽह । **अन्वयेति** । चातुर्थिकान्वयादिना पदार्थज्ञाने वाक्यप्रवृत्तेस्तदर्थज्ञानोपयोगि तदिष्टमित्यर्थः ॥ १२८१ ॥

बाध्यबाधकयोरेवं ज्ञातयोरुक्तवर्त्मना ॥
प्रतीचि जायते ज्ञानं वाक्यादज्ञानहानिकृत् ॥ १२८२ ॥

पदार्थज्ञानमनूद्य तत्फलं वाक्यार्थज्ञानमनुभाषमाणस्तत्फलमाह । **बाध्येति** । इदमो बाध्यत्वमहमश्च बाधकत्वमिति विवेकः । एवंशब्दार्थमाह । **उक्तेति** ॥ १२८२ ॥

ज्ञानाद्ध्वस्ते हि तमसि ध्वस्ते द्वैते सहेतुके ॥
सर्वः कृत्स्नो भवेदात्मा मनोवाचामगोचरः ॥ १२८३ ॥

कारणध्वंसस्य कार्यध्वंसे कारणत्वद्योतको हिशब्दः । हेतुशब्दो निमित्तविषयः ॥ १२८३ ॥

स एष पर उत्कर्षो विद्यायाः संप्रदर्शितः ॥
संप्रसाद इदं सर्वमात्मनैवावशिष्यते ॥ १२८४ ॥

अहमेवेत्यादेरर्थमनुभाष्य सोऽस्येत्यादेरप्यनुभाषते । **स इति** । अधिकाविवक्षयोक्तमनूद्याधिकमाह । **संप्रसाद इति** । अविद्याकार्यमिदमोच्यते ॥ १२८४ ॥

एक आत्मेति तद्वद्धीः स्वप्नजाग्रदवस्थयोः ॥ १२८५ ॥
अविचारितसंसिद्धिस्तथैवानात्मधीरपि ॥
व्यभिचारस्वभावोक्ता प्रत्यगात्मैकसाक्षिका ॥ १२८६ ॥

आत्ममात्रत्वेन सर्वावशेषात्तदा सोऽद्वयश्चेत्पूर्वावस्थयोः सद्वयः स्यादित्याशङ्क्याऽऽह । **एक इति** । तद्वत्सुषुप्ते यथाऽऽत्माऽद्वयस्तथेत्यर्थः । श्रुत्यादेरुदेतीति शेषः । अनात्मनोऽपि तत्र भानात्तन्नाऽऽत्माद्वयमिति चेत्तत्राऽऽह । **अविचारितेति** । श्रुत्या-

---

१ ख. घ. 'पस्कर' । २ ख. 'द्विशिष्य' ।

द्युत्थाद्वयात्मधीवदनात्मधीरप्यध्यक्षादिभ्यो जाता व्यभिचारस्वभावा स्वानुभवसिद्धा न हि जाग्रदनात्मधीः स्वप्नादावनुगच्छति नापि स्वाप्नी सा जागरादौ तस्मादुक्ताऽनात्मधीः संवेद्याऽनिर्वाच्याऽविद्यैवेत्यात्माद्वैतसिद्धिरित्यर्थः ॥ १२८५ ॥ १२८६ ॥

**व्यभिचारिमतिष्वेवं बुद्धिरव्यभिचारिणी ॥**
**व्यभिचारित्वसंसिद्धिहेतुरैकात्म्यनिष्ठिता ॥ १२८७ ॥**

व्यभिचारित्वेनानात्मनो मृषात्वादात्मनोऽद्वयत्वं चेत्तस्यापि चिदात्मनः स्वापादौ व्यभिचारित्वान्मृषात्वे शून्यमेवाद्वयमित्याशङ्क्याऽऽह । **व्यभिचारीति** । एवमित्यनुभवानुसारोक्तिः । व्यभिचारिणीनां धियां व्यभिचारित्वसाधकान्तराभावादव्यभिचारिणी संविदद्वयात्ममात्रतया स्थिताऽऽस्थेयेत्यर्थः ॥ १२८७ ॥

**सत्यामपि त्वविद्यायां प्रमाणोनुगमात्पुरा ॥**
**वास्तवं वृत्तमीदृङ्नः सिद्धं ह्यनुभवाश्रयम् ॥ १२८८ ॥**

यथोक्तसंवित्तिसिद्धौ फलितमाह । **सत्यामिति** । पुरेति सुषुप्तिकालोक्तिः । अनुभवाश्रयमनुभवगम्यमिति यावत् । ईदृगित्यव्यभिचारित्वाद्वयत्वाद्युक्तिः । तथाविधं तु सर्वोपनिषत्प्रसिद्धमिति वक्तुं हिशब्दः । अवस्थात्रयेऽप्यद्वयमात्मवस्तु स्वीकर्तव्यं द्वैतमिथ्यातायाः साधितत्वादसत्यामविद्यायामद्वयं वस्तु किमु वक्तव्यमिति भावः ॥ १२८८ ॥

**अविद्याविद्ययो रूपं कार्यं चापि समासतः ॥**
**व्याख्यातमेवं मानानां प्राक्सूतेरनुभूतितः ॥ १२८९ ॥**

अहमेवेदमित्यादिवाक्यार्थं प्रसङ्गप्राप्तं समाप्य वाक्यव्याख्यानमनुवर्तयन्नतिच्छन्दावाक्यस्य संबन्धं वक्तुं वृत्तं कीर्तयति । **अविद्येति** । प्रागिति स्वप्नसुषुप्त्योरुक्तिः । अनुभूतिः श्रुतेरुपलक्षणम् ॥ १२८९ ॥

**अनात्मवस्तुमानानां प्रागनात्माभिसंगतेः ॥**
**स्वतःसिद्धात्ममेयोत्थरूपतैव प्रतीयते ॥ १२९० ॥**

प्राक्प्रमाणानां प्रसूतेरविद्यादिदर्शनमिति वदता स्वीकृतमनात्मवस्तु तन्मानं चेत्याशङ्क्याऽऽह । **अनात्मेति** । तत्र मानत्वेनेष्टाध्यक्षादीनां तत्संबन्धात्पूर्वमेव स्वसाधकस्वतन्त्रभूतप्रतीचा संबन्धात्तेन मेयेनाभिव्यक्ताकारता प्रतीयते तस्मादात्मन्येव तेषां मानतेत्यर्थः ॥ १२९० ॥

**चिद्रूपैरेव तैः सद्भिरनात्मार्थोऽपि शक्यते ॥**
**प्रमातुं तदृतेऽनात्मा ह्यन्धकारप्रनृत्तवत् ॥ १२९१ ॥**

प्रत्यक्षादिभिरनात्मवदात्मनोऽपरिच्छेदात्कथं तेषां तत्र मानतेत्याशङ्क्याऽऽह ।

---

१ ख. °वाऽनु° । २ ख. ग. °णागमनात्पु° । ३ क. ख. °दृङ्न सि° । ४ क. किं । ५ क. ख. प्राग्भूते° । ६ घ. °न्त्रस्वभ° । ७ क. ख. °रकता ।

**चिद्रूपैरिति** । तेषां स्वार्थवज्जाड्यात्स्वतोऽसाधकत्वाच्चिद्व्याप्तैरेव तैः स्वार्थोऽनात्मा प्रमातुं शक्यते तद्रूपादृते जडैर्मानैरन्धकारस्थनृत्तवदर्थस्य दुर्ज्ञानत्वात्तस्मात्तेषां चिदात्मापेक्षत्वमस्तीत्यर्थः । चिद्व्याप्तिमन्तरेण जडस्य घटवदसाधकत्वं दीपस्यापि तद्व्याप्तस्यैव साधकत्वोपगमादिति हिशब्दार्थः ॥ १२९१ ॥

**अनात्माऽपि विनाऽऽत्मानं नैवानात्मायते यतः ॥**
**अवस्तुत्वान्निरात्मत्वाद्वन्ध्यासूनुनृशृङ्गवत् ॥ १२९२ ॥**

चिद्रूपैरध्यक्षादिभिरनात्मदृष्टावपि तद्दृष्टेरद्वैतहानिरित्याशङ्क्याऽऽह । **अनात्माऽपीति** । अनात्ममानवत्तदर्थोऽनात्माऽप्यात्मानमनपेक्ष्य न स्वातन्त्र्येण सिध्यत्यतो नाद्वैतहानिरित्यर्थः । स्वातन्त्र्येणानात्मासिद्धौ हेतुमाह । **अवस्तुत्वादिति** । एकस्माद्वस्तुनोऽन्यत्वेनावस्तुनोऽपि स्यादित्याशङ्क्याऽऽह । **निरात्मत्वादिति** ॥ १२९२ ॥

**जाग्रत्स्वप्नसुषुप्तेषु त्वात्माविद्या मृषा सती ॥**
**व्यवहारपथं प्राप्ता स्वतःसिद्धात्मसाक्षिका ॥ १२९३ ॥**

द्वैतस्य तर्हि शून्यत्वोपगतेरविद्यापक्षक्षतिस्तत्राऽऽह । **जाग्रदिति** । आत्माविद्या मानमेयाद्यात्मना विवर्तमानेति शेषः ॥ १२९३ ॥

**सर्वोऽस्मीति हि विद्येयमविद्याऽतोऽन्यदर्शनम् ॥**
**उभयं संविदायत्तं दर्शनं प्राक्प्रमागमात् ॥ १२९४ ॥**

प्रसङ्गप्राप्तमद्वैतभङ्गचोद्यमुपमृद्य वृत्तानुद्रवणं पूर्ववृत्तं स्मारयति । **सर्व इति** । सर्वभावदर्शनं विद्येति ब्रह्मकण्डिकायां प्रस्तुतमिति हिशब्दार्थः । उभयं विद्याविद्याद्वयं तत्कार्यं चेत्यर्थः ॥ १२९४ ॥

**एषोऽस्य परमो लोको यः सर्वोऽस्मीति दर्शितः ॥**
**अतः परं परावस्था निरविद्या प्रदर्श्यते ॥ १२९५ ॥**

विद्याकार्यस्य सर्वात्मभावस्य स्वप्ने दर्शितत्वात्तद्वतहननादिवन्मिथ्यात्वमाशङ्क्योक्तं परिहारं स्मारयति । **एषोऽस्येति** । स्वप्नदृष्टस्यापि सर्वात्मत्वस्य सत्यत्वे हेतुमाह । **अत इति** । स्वप्नोक्त्यनन्तरमिति यावत् । निरविद्या व्यक्ताविद्याहीनेत्यर्थः । यः स्वप्ने सर्वभाव उक्तः स सुषुप्तेऽप्यतिच्छन्दवाक्येनोच्यतेऽतः सर्वभावस्याबाध्यतया प्रतिपाद्यस्य सत्यतेति भावः ॥ १२९५ ॥

**अनाप्तकाममस्योक्तमात्माविद्यैकहेतुकम् ॥**
**रूपं पूर्वमिह त्वस्य ध्वस्ताविद्यमथोच्यते ॥ १२९६ ॥**

पूर्वमपि सर्वभावो दर्शितश्चेत्किमतिच्छन्दवाक्येनेत्याशङ्क्य वृत्तमनूद्योक्तमेव व्यनक्ति ।

---

१ घ. °रप्रनृ° । २ घ. °त्माक्षेपकत्व° । ३ ख. °क्षकत्व° । ४ घ. °स्तुत्वेऽवस्तुनो° । ५ क. ख. °नात्मका° । ६ क. ग. °मिदं त्व° ।

**अनात्मेति** । पूर्वमहमेवेदमित्यस्मात्प्राक्तनश्रुताविति यावत् । व्यक्ताविद्यातज्जहीनं स्वप्ने संक्षिप्तमपि सर्वात्मत्वमतिच्छन्दवाक्येन सुपुप्ते स्पष्टी क्रियत इत्याह । **इह त्विति** । अस्येति षष्ठीभ्यामात्मा निर्दिश्यते ॥ १२९६ ॥

**छन्दः कामोऽधिकारात्स्यात्साहचर्याच्च पाप्मना ॥**
**अतिक्रान्तं यतश्छन्दमतिच्छन्दमिदं ततः ॥ १२९७ ॥**

अतिच्छन्दवाक्यतात्पर्यमुक्त्वा तत्पदानि व्याकुर्वंश्छन्दशब्दार्थमाह । **छन्द इति** । यद्यपि सान्तश्छन्दःशब्दो गायत्र्यादिच्छन्दोवाची तथाऽप्ययमकारान्तश्छन्दशब्दः कामवचनो न कंचन काममिति कामस्य प्रकृतत्वात्तत्प्रयोज्यकर्मवाचिपाप्मपदेन सह पाठाच्चेत्यर्थः । अतिशब्दार्थं वदन्नतिच्छन्दपदं व्युत्पादयति । **अतिक्रान्तमिति** ॥ १२९७ ॥

**विवृतिश्छान्दसी ज्ञेया लक्षणासंभवादिह ॥ १२९८ ॥**
**पाप्मशब्देन चात्र स्याद्धर्माधर्मपरिग्रहः ॥**
**पाप्मनो विजहातीति तथाचैव[३] पुरोदितम् ॥ १२९९ ॥**

तर्हि दैर्घ्यं किमिति प्रयुज्यते तत्राऽऽह । **विवृतिरिति** । इहेति प्रकृतप्रयोगोक्तिः । किमित्यत्र च्छान्दसं दैर्घ्यमिष्टं मुख्यमेव किं न स्यादित्याशङ्क्य रूपपरत्वादतिच्छन्दवचनस्य दैर्घ्यप्रापकाभावादित्याह । **लक्षणेति** । अपहतपाप्मेत्यत्र पाप्मशब्दार्थमाह । **पाप्मेति** । अधर्मे निरूढोऽयं कथं धर्ममपि ब्रूयादित्याशङ्क्याऽऽह । **पाप्मन इति** ॥ १२९८ ॥ १२९९ ॥

**अपेतकारकत्वादिहेतोरज्ञानतो हतेः ॥**
**धर्माधर्मादिपाप्मानो रूपमात्मन उच्यते ॥ १३०० ॥**
**सदाऽपहतपाप्मेति भयहेतोश्च लङ्घनात् ॥**
**आत्मनोऽस्याभयं रूपं सदाऽनस्तमितोदितम् ॥ १३०१ ॥**

तथाऽपि **पापो**ऽहं पापकर्माऽहं पापात्मा पापसंभव **इति** प्रसिद्धेरात्मा कथमपहतपाप्मेत्याशङ्क्याऽऽह । **अपेतेति** । क्रियाकारकफलभेदहेतुरबोधो यस्मात्प्रतीचो वस्तुतोऽपगतस्तस्य प्रतीचः प्रातीतिकानाद्यज्ञानाच्छन्नत्वात्कामादिरात्मस्वरूपमुच्यते तद्धर्मादियोगस्याज्ञानजत्वात्तद्रूपं सदा तद्धीनमेवान्यत्र धर्मादित्यादिश्रुतेरित्यर्थः । अभयं रूपमित्यस्यार्थमाह । **भयेति** । सुषुप्ते विक्षेपकाज्ञानाभावादात्मरूपं कूटस्थमभयं स्थितमित्यर्थः ॥ १३०० ॥ १३०१ ॥

**वास्तवेनैव वृत्तेन ज्ञेयकार्यसमाप्तितः[४] ॥**
**अतः सर्वं कृतं ज्ञानं नातोऽन्यदवशिष्यते ॥ १३०२ ॥**

---

१ ख. ॰नात्मेति । २ घ. इदं । ३ ख. ॰चैवं पु॰ । ४ क. घ. ज्ञेयं का॰ । ख. ज्ञेये का॰ ।

अतिच्छन्दवाक्यार्थज्ञानफलमाह । **वास्तवेनेति** । **पुरुषान्न** परं किंचिदित्यादिश्रुतेस्तज्ज्ञाने ज्ञातव्यान्तरादेरसत्त्वात्कृतकृत्यतेत्यर्थः ॥ १३०२ ॥

**यत एवमतो यावत्किंचित्कार्यान्तरायकम् ॥**
**मोहव्यवहितं वा यत्प्राप्तं तद्ब्रह्मबोधतः ॥ १३०३ ॥**

आत्मातिरिक्तमपि कार्यं ज्ञेयं च भाति तत्कथं तदभावः कथं वा पुरुषार्थत्वं विनाऽऽत्मनो ज्ञेयत्वं तत्राऽऽह । **यत इति** । आत्मातिरिक्तं सर्वं वाचारम्भणमात्रमात्मा चानतिशयसुखत्वात्पुरुषार्थ इत्येवं यतः स्थितमतो यावत्किंचित्कार्यान्तरं ज्ञेयान्तरं वा तद्ब्रह्मणः प्रत्यक्त्वेन बोधात्प्राप्तमेवेत्यतिच्छन्दवाक्यार्थवित्कृतार्थ इत्यर्थः ॥ १३०३ ॥

**कामकर्ममहामोहरहितं रूपमात्मनः ॥**
**श्रुत्या प्रदर्शितं साक्षात्करविन्यस्तबिल्ववत् ॥ १३०४ ॥**

स्त्रीवाक्यसंगतिं वक्तुं वृत्तं कीर्तयति । **कामेति** । मोहस्य महत्त्वमितरापेक्षय संसारं प्रति प्रधानत्वम् ॥ १३०४ ॥

**स्वयंज्योतिष्ट्वमुक्तं यदात्मनः प्राक्प्रयत्नतः ॥**
**तदप्यात्मन आगामि शङ्क्यते कामकर्मवत् ॥ १३०५ ॥**

संबन्धं वक्तुकामश्चोदयति । **स्वयमिति** । वेद्यत्वशङ्कानिरसनं प्रयत्नः ॥ १३०५ ॥

**यस्मात्सुषुप्त आत्माऽयं नाऽऽत्मानं नाप्यनात्मनः ॥**
**जाग्रद्वद्वेत्ति तेनास्य चैतन्यं कामकर्मवत् ॥ १३०६ ॥**

निर्बीजाशङ्काऽतिप्रसङ्गिनीत्याशङ्क्याऽऽह । **यस्मादिति** ॥ १३०६ ॥

**नैतदेवं यतो भेदज्ञानं मोहोत्थकारक—**
**संश्रयादेव न पुनर्मोहाभावे तदिष्यते ॥ १३०७ ॥**

परिहरति । **नैतदिति** । चैतन्यस्याऽऽगन्तुकत्वं वदता सुप्तावसत्त्वमिष्टं तत्र हि किं स्वरूपज्ञानं निषिध्यते किंवा विशेषज्ञानं नाऽऽद्यो यः सुप्तः सोऽहमित्युत्थितस्य प्रतिसंधानविरोधात्पश्यन्वै तन्न पश्यतीति च श्रुतेर्नेतरस्तस्यान्वयव्यतिरेकाभ्यां मोहोत्थकारकजन्यत्वात्सुषुप्ते चाज्ञोऽहमितिव्यक्ताज्ञानाभावात्कारकग्रामस्य च दूरोत्सारितत्वात्तत्र तन्निषेधस्येष्टत्वादित्यर्थः ॥ १३०७ ॥

**यत्र वा अन्यदित्येवं भेदज्ञानमभाषत ॥**
**सत्येव प्रत्यगज्ञाने तस्याज्ञानसमन्वयात् ॥ १३०८ ॥**

यत्राज्ञानं तत्र विशेषज्ञानमित्यन्वये मानमाह । **यत्रेति** । तत्र तस्य भेदज्ञानस्येति यावत् ॥ १३०८ ॥

---

१ क. ग. 'समाश्रया' ।

यत्र त्वस्येति विध्वस्त आत्माज्ञाने प्रबोधतः ॥
तत्केन कमिति श्रुत्या भेददृष्टिर्निषिध्यते ॥ १३०९ ॥

यत्र नाज्ञानं तत्र न विशेषज्ञानमिति व्यतिरेके मानमाह । **यत्र त्विति** । यत्र त्वस्येत्युपक्रम्य तत्केन कमिति श्रुत्येति संबन्धः ॥ १३०९ ॥

एकत्वमेव तेनात्र भेदादर्शनकारणम् ॥
स्त्रीपुंदृष्टान्तवचसा तदेतत्प्रतिपाद्यते ॥ १३१० ॥

सुषुप्ते विशेषज्ञानाभावे हेत्वन्तरमाह । **एकत्वमिति** । तेन परेण जीवस्यैकत्वं सुप्तौ विशेषज्ञानाभावे हेतुरिति यावत्[1] । तत्र स्त्रीवाक्यमवतारयति । **स्त्रीति** । तदेतदेकत्वं विशेषादर्शने कारणमित्यर्थः ॥ १३१० ॥

चेतोनुरागसिद्ध्यर्थं[2] प्रिययेति विशेषणम् ॥[3]
द्विष्टायां सत्यपि स्त्रीत्वे चेतो नैवानुरज्यते ॥ १३११ ॥

दृष्टान्तं व्याकुर्वन्विशेषणकृत्यमाह । **चेत इति** । सति स्त्रीत्वे तद्दृष्ट्या चेतोनुरागयोगात्कृतं विशेषणेनेत्याशङ्क्याऽऽह । **द्विष्टायामिति** ॥ १३११ ॥

अतीव कामवशगः स्त्रीगुणोपेतया स्त्रिया ॥
प्रियया कामयन्त्या च परिष्वक्तः पुमानिह ॥ १३१२ ॥

तर्हि तस्यां प्रीतिसत्तामात्रेण चेतोनुरागसिद्धेः स्त्रीगुणानां सुभ्रूरित्यादीनां व्यर्थतेत्याशङ्क्य वाक्यं योजयति । **अतीवेति** । न चोक्तस्त्रीपिण्डे स्वप्रीतिमात्रेण चेतोनुरागः फलवानिति विशिनष्टि । **कामयन्त्येति** । इहेति परिष्वङ्गफलमवाच्यं कर्मोच्यते । पुमान्न वेत्तीति संबन्धः ॥ १३१२ ॥

परिष्वक्तगिरा चात्र व्यामिश्रीभाव उच्यते ॥
पृक्तावयवयोः प्रीत्या स्त्रीपुंसोरपरस्परम् ॥ १३१३ ॥
उत्पन्नसंभोगफलः पुमान्मैथुनकर्मणि ॥
स न वेत्ति यथा बाह्यं सुखाविष्टो न चाऽऽन्तरम् ॥ १३१४ ॥

परिष्वक्तशब्दस्य विवक्षितमाह । **परिष्वक्तेति** । अत्रेति वाक्योपादानम् । व्यामिश्रीभावः स्त्रीलक्षणे पुरुषलक्षणस्यान्तरनुप्रवेशः । अथैवं कुर्वतोरनयोर्मध्ये किमिति पुमान्बाह्यमान्तरं वा न वेत्ति तत्राऽऽह । **पृक्तेति** । द्वयोरुक्ते कर्मणि तत्फले तदधीनाज्ञानसाम्येऽपि प्राधान्यात्पुंसो निर्देशः ॥ १३१३ ॥ १३१४ ॥

परिष्वङ्गाद्यथा पूर्वं वेद बाह्यान्तरं स्फुटम् ॥
परिष्वक्तस्तु नैवं स वेद बाह्यं न चाऽऽन्तरम् ॥ १३१५ ॥

---

[1] ख. °त् । स्त्री° । [2] ख. ग. °तोपहारसि° । [3] ख. °ते ॥ १३११ ॥ तत्र द° ।

संबन्धाधीनसुखावेशादज्ञानमिति कुतो नियम्यते स्वाभाविकमेव तत्किं न स्यादत आह । **परिष्वङ्गादिति** ॥ १३१५ ॥

**तमोऽव्यवहितैकात्म्यस्तथाऽविद्योत्थकार्यगः ॥**
**वेद बाह्यं जगत्सर्वं स्वं चाऽऽत्मानं तमस्विनम् ॥ १३१६ ॥**

अपरिष्वक्तस्य बाह्यान्तरार्थधीवदनिवृत्ताज्ञानतज्जस्य विशेषधीरिति दार्ष्टान्तिकमाह । **तम इति** ॥ १३१६ ॥

**कार्यकारणरूपः संस्तद्विरुद्धैकरूपिणा ॥**
**परिष्वक्तः पुमान्प्राज्ञे प्राज्ञेनाऽऽत्माऽयमात्मना ॥ १३१७ ॥**

परिष्वक्तस्य विशेषाज्ञानवदव्यक्ताज्ञानतज्जस्य न विशेषज्ञानमिति वदन्नेवमेवेत्यादि योजयति । **कार्येति** । सोपाधिकः पुरुषः सुषुप्ते निरुपाधिकब्रह्मात्मनैक्यं गतोऽव्यक्ताज्ञानतज्जो न विशेषं पश्यतीत्यर्थः ॥ १३१७ ॥

**तमस्विनि निवृत्तेऽस्मिन्देहान्ते प्रत्यगात्मनि ॥**
**वितमस्कात्मना योगे स्वप्नजाग्रत्क्रियाक्षये ॥ १३१८ ॥**

कथं निरुपाधिकेन ब्रह्मणैक्यं स्वापे सिध्यति तत्राऽऽह । **तमस्विनीति** । जाग्रत्स्वप्नभोगप्रदकर्मक्षये यः प्रत्यगात्मा तमस्वी तस्मिन्बुद्ध्यादौ देहान्ते विषयेऽभिमानध्वस्तौ वितमस्कब्रह्मरूपेणैक्यात्मसंयोगो भवति तस्मिन्सति न किंचिज्जानाति **सति** संपद्य न विदुरित्यादिश्रुतेरित्यर्थः ॥ १३१८ ॥

**अविद्याऽन्वेति कार्यं स्वं न त्वात्मानमकार्यतः ॥**
**कार्यं स्वकारणस्थं च न त्वात्मस्थमकारणात् ॥ १३१९ ॥**

प्राज्ञस्य वितमस्कत्वं प्राज्ञः कारणबद्धस्त्विति श्रुतेरसिद्धमिति चेन्नेत्याह । **अविद्येति** । आत्मानं नाविद्याऽनुगच्छतीत्यत्र हेतुमाह । **अकार्यत इति** । सा कार्यमनुगच्छन्ती तद्द्वाराऽऽत्मानमप्यनुगच्छति तत्कार्यबुद्ध्यादेरात्मस्थत्वादित्याशङ्क्याऽऽह । **कार्यमिति** । बुद्ध्यादि नाऽऽत्मानमन्वेतीत्यत्र हेतुमाह । **अकारणादिति** । अज्ञानतज्जयोरन्योन्यमेव योगो नाऽऽत्मनेति समुदायार्थः ॥ १३१९ ॥

**आत्माभासोऽपि योऽज्ञाने तत्कार्ये चावभासते ॥**
**कार्यकारणतारूपस्तमप्येषोऽतिवर्तते ॥ १३२० ॥**

अविद्यातत्कार्यस्याऽऽभासेन संबन्धादात्मनस्तद्द्वाराऽविद्यादिनाऽपि स स्यादित्याशङ्क्याऽऽह । **आत्मेति** ॥ १३२० ॥

**कूटस्थात्मानुरोधित्वात्तावन्मात्रात्मकत्वतः ॥**
**न कार्यं कारणं चातः कटाक्षेणापि वीक्षते ॥ १३२१ ॥**

---

१ क. ख. 'वदध्वस्ताज्ञा' ।

आत्मनः सौषुप्तस्य कारणस्थाभासेन कारणतारूपेण कार्यस्थाभासेन च कार्यतारूपेणासंबन्धे हेतुमाह । **कूटस्थेति** । तदनुरोधिनस्ततो भेदो दर्पणानुरोधिमुखवदित्याशङ्क्याऽऽह । **तावन्मात्रेति** । तदेव तदनुरोधित्वं यत्तन्मात्रत्वं मुखस्य दर्पणानुरोधित्वं चौपचारिकमतस्तस्यान्यासंबन्धात्तदात्मा सुषुप्तोऽपि न तत्संबन्धीत्यर्थः । अन्यासंबन्धे लब्धमर्थमाह । **नेति** ॥ १३२१ ॥

**विज्ञानात्मा परिष्वक्तः प्राज्ञेनैव परात्मना ॥**
**भेदकारणविध्वस्तौ भेदधीर्विनिवर्तते ॥ १३२२ ॥**

सुषुप्ते पुंसोऽतमस्कब्रह्मैक्यमुक्तमुपसंहरति । **विज्ञानात्मेति** । एकत्वहेतोः साध्यं निगमयति । **भेदेति** । तत्कारणं व्यक्ताज्ञानं तस्य स्वापे ध्वंसात्तत्र विशेषधीध्वस्तिरित्यर्थः ॥ १३२२ ॥

**यस्मादेवमतः प्राह न बाह्यमिति नः श्रुतिः ॥**
**ऐकात्म्यमात्रावसितेर्न वेदान्तर्बहिस्तथा ॥ १३२३ ॥**

उक्तेऽर्थे वाक्यं पातयति । **यस्मादिति** । यस्मादेवमित्यस्यैवार्थं स्फुटयति । **ऐकात्म्येति** । श्रुतेरर्थमाह । **नेति** ॥ १३२३ ॥

**क्रियाकारकसंभेदहेतौ सत्यसतीदृशम् ॥**
**सर्वदैवाऽऽत्मनो रूपं निरस्ताशेषभेदकम् ॥ १३२४ ॥**

सुप्तो न वेदेति विशेषणादवस्थान्तरे विशेषधीरिति सविशेषत्वमाशङ्क्याऽऽह । **क्रियेति** । तद्धेतुरभिव्यक्तमज्ञानम् । ईदृशमित्यस्य व्याख्या निरस्तेति ॥ १३२४ ॥

**नाऽऽत्मवृत्तमपेक्ष्येदं नापि बाह्यस्य वस्तुनः ॥**
**क्रियाकारकवद्वस्तु किंचिदीक्षामहेऽमितः ॥ १३२५ ॥**

क्रियादिसंभेदो जागरादौ भाति न वा भाति चेत्सुप्तौ तदभावात्सविशेषता न चेदनुभवविरोध इत्याशङ्क्याऽऽह । **नाऽऽत्मेति** । असङ्गमद्वितीयं कूटस्थं चिदेकतानमात्मवृत्तं न तदपेक्ष्य द्वैतं भाति नाप्यनात्मनो वृत्तं जडत्वमवस्तुत्वमपेक्ष्य ततो द्वैतप्रमित्यभावे न तत्प्रतीतिरिष्टेति भावः ॥ १३२५ ॥

**सर्वमन्यानपेक्षं सत्स्वात्ममात्रतयेक्षितम् ॥**
**ऐकात्म्यतो हिरुग्रूपं न वस्तूत्प्रेक्ष्यतेऽण्वपि[2] ॥ १३२६ ॥**

आत्मवृत्तमपेक्ष्य द्वैतं न प्रामाणिकमित्येतत्प्रतिपादयति । **सर्वमिति** । यथा सर्वमन्यानपेक्षं स्यात्तथाऽऽत्ममात्रतया यदा दृष्टं तदैकस्मादात्मनः सकाशाद्भिन्नं सत्किंचिदपि नोपलभ्येत तस्मादात्मवृत्तानुसारान्न प्रामाणिकी द्वैतधीरित्यर्थः ॥ १३२६ ॥

---

१ घ. °त्वं त्वौप° । २ ख. ग. °त्प्रेक्षते° ।

**आपेक्षिकं तु यद्रूपं तन्मिथ्येत्युपपादितम् ॥**
**स्वतो यद्वस्तुतो नास्ति तत्कुतोऽन्यव्यपेक्षया ॥ १३२७ ॥**

अनात्मवृत्तापेक्षयाऽपि तद्धीरप्रामाणिकीति साधयति । **आपेक्षिकं त्विति** । उक्तं प्रकारं स्मारयति । **स्वत इति** । आगन्तुकस्य रजतादिवन्मिथ्यात्वमावश्यकमित्यर्थः ॥ १३२७ ॥

**अतः सर्वानपेक्षं यत्स्वमहिम्नैव सिध्यति ॥**
**तदेव परमार्थं स्याद्वस्त्वैकात्म्यस्वलक्षणम् ॥ १३२८ ॥**

द्वैतमिथ्यात्वेऽवशिष्टमाचष्टे । **अत इति** । सर्वानपेक्षत्वे हेतुः[1] । **स्वमहिम्नेति** । शून्यव्यावृत्त्यर्थं वस्तुविशेषणम् । ताटस्थ्यं व्युदस्यति । **ऐकात्म्येति** ॥ १३२८ ॥

**यस्मादेवमतः प्राह तद्वा अस्येति नः श्रुतिः ॥**
**उक्तात्मवस्तुनो रूपं कामाविद्यादिवर्जितम् ॥ १३२९ ॥**

सुषुप्ते विशेषज्ञानाभावे स्त्रीवाक्यात्सिद्धे सत्यतिच्छन्दवाक्योक्तं युक्तमित्युपसंहरति । **यस्मादिति** ॥ १३२९ ॥

**कामकर्मादिवन्नेदं मृत्योर्धर्मो भवेदतः ॥**
**चैतन्यं प्रत्यगात्मैव यस्मादुक्तेन हेतुना ॥ १३३० ॥**

सुषुप्ते विशेषज्ञानाभावश्चेज्ज्ञानत्वाविशेषाच्चैतन्यमपि न स्यादित्याशङ्क्याऽऽह । **कामेति** । उक्तस्वयंज्योतिष्ट्वहेतोश्चैतन्यं यस्मादात्मैव तस्मात्कामादिवदज्ञानधर्मतया नाऽऽगन्तुकं तत्कुतः स्वापे न स्यादित्यर्थः ॥ १३३० ॥

**आत्मत्वान्न विभागोऽत्र ज्ञातृज्ञानादिलक्षणः ॥**
**अनपास्ततमस्कोऽपि भेदं नाऽऽत्मनि पश्यति ॥ १३३१ ॥**

चैतन्यस्य स्वात्मत्वे तस्य घटादिज्ञानवत्कारकभेदापेक्षायामद्वैतहानिरित्याशङ्क्याऽऽह । **आत्मत्वादिति** । कादाचित्कत्वमुपाधिरिति भावः । आत्मनि चैतन्ये ज्ञात्रादिभेदाभावे कैमुतिकन्यायमाह । **अनपास्तेति** । कर्मकर्तृविरोधो हेतुः कर्तव्यः । ध्वस्ताज्ञानश्च स्वस्मिन्न तं पश्यतीति किं वक्तव्यमिति शेषः ॥ १३३१ ॥

**अविद्यावर्त्मदृष्ट्यैव ह्यविद्याकार्यवस्तुगम् ॥**
**द्वैतमाभासते व्योम्नि नीलदिङ्मण्डलत्ववत् ॥ १३३२ ॥**

ज्ञातृत्वादिभेदधियो गतिमाह । **अविद्येति** । यत्र हीत्यादिश्रुतिमिहानुकूलयितुं हिशब्दः । तत्कार्यं वस्तु बुद्ध्यादि तन्निष्ठमिति यावत् । ज्ञातृत्वादि द्वैतम् ॥ १३३२ ॥

**निरविद्यं तु यद्रूपमनन्यापेक्षसिद्धिकम् ॥**
**तद्वा अस्यैतदिति तच्छ्रुत्या निर्वर्ण्यतेऽधुना ॥ १३३३ ॥**

---

१ घ. हेतुमाह । २ क. ग. °स्वयं ।

अतिच्छन्दवाक्योक्तं रूपमागन्तुकं चैतन्यमिति शङ्कां स्त्रीवाक्येन निरस्यातिच्छन्दवाक्यार्थमेवोपस्कर्तुमाप्तकामादिवाक्यमादत्ते । **निरविद्यं त्विति** ॥ १३३३ ॥

**सर्वैकात्म्यमिदं यस्मादात्मनो रूपमीदृशम् ॥**
**तदाविष्क्रियते तस्मात्करविन्यस्ताबिल्ववत् ॥ १३३४ ॥**

अतिच्छन्दवाक्यार्थस्य किमित्याप्तकामवाक्येन स्पष्टीकरणमित्याशङ्क्याऽऽह । **सर्वेति** । यस्मादिदमात्मरूपं सर्वस्य कार्यकारणद्वैतस्य कल्पितस्यानुपचरितं स्वरूपं परमानन्दतया परमपुरुषार्थात्मकं च तस्मादा[1]प्तकामश्रुत्या प्रत्यक्षयोग्यतया तत्प्रतिपादितमित्यर्थः । ईदृशमिति पुरुषा[2]र्थोक्तिः ॥ १३३४ ॥

**आत्मनो यदविद्योत्थं रूपं संसारभूमिगम् ॥**
**अनाप्तकामं तत्सर्वमपेक्ष्येदमिहोच्यते ॥ १३३५ ॥**
**आप्तकामादिकं सर्वं वस्तुवृत्तव्यपेक्षया ॥**
**आप्ताप्तव्यादिहीनत्वादानन्दैकात्म्यवस्तुनः ॥ १३३६ ॥**

[3]आप्तकामवाक्यस्य विशेषणान्यवतारयति । **आत्मन इति** । रूपं कार्य[4]कारणात्मकमव्याकृतसूत्रादिलक्षणमित्यर्थः । श्रुतिः सप्तम्यर्थः । तेषां तात्पर्यमाह । **वस्त्विति** । आनन्दैक[5]रूपस्य वस्तुनो वास्तवस्वरूपापेक्षया सर्वभेदहीनत्वाद्युक्तमाप्तकामत्वादीत्यर्थः ॥ १३३५ ॥ १३३६ ॥

**पुमर्थः कामशब्दार्थो नान्योऽर्थः काम्यते यतः ॥**
**आप्ताशेषपुमर्थोऽयं सर्वसाधननिस्पृहः ॥ १३३७ ॥**

कामशब्दार्थं सहेतुमाह । **पुमर्थ इति** । कामशब्दस्योक्तार्थत्वे सोऽनेनाऽऽप्त इति व्युत्पत्त्याऽन्यस्यैव तथात्वं स्यादित्याशङ्क्याऽऽह । **आप्तेति** । आत्मत्वेन नित्याप्तेरात्मा पुमर्थतयाऽकाम्यत्वाच्च सर्वानपेक्षः सन्नाप्तश्च कामश्चेत्याप्तकाम इत्यर्थः ॥ १३३७ ॥

**सत्यकामादिशब्देन यदप्यन्यत्र भाषितम् ॥**
**एतद्वाक्यानुरोधेन व्याख्येयं तदपि स्फुटम् ॥ १३३८ ॥**

सत्यकामः सत्यसंकल्प इत्यादौ छान्दोग्ये का[6]मशब्दस्याऽऽत्मसंबन्धिताश्रुतेर्न तच्छब्दस्योक्तार्थतेत्याशङ्क्याऽऽह । **सत्येति** । इह तावत्स्वरूपसुखं निर्मृष्टनिखिलदुःखं कामशब्दार्थ आत्मकामादिविशेषणात्तथाचैतदनुसाराच्छान्दोग्योक्तमपि नेतव्यं परविषयत्वेन वाक्ययोरेकत्वात्तस्माद्युक्ताऽत्र कामशब्दस्योक्तार्थतेत्यर्थः । एतद्वाक्यानुसारेण तद्वाक्यव्याख्यानमुचितमेकविषयत्वेनैकवाक्यस्य स्फुटत्वादिति हेतुमाह । **स्फुटमिति** ॥ १३३८ ॥

---

१ क. ख. घ. °दात्मका° । २ घ. °षार्थतोक्तिः । ३ घ. आत्मका° । ४ घ. °यैकर° । ५ ख. °कस्वरू° । ६ घ. °मस्या° ।

**आत्ममात्रं समुत्सृज्य सत्यत्वं नान्यतो यतः ॥**
**तत्रैव निरधार्येतद्यत्र नान्यदिति श्रुतेः ॥ १३३९ ॥**

सत्यकामवाक्ये कामशब्दो यथोक्तसुखवाचीत्यत्र हेत्वन्तरमाह । **आत्ममात्र-मिति** । अतो निरतिशयसुखमात्मतत्त्वं सत्यकामपदवेदनीयमिति शेषः । तदेव कुतः सिद्धमित्याशङ्क्य भूमवाक्यादित्याह । **तत्रैवेति** । छान्दोग्यश्रुतावेव **यत्र नान्यत्पश्य-तीत्यादिश्रुत्या** दर्शनादिनिषेधे भूमलक्षणमाचक्षाणया प्रत्यगात्मनो भूम्नः सत्यत्वं सुखत्वं चेत्येतन्निर्धारितमित्यर्थः ॥ १३३९ ॥

**सुखसंविद्धि काम्योऽर्थो बाह्यसाधनसाधनः ॥**
**संविदेव सुखं यस्मादाप्तकाममिदं ततः ॥ १३४० ॥**

श्रुत्यन्तरविरोधशङ्कामुन्मूल्याऽऽप्तकामत्वमुपसंहरन्नादौ लोकप्रसिद्धिमाह । **सुखेति** । बाह्यानि स्रगादीनि साधनानि यस्योत्पादकानि स काम्योऽर्थः सुखसाक्षात्कारः प्रसिद्ध इत्यर्थः । तथाऽप्यात्मनि किमायातं तदाह । **संविदेवेति** । **विज्ञानमानन्दमिति श्रुते-**रात्मातिरिक्तसुखतत्संविदोरभावादात्मरूपं कर्मधारयादाप्तकाममित्यर्थः ॥ १३४० ॥

**कामकामिप्रभेदेन प्रतीचोऽस्याऽऽप्तकामता ॥**
**हिरण्यगर्भवत्किंवा निर्भेदस्येह भण्यते ॥ १३४१ ॥**

आत्मकामपदमाकाङ्क्षापूर्वकमादाय व्याकरोति । **कामेति** । इहेति श्रुतिरुक्ता ॥ १३४१ ॥

**आत्मैव कामा निःशेषा नाऽऽत्मरूपप्रभेदतः ॥**
**आत्मैवेदं सर्वमिति प्रत्यङ्मात्रावशेषणः ॥ १३४२ ॥**

आत्मनो भेदेन कामा न सन्तीत्यत्र हेतुमाह । **आत्मेति** । नाऽऽत्मनो हिरण्यग-र्भवदाप्तकामत्वमन्वयादिपरिहाण्या सर्वस्याऽऽत्ममात्रताश्रुतेस्तस्मात्तस्य निर्भेदस्यैवाऽऽप्त-कामतेत्यर्थः ॥ १३४२ ॥

**समस्तव्यस्तताशङ्कामुच्छेत्तुं चोत्तरं वचः ॥**
**अकाममित्यतो ध्वस्तसमस्तव्यस्तरूपकम् ॥ १३४३ ॥**

अकाममित्यस्यार्थमाह । **समस्तेति** । वक्ष्यमाणपक्षेण समुच्चयार्थश्चकारः । विशेष-णफलमाह । **अत इति** । कामादिसर्वभेदरहितमात्मरूपं तस्मिन्सत्यपि स्वापादौ तदभा-वान्न च व्यस्ताभावे तदपेक्षसमस्तसंभवोऽतोऽकामत्वात्तदेकरसमिति भावः ॥ १३४३ ॥

**आप्तकामात्मकामत्ववचसैव निराकृताः ॥**
**कामाः सर्वेऽकाममिति तथाऽपि पुनरुच्यते ॥ १३४४ ॥**

पुनरुक्तिं शङ्कते । **आप्तेति** । तदनर्थकं पौनरुक्त्यादिति शेषः । न च समस्तव्यस्त-त्वशङ्कां समुच्छेत्तुमिति वाच्यमाप्तकामादिवचसैव तत्सिद्धेरिति भावः ॥ १३४४ ॥

आत्माश्रयत्वं कामानां केचिद्व्याचक्षतेऽबुधाः ॥
अतस्तत्प्रतिषेधार्थं भूयोऽकाममितीरणम् ॥ १३४५ ॥

पुनरुक्तिमङ्गीकृत्य तस्याः सार्थत्वमाह । आत्मेति । कामकामिविभागे प्रत्युक्ते कथं कामाश्रयत्वमात्मनः शक्यशङ्कमित्याशङ्क्याऽऽह । अबुधा इति । मन्दमतीनां मतनिरासार्थं विशेषणमर्थवदिति फलितमाह । अत इति ॥ १३४५ ॥

कामादिहेतुकः शोकः कामाद्यज्ञानहेतुकम् ॥
तदभावादथैकात्म्यं शोकान्तरमितीर्यते ॥ १३४६ ॥

शोकान्तरमित्यस्यार्थमाह । कामादीति । तदभावात्सुषुप्तौ व्यक्ताज्ञानाभावादित्येतत् ॥ १३४६ ॥

यदि वा शोकवद्वस्तु शोकशब्देन भण्यते ॥
गुणत्वाच्छोकशब्दस्य मतुपो लुप्तता भवेत् ॥ १३४७ ॥

कुतोऽशोकत्वं तदाश्रयसंबन्धादित्याशङ्कामथशब्देनानूद्यार्थान्तरं ब्रुवाणः शोकशब्दार्थमाह । यदि वेति । अन्तःकरणं शोकशब्दितामित्यत्र हेतुमाह । गुणत्वादिति । तद्वाचित्वादिति यावत् । किमिति तर्हि शोकवदिति नोच्यते तत्राऽऽह । मतुप इति । लुप्तता छान्दसीति शेषः ॥ १३४७ ॥

शोकार्हवत्पदार्थेभ्यो जात्यन्तरमिदं यतः ॥
अहेतुफलरूपत्वाच्छोकान्तरमतो मतम् ॥ १३४८ ॥

तथाऽपि किं शोकान्तरं तदाह । शोकार्हेति । आत्मरूपं हेतुफलविलक्षणतया शोकयोग्यबुद्ध्यादिभ्योऽर्थान्तरत्वात्प्रामाणिकैः शोकान्तरमाधिगतमित्यर्थः ॥ १३४८ ॥

शोकस्य प्रत्यगात्मा वा शोकान्तरगिरोच्यते ॥
शोकहेतोरपि प्रत्यङ्ङात्मा स्याच्छोकवान्कथम् ॥ १३४९ ॥

द्वैतप्रसक्तिमाशङ्क्यार्थान्तरमाह । शोकस्येति । कथं तर्हि तस्य शोकराहित्यं न हि तदात्मा तद्रहितस्तत्राऽऽह । शोकेति । अपिः शोकसमुच्चयार्थः । न हि सर्पस्य रज्जुं विना सत्त्वाभावे तस्यास्तद्वत्त्वं वस्तुतोऽस्तीति भावः ॥ १३४९ ॥

अशोकान्तरमिति वा श्रुत्यन्तरसमाश्रयात् ॥
अशोकादपरोऽशोकोऽशोकान्तरमितीर्यते ॥ १३५० ॥

अशोकान्तरमितिमाध्यंदिनपाठमुत्थापयति । अशोकेति । तं व्युत्पादयति । अशोकादिति ॥ १३५० ॥

शोकायोग्यः शुचा हीनोऽशोकशब्देन भण्यते ॥
यद्वाऽन्तरयते शोकमानन्दैकस्वभावतः ॥
शैत्यं हुताशवत्तस्माच्छोकान्तरमिदं भवेत् ॥ १३५१ ॥

अशोकशब्दार्थमाह । **शोकेति** । ईश्वरो मायाविशिष्टः सर्वनियन्ता शोकायोग्यत्वादशोकः केवलश्चिद्धातुरविद्यातज्जरूपया शुचा हीनत्वाद्विशिष्टादर्थान्तरत्वेनाशोकान्तरमित्यर्थः । यत्तु काण्वपाठे शोकस्य प्रत्यक्तया शोकान्तरमिति तत्र प्रतीचस्तद्वत्त्वाभावेऽपि तत्त्वापत्तेरित्याशङ्क्यार्थान्तरमाह । **यद्वेति** । आत्मरूपं शोकं तिरयतीत्यत्र हेतुः । **आनन्देति** । तस्य तत्तिरस्कर्तृत्वे दृष्टान्तः । **शैत्यमिति** । दार्ष्टान्तिकं निगमयति । **तस्मादिति** ॥ १३९१ ॥

**शोकादेर्जनकं यद्वा तच्छोकान्तं भवेत्तमः ॥**
**तस्यारं छिद्रमेतत्स्याच्छान्दसी वर्णनिह्नुतिः ॥ १३९२ ॥**

आत्मनः शोकहेतुयोगे सुखत्वेऽपि न सर्वथा तत्तिरस्कर्तृतेत्याशङ्क्यार्थान्तरमाह । **शोकादेरिति** । तर्हि शोकान्तारमिति स्यान्नेत्याह । **छान्दसीति** ॥ १३९२ ॥

**अविद्याकामकर्माणि निःसङ्गत्वस्वभावतः ॥**
**अतिवर्तत आत्माऽयं वस्तुवृत्तानुरोधतः ॥ १३९३ ॥**

कथमात्मनः शोकहेतुराहित्यमविद्यादिमत्त्वप्रतीतेरित्याशङ्क्याऽऽह । **अविद्येति** । प्रतीतिविरोधं परिहर्तुं द्वितीयपादार्थं स्फुटयति । **वस्त्विति** ॥ १३९३ ॥

**स्वतो बुद्धं यतो वस्तु स्वतः शुद्धमतोऽद्वयम् ॥**
**स्वतो मुक्तमतः सिद्धमविद्यातज्जहानतः ॥ १३९४ ॥**

वस्तुवृत्तमेव दर्शयन्नाप्तकामवाक्यार्थमुपसंहरति । **स्वत इति** ॥ १३९४ ॥

**यत एवमिदं वस्तु अतिच्छन्दादिलक्षणम् ॥**
**निःशेषध्वान्तसंबन्धव्यतिक्रान्तमिदं ततः ॥ १३९५ ॥**

अत्रेत्यादेस्तात्पर्यमाह । **यत इति** ॥ १३९५ ॥

**जन्यकारणसंबन्धात्कार्यकारणसंगतेः ॥**
**जन्यहेत्वतिवृत्तत्वात्पिताऽप्यत्रापिता ततः ॥ १३९६ ॥**

प्रतिपदं व्याकुर्वन्नत्र पिताऽपितेत्यस्यार्थमाह । **जन्येति** । पुत्रस्य कारणं धर्मादि तेन संबन्धात्पितापुत्रयोः कार्यकारणत्वोपगमात्सुप्तौ च तत्संबन्धाभावात्तन्निबन्धनकार्यकारणत्वव्यावृत्तेर्जागरादौ पिताऽपि सुषुप्ते भवत्यपिता पुत्रेऽपि तुल्यमेतदित्यर्थः ॥ १३९६ ॥

**अविद्यैव यतो हेतुः कर्तृत्वस्य न वस्तुतः ॥**
**कर्तृत्वे सति कर्माणि नान्यथाऽकर्तुरात्मनः ॥ १३९७ ॥**

आत्मनः सुषुप्ते धर्मादिसंबन्धाभावार्थं कर्तृत्वाद्यभावमाह । **अविद्येति** । व्यक्ताविद्या कर्तृत्वस्य हेतुर्न स्वतस्तदस्ति मोक्षाभावप्रसङ्गान्न च सुप्तौ तादृगविद्या तद्भङ्गात्तन्न तदा

---

१ घ. °दर्शयि° ।

कर्तृतेत्यर्थः । तदभावेऽपि कर्मसंबन्धः स्यादिति चेन्नेत्याह । **कर्तृत्व इति** । अकर्तुरिति च्छेदः । विपक्षे त्वनिर्मुक्तिरिति भावः ॥ १३५७ ॥

**अविद्यायामतोऽसत्यां नाऽऽत्मनः कर्तृकर्मणी ॥**
**पितृपुत्रादिसंबन्धो नातोऽस्तीह सुषुप्तगे ॥ १३५८ ॥**

सुषुप्तौ व्यक्ताविद्याभावे फलितमाह । **अविद्यायामिति** । कर्तृत्वस्यावास्तवत्वमकर्तुः कर्माभावश्चातःशब्दार्थः । कर्मासंबन्धे फलितमाह । **पित्रिति** ॥ १३५८ ॥

**असङ्गोऽयं स्वतो यस्मान्नातः केनचिदात्मनः ॥**
**सर्वावस्थासु संबन्धः संबन्धोऽतोऽस्य मोहतः ॥ १३५९ ॥**

सुषुप्तगविशेषणात्पितापुत्राद्यसंबन्धस्तत्रैव न सदेत्याशङ्क्याऽऽह । **असङ्गोऽयमिति** । संबन्धबुद्धेर्गतिमाह । **संबन्ध इति** । वास्तवसंबन्धायोगोऽतःशब्दार्थः ॥ १३५९ ॥

**शुभकर्माभिसंबन्धः केवलो नास्य वार्यते ॥**
**निषिध्यते यतो योगः कुत्सितेनापि कर्मणा ॥ १३६० ॥**

अत्र स्तेन इत्यादेस्तात्पर्यमाह । **शुभेति** । अस्येति सौषुप्तात्मोक्तिः ॥ १३६० ॥

**विप्रहाटकहार्यत्र स्तेनशब्देन भण्यते ॥**
**भ्रूणघ्नसहचारित्वाच्चाण्डालो ब्राह्मणीसुतः ॥ १३६१ ॥**
**शूद्रेण जातो विज्ञेयः प्रातिलोम्योपलक्षणः ॥**
**वरिष्ठब्रह्महा चेह भ्रूणहेत्यभिधीयते ॥ १३६२ ॥**

स्तेनादिपदानि व्याचष्टे । **विप्रेत्यादिना** । स्तेनशब्दश्चोरमात्रे भाति कथं विशेषणमित्याशङ्क्याऽऽह । **भ्रूणघ्नेति** । अनुक्तप्रतिलोमोपलक्षणत्वं चण्डालस्याऽऽह । **प्रातिलोम्येति** । यथाऽऽह—

"आयोगवश्च क्षत्ता च चाण्डालश्चाधमो नृणाम् ।
प्रातिलोम्येन जायन्ते शूद्रादपसदास्त्रयः" इति ॥

अन्योऽप्याह—

"ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकस्तथा ।
शूद्राज्जातस्तु चाण्डालः सर्वधर्मबहिष्कृतः" इति ॥

ननु भ्रूणघ्ना सह पठितोऽपि स्तेनो ब्राह्मणसुवर्णहर्तेति कुतो नियम्यते तत्राऽऽह । **वरिष्ठेति** ॥ १३६१ ॥ १३६२ ॥

**उत्पन्नः क्षत्रियायां यः शूद्रेणैव स उच्यते ॥**
**पौल्कसः पुल्कसो ज्ञेयः स्वार्थ एव च तद्धितः ॥ १३६३ ॥**

पौल्कसं व्याकरोति । **उत्पन्न इति** । न च

"जातो निषादाच्छूद्रायां जात्या भवति पुल्कसः" ।

इति विरोधः । शूद्रयां ब्राह्मणाज्जातो हि निषादः । **यथाऽऽह—**

"विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम् ।
अम्बष्ठः शूद्र्यां निषादो जातः पारशवोऽपि च" इति ।

तथाच शूद्रायां ब्राह्मणाज्जातो यो निषादो जात्या शूद्रस्तस्मात्क्षत्रियायां जातः पुल्कस इति वचनपर्यवसानादिति भावः । पुल्कससंबन्धी पौल्कसो न पुल्कस एवेत्याशङ्क्याऽऽह । **स्वार्थ इति** ॥ १३६३ ॥

**निकृष्टदेहसंबन्धप्रापकैरपि कर्मभिः ॥**
**असंबद्धः सुषुप्तस्थः कर्महेत्वनभिप्लुतेः ॥ १३६४ ॥**

स्तेनादिवाक्यतात्पर्यमुपसंहरति । **निकृष्टेति** । कर्महेतुरभिव्यक्ताविद्यादि ॥१३६४॥

**तथैवानभिसंबन्ध आश्रमाख्यैश्च कर्मभिः ॥**
**परिव्राट्श्रमणो ज्ञेयस्तापसाश्रमसंनिधेः ॥ १३६५ ॥**

श्रमणादिवाक्यतात्पर्यमाह । **तथेति** । शुभाशुभदेहसंबन्धहेतुकर्मभिरिति यावत् । श्रमणशब्दस्य क्षपणके रूढिमाशङ्क्याऽऽह । **परिव्राडिति** ॥ १३६५ ॥

**वर्णाश्रमादिहेतूनां सर्वेषामपि कर्मणाम् ॥**
**उपलक्षणकृज्ज्ञेयः परिव्राट्तापसग्रहः ॥ १३६६ ॥**

द्वयोरेव ग्रहात्तत्कर्मायोगेऽपि सौषुप्तस्य वर्णाश्रमान्तरकर्मयोगं शङ्कित्वाऽऽह । **वर्णेति** । आदिशब्देन वयोवस्थादि गृह्यते ॥ १३६६ ॥

**इत्येवमादयोऽनन्ताः संबन्धा मोहहेतवः ॥**
**नरेण परिसंख्यातुं न शक्याः कल्पकोटिभिः ॥ १३६७ ॥**

सौषुप्ते श्रौतसंबन्धाभावेऽपि संबन्धान्तराणि भविष्यन्ति तद्भेदानामानन्त्यादित्याशङ्क्याऽऽह । **इत्येवमिति** । सर्वेऽपि ते सौषुप्ते पुरुषे निवर्तन्ते तद्धेतुव्यक्ताविद्याभावादिति भावः । आनन्त्यं स्फोरयति । **नरेणेति** ॥ १३६७ ॥

**पुण्यापुण्ये हि निखिलसंबन्धस्येह कारणम् ॥**
**प्राज्ञोऽनन्वागतस्ताभ्यां कर्महेत्वसमन्वयात् ॥ १३६८ ॥**

अनन्वागतमित्यादेरर्थमाह । **पुण्येति** । इहेत्यात्मोक्तिः । पञ्चमेऽप्युक्तमेतदिति हिशब्दार्थः । स्वापे पुण्यपापाभ्यां पुंसोऽस्पृष्टत्वे हेतुमाह । **कर्मेति** । अज्ञानोत्थं कारकं तद्धेतुस्तस्य स्वापेऽनन्वयादिति यावत् ॥ १३६८ ॥

१ क. °प्लुतः ॥ १३६४ ॥ २ ख. °स्यातुमश° ।

**परं रूपं समापन्नः कर्माविद्यानिमित्तकम् ॥**
**पितृमात्रादिसंबन्धं सुषुप्ते सोऽतिवर्तते ॥ १३६९ ॥**

तत्र हेतुमाह । **परमिति** । कर्माद्यानिबन्धनं ब्रह्म यतः स्वापे प्रतिपद्यते सता सोम्य तदा संपन्न इति श्रुतेरतस्तद्गतः पित्रादिसंबन्धहीनः पुरुषो भवतीत्याह । **पित्रिति** ॥ १३६९ ॥

**जीवत्येव शरीरेऽस्मिंस्तत्स्थ एव कथं पुनः ॥**
**सर्वसङ्गव्यतीतोऽयं भवतीत्यभिधीयते ॥ १३७० ॥**

व्याख्यातमनन्वागतवाक्यं शङ्कोत्तरत्वेन व्याख्यातुं शङ्कयति । **जीवत्येवेति** । एतदुत्तरत्वेन वाक्यमवतारयति । **अभिधीयत इति** ॥ १३७० ॥

**यतोऽनन्वागतं रूपं सुषुप्तेऽस्याऽऽत्मनः स्वतः ॥**
**उभाभ्यां पुण्यपापाभ्यां कुतस्तदपि चेन्मतम् ॥ १३७१ ॥**

व्याचष्टे । **यत इति** । अतः सर्वसङ्गव्यतीत इति शेषः । कर्मासंबद्धत्वमप्यासिद्धमिति शङ्कते । **कुत इति** ॥ १३७१ ॥

**हृदयातिक्रमाद्यस्मात्तद्धर्माननतिवर्तते ॥**
**कर्मप्रयोजकान्कामांस्तस्मात्सुस्थं यथोदितम् ॥ १३७२ ॥**

तीर्णो हीत्याद्युत्तरत्वेनाऽऽदत्ते । **हृदयेति** । यथोदितं[2] सुप्तौ कर्मासंबन्धादशेषसंबन्धराहित्यमिति यावत् ॥ १३७२ ॥

**हृदयस्यैव धर्मास्ते शोककामादयो यतः ॥**
**तीर्णबुद्धिर्हि तद्धर्मांस्तस्मादेषोऽतिवर्तते ॥ १३७३ ॥**

हृदयस्य शोकानतिक्रामतीत्ययुक्तं शोकशब्दितकामादीनामात्मधर्मत्वादिति केचित्तान्प्रत्याह । **हृदयस्येति** । शोकान्हृदयस्येति संबन्धस्य हृदि श्रिता इति हृदयाश्रितत्वस्यैतत्सर्वं मन इति तादात्म्यस्य च श्रवणान्न तेषामात्मधर्मता किंतु मनोधर्मत्वमतः सुप्तस्तदतिक्रमात्तद्धर्मान्कामादीनतिक्रामतीत्यर्थः । धर्मिसंबन्धाभावे तद्धर्मसंबन्धाभावः सुतरामिति हिशब्दार्थः ॥ १३७३ ॥

**पुण्यपापाभिसंबन्धः स्वप्ने हृदयसंगतेः ॥**
**वासनामात्रया त्वत्र साऽपि प्राज्ञे निवर्तते ॥ १३७४ ॥**

स्वप्नवत्सुप्तौ कामाद्ययोगेऽपि कर्मयोगः किं न स्यात्तत्राऽऽह । **पुण्येति** ॥१३७४

**करणत्वं विहायेह केवलाज्ञानमात्रकम् ॥**
**स्वप्न आस्ते मनोरूपं वासनामयविग्रहम् ॥ १३७५ ॥**

---

१ ख. घ. °बन्धत्व° । २ क. °तं क° । ३ क. ख. शोकादिश° ।

स्वप्ने मनसः सत्त्वात्कथं वासनामात्रया कर्मयोगस्तत्राऽऽह । **करणत्वमिति** ॥ १३७५ ॥

**वासनामय एवातो भुङ्क्ते स्वप्ने क्रियाफलम् ॥**
**न हि स्वप्नदृशो योगः स्वप्नेऽन्येनास्ति केनचित् ॥ १३७६ ॥**

स्वप्ने स्वरूपेण मनो न तिष्ठति चेत्कथं भोगस्तत्राऽऽह । **वासनेति** । वासनामयत्वं तत्प्रधानत्वं वासनाविग्रहस्य मनसोऽवशेषादित्यतःशब्दार्थः । जागरवत्स्वप्नेऽपि स्थूलो भोगः किं न स्यात्तत्राऽऽह । **न हीति** ॥ १३७६ ॥

**स्वाभासवर्त्मनैवाऽऽस्ते जाग्रत्स्वप्नसुषुप्तिषु ॥**
**अविद्याकामकर्मादि बिभर्तीव न तु स्वतः ॥ १३७७ ॥**

स्वप्नसुप्त्योर्वस्तुतोऽन्येनायोगेऽपि जागरे सोऽस्तीत्याशङ्क्याऽऽह । **स्वाभासेति ।** बुद्ध्यादिस्थचित्प्रतिबिम्बद्वारैवाऽऽत्मा सदाऽविद्यादिना युज्यते न स्वतोऽसङ्गत्वश्रुतेरित्यर्थः । आदिशब्देन वासना गृह्यते ॥ १३७७ ॥

**चैतन्यमपि नैव स्यादात्मनः कामकर्मवत् ॥**
**धर्मानन्वयतः प्राज्ञ इत्येवमभिचोदिते ॥ १३७८ ॥**
**स्त्रीपुंदृष्टान्तवाक्येन परिहारश्च दर्शितः ॥**
**विभागहेत्वसद्भावाज्जाग्रद्वन्नोपलभ्यते ॥ १३७९ ॥**

यद्वै तन्न पश्यतीत्यादेः संबन्धार्थं वृत्तं कीर्तयति । **चैतन्यमिति** । धर्मः कामादिस्तद्वच्चैतन्यस्यापि सुप्तौ हेत्वभावेन सत्त्वायोगादिति हेत्वर्थः । उक्तमेव परिहारमनुद्रवति । **विभागेति** । बाह्यो घटादिरान्तरश्च सुखादिर्विभागस्तस्य हेतुर्व्यक्तमज्ञानं तदभावादिति यावत् । चैतन्यमिति शेषः ॥ १३७८ ॥ १३७९ ॥

**अविभागात्मतां यातं न पुनः कामकर्मवत् ॥**
**साधितं च प्रयत्नेन स्वयंज्योतिष्ट्वमात्मनः ॥ १३८० ॥**

हेत्वन्तरमाह । **अविभागेति** । अद्वयब्रह्मणैकीभूतमिति यावत् । नासत्त्वमनुपलब्धिहेतुरित्याह । **न पुनरिति** । तदेव तत्रादृष्टिकारणं किं न स्यात्तत्राऽऽह । **साधितं चेति** । आत्मनः स्वयंज्योतिष्ट्वं वागादिवदौपचारिकमित्याशङ्क्य तस्यान्यानवभास्यत्वेन तस्य सर्वावभासकत्वान्नैवमित्याह । **प्रयत्नेनेति** ॥ १३८० ॥

**यद्यात्माऽयं स्वयंज्योतिः कामकर्मादिवत्कथम् ॥**
**सुषुप्तेऽस्य स्वभावत्वाज्जह्याच्चैतन्यमित्यतः ॥ १३८१ ॥**
**नास्य धर्मो भवेदेतत्सुषुप्ते तददर्शनात् ॥**
**नाऽऽत्मधर्मो विनष्टत्वात्तस्माच्चैतन्यमत्र तत् ॥ १३८२ ॥**

तत्र चोदयति । **यदीति** । आत्मा चिद्रूपश्चेत्कामादिवच्चैतन्यं न त्यजेत्स्वभावस्य त्यागायोगादतश्चैतन्यं नास्य स्वाभाविको धर्मः सत्येवाऽऽत्मनि स्वापे तदभावात्संयोगादिवदागन्तुकत्वेऽपि नासावात्मनः स्वतो धर्मस्तद्धर्मत्वेऽपि तथैव सुप्तौ तन्नाशस्तस्मादात्मा जड एवेत्यर्थः ॥ १३८१ ॥ १३८२ ॥

**अपि विप्रतिषिद्धं च यत्स्वयंज्योतिरात्मकम् ॥**
**प्रत्यग्वस्तु न वेत्तीति भवतेहाभिधीयते ॥ १३८३ ॥**

किंचाऽऽदित्योऽप्रकाश इतिवत्स्वयंज्योतिर्न पश्यतीति व्याहतमित्याह । **अपीति** । इहेति स्वापोक्तिः ॥ १३८३ ॥

**ऐक्यादनुपलब्धिश्चेदनैकान्तिकता तथा ॥**
**यतोऽभावेऽप्यसंवित्तिश्चैतन्यस्येह दृश्यते ॥ १३८४ ॥**

स्त्रीवाक्योक्तं समाधिं शङ्कते । **ऐक्यादिति** । ब्रह्मणैक्यं विद्यमानस्यैव चैतन्यस्यानुपलब्ध्या न नियतमिति दूषयति । **अनैकान्तिकतेति** । तथेत्यैक्यादनुपलम्भस्वीकारे सतीत्यर्थः । अनैकान्तिकत्वे हेतुमाह । **यत इति** । लोके पाषाणादौ चैतन्यस्याभावेऽप्यनुपलब्धेरैक्यस्य तत्प्रयोजकत्वं व्यभिचारीत्यर्थः ॥ १३८४ ॥

**इत्यस्य परिहारार्थं परो ग्रन्थोऽवतार्यते ॥**
**यद्वै तदित्युपक्रम्य प्रत्यग्वस्तुविशुद्धये ॥ १३८५ ॥**

उत्तरमादत्ते । **इत्यस्येति** । स्वप्रकाशं तन्न जडमिति तद्विशुद्धिस्तदर्थं चोद्यं समाधेयं तदर्थेन यद्वै तदित्यादिप्रवृत्तिरित्यर्थः ॥ १३८५ ॥

**तथा परोऽपि संबन्धः कैश्चिदत्राभिधीयते ॥**
**अशोकान्तरमित्युक्तं याथात्म्यं प्रत्यगात्मनः ॥ १३८६ ॥**

भाष्योक्तं संबन्धमुक्त्वा भर्तृप्रपञ्चोक्तमुत्थापयति । **तथेति** । अत्रेति प्रकृतग्रन्थोक्तिः। तच्छेषत्वेन तदीयं वृत्तानुवादं दर्शयति । **अशोकेति** ॥ १३८६ ॥

**ज्योतिर्मात्रतयैवाऽऽत्मा सुषुप्ते व्यवतिष्ठते ॥**
**कुतः पुनरिदं सिद्धं विशेषज्ञानसंक्षये ॥ १३८७ ॥**
**ज्योतीरूपमिदं तत्त्वं सुषुप्ते व्यवतिष्ठते ॥**
**उक्तं प्राग्व्यतिरेकेण स्वयंज्योतिष्ट्वमात्मनः ॥ १३८८ ॥**

याथात्म्यमेव कथयति । **ज्योतिरिति** । **यथाऽऽहुरशोकान्तरमित्युक्तं** तदेवास्मिन्काले स्वेनाऽऽत्मना ज्योतिर्मात्रेण भवतीति । उक्तानुवादं चोदयति । **कुत इति** । **उक्तं हि** व्यतिरेकेण स्वयंज्योतिष्ट्वमिति । तद्भाष्योक्तं परिहारमाह । **उक्तमिति** । व्यतिरेकेण विनाऽऽदित्यादिना व्यवहारस्य दृष्टत्वादिति यावत् ॥१३८७॥१३८८॥

**ननूक्तं प्रागिदं सर्वं विशेषज्ञानमात्मनः ॥ १३८९ ॥**

अविद्यापक्षपात्येव न तत्स्याच्चित्तिवत्स्वतः ॥
नैतदेवं यतोऽदर्शि पूर्वमेतत्स्फुटं मया[1] ॥ १३९० ॥

पुनश्चोदयति । **ननूक्तमिति** । सर्वमपि विशेषज्ञानमाविद्यमिति त्वयैवोक्तं[2] न तु तच्चैतन्यवत्स्वतोऽस्त्यहमेवेदं सर्वोऽस्मीत्येतदपि ज्ञानं विशेषज्ञानमेवैतदेव चाऽऽत्मनः स्वयंज्योतिष्ट्वं विशेषज्ञानानां चाभावः सुषुप्तावुच्यतेऽतः स्वयंज्योतिरात्मा तत्रेतिसिद्धवदनुवादासिद्धिरित्यर्थः । **उक्तं हि** तद्विशेषज्ञानमविद्यापक्षस्यैवेति । परिहरति । **नैतदिति** ॥ १३८९ ॥ १३९० ॥

सर्वमेवाहमस्मीति यद्यपीदं विशेषवत् ॥
विज्ञानं न तथाऽपीदमविद्यापक्षभागिति ॥ १३९१ ॥

दर्शितमेव स्फोरयति । **सर्वमिति** । सर्वोऽस्मीति ज्ञानं विशेषज्ञानमपि नाविद्यापक्षपाति तादृग्ज्ञानं स्वापे निवर्तते न तन्मात्रमतः स्वयंज्योतिष्ट्वमात्मनस्तत्राविरुद्धं भवत्येतद्विशेषविज्ञानं न त्वविद्येति स्थितेरित्यर्थः ॥ १३९१ ॥

नानात्वदर्शनं यस्माद्भयादज्ञानजं मतम् ॥
प्रतिपक्षमविद्याया अहमेवेदमित्यतः ॥ १३९२ ॥

किं तदविद्यापक्षपातिज्ञानं तदाह । **नानात्वेति** । तस्मात्तत्स्वापे निवर्तत इति शेषः । यथोक्तं नानात्वदर्शनकार्यरूपं हि भयमविद्येत्युक्तमिति । अहमेवेदमिति ज्ञानस्यापि तुल्यमविद्यापक्षपातित्वमित्याशङ्क्याऽऽह । **प्रतिपक्षमिति** । अहमेवेति ज्ञानमविद्यायाः प्रतिपक्षतया वर्तते[3]ऽहमेवेदं सर्वमस्मीति प्रतिपक्षभूता विद्येत्युक्तत्वादतस्तस्याविद्याजत्वाभावात्स्वापेऽपि तत्स्वरूपभूतमस्तीत्यर्थः ॥ १३९२ ॥

तदेतन्मथ्यमानं सदैक्यदर्शनलक्षणम् ॥
भवत्यतीव संशुद्धं प्रसन्नं व्यवतिष्ठते ॥ १३९३ ॥

अथेदं ज्ञानं विशेषज्ञानत्वाद्घटादिज्ञानवदविद्योत्थमतो न तत्स्वापे[4] स्यादित्याशङ्क्याऽऽह । **तदेतदिति** । मथ्यमानं भेददर्शनाद्विविच्यमानमिति यावत् । तदेतदेकत्वदर्शनं मथ्यमानं सदा शुद्धं प्रसन्नं भवतीति भाष्ये भवतिपदस्यार्थमाह । **व्यवतिष्ठत इति** । विशेषज्ञानमप्येतद्वस्तुनिष्ठत्वान्नाविद्यापक्षपातीत्यस्योक्तत्वात्स्वापे स्वरूपतया तत्स्थितिरित्यर्थः ॥ १३९३ ॥

विशेषदर्शनासृतेरसंबोधस्तदाऽऽत्मनः ॥
देदीप्यमाना विज्ञप्तिर्विशेषात्माऽवतिष्ठते ॥ १३९४ ॥

स्वप्रकाशचिदात्मत्वेनाऽऽत्मा सुप्तौ स्थितश्चेन्न किंचिदवेदिषमिति कथमुत्थितस्यासंबोधधीरित्याशङ्क्याऽऽह । **विशेषेति** । तद्वदेव स्वरूपज्ञानमपि तदा न स्यादित्याश-

---

१ ख. °मेव स्फुटं । २ घ. त्वयैवोक्तं । ३ क. ख. °वर्तत° । ४ ख. तत्स्वरूपं ।

ङ्क्याऽऽह । देदीप्यमानेति । उक्तं हि स्वेन विशेषविज्ञानात्मना देदीप्यमानो भवतीति । आत्मनः स्वापे कर्तृत्वादिविशेषज्ञानानुत्पत्तिरेवासंबोधो विशेषज्ञानानुत्पत्तिरसंबोध इत्युक्तत्वात्स्वयं त्वहमेवेदमित्येवंरूपज्ञानेनास्तीति समुदायार्थः ॥ १३९४ ॥

**सुषुप्तस्थानगं रूपं तदेतत्प्राक्प्रदर्शितम् ॥ १३९५ ॥**
**तत्रैतच्छङ्क्यते ज्ञानेऽसंबोधः कथमात्मनः ॥**
**सति स्याद्वेदनाशङ्का स्त्रीपुंदृष्टान्तनिर्णयात् ॥ १३९६ ॥**

वृत्तानुवादे प्रासङ्गिकं चोद्यं निरस्यानुवादमुपसंहरति । **सुषुप्तेति** । ऐक्यदर्शनरूपस्वयंज्योतिष्ट्वेनाऽऽत्मा सुप्तौ तिष्ठतीत्युक्तमित्यर्थः । आत्मनः स्वयंज्योतिष्ट्वे स्थिते चोदयति । **तत्रेति** । सति स्वरूपज्ञाने नाज्ञानमतः सुषुप्ते स्वरूपज्ञानराहित्यमयुक्तमित्यर्थः । स्त्रीवाक्येन चिद्रूपस्यापि सुप्तावज्ञानं युक्तमिति निर्णीतत्वान्नाऽऽशङ्केत्याह । **स्यादिति** । कथं सति विज्ञानेऽसंबोध इति चोद्यं शङ्कितमनाशङ्कैषा परिष्वक्तदृष्टान्तेन प्रत्युक्तत्वादिति तेन युक्तं सुप्तावज्ञानमित्यर्थः ॥ १३९५ ॥ १३९६ ॥

**नैतदेवं यतस्तत्र सत्स्वेव ज्ञानहेतुषु ॥**
**अविभक्तो विशेषेषु भवतीति प्रदर्शितम् ॥ १३९७ ॥**

उत्तरमाह । **नैतदिति** । तत्र स्त्रीपुंसोर्मिथो योगे धीहेतुषु चक्षुरादिषु सत्स्वेव बाह्यान्तर्विशेषेषु पुरुषो भवत्यविभक्तो विभागधीहीनोऽन्यमनस्कत्वादिति यतः स्त्रीवाक्ये दर्शितमतो नैतच्चोद्यं तत्र हि विद्यमानेषु विशेषज्ञानकार्येष्वप्रविभक्तो भवत्येवमसंबोधस्तत्रेत्युक्तेरित्यर्थः ॥ १३९७ ॥

**इह पुनर्न शक्यन्ते विशेषाः प्रसमीक्षितुम् ॥**
**यतोऽत्राप्रविभक्तेन स्वेन बोधेन तिष्ठति ॥ १३९८ ॥**

तर्हि स्वापेऽपि सत्स्वेव धीहेतुषु विशेषादृष्टिरन्यमनस्कत्वादित्याशङ्क्याऽऽह । **इहेति** । न हि तत्र विशेषा ज्ञातुं योग्यास्तद्धेतूनामसत्त्वादन्यथा सुप्त्ययोगादतस्तत्राखण्डस्वरूपज्ञप्तिमात्रत्वेनाऽऽत्मस्थितिरित्यर्थः ॥ १३९८ ॥

**असंबोधः सति ज्ञाने कथं स्यादिति शङ्क्यते ॥**
**तम एवेति चेन्नैवं स्वयंज्योतिष्ट्वमात्मनः ॥ १३९९ ॥**
**महतेह प्रयत्नेन यतः प्राक्प्रतिपादितम् ॥**
**सिद्धान्तस्य स्थितत्वाच्च यथावदुपपत्तिभिः ॥ १४०० ॥**

उक्तशङ्कातादवस्थ्यं फलमाह । **असंबोध इति** । निर्विकल्पकज्ञप्त्यात्मना सुप्तावात्मस्थित्युपगमादसंबोधायोगोऽन्यथा ज्ञप्तिस्वरूपत्वासिद्धेरात्मनो जडतेति पूर्वपक्षमुपसंहरति । **तम इति** । तदाहुस्तम एवैतद्रूपं स्यान्न ज्योतिरिति । सिद्धान्तमाह । **नैव-**

---

१ ख. °र्णये ॥ १३९६ ॥ २ क. °नसाहित्यं यु° । ख. °नराहित्यं यु° । ३ घ. °षादृ° ।

**मिति।उक्तं च** ज्योतीरूपत्वस्य महता प्रयत्नेन विभावितत्वादिति। इहेति श्रुत्युक्तिः। प्रागिति ब्राह्मणारम्भाभिधानम्। इतश्चाऽऽत्मनो न जडतेत्याह। **सिद्धान्तस्येति।** आत्मनः स्वयंज्योतिष्ट्वमत्रायमित्यादिवेदसिद्धान्तस्तस्याबाधितोपपत्तिभिर्जाड्ये घटवदना-त्मतेत्याद्याभिः स्थितत्वान्नाऽऽत्मा जड इत्यर्थः। **तदुक्तं स्थितत्वाच्च सिद्धान्तस्येति** ॥ १३९९ ॥ १४०० ॥

**प्रदीपवद्विनष्टोऽयमिति चेदभिधीयते ॥**
**प्रत्यभिज्ञानतो नैवं पूर्वदृष्टस्य वस्तुनः ॥ १४०१ ॥**

आत्मा ज्योतीरूपश्चेत्तर्हि स्वापे स्फुरणादृष्टेस्तदा तस्य दीपवन्नाशः स्याज्ज्यो-तिषः स्वसत्तायां प्रकाशाव्यभिचारात्ततश्च क्षणवादापत्तिरिति शङ्कते। **प्रदीपवदिति।** उत्थितस्य पूर्वबोधे दृष्टमधिकृत्य प्रत्यभिज्ञादृष्टेः स्वापे पूर्वद्रष्टुर्नाशे द्रष्ट्रन्तरस्य चोत्थाने तदयोगान्न क्षणवादशङ्केति परिहरति। **प्रत्यभिज्ञानत इति** ॥ १४०१ ॥

**यतः प्रत्यभिजानाति सुषुप्तादुत्थितस्ततः ॥**
**सर्वावस्थास्वयं नित्य आत्मा नैव विनश्यति ॥ १४०२ ॥**

आत्मनः सुप्तावनाशे प्रत्यभिज्ञान्तरमाह। **यत इति।** उत्थितस्य यः सुप्तः स जागर्मीति प्रत्यभिज्ञानादात्मनोऽवस्थात्रयेऽपि स्थायित्वान्नासौ स्वापे नश्यतीत्यर्थः ॥ १४०२ ॥

**समस्तैरिन्द्रियैर्हीनः संप्रसन्नो निराकुलः ॥**
**सुप्तः स्वप्नान्न जानाति यः स आत्मेति भण्यते ॥ १४०३ ॥**

स तर्हि तदा कीदृशो विवक्ष्यते तत्राऽऽह। **समस्तैरिति।** यदा सुप्तः संहृतसर्वे-न्द्रियः स्वप्नानन्यथाग्रहभेदाञ्जाग्रत्स्वप्नरूपान्न प्रतिपद्यते तदा स्थूलसूक्ष्माकुलताविकलो नाडीपुरीतद्द्वारा ब्रह्मण्यवतिष्ठते यः सुप्तः स परमात्मेत्युक्तं तदभावो नाडीषु तच्छ्रुतेरि-त्यादावित्यर्थः ॥ १४०३ ॥

**नाद्राक्षं स्वप्नमद्येति प्रतिबुद्धोऽभिभाषते ॥**
**जाग्रत्स्वप्नसुषुप्ते[1] च तस्मादात्मा स एव सः ॥ १४०४ ॥**

प्रत्यभिज्ञाया भ्रान्तत्वात्कथं तयाऽऽत्मनः स्थायितेत्याशङ्क्याबाधात्प्रमैव सेति मत्वाऽऽह। **नेत्यादिना।** यस्मादुत्थितः सन्नेवं वदति तस्मादेकैकस्यामवस्थायां योऽसावात्मा स एवावस्थात्रयेऽपि प्रत्यभिज्ञायते प्रत्यभिज्ञा चाबाधादभ्रान्तिरिति योजना ॥ १४०४ ॥

**स्वप्नमेति सुषुप्ताच्च स्वप्नाद्बुद्धान्तमेव च ॥**
**इति श्रुत्या पुराऽप्युक्तं तस्मान्नाऽऽत्मा विनश्यति ॥ १४०५ ॥**

---

१ ख. ॰त्स्वप्ने स॰।

तत्रैव श्रुतिसंवादं दर्शयति । स्वप्नमिति । श्रुत्याऽपीति संबन्धः ॥ १४०५ ॥

**स्वयंज्योतिःस्वभावस्थस्तस्मादात्मा सुषुप्तगः ॥**
**प्रत्यगज्ञानतत्कार्यैरसंस्पृष्टः स्वभावतः ॥ १४०६ ॥**

आत्मनः सुप्तावनाशे फलितमुपसंहरति । स्वयमिति । सुषुप्तगविशेषणादवस्थान्तरे नास्ति स्वयंज्योतिष्ट्वमित्याशङ्क्याऽऽह । प्रत्यगिति । उक्तं हि स्वात्मनैव ज्योतिषाऽवस्थानमिति ॥ १४०६ ॥

**यत्तु तच्छङ्क्यते कस्मादात्मा प्राज्ञे न पश्यति ॥**
**चैतन्यात्मस्वभावोऽपि तच्चापि शृणु सांप्रतम् ॥ १४०७ ॥**

उक्तस्वभावश्चेदात्मा किमिति स्वापे स्वात्मानमन्यं च न वेत्तीति चोद्यमनूद्य यदित्यादिवाक्यं परिहारत्वेनाऽऽदत्ते । यत्त्विति ॥ १४०७ ॥

**स्वभावो नाऽऽत्मनः कामकर्माविद्यादि बोधवत् ॥**
**असङ्गानन्वयोक्तिभ्यां कामादेश्च मृषात्वतः ॥ १४०८ ॥**

परेष्टसंबन्ध उक्तस्तत्रानिष्टमंशमग्रे निरसिष्यति संप्रति स्वोक्तसंबन्धानुसारेणाक्षराणि व्याख्यातुमुक्तमनुभाषते । स्वभाव इति । कार्यसाहितमज्ञानं नाऽऽत्मरूपं चैतन्यमेव तथेति श्रुतियुक्तिभ्यां स्थितमित्यर्थः ॥ १४०८ ॥

**चैतन्यमात्मनस्तत्त्वं कूटस्थं न तु कामवत् ॥**
**अनाद्यविद्यायोगोऽस्य तत्कार्यैरादिमान्मतः ॥ १४०९ ॥**

बोधवदिति व्यतिरेकदृष्टान्तं स्फोरयति । चैतन्यमिति । तदपि नाऽऽत्मरूपं जन्मादिमत्त्वात्कामादिवदित्याशङ्क्याऽऽह । कूटस्थमिति । कामादिवदविद्याऽप्यात्मनोऽस्वभावश्चेत्तत्संबन्धवदविद्यासंबन्धोऽपि सादिः स्यात्ततश्च तस्याः सादित्वं स्वतन्त्रतो वेत्याशङ्क्याऽऽह । अनादीति । अनादिरविद्या तद्धेत्वसिद्धेर्न तावत्सैव तद्धेतुरेकत्र हेतुहेतुमद्भावाभावान्न चाविद्यान्तरं मानाभावान्न चाऽऽत्मा तस्य निरविद्यस्याहेतुत्वादविद्यावतो हेतुत्वे चानाद्यविद्यासिद्धिस्तद्भेदस्यामानत्वेन व्युदस्तत्वात्तस्मादनादित्वादविद्यायास्तत्संबन्धोऽप्यनादिः कामादिस्तु तत्संबन्धश्च नैवमित्यर्थः ॥ १४०९ ॥

**अज्ञानमिथ्याविज्ञानसंस्थस्यास्याऽऽत्मनः क्वनु ॥**
**उपदेशादिसंबन्ध इत्येतदिह भण्यते ॥ १४१० ॥**

उक्तानुवादद्वारा कूटस्थदृष्टिर्नित्यमुक्तः प्रत्यगात्मेति प्रतिपादयितुं यदित्यादिवाक्यमित्युक्तमिदानीं तात्पर्यान्तरमाह । अज्ञानेति । अज्ञोऽहमित्यज्ञानाधीनतया स्थितस्य कर्तृत्वाद्यभिमानं मिथ्याज्ञानमात्मनि मन्यमानस्येश्वरार्पणबुद्ध्या नित्याद्यनुष्ठितवतो निरस्तकल्मषस्य मुमुक्षोर्विरक्तस्य कस्मिन्विषये तद्धेतुज्ञानार्थमुपदेशसंबन्धः स्यादित्यपेक्षायां

---

१ क. °न्वयोक्ति° । २घ. °ता चेत्या° । ३ ग. °शाभिसं° । ४ घ. °मानमि° ।

सुषुप्ते संसारनिर्मुक्तमात्मतत्त्वं सिद्धं तज्ज्ञानं मोक्षायेति वक्तुं यदित्यादिवाक्यमित्यर्थः ॥ १४१० ॥

न पश्यत्येष आत्माऽत्र स्वयंज्योतिश्च स स्वतः ॥
इति विप्रतिषिद्धं यत्तदैकात्म्यान्न दुष्यति ॥ १४११ ॥

पदानि व्याचिख्यासुर्विप्रतिषेधमनूद्य दूषयति । नेत्यादिना । पश्यन्न पश्यतीत्युक्तिभ्यां कूटस्थबोधरूपेण प्रत्यङ्मात्रस्यैव सुप्तावस्थानोक्तेर्भावाभावानुपगमान्न विप्रतिषेध इत्यर्थः ॥ १४११ ॥

चोदितार्थानुवादोऽयं परिहारविवक्षया ॥
यद्वै तदिति यत्नेन श्रुत्येह क्रियतेऽञ्जसा ॥ १४१२ ॥

स्वयंज्योतिर्न पश्यतीति विरोधं परिहृत्य यदित्यादेरर्थमाह । चोदितेति । अनुवादस्योपोद्घातत्वं यच्छब्देन विवक्ष्यते । अत एव परिहारविवक्षयेत्युक्तम् । यच्छब्दोपबन्धादनुवादस्य स्पष्टत्वमञ्जसेत्युच्यते । इहेति वाक्योक्तिः ॥ १४१२ ॥

न पश्यतीति मन्वीथाः सुषुप्ते यन्न तत्तथा ॥
पश्यन्नेवाविलुप्ताक्ष आत्माऽयं वर्तते यतः ॥ १४१३ ॥

विवक्षितं परिहारमाह । नेत्यादिना । अयमात्मा सुप्ते न पश्यतीति यन्मन्यसे तथा न मन्तव्यमित्यत्र हेतुमाह । पश्यन्निति । कर्तृत्वं वारयति । अविलुप्तेति ॥ १४१३ ॥

न पश्यत्येव नन्वत्र चक्षुरादेरसंभवात् ॥
करणान्यन्तरेणेह जात्यन्धादिर्न वीक्षते ॥ १४१४ ॥

पश्यन्नेवेत्युक्तमाक्षिपति । नेति । चक्षुराद्यभावेऽपि स्वापे दर्शनं किं न स्यात्तत्राऽऽह । करणानीति । तथा सुषुप्तोऽपीत्यर्थः ॥ १४१४ ॥

नैतदेवं यतो द्रष्टुः कारकस्य समीक्षणे ॥
करणानि व्यपेक्ष्यन्ते न त्वकारकवीक्षणे ॥ १४१५ ॥

द्रष्टुरागन्तुकज्ञानस्य करणापेक्षा साक्षिणस्तु नैवं नित्यज्ञानत्वादित्याह । नैतदिति ॥ १४१५ ॥

स्वप्नेऽपि चक्षुरादीनामपीतिः श्रूयते श्रुतौ ॥
कुतः सुषुप्तौ तानि स्युर्यत्र तद्वासनाऽपि न ॥ १४१६ ॥

किंच प्रमातुरपि न चक्षुराद्यपेक्षानियमः स्वप्ने दृष्ट्यादिव्यापारेऽपि करणोपसंहारश्रु-

---

१ ख. सन् । २ क. ग. °कार्थान्न । ३ घ. °तिषिद्धम° । ४ क. ग. श्रुत्यैव । ५ घ. यत्तच्छ° । ६ घ. °ब्दोक्तस्य । ७ ख. वीक्ष्यते । ८ घ. °पीति शेष. ॥१४१४॥ ९ क. व्यपेक्षन्ते ।

तेरित्याह । स्वप्नेऽपीति । अमुप्तः सुप्तानित्याद्या श्रुतिः । सौपुप्तस्य साक्षिणश्चक्षुराद्य-पेक्षायोगेऽपिना सूचितं कैमुतिकन्यायमाह । कुत इति । तच्छब्दश्चक्षुरादिविषयः ॥ १४१६ ॥

न पश्यतीति वचनं कारकादेरसंभवात् ॥
वास्तवं वृत्तमापेक्ष्य पश्यन्वै तदितीर्यते ॥ १४१७ ॥

अविरोधमुपसंहरति । नेत्यादिना ॥ १४१७ ॥

पश्यन्नेवायमत्राऽऽस्त इत्येतच्चेत्कुतो भवेत् ॥
इत्यस्य हेतुसिद्ध्यर्थं न हि द्रष्टुरितीरणम् ॥ १४१८ ॥

न हीत्यादिवाक्यमाकाङ्क्षापूर्वकमादत्ते । पश्यन्निति । पश्यन्नेवाऽऽस्ते सुप्तावात्मे-त्यस्यापेक्षितो हेतुः स्वरूपज्ञानाविनाशस्ततस्तत्प्रतिपत्त्यर्थं न हीत्यादिवाक्यमित्यर्थः ॥ १४१८ ॥

मेयमानप्रमातॄणां व्यभिचारेऽपि चाऽऽत्मनः ॥
अनन्यानुभवादेव सिद्धिस्तद्ध्वंससाक्षितः ॥ १४१९ ॥

कुतो मानाद्यतिरेकेण स्वरूपज्ञानादेवाऽऽत्मनः सिद्धिस्तत्राऽऽह । मेयेति । मात्रा-द्यभावसाक्षित्वादात्मा तदभावेऽपि स्वरूपज्ञानादेव सिध्यतीत्यर्थः ॥ १४१९ ॥

प्रमात्राद्यनभिव्याप्तं वस्तु पूर्वं समीक्ष्य हि ॥
नाद्राक्षमिति संधत्ते दृष्टवत्स्वचिदात्मना ॥ १४२० ॥

तत्रैव हेत्वन्तरमाह । प्रमात्रादीति । पूर्वं प्रमाणादिप्रवृत्तेः प्रागवस्थायामित्यर्थः । प्राचीनानुभवपुरःसरमनुसंधानमित्यत्र प्रसिद्धिद्योतको हिशब्दः । प्रमाणतो दृष्टस्य पुन-रनुसंधानवत्तेनादृष्टस्यापि स्वरूपचिता प्रतिपन्नस्यानुसंधानदर्शनात्तदविनाशितेत्यर्थः ॥ १४२० ॥

यस्माद्द्रष्टुर्हि या दृष्टिर्यया द्रष्टा प्रसिध्यति ॥
तस्या विपरिलोपोऽयं हेत्वभावान्न युज्यते ॥ १४२१ ॥

तात्पर्यमुक्त्वा न हीत्याद्यक्षराणि व्याचष्टे । यस्मादिति । दृष्टिं विशिनष्टि । ययेति । मनोवृत्तिव्युदासो विशेषणार्थः । तस्मादात्मा पश्यन्नेव सुप्तौ तिष्ठतीति शेषः । श्रौतो हिशब्दो हिशब्देनानुकृतः । तृतीयेत्थंभावे । आत्मा चायं दृष्टिरूपः स्फुरति सा तस्य स्वरूपत्वान्नाशकाभावाद्यतो न लुप्यतेऽतः सुप्तावात्मा पश्यन्नेवेति योजना ॥ १४२१ ॥

नाशोत्पत्त्यादयो धर्मा हेतुमद्वस्तुनो यतः ॥
निर्हेतुसाक्षिणो न स्युरागमापायिसाक्षितः ॥ १४२२ ॥

१ ख. अलुप्तः स्वप्तानि॰ । २ ख. दृष्टया । ३ क. ॰क्षिणः ॥ १४२२ ॥

हेत्वभावं प्रपञ्चयन्नविनाशित्वादित्यस्यार्थमाह[1] । नाशेति । अतो हेतुहीनसाक्षिणो नाशादयो नेत्यत्र हेत्वन्तरमाह । आगमेति ॥ १४२२ ॥

नाशादि न स्वयं सिध्येद्विना नाशादिसाक्षिणा ॥
नातो विपरिलोपः स्याद्द्रष्टुर्दृष्टेः कदाचन ॥ १४२३ ॥

तस्य साक्षिगम्यत्वासिद्धिमाशङ्क्याऽऽह । नाशादीति । अन्यथा जडताहानिरिति भावः । आत्मनस्तत्साधकत्वे फलितमाह । नात इति ॥ १४२३ ॥

द्रष्टुरात्मैव या दृष्टिः प्रत्यग्दृष्ट्या समीक्ष्यते ॥
तस्या विपरिलोपोऽत्र न कथंचन युज्यते ॥ १४२४ ॥

प्रमात्रा तत्सिद्धेरलं साक्षिणेत्याशङ्क्य तद्भावाभावयोस्तदसिद्धेर्मैवमिति[2] मत्वाऽऽह । द्रष्टुरिति । तत्रानुभवं प्रमाणयति । प्रत्यगिति । आत्मदृष्टेः सर्वसाधकत्वे किमायातं तदाह । तस्या इति । स्वापः सप्तम्यर्थः । कथंचन स्वतो वा परतो वेत्यर्थः॥१४२४॥

आत्मैवाऽऽत्मीयभूतस्य या दृष्टिरविनश्वरी ॥
द्रष्टुर्विनाशिनस्तस्या नोच्छित्तिरुपपद्यते ॥ १४२५ ॥

साऽपि दृष्टित्वान्मातृदृष्टिवदुच्छिद्येतेत्याशङ्क्याऽऽह । आत्मेति । नाशयोग्यत्वमुपाधिरिति भावः ॥ १४२५ ॥

आगमापायिनो द्रष्टुर्दृष्टिस्तत्साक्षिणी तु या ॥
द्रष्ट्रादिलोपसाक्षित्वात्तस्या लोपो न युज्यते ॥ १४२६ ॥

साधनव्याप्तिमाशङ्क्याऽऽह । आगमेति ॥ १४२६ ॥

सत्येव साक्षिणि यतो भावाभावौ प्रसिध्यतः ॥
जगतोऽतो न नाशः स्यादात्मदृष्टेः कुतश्चन ॥ १४२७ ॥

आत्मदृष्टेर्नित्यत्वे हेत्वन्तरमाह । सत्येवेति । जगतो भावाभावयोर्जडत्वेनाऽऽत्मसाक्षिकत्वादात्मस्वभावभूता साक्षिदृष्टिरविनाशिनीत्यर्थः । इहेति हेतुवाक्योक्तिः ॥ १४२७ ॥

ननु विप्रतिषिद्धोक्तिर्भवतेहाभिधीयते ॥
न[3] विनश्यति सा दृष्टिर्द्रष्टुश्चेत्यतिसाहसम् ॥ १४२८ ॥

विधान्तरेण विरोधं चोदयति । नन्विति । तदुक्तिमेव व्यनक्ति । नेति ॥१४२८॥

कर्तृकार्याभिसंबन्धो द्रष्टुर्दृष्टेरितीर्यते ॥
ततश्चापरिलोपोऽस्याः कार्यत्वान्नोपपद्यते ॥ १४२९ ॥

कथमेतदतिसाहसं तदाह । कर्त्रिति ॥ १४२९ ॥

---

१ घ. °दित्यायस्या° । २ घ. °स्तत्सिद्धे° । ३ ग. न हि न° ।

**ननु न लुप्यत इति वचनान्न विलोप्स्यति ॥**
**नैवं यतो मितिप्राप्तं वचो नाशं न वारयेत् ॥ १४३० ॥**

कार्यस्याप्यनाशो वचनादिति शङ्कते । **नन्विति** । यत्कृतकं तदनित्यमितिव्या-प्त्यनुगृहीतानुमानविरोधाद्वचो न कार्यनित्यत्वबोधीत्याह । **नैवमिति** ॥ १४३० ॥

**सिद्धस्य व्यञ्जकं मानं न तु तत्कारकं यतः ॥**
**उक्तेर्नातोऽविनाशित्वं द्रष्टुर्दृष्टेरिहेष्यते ॥ १४३१ ॥**

यद्यपि मानान्तरविरुद्धमर्थं वचो न बोधयति तथाऽपि करोतीत्याशङ्क्याऽऽह । **सिद्धस्येति** । इहशब्दः पूर्वार्धगामी मानभूमिविषयः ॥ १४३१ ॥

**नैष दोषो यतो द्रष्टुः श्रुतिराह विशेषणम् ॥**
**द्रष्टुर्दृष्टेरिति ततो द्रष्टा नैवेह कारकम् ॥ १४३२ ॥**

कूटस्थदृष्टिरेवात्र द्रष्टृशब्देनोच्यते न दृष्टिकर्ता तन्न विप्रतिषेधोऽस्तीत्याह । **नेति** । न हि द्रष्टुरिति श्रुतिर्दृष्टेरिति विशेषणं द्रष्टुराचष्टे षष्ठ्योः सामानाधिकरण्यादतो द्रष्टा साक्षी न कर्तेत्यविरोध इत्यर्थः ॥ १४३२ ॥

**देहान्तो दृष्टिकारी यो द्रष्टा धर्मादिहेतुमान् ॥**
**दृष्टेर्द्रष्टुश्च लोपोऽत्र प्रत्यग्दृष्ट्येकसाक्षिकः ॥ १४३३ ॥**

षष्ठ्योः सामानाधिकरण्यमुपेत्य कूटस्थदृष्टिरात्मेत्यादिष्टमथ तयोर्वैयधिकरण्येऽपि तथेत्याह । **देहान्त इति** । यो धर्मादिमान्बुद्ध्यादिर्देहान्तो दृष्टिकारी द्रष्टा तस्य तद्ग-तायाश्च दृष्टेर्नाशः स्वापादौ प्रत्यग्दृष्टिमात्रात्प्रसिध्यत्यतो द्रष्टुर्या साक्षिभूता दृष्टिस्तस्याः प्रतिच्या न नाश इत्यर्थः ॥ १४३३ ॥

**प्राक्प्रमात्रादिसंभूतेर्या तु दृष्टिरकर्तृका ॥**
**द्रष्ट्रादिनाशसाक्षित्वात्सा दृष्टिरविनश्वरी ॥ १४३४ ॥**

आत्मा कूटस्थदृष्टिरित्युक्तमुपपादयति । **प्रागिति** । स्वापादौ तादृशी दृष्टिरसिद्धे-त्याशङ्क्याऽऽह । **द्रष्ट्रादीति** ॥ १४३४ ॥

**दृष्टिरेव तु सा द्रष्टा न तु कारकलक्षणः ॥**
**द्रष्टुर्विशेषणत्वेन दृष्टेरिति परिग्रहात् ॥ १४३५ ॥**

वैयधिकरण्यपक्षं हित्वा पक्षान्तरमाश्रित्याऽऽह । **दृष्टिरिति** । सा दृष्टिरेव द्रष्टा न तत्कर्तेत्यत्रोक्तं हेतुं स्मारयति । **द्रष्टुरिति** ॥ १४३५ ॥

**परिलोपो हि कार्याणां लोके सिद्धः स्वकारणे ॥**
**नातः कारणरूपस्य नाप्यकारकवस्तुनः ॥ १४३६ ॥**

आत्मदृष्टेरनाशो हेत्वन्तरं वक्तुं सामान्यन्यायमाह । **परिलोपो हीति** । आत्मदृ-

---

१ ख. मैवं । २ ख. घ. °ह । मैव° । ३ क. °रणम् । ४ ख. ग. °ग्दृष्टयैक° ।

ष्टेस्तु कार्यवैरूप्यान्नोक्तनाशसिद्धिरित्याह । नात इति । परिलोपोऽस्तीति शेषः । अज्ञानवदात्यन्तिकनाशमाशङ्क्य कारणवैलक्षण्यान्नैवमित्याह । नापीति ॥ १४३६ ॥

**अभावस्य च भावत्वाद्भावसिद्धेश्च दृष्टितः ॥**
**दृष्टौ नाभावशङ्काऽतः सर्वसिद्धेस्तदन्वयात् ॥ १४३७ ॥**

तदपरिलोपे युक्त्यन्तरमाह । अभावस्येति । न हि स भावाद्भिद्यते भेदस्य भावत्वे तन्निष्ठत्वायोगादभावत्वेऽपि स एव दोषस्तथाच तस्य भावातिरेकिणोऽभावात्तत्सिद्धेश्च दृष्ट्यधीनत्वात्तस्मान्न नाशशङ्केत्यर्थः । भावादभावस्यान्यत्वेऽपि सर्वदृष्टेर्दृष्ट्यधीनत्वादात्मा कूटस्थदृष्टिरेवेत्याह । अत इति ॥ १४३७ ॥

**न सुषुप्तप्रसिद्धिः स्याद्दृष्टेर्लोपो भवेद्यदि ॥**
**जन्मनाशादिहीनेयमतो दृष्टिः परात्मनः ॥ १४३८ ॥**

इतश्चाऽऽत्मदृष्टिरनाशिनीत्याह । नेत्यादिना । न चानुमानादेव तत्सिद्धेरलं कूटस्थदृष्ट्येति युक्तं तद्व्याप्तलिङ्गाभावे तदनुत्थानान्न चाहं स्वप्नजागरान्तराले दुःखाद्यनुभवशून्यस्तत्कालीनतदीयस्मरणविरहित्वात्[1]पाषाणवदिति वाच्यं तदीयस्मृत्यभावस्योपेक्षणीयतृणादावनुभवाभावासाधकत्वेन व्यभिचारित्वादतो दृष्टिरेव कूटस्था तत्साधिकेति भावः । कूटस्थदृष्टिरात्मेत्युक्तमुपसंहरति । जन्मेति ॥ १४३८ ॥

**शतृतृजन्तश्रवणाद्दृष्टिश्चेत्स्यात्सकर्तृका ॥**
**पश्यन्द्रष्टुरिति ह्येवं[2] नैवं[3] कर्त्राद्यसंभवात् ॥ १४३९ ॥**

पश्यन्निति शत्रन्तस्य द्रष्टुरिति तृजन्तस्य च श्रवणाद्धात्वर्थरूपा सकर्तृका दृष्टिर्न कूटस्थेति शङ्कते । शन्निति । प्रयोगद्वयस्य क्रियापेक्षकत्वं प्रसिद्धमिति हिशब्दार्थः । धातुप्रत्ययार्थयोः सुप्तावयोगाद्दृष्टिकौटस्थ्यमित्याह । नैवमिति[5] ॥ १४३९ ॥

**नेह बुद्ध्यादिसद्भावस्तदाऽपीतिश्रुतेर्भवेत् ॥**
**सुषुप्तेऽतो न धात्वर्थः प्रत्ययार्थश्च नेष्यते ॥ १४४० ॥**

हेतुं साधयति । नेति । प्राणं तर्हि वागप्येतीत्याद्या श्रुतिः । कारकाभावे फलितमाह । सुषुप्त इति ॥ १४४० ॥

**कर्त्रादिकारकं नो चेत्सुषुप्ते विद्यते कथम् ॥**
**पश्यन्द्रष्टुरिति वचः कूटस्थ उपपद्यते ॥ १४४१ ॥**

कादाचित्की दृष्टिस्तत्कर्ता च स्वापे नास्ति कारकाभावादित्यत्र शङ्कते । कर्त्रादीति ॥ १४४१ ॥

**यथाऽवकाशदान्निति भण्यते निष्क्रियं वियत् ॥**
**शतृतृजन्तवचसा तथाऽऽत्मा भण्यते ध्रुवः ॥ १४४२ ॥**

१ घ. °हितत्वा° । २ ग. ह्येव । ३ ख. ग. मैवं । ४ घ. °याक्षेपक° । ५ ख. मैवमिति ।

सदृष्टान्तं समाधत्ते । यथेति ॥ १४४२ ॥

**स्वभावः कारकाणां च यदकृत्वेह कुर्वते ॥**
**अकुर्वत्कारकं तस्मात्कुर्वतोऽतिशयः कुतः ॥ १४४३ ॥**

कार्यकारणभावस्य दुर्वचत्वाच्च कूटस्था दृष्टिरिति वक्तुं कुर्वदकुर्वद्वा कारकं कारणमिति विकल्प्याऽऽद्यं प्रत्याह । स्वभाव इति । क्रियाकारकव्यवहारभूमिरिहेत्युक्ता । कारकस्वभावविरोधान्न कुर्वत्कारणमित्यर्थः । तत्रैव दोषान्तरमाह । कुर्वत इति । न हि कुर्वतः कार्यात्माऽतिशयोऽनवस्थितेरित्यर्थः ॥ १४४३ ॥

**प्राक्क्रियाया विनिष्पत्तेः कुर्वद्रूपं न लभ्यते ॥**
**यतोऽतोऽकुर्वदेवेह स्यात्सर्वत्रैव कारकम् ॥ १४४४ ॥**

इतश्च कुर्वत्पक्षोऽयुक्त इत्याह । प्रागिति । इहेति क्रियोक्तिः । तथाऽन्यत्रापि तादृगेव कारणमैक्यरूपलाभादित्याह । सर्वत्रेति ॥ १४४४ ॥

**शक्तिमत्कारकं चेत्स्यात्स्यात्कार्यं शक्तिवत्सदा[२] ॥**
**शक्यानामपि सद्भावः शक्तिवत्सर्वदा यतः ॥ १४४५ ॥**

अकुर्वत्पक्षमनुभाष्य दूषयति । शक्तिमदिति । शक्तेः सदातनत्वे तद्वदेव कार्यस्यापि सदातनत्वमित्यत्र हेतुमाह । शक्यानामिति ॥ १४४५ ॥

**न मिथो व्यतिरेकेण शक्तिशक्यौ प्रसिध्यतः ॥**
**परस्परव्यपेक्षत्वाच्छक्तिशक्यस्वरूपयोः ॥ १४४६ ॥**

हेतुं साधयति । नेति । तदेव कथं तत्राऽऽह । परस्परेति ॥ १४४६ ॥

**शक्तीनां नियमः शक्याच्छक्यानां चापि शक्तितः ॥**
**परस्पराश्रयत्वं च प्राप्नुयाच्छक्तिवादिनः ॥ १४४७ ॥**

शक्तिपक्षे दोषान्तरमाह । शक्तीनामिति । दुग्धादावेव दध्यादिशक्तिरिति प्रतिनियमस्तस्मादेव दध्यादिदर्शनादास्थेयः । तस्मादेव दध्यादीति शक्यः प्रतिनियमश्च तत्रैव तज्जननशक्तिरिति नियमादेष्टव्यः । तथाचान्योन्याश्रयतेत्यर्थः ॥ १४४७ ॥

**क्रियायाश्चाप्यकार्यत्वे कारकं न प्रसिध्यति ॥**
**कार्यत्वे चानवस्था स्यात्कुर्वच्चापि सुदुर्लभम् ॥ १४४८ ॥**

किंच क्रियाऽकार्या कार्या वा तत्राकार्यपक्षं निराह । क्रियायाश्चेति । क्रियां कुर्वत्कारणं कारकमिति स्थितेरित्यर्थः । द्वितीयं प्रत्याह । कार्यत्वे चेति । तस्या मूलक्षयकरत्वेन दोषपर्यन्तत्वमाह । कुर्वच्चेति ॥ १४४८ ॥

**क्रियातत्फलयोश्चापि पौर्वापर्याप्रसिद्धितः ॥**
**किं साध्यं साधनं चेह निश्चयो नोपपद्यते ॥ १४४९ ॥**

---

१ क. घ. °रण°। २ ग. °क्तिमत्स°। ३ क. सनात°। ४ ग. °शक्ये प्र°। ५ ख. °पेक्षित्वा°।

किंच क्रियायाश्चेदकार्यत्वं तदा तदनादित्ववत्तत्फलस्याप्यनादित्वात्पौर्वापर्ये माना- भावान्न कार्यकारणतेत्याह । **क्रियेति** । कार्यकारणव्यवहारः सप्तम्यर्थः ॥ १४४९ ॥

**अविद्यामात्रहेतौ तु सर्वमेतत्समञ्जसम् ॥**
**तत्कार्यत्वाच्च सर्वस्य न किंचिदसमञ्जसम् ॥ १४५० ॥**

कार्यकारणभावस्य त्वयाऽपीष्टेर्दोषसाम्यमित्याशङ्क्याऽऽह । **अविद्येति** । आविद्ये कार्यकारणभावे यथोक्तविकल्पदोषाभावात्कार्यं कारणं च यथादृष्टिश्लिष्टमित्यर्थः । यत्तु क्रियातत्फलयोश्चेत्यादि तदपि नास्मत्पक्षेऽस्तीत्याह । **तदिति** । क्रियादेराविद्यत्वा- त्पौर्वापर्यमपि तादृगनुभवायातमविरुद्धमित्यर्थः ॥ १४५० ॥

**यत्राऽऽत्मनोऽस्य संबन्धोऽनात्मनेह विवक्ष्यते ॥**
**अविद्याहेतुकर्त्रादिसंगतिस्तत्र मोहजा ॥ १४५१ ॥**

आत्मनोऽनात्मसंबन्धोऽस्ति न वाऽऽद्ये तत्कर्तृत्ववदन्यत्रापि वास्तवं तदस्तु कृत- मविद्यया द्वितीये सर्वगतत्वासिद्धिरित्याशङ्क्याऽऽह । **यत्रेति** । अविद्यावस्थायामिति यावत् । अविद्याहेतुना कर्त्रादीनां संगतिरित्युक्तस्यैव संबन्धस्यानुवादो मोहजेति संग- तिरिति संबन्धः ॥ १४५१ ॥

**यत्र त्वात्मेति धीरस्य जायतेऽनात्मधीरिव ॥**
**यथावस्त्वेव धीस्तत्र नात्राविद्याद्यपेक्षते ॥ १४५२ ॥**

सर्वमात्मेति ज्ञाने कर्तृत्वं वास्तवमिष्टमिति चेन्नेत्याह । **यत्र त्विति** । अविद्यावस्था- यामनात्मधीवद्यस्यां विद्यावस्थायां सर्वमात्मेति पुंसो धीस्तस्यां सा निष्प्रपञ्चार्थानुसारि- त्वान्न स्वात्मन्यज्ञानतज्जकर्तृत्वाद्यपेक्षते तद्बलोत्थत्वेऽपि तद्ध्वंसित्वादित्यर्थः ॥ १४५२ ॥

**जाग्रत्स्वप्नप्रहाणेऽपि प्रत्यङ्मात्रं न हीयते ॥**
**तद्धानेरात्मसाक्षित्वात्प्रत्यङ्जन्मादिवर्जितः ॥ १४५३ ॥**

निष्प्रपञ्चात्मवस्त्वेव नास्ति स्वापे द्वैतवदात्मनो नाशस्येष्टत्वादित्याशङ्क्याऽऽह । **जाग्रदिति** । प्रतीचो हीयमानत्वाभावे हेतुः । **तद्धानेरिति** । प्रतीचः कूटस्थदृष्टित्व- मुपसंहरति । **प्रत्यङ्ङिति** ॥ १४५३ ॥

**रज्ज्वज्ञानमनादाय न सर्पादीक्षणं यथा ॥**
**आत्माज्ञानमनादाय न तथाऽनात्मवीक्षणम् ॥ १४५४ ॥**

किंच द्वैतस्य सर्पवदज्ञानाधीनभानत्वान्मिथ्यात्वमतोऽप्रपञ्चं कूटस्थमेव तत्त्वमित्याह । **रज्ज्वति** ॥ १४५४ ॥

**कल्पनाबीजविरहात्कल्पना न हि लभ्यते ॥**
**प्रतीचि कल्पितोऽनात्मा प्रतीचि व्यभिचारितः ॥ १४५५ ॥**

---

१ घ. °त्वात्तत्पौ° । २ क. °चारतः ।

प्रतीचोऽप्यनात्मवत्कल्पितत्वमाशङ्क्याऽऽह । कल्पनेति । न हि तास्मिन्कल्पना हेत्वभावादन्यथा निरधिष्ठानो भ्रमो निरवधिश्च बाधः स्यादित्यर्थः । आत्मवदनात्माऽप्यकल्पितः स्यादित्याशङ्क्याऽऽह । कल्पित इति ॥ १४५५ ॥

आत्मनोऽव्यभिचारित्वं सर्वत्राऽऽत्मैकसाक्षिकम् ॥
यतोऽतस्तत्परिज्ञाने नाऽऽत्माऽज्ञानमपेक्षते ॥ १४५६ ॥

प्रतीचोऽपि व्यभिचारित्वेन कल्पितत्वमाशङ्क्याऽऽह । आत्मन इति । सर्वावस्थास्वव्यभिचारित्वेनाऽऽत्मनः स्वतःसिद्धत्वमुक्तं परामृशति । यत इति । तस्मादात्मा स्वज्ञाने नाज्ञानं वा तत्कार्यं वा काङ्क्षतीत्यनपेक्षसत्तास्फूर्तित्वादकल्पित इत्याह । अत इति ॥ १४५६ ॥

प्रकाश्यार्थाभिसंबन्धे कर्तृत्वं सवितुर्यथा ॥
अप्रकाशप्रकाशित्वान्न तथाऽऽत्मप्रकाशने ॥ १४५७ ॥

तर्हि स्वयमेवाऽऽत्मा स्वात्मानमन्यं च प्रकाशयन्कथं कूटस्थः स्यादित्याशङ्क्य दृष्टान्तमाह । प्रकाश्येति ॥ १४५७ ॥

बाह्यार्थभासनेऽप्यस्य सूर्यादेरिव कर्तृता ॥
सर्वदैवैकरूपत्वाद्भानोर्नापूर्वकारिता ॥ १४५८ ॥

स्वप्रकाशने निर्विकारस्यापि सवितुरन्यप्रकाशने कर्तृत्वान्निर्विकारस्याऽऽत्मनः स्वपरप्रकाशने नेदमुदाहरणमित्याशङ्क्याऽऽह । बाह्येति । सवितुरपि रूपादौ प्रकाशकर्तृत्वमस्तीति चेन्नेत्याह । सर्वदेति । भानोः स्वेतरप्रकाशने विकाराभाववदात्मनोऽपि सदा निर्विकारता प्रकाश्यार्थाभिसंबन्ध इत्यत्र त्वादित्यस्यान्यप्रकाशने कर्तृत्वमङ्गीकारमात्रं बाह्यार्थभासनेऽपीत्यत्र तस्य निरस्तत्वादिति द्रष्टव्यम् ॥ १४५८ ॥

यथा जात्यमणेः शुभ्रा ज्वलन्ती निश्चला शिखा ॥
संनिध्यसंनिधानेषु प्रकाश्यानामविक्रिया ॥ १४५९ ॥

भानोर्भासकत्वे मेघादिविगमसापेक्षत्वात्कथं तन्निष्क्रियतेत्याशङ्क्य दृष्टान्तान्तरमाह । यथेति ॥ १४५९ ॥

न प्रकाशक्रिया काचिदस्य स्वात्मनि विद्यते ॥
उपचारात्क्रिया साऽस्य यः प्रकाश्यस्य संनिधिः ॥ १४६० ॥

दार्ष्टान्तिकमाह । नेति । प्रतीचः स्वात्मनि प्रकाशार्थक्रियाभावेऽपि परत्र सा स्यादिति चेन्नेत्याह । उपचारादिति ॥ १४६० ॥

न चेदं दर्शनं गौणमग्निर्माणवको यथा ॥
इतोऽन्यथाऽवबोधस्य प्रतीचोऽनुपलब्धितः ॥ १४६१ ॥

---

१ क. सर्वानात्मै° । २ ख. घ. प्रतीचि । ३ ग. °था ॥ अतो° ।

विना विकारं प्रकाशकत्वं गौणं न मुख्यमित्याशङ्क्याऽऽह । **न चेति** । प्रतीचोऽक्रियबोधस्य संनिधिमात्रेण सर्वजगत्प्रतीतिरेव तद्भासकत्वं नाम न तु तद्विकारद्वारा तथाविधभासकत्वे मानाभावात्तदिदमेव मुख्यमित्यर्थः ॥ १४६१ ॥

**ननु भङ्गुरधात्वर्थे तृच्प्रयोगो जगत्यपि ॥**
**द्रष्टृशब्दाभिलप्यस्य नित्या दृष्टिः कथं भवेत् ॥ १४६२ ॥**

कूटस्थदृष्टित्वे प्रतीचः साधिते शतृतृजन्तश्रवणादित्याशङ्क्याऽऽदावुक्तमविद्वानाशङ्कते । **नन्विति** । अपरिभिव्याप्त्यर्थः । छेत्ता भेत्तेत्यादौ कादाचित्कक्रियाकर्तृत्वविषये तृच्प्रयोगेऽपि प्रकृते किमायातं तत्राऽऽह । **द्रष्टृति** ॥ १४६२ ॥

**नोक्तत्वात्परिहारस्य सूर्यादावपि दर्शनात् ॥**
**प्रकाशयिता सविता व्याप्तृ वाऽपि वियत्तथा ॥ १४६३ ॥**

उत्तरमाह । **नेति** । न हि कादाचित्कक्रियाकर्तरि तृचो नियमः सविता प्रकाशयिता व्याप्तृ वियदित्यागन्तुकक्रियाभावेऽपि तद्दृष्टेस्तथाऽऽत्मा दृष्टेर्द्रष्टेत्यविरुद्धमित्यर्थः ॥ १४६३ ॥

**अस्तु प्रकाशकेष्वेवं न प्रतीचीति चेन्मतम् ॥**
**नैवं प्रकाशकत्वात्स्यात्प्रत्यगात्माख्यवस्तुनः ॥ १४६४ ॥**

वैषम्यं शङ्कते । **अस्त्विति** । प्रकाशकग्रहणं व्यापकोपलक्षणार्थम् । एवं विकारं विना प्रकाशकता व्यापकता चेति यावत् । तेषां प्रकाशकादिस्वभावत्वादिति भावः । आत्मनि प्रकाशादिरूपत्वासिद्धेर्विकारेण भाव्यमित्याह । **नेति** । प्रतीचश्चित्प्रकाशत्वस्यानवच्छिन्नत्वस्य च श्रुत्यादिसिद्धत्वात्कर्तृत्वं विना प्रकाशकत्वाद्यविशिष्टमित्याह । **नैवमिति** ॥ १४६४ ॥

**प्रत्यक्षमात्मना लोके दृष्टाद्यर्थावभासनम् ॥**
**स्वयंज्योतिष्ट्वशास्त्राच्च प्रत्यगात्मा प्रकाशकः ॥ १४६५ ॥**

कथं प्रतीचश्चित्प्रकाशत्वं प्रत्यक्षादिसिद्धं तत्राऽऽह । **प्रत्यक्षमिति** । स्वानुभवसिद्धमित्यर्थः । चकारो द्रष्ट्रादेर्जाड्यान्न स्वतो भानमितियुक्तिसमुच्चयार्थः ॥ १४६५ ॥

**अप्यात्मैवेह सर्वत्र स्वयंज्योतिः प्रतीयते ॥**
**ज्योतिषामपि तज्ज्योतिस्तमेवेति च शास्त्रतः ॥ १४६६ ॥**

तस्य सर्वभासकत्वे वाक्यान्तरं प्रतिज्ञापूर्वकमाह । **अप्यात्मेति** । सप्तमीभ्यां भास्योऽर्थो गृहीतः । न केवलमवभासकोऽपि तु तत्तदात्मना भास्योऽपीत्यपेरर्थः ॥ १४६६ ॥

---

१ क. ग. °लप्यः स्यान्नित्या । २ ख. °शयति स° । ३ क. ग. °यित्रिति सदा व्याप्तृ व्यापि । ४ ख. °यथा । ५ ग. °केऽप्येवं । ६ ख. °त्मनो लो° । ७ क. ग. °के दृष्टाद्य° ।

**साक्षात्पश्याम्यहं कुम्भं न पश्यामीति लोकतः ॥**
**अनुभूतेः प्रसिद्धत्वान्नैवं स्यादिति चेन्मतम् ॥ १४६७ ॥**

कूटस्थदृष्टिरात्मेत्युक्ते प्रत्यक्षविरोधं शङ्कते । **साक्षादिति** ॥ १४६७ ॥

**नैवं पश्याम्यहं कुम्भं न पश्यामीति दर्शनात् ॥**
**सदाऽनश्वरदृष्टित्वं प्रतीचो गम्यते स्फुटम् ॥ १४६८ ॥**

परिहरति । **नैवमिति** । द्विविधोऽनुभवस्तस्य कूटस्थदृष्टित्वमनुगृह्णातीत्यर्थः ॥ १४६८ ॥

**पश्यामीत्यस्य साक्षित्वं प्रतीचो गम्यते यथा ॥**
**न पश्यामीति चाप्यस्य तथैवेहाऽऽत्मसाक्षिकम् ॥ १४६९ ॥**

पश्यामीत्याद्यनुभवे यथोक्तमात्मानं साधयत्यपि कथं न पश्यामीति धीस्तं साधयतीत्याशङ्क्य स्फुटमित्युक्तं प्रकटयति । **पश्यामीत्यस्येति** । ज्ञानवत्तदभावस्यापि नित्यानुभवादेव सिद्धेरात्मा कूटस्थदृष्टिरित्यर्थः । तथैव न पश्यामीत्यस्यापि साक्षित्वं प्रतीचो गम्यत इति संबन्धः । इहेति व्यवहारभूमिरुक्ता । आत्मसाक्षिकं ज्ञानमज्ञानं चेति शेषः ॥ १४६९ ॥

**उत्खातचक्षुषां चापि दृष्टिः स्वप्नेऽनुभूयते ॥**
**द्रष्टृदृष्ट्यतिरेकेण नित्या दृष्टिरतो मम ॥ १४७० ॥**

आत्मदृष्टेर्नित्यत्वे हेत्वन्तरमाह । **उत्खातेति** । दृष्टेरागन्तुकत्वनियमे स्वप्नावस्थायामन्धस्य रूपादिदृष्टिविरोधाद्वासनायाश्च जात्यन्धेऽसंभवाज्जन्मान्तराङ्गीकारे च तत्साधककूटस्थदृष्टिध्रौव्यान्नित्या दृष्टिरेष्टव्येत्यर्थः ॥ १४७० ॥

**ज्योतिषामपि तज्ज्योतिरस्मद्धीपरिमोषणात् ॥**
**तमोरूपमिवाऽऽभाति भानुर्नक्तंदृशामिव ॥ १४७१ ॥**

नित्या चेदात्मदृष्टिस्तर्हि सर्वैः सर्वदा किमिति नानुभूयते तत्राऽऽह । **ज्योतिषामिति** ॥ १४७१ ॥

**यत एवमतो दृष्टिर्नित्यैवाऽऽत्मन इष्यताम् ॥**
**अनित्यत्वस्य सर्वस्य प्रत्यग्दृष्ट्येकसाक्षितः ॥ १४७२ ॥**

आत्मदृष्टेर्नित्यत्वे बाधकाभावं साधकं चोक्त्वा तन्निगमयति । **यत इति** । अतःशब्दार्थं स्पष्टयति । **अनित्यत्वस्येति** । आगमापायिनः सर्वस्येत्यर्थः ॥ १४७२ ॥

**तयाऽसाधनया दृष्ट्याऽपरिणामस्वभावया ॥**
**पश्यन्नेवायमात्माऽऽस्ते तद्दृष्टेश्चोद्यहेतुतः ॥ १४७३ ॥**

---

१ ग. °भूतप्र° । २ ग. °सिद्धित्वा° । ३ ख. घ. °यत्राह । प° । ४ ख. ग. °ग्दृष्ट्यैक° । ५ क. ख. घ. °धकत्वं चो° ।

दृष्टेर्नित्यत्वोक्तिफलमाह । **तयेति** । असाधनयेति च्छेदः । तदेव व्याकरोति । **अपरिणामेति** । तन्नित्यत्वे हेत्वन्तरमाह । **तद्दृष्टेरिति** । स्वप्रकाशश्चेदात्मा कुतः सुप्ते स्वात्मानमन्यं च न वेत्तीतिचोद्यप्रमुखस्य द्वैतस्याऽऽत्मदृष्टेः सिद्धेर्न तस्या लोपोऽस्तीत्यर्थः ॥ १४७३ ॥

**पश्यामीति यथाऽद्राक्षीरात्मदृष्ट्यैव जागरे ॥**
**न पश्यामीत्यपि तथा नित्यदृष्ट्यैव वीक्षसे ॥ १४७४ ॥**

तस्याः सुप्तावनाशं दृष्टान्तेन साधयति । **पश्यामीतीति** । वीक्षसे सुषुप्ताविति शेषः । अन्यथोत्थितस्य नावेदिषमितिपरामर्शासिद्धिरिति भावः ॥ १४७४ ॥

**पश्यन्कुम्भादिकं वस्तु देहान्तो ग्राहको यथा ॥**
**दृष्ट्या संबध्यते द्रष्टा द्रष्टृत्वस्य तदाश्रयात् ॥ १४७५ ॥**
**अकारकस्वभावत्वान्नैवं वृत्तं ममाऽऽत्मनः ॥**
**आत्मदृष्टिरतो ग्राह्या प्रत्यङ्मात्रानुरोधिनी ॥ १४७६ ॥**

आत्मा जाग्रति पश्यति चेत्तस्य कारकत्वेन दृष्टिसंबन्धः स्यादित्याशङ्क्याऽऽह । **पश्यन्निति** । यो बुद्ध्यादिर्देहान्तो ग्राहकः स कुम्भादि पश्यन्द्रष्टेत्युच्यमानो यथा दृष्ट्या संबध्यते प्रमातृस्थद्रष्टृत्वस्य दृष्टिक्रियासंबन्धाधीनत्वान्न तथाऽऽत्मस्वरूपं तत्संबन्धमपेक्ष्य द्रष्टृ भवति कूटस्थदृष्टित्वादतो मातुर्द्रष्टृत्वे दृष्टिसंबन्धनिमित्तेऽपि स्वरूपाधीनं चितो द्रष्टृत्वमित्यर्थः । न हि द्रष्टुरित्यादेरर्थमुपसंहरति । **आत्मदृष्टिरिति** । उक्तेनीत्या नाशायोगोऽतःशब्दार्थः । तदनुरोधित्वं तन्नित्यत्वम् ॥ १४७५ ॥ १४७६ ॥

**यथोक्तार्थप्रसिद्धत्वाद्वैशब्दोऽत्र प्रयुज्यते ॥**
**तन्न पश्यतिशब्देन कारकत्वं निषिध्यते ॥ १४७७ ॥**

प्रतिज्ञाहेतुवाक्ययोरर्थं संक्षिप्य प्रतिज्ञार्थं प्रपञ्चयन्वैशब्दार्थमाह । **यथोक्तेति** । कूटस्थदृष्टित्वस्याऽऽत्मनः सर्वोपनिषत्प्रसिद्धेस्तस्यैव स्मरणार्थमस्मिन्वाक्ये वैशब्दप्रयोग इति यावत् । तन्न पश्यतीत्यस्यार्थमाह । **तन्नेति** ॥ १४७७ ॥

**दृश्यार्थासंभवाद्यद्वत्पश्यन्नपि न पश्यति ॥***
**न पश्यामीतिफलतः कारकस्य यथा तथा ॥ १४७८ ॥**
**अकारकात्मनोऽदृष्टिर्द्रष्टव्यार्थाप्रयुक्तितः ॥**
**वस्तूक्तं दृष्टिशब्देन न क्रिया नापि कारकम् ॥ १४७९ ॥**

तस्य यथाश्रुतार्थत्वमाशङ्क्य दृष्टान्तेन परिहरति । **दृश्यार्थेति** । यथाऽहमित्यात्मानं पश्यन्नपि माता घटाद्यर्थाभावान्न पश्यतीत्युच्यते तस्य प्रमां प्रति कर्तृरूपस्य

* एतच्छ्लोके यथेत्यस्य विद्यमानत्वाद्यद्वदित्यस्याऽऽनर्थक्यम् ।

१ घ. °ति । एवं स्व° । २ ख. घ. °क्तरीत्या । ३ ख. °त्वं नित्य° ।

कुम्भाद्यभावे न पश्यामीतिफलोपलम्भात्तथा कूटस्थदृष्टिस्वभावस्याऽऽत्मनः स्वापे द्रष्टव्याभावाद्दृष्ट्यभावो न स्वरूपदृष्टेरेवाभावः प्रत्यभिज्ञया तन्नित्यत्वनिश्चयादित्यर्थः । यद्वै तदित्यादि व्याख्याय पश्यन्नित्यस्यार्थमाह । वस्त्विति । दृष्टिशब्देन पश्यन्नितिशब्देनेत्यर्थः ॥ १४७८ ॥ १४७९ ॥

ग्राहकग्रहणग्राह्यहीनं रूपं यदात्मनः ॥
तद्दृष्टिरिति वचसा साक्षान्नः प्रतिपाद्यते ॥ १४८० ॥

अक्रियाकारकं वस्तु पश्यन्नित्यनेनोक्तमित्यस्मिन्नर्थे वाक्यशेषं हेतू करोति । ग्राहकेति ॥ १४८० ॥

प्रतीच्येव समाप्तं यदक्रियाकारकात्मकम् ॥
न पश्यतिगिरा रूपमात्मनस्तदिहोच्यते ॥ १४८१ ॥

वैशब्दस्यावधारणार्थत्वं मन्वानस्तत्र पश्यतीत्यस्यार्थमाह । प्रतीचीति । स्वापो वा प्रकृतं वाक्यं वा सप्तम्या गृह्यते । तत्र पश्यतिशब्देन कारकत्वं निषिध्यत इत्यनेन न पुनरुक्तिस्तस्य पश्यन्नित्यनेन विरोधे शङ्किते तन्निरासार्थमेतदुपादानादिति द्रष्टव्यम् ॥ १४८१ ॥

ननु चोद्यानुवादोऽयं न पश्यतिगिरोच्यते ॥
कुतोऽकारकवस्त्वत्र प्रमाणादभिधीयते ॥ १४८२ ॥

चोदितार्थानुवादोऽयमित्युक्तेर्न पश्यतीत्येतदनुवादकं तत्कथं कौटस्थ्यसाधकमिति चोदयति । नन्विति । प्रमाणान्तरात्तर्हि विवक्षितार्थसिद्धिरिति नेत्याह । कुत इति । अत्रेत्यवस्थाविशेषोक्तिः ॥ १४८२ ॥

ऐकात्म्यमेव नो ज्ञातं सर्वत्रैव पुरा मितेः ॥
अज्ञातमेव च ज्ञातं नातश्चोद्यस्य संभवः ॥ १४८३ ॥

अकारकात्मनि मानाभावं दूषयति । ऐकात्म्यमिति । लोकशास्त्रयोः सर्वत्र देशे काले च पूर्वं प्रमाणप्रवृत्तेरज्ञातमेवोर्ध्वं ज्ञातं भवतीत्यविवादः । एवमैकात्म्यमेवाज्ञातमिति च साधितमतस्तत्रैव सर्वस्य मानत्वादकारकं वस्तु कुतो मानात्सिध्येदितिचोद्यासंभावनेत्यर्थः ॥ १४८३ ॥

स्वतःसिद्धानुभूतिश्च नाज्ञानाद्व्यतिरिच्यते ॥
सांख्यराद्धान्तवन्नातश्चोद्यं मत्तोऽन्यतः कृतम् ॥ १४८४ ॥

ऐकात्म्यमज्ञातं चेत्तत्किमज्ञानाद्भिद्यते न वाऽऽद्ये सांख्यीयप्रकृतिवदज्ञानस्य स्वातन्त्र्यं द्वितीये त्वैकात्म्यमपि जडं स्यादित्याशङ्क्याऽऽह । स्वतःसिद्धेति । कथं तर्हि जडतासमाधिरज्ञानादतिरेकाभावे स्वतःसिद्धत्वस्य व्याघातात्तत्राऽऽह । नात इति ।

---

१ क. ग. यद्विक्रि॰ ।

अज्ञानस्य तत्त्वान्यत्वाभ्यामनिर्वाच्यत्वान्न तदभेदादात्मनो जडतेत्यर्थः । ये त्वात्मानमद्वयं न मृष्यन्ते तान्प्रत्याह । **मत्त इति** । आत्मनो जडत्वे चोद्यं त्वया कृतं तदद्वैतवादिनोऽन्यत्र स्यात्परिच्छिन्नस्य जाड्याव्यभिचारान्न तस्य घटादिवदात्मतेति भावः ॥ १४८४ ॥

**ऐकात्म्यवादिनाऽवश्यमेको मेयोऽर्थ इष्यते ॥**
**मेयान्तराभ्युपगमे न ह्यैकात्म्यं प्रसिध्यति ॥ १४८५ ॥**

कथमैकात्म्यमेवाज्ञातं मेयं घटादेरपि तथात्वादित्याशङ्क्याऽऽह । **ऐकात्म्येति** । आवश्यकत्वे हेतुमाह । **मेयान्तरेति** । न च तदप्रसिद्धिरस्तु सर्वोपनिषद्व्याकोपादिति भावः ॥ १४८५ ॥

**साधनानामसामग्र्यात्सामग्र्याच्चेह कर्तरि ॥**
**न पश्यतीक्षत इति विरुद्धार्थो यथोच्यते ॥ १४८६ ॥**
**पश्यन्न पश्यतीत्यत्र न तथाऽऽत्मनि युज्यते ॥**
**दृङ्मात्राविक्रियात्मत्व एकत्वाकारकत्वतः ॥ १४८७ ॥**

न पश्यतीतिचोद्यानुवादेन कौटस्थ्यमात्मनः साध्यते[1] सर्वाणि मानानि तादृगात्मसाधकानीत्युक्तमिदानीं मातरि दर्शनादर्शनोक्तिवदात्मन्यपि तदर्थं पश्यन्न पश्यतीति वाक्यं न[2] कौटस्थ्यार्थमित्याशङ्क्याऽऽह । **साधनानामिति** । पश्यन्नित्यादावात्मनि दर्शनादर्शनोक्तिरयुक्तेत्यत्र हेतुमाह । **दृङ्मात्रेति** । तन्मात्रत्वे क्रियात्वमात्मनः[3] स्याद्दृशस्तथात्वादित्याशङ्क्याऽऽह । **अविक्रियेति** । तर्हि गुणत्वं तस्यागुणत्वान्नेत्याह । **आत्मत्वेति** । नीतिश्च यथोक्ते हेतुः । एकत्वादकारकत्वाच्चाऽऽत्मनि दर्शनादर्शनोक्तिरयुक्तेत्याह । **एकत्वेति** ॥ १४८६ ॥ १४८७ ॥

**यत एवमतः पश्यन्नित्यस्यैवोत्तरं वचः ॥**
**न पश्यतीति व्याख्यानं कारकादिनिषेधनम् ॥ १४८८ ॥**

आत्मोक्तलक्षणश्चेत्पश्यन्नित्येवास्तु किमिति न पश्यतीत्युच्यते तत्राऽऽह । **यत इति** । उक्तनीत्या यस्मादात्मा कूटस्थदृष्टिस्तस्मात्पश्यन्नित्युक्ते यत्कर्तृत्वं तन्निराकर्तुं न पश्यतीति वाक्यमित्यर्थः । व्याख्यानफलमाह । **कारकादीति** ॥ १४८८ ॥

**पश्यन्न पश्यतीत्यत्र तस्मादेकोऽर्थ उच्यते[4] ॥**
**अकारकात्मकं ज्योतिरद्वयं प्रत्यगात्मकम् ॥ १४८९ ॥**

व्याख्यानव्याख्येयभावे लब्धमाह । **पश्यन्निति** । तमेवैकमर्थं व्यनक्ति । **अकारकेति** ॥ १४८९ ॥

---

१ ख. साध्यं । २ घ. न तत्कौट° । ३ घ. °यात्मत्व° । ४ ग. इष्यते ।

**ग्रहीतृग्रहणग्राह्यं वस्तु द्रष्टव्यमुच्यते ॥**
**प्रमाणदृष्टियोग्यत्वात्प्रमात्राद्यात्मवस्तुनः ॥ १४९० ॥**

पश्यन्नित्यादिकाण्वपाठं व्याख्याय पश्यन्वै तद्द्रष्टव्यमित्यादिमाध्यंदिनपाठे द्रष्टव्यशब्दार्थमाह । **ग्रहीत्रिति** । घटादिग्राह्यमेव द्रष्टव्यशब्दार्थो न मात्रादीत्याशङ्क्याऽऽह । **प्रमाणेति** । द्रष्टव्यशब्दार्थतेति शेषः ॥ १४९० ॥

**प्रात्यक्ष्यं च यथैतेषां तथा पूर्वमवादिषम् ॥**
**द्रष्ट्रादेरात्मनश्चोक्तं वैलक्षण्यं तथा पुरा ॥ १४९१ ॥**

मेयवन्मातृमानयोरप्यन्याधीना धीश्चेत्स्यादनवस्थेत्याशङ्क्य स्वप्रकाशदृष्ट्यवष्टम्भात्तत्सिद्धेर्मैवमित्याह । **प्रात्यक्ष्यं चेति** । संबन्धग्रन्थादारम्य तत्र तत्र मात्रादेः साक्षिवेद्यत्ववचनान्नानवस्थेत्यर्थः । दृष्टियोग्यत्वान्मात्रादेर्द्रष्टव्यशब्दार्हत्वे तद्योग्यत्वाविशेषादात्मनोऽपि तदर्हत्वापत्तिरित्याशङ्क्याऽऽह । **द्रष्ट्रादेरिति** । पुरेत्यव्याकृतादाविति यावत् । तथा सति स्वप्रकाशस्याऽऽत्मनोऽनन्याधीनत्वान्न द्रष्टव्यतेत्याह । **तथेति** ॥ १४९१ ॥

**दर्शनादर्शनोक्तिभ्यामविभागात्मको दृशिः ॥**
**इहाभिधीयते ज्योतिरन्यत्र तु विभागवत् ॥ १४९२ ॥**

द्रष्टव्यशब्दार्थमुक्त्वा पश्यन्नित्यादिपाठद्वयेऽपि तुल्यार्थमित्याह । **दर्शनेति** । इहेति स्वापपरामर्शस्य कृत्यमाह । **अन्यत्रेति** । जागराद्यवस्थाद्वये विभक्तमात्मज्योतिर्व्यवह्रियत इति यावत् ॥ १४९२ ॥

**चितेरकारकत्वाच्च सर्वान्तरतमत्वतः ॥**
**कार्त्स्न्यात्तदन्ययाथात्म्यात्पश्यन्नपि न पश्यति ॥ १४९३ ॥**
**न पश्यति यथा प्राज्ञ उक्तहेत्वविशेषतः ॥**
**तथैवैतद्ग्रहीतव्यं स्वप्नजाग्रदवस्थयोः ॥ १४९४ ॥**

तर्हि स्वीकृतमात्मज्योतिषोऽवस्थाविशेषे कारकत्वं नेत्याह । **चितेरिति** । कल्पनया कारकत्वेऽपि वस्तुतस्तदभावान्न सिद्धान्तहानिरित्यर्थः । जागरादावपि वस्तुतोऽकारकत्वं तुल्यमित्याह । **सर्वेति** । तथाऽपि विभागवदित्युक्तत्वात्परिच्छिन्नत्वे कथं कौटस्थ्यमत आह । **कार्त्स्न्यादिति** । जागरादावपि दर्शनादर्शनोक्तिभ्यां कूटस्थमद्वयमात्मज्योतिरिष्टमित्याह । **पश्यन्नपीति** । ननु तत्र पश्यन्नित्येव युक्तं न तु न पश्यतीत्यन्यथा सुषुप्तेरविशेषप्रसङ्गात्तत्राऽऽह । **तथेति** । सुप्तिवदन्यत्राप्यात्मा निर्विशेषो दृङ्मात्राविक्रियात्मत्वादिहेतूनां तुल्यत्वान्न हि कदाचिद्विशेषदर्शनमात्मेति संभवति कूटस्थदृष्टिस्वाभाव्यादित्यर्थः ॥ १४९३ ॥ १४९४ ॥

**चितेर्यथाऽविनाशश्च स्वप्नजाग्रदवस्थयोः ॥**
**तथैव संप्रसादेऽस्मिन्नुक्तहेतुसमन्वयात् ॥ १४९५ ॥**

जागरादौ दर्शनादर्शनोक्तावपि स्वापे न पश्यतीत्येव युक्तं कथं पश्यतीत्युच्यते तत्राऽऽह । **चितेरिति** । अविनाश इति च्छेदः । उक्तेति चितेरकारकत्वाच्चेत्यत्रोक्तहेतूनामात्मनि सदा सत्त्वादिति यावत् । आविद्यस्थूलसूक्ष्मविशेषदृष्टदृष्टिभ्यामवस्थासु विशेषसिद्धिरिति भावः ॥ १४९५ ॥

**न हीतिहेतुवचनं प्रतिज्ञातार्थसिद्धिकृत् ॥**
**द्विप्रकारो विनाशश्च द्विर्हेतूक्त्या निषिध्यते ॥ १४९६ ॥**

प्रतिज्ञावाक्यं पाठद्वयेऽपि व्याख्याय हेतुवाक्यमनूद्य तस्यार्थमाह । **न हीतीति** । आत्मा कूटस्थदृष्टिरिति प्रतिज्ञातोऽर्थस्तत्साधकत्वेन न हीत्यादिवाक्यमित्यर्थः । एकेनैव हेतुना प्रतिज्ञार्थसिद्धेर्व्यर्थं हेत्वन्तरमित्याशङ्क्याऽऽह । **द्विप्रकार इति** ॥ १४९६ ॥

**निरन्वयो विनाशोऽस्य न हीत्युक्त्या निषिध्यते ॥**
**अविनाशीति चाप्यत्र विकारापह्नुतेर्वचः ॥ १४९७ ॥**

कौ तौ नाशस्य द्वौ प्रकारौ तयोर्वा कस्य केन निषेध इत्याशङ्क्योक्तं विभजते । **निरन्वय इति** । विपरीत्युपसर्गद्वयवशादित्यर्थः । अविनाशित्वादित्यस्य तात्पर्यमाह । **अविनाशीति चेति** । विकारस्यापह्नुतिः कारणसंसर्गः सावशेषो नाशस्तत्संबन्ध्यविनाशित्वादिति वचोऽस्मिन्वाक्ये प्रयुक्तमतो निरवशेषनाशवत्सावशेषनाशस्याप्ययोगात्कूटस्थदृष्टिरात्मेत्यर्थः ॥ १४९७ ॥

**अविनाशीति मैत्रेय्यां द्विधानाशनिषेधकृत् ॥**
**वचनं प्रागुपन्यस्तं तदेवात्रापि हेतवे ॥ १४९८ ॥**

चतुर्थे च नाशद्वयं निरस्तमित्याह । **अविनाशीति** । अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मेत्यत्र नाशद्वयं निषिद्धं चेत्किमितीह निषिध्यते तत्राऽऽह । **तदेवेति** । आत्मा कूटस्थदृष्टिरिति प्रतिज्ञातेऽर्थे नाशद्वयाभावरूपहेतुसिद्ध्यर्थं चातुर्थिकमेव वाक्यमत्राऽऽकृष्टमित्यर्थः ॥ १४९८ ॥

**सर्वोच्छित्त्यात्मसाक्षित्वादुच्छित्तेश्चाप्यसंभवात्[1] ॥**
**तथा सर्वविकाराणां प्रत्यङ्मात्रैकसाक्षिता ॥ १४९९ ॥**

आत्मनो निरन्वयनाशाभावे हेतुमाह । **सर्वेति** । सर्वात्मनोच्छित्तिर्निरन्वयो नाशस्तत्राऽऽत्मनः साक्षित्वान्न तद्वत्तेत्यर्थः । आत्मनः सावशेषनाशाभावे हेतुमाह । **उच्छित्तेश्चेति** । उच्छित्तिः सावशेषो नाशो हेतुसंसर्गो नाऽऽत्मनो युज्यते हेत्वभावात्तत्रापि साक्षित्वाच्च तदसौ नित्यदृष्टिरेवेत्यर्थः । सावशेषनाशाभावे हेत्वन्तरमाह । **तथेति** । सर्वेषु विकारेषु प्रत्यङ्मात्रस्य साक्षित्वात्तस्याविकारित्वान्न कारणसंसर्गो नाश इत्यर्थः ॥ १४९९ ॥

---

१ ख. °क्षिकः ॥ १४९९ ॥

**पश्यन्नेवायमत्राऽऽस्ते सान्वयानन्वयौ ध्रुवः ॥**
**नाशौ यस्मादतः सिद्ध आत्मा कूटस्थदर्शनः ॥ १५०० ॥**

आत्मनो द्विधानाशाभावे फलितमाह । **पश्यन्निति** ॥ १५०० ॥

**पश्यन्न पश्यतीत्येतत्स्वतन्त्रं चाऽऽगमं वचः ॥**
**न हीति तु प्रतिज्ञोक्तिरनुमोक्त्यनुसारिणी ॥ १५०१ ॥**
**हेतूक्तिरविनाशित्वादित्युक्तार्थप्रसिद्धये ॥**
**विनाशशक्त्यभावोक्तेर्न प्रतिज्ञैकदेशता ॥ १५०२ ॥**

विधान्तरेण वाक्यं विभजते । **पश्यन्नित्यादिना** । आगमरूपं हि वचो न हेतुमाकाङ्क्षते निरपेक्षप्रमाणत्वादित्यर्थः । न हीत्यादाविष्टं विभागमाह । **नेति** । यथा वह्निमानिति प्रतिज्ञाय तत्सिद्धये धूमवत्त्वादिति हेतुरुच्यते तथैव दृष्टेर्नित्यत्वं प्रतिज्ञाय तस्यैव प्रतिज्ञातस्य सिध्यर्थमनुमानानुसारिणी हेतूक्तिरविनाशित्वादिति प्रयुज्यते तथाचानुमानवत्साधकतेत्यर्थः । आत्मदृष्टेर्नाशाभावं प्रतिज्ञायाविनाशित्वादिति हेतुं वदतः साध्याविशिष्टतेत्याशङ्क्याऽऽह । **विनाशेति** । न विनश्यतीति प्रतिज्ञा विनंष्टुमयोग्यत्वं हेतुस्तन्नानयोरेकार्थतेत्यर्थः ॥ १५०१ ॥ १५०२ ॥

**प्रतिज्ञावचसी द्वे वा पश्यन्नित्यादिनोदिते ॥**
**न हीति हेतुवचसी द्वे स्यातामुत्तरे तयोः ॥ १५०३ ॥**

प्रकारान्तरेण विभागमाह । **प्रतिज्ञेति** ॥ १५०३ ॥

**पश्यन्नेवाऽऽस्त इत्यस्याः प्रतिज्ञोक्तेः प्रसिद्धये ॥**
**हेतुर्न हीतिवचनमुत्तरस्यापि चोत्तरम् ॥ १५०४ ॥**

तमेव विभागं प्रकटयति । **पश्यन्नेवेति** । उत्तरस्य न पश्यतीत्यस्येति यावत् । उत्तरमविनाशित्वादिति वाक्यमित्यर्थः ॥ १५०४ ॥

**निरन्वयविनाशस्य निषेधोऽत्र विवक्ष्यते ॥**
**प्रथमे हेतुवचसि परिणामस्तथोत्तरे ॥ १५०५ ॥**

हेत्वोरैकार्थ्यमाशङ्क्याऽऽह । **निरन्वयेति** । परिणामो निषिध्यत इति शेषः ॥ १५०५ ॥

**द्वौ वा हेतू यथोक्तार्थौ द्वयोरपि प्रतिज्ञयोः ॥**
**आभ्यां संभूय सिद्धोऽर्थ एवं सति भवेद्यतः ॥ १५०६ ॥**

प्रतिज्ञाद्वये हेतुद्वयं योज्यमिति विधान्तरमाह । **द्वौ वेति** । यथोक्तार्थौ सावशेषो निरवशेषश्चेत्युक्तावित्यर्थः । द्वयोरिति पश्यन्न पश्यतीत्यनयोरित्यर्थः । अस्मिन्पक्षे लाभमाह । **आभ्यामिति** । आभ्यां हेतुभ्यां संभूय स्थिताभ्यामात्मनो दृष्टित्वमनाशश्च विव-

---

१ ख. त्वागमं ।

क्षितोऽर्थो यतः सिध्यत्यतो हेतुद्वयं प्रतिज्ञाद्वयेऽपि योज्यमेवं वाक्यद्वये स्थिते कूटस्थ-दृष्टित्वमात्मनः स्थितमित्यर्थः ॥ १५०६ ॥

**पश्यन्नेवायमत्राऽऽस्त इति चेत्कथमुच्यते ॥**
**न पश्यतीति वचनं शृणु तच्च यथा तथा ॥ १५०७ ॥**

न त्वित्याद्याकाङ्क्षापूर्वकमादत्ते । **पश्यन्निति** । अत्रेति सुप्तिरुक्ता । तच्छब्देन न पश्यतीतिवाक्योक्तिः ॥ १५०७ ॥

**पुरा यदभवन्मोहात्स्वप्नजाग्रदवस्थयोः ॥**
**प्रतीचो न तदत्रास्ति रूपं[1] यत्कारकात्मकम् ॥ १५०८ ॥**

अवतारितवाक्यपदानि व्याचष्टे । **पुरेति** । कारकात्मकं प्रमातृलक्षणमिति यावत् । सप्तमी पूर्ववत् ॥ १५०८ ॥

**आत्मनोऽद्वयतत्त्वस्य द्वितीयं यदविद्यया ॥**
**सुषुप्ते न तदस्तीह प्रयुक्तं यत्स्वगोचरैः ॥ १५०९ ॥**

प्रतीचस्तद्रूपं वास्तवमेव किं न स्यात्तत्राऽऽह । **आत्मन इति** । स्वापेऽपि किमित्याविद्यं प्रमातृत्वं न भवतीत्याशङ्क्याऽऽह । **प्रयुक्तमिति** । श्रोत्रादिकरणोपेतं साभासमन्तःकरणं प्रमातृशब्दितं स्वविषयशब्दादिप्रेरितं प्रवर्तते न च प्रेरकाः शब्दादयः स्वापे सन्त्यतो मातृरूपमाविद्यमपि न तत्रास्तीत्यर्थः ॥ १५०९ ॥

**सजातीयप्रयुक्तं यद्बुद्ध्यन्तं रूपमात्मनः ॥**
**धर्मादिहेतुकं प्राज्ञे तद्ध्वस्तं कर्मणः क्षयात् ॥ १५१० ॥**

तत्रैव हेत्वन्तरमाह । **सजातीयेति** । श्रोत्रादिप्रयुक्तं धर्मादिकारणकमात्मनो यन्मा-तृत्वं तत्तत्र निवर्तते करणस्य कर्मणश्च तदा निवृत्तेरित्यर्थः ॥ १५१० ॥

**तमोन्तात्कारणात्तद्धि द्वितीयं कार्यरूपतः ॥**
**ततोऽन्यद्ग्रहणं नास्ति विभक्तं ग्राह्यमेव च ॥ १५११ ॥**

स्वापे प्रमातृरूपाभावे हेत्वन्तरमाह । **तमोन्तादिति** । तन्मातृरूपं द्वितीयशब्दितं कार्यत्वात्कारणमपेक्षते तथाच पारिशेष्यात्तमसः साभासात्तदुत्पद्यते न च स्वापे तमो व्यक्तमस्त्यतस्तत्र नाभिव्यक्तियोग्यं मातृत्वमित्यर्थः । ततोऽन्यदित्यस्य न त्वित्यनेन संयोज्यार्थमाह । **तत इति** । आत्मातिरिक्तं शब्दादिज्ञानं[2] स्वापे नास्तीति यावत् । विभक्तपदार्थमाह । **विभक्तमिति** । शब्दादिविषयजातं विभक्तं तदपि तत्र नास्तीति चशब्दार्थः । अतो मातृमानमेयाभावान्न पश्यतीति वचस्तत्र प्रयुक्तमित्यर्थः ॥ १५११ ॥

**स्वप्नेऽप्येतत्त्रयं नाभूद्वासनामात्रशेषतः ॥**
**किमु विध्वस्तनिःशेषद्वैतहेतौ[3] सुषुप्तगे ॥ १५१२ ॥**

---

१ ख. °पं तत्का° । २ घ. °यज्ञानं वि° । ३ ग. °हेतोः सु° ।

प्रमात्रादित्रयं सुप्तौ नेत्यत्र कैमुतिकन्यायमाह । **स्वप्नेऽपीति** ॥ १५१२ ॥

**सुषुप्ते योऽवशिष्टोऽत्र कौटस्थ्यान्नान्यदर्श्यसौ ॥**
**योऽप्यन्यदर्शी सोऽप्यत्र नास्ति तद्धेत्वसंभवात् ॥ १५१३ ॥**

तादृगात्मनि मात्रादित्रयाभावेऽपि तदभावदर्शित्वादसौ कर्तेति चेन्नेत्याह । **सुषुप्त इति** । अन्यशब्दो मात्राद्यभावविषयः । कौटस्थ्यादात्मनोऽकर्तृत्वेऽपि स्वापेऽन्योऽस्ति कर्तेत्याशङ्क्याऽऽह । **योऽपीति** । अन्यस्यानात्मनो दर्शनकर्ता प्रमातेति यावत् । तद्धे-त्वसंभवात्प्रमातुर्हेतुरभिव्यक्तमज्ञानं तस्य सुषुप्तावसत्त्वादित्यर्थः ॥ १५१३ ॥

**द्वितीयदर्शनायालं रूपमासीद्यदात्मनः ॥**
**तन्नास्ति तद्द्वितीयं च विभक्तं नात ईक्षते ॥ १५१४ ॥**

न त्वित्यादेरर्थमुपसंहरति । **द्वितीयेति** । यदात्मनो जागरादावनात्मदर्शनशक्तं मातृ-रूपं तन्न स्वापेऽस्ति तस्मान्मातृरूपं द्वितीयं शब्दार्थजातं तज्ज्ञानं च तदा न वर्ततेऽतो न पश्यत्यात्मेत्यर्थः ॥ १५१४ ॥

**अविद्यावद्द्वितीयं वा नित्यदृष्टेर्विवक्ष्यते ॥**
**सदाहीनाननुदितभास्वदेकदृगात्मनः ॥ १५१५ ॥**

द्वितीयशब्दस्यार्थान्तरमाह । **अविद्यावदिति** । कूटस्थदृष्टेरात्मनः साभासमज्ञानं द्वितीयं विवक्षितमित्यत्र हेतुमाह । **सदेति** । कूटस्थस्वप्रकाशचिदेकरसत्वादात्मनस्तद्-द्रिक्तं साभासमज्ञानमिति द्वितीयमित्यर्थः ॥ १५१५ ॥

**तादात्म्यव्यतिरेकाभ्यां तमस्तज्जं च नाऽऽत्मनः ॥**
**विरोधादेशतोऽकार्यकारणत्वात्परात्मनः ॥ १५१६ ॥**

किंच द्वितीयशब्देनाज्ञानं तत्कार्यं वा गृह्यतामात्मनस्तु न कदाचित्तत्संबन्ध इत्याह । **तादात्म्येति** । न भेदाभेदाभ्यामात्मनो द्वितीयं शक्यनिरूपणमित्यत्र हेतुमाह । **विरो-धेति** । जडाजडयोर्विरोधात्परस्य च निर्विशेषत्वस्यास्मदिष्टत्वात्तस्य कार्यकारणविनिर्मु-क्तत्वान्न द्वितीयसंगतिरित्यर्थः ॥ १५१६ ॥

**विभक्तं यत्तमोऽस्तीव नाविभक्तं मनागपि ॥**
**तमोऽन्वितत्वाद्बुद्ध्यन्ते न प्राज्ञेऽनन्वयात्तमः ॥ १५१७ ॥**

साभासमज्ञानं द्वितीयं चेन्न त्वित्यादि कथं निषेधो न हि सुषुप्तावज्ञानं नास्ति पुनरु-त्थानविरोधादित्याशङ्क्याऽऽह । **विभक्तमिति** । यदज्ञानमज्ञोऽहमिति विभागेन भाति तत्परमार्थतोऽसदपि प्रतीतितोऽस्तीत्यवस्थाद्वये व्यवह्रियते सुषुप्ते च न तद्विभागेन ज्ञाय-तेऽतो न तत्तदाऽस्तीत्युच्यत इत्यर्थः । किंच मातृपक्षतयाऽविद्या भासते न परपक्षतया

१ ख. तु । २ क. ख. °धादेश° ।

न च स्वापे माताऽस्त्यतो युक्तं तदा तदभाववचनमिति स्थूलदृष्टिमाश्रित्याऽऽह । **तम इति** ॥ १५१७ ॥

**कूटस्थदृष्टावेकस्मिन्नविभक्ते सहस्रधा ॥**
**नामरूपादिभेदेन विभक्तं यत्तमो दृशेः ॥ १५१८ ॥**

**तत्तु द्वितीयं नेहास्ति तमोऽनर्थस्य कारणम् ॥**
**द्रष्ट्रादिरूपसंभेदाद्यत्पश्येज्जागरे यथा ॥ १५१९ ॥**

द्वितीयशब्दस्य कारणवाचित्वमपेक्ष्य वाक्यार्थमाह । **कूटस्थेति** । इहेति सुषुप्तिरुक्ता । यथा जागरे द्वितीयं द्रष्ट्रादिभेदावष्टम्भादुपलभते तथैव स्वापे तदवष्टम्भाद्यद्द्वितीयं पश्येत्तदत्र नास्तीति योजना ॥ १५१८ ॥ १५१९ ॥

**अविद्यादेरभावोक्त्या कूटस्थात्मैव भण्यते ॥**
**कारणात्मा यतोऽभावः कार्याख्यस्येह वस्तुनः ॥ १५२० ॥**

अविद्यातज्जयोस्तत्राभावे तेनाऽऽत्मा सद्वयः स्यादित्याशङ्क्याऽऽह । **अविद्यादेरिति** । तत्र हेतुः । **कारणेति** । अज्ञानप्रतिभासस्य कादाचित्कत्वाज्ज्ञानात्तद्बाधोच्च तत्कार्याख्यं वस्तु तस्य कारणात्मा कूटस्थदृष्टिरेवाभावो न हि कारणस्य सत्तास्फूर्तिदं कूटस्थदृष्टेरन्यदस्त्यतो नाद्वैतहानिरित्यर्थः । इहेति स्वसिद्धान्तोक्तिः ॥ १५२० ॥

**अज्ञानान्नान्यदस्तित्वं सर्वस्यानात्मनो यथा ॥**
**निवृत्तिस्तद्वत्तद्धेतोर्नावगत्यात्मनोऽपरा ॥ १५२१ ॥**

अज्ञानाद्यभावस्याऽऽत्माभेदे कथं तस्य भावत्वं तत्राऽऽह । **अज्ञानादिति** । तद्धेतोर्द्वितीयकारणस्याज्ञानस्येत्यर्थः ॥ १५२१ ॥

**तत्तु नैवेह वस्त्वस्ति द्वितीयं मोहहेतुजम् ॥**
**साक्षिणो विषयीभूतं विभक्तं कार्यरूपतः ॥ १५२२ ॥**

किंच सुषुप्ते द्वितीयं वस्त्ववस्तु वा नाऽऽद्य इत्याह । **तत्त्विति** । तत्र हेतुः । **मोहेति** । मोहाद्धेतोर्द्वितीयस्य जातत्वान्न वस्तुता इन्द्रो मायाभिरिति श्रुतेरित्यर्थः । मोहजत्वं साधयति । **साक्षिण इति** । दृश्यत्वाद्विभक्तत्वात्कार्यत्वाच्च मात्रादि रज्जुसर्पवन्मोहोत्थमित्यर्थः ॥ १५२२ ॥

**संविदैव समाप्तत्वात्तमोजस्य पुरोत्थितेः ॥**
**लभते न द्वितीयत्वमन्यत्वासंभवात्तमः ॥ १५२३ ॥**

स्वापे द्वितीयवस्त्वभावे हेत्वन्तरमाह । **संविदेति** । तमसस्तज्जस्य च संविन्मात्रत्वेन समाप्तेः स्वापे न द्वितीयतेत्यर्थः । द्वितीयेऽपि तदज्ञानं तज्जं वेति विकल्प्याऽऽद्यं दूष-

---

१ घ. 'त्वपक्षे वा' । २ क. ख. 'धात्तका' ।

यति । लभत इति । न हि तमसोऽनिर्वाच्यस्यान्यत्वं न च तदभावे द्वितीयतेत्यर्थः ॥ १५२३ ॥

**कार्यस्यापि च बुद्ध्यादेस्तद्धेतोरविभागतः ॥**
**न तदस्ति द्वितीयत्वं संविदेव समाश्रितः ॥ १५२४ ॥**

कल्पान्तरं निराह । कार्यस्येति । किंचावस्तुनोऽवस्तुत्वादेव न द्वितीयत्वं न च वस्तुनो वस्तुत्वादेवातोऽवस्तुनोऽप्यज्ञानस्य तज्जस्य वा न द्वितीयत्वं किंत्वन्यस्येति वाच्यं तच्च न तदभावादित्याह । संविदेति ॥ १५२४ ॥

**यत एवमतः प्राह नेह तद्वस्तु विद्यते ॥**
**यत्पश्येद्गोचरापन्नं सुखशब्दादिलक्षणम् ॥ १५२५ ॥**
**यत्पश्येदिति कर्त्रुक्तिर्द्रष्टाऽत्राऽऽशङ्क्यते यतः ॥**
**तन्नास्ति विषयोल्लेखिदर्शनस्येह कारणम् ॥ १५२६ ॥**

उक्तेऽर्थे वाक्यतात्पर्यमाह । यत इति । उक्तरीत्या सुप्तौ कूटस्थाद्वयसंविन्मात्रमेव यतोऽवशिष्यतेऽतो न त्वित्यादिका श्रुतिर्यद्बाह्यमाभ्यन्तरं वा विषयभूतं पश्येत्तन्न द्रष्टव्यरूपमत्रास्तीत्याहेत्यर्थः । यत्पश्येदित्यनेन मातृनिर्देशे हेतुमाह । द्रष्टेति । तस्य न त्वित्यनेन संबन्धं दर्शयति । तन्नेति । उभयत्र सप्तम्योः सुप्तिरेवार्थः ॥ १५२५ ॥ ॥ १५२६ ॥

**श्रोत्रादिकरणोपेतं यतोऽन्तःकरणं दृशेः ॥**
**बाह्यार्थदर्शने हेतुः कौटस्थ्यान्न तदक्षरम् ॥ १५२७ ॥**

द्रष्टा स्वापे निषिध्यते चेदात्मैव निषेध्यः स्यान्नान्योऽतोऽस्ति द्रष्टेति श्रुतेरित्याशङ्क्याऽऽह । श्रोत्रादीति । साभासान्तःकरणं श्रोत्रादिकरणोपकरणं दृगात्मनः शब्दादिदर्शने परिणामितया यतो हेतुरतस्तदक्षरं न द्रष्टृ स्वीक्रियते कूटस्थदृष्टित्वेन तस्य दृष्टकर्तृत्वाच्छ्रुतिस्तु चक्षुरादिद्वारा रूपाद्याकारमनोविकारे दृष्ट्यादिशब्दिते साक्षिताऽस्यैवेत्येवंपरेत्यर्थः ॥ १५२७ ॥

**तमोन्तः कारणं बुद्धेर्द्रष्टाऽन्तःकरणावधिः ॥**
**सुखी दुःखी च देहान्तः प्रत्यगज्ञानहेतुतः ॥ १५२८ ॥**

तर्हि मात्रादिभेदाभ्युपगमादपसिद्धान्तो नेत्याह । तमोन्त इति । प्रत्यगात्मा खल्वविद्यान्तो बुद्ध्यादिनिदानं बुद्ध्यन्तो द्रष्टा देहान्तः कर्ता भूत्वा सुखादिना संबध्यते तदनाद्यविद्ययाऽऽत्मैव कारणाद्यात्मना तिष्ठतीत्यातिष्ठमानस्य नापराद्धान्तशङ्केत्यर्थः ॥ १५२८ ॥

---

१ घ. °द्वयं चिन्मा° । २ घ. °मान्त° । ३ ख. °मन्यदस्ती° । ४ ख. निषेध्य° । ५ घ. निषिद्धः । ६ घ. °भासमन्तः° । ७ ध. °रं च न ।

**बुद्ध्यादेश्च समुत्पत्तौ धर्माद्येवात्र कारणम् ॥**
**यतोऽतः कारणध्वस्तौ बुद्ध्याद्येत्यात्मकारणम् ॥ १५२९ ॥**

स्वापे मात्राद्यभावे हेत्वन्तरमाह । **बुद्ध्यादेश्चेति** । अत्रेत्यात्मोक्तिः । अज्ञानोत्थं धर्माद्यात्मनि बुद्ध्याद्युत्पत्तौ निमित्तमिति यावत् । कथं तावता स्वापे मात्राद्यभावस्तत्राऽऽह । **यत इति** । यस्मादज्ञानजं धर्मादि बुद्ध्यादिनिमित्तं तस्मादभिव्यक्तनिमित्तस्य तत्र ध्वस्तौ पृथग्बुद्ध्यादि स्थातुमशक्तमज्ञातमात्मानं गच्छतीत्यर्थः ॥ १५२९ ॥

**तमोन्वयस्तमःकार्ये बुद्ध्यादावेव युज्यते ॥**
**न त्वकारणकार्येऽस्मिन्नित्यबुद्धे परात्मनि ॥ १५३० ॥**

बुद्ध्यादेरज्ञातात्मान्वये केवलात्मन्यज्ञानान्वयः स्यादित्याशङ्क्याऽऽह । **तमोन्वय इति** । एवकारार्थमाह । **न त्विति** । तत्र तमोनन्वये हेतुमाह । **नित्येति** ॥१५३०॥

**वृत्तिं च लभते कार्यं न स्वकारणतोऽन्यतः ॥**
**न कार्यं कारणं वाऽस्ति प्रत्यग्वृत्तव्यपेक्षया ॥ १५३१ ॥**

परस्मिन्ननन्वयेऽपि तमसो बुद्ध्यादेस्तदन्वयात्तद्द्वारा तदपि तत्रान्वियादित्याशङ्क्याऽऽह । **वृत्तिं चेति** । न तावदज्ञातात्मन्यज्ञानं स्वाश्रयप्रसङ्गान्न च कारणादन्यत्र कार्यमिति बुद्ध्यादेरपि न तदन्वयस्तथाच केवलेऽप्यात्मन्यज्ञानाद्यनङ्गीकारश्चेत्कथं तत्पारतन्त्र्यमित्याशङ्क्याऽऽह । **नेति** । प्रतीचो वृत्तमनुसृत्य तत्राज्ञानाद्ययोगेऽपि स्वातन्त्र्यासंभवादाश्रयान्तरादृष्टेश्चाग्निमिव घृतपिण्डोऽज्ञानाद्यात्मानमाश्रयेतेत्यर्थः ॥ १५३१ ॥

**बुद्ध्यन्तस्यास्य मूढस्य सुखशब्दादिदर्शिनः ॥**
**स्वकारणक्षयाद्ध्वस्तौ नाऽऽत्मा पश्यन्नपीक्षते ॥ १५३२ ॥**

स्वापे मात्राद्यभावेऽपि प्रकृते किमायातं तदाह । **बुद्ध्यन्तस्येति** । मात्रादिहेतुव्यक्ताज्ञानस्य स्वापे नाशात्तस्यापि तदा ध्वस्तावात्मा चिद्रूपतया स्वप्रकाशोऽपि न पश्यतीत्युच्यत इत्यर्थः ॥ १५३२ ॥

**द्रष्टृत्वादिविभागेन विभक्तो यस्त्वविद्यया ॥**
**स कूटस्थात्मनाऽपीतो रज्ज्वा सर्पो यथा तथा ॥ १५३३ ॥**

ननु तदा मात्रादिध्वंसः सावशेषो निरवशेषो वाऽऽद्ये स्वकारणक्षयादित्ययुक्तं द्वितीये पुनरुत्थानानुपपत्तिस्तत्राऽऽह । **द्रष्टृत्वादीति** । स्वापे हेत्वभावोक्तिर्व्यक्ताज्ञानाभावाभिप्राया तेन मात्रादिविभागस्याज्ञातेनाऽऽत्मना तत्रोपसंहाराद्ध्वंसः सावशेष इत्यर्थः । कूटस्थं ब्रह्माऽऽत्मा यस्य कारणस्य तेन स्वात्मन्येव मात्रादेरुपसंहारं दृष्टान्तेनाऽऽह । **रज्ज्वेति** ॥ १५३३ ॥

---

१ ख. चास्ति ।

**द्रष्टृदर्शनदृश्यानां संबन्धोऽतो न वीक्ष्यते ॥**
**तमस्विनः प्रलीनत्वान्नाविद्याकार्यमीक्षते ॥ १५३४ ॥**

आत्मनः स्वापे मात्रादिसंबन्धात्कुतः संबन्धी निषिध्यते तत्राऽऽह । **द्रष्टृिति** । अतःशब्दोक्तं हेतुमाह । **तमस्विन इति** । कारणातिरिक्तमात्राद्यभावात्तस्य च तदाऽनभिव्यक्तेरित्यर्थः । मात्रादेस्तत्संबन्धस्य च सुप्तावसत्त्वे फलितमाह । **नाविद्येति** । अविद्यातत्कार्यं तदा न पश्यतीति यावत् ॥ १५३४ ॥

**द्रष्टृदर्शनदृश्यादिभेदोऽविद्याप्रकल्पितः ॥**
**यतोऽतो मोहविध्वस्तौ द्रष्ट्राद्यात्मनि नेक्ष्यते ॥ १५३५ ॥**

यद्वै तन्न पश्यतीत्यादिवाक्यव्याख्यामुपसंहरति । **द्रष्टृिति** । दृश्यादीत्यादिशब्देन घ्राता घ्रातव्यमित्यादि गृह्यते ॥ १५३५ ॥

**उत्तरेष्वपि वाक्येषु यथोक्तमुपपादयेत् ॥**
**व्याख्यानमेतदेवेति नातोऽन्यदवशिष्यते ॥ १५३६ ॥**

यद्वै तन्न जिघ्रतीत्यादावुक्तमतिदिशति । **उत्तरेष्विति** । अतिदेशे हेतुमाह । **व्याख्यानमिति** ॥ १५३६ ॥

**अन्ये पुनरिमं ग्रन्थमन्यथैव यथोदितात् ॥**
**व्याचक्षते हि व्याख्यानात्तच्चापीह विभाव्यते ॥ १५३७ ॥**

यद्वै तदित्यादेः स्वव्याख्यानमुक्त्वा भर्तृप्रपञ्चव्याख्यानमुत्थापयति । **अन्ये पुनरिति** । कथं प्रसिद्धमन्यथा व्याख्यानं तदाह । **तच्चेति** ॥ १५३७ ॥

**निरस्य पूर्वपक्षोक्तीः परिहारोक्तिभिः क्रमात् ॥**
**ज्योतिर्मात्रतया स्थानं दृशेः प्राज्ञे जगौ सुधीः ॥ १५३८ ॥**

विभावनमभिनेतुं वृत्तं कीर्तयति । **निरस्येति** । जडत्वादिपूर्वपक्षोक्तीः स्वयंज्योतिष्ट्वादिपरिहारोक्तिभिः क्रमान्निरस्य ज्योतिर्मात्रत्वेन दृगात्मनः सुप्ताववस्थानं मुनिरुक्तवानित्यर्थः ॥ १५३८ ॥

**साधयित्वा स्वयंज्योतिः सुषुप्ते युक्तिभिः स्फुटम् ॥**
**अथैवं ज्ञस्वभावोऽपि कस्मात्प्राज्ञे न पश्यति ॥ १५३९ ॥**
**इत्याशङ्कापनुत्त्यर्थं परो ग्रन्थोऽवतारितः ॥**
**तद्व्याख्यानं यथावच्च ह्यक्षराणां विभाव्यते ॥ १५४० ॥**

कथं ज्योतिर्मात्रतया स्थितिस्तत्राऽऽह । **साधयित्वेति** । स्वप्ने स्वयंज्योतिरात्मेति पूर्वोक्ताभिर्युक्तिभिः स्फुटं साधयित्वा सुषुप्ते तस्य ज्योतिर्मात्रत्वेन स्थितिं जगौ मुनिरिति योजना । वृत्तमनूद्याऽऽकाङ्क्षापूर्वकं यद्वै तदित्यादेरवतारितत्वप्रकारमाह । **अथेति** । परोक्तं संबन्धं पूर्वत्रानूदितमेवात्र स्मारयित्वा वाक्याक्षरव्याख्यां प्रतिजानीते । **तद्व्या-**

ख्यानमिति । चकारोऽवधारणे । तद्व्याख्यानं तच्छिष्याणां प्रसिद्धमिति हिशब्दार्थः ॥ १५३९ ॥ १५४० ॥

**यद्वै न पश्यतीत्येवमात्मानमतिशङ्कसे ॥**
**तन्मा शङ्कीर्यतः प्राज्ञे पश्यन्नात्माऽत्र वर्तते ॥ १५४१ ॥**

तदेव प्रकटयति । **यद्वै नेति ।** आत्मा स्वापे न पश्यतीति चेन्न ज्योतिःस्वभावो जडस्तु स्यादित्यात्मानं यदतिशङ्कसे सा शङ्का न कार्या यस्मात्पश्यन्नेवायं तत्र तिष्ठतीत्यर्थः । **उक्तं** हि पश्यन्नेवायं तस्मिन्काले भवतीति ॥ १५४१ ॥

**इत्थंसतत्त्वकस्तावद्द्रष्टव्यः श्रुतियुक्तिभिः ॥**
**न पश्यतीति न पुनर्द्रष्टव्यो हेत्वसंभवात् ॥ १५४२ ॥**

अस्तु स्वापे पश्यन्नपश्यंश्चाऽऽत्मोभयथा श्रुतेर्नेत्याह । **इत्थमिति ।** ज्योतिर्मात्रस्वभाव इति यावत् । पश्यन्निति श्रुतिः । जडस्यानात्मताप्रसक्तिरित्याद्या युक्तिः । व्यावर्त्यमाह । **नेति** ॥ १५४२ ॥

**विशेषवन्न चाप्यस्य विज्ञानमिह जायते ॥**
**पश्यन्न पश्यतीत्येवं पदार्थद्वयमीरितम् ॥ १५४३ ॥**
**तदाविष्करणे ग्रन्थः क्रमेणाऽऽरभ्यते परः ॥**
**न हि द्रष्टुरितीत्थं च सौकर्येणावगम्यते ॥ १५४४ ॥**

न पश्यतीति श्रुतिरेव हेतुरिति चेत्तत्राऽऽह । **विशेषवदिति ।** अतो न पश्यतीति श्रुतिरिति शेषः । **यथाऽऽहुः**—न चास्य विशेषज्ञानं प्रादुरस्तीति । वृत्तमनूद्योत्तरवाक्यमादत्ते । **पश्यन्निति ।** पश्यन्नित्युक्तपदार्थप्रकटीकरणार्थं न हीत्यादि । न पश्यतीत्युक्तार्थस्पाष्टार्थं न त्वित्यादीरितमित्यर्थः । पश्यन्नित्यस्य व्याख्या न हीत्यादिरिति पक्षे वाक्याक्षराणामार्जवेनार्थो भातीत्याह । **न हीति ।** न पश्यतीत्यस्य व्याख्या न त्वित्यादिरित्यत्रापि तदक्षराणामाञ्जस्यं तुल्यमिति चार्थः ॥ १५४३ ॥ १५४४ ॥

**द्रष्टा दृष्टिक्रियाकारी विज्ञानात्मा पुमानिह ॥**
**बुद्ध्युपात्तस्य रूपादेर्विज्ञानं च ततः परम् ॥ १५४५ ॥**

द्रष्टृपदार्थमाह । **द्रष्टेति ।** बुद्धिविषयरूपादेर्दृष्टिरूपक्रियाकर्ता जीवो लोके द्रष्टोच्यते द्रष्टाऽयं पुरुषो दृष्टिक्रियायाः कर्ता दृष्टिक्रियाभिव्यक्तस्य रूपस्य बुद्ध्योपात्तस्य विज्ञातेत्युक्तेरित्यर्थः । यदाऽस्य दृष्टिकर्तृत्वं कारणपौष्कल्यात्तदाऽनन्तरक्षणे लब्धाश्रयं विज्ञानं चक्षुरादिद्वारा रूपादिविषयं प्रादुर्भवतीत्याह । **विज्ञानं चेति** ॥ १५४५ ॥

**तत्रापि च धियो वृत्तेर्ग्राह्यग्राहकरूपतः ॥**
**घटादिमेयविषयात्पूर्वोत्पन्नक्रियात्मनः ॥ १५४६ ॥**

क्रियान्तरस्य निर्वृत्तौ द्रष्टा तत्रापि पूरुषः ॥
दृक्शक्तिः पुरुषे तत्र या रूपाद्यनुरोधिनी ॥ १५४७ ॥

न केवलं ज्ञानस्यैवाऽऽत्मा कर्ता किंतु तत्फलस्य संवेदनस्यापीत्याह । **तत्रापीति ।** आत्मनो दृष्टिकर्तृत्वे विषयज्ञाने चोत्पन्ने सति धीवृत्तेरात्मकर्तृकज्ञानस्य ग्राह्यं शब्दाद्यधिकृत्य ग्राहकरूपत्वात्प्रथमप्रवृत्तात्क्रियारूपज्ञानाद्घटाद्यर्थात्क्रियान्तरस्य संवेदनाख्यफलस्योत्पत्तौ तस्मिन्नपि कर्ता जीवोऽवगम्यते । **उक्तं हि** तत्रापि बुद्धिप्रत्ययस्य घटादेश्च ग्राह्यग्राहकभावेन संबन्धात्क्रियान्तरनिर्वृत्तौ द्रष्टैवेति । तज्ज्ञानसंवेदनयोरात्मा कर्तेत्यर्थः । बुद्धेरेव दृष्टिसामर्थ्यात्कथमात्मनो द्रष्टृत्वं तत्राऽऽह । **दृक्शक्तिरिति ।** शब्दादिज्ञानसंवेदनकर्तृत्वसामर्थ्यमात्माश्रितं जडस्य तदयोगादित्यर्थः । **तदुक्तं** तत्र यस्मिन्पुरुषे दृक्शक्ती रूपग्रहणादिसंबन्धिनीति ॥ १५४६ ॥ १५४७ ॥

क्रियाभावोऽवगन्तृस्थो विज्ञानात्मैककर्तृकः ॥
तस्या दृष्टेः क्रियाया हि द्रष्टृधर्मत्वतः सदा ॥ १५४८ ॥
द्रष्टुर्विपरिलोपोऽत्र मनागपि न विद्यते ॥
गुणिस्थित्यनुरोधित्वाद्गुणानामग्निदाहवत् ॥ १५४९ ॥

आत्मनो द्रष्टृत्वे फलितमाह । **क्रियेति ।** ज्ञानसंवेदनाख्यक्रियारूपो भावो जीवकर्तृकस्तदाश्रित इत्यर्थः । तदाहुर्विज्ञानात्माधीनो यो दृशिक्रियाभावः कर्तृगत इति । द्रष्टुर्दृष्टेरिति पदद्वयं व्याख्यायावशिष्टं व्याचष्टे । **तस्या इति ।** वक्ष्यमाणन्यायावद्योती हिशब्दः । द्रष्टृधर्मत्वे दृष्टेर्द्रष्टुश्चाविनाशेऽपि किमिति नाशो दृष्टेर्न स्यात्तत्राऽऽह । **गुणीति ।** यथाऽग्नेर्दाहो यावदग्निभावी तथा गुणानां गुणिस्थित्यनुसारित्वाद्यावद्गुणिभावित्वमित्यर्थः । **उक्तं च** यावद्गुणिभाविनो हि गुणा यावदग्निस्तावदौष्ण्यमिति ॥ १५४८ ॥ १५४९ ॥

यत एवमतो यावदात्मा द्रष्टा न नश्यति ॥
न तावत्स्यात्समुच्छेदो द्रष्टुर्दृष्टेस्तदाश्रयात् ॥ १५५० ॥

सामान्यन्यायं प्रकृते योजयति । **यत इति ।** यथोक्तं यावद्द्रष्टा तावद्दृष्टिरित्यपरिलोप इति ॥ १५५० ॥

मतं गुणिविनाशेन तद्गुणोऽपि विनङ्क्ष्यति ॥
अग्न्याद्यौष्ण्यादिवच्चेन्न द्रष्टुरस्याविनाशतः ॥ १५५१ ॥

आत्मना सह तर्हि दृष्टिर्नश्यतीति शङ्कते । **मतमिति ।** यथाऽग्न्यादिगुणिनाशेनौष्ण्यादिस्तद्गुणो नश्यति तद्वदात्मनाशेन तद्गुणो दृष्टिर्नश्यतीत्यर्थः । नित्यो हि द्रष्टेति भाष्येण दूषयति । **न द्रष्टुरिति ।** ॥ १५५१ ॥

---

१ ग. ॰शता ॥ १५५१ ॥

**अत आहाविनाशित्वाद्द्रष्टुर्दृष्टिकृतः सदा ॥**
**विनंष्टुं नाऽऽत्मनः शीलं घटादेरिव युज्यते ॥१५५२ ॥**

द्रष्टुरविनाशे हेतुत्वेन श्रुतिमवतारयति । **अत इति** । यतो द्रष्टुरविनाशोऽभीष्टोऽतोऽविनाशित्वादिति हेतुमाह श्रुतिः । यतश्च द्रष्टुरनाशोऽतो दृष्टिरात्मनः सदाऽस्ति द्रष्ट्रा सह तन्नाशस्य शङ्कितुमशक्यत्वादित्यर्थः । आत्मनोऽनाशे कथमविनाशित्वं हेतुः साध्यावैशिष्ट्यादित्याशङ्क्याऽऽह । **विनंष्टुमिति** । **यथाऽऽहुः**—न ह्यस्य विनंष्टुं शीलं विद्यत इति ॥ १९९२ ॥

**न विनश्यत्यसौ कस्मादिति हेतुरिहोच्यताम् ॥**
**सर्वात्मत्वात्तथैकत्वाद्द्रष्टुर्नाशो न विद्यते ॥ १५५३ ॥**

कुत इतिप्रश्नार्थमाह । **नेति** । सर्वात्मभावादद्वैतत्वादिति भाष्येणोत्तरमाह । **सर्वात्मत्वादिति** ॥ १९९३ ॥

**येनास्याऽऽशङ्क्यते नाशस्तेनास्याप्रविभागतः ॥**
**संभाव्यते न नाशोऽस्य नंष्टुर्नाशाविभागतः ॥ १५५४ ॥**

किंचाऽऽत्मनः स्वातिरिक्तेन वा नाशः स्वेनैव वा नाऽऽद्य इत्याह । **येनेति** । नंष्टृत्वेनेष्टात्मनो नाशकत्वेनेष्टाद्भेदाभावादित्युक्तमेव हेतुं स्पष्टयति । **नंष्टुरिति** । नाशशब्दो नाशकविषयः । **यथाऽऽहुः**—येन ह्यस्यान्येन द्वितीयेन नाश आशङ्क्येत न तदस्ति तेनाविभक्तत्वात्तस्येति ॥ १९९४ ॥

**न च तेनैव तस्यैव विनाश उपपद्यते ॥**
**ऐकात्म्याद्वैतविषये यथाऽग्नीन्धनयोस्तथा ॥ १५५५ ॥**

न द्वितीय इत्याह । **न चेति** । अनुपपत्तिं वैधर्म्यदृष्टान्तेन स्पष्टयति । **द्वैतेति** । सति भेदे वह्नीन्धनयोर्नाश्यनाशकता यथेक्ष्यते न तथैकात्म्यविषये सा संभवति विषयविषयिभावस्य भेदापेक्षत्वादित्यर्थः । **तदुक्तं** न च तेनैव तस्य विनाशोऽस्तीति ॥१९९५॥

**द्रष्टुस्ततोऽविनाशित्वान्नित्या नित्यस्य धर्मिणः ॥**
**आदित्यरश्मिवद्ग्राह्या दृष्टिरप्यविनाशिनी ॥ १५५६ ॥**

आत्मनः स्वतः परतश्चानाशे फलितमाह । **द्रष्टुरिति** । *तथा द्रष्टुर्नित्यत्वे सतीत्यर्थः । यथोक्तमविनाशित्वान्नित्यस्तस्य नित्यस्य द्रष्टुर्नित्यो गुणो दृष्टिरवस्थितैवाऽऽस्त इति ॥ १९९६ ॥

**नित्योऽतो नित्यया दृष्ट्या पश्यन्नेवाविलुप्तया ॥**
**द्रष्टाऽऽस्ते प्रज्वलन्त्याऽत्र सुषुप्ते यो विवक्षितः ॥ १५५७ ॥**

---

*एतट्टीकानुरोधेन मूले ततोऽविनाशित्वादित्यत्र तथाऽविनाशित्वादिति स्यादित्यनुमीयते ।

---

१ क. ग. 'च्यते । स' । २ ख. साधयति । ३ घ. आशङ्क्यते ।

दृष्टेर्नित्यत्वे किमायातं तत्राऽऽह । **नित्य इति । तदुक्तं** स तया दृष्ट्याऽविपरिलुप्तया पश्यन्नेवाऽऽस्त इति ॥ १९१७ ॥

**एवं तावत्स्थितं पूर्वं पश्यन्निति यदीरितम् ॥**
**न पश्यतीति यत्तूक्तं तदिदानीं प्रपञ्च्यते ॥ १९१८ ॥**

इति स्थितमित्यस्यार्थमाह । **एवमिति** । द्वितीयं पदार्थं निर्णेतुमुपादत्त इतिभाष्यार्थमाह । **नेत्यादिना** ॥ १९१८ ॥

**न पश्यतीदं द्रष्टव्यमिति यत्सूत्रितं पुरा ॥**
**पश्यन्नेव यदि ह्यास्ते कथं तदुपपद्यते ॥ १९१९ ॥**

नेत्यादिप्रतिज्ञाया दौर्बल्याभावात्किं तत्प्रपञ्चेनेत्याशङ्क्य यदि पश्यन्नेवाऽऽस्ते कथं न पश्यतीतिभाष्यार्थमाह । **न पश्यतीति** ॥ १९१९ ॥

**यथोपपद्यते सर्वं शृणु तच्चापि भण्यते ॥**
**पश्यन्नेवायमत्राऽऽस्ते पूर्वहेतुसमाश्रयात् ॥ १९२० ॥**

शृणु यथा पश्यति न पश्यति चेत्यस्यार्थं वदन्नन्वित्यादिवाक्यमादत्ते । **यथेति** । पश्यन्न पश्यतीति यथोपपद्यते तथा तत्सर्वमपि भण्यते तत्त्वं शृण्विति योजना । पूर्वत्रैवं स्थितमनुवदन्पश्यति तावदयमित्यस्यार्थमाह । **पश्यन्निति** । नित्यदृष्टित्वं पूर्वहेतुः ॥ १९२० ॥

**तत्तु द्वितीयं नेहास्ति द्रष्टव्यं यत्समाश्रयात् ॥**
**विशेषबुद्ध्यभिव्यक्तिर्जाग्रद्वाऽऽविर्भविष्यते ॥ १९२१ ॥**

कथं तर्हि न पश्यतीत्याशङ्क्य तत्तु द्वितीयं नास्ति यत्संबन्धाद्विशेषविज्ञानं प्रादुःष्यादितिभाष्यार्थमाह । **तत्त्विति** । इहेति सुप्तिरुक्ता ॥ १९२१ ॥

**ननु द्रष्टव्यमस्त्येव द्वैताद्वैतात्मकत्वतः ॥**
**ब्रह्मणोऽस्य कथं नास्ति द्रष्टव्यमिति भण्यताम् ॥**
**द्रष्टव्यं स्याद्विभक्तं तन्नाविभक्तं यथोदितम् ॥ १९२२ ॥**

ननु च द्वैताद्वैतविषयत्वे स्यादेव विभक्तं द्रष्टव्यमिति चोद्यं व्याकुर्वन्द्रष्टव्यासंभवान्न पश्यतीत्युक्तमाक्षिपति । **नन्विति** । स्याद्विभक्तं न त्वन्यत्वत इति भाष्येणोत्तरमाह । **द्रष्टव्यमिति** । द्रष्टुर्व्यतिरिक्तं जगद्रष्टव्यं भवितुमीष्टे न तन्मात्रं स्वापे तु यथोक्तं भिन्नाभिन्नात्मकं ब्रह्मैव जगदिति द्रष्टव्यासत्त्वमेतेन ततोऽन्यदित्यादि व्याख्यातमित्यर्थः ॥ १९२२ ॥

**यदि ह्यन्यत्ततो द्रष्टुर्दृश्यं तत्स्याद्विभागवत् ॥**
**ततः पश्येद्विभक्तं सन्न त्वेवमिह विद्यते ॥ १९२३ ॥**

१ घ. तदाह । २ ख. भण्यते ।

यदि हि ततोऽन्यद्विभक्तं स्यात्पश्येन्न तु तद्द्वितीयमस्तीति भाष्यं व्याकुर्वन्नुक्तं प्रपञ्चयति । **यदीति** । इहेति स्वसिद्धान्तस्य सुषुप्तेर्वा ग्रहणम् ॥ १५६३ ॥

**पश्यन्नेवायमत्राऽऽस्ते द्रष्टव्यासंभवात्सदा ॥**
**न पश्यतीति द्रष्टोक्तो न तु दृष्टिविनाशतः ॥ १५६४ ॥**

तस्माद्दृक्शक्तेर्विद्यमानत्वात्पश्यन्नेवाऽऽस्ते न तु द्रष्टव्यं प्राप्नोति यतोऽतो नोपलभत इतिभाष्यार्थं वदन्प्रतिज्ञाद्वयमुपसंहरति । **पश्यन्निति** ॥ १५६४ ॥

**ज्वलन्नपि यथा वह्निर्नानभ्याहितमिन्धनम् ॥**
**दहतीह तथा द्रष्टा नाप्राप्तं दृश्यमीक्षते ॥ १५६५ ॥**

तद्यथाऽग्निर्ज्वलन्नपि नानभ्याहितं दहति तद्वदिति भाष्यमाश्रित्योक्तमेव दृष्टान्तेन साधयति । **ज्वलन्निति** । व्यवहारभूमिः सप्तम्यर्थः ॥ १५६५ ॥

**व्याख्यानमेतत्सुधियां श्रद्दधाना उपासते ॥**
**युक्त्यक्षरबहिष्ठत्वान्न विद्वांस उपासते ॥ १५६६ ॥**

भर्तृप्रपञ्चव्याख्यानमुपन्यस्य स्थूलधीभिरादरणीयत्वं दर्शयन्दुष्टत्वं सूचयति । **व्याख्यानमिति** । विद्वद्भिरुपेक्षणीयत्वाच्च तस्य दुष्टतेत्याह । **युक्तीति** ॥ १५६६ ॥

**यथा चेदमसंबद्धं न युक्त्यक्षरसंश्रयम् ॥**
**तथाऽसकृत्पुराऽप्युक्तमधुनाऽप्यभिधीयते ॥ १५६७ ॥**

कथमिदं युक्त्यक्षरबाह्यतयोपेक्ष्यमिति तत्राऽऽह । **यथेति** । आत्मा कूटस्थदृष्टिरिति वदद्भिरिदं दुष्टमित्युपदिष्टमुपपादयिष्यते चेत्यर्थः । तर्हि किमर्थमिदमिदानीमनूदितं तत्राऽऽह । **अधुनाऽपीति** । तद्व्याख्याने दुष्टतोक्तिः सम्यक्त्वभ्रान्तिनिरासार्थमित्यर्थः ॥ १५६७ ॥

**पश्यन्नेवायमत्राऽऽत्मा सुषुप्ते व्यवतिष्ठते ॥**
**एवंसतत्त्व एवायमिति हेतुरिहोदितः ॥ १५६८ ॥**

किं तर्हि तदुच्यमानं दूषणमिति[2] तद्वक्तुं परपक्षमनुभाषते । **पश्यन्निति** । आत्मा हि स्वापे पश्यन्नेव तिष्ठत्येवमविनष्टदृष्टिरसावित्यत्र न हीत्यादिना दृष्टिकर्तुर्नाशाभावात्तद्गुणस्य दृष्टेरपि न नाश इत्युक्तो हेतुरित्यर्थः ॥ १५६८ ॥

**न च प्रादुर्भवत्यस्य ज्ञानमन्यद्विशेषवत् ॥**
**न पश्यतीति वाक्यस्य व्याख्यानमिदमीरितम् ॥ १५६९ ॥**

प्रतिज्ञान्तरव्याख्यामनुवदति । **न चेति** ॥ १५६९ ॥

**पश्यन्नेवेति चेदेतद्वस्तुयाथात्म्यमुच्यते ॥**
**इत्थंसतत्त्व इत्युक्त्या कथं द्रष्टृक्रियोच्यते[3] ॥ १५७० ॥**

---

१ घ. °त्वात्तस्य । २ ख. °ति वक्तुं । ३ ख. द्रष्टुः क्रि° ।

यत्तावत्पश्यन्नित्यस्य व्याख्यानं तत्र किं पश्यन्नित्यात्मनो दृष्टिरूपतोक्ता किंवा तत्कर्तृताऽऽद्यं प्रत्याह । **पश्यन्निति** । यदि प्रतीचः स्वरूपं पश्यन्नित्यनेन दृष्टिलक्षण-मुक्तं तदा प्रत्यगात्मेत्थंसतत्त्वो दृष्टिस्वभावो न तत्कर्तेत्यतो न हीत्यादौ दृष्टेरित्युक्त्या दृष्टिकर्तुरात्मनो दृष्टिरूपा क्रिया नैवोच्येतेत्यर्थः ॥ १९७० ॥

**द्रष्टृधीना क्रियादृष्टिरिति चेद्भवतोच्यते ॥**
**कथं विपरिलोपोऽस्याः क्रियात्वे सति वार्यते ॥ १९७१ ॥**

द्वितीयमनूद्य प्रत्याह । **द्रष्टृति** । क्रिया हि परिलुप्यते क्रियात्वाद्गतिवत्तथाच न हीत्यादिनिषेधविरोधः स्यादिति भावः ॥ १९७१ ॥

**अभूतदृष्टिकर्तृत्वे द्रष्टृत्वं द्रष्टुरिष्यते ॥**
**प्रादुर्भावे तथाऽसत्याः क्रियायाश्च क्रियात्मता ॥ १९७२ ॥**

किंचाऽऽत्मा सतीं दृष्टिं करोत्यसतीं वा तत्राऽऽद्यं निराह । **अभूतेति** । असती-मभूतां दृष्टिं प्रति कर्तृत्वे द्रष्टुर्द्रष्टृत्वमेष्टुं शक्यते न त्वसौ सतीं कर्तुमीष्टे सत्या दृष्टेः सत्त्वादेव चिकीर्षाविषयत्वाभावात्तन्नाऽऽद्यकल्पसिद्धिरित्यर्थः । तत्रैव हेत्वन्तरमाह । **प्रादुर्भाव इति** । यथा द्रष्टुर्द्रष्टृत्वमसतीं क्रियां प्रति कर्तृत्वेन भवति तथा क्रियायाश्चा-सत्या जन्मनि क्रियात्वं सिध्यत्यतो न सतीं दृष्टिं द्रष्टा करोतीत्यर्थः । न द्वितीयोऽ-सत्या दृष्टेः शशशृङ्गवत्करणासिद्धेरिति चार्थः ॥ १९७२ ॥

**द्रष्ट्रा च क्रियते दृष्टिर्न चासौ परिलुप्यते ॥**
**इति स्ववचसैवैतद्विरुद्धमभिधीयते ॥ १९७३ ॥**

आत्मा दृष्टिकर्ता तस्य क्रिया दृष्टिरिति निरस्तम् । यत्तु दृष्टिकर्तुरविनाशात्तद्गुणो दृष्टिर्न नश्यतीति तत्राऽऽह । **द्रष्ट्रा चेति** ॥ १९७३ ॥

**कार्यस्यापि च नित्यत्वं वचनाच्चेत्प्रसिध्यति ॥**
**वचनस्याप्रमाणत्वं कारकत्वात्प्रसज्यते ॥ १९७४ ॥**

न हि द्रष्टुरित्यादिवाक्याद्व्याघातसमाधिं शङ्कते । **कार्यस्येति** । वाक्यं कृतकस्य नित्यतां कुर्याद्बोधयेद्वेति विकल्प्याऽऽद्ये दोषमाह । **वचनस्येति** ॥ १९७४ ॥

**प्रमाणं बोधकं सर्वं तच्च सिद्धस्य वस्तुनः ॥**
**पूर्वं प्रमाणसंबन्धाद्व्यङ्ग्यव्यञ्जकसंगतेः ॥ १९७५ ॥**

कारकत्वेऽपि प्रमाणं किं न स्यात्तत्राऽऽह । **प्रमाणमिति** । बोधकत्वेऽपि कार-कत्वं किं न स्यादत आह । **तच्चेति** । मानसंबन्धात्प्रागेव सिद्धस्य बोधकं मानमि-त्यत्र हेतुमाह । **व्यङ्ग्येति** । विद्यमानविषयापेक्षत्वाद्घटदीपादौ तथादृष्टत्वादिति शेषः ॥ १९७५ ॥

**अनुमानविरोधस्य वचसोऽस्य प्रसज्यते ॥**
**अविनाभाविता यस्मादनित्यकृतकत्वयोः ॥ १५७६ ॥**

द्वितीयं प्रत्याह । **अनुमानेति** । चकारस्तद्यथेह कर्मजित इत्यादिश्रुतिविरोधसमुच्चयार्थः । अनुमानविरोधे हेतुमाह । **अविनाभावितेति** ॥ १५७६ ॥

**द्वौ पदार्थावुपन्यस्तावित्येतदेतिदुर्घटम् ॥**
**यतो न पश्यतीत्येतदनूद्यान्यद्विभाव्यते ॥ १५७७ ॥**

आत्मना क्रियमाणाऽपि दृष्टिर्न नश्यतीति प्रत्युक्तम् । यत्तु पश्यन्न पश्यतीत्येवं पदार्थद्वयमुक्तमिति तन्निरस्यति । **द्वाविति** । दौर्घट्ये हेतुः । **यत इति** ॥ १५७७ ॥

**न पश्यतीति प्राप्तत्वान्नापूर्वोऽर्थोऽवबोध्यते ॥**
**न पश्यतीत्यतोऽनूद्य पश्यन्निति विधीयते ॥ १५७८ ॥**

कथं यथोक्तोऽनूद्यविधेयभावस्तत्राऽऽह । **नेत्यादिना** । स्वापे दृष्टयभावस्य प्राप्तत्वान्न पश्यतीत्यज्ञातोऽर्थो न बोध्यते किंतु न पश्यतीत्यदृष्टिमनूद्य पश्यतीत्यप्राप्ता दृष्टिर्विधीयते तन्न पदार्थद्वयसंभावनेत्यर्थः ॥ १५७८ ॥

**पश्यन्नित्यस्य वा व्याख्या कारकत्वनिवृत्तये ॥**
**न पश्यतीति वचनं न त्वर्थान्तरमुच्यते ॥ १५७९ ॥**

इतश्च पदार्थद्वयं नास्तीत्याह । **पश्यन्नित्यस्येति** । अनूद्यविधेयभावेन व्याख्यानव्याख्येयभावस्य विकल्पार्थो वाशब्दः । पश्यन्नित्युक्ते ज्ञानकर्तृत्वं प्राप्तं निराकर्तुं न पश्यतीत्युच्यते न स्वतन्त्रं पदार्थान्तरं तन्न पदार्थद्वयमित्यर्थः ॥ १५७९ ॥

**किमयं दृष्टिकारित्वात्पुमान्द्रष्टेति भण्यते ॥**
**दृष्ट्यात्मकं वा किं वस्तु द्रष्टेत्यत्र विवक्ष्यते ॥ १५८० ॥**

यत्तु द्रष्टा दृष्टिक्रियाकारीति तद्दूषयितुं विमृशति । **किमिति** ॥ १५८० ॥

**न तावद्दृष्टिकर्तृत्वं कौटस्थ्यादात्मवस्तुनः ॥**
**कौटस्थ्यसिद्धौ हेतूंश्च प्रागवोचमनेकशः ॥ १५८१ ॥**

आद्ये दोषमाह । **न तावदिति** । हेत्वसिद्धिमाशङ्क्याऽऽह । **कौटस्थ्येति** । हेतुरसङ्गत्वादिः ॥ १५८१ ॥

**क्रियाकारकरूपस्य प्रत्यङ्मात्रसतत्त्वतः ॥**
**नातोऽस्य कारकत्वं स्यात्साक्षित्वाच्च क्रियावताम् ॥ १५८२ ॥**

आत्मातिरिक्तवस्त्वभावाच्च नास्य दृष्टिकर्तृतेत्याह । **क्रियेति** । पञ्चम्यौ समानाधिकरणे । तत्रैव हेत्वन्तरमाह । **साक्षित्वाच्चेति** । न हि कारकसाक्षी कारकतां गन्तुमलमित्यर्थः ॥ १५८२ ॥

---

१ क. ख. °र्मचित । २ ग. °दपि दु° ।

बुद्ध्युपात्तस्य रूपादेर्विज्ञातृत्वं न चाऽऽत्मनः ॥
भोक्तृत्वमपि तस्येह चैतन्याभासवर्त्मना ॥ १५८३ ॥

दृष्ट्यात्मकं वस्तु द्रष्टृशब्देनेष्टं चेद्बुद्ध्युपात्तस्य रूपादेरात्मा दृष्टिक्रियाकारीतीष्टं न स्यादिति द्वितीयं निराचष्टे । **बुद्धीति** । चकारोऽवधारणार्थो निषेधानन्तरभावी । आत्मनो धीकर्तृत्वं प्रत्यूढम् । यत्तु क्रियान्तरस्य निर्वृत्तौ द्रष्टा तत्राऽपि पूरुष इति तत्राऽऽह । **भोक्तृत्वमिति** । बुद्धिवृत्तिव्याप्तशब्दाद्यर्थस्य चिदाभासाक्रान्तत्वाकारेणाऽऽत्मनो भोज्ये भोक्तृत्वमिष्टं तथाचास्य धीकर्तृत्ववन्न तत्फलकर्तृत्वमपीत्यर्थः ॥ १५८३ ॥

मणेरेव विकारोऽयं याऽलक्तादिसरूपता ॥
नालक्तकादेर्विकृतिर्निष्क्रियत्वादिहेष्यते ॥ १५८४ ॥

शब्दाद्यर्थस्य च चिदाकारत्वे चिदात्मा कथं न विक्रियते तत्राऽऽह । **मणेरिति** । मणेस्तदाकारधारित्वे तस्य क्रियानपेक्षत्वं निषेधे हेतुः ॥ १५८४ ॥

रक्तत्वादिप्रसिद्ध्यर्थं विक्रियां न प्रपद्यते ॥
अलक्तकादिः सर्वत्र यथैवं ह्यात्मवस्त्वपि ॥ १५८५ ॥

दृष्टान्तमनूद्य दार्ष्टान्तिकमाह । **रक्तत्वादीति** । सर्वत्र मण्यादे रक्तत्वादिसिद्ध्यर्थमलक्तकादिर्यथा विक्रियां न प्रपद्यते तथाऽऽत्मवस्त्वपि धीवृत्तिव्याप्तशब्दादेश्चिदाकारत्वे न विकारवादित्यर्थः ॥ १५८५ ॥

गुणिस्थित्यनुरोधित्वं न च सर्वत्र वीक्ष्यते ॥
गुणानां केशकृष्णत्वं व्येति केशेषु सत्स्वपि ॥ १५८६ ॥

ज्ञानतत्फलकर्तृत्वमात्मनो निरस्य गुणिस्थित्यनुरोधित्वं गुणानामित्युक्तं निरस्यति । **गुणीति** ॥ १५८६ ॥

अग्नेरात्यन्तिको नाशो भवताऽपि न मृष्यते ॥
न चोष्णत्वं सतोऽप्यग्नेः काष्ठादावुपलभ्यते ॥ १५८७ ॥

यत्वग्निदाहवदिति तत्राऽऽह । **अग्नेरिति** । अरणिमणिप्रभृतिषु तस्य सत्त्वादन्यथोत्पत्त्यनुपपत्तेरित्यर्थः । तथाऽपि प्रकृते किं जातं तदाह । **न चेति** । अतो गुणानां गुणिस्थित्यनुसारित्वे नेदमुदाहरणमिति शेषः ॥ १५८७ ॥

गुणिस्थित्यनुरोधित्वमस्तु नाम गुणात्मनः ॥
द्रष्टुर्दृष्टेः किमायातं क्रिया दृष्टिर्गुणो न तु ॥ १५८८ ॥

तत्राग्नेरदृष्टेरेव दाहाद्यदृष्टिस्तद्दृष्टौ तु तद्दृष्टिः स्यात्तथाच गुणिस्थित्यनुरोधित्वं गुणानां नियतमित्याशङ्क्याऽऽह । **गुणीति** । तस्या यावद्द्रष्टृभावित्वमायास्यतीति चेन्नेत्याह । **क्रियेति** ॥ १५८८ ॥

**कारकाणां स्वभावोऽयं यदकृत्वा प्रवर्तनम् ॥**
**यथाऽभूत्वा तथा भावः क्रियायास्तत्त्वमुच्यते ॥ १५८९ ॥**

क्रियाऽपि सा यावद्द्रष्टृभाविनीति चेन्नेत्याह । **कारकाणामिति** । कारकस्वभावालोचनया क्रियानित्यत्वाभावमुक्त्वा क्रियास्वरूपनिरूपणयाऽपि तन्नित्यत्वाभावमाह । **यथेति** । अभूत्वा यथा भवनं तथा भूत्वा वाऽभवनं क्रियायाः स्वरूपं तत्कुतो नित्यतेत्यर्थः ॥ १५८९ ॥

**यावद्द्रव्यानुरोधित्वं नावश्यं गुणकर्मणोः ॥**
**द्रव्ये सत्यपि लोकेऽस्मिन्व्यभिचारस्य दर्शनात् ॥ १५९० ॥**

दृष्टेर्गुणत्वे क्रियात्वे वाऽयावद्द्रष्टृभावित्वमुपसंहरति । **यावदिति** । अतो दृष्टेरपि गुणत्वे क्रियात्वे च न यावद्द्रष्टृभावितेति शेषः ॥ १५९० ॥

**जातिक्रियागुणादीनां निषेधादात्मवस्तुनः ॥**
**अस्थूलं नेति नेतीति प्रतीचोऽन्यन्निषिध्यते ॥ १५९१ ॥**

यत्तु द्रष्टुरविनाशित्वं तद्धर्मस्य दृष्टेरविनाशित्वे हेतुरिति तत्र द्रष्टा निर्विशेषः सविशेषो वाऽऽद्ये निर्धर्मकत्वात्तद्धर्मस्य दृष्टेरविनाशितेत्ययुक्तमित्याह । **जातीति** । तन्निषेधे मानमाह । **अस्थूलमिति** ॥ १५९१ ॥

**द्रष्टुश्चापि न नित्यत्वं क्रियोद्भूतिनिमित्ततः ॥**
**क्रियाकारकयो रूपमितरेतरहेतुकम् ॥ १५९२ ॥**

द्वितीयं प्रत्याह । **द्रष्टुश्चेति** । दृष्टिवदित्यपेरर्थः । सविशेषस्य द्रष्टुर्नित्यत्वाभावे हेतुमाह । **क्रियेति** । कारकरूपस्यापि द्रष्टुर्नित्यत्वं किं न स्यात्तत्राऽऽह । **क्रियाकारकयोरिति** । तथाच क्रियाभावे कर्तुरप्यभाव इति शेषः ॥ १५९२ ॥

**स्वमात्रेण न यत्सिद्धं तत्सिद्धं परतः कथम् ॥**
**स्वमात्रेण च यत्सिद्धं तस्यापेक्षाऽन्यतः कुतः ॥ १५९३ ॥**

न हीत्यादिवाक्ये द्रष्टृदृष्टिशब्दाभ्यां क्रियाकारकग्रहो निरस्त इदानीं तयोः सापेक्षत्वेन कल्पितत्वाच्च नेह ग्रह इत्याह । **स्वमात्रेणेति** । विमतं कल्पितं सापेक्षत्वात्संमतवदित्यर्थः । आत्मनि व्यभिचारमाशङ्क्याऽऽह । **स्वमात्रेण चेति** ॥ १५९३ ॥

**न सिद्धयोर्मिथोऽपेक्षा न स्वतोऽसिद्धयोस्तथा ॥**
**इत्यादेः पूर्वमुक्तत्वान्नेह भूयोऽपि यत्यते ॥ १५९४ ॥**

किंच सापेक्षस्य कल्पितत्वमव्याकृतविचारादावुक्तत्वान्नात्र वाच्यमित्याह । **नेति** । आदिपदेन सिद्धासिद्धयोरपि नापेक्षा तेन सापेक्षं सर्वं कल्पितमित्येतदुच्यते ॥ १५९४ ॥

---

१ ख. त्वा चाभ ।

**नासतो विद्यतेऽपेक्षा नापि कूटस्थवस्तुनः ॥**
**शक्त्यवस्थं यतो वस्तुहेत्वपेक्ष्यैति विक्रियाम् ॥ १५९५ ॥**

अव्याकृतादावुक्तं बुद्धिसौकर्यार्थं संक्षिपति । **नासत इति** । सतोऽसतश्चापेक्षाभावे कस्यापेक्षेति तत्राऽऽह । **शक्तीति** । आत्माविद्या शक्तिस्तदात्मना स्थितं जगदकल्पितं वस्त्वपेक्ष्य जन्मादि प्राप्नोत्यतो मायामयस्य सापेक्षतेत्यर्थः । वस्तु कूटस्थं हेतुर्यस्य तज्जगत्तथेति विग्रहः ॥ १५९५ ॥

**नित्यं न भवनं यस्य यस्य वा नित्यभूतता ॥**
**न तस्य क्रियमाणत्वं खपुष्पाकाशयोरिव ॥ १५९६ ॥**

कार्यप्रपञ्चस्य कल्पितत्वे हेत्वन्तरमाह । **नित्यमिति** । विमतं कल्पितमाद्यन्तवत्त्वात्संमतवदित्यर्थः ॥ १५९६ ॥

**उत्पत्त्यादौ तु यच्छक्तं शक्तिमात्रात्मना स्थितम् ॥**
**तदेव हेत्वपेक्षं सदुत्पत्त्यादि प्रपद्यते ॥ १५९७ ॥**

कार्यस्य कारणातिरेकाभावाच्च कल्पितत्वमित्याह । **उत्पत्त्यादाविति** । उत्पत्त्यादिमत्त्वात्कल्पितत्वं चैतन्येऽपि स्यादिति चेन्नेत्याह । **तदेवेति** ॥ १५९७ ॥

**उत्पत्त्यादावशक्तत्वात्कौटस्थ्यादात्मवस्तुनः ॥**
**अद्वितीयत्वतश्चास्य नोत्पत्त्यादि प्रसिध्यति ॥ १५९८ ॥**

चैतन्यमपि तद्योग्यत्वेनोत्पत्त्यादि प्रपत्स्यते तथाच कल्पितत्वमित्याशङ्क्याऽऽह । **उत्पत्तीति** । तत्र हेतुः । **कौटस्थ्यादिति** । तस्य जन्माद्यभावे हेत्वन्तरमाह । **अद्वितीयत्वतश्चेति** ॥ १५९८ ॥

**शक्त्यवस्थानि वस्तूनि योग्यहेतोरसंभवात् ॥**
**नाऽऽर्तवानि प्रसूयन्ते योग्यहेतौ च तज्जनिः ॥ १५९९ ॥**

तस्य जन्मादि मा भूज्जगतस्तु सदा स्यात्कारणात्मना सदा स्थितेस्तत्कथं कार्यत्वेन कल्पिततेत्याशङ्क्याऽऽह । **शक्तीति** । कारणात्मना स्थितमपि जगन्न सदा जन्माद्यापद्यते सहकारिसापेक्षत्वादित्यर्थः । आर्तवानि पुष्पफलादीनि तेषामप्रसूतिस्तदयोग्यत्वादित्याशङ्क्याऽऽह । **योग्येति** । कालादिर्योग्यो हेतुः ॥ १५९९ ॥

**कार्यं नाक्रियमाणं सन्नाकुर्वत्कारणं तथा ॥**
**मिथो न व्यतिरेकेण सिध्येते कार्यकारणे ॥ १६०० ॥**

अव्याकृतादावुक्तं संक्षिप्तमुपसंहरति । **कार्यमिति** । न तावत्क्रियाव्याप्यं कार्यं क्रियायास्तदभावेऽपि कार्यत्वादन्यथाऽनवस्थानान्नापि तद्व्याप्यत्वरहितं दृश्यपि प्रसङ्गान्न च सत्कार्यं कारकव्यापारवैयर्थ्यान्नाप्यसन्नभोनलिनादेरपि प्रसङ्गान्न चाकुर्वत्कारणं

कारणत्वव्याघातान्न च कुर्वत्तथा कुर्वत्त्वस्य नित्यत्वे नित्यं कार्यप्रसङ्गादनित्यत्वेऽनवस्थानान्न च कार्यकारणे मिथो भेदेनाभेदेन वा सिध्यतस्तद्भावभङ्गाद्भेदाभेदयोश्च विरुद्धत्वात्तस्मादारोपितं कारणादीत्यर्थः ॥ १६०० ॥

**वस्त्वेव दृष्टिरत्रातो न क्रिया नापि कारकम् ॥**
**तस्मादेवाविनाशित्वादिति हेतुरिहोदितः ॥ १६०१ ॥**

तस्याऽऽरोपितत्वेऽपि प्रस्तुते किं जातं तदाह । **वस्त्वेवेति** । क्रियाकारकादेरारोपितत्वमतःशब्दार्थः । न हीत्यादिवाक्यमत्रेत्युच्यते । दृष्टिग्रहणं द्रष्टुरुपलक्षणम् । दृष्टिर्न क्रिया द्रष्टा न कारकमिति भेदः । इतश्चात्र द्रष्टृदृष्टिशब्दाभ्यां न क्रियाकारकग्रहणमित्याह । **तस्मादिति** । क्रियाकारकयोरिहाग्रहादिति यावत् । इहेति दृष्टेरपरिलोपोक्तिः । क्रियादिग्रहे त्वविनाशित्वहेतोरनुपपत्तिरुक्तेति भावः ॥ १६०१ ॥

**निर्णीतं प्रथमं वस्तु पश्यन्निति यदीरितम् ॥**
**न पश्यतीति यत्तूक्तं तस्य व्याख्याऽधुनोच्यते ॥ १६०२ ॥**

पश्यन्नित्यस्य नहीत्यादि व्याख्यानमित्येतन्निरस्तमिदानीं न पश्यतीत्यस्य व्याख्यानं न त्वित्यादीत्युक्तमनुवदति । **निर्णीतमिति** । न हीत्यादिवाक्यार्थमनूद्य न त्वित्याद्यवतारयति । **नेत्यादिना** ॥ १६०२ ॥

**दृष्टेरपरिलोपश्चेदथ कस्मान्न पश्यति ॥**
**प्रबोधवत्सुषुप्तेऽस्मिन्निति प्रतिविधीयते ॥ १६०३ ॥**

तदेव शङ्कोत्तरत्वेनोत्थापयति । **दृष्टेरिति** । दृष्ट्यपरिलोपस्य स्वदर्शनाविनाभूतत्वमथशब्दार्थः ॥ १६०३ ॥

**पश्यन्नेवायमात्मेति यथोक्तन्यायसंश्रयात् ॥**
**न तु द्वितीयं जाग्रद्वत्पश्यत्यात्मा सुषुप्तगः ॥ १६०४ ॥**

वाक्यं व्याख्यातुं स्थितमनुद्रवति । **पश्यन्नेवेति** । इतिपदादूर्ध्वं सिद्धमित्यध्याहारः । अविनाशित्वादित्यत्रोक्तं न्यायं सिद्धमनुभाष्य न त्वित्यादिवाक्यार्थमाह । **न त्विति** ॥ १६०४ ॥

**द्वितीयं नेक्षते[2] कस्मादित्यत्रैवाभिधीयते ॥**
**हेतुर्न तु तदस्तीति पश्येद्यद्वस्तु बोधवत् ॥ १६०५ ॥**

तत्र हेतुमाकाङ्क्षापूर्वकमाह । **द्वितीयमिति** ॥ १६०५ ॥

**विशेषदृष्ट्यभिव्यक्तिर्यदाश्रित्य प्रसिध्यति ॥**
**न तदस्ति यतस्तस्मात्पश्यन्नपि न पश्यति ॥ १६०६ ॥**

वाक्यार्थमुपसंहरति । **विशेषेति** । यदिति द्रष्टव्यमादिश्यते ॥ १६०६ ॥

---

१ घ. °रकत्व° । २ ख. ग. नेक्ष्यते ।

इति व्याख्या न साध्वीयं द्रष्टव्यासंभवे यतः ॥
न प्रात्यक्ष्यं द्रष्टृदृष्ट्योः स्यात्सुषुप्तप्रसिद्धिवत् ॥ १६०७ ॥

निर्णीतं प्रथममित्यादिना न पश्यतीत्यन्तेन न च प्रादुर्भवत्यस्य ज्ञानमित्यनुवादवार्तिकं प्रपञ्चितं संप्रत्येतन्निरस्यति । **इति व्याख्येति ।** शब्दादेर्द्रष्टव्यस्याभावात्पश्यन्नपि द्रष्टा स्वापे न पश्यतीत्येषा व्याख्या न युक्ता द्रष्टव्याभावे द्रष्टृदृष्ट्योरपि तदपेक्षयोरनुपपत्तेस्तदभावेऽपि तयोर्भावे द्रष्टृदृष्ट्योः सुप्तौ प्रत्यक्षता स्यान्न च यथा सुप्तेर्न तत्काले प्रत्यक्षता तथा द्रष्ट्रादेरपीति वाच्यमप्रकाशरूपायास्तस्यास्तथात्वेऽपि प्रकाशरूपस्य द्रष्ट्रादेः सतोऽप्रत्यक्षत्वायोगात्तस्माद्द्रष्टव्याभावे दृष्ट्यादेर्भावोक्तिरयुक्तेत्यर्थः॥ १६०७ ॥

तमस्यवस्थितोऽपश्यञ्ज्ञातृज्ञानतमांसि हि ॥
प्रपद्यते विवेकेन यथा कुम्भादिवीक्षणे ॥ १६०८ ॥
न माझे तु ततोऽयुक्तं दृश्यमात्रनिषेधनम् ॥
ग्राहकग्रहणग्राह्यभावाभावाद्यपह्नुतः ॥ १६०९ ॥

सुप्तेरप्रत्यक्षत्वमङ्गीकृत्योक्तं तदपि नास्तीत्याह । **तमसीति ।** यथा कुम्भाद्युपलम्भे प्रस्तुते प्रभूते तमसि स्थितो द्रष्टा तदनुपलभमानोऽपि ज्ञातारं ज्ञानं तमश्च विवेकेन प्रत्येति तथाऽऽत्माऽपि सुप्तः शब्दाद्यनुपलम्भेऽपि सुप्तिं दृष्टिं द्रष्टारं च तस्यामेवावस्थायां विविच्य विद्यान्न च विवेकधीरस्तीत्यर्थः । दृष्टान्ते ज्ञात्रादिविवेकधीरनुभवानुसारिणीति हिशब्दार्थः । विवेकदृष्ट्यभावे फलितमाह । **तत इति ।** अयुक्तमिति च्छेदः । ततःशब्दार्थं विशदयति । **ग्राहकेति ।** अदृष्टिर्हि द्रष्टव्यनिषेधे हेतुः सा च द्रष्ट्रादावपि तुल्या तद्ग्राह्यवद्ग्राहकादेरपि स्वापेऽपह्नवप्रसङ्गान्न दृश्यमात्रस्य तत्रापह्नुतिरित्यर्थः । भावाभावौ जन्मनाशौ । आदिशब्देन परिणामादिग्रहः ॥१६०८॥१६०९॥

ननु चास्त्येव तद्दृश्यं समस्तव्यस्तरूपतः ॥
यथोक्तवस्तुनो मैवं तस्यानत्यन्तभेदतः ॥ १६१० ॥

पश्यन्नेव स्वापे द्रष्टव्याभावान्न पश्यतीति परोक्तं निरस्य द्रष्टव्याभावान्न पश्यतीत्यत्र परकीयौ चोद्यपरिहारावनुवदति । **ननु चेत्यादिना** ॥ १६१० ॥

बाढमस्त्येव तद्दृश्यं न त्वत्यन्तविभागवत् ॥
स्याद्विभक्तं तदन्यच्चेत्पश्येदेव प्रबोधवत् ॥ १६११ ॥

परिहारभागं विभजते । **बाढमिति ।** कथं तर्हि द्रष्टव्याभावोक्तिस्तत्राऽऽह । **न त्विति ।** तथाऽपि तद्दृष्टिप्रसक्तेर्न पश्यतीत्ययुक्तमत आह । **स्यादिति ।** द्रष्टव्यं द्रष्टुरत्यन्तं विभक्तं चेत्स्वस्मादन्यत्तद्द्रष्टा जाग्रतीव पश्येदेव न तु सदपि तदत्यन्तविभागाभावात्सुप्तौ पश्यत्यतश्चैतन्यवत्तस्य न सत्तेत्यर्थः ॥ १६११ ॥

---

१ क. प्रत्यक्षं । २ क. ग. °स्थितः प° । ३ ख. °स्यानात्य° । ४ ख. °त्यन्तं वि° ।

नात्यन्तमेव सर्वत्र विभागोऽयं समीक्ष्यते ॥
विशेषणमतोऽन्याय्यमत्यन्तामिति भण्यते ॥ १६१२ ॥

पराकरोति । नात्यन्तामिति । भेदाभेदवादे जागरादावपि नात्यन्तं भेदस्तन्मानामावात्तथाच स्वापगतमत्यन्तविशेषणमयुक्तमतो विशेषविज्ञानभावाभावाववस्थात्रयेऽपि तुल्यौ स्यातामित्यर्थः ॥ १६१२ ॥

विभक्तमविभक्तं वा वस्तु वस्त्वन्तराश्रयात् ॥
सर्वैकत्वे विभागो वाऽविभागो वा न युज्यते ॥ १६१३ ॥

भेदाभेदवादमङ्गीकृत्य विशेषणं दूषयित्वा तद्वादस्यैवानुत्थानं कथयति । विभक्तमिति । इदं सर्वं यदयमात्मेत्यादिश्रुतेः सर्वस्याद्वयात्ममात्रत्वे द्वितीयवस्त्वभावात्कुतो भेदाभेदावतार इत्यर्थः ॥ १६१३ ॥

यद्धि यस्माद्विभक्तं स्यात्तदेव स्यात्ततः कथम् ॥
अविभक्तं विरुद्धत्वात्तस्मादुक्तमशोभनम् ॥ १६१४ ॥

एकमेव भिन्नाभिन्नमित्युपगमात्किं द्वितीयसत्त्वेनेत्याशङ्क्याऽऽह । यद्धीति । विरुद्धत्वादिति हिशब्दावद्योतितहेतुस्फुटीकरणम् । *तस्मादिति । उक्तमेकमेव भिन्नाभिन्नमिति त्वया कथितमिति यावत् ॥ १६१४ ॥

अपह्नुतिर्विभागस्य ह्यविभक्तगिरोच्यते ॥
विभागान्नापरं वस्तु ह्यविभक्तगिरा ततः ॥ १६१५ ॥

अथाविभागो विभागादर्थान्तरं तथाच रूपरसयोरिव भेदाभेदयोरेकत्राविरोधस्तत्राऽऽह । अपह्नुतिरिति । नञश्चैष स्वभावो यत्स्वसंबन्धिनोऽभावं बोधयतीति भाष्यमत्र प्रमाणयितुमाद्यो हिशब्दो द्वितीयस्तु तदन्यतद्विरुद्धयोस्तदभावाविनाभूतयोस्तद्द्वारा नञो गौणत्वाद्गौणमुख्ययोर्मुख्ये संप्रत्यय इतिन्यायद्योतनार्थः । अभावो हि नञो मुख्योऽर्थस्तस्मिन्संभवति नार्थान्तरं युक्तं तथाचाविभक्तगिरा विभागादन्योऽर्थो नोच्यत इत्यर्थः ॥ १६१५ ॥

अन्यद्विभक्तमिति च तथा द्रष्टव्यमित्यपि ॥
सामर्थ्यादेक एवार्थो भूयो भूयोऽभिधीयते ॥ १६१६ ॥

किंच द्वितीयमन्यद्विभक्तमिति पदार्थभेदस्य दुर्वचत्वात्पौनरुक्त्यमिति परमते दोषान्तरमाह । अन्यदिति । द्रष्टव्यमिति द्वितीयोक्तिः । भेदाभेदाङ्गीकारादभेदमादाय पर्यायता यद्यपि भेदादपर्यायत्वं तथाऽप्यभेदात्पर्यायता दुर्वारा ततश्च सहप्रयोगासिद्धिरित्यर्थः । यद्वा पदशक्तेरर्थैक्यदृष्टेर्दुर्वारं पौनरुक्त्यमित्यर्थः ॥ १६१६ ॥

---

* अस्यावतरणिका त्रुटितेत्यनुमीयते ।

---

१ घ. 'दानामर्थं' ।

**अस्मत्पक्षे तु दोषोऽत्र मनागपि न विद्यते ॥**
**द्रष्टव्यो दृष्टियोग्योऽर्थो ह्यन्योऽनन्यश्च युज्यते ॥ १६१७ ॥**

त्वत्पक्षेऽपि तत्तुल्यमित्याशङ्क्याऽऽह । **अस्मादिति** । अत्रेति पदत्रयोक्तिः । पुनरुक्त्यभावं वक्तुं द्वितीयपदार्थमाह । **द्रष्टव्य इति** । दृष्टियोग्यो द्रष्टव्योऽर्थः स्वाविद्यातत्कार्याख्यो द्वितीयशब्दार्थ इत्यर्थः । प्रसिद्धं दृश्यस्य द्रष्टृपेक्षया द्वितीयत्वमिति वक्तुं हिशब्दः । तस्यान्यशब्देनापौनरुक्त्यमाह । **अन्य इति** । आत्मनोऽन्योऽनन्यश्चासावर्थो दृष्टियोग्यत्वस्योभयत्र प्रयोगादित्यर्थः ॥ १६१७ ॥

**परमार्थात्मनस्तद्वत्कल्पिताज्ञानलक्षणः ॥**
**अविभक्तोऽपि चान्यः स्याद्वैलक्षण्यात्परस्परम् ॥ १६१८ ॥**

अन्यशब्दार्थमाह । **परमार्थेति** । कल्पिताज्ञानतत्कार्यरूपोऽर्थोऽकल्पितात्मनो यद्यपि न विभक्तः कल्पितस्याकल्पितातिरेकेणासत्त्वात्तथाऽपि तस्मादन्यः स्यादविद्यादेरात्मनश्च मिथः स्वभाववैषम्यादतो यथा दृष्टियोग्यत्वं निमित्तीकृत्याविद्यादौ द्वितीयशब्दस्तथा स्वभाववैषम्यान्निमित्तात्तत्रैवान्यशब्द इति भावः ॥ १६१८ ॥

**धर्मादीनां विभक्तत्वमविभक्तेऽपि धर्मिणि ॥**
**एवं न पुनरुक्तत्वं द्रष्टव्यादेः प्रसज्यते ॥ १६१९ ॥**

विभक्तशब्दार्थमाह । **धर्मादीनामिति** । धर्मिण्यात्मनि कल्पनाधिष्ठाने वस्तुतो विभागहीनेऽपि महदहंकारादीनामाविद्यानां मिथो विभक्तत्वनिमित्ताद्विभक्तशब्द इत्यर्थः । प्रत्यञ्चोहो महदादीनां धारणाद्धर्मः । आदिशब्देन महदहंकारादिग्रहः । पदानामपौनरुक्त्यं निगमयति । **एवमिति** ॥ १६१९ ॥

**साक्ष्यार्थो दृष्टियोग्यः स्यादन्यो मात्रादिरात्मनः ॥**
**द्रष्टृदर्शनदृश्यार्था विभक्ताः स्युः परस्परम् ॥ १६२० ॥**

बुद्धिसौकर्यार्थमुक्तं संक्षिपति । **साक्ष्येति** । मात्रादिः कार्यकरणरूपः साक्षिविषयो दृष्टियोग्यः स द्रष्टव्यशब्दितो द्वितीयशब्दार्थः स चाकल्पितादात्मनः कल्पितत्वेन वैलक्षण्यात्तदेव निमित्तीकृत्यान्यो विवक्ष्यते द्रष्ट्रादीनां मिथो भेदात्ते विभक्तशब्देनोच्यन्ते तत्र पौनरुक्त्यमित्यर्थः ॥ १६२० ॥

**द्वैताद्वैतात्मकत्वं च प्रमाणान्नोपपद्यते ॥**
**यथेह वस्तुनः साक्षात्तथा पूर्वमवादिषम् ॥ १६२१ ॥**

परस्यापि यथोक्तनिमित्तवशादपौनरुक्त्यमित्याशङ्क्य संबन्धादावुक्तं स्मारयति । **द्वैतेति** । इहेति शास्त्रोक्तिः । साक्षात्कल्पनामन्तरेणेत्यर्थः ॥ १६२१ ॥

**पूर्ववाक्ये यथा व्याख्या कृता कृत्स्ना तथैव सा ॥**
**उत्तरेष्वपि वाक्येषु कर्तव्या पण्डितैरतः ॥ १६२२ ॥**

यद्वै तन्न पश्यतीत्यादिवाक्यस्य भर्तृप्रपञ्चव्याख्यामनूद्य स्वव्याख्यामेवानुसंदधानो यद्वै तन्न जिघ्रतीत्यादिषु प्रथमवाक्योक्तमतिदिष्टमेवानुवदति । **पूर्वेति** । अतो व्याख्याप्रकारसाम्यादर्थविशेषो वाच्यो नास्तीत्यर्थः ॥ १६२२ ॥

**दर्शनादिक्रियाणां यदस्तित्वं तन्न वास्तवम् ॥**
**सदसत्त्वादिसंभेदशून्यत्वादात्मवस्तुनः ॥ १६२३ ॥**

सर्वेषु पर्यायेषु चिदेकरसं वस्तु विवक्षितं चेत्कथं तर्हि दृष्टिश्रुत्यादिक्रियाभेदधीस्तत्राऽऽह । **दर्शनादीति** । तत्र भेदधीर्भ्रान्तेत्यत्र हेतुमाह । **सदिति** ॥ १६२३ ॥

**विदितादन्यदेवैतत्तथैवाविदितादधि ॥**
**ब्रह्मात्मवस्त्विवति ज्ञेयमिति श्रौतं वचः स्फुटम् ॥ १६२४ ॥**

उक्तविधमात्मतत्त्वमित्यत्र मानत्वेन तलवकारश्रुतिमर्थतो निबध्नाति । **विदितादिति** ॥ १६२४ ॥

**द्रष्टुरिति तृजन्तेन कर्तृत्वमभिधीयते ॥**
**द्रष्टा कस्येत्यपेक्षायां दृष्टेरित्यभिधीयते ॥ १६२५ ॥**

प्रतिपर्यायं दर्शनादिक्रियाभेदधीर्मृषेति स्वमतमुक्त्वा भर्तृप्रपञ्चमतमाह । **द्रष्टुरितीति** । **उक्तं हि** तृजन्तेन कर्तृत्वमेवाऽऽचष्ट इति । कस्य द्रष्टा दृष्टेरितिभाष्यार्थमाह । **द्रष्टेति** ॥ १६२५ ॥

**दृष्टिरित्यपि भावः स्यात्समाप्तिर्या क्रियात्मनः ॥**
**फलाश्रितोऽसौ भावोऽत्र दृष्टिशब्देन भण्यते ॥ १६२६ ॥**

दृष्टिशब्दार्थमाह । **दृष्टिरित्यपीति** । भावमेव व्याकरोति । **समाप्तिरिति** । भावस्य फलशिरस्कत्वमाह । **फलेति** । अत्रेति प्रकृतवाक्योक्तिः । यथोक्तं दृष्टिरिति भावः क्रियासमाप्त्यर्थः फलाश्रितो निर्दिश्यत इति ॥ १६२६ ॥

**फलं प्रकाशनं ज्ञानं तत्कर्तृत्वं च वस्तुनः ॥**
**प्रत्येकमुच्यतेऽत्रैतद्वाक्येष्वेतेषु वस्तुनः ॥ १६२७ ॥**

किं पुनः फलं[1] प्रकाशनमितिभाष्यार्थमाह । **फलमिति** । पूर्वोक्तदृष्टिकर्तृत्वेनाऽऽत्मनस्तत्फलकर्तृत्वसमुच्चयार्थश्चकारः[2] । उक्तमनूद्य पर्यायान्तरेष्वपि दर्शयति । **प्रत्येकमिति** । ज्ञानादौ वस्तुन एतत्कर्तृत्वमिति[3] संबन्धः । तदाहुस्तदेतत्प्रकाशनं च ज्ञानकर्तृत्वं चेति धर्मद्वयं प्रत्येकमुपदिश्यत इति ॥ १६२७ ॥

**इह यद्दूषणं वाच्यं तदुक्तमिति नोच्यते ॥**
**कारकादेरसद्भावात्सुषुप्ते परमार्थतः ॥ १६२८ ॥**

---

१ घ. कस्या । २ घ. फलम' । ३ क. ख. 'तृकत्व' ।

एषा व्याख्या पञ्चमे निरस्तेत्याह । इहेति । किंच सुप्तात्मविषयमिदं वाक्यं न च तत्र देहादिसत्त्वं तत्कथं तस्य द्रष्ट्रादिकर्तृतेत्याह । कारकादेरिति ॥ १६२८ ॥

**कारकादिविधर्मोऽपि प्रत्यगज्ञानहेतुजैः ॥**
**ग्राहकग्रहणग्राह्यरूपैरात्मेक्ष्यते तथा ॥ १६२९ ॥**

तथाऽपि जागरादौ तद्भावादात्मनो द्रष्ट्रादिभेदभाक्त्वमन्यथा कथं तत्रापि कर्तृत्वादिधीरित्याशङ्क्याऽऽह । कारकादीति ॥ १६२९ ॥

**कर्तृकार्यावभासित्वात्कर्तृकार्यादिसाक्ष्ययम् ॥**
**कर्तृकार्यादिवद्भाति कूटस्थोऽप्यात्ममोहतः ॥ १६३० ॥**

तथेक्ष्यत इत्युक्तं स्फोरयति । कर्त्रिति । अतथेति वा छेदः । वस्तुतोऽसद्भिरविद्यमानैरित्यर्थः । कथं कूटस्थस्य कर्त्रादिसाक्षिणस्तद्वद्भानं तत्राऽऽह । कर्त्रिति ॥ १६३० ॥

**एकैवेयमतो दृष्टिर्जन्महानादिवर्जिता ॥**
**बहुत्वजन्मनाशादि यात्यविद्योत्थसंगतेः ॥ १६३१ ॥**

मोहमाहात्म्यादात्मनि कर्तृत्वादिधीरिति स्थिते फलितमाह । एकेति । अतःशब्दार्थमेव दर्शयति । अविद्येति । अविद्यातज्जसंबद्धा दृष्टिर्नानात्वं विक्रियां च यतो लभतेऽतः स्वतः सा प्रत्यग्भूता कूटस्थैकरसेत्यर्थः ॥ १६३१ ॥

**यन्न रसयतीत्यत्र विजानन्वा इतीर्यते ॥**
**विरूपं प्रस्तुताद्रूपादन्याय्यं भण्यते कुतः ॥ १६३२ ॥**

लोकसिद्धद्रष्ट्रादिभेदानुवादेनाद्वयकूटस्थदृष्टिप्रतिपादनं सर्वपर्यायेषु विवक्षितमित्युक्तम् । अधुना यद्वै तन्न रसयतीत्यत्र रसयन्नित्यादि हित्वा विजानन्वै तन्न रसयतीति माध्यंदिनपाठस्तमाक्षिपति । यन्नेति ॥ १६३२ ॥

**नैष दोषोऽत्र विज्ञप्तिमात्ररूपे परात्मनि ॥**
**द्रष्ट्रादिशक्तिभेदोऽयं मा प्रसाङ्क्षीदितीर्यते ॥ १६३३ ॥**

तद्वाक्याभिप्रायमाह । नैष इति । विज्ञानैकरसे प्रतीचि द्रष्ट्रादिशक्तिभेदनिरासार्थं माध्यंदिनश्रुत्या रसयन्नित्यत्र विजानन्निति प्रयुक्तमित्यर्थः ॥ १६३३ ॥

**यत एवमतो ज्ञप्तिमात्रमेवाभिधीयते ॥**
**द्रष्ट्रादिशब्दैस्तस्माच्च सलिलादिवचोऽर्थवत् ॥ १६३४ ॥**

उक्तश्रुत्यनुसारेण काण्वश्रुतेरपि कूटस्थैकरसदृष्टिविषयत्वमेष्टव्यमित्याह । यत इति । वाक्यशेषाच्चोक्ता दृष्टिरेव सर्वपर्यायेषु विवक्षितेत्याह । तस्माच्चेति ॥ १६३४ ॥

---

१ ख. 'बन्धाद्दृष्टिं'।

बाह्यदृष्ट्याद्युपाधिस्था प्रत्यगात्मैकलक्षणा ॥
दृष्टिर्दृष्ट्यादिवाच्येह विनाशादिनिषेधतः ॥ १६३५ ॥

इतश्च सैवात्र दृष्ट्यादिशब्दितेत्याह। **बाह्येति**। बुद्धिपरिणामरूपदृष्ट्याद्युपाधौ साक्षित्वेन स्थिता प्रत्यग्दृष्टिरेतेषु पर्यायेषु दृष्ट्यादिशब्दैरुक्ता न दृष्ट्यादिक्रियाऽविनाशित्वादित्यादिना विरोधादित्यर्थः ॥ १६३५ ॥

अन्तर्भावेऽपि दृष्ट्यादौ मतिविज्ञानयोरिह।
स्वातन्त्र्येणापि तद्वृत्तेः सिद्धेर्भूयः पृथग्ग्रहः ॥ १६३६ ॥

यथोक्तदृष्टेः सर्वपर्यायेपूक्तावपि मनोबुद्ध्योश्चक्षुरादिसाधारणत्वात्तज्जन्यवृत्त्यतिरिक्तवृत्त्यभावाद्यद्वै तन्न मनुते यद्वै तन्न विजानातीति पृथङ्निर्देशस्तयोर्न युक्तिमानित्याशङ्क्य मननविज्ञानयोरित्यादिभाष्यार्थमाह। **अन्तर्भावेऽपीति**। अतीतादिज्ञानं रागादिवृत्तिश्च स्वातन्त्र्येणास्तीति पृथग्ग्रहणमित्यर्थः ॥ १६३६ ॥

दहनौष्ण्यादिवद्वह्नेर्विभिन्नाः स्युः परस्परम् ॥
द्रष्टुर्दृष्ट्यादयो धर्मा भिन्नाभिन्नात्मना स्थिताः ॥ १६३७ ॥
एतैकस्यैव धर्मस्य तदवोधोत्थभेदतः ॥
भेदोऽयं लक्ष्यते मोहाद्रवेः स्वोत्थैर्जलैरिव ॥ १६३८ ॥

यद्वै तन्न पश्यतीत्यादौ परकीयं व्याख्यानमपनुद्य स्वपक्षमुक्त्वा तं निर्धारयितुं विचारमवतारयति। **दहनेति**। यथा दाहप्रकाशौष्ण्यादयो धर्मा वह्नेर्भिन्नाभिन्ना मिथश्च भिन्नास्तथा दृष्टिश्रुत्यादयो धर्मा धर्मिणः प्रतीचो मिथश्च भिन्नाभिन्ना भिन्नाश्च किमिष्यन्ते किंवा यथाऽऽदित्याज्जायते वृष्टिरिति **स्मृतेस्तस्य** स्वोत्थैर्नानाभाजनस्थैर्जलैर्भेदो मोहाद्दृष्टस्तथा स्वतोऽद्वितीयात्मनः स्वाविद्याविकल्पितोपाधिभेदादनेकधा भेदो भातीति विमर्शार्थः। आत्मनः सर्वाधिष्ठानत्वात्तस्मिन्धर्मशब्दः ॥ १६३७ ॥ १६३८ ॥

इह व्याचक्षते केचिन्नानात्वैकत्वरूपता ॥
स्वत एवाऽऽत्मनो ग्राह्या चैतन्यमिव सर्वदा ॥ १६३९ ॥

पूर्वपक्षयति। **इहेति**। भेदाभेदात्मकं रूपं स्वाभाविकमित्यत्र दृष्टान्तः। **चैतन्यमिति** ॥ १६३९ ॥

भेदाभेदात्मकं सर्वं वस्तु दृष्टं यतस्ततः ॥
परपक्षे न दृष्टान्तः कश्चिदप्युपलभ्यते ॥ १६४० ॥

आत्मनो भिन्नाभिन्नत्वे किं मानं तदाह। **भेदेति**। ततो वस्तुत्वादात्माऽपि तथाऽनुमीयत इत्यर्थः। एकरसत्वमात्मत्वादात्मनः शक्यमनुमातुमिति प्रत्यनुमानमाशङ्क्याऽऽह। **परेति** ॥ १६४० ॥

१ घ. °दिना। २ क. °मनूय। ३ घ. °न्ना दृष्टास्त°। ४ क. ख. घ. °नाश्च। ५ ख. तत्राऽऽह।

**एकैव गोता गोपिण्डे सास्नाद्यर्थानुसारिणी ॥**
**सास्नादयो मिथो भिन्ना न चान्योन्यविरोधिनः ॥ १६४१ ॥**

आत्मा भिन्नाभिन्नो वस्तुत्वादित्यत्रापि दृष्टान्ताभावस्तुल्यो न हि किंचिद्भिन्नाभिन्नमस्माकमिष्टमित्याशङ्क्याऽऽह । **एकेति** । सास्नादिशब्देन तद्वन्तो[1] विशेषा गृह्यन्ते । खण्डमुण्डादावेकमेव गोत्वं तच्च सास्नादिमद्भिरर्थैः स्वविशेषैः सह भिन्नाभिन्नं ते च मिथो भिन्ना गोत्वेन चाभिन्ना न चैकत्र सामान्यविशेषभावस्य भिन्नाभिन्नत्वस्य वा विरोधो न खल्वेते मिथो विरोधभाज इत्यर्थः ॥ १६४१ ॥

**न च सामान्यबुद्ध्येह भेदबुद्धिर्निवर्तते ॥**
**नापि सामान्यधीबाधो विशेषोत्थधियेष्यते ॥ १६४२ ॥**

अविरोधं साधयति । **न चेति** । सामान्यविशेषबुद्ध्योर्भेदाभेदबुद्ध्योश्चान्योन्यं बाध्यबाधकत्वाभावान्न तद्विषयेषु मिथो विरोधो न हि प्रामाणिकेऽर्थे विरोधस्तद्विपर्यये तदुपगमादित्यर्थः ॥ १६४२ ॥

**स्थूलेषु यद्वत्सामान्यविशेषात्मकता तथा ॥**
**संभावनीया निःशेषसूक्ष्मवस्तुष्वपीदृशी ॥ १६४३ ॥**

स्थूलार्थानां गवादीनां भिन्नाभिन्नत्वेऽपि कथमतिसूक्ष्मात्माकाशादिषु तत्सिद्धिरित्याशङ्क्याऽऽह । **स्थूलेष्विति** । ईदृशी सामान्यविशेषात्मता भिन्नाभिन्नता चेत्यर्थः ॥ १६४३ ॥

**नानात्वैकत्ववत्स्थूलं दृष्टं वस्तु यथा तथा ॥**
**आत्माद्यतीन्द्रियं वस्तु वस्तुत्वादिति गम्यताम् ॥ १६४४ ॥**

उक्तेऽर्थे यथेत्यादिभाष्यं व्याचष्टे । **नानात्वेति** ॥ १६४४ ॥

**इत्येवं पण्डितंमन्या अनुमानबलादिह ॥**
**भिन्नाभिन्नात्मकं वस्तु स्थापयन्त्यविशेषतः ॥ १६४५ ॥**

पूर्वपक्षमुपसंहरति । **इत्येवमिति** । इहेति परमार्थावस्थोक्तिः । **अविशेषत इति** । आत्मानात्मविशेषं विनेति यावत् ॥ १६४५ ॥

**इत्युक्तपरिफल्गुत्वप्रबोधायाभिधीयते ॥**
**न्यायः श्रेयोर्थिनां मा भूद्भ्रान्तिर्वेदान्तवस्तुनि ॥ १६४६ ॥**

सिद्धान्तमारभते । **इत्युक्तेति** । उक्तपक्षस्य न्यायतोऽतितुच्छत्वबोधनफलमाह । **श्रेय इति** । वेदार्थे वस्तुनि भ्रान्तिर्नानारसत्वधीरित्यर्थः ॥ १६४६ ॥

**भेदग्राहि न नो मानं कृत्स्नेऽपि जगतीक्ष्यते ॥**
**वस्तुस्वरूपमुज्झित्वा मेयं नास्त्यपरं मितेः ॥ १६४७ ॥**

---

1 क. ख. तद्वतो ।

कोऽसौ न्यायो येन भेदाभेदवादफल्गुतेत्याशङ्क्य परस्यानुमानं दूषयितुं भेदो धर्मः स्वरूपं वेति विकल्प्याऽऽद्यं दूषयति। **भेदेति।** न हि स्वरूपादन्यत्र प्रमाणं प्रभवति ततोऽन्यस्य निःस्वरूपत्वेन प्रमाणायोग्यत्वादित्यर्थः ॥ १६४७ ॥

**न च स्वरूपे भेदोऽस्ति कस्यचिद्वस्तुनः क्वचित् ॥**
**स्वरूपाच्चान्यतो भेदः प्रमाणाभासगोचरः ॥ १६४८ ॥**

कल्पान्तरं निराह। **न चेति।** स्वरूपत्वे भेदस्य स्वस्मादेव स्वस्य स भवत्यन्यस्माद्वा नाऽऽद्यो वस्त्वभावप्रसङ्गादित्युक्त्वा द्वितीयं प्रत्याह। **स्वरूपाच्चेति।** अन्यस्य प्रतियोगित्वे तस्य निःस्वरूपत्वात्ततो भेदो न प्रामाणिकः स्यादित्यर्थः ॥ १६४८ ॥

**असाधारणरूपेण व्यावर्तन्ते परस्परम् ॥**
**यथा विशेषाः सामान्यं तथा व्यावर्तते ततः ॥ १६४९ ॥**

भेदस्याप्रामाणिकतया भेदाभेदवादं दूषयित्वा तद्वादिना सामान्यविशेषौ मिथो भिन्नाविष्टावभिन्नौ वेति विकल्प्याऽऽद्यं दूषयति। **असाधारणेति।** ततो विशेषेभ्य इति यावत्। तथाच भेदवादस्यैवाऽऽपत्तिरिति शेषः ॥ १६४९ ॥

**तेऽपि सामान्यमात्रं चेद्विशेषा भवतो मताः ॥**
**विशेषविरहात्तर्हि सामान्यमपि दुःस्थितम् ॥ १६५० ॥**

कल्पान्तरमादत्ते। **तेऽपीति।** सामान्यं विशेषमात्रमित्यपेरर्थः। तावन्योन्याभिन्नौ चेत्सामान्यातिरिक्तविशेषाभावात्तदपेक्षं तदपि न स्याद्विशेषातिरिक्तसामान्याभावात्तदपेक्षास्ते च न स्युस्तत्कुतो भेदाभेदावित्याह। **विशेषेति** ॥ १६५० ॥

**भिन्नं वा स्यान्न वा भिन्नं सामान्यं चेद्विशेषतः ॥**
**भेदे विशेष एव स्यात्सामान्यं खण्डमुण्डवत् ॥ १६५१ ॥**

सामान्यविशेषौ विकल्प्य दूषयित्वा सामान्यमेवाऽऽश्रित्य विकल्पयति। **भिन्नं वेति।** आद्यमनूद्य दूषयति। **भेद इति।** अभेदश्चेत्तदाऽपि स एव दोषः सामान्यस्य विशेषाभिन्नस्य तद्भावासंभवादिति चेच्छब्दाद्द्रष्टव्यम् ॥ १६५१ ॥

**भेदभेदवतोर्भित्तावनवस्था प्रसज्यते ॥**
**धर्मधर्म्यप्रसिद्धिश्च तदभेदेऽपि सज्यते ॥ १६५२ ॥**

किंच भेदो वस्तुनो भिन्नोऽभिन्नो वा तत्राऽऽद्यं प्रत्याह। **भेदेति।** तेनैव भेदेन भेदे स्वाश्रयत्वं द्वितीयेन तृतीयेन वा भेदे परस्पराश्रयत्वं चक्रकं चानन्तभेदाभ्युपगमे त्वनवस्थेत्यर्थः। द्वितीये दोषमाह। **धर्मेति।** सर्वत्र च भिन्नाभिन्नत्वे भेदांशमभेदांशं वाऽऽश्रित्य प्रागुक्तं दूषणं प्रत्येतव्यम् ॥ १६५२ ॥

---

१ ख. °यितुं त° । २ घ. °मान्यमपि वि° । ३ ख. ग. °स्था च जायते । ४ घ. °कं वाऽनन्तभे° ।

आत्मैव चेद्विशेषाः स्युर्धर्मिणो धर्मलक्षणाः ॥
व्यतिरेको न संसिध्येदात्मत्वं स्यात्तदाऽऽत्मनः ॥ १६५३ ॥

यत्तु दृष्ट्यादयो द्रष्टुर्भिन्नाभिन्ना मिथश्च भिन्ना दहनदाहादिवदिति तत्राभेदांशमनुभाष्य दूषयति । **आत्मेति** । आत्मनो धर्मिणो धर्मरूपा विशेषास्ते चेदात्मैव तदा तेषां दृष्ट्यादीनामात्मनः सकाशादभेदे ततो मिथश्च भेदो न सिध्येदात्मभावस्य कुतश्चिदपि भेदाभावादित्यर्थः ॥ १६५३ ॥

स्वयंरूपत्वतो नाऽऽत्मा ह्यात्मनो व्यतिरिच्यते ॥
अनात्माभिजना ह्येषा व्यावृत्तिर्याऽऽत्मनो भवेत् ॥ १६५४ ॥

आत्मस्वरूपस्य कुतो न कुतश्चिद्भेदोऽनात्मनो भेदादित्याशङ्क्याऽऽह । **स्वयमिति** । आत्मा हि सर्वस्य स्वरूपत्वात्प्रतियोग्यभावान्न स्वस्मादेव भिद्यते स्वरूपाभावप्रसङ्गस्योक्तत्वान्नानात्माऽपि ततोऽन्योऽस्ति तदन्यस्यास्वरूपताध्रौव्यादित्यर्थः । कथं तर्हि तस्मिन्भेदधीस्तत्राऽऽह । **अनात्मेति** । आत्मनो व्यावृत्तिरविद्यातज्जोपाधिप्रयुक्ता भ्रान्तेत्यर्थः । भेदस्य भ्रान्तत्वं सर्पधारादिभेदे प्रसिद्धमिति वक्तुं हिशब्दः ॥ १६५४ ॥

न च धर्म्यन्तरासत्त्वे प्रत्यगात्मातिरेकिणः ॥
धर्मा लभन्त आत्मानं पारतन्त्र्यात्मकत्वतः ॥ १६५५ ॥

दृष्ट्यादयो भिन्नाभिन्ना द्रष्टुरित्यत्राभेदभागं दूषयित्वा भेदांशं शिथिलयति । **न चेति** । दृष्ट्यादयो भिन्ना द्रष्टुर्यदेष्टास्तदा ते स्वतन्त्राः परतन्त्रा वा नाऽऽद्यो धर्मत्वविरोधाद्द्वितीये धर्म्यन्तरस्यासत्त्वं सत्त्वं वाऽऽद्ये न ते स्वरूपं लभेरन्नात्मनो भिन्नानां धर्म्यन्तराभावे पारतन्त्र्यायोगादित्यर्थः ॥ १६५५ ॥

धर्म्यन्तरस्य चास्तित्वे प्रतिज्ञार्थो न सिध्यति ॥
समस्तव्यस्ततारूप आत्मैवैक इतीरितः[3] ॥ १६५६ ॥

कल्पान्तरं निराह । **धर्म्यन्तरस्येति** । प्रतिज्ञार्थमेव दर्शयति । **समस्तेति** ॥ १६५६ ॥

व्यस्ता अपि तदात्मानो धर्माः स्युश्चेत्समस्तवत् ॥
विशेष उच्यतां कोऽत्र समस्तव्यस्तरूपयोः ॥ १६५७ ॥

किंच समस्तव्यस्तयोरात्मनः सकाशाद्भेदोऽभेदो वा नाऽऽद्यः स्वपक्षासिद्धेरिति मत्वा द्वितीयं प्रत्याह । **व्यस्ता इति** । समस्तव्यस्तयोरात्माभेदे समस्तमिदमदो व्यस्तमितिविशेषासिद्धिरित्यर्थः । अत्रेत्यभेदपक्षोक्तिः ॥ १६५७ ॥

धर्म्यन्तराश्रितैर्धर्मैर्नान्यो धर्मी विशेष्यते ॥
धर्मिधर्मत्वरूपस्य संबन्धस्यासमन्वयात् ॥ १६५८ ॥

---

१ क. 'त्वं तत्त' । २ ग. 'त्तथाऽऽत्म' । ३ ख. 'रितम् ॥ १६५६ ॥

किंच समस्तत्वस्य समस्तधर्मत्वाद्व्यस्तत्वस्य च व्यस्तधर्मत्वान्नाऽऽत्मनो द्विरूपतेत्याह । **धर्म्यन्तरेति** । न हि पृथुत्वादयो घटधर्माः शकटं व्यावर्तयन्तीत्यर्थः । तत्र हेतुमाह । **धर्मीति** । न हि घटधर्माणां शकटस्य च तद्धर्मधर्मित्वसंगतिरित्यर्थः ॥ १६५८ ॥

**नेति नेत्यादिवाक्यानां नैरर्थक्यं च संज्यते ॥**
**समस्तव्यस्तरूपत्वं यदि स्याद्ब्रह्मणः श्रुतेः ॥ १६५९ ॥**

ब्रह्मैव समस्तं व्यस्तं चेत्युपगमात्तस्य यथोक्तविशेषणसिद्धिरित्याशङ्क्याऽऽह । **नेत्यादिना** । श्रुतेर्वाक्यानामिति संबन्धः ॥ १६५९ ॥

**व्युत्थाप्य ब्रह्मणो द्वैतं तदनूद्य श्रुतिः पुनः ॥**
**आत्मैवेत्यब्रवीत्साक्षात्कुतो भेदस्य संभवः ॥ १६६० ॥**

आत्मैवेदं सर्वं ब्रह्मैवेदमित्यादिश्रुतिविरोधाच्च न समस्तव्यस्ततेत्याह । **व्युत्थाप्येति** । ब्रह्मणः सकाशान्मायाद्वारा द्वैतस्य तत्तेजोऽसृजतेत्यादिना व्यक्तिमुक्त्वा पुनस्तदिदमित्यत्र ह्यात्मैवेति श्रुतिर्यतः साक्षादभेदमभाषत ततो भेदासंभवान्न भेदाभेदसंभावनेति योजना ॥ १६६० ॥

**व्यावर्ततेऽस्वरूपं चेत्स्वरूपाद्वस्तु मानतः ॥**
**अनवाप्तस्वरूपं सद्वस्तु स्याच्छशशृङ्गवत् ॥ १६६१ ॥**

किंच तन्मते वस्तुनः स्वरूपाद्भेदोऽस्वरूपाद्वेति विकल्प्याऽऽद्यमनुवदति । **व्यावर्तत इति** । स्वरूपात्प्रतियोगिनो मानवशाद्वस्तु भिद्यते चेदस्वरूपं स्यान्न हि घटाद्व्यावृत्तस्य पटस्य घटतेत्यर्थः । अस्वरूपमिति च्छेदः । स्वरूपाद्व्यावृत्तस्य निःस्वरूपत्वं साधयति । **अनवाप्तेति** । एतेन द्वितीयो व्याख्यातो निःस्वरूपस्य प्रतियोगित्वायोगान्न च स्वरूपे भेदोऽस्ति कस्यचिदित्यस्यायं प्रपञ्च इत्यपौनरुक्त्यम् ॥ १६६१ ॥

**मानं विधिमुखं मुक्त्वा न व्यावृत्त्येकवर्त्मना ॥**
**लभते मेयसंबन्धं तत्सद्वस्तूपलम्भतः ॥ १६६२ ॥**

ननु मानसिद्धो भेदो न युक्त्याऽपह्नवमर्हति तत्र किं सोऽन्योन्याभावः किंवा पृथक्त्वमाद्ये किं मानं भेदमेव गृह्णाति किंवा वस्त्वपि नाऽऽद्य इत्याह । **मानमिति** । तन्मानमिति संबन्धः । तत्र हेतुमाह । **सदिति** ॥ १६६२ ॥

**अघटादिव्युदासेन न घटाद्यर्थसंगतिः ॥**
**मितेरनेवंधर्मत्वान्नाभावे व्यापृतिर्मितेः ॥ १६६३ ॥**

द्वितीयेऽपि भेदग्रहपूर्वको वस्तुग्रहस्तत्पूर्वको वा भेदग्रहो युगपदुभयग्रहो वाऽऽद्ये

१ क. ग. सज्जते । २ घ. आत्मैव ।

दोषमाह । अघटादीति । तत्र हेतुः । अनेवमिति । न हि मानस्यान्यनिषेधे व्यापारस्तस्य वस्तुबोधित्वं विना निषेधबोधित्वाभावादित्यर्थः ॥ १६६३ ॥

अप्रसिद्धघटाद्यर्थोऽघटाद्यर्थापनोदनम् ॥
मानेनेह कथं कुर्यादन्योन्याश्रयकारणात् ॥ १६६४ ॥

कुतो मानस्यानेवंधर्मत्वं तत्राऽऽह । अप्रसिद्धेति । अघटाद्यर्थापनोदनमिति च्छेदः । इहेति व्यवहारमार्गोक्तिः । प्रतियोगिज्ञानं विना नाभावधीरिति भावः । अस्तु तर्हि वस्तुग्रहपूर्वको भेदग्रहस्तत्राऽऽह । अन्योन्येति । धर्म्यादिज्ञाने सति भेदज्ञानं ततस्तज्ज्ञानमित्यन्योन्याश्रयान्न वस्तुधीपूर्विका भेदधीरित्यर्थः ॥ १६६४ ॥

घटबोधप्रयुक्तेयमघटस्य ह्यपाक्रिया ॥
अघटार्थव्युदासाच्च घटार्थस्यावबोधनम् ॥ १६६५ ॥

निषेधपूर्वकविधिपक्षेऽपि तुल्यमन्योन्याश्रयत्वमित्याह । घटेति ॥ १६६५ ॥

घटवच्चाघटस्यापि तदन्यापाक्रियां विना ॥
नैवाधिगतिरित्येवमनवस्था प्रसज्यते ॥ १६६६ ॥

निषेधपूर्वको विधिरित्यत्रैव दोषान्तरमाह । घटवदिति ॥ १६६६ ॥

मातृमानाप्रसिद्धिश्च तदन्यापोहनादृते ॥
ताभ्यां विना प्रमेयोऽर्थो नितरां न प्रसिध्यति ॥ १६६७ ॥

अघटनिवृत्त्या घटसिद्धौ दोषान्तरमाह । मात्रिति । तयोरसिद्धौ किं स्यात्तत्राऽऽह । ताभ्यामिति । यत्र स्फुरत्यपि मात्रादौ सर्वसाधकं साक्षिणं विना मेयोऽर्थो न सिध्यति तत्र मात्रादेरेवास्फुरणे स न सिध्यतीति किं वाच्यमित्याह । नितरामिति । एतेन युगपदुभयग्रहो निरस्तो न हि धर्म्यादिज्ञानकार्यं भेदज्ञानं तेन सह भवति कार्यकारणयोः पौर्वापर्यनियमात् ॥ १६६७ ॥

पृथक्त्वं चापृथक्त्वं च गुणो येषां च वादिनाम् ॥
तत्प्रक्रियानुसारेणाप्यत्र नैवास्ति भेदधीः ॥ १६६८ ॥

अन्योन्याभावभेदपक्षे तत्प्रामाणिकत्वं निरस्य पृथक्त्वपक्षेऽपि न तत्प्रामाणिकतेत्याह । पृथक्त्वं चेति ॥ १६६८ ॥

पृथग्गुणस्ततोऽन्येभ्यः पृथक्त्वे वा पृथग्गुणात् ॥
अपृथग्वा मिथस्ते स्युर्न तथाऽपि भिदे[2]क्ष्यते ॥ १६६९ ॥

न हि जगति वैशेषिकादिप्रक्रिययाऽपि भेदप्रमेत्येतदुपपादयितुं विकल्पयति । पृथगिति । तस्माद्धर्मिणः सकाशादन्यपदार्थेभ्यः स्वस्माच्च पृथग्गुणकाद्धर्मिणः पृथक्त्वे सति तस्मिन्वा धर्मिणि पृथक्त्वगुणो भेदाख्योऽवतिष्ठते । इतरपदार्थेभ्यः पृथक्त्वगुणका-

१ घ. °त्तदाह । २ ग. °देष्यते ।

र्च तद्धर्मिणोऽपृथक्त्वे तस्मिन्वा धर्मिणि पृथक्त्वगुणो भेदाख्योऽवतिष्ठत इत्यर्थः । अपृथक्त्वाख्योऽप्यभेदगुणो धर्मिणः सकाशादितरपदार्थेभ्योऽपृथक्त्वगुणकाच्च धर्मिणोऽपृथक्त्वे सति तस्मिन्वा धर्मिणि वर्तेताथवेतरपदार्थेभ्योऽपृथक्त्वधर्मिणश्च पृथक्त्वे तस्मिन्धर्मिणीत्यपृथक्त्वमधिकृत्य विकल्पयति । **अपृथग्वेति** । यदि पृथक्त्वं पृथक्त्वे सति धर्मिणि वर्तेत तदा पृथक्त्वप्रभेदा मिथोऽपि[2] पृथगपृथग्वा स्युरपृथक्त्वं च यद्यपृथक्त्वे सति धर्मिणि तिष्ठेत्ततोऽपृथक्त्वभेदा मिथोऽपृथक्पृथग्वेति विकल्पयति । **मिथ इति** । सर्वत्र भेदस्य प्रामाणिकत्वासिद्धिरिति दूषयति । **न तथेति** । यदि पृथक्त्वं सति पृथक्त्वे धर्मिणि तिष्ठति पृथक्त्वभेदाश्च मिथो भिद्यन्ते तदा न भेदप्रमा स्यादनवस्थानाद्यदि पृथक्त्वभेदा मिथोऽपृथगिष्यन्ते तदा तदैक्यात्पृथक्त्वे सति धर्मिणि पृथक्त्वमिति वदतः स्वाश्रयान्न चापृथक्त्वे सति धर्मिणि पृथक्त्वं प्रमातुं शक्यमेकत्र तयोर्विरोधादपृथक्त्वं वाऽपृथक्त्वे सति धर्मिणि वर्तते तद्भेदानां च मिथः पृथक्त्वेऽनवस्थितेर्नाभेदप्रमितिः । अपृथक्त्वे तदैक्यादपृथक्त्वे सति धर्मिण्यपृथक्त्वमित्यत्राऽऽत्माश्रयै[3]तैव पृथक्त्वे सति धर्मिण्यपृथक्त्वस्थितिस्तु विरुद्धा तत्र भेदोऽभेदो वा प्रमाणवानित्यर्थः ॥ १६६९ ॥

**अपृथक्त्वगु[4]णद्रव्यं पृथक्त्वं संश्रयेत्कथम् ॥**
**परस्परविरोधित्वाच्छैत्यं यद्वद्विभावसुम् ॥ १६७० ॥**

[5]अपृथक्[6]त्वे वा पृथक्[7]त्वे वा सति धर्मिणि पृथक्त्वमपृथक्त्वं [8]च तिष्ठति तद्भेदानां च प्रत्येकं मिथो भिन्नाभिन्नत्वमतो नोक्तदोषापत्तिस्तत्राऽऽह । **अपृथक्त्वेति** ॥ १६७० ॥

**पारतन्त्र्यस्वभावाच्च न चाप्राप्तसमाश्रयः ॥**
**गुणत्वं लभते लोके गुणः कश्चिद्गुणी यथा ॥ १६७१ ॥**

यदि भिन्नोऽभिन्नो भिन्नाभिन्नो वा नाऽऽश्रयस्तर्हि स्वातन्त्र्यमेव पृथक्त्वापृथक्त्वयोरित्याशङ्कयाऽऽह । **पारतन्त्र्येति** । न हि लोके कदाचिदपि गुणी गुणत्वमापद्यते तथाऽप्राप्ताश्रयो गुणोऽपि न गुणत्वं तस्य पारतन्त्र्य[9]स्वभावादित्यर्थः ॥ १६७१ ॥

**असंभित्तिः पृथक्त्वस्य ततोऽन्येभ्यः प्रसज्यते ॥**
**पृथक्त्वस्य न चेदन्यत्पृथक्त्वान्तरमिष्यते ॥ १६७२ ॥**

किंच पृथक्त्वस्य पृथक्त्वान्तरमस्ति न वाऽऽद्ये सैवानवस्थेति मन्वानो द्वितीयमनुभाष्य दूषयति । **असंभित्तिरिति** ॥ १६७२ ॥

**अन्यापेक्षं पृथक्त्वं च स्वयमेवापृथग्घटः ॥**
**बलीयानन्तरङ्गत्वाद्बाहिरङ्गं प्रबाधते ॥ १६७३ ॥**

---

१ घ °च्च धार्मि° । २ ख. मिथः पृथगपृथग्वे° । ३ क. ख. °यतयैव । ४ ख. °गुणं द्र° । ५ क. घ. अथ पृ° । ६ क. °क्त्वे चापृ° । घ. °क्त्वे वाऽपृ° । ७ क. घ. °क्त्वे च स° । ८ घ. वा । ९ ख. घ. °न्त्र्यस्वाभाव्यादि° ।

पृथक्त्वस्य दुर्निरूपत्वेन कल्पितत्वमुक्त्वा तत्रैव हेत्वन्तरमाह । **अन्यापेक्षमिति** । सापेक्षत्वात्पृथक्त्वं सर्पवत्कल्पितमित्यर्थः । पृथक्त्ववदपृथक्त्वस्यापि कल्पितत्वान्न किंचिदकल्पितं स्यादित्याशङ्क्याऽऽह । **स्वयमिति** । निरपेक्षत्वादेकरसं वस्त्वकल्पितमित्यर्थः । किंचापृथक्त्वस्य स्वरूपत्वेनान्तरङ्गतया बलवत्त्वाद्धर्मत्वेन बहिरङ्गं दुर्बलं पृथक्त्वं प्रति बाधकत्वात्तत्कल्पिततेत्याह । **बलीयानिति** ॥ १६७३ ॥

**पृथग्गुणाच्च व्युत्थाप्य द्रव्यादेः किं स्वलक्षणम् ॥**
**स्वतोऽपृथक्त्वात्सर्वस्य पृथक्त्वमपि दुर्लभम् ॥ १६७४ ॥**

कथं घटः स्वयमेवापृथगित्युक्तं पृथक्त्वादपृथक्त्वाच्च तद्व्युत्थानाङ्गीकारादित्याशङ्क्याऽऽह । **पृथगिति** । चकारादपृथग्गुणोऽनुकृष्यते । उभयतो व्यावर्त्य पृथगुपगतस्य द्रव्यसामान्यादेः स्वाभाविकं रूपं किमित्यपेक्षायां सर्वस्य तस्य स्वरूपेणैकरस्यान्न पृथक्त्वं न हि पृथक्त्वाद्व्यावृत्तमपृथक्त्वादपि व्यावर्तते निःस्वरूपत्वप्रसङ्गात्तस्मादेकरसं वस्त्वकल्पितं कल्पितमितरदित्यर्थः ॥ १६७४ ॥

**अथानुभवतोऽस्तीति पृथक्त्वं भवतो मतम् ॥**
**मैवं मिथ्यानुभूतित्वाच्छुक्तिकारजतादिवत् ॥ १६७५ ॥**

पृथक्त्वस्य दौर्लभ्यमसहमानः शङ्कते । **अथेति** । किमनुभवमात्रं घटस्य पृथक्त्वं साधयत्यबाधितानुभवो वा नाऽऽद्य इत्याह । **मैवमिति** । अनुभवमात्रस्य भ्रान्तित्वेनापि संभवान्न वस्तुसाधकतेत्यर्थः ॥ १६७५ ॥

**नैकानुभूतिबलतो वस्तुनो लभ्यते भिदा ॥**
**भिन्नानुभूतितो नापि मिथस्तासामसंगतेः ॥ १६७६ ॥**

द्वितीयेऽपि घटानुभवो वा तत्पृथक्त्वं साधयेदनुभवान्तरं वा द्वितीये पटानुभूत्याऽपि घटपृथक्त्वप्रथाप्रसङ्गः । घटानुभवोऽपि केवलो वा तत्पृथक्त्वं साधयत्यनुभवान्तरसहितो वा नाऽऽद्य इत्याह । **नैकेति** । तस्य वस्तुमात्रपर्यवसायित्वादित्यर्थः । न चानुभवान्तरसहितो घटानुभवो घटस्य पृथक्त्वं साधयति भिन्नानुभूतीनां संभूयैकार्थासाधकत्वादित्याह । **भिन्नेति** ॥ १६७६ ॥

**एकस्यामनुभूतौ चेद्भेदो नाऽऽत्मन इष्यते[1] ॥**
**मृषा तत्रैव स मिथो व्यभिचाराद्ध्रुवं भवेत् ॥ १६७७ ॥**

तासामसंगतेरित्युक्तेरनुभूतिभेदोपगमादपसिद्धान्तः स्यादिति चेन्नेत्याह । **एकस्यामिति** । अस्यार्थः । किमनुभवे स्वापेक्षया भेदः किंवाऽन्यापेक्षया नाऽऽद्यो निःस्वरूपत्वप्रसङ्गान्नेतरोऽन्योन्याश्रयत्वापत्तेरेवं निरूप्यमाणेऽनुभवे भेदायोगश्चेत्तस्मिन्भास-

---

[1] ख. ईक्ष्यते ।

मानः स मृषैव स्यात्तद्भेदे तेषां सर्पधारादिवन्मिथो व्यभिचाराच्च मिथ्यात्वापातादद्वयोऽसावित्यवश्यमापतेदिति ॥ १६७७ ॥

**नानुभूतिः प्रतीचीयमभेदाद्भेदमीक्षते ॥**
**स्वरूपाव्यतिरेकाच्च नापि चानात्मनीक्षते ॥ १६७८ ॥**

किंचानुभूतिः स्वयमेव स्वभेदं गोचरयेदनुभूत्यन्तरं वाऽऽद्येऽपि स्वापेक्षयैव स्वभेदमनुभवेदन्यापेक्षया वा नाऽऽद्य इत्याह । **नेति** । अनुभवान्तरमनुभवभेदग्राहीति पक्षं प्रत्याह । **स्वरूपेति** । न खल्वनुभवान्तरं भेदस्याद्याप्यसिद्धेरतो न तदीक्षते तद्भेदमित्यर्थः । अन्यापेक्षया स्वभेदमनुभवो गृह्णातीति पक्षं दूषयति । **नापीति** । न खल्वनात्मानं प्रतियोगीकृत्यानुभवः स्वभेदमुद्भासयेदन्योन्याश्रयादित्यर्थः ॥ १६७८ ॥

**न चैकबुद्धिबाधेन द्व्यादिधीरुपजायते ॥**
**तत्कारणत्वात्तद्बुद्धेर्मृत्स्नेव घटजन्मनः ॥ १६७९ ॥**

नन्वेकमिति तावद्वस्तुनि ज्ञानमुत्पद्यतेऽतस्तद्बाधेन द्वे त्रीणीति वा धीरुदेति पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यतीति न्यायादतो द्व्यादिबुद्ध्या बाध्यत्वादेकत्वधियो भ्रमत्वात्तद्विषयाभेदस्यैव मृषात्वमबाधितद्व्यादिधीविषयो भेदस्त्वमृषेति तत्राऽऽह । **न चेति** । एकमिति बुद्धेर्द्व्यादिबुद्धिं प्रति कारणत्वेनोपजीव्यत्वे दृष्टान्तमाह । **मृत्स्नेति** ॥ १६७९ ॥

**द्वित्र्यादिबुद्धिरेकस्मिन्मिथ्याऽतद्रूपवस्तुनः ॥**
**समूहस्योभयत्वेऽपि स्मृतेरप्यप्रमाणतः ॥ १६८० ॥**

तर्हि मृद्धटयोरिवैकबुद्धेर्द्व्यादिबुद्धेश्च मिथोऽबाध्यत्वादुभयबुद्ध्यनुरोधादेकानेकत्वं घटादेः स्यात्तत्र किं द्व्यादिबुद्धेर्घटादिर्विषयस्तत्समूहो वाऽऽद्यं प्रत्याह । **द्वित्र्यादीति** । एकबुद्धेरेकत्वेन सिद्धे घटे द्व्यादिधीर्जायमाना मिथ्येत्युपेयं स्वतो द्व्यादिरूपरहितस्य वस्तुनः स्वीकारान्न हि प्रतियोग्यपेक्षां विना वस्तुनि तद्रूपधीरतो वस्तु नैकानेकात्मकमित्यर्थः । द्वितीये दोषमाह । **समूहस्येति** । तस्य समूह्यपेक्षया भिन्नाभिन्नत्वेऽपि नासौ द्व्यादिबुद्धेर्विषयस्तस्याप्रमाणकत्वान्न च सैव तत्र मानं तन्मानत्वस्याद्याप्यसिद्धेरित्यर्थः । एकैकघटानुभवघटितभावनाप्रभावप्रसूता स्मृतिर्घटसमूहमवगाहते तत्कथं तस्याप्रमाणकत्वमित्याशङ्क्याऽऽह । **स्मृतेरिति** ॥ १६८० ॥

**न चेत्समूहो वस्त्वस्ति एकैकत्वात्समूहिनाम् ॥**
**सत्यत्वेऽपि तथैकत्वान्नानेकत्वं तथाऽपि च ॥ १६८१ ॥**

किंच समूहो वस्त्ववस्तु वेति विकल्प्यान्त्यं निराह । **न चेदिति** । समूहो नाम वस्तु नास्ति चेत्तदा समूहिनां प्रत्येकमैक्यान्नानेकरसमेकं स्यादित्यर्थः । संधेरनादरेण

---

१ ख. घ. 'स्तत्तद्बा' । २ ग. 'स्ति त्वेकै' ।

वा समूहस्य समूहिभ्यो भेदाभेदाभ्यां दुर्निरूपत्वमित्येवमर्थं हिशब्दमध्याहृत्य वा योजनीयम् । वस्तुत्वपक्षमनुभाष्य दूषयति । **सत्यत्वेऽपीति** । तस्य समूहिनां चैकत्वात्पूर्ववद्वस्तुनो नानेकरसतेत्यर्थः । किंच समूहस्य वस्तुत्वेऽपि समूहिव्यतिरेकादृष्टेस्तेषां च प्रत्येकमैक्यस्योक्तत्वान्नानेकरसत्वमेकस्यास्तीत्याह । **नेति** । तथाऽपि समूहस्य वस्तुत्वेऽपीति यावत् ॥ १६८१ ॥

**अद्वैतविषयैवेयं द्वौ त्रयश्चेति या मतिः ॥**
**एकत्वात्समुदायस्य न प्रमाऽतो भिदां प्रति ॥ १६८२ ॥**

भेदस्याप्रामाणिकत्वादेकस्य वस्तुनो न भिन्नाभिन्नतेति प्रकृतमुपसंहरति । **अद्वैतेति** । या तावद्भेदाभेदवादिनां द्वौ त्रयश्चत्वारो वेति धीः सा समूहे समूहिषु वा प्रवर्तमाना तस्य तेषां च प्रत्येकमेकत्वादभिन्नमेव वस्तु गोचरयत्यतो योग्यविषयाभावाद्भेदं प्रति न सा प्रमा न च प्रमान्तरमिति कुतो भिन्नाभिन्नतेत्यर्थः ॥ १६८२ ॥

**यदि प्रत्यक्षगम्योऽर्थो व्यावृत्तेस्तत्पृथक्त्वतः ॥**
**न प्रत्यक्षोभिसंबन्धः कुम्भप्रत्यक्षतो भवेत् ॥ १६८३ ॥**

अनुभूतेरनुभाव्यस्य वा भेदेन प्रमेति प्रतिपाद्यानुभाव्यभेदस्याप्रामाणिकत्वे हेत्वन्तरमाह । **यदीति** । कुम्भाद्यर्थस्य प्रत्यक्षत्वेऽपि न भेदस्य तथात्वं कुम्भादेरेव तद्विषयत्वानुभवाद्भेदस्य ततोऽन्यत्वादित्यर्थः ॥ १६८३ ॥

**प्रत्यक्षगम्यधर्मश्चेद्व्यावृत्तिर्भवतोच्यते ॥**
**धर्मिप्रतीतिरेव स्यात्साऽपि चैकैककर्मिका ॥ १६८४ ॥**

घटादिप्रत्यक्षं तद्गतरूपादिवत्तद्धर्मत्वात्तद्भेदमपि प्रत्यक्षयेदिति शङ्कते । **प्रत्यक्षेति** । धर्मत्वेनेष्टा व्यावृत्तिस्तद्धर्मिणोऽभिन्ना भिन्ना वाऽऽद्ये धर्मधर्मिभावानुपपत्तिं मत्वा दोषान्तरमाह । **धर्मीति** । धर्मस्य धर्मिमात्रत्वे धर्मिधीरेव धर्मधीः स्यात्सा च व्यवहारभूमावेकमेव धर्मिणं कर्मत्वेनाऽऽदाय प्रवृत्ता तद्भेदस्य धर्मिमात्रत्वे वस्त्वेकरसं स्यादित्यर्थः ॥ १६८४ ॥

**धर्मिबुद्धेर्न धर्मेषु बुद्धिभेदः प्रजायते ॥**
**देशकालाद्यभिन्नत्वादेकात्मत्वाच्च संविदः ॥ १६८५ ॥**

धर्मधर्मिणोरेकत्वे तद्धियोरप्येकत्वमित्येतत्प्रतिपादयति । **धर्मीति** । किंचाभेदपक्षे धर्मधर्मिणोर्देशतः कालतो वस्तुतश्च भेदाभावाद्धर्मिज्ञानाज्ज्ञानान्तरं धर्मेषु न संभवतीत्याह । **देशेति** । किंच संविदो ज्ञानफलस्य धर्मो धर्मी वा न पृथगस्ति तद्ग्राहिसंविदन्तराभावादतस्तदैकरस्याद्भेदो विकल्पमात्रमित्याह । **एकात्मत्वादिति** ॥ १६८५ ॥

---

१ क. ख. वो । २ ख. °क्षादिसं° ।

**सत्तत्त्वं सर्वभावानां तत्र तावन्न भेदधीः ॥**
**भेदधीविषयो यश्च तस्मात्सद्धीर्निवर्तते ॥ १६८६ ॥**

भेदस्य विकल्पमात्रत्वे हेत्वन्तरमाह । **सदिति ।** अस्तु सर्वेषां भावानां सदेकतत्त्वं कथं तावता भेदो भ्रमस्तत्राऽऽह । **तत्रेति ।** सर्वस्य सन्मात्रत्वात्तस्य चैक्याद्भेदो मिथ्येत्यत्र युक्त्यन्तरमाह । **भेदेति** ॥ १६८६ ॥

**सतैव सर्ववस्तूनि बिभ्रत्यात्मानमात्मना ॥**
**कल्पितत्वादनेकत्वाद्रज्जुसर्पद्विचन्द्रवत् ॥ १६८७ ॥**

कथं भेदधीविषयान्निवृत्तिः सद्धियो न हि तद्विषया घटादयः सन्तो न भवन्ति तत्राऽऽह । **सतेति ।** सर्वाण्यपि वस्तून्यात्मानं सत्त्वेनैवाऽऽत्मना धारयन्तीत्यत्र हेतुमाह । **कल्पितत्वादिति ।** रज्जोरिदमंशे कल्पितसर्पादेराधिष्ठानातिरिक्तसत्त्वाभाववज्जगतः सन्मात्रे कल्पितस्य न सदतिरेकेण स्वरूपमस्तीत्यर्थः । कल्पितत्वं साधयति । **अनेकत्वादिति ।** विमतं कल्पितं परिच्छिन्नत्वात्संमतवदित्यर्थः ॥ १६८७ ॥

**प्रकृत्यर्थातिरेकेण प्रत्ययार्थो न गम्यते ॥**
**सत्तेत्यत्र ततः स्वार्थस्तद्धितोऽत्र भवन्भवेत् ॥ १६८८ ॥**

सतो भावः सत्तेति निर्वचनात्प्रकृतिप्रत्ययार्थभेदेन तत्रापि परिच्छिन्नत्वस्य सत्त्वादनैकान्तिकत्वमित्याशङ्क्याऽऽह । **प्रकृत्यर्थेति ।** का तर्हि तद्धितस्य गतिस्तत्राऽऽह । **तत इति** ॥ १६८८ ॥

**सति व्यभिचरत्येव तदन्यद्वस्तु मोहजम् ॥**
**सर्पादिवस्तुवत्तस्मात्सत्सत्यमितरन्मृषा ॥ १६८९ ॥**

परिच्छिन्नत्वेन जगतः सति कल्पितत्वमुक्त्वा तत्रैव हेत्वन्तरमाह । **सतीति ।** सत्यधिष्ठाने ततोऽन्यत्सर्वं मोहात्प्रतिपन्नं कल्पितमिति प्रतिज्ञार्थः । व्यभिचारित्वं हेतुमाह । **व्यभिचरतीति ।** तत्र दृष्टान्तः । **सर्पादीति ।** विमतं कल्पितं व्यभिचारित्वात्सर्पादिवदित्यनुमानफलमाह । **तस्मादिति** ॥ १६८९ ॥

**व्युत्थिता हि सतो भेदाः प्रत्यक्षागमलिङ्गतः ॥**
**अभावात्मकतां प्राप्ता गम्यन्ते नेश्वरैरपि ॥ १६९० ॥**

ननूक्तहेतुभ्यां कुम्भादीनामेकस्मादनुगताद्व्यावृत्तिरेव सतः सिध्यति न कल्पितत्वमत आह । **व्युत्थिता हीति ।** सतो व्यावृत्ता घटादयस्तद्व्यावृत्तेरेव तुच्छतां गता न हि सदेव सतो व्यावर्तते धर्मिप्रतियोगिभावस्य भेदापेक्षत्वादतोऽध्यक्षाद्यगम्यत्वात्कुम्भादीनां कल्पिततेत्यर्थः ॥ १६९० ॥

**सदेकत्वमशेषेषु वस्तुष्वव्यभिचारि हि ॥**
**व्यभिचारि ततोऽन्यद्यद्वस्त्वतोऽद्वैतमेव सत् ॥ १६९१ ॥**

व्यभिचारिणामनेकेषां च तेषां कल्पितत्वे हेतुद्वयं सति व्यभिचरतीति चेन्नेत्याह । **सदिति** । अतो न सति व्यभिचारशङ्केति शेषः । तर्हि सदभेदात्कुम्भादिष्वपि तदुभयमसिद्धमित्याशङ्क्याऽऽह । **व्यभिचारीति** । सतोऽव्यभिचारैकत्वस्य कुम्भादेर्व्यभिचारानेकत्वस्य च स्वानुभवसिद्धत्वे फलितमाह । अत इति ॥ १६९१ ॥

**व्युत्थाय न सतो यस्माद्वस्तु संभावनामपि ॥**
**अभावमपि नाऽऽप्नोति काऽऽस्था भूत्यै विनाऽऽत्मना ॥१६९२॥**

द्वैतस्य कल्पितत्वे कैमुतिकन्यायमाह । **व्युत्थायेति** । सतो व्युत्थाय स्थितं वस्तु संभावनामभावं च यस्मान्न प्रतिपद्यते तस्मादात्मना सता विना भूत्यै वस्तुतः सद्भावार्थं मनोरथोऽपि न संभवतीत्यर्थः ॥ १६९२ ॥

**सत्सिद्धिमेव संभाव्य सिद्धाः स्मेत्यभिमन्वते ॥**
**सर्वे भावाः स्रजा यद्वद्भोगी सिद्धायतेऽन्यतः ॥ १६९३ ॥**

कथं तर्हि सतो व्यावृत्तानां कुम्भादीनां सत्त्वसिद्धिस्तत्राऽऽह । **सत्सिद्धिमिति** । अधिष्ठानस्य स्वतः स्वरूपभूतां सत्तां स्फूर्तिं चापेक्ष्य कुम्भादयः सर्वे भावा वयं सन्तः स्फुरन्तश्चेत्यभिमानवन्त इव वर्तन्ते चेत्ततो भेदभानायोगात्तेषां तद्व्यावृत्तत्वासिद्धिरित्याशङ्क्याऽऽह । **स्रजेति** । यथा स्रगधिष्ठानसत्तया सिद्धोऽपि सर्पस्ततोऽन्यत्वेन सिद्धवद्भाति तथा सर्वे भावाः सदात्मानोऽपि ततो व्युत्थिता इव भान्तीत्यर्थः ॥ १६९३ ॥

**प्रत्यक्षेणापि नाभावः क्वचिज्जगति मीयते ॥**
**तस्य सद्वस्तुमेयत्वादभावस्याप्यसंभवात् ॥ १६९४ ॥**

सतो व्युत्थितमभावमपि नाऽऽप्नोतीत्ययुक्तमभावप्रमाणात्तत्सिद्धेरित्याशङ्क्याऽऽह । **प्रत्यक्षेणेति** । अपिर्मानान्तरसंग्रहार्थः । सर्वस्यैव मानस्य सद्विषयत्वात्तन्निरपेक्षाभावाभावाच्चेति हेत्वर्थः ॥ १६९४ ॥

**कामं घटाद्यभावोऽयं प्रत्यक्षादवसीयताम् ॥**
**प्रत्यक्षाभावसंसिद्धौ किं प्रमाणमितीर्यताम् ॥ १६९५ ॥**

मेयाभावस्य मानगम्यत्वमुपेत्यापि मानाभावस्य तन्निरस्यति । **काममिति** ॥१६९५॥

**कार्यरूपाभिधाभेदादतीतानागतेष्विव ॥**
**ऐकात्म्यं सर्वभावानां भिन्ननामादिमत्स्वतः ॥ १६९६ ॥**

भावाभावयोः सति कल्पितत्वेनैव सिद्धेः सन्मात्रमकल्पितमित्युक्तम् । इदानीं घटादिनामभेदादुदकाहरणादिरूपकार्यभेदात्पृथुत्वादिरूपभेदाच्च सत्त्वस्य भिन्नत्वात्कथं तदद्वयमकल्पितमित्याशङ्क्याऽऽह । **कार्येति** । यथा चैत्रादिष्वतीतादिकालसंबन्धिषु बालः

---

१ घ. °षां सद्भा° । २ ख. भिन्नानामादिमत्त्वतः । ३ क. °दिवत्सु तत् ॥ १६९६ ॥ ४ क. सत्त्वात्तस्य । ख. सतत्त्वस्य ।

स्थविरो युवा पिता भ्रातेत्यादिनामरूपकार्यभेदेऽपि न ते भिद्यन्ते न हि कदाचिदपि चैत्रोऽचैत्रो भवति तथा कुम्भादिषु भिन्ननामादिमत्स्वपि सत्सु न भेदः किंतु तेषां सन्मात्रतेति तदद्वयमकल्पितमित्यर्थः ॥ १६९६ ॥

**अथ ब्रवीषि भेदोऽत्र स्याद्द्वयोर्धर्मधर्मिणोः ॥**
**व्यावृत्तेर्धर्मधर्मित्वं न तयोरुष्णशीतवत् ॥ १६९७ ॥**

व्यावृत्तेर्धर्मस्य धर्मिणोऽभेदे तद्धीरेव धर्मधीरित्यादिदूषणमधस्तादुक्तमिदानीं भेदपक्षमनुभाष्य दूषयति । **अथेत्यादिना** ॥ १६९७ ॥

**न भावयोरसंभित्तेर्धर्मधर्मित्वमिष्यते ॥**
**नितरामभावयोर्न स्यान्न विरुद्धाविरुद्धयोः ॥ १६९८ ॥**

किंच भावयोरभावयोर्वा भावाभावयोर्वा धर्मधर्मित्वमिति विकल्प्य क्रमेण दूषयति । **नेत्यादिना** । अभावयोः स्वयमसत्त्वाद्धर्मधर्मित्वं दूरोत्सारितमित्यतिशयमाह । **नितरामिति** । विरुद्धाविरुद्धयोर्भावाभावयोरिति यावत् । तयोर्मिथो विरुद्धत्वादित्यर्थः ॥ १६९८ ॥

**निर्भेदकस्य कुम्भस्य भेदः केनेति भण्यताम् ॥**
**वस्त्वात्मनैव चेत्तर्हि मत्पक्षः साध्यते त्वया ॥ १६९९ ॥**

किंचैकोऽयमित्येकस्तावत्कुम्भो भाति तस्य भेदो वस्तुरूपेणावस्तुरूपेण वेति विकल्पयति । **निर्भेदकस्येति** । तत्राऽऽद्यमनूद्य दूषयति । **वस्त्विति** । वस्तुरूपेण भेदे प्रतियोगिनो वस्तुत्वादद्वयं धर्मिमात्रं वस्तु स्यान्न च धर्माभावे तस्मिन्धर्मित्वमित्यर्थः ॥ १६९९ ॥

**वस्तुस्वरूपमुज्झित्वा नान्यत्र व्यापृतिर्मितेः ॥**
**अस्ति यस्मादतोऽद्वैतं वस्तु वस्तुनि सर्वदा ॥ १७०० ॥**

कल्पान्तरं निरस्यति । **वस्तुस्वरूपमिति** । अवस्तुरूपेण प्रतियोगिनो धर्मिणो भेदे तन्मात्रं वस्तु प्रामाणिकं स्यादवस्तुरूपे धर्मिणि मानप्रवृत्त्ययोगादतो भेदस्याप्रामाणिकत्वादद्वैतं सदा वस्तु तत्रैव च सर्वप्रमाणानां प्रमाणत्वमित्यर्थः ॥ १७०० ॥

**व्यावृत्तिरनुवृत्तिर्वा सर्वस्यैवास्य वस्तुनः ॥**
**अद्वैतपक्षो भवता मदीयोऽयं प्रसाध्यते ॥ १७०१ ॥**

किंच व्यावृत्त्यनुवृत्ती वस्तुनः स्यातामवस्तुनो वा द्वितीये वस्तुनस्तदस्पर्शादैकरस्यं स्याद्यद्याद्यस्तत्राऽऽह । **व्यावृत्तिरिति** । ते वस्तुनश्चेदिष्टे तदा षष्ठ्या तयोस्ततो निष्कर्षादवस्तुत्वमुक्तं स्यात्ततश्च वस्त्वद्वैतमित्यर्थः ॥ १७०१ ॥

---

१ क. 'वाऽऽत्मत्र' ।

**व्यावृत्तोऽयमिति ज्ञानं किं कुम्भे किं ततोऽन्यतः ॥**
**अव्यावृत्तस्वरूपत्वात्कुम्भे तावन्न धीरियम् ॥ १७०२ ॥**

किंच व्यावृत्तज्ञानं निर्विषयं सविषयं वा नाऽऽद्यः सुगतमतप्रसङ्गाद्द्वितीये कुम्भोऽर्थान्तरं वा विषयस्तस्येति पृच्छति । **व्यावृत्त इति** । कुम्भविषयत्वं दूषयति । **अव्यावृत्तेति** । कुम्भस्य स्वरूपेणैकत्वानुभवान्न तस्मिन्व्यावृत्तधीर्विरोधादित्यर्थः ॥ १७०२ ॥

**नाप्यकुम्भव्युदासेन कुम्भस्य स्याद्विशेषणम् ॥**
**न ह्यम्भस्थेन शैत्येन शिखिनः स्याद्विशेषणम् ॥ १७०३ ॥**

केवलादर्थान्तरपटादिव्यावृत्तं[1] कुम्भं व्यावृत्तधीविषयमिच्छन्तं प्रत्याह । **नापीति** । अकुम्भः स्तम्भादिस्तत्प्रतियोगिकव्यावृत्त्या[2] विशेषणं न कुम्भस्य संभवति व्यावृत्तिविशेषणतया स्तम्भादेरपि विशेषणत्वप्रसङ्गादतो व्यावृत्ते[3] सर्वस्य प्रवेशाद्व्यावृत्तधीगम्यमद्वयं भवेदिति भावः । स्तम्भादिविशेषिता व्यावृत्तिर्न कुम्भविशेषणमित्यत्र[4] दृष्टान्तः[5] । **न हीति** ॥ १७०३ ॥

**अस्यायमिति षष्ठ्यर्थः प्रत्यक्षादवगम्यते ॥**
**घटाभावः पटे किं न कुतो वाऽस्य घटेऽस्तिता ॥ १७०४ ॥**

शैत्यस्याम्भोनिष्ठस्याग्निनिष्ठत्वाभावात्तद्विशेषणत्वाभावेऽपि स्तम्भादिव्यावृत्तेर्घटनिष्ठत्वात्तद्विशेषणत्वसिद्धिरित्याशङ्क्याऽऽह । **अस्येति** । स्तम्भस्याभाव इति षष्ठ्या तयोः संबन्धः प्रत्यक्षी क्रियते तथाच स्तम्भाभावः स्तम्भे न कुम्भेऽस्तीत्यर्थः । ननु घटः पटो नेति प्रतीतेर्घटाभावः पटे पटाभावश्च घटे किमिति नेष्यते तथाच घटाभावो घटे पटाभावो वा पटे कुतो नियम्यते प्रतीतेरविशेषादिति शङ्कते । **घटेति** ॥ १७०४ ॥

**भावाभावौ सतो न स्तः सत्त्वादेवासतः कुतः ॥**
**नानयोर्धर्मधर्मित्वं विरोधादितरेतरम् ॥ १७०५ ॥**

नाभावस्य धर्मिनिष्ठत्वं प्रतियोगिनिष्ठत्वं वा प्रत्यक्षयितुं शक्यं तस्य युक्तिविरुद्धत्वेनाऽऽभासत्वादिति परिहरति । **भावाभावाविति** । न तावज्जन्मनाशौ सतो धर्मौ तस्य सदा सत्त्वात्ताभ्यामस्पर्शान्नाप्यसतस्तौ निःस्वरूपस्य धर्मित्वायोगादतस्तौ कल्पिताविर्थः । मा भूदभावस्य घटादेश्च धर्मधर्मित्वं तथाऽपि सतो धर्मत्वेनासदेष्टव्यं तस्यास्वतन्त्रत्वादित्याशङ्क्याऽऽह । **नानयोरिति** ॥ १७०५ ॥

**सर्वे भावाः स्वयं सन्तो व्यावृत्तिः किंसमाश्रया ॥**
**निराकृता स्वयं सद्भिर्यथा वियति[6] कृष्णिमा ॥ १७०६ ॥**

---

१ ख. घ. °न्तरं प° । २ घ. कुम्भव्या° । ३ ख. घ. °वृत्तेः स° । ४ ख. घ. कुम्भादिवि° । ५ ख. °ष्टान्तमाह । न । ६ ग. वियं ।

भेदाभावादिविकल्पस्य विकल्पितत्वादकल्पितं सन्मात्रमित्युक्त्वा तत्रैव युक्त्यन्तरमाह । सर्व इति । कुम्भादयः सर्वे भावाः स्वभावतः सन्तोऽनुभूयन्ते तथाच सर्वस्य सन्मात्रत्वे भेदाभावाख्या व्यावृत्तिराश्रयाभावान्न सेत्स्यतीत्यर्थः । सन्तो भावा व्यावृत्तेराश्रया भविष्यन्तीत्याशङ्क्याऽऽह । निराकृतेति । यथा नभसि नीरूपे स्वभावेनैव नीलिमा निराकृतस्तथा स्वभावतः सन्मात्रैर्भावैर्व्यावृत्तिर्निरस्ता तस्याः सन्मात्रे दुर्घटत्वादित्यर्थः ॥ १७०६ ॥

नभोवत्सदिदं सर्वं तत्र यत्तन्सदात्मना ॥
साध्यत्वं नान्यथा दृष्टमसतो यदि वा सतः ॥ १७०७ ॥

सर्वस्य सन्मात्रत्वं दृष्टान्तेन साधयति । नभोवदिति । यथा कूपकुम्भाकाशादि सर्वं नभोमात्रं तथा जगदखिलं सन्मात्रं भातीत्यर्थः । कथं तर्हि जन्मादिव्यवहारो न हि सति सोऽस्ति तत्राऽऽह । तत्रेति । सर्वस्य सन्मात्रत्वे सतीति यावत् । घटादि दृश्यं तत्सद्रूपात्यागेन तदविद्यया कारकव्यापाराधीनं न सद्रूपत्यागेन साध्यत्वमेति तस्यासत्त्वादेव कारकव्यापारविषयत्वानुपपत्तेरतः सतोऽसतो नोत्पत्त्यादीत्याविद्यं तदित्यर्थः ॥ १७०७ ॥

वस्त्वन्तराच्चेद्व्यावृत्तिरिष्यते ह्यन्यवस्तुनः ॥
वस्तुत्वात्साऽस्त्वभावस्य वस्तु नो चेत्कुतो भिदा ॥ १७०८ ॥

किंच किमभावो वस्तु किंवाऽवस्तु तत्राऽऽद्ये दोषमाह । वस्त्वन्तरादिति । एकस्य वस्तुनोऽन्यस्माद्वस्तुनः सकाशाद्व्यावृत्तिरिष्यते चेत्तदा चतुर्विधाभावस्यापि वस्तुत्वाद्घटादेर्व्यावृत्तिरस्तु निवारकाभावात्तथाच घटादि चतुर्विधाभावास्पृष्टत्वादद्वयं स्यात्तत्संस्पर्शेऽपि तस्य न क्षतिर्न हि घटस्पृष्टं नभो नश्यति विरोधिसंसर्गे नाशः स्यादिति चेन्न भावाभावयोर्वस्तुत्वाविशेषे विरोधासिद्धेराखुनकुलवदिति चेन्न तत्रापि भावत्वाकारेणाविरोधात्प्रतीतिविरोधः स्यादिति चेन्न भावाभावपुरस्कारेण तदविरोधादित्यर्थः । अभावस्यावस्तुत्वपक्षं प्रत्याह । वस्त्विति । अभावस्यासत्त्वे तदपेक्षभेदस्याप्यसत्त्वादद्वयमेव वस्तु स्यादित्यर्थः ॥ १७०८ ॥

घटो भावात्मनाऽऽप्नोति त्वत्साध्यं चेदशेषतः ॥
घटीभूतमिदं सर्वं द्वैतं ते किंमयं मतम् ॥ १७०९ ॥

किंच भेदाभेदवादिना भावरूपेणाभावरूपेण वा घटस्य पटादेरभेदो[1]ऽप्युपगम्यते तत्राऽऽद्यमनूद्य दूषयति । घट इति । भिन्नाभिन्नत्वेन त्वया कृतं साध्यं सर्वं भावरूपेण घटो व्याप्नोति चेत्तर्हि घटमात्रं तदापन्नं तन्न भेदो मानाभावादित्यर्थः ॥ १७०९ ॥

---

१ घ. 'दोऽभ्युप' ।

**बोधकं यत्प्रमेयस्य तत्प्रमाणमिहेष्यते ॥**
**न च प्रमाणनास्तित्वमीदृक्तस्मान्न युज्यते ॥ १७१० ॥**

द्वितीये नाभेदो न च मानं विना घटस्याभावः सिध्येन्न च मानपञ्चकानुदयो घटाभावे मानमित्याह । **बोधकमिति** । अभावप्रमाणस्यापि तथात्वं शङ्कित्वाऽऽह । **न चेति** । मानाभावस्य बोधकत्वाभावान्मेयाभावे मानत्वं न युक्तमित्याह । **तस्मादिति** ॥ १७१० ॥

**मेयाभावः प्रमाणानां यद्यभावेन गम्यते ॥**
**प्रमाणानामभावस्य गमकः को भविष्यति ॥ १७११ ॥**

मानाभावस्य मेयाभावबोधित्वमङ्गीकृत्यापि दोषमाह । **मेयेति** । न च मेयाभावो मानाभावं गमयति परस्पराश्रयान्न च मानाभावादेव तद्धीरात्माश्रयान्न च भावमानादेव तद्धीरभावमानोच्छेदादिति भावः ॥ १७११ ॥

**एकप्रत्ययनिर्ग्राह्यमेकं वस्त्विति भण्यते ॥**
**प्रत्यभिज्ञाबलाद्वाऽपि नाभावेऽस्त्युभयं हि तत् ॥ १७१२ ॥**

मेयाभावो मानाभावश्चेति न मिथोभेदोऽभावस्य तद्धर्मत्वासिद्धेरतो मेयाभावे मानमस्ति चेन्मानाभावेऽप्यस्त्येवेत्याशङ्क्याऽऽह । **एकेति** । एकमित्येकधीग्राह्यमेकं वस्तूच्यते सोऽयमिति प्रत्यभिज्ञातो वा तदैक्यं गृह्यते न चाभावस्योभयमस्ति तस्मान्नैक्यं तस्य भावत्वेनाभावानाधारत्वादित्यर्थः ॥ १७१२ ॥

**दर्शनस्पर्शनाभ्यां स्याद्यथैकार्थग्रहस्तथा ॥**
**प्रत्यक्षाभावमानाभ्यां नानुभूतिरिहास्ति नः ॥ १७१३ ॥**

प्रत्यक्षसिद्धमानाभावेन मेयाभावे सिद्धे द्वाभ्यामभावैक्यसिद्धिरित्याशङ्क्याऽऽह । **दर्शनेति** । इहेत्यभावोक्तिः । अनुभूतिस्तदैक्यगोचरा नहि संभूयमानाभ्यामभावैक्यं बोध्यते मिथो वार्तानभिज्ञत्वादित्यर्थः ॥ १७१३ ॥

**न प्रमाणं प्रमेयं वा तदभावविशेषणम् ॥**
**तदा द्वयोरसंसिद्धेर्विरोधाच्चाप्यसंगतिः ॥ १७१४ ॥**

यथा तेऽनुभूतेरैक्येऽपि नीलपीताद्युपाधिभेदाद्भेदधीरिष्टा तथा स्वारस्येनाभावाभेदेऽपि मानाभावो मेयाभाव इति प्रतियोगिभेदात्तत्र भेदोऽस्तीत्याशङ्क्याऽऽह । **नेति** । तत्र हेतुः । **तदेति** । एकस्मिन्क्षणे भावाभावयोरभावाद्विरुद्धत्वाच्च न तयोर्विशेषणविशेष्यता तत्कथं प्रतियोगिभेदादभावभेदोक्तिरित्यर्थः ॥ १७१४ ॥

**यद्यसन्नपि धर्मः स्यान्नैपुण्याद्भवतः क्वचित् ॥**
**नभो मूर्तं घटोऽमूर्तो विश्रब्धैः किं न साध्यते ॥ १७१५ ॥**

भावाभावयोरेककालत्वाभावेऽपि विशेषणविशेष्यत्वं किं न स्यात्तत्राऽऽह । यदीति । असमकालयोरपि विशेषणविशेष्यत्वे सर्वमपि सुसाध्यं स्यादित्यर्थः ॥ १७१५ ॥

न भावयोरभिन्नत्वाद्धर्मधर्मित्वमिष्यते ॥
नितरामभावयोर्न स्याद्दूरतो भावाभावयोः ॥ १७१६ ॥

यस्मिन्धर्मिणि प्रतियोगी संबध्यते तत्रैव संबद्धोऽभावः प्रतियोगिनो विशेष्यः स्यादिति चेन्न धर्मधर्मिभावस्य दुर्वचत्वादित्याह । नेति ॥ १७१६ ॥

नाऽऽत्मना वस्तुनो भेदो भेदस्यान्यव्यपाश्रयात् ॥
अन्यदीयोऽपि नान्यस्य भेदः स्यात्कल्पनां विना ॥ १७१७ ॥

भावाभावयोर्विशेषणविशेष्यत्वं धर्मधर्मित्वं च निराकृत्य [1]भेदाभेदनिराकरणमनुवर्तयन्पूर्वोक्तं स्मारयति । नाऽऽत्मनेति । न तावद्वस्तुनः स्वापेक्षया भेदस्तस्यान्यापेक्षत्वान्नाप्यन्यस्मादसौ कल्पनां विना युक्तोऽन्योन्याश्रयादतो भेदभावादेकं वस्तु स्यादित्यर्थः ॥ १७१७ ॥

स्वतोऽभिन्नस्वभावत्वान्न भेदोऽन्योन्यसंश्रयः ॥
उभयोरप्यसंभेदः कथं भिन्द्याद्विरोधिनम् ॥ १७१८ ॥

किंच सर्वस्य स्वरूपेणाभिन्नत्वान्न स्वरूपभेदः प्रतियोग्यपेक्षया तु न स लभ्यतेऽन्योन्याश्रयान्न च धर्मिप्रतियोगिनोर्भेदो विद्यमानः प्रतियोग्यपेक्षया विरोधिनं धर्मिणं भेत्तुमर्हत्यतो न भेदो वास्तवोऽस्तीत्याह । स्वत इति ॥ १७१८ ॥

विशेषणप्रभेदेऽपि विशेष्योऽर्थो न भिद्यते ॥
शुक्लकृष्णादिभेदेऽपि गोपिण्डो न हि भिद्यते ॥ १७१९ ॥

भेदाभावनिरासेनैकरसं वस्तूक्त्वा कुम्भादिभेदोपगमेऽपि सदद्वयमेष्टव्यमित्याह । विशेषणेति ॥ १७१९ ॥

विशेषणं विशेष्याच्चेद्विशेष्यान्तरवत्पृथक् ॥
भिन्नत्वात्संगतिर्न स्याद्विशेषणविशेष्ययोः ॥ १७२० ॥

तर्हि विशेषणविशेष्यत्वोपगमात्तस्य भेदगर्भत्वादद्वैतवादिनः सिद्धान्तहानिरित्याशङ्क्योपेतं विशेषणविशेष्यत्वं दूषयति । विशेषणमिति । तद्विशेष्याद्भिन्नमभिन्नं वा नाऽऽद्यो हिमवद्विन्ध्ययोरिवात्यन्तभिन्नत्वात्तद्भावेन संबन्धासिद्धेर्नेतरस्तत्त्वानुपपत्तेस्तु[2]स्यत्वादित्यर्थः ॥ १७२० ॥

नैकधीगम्यता च स्याज्ज्ञानस्यायुगपज्जनेः ॥
युगपन्न हि विज्ञानं जायते घटमेषयोः ॥ १७२१ ॥

---

१ क. घ. भेदं । २ घ. 'स्य च भे' ।

किंच तयोरेकधीगम्यत्वं भिन्नधीगम्यत्वं वा नाऽऽद्य इत्याह । **नैकेति** । न हि मलयहिमालययोरत्यन्तभिन्नयोर्मिथःसंसृष्टतयैकदृष्टिविषयता दृष्टेत्यर्थः । द्वितीयेऽपि युगपदुत्पन्नानेकज्ञानगम्यत्वं क्रमभाव्यनेकज्ञानगम्यत्वं वा नाऽऽद्य इत्याह । **ज्ञानस्येति** । अनेकज्ञानस्य युगपज्जन्माभावे दृष्टान्तमाह । **युगपदिति** ॥ १७२१ ॥

**प्रागेवानात्मसंबन्धादुत्पत्तावेव लब्धतः ॥**
**प्रत्यग्वस्तुप्रमेयस्य तावतैव कृतार्थतः ॥ १७२२ ॥**
**प्रमाणस्य ततोऽन्यस्मिन्न तन्मानत्वमर्हति ॥**
**विरोधिव्यभिचारित्वात्तदन्यस्य च वस्तुनः ॥ १७२३ ॥**

क्रमभाव्यनेकज्ञानगम्यत्वे च घटपटादिवदयःशलाकाकल्पतया न विशेषणविशेष्यतेति मत्वा क्रमाक्रमकल्पयोः साधारणं दोषमाह । **प्रागिति** । एकस्यानेकस्य वा ज्ञानस्य युगपदयुगपद्वा प्रवृत्तस्यानात्मना विषयेण संबन्धात्पूर्वमेव प्रतीचो वस्तुनः स्वाकारार्पकतया विषयस्य लाभान्मानस्य मेयलाभमात्रेणानपेक्षत्वान्नाऽऽत्मनोऽन्यस्मिन्नर्थे तन्मानत्वं तस्माद्विशेषणाद्यनात्मभूतमप्रामाणिकं कल्पितमित्यर्थः । किंचाऽऽत्मनोऽन्यस्य जाड्यादजडप्रमाणफलविरोधितया तत्संबन्धाभावात्प्रमेयत्वासिद्धेर्व्यभिचारित्वाच्च तत्कल्पितं मिथोव्यभिचारिसर्पधारादिवदित्याह । **विरोधीति** ॥ १७२२ ॥ १७२३ ॥

**सर्वं मिथोऽनपेक्षं सत्स्वात्ममात्रविवक्षया ॥**
**प्रत्यग्रूपात्परं रूपं न वस्तूत्प्रेक्ष्यते मितेः ॥ १७२४ ॥**

कल्पितत्वेऽनात्मनो हेत्वन्तरमाह । **सर्वमिति** । स्वरूपमात्रानुसारेण सर्वमन्योन्यानपेक्षं सदेव तथाच तस्याऽऽत्ममात्रत्वादन्यत्कल्पितमित्यर्थः । कथं सर्वस्याऽऽत्ममात्रत्वं तत्राऽऽह । **प्रत्यगिति** ॥ १७२४ ॥

**यद्वस्तु स्वात्मनैवास्ति तत्परार्थं न बोधवत् ॥**
**पारार्थ्येनैव सद्यच्च तत्परस्माद्विरुङ्न सत् ॥ १७२५ ॥**

आत्ममात्रमपि जगत्कल्पितं चेत्सोऽपि तथा स्यादित्याशङ्क्याजाड्यान्नेत्याह । **यदिति** । तर्हि जगदप्यकल्पितमात्माभिन्नत्वादित्याशङ्क्य जाड्यान्नैवमित्याह । **पारार्थ्येनेति** ॥ १७२५ ॥

**असाधारणरूपत्वात्प्रत्यक्चिन्मात्रवस्तुनः ॥**
**तत्तत्त्वानुविधाय्येव प्रमात्रादिर्भवन्भवेत् ॥ १७२६ ॥**

तर्हि विरुद्धत्वाज्जगदात्मनोर्भिन्नतेत्याशङ्क्याऽऽह । **असाधारणेति** । प्रतीचश्चिदेकरसस्यासामान्यविशेषत्वादकल्पितत्वं मात्रादिस्त्वनात्मा सामान्यविशेषात्मको भवन्मिथोपेक्षत्वात्कल्पितोऽतोऽधिष्ठानात्मतत्त्वानुसार्येव कल्पितस्यातिरिक्तरूपाभावादित्यात्ममात्रता जगतो युक्तेत्यर्थः ॥ १७२६ ॥

द्रष्टव्याद्यनुसारिण्या प्रत्यङ्मोहप्रसूतितः ॥
दृष्ट्या विरुद्धदिक्स्थस्य प्रतीचो दर्शनं कुतः ॥ १७२७ ॥

सच्चिन्मात्रमद्वयं तत्त्वमिति वदता भेदाभेदवादो दूषितः संप्रति तत्पक्षे विषयधीग्राह्यत्वमात्मनः स्यात्तच्चायुक्तमित्याह । द्रष्टव्येति । स्प्रष्टव्यश्रोतव्यादिसंग्रहार्थमादिपदम् । आत्मा भिन्नाभिन्नश्चेद्रूपादिना सहाभिन्नत्वात्तदाकारदृष्ट्या दृष्टः स्यान्न च प्रतीचो बाह्यरूपाद्यपेक्षयाऽन्तरवस्थितस्य तद्दृष्ट्या दृष्टिः श्लिष्टा प्रत्यगज्ञानजभ्रान्तित्वाच्च न साऽऽत्मानं गोचरयेदित्यर्थः ॥ १७२७ ॥

श्रुतिमानार्पितं चैतन्नावज्ञेयं विपश्चिता ॥
पराञ्चीति तथा शास्त्रं न दृष्टेरिति च स्फुटम् ॥ १७२८ ॥
विदिताविदिताभ्यां नो व्युत्थाप्य ब्रह्म चाब्रवीत् ॥
नातो वस्त्वन्तरं ज्ञेयं तदन्यस्य निषेधतः ॥ १७२९ ॥

आत्मनो विषयज्ञानाविषयत्वे मानमाह । श्रुतीति । अन्यदेव तद्विदितादिति श्रुतेः । जगतस्तर्हि मेयत्वमन्यथा विदितादित्यनुवादायोगादित्याशङ्क्याऽऽह । नात इति । ब्रह्मणः सकाशाद्वस्त्वन्तरं न मानग्राह्यमित्यत्र हेतुः । तदन्यस्येति । अस्थूलादिवाक्यैरनात्मनो निषेधाद्भ्रान्तिदृष्टत्वमात्रं विदितश्रुतेरित्यर्थः[1] ॥१७२८॥१७२९॥

मनुते मनसा यन्न येनाऽऽहुस्तन्मनो मतम् ॥
ब्रह्म विद्धि तदेव त्वं न त्विदं यदुपासते ॥ १७३० ॥
यतो वाचो निवर्तन्ते नेति नेतीति चापरम् ॥
इति स्पष्टं वचो मानं कुतो हेतोरुपेक्ष्यते ॥ १७३१ ॥

प्रतीचो विषयज्ञानाग्राह्यत्वे वाक्यान्तरमाह । मनुत इत्यादिना । यथोक्तं वाक्यं यजमानप्रस्तरादिवाक्यवदनादरणीयमित्याशङ्क्याऽऽह । इति स्पष्टमिति । न हि प्रकृते प्रमाणविरोधस्तदयोग्यत्वादुक्तश्रुत्यर्थस्येति भावः ॥ १७३० ॥ १७३१ ॥

द्रष्टुः प्रतीचि यत्साक्षात्प्रत्यग्दृष्ट्याऽवसीयते ॥
दृष्ट्यादिजन्मनाशादिसाक्ष्यभेदात्मकं स्वतः ॥ १७३२ ॥

तर्हि निषेधश्रुतेर्जगतोऽभावनिष्ठत्वान्माध्यमिकमतापातो नेत्याह । द्रष्टुरिति । मातुरपि प्रत्यक्त्वेन स्थिते चिदात्मन्यधिष्ठाने यद्दृष्टिश्रुत्यादि तज्जन्मनाशादिवत्साक्ष्यतया यत्स्थितं विशेषजातं साक्षाद्दृश्यते तत्सर्वं निषेधश्रुत्या निषिध्यमानं स्वतः प्रत्यग्भूतकूटस्थदृष्टिमात्रत्वेनावसीयते तन्न जगतोऽभावनिष्ठतेत्यर्थः ॥ १७३२ ॥

तदेतदिति मानेन तत्त्वमस्यादिना तथा ॥
ब्रह्मेति बोध्यते साक्षात्तत्तमोध्वस्तिवर्त्मना[2] ॥ १७३३ ॥

---

१ क. घ. °तेरर्थः । २ क. ख. °मानः प्र° ।

प्रतीचो वेद्यत्वनिषेधे तत्त्वमादिवाक्यविषयत्वस्याप्यभावादौपनिषदत्वव्याहतिरित्याशङ्क्याऽऽह । **तदेतदिति** । ऐक्यमितिना परामृश्यते । तदीयः साक्षात्कारः साक्षादित्युच्यते । तेन प्रतीचः स्वाज्ञानतज्जनिरासद्वारा ब्रह्मैक्ये पर्यवस्यद्वाक्यजातं तद्विषयीकारमन्तरेण मानमित्यर्थः ॥ १७३३ ॥

**ब्रह्मात्माऽऽत्मानमेवावेदहं ब्रह्मेति च श्रुतेः ॥**
**प्रत्यग्दृष्ट्यैव तद्ब्रह्म दृश्यते न पराग्धिया ॥ १७३४ ॥**

अथ तत्र विषयतयैव किमिति वाक्यानि ज्ञानं न जनयन्ति तत्राऽऽह । **ब्रह्मेति** । तस्यास्तात्पर्यमाह । **प्रत्यगिति** । तद्धि वाक्योत्थया दृष्ट्या प्रत्यक्त्वेनाविषयतयैव स्फुरति न तु तया पराग्भावेन दृश्यत इति योजना ॥ १७३४ ॥

**घटोऽत्रास्तीति वाक्येऽस्मिन्को न्वर्थः संप्रतीयते ॥**
**मेयोऽनधिगतस्तावत्स्वानुभूत्यैकसिद्धिकः ॥ १७३५ ॥**

प्रत्यक्चिदेकतानं ब्रह्म वाक्यीयधिया स्फुरतीत्ययुक्तं तथाविधे वस्तुन्यसंप्रतिपत्तेरित्याशङ्क्य विमृशति । **घट इति** । विमर्शफलमाह । **मेय इति** । न तावद्घटोऽस्तीत्यादिवाक्ये ज्ञातो विषयो वाक्यवैयर्थ्यादतोऽज्ञातोऽनुभवमात्रसिद्धः स[1] वाच्यस्तथाच प्रत्यगात्मा चिदेकतानो ज्ञाताज्ञातसाक्षी न शक्योऽपह्नोतुमित्यर्थः ॥ १७३५ ॥

**मात्रादिजन्मनः प्राक्च नानुभूत्यतिरेकतः ॥**
**द्रष्टृदर्शनदृश्यादिवस्त्वन्यदवसीयते ॥ १७३६ ॥**

तत्रैव हेत्वन्तरमाह । **मात्रादीति** ॥ १७३६ ॥

**मातृमानप्रमेयादेरन्योन्यव्यभिचारतः[2] ॥**
**अनन्यानुभवात्प्रत्यक्संविदव्यभिचारिणी ॥ १७३७ ॥**

प्रागनुभूतिव्यतिरेकेण द्रष्ट्रादेर्न दृष्टिरिति विशेषणान्मात्राद्युत्पत्तेरूर्ध्वमनुभूतेरर्थान्तरत्वेनापि द्रष्ट्रादि द्रष्टुं शक्यमित्याशङ्क्याऽऽह । **मात्रिति** ॥ १७३७ ॥

**संविदो व्यतिरेकेण वस्तु यद्यत्प्रसाध्यते ॥**
**रज्जुसर्पादिवत्तत्तन्नैति संभावनामपि ॥ १७३८ ॥**

व्यभिचाराव्यभिचारव्यवस्थायां फलितमाह । **संविद इति** ॥ १७३८ ॥

**संविद्देशादिभेदेन वस्तु चेत्साध्यतेऽन्यतः ॥**
**घटो नास्तीति चान्यद्वा संगतिर्नानयोर्मितेः ॥ १७३९ ॥**

मात्राद्यधिष्ठानसंविदतिरेकेण रज्जुसर्पवन्नास्तीत्युक्तं समर्थयते । **संविदिति** । संविदो देशकालादिभेदेन मात्रादि भिन्नत्वेन साध्यते चेत्तस्य सत्त्वमसत्त्वं वा न स्वतो जाड्या-

---

१ ख. स च वा° । २ क. ग. °चारितः ।

त्रापि संविदा प्रामाणिकसंबन्धाभावादतो रज्ज्वां सर्पवत्कल्पितं संविदि तत्तन्मात्रमित्यर्थः ॥ १७३९ ॥

उपलब्धोऽस्ति सन्कुम्भो लम्बोष्ठो देशकालवान् ॥
पूर्वपूर्वातिरेकेण नोत्तरोऽर्थोऽनुभूयते ॥ १७४० ॥

मात्रादेः संविन्मात्रत्वे प्रत्यक्षं प्रमाणयति । उपलब्धोऽस्तीति ॥ १७४० ॥

कर्त्रादिव्यापृतेः पूर्वं संवित्संवित्तिमात्रतः ॥
अविभागादनाख्येयं तदुद्भूत्या फलायते ॥ १७४१ ॥

संविदो मानफलत्वेन कार्यत्वात्कथं तत्कल्पनाधिष्ठानतेत्याशङ्क्याऽऽह । कर्त्रादीति । मात्रादिव्यापारात्प्रागवस्थायां मानमेयादिविभागाभावादेषा संवित्फलाद्याख्याविकला तद्व्यापारोत्पत्त्या फलादिवदाचरत्यतस्तत्सद्भावस्य सदाऽविशेषादकार्यभूता सा भवत्येव सर्वाधिष्ठानमित्यर्थः ॥ १७४१ ॥

अक्रियेऽपि यथा व्योम्नि ह्युद्भूतिस्थितिहानिभिः ॥
जगन्नर्नर्ति मय्येवं कार्यकारणवस्त्विदम् ॥ १७४२ ॥

रज्ज्वादौ सक्रिये सर्पादिसमारोपदर्शनादक्रिये संविदात्मनि कथं जगदध्यासस्तत्राऽऽह । अक्रियेऽपीति । अवकाशाभावे जगतो न काऽपि विक्रियेतिप्रसिद्ध्यर्थो हिशब्दः ॥ १७४२ ॥

नन्वघटार्थावपह्नुत्य संवित्सद्रूपमात्रया ॥
अवगत्यात्मना सत्त्वमवाक्यार्थत्वमश्नुते ॥ १७४३ ॥

आकाशवत्तर्हि कल्पनाधिष्ठानत्वाज्जाड्यं प्रतीचः स्यादित्याशङ्क्याऽऽह । नन्विति । संविद्धि भावाभावौ सन्मात्रत्वेन तदप्यवगतिमात्रतयोपसंहृत्याखण्डैकरसानुभूतिमात्रत्वेन तिष्ठतीत्यर्थः ॥ १७४३ ॥

दिग्विभागोऽविभागेऽपि व्योम्नि यद्वत्प्रकल्पितः ॥
प्रध्वस्ताशेषभेदेऽपि मयि भिन्नधियस्तथा ॥ १७४४ ॥

तथाऽप्यधिष्ठानत्वे रज्ज्वादिवत्परिच्छिन्नतेत्याशङ्क्याऽऽह । दिगिति ॥ १७४४ ॥

स्वप्नभबुद्धिर्नष्टेऽपि स्वप्न आभाति जागरे ॥
यथैवं मोहजं द्वैतं नष्टे मोहेऽपि सांप्रतम् ॥ १७४५ ॥

संविदि सर्वस्याविद्याध्यासे ध्वस्ताविद्यस्य विदुषो द्वैतभानासिद्धिरित्याशङ्क्याऽऽह । स्वप्नेति । विदुषो द्वैतदृष्टिरविद्यालेशादित्यसकृदुक्तमिति भावः ॥ १७४५ ॥

आगमादन्यतो मानाद्भिन्नाभिन्नत्वमात्मनः ॥
यथोक्तेन प्रकारेण न मनागपि गम्यते ॥ १७४६ ॥

---

१ क. तन्मा° । २ ख. °स्येया त° ।

भेदाभेदानुमानस्यानुत्थानमुपपादितमुपसंहरति । आगमादिति ॥ १७४६ ॥

मानान्तराच्च यत्प्राप्तं मानत्वं तत्र च श्रुतेः ॥
न कथंचन संभाव्यमनुवादत्वकारणात् ॥ १७४७ ॥

आगमात्तर्हि भिन्नाभिन्नत्वमात्मनो गम्यतामित्याशङ्क्य तत्किं मानान्तरस्यापि विषयः किंवाऽऽगमस्यैवेति विकल्प्याऽऽद्यं प्रत्याह । मानान्तरादिति । आगमाद्य-थेत्याद्यचकारार्थः । मानान्तरस्यैवेति द्वितीयार्थः ॥ १७४७ ॥

प्रमान्तरानधिगते मानानां मानतेष्यते ॥
अग्निर्हिमस्य भेषजमिति चातोऽन्यथा भवेत् ॥ १७४८ ॥

अज्ञातार्थगन्तृ मानमितिलक्षणविरोधाच्च न प्रतीतेऽर्थे श्रुतेर्मानतेत्याह । प्रमान्त-रेति । विपक्षे दोषमाह । अग्निरिति ॥ १७४८ ॥

प्रमान्तरविरुद्धं च मातुं नोत्सहते श्रुतिः ॥
स्वगोचरेश्वरं मानं न मानान्तरगोचरे ॥ १७४९ ॥

द्वितीयेऽपि सृष्ट्यादिश्रुतिर्वा यद्वै तदित्यादिश्रुतिर्वा[2] यथोक्तं बोधयतीति विक-ल्प्याऽऽद्यं दूषयति । प्रमान्तरेति । अस्थूलादिवाक्यविरुद्धमात्मनो भिन्नाभिन्नत्वं प्रमातुं सृष्ट्यादिश्रुतिर्न शक्नोति न हि प्रधानविरुद्धार्थमवान्तरवाक्यं साधयतीत्यर्थः । मानान्तरविरुद्धं न साधयतीत्यत्र हेतुमाह । स्वगोचरेति ॥ १७४९ ॥

श्रोत्रादिकरणानीव नातो गोचरसंकरः ॥
भिन्नाभिन्नप्रसिद्ध्यर्थं न चेयं श्रुतिरिष्यते ॥
यद्वै तदिति वचस इतोऽन्यार्थपरत्वतः ॥ १७५० ॥

मानानां स्वार्थशूरत्वे दृष्टान्तमाह । श्रोत्रादीति । स्वार्थेषु मानानामैश्वर्यात्तेषां व्यवस्थितार्थत्वान्न मानान्तरविरुद्धं श्रुतिर्गोचरयतीति फलितमाह । नात इति । कल्पान्तरं शङ्कित्वा प्रत्याह । भिन्नाभिन्नेति ॥ १७५० ॥

द्रष्ट्यादिभेदसिद्ध्यर्थं नेदं वचनमिष्यते ॥
भेदस्यातोऽन्यतः प्राप्तेर्न श्रुत्या तत्र यत्यते ॥ १७५१ ॥

भिन्नाभिन्नार्थादर्थान्तरत्वेऽपि तद्दृष्ट्यादिभेदरूपं स्वयं पदार्थान्तरमित्याशङ्क्याऽऽह । द्रष्ट्यादीति ॥ १७५१ ॥

किंतु चैतन्यमप्यस्य कामकर्मादिवद्भवेत् ॥
न स्वतोऽदर्शनात्प्राज्ञ इत्याशङ्क्यैतदीरितम् ॥ १७५२ ॥

भेदाभेदस्य भेदस्य वा न चेद्वाक्यं प्रतिपादकं तर्हि किं प्रतिपादयतीत्यत आह ।

---

१ क. ख. ग. °स्य भैषज्यमि° । २ घ. °दितिप्रकृतश्रु° ।

**किंत्विति** । वाक्यप्रतिपाद्यमाह । **चैतन्यमिति** । लोकप्रसिद्धदृष्ट्यादिभेदानुवादेन स्वापे दृष्टेरविनाशप्रतिपादकं वाक्यमित्यर्थः ॥ १७९२ ॥

**स्वप्नप्रबोधयोर्यद्वद्दृष्टिरस्याऽऽत्मनः स्वतः ॥**
**मात्रादिविक्रियाग्रामसाक्षिणी साऽविनश्वरी ॥ १७९३ ॥**

तत्र दृष्टेरनाशे दृष्टान्तमाह । **स्वप्नेति** । अविनश्वरीति च्छेदः ॥ १७९३ ॥

**प्राज्ञेऽपीयं तथैवाऽऽस्ते कूटस्थैकात्म्यलक्षणा ॥**
**भावाभावौ त्वविद्यादेर्विशेषः केवलस्त्विह ॥ १७९४ ॥**

दार्ष्टान्तिकमाह । **प्राज्ञेऽपीति** । तत्रापि दृष्टिरिष्टा चेज्जागरादेस्तस्य को विशेष इत्याशङ्क्याऽऽह । **भावेति** । तुशब्दोऽवधारणे । द्वितीयो विशेषान्तरव्यासेधार्थः । अवधारणार्थप्रकटीकरणार्थं केवलपदम् । इहेत्यवस्थात्रयोक्तिः ॥ १७९४ ॥

**कामाद्यशेषोपाधीनां निवृत्तौ न निवर्तते ॥**
**तन्निवृत्त्येकसाक्षित्वात्कामाद्यस्तित्वसाक्षिवत् ॥ १७९५ ॥**

स्वापे चैतन्यमपि कामादिवन्नश्यतीति शङ्का कथं समाहितेति तत्राऽऽह । **कामादीति** । सर्वत्र यथासंभवं तद्भावाभावसाक्षित्वेनाविनाशिन्यात्मदृष्टिरेष्टव्येत्यर्थः ॥ १७९५ ॥

**भावाभावार्थसाक्षित्वाद्भावाभावात्मिकेव[1] सा ॥**
**गृह्यतेऽविद्यया मूढैर्मणिः शुद्धो यथाऽऽश्रयैः[2] ॥ १७९६ ॥**

कथं तर्हि तत्र जन्मादिदृष्टिरित्याशङ्क्याऽऽह । **भावेति** । औपाधिकी जन्मादिदृष्टिरित्यत्र दृष्टान्तमाह । **मणिरिति** ॥ १७९६ ॥

**सत्यं ज्ञानमनन्तं च विज्ञानघनमित्यपि ॥**
**प्रज्ञानं ब्रह्म चेत्येवं ज्ञानमात्रात्मताऽऽत्मनः ॥ १७९७ ॥**

दृष्टेरविनाशित्वे श्रुत्यन्तरसंवादमाह । **सत्यमिति** ॥ १७९७ ॥

**दृष्टान्तश्च न नो नास्ति मण्यादेरिह संभवात् ॥**
**मणेर्नीलादिवद्भेदो दृष्ट्यादिप्रत्यगात्मनः ॥ १७९८ ॥**

सर्वस्य वस्तुनो भिन्नाभिन्नत्वादात्माऽपि वस्तुत्वात्तथेत्येतन्निरस्तं निरस्तं च तस्य श्रौतत्वम् । यत्तु परपक्षे न दृष्टान्त इति तत्र किमेकस्यानेकरूपमानं भ्रान्तमित्यत्र दृष्टान्ताभावः किंवा वस्त्वेकरूपमित्यत्रेति विकल्प्याऽऽद्यं दूषयति । **दृष्टान्तश्चेति** । इहेत्येकस्यानेकत्वदृष्टावित्यर्थः । द्वितीयपादार्थं प्रपञ्चयति । **मणेरिति** ॥ १७९८ ॥

**प्रतिज्ञाहेतुदृष्टान्ता भिन्नाभिन्नत्ववादिनः ॥**
**मिथो भिन्ना न सन्तीह भिन्नाभिन्नत्वमात्रतः ॥ १७९९ ॥**

---

1 ख. 'दृष्ट्याभावात्मकत्व' । २ क. 'त्मिकेव' ।

साध्यासंभवादिना वस्तुत्वानुमानानुत्थानं प्रागुक्तं संप्रति प्रकारान्तरेण तदनुत्थानमाह । **प्रतिज्ञेति** । परपक्षः सप्तम्यर्थः । अतस्तत्रैव दृष्टान्ताभावः ॥१७५९॥

**दृष्टान्तमात्रनास्तित्वं दोषोऽस्मास्विह चोद्यते ॥**
**दृष्टान्तोऽस्त्येव नः स्पष्टस्त्वन्मुखेनैव तद्ग्रहात् ॥ १७६० ॥**

द्वितीयं प्रत्याह । **दृष्टान्तेति** । इहेत्येकरूपवस्तूक्तिः । त्वत्पक्षे प्रतिज्ञादेरपि नास्तितेत्यतिशयो मात्रचा सूचितः । दृष्टान्तनास्तित्वमपि दूषणमिति चेत्तत्राऽऽह । **दृष्टान्तोऽस्तीति** । कथं तर्हि तदवगतिस्तत्राऽऽह । **त्वन्मुखेनेति** ॥ १७६० ॥

**भिन्नाभिन्नत्ववादेऽस्मिन्यो भिन्नो भवतोच्यते ॥**
**स एव नोऽस्तु दृष्टान्तो नातोऽन्यः प्रार्थ्यते मया ॥ १७६१ ॥**

को हि भेदाभेदवादिवाक्यवशादेव दृष्टो दृष्टान्तस्तत्राऽऽह । **भिन्नेति** ॥१७६१॥

**अवश्यमेव भिन्नार्थौ भिन्नाभिन्नरवाविमौ ॥**
**भवतैवाभ्युपेतव्यौ भिन्नाभिन्नत्वसिद्धये ॥ १७६२ ॥**

सर्वं भिन्नाभिन्नमिति वदता भेदाभेदयोरपि संकरस्वीकारादसंकीर्णभेदाभावात्कथं दृष्टान्तसिद्धिस्तत्राऽऽह । **अवश्यमिति** ॥ १७६२ ॥

**ऐकार्थ्यमेव चेदिष्टं भिन्नाभिन्नाभिधानयोः ॥**
**तवैव न स्याद्दृष्टान्तः सर्वस्यैकस्वरूपतः ॥ १७६३ ॥**

विपक्षे दोषमाह । **ऐकार्थ्यमिति** ॥ १७६३ ॥

**भिन्नाभिन्नत्ववचसा न चैकार्थोऽपि भण्यते ॥**
**भिन्नार्थप्रतिषेधत्वादभिन्नवचसस्तव ॥ १७६४ ॥**

किंच भिन्नाभिन्नशब्दयोराभिन्नार्थत्वशङ्कैवानवकाशेत्याह । **भिन्नेति** । तवेत्युपलक्षणं ममेत्यपि द्रष्टव्यम् ॥ १७६४ ॥

**गोभिधानाभिधेयार्थाद्यथेहाश्वगिरोच्यते ॥**
**भिन्नोऽर्थो भेदशब्दार्थान्न तथाऽभेदशब्दतः ॥ १७६५ ॥**

तयोर्भिन्नार्थत्वेऽपि भेदनिषेधो नाभेदः किंतु भेदादर्थान्तरं तथाच तयोरेकत्रोपपत्तिरित्याशङ्क्याऽऽह । **गोभिधानेति** । इहेति वृद्धव्यवहारोक्तिः । नञोऽभावे मुख्यत्वादित्यर्थः ॥ १७६५ ॥

**सर्वात्मकत्वसंप्राप्तावसाधारणवस्तुनः ॥**
**सर्वात्मत्वनिषेधार्थं प्रमाभावस्त्वयाऽऽश्रितः ॥ १७६६ ॥**

भेदाभेदशब्दयोर्भावाभावार्थत्वादेकविषयत्वाभावं वदता स्वपक्षे दृष्टान्त उक्तः । इदानीं भिन्नाभिन्नं सर्वमित्यत्र दोषान्तरमाह । **सर्वेति** । असाधारणस्य घटादिवस्तुनः सर्वेण पटादिना भिन्नाभिन्नत्वोपगमात्तस्य सर्वात्मत्वप्राप्ताविष्टमभावप्रमाणं नष्टं स्यादि-

त्यर्थः । कथमेतावता तन्नश्यति भेदमाश्रित्य तस्य सावकाशत्वादित्याशङ्क्याऽऽह । **सर्वात्मत्वेति** ॥ १७६६ ॥

**भिन्नाभिन्नत्ववाचेह तत्कृतं खातपूरितम् ॥**
**सर्वैः सर्वस्य चाभेदाद्व्यवहारोऽपि नश्यति ॥ १७६७ ॥**

न हि भेदाभेदवादे सर्वस्य सर्वात्मत्वं शक्यं निषेद्धुमन्यथा भिन्नाभिन्नत्वोक्त्ययोगादतस्त्वयैव प्रमाभावरूपमभावमानं गर्ते निपात्य पिहितमित्याह । **भिन्नेति** । परमते दोषान्तरमाह । **सर्वैरिति** ॥ १७६७ ॥

**एकैकं भेदतो वस्तु निःसंसर्गं परस्परम् ॥**
**एकमेव त्वभेदे स्यादसामान्यविशेषवत् ॥ १७६८ ॥**

कथं सर्वव्यवहारानुपपत्तिस्तत्राभेदकृतव्यवहाराभावमाह । **एकैकमिति** । भेदकृतस्तर्हि स निर्वहति नेत्याह । **एकमेवेति** । तथाचाप्रवृत्तिनिवृत्ति विश्वं स्यादिति भावः ॥ १७६८ ॥

**दृष्ट्यादिवचसां लोके प्रवृत्तेर्ज्ञान एव च ॥**
**दर्शनाज्ज्ञप्तिमात्रं स्यादर्थस्तेषां प्रसिद्धितः ॥ १७६९ ॥**

दृष्ट्यादीनां भिन्नाभिन्नत्वे भिन्नत्वे वा यद्वै तदित्यादेर्न तात्पर्यमिति ब्रुवता स्वपक्षे दृष्टान्तः परपक्षे तदभावश्चोक्तः । इदानीं तेषां भिन्नत्वाभावे हेत्वन्तरमाह । **दृष्ट्यादीति** । उक्तं हेतुं संक्षिप्याऽऽह । **प्रसिद्धित इति** ॥ १७६९ ॥

**पश्च श्रोत्रादिभिः साक्षाज्ज्ञानामीति समीक्ष्यते ॥**
**शब्दादीनिह लोकेऽतो दृष्ट्यादेर्ज्ञानवाच्यता ॥ १७७० ॥**

दृष्ट्यादिशब्दानां ज्ञानमात्रवाचित्वं प्रसिद्धमित्येतत्प्रकटयति । **पश्चेति** । दृष्ट्यादेस्तत्पदस्येति यावत् । ज्ञानमेव वाच्यं यस्य तस्य भावस्तत्तेति विग्रहः ॥ १७७० ॥

**येन रूपं रसं गन्धं शब्दान्स्पर्शांश्च मैथुनान् ॥**
**एतेनैव विजानातीत्यपि च श्रुतिशासनम् ॥ १७७१ ॥**

दृष्ट्यादीनां ज्ञानमात्रत्वे **काठकश्रुतिं** प्रमाणयति । **येनेति** । येनैतेन साक्षिचैतन्येन लोको रूपादीञ्जानाति तस्मिञ्ज्ञाते नावशिष्यते तज्ज्ञेयमिति वदद्वाक्यं दृष्ट्यादीनां ज्ञानमात्रत्वं श्रावयति जानातेः सर्वत्र प्रयोगादित्यर्थः ॥ १७७१ ॥

**लावकः पाचको वेति कारकस्य सतो यतः ॥**
**संभेदोऽयं क्रियाभिः स्यान्नातोऽकारकतान्वितः ॥ १७७२ ॥**

चक्षुरादिकरणाधीनो दर्शनादिक्रियाभेदोऽपि लोकसिद्धत्वान्न निरासमर्हतीत्या-

---

१ ख. पाठको । क. पावको । २ ख. स्वतो । ३ ग. 'ञ्जातः का' ।

शङ्क्य दृष्ट्यादिवाच्यार्थस्य साभासबुद्धिनिष्ठस्य भेदेऽपि लक्ष्यार्थस्याऽऽत्ममात्रतया न भेदोऽस्तीत्यभिप्रेत्याऽऽह । **लावक इति** ॥ १७७२ ॥

**गच्छतः पठतो भोक्तृस्नानाकर्मकृतो रविः ॥**
**यथा प्रकाशयत्येकरूप एव तथा धियः ॥ १७७३ ॥**

दृष्ट्यादेरीक्षितृत्वादात्मनोऽकारकत्वमसिद्धमित्याशङ्क्याऽऽह । **गच्छत इति** । धियो वीक्षत इति संबन्धः ॥ १७७३ ॥

**दृष्ट्यादिभिन्नचेष्टास्ता भिन्नदेशादिलक्षणाः ॥**
**एकरूपं परं ज्योतिरेकं सद्वीक्षते धियः ॥ १७७४ ॥**

दार्ष्टान्तिकं प्रपञ्चयति । **दृष्ट्यादीति** । देशशब्देन चक्षुराद्युक्तिः । आदिशब्दस्तु कालविषयः । लक्षणशब्दो निमित्तपरः ॥ १७७४ ॥

**किंज्योतिरित्युपक्रम्य यत्नेन महताऽऽदरात् ॥**
**अर्थोऽयमेव निर्णीतस्तद्विरुद्धं किमुच्यते ॥ १७७५ ॥**

किंच कूटस्थमेकरसं ज्योतिरात्मेति प्रतिपाद्य तस्य दृष्ट्यादिक्रियावत्त्वोक्तौ पूर्वापरविरोधः स्यादित्याह । **किमिति** । परपक्षनिरासद्वारा स्वपक्षसाधनं यत्नस्तस्य महत्त्वं साधनदूषणयोर्विवृतत्वमादरो दृष्टान्तोक्तिः ॥ १७७५ ॥

**मोहोत्थोपाधिसंबन्धादभिन्नोऽपि स्वतोदृशिः ॥**
**द्रष्टा श्रोतेति नानात्वं याति यद्वदलक्तकम् ॥ १७७६ ॥**

आत्मा कूटस्थदृष्टिश्चेत्कथं तस्य द्रष्टा श्रोतेत्यादिनानात्वदृष्टिरित्याशङ्क्याऽऽह । **मोहेति** । यथा स्वच्छस्वभावः स्फटिकमणिरलक्तकमुपाध्यन्तरं वा संनिहितमपेक्ष्य लोहिताद्यनेकरूपतामेति तथेत्याह । **यद्वदिति** ॥ १७७६ ॥

**रक्तादिभेदतो भेदः प्रकाशस्य प्रकाश्यतः ॥**
**यथैवमात्मनो भेदो ज्योतिष्ट्वाद्भास्यभेदतः ॥ १७७७ ॥**

स्फटिकादेरप्रकाशस्योपाधितोऽन्यथा प्रथनेऽपि कथं प्रकाशात्मनोऽन्याधीनतयाऽन्यथा प्रथेत्याशङ्क्याऽऽह । **रक्तादीति** । यथा प्रदीपादिप्रकाशस्य प्रकाश्यरक्तादिभेदवशात्तद्भेदो भाति तथाऽऽत्मनो ज्योतिष्ट्वविशेषाद्भास्यद्रष्टव्यादिभेदवशाद्द्रष्टेत्यादिनानात्वं सिद्धमित्यर्थः ॥ १७७७ ॥

**निरंशेषु न चाप्येवं सभागेष्विव वस्तुषु ॥**
**भिन्नाभिन्नात्मता शक्या कर्तुं साक्षादपीश्वरैः ॥ १७७८ ॥**

दृष्ट्यादीनां द्रष्टुर्भिन्नाभिन्नत्वं मिथश्च भिन्नतेत्येतन्निरस्तमधुना स्थूलेषु यद्वदित्यादिनोक्तं निरस्यति । **निरंशेष्विति** ॥ १७७८ ॥

न चापीह निरंशेषु भिन्नाभिन्नत्वकल्पने ॥
दृष्टान्तः कश्चिदप्यस्ति जगत्यस्मिंश्चराचरे ॥ १७७९ ॥

तत्र दृष्टान्ताभावं हेतुमाह । न चेति । गोत्वादेः साध्यतुल्यत्वमप्यर्थः ॥१७७९॥

दृगादिशक्तिभेदानां चक्षूरूपादिभेदतः ॥
विकारकल्पनैतेन न्यायेनाऽऽत्मन्यपाकृता ॥ १७८० ॥

आत्मनि दृष्ट्यादीनां भिन्नाभिन्नत्वनिरासिन्यायेनैव दृगादिशक्तिश्चक्षुरादिना रूपादिना च परिणमत इति कल्पनाऽपि निरस्तेत्याह । दृगादीति ॥ १७८० ॥

कार्यलिङ्गाद्धि शक्तीनामस्तित्वं कारणत्वतः ॥
यतोऽवगम्यते नातोऽकारके शक्तिरात्मनि ॥ १७८१ ॥

किंचाऽऽत्मनि शक्तिरेव नास्ति मानाभावादित्याह । कार्येति । कार्यमेव लिङ्गं तद्गम्यं[1] तासामस्तित्वमित्यत्र हेतुमाह । कारणत्वत इति । शक्तिमत्कारणं तच्च कार्यलिङ्गं तथाच विशेषणत्वेन शक्तिमत्त्वमपि तल्लिङ्गमित्यर्थः ॥ १७८१ ॥

शक्तिशक्तिमतोरैक्यं तयोर्भेदान्न युक्तितः ॥
प्रतिपत्तुं क्वचिच्छक्यं प्रकृतिप्रत्ययार्थयोः ॥ १७८२ ॥

आत्मन्यकारकत्वादेव शक्तिर्नास्ति चेत्प्रधानादावेव जगज्जन्मादिशक्तिरस्तु तत्कारकत्वादित्याशङ्क्य प्रकृतिप्रत्ययार्थयोः शक्तिशक्तिमतोरभेदो भेदो वेति विकल्प्याऽऽद्ये दोषमाह । शक्तीति । न च तयोर्भेदप्रतीतौ स एवास्तु हिमवद्विन्ध्ययोरिव शक्तितद्वद्भावायोगादिति द्रष्टव्यम् ॥ १७८२ ॥

प्रकृत्यर्थेऽथवाऽयं स्यान्मतुब्वद्वा ततोऽन्यतः ॥
पक्षासिद्धिर्हि पूर्वस्मिन्भेदान्नैक्यं तथोत्तरे ॥ १७८३ ॥

उक्तमर्थं स्फोरयितुं शक्तिमानित्यत्र मतुबर्थं विकल्पयति । प्रकृतीति । प्रकृत्यर्थः शक्तिरेव मत्वर्थश्चेच्छक्तिमत्कारणमितिपक्षासिद्धिरित्याद्यं दूषयति । पक्षेति । शक्तेरेव कारणत्वप्रसङ्गात्तस्याश्चाऽऽश्रयविषयव्यतिरेकेणायोगादिति हिशब्दार्थः । प्रकृत्यर्थाच्छक्तेरर्थान्तरे मतुबर्थे शक्तितद्वतोर्भेदात्तयोरैक्यं विवक्षितं न सिध्येन्न च तयोर्भिन्नतैव शक्तितद्वद्भावायोगादिति कल्पान्तरं निरस्यति । भेदादिति ॥ १७८३ ॥

आत्माविद्यैव नः शक्तिः सर्वशक्यस्य सर्जने ॥
नातोऽन्यथा शक्तिवादः प्रमाणेनावसीयते ॥ १७८४ ॥

ननु भेदाभेदविकल्पाभ्यां शक्तिवादो नापवादमर्हति त्वयाऽपि स्वशक्तेराश्रितत्वादित्याशङ्क्याऽऽह । आत्मेति ॥ १७८४ ॥

---

[1] घ. 'द्गम्यतां ता' ।

अशक्तं शक्तिमच्छक्त्या शक्तिः शक्तिमता तथा ॥
अशक्तेति कथं योगमन्योन्यं हेत्वसंभवात् ॥ १७८५ ॥

आत्मविद्यातिरिक्तशक्तिवादो न प्रमाणवानित्येतत्कथमिति तत्र किं शक्तिशक्तिमतोर्मिथः संबन्धे प्रत्येकं शक्तिरस्ति न वा द्वितीयं दूषयति । अशक्तमिति ॥ १७८५॥

शक्तयः सन्ति भूयस्यस्तयोरपि मतं यदि ॥
तत्रापि तुल्यचोद्यत्वादनवस्था प्रसज्यते ॥ १७८६ ॥

आद्यमनूद्य प्रत्याह । शक्तय इति । तत्रापि तत्तच्छक्तितद्वतोरपीत्यर्थः । तुल्यस्य चोद्यस्य सत्त्वं नाम तत्र तत्र शक्तिमत्त्वस्याऽऽवश्यकत्वम् ॥ १७८६ ॥

तस्मादज्ञात आत्मैव शक्तिरित्यभिधीयते ॥
आकाशादेस्ततो जन्म यस्माच्छ्रुत्याऽभिधीयते ॥ १७८७ ॥

परपक्षं निराकृत्य स्वपक्षमुपसंहरति । तस्मादिति । तत्र मानमाह । आकाशादेरिति । कारणं हि शक्तिमदिष्टमन्यथाऽतिप्रसङ्गादज्ञातश्चाऽऽत्मा विश्वस्य कारणं श्रूयते तस्मादात्माज्ञानमेव शक्तिरित्यर्थः ॥ १७८७ ॥

नन्वेवं चेत्स्वभावोऽस्य निर्विभागैकदृष्टिता ॥
अथ स्वभावसंत्यागे को हेतुरिति भण्यताम् ॥ १७८८ ॥

यद्वै तन्न पश्यतीत्यादिवाक्यं कूटस्थनिर्विशेषप्रत्यगात्मपरं व्याख्यातमधुना यत्र वा अन्यदित्याद्यवतारयितुं चोदयति । नन्विति । किमात्मनो निर्विशेषदृष्टिः स्वभावः किंवा विशेषज्ञानमिति विकल्प्याऽऽद्यमनूद्य जागरादौ विशेषज्ञानायोगं दोषमाह । एवं चेदिति ॥ १७८८ ॥

विशेषज्ञानमेवास्य स्वभावो वाऽभ्युपेयते ॥
सुषुप्ते तत्परित्यागः कस्मादित्यभिधीयते ॥ १७८९ ॥

द्वितीयमनुभाष्य सुषुप्तेऽपि विशेषज्ञानप्राप्तिदोषमाह । विशेषेति । एतदुत्तरत्वेनोत्तरवाक्यमवतारयति । अभिधीयत इति ॥ १७८९ ॥

जाग्रत्स्वप्नप्रपञ्चेऽस्मिन्नात्माविद्यैकहेतुके ॥
अनन्योऽपि स्वतो यत्र मोहादन्य इवेक्ष्यते ॥ १७९० ॥
तत्रान्यः कारको द्रष्टा तथाऽन्येनैव चक्षुषा ॥
दृश्यमन्यदविद्योत्थं पश्येत्स्वप्ने यथा तथा ॥ १७९१ ॥

तस्यार्थमाह । जाग्रदिति । यस्यामविद्यादशायां तत्कृते जागरितादौ सति स्वतोऽद्वितीयोऽप्यात्मा मोहतः सद्वितीयवदुपलभ्यते तत्र कर्त्रादिविभागी स भवतीत्यर्थः ।

१ ख. घ. 'भागभागी ।

स्वतोऽद्वयस्याप्यविद्यया सद्वयवद्दृष्टिं दृष्टान्तेन स्पष्टयति । स्वप्न इति ॥ १७९० ॥
॥ १७९१ ॥

विशेषदर्शने यस्मादविद्यैवास्य कारणम् ॥
अतस्तस्यां निवृत्तायां कृत्स्नो भेदो निवर्तते ॥ १७९२ ॥

आविद्यं द्वैतदर्शनमित्यङ्गीकारफलमाह । विशेषेति ॥ १७९२ ॥

छान्दोग्योपनिषद्वाक्यं तथा च सति युक्तिमत् ॥
यत्र नान्यदिति तथाचाऽऽत्मैवेत्युपसंहृतेः ॥ १७९३ ॥

द्वैतदर्शनमाविद्यमित्यत्रैव श्रुत्यन्तरं संवादयति । छान्दोग्येति । षष्ठादौ सदेवेत्युपक्रम्य सप्तमसमाप्तावात्मैवेत्युपसंहारादात्माद्वयत्वमुपक्रमोपसंहारैकरूप्यात्प्रतीतमतश्च द्वैतदृष्टिरविद्याकृतेत्याह । तथाचेति ॥ १७९३ ॥

मैत्रेयीब्राह्मणे चैतद्व्याख्यातं वाक्यमादरात् ॥
यतो भूयो न तद्व्याख्या क्रियतेऽत्र ततोऽधुना ॥ १७९४ ॥

यत्रेत्यादिवाक्यस्य व्याख्यासंक्षेपे हेतूक्तिपूर्वकं तद्व्याख्यामुपसंहरति । मैत्रेयीति ॥ १७९४ ॥

यद्वै तदित्युपक्रम्य व्याख्यातं वस्तु विस्तरात् ॥
सलिलादिगिरा तस्य क्रियतेऽत्रोपसंहृतिः ॥ १७९५ ॥

सलिलादिवाक्यं तात्पर्योक्तिपूर्वकमादत्ते । यदिति ॥ १७९५ ॥

अविद्यैव यतो हेतुः कार्यकारणतां प्रति ॥
सम्यग्ज्ञानादतस्तस्यां ध्वस्तायामात्ममात्रता ॥ १७९६ ॥

सलिलपदार्थोक्त्यर्थं पातनिकां करोति । अविद्येति॥ १७९६ ॥

नाविद्यामनुपादाय प्रतीचोऽनात्मसंगतिः ॥
यतो विध्वंसने तस्या नाऽऽत्मनोऽन्योऽवशिष्यते ॥ १७९७ ॥

सर्वस्याऽऽत्ममात्रत्वं प्रपञ्चयति । नेत्यादिना ॥ १७९७ ॥

स्वतोऽवबोधमात्रत्वात्कुतोऽविद्यादिसंप्लुतिः ॥
तस्मात्सलिलवच्छुद्धः कार्यकारणहानतः ॥ १७९८ ॥

आत्मनः स्वाविद्यां विनाऽनात्मासंबन्धे हेतुमाह । स्वत इति । सर्वस्याऽऽविद्यस्य विद्यया ध्वस्तावात्ममात्रत्वपरिशेषे फलितं सलिलपदार्थमाह । तस्मादिति ॥१७९८॥

अन्तरेणापि संबन्धं कार्यकारणवस्तुनः ॥
स्वतोऽनेकात्मकं तत्स्यादित्याशङ्क्यैक उच्यते ॥ १७९९ ॥

एकशब्दमाशङ्कोत्तरत्वेनोत्थापयति । अन्तरेणेति ॥ १७९९ ॥

---

१ क. ख. अतो । २ क. ग. °स्तुना । स्व° ।

न कपित्थादिवत्तत्त्वं स्वतोऽनेकस्वभावकम् ॥
उक्त्वा सलिलवत्तस्मादेक इत्यब्रवीच्छ्रुतिः ॥ १८०० ॥

तस्यार्थमाह । **नेत्यादिना** । सलिलपदादात्मानं शुद्धमुक्त्वा पुनरेकपदं प्रयुञ्जाना श्रुतिरैकरस्यं तस्य विवक्षत्यन्यथा विशेषणवैयर्थ्यादित्यर्थः ॥ १८०० ॥

सजातीयनिषेधो वा ह्येकशब्देन भण्यते ॥
सलिलोक्त्या विजातीयसंबन्धो हि निवारितः ॥ १८०१ ॥

एकशब्दस्यार्थान्तरमाह । **सजातीयेति** । तत्रापि तच्छब्दस्य सामर्थ्यमस्तीति-द्योतनार्थो हिशब्दः । एकपदे सर्वभेदनिवारके संभवति किं सजातीयाविशेषणेनेत्या-शङ्क्य सलिलशब्दस्यार्थान्तरमाश्रित्याऽऽह । **सलिलेति** । सर्वं सलिलाद्यात्ममात्र-मिति निर्देशादनात्मभेदस्य निषिद्धत्वादेकपदमात्मभेदनिरासार्थमित्यर्थः ॥ १८०१ ॥

एकशब्दो न संख्यार्थः संख्येयासंभवादिह ॥
अद्वितीयार्थतैवातो द्वितीयार्थनिषेधतः ॥ १८०२ ॥

एकशब्दस्य संख्यावाचिनो गुणगुणिसंबन्धपरत्वान्न विवक्षितार्थतेत्याशङ्क्याऽऽह । **एकेति** । इहेत्यात्मोक्तिः । न हि तास्मिन्नेकत्वं गुणो निर्गुणत्वश्रुतेरित्यर्थः । संख्यावा-चित्वासंभवे सिद्धमाह । **अद्वितीयेति** ॥ १८०२ ॥

सदेवेत्यादिना चास्य तथा सत्यविरुद्धता ॥ १८०३ ॥
प्रत्यङ्मात्रावसायित्वं प्रत्यग्दृष्टेर्यतस्ततः ॥
अकारकस्वभावत्वादद्रष्टेत्यभिधीयते ॥ १८०४ ॥

एकशब्दस्य वृद्धव्यवहारे संख्यावाचित्वप्रसिद्धेर्नाद्वितीयार्थतेत्याशङ्क्य श्रुत्यन्तर-विरोधान्मैवमित्याह । **सदिति** । तथा सत्येकपदस्याद्वयार्थत्वे सतीति यावत् । अका-रकत्वे हेतूक्तिपूर्वकमद्रष्टेत्यस्यार्थमाह । **प्रत्यगिति** ॥ १८०३ ॥ १८०४ ॥

यत्र हि द्वैतमित्युक्तेर्यत्र त्वस्येति चेरणात् ॥
स्वतः पूर्णात्मकं ज्योतिरद्रष्टेत्यभिधीयते ॥ १८०५ ॥

द्रष्टेति पदच्छेदमाशङ्क्य दूषयति । **यत्रेति** ॥ १८०५ ॥

यस्मादेवमतोऽद्वैतोऽविद्यातत्कार्यलङ्घनात् ॥
न ह्यविद्यादिविरहे द्वैतधीरुपपद्यते ॥ १८०६ ॥

सजातीयविजातीयभेदविरही कूटस्थो यस्मादात्मा तस्मादसौ स्वगतभेदशून्य इत्यद्वै-तपदार्थमाह । **यस्मादिति** । अविद्यातज्जाभावेऽपि स्वगतभेदभानं किं न स्यादित्या-शङ्क्याऽऽह । **न हीति** । हेत्वभावे फलाभावस्य प्रसिद्धत्वादिति भावः ॥ १८०६ ॥

द्विधेतं द्वीतमित्याहुस्तद्भावो द्वैतमुच्यते ॥
तन्निषेधेन चाद्वैतं प्रत्यग्वस्त्वभिधीयते ॥ १८०७ ॥

ननु नञर्थे त्रैविध्यादन्यतमनिर्धारणादृते कथमद्वैतं निर्धार्येतेत्याशङ्क्याद्वैतशब्दस्यावयवशोऽर्थमाह। द्विधेति। अभावावसानत्वमद्वैतस्य व्यावर्तयति। प्रत्यगिति॥१८०७॥

द्विधा त्रिधा वा बहुधा कारणं सद्भवेदिह ॥
तस्याऽऽत्मनि निषिद्धत्वादात्माऽद्वैतो भवेत्ततः ॥ १८०८ ॥

कथं द्वैतनिषेधवत्त्वसिद्धिस्तत्राऽऽह । द्विधेत्यादिना । इह चेदात्मनि द्वैतकारणमनिषिद्धं तदा तस्मिन्बहुप्रकारद्वैतं स्यात्तस्य च कारणस्यात्यन्ताद्वैतपदेन निषिद्धत्वादात्यन्तिकद्वैतनिषेधसंभवादद्वैतो भवेदात्मेति योजना ॥ १८०८ ॥

भेदसंसर्गहानार्थमेवंयत्नामपि श्रुतिम् ॥
अनादृत्यान्यथा प्राहुरहो विद्या महीयसी ॥ १८०९ ॥

सलिलादिवाक्यादैकरस्यमात्मनो निर्धार्य भिन्नाभिन्नत्ववादिनां तद्वाक्यविरोधमाह । भेदेति ॥ १८०९ ॥

मिथो विभागसंसिद्धिर्धर्माणां नाऽऽत्मसंश्रयात् ॥
धर्मधर्म्यभिसंबन्धो दृश्यत्वाद्द्रष्ट्रपेक्षया ॥ १८१० ॥

श्रुतिमवधीर्याऽऽत्मनो भिन्नाभिन्नत्ववादिनां विद्या महतीत्युपहसता तेषामज्ञत्वं प्रतिज्ञातमिदानीं तत्साधकन्यायमाह । मिथ इति । द्रष्ट्रादिधर्माणामात्माश्रयत्वे ततो भेदस्य दुर्वचत्वान्मिथोऽपि तेषां भेदासिद्धिस्तत्राऽऽत्मधर्मतेत्यर्थः । द्रष्ट्रादीनामात्मनो न भिन्नत्वं नाप्यभिन्नत्वं धर्मधर्मित्वायोगात्किंतु भिन्नाभिन्नत्वं तत्सिद्धेरित्याशङ्क्याऽऽह । धर्मेति । द्रष्ट्रपेक्षया दृश्यत्वादेव रूपघटादिषु धर्मधर्मिसंबन्धो दृष्टो न चाऽऽत्मधर्माणां तद्दृश्यत्वमात्मनोऽपि तत्प्रसङ्गान्न च स्वेनैव स्वस्य दृश्यत्वं न च द्रष्ट्रन्तरमतो द्रष्ट्रादीनां नाऽऽत्मधर्मतेति भावः ॥ १८१० ॥

द्रष्टा सलिलवच्छुद्धो निःसङ्गैकाद्वयस्तथा ॥
श्रुत्युक्तोऽतो विरुद्धोऽर्थो निर्ह्रीकैरिह वर्ण्यते ॥ १८११ ॥

सलिलादिवाक्यार्थमनुवदन्भेदाभेदवादिनां तद्विरोधमुपसंहरति । द्रष्टेति । अर्थशब्दो भिन्नाभिन्नत्वविषयः । इहेत्यात्मोच्यते ॥ १८११ ॥

तमोंशत्वं यथा भानोः सतश्चाप्यसदंशता ॥
वियतो मूर्ततैवं स्याद्भिन्नाभिन्नत्वमात्मनः ॥ १८१२ ॥

आत्मनो भिन्नाभिन्नत्वस्य श्रुतिन्यायविरोधमुक्त्वा तदसंभवं दृष्टान्तैर्निगमयति । तम इति ॥ १८१२ ॥

अत ऊर्ध्वं विमोक्षायेत्युक्तं प्राग्यत्पुनः पुनः ॥
तद्विमुक्तः समाप्तत्वादेष इत्यभ्यधान्मुनिः ॥ १८१३ ॥

---

१ ख. च । २ क. 'णं तद्भ' ।

एष ब्रह्मलोक इत्यादिवाक्यस्थमेषशब्दमादत्ते । **अत इति** । उक्तं पृष्टमिति यावत् । आत्मा संनिहितत्वादेषशब्दवाच्यः ॥ १८१३ ॥

**प्रत्यग्दृष्ट्यव्यवहितेः प्रात्यक्ष्यादात्मवस्तुनः ॥**
**एष इत्यात्मनिर्देशो यत्साक्षादिति च श्रुतिः ॥ १८१४ ॥**

न च तस्यानिदमाकारस्य शास्त्रैकगम्यस्यैतच्छब्दार्हतेत्याशङ्कयाऽऽह । **प्रत्यगिति** । तदव्यवहितत्वं तदात्मत्वं ततश्च प्रत्यक्षत्वादेषशब्दार्हत्वमात्मनोऽस्तीत्यर्थः । आत्मनः प्रत्यक्षत्वे मानमाह । **यदिति** ॥ १८१४ ॥

**अव्यावृत्ताननुगतं निःसामान्यविशेषतः ॥**
**ब्रह्मेति मुख्यवृत्त्येह वस्तु श्रुत्याऽभिधीयते ॥ १८१५ ॥**

ब्रह्मशब्दार्थमाह । **अव्यावृत्तेति** । तत्र हेतुः । **निःसामान्येति** । अस्ति कमलासनादिविशेषवदपि ब्रह्मेति चेत्तत्राऽऽह । **मुख्येति** । इहेति ब्रह्मलोकशब्दनिर्देशः । अव्यावृत्ताननुगतं वस्तु ब्रह्मेति श्रुत्याऽभिधीयत इति संबन्धः ॥ १८१५ ॥

**तथा लोकयतेर्धातोर्दर्शनार्थत्वहेतुतः ॥**
**प्रकृतत्वात्तथा दृष्टेर्लोकनं लोक उच्यते ॥ १८१६ ॥**

लोकशब्दस्य भोगभूमिविषयत्वं प्रकरणादिना व्यावर्तयन्विवक्षितमाह । **तथेति** ॥ १८१६ ॥

**कर्मधारय एवातः समासोऽत्रोपपद्यते ॥**
**न तु षष्ठीसमासोऽत्र विभागस्याप्रसिद्धितः ॥ १८१७ ॥**

अवयवार्थमुक्त्वा ब्रह्मलोकशब्दस्य समासमाह । **कर्मेति** । ब्रह्मशब्देन तत्पदार्थस्य लोकशब्देन त्वंपदार्थस्य चोक्तरीत्याऽभिधानमतःशब्दार्थः । ननु निषादस्थपत्यधिकरणपूर्वपक्षन्यायेन समासान्तरे संभाविते कथं कर्मधारयो नियम्यते तत्राऽऽह । **न त्विति** । तत्र हि भेदमादाय समासान्तरं शङ्कितं न चात्र तत्त्वमर्थयोर्भेदे मानमस्ति तथाच तदीयसिद्धान्तन्यायेन कर्मधारय इत्यर्थः ॥ १८१७ ॥

**श्रुतं चैकविभक्तित्वं युक्तं नाश्रुतकल्पना ॥**
**कल्पनाहेत्वसद्भावे निराकाङ्क्षे तथा श्रुते ॥ १८१८ ॥**

तत्रैव युक्त्यन्तरमाह । **श्रुतं चेति** । अस्यार्थः । लोकशब्दस्य तावत्प्रथमान्तत्वं श्रुतं तेन समभिव्याहृतो ब्रह्मशब्दः समासान्तर्वर्ती लुप्तविभक्तिको विभक्तिमपेक्षते तथाच संनिहितलोकशब्दवशादस्यापि प्रथमान्तत्वं युक्तं कल्पकसद्भावाल्लाघवाच्च न त्वस्य षष्ठ्यन्तता कल्प्या तद्धेत्वभावाद्गौरवादश्रुतषष्ठीकल्पनायां प्रकरणविरोधाच्च

१ ख. श्रुतेः ।

तत्र हेतोरसत्त्वे ब्रह्मलोकशब्दे च श्रुते प्रथमयैव निराकाङ्क्षे सति न सा कल्प्येति षष्ठीकल्पनावच्चतुर्थ्यादिकल्पनाऽपि न युक्तेति ॥ १८१८ ॥

षष्ठ्यादिकल्पनाऽसाध्वी तस्मादत्रेति भण्यते ॥
सामानाधिकरण्यं च विशेषणविशेष्यता ॥ १८१९ ॥
लक्ष्यलक्षणसंबन्धो ब्रह्मलोकाभिधानयोः ॥
ब्रह्मेति चाऽऽत्मयाथात्म्यं लक्ष्यते नाभिधीयते ॥ १८२० ॥
तथा लोकगिरा ब्रह्मतत्त्वमात्मोपलक्ष्यते ॥
मुख्यमैकार्थ्यमेवं स्याद्ब्रह्मलोकपदार्थयोः ॥ १८२१ ॥

समासान्तरत्यागेन कर्मधारयस्यैव स्वीकार्यत्वमुपसंहरति । **षष्ठ्यादीति** । अत्र ब्रह्मलोकपदे षष्ठीचतुर्थ्यादिकल्पना न साध्वीति कृत्वा कर्मधारयो भण्यत इति योजना । समासं व्यवस्थाप्य वाक्यवृत्तिं व्याचष्टे । **सामानाधिकरण्यं चेति** । ब्रह्मलोकपदयोः सामानाधिकरण्यं तदर्थयोर्वाच्ययोर्विशेषणविशेष्यत्वं तयोरेव लक्ष्यवाच्ययोर्लक्ष्यलक्षणसंबन्धस्तत्त्वमसीतिवदित्यर्थः । ब्रह्मशब्देनानात्मनो लोकशब्देन चाब्रह्मणो लक्ष्यत्वान्नाखण्डार्थत्वमन्यथा पदान्तरवैयर्थ्यादित्याशङ्क्याऽऽह । **ब्रह्मेतीति** । न च पदान्तरवैयर्थ्यं व्यावर्त्यभेदादिति भावः । पदाभ्यां ब्रह्मात्मनोर्वाच्यत्वमेव किं न स्यादित्याशङ्क्याऽऽह । **नाभिधीयत इति** । शब्दप्रवृत्तिनिमित्तस्य षष्ठ्योदरभावादित्यर्थः । उक्तनीत्या लक्ष्यलक्षणभावोपगमे फलितमाह । **मुख्यमिति** ॥ १८१९ ॥ १८२० ॥ ॥ १८२१ ॥

न हि लोकातिरेकेण ब्रह्मत्वमुपपद्यते ॥
ब्रह्मणो व्यतिरेकेण प्रत्यक्ता नान्यतस्तथा ॥ १८२२ ॥

मुख्यैक्ये युक्तिमाह । **न हीति** ॥ १८२२ ॥

अनयोरैक्यसंमोहात्पारोक्ष्यद्वयकल्पने ॥
संसारोऽयमतो मोहसमुच्छित्तौ विमुक्तता ॥ १८२३ ॥

ब्रह्मात्मनोरैक्यमस्ति चेत्कथं संसारप्रतीतिस्तत्प्रतीतौ वा कथं ब्रह्मणो नित्यमुक्ततेति तत्राऽऽह । **अनयोरिति** ॥ १८२३ ॥

अतोऽशेषमहानर्थहेतोर्मोहस्य हानये ॥
एष इत्यादिवाक्योक्तिः सम्यग्दर्शनजन्मने ॥ १८२४ ॥

वाक्यतात्पर्यमुपसंहरति । **अत इति** । मोहध्वस्तौ मुक्तिरतःशब्दार्थः ॥ १८२४ ॥

इतिशब्दो यथोक्तार्थपरामर्शनकर्मणे ॥
एतिह्यार्थस्तथा हेति सम्राडित्यभिमन्त्रणम् ॥ १८२५ ॥

सम्राडित्यादेरवयवार्थमाह । **इतिशब्द इति** ॥ १८२५ ॥

इत्युक्तेन प्रकारेण मुमुक्षुं जनकं मुनिः ॥
अन्वशात्सकलानर्थहेत्वविद्यापनुत्तये ॥ १८२६ ॥

एनमित्यादेरितिशब्दार्थानुवादपूर्वकमर्थमाह । इत्युक्तेनेति ॥ १८२६ ॥

व्युत्थायाऽऽख्यायिकातो नः श्रुतिरेवेदमब्रवीत् ॥
अन्वशात्स कथं धीमान्राजानमिति चेच्छृणु ॥ १८२७ ॥

आख्यायिकायामिदं वाक्यमसंगतमिवेति शङ्कायामेष इत्यादिवाक्यं न मुने राज्ञो वा किंतु श्रुतेरित्याह । व्युत्थायेति । एषाऽस्येत्याद्याकाङ्क्षापूर्वकमवतारयति । अन्वशादिति ॥ १८२७ ॥

विज्ञानपुरुषस्यास्य या यथोक्ता पुरोक्तिभिः ॥
नैष्ठिकी गतिरेषाऽस्य गत्यन्तरसमाप्तितः ॥ १८२८ ॥

एषाऽस्य परमा गतिरित्यस्यार्थमाह । विज्ञानेति । बुद्ध्युपाधिकस्य जीवस्य या गतिरितिच्छन्दादिवाक्यादुक्तैषैवास्य नैष्ठिकी गतिर्गत्यन्तराणां तत्रैव समाप्तेरिति योजना ॥ १८२८ ॥

इतोऽन्या गतयः सर्वाः क्षयिसाधनसंश्रयात् ॥
क्षयिण्योऽतो हि परमा गतिरेषैव नापरा[1] ॥ १८२९ ॥

परमत्वं साधयति । इत इति । साम्यमाशङ्क्य ज्ञानस्य विषयतोऽक्षयत्वात्तदधीनं फलमक्षयमिति विवक्षन्नाह । अतो हीति । यत इत्यर्थे हिशब्दः ॥ १८२९ ॥

अविद्यामात्रहेतुत्वात्कामकर्मादिसाधनाः ॥
गतयोऽपरमाः सर्वा माया स्वप्नगतिर्यथा ॥ १८३० ॥

गत्यन्तराणामपरमत्वं दृष्टान्तेनाऽऽह । अविद्येति ॥ १८३० ॥

संपच्च परमैषैव मोहोत्थास्त्वन्यसंपदः ॥
उत्कर्षातिशयः संपद्विभूतिश्चेति भण्यते ॥ १८३१ ॥

किंज्योतिरित्युपक्रम्य पूर्ववाक्यैर्यदस्य कैवल्यमुक्तं तदेव परमा गतिर्न कर्मफलमित्युक्तं संप्रत्येषाऽस्य परमा संपदित्यस्यार्थमाह । संपच्चेति । अवधारणे हेतुमाह । मोहेति । का पुनः संपन्नाम न हि परमगतेरर्थान्तरं तथाच पूर्वेण गतार्थता तत्राऽऽह । उत्कर्ष इति । उत्कृष्टोऽवष्टम्भस्तु परमगतिस्तन्न पौनरुक्त्यमिति चार्थः ॥ १८३१ ॥

एषोऽस्य परमो लोको लोकास्त्वन्ये क्षयिष्णवः ॥
क्षयिष्णुसाधनोत्पत्तेर्न त्वेषोऽसाधनाश्रयात् ॥ १८३२ ॥

एषोऽस्य परमो लोक इत्यस्यार्थमाह । एष इति । मोक्षस्यापि तुल्यं क्षयिष्णुसाधनसाध्यत्वेन क्षयिष्णुत्वमित्याशङ्क्याऽऽह । न त्विति ॥ १८३२ ॥

---

[1] क. नापराः ।

**ब्रह्मैव सन्स्वतो यस्माद्ब्रह्माप्येत्यवबोधतः ॥**
**तदविद्यानिरासेन मुक्तिर्नातोऽन्यसाधनात् ॥ १८३३ ॥**

कथं मोक्षस्य साधनानपेक्षत्वं कर्मज्ञानापेक्षत्वादित्याशङ्क्याऽऽह । **ब्रह्मेति** । प्रतिबन्धध्वस्तौ ज्ञानस्योपयोगेऽपि कर्म साक्षान्मोक्षे नोपकरोतीत्यर्थः ॥ १८३३ ॥

**लोकशब्दस्य मुख्योऽर्थ आत्मैवेह यतस्ततः ॥**
**कर्मादिहेतुसाध्येषु गौणी लोकार्थता भवेत् ॥ १८३४ ॥**

मोक्षस्य ब्रह्मलोकशब्दितस्य लोकत्वात्कथं न कर्मफलत्वं स्वर्गवदित्याशङ्क्याऽऽह। **लोकेति** । रूढिव्युत्पत्तिभ्यामात्मैव लोकशब्दार्थश्चेत्कर्मफलेषु स्वर्गादिषु कथं तच्छब्द इत्याशङ्क्यान्याय्यश्चानेकार्थत्वमिति न्यायेनाऽऽह । **कर्मादीति** ॥ १८३४ ॥

**न कर्मणा कनीयस्ता वृद्धिर्वा नान्तरात्मनः ॥**
**इति बाहुमिवोद्धृत्य वेदान्तैर्घोषणा कृता ॥ १८३५ ॥**

ननु लोकस्य कर्मसाध्यत्वप्रसिद्धेरात्मैव लोकश्चेत्कर्मसाध्यः सोऽपि भविष्यति नेत्याह। **नेति** ॥ १८३५ ॥

**आनन्दः परमोऽस्यैष सुखोत्कर्षसमाप्तितः ॥**
**सर्वानन्दातिशायित्वात्तथाचैवं प्रवक्ष्यते ॥ १८३६ ॥**

एषोऽस्य परम आनन्द इत्यस्यार्थमाह । **आनन्द इति** । आत्मानन्दस्य परमत्वे हेतुः । **सुखेति** । आनन्दातिशयस्याऽऽत्मनि कथं समाप्तिस्तत्राऽऽह । **सर्वेति** । तदेव कथं तदाह । **तथाचेति** । यथाऽऽनन्दोत्कर्षस्याऽऽत्मनि समाप्तिस्तथा सर्वानन्दातिशायित्वमात्मनि स यो मनुष्याणामित्यादिप्रकारेण वक्ष्यत इति यावत् ॥ १८३६ ॥

**विषयस्पर्शजानन्दाः साधनानुविधानतः ॥**
**आद्यन्तवत्त्वस्वाभाव्याद्दुःखहेतव एव ते ॥ १८३७ ॥**

विषयानन्दानामपि हिरण्यगर्भादीनां परमत्वात्कथं तेनाऽऽत्मानन्दो विशेष्यते तत्राऽऽह । **विषयेति** ॥ १८३७ ॥

**कूटस्थात्मस्वभावत्वात्सर्वसाधननिस्पृहः ॥**
**सर्वानन्दातिवर्तित्वादानन्दः परमो मतः ॥ १८३८ ॥**

तर्हि तद्वदात्मसुखस्यापि सुखत्वाविशेषान्न परमतेत्याशङ्क्याऽऽह । **कूटस्थेति** ॥ १८३८ ॥

**आनन्दः परमोऽस्यैष इत्युक्तार्थप्रसिद्धये ॥**
**एतस्यैवेति वचसा समर्था हेतुरुच्यते ॥ १८३९ ॥**

---

१ ख. 'न्याय्यं चाने'।

आत्मसुखमेवोत्कृष्टं सुखमितरन्निकृष्टमित्यत्राबाधितहेतूक्त्यर्थमुत्तरं वाक्यमित्याह । **आनन्द इति** ॥ १८३९ ॥

**एतस्यैव यथोक्तस्य सर्वानन्दातिवर्तिनः ॥**
**उपजीवन्ति भूतानि ब्रह्मानन्दस्य विप्रुषम्**[1] **॥ १८४० ॥**

वाक्यं योजयति । **एतस्यैवेति** । यथोक्तस्येत्यस्य व्याख्यानम् । **सर्वानन्देत्यादि** ॥ १८४० ॥

**एष एवंविधो यस्मादानन्दः परमस्ततः ॥**
**आनन्दानतिशेतेऽन्यान्सर्वानस्यैव कृत्स्नतः ॥ १८४१ ॥**

हेत्वर्थमनूद्य साध्यार्थं निगमयति । **एष इति** । परमत्वं व्याकरोति । **आनन्दानतीति** । तत्र हेतुः । **अस्येति** ॥ १८४१ ॥

**कृत्स्नोऽपि चैष आनन्दस्तदविद्यैकहेतुजः ॥**
**बुद्ध्याद्युपाध्यवच्छेदान्मात्रेति व्यपदिश्यते ॥ १८४२ ॥**

आत्मानन्दस्य कृत्स्नत्वे कथं मात्रेति व्यपदेशस्तत्राऽऽह । **कृत्स्नोऽपीति** । पूर्णस्याऽऽनन्दस्याविद्योत्थबुद्ध्यादिसंबन्धान्मात्रेतिव्यपदेशार्हतेत्यर्थः ॥ १८४२ ॥

**तन्मात्रावर्त्मनैवैनं बुबोधयिषुरादरात् ॥**
**लवणाब्धिं यथा तद्वल्लवणावयवैरिह ॥ १८४३ ॥**

स यो मनुष्याणामित्यादिवाक्यतात्पर्यमाह । **तन्मात्रेति** । यथा लोके लवणावयवैस्तदब्धिं लोको बोधयति तथा ब्रह्मानन्दमात्राद्वारा मात्रिणं तं बोधयितुमिच्छन्ती प्रवृत्ता परा श्रुतिरित्यर्थः । आदरस्तु प्रबोधोपायत्वेन परंपरोपादानम् ॥ १८४३ ॥

**उत्तरोत्तरवृद्ध्याऽत आनन्दान्मानुषादधि ॥**
**परानन्दावबोधार्थं प्रवृत्तैषा परा श्रुतिः ॥ १८४४ ॥**

नन्वत्राऽऽनन्दभेदः सातिशयो व्यपदिश्यते तत्कथमनतिशयब्रह्मानन्दबुबोधयिषयाऽनन्तरश्रुतिप्रवृत्तिस्तत्राऽऽह । **उत्तरेति** । मानुषानन्दादारभ्य ब्रह्मपर्यन्तमुत्तरोत्तरं शतगुणवृद्धिद्वारेण ब्रह्मानन्दमनतिशयमादर्शयितुमुत्तरा श्रुतिरित्यर्थः ॥ १८४४ ॥

**मनुष्याणां स यः कश्चित्संसिद्धोऽवयवैर्दृढैः ॥**
**समग्राक्षेपचार्वङ्गो राद्धो भोगक्षमः पुमान् ॥ १८४५ ॥**

तात्पर्यमुक्त्वाऽक्षराणि व्याचष्टे । **मनुष्याणामिति** । दृढैरवयवैः संसिद्धत्वं स्फुटयति । **समग्रेति** । कीदृगङ्गानां सौन्दर्यं तदाह । **भोगेति** ॥ १८४५ ॥

**कृत्स्नसाधनसंपन्नः समृद्धोऽत्राभिधीयते ॥**
**बाह्यैराध्यात्मिकैरेवं साधनैरन्वितः पुमान् ॥ १८४६ ॥**

---

[1] ग. विपुषं ।

राद्धशब्देन समृद्धशब्दस्य पुनरुक्तिं परिहरति । कृत्स्नेति । पदद्वयार्थं पिण्डीकृत्य निगमयति । बाह्यैरिति ॥ १८४६ ॥

तथाऽधिपतिरन्येषां नृणामेवेह यो भवेत् ॥
स्वतन्त्रोऽधिपतिर्ज्ञेयो मनुष्यैर्न विहन्यते ॥ १८४७ ॥

अन्येषामित्यादि व्याकरोति । तथेति । एष परमो मनुष्याणामानन्द इत्युत्तरत्र संबन्धः । किं तदाधिपत्यं तदाह । स्वतन्त्र इति । स्वातन्त्र्यमेव व्याचष्टे । मनुष्यैरिति ॥ १८४७ ॥

मानुष्यकेण भोगेन संपन्नानां नृणामिह ॥
संपन्नोऽतिशयेनातः संपन्नतम उच्यते ॥ १८४८ ॥

सर्वैरित्यादेरर्थमाह । मानुष्यकेणेति ॥ १८४८ ॥

सर्वैर्मानुष्यकैर्भोगैः संपन्नो न तु दैविकैः ॥
आनन्द एष परमो मनुष्याणामिहोच्यते ॥ १८४९ ॥

मानुष्यकैरितिविशेषणतात्पर्यमाह । सर्वैरिति । स मनुष्याणामित्यादेरर्थमाह । आनन्द इति । न खल्वाध्यात्मिकसाधनसंपद्बाह्यसाधनसंपदभावे भोगवैधुर्ये फलवती न चाऽऽधिपत्यमन्तरेण तयोस्ते वा विना तस्यार्थवत्त्वमतोऽनतिशयमनुष्यभोगभोगी युधिष्ठिरादिर्मनुष्याणां परम आनन्द आनन्दानन्दिभेदाभावादिति भावः ॥ १८४९ ॥

शतकृत्वो मनुष्याणामानन्दो गुणितस्तु यः ॥
पितॄणामेक आनन्दस्तेन तुल्यप्रमाणतः ॥ १८५० ॥

अथेत्यादेरर्थमाह । शतेति । प्रमाणं परिमाणम् ॥ १८५० ॥

यत्सुखं साधनाधीनं दुःखमेव तदुच्यते ॥
अनन्यसाधनं तस्मात्स्वात्मस्थं परमं सुखम् ॥ १८५१ ॥

परंपरयोच्यमानो ब्रह्मानन्दो न परमो हिरण्यगर्भाद्यानन्दस्यानुभूतसजातीयस्य परमत्वसंभवादित्याशङ्क्याऽऽह । यदिति ॥ १८५१ ॥

तस्मादात्मपरिज्ञानात्कार्यज्ञेयसमाप्तितः ॥
निरस्तातिशयानन्दो भवतीत्यस्य निर्णयः ॥ १८५२ ॥

वैषयिकसुखस्य विषसंबद्धदुग्धवद्दुःखात्मत्वादात्मसुखस्यैव परमत्वात्तन्निर्धारणार्थं परंपरेति फलितमाह । तस्मादिति ॥ १८५२ ॥

तारतम्यादुपायानां शुद्धिस्तरतमा धियः ॥
शुद्धेस्तरतमत्वाच्च सुखं तरतमं भवेत् ॥ १८५३ ॥

---

१ क. 'परसंबन्धदुःखत्व'।

ननु सर्वं सुखमात्मेष्यते तत्कथं तारतम्यवत्स्यादात्मनोऽनतिशयत्वात्तत्राऽऽह । **तारतम्यादिति** । व्यञ्जकबुद्धिशुद्धिवैषम्यात्तस्मिन्वैषम्यधीरित्यर्थः ॥ १८९३ ॥

**यावद्यावन्मलो व्येति बुद्धेर्धर्मादिसंचयात् ॥**
**तावत्तावद्धियः स्वास्थ्यं तावत्तावत्सुखोन्नतिः ॥ १८५४ ॥**

कथं तेषामुपायतारतम्याच्छुद्धितारतम्यं तत्राऽऽह । **यावदिति** । बुद्धिशुद्धितारतम्यादानन्दे तारतम्यधीरित्येतन्निगमयति । **तावदिति** ॥ १८९४ ॥

**यावद्यावद्घनीभावो बुद्धेः पापादिसंगतेः ॥**
**तावत्तावद्धियोऽस्वास्थ्यं दुःखोद्भूतिस्तथा तथा ॥ १८५५ ॥**

उपायतारतम्याधीनशुद्धितारतम्यकृतं सुखतारतम्यमित्येतद्व्यतिरेकमुखेनाऽऽह । **यावदिति** ॥ १८९५ ॥

**पितृलोको जितो यैः स्यात्पितृयज्ञादिकर्मभिः ॥**
**जितलोकास्त उच्यन्ते पितरो दिव्यभोगिनः ॥ १८५६ ॥**

मनुष्यानन्दादारभ्य हिरण्यगर्भानन्दान्तानामानन्दानां तारतम्ये हेतुं वदता स एकः पितृणामित्यन्तं व्याख्यातम् । इदानीं जितलोकानामित्यस्यार्थमाह । **पितृलोक इति** ॥ १८९६ ॥

**य एष दक्षिणः पन्थाः पितृलोकः स उच्यते ॥**
**मनुष्यानन्दतः सोऽयं गुणितः स्याच्छताधिकः ॥ १८५७ ॥**

कोऽयं पितृलोकस्तत्राऽऽह । **य इति** । गतेर्गन्तव्यैक्यमौपचारिकम् । तस्य स एक आनन्द इत्यनेन संगतिमाह । **मनुष्येति** ॥ १८९७ ॥

**उत्तरेष्वपि वाक्येषु यथोक्तमुपपादयेत् ॥**
**शताधिकोऽयमानन्दः पूर्वस्मादुत्तरः क्रमात् ॥ १८५८ ॥**

अथ ये शतमित्यादिवाक्येषूक्तन्यायमतिदिशति । **उत्तरेष्विति** । सर्वपर्यायेषु सिद्धमर्थं संकलयति । **शताधिक इति** ॥ १८९८ ॥

**नक्षत्रलोकशब्देन ये पूर्वं प्रतिपादिताः ॥**
**देवलोकगिरा तेऽत्र भण्यन्ते सूक्ष्ममूर्तयः ॥ १८५९ ॥**

काण्वपाठेन सर्वपर्यायतात्पर्यमुक्त्वाऽथ ये शतं गन्धर्वलोक आनन्दाः स एको देवलोक आनन्द इति माध्यंदिनपाठे देवलोकशब्दार्थमाह । **नक्षत्रेति** । पूर्वमिति गार्गिब्राह्मणोक्तिः ॥ १८९९ ॥

**सर्गस्य जननादादौ देवत्वं ये प्रपेदिरे ॥**
**आजानदेवास्तेऽत्र स्युः पूर्वेभ्यः सूक्ष्ममूर्तयः ॥ १८६० ॥**

---

१ क. कथमु° । २ घ. °पायानां ता° । ३ क. ख. एव ।

स एक आजानदेवानामित्यत्राऽऽजानदेवशब्दार्थमाह । **सर्गस्येति** । मनुष्यादिसर्गस्याऽऽदिनिष्पत्तिं मर्यादात्वेनोपेत्य तस्मात्प्रागेवेति यावत् । पूर्वेभ्यः कर्मदेवेभ्य इत्यर्थः ॥ १८६० ॥

**व्यापीनि तेषां सूक्ष्माणि शरीराणि महात्मनाम् ॥**
**पूर्वानन्देभ्य एतेषामानन्दोऽतो महान्मतः ॥ १८६१ ॥**

आजानदेवानामानन्दाधिक्ये हेतुमाह । **व्यापीनीति** । शरीरस्योक्तरूपत्वे साधनसंपत्तिं हेतुमाह । **महात्मनामिति** । उक्तदेहानां सूक्ष्मत्वं व्यापित्वं चातःशब्दार्थः ॥ १८६१ ॥

**नानाद्वंद्वोपघातार्थहेतूनां बहुलत्वतः ॥**
**आजानदेवानन्दोऽतः पूर्वेभ्यः स्याच्छताधिकः ॥ १८६२ ॥**

कर्मदेवेष्वपि तुल्यं देहानां व्यापित्वं सूक्ष्मत्वं चेति चेत्तथाऽपि तेषामाजानदेवाद्यपेक्षया न्यूनं सुखमित्यत्र हेतुमाह । **नानेति** । नानाविधा द्वंद्वशब्दिता ये केचिदुपघातस्य दुःखलक्षणार्थस्य हेतवस्तेषामिति यावत् । आजानदेवेष्वपि तुल्यमुपघातबाहुल्यं संसारित्वाविशेषादित्याशङ्क्याऽऽह । **आजानेति** । तेषां पूर्वापेक्षयोपघाताल्पत्वमतःशब्दार्थः ॥ १८६२ ॥

**श्रोत्रियोऽधीतवेदः स्याज्ज्ञातवेदार्थ एव यः ॥**
**कृत्स्नचोदितकारित्वात्सर्वपापविवर्जितः ॥ १८६३ ॥**

यश्चेत्यादौ श्रोत्रियशब्दं व्याचष्टे । **श्रोत्रिय इति** । अर्थज्ञानान्तमध्ययनमेकशाखाविषयं यस्यास्ति स[1] श्रोत्रियो विवक्षित इति यावत् । अवृजिनशब्दार्थमाह । **कृत्स्नेति** ॥ १८६३ ॥

**आजानदेवावधिककामानुपहताशयः ॥**
**ततः परेषु भोगेषु जाततृष्णश्च यः पुमान् ॥ १८६४ ॥**

अकामहतपदार्थमाह । **आजानेति** । तदानन्दादर्वाचीनानन्देषु वीतरागोऽत्राकामहत इत्यर्थः । वैराग्यस्य निरङ्कुशत्वमित्याशङ्क्याऽऽह । **तत इति** । आजानदेवानन्दमारभ्योत्तरानन्देषु प्रवृत्ततृष्णश्च यो भवति सोऽकामहत इत्यर्थः ॥ १८६४ ॥

**आजानदेवानन्देन समं तस्य च यत्सुखम् ॥**
**अस्याकामहतत्वेन सुखोत्कृष्टिरिहोच्यते ॥ १८६५ ॥**

चशब्दार्थमाह । **आजानदेवेति** । उक्तविशेषणवतो मनुष्यदेहे वर्तमानस्यैव यत्सुखं तदाजानदेवानन्देन तुल्यं भवतीति यावत् । श्रोत्रियत्वादीनां तुल्यमानन्दोत्कर्षे हेतुत्व-

---

१ घ. °या न म्° । २ घ. सोऽत्र । ३ ख. ग. °रिहेष्यते । ४ घ. °त्कर्षहे° ।

मविशेषश्रुतेरित्याशङ्क्याऽऽह । **अस्येति** । मनुष्यदेहस्थस्याधिकृतस्येति यावत् । इहेति निर्धारणे सप्तमी ॥ १८६५ ॥

**श्रोत्रियावृजिनत्वे द्वे तुल्ये एवाऽऽविरिञ्चितः[1] ॥**
**अकामहतताहेतोर्वृद्धौ ह्लादो विवर्धते ॥ १८६६ ॥**

तत्र हेतुः । **श्रोत्रियेति** । ते हि मनुष्यानन्दादारभ्य शतानन्दान्तेषु तुल्ये दृष्टे तदकामहतत्वोत्कर्षादुत्कर्षः सुखस्येत्यर्थः । तस्यापि सर्वत्र तद्वदेकरूप्यात्कथं तदुत्कर्षादानन्दोत्कर्षस्तत्राऽऽह । **अकामेति** ॥ १८६६ ॥

**पूर्वपूर्वोपभोगेभ्यो यावद्यावन्निवर्तते ॥**
**कामो विवर्धते पुंसस्तावत्तावत्सुखं हृदि ॥ १८६७ ॥**

तत्रानुभवं प्रमाणयति । **पूर्वेति** ॥ १८६७ ॥

**कामैकक्षयतश्चैव यस्मात्पुंसः सुखोन्नतिः ॥**
**अकामहततैवातः पूर्वाभ्यां साधनं परम् ॥ १८६८ ॥**

अकामहतत्वस्येतराभ्यामुत्कृष्टत्वं फलितमाचष्टे । **कामेति** ॥ १८६८ ॥

**साधनत्वं समानं स्यात्त्रयाणामिह यद्यपि ॥**
**कामक्षयप्रकर्षोऽत्र ह्युत्कृष्टाह्लादसाधनम् ॥ १८६९ ॥**

कथं साधारणश्रुतेरेष विभागस्तत्राऽऽह । **साधनत्वमिति** । इहेत्यानन्दाप्तिरुक्ता। अत्रेत्यधिकृतपुरुषोक्तिः । अबाधितस्वानुभवप्राप्तो विभागो न साधारणश्रुत्या शक्यो भेत्तुमित्यर्थः । उक्तेऽर्थे स्वानुभवमनुकूलयितुं हिशब्दः ॥ १८६९ ॥

**समुच्चयविवक्षाऽत्र न मनागपि युज्यते ॥**
**कर्तृत्वादिसमुच्छेदिज्ञानस्येहाऽऽश्रितत्वतः ॥ १८७० ॥**

अथाकामहतशब्देन ब्रह्मज्ञानं विवक्ष्यते श्रोत्रियावृजिनशब्दाभ्यां कर्म तथाच विशेषणत्रयवतोऽनतिशयानन्दाप्तिं वदन्ती श्रुतिर्ज्ञानकर्मसमुच्चयं विवक्षति नेत्याह । **समुच्चयेति** । अत्रेति वाक्यं ज्ञानकर्मणी मुक्तिर्वोक्ता । अयुक्तत्वे हेतुः । **कर्तृत्वादीति** । इह खल्वन्तिमे पर्याये यथोक्तज्ञानस्याकामहतशब्देनेष्टत्वान्न मोक्षे समुच्चयो विवक्षित इत्यर्थः ॥ १८७० ॥

**समुच्चयनिवृत्त्यर्थं न्यायश्चापि पुरोदितः ॥**
**नातः समुच्चयाशेह कर्तव्या सूक्ष्मदर्शिभिः ॥ १८७१ ॥**

केन पुनर्न्यायेन समुच्चयो निरस्यते तत्राऽऽह । **समुच्चयेति** । पुरा संबन्धग्रन्थादावित्यर्थः । फलितमाह । **नेति** । मानयुक्तिविरोधोऽतःशब्दार्थः । इहेति मुक्तेरुक्तिः ॥ १८७१ ॥

[1] ख. ग. °रिञ्चतः ।

साधनत्वं यतस्तुल्यं श्रोत्रियावृजिनत्वयोः ॥
अंवरेष्वपि भोगेषु न चोत्तमसुखं ततः ॥ १८७२ ॥

किंचाकामहतशब्दितज्ञानस्य परमसुखोपायत्वादितरयोस्तदभावान्न समुच्चय इत्याह। **साधनत्वमिति** ॥ १८७२ ॥

अकामहततैवात्र तारतम्यात्मकत्वतः ॥
भेदादुत्तमसौख्यस्य साधनं चोत्तमा भवेत् ॥ १८७३ ॥

अर्वाचीनसुखसाधनत्वाविशेषादकामहतत्वस्यापि श्रोत्रियत्वादिवन्न मुक्तिहेतुतेत्याशङ्क्याऽऽह । **अकामेति** । प्रकृतसाधनेष्वकामहतत्वस्योत्कर्षापकर्षसंभवादपकृष्टं तत्कादाचित्कार्वाचीनसुखहेतुरुत्कृष्टं ज्ञानाव्यतिरिक्तमोक्षोपायस्तन्न समुच्चयान्मुक्तिरित्यर्थः ॥ १८७३ ॥

युवा साधुयुवेत्येवं तैत्तिरीयश्रुतीरणात ॥
अधरेष्वपि वाक्येषु श्रोत्रियादि विवक्षितम् ॥ १८७४ ॥

नाऽऽजानदेवेभ्योऽर्वाक्तनभोगहेतुत्वं श्रोत्रियत्वादेरकामहतत्ववदस्ति श्रवणाश्रवणयोः साम्यादित्याशङ्क्य तस्य तद्धेतुत्वं विवक्षितमित्येतन्मानतो दर्शयति । **युवेति** । साधुयुवेत्यवृजिनत्वमध्यायक इति श्रोत्रियत्वमित्युभयं पूर्वभूमिष्वपि युवा स्यात्साधुयुवाऽध्यायक इत्यत्रोक्तमतो येषु पर्यायेषु तन्न श्रुतं तत्रापि द्रष्टव्यमित्यर्थः ॥ १८७४ ॥

विराट्प्रजापतिर्ज्ञेयस्त्रैलोक्यात्मकदेहभृत् ॥
हिरण्यगर्भो ब्रह्माऽत्र तथा ब्रह्मगिरोच्यते ॥ १८७५ ॥

स एकः प्रजापतिलोक आनन्दः स एको ब्रह्मलोक आनन्द इत्यनयोरैकात्म्यमित्याशङ्क्याऽऽह । **विराडिति** ॥ १८७५ ॥

अतः परमनन्तत्वाद्गणितं विनिवर्तते ॥
यत एवमतः प्राहाथैष एवेति नः श्रुतिः ॥ १८७६ ॥

अथैष इत्यादिवाक्यमादत्ते । **अतः परमिति** । आत्मसुखे गणनायोगात्तदेवानतिशयमित्यर्थः ॥ १८७६ ॥

अनेनातिशयवता ह्यस्मद्गोचरवर्तिना ॥
अपास्तातिशयानन्दं सुखेनेहानुमीयते ॥ १८७७ ॥

कथमिदं प्रमीयते तत्राज्ञान्प्रति प्रमाणमाह । **अनेनेति** । अनेन सुखेनेति संबन्धः। सातिशयस्य निरतिशयेन व्याप्तिं वक्तुं हिशब्दः । आत्मतत्त्वमिति शेषः । इहेत्यनुमानभूमिरुक्ता ॥ १८७७ ॥

---

१ क. अधरे॰ । २ क. योत्तमा । ग. चोत्तमं । ३ ग. ॰त्वाद्गुणि॰ ।

ध्वस्तातिशयनिष्ठत्वाल्लोके सातिशयात्मनः ॥
यतोऽतोऽतिशयवता गम्यतेऽनतिशयं सुखम् ॥ १८७८ ॥

कथमनुमानं तत्र व्याप्तिमाह । ध्वस्तेति । व्याप्तिसिद्धिरिति शेषः । तामनूद्यानुमानमाह । यत इति । सुखोत्कर्षतारतम्यं क्वचिद्विश्रान्तं तरतमभावत्वात्परिमाणतारतम्यवदिति भावः ॥ १८७८ ॥

यत्रैतानि समस्तानि निष्ठां यान्ति परात्मनि ॥
परमोऽसाविहाऽऽनन्दः सर्वानन्दातिलङ्घनात् ॥ १८७९ ॥

हिरण्यगर्भानन्दे तत्तारतम्यविश्रान्तेरर्थान्तरत्वमाशङ्क्याऽऽह । यत्रेति । एतानीति लौकिकसुखोक्तिः । इहेति प्रकृतानन्दभेदा गृह्यन्ते ॥ १८७९ ॥

एषोऽस्येति प्रतिज्ञात आनन्दः सोऽनुमानतः ॥
निष्ठां प्रतीचि गमित उत्तरोत्तरवृद्धितः ॥ १८८० ॥

अथानुमानात्परानन्दे परमात्मनि सिध्यत्यपि प्रत्यगात्मा कथं परानन्दी भवितुमुत्सहते तत्राऽऽह । एषोऽस्येति ॥ १८८० ॥

अविज्ञातपरानन्दान्प्रत्येषाऽनुमितिर्मता[1] ॥
साक्षाज्ज्ञातात्मतत्त्वानां[2] प्रत्यक्षतममेव तत् ॥ १८८१ ॥

अज्ञान्प्रत्यनुमानमुक्त्वाऽऽत्मज्ञान्प्रत्याह । अविज्ञातेति । उक्तं हि स एष परमानन्दो वितृष्णश्रोत्रियप्रत्यक्षोऽधिगत इति ॥ १८८१ ॥

अकामहतधीगम्य आनन्दः प्रत्यगात्मनि ॥
यः स एव यथोक्तेभ्यः परमः स्यादनन्ततः ॥ १८८२ ॥

आत्मानन्दस्य परमत्वं साधयति । अकामेति ॥ १८८२ ॥

तथाच भगवान्व्यासः सर्ववेदार्थतत्त्ववित् ॥
स्वयं प्राहेममेवार्थं कामानर्थजिहासया ॥ १८८३ ॥

तस्य परमत्वे प्रमाणमवतारयति । तथाचेति । अकामहतत्वकृतमुत्तमं सुखमिति वदतोऽभिप्रायमाह । कामेति ॥ १८८३ ॥

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ॥
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ १८८४ ॥

तदेवोदाहरति । यच्चेति ॥ १८८४ ॥

यतो यतो निवर्तते[3] ततस्ततो विमुच्यते ॥
निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि ॥ १८८५ ॥

तदीयमेव वाक्यान्तरं पठति । यत इति ॥ १८८५ ॥

---

१ क. 'त्येवानु' । २ क. 'क्षात्कृता' । ३ ख. 'वर्तेत त' ।

सलिलादिगिरा योऽर्थः प्रत्यज्ञायि पुराऽखिलः ॥
ब्रह्मलोकान्तवाक्येन तस्य स्यादुपसंहृतिः ॥ १८८६ ॥

एष इत्यादिवाक्यस्य तात्पर्यमाह । **सलिलादीति** । ब्रह्मलोकान्तवाक्येन ब्रह्मलोकपदमन्ते मध्ये यस्यास्ति तेनेति यावत् । सलिल एको द्रष्टेत्युपक्रम्य मात्रामुपजीवन्तीत्यन्तेन कार्यकारणनिर्मुक्तोऽनतिशयानन्दो यः प्रत्यगात्मा परिपूर्णः प्रतिज्ञातः स पुनः स यो मनुष्याणामित्यारभ्याथैष एवेत्यन्तेन प्रतिपादितस्तस्येदानीमेष इत्यादिवाक्येनोपसंहारः कृत इत्यर्थः ॥ १८८६ ॥

प्रश्नार्थेऽस्मिन्समाप्तेऽपि पूर्ववत्तं मुनिं नृपः ॥
अन्वयुङ्क्त ऊर्ध्वं त्वं मुक्तये ब्रूहि यत्परम् ॥ १८८७ ॥

सोऽहमित्यादेरर्थमाह । **प्रश्नेति** । राज्ञो जनकस्य मुक्तिफलसम्यग्ज्ञानाय प्रश्नः प्रवृत्तस्तस्यार्थे सम्यग्ज्ञाने यथोक्तरीत्या निर्धारितेऽपि तन्निर्धारणात्प्रागिव राजा मुनिं यन्मुक्तये परं साधनं तदस्मादूर्ध्वं मह्यं ब्रूहीति विद्यानिष्क्रयार्पणपूर्वकं पप्रच्छेत्यर्थः ॥ १८८७ ॥

याज्ञवल्क्योऽपि राज्ञैवं पृष्टः सन्पूर्ववत्तदा ॥
*अबिभेदन्यतो हेतोर्न त्वसामर्थ्यकारणात् ॥ १८८८ ॥

अत्र हेत्यादेरर्थमाह । **याज्ञवल्क्योऽपीति** । वक्तृत्वासामर्थ्यादुत्तराज्ञानाद्वा मुनेर्भयमित्येतन्निरस्यति । अन्यत इति ॥ १८८८ ॥

सर्वज्ञत्वान्मुनेर्नाभूत्प्रश्नार्थाज्ञानतो भयम् ॥
कारणं त्वन्यदेवातो यतः श्रुतिरभाषत ॥ १८८९ ॥

असामर्थ्यमज्ञानं वा न तस्य भयहेतुरित्यत्र हेतुमाह । **सर्वज्ञत्वादिति** । ब्रह्मीभूतश्च याज्ञवल्क्यः सर्वज्ञः सर्वशक्तिश्च न तस्य प्रश्नोत्तरीभूतार्थाज्ञानात्तदुक्त्यसामर्थ्याद्वा भयं संभवतीत्यर्थः । किं तर्हि तस्य तत्कारणमित्यपेक्षायामन्यतो हेतोरित्युक्तं व्यक्ती कर्तुं मेधावीत्याद्युत्थापयति । **कारणं त्विति** ॥ १८८९ ॥

अविवक्षुमयं राजा कामप्रश्नबलाश्रयात् ॥
किंज्योतिरित्येवमादिमप्राक्षीन्मां पुनः पुनः ॥ १८९० ॥

तद्व्याकर्तुं भूमिकां करोति । **अविवक्षुमिति** ॥ १८९० ॥

अप्रत्याख्येयो ह्यर्थश्च सत्यस्यावश्यरक्षणात् ॥
स्वयंज्योतिष्ट्वनिर्णीतिः कृताऽतोऽनवशेषतः ॥ १८९१ ॥

ननु दुराग्रहग्रस्तो राजा पृच्छतु त्वया तु प्रत्युत्तरं न देयं न हि पथि कृतं मौनव्रतमकस्मादेव हातव्यं तत्राऽऽह । **अप्रत्याख्येयो हीति**। हिशब्दार्थमेव विशदयति।

---

* पुस्तकत्रयेऽप्यबिभ्यादिति वर्तते तत्प्रामादिकम् ।

**सत्यस्येति** । तर्हि पृष्टं बुभुत्सितं निःशेषं विशदी क्रियतामत आह । **स्वयमिति** । प्रागुक्तहेतुपरामर्शार्थोऽतःशब्दः ॥ १८९१ ॥

**निर्णीतेऽप्यथ मां राजा पुनः पुनरपृच्छत ॥**
**अत ऊर्ध्वमिति गिरा निरुणद्ध्येव मां नृपः ॥ १८९२ ॥**

तर्हि कृतनिर्णयस्य ते कुतो भयमुपस्थितं तत्राऽऽह । **निर्णीतेऽपीति** । अथशब्दोऽतःशब्दपर्यायो निरुणद्धीत्यस्मात्पूर्वं संबध्यते ॥ १८९२ ॥

**कामप्रश्नाङ्कुशेनैव मां वशीकृत्य मद्गतम् ॥**
**समादित्सति निःशेषं ज्ञानं राजाऽतिपण्डितः ॥ १८९३ ॥**

ननु राजा गुरुं निरुन्धन्नविवेकी न विद्यापात्रं नेत्याह । **कामेति** ॥ १८९३ ॥

**इत्येष भयहेतुः स्याद्याज्ञवल्क्यस्य नान्यतः ॥**
**भयहेतोरविद्यायाः सर्वज्ञत्वादसंभवात् ॥ १८९४ ॥**

सर्वस्वापहारप्रसङ्गो भयहेतुरित्युपसंहरति । **इत्येष इति** । नान्यतो भयहेतुरित्यत्र हेतुमाह । **भयेति** ॥ १८९४ ॥

**असकृन्निर्णयोऽकारि पृष्टे वस्तुन्यशेषतः ॥**
**अरौत्सीन्मां तथाऽप्येष सर्वस्वादित्सया नृपः ॥ १८९५ ॥**

विद्यायोग्यो हि राजा मुनिगतं ज्ञानमादित्सते तथा च तस्मै तद्दातुं किमिति गुरुर्बिभेति न हि परस्मै दत्तं तदात्मनि ह्रसतीत्याशङ्क्याऽऽह । **असकृदिति** ॥१८९५॥

**मेधावी पण्डितोऽतोऽयं ब्रह्मस्वादानकारणात् ॥**
**न बिभेति यतस्तस्माद्भेतव्यं जनकाद्भृशम् ॥ १८९६ ॥**

तस्य श्रुत्युक्तं मेधावित्वं साधयति । **मेधावीति** । अतःशब्दार्थमेव स्फुटयति । **ब्रह्मेति** । ब्रह्मणो ब्राह्मणस्य स्वं ज्ञानं तस्याऽऽदानादित्यर्थः । मोक्षफलकं ज्ञानं पालयितुमिच्छता जनकाद्भयं कर्तव्यमिति फलितमाह । **तस्मादिति** । योग्येऽपि पात्रे मुक्तिफलं ज्ञानं सहसा नोपदेष्टव्यमिति वाक्यार्थः ॥ १८९६ ॥

**ननु प्रश्ना यथोक्ताश्चेन्निर्णीतार्थाः पुरोक्तिभिः ॥**
**अनिर्णीतं किमुद्दिश्य नृपोऽप्राक्षीन्मुनिं पुनः ॥ १८९७ ॥**

स वा एष इत्याद्याक्षिपति । **नन्विति** । यथोक्ताः प्रश्नाः किंज्योतिरयमित्यादय आदित्यज्योतिरित्याद्यास्तु पुरोक्तयोऽत ऊर्ध्वमितिप्रश्नायोगे प्रत्युक्तिरपि न युक्तेति भावः ॥ १८९७ ॥

**स्वप्नबुद्धान्तसंचार आत्मनो यः पुरोदितः ॥**
**दृष्टान्तत्वेन राज्ञाऽसौ सर्वोऽपीह विवक्षितः ॥ १८९८ ॥**

अनिर्णीतं दर्शयन्प्रश्नप्रत्युक्ती समर्थयते । स्वप्नेति । इहेति लोकद्वयसंचाराख्यसं-
सारोक्तिः ॥ १८९८ ॥

**तस्य दार्ष्टान्तिको योऽर्थो यावत्साक्षान्न कथ्यते ॥**
**मुमुक्षति न तावत्तं राजा प्रश्नार्थशेषतः ॥ १८९९ ॥**

तथाऽपि कथं प्रश्नावकाशस्तत्राऽऽह । **तस्येति** । स यावदिति वक्तव्यं योऽर्थ इत्युपक्रमात्तमित्याचार्यस्तच्छब्दार्थः । प्रश्नार्थस्य बन्धरूपस्य दार्ष्टान्तिकस्य वक्तव्यस्य शिष्टत्वादिति यावत् । अवस्थाद्वयसंचारो लोकद्वयसंचाराख्यसंसारस्य दृष्टान्ततयोक्तोऽथ तस्यैव दार्ष्टान्तिकस्योक्त्यर्थमुत्तरो ग्रन्थ इत्यर्थः ॥ १८९९ ॥

**दृष्टान्तस्य सुषुप्तेश्च नार्थं दार्ष्टान्तिकं जगौ ॥**
**ब्रह्मास्मीत्यागमाद्बोधः सुषुप्तोदाहृतेर्मतः ॥**
**दार्ष्टान्तिकोऽर्थः प्राज्ञस्य दृष्टान्तस्यावशेषतः ॥ १९०० ॥**

संसारप्रकरणस्यार्थवत्त्वमुक्त्वाऽथाकामयमान इत्यादेरर्थवत्त्वमाह । **दृष्टान्तस्येति** । अतोऽपि प्रश्नस्य सावकाशत्वमिति शेषः । कोऽसौ दार्ष्टान्तिकोऽर्थस्तमाह । **ब्रह्मेति** । यतः स्वापदृष्टान्तस्य दार्ष्टान्तिकोऽर्थो वक्तव्यत्वेनावशेपितोऽतस्तादर्थ्येन मोक्षप्रकरणमागमिष्यतीत्याह । **प्राज्ञस्येति** ॥ १९०० ॥

**उक्ते दार्ष्टान्तिकेऽर्थेऽस्मिन्प्रश्नार्थस्य समाप्तितः ॥**
**सर्वमुक्तं भवेद्यस्मादतः सोऽर्थोऽधुनोच्यते ॥ १९०१ ॥**

दार्ष्टान्तिकद्वये निर्दिष्टेऽपि वक्तव्यान्तरशेपादाकाङ्क्षानिवृत्तेः प्रश्नतादवस्थ्यमित्याशङ्क्याऽऽह । **उक्त इति** ॥ १९०१ ॥

**असङ्गो मत्स्यवत्प्रत्यङ्कामकर्मादिभिः क्रमात् ॥**
**समेति स्वप्नबुद्धान्तौ यथाऽयं स्ववशस्तथा ॥ १९०२ ॥**
**सहेतुरस्य संसारः परलोकेहलोकयोः ॥**
**सविस्तरः स वक्तव्य इत्यर्थेयं परा श्रुतिः ॥ १९०३ ॥**

प्रकरणद्वयमवतार्याऽऽदौ संसारप्रकरणमुत्थापयति । **असङ्ग इति** । यथा महामत्स्यो नद्या द्वे कूले क्रमात्क्रमते तथाऽयं कामादिभिर्वस्तुतोऽस्पृष्टोऽपि जाग्रत्स्वप्नौ स्वतन्त्रः सन्ननुसंचरति तथाऽस्य लोकद्वये संचाराख्यो बन्धो हेतुसहितो विस्तरसहितश्च[2] वाच्यो वैराग्यार्थमिति संसारप्रकरणं प्रवृत्तमित्यर्थः ॥ १९०२ ॥ १९०३ ॥

**बन्धो बन्धनहेतुश्च मोक्षस्तद्धेतुरेव च ॥**
**सविस्तरः प्रवक्तव्यस्तदुक्त्यर्था परा श्रुतिः ॥ १९०४ ॥**

प्रकरणद्वयार्थं प्रतिपत्तिसौकर्यार्थं संक्षिपति । **बन्ध इति** ॥ १९०४ ॥

---

१ क. ख. 'राय सं' । २ क. ख. घ. विस्तार' । ३ ख. प्रकृतमि' ।

जाग्रत्स्थानात्ततः पूर्वं स्वप्नमात्मा प्रवेशितः ॥
जाग्रद्भूमिं स नेतव्यो दार्ष्टान्तिकविवक्षया ॥ १९०५ ॥

इतरसंदर्भमवतार्य स वा एष इत्यादेस्तात्पर्यमाह । **जाग्रदिति** । बुद्धान्ते रत्वेत्यादिवाक्याज्जागरितादात्मा स्वप्नान्तायैवेति स्वप्नं प्रवेशितः स चेदानीं ततो जाग्रदवस्थां संसारप्रकारप्रदर्शनार्थं प्रापयितव्यो न हि स्वप्नावस्थायामेव दार्ष्टान्तिको बन्धः स्पष्टयितुं शक्यतेऽतः स्वप्नाज्जाग्रदापत्तिकथनार्थमनन्तरवाक्यमित्यर्थः ॥ १९०५ ॥

आनन्दनिर्णयान्तं तु संप्रसादवचो यदा ॥
तदा निगमनार्थं तत्प्रतिज्ञातार्थगोचरम् ॥ १९०६ ॥

तस्यैवोक्तार्थाविरोधनार्थान्तरमाह । **आनन्देति** । यदा स्वप्नान्तायेत्यत्र स्वप्नान्तं सुषुप्तं तथा महामत्स्यवाक्यमारभ्याथैष[1] एव परम आनन्द इत्येतदन्तं वाक्यं तद्विषयं ततश्च प्रतिज्ञातार्थमधिकृत्य निगमनार्थमनन्तरवाक्यं तदाऽपि स्वापाज्जागरापत्तिरात्मनोऽत्र विवक्षिताऽन्यथा संसारप्रकारप्रदर्शनायोगादित्यर्थः ॥ १९०६ ॥

अलुप्तदृष्टिरात्माऽयं यथोक्तं[2] स्वप्नबोधयोः ॥
प्राज्ञेऽपि च तथैवायं यद्वै तदितिवाक्यतः ॥ १९०७ ॥

कोऽसौ प्रतिज्ञातोऽर्थस्तमाह । **अलुप्तेति** । यथा स्थानद्वये प्रत्यगात्माऽपि नष्टदृष्टिस्तथा स्वापेऽपीत्येतदृष्टिपरीक्षायामुक्तमित्यर्थः ॥ १९०७ ॥

अतिकारकहेतुश्च यथाऽऽत्माऽयं सुषुप्तगः ॥
कूटस्थदृष्टिमात्रत्वात्तथा स्वप्नप्रबोधयोः ॥ १९०८ ॥

प्रतिज्ञातमर्थान्तरमाह । **अतिकारकेति** । यथाऽऽत्मा स्वापे मात्रादिद्वैतरहितस्तथा स्थानद्वयेऽपि कूटस्थदृष्टित्वाविशेषादिति च तत्रैवोक्तमित्यर्थः ॥ १९०८ ॥

इत्येवं पूर्वसिद्धेऽर्थे[3] निगमार्थं पुनर्वचः ॥
स वा इत्यादिकं ज्ञेयं न तु नाशादिशङ्कया ॥ १९०९ ॥

प्रतिज्ञातं स्मारयित्वा तन्निगमनार्थत्वमुत्तरस्योपन्यस्यति । **इत्येवमिति** । आत्मनो नित्यदृष्टित्वं मात्रादिद्वैतराहित्यं चेत्युभयमत्र स्वप्नान्तपदेन निगम्यते स्वप्नशब्देन हि विशेषदर्शनमुच्यते तस्यान्तः सुप्तमित्युक्ते मात्रादिहीनं तत्त्वं सिध्यति तद्धानिश्च तत्काले कूटस्थबोधाधीना साधकान्तराभावादतः स्वप्नान्तपदेनोभयं निगमयद्वाक्यं स्वप्नादात्मनो जागरापत्तिं दर्शयतीत्यर्थः । ननु सुप्तो मृतवन्नष्टो देशान्तरं गतो वेति शङ्क्यते तस्य व्यादितास्यत्वादिना मृतेन तुल्यत्वात्तथाच तन्निराचिकीर्षयाऽनन्तरवाक्यमिति नेत्याह । **न त्विति** । न खल्वात्मनो नाशं देशान्तरगमनं वा शङ्कित्वा वाक्यमित्येत-

१ क. °नायैत° । २ ख. °थोक्तः स्व° । ग. °थोक्तस्व° । ३ ख. °र्वसंसिद्धेर्निग° । ग. °र्वसंसिद्धे नि° ।

त्प्रवृत्तं नित्यसिद्धे निष्क्रिये प्रतीचि तदाशङ्कानवकाशान्न च सुप्तो मृतेन तुल्यः प्रसन्नवदनतादिवैसादृश्यादित्यर्थः ॥ १९०९ ॥

**इत आरभ्य संसार आत्मनो वर्ण्यतेऽधुना ॥**
**स्वप्नाद्बोधाप्तिवच्चास्माल्लोकाल्लोकान्तरं गतः ॥ १९१० ॥**
**इत्यर्थप्रतिपत्त्यर्थं दृष्टान्तोऽत्राभिधीयते ॥**
**सुखावबोधसिद्ध्यर्थं श्रोतुरर्थे विवक्षिते ॥ १९११ ॥**

स वा एष इत्यादेर्बुद्धान्तायेत्यन्तस्य तात्पर्यमुक्त्वा ब्राह्मणशेषस्य तात्पर्यमाह । **इत इति** । तद्यथाऽन इत्यादिदृष्टान्तवाक्यमादत्ते । **स्वप्नादिति** । अत्रेत्यनन्तरवाक्योक्तिः । अज्ञस्याऽऽत्मनो देहाद्देहान्तरापत्तिरेवोच्यतां किं तत्र दृष्टान्तेनेत्याशङ्क्याऽऽह । **सुखेति** । अस्मिन्प्रकरणे विवक्षितसंसारप्रकारे श्रोतुः सुखप्रतिपत्त्यर्थं स्वप्नाज्जाग्रत्प्राप्तिवद्देहाद्देहान्तरप्राप्तौ दृष्टान्तोक्तिरित्यर्थः ॥ १९१० ॥ १९११ ॥

**नानार्थसाधनैर्मार्गे यथाऽनः सुसमाहितम् ॥**
**शब्दान्नानाविधान्कुर्वद्गुरुभारप्रपीडनात् ॥ १९१२ ॥**

तदक्षराणि व्याचष्टे । **नानार्थेति** । अनेकफलोपायैरुलूखलमुसलपिठरादिभिरिति यावत् । नानाविधशब्दकरणे कारणमाह । **गुरुभारेति** ॥ १९१२ ॥

**व्रजेच्छाकटिकेनेह देशान्तरमधिष्ठितम् ॥**
**अनसस्तद्गताच्चार्थाद्विलक्षणवपुर्भृता ॥ १९१३ ॥**
**स्वार्थेनाधिष्ठितं गच्छेत्पथि शार्कटिकेन तत् ॥**
**दृष्टान्तार्थेन संबन्ध एवमेवेति भण्यते ॥ १९१४ ॥**

यायादित्यस्यापेक्षितं पूरयन्नर्थमाह । **व्रजेदिति** । इहेति व्यवहारभूमिग्रहः । ननु शकटमध्यपतिनः शाकटिकस्तदधिष्ठितस्य कुतो गतिरित्याशङ्क्योक्तं प्रपञ्चयति । **अनस इति** । एवमेवेत्यस्यार्थमाह । **दृष्टान्तेति** । दार्ष्टान्तिकस्येति शेषः ॥१९१३॥१९१४॥

**भुक्तदेहादिदं लिङ्गमुत्क्रान्तं भोगसंक्षयात् ॥**
**याति देहान्तरं तद्वत्कर्मविद्यादिसंभृतम् ॥ १९१५ ॥**

अयं शारीर आत्मा यातीत्यस्यार्थमाह । **भुक्तेति** । उत्क्रान्तौ हेतुमाह । **भोगेति** । प्रतिनियतदेहान्तरप्राप्तिनिमित्तं सूचयति । **कर्मेति** । तद्वत्प्रकृतशकटवदित्यर्थः ॥ १९१५ ॥

**वियुक्तं देवताभिः सत्कर्मसंभारसंभृतम् ॥**
**अनोवल्लिङ्गमेत्येतत्प्रत्यगात्मार्थसिद्धये ॥ १९१६ ॥**

किमिति लिङ्गं भुक्तदेहान्निष्क्रान्तं देहान्तरं गच्छत्यादित्याद्यनुगृहीतमत्रैव कुतो न

---

१ ख. 'मार्ग य' । २ घ. 'स्य तस्य कु' ।

तिष्ठति न च तस्य गतौ कारणं वा फलं वाऽस्ति तत्राऽऽह । **वियुक्तमिति ।** कर्मविद्यादिसंभृतमित्येतदेव स्फुट्यते । **कर्मेत्यादिना** ॥ १९१६ ॥

**शारीरवचसा चात्र लिङ्गमेवाभिधीयते ॥**
**शरीरदेशसंस्थत्वान्न तु प्रत्यङ्ङसंहतेः ॥ १९१७ ॥**

आत्मेति विशेषणादत्र शारीरशब्देन लिङ्गग्रहणमयुक्तमित्याशङ्क्याऽऽह । **शारीरेति ।** आत्मैकादश[1] इत्यादावात्मशब्दस्य लिङ्गेऽपि प्रयोगात्तदेवात्र गतियोग्यं विवक्षितमित्यर्थः ॥ १९१७ ॥

**प्राज्ञेनाधिष्ठितं गच्छेद्रथिना स्वार्थरूपिणा ॥**
**प्रत्यग्धियः समारोहमन्वात्माऽऽरूढवद्यतः ॥ १९१८ ॥**
**प्राज्ञेनेहाऽऽत्मना तस्मादन्वारूढोऽभिधीयते ॥**
**भानुनेवोदपात्रादेरारोहो नाऽऽत्मनः स्वतः ॥ १९१९ ॥**

प्राज्ञेनेत्यत्र विवक्षितमाह । **प्राज्ञेनेति ।** अन्वारूढशब्दार्थमाह । **प्रत्यगिति ।** प्रत्यग्धीश्चैतन्याभासस्तस्याऽऽरोहोऽन्तःकरणे व्याप्तिस्तदनन्तरमात्माऽपि तत्र व्याप्तवद्यतोऽवतिष्ठते तस्मात्प्राज्ञेनाऽऽत्मना परेण साभासबुद्ध्यात्मको लिङ्गात्मा वाऽन्वारूढोऽस्मिन्वाक्ये कथ्यत इत्यर्थः । किमित्याभासद्वाराऽऽत्मनो बुद्धिव्याप्तिः स्वत एव किं न स्यादित्याशङ्क्याऽऽह । **भानुनेति ।** उदपात्रादेरुपाधिविशेषस्य भानुना स्वप्रतिबिम्बद्वारा व्याप्तिर्यथोच्यते तथा प्राज्ञस्याऽऽत्मनश्चिदाभासद्वारैव बुद्धौ व्याप्तिर्न स्वतोऽसङ्गत्वादित्यर्थः ॥ १९१८ ॥ १९१९ ॥

**प्राक्चोक्तमात्मनैवायं ज्योतिषेत्यादिकं वचः ॥**
**आत्मानं रथिनं विद्धीत्यपि श्रुत्यन्तरे वचः ॥ १९२० ॥**

किमिति लिङ्गस्य प्राज्ञेनाधिष्ठितत्वं स्वयमेव गत्यादिव्यापारवत्स्यादित्याशङ्क्य बुद्ध्यादिव्यापारस्याऽऽत्माधीनत्वमुक्तं स्मारयति । **प्राक्चेति ।** कार्यकारणसंघातस्याऽऽत्मचैतन्याधिष्ठितस्य[3] व्यापारवत्त्वे **काठकश्रुतिरपि** मानमित्याह । **आत्मानमिति** ॥ १९२० ॥

**मर्मकृन्तनसंभूतवेदनार्दितमानसम् ॥**
**हिक्किकालक्षणं शब्दं मृतिकाल उपस्थिते ॥ १९२१ ॥**
**उत्सर्जद्याति लिङ्गं तदिति प्रत्यक्षगोचरः ॥**
**तदिदं भण्यते श्रुत्या पुंसां[4] वैराग्यजन्मने ॥ १९२२ ॥**

उत्सर्जन्यातीत्यस्यार्थं[5] प्रकटयति । **मर्मेति ।** तल्लिङ्गमिति साभासप्राणोक्तिः । किमिति प्रत्यक्षमर्थं श्रुतिरनुवदति तदाह । **तदिदमिति** ॥ १९२१ ॥ १९२२ ॥

---

१ ख. घ. °त्मैकदेश । २ घ. °त्माऽन्वा° । ३ ख. °र्यकर° । ४ ग. पुंसो । ५ क. ख. °र्जद्याती° ।

**मर्मसूत्कृत्यमानेषु मुच्यमानेषु संधिषु ॥**
**मुमूर्षतोऽत्र यद्दुःखं स्मर्यतां तन्मुमुक्षुभिः ॥ १९२३ ॥**

संसारस्वरूपे प्रत्यक्षे वैराग्यं न चेदुत्पद्यते कथं तस्मिन्ननुवादमात्रेण तत्सिद्धिरित्याशङ्क्यानुवादश्रुतेरभिप्रायमाह । **मर्मस्विति** । अत्र स्वस्थावस्थायां तत्तद्दुःखश्रुतौ तत्प्रत्यनीकसम्यग्धीसिद्धये तदुपायेषु यत्नः संभवतीति भावः ॥ १९२३ ॥

**कस्मिन्काल इदं जन्तोः किंनिमित्तं च जायते ॥**
**इत्यस्य प्रतिपत्त्यर्थं परो ग्रन्थोऽवतार्यते ॥ १९२४ ॥**

यत्रेत्याद्याकाङ्क्षापूर्वकमादत्ते । **कस्मिन्निति** । इदमा दुःखं परामृश्यते ॥ १९२४ ॥

**उदानवायौ प्रबले यत्रैतत्स्यान्मुमूर्षतः ॥**
**ऊर्ध्वोच्छ्वासी पुमांस्तत्र यथोक्तं जायते मृतौ ॥ १९२५ ॥**

प्रथमप्रश्नस्योत्तरम् । **उदानेति** । मुमूर्षोर्जन्तोर्यत्र मृतावुपस्थितायामुदानाख्ये वायौ प्रबले सति पुमानूर्ध्वोच्छ्वासी व्यपदिश्यते यत्र चैतदूर्ध्वोच्छ्वासित्वं तत्र यथोक्तं हाहेत्यादिशब्दपूर्वकं परवशस्य लिङ्गस्य गमनं भवत्यतस्तस्या मृतेः प्रागेव यत्नवता भवितव्यमित्यर्थः ॥ १९२५ ॥

**पिण्डोऽणुत्वं यदाऽभ्येति जरयाऽभ्यर्दितस्तदा ॥**
**उपतापान्वितो वा सन्यथोक्तं प्रतिपद्यते ॥ १९२६ ॥**

द्वितीयप्रश्नस्योत्तरं स यत्रायमित्यादि तद्व्याकरोति । **पिण्ड इति** । यथोक्तमूर्ध्वोच्छ्वासित्वमित्येतत् ॥ १९२६ ॥

**अणिमानमणोर्भावं कार्श्यं देहो यदैत्ययम् ॥**
**जरया रोगहेतोर्वा ऊर्ध्वोच्छ्वासी तदा भवेत् ॥ १९२७ ॥**

उक्तमनूद्य चतुर्थपादार्थं स्फुटयति । **अणिमानमिति** ॥ १९२७ ॥

**जरया रोगतो वाऽस्य जायते विषमाग्निता ॥**
**सम्यक्पक्तिस्ततोऽन्नस्य मन्दाग्नेर्नोपजायते ॥ १९२८ ॥**
**रसादिधातुभिर्देहस्ततोऽनुपचयादयम् ॥**
**अबलः सन्पतत्येष जीर्णमन्दिरवत्क्षितौ ॥ १९२९ ॥**

जराज्वरादिना देहस्य कथं कार्श्यमित्याशङ्क्याऽऽह । **जरयेति** । रसादिधातुभिः पक्वरसपूर्णत्वगादिभिरिति यावत् ॥ १९२८ ॥ १९२९ ॥

**अथैवं कृशतापन्ने देहेऽन्तरुपजायते ॥**
**या वृत्तिः सोच्यते साक्षाद्दृष्टान्तोक्त्या प्रयत्नतः ॥ १९३० ॥**

---

१ ख. °यां यद्दः° । घ. °यां तद्दः° । २ घ. °ति म पु° ।

तद्यथेत्यादिवाक्यतात्पर्यमाह । अथेति । ऊर्ध्वोच्छ्वासादिदुःखस्य कालनिमित्तयोरवगत्यनन्तरमित्यथशब्दार्थः । स्थूलदेहे यथोक्तेऽन्तर्वृत्तिर्नाम लिङ्गस्योत्क्रान्तिस्तस्याश्च दृष्टान्तोक्त्या प्रत्यक्षवद्वचनं वैराग्यद्वारा ज्ञानहेतुष्ववधानं फलयतीत्यर्थः । प्रयत्नो भूयसां दृष्टान्तानामुक्तिः ॥ १९३० ॥

**आम्रं यथा रसादार्द्र्ये स्वस्माद्वृन्तात्प्रमुच्यते ॥**
**तथेहान्नरसग्लानौ लिङ्गं देहात्प्रमुच्यते ॥ १९३१ ॥**

तात्पर्यमुक्त्वा वाक्यं योजयति । **आम्रमिति** ॥ १९३१ ॥

**वृन्ते निबध्यते येन रसेनाऽऽपरिपाकतः ॥**
**स रसो बन्धनं ज्ञेयो वृन्तं वा बन्धनं मतम् ॥ १९३२ ॥**

दृष्टान्तगतबन्धनशब्दस्यार्थमाह । **वृन्त इति** । करणव्युत्पत्त्या रसो वाऽधिकरणव्युत्पत्त्या वृन्तं वा बन्धनमिति यावत् ॥ १९३२ ॥

**वृन्तेनाऽऽम्रस्य संबन्धो रसस्याऽऽपरिपाकतः ॥**
**बाल्ये दृढो यथा तद्वन्नैवं पक्वरसस्य सः ॥ १९३३ ॥**

तस्मादाम्रादिफलस्य पाते हेतुमाह । **वृन्तेनेति** । एवमिति दार्ष्टान्तिकोक्तिः । स संबन्धो[1]ऽपक्वरसस्याऽऽम्रस्योक्तदृष्टान्तानुसारेण बाल्यावस्थायामिव दृढो न भवति तेन तत्पतनमित्यर्थः ॥ १९३३ ॥

**क्लैद्यमापद्यमानोऽथ पाककाल उपस्थिते ॥**
**रस आम्रं धारयितुं नैवेहोत्सहतेऽबलः[2] ॥ १९३४ ॥**

कथं फलपाते पक्वो रसो हेतुरित्याशङ्क्य हेतुत्वं साधयति । **क्लैद्यमिति** । अबल इति च्छेदः । रसक्लेदस्य तदीयदौर्बल्ये हेतुत्वमथेत्युच्यते । आम्रधारणाधिकरणं वृन्तं सप्तम्या गृह्यते ॥ १९३४ ॥

**गुरुत्वाद्बन्धनाद्वृन्ताद्रसाद्वाऽथ प्रमुच्यते ॥ १९३५ ॥**
**नानाहेतुकपातस्य फलस्य प्रतिपत्तये ॥**
**दृष्टान्तानामिहोक्तिः स्याद्भूयसां भिन्नरूपिणाम् ॥ १९३६ ॥**

फलपातहेतुमुक्त्वा तत्पतनमधुना दर्शयति । **गुरुत्वादिति** । एकेनापि दृष्टान्तेनेष्टार्थसिद्धौ किमिति विषमानेकदृष्टान्तोक्तिरित्याशङ्क्याऽऽह । **नानेति** । प्रकृतं वाक्यं सप्तम्या संगृहीतम् ॥ १९३५ ॥ १९३६ ॥

**वृन्तादेवाऽऽम्रपातोऽत्र वृन्तेनोदुम्बरं सह ॥**
**पतत्यश्वत्थपातस्तु पाकेऽप्यन्यनिमित्ततः ॥ १९३७ ॥**

---

१ घ. °न्धो न प° । २ क. °तुं न चैवोत्स° । ख. °तुं न चेहोत्स° ।

अनुभवानुसारेण फलपतनस्य नानाहेतुकत्वमाह । **छुन्तादिति** । फलभेदाः सप्तम्या संगृह्यन्ते । अन्यनिमित्तं शकुन्तसंबन्धादिः ॥ १९३७ ॥

**बहुप्रकारसिद्ध्यर्थं वाशब्दव्याहृतिस्त्विह ॥**
**बहुहेतुर्मृतिर्यस्मात्प्राणिनां जगतीक्ष्यते ॥ १९३८ ॥**

किमिति दृष्टान्ते त्रयाणां वाशब्दानामुक्तिरित्याशङ्क्य दार्ष्टान्तिकं मरणमनियतहेतुकमिति प्रतिपत्तुमित्याह । **बहुप्रकारेति** । मरणस्यानियतानेकहेतुकत्वमनुभवावष्टम्भेन स्पष्टयति । **बहुहेतुरिति** । तस्मात्तत्र न विवदितव्यमिति शेषः ॥ १९३८ ॥

**यथाऽयमुक्तो दृष्टान्तः पुरुषोऽप्येवमेव हि ॥**
**लिङ्गात्मा पुरुषो ज्ञेयस्तस्यैवेहाङ्गसंगतेः ॥ १९३९ ॥**

दृष्टान्तं संक्षेपविस्तराभ्यां व्याख्याय दार्ष्टान्तिकं विवृणोति । **यथेति** । अङ्गेभ्यः संप्रमुच्यत इति शेषः । न च संप्रमोक्षणं प्रत्यक्षमिति वक्तुं हिशब्दः । पुरुषशब्दार्थमाह । **लिङ्गेति** । इहेति देहोक्तिः ॥ १९३९ ॥

**श्रोत्रत्वगादिनाड्यश्च प्रोच्यन्तेऽत्राङ्गसंज्ञया ॥**
**तेषु व्युष्यैव लिङ्गात्मा यतोऽलं स्यात्स्वकर्मणे ॥ १९४० ॥**

अङ्गशब्दार्थमाह । **श्रोत्रेति** । ननु कस्मादस्मिन्वाक्ये श्रोत्रादीन्द्रियस्थानमङ्गशब्देन गृह्यते तत्राऽऽह । **तेष्विति** । अतस्तेषामङ्गशब्दवाच्यतेति शेषः ॥ १९४० ॥

**अङ्गस्य कृष्णसारस्य चक्षुषः करणस्य च ॥**
**आश्रयाश्रयिसंबन्धे हेतुरन्नरसो भवेत् ॥ १९४१ ॥**

आम्रादेरपक्वो रसो वृन्ते स्थितिहेतुरास्थितो लिङ्गस्य तु देहे कस्तथेति तत्राऽऽह । **अङ्गस्येति** ॥ १९४१ ॥

**अन्नं दामेति चाप्युक्तं रसादिपरिणामतः ॥**
**तद्यावत्कठिनं देहे तावल्लिङ्गं स्थिरं भवेत् ॥ १९४२ ॥**

लिङ्गस्य देहे स्थितावन्नरसो हेतुरिति चतुर्थे व्याख्यातमित्याह । **अन्नमिति** । तद्रसमात्रं देहे लिङ्गस्य स्थितिहेतुश्चेत्पक्वोऽपि स तथा स्यादिति देहपातानुपपत्तिरित्याशङ्क्याऽऽह । **रसादीति** । रसशब्देनाणीयान्परिणामो गृह्यते । आदिशब्देनाधममध्यमपरिणामौ गृहीतौ ॥ १९४२ ॥

**जरादिहेतुपाके तु पतत्याम्रादिवद्ध्रुतम् ॥**
**एभ्योऽङ्गेभ्य इति गिरा तदेतदभिधीयते ॥ १९४३ ॥**

कठिनस्यान्नरसस्य लिङ्गस्य स्थितिहेतुत्वमुक्त्वा तस्यैव पक्वस्य लिङ्गनिर्गमयितृत्वेन

---

१ क. ख. ग. व्युष्यैव ।

देहपातहेतुत्वमाह । **जरादीति ।** कर्तृत्वं देहस्यात्र विवक्षितम् । उक्तेऽर्थे पदत्रयस्य द्योतकत्वं सूचयति । **एभ्य इति** ॥ १९४३ ॥

**उपसर्गः समित्येष एकीभावप्रसिद्धये ॥**
**तथा प्रकर्षसिद्ध्यर्थं प्रोपसर्गः प्रयुज्यते ॥ १९४४ ॥**

संप्रमुच्येत्यत्रोपसर्गयोरर्थमाह । **उपसर्ग इति** ॥ १९४४ ॥

**व्यस्तानि स्थानसंबन्धात्करणानि यतस्ततः ॥**
**स्वस्थानेभ्योऽपकृष्टानि मरणे यान्त्यथैकताम् ॥ १९४५ ॥**

कोऽयमेकीभावो यत्प्रसिद्धये समित्युपसर्गस्तत्राऽऽह । **व्यस्तानीति ।** स्वस्थावस्थायां स्थानभेदसंबन्धाद्यतस्ततो व्यस्तानि करणानि मरणे स्वस्थानेभ्योऽपकृष्टान्यनन्तरं लिङ्गात्मनैकतां यान्तीति संबन्धः ॥ १९४५ ॥

**स्वप्ने प्राणावशेषत्वात्स्थानात्करणसंहृतेः ॥**
**मृतौ सहैव चानेन प्रकर्षोऽत्रात ईक्ष्यते ॥ १९४६ ॥**

कोऽसौ प्रकर्षो यदर्थं प्रोपसर्गस्तत्राऽऽह । **स्वप्न इति ।** अस्ति स्वप्नेऽपि स्वस्थानात्करणसंहृतिर्नासौ निर्लेपेन भवति तस्याः प्राणावशेषत्वान्मरणे तु सहैव तेन तानि स्वस्थानेभ्यः संह्रियन्तेऽतः स्वप्नापेक्षया प्रकर्षो मरणे करणोपसंहृतेर्दृश्यते प्रोपसर्गश्च तदद्योतीत्यर्थः ॥ १९४६ ॥

**देहान्तरादमुं देहं पूर्वमागाद्यतस्ततः ॥**
**तदपेक्ष्य पुनःशब्दः श्रुत्यैवेहाभिधीयते ॥ १९४७ ॥**

पुनःशब्दार्थमाह । **देहान्तरादिति ।** तदपेक्ष्यैवेति संबन्धः ॥ १९४७ ॥

**स्वप्नाद्यथैतो बुद्धान्तं स्वप्नं बुद्धान्ततः पुनः ॥**
**पूर्वदेहात्तथैवाऽऽत्मा याति देहान्तरं पुनः ॥ १९४८ ॥**

उक्तमेव दृष्टान्तेन स्पष्टयति । **स्वप्नादिति ।** इतो गतः ॥ १९४८ ॥

**बाह्याद्देहात्तथैवान्तर्लिङ्गं स्वाप्नं प्रपद्यते ॥**
**यथान्यायप्रतिन्यायौ यथा तत्रोदितौ पुरा ॥ १९४९ ॥**

**देहाद्देहान्तरप्राप्तौ तथैवेति विनिर्दिशेत् ॥**
**प्रतियोनि यथास्थानमित्यत्रापि तथैव तत् ॥ १९५० ॥**

एतदेव संक्षिपति । **बाह्यादिति ।** यथा जाग्रद्देहाद्बहिःस्थितादन्तःस्थितं लिङ्गं स्वप्नसंबद्धं तन्निमित्तकर्मोद्भवे पुमान्प्रतिपद्यते ततो जाग्रद्देहं तन्निमित्तकर्मप्रवृत्तौ प्राप्नोति तथाऽयमात्मा देहाद्देहान्तरं गच्छतीत्यर्थः । प्रतिन्यायशब्दार्थं स्मारयति । **यथान्यायेति ।** स वा एष एतस्मिन्संप्रसादे रत्वेत्यादौ दृष्टान्ते प्रतिन्यायशब्दो यथान्यायशब्दश्च व्याख्येयव्याख्यानतया यथोक्तौ तथैवात्रापि तौ वाच्यावित्यर्थः । प्रतियोनिशब्दार्थ-

माह । **प्रतीति** । यथा पूर्वं दृष्टान्ते प्रतियोनिशब्दो यथास्थानमित्यर्थे व्याख्यातस्तथै- वात्रापि दार्ष्टान्तिके तद्व्याख्या द्रष्टव्येत्यर्थः ॥ १९४९ ॥ १९५० ॥

**श्रुतकर्मानुरूपेण चक्षुराद्यनुरूपतः ॥**
**प्रतियोनि यथास्थानमाद्रवत्येष जन्मने ॥ १९५१ ॥**

पदद्वयार्थमुक्त्वा वाक्यार्थमाह । **श्रुतेति** । प्रतियोनिव्याख्यानस्य यथास्थानमि- त्यस्य विवक्षितमर्थमाह । **चक्षुरादीति** । प्राणायेत्यस्यार्थो जन्मन इति ॥ १९५१ ॥

**देहान्तरगृहीत्यर्थं प्राणिनां मरणं यतः ॥**
**प्राणायेति ततो वक्ति जन्मन्यसति नो मृतिः ॥ १९५२ ॥**

तमेव संक्षिप्तमर्थं प्रपञ्चयति । **देहान्तरेति** । मरणस्य जन्मव्याप्तेर्मृतो देहान्तरम- वश्यं गृह्णाति **जातस्य** हीत्यादिस्मृतेरित्यर्थः ॥ १९५२ ॥

**प्राणव्यूहाय चैवायमाद्रवत्यन्यदेहतः ॥**
**स्थानेष्वव्यूढकरणो नालं स्यात्कर्मणे यतः ॥ १९५३ ॥**

**तमुत्क्रामन्त**मित्यादिश्रुतेः सहैव प्राणेन जीवगमनात्प्राणार्थं देहान्तरग्रहणं कुतो मृतस्येत्याशङ्क्याऽऽह । **प्राणेति** । अन्यदेहतोऽन्यस्माद्देहादन्यं देहं प्रतीत्यर्थः । तेषामा मुक्तेः सत्त्वात्तद्व्यूहस्याकिंचित्करत्वात्कुतस्तदर्थं देहान्तरोपादानमित्याशङ्क्याऽऽह । **स्थानेष्विति** । सत्यमा मुक्तेरस्ति प्राणानुवृत्तिस्तथाऽपि न तत्तद्गोलकादिस्थानेषु करणस्थापनं विनाऽयमात्मा कर्म निर्मातुमीष्टे तस्माद्देहान्तरग्रहणं प्राणव्यूहार्थमर्थ- वदित्यर्थः ॥ १९५३ ॥

**प्राणव्यूहस्य संसिद्धिः कथमस्येति शङ्क्यते ॥**
**शरीरग्रहणाशक्तेरव्यूढकरणत्वतः ॥ १९५४ ॥**

तद्यथा राजानमित्यादिवाक्यापोद्यं चोद्यमाह । **प्राणेति** । अस्येति प्रकृतो भोक्ता गृह्यते । अतिप्रसङ्गित्वं निर्बीजशङ्काया निरसितुं तद्बीजमाह । **शरीरेति** ॥१९५४॥

**न च देहान्तरं कृत्वा राज्ञो भृत्या इवाऽऽसते ॥**
**यतः कर्मसहायोऽयमेकाक्येवेह गच्छति ॥ १९५५ ॥**

यद्यपि त्यक्तदेहो देहान्तरं कर्तुमसहायत्वादक्षमस्तथाऽपि केचिदस्य भृत्यस्थानीया देहान्तरं कृत्वा प्रतीक्षिप्यन्तेऽत आह । **न चेति** । इहेति मृतौ सत्यामित्यर्थः ॥ १९५५ ॥

**इत्यस्य परिहारार्थं दृष्टान्तोऽत्राभिधीयते ॥**
**कृत्स्नं जगत्स्वभोगार्थं पुंसोपात्तं स्वकर्मणा ॥ १९५६ ॥**

---

१ प. 'न्तेन प्र' । २ क. राज्ञे ।

उत्तरं वाक्यमुत्तरत्वेनाऽऽदत्ते । **इत्यस्येति** । अत्रेति श्रुतिरुक्ता । यत्तु नास्य भृत्यस्थानीयाः सन्तीति तत्राऽऽह । **कृत्स्नमिति** ॥ १९५६ ॥

**तत्कर्मफलभोगार्थं कृत्वा देहं प्रतीक्षते ॥**
**शुभं वा यदि वा पापं श्रुतकर्मानुरूपतः ॥ १९५७ ॥**

इन्द्रादिजगतो भृत्यस्थानीयस्य सत्त्वेऽपि कथं प्रतीक्षकत्वमित्याशङ्क्याऽऽह । **तत्कर्मेति** । स्वामिभोगाय देहं कृत्वा तदिन्द्रादिजगद्भोक्तारं प्रतीक्षत इति योजना । कथमेतत्कर्मोपार्जितमिन्द्रादीत्याशङ्क्य कर्मस्वरूपं विवेचयति । **शुभं वेति** । पूर्वज्ञान-कर्मानुसारतः शुभमशुभं वा पुनरपि कर्मोपचिनोति "तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते" इति **स्मृतेरित्यर्थः** ॥ १९५७ ॥

**कर्मोपात्तानि भूतानि तत्प्रयुक्तानि देहिनः ॥**
**कृत्वा देहान्तरं योग्यं तस्थू राज्ञोऽग्रगा इव ॥ १९५८ ॥**

उपचितकर्मोपार्जितानि भूतानि तत्प्रेरितानि तत्फलाभिमुखानि तिष्ठन्तीत्याह । **कर्मेति** । भूतानामात्मकर्मार्जितत्वे सिद्धमर्थमाह । **देहिन इति** ॥ १९५८ ॥

**तत्रैतस्मिन्यथोक्तेऽर्थे दृष्टान्तोऽप्यभिधीयते ॥**
**विवक्षितार्थविज्ञानप्रसिद्धिः स्यात्कथं न्विति ॥ १९५९ ॥**

उक्तेऽर्थे दृष्टान्तश्रुतिं पातयति । **तत्रेति** । देहिनो देहाद्देहान्तरग्रहे सहायाः सन्तीत्यस्मिन्नर्थे दृष्टान्तस्तद्यथेत्यादिनोच्यत इत्यर्थः । देहान्तरग्रहे पुंसः सहायसंपद-स्तीति विवक्षितं चेत्तन्मात्रमेवोच्यतां श्रुतेरनतिशङ्क्यत्वात्कृतं दृष्टान्तेनेत्याशङ्क्याऽऽह । **विवक्षितेति** । श्रुतेरनतिशङ्क्यत्वेऽपि प्रतिपत्तिसौकर्यार्थं दृष्टान्तोक्तिरित्यर्थः । अयमेव पूर्वार्धगतस्यापेरर्थः ॥ १९५९ ॥

**यथा राजानमायान्तं सन्नपानादिसाधनैः ॥**
**बुद्ध्वा कृतैः प्रतीक्षन्त उग्राः सूतादयो जनाः ॥ १९६० ॥**

तदक्षराणि व्याकरोति । **यथेति** । आयान्तं बुद्ध्वेति संबन्धः ॥ १९६० ॥

**उग्रे कर्मणि ये राज्ञा नियुक्ताः पापकारिषु ॥**
**उग्रास्तेऽत्राभिधीयन्ते जातितो वाऽभिधा भवेत् ॥ १९६१ ॥**

उग्रशब्दस्य द्वेधाऽर्थमाह । **उग्र इति** ॥ १९६१ ॥

**एन एनः प्रति तथा नियुक्ता ये नराधिपैः ॥**
**प्रत्येनसोऽत्र ते ज्ञेया भिन्नास्ते स्वाधिकारतः ॥ १९६२ ॥**

उग्राः प्रत्येनस इत्यनयोरर्थैक्यमाशङ्क्याऽऽह । **एन इति** । अत्रेति निर्धारणार्था

---

१ ग. 'पं कृत' ।

सप्तमी । उभये तच्छब्देन गृह्यन्ते । अधिकारो नियोगविशेषः प्रवृत्तिविशेषो वा ॥ १९६२ ॥

**रथवाहाश्च सूताः स्यू रथवाहनकोविदाः ॥**
**ग्रामण्यो ग्रामनेतारः सेनाधिपतयो मताः ॥ १९६३ ॥**

सूतादिशब्दद्वयं व्याचष्टे । **रथेति** ॥ १९६३ ॥

**ते यथा कर्मणोपात्ता राज्ञः प्रागेव चाऽऽगमात् ॥**
**अन्नपानगृहाद्यर्थान्कृत्वा राजप्रतीक्षिणः ॥**
**राजाऽयं नः समायातीत्यासते यत्नमास्थिताः ॥ १९६४ ॥**

दृष्टान्ते विवक्षितमुपसंहरति । **ते यथेति** ॥ १९६४ ॥

**यथैवं सर्वभूतानि भोक्त्रा कर्मादिकारणैः ॥**
**अर्जितान्युचितं देहं भोक्तुर्भोगक्षमं तथा ॥ १९६५ ॥**
**कृत्वा तत्प्राप्तितः पूर्वं यथा सूतादयो नृपम् ॥**
**प्रतीक्षन्ते प्रयत्नेन ब्रह्मैतीत्यभिकाङ्क्षया ॥ १९६६ ॥**

एवमित्यादि व्याचष्टे । **यथैवमिति** । परामृष्टं दृष्टान्तमनुवदति । **यथेति** ॥ १९६५ ॥ १९६६ ॥

**विज्ञानात्मन्युपक्रान्ते ब्रह्मेति यदिहोच्यते ॥**
**स्वतो ब्रह्मत्वतस्तस्य संसारित्वमविद्यया ॥ १९६७ ॥**

देहाद्देहान्तरग्रहीतारि तस्मिन्निदं ब्रह्माऽऽयातीति ब्रह्मशब्दप्रयोगे को हेतुरित्याशङ्क्याऽऽह । **विज्ञानेति** । इहेति वाक्योक्तिः । तस्येत्यत्र तदिति वक्तव्यम् । जीवः संसारी कथमसंसारि ब्रह्म स्यादित्याशङ्क्याऽऽह । **संसारित्वमिति** ॥ १९६७ ॥

**कथं नाम मतिस्तस्य ब्रह्मास्मीति भवेदिह ॥**
**श्रुतिस्तत्तत्त्वबोधार्थं ब्रह्मेत्याह ततो नरम् ॥ १९६८ ॥**

जीवे ब्रह्मशब्दस्यापरं तात्पर्यमाह । **कथमिति** । इहेत्यात्मस्वरूपोक्तिः । यतः श्रुतेरयमाशयस्तत इति योजना ॥ १९६८ ॥

**अनुवादो न तु विधिरेवंविदमितीर्यते ॥ १९६९ ॥**
**सर्वान्प्रत्यविशिष्टत्वादेवंविदमितीरणम् ॥**
**नानुवादः फलोक्तिर्वा यथाव्याख्यातवेदिनः ॥ १९७० ॥**

एवं हैवंविदमित्यत्रैवंविच्छब्दस्यार्थमाह । **अनुवाद इति** । तत्र हेतुः । **सर्वानिति** । मरणस्य सर्वसाधारणत्वादुत्क्रान्तिविद्भवेदिति न विधिः किंतु लोकसिद्धमेवोत्क्रमणमनूद्यते देहान्तरोपादाननिवेदनार्थमित्यर्थः । अनुवादमुक्त्वा विधिपक्षमाह ।

---

१ ख. °ता नृपं तथा ॥ प्र° । २ क. ग. °सारी स त्ववि° ।

**एवमिति** । यथाशास्त्रमुत्क्रान्तिमनुसंदधानस्य संसारे ध्वस्ततृष्णस्य सर्वाणि भूतानि प्रतीक्षन्त इति फलोक्तेरेवंविदमित्येवंवित्त्वं विधीयते न त्वनूद्यते तन्मात्रे फलाभावात्तस्माद्दतेऽपि देहान्तरोपादानत्वोक्तेः सुकरत्वादित्यर्थः । वाशब्दोऽवधारणार्थः ॥ १९६९ ॥ १९७० ॥

**करणानुग्रहीतॄणि भूतानि च मुमूर्षतः ॥**
**कृत्वा देहं प्रतीक्षन्ते नृपस्येव गृहं नराः ॥ १९७१ ॥**

सर्वाणि भूतानीत्यत्र भूतशब्दार्थमाह । **करणेति** । क्रियापदार्थमाह । **कृत्वेति** ॥ १९७१ ॥

**एवं जिगमिषुं देवमनुगच्छन्ति के तु तम् ॥**
**गच्छन्तः कस्य गत्या वा स्वातन्त्र्येणाऽऽत्मनोऽथवा ॥१९७२॥**

अज्ञस्याऽऽत्मनो वर्तमानदेहं हित्वा देहान्तरं जिगमिषतस्तन्निर्माणे सहायसंपत्तिरुक्ता । इदानीं तद्यथा राजानं प्रयियासन्तमित्याद्यवतारयितुं चोदयति । **एवमिति** । गच्छन्तं केऽनुगच्छन्त्यनुगच्छन्तोऽपि कस्य गत्याऽनुगच्छन्ति किं स्वातन्त्र्येणाऽऽत्मकर्मप्रयुक्ता वेति जिज्ञासार्थः ॥ १९७२ ॥

**इत्यर्थमपि दृष्टान्तः पूर्ववद्वर्ण्यते[3] पुनः ॥**
**इतः प्रवसतो देहाद्देहिनः कर्मसंक्षयात् ॥ १९७३ ॥**

आत्मकर्मप्रेरिता वागादयोऽनुगच्छन्तीति निर्णयार्थं दृष्टान्तमुत्थापयति । **इत्यर्थमिति** । अपिशब्दसूचितं प्रकटयति । **पूर्ववदिति** । दार्ष्टान्तिकं सूचयति । **इत इति** । प्राणाः समायान्तीति संबन्धः ॥ १९७३ ॥

**यथेह प्रयियासन्तमुग्रसूतादयो जनाः ॥**
**राजानमभिसंयान्ति प्राणास्तद्वन्मृतौ नरम् ॥ १९७४ ॥**

दृष्टान्तं विवृणोति । **यथेति** । दार्ष्टान्तिकं स्पष्टयति । **प्राणा इति** ॥ १९७४ ॥

**यदोर्ध्वोच्छ्वासितैवास्य पुरुषस्य भवत्यथ ॥**
**सुखयन्तस्तदा प्राणाः संयान्त्युत्क्रान्तिवेदिनम् ॥ १९७५ ॥**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके चतुर्थाध्यायस्य**
**तृतीयं ज्योतिर्ब्राह्मणम् ॥ ३ ॥**
**बृहदारण्यकक्रमेण षष्ठाध्यायस्य तृतीयं ब्राह्मणम् ॥**

यत्रैतदित्यादेस्तात्पर्यमाह । **यदेति** । अस्यार्थः । संसारिणो हि प्रारब्धकर्मावसानानन्तरं यस्यामेव दशायामूर्ध्वोच्छ्वासितोपावर्तते तस्यामेवावस्थायां यथाशास्त्रं पूर्वाभ्यस्तोत्क्रान्तिविदं संसृतावनास्थावन्तं पुमांसमक्लेशयन्तो वागादयोऽनुवर्तन्ते मरणावसरे हि

---

१ ख. नु । २ ग. गच्छन्तं । ३ ग. 'तेऽधुना ॥ १' । ४ घ. 'शास्त्रपू' ।

प्राणाः सर्वेषु प्राणिषु क्लेशमादधतीत्युत्सर्ग उत्क्रान्तिवेदिनि पुनर्न ते क्लेशाधायिनो ज्ञानमाहात्म्यादिति ॥ १९७९ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां चतुर्थाध्यायस्य तृतीयं ज्योतिर्ब्राह्मणम् ॥ ३ ॥

**श्लोकानामादितः समष्ट्यङ्काः—९०३३**

---

अथ चतुर्थं ब्राह्मणम् ।

**यत उत्क्रान्तिरुक्तेयं विशिष्टफलसंगतेः ॥**
**सर्वेषामविशिष्टाऽतः स यत्रेत्युच्यतेऽधुना ॥ १ ॥**

पूर्वस्मिन्ब्राह्मणे कार्यकरणसंघातातिरिक्तस्याऽऽत्मनः स्वयंज्योतिषोऽवस्थात्रयातीतस्याविद्याकामकर्मनिर्मुक्तस्यानातिशयानन्दस्यापि दुरपह्नवानाद्यविद्यानिमित्तकामादिकृतमिहलोकपरलोकसंचरणमवस्थाद्वयसंचारदृष्टान्तस्य दार्ष्टान्तिकं मोक्षोदाहरणं च सुषुप्तं व्याख्यातम् । अधुना मोक्षस्यैव सुषुप्तिदार्ष्टान्तिकस्य शिष्टत्वात्तस्मिन्वक्तव्ये पुनःसंसारोक्तिरयुक्ता पुनरुक्तेरित्याशङ्क्य ब्राह्मणान्तरमवतारयति । **यत इति । वैशिष्ट्ये हेतुमाह । फलेति । एवंविदं** सर्वाणि भूतानि प्रतिकल्पन्त इति श्रुतेरित्यर्थः ॥ १ ॥

**करणानां समुत्क्रान्तिर्गमनं च तयोः समम् ॥**
**प्रागुक्तं तत्र यन्नोक्तं तदेवेहोच्यतेऽधुना ॥ २ ॥**

एवंवित्त्वविधिपक्षे संबन्धमुक्त्वा तदनुवादपक्षे तमाह । **करणानामिति ।** तयोर्जीवप्राणयोरिति यावत् । प्रागुक्तं तद्यथा राजानं प्रयियासन्तामित्यादावित्यर्थः । यन्नोक्तं तेजोमात्रादानादीत्यर्थः ॥ २ ॥

**संसारस्याधिकारोऽयमा श्लोकोदाहृतेर्मतः ॥**
**स यत्रेत्यत आरभ्य पुंसः संसारवर्णनम् ॥ ३ ॥**

सर्वस्यैव ब्राह्मणस्य संसारविषयत्वं व्यावर्तयितुं संसारप्रकरणपरिमाणमाह । **संसारस्येति ।** स यत्रायमित्यस्मादारभ्य तदेव सक्तः सह कर्मणेतिश्लोकसहितार्वाक्तनग्रन्थेन संसारप्रकरणं यतो निवृत्तमतोऽकामयमानवाक्यात्प्रागेव वैराग्यहेतोः संसारवर्णनमित्यर्थः ॥ ३ ॥

**पुंसः संसरणं पूर्वं सूत्रितं यत्समासतः ॥**
**विस्तरस्तस्य वक्तव्य इत्यर्था वा परा श्रुतिः ॥ ४ ॥**

---

१ क. 'संसर' ।

भाष्याद्बहिरेव संबन्धद्वयोक्त्या पुनरुक्तिं समाधाय भाष्योक्तसंबन्धमनुसृत्य तां समाधत्ते । **पुंस इति** ॥ ४ ॥

**तत्संप्रमोक्षणं कस्मिन्पुंसः कालेऽभिजायते ॥**
**कथं[1] वेत्यादिकोऽत्रार्थो विस्तरेणोपवर्ण्यते ॥ ५ ॥**

विस्तरप्रकारमेवाऽऽह । **तदिति** । देहाङ्गानि[2] च सर्वनाम्ना गृहीतानि तानि हि पुंसो देहान्मुच्यमानस्यापादानभूतानि । आदिपदेन देहान्तरोपादानोपकरणारम्भादि गृह्यते । अत्रेति वक्ष्यमाणसंसारप्रकरणोक्तिः ॥ ५ ॥

**प्रकृतात्मपरामर्शः सशब्देन विवक्ष्यते ॥**
**संसारानर्थसंबन्धविज्ञानाय तमस्विनः ॥ ६ ॥**

तात्पर्यमुक्त्वा पदव्याख्यानमारभमाणः सशब्दार्थमाह । **प्रकृतेति** । तद्यथाऽनः सुसमाहितमित्यादौ प्रकृतस्याज्ञस्याऽऽत्मनः सशब्देन किमिति परामर्शस्तत्राऽऽह । **संसारेति** ॥ ६ ॥

**य आत्मा प्रस्तुतोऽविद्वान्स यदेदं शरीरकम् ॥**
**कार्श्यं प्रापय्य पूर्वोक्तैर्जरारोगादिहेतुभिः ॥ ७ ॥**

उक्तमनूद्याबल्यं न्येत्येत्यस्यार्थमाह । **य आत्मेति** । उक्तहेतुभिरविद्वानात्मा कार्श्यं प्रापय्य यदा संमोहमिव याति तदैनं वागादयः समायन्तीति[3] संबन्धः ॥ ७ ॥

**यदि वा स्वयमेवैत्य देहाभेदत्वहेतुतः ॥**
**दौर्बल्यमेवं संप्राप्य संमोहमिव यात्यथ ॥ ८ ॥**

न्येत्येति ल्यपृश्रुतेर्णिचोऽश्रवणात्कथं कार्श्यं प्रापय्येत्युच्यते तत्राऽऽह । **यदि वेति** । स्वयमेवाऽऽत्मा कार्श्यमेत्य संमोहमिव यातीति संबन्धः । आत्मनो दौर्बल्यप्राप्तौ हेतुमाह । **देहेति** । मनुष्योऽहमित्यध्यासादित्यर्थः । उक्तमनूद्योत्तरवाक्यमादत्ते । **दौर्बल्यमिति** । कार्श्यमोहाह्योर्नैरन्तर्यार्थोऽथशब्दः ॥ ८ ॥

**मूर्छादाविव संमोहमिहाप्यात्मा निगच्छति ॥**
**बोधमात्रैकयाथात्म्यान्नायं संमोहभाग्यतः ॥**
**संमूढबुद्धिसाक्षित्वात्संमूढ इव भात्यतः ॥ ९ ॥**

तस्य दृष्टान्तपूर्वकमर्थमाह । **मूर्छादाविति** । इहेत्यन्तकालोक्तिः । इवशब्दार्थं समर्थयते । **बोधेति** ॥ ९ ॥

**संमोहहेतुकं कार्यं संमोहात्मकमिष्यते ॥**
**अकार्यकारणं[5] प्रत्यग्ज्योतिः संमुह्यते कुतः ॥ १० ॥**

---

१ ग. °थं चेत्या° । २ घ. °नि स° । ३ क. °मायान्ती° । ४ ग. °ह्यान्वितामि° । ५ क. ग. °कार्याका° ।

आत्मनो वस्तुतोऽसंमोहे हेत्वन्तरमाह । संमोहेति ॥ १० ॥

कार्श्यसंमोहसंबन्धो यतो नास्य स्वतस्ततः ॥
मोहोत्थदेहबुद्ध्यादिसंगतेरिवगीरियम् ॥ ११ ॥

इवशब्दार्थमुपसंहरति । कार्श्येति ॥ ११ ॥

उत्क्रान्तिकाले प्राणानां स्वस्थानादार्ढ्यहेतुका ॥
स्वगोचरेष्वशक्तिर्या संमोहोऽसाविहाऽऽत्मनः ॥ १२ ॥

संमोहशब्देन मूलाज्ञानमुक्त्वाऽर्थान्तरमाह । उत्क्रान्तीति । इहशब्दस्य पूर्वसप्तमीभ्यां संबन्धः ॥ १२ ॥

दाहच्छेदादयो यद्वद्दाह्याच्छेद्यतन्विनः ॥
परोपाधिनिमित्ताः स्युर्दुर्बलत्वादयस्तथा ॥ १३ ॥

कथं करणाशक्तिरात्मनः संमोहो न ह्यन्यधर्मोऽन्यस्य भवतीत्याशङ्क्याऽऽह । दाहेति । परोपाधिर्देहादिः ॥ १३ ॥

बाह्या तावदियं वृत्तिर्व्याख्याता प्रत्यगात्मनः ॥
कार्श्यसंमोहरूपा या प्रसिद्धा जगतीदृशी ॥ १४ ॥

अथैनामित्याद्यवतारयितुं वृत्तं कीर्तयति । बाह्येति । ईदृशीति स्वानुभवसिद्धत्वोक्तिः ॥ १४ ॥

मरिष्यतोऽस्य या वृत्तिरान्तरी साऽधुनोच्यते ॥
हृत्सद्मन्युपसंहारो यथा स्यादिन्द्रियात्मनाम् ॥ १५ ॥

अथेत्यादेस्तात्पर्यमाह । मरिष्यत इति । एतच्च प्रत्यगात्मविशेषणं प्रागपि संबध्यते । का पुनरान्तरी वृत्तिस्तामाह । हृदिति । तथोच्यत इति शेषः ॥ १५ ॥

अथैनमुच्चिक्रमिषुं विज्ञानात्मानमीश्वरम् ॥
प्राणा वागादयः सर्वे तं समायन्ति कृत्स्नतः ॥ १६ ॥

पदानि व्याकरोति । अथेति । प्रारब्धकर्मावसानानन्तर्यमथशब्दार्थः । वागादीनां जीवं प्रत्यागतौ करणस्वामित्वं हेतुमाह । ईश्वरमिति । स्वापाद्विशेषार्थं कृत्स्नत इत्युक्तम् ॥ १६ ॥

अभीति चाऽऽभिमुख्येऽर्थे सं तु सामस्त्य इष्यते ॥
अवध्यर्थे तथाऽऽङत्र यन्तीत्यस्य विशेषणम् ॥ १७ ॥

अभिसमायन्तीत्यत्रोपसर्गत्रयार्थमाह । अभीति चेति ॥ १७ ॥

स्वाश्रयेभ्यो यियासन्ति करणानि हृदीश्वरम् ॥
यदैषां स्थानसंबन्धविमोक्षः स्यात्तदैव तु ॥ १८ ॥

---

१ क. ख. °मायान्ति ।

स्वाश्रयस्थानामेव करणानामात्मानं प्रति गतिश्चक्षुषो गोलकस्थस्यैव ध्रुवादिगतिदृष्टे-रित्याशङ्क्याऽऽह । **स्वाश्रयेभ्य इति** । जीवदवस्थायां स्वाश्रयस्थानामेव गमनेऽपि मरणकाले करणानां न तादृग्गमनं मरणानुपपत्तेरित्यर्थः ॥ १८ ॥

**कथं तमभिसंयान्तीत्युक्ते श्रुत्याऽभिधीयते ॥**
**आत्मानमभिसंयान्ति वागादीनि यथा स्फुटम् ॥ १९ ॥**

स एता इत्याद्याकाङ्क्षापूर्वकमादत्ते । **कथमिति** ॥ १९ ॥

**स आत्मा प्रकृतस्त्वेताश्चक्षुःश्रोत्रादिलक्षणाः ॥**
**तेजोमात्रा यथादेशं समये मृतिकर्मणः ॥ २० ॥**

यथाऽऽत्मानं करणानि सामस्त्येनाऽऽभिमुख्येन गच्छन्ति तथा स्फुटमुच्यते वाक्ये-नेति तात्पर्यमुक्त्वा तद्व्याचष्टे । **स इति** । अविद्वानात्मा तत्तद्देशात्करणान्यादाय मृति-काले हृदि गच्छतीत्यर्थः ॥ २० ॥

**उद्भूताकूतविज्ञानो मृतिं प्रति यदा तदा ॥**
**आकूतानुविधायीनि जायन्ते करणान्यथ ॥ २१ ॥**

समभ्याददान इत्यस्यार्थं वक्तुं पातनिकां करोति । **उद्भूतेति** । यथोक्ताकूतस्य तद-नुविधायित्वस्य च हेतुहेतुमत्त्वद्योतनार्थोऽथशब्दः ॥ २१ ॥

**स्वाकूतानुविधायित्वं यत्तदा करणात्मनाम् ॥**
**अभ्याददान इति तत्कर्तृत्वं स्यादिहाऽऽत्मनः ॥ २२ ॥**

संप्रति शानचोऽर्थमाह । **स्वाकूतेति** । अविद्वानात्मा मुमूर्षुः स्वशब्दार्थः । तदेति मुमूर्षावस्थोच्यते । इहेति प्रकृतवाक्योक्तिः ॥ २२ ॥

**एतत्कर्तृत्वमापेक्ष्य श्रुत्यैवमभिधीयते ॥**
**अभ्याददान इति तु तेजोमात्राः स्वदेशतः ॥ २३ ॥**

करणानामात्माभिप्रायानुसारित्वमेव तस्य तदादानकर्तृतेति कस्मादुच्यते चैत्रादौ धनादिविषये प्रसिद्धमादानकर्तृत्वमत्रापि किं न स्यादित्याशङ्क्याऽऽह । **एतदिति** । ध्यायतीवेत्यादिविरोधात्करणान्तराभावाच्च तदादानकर्तृताऽऽत्मनोऽमुख्येत्यर्थः ॥ २३ ॥

**मीयन्ते विषया याभिर्मात्रास्ताश्चक्षुरादयः ॥**
**तेजोविकृतिहेतुत्वात्तेजोमात्राश्च ताः स्मृताः ॥ २४ ॥**

तेजोमात्रा इत्यस्यार्थमाह । **मीयन्त इति** । तेज एव विकृतिः साभासस्याज्ञानस्य तां हेतूकृत्य प्रवृत्तत्वात्तेजसो मात्राः करणानीत्यर्थः ॥ २४ ॥

**सत्त्वं तेजोऽत्र विज्ञेयं तदेव करणात्मना ॥**
**प्रविभक्तं हि तच्छब्दस्पर्शाद्यर्थावभासनात् ॥ २५ ॥**

---

१ क. ख. 'कृतास्त्वे' । २ ख. 'कूतिवि' । ३ ग. 'मात्राश्च दे' । ४ घ. 'ता नाऽऽत्मनो मु' ।

मात्राशब्दार्थं समासं चोक्त्वा तेजःशब्दार्थं सांख्याभिप्रेतमाह । **सत्त्वमिति** । तत्र सांख्यप्रसिद्धिद्योतको हिशब्दः । कथं सत्त्वगुणश्चक्षुरादिकरणरूपेण परिणत इति ज्ञायते तत्राऽऽह । **तच्छब्देति** । सत्त्वमहंकारावस्थितं शब्दाद्यर्थावभासकत्वात्करणरूपेण परिणतं **सात्त्विक** एकादशकः प्रवर्तते वैकृतादहंकारादित्युक्तेरित्यर्थः ॥ २५ ॥

**पित्ताख्यं वा भवेत्तेजस्तदंशाश्चक्षुरादयः ॥**
**इत्येवमायुर्वेदज्ञाः करणानि प्रचक्षते ॥ २६ ॥**

पूर्वपक्षान्तरमाह । **पित्ताख्यं वेति** । तत्र प्रमाणमाह । **इत्येवमिति** । **उक्तं हि**— अग्निरेव शरीरे पित्तान्तर्गतः कुपिताकुपितानि शुभाशुभानि करोतीति । **अन्योऽप्याह**—

"आमाशयाश्रयं पित्तं रञ्जकं रसरञ्जनात् ।
बुद्धिमेधाभिमानाद्यैरभिप्रेतार्थसाधनात् ॥
साधकं हृद्गतं पित्तं रूपालोचनतः स्मृतम् ।
दृक्स्थमालोचकं त्वक्स्थं भ्राजकं भ्राजनात्त्वचः" इति ॥ २६ ॥

**यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ॥**
**इति प्रकाशरूपत्वं करणानां श्रुतिर्जगौ ॥ २७ ॥**

सिद्धान्तयितुं करणानां प्रकाशरूपत्वं सप्रमाणमाह । **यदेति** ॥ २७ ॥

**भौतिकस्तु प्रकाशोऽयं भौतिकार्थप्रकाशनात् ॥**
**प्रदीपवन्न भूतेभ्यो जात्यन्तरमतो भवेत् ॥ २८ ॥**

तेषां प्रकाशरूपत्वेऽपि कथं ते सिद्धान्तसिद्धिरत आह । **भौतिकस्त्विति** । तेजःशब्देन भूतपञ्चकमुच्यते तत्कार्यं करणजातं भौतिकप्रकाशत्वादालोकवत् । तदाहुर्भर्तृप्रपञ्चाः—प्रकाशः पुनरयं भौतिको न जात्यन्तरं भूतेभ्य इति । **आयुर्वेदविदश्चाऽऽहुः**—

"एकैकाधिकयुक्तानि खादीनामिन्द्रियाणि च" इति ।
"खादीनि बुद्धिरव्यक्तमहंकारस्तथाऽष्टमः ।
भूतप्रकृतिरुद्दिष्टा विकाराः षोडशैव तु ॥
बुद्धीन्द्रियाणि पञ्चैव पञ्च कर्मेन्द्रियाणि च ।
समनस्काश्च पञ्चार्था विकारा इति संज्ञिताः" इति च ।

तत्कथं सांख्यादिसिद्धान्तसिद्धिरिति भावः ॥ २८ ॥

**स्पष्टं च वक्ष्यतेऽथोर्ध्वमेतेभ्य इति हि श्रुतिः ॥**
**अक्षाणि भौतिकान्येव नातः शक्तय आत्मनः ॥ २९ ॥**

---

१ ख. घ. 'णतः प्रति' । २ ख. घ. 'राकारात' । ३ ख. घ. 'शकत्वा' । ४ घ. 'काशकः पु' ।

करणानां भौतिकत्वे वाक्यशेषसंवादमाह । **स्पष्टं चेति** । एतेभ्यो भूतेभ्यः समुत्थायेत्यत्र भूतशब्देन कार्यकरणान्युच्यन्ते तथा च शरीरवदिन्द्रियाण्यपि भूतकार्याण्येवेति श्रुतिर्वक्ष्यति भाष्यकारादिभिश्चायमर्थो वक्ष्यते तस्माद्भौतिकत्वमिन्द्रियाणामविवादमित्यर्थः । आयुर्वेदे श्रुत्यन्तरे च यथा करणानां भौतिकत्वमुक्तं तथा वाक्यशेषेऽपीत्यथशब्दार्थः । भौतिकत्वे तेषामात्मविकारत्वमपि स्वयूथ्याभीष्टं प्रत्यादिष्टमित्याह । **नात इति** ॥ २९ ॥

**लिङ्गात्मकानां भूतानां निर्देशोऽविद्यया सह ॥**
**तन्नाशमनु नाशः स्याद्यतो दुःखात्मनस्ततः ॥ ३० ॥**

यथोक्ते वाक्ये करणानां भौतिकत्वं न भाति तत्कथं तत्र वाक्यशेषस्य संवादितेत्याशङ्क्याऽऽह । **लिङ्गेति** । साविद्यं सप्तदशकलिङ्गाकारपरिणतं भूतपञ्चकमत्र भूतशब्दार्थः । तथाच भूतेषु करणानामन्तर्भावात्कार्यतैव परिशिष्यत इत्यर्थः । तत्र भूतशब्दस्योक्तार्थत्वे हेतुमाह । **तन्नाशमिति** । तान्येवानुविनश्यतीति जीवस्यापि भूतनाशेन नाशो यतः श्रूयतेऽतो भूतशब्देनोक्तलिङ्गग्रह इत्यर्थः ॥ ३० ॥

**पिण्डनाशेऽपि नैवास्य नाशः संसारिणो यतः ॥**
**अविद्यादीनि भूतानि तत्रोच्यन्ते ततो ध्रुवम् ॥ ३१ ॥**

स्थूलदेहनाशेऽपि शारीरनाशात्तद्विषयमेव भूतपदमित्याशङ्क्याऽऽह । **पिण्डेति** । तथाऽपि सूक्ष्मदेहगृहीतस्य स्थितिसंभवादित्यर्थः ॥ ३१ ॥

**मात्रासंसर्ग एवास्य तथाचैव प्रवक्ष्यते ॥**
**विज्ञानेनाथ विज्ञानमादायेत्यपि चावदत् ॥ ३२ ॥**

साविद्यं लिङ्गशरीरं वाक्यशेषे भूतशब्दितमित्युक्त्वा करणानां भौतिकत्वे पूर्वोक्तवाक्यस्थमेव लिङ्गमुपन्यस्यति । **मात्रेति** । तेषां भौतिकत्वानुसारेण प्रकृतवाक्य एव मात्रासंसर्गस्त्वस्य भवतीति वक्ष्यते । तथाच भूतेभ्यो मात्राभ्यश्च समुत्थायेति पूर्वत्र विवक्षितं न च भूतानां मात्रास्तेजोमात्राभ्यो भिद्यन्ते तेन मात्रासंसर्गश्रुत्या भौतिकत्वमिन्द्रियाणामिष्टमिति भावः । तत्रैव हेत्वन्तरमाह । **विज्ञानेनेति** । विज्ञानेन विज्ञानमादायान्तर्हृदये शेत इति वदता विज्ञानमात्रत्वं करणानामुक्तं न च तन्मात्रास्तेजोमात्राभ्यो भिन्नास्तद्यथोक्तवाक्यादपीन्द्रियाणां भौतिकत्वमित्यर्थः । करणानां भौतिकत्ववदभौतिकत्वे न श्रुतिरस्तीतिद्योतनार्थोऽथशब्दः ॥ ३२ ॥

**अस्य लोकस्य चेत्युक्तं शुक्रमित्यादि चापरम् ॥**
**सर्वेष्वेषु प्रदेशेषु भूतमात्राग्रहः श्रुतौ ॥ ३३ ॥**

किंचास्य लोकस्य सर्वावतो मात्रामपादाय प्रस्वपितीतिब्राह्मणोक्तोऽर्थः शुक्रमादाय पुनरैति स्थानमित्यादिमन्त्रेणापि प्रकाश्यते तेनात्रापि स्वप्नप्रकरणे करणानां

भौतिकत्वं विवक्षितमित्याह । **अस्येति** । अथोदाहृतवाक्येषु करणानां भौतिकत्वं न माति तत्राऽऽह । **सर्वेष्विति** ॥ ३३ ॥

**भूतेभ्यो नापरं वस्तु यस्मादात्मन ईक्ष्यते[1] ॥ ३४ ॥**
**अतो विवेको भूतानां यः परोऽतीव शुद्धितः ॥**
**तेजोमात्रादिवचसा स एवात्राभिधीयते ॥ ३५ ॥**

श्रुतिगतोक्तवाक्येषु भूतमात्राभ्योऽतिरिक्तग्रहणं किं न स्यात्तत्राऽऽह । **भूतेभ्य इति** । आत्मनोऽतिरिक्तं वस्तु भूतभौतिकेभ्यो नापरं दृश्यते तस्माद्भूतात्मातिरिक्तविषयत्वे भौतिकविषयत्वस्याऽऽवश्यकत्वाद्युक्तमत्र सर्वत्र भूतमात्राग्रहणमित्यर्थः । उक्तवाक्यानां भूतमात्रार्थत्वात्तदनुसारेण प्रकृतवाक्येऽपि तद्ग्रहणमुचितमिति फलितमाह । **अत इति** । यो भूतानामुत्तमो विवेकापरपर्यायः परिणामोऽत्यन्तप्रकाशरूपः करणसमुदायः स एव तेजोमात्राः समभ्याददान इति वाक्ये तेजोमात्राशब्देनोच्यत इत्यर्थः ॥ ३४ ॥ ३५ ॥

**इन्द्रियाणीन्द्रियार्थाश्च न विकारः परात्मनः ॥**
**अतो न जायत इति तद्विकारनिषेधतः ॥ ३६ ॥**

केचित्तु सविषयाणां करणानां न भौतिकत्वमात्मविकारत्वादित्याहुस्तान्प्रत्याह । **इन्द्रियाणीति** । **उक्तं** चैतन्नातः शक्त्तय आत्मन इति । तत्र हेतुमाह । **अत इति** । **अतो**ऽन्यदार्तं **न** जायते म्रियते वा विपश्चिदित्यादिनाऽऽत्मनः सर्वविकारनिषेधान्न तद्विकारत्वमिन्द्रियादेरित्यर्थः ॥ ३६ ॥

**जन्मादिविक्रियाषट्कं साक्षान्न परमात्मनः ॥**
**अपूर्वानपराद्युक्तेर्नेति नेत्यादिवाक्यतः ॥ ३७ ॥**

तत्रैव हेत्वन्तरमाह । **जन्मादीति** । साक्षादित्यविद्यां विनेत्यर्थः ॥ ३७ ॥

**न च वेदान्तसिद्धान्ते परमात्मातिरेकतः ॥**
**इष्टं विकारवद्वस्तु यथा कापिलशासने ॥ ३८ ॥**

तर्हि तदतिरिक्तमेव किंचित्परमार्थतो विकारि भविष्यति नेत्याह । **न चेति** ॥ ३८ ॥

**स्वतः कूटस्थतत्त्वस्य तदसंबोधतस्ततः ॥**
**जन्मादिविक्रियाषट्कसंगतिः स्यात्परात्मनः ॥ ३९ ॥**

परस्य कूटस्थत्वे विकारिणश्चान्यस्यानुपगमे निष्कारणं विश्वं स्यादित्याशङ्क्याऽऽह । **स्वत इति** । **मायां** तु प्रकृतिमित्यादिश्रुतेराविद्यं कारणत्वं तस्यैव परस्याऽऽस्थेयमित्यर्थः ॥ ३९ ॥

---

1 ख. दृश्यते ।

आत्मकारणवादोऽयमेवं सत्युपपद्यते ॥
न तु विध्वस्तनिःशेषजन्मनाशादिकारणे ॥ ४० ॥

आत्मनो यदि कारणत्वं तर्त्ताहं वस्तुतोऽस्तु किं तदबोधेनेत्याशङ्क्याऽऽह । आत्मेति । एवं सत्यविद्याकृते कारणत्वे स्वीकृते सतीति यावत् । निरविद्ये त्वात्मन्य-ङ्गीकृते नैवमपूर्वादिश्रुतेरित्याह । न त्विति ॥ ४० ॥

तेजोऽतो भौतिकं सर्वमन्यत्र परमात्मनः ॥
स्वयंज्योतिःप्रसङ्गेन तदुक्तं प्रागपि श्रुतौ ॥ ४१ ॥

अज्ञानहीनस्य कूटस्थस्य कारणत्वानुपपत्तेरात्माज्ञानजन्यभूतकार्यत्वमिन्द्रियादेरित्यु-पसंहरति । तेज इति । ब्रह्मैव तेज एवेत्यत्र व्यभिचारमाशङ्क्याऽऽह । अन्यत्रेति । किंच करणादेर्भौतिकत्वं ज्योतिर्ब्राह्मणादावपि साधितमित्याह । स्वयमिति ॥ ४१ ॥

आदित्यादीनि तेजांसि तथाऽध्यात्माधिभूतयोः ॥
भौतिकान्येव तानीति प्रत्यङ् तेभ्यो विलक्षणः ॥ ४२ ॥

उक्तमेव स्मारयति । आदित्यादीनीति । इति यत्तदुक्तमिति संबन्धः । सर्वस्य भौतिकत्वोक्तिफलमाह । प्रत्यङ्ङिति ॥ ४२ ॥

ता एतास्तेजसो मात्राः समस्तोश्चाऽऽभिमुख्यतः ॥
सामस्त्येनाऽऽददानः सन्हृत्सद्मन्युपसर्पति ॥ ४३ ॥

स इत्यादेरर्थमनूद्य हृदयमित्यादेरर्थमाह । ता इति ॥ ४३ ॥

अभ्याददान एवायमन्ववक्रामतीश्वरः ॥
न त्वाक्रम्य समादत्ते कथं तदिति भण्यते ॥ ४४ ॥

करणाभ्यादानस्य हृदयाक्रमणस्य च पौर्वापर्यमाशङ्क्य शानचा विवक्षितं यौग-पद्यमाह । अभ्याददान इति । ईश्वरत्वं करणस्वामित्वं वस्तुतो वा परमात्मत्वम् । आत्मनः स्वात्मोपसंहारः करणादानं च युगपन्नोपपद्यते स्थितिगतिवद्व्यापारद्वययौगप-द्यायोगादित्याक्षिपति । कथमिति । सप्तदशकलिङ्गोपाधिकत्वादात्मनो लिङ्गसंकोच-विकासावेवाऽऽत्मनः संकोचविकासौ न स्वतोऽतो व्यापारद्वयाभावान्न क्रमप्राप्तिरि-त्याह । भण्यत इति ॥ ४४ ॥

विशेषज्ञानलाभोऽस्य लिङ्गात्मानुविधानतः ॥
यतस्तदपकर्षेण विज्ञानात्मोपसंहृतिः ॥ ४५ ॥
तद्व्याप्तौ चापि संव्याप्तिरापादतलमस्तकम् ॥
स्वतस्तु व्याप्तिसंहाररहितत्वात्परात्मनः ॥ ४६ ॥

तदेव वार्तिकाभ्यां प्रपञ्चयति । विशेषेत्यादिना । अस्य जीवस्य तदपकर्षेण

१ घ. 'ये त्वात्म' । २ ख. ग. 'स्ता आभि' ।

लिङ्गस्य देहादवसर्पणेन तद्व्याप्तौ देहे लिङ्गस्य व्याप्तौ सत्यामित्यर्थः। लिङ्गसंकोचविकासावेव तदुपाधेरात्मनस्तावित्यत्र हेतुमाह। **स्वतस्त्वति** ॥ ४५ ॥ ४६ ॥

**सैन्धवादिरसव्याप्ते पीयमाने यथोदके ॥**
**पानं सलवणस्यैवं लिङ्गात्मानुविधायिता ॥ ४७ ॥**

एतद्दृष्टान्तेन साधयति। **सैन्धवादीति** ॥ ४७ ॥

**सोऽभ्यादानस्य कर्ताऽत्र लिङ्गं योऽस्मीति मन्यते ॥**
**आक्रामद्धृदयं लिङ्गमन्ववक्रामतीव सः ॥ ४८ ॥**

उपहितस्य लिङ्गानुविधायित्वेऽपि करणादानहृदयप्रवेशकर्तुस्ततो भेदाद्व्यर्थं तस्य लिङ्गानुविधायित्वमित्याशङ्क्याऽऽह। **स इति**। यः सप्तदशकलिङ्गात्मन्यहमभिमानी सोऽस्मिन्वाक्ये करणादानस्य कर्ता स एवं च बहिष्करणरूपं लिङ्गमन्तःकरणं प्रविशदनुप्रविशति तदुपाधित्वान्न च तस्य वस्तुतः प्रवेशो निर्व्यापारत्वादित्यर्थः ॥ ४८ ॥

**तथा हृदयशब्देन तत्स्था धीरभिधीयते ॥**
**एवेत्यवधृतिश्चात्र स्वप्नप्राज्ञनिवृत्तये ॥ ४९ ॥**

हृदयमेवेत्यत्र हृदयशब्दार्थमाह। **तथेति**। यथाऽभ्याददानोऽन्ववक्रामतीत्युभयत्रापि कर्तोपहितो विवक्षितस्तद्वादित्यर्थः। एवकारकृत्यमाह। **एवेतीति** ॥ ४९ ॥

**विशेषकार्यवाहिभ्यः स्रोतोभ्यः स्वप्नभूमिगः ॥**
**विशेषाननुसृप्याऽऽत्मा यात्वा हृदयमाश्रयम् ॥ ५० ॥**
**पुरीतत्प्रमुखं देहं वृत्त्या सामान्यरूपया ॥**
**तप्तलोहादिवद्व्याप्य शेते प्राणात्मतां गतः ॥ ५१ ॥**

कथमनेनावधारणवाचिना स्वप्नस्वापयोर्व्यवच्छित्तिरित्याशङ्क्य तयोः स्वरूपं तावदाह। **विशेषेत्यादिना**। स्वप्नस्थो हि पुरुषो रूपादिवासनाश्रयनाडीविशेषवशाद्वासनामयान्विशेषाननुभवति स च स्वप्ननिर्वर्तककर्मक्षये सत्यन्तःकरणं प्राप्य प्राणशब्दिताज्ञातब्रह्मतां गतस्तप्तलोहादौ वह्निरिव समस्तं देहं निर्विकल्पकचिदाभासेन व्याप्यावतिष्ठते तथाच साभासाया बुद्धेः शरीरे सामान्यव्याप्तिर्द्वयोस्तुल्या वासनारूपेण द्रष्टेत्यादिविशेषव्याप्तिः स्वप्न एवेत्यर्थः ॥ ५० ॥ ५१ ॥

**इह त्वेवेति निःशेषा लिङ्गस्यास्योपसंहृतिः ॥**
**विशेषेभ्योऽविशेषेभ्यो युक्तं प्रत्यवसर्पणम् ॥ ५२ ॥**

द्वयोर्वृत्तमुक्त्वा मृतावेवकारः सर्वप्रकारव्याप्तिं निरस्यतीत्याह। **इह त्विति**। लिङ्गस्य निःशेषोपसंहारे तदुपाधेरात्मनोऽपि तथा संभवतीत्याह। **विशेषेभ्य इति** ॥ ५२ ॥

---

१ ख. 'व ह्रि कर'। २ ख. 'न तात्स्थ्याद्धीर'। ३ ग. श्रोत्रेभ्यः।

अवदध्रेऽत एवेति मा भूत्स्वप्नादिवत्स्थितिः ॥
सामान्यं वा विशेषो वा न यतोऽत्रावशिष्यते ॥
कार्त्स्न्येन हृदये एव पिण्डीभावं व्रजत्यतः ॥ ५३ ॥

एवकारार्थं निगमयति । अवदध्र इति । स्वप्नसुप्त्योरिव मरणेऽपि स्थितिरात्मनो लिङ्गस्य च मा भूदिति यस्मान्मन्यते श्रुतिस्तस्मादेवेत्यवधृतवतीति यावत् । हृदयमित्यादेरर्थमुपसंहरति । सामान्यं वेति ॥ ५३ ॥

विधिराकर्षणे तावत्तेजोमात्राश्रयो गतः ॥
अथासंवेदनविधिर्मुमूर्षोरुच्यते यथा ॥ ५४ ॥

स यत्रेत्यादिवाक्यस्य वृत्तानुवादपूर्वकं तात्पर्यमाह । विधिरिति । करणादानप्रकारमुक्त्वा मुमूर्षोर्मृतिकाले शब्दाद्यज्ञानप्रकारो यथा तथोच्यत इत्यर्थः ॥ ५४ ॥

साधारणात्मनो योंऽशो भोक्तृकर्मवशीकृतः ॥
अध्यात्मं चक्षुषि रवेश्चक्षुर्व्यापारसिद्धिकृत् ॥ ५५ ॥

तात्पर्यमुक्त्वा चाक्षुषशब्दार्थमाह । साधारणेति । यो हि सर्वत्र तुल्यस्य रवेरध्यात्मं चक्षुषि रूपादिधीहेतुरनुग्राहकोंऽशो भोक्तृकर्मार्जितः स चाक्षुष इत्यन्वयः॥५५॥

कर्मोपभोगसिद्ध्यर्थं परिच्छिन्नः स्वचक्षुषा ॥
चाक्षुषोऽतः स विज्ञेयः सामान्यात्माऽपि भास्करः ॥ ५६ ॥

किमिति सर्वसाधारणस्य रवेः श्रोत्रत्वादि विहाय चाक्षुषत्वमिष्यते तत्राऽऽह । कर्मेति । साधारणात्माऽपि कर्मफलभोगार्थं भोक्तुः स्वचक्षुषाऽऽदित्यो यतः परिच्छिद्यत आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशदिति श्रुतेरतः स चाक्षुषो ज्ञेय इति योजना ॥ ५६ ॥

स एष पुरुषो यत्र तत्प्रयोक्तृक्रियाक्षये ॥
क्षेत्रज्ञार्थात्पराङेव पर्यावर्तत आत्मनि ॥ ५७ ॥

स यत्रेत्यादेरवशिष्टभागस्यार्थमाह । स एष इति । आदित्यांशश्चक्षुषोऽनुग्राहको देहगतः स्वप्रयोजकभोक्तृकर्मक्षये[4] भोक्तुर्भोग्येभ्यो विमुखः स्वावयविदेवतारूपे यदा पर्यावर्तते तदाऽरूपज्ञो भवतीत्यर्थः ॥ ५७ ॥

निरनुग्रहतैवास्य पर्यावर्तनमुच्यते ॥ ५८ ॥
हृल्लिङ्गप्रसृतो योंऽश उपभोगार्थमक्षिणि ॥
सोऽस्य कर्मक्षयादक्ष्णः पराङावर्तते हृदि ॥ ५९ ॥

पर्यावर्तनं व्याकरोति । निरनुग्रहतेति । अनुग्राहकादित्यांशस्यांशिदेवतात्मनोपसंहारेऽपि करणस्य चक्षुषो रूपधीहेतुत्वसंभवाद्भोगो भोक्तुः सिध्यतीत्याशङ्क्याऽऽह । हृदिति । हृच्छब्देन लिङ्गमेवोच्यते । अस्येति भोक्तुर्निर्देशः । अक्षिशब्दोऽत्र

१ ख. 'तोऽत्र विशि' । २ क. ख. 'यमेव । ३ क. ग. 'मात्रांशयोग' । ४ घ. भोक्तृभोग्ये' ।

स्थानार्थः। यदा हि देवतांशश्चाक्षुषो देवतामापद्यते तदा चक्षुरपि करणं स्थानाद्व्यावृत्तं लिङ्गमेवैत्यतो न तस्य कार्यकरणतेत्यर्थः ॥ ५८ ॥ ५९ ॥

**चाक्षुषे पुरुषे तस्मिन्नावृत्ते कर्मणः क्षयात् ॥**
**देवता देवतामेति लिङ्गैक्यं करणं तथा ॥ ६० ॥**

स यत्रेत्यादेरर्थमुपसंहरति। **चाक्षुष इति** ॥ ६० ॥

**अथैवं सत्यरूपज्ञो देवताकरणच्युतेः ॥**
**आत्मैवमुक्तानुक्तेषु योज्यं प्राणेष्वशेषतः ॥ ६१ ॥**

अथारूपज्ञो भवतीत्यस्यार्थमाह। **अथैवमिति**। अथशब्दस्य तदापर्यायस्य व्याख्यानमेवं सतीति देवतांशस्य देवतैक्यं करणस्य लिङ्गैक्यमित्येवं स्थिते सतीत्यर्थः। देवताच्युतिरनुग्राहकनिवृत्तिः करणच्युतिः स्थानभ्रंशः। मुमूर्षोर्मरणकाले रूपवेदनप्रकारं प्रदर्श्य गन्धादिवेदनाभावप्रकारमतिदिशति। **एवमिति**। चक्षुष्युक्तमवेदनोपयोगि सर्वं घ्राणादिष्वपि द्रष्टव्यमिति यावत् ॥ ६१ ॥

**चेतनावदधिष्ठानात्करणादेर्जडात्मनः ॥**
**प्रवृत्तिर्नियता दृष्टा लोकेऽतो न विपर्यये ॥ ६२ ॥**

इतश्च मृतिकाले युक्तमात्मनो विषयाज्ञानमित्याह। **चेतनावदिति**। लोके हि चेतनावता पुरुषेणाधिष्ठानादचेतनस्य शकटादेर्गमनादिप्रवृत्तिर्नियता दृष्टा तदनधिष्ठिते त्वचेतने न कदाचिदपि प्रवृत्तिरतोऽस्यापि संघातस्य तदधिष्ठितस्यैव प्रवृत्तिर्विमता प्रवृत्तिश्चेतनाधिष्ठानपूर्विकाऽचेतनप्रवृत्तित्वाद्रथादिप्रवृत्तिवदित्यनुमानस्य यः प्राणेन प्राणितीत्यत्र दर्शितत्वात्तथाच मरणकाले चेतनस्याधिष्ठातृत्वाभावात्कार्यकरणयोरप्रवृत्तेर्युक्तमात्मनो विषयावेदनमित्यर्थः ॥ ६२ ॥

**अरूपज्ञत्वहेतुः क इत्याशङ्क्योत्तरं वचः ॥**
**लोकप्रसिद्धिमाचष्ट एकीत्यादि मुमूर्षति ॥ ६३ ॥**

एकी भवतीत्यादेराकाङ्क्षापूर्वकं तात्पर्यमाह। **अरूपेति**। मुमूर्षति पुरुषे देवताकरणच्युतिरेवारूपज्ञत्वहेतुरित्यत्र लोकप्रसिद्धिमेकी भवतीत्यादिवाक्यमाहेत्यर्थः ॥ ६३ ॥

**एकी भवति सावित्रः सवित्रांऽशस्तथैव च ॥**
**लिङ्गांशश्चाक्षुपो व्यूढो लिङ्गैक्यं प्रतिपद्यते ॥ ६४ ॥**

तद्योजयन्नेकी भवतीत्यस्यार्थमाह। **एकी भवतीति**। व्यूढत्वमादित्यानुग्राह्यत्वेन चक्षुःस्थानावच्छिन्नत्वम् ॥ ६४ ॥

**स्वांशिभ्यामेकतापत्तौ देवतालिङ्गभागयोः ॥**
**अथारूपज्ञतामेति यः प्राग्रूपादिवेद्यभूत् ॥ ६५ ॥**

---

१ घ. 'यंकार'।

न पश्यतीत्यस्यार्थमाह । स्वांशिभ्यामिति । अनुग्राह्यानुग्राहकनिवृत्ते रूपज्ञानाभावस्य च हेतुहेतुमत्त्वार्थोऽथशब्दः । रूपाद्यवेदनस्य स्वभावत्वं व्यावर्तयति । य इति ॥ ६५ ॥

अथैनं पार्श्वगाः प्राहुर्बन्धवोऽस्य मुमूर्षतः ॥
वाक्यमेकी भवतीति निराशास्तस्य जीविते ॥ ६६ ॥

इत्याहुरित्यस्यार्थमाह । अथेति । कालार्थोऽथशब्दः ॥ ६६ ॥

करणे देवता यस्मिन्पूर्वं मुञ्चत्यनुग्रहम् ॥
तस्यैव प्रथमं वृत्तिनिरोध उपजायते ॥ ६७ ॥

देवताकरणभागगमनमज्ञानकारणं मरणे श्रुत्युक्तं लोकप्रसिद्ध्याऽपि दृढीकृतम् । इदानीं तस्याज्ञानस्य पाठक्रमानुसारेण क्रमविवक्षायामनुभवविरोधः कस्याश्चिद्वाचो वृत्तिरादौ निरुध्यते कस्यचिदिन्द्रियान्तरस्येत्यनुभवादित्याशङ्क्याऽऽह । करण इति । आनुभविकमर्थमनुसृत्य पाठक्रमो बाध्य इत्यर्थः ॥ ६७ ॥

कस्मिंश्चित्करणे वृत्तिनिरोधः पूर्वमीक्ष्यते ॥
अयौगपद्येनोत्क्रान्तौ तल्लिङ्गं देवतात्मनाम् ॥ ६८ ॥

स चेदुपेक्ष्यते यौगपद्यमेव करणोत्क्रमणादेरस्तु किं क्रमान्तरानुसरणेनेत्याशङ्क्यानुभवमेवाऽऽश्रित्याऽऽह । कस्मिंश्चिदिति ॥ ६८ ॥

यदाऽऽलोचनमात्रं स्याद्रूपादौ चक्षुरादिभिः ॥
प्रविवेक्ता तु रूपादेः सम्यङ्नैव पुमान्भवेत् ॥ ६९ ॥
तदोत्क्रान्तां विजानीयान्मनसो देवतामितः ॥
केवलालोचनाल्लिङ्गात्तथा बुद्धेश्च देवताम् ॥ ७० ॥

चक्षुरादिदेवतोत्क्रान्तौ तद्वृत्तिविशेषनिरोधवन्मनोबुद्धिदेवतोत्क्रान्तौ लिङ्गाभावात्तदुत्क्रान्तिनिश्चयो न स्यादित्याशङ्क्याऽऽह । यदेति । केन पुनर्लिङ्गेन मनोबुद्धिदेवतोत्क्रान्तिरुच्यते तत्राऽऽह । केवलेति । मनोदेवतावद्बुद्धेरपि देवतामुत्क्रान्तां विजानीयादिति पूर्वेण संबन्धः ॥ ६९ ॥ ७० ॥

एवं तद्देवतोत्क्रान्तावेकीभावेन संगतेः[1] ॥
मनुते नो[2] न जानातीत्येवमाहुस्तथा[3] जनाः ॥ ७१ ॥

एकी भवतीत्यादेरर्थमाह । एवमिति । चक्षुरादिदेवतावन्मनोदेवताया बुद्धिदेवतायाश्चास्माद्देहादुत्क्रान्तौ सत्यां मनोदेवतायाश्चन्द्रमस्यैक्यान्न मनुते बुद्धिदेवतायाश्च प्रजापतिनैक्यान्न जानातीत्येवं तस्यामवस्थायां पार्श्वस्था ब्रुवन्तीति योजना ॥ ७१ ॥

---

१ ग. संगतिः । २ क. ग. 'तेऽतो न । ३ ख. ग. 'स्तदा ज' ।

उक्तं विमोक्षणं तावत्करणानां स्वदेशतः ॥
असंविज्ञानता चोक्ता हृदये चोपसंहृतिः ॥ ७२ ॥

तस्येत्यादिवाक्यार्थं वक्तुं वृत्तं कीर्तयति । उक्तमिति ॥ ७२ ॥

अथोपसंहृताशेषकरणस्याऽऽत्मनो यथा ॥
लोकान्तरोपसंक्रान्तिस्तथैतदभिधीयते ॥ ७३ ॥

वाक्यतात्पर्यमाह । अथेति । एतदिति हृदयाग्रप्रद्योतनादि गृह्यते ॥ ७३ ॥

तस्यैतस्य यथोक्तस्य कृत्स्नप्राणोपसंहृतेः ॥
नाड्यग्रं हृदयस्याथ प्रकर्षेण प्रकाशते ॥ ७४ ॥

वाक्याक्षराणि व्याकरोति । तस्येति । यथोक्तस्येत्येतदेव व्यनक्ति । कृत्स्नेति । कृत्स्नानां प्राणानामुपसंहृतिर्यस्मिन्हृदये तस्येति विग्रहः । करणोपसंहारानन्तर्यमथशब्दार्थः । पूर्ववार्तिकस्थाथशब्दस्याप्ययमेवार्थः ॥ ७४ ॥

सर्वेषु संहृतेष्वेवं करणेषु सवायुषु ॥
बुद्धेः प्रद्योततेऽथाग्रं हृदयस्य यियासतः ॥ ७५ ॥

उक्तमेव व्यनक्ति । सर्वेष्विति । परलोकं गन्तुमिच्छतो जन्तोर्यद्धृदयं तत्संबन्धिनाडीमुखं मरणकाले सर्वकरणोपसंहारे सति प्रकाशत इत्यर्थः । हृदयस्येत्यस्य व्याख्या बुद्धेरिति । पुरुषस्य परलोकौन्मुख्यानन्तर्यमथशब्दार्थः ॥ ७५ ॥

स एष कर्मजो बुद्धेः प्रकाशो जायते मृतौ ॥
स्वकर्मनिर्मितं लोकं येनाऽऽत्माऽयं प्रपश्यति ॥ ७६ ॥

हृदयाग्रप्रद्योतस्य किं कारणं तदाह । स इति । यः स मृतिकाले प्रकाशो बुद्धेर्जायत एष कर्मज इति योजना । तस्य कार्यमाह । स्वकर्मेति ॥ ७६ ॥

कर्मणैवास्य विज्ञानं तादात्म्यमुपनीयते ॥
पश्चादापन्नतद्भावो देहमेतं विमुञ्चति ॥ ७७ ॥

कर्मवशाद्भाविदेहज्ञानमुत्पद्यते चेत्तर्हि तत्र ममतामहंतां वा समुल्लिखेदित्याकाङ्क्षायामाह । कर्मणैवेति । उच्चिक्रमिषोस्तावत्कर्मवशाद्भाविदेहज्ञानमुत्पन्नं तेन[1] स्वविषयेण सह पुरुषस्य तादात्म्यं तद्वशादेवोपस्थाप्यते तथाचाहंभावो भाविदेहे भवतीत्यर्थः । तत्र प्रवृत्ताहंभावस्य फलमाह । पश्चादिति ॥ ७७ ॥

भाविलोकात्मिका याऽस्य प्रत्यक्चैतन्यबिम्बिता ॥
वासनैवाऽऽत्मनः प्रोक्ता प्रद्योतवचसा स्फुटम्[3] ॥ ७८ ॥

उपसंहृतकरणवर्गस्य मरणकाले कथं भाविदेहज्ञानसंभावना न हि कर्मणोऽसहायस्य

---

१ ख. 'न्तराय सं' । २ घ. 'न च स्व' । ३ क. ग. स्फुटा ।

तद्धेतुतेत्याशङ्क्याऽऽह । **भावीति** । मरणात्प्रागेव षण्मासादारभ्याहमस्मीति पुंसो योऽभिमानो जायते सोऽत्र प्रद्योत इत्यर्थः ॥ ७८ ॥

**मात्रोपादानरूपेण स्वेन भासा पुराऽब्रवीत् ॥**
**स्वेनैव ज्योतिषा स्वप्ने यथा तद्वदिहापि तत् ॥ ७९ ॥**

तथाऽपि मरणकाले करणव्यतिरेकेण नोक्तज्ञानव्यक्तीभावो न हि मनसोऽभावे वासनाऽपि समुल्लसेदित्याशङ्क्याऽऽह । **मात्रेति** । यथा स्वप्ने जाग्रद्वासनादानरूपेण स्वेन भासा चैतन्यज्योतिषा च करणव्यतिरेकेण ज्ञानं ज्योतिर्ब्राह्मणे श्रुतिरुक्तवती तथा मृतिदशायामपि यथोक्तं प्रद्योतनं युक्तं न हि तदा बुद्धिरुपसंहृता तदुपसंहारेऽपि प्रद्योतोपपत्तिः स्फुटी भविष्यतीत्यर्थः ॥ ७९ ॥

**प्रद्योतेन यथोक्तेन प्रद्योतितपथा कृत—**
**कर्मकार्योऽथ हृदयान्निष्क्रामति यथासुखम् ॥ ८० ॥**

तेनेत्यादिवाक्यतात्पर्यमाह । **प्रद्योतेनेति** । फलभोगकाले प्राप्ते सतीत्यथशब्दार्थः । असुखं सुखमिति वा छेदः ॥ ८० ॥

**साध्वेवातः प्रयत्नेन कर्म कार्यं विपश्चिता ॥**
**पश्यता प्राणिनामेवं कर्ममूलामिमां गतिम् ॥ ८१ ॥**

अथ मृतिकाले बाह्यमान्तरं च वृत्तं पुमर्थानुपयोगि किमर्थं कथ्यते तत्राऽऽह । **साध्विति** । अतःशब्दार्थं स्फुटयितुं विशिनष्टि । **पश्यतेति** ॥ ८१ ॥

**आत्मा स्वकर्मणोपात्तं प्रद्योतेन यथोचितम् ॥**
**लोकं पश्यन्स्वहृदयान्निष्क्रामति यथायथम् ॥ ८२ ॥**

हृदयान्निष्क्रामन्नात्मा केन प्रकारेण निष्क्रामति तत्राऽऽह । **आत्मेति** । उक्तप्रद्योतेन कर्मार्जितं लोकं पश्यन्नात्मा यथाकर्म यथाश्रुतं चक्षुरादिद्वारा हृदयान्निष्क्रामतीत्यर्थः ॥ ८२ ॥

**चक्षुष्टो वाऽथ मूर्ध्नो वा यं यं लोकं प्रपत्स्यते ॥**
**तद्द्वारेणैव निष्क्रामन्न क्वचित्प्रतिहन्यते ॥ ८३ ॥**

यथायथमित्येतदेव स्फुटयति । **चक्षुष्टो वेति** ॥ ८३ ॥

**आदित्यलोकसंप्राप्तौ चक्षुष्टोऽयं निगच्छति ॥**
**ब्रह्मलोकपरिप्राप्तौ मूर्ध्न आत्मा निगच्छति ॥ ८४ ॥**

उक्तविकल्पस्य व्यवस्थामाह । **आदित्येति** ॥ ८४ ॥

**कर्मश्रुतानुरोधेन ह्यन्येभ्यो वा यथायथम् ॥**
**हृदयसृतनाडीभिरित आत्मा निगच्छति ॥ ८५ ॥**

---

१ क. ग. 'थोदित' । २ ख. 'दयाश्रित' ।

प्रत्यभिज्ञानस्य प्रागेव प्रवृत्तत्वात्पाठक्रमस्त्वविवक्षितोऽन्यथोत्क्रान्तेरपि क्रमप्रसङ्गात्तस्य च प्रत्युक्तत्वादित्यर्थः ॥ ९१ ॥ ९६ ॥

हृदयाग्रप्रकाशेन निष्क्रान्तस्यापि देहतः ॥
निःसंबोधस्य गमनं कथं देहान्तरं प्रति ॥ ९७ ॥

स एष इत्यादि क्यव्यावर्त्यां शङ्कामाह । हृदयेति ॥ ९७ ॥

इत स्य परिहाराय स इत्यादि परं वचः ॥
स एष ज्ञः परो देवः सविज्ञानो भवत्यथ ॥ ९८ ॥

उत्तरं वाक्यमादत्ते । इत्यस्येति । तदेव पठति । स इति । उत्क्रान्त्यानन्तर्यमथशब्दार्थः ॥ ९८ ॥

संहृताशेषकरणो भावनाकर्महेतुतः ॥
सविज्ञानो यथा स्वप्ने तथोत्क्रान्तावपीष्यते ॥ ९९ ॥

स एष ज्ञः सविज्ञानो भवतीत्युपात्तमाध्यंदिनवाक्यस्यार्थमाह । संहृतेति । स्वप्नवदुत्क्रान्तौ ध्वस्तसर्वकरणोऽपि चेतनत्वाद्भावनादिना मार्गादिज्ञानसहितो भवत्येवेत्यर्थः ॥ ९९ ॥

विशेषज्ञानसंबन्धः कर्मणैवास्य हेतुना ॥
न तु स्वातन्त्र्यतो लभ्यः स्वातन्त्र्यासंभवादिह ॥ १०० ॥

माध्यंदिनश्रुतिमपि व्याख्याय श्रुतिद्वयमनुसरन्भाविदेहादिज्ञानमस्य चेतनत्वात्कर्मानपेक्षं भाविकमित्याशङ्क्याऽऽह । विशेषेति । इहेति मृत्यवस्थोक्तिः ॥ १०० ॥

कृतकृत्यो भवेत्सर्वो विशेषज्ञानसंगतिः ॥
स्वातन्त्र्येणेह चेल्लभ्या न तु लभ्या तथाऽऽह च ॥ १०१ ॥
यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम् ॥
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ १०२ ॥

तत्रास्वातन्त्र्ये हेतुमाह । कृतकृत्य इति । इहेति पूर्ववत् । उक्तेऽर्थे व्यासवाक्यं प्रमाणयति । तथेति । सफलायाः स्मृतेरन्तराले हेतुमाह । सदेति ॥१०१॥१०२॥

एवमात्मा सविज्ञानो गन्तव्यं यत्पुराऽर्जितम् ॥
तदात्मभावविज्ञानस्तदेवातो निगच्छति ॥ १०३ ॥

उभयोरपि शाखयोर्वाक्यद्वयस्यार्थमुपसंहरति । एवमिति । कर्मवशादित्यतःशब्दार्थः ॥ १०३ ॥

यत एवमतः पुम्भिः स्वातन्त्र्यार्थं प्रयत्नतः ॥
योगादिसाधनाभ्यासः कर्तव्यः पुण्यसंचयः ॥ १०४ ॥

---

१ ख. स्वतो । २ घ. यज्ञः ।

उक्तां कर्मगतिं परामृश्य वाक्यद्वयाभिप्रायं प्रकटयति । **यत इति** । ननु कर्मानुसारी पुरुषो न स्वतन्त्रः स कथं पुण्यसंचये नियुज्यते तत्राऽऽह । **प्रयत्नत इति** । कर्मानुसारिणोऽपि राजादिवदविरुद्धं स्वातन्त्र्यमिति भावः । योगश्चित्तवृत्तिनिरोधस्तदङ्गानि यमप्रभृतीनि तेषां साधनानामभ्यासो विशिष्टपुण्योपचयश्च तात्पर्येण कार्यो मृतिकाले पारवश्यन्यावृत्त्यर्थमित्याह । **योगादीति** ॥ १०४ ॥

**सर्वशास्त्रसमारम्भस्तदर्थोऽयं महानिह ॥**
**वाङ्मनःकायसाध्यानामुपायानां प्रबुद्धये ॥ १०५ ॥**

किंच सर्वस्य शास्त्रस्य शुभकर्मविधायित्वेनाशुभकर्मनिषेधित्वेन चाऽऽरम्भो महानिति व्यवहारभूमौ दृश्यते सोऽपि मृतिकाले स्वातन्त्र्यार्थं पुण्योपचयकार्यतां दर्शयतीत्याह । **सर्वेति** । तदर्थ इत्येतदेव स्फोरयति । **वागिति** ॥ १०५ ॥

**तथाऽनर्थपरिप्राप्तावुपायानां निषेधनम् ॥**
**एतावानेव शास्त्रार्थः कर्त्रधीनः सुखाप्तये ॥ १०६ ॥**

अनिष्टसाधननिषेधोऽपि निषेधशास्त्रेण क्रियते तच्च पुण्यविधिवदन्तकाले स्वातन्त्र्यार्थं दुरितनिबर्हणकार्यतां दर्शयतीत्याह । **तथेति** । यद्यपि शास्त्रेण धर्मो विधीयते निन्द्यते चाधर्मस्तथाऽपि धर्मानुष्ठानमधर्मत्यागश्चेत्येतावन्मात्रेण कथं पुमर्थसिद्धिस्तत्राऽऽह । **एतावानिति** । सुखदुःखाप्तिहानार्थं धर्मोपचयादिरेव शास्त्रोक्तः कर्तव्यो नान्यः कर्तृतन्त्रः पुमर्थहेतुस्तस्मान्मृतिकाले स्वातन्त्र्यार्थं धर्मोऽनुष्ठेयोऽधर्मश्च त्याज्य इत्यर्थः ॥ १०६ ॥

**मात्रालक्षणमादानं कृत्वा स्वप्नस्य सर्जनम् ॥**
**यथेह न तथा किंचिदुपादानं समीक्ष्यते ॥ १०७ ॥**

सविज्ञान इत्यादि व्याख्याय तं विद्येत्यादिवाक्यव्यावर्त्यमाह । **मात्रेति** । यथा स्वप्ननिर्माणं जाग्रद्वासनाकर्मभ्यामिष्टं तथा लोकान्तरनिर्माणकारणं न किंचिद्दृष्टमित्यर्थः ॥ १०७ ॥

**अथैवं देवतात्यक्ते लिङ्गे देहाद्बहिर्गते ॥**
**लोकान्तरगतौ हेतुर्लोकारम्भे च भण्यताम् ॥ १०८ ॥**

कार्यकरणतदधिष्ठातृदेवतावशाद्देहान्तरगतिस्तदारम्भश्चेत्याशङ्क्याऽऽह । **अथेति** । अथारूपज्ञो भवतीत्यादावुक्तन्यायेनाऽऽह । **एवमिति** ॥ १०८ ॥

**आत्मनः परलोकाय यत्स्याद्गमनकारणम् ॥**
**भुङ्क्ते गत्वा च यत्तत्र देहारम्भे च कारणम् ॥ १०९**

---

१ घ. 'निव व्य' ।

आत्मनस्तर्हि विनैव कारणं देहान्तरगमनादि स्यादत आह । **आत्मन इति** । कथ्यतामित्युत्तरेण संबन्धः । कारणं विना कार्यायोगादिति भावः ॥ १०९ ॥

**लिङ्गानस इतो देहाद्देहमन्यं निगच्छतः ॥**
**संभारः कोऽस्य गत्यर्थो देहारम्भे च कथ्यताम् ॥ ११० ॥**

लिङ्गमेव तर्हि केवलं गत्यादिहेतुरित्याशङ्क्य स्थूलदेहानपेक्षस्य तस्याकिंचित्करत्वान्नैवमित्याह । **लिङ्गेति** । अस्य लिङ्गानस इति संबन्धः । लिङ्गमेवानो यस्य सोऽयं लिङ्गानास्तस्येति यावत् ॥ ११० ॥

**इतो जिगमिषुं विद्याकर्मणी ये पुराऽर्जिते ॥**
**तं समन्वारभेते ते यां चाभूत्पूर्ववासना ॥ १११ ॥**

परलोकनिर्माणे तद्गतौ भोगे च कारणं वक्तुं तं विद्येत्यादिवाक्यमिति मन्वानस्तदादत्ते । **इत इति** ॥ १११ ॥

**विज्ञानं संशयज्ञानं मिथ्याज्ञानमथापि वा ॥**
**प्रमाणतोऽप्रमाणाद्वा सर्वं विद्येति भण्यते ॥ ११२ ॥**

विद्यां व्याचष्टे । **विज्ञानमिति** । ज्ञानमात्रमत्र विद्येत्यर्थः ॥ ११२ ॥

**संसारकारणध्वंसि यत्तु ज्ञानं परात्मगम् ॥**
**तदत्र न परिग्राह्यं सर्वापत्कारणापनुत् ॥ ११३ ॥**

ब्रह्मज्ञानमपि तर्हि विद्याशब्देनात्र ग्राह्यमित्याशङ्क्याऽऽह । **संसारेति** । तस्याग्राह्यत्वे हेतुः । **सर्वेति** । विद्येत्यत्र बन्धहेतुर्गृह्यते तद्धेतुकर्मादिसाहचर्यात् । ब्रह्मज्ञानं तु तद्ध्वंसित्वान्नेह विद्याशब्दमर्हतीत्यर्थः ॥ ११३ ॥

**संसारकारणं तस्माद्[2]आत्मज्ञानाविरोधि यत् ॥**
**अप्राप्तपरमार्थार्थं ज्ञान[3]मात्रं जिघृक्षितम् ॥ ११४ ॥**

तस्यात्राग्रहे फलितमाह । **संसारकारणमिति** । तदविरोधित्वे हेतुमाह । **अप्राप्तेति** ॥ ११४ ॥

**वाङ्मनःकायसाध्यं च शास्त्रतो यदि वाऽन्यतः ॥**
**दृष्टादृष्टार्थरूपं यत्तच्च कर्मेति गृह्यते ॥ ११५ ॥**

कर्मशब्दार्थमाह । **वागिति** । व्यापारमात्रमत्र कर्मेत्यर्थः ॥ ११५ ॥

**अन्वारभेते गच्छन्तं यथोक्ते ज्ञानकर्मणी ॥**
**गच्छन्तं पुरुषं यस्मादन्वेते स्वस्वभावतः ॥**
**गच्छतोऽतोऽनुशब्दोऽत्र पश्चादर्थे प्रयुज्यते ॥ ११६ ॥**

[1]वादपूर्वकं तं समन्वारभेते इतिभागमादत्ते । **अन्वारभेते इति** ।

[1] ग वाऽभू' । २ क. 'दात्मज्ञानवि' । ३ ख. 'नमत्र जि' ।

तस्यार्थमाह । **गच्छन्तमिति** । स्वस्वभावतो ज्ञानकर्मणोराश्रयपारतन्त्र्यस्वाभाव्यादित्यर्थः ॥ ११६ ॥

**गमनादिविधौ पुंसः साधनत्वं निगच्छतः ॥ ११७ ॥**
**कर्मणः क्रियमाणस्य संस्कारो यो हृदि श्रितः ॥**
**तत्फलस्य च भुक्तस्य पूर्वप्रज्ञेति सोच्यते ॥ ११८ ॥**

यस्तु संभारः कोऽस्येत्यादि तत्राऽऽह । **गमनादीति** । आदिपदेन देहेन देहान्तरारम्भो गृह्यते । पूर्वप्रज्ञां व्याचष्टे । **कर्मण इति** ॥ ११७ ॥ ११८ ॥

**पूर्वोपचितसंस्कारहेतुभ्यः साऽभिजायते ॥ ११९ ॥**
**षण्मासशेषप्रोद्भूता वासना याऽस्य देहिनः ॥**
**मरिष्यतोऽन्यदेहार्थं पूर्वप्रज्ञेति तां विदुः ॥ १२० ॥**

अन्तःकरणाश्रिता कर्मतत्फलसंस्कारसंज्ञिता पूर्वप्रज्ञा तदभिव्यक्तिकारणमाह । **पूर्वेति** । उपात्तकर्मापूर्वाख्यहेतुभ्यां मृतिकाले पूर्वोक्ता पूर्वप्रज्ञा कार्याभिमुख्येनाऽऽविर्भवतीत्यर्थः । पूर्वप्रज्ञाशब्दस्यार्थान्तरमाह । **षण्मासेति** ॥ ११९ ॥ १२० ॥

**समर्था सैव ते यस्मादुद्बोद्धुं ज्ञानकर्मणी ॥**
**नरस्यातः प्रधानत्वात्पृथक्तस्या ग्रहः कृतः ॥ १२१ ॥**

तस्या विद्याकर्मभ्यां पृथक्कथने को हेतुस्तत्राऽऽह । **समर्थेति** । न हि मृतस्य विद्याकर्मणी स्वरूपेण स्थातुमर्हतः कारकभेदाभावादतो वासनात्मनैव स्थितेस्तयोस्तत्प्राधान्यात्तस्या युक्ता पृथगुक्तिरित्यर्थः ॥ १२१ ॥

**समासेनैव निर्दिष्टे कारणत्वाविशेषतः ॥**
**अन्योन्यकारणत्वाच्च श्रुत्येह ज्ञानकर्मणी ॥ १२२ ॥**

तर्हि पूर्वप्रज्ञावदसमासकरणं विद्याकर्मणोरपि स्यान्नेत्याह । **समासेनेति** । ज्ञानकर्मणी हि पूर्वप्रज्ञायां कारणत्वाविशेषात्तत्कारणे श्रुत्या समासेनैवोक्ते एकस्मिन्कार्ये कारणत्वेनैकरूप्यात्तस्य युक्तत्वादित्यर्थः । किंच प्रज्ञाया विद्याकर्मणोश्चान्योन्यं कार्यकारणभावात्कार्यकारणकोट्योर्युक्तं द्वैराश्यमित्याह । **अन्योन्येति** । इह ज्ञानकर्मपूर्वप्रज्ञाख्यार्थेषु मिथोहेतुफलभावाज्ज्ञानकर्मणी श्रुत्या पृथक्कृते पूर्वप्रज्ञा च ताभ्यां पृथक्कृतेति योजना ॥ १२२ ॥

**पूर्वप्रज्ञात उद्भूतिर्विद्यायाः कर्मणो यतः ॥**
**ताभ्यां च भावनोद्भूतिर्निर्देशोऽतो यथोदितः ॥ १२३ ॥**

तदेव स्फुट्यते । **पूर्वेति** ॥ १२३ ॥

---

१ क. ग. °च्छति ॥ ११७ ॥ २ ख. ग. भावना॰

कर्मणो भुज्यमानस्य परिशेषो हि भावना ॥
मूलं च जायमानस्य प्रधानं तेन भण्यते ॥ १२४ ॥

तस्यास्तयोश्च मिथो हेतुहेतुमत्त्वे त्रयाणामविशेषात्कथं पूर्वप्रज्ञाप्राधान्यमित्याशङ्क्याऽऽह । कर्मण इति । परिशेषो नाम फलवासना । हिशब्दापेक्षितं फलितमाह । प्रधानमिति ॥ १२४ ॥

परिच्छेत्त्री विनिर्मात्री विद्या लोकान्तरस्य हि ॥
[illegible] च पूर्वप्रज्ञेह पूर्वयोः ॥ १२५ ॥

त्रयाणां कार्यविशेषोक्तिपूर्वकं वाक्यार्थमुपसंहरति । परिच्छेत्त्रीति । परिच्छेत्तृत्वं विद्याया विकर्तृत्वं च कर्मणो लोकसिद्धमिति हिशब्दार्थः । सप्तमी निर्धारणे ॥ १२५ ॥

नानाविकल्पसद्भावात्संदेहो गमनं प्रति ॥
पक्षीव वृक्षात्किं तावत्परिच्छिन्नो व्रजत्ययम् ॥ १२६ ॥

विद्यादिसंघातवतो देहान्तरप्राप्तिरुक्ता संप्रति तृणजलायुकावाक्यमवतारयितुं भूमिकामाह । नानेति । वादिविप्रतिपत्तिमूलं संदेहमेव व्याकुर्वन्नादौ दिगम्बरमतमाह । पक्षीति ॥ १२६ ॥

आतिवाहिकदेहेन किंवा देहान्तरं प्रति ॥
गतिर्विकाशसंकोचौ भिन्नकुम्भस्थदीपवत् ॥
मतं वा किं मनोमात्रं देहाद्देहान्तरं व्रजेत् ॥ १२७ ॥

देवतावादिमतमाह । आतिवाहिकेति । देवता येन देहेन विशिष्टं जीवं परलोकं नयति सोऽयमातिवाहिको देहस्तेनेति यावत् । सांख्यादिमतमाह । विकाशेति । वैशेषिकादिपक्षमाह । किमिति ॥ १२७ ॥

किंवा सर्वगतानां स्यात्करणानामिहाऽऽत्मनि ॥
श्रुतकर्मानुरोधेन वृत्तिहान्युद्भवौ क्वचित् ॥ १२८ ॥

औपनिषदं दर्शनं दर्शयति । किंवेति । इहेति सिद्धान्तोक्तिः । क्वचिदिति मृतिजीवनावस्थयोर्ग्रहः ॥ १२८ ॥

इति भूरिविकल्पायां भूमौ सिद्धान्त उच्यते ॥
अनन्ताः सर्व एवैते वाङ्मनःप्राणलक्षणाः ॥ १२९ ॥

[illegible]वादेन संदेहं कृत्वा तन्निवृत्तये सिद्धान्तमाह । इति भूरीति । तमेव [illegible] इति । सर्वगतत्वपक्षमाश्रित्य श्रुतिप्रवृत्तेस्तद्विरुद्धानि पक्षान्तराणि [illegible] ॥

**अदोमयत्वं लिङ्गं स्याल्लिङ्गेनेदंमयात्मना ॥**
**भावनाकर्मविद्यानामेवमुक्तेन वर्त्मना ॥**
**भूरिभेदान्न शक्यन्ते वक्तुं रूपाण्यशेषतः ॥ १९३ ॥**

सर्वमयत्वे व्याख्याते पाठक्रमेण तद्यदेतदित्यादिवाक्ये बुद्धिस्थे तदर्थमुक्तमनुवदति। **अदोमयत्वमिति** । युक्तं हि कार्येण कारणानुमानमिति भावः । इदंमयादिवाक्यार्थमुपसंहरति । **भावनेति** । एवमित्यस्यैवार्थमाह । **उक्तेनेति** । प्रवृत्तय इहेक्ष्यन्त इत्यादिनेत्यर्थः । तस्मादिदंमयोऽदोमय इति संक्षेपोक्तिर्युक्तेति शेषः ॥ १९३ ॥

**किं कारणं पुमान्यस्माद्यथाकारी भवत्ययम् ॥**
**यथाचारी च लोकेऽस्मिंस्तथारूपो भवत्यसौ ॥ १९४ ॥**

आत्मनोऽसङ्गाद्वयस्य प्राणादिमयत्वे हेतुर्वाच्यो न चाविद्याभावनादिस्तथा तेनापि संगत्यभावादिति पृच्छति। **किं कारणमिति।** यथाकारीत्यादिवाक्येनोत्तरमाह । **पुमानिति ।** तथारूपशब्दात्पूर्वं तस्मादिति वक्तव्यं स्वाविद्यया करणचरणानुसारेण प्राणादिमयतेत्यर्थः ॥ १९४ ॥

**करणं नियतं चैव ततोऽन्यच्चरणं तथा ॥**
**करणं कर्मशक्तिर्वा चरणं प्रत्ययात्मकम् ॥ १९५ ॥**

करणचरणयोरर्थभेदाभावेन पौनरुक्त्यमाशङ्क्याऽऽह । **करणमिति** । नियतत्वं शास्त्राधीनत्वमन्यत्वमनियतत्वमतो मानाधीनत्वतदनधीनत्वात्तद्भेदादपौनरुक्त्यमित्यर्थः । सर्वप्रकारव्यापारशक्तिः करणं करोतेस्तदर्थत्वात्सर्वप्रकारज्ञानयोग्यता चरणं चरतेर्गत्यर्थत्वादित्यर्थान्तरमाह । **करणमिति** ॥ १९५ ॥

**साधुकारी पुमान्यः स्यात्साधुरेव भवत्यसौ ॥**
**पितृगन्धर्वदेवादौ साधुसाधनसंपदा ॥ १९६ ॥**

साधुकारीत्याद्यादत्ते । **साध्विति** । तद्याचष्टे । **पित्रिति** । देवादौ जायत इति संबन्धः ॥ १९६ ॥

**पापकारी च पापश्च स्थाण्वादावभिजायते ॥**
**कामक्रोधादिभूयिष्ठः पुमानुग्रेण कर्मणा ॥ १९७ ॥**

पापकारीत्यादिवाक्यमादाय व्याचष्टे । **पापेति** ॥ १९७ ॥

**साध्वादि भूयोभ्यासात्स्यात्ताच्छील्यप्रत्ययश्रुतेः ॥**
**फलमित्यतिशङ्क्याऽऽह पुण्य इत्यादिकं वचः ॥ १९८ ॥**

ताच्छील्यप्रत्ययोपादानादित्यादिभाष्यमाश्रित्याऽऽशङ्कापूर्वकमुत्तरवाक्यमुत्थापयति। **साध्वादीति** । अतिशङ्क्य धर्माधर्मशक्तिमतीत्य शङ्कां कृत्वेत्यर्थः ॥ १९८ ॥

---

१ ख. °यता चेष्टा त° । २ ख. ग. °सोऽन्या चर° । ३ ख. °भमिन्नः ।

नैवाभ्यासव्यपेक्षाऽस्ति पुण्यपापफलाप्तये ॥
सकृदप्यनुतिष्ठन्ना प्राप्नोत्येव फलं तयोः ॥ १९९ ॥

तद्व्याचष्टे । नैवेति । अन्यथा तदनुष्ठानवैफल्यादित्यर्थः ॥ १९९ ॥

फलातिशीतिरभ्यासाज्जायते पुण्यपापयोः ॥
तत्फलस्य तु या प्राप्तिः सा सकृत्करणादपि ॥ २०० ॥

अभ्यासवैयर्थ्यात्ताच्छील्यप्रत्ययविरोधः स्यादित्याशङ्क्याऽऽह । फलेति ॥ २०० ॥

कामक्रोधादिपूर्वैव कर्तृता पुण्यपापयोः ॥
पुंसः सर्वमयत्वस्य हेतुः संसारकारणम् ॥ २०१ ॥

यथाकारीत्यारभ्याथो खल्वाहुरित्यस्मात्प्राक्तनवाक्यस्य तात्पर्यमनुभाषते । कामेति । किं पुनः पुण्यादिना कर्मणेत्याशङ्क्याऽऽह । पुंस इति ॥ २०१ ॥

धर्माधर्मात्मकं कर्म संसारानर्थकारणम् ॥
एतद्विषयमेवैतद्वेदशास्त्रमधीयते ॥ २०२ ॥

संसारकारणमेव स्फोरयति । धर्मेति । तत्र प्रमाणमाह । एतदिति । वेदशास्त्रशब्देन कर्मकाण्डं गृह्यते ॥ २०२ ॥

कर्मैव वेदशास्त्रेऽस्मिन्प्रधानं निश्चितं यतः ॥
पुंसोऽभ्युदयदुःखाप्तौ कार्यं वर्ज्यं च तत्ततः ॥ २०३ ॥

कर्मणः संसारप्रयोजकत्वे फलितमाह । कर्मैवेति ॥ २०३ ॥

कर्म साध्वेव कर्तव्यमिच्छताऽभ्युदयं चिरम् ॥
पापं तु सर्वदा हेयं दुःखेभ्यस्त्रस्यता भृशम् ॥ २०४ ॥

कथमेकमेव विरुद्धफलतया कार्यं त्याज्यं चेत्याशङ्क्य विभजते । कर्मेति ॥ २०४ ॥

संसारानर्थनिष्पत्तौ सर्वेषामविशिष्टता ॥
आरम्भकाणां विज्ञानप्रमुखाणामिहाऽऽत्मनः ॥ २०५ ॥
यद्यप्येवं तथाऽपीह धर्माधर्मात्मकं बुधाः ॥
कर्म प्रधानमिच्छन्ति यतः कर्म प्रयोजकम् ॥ २०६ ॥
प्रयोज्यमितरत्सर्वं विज्ञानादि यदीरितम् ॥
प्रयोजकं प्रयोज्याच्च प्रधानमिति निश्चितम् ॥ २०७ ॥

संसारप्राप्तौ न कर्मणः प्राधान्यं विज्ञानादीनामपि तत्राविशेषादित्याशङ्क्याथो खल्वित्यादिवाक्यव्यावर्त्यमाह । संसारेति । इहेति संसारानर्थाप्तिनिर्देशः । पूर्वसप्तमी तु पूर्वया सप्तम्या योजनीया । कर्मप्राधान्ये हेतुः । यत इति । प्रयोजकत्वेऽपि कथं प्राधान्यमत आह । प्रयोजकमिति ॥ २०५ ॥ २०६ ॥ २०७ ॥

---

१ ख °यत्वेऽस्य ।

पुण्य इत्यादिवचसा कर्मप्राधान्यवाञ्छया ॥
कर्मोपसंहृतं श्रुत्या यथोक्तेनैव हेतुना ॥ २०८ ॥

कर्मप्राधान्ये श्रुतिं प्रमाणयति । **पुण्य इत्यादीति** । यथोक्तेन प्रयोजकत्वेनेत्यर्थः ॥ २०८ ॥

कर्म प्रधानमित्येवं साक्षाच्छ्रुत्योपसंहृतम् ॥
पूर्वपक्षेऽथ सिद्धान्तः खल्वाहुरिति भण्यते ॥ २०९ ॥

पूर्वपक्षमनुभाष्य सिद्धान्तवाक्यमादत्ते । **कर्मेति** । साक्षात्त्वं शब्दोपात्तत्वं पूर्वपक्षानन्तरं सिद्धान्तप्राप्तेर्योग्यताद्योतकोऽथशब्दः ॥ २०९ ॥

अथो खल्वत्र पूर्वोक्ते प्राहुरुच्चैर्विपश्चितः ॥
न कर्ममय एवायं पुमान्सर्वमयः कुतः ॥ २१० ॥
यतः काममयो भूत्वा प्राप सर्वमयात्मताम् ॥
प्रयोजकप्रयोज्यत्वे ज्ञानादीनां प्रयोजकम् ॥ २११ ॥
कर्मैवावधृतं यद्वत्कर्मान्तानां प्रयोजकः ॥
काम एवेति तत्स्पष्टं स यथेति विभाव्यते ॥ २१२ ॥

तत्राथो खल्वाहुरित्यस्यार्थमाह । **अथो खल्विति** । प्रागेव सप्तम्योरर्थो दर्शितः । पुंसः सर्वमयत्वे कर्ममयत्वं प्राधान्येन प्रयोजकमित्यत्र प्रश्नपूर्वकं हेतुत्वेनानन्तरवाक्यमादाय व्याकरोति । **कुत इत्यादिना** । कामः संसारस्य प्राधान्येन प्रयोजको न कर्मेत्येतद्दृष्टान्तेन साधयति । **प्रयोजकेति** । ज्ञानादीनां कामातिरिक्तानां प्रयोजकत्वे प्रयोज्यत्वे च निरूप्यमाणे कर्मैव तदितरप्र[illegible] वधृतं **पुण्यो** वै पुण्येनेत्यादिवचसेति शेषः । कथं कामस्य प्राधान्येन प्रयोजकत्व[illegible]ते तत्राऽऽह । **तदिति** ॥ २१० ॥ ॥ २११ ॥ २१२ ॥

प्रयोजकत्वे कर्मादेः कामप्राधान्यमीरितम् ॥
प्रयोजकानां निष्ठात्वे न तु कामो विवक्षितः ॥ २१३ ॥

कामस्य संसारप्रयोजकावसानभूमित्वात्प्रत्यगज्ञानं तन्मूलमित्युपगमहानिरित्याशङ्क्याऽऽह[1] । **प्रयोजकत्व इति** ॥ २१३ ॥

यथावस्त्वपरिज्ञानं कामस्यापि प्रयोजकम् ॥
आप्ताशेषसुखापास्तदुःखत्वादात्मवस्तुनः ॥ २१४ ॥
नानवाप्तं सुखं किंचिन्नानपास्तं तथा सुखम् ॥
यो वै भूमेति वचनाद्योऽशनायेति चाऽऽत्मनि ॥ २१५ ॥

---

१ ख. °मित्यभ्युप° ।

कामस्य प्रयोजकावसानभूमित्वाभावे हेतुमाह । **यथावस्त्विति** । तत्प्रतिपादयितुमात्मयाथात्म्यं तावदाह । **आप्तेति** । आप्ताशेषसुखत्वे मानमाह । **यो वा इति** । अपास्तदुःखत्वे तदाह । **य इति** । आत्मनि वचनादिति संबन्धः ॥ २१४ ॥ २१५ ॥

**स्वत एवंविधं वस्तु यतोऽतस्तदबोधतः ॥**
**कामद्वेषादिसंभूतिर्मिथ्याज्ञानत्वकारणात् ॥ २१६ ॥**

वस्तुस्वरूपमुक्त्वा तदज्ञानजत्वं कामादेराह । **स्वत इति** । तन्निमित्तमाह । **मिथ्येति** । शोभनाध्यासादिरूपो मिथ्याज्ञानभावस्तस्मान्निमित्तात्कामादिजन्मेत्यर्थः ॥ २१६ ॥

**अज्ञातं वस्तु चोद्दिश्य तत्तत्त्वप्रतिपत्तये ॥**
**प्रमाणानां प्रवृत्तिः स्यादन्यथा नोपपद्यते ॥ २१७ ॥**

नेनु न प्रकृते वाक्ये कामहेतुरज्ञानं श्रुतं तत्कथं तस्माज्जन्मेत्याशङ्क्य सामान्यन्यायमाह । **अज्ञातमिति** । प्रमाणप्रवृत्तिरज्ञातमर्थमाश्रित्येत्यन्वयमुक्त्वा तदभावे न तत्प्रवृत्तिरिति व्यतिरेकमाह । **अन्यथेति** ॥ २१७ ॥

**प्रयोजकत्वेऽविद्येयं यदि नामेह न श्रुता ॥**
**मितिप्रवृत्तिहेतुत्वात्तथाऽप्यत्राऽऽश्रितैव सा ॥ २१८ ॥**

अस्त्वेवं स्वाज्ञानस्य कामादिहेतुत्वे किमायातं तदाह । **प्रयोजकत्व इति** । अज्ञाते प्रमाणप्रवृत्तिनियमादात्मनि श्रुतिप्रामाण्ये स्वाज्ञानमश्रुतमपि तत्र तत्प्रवृत्तिहेतुतयेष्टं तथाच प्रतीचि कामादि दृश्यमानं कारणान्तराभावादज्ञानमेव तत्त्वेन स्वीकरोतीत्यर्थः ॥ २१८ ॥

**सर्वेषामपि मानानां प्रमाणं परमं श्रुतिः ॥**
**सर्वमेयातिवर्त्यात्मयाथात्म्यप्रतिबोधतः ॥ २१९ ॥**

श्रुतिप्रामाण्ये तत्प्रवृत्तिहेतुत्वेनाऽऽत्मन्यज्ञानसिद्धिस्तत्प्रामाण्यं तु संदिग्धं वादिनां तत्र विवादादित्याशङ्क्याऽऽह । **सर्वेषामिति** । न तावद्वेदप्रामाण्ये संदेहः प्राच्यामेव मीमांसायां तन्निराकरणादुपनिषदस्तु तत्त्वावेदकतया प्रमाणमिति भावः । तासां तत्त्वावेदकत्वे हेतुमाह । **सर्वेति** ॥ २१९ ॥

**तस्मादज्ञात आत्मैव कामादेः स्यात्प्रयोजकः ॥**
**यतोऽबोधस्य विध्वस्तौ पुंसः स्यात्कृतकृत्यता ॥ २२० ॥**

श्रुतिप्रामाण्यात्तत्प्रवृत्तिहेतुत्वेनाऽऽत्मनिष्ठमपि तदज्ञानं न कामादिकारणमात्मनः सर्वकारणत्वाङ्गीकारादित्याशङ्क्याऽऽह । **तस्मादिति** । अज्ञानस्याऽऽत्मनि सिद्धत्वं तच्छब्दार्थः । आत्मनोऽज्ञातस्य कामादिप्रयोजकत्वे फलितमाह । **यत इति** ॥ २२० ॥

---

१ ख. घ. तत्र निमि° । २ ख. घ. न प्र° । ३ ग. °योजिका त्ववि° । ४ ख. ग. °तोऽतोऽबो° । ५ ख. ग. °धवि° ।

**वाङ्मनःकायसाध्यायाः प्रवृत्तेः काममूलता ॥**
**यथा तत्प्रतिपत्त्यर्थं स यथेत्युत्तरा श्रुतिः ॥ २२१ ॥**

काममय एवेत्यादि व्याख्याय स यथेत्यादेस्तात्पर्यमाह । **वागिति** ॥ २२१ ॥

**सर्वस्य जगतो हेतू पुण्यापुण्ये समीरिते ॥**
**यद्यपीह परो हेतुः काम एव तयोरपि ॥ २२२ ॥**

कथं काममूलत्वं त्रिविधप्रवृत्तेरुच्यते पुण्यो वै पुण्येनेत्यादिना कर्मणः सर्वजगन्मूलत्वप्रतीतेरित्याशङ्क्याऽऽह । **सर्वस्येति** । पुण्यो वै पुण्येनेत्यादिवाक्यमिहेत्युच्यते ॥ २२२ ॥

**अकामस्य क्रिया काचिद्दृश्यते नेह कस्यचित् ॥**
**यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम् ॥ २२३ ॥**

सर्वप्रकारप्रवृत्तौ प्राधान्येन कामस्य प्रयोजकत्वे प्रमाणमाह । **अकामस्येति** ॥ २२३ ॥

**निष्फलं कर्म सर्वं स्यान्न चेत्कामपुरःसरम् ॥**
**अपराधलघुत्वं च दृष्टं पुंसोऽप्यकामतः ॥ २२४ ॥**

अथाकामस्यापि क्रिया दृश्यते न हि कश्चित्क्षणमपीत्यादिस्मृतेस्तथाचादृष्टिवचनमनुभवाविरुद्धमित्यत आह । **निष्फलमिति** । कामादृते कृतमपि कर्माफलमित्यत्र हेतुमाह । **अपराधेति** । रागं विना प्रमादोपनतेऽपि दुरिते पुरुषस्य दोषाल्पत्वं धर्मशास्त्रेषु दृष्टम् । **यथोक्तम्**—

"चण्डालान्नं प्रमादेन यदि भुञ्जीत यो द्विजः ।
ततश्चान्द्रायणं कुर्यान्मासमेकं व्रतं चरेत्" इति ।

तदकामपूर्वकं कर्माफलमित्यर्थः ॥ २२४ ॥

**कामप्रयुक्तो हि नरः संचिनोति शुभाशुभे ॥**
**आत्मैवेदमिति गिरा श्रुत्यैतत्प्रागपीरितम् ॥ २२५ ॥**

कामप्रयुक्ता त्रिविधाऽपि फलवती प्रवृत्तिरित्यत्र प्रतिज्ञापूर्वकमात्मैवेदमग्र आसीदेक एव सोऽकामयतेत्यादिश्रुतिं प्रमाणयति । **कामेति** । तत्रान्वयव्यतिरेकयोरानुकूल्यं वक्तुं हिशब्दः ॥ २२५ ॥

**कामो गर्धोऽभिलाषश्च तृष्णेत्येकार्थवाचकाः ॥**
**आसङ्गपूर्वकः कामो नाऽऽसङ्गविरहादसौ ॥ २२६ ॥**

काममूलत्वं सर्वप्रवृत्तेरुक्त्वा कामशब्दार्थमाह । **काम इति** । आसङ्गोऽपि कामपर्यायः स कस्मादत्राभिलाषादिवन्न गृह्यते तत्राऽऽह । **आसङ्गेति** । आसङ्गोऽभि-

---

१ क. °ह कुत्राचि° ।

निवेशो मिथ्याध्यासस्तस्मान्निमित्तात्कामो भवति न खल्वध्यासविकला भवन्ति कामिनस्तथाच निमित्तत्वेन पार्थक्यान्न समभिव्याहार इत्यर्थः ॥ २२६ ॥

ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ॥
सङ्गात्संजायते काम इति सर्वज्ञशास्त्रतः ॥ २२७ ॥

आसङ्गो निमित्तं कामस्येत्यत्र प्रमाणमाह । ध्यायत इति ॥ २२७ ॥

पुंसो या विषयादित्सा स काम इति भण्यते ॥
तद्गुणस्मरणाभ्यासादिच्छा पुंसोऽभिवर्धते ॥ २२८ ॥

स यथेत्यादेस्तात्पर्यमुक्त्वाऽक्षराणि व्याकुर्वन्कामपदार्थमनुवदति । पुंस इति । यादृशेन कामेन स पुरुषो युज्यते तादृशः क्रतुमान्भवतीत्यभिधित्समानः कामस्य क्रतुत्वं वक्तुं पातनिकामाह । तद्गुणेनेति । तच्छब्देन विषया गृह्यन्ते ॥ २२८ ॥

कामिताद्विषयान्नान्यस्तदा तस्येह रोचते ॥
निराकर्तुं न च ततः शक्यते[1] येन केनचित् ॥ २२९ ॥

इच्छावृद्धिफलमाह । कामितादिति । तदा विषयगुणस्मरणाभ्यासावस्थायामित्यर्थः। तस्येति काममयपुरुषोक्तिः । इहेत्यविद्यादशोच्यते । दोषानुसंधानात्कामितविषये वैमुख्यमाशङ्क्याऽऽह । निराकर्तुमिति । दोषानुसंधाने विषयवैमुख्येऽपि तदनुसंधानाभावे विषयपारवश्यमशक्यनिरसनमित्यर्थः ॥ २२९ ॥

इत्येवं वर्धमानः सन्क्रतुत्वं प्रतिपद्यते ॥
यदनन्तरमेवेहा स कामः क्रतुरुच्यते ॥ २३० ॥

पातनिकां कृत्वा तत्क्रतुर्भवतीति वाक्यं व्याकरोति । इत्येवमिति । प्रकरणात्कर्ता कामः । क्रतुशब्दार्थं स्फुटयति । यदनन्तरमिति ॥ २३० ॥

क्रतुना यादृशेनायं[2] यत्क्रतुः स्यात्पुमानिह ॥
कुरुते तादृशं कर्म वाङ्मनःकायसाधनैः ॥ २३१ ॥

यत्क्रतुरित्यादेरर्थमाह । क्रतुनेति । इहेति कर्मभूमिरुक्ता ॥ २३१ ॥

यत्कर्म कुरुते चायं शुभं वा यदि वाऽशुभम् ॥
संपद्यतेऽथ तत्साक्षादात्मत्वेन पुमानयम् ॥ २३२ ॥

यत्कर्मेत्यादेरर्थमाह । यदिति । कर्मणोऽनुष्ठितस्य फलानुकूलत्वमथशब्दार्थः । साक्षात्संपत्तिमेव व्याकरोति । आत्मत्वेनेति ॥ २३२ ॥

अपूर्वमिति चेदं स्याददृष्टमिति चोच्यते ॥
पुण्यापुण्यमय इति प्राक्चैतदुपवर्णितम् ॥ २३३ ॥

कर्मवशात्तत्फलं कर्ताऽऽप्नोतीत्ययुक्तमपूर्वमदृष्टं फलहेतुरितीष्टत्वादित्याशङ्क्याऽऽह ।

---

१ ग. शक्येतान्येन । २ ख. °यं सक्रतुः ।

अपूर्वमिति चेति । कर्मवशात्तत्फलाप्तिरित्येतद्धर्ममयोऽधर्ममय इत्यत्रोक्तमित्याह । पुण्येति ॥ २३३ ॥

**पुमान्काममय एव कर्मादेः स्यात्प्रयोजकः ॥**
**यथा तदुक्तं श्रुत्येह मन्त्रोऽप्यत्र निगद्यते ॥ २३४ ॥**

अज्ञस्य संसारित्वे कामो हेतुरिति ब्राह्मणोक्तमनूद्य तत्रैव मन्त्रमादत्ते। **पुमानिति**। इहेत्यनन्तरपूर्वसंदर्भोक्तिः ॥ २३४ ॥

**तदेवैति पुमानस्य सक्तं यत्र मनो भवेत् ॥**
**आत्मा सक्त इदं लिङ्गं कर्मणा सह तत्सदा ॥ २३५ ॥**

पूर्वार्धं व्याचष्टे । तदेवेति । यत्रास्याज्ञस्य मनो निश्चयेन सक्तमुद्भूताभिलाषं स्यात्तदा तत्रैवार्थे तदिदं लिङ्गं सक्तस्तेनैकीभूतस्तदेव कर्मणा सह पुमानेतीत्येवमात्मा कामकर्मभ्यां विषयाधीनः संसरतीत्यर्थः ॥ २३५ ॥

**सूक्ष्मो देहोऽत्र लिङ्गं स्याल्लिङ्गनात्प्रत्यगात्मनः ॥**
**स्वात्मचैतन्यबिम्बेन निःसङ्गः सक्त आत्मना ॥ २३६ ॥**

लिङ्गशब्दार्थमाह । **सूक्ष्म इति** । तस्य लिङ्गत्वे हेतुः । **लिङ्गनादिति** । तेन हि प्रत्यगात्मनि स्फुटतरं ज्ञानमुत्पद्यते तेन लिङ्ग्यते ज्ञायते सोऽनेनेति सूक्ष्मो देहो लिङ्गमित्यर्थः। आत्मनोऽसङ्गस्य कुतो लिङ्गसक्तिरित्याशङ्क्याऽऽह। **स्वात्मेति**। आत्मनोऽसङ्गत्वेऽप्यात्मना लिङ्गेन स्वचैतन्याभासद्वारा काल्पनिकी सक्तिरविरुद्धेत्यर्थः॥२३६॥

**उदपात्रार्कगतिवद्गतेर्गतिरात्मनः ॥**
**ध्यायतीवेति च तथा निषिद्धैव स्वतो गतिः ॥ २३७ ॥**

तथाऽपि यत्रार्थे मनो निषक्तं तत्राऽऽत्मा लिङ्गेनैक्यं गतो गच्छतीत्ययुक्तं कूटस्थस्य विभोस्तदयोगादित्याशङ्क्याऽऽह । **उदपात्रेति** । यथा जलपात्रगमनं तद्गते सवितर्यारोप्यते तथाऽऽत्मनो गतिरहितस्यापि लिङ्गगमनं स्वात्मन्यारोप्य गतिरिष्टेत्यर्थः । औपाधिकमात्मनो गमनमित्यत्र मानमाह। **ध्यायतीति** । यथाऽत्र गमनमौपाधिकं तथा तदनुसारेणेति यावत् ॥ २३७ ॥

**तदेवैतीति यदि वा गन्तव्यमभिधीयते ॥**
**कामप्रधानता चैवं प्रकृतार्थानुरोधिनी ॥ २३८ ॥**

तदेवेत्यादिभागस्य भाष्याद्बहिरर्थमुक्त्वा भाष्योक्तमर्थमाह । **तदेवेति** । यत्र स्वर्गादिफले मनो निश्चयेन सक्तमुद्भूताभिलाषमस्य पुंसो भवति तदेवं स गच्छतीति तच्छब्देन गन्तव्यं गृह्यते कथं च गच्छतीत्यपेक्षायां फलासक्तः सन्यत्कर्माकरोत्तेन सह

---

१ घ. तत्रापि । २ घ. °व ग° ।

तत्फलं प्राप्नोतीति प्रतिभातीत्यर्थः। पूर्वव्याख्यानादस्य साक्षात्प्रकृत उपयोगित्वेन युक्ततरत्वमाह। कामेति ॥ २३८ ॥

**कामादयो यतो धर्माः स्वान्तस्यैवेह कीर्तिताः ॥**
**तदात्ममानिनोऽतः स्युरात्मनस्ते न तु स्वतः ॥ २३९ ॥**

मनो यत्र निषक्तमुद्भूताभिलाषमित्ययुक्तमभिलाषादेरात्मधर्मत्वादित्याशङ्क्याऽऽह। **कामादय इति**। कामः संकल्पो विचिकित्सेत्यादाविति शेषः ॥ २३९ ॥

**लिङ्गासक्तिवशादात्मा सक्त इत्यभिधीयते ॥**
**सक्तः सन्कर्मणा सार्धमेत्यात्मा कर्मणः फलम् ॥ २४० ॥**

सक्त इति विशेषणादात्मनः स्वतोऽभिलाषादिशालित्वं स्यादित्याशङ्क्यानेकश्रुतिविरोधादन्यथासिद्धं विशेषणं नाऽऽत्मनः स्वतःसक्तिसाधकमित्याह। **लिङ्गेति**। औपाधिकीं सक्तिमुक्त्वा तत्फलमाह। **सक्तः सन्निति** ॥ २४० ॥

**मनोभिष्वङ्गवशगः कर्मणैति यतः सह ॥**
**कामस्यातः प्रधानत्वं तत्प्रयुक्तात्मसंसृतेः ॥ २४१ ॥**

लिङ्गोपाधिरात्मा फलासक्तो यत्कर्म कृतवांस्तेन सह तत्फलं गच्छतीति वदतो मन्त्रस्याभिप्रेतार्थमाह। **मन इति**। अतःशब्दार्थं स्पष्टयति। **तत्प्रयुक्तेति** ॥२४१॥

**लिङ्गं मनःप्रधानत्वाल्लिङ्गं मन इहोच्यते ॥**
**यदि वा लिङ्ग्यते तेन मनो लिङ्गमिहाऽऽत्मनः ॥ २४२ ॥**

सप्तदशकं लिङ्गं न मनोमात्रं तत्कथं लिङ्गं मन इति सामानाधिकरण्यमित्याशङ्क्याऽऽह। **लिङ्गमिति**। लिङ्गं मन इत्यत्र लिङ्गमिति मनो गृह्यते लिङ्गस्य सप्तदशकस्यापि मनःप्रधानत्वादिति योजना। अथवेत्यादिभाष्यार्थमाह। **यदि वेति** ॥ २४२ ॥

**निश्चयेन तदासक्तं यस्मिन्विषय आत्मना ॥**
**विषयं कर्मणा सार्धं तमेवैतीति संगतिः ॥ २४३ ॥**

तन्मनो यत्रेत्यादिभाष्यार्थमाह। **निश्चयेनेति**। तन्मनो लिङ्गमुपहितेनाऽऽत्मना सह यस्मिन्नर्थे स्वर्गादावस्य सक्तमासीत्तत्रोद्भूताभिलाषवशादनुष्ठितकर्मणा तमेवार्थमात्मा मनः सक्तिहेतोर्गच्छतीत्यर्थः ॥ २४३ ॥

**इति कामप्रधानत्वसिद्धान्तस्योपसंहृतिः ॥**
**कर्मणोऽन्तं फलं प्राप्य भुक्त्वा निरवशेषतः ॥ २४४ ॥**

तेनेत्यादिभाष्यार्थमाह। **इति कामेति**। इतिशब्देन प्रकृतमन्त्रभागोक्तिः। प्राप्यान्तमित्यादेरर्थमाह। **कर्मण इति**। इमं लोकं पुनरैतीत्युत्तरत्र संबन्धः ॥ २४४ ॥

---

१ घ. 'कृतोप'।

कस्य कर्मण इत्युक्ते यत्किंचेहेति तद्वचः ॥ २४५ ॥
फलभोगावसानेऽथ किमसौ प्रतिपद्यते ॥
तस्माल्लोकादिमं लोकं पुनरैति स कर्मणे ॥ २४६ ॥

आकाङ्क्षापूर्वकं यत्किंचेत्यादिना कर्म विशेष्यत इत्याह । कस्येति । प्रश्नपूर्वकं तस्मादित्याद्यादत्ते । फलेति ॥ २४५ ॥ २४६ ॥

अस्मै लोकाय देहाय देहयोगश्च कर्मणे ॥
इत्येवमपरिश्रान्तो बंभ्रमीति पुनः पुनः ॥ २४७ ॥

अस्मै लोकाय कर्मण इति भागं विभजते । अस्मा इति । कर्म किमर्थमित्याशङ्क्य फलसंयोगार्थमित्याह । इत्येवमिति ॥ २४७ ॥

अनिर्ज्ञातात्मतत्त्वः सन्कामबन्धनबन्धनः ॥
घटीयन्त्रवदश्रान्तो बंभ्रमीत्यनिशं नरः ॥ २४८ ॥

पौनःपुन्येनेहलोकपरलोकयोरतिशयेन भ्रमणे हेतुमाह । अनिर्ज्ञातेति । अविश्रान्तां भ्रान्तिं दृष्टान्तेन स्पष्टयति । घटीयन्त्रवदिति ॥ २४८ ॥

इतीत्युक्तपरामर्शे न्विति खेदानुकम्पयोः ॥
एवमज्ञः कामवशाद्भूयो योनीः प्रपद्यते ॥ २४९ ॥

उपसर्गयोरर्थमाह । इतीत्युक्तेति । किं तदुक्तमित्युक्ते तद्दर्शयति । एवमिति ॥ २४९ ॥

अस्माल्लोकादमुं लोकममुष्मादिममेव च ॥
अज्ञः कामाङ्कुशाकृष्टो जायते म्रियतेऽसकृत् ॥ २५० ॥

खेदानुकम्पे स्फुटयति । अस्मादिति । प्रपद्यत इति संबन्धः । लोकद्वयप्राप्तिं प्रकटयति । अज्ञ इति ॥ २५० ॥

इति कामप्रधानस्य संसारानर्थसंगैतिम् ॥
उक्त्वा तदुपसंहारमितीतिवचसाऽकरोत् ॥ २५१ ॥

इतिशब्दस्यार्थान्तरमाह । इति कामेति । उक्त्वेत्यत्रेतिशब्दस्य संबन्धः॥२५१॥

एवं कामयमानोऽयं स्वप्नबुद्धान्तवञ्चरः ॥
संसरत्यप्रबुद्धः सन्परलोकेहलोकगः ॥ २५२ ॥

उपसंहृतमेव दर्शयति । एवमिति । आत्मनो नित्यशुद्धबुद्धमुक्तस्वभावस्याविद्यादिवशादीदृशी दशा तेन श्रेयोर्थिना तदपवादे यतितव्यमिति भावः ॥ २५२ ॥

अथ तस्यावदत्पूर्वं योषिदालिङ्गने यथा ॥
सौषुप्तं स्थानमाप्तस्य रूपं कामादिवर्जितम् ॥ २५३ ॥

---

१ ख. 'ने च कि' । २ ख. ग. 'मर्शो न्वि' । ३ क. ग. 'गतिः ॥ उक्त्वा त' ।

**तद्वा अस्यैतदित्येवं प्राक्श्रुत्या प्रतिपादितम् ॥**
**मोक्षो दार्ष्टान्तिकस्तस्य दृष्टान्तस्येह वर्ण्यते ॥ २९४ ॥**

अथाकामयमान इत्याद्यवतारयितुं वृत्तं कीर्तयति । **अथेति ।** प्रकरणविच्छेदार्थोऽथ-शब्दः । यथा योषिदालिङ्गने पुंसो रूपं स्त्रीवाक्येन श्रुतिरवदत्तथा सौषुप्तं स्थानं प्राप्तस्य कामादिहीनं रूपं मोक्षदृष्टान्तभूतमतिच्छन्दादिवाक्येनोक्तमनन्तरं च स्वप्नादिसं-सारदृष्टान्तस्य दार्ष्टान्तिको बन्धो वर्णित इत्यर्थः । संप्रत्युत्तरप्रकरणं प्रस्तौति । **मोक्ष इति** ॥ २९३ ॥ २९४ ॥

**अथशब्दोऽत्र हेत्वर्थ उक्तस्य तदपेक्षतः ॥**
**काम्येव हि यतोऽजस्रं संसरत्यविचक्षणः ॥ २९५ ॥**

यस्मादित्यादिभाष्येणाथशब्दार्थमाह । **अथशब्द इति** । तत्र हेतुः । **उक्तस्येति ।** उक्तो बन्धस्तस्य कामापेक्षत्वाद्यस्मात्कामी संसरति तस्मादकामो मुच्यत इत्यत्र विव-क्षितमित्यर्थः । संसारस्य कामापेक्षां साधयति । **काम्येवेति** । कामस्यानर्थमूलत्वमनु-भवानुसारीति हिशब्दार्थः । यतःशब्दस्योत्तरेणातःशब्देन संबन्धः । कामित्वे हेतुः । **अविचक्षण इति** ॥ २९५ ॥

**तद्भावभाविहेतुत्वादतोऽकामो विमुच्यते ॥**
**नरोऽकामयमानः स्यात्कामहेतोर्निराकृतः ॥ २९६ ॥**

काम्येव संसारीत्यत्र हेतुमाह । **तद्भावेति ।** तस्य कामस्य भावे बन्धस्य भावाद्वि-पर्यये चाभावात्तस्य तं प्रति हेतुत्वसिद्धेरित्यर्थः । कामी संसारीति सिद्धे फलितमाह । **अत इति ।** सत्यमकामो मुच्यते कथं त्वकामत्वं तदाह । **नर इति ।** यद्वा नाकामो मुच्यते सुप्तस्याकामस्यापि पुनरुत्थानादित्याशङ्क्याऽऽह । **नर इति** ॥ २९६ ॥

**स्वत एवाखिलसुखप्राप्ते[2]तत्त्वे स्व आत्मनि ॥**
**निरस्ताशेषदुःखे च मोहात्तत्र विपर्ययः ॥ २९७ ॥**

कस्तर्हि कामहेतुस्तत्राऽऽह । **स्वत इति** ॥ २९७ ॥

**अप्राप्तं दुःखवन्मोहान्मन्वानः सुखमुत्तमम् ॥**
**सुखं मे स्यादिति सदा नरः कामयते[3]ऽबुधः ॥ २९८ ॥**

निरतिशयसुखे प्रतीचि मोहकृतं विपर्ययमभिनयति । **अप्राप्तमिति** ॥ २९८ ॥

**तथा परिहृताशेषदुःखहेतुः स्वतोऽपि सन् ॥**
**मा भूद्दुःखं ममेत्येवं जाड्यात्कामयतेऽनिशम् ॥ २९९ ॥**

निरस्तसमस्तदुःखे तस्मिन्नविद्यातो विपर्ययमुदाहरति । **तथेति** ॥ २९९ ॥

---

१ क. ख. °समार° । २ क. °प्तता च स्व । ३ ख. °तेऽन्धधीः ॥ २९८ ॥

**कृत्स्नानन्दस्य चानाप्तिरवाप्तिरसुखस्य च ॥**
**नाऽऽत्मवस्त्वनुरोधेन तदबोधात्तदश्नुते ॥ २६० ॥**

सुखस्याप्राप्तिर्दुःखस्य प्राप्तिश्चेत्युभयमाविद्यं तत्प्रपञ्चयति । **कृत्स्नेति** ॥ २६० ॥

**वस्तुतन्त्रा भवेद्विद्या कर्तृतन्त्रैव च क्रिया ॥**
**अतः कामयमानत्वं कर्तृतन्त्रमबोधतः ॥ २६१ ॥**

कामस्य स्वाविद्या हेतुरित्युक्तं तत्रैव हेत्वन्तरं वक्तुं सामान्यन्यायमाह । **वस्त्विति** । अस्तु प्रस्तुते किं जातं तदाह । **अत इति** । कामस्य क्रियारूपत्वेन कर्तृतन्त्रत्वात्कर्तुश्चाज्ञानजत्वात्तस्यापि तज्जन्यत्वसिद्धिरित्यर्थः ॥ २६१ ॥

**कारकाण्युपमृद्नाति विद्या बीजमिवोषरम्[१] ॥**
**तत्कारणोपमर्दित्वाज्जन्मनैव न कारकम् ॥ २६२ ॥**

क्रियावद्विद्याऽपि कर्तृतन्त्रेत्याशङ्क्याऽऽह । **कारकाणीति** । कथं कारकोपमर्दित्वं विद्यायाः सिद्धं तत्राऽऽह । **तदिति** । विद्या जन्ममात्रेणैव कारकं न सिध्यति तस्याः स्वोदयमात्रेण तत्कारणाविद्योपमर्दित्वादित्यर्थः ॥ २६२ ॥

**यत एवमतो विद्वान्कामहेतूपमर्दनात् ॥**
**स्यादकामयमानोऽत्र न त्वविद्वान्कथंचन ॥ २६३ ॥**

स्वाविद्या कामहेतुरिति स्थिते फलितमाह । **यत इति** । अत्रेत्यधिकारिनिर्धारणे सप्तमी ॥ २६३ ॥

**कुतोऽकामयमानः स्यादित्येवमभिचोदिते ॥**
**योऽकाम इति वचनं पूर्वप्रत्युक्तिरुच्यते ॥ २६४ ॥**

अथेत्यादि व्याकुर्वता कामस्य मूलकारणमज्ञानमित्युक्तमिदानीं तस्यैवावान्तरकारणं वक्तुं चोद्यपूर्वकमुत्तरवाक्यमादत्ते । **कुत इति** । पूर्वस्य चोद्यस्य प्रत्युक्तिर्योऽकाम इति वचनमिति योजना ॥ २६४ ॥

**कामा यस्य न विद्यन्ते दृष्टानुश्रविका बहिः ॥**
**सोऽकाम इति संभाव्यः कृत्स्नकर्मनिराकृतेः ॥ २६५ ॥**

अकामशब्दार्थमाह । **कामा इति** । बाह्येषु शब्दाद्यर्थेषु दृष्टिश्रुतिपूर्वकास्तृष्णाप्रभेदा यस्य न सन्ति सोऽकाम इति ज्ञेये[२] इत्यर्थः । उक्तप्रकारकामाभावे हेतुमाह । **कृत्स्नेति** । कर्मशब्देन व्यापारोऽर्थश्चेत्युभयमुच्यते । न हि विदुषो बाह्यो विषयो व्यापारो वाऽस्ति साक्षात्कृताविक्रियाखण्डचिदेकस्वाभाव्यादित्यर्थः ॥ २६५ ॥

---

१ क. °याशुद्धिमिवोखरे ॥ त° । ख. °याबुद्धिमिवोखरे ॥ त° । ग. °याऽब्बुद्धिमिवोखरे ॥ त° । २ घ. °यमित्य° ।

क्रियमाणो यथा कामः क्रत्वादीनि प्रसूयते ॥
तथा संत्यज्यमानोऽपि नैष्कर्म्येणावतिष्ठते ॥ २६६ ॥

कामाभावं विदुषो दृष्टान्तेन प्रतिपादयति । क्रियमाण इति । यथा शोभनाध्यासेनाविदुषा क्रियमाणः कामः क्रत्वादीनाधत्ते तथा विवेकवैराग्यादिना बाध्यमानोऽपि कैवल्येन तिष्ठत्यतो विद्वानकामयमान इत्यर्थः ॥ २६६ ॥

अकामोऽपि क इत्येवं पृष्टे निष्काम उच्यते ॥ २६७ ॥
प्रयोजकात्मकाः कामा निष्क्रान्ता यस्य बुद्धितः ॥
अतिग्रहाः स निष्कामो विद्वद्भिरभिधीयते ॥ २६८ ॥

प्रश्नपूर्वकं विशेषणान्तरमुत्थापयति । अकामोऽपीति । पूर्वेणास्य पौनरुक्त्यमाशङ्क्य व्याचष्टे । प्रयोजकेति । अतिग्रहशब्दिताः शब्दादिवासनाः साभासबुद्ध्यारूढाः स्थूलकामहेतवोऽत्र कामास्ते यस्मान्निर्गताः स निष्कामोऽतोऽकामपदेन कामा बाह्या निरस्यन्त आन्तरास्तु निष्कामपदेनेत्यपौनरुक्त्यमित्यर्थः ॥ २६७ ॥ २६८ ॥

बाह्यानामान्तराणां च कार्यकारणता मिथः ॥
प्रत्यगज्ञानहेतुः स्यात्तदुच्छित्तौ न सा ततः ॥ २६९ ॥

प्रयोजकात्मकाः कामा इति वदता बहिरन्तस्थितकामानामन्योन्यं कार्यकारणभावो दर्शितस्तस्य किं प्रयोजकं तदाह । बाह्यानामिति । प्रत्यगज्ञानकृतानां कामानामन्योन्यं कार्यकारणतेत्युक्ते सिद्धमर्थमाह । तदुच्छित्ताविति ॥ २६९ ॥

तदुच्छित्तावतः प्रत्यग्याथात्म्यज्ञानमुच्यते ॥
आप्तकामादिवचसा यथावस्त्ववबोधिना ॥ २७० ॥

स्वाज्ञानध्वस्तिकारणं किमित्याशङ्क्य विशेषणद्वयमादत्ते । तदिति । अज्ञानध्वस्तौ ज्ञानातिरिक्तहेत्वयोगोऽतःशब्दार्थः ॥ २७० ॥

आप्ताः सर्वे स्वतोऽप्यस्य कामा ये बाह्यसाधनाः ॥
फलतोऽवाप्तकामोऽसौ परानन्दस्वभावतः ॥ २७१ ॥

आप्तकामत्वमयुक्तं स्वर्गादिफलानामननुष्ठायिविद्वदाप्यत्वासिद्धेरित्याशङ्क्याऽऽह । आप्ता इति । ये स्वर्गादयस्ते यद्यपि यागाद्यपेक्षास्तथाऽपि विदुषः स्वतः सर्वे प्राप्ता इति भवत्यसावाप्तकाम इत्यर्थः । साधनाधीनं सुखमेव च तदतिरेकेण प्राप्यमिति विप्रतिषिद्धमित्याशङ्क्याऽऽह । फलत इति । परानन्दरूपं ब्रह्म तत्स्वभावश्च विद्वांस्तत्कतुत्वादतोऽसावर्थादाप्तसर्वकामः सर्वानन्दानां परानन्दान्तर्भूतत्वादित्यर्थः ॥ २७१ ॥

मानुषानन्दमारभ्य ह्युत्तरोत्तरवृद्धितः ॥
सहस्रदशमांशोक्त्या परानन्दो निरूपितः ॥ २७२ ॥

ये तु परानन्देऽपि विवदन्ते तान्प्रत्याह । **मानुषेति** । न केवलमिहैव निरूपितमिदमपि तु श्रुत्यन्तरेऽपीति हिशब्दार्थः ॥ २७२ ॥

**कामिकामप्रभेदस्य प्रसक्ताविदमुच्यते ॥**
**श्रुत्याऽऽत्मकाम इत्येवमात्मैवामी न ते पृथक् ॥ २७३ ॥**

आप्तकामत्वं व्याख्यायाऽऽत्मकामत्वं व्याचष्टे । **कामीति** ॥ २७३ ॥

**आत्मैव सर्वमित्येवं बुद्धावस्याऽऽप्तकामता ॥ २७४ ॥**
**अबाह्याभ्यन्तरः कृत्स्नः प्रज्ञानघनमात्रभाक् ॥**
**इत्येवं यस्य वेदान्तवाक्योत्थं ज्ञानमात्मनि ॥ २७५ ॥**
**ध्वस्ताशेषतमस्कत्वात्सम्यग्ज्ञानप्रसूतितः ॥**
**वद तस्य कुतो हेतोः कामादेः स्यात्समुत्थितिः ॥ २७६ ॥**

आत्मकामत्वमाप्तकामत्वे हेतुरित्याह । **आत्मैवेति** । सर्वस्य शब्दादिप्रपञ्चस्य ज्ञानादात्ममात्रत्वे प्रतिपन्ने स्वातिरिक्तकामयितव्यराहित्यमात्मकामत्वमतः शब्दादिसाध्यसुखस्याप्यात्ममात्रत्वमाप्तकामत्वमित्यर्थः । आत्मकामत्वादाप्तकामत्वं ततो निष्कामत्वं ततश्चाकामत्वं तस्माच्चाकामयमानस्य मुक्तिरित्यभिप्रेत्याऽऽह । **अबाह्येत्यादिना** ॥ २७४ ॥ २७५ ॥ २७६ ॥

**यत्र वा अन्यदित्येवं सत्येवाज्ञान आह हि ॥**
**ज्ञातृज्ञेयादिकं भेदं तमोध्वस्तौ न सोऽस्त्यतः ॥ २७७ ॥**

सम्यग्ज्ञानादज्ञाने ध्वस्तेऽपि ज्ञात्रादिभेदवशेन कामादिः स्यादित्याशङ्क्याऽऽह । **यत्रेति** । अज्ञानावस्थायामेव ज्ञात्रादिभेदस्योक्तत्वाज्ज्ञानादज्ञानध्वस्तौ ज्ञात्रादिभेदप्रयुक्तो न कामादिरित्यर्थः ॥ २७७ ॥

**यत्र त्वस्येत्यतः प्राह ध्वस्तात्मतमसि श्रुतिः ॥**
**तत्केन कमितीत्यादि साक्षेपं वचनं स्वयम् ॥ २७८ ॥**

ज्ञानावस्थायां ज्ञात्रादिभेदाभावे मानमाह । **यत्र त्विति** । यत्र त्वस्य सर्वमित्यस्मादारभ्य तत्केन कं पश्येदित्यादिवचनं साक्षेपं ध्वस्तात्मतमसि पुंसि श्रुतिः स्वयमाहेत्थं ज्ञानादज्ञाने ध्वस्ते ज्ञात्रादिभेदाभावात्कामाद्यनुपपत्तिरित्यर्थः ॥ २७८ ॥

**ऐकात्म्यमात्रकूटस्थप्रबोधावसितेः कुतः ॥**
**मातृमानक्रियामेयव्यवहारस्य संभवः ॥ २७९ ॥**

आक्षेपं प्रकटयन्भाष्योक्तं श्रुत्यर्थं स्फुटयति । **ऐकात्म्येति** ॥ २७९ ॥

**अविजानन्हि विज्ञेयं कामं कामयते कथम् ॥**
**ज्ञात्वैव विषयाँल्लोके सर्वः कामयते यतः ॥ २८० ॥**

---

१ क. 'त्म्यवस्तुकू' ।

ज्ञाने ज्ञात्रादिव्यवहाराभावेऽपि कामः स्यादित्याशङ्क्याऽऽह । **अविजानन्निति ।** ज्ञातविषयो हि कामी ध्यायतो विषयानित्यादिस्मृतेः । न चाऽऽत्मज्ञः स्वातिरिक्तान्विषयानुपलभते तत्कुतोऽस्य काम इत्यर्थः । हिशब्दसूचितमन्वाचष्टे । **ज्ञात्वैवेति** ॥ २८० ॥

**इत्येवमात्मकामत्वादाप्तकामोऽत्र यो भवेत् ॥ २८१ ॥**
**आप्तकामतया तद्वन्निष्कामत्वं समश्नुते ॥**
**निष्कामत्वेन चाकामः स आत्मज्ञो विमुच्यते ॥ २८२ ॥**

अथेत्यादिवाक्यार्थं हेतुहेतुमद्भावेनोक्तमुपसंहरति । **इत्येवमिति** ॥ २८१ ॥ २८२ ॥

**संसारानर्थबीजस्य प्रध्वंसादात्मबोधतः ॥**
**तस्मादात्मनि विज्ञाते कामहेतोरसंभवात् ॥ २८३ ॥**
**कामकर्मौघसद्भावात्पूर्ण आत्माऽवतिष्ठते ॥**
**न तस्येत्युत्तरोक्त्याऽयं यथोक्तोऽर्थः समर्थ्यते ॥ २८४ ॥**

केयं मुक्तिर्न हि सा निर्धारिता वादिविप्रतिपत्तेरित्याशङ्क्याऽऽह । **संसारेति ।** ज्ञानादज्ञानतज्जध्वंसादपूर्णताहेत्वभावात्पूर्णरूपेणावस्थानं मुक्तिरित्यर्थः । तत्र विप्रतिपत्तिनिरासार्थं न तस्येत्यादिवाक्यद्वयमवतारयति । **नेति** ॥ २८३ ॥ २८४ ॥

**अपास्तानर्थहेतुत्वं यदुक्तं प्रत्यगात्मनः ॥**
**योऽकाम इत्यादिगिरा यो वेदाऽऽत्मानमागमात् ॥ २८५ ॥**
**जिघृक्षत्यायसं तप्तं शास्त्राचार्यात्मनिश्चयात् ॥**
**तस्योत्क्रामन्ति न प्राणा आसते नापि तत्र ते ॥ २८६ ॥**

यथोक्तमर्थमेव व्यनक्ति । **अपास्तेति ।** अखण्डब्रह्मात्मरूपेणावस्थानलक्षणं मोक्षं पूर्ववाक्योक्तमनन्तरवाक्यद्वयं समर्थयते तत्र श्रौतेऽर्थे विवादो वैदिकानामितरे तु प्रत्युदस्ता इत्यर्थः । वाक्याक्षराणि व्याकरोति । **यो वेदेति ।** प्राणानामनुत्क्रमणं वाङ्मात्रब्रह्मविदो नात्रोच्यते किंतु मनुष्योऽहमितिवदहं ब्रह्मेतिदृढप्रत्ययवतः सत्याभिसंधस्य तप्तपरशुग्रहणादिशपथसमर्थस्येत्यर्थः ॥ २८५ ॥ २८६ ॥

**स्थित्युत्क्रान्त्योर्हि यो हेतुरात्माविद्यादिलक्षणः ॥**
**ध्वस्तत्वात्तस्य सर्वस्य प्रत्यग्याथात्म्यदर्शनात् ॥ २८७ ॥**

किमिति प्राणा ब्रह्मविदो नोत्क्रामन्ति दृश्यते हि तस्यापीतरवदुत्क्रमणमत आह । **स्थितीति ।** उत्क्रमणादिहेतुत्वमविद्यादेरन्वयव्यतिरेकलभ्यमिति हिशब्दार्थः । तत्कार्यस्यास्थितिरिति शेषः ॥ २८७ ॥

---

१ ग. वाऽकामः । २ क. तदुक्तं ।

यत एवमतः प्राणाः सम्यग्ज्ञानस्य जन्मनि ॥
नोत्क्रामन्ति न तिष्ठन्ति न च नश्यन्त्यहेतुतः ॥ २८८ ॥

उत्क्रान्तिस्थितिहेत्वभावे वाक्यार्थमुपसंहरति । यत इति ॥ २८८ ॥

रज्जुसर्पो यथा लोकेऽज्ञातरज्जुसतत्त्वकः ॥
नोत्क्राम्न्ति न चाप्यास्ते न च नश्यति रज्जुतः ॥ २८९ ॥

आत्मयाथात्म्यज्ञानादज्ञानादिध्वस्तौ प्राणानामुत्क्रान्तिस्थितिनाशा न सिध्यन्तीत्यत्र दृष्टान्तमाह । रज्ज्विति । अज्ञातेति च्छेदः ॥ २८९ ॥

स्थित्युत्क्रान्तिविनाशानां रज्जुस्तत्त्वं यतस्ततः ॥
रज्जुज्ञानसमुत्पत्तौ रज्ज्वा नान्योऽवशिष्यते ॥ २९० ॥

रज्जुरेव तत्र कल्पितसर्पस्य तत्त्वमित्युक्तं हेतुं प्रपञ्चयति । स्थितीति । एवमात्मज्ञानोत्पत्तावन्यानवशेषान्न प्राणोत्क्रान्त्यादि सिध्यतीति शेषः ॥ २९० ॥

अविद्यातज्जनिर्मुक्तं वस्त्वत्रैवेति भण्यते ॥
समित्यैकात्म्यमात्रेण प्राणानां स्थितिरुच्यते ॥ २९१ ॥

अत्रैव समवनीयन्त इति माध्यंदिनश्रुतावत्रैवेत्यस्यार्थमाह । अविद्येति । उपसर्गार्थमाह । समितीति ॥ २९१ ॥

अवनीयन्त इत्युक्त्या नाशादिभ्योऽन्यतोगतिः ॥
प्रत्यङ्मात्रैकनिष्ठत्वान्न भावाभावयोः स्थितिः ॥ २९२ ॥

क्रियापदार्थमाह । अवनीयन्त इतीति । अन्वयव्यतिरेकाभावपरिहारेण प्राणानामात्ममात्रतया स्थितिरवनयनमित्येतदुपपादयति । प्रत्यगिति ॥ २९२ ॥

तादात्म्यमेव सर्वस्य कार्यकारणवस्तुनः ॥
उत्क्रान्त्यादेश्च कृत्स्नस्य सर्वमात्मेतिशास्त्रतः ॥ २९३ ॥

प्रत्यङ्निष्ठतामन्तरेण प्राणादेर्भावाभावात्मना न स्थितिरित्यत्र मानमाह । तादात्म्यमिति ॥ २९३ ॥

इति वस्तु स्वतो बुद्धमज्ञानं चानुभूतितः ॥ २९४ ॥
प्रत्यग्याथात्म्यमात्रत्वात्तन्मोहाद्यप्यशेषतः ॥
निवर्तते निवृत्तं चेत्येतदप्यनुभूतितः ॥ २९५ ॥

ननु सर्वस्याऽऽत्ममात्रत्वे साधकाभावादात्मासिद्धिर्न च शास्त्रात्तत्सिद्धिस्तस्याज्ञाते प्रवृत्तेर्न च सर्वस्याऽऽत्मत्वे ततोऽन्यदज्ञानमस्ति न चाज्ञानादि निवर्तते निवृत्तं चेति व्यवहारस्ते संभवत्यत आह । इति वस्त्विति । न तावदात्मनः साधकापेक्षा स्वप्रकाशत्वान्नापि तत्र शास्त्राप्रामाण्यमज्ञानस्य तत्रानुभवसिद्धत्वात्प्रत्यागितररूपाभावादविद्यादेस्त्रैकाल्यनिवृत्तिश्च विद्वदनुभवसिद्धा न विरुद्धेत्यर्थः ॥ २९४ ॥ २९५ ॥

**यत एवमतो वस्तु मुक्तमेव विमुच्यते ॥**
**कठवल्लीषु चाप्युक्तं विमुक्तश्च विमुच्यते ॥ २९६ ॥**

माध्यंदिनश्रुतिं व्याख्याय ब्रह्मैवेत्यादिवाक्यमवतार्य व्याख्यातुं भूमिकां करोति । **यत इति ।** आत्मवस्तु वस्तुतो नित्यशुद्धबुद्धमुक्तस्वभावमविद्ययाऽन्यथेत्येवं यतोऽवगतमतः स्वतो मुक्तमेवाविद्यया बद्धवत्सिद्धं विद्ययाऽविद्याध्वस्तौ मुक्तिव्यपदेशभागित्यर्थः । तत्र श्रुत्यन्तरं संवादयति । **कठेति ॥ २९६ ॥**

**इहापि सपरीवारं श्रुतिन्यायोपपत्तिमत् ॥**
**श्रुतिस्तदेव चाऽऽचष्टे वस्तु ब्रह्मैव सन्निति ॥ २९७ ॥**

पातनिकां कृत्वा मुक्तस्यैव मुक्तिरित्यर्थे वाक्यमुत्थापयति । **इहेति । ब्रह्मैव** सन्ब्रह्माप्येतीत्येषा श्रुतिस्तदेव श्रुत्यन्तरसिद्धं वस्तु शमादिपरिवारसहितश्रवणमनननिदिध्यासनैः श्रुतिन्यायोपपत्तिशब्दितैर्विषयीकृतमाचष्टे तदिहापि श्रुत्यन्तरवन्मुक्तस्यैव मुक्तिः सिद्धेत्यर्थः ॥ २९७ ॥

**ब्रह्म वा इदमित्येवं सूत्रितं वस्तु यत्पुरा ॥**
**स्पष्टं व्याख्याय तच्छ्रुत्या ह्युपसंह्रियतेऽधुना ॥ २९८ ॥**

ननु ब्रह्म वा इदमग्र आसीदित्यत्र ब्रह्मज्ञानं सफलं सूत्रितं तच्च ब्रह्म ते ब्रवाणीत्यादिना व्याख्यातमतो ब्रह्मैव सन्नित्याद्यनर्थकमत आह । **ब्रह्मेति ।** उपक्रान्तस्य परामृष्टस्योपसंहारावसरं दर्शयितुं हिशब्दः ॥ २९८ ॥

**योऽयं संसारभूमिष्ठो व्याख्यातोऽज्ञाततत्त्वकः ॥**
**कार्यकारणरूपोऽयं[1] मोहवृत्तानुरोधतः ॥ २९९ ॥**

उपसंह्रियमाणं सोपस्कारं स्फोरयितुं संसारिरूपमनुवदति । **योऽयमिति ।** यस्तावत्तद्धेदमित्यादावज्ञाततत्त्वकः प्रत्यग्धातुः संसारभूमिगतः प्रकृतः सोऽयं यत्रायमात्मेत्यादिना व्याख्यात इति योजना । संसारभूमिष्ठं प्रत्यञ्चं प्रपञ्चयति । **कार्येति॥२९९॥**

**यतो ब्रह्मैव सन्नेप प्रथते मोहतोऽन्यथा ॥**
**ब्रह्मैवेतीह सन्ब्रह्म तस्मान्मोहनिराकृतौ ॥ ३०० ॥**

अथोपसंह्रियमाणं वदन्वाक्यं योजयति । **यत इति ।** इहेति विद्याविद्यावस्थयोरन्यतरोक्तिः ॥ ३०० ॥

**नान्यदज्ञानतोऽस्तित्वं द्वितीयस्याऽऽत्मनो यथा ॥**
**निवृत्तिस्तद्वदेवास्य नावगत्यात्मनोऽपरा ॥ ३०१ ॥**

मोहध्वस्तेरात्मनोऽन्यत्वमाशङ्क्यासकृदुक्तं स्मारयति । **नेति ॥ ३०१ ॥**

---

१ क. 'परिवा' । २ ग. 'पोऽथ मो' ।

**यस्मादेतत्स्वतो बुद्धं स्वतः शुद्धमतोऽद्वयम् ॥**
**प्रमात्रादेस्तदज्ञाननिवृत्तौ विनिवृत्तितः ॥ ३०२ ॥**

अवगत्यात्मस्वरूपं दर्शयति । **यस्मादिति** । कथमद्वयत्वं मात्रादेः सत्त्वात्तत्राऽऽह । **प्रमात्रादेरिति** ॥ ३०२ ॥

**मुक्तं चातः स्वतस्तत्त्वं मुक्तमित्युपचर्यते ॥**
**तदविद्यादिविध्वंसात्त्रिवः शपथयाम्यहम् ॥ ३०३ ॥**

नित्यशुद्धस्याद्वयस्य कथं मुक्तत्वोक्तिर्मलाभावे तद्विगमात्मनो मुक्तेरनुपपत्तेस्तत्राऽऽह । **मुक्तमिति** । उपचारे निमित्तमाह । **तदिति** । उक्तात्मरूपे संदिहानान्प्रत्याह । **त्रिरिति** ॥ ३०३ ॥

**योऽक्रियाकारकं साक्षादक्रियाकारकात्मकः ॥**
**आत्मानमात्मनैवाऽऽत्मा साक्षाद्वेत्ति सुषुप्तवत् ॥ ३०४ ॥**
**निरस्ताशेषसंभेदं दृष्टिमात्रं निरञ्जनम् ॥**
**वितमस्कं स आत्मज्ञस्ततोऽन्ये मूढचेतसः ॥ ३०५ ॥**

ब्रह्मविदो मुक्तस्यैव मुक्तिरित्ययुक्तं तस्याप्रत्यवायार्थं कर्मानुष्ठानस्य वादिभिरिष्टत्वादित्याशङ्क्याऽऽह । **य इति** । कूटस्थात्मवेदिनस्तत्क्रतुन्यायात्तथात्वमप्रतिहतमिति वक्तुं साक्षादित्युक्तम् । आत्मानमिति कर्मान्तरमात्मनैवेति करणान्तरमात्मैवेति कर्त्रन्तरं च निरस्यते । द्वितीयं साक्षात्पदं यथाश्रुतं संगतमित्यपौनरुक्त्यम् । यथा सुप्तमात्मरूपं मोक्षदृष्टान्तभूतमुक्तं तथैवाऽऽत्मानं मोक्षरूपं साक्षात्कुर्वन्ब्रह्मविदित्युच्यते स ब्रह्मविदिति श्रुतेर्ये त्वात्मानं वस्तुतः संसारिणं प्रत्यवायिनं कल्पयन्ति न ते विदन्ति ये के चाऽऽत्महनो जना इति श्रुतेरित्यर्थः ॥ ३०४ ॥ ३०५ ॥

**न तस्य जीवतः कश्चिद्विशेषोऽस्ति मृतस्य वा ॥**
**यतः सर्वविशेषाणामविद्यैवास्ति कारणम् ॥ ३०६ ॥**

जीवन्नेव विद्वान्मुक्तः सन्मुच्यत इत्ययुक्तं जीवतो मुक्तिविरोधान्न हि प्राणादिमत्त्वं तद्राहित्यं च युगपद्युक्तमतो विदुषोऽपि मृतस्यैव मुक्तिरित्याशङ्क्याऽऽह । **न तस्येति** । सा चाविद्या जीवत एव विदुषोपनीताऽतो मृतस्य मोक्षवादिनो भ्रान्ता इति शेषः ॥ ३०६ ॥

**अविचारितसंसिद्धिप्रत्यङ्मोहादिलक्षण—**
**व्यवधानमात्राभावेन ब्रह्माप्येतीति शब्द्यते ॥ ३०७ ॥**

जीवदवस्थायामितरत्र च विदुषो विशेषाभावे कथं ब्रह्माप्येतीत्युच्यतेऽत आह । **अविचारितेति** ॥ ३०७ ॥

---

१ क. स्वतःसिद्धं । २ ख. °विध्वस्तेस्त्रिर्वः । ३ ख. °त्मनः । आ° । ४ ग. च । ५ ख. °वास्य का° । ६ ग. °सिद्धप्र° ।

**इतोऽन्यथा चेन्मोक्षः स्यादारम्भोऽनर्थकः श्रुतेः ॥**
**मुक्तेश्च कर्महेतुत्वादनित्यत्वं प्रसज्यते ॥ ३०८ ॥**

अप्येतिशब्दोऽविद्यातज्जरूपव्यवधानाभावाभिप्रायेण कस्मादौपचारिको व्याख्यातः परस्मादन्यो जीवोऽनतिशयज्ञानकर्मभ्यां ब्रह्माप्येतीति किं न स्यादित्याशङ्क्याऽऽह । **इत इति** । आत्मनः स्वरूपावस्थानं मुक्तिः सा चाज्ञानव्यवधानहानार्थं ज्ञानं काङ्क्षति तत्राऽऽत्मैक्यार्था श्रुतिरर्थवती । आत्मनो भिन्नस्यैव भावान्तरब्रह्मभावो मुक्तिश्चेदैक्यश्रुत्युपक्रमो बाध्येतेत्यर्थः । मोक्षस्य साध्यत्वे दोषान्तरमाह । **मुक्तेश्चेति** ॥ ३०८ ॥

**एष नित्यो महिमेति श्रुतिवाक्यं विहन्यते ॥**
**स्वाभाविकात्स्वभावाच्च नित्यो नान्योऽस्ति कश्चन ॥ ३०९ ॥**

इष्टापत्तिमाशङ्क्याऽऽह । **एष इति** । कृतकोऽपि ब्रह्मभावो ध्वंसवन्नित्यः स्यादित्याशङ्क्याऽऽह । **स्वाभाविकादिति** । कृत्रिमस्वभावव्यावृत्त्यर्थं स्वाभाविकपदम् । **अतोऽन्यदार्तमिति** हि **श्रुतिः** । ध्वंसस्य तु विकल्पमात्रत्वान्नित्यत्वमसंमतमिति कुतो दृष्टान्ततेति भावः ॥ ३०९ ॥

**आत्मस्वभावो मोक्षश्चेद्वियच्छिद्रत्ववत्सदा ॥**
**अग्न्युष्णवच्चाशक्योऽतः कर्मोत्थ इति भाषितुम् ॥ ३१० ॥**

मोक्षोऽकृत्रिमस्वभावोऽपि कर्मोत्थः स्यादित्याशङ्क्याऽऽह । **आत्मेति** ॥ ३१० ॥

**ज्वलनव्यापृतेरग्नेः प्रकाशौष्ण्यादि चेत्फलम् ॥**
**नोपलब्ध्यन्तरायार्थध्वंसाभिव्यक्त्यपेक्षतः ॥ ३११ ॥**

अरणिगतस्य वह्नेरौष्ण्यप्रकाशौ नोपलभ्येते ज्वलने च सति दृश्येते तत्तयोरागन्तुकत्वं कादाचित्कोपलब्धिमत्त्वादिति दृष्टान्तेन विवदमानः शङ्कते । **ज्वलनेति** । न खलु स्वतोऽग्नेरौष्ण्यादि कादाचित्कं युक्तं दृष्टेर्व्यवधानस्य दार्वादेर्ध्वंसे मथनज्वलनादिनाऽप्यग्न्याभिव्यक्तिमपेक्ष्य तत्स्वभावस्यौष्ण्यादेर्व्यक्त्युपगमादिति परिहरति । **नोपलब्धीति** ॥ ३११ ॥

**ज्वलनव्यापृतवह्नेः प्रकाशौष्ण्यादजन्मनः ॥**
**न त्वग्न्यपेक्षयौष्ण्यादेरभिव्यक्तस्वभावतः ॥ ३१२ ॥**

तत्प्रपञ्चयति । **ज्वलनेति** । मथनादिव्यापारादग्नेरौष्ण्यादिविशिष्टस्य जन्मोपगमाल्लब्धात्मकाग्न्यपेक्षया प्रकाशादेर्न व्यक्तिस्तदन्यतत्स्वभावाभावादतो न सिद्धाग्न्यपेक्षयौष्ण्याद्यभिव्यक्तेः साध्यत्वं पुरुषापेक्षया तु तदिष्टमेव वह्नेरन्यत्वात्पुंसो व्यवधिसंभवादित्यर्थः ॥ ३१२ ॥

---

१ घ. °न्यस्तमा° ।

**नाभिव्यञ्जकसंसाध्या घटादेरिव चाऽऽत्मनः ॥**
**अभिव्यक्तिः स्वतोभास्वद्बोधमात्रैकरूपतः ॥ ३१३ ॥**

पुरुषापेक्षयाऽग्न्यौष्ण्याद्यभिव्यक्तेर्ज्वलनादिसाध्यत्ववदात्मनो ब्रह्मभावमोक्षाभिव्यक्तिरपि कर्मादिसाध्येत्याशङ्क्याऽऽह । **नेति** । घटाद्यभिव्यक्तेर्दीपादिसाध्यत्ववदात्मनो ब्रह्मत्वव्यक्तिर्न साध्येत्यत्र हेतुमाह । **स्वत इति** ॥ ३१३ ॥

**अग्नेरन्यस्य पुंसोऽग्निज्वलनादिनिमित्ततः ॥**
**उष्णप्रकाशयोर्व्यक्तिर्व्यवधानस्य संभवात् ॥ ३१४ ॥**

अग्न्यौष्ण्यादिव्यक्तिरपि न साध्या प्रकाशरूपत्वादात्मव्यक्तिवदित्याशङ्क्याऽऽह । **अग्नेरिति** ॥ ३१४ ॥

**अप्यभिव्यक्तिरूपेऽस्मिन्मोक्षे नैवास्ति कार्यता ॥**
**प्रदीपादेरभिव्यङ्ग्यं नैव कार्यं घटादिकम् ॥ ३१५ ॥**

अग्निपुरुषयोरन्यत्वादग्निस्वभावौष्ण्यादिना सह पुंसो व्यवधिवदात्ममुक्त्योरपि कल्पितव्यवधिसंभवात्कर्मादिसाध्या तद्व्यक्तिरित्याशङ्क्याङ्गीकृत्याऽऽह । **अपीति** । अस्मिन्पक्षे कर्मादिकृतव्यक्तिस्वभावेऽभ्युपगतेऽपि न मुक्तेः साध्यतेति यावत् । मुक्तिश्चेत्कर्मव्यङ्ग्या कथं न तत्साध्येत्याशङ्क्याऽऽह । **प्रदीपादेरिति** ॥ ३१५ ॥

**अभिव्यक्तिश्च नैवास्ति सौष्ण्याद्यात्मकवस्तुनः ॥**
**तदन्तरायासद्भावाद्वास्तवी न तु मोहजा ॥ ३१६ ॥**

दृष्टान्तेऽग्निस्वभावस्यैवौष्ण्यादेर्ज्वलनादिसाध्यां व्यक्तिमुपेत्य दार्ष्टान्तिके मोक्षे न कर्मादिसाध्या व्यक्तिस्तस्यास्तथात्वेऽपि मोक्षस्य न तत्साध्यतेत्युक्तम् । इदानीं दृष्टान्ते पुरुषापेक्षयेवाग्न्यपेक्षयाऽपि तदौष्ण्यादिव्यक्तेर्ज्वलनादिसाध्यत्वं किं न स्यादित्याशङ्क्याऽऽह । **अभिव्यक्तिश्चेति** । उष्णसहितप्रकाशात्मकं हि वह्न्याख्यं वस्तु न तस्य प्रकाशादिना सह व्यवधानं न हि स्वस्य स्वेनैव व्यवधिरतो वह्न्यपेक्षया तदौष्ण्यादिव्यक्तिर्न ज्वलनादिसाध्येत्यर्थः । कथं तर्हि मथनादिना वह्न्यौष्ण्यादेर्व्यक्तिव्यवहारस्तत्राऽऽह । **वास्तवीति** । न वह्निस्वरूपानुसारिणी तत्रौष्ण्यादिव्यक्तिव्यवहृतिर्मोहजा तु सेति यावत् ॥ ३१६ ॥

**ज्वालानुग्रहतो वह्नेस्तत्प्रकाशादिदर्शनात् ॥**
**भ्रमोऽयमग्निव्यापारादुष्णादेर्जन्मकल्पना ॥ ३१७ ॥**

ज्वलनादिनौष्ण्यादिजन्मैव न तु व्यक्तिर्नियामकाभावादित्याशङ्क्याऽऽह । **ज्वालेति** । वह्नौ या ज्वाला तदनुग्रहात्तस्यैव वह्नेरौष्ण्यादिदृष्टा तद्वारा तज्जन्मेति भ्रान्तिर्वस्तुतस्त्वभिव्यक्तिरेव न जन्मेत्यर्थः ॥ ३१७ ॥

**न चेदग्नेः प्रकाशादिस्वभावोऽभ्युपगम्यते ॥**
**यत्स्यात्स्वाभाविकं यस्य तदुदाहरणं भवेत् ॥ ३१८ ॥**

अग्नेरौष्ण्यादि न स्वाभाविकं तन्न तादृशो मोक्षस्योदाहरणमिति शङ्कते । **न चेदिति** । वस्तुनः स्वाभाविको धर्मोऽस्ति न वेति विकल्प्याऽऽद्यं प्रत्याह । **यदिति** । उदाहरणं मोक्षस्येति शेषः ॥ ३१८ ॥

**न च स्वाभाविको धर्मः कस्यचिन्नास्ति वस्तुनः ॥**
**स्वयं तु भवतो यस्माद्वस्तुनोऽन्येन संगतिः ॥ ३१९ ॥**

द्वितीयं दूषयति । **न चेति** । तत्र हेतुः । **स्वयं त्विति** । लब्धात्मकं हि वस्तु वस्त्वन्तरेण संबध्यतेऽन्यथा सर्वाण्येव वस्तूनि संकीर्येरन्नस्ति च निम्बे तिक्तत्वधीरित्यर्थः ॥ ३१९ ॥

**निगडध्वंसवन्नापि पुंसो मोक्ष इहाऽऽत्मनः ॥**
**निवृत्तिमात्रं बन्धस्य कथंचिदुपपद्यते ॥ ३२० ॥**

ब्रह्मभावो मोक्षो न कर्मसाध्य इत्युक्तमन्ये तु तममृष्यमाणा बन्धध्वंसं मोक्षमाचक्षाणास्तस्य कर्मसाध्यतामाहुस्तान्प्रत्याह । **निगडेति** । न हि बन्धस्य तथास्थितस्य ध्वस्तिर्विरोधान्नाप्यन्यथास्थितस्य तस्यानवस्थानान्न च प्रसिद्धिविरोधो दुर्निरूपध्वस्तिविषयत्वादित्याह । **निवृत्तीति** ॥ ३२० ॥

**एकमेवाद्वितीयं[1] सद्वितीयं तद्बोधतः ॥**
**न च बद्धस्ततोऽन्योऽस्ति यस्य नश्यति बन्धनम् ॥ ३२१ ॥**

किंच नाऽऽत्मातिरिक्ता तद्ध्वस्तिर्बन्धस्याऽऽविद्यस्यास्वातन्त्र्यान्न हि रज्ज्वविद्याकल्पितसर्पभावाभावौ रज्ज्वातिरेकेण स्तस्तथाच स्वरूपास्थितिरेव मुक्तिरित्याह । **एकमिति** । ब्रह्मणोऽद्वयत्वेऽप्यन्यस्य बद्धस्य स्वीयबन्धध्वस्तिर्मुक्तिरित्याशङ्क्याऽऽह । **न चेति** ॥ ३२१ ॥

**प्रतीचो व्यतिरेकेण तथैवाव्यतिरेकतः ॥**
**वस्त्वन्तरस्य सद्भावमभावं च प्रयत्नतः ॥ ३२२ ॥**
**निराकार्ष सुयुक्त्युक्त्या मोक्षोऽतोऽज्ञाननिह्नुतिः ॥**
**सर्पाद्यभाववद्रज्जुमोहमात्रनिवृत्तितः ॥ ३२३ ॥**

अन्यो बद्धोऽबद्धो वा नेत्यत्राव्याकृतविचारादावुक्तं स्मारयति । **प्रतीच इति** । प्रयत्नो विचारपरिनिष्पीडनं सुयुक्तिर्नामाऽऽगमानुसारी न्यायः । प्रत्यग्ब्रह्मातिरिक्तवस्त्वभावे कीदृशी मुक्तिरित्याशङ्क्याऽऽह । **मोक्ष इति** । तत्प्रतिबन्धकाज्ञानध्वस्तौ

---

१ क. ग. °यं तदद्वि° ।

तद्व्यवहार इत्यत्र दृष्टान्तमाह । **सर्पादीति** । रज्जुविषयमोहमात्रध्वस्त्या तज्जसर्पादिध्वस्तिवदात्मज्ञानात्तदज्ञानध्वस्त्या तदुत्थबन्धध्वस्तिरतो रज्जोः स्वाज्ञानतज्जध्वस्तौ रज्जुभाववदात्मनोऽपि स्वाविद्यातज्जध्वस्तावुपचर्यते ब्रह्मत्वमित्यर्थः ॥ ३२२ ॥ ३२३ ॥

**ये तु व्याचक्षते मोक्षे नित्यानन्दैकगोचरा ॥**
**ज्ञानाभिव्यक्तिरित्येवं स्वसिद्धान्तसमाश्रयात् ॥ ३२४ ॥**

आत्मनो[1] ब्रह्मत्वं मुक्तिरित्युक्तमथ वैषयिकसुखज्ञानातिरिक्ते सुखज्ञाने मोक्षे व्यज्येते ते च मिथो विषयविषयिभूते न ब्रह्मभावमात्रं मुक्तिरिति मतमाह । **ये त्विति** । तत्र मानयुक्तिहीनत्वं सूचयति । **स्वसिद्धान्तेति** ॥ ३२४ ॥

**तैरभिव्यक्तिशब्दार्थो वक्तव्यः कीदृगिष्यते ॥**
**प्रसिद्ध एव चेदर्थो विज्ञानालम्बनाप्तिता ॥ ३२५ ॥**

केयमभिव्यक्तिरुत्पत्तिर्वा प्रकाशो वा नाऽऽद्यो मोक्षे सुखाद्युत्पत्तौ तदनित्यत्वापत्तेरिति मत्वाऽऽह । **तैरिति** । द्वितीयमालम्बते । **प्रसिद्ध इति** । घटादेरिव ज्ञानविषयत्वं सुखादेर्व्यक्तिरित्यर्थः ॥ ३२५ ॥

**विज्ञानालम्बनप्राप्तिः किं सतो वाऽथवाऽसतः ॥**
**अभिव्यक्तिः सतश्चेत्स्याद्यस्य मुक्तस्य तत्सुखम् ॥ ३२६ ॥**
**स्वरूपमेव तस्येति विशेषणमनर्थकम् ॥**
**मुक्तौ तद्व्यज्यते ज्ञानं सुखं चेति यदीरितम् ॥ ३२७ ॥**

सुखादि विद्यमानमविद्यमानं वाऽऽत्मनो व्यज्यत इति विकल्पयति । **विज्ञानेति** । आद्यमनुभाष्य दूषयति । **अभिव्यक्तिरिति** । आत्मनो विद्यमानं सुखादि मुक्तौ व्यज्यते चेत्तर्हि स्वरूपमेव मुक्तस्य स्यात्ततो भेदेनावस्थाने मानाभावादतो नित्यव्यक्तेः सुखादेर्मुक्तौ व्यक्तिरिति विशेषोक्तिरनर्थिकेत्यर्थः। संसारेऽनभिव्यक्तमपीत्यप्यर्थे चकारः ॥ ३२६ ॥ ३२७ ॥

**स्वात्मभूतं हि यद्यस्य नैव तद्व्यवधीयते ॥**
**आत्मनस्तत्स्वभावत्वात्सर्वदेति विनिश्चयः ॥ ३२८ ॥**

स्वरूपत्वेन सदा सदपि तत्प्राङ्मुक्तेर्व्यवहितत्वादव्यक्तमित्याशङ्क्याऽऽह। **स्वात्मेति**। स्वरूपसुखादेर्न वास्तवं व्यवधानं स्वरूपत्वविरोधान्मानाभावाच्चावास्तवे तु तस्मिन्मतभेदासिद्धिरित्यर्थः । यद्यस्य स्वरूपं न तत्तस्य व्यवहितं यथा प्रकाशो दीपस्येतिव्याहृत्यर्थो हिशब्दः ॥ ३२८ ॥

**अमुक्तावथवा मुक्तौ विशेषोऽस्ति न कश्चन ॥**
**प्रत्यगात्मस्वभावत्वात्सुखविज्ञानयोरतः ॥ ३२९ ॥**

---

1 क. 'नोऽपि ब्र' ।

मुक्तौ तद्व्यज्यत इति विशेषवचनं मृषा ॥
स्वसिद्धान्तविरोधोऽपि तदभिव्यक्तिवादिनः ॥ ३३० ॥
सत्कार्यवादिनो यस्मादभिव्यक्तिः प्रशस्यते ॥
व्यज्यते सर्वमेवेदं सत्त्वात्सर्वस्य वस्तुनः ॥ ३३१ ॥

बन्धमोक्षयोः सुखादेरतिशयाभावे मुक्तौ तद्व्यक्तिरिति विशेषोक्तिरनर्थिकेत्युक्तं निगमयति । **अमुक्ताविति** । किंचासत्कार्यवादिनां सत्कार्यवादिनां वा मतमेतदिति विकल्प्याऽऽद्यं प्रत्याह । **स्वसिद्धान्तेति** । तत्पक्षे वा कथं तत्प्रशंसेत्याशङ्क्य तन्मतमनुवदति । **व्यज्यत इति** ॥ ३२९ ॥ ३३० ॥ ३३१ ॥

आरम्भवादे त्विच्छादेः कार्यत्वादसदात्मता ॥
असतश्चाप्यभिव्यक्तिर्न युक्ता खरशृङ्गवत् ॥ ३३२ ॥

असत्कार्यवादेऽपि कस्मादभिव्यक्तिरेव न भवति तत्राऽऽह । **आरम्भेति** । नापि द्वितीयस्तत्र विशेषणवैयर्थ्यस्योक्तत्वादिति तुशब्दार्थः । विद्यमानसुखादेरभिव्यक्तिपक्षं निराकृत्य पक्षान्तरं निराकरोति । **असतश्चेति** ॥ ३३२ ॥

व्यङ्ग्यव्यञ्जकसंबन्धः प्रदीपघटयोरिव ॥
उभयोः सिद्धयोर्योगान्नेष्टा कारणकार्यता ॥ ३३३ ॥

तस्यापि तच्छब्दाद्व्यक्तिमाशङ्क्य तद्विशेषो नास्तीत्याह । **व्यङ्ग्येति** । किंच व्यक्तिः सत्यसती वोभयथाऽपि कारणेन तस्या न कार्यता सतोऽसतश्च साध्यत्वादृष्टेरित्याह । **नेष्टेति** ॥ ३३३ ॥

सुखविज्ञानयोश्चापि किमभेदोऽथवा भिदा ॥
नैक्येऽभिव्यक्तिशब्दार्थः कदाचिदपि लभ्यते ॥ ३३४ ॥

व्यक्तिपक्षे दोषान्तरं वक्तुं विकल्पयति । **सुखेति** । आद्ये ज्ञानालम्बनत्वाख्या व्यक्तिर्न सिध्यत्येकत्र विषयविषयित्वायोगादित्याह । **नेति** ॥ ३३४ ॥

अथ भेदस्तयोरिष्टो व्यवधानं प्रसज्यते ॥
तद्भेदाभेदतासिद्धौ न च मानमिहास्ति वः ॥ ३३५ ॥

कल्पान्तरमनूद्य निरस्यति । **अथेति** । सुखज्ञानयोर्भेदे देशादिव्यवधिप्रसङ्गाद्घटादिवन्नित्यज्ञानाज्ज्ञानान्तरं सुखग्राहि स्यात्तथाच मुक्तावपि कार्यकारणप्रसक्तेः संसारादविशेष इत्यर्थः । ज्ञानानन्दयोर्न केवलो भेदो नाप्यभेदः किंतु भेदाभेदावित्याशङ्क्याऽऽह । **तदिति** । इहेत्यात्मा मुक्तिर्वोक्ता ॥ ३३५ ॥

भेदग्राहि न नो मानमितोऽन्यत्रापि विद्यते ॥
मेयमात्रावसायित्वात्सर्वमानस्य सर्वदा ॥ ३३६ ॥

---

१ ग. नः ।

तयोर्भेदाभेदे मानाभावार्थं भेदस्याप्रामाणिकत्वं साधयति । **भेदेति** । घटादावपि न भेदग्राहि मानमस्तीत्यत्र हेतुमाह । **मेयेति** ॥ ३३६ ॥

**स्वमेयव्यतिरेकेण मेयान्तरसमाश्रयः ॥**
**न व्यावृत्त्यनुवृत्त्यादिव्यापारोऽस्ति मितेः क्वचित् ॥ ३३७ ॥**

स्वार्थं व्यञ्जयदेव मानमन्यस्माद्व्यावृत्तिमनुवृत्तिं च तस्य व्यनक्तीत्याशङ्क्याऽऽह । **स्वमेयेति** । स्वार्थावसितव्यापाराणि मानानि न तस्यान्यतो भेदमभेदमुभयं वाऽवगाहन्ते स्वार्थशूराणां तेषामन्यत्रौदासीन्यादित्यर्थः ॥ ३३७ ॥

**अभिव्यक्तिः सुखस्यास्तु कामं ज्ञानेन संगतेः ॥**
**ज्ञानव्यक्तौ तु किं मानं यतोऽभिव्यक्तिवागियम् ॥ ३३८ ॥**

अस्तु वा यथाकथंचिज्ज्ञानेन संगत्या सुखव्यक्तिस्तद्व्यक्तिस्तु न सिध्यति तत्कुतो द्वयोर्मुक्तौ व्यक्तिरित्याह । **अभिव्यक्तिरिति** । ज्ञाने स्वयमेव मानमन्यद्वेति प्रश्नार्थः ॥ ३३८ ॥

**प्रमाणानां प्रमाणत्वं न स्वरूपप्रमेयता ॥**
**न च मानान्तरादिष्टं तयोस्तुल्यस्वभावतः ॥ ३३९ ॥**

तत्राऽऽद्यं दूषयति । **प्रमाणानामिति** । मानमेययोर्भेदप्रसिद्धेरित्यर्थः । द्वितीयं निराह । **न चेति** । इष्टं मानस्य मेयत्वमिति शेषः ॥ ३३९ ॥

**अभिव्यक्तिर्मताऽथापि कादाचित्की न सर्वदा ॥**
**तदन्तरायसद्भावादव्यक्तिः स्यात्सदा ध्रुवम् ॥ ३४० ॥**

किंच ज्ञानेन सुखव्यक्तिरनित्या नित्या वेति विकल्प्याऽऽद्यमादत्ते । **अभिव्यक्तिरिति** । अनित्या चेदानन्दाभिव्यक्तिस्तदा तस्य व्यवधेरव्यक्तिरेव मुक्तौ स्यात्तत्काले तद्धेत्वभावादित्याह । **तदन्तरायेति** । संसारदशायामानन्दाव्यक्तेरिष्टत्वमवष्टभ्य सदेत्युक्तम् ॥ ३४० ॥

**अन्तरायनिवृत्तौ च व्यपेक्षा वः प्रसज्यते ॥**
**साधनान्तरविषया तज्ज्ञानव्यतिरेकतः ॥ ३४१ ॥**

मुक्तिदशायां व्यवधिभङ्गेन तद्व्यक्तिरित्याशङ्क्याऽऽह । **अन्तरायेति** । व्यवधेर्वस्तुत्वे ज्ञानस्यातद्ध्वंसित्वात्तदर्थं हेत्वन्तरमुपास्यं तदभावान्मुक्तौ व्यवधानाध्वस्तेरव्यक्तिरेव सुखस्येत्यर्थः ॥ ३४१ ॥

**उपलब्ध्येकनीडत्वे व्यवधानस्य कल्पना ॥**
**न चोपपद्यते मानात्तयोरेकात्मकत्वतः ॥ ३४२ ॥**

व्यवधेरवस्तुत्वे तस्याज्ञानाख्यस्य ध्वस्तिर्नित्यादागन्तुकाद्वा ज्ञानादिति विक-

---

१ ख. ॅश्रयात् ॥ न । २ क. ग. ॅयतः ॥ न । ३ ख. ध्रुवा ।

ल्प्याऽऽद्यं दूषयति । उपलब्धीति । यत्र ज्ञानं तत्रैव सुखमपीत्येकाश्रयत्वे तयोर्व्य-वधानमप्रामाणिकमेकस्मिन्नात्मनि तयोः सदा सत्त्वाद्व्यवधानाज्ञानस्य नित्यज्ञानेन नित्यप्रतिहतेरित्यर्थः ॥ ३४२ ॥

**एवं च सत्यभिव्यक्तिः सर्वदा सुखबोधयोः ॥**
**अभिव्यक्तिर्न चेदेवं नाभिव्यक्तिः सदा तदा ॥ ३४३ ॥**

व्यवधानायोगे फलितमाह । **एवं चेति** । विपक्षे दण्डमाह । **अभिव्यक्तिरिति** ॥ ३४३ ॥

**इतोऽन्यथा कल्पनायां न प्रमाणं समीक्ष्यते ॥ ३४४ ॥**
**नाप्येकाश्रयिणां लोके धर्माणां क्वचिदीक्ष्यते ॥**
**मानमेयत्वसंबन्धो[1] मिथोयोग्यत्वतस्तथा ॥ ३४५ ॥**

यदि मुक्तावागन्तुकं ज्ञानमज्ञानाख्यं व्यवधिं धुनीते तत्राऽऽह । **इतोऽन्यथेति** । नित्यज्ञानं विना मुक्तावागन्तुकज्ञानकल्पनायां तत्र मात्रादि कल्प्यं तच्चायुक्तं बन्धाद-विशेषापत्तेर्मानाभावाच्चेत्यर्थः । इतश्च मुक्तौ ज्ञानादिव्यक्तिरयुक्तेत्याह । **नापीति** । विमतौ नान्योन्यगोचरावेकाश्रयत्वात्तथाविधरूपरसवदिति भावः ॥ ३४४ ॥ ३४५ ॥

**सुखादिव्यक्तितः पूर्वं यस्य संसारिता मता ॥**
**सोऽन्य एव सदाव्यक्तनित्यज्ञानसुखात्मनः ॥**
**शीतोष्णयोरिव तयोर्वैलक्षण्यात्परस्परम्[2] ॥ ३४६ ॥**

अभिव्यक्तिवादे दोषान्तरं वक्तुं भूमिकामाह । **सुखेति** । परापरयोर्भेदे दृष्टान्ते हेतुं ब्रूते । **शीतेति** ॥ ३४६ ॥

**परात्मभेदकॢप्तौ च संत्यागो वः प्रसज्यते ॥**
**यतो वैदिकपक्षस्य नातः कल्प्याऽऽत्मनो भिदा ॥ ३४७ ॥**

तद्भेदापादनमस्मदिष्टमेवेत्याशङ्क्याऽऽह । **परेति** । एको देवः सर्वभूतेष्वेकमेवाद्वि-तीयमित्यादिर्वैदिकः पक्षः ॥ ३४७ ॥

**आत्मधीमानमात्रत्वात्प्रत्यगात्मैकवस्तुनः[3] ॥**
**प्रमाणासंभवश्च स्यादात्मभेदप्रकल्पने ॥ ३४८ ॥**

वैदिकोऽपि पक्षस्त्यज्यते तद्भेदस्य प्रत्यक्षादिसिद्धत्वादित्याशङ्क्याऽऽह । **आत्मेति** । स्वप्रकाशे भेदग्राहिमानायोगाद्ब्रह्मभावो मोक्षस्तस्य निर्विशेषो नित्यसिद्ध इत्यर्थः । उक्तप्रमाणविरोधसमुच्चयार्थश्चकारः ॥ ३४८ ॥

**नन्विदानीं यथा तद्वन्मुक्तौ चेदविशेषता ॥**
**नातियत्नो भवेन्नृणां शास्त्रवैयर्थ्यमेव च ॥ ३४९ ॥**

१ ग. °मंबोधो मि° । २ क. °क्षण्यं पर° । ३ क. ग. °गात्मात्मन° ।

उक्तां मुक्तिममृष्यमाणः शङ्कते । नन्विति । लौकिकं यत्नमतीत्य शास्त्रीयशमादिरितियत्नः । शास्त्रं मोक्षविषयम् ॥ ३४९ ॥

नाऽऽत्माविद्याहानमात्रकारित्वादागमात्मनः ॥
तदर्थं यत्नसाफल्यं शास्त्रारम्भोऽपि चार्थवान् ॥ ३५० ॥

मोक्षस्य निर्विशेषत्वेऽपि स्वाविद्यातज्जध्वंसित्वेन शास्त्राद्यर्थवदिति परिहरति । नाऽऽत्मेति । यथाऽऽहुः—अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्येति ॥ ३५० ॥

मुक्तामुक्तत्वरूपोऽयं न विशेषोऽस्ति वस्तुनि ॥
तदविद्यैव निःशेषविशेषाणां प्रसूतिकृत् ॥ ३५१ ॥

अथामुक्तस्याऽऽत्मनो मुक्तिविशेषार्थौ शास्त्रयत्नौ किं न स्यातां तत्राऽऽह । मुक्तेति । तत्र वस्तुतो विशेषाभावे हेतुमाह । तदविद्येति ॥ ३५१ ॥

अशेषानर्थहेतुं तामविद्यां शास्त्रजा मतिः ॥
यतो निहन्ति तेन स्यात्साफल्यं यत्नशास्त्रयोः ॥ ३५२ ॥

शास्त्रयत्नयोरर्थवत्त्वं निगमयति । अशेषेति ॥ ३५२ ॥

अथाविद्यावतोऽविद्याहान्यहानिकृतो भवेत् ॥
विशेष आत्मनः कश्चिदिति चेन्नैवमिष्यते ॥ ३५३ ॥
अविद्यामात्रहेतूत्थगोचरत्वसमाश्रयात् ॥
रज्जुखण्डाद्यविद्योत्थसर्पादिविनिवृत्तिवत् ॥ ३५४ ॥

आत्मनो निर्विशेषासिद्धिं चोदयति । अथेति । आविद्यः सोऽपीति समाधत्ते । नैवमिति । रज्ज्वविद्योत्थसर्पादेस्तद्विद्यया ध्वंसाध्वंसयो रज्जोर्वास्तवविशेषाभाववदात्मनोऽपि स्वाविद्यामात्रोत्थविशेषवतोऽपि तद्ध्वंसाध्वंसयोर्न वास्तवो विशेषोऽस्तीत्यर्थः ॥ ३५३ ॥ ३५४ ॥

आत्मनो मोहकर्तृत्वमकर्तृत्वं यदीष्यते ॥
विशेष इति नैवं स्याद्ध्यायतीवेति वारणात् ॥ ३५५ ॥

तथाऽपि सविशेषताऽऽत्मनो दुर्वारेत्याह । आत्मन इति । मोहकर्तृत्वं तज्जनकत्वं तदाश्रयत्वं वेति विकल्प्याऽऽद्यं दूषयति । नैवमिति ॥ ३५५ ॥

अजो न जायते नेति ध्यायतीवेति चाऽऽगमैः ॥
निषेधः क्रियतेऽशेषविकारादेरिहाऽऽत्मनः ॥ ३५६ ॥

तदेव स्फोरयति । अज इति । विकारादेरित्यादिशब्देन विकारिग्रहणम् । इहेति मुक्तिशास्त्रोक्तिः ॥ ३५६ ॥

---

१ ख. रज्जुपराद्य॰ । २ ख. ॰त्तिकृत् । ३ ख. ॰त्मनि ॥ ३५६ ॥

**विषयत्वोपपत्तेश्च प्रत्यञ्चोहतदुत्थयोः ॥**
**नाविद्यावान्भवेदात्मा नापि तत्कार्यवांस्ततः* ॥ ३५७ ॥**

कल्पान्तरं प्रत्याह । **विषयत्वेति** । अविद्यादेरात्मदृश्यत्वान्न तदाश्रयत्वं न हि तद्गतस्य तद्ग्राह्यत्वमंशतःस्वग्रहापत्तेरित्यर्थः । चकारोऽवधारणार्थः । *अतःशब्दस्तु प्राच्या पञ्चम्या संबध्यते ॥ ३५७ ॥

**ग्राहकग्रहणग्राह्यभावाभावप्रसिद्धता ॥**
**यथाऽऽत्मसाक्षिका तद्वन्न वेद्मीत्यात्मसाक्षिकम् ॥ ३५८ ॥**

तस्याऽऽत्मदृश्यत्वं प्रपञ्चयति । **ग्राहकेति** । अज्ञानोत्थस्याऽऽत्मदृश्यत्ववत्तस्यापि तद्दृश्यत्वं स्वसाक्षिकमित्यर्थः ॥ ३५८ ॥

**अज्ञातत्वान्यथाज्ञातसिद्धेरात्मैकसाक्षितः ॥**
**अज्ञानमन्यथाज्ञानमतो नास्त्यात्मसाक्षिणः ॥ ३५९ ॥**

सर्वस्याऽऽत्मसाक्षिकत्वेऽपि किं तवेति तदाह । **अज्ञातत्वेति** ॥ ३५९ ॥

**न हि यो यत्र साक्षीह स तत्राज्ञ इतीर्यते ॥**
**असामान्येन तत्सिद्धेः साक्षिसाक्ष्यपदार्थयोः ॥ ३६० ॥**

न जाने मुग्धोऽस्मीति प्रतीतेः साक्षिणोऽपि तदाश्रयतेत्याशङ्क्याऽऽह । **न हीति** । इहेति व्यवहारदशोक्तिः । तयोराश्रयाश्रयित्वाभावे हेतुमाह । **असामान्येनेति** । मिथोव्यावृत्तासाधारणरूपेणेत्यर्थः । तत्तयोरिति यावत् ॥ ३६० ॥

**तस्मिन्साक्षी च मूढश्चेत्यतीवैतद्विरुध्यते ॥**
**मिथो वाक्यमतो नेदृग्वक्तव्यं मानिना ततः ॥ ३६१ ॥**

आत्मनोऽविद्यानाश्रयत्वे हेत्वन्तरमाह । **तस्मिन्निति** । ततो नाऽऽत्मनोऽविद्याश्रयतेति शेषः ॥ ३६१ ॥

**न जाने मुग्ध एवाहं भवदुक्तं मनागपि ॥**
**इति चेद्वीक्षसे तर्हि मूढमज्ञं च कुम्भवत् ॥ ३६२ ॥**

प्रतीचो युक्तितोऽज्ञानाद्याश्रयत्वं प्रत्युक्तं सा चानुभवबाधितेति मन्वानो ब्रूते । **नेति** । मातुस्तदाश्रयत्वमनुभवादभिदधासि तत्साक्षिणो वाऽऽद्यं प्रत्याह । **वीक्षस इति** ॥ ३६२ ॥

**त्वं त्वज्ञो मूढ एवेति भव कामं यथेच्छसि ॥**
**मूढाज्ञयोस्तु यः साक्षी नासौ मुग्धोऽज्ञ एव वा ॥ ३६३ ॥**

---

* एतट्टीकानुरोधेन मूले वानत इति स्यादथवा मूलानुरोधेन टीकायां ततःशब्द इति स्यादिति ज्ञेयम् ॥

उक्तेऽर्थे भवेत्यादिभाष्यं[1] योजयति । त्वं त्विति । कल्पान्तरं निराह । मूढेति ॥ ३६३ ॥

**लोकेऽपि यस्य यः साक्षी सम्यग्दर्श्येव तस्य सः ॥**
**यथा लोके तथेहापि साक्षी सम्यक्प्रपश्यति ॥ ३६४ ॥**

मातृसाक्षिणो मोहाद्यभावे लोकप्रसिद्धिं प्रमाणयति । **लोकेऽपीति** । प्रकृते साक्षिणि लोकसाक्षिणो वैलक्षण्यमाशङ्क्याविशिष्टस्तु वाक्यार्थ इति न्यायेनाऽऽह । **यथेति** ॥ ३६४ ॥

**महाभूतादिधृत्यन्तं क्षेत्रमेवेति चाब्रवीत् ॥**
**साक्षात्स्वयंभूर्वेदात्मा संसारानर्थशान्तये ॥ ३६५ ॥**

आत्मनो मोहादिराहित्ये भगवद्वाक्यमपि मानमित्याह । **महाभूतादीति** ।

"महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥
इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् " ॥

इत्यज्ञानोत्थस्य महाभूतादेः साक्षिणः सकाशात्क्षेत्रत्वेन पृथक्करणात्तत्कारणीभूतस्याज्ञानस्यापि तदस्पर्शसिद्धिरित्यर्थः । न चेदममानमाप्तोक्तत्वादित्याह । **साक्षादिति** । न चेदं सुगतोक्तिसमं वेदमूलत्वादित्याह । **वेदेति** । किमर्थमित्थं भगवानूचिवांस्तत्राऽऽह । **संसारेति** ॥ ३६५ ॥

**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ॥**
**क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३६६ ॥**

मोहादेरात्मदृश्यत्वान्नाऽऽत्मनिष्ठतेत्यत्रापि संमतिमाह । **यथेति** ॥ ३६६ ॥

**ज्योतिषामपि तज्ज्योतिः स्वयंज्योतिःश्रुतेस्तथा ॥**
**न तत्र सूर्यो भातीति नान्योऽतोऽस्तीति च श्रुतेः ॥ ३६७ ॥**

तत्रैव श्रुतिं संवादयति । **ज्योतिषामिति** । आत्मनोऽपि दृश्यत्वमाशङ्क्याऽऽह । **स्वयमिति** । द्रष्ट्रन्तराभावाच्च नाऽऽत्मनो दृश्यतेत्याह । **नान्य इति** ॥ ३६७ ॥

**यत एवमतो नास्ति विशेषोऽत्र मनागपि ॥**
**बन्धमोक्षादिरूपोऽयमात्मनीति विनिश्चयः ॥ ३६८ ॥**

आत्मनो निर्विशेषत्वे सिद्धे स्वमतमुपसंहरति । **यत इति** ॥ ३६८ ॥

**ये त्वतः कल्पयन्तीममन्यथैव महाधियः ॥**
**अर्थवादं च बन्धादिशास्त्रं व्याचक्षते तथा ॥ ३६९ ॥**

---

१ ख. 'वेदित्या' ।

पक्षान्तरमनुभाषते । **ये त्विति** । अतो निर्विशेषत्वादिति यावत् । इममित्यात्मोक्तिः। महाधिय इति स्थूलबुद्धित्वमुच्यते । **यदा ह्येवैष** एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवतीत्यादावज्ञानाद्बन्धो ज्ञानान्मुक्तिरिति शास्त्रे सति कथमात्मनो वस्तुतः सविशेषतेत्याशङ्क्याऽऽह । **अर्थवादं चेति** । तथा सत्यात्मनो बन्धमोक्षादिविभागो वास्तवोऽस्तीत्याह । **तथेति** ॥ ३६९ ॥

**इत्युक्तावसकृत्पूर्वं परिहारोऽपि वर्णितः ॥ ३७० ॥**
**एवं परिहृतेऽप्याहुर्यथेच्छं दूषणं परे ॥**
**विद्वद्भिस्त उपेक्ष्याः स्युर्बालोन्मत्तसमा जनाः ॥ ३७१ ॥**

इमामेव द्वैतिनामुक्तिमनूद्य तत्र तत्रानेकधा समाधेरुक्तत्वान्न भूयस्तदर्थं यतितव्यमित्याह । **इत्युक्ताविति** । अपिरवधारणार्थो निष्ठानन्तरभावी । भाष्याद्बहिरेव परपक्षदोषं स्मारयित्वा त उत्सहन्ते खेऽपीत्यादिभाष्यतात्पर्यमाह । **एवमिति** ॥ ३७० ॥ ॥ ३७१ ॥

**ब्रह्माप्येतीत्यतो वाक्यमुपचारसमाश्रयात् ॥**
**तदविद्योत्थदेहादिसंतत्युच्छेदहेतुतः ॥ ३७२ ॥**

परपक्षनिरासेनोक्तं वाक्यार्थमुपसंहरति । **ब्रह्मेति** । उपचारनिमित्तं निगमयति । **तदविद्येति** ॥ ३७२ ॥

**अविद्याध्वस्तिमापेक्ष्य सम्यग्धीजन्ममात्रतः ॥**
**आत्मा ब्रह्मैव सन्साक्षाद्ब्रह्माप्येतीति भण्यते ॥ ३७३ ॥**

भाविदेहादिसंतत्युच्छेदे निमित्तमाह । **अविद्येति** । तद्ध्वस्तिहेतुमाह । **सम्यगिति** । उपचाराश्रयादुक्तवाक्यस्य योजनां निगमयति । **आत्मेति** । सम्यग्ज्ञानादज्ञानध्वस्तिमपेक्ष्य तज्जन्यदेहादिध्वंसं निमित्तीकृत्य साक्षाद्ब्रह्मैव सन्नात्मा ब्रह्माप्येतीत्युच्यते तस्मादुपचारादेतद्वाक्यमिति वार्तिकयोजना[1] ॥ ३७३ ॥

**इत्येतत्सर्ववेदान्तसर्वस्वं ब्राह्मणोदितम् ॥**
**अर्थस्य ब्राह्मणोक्तस्य द्रढिम्नेऽतः परा श्रुतिः ॥ ३७४ ॥**

तदित्यादिश्रुतितात्पर्यं वृत्तमनूद्य कथयति । **इत्येतदिति** ॥ ३७४ ॥

**यथा काममये[2] तद्वन्मन्त्रं श्लोकमुदाहरत् ॥**
**ब्रह्मास्मीति परिज्ञानात्प्रत्यगज्ञानहानतः ॥ ३७५ ॥**

---

१ ख. घ. 'योर्योज' । २ क. कामयते ।

**यदा सर्वेऽखिलाः कामाः काम्यैश्च विषयैः सह ॥**
**प्रमुच्यन्ते विनश्यन्ति तेषामज्ञानहेतुतः ॥**
**कार्याणां कारणे वृत्तिर्नान्यत्र जगतीक्ष्यते ॥ ३७६ ॥**

ब्राह्मणोक्तार्थस्य तेनैव दार्ढ्यसिद्धेरलं मन्त्रोदाहरणेनेत्याशङ्क्याऽऽह । **यथेति** । ब्राह्मणोक्तेनैव दृढेऽपि मन्त्रोक्तौ श्रोतृप्रवृत्तेर्दृढतेति तदुक्तिरिति भावः । यदेत्यादिपदानि व्याचष्टे । **ब्रह्मेति** । तदाऽमृतो भवतीति संबन्धः । ज्ञानादज्ञाने हतेऽपि कामाः स्थास्यन्तीति चेन्नेत्याह । **तेषामिति** । नष्टाज्ञानस्यापि कामादि दृष्टमित्याशङ्क्याऽऽह । **कार्याणामिति** । कारणे नष्टे कार्यं न स्थातुमर्हति ततोऽन्यत्र तदयोगान्नष्टाज्ञानस्य रागादिदृष्टिस्तु बाधितानुवृत्तिरज्ञानलेशादित्यर्थः ॥ ३७५ ॥ ३७६ ॥

**यदा कामाः प्रमुच्यन्त इत्युक्त्यैव कृतार्थता ॥**
**विशेषणं सर्व इति किमर्थमभिधीयते ॥ ३७७ ॥**

कामविशेषणानर्थक्यं चोदयति । **यदेति** । कृतार्थता काममात्रध्वस्तेः सिद्धतया निराकाङ्क्षतेति यावत् ॥ ३७७ ॥

**जाग्रत्स्वप्नक्षये कामाः प्रमुच्यन्तेऽखिला नृणाम् ॥**
**संस्कारमात्रशेषास्ते सुषुप्ते यान्ति संक्षयम् ॥**
**यतस्तदवरोधार्थं तस्मात्सर्वविशेषणम् ॥ ३७८ ॥**

समाधत्ते । **जाग्रदिति** । तदवरोधार्थं कामसंस्काराणामपि ज्ञानबलान्निवर्त्यतया संग्रहार्थमित्यर्थः । सर्वविशेषणं सर्वे इति कामानां विशेषणमिति यावत् ॥ ३७८ ॥

**कामहेतौ हि विध्वस्ते न कश्चिदवशिष्यते ॥**
**संस्कारो वाऽथवाऽप्यन्यः[1] सर्वस्याज्ञानमूलतः ॥ ३७९ ॥**

कथं ज्ञानवशात्कामसंस्कारा नश्यन्तीत्याशङ्क्याऽऽह । **कामेति** । अन्यशब्देन कामोक्तिः । हेत्वभावे फलाभावप्रसिद्ध्यर्थो हिशब्दः । कोऽसौ तद्धेतुस्तत्राऽऽह । **सर्वस्येति** । कामस्यापि तदेव मूलमिति शेषः ॥ ३७९ ॥

**हृदि श्रिता इति वचः कामधर्म्यब्रवीन्मनः ॥**
**कामः संकल्प इत्येवं तथाच प्राक्श्रुतीरणम् ॥ ३८० ॥**

अस्य पुंसो ये कामा लोकद्वयविषयास्ते सर्वे ज्ञानान्नश्यन्तीत्युक्तं संप्रति हृदीत्यादेस्तात्पर्यमाह । **हृदीति** । तत्र श्यन्नाधिकारं संवादयति । **काम इति** ॥ ३८० ॥

**इदं च हेतुवचनं प्रतिज्ञातस्य वस्तुनः ॥**
**हृदि श्रिता यतः कामाः प्रमुच्यन्तेऽखिलास्ततः ॥ ३८१ ॥**

---

१ ख. ग. 'प्यन्यत्सर्वे' ।

तर्हि तेनैव गतार्थत्वाद्व्यर्थमेतदित्याशङ्क्याऽऽह । **इदं चेति** । कामाः प्रमुच्यन्त इतिप्रतिज्ञातवस्तुनो हृदि श्रिता इति हेतुवाक्यमित्यमुमेव विभागं प्रकटयति । **हृदीति** ॥ ३८१ ॥

**अविद्याया यतः कार्यमध्यात्मादिविशेषणम् ॥**
**त्रयं वा इदमित्युक्तं वाङ्मनःप्राणभेदवत् ॥ ३८२ ॥**
**अतोऽविद्यासमुच्छित्तौ तद्धेतूनामशेषतः ॥**
**कामानामपि नाशः स्याद्ग्रहातिग्रहरूपिणाम् ॥ ३८३ ॥**

ननु ब्रह्मविदो विद्यया कामध्वस्तौ तेषां हार्दत्वं कथं हेतुर्न हि शुक्तिविद्यया तदविद्याध्वस्तौ पुरुषनिष्ठत्वं तस्या हेतुः क्रियते तत्राऽऽह । **अविद्याया इति** । त्रिविधं वागादिकं जगदाविद्यमिति त्रयं वा इदमित्यत्र यस्मादुक्तं तस्मादविद्याध्वस्तौ तज्जान्तःकरणध्वस्तेस्तदाश्रितानामपि कामानां सार्थानां सर्वथा ध्वस्तिरिति विदुषो विद्यया कामध्वस्तौ हृदिश्रितत्वोक्तिर्भवति हेतुरित्यर्थः ॥ ३८२ ॥ ३८३ ॥

**निःशेषजनिमद्धेतुः काम एवावधारितः ॥**
**श्रिता अतिग्रहाः कामा इन्द्रियाणां प्रवर्तकाः ॥**
**हृदि श्रिता इति वचस्तेषामवरुरुत्सया ॥ ३८४ ॥**

नन्वविद्याध्वस्तौ तत्कार्यध्वस्तेस्तदाश्रितकामध्वंसेऽपि कार्यान्तरं स्थास्यति तत्कुतो मुक्तिस्तत्राऽऽह । **निःशेषेति** । काममय एवायं पुरुषः कामबन्धनमेवेदमित्यादाविति शेषः । कामहेतुकत्वाद्धर्मादेर्विद्यया ध्वस्तौ कर्म विध्वंसते तथाच मुक्तिप्रतिबन्धाभावात्तत्सिद्धिरित्यर्थः । कामशब्दस्यानेकार्थत्वात्कस्य जनिमद्धेतुत्वं तत्राऽऽह । **श्रिता इति** । बुद्धिस्था रागादिवासनाख्याः कामा द्विविधेन्द्रियप्रवर्तकाः सन्तो नानाक्रियामुत्पादयन्तो जगज्जनयन्ति **धिया** धिया जनयते कर्मभिरिति श्रुतेरित्यर्थः । रागादिवासनानामत्र कामत्वे गमकमाह । **हृदीति** । रागादीनामत्र कामशब्देन संग्रहार्थमेतद्विशेषणं न हि मनोगतत्वं रागादिभ्योऽन्यत्र मुख्यमित्यर्थः ॥ ३८४ ॥

**वेदव्यासोऽपि च मुनिर्जगादेमं यथोदितम् ॥**
**श्रुत्यर्थमुररीकृत्य लोकानुग्रहकाम्यया ॥ ३८५ ॥**

ब्रह्मविदो ज्ञानादशेषकामध्वस्तिरिति प्रतिज्ञाहेतुभ्यामुक्तं तत्र **स्मार्तं** प्रमाणयति । **वेदव्यासोऽपीति** ॥ ३८५ ॥

**विषया विनिवर्तन्ते निराहारस्य देहिनः ॥[1]**
**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ३८६ ॥**

---

१ घ. °या तद्ध्वस्तौ ।

तदीयं वाक्यं पठति । **विषया इति** । तत्प्रावण्यराहित्यं निराहारत्वं रसो रागः ॥ ३८६ ॥

**एवं बुद्धेः परं बुद्ध्वा संस्तभ्याऽऽत्मानमात्मना ॥**
**जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ३८७ ॥**

तदीयं वाक्यान्तरमाह । **एवमिति** ॥ ३८७ ॥

**हेत्वर्थे चाथशब्दोऽयं हेत्वर्थप्रकृतत्वतः ॥**
**यस्मादज्ञानतो मर्त्योऽतोऽमृतोऽज्ञानहानतः ॥ ३८८ ॥**

मन्त्रस्य पूर्वार्धे व्याख्यायोत्तरार्धं व्याचष्टे । **हेत्वर्थे चेति** । सत्स्वर्थान्तरेषु किमत्र नियामकं तत्राऽऽह । **हेत्वर्थेति** । हृदि श्रिता इति हेत्वर्थस्य प्रकृतत्वादिति यावत् । हेतुरूपमर्थं स्फुटयन्मर्त्य इत्यादेरर्थमाह । **यस्मादिति** ॥ ३८८ ॥

**प्रत्यग्याथात्म्यविज्ञानं यदत्रेत्यभिधीयते ॥**
**सम्यग्ज्ञानसमुत्पत्तावत्रैव ब्रह्म सोऽश्नुते ॥ ३८९ ॥**

अत्रेत्यस्यार्थमाह । **प्रत्यगिति** । उक्तमनूद्य ब्रह्मेत्यादेरर्थमाह । **सम्यगिति** ॥ ३८९ ॥

**ब्रह्मज्ञानोदये यस्माज्जन्मबन्धो व्यपेयते ॥**
**मृतिरात्ममतिस्तस्य हेतुहेतूपमर्दनात् ॥ ३९० ॥**

ज्ञानसमकालमेव ब्रह्माप्तिरित्यत्र हेतुमाह । **ब्रह्मेति** । जन्माख्यस्य बन्धस्य हेतुर्धर्मादिकस्तस्य कारणं स्वाज्ञानं तन्निवर्तकत्वाद्ब्रह्मज्ञानं जन्मादिबन्धस्य मृतिर्यस्मादुच्यते तस्माज्ज्ञानसमकालमेव बन्धोऽपगच्छतीति युक्ता विदुषो मुक्तिरित्यर्थः ॥ ३९० ॥

**यथोक्तादन्यथैवेमं व्याख्यानाद्यत्नतो बुधाः ॥**
**श्लोकं व्याचक्षतेऽयुक्त्या हुतभुग्वरसंश्रयात् ॥ ३९१ ॥**

निःशेषकामध्वस्तौ विदुषो मुक्तिरित्येवमर्थतया मन्त्रः स्वमते व्याख्यातः संप्रति मन्त्रस्य भर्तृप्रपञ्चव्याख्यानं प्रस्तौति । **यथोक्तादिति** । श्लोकाक्षराणां श्रुतत्यागेनाश्रुतकल्पनं यत्नः । अन्यथा व्याख्याने बुद्धिबाहुल्यं हेतुरित्युपहसति । **बुधा इति** । न युक्तिकृतेयं व्याख्या किंतु देवताप्रसादायत्तेत्युपहासान्तरमाह । **अयुक्त्येति** ॥ ३९१ ॥

**यथैव पूर्वं संसारः काममूलोऽनुवर्णितः ॥**
**श्लोकेन तद्वन्मोक्षोऽपि निष्कामस्योपवर्ण्यते ॥ ३९२ ॥**

कथमन्यथा व्याख्यानं तदाह । **यथेति** । **उक्तं च** यथा पूर्वस्मिन्कामैर्बन्ध इति श्लोकेनोद्भावितमेवमेवेहापि निष्कामोऽपि मुच्यत इति श्लोकेनोद्भिभावयिषतीति ॥ ३९२ ॥

---

१ घ. तदाह । २ क. ख. मन्त्रे ।

प्राज्ञादात्मन एतस्मात्प्रमुच्यन्तेऽखिला यदा ॥
कामास्ते कतम इति तद्विशेषणमुच्यते ॥ ३९३ ॥

परपक्षे मन्त्रमवतार्य तस्यार्थमाह । प्राज्ञादिति । तदा मर्त्योऽमृतो भवतीति संबन्धः । स्वस्था धीस्थाश्चोभये कामास्तत्र केषां ध्वस्तिरित्याकाङ्क्षामुत्थाप्य येऽस्ये-त्याद्यवतारयति । त इति ॥ ३९३ ॥

हृदि येऽस्य श्रिताः कामाः प्रमुच्यन्ते त एव तु ॥
आत्माश्रितास्तु ये त्वस्य प्रमुच्यन्ते न ते सदा ॥ ३९४ ॥

विशेषणमेव दर्शयन्वाक्यं योजयति । हृदीति । एवकारार्थमाह । आत्मेति ॥ ३९४ ॥

हृदयं नाम विज्ञानं मांसपेशी च भण्यते ॥
रूढ्या वृत्तिर्मांसखण्डे तात्स्थ्याद्विज्ञानवाचकम् ॥ ३९५ ॥

हृदयशब्दार्थमाह । हृदयमिति । कथमेकमेव पदमनेकार्थमेकस्यानेकार्थत्वायोगा-त्तत्राऽऽह । रूढ्येति । श्रुतिलक्षणाभ्यामेकस्यानेकार्थत्वमविरुद्धमित्यर्थः ॥ ३९५ ॥

कामाः पुनरिहोच्यन्ते य उक्ता वासनात्मकाः ॥
माहारजनमित्यादिवाक्येनाऽऽत्मविशुद्धये ॥ ३९६ ॥

कामशब्दार्थमाह । कामा इति । इहेति मन्त्रोक्तिः । किमिति मूर्तामूर्तब्राह्मणे मनोगताः कामा व्याख्यातास्तत्राऽऽह । आत्मेति । यथाऽऽहुः कामाः पुनर्माहारज-नादिरूपा इति ॥ ३९६ ॥

प्राज्ञस्याभ्यन्तरं रूपं तन्माहारजनादिकम् ॥
हृदयाश्रयिणस्ते तु बाह्याः स्युर्बाह्यसंश्रयात् ॥ ३९७ ॥

तच्च वासनात्मकं रूपं क्षेत्रज्ञस्यान्तरङ्गं स्वरूपमित्याह । प्राज्ञस्येति । सर्वेषां कामानामविशेषादात्मरूपतेत्याशङ्क्याऽऽह । हृदयेति । बाह्यत्वमनात्मरूपत्वम् । तदुक्तं तद्ये माहारजनादिलक्षणाः कामविशेषास्ते बाह्ये हृदये श्रिता इति ॥ ३९७ ॥

हृदयाश्रयिकामेभ्य आत्मसंश्रयिणां यतः ॥
प्रसूतिरिह कामानामतोऽनेकसमाश्रयात् ॥ ३९८ ॥
हृदयाश्रयणं तेषां विशेषणमिहोच्यते ॥
आत्माश्रयाणां कामानां विनिवृत्तिः फलं हि तत् ॥ ३९९ ॥

मनोगतस्थूलकामानामात्मस्थसूक्ष्मकामेषु कारणत्वमाह । हृदयाश्रयीति । इहेति बन्धावस्थोक्तिः । आत्मान्तःकरणस्थकामानां कार्यकारणभावे फलितमाह । अत इति । हृदि श्रिता इति विशेषणस्य कृत्यमाह । आत्मेति । यथाऽऽहुस्ततो हि तेषां प्रसू-तिर्भवतीति । यथोक्तभाष्यावद्योती हिशब्दः ॥ ३९८ ॥ ३९९ ॥

---

१ ख. वृत्त्या मांस॰ । २ क. ख. ॰नर्महा॰ । ३ क. ख. तन्महा॰ । ४ क. ख. घ. ॰ये महा॰ ।

**मनोद्वारोपसंक्रान्ता भावना याऽऽत्मनि स्थिता ॥**
**देहिनो जन्मबीजं सा तदुच्छेदाद्विमुच्यते ॥ ४०० ॥**

आत्माश्रयाः कामा न निवर्तन्ते चेत्तर्हि मुक्तिर्न सिध्येत्कामी मुक्तश्चेति व्याहतेरित्याशङ्क्याऽऽह । **मनोद्वारेति** ॥ ४०० ॥

**बीजस्थस्याङ्कुरस्येह जन्माऽऽश्रित्य यथैव गाम् ॥**
**आश्रयादेव जन्मैवं कामानां हृदयाश्रयात् ॥ ४०१ ॥**

बुद्ध्याश्रयकामवशादात्माश्रयकामोत्पत्तिरित्येतद्दृष्टान्तेन साधयति । **बीजस्थस्येति** । पृथिवीमाश्रित्य बीजगतस्याङ्कुरस्य व्यवहारभूमौ जन्मेत्यत्र तदाश्रितत्वेन तद्दर्शनं हेतुमाह । **आश्रयादिति** । केचित्त्वाश्रयादेवेत्यस्य व्याख्यानं हृदयाश्रयादित्याहुः । **उक्तं हि यथा** बीजगतस्याङ्कुरस्य पृथिवीमाश्रित्य प्रसूतिरेवं प्राज्ञाश्रितानां हृदयं योनिरिति ॥ ४०१ ॥

**हृदयेन च संबन्धाद्दृश्यन्ते[1] येन तेऽखिलाः ॥**
**अतो विशेषकार्येण विशेष्यन्ते हृदैव[2] ते ॥ ४०२ ॥**

मनोद्वाराऽऽत्मन्युत्पन्ना यदि कामास्तर्हि किमिति हृदि श्रिता इति तेनैव ते विशेष्यन्ते तत्राऽऽह । **हृदयेनेति** । विशेषकार्येण कामव्यक्तिविशेषकार्यस्य हृदये दृष्टत्वेनेति यावत् ॥ ४०२ ॥

**हृदि श्रिता यदा कामाः प्रमुच्यन्तेऽस्य देहिनः ॥**
**अथ मर्त्योऽमृतः प्राज्ञो भवतीत्येष निश्चयः ॥ ४०३ ॥**

पूर्वार्धस्योक्तमर्थमनूद्योत्तरार्धं व्याचष्टे । **हृदीति** ॥ ४०३ ॥

**विद्याकर्मसमूहेन येनायं परमात्मनः ॥**
**संसारित्वं परिच्छिद्य प्रापितः स यदाऽखिलः ॥**
**प्रमुच्यतेऽथ तद्धानाच्छुद्धो ब्रह्म समश्नुते ॥ ४०४ ॥**

विद्यया कामादिध्वस्तौ ध्वस्तेऽपि बन्धे ब्रह्मभावार्थं हेत्वन्तरं मृग्यमिति चेन्नेत्याह । **विद्येति** । येनाज्ञानमूलेन कामादिनाऽयं विज्ञानात्मा परस्मादात्मनः सकाशात्परिच्छिद्य संसारित्वं प्रापितः स कामादिरखिलोऽपि यदा विद्याकर्मसमुच्चयेन प्रमुच्यते तदा हेत्वभावेन बद्धत्वहानात्परिशुद्धोऽप्रतिबन्धेनाऽऽत्मा ब्रह्म भवतीत्यर्थः ॥ ४०४ ॥

**आत्मकामोक्तिमानाच्च प्रागप्येतद्विनिश्चितम् ॥**
**आत्मैव कामा अस्येति न भिन्ना हार्दकामवत् ॥ ४०५ ॥**

बुद्धिस्थास्तद्द्वाराऽऽत्मस्थाश्च कामा हृदि श्रिता निवर्तन्ते ततो जीवस्य मोक्षो न

---

1 ग. 'बन्धी दृश्यते ये' । 2 ख. तु ।

तद्धेदमित्यत्राज्ञातस्याऽऽत्मनो नामरूपकर्मात्मना व्याकरणमज्ञानकृतमित्युक्तं कामादयश्च नामरूपान्तर्वर्तिनो न केवलमात्मानमाश्रयन्तीत्यर्थः ॥ ४१७ ॥

**नामरूपादिभेदेन वर्णादिप्रविभागतः ॥**
**कार्यमेतदविद्यायाः श्रुत्या व्याख्यायतेऽखिलम् ॥ ४१८ ॥**

सृष्टिप्रकरणालोचनेऽपि तेषां नाऽऽत्मधर्मतेत्याह । **नामेति** । अस्यार्थः । अज्ञातस्य ब्रह्मणो नामाद्यात्मना व्याकरणं तद्धेदमित्यत्र सूत्रितमथ योऽन्यामित्यादिनाऽनूद्य ब्रह्म वा इदमित्यादिना प्रपञ्च्यते तथाचाविद्यापेक्षत्वात्सर्वकार्यस्य तदन्तर्गतकामादेर्नाऽऽत्मधर्मतेति ॥ ४१८ ॥

**कणभुग्जैमिनीयैर्य आत्मधर्मा इतीरिताः ॥**
**नाऽऽत्मनोऽनात्मनस्ते तु काम इत्यादिनोदिताः ॥ ४१९ ॥**

कथं तर्हि तेषामात्मधर्मत्वं वदन्तो वादिनो बोधनीयास्तत्राऽऽह । **कणभुगिति** । श्रुतिबाधितं तत्तन्मतमनादरणीयमिति भावः ॥ ४१९ ॥

**यावत्किंचिज्जगत्यस्मिन्रूपं मेयत्वमागतम् ॥**
**सर्वं तन्मन एवेति श्रुत्या साक्षात्स्फुटीकृतम् ॥ ४२० ॥**

आत्मनो रूपाश्रयत्ववत्कामाद्याश्रयत्वमपि स्यादिति चेन्नेत्याह । **यावदिति** । एतद्धि सर्वाणि रूपाणि बिभर्तीति श्रुत्या रूपमात्रस्य मनोनिष्ठत्वं तृतीये दर्शितमित्यर्थः ॥ ४२० ॥

**प्रकाशोऽपि च यः कश्चिदभिव्यञ्जक इष्यते ॥**
**अभिव्यङ्ग्याभिसंबन्धः स च वागित्यथावदत् ॥ ४२१ ॥**

नामवत्कामादेरात्मधर्मतेति चेन्नेत्याह । **प्रकाशोऽपीति** । रूपमात्रस्य मनस्त्ववदिति-दृष्टान्तार्थोऽथशब्दः । **एतद्धि** सर्वाणि नामानि बिभर्तीति **श्रुतिः** सर्वनाम्नो[2] वाग्धर्मत्वमवोचदित्यर्थः ॥ ४२१ ॥

**क्रियात्मकं च यत्किंचिन्मानतो जगतीक्ष्यते ॥**
**तत्सर्वं प्राण एवेति संजहार श्रुतिः स्वयम् ॥ ४२२ ॥**

कर्मवदात्मधर्मत्वं कामादेरित्याशङ्क्याऽऽह । **क्रियेति** । एतद्धि सर्वाणि कर्माणि बिभर्तीति श्रुतिरुपसंहृतवती कर्ममात्रस्य प्राणधर्मत्वमित्यर्थः ॥ ४२२ ॥

**निश्चितं यच्च संदिग्धं तथाऽविज्ञातमेव च ॥**
**वाङ्मनःप्राणरूपाणि तानि हीति श्रुतिर्जगौ ॥ ४२३ ॥**

सर्वस्य प्रपञ्चस्य मनोवाक्प्राणधर्मत्वान्नाऽऽत्मधर्मतेत्युक्तम् । इदानीं विज्ञातं विजि-

१ ग. हि । २ घ. 'र्वस्य ना' । ३ क. ग. 'गदीक्ष्य' ।

ज्ञास्यमविज्ञातमेत एवेत्यादिश्रुत्याऽपि सर्वस्य त्रयान्तर्भावावगमान्नाऽऽत्मधर्मता कामादेरित्याह । **निश्चितमिति** । अन्नाधिकारेऽप्युपपादितमेतदिति हिशब्दार्थः ॥ ४२३ ॥

**यतोऽविद्यात्मकान्येव रूपाण्येतान्यतो दृशेः ॥**
**नाऽऽत्मनः स्युः समस्तानि कार्यकारणबाह्यतः ॥ ४२४ ॥**

तृतीयालोचनातो[1] लब्धमर्थमुपसंहरति । **यत इति** । रूपाणि नामरूपकर्मात्मकानि कामादीनीत्यर्थः । दृशेर्न स्युरेतानीत्यत्र हेतुः । **कार्येति** ॥ ४२४ ॥

**तथा दिग्भेदभिन्नानां नामरूपक्रियात्मनाम् ॥**
**उक्तं हृदय एवेति नीडं नाऽऽत्मा परो मतः ॥ ४२५ ॥**

शाकल्यब्राह्मणनिरूपणेऽप्यात्मनो न कामाद्याश्रयतेत्याह । **तथेति** । किंदेवतोऽस्यां प्राच्यामित्यारभ्य हृदय इत्यन्तेन नामादेः सर्वस्य हृदयमधिकरणमित्युक्तं नाऽऽत्मा परस्तदाधारः श्रुतेरिष्टस्तथाच तदन्तस्थकामादेर्नाऽऽत्मधर्मतेत्यर्थः ॥४२५॥

**समान उपसंहृत्य जगत्कारणरूपके ॥**
**कारणस्याप्यपह्नुत्यै नेतीत्यात्मानमब्रवीत् ॥ ४२६ ॥**

क्व सेमन्नु हृदयं प्रतिष्ठितमित्यारभ्यैतान्यष्टावायतनानीत्यस्मात्प्राक्तनेन[2]ग्रन्थसंदर्भालोचनायामपि नाऽऽत्मधर्मता कामादेरित्याह । **समान इति** । जगदुपसंहृत्येति संबन्धः ॥ ४२६ ॥

**कार्यकारणयोरेवं निषेधान्नेतिवाक्यतः ॥**
**आत्माश्रयत्वं कामानां निष्प्रमाणकमुच्यते ॥ ४२७ ॥**

मूर्तामूर्तशाकल्यकूर्चमैत्रेयीशारीरकब्राह्मणेषु श्रुतनिषेधानुरोधेनापि नाऽऽत्माश्रयत्वं कामादीनामित्याह । **कार्येति** । एवमित्यसकृदित्यर्थः ॥ ४२७ ॥

**हृदयोत्पाद्यता नापि कामानामिह कीर्त्यते ॥**
**हृदि श्रिता इति ह्युक्तेर्न श्रुता कारणात्मता ॥ ४२८ ॥**

तेषामात्माश्रयत्वस्याश्रौतत्वमुक्त्वा बुद्धिस्थकामेभ्यः सकाशादात्मस्थकामजन्मेत्युक्तं प्रत्याह । **हृदयेति** । अत्र हि श्रुतिस्तदर्थापत्तिर्वा मानं न तावदस्मिन्मन्त्रे हार्दकामोत्पाद्यता कामानामात्मस्थानामुच्यते तेषां हृदयस्थत्वमात्रस्योच्यमानत्वादन्यत्र वाचकशब्दाभावान्न द्वितीयः श्रुतस्यान्यथानुपपत्त्यभावात्तस्मादात्मीयकामानां बौद्धकामेभ्यो जन्माप्यश्रौतमित्यर्थः । द्वितीयपक्षप्रतिक्षेपद्योती हिशब्दः ॥ ४२८ ॥

**नेति नेतीति चोक्तोऽर्थो जनकं प्रति यः पुरा ॥**
**किंज्योतिरित्युपक्रम्य स एवार्थः प्रपञ्च्यते ॥ ४२९ ॥**

आत्मनि कामोत्पत्तिरश्रौतीत्युक्त्वा श्रुतिविरुद्धा चेत्याह । **नेतीति** । कूर्चब्राह्मणे

---

[1] घ. °चनतो । [2] घ. °नसं° ।

प्रत्यगात्मा निर्विशेषो दर्शितः स एव ज्योतिर्ब्राह्मणेऽपि प्रतिपाद्यते तत्तत्र कामानां वस्तुतो जन्म ब्राह्मणद्वयविरुद्धमित्यर्थः ॥ ४२९ ॥

**क्रियाकारककर्मभ्यो व्युत्थाप्याऽऽत्मानमेकलम् ॥**
**पुमासनादिलिङ्गेन रवीन्दूदाहृतेस्तथा ॥ ४३० ॥**

तत्रैव हेत्वन्तरमाह । **क्रियेति** । पुरुषव्यापारलिङ्गेनाऽऽदित्यादिदृष्टान्तेन च क्रियाकारकविषयस्थूलसूक्ष्मोपाधिभ्यो निष्कृष्य ज्योतिरेकरसमात्मानं किंज्योतिरयमित्यादिना श्रुतिः श्रावयति तथाच देहद्वयातिरिक्ते प्रतीचि न कामादेरवकाश इत्यर्थः ॥ ४३० ॥

**व्यतिरिक्तस्य तस्यैवमुक्ताध्यात्मादिभेदतः ॥**
**स्वयंज्योतिर्विशुद्ध्यर्थं स वा इत्यादिका श्रुतिः ॥ ४३१ ॥**

तत्रैव हेत्वन्तरमाह । **व्यतिरिक्तस्येति** । उक्तोऽध्यात्मादिभेदो देहद्वयात्मकस्तस्मात्किंज्योतिरित्यादावुक्तानुमानेनातिरिक्ततया दृष्टस्य स्वयंज्योतिष्ट्वविस्पष्टीकरणार्थं **स वा** एष एतस्मिन्संप्रसादे रत्वेत्याद्या **श्रुतिः** सा च तस्यावस्थात्रयसंचारेण कामादिराहित्यमाहेत्यर्थः ॥ ४३१ ॥

**स्वतोऽसंदूषितः प्रत्यङ्कामकर्मादिभिर्मलैः ॥**
**अनन्वागतवचनात्तथाऽसङ्गश्रुतेरपि ॥ ४३२ ॥**

इतश्चाऽऽत्मनि वस्तुता नास्ति कामादीत्याह । **स्वत इति** ॥ ४३२ ॥

**आत्मशुद्धेर्विवक्षेह न त्वशुद्धेः कथंचन ॥ ४३३ ॥**
**विशेषणस्य श्रवणाद्धृदीत्यात्मनि चेन्मतम् ॥**
**सव्येनाक्ष्णा न पश्यामि यथा सामर्थ्यतस्तथा ॥ ४३४ ॥**

श्रुतिषु विवक्षितमात्मनि कामादिराहित्यमुपसंहरति । **आत्मेति** । कामाद्यसंबन्धः शुद्धिस्तत्संबन्धश्चाशुद्धिः । तेषामात्माश्रयत्वे श्रुत्यभावेऽपि तदर्थापत्तिरस्तीति शङ्कते । **विशेषणस्येति** । यथा सव्येन न पश्यतीत्युक्ते दक्षिणेनाक्ष्णा पश्यतीत्यर्थाद्गम्यते तथा हृदि श्रिता निवर्तन्ते कामा इति विशेषणादात्माश्रिताः सन्तीति निवृत्तिप्रतियोगिकामानां हृदिश्रितत्वविशेषणसामर्थ्याल्लब्धमित्यर्थः ॥ ४३३ ॥ ४३४ ॥

**नोक्तोत्तरत्वात्साध्वेतद्भवतेहाभिधीयते ॥**
**प्रतिज्ञातार्थसिद्ध्यर्थहेत्वर्थं तद्विशेषणम् ॥ ४३५ ॥**

दूषयति । **नेति** । इहेति श्लोकाक्षरव्याख्याग्रन्थोक्तिः । उक्तमेव स्मारयति । **प्रतिज्ञेति** । विद्यया कामादिविमोको हि प्रतिज्ञातोऽर्थस्तत्र हेतुसिद्ध्यर्थं विशेषणमित्युक्तं तस्मादात्माश्रयाणां कामानामित्याद्ययुक्तमित्यर्थः ॥ ४३५ ॥

---

१ क. ख. तत्र । २ क. °न्मतः । म° ।३ ख. ग. °र्थ्यं हे° ।

**सर्वेषामपि कामानामाश्रयो हृदयं यतः ॥**
**तद्धेत्वतिक्रमादात्मा सर्वशोकातिगस्ततः ॥ ४३६ ॥**

हृदि श्रिता यत इत्यादावुक्तमेव हेत्वर्थं प्रकटयति । **सर्वेषामिति** ॥ ४३६ ॥

**अनाश्रितविभागार्थमथर्वाऽस्तु विशेषणम् ॥**
**तेषु यत्नविधेयत्वात्सफलं स्याद्विशेषणम् ॥ ४३७ ॥**

ब्रह्मविदः कामा निवर्तन्त इति प्रतिज्ञायामज्ञानोत्थबुद्धिस्थत्वात्तेषां तद्ध्वस्तौ ध्वस्तेरितिहेत्वर्थतया विशेषणं व्याख्यायार्थान्तरमाह । **अनाश्रितेति** । लब्धसत्ताकाः कामास्तावद्बुद्धिमाश्रयन्ते नालब्धसत्ताकास्तान्व्यावर्तयितुं हृदिश्रितविशेषणमिति यावत् । कामाः प्रमुच्यन्त इत्येतावतैवेष्टासिद्धेर्लब्धसत्ताका इत्यनर्थकमन्येषामप्रस्तावा-त्तथाच विशेषणवैयर्थ्यमित्याशङ्क्याऽऽह । **तेष्विति** । आप्तकामेषु विषयदोषदर्शनादिना ध्वस्तौ यत्नातिशयस्य कार्यत्वात्तद्बोधनार्थं विशेषणमर्थवदित्यर्थः ॥ ४३७ ॥

**नाऽऽश्रयापेक्षयैतत्स्याद्धृदीतीह विशेषणम् ॥ ४३८ ॥**
**न हि हृद्व्यतिरेकेण कामानामाश्रयान्तरम् ॥**
**श्रुतौ स्मृतौ वा न्यायाद्वा दृश्यतेऽपि प्रमान्तरात् ॥ ४३९ ॥**

आश्रयान्तरस्थकामापोहार्थमेव तत्किं न स्यान्नेत्याह । **नाऽऽश्रयेति** । तत्र हेतुः । **न हीति** ॥ ४३८ ॥ ४३९ ॥

**प्रवृत्तिः कामशब्दस्य भूयःस्वर्थेषु दृश्यते ॥**
**कर्मादिषु जगत्यस्मिंस्तानपेक्ष्यात उच्यते ॥**
**हृदि श्रिता इति वचो नाऽऽश्रयान्तरवीक्षया ॥ ४४० ॥**

वर्तमानकामेषु यत्नाधिक्यविधानार्थमनाश्रितकामेभ्यो विभागं वक्तुं विशेषणमित्यु-क्त्वाऽर्थान्तरमाह । **प्रवृत्तिरिति** । काम्यत इति वा काम्यतेऽनेनेति वा कामनमिति वा कामशब्दस्यानेकार्थत्वं दृश्यते तत्र भावव्युत्पत्तिलब्धतृष्णाविशेषा हृदि श्रिता नेतरे करणादयस्तानपेक्ष्य तद्विशेषणं नाऽऽत्मीयकामापेक्षया तदभावस्योक्तत्वादतः सर्वविष-येच्छाध्वस्तौ मुक्तिर्नान्यथेति वक्तुं विशेषणमित्यर्थः । नाऽऽश्रयान्तरवीक्षयेत्यात्मनः कामाश्रयत्वाभाव उक्तः ॥ ४४० ॥

**अतिच्छन्दा इति वचः कामाधारत्व आत्मनः ॥**
**विरुध्यते प्रमाणं सन्न चान्यार्थत्वमिष्यते ॥ ४४१ ॥**

तत्रैव हेत्वन्तरमाह । **अतिच्छन्दा इति** । आत्मन्यौपाधिककामाभावपरमेतद-तोऽस्य स्वाभाविककामाश्रयत्वे यथोक्तोक्तिविरोधो नास्तीत्याशङ्क्याऽऽह । **न चेति** । आत्मनः कामाश्रयत्वे मानाभावान्नेयं कल्पनेत्यर्थः ॥ ४४१ ॥

---

१ ग. °वा तद्विशे° । २ ख. घ. °ति । प्राप्त° । ३ ग. °दात्यतद्विशे° ।

**आत्मनः कामनीडत्वे न च मानान्तरं क्वचित् ॥**
**सर्वकामादिवचनं प्रमाणमिति चेन्मतम् ॥ ४४२ ॥**

कथं मानाभावस्तत्र किं प्रत्यक्षाद्यात्मनस्तदाश्रयत्वे मानं किंवा सर्वकामादिवाक्यं तत्राऽऽद्यं दूषयति । **आत्मन इति** । क्वचिद्देशादाविति यावत् । तस्य तदगोचरत्वादित्यर्थः । द्वितीयमालम्बते । **सर्वेति** ॥ ४४२ ॥

**तन्नातिच्छन्दवचसा विरोधान्नास्य मानता ॥ ४४३ ॥**
**वस्तुनोऽप्यनृतन्त्रत्वात्षोडशिग्रहणादिवत् ॥**
**विकल्पोऽप्यत्र नैवास्ति न हि वस्तु विकल्पते ॥ ४४४ ॥**

तस्याऽऽत्मनो न कामाश्रयत्वे मानत्वं वाक्यान्तरविरोधादतो नैतदित्याह । **तन्नेति** । अतिच्छन्दवाक्यस्य च्छान्दोग्यवाक्यस्य च तुल्यतया विरोधे सत्युदितानुदितहोमवद्विकल्पः स्यादित्याशङ्क्याऽऽह । **वस्तुनोऽपीति** । योऽपि विकल्पः शङ्क्यते सोऽपीत्येकस्यापेरर्थः । न क्वचिदपि विकल्पो बहुदोषत्वात्काचित्त्वगत्या तदाश्रयणम् । उक्तं हि—

"एवमेषोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः ।
विकल्प आश्रितस्तत्र गतिरन्या न विद्यते" इति ॥

एतदभिप्रेत्य द्वितीयोऽपिशब्दः । अत्रेति वाक्यद्वयोक्तिः ॥ ४४३ ॥ ४४४ ॥

**सर्वं हि खल्विदं ब्रह्मेत्येवं तत्रापि च श्रुतिः ॥**
**प्रतिज्ञायाऽऽह युक्तिं च तज्जलानिति सादरात् ॥ ४४५ ॥**

तस्य तुल्यबलत्वमुपेत्य वस्तुनि विकल्पायोग उक्तः । अथातुल्यत्वं वक्तुं छान्दोग्यश्रुतिमनुसंदधानस्तद्गतं सर्वमित्यादिवाक्यमादत्ते । **सर्वं हीति** । पुनः सर्वकामादिवाक्यस्यातिच्छन्दवाक्येन बाधोऽतुल्यत्वादिति हिशब्देन द्योत्यते । एतदेव स्फुटयितुं तद्व्याचष्टे । **प्रतिज्ञायेति** । ब्रह्माद्वयं प्रतिज्ञाय सा श्रुतिस्तास्मिन्नर्थे तज्जत्वात्तल्लत्वात्तदनत्वाच्चेत्यबाधितां युक्तिं तात्पर्येण वक्तीत्यर्थः ॥ ४४५ ॥

**अक्रियाकारकफलं यतो ब्रह्माद्वयं ततः ॥**
**त्यक्ताशेषक्रियैस्तस्मात्तदुपास्यं सदाऽऽत्मना ॥ ४४६ ॥**

शान्त उपासीतेत्यस्यार्थमाह । **अक्रियेति** । यतोऽद्वयं ब्रह्म ततः क्रियादिभेदशून्यं तस्मात्संन्यासिभिः शमादियुक्तैस्तत्प्रत्यक्त्वेन सदा ध्येयमित्यर्थः ॥ ४४६ ॥

**इत्येतज्जगतो वृत्तं ब्रह्मैवाकार्यकारणम् ॥**
**अव्यावृत्ताननुगतं प्रत्यङ्मात्रसतत्त्वकम् ॥ ४४७ ॥**

सर्वमित्यादेरर्थेत्यनः प्राक्तनस्यार्थमुपसंहरति । **इत्येतदिति** ॥ ४४७ ॥

---

१ क. ग. °धात्तस्य । २ क. ख. तत्सं° ।

उक्त्वैवं वस्तुनो वृत्तं तद्याथात्म्यप्रबोधजम् ॥
कर्त्रादिकारकापेक्षं[1] क्रियावृत्तमभाषत ॥ ४४८ ॥

अथ खल्वित्याद्यवतारयति । उक्त्वेति ॥ ४४८ ॥

ब्रह्मात्मानमुपासीत ब्रह्मतत्त्वाविचक्षणः ॥
कुर्वीत स क्रतुं कर्ता ह्यकार्यत्वेऽपि वस्तुनः ॥ ४४९ ॥
मनोमयादिविषयः क्रतुः पुंसो विधीयते ॥
स हि तस्मिन्यतः शक्तो लोकाग्न्यादिविधौ यथा ॥ ४५० ॥

स क्रतुमित्यादिवाक्यमर्थोक्तिपूर्वकमादत्ते । ब्रह्मेति । तत्त्वज्ञानहीनस्य तादर्थ्येनोपास्तिसंभावनार्थो हिशब्दः । ननु न ब्रह्मात्मनि विधिरकार्यत्वान्नापि तद्ध्याने तस्यान्वयव्यतिरेकाभ्यां ध्येयातिशयहेतुत्वसिद्धेर्विध्यानर्थक्यात्तत्राऽऽह । अकार्यत्वेऽपीति । मनोमयत्वादिगुणके परस्मिन्नात्मनि सोपाधिके ध्यानं विधीयते सर्वत्र प्रसिद्धोपदेशादिति न्यायान्न चान्वयादिना सिद्धसाधनत्वे तस्मिन्विध्ययोगोऽवघातवदुपपत्तेरित्यर्थः । यथोक्ते ध्याने विधिरित्यत्र हेतुमाह । स हीति । आरोपितदृष्टिविषयविधौ पुरुषसामर्थ्ये हिशब्दद्योतिते दृष्टान्तमाह । लोकेति ॥ ४४९ ॥ ४५० ॥

अतः कर्त्रादितन्त्रत्वात्सर्वकामादिवस्तुनः ॥
अतिच्छन्दोक्तिबाधः स्याद्वस्तुतन्त्रत्वहेतुतः ॥ ४५१ ॥

सर्वमित्यादिवाक्यं वस्तुपरं तत्राऽऽत्मनो न कामसंबन्धः श्रुतोऽथेत्यादि तु क्रियापरं तत्र च कामश्रुतिरिति स्थिते फलितमाह । अत इति । वस्तुनः सर्वकामादिरूपस्य क्रियात्मकत्वेन कारकतन्त्रत्वात्तदर्थवाक्यस्य न वस्तुपरत्वमतिच्छन्दवाक्यस्य तु तत्परत्वादन्यतोबलीयस्त्वादतुल्यत्वमतस्तद्बाधः सर्वकामादिश्रुतेरित्यर्थः ॥ ४५१ ॥

विकल्पोऽत्र न युक्तः स्यादेवमुक्तेन वर्त्मना ॥ ४५२ ॥
असत्यकामनुत्त्यर्था कामोक्तिर्याऽपि चाष्टमी ॥
सत्यास्त इम इत्यादि स्तुतिर्वा स्याद्विधित्सिते ॥ ४५३ ॥

वाक्यद्वयेऽपि विकल्पायोगमुपसंहरति । विकल्पोऽत्रेति । एवमित्यतुल्यबलत्वोक्तिः । उक्तेन वर्त्मनेति बाध्यबाधकप्रकारोक्तिः । ननु वस्तुपरे दहरवाक्ये त इमे सत्याः कामा इत्यात्मनः कामसंबन्धश्रवणादतिच्छन्दवाक्यस्य सत्यकामवाक्यस्य च वस्तुपरत्वेन तुल्यत्वाद्विकल्पो द्वयोरप्रामाण्यं वा तत्राऽऽह । असत्येति । न तद्दहरवाक्यं वस्तुपरमुपास्तिपरत्वात्तस्मिन्यदन्तस्तदन्वेष्टव्यमित्यादिश्रुतेर्वस्तुपरत्वेऽपि नैतदात्मनः कामत्वं प्रापयति तस्मिन्नसत्यानां कामानां निरासपरत्वाद्यद्वा ब्रह्मोपासने विधित्सिते ब्रह्मस्तुतिरिह प्रस्तूयते प्रशस्तं हि ब्रह्म यस्मात्तस्मिन्कामाः सत्याः सन्तीति तस्माद्-

---

1 ख. ग. °पेक्षि क्रि° ।

हरवाक्यस्यातिच्छन्दवाक्येनातुल्यत्वाद्बाध एवेत्यर्थः । अष्टम्यष्टमप्रपाठकनिविष्टेति यावत् ॥ ४९२ ॥ ४९३ ॥

**सन्त्यात्मनि न चेत्कामास्तदेवं[2] फलवद्वचः ॥**
**अतिच्छन्दो[3] इति शुभं कामशोकनिषेधकृत् ॥ ४९४ ॥**

वस्तुपरेऽपि प्रजापतिवाक्ये सत्यकाम इति कामसंबन्धः श्रूयते तद्विकल्पाप्रामाण्ययोरन्यतरापत्तिरित्याशङ्क्याऽऽह । **सन्तीति** । अस्यार्थः । स्वरूपसुखस्यानादिनिधनत्वेनामृषात्वादवितथसुखत्वमात्मनः सत्यकामशब्दार्थो वेद्यं वा ब्रह्म तेन स्तूयते सर्वथाऽप्यात्मनो न कामसंबन्धोऽन्यथाऽतिच्छन्दवाक्यविरोधाद्विकल्पस्तु वस्तुनि निरस्तो न च तदमानं तद्धेत्वभावादिति ॥ ४९४ ॥

**निषिध्यन्ते न चेत्कामा यथोक्ताः प्रत्यगात्मनि ॥**
**अथ काममयत्वेऽस्य संसारोऽपि न वार्यते ॥ ४९५ ॥**

किंचाऽऽत्मनि वासनामयाः कामाः संसारहेतवो न वेति विकल्प्याऽऽद्यं प्रत्याह । **निषिध्यन्त इति** । आत्मनि बन्धहेतवः कामा यद्यनिषिद्धास्तदा न तस्य कदाचिदपि मुक्तिः स यथाकामो भवतीति श्रुतेरित्यर्थः । तादर्थ्येऽथशब्दः । हेतुभावे फलभावसंभावनार्थोऽपिशब्दः ॥ ४९५ ॥

**मतं नालं प्ररोहाय ये कामाः प्रत्यगात्मनि ॥**
**किमर्था तर्हि तत्रैषां कल्प्यते भवता स्थितिः ॥ ४९६ ॥**

द्वितीयमालम्बते । **मतमिति** । आत्मनि तेषां बन्धाहेतुत्वं चेत्तत्र स्थितिर्न कल्प्या फलाभावादित्याक्षिपति । **किमर्थेति** ॥ ४९६ ॥

**न कश्चिदुपयोगोऽत्र कामानां विद्यते स्थितौ ॥**
**अजागलस्तनस्येव प्रमाणाद्बन्धमोक्षयोः ॥ ४९७ ॥**

तेषां तत्र स्थितिर्बन्धाहेतुरपि फलान्तरं करिष्यतीत्याशङ्क्याऽऽह । **न कश्चिदिति** । अत्रेत्यात्मोक्तिः । न हि सा मुक्तिहेतुर्विरोधित्वाद्बन्धस्यापि न हेतुश्चेद्विफलैव स्यात्फलान्तरस्याप्रमाणत्वादित्यर्थः ॥ ४९७ ॥

**प्रमाणलब्धसद्भावो निष्फलोऽपि न वार्यते ॥**
**प्रतीचि कामसंबन्धो न तथेति निषिध्यते ॥ ४९८ ॥**

न केवलं वैफल्यादात्मनि कामासंबन्धः किंतु मानाभावादपीत्याह । **प्रमाणेति** ॥ ४९८ ॥

**कामादीनामनर्थानां प्रतीचि शतशः श्रुतौ ॥**
**निषेधकानि वाक्यानि सन्त्यपि स्मृतिशासने ॥ ४९९ ॥**

---

१ घ. °क्यस्थकामवाक्यस्या° । २ क. ग. °देव फ° । ३ ग. °न्दा अति° ।

तद्विरोधाच्च कामसंबन्धो नाऽऽत्मनीत्याह । **कामादीनामिति** । श्रौतैरस्थूलादिवाक्यैः स्मार्तैश्चाविकार्योऽयमित्यादिभिर्विरोधान्नाऽऽत्मनि तत्संगतिरिति यावत् ॥४५९॥

**कामक्लृप्तिरतो नेह प्रत्यगात्मनि युज्यते ॥**
**प्रमाणासंभवात्तस्मात्सा न कल्प्या विपश्चिता ॥ ४६० ॥**

मानफलयोरभावे तद्विरोधे च फलितमुपसंहरति । **कामेति** ॥ ४६० ॥

**प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि ॥**
**अदृष्टशतभागोऽपि न कल्प्यो निष्प्रमाणकः ॥ ४६१ ॥**

मानाद्यभावान्नाऽऽत्मनि कामादिक्लृप्तिरित्यत्र भट्टपादसंमतिमाह । **प्रमाणवन्तीति** ॥ ४६१ ॥

**न चाऽऽत्मकाम इत्यत्र कामाधारत्व आत्मनः ॥**
**मानान्तरप्रसिद्धत्वात्प्रामाण्यं लभ्यते श्रुतेः ॥ ४६२ ॥**

आत्मकामवाक्यादात्मैवास्य कामा न भिन्ना हार्दकामवदित्युक्तं तत्कथं मानाभावोक्तिरित्याशङ्क्याऽऽह । **न चेति** । आत्मकाम इत्यत्र कामः सुखं तृष्णाभेदो वाऽऽद्ये त्वदिष्टेऽर्थे श्रुतेर्न मानत्वमात्मनः सुखत्वे पर्यवसानाद्द्वितीयेऽप्यात्मनस्तदाधारत्वे श्रुतेर्न मानत्वं तस्य तदाधारत्वस्य लोकसिद्धत्वेनापूर्वत्वाभावादित्यर्थः ॥ ४६२ ॥

**न चोपास्योऽयमप्यर्थः सर्वकामादिवच्छ्रुतेः ॥**
**ऐकात्म्यवस्तुयाथात्म्यप्रकाशनपरत्वतः ॥ ४६३ ॥**

किंचाऽऽत्मनः कामसंबन्धो ज्ञेयत्वेनोपास्यत्वेन वोच्यते नाऽऽद्यस्तस्यानर्थत्वान्नान्त्य इत्याह । **न चेति** । तत्र व्यतिरेकदृष्टान्तमाह । **सर्वेति** । तत्र हेतुः । **श्रुतेरिति** । आत्मकामादिवाक्यस्य वस्तुपरत्वादित्यर्थः ॥ ४६३ ॥

**कणभुङ्न्यायसिद्धा चेत्कामाद्याश्रयताऽऽत्मनः ॥**
**श्रुतेस्तदनपेक्षत्वान्नापेक्ष्यं कणभुङ्मतम् ॥ ४६४ ॥**

परपक्षस्याऽऽगमबाह्यत्वं प्रतिपाद्य न्यायबाह्यत्वं प्रतिपादयितुं चोद्यमुद्भावयति । **कणभुगिति** । इच्छादयः क्वचिदाश्रिता गुणत्वाद्रूपवदिति सामान्येन धर्मिसिद्धौ पारिशेषादात्मा तदाश्रयः सेत्स्यतीति भावः । तेषां मनोधर्मत्वश्रुतेरात्मनो निर्गुणत्वश्रुतेश्च तर्कमतानुसारित्वाभावादुपेक्ष्यं तन्मतमिति परिहरति । **श्रुतेरिति** ॥ ४६४ ॥

**तन्निषेधश्रुतेश्चापि नापेक्ष्यं तद्विरोधतः ॥**
**सौगताद्युक्तिवत्तस्मान्न कामाश्रयताऽऽत्मनः ॥ ४६५ ॥**

किंच यदा सर्वे प्रमुच्यन्तेऽस्थूलमनण्वित्यादिना कामादीनामात्मनि निषेधात्तद्विरो-

धात्त्याज्यं तन्मतामित्याह[1] । **तन्निषेधेति** । तार्किकयुक्तेराभासत्वे फलितमाह । **तस्मादिति** ॥ ४६५ ॥

**न च कामाश्रयत्वेऽन्यत्प्रमाणं किंचिदीक्ष्यते ॥**
**मानमेयातिवर्तित्वात्स्वतः सिद्धेश्च वस्तुनः ॥ ४६६ ॥**

आत्मनः कामाश्रितत्वे श्रुतियुक्त्योरसत्त्वेऽपि मानान्तरमस्तीत्याशङ्क्याऽऽत्मनः कामनीडत्वे न च मानान्तरामित्युक्तं प्रपञ्चयति । **न चेति** । न तर्हि वस्तुनः सिद्धिरित्याशङ्क्याऽऽह । **स्वत इति** ॥ ४६६ ॥

**मातृमानप्रमेयार्थाश्चाऽऽगमापायिनः सदा ॥**
**वीक्षते योऽविलुप्ताक्षः स आत्माऽनन्यमानगः ॥ ४६७ ॥**

कथं स्वतःसिद्धत्वमित्याशङ्क्यासकृदुक्तमित्युपपादयति । **मातृमानेति** । चकारस्त्ववधारणार्थः सदेत्यत्र संबध्यते ॥ ४६७ ॥

**यः स्वतो नाऽऽगमापायी तद्विरुद्धेषु सर्वदा ॥**
**तत्रैवाऽऽत्मेति धीरेषा नाऽऽगमापायिवस्तुषु ॥ ४६८ ॥**

स आत्मेत्यात्मत्वं साक्षिणोऽयुक्तं देहादिष्वेव तत्प्रसिद्धेरित्याशङ्क्याऽऽह । **यः स्वत इति** । देहादिष्वात्मत्वधीर्भ्रान्तिरिति भावः ॥ ४६८ ॥

**कामिनं दुःखिनं मूढं योऽविलुप्ताक्ष ईक्षते ॥**
**नासौ कामोऽथवा कामी तत्संबन्धोऽथवा स्वयम् ॥ ४६९ ॥**

आत्मत्वेऽपि मात्रादिसाक्षिणः प्रस्तुते किं जातं तदाह । **कामिनमिति** । कामाद्याश्रयमातृसाक्षिणश्चिद्धातोरात्मत्वान्न तस्य तत्संगतिरित्यर्थः ॥ ४६९ ॥

**एवं दुःखादिषु ज्ञेयमुक्तं प्रत्यक्षसंश्रयात् ॥**
**इच्छादेश्चित्तधर्मत्वात्कर्मस्थत्वं सुनिश्चितम् ॥ ४७० ॥**

कामादावुक्तन्यायं दुःखादिष्वतिदिशति । **एवमिति** । उक्तमनात्मत्वादिकमिति शेषः । प्रत्यक्षं साक्ष्यनुभवः । कामादेरात्मधर्मत्वाभावे हेत्वन्तरमाह । **इच्छादेरिति** ॥ ४७० ॥

**इच्छादिधर्मवत्साक्षाद्यः सदा वीक्षते मनः ॥**
**तस्येच्छाद्यभिसंबन्धः केन मानेन गम्यते ॥ ४७१ ॥**

अग्न्यौष्ण्यस्य जलाधारत्ववच्चित्तस्थमिच्छाद्यात्मस्थं किं न स्यादित्याशङ्क्याऽऽह । **इच्छादीति** । औष्ण्यधीर्जले भ्रान्तिरिच्छादिधीरप्यात्मनि तादृशी चेदविरुद्धेति भावः ॥ ४७१ ॥

---

[1] ख. °मिति परिहरति । त° ।

**प्रत्यग्वस्तु पराग्बुद्धिगम्यैरिच्छादिभिः कथम् ॥**
**विरुद्धत्वाद्विशेष्यं स्यात्तमसा दिनकृद्यथा ॥ ४७२ ॥**

इतश्च नेच्छादेरात्मधर्मतेत्याह । **प्रत्यगिति** ॥ ४७२ ॥

**एकबुद्ध्यधिगम्यत्वं विशेषणविशेष्ययोः ॥**
**नीलोत्पलादिवद्दृष्टं न तद्दृष्टं विरुद्धयोः ॥ ४७३ ॥**

मिथोविरुद्धत्वेनैकधीग्राह्यत्वाभावाच्च नाऽऽत्मधर्मत्वं कामादेरित्याह । **एकेति** । ॥ ४७३ ॥

**नापि चाऽऽत्मातिरेकेण ग्राहकोऽन्योऽवसीयते ॥**
**ग्राहकस्थश्च कामादिः स कथं ग्राह्यतां व्रजेत् ॥ ४७४ ॥**

किंच तस्याऽऽत्मधर्मत्वे ग्राहको धर्मिणोऽन्योऽनन्यो वेति विकल्प्याऽऽद्यं दूषयति । **नापीति** । द्वितीयं निरस्यति । **ग्राहकेति** । तस्यांशतःस्वग्रहापत्तेरित्यर्थः ॥ ४७४ ॥

**चक्षुर्दृष्टेन चक्षुस्थं कृष्णत्वाद्येति दृश्यताम् ॥**
**प्रमातृस्थं न कामादि तद्वदेयात्प्रमेयताम् ॥ ४७५ ॥**

स्वस्य स्वगतधर्मग्राहकत्वायोगं दृष्टान्तेनाऽऽह । **चक्षुरिति** ॥ ४७५ ॥

**आत्मत्वावगमाद्वाऽपि जडस्यैवेह वस्तुनः ॥**
**कामकाम्यादि तस्यास्तु दृष्टिमात्रात्मनो न तु ॥ ४७६ ॥**

किंच कामाद्याश्रयत्वमात्मनो जडस्याजडस्य वा तत्राऽऽद्यमङ्गी करोति । **आत्मत्वेति** । विकल्पद्योती वाशब्दः । इहेति च परपक्षोक्तिः । द्वितीयं प्रत्याह । **दृष्टीति** । ऐकरस्यविरोधादित्यर्थः ॥ ४७६ ॥

**अचेतनैकनीडत्वं मयाऽपीह प्रसाध्यते ॥ ४७७ ॥**
**स्वेन भासेति च स्वप्ने सर्वकामादिवर्जितम् ॥**
**स्वेनैव ज्योतिषेत्युक्तं स्वयंज्योतिष्ट्वसिद्धये ॥ ४७८ ॥**

जडस्य कामाद्याश्रयत्वाङ्गीकारं विवृणोति । **अचेतनेति** । इहेति कामाद्युक्तिः । त्वयाऽपि तदेव साध्यते चेन्न विप्रतिपत्तिरित्यपेरर्थः । किंच स्वेन भासेत्युपक्रम्य स्वेन ज्योतिषा प्रस्वपितीति श्रुत्या स्वयंज्योतिष्ट्वसाधनार्थमात्मनः स्वप्ने कामादिसर्वविशेषहीनं रूपमुक्तमतस्तद्विरोधान्न तस्य कामाद्याश्रयतेत्याह । **स्वेनेति** ॥ ४७७ ॥ ४७८ ॥

**स्वयंज्योतिष्ट्वसिद्धिश्च श्रुतिन्यायपुरःसरा ॥**
**कामाद्याश्रयतोक्त्याऽर्थात्सो त्वया बाधिता भवेत् ॥ ४७९ ॥**

तत्रैव हेत्वन्तरं वक्तुं पातनिकां करोति । **स्वयमिति** । अत्रायं पुरुषः स्वयंज्योतिरिति श्रुतेर्जाड्येऽनात्मत्वापत्तिरित्यादिन्यायाच्चाऽऽत्मनः स्वप्रकाशत्वेऽपि कामाद्या-

---

१ ख. ग. °श्रयितो° । २ क. ग. °त्सान्वया ।

श्रयत्वं किं न स्यात्तत्राऽऽह । **कामादीति ।** सा हि श्रौती नैयायिकी वाऽऽत्मनः स्वप्रकाशत्वप्रसिद्धिस्त्वया कामादीनामात्माश्रयत्वोक्त्या बाधिता स्यात्स्वाश्रयवृत्तिविशेषादेव तदाश्रयस्याऽऽत्मनो वैशेषिकादिवद्दृष्टिसंभवादित्यर्थः ॥ ४७९ ॥

**तथैवाऽऽत्मनि दृष्टे च सर्वं दृष्टं भवेदिति ॥**
**कामादेरात्मनोऽन्यत्वे तच्चापि स्यात्प्रबाधितम् ॥ ४८० ॥**

किंच कामादेरात्माश्रयत्वं वदता तद्भेदोपगमादेकविज्ञानेन सर्वविज्ञानश्रुतिर्बाधिता स्यादित्याह । **तथेति ।** स्वयंज्योतिष्ट्वप्रसिद्धेर्बाधितत्ववदित्यर्थः ॥ ४८० ॥

**सर्ववेदान्तबाधश्च कामाद्याश्रयता यदि ॥**
**आत्मनोऽभ्युपगम्येत तेषां तत्प्रतिषेधतः ॥ ४८१ ॥**

इतश्चाऽऽत्मनो न कामाद्याश्रयतेत्याह । **सर्वेति ।** तत्र हेतुः । **तेषामिति ।** तदुपलक्षितेऽर्थे पर्यवसानादित्यर्थः ॥ ४८१ ॥

**ऐकात्म्यस्याऽऽगमार्थत्वाच्छ्रुतेश्चान्यानपेक्षतः ॥**
**यतोऽतस्तार्किकोक्तीस्ता नैवापेक्षामहे वयम् ॥ ४८२ ॥**

श्रुतियुक्तिभ्यामात्मनो न कामाद्याश्रयतेत्युक्तमुपसंहरति । **ऐकात्म्यस्येति ।** एकरसं वस्तु यतः श्रुत्यर्थोऽतो न श्रुत्याऽऽत्मनः कामाद्याश्रयत्वसिद्धिर्नापि तार्किकयुक्तिभिरात्मप्रतिपादकश्रुतेरनपेक्षमाणत्वाद्यतो न प्रामाणिकेऽर्थे तद्विरुद्धा युक्तयः सावकाशा अतो वैशेषिकादियुक्तयस्तदाश्रयत्वमात्मनो दर्शयन्त्यः श्रुतिविरोधादुपेक्ष्या इत्यर्थः ॥ ४८२ ॥

**हृद्याश्रितत्वं कामानां नन्वत्रोक्तं विशेषणम् ॥**
**संभवे व्यभिचारे च तच्च स्यात्फलवत्सति ॥ ४८३ ॥**

विशेषणस्य श्रवणादित्यादावुत्थाप्य प्रत्याख्यातमेव चोद्यमधिकविवक्षयोत्थापयति । **हृदीति ।** तत्सामर्थ्यादात्माश्रिताः कामाः सन्तीत्यर्थः ॥ ४८३ ॥

**हृद्यनाश्रितकामानां संभवादिष्टमेव तत् ॥**
**आत्माश्रयातिरेकेण तच्चावो चं पुराऽप्यहम् ॥ ४८४ ॥**

अनाश्रितविभागार्थमित्यादावुक्तं स्मारयति । **हृद्यनाश्रितेति ॥** ४८४ ॥

**मूर्तं मर्त्यं स्थितं सच्च पृथिव्यप्तेजसामिदम् ॥**
**न विशेषणमित्यस्मादमूर्तत्वादिकल्पनम् ॥ ४८५ ॥**

यदधिकं विवक्षन्नुक्तावेव चोद्यपरिहारावन्ववादीत्तदिदानीमाह । **मूर्तमिति ।** न हि व्यावर्तकमेव विशेषणमिति नियमो भूतत्रयविशेषणानां मूर्तत्वादीनामपि तत्प्राप्तावमूर्त-

१ घ. चाऽऽत्मनः । २ ग. °श्रयिता । ३ ख. °पेक्ष्य प्रमा° ।

त्वादियुक्तपृथिव्यादिसत्त्वप्रसङ्गात्तेषाममूर्तवाय्वादिव्यावर्तकत्वेनाविरोधे प्रकृतेऽप्यना-
श्रितकामव्यावर्तकत्वोपपत्तेर्न विशेषणवशादात्मनि कामादिसिद्धिरित्यर्थः ॥ ४८५ ॥

**चलनात्मा मरुन्नित्यं दाहकोऽग्निरितीरिते ॥**
**विशेषणश्रवात्क्लृप्तिर्नैतयोस्ताद्विरुद्धयोः ॥ ४८६ ॥**

इतश्च विशेषणं व्यावर्तकमिति नियन्तुमशक्यमित्याह । **चलनात्मेति** ॥ ४८६ ॥

**वास्येऽर्थे वासनाः सर्वाः सजातीये च ता यतः ॥**
**निःसङ्गे भिन्नजातीये ताः कुतः प्रत्यगात्मनि ॥ ४८७ ॥**

हृदिश्रितत्वस्य शुक्लं भास्वरं रूपं तैजसमितिवत्स्वरूपविशेषणत्वान्न तद्बलादात्मा-
श्रयकामादिसिद्धिरित्युक्तं यत्तु कामादिवासनानामात्मनि वृत्तिरिति तत्र परस्य जीवस्य
वा तदाश्रयतेति विकल्प्याऽऽद्यं दूषयति । **वास्य इति** । परस्यापि वास्यत्वमाश-
ङ्क्याऽऽह । **सजातीये चेति** । साजात्यं कामाद्याश्रयेण हृदयेन तस्यापि स्यादिति
चेन्नेत्याह । **निःसङ्ग इति** ॥ ४८७ ॥

**प्रत्यगात्मातिरेकेण प्राज्ञोऽन्यश्चेद्विवक्ष्यते ॥**
**नेति नेतीति तस्योक्तान्निषेधान्नेह संभवः ॥ ४८८ ॥**[1]

द्वितीयं निरस्यति । **प्रत्यगिति** । प्राज्ञो जीवः । इहेति शास्त्रीयव्यवहारभूमिरुक्ता
॥ ४८८ ॥

**निःशेषकामकर्मादेर्व्युत्थाप्याऽऽत्मानमब्रवीत् ॥**
**तद्वा अस्यैतदित्युक्त्या नातः कामादयोऽत्र ते ॥ ४८९ ॥**

तद्वा अस्यैतदाप्तकाममित्यादिवाक्यालोचनयाऽपि नाऽऽत्मनि कामादयः सन्तीत्याह ।
**निःशेषेति** ॥ ४८९ ॥

**तद्वा अस्यैतदित्यादेः प्राज्ञस्याऽऽन्तररूपतः ॥**
**वासनाकामकर्मादेः कुतोऽस्याऽऽन्तररूपता ॥ ४९० ॥**

यत्तु प्राज्ञस्याभ्यन्तरं रूपं तन्माहारजनादिकमिति तत्राह । **तद्वा इति** । प्राज्ञस्य
कामकर्मादिनिर्मुक्तं रूपमन्तरङ्गमित्यङ्गीकारान्न कामादेस्तदन्तरङ्गरूपतेत्यर्थः ॥४९०॥

**पीतरक्तादिभी रूपैः कर्मकार्यैः प्रयुज्यते ॥**
**निर्देष्टुं शक्यते तस्मादनिर्देश्योऽपि सन्नसौ ॥ ४९१ ॥**

स्वोक्तिविरोधाच्चाऽऽत्मनो न कामाद्याश्रयतेति वक्तुं भर्तृप्रपञ्चप्रक्रियां मूर्तामूर्त-
ब्राह्मणस्थामनुभाषते । **पीतेति** । कर्मकार्यवासनात्मकरूपसंबन्धे कार्यमाह । **निर्देष्टु-
मिति** ॥ ४९१ ॥

---

१ ख. °स्योक्त्या निषे° । २ क. ख. घ. तन्महा° ।

**भावनैव विजृम्भन्ती स्थूलत्वमुपगच्छति ॥**
**अव्याकृतादिभावेन खवाय्वादित्यसंज्ञितम् ॥ ४९२ ॥**

कथमनिर्देश्यस्य निर्देश्यत्वं भावना भावयतीत्याशङ्क्य तस्याः स्थूलरूपतां तावदाह । **भावनेति** । प्रकृतिविकृतिभावेन विजृम्भमाणा भावना भूतभौतिकात्मकं स्थौल्यमाप्नोतीति यावत् ॥ ४९२ ॥

**मूर्तामूर्तादिभावाच्च क्षीयमाणा हि सैव तु ॥**
**निर्गुणं सन्तमात्मानं रञ्जयित्वाऽवतिष्ठते ॥ ४९३ ॥**

सैव सूक्ष्मत्वमपि गच्छतीत्याह । **मूर्तेति** । सूक्ष्मत्वमुपगच्छतीत्यध्याहारः । भावनातिरिक्तस्थूलसूक्ष्मदृश्यार्थसत्त्वे मानाभावो हिशब्दार्थः । कथं द्विविधाऽपि साऽऽत्मनि व्यवहारमावहेदित्याशङ्क्याऽऽह । **निर्गुणमिति** ॥ ४९३ ॥

**भावना बहुरूपाऽसौ बहुरूपत्वमात्मनः ॥**
**करोत्यनामरूपस्य मणेरास्तरणं यथा ॥ ४९४ ॥**

तस्याश्चिदात्मसंबन्धे फलितमाह । **भावनेति** ॥ ४९४ ॥

**इत्यादि भवतैवोक्तं वासनोक्तिप्रसङ्गतः ॥**
**इहोक्तेस्तद्विरुद्धत्वात्परस्परविरुद्धता ॥ ४९५ ॥**

परप्रक्रियामुपसंहरति । **इत्यादीति** । आदिशब्देन राशित्रयकल्पनं कर्मराशिपदेनाऽऽत्मग्रहणमित्यादि गृह्यते। तस्य हैतस्य पुरुषस्येत्यादिना वासनारूपविशेषोक्तिप्रसङ्गाद्यद्यपीदमुक्तं तथाऽपि प्रकृते को दोषस्तत्राऽऽह । **इहेति** । अत्र मन्त्रे कामादीनामात्माश्रयत्वं स्वतोऽस्तीति भवद्वाक्यस्य पूर्वोक्तेनाऽऽत्मन्यौपाधिककामसंबन्धवादिस्ववाक्येन विरुद्धत्वान्मिथो विरुद्धत्वात्स्वव्याख्यानस्येत्यात्मनो न कामाद्याश्रयतेत्यर्थः ॥ ४९५ ॥

**कर्मराशिगिराऽऽत्माऽपि यदि तत्र विवक्षितः ॥**
**निषेधात्तस्य नेतीति शून्यतैव प्रसज्यते ॥ ४९६ ॥**

किंच मूर्तामूर्तब्राह्मणे राशित्रयं कल्पयता कर्मराशिशब्देनाऽऽत्मनोऽपि गृहीतत्वात्तस्य निषेधविषयस्य न कामाद्याश्रयत्वेन स्थितिरित्याह । **कर्मेति** ॥ ४९६ ॥

**परमार्थात्मनोऽथान्यः कश्चिदात्मेति भण्यते ॥**
**अस्तु कामं स कामादेराश्रयो न निवार्यते ॥ ४९७ ॥**

आत्मा हि द्विविधः परमार्थश्चापरमार्थश्च तत्रापरमार्थस्य कामाद्याश्रयस्य कर्मराश्यन्तर्भूतत्वेन निषेधेऽपीतरस्य शिष्टत्वान्न शून्यतेति शङ्कते। **परमार्थेति** । इष्टापत्त्या परिहरति । **अस्त्विति** ॥ ४९७ ॥

**शक्त्यात्मनाऽप्यवस्थानं कारणात्मनि युज्यते ॥**
**तस्य शक्त्यभिसंबन्धान्न त्वकारण आत्मनि ॥ ४९८ ॥**

कामा द्विविधाः स्थूलाः सूक्ष्माश्च तत्र स्थूलानामपरमार्थात्माऽऽश्रयः सूक्ष्माणां तु परमार्थात्मेति विभागे कथं त्वदिष्टसिद्धिरित्याशङ्क्याऽऽह । **शक्तीति** । तदात्मना सूक्ष्मरूपेणेत्यर्थः ॥ ४९८ ॥

**न च कारणमात्रत्वं रूपमिष्टं परात्मनः ॥**
**अनिर्मोक्षप्रसक्तित्वाच्छ्रुत्यनारम्भसक्तितः ॥ ४९९ ॥**

अकारणविशेषणमात्मनोऽयुक्तं तस्य त्वया कारणत्वस्वीकारादित्याशङ्क्याऽऽह । **न चेति** । अविद्यया कारणत्वेऽपि वस्तुतो न तत्संभवोऽन्यथा मुक्त्यनुपपत्तेस्तदर्थोपनिषदामप्रवृत्तिप्रसङ्गादित्यर्थः ॥ ४९९ ॥

**स्थूलादीनां च सर्वेषां प्रतीचि प्रतिषेधतः ॥**
**विशेषणानां संबन्धो नातः स्यात्प्रत्यगात्मनः ॥ ५०० ॥**

न केवलमात्मनि कामादीनामेवासंभवः किंतु सर्वस्यैव विशेषणजातस्येत्याह । **स्थूलादीनामिति** ॥ ५०० ॥

**आत्माश्रयत्वं कामानां न युक्त्या नापि शास्त्रतः ॥**
**अपव्याख्यानतस्तेषां कामा आत्माश्रया इति ॥ ५०१ ॥**

परपक्षनिरासमुपसंहरति । **आत्माश्रयत्वमिति** ॥ ५०१ ॥

**एवं समवनीतेषु प्राणेष्वात्मनि तद्विदः ॥**
**पूर्ववद्देहसंबन्धः किमिवेह न जायते ॥ ५०२ ॥**

यदेत्यादिमन्त्रस्य भाष्योक्तमर्थमुक्त्वा परकीयं व्याख्यानं निरस्तमिदानीं तद्यथेत्यादिवाक्यनिरस्यां शङ्कामाह । **एवमिति** । विदुषो विद्ययाऽऽत्ममात्रत्वेन प्राणेषु बाधितेष्वपि देहे चेदसौ वर्तते पूर्ववदस्य तद्योगः स्यात्ततो विद्यावैयर्थ्यमिति चोद्यार्थः । इहेति विद्यादशा गृह्यते ॥ ५०२ ॥

**सर्पनिर्मोकवत्कृत्स्नमात्माविद्यैकहेतुजम् ॥**
**यथावस्तुधिया हित्वा निर्ममो निरहंकृतः ॥ ५०३ ॥**

तस्य यथापूर्वं देहायोगं दर्शयन्नर्थवत्त्वं विद्यायाः समर्थयते । **सर्पेति** । यथा सर्पस्त्वचं विहाय तत्राहंतादिहीनो वर्तते तथाऽयं विज्ञानशेषमपि देहादि स्वाविद्योत्थं तत्त्वविद्यया त्यक्त्वा ममत्वादिरहितस्तिष्ठतीत्यर्थः ॥ ५०३ ॥

**वर्तमानोऽपि देहादौ लोकदाक्षिण्यपेक्षया ॥**
**नाऽऽत्माऽऽत्मीयत्वबुद्ध्याऽसौ देहादीन्समुदीक्षते ॥ ५०४ ॥**

कथं देहादौ वर्तमानस्तत्र ममत्वादिहीनो भवति तत्राऽऽह । वर्तमानोऽपीति ॥ ५०४ ॥

षष्ठ्यर्थहेतुविध्वंसाद्यथावस्त्ववबोधतः ॥
अव्यावृत्ताननुगतं पूर्णं वस्त्ववतिष्ठते ॥ ५०५ ॥

अज्ञदृष्ट्या देहादिनिष्ठोऽपि न स्वदृष्ट्या तत्र ममत्वादिभागीत्यत्र हेतुमाह । षष्ठीति । तत्त्वज्ञानाद्देहादिसंबन्धहेतोरज्ञानस्यापनीतत्वादित्यर्थः । केन तर्हि रूपेण विद्वानवतिष्ठते तत्राऽऽह । अव्यावृत्तेति ॥ ५०५ ॥

अहिनिर्ल्वयनीवाचा सर्पनिर्मोक उच्यते ॥
मृता सत्यहिना न्यस्ता वल्मीकान्तर्बिलाश्रये ॥ ५०६ ॥

तात्पर्यमुक्त्वा पदव्याख्यामारभते । अहीति । शयीतेति संबन्धः ॥ ५०६ ॥

अहिदेहवियोगोऽत्र मृतशब्देन भण्यते ॥
वल्मीकाश्रयेणं तस्याः प्रत्यस्तेत्यभिधीयते ॥ ५०७ ॥

मृता प्रत्यस्तेतिपदयोरसंकीर्णमर्थमाह । अहिदेहेति ॥ ५०७ ॥

अहिनिर्मोकविषयो व्यापारस्तावदीरितः ॥
निर्ममाहंकृतित्वं तु सर्पदृष्टान्तसंश्रयम् ॥ ५०८ ॥

सर्पस्तन्निर्मोकश्चेति दृष्टान्तद्वयमत्रेष्टं तत्र सर्पनिर्मोको विद्वद्देहस्य दृष्टान्तो व्याख्यात इत्यनुवदति । अहीति । सर्पशरीरविश्लेषो वल्मीकान्तःशयनमित्यादिव्यापारः । सर्पो विदुषो दृष्टान्तः स च व्याख्यायत इत्याह । निर्ममेति । विदुष इति शेषः ॥ ५०८ ॥

बिले त्यक्तेऽहिना यद्वत्स्वनिर्मोके न पूर्ववत् ॥
निर्गच्छन्प्रविशन्सर्पो निर्मोकमनुरुध्यते ॥ ५०९ ॥

व्याख्याप्रकारमाह । बिल इति ॥ ५०९ ॥

नाहं ममेति वा बुद्धिस्तत्राहेरुपजायते ॥
तत्रैव वर्तमानस्य यथैवं प्रत्यगात्मनः ॥ ५१० ॥
संबन्धहेतोरुच्छित्तेरात्मसंबन्धवर्जितम् ॥
शेते शरीरं सूक्ष्मं च स्थूलं चैकात्म्यधीहृतम् ॥ ५११ ॥

सर्पस्य त्यक्तनिर्मोकाननुरोधमेव स्फोरयति । नाहमिति । दृष्टान्तौ व्याख्याय निर्मोकदृष्टान्तमनुवदति । यथेति । तस्य दार्ष्टान्तिकं व्याकरोति । एवमिति ॥ ५१० ॥ ५११ ॥

अहिनिर्मोकदृष्टान्तदार्ष्टान्तिकमितीरितम् ॥
दार्ष्टान्तिकोऽर्थः सर्पस्य दृष्टान्तस्याथ उच्यते ॥ ५१२ ॥

---

१ ख. 'वतीति । २ ग. 'यता त' ।

उक्तमनूद्यार्थेत्याद्यवतारयति । **अहीति** । विसंधिकरणं वाक्यप्रतीकोपादानार्थम् ॥ ५१२ ॥

**अहिनिर्मोकयोरत्र संगतिः पूर्ववन्मिथः ॥**
**निषिध्यते प्रयत्नेन स्थितिर्नात्र विवक्षिता ॥ ५१३ ॥**

ननु दृष्टान्ते सर्पनिर्मोकयोर्भेदेन स्थितिवद्दार्ष्टान्तिके विद्वद्देहयोस्तथा स्यादन्यथा तद्भावासिद्धेरित्याशङ्क्योभयत्र विवक्षितमंशं दर्शयति । **अहिनिर्मोकयोरिति । अत्रेति** दृष्टान्तवाक्योक्तिः । पूर्ववन्मिथो विश्लेषात्पूर्वावस्थायामिवेत्यर्थः । प्रयत्नस्त्वनेकविशेषणग्रहणम् । एवं दार्ष्टान्तिकेऽपि मिथ्याभिमानाख्यसंबन्धनिषेधो विवक्षितो भेदेन स्थितिस्त्वविवक्षितेति शेषः ॥ ५१३ ॥

**प्रधानवादः प्राप्नोति यदि देहात्मनोः पृथक् ॥**
**विवक्ष्यते स्थितिरिह न्यषेधि बहुशः स च ॥ ५१४ ॥**

विपक्षे दोषमाह । **प्रधानेति । इहेति** विद्यावस्थोक्तिः । इष्टापत्तिमाशङ्क्याऽऽह । **न्यषेधीति** ॥ ५१४ ॥

**हेत्वर्थे त्वथशब्दोऽयं हेतूक्तेः प्रकृतत्वतः ॥**
**सकारणस्य देहस्य त्यागो हेतुर्विवक्षितः ॥ ५१५ ॥**

प्रासङ्गिकं त्यक्त्वाऽथशब्दार्थमाह । **हेत्वर्थे त्विति** । सत्स्वर्थान्तरेषु नियमे हेतुमाह । **हेतूक्तेरिति** । अथ मर्त्योऽमृतो भवतीत्यत्रेति शेषः । हेतुरूपमर्थं प्रकटयति । **सकारणस्येति** । अज्ञानेन सह देहस्य नष्टत्वमशरीरत्वादौ हेतुरथशब्देन द्योत्यत इत्यर्थः ॥ ५१५ ॥

**स्रगज्ञानमनादाय नाहियोगः स्रजो यथा ॥**
**प्रतीचो देहसंबन्धो नाऽऽत्माज्ञानादृते तथा ॥ ५१६ ॥**

अज्ञानं न देहहेतुः स्वाभाविकत्वादात्मनस्तत्संगतेरित्याशङ्क्याऽऽह । **स्रगिति** । न खल्वसङ्गस्य स्वाभाविकी देहादिसंगतिः संभवतीत्यर्थः ॥ ५१६ ॥

**प्रत्यग्ज्ञानशिखिध्वस्ते मिथ्याज्ञाने सहेतुके ॥**
**नेतिनेतिस्वरूपत्वादशरीरो भवेत्ततः ॥ ५१७ ॥**

अथशब्दार्थमनूद्याशरीरविशेषणमादत्ते । **प्रत्यगिति** ॥ ५१७ ॥

**स्वतोऽदिग्देशकालादेः प्रत्यक्चिन्मात्रवस्तुनः ॥**
**देशादिमच्छरीरेण न संबन्धस्तमो विना ॥ ५१८ ॥**

तस्यार्थमाह । **स्वत इति** । अदिग्देशकालादेरिति च्छेदः । देहयोगवियोगाद्यर्थं **विशिनष्टि । तमो विनेति** ॥ ५१८ ॥

---

१ क. ख. °वेदतः ।

कल्पितेनाभिसंबन्धो न ह्यकल्पितवस्तुनः ॥
अज्ञानकालेऽप्यस्तीह किमुताज्ञाननिह्नुतौ ॥ ५१९ ॥

विदुषो देहयोगो नेत्युक्तं कैमुतिकन्यायेन साधयति । कल्पितेनेति ॥ ५१९ ॥

अनस्थिकगिरा स्थूलदेहस्येह निवारणम् ॥
तथाऽशरीरशब्देन सूक्ष्मो देहो निषिध्यते ॥ ५२० ॥

अथायमनस्थिकोऽशरीर इति माध्यंदिनपाठस्तत्रानस्थिकशब्दार्थमाह । अनस्थिकेति । अशरीरशब्दस्य तर्हि पुनरुक्ततेत्याशङ्क्याऽऽह । तथेति ॥ ५२० ॥

सूक्ष्मदेहनिषेधोक्त्या स्थूलस्यापि निषेधतः ॥
तन्निषेधाय यत्नोऽतः काण्वश्रुत्या न भण्यते ॥ ५२१ ॥

तर्हि काण्वपाठे स्थूलदेहनिवारकाभावस्तत्राऽऽह । सूक्ष्मेति ॥ ५२१ ॥

यद्वाऽशरीरशब्देन तच्छ्रुतौ लिङ्गनिह्नुतिः ॥
स्थूलस्यामृत इत्युक्त्या निषिद्धत्वान्न निह्नुतिः ॥ ५२२ ॥

यश्चार्थादर्थो न स चोदनार्थ इति न्यायेन काण्वश्रुतौ स्थूलदेहनिषेधस्याविवक्षिततत्वमाशङ्क्याऽऽह । यद्वेति । माध्यंदिनश्रुतौ विशेषणद्वयार्थोऽमृतश्रुतौ पिण्डीकृत्योच्यते ॥ ५२२ ॥

साक्षिणः प्राणशब्देन विशेष्यस्याभिधेष्यते ॥
ब्रह्मैवेति तु शब्देन तद्विशेषणमुच्यते ॥ ५२३ ॥

यथोक्तस्य विदुषो मुक्तस्यापनीतप्राणत्वान्न प्राणशब्दता युक्तेत्याशङ्क्याऽऽह । साक्षिण इति । ब्रह्मशब्दार्थमाह । ब्रह्मेति ॥ ५२३ ॥

साक्षिणः सद्वितीयत्वं ब्रह्मणश्च परोक्षताम् ॥
तद्धेतुप्रतिषेधेन वाक्यमेतन्निषेधति ॥ ५२४ ॥

समानाधिकृतपदद्वयतात्पर्यमाह । साक्षिण इति । तद्धेतुः सद्वितीयत्वादिहेतुरात्माज्ञानम् ॥ ५२४ ॥

नामोपक्रममाशान्तं प्राणकारणसंश्रयम् ॥
प्राणो ब्रह्मेति वचसा तदात्मनि निषिध्यते ॥ ५२५ ॥

न केवलं सद्वयत्वादेरेव प्राणो ब्रह्मेतिवाक्योत्थज्ञानान्निषेधः किंत्वन्यदपि सर्वं सकारणं निषिध्यते तेनेत्याह । नामेति ॥ ५२५ ॥

ब्रह्मात्मनोश्च संसर्गो मा भूत्कृष्णसर्पवत् ॥
इत्यर्थं तेज एवेति श्रुतिः संसर्गवारिणी ॥ ५२६ ॥

प्राणो ब्रह्मैवेत्युक्त्वा तेज एवेत्ययुक्तं तेजःशब्दस्याऽऽदित्यादौ रूढस्य साक्षिणि

---

१ ख. 'वारणी ।

ब्रह्मण्ययोगादित्याशङ्क्याऽऽह । **ब्रह्मेति । प्राणः** साक्षी तेज एवेति श्रुतिर्ब्रह्मात्मनोः संसर्गवारिणीति संबन्धः । तयोः संसर्गप्रसङ्गं दृष्टान्तेन दर्शयन्ती वारणप्रकारमितरभागेनाभिनयति न च तेजःशब्दस्य तस्मिन्नयोगस्तस्य भासेत्यादिश्रुतेः सर्वावभासकस्य तच्छब्दार्थत्वादिति भावः ॥ ५२६ ॥

**व्यावर्त्यभेदादाभाति भेदो ब्रह्मात्मशब्दयोः ॥**
**वस्तुतस्त्वेक एवाऽऽत्माऽमानित्वादिर्यथा तथा ॥ ५२७ ॥**

ब्रह्मात्मनोरभेदे कथं तद्भेदभानमत आह । **व्यावर्त्येति** । तच्छब्दयोस्तद्वतोरर्थयोरित्यर्थः ॥ ५२७ ॥

**ब्रह्मैव तेज एवेति ह्युभयत्रावधारणम् ॥**
**संसर्गप्रतिषेधार्थं मा भून्नीलोत्पलादिवत् ॥ ५२८ ॥**

कथं ब्रह्मैवेत्युक्त्वा तेज एवेत्युक्ते ब्रह्मात्मनोः संसर्गनिषेधस्तत्राऽऽह । **ब्रह्मैवेति ।** एवकारद्वयसामर्थ्यात्संसर्गवारणमित्यर्थः । श्रुतेः सामर्थ्यादर्थसाधकत्वमन्यत्रापि प्रसिद्धमिति हिशब्दार्थः । तत्प्रतिषेधप्रकारमभिनयति । **मा भूदिति** ॥ ५२८ ॥

**सर्वानर्थैकबीजस्य प्रत्यगज्ञानरूपिणः ॥**
**कार्योऽत्र वचसा बाधः केवलो नान्य इष्यते ॥ ५२९ ॥**

अथेत्यादि पदशो व्याख्याय तत्तात्पर्यमुपसंहरति । **सर्वानर्थेति ।** इहेति प्रत्यगात्मोक्तिः ॥ ५२९ ॥

**यस्मादेतत्स्वतो बुद्धमतः शुद्धमसंगतेः ॥**
**मुक्तं चातः स्वतो वस्तु किमन्यत्कार्यमिष्यते ॥ ५३० ॥**

वाक्यीयज्ञानादनर्थहेत्वज्ञानहानं केवलं कर्तव्यं न तु सति ज्ञाने कार्यान्तरमस्तीत्यत्र हेतुमाह । **यस्मादिति** ॥ ५३० ॥

**कृतं चिकीर्षितं सर्वं बुद्धं यच्च बुभुत्सितम् ॥**
**आप्तं बोधात्तथाऽऽप्तव्यं वर्जनीयं च वर्जितम् ॥ ५३१ ॥**

चिकीर्षा बुभुत्सा प्रेप्सा परिजिहीर्षा चेज्ज्ञानिनोऽपि दृश्यते तत्कथं तस्य कार्यान्तराभावस्तत्राऽऽह । **कृतमिति** । सर्वानर्थहेत्वज्ञानहानादेवोक्तार्थसिद्धेर्ज्ञानिनो न कार्यान्तरं तद्धीश्चाऽऽभासो दग्धपटवदित्यर्थः ॥ ५३१ ॥

**कामप्रश्नः समाप्तोऽतो निराकाङ्क्षोऽभवन्नृपः ॥**
**सोऽहं सहस्रमित्याह तस्मादेव च कारणात् ॥ ५३२ ॥**

सोऽहमित्यादेस्तात्पर्यमाह । **कामेति ।** तत्समाप्तिपरामर्शोऽतःशब्दार्थः । **सहस्रदा**ननिमित्तं निराकाङ्क्षत्वं तस्मादित्युच्यते ॥ ५३२ ॥

---

१ घ. °सर्गं वारयतीति । २ ख. °वारणी° । ३ घ. °यन्निव° ।

**ननु प्रश्नः समाप्तश्चेन्नादात्सर्वं स किं नृपः ॥**
**सहस्रमेव तु प्रादादेकदेशोक्तिवत्कथम् ॥ ५३३ ॥**

कामप्रश्नो मोक्षार्थो मुनिना राज्ञे वरो दत्तः समाप्तश्चेन्न सहस्रदानं युक्तं सर्वस्वदानं तु युक्तमित्याक्षिपति । **नन्विति** ॥ ५३३ ॥

**मतं विद्यारसाकृष्टो विद्यां भूयोऽपि चेन्नृपः ॥**
**शुश्रूषति तदर्थं च सहस्रं मुनये ददौ ॥ ५३४ ॥**

सर्वस्वदानप्राप्तावपि सहस्रदाने हेतुमेकदेशी शङ्कते । **मतमिति** ॥ ५३४ ॥

**शुश्रूषालिङ्गमेतत्स्यान्न त्वियं गुरुदक्षिणा ॥ ५३५ ॥**
**सर्वस्वं चेदहं दद्यामिहैव च तदा मुनेः ॥**
**निवृत्तकामं मां मत्वा विद्यां भूयो न वक्ष्यति ॥ ५३६ ॥**

यदि श्रुतामेव विद्यां पुनः श्लोकैः श्रोतुमिच्छति तदा किमर्थमल्पीयसी दक्षिणा क्रियते प्रभूता हि सा गुरुं प्रीणयन्ती स्वीयां शुश्रूषां फलयति तत्राऽऽह । **शुश्रूषेति** । कथमस्य तल्लिङ्गत्वं तदाह । **सर्वस्वमिति** । इहेति श्लोकोपन्यासात्प्रागवस्थायामित्यर्थः ॥ ५३५ ॥ ५३६ ॥

**इत्येतस्माद्भयाद्राजा श्लोकशुश्रूषयेरितः ॥**
**प्रादात्सहस्रमेवास्मै शुश्रूषालिङ्गवित्तये ॥ ५३७ ॥**
**इति चेन्नैतदेवं स्याच्छ्रुतेः प्रामाण्यकारणात् ॥**
**श्रुतौ न युक्ता व्याजोक्तिरप्रमाणनरोक्तिवत् ॥ ५३८ ॥**

स्वयूथ्योक्तिं निगमयति । **इत्येतस्मादिति** । तन्मतं दूषयति । **नैतदिति** । सहस्रदानकरणे राज्ञश्चेदेवमभिप्रायस्तदा प्रमाणभूतश्रुतेरप्रामाण्यप्रसक्तिरित्यर्थः । तामेव प्रकटयति । **श्रुताविति** । अनाप्तोक्तौ हृदयेऽन्यन्निधाय वाचाऽन्यन्निष्पादनात्मकं व्याजोत्तरं युक्तं श्रुतौ त्वपौरुषेय्यामपास्ताशेषदोषाशङ्कायां न व्याजोक्तिर्युक्ता स्वारसिकतदीयप्रामाण्यभङ्गप्रसङ्गादित्यर्थः ॥ ५३७ ॥ ५३८ ॥

**संभवाच्चार्थशेषस्य सर्वसंन्यासरूपिणः ॥**
**प्राग्यथोक्तोत्म[१]विज्ञानसाधनस्येह चाश्रवात् ॥ ५३९ ॥**

एकीयपरिहारायोगे हेत्वन्तरमाह । **संभवाच्चेति** । यद्यपि मोक्षार्थं सम्यग्ज्ञानमुक्तं तथाऽपि तच्छेषस्य संन्यासस्य वक्तव्यस्य संभवान्नायं समाधिरित्यर्थः । तस्यापि पूर्वमसकृदुक्तेस्तदीयशुश्रूषाधीनसहस्रदानमनुचितमित्याशङ्क्याऽऽह । **प्रागिति** । इह सहस्रदानकरणे शमादेर्ज्ञानसाधनत्वेन प्रागनुक्तेस्तेन सह भूयोऽपि संन्यासस्य वाच्यत्वयोगात्तदपेक्षया सहस्रदानं न त्वदुक्तान्निमित्तादित्यर्थः ॥ ५३९ ॥

---

१ घ. तु न्याय्यमि॰ । २ ग. ॰क्तार्थवि॰ ।

**यत एवमतोऽयुक्ता पुनरुक्तार्थकल्पना ॥**
**गतौ सत्यामनृज्वीयं नापि विद्यास्तुतिर्मता ॥ ५४० ॥**

वाच्यशेषसिद्धौ फलितमाह । **यत इति** । उक्तन्यायेनापुनरुक्तार्थसंभवाद्विद्यां श्रुतामेव श्लोकैः श्रोतुं सहस्रदानमित्येषा पुनरुक्तार्थकल्पना न कल्पतेऽगतिका हीयं गतिर्यत्पुनरुक्तार्थकल्पनं सा चायुक्ता सत्यां गतावित्यर्थः । ननु संन्यासादि विद्यास्तुत्यर्थमुच्यते महाभागा हीयं यत्तदर्थी दुष्करमपि करोत्यतो नार्थशेषसिद्धिरित्याशङ्क्याऽऽह । **नापीति** । अस्यार्थः । न तावत्संन्यासो विद्यास्तुतिर्विदित्वा व्युत्थायेति समानकर्तृकत्वनिर्देशात् । **उक्तं** चैतत्पञ्चमे नापि शमादि[2] विद्यास्तुतिस्तत्रापि विधेर्वक्ष्यमाणत्वादिति ॥ ५४० ॥

**ननु यद्यर्थशेषोऽस्ति कस्माद्ब्रूते न पूर्ववत् ॥**
**विमोक्षायैव मे ब्रूहीत्यदोषोऽयं कुतो यतः ॥ ५४१ ॥**

अर्थशेषशुश्रूषया सहस्रदानमित्युक्तमाक्षिपति । **नन्विति** । अत ऊर्ध्वमित्यादिप्रश्नाकरणस्यादोषत्वं प्रतिजानीते । **अदोषोऽयमिति** । तत्र हेतुं पृच्छति । **कुत इति** । आत्मज्ञानवदिति भाष्येण हेतुरुच्यत इत्याह । **यत इति** ॥ ५४१ ॥

**विमोक्षायेह नैवालमन्यदात्मावबोधतः ॥**
**मुक्तस्य च मुमुक्षोश्च सर्वत्यागव्यपेक्षतः ॥ ५४२ ॥**

तमेव स्फुटयति । **विमोक्षायेति** । आलोच्यमाने शास्त्रे ज्ञानादन्यन्न साक्षान्मोक्षाय क्षममिष्यते वक्ष्यमाणसंन्यासादेस्तद्द्वारा साधनत्वादिति विवक्षन्विमोक्षायेति नापृच्छदित्यर्थः । संन्यासस्य ज्ञानवन्मोक्षाहेतुत्वे हेत्वन्तरमाह । **मुक्तस्येति** । मुक्तेन मुमुक्षुणा च संन्यासोऽपेक्ष्यते तस्य मुक्तिसाधनत्वे न स मुक्तेन मुमुक्षुणेवापेक्ष्येत साध्याभावादित्यर्थः ॥ ५४२ ॥

**स्वरूपसाधनत्वाभ्यां त्यागस्यैवान्तरङ्गतः ॥**
**नापूर्ववद्विधेयत्वं न च त्यागाद्विमुक्तता ॥ ५४३ ॥**

ननु तेऽपि मुक्तस्य तदपेक्षाऽयुक्ता कृतकृत्यत्वान्मुमुक्षुरेवाभीष्टहेतुशेषतया तमपेक्षेत तत्राऽऽह । **स्वरूपेति** । मुक्तेन स्वरूपत्वेन संन्यासोऽपेक्षितो निःशेषक्लेशोपशमात्मकं हि तस्य स्वरूपं मुमुक्षुणा तु धीहेतुत्वेन सोऽपेक्षितव्य उपरतो हि पश्यति तथाच ज्ञानबलादर्थप्राप्तसंन्यासस्य फलत्वाद्वैधस्य च ज्ञानसाधनत्वादन्तरङ्गतया नासावपलापमर्हतीत्यर्थः । विरक्तेन कार्यः संन्यास इति विविदिषासंन्यासो विधीयते चेदविशेषादितरोऽपि विधेयस्तन्न फलरूपसंन्याससिद्धिरित्याशङ्क्याऽऽह । **नेति** । अपूर्वसाधनाग्निहोत्रादिवन्न विद्वत्संन्यासस्य विधेयत्वं स्वरूपत्वेनासाध्यत्वादित्यर्थः । तथाऽपि

---

१ ख. कल्प्यते । २ घ. दिर्विद्या ।

विधेयो विविदिषासंन्यासो ज्ञानवन्मोक्षहेतुरस्तु **त्यागेनैके** अमृतत्वमानशुरिति श्रुतेरित्या- शङ्क्याऽऽह । **न चेति** । मार्गान्तरनिषेधकश्रुतिस्मृतिविरोधादुक्तश्रुतिर्धीद्वारा संन्यासस्य मुक्तिहेतुत्वे पर्यवसितेति भावः ॥ ५४३ ॥

**प्रागात्मज्ञानसंभूतेः संन्यासो ज्ञानसाधनम् ॥**
**उत्पन्नात्मधियः पश्चाज्ज्ञानमेव हि तत्तथा ॥ ५४४ ॥**

विविदिषासंन्यासो धीहेतुर्विद्वत्संन्यासस्तु फलमित्युक्तमुपसंहरति। **प्रागिति** । ज्ञानमेवेति नित्यमुक्तब्रह्मोक्तिः । ब्रह्मणो निर्व्यापारत्वप्रसिद्ध्यर्थो हिशब्दः । सर्वकर्मत्यागात्मकं पारिव्राज्यं तदित्युच्यते । विविदिषासंन्यासस्य धीहेतुत्ववदितरस्य फलत्वं तथाशब्दार्थः ॥ ५४४ ॥

**उक्तब्रह्मविदो मोक्ष इत्यर्थे ब्राह्मणोदिते ॥**
**श्लोका अपि भवन्त्यत्र ब्राह्मणोक्तविनिश्चितौ ॥ ५४५ ॥**

सर्वस्वदानप्राप्तावपि राज्ञः सहस्रदाने विमोक्षायेतिप्रश्नाकरणे चाभिप्रायमुक्त्वा तदित्यादि व्याकरोति । **उक्तेति** । अथाकामयमान इत्यादिब्राह्मणेन यदेत्यादिमन्त्रेण च ज्ञानादेव मुक्तिरिति संक्षिप्तोऽर्थो विव्रियते श्लोकैरिति यावत् ॥ ५४५ ॥

**अणुस्थूलादिनिःशेषविकल्पातिक्रमादयम् ॥**
**अणुरात्मैकयाथात्म्यज्ञानं पन्थाः पुरातनः ॥ ५४६ ॥**

मन्त्राणां तात्पर्यमुक्त्वा प्रतीकमादाय व्याचष्टे । **अणुरिति** । आद्यमणुपदं मन्त्रोक्त्यर्थं द्वितीयं व्याख्यातेऽर्थे व्याख्येयोपादानमिति भेदः । यद्वा स्थूलाण्वाद्यशेषविशेषात्ययादयमणुः सूक्ष्म इति यावत् । पथिशब्दार्थमाह । **आत्मेति** ॥ ५४६ ॥

**अनन्तात्मैकमेयत्वाद्विततश्चातिविस्तृतः ॥**
**अनुत्पन्नागमोत्थत्वात्पुराणश्चेति शब्द्यते ॥ ५४७ ॥**

विततशब्दार्थमाह। **अनन्तेति**। तथाऽपि कथं पुरातन इति पुराणशब्दो व्याख्यातस्तत्राऽऽह । **अनुत्पन्नेति** ॥ ५४७ ॥

**तरन्त्यनेन विस्पष्टं संसारानर्थसागरम् ॥**
**यतोऽतो वितरः पन्थाः प्रत्यग्बोधोऽभिधीयते ॥ ५४८ ॥**

वितर इति माध्यंदिनपाठस्यार्थमाह । **तरन्तीति** ॥ ५४८ ॥

**मां मुक्त्वाऽसंभवो यस्माद्ब्रह्मार्थस्यात उच्यते ॥**
**मां स्पृष्टो मामनुप्राप्त एष पन्था यथोदितः ॥ ५४९ ॥**

मां स्पृष्ट इत्यश्लिष्टं ब्रह्मज्ञानं हि ब्रह्म स्पृशति न प्रत्यञ्चमित्याशङ्क्याऽऽह । **मामिति** । असंभव इति च्छेदः ॥ ५४९ ॥

---

१ ग. भणगते ।

**शास्त्राचार्योक्तितः पश्चादनुवित्तो मयैव च ॥**
**ज्ञेयाज्ज्ञाता परो नास्ति प्रत्यग्ज्ञाने यतस्ततः ॥ ५५० ॥**

तथाऽपि कथमनुवित्तो मयैवेत्युच्यते न हि वित्तस्यैव वेदनमर्थवत्तत्राऽऽह । **शास्त्रेति** । कुतोऽवध्रियते ब्रह्मवेदनस्य ब्रह्मणाऽपि लब्धत्वादित्याशङ्क्याऽऽह । **ज्ञेयादिति** । ब्रह्म ज्ञेयं ब्रह्मविज्ज्ञाता तयोरभेदादवधारणमित्यर्थः ॥ ५५० ॥

**प्रागप्यवोचं बहुश इममर्थं यथोदितम् ॥**
**श्रुतितो न्यायतः स्पष्टं नाऽऽत्मनोऽन्योऽस्ति वेदिता ॥ ५५१ ॥**

ब्रह्मणः सकाशाद्वेदितुर्नाभेदो युक्तो द्रष्टृदृश्यभेदस्य सर्वजनीनत्वादित्याशङ्क्याऽऽह। **प्रागपीति** । श्रुतितो **नान्यो**ऽतोऽस्ति द्रष्टेत्यादेरिति यावत् । न्यायतः प्रतीचोऽन्यस्य घटवन्न द्रष्टृतेत्यादेरित्यर्थः । यथोदितमेवार्थमाह । **नेति** ॥ ५५१ ॥

**तेनानेन पथा धीराः प्रत्यग्ध्वान्तच्छिदा सदा ॥**
**ब्रह्मापियन्ति निर्द्वंद्वा आप्तमेव तमोह्नुतेः ॥ ५५२ ॥**

तेनेत्यादेरर्थमाह । **तेनेति** । धीरा इत्यस्य विवक्षितोक्तिर्निर्द्वंद्वा इति प्रज्ञावन्तः सदा द्वंद्वातीता इत्यर्थः । ब्रह्माप्तेरागन्तुकत्वं परिहरति । **आप्तमेवेति** । तस्य कथमाप्तिस्तत्राऽऽह । **तम इति** ॥ ५५२ ॥

**आत्मैव ब्रह्म चाऽऽत्माऽपि ब्रह्मैव स्याद्यतः स्वतः ॥**
**तद्याथात्म्यापरिज्ञानात्तद्विपर्ययधीरियम् ॥ ५५३ ॥**

प्राप्तस्यैवाज्ञानध्वस्त्या न प्राप्तिर्ब्रह्मात्मनोर्भेददृष्टेरित्याशङ्क्याऽऽह । **आत्मैवेति** ॥ ५५३ ॥

**निःशेषमिथ्याविज्ञानहेत्वविद्याविनाशकृत् ॥**
**नान्योऽस्ति ब्रह्मसंबोधाच्छ्रुतिस्तेनेत्यतोऽवदत् ॥ ५५४ ॥**

ब्रह्मणोऽविद्यातज्जध्वंसात्प्राप्तस्यैव प्राप्तावपि तद्ध्वंसि ज्ञानमेवेत्यत्र किं गमकमित्याशङ्क्याऽऽह । **निःशेषेति** ॥ ५५४ ॥

**स्वर्गोऽयमेव प्रागुक्तः स्वर्गकामवचस्यपि ॥**
**कर्मभिस्तदसिद्धेर्हि वेदान्तज्ञानसिद्धितः ॥ ५५५ ॥**

स्वर्गलोकमित्यत्र स्वर्गशब्दार्थमाह । **स्वर्ग इति** । अयमेवात्र स्वर्गो विवक्षित एषोऽस्य परम आनन्द इत्यादौ यः परमानन्दोऽभिहित इति योजना । स्वर्गकामो यजेतेत्यत्र भोगभूमिविशेषः स्वर्गो गृहीतः स एवात्रापि ग्राह्यो लोकशब्दादित्याशङ्क्याऽऽह । **स्वर्गोति** । तत्राप्युपाध्यवच्छिन्नः परमानन्द एव स्वर्गशब्देनोच्यते तन्नासौ दृष्टान्तो दार्ष्टान्तिकादविशेषादित्यर्थः । तर्हि तत्र स्वर्गस्य कर्मसाध्यत्वान्मोक्षस्यापि

तच्छब्दस्य तदापत्तिरित्याशङ्क्याऽऽह । **कर्मभिरिति** । सोपाधिकस्वर्गस्य कर्मसाध्यत्वेऽपि निरुपाधिकस्य ज्ञानैकलभ्यत्वात्तदसाध्यत्वात्तेनेति श्रुतिरविरुद्धेत्यर्थः ॥ ९९९ ॥

**परमानन्द एवातः स्वर्गशब्देन भण्यते ॥**
**मोक्षप्रकरणान्नित्यः क्रियोत्थोऽतो न गृह्यते ॥ ९९६ ॥**

अयमपि सोपाधिकस्वर्गो लोकत्वादितरवदित्याशङ्क्याऽऽह । **परमानन्द इति** । तत्र लोकशब्दसंभावनार्थोऽतःशब्दः । निरतिशयप्रकाशतया परस्मिन्नेवाऽऽनन्दे लोकशब्दसंभवात्क्रियाफलस्यात्राग्रहात्प्रकरणविरोधादनुमानमनवकाशमित्यर्थः॥९९६॥

**इत उक्तात्मसंबोधमोहोच्छित्तेरनन्तरम् ॥**
**स्वत एव यतो मुक्ता मुच्यन्तेऽतस्तमोह्नुतेः ॥ ९९७ ॥**

इत इत्यादेरर्थमाह । **इत इति** ॥ ९९७ ॥

**देहपातव्यपेक्षा स्याद्यत्र कारणसंगतिः ॥**
**सर्वकारणविध्वस्तौ नान्यद्बोधादपेक्ष्यते ॥ ९९८ ॥**

न मुक्ता मुच्यन्ते देहपातोत्तरभावित्वान्मुक्तेरिति चेन्नेत्याह । **देहेति** । यत्र सूत्रादिभावे चोच्यमाने कारणेनाज्ञानेन संबन्धो नापगतस्तत्र देहपातोऽपेक्ष्यत इह त्वज्ञानध्वंसे मोक्षे ज्ञानान्नान्यदपेक्ष्यमस्ति ज्ञानाज्ञानयोरेव विरोधप्रसिद्धेरित्यर्थः ॥ ९९८ ॥

**मुक्तौ तमोतिरेकेण नान्तरायोऽन्य इष्यते ॥**
**यतोऽतोऽज्ञानविध्वस्तौ मुक्तः सन्ना विमुच्यते ॥ ९९९ ॥**

ब्रह्मभावे मोक्षे व्यवधिभूततमोध्वस्तौ ज्ञानादर्थान्तरस्यानपेक्षत्वेऽपि व्यवधानान्तरध्वस्तौ देहपातापेक्षेत्याशङ्क्याऽऽह । **मुक्ताविति** ॥ ९९९ ॥

**ब्रह्मैव सन्निति तथा प्रागपीदं श्रुतीरितम् ॥**
**देहपातव्यपेक्षाऽतो न स्यादूर्ध्वश्रुतेरिह ॥ ९६० ॥**

ऊर्ध्वश्रुतिवशात्तदपेक्षा मोक्षस्येत्याशङ्क्याऽऽह । **ब्रह्मेति** । प्रकृतमन्त्रवदिति तथाशब्दार्थः । मुक्तस्यैव मुक्तत्वमिदमा परामृष्टम् । प्राचीनश्रुतिवशादित्यतःशब्दार्थः । अनन्यथासिद्धवाक्यान्तरविरोधेऽन्यथासिद्धा श्रुतिरनादेयेत्यर्थः । इहेति मोक्षोक्तिः ॥ ९६० ॥

**मोक्षमार्गे यथोक्तेऽस्मिन्नविद्योपप्लुताशयाः ॥**
**दर्शनानि विचित्राणि कल्पयन्ति यथारुचि ॥ ९६१ ॥**

तस्मिन्नित्यादिपूर्वपक्षस्य तात्पर्यमाह । **मोक्षेति** । विचित्रानेकदृष्टिकल्पनाहेतुमाह । **अविद्येति** । तत्रैव हेत्वन्तरमाह । **यथेति** ॥ ९६१ ॥

**शुक्लं ब्रह्मातिसंशुद्धमिति केचिद्विनिश्चिताः ॥**
**शरदि व्योमवन्नीलमित्याहुरपरे जनाः ॥ ९६२ ॥**

पिङ्गलं तत्परं ब्रह्म वह्निज्वालेव शाश्वतम् ॥
वैदूर्यवच्च हरितं केचिदाहुर्विपश्चितः ॥ ५६३ ॥
अपरे लोहितं प्राहुर्जपाकुसुमसंनिभम् ॥
यथा रूपे तथा ज्ञेया शब्दादिष्वपि कल्पना ॥ ५६४ ॥

कल्प्यमानदर्शनान्येव दर्शयति । **शुक्लमित्यादिना** । गन्तव्यब्राह्मणः शौक्ल्यादियोगात्तन्मार्गोऽपि नाडीविशेषस्तथेत्यर्थः । पिङ्गलमित्यनेन लोहितमित्यस्य पौनरुक्त्यमिति चेन्न ताद्धि वह्निज्वालातुल्यमिदं तु जपाकुसुमसममिति विशेषादित्याह । **जपेति** । चकारार्थमाह । **यथेति** । यथाऽनेकविधे रूपे तदात्मके ब्रह्मणि तन्मार्गोऽपि यथा कल्प्यते तथा शब्दस्पर्शादिष्वपि ज्ञेयं नानाविधेषु तेषु तदात्मके ब्रह्मणि तन्मार्गत्वेन नानानाडीकल्पनमित्यर्थः ॥ ५६२ ॥ ५६३ ॥ ५६४ ॥

अविद्यापटसंवीतचेतसामागमादृते ॥
कामापहतबुद्धीनामेवमाद्या विकल्पनाः ॥ ५६५ ॥

कल्पनानामनादेयत्वं सूचयति । **अविद्येति** । अज्ञानिनां कामिनां स्वेच्छानुसारित्वादप्रामाणिककल्पनानां नेयत्तेति वक्तुमादिपदम् ॥ ५६५ ॥

एकमेवैकरूपं सद्वस्त्वज्ञातं निरञ्जनम् ॥
जात्यन्धगजदृष्ट्येव कोटिशः कल्प्यते मृषा ॥ ५६६ ॥

यथोक्तकल्पनानां वस्त्वनुसारित्वादविद्यानपेक्षत्वमाशङ्क्याऽऽह । **एकमिति** । दाडिमादिवदेकस्यैवानेकरसत्वं निरसितुं विशिनष्टि । **एकरूपमिति** । तस्यैव मेयत्वार्थमाह । **अज्ञातमिति** । वस्तुतस्तु नाज्ञानादियोगोऽस्तीत्याह । **निरञ्जनमिति** । वस्त्वनुसारित्वाभावे कल्पनानामविद्यात्वं फलतीत्याह । **जात्यन्धेति** ॥ ५६६ ॥

अस्थूलाशब्दनेतीति सर्वमात्रादिनिह्नुतेः ॥
कुतोऽकारणकार्येऽस्मिञ्शुक्लादेः संभवः परे ॥ ५६७ ॥

जात्यन्धानां गजदृष्टिर्मानविरुद्धत्वान्मिथ्या शुक्लं ब्रह्मेत्यादिकल्पना तु श्रौतत्वान्न तथेत्याशङ्क्याऽऽह । **अस्थूलेति** । तत्परश्रुतिविरोधेऽन्यपरा श्रुतिरवहेयेति भावः ॥ ५६७ ॥

यस्तु वेदोदितोपायक्षपिताशेषकल्मषः ॥
ब्रह्मणैवानुवित्तोऽयं तेन पन्था गुरूक्तितः ॥ ५६८ ॥

कल्पितमोक्षमार्गाणां त्याज्यत्वं प्रदर्श्यैष पन्था इत्यादिसिद्धान्ते प्रथमपादस्यार्थमाह । **यस्त्विति** । वैदिकयज्ञादिनिरस्तसमस्तपाप्माऽयं शुद्धधीरधिकारी तेन मुमुक्षुणा गुरूपदेशानन्तरमखण्डाद्वयप्रत्यग्ब्रह्मात्मना मोक्षहेतुर्ज्ञानमार्गो लब्ध इत्यर्थः । ब्रह्मशब्देन ब्राह्मणो गृह्यते ॥ ५६८ ॥

अव्यावृत्ताननुगतब्रह्मरूपातिरेकतः ॥
न रूपमात्मनोऽस्त्यन्यच्छ्रुतिन्यायानुभूतितः ॥ ५६९ ॥

तेन च परस्माद्ब्रह्मणो रूपान्तरेणैव ज्ञानमार्ग उपलब्ध इति चेन्नेत्याह । **अव्यावृत्तेति** । तत्त्वमसीत्याद्या श्रुतिरात्मनो ब्रह्मणोऽन्यत्वे तत्त्वानुपपत्तिर्न्यायोऽनुभूतिर्विद्वदनुभवः ॥ ५६९ ॥

यतोऽतो ब्रह्मणैवायं पन्था ज्ञातः प्रमाणतः ॥ ५७० ॥
ब्रह्मणेति च ज्ञेया इत्थंभूतार्थलक्षणा ॥
तृतीयेयं न कर्त्रादौ प्रतीचि तदसंभवात् ॥ ५७१ ॥

आत्मनो ब्रह्मातिरिक्तरूपाभावे फलितमाह । **यत इति** । कर्तृकरणादिषु कस्मिन्नर्थे तृतीयेत्यपेक्षायामाह । **ब्रह्मणेति** । संधिस्तु सन्नपि न विवक्षितो विवक्षितस्य तस्य प्रवृत्तेः । हस्तेन शरेण रामेणेतिवत्कर्त्रादौ किं न स्यादत आह । **नेति** । तत्र हेतुः । **प्रतीचीति** ॥ ५७० ॥ ५७१ ॥

क्रियाकारकभेदोऽयं प्रत्यगज्ञानहेतुजः ॥
यतोऽतो न तृतीयेयं कर्त्रादाविह युज्यते ॥ ५७२ ॥

असंभवं साधयति । **क्रियेति** । आत्मनि कर्तृत्वादिभावस्य वस्तुतोऽयोगोऽतःशब्दार्थः ॥ ५७२ ॥

ब्रह्मात्मनोरभिन्नत्वं वस्तुतो यद्यपीक्ष्यते ॥
अनन्तानर्थसंप्राप्तिस्तथाऽपि तदबोधतः ॥ ५७३ ॥

नन्वात्मन्यज्ञानादपि न कर्तृत्वादिसंभवस्तस्यासंसारिब्रह्माभिन्नत्वात्तथाच प्रतीचि न स्वाज्ञानात्क्रियाकारकभेदो नेत्याह । **ब्रह्मात्मनोरिति** ॥ ५७३ ॥

तथाच यदि नाम स्याद्यथोक्तज्ञानपूर्वकम् ॥
पराक्सर्वार्थविज्ञानं वस्तुवृत्तानुरोधतः ॥ ५७४ ॥

ननु चिदात्मस्फूर्तिपूर्वकं सर्वस्य जडस्य स्फुरणमस्ति च तस्य सदा स्वरूपज्ञानेन स्फूर्तिस्तत्कथं तदबोधादनर्थाप्तिरत आह । **तथाचेति** । ब्रह्मात्मनोरभेदे सतीति यावत् । वस्तुवृत्तानुरोधतोऽखण्डस्फुरत्स्वरूपस्याऽऽत्मनः सर्वप्रकाशकत्वस्वाभाव्यादनात्मनश्च जडत्वादजडात्मापेक्षां विना स्फूर्त्ययोगादित्यर्थः ॥ ५७४ ॥

तथाऽप्यब्रह्मवित्तेन[1] न कैवल्यं प्रयैति तत् ॥
तेनैति ब्रह्मवित्तस्मान्नान्यः पन्था इति श्रुतेः ॥ ५७५ ॥

स्वरूपस्फूर्तिरात्मनः सदेष्टा चेत्तर्हि ज्ञानाधीनमुक्तेरनायाससिद्धत्वान्नानर्थसंगतिस्तत्राऽऽह । **तथाऽपीति** । वाक्योत्थाखण्डाद्वयब्रह्माकारस्वरूपसाक्षात्कारं विना

१ क. ख. 'वित्समा'

ज्ञानमात्रान्न मुक्तिरित्यर्थः । एष इत्यादि व्याख्याय तेनेत्यादि व्याचष्टे । तेनेति । प्रकृतज्ञानमार्गेण ब्रह्मविन्मोक्षं गच्छति तदितरैस्तन्मार्गो नेति श्रुतिसिद्धत्वात्तस्मान्नाब्रह्मविन्मुक्तिमागित्यर्थः ॥ ५७५ ॥

ब्रह्मवित्त्वे च को हेतुरित्याशङ्क्याऽऽह नः श्रुतिः ॥
पुण्यकृत्तैजसश्चेति भवेद्ब्रह्मविदुत्तमः ॥ ५७६ ॥

पुण्यकृदित्यादिपदद्वयमाकाङ्क्षापूर्वकमादत्ते । ब्रह्मेति ॥ ५७६ ॥

पुण्यकृज्जायते यस्माच्छुद्धधीरिह मानवः ॥
शुद्धसत्त्वोऽथ तद्ब्रह्म साक्षादात्मनि पश्यति ॥ ५७७ ॥

द्वयोर्ब्रह्मवित्त्वे हेतुत्वमुक्त्वाऽऽद्यस्य तद्धेतुत्वं साधयति । पुण्येति । इहेत्यधिकृतनिर्धारणार्था सप्तमी । तस्मात्पुण्यकृत्त्वं ब्रह्मवित्त्वे हेतुरित्यथशब्दार्थः ॥ ५७७ ॥

तेजःशब्देन संशुद्धं सत्त्वमेवाभिधीयते ॥
तस्मिन्भवस्तैजसः स्यात्प्रत्यक्प्रवणधीर्नरः ॥ ५७८ ॥

तैजसत्वमपि हेतुस्तत्रेति वक्तुं[3] तैजसशब्दार्थमाह । तेजःशब्देनेति । शुद्धधीः पुमानात्मप्रवणोऽत्र तैजसः ॥ ५७८ ॥

ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ॥
यथाऽऽदर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ॥ ५७९ ॥

तत्र ज्ञानोत्पत्तिरित्यत्र मानमाह । ज्ञानमिति । किमिति ज्ञानं बुद्धिशुद्धिमपेक्षते तत्राऽऽह । यथेति ॥ ५७९ ॥

गार्भैर्होमैर्जातकर्मचूडामौञ्जीनिबन्धनैः ॥
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये ॥ ५८० ॥

पापक्षये शुद्धधियस्तु ज्ञानोत्पत्तिस्तत्क्षयस्तु कथमित्युक्ते वाक्यान्तरमाह । गार्भैरिति । तत्रैव भगवतः संमतिमाह । योगिन इति ॥ ५८० ॥

योगी वा तैजसोऽत्र स्यात्प्रत्यग्दृष्टौ समर्थतः ॥
विषयाकृष्टधीर्यस्मान्न क्षमः प्रत्यगीक्षणे ॥ ५८१ ॥

पुण्यकृत्त्वेनैव शुद्धधीत्वसिद्धेस्तैजसत्वमकिंचित्करमित्याशङ्क्यार्थान्तरमाह । योगी वेति । समाहितधियो योगिनस्तैजसत्वे हेतुमाह । प्रत्यगिति । कथमात्मदृष्टौ सामर्थ्यमेकाग्रबुद्धेरिष्यते सर्वो हि स्वात्मानमहमिति द्रष्टुमीष्टे तत्राऽऽह । विषयेति । प्रत्यग्याथात्म्यधीरसमाहितधियो न सिध्यति कश्चिद्धीरः प्रत्यगात्मानमैक्षदिति श्रुतेस्तस्माद्धीसमाधानं ज्ञाने हेतुर्निदिध्यासनविधानादित्यर्थः ॥ ५८१ ॥

---

१ घ. 'रस्य तन्मा' । २ घ. 'भागीत्य' । ३ क. ख. 'क्तुं तेजःश' ।

**सर्वभूतस्थमात्मानं सर्वभूतानि चाऽऽत्मनि ॥**
**ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ ५८२ ॥**

एकाग्रधियस्तैजसस्य ज्ञानोत्पत्तिरित्यत्र भगवदनुमतिमाह । **सर्वेति** ॥ ५८२ ॥

**इत्येवं स्मृतयः सन्ति श्रुतयश्च सहस्रशः ॥**
**कर्मभिः शुद्धसत्त्वस्य सम्यग्ज्ञानस्य जन्मनि ॥ ५८३ ॥**

शुद्धबुद्धेर्ज्ञानमित्यत्रोक्ताः स्मृतीरुपसंहरन्नत्रैव श्रुतीनामपि सत्त्वं सूचयति । **इत्येवमिति** । तासां संक्षिप्तमर्थं कथयति । **कर्मभिरिति** ॥ ५८३ ॥

**यस्मिन्विशुद्ध इत्येवं सत्त्वशुद्धौ ध्रुवा स्मृतिः ॥**
**तमेतमिति च स्पष्टं श्रौतानि च वचांसि नः ॥ ५८४ ॥**

श्रुतयः सन्तीत्युक्तं ताः संप्रत्युदाहरति । **यस्मिन्निति** । यच्छब्देन चित्तमुच्यते । एषोऽणुरात्मा चेतसेति प्रकृतत्वाद्धि भवत्येष आत्मेति शेषः । तत्रैव श्रुत्यन्तरमाह । **सत्त्वेति** । स्मृतिस्तत्त्वज्ञानम् । विविदिषावाक्यं च वेदानुवचनादीनां शुद्ध्यादिद्वारा ज्ञानोत्पत्तौ विनियोजकमित्याह । **तमिति** । उक्तश्रुतीरुपसंहरति । **श्रौतानीति** । येन केनचन यजेतेत्यादिवाक्यसमुच्चयार्थश्चकारः ॥ ५८४ ॥

**प्रसिद्धमहिमानौ वा पुण्यकृद्योगिनाविह ॥**
**ब्रह्मवित्स्तूयते ताभ्यां ब्रह्मविद्याप्रवृत्तये ॥ ५८५ ॥**

पुण्यकृत्त्वादेर्ब्रह्मवित्त्वे हेतुत्वमुक्त्वा पक्षान्तरमाह । **प्रसिद्धेति** । इहेति जन्तुमात्रोक्तिः । स्तुतिफलमाह । **ब्रह्मेति** । यो ब्रह्मवित्तेन गच्छति स एव पुण्यकृत्तैजसश्चेति ब्रह्मविदस्ताभ्यां स्तुतिः सा च मुमुक्षूणां ब्रह्मविद्योद्देशेन श्रवणादिप्रवृत्तावुपकरोतीत्यर्थः ॥ ५८५ ॥

**इह केचिन्महात्मानः प्रत्यङ्मोहच्छिदा सह ॥**
**पुण्यकृत्तैजसत्वाभ्यां ज्ञानेनाऽऽहुः समुच्चयम् ॥ ५८६ ॥**

तेनेत्यादेः स्वाभिप्रेतां व्याख्यामुक्त्वा व्याख्यान्तरमनुभाषते । **इहेति** । ज्ञानेन प्रत्यङ्मोहच्छिदेति संबन्धः ॥ ५८६ ॥

**पुण्यकृत्पुण्यकर्मा यो योगी तैजस उच्यते ॥ ५८७ ॥**
**ब्रह्मज्ञानैकनिष्ठः सन्पुण्यकृत्तैजसश्च सन् ॥**
**शास्त्रोपदिष्टमैकात्म्यं शक्तो योगेन वीक्षितुम् ॥ ५८८ ॥**

समुच्चयप्रकारं दर्शयितुं पदयोरर्थमाह । **पुण्यकृदिति** । योगी सूत्राद्युपासको योगशास्त्रसिद्धो वा । संप्रति समुच्चयप्रकारमाह । **ब्रह्मेति** । तत्फलमाह । **शास्त्रेति** । योगः साधनानां मेलनम् ॥ ५८७ ॥ ५८८ ॥

**परस्परं व्यपाश्रित्य यथोक्तं साधनत्रयम् ॥**
**एकार्थसिद्धयेऽलं स्यान्नान्यथेदं त्रिदण्डवत् ॥ ५८९ ॥**

ब्रह्मवित्त्वादीनामपरोक्षज्ञानेन समुच्चयेऽपि मोक्षे न सोऽस्ति प्रत्येकं सामर्थ्यादित्याशङ्क्याऽऽह । **परस्परमिति** । न हि त्रयो दण्डा मिथोऽसंबद्धाः कुड्यादि निर्मातुमर्हन्ति तथेदमपि साधनत्रयमसमुच्चितं न मुक्तये पर्याप्तं विद्यातपसोः संयुक्तयोर्भेषजत्वस्मरणादित्यर्थः ॥ ५८९ ॥

**समुच्चयोऽयमस्माभिर्यथाऽभाणि तथा यदि ॥**
**व्याख्यायते न दोषः स्यात्तत्र मानस्य संभवात् ॥ ५९० ॥**

क्रमसमुच्चयः समसमुच्चयो वा साध्यते तत्राऽऽद्यमङ्गी कुरुते । **समुच्चय इति** ॥ ५९० ॥

**इतोऽन्यथा चेद्व्याख्यानं क्रियते बुद्धिलाघवात् ॥**
**दुर्निवारेह साऽऽप्नोति योक्ता दोषपरंपरा ॥ ५९१ ॥**

द्वितीयं प्रत्याह । **इतोऽन्यथेति** । समुच्चयव्याख्याने बुद्धिदौर्बल्यं हेतुरित्याह । **बुद्धीति** । उक्ता विज्ञानकर्मणोस्त्रेधा यद्युच्येतेत्यादाविति शेषः ॥ ५९१ ॥

**अपुण्यपुण्योपरमे यं पुनर्भवनिर्भयाः ॥**
**शान्ताः संन्यासिनो यान्ति तस्मै मोक्षात्मने नमः ॥ ५९२ ॥**

तत्र मानस्य संभवादित्युक्तं व्यञ्जयन्कर्मणां मोक्षे साक्षाज्ज्ञानेनासमुच्चये प्रमाणमाह । **अपुण्येति** ॥ ५९२ ॥

**त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ॥**
**उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज ॥ ५९३ ॥**

ज्ञानस्य कर्मासमुच्चयेऽपि विवेकज्ञानेन सोऽस्तीत्याशङ्क्याऽऽह । **त्यजेति** ॥ ५९३ ॥

**निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् ॥**
**अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः ॥ ५९४ ॥**

ब्रह्मविदोऽपि स्तुत्यादिदृष्टेस्तेन समुच्चयो ज्ञानस्येत्याशङ्क्याऽऽह । **निराशिषमिति** । काम्याननुष्ठानमनारम्भः । अक्षीणत्वं निषिद्धानाचरणम् । क्षीणकर्मत्वं नित्यादिकर्मराहित्यम् ॥ ५९४ ॥

**नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च ॥**
**शिलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः ॥५९५॥**

ज्ञानकर्मासमुच्चये वाक्यान्तरमाह । **नेत्यादिना** । एकता निरपेक्षता सर्वत्रोदासी-

---

१ घ. ॰योर्महाभेष॰ । २ घ. करोति ।

नतेति यावत् । समता मित्रोदासीनशत्रुबुद्धिव्यतिरेकेण सर्वत्र स्वस्मिन्निव दृष्टिः । दण्डनिधानमहिंसापरत्वम् ॥ ५९५ ॥

**अर्थस्य मूलं निकृतिः क्षमा च कामस्य रूपं च वयो वपुश्च ॥**
**धर्मस्य यागादि दया दमश्च मोक्षस्य सर्वोपरमः क्रियाभ्यः ॥ ५९६ ॥**

चतुर्विधे पुमर्थे साधनभेदोपदेशाच्च न समुच्चय इत्याह । **अर्थस्येति** । निकृतिर्वाणिज्यादिलक्षणा क्रिया शाठ्यं वा सत्यानृतमिथुनीकरणात्मा व्यवहार इति स्थितेः ॥ ५९६ ॥

**इत्येवं स्मृतिशास्त्राणि सर्वत्यागपुरःसरम् ॥**
**ज्ञानजन्माभिदधति तथा श्रुतिवचांसि च ॥ ५९७ ॥**

ननु क्रियाभ्यः सर्वथोपरमो मोक्षस्य न मूलं तज्ज्ञानस्य तथात्वोपगमादित्याशङ्क्य यथोक्तस्मृतीनां तात्पर्यमाह । **इत्येवमिति** । तासां श्रुतिमूलतया प्रामाण्यदार्ढ्यार्थमाह । **तथेति** । न कर्मणेत्यादीनीत्यर्थः ॥ ५९७ ॥

**ऐकात्म्यदर्शनादुक्ताद्यदन्यद्दर्शनान्तरम् ॥**
**अन्धं तम इति श्रुत्या तदिहापोद्यतेऽखिलम् ॥ ५९८ ॥**

केवलो ज्ञानमार्गो मुक्तिहेतुरित्युक्तम् । इदानीमन्धमित्यादिमन्त्रतात्पर्यमाह । **ऐकात्म्येति** । इहेति मुक्तेरुक्तिः ॥ ५९८ ॥

**तमोमोहादिभेदेन तमोऽनेकंस्वलक्षणम् ॥**
**यतोऽतोऽन्धं तम इति विशिनष्टि[2] श्रुतिस्तमः ॥ ५९९ ॥**

अन्धं तमोविशेषणं किमर्थमित्याशङ्क्याऽऽह । **तम इति** । आदिपदेन महामोहतामिस्रान्धतमसानां ग्रहणम् ॥ ५९९ ॥

**अन्धं मूढं तमो यान्ति[3] येऽविद्यां समुपासते ॥**
**विरक्ता अपि संसारान्नैकात्म्यं ये विदुर्नराः ॥ ६०० ॥**

मन्त्रस्य विशेषणस्य चाभिप्रायमुक्त्वा पूर्वार्धाक्षराणि व्याकरोति । **अन्धमिति** । अविरक्तानां कर्ममात्रशरणानामेषा निन्दा न विरक्तानां दहराद्युपासकानामित्याशङ्क्याऽऽह । **विरक्ता इति** । अविरक्ताः केवलकर्मिणस्तामसं देहं गृह्णन्ति विरक्ता दहरादिपरा राजसमिति भेदः ॥ ६०० ॥

**संभूतिवचसाऽपीयमविद्यैवाभिधीयते ॥**
**अविद्यातो हि संभूतिः सर्वस्य जगतो यतः ॥ ६०१ ॥**

अन्धं तमः प्रविशन्ति ये संभूतिमिति **माध्यंदिनास्तत्र** संभूतिं व्याचष्टे । **संभूतीति** । **काण्वश्रुतिस्थामविद्यामियमित्यनुकर्षति** । कथमविद्यायां संभूतिशब्दो न हि तत्र वृद्धास्तं

१ ख. °कस्य ल°। २ क. °ष्टि स्वयं तमः । ३ ख. ग. यन्ति ।

प्रयुङ्क्ते तत्राऽऽह । **अविद्यातो हीति** । तत्रान्वयादि प्रमाणयितुं हिशब्दः । यतः-शब्दस्तु पूर्वप्रतिज्ञया संबध्यते ॥ ६०१ ॥

**ततो भूयस्तमो यान्ति ये विद्यायां रता जनाः ॥**
**अणिमादावविद्योत्थे पराक्चित्ततया रताः ॥ ६०२ ॥**

उत्तरार्धं विभजते । **तत इति** । द्वितीयपादार्थं स्फुटयति । **अणिमादाविति** । आदिपदेनावशिष्टैश्वर्योक्तिः ॥ ६०२ ॥

**ग्राह्यग्राहकभेदेन या विद्यामात्रकारणा ॥**
**विद्येति सेह विज्ञेया नैकात्म्यप्रसमीक्षणम् ॥ ६०३ ॥**

नन्वत्र विद्याशब्देन परविद्योच्यते तदधिकारात्तत्कथं तस्यामासक्तावन्धं तमो निगच्छन्ति सा हि मुक्तिबीजं तत्राऽऽह । **ग्राह्येति** । भेददृष्टिनिविष्टास्तामसयोनयो भवन्तीत्यर्थः ॥ ६०३ ॥

**कर्मार्थद्योतिका वेह विद्याऽत्राप्यभिधीयते ॥**
**तस्यामभिरता ये स्युर्वेदान्तार्थानपेक्षिणः ॥ ६०४ ॥**
**विशन्त्यज्ञास्तु ते सन्तस्ततो भूयः परं तमः ॥**
**मिथ्याज्ञानाधिकत्वेन भूयस्त्वं तमसो भवेत् ॥ ६०५ ॥**

भेददृष्टिरविद्योत्थत्वात्तच्छब्दमर्हति न विद्याशब्दमित्याशङ्क्यार्थान्तरमाह । **कर्मेति** । विद्याशब्दार्थमुक्त्वा वाक्यार्थमाह । **तस्यामिति** । ननु तमो नामाज्ञानं तच्च ज्ञानाभाव-त्वान्न भूयो भवति न हि तस्मिन्भूयस्त्वाभूयस्त्वे परिमाणे संभवतस्तत्राऽऽह । **मिथ्येति** । अविद्यारतास्तावदीश्वरमाश्रयन्त्युपनिषदश्च तद्विषयत्वेन प्रामाण्यमनुमन्यन्ते तत्र तेषा-मविवेको भूयान्कर्मनिष्ठा मीमांसकास्त्वीश्वरं द्विषन्त्युपनिषदश्च विधिशेषतया कार्यार्थत्वाद-प्रामाण्यमाहुस्तेन तेषां मिथ्याज्ञानाधिक्यात्तद्धेत्वविवेकस्यापि प्रभूतत्वं न च ज्ञानाभावोऽ-ज्ञानं जगन्निदानत्वादित्यर्थः ॥ ६०४ ॥ ६०५ ॥

**यदि ते तत्तमो यान्ति को दोष इति चोदिते ॥**
**अनन्दा इति वाक्येन तद्दोषोऽथाभिधीयते ॥ ६०६ ॥**

अनन्दा नामेत्यादेस्तात्पर्यमाकाङ्क्षापूर्वकमाह । **यदीति** । दोषबुभुत्सायां तदुक्ति-र्युक्तेति वक्तुमथशब्दः ॥ ६०६ ॥

**अनानन्दाभिधा लोकास्तीव्रदोषसमन्विताः ॥ ६०७ ॥**

---

१ ख. यान्ति । २ ग. °या न त्वैकात्म्यस° । ३ ख. °क्षणा ॥ ६०३ ॥ ४ ख. ग. यन्ति । ५ घ. °यां तु त° ।

तांस्ते प्रेत्याभिगच्छन्ति येऽविद्वांसोऽबुधो जनाः ॥
अविद्वांसो न सामान्यात्किंतु येऽत्राबुधो जनाः ॥ ६०८ ॥

तमेव दोषं विशदयति । अनानन्देति । आध्यात्मिकादित्रिविधदेहजातं दुःखबहुलमात्मज्ञानप्रतिकूलं ते गृह्णन्तीत्यर्थः । अबुध इतिविशेषणतात्पर्यमाह । अविद्वांस इति । अत्रेति ब्रह्मात्मोक्तिः । जननमरणादिमात्रशालित्वेन ब्रह्मात्मबोधविधुरतामेव स्फोरयति । जना इति ॥ ६०७ ॥ ६०८ ॥

आत्मानं चेद्विजानीयात्सर्वधीवृत्तिसाक्षिणम् ॥
अशनायाद्यतिक्रान्तं कथंचित्सत्त्वशुद्धितः ॥ ६०९ ॥

आत्मज्ञानाभावे दोषं मन्त्राभ्यामुक्त्वा तज्ज्ञाने मुक्तिमुत्तरमन्त्रेणाऽऽह । आत्मानमिति । चेच्छब्दार्थमाह । कथंचिदिति । तदा नानुसंज्वरेदिति संबन्धः ॥ ६०९ ॥

कथं तमभिजानीयादित्युक्त इदमुच्यते ॥
पुरुषः परमात्माऽयमयमस्मीतिवाक्यतः ॥
किमिच्छन्कस्य वाऽर्थाय शरीरं संज्वरेत्तदा ॥ ६१० ॥

अयमित्याद्याकाङ्क्षापूर्वकमवतार्य व्याकरोति । कथमित्यादिना । अयमात्मा ब्रह्माहं ब्रह्मास्मि तत्त्वमसीत्यादिवाक्यादयं परमात्माख्यः पुरुषोऽहमस्मीति जानीयादित्यर्थः । उत्तरभागमादत्ते । किमिच्छन्निति । तदेति ज्ञानावस्थोक्तिः ॥ ६१० ॥

सर्वेच्छानां समाप्तत्वादात्मकामप्रबोधतः ॥
आक्षिप्यतेऽत इच्छेह किमिच्छन्नितिवाक्यतः ॥ ६११ ॥

किंशब्दस्याऽऽक्षेपार्थत्वमाह । सर्वेच्छानामिति । इहेति विद्वदुक्तिः ॥ ६११ ॥

प्रत्यगात्मातिरेकेण यस्माच्चान्यन्न पश्यति ॥
कस्य कामाय वा चातोऽप्यनात्माऽऽक्षिप्यतेऽखिलः ॥ ६१२ ॥

कस्य कामायेत्यस्यार्थमाह । प्रत्यगिति । अखिलोऽप्यनात्मेति संबन्धः ॥ ६१२ ॥

शरीरज्वरमन्वेष संज्वरेद्ब्रह्म सन्कथम् ॥
निःसङ्गस्य हि संबन्धो देहेनास्य[1] न कश्चन ॥ ६१३ ॥

शरीरमित्यादेरर्थमाह । शरीरेति । कथमित्युक्तानुपपत्तिं स्फुटयति । निःसङ्गस्येति । असङ्गत्वससङ्गत्वयोर्मिथो विरोधो हिशब्दार्थः ॥ ६१३ ॥

नातो देहादिदुःखेन दुःखित्वं प्रत्यगात्मनः ॥
निःशेषदुःखसंबन्धहेतूच्छित्तेः प्रबोधतः ॥ ६१४ ॥

संबन्धाभावे फलितमाह । नेति । इतश्चाऽऽत्मनो न दुःखितेत्याह । निःशेषेति ॥ ६१४ ॥

---

१ ग. हेन न कथंचन ।

भूयोऽसत्यमहादुःखनीडदेहप्रवेशन—
हेत्वविद्यासमुच्छित्तेर्देहं चानुविशेत्कुतः ॥ ६१५ ॥

शरीरमनुसंचरेदिति माध्यंदिनपाठस्यार्थमाह । भूय इति । ज्ञानिनो देहान्तरसंसर्गक्षेपार्थश्चकारः । भूयःशब्दस्तु वर्तमानदेहपातानन्तर्यवाची तेन संबध्यते समस्तो वा यथाश्रुतोऽस्तु ॥ ६१५ ॥

शास्त्राचार्यप्रसादात्तु क्षपिताशेषपाप्मनः ॥
वित्तो बुद्ध्यादिसाक्षीशः प्रतिबुद्धस्तथैकलः ॥ ६१६ ॥

यस्येत्यादिमन्त्रावयवस्यार्थमाह । शास्त्रेति । येन परमात्मा लब्धः साक्षात्कृतश्च स सर्वस्य कर्तेति संबन्धः ॥ ६१६ ॥

अन्नात्तेजोभिरत्यर्थं देहः संदिह्यते यतः ॥
संदेहस्तेन देहोऽयं संदेघश्छान्दसत्वतः ॥ ६१७ ॥

संदेहशब्दार्थमाह । अन्नेति । संदिह्यते सम्यगुपचीयत इति यावत् । कथं तर्हि श्रुतौ घकारप्रयोगस्तत्राऽऽह । संदेघ इति ॥ ६१७ ॥

आध्यात्मिकाधिभूताधिदैविकार्थातिसंकरात् ॥
गुणप्रधानभावेन गहनोऽयं ततो मतः ॥ ६१८ ॥

देहस्य गहनत्वं साधयति । आध्यात्मिकेति । गुणप्रधानत्वेनाऽऽध्यात्मिकाद्यर्थानां पृथक्करणायोग्यतयाऽस्मिन्देहे संश्लेषादेष गहन इत्यर्थः ॥ ६१८ ॥

संदेहे गहनेऽत्राऽऽत्मा प्रविष्टो जलसूर्यवत् ॥
विविच्य येन विज्ञातः स स्याद्विश्वकृदीश्वरः ॥ ६१९ ॥

प्रविष्टशब्दं व्याचष्टे । संदेह इति । स विश्वकृदित्यस्यार्थमाह । विविच्येति ॥ ६१९ ॥

प्रत्यग्याथात्म्यसंबोधात्सर्वं तेन कृतं भवेत् ॥
निःशेषपुरुषार्थाप्तेर्न कार्यं शिष्यते परम् ॥ ६२० ॥

न ब्रह्मविदो विश्वकृत्त्वं विश्वाभावादित्याशङ्क्याऽऽह । प्रत्यगिति । विदुषः सर्वकृत्त्वे हेतुमाह । निःशेषेति । ज्ञानफले सर्वस्यान्तर्भावाज्ज्ञानिना सर्वं कृतमित्युच्यत इत्यर्थः ॥ ६२० ॥

स हि सर्वस्य कर्तेति तस्मादेवाभिधीयते ॥
कृतकृत्यत्वतो हेतोर्लोकोऽयं तस्य लोकिनः ॥ ६२१ ॥

स हीत्यादेस्तात्पर्यमाह । स हीति । तच्छब्दपरामृष्टं स्पष्टयति । कृतेति । ज्ञानेन

---

१ ग. र्थाभिसं ।

सर्वस्याऽऽत्मसात्करणात्सर्वकृदुच्यते विद्वानित्यर्थः । तस्येत्यादेरर्थमाह । **लोक इति ।** अयं परमात्मा तस्य विदुषः स्वभावः स्वभावान्तरासंभवादित्यर्थः ॥ ६२१ ॥

**निःशेषजनिमत्कार्यहेतोर्वा ज्ञाततत्त्विनः ॥**
**विश्वकृत्त्वं भवेदेवं हीतिहेतुपरिग्रहात् ॥ ६२२ ॥**

स विश्वकृदित्यादेरर्थान्तरमाह । **निशेषेति ।** अज्ञस्याविश्वरूपत्वेऽपि नाऽऽत्मज्ञस्य तत्सिद्धिस्तथाच स विश्वकृदिति कुतो[2] व्यपदेशः सशब्देन विद्वत्परामर्शादित्याशङ्क्याऽऽह । **एवमिति ।** स हि सर्वस्य कर्तेत्येवं हेतूक्तेर्विद्वानेवाविद्वद्दशायां तद्द्वारा विश्वकर्तेति यावत् ॥ ६२२ ॥

**तस्य साक्षादयं लोको योऽहं ब्रह्मेतिबोधितः ॥**
**भेदाशङ्कापनुत्त्यर्थं स उ लोक इतीर्यते ॥ ६२३ ॥**

तस्येत्यादि व्याचष्टे । **तस्येति ।** यो हि कूटस्थश्चिदात्मा स्वाज्ञानाद्विश्वकर्ता स येन ज्ञानादज्ञानादि व्युदस्य साक्षात्कृतस्तस्य विदुषः[3] परमात्मा साक्षादात्मेत्यर्थः । यद्वा तस्य परस्यायं विद्वान्साक्षादात्मेति यावत् । स उ लोक एवेत्यस्यार्थमाह । **भेदेति ।** तस्येत्युक्ते भेदः शङ्कितस्तन्निरासार्थं स इत्यादिवाक्यं स हि परो विदुषः स्वभावः स वा परस्यातो न भेदशङ्केत्यर्थः ॥ ६२३ ॥

**इहैव कृतकृत्यत्वात्सन्तः स्याम परं यदि ॥**
**ब्रह्म प्रत्यक्तया विद्मः कथंचित्कल्मषक्षयात् ॥ ६२४ ॥**

इहैवेत्यादि व्याकुर्वन्नुक्ताभेदज्ञानफलमाह । **इहेति ।** यदि बहुजन्मनिर्वर्तितानन्तपुण्यवशात्तत्त्वज्ञानप्रतिबन्धकपापापाकरणात्परं ब्रह्म प्रत्यक्त्वेन जानीमस्तदा वयमिहैवानेकानर्थसंकटे देहे वर्तमाना ज्ञानात्प्राप्तपरमपुरुषार्थतया तदेव ब्रह्म भवामोऽतो महाभागधेया ब्रह्मविद्येत्यर्थः ॥ ६२४ ॥

**न चेदथ परं विद्मः शास्त्राचार्यानुसारतः ॥**
**अवेदिनं तदा बालं विनष्टिर्महती व्रजेत् ॥ ६२५ ॥**

न चेदित्यादि व्याकुर्वन्नज्ञाने प्रत्यवायप्राप्तिमाह । **न चेदिति ।** बहुवचनेनोपक्रम्य पुनरेकवचनेन विनिर्दिशन्बहुत्वमविवक्षितमिति सूचयति । **अवेदिनमिति ।** अथशब्दार्थस्तदेत्यनुकृष्यते । यदि शास्त्राद्यनुसारेण परं ब्रह्म प्रत्यक्तया नानुभवामस्तदा योऽहं वेदनहीनस्तं मां बालवदविवेकिनं या महती विनष्टिः सा सहसा समाक्रम्याधितिष्ठेदित्यर्थः ॥ ६२५ ॥

**विनष्टिं महतीं चेयाद्योऽवेद्यात्माऽविचक्षणः ॥ ६२६ ॥**
**विनष्टिर्महती चेह विनाशादिप्रसूतितः ॥**

---

१ क. ख. °ज्ञस्य वि° । २ घ. °तोऽस्य व्य° । ३ घ. °षः स प° ।

**आत्माविद्यैव निर्दिष्टा सामानाधिकरण्यतः ॥ ६२७ ॥**

अवेदिनः कर्मत्वं विनष्टेश्च कर्तृत्वमुक्त्वा विधान्तरमाह । **विनष्टिमिति** । अवेदित्वं व्याकरोति । **आत्मेति** । यस्तावदात्मज्ञानहीनः स या महती विनष्टिस्तामाश्रित्य तत्परवशस्तिष्ठतीत्यर्थः । केयं महती विनष्टिर्न हि ध्वंसस्य महत्त्वं तत्राऽऽह । **विनष्टिरिति** । महती विनष्टिरिति सामानाधिकरण्यादात्माविद्यैव निर्दिष्टेति संबन्धः । अखण्डजाड्यात्मकत्वादात्माविद्याया महत्त्वेऽपि कथं सा विनष्टिस्तत्राऽऽह । **विनाशादीति** ॥ ६२६ ॥ ६२७ ॥

**उक्तार्थस्य प्रकाशार्थमुत्तरार्धेन भण्यते ॥**
**ये तद्विदुरिति श्रुत्या स्पष्टार्थप्रतिपत्तये ॥ ६२८ ॥**

ये तदित्यादेरर्धस्य पूर्वेण पौनरुक्त्यमाशङ्क्याऽऽह । **उक्तार्थस्येति** । ये तद्विदुरितिश्रुतिरूपेणोत्तरार्धेन पूर्वार्धार्थ एव प्रपञ्चार्थमुच्यते प्रपञ्चनं चोक्तार्थस्य स्पष्टताप्रतिपत्त्यर्थमिति योजना । तत्र प्रथमपादार्थस्तृतीयपादेन प्रपञ्च्यते द्वितीयपादार्थश्चतुर्थपादेनेति विभागः ॥ ६२८ ॥

**ब्रह्मैव सन्तो विज्ञानात्प्रागतो ब्रह्मबोधतः ॥**
**भवामो ब्रह्म नानाप्तं दशमो दशमं यथा ॥ ६२९ ॥**

मन्त्रार्थमुपसंहरति । **ब्रह्मैवेति** । वयं हि ज्ञानात्प्रागपि वस्तुतो ब्रह्मैव सन्तोऽतस्तदज्ञानादब्रह्मवदवस्थिता वाक्योत्थज्ञानादज्ञानेऽपयाते ब्रह्म भवामो न स्वर्गादिवदप्राप्तं ब्रह्म ज्ञानात्प्राप्नुमो यथा दशमो माणवको दशमोऽसीतिवाक्योत्थज्ञानादज्ञानं विधूय दशममात्मानमाप्नोति तद्वदित्यर्थः ॥ ६२९ ॥

**ब्रह्मास्मीति यदैवैतमात्मानं देवमञ्जसा ॥**[1]
**अनुपश्यति साक्षात्तमीश्वरं भूतभव्ययोः ॥ ६३० ॥**
**ईश्वरप्रत्यगात्माप्तेस्तदा तद्भेदनाशतः ॥**
**ईशितव्यत्वसंक्रान्तेर्न ततो विजुगुप्सते ॥ ६३१ ॥**

यदेत्यादेरर्थमाह । **ब्रह्मेति** । अञ्जसेत्यस्य व्याख्या साक्षादिति । तमेतमात्मानं[2] स्वप्रकाशतया पूर्वत्रोक्तं सर्वेश्वरं परमात्मानं साक्षादाचार्योपदेशानुसारेणास्मीति यदा पश्यति तदा परस्य प्रत्यक्त्वेनाऽऽप्तेस्तद्भेदभ्रमनाशादप्यनिष्टतया प्रतिपन्नस्येशितव्यत्वस्य व्यावृत्तेर्ज्ञानबलादेव न विजुगुप्सत इति योजना ॥ ६३० ॥ ६३१ ॥

**गुप्तिमिच्छति सर्वोऽपि यत ईशाद्भयातुरः ॥**
**अयं तु तदभिन्नत्वान्न ततो गुप्तिमिच्छति ॥ ६३२ ॥**

---

१. ख ग. 'वैनमा' । २ घ. 'मेनमा' ।

उत्थापितं चतुर्थं पादं विभजते । गुप्तिमिति । तदभिन्नत्वाद्भयाभावादिति शेषः ॥ ६३२ ॥

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ॥
आनन्दं ब्रह्मणो विद्वान्न बिभेतीति शास्त्रगीः ॥ ६३३ ॥

विदुषो भयाभावे मानमाह । यत इति । यथावाक्यमुपपादयितुमिहासंधिकरणम् ॥ ६३३ ॥

न वा निन्दति निःशेषद्वैतहेतुविनाशतः ॥
ऐकात्म्यदर्शनाद्विद्वान्यत्र त्वस्येतिशास्त्रतः ॥ ६३४ ॥

न तत इत्यादेरर्थान्तरमाह । न वेति । तत्त्वज्ञानान्निःशेषद्वैतस्य सहेतुकस्य नाशे मानमाह । यत्रेति ॥ ६३४ ॥

निःशेषविक्रियाहेतुकालातिक्रमहेतुतः ॥
जन्मादिविक्रियाषट्कसंगतिस्तस्य नेष्यते ॥ ६३५ ॥

ज्ञानस्याव्यवहितफलत्वं दर्शयित्वा यस्मादित्यादिमन्त्रतात्पर्यमाह । निःशेषेति ॥ ६३५ ॥

अर्वाग्यस्मादयं कालो विकुर्वञ्जनिमज्जगत् ॥
संवत्सरः स्वावयवैरहोभिः परिवर्तते ॥
ज्योतिषामपि तज्ज्योतिरायुर्देवा उपासते ॥ ६३६ ॥

ज्ञेयस्याऽऽत्मतत्त्वस्य कूटस्थत्वविधानार्थं वाक्यमित्युक्त्वा तदक्षराणि व्याकरोति । अर्वागिति । अयं संवत्सराख्यः कालः स्वावयवैरहोरात्रैः कार्यजातं विकुर्वन्यस्मादर्वागेव परिवर्तते तं कूटस्थमात्मानं ज्योतिषामपि ज्योतिरायुरित्येवमनुसंदधते देवास्तेनाऽऽयुष्मन्तो ज्योतिष्मन्तश्च ते प्रसिद्धा इत्यर्थः ॥ ६३६ ॥

कौटस्थ्यादमृतं ज्योतिर्मृत्युभूम्यतिलङ्घनात् ॥
कालस्य जरणादात्मा श्रुतौ कालंजरो मतः ॥ ६३७ ॥

तस्यामृतत्वं साधयति । कौटस्थ्यादिति । कौटस्थ्यं मृत्युगोचरत्वाभावे हेतुस्ततश्च ज्योतिरमृतमित्यर्थः । इतश्च परस्य कालनिमित्तोऽन्यथाभावो नास्तीत्याह । कालस्येति । ज्ञः *कालकालो गुणी सर्वविद्य इति पाच्यांश्च सर्वान्परिणामयेद्य इति च श्रुतौ कालस्यान्यथाभावः परमात्मनिमित्तो निश्चितस्तेन न तन्निमित्तोऽन्यथाभावस्तस्येत्यर्थः । यद्वा योऽयमात्मा तत्र तत्र श्रुतौ मतः स कालस्य जरणात्कालंजरो भवतीति योजना । उक्तं हि—

* श्वेताश्वतरोपनिषद्भाष्ये तु कालकार इति मूलप्रतीकं गृहीत्वा व्याख्यातम् ।

१ ख. ग. °तिश्चास्य । २ ख. ग. °ज्जनान् ॥ सं° ।

'कालः पचति भूतानि सर्वाण्येव सताऽऽत्मना[1] ।
कालः पक्को यमन्वेति यस्तं वेद स वेदवित् ॥
कालः[2] स पच्यते[3] यत्र न कालस्तत्र वै प्रभुः ।
कालस्यैव च मृत्योश्च जङ्गमस्थावरस्य च ॥
ईशते भगवानेकः सत्यमेतद्ब्रवीमि ते' इति ।

**मोक्षधर्मे च—**

'आहृत्य सर्वसंकल्पान्सत्त्वे[4] चित्तं निवेशयेत् ॥
सत्त्वे[5] चित्तं समावेश्य ततः कालंजरो भवेत्' इति ॥ ६३७ ॥

**भावाभावात्मकस्यास्य कार्यकारणवस्तुनः ॥**
**परमात्मा स्वतः सिद्धेरायुरस्य परार्थतः ॥ ६३८ ॥**

परस्य कालनिमित्तान्यथात्वाभावेऽपि न कौटस्थ्यमायुष्ट्वादायुषश्च प्रतिप्राण्यन्यथात्वादित्याशङ्क्याऽऽह । **भावेति** । स कथं स्वतः सिद्धोऽपि प्रपञ्चस्य जीवनमिति तत्राऽऽह । **अस्येति** । कार्यकारणप्रपञ्चस्य जडतया स्वतः सत्तास्फूर्त्योरभावात्परमात्मैव स्वरूपमित्यर्थः ॥ ६३८ ॥

**गन्धर्वाः पितरो देवा रक्षोभिश्च सहासुराः ॥**
**यस्मिन्पञ्चजनाः पञ्च वियदन्ताः प्रतिष्ठिताः ॥ ६३९ ॥**

कूटस्थत्वं स्वप्रकाशत्वं सर्वात्मत्वं च व्याख्याय यस्मिन्नित्यादिमन्त्रेण सर्वकल्पनाधिष्ठानत्वमात्मनो दर्शयित्वा विदुषो ब्रह्मत्वं विवक्षितमित्यङ्गीकृत्य पूर्वार्धस्यार्थमाह । **गन्धर्वा इति** । तमेव मन्य इति संबन्धः ॥ ६३९ ॥

**पञ्च प्राणादयो वा स्युरन्नान्तास्तच्छ्रुतत्वतः ॥**
**अन्नाभावे विवक्ष्यन्ते काण्वानां ज्योतिषा सह ॥**
**तमेव कारणात्मानं विद्वान्मन्येऽमृतोऽमृतम् ॥ ६४० ॥**

प्राणादयो वाक्यशेषादितिसूत्रविरोधमाशङ्क्य पक्षान्तरमाह । **पञ्चेति** । प्राणस्य प्राणमित्यादिवाक्यशेषे माध्यंदिनैरन्नमपि पठ्यते काण्वैस्तु नैवं तत्कथं तत्पक्षे पञ्चसंख्यादिपूरणमित्याशङ्क्य ज्योतिषैकेषामित्यादिन्यायेनाऽऽह । **अन्नेति** । काण्वश्रुतावन्नपाठाभावे ज्योतिषां ज्योतिरिति षष्ठ्यन्तज्योतिषा सह प्राणादयः पञ्च पञ्चजना विवक्षिता इति यावत् । तमेवेत्यादिभागमादत्ते । **तमिति** ॥ ६४० ॥

**कार्यकारणयोस्तत्त्वं यस्मादात्मैव निर्द्वयः ॥**
**मन्य आत्मानमेवातः कार्यकारणवज्जगत् ॥ ६४१ ॥**

---

१ क. घ. °त्मनः । का° । २ ख. कालं । घ. काले । ३ क. ख. घ. पचते । ४ ख. °न्सत्ये चि° । ५ ख. सत्ये ।

कारणात्मानमित्युक्तेरात्मनि कार्यादिविभागः स्यान्न चोभयान्यत्वेन श्रुतेस्तत्रासौ युक्त इत्याशङ्क्य व्याचष्टे । **कार्येति** ॥ ६४१ ॥

**प्रध्वस्तभेदहेतुत्वात्कारणादेरसंभवात् ॥**
**अमृतोऽमृतमित्याह स्वयं विद्वानिति श्रुतिः ॥ ६४२ ॥**

उभयात्मकं जगदात्ममात्रं बुध्यते चेत्तस्य सविशेषतेत्याशङ्क्य विद्वानित्यादेरर्थमाह । **प्रध्वस्तेति** । विद्वानित्याद्या श्रुतिरमृतः स्वयं विद्वानमृतं ब्रह्मेत्याहेति योजना ॥ ६४२ ॥

**यतः प्राणादिभावोऽयं प्राणादीनां तमेव ये ॥**
**निचिक्युस्ते विदुः साक्षादद्वयं ब्रह्म सनातनम् ॥ ६४३ ॥**

प्राणस्येत्यादेस्तात्पर्यमाह । **यत इति** । पूर्वमन्त्रे विद्वान्ब्रह्मेत्युक्तं सा विद्या कथं स्यादित्यपेक्षायां यथा त्वंपदार्थविदां वाक्यार्थधीरूपा सोदेतीत्येतमर्थं प्राणस्येत्यादिर्मन्त्रो दर्शयतीत्यर्थः ॥ ६४३ ॥

**निरपेक्षात्मनैवेह सर्वस्याऽऽत्मवतो यतः ॥**
**प्राणादेरात्मवत्ता स्यात्प्राणस्य प्राणमित्यतः ॥ ६४४ ॥**

प्राणादीनां प्राणादित्वं किमित्यात्मकृतं स्वाभाविकमेव चैतन्यवत्किं न स्यात्तत्राऽऽह । **निरपेक्षेति** । आत्मानात्मनोर्मध्ये प्राणादेरनात्मनः सर्वस्याऽऽत्मवतः स्वार्थेनाऽऽत्मनैव यस्मादात्मवत्ता तस्मात्प्राणस्य प्राणमित्यादिवाक्यं युक्तमिति योजना ॥ ६४४ ॥

**अनात्मा हि स्वतोऽसिध्यन्स्वतःसिद्धमपेक्षते ॥**
**आत्मनस्तु स्वतः सिद्धेर्नापेक्षाऽनात्मसंश्रयात् ॥ ६४५ ॥**

किंचानात्मा जाड्यान्न स्वतः स्फुरत्यनात्मत्वाच्च न स्वतोऽस्त्यतः सन्तं स्फुरन्तं चाऽऽत्मानमपेक्ष्यासौ सिध्यतीति प्राणादीनां प्राणादित्वं तत्कृतं युक्तमित्याह । **अनात्मेति** । उक्तहेतुद्वयसिद्ध्यर्थो हिशब्दः ॥ ६४५ ॥

**अन्यतः संगतिः सेयमविचारितसिद्धिका ॥**
**अविद्योत्सङ्गसंस्थैव तत्त्वज्ञानाद्विनश्यति ॥ ६४६ ॥**

आत्मनोऽपि तुल्यं सापेक्षत्वं स हि विषयसंविदाश्रयत्वेन सिध्यति तत्कथमात्मना प्राणादेरात्मवत्त्वमत आह । **अन्यत इति** । आत्मानात्मसंबन्धस्य कल्पितत्वफलमाह । **तत्त्वेति** ॥ ६४६ ॥

**अकार्याकारणात्मैव कार्यकारणवस्तुनः ॥**
**तत्त्वमुक्तं पृथिव्यादेर्नभोन्तस्याक्षरं परम् ॥ ६४७ ॥**

---

१ ख. 'दरर्थमा' ।

ततश्चेत्तत्संगतिर्निश्यति तौ तर्हि विश्लिष्टौ स्वतन्त्रौ स्यातामित्याशङ्क्य पाश्चमिकं स्मारयति । अकार्येति ॥ ६४७ ॥

**तस्यास्य दर्शनोपायः कः स्यादित्यभिचोदिते ॥**
**मनसैवेत्यतः प्राह श्रुतिर्ब्रह्मावबोधने ॥ ६४८ ॥**

पदार्थज्ञानस्य वाक्यार्थज्ञानोपायत्वमुक्त्वोपायान्तरजिज्ञासापूर्वकं मन्त्रान्तरमवतारयति । **तस्येति** । श्रवणादिसंस्कृतं मनो ब्रह्मधीसाधनमिति प्रकृता श्रुतिराहेत्यर्थः । चोद्यानन्तरं प्रतिवचनमुचितमित्यतःशब्दार्थः ॥ ६४८ ॥

**अवदध्रे यतश्चेयं मनसैवेति च श्रुतिः ॥**
**मनोतिरेकतोऽपेक्षा नैवातः साधनान्तरे ॥ ६४९ ॥**

एवकारं व्याकरोति । **अवदध्र इति** । मनसैवेदमाप्तव्यमितिश्रुत्यन्तरसमुच्चयार्थश्चकारः साधनान्तरानुपलम्भं समुच्चेतुं द्वितीयः ॥ ६४९ ॥

**आत्मानात्मपदार्थेषु विज्ञानोत्पत्तिसाधनम् ॥**
**मनः साधारणं दृष्टं सर्वज्ञानैकहेतुतः ॥ ६५० ॥**

किंचाऽऽत्मज्ञाने मनसः साधनत्वं नास्मत्साध्यं तस्य सर्वज्ञानसाधारणकरणत्वस्य सर्वेष्टत्वादित्याह । **आत्मेति** । मनसः साधारणकरणत्वस्येष्टत्वे हेतुमाह । **सर्वेति** । सर्वत्र ज्ञानहेतूनां मध्ये मनसोऽन्यतमत्वेन हेतुत्वादिति यावत् ॥ ६५० ॥

**प्रत्यक्चिदाकृतिस्तत्र सर्वदा धर्मधर्मिणोः ॥**
**हेत्वन्तरानपेक्षत्वादात्मत्वात्संनिधेः[3] सदा ॥ ६५१ ॥**

मनश्चेदनात्मज्ञानवदात्मज्ञानेऽपि साधनं तर्हि तद्गम्यत्वादात्मनोऽपि जाड्यापत्तिरित्याशङ्क्याऽऽह । **प्रत्यगिति** । धर्मिणो बुद्ध्यादेस्तद्धर्मस्य च ज्ञानादेः सदा चिदाभासव्याप्तिरस्ति तस्य स्वरूपलाभातिरेकेण चिद्व्याप्तौ हेत्वन्तरानपेक्षत्वात्तथाच तस्मिन्बुद्ध्यादौ साधकत्वान्नाऽऽत्मनो जाड्यमित्यर्थः । उक्तं हेतुं साधयति । **आत्मत्वादिति** । बुद्ध्यादेः स्वरूपत्वेन सदा चिदात्मनस्तत्र संनिधानादित्यर्थः ॥ ६५१ ॥

**आत्माकृतिरतो नित्या तद्धेतोः संभवात्सदा ॥**
**अज्ञानादेश्च चिद्रूपं तद्याथात्म्यान्न वार्यते ॥ ६५२ ॥**

न केवलं बुद्धितद्धर्मयोरेव सदातनश्चिदाभासः किंतु सर्वस्येत्याह । **आत्मेति** । अतः संभवादिति संबन्धः । सर्वस्याऽऽत्माकारो नित्यस्तत्र हेतोरात्मसंनिधेः सर्वत्र नित्यभावादस्य सर्वस्य प्रत्यक्त्वादित्यर्थः । कथं सर्वस्याऽऽत्माकृतिर्नित्या संशयादेस्तदभावादित्याशङ्क्याऽऽह । **अज्ञानादेश्चेति** । तद्याथात्म्यात्तस्यैव चिद्धातोरज्ञानादिस्वरूपत्वा-

---

१ घ. °णकार° । २ ख. घ. °णकार° । ३ ख. °निधिः स° । ४ क. ख. °दाऽऽत्म° । ५ घ. °र्वप्र° ।

दतिरिक्तत्वाभावादिति यावत् । आत्मप्रसादादेव सर्वस्य सत्ता स्फूर्तिश्चेत्यात्मनो न जाड्यं तद्दर्शने मनसः साधनत्वोक्तिस्तु सदा तदाकारस्य तस्य श्रवणादिसंस्कारापेक्षया कादाचित्कतद्रूपपरिणामधारित्वादिति वार्तिकयोस्तात्पर्यार्थः ॥ ६९२ ॥

धर्माधर्माद्यपेक्षत्वादन्यत्वाच्चान्यवस्तुनः ॥
शब्दाद्याकारता तस्मात्कादाचित्की धियो भवेत् ॥ ६९३ ॥

सर्वधीसाधारणस्य मनसः किमित्यात्माकृतिर्नित्येति विशेष्यते तस्यानात्माकृतिरपि तथेत्याशङ्क्याऽऽह । धर्मेति । मनसः शब्दाद्याकारता न नित्याऽदृष्टाद्यपेक्षत्वात्तदाकारतायाः शब्दादेरप्रत्यक्तया मनसि सदासांनिध्याभावाच्च तस्मादनात्माकृतिर्न नित्येत्यर्थः ॥ ६९३ ॥

यद्यपीमौ जगत्यस्मिन्नात्मज्ञानपुरःसरौ ॥
शब्दाद्यनात्मविज्ञानभावाभावौ स्वभावतः ॥ ६९४ ॥
तथाऽप्यनुभवादेव प्रत्यक्तत्त्वानभिज्ञता ॥
अनात्मबोधवत्सिद्धाऽविद्याऽतः प्रत्यगात्मनि ॥ ६९५ ॥

मनसः शब्दाद्याकृतेरानित्यत्वेऽपि सर्वस्याऽऽत्माकारो नित्यश्चेदात्मस्फूर्तिपूर्वकत्वात्तच्छब्दादिज्ञानभावाभावयोर्नाऽऽत्माज्ञानं कदाचिदपि संभवेदात्मस्फूर्तिव्याप्तमनोवृत्त्या तन्निवृत्तेरित्याशङ्क्याऽऽह । यद्यपीति । अनात्माकारधीवृत्तिभावाभावयोरात्मचैतन्यव्याप्तत्वेऽपि तत्त्वमादिवाक्योत्थबुद्धिवृत्तिरेवाद्वयप्रत्यङ्मात्राकारा तदविद्यामपनुदति वृत्त्यन्तरं चिदाकारमप्याकारान्तरोल्लेखाहित्वान्न तामपनेतुमर्हति तस्मात्प्रतीच्यज्ञानमनुभवसिद्धं दुरपह्नवमित्यर्थः । अनुभवप्राप्तमर्थं निगमयति । अनात्मेति । अतःशब्दोऽनुभवार्थः ॥ ६९४ ॥ ६९५ ॥

उत्पन्नस्यापि चोत्पत्तिः कूपाकाशादिवत्ततः ॥
प्रत्यग्याथात्म्यबोधस्य व्युत्पत्तेर्गुरुशास्त्रतः ॥ ६९६ ॥

भवतु प्रतीच्यज्ञानं तथाऽपि तन्निवर्तते न वा न चेदनिर्मोक्षो निवर्तते चेन्निवर्तकमस्ति न वा न चेत्सदा निवृत्तिरस्ति चेत्किं कर्म ज्ञानं वा नाऽऽद्योऽनभ्युपगमाद्द्वितीयेऽपि स्वरूपज्ञानं ज्ञानान्तरं वा नाऽऽद्यः सदा निवृत्त्यनिवृत्त्योरन्यतरापत्तेः श्रवणादिवैयर्थ्यप्रसङ्गाज्ज्ञानान्तरमपि जडमजडं वाऽऽद्ये नाज्ञानं निवर्तयेदविरोधाद्द्वितीये तदात्मनोऽर्थान्तरं चेदपराद्धान्त आत्मैव चेत्तस्यापि कादाचित्कत्वप्रसक्तिः स्वरूपज्ञानपक्षोक्तदोषश्चेत्याशङ्क्याऽऽह । उत्पन्नस्येति । यथा नित्यसिद्धस्यैवाऽऽकाशस्य कूपाद्यवच्छिन्नस्योत्पत्तिस्तथा प्रत्यग्याथात्म्यरूपबोधस्य सदालब्धात्मकस्यापि शास्त्राचार्यबलादह-

---

१ ध. 'क्ततत्त्वाभा'।

मस्मि ब्रह्मेतिधीवृत्त्युत्पत्तेरनन्तरं तदुपहितस्यैवोत्पत्तिरिष्टा ततश्च स्वरूपज्ञानस्यैव वाक्योत्थधीवृत्त्युपहितस्याविद्याध्वंसित्वोपगमान्नावद्यमित्यर्थः ॥ ६५६ ॥

प्रसादादनु शास्त्रादेर्मनसैवेत्यतः श्रुतिः ॥
द्रष्टव्यमात्मनस्तत्त्वमित्याहास्मद्धितैषिणी ॥ ६५७ ॥

मनसेत्यादेरर्थमुपसंहरति । **प्रसादादिति** । संस्कृतस्य मनसो ज्ञानहेतुत्वसंभवोऽतःशब्दार्थः । अनुशब्दो द्रष्टव्यमित्यनेन संबध्यते ॥ ६५७ ॥

दृश्यं चेन्मनसैवैतद्द्रष्टृत्वादिप्रभेदतः ॥
पुनः प्रसक्तं नानात्वं मैवं यस्मान्निषिध्यते ॥ ६५८ ॥

नेहेत्यादिव्यावर्त्यां शङ्कामाह । **दृश्यं चेदिति** । न ब्रह्मात्मनि नानात्वं तस्य निषिध्यमानत्वादित्याह । **मैवमिति** ॥ ६५८ ॥

नेह प्रमाणतो मेयं यस्मान्नानाऽस्ति किंचन ॥
अज्ञातं यदि वा ज्ञातं वस्तु नानात्वभाङ्न हि ॥ ६५९ ॥

निषेधमेव दर्शयन्वाक्यं योजयति । **नेहेति** । तस्मान्न द्वैतप्रसक्तिरिति शेषः । प्रतिषेधं प्रपञ्चयति । **अज्ञातमिति** ॥ ६५९ ॥

नानात्वबुद्धये नालममितोऽर्थो यतस्ततः ॥
अज्ञातः संशयज्ञातो मिथ्याज्ञातो न भित्तये ॥ ६६० ॥

अज्ञातं वस्तु वस्तुनः सकाशाद्वस्तुतो न नानात्वभागित्येतत्साधयति । **नानात्वेति** । मानेनागृहीतस्य भेदो न प्रामाणिक इत्यर्थः ॥ ६६० ॥

सम्यग्ज्ञातोऽपि नैवार्थो द्वैतबोधकृदिष्यते ॥
द्वैतकारणबाधेन सम्यग्ज्ञातत्वसिद्धितः ॥ ६६१ ॥

ज्ञातं वस्तु वस्तुतो न नानात्वभागित्युक्तं व्यनक्ति । **सम्यगिति** । प्रत्यगर्थो हि शास्त्राचार्यवशाद्यथावदधिगतो न भेदज्ञानं करोति नानात्वहेत्वज्ञाननिरासेन तस्य सम्यग्ज्ञातत्वादित्यर्थः ॥ ६६१ ॥

मेयव्याप्तिश्च मानानां नान्यव्यावृत्तिवर्त्मना ॥
व्यावर्त्येष्वपि तत्सक्तेर्न चापि लभतेऽवधिम् ॥ ६६२ ॥

ज्ञातमज्ञातं वा वस्तु न नानात्वभाक्चेत्कथं प्रत्यक्षादीनि नानात्वमुल्लिखन्तीत्याशङ्क्य विधिमुखेन निषेधमुखेन वा तानि नानात्वं गोचरयन्तीति विकल्प्य द्वितीयं प्रत्याह । **मेयेति** । घटः पटो नेत्यन्यनिवृत्तिद्वारा मानानां न मेयव्याप्तिः पटादिषु व्यावर्त्येष्वप्यन्यव्यावृत्तिप्रसक्तेर्न सा क्वचिद्विश्राम्येदतो न निषेधद्वारा मानप्रवृत्तिरित्यर्थः ॥ ६६२ ॥

---

१ ख. 'नातमत्व' ।

**मेयेनैव समाप्तत्वात्ततोऽन्या व्यापृतिर्न च ॥**
**नातो वस्त्वन्तरव्याप्तिं व्यावृत्तिं वाऽश्नुते प्रमा ॥ ६६३ ॥**

कल्पान्तरं निरस्यति । **मेयेनेति** । ततो वस्तुबोधनादिति यावत् । वस्तुमात्रबोधनेनैव मानानामुपक्षीणत्वान्न भेदाभेदगोचरतेत्यर्थः । व्यापारान्तराभावोऽतःशब्दार्थः ॥ ६६३ ॥

**व्यावृत्तेश्चाप्यवस्तुत्वान्न सद्वस्तूपलम्भनैः ॥**
**प्रमाणैरपि संबन्धः प्रत्यक्षप्रमुखैः क्वचित् ॥ ६६४ ॥**

किंचान्यव्यावृत्तिरेव भेदोऽर्थान्तरं वा प्रथमे भेदस्य प्रत्यक्षादिग्राह्यत्वानुपपत्तिरित्याह । **व्यावृत्तेश्चेति** । व्यावृत्तिवत्तदन्तर्भूतभेदस्यावस्तुत्वमपेरर्थः । क्वचिदिति देशकालविषयोक्तिः ॥ ६६४ ॥

**अभावमात्रबोधित्वान्नाभावादपि भेदधीः ॥**
**भावाभावावभावेन प्रत्यक्षेणेव नेक्षते ॥ ६६५ ॥**

प्रत्यक्षादिपञ्चकस्य व्यावृत्त्यबोधित्वेऽपि षष्ठं मानं तां बोधयिष्यत्यतो भेदस्यापि प्रामाणिकतेत्याशङ्क्याऽऽह । **अभावेति** । योग्यानुपलब्धेरभावमात्रबोधित्वान्न ततो भावरूपभेदधीर्न हि भेदोऽन्यव्यावृत्तिरेवं तथा सति तदवस्तुत्वेनाद्वैतापातादेतेन कल्पान्तरमपि प्रत्युक्तं व्यावृत्त्यतिरिक्तभेदे मानाभावादिति भावः । अभावस्याभावमानमेयत्वमङ्गीकृत्य भेदस्याप्रामाणिकत्वमुक्तं संप्रत्यङ्गीकारं त्यजति । **भावेति** । अभावश्चेदभावेन गृह्यते भावोऽपि तेन ग्रहीतव्यस्तयोर्धर्मधर्मित्वान्न हि धर्मिणमगृह्णन्मानं तद्धर्मं गृह्णाति न च शब्दादेराकाशाद्यग्रहेऽपि श्रोत्रादिग्राह्यता दृष्टेति वाच्यं तत्रापि विप्रतिपत्तेस्तुल्यत्वाद्दृष्टिमात्रानुसारे च यौक्तिकत्वव्याघातान्न चाभावेन मानेन भावाभावौ कश्चिदपि निश्चिनोति यथा प्रत्यक्षेण भावे गृह्यमाणेऽपि नाभावो गृह्यते तथाऽभावेनापि नोभयग्रहः स्वयमतो ग्राहकत्वायोगात्तस्मादभावस्य न तद्ग्राह्यताऽपीत्यर्थः ॥ ६६५ ॥

**योऽपि प्रत्यक्षतोऽभावं वादी कश्चित्समीक्षते ॥**
**तावन्मात्रावसायित्वाद्भेदं नासावपीक्षते ॥ ६६६ ॥**

प्रत्यक्षाभाववादिपक्षे दृष्टान्तासिद्धिमाशङ्क्याऽऽह । **योऽपीति** । तन्मतेऽपि प्रत्यक्षस्यान्यव्यावृत्तिरूपाभावमात्रविषयत्वान्न भेदविषयतेत्याह । **तावन्मात्रेति** ॥ ६६६ ॥

**प्रत्यक्षस्यानुवृत्तिं च व्यावृत्तिं तद्विदां च सः ॥**
**प्रत्यक्षेणैव सं पश्येत्कथमित्यभिधीयताम् ॥ ६६७ ॥**

अभावस्य धर्मिप्रतियोगिघटितत्वात्तद्ग्राहि प्रत्यक्षं कथं न भेदं गृह्णातीत्याशङ्क्याऽऽह । **प्रत्यक्षस्येति** । भेदवादी सर्वनाम्ना परामृश्यते । समुपसर्गस्तु क्रियापदेन योजनीयः ।

---

१ ग. °रभिसं° । २ घ. °व तत्र त° ।

तस्य विषयेष्वनुवृत्तिस्तेभ्यो व्यावृत्तिरवान्तरभेदश्चेत्येतन्नाध्यक्षगोचरोऽशतःस्वग्रहापत्तेर्न च तद्ग्राहि मानान्तरमनवस्थानादतो नाध्यक्षं विषयभेदमपि साधयेत्तस्मादगृहीतभेदत्वात्तद्वदित्यर्थः ॥ ६६७ ॥

**यतो मानं न हीहास्ति नानात्वप्रतिपत्तये ॥**
**खकार्ष्ण्यवदतस्तत्स्यादविचारितसिद्धिकम् ॥ ६६८ ॥**

न किंचिदपि प्रत्यक्षतो नानात्वभागीत्युक्त्वा मानान्तरं नानात्वावेदकमित्याशङ्क्याऽऽह । यत इति । इहेति वस्तूक्तिः ॥ ६६८ ॥

**अज्ञातवस्तुहेत्वेव यस्मान्नाना ततोऽवदत् ॥**
**मृत्योः स मृत्युमाप्नोति योऽत्र नानेव पश्यति ॥ ६६९ ॥**

नेहेत्यादि व्याख्याय मृत्योरित्याद्युक्तमुपजीव्याऽऽदत्ते । अज्ञातेति । सप्तमी पूर्ववत् ॥ ६६९ ॥

**मृत्युर्हिरण्यगर्भः स्यात्स्वकार्यप्रलयत्वतः ॥**
**तस्यापि मृत्युर्विज्ञेयो यत आविरभूदसौ ॥ ६७० ॥**

नन्वेको मृत्युः स कथं द्विधोच्यते तत्राऽऽह । मृत्युरिति । यत इति साभासप्रत्यगज्ञानोक्तिः ॥ ६७० ॥

**मिथ्यादर्शनदोषित्वान्मिथ्यादर्शनकारणम् ॥**
**मृत्योर्मृत्युमसावेति यो नानेवेह वीक्षते ॥ ६७१ ॥**

मृत्युशब्दयोरर्थमुक्त्वा वाक्यं योजयति। मिथ्येति। इहेति ब्रह्मात्मोक्तिः ॥६७१॥

**पूर्वं ज्ञानसमुत्पत्तेर्नानैवेति ह्यभून्मतिः ॥**
**ज्ञानोत्पत्तौ तु तद्बाधान्नानेवेति प्रयुज्यते ॥ ६७२ ॥**

इवशब्दार्थमाह । पूर्वमिति । अज्ञानदशायां नानात्वबुद्धिप्रसिद्ध्यर्थो हिशब्दः । ज्ञानोत्पत्तेरूर्ध्वं नानेव वर्तमानं पूर्वं नानैवेति यो मन्यते स खल्वाभासभूतं नाना परमार्थबुद्ध्या पश्यन्नज्ञः संसरतीत्यर्थः ॥ ६७२ ॥

**वस्तुवृत्तं यतोऽद्वैतं नानात्वं मोहहेतुजम् ॥**
**एकधैवात आत्माऽयं द्रष्टव्यः श्रुतिवर्त्मगैः ॥ ६७३ ॥**

एकधेत्यादि सोपपत्तिकमवतारयति । वस्त्विति ॥ ६७३ ॥

**एकेनैव प्रकारेण भास्वच्चिन्मात्ररूपिणा ॥**
**शास्त्रैकमानतो ब्रह्म द्रष्टव्यं प्रत्यगात्मना ॥ ६७४ ॥**

तस्यार्थमाह । एकेनेति । इत्थंभावे तृतीया ॥ ६७४ ॥

---

१ ख. ॰तुकम् ।

समस्तव्यस्ततादृष्टिरेकधैवेतिवाक्यतः ॥
मिथ्येति गम्यते श्रौतान्मृत्योरिति च निन्दनात् ॥ ६७५ ॥

वाक्यस्य श्रौतार्थमुक्त्वाऽऽर्थिकार्थमाह । समस्तेति । तत्रैव भेददृष्ट्यपवादस्यानुग्राहकत्वमाह । श्रौतादिति ॥ ६७५ ॥

एतदप्रमेयं ब्रह्म मृत्युहेतोर्निषेधनात् ॥
मृत्युर्वै तम इत्युक्तं तच्च बोधान्निराकृतम् ॥ ६७६ ॥

एतदित्यादेस्तात्पर्यमाह । एतदिति । जन्ममृत्युप्रमुखसर्वबन्धहेत्वज्ञानस्य वाक्योत्थज्ञानेन निषेधात्तस्य वस्तुबोधित्वाभावाद्वस्तुनो युक्तममेयत्वमित्यर्थः । मृत्युरेव हिरण्यगर्भाख्यो हेतुस्तस्य निषेधेऽपि कथं ब्रह्मणोऽप्रमेयत्वमिति प्रतिभासं व्यावर्तयति । मृत्युरिति ॥ ६७६ ॥

एकधैव यतस्तत्त्वं सर्वस्य जगतस्ततः ॥
क्रियाकारकसंभेदधीर्मृषेत्यवधार्यताम् ॥ ६७७ ॥

सर्वप्रत्ययवेद्यं ब्रह्मेति स्थितेः कथमप्रमेयमित्याशङ्क्याऽऽह । एकधैवेति । भेदबुद्धेर्मिथ्यात्वात्तद्ग्राह्यत्वमपि तादृगेव न च केवलस्य सर्वप्रत्ययवेद्यत्वमौपनिषदत्वादित्यर्थः ॥ ६७७ ॥

यत्र हि द्वैतमित्येवं यत्र त्वस्येति च श्रुतिः ॥
नानात्वदृष्टेर्मिथ्यात्वं स्वयमेवावदत्पुरा ॥ ६७८ ॥

भेदधीमिथ्यात्वे वाक्यान्तरमन्वयव्यतिरेकानुवादि दर्शयति । यत्र हीति ॥ ६७८ ॥

एकधा चेत्परं ब्रह्म द्रष्टव्यं कथमुच्यते ॥
द्रष्ट्रादिभेदसद्भावे द्रष्टव्यत्वप्रसिद्धितः ॥ ६७९ ॥

एकधा द्रष्टव्यमिति पदयोर्मिथो विरोधं शङ्कते । एकधा चेदिति । का पुनरनुपपत्तिस्तत्राऽऽह । द्रष्ट्रादीति ॥ ६७९ ॥

अप्रमेयं कथं वस्तु प्रमाणेन प्रमीयते ॥
मीयते चेत्प्रमाणेन नाप्रमेयं तदिष्यते ॥ ६८० ॥

द्रष्टव्यमप्रमेयमिति च मिथो विरुद्धमिति व्याघातान्तरमाह । अप्रमेयमिति । विरोधं स्फुटयति । मीयते चेदिति ॥ ६८० ॥

नैष दोषः पुरोक्तत्वात्परिहारस्य चाञ्जसा ॥
भूयोऽपि परिहारोक्तौ भवेत्पिष्टस्य पेषणम् ॥ ६८१ ॥

समाधत्ते । नैष दोष इति । समाहितमपि विरोधद्वयं पुनः समाधेयमिति चेत्तत्राऽऽह । भूयोऽपीति ॥ ६८१ ॥

---

१ ख. गम्यतां । २ क. °प्रमेयं । ३ ख. ग. °धतः ॥ मृ° ।

**प्रमात्रादेरुपादानमैकात्म्यप्रतिबन्धकम् ॥**
**यतोऽतस्तत्प्रबोधेऽस्मिन्न प्रमात्राद्यपेक्षते ॥ ६८२ ॥**

एकधा चेत्कथं द्रष्टव्यमितिविरोधसमाधिमनेकधोक्तं स्मारयति । **प्रमात्रादेरिति ।** सहेतुमात्रादिस्वीकारस्यैक्यप्रतिबन्धित्वात्तन्निरासेन तज्ज्ञाने वास्तवमात्राद्यपेक्षाभावादेकधात्वं द्रष्टव्यत्वं चाविरुद्धमित्यर्थः ॥ ६८२ ॥

**मेयस्य मानसंबन्धे प्रमेय इति गीरियम् ॥**
**प्रमाफलं त्वप्रमेयं यतो नातो विरुद्धता ॥ ६८३ ॥**
**अज्ञातवस्तुना योगो मानस्येह यतस्ततः ॥**
**ज्ञातस्य चाप्रमेयत्वान्नापेक्षा मानसंगतौ ॥ ६८४ ॥**

यत्तु द्रष्टव्यमप्रमेयमिति विरोधवचनं तस्यापि पूर्वोक्तं परिहारं स्मारयन्सामान्यन्यायमाह । **मेयस्येति ।** एवमपि प्रकृते किमायातं तदाह । **यत इति ।** प्रमाणभूमिः सप्तम्यर्थः । चकारोऽवधारणार्थः सन्पञ्चम्यनन्तरं संबध्यते ॥ ६८३ ॥ ६८४ ॥

**फलात्मनैव तन्मानं न तु मात्रादिरूपतः ॥**
**अभिव्यनक्ति नो ज्ञातं नातोऽस्य स्यात्प्रमेयता ॥ ६८५ ॥**

कथममेयत्वे द्रष्टव्यत्वाधीना मेयतेत्याशङ्क्याऽऽह । **फलात्मनेति ।** तद्धि स्वप्रकाशे प्रतीचि प्रवृत्तं प्रमाणमविषयसंविद्रूपतयैव तं नोऽस्माकं साक्षाद्बोधयति न तु मात्राद्यपेक्षया विषयी करोत्यतो वृत्तिव्याप्यत्वं कल्पितं फलाव्याप्यत्वं[1] तु वास्तवमित्यविरोध इत्यर्थः ॥ ६८५ ॥

**तरावेव च्छिदा यद्वद्द्वैधीभावे तु नेष्यते ॥**
**प्रमेयत्वं तथाऽज्ञाते न तु ज्ञाते फलात्मता ॥ ६८६ ॥**

फलाव्याप्यत्वेऽपि[2] वृत्तिव्याप्यत्वं वास्तवं किं न स्यादित्याशङ्क्याऽऽह । **तराविति ॥** ६८६ ॥

**आमगोऽपीममात्मानं तत्तमोध्वस्तिवर्त्मना ॥**
**अवबोधयतीत्येवं भण्यते दृष्टितत्त्वतः ॥ ६८७ ॥**

आत्मनि फलव्याप्यत्वमपीतरवत्कल्प्यमौपनिषदत्वात्तस्येत्याशङ्क्याऽऽह । **आगमोऽपीति ।** न हि वृत्तिव्याप्यत्वादृते प्रतीचः संविद्व्याप्यत्वं कल्प्यं तदात्मत्वादित्यर्थः[3] ॥ ६८७ ॥

**स्वतःसिद्धाद्यतः सिद्धिरज्ञातादपि चाऽऽत्मनः ॥**
**सिद्ध्यसिद्ध्योः प्रमात्रादेस्तत्सिद्धौ किमपेक्षते ॥ ६८८ ॥**

इतश्चाऽऽत्मनो न तद्व्याप्यतेत्याह । **स्वतःसिद्धादिति ।** मात्रादिभावाभावयोर्य-

---

१ घ. फलव्या° । २ क. फलव्या° । ३ घ. °दिति भावः ॥ ६८७ ॥

त्प्रसादात्सिद्धिस्तस्य स्वप्रकाशस्याज्ञातस्य मानजन्यवृत्तिव्याप्यतया सिद्धत्वव्यवहारे नान्यसंविदपेक्षेत्यर्थः ॥ ६८८ ॥

**ज्ञानव्याप्तिर्हि शब्दादौ स्यादेकप्रकृतित्वतः ॥**
**अकार्यकारणे व्याप्तिः कथं स्यात्प्रत्यगात्मनि ॥ ६८९ ॥**

किंच वृत्तिव्याप्यत्वमपि तस्य दुर्वचनमित्याह । **ज्ञानेति** । तत्रोभयसंप्रतिपत्त्यर्थो हिशब्दः । शब्दादौ ज्ञानव्याप्तिरित्यत्र हेतुमाह । **एकेति** । शब्दादेर्बुद्धिवृत्तेश्चाविद्योपादानत्वादित्यर्थः । आत्मनि तु न ज्ञानव्याप्तिरित्याह । **अकार्येति** । एकभूतप्रकृतित्वे सति रूपचक्षुषोर्ग्राह्यग्राहकत्वं दृष्टं न चाऽऽत्मनो ज्ञानेनैकप्रकृतिकत्वमकार्यकारणत्वात्तन्न तत्र वृत्तिरूपस्यापि ज्ञानस्य व्याप्तिरित्यर्थः ॥ ६८९ ॥

**शब्दप्रवृत्तिहेतूनां प्रत्यगात्मन्यसंभवात् ॥**
**नाभिधानाभिधेयत्वसंगत्याऽतः प्रबोध्यते ॥ ६९० ॥**

आत्मनः शाब्दज्ञानाविषयत्वे हेत्वन्तरमाह । **शब्देति** । अतोऽसंभवादिति संबन्धः ॥ ६९० ॥

**प्रत्यगज्ञानहेतूत्थो यत्रानात्मा प्रसिध्यति ॥**
**ज्ञातृज्ञेयप्रभेदः स्यात्तत्र प्रत्यगनात्मनोः ॥ ६९१ ॥**

प्रतीचः संविद्व्याप्यत्वे हेत्वन्तरं वक्तुं भूमिकां करोति । **प्रत्यगिति** । यस्यां खल्वविद्यावस्थायामात्माज्ञानजोऽनात्मा ज्ञायते तत्र प्रतीचोऽनात्मनश्च ज्ञातृज्ञेयभावेन भेदप्रतिभासो भवेद्यत्र हीत्यादिश्रुतेरतस्तत्राऽऽत्मनि न ज्ञानव्याप्तिरित्यर्थः ॥ ६९१ ॥

**यत्र त्वात्मैव मेयः स्यात्तत्र मेयातिरेकतः ॥**
**कः प्रमाता प्रमाणं वा यमेवेति तथा श्रुतिः ॥ ६९२ ॥**

विद्यावस्थामुपन्यस्यति । **यत्र त्विति** । यस्यां विद्यावस्थायामात्मैवाद्वयो वाक्योत्थबुद्धिवृत्त्या व्याप्यते तत्राऽऽत्मातिरेकतो मात्रादेरभावान्न संविद्व्याप्यता **यत्र** त्वस्य सर्वमात्मैवेत्यादिश्रुतेरित्यर्थः । मात्राद्यभावे श्रुत्यन्तरं संवादयति । **यमेवेति** । **यमेवैष** वृणुते तेन लभ्य इति श्रुतेर्मात्रादिविभागाभावः । एष हि परो यमेव साधकं मामयं प्रत्यक्त्वेन प्रतिपद्यतामित्यनुगृह्णाति स तेन तथा शक्यो ज्ञातुमिति श्रुत्यर्थः । तत्कुतो मात्रादिभेदसिद्धिरित्यर्थः ॥ ६९२ ॥

**मानापेक्ष्यैव यो भावः स एवामानतो न सन् ॥**
**मानानपेक्षसिद्धिस्तु कस्मान्मानमपेक्षते ॥ ६९३ ॥**

मानातिरेकि मेयमाक्षिप्यते चेन्मेयस्याऽऽत्मनोऽसत्त्वं मानसिद्धस्यैव सत्त्वादित्याश-

---

१ क. 'नकत्वा' ।

ङ्क्याऽऽह । **मानेति** । आत्मनोऽपि वस्तुत्वादस्ति मानापेक्षेति चेन्नेत्याह । **मानानपेक्षेति** । स्वप्रकाशस्य न मानापेक्षेत्यर्थः ॥ ६९३ ॥

**मातृमानप्रमेयाणां प्रत्यक्त्वादात्मवस्तुनः ॥**
**नातः प्रमेयता तस्य स्वतश्चावगमात्मनः ॥ ६९४ ॥**

इतश्चाऽऽत्मनो न ज्ञानव्याप्यतेत्याह । **मात्रिति** । अतः प्रत्यक्त्वादिति संबन्धः । तत्रैव हेत्वन्तरमाह । **स्वतश्चेति** । स्वरसतः स्फुरत्स्वरूपत्वादात्मनो न मानव्याप्यता वेदान्तास्तु तदाकारां वृत्तिमुत्पादयन्तस्तदज्ञाननिवर्तकतया तत्र प्रमाणमिति[1] भावः ॥६९४॥

**प्रमातत्फलयोर्भित्तेर्नेह चोद्यस्य संभवः ॥**
**क्रिययोर्हि प्रभेदे तत्किं पूर्वमिति चोद्यते ॥ ६९५ ॥**

ज्ञानाज्ञानध्वस्त्योरनिश्चितपौर्वापर्ये कथं तद्ध्वस्तिर्मानफलमित्याशङ्क्याऽऽह । **प्रमेति** । न हि फलान्तरं मानस्याऽऽत्मनि संभाव्यते तत्प्रमायास्तत्फलस्य चाज्ञानध्वस्तेर्हेतुफलभावेन पौर्वापर्यस्य व्यवस्थिततत्वादनयोर्मध्ये किं पूर्वमिति न चोद्यमित्यर्थः । तर्हि कुत्र सावकाशमिति तत्राऽऽह । **क्रिययोरिति** । तत्क्रमस्यानिर्धारितत्वं हिशब्दार्थः । पौर्वापर्यं तादित्युच्यते ॥ ६९५ ॥

**अपीतकरणग्रामः पुमान्यद्वत्सुषुप्तगः ॥**
**शब्दान्निद्रामपास्याथ यथावस्त्ववबोध्यते ॥ ६९६ ॥**

नन्वात्मनि शाब्दी प्रमैव नोत्पद्यते जात्यादिहीने तस्मिन्नगृहीतसंगतेः शब्दस्याबोधकत्वात्तद्दूरापेतं प्रमातत्फलयोः पौर्वापर्यं तत्राज्ञातसंगतेरपि शब्दस्य बोधकत्वे दृष्टान्तमाह । **अपीतेति** । तदनुभवस्याऽऽनुभविकत्वद्योतकोऽथशब्दः ॥ ६९६ ॥

**अगृहीत्वैव संबन्धमभिधानाभिधेययोः ॥**
**हित्वा निद्रां प्रबुध्यन्ते यथेहापि तथाऽऽत्मनि ॥ ६९७ ॥**

दृष्टान्ते विवक्षितमंशमनूद्य दार्ष्टान्तिकमाह । **अगृहीत्वेति** ॥ ६९७ ॥

**शब्दशक्तेरचिन्त्यत्वादात्मत्वाद्बोधरूपिणः ॥**
**तत्सौक्ष्म्यत्वाच्च[2] निद्राया विध्वस्तं मोहहानतः ॥ ६९८ ॥**

दार्ष्टान्तिकं स्फुटयति । **शब्देति** । तस्य हि महिमा न प्राकृतोऽवसेयस्तस्यातीतानागतवर्तमानादिषु तुल्यत्वात् । **उक्तं हि** चोदना हि भूतं भवन्तमि**त्यादि** । तदज्ञातशक्तिको न बोधयत्ययमित्यशक्यं निश्चेतुमित्यर्थः । किंच बोधस्य[3] स्फुरद्रूपत्वाद्बोधकापेक्षव नास्तीत्याह । **आत्मत्वादिति** । अज्ञातमात्मवस्तु वेदान्तवेद्यमित्यङ्गीकारस्तर्हि कथं तत्राऽऽह । **तत्सौक्ष्म्यत्वादिति**[4] ॥ ६९८ ॥

---

१ ख. °मित्यर्थः ॥ ६९४ ॥ २ क. ख. °त्साक्षित्वा° । ३ क. ख. बोध्यस्य । ४ ख. घ. °त्साक्षित्वा° ।

**धर्माधर्मौ रजो ज्ञेयं रजोवत्तन्मलत्वतः ॥**
**तदकर्तृत्वतो ब्रह्म विरजोऽकारणत्वतः ॥ ६९९ ॥**

अप्रमेयवाक्यार्थमुक्त्वोत्तरवाक्यं व्याख्यातुं विरजशब्दार्थमाह । **धर्मेति** । तयो रजस्त्वे हेतुः । **रजोवदिति** । ब्रह्मणो विरजस्त्वं सहेतुकमाह । **तदकर्तृत्वत इति** । ब्रह्मणो धर्माधर्माकर्तृत्वे हेतुमाह । **अकारणत्वत इति** ॥ ६९९ ॥

**असम्यग्ज्ञानयाथात्म्यो जनिमत्प्रकृतित्वतः ॥**
**आत्मैवाऽऽकाशशब्देन श्रुत्येह प्रतिपाद्यते ॥ ७०० ॥**

आकाशशब्दं व्याकरोति । **असम्यगिति** । तृतीये समानाधिकरणे । प्रकृतो मन्त्रः सप्तम्यर्थः ॥ ७०० ॥

**जनिमत्कारणादात्मा योऽस्थूलादिविशेषणः ॥**
**आकाशात्स परो ज्ञेयस्तस्यापूर्वादिरूपतः ॥ ७०१ ॥**

परशब्दार्थं कथयति । **जनिमदिति** । जगत्कारणादाकाशादव्याकृतादस्थूलादिविशेषणस्याऽऽत्मनोऽन्यत्वे हेतुमाह । **तस्येति** ॥ ७०१ ॥

**यस्मादेवमतोऽजोऽसावकार्याकारणत्वतः ॥**
**अजत्वादेव निःशेषविकाराणामपाक्रिया ॥ ७०२ ॥**

अज इत्यस्यार्थमाह । **यस्मादिति** । उपजीव्यतयोक्तमेव हेतुं स्पष्टयति । **अकार्येति** । अजविशेषणस्याऽऽर्थिकमर्थमाह । **अजत्वादिति** ॥ ७०२ ॥

**अव्यावृत्तानतुगतेर्महानात्मेति भण्यते ॥**
**कौटस्थ्याच्च ध्रुवो ज्ञेयो विकारोच्छित्त्यसंभवात् ॥ ७०३ ॥**

आत्मा महानित्यनयोरर्थमाह । **अव्यावृत्तेति** । ध्रुव इत्यस्यार्थमाह । **कौटस्थ्याच्चेति** । विकारस्योच्छित्तेश्चासंभवात्कौटस्थ्यमतश्च ध्रुव इत्यर्थः ॥ ७०३ ॥

**प्रत्यक्तया श्रुतेर्वाक्यात्तमेवोक्तविशेषणम् ॥**
**अन्वयव्यतिरेकाभ्यां विज्ञायाऽऽत्मानमादितः ॥ ७०४ ॥**

तमेवेत्यादेरर्थमाह । **प्रत्यक्तयेति** । उक्तविशेषणं विरजस्त्वादिविशेषणवन्तमिति यावत् । चतुर्विधान्वयव्यतिरेकानुरोधेन तन्मूलश्रुत्या च पदार्थौ परिशोध्य प्रज्ञां कुर्यादित्यर्थः ॥ ७०४ ॥

**बुभुत्सोच्छेदिनीं प्रज्ञां सर्वाज्ञाननिरासतः ॥**
**सर्वज्ञेयसमाप्तेश्च कुर्याद्वाक्यार्थबोधतः ॥ ७०५ ॥**

प्रज्ञां कुर्वीतेत्यस्यार्थमाह । **बुभुत्सेति** । वाक्यार्थज्ञानाज्ज्ञेयस्य सर्वस्य ज्ञातत्वाद-

---

१ ग. °थात्म्यज° । २ क. ग. °च्छेदनी ।

ज्ञानस्य च निरस्तत्वादशेषाकाङ्क्षाशान्तिरतो वाक्यार्थधीरूपां सर्वाकाङ्क्षाध्वंसित्वेन परमपुरुषार्थहेतुं प्रज्ञां तत्त्वमादिवाक्यवशादेवाऽऽपादयेदित्यर्थः ॥ ७०५ ॥

**इह व्याचक्षते केचिदुक्ताद्व्याख्यानतोऽन्यथा ॥**
**कृतायाः करणं कीदृक्प्रज्ञाया इति चोदिते ॥ ७०६ ॥**

विज्ञाय प्रज्ञां कुर्वीतेत्यत्र पदार्थद्वयज्ञानं संपाद्य वाक्यार्थज्ञानं कुर्यादिति वाक्यार्थ उक्तः । इदानीं भर्तृप्रपञ्चमतमाह । **इहेति** । अन्यथाव्याख्यानमेवाऽऽख्यातुं तदीयं चोद्यमनुद्रवति । **कृताया इति** । विज्ञायेति ल्यबन्तेन निष्पन्ना प्रज्ञोच्यते तस्याश्च प्रज्ञां कुर्वीतेति पुनः करणं कथ्यमानमयुक्तं पिष्टपिष्टेरित्यर्थः ॥ ७०६ ॥

**उच्यते वचसा बुद्धौ वस्तुमात्रं समर्प्यते ॥**
**विज्ञातस्य सतत्त्वस्य तादात्म्यप्रतिपादनम् ॥ ७०७ ॥**
**भावनाज्ञानसंतानैः प्रज्ञाकरणमुच्यते ॥**
**अस्मिन्काले तु सा प्रज्ञा निष्ठां नीता कृता भवेत् ॥ ७०८ ॥**

समाधिमाह । **उच्यत इति** । अनुभवानारूढं वस्तु बुद्धौ शब्देनार्प्यते तच्च शाब्दं परोक्षज्ञानं विज्ञायेत्युच्यते परोक्षतया ज्ञातस्य ब्रह्मणः प्रतीचा तादात्म्यसाक्षात्करणं शब्दज्ञानाभ्यासप्रचयोत्थं प्रज्ञा तस्याश्च मुमुक्षुयत्नसाध्यताऽत्र विवक्षितेत्यर्थः । अहं ब्रह्मेति शाब्दे ज्ञाने सति कृतं साक्षात्कारेणेत्याशङ्क्याऽऽह । **अस्मिन्निति** । सा हि शब्देन कृता प्रज्ञा साक्षात्कारकाले निष्ठां नीता सफला स्यादतः शाब्दज्ञानवताऽपि साक्षात्कारोऽपेक्ष्यत इत्यर्थः ॥ ७०७ ॥ ७०८ ॥

**इत्येतदुररीकृत्य विज्ञायेत्युक्तमादरात् ॥**
**प्रमाणवृत्तमुक्त्वैतन्मनसैवेतिवाक्यतः ॥ ७०९ ॥**

उक्तेऽर्थे श्रुत्यभिप्रायं दर्शयितुं तदुत्थानप्रकारमाह । **इत्येतदिति** । अनुभवानारूढं शाब्दं ज्ञानमादावुत्पद्यते तदभ्यस्यमानं साक्षात्कारमापाद्य फलवदित्येतदङ्गीकृत्य मनसैवानुद्रष्टव्यमितिवाक्येन शब्दप्रमाणस्य बोधनप्रकारमभिधाय विज्ञायेत्यादिवाक्यमवतारितं श्रुत्यैवेत्यर्थः ॥ ७०९ ॥

**मात्राद्यप्रविभक्तं सदद्वैतं ब्रह्म शाश्वतम् ॥**
**द्रष्टव्यं तत्कथं साक्षान्मातृमानाद्यसंभवात् ॥ ७१० ॥**

कथं मनसैवेत्यादिना मानवृत्तमुक्तमित्याशङ्क्य तद्दर्शयितुं परकीयं चोद्यमुद्भावयति । **मात्रादीति** । अद्वयमनाद्यनन्तं मात्रादिहीनं ब्रह्म साक्षात्कर्तुमशक्यं हेत्वभावादित्यर्थः ॥ ७१० ॥

---

१ ख. ग. समस्तस्य ।

**द्रष्टव्यं मनसैवैतन्नान्या गतिरिहेष्यते ॥**
**कथं तदिति चेदत्र मानव्यापार उच्यते ॥ ७११ ॥**

एतदुत्तरत्वेन मनसेत्यादि योजयति । **द्रष्टव्यमिति** । इहेति ब्रह्मदर्शनोक्तिः । मनसैव ब्रह्म द्रष्टव्यमित्ययुक्तं तद्विषयत्वनिषेधेन तस्यौपनिषदत्वोपगमादिति शङ्कते । **कथमिति** । औपनिषदमपि तत्तेन द्रष्टव्यमित्यस्मिन्नर्थे साध्ये सति शब्दस्य बोधनप्रकारस्तावत्प्रदर्श्यत इत्याह । **अत्रेति** ॥ ७११ ॥

**तत्त्वमस्यादिवाक्योक्तौ शब्दमात्रावलोकनम् ॥**
**श्रोत्रेण क्रियते तस्य शब्दस्याऽऽलोचितस्य तु ॥ ७१२ ॥**
**स्वरवर्णपदोक्त्याऽऽनुपूर्वी या प्रविभागभाक् ॥**
**प्रविभक्तक्रमवती मनसा तस्य कल्प्यते ॥ ७१३ ॥**

उक्तिप्रकारं प्रकटयति । **तत्त्वमिति** । अस्यार्थः । आचार्येण तत्त्वमादिवाक्योच्चारणानन्तरं तन्मात्रस्य ग्रहणं मुमुक्षुणा श्रोत्रमात्रेण क्रियते तस्य गृहीतशब्दमात्रस्य स्वरवर्णपदात्मकोक्तीनामानुपूर्वी प्रवाहरूपा स्वराद्यैकैकविशेषिता प्राथम्यचारम्यरूपेण प्रविभक्तक्रमवती या प्रसिद्धा सा तस्य श्रोत्राभिव्यक्तशब्दस्य मनसा कल्प्यते तन्मात्रेण गृह्यत इति ॥ ७१२ ॥ ७१३ ॥

**स्वेनार्थेनाभिसंबन्धः सिद्धशब्दस्य यः सदा ॥**
**दृश्यते मनसैवासौ नातोऽन्येनेह केनचित् ॥ ७१४ ॥**

अस्तु शब्दमात्रस्य श्रोत्रमात्रग्राह्यत्वं विशिष्टस्य तु तस्य मनोगम्यत्वं तथाऽपि शब्दार्थयोः संगतिरनुमानगम्या न मानसी तत्कथं शब्दादात्मविज्ञानं मानसं स्यात्तस्यापि संगतिवदानुमानिकत्वसिद्धेरित्याशङ्क्याऽऽह । **स्वेनेति** । यः शब्दार्थयोः संबन्धः सदा सिद्ध औत्पत्तिकस्तु शब्दस्यार्थेन संबन्ध इति न्यायाद्व्युत्पत्तिकाले चानुमानादवगतो व्यवहारो हि मूलं बालानां व्युत्पत्तेरिति स्थितेः स तु व्युत्पन्नाच्छब्दादर्थधीकाले मनसैव स्मर्यते तथाच संबन्धस्य मानसत्वात्तज्ज्ञातशब्दजन्या धीर्मानस्येवेत्यर्थः । इहेति व्युत्पत्तिकाले व्युत्पन्नस्य शब्दाद्व्यवहारकाले चे[3]त्यर्थः ॥ ७१४ ॥

**तत्रार्थप्रत्ययो योऽसौ प्रमातुर्मानसो भवेत् ॥**
**अविशिष्टः स बाह्येन मेयेनार्थेन संगतः ॥ ७१५ ॥**

शब्दार्थसंबन्धस्मरणपूर्वकं शब्दादर्थे जायमानमानसप्रत्ययस्यार्थाकारत्वमाह । **तत्रेति** । शब्दार्थयोः संबन्धस्यानुस्मरणे सतीति यावत् । अविशिष्टस्तद्रूपस्तदाकार इत्यर्थः । तस्य बाह्यमेयाकारत्वे हेतुमाह । **अर्थेनेति** ॥ ७१५ ॥

---

१ क. ख. °राद्येकै° । २ क. ख. °त्मनि ज्ञा° । ३ क. चेत्यर्थः ।

**प्रत्ययश्च यथारूपो मानसोऽस्योपजायते ॥**
**प्राज्ञ आत्माऽपि तादात्म्यात्तन्मयत्वं निगच्छति ॥ ७१६ ॥**

न केवलं प्रत्ययस्यार्थमयत्वं किंत्वात्मनोऽपीत्याह । **प्रत्ययश्चेति** । तादात्म्यान्मनसो यो बोध्यस्तदभेदात्तदात्मकप्रत्ययेनापि तद्भावादित्यर्थः । तन्मयत्वं बाह्यार्थमयत्वं तत्प्रधानत्वमित्येतत् ॥ ७१६ ॥

**मनोबुद्ध्योरभेदेन व्यवहारश्रुताविह ॥**
**तत्रैवं सति योऽप्यस्य देवताविषयो भवेत् ॥ ७१७ ॥**
**यथा श्रुतौ मनस्येव प्रत्ययः सोऽवतिष्ठते ॥**
**तन्मयत्वं तथैवैति*[1]क्रमेणैव स मानवः ॥ ७१८ ॥**

शब्दार्थे प्रत्ययो मानस इत्ययुक्तं तस्य बौद्धत्वाभ्युपगमादित्याशङ्क्याऽऽह । **मन इति** । इह मनसैवेत्यादावित्यर्थः । आत्मनः सामान्यतो ज्ञानद्वारा ज्ञेयमयत्वमुक्त्वा विशिष्टदेवतादिज्ञाने सति तदुपास्त्या तन्मयतेति विशेषमाह । **तत्रेति** । तस्मिन्नात्मनि धीद्वारा बाह्यार्थमयत्वे सति योऽप्यस्याऽऽत्मनो देवताविषयः प्रत्ययः श्रुतौ निमित्तभूतायां स्यात्स मनस्येवावतिष्ठते*ऽतो यथा बाह्यप्रत्ययाभ्यासात्तन्मयत्वं तथा देवताप्रत्ययावृत्तेः स क्रमेण देवतामयत्वं गच्छति देवो भूत्वेत्यादिश्रुतेरित्यर्थः । मनुष्यस्यैव सर्वासूपास्तिष्वधिकार इतिद्योतनार्थं मानव इति विशेषणम् ॥ ७१७ ॥ ॥ ७१८ ॥

**द्वैतैकत्वं श्रुताच्छब्दात्पश्यतीह यदा[2] ह्यसौ ॥**
**हैरण्यगर्भमात्मेति बौद्धं ज्ञानं तदा भवेत् ॥ ७१९ ॥**
**स खलूत्पन्नविज्ञानस्तन्मयः संस्तथा व्रजेत् ॥**
**तस्मिन्नेव स विज्ञान आत्मरूपे स्थितो भवेत् ॥ ७२० ॥**
**बौद्धेऽथ स यदा तत्त्वं परं समनुपश्यति ॥**
**तदा विविच्य रूपाणि क्रमशो यो धियः शुभम् ॥**
**वीक्षते केवलं शुद्धं तत्त्वं ब्रह्म सनातनम् ॥ ७२१ ॥**

इन्द्रादिमयत्वमुक्त्वाऽऽत्मनः सूत्रमयत्वमाह । **द्वैतेति** । प्रामाणिकव्यवहारे श्रुतसूत्रप्रतिपादकशब्दादहं हिरण्यगर्भोऽस्मीति समस्तव्यस्तात्मकं सौत्रं तत्त्वमात्मा यदा पश्यति तदा तस्य बुद्धिवृत्तिरूपं विज्ञानमावृत्तियोग्यं भवति स चैवमुत्पन्नज्ञानस्तदभ्यसन्विज्ञानमयः सन्विज्ञानानुसारेण विज्ञेयसूत्रमयत्वं गच्छति ततश्च तस्मिन्नेवाहंग्रहेण ज्ञाते तद्रूपे बौद्धादिशब्दिते स्वरूपभूते साधकस्तिष्ठतीत्यर्थः । सूत्रावस्थां प्राप्तस्य

* एतट्टीकानुरोधेन मूले क्रमेणैवेत्यत्र क्रमेणात इति स्यादित्यनुमीयते ।

१ ख. °णैवं स । २ घ. °ताविज्ञ° । ३ ख. ग. °दाऽप्यसौ ।

तत्त्वमयत्वमाह । अथेति । सूत्रात्मना स्थित्यनन्तरं स पुरुषस्तथा स्थितो यदा तत्त्वमादिवाक्यादहं ब्रह्मेति परं तत्त्वं सम्यक्पश्यति तदा तदनुसंधानाद्धियो देवतादिरूपाणि क्रमेण त्यक्त्वा सर्वसंसारनिर्मुक्तं तद्धेतुना च हीनमद्वयं वास्तवमनाद्यनन्तं ब्रह्म नैरन्तर्येण यो वीक्षते स तदेव तत्क्रतुन्यायाद्भवतीत्यर्थः ॥ ७१९॥७२०॥७२१॥

**तन्मनोऽथ परे तत्त्वे लब्धलक्ष्यं स्व आत्मनि ॥**
**रूपाणि विलिखत्साक्षान्निर्वाणं संप्रलीयते ॥ ७२२ ॥**

ननु नाद्वयं ब्रह्म तदवगतिहेतोर्मनसो द्वितीयस्य सत्त्वादित्याशङ्क्याऽऽह । **तन्मन इति** । स्वकार्येण सह मनो निःशेषं साक्षाल्लीयते ब्रह्मणीत्यर्थः । कल्पितस्याकल्पिते लयो रज्जुभुजंगवदिति वक्तुमथेत्युक्तम् । लब्धलक्ष्यं प्राप्तावकाशमित्यर्थः ॥ ७२२ ॥

**परं तत्त्वं प्रदृश्यैवं मनस्यद्वैततां गते ॥**
**विज्ञानं केवलं शुद्धं स्वात्मन्येवावतिष्ठते ॥ ७२३ ॥**

तत्र स्वरूपेण मनसि लीने सत्यवशिष्टं व्याचष्टे । **परमिति** । केवलमित्यद्वयत्वं शुद्धमिति कार्यकारणस्पर्शशून्यत्वमुच्यते ॥ ७२३ ॥

**दाह्यं दग्ध्वा यथा वह्निर्दाह्यनाशमनु स्वयम् ॥**
**नश्यतीदं मनस्तद्वद्द्वैतमद्वैतरूपताम् ॥**
**आपाद्य विषयं सम्यक्स्वयमेव प्रलीयते ॥ ७२४ ॥**

मनसः स्वात्मनि ब्रह्मणि दर्शितं लयं दृष्टान्तेन साधयति । **दाह्यमिति** । विषयशब्दो द्वैतशब्देन संबध्यते ॥ ७२४ ॥

**मनस्यस्मिन्विलीने तु यत्सुखं स्वात्मसाक्षिकम् ॥**
**योगावस्थां परामेतामाहुर्योगविदो जनाः ॥ ७२५ ॥**

मनोलयादनन्तरं परमसुखरूपा परब्रह्मावस्था विद्वदनुभवसिद्धा तत्र योगशास्त्रसंमतिमाह । **मनसीति** । उक्तं हि सर्ववृत्तिनिरोधे त्वसंप्रज्ञातसमाधिरिति[२] । धर्ममेघनामधेयं समाधिमभिधाय चोक्तं ततः क्लेशकर्मनिवृत्तिस्तस्मादविद्यादयः क्लेशाः समूलकापं कषिता भवन्ति कुशलाकुशलाश्च कर्माशयाः समूलघातं हता भवन्ति क्लेशकर्मनिवृत्तैस्तु जीवन्नेव विद्वान्मुक्तो[३] भवतीति ॥ ७२५ ॥

**भूमौ यथाऽऽहितं लोहं भूमित्वमुपगच्छति ॥**
**मनोऽक्षरे धृतं तद्वदक्षरत्वं निगच्छति ॥ ७२६ ॥**

वह्निदृष्टान्ते वह्निकाष्ठविनाशयोर्भिन्नाधारत्ववन्मनोद्वैतनाशयोरपि स्यात्तथा च नाऽऽत्मनि मनोलय इत्याशङ्क्याऽऽह । **भूमाविति** ॥ ७२६ ॥

---

१ घ. 'ल्पिततत्त्व ल' । २ घ. 'ति । असंप्रज्ञातना' । ३ घ. 'द्वान्विमुक्तो ।

**एतच्च दृष्टं लोकेऽपि यैर्भावैः संप्रयुज्यते ॥**
**मनस्तन्मयतामेति तद्भावेनानुरञ्जितम् ॥ ७२७ ॥**

लोहस्य भूविकारत्वात्तत्र निहितस्य तन्मयत्वेऽपि मनसो भौतिकस्याक्षरविकारत्वाभावान्नैवमित्याशङ्क्य परिहर्तुं सामान्यन्यायमाह । **एतच्चेति** ॥ ७२७ ॥

**एवमस्मिन्परे तत्त्वे भाव्यमाने मुमुक्षुणा ॥**
**तद्भावमचिरेणैति स्थैर्यं चात्रैव गच्छति ॥ ७२८ ॥**

उक्तन्यायं प्रकृते योजयति । **एवमिति** । विषयेषु रञ्जितं तन्मयमपि मनस्तेभ्यो विमुखं कदाचिद्दृष्टं तथाऽऽत्मनि धृतं तद्रूपमपि तत्तस्मात्कदाचिच्च्यवेतेत्याशङ्क्याऽऽह । **स्थैर्यं चेति** । आत्मीभूतस्य मनसो न ततश्च्युतिरनिर्मोक्षप्रसङ्गादनुसंधेयान्तराभावाच्चेत्यर्थः ॥ ७२८ ॥

**मनोविनाशमन्वेष विज्ञानात्मा विलीयते ॥**
**यथा संकल्पितश्चार्थ उभयोर्ज्ञानयोगयोः ॥ ७२९ ॥**

मनसो ब्रह्मणि लयेऽपि न मुक्तिः संसारिणः सत्त्वादित्याशङ्क्याऽऽह । **मन इति** । तदुपाधिकत्वादित्यर्थः । किं तत्र साधनमित्याशङ्क्य समुच्चय इत्याह । **यथेति** । यथाऽऽत्मनि मनोलयस्तथाऽस्मिञ्जीवलयोऽपि दर्शितो ज्ञानकर्मणोः समुच्चितयोरर्थ इति योजना ॥ ७२९ ॥

**एतदेवमभिप्रेत्य तदुक्तं नेह किंचन ॥**
**नानाऽस्तीत्येवमेकत्वमस्मिञ्शास्त्रेऽभिधीयते ॥ ७३० ॥**

मनसैवेत्यादेरर्थमुक्त्वा नेहेत्याद्यवतार्य तात्पर्यमाह । **एतदिति** । फलावस्थमद्वयमात्मरूपमङ्गीकृत्य नेहेत्यादिप्रवृत्तेस्तत्र मुक्तात्मनि नानात्वाभावमाहेत्यर्थः । तन्निषेधेऽध्यक्षादिविरोधमाशङ्क्याऽऽह । **इत्येवमिति** । संसारदशायां नानात्वस्य सत्त्वेऽपि मोक्षावस्थायां तदसत्त्वमित्यनया रीत्यैक्यं शास्त्रे विवक्षितं तथाच सांसारिकनानात्वविषयत्वात्प्रत्यक्षादेर्न विरोध इत्यर्थः ॥ ७३० ॥

**मुक्तिप्रवेशोपायोऽयं यथोक्तेनेह वर्त्मना ॥**
**उक्तो मनस एकस्मिन्प्रत्ययो मानसो यतः ॥ ७३१ ॥**

भागशो वाक्यतात्पर्यमुक्त्वा समुदायेन विवक्षितमर्थमाह । **मुक्तीति** । मनोलयादिद्वारा मुमुक्षोर्मोक्षानुप्रवेशो को हेतुरस्मिन्वाक्ये मनसः संबन्धी विवक्षितस्तत्राऽऽह । **एकस्मिन्निति** । एकमद्वयं ब्रह्मास्मीत्येकस्मिन्ब्रह्मणि योऽत्यन्तदृढप्रत्ययो मानसः स मोक्षप्रवेशहेतुरित्यर्थः । प्रथमार्थे यतःशब्दः ॥ ७३१ ॥

**एकत्वधीव्यवस्थाऽपि मानस्येवेति गम्यताम् ॥**

वृत्तिः सा त्वपरिक्षीणा मनोवृत्तिरियं भवेत् ॥
तावद्यावदमी सर्वे विशेषाः स्युः क्षयं गताः ॥ ७३२ ॥

कथमैक्यप्रत्ययस्य मानसत्वमात्मतत्त्वतद्विकारत्वयोरन्यतरत्वात्तत्राऽऽह । **एकत्वेति** । न तावदात्मैव तद्धीराद्यन्तवत्त्वान्नापि विकारस्तस्यापरिणामित्वादतः साऽऽत्मनो ब्रह्मत्वव्यवस्थापकत्वाद्व्यवस्थेत्युच्यमाना मानसी वृत्तिरेवेति निश्चय इत्यर्थः । नानात्वधीवादित्यपेरर्थः । तस्याः स्थित्यवधिमाह । **सा त्विति** । पश्चान्निरिन्धनाग्निवदुपयोगाभावादुपशाम्यतीत्यर्थः ॥ ७३२ ॥

स्वात्मन्येवाथ संशुद्धं ज्ञानमद्वैतरूपकम् ॥
अवस्थितं भवेत्साक्षादेवं कृत्वेदमुच्यते ॥ ७३३ ॥

विषयेषु क्षीणेषु क्षीणायां च तस्यां किमवशिष्यते तदाह । **स्वात्मनीति** । ज्ञानस्य स्वमहिमप्रतिष्ठत्वे प्रतिबन्धकाभावं हेतूकर्तुमथेत्युक्तम् । साक्षादित्यस्यैव निरपेक्षत्वमुच्यते । उक्तमात्मस्वरूपं मनसि कृत्वैकधेत्यादि प्रवृत्तमित्याह । **एवं कृत्वेति**॥७३३॥

मनसाऽनुप्रविश्येदं क्रमेणैकात्म्यमुत्तमम् ॥
यत्नादप्रमयं तत्त्वं द्रष्टव्यं तद्विपश्चिता ॥ ७३४ ॥

तस्यार्थमाह । **मनसेति** । क्रमेण देवनासूत्रासिद्वारेत्यर्थः ॥ ७३४ ॥

कौटस्थ्याद्ध्रुवमक्षय्यं प्रत्यगात्मन्यवस्थितम् ॥ ७३५ ॥
विरजः शुद्ध इत्यर्थ आकाशात्परतः स्थितः ॥
अजो न जायते यस्मान्महान्सर्वमहत्तरः ॥ ७३६ ॥

ध्रुवमित्यस्यार्थमाह । **कौटस्थ्यादिति** । विरज इत्यादि व्याकरोति । **विरज इति** ॥ ७३५ ॥ ७३६ ॥

तमेवंविधमात्मानं ज्ञात्वा कुर्यान्मतिं दृढाम् ॥
भावनाज्ञानसंतानसंरूढामविचालिनीम् ॥ ७३७ ॥
द्वैताभिधायकाञ्शब्दान्ध्यानकाले न चिन्तयेत् ॥
वाचं ते ग्लापयन्त्येतां येयमेकत्ववाचिनी ॥ ७३८ ॥

तमेवेत्यादेरर्थमाह । **तमिति** ॥ ७३७ ॥ ७३८ ॥

ग्लानौ तस्यास्तदर्थेऽस्य मनोऽस्मिन्नाधिवर्तते ॥ ७३९ ॥
तस्मान्न चिन्तयेदेतान्किंतु यैकत्ववाचिनी ॥
वाक्पूर्वं चिन्तयित्वा तां तदर्थं धारयेन्मनः ॥ ७४० ॥

अस्त्वेकत्ववाचिन्या वाचो ग्लानिः का हानिस्तत्राऽऽह । **ग्लानाविति** । निषेधा-

१ ख. ग. 'नाध्यान' । २ क. 'चालनी' । ३ क. ख. ग. 'तु चैक' । ४ क. ख. ग. 'नीम् ॥ वा' ।

र्थमुपसंहरति । **तस्मादिति** । किं तर्हि मुमुक्षुणा कर्तव्यं तदाह । **किंत्विति** ॥ ७३९ ॥ ७४० ॥

**श्रीमद्भर्तृप्रपञ्चस्य श्लोकव्याख्येयमीरिता ॥ ७४१ ॥**

**मनसैवेत्युपक्रम्य सा त्विदानीं विचार्यते ॥**

**न्याय्याऽन्याय्येति वा यत्नाद्युक्तिभिः प्रविभागशः ॥ ७४२ ॥**

परपक्षमुपसंहरति । **श्रीमदिति** । तत्र दोषं संभावयति । **सा त्विति** । तात्पर्येण विचार्य विभज्य युक्तिभिः सहितो भागो गृह्यते त्यज्यते चेतर इति विचारफलमाह । **यत्नादिति** ॥ ७४१ ॥ ७४२ ॥

**मनसैवानुद्रष्टव्यमिति यद्भवतेरितम् ॥**

**सत्यमेतन्मनो मुक्त्वा न तस्यास्त्यन्यतो गतिः ॥ ७४३ ॥**

परप्रस्थानस्थमादेयं दर्शयन्द्रष्टव्यं मनसैवैतन्नान्या गतिरिहेत्युक्तमङ्गी करोति । **मनसैवेति** ॥ ७४३ ॥

**तत्त्वस्माभिर्यथाऽभाणि मनसैवेति दर्शनम् ॥**

**मनसा शक्यते द्रष्टुं तत्तथैव प्रमान्वयात् ॥ ७४४ ॥**

अगतिका हीयं गतिर्यत्परोदीरिताङ्गीकरणमित्याशङ्क्याऽऽह । **तत्त्विति** । आत्मनो दर्शनं मनसैवेति यथाऽस्माभिरुक्तं तथैव त्वयापि तदात्मतत्त्वं मनसैव शक्यते द्रष्टुमिति वदतोच्यते तन्नास्माभिर्दूष्यते मनसैवानुद्रष्टव्यमित्यादिमानसिद्धार्थस्यादूष्यत्वादित्यर्थः ॥ ७४४ ॥

**प्रमाणव्यापृतिर्याऽपि भवतेहोपवर्णिता ॥**

**साऽपि कामं भवत्वेव न दोषस्तत्र भण्यते ॥ ७४५ ॥**

यत्तु तत्त्वमस्यादिवाक्योक्तावित्यादिना शब्दस्य बोधनप्रकारो दर्शितः सोऽप्यस्माभिरङ्गीकृत एवेत्याह । **प्रमाणेति** । इहेति पूर्वपक्षोक्तिः ॥ ७४५ ॥

**शब्दप्रधानं विज्ञानं प्रमातृव्यापृतौ पुरा ॥**

**जायतेऽनन्तरं शब्दः स्वव्यापारक्रमादथ ॥**

**ज्ञानप्रधानतामेति स्वार्थसंकेतवर्त्मना ॥ ७४६ ॥**

शब्दस्य बोधनप्रकारं परोक्तं स्वेन स्वीकृतं सोपस्कारं प्रपञ्चयति । **शब्देति** । आचार्येण शब्दोच्चारणानन्तरं प्रमातुः श्रोतुः शब्दमात्रविषयायां श्रोत्रकरणिकायां व्यापृतौ ज्ञानाख्यायां सत्यां तज्ज्ञानमादौ शब्दप्रधानं भवति कर्मकारकस्य कर्मणि प्राधान्यादित्यर्थः । तद्ग्रहानन्तरं शब्दस्यार्थसंबन्धस्मरणापेक्षया स्वार्थबोधनक्रमेण तद्विषै-

१ क. °रमा° । २ ख. °वत्येव । ३ घ. °षयं ज्ञा° ।

यज्ज्ञानं प्रधानीकृत्य तत्प्रति गुणतामेति करणत्वेन तदुत्पादकत्वादित्याह । **अनन्तर-मिति** । शब्दस्योक्तार्थबोधनप्रकारोपसंहारार्थोऽथशब्दः ॥ ७४६ ॥

**वर्णस्वरादिक्रमवद्वाक्यरूपानुरञ्जितम् ॥**
**अज्ञातार्थाधिगतौ तु ज्ञानं मानमितीर्यते ॥ ७४७ ॥**

शब्दप्रधानमित्यादिना जायत इत्यन्तेनोक्तं व्यनक्ति । **वर्णेति** । वर्णाश्च स्वराश्च पदानि च तेषां यः क्रमस्तद्विशिष्टं यद्वाक्यं तदाकारं यज्ज्ञानं श्रोत्रोत्थं तच्चाज्ञातवा-क्यरूपार्थाधिगतिं निमित्तीकृत्य प्रवृत्तत्वाद्वाक्ये प्रमाणमित्युच्यतेऽतो वाक्यं प्रति ज्ञानं गुणस्तस्य कर्मत्वेन प्रधानत्वादित्यर्थः ॥ ७४७ ॥

**शब्दाभिन्नं पुरा ज्ञानं शब्दरूपानुरञ्जितम् ॥ ७४८ ॥**
**स्वप्रमेये प्रमाणं तदिति यद्वदिहोदितम् ॥**
**प्रमेयेऽपि तथैवैतत्पूर्वं मेयप्रधानकम् ॥ ७४९ ॥**

अनन्तरमित्यादि प्रपञ्चयन्नुक्तमर्थं दृष्टान्तमेवानुवदति । **शब्देति** । यथा श्रोत्रेण शब्दज्ञानोत्पत्तिकाले शब्दस्य कर्मतया प्राधान्यमुत्पत्त्यनन्तरं सत्ताकाले ज्ञानस्य गुणत्वं तस्य शब्दसाधकत्वाच्च ज्ञानं शब्दाभिन्नं स्वार्थे शब्दे मानमिति पूर्वत्र स्थितमित्यर्थः । शब्दाभिन्नमित्यस्यैवार्थमाह । **शब्दरूपेति** । दार्ष्टान्तिकमाह । **प्रमेयेऽपीति** । उक्त-दृष्टान्तानुसारेण मेयेऽपि घटादौ शब्दोत्थमेतज्ज्ञानमुत्पत्तिकाले घटादिप्रधानकं भवति तस्य कर्मत्वेन प्रधानत्वादित्यर्थः ॥ ७४८ ॥ ७४९ ॥

**मेयव्यापारतः पश्चात्प्राप्तज्ञानानुरञ्जनात् ॥**
**गुणत्वं व्रजति ज्ञाने प्रमेयोऽर्थः प्रमातरि ॥ ७५० ॥**

अर्थप्रधानकज्ञानोत्पत्त्युत्तरकालं मेयस्य मानव्याप्यत्वरूपव्यापारवशादसौ मेयोऽर्थः स्वविषयेण मातृपरिणामेन ज्ञानेन संबन्धात्तस्मिन्गुणत्वं गच्छति प्रमातरि तेनाऽऽपा-दितस्फुरणवत्त्वादित्याह । **मेयेति** ॥ ७५० ॥

**अमितार्थानुगं ज्ञानं प्रमेयार्थानुरञ्जितम् ॥**
**पूर्वोक्तेन प्रमाणेन संगतेर्मेय उच्यते ॥ ७५१ ॥**

तच्च ज्ञानमर्थे शब्दोत्थं तदाकारं तन्मानमज्ञातार्थविषयत्वादित्याह । **अमितेति** । घटादेर्मेयत्वे हेतुमाह । **पूर्वेति** । उक्तरूपेण ज्ञानेनेत्यर्थः ॥ ७५१ ॥

**मेयमानाभिसंबन्धो यथेह प्रतिपादितः ॥**
**एवमेवैष विज्ञेयो मेयमानान्तरेष्वपि ॥ ७५२ ॥**

शाब्दधीमेययोरुक्तां प्रक्रियामन्यत्राप्यतिदिशति । **मेयेति** ॥ ७५२ ॥

---

१ ग. °तौ तज्ज्ञानं ।

**मेयमानाभिसंबन्धान्मानमेयार्थसंकरात् ॥**
**नश्यद्विशेषणत्वं तन्मानं याति फलात्मनि ॥ ७९३ ॥**

ज्ञानज्ञेयनिष्ठां प्रक्रियां प्रदर्श्य ज्ञानतत्फलसंबद्धां प्रक्रियामाह । **मेयेति** । मानमेययोर्मिथःसंबन्धादूर्ध्वं क्षणिकत्वान्नश्यज्ज्ञानं फले विशेषणत्वमेतीत्यर्थः ॥ ७९३ ॥

**तावन्मात्रप्रधानत्वात्प्रमाणफलमुच्यते ॥**
**इत्येष मानव्यापारो यथावदनुवर्णितः ॥ ७९४ ॥**

तत्प्रकारमभिनयति । **तावन्मात्रेति** । फलमेव मानस्य प्रधानं तदवसायितां विना तस्योपेक्षणीयत्वात्तस्मात्तस्येदं फलमिति फले स्फुरणाख्ये विशेषणत्वं गच्छन्मानमपि[1]गच्छति तत्पुनरनाद्यनन्तमद्वयमित्यर्थः । मानव्यापारमङ्गीकृतं संस्कृत्य प्रपञ्चितमुपसंहरति । **इत्येष इति** ॥ ७९४ ॥

**व्यापारः कर्तृतन्त्रः स्यात्तनुवाग्बुद्धिसाधनः ॥**
**पुंसस्तत्र स्वतन्त्रत्वाद्विद्याच्छास्त्रं प्रवर्तकम् ॥ ७९५ ॥**

भर्तृप्रपञ्चप्रक्रियायामादेयत्वेनादूष्यांशो दर्शितः संप्रति वचसा बुद्धौ वस्तुमात्रमित्यादिना विज्ञायेत्यादौ प्रज्ञाकरणं विधेयमित्युक्तं दूषयितुं भूमिकां करोति । **व्यापार इति** । यत्पुंसा कर्तुमकर्तुमन्यथा च कर्तुं शक्यं तद्विधेयं यथा यागादि देहादिसाध्ये धात्वर्थे पुंसः स्वातन्त्र्यादित्यर्थः । उक्ते व्यापारे विधिशास्त्रस्य सावकाशत्वं दर्शयति । **विद्यादिति** ॥ ७९५ ॥

**वस्तुतन्त्रं तु सद्यत्र विज्ञानं जायते बलात् ॥**
**तत्रापुरुषतन्त्रत्वान्न कश्चिद्विधिरिष्यते ॥ ७९६ ॥**

विधेयवृत्तमुक्त्वा तदभावात्प्रकृते प्रज्ञाकरणविध्यसंभवमाह । **वस्त्विति** । प्रमाणज्ञाने नियमापूर्वपरिसंख्यानामन्यतमोऽपि विधिर्न संभवति तस्य प्रमाणबलाज्जायमानस्य वस्तुमात्रतन्त्रतया पुरुषानधीनत्वान्न च शब्दादेव तत्त्वधीसंभवे तदुद्देशेनाभ्यासे विधिरकिंचित्करत्वादित्यर्थः ॥ ७९६ ॥

**व्यापारः कर्तृतन्त्रो हि तमेतमितिशास्त्रतः ॥**
**नित्यो ध्यानादिरूपो वा स स्याद्बुद्धिविशुद्धये ॥ ७९७ ॥**

इतश्च प्रज्ञाकरणवाक्यं न विधिपरमित्याह । **व्यापार इति** । अत्र हि ज्ञानस्य विध्यनर्हत्वात्तद्धेतुर्विधेयः स च वेदानुवचनादिः शमादिश्च पुरुषाधीनो व्यापारो विविदिषावाक्येन शान्तादिवाक्येन च विधास्यते तन्नेदं विधिपरमित्यर्थः । ज्ञानोपाये विधिर्वक्ष्यते चेत्कथं शब्दादेव तदुत्पत्तिरुक्तेत्याशङ्क्याऽऽह । **स स्यादिति** । विहितो वेदा-

---

[1] क. ॰मपग॰ ।

नुवचनादिरूपो यश्चित्तशुद्धिहेतुस्तस्य तद्धेतुतायाः श्रुतिस्मृतिप्रसिद्धत्वाच्छुद्धबुद्धेश्चाधिकारिणः शब्दो ज्ञानं जनयत्यधिकारिणः प्रमितिजनको वेद इति न्यायादित्यर्थः॥७९७॥

**तमोरजोभ्या मुक्ता धीर्यदा स्यादुक्तसाधनात् ॥**
**शमादिमान्यथातत्त्वमथाऽऽत्मानं समीक्षते ॥ ७९८ ॥**

यत्तु शब्दादेव तत्त्वज्ञाने सर्वेषामपि श्रुतशब्दानां किमिति न भवतीति तदप्येतेन प्रत्यादिष्टमित्याह । **तम इति** । वेदानुवचनादिभ्यः शमादीनां ज्ञानं प्रत्यन्तरङ्गत्वं मत्वा विशिनष्टि । **शमादिमानिति** । यदेत्युपक्रमादथशब्दस्तदेत्यर्थः ॥ ७९८ ॥

**तस्मिन्दृष्टेऽथ सर्वस्य तावन्मात्रैकतत्त्वतः ॥**
**सर्वाज्ञानसमुच्छित्तेः सर्वज्ञानोदयस्तथा ॥ ७९९ ॥**

आत्मसमीक्षणमविहितमफलमिति चेन्नेत्याह । **तस्मिन्निति** । दृष्टिफलं दृष्टफलं कृतकृत्यत्वमथशब्दार्थः । तदुपपादयितुं ज्ञेयस्य सर्वस्याऽऽत्मविदा ज्ञातत्वमाह । **सर्वाज्ञानेति** । आत्मज्ञानेन सर्वज्ञाने हेतुमाह । **सर्वस्येति** । सर्वज्ञानफलमाह । **सर्वेति** ॥ ७९९ ॥

**निःशेषपुरुषार्थाप्तिः सर्वदुःखौघनिह्नुतिः ॥**
**यतोऽत आत्मनि ज्ञाते कृतकृत्यत्वहेतुतः ॥ ७६० ॥**
**वाङ्मनःकायसाध्याया व्यापृतेः स्यादसंभवः ॥**
**फलावधित्वात्सर्वेषामुपायानां जगत्यपि ॥ ७६१ ॥**

सर्वाज्ञानध्वस्तौ किं सिध्यति तदाह । **निःशेषेति** । तद्युक्तमात्मविदः कृतकृत्यत्वमित्यर्थः । सोऽपि विद्वान्विध्यधीनः स्यादिति चेन्नेत्याह । **यत इति** । असंभवो यतोऽतो विदुषो न विधिरिति शेषः । कृतकृत्यस्य विध्यसंभवे लोकप्रसिद्धिमनुकूलयति । **फलेति** । लोकेऽपि सर्वेषामुपायानां फलपर्यन्तत्वान्न प्राप्ते फले पुनर्विधेरुपायानुष्ठानमफलत्वादित्यर्थः ॥ ७६० ॥ ७६१ ॥

**प्रमेयमयतां कामं प्रमातैव व्रजत्वयम् ॥**
**तस्यैव परिणामित्वात्प्रमेयेन च संगतेः ॥ ७६२ ॥**

प्रज्ञाकरणविधिः संक्षेपतो निरस्तः । यत्तु प्राज्ञ आत्माऽपि तादात्म्यात्तन्मयत्वं निगच्छतीति तत्र मातुर्वा साक्षिणो वा तन्मयत्वमिति विकल्प्याऽऽद्यमङ्गी कुरुते । **प्रमेयेति** । अङ्गीकारे हेतुमाह । **तस्येति** ॥ ७६२ ॥

**षड्भावविक्रियाभावादसङ्गाच्चाप्यनात्मना ॥**
**विज्ञानादिमयत्वं स्यान्न स्वतः प्रत्यगात्मनः ॥ ७६३ ॥**

---

१ क. ग. °दयास्तथा । २ क. °र्थाप्तेः स° । ग. °र्थाप्तेः कृत्स्नदुः° । ३ क. ग. °ह्नुतेः ॥ य° । ४ ग. °येण च । ५ घ. करोति ।

द्वितीयं दूषयति । षडिति ॥ ७६३ ॥

**एवंभूतोऽपि चाज्ञातः कार्यकारणरूपताम् ॥**
**व्रजत्येष यथा रज्जुरज्ञाता सर्परूपताम् ॥ ७६४ ॥**

यद्यात्मा सर्वविकारहीनोऽसङ्गो न स्वतो विज्ञानादिमयः कथं तर्हि तस्य सर्वात्मत्वश्रुतिरत आह । एवंभूतोऽपीति ॥ ७६४ ॥

**मनआदेरशेषस्य प्रत्यगज्ञानहेतुतः ॥**
**हेतुध्वस्तौ भवेद्ध्वस्तिरकार्याकारणेऽक्षरे ॥ ७६५ ॥**

यद्यपि मनोविनाशमन्वेष विज्ञानात्मा विलीयत इति तत्र लयो ज्ञानाधीनो बाधो नाशादिर्वेति विकल्प्याऽऽद्यमङ्गी करोति । मन इति ॥ ७६५ ॥

**तत्त्वबोधान्न नाशः स्याद्व्यतिरेकान्वयौ न च ॥**
**प्रत्यङ्मात्रैकयाथात्म्यादविद्यादेरिहाऽऽत्मनि ॥ ७६६ ॥**

द्वितीयं निरस्यति । तत्त्वेति । नाशस्तुच्छता व्यतिरेको वस्तुनः सकाशात्पृथक्त्वमन्वयः कारणसंसर्गस्तस्य त्रिविधस्यापि लयस्यायोगे हेतुमाह । प्रत्यगिति । इहाऽऽत्मन्यविद्यादेर्न नाशो न चान्वयव्यतिरेकाविति संबन्धः ॥ ७६६ ॥

**विनाशः क्रियते यत्र व्यतिरेकोऽथवाऽन्वयः ॥**
**कार्यकारणसंबन्धान्मुक्तिस्तत्र सुदुर्लभा ॥ ७६७ ॥**

विपक्षे दोषमाह । विनाश इति । न तावदविद्यादेरात्यन्तिको नाशः सप्रतियोगिकस्य तस्यातथात्वादनात्यन्तिकनाशस्य च कारणसंबन्धत्वाद्व्यतिरेके कादाचित्कसंबन्धसंभवादन्वये च तस्येष्टत्वात्पुनर्बन्धः स्यादित्यर्थः । यत्तच्छब्दौ पक्षार्थौ ॥ ७६७ ॥

**ध्यानादिसंस्कृतं चेतो यदि मुक्तौ प्रणश्यति ॥**
**सभावनं सहेत्वेवं ध्यानं सर्वमपार्थकम् ॥ ७६८ ॥**

विनाशपक्षे दोषान्तरमाह । ध्यानादीति । सति विशिष्टे मनसि मुक्तिरिष्टा चेन्नाशो व्यर्थः स्यान्मुक्तावुद्देश्यायां तन्नश्यति चेद्ध्यानादेस्तद्धेतुत्वासिद्धेर्यथा संकल्पितश्चेत्यादिर्वृथा प्रलापः स्यान्न चोक्तमनो ज्ञानवन्मुक्तिमापाद्य नश्यति तस्याभिध्यानादित्यादिवदित्यस्मिन्नर्थे मानाभावादिति भावः ॥ ७६८ ॥

**अथ मुक्तौ तदन्वेति कारणेन सहान्वियात् ॥**
**अज्ञाने सति संसारो वद केन निवार्यते ॥ ७६९ ॥**

अन्वयपक्षे मुक्तेर्दौर्बल्यमुक्तं प्रपञ्चयति । अथेत्यादिना । अज्ञानं च कारणं तत्सत्त्वे चानर्थानुबन्धान्न मुक्तिरित्यर्थः ॥ ७६९ ॥

---

१ क. ग. 'त्येव य' । २ ख. 'दिव' ।

लोहादेः कारणं भूमिर्भूमिष्ठं भूमितामितम् ॥
विरोधिहेतुसंपर्काल्लोहाद्येति न वायुताम् ॥ ७७० ॥

मनआदिलयं दार्ष्टान्तिकं निरस्य भूमौ यथाऽऽहितं लोहमित्यादिनोक्तं दृष्टान्तं निराचष्टे । लोहादेरिति । कांस्यायसादेर्भूमिरुद्भवहेतुस्तत्तैजसत्वं तु प्रक्रियामात्रं न चासांसिद्धिकद्रवत्वे सति जात्युपाधावेकविधरूपं तत्तैजसत्वसाधकमसांसिद्धिकद्रवत्वं हि नैमित्तिकद्रवत्वाधिकरणत्वं वा स्वाभाविकद्रवत्वानधिकरणत्वं वा नाऽऽद्यः प्रदीपप्रभादृष्टान्ते साधनवैकल्याद्द्वितीये पार्थिवप्रदेशविशेषेषु व्यभिचारो न च तत्र पाकात्प्रागूर्ध्वं च रूपस्यानेकविधत्वं यत्कृष्णं तदन्नस्येति पार्थिवरूपस्यैकविधत्वश्रुतेस्तच्च भूमौ स्वकारणे स्थितं विरोधिद्रव्यान्तरसंपर्काद्विलीयमानं स्वकारणभूतभूमितामेति न तु स्वाकारणवाय्वादिभावं निगच्छत्यतो लोहादेर्मृद्भावः संभवति मनआदेस्त्वकारणब्रह्मभावो न सिध्यतीत्यर्थः ॥ ७७० ॥

स्वकारणस्थं नित्यं च कार्यं सर्वमिदं मतम् ॥
न चैति कारणत्वं तत्तस्मादुक्तमपेशलम् ॥ ७७१ ॥

यत्पुनरेतच्च दृष्टमित्यादि तन्न कारणादन्यत्र कार्यलयायोगादित्यभिप्रेत्य ब्रह्मात्मनोऽपि कारणत्ववादिनं प्रत्याह । स्वकारणस्थमिति । सर्वमपीदं कार्यं सदा स्वकारणे ब्रह्मणि तदात्मना स्थितमिति परिणामवादिनां मतमतस्तत्कार्यं कदाचित्कारणत्वमेतीत्ययुक्तं तथाच ब्रह्मणः कारणत्वं वस्तुतो न सिध्येदित्यर्थः ॥ ७७१ ॥

कुलालाद्युत्थसंस्कारविनाशादेव तत्स्वयम् ॥
कार्यं कारणतामेति न तु तत्कारणस्थितेः ॥ ७७२ ॥

घटादिकार्यं सदा मृदादिकारणस्थमपि मुसलादिव्यापाराद्विनश्यत्कारणभावं निगच्छतीति लौकिकी प्रसिद्धिस्तथा ब्रह्मणि सदा स्थितमपि जगद्ध्यानादिना नश्यद्ब्रह्मत्वमेतीत्यविरुद्धमित्याशङ्क्याऽऽह । कुलालादीति । संस्कारो नाम कम्बुग्रीवादिसंस्थानविशेषस्तस्य मुसलाभिघातादिना तिरोभावो नाशस्तद्वशात्तत्कार्यं नश्यति कारणतामेतीति चोच्यते न तु स्वयमेव तत्कार्यं नश्यति कारणत्वं चाऽऽपद्यते तस्य सदा कारणे स्थितत्वादतो दृष्टान्ताभावाद्ब्रह्मकारणपक्षे जगतस्तद्भावे नोपयोगो ध्यानादेरित्यर्थः॥७७२॥

आरभ्यं यत्र कार्यं स्यात्तत्रैव व्यापृतिर्ध्रुवम् ॥
तमित्यस्याः श्रुतेर्ज्ञेया भावनाज्ञानकर्मणाम् ॥ ७७३ ॥

कुत्र तर्हि तस्योपयोगस्तत्राऽऽह[1] । आरभ्यमिति । यस्मिन्पक्षे ध्यानादिभिर्ब्रह्मविविदिषाख्यं कार्यमारभ्यते तत्रैव तेषां फलवती प्रवृत्तिर्ज्ञेया तमेतं वेदानुवचनेनेत्यादिश्रुतेरतो विविदिषायामुपयोगस्तेषामित्यर्थः ॥ ७७३ ॥

---

१ घ. °स्तदाह ।

**ब्रह्मैव सन्स्वतो यत्र ब्रह्माप्येति तमोहनुतेः ॥**
**नामीषां व्यापृतिस्तत्र ह्युत्पत्त्यादिविरोधतः ॥ ७७४ ॥**

साक्षादेव मोक्षान्वयस्तेषां किं नेष्यते तत्राऽऽह । **ब्रह्मैवेति** । स्वतो ब्रह्मैव सन्प्रतिबन्धतमोध्वस्तौ ब्रह्म भवतीति यस्मिन्सिद्धान्ते स्थितिस्तत्र ध्यानादीनां न तद्भावफलत्वेन प्रवृत्तिस्तेषामुत्पत्त्यादिफलवत्त्वात्तस्य च तद्विरोधित्वादित्यर्थः ॥ ७७४ ॥

**प्रत्यगज्ञानविध्वंसिज्ञानाभ्यासोऽपि नेष्यते ॥**
**सकृदात्मप्रसूत्यैव बोधस्याज्ञानहानतः ॥ ७७५ ॥**

ब्रह्मत्वव्यवधितमोध्वस्तौ ध्यानाद्युपयोगमाशङ्क्याऽऽह । **प्रत्यगिति** । अपिर्वेदानुवचनादिसमुच्चयार्थः । तत्र हेतुः । **सकृदिति** ॥ ७७५ ॥

**न ह्यावृत्तिव्यपेक्षं सन्मानं जगति किंचन ॥**
**स्वप्रमेये तमो हन्ति स्वसाध्ये साधनं यथा ॥ ७७६ ॥**

इतश्च बोधस्य तमोध्वंसित्वे नाऽऽवृत्त्यपेक्षेत्याह । **न हीति** । तत्र दृष्टान्तमाह । **स्वसाध्य इति** । यथा यागादिसाधनमावृत्तिगुणादृते विहितं साध्ये स्वर्गादौ परमापूर्वे वा नाभ्यासमपेक्षते तथा वाक्योत्थात्मधीरपीत्यर्थः ॥ ७७६ ॥

**भावनाजं फलं यत्स्याद्यच्च स्यात्कर्मणः फलम् ॥**
**न तत्स्थास्न्विति मन्तव्यं पण्यस्त्रीगमनं यथा ॥ ७७७ ॥**

ये त्वज्ञानव्यवहितत्वमनिच्छन्तः साक्षादेव ध्यानादिसाध्यं मोक्षमाचक्षते तान्प्रत्याह । **भावनेति** । भावनाधीनफलस्यास्थिरत्वे दृष्टान्तः । **पण्यस्त्रीति** ॥ ७७७ ॥

**संसार्यस्मीति चेद्ध्वस्ता कोटिकल्पोपबृंहिता ॥**
**स्वल्पीयोभ्यासजा स्थास्न्वी भावनेत्यत्र का प्रमा ॥ ७७८ ॥**

ब्रह्मास्मीति भावनायाः स्थास्नुत्वात्तत्फलं कैवल्यं स्थास्नु भविष्यतीत्याशङ्क्याऽऽह । **संसारीति** ॥ ७७८ ॥

**तस्मान्न साध्विदं सर्वं भावनासंचयार्थिभिः ॥**
**ध्यानादि यदुपन्यस्तं निःशेषानर्थमुक्तये ॥ ७७९ ॥**

ध्यानादेर्मोक्षसाधनत्वायोगे फलितमुपसंहरति । **तस्मादिति** ॥ ७७९ ॥

**वाक्येनावेदितं कृत्स्नं यदि साक्षात्प्रबोध्यते ॥**
**वस्तु बुद्धौ वद ध्यानव्यापारात्किमपेक्षते ॥ ७८० ॥**

मोक्षार्थत्वाभावेऽपि ध्यानस्य ज्ञानार्थत्वेनानुष्ठेयतेति चेन्नेत्याह । **वाक्येनेति** ॥ ७८० ॥

---

१ ख. ग. °ध्वंसी ज्ञा° । २ ख. °स्त्रीसंगतं य° । ग. °स्त्रीसंगतिर्यथा ।

**निःशेषानर्थसंप्राप्तिकैवल्यानाप्तिकृत्तमः ॥**
**तच्चेज्ज्ञानादपध्वस्तं समाप्तं यच्चिकीर्षितम् ॥ ७८१ ॥**

ज्ञानस्योत्पत्तौ ध्यानानपेक्षत्वेऽपि फले तदपेक्षेत्याशङ्क्याऽऽह । **निःशेषेति ।** तन्न ध्यानमर्थवदिति शेषः ॥ ७८१ ॥

**कृतं चिकीर्षितं सर्वं बुद्धं यच्च बुभुत्सितम् ॥**
**सम्यग्ज्ञानोदयात्सर्वं वर्जितं यज्जिहासितम् ॥ ७८२ ॥**
**तथेप्सितं च संप्राप्तमित्येवं कृतकृत्यता ॥**
**प्रत्यग्याथात्म्यसंमोहध्वंसमात्रात्प्रबोधतः ॥ ७८३ ॥**

ज्ञानादपेक्षितसर्वार्थाप्तिमेव व्यनक्ति । **कृतमिति ।** सम्यग्ज्ञानोदयादित्युक्तं व्य[3]नक्ति । **प्रत्यगिति ।** कृतकृत्यतेति पूर्वेण संबन्धः ॥ ७८२ ॥ ७८३ ॥

**समर्पितं चेच्छब्देन बुद्धौ वस्तु यथोदितम् ॥**
**प्रज्ञां कुर्वीतेति विधिः किमर्थ इति भण्यताम् ॥ ७८४ ॥**

सति प्रज्ञां कुर्वीतेति विधौ कुतोऽफलत्वेनापलप्यते ध्यानमित्याशङ्क्य ज्ञातेऽज्ञाते वा ब्रह्मणि तद्विधिरिति विकल्प्याऽऽद्यमनूद्य दूषयति । **समर्पितं चेदिति ।** यथोदितं विरजस्त्वादिलक्षणमित्यर्थः ॥ ७८४ ॥

**न चेत्समर्पितं साक्षाद्वस्तु श्रुत्या यथोदितम् ॥**
**अप्रामाण्यं श्रुतेः प्रापत्स्वार्थस्याप्रतिपादनात् ॥ ७८५ ॥**

द्वितीयमनूद्य निरस्यति । **न चेदिति** ॥ ७८५ ॥

**स्वप्रमेये प्रमाणं सत्प्रवृत्तं स्वात्मलाभतः ॥**
**अज्ञानाद्यनिरासेन नास्ति लोके प्रबोधकम् ॥ ७८६ ॥**

स्वार्थबोधित्वेन प्रामाण्यं श्रुतेराश्रीयते ध्यानविधिस्तु विषयस्थाज्ञानादिध्वंसोपयोगी-त्याशङ्क्याऽऽह । **स्वप्रमेय इति ।** अज्ञानादिध्वंसित्वं विना स्वार्थबोधित्वायोगान्नाऽऽत्मनि शाब्दबोधातिरेकेणाज्ञानादिध्वस्तौ विध्यपेक्षेत्यर्थः ॥ ७८६ ॥

**अज्ञानमिथ्यासंशीतिव्यतिरेकेण नापरम् ॥**
**प्रत्यर्थि मेयविषये मानस्येहास्ति किंचन ॥ ७८७ ॥**

ज्ञानस्य ज्ञेयस्थाज्ञानादिध्वंसित्वेन तद्गतचैतन्यादिध्वंसित्वमेव किं न स्यादित्याशङ्क्य विरोधिध्वंसित्वेऽपि न सर्वध्वंसितेत्याह । **अज्ञानेति** ॥ ७८७ ॥

**अज्ञानादित्रयं बाध्यं मेययाथात्म्यसंश्रयात् ॥**
**मानं बाधकमेवात्र बाध्येन नं[4] हि हन्यते ॥ ७८८ ॥**

विरोधित्वाविशेषाज्ज्ञातमेवाज्ञानादिना निवर्त्यमिति वैपरीत्यमाशङ्क्याऽऽह । **अज्ञा-**

---

१ ग. °प्राप्तिः कै° । २ ख. °दथ ध्व° । ३ घ. प्रकटयति । ४ ग. न त्विह° ।

**नादीति** । मानस्य बाधकत्वे हेतुः । **मेयेति** । अत्रेति प्रकृतबाध्योक्तिः । नियमनिरस्यमाह । **बाध्येनेति** ॥ ७८८ ॥

**बाध्यस्य बाधनादेव प्रमाणस्य प्रमाणता ॥**
**स्वमेयतत्त्वसंबन्धलब्धरूपस्य सर्वदा ॥ ७८९ ॥**

मानं बाधकमेवेत्युक्तं समर्थयते । **बाध्यस्येति** ॥ ७८९ ॥

**नादग्ध्वाऽभ्याहितं दाह्यमग्नेरग्नित्वमिष्यते ॥**
**यथा बाध्यमबाधित्वा नैवं बाधकता मितेः ॥ ७९० ॥**

अज्ञानाद्यन्यतमबाधेनैव मानस्य मानतेत्येतदृष्टान्तेन स्पष्टयति । **नेति** ॥ ७९० ॥

**न च प्रामाणिकं ज्ञानमुत्पत्त्यादौ नियुज्यते ॥**
**स्वमेयव्यक्तितस्तस्य न कार्यान्तरमिष्यते ॥ ७९१ ॥**

प्रज्ञाकरणवाक्ये ध्यानाविधानेऽपि प्रज्ञाशब्दिते ज्ञाने विधिः स्यादिति चेत्तत्किं मानममानं वाऽऽद्येऽपि तदुत्पत्त्याद्यन्यतमनिमित्तं विधीयते फलान्तरार्थं वेति विकल्प्याऽऽद्यं प्रत्याह । **न चेति** । प्रमाणज्ञानस्योत्पत्त्यादिफलत्वमप्रामाणिकमिति भावः । द्वितीयं निराह । **स्वमेयेति** ॥ ७९१ ॥

**न च मानान्तरैर्मेये मानस्येष्टा विरोधिता ॥**
**असाधारणमेयत्वान्मानानां चक्षुरादिवत् ॥ ७९२ ॥**

अप्रामाणिकं ज्ञानं प्रज्ञाख्यं विधेयमित्यत्र तदप्रामाण्यं मानान्तरासंवादात्तद्विरोधाद्वा नाऽऽद्यस्तस्य प्रतीच्यप्रवृत्तेरिति मत्वा द्वितीयं निरस्यति । **न चेति** । तत्र हेतुः । **असाधारणेति** । स्वविषयशूरत्वान्मानानां मिथो विरोधो नास्तीत्यर्थः ॥ ७९२ ॥

**मानान्तरैर्विरोधश्चेन्मानस्याभ्युपगम्यते ॥**
**तदुच्छित्तौ न हेतुः स्याद्विरोधस्य प्रमाश्रयात् ॥ ७९३ ॥**

अस्तु वा तत्त्वमस्यादिवाक्यस्याध्यक्षादिभिर्विरोधस्तथाऽपि स प्रातिभासिको वा वास्तवो वेति विकल्प्याऽऽद्यमङ्गीकृत्य द्वितीये दोषमाह । **मानान्तरैरिति** ॥ ७९३ ॥

**न च सामान्यतो ज्ञानं ल्यबन्तेनाभिधीयते ॥**
**प्रत्यग्वस्तु यतः सिद्धमसामान्यविशेषवत् ॥ ७९४ ॥**

विज्ञायेति शाब्दं परोक्षं ज्ञानमनूद्य प्रज्ञां कुर्वीतेत्यत्रापरोक्षज्ञानार्थं तदावृत्तिर्विधेयेति प्रत्युदस्तं यदपि विज्ञायेति सामान्यज्ञानं प्रज्ञां कुर्वीतेति प्रज्ञाशब्देन विशेषज्ञानमुच्यते ब्रह्मणो द्व्यात्मकत्वादिति तन्निराकरोति । **न चेति** ॥ ७९४ ॥

**सामान्येनेक्षमाणस्य विशेषेण च वस्त्विदम् ॥**
**अपवादः पुरा तस्य न पश्यन्तीति वर्णितः ॥ ७९५ ॥**

---

१ क. ख. °न्तरसं° ।

तत्र श्रुतिं प्रमाणयति । **सामान्येनेति** । अतो ल्यबन्तेन सामान्यज्ञानमनूद्य द्वितीयान्तेन विशेषज्ञानं विवक्षित्वा तत्सिद्धयेऽभ्यासविधिर्वाक्यार्थ इत्ययुक्तमिति भावः ॥ ७९५ ॥

**अन्ये तु पण्डितंमन्याः संप्रदायानुसारतः ॥**
**विज्ञायेति वचः श्रौतमिदं व्याचक्षतेऽन्यथा ॥ ७९६ ॥**

ब्रह्मणि कार्यकारणभावः सामान्यविशेषभावश्च वस्तुतोऽस्तीति भर्तृप्रपञ्चपक्षे प्रज्ञाकरणवाक्यव्याख्या प्रत्युक्ता संप्रत्यकार्यकारणासामान्यविशेषं प्रत्यग्ब्रह्मेत्युपगच्छतां मण्डनादीनां तद्व्याख्यामुत्थापयति । **अन्ये त्विति** ॥ ७९६ ॥

**तत्त्वमस्यादिवाक्योत्थविज्ञानेन यथोदितम् ॥**
**विज्ञाय वस्त्वसंसर्गि प्रज्ञां कुर्वीत यत्नतः ॥ ७९७ ॥**

कथमन्यथा व्याख्यानं तदाह । **तत्त्वमिति** । यत्नत इत्यावृत्तिः सूच्यते ॥ ७९७ ॥

**नन्वत्रापि कृतैवासौ ल्यबन्तेनाभिधीयते ॥**
**प्रज्ञाऽतः करणं तस्या भूयः कस्माद्विधीयते ॥ ७९८ ॥**

उक्तमेव व्यक्तीकर्तुं शङ्कयति । **नन्विति** । भर्तृप्रपञ्चपक्षवदस्मिन्नपि पक्षे निष्पन्नैव प्रज्ञा विज्ञायेत्युच्यते तथाच प्रज्ञां कुर्वीतेति प्रज्ञाया निर्वर्तिताया न पुनः करणं विधेयं पिष्टपिष्टिप्रसक्तेरित्यर्थः ॥ ७९८ ॥

**मैवं पदार्थसंसर्गरूपस्यैवातथात्मके ॥**
**ऐकात्म्ये वाक्यहेतूत्थबोधस्योद्भूतिकारणात् ॥ ७९९ ॥**
**ब्रह्मासंसर्गि तद्यस्मादसामान्यविशेषवत् ॥**
**संसर्गरूपं वाक्योत्थं ज्ञानं नीलोत्पलादिवत् ॥ ८०० ॥**

परिहरति । **मैवमिति** । शाब्दज्ञानस्य संसृष्टपरोक्षरूपस्यासंसृष्टापरोक्षब्रह्मण्युत्पत्तेर्न तद्ब्रह्म स्पृशत्यतो ब्रह्मस्पर्शिसाक्षात्कारस्य चिकीर्षितत्वान्न पिष्टपिष्टिरित्यर्थः । शाब्दज्ञानस्य ब्रह्मासंसर्गित्वं साधयति । **असामान्येति** । असंसृष्टापरोक्षब्रह्मविरोधितया संसृष्टपरोक्षशाब्दज्ञानस्य न ब्रह्मस्पर्शितेति यावत् । शाब्दज्ञानस्य संसृष्टपरोक्षत्वे दृष्टान्तः । **नीलेति** ॥ ७९९ ॥ ८०० ॥

**स्वभावतोऽखिलं वाक्यं संसर्गात्मकमेव हि[२] ॥**
**परोक्षवृत्त्या च तथा वस्तु बोधयति स्वतः ॥ ८०१ ॥**

कथं शाब्दज्ञानं संसृष्टपरोक्षं प्रतिज्ञायते तत्राऽऽह । **स्वभावत इति** । स्वर्गकामादिवाक्यं दृष्टान्तयितुं हिशब्दः ॥ ८०१ ॥

---

१ ख. अत्र । २ ग. हि । पारोक्ष्यव

**स्वस्वभावं न चोल्लङ्घ्य स्वभावान्तरसंश्रयात् ॥**
**ब्रह्मासंसर्गि साक्षाच्च शब्दः शक्नोति बोधितुम् ॥ ८०२ ॥**

ब्रह्मणोऽन्यत्र शब्दः संसृष्टं परोक्षं च ज्ञानं जनयन्नपि ब्रह्मण्यसंसृष्टापरोक्षे तथा ज्ञानं जनयिष्यति मेयानुसारित्वान्मानस्येत्याशङ्क्याऽऽह । **स्वस्वभावमिति ।** अर्थापेक्षया स्वरूपस्याभ्यर्हितत्वान्न शब्दस्य स्वभावमतिक्रम्य बोधकतेत्यर्थः ॥ ८०२ ॥

**अलब्धब्रह्मयाथात्म्यं ज्ञानं वाक्योद्भवं यतः ॥**
**तस्मात्प्रज्ञां प्रकुर्वीत साक्षाद्ब्रह्मैकगोचराम् ॥ ८०३ ॥**

शाब्दज्ञानस्य ब्रह्मास्पर्शित्वे फलितमाह । **अलब्धेति** ॥ ८०३ ॥

**अपास्ताशेषसंसर्गं यया ब्रह्माधिगम्यते ॥ ८०४ ॥**[1]
**केनेति च व्यपेक्षायां विज्ञानेनेति गम्यते ॥**
**ल्यबन्तोक्तेन सांनिध्यान्न ततोऽन्यदपेक्ष्यते ॥ ८०५ ॥**[3]

कार्यां प्रज्ञां प्रकटयति । **अपास्तेति ।** प्रज्ञाकरणे करणमाकाङ्क्षापूर्वकमाह । **केनेतीति ।** तस्य करणत्वे हेतुमाह । **सांनिध्यादिति ।** ब्राह्मण्यादेरपि सांनिध्यात्करणत्वापत्तिमाशङ्क्याऽऽह । **नेति** ॥ ८०४ ॥ ८०५ ॥

**योग्यं संनिहितं चेदं साकाङ्क्षं च समीक्ष्यते ॥**[4]
**विज्ञानं यल्ल्यबन्तोक्तं तदेवात्र तु साधनम् ॥ ८०६ ॥**

तत्र विशेषं दर्शयति । **योग्यमिति** ॥ ८०६ ॥

**तस्माद्वाक्योत्थविज्ञानसाधनाभ्यासतोऽनिशम् ॥**
**प्रज्ञां कुर्यादसंसर्गिब्रह्मयाथात्म्यबोधिनीम् ॥ ८०७ ॥**

तस्य क्षणिकत्वान्न प्रज्ञाकरणे साधनतेत्याशङ्क्याऽऽह । **तस्मादिति** ॥ ८०७ ॥

**अपेताशेषसंसर्गं तयैव ब्रह्म गम्यते ॥**
**यतोऽशेषतमोहन्त्री प्रज्ञा सैवात इष्यते ॥ ८०८ ॥**

असंसर्गित्वादिनोक्तं व्यनक्ति । **अपेतेति ।** ब्रह्म प्रत्यक्तया सदा ज्ञातमेवेति व्यर्थं प्रज्ञाकरणमित्याशङ्क्याऽऽह । **यत इति ।** प्रज्ञेत्यभ्यासजनितः साक्षात्कारो विवक्षितः ॥ ८०८ ॥

**साक्षाद्दर्शनसिद्ध्यर्थमन्यत्रापि विधीयते ॥**
**निदिध्यासनवाक्येन साधनं ध्यानलक्षणम् ॥ ८०९ ॥**

न केवलमिहैव साक्षात्कारमुद्दिश्य ज्ञानं विधीयते किंतु द्रष्टव्यवाक्येऽपीत्याह । **साक्षादिति** ॥ ८०९ ॥

---

१ ग. °ह्मावग°। २ ख. भण्यते । ३ ख. °पेक्षते । ४ ख. °मीक्षते ।

इत्येवमादिवाक्यानि गम्भीरन्यायवेदिनः ॥
केचिद्व्याचक्षते यत्नादत्र प्रतिविधीयते ॥ ८१० ॥

एकीयं मतमुपसंहरति । इत्येवमादीति । आदिशब्देन निदिध्यासितव्यः स विजिज्ञासितव्य इत्यादिवाक्यानि गृहीतानि। यत्नाद्वस्तुस्वरूपमननुसृत्य स्वसामर्थ्यादित्यर्थः । सिद्धान्तयति । अत्रेति ॥ ८१० ॥

मानान्तरापरिज्ञाते प्रमेयार्थे प्रमां स्फुटाम् ॥
मेयाज्ञातत्वबाधेन कुर्वन्मानमितीर्यते ॥ ८११॥

तत्प्रकटनार्थं प्रथमं प्रमाणलक्षणमाह । मानान्तरेति । तत्संवादविसंवादाभ्यां फलाभावेन चाऽऽभासत्वं निरासितुं विशेषणानि ॥ ८११ ॥

ब्रह्मानधिगतं चेदं वाक्यादन्यैः प्रमान्तरैः ॥
तद्यथा बोधयेद्वाक्यं तत्तथैवेति गृह्यताम् ॥ ८१२ ॥

अज्ञातगन्तृ मानमिति लक्षणेऽपि प्रस्तुते किं जातं तदाह । ब्रह्मेति । संसृष्टपरोक्षतया श्रुत्या ब्रह्म दृष्टं चेत्तत्तथैव नासंसृष्टापरोक्षतया तद्ग्राह्यं प्रामाणिकार्थस्यान्यथयितुमशक्यत्वादित्यर्थः ॥ ८१२ ॥

प्रमाणादेव यत्प्राप्तं कथं तदतिशङ्क्यते ॥
ब्रह्म संसर्गरूपं वा यदि वाऽतोऽन्यथा श्रुतेः ॥ ८१३ ॥

उक्तमेव साधयितुं सामान्यन्यायमाह । प्रमाणादिति । न हि प्रमाणमतीत्य शङ्कितुं युक्तं प्रमाणविरोधादित्यर्थः । तत्फलं प्रकृते प्रापयति । ब्रह्मेति । ज्ञातं तथैवेति शेषः ॥ ८१३ ॥

प्रमाणतोऽपि संप्राप्तं यदि वस्त्वतिशङ्क्यते ॥
तदा शङ्कानिवृत्त्यर्थं मानादन्यत्किमिष्यताम् ॥ ८१४ ॥

विपक्षमनूद्य दोषमाह । प्रमाणतोऽपीति । अतिशङ्क्यते प्रमाणमतिक्रम्य शङ्का क्रियत इति यावत् ॥ ८१४ ॥

न चापि स्वप्रमेयेऽस्ति मानानां बोधहेतुतः ॥
तारतम्यं यथा कार्ये कारकाणामसंभवात् ॥ ८१५ ॥

संसृष्टपरोक्षतया शब्दावगते ब्रह्मण्यसंसृष्टापरोक्षबोधार्थं ध्यानविधिरित्यत्र शब्दप्रमाणविरोध उक्त इदानीं चक्षुषो दूरस्थं वृक्षाद्यपेक्ष्य वास्त्विति वा द्रव्यमिति वा सामान्येनाऽऽदौ बोधमाधाय पुनः समीपगमनाद्यपेक्षया वृक्षोऽयमिति तत्त्वज्ञानहेतुत्ववत्प्रथमं शब्दस्यापि स्वभावमनुसृत्य संसृष्टपरोक्षतया ब्रह्म बोधयतस्तदभ्याससचिवस्यासंसृष्टापरोक्षबोधितेति बोधनक्रमे मानविरोधो नास्तीत्याशङ्क्याऽऽह । न चेति ।

---

१ क. °यत्नादि° । २ क. °संगिरू° । ३ ख. °ध्यते ॥ ८१४ ॥ ४ क. °मादाय ।

कारकस्यायं स्वभावो न बोधकस्येत्यत्र हेतुमाह । **असंभवादिति** । न हि कारकाणामपर्यायेणानेककार्यनिर्माणसंभवो मृदादिष्वदृष्टत्वाद्व्यञ्जकानां तु युगपदनेकव्यञ्जता स्याद्दीपादौ तथा दृष्टेरित्यर्थः ॥ ८१५ ॥

**न च प्रमान्तरैः साक्षादज्ञाते ब्रह्मवस्तुनि ॥**
**अयथावस्त्विवति ज्ञानं वक्तुं शक्यं विपश्चिता ॥ ८१६ ॥**

बोधकेषु बोधनक्रमाभावेऽपि ब्रह्मण्यसंसृष्टापरोक्षज्ञानस्य तद्विपरीतशाब्दज्ञानेनाभ्यस्यमानेनोद्भवस्तस्याप्रमाणतया स्वयमेव पुमर्थसमाप्तिहेतुत्वायोगादित्याशङ्क्यासंसृष्टापरोक्षं ब्रह्म ज्ञानान्तरैर्ज्ञायते न वेति विकल्प्य द्वितीयं प्रत्याह । **न चेति** । असंसृष्टापरोक्षब्रह्मणो मानान्तरागोचरत्वे संसृष्टपरोक्षं तद्गोचरं शाब्दं ज्ञानमप्रमाणमित्यशक्यं वक्तुं तद्विरोधिमानाभावादित्यर्थः ॥ ८१६ ॥

**अपि मानान्तराज्ज्ञाते तद्विरुद्धस्वभावके ॥**
**न चैवं युज्यते वक्तुं द्वयोरपि मितित्वतः ॥ ८१७ ॥**

कल्पान्तरं निरस्यति । **अपीति** । असंसृष्टापरोक्षे ब्रह्मणि शब्दातिरिक्तप्रमाणगम्येऽपि शाब्दं ज्ञानममानमित्येवं वक्तुं न युक्तं मानान्तरवत्तन्मानत्वस्यापि दुर्वारत्वादित्यर्थः ॥ ८१७ ॥

**प्रमान्तरेण चेज्ज्ञातं ब्रह्मासंसर्गरूपकम् ॥**
**कृतत्वात्तर्हि प्रज्ञाया निष्फलोऽयं पुनर्विधिः ॥ ८१८ ॥**

संसृष्टपरोक्षब्रह्मग्राहिशाब्दज्ञानस्य तद्विपरीतग्राहिमानान्तरविरोधेन मानत्वं शक्यं वारयितुमित्याशङ्क्य विरोधस्य तुल्यत्वान्नैवमित्यभिप्रेत्य दोषान्तरमाह । **प्रमान्तरेणेति** ॥ ८१८ ॥

**प्रज्ञायाश्च समाप्तत्वादविद्याया निराकृतेः ॥**
**पुरुषार्थस्य चाऽऽप्तत्वात्किमर्थं विधिशासनम् ॥ ८१९ ॥**

विधेर्निष्फलत्वं प्रपञ्चयति । **प्रज्ञायाश्चेति** ॥ ८१९ ॥

**वाक्यमानोद्भवं ज्ञानमयथावस्त्विवतीर्यते ॥**
**यथावस्त्वप्रमोत्थं च चित्रं सर्वज्ञचेष्टितम् ॥ ८२० ॥**

किंच शाब्दं ज्ञानममानमभ्यासोत्थं तु तन्मानमिति वदतो महत्पाण्डित्यमित्युपहसति । **वाक्येति** । अप्रमाऽभ्यासः ॥ ८२० ॥

**न च मिथ्याधियोऽभ्यासात्सम्यग्ज्ञानसमुद्भवः ॥**
**तथा सत्यप्रयत्नेन मुक्तिः स्यात्सर्वदेहिनाम् ॥ ८२१ ॥**

---

१ ग. °न्तरैर्ज्ञाते । २ ख. °वक्रम् । न ॥

किंच शाब्दं ज्ञानममानं चेत्तदभ्यासान्न सम्यग्धीरुद्भवेदित्याह । **न चेति** । विपक्षे दोषमाह । **तथेति** ॥ ८२१ ॥

**संसारमिथ्याविज्ञानमभ्यस्यन्त्येव सर्वदा ॥**
**प्राणिनो न च सम्यग्धीस्तेषां ब्रह्मणि जायते ॥ ८२२ ॥**

मिथ्याज्ञानाभ्यासात्सम्यग्ज्ञानोत्पत्तिमङ्गीकृत्यातिप्रसङ्गमुक्त्वा सैवादृष्टेर्नास्तीत्याह । **संसारेति** ॥ ८२२ ॥

**सम्यग्ज्ञानप्रसूतेश्च विघातायैव जायते ॥**
**मिथ्याज्ञानाभ्यासहेतुः संस्कारो न तु जन्मने ॥ ८२३ ॥**

न केवलं मिथ्याज्ञानाभ्यासः सम्यग्ज्ञानं नोत्पादयति किंतु तद्विरोधी चेत्याह । **सम्यगिति** ॥ ८२३ ॥

**तथाच प्राह भगवान्व्यासः सत्यवतीसुतः ॥**
**पूर्वमर्थान्तरे न्यस्ता कालान्तरगता मतिः ॥ ८२४ ॥**

मिथ्याज्ञानाभ्यासः सम्यग्धीविरोधीत्यत्र मानमाह । **तथाचेति** । तदेवोदाहरति । **पूर्वमिति** । अनादिसंभवपरंपरायामात्मातिरिक्ते शब्दादौ विषये मतिः स्वारस्येन प्रथमं प्रवृत्ता सा च बहुतिथं विषयाभ्याससंस्कृता तत्रैव सक्तेत्यर्थः ॥ ८२४ ॥

**तेनान्यं सन्तमप्यर्थं द्वेषान्न प्रतिपद्यते ॥**
**परीक्ष्य यो न गृह्णाति गृह्णाति च विपर्ययात् ॥ ८२५ ॥**

आसङ्गफलमाह । **तेनेति** । विषयासङ्गेन हेतुना वस्तुतो विषयेभ्योऽतिरिक्तमक्रियाकारकफलमनतिशयानन्दं प्रत्यञ्चं सन्तमपि द्वेषान्नानुमन्यते तदनुमतेर्विषयानुभवविरोधित्वादित्यर्थः । विषयानुभवाभ्यासस्य तत्त्वज्ञानप्रतिबन्धकत्वमुक्त्वा प्रतिबन्धकान्तराण्याह । **परीक्ष्येति** । न गृह्णाति सन्तमर्थमिति शेषः । परीक्षामन्तरेणासन्तमर्थं सद्बुद्ध्या गृह्णातीत्याह । **गृह्णाति चेति** ॥ ८२५ ॥

**दृढपूर्वश्रुतत्वाच्च प्रमादाच्चापि लौकिकात् ॥**
**चतुर्भिः कारणैरेतैर्याथातथ्यं न विन्दति ॥ ८२६ ॥**

दृढपूर्वश्रुतत्वमबाधितसंप्रदायस्ततो न तत्त्वं वेत्ति किंतु स्वयमुत्प्रेक्षते शास्त्रनिरीक्षणे-[3]नेत्याह । **दृढेति** । लौकिकप्रमादो विषयपारवश्यादिः । अपिर्निद्रालस्यसमुच्चयार्थः ॥ ८२६ ॥

**नातो मिथ्याधियोऽभ्यासः सम्यग्ज्ञानस्य जन्मने ॥ ८२७ ॥**
**अपि मिथ्याधियोऽभ्यासः सम्यग्ज्ञानस्य जन्मने ॥**
**स्यादेव चेच्छ्रुतेर्मानत्वान्न मितेर्व्यञ्जकत्वतः ॥ ८२८ ॥**

मिथ्याज्ञानाभ्यासः सम्यग्ज्ञानविरोधीति वृद्धसंमतमर्थमुपसंहरति । **नात इति** ।

१ ख. °ग्कृता । २ ख. °दादपि । ३ ख. °निरपेक्ष° ।

श्रुतिविरोधे स्मृत्यप्रामाण्यं मन्वानः श्रुत्या शङ्कते । **अपि मिथ्येति** । विज्ञायेतिल्यबन्तोक्तविज्ञानं सम्यग्ज्ञानं चेत्प्रज्ञां कुर्वीतेतिविध्यानर्थक्यान्मिथ्याज्ञानमेव तेनोच्यते तदभ्यासाच्च सम्यग्ज्ञानोदयः प्रज्ञाकरणश्रुतेर्मानत्वादित्यर्थः । मानस्य व्यञ्जकत्वेन मेयानुसारित्वान्न मिथ्याज्ञानाभ्यासाज्जन्मेति दूषयति । **न मितेरिति** ॥ ८२७ ॥ ८२८ ॥

**कार्योत्पत्तौ स्वतन्त्रत्वं कारणस्यैव निश्चितम् ॥**
**मानस्य व्यञ्जकत्वात्तु मेयतत्त्वानुरोधिता ॥ ८२९ ॥**

व्यञ्जकमपि मानं विषयविमुखं किं न स्यादित्याशङ्क्याऽऽह । **कार्येति** । स्वातन्त्र्यं विषयवैमुख्यं माने तु तदभावान्न मिथ्याज्ञानाभ्यासाज्जन्मेत्याह । **मानस्येति** ॥ ८२९ ॥

**अपि चाभ्यस्यमानस्य दार्ढ्यं दृष्टं जगत्यपि ॥**
**तदभ्यासवशादेवमत्राप्यध्यवसीयताम् ॥ ८३० ॥**

तत्रैव हेत्वन्तरमाह । **अपि चेति** । यदभ्यस्यते तदेव दृढीभवद्दृष्टं यथा दीर्घप्रपाठके तथाच मिथ्याज्ञानाभ्यासे तस्यैव दार्ढ्यं न सम्यग्ज्ञानं सावकाशमित्यर्थः ॥ ८३० ॥

**भवद्व्याख्यात एवार्थो न चास्य वचसो ध्रुवम् ॥**
**व्याख्येयः सोऽपरेणापि राज्ञामाज्ञां विना क्वचित् ॥ ८३१ ॥**

मिथ्याज्ञानमभ्यस्यमानं सम्यग्ज्ञानं नाऽऽदधाति चेत्तर्हि प्रज्ञाकरणवाक्याप्रामाण्यं हेत्वन्तराभावादित्याशङ्क्याऽऽह । **भवदिति** । न हि तस्य त्वदुक्तादर्थान्तराभावो न त्वदुक्तानङ्गीकारे सत्यप्रामाण्यं निवारकाभावात्तस्यान्यत्रापि नेतुं शक्यत्वादित्यर्थः ॥ ८३१ ॥

**भवद्व्याख्यानतोऽस्माभिरुक्ता दोषपरंपरा ॥**
**सा यथा प्रसजेन्नेह व्याख्येयं तत्तथा वचः ॥ ८३२ ॥**

अस्मद्व्याख्यानमदुष्टत्वादेष्टव्यं कृतं व्याख्यान्तरगवेषणयेत्याशङ्क्याऽऽह । **भवद्व्याख्यानत इति** । सार्वविभक्तिकत्वात्तसिः सप्तम्यर्थः । यद्वा तस्मान्निमित्तादिति योज्यम् । ब्रह्मानधिगतं चेदमित्यादिनेत्यर्थः[2] । कथं तर्हि वाक्यं व्याख्येयं तत्राऽऽह । **सा यथेति** । इहेति वाक्यव्याख्योक्तिः ॥ ८३२ ॥

**सर्वमानाविरोधेन वाक्यार्थो गम्यते यथा ॥**
**गुणवृत्त्याऽन्यथा वा तद्व्याख्येयं सुविपश्चिता ॥ ८३३ ॥**

उक्तमेव व्यनक्ति । **सर्वेति** । असंसृष्टापरोक्षब्रह्मप्रतिपादकास्थूलादिसर्ववाक्याविरोधेन प्रज्ञाकरणवाक्यार्थो यथा गम्यते तथा तद्वाक्यं मुख्यलक्षणागुणवृत्तीनामन्यतमया वृत्त्या प्रेक्षावता व्याख्येयमित्यर्थः ॥ ८३३ ॥

**वाक्यमाहात्म्यसंभूतं शाब्दं विज्ञानमुच्यते ॥**
**मेययाथात्म्यतो जाता प्रज्ञेतीहाभिधीयते ॥ ८३४ ॥**

---

१ ख. °रकस्यै° । २ क. ख. घ. चेदित्या° ।

मानान्तराविरुद्धं व्याख्यानमनुवर्तयन्पदद्वयार्थमाह । **वाक्येति** । अधीतवाक्यप्रसादप्रसूतमापातिकं ज्ञानं विज्ञायेत्युच्यते मेयस्वरूपानुसारेण निर्वृत्तं विचारफलभूतमसंसृष्टापरोक्षज्ञानं प्रज्ञेति प्रकृते वाक्ये कथ्यत इत्यर्थः ॥ ८३४ ॥

**शाब्दविज्ञानमानेन प्रज्ञामैकात्म्यलक्षणाम् ॥**
**ब्रह्मास्मीति प्रकुर्वीत बुभुत्सोच्छेदिनीं दृढाम् ॥ ८३५ ॥**

वाक्यार्थमाह । **शाब्देति** । शब्दोत्थप्रयोजकज्ञानेन विचारपूर्वकासंसृष्टापरोक्षज्ञानमहं ब्रह्मेत्येवंरूपमसंभावनादिहीनमापादनीयं तेन सर्वाकाङ्क्षाध्वस्तेरित्यर्थः ॥ ८३५ ॥

**विज्ञायेति ल्यबन्तेन प्रमाणव्याप्तिरुच्यते ॥**
**मेयस्य तेन माव्याप्तिः प्रज्ञामित्यभिधीयते ॥ ८३६ ॥**

व्याख्यानान्तरमाह । **विज्ञायेतीति** । अविद्यातज्जध्वंसिज्ञानेन मेयव्याप्तिर्ल्यबर्थो मेयेन मानव्याप्तिः प्रज्ञा तन्नात्र ज्ञानद्वयमस्तीत्यर्थः ॥ ८३६ ॥

**प्रमाणव्यापृतेर्यस्मान्मेयस्य व्यापृतेस्तथा ॥**
**प्रज्ञाफलं जायतेऽथ यदपूर्वादिलक्षणम् ॥ ८३७ ॥**

तयोर्मिथोव्याप्तेरुपयोगमाह । **प्रमाणेति** । मानमेययोर्मिथोव्याप्त्या मानफलमपूर्वादिरूपं कैवल्यं सिध्यति तेन सा वाच्येत्यर्थः । अथशब्दस्तस्मादर्थो[3] यथोक्तफलद्योतकः ॥ ८३७ ॥

**प्रमात्रादिविभागेन मानं मेयं समश्नुते ॥**
**मेयेनाऽऽप्तौ तु तद्ध्वस्तिर्मेययाथात्म्यमात्रतः ॥ ८३८ ॥**

मानेन मेयस्य व्याप्तिमात्रेण तत्सिद्धेर्व्यर्था मेयेन मानव्याप्तिरित्याशङ्क्याऽऽह । **प्रमात्रादीति** । मेयेन मानव्याप्तौ प्रमात्रादिविभागादिध्वस्तिरित्यत्र हेतुमाह । **मेयेति**[4] ॥ ८३८ ॥

**सकारणस्य मात्रादेः प्रत्यग्दृष्ट्यतिरेकतः ॥**
**तत्त्वं नान्यद्यतस्तस्मात्तन्मात्रेणैव तद्धतिः ॥ ८३९ ॥**

कथं मात्रादेस्तथात्वं मेयेन मानव्याप्तौ तन्निवृत्तिस्वीकारात्तत्राऽऽह । **सकारणस्येति** । मात्रादिभावाभावयोरात्मातिरेकेणाभावात्तद्याथात्म्यमात्रत्वं तस्याविरुद्धमित्यर्थः ॥ ८३९ ॥

**निद्रान्धः सन्यथा स्वप्ने ह्यग्निव्याघ्रादिसंगतेः ॥**
**निद्रास्वप्नप्रहाणेन बोधमात्रार्थभाग्भवेत् ॥ ८४० ॥**
**प्रत्यगज्ञानसंभूतनानात्वोत्थप्रबोधतः ॥**
**प्रध्वंसादात्ममोहस्य तथैकात्म्यं समश्नुते ॥ ८४१ ॥**

१ क. ख. °च्छेदनीं । २ घ. °संप्रमम° । ३ घ. °र्थो यथोक्त° । ४ ख. °येनेति । ५ घ. °णास-भवा° ।

प्रत्यग्दृष्टिमात्रत्वान्मात्रादेरतिरिक्ततया भासमानस्य मिथ्यात्वे तत्त्वधीहेत्वभावादुक्ताया मुक्तेरसिद्धिरित्याशङ्क्याऽऽह । **निद्रेति** । स्वप्ननिमित्तकृतप्रबोधस्य प्रसिद्धत्वं हिशब्दार्थः । यथा स्वाप्नमिथ्याव्याघ्रादिबलात्फलवान्प्रबोधः प्रजायते तथा मिथ्यामात्रादिना फलवज्ज्ञानमविरुद्धमित्यर्थः ॥ ८४० ॥ ८४१ ॥

**शास्त्राचार्यमतिर्वाऽत्र विज्ञायेत्यभिधीयते ॥**
**प्रज्ञेत्यादिकया वाचा ह्यात्मप्रत्यय उच्यते ॥ ८४२ ॥**

वाक्यस्यार्थान्तरमाह । **शास्त्रेति** । श्रवणमननादिविज्ञानं विज्ञायेत्युच्यते वाक्यार्थज्ञानं प्रज्ञा तेन श्रवणादि कृत्वा वाक्यार्थज्ञानं कुर्यादिति वाक्यार्थ इत्यर्थः । श्रवणादेर्वाक्यार्थधीहेतुत्वावद्योती हिशब्दः ॥ ८४२ ॥

**शास्त्राचार्यव्यपेक्षत्वात्परतन्त्रैव तन्मतिः ॥**
**अनन्यापेक्षतो ज्ञेया प्रत्यग्बुद्धेः स्वतन्त्रता ॥ ८४३ ॥**

शास्त्राचार्यमतेरात्मप्रत्ययस्य चावान्तरभेदमाह । **शास्त्राचार्येति** । तदधीना श्रवणादिरूपा मतिस्तदपेक्षत्वात्परतन्त्रा व्यवह्रियते प्रत्यग्विषयायास्तु बुद्धेर्वाक्यार्थज्ञानाख्यायाः सत्यां श्रवणादिसामग्र्यामन्यापेक्षाराहित्यात्स्वतन्त्रतेत्यर्थः ॥ ८४३ ॥

**आत्मप्रत्यय आत्मैको द्वितीयः पुनरात्मनः ॥**
**अनात्मप्रत्ययः सोऽहमुत्पत्त्यैवास्मि केवलः ॥ ८४४ ॥**

किंच बुद्धेर्बोध्याकारत्वात्प्रत्यग्बुद्धिबोध्यस्य च स्वातन्त्र्याद्युक्ता तद्बुद्धेः स्वतन्त्रतेत्याह । **आत्मेति** । आत्मा स्वप्रकाशत्वादद्वयः परमार्थोऽनात्मा दृश्यत्वान्मिथ्या तत्स्वतः प्रतीचः स्वातन्त्र्यात्तद्बुद्धिरपि तथेत्यर्थः । केवलशब्दः स्वतन्त्रार्थः ॥ ८४४ ॥

**यदि वोक्तात्मयाथात्म्यबोधेनैवाद्वयात्मिकाम् ॥**
**ब्रह्मप्रज्ञां प्रकुर्वीत विशेषणसमाश्रयात् ॥ ८४५ ॥**

वाक्यस्यार्थान्तरमाह । **यदि वेति** । आत्मनो ब्रह्मत्वं विज्ञायेत्युच्यते ब्रह्मणश्च प्रत्यक्त्वं प्रज्ञेत्याख्यायते तस्मादात्मनो ब्रह्मत्वं विज्ञाय तेनैवाऽऽत्मरूपेण ब्रह्मानुसंदधीतेत्यर्थः । कथं प्रतीचो ब्रह्मत्वं ब्रह्मणो वा प्रत्यक्त्वं गमकाभावात्तत्राऽऽह । **विशेषणेति** । तमेवेत्यवधारणसामर्थ्यात्प्रत्यक्त्वं ब्रह्मणोऽवगम्यते । अज आत्मा महानित्यत्र महानिति विशेषणात्प्रतीचोऽपि ब्रह्मत्वसिद्धिरित्यर्थः ॥ ८४५ ॥

**अव्यावृत्ताननुगतब्रह्मार्थोऽनात्मनोऽन्यतः ॥**
**लभ्यतेऽत्र यतस्तस्मात्तमेवेत्यभिधीयते ॥ ८४६ ॥**

एवकारसामर्थ्यसिद्धमर्थं प्रपञ्चयति । **अव्यावृत्तेति** । अध्यात्मशास्त्रं सप्तम्यर्थः ॥ ८४६ ॥

---

१ ख. °स्य स्वप्नादि° ।

अव्यावृत्तानानुगतब्रह्मार्थाऽपि चान्यतः ॥
प्रत्यक्ता लभ्यते साक्षान्महानात्मेत्यतोऽत्र गीः ॥ ८४७ ॥

महत्त्वविशेषणावष्टम्भादिष्टं स्पष्टयति । अव्यावृत्ताननुगतेति । विरज इत्यादिमन्त्रः सप्तम्या गृहीतः ॥ ८४७ ॥

व्यावर्त्यार्थातिरेकेण नाऽऽत्मब्रह्मपदार्थयोः ॥
स्वरूपेऽस्ति भिदा काचिदमानित्वादिवस्तुवत् ॥ ८४८ ॥

प्रत्यग्ब्रह्मणोरन्योन्याभेदमुक्त्वा भेदधीगतिमाह । व्यावर्त्येति ॥ ८४८ ॥

विरुध्यतेऽक्रियारूपं मानित्वादिक्रियात्मकैः ॥
अमानित्वादिकं वस्तु यथेहापि तथेष्यताम् ॥ ८४९ ॥

दृष्टान्तं प्रपञ्चयति । विरुध्यत इति । अक्रियारूपमिति च्छेदः । अमानित्वमित्यादि मानित्वादिभिर्विरुध्यते तेषां च प्रतियोगिनां भेदादमानित्वाद्यपि भिन्नवद्भाति वस्तुतस्तु तत्तदभावोपलक्षितमेकमेव वस्तुस्वरूपं तथा ब्रह्मात्मन्यद्वयत्वं पारोक्ष्यं च विरुध्यते तद्भेदादेव भेदधीर्वस्तुतस्त्वेकत्वमेवेति दृष्टान्तमनूद्य दार्ष्टान्तिकमाह । यथेति ॥ ८४९ ॥

प्रत्यग्वस्त्वद्वयमपि तदबोधोपघाततः ॥
स्रगिवाद्यादिरूपेण प्रथते भेदवन्मृषा ॥ ८५० ॥

अद्वयस्य सद्वयत्वमपरोक्षस्य परोक्षत्वं विरुध्यते चेत्कथं निवृत्तिस्तदनिवृत्तावैक्यासिद्धिरित्याशङ्क्य सद्वयत्वस्याऽऽविद्यत्वमाह । प्रत्यगिति ॥ ८५० ॥

तथैवाऽऽत्माऽपि तद्ब्रह्म तदविद्यैकहेतुतः ॥
परोक्षमिव तद्भाति तिमिरोद्भूतचन्द्रवत् ॥ ८५१ ॥

आत्मनः सद्वयत्ववत्पारोक्ष्यस्यापि ब्रह्मणोऽविद्याकृतत्वमाह । तथेति ॥ ८५१ ॥

सद्वितीयपरोक्षत्वे यतोऽज्ञानैकहेतुके ॥
न वस्तु स्पृशतस्तस्मात्प्रमाणोत्थप्रबोधतः ॥ ८५२ ॥

उभयोराविद्यत्वमनूद्य तत्फलमाह । सद्वितीयेति ॥ ८५२ ॥

यथावस्त्वभिसंबन्धान्निवर्तेते सहेतुके ॥
अकारकात्मबोधस्य जन्मनैव तमोहुतिः ॥ ८५३ ॥

प्रामाणिकबोधस्य निवर्तकत्वे हेतुमाह । यथावस्त्विति । वाक्यीयो बोधो वस्त्वनुसारित्वादविद्यां नुदन्नुभयमपि तत्कार्यं नुदति चेदजातस्यासत्त्वादेव तन्निवर्तकत्वाभावो जातस्याविरोधेन जातत्वादेवानिवर्तकतेत्याशङ्क्याऽऽह । अकारकेति ॥ ८५३ ॥

---

१ घ. 'द्वयापरोक्षे द्वय' ।

**नान्वयव्यतिरेकाभ्यां नाप्यभावेन तद्धतिः ॥**
**आत्मब्रह्मपदार्थैकरूपेणैव ह्नुतिर्यतः ॥ ८५४ ॥**

प्रस्तुततमोनिवृत्तेः प्रसिद्धानिवृत्तितो वैलक्षण्यमाह । **नेति** । तत्र हेतुः । **आत्मेति** ॥ ८५४ ॥

**नान्यदज्ञानतोऽस्तित्वं द्वितीयस्याऽऽत्मनो यथा ॥**
**निवृत्तिरप्यविद्याया नावगत्यात्मनोऽपरा ॥ ८५५ ॥**

प्रकृता निवृत्तिरात्मैवेत्युक्ते दृष्टान्तेनानेकशो दर्शितं प्रसङ्गागतं स्मारयति । **नान्यदिति** ॥ ८५५ ॥

**पदार्थप्रतिबोधो वा वाक्यार्थज्ञानजन्मने ॥**
**विज्ञायेत्युच्यते श्रुत्या पुंसस्तत्र स्वतन्त्रतः ॥ ८५६ ॥**

व्याख्यानान्तरमाह । **पदार्थेति** । पदार्थद्वयज्ञानं विज्ञायेतिश्रुत्या वाक्यार्थज्ञानार्थं कर्तव्यं वाक्यार्थज्ञानं प्रज्ञा तथाच पदार्थौ संशोध्य वाक्यार्थो ज्ञातव्य इत्यर्थस्तेनोच्यते पदार्थज्ञाने पुंसः स्वातन्त्र्यात्तस्य कर्तुं योग्यत्वादिति योजना ॥ ८५६ ॥

**अन्वयव्यतिरेकाभ्यां वाक्यनीडपदार्थयोः ॥**
**पुमानलं विवेकाय न तु वाक्यार्थवित्तये ॥ ८५७ ॥**

पदार्थविवेके पुंसः स्वातन्त्र्यमुक्तं साधयति । **अन्वयेति** । वाक्यनीडे तन्निष्ठे तत्त्वंपदे तदर्थयोर्विवेकोऽन्वयादिना शोधनं तदर्थं पुरुषः समर्थो भवति तदेव शोधनं कुर्यादित्यर्थः । वाक्यार्थज्ञानेऽपि पुंसः स्वातन्त्र्यसंभवात्पदार्थविवेकवत्तस्मिन्नसौ नियुज्यतामित्याशङ्क्याऽऽह । **न त्विति** ॥ ८५७ ॥

**नानुत्पन्ने विधिः पुंसोऽशक्यत्वाद्वस्तुतन्त्रतः ॥**
**उत्पन्नेऽपि कृतार्थत्वान्न स्याद्वाक्यार्थबोधने ॥ ८५८ ॥**

तदेव साधयति । **नेत्यादिना** । न हि वाक्यार्थज्ञाने विधिस्तस्य प्रमाणवस्तुतन्त्रतया पुंस्तन्त्रत्वाभावान्न चानुत्पन्ने तस्मिन्विधिस्तस्यासत्त्वादेव विध्ययोग्यत्वान्नापि तस्मिन्नुत्पन्ने विधिस्तदुत्पत्तिमात्रेण कृतकृत्यत्वात्पुंसो विधिफलाभावादित्यर्थः ॥ ८५८ ॥

**अन्वयव्यतिरेकाभ्यां लौकिकत्वात्पदार्थयोः ॥**
**शक्तस्तद्विषयं ज्ञानं कर्तुं वाक्यार्थवित्तये ॥ ८५९ ॥**

पदार्थविवेकवदित्युक्तं[2] विघटयति । **अन्वयव्यतिरेकाभ्यामिति** । पदार्थयोर्लौकिकत्वादन्वयादिना तद्विषयं ज्ञानं वाक्यार्थज्ञानार्थं कर्तुं पुरुषः शक्त इति योजना । विवेकस्य क्रियात्वाद्यागादाविव पुंसः स्वातन्त्र्यात्तत्र युक्तो विधिरित्यर्थः ॥ ८५९ ॥

---

१ क. 'प्रविवेको वा । २ घ. 'क्तं घ'

आत्मा द्रष्टव्य इत्यादावयमेव विधीयते ॥
पदार्थविषयः पुंसो व्यापारो योऽनुमात्मकः ॥ ८६० ॥

किंच द्रष्टव्यवाक्येऽपि विवेकविषयो विधिर्न वाक्यार्थज्ञानविषय इति साधितमित्याह । **आत्मेति** । अनुमानात्मकोऽन्वयाद्यधीनः शोधनात्मेति यावत् ॥ ८६० ॥

वाक्यार्थप्रतिबोधस्य पदार्थाज्ञानमेव तु ॥
अन्तरायो यतस्तस्मात्पदार्थज्ञानचोदना ॥ ८६१ ॥

वाक्यादेव तदर्थधीसंभवात्तादर्थ्येन तत्पदार्थज्ञानं न विधेयमित्याशङ्क्याऽऽह । **वाक्यार्थेति** ॥ ८६१ ॥

ज्ञात्वाऽऽत्मानं तमेवेति तन्मोहोत्थादनात्मनः ॥ ८६२ ॥
अनात्मार्थप्रधानोऽयं यावदात्मा समीक्ष्यते ॥
ब्रह्मास्मीति न तावद्धीर्जायते सान्तरायतः ॥ ८६३ ॥

चोदनामेव साधयति । **ज्ञात्वेति** । स्वमोहोत्थाद्देहादेर्निष्कृष्याऽऽत्मानं ज्ञात्वा वाक्यार्थं मुमुक्षुर्जानात्यतस्तमेवेत्यादिना विवेके विधिरर्थवानित्यर्थः । पदार्थाज्ञानस्य वाक्यार्थज्ञानान्तरायत्वं स्फोरयति । **अनात्मेति** ॥ ८६२ ॥ ८६३ ॥

अनात्मनो यदाऽऽत्मानं प्रत्यगज्ञानकल्पितात् ॥
विविनक्त्यनुमानेन तदा वाक्यार्थधीर्भवेत् ॥ ८६४ ॥

कदा तर्हि वाक्यार्थज्ञानं तदाह । **अनात्मन इति** । अनुमानेनान्वयादिना तदनुसारिश्रुत्या चेत्यर्थः ॥ ८६४ ॥

आत्मन्येव यदाऽऽत्मानं व्युत्थाप्यानात्मनो नरः ॥
विजानाति तदा सर्वमात्मैवेति प्रपश्यति ॥ ८६५ ॥

विवेकविधिफलमुपसंहरति **आत्मन्येवेति** ॥ ८६५ ॥

अथवा पुरुषार्थत्वात्प्रज्ञायाः करणं नृणाम् ॥
स्वतः प्राप्तमनूद्येह तमेवेति नियम्यते ॥ ८६६ ॥

व्याख्यान्तरमाह । **अथवेति** । ब्रह्मसाक्षात्करणं प्रज्ञेत्युच्यते तच्च परमानन्दाकारतया परमपुरुषार्थत्वेन प्रसिद्धं तदनूद्याऽऽत्मज्ञानमेव कर्तव्यमिति नियम्यत इत्यर्थः । प्राप्तमित्यस्मादूर्ध्वमतस्तदित्यध्याहार्यम् ॥ ८६६ ॥

प्रज्ञां कुर्वीत यदिह तत्तमेव यथोदितम् ॥
तां प्रकुर्वीत विज्ञाय स्वात्मानं न त्वनात्मनः ॥ ८६७ ॥

तत्पक्षे व्याख्याप्रकारं दर्शयति । **प्रज्ञामिति** । तां प्रज्ञां कुर्वीतेति यदिह वाक्ये

---

१ घ. ॰ज्ञां प्रकु॰ ।

दृश्यते तत्तमेव स्वात्मानं यथोक्तं विज्ञाय कुर्वीतेति गम्यते न त्वनात्मनो ज्ञात्वा तेन प्रज्ञाकरणमिति योजना ॥ ८६७ ॥

**तत्त्वमात्मैव सर्वस्य कार्यकारणवस्तुनः ॥**
**यस्मादात्मानमेवातः प्रज्ञां विज्ञाय कुर्विति ॥ ८६८ ॥**

यथोक्ते नियमे हेतुमाह । **तत्त्वमिति**[1] । इतिशब्दो[2] नियमार्थः ॥ ८६८ ॥

**तदन्यविषयज्ञाने न किंचिद्वेत्ति तत्त्वतः ॥**
**न च कृत्स्नतमोहानिः सर्वज्ञानोदयो न च ॥ ८६९ ॥**

आत्मानं ज्ञात्वा प्रज्ञाकरणमित्यत्र हेतुमुक्त्वा नानात्मानं ज्ञात्वेत्यत्र हेतुमाह । **तदन्येति** । इतश्च नानात्मानं ज्ञात्वा प्रज्ञाकरणमित्याह । **न चेति** ॥ ८६९ ॥

**प्रत्यगात्मनि तु ज्ञाते श्रुत्युक्तेनैव वर्त्मना ॥**
**नानुत्पन्नं क्वचिज्ज्ञानं नेहाध्वस्तं तमोऽप्यतः ॥ ८७० ॥**

आत्मज्ञाने विशेषमाह । **प्रत्यगिति** । श्रुत्युक्तं वर्त्म श्रवणादि । अतःशब्दः सर्वज्ञानोदयार्थः ॥ ८७० ॥

**विज्ञायेह तमेवातः प्रज्ञां कुर्वीत सद्द्विजः ॥**
**अज्ञानादि[3] तथा[4] कृत्स्नमात्मनोऽन्यत्र वेदने ॥**
**सर्वमात्मानमेवेति श्रुतेरपि वचस्तथा ॥ ८७१ ॥**

नियमपक्षमुपसंहरति । **विज्ञायेति** । इहेत्यात्मानात्मनोरिति निर्धारणे सप्तमी । प्रज्ञाकरणस्य प्राप्तत्वमतःशब्दार्थः । आत्मानमेव ज्ञात्वा प्रज्ञाकरणमित्ययुक्तमनात्मनोऽपि हेयत्वेन ज्ञेयत्वात्परिहार्यत्वेनाधर्मजिज्ञासावदित्याशङ्क्याऽऽह । **अज्ञानादीति** । अन्यत्रानात्मनि वेदने स्वीकृतेऽपि कृत्स्नमनात्मरूपमात्मत्वेनैव ज्ञेयं यस्मादात्मन एवाज्ञातत्वादि संभवत्यतो यदात्मानमेव ज्ञात्वा प्रज्ञाकरणं तत्तथैव स्थितमित्यर्थः । सर्वस्याऽऽत्मत्वेनैव दर्शने मानमाह । **सर्वमिति** । **सर्वमात्मानं पश्यत्यात्मानमेव** लोकमुपासीतेत्यादिवचोऽपि दर्शितार्थानुसारीत्यर्थः ॥ ८७१ ॥

**निष्कर्मिका वा प्रज्ञेह विहितेत्यथ भण्यते ॥**
**कर्म तस्यास्तमेवेति विज्ञायेत्यनुवादतः ॥ ८७२ ॥**

व्याख्यान्तरमाह । **निष्कर्मिकेति** । प्रज्ञां कुर्वीतेति कर्मरहिता प्रज्ञा विहिता न च सा तादृशी युक्ता तदनन्तरं कर्मापेक्षायां तमेवेति वाक्येन तत्कर्मोच्यते तथाच प्रज्ञाकर्मविधानपरं वाक्यमित्यर्थः । आत्मैव प्रज्ञाकर्मेत्येतद्वाक्यं बोधयति चेद्विज्ञायेत्य-

---

१ घ. °ति । प्रज्ञाश° । २ ख. °ति कर्तव्यमिति नियम्यत इत्यर्थः । ३ क. ग. °ज्ञातादि । ४ ग. यथा ।

नर्थकमित्याशङ्क्याऽऽह । **विज्ञायेतीति** । प्रज्ञैव विज्ञायेत्यनूद्यतेऽनुवादश्चाऽऽत्मकमेकप्रज्ञायां सत्यां कार्यज्ञेयसमाप्तेः कृतार्थतेतिद्योतनार्थमित्यर्थः ॥ ८७२ ॥

**प्रज्ञा वा परमात्मेह प्रज्ञानमितिवाक्यतः ॥**
**विज्ञायेह तमात्मानं प्रज्ञां कुर्वीत सद्विजः ॥ ८७३ ॥**

व्याख्यान्तरमाह । **प्रज्ञा वेति** । पदार्थमुक्त्वा वाक्यं योजयति । **विज्ञायेति** । देहादौ स्थितं त्वमर्थं ततो निष्कृष्य ज्ञात्वा पुनस्तं ब्रह्मरूपमनुसंदध्यादित्यर्थः । द्विजस्य सत्त्वं साधनचतुष्टयवत्त्वम् ॥ ८७३ ॥

**इमं देहस्थमात्मानं विज्ञायोक्तेन वर्त्मना ॥**
**परां प्रज्ञां प्रकुर्वीतेत्येष शास्त्रस्य संग्रहः ॥ ८७४ ॥**

अन्तिमां व्याख्यामुपसंहरति । **इममिति** । उक्तेन वर्त्मनाऽन्वयादिनेति यावत् । परा प्रज्ञा वाक्यार्थज्ञप्तिः ॥ ८७४ ॥

**तत्रैवं संभवत्यर्थे सर्वमानाविरोधिनि ॥**
**वाक्यार्थः कल्प्यते कस्माद्विरुद्धो यः प्रमान्तरैः ॥ ८७५ ॥**

असंसृष्टापरोक्षब्रह्मप्रतिपादकप्रमाणाविरोधेनाष्टधा वाक्यार्थे समर्थिते पूर्वोक्तं पक्षद्वयं न ग्राह्यमिति फलितमाह । **तत्रेति** । प्रज्ञाकरणवाक्यस्य प्रागुक्तरीत्या बहुधाऽर्थे प्रमाणाविरुद्धे सिद्धे सति प्रमाणविरुद्धो यो वाक्यार्थः स कल्प्यो न भवतीति योजना ॥ ८७५ ॥

**असंतोषादतोऽन्येऽत्र भूरिदोषप्रदर्शिनः ॥**
**व्याख्यानादन्यथा चक्रुर्व्याख्यां वेदार्थनिश्चिताः ॥ ८७६ ॥**

पक्षद्वयप्रत्युक्त्या प्रज्ञाकरणवाक्यमनेकधा व्याख्याय स्वयूथ्यानामेव मतान्तरमाह । **असंतोषादिति** । उक्ताद्व्याख्यानादन्यथाऽस्य वाक्यस्य व्याख्यानमन्ये वेदार्थनिश्चयवन्तः कृतवन्तः प्रस्तुते व्याख्यात्रये सति संतोषाभावात्ते च तत्र प्रचुरदोषदर्शिन इत्यक्षरार्थः ॥ ८७६ ॥

**वेदान्तवाक्यजं ज्ञानं यथावस्त्वेव मोहनुत् ॥**
**प्रामाण्याद्वेदवचसस्तज्जं मिथ्या भवेत्कथम् ॥ ८७७ ॥**

कथं पक्षत्रये दोषदर्शितेत्याशङ्क्य सिद्धान्तातिरिक्तपक्षयोर्दोषमाह । **वेदान्तेति** । वाक्योत्थं ज्ञानं वस्त्वनुसारेण तद्बोधयत्तदविद्यां निवर्तयति वाक्यस्य मानत्वात्तथाच न मिथ्याज्ञानं वचो जनयत्यतो न संसृष्टपरोक्षं शाब्दं ज्ञानमात्मनोऽसंसृष्टापरोक्षत्वादित्यर्थः ॥ ८७७ ॥

---

१ ख. °यंहमप्रा° ।

**वाक्यश्रवणकाले[1] तत्सर्वाज्ञानतमोपनुत् ॥**
**जायते यद्यपि ज्ञानं कृत्स्नैकात्म्यसमाश्रयम् ॥ ८७८ ॥**
**जन्मानन्तरमेवैतदनादितमसाऽखिलम् ॥**
**तथाऽपि बाध्यते ज्ञानमविद्याकार्यदर्शनात् ॥ ८७९ ॥**

सिद्धान्ते दोषमाह । **वाक्येति** । यद्यपि सर्वाविद्यातज्जध्वंसित्वेन वाक्यादादौ यथार्थज्ञानमुत्पद्यते तथाऽपि तदनाद्यज्ञानेन बाध्यते तत्तत्कार्यरागादिदृष्टेरिति वार्तिकयोरर्थः । अखिलमनल्पं विषयसहितमित्यर्थः ॥ ८७८ ॥ ८७९ ॥

**अविद्याहेतु[2]रागादीन्सम्यग्ज्ञानादनन्तरम् ॥**
**यतो वीक्षामहे तस्माज्ज्ञानस्याज्ञानबाधनम् ॥ ८८० ॥**

अविद्याकार्यदर्शनादित्युक्तं विवृणोति । **अविद्येति** ॥ ८८० ॥

**नैसर्ग्यागन्तुकी चेति ह्यविद्या द्विविधा स्मृता ॥**
**आगन्तुकी स्याद्विषये नैसर्गिक्यात्मनीष्यते ॥ ८८१ ॥**

नष्टस्याज्ञानस्य पुनरनुद्भवादन्यस्य चाभावात्कथं तेन ज्ञानस्य बाध्यतेत्याशङ्क्य तदर्थमज्ञानद्वैविध्यमाह । **नैसर्गीति** । तत्र परप्रसिद्ध्यर्थो हिशब्दः । एकस्मिन्नात्मन्याकारभेदं विना कुतोऽज्ञानभेदस्तत्राऽऽह । **आगन्तुकीति** ॥ ८८१ ॥

**तत्राऽऽगन्तु[3] यदज्ञानं तत्सकृज्ज्ञानजन्मना ॥**
**अपैति नासि शबरो राजाऽसीत्युक्तितो यथा ॥ ८८२ ॥**
**नैसर्गिकी तु याऽविद्या सा सकृज्ज्ञानजन्मना ॥**
**ध्वस्ताऽपि पुनरेवैति तज्जरागादिदर्शनात् ॥ ८८३ ॥**

तथाऽपि प्रत्यगज्ञानादशेषमज्ञानमपगच्छतीत्याशङ्क्य विशेषमाह । **तत्रेत्यादिना** । ध्वस्ताऽपीत्यभिभूताऽपीत्यर्थः ॥ ८८२ ॥ ८८३ ॥

**यस्मादेवंस्वभावैषाऽविद्या नैसर्गिकी ततः ॥**
**विज्ञायापि परं तत्त्वं कुर्यात्प्रज्ञां पुनः पुनः ॥ ८८४ ॥**

नैसर्गिकमज्ञानं प्रज्ञानस्य बाधकमिति स्थिते फलितमाह । **यस्मादिति** । एवंस्वभावत्वं ज्ञानबाधकत्वम् ॥ ८८४ ॥

**तावत्प्रज्ञां प्रकुर्वीत यावद्ध्वस्ता निरन्वया ॥**
**आत्माविद्या यथोक्तात्मविद्याभ्यासेन यत्नतः ॥ ८८५ ॥**

प्रज्ञाकरणस्यावधिमाह । **तावदिति** । अभ्यासस्य दीर्घकालादरनैरन्तर्यवत्त्वं यत्नः ॥ ८८५ ॥

---

१ ग. °ले तु सर्वा° । २ ख. °हेतूत्रागा° । ३ ख. °गन्तु य° ।

श्लोकांश्च गौडपादादेर्यथोक्तार्थस्य साक्षिणः ॥
अधीयतेऽत्र यत्नेन संप्रदायविदः स्वयम् ॥ ८८६ ॥

ज्ञाततत्त्वेनाप्यज्ञानध्वंसार्थं ज्ञानाभ्यासः कार्य इत्यत्र मानमाह । श्लोकांश्चेति । आदिपदेन व्यासादिग्रहः । यथोक्तार्थः समम्यर्थः । यत्नो गुरुशुश्रूषादिः ॥ ८८६ ॥

तत्त्वमाध्यात्मिकं दृष्ट्वा तत्त्वं दृष्ट्वा तु बाह्यतः ॥
तत्त्वीभूतस्तदारामस्तत्त्वादप्रच्युतो भवेत् ॥ ८८७ ॥

तत्र गौडपादीयं श्लोकद्वयं पठति । तत्त्वमित्यादिना । शरीरादि पृथिव्यादि च सर्वं परमार्थात्मवस्तुमात्रं तद्व्यतिरेकेणासद्वाचारम्भणमित्यनुभूय तत्र कल्पनाधिष्ठानत्वेन स्वयं स्थितस्तन्निष्ठो विषयासक्तिविवर्जितो ब्रह्मास्मीति सम्यग्धीपरः स्यादित्यर्थः ॥ ८८७ ॥

यदा न लीयते चित्तं न च विक्षिप्यते पुनः ॥
अनिङ्गनमनाभासं निष्पन्नं ब्रह्म तत्तदा ॥ ८८८ ॥

वैतथ्यप्रकरणस्थं वाक्यमुक्त्वाऽद्वैतप्रकरणस्थं वाक्यमाह । यदेति । लये संबोधयेच्चित्तमित्यादिनोक्तोपायेन निगृहीतं चित्तं यदा सुषुप्तवन्न लीयते न च पुनर्विषयेषु विक्षिप्यते निर्वातदीपवदचलं न केनचित्कल्पितेन विषयाकारेण भासते तदा ब्रह्मरूपेण निष्पन्नं भवतीत्यर्थः ॥ ८८८ ॥

मन एव मनुष्याणां कारणं बन्धमोक्षयोः ॥
बन्धाय विषयासक्तं मुक्त्यै निर्विषयं यदा ॥ ८८९ ॥[1]

तत्रैव वैयासिकं वाक्यद्वयमाह । मन इत्यादिना । कथमेकस्यैव मनसो विरुद्धफलवत्त्वं तत्राऽऽह । बन्धायेति ॥ ८८९ ॥

तावदेव निरोद्धव्यं हृदि यावत्क्षयं गतम् ॥
इदं ज्ञानं च ध्यानं च शेषोऽन्यो ग्रन्थविस्तरः ॥ ८९० ॥

तन्निरोधस्यावधिमाह । तावदिति । हृदि ज्ञानात्मनीति यावत् । आत्मज्ञानं मनोनिग्रहं वा स्तौति । इदमिति । अन्यो ग्रन्थविस्तरोऽस्यैव शेष इति योजना ॥ ८९० ॥

इति व्याचक्षते केचिद्विज्ञायेति वचः स्फुटम् ॥
महामीमांसका धीरा अत्र प्रतिविधीयते ॥ ८९१ ॥

स्वगृह्यमतमुपसंहरति । इति व्याचक्षत इति । सिद्धान्तयति । अत्रेति ॥ ८९१ ॥

यदाऽसाधारणाऽविद्या प्रत्यगात्मैकगोचरा ॥
अज्ञानाद्यात्मिका सिद्धा द्वैविध्यं स्यात्तदा कुतः ॥ ८९२ ॥

---

१ क. ध. 'सो मिथोवि' ।

तदेव प्रकटयन्परोक्तमविद्याद्वैविध्यं निरस्यति । **यदेति** । अविद्या खल्वज्ञानसंशयमिथ्याज्ञानात्मिका प्रत्यङ्मात्रस्था सती तदसाधारणा यदेष्टा तदा प्रतीचोऽद्वयस्य निर्विशेषत्वात्तत्र तद्भेदायोगाद्भ्रान्त्यादिनिदानमेकैवाविद्या न तद्द्वैविध्यमित्यर्थः ॥ ८९२ ॥

**अज्ञात एव सर्वत्र मानानां मेय उच्यते ॥**
**आत्मैव ज्ञेय एष्टव्यो ध्रुवमैकात्म्यवादिना ॥ ८९३ ॥**

कथं तस्याः प्रत्यङ्मात्रगोचरत्वेनासाधारण्यं तत्राऽऽह । **अज्ञात इति** । अज्ञातस्य मानविषयत्वादात्मैवाज्ञातत्वेन तद्विषयः सर्वैरेष्टव्यस्तस्मात्तदेकगोचरा तदसाधारणाऽविद्या न द्विविधेत्यर्थः । सर्वत्र सर्वेषु शास्त्रेष्विति यावत् । ऐकात्म्यवादिनेत्युपलक्षणं सर्वैः परीक्षकैरिति द्रष्टव्यम् ॥ ८९३ ॥

**अज्ञातोऽर्थोऽन्यतो यस्मान्नैवैकात्म्यात्प्रसिध्यति ॥ ८९४ ॥**
**न चानधिगतत्वस्य प्रसिद्धिः स्यात्प्रमाणतः ॥**
**अतिशीतेरसद्भावान्न च बाधोऽस्य माश्रयात् ॥ ८९५ ॥**

अज्ञातस्य मेयत्वेऽप्यात्मन एव कथं तथात्वमित्याशङ्क्य ध्रुवमिति सूचितमाह । **अज्ञात इति** । अन्यस्याज्ञानहेतुत्वात्तस्मादात्मैवाज्ञातो मेय इति शेषः । किंचानात्मनोऽज्ञातत्वं मानाद्वा स्वमहिम्ना वा सिद्धं नाऽऽद्य इत्याह । **न चेति** ॥ ८९४ ॥ ८९५ ॥

**न चाप्यनात्मना सिद्धिरज्ञातस्येह वस्तुनः ॥**
**तस्याप्यविद्यारूपत्वाज्जडोऽनात्मेति हीष्यते ॥ ८९६ ॥**

नापि द्वितीय इत्याह । **न चापीति** । स्वगताज्ञातत्वस्यानात्ममहिम्ना न सिद्धिरित्यत्र हेतुस्तस्येति । अविद्यावदित्यपेरर्थः । अनात्मनः स्वतःसाधकत्वास्वीकाराच्च न तद्वशात्तदज्ञातत्वसिद्धिरित्याह । **जड इति** ॥ ८९६ ॥

**अतो मात्राद्यभावेऽपि योऽज्ञातत्वस्य सिद्धये ॥**
**अलमर्थः स एवात्र मेयोऽज्ञात इहेष्यते ॥ ८९७ ॥**

साधकाभावादनात्मनोऽज्ञातत्वायोगे फलितमाह । **अत इति** । अत्रेति स्वापादेरिहेति मानभूमेरुक्तिः । स एवाज्ञातः स मेय इष्यत इति संबन्धः ॥ ८९७ ॥

**बोधमात्रातिरेकेण नान्योऽर्थोऽज्ञानसिद्धिकृत् ॥**
**अज्ञानादित्रयं तस्मात्स्वतोबोधैकसंश्रयम् ॥ ८९८ ॥**

अज्ञातत्वसाधकोऽर्थोऽज्ञातो मेयोऽस्तु तथाऽपि प्रतीचि किमायातं तदाह । **बोधेति** । प्रतीचोऽज्ञानविषयत्ववदाश्रयत्वमपीत्याह । **अज्ञानादीति** । आश्रयान्तरदृष्टभावस्तच्छब्दार्थः ॥ ८९८ ॥

---

१ ख. कथमस्याः । २ ख. °त्मनः सि° ।

**संभाव्यते जगत्यस्मिन्बोधमात्रपुरःसरम् ॥ ८९९ ॥**
**अज्ञायमानो मात्रादिर्न यस्मादनुभूयते ॥**
**अज्ञातचितिवत्तस्मादज्ञातोऽनुभवः स्मृतः ॥ ९०० ॥**

अज्ञानाद्यात्ममात्राश्रितमित्यत्रानुभवं प्रमाणयति । **संभाव्यत इति** । अनुभवसिद्धमपि त्रयं मात्राद्याश्रयं किं न स्यात्तत्राऽऽह । **अज्ञायमान इति** । यथा चिदात्मा तदाश्रयो दृश्यते न तथा मात्रादिस्तस्य सदाऽनुभवग्रस्तत्वादतश्चिदात्मैव तदाश्रय इत्यर्थः ॥ ८९९ ॥ ९०० ॥

**अज्ञातायां यथा शुक्तौ रजताद्यर्थनिश्चितिः ॥**
**अनात्मनिश्चितिस्तद्वदज्ञातेऽनुभवात्मनि ॥ ९०१ ॥**

इतश्चाऽऽत्मैवाज्ञात इत्याह । **अज्ञातायामिति** । शुक्त्यज्ञानविवर्तरजतस्येवाऽऽत्माज्ञानविलसितस्याऽऽकाशादेरपि नाज्ञातत्वसिद्धिरित्यर्थः ॥ ९०१ ॥

**ज्ञानात्पृथगसंसिद्धे रजतादेरमेयता ॥**
**शुक्तेरिव त्वविज्ञातज्ञातत्वस्य ततोऽन्यतः ॥ ९०२ ॥**

शुक्तिकादावज्ञाते रजतादिनिश्चयो युक्तस्तस्याप्रामाण्यादात्मन्यज्ञाते नानात्मनिश्चयस्तस्य सम्यक्त्वेन प्रामाण्यादित्याशङ्क्य रजतादिनिश्चयवत्तदप्रामाण्यार्थं तस्याप्रामाण्यं साधयति । **ज्ञानादिति** । रजतादिज्ञानस्य प्रामाण्यं तद्विषयत्वेन शुक्त्यादिविषयत्वेन वा नाऽऽद्यः शुक्तेरज्ञाताया ज्ञातत्वस्य रजतादन्यत्वेन सिद्धिवत्तस्य ततः पृथगज्ञातत्वस्य ज्ञातत्वस्य च ज्ञानादसिद्धेर्मेयत्वायोगादित्यर्थः ॥ ९०२ ॥

**यतो न लभते मेयं शुक्तौ रजतधीरतः ॥**
**न रूप्यधीः प्रमाणं स्यात्प्रमेयासंभवादिह ॥ ९०३ ॥**

रजतादेर्मेयत्वाभावे फलितमाह । **यत इति** । इह शुक्ताविति संबन्धः ॥ ९०३ ॥

**यथा न रजते मानं शुक्तावपि तथैव सा ॥**
**तदप्रबोधताबाधात्तस्याश्चाशुक्तिकात्मनः ॥ ९०४ ॥**

द्वितीयं दूषयति । **यथेति** । रजतादिधियो रजतादाविव शुक्त्यादावपि न मानता तदज्ञानाध्वंसित्वात्तदाकारत्वाभावाच्चेत्यर्थः ॥ ९०४ ॥

**यथैवं सर्वमानानि प्रत्यग्ज्ञानातिरेकतः ॥**
**अनात्ममेयभाञ्ज्येव विज्ञेयानीति निश्चितिः ॥ ९०५ ॥**

रजतादिज्ञानाप्रामाण्यमुक्त्वा तद्दृष्टान्तेनानात्मज्ञानानामप्यप्रामाण्यमाह । **यथेति** । यथोक्तरीत्या रजतादिधीर्न मानं तथा प्रत्यग्ज्ञानमेकं हित्वा सर्वाण्यनात्ममानान्येवममानानि ज्ञेयानि विषयाभावादनात्मन्यज्ञातत्वज्ञातत्वयोरयोगादज्ञानाध्वंसित्वादतदाकारत्वाच्च तन्मृषैवानात्मधीर्भवतीत्यर्थः ॥ ९०५ ॥

**प्रत्यक्संविच्त्वविज्ञाता तथैवेहानुभूयते ॥**
**अपि प्राज्ञानसंव्याप्तेर्यावद्व्युत्पाद्यते न ना ॥ ९०६ ॥**

प्रत्यज्ञानातिरेकत इतिविशेषणतात्पर्यमाह । **प्रत्यगिति** । प्रतीच्यज्ञातत्वस्यानुभवसिद्धत्वात्तदाकारज्ञानस्य तदज्ञानध्वंसित्वाच्च तत्र मानतेत्यर्थः । अज्ञातत्वस्याऽऽत्मन्यनुभवसिद्धत्वं स्फुटयति । **अपीति** । यावदेष पुरुषो नासि संसारी किंतु सदेवेति न व्युत्पाद्यते तावन्मानसंबन्धात्पूर्वं स्वप्रकाशेऽपि स्वानुभवसिद्धमज्ञातत्वमित्यर्थः ॥९०६॥

**वास्तव्येव तु संसिद्धिरनुभूतेर्यतस्ततः ॥**
**नाज्ञातत्वस्य बाधः स्याच्छुक्तिकाबाधसिद्धिवत् ॥ ९०७ ॥**

तथाऽपि सवितारि तमोहानवत्तद्बाधितमेवेत्याशङ्क्य वाक्योत्थज्ञानात्स्वरूपज्ञानाद्वेति विकल्प्याऽऽद्यं प्रत्याह । **वास्तवीति** । चिदात्मनः स्वरूपस्फूर्तिरेव सदा वर्तते न वाक्यीया तन्न तद्बलादात्मन्यज्ञातत्वस्य सदा बाधेत्यर्थः । द्वितीयं दूषयति । **नेत्यादिना** । यथा शुक्त्या न स्वाज्ञातत्वबाधस्तथा न स्वरूपज्ञानेनान्यथाऽतिप्रसङ्गादित्यर्थः ॥ ९०७ ॥

**मानेनानभिसंबन्धान्नेयं षष्ठेन्द्रियार्थवत् ॥**
**अनुभूतेः सुषुप्त्यादेर्न चाप्यनुभवत्वतः ॥**
**निरपेक्षा प्रमाणाप्तौ मानाप्तकरबिल्ववत् ॥ ९०८ ॥**

वाक्योत्था मितिः सदा नास्ति चेन्न तर्हि स्वरूपज्ञानमपि सदा स्यान्मानाभावादित्याशङ्क्याऽऽह । **मानेनेति** । अनुभूतिरमेयाऽपि नासतीत्यत्र हेतुमाह । **अनुभूतेरिति** । स्वापादिसाधकत्वेन स्वतः सिद्धेरिति यावत् । सा तर्हि मानेन स्वप्राप्तौ निरपेक्षा स्वतःसिद्धत्वात्तत्कथमौपनिषदत्वमित्याशङ्क्याऽऽह । **न चेति** । प्रत्यक्षाप्तं करतलकलितं बिल्वफलं न पुनर्मानाप्तिमपेक्षते न तथाऽनुभूतिः स्फुरद्रूपत्वेऽपि मानेन स्वाप्तावनपेक्षा स्वाज्ञानध्वंसित्वेन वाक्योत्थधीसापेक्षत्वादित्यर्थः ॥ ९०८ ॥

**प्रमाणव्यापृतेः पूर्वमेवं मेयोऽत्र लभ्यते ॥ ९०९ ॥**
**नैवं वेदान्तसिद्धान्तादन्यसिद्धान्तशासने ॥**
**मेयसिद्धिर्यतस्तस्मान्न मानं तत्र विद्यते ॥ ९१० ॥**

चिदात्मैवाज्ञातो मेय इत्युक्तमुपसंहरति । **प्रमाणेति** । एवमित्यनुभवानुसारोक्तिः । अत्रेति सिद्धान्तोक्तिः । स्वपक्षे मानप्रवृत्तिमुक्त्वा परपक्षे तदयोगमाह । **नैवमिति** ॥ ९०९ ॥ ९१० ॥

**इह त्वज्ञात आत्मैव मिथ्याज्ञातस्तथैव च ॥**
**तस्य प्रमाणसंबन्धात्सर्वाज्ञानप्रहाणतः ॥ ९११ ॥**

---

१ ख. ग. तथैवे' । २ ग. 'यादित्र' ।

तत्र मानफलमपि नास्तीति मत्वा स्वपक्षे तत्सत्त्वमाह । **इह त्विति** । तथैवेति संदिग्धत्वसमुच्चयः । सर्वाज्ञानप्रहाणतः किं कार्यमवशिष्यत इति संबन्धः ॥ ९११ ॥

**तत्त्वमस्यादिवाक्येभ्यः सर्वज्ञानप्रसूतितः ॥**
**सर्वाज्ञानापनुत्तेश्च ज्ञेयकार्यसमाप्तितः ॥ ९१२ ॥**

आत्मनो मानसंबन्धात्कथं सर्वाज्ञानध्वस्तिस्तन्मानसंबन्धे तदज्ञानध्वस्तिरेव युक्ता तत्राऽऽह । **तत्त्वमिति** । वाक्यवशादात्मनि ज्ञाते तदन्यवस्त्वभावादेकविज्ञानेन सर्वविज्ञानन्यायेन सर्वत्र ज्ञानोत्पत्तेः सर्वाज्ञानध्वस्तिरित्यर्थः । तत्फलमाह । **सर्वेति** ॥ ९१२ ॥

**प्राप्यस्य सर्वस्यावाप्तेस्तथा हेयस्य हानतः ॥**
**सम्यग्धियः सकृत्सूतेः किं कार्यमवशिष्यते ॥ ९१३ ॥**

प्राप्यपरिहार्ययोरवशेषं शङ्कित्वाऽऽह । **प्राप्यस्येति** । ब्रह्मविदोऽप्यनुष्ठानं केचिदिच्छन्ति तान्प्रत्याह । **सम्यगिति** । सकृत्सूतेरुक्ताशेषफलसिद्धेरिति शेषः ॥ ९१३ ॥

**अविद्या पूर्ववच्चेत्स्यात्सम्यग्ज्ञातेऽपि वस्तुनि ॥**
**भूयोऽपि सा मृतेरूर्ध्वं नेष्यतीत्यत्र का प्रमा ॥ ९१४ ॥**

आत्मैवाज्ञश्चाज्ञातश्चेति वदता द्वैविध्यमज्ञानस्य निरस्तमिदानीं ध्वस्तेनाज्ञानेन पुनरुद्भूतेन ज्ञानं बाध्यमित्युक्तमनुभाष्य दूषयति । **अविद्येति** । तत्त्वज्ञानानन्तरमप्यविद्योद्भूतौ विदेहकैवल्यादूर्ध्वमपि तदुद्भवसंभवादमुक्तिरित्यर्थः ॥ ९१४ ॥

**अविद्याविद्ययोर्यस्माद्बाध्यबाधकसंगतिम् ॥**
**मुक्त्वाऽन्यो नास्ति संबन्धो दाह्यदाहकयोरिव ॥ ९१५ ॥**

ध्वस्ताऽपि पुनरुद्भवत्यविद्येत्येतन्निरस्य विद्योदयमात्रान्न सा ध्वस्ता किंतु तिरोभूता पुनर्व्यक्ता भविष्यतीत्याशङ्क्याऽऽह । **अविद्येति** । तस्मादविद्या विद्यया भवति ध्वस्तैव न तिरोभूतेति शेषः ॥ ९१५ ॥

**बाध्याऽविद्या कथं विद्यां बाधिकां बाधते वद ॥**
**दाहकस्य न दाहोऽस्ति वह्नेर्दाह्येन वस्तुना ॥ ९१६ ॥**

यत्त्वविद्या विद्याया बाधिकेति तन्निरस्यति । **बाध्येति** । अविद्याया बाधकत्वं दाह्यस्य दाहकत्ववदयुक्तमित्यर्थः ॥ ९१६ ॥

**विद्यमानाऽप्यविद्येयं विद्यां चेन्नावधीत्पुरा ॥**
**ध्वस्ता बाधिष्यतेऽविद्या विद्यामित्यत्र का प्रमा ॥ ९१७ ॥**

किंचाविद्या विद्यमाना विद्यां बाधतेऽविद्यमाना वा नाऽऽद्यः परिपन्थिन्यामनाद्यविद्यायां विद्यानुदयप्रसङ्गादित्यभिप्रेत्य द्वितीयं दूषयति । **विद्यमानेति** ॥ ९१७ ॥

**अविद्यया चेद्विध्वस्ता विद्येयं कार्त्स्न्यतस्तदा ॥**
**मुषितात्मपरिज्ञानः प्रज्ञां कुर्यात्कथं जडः ॥ ९१८ ॥**

यत्तु यस्मादेवंस्वभावैषेत्यादि तद्दूषयति । **अविद्ययेति** ॥ ९१८ ॥

**किंच हेतुमतो जन्म सर्वत्र स्यात्पुनः पुनः ॥**
**सर्वहेतोस्त्वविद्याया ध्वस्तायाः स्यात्कुतो भवः ॥ ९१९ ॥**

इतश्च ध्वस्ताऽविद्या न पुनरुद्भवतीत्याह । **किंचेति** । सा हि पुनर्भवन्ती हेतुमपेक्षते न वा न चेत्तत्राऽऽह । **हेतुमत इति** । अपेक्षते चेत्तत्र पृच्छति । **सर्वेति** । अर्थान्तराद्ब्रह्मणो वेति प्रश्नार्थः ॥ ९१९ ॥

**ब्रह्मणश्चेद्भवस्तस्या अनिर्मोक्षः प्रसज्यते ॥**
**स्थास्नुत्वाद्ब्रह्मणो नित्यं किरणानां रवेरिव ॥ ९२० ॥**

नाऽऽद्योऽविद्यातज्जातिरेकितदभावादिति मत्वा कल्पान्तरमादाय दूषयति । **ब्रह्मणश्चेदिति** । प्रसङ्गं प्रकटयति । **स्थास्नुत्वादिति** ॥ ९२० ॥

**अनादेर्नाप्यनुच्छित्तिः सर्वत्रोच्छित्तिदर्शनात् ॥**
**अनाद्यज्ञातमेयेषु[1] ह्यज्ञानस्य प्रहाणतः ॥ ९२१ ॥**

हेत्वभावादविद्याया नोत्पत्तिश्चेदुच्छित्तिरपि न स्यादनादित्वादात्मवदिति प्रासङ्गिकीं शङ्कां[2] प्रत्याह । **अनादेरिति** । सर्वत्रेत्यादि स्फुटयति । **अनादीति** । तेष्वज्ञातत्वं तद्धानिश्चानुभवादिति शेषः । संभवत्यनाद्यज्ञानोच्छित्तिसिद्धिरिति हिशब्दार्थः ॥ ९२१ ॥

**अनाद्यज्ञानवन्मेयमूरीकृत्येह सर्वतः ॥**
**उच्छिन्दन्ति प्रमाणानि ह्यज्ञातत्वं प्रमेयगम् ॥ ९२२ ॥**

अर्थेष्वज्ञातत्वध्वंसेऽपि कथमनाद्यज्ञानध्वस्तिरित्याशङ्क्याऽऽह । **अनाद्यज्ञानेति** । न हि मानानि मेयस्थमज्ञातत्वमज्ञाने स्थिते बाधितुं पारयन्तीत्यर्थः । तदध्वंसित्वे प्रमाणानर्थक्यमित्यवद्योतनार्थो हिशब्दः ॥ ९२२ ॥

**न च कारणसंसर्गो नाशोऽज्ञानस्य भण्यते ॥**
**उरगादेः स्रजीवास्य ब्रह्मणोऽकारणत्वतः ॥ ९२३ ॥**

तथाऽपि ध्वंसस्य कारणसंसर्गत्वात्पुनरुद्भवः स्यादित्याशङ्क्याऽऽह । **न चेति** । स्रजि कल्पितस्य सर्पादेर्नाशो न कारणसंसर्गः किंतु स्रङ्मात्रता तथा ब्रह्मण्यज्ञाननाशोऽपि न कारणसंसर्गात्मको ब्रह्मणस्तदकारणत्वात्तस्य चाकार्यत्वादित्यर्थः ॥ ९२३ ॥

**अज्ञातज्ञापनं मुक्त्वा न चेहास्त्यपरो विधिः ॥**
**तावतैव कृतार्थत्वान्न कार्यमवशिष्यते ॥ ९२४ ॥**

---

१ ख. °ज्ञानमे° । २ घ. °निनिश्चयात्° ।

यत्तु तावत्प्रज्ञां प्रकुर्वीतेत्यादि तन्निरस्यति । **अज्ञातेति** । इहेति मोक्षशास्त्रोक्तिः । तत्र हेतुः । **तावतेति** ॥ ९२४ ॥

**आत्मैव कारणं यस्य सर्वज्ञानस्य कार्यतः ॥**
**आत्मान्वितेः स्वतः सिद्धेर्न कार्या तस्य चाऽऽत्मधीः ॥ ९२५ ॥**

किंच लौकिकात्मज्ञाने तत्संताने वा विधिर्वैदिकात्मज्ञाने तत्संताने वाऽऽद्येऽपि **प्राभाकरनयेन** वा **भाट्टमतेन** वा **सांख्यानुमत्या** वा **वेदान्तिमतेन** वा **वैशेषिकभाषया** वा **लोकायतनीत्या** वेति विकल्प्याऽऽद्यं दूषयति । **आत्मैवेति** । गुरुमते ज्ञानमात्रस्याऽऽत्मैवाऽऽश्रयस्तथाच ज्ञानस्याऽऽश्रितत्वात्तस्मिन्नाश्रयत्वेनाऽऽत्मान्वयात्तस्य विधिं विना सिद्धेर्नाऽऽत्मज्ञाने तत्संताने वा विधिर्घटादिज्ञानेऽपि तदाश्रयत्वेनाऽऽत्मदृष्टेरित्यर्थः ॥ ९२५ ॥

**अंशांशिसंगतेरात्माऽप्यहंबुद्ध्याऽनुभूयते ॥**
**तस्यापि नित्यसंबन्धान्न विधेयाऽऽत्मधीरियम् ॥ ९२६ ॥**

द्वितीयं निरस्यति । **अंशेति** । द्रव्यबोधावंशावंशी चाऽऽत्मेति संगतिर्यस्य भाट्टस्यास्ति तस्याप्यहमिति बुद्ध्या यस्मादात्माऽनुभूयते तस्मात्तस्य ज्ञानस्य च विना विधिं सदा संबन्धादात्मधीस्तत्संततिर्वा न विधेयेत्यर्थः ॥ ९२६ ॥

**आत्मानात्मपरिज्ञाने यस्य साधारणं मतम् ॥**
**करणं बुद्धिरेवेह[1] न तं प्रत्यपि चोदना ॥ ९२७ ॥**

तृतीयं प्रत्याह । **आत्मेति** । **सांख्यमते** सर्वप्रतिपत्तौ बुद्धेः साधारणकरणत्वात्तद्बलादात्मधीसिद्धेर्नाऽऽत्मज्ञानतत्संतत्योर्विधिरित्यर्थः ॥ ९२७ ॥

**बुद्ध्यादेर्विषयान्तस्य प्रतीचोऽन्यस्य वस्तुनः ॥**
**आत्मात्मीयत्वतस्तस्माच्चित्स्वभावमिदं जगत् ॥ ९२८ ॥**

चतुर्थं शिथिलयति । **बुद्ध्यादेरिति** । वेदान्तिमते प्रतीचस्ततोऽन्यतया भासमानवस्तुनश्चाऽऽत्मात्मीयतया संबन्धात्सर्वं जगच्चित्स्वभावं निश्चीयते तस्मात्तन्मतेऽपि न ज्ञानादौ विधिरित्यर्थः ॥ ९२८ ॥

**चित्स्वभावं सदा[2] तत्स्यादन्यहेत्वनपेक्षणात् ॥**
**धर्माधर्माद्यपेक्षत्वादनात्माकारतां प्रति ॥ ९२९ ॥**

सर्वस्य चित्स्वभावत्वे हेत्वन्तरमाह । **चिदिति** । न हि जगदौपनिषदे दर्शने चिदतिरिक्तं हेतुमपेक्षते जन्मादिसूत्रमारभ्य प्रकृतिश्चेति न्यायान्न च कारणातिरिक्तं कार्यमारम्भणाधिकरणविरोधादतः सर्वं चिन्मात्रमित्यर्थः । तस्यादृष्टत्वाद्यपेक्षत्वादन्यहेत्वनपेक्षत्वमप्र-

१ क. ग. न तत्प्रत्य° । २ ग. तदा । ३ घ. °दृष्टाद्य° ।

सिद्धमित्याशङ्क्याऽऽह । **धर्मेति** । अनात्मनः स्वरूपसत्तां प्रत्यात्माविद्योत्थधर्मादिनिमित्तापेक्षत्वेऽपि नोपादानान्तरापेक्षाऽतो युक्ता तस्य चिन्मात्रतेत्यर्थः ॥ ९२९ ॥

**वियत्संपूर्णतां नर्ते घटो नानाविधैर्युतिम् ॥**
**द्रव्यैर्यायाद्वियोगं वा संविदर्ते तथा धियः ॥ ९३० ॥**

बुद्ध्यादिविषयान्तस्य सदा चिदात्मव्याप्तिं दृष्टान्तेन साधयति । **वियदिति** । आकाशव्याप्तो हि घटो दध्यादिभिः संयोगवियोगौ प्रतिपद्यते तथा संविद्व्याप्यं जगत्तत्तदर्थक्रियां प्राप्नोतीत्यर्थः ॥ ९३० ॥

**शब्दाद्याकारतां यान्ति संशयाद्यात्मतां तथा ॥**
**प्रत्यक्चित्पूर्णतां मुक्त्वा शून्यतां न च ताः सदा ॥ ९३१ ॥**

दार्ष्टान्तिकं प्रपञ्चयति । **शब्दादीति** । न हि धियः[1] संविद्व्याप्तिं मुक्त्वा भावमभावं वाऽऽकारं धारयन्ति जडत्वात्स्वतोऽर्थक्रियायामसामर्थ्यादतः सदा जगत्पूर्णं चिदात्मनेत्यर्थः ॥ ९३१ ॥

**यतोऽतो नाऽऽत्मधीः कार्या नापि तत्संततिस्तथा ॥**
**स्वभावादेव तत्सिद्धेः सर्वप्राणभृतामपि ॥ ९३२ ॥**

सर्वस्य सर्वदा तद्व्याप्तौ फलितमाह । **यत इति** । अतःशब्दार्थं स्पष्टयति । **स्वभावादिति** । तच्छब्देनाऽऽत्मधीतत्संतती गृह्येते ॥ ९३२ ॥

**सर्वेषामपि भिन्नानां तथाऽभेदत्वहेतुतः ॥**
**न कार्यैवाऽऽत्मधीः पुंभिः कृतत्वादेव हेतुतः ॥ ९३३ ॥**

इतश्चास्मन्मते नाऽऽत्मज्ञानतत्संतत्योर्विधेयतेत्याह । **सर्वेषामिति** । भेदप्रपञ्चस्य सर्वस्याऽऽत्माभेदेन तज्ज्ञानस्याप्यात्मज्ञानत्वात्तस्मिन्नयत्नसिद्धे न विधिरित्यर्थः । तथोक्तचिद्व्याप्त्यनुसारेणेति यावत् ॥ ९३३ ॥

**आत्माधाराणि यस्यापि ज्ञानादीनीह वादिनः ॥**
**तस्यापि नाऽऽत्मधीः कार्या नित्यप्राप्तत्वकारणात् ॥ ९३४ ॥**

पञ्चमं पराकरोति । **आत्मेति** । आदिशब्देनेच्छाप्रयत्नादिग्रहणम् । इहेति व्यवहारावस्था कथ्यते ॥ ९३४ ॥

**देहस्य सर्वदैवास्य जीवतश्चित्स्वभावतः ॥**
**स्वभाववादिनोऽपीयं कार्या नैवाऽऽत्मधीस्तथा ॥ ९३५ ॥**

षष्ठमपास्यति । **देहस्येति** । वाद्यन्तरं दृष्टान्तयितुमपिशब्दः । जीवतो देहस्य चित्स्वभावत्वमनुभवानुसारीति वक्तुं तथाशब्दः ॥ ९३५ ॥

---

१ घ. °यः सदा चिद्व्या° ।

**नियमे परिसंख्यायां सर्वानात्मासमीक्षणात् ॥**
**वैयर्थ्यं कर्मकाण्डस्य निर्मूलत्वात्प्रसज्यते ॥ ९३६ ॥**

लौकिकात्मज्ञानतत्संतत्योर्विधिर्वादिभेदेन निरस्तः। संप्रति वैदिकात्मधीतत्संतत्योर्विधिपक्षे किमपूर्वो नियमो वा परिसंख्या वेति विकल्प्यात्यन्ताप्राप्त्यभावादाद्यायोगं मत्वेतरौ दूषयति । **नियम इति** । तत्रानात्मज्ञानाभावादमूलं कर्मकाण्डममानं ते स्यादित्यर्थः॥ ९३६ ॥

**न चापि नित्यप्राप्तत्वात्तयोरस्तीह संभवः ॥**
**अप्राप्तांशे यतो नित्यं विधिः सर्वोऽपि चेष्यते ॥ ९३७ ॥**

आत्मज्ञाने विधिद्वयमङ्गीकृत्योक्त्वा तदयोगे हेत्वन्तरमाह । **न चेति** । आत्मज्ञानस्य नित्यप्राप्तावपि तयोस्तत्र काऽनुपपत्तिस्तत्राऽऽह । **अप्राप्तेति** । उभयोः पक्षप्राप्तौ नियमो नित्यप्राप्तौ परिसंख्या वाक्योत्थज्ञानानन्तरं तु तदेव सदेति नोभयोरिह संभावनेत्यर्थः ॥ ९३७ ॥

**कर्तव्यमात्मविज्ञानमित्यत्रैव निराकृतः ॥**
**विधिः सर्वप्रकारोऽपि न त्वबुद्धार्थबोधनम् ॥ ९३८ ॥**

आत्मज्ञाने न कोऽपि विधिरित्यत्र द्रष्टव्यवाक्योक्तन्यायं स्मारयति । **कर्तव्यमिति** । अनेन द्रष्टव्यवाक्यमर्थतोऽनूद्यते । सर्वप्रकारो विधिर्निरस्तश्चेदज्ञातज्ञापनस्यापि निरासादज्ञातज्ञापनं मुक्त्वा न चेहास्त्यपरो विधिरित्युक्तिव्याहतिरित्याशङ्क्याऽऽह । **न त्विति** । प्रवर्तकविधिनिरासेऽपीतरदिष्टमेवेत्यर्थः ॥ ९३८ ॥

**कर्तव्यता न साध्यस्य विज्ञातत्वाद्विधीयते ॥**
**दुःखत्वाच्च न यागस्य ह्युपायोऽतोऽत्र बोध्यते ॥ ९३९ ॥**

किंच कर्मकाण्डेऽपि प्रवर्तको विधिर्न संभवति ज्ञानकाण्डे तु सुतरामित्यभिप्रेत्याऽऽह। **कर्तव्यतेति** । यदा सा विधेया तदा फलस्य भावार्थस्य वा सा नाऽऽद्योऽभिलाषगोचरीभूतं हि फलं तत्र सा रागप्राप्ता न विध्यपेक्षा न द्वितीयः क्लेशात्मनस्तस्य कर्तव्यानुपपत्तेरतो न कर्मकाण्डस्यापि तद्विधायकत्वमित्यर्थः । कथं तर्हि तस्य प्रामाण्यं तत्राऽऽह । **उपाय इति** । अज्ञातेष्टसाधनताज्ञानहेतुत्वेन तत्प्रामाण्यमित्यर्थः । विधेयान्तराभावो हिशब्दद्योतितोऽतःशब्देन परामृश्यते । सप्तम्या तु कर्मकाण्डं गृह्यते ॥ ९३९ ॥

**प्रवृत्तिरप्रवृत्तिर्वा मेयवस्त्वनुरोधिनी ॥**
**प्रमाऽत्र बोधिकैवातो न प्रवृत्तिः प्रमाणतः ॥ ९४० ॥**

प्रवर्तको नियोगो नेष्टश्चेत्तर्हि शब्दस्तथेति भावनावादिनस्तान्प्रत्याह। **प्रवृत्तिरिति**।

मेयेऽर्थे शोभनाशोभनाध्यासद्वारा रागद्वेषाभ्यां प्रवृत्तिनिवृत्ती न शब्दात्स त्विष्टानिष्टोपायमात्रं ज्ञापयत्यतो न शब्दस्य प्रवर्तकतेत्यर्थः ॥ ९४० ॥

**कर्त्रादिहेतूच्छित्तेश्च प्रवृत्तेर्नास्ति संभवः ॥**
**सम्यग्ज्ञानसमुत्पत्तौ मेयस्याकारकत्वतः ॥ ९४१ ॥**

कर्मकाण्डे प्रवर्तकविध्यसंभवोक्त्या ज्ञानकाण्डे तदयोगमुक्त्वा ज्ञाने सति तदयोगे हेत्वन्तरमाह । **कर्त्रादीति** । मात्रादेर्ध्वस्तत्वादात्मनश्च कौटस्थ्याज्ज्ञाने सति प्रवृत्त्ययोगान्न प्रवर्तको विधिरित्यर्थः ॥ ९४१ ॥

**अज्ञानध्वंसि विज्ञानं न च कारकरूपताम् ॥**
**गृहीत्वेह तमो हन्ति द्वैधीभावेऽसिवत्क्वचित् ॥ ९४२ ॥**

ज्ञाने सति प्रवृत्त्यन्तराभावेऽप्यभ्यासाख्यप्रवृत्तिसंभवात्प्रवर्तकविधिरित्याशङ्क्याऽऽह । **अज्ञानेति** । इहेति प्रत्यगुक्तिः । वैधर्म्यदृष्टान्तो द्वैधीभाव इति कुठारादिकारकवद्बोधकं प्रमाणं नाऽऽवृत्तिमपेक्ष्य फलवदित्यर्थः ॥ ९४२ ॥

**प्रत्यग्बोधोऽप्रमः सिद्ध आगमापायिमातृवत् ॥**
**प्रत्यङ्मात्रफलत्वेन साक्षित्वेन च सर्वदा ॥ ९४३ ॥**

अथाऽऽत्मज्ञानमात्मानं बोधयत्येव न तत्तमो हन्ति तद्धानिस्तु विध्यधीनादभ्यासादित्याशङ्क्याऽऽह । **प्रत्यगिति** । न तावदात्मनो मानाधीना सिद्धिः स्वप्रकाशत्वान्मात्रादिसाक्षित्वाच्च यथा मातुरात्मसाक्ष्यत्वान्न मानाधीना सिद्धिस्तद्वत्तस्मादात्मज्ञानं निवर्तकमेवेत्यर्थः ॥ ९४३ ॥

**अनात्मवस्तुना नाऽऽत्माऽकारकत्वाद्विना तमः ॥**
**संबन्धं लभते साक्षात्तथाऽनात्माऽपि चाऽऽत्मना ॥ ९४४ ॥**

साक्षित्वकृतमात्मानात्मनोः संबन्धमाशङ्क्य स वास्तवोऽवास्तवो वा नाऽऽद्योऽसङ्गत्वश्रुतिविरोधादिति मत्वाऽऽह । **अनात्मेति** । अकारकत्वादिति च्छेदः ॥ ९४४ ॥

**बुद्ध्यादिर्जडरूपत्वात्स्वमहिम्ना न सिध्यति ॥**
**बोधात्मवत्स्वतःसिद्धप्रत्यक्सिद्ध्यैव सिध्यति ॥ ९४५ ॥**

द्वितीयमङ्गी करोति । **बुद्ध्यादिरिति** । न तावदात्मवद्बुध्यादिः स्वतः सिध्यति जडत्वात्किंतु स्वप्रकाशप्रत्यक्चैतन्यवशात्तत्राध्यस्तस्तथाचाऽऽध्यासिकसंबन्धसिद्धिरित्यर्थः ॥ ९४५ ॥

**स्वार्थं प्रत्येव सर्वोऽपि परार्थोऽर्थः प्रसिध्यति ॥**
**यथा स्वप्नविनिर्माणं सिध्येत्स्वप्नदृशं प्रति ॥ ९४६ ॥**

---

१ घ. ॰धिसिद्धिरि॰ ।

बुद्ध्यादेरध्यस्तस्य प्रतीच्यधिष्ठानभूतप्रत्यक्प्रसादात्सिद्धिरित्येतद्दृष्टान्तेन साधयति। **स्वार्थमिति** ॥ ९४६ ॥

**पृथक्त्वे वाऽपृथक्त्वे वा नैव तस्य मृषात्मता ॥**
**पृथक्त्वे स्वमहिम्नैव तस्य सिद्धेः परात्मवत् ॥ ९४७ ॥**

किंचाऽऽत्मन्यध्यस्तं जगत्ततो भिन्नमभिन्नं वेति विकल्प्य कल्पितं संबन्धमेव स्फुटयति। **पृथक्त्वे वेति**। कथमुभयथाऽपि मिथ्यात्वासिद्धिरित्याशङ्क्याऽऽद्ये तदसिद्धिं प्रकटयति। **पृथक्त्व इति**। भेदे सत्यात्मसंबन्धस्य दुर्वचनत्वात्स्वतः सिद्धिरसिद्धिर्वाऽनात्मनः स्यान्नोभयथाऽपि मिथ्यात्वं न ह्यात्मा स्वतःसिद्धो मिथ्या दृष्टो न चासिद्धो नभोनलिनादिस्तथाऽत्यन्तादृष्टस्य सतत्त्वादिविशेषासिद्धेरित्यर्थः ॥ ९४७ ॥

**आत्मत्वादपृथक्त्वे च मानं नाशे च नेक्ष्यते[१] ॥**
**परमार्थमनाविश्य न मिथ्येति[२] प्रसिध्यति ॥ ९४८ ॥**

द्वितीये मिथ्यात्वासिद्धिं स्फोरयति। **आत्मत्वादिति**। न मृषात्मतेति पूर्वेण संबन्धः। नै[३]चामिथ्यैव जगदस्तु जडत्वाद्रज्जुसर्पवदिति[४] भावः। आत्मनो भेदाभेदाभ्यां जगतोऽसिद्धावभावनिष्ठमेव तत्स्यादिति चेन्नेत्याह। **मानमिति**। न हि तदभावीभूतमित्यत्र मानं दृष्टमर्थक्रियाप्रतीतिविशेषविरोधश्च तदभाववादिनः स्यान्न च पूर्वं सदपि ज्ञानादूर्ध्वमसद्भविष्यति "**नासतो** विद्यते भावो नाभावो विद्यते सतः" इत्युक्तेरिति भावः। आत्मनो भेदाभेदात्मना मिथ्या जगन्न सिध्यति चेत्तर्हि तद्रहितात्मवत्तदपि स्वेन रूपेण स्वतन्त्रं स्यादित्याशङ्क्याऽऽह। **परमार्थमिति** ॥ ९४८ ॥

**क्लृप्तसर्पाद्यभावोऽयं न स्रक्तत्त्वात्पृथक्स्थितः ॥**
**व्यतिरेकेण तत्सिद्धेर्नापि चाऽऽत्मानमन्वियात् ॥ ९४९ ॥**

कल्पितस्य नाधिष्ठानादृते भावाभावावित्यत्र दृष्टान्तमाह। **क्लृप्तेति**। अभावो भावोपलक्षणं तथाऽऽत्मातिरेकेण जगतो न भावाभावाविति शेषः। कल्पितजगतोऽधिष्ठानाद्भेदाभेदयोरसंभवे हेत्वन्तरमाह। **व्यतिरेकेणेति** ॥ ९४९ ॥

**स्वार्थस्य प्रत्यगात्मत्वात्प्रत्यग्याथात्म्यतोऽपि च ॥**
**खण्डमुण्डादिवन्मत्तो[५] नानात्मा लभते भिदाम् ॥ ९५० ॥**

प्रातीतिकश्चेद्भेदः स तर्हि वास्तवोऽस्त्वबाधादित्याशङ्क्याऽऽह। **स्वार्थस्येति** ॥ ९५० ॥

**सर्वमात्मेत्यतो वाक्यात्प्रत्यक्त्वात्रैकरूपताम् ॥**
**तदबोधप्रहाणेन प्रतीमो जगदात्मनः ॥ ९५१ ॥**

---

१ ग. नेष्यते। २ ख. मृषेति। ३ क. न च मि°। घ. न वा मि°। ४ ख. °दित्यर्थः। आ°। ५ ग. °यद्वमतः।

अन्वयव्यतिरेकाभावपरिहारेण जगतो वाक्यीयधीबाधितस्य प्रत्यङ्मात्रतया परिशेष इत्युपसंहरति । **सर्वमिति** ॥ ९९१ ॥

**तत्त्वप्रबोधनं मुक्त्वा कार्यकारणवस्तुनः ॥**
**अपूर्वाद्यर्थवचसा नान्वयाद्यवबोध्यते ॥ ९९२ ॥**

इदं सर्वं यदयमात्माऽपूर्वमनपरमनन्तरमित्यादिना जगतो ब्रह्मणोऽन्वयव्यतिरेका-वुच्येते न त्वेतत्तत्त्वबोधनद्वारा प्रत्यङ्मात्रेऽवसितमित्याशङ्क्याऽऽह । **तत्त्वेति** ॥९९२॥

**बोधोऽप्यकारको यस्माद्धन्त्यज्ञानमिहाऽऽत्मनि ॥**
**न चाऽऽवृत्तिव्यपेक्षः सन्व्यञ्जकत्वात्तमोपनुत् ॥ ९९३ ॥**

वैदिकात्मज्ञाने[1] विध्यसंभवमुपसंहरति । **बोधोऽपीति** । अकारकोऽपीति संबन्धः । तस्मान्नास्मिन्विधिरिति शेषः । तदभ्यासेऽपि न सोऽस्तीति निगमयति । **न चेति** ॥ ९९३ ॥

**एवं स्वात्मनि विज्ञाते निष्क्रियेऽकारकेऽफले ॥**
**प्रवृत्तौ वा निवृत्तौ वा को हेतुरिति भण्यताम् ॥ ९९४ ॥**

प्रवर्तकविध्यभावेऽपि ज्ञानिनो निवर्तकविधिः स्यादित्याशङ्क्याऽऽह । **एव-मिति** ॥ ९९४ ॥

**प्रत्यङ्मात्रैकतां मुक्त्वा तदविद्यामृते न हि ॥**
**विद्वान्रूपान्तरं पश्येद्यत्र हीति तथा श्रुतिः ॥ ९९५ ॥**

विदुषोऽपि द्वैतदृष्टिरेव तद्धेतुरित्याशङ्क्याऽऽह । **प्रत्यगिति** । न हि विद्वान्प्रत्यङ्मा-त्रमेकमन्तरेण रूपान्तरं पश्यत्यविद्याया द्वैतधीहेतोर्विद्यया बाधितत्वादित्यर्थः । अवि-द्याकृता द्वैतधीरित्यत्र मानमाह । **यत्रेति** । विदुषो द्वैतदृष्टेर्बाधितानुवृत्तित्वान्न प्रव-र्तकत्वं निवर्तकत्वं वेति भावः ॥ ९९५ ॥

**नातोऽविद्यासमुच्छित्तौ ब्रह्मयाथात्म्यबोधतः ॥**
**प्रतीचि भूयोऽविद्यायाः संभवोऽस्ति[2] प्रमाणतः ॥ ९९६ ॥**

ध्वस्ताऽप्यविद्या पुनरुद्भवन्ती द्वैतं दर्शयिष्यति तथाच वैधप्रवृत्त्यादिसिद्धिरित्या-शङ्क्याऽऽह । **नात इति** । तत्त्वमादिवाक्यमतःशब्दार्थः ॥ ९९६ ॥

**रागादिदर्शनं यच्च ज्ञानिनोऽपीह चोद्यते ॥**
**बाधितस्यैव तत्सूतेस्तदप्युक्ते न दूषणम् ॥ ९९७ ॥**

विदुषोऽपि रागादिदृष्टेरविद्याऽस्तीत्युक्तमनुभाषते । **रागादीति** । व्यवहारभूमिः सप्तम्यर्थः । ध्वस्ताऽविद्या पुनर्नोद्भवतीत्यत्र ज्ञानिनो रागादिदृष्टिर्न दोषमावहति तस्य

---

१ क. ॰नेऽपि वि॰ । २ ग. ॰वोऽस्त्यप्र॰ ।

बाधितस्यैव विद्यादशायां दग्धपटन्यायेनाऽऽभासस्य दृष्टेरिति समाधत्ते। **बाधितस्येति** ॥ ९१७ ॥

**बाध्यबाधकयोर्यस्मात्संबन्धः सकृदेव तु ॥**
**संबन्धोत्तरकाले तु तत्स्मृत्योरेव संगतिः ॥ ९५८ ॥**

ज्ञानिनो रागादि बाधितमेवेत्यत्र हेतुमाह। **बाध्येति**। द्वैतदृष्टेरद्वैतदृष्टेश्च बाध्यबाधकत्वेन सकृदेव संबन्धोऽतो द्वैतधियो ज्ञानोत्तरकालीनरागादिधीरूपाया बाधितानुवृत्तिमात्रमित्यर्थः। ननु ज्ञानिनो ज्ञानं तदेवैकमनवरतं नावतिष्ठते क्षणिकत्वादभ्यासश्च नेष्यते तदीयस्मृत्यङ्गीकारे च द्वैतस्मृतेरपि संभवाद्वैधप्रवृत्त्यादिसिद्धिस्तत्राऽऽह। **संबन्धेति**। द्वैताद्वैतधियोः संबन्धादूर्ध्वमद्वैतस्मृतिर्बाधकत्वेन संबध्यते बाध्यत्वेन द्वैतस्मृतिरिति विभागः ॥ ९९८ ॥

**न च स्मृतेः प्रमाणत्वं क्वचित्सिद्धान्त इष्यते ॥**
**प्रमाणलक्षणाभावान्न च बाधोऽप्रमाणतः ॥ ९५९ ॥**

द्वैताद्वैतस्मृत्योरुक्तबाध्यबाधकत्वव्यवस्थार्थमुभयसिद्धस्मृत्यप्रामाण्यमनुवदति । **न चेति**। तर्हि द्वयोरप्रामाण्याविशेषात्कुतो बाध्यबाधकत्वमत आह। **न चेति**। अप्रमाणपूर्वकं द्वैतस्मरणं बाध्यं प्रमाणपूर्वकं त्वन्यद्बाधकमिति व्यवस्थेत्यर्थः ॥ ९५९ ॥

**मात्रादिकारणध्वस्तेः पराज्ञानप्रबाधतः ॥**
**प्रत्यक्षादिविरोधोऽपि नातश्चोद्यः कथंचन ॥ ९६० ॥**

अद्वैतधीरध्यक्षादिविरोधान्न मानं तन्नाद्वैतस्मृतेर्मानपूर्वकतेत्याशङ्क्याऽऽह । **मात्रादीति**। अद्वैतधिया सकार्याज्ञानध्वस्तेरूर्ध्वमध्यक्षादेर्बाधितत्वात्तेन विरोधो नास्याः शङ्कनीयस्तथाच तत्प्रामाण्यात्तत्पूर्विका स्मृतिर्बलवत्तरेतरस्या बाधिकेत्यर्थः ॥ ९६० ॥

**उदर्के च शमादीनि साधनानि प्रवक्ष्यति ॥**
**उक्तप्रज्ञाप्रसिद्ध्यर्थं येषु स्वातन्त्र्यमिष्यते ॥ ९६१ ॥**

ज्ञानिनोऽपि रागादिदृष्ट्या तद्धेत्वविद्यानुवृत्तेस्तद्ध्वंसायाभ्यासे विधिरित्येतन्निरस्तं संप्रति प्रज्ञायाः साधनापेक्षत्वात्तदपेक्षितसाधनत्वेनाभ्यासः कर्तव्य इत्येतद्दूषयति। **उदर्क इति**। तेषां विधियोग्यत्वमाह। **येष्विति** ॥ ९६१ ॥

**नाभिध्यायेदतः शब्दाननात्मार्थावबोधिनः ॥**
**बहूनित्यनुवादः स्याद्बहुत्वस्य सिद्धितः ॥ ९६२ ॥**

प्रज्ञाकरणवाक्यस्य परकीयव्याख्यानिरासेन स्वव्याख्यां व्यवस्थाप्य नानुध्यायादित्यादेरर्थमाह। **नेति**। शमादीनां साधनत्वेन विधास्यमानत्वादनात्मवाचिशब्दानुसंधा-

---

१ ख. 'कालं तु। २ क. ख. ग. 'क्ष्यते ॥ उ'।

नस्य च तद्विरोधित्वादित्यतःशब्दार्थः । बहुशब्दोपादानं स्वरूपानुवादार्थमित्याह । **बहूनितीति** । बहुत्वस्यानात्मवाचिशब्देष्विति शेषः ॥ ९६२ ॥

**वाचो विग्लापनमिति श्रुत्या निन्दाऽभिधीयते ॥**
**भूरिशब्दानुचिन्तायास्तन्निषेधप्रसिद्धये ॥ ९६३ ॥**

उत्तरपादस्य तात्पर्यमाह । **वाच इति** । निन्दाफलमाह । **तन्निषेधेति** ॥ ९६३ ॥

**प्रभूतशब्दाभिध्यानं नालं मोक्षार्थसिद्धये ॥**
**न चेदेवं फलं तत्स्याद्वाक्तालुगलशोषणम् ॥ ९६४ ॥**

अनात्मवाचिशब्दानुध्याननिषेधे हेतुमाह । **प्रभूतेति** । किं तर्हि तत्फलं तदाह । **न चेदिति** ॥ ९६४ ॥

**उक्तव्याख्यानतोऽन्यस्य व्याख्यानस्य यथोदित—**
**न्यायेन दूषितत्वात्तद्दूषणार्थं न यत्यते ॥ ९६५ ॥**

**द्वैताभिधायकान्शब्दान्ध्यानकाले न चिन्तयेदिति भर्तृप्रपञ्चोक्तं** निरस्यति । **उक्तेति** । यथोदितो न्यायो ध्यानविधिनिरासोपयोगी न च ध्यानकाले द्वैतवादिशब्दानामनुसंधानं प्राप्तं येन तन्निषिध्यते मुमुक्षोः सदा तन्निषेधे च पक्षभेदासिद्धिरिति भावः ॥ ९६५ ॥

**ओमित्येवं सदा ध्यायेदन्या वाचो विमुञ्चथ ॥**
**तेऽनुविच्येति च तथा त्रयीत्यागे वचः स्फुटम् ॥ ९६६ ॥**

मुमुक्षुणाऽनात्मवाचिकर्मकाण्डाख्यशब्दानुध्यानं न कार्यमित्यत्र श्रुत्यन्तरं प्रमाणयति । **ओमित्येवमिति** । तेषामोंकारनिष्ठत्वे श्रुत्यन्तरमाह । **तेऽनुविच्येति चेति** । त्रयीत्यागस्तद्विहितकर्मत्यागस्तद्द्वारा प्रणवनिष्ठत्वे विशिष्टाधिकारिणां देवा ह वै मृत्योरित्यारभ्य तेऽनुविच्योर्ध्वमृचः साम्नो यजुषः स्वरमेव प्राविशन्निति च्छन्दोगवचः स्पष्टमित्यर्थः ॥ ९६६ ॥

**हेत्वर्थ इतिशब्दोऽयं बहुशब्दजिहासया ॥**
**मन्त्राम्नायसमाप्त्यर्थं यदि वेतिसमीरणम् ॥ ९६७ ॥**

इतिशब्दार्थमाह । **हेत्वर्थ इतीति** । यस्मात्प्रभूतशब्दध्यानं ताल्वादिशोषमात्रफलं तस्माद्बहवः शब्दा मुमुक्षुणा न ध्येयाः स्वल्पास्त्वात्मैकत्वार्थास्तस्याप्यनुज्ञायन्तेऽन्यथा बहूनितिस्वरूपानुवादिविशेषणवैयर्थ्यादन्या वाचो विमुञ्चथेत्यत्रान्यविशेषणानर्थक्याच्चेति भावः । हिशब्देनैव हेतोरुक्तत्वादितिशब्दोऽपि तदर्थश्चेत्पुनरुक्तिरित्याशङ्क्याऽऽह । **मन्त्रेति** ॥ ९६७ ॥

---

१ ख. तस्माद्बा° । २ क. °नुसंधानं ।

**सहेतुकावभिहितौ बन्धमोक्षौ प्रयत्नतः ॥**
**मन्त्रोक्त्या ब्राह्मणोक्त्या च पुंसां श्रेयोभिवाञ्छिनाम् ॥९६८॥**

पूर्वोत्तरसंदर्भयोः संगतिं वक्तुं वृत्तं कीर्तयति । **सहेतुकाविति** । प्रयत्नमेव प्रकटयति। **मन्त्रेति। तदेव** सक्तः सह कर्मणेत्यादिमन्त्रोक्त्या **स** यत्रायमात्माऽबल्यमित्यादिब्राह्मणोक्त्या च कामादिहेतुसहितो बन्धो मुमुक्षूणां हेयत्वेनोक्तो **यदा** सर्वे प्रमुच्यन्त इत्यादिमन्त्रेणाथाकामयमान इत्यादिब्राह्मणेन च तेषामेवापेक्षत्वेन सम्यग्धीहेतुको मोक्ष उक्तः पुनश्च तत्स्वरूपं श्लोकैर्विप्रपञ्चितमित्यर्थः ॥ ९६८ ॥

**नानुध्यायाद्बहूञ्शब्दानिति कस्मादिहोच्यते ॥**
**अल्पीयसां वा न त्यागः कस्मादित्यभिधीयताम् ॥ ९६९ ॥**

स वा एष महानित्याद्यवतारयितुं चोदयति । **नेत्यादिना** । मुमुक्षुरधिकारी समर्थः ॥ ९६९ ॥

**शब्दस्याल्पीयसोऽत्यागे तत्र तावदिहोच्यते ॥**
**हेतुस्त्रय्यास्तु संत्यागे तमेतामिति वक्ष्यते ॥ ९७० ॥**

बहूनितिविशेषणादल्पीयसां तत्त्वमादिशब्दानामत्यागो दर्शितस्तत्र बुभुत्सितो हेतुस्तमेतमित्यतः प्राक्तनवाक्येनोच्यत इत्याह । **शब्दस्येति** । तत्र त्यागात्यागयोरिति यावत् । स वा एष इत्यादावात्मयाथात्म्यमनूद्यते तेन तद्विषयोपनिषद्भागेन भवितव्यं तस्यापि त्यागे तत्त्वज्ञानासिद्धेरित्येतत्तमेतमित्यस्मात्प्रागभिप्रेतमित्यर्थः। बहूञ्शब्दान्नानुध्यायेदिति कर्मकाण्डत्याग उक्तस्तत्र हेतूक्त्यर्थं तमित्यादिवाक्यमित्याह । **त्रय्यास्त्विति** । प्रभूतायास्तस्याः कर्मकाण्डरूपायास्त्यागे तमित्यादिना हेतुर्वक्ष्यते तेन हि विविदिषायां कर्माणि विनियुज्यन्ते तथाचोत्पन्नविविदिषस्याफलत्वात्कर्मत्यागे तत्काण्डस्यापि त्यागः संसिध्यतीत्यर्थः ॥ ९७० ॥

**यदि वा भिन्नवाक्यत्वात्कर्मविज्ञानकाण्डयोः ॥**
**वेदान्तैः कर्मकाण्डस्य परस्परविरोधतः ॥ ९७१ ॥**

विविदिषावाक्यस्य तात्पर्यान्तरं प्रतिजानीते । **यदि वेति** । तदेव वक्तुं शङ्कयति। **भिन्नेति** । सिद्धसाध्यार्थतया काण्डयोर्भिन्नवाक्यत्वान्मिथो विरोधाच्च न शेषशेषितेति शङ्कार्थः। कर्मकाण्डस्य वेदान्तैः सह विरोधवत्तेषामपि तेन विरोधात्परस्परविरोध इत्युत्तरार्धयोजना ॥ ९७१ ॥

**हेतुतां प्रतिपद्यन्ते कर्माण्यपि विमुक्तये ॥**
**बुद्धेः संस्कारकत्वेन यथा तदभिधीयते ॥ ९७२ ॥**

यथा कर्मवाक्यानां बुद्धिशुद्धिद्वारा ज्ञानवाक्यशेषता तथा वक्तुमुत्तरमित्युत्तरमाह। **हेतुतामिति**। ज्ञानवदित्यपेरर्थः ॥ ९७२ ॥

**पूर्वो भागः समस्तोऽपि वेदान्तार्थावबुद्धये ॥**
**यथा भवति वेदस्य तथाऽथ मतिपाद्यते ॥ ९७३ ॥**
**वेदान्तार्थं यथायातमनूद्य श्रुतिरादरात् ॥**
**स वा इत्यादिनोक्तार्थं प्रवक्तुमुपचक्रमे ॥ ९७४ ॥**

एवमेतस्मिन्नित्यादिभाष्यमुक्तेऽर्थे योजयति । **पूर्व इति** । स वा इत्यादिना कर्मकाण्डस्योक्तरीत्या ज्ञानकाण्डशेषत्वं नोच्यते तथाच भाष्ये कण्डिकोक्तिरयुक्तेत्याशङ्क्य तच्चेत्यादिभाष्यतात्पर्यमाह। **वेदान्तेति**। स वा इत्यादिना वेदान्तार्थमनूद्येति संबन्धः। अनुवादे हेतुमाह। **यथेति**। आगमप्रधानेन मधुकाण्डेनोपपत्तिप्रधानेन मुनिकाण्डेन वेदान्तान्तरैश्च प्राप्तं रूपमनतिक्रम्येति यावत् । श्रुतिस्तमेतमित्याद्या। उक्तार्थं कर्मणां धीशुद्धिद्वारा ज्ञानोत्पत्तिहेतुत्वम् ॥ ९७३ ॥ ९७४ ॥

**परामर्शः सशब्देन पूर्वोक्तस्य प्रसिद्धितः ॥**
**वैशब्दः स्मृतये तस्य मृतिजन्मादिधर्मिणः ॥ ९७५ ॥**

कण्डिकातात्पर्यमुक्त्वा विविदिषावाक्यात्प्राक्तनग्रन्थस्यावयवशस्तात्पर्यं दर्शयन्पदयोरर्थमाह । **परामर्श इति** । वैशब्दस्तस्यैव स्मृत्यर्थमित्यत्र हेतुः । **प्रसिद्धित इति** । त्वंपदलक्ष्यस्यापि प्रागुक्तत्वात्तस्य सशब्देन परामर्शमाशङ्क्याऽऽह। **मृतीति** ॥९७५॥

**ध्रुवान्तमत्राम्नायोक्त एष इत्यभिधीयते ॥**
**महानज इति वचस्तद्विशेषणसिद्धये ॥ ९७६ ॥**

एषशब्देनापि तस्यैवोक्तिं व्यावर्तयति । **ध्रुवेति** । विरजः पर आकाशादज आत्मा महान्ध्रुव इत्युक्तस्त्वंपदलक्ष्योऽर्थोऽत्रैष इत्युपदिष्ट इत्यर्थः । त्वमर्थस्य शोधनार्थमजशब्दः । शुद्धस्य तस्य ब्रह्मलक्षणविशेषणसिद्ध्यर्थं महानिति पदमित्याह। **महानिति** ॥ ९७६ ॥

**अन्वयव्यतिरेकार्था योऽयमित्यादिका श्रुतिः ॥**
**विशेषणविशेष्यार्थं सर्वस्येति तथा वचः ॥ ९७७ ॥**

योऽयमित्यादेस्तात्पर्यमाह । **अन्वयेति** । अन्वयव्यतिरेकाभ्यां त्वंपदार्थपरिशोधनार्थेति यावत् । सर्वस्य वशीत्यादेस्तात्पर्यमाह । **विशेषणेति** । ब्रह्मणः प्रतीचो विशेषणत्वेन यथा तस्य विशेष्यत्वं तथा ब्रह्मणोऽपि सर्वस्य वशीत्यादिविशेषणैर्विशेष्यत्वार्थं वाक्यमित्यर्थः ॥ ९७७ ॥

---

१ क. °रमा° ।

यदत्र किंचिद्वक्तव्यं तस्य प्रागेव चोक्तितः ॥
सामानाधिकरण्यादेर्नेह तत्पुनरुच्यते ॥ ९७८ ॥

ब्रह्मणो विशेषणत्वं प्रतीचश्च विशेष्यत्वं चेत्तर्हि पदयोः सामानाधिकरण्यं तदर्थयोर्विशेषणविशेष्यत्वं स्वरूपमात्रस्य लक्ष्यत्वमित्येतदपि वाच्यं न चात्र सामानाधिकरण्यादि स्वीकर्तुं शक्यं ब्रह्मप्रतीचोर्मिथो विरोधादित्याशङ्क्य ब्रह्मकण्डिकायामुक्तं स्मारयति। **यदत्रेति**। इहेत्यत्र च प्रकृतकण्डिकोक्तिः ॥ ९७८ ॥

भूयान्स साधुना नेति ज्ञानस्य फलमुच्यते ॥
एष सर्वेश्वरोक्त्या च यथोक्तस्यैव संस्तुतिः ॥ ९७९ ॥

स न साधुनेत्यादेस्तात्पर्यमाह । **भूयानिति**। एप सर्वेश्वर इत्यादेस्तात्पर्यमाह । **एष इति**। यथोक्तस्येति प्रत्यगुक्तिः ॥ ९७९ ॥

एतदुक्तं भवत्यत्र योऽयमित्यादिनोदितः ॥
विविक्तः कामकर्मादेः स्वयंज्योतिश्च शब्दितः ॥ ९८० ॥
स एष ईश्वरः साक्षादिति श्रुत्या प्रदर्शितः ॥
विशेषणविशेष्यत्वमीशितव्येशयोरिह ॥ ९८१ ॥

त्वं ब्रह्म त्वं विष्णुरित्यादिवदविद्यमानस्तुतिरेपेत्याशङ्क्य स्तुतिप्रकारमभिनयति। **एतदिति**। अत्रेति ज्योतिर्ब्राह्मणोक्तिः । तत्त्वमादिवाक्यादैक्यसिद्धेरेषा यथार्थस्तुतिरेवेति भावः। तत्र विशेषणविशेष्यत्वविभागं दर्शयति । **विशेषणेति** । इहेति श्रुतिरुक्ता ॥ ९८० ॥ ९८१ ॥

यमपेक्ष्येश्वरत्वं स्यात्तत्तावत्प्रतिषेधति ॥
विशेषणविरोधित्वान्महत्त्वं कुम्भगं यथा ॥ ९८२ ॥

ईश्वरेण विशेषणेन जीवस्य विशेष्यत्वे फलमाह । **यमिति**। सर्वेश्वरत्वादिविशेषणसामर्थ्याद्विशेष्यजीवस्थमीशितव्यत्वाद्यपगच्छतीत्यर्थः। निषेधकर्ता विशेषणविशेष्यभावस्तस्य निषेधकत्वे हेतुमाह । **विशेषणेति**। ईश्वरत्वेन विरोधित्वात्तेन विशेषितजीवगतेशितव्यत्वस्य निवृत्तिरित्यर्थः। घटाकाशो महाकाश इत्युक्ते घटाकाशस्थपरिच्छिन्नत्वनिवृत्तिवदेष सर्वेश्वर इत्युक्ते जीवगतेशितव्यत्वनिवृत्तिरित्याह । **महदिति**॥ ९८२ ॥

ईशितव्यापनुत्तौ च तदपेक्षैकसंश्रयात् ॥
ईशित्वमपि निःशेषं प्रतीचो विनिवर्तते ॥ ९८३ ॥

ईशितव्यत्वनिवृत्तौ फलितमाह । **ईशितव्येति**। ततश्च निर्विशेषं प्रत्यङ्मात्रं तिष्ठतीति भावः ॥ ९८३ ॥

---

१ क. ख. चोक्तितः। २ ग. °त्र प्र°। ३ घ. ब्रह्म। ४ क. ख. °प्यभा°। ५ ख °स्मत्वं ग°।

**घटाकाशो महाकाश इत्युक्ते कुम्भखह्नुतौ ॥**
**आकाशमात्रताशेषो यथैवेह तथाऽऽत्मनि ॥ ९८४ ॥**

महदित्यादिनोक्तं दृष्टान्तं प्रपञ्चयति । **घटेति** । दार्ष्टान्तिकमाह । **इहेति** ॥९८४॥

**विरुद्धयोरसंसर्गो यथैवमविरुद्धयोः ॥**
**तदबोधसमुच्छित्तावबवाक्यार्थोऽवशिष्यते ॥ ९८५ ॥**

तदेव स्पष्टयति । **विरुद्धयोरिति** । पदार्थद्वयस्थसद्वयत्वपरोक्षत्वयोर्न ब्रह्मात्मभ्यां संसर्गो मिथोविरुद्धत्वादेवं प्रत्यक्त्वाद्वयत्वयोरपि नान्योन्यमन्वयस्तयोरेकत्वादतो ब्रह्मात्माज्ञानध्वस्तावेकरसं वस्तु स्यादित्यर्थः ॥ ९८५ ॥

**ऐदंपर्यमिदं तावत्पदार्थोऽथाधुनोच्यते ॥**
**स वा इतिवचोर्थस्य व्याख्यातत्वान्न यत्यते ॥**
**तद्व्याख्यानाय भूयोऽपि तस्य चेहानुवादतः ॥ ९८६ ॥**

उक्तवक्ष्यमाणयोः पौनरुक्त्यं परिहरन्नुक्तमनूद्य वक्ष्यमाणं प्रतिजानीते । **ऐदंपर्यमिति** । पदार्थानामपि प्रागेवार्थादुक्तत्वात्तदवस्था पुनरुक्तिरित्याशङ्क्याऽऽह । **स वा इतीति** । तथाऽपि कतम आत्मेत्यारभ्य यदुक्तं तेन पौनरुक्त्यमित्याशङ्क्य तस्यैव चात्रोपनिषद्भागात्यागेन[1] हेतूक्त्यर्थत्वेनानुवादान्न पुनरुक्तिरित्याह । **तस्येति** ॥९८६॥

**आकाशवचसा चोक्तः परोऽज्ञातो जगद्गुरुः ॥**
**जगज्जनिस्थितिध्वंसहेतुरात्मविशेषणम् ॥ ९८७ ॥**

आकाशशब्दार्थं स्मारयति । **आकाशेति** । जगद्गुरुत्वं स्फोरयति । **जगदिति** । तस्य ताटस्थ्यं व्यावर्तयति । **आत्मेति** ॥ ९८७ ॥

**क्षेत्रक्षेत्रज्ञयोरेष स्वभावः प्राक्समीरितः ॥**
**अप्रबुद्धात्मतत्त्वः सन्कारणात्मतया स्थितः ॥ ९८८ ॥**

जगत्कारणत्वफलं सर्वात्मत्वमिदं सर्वमित्यादावुक्तमिति स्मारयति । **क्षेत्रेति**॥९८८॥

**सर्वमस्य वशे यस्माद्वशी सर्वस्य तेन सः ॥**
**उदासीनस्य तस्य स्याद्वशित्वमिति चेन्मतम्[2] ॥ ९८९ ॥**
**वशित्व[3]शक्तिसंबन्धान्नैवं[4] यस्मात्पुनर्वचः ॥**
**सर्वस्येशान एवेति सर्वस्येष्टे सदैव सः ॥ ९९० ॥**

सर्वस्य वशीत्यस्यार्थमाह । **सर्वमिति** । सर्वस्येशान इत्येतदाकाङ्क्षापूर्वकमादाय व्याकरोति । **उदासीनस्येति** ॥ ९८९ ॥ ९९० ॥

**कुमारनृपवत्तस्यादीशानत्वं परात्मनः ॥**
**इति चेन्नैतदेवं स्याद्यतोऽधिपतिरुच्यते ॥ ९९१ ॥**

---

१ घ. °द्भागता° । २ क. ग. °त्वमपि चे° । ३ ग. °शित्वं श° । ४ ग. °संभेदान्नै° ।

**अधिष्ठायाऽऽत्मकार्यत्वादुत्पत्तिस्थितिहानिषु ॥**
**त्रिविधेनाऽऽधिपत्येन स जगत्पाति सर्वदा ॥ ९९२ ॥**

सर्वस्याधिपतिरिति विशेषणमाशङ्कापुरःसरमवतार्य व्याकरोति । **कुमारेति** । उत्पत्तिस्थितिहानिप्रयोजकं त्रिविधमाधिपत्यं स खलु तिसृष्ववस्थासु जगदुक्तेनाऽऽधिपत्येनाधिष्ठाय सदा पालयति स्वकार्यत्वाज्जगतस्तस्मिन्नधिष्ठानपालनसिद्धेरिति द्वितीयवार्तिकयोजना ॥ ९९१ ॥ ९९२ ॥

**धर्माधर्मसमायोगो लोकवच्छासनात्प्रभोः ॥**
**प्राप्नोति चेन्न तत्प्राप्तिः स नेति वचसः श्रुतेः ॥ ९९३ ॥**

स न साधुनेत्यादि शङ्काद्वारोत्थापयति । **धर्मेति** ॥ ९९३ ॥

**स्वकर्तृफलदायित्वं स्वभावः कर्मणां मतः ॥**
**कर्तृस्वामित्वविरहान्नेशस्य फलसंगतिः ॥ ९९४ ॥**

तदपेक्षितामुपपत्तिं शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वादिति न्यायेनाऽऽह । **स्वकर्त्रिति** ॥ ९९४ ॥

**कौटस्थ्यान्नास्य कर्तृत्वमकार्याकारणत्वतः ॥**
**कार्यकारणभेदेन तदविद्यैव संस्थिता ॥ ९९५ ॥**

ईशस्य सर्वकर्तृत्वोपगमात्कर्तृत्वराहित्यमसिद्धमित्याशङ्क्याऽऽह । **कौटस्थ्यादिति** । तदुपपादयति । **अकार्येति** । कथं तर्हि तस्य कारणत्वं तदाह । **कार्येति** ॥ ९९५ ॥

**अस्थूलं नेति नेतीति न जायत इति श्रुतिः ॥**
**अपूर्वानपरेत्याद्या तथाच सति युज्यते ॥ ९९६ ॥**

प्रतीचः स्वतो न कर्तृत्वं किंत्वविद्ययेत्यत्र श्रुतीनामानुकूल्यमाह । **अस्थूलमिति** ॥ ९९६ ॥

**स्वस्वामित्वादिसंबन्धस्तथा नास्याद्वितीयतः ॥**
**यत्र हि द्वैतमित्येवं तथाच श्रुतिशासनम् ॥ ९९७ ॥**

कर्तृत्वाभावमीशस्योक्त्वा स्वामित्वाभावमाह । **स्वस्वामित्वादीति** । आदिशब्देन संबन्धान्तराणामपि कल्पितत्वं सूचयति । तथा कार्यकारणत्ववदित्यर्थः । आत्मनः संबन्धः सर्वोऽपि कल्पित इत्यत्र श्रुतिमाह । **यत्र हीति** ॥ ९९७ ॥

**जन्यादयो विकारा ये संबन्धाश्चापि ये मताः ॥**
**अविद्योपप्लुतस्यैव ते सर्वे स्युर्न तु स्वतः ॥ ९९८ ॥**

कर्तृत्वाद्यात्मनो वस्तुतो नेत्युक्तमुपसंहरति । **जन्यादय इति** । जनिर्जन्म तदा-

यत एवमतो नेशो भूयान्स्यात्साधुकर्मणा ॥
कनीयान्नापि पापेन तदकर्तृत्वहेतुतः ॥ ९९९ ॥

आत्मनः स्वतःस्वामित्वाद्यभावमुक्तमुपजीव्य कर्मफलासंबन्धं वदन्वाक्यं योजयति । **यत इति** । अतःशब्दार्थं स्फुटयति । **तदकर्तृत्वहेतुत इति** ॥ ९९९ ॥

क्षेत्रज्ञस्य सतो यद्वत्पुण्यपापाभिसंगतिः ॥
कर्तृत्वाद्यभिमानित्वान्नेशस्य तदसंभवात् ॥ १००० ॥

ईश्वरस्य कर्मतत्फलासंबन्धे हेत्वन्तरमाह । **क्षेत्रज्ञस्येति** । विशिष्टस्य कर्मतत्फलसंबन्धः कर्ताऽहमित्याद्य[illegible]णोपलक्षितस्य तस्य तदभावादित्यर्थः ॥१०००॥

निर्हेतु[illegible] तमस्वित्वस्य सर्वदा ॥
हानि[illegible] धर्माधर्मैरसंगतेः ॥ १००१ ॥

इतश्च नेशस्य कर्मादिसंबन्धितेत्याह । **निर्हेतुत्वादिति** । अस्य प्रतीचस्तमस्वित्वं नामाज्ञानकृतमीशत्वं तस्याज्ञानोपाधिकस्याऽऽगन्तुकहेत्वनपेक्षत्वेन सदाभावान्न धर्मादिभिः संगतिरतो न कर्मप्रयुक्तहानिवृद्धी परस्येत्यर्थः ॥ १००१ ॥

न कार्यकारणं वाऽस्य यत्कर्तृत्वादिकारणम् ॥
स्वतोऽसङ्गस्वभावत्वान्निरंशैकत्वतस्तथा ॥ १००२ ॥

ईशत्वाद्यात्मनः स्वीकृत्य तस्य धर्माद्यसंगतिमुक्त्वा तदेव तस्य नास्तीत्याह । **नेत्यादिना** । कर्तृत्वादिकारणस्य कार्यकारणस्य वाऽभावे हेतुमाह । **स्वत इति** । अंशभेदेन कर्तृत्वमसङ्गत्वं च स्यादित्याशङ्क्याऽऽह । **निरंशेति** । क्षेत्रज्ञस्य कर्तृत्वं परस्यासङ्गत्वमित्याशङ्क्याऽऽह । **एकत्वत इति** । यथोक्तलक्षणत्वादात्मनो नेशत्वादीत्यर्थः ॥ १००२ ॥

स्वत एवंस्वभावोऽपि तदविद्यासमाश्रयात् ॥
एष सर्वेश्वरो देव ईशितव्यव्यपेक्षया ॥ १००३ ॥

तर्हि कथमेष सर्वेश्वर इत्यादिवाक्यमत आह । **स्वत इति** । एवंस्वभावोऽसङ्गत्वानंशत्वादिरूपोऽपीति यावत् । तदविद्यासमाश्रयादीशितव्यव्यपक्षयेति संबन्धः ॥ १००३ ॥

एष सर्वेश्वर इति पुनरुक्तं किमुच्यते ॥
वक्ष्यमाणबुभुत्सायाः विषयत्वप्रसिद्धये ॥ १००४ ॥

सर्वस्येशान इत्यनेन पुनरुक्तिं चोदयति । **एष इति** । तस्यास्तात्पर्यं दर्शयन्परिहरति । **वक्ष्यमाणेति** । प्रत्यगात्मैवाज्ञातो विविदिषाविषय इति वक्तुं पुनरुक्तिरेष इति

---

१ क. ख. घ. °बन्धे क° । २ क. घ. तद° । ३ ग. चास्य । ४ ख. चाभावे । ५ घ. °ति । तथो° ।

हि प्रतीचो निर्देशस्तस्याज्ञातत्वं सर्वेश्वरशब्देन द्योत्यते स च बुभुत्साविषयो विवक्षित इत्यर्थवती पुनरुक्तिरित्यर्थः ॥ १००४ ॥

**अज्ञात एष एवाऽऽत्मा तावन्मात्रसतत्त्वतः ॥**
**ईशादेर्विषयान्तस्य कल्पितत्वमतो भवेत् ॥ १००५ ॥**

अज्ञातत्वेन तद्विषयत्वं हरिहरादेरपि संभवति तत्कथं प्रत्यगात्मैव तथा प्रतिज्ञायते तत्राऽऽह । **अज्ञात इति** । नियमे हेतुः । **तावन्मात्रेति** । प्रत्यङ्मात्रं कथं सर्वस्य सतत्त्वमीश्वरादेरपि लोके वस्तुत्वप्रसिद्धेरित्याशङ्क्याऽऽह । **ईशादेरिति** । जडत्वपरिच्छिन्नत्वादिरतःशब्दार्थः ॥ १००५ ॥

**साध्वाद्यनभिसंबन्धे यदि वा हेतुरुच्यते ॥**
**एष इत्यादिवचसा सर्वेशस्याऽऽत्मनः स्फुटः ॥ १००६ ॥**

पालनादिकर्तुरनुग्रहादिना कृतेन धर्मादिना योगो दुर्वारो लोके तथादृष्टत्वात्तत्कथं स नेत्यादिवाक्यमित्याशङ्क्य पुनरुक्तेरर्थान्तरमाह । **साध्वादीति** ॥ १००६ ॥

**धर्माधर्मादितन्त्रोऽर्थस्तत्फलेनेह लिप्यते ॥**
**विज्ञानात्मा न तु तथा सर्वेशत्वात्परो भवेत् ॥ १००७ ॥**
**सर्वस्य कर्मणोऽप्येष कारकस्य च तत्कृतः ॥**
**स्वतन्त्र ईश्वरो यस्मान्नातो धर्मादितन्त्रता ॥ १००८ ॥**

कोऽसावबाधितोऽसंदिग्धो हेतुस्तमाह । **धर्मेति** । कामकर्माविद्यातन्त्रो जीवस्तत्फलेन संबध्यते परस्तु तद्वन्न कर्मादितन्त्रः सर्वेश्वरत्वात्तस्मिन्नपि नियन्तृत्वादतो न तत्फलसंबन्धी स्यादित्यर्थः । इहशब्दो जीवेशयोर्निर्धारणार्थः । कथं सर्वेश्वरत्वेऽपि कर्मतत्फलासंबन्धित्वं तत्राऽऽह । **सर्वेति** ॥ १००७ ॥ १००८ ॥

**भूतानि जनिमन्त्येष यतः पालयतीश्वरः ॥**
**भूतपालस्ततो देवः कार्याणां कारणत्वतः ॥ १००९ ॥**

पशुपतिर्वा श्रीपतिर्वा सर्वेश्वरो न प्रत्यगात्मेत्याशङ्क्यैष भूताधिपतिरिति विशेषणमित्यभिप्रेत्यैष भूतपाल इत्यस्यार्थमाह । **भूतानीति** । तत्र हेतुः । **कार्याणामिति** ॥ १००९ ॥

**कारणेन हि पाल्यन्ते कार्याणीह यतस्ततः ॥**
**तत्कार्यत्वाच्च भूतानां भूतपालत्वमात्मनः ॥ १०१० ॥**

यद्यपि सर्वकार्याणां जन्मादिसूत्रमारभ्य तत्र तत्रोक्तन्यायेन कारणमीश्वरस्तथाऽपि कथं तस्य भूतपालत्वमत आह । **कारणेनेति** । तेनोपेक्षितस्य कार्यस्य सत्त्वमेव नेति

---

१ ख °त्यर्थः । २ ख °त्वकः ॥ ई° । ३ ग °द्विहेतर° । ४ ख. स्फुटम् ।

वक्तुं हिशब्दः । व्यवहारभूमिरिहेत्युक्ता । यतस्ततः सर्वत्रेत्यर्थः । सामान्यन्यायं प्रकृते योजयति । **तत्कार्यत्वादिति** ॥ १०१० ॥

**भूताधिपतिशब्देन ब्रह्मा वाऽत्राभिधीयते ॥**
**इन्द्रो लोकेश्वरश्चात्र वरुणाद्यात्मना तथा ॥ १०११ ॥**
**लोकपालोऽपि चाप्येष तथाकार्यस्य दर्शनात् ॥**
**प्रशासिताऽपि चाप्येष तदेतदभिधीयते ॥ १०१२ ॥**

भूताधिपतिशब्दस्यार्थान्तरमाह । **भूतेति** । यो ब्रह्मा श्रुतिस्मृतीतिहासपुराणेषु सूत्रादिसंज्ञया विज्ञातः सोऽस्मिन्वाक्ये भूताधिपतिशब्देनोच्यते **हिरण्यगर्भः** समवर्तताग्रे भूतस्य जातः पतिरेक आसीदिति **श्रुतेः** स चात्र परमात्मैव तत्प्रकरणत्वादित्यर्थः। एष लोकेश्वर एष लोकपाल इति **माध्यंदिनास्तत्र** लोकेश्वरशब्दं व्याकरोति । **इन्द्र इति ।** लोकपालशब्दार्थमाह । **वरुणादीति** । यथा परमात्मैवेन्द्रात्मना लोकेश्वरस्तथा स एव वरुणादिरूपेण लोकपालोऽपीत्यत्र हेतुः । **तथेति** । जगन्नियमनपालनादिकार्यस्येन्द्रादौ दर्शनादनीश्वरस्य तदयोगात्तत्तद्रूपेण स्थित्वा स एव तत्तत्कार्यं करोतीत्यर्थः । एष सेतुरित्याद्यवतारयति । **प्रशासितेति** । मर्यादाधारयितेति यावत् । द्वितीयोऽपिरवधारणे ॥ १०११ ॥ १०१२ ॥

**लोकानां रचना यैषा क्षित्यादीनां व्यवस्थिता ॥**
**सिद्धाऽसंकीर्यमाणेह साऽप्यस्यैवानुशासनात् ॥ १०१३ ॥**

परस्मादन्योऽपि कश्चित्प्रशासिताऽस्तु तद्भेदप्रसिद्धेरिति चेन्नेत्याह । **लोकानामिति ।** प्रशासित्रन्तरमतोऽन्यदार्तमित्यादिना प्रत्युदस्तमित्यर्थः ॥ १०१३ ॥

**वर्णाश्रमादिहेतूनां व्यवस्थानामसंकरः ॥**
**नैव सिध्येद्विना हेतुं सेतुरेष इतीक्ष्यताम् ॥ १०१४ ॥**

परस्यैव प्रशासितृत्वेऽपि कथं सेतुशब्दस्तत्र प्रयुक्तस्तत्राऽऽह । **वर्णेति** ॥ १०१४ ॥

**यथोदकप्रवाहस्य सेतुर्विधरणस्तथा ॥**
**सर्वलोकव्यवस्थानां सेतुः स परमेश्वरः ॥ १०१५ ॥**

परस्य सेतुत्वं दृष्टान्तेन साधयितुं विधरणविशेषणं व्याचष्टे । **यथेति** ॥ १०१५ ॥

**किमर्थं सेतुरित्येवमाकाङ्क्षायां परं वचः ॥**
**असंभेदाय लोकानामेषामित्यभिधीयते ॥ १०१६ ॥**

एषामित्याद्यादत्ते । **किमर्थमिति** ॥ १०१६ ॥

**असंभिन्नव्यवस्थाः स्युः कथं नाम यथोदिताः ॥**
**तस्मै तस्मै फलायालं सेतुरीशो भवेत्ततः ॥ १०१७ ॥**

---

१ ख. °त्याद्यवतारयति । कि° ।

विविदिषन्तीतिगिरा संबन्धः प्रतिसाधनम् ॥
साकाङ्क्षत्वादिह ज्ञेयो निराकाङ्क्षत्वसिद्धये ॥ १०३० ॥

क्रियापदस्य सर्वसाधनेषु योग्यतया प्रत्येकं संबन्धमाह । **विविदिषन्तीति** । आकाङ्क्षासंनिधियोग्यतेति त्रितयं विवक्षति । **साकाङ्क्षत्वादिति** । संबन्धधीफलमाह । **निराकाङ्क्षत्वेति** ॥ १०३० ॥

वेदानुवचनोक्त्या वा कर्मकाण्डपरिग्रहः ॥
व्याख्यानायाथ तस्यैव यज्ञेनेत्यादिरुच्यते ॥ १०३१ ॥

अर्थान्तरमाह । **वेदेति** । कथं कर्मकाण्डेन विविदिषन्तीत्यपेक्षायामाह । **व्याख्यानायेति** । संग्रहस्य विवरणापेक्षां द्योतयति । **अथेति** ॥१०३१ ॥

प्रकाश्यमानमात्मानं वेदानुवचनेन तु ॥
इति व्याचक्षते ये तु तेषां वेदान्तमात्रकम् ॥
प्राप्तं वेदानुवचनं तदन्यस्याप्रकाशनात् ॥ १०३२ ॥

भर्तृप्रपञ्चव्याख्यामनुवदति । **प्रकाश्यमानमिति** । मन्त्रब्राह्मणरूपेण वेदानुवचनेन प्रकाश्यमानमात्मानं विविदिषन्तीति पक्षे सर्ववेदवाचिनो वेदानुवचनशब्दस्य वेदैकदेशविषयत्वं स्यादिति दूषयति । **तेषामिति** । तत्र हेतुमाह । **तदन्यस्येति** ॥ १०३२ ॥

विरहय्य न वेदान्तान्वेदेऽन्येन कथंचन ॥
ग्रन्थेनाऽऽविष्कृतिः साक्षादात्मनोऽस्योपपद्यते ॥ १०३३ ॥

वेदान्तेतरग्रन्थस्याऽऽत्माप्रकाशकत्वं साधयति । **विरहय्येति** । कथंचनेति परोक्षत्वेन साक्षादित्यपरोक्षत्वेनेत्यर्थः ॥ १०३३ ॥

तं त्वौपनिषदमिति नियमार्थे सतीष्यते ॥
श्रौतं वाक्यमिदं न्याय्यं न तु सर्वोक्तिभासने ॥ १०३४ ॥

परश्चेदात्मा कर्मकाण्डेनाप्रकाश्यस्तर्हि वेदत्वाविशेषाद्वेदान्तैरपि न प्रकाश्येतेत्याशङ्क्य श्रुतिविरोधान्नैवमित्याह । **तं त्वेति** । किंच वेदानुवचनपदं हीदं सर्ववेदवाक्यप्रकाशने संभवति तदेकदेशवाचकं नेत्र न्याय्यं संकोचकाभावादित्याह । **इदमिति** । ॥ १०३४ ॥

ननु सर्वस्य वेदस्य त्वत्पक्षेऽपि न सिध्यति ॥
ग्रहणं यज्ञदानादिवाचकस्यैव संश्रयात् ॥ १०३५ ॥

साम्यं शङ्कते । **नन्विति** ॥ १०३५ ॥

मैवं विविदिषामात्रहेतोरेव परिग्रहात् ॥ १०३६ ॥

---

१ ख °षन्तीत्यपि गि° । क. ग °षन्तीति गि° ।

**वेदानुवचनस्येह न तु तत्त्वावबोधिनः ॥**
**त्र्यन्तस्य ग्रहोऽत्र स्यात्साक्षाज्ज्ञाने तु तद्ग्रहः ॥ १०३७ ॥**

परिहरति । **मैवमिति** । वेदानुवचनशब्दस्य मन्त्रब्राह्मणमात्रवाचिनोऽपि कर्मकाण्डे संकोचोऽस्मन्मते युक्तो यज्ञेनेत्यादिशेषस्य संकोचकत्वात्परपक्षे तु न संकोचकमस्तीत्यर्थः । इहेति स्वपक्षोक्तिः । एवकारार्थमाह । **न त्विति** । अत्रेति प्रकृतवाक्यग्रहः । कथं तर्हि त्र्यन्तसंग्रहस्तत्राऽऽह । **साक्षादिति** ॥ १०३६ ॥ १०३७ ॥

**अप्यभ्युपगमे नायं दोषोऽस्मान्प्रति ढौकते ॥**
**कृत्स्नवेदग्रहादाद्यव्याख्याने दोष एव न ॥ १०३८ ॥**

द्वितीयव्याख्योपगमेऽपि वेदमात्रवाचिनस्तदेकदेशे संकोच इत्ययं दोषो नास्मान्प्रति प्रसरति संकोचकस्योक्तत्वादिति निगमयति । **अपीति** । यद्वा द्वितीयव्याख्योपगमेनायं दोषोऽस्मान्प्रति प्राप्नोति सा च नोपगम्यते तस्मात्तत्र भवत्वेष दोषो व्याख्यान्तरे तु न किंचिद्दूषणमित्यभिप्रेत्याऽऽह । **अपीति** । कथमाद्यव्याख्याने दोषराहित्यमत आह । **कृत्स्नेति** ॥ १०३८ ॥

**प्रकाश्यमाने मानेन बुभुत्साऽपि न युज्यते ॥**
**साक्षात्त्वाद्वस्तुनो माप्तेर्बुभुत्सा प्राक्प्रमायुतेः ॥ १०३९ ॥**

स्वपक्षे दोषाभावमुक्त्वा परपक्षे दोषान्तरमाह । **प्रकाश्यमान इति** । न केवलं परस्य संकोचकाभावेन संकोचानुपपत्तिः किंतु मानसिद्धतया वस्तुनः साक्षाद्भावाद्विविदिषन्तीति[1]शेषानुपपत्तिश्चेत्यर्थः । कुत्र तर्हि बुभुत्सोपपत्स्यते तत्राऽऽह । **बुभुत्सेति** ॥ १०३९ ॥

**वेदानुवचनोक्त्याऽत्र नित्यं कर्मोपदिश्यते ॥**
**यज्ञदानादिभिस्तस्य साहचर्येण हेतुना ॥ १०४० ॥**

ये पुनर्वेदपारायणं वेदानुवचनमाहुस्तान्प्रत्याह । **वेदेति** । अत्रेति वाक्योक्तिः । तत्र हेतुः । **यज्ञेति** । वेदपारायणस्य काम्यत्वान्नित्यकर्मसाहचर्यादत्र ब्रह्मयज्ञ एव वेदानुवचनमित्यर्थः ॥ १०४० ॥

**सिद्धिर्विविदिषायाः स्याद्वेदानुवचनादिभिः ॥**
**कथमित्युच्यते तेषां बुद्धिसंशुद्धिहेतुतः ॥ १०४१ ॥**

कर्मभिरात्मानं विविदिषन्तीत्ययुक्तं तेषामुपनिषदामिवाऽऽत्माप्रकाशकत्वादिति शङ्कते । **सिद्धिरिति** । नित्यस्वाध्यायादिसंस्कृतमतेरुपनिषत्प्रकाशितात्मनि संवेदनसंभवाद्युक्ता तेषां विविदिषाहेतुतेति परिहरति । **उच्यत इति** ॥ १०४१ ॥

---

१ ख. °तिविशे° । २ ग. °तुता ॥ १०४१ ॥

इदं मेऽङ्गमनेनेति पुंसंस्कारश्रुतेस्तथा ॥
यज्ञो दानं तपश्चेति स्मृतेरपि वचः स्फुटम् ॥ १०४२ ॥

कर्मणां शुद्धिहेतुत्वे श्रुतिस्मृती प्रमाणयति । **इदमिति** । तथा शुद्धिहेतुत्वं कर्मणा-मित्यत्र स्फुटमिति प्रामाण्यं सूच्यते ॥ १०४२ ॥

यस्मिन्विशुद्ध इति चे सत्त्वशुद्धौ ध्रुवा स्मृतिः ॥
इत्येवमादिवाक्यानि श्रौतान्युक्तार्थसिद्धये ॥ १०४३ ॥

कर्मभिः शुद्धबुद्धेर्विविदिषोर्ज्ञानमित्यत्र मानमाह । **यस्मिन्निति** । उक्तोऽर्थः शुद्ध-धियो विविदिषादिद्वारा ज्ञानोत्पत्तिलक्षणः । आदिपदेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलमित्यादिवाक्यानि गृह्यन्ते ॥ १०४३ ॥

ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ॥
यथाऽऽदर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ॥ १०४४ ॥

शुद्धधियो ज्ञानमित्यत्र स्मृतिमाह । **ज्ञानमिति** ॥ १०४४ ॥

यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ॥
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ १०४५ ॥
चत्वारिंशत्तथाऽष्टौ च संस्कारा इति च स्मृतिः ॥
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये ॥ १०४६ ॥

कर्मभिः शुद्धिरित्यत्रोक्तामेव स्मृतिमनूद्य स्मृत्यन्तरमाह । **यज्ञेत्यादिना** । तत्रैव वाक्यान्तरमाह । **योगिन इति** । फलाभिलाषं हित्वा बुद्धिशुद्ध्यर्थमीश्वरार्पणबुद्ध्या कर्म कर्मिणो निर्वर्तयन्तीत्यर्थः ॥ १०४५ ॥ १०४६ ॥

योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ॥
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ १०४७ ॥

कर्मणां शुद्धिहेतुत्वे वाक्यान्तरमाह । **योगेति** । बुद्धिशुद्धावात्मशब्दितबुद्धेः स्ववशत्वमिन्द्रियान्तराणां च स्वाधीनत्वं फलतीत्याह । **विजितेति** । न च तस्य कर्मानुष्ठितवतोऽपि तत्फलसंबन्धः सर्वेषां भूतानामात्मभूतं यद्ब्रह्म तदात्मत्वादित्याह । **सर्वेति** ॥ १०४७ ॥

गार्भैर्होमैर्जातकर्मचूडामौञ्जीनिबन्धनैः ॥
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥ १०४८ ॥

नित्यकर्मानुष्ठानात्पापहानिरित्यत्र स्मृत्यन्तरमाह । **गार्भैरिति** । बीजसंबन्धाद्गर्भसंबन्धाच्च संभावितं पापं पुंसवनादिकर्मभिर्निवर्तते त्रैवर्णिकानामित्यर्थः ॥ १०४८ ॥

---

१ क. इदम° । २ ख ग° । ३ ख ग. [illegible] । ४ ख [illegible] ।

**स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः ॥**
**महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥ १०४९ ॥**

कर्मणां शुद्धिहेतुत्वे वाक्यान्तरमप्यस्तीत्याह । **स्वाध्यायेनेति** । त्रैविद्येन स्वाध्यायेनेति संबन्धः । यद्वा स्वाध्यायोऽध्ययनमात्रं त्रैविद्यं नित्यस्वाध्यायोऽथवाऽधीतवेदः स्वाध्यायस्तदर्थज्ञानं त्रैविद्यमिति भेदः ॥ १०४९ ॥

**इत्येवं शतशः सन्ति यथोक्तार्थप्रसिद्धये ॥**
**स्मृतिवाक्यानि पुंबुद्धिशुद्धिशंसीनि कर्मभिः ॥ १०५० ॥**

उक्तस्मृतीनां तात्पर्यमाह । **इत्येवमिति** । शुद्धिफलमाह । **यथोक्तेति** । विविदिषाद्वारा ज्ञानसिद्ध्यर्थमिति यावत् ॥ १०५० ॥

**संसारानर्थहेतुत्वज्ञानायैव च कर्मणाम् ॥**
**काम्यानामिह निर्देशस्तज्जिहासाप्रसिद्धये ॥ १०५१ ॥**

शुद्धिद्वारा मुक्तिफलोपायत्वान्नित्यकर्मणामुत्तमपुमर्थान्वयमुक्त्वा काम्यकर्मणां तदन्वयप्रकारमाह । **संसारेति** । यदा वेदे काम्यानि कर्माण्युक्तानि गर्भवासाद्यनर्थहेतवो ज्ञायन्ते तदा तेषु जिहासोपवर्तते ततश्च नित्याद्यनुष्ठानात्परिशुद्धबुद्धेर्विविदिषादिद्वारा मुक्तिरिति युक्ता तेषामपि प्रकृष्टफलान्वयितेत्यर्थः ॥ १०५१ ॥

**यद्वा विविदिषार्थत्वं काम्यानामपि कर्मणाम् ॥**
**तमेतमिति वाक्येन संयोगस्य पृथक्त्वतः ॥ १०५२ ॥**

तेषां विधान्तरेण मोक्षान्वयित्वं संबन्धग्रन्थोक्तं स्मारयति । **यद्वेति** । कथं तानि फलान्तरोद्देशेन विहितानि विविदिषायामुपयुज्यन्ते तत्राऽऽह । **संयोगस्येति** ॥ १०५२ ॥

**देशे काले च पात्रे च दानं श्रद्धादिपूर्वकम् ॥**
**शुद्धिकृत्स्याद्धियः पुंसो बहिर्वेद्यपि शास्त्रतः ॥ १०५३ ॥**

महायज्ञैश्च यज्ञैश्चेत्याद्युदाहरता यज्ञेनेति व्याख्यातम् । इदानीं दानेनेत्यस्यार्थमाह । **देश इति** । कुरुक्षेत्रादिर्देशः । राहूपरागादिः कालः । श्रोत्रियोऽध्यात्मविदित्यादिः पात्रम् । श्रद्धादीत्यादिशब्देन भक्तिरुक्ता । ननु दक्षिणाख्यं दानं यज्ञान्तर्भूतं तथाच यज्ञेनेत्यनेन गतत्वाद्दानेनेति पुनरुक्तं नेत्याह । **बहिरिति** । वेद्या बहिरपि दानं शुद्धिकरमित्यत्र मानमाह । **शास्त्रत इति** । **दाने** सर्वं प्रतिष्ठितं तस्माद्दानं परमं वदन्तीत्यादिवाक्यादित्यर्थः ॥ १०५३ ॥

**नियमाद्द्वंद्वसंपातसहनं तप उच्यते ॥**
**तस्यापि बुद्धिसंशुद्धिहेतुत्वं शास्त्रतो मतम् ॥ १०५४ ॥**

तपःशब्दार्थमाह । **नियमादिति** । रागादिनिमित्तक्लेशसहिष्णुत्वव्यवच्छेदार्थं

---

१ ख. स्तुतैः ।

नियमादित्युक्तम् । शास्त्रीयपारलौकिकजपोपवासादिविधिवशादिति यावत् । तेन कथं विविदिषासिद्धिस्तत्राऽऽह । **तस्यापीति** ॥ १०५४ ॥

**विजिज्ञासस्व तद्ब्रह्म तपसैवेति च श्रुतिः ॥**
**तपसा कल्मषं हन्तीत्यपि च स्मृतिशासनम् ॥१०५५॥**

तदेवोदाहरति । **विजिज्ञासस्वेति** । अन्वयव्यतिरेकरूपं तपोऽत्र विवक्षितमित्याशङ्क्य चशब्दसूचितां स्मृतिमवतारयति । **तपसेति** ॥ १०५५ ॥

**यद्दुस्तरं यद्दुरापं यद्दुर्गं यच्च दुष्करम् ॥**
**सर्वं तत्तपसा साध्यं तपो हि दुरतिक्रमम् ॥ १०५६ ॥**

तत्रैव स्मृत्यन्तरमाह । **यदिति** । दुस्तरं दुष्परिहरं कुम्भीपाकादिदुःखम् । दुरापमाप्तुमशक्यं स्वर्गादिसुखम् । दुर्गमवगन्तुमशक्यमात्मादि । दुष्करं कर्तुमशक्यमश्वमेधादि । तपसा सर्वस्य साध्यत्वे हेतुमाह । **तपो हीति** । तपसा हि कुम्भसंभवेनाम्भोनिधिः सहसा चुलुकीकृतस्तत्र तस्य माहात्म्यं सुवचमिति भावः ॥ १०५६ ॥

**अनाशकं चानशनं कामानशनलक्षणम् ॥**
**रागद्वेषवियुक्तैस्तु विषयानिति चाऽऽह हि ॥ १०५७ ॥**
**कामानशनबोधार्थं वेदव्यासोऽपि यत्नतः ॥**
**मृत्य्वन्तं वा सनियमं तदप्यत्यन्तशुद्धिकृत् ॥ १०५८ ॥**

अनाशकशब्दार्थमाह । **अनाशकं चेति** । रागद्वेषाभिनिवेशातिरेकेण परिमितशास्त्रीयविषयनिषेवणमनाशकमित्यत्र मानमाह । **रागेति** । इन्द्रियमनोनिग्रहस्य प्रसादादिफलवचनं यत्नः । अनाशकशब्दस्य प्रसिद्धिमनुरुन्धानोऽर्थान्तरमाह । **मृत्य्वन्तमिति** । नियमेन संकल्पेन सहितं मरणान्तमशनवर्जनमनाशकमित्यर्थः । किं तेनेति तदाह । **तदपीति** ॥ १०५७ ॥ १०५८ ॥

**प्रत्यग्विविदिषामात्रहेतुत्वान्न मृतेर्भयम् ॥**
**अनेकजन्मसंसिद्धस्ततो यातीति च स्मृतेः ॥ १०५९ ॥**

शुद्धिद्वारा विविदिषाहेतुत्वं तस्य न सिध्यति जीवतो हि शुद्ध्यादिसिद्धिरित्याशङ्क्याऽऽह । **प्रत्यगिति** । अनाशकस्याऽऽत्मविविदिषामात्रहेतुत्वान्न त्वैहिकविविदिषायां तन्नियमोऽतो मृतिप्रयुक्तमनाशकस्याफलत्वं नाऽऽशङ्कनीयं जन्मान्तरे तस्य तद्धेतुत्वादित्यर्थः । ऐहिकमपि साधनं जन्मान्तरविविदिषाद्वारा मुक्तिहेतुरित्यत्र मानमाह । **अनेकेति** ॥ १०५९ ॥

**भावितैः करणैश्चायं बहुसंसारयोनिषु ॥**
**आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे ॥ १०६० ॥**

सर्वानाश्रमाननुष्ठितवतो जन्मान्तरेऽपि मुक्तिरिति नियमं निराकुर्वन्वाक्यान्तरमाह । **भावितैरिति** ॥ १०६० ॥

**पृथूदकादितीर्थेषु तथाच मरणं स्मृतौ ॥**
**श्रूयते मुक्तये साक्षान्न भयं स्यादतो मृतेः ॥ १०६१ ॥**

यद्यपि वार्तमानिकं यज्ञादि जन्मान्तरे शुद्ध्यादिद्वारोपयुक्तं तथाऽपि कथं विशिष्टं मरणं तथेत्याशङ्क्याऽऽह । **पृथूदकादीति** । आदिपदेन प्रयागादिग्रहः । स्मृतौ **ब्रह्मज्ञानेन** मुच्यन्ते प्रयागमरणेन वेत्याद्यायामिति । तथाच मृतिकृतमनाशकस्याफलत्वविषयं भयं नास्तीति फलितमाह । **नेति** ॥ १०६१ ॥

**साक्षात्तु वस्तुविज्ञाने श्रुत्या यत्र नियुज्यते ॥**
**विद्वान्परिहरेत्तत्र मृतिहेतुं प्रयत्नतः ॥ १०६२ ॥**

सर्वैरपि तर्हि मुमुक्षुभिरनशनं मरणान्तमनुष्ठेयं तत्कुतस्तेषां श्रवणादिविधिरित्याशङ्क्याऽऽह । **साक्षादिति** । यत्र ज्ञानमुद्दिश्य श्रवणादौ श्रोतव्यादिश्रुत्या पुरुषो नियुज्यते तत्र समर्थः साधनचतुष्टयसंपन्नो मरणकारणमनशनं दूरादेव त्यजेदनशनान्तरं चाऽऽद्रियेत मृतिहेतुमिति विशेषणाच्छ्रवणादिसमर्थस्तु मरणान्तमनशनमाचरन्प्रत्यवेयात्त्वंपदार्थविवेकायेत्यादिस्मृतेरित्यर्थः ॥ १०६२ ॥

**चतुर्णामाश्रमाणां वा वेदानुवचनादिना ॥**
**श्रुत्येह ग्रहणं ज्ञेयं तद्बुभुत्साप्रसिद्धये ॥ १०६३ ॥**

वेदानुवचनादिशब्दानां कर्मपरत्वमुक्त्वाऽऽश्रमविषयत्वमाह । **चतुर्णामिति** । वेदानुवचनादिरूपया श्रुत्या किमित्यस्मिन्वाक्ये ग्रहणमाश्रमाणामित्याशङ्क्याऽऽह । **तदिति** । सर्वेषामप्याश्रमाणां व्यवधानाव्यवधानाभ्यां प्रत्यग्विविदिषायामधिकारार्थं तेषां ग्रहणमित्यर्थः ॥ १०६३ ॥

**ब्रह्मचर्यान्तवाक्येन ब्रह्मचारिपरिग्रहः ॥**
**तपसा तापसस्यैव यज्ञेन गृहिणस्तथा ॥ १०६४ ॥**
**श्रद्धानाशकवाक्यं तु सर्वार्थमिति गम्यते ॥**
**एतमेव विदित्वेति पारिव्राज्यं च वक्ष्यति ॥ १०६५ ॥**

केन शब्देन कस्याऽऽश्रमस्य ग्रहणमित्यपेक्षायां माध्यंदिनपाठमनुसृत्य विभागमाह । **ब्रह्मचर्यान्तेति** । **तमेतं** वेदानुवचनेन ब्रह्मचर्येण[3] ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति हि ते पठन्ति । तथाऽपि त्रयाणामेवाऽऽश्रमाणामिह ग्रहश्चतुर्थाश्रमद्योतिशब्दाभावादित्याशङ्क्याऽऽह । **एतमेवेति** ॥ १०६४ ॥ १०६५ ॥

---

१ ख. °क्षात्त्व° । २ ग. °था ॥ १०६४ ॥ अद्धा° । ३ क. ख. °ण वि° । ४ क. ख. घ. °षन्तीति य° ।

**सर्वेऽपि क्रमशस्त्वेते सेव्यमाना यथाविधि ॥**
**यथोक्तकारिणं विप्रं नयन्ति परमां गतिम् ॥ १०६६ ॥**
**चतुर्भिराश्रमैरेभिर्यथाशास्त्रमनुष्ठितैः ॥**
**अत्यन्तं क्षेममाप्नोतीत्यापस्तम्बोऽप्यभाषत ॥ १०६७ ॥**

वेदानुवचनादिशब्दानामाश्रमविषयत्वं वदता विविदिषादिद्वारा मोक्षोपायत्वमाश्रमाणामुक्तं तत्र प्रमाणमाह । **सर्वेऽपीति** । क्षेमशब्देन मोक्षं ग्रहीतुमत्यन्तविशेषणम् ॥ १०६६ ॥ १०६७ ॥

**यं तं विविदिषन्त्युच्चैर्यथोक्तैः साधनैः परम् ॥**
**एतमेव विदित्वाऽथ मुनिः स्यात्प्राग्यथोदितः ॥ १०६८ ॥**

एतमेव विदित्वेत्यादेरर्थमाह । **यमिति** । आत्मवेदनमुनिभावयोरव्यवधानार्थमथेत्युक्तम् । प्रागिति विविदिषावाक्योक्तिः । यथोदितः प्रत्यग्विविदिषावानित्यर्थः । तात्पर्यवत्त्वमुच्चैरित्युच्यते ॥ १०६८ ॥

**पाण्डित्यबाल्ययोर्निष्ठां मुनित्वं प्रागवादिषम् ॥**
**सर्वकर्ममुचां यस्मान्न तत्साधारणं ततः ॥ १०६९ ॥**

प्रत्यञ्चं विविदिषुस्तमेव विदित्वा ज्ञानी भवतीत्युक्तम् । इदानीमात्मवेदनान्मुनित्वं सर्वाश्रमसाधारणं विविदिषा हि श्रवणादिद्वारा ज्ञानहेतुः सा च सर्वाश्रमसाधारणी दर्शितेत्याशङ्क्य पञ्चमोक्तं स्मारयति । **पाण्डित्येति** ॥ १०६९ ॥

**योगस्य च समस्तस्य प्रत्यग्विज्ञानजन्मने ॥**
**उपयोगो यतस्तस्मान्नाऽऽत्मज्ञानोदयात्परः ॥ १०७० ॥**

किंच कर्मणां विविदिषाद्वारा दूरोपकारित्वाज्ज्ञानादूर्ध्वमयोगात्कर्मत्यागिनामेव ज्ञानितेत्याह । **योगस्येति** । कर्मण इति यावत् । परो योग इति शेषः ॥ १०७० ॥

**शमादीन्येव विद्यायाः साधनानि यतस्ततः ॥**
**कुतोऽसंन्यासिनस्तत्स्यान्मुनित्वं निष्प्रमाणकम् ॥ १०७१ ॥**

यदि कर्मणो ज्ञानोत्पत्त्युपायत्वमिष्टं तर्हि कर्मिणोऽपि मुनित्वं तत्राऽऽह । **शमादीनीति** । अन्तरङ्गसाधनं विद्यायाः शमादिर्बहिरङ्गसाधनं कर्मातः संन्यासिनामेव ज्ञानितेत्यर्थः ॥ १०७१ ॥

**मननात्मकमेवास्य कर्म नान्यद्यतस्ततः ॥**
**मुनित्वं न्यासिनो युक्तं मौनाच्चाप्यस्य सर्वदा ॥ १०७२ ॥**

तेषामपि न ज्ञानित्वं स्वाश्रमकर्माक्षिप्तचित्तत्वादित्याशङ्क्याऽऽह । **मननेति** । संन्यासिनो हि कर्म वेदान्तानामैक्यविषयमैदंपर्यं निश्चित्य तस्यैव तात्पर्यविषयस्य श्रौत-

१ घ. तमेव ।

युक्त्यवष्टम्भेनानवरतमनुसंधानमेव न तद्विरोधि कर्मान्तरं शौचादीनां बाधितानुवृत्तिमात्रत्वादतस्तस्य युक्ता मुनितेत्यर्थः । सततमतिनियतवागादिव्यापारत्वाच्च तस्य मुनित्वं युक्तमित्याह । **मौनाच्चेति** ॥ १०७२ ॥

**प्रत्यग्याथात्म्यविज्ञाननिष्ठता मुनिता यतः ॥**
**तज्ज्ञानजन्मनो नोर्ध्वं मुनिता तत्फलत्वतः ॥ १०७३ ॥**

अन्ये तु शब्दोत्थब्रह्मज्ञानमात्रान्न मुनित्वं तस्य संसृष्टपरोक्षत्वात्तदभ्यासोत्थसाक्षात्कारापेक्षं तदिति मन्यन्ते तान्प्रत्याह । **प्रत्यगिति** । आत्मस्वरूपविषयं शाब्दज्ञानं साक्षात्कारफलकमेवोत्पद्यते तथाविधज्ञानलाभो मुनित्वं तस्य फलरूपत्वादतः शाब्दज्ञानोत्तरकालमभ्यासकृतसाक्षात्कारमपेक्ष्य मुनित्वं न शङ्क्यमित्यर्थः ॥ १०७३ ॥

**एतमेवेत्यवधृतेरस्यैवैकस्य वस्तुनः ॥**
**तदज्ञानैकहेतुत्वात्सर्वस्यानात्मवस्तुनः ॥ १०७४ ॥**

इतश्च संन्यासिनामेव मुनितेति वक्तुमेवकारं व्याकरोति । **एतमिति** । अवधारणे हेतुः । **तदज्ञानेति** ॥ १०७४ ॥

**सामर्थ्याच्च ततोऽस्यैव प्रत्यग्याथात्म्यवेदिनः ॥**
**मुनित्वं प्रत्यगज्ञानहेतुकर्मापवर्जनात् ॥ १०७५ ॥**

अस्त्वेवं प्रस्तुते किं जातं तदाह । **सामर्थ्याच्चेति** । आत्मैव वस्त्वनात्मा तदविद्याजन्यस्ततो वस्तुस्वरूपाभिज्ञस्यैव ज्ञानसामर्थ्यादज्ञानकृतकर्मत्यागसिद्धेस्तस्यैव मुनितेत्यर्थः ॥ १०७५ ॥

**किंचैतमेवमात्मानं सर्वानर्थैककारणम् ॥**
**मोहमात्रव्यवहितमाप्तुमिच्छन्त आदरात् ॥ १०७६ ॥**

तत्रैव हेत्वन्तरत्वेनोत्तरं वाक्यमादत्ते । **किंचेति** । प्रकृतमात्मानं शुद्ध्यादिद्वाराऽऽप्तुमादरादिच्छन्तः प्रव्रजन्तीति संबन्धः । आत्मनः सदाऽऽप्तत्वात्कथमाप्तीच्छेत्याशङ्क्याऽऽह । **सर्वेति** ॥ १०७६ ॥

**आत्मयाथात्म्यविज्ञानसर्वाविद्योपमर्दिना ॥**
**सम्यग्ज्ञानप्रदीपेन प्रत्यक्प्रवणबुद्धयः ॥ १०७७ ॥**

तदाप्त्युपायमाह । **आत्मेति**। आत्मनो याथात्म्यमेव विज्ञानं तत्र सर्वप्रकाराविद्याविषयाश्रयान्तराभावात्तदुपमर्दिसम्यग्ज्ञानसंज्ञो दीपस्तेनाऽऽत्मानमाप्तुमिच्छन्तीति योजना। प्रव्राजिन इत्यस्य तात्पर्यमाह । **प्रत्यगिति** ॥ १०७७ ॥

**विरक्ताः सर्वसंसारादाब्रजाद्बुद्धिशुद्धितः ॥**
**उत्पन्ननिखिलानर्थतित्यक्षा दोषदर्शनात् ॥ १०७८ ॥**

१ ख. घ. शक्यमि° । २ ग. °वृतिर° ।

कथं स्वभावतो विषयाभिमुखानां प्रत्यक्प्रावण्यं पराञ्चि खानीति हि श्रुतेस्तत्राऽऽह। **विरक्ता इति**। नित्यकर्मानुष्ठानसिद्धिशुद्धिलब्धवैराग्यस्य विषयदोषधीसहकृतस्य फलमाह। **उत्पन्नेति** ॥ १०७८ ॥

**वाङ्मनःकायकर्मभ्योऽतः प्रव्रजनशीलिनः ॥ १०७९ ॥**
**एतमेवेत्यवधृतेर्न लोकत्रयकामिनाम् ॥**
**पारिव्राज्येऽधिकारोऽस्तीत्ययमर्थोऽवगम्यते ॥ १०८० ॥**

प्राप्तसर्वसंसारत्यागेच्छानामिच्छाकार्यमाह। **वागिति**। यस्मादीदृक्षा मुमुक्षवोऽतः प्रत्यक्प्रवणबुद्धयः प्रव्रजन्तीति संबधः। एवकारार्थं दर्शयन्नेतमेव लोकमित्यादिभाष्यार्थमाह। **एतमिति** ॥ १०७९ ॥ १०८० ॥

**असाधारणसाध्यानि पुत्रादीनि यथा तथा ॥**
**पुत्रादिकामत्यागोऽपि स्यादसाधारणोऽर्थवान् ॥ १०८१ ॥**

विरक्तस्य पारिव्राज्यमुक्त्वा तस्यैव पारिव्राज्यं ज्ञानद्वारा मुक्तिहेतुरित्येतदृष्टान्तेनाऽऽह। **असाधारणेति** ॥ १०८१ ॥

**परस्परविरोधाच्च पराक्प्रत्यक्फलात्मनाम् ॥**
**पुत्रादिसाधनानां च तत्त्यागस्य च वर्त्मनः ॥ १०८२ ॥**

पुत्रादिसाधनसमुच्चितस्य पारिव्राज्यस्य कुतो न मोक्षहेतुतेत्याशङ्क्याऽऽह। **परस्परेति** ॥ १०८२ ॥

**पूर्वे समुद्रे यः पन्था न स गच्छति पश्चिमम् ॥**
**एकः पन्था हि मोक्षस्येत्यपि व्यासोऽपि चावदत् ॥ १०८३ ॥**

मिथो विरोधे दृष्टान्तमाह। **पूर्व इति**। पारिव्राज्यस्यैव केवलस्य कैवल्यहेतुतेत्यत्र वृद्धसंमतिमाह। **एक इति**। श्रौतार्थे स्मृतिसमुच्चयार्थमपि चेत्युक्तम्। अपिशब्दस्त्याग एव हि सर्वेषां मोक्षसाधनमुत्तममित्यादिवाक्यसमुच्चयार्थः ॥ १०८३ ॥

**प्रव्राजिनोऽत्र गृह्यन्ते प्रसिद्धेर्यदि वा परे ॥**
**त्रिदण्डिनः समाख्यायास्तेष्वेवातिप्रसिद्धितः ॥ १०८४ ॥**

प्रव्राजिनः प्रव्रजनशीला मुमुक्षव इत्येवंपरत्वेन व्याख्यातमिदानीं तस्यैवार्थान्तरमाह। **प्रव्राजिनोऽत्रेति**। प्रसिद्धेरिति हेतुं स्फुटयति। **समाख्याया इति**। मुमुक्षवस्त्रिदण्डिनः पारमहंसीं वृत्तिं गृह्णन्तीति भावः ॥ १०८४ ॥

**पराञ्चि खानीत्यादीनि श्रौतानि च वचांसि नः ॥**
**तानि वा इति निन्दित्वा न्यासो ब्रह्मेति शासनात् ॥१०८५॥**

---

१ क. °र्त्तस्येवम°। २ ख. °ग्णार्थे°।

**उपायो न्यास एवातः प्रत्यग्ज्ञानस्य जन्मने ॥**
**प्रत्यग्ज्ञानविरुद्धत्वान्मनोवाक्कायकर्मणाम् ॥ १०८६ ॥**

कर्मिणामेव तेषां विवक्षितज्ञानलाभात्किं पारमहंस्येनेत्याशङ्क्य बहिर्मुखानां कर्मिणां न ज्ञानमित्यत्र मानमाह । **पराञ्चीति** । पारमहंस्यमेव सम्यग्धीहेतुरित्यत्र श्रौतं लिङ्गमाह । **तानीति** । न्यास इति [1]ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मेत्युक्त्वा तानि वा एतान्यवराणि तपांसीति प्रकृतानि सत्यादीनि निन्दित्वा न्यास एवात्यरेचयदिति परमहंससंन्यासस्यातिशायित्वोपदेशात्तस्य तत्त्वज्ञानं प्रत्यन्तरङ्गत्वं निश्चितमित्यर्थः । वाङ्मनःकायकर्मणां संन्यास एवेति संबन्धः । अवधारणे हेतुः । **प्रत्यगिति** ॥ १०८५॥१०८६॥

**शब्दादिप्रकृतीन्येव कार्याणि करणानि च ॥**
**प्रत्यग्ज्ञानाय नैवालमतस्तानि विरोधतः ॥ १०८७ ॥**

विरोधं साधयति । **शब्दादीति** । देहेन्द्रियाणि भौतिकत्वात्प्रत्यग्विरोधीनि न तज्ज्ञानमुत्पादयितुमुत्सहन्ते तत्कार्यत्वात्कर्माण्यपि तथैवेत्यर्थः ॥ १०८७ ॥

**आत्मलोकपरीप्सायां तस्मात्साधनमुत्तमम् ॥**
**त्याग एव हि विज्ञेयं मनोवाक्कायकर्मणाम् ॥ १०८८ ॥**

कर्मत्यागो ज्ञानहेतुरित्युक्तमुपसंहरति । **आत्मेति** । तस्य ज्ञानसाधनत्वं श्रुतिस्मृतिप्रसिद्धमिति हिशब्दार्थः ॥ १०८८ ॥

**प्रतिसाध्यं सुतादीनि यथा लोकत्रयार्थिनाम् ॥**
**नियतानि तथैवेह प्रत्यग्लोकाप्तिमिच्छताम् ॥ १०८९ ॥**
**सर्वकर्मपरित्यागः साधनं परमं मतम् ॥**
**असंभवे हि कर्माणि विधीयन्तेऽस्य सर्वतः ॥ १०९० ॥**

तदेव दृष्टान्तेन स्पष्टयति । **प्रतिसाध्यमिति** । इहेति प्रतीचो लोकस्याऽऽप्तिरुक्ता । कर्मत्यागो ज्ञानसाधनं चेत्तर्हि पङ्कप्रक्षालनन्यायात्कर्मविधिवैयर्थ्यमित्याशङ्क्या[2]ऽऽह । **असंभवे हीति** । अविरक्तस्य संन्यासासंभवे सति सर्वतो वैराग्योत्पत्त्यर्थं शुद्धिफलानि कर्माणि विधीयन्ते तस्मान्न पङ्कप्रक्षालनन्याय इत्यर्थः ॥ १०८९ ॥ १०९० ॥

**रागाद्याकृष्टचेतस्त्वान्न चेच्छक्नोत्यशेषतः ॥**
**कर्माणि मानवस्त्यक्तुं स करोतु यथाविधि ॥ १०९१ ॥**
**कर्माणि कर्मसंत्यागसामर्थ्यार्थं दिवानिशम् ॥**
**न कर्मणामनारम्भात्तथाच स्मृतिशासनम् ॥ १०९२ ॥**

तदेव प्रपञ्चयति । **रागादीति** । कर्मणां संत्यागे सामर्थ्यं बुद्धिशुद्धिद्वारा वैराग्यं

---

१ घ. ब्रह्म । २ ख. हेतुमाह ।

तदर्थमिति यावत् । अज्ञस्याविरक्तस्य कर्मानुष्ठानमित्यत्र मानमाह । **नेति** ॥१०९१॥
॥ १०९२ ॥

**आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ॥**
**योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ १०९३ ॥**

तर्हि कर्मणामेव साक्षान्नैष्कर्म्यसाधनत्वं भगवतो मतमिति शान्तिकर्मणि वेतालोदयस्तत्राऽऽह । **आरुरुक्षोरिति** । योगशब्देन चित्तशुद्धिर्ज्ञानोदयो वोच्यते ॥ १०९३ ॥

**कोऽभिप्रायोऽखिलं कर्म त्यजतां साधनैः सह ॥**
**आत्मलोकार्थिनां पुंसामिति पृष्टेऽर्थ उच्यते ॥ १०९४ ॥**

एतमेवेत्यादि व्याख्यातम् । इदानीमेतद्ध स्मेत्यादि प्रश्नपूर्वकमादत्ते । **कोऽभिप्राय इति** । साधनैः शिखायज्ञोपवीतादिभिरिति यावत् ॥ १०९४ ॥

**एतद्ध स्मेति वचसा पारिव्राज्येऽभिधीयते ॥**
**अर्थवादस्वरूपेण हेतुः श्रुत्या प्रयत्नतः ॥ १०९५ ॥**

अभिप्रेतमर्थमुच्यमानत्वेन प्रतिज्ञातं प्रकटयति । **एतदिति** । अर्थवादस्वरूपेणैतदित्यादिवचसा तात्पर्येण श्रुत्या पारिव्राज्ये हेतुरुच्यत इति योजना ॥ १०९५ ॥

**तदेतत्कारणं स्पष्टं पारिव्राज्येऽभिधीयते ॥**
**ऐतिह्यार्थं च ह स्मेति वैशब्दः स्मरणाय च ॥ १०९६ ॥**

तात्पर्यमुक्त्वा पदानि व्याकुर्वाणस्तदेतच्छब्दयोः संबन्धं दर्शयन्नपेक्षितं पूरयति । **तदेतदिति** । निपातत्रयं व्याकरोति । **ऐतिह्येति** ॥ १०९६ ॥

**पूर्वेऽतिक्रान्तकालीना विद्वांसो ज्ञाततत्त्वकाः ॥**
**तिसृणामेषणानां स्यात्प्रजामित्युपलक्षणम् ॥ १०९७ ॥**

पदद्वयं व्याचष्टे । **पूर्वे इति** । प्रजां न कामयन्त इति संबन्धः । प्रजामित्येतच्छ्रूयते कर्मापरब्रह्मविद्यां चेति कथं भाष्यमित्याशङ्क्याऽऽह । **तिसृणामिति** ॥ १०९७ ॥

**न कामयन्ते नेच्छन्ति पुत्रोत्पत्त्यादिलक्षणाः ॥**
**एषणाः सकला एताः कस्मादित्यभिधीयते ॥ १०९८ ॥**

नेत्यादेरर्थमाह । **नेत्यादिना** । वाच्यमुक्त्वा विवक्षितमाह । **पुत्रेति** । नेच्छन्तीति पूर्वेण संबन्धः । पुत्रादिलोकत्रयसाधनं नानुतिष्ठन्तीतिभाष्यव्याख्याने हेतुं पृच्छति । **कस्मादिति** । किमित्यादि हेतुत्वेनावतारयति । **अभिधीयत इति** ॥ १०९८ ॥

**एषणास्त्यजतां तेषामभिप्रायमिमं शृणु ॥**
**एषणात्रितयस्यापि किमित्याक्षेप उच्यते ॥ १०९९ ॥**

तस्य तात्पर्यमाह । **एषणा इति** । तेषामभिप्रायं दर्शयितुमेतद्वाक्यमित्यर्थः । किंशब्दस्य प्रश्नवितर्ककुत्सार्थत्वं व्यावर्तयति । **एषणेति** ॥ १०९९ ॥

**प्रजया किं करिष्यामः कनीयःफलया वयम् ॥**
**स्वतःसिद्धैकलो ह्यात्मा येषां लोको ध्रुवोऽक्षयः ॥ ११०० ॥**

आक्षेपं प्रकटयद्वाक्यं योजयति । **प्रजयेति** । येषामस्माकं कूटस्थश्चिदात्मैव पुमर्थस्ते वयं प्रजादिना लोकत्रयहेतुना साध्यं नैव पश्याम इत्यर्थः । आक्षेपे हेतुरुत्तरार्धेनोक्तः ॥ ११०० ॥

**आत्मत्वादेव चावाप्तः सर्वसाधननिःस्पृहः ॥**
**वस्तूत्पत्त्यादिमद्यस्मात्साधनानि व्यपेक्षते ॥ ११०१ ॥**

आत्माख्योऽपि पुमर्थः साधनसाध्यः स्वर्गादिवत्तत्कथमाक्षेपस्तत्राऽऽह । **आत्मत्वादिति** । आत्मनः साधननिरपेक्षत्वे हेत्वन्तरमाह । **वस्त्विति** । तस्मादुत्पत्त्यादिरहितमात्मवस्त्वनपेक्षमिति शेषः ॥ ११०१ ॥

**यच्चोत्पत्त्यादिमद्वस्तु तत्तुच्छं स्वप्नवस्तुवत् ॥**
**आत्मज्ञाने तु निःशेषफलान्तर्भावकारणात् ॥ ११०२ ॥**

अथोत्पत्त्यादिमद्वस्त्वात्मनोऽन्यदनन्यद्वा प्रथमे वस्त्वन्तरस्वीकारादपसिद्धान्तो द्वितीये साधनानपेक्षत्वं नाऽऽत्मनः सिध्यति तत्राऽऽह । **यच्चेति** । तस्य तुच्छत्वे स्वर्गादिलाभो न पुमर्थः स्यात्ततोऽन्यस्य तत्त्वे चाऽऽत्मलाभादप्यर्थान्तरस्य तथात्वमित्यनवस्थेत्याशङ्क्याऽऽह । **आत्मज्ञाने त्विति** । तस्य पुमर्थता दुर्वारेति शेषः ॥ ११०२ ॥

**नाऽऽत्मलाभात्परो लाभः कृत्स्नेऽपि जगतीक्ष्यते ॥**
**सर्वप्राप्यार्थसंप्राप्तेः सर्वहेयनिराकृतेः ॥ ११०३ ॥**

तत्रैव हेत्वतन्रमाह । **नेत्यादिना** । आत्मज्ञाने निःशेषफलान्तर्भावे हेतुमाह । **सर्वेति** ॥ ११०३ ॥

**इति चेतसि संधाय ह्याक्षिपन्ति प्रजादिकम्[1] ॥**
**नृलोकादिफलं सर्वमेषणात्रयमादरात् ॥ ११०४ ॥**

एषणात्यागिनामभिप्रायं निगमयति । **इति चेतसीति** । आत्मज्ञाने सति प्राप्यस्य सर्वस्य प्राप्तेर्निराकर्तव्यस्य सर्वस्य निराकृतेस्तस्मिन्सर्वफलान्तर्भावादात्मलाभात्परो लाभो नेति मत्वा प्रजादिकं विद्वांसः समाक्षिपन्तीत्यर्थः । आक्षेपके सत्याक्षेपस्योपपत्त्यर्थो हिशब्दः ॥ ११०४ ॥

**उत्पाद्यमाप्यं संस्कार्यं विकार्यं चैषणाफलम् ॥**
**तस्मिन्नेवंविधे कः स्यात्संतोषो विदुषामपि ॥ ११०५ ॥**

---

१ ल. °म् ॥ भूलो° ।

एतदित्यादि व्याख्याय ते हेत्यादौ पुत्रैषणाशब्दार्थमाह । **पुत्रेति** । यः प्रसिद्धः पुत्रोत्पत्तिमुद्दिश्य दारसंग्रहः सा खल्वेषणा पुत्रैषणेत्यस्यां श्रुतावुक्तेति संबन्धः । उक्तैषणातो विधान्तरेण प्रवृत्तां कदाचिदेषणा पुत्रैषणेति पक्षान्तरमाह । **यदि वेति** ॥ १११९ ॥

**मनुष्यलोकसंप्राप्तिं समुद्दिश्यास्य यैषणा ॥**
**पुत्रोत्पत्त्येह तत्प्राप्तौ साऽत्र पुत्रैषणोच्यते ॥ ११२० ॥**

विधान्तरं प्रकटयति । **मनुष्येति** । पुत्रोत्पत्त्या हेतुभूतया मनुष्यलोकाप्ताविह पुत्रेणैवायं लोको जय्य इतिशास्त्रसिद्धा या तामुद्दिश्याज्ञस्यैषणा साऽस्मिन्वाक्ये पुत्रैषणेति योजना ॥ ११२० ॥

**दैवं च मानुषं वित्तं कर्मणो यत्प्रयोजकम् ॥**
**देवतादिपरिज्ञानं दैवं पश्वादि मानुषम् ॥ ११२१ ॥**

वित्तैषणाशब्दार्थमाह । **दैवं चेति** । तस्य विनियोगमाह । **कर्मण इति** । वित्तद्वयं विभजते । **देवतादीति** ॥ ११२१ ॥

**संसारकारणध्वंसि यत्तु ज्ञानं विमुक्तिदम् ॥**
**वित्तश्रुत्या न तद्ग्राह्यं तस्य कर्मविरोधतः ॥ ११२२ ॥**

ब्रह्मज्ञानस्यापि दैववित्तान्तर्भावाद्वित्तशब्दतेति केचित्तान्प्रत्याह । **संसारेति** । वित्तं हि कर्मप्रयोजकं तत्र विनियुक्तमिदं तु तद्विरोधित्वान्न तच्छब्दार्हमित्यर्थः ॥ ११२२ ॥

**यस्य साधनभावः स्यात्प्रवृत्तौ सर्वकर्मणाम् ॥**
**गर्तादेरिव वित्तत्वं तस्य ज्ञानस्य कर्मसु ॥ ११२३ ॥**

देवतादिज्ञानस्यापि तर्हि ब्रह्मज्ञानवन्न तच्छब्दतेत्याशङ्क्य विशेषमाह । **यस्येति** । गर्तादेरित्याहवनीयरूपादि दृष्टान्त्यते । यद्वा गर्तकण्टकादेर्व्यावहारिकस्य कर्महेतुत्वान्न वित्तत्वं नैवं प्रकृतस्य ज्ञानस्येति व्यतिरेको गवादेरिवेति पाठान्तरम् ॥ ११२३ ॥

**कर्महेतुविरुद्धं तु न वित्तं ज्ञानमिष्यते ॥ ११२४ ॥**
**कर्मप्रकरणाकाङ्क्षि ज्ञानं कर्मगुणो भवेत् ॥**
**यद्धि प्रकरणे यस्य तत्तदङ्गं प्रचक्षते ॥ ११२५ ॥**

ब्रह्मज्ञानं वित्तश्रुत्या न ग्राह्यं कर्मविरोधित्वादित्युक्तमनुभाषते । **कर्मेति** । ब्रह्मज्ञानस्य कर्मतद्धेतुविरुद्धत्वमसिद्धं कर्माङ्गत्वादाज्यावेक्षणवदित्याशङ्क्याऽऽह । **कर्मेति** ।

१ ख. °त्ता कांचि° । २ क. ग. गवादे° । ३ ध. °रेकेण ग° ।

तत्र हेतुः । **यद्धीति** । विनियोजकप्रमाणाभावान्नेदं कर्माङ्गमित्यर्थः ॥ ११२४ ॥ ॥ ११२५ ॥

**स्वरूपलाभमात्रेण यत्त्वविद्यां निहन्ति नः ॥**
**न तदङ्गं प्रधानं वा ज्ञानं स्यात्कर्मणः क्वचित् ॥ ११२६ ॥**

अङ्गत्वाभावेऽपि प्राधान्येन ज्ञानस्य कर्मणि संबन्धः स्यादिति चेन्नेत्याह । **स्वरूपेति** । क्वचिदिति स्वरूपे फले वेत्यर्थः ॥ ११२६ ॥

**एतद्बलेन संन्यास एषणाभ्योऽवसीयते ॥**
**देवलोकफलं ज्ञानमेषणैवेति गम्यते ॥ ११२७ ॥**

ब्रह्मज्ञानस्य कर्मविरोधित्वान्न वित्तत्वमित्युक्त्वा तत्रैव हेत्वन्तरमाह । **एतदिति** । अतो नास्य वित्तत्वेन त्यागोऽस्तीति शेषः । ब्रह्मधीवदुपास्तिमपि हित्वा ज्ञानान्तरं वित्तश्रुत्या ग्राह्यमित्याशङ्क्याऽऽह । **देवलोकेति** । यस्य साधनभावः स्यादित्यत्र कर्मप्रयोजकं ज्ञानं वित्तमेवेत्युक्तमिह तूपास्तिरपीति विशेषो न हि यथोक्तफलं ज्ञानमेषणातोऽर्थान्तरं पितृलोकादिफलस्य कर्मादेरपि तथात्वापत्तेरिति भावः ॥ ११२७ ॥

**लोकैषणाग्रहेणैव वित्तान्तर्भावसिद्धितः ॥**
**फलोद्देशेन या चेष्टा सैव लोकैषणा यतः ॥ ११२८ ॥**

लोकैषणाशब्देन वित्तैषणाशब्दस्य पौनरुक्त्यं शङ्कते । **लोकेति** । तेनैव वित्तैषणा गृहीता लोकसाधनत्वेन वित्तस्य लोकैषणायामन्तर्भावसिद्धेरिति योजना । अन्तर्भावं साधयति । **फलेति** । अतो लोकैषणाशब्देनैव लोकसाधनसर्वप्रकारकर्मग्रहाद्वित्तशब्देनापि तद्ग्रहे पुनरुक्तिरित्यर्थः ॥ ११२८ ॥

**यत्तु चोदितमित्येव क्रियते कर्म निष्फलम्[1] ॥**
**वित्तैषणेति तां ब्रूमो जामित्वविनिवृत्तसया ॥ ११२९ ॥**

अर्थभेदं दर्शयन्परिहरति । **यत्त्विति** । निष्फलं विध्युद्देशस्थफलविकलमिति यावत् । वित्तशब्देन नित्यं कर्म तत्साधनं च पुनरुक्तिपरिहारार्थं ग्राह्यमित्यर्थः ॥ ११२९ ॥

**लोकोद्देशेन या चेष्टा वाङ्मनःकायसाधना ॥**
**लोकैषणेति तामाहुरेषणार्थविदो जनाः ॥ ११३० ॥**

लोकैषणाशब्दार्थमाह । **लोकेति** । काम्यं कर्म तत्साधनं चात्र विवक्षितमिति न पौनरुक्त्यमित्यर्थः ॥ ११३० ॥

**क्रियाकारकरूपाभ्य एषणाभ्यः प्रबोधतः ॥**
**प्रातिलोम्येन यत्स्थानं व्युत्थानमिति तद्विदुः ॥ ११३१ ॥**

---

१ ख. ग. °त्येवं क्रि° ।

व्युत्थायेत्यत्र प्रकृत्यर्थमाह । **क्रियेति** ॥ ११३१ ॥

**इत्येवमादि व्याख्येयं व्याख्यातं पूर्वमेव तु ॥**
**कहोलब्राह्मणे नातस्तद्व्याख्यानाय यत्यते ॥ ११३२ ॥**

अथेत्यादिवाक्यं प्रत्याह । **इत्येवमादीति** । व्याख्याप्रकारं पृच्छन्तं प्रत्याह । **व्याख्यातमिति** ॥ ११३२ ॥

**प्रव्रजेयुरतो लोकमीप्सन्तो ब्राह्मणा बुधाः ॥**
**प्रव्रजन्तीति च विधिरर्थवादेन संगतेः ॥ ११३३ ॥**

पदार्थस्यावाच्यत्वेऽपि प्रकरणार्थमाह । **प्रव्रजेयुरिति** । आत्मलोकस्य कर्मासाध्यत्वमतःशब्दार्थः । न च ब्राह्मण्यमेव जिज्ञासाद्वारा पारिव्राज्यस्य हेतुः किंतु विवेककृतं वैराग्यमित्याह । **बुधा इति** । प्रव्रजेयुरिति न विधिः प्रव्रजन्तीतिवर्तमानापदेशादित्याशङ्क्याऽऽह । **प्रव्रजन्तीति चेति** ॥ ११३३ ॥

**नार्थवादान्तरापेक्षा ह्यर्थवादस्य युज्यते ॥**
**विधिनैवैकवाक्यत्वमर्थवादस्य युज्यते ॥ ११३४ ॥**

एतद्ध स्मेत्याद्यर्थवादसंबन्धेऽपि पारिव्राज्यवचनस्य कुतो विधित्वमत आह । **नेत्यादिना** । तत्राहृष्टत्वं हेतूकर्तुं हिशब्दः । अयुक्तत्वं साधयति । **विधिनेति** । सोऽरोदीदित्यादेर्बर्हिषि रजतं न देयमित्यादिविधिनैकवाक्यत्वदर्शनादर्थवादस्यार्थवादान्तरापेक्षा न युक्तेत्यर्थवादाधिकरणे स्थितमित्यर्थः ॥ ११३४ ॥

**अर्थवादेन लिङ्गेन तस्माद्विधिरयं स्फुटः ॥**
**विधिशेषत्वमुज्झित्वा नार्थवादो यतोऽन्यतः ॥ ११३५ ॥**

तस्य विधिनैवान्वये फलितमाह । **अर्थवादेनेति** । तच्छब्दार्थं स्फुटयति । **विधीति** ॥ ११३५ ॥

**समानकर्तृकत्वोक्तेर्विभागोक्तेः फलस्य च ॥**
**प्रव्रजन्तीत्येष विधिरर्थवादेन चान्वयात् ॥ ११३६ ॥**

इतश्च पारिव्राज्यं विधित्सितमित्याह । **समानेति** । यथाऽर्थवादयोगात्प्रव्रजन्तीत्येष विधिरित्युक्तं तथा विदित्वा व्युत्थायेति ज्ञानेन सह व्युत्थानाख्यपारिव्राज्यस्य तुल्यकर्तृकत्वनिर्देशाद्वेदनसहितव्युत्थानस्य पुत्रादिफलभूतलोकत्रयाद्विभज्याऽऽत्मलोकाख्यफलोक्तेश्च विधित्सितमेव पारिव्राज्यमित्यर्थः ॥ ११३६ ॥

**विज्ञानेन विदित्वेति श्रूयतेऽस्यैककर्तृता ॥**
**विविनक्ति फलं चापि येषामित्येवमादिना ॥ ११३७ ॥**

---

१ क. ख. घ. °तृत्व° । २ ग. °ते श्रेक° । ३ क. ग. वाऽपि ।

उक्तेऽर्थे विज्ञानसमानेत्यादिभाष्यं योजयति । **विज्ञानेनेति** । अपिशब्दाद्वेदानुवचनादिसहपाठान्नार्थवादताऽस्येति सूचितम् ॥ ११३७ ॥

**प्रव्रजन्तीति नाप्येतत्सकृच्छ्रुतमिहेष्यते ॥**
**प्राप्तवल्लोकनुत्यर्थमर्थवादव्यपेक्षि च ॥**
**प्रधानवदतो नेदं लोकस्तुतिपरं भवेत् ॥ ११३८ ॥**

इतश्च तद्विधित्सितमित्याह । **प्रव्रजन्तीति** । न केवलं प्रकृते वाक्ये सकृदेवेदं पारिव्राज्यं श्रूयते किंतु तत्र तत्राभ्यस्यते प्रव्राजिनः प्रव्रजन्ति व्युत्थाय भिक्षाचर्यं चरन्ति विदित्वा मुनिर्भवतीति च तस्मादेतद्विधेयमित्यर्थः । ननु यथा वायुर्वै क्षेपिष्ठेत्यादिना प्राप्तार्थेनार्थवादेन देवतादिप्रशंसाद्वारा वायव्यं श्वेतमालभेतेत्यादिना विहितं कर्म स्तूयते तथा पारिव्राज्येनापि महाभागोऽयमात्मलोको यत्तदर्थं दुष्करमपि पारिव्राज्यं कुर्वन्तीत्यात्मलोकस्तुतिर्विवक्षिता तथाच न तत्र विधिरत आह । **प्राप्तवदिति** । पूर्वार्धस्थं नञ्पदमत्रानुषज्यते । किंच यथा प्रधानस्य दर्शादेः सुवर्गाय हि लोकायेत्यर्थवादापेक्षा तथेदमपि पारिव्राज्यमेतद्ध स्मेत्यर्थवादापेक्षमतो लोकस्तुतिपरमेतदिति भ्रान्तिमात्रमित्याह । **अर्थवादेति** ॥ ११३८ ॥

**नाप्यनुष्ठेयरूपेण पारिव्राज्येन संस्तुतिः ॥**
**आत्मलोकस्य युक्ता स्यान्नापि तज्ज्ञानसंस्तुतिः ॥ ११३९ ॥**

नन्वनुष्ठेयेनापि तेनाऽऽत्मा तज्ज्ञानं वा स्तूयतां नेत्याह । **नापीति** ॥ ११३९ ॥

**अथानुष्ठेयमपि[2] संस्तुत्यर्थं भवतेष्यते ॥**
**अनुष्ठेयस्य दर्शादेः स्तुत्यर्थत्वं प्रसज्यते ॥ ११४० ॥**

विपक्षे दोषमाह । **अथेति** ॥ ११४० ॥

**कर्तव्यता[3] न च ज्ञाता पारिव्राज्यस्य कुत्रचित् ॥**
**स्तुत्यर्थत्वं यतोऽस्येह भवता परिकल्प्यते ॥ ११४१ ॥**

किंच प्राप्तं पारिव्राज्यं स्तावकं वाच्यं न च शास्त्रं विना विशिष्टं तद्द्रष्टुं शक्यं तथाच तस्य विद्याप्रकरणे प्राप्तिरन्यत्र वा प्रथमेऽननुष्ठेयतया प्राप्तेन तेन स्तुत्ययोगादनुष्ठेयत्वेन स्तावकत्वेन च तस्मिन्नुच्यमाने वाक्यं भिद्येतेत्यभिप्रेत्य द्वितीयं निराह । **कर्तव्यतेति** । परमते पारिव्राज्यस्य क्वापि कर्तव्यत्वापरिज्ञानान्न तेनाऽऽत्मलोके तज्ज्ञाने वा स्तुतिः सिध्यतीत्यर्थः ॥ ११४१ ॥

**अन्यत्रापि विधौ कल्प्य इहैवासौ समर्थ्यताम् ॥ ११४२ ॥**
**भूमिष्ठे मधुनि प्राप्ते को विद्वान्पर्वतं व्रजेत् ॥**
**लब्धेऽपि प्रव्रजन्तीति विधावन्यत्र किं श्रमः ॥ ११४३ ॥**

१ घ. °दर्शिनो द° । २ ग. °पि सत्स्तुत्य° । ३ ख. °ताविधिस्तस्य पा° ।

किंच प्रकरणान्तरे पारिव्राज्यविधिर्न कल्पनीयस्तस्य कर्मप्रकरणे विरोधित्वादिति मत्वाऽऽह । **अन्यत्रेति ।** किंचास्मिन्नेव विद्याधिकारे तद्विधौ संभवति किमित्यन्यत्र स कल्प्यतेऽर्के[1] चेन्मधु विन्देत किमर्थं पर्वतं व्रजेदिति न्यायादित्याह । **भूमिष्ठ इति ।** न च पारिव्राज्ये नोत्पत्तिविधिरस्तीति युक्तं चतुर्विधविधीनां मिथोऽविनाभावादन्यथा सोमयागविधावपि पर्यनुयोगादिति ॥ ११४२ ॥ ११४३ ॥

**काणकुण्ठादिविषये यत्तु कैश्चित्प्रकल्प्यते ॥**
**पारिव्राज्यं न तद्युक्तमननुष्ठेयरूपतः ॥ ११४४ ॥**

केचित्तु विधेयमपि तत्कर्मानधिकृतान्धादिविषयमाहुस्तान्प्रत्याह । **काणेति** ॥ ११४४ ॥

**कर्तव्यत्वेन न ज्ञातं वृक्षाग्रारोहणं यथा ॥**
**संन्यासोऽपि तथैवायं नैव कार्यतया मतः ॥**
**प्रव्रजन्तीत्यतो नास्य स्तुतिगन्धोऽपि विद्यते ॥ ११४५ ॥**

कथमिदं काणादीनामनुष्ठेयत्वेन न प्रतिपन्नमत आह । **कर्तव्यत्वेनेति ।** यथाऽग्निप्रवेशादि काणादेरनुष्ठेयं नास्मिन्वाक्ये प्रतीयते तथा पारिव्राज्यं तदनुष्ठेयं नेह भातीत्यर्थः । प्रकृतमुपसंहरति । **प्रव्रजन्तीत्यत इति ।** अर्थवादान्वयादिलिङ्गादस्य विधेयत्वमनःशब्दार्थः । आत्मलोकं तज्ज्ञानं वा प्रतीति शेषः । अपिशब्देन संन्यासस्यानधिकृतविषयत्वाभावो विवक्षितः ॥ ११४५ ॥

**ननु चाऽऽत्मप्रबोधेन विधिगोचरलङ्घिनः ॥**
**कृतकृत्यस्य मुक्तस्य विधिरेष कथं भवेत् ॥ ११४६ ॥**

नास्य विधेयत्वमुक्तमाक्षिपति । **नन्विति ।** न तावदविदुषो विहितः संन्यासो विद्वत्प्रकरणविरोधान्नापि विदुषस्तस्य प्राप्तविद्याफलस्य विध्ययोग्यत्वाद्वैधसंन्यासायोगादित्यर्थः ॥ ११४६ ॥

**परिहारोऽस्य चोद्यस्य कहोलब्राह्मणेऽखिलः ॥**
**यतोऽभाणि मया पूर्वं नेहातः पुनरुच्यते ॥ ११४७ ॥**

पञ्चमोक्तं स्मारयन्परिहरति । **परिहारोऽस्येति ।** साक्षात्कारवतो वा वैधसंन्यासो निरस्यत आपातज्ञानवतो वा नाऽऽद्यस्तस्य विद्याफलभूतसंन्यासस्याऽऽर्थिकत्वेन वैधत्वानुपगमान्न द्वितीयस्तस्य साक्षात्कारोद्देशेन संन्यासस्यानुष्ठेयतया विध्यपेक्षत्वादित्यर्थः ॥ ११४७ ॥

**ब्रह्मचर्यं समाप्येतिप्रत्यक्षश्रुतिमूलतः ॥**
**चतुर्णामाश्रमाणां स्यान्नोपेक्षाऽतोऽनुमानतः ॥ ११४८ ॥**

---

1 क. ग. 'तेऽर्के च'।

ननु विदुषोऽविदुषो वा न संन्यास ऐकाश्रम्यस्मृतेर्गार्हस्थ्यातिरेकेणाऽऽश्रमान्तरायोगाद्यथाऽऽह **गौतम**ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्य**स्येति** तत्राऽऽह । **ब्रह्मचर्यमिति** । श्रुतिवशाच्चातुराश्रम्यसंभवादनुमानशब्दितैकाश्रम्यविषयस्मृतिबलान्नाऽऽश्रमान्तरोपेक्षेत्यर्थः ॥ ११४८ ॥

**न च वेदैकमूलत्वविरहात्स्यात्प्रमाणता ॥**
**आचारस्य स्मृतेर्वाऽपि बौद्धाद्याचारवद्ध्रुवम् ॥ ११४९ ॥**

तर्हि श्रुतेश्चातुराश्रम्यं स्मृतेरैकाश्रम्यं चेति संशयः स्याद्द्वयोरपि प्रामाण्याविशेषादत आह । **न चेति** । तुल्यन्यायत्वादाचारग्रहणम् । अयं भावः । वेदमूलाः स्मृतयः प्रमाणं तन्मूलागमानां मानत्वान्न चैकाश्रम्यस्मृतेर्मूलं वेदोऽस्ति कुटुम्बे शुचौ देशे स्वाध्यायमधीयान इत्यादि तु नाऽऽश्रमान्तरमपवदति किंत्वज्ञस्याविरक्तस्य गार्हस्थ्यमनुमोदते न चास्यां स्मृतावाश्रमान्तरासत्त्वं विवक्षितं ब्रह्मचर्यस्याप्यपलापप्रसङ्गात्तस्याऽऽश्रमविकल्पमेके ब्रुवत इत्युपक्रमविरोधाच्च न चासावेकीयपक्षोपन्यासो न स्वमतमिति वाच्यं नियामकाभावाच्चातुराश्रम्यविषयबहुश्रुतिस्मृतिविरोधाच्च तस्मादैकाश्रम्यस्मृतेर्मूलाभावादमानत्वान्न तद्वशादत्र संशयोऽवतरेदिति ॥ ११४९ ॥

**धर्मस्य वेदमूलत्वादवेदस्य न धर्मता ॥**
**इत्येवं न्यायवद्वाक्यमाहुर्वेदप्रमाणकाः ॥ ११५० ॥**

वेदमूला स्मृतिर्मानमित्यत्र स्मृत्यधिकरणं प्रमाणयति । **धर्मस्येति** । अवेदस्य वेदाप्रमाणकस्य चैत्यवन्दनादेरिति यावत् । वेदप्रमाणकाः **शबरस्वामिप्रभृतयः । उक्तं हि**— शब्दमूलको हि धर्म इत्युक्त**मिति ये** त्वदृष्टार्थास्तेषु वैदिकशब्दानुमान**मिति** च ॥ ११५० ॥

**वेदशास्त्रानपेक्षत्वं[2] स्मृतिशास्त्रस्य चेन्मतम् ॥**
**निर्ग्रन्थिशास्त्रतुल्यत्वं स्मृतीनां वः प्रसज्यते ॥ ११५१ ॥**

श्रुतिमूला स्मृतिर्मानमित्युक्त्वा विपक्षे दोषमाह । **वेदेति** । निर्ग्रन्थयो दिगम्बरादयः । **यथाऽऽहुः**—युक्तं श्रुतिविरोधात्स्मृतिरप्रमाणमितीति ॥ ११५१ ॥

**नापि स्मृतिव्यपेक्षाऽस्ति श्रुतेः स्वातन्त्र्यकारणात् ॥**
**स्मृत्यर्थस्यानुवादोऽयं पारतन्त्र्येऽसति श्रुतेः ॥ ११५२ ॥**

श्रुतिनिरपेक्षत्वे स्मृतीनामप्रामाण्यप्रसङ्गात्प्रमाणं स्मृतिस्तत्सापेक्षेति नियम्यते चेदितराऽपि स्मृतिसापेक्षा किं न स्यात्साऽपि पौरुषेयी मूलानपेक्षा न मानमित्याशङ्क्याऽऽह । **नापीति** । तत्र हेतुः । **स्वातन्त्र्येति** । अपौरुषेयतया निरस्तसमस्तदोषाशङ्कायाः श्रुतेः स्वार्थे स्वतन्त्रप्रमाणत्वान्नापेक्षेत्यौत्पत्तिकसूत्रे स्थितम् । **उक्तं हि**—

१ ग. °रहे स्यात्प्र° । २ क. ग. °पेक्षित्वं ।

**अतश्च** प्रमाणमनपेक्षत्वादिति । शब्दार्थसंबन्धापौरुषेयत्वमतःशब्दार्थः । ननु स्मृत्यर्थमनुवदन्ती श्रुतिः स्मृतिं कथं नापेक्षते **पादोऽस्य** विश्वा भूतानीत्याद्या हि **श्रुतिर्ममैवांशो** जीवलोक इत्यादिस्मृत्यर्थमनुवदति नेत्याह । **स्मृत्यर्थस्येति** । श्रुतेरसति पारतन्त्र्ये नास्ति स्मृत्यर्थानुवादित्वमिति पूर्वेणान्वयेन योजना ॥ ११५२ ॥

**स्वतन्त्रयोर्मिथोऽपेक्षा नापि स्यात्परतन्त्रयोः ॥**
**पारतन्त्र्यान्न चापेक्षा स्वतन्त्रस्य स्वतः क्वचित् ॥ ११५३ ॥**

श्रुतेः स्मृत्यनपेक्षत्वं दृष्टान्तेनाऽऽह । **स्वतन्त्रयोरिति** । आत्माकाशयोर्वा घटपटस्थरूपरसयोर्वा मिथोपेक्षाभाववद्वेदस्यापि स्वतन्त्रस्य स्मृतिशास्त्रात्परतन्त्रात्क्वचिदप्यर्थे स्वतोऽपेक्षा न युक्ता स्वतन्त्रस्य परतन्त्राधीनापेक्षावत्त्वव्याघातादित्यर्थः ॥ ११५३ ॥

**स्मृत्यर्थं न श्रुतिस्तस्मादनुवक्तीह कुत्रचित् ॥**
**स्मृतिस्त्वनुवदत्येव श्रुत्यर्थं परतन्त्रतः ॥ ११५४ ॥**

श्रुतेः स्मृत्यनपेक्षत्वे फलितमाह । **स्मृत्यर्थमिति** । इहेति वैदिकव्यवहारभूमिरुक्ता । यत्तु **पादोऽस्येत्यादिश्रुतिर्ममैवेत्यादिस्मृत्यर्थ**मनुवदतीति तत्र वैपरीत्यमाह । **स्मृतिस्त्विति** । **उक्तं** हि प्रमाणमेषा स्मृतिर्विज्ञातं तत्किमित्यन्यथा भवतीति ॥ ११५४ ॥

**आत्मा चेदिष्यते लोकः कर्माण्येव न किं नराः ॥**
**तत्प्राप्त्यर्थं प्रयत्नेन कुर्वन्तीह दिवानिशम् ॥ ११५५ ॥**
**पारिव्राज्येन किं कार्यमिति चेदुच्यते शृणु ॥**
**अस्यात्यन्तमसंबन्धादात्मलोकस्य कर्मभिः ॥ ११५६ ॥**

सार्थवादं पारिव्राज्यवाक्यं व्याख्याय स एष इत्यादिवाक्यव्यावर्त्यां शङ्कामाह । **आत्मा चेदिति** । प्रयत्नेन शास्त्रानुसारेणेत्यर्थः । इह पारिव्राज्येन किमिति संबन्धः । इहेत्यात्मलोकोक्तिः । दिवानिशमिति विहितकालोपलक्षणम् । न हि यावज्जीवं जुहुयादित्याहारनिर्हारादिकालेऽपि होमो विधीयते यावदुपबन्धस्य सायंप्रातःकालविधिना संकोचाद्धोमाङ्गस्यापि कालस्यानुपादेयतया निमित्तानुप्रवेशादिति । पारिव्राज्यकार्यं निर्धार्योच्यमानं श्रोतव्यमित्याह । **उच्यत इति** । उक्तिप्रकारं प्रकटयति । **अस्येति** । साधनत्वेन फलत्वेन चोत्पाद्यत्वादीनामन्यतमत्वेनापि कर्मभिरात्मलोकस्य संबन्धाभावं वक्तुमत्यन्तमित्युक्तम् ॥ ११५५ ॥ ११५६ ॥

**नोत्पत्त्याद्यभिसंबन्ध आत्मनोऽस्योपपद्यते ॥**
**यतोऽतः कर्मणां कार्यं नेह संभाव्यतेऽण्वपि ॥ ११५७ ॥**

उक्तमेव व्यनक्ति । **नेत्यादिना** ॥ ११५७ ॥

**तदसंभावनायाश्च को हेतुरिति भण्यते ॥**
**स एष नेति नेत्यात्मा यस्मात्प्रागपि वर्णितः ॥ ११५८ ॥**

आत्मनि कर्मकार्यस्यासंभावनाहेतुं पृच्छति । **तदिति** । हेतुवादी वाक्यमादत्ते । **भण्यत इति** । तस्य हेतुरूपमर्थमाह । **स एष इति** । स खल्वयमात्मा निरस्तसमस्तप्रपञ्चो यस्मादवतिष्ठते तस्मान्न तत्र कर्मकार्यमीषदप्यस्तीत्यर्थः । अस्य च वाक्यस्यार्थो न व्याख्येयः प्रागेवानेकशो व्याख्यातत्वादित्याह । **प्रागपीति** ॥ ११५८ ॥

**प्रध्वस्तैकात्म्यसंमोहो नेति नेत्यात्मविद्यया ॥**
**अगृह्याद्यात्मतां यातः स्वमहिम्नि व्यवस्थितः ॥ ११५९ ॥**

वर्णितप्रकारं प्रतिपत्तिसौकर्यार्थं संक्षिपति । **प्रध्वस्तेति** ॥ ११५९ ॥

**कर्मणां चाऽऽत्मविद्यायां चरितार्थत्वकारणात् ॥**
**विद्ययाऽपि न चेत्कार्यं कर्मभिः स्यात्कथं नु तत् ॥ ११६० ॥**

इतश्चाऽऽत्मलोकार्थिभिर्न कर्मानुष्ठेयमित्याह । **कर्मणां चेति** । शुद्धिविविदिषादिद्वारा तेषां विद्यायामवसितत्वाद्विविदिषादिप्राप्तस्य मुमुक्षोर्न तत्कार्यमित्यर्थः । न कर्माणि विद्यायामवस्यन्ति किंतु मुक्तावित्याशङ्क्याऽऽह । **विद्ययेति** । उत्पन्नायां विद्यायां तत्कार्ये चाविद्यातत्कार्यध्वंसे सिद्धे विद्ययाऽपि कार्यं न किंचिदस्ति चेत्कर्मकार्यमात्मलोके नास्तीति किमु वक्तव्यमित्यर्थः ॥ १६० ॥

**एवं चतुर्भिरध्यायैर्यथाव्याख्यातवर्त्मना ॥**
**मुमुक्षुः प्रापितः स्वास्थ्यं परमैकात्म्यलक्षणम् ॥ ११६१ ॥**

आत्मलोकस्याकर्मसाध्यत्वे तत्र तत्रोक्तन्यायमत्रानुसंधेयत्वेन सूचयति । **एवमिति** । यथाव्याख्यातं वर्त्म कर्मत्यागाख्यं स्वास्थ्यस्य परमत्वं कर्मासाध्यत्वम् । तत्र हेतुः । **ऐकात्म्येति** ॥ ११६१ ॥

**यस्मादेवमयं तस्माद्विदिते परमात्मनि ॥**
**ज्ञेयकार्यसमाप्तत्वान्न किंचिदवशिष्यते ॥ ११६२ ॥**

मुक्तेरकर्मसाध्यत्वे फलितमाह । **यस्मादिति** । अयमिति मोक्षपरामर्शः ॥ ११६२ ॥

**सर्वकर्मफलानां च तथाऽन्तर्भावसंभवात् ॥**
**आप्ते कर्मफले नात आरम्भः कर्मणामिह ॥ ११६३ ॥**

ब्रह्मज्ञानफले सर्वकर्मफलान्तर्भावाच्च ज्ञानिनो न किंचित्कार्यमित्याह । **सर्वेति** । मुक्तेरकर्मसाध्यत्वान्मुमुक्षुणा मुक्तेन वा न कर्म कार्यं यथा तथा कर्मफलमात्रस्य ज्ञानफलेऽन्तर्भावादिह ज्ञाने प्राप्ते तत्फले तदन्तर्भावात्कर्मफले च भूयस्तदारम्भो न संभवतीत्यर्थः ॥ ११६३ ॥

**तथाच भगवान्व्यास इममर्थमुवाच ह ॥**
**सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ११६४ ॥**

---

१ क. ग. °तः स्वे म° । २ ग. °वकारणात् । ३ क. घ. °र्ये तथा सति क° ।

ज्ञानफले कर्मफलान्तर्भावे मानमाह । **तथाचेति** । व्यासोक्तेरतिप्रसिद्धत्वार्थो निपातः । अखिलं समग्राङ्गोपेतमित्यर्थः ॥ ११६४ ॥

**नातो विज्ञाततत्त्वस्य कर्महेतुप्रबाधनात् ॥**
**वाङ्मनःकायसाध्यानामारम्भः सर्वकर्मणाम् ॥ ११६५ ॥**

स इत्यादिवाक्यतात्पर्यमुपसंहरति । **नात इति** ॥ ११६५ ॥

**यस्त्वेषणानिर्वृत्तः स्यान्नेति नेत्यात्मविद्यया ॥ ११६६ ॥**
**नेतीत्यात्मैव संवृत्तो यतोऽतस्तं विपश्चितम्[२] ॥**
**उभे न व्याप्नुतोऽज्ञोत्थे नेति नेत्यात्मनि स्थितम् ॥ ११६७ ॥**

एतमित्यादेरर्थमाह । **यस्त्विति** । एषणाभ्यो निवृत्तौ हेतुमाह । **नेतीति** । स नेति नेत्यात्मैव यतः संवृत्तोऽतस्तं विपश्चितमुभे न व्याप्नुतस्तयोरज्ञानादुत्पन्नत्वाद्विदुषश्च निष्प्रपञ्चात्मनि स्थितत्वादिति योजना ॥ ११६६ ॥ ११६७ ॥

**के ते उभे न तरत इत्युक्तार्थविवक्षया ॥**
**अत इत्यादिकं तस्मादाजगामोत्तरं वचः ॥ ११६८ ॥**

आकाङ्क्षापूर्वकमुत्तरवाक्यमवतारयति । **के त इति** । उक्तार्थविवक्षयेति पूर्ववाक्यार्थस्य स्फुटीकरणेच्छयेति यावत् । तस्मादेतमित्यादेरुत्तरमत इत्यादिकं वच इति संबन्धः ॥ ११६८ ॥

**अतो निमित्तादत्यर्थमहं *पापमकारिषम् ॥**
**भोक्तव्यं तन्मयेदानीं मरणात्समनन्तरम् ॥ ११६९ ॥**

अतः पापमकरवमित्यस्यार्थमाह । **अत इति** । अविवेककृताद्रागादेरित्यर्थः । यद्यपि महत्पापं कृतं तथाऽपि किं तेनेत्यत आह । **भोक्तव्य मिति** । इदानीमित्यस्य व्याख्या मरणादिति ॥ ११६९ ॥

**असह्यानन्तदुःखौघमहाभयमुपस्थितम् ॥**
**इत्येष घोरसंकल्पो हिक्किकावशवर्तिनः ॥**
**सर्वसामर्थ्यहीनस्य जायते तापकारणम् ॥ ११७० ॥**

तदा पापं भुज्यतां किं खेदेनेति तत्राऽऽह । **असह्येति** । इतिशब्दार्थमाह । **इत्येष इति** । एवं संकल्पयन्प्राप्तव्यदुःखपरिहारार्थं किमिति साधनं नानुतिष्ठतीत्याशङ्क्याऽऽह । **हिक्किकेति** । तापकारणं कृतदुरितमिति शेषः ॥ ११७० ॥

**क्षयिष्णु पुण्यं चैतस्माद्धेतोरकरवं पुरा ॥**
**इत्येते विचिकित्से द्वे सर्वस्य भवतो मृतौ ॥ ११७१ ॥**

* इदं छान्दसमकार्षमिति यावत् ।

१ ख. 'र्वृत्तः स्या' । २ क. ग. 'निश्चित' ।

अतः कल्याणमित्यादेरर्थमाह । क्षयिष्णिवति । एतस्माद्रागादेरेवेत्यर्थः । तत्फलं च मरणानन्तरं भोक्तव्यमिति संकल्पयतीति शेषः । संकल्पद्वये कोऽधिकारीत्यपेक्षायामाह । इत्येते इति । तत्र समुच्चयानुष्ठायी यथोक्तविचिकित्सावान्मृतेरूर्ध्वं सूक्ष्मदेहवेष्टितो देवयानेन पथा ब्रह्मलोकमासाद्य निर्वृणोति केवलेष्टादिकारित्वविशेषणः पितृयाणेन चन्द्रमसमासीदति । अनिष्टादिकारी पुनरुक्तविशेषणो भूतसूक्ष्मपरिवृतः संयमने यामीर्यातना भूयो भूयोऽनुभूय ततोऽवरुह्य तृतीयस्थानभाग्भवतीति भावः ॥ ११७१ ॥

एते न तरतोऽज्ञोत्थे तद्धेत्वज्ञानघस्मरम् ॥
अशनायाद्यतिक्रान्तं ब्रह्मास्मीत्यात्मवेदिनम् ॥
कथं ते व्याप्नुतोऽविद्याहेतूत्थे ब्रह्मवेदिनम् ॥ ११७२ ॥

तर्हि ब्रह्मविदोऽपि स्यातामेते विचिकित्से तत्कारणे च सुकृतदुष्कृते नेत्याह । एते इति । धर्माधर्मयोर्ब्रह्मविदस्पर्शे हेतुमाह । कथमिति । न हि तं स्पृष्ट्वाऽदृष्टं तपति तस्याविद्याकार्यत्वात्तद्रहितेऽस्मिन्नयोगादित्यर्थः ॥ ११७२ ॥

तापाय पुण्यमप्याहुः परिणामादिसंगतेः ॥
क्षयातिशययोगित्वात्तथा व्यासोऽप्यभापत ॥
तस्य स्थानवरिष्ठस्य सर्वे निरयसंज्ञिताः ॥ ११७३ ॥

पापस्य तापकत्वेऽपि पुण्यस्य तस्य तदभावात्तन्न तपतीत्यप्रसक्तनिषेधोऽयमित्याशङ्क्याऽऽह । तापायेति । आहुः सूत्रकारभाष्यकारप्रभृतयः श्रुतयश्चेति शेषः । तस्य पापवत्तापकत्वे हेतुमाह । परिणामादीति । पुण्यस्य हि फले परिणामवृद्ध्यादिसंबन्धात्क्षयेणातिशयेन च युक्तत्वाद्युक्तं तस्यापि तापकत्वमित्यर्थः । तत्र स्मृतिं प्रमाणयति । तथेति । व्यासवाक्यमेव लेशतो दर्शयति । तस्येति । ब्रह्मलोकाख्यस्थानस्य मोक्षस्थानस्य वाऽधस्ताद्भाविनः सर्वे लोका दुःखबहुलत्वान्नरकशब्दिता इति वदन्पुण्यमपि तापकं सूचयति स्मेत्यर्थः ॥ ११७३ ॥

न व्याप्नुतस्ते तं कस्मात्कर्मणी साध्वसाधुनी ॥
इतिहेतूपदेशार्थमुभे इति परं वचः ॥ ११७४ ॥

पुण्यापुण्ये ब्रह्मविदं न स्पृशतो न तपतश्चेत्यत्र श्रुतिमुखेन हेतुं वक्तुं प्रश्नपूर्वकमुत्तरवाक्यमादत्ते । नेत्यादिना ॥ ११७४ ॥

उभे एते तरत्येष विद्वांस्तद्धेतुबाधनात् ॥
उभे न तरतोऽतस्तमुभे न तपतश्च तम् ॥ ११७५ ॥

तद्व्याकरोति । उभे इति । तत्र हेतुः । तद्धेत्विति । कर्महेतोरविद्याया विद्यया

---

१ क. ख. 'न्तरमेव भो' । २ क. 'योऽनु' । ३ ख. तद' ।

बाधादिति यावत् । विदुषो धर्माद्यतिक्रमफलमभिलपन्नैनमित्यादेरर्थमाह । **उभे नेति** ॥ ११७५ ॥

**कृतं फलप्रदानेन प्रत्यवायेन चाकृतम् ॥**
**न तापयति कर्मैतन्नेति नेत्यात्मदर्शिनम् ॥ ११७६ ॥**

उभे न तपतस्तमित्येतत्प्रपञ्चयति । **कृतमिति** । तस्यातापकत्वे हेतुमाह । **नेतीति** ॥ ११७६ ॥

**पुण्यं वा यदि वा पापं न कर्मेहास्ति तादृशम् ॥**
**लोकोऽस्य मीयते येन ब्रह्मविद्याप्रकाशितः ॥ ११७७ ॥**

यद्यपि कर्म विद्वांसं न तापयति तथाऽपि विद्यया सह तत्फलं परिच्छिनत्तीत्यस्ति विदुषोऽपि कर्माधीनतेत्याशङ्क्याऽऽह । **पुण्यं वेति** । षष्ठीसप्तमीभ्यां विद्वानुच्यते ॥ ११७७ ॥

**न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः ॥**
**इति मन्त्रोऽपि चाऽऽनन्त्यमेकात्म्यस्यावदत्स्वयम् ॥ ११७८ ॥**

विद्याप्रकाशितात्मलोकस्यापरिच्छिन्नत्वे मानमाह । **न तस्येति** । तस्य तात्पर्यमाह । **इति मन्त्रोऽपीति** ॥ ११७८ ॥

**सर्वकर्मातिगं ब्रह्म प्रत्यङ्मात्रसतत्त्वकम् ॥**
**मन्त्रेणाप्यात्मनो रूपं तदेतदिति वर्ण्यते ॥ ११७९ ॥**

तदेतदित्यादेरर्थमाह । **सर्वेति** । अस्त्वेवंविधं ब्रह्म प्रतीचस्तु किमायातमित्याह । **प्रत्यङ्ङिति** । ब्राह्मणोक्तं ब्रह्मानूद्य तत्र मन्त्रप्रवृत्तिमाह । **मन्त्रेणेति** । तदिति ब्राह्मणोक्तब्रह्मोक्तिः । एतदिति संनिहितात्मरूपोक्तिः । इतिशब्देन तस्य प्रत्यक्षत्वं विवक्ष्यते ॥ ११७९ ॥

**एष योऽभिहितः पूर्वं तं साक्षाद्दृष्टवानृषिः ॥**
**तत्रैव निष्ठां यातः सन्मन्त्रमेतमुदीरयेत् ॥ ११८० ॥**

मन्त्रमवतार्य व्याख्यातुं प्रतीकमादत्ते । **एष इति** । तस्य प्रकृतत्वं सूचयति । **योऽभिहित इति** । ऋषिरिति मन्त्रद्रष्टोच्यते । कथमन्यदृष्टो मन्त्रोऽस्मद्दृष्टिपथमवतरति तत्राऽऽह । **तत्रैवेति** । मन्त्रार्थस्तच्छब्दार्थः ॥ ११८० ॥

**आ ब्रह्मणोऽस्य ये सिद्धा अविद्याकर्महेतुतः ॥**
**सर्वेऽपि महिमानोऽमी क्षणप्रध्वंसिनो मताः ॥ ११८१ ॥**

नित्यविशेषणस्य व्यावर्त्यमाह । **आ ब्रह्मण इति** । अस्येति षष्ठ्या प्रत्यग्ब्रह्मोच्यते । महिमशब्देनैश्वर्यविशेषो व्यपदिश्यते ॥ ११८१ ॥

---

१ ख. मुदीरयन् ।

**एष एवैकलो नित्यो बाह्यसाधननिस्पृहः ॥**
**महिमा ब्राह्मणस्योक्तो नेतीत्याद्युक्तिभिः पुरा ॥ ११८२ ॥**

संप्रत्याद्यपादस्य संपिण्डितमर्थमाह । **एष एवेति** । तस्यैव नित्यत्वे हेतुमाह । **बाह्येति** । ब्राह्मणस्य महिमेत्युक्तेर्भेदमाशङ्क्य विशिनष्टि । **उक्त इति** ॥ ११८२ ॥

**अस्यैकस्य स्वतः सिद्धेर्न वृद्धिः पुण्यकर्मभिः ॥**
**न च पापैः कनीयस्ता तस्यासाध्यत्वहेतुतः ॥ ११८३ ॥**

न वर्धते कर्मणेत्यादेरर्थमाह । **अस्येति** ॥ ११८३ ॥

**वृद्धिहानी यतो दृष्टे कर्मसाध्यस्य वस्तुनः ॥**
**कर्मानपेक्षसंसिद्धेः कथं ते भवतो वद ॥ ११८४ ॥**

श्रुत्यक्षरैरुक्तेऽर्थे युक्तिमाह । **वृद्धीति** । उत्पाद्यादिरूपस्यैव स्वर्गादेर्वृद्ध्यादिदृष्टमनुत्पाद्यादिरूपस्याऽऽत्मवस्तुनो न तत्सिध्यतीत्यर्थः ॥ ११८४ ॥

**स ब्राह्मण इति गिरा यः श्रुत्या प्रतिपादितः ॥**
**ग्रहणं ब्राह्मणस्येति तस्यैवेहाऽऽत्मवस्तुनः ॥ ११८५ ॥**

महिमा ब्राह्मणस्येत्यत्र ब्राह्मणशब्देन जातिग्रहणमाशङ्क्याऽऽह । **स इति** ॥ ११८५ ॥

**महिमा विद्यमानोऽपि तदविद्यासमुद्भव—**
**देहजात्यादिमानस्य वृद्धिहान्यादिसंगतेः ॥ ११८६ ॥**
**अविद्यमानवज्ज्ञेयो महिमाप्रतिबोधतः ॥**
**ब्राह्मणग्रहणेनातः कृतकृत्य इहोच्यते ॥ ११८७ ॥**

यदि ब्रह्मविदो निरुपाधिकात्मरूपेण स्थितस्य कहोलप्रश्नोक्तस्यात्र मन्त्रे ब्राह्मणशब्दत्वं तर्हि तस्याऽऽत्मनो ब्रह्मस्वरूपमहिमा नित्यत्वेनोपगतो नित्यं किमिति नोपलभ्यते तत्राऽऽह । **महिमेति** । विद्यमानोऽपि महिमा महिम्नोऽप्रबोधादविद्यमानवज्ज्ञेय इति संबन्धः । तत्र हेतुः । **तदविद्येति** । आत्माविद्योत्थदेहजन्मादिसंबन्धी स्वभावभूतो महिमा तथाचास्य वृद्ध्यादिसंबन्धादविद्यमानवत्प्रतीतिरित्यर्थः । निरुपाधिकब्रह्मस्वरूपस्य ब्रह्मविदो ब्राह्मणशब्दत्वे फलितमाह । **ब्राह्मणेति** । कहोलप्रश्नोक्तब्राह्मणस्यास्मिन्मन्त्रे ग्रहोऽतःशब्दार्थः ॥ ११८६ ॥ ११८७ ॥

**महिमैवंविधो यस्माद्ब्राह्मणस्यात आदरात् ॥**
**पदवित्स्यान्महिम्नोऽस्य महत्तज्ज्ञानतः फलम् ॥ ११८८ ॥**

तस्यैवेत्यादेरर्थमाह । **महिमेति** । एवंविधो वृद्धिहानिहीन इति यावत् । महिम्न-

---

१ क. ख. 'गतः कि' ।

स्त्वंपदार्थस्य[1] पदं ब्रह्म तज्ज्ञानी स्यान्मुमुक्षुरित्यर्थः । तं विदित्वेत्यादेस्तात्पर्यमाह । **महदिति** ॥ ११८८ ॥

**तत्त्ववित्स्यान्महिम्नोऽस्येत्येष मन्त्रो विधित्सितः[3] ॥**
**फलवादोऽर्थवादः स्यादस्यैव तु विधेः परः ॥ ११८९ ॥**

उक्तमेव विभजते । **तत्त्वविदिति** । तं विदित्वेत्यादिर्विधेः[4] परः फलवादोऽर्थवादः स्यादिति योजना ॥ ११८९ ॥

**महिम्नोऽस्यैव वा साक्षाद्वाक्यार्थप्रतिबुद्धये ॥**
**अन्वयव्यतिरेकाभ्यां स्यात्पदार्थविचक्षणः ॥ ११९० ॥**

यद्येष सार्थवादो विधिस्तर्हि वाक्यार्थज्ञाने विधीष्टेरपराद्धान्त इत्याशङ्क्य तस्येत्यादेरर्थान्तरमाह । **महिम्न इति** । महिम्नः पदं त्वमर्थरूपं तज्ज्ञानमत्र विधीयते तस्यैव पदवित्स्यादिति । किमर्थं तद्विधानं तत्राऽऽह । **साक्षादिति** । पदार्थज्ञानविधिमेवाभिनयति । **अन्वयेति** ॥ ११९० ॥

**यतः पदार्थसंबोधान्नेति नेत्यादिलक्षणम् ॥**
**महिमानं श्रुतेर्वेत्ति फलं चेत्स्यात्ततोऽपि किम् ॥ ११९१ ॥**

वाक्यार्थज्ञानार्थं पदार्थज्ञानं न विधेयं वाक्यादेव तदर्थज्ञानसिद्धेरित्याशङ्क्याऽऽह । **यत इति** । अज्ञातपदार्थस्य वाक्यार्थज्ञानायोगात्तादर्थ्येन पदार्थज्ञानमार्थितमित्यर्थः । वाक्यार्थज्ञानफलं पृच्छति । **फलं चेदिति** ॥ ११९१ ॥

**तं विदित्वेत्यतः प्राह फलं वाक्यार्थबोधतः ॥**
**यस्मादेवंफलं ज्ञानमेवंविद्यत्नतस्ततः ॥ ११९२ ॥**
**शमादिसाधनो भूत्वा महिम्नः पदविद्भवेत् ॥**
**इति मन्त्रोक्त एवार्थो ब्राह्मणेनापि वर्ण्यते ॥ ११९३ ॥**

मन्त्रभागेनोत्तरमाह । **तमिति** । तस्मादित्यादेस्तात्पर्यमाह । **यस्मादिति** । एवंफलमकर्मसंबन्धिस्वरूपावस्थानफलकमिति यावत् । एवंविदिति ज्ञानाद्यथोक्तफलत्वं विद्वानित्यर्थः । शमादेरायाससाध्यतां दर्शयितुं यत्नत इत्युक्तम् । **एष नित्यो महिमेत्यादिमन्त्रेणास्य** पुनरुक्तिमाशङ्क्याऽऽह । **इति मन्त्रेति** । मन्त्रब्राह्मणाभ्यामुक्तोऽर्थो भूयो ब्राह्मणेनोपस्क्रियमाणो द्रढिमानमनुभवतीति भावः ॥ ११९२ ॥ ११९३ ॥

**धर्माधर्मासमायोगो यस्मात्प्रत्यग्धियः फलम् ॥**
**एवंविदादरात्तस्मात्प्रत्यक्प्रवणधीर्नरः ॥ ११९४ ॥**

वाक्यतात्पर्यमुक्त्वा तत्पदार्थमाह । **धर्मेति** । तस्मादेवंवित्प्रत्यग्ज्ञानजन्मने विनियु-

---

१ क. °र्थस्तत्पदं । २ क. ख. घ. °ज्ञानात्स्यान्म° । ३ क. ख. विधिः स्मृतः । ४ क. ख. घ. °दि विधेः ।

ज्यत इति संबन्धः । एवंविदित्यस्यार्थमाह । आदरादिति । आत्मज्ञानफलं कर्मत-त्फलध्वास्तिरित्येवं जानन्नात्मधीः श्रद्धालुतया सदा प्रत्यक्प्रवणचित्तः स्यादि-त्यर्थः ॥ ११९४ ॥

उत्पन्नात्मबुभुत्सुः सन्वेदानुवचनादिभिः ॥
विरक्त आब्रजाल्लोकान्मोक्षादर्वाक्षु भूमिषु ॥ ११९५ ॥

प्रत्यक्प्रावण्ये कारणमाह । उत्पन्नेति । तस्य पूर्वेण संबन्धः । बुभुत्सोत्पत्तौ वेदानुवचनाद्यधीनधीशुद्धिं हेतुं सूचयति । वेदेति । ननु तदनुष्ठानेऽपि न सोऽपावर्तते सर्वेषां स्वभावतो विषयप्रावण्यादुक्तं हि स्वभावतो विषयविषयाणीन्द्रियाणीति तत्राऽऽह । विरक्त इति ॥ ११९५ ॥

संशुद्धधिषणोऽत्यर्थं वैदिकैरेव साधनैः ॥
पराङ्मुखीकृतः शुद्ध्या तैस्तैः सांसारिकैः फलैः ॥ ११९६ ॥

वैराग्ये हेतुमाह । संशुद्धेति । शुद्धिफलं कथयति । पराङिति ॥ ११९६ ॥

दुःखात्मकत्वात्सर्वेषां शिखिविन्यस्तहस्तवत् ॥ ११९७ ॥
इत्येवं ध्वस्तनिःशेषकल्मषः पूर्वसाधनैः ॥
उत्पन्नात्मबुभुत्सुः संस्त्यक्तसर्वपरिग्रहः ॥ ११९८ ॥

युक्तं सांसारिकेषु फलेषु पराङ्मुखत्वमित्याह । दुःखेति । नित्यादिकर्मभिः शुद्धबु-द्धेर्विवेककृतं वैराग्यं सिध्यतीत्युक्तमिदानीं विरक्तस्य पारिव्राज्यं विशेषणान्तरमाह । इत्येवमिति ॥ ११९७ ॥ ११९८ ॥

रजस्तमोजरागादिदोषानाक्षिप्तशेमुषिः ॥
मुमुक्ष्ववस्थां संप्राप्त एवं पूर्वोक्तसाधनैः ॥ ११९९ ॥

सर्वकर्मसंन्यासिनः शमादिसंपत्तिमाह । रज इति । उक्तं साधनत्रयमवेक्ष्य मुमुक्षुत्वं लम्भयति । मुमुक्ष्ववस्थामिति ॥ ११९९ ॥

मन्त्रब्राह्मणरूपिण्याऽथेदानीं विनियुज्यते ॥
श्रुत्याऽशेषतमोघातिप्रत्यग्ज्ञानस्य जन्मने ॥ १२०० ॥

साधनचतुष्टयविशिष्टमधिकारिणमुक्त्वा तस्य विधिसंबन्धमाह । मन्त्रेति । तस्यैव स्यात्पदविदात्मन्येवाऽऽत्मानं पश्येदिति श्रुत्या त्वंपदार्थविवेकादिसाधनेषूक्तोऽधिकारी नियुज्यते वाक्यार्थज्ञानार्थमित्यर्थः । तस्य यथोक्तसाधनातिरेकेणायोगोऽथशब्दार्थः । इदानीमिति वाक्यार्थज्ञानाकाङ्क्षादशोक्तिः ॥ १२०० ॥

---

१ ख. 'षे सा' ।

**एवं पूर्वोक्तमन्त्रार्थज्ञानतत्फलवित्सुधीः ॥**
**शमादिसाधनो विद्यादन्वयव्यतिरेकतः ॥**
**व्युत्थाप्यानात्मनः पश्येत्प्रविश्याऽऽत्मानमात्मना ॥ १२०१ ॥**

कथमधिकारिणो यथोक्तसाधनेषु मन्त्रब्राह्मणाभ्यां विनियुज्यमानत्वमित्यपेक्षायां विनियोगप्रकारमाह । **एवमिति** । कर्मानुष्ठानशुद्ध्यादिक्रमेणैष नित्यो महिमेत्यादिमन्त्रार्थज्ञानतत्फलवेत्ता भूत्वा बुद्धिपूर्वकारी देहादेरन्वयव्यतिरेकाभ्यामात्मानं निष्कृष्य स्वेन पूर्णात्मना तमेव प्रविश्य तदैक्यमासाद्य पश्येदिति यदुच्यते तदयं विवेकशमादिसाधनः सन्विद्यादित्येवं विवक्षितमित्यर्थः ॥ १२०१ ॥

**वाक्यादेव ततोऽसङ्गः सर्वमात्मेति वीक्षते ॥**
**इत्येतद्ब्राह्मणेनेह प्रयत्नेन विधीयते ॥ १२०२ ॥**

पदार्थज्ञानमधिकृत्य मन्त्रेण विनियोगे फलितमाह । **वाक्यादिति** । पदार्थज्ञानानन्तरं देहाद्यभिनिवेशशून्योऽधिकारी तत्त्वमादिवाक्यादखण्डैकरसमात्मानमनुभवत्येवेत्यर्थः । ब्राह्मणेन तर्हि किमित्येष नियुज्यते तत्राऽऽह । **इत्येतदिति** । इतिशब्देन शमाद्युच्यते तच्चेदं ब्राह्मणेन वाक्यार्थबुद्धावुद्देश्यायां तात्पर्येण विधीयते न च तन्मन्त्रेण विहितं न च तद्विना वाक्यार्थधीरतस्तज्ज्ञानमुद्दिश्य शमादि विधातुं ब्राह्मणमित्यर्थः ॥ १२०२ ॥

**दान्तो भूत्वा ततः शान्तस्ततश्चोपरतो भवेत् ॥**
**अर्थक्रमो बलीयान्स्याद्यतः पाठक्रमादिह ॥ १२०३ ॥**

पदद्वयं व्याख्याय पदान्तराणि व्याचिख्यासुरादौ पाठक्रमं भङ्क्त्वा क्रमान्तरमाह । **दान्त इति** । पाठक्रमभङ्गे हेतुः । **अर्थेति** । इहेति श्रौतं पन्थानं निर्दिशति ॥ १२०३ ॥

**क्रियानिवृत्तिविषये प्रयोगो जगतीक्ष्यते ॥**
**अभिधानस्य शान्तादेः[१] प्रत्यक्षेणेह सर्वतः ॥ १२०४ ॥**

कोऽसावर्थक्रमो यस्य बलीयस्त्वमित्याशङ्क्य पदपञ्चकस्य साधारणमर्थमाह । **क्रियेति** । इह जगतीति संबन्धः । सर्वतः सर्वत्र व्युत्पत्तिभूमावित्यर्थः । प्रत्यक्षेण व्युत्पत्तिजनितस्वानुभवेनेत्यर्थः ॥ १२०४ ॥

**बहिष्करणचेष्टाया निवृत्तौ दान्त उच्यते ॥**
**दान्तोऽश्वो गौर्गजो वाऽपि प्रयोगस्तत्र वीक्ष्यते ॥ १२०५ ॥**

इदानीमर्थक्रमेण दान्तपदं व्याचष्टे । **बहिरिति** । तत्र वृद्धप्रयोगं प्रमाणयति । **दान्त इति** । बाह्यकरणचेष्टादिनिवृत्तिः सप्तम्यर्थः ॥ १२०५ ॥

---

१ क. ग. शान्त्यादेः ।

**अन्तःकरणचेष्टाया निवृत्तौ शान्त उच्यते ॥**
**शान्तो भिक्षुस्तपस्वीति तत्प्रयोगसमीक्षणात् ॥ १२०६ ॥**

शान्तशब्दं व्याकरोति । **अन्तःकरणेति** । तत्प्रयोगसमीक्षणात्तस्मिन्नन्तःकरण-चेष्टानिवृत्तिविशिष्टे पुंसि शान्तशब्दस्य प्रयोगदृष्टेरित्यर्थः । अयं भावः । बाह्यकर-णानां विषयाभिनिवेशनिवृत्तिमन्तरेणान्तःकरणस्य विषयासङ्गो न व्यावर्तते न हि विष-यविमुखा धीर्बाह्यानि करणानि तदभिनिवेशभाञ्जीति युज्यते तदव्यावृत्तावपि तदुपरमः संभवति **कर्मेन्द्रियाणि** संयम्य य आस्ते मनसा स्मरन्निति स्मृतेस्तद्यथोक्तमर्थक्रममा-श्रित्य पाठक्रमातिक्रमो यदि तु शान्तदान्तशब्दयोर्भाष्योक्तोऽर्थो वृद्धप्रयोगमनादृत्यो-पेयते तदा पाठक्रमोऽपि स्यादिति ॥ १२०६ ॥

**नन्वप्राप्तौ विधिर्युक्तः प्राप्तास्त्वेते दमादयः ॥**
**कुतस्तत्प्राप्तिरिति चेद्यथा प्राप्तिस्तथोच्यते ॥ १२०७ ॥**

शमादीनां विधेयत्वमाक्षिपति । **नन्विति** । शमादीनामपि तुल्यमप्राप्तत्वमित्या-शङ्क्याऽऽह । **प्राप्तास्त्विति** । प्रापकाभावाद्विधिं विना तेषां न प्राप्तिरित्याह । **कुत इति** । प्रापकोक्त्या प्राप्तिस्तेषां प्रदर्श्यत इत्याह । **यथेति** ॥ १२०७ ॥

**प्रतिषिद्धं तथा काम्यं चापलं नित्यमेव च ॥**
**इयदेव जगत्यस्मिन्पुंसां कर्म समीक्ष्यते ॥ १२०८ ॥**

तदर्थमादौ कर्मणां चातुर्विध्यमाह । **प्रतिषिद्धमिति** । चापलं प्रामादिकं प्रायश्चि-त्तार्हं कर्म । कर्मान्तरसत्त्वं निरस्यति । **इयदेवेति** ॥ १२०८ ॥

**निषिद्धस्य निषिद्धत्वात्कर्मकाण्डेऽपि कर्मणः ॥**
**कुतो वेदान्तविद्यायां तस्य प्राप्तिर्मनागपि ॥ १२०९ ॥**

संप्रत्युपपत्त्या शमादि प्रापयन्निषिद्धध्वस्तेर्विधिं विना प्राप्तिमाह । **निषिद्धस्येति** । वेदान्तविद्यायामिति ज्ञानकाण्डोक्तिः ॥ १२०९ ॥

**मुक्तेरर्वाक्षु काम्येषु मुमुक्षुत्वाद्विरक्ततः ॥**
**काम्यकर्मापि नैवेह मुमुक्षोः संभवत्यतः ॥ १२१० ॥**

कर्मकाण्डाभिव्याहारात्काम्यकर्मणामपि ध्वस्तेर्विना विधिं प्राप्तिमाह । **मुक्तेरिति** । मुक्त्यतिरिक्तकाम्येषु सूत्रादिपदेषु विरक्तत्वे हेतुमाह । **मुमुक्षुत्वादिति** । वैराग्य-फलमाह । **काम्येति** । इहेति वेदान्तविद्योक्तिः । अतःशब्दो विरक्तत इत्यनेन संबध्यते ॥ १२१० ॥

**रजस्तमोतिवर्तित्वात्सत्त्वसंशुद्धिहेतुतः ॥**
**चापलान्यपि कर्माणि नातः सन्त्यस्य कानिचित् ॥ १२११ ॥**

चापलनिवृत्तेर्विधिमनपेक्ष्य प्राप्तिं दर्शयति । **रज इति** । मुमुक्षोर्गुणद्वयातिवर्तित्वे हेतुमाह । **सत्त्वेति** । अतःशब्दोऽप्यत्रैव स्पृश्यते ॥ १२११ ॥

**न पाणिपादचपल इत्युक्तेर्वा निषेधतः ॥**
**नातः संभाव्यते कर्म मुमुक्षोश्चापलं क्वचित् ॥ १२१२ ॥**

"न पाणिपादचपलो न नेत्रचपलो भवेत् ।
न स्याद्वाक्चपलश्चैव न परद्रोहकर्मधीः" ॥

इतिस्मार्तनिषेधानुरोधादपि विधिं विना चापलध्वस्तिरित्याह । **न पाणीति** । वाशब्दश्चार्थे ॥ १२१२ ॥

**नित्यस्याकरणाद्यः स्यादनर्थः करणादपि ॥**
**नित्यस्यावाप्यतेऽसौ चेद्वद किं नित्यकर्मणा ॥ १२१३ ॥**

नित्यकर्मणामपि ध्वस्तिर्विध्यनपेक्षा सिध्यतीति वक्तुं तत्करणाकरणयोरनर्थकरत्वमाह । **नित्यस्येति** । असावित्यनर्थो गर्भवासादिरुच्यते ॥ १२१३ ॥

**एवं नित्यानि कर्माणि कुर्वतः शुद्धचेतसः ॥**
**तित्यक्षा जायते पुंसो नित्येष्वपि च कर्मसु ॥ १२१४ ॥**

तर्हि तेषामत्यन्तमेवानादरो नेत्याह । **एवमिति** । यावज्जीवश्रुतिवशेनेति दर्शयितुमेवमित्युक्तम् । कर्मान्तराणि दृष्टान्तयितुमपि चेत्युच्यते ॥ १२१४ ॥

**संसारमोक्षणायाऽऽशु नित्यं कर्म न चेदलम् ॥**
**कोऽर्थस्तेनेह पुंसः स्यादकृतेन कृतेन वा ॥ १२१५ ॥**

त्यागेच्छाप्रकारमभिनयति । **संसारेति** । आशु झटिति साक्षादिति यावत् । इहेति मोक्षोक्तिः ॥ १२१५ ॥

**इति संजातपरमवैराग्यो नित्यकर्मणः ॥**
**स्वतस्त्यागं करोत्येव प्राप्तास्तेन शमादयः ॥ १२१६ ॥**

तित्यक्षाफलमाह । **इति संजातेति** । शमादीनां विधिं विनोपपत्त्या प्राप्तिमुक्तामुपसंहरति । **प्राप्ता इति** ॥ १२१६ ॥

**यमान्सेवेत सततं न नित्यं नियमान्बुधः ॥**
**यमान्पतत्यकुर्वाणो नियमान्केवलान्भजन् ॥ १२१७ ॥**

न केवलमुपपत्तितस्तत्प्राप्तिः किंतु स्मार्तविधिनाऽपीत्याह । **यमानिति** । देशकालावस्थाभिरनियता बुद्धिशुद्धिहेतवो ब्रह्मचर्यादयो यमाः । **उक्तं हि**—अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमा **इति** । देशकालावस्थापेक्षिणः शुद्धिहेतवः क्रियाविशेषा देवताप्रणिधानादयो नियमाः । **उक्तं च**—शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमा इति । उक्तस्य विधेरर्थवादं दर्शयति । **यमानिति** ॥ १२१७ ॥

**सत्यमेवं शमादीनां प्राप्तत्वान्नेष्यते विधिः ॥**
**प्राप्तानामेव तेषां तु साधनत्वं विधीयते ॥**
**प्रत्यग्याथात्म्यविज्ञानजन्मने श्रुतिवाक्यतः ॥ १२१८ ॥**

प्राप्तत्वहेतुना शमादीनां स्वरूपे वा विधिर्निरस्यते तत्त्वज्ञानहेतुत्वे वेति विकल्प्याऽऽद्यमङ्गी करोति । **सत्यमिति** । द्वितीयं प्रत्याह । **प्राप्तानामिति** ॥१२१८॥

**यथोक्तविषये तेषां साधनत्वं न मानतः ॥**
**यतः प्राप्तमतः श्रुत्या साधनत्वं विधीयते ॥ १२१९ ॥**

ज्ञानसाधनत्वमपि प्राप्तत्वान्न विधेयमित्याशङ्क्याऽऽह । **यथोक्तेति** । प्रत्यग्याथात्म्यज्ञानजन्मनीति यावत् । श्रुत्या शमादिवाक्येनेत्यर्थः ॥ १२१९ ॥

**निवृत्तिमात्रं प्राप्तं वा भवेदुक्तेन वर्त्मना ॥**
**कर्तव्यता निवृत्तेस्तु न प्राप्तेति विधीयते ॥ १२२० ॥**

इतश्च तेषां विधेयतेत्याह । **निवृत्तीति** । उक्तं वर्त्म निषिद्धस्य निषिद्धत्वादित्यादि । वाशब्दो विधान्तरद्योतनार्थः । यद्वा शमादीनां विधेयत्वमुपसंहरति । **निवृत्तीति** । वाशब्दोऽवधारणार्थः ॥ १२२० ॥

**ननु दान्तशमोक्त्यैव सर्वस्यैवेह कर्मणः ॥**
**वारितत्वादुपरतश्रुत्याऽन्यत्किं विधीयते ॥ १२२१ ॥**

शमादीनां विधेयत्वमौपाद्योपरतश्रुतिव्यावर्त्यां शङ्कामाह । **नन्विति** ॥ १२२१ ॥

**बहिरन्तःक्रियातोऽन्या न क्रिया विद्यते यतः ॥**
**नोत्सर्गविधिना यस्मान्नापवादस्य बाधनम् ॥ १२२२ ॥**

शान्तिदान्तिभ्यामनिवारितक्रियानिवारणार्थमुपरतश्रुतिरित्याशङ्क्याऽऽह । **बहिरिति** । अतस्तयोर्वारितत्वादुपरतश्रुतिरनार्थिकेति शेषः । दूषयति । **नेति** । उपरतश्रुतेरपुनरुक्तं विषयं वक्तुं सामान्यन्यायमाह । **उत्सर्गेति** । एकस्य निषेधविधेः स्वविषयस्य क्रत्वर्थत्वेन पुरुषार्थत्वेन च विनियोगे विरोधात्सामान्यविषयत्वे च पुरुषार्थहिंसासु सावकाशस्य न क्रत्वर्थहिंसाविषयत्वं तदाऽधिकारान्तरानुप्रवेशित्वेन सापेक्षत्वप्रसङ्गादतो नोत्सर्गेणापवादस्य बाधोऽस्तीत्यर्थः ॥ १२२२ ॥

**भूताहिंसाविधिर्यस्मान्नाग्नीषोमीयमारभित् ॥**
**ऊर्ध्वं प्राणा उत्क्रामन्ति यूनः स्थविर आयति ॥ १२२३ ॥**

तत्र श्रौतदृष्टान्तमाह । **भूतेति** । न हिंस्यात्सर्वभूतानीति निषेधस्य निषेध्याधीननिरूपणत्वात्तस्य च रागप्राप्तत्वेन पुरुषार्थत्वात्तन्निषेधस्यापि तादर्थ्याद्रागप्राप्तहिंसानुवा-

* उपपाद्येत्यर्थकं ज्ञेयम् ।

१ ख. तदधि° । २ ख. ग. °रनुत् । ३ ख. °त्सर्वा भू° ।

देन नञर्थे विध्युपसंक्रान्तेर्यत्पुरुषार्थभूतहिंसनं तन्न कुर्यादिति वाक्यार्थावसानात्पुरुषार्थ-निषेधो न क्रत्वर्थमप्यास्कन्दत्यन्यथा वाक्यभेदान्न हि न हिंस्यादिति क्रतुप्रकरणे तौ न पशौ करोतीतिवदाम्नातं तस्माद्भिन्नगोचरचारित्वान्न भूताहिंसाविधिरग्नीषोमीयहिंसा-बाधक इति भावः । तत्रैव स्मार्तदृष्टान्तमाह । ऊर्ध्वमिति ॥ १२२३ ॥

प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥
इत्यौत्सर्गिकमाचारं यथा ब्रह्मा प्रबाधते ॥ १२२४ ॥

तर्हि स्थविरदर्शी युवा कथं पुनर्जीवति तत्राऽऽह । प्रत्युत्थानेति । ऋत्विग्विशेषो ब्रह्मन्प्रवर्ग्येणेत्यादौ संबोध्यमानो ब्रह्मेत्युच्यते ॥ १२२४ ॥

आगच्छति गुरौ तूष्णीमासीनस्तद्वदत्र च ॥
औत्सर्गिकत्यागविधिं नित्यकर्मविधिर्बलात् ॥
तस्य जीवनमात्रैकहेतुत्वाद्बाधते ध्रुवम् ॥ १२२५ ॥

स कथमौत्सर्गिकमाचारं बाधते तत्राऽऽह । आगच्छतीति । तस्य वागादिविसर्गे कर्मभ्रंशादित्यर्थः । दार्ष्टान्तिकमाह । तद्वदिति । अत्रेति शमादिवाक्योक्तिः । त्याग-विधिः शान्तो भवेदित्यादिः । कथं यावज्जीवादिविधिस्तस्य बाधको द्वयोर्वैदिकविधि-त्वाविशेषात्तत्राऽऽह । तस्येति ॥ १२२५ ॥

नित्यकर्मविधेर्यस्माच्छमादिविधिना हतिः ॥
न संभाव्यत्यतो यत्नात्प्रारब्धोपरतश्रुतिः ॥ १२२६ ॥

शमादिविधेरौत्सर्गिकस्यापवादतया प्रवृत्तयावज्जीवादिविधेरपवादार्थमुपरतश्रुतिरिति फलितमाह । नित्येति । उत्सर्गापवादयोरपवादस्य बलवत्त्वमतःशब्दार्थः । न च शमादिश्रुतेर्यावज्जीवश्रुतेश्च विपरीतमुत्सर्गापवादत्वं हिंसाहिंसाश्रुत्योरपि तथा प्रसङ्गा-त्सामान्यविशेषविषयत्वेन तयोरुत्सर्गापवादत्वं प्रकृतेऽपि तुल्यं शमादिविधेरन्तर्बहिश्चेष्टा-मात्रनिवृत्तिविषयस्य सामान्यविषयत्वेनोत्सर्गत्वाद्यावज्जीवश्रुतेरग्निहोत्रादिविषयत्वेनाप-वादत्वादतस्तदपवादार्थमुपरतश्रुतिरिति भावः । अतो यत्नादुक्तन्यायादगतार्थत्वसंभवा-दिति यावत् ॥ १२२६॥

इह चोपरतश्रुत्या तिष्ठत्यादिवदुच्यते ॥
कर्माकर्मैव पुंसोऽस्य ह्यनुष्ठेयतयाऽऽमृतेः ॥ १२२७ ॥

उपरतिर्विधीयते चेद्यागादिवत्कर्म स्याद्विधेर्भावार्थविषयत्वनियमात्तथा च तद्वदेव त्याज्य-ताऽन्यथा यागादेरप्युपादेयतेत्याशङ्क्याऽऽह । इह चेति । यथा तिष्ठति स्वपितीत्या-दिना क्रियानिवृत्तिरेवोच्यते तथोपरतश्रुत्या नित्यकर्मनिवृत्तिरूपमकर्मैव यावन्मरणमनुष्ठे-

---

१ घ. °वेद्या° ।

यमस्मिन्वाक्ये विवक्ष्यतेऽतो यागादिसदृशकर्मविधिष्विवाग्निषेधेष्विव विध्यवसानान्नोक्तानुपपत्तिरित्यर्थः ॥ १२२७ ॥

(श्रुत्या)

अनुष्ठेयतया श्रुत्या निवृत्तिः सर्वकर्मणाम् ॥
यस्माद्विधीयते तस्मात्तत्त्यागी पतितो भवेत् ॥ १२२८ ॥

अथोपरतश्रुतेरभिप्रायं दर्शयति । अनुष्ठेयतयेति । स्वीकृतपारमहंस्यो जीवन्नेव तत्त्यजन्नस्पृश्यः स निरयार्हः स्याद्बहिस्तूभयथाऽपीति न्यायादित्यर्थः ॥ १२२८ ॥

इत्यत्र चोदयित्वैके परिहारं प्रचक्षते ॥
नित्यानां कर्मणां कस्मात्परित्यागो विधीयते ॥ १२२९ ॥

उपरतश्रुतिर्नित्यकर्मनिवृत्त्यर्थेत्युक्तेऽर्थे चोद्यसमाधी परकीयावुद्भावयति । इत्यत्रेति । कौ तावित्याकाङ्क्षायां चोद्यं तावद्दर्शयति । नित्यानामिति । यावज्जीवश्रुतिचोदितानामकस्मात्त्यागायोगो न चोपरतश्रुतिस्तत्त्यागे हेतुस्तस्याः काम्यकर्ममात्रत्यागार्थत्वात्काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुरिति स्मृतेः शमदमश्रुतिभ्यामेव तत्सिद्धेस्तद्वैयर्थ्ये सिद्धं नः समीहितमिति भावः ॥ १२२९ ॥

काम्यादिकर्मवत्तेषां मनोव्याक्षेपहेतुतः ॥
त्यागोऽतश्चोद्यते श्रुत्या नित्यानामपि कर्मणाम् ॥ १२३० ॥

तत्र परकीयं समाधिमाह । काम्यादीति । अतःशब्दस्य पूर्वपञ्चम्या संबन्धः ॥ १२३० ॥

भूत्वा समाहित इति समाधानं विधास्यते ॥
चोद्यस्यासंभवोऽस्यात्र श्रुत्यैव विहितत्वतः ॥ १२३१ ॥
साधनत्वेन शान्त्यादेः सम्यग्ज्ञानस्य जन्मने ॥
नातश्चोद्यावकाशोऽत्र शमादेर्विहितत्वतः ॥ १२३२ ॥

नित्यकर्मणां चित्तविक्षेपकत्वेऽपि तत्त्यागादृते मुमुक्षूणामपेक्षितज्ञानस्य काम्यादित्यागादेव सिद्धेस्तत्त्यागचोदना वृथेत्याशङ्क्याऽऽह । भूत्वेति । ज्ञानार्थिनश्चित्तसमाधिविधेस्तद्विक्षेपस्य तद्विरोधित्वान्मुमुक्षुणा तद्धेतुधियमिच्छता चित्तविक्षेपकरं नित्यमपि कर्म त्याज्यमेवेत्यर्थः । परेषां चोद्यमाक्षिपति । चोद्यस्येति । आत्मनि धीहेतुत्वेन संन्यासादेः श्रुत्यैव विहितत्वान्नित्यत्यागायोगचोद्यमनवकाशं न च काम्यादिमात्रत्यागार्थोपरतश्रुतिः शमादिश्रुत्या पुनरुक्तेर्न चोपरतवचनं प्रमत्तगीतं नोत्सर्गविधिनेत्यादिन्यायेन सति गत्यन्तरे वैदिकोक्तित्यागायोगात्तुल्यं हि सांप्रदायिकमिति भावः । तदेव दृष्टान्तेन स्पष्टयितुमनुभाषते । नात इति । अत्राऽऽत्मनि ज्ञानमुद्दिश्य शमादेर्विहितत्वान्न चोद्यं सावकाशमित्यर्थः ॥ १२३१ ॥ १२३२ ॥

---

१ ख. घ. °त्यागे चो° । २ घ. °दिश्यातः श° ।

**साध्यसाधनसंबन्धविधाने सत्यसंभवः ॥**
**स्वर्गादाविव यथा वैधानादेव कारणात् ॥ १२३३ ॥**

सत्यपि शमादिविधौ किमिति चोद्यं नोल्लसेदित्याशङ्क्याऽऽह । **साध्येति** । यथा स्वर्गादौ साध्ये यागादेः साधनत्वं ज्योतिष्टोमादिवाक्येन विधीयते तथा सम्यग्ज्ञानोदयस्य कर्मत्यागस्य च साध्यसाधनत्वेन संबन्धविधौ श्रौते विधेरेव कर्मत्यागसंभवात्कथं नित्यत्यागायोगचोद्योल्लासोऽस्ति हि मुमुक्षोरुपरतः स्यादिति विधिस्तथाच ततो नित्यत्यागे चोद्यायोगान्न समाधिरपि साधीयानित्यर्थः ॥ १२३३ ॥

**दोषान्तरप्रसङ्गार्थं परिहारः कृतस्ततः ॥**
**चोद्यपूर्वक एतस्मिन्नन्यचोद्यस्य संभवात् ॥ १२३४ ॥**

सिद्धान्ती समाधत्ते । **दोषान्तरेति** । अस्यार्थः—यावज्जीवश्रुतिविहितनित्यकर्मत्यागो न युक्तिमानितिचोद्यपूर्वकमनोविक्षेपकत्वात्काम्यादिवत्त्यागो नित्यानामिति समाधौ चोद्यान्तरस्य संभवादसच्चोद्यमादावुद्भाव्य समाधिस्तस्य विहितस्ततो दोषान्तरमापाद्य समाधेयमिति परेषामिष्टमिति ॥ १२३४ ॥

**यदि व्याक्षेपकारित्वान्नित्यं कर्म निषिध्यते ॥**
**बहु भिक्षाटनाद्यस्ति तत्कस्मान्न निषिध्यते ॥ १२३५ ॥**

किं तच्चोद्यान्तरं यद्दोषान्तरप्रसङ्गरूपं परिजिहीर्ष्यते तदाह । **यदीति** । नित्यकर्मणश्चित्तविक्षेपकत्वादुपरतश्रुत्या निषेधे विक्षेपकत्वाविशेषाद्भिक्षाटनाद्याश्रमधर्मस्यापि निषेधः स्यात्तथाच तद्धीनः संन्यासी भ्रष्टो न पुरुषार्थाय स्यात् ।

" आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः ।
प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा " ॥

इति भ्रष्टस्यासमाधेयपतनस्मृतेरित्यर्थः ॥ १२३५ ॥

**वेदान्तश्रवणाद्यस्ति बहु व्याक्षेपकारि च ॥**
**तन्नित्यकर्मवत्कस्माच्छ्रुत्येह न निषिध्यते ॥ १२३६ ॥**

भिक्षाटनादेः श्रवणाद्यर्थत्वान्न निषेधोऽस्तीत्याशङ्क्य तस्यापि विक्षेपकत्वान्मुमुक्षुविषये निषेधप्राप्तेर्मैवमित्याह । **वेदान्तेति** ॥ १२३६ ॥

**नैष दोषः प्रधानार्थसमाप्तेरेव कारणात् ॥**
**भिक्षाटनाद्यनुष्ठानं तादर्थ्यान्न निषिध्यते ॥ १२३७ ॥**

नित्यकर्मवद्भिक्षाटनादेः श्रवणादेश्चोपरतश्रुत्या त्यागो न प्राप्नोतीत्याह । **नैष इति** । तत्र हेतुः । **प्रधानेति** । भिक्षाटनादेः श्रवणादेश्चोभयविधाद्धेतोर्ज्ञानाख्यार्थस्य प्रधानस्य सम्यगाप्तेर्न प्रधानार्थिनः संन्यासिनस्तत्त्यागसिद्धिः प्रधानविघातादित्यर्थः । यत्ता-

---

१ क. ग. 'स्मिन्नान्य' । २ ख. बः । ग. त ।

वद्भिक्षाटनाद्युपरतश्रुत्या निषेध्यमिति तद्दूषयति । **भिक्षेति** । ज्ञानार्थत्वान्मुमुक्षुणा तदनुष्ठेयमन्यथा जीवनायोगात्प्रधानासिद्धेस्तन्नोपरतश्रुत्या तन्निषेध्यमित्यर्थः ॥ १२३७ ॥

**प्रत्यग्याथात्म्यविज्ञानसमाप्त्याऽपेक्षितत्वतः ॥**
**वेदान्तश्रवणादीनां न त्यागोऽतोऽत्र भण्यते ॥ १२३८ ॥**

यत्तु वेदान्तश्रवणाद्यस्तीत्यादि तत्राऽऽह । **प्रत्यगिति** । अतःशब्दोऽपेक्षितत्वत इत्यनेन युज्यते । अत्रेति प्रकृतवाक्योक्तिः । श्रवणादित्यागे ज्ञानासिद्धेर्जिज्ञासोस्तत्त्यागायोगात्तद्विविधसाधनसंपादनकाले विक्षेपो भवन्नपि भुजिकालश्रमवत्प्रधानाविरोधीति भावः ॥ १२३८ ॥

**समाप्तिं न समायाति प्रधानं यदसंभवे ॥**
**निषिद्धमपि तत्कार्यं तत्समाप्तिप्रयुक्तितः ॥ १२३९ ॥**

उपरतश्रुत्या प्रधानार्थत्वादनिषेधः श्रवणादेरित्युक्त्वा निषेधमङ्गीकृत्यापि मुमुक्षुणा तस्य कार्यत्वमाह । **समाप्तिमिति** ॥ १२३९ ॥

**प्रधानचोदनैवास्य चोदनातोऽवगम्यते ॥**
**भिक्षाटनादिना नर्ते प्रधानं हि समाप्यते ॥ १२४० ॥**

तत्समाप्तिप्रयुक्तित इत्येतत्प्रपञ्चयति । **प्रधानेति** । ज्ञानोपदेश एव श्रवणादेः प्रापको भातीत्यत्रातःशब्दोक्तं हेतुं व्यनक्ति । **भिक्षेति** । न हि संन्यासिनो विना भिक्षादिना देहधारणं न च तद्विना तस्य ज्ञानमागन्तुकं युक्तं शरीरं मे विचर्षणमित्यादिश्रुतेर्नापि श्रवणाद्यभाव एव तत्त्वबोधो युक्तो द्रष्टव्यादिश्रुतेस्तन्निषिद्धमपि प्रधानानुरोधि कार्यं तद्विधिनाऽऽक्षिप्ततया निषेधस्याकिंचित्करत्वादित्यर्थः ॥ १२४० ॥

**शेषभक्षं न कुर्वन्ति प्रधानार्थानुरोधतः ॥**
**साक्षाद्विहितमप्येवं तादर्थ्यात्कर्म नो मतम् ॥ १२४१ ॥**

प्रधानार्थिना निषिद्धमपि प्रधानानुरोधादुपादानप्रमाणात्कर्तव्यमित्युक्तम् । इदानीं विहितमपि प्रधानविरोधि त्याज्यमिति तार्तीयोदाहरणेन दर्शयति । **शेषेति** । अस्यार्थः—यदि राजन्यं वैश्यं वा याजयेत्स यदि सोमं बिभक्षयिषेन्न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेदित्यत्र फलचमसो भक्षविकारो यागविकारो वेति विशये तमस्मै भक्षं प्रयच्छेदिति श्रुतेर्भक्षे स सोमं विकरोतीति पूर्वपक्षे श्रुत्या भक्षान्वयेऽपि यागशेषद्रव्यसंस्कारार्थतया तस्यावगतत्वात्फलचमसस्य यागसाधनत्वं विना तदयोगाद्यथाऽयं शेषभक्षस्तथा कुर्यादित्यनया भङ्ग्या योगसंबन्धस्यैव विधानाद्भक्षणमपि सोमकार्यापत्त्याऽर्थप्राप्तमनूद्यत इति राद्धान्तितमिज्याविकारो वा संस्कारस्य तदर्थत्वादित्यत्र तत्र यथा तमस्मै भक्षं प्रयच्छेदिति साक्षाद्विहितमपि शेषभक्षं प्रधान-

---

१ घ. °नार्थितानु° । २ घ. यागेन सं° ।

सोमयागविरोधाद्राजन्यादयो न कुर्वन्ति किंतु तदनुरोधेनैव तमाचरन्ति न सोममिति च श्रूयते तथेहापि प्रधानवशाद्विहितस्यापि विरोधिनस्त्यागो नाविरुद्धस्येति । अथवाऽधिकारलक्षणे स्थितं निर्देशाच्छेषभक्षोऽन्यप्रधानत्वाद्दर्शपूर्णमासयोर्ये शेषभक्षास्ते किमृत्विग्भ्योऽन्यैरेव कर्तव्याः किंवा तैरेवेति संशये सर्वभक्षेषु कर्मकरत्वेन प्राप्तानामृत्विजां यजमानपञ्चमा इडां भक्षयन्तीति पुनरिडायाः श्रवणाद्भक्षान्तरपरिसंख्यानादिडामेवैते भक्षयन्तीति नियमादन्येष्वन्यभक्षेष्वितर इति प्राप्ते यजमानस्याकर्मकरत्वेनाप्राप्तस्य प्रापकं यजमानपञ्चमा इत्यादिवचनमित्यङ्गीकाराद्भक्षान्तराणामपरिसंख्यातत्वात्तेष्वपि प्रकृतानामेव प्रधानकर्मानुरोधेन कर्तृत्वान्नान्येषामिति राद्धान्तितं तत्र यथा साक्षाद्विहितमपि शेषभक्षं प्रधानपूर्णमासानुरोधादृत्विग्भ्योऽन्ये न कुर्वन्त्यृत्विजामेव दर्शपूर्णमासकर्तृतया तदीयशेषभक्षेऽपि कर्तृत्वनिश्चयात्तथा प्रकृते निषिद्धमपि प्रधानाविरुद्धमेष्टव्यं तद्विरुद्धं तु विहितमपि त्याज्यमिति । अथवाऽभिषुत्य हुत्वा भक्षयन्तीति समानकर्तृकत्वश्रुतेरभिषवादिपदेन तत्साक्षाद्विहितमपि शेषभक्षं न प्रधानीभूतप्रयोजनानुरोधादनुतिष्ठन्ति न हि शेषभक्षप्रतिबद्धं किमपि फलमभिलप्यते किंतु प्रतिपत्तिकर्मतया तमाचरन्ति तथा प्रतिपत्तिकर्मभूतसर्वकर्मत्यागं विरक्ता मुमुक्षवोऽनुतिष्ठन्तोऽपि प्रधानीभूतसम्यग्ज्ञानानुरोधादेव भिक्षाटनादि न त्यजन्तीति । अथवा होमादिवत्तुल्यकर्तृकत्वश्रुत्या मुखतो विहितमपि शेषभक्षणं न रौद्रस्येडामवद्यतीति रौद्रे गावीधुके चरौ प्रतिषेधान्न कुर्वन्ति प्रकृते तु प्रधानभूतसम्यग्ज्ञानानुरोधादनिषेधाच्च भिक्षाचर्याद्यविरुद्धमिति विरोधिनस्त्याग इति प्रधानार्थिना विहितमपि विरोधि त्याज्यं निषिद्धत्वादविरोध्यनुसर्तव्यमित्युक्तिद्वारा श्रवणादेर्ज्ञानोपायत्वादनुष्ठानावस्थायामर्थप्राप्तो विक्षेपो न ज्ञानोत्पत्तिविरोधीत्युक्तमिदानीं कर्मणोऽपि तादर्थ्यात्तदनुष्ठानकालिकमनोविक्षेपस्य तदविरोधित्वान्मुमुक्षुणा तदत्याज्यमित्याशङ्क्याऽऽह । **एवमिति ।** यथा श्रवणादि ज्ञानसाधनं दर्शनमनूद्य तदुपायत्वेन विधानान्न तथा कर्म साक्षात्तत्साधनं विविदिषन्तीति व्यवधानश्रुतेस्तस्य चित्तशुद्ध्यर्थत्वादतः शुद्धबुद्धेर्मुमुक्षोस्त्याज्यमेव कर्म फलाभावादित्यर्थः ॥ १२४१ ॥

**याः काश्चिज्जीवता शक्यास्त्यक्तुं वित्यक्षता क्रियाः ॥**
**ताः सर्वाः संपरित्यज्य निमेषादौ व्यवस्थितः ॥ १२४२ ॥**

मुमुक्षोः श्रवणाद्यतिरिक्ताशेषकर्मत्यागे स्मृतिं प्रमाणयति । **याः काश्चिदिति ।** शक्या भिक्षाटनादिव्यतिरिक्ता जीवतेति विशेषणात्तित्यक्षता त्यक्तुमिच्छता विरक्तेनेति यावत् । निमेषादौ काले स्थितो झटिति ताः सर्वास्त्यक्त्वा ज्ञानार्थी श्रवणादिपरः स्यादिति शेषः ॥ १२४२ ॥

---

१ घ. 'न्ये भ' । २ क. 'षन्तीति ।

उक्तविध्यर्थविषयाद्याः क्रिया विषयान्तरे ॥
निषिध्यन्तेऽत्र ताः सर्वा व्याघातायैव ता यतः ॥ १२४३ ॥

तस्यास्तात्पर्यमाह । **उक्तेति** । उक्तो विधिरूपोऽर्थः शान्तः स्यादित्यादिस्तस्य विषयस्तत्त्वज्ञानमुद्देश्यं तस्मादुद्देश्यान्तरे स्वर्गादौ या यागादिक्रियाः संभाव्यन्ते ताः सर्वाः सम्यग्ज्ञानस्य व्याघातायैव यतो भवन्त्यतोऽस्यां स्मृतौ निषिध्यन्ते श्रवणादयस्तु तद्धेतुत्वान्न निषेधमर्हन्तीत्यर्थः ॥ १२४३ ॥

द्वंद्वप्रवाहसंपातसहिष्णुरभिधीयते ॥
तितिक्षुवचनेनात्र दुरुक्तादेस्तथैव च ॥ १२४४ ॥

उपरतश्रुतिं व्याख्याय तितिक्षापदस्यार्थमाह । **द्वंद्वेति** । शीतोष्णादिप्रवाहसंबन्धसहनशीलो दुर्वादताडनादेश्च सहिष्णुरस्मिन्वाक्ये तितिक्षुर्विवक्षित इत्यर्थः ॥ १२४४ ॥

स्वातन्त्र्यं येषु कर्तुः स्यात्करणाकरणं प्रति ॥
तान्येव तु निषिद्धानि कर्माणीह शमादिभिः ॥ १२४५ ॥

शान्तादिपदचतुष्टयेन समाहितपदस्यागतार्थत्वार्थं तत्र निष्पन्नमनुवदति । **स्वातन्त्र्यमिति** । इहेति प्रकृतश्रुतिग्रहः । तथाविधानि काम्यादीनि कर्माणि प्रसिद्धानीति वक्तुं हिशब्दः ॥ १२४५ ॥

अस्वातन्त्र्यं तु येषु स्यात्कर्तुः कर्मसु सर्वदा ॥
समाहितोक्त्याऽथेदानीं तन्निरोधो विधीयते ॥ १२४६ ॥

संप्रति समाहितपदस्यार्थमाह । **अस्वातन्त्र्यमिति** । मनोरथादिनिवृत्तिः समाहितोक्त्या धीसाधनतया विधीयते न च सा पूर्वत्र विहितेत्यर्थः । धीपूर्वककर्मनिवृत्तिरितरनिवृत्तौ संस्कारद्वारा हेतुरित्यथशब्दार्थः ॥ १२४६ ॥

पिण्डीकृत्येन्द्रियग्रामं बुद्धावारोप्य निश्चलम् ॥
विषयांस्तत्स्मृतींस्त्यक्त्वा तिष्ठेच्चिदनुरोधतः ॥ १२४७ ॥

तत्र स्मृतिं प्रमाणयति । **पिण्डीकृत्येति** । द्विविधेन्द्रियसमुदायमर्थेभ्यो विमुखीकृत्य बुद्ध्यधीनमापाद्य निश्चलं कृत्वा स्मृत्यादिमनोव्यापारं च हित्वा चिन्मात्राकारं तद्विधाय तदनुसारेण सदा वर्तेत योगशास्त्रविदोऽप्येतमेवासंप्रज्ञातसमाधिमाहुरित्यर्थः ॥ १२४७ ॥

एषोऽभ्युपायः सर्वत्र वेदान्तेषु विधीयते ॥
तत्त्वमस्यादिवाक्यार्थज्ञानोत्पत्त्यर्थमादरात् ॥ १२४८ ॥

इह विहितेषु शमादिषु सर्ववेदान्तसंमतिमाह । **एष इति** ॥ १२४८ ॥

नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ॥
नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥ १२४९ ॥

---

१ ग. ॰भ्युदयः ।

तानेव वेदान्तानुदाहरन्नादौ कठश्रुतिं पठति । **नाविरत इति ।** दुराचारो वा द्विविधेन्द्रियाधीनो वा निद्रालस्यादिपरवशो वा नाऽऽत्मज्ञानाधिकारीति वदता विहितः शमादिरित्यर्थः ॥ १२४९ ॥

**मुक्तेर्हि बिभ्यतो देवा मोहेनापिदधुर्नरान् ॥**
**ततस्ते कर्मसूद्युक्ताः प्रावर्तन्त दिवानिशम् ॥ १२५० ॥**

शाखान्तरीयवाक्यमुदाहरति । **मुक्तेरिति ।** प्राक्चासकृदुदाहृतमेतद्वाक्यमिति हिशब्दार्थः ॥ १२५० ॥

**यतः कर्म तमोहेतुस्तस्मादेव मुमुक्षुभिः ॥**
**ज्ञानेन भित्त्वा संमोहं सर्वानर्थैकसंश्रयम् ॥ १२५१ ॥**

कर्मणामविवे[1]ककार्यत्वे फलितमाह । **यत इति ।** तमःशब्देनाविवेको गृह्यते । ज्ञानेन विवेकेनेति यावत् । संमोहमविवेकमित्यर्थः । तस्य हातव्यत्वे हेतुः । **सर्वेति ।** मुमुक्षुभिरेव संन्यासः कर्तव्य इति शेषः ॥ १२५१ ॥

**संन्यस्य सर्वकर्माणि प्रत्यक्प्रवणधीर्नरः ॥**
**प्रत्यग्याथात्म्यविज्ञानमात्रमेव समाश्रयेत् ॥ १२५२ ॥**

तदनन्तरमनुष्ठेयं दर्शयति । **संन्यस्येति ॥** १२५२ ॥

**तत एवैकलाद्यस्मात्संसाराद्विप्रमुच्यते ॥**
**इत्येतदाह विस्पष्टं भाल्लविब्राह्मणं वचः ॥ १२५३ ॥**

किमिति ज्ञानमात्रमपेक्ष्य श्रवणाद्येवाऽऽवर्तनीयं तत्राऽऽह । **तत इति ।** भाल्लविश्रुतिमुपसंहरति । **इत्येतदिति ।** मुक्तिसाधनज्ञानोद्देशेन संन्यासपूर्वकं श्रवणादि कार्यमित्येतद्भाल्लविश्रुत्या विवक्षितमित्यर्थः ॥ १२५३ ॥

**यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ॥**
**बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम् ॥ १२५४ ॥**

पुनरपि तस्मिन्नेवार्थे कठवल्लीवाक्यमुपन्यस्यति । **यदेत्यादिना ।** बाह्येन्द्रियाणां मनोबुद्ध्योश्च विषयपारवश्यं त्यक्त्वा निश्चलत्वेन स्थितिरुत्तमपुरुषार्थहेतुरिति संन्यासिनो ज्ञानार्थिनः[2] समाधानपूर्वकं श्रवणादेरनुष्ठेयत्वं[3] सूचयतीत्यर्थः ॥ १२५४ ॥

**तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ॥**
**अप्रमत्तस्तदा भवति[4] योगो हि प्रभवाप्ययौ ॥ १२५५ ॥**

योगो हि मुमुक्षुभिर्ज्ञानार्थिभिः संन्यासिभिरनुष्ठेयः स सर्वेन्द्रियाणां निश्चलावस्थेति योगविदो वदन्तीत्याह । **तामिति ।** किं पुनर्योगानुष्ठानेन लभ्यते तत्राऽऽह[5] । **अप्रमत्त इति ।** कोऽसौ योगो यस्यानुष्ठानाज्ज्ञानद्वारा संसाराख्यप्रमादध्वंसस्तत्राऽऽह । **योगो**

---

१ ख. 'वेकार्थत्वे । २ घ. 'नः साधन' । ३ क. ख. घ. 'ष्ठेयं मू' । ४ ग. भाति । ५ घ. तदाह ।

हीति । सृष्टिप्रलयानुसंधानरूपप्रत्ययावृत्तिकरणं योगः । योगशास्त्रविदोऽपि यथोक्तं योगं संप्रज्ञातसमाधिमाचक्षते स चोक्तफलहेतुरित्यर्थः ॥ १२९९ ॥

**यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ॥**
**ज्ञानमात्मनि महति तद्यच्छेच्छान्त आत्मनि॥ १२५६ ॥**

बाह्येन्द्रियाणि मनोधीनत्वेनोपसंहरेदित्याह । **यच्छेदिति** । वागिति द्वितीयार्थे प्रथमा । मनसीति दैर्घ्यं छान्दसम् । मनसो बुद्धावुपसंहारमाह । **तद्यच्छेदिति** । व्यष्टिबुद्धेः समष्टिबुद्धावुपसंहारमाह । **ज्ञानमिति** । हिरण्यगर्भबुद्धेरात्मनि परस्मिन्नकार्यकरणे लयं कथयति । **तदिति** ॥ १२९६ ॥

**उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत ॥**
**सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ॥**
**अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥१२५७॥**

अज्ञाननिद्राया मुमुक्षूणामुत्थानं प्रार्थयते । **उत्तिष्ठतेति** । तत्रोपायमाह । **जाग्रतेति** । कथं जागरणं तत्राऽऽह । **प्राप्येति** । उत्कृष्टान्ब्रह्मनिष्ठानाचार्यान्प्राप्य तत्प्रसादान्निश्चयेन तत्त्वबोधं प्राप्नुतेति यावत् । आथर्वणिकं वाक्यद्वयमस्मिन्नेवार्थे दर्शयति । **सत्येनेत्यादिना** । नित्यशब्दः सत्यादिषु प्रत्येकं संबध्यते सदातनसत्यादिसाधनबलादुपलब्धसम्यग्ज्ञानेनाऽऽत्मलाभो मुक्तिरित्यर्थः । परस्य स्वर्गादिवल्लभ्यत्वे ताटस्थ्यमाशङ्क्याऽऽह । **अन्तरिति** । परापरयोरैक्ये हेतुः । **ज्योतिर्मयो हीति** । चिद्रूपत्वात्परस्य प्रत्यक्त्वे तद्गतं संसारित्वं तस्य प्रसज्येतेति चेन्नेत्याह । **शुभ्र इति** । तत्र विद्वदनुभवं प्रमाणयति । **यमिति** । सर्वेषां द्रष्टृत्वं व्यावर्तयति । **यतय इति** । तेषां प्रधानं लक्षणमाह । **क्षीणेति** ॥ १२९७ ॥

**न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा ॥**
**ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते[1] निष्कलं ध्यायमानः ॥१२५८॥**

पश्यन्तीत्युक्तत्वाच्चक्षुरादिग्राह्यत्वमाशङ्क्याऽऽह । **नेत्यादिना** । देवशब्देन द्योतनवन्तीन्द्रियाणि गृह्यन्ते । कथं तर्हि पश्यन्तीत्युक्तं तत्राऽऽह । **ज्ञानेति** । ततो नित्यादिकर्मानुष्ठानाद्विशुद्धबुद्धिर्विवेकप्रकर्षेण श्रवणादि कुर्वन्नात्मानं साक्षात्करोतीत्यर्थः ॥ १२९८ ॥

**प्रतिशाखं तथाऽन्यानि ज्ञानोपायप्रसिद्धये ॥**
**तन्मूलानि तथाऽन्यानि स्मृतिवाक्यानि कोटिशः ॥ १२५९ ॥**
**सन्त्येवाऽऽत्मपरिज्ञानसाधनानां प्रसिद्धये ॥**
**अनग्निरनिकेतः स्यादशर्माऽशरणो मुनिः ॥ १२६० ॥**

---

1 ख. ग. पश्यति ।

यथोक्तवाक्यवद्वाक्यान्तराण्यपि सर्वासु शाखासु शमादिसाधकानि **शान्त** उपासीत तपसा ब्रह्म विजिज्ञासस्वेत्यादीनि सन्तीत्याह । **प्रतिशाखमिति** । तत्रैव स्मृतीनां सत्त्वं सूचयति । **तन्मूलानीति** । तथा श्रुतिवदित्यर्थः । पिण्डीकृत्येत्यादिपूर्वोक्तस्मृत्यपेक्षयाऽन्यत्वे तेषां तात्पर्यमाह । **आत्मेति** । तान्येवोपन्यस्यति । **अनग्निरित्यादिना** । अनेन पञ्चाग्नित्वत्रेताग्नित्वादि निषिध्यते । अनिकेतशब्देन गृहसंबन्धं निषेधता भार्याराहित्यमुच्यते । विषयस्पर्शकृतसुखलेशालोलुपत्वमाह । **अशर्मेति** । मठादिनियतस्थानराहित्यमाह । **अशरण इति** । श्रवणादिनिष्ठतामाह । **मुनिरिति** ॥ १२५९ ॥ १२६० ॥

**त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ॥**
**उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज ॥ १२६१ ॥**

संन्यासविषयं वाक्यान्तरमाह । **त्यजेति** ॥ १२६१ ॥

**यतो यतो निवर्तते ततस्ततो विमुच्यते ॥**
**निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि ॥ १२६२ ॥**

सर्वत्यागे फलमाह । **यत इति** ॥ १२६२ ॥

**कोऽहं कस्य कुतो वेति कः कथं वा भवेदिति ॥**
**प्रयोजनमतिर्नित्यमेवं मोक्षाश्रमी भवेत् ॥ १२६३ ॥**

निःशेषत्यागादशेषदुःखहानिश्चेत्तर्हि संन्यासिनो न किंचित्कार्यमस्तीत्याशङ्क्याऽऽह । **कोऽहमिति** । अहं देहादिषु कः स्यां कस्य वा संबन्धी कुतो वाऽऽगतो जातो वेति निरूप्य वर्तमानदेहपाते सुरनरादिषु को भविष्यामि केन वा प्रकारेणेनिफलपर्यन्तविचारान्वितः संन्यासी सदाऽन्वयादिकुशलः स्यादित्यर्थः ॥ १२६३ ॥

**नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च ॥**
**शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः ॥ १२६४ ॥**

वित्तद्वयमपि मुमुक्षुणा लोकद्वयोपयोगिकत्वान्न त्याज्यं तत्कथं सर्वसंन्यासितेत्याशङ्क्याऽऽह । **नैतादृशमिति** ॥ ११६४ ॥

**निवर्तयित्वा रसनं रसेभ्यो घ्राणं च गन्धाच्छ्रवणं च शब्दात् ॥**
**स्पर्शात्तनुं रूपगुणाच्च चक्षुस्ततः परं पश्यति स्वं स्वभावम् ॥ १२६५ ॥**

क्रियाभ्यः सर्वाभ्यो नोपरमो घ्राणादीनां गन्धादिप्रवणत्वादित्याशङ्क्याऽऽह । **निवर्तयित्वेति** । तनुशब्देन त्वगत्र गृह्यते । स्पर्शादिति विशेषणादिन्द्रियोपरतिफलमाह । **तत इति** ॥ १२६५ ॥

१ ख. निवर्तन । २ क. ग. 'र्शान्मच ह'

**एवं मनुवसिष्ठादिधर्मेष्वपि सहस्रशः ॥**
**स्पष्टानि सन्ति वाक्यानि यथोक्तार्थप्रसिद्धये ॥ १२६६ ॥**

व्यासवाक्यवन्मन्वादिशास्त्रेष्वपि ज्ञानसाधनशमादिसिद्ध्यर्थं बहूनि वाक्यानि सन्तीत्याह । **एव मिति । यथाऽऽह मनुः—**

"अनग्निरनिकेतः स्याद्ग्राममन्नार्थमाश्रयेत् ।
उपेक्षकोऽसंचायिको मुनिर्भावसमन्वितः ॥
कपालं वृक्षमूलानि कुचेलमसहायता ।
समता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम् " इत्यादि ।

**वसिष्ठश्च—**

"अरण्यनित्यस्य जितेन्द्रियस्य सर्वेन्द्रियप्रीतिनिवर्तकस्य ।
अध्यात्मचिन्तागतमानसस्य ध्रुवा ह्यनावृत्तिरुपेक्षकस्य ॥
न शब्दशास्त्राभिरतस्य मोक्षो न चापि लोकग्रहणे रतस्य ।
न[1] भोजनाच्छादनगर्वितस्य न चापि रम्यावसथप्रियस्य " इति ।

**याज्ञवल्क्यश्च—**

"विषयेन्द्रियसंरोधतन्द्रालस्यविवर्जनम् ।
शरीरपरिसंख्यानं प्रवृत्तिष्वघदर्शनम् ॥
विरजं[2] समता सत्त्वशुद्धिर्निस्पृहता शमः ।
एतैरुपायैः संशुद्धसत्त्वो योग्यमृती भवेत् " इति ॥ १२६६ ॥

**साध्यस्य कर्मणस्त्यागात्सामर्थ्यादेव सिद्धतः ॥**
**तत्साधनस्य संत्यागे श्रद्धावित्तगिराऽत्र किम् ॥ १२६७ ॥**

तस्मादित्यादि समाहित इत्यन्तं व्याख्याय श्रद्धावित्तो भूत्वेति माध्यंदिनश्रुतिं व्याख्यातुं चोदयति । **साध्यस्येति ।** श्रद्धैव वित्तमस्येति व्युत्पत्त्या वित्तान्तरत्यागो विवक्ष्यते स च कर्मत्यागेनैव गतस्तथाचोपरै[3]तादिश्रुत्या श्रद्धावित्तश्रुतेः पौनरुक्त्यात्प्रमादपाठोऽयमित्यर्थः ॥ १२६७ ॥

**मैवं दृष्टार्थविषये यत्कर्मास्यावशेषितम् ॥**
**तत्साधनेष्वममताविधानार्थं वचो यतः ॥ १२६८ ॥**

परिहरति । **मैवमिति ।** देहस्थितिर्दृष्टार्थस्तद्विषये यत्कर्म भिक्षाटनादि पूर्वविशेषणैरनिषिद्धं संन्यासिनोऽवशेषितं तत्साधनेषु भिक्षापात्रादिष्वपि ममता न कार्येत्येतदर्थं श्रद्धावित्तपदे[4]मुक्तम् । **उक्तं हि—**

---

१ क. न भाज° । २ घ. °रजस्तम° । ३ ख. °रतश्रु° । ४ ख. घ. °दम् ।

"न कुट्यां नोदके सङ्गो न चैले न त्रिपुष्करे ।
नागारे नाऽऽसने नान्ने यस्य वै मोक्षवित्तु सः" इति ।

तस्मादपुनरुक्तेर्युक्ता माध्यंदिनश्रुतिरित्यर्थः ॥ १२६८ ॥

**श्रद्धैव वित्तमस्येति नान्यदस्य यतस्ततः ॥**
**श्रद्धावित्तोऽयमित्युक्तः संन्यासी सर्वकर्मणाम् ॥ १२६९ ॥**

उक्तेऽर्थे तां व्याचष्टे । **श्रद्धेति** । यतःशब्दात्पूर्वमितिशब्दस्य संबन्धः ॥ १२६९ ॥

**भूत्वेत्यस्याभिसंबन्धः सर्वैः शान्तादिभिः पदैः ॥**
**विधिनाऽस्यापि चाऽऽक्षेपाद्विधितन्त्रत्वमिष्यते ॥ १२७० ॥**

पाठद्वयेऽपि भूत्वेतिपदस्याव्यवहितेनैव संबन्धो न व्यवहितेन शान्त्यादिनेति शङ्कां निरस्यति । **भूत्वेत्यस्येति** । न हि संनिधिरेव संबन्धहेतुः किंतु योग्यत्वादिरपीति भावः । शान्तः स्यादित्यादिर्विधिरत्रास्ति चेत्तर्हि शमादीनां स्वतन्त्रविधिविषयत्वान्न ज्ञानशेषतेत्याशङ्क्य पश्येदितिविधिसंनिधानान्मैवमित्याह । **विधिनेति** । उभयत्र विधिपदं पश्येदितिविधिविषयम् ॥ १२७० ॥

**पाण्डित्यादि पुरोक्तं यत्तस्येयमुपसंहृतिः ॥**
**प्राक्तदात्मानमेवावेदिति यच्च समीरितम् ॥**
**सेतिकर्तव्यताकोऽथ विधिस्तस्यायमुच्यते ॥ १२७१ ॥**

कहोलब्राह्मणादौ यथोक्तशमादेर्विहितत्वात्किमत्र तद्विधिनेत्याशङ्क्याऽऽह । **पाण्डित्यादीति** । आत्मन्येवेत्यादेस्तात्पर्यमाह । **प्रागिति** । तृतीयेऽध्याये तदात्मानमेवावेदित्यत्र वाक्यार्थज्ञानमुक्तं तस्योपाये त्वमर्थज्ञाने शमादीतिकर्तव्यतासहितो विधिरात्मन्येवेत्यादिनोच्यते शमादिसंपन्नो हि त्वमर्थज्ञानी भूत्वा वाक्यार्थज्ञानवान्मुच्यत इत्यर्थः । वाक्यार्थज्ञानस्य मुक्तिहेतुत्वेनाऽऽवश्यकत्वद्योतनायाथेत्युक्तम् ॥ १२७१ ॥

**अन्वयव्यतिरेकाभ्यां यथोक्तैः साधनैर्युतः ॥ १२७२ ॥**
**आत्मन्येव तमात्मानं निष्कृष्यानात्मराशितः ॥**
**पश्येदित्यभिसंबन्धः पश्यतीत्यथवा भवेत् ॥ १२७३ ॥**

नायं वाक्यार्थज्ञाने विधिरिति स्फोरयितुं पदार्थज्ञाने विधिमनुवदन्नात्मनीत्यादि व्याकरोति । **अन्वयेति** । शमादिभिर्युक्तोऽधिकारी चतुर्थाऽन्वयव्यतिरेकाभ्यामात्मानमनात्मराशेर्निष्कृष्य तमात्मन्येव पश्येदिति योजना । सप्तम्या संघातोक्तिः । द्वितीयया तत्साक्षिनिर्देशः । पश्येदिति माध्यंदिनपाठेनोक्तम् ॥ १२७२ ॥ १२७३ ॥

**विध्यर्थस्य पुरा प्राप्तेः काण्वानामनुवादतः ॥**
**द्रष्टव्याद्युक्तितस्तस्मात्पश्यतीत्यभिधीयते ॥ १२७४ ॥**

---

१ क. ग. 'मणेना' ।

पश्यतीति वर्तमानापदेशात्काण्वपाठे पदार्थज्ञाने कुतो विधिरित्याशङ्क्याऽऽह । **विधीति ।** यद्यपि द्रष्टव्यादिवाक्यात्पदार्थज्ञानं काण्वमाध्यंदिनयोः सिद्धं तथाऽपि विशिष्टं तदप्राप्तमिति माध्यंदिनानां तद्विधिरिष्टः काण्वानां तु पदार्थज्ञानमनूद्य विशेषणविषयो विधिरिति वर्तमानापदेशात्कल्पितोऽर्थतो नोभयेषां विशेष इत्यर्थः॥१२७४॥

**आत्माऽनात्मप्रधानत्वाद्ब्रह्मरूपेण नेक्ष्यते ॥ १२७५ ॥**
**विशेषणत्वं स्वार्थोऽपि सत्कार्ये कारणे गतः ॥**
**स्वात्माविद्यासमुत्थेऽस्मिन्नात्माविद्यासमाश्रयात् ॥ १२७६ ॥**

ननु शमादिविशेषणमात्रविषयो विधिरात्मज्ञानस्य विधिमन्तरेणाहमिति सदा प्राप्तेरत आह । **आत्मेति ।** यद्यप्यहमात्मेक्ष्यते तथाऽपि परमार्थस्वरूपेण नायं लभ्यते देहादावात्माभिमानभाक्त्वादतस्त्वमर्थशुद्धिर्विधेयेत्यर्थः । कथमजडस्य चिद्धातोः स्वतन्त्रस्यानात्मप्राधान्यं तत्राऽऽह । **विशेषणत्वमिति** ॥ १२७५ ॥ १२७६ ॥

**देहेन्द्रियमनोधीभ्यो ह्यन्वयव्यतिरेकतः ॥**
**मुञ्जेषीकावदुत्कृष्य पश्येदात्मानमात्मनि ॥ १२७७ ॥**

तस्मादित्यादिवाक्यार्थमुपसंहरति । **देहेति ।** अन्वयव्यतिरेकयोर्विवेकहेत्वोश्चतुर्थे प्रसिद्धत्वार्थो हिशब्दः ॥ १२७७ ॥

**आत्मन्येव यदाऽऽत्मानं विभज्यानात्मनोऽखिलात् ॥**
**प्रपश्यति तदाऽनात्मा न पृथग्व्यवशिष्यते ॥ १२७८ ॥**

अन्वयादिना देहद्वयाद्विभज्य स्वमहिमस्थात्मनो ज्ञाने रज्जुसर्पवत्कल्पितत्वादनात्मनोऽनवशेषात्पूर्णत्वं प्रतीचः सिध्यतीति फलितमाह । **आत्मन्येवेति** ॥ १२७८ ॥

**स एष नेति नेत्यात्मेत्यथैतस्मात्पुरोदितात् ॥**
**वाक्यात्सर्वमसंसर्गमात्मानं परिपश्यति ॥ १२७९ ॥**

सर्वमित्यादेरर्थमाह । **स एष इति ।** साधनसंपत्त्यानन्तर्यमथेत्युच्यते । सर्वं जगदेकरसमात्मानं वाक्याद्विशिष्टोऽधिकारी पश्यतीत्यर्थः ॥ १२७९ ॥

**अविद्यातज्जकार्याणां प्रत्यग्दर्शनबाधतः ॥**
**अव्यावृत्ताननुगतं ब्रह्मात्मानं प्रपश्यति ॥ १२८० ॥**

वाक्यस्यार्थान्तरमाह । **अविद्येति ।** सर्वशब्देन ब्रह्म गृह्यते । तस्य लक्षणमाह । **अव्यावृत्तेति ।** एतत्समर्थनार्थं पूर्वो भागः । शोधितत्वमर्थः शमादिसंपन्नोऽधिकारी वाक्याद्ब्रह्म प्रत्यक्त्वेन प्रत्येतीति वाक्यार्थः ॥ १२८० ॥

**नानुत्पन्नमतो ज्ञानं नाप्यज्ञानमबाधितम् ॥**
**कृत्स्नज्ञेयसमाप्तत्वान्न किंचिदवशिष्यते ॥ १२८१ ॥**

---

१ ख. °वतिष्ठते ।

आत्मनो ब्रह्मत्वज्ञानफलमाह । **नानुत्पन्नमिति ।** आत्मनि ज्ञाते ज्ञानमनुत्पन्नं नेत्यत्र हेतुमाह । **कृत्स्नेति ।** अबाधितमज्ञानमपि नास्तीत्यत्र युक्तिमाह । **न किंचिदिति ।** आत्मज्ञानविषयः सप्तम्यर्थश्चातःशब्दः ॥ १२८१ ॥

**इयं सा ब्रह्मविद्योक्ता मधुकाण्डे पुरोदिता ॥**
**या तस्या जन्मनः काले फलं श्रुत्याऽधुनोच्यते ॥ १२८२ ॥**

नैनं पाप्मेत्यादेर्वृत्तानुवादपूर्वकं तात्पर्यमाह । **इयं सेति ।** या पूर्वं मधुकाण्डे ब्रह्मविद्या सूचिता सेयं मुनिकाण्डे प्रपञ्चेनोक्तेत्यनुवादार्थः ॥ १२८२ ॥

**अकर्तृत्वात्मविज्ञानाद्ध्वस्तात्माज्ञानहेतुतः ॥**
**नैनं ब्रह्मविदं पाप्मा तरत्यज्ञं यथा तथा ॥ १२८३ ॥**

नैनमित्याद्यवतारितश्रुतेरक्षराणि व्याकरोति । **अकर्तृत्वेति** ॥ १२८३ ॥

**पाप्मशब्देन धर्मोऽपि देहोपादानहेतुतः ॥**
**मुमुक्षोस्तदनिष्टत्वादिह निःशेष उच्यते ॥ १२८४ ॥**

पाप्मेति विशेषणात्पापमेव ब्रह्मविदं न स्पृशति पुण्यं तु स्पृशतीत्याशङ्क्याऽऽह । **पाप्मेति ।** प्रकृते हि वाक्ये पाप्मशब्दो धर्ममपि निःशेषं विषयी करोत्यधर्मवद्धर्मस्यापि देहग्रहणहेतुत्वान्मुमुक्षोश्च देहग्रहणस्यानिष्टत्वान्नातो धर्मोऽपि ब्रह्मविदं स्पृशतीत्यर्थः ॥ १२८४ ॥

**दुःखाभावः सदेहस्य नैवास्तीति श्रुतेर्मतम् ॥**
**तस्माद्देहोऽप्यनर्थः स्याद्देहो नाशाच्च सर्वदा ॥ १२८५ ॥**

देहग्रहणं मुमुक्षोरनिष्टमित्येतत्प्रतिपादयति । **दुःखेति ।** सदेहस्य देहाभिमानवतो दुःखाभावः सदैव नास्तीति न ह वै सशरीरस्येत्यादिश्रुतेर्मतमिति संबन्धः । अपिशब्दो मानुषादिदेहस्यानर्थत्वं कैमुतिकन्यायात्सिद्धमितिद्योतनार्थः । देहमात्रस्यानिष्टत्वे हेत्वन्तरमाह । **नाशाच्चेति ।** सर्वदेत्यनर्थपदेन युज्यते ॥ १२८५ ॥

**न तपत्यथ तं कस्मात्तापकोऽप्यात्मवेदिनम् ॥**
**पाप्मेति हेतुरधुना तत्र श्रुत्याऽभिधीयते ॥ १२८६ ॥**

पाप्मा धर्माधर्मात्मको न ब्रह्मविदं स्पृशति न च तमस्पृशन्नुपतापं तस्मिन्नाधातुमलमित्युक्तं संप्रति सर्वमित्यादिवाक्यमाकाङ्क्षापूर्वकमादत्ते । **नेत्यादिना ।** पाप्मनस्तापकत्वस्यापि दृष्टिसिद्धत्वात्तत्र कर्माऽऽत्मवेदिनो न तापकमित्यर्थः ॥ १२८६ ॥

**अकर्तृत्वात्मयाथात्म्यसम्यग्ज्ञानाग्निना यतः ॥**
**सर्वं पापं तपत्येष भस्मसात्कुरुतेऽग्निवत् ॥ १२८७ ॥**

---

१ प. मत्रिना ।

हेतुवाक्यं विभजते । **अकर्तृत्वेति** । तपतीत्यस्य व्याख्या भस्मसात्कुरुत इति । अतो न कर्म विद्वद्दृष्टितापकमिति शेषः ॥ १२८७ ॥

**स्वयमेवेश्वरः प्राह प्रपन्नाय किरीटिने ॥**
**पुराणः शाश्वतोऽचिन्त्यः सर्वभूतानुकम्पया ॥ १२८८ ॥**

सम्यग्ज्ञानाग्निः सर्वं कर्म भस्मी करोतीत्यस्मिन्नर्थे भगवद्वाक्यमवतारयति । **स्वयमिति** ॥ १२८८ ॥

**यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ॥**
**ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ १२८९ ॥**

तदेवोदाहरति । **यथेति** ॥ १२८९ ॥

**संबन्धे सति पाप्माऽयं स्वफलेनानुतापयेत् ॥**
**अकर्तृत्वान्न संबन्धो विदुषोऽस्तीह पाप्मभिः ॥ १२९० ॥**

नैनं पाप्मेत्यादेस्तात्पर्यमाह । **संबन्ध इति** । इहेति विद्यावस्थोक्तिः ॥ १२९० ॥

**तदेतदुच्यते श्रुत्या नैनं पाप्मेति यत्नतः ॥**
**नैनं ब्रह्मविदं पाप्मा तरति व्याप्नुते स्वतः ॥ १२९१ ॥**
**तदकर्तृत्वतो हेतोर्ब्रह्मवित्तु सकारणम् ॥**
**सर्वं तरति पाप्मानं सर्पादीन्रशना यथा ॥ १२९२ ॥**

उक्तेऽर्थे वाक्यं पठति । **तदेतदिति** । यत्नतोऽभ्यासादिति यावत् । पाठक्रमस्त्वत्राविवक्षित इत्यभिप्रेत्य नैनं पाप्मा तरतीत्यस्यार्थमनुवदति । **नैनमिति** । प्रतीत्यविरोधार्थं विशिनष्टि । **स्वत इति** । सर्वमित्यादेरर्थमाह । **ब्रह्मविच्चिति** । विदुषः सकारणकर्मातिक्रमश्चेदतिक्रमणीयस्य नद्यादिवद्वस्तुत्वापत्तिरित्याशङ्क्याऽऽह । **सर्पादीनिति** ॥ १२९१ ॥ १२९२ ॥

**आत्मयाथात्म्यवित्सोऽयं विपापो विरजः स्वतः ॥**
**निष्कर्मा स्याद्विपापोऽयं विरजस्कोऽप्यकामतः ॥ १२९३ ॥**
**सर्वसंशयहेतोश्च प्रत्यङ्मोहस्य नाशतः ॥**
**स्यादेषोऽविचिकित्सोऽतः सर्वसंशयवर्जितः ॥ १२९४ ॥**

विपाप इत्यादिपदानि व्याकरोति । **आत्मेत्यादिना** । अतःशब्दः सम्यग्ज्ञानार्थः ॥ १२९३ ॥ १२९४ ॥

**एवमात्मपरिज्ञानाद्ध्वस्ताविद्यो भवेद्यदा ॥**
**अनापन्नादिमध्यान्तं ब्राह्मण्यं लभते तदा ॥ १२९५ ॥**

ब्राह्मणो भवतीत्यस्यार्थमाह । **एवमिति** ॥ १२९५ ॥

१ क. ख. °तो नित्यः स° ।

**इमामवस्थामापन्नो मुख्यो ब्राह्मण उच्यते ॥**
**भाविवृत्त्या स गौणस्तु प्रागतो ब्राह्मणो भवेत् ॥ १२९६ ॥**

ब्राह्मण्यं न विद्याफलं प्रागेव लब्धत्वादित्याशङ्क्याऽऽह । **इमामिति** । पूर्वावस्थायां तच्छब्दप्रयोगे निमित्तमाह । **भावीति** । अतःशब्दो ज्ञानावस्थार्थः ॥१२९६॥

**जातौ ब्राह्मणशब्दोऽयं मा प्रापदिति तं श्रुतिः ॥**
**व्याचष्टेऽतः प्रयत्नेन ब्रह्मलोकगिरा स्वयम् ॥ १२९७ ॥**

प्रकृतं ब्राह्मणमेषशब्देनानूद्य तस्मिन्ब्रह्मलोकपदं प्रयुञ्जानायाः श्रुतेरभिप्रायमाह । **जाताविति** । इतिशब्दादूर्ध्वमतःशब्दो योज्यः । तमिति ब्राह्मणशब्दोक्तिः । यत्नस्तु पूर्ववत् ॥ १२९७ ॥

**अव्यावृत्ताननुगतं ब्रह्मेत्यत्राभिधीयते ॥**
**लोकोऽपि दृष्टिमात्रत्वात्प्रत्यङ्मात्रं निरुच्यते ॥ १२९८ ॥**

ब्रह्मशब्दं व्याकरोति । **अव्यावृत्तेति** । अत्रेत्यखण्डपदोक्तिः । लोकशब्दं व्याचष्टे । **लोकोऽपीति** ॥ १२९८ ॥

**अन्योन्यार्थसमाप्तित्वात्कर्मधारय एव तु ॥**
**समासोऽत्र परिग्राह्यो निषादस्थपतिर्यथा ॥ १२९९ ॥**

पदच्छेदः पदार्थोक्तिरिति न्यायेन पदार्थमुक्त्वा समासमाह । **अन्योन्येति** । ब्रह्मलोकपदयोरेकार्थावसानाद्ब्रह्मैव लोक इति कर्मधारयोऽस्मिन्पदे भातीत्यर्थः । ब्रह्मणो लोक इति षष्ठीसमासोऽपि संभवतीत्याशङ्क्याऽऽह । **निषादेति** । यथा निषादानां स्थपतिरिति षष्ठीसमासो नेष्टः कल्पनागौरवाल्लाघवात्तु निषादश्चासौ स्थपतिश्चेति कर्मधारयो निषादस्थपत्यधिकरणे स्थितस्तथाऽत्रापीत्यर्थः ॥ १२९९ ॥

**श्रुतमेकविभक्तित्वं विभक्त्यन्तरकल्पनात् ॥**
**लघीयोऽतीव यत्तस्मात्कर्मधारय एव सः ॥ १३०० ॥**

कर्मधारयाङ्गीकारे हेत्वन्तरमाह । **श्रुतमिति** । लोकशब्दस्य प्रथमान्तत्वं श्रुतं तदेव समासान्तर्वर्तिब्रह्मशब्दस्यापि स्वीकर्तुमुचितं संनिधानाल्लाघवाच्च तथाच श्रुतकल्पकशून्यषष्ठीकल्पनातो यतोऽतिशयेन लघुतरं प्रथमान्तत्वं तस्मान्नात्र समासान्तरमेष ब्रह्मलोकः सम्राडिति हैनमनुशशासेत्यत्र चैतत्प्रपञ्चितमित्यर्थः ॥ १३०० ॥

**ब्रह्मलोकमिमं साक्षाद्धे सम्राड्ब्रह्मविद्यया ॥**
**प्रापितोऽस्यभयं पूर्वं यत्प्रतिज्ञातवानहम् ॥ १३०१ ॥**

सम्राडिति संबोधयतो मुनेराशयं दर्शयति । **ब्रह्मलोकमिति** । ननु कूर्चब्राह्मणे विद्याफलमभयं वै जनक प्राप्तोऽसीत्यभयमुक्तमिह तु ब्रह्मलोकं प्राप्तोऽसीत्युच्यते तथा

च तत्फले विकल्पः स्यादित्याशङ्क्याभयस्यैव ब्रह्मलोकत्वान्नैवमित्याह । **अभयमिति** ॥ १३०१ ॥

**इत्येवं याज्ञवल्क्यस्तं नृपमुक्तेन वर्त्मना ॥**
**साक्षादनुशशासैनमित्युक्तिः स्याच्छ्रुतेरियम् ॥ १३०२ ॥**

इति हेत्यादेरर्थमाह । **इत्यवमिति** । एवंपदमितिपदस्य व्याख्यानं तस्यार्थमाह । **उक्तेनेति** । अनुशासनस्य साक्षात्त्वं पुनःशङ्कानुत्थाननिदानत्वम् । इदं च श्रुतेर्वाक्यं न मुने राज्ञो वेत्याह । **इत्युक्तिरिति** ॥ १३०२ ॥

**अनुशिष्टोऽथ नृपतिर्विद्यानिष्क्रयहेतुतः ॥**
**सोऽहमित्यादिकं वाक्यं गुरुमाह त्वरान्वितः ॥ १३०३ ॥**

सोऽहमित्यादेस्तात्पर्यमाह । **अनुशिष्ट इति** । अनुशासनफलं विद्यालाभानन्तर्यमथशब्दार्थः । ब्रह्मविद्यानुरूपा नास्ति दक्षिणेति सूचयति । **त्वरान्वित इति** । दक्षिणात्वेन राजा राज्यमात्मानं च गुरवे समर्पितवानिति वाक्यार्थः ॥ १३०३ ॥

**ब्रह्मविद्या समाप्तेयं ससंन्यासाऽद्वयात्मिका ॥**
**सेतिकर्तव्यताकेयं साङ्गा निःश्रेयसे नृणाम् ॥ १३०४ ॥**

प्रकरणार्थमुपसंहरति । **ब्रह्मविद्येति** । अद्वयात्मिकेत्यखण्डवस्त्वाकारत्वोक्तिः । तत्त्वज्ञानं साङ्गोपाङ्गं तत्फलं चोक्तमित्यर्थः । निरित्युपसर्गो निश्चितार्थोऽसमस्तो द्रष्टव्यः ॥ १३०४ ॥

**निःशेषपुरुषार्थोऽयं समाप्तो ब्रह्मबोधतः ॥**
**सर्वानर्थनिरासार्थमेतावानेव चाऽऽद्दतैः ॥ १३०५ ॥**
**कर्तव्यो यत्नमास्थाय कृते यस्मिन्कृतार्थता ॥**
**नान्यतः कृतकृत्यः स्यादुक्तज्ञानातिरेकतः ॥ १३०६ ॥**

ब्रह्मविद्यासमाप्तावपि परमानन्दावाप्तये कार्यान्तरमाशङ्क्याऽऽह । **निःशेषेति** । तथाऽप्यनर्थनिरासार्थं कर्तव्यान्तरमाशङ्क्याऽऽह । **सर्वानर्थेति** । एतावानित्युक्तो ब्रह्मबोधो गृह्यते । अद्वेष्टा सर्वभूतानामित्यादिशास्त्रोपदिष्टधर्मवैशिष्ट्यं यत्नास्थानम् । तत्करणफलमाह । **कृत इति** । हेत्वन्तरादपि कृतकृत्यतासंभवादेतावानेवेति नावधार्यमित्याशङ्क्याऽऽह । **नेति** ॥ १३०५ ॥ १३०६ ॥

**व्याख्यातो योऽयमत्राऽऽत्मा स विज्ञानानुरोधतः ॥**
**फलाय स्यादविज्ञात इत्येतदधुनोच्यते ॥ १३०७ ॥**

वृत्तमर्थमुपसंहृत्योत्तरकण्डिकाद्वयस्य तात्पर्यमाह । **व्याख्यात इति** । योऽयं प्रत्यगात्मा पूर्वोक्तः स ज्ञातः सन्मोक्षाय स्यादिति द्वितीयवाक्येनोच्यते स चाज्ञातः संसाराख्यैश्वर्यफलायेत्यादिवाक्येनेत्यर्थः ॥ १३०७ ॥

**पञ्चमान्त उपन्यस्तं रातेर्दातुः परायणम् ॥**
**तद्विदस्तिष्ठमानस्येत्यस्य चेहोपसंहृतिः ॥ १३०८ ॥**

रातिर्दातुः परायणं तिष्ठमानस्य तद्विद इत्यत्र कर्मज्ञानफलयोरुक्तत्वादत्रापि तदुक्तौ पुनरुक्तिरित्याशङ्क्य तयोरर्थान्तरमाह । **पञ्चमान्त इति** । कर्मफलमुपसंहर्तु-माद्यं वाक्यं ज्ञानफलमुपसंहर्तुं द्वितीयमित्यर्थः ॥ १३०८ ॥

**आत्मान्तेनास्य वाक्येन स्वतस्तत्त्वमिहोच्यते ॥**
**अन्नादवसुदानाभ्यामविद्योत्थं तु भण्यते ॥ १३०९ ॥**

कथं कूटस्थस्याऽऽत्मनोऽन्नादत्ववसुदानत्वोपपत्तिरित्याशङ्क्याऽऽद्यवाक्यस्य विभज्य तात्पर्यमाह । **आत्मान्तेनेति** । इहेत्याद्यकण्डिकोक्तिः । अविद्योत्थमात्मनस्तत्त्वं मूल-कारणमिति शेषः ॥ १३०९ ॥

**निःशेषान्नादनादात्मा प्राणान्तोऽन्नाद उच्यते ॥**
**आत्माऽयं कारणं यस्मात्कार्यमित्यखिलं ततः ॥ १३१० ॥**

कथमन्नादपदेन मूलकारणमुच्यतेऽन्नात्तृत्वमात्रं हि तेन भातीत्याशङ्क्याऽऽह । **निःशेषेति** । अज्ञातो हि परः प्राणस्वभावः कारणात्मा सर्वकार्यसंहर्तृत्वादन्नादो विवक्षित इत्यर्थः । कथं तस्य सर्वकार्यसंहर्तृत्वं तत्राऽऽह । **आत्मेति** । जगन्मूलका-रणस्य तत्संहर्तृत्वं यत्प्रयन्त्यभिसंविशन्तीत्यादौ प्रसिद्धमित्यर्थः ॥ १३१० ॥

**कारणेऽनुपयुक्तं यत्कार्यं तन्नेह विद्यते ॥**
**कार्येऽप्यनुपयुक्तं यन्न तत्कारणमुच्यते ॥ १३११ ॥**

अन्नादपदार्थोक्तिप्रसङ्गागते कार्यकारणे तयो रज्जुसर्पवत्कल्पितत्वं वक्तुं मिथः सापेक्षत्वमाह । **कारण इति** । अनुपयुक्तमनपेक्षमिति यावत् । इहेति व्यवहारभूमिरुक्ता ॥ १३११ ॥

**अन्योन्यार्थव्यपेक्षित्वात्कार्यकारणवस्तुनोः ॥**
**नान्योन्यार्थातिरेकेण सिध्येते कार्यकारणे ॥ १३१२ ॥**

तयोः सापेक्षत्वे फलितमाह । **अन्योन्येति** ॥ १३१२ ॥

**वसूपकरणं प्रोक्तं तद्ददातीश्वरत्वतः ॥**
**यतस्ततोऽज आत्माऽयं वसुदान इहोच्यते ॥ १३१३ ॥**

वसुदानपदं व्याचष्टे । **वस्विति** । उपकरणं भोगसाधनमिति यावत् । इहेति वाक्योक्तिः ॥ १३१३ ॥

**अन्नादवसुदानाभ्यां गुणाभ्यां यः समीक्षते ॥**
**ईश्वरं स यथादृष्टि फलमाप्नोति मानवः ॥ १३१४ ॥**

---

१ क. प्राणतोऽन्ना° ।

विन्दत इत्यादेरर्थमाह । अन्नादेति ॥ १३१४ ॥

**इत्येवमयथावस्तुदर्शिनः फलमीरितम् ॥**
**यथावस्तुदृशोऽप्येवं यथा रज्ज्वादिदर्शिनः ॥ १३१५ ॥**

उक्तं सम्यग्धीफलमिति मन्दमतिशङ्कां निरस्यति । **इत्येवमिति** । किं तर्हि सम्यग्धीफलं तदाह । **यथेति** । एवं दृष्ट्यनुसारिकैवल्यमिति यावत् । सम्यग्ज्ञानिनस्तदनुकूलफललाभे दृष्टान्तः । **यथेति** । यो हि रज्ज्वादि स्वरूपेण पश्यति तस्य भयादिध्वस्तिः फलमेवमात्मतत्त्वदृशो बन्धध्वस्तिरित्यर्थः ॥ १३१५ ॥

**ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ॥**
**इति चाऽऽहेश्वरो वाक्यमुक्तार्थप्रतिपत्तये ॥ १३१६ ॥**

प्रतिपत्त्यनुसारिफलमित्यत्र भगवत्संमतिमाह । **ये यथेति** ॥ १३१६ ॥

**यथातत्त्वं तु योऽज्ञातं वस्तु साक्षात्प्रपद्यते ॥**
**यथावस्त्वेव तस्यापि फलं स्यादिति भण्यते ॥ १३१७ ॥**

आत्मदर्शनान्मुक्तिरित्यत्रानन्तरवाक्यमवतारयति । **यथेति** । अज्ञातमिति च्छेदः ॥ १३१७ ॥

**काण्डद्वयस्य वा योऽर्थः स संक्षिप्याभिधीयते ॥**
**स वा इत्यादिवाक्येन सारार्थस्य जिघृक्षया ॥ १३१८ ॥**

वाक्यस्यार्थान्तरमाह । **काण्डद्वयस्येति** । संक्षिप्योपसंहारे फलमाह । **सारार्थस्येति** । ब्रह्मात्मैक्यज्ञानसौकर्यार्थं संक्षेपोक्तिरित्यर्थः ॥ १३१८ ॥

**अविद्यावान्पुरा योक्तो मृत्युजन्मादिसंसृतिः ॥**
**स वा इति गिरा सोऽत्र स्मार्यते ब्रह्मसंगतौ ॥ १३१९ ॥**

वाक्यतात्पर्यमुक्त्वा स वा इतिपदयोरर्थमाह । **अविद्यावानिति** । पुरा ब्राह्मणादाविति यावत् । य उक्त इत्यत्र योक्त इति प्रयोगः सेमामितिवत् । मृत्युर्जन्म चेत्यादिरूपा संसृतिर्यस्येति विग्रहः । स्मारणफलमाह । **ब्रह्मेति** । ब्रह्मणो जीवस्य संगतिस्तादात्म्यधीस्तस्यामुद्देश्यायामित्यर्थः । अत्रेत्यन्तिमकण्डिकोक्तिः । प्रसिद्धानुवादेनाप्रसिद्धविधेर्न्याय्यतया संसारिस्मारणं फलवदिति भावः ॥ १३१९ ॥

**स वा एष पुरोक्तेन यो वाक्येन प्रकाशितः ॥**
**प्रध्वस्ताज्ञानतज्जः सन्परां निर्वृतिमागतः ॥ १३२० ॥**

एषशब्दार्थमाह । **स वा इति** । यो हि त्वंपदवाच्यः स वा इत्युक्तः स ब्रह्मलोकवाक्ये लोकशब्देन प्रकाशितोऽविद्यातज्जहीनो नित्यमुक्तस्तल्लक्ष्यः सोऽयमेष इति विवक्षित इत्यर्थः ॥ १३२० ॥

---

१ घ. योऽहिं र॰ ।

**महानित्यभिधानेन सत्यज्ञानादिलक्षणम् ॥**
**ब्रह्मैव प्रोच्यते साक्षात्प्रत्यगात्मविशेषणम् ॥ १३२१ ॥**

महानित्यस्यार्थमाह । **महानितीति** । तत्पदलक्ष्यस्य तस्याऽऽत्मानं प्रति विशेषणत्वमाह । **प्रत्यगिति** । साक्षादित्यपरोक्षत्वोक्तिः ॥ १३२१ ॥

**ब्रह्मैवाऽऽत्मा स्वतोऽबोधादब्रह्मैव प्रकाशते ॥**
**जरादिधर्मवांस्तस्माद्ब्रह्मणैव विशेष्यते ॥ १३२२ ॥**

महानात्मेति ब्रह्मात्मनोर्न विशेषणविशेष्यत्वमात्मनो जरादिमत्त्वात्तद्धीनब्रह्मणा विशेष्यत्वायोगादित्याशङ्क्याऽऽह । **ब्रह्मैवेति** । जरादिधर्मवत्त्वस्य प्रतीच्यबोधकृतत्वं तच्छब्दार्थः ॥ १३२२ ॥

**प्रमान्तरानधिगता ब्रह्मता प्रत्यगात्मनः ॥**
**प्रत्यक्त्वं ब्रह्मणस्तद्वद्वचसैव प्रबोध्यते ॥ १३२३ ॥**

पदार्थयोर्विशेषणविशेष्यत्वमुक्त्वा पदयोः सामानाधिकरण्यस्य तात्पर्यमाह । **प्रमान्तरेति** । तद्वदिति प्रमान्तरानधिगतमाकृष्यते । वचसा महानात्मेति समानाधिकृतेनेति यावत् ॥ १३२३ ॥

**अहं ब्रह्मेतिवाक्योत्थविज्ञानात्प्रत्यगात्मनः ॥**
**ध्वस्तेऽज्ञाने सकार्येऽथ यद्रूपं तदिहोच्यते ॥ १३२४ ॥**

प्रबोधफलमनूद्याज इत्यादेस्तात्पर्यमाह । **अहमिति** । समनन्तरवाक्यमिहेत्युच्यते । वाक्यीयज्ञानादज्ञानतज्जध्वस्तौ व्यावर्तकाभावाद्युक्तमात्मनोऽद्वितीयनिर्विशेषैकरस्यमितिद्योतनायाथशब्दः ॥ १३२४ ॥

**रज्जुः सर्पादिनेवाऽऽत्मा विनाऽविद्यां न जायते ॥**
**कार्यात्मना यतस्तस्मादात्माऽज इति भण्यते ॥ १३२५ ॥**

अजशब्दं व्याचष्टे । **रज्जुरिति** ॥ १३२५ ॥

**सर्वभावविकाराणां जन्म मूलं यतस्ततः ॥**
**सर्वेषां प्रतिषेधः स्यान्निषेधादात्मजन्मनः ॥ १३२६ ॥**

अजरादिविशेषणान्याक्षिपति । **सर्वेति** ॥ १३२६ ॥

**तथाऽपि ताञ्श्रुतिर्यत्नाज्जरादीन्प्रतिषेधति ॥**
**स्वाभाविकत्वाशङ्कायाः प्रतिषेधस्य सिद्धये ॥ १३२७ ॥**

जन्मनिषेधादितरविकारनिषेधमङ्गीकृत्य समाधत्ते । **तथाऽपीति** । आर्थिकनिषेधस्याशाब्दिकत्वाज्जरादीनां पारमार्थिकत्वाशङ्कायां तन्निरासार्थं मुखतो निषेध इत्यर्थः ॥ १३२७ ॥

**कालात्मना ह्यवच्छेदान्नायं कालंजरत्वतः ॥**
**देहादिवज्जरामेति तस्मादात्माऽजरः स्मृतः ॥ १३२८ ॥**

अजरपदं व्याकरोति । **कालात्मनेति** । यथा देहादि कालावच्छिन्नत्वाज्जीर्यते न तथाऽऽत्मा जरामेति कालंजरत्वादेव तदनवच्छिन्नत्वात्प्रतीचश्च कालंजरत्वमुक्तं तस्मादयमजरः स्मृतो विद्वद्भिरित्यर्थः । कालंजरत्वस्याऽऽत्मनि प्रागुक्तत्वावद्योती हिशब्दः ॥ १३२८ ॥

**सर्वस्य परिणामस्य हानोपादानमात्रतः ॥**
**जराजन्मनिषेधेन सर्वोऽतोऽत्र निषिध्यते ॥ १३२९ ॥**

जरादीनां स्वाभाविकत्वं निषेद्धुमजरादिविशेषणं चेत्तर्हि वृद्ध्यादेस्तथात्वाशङ्का तदवस्था तन्निषेधकविशेषणाभावादित्याशङ्क्याऽऽह । **सर्वस्येति** । अत्रेत्यात्मोक्तिः । हानोपादानमात्रतो जराजन्मान्तर्वर्तित्वादिति यावत् । अतःशब्दस्य पञ्चम्या संबन्धः ॥ १३२९ ॥

**परिणामोऽस्य येनान्त्यः श्रुत्येह प्रतिषिध्यते ॥ १३३० ॥**
**देहस्थितेरवसितिर्मृतिशब्देन भण्यते ॥**
**तन्निषेधोऽमरोक्त्याऽत्र नित्यस्याऽऽत्मन उच्यते ॥ १३३१ ॥**

उक्तेर्थे गमकमाह । **परिणाम इति** । इह वाक्ये जन्मजरानिषेधानन्तरमात्मनो नाशाख्योऽन्त्यो विकारोऽमृतश्रुत्या येन हेतुना निषिध्यते तेन मध्यवर्तिवृद्ध्यादिसर्वविकारनिषेधो विवक्षित इत्यर्थः । अमरपदं तर्हि किमर्थमित्याशङ्क्य प्राणत्यागरूपमरणनिषेधार्थमाह । **देहेति** । तन्निषेधे हेतुमाह । **नित्यस्येति** ॥ १३३० ॥ १३३१ ॥

**नाजस्यापरिणामस्य मरणं जगतीक्ष्यते ॥**
**अजोऽजरश्च तेनोक्तोऽमरश्चैष ततः स्मृतः ॥ १३३२ ॥**

अजत्वाद्युपजीव्यामरत्वं साधयति । **नाजस्येति** । यतोऽजस्तेनाजरो यतश्चाजरस्ततोऽमर इति योजना ॥ १३३२ ॥

**परिणामात्मको मृत्युरमरोक्त्या निवारितः ॥**
**अमृतोक्त्याऽथ नाशोऽस्य वार्यते यो निरन्वयः ॥ १३३३ ॥**

अमरपदेनैवान्त्यविकारनिराससिद्धेर्व्यर्थममृतपदं न च घटादिवन्नाशं निरसितुं तदिति युक्तमजरपदेन गतत्वादित्याशङ्क्याऽऽह । **परिणामेति** । अमरोक्त्या प्राणत्यागस्याजरोक्त्या च कारणसंसर्गस्य मृत्योर्निवारितत्वान्निरन्वयनाशं निरसितुममृतपदमित्यर्थः । अमृतपदस्यागतार्थत्वद्योतनार्थोऽथशब्दः ॥ १३३३ ॥

---

१ ग. निषेध्य° । २ ख. °जरामर° ।

अविनाशीत्यपि तथा विनाशद्वयमात्मनः ॥
श्रुत्या निषिध्यते साक्षात्प्रत्यक्कौटस्थ्यसिद्धये ॥ १३३४ ॥

मैत्रेयीब्राह्मणेऽप्यविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मेति श्रुत्या नाशद्वयमात्मनो निषिद्धमित्याह । **अविनाशीत्यपीति** । प्रकृतश्रुत्यैवेति वक्तुं तथाशब्दः । तन्निषेधफलमाह । **प्रत्यगिति** ॥ १३३४ ॥

काममकर्मतमोभावादमरोऽमृत एव च ॥
तत एवाभयः प्रत्यङ्भयं हि तदबोधतः ॥
कारणस्य निषेधोऽतो भयकार्यनिषेधतः ॥ १३३५ ॥

अमरत्वाद्युपजीव्याभयत्वमवतारयति । **कामेति** । तद्विभजते । **भयं हीति** । अनुभवानुसारार्थो हिशब्दः ॥ १३३५ ॥

कुतोऽभयत्वसंसिद्धिः प्रतीच इति शङ्किते ॥
ब्रह्मेत्याहाऽऽत्मनस्तत्त्वं ब्रह्म त्वभयमेव हि ॥ १३३६ ॥

आकाङ्क्षापूर्वकं विशेषणान्तरमादत्ते । **कुत इति** । तथाऽपि कथमभयत्वमित्याशङ्क्याभयं वै ब्रह्मेत्यस्यार्थमाह । **ब्रह्म त्विति** । श्रौतीं प्रसिद्धिमनुरोद्धुं हिशब्दः ॥ १३३६ ॥

अहं ब्रह्मेत्यतः साक्षाद्यथोक्तेनैव वर्त्मना ॥
भयहेतोर्निरासेन स ब्रह्माभयमश्नुते ॥ १३३७ ॥

अभयं हीत्यादि व्याकरोति । **अहमिति** । इतिशब्दो ज्ञानपरामर्शार्थः । तस्य निमित्तत्वमतःशब्दार्थः । अपरोक्षज्ञानस्यैव सनिदानापरोक्षभ्रमध्वंसितेति दर्शयितुं साक्षादित्युक्तम् । ऐक्यज्ञानोदयोपायं सूचयति । **यथोक्तेनेति** । अन्वयादिना पदार्थशोधनपूर्वकं श्रुतेन वाक्येनेत्यर्थः ॥ १३३७ ॥

सर्वोपनिषदामेष संक्षिप्तोऽर्थ इहोदितः ॥
उत्पत्त्यादिविकल्पोऽयमस्यैव प्रतिपत्तये ॥ १३३८ ॥

अन्तिमकण्डिकार्थमुपसंहरति । **सर्वोपनिषदामिति** । कूटस्थमद्वयं प्रत्यग्ब्रह्म वेदान्तार्थश्चेत्किमिति सृष्ट्याद्युच्यते श्रुत्येत्याशङ्क्याऽऽह । **उत्पत्त्यादीति** ॥ १३३८ ॥

एकप्रभृतिसंख्येयं रेखासंकेतवर्त्मना ॥
प्रतिपत्तिरसंख्येयवस्तुनः स्याद्यथा तथा ॥ १३३९ ॥
सर्वप्रमाणविषयलङ्घिनोऽकार्यकारण—
वस्तुनः प्रतिपत्तिः स्याज्जन्मादिध्वंसवर्त्मना ॥ १३४० ॥

सृष्ट्यादेरात्मज्ञानहेतुत्वे दृष्टान्तमाह । **एकेति** । इयं खल्वेकप्रभृतिपरार्धान्ता

१ क. ख. ग. °त्यरभयं । २ क. ख. °यम° । ३ क. °दिनिषेधोऽय° । ४ क. ग. °ख्येयरे° । ५ ग. °ख्येये व° ।

संख्या रेखाविशेषेष्वध्यासद्वारेणानन्तवस्तुप्रतिपत्तिहेतुः संख्येयज्ञानं विना संख्याज्ञाना-योगात् । यद्वैकप्रभृतिपरार्धान्तसंख्यायाः संख्येयस्य वस्तुनो रेखाविशेषेष्वारोपद्वारा नानाविधा वस्तुप्रतिपत्तिर्यथेत्यर्थः । दार्ष्टान्तिकमाह । **तथेति** । परस्मिन्नध्यस्तजगज्ज-न्मादिद्वारा तद्धीरित्यर्थः ॥ १३३९ ॥ १३४० ॥

**संख्येयत्वं न रेखायाः संख्यात्वं वाऽञ्जसेष्यते ॥**
**तदध्यारोपगत्यैव तथाऽपि प्रतिपत्तये ॥ १३४१ ॥**

रेखायां संख्या वा संख्येयं वा नाऽऽरोपितमित्याशङ्क्य दृष्टान्तं साधयति । **संख्येयत्व-मिति** । यद्यपि रेखायां स्वगता संख्या तत्संख्येयत्वं च नाऽऽरोपितं तथाऽपि यद्वारा रेखा संख्येयं वस्तु बोधयति तत्तस्यामध्यस्तं न हि तत्र घटादि वा संख्या वा वस्तुतोऽस्ति तस्मादारोपितद्वारैव सा धीहेतुरित्यर्थः ॥ १३४१ ॥

**यथैवमवगच्छन्ति प्रध्वस्ताशेषकल्पनम् ॥**
**आत्मानं स्थितिजन्मादिकल्पनोपायमात्रतः ॥१३४२ ॥**

दृष्टान्तमनूद्य दार्ष्टान्तिकं प्रपञ्चयति । **यथेति** ॥ १३४२ ॥

**पत्रकज्जलरेखाभिर्यथा वाऽध्यासवर्त्मना ॥**
**वर्णाञ्जानन्त्यकारादीन्पत्रादिभ्यो विलक्षणान् ॥ १३४३ ॥**

उदाहरणान्तरमाह । **पत्रेति** । ॥ १३४३ ॥

**तथोत्पत्त्यादिकाध्यासवर्त्मना तद्विलक्षणम् ॥**
**जन्मादिहेतुध्वंसेन नेतीति ब्रह्म गम्यते ॥ १३४४ ॥**

दार्ष्टान्तिकमाह । **तथेति** । तद्वैलक्षण्यं कौटस्थ्यं तद्धेतुरविवेकादि ॥ १३४४ ॥

**इति काण्डद्वयोक्तोऽर्थः संहृत्य सफलोऽखिलः ॥**
**इह प्रदर्शितो वाक्ये तत्समाप्तिविवक्षया ॥ १३४५ ॥**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके चतुर्थाध्यायस्य**
**चतुर्थं शारीरकब्राह्मणम् ॥ ४ ॥**
**बृहदारण्यकक्रमेण षष्ठाध्यायस्य चतुर्थं ब्राह्मणम् ॥ ४ ॥**

प्रकृतमुपसंहरति । **इति काण्डेति** । इह वाक्य इत्यन्तिमकण्डिकोक्तिः । तच्छ-ब्देन काण्डद्वयमुच्यते ॥ १३४५ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां चतुर्थाध्यायस्य
चतुर्थं शारीरकब्राह्मणम् ॥ ४ ॥

**श्लोकानामादितः समष्ट्यङ्काः—१०३७८**

---

१ ख. ग. प्रतिपद्यते । २ ख. °कादिः ॥ १३४४ ॥

अथ पञ्चमं ब्राह्मणम् ।

---

निरधारि पुरा ब्रह्म मधुकाण्डागमेन यत् ॥
याज्ञवल्कीयकाण्डेन तद्युक्त्याऽथोपपादितम् ॥ १ ॥

पूर्वस्मिन्ब्राह्मणे मन्त्रब्राह्मणाभ्यामनर्थानर्थहेतुपुरुषार्थतद्धेतुरूपं चतुष्टयं शिष्ट्वा मन्त्रैरेव प्रपञ्चिते पुमर्थमार्गे सर्वस्याऽऽम्नायस्य विनियोगमुक्त्वा सोपाधिकनिरुपाधिकब्रह्मभेदेन ब्रह्म तज्ज्ञानं तत्फलं चोक्तमिदानीं वक्तव्यानवशेषादुत्तरं ब्राह्मणमकिंचित्करमित्याशङ्क्य वृत्तं कीर्तयति । **निरधारीति** । आगमशेषस्य युक्तेरागमानन्तर्यं युक्तं प्रधानानन्तर्याद्गुणस्येति वक्तुमथेत्युक्तम् ॥ १ ॥

जल्पन्यायेन तत्पूर्वं पञ्चमे प्रतिपादितम् ॥
वादन्यायेन तद्भूयः षष्ठे सम्यक्प्रपञ्चितम् ॥ २ ॥

युक्तिप्रधानमुनिकाण्डेनाध्यायभेदेनोक्तं विभज्यानुद्रवति । **जल्पेति** ॥ २ ॥

अथाधुना निगमनस्थानीयमिदमुच्यते ॥
मैत्रेयीब्राह्मणं श्रुत्या तथाच न्यायविद्वचः ॥ ३ ॥

उत्तरब्राह्मणसंगतिमाह । **अथेति** । किमिदं निगमनं नाम तदाह । **तथाचेति** ॥३॥

हेतूक्तितः प्रतिज्ञायाः सिद्धार्थाया यदुत्तरम् ॥
वचो निगमनं तत्स्याद्वाक्यस्यावयवोक्तिभाक् ॥ ४ ॥

अनुमानविदो न्यायसूत्रकृतो हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनमिति सूत्रमुदाहरति । **हेतूक्तित इति** । वाक्यस्येत्यनुमानरूपं पञ्चावयवं महावाक्यं गृह्यते । निगमनस्यान्त्यावयवत्वं प्रतिज्ञाहेतूदाहरणोपनयननिगमनान्यवयवा इत्यवयवविभागोद्देशसूत्रान्मन्तव्यम् । एतदुक्तं भवति । साधर्म्योक्ते वैधर्म्योक्ते वा हेतौ यथोदाहरणमुपसंहृते तस्मादुत्पत्तिधर्मवत्त्वादनित्यः शब्द इति निगमनं तेन हि प्रतिज्ञादय एकार्थतया समर्थ्यन्त एवं प्रकृतेऽपि श्रुतियुक्तिसिद्धोऽर्थोऽनेनोपसंह्रियत इति ॥ ४ ॥

ससंन्यासाऽऽत्मविद्या या मधुकाण्डागमोदिता ॥
उपपत्तिप्रधानेऽपि सैव मोक्षेऽवसीयते ॥ ५ ॥

ब्राह्मणस्यार्थान्तरमाह । **ससंन्यासेति** । मधुकाण्डे मैत्रेयीब्राह्मणेनाऽऽगमबलादुक्ता मुक्तिसाधनीभूता संन्याससहिताऽऽत्मविद्या सैवाधुना न्यायप्रधानेऽपि मुनिकाण्डे मुक्तौ हेतुत्वेन न्यायतो मन्तव्येत्येतद्ब्राह्मणं प्रवृत्तमित्यर्थः ॥ ५ ॥

आत्मज्ञानं ससंन्यासं मोक्षायेत्यागमाद्यथा ॥
युक्तितोऽपि तथा ज्ञेयमिति चेहोपसंहृतिः ॥ ६ ॥

कहोलप्रश्नादौ न्यायतोऽपि सिद्धा यथोक्ता विद्येति किमनेन ब्राह्मणेनेत्याशङ्क्य

प्रथमपक्षमेवानुसरन्नाह । **आत्मज्ञानमिति** । इतिशब्दादूर्ध्वं ज्ञानमित्यध्याहारः । श्रुतियुक्तिसिद्धार्थोपसंहारार्थमिदं ब्राह्मणं न च निगमनमनर्थकं यदाहोदाहरणस्थयोर्धर्मयोः साध्यसाधनभावोपपत्तौ साध्ये विपरीतप्रतिषेधार्थं निगमनमिति तस्मादुपसंहारोऽर्थवानित्यर्थः ॥ ६ ॥

**व्याख्यातत्वात्पदार्थानां चतुर्थेऽध्याय एव तु ॥**
**तद्व्याख्यानाय यत्नोऽतो न भूयः क्रियतेऽधुना ॥ ७ ॥**

ब्राह्मणस्य तात्पर्यमुक्त्वा पदार्थोक्तिप्राप्तावाह । **व्याख्यातत्वादिति** ॥ ७ ॥

**शब्दस्यैवाऽऽत्मनो जन्म चतुर्थे प्रतिपादितम् ॥**
**सर्वोपसंहृतेरत्र यागादेरपि भण्यते ॥ ८ ॥**

अक्षरार्थो न वक्तव्यश्चेत्तात्पर्यस्योक्तत्वाद्ब्राह्मणस्य समाप्तिरेवेत्याशङ्क्येष्टमित्यादिवाक्यतात्पर्यमाह । **शब्दस्येति** । यागादेरर्थप्राप्तस्यापि[1] प्रकृते जन्म मुखतो निर्दिश्यते सर्वोपसंहारस्येह विवक्षितत्वादित्यर्थः ॥ ८ ॥

**शब्दोऽयं बहुधा भिन्नो नामैव परमात्मजम् ॥**
**यागदानादिकं कर्म रूपं लोकपुरःसरम् ॥ ९ ॥**

यदृग्वेद इत्यादिश्रुतेर्विभागमाह । **शब्दोऽयमिति** । अयं शब्दो बहुधा मन्त्रब्राह्मणभेदेन भिन्नो नाममात्रं तच्च परमात्मजमेवेत्येतदृग्वेद इत्यारभ्येष्टमित्यस्मात्प्राक्तनवाक्येनोपसंह्रियते । इष्टमित्यारभ्यायं च लोक इत्यस्मात्प्राचीनवाक्येन यागादिकर्म परमात्मजमेवेत्युपसंहारः क्रियतेऽयं चेत्युपक्रम्य परेण तादृगेव रूपमिति नियम्यते[2] । एष विभागः सृष्टिश्रुतेरित्यर्थः ॥ ९ ॥

**सर्वमेतदयत्नेन तत एव विनिःसृतम् ॥**
**अनन्यभूतं तेनातः[3] साक्षात्तत्त्वं प्रगीयते[4] ॥ १० ॥**

कथं परस्मात्त्र्यात्मकं जगज्जायते तस्य प्रयत्नाद्यभावादन्यथा ततो जातो नामान्तर्गतो वेदः स पौरुषेयः स्यादत आह । **सर्वमिति** । परस्य प्रयत्नाद्यभावेऽपि मायामयी सृष्टिरविरुद्धा सर्वधर्मोपपत्तेश्चेति न्यायादिति भावः । सर्वस्य परस्मादुत्पत्तौ फलितमाह । **अनन्येति** । कार्यस्य कारणातिरेकेणाभावोऽतःशब्दार्थः । तेन परेण कारणेनेति यावत् । तत्त्वं[5] सर्वस्य कार्यस्येति शेषः ॥ १० ॥

**अन्तर्बहीरसघनः सैन्धवस्य घनो यथा ॥**
**विज्ञानघन एवायं विज्ञानात्मा तथैव च ॥ ११ ॥**

यथा सैन्धवघन इत्यादेरर्थमाह । **अन्तरिति** । ॥ ११ ॥

---

१ क. ख. °र्थस्या° । २ घ. निगम्य° । ३ क. °तः सतत्त्वं प्रतिपादितम् ॥ १० ॥ ४ ख. प्रतीय° । ५ क. सत्त्वं ।

स्वविकारोपसंश्लेषाद्विज्ञानात्मत्वमेत्यतः ॥
तद्धेतुनाशात्प्रकृतिं स्वामेव प्रतिपद्यते ॥ १२ ॥

एतेभ्य इत्यादेरर्थमाह । **स्वविकारेति** । स्वशब्देन प्रत्यगविद्योक्ता तद्विकारो बुद्ध्यादिस्तेन संबन्धे सैवाविद्या हेतुरित्यतःशब्दार्थः । तान्येवेत्यादेरर्थमाह । **तद्धेत्विति** । चिद्धातोर्बुद्ध्यादिसंबन्धे हेतोरविद्याया विद्यया नाशाज्जीवो जैवं भावं हित्वा स्वाभाविकं ब्रह्मभावं प्राप्नोतीत्यर्थः ॥ १२ ॥

परिणामनिषेधः स्यादविनाशिगिराऽऽत्मनः ॥
अनुच्छित्तिगिरा नाशो वार्यते यो निरन्वयः ॥ १३ ॥

अविनाशीत्यादिपदद्वयस्यापुनरुक्तिमाह । **परिणामेति** । कारणसंसर्गः परिणामः ॥ १३ ॥

मात्रासंसर्गजस्त्वेष यो विनाशादिधर्मवान् ॥
अविद्यामात्रहेतूत्थो रज्जुसर्पादिवन्मतः ॥ १४ ॥

मात्रासंसर्गस्त्वस्य भवतीति माध्यंदिनश्रुतेरर्थमाह । **मात्रेति** । अत्र विशेष्यत्वेन जीवो मन्तव्यः । प्रथमपादार्थं विवृणोति । **अविद्येति** । जीवशब्दवाच्यस्यानिर्वाच्यत्वे निर्विशेषनित्यसिद्धं चिदेकरसं जीवपदलक्ष्यं भवतीति भावः ॥ १४ ॥

ब्रह्मैवैकः स आत्मोक्तो ह्यध्यायेषु चतुर्ष्वपि ॥
उपायमात्रभेदोऽत्र न तूपेयः प्रभिद्यते ॥ १५ ॥

तस्य ब्रह्मप्राप्त्युपायानां प्रत्यध्यायं भेदादनेकरसं ब्रह्मेत्याशङ्क्याऽऽह । **ब्रह्मैवेति** । उक्तेरतिव्यक्तत्वद्योतको हिशब्दः । आगमो जल्पवादात्मको न्यायश्चोपायः ॥ १५ ॥

नेति नेति चतुर्थेऽसौ यथैव प्रतिपादितः ॥
नेतीति पञ्चमेऽप्येवं निर्विकल्पोऽवधारितः ॥ १६ ॥
षष्ठेऽपि जनकाख्यानप्रारम्भे तद्वदीरितः ॥
निर्विकल्पो यथैकोऽर्थो नेतीत्यत्रोपसंहृतः ॥ १७ ॥
नेतीति शास्त्रावसितौ तथैवाऽऽत्मोपसंहृतः ॥
एकरूपमतस्तत्त्वं सर्वत्रैव विवक्षितम् ॥ १८ ॥

उपेयभेदाभावमुपपादयन्स एष इत्यादेस्तात्पर्यमाह । **नेतीति** । अत्रेति शारीरकब्राह्मणोक्तिः । शास्त्रावसिताविति मैत्रेयीब्राह्मणग्रहः । उपेयभेदाभावमुपसंहरति । **एकरूपमिति** ॥ १६ ॥ १७ ॥ १८ ॥

नेति नेत्यात्मकात्तत्त्वात्प्रकाराणां शतैरपि ॥
निरूप्यमाणे नान्यादृग्यस्मात्तत्वं समीक्ष्यते ॥ १९ ॥

---

१ घ. °त्वेन नि° ।

तर्कतो यदि वा वाक्यादत एवेदमेव तु ॥
नेतिनेत्यात्मविज्ञानममृतत्वैकसाधनम् ॥ २० ॥
ससंन्यासं विनिश्चेयमिति शास्त्रस्य संग्रहः ॥
अमृतमाप्तयेऽलं स्यात्साधनान्तरनिस्पृहम् ॥ २१ ॥
यथोदितमिदं ज्ञानं सहकार्यन्यसाधन—
निरपेक्षमलं मुक्त्या इत्येतदभिधीयते ॥ २२ ॥

अतःशब्दपरामृष्टं हेतुमाह । **नेत्यादिना** । तदैकरूप्ये फलितमाह । **अत इति** । निर्विशेषाद्वयात्मज्ञानं ससंन्यासं मुक्तिहेतुरित्युक्तमनुवदति । **अमृतेति** । तत्रैवैतावदित्यादिवाक्यं प्रमाणत्वेनाऽऽदत्ते । **सहकारीति** ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

एतावदर एवैतदमृतत्वस्य सिद्धये ॥
प्रत्यग्याथात्म्यविज्ञानं नान्यत्किंचिदपेक्ष्यते[1] ॥ २३ ॥

तद्याकरोति । **एतावदिति** । एतावदेवेति संबन्धः । एवकारार्थमाह । **नान्यदिति** ॥ २३ ॥

इत्युक्तार्थपरिज्ञानदार्ढ्यार्थं सर्वसाधनम् ॥
कर्माणि[2] चापनुद्या[3]ऽऽशु प्रवव्राजाविचारयन् ॥ २४ ॥

विजहारेत्यस्यार्थमाह । **इत्युक्तेति** । आत्मज्ञानं संन्याससहायं मुक्तिहेतुरित्यत्र मैत्रेयीनिश्चयाधानार्थं शिखायज्ञोपवीताद्यङ्गमङ्गि च कर्म त्यक्त्वा पारिव्राज्यमाश्रममाश्रितवान्मुनिरित्यर्थः । ज्ञानिनः संन्यासे फलात्मके विध्यालोचनापेक्षा नेति सूचयति । **आश्विति** । वैधेऽपि संन्यासे विरक्तिरेव सामग्रीति विवक्षति । **अविचारयन्निति** ॥ २४ ॥

न केवलमिदं ज्ञानं कर्मसाधननिस्पृहम् ॥
निःशेषकर्मसंन्यासापेक्षाऽपि स्याद्यतो मुनिः ॥ २५ ॥
सम्यग्विज्ञाततत्त्वत्वात्कृतार्थोऽप्यखिलं स्वयम् ॥
तत्याज कर्म त्वरया वाङ्मनःकायसाधनम् ॥ २६ ॥

आत्मज्ञानं केवलं मुक्तिहेतुरिति द्योतयितुं कृतकृत्योऽपि संन्यस्यति स्मेत्येकोऽभिप्राय उक्त इदानीं विजहारेत्यस्याभिप्रायान्तरमाह । **न केवलमिति** । त्वरयेति कर्मत्यागे निवारकाभावं विवक्षन्नावश्यकत्वं तस्य दर्शयति ॥ २५ ॥ २६ ॥

अतोऽवगम्यते नूनं न कर्म सहतेऽखिलम् ॥
आत्मज्ञानं यतोऽत्याक्षीत्सम्यग्ज्ञानोऽपि तन्मुनिः ॥ २७ ॥

संन्यासापेक्षं ज्ञानं मोक्षहेतुरिति द्वितीयमभिप्रायमुक्त्वाऽभिप्रायान्तरमाह । **अत**

---

१ क. ग. °पेक्षते । २ ख. °णि व्यपनु° । ३ क. °पविध्याऽऽशु ।

इति । ज्ञानकर्मणोर्विरोधस्याख्याय कर्म त्यक्तवान्कृतार्थोऽपि मुनिरिति तृतीयोऽभिप्रायः ॥ २७ ॥

कर्महेतुविरुद्धत्वात्सम्यग्ज्ञानस्य कर्मणा ॥
विरोधोऽत्यर्थमेवातस्तत्त्यक्तं ज्ञानशालिना ॥ २८ ॥

कथं विरोधस्तयोरित्याशङ्क्याऽऽह । कर्मेति । यथोक्तविरोधद्योतनार्थं कर्मत्यागं कृतकृत्यस्योक्तं निगमयति । अत इति ॥ २८ ॥

एवं काण्डद्वयेनेयं सफलाऽनवशेषतः ॥
सर्वसंन्यासनिष्ठा च ब्रह्मविद्या समीरिता ॥ २९ ॥

काण्डद्वयतात्पर्यमुपसंहरति । एवमिति ॥ २९ ॥

एतावानुपदेशः स्याद्वेदे श्रेयोर्थिनां नृणाम् ॥
कृतकृत्यो भवेत्क्षिप्रमेतज्ज्ञात्वाऽनुशासनम् ॥ ३० ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके चतुर्थाध्यायस्य
पञ्चमं ब्राह्मणम् ॥ ५ ॥

त्रिसाहस्री तथा पञ्च शतान्यत्र समासतः ॥
चत्वारिंशत्तथा श्लोकाः षष्ठाध्यायस्य वार्तिके ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यभगवत्पूज्यपादश्रीशंकराचार्यशिष्य-
सुरेश्वराचार्यकृतौ बृहदारण्यकोपनिषद्भाष्यवार्तिके
चतुर्थोऽध्यायः ॥ ४ ॥

बृहदारण्यकक्रमेण षष्ठोऽध्यायः ॥ ६ ॥

तल्लाभे कार्यान्तराभावं दर्शयति । एतावानिति । अथोपदेशान्तरमपि सुगतादिभिरुच्यते तत्राऽऽह । वेद इति । चैत्यवन्दनादिरुपदेशो म्लेच्छप्रायाणां पुरुषापसदानां भवतीति न पुरुषधौरेयाणां मुमुक्षूणामित्याह । श्रेयोर्थिनामिति । वेदानुशासनज्ञानफलमाह । कृतकृत्य इति । तत्र हेत्वन्तरनैरपेक्ष्यं सूचयति । क्षिप्रमिति ॥ ३० ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां चतुर्थाध्यायस्य
पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्येण श्रीमदानन्दज्ञानेन
विरचितायां श्रीमत्सुरेश्वरवार्तिकटीकायां शास्त्रप्रकाशिकाख्यायां
चतुर्थोऽध्यायः ॥ ४ ॥

श्लोकानामादितः समष्ट्यङ्काः—१०४०८ ।

# अथ पञ्चमोऽध्यायः ।

---

**समाप्तं याज्ञवल्कीयं काण्डमैकात्म्यनिष्ठितम् ॥**
**खिलकाण्डमथेदानीं यथावदुपवर्ण्यते ॥ १ ॥**

पूर्वस्मिन्नध्याये ब्रह्मात्मज्ञानं सविषयं सफलं साङ्गोपाङ्गं वादन्यायेनोक्तमिदानीं वृत्तमनूद्य संगतिं वदन्काण्डान्तरमाह । **समाप्तमिति** ॥ १ ॥

**संभावितं न यत्पूर्वं कर्मविज्ञानकाण्डयोः ॥**
**तदत्र भण्यते सर्वं खिलकाण्डत्वहेतुतः ॥ २ ॥**

ननु पूर्वत्रानुक्तं वक्तव्यत्वेनावशिष्टं खिलमित्युच्यते तद्विषयत्वेन काण्डारम्भो न युक्तः सर्वस्यार्थस्य काण्डद्वयेनोक्तत्वादवशेषाभावात्तत्राऽऽह । **संभावितमिति** । क्रियाविशेषस्य शिष्टत्वात्तस्य खिलतया तद्विषयत्वेन काण्डारम्भ इत्यर्थः । शिष्टस्यापेक्षितस्यात्र वक्तव्यत्वे हेतुमाह । **खिलेति** ॥ २ ॥

**अपास्तनिखिलध्वान्ततज्ज्ञं[1] ब्रह्मोपवर्णितम् ॥**
**पूर्वैश्चतुर्भिरध्यायैर्यद्धीः कैवल्यसिद्धये ॥ ३ ॥**

उक्तां संगतिं व्यनक्ति । **अपास्तेति** । तदुक्तिफलमाह । **यद्धीरिति** ॥ ३ ॥

**सोपाधिकस्य तस्यैव व्यवहारानुपातिनः ॥**
**उपासनानि वाच्यानि यान्यनुक्तान्यतः परम् ॥ ४ ॥**

समाप्तमित्यादिभागं विभज्य खिलकाण्डं विभजते । **सोपाधिकस्येति** । तान्यतः परं वाच्यानीति संबन्धः ॥ ४ ॥

**प्रकृष्टाभ्युदयार्थानि क्रममुक्तिकराणि च ॥**
**क्रियाभिश्चाविरुद्धानि वाच्यानीति परा श्रुतिः ॥ ५ ॥**

तानि त्रेधा विभजति । **प्रकृष्टेति** । अभ्युदयफलानि क्रममुक्तिफलानि कर्मसमुच्चयार्थानि च त्रिविधान्युपासनानि तानि वाच्यानीति कृत्वा परा श्रुतिरिति योजना ॥ ५ ॥

**तथोंकारं दमं दानं दयामित्यादिकानि च ॥**
**सर्वोपास्त्यङ्गभूतानि वक्तव्यानीति यत्यते ॥ ६ ॥**

वाच्यमर्थान्तरमाह । **तथेति** । उपास्तिवदित्यर्थः । शिक्षेदिति वक्ष्यमाणक्रियया कर्मणः संबन्धः । आदिशब्देन गतिः फलमित्यादि गृह्यते । तेषां वाच्यत्वे हेतुः । **सर्वेति** ॥ ६ ॥

**कार्यकारणसंबन्धव्याजमाश्रित्य तत्परम् ॥**
**व्याख्यातं यत्नतः पूर्वमात्मज्ञानप्रसिद्धये ॥ ७ ॥**

---

[1] क. ग. 'तज्जन्' ।

काण्डारम्भमुक्त्वा पूर्णवाक्यस्य वृत्तमनूद्य तात्पर्यमाह । **कार्येति** । मिथ्याभूतं कार्यकारणसंबन्धमाश्रित्य तात्पर्येण ब्रह्मव्याख्यानस्य फलमाह । **आत्मेति** ॥ ७ ॥

**चरितार्थत्वतस्तस्य कार्यकारणवस्तुनः ॥**
**निषेधायेयमुक्तिः स्यात्पूर्णमित्येवमादिना ॥ ८ ॥**

सत्यात्मज्ञाने कार्यादेस्तादर्थ्येन कल्पितस्य कृतफलतया पुनरनुपयोगात्तन्निषेधार्थं पूर्णवाक्यमित्याह । **चरितार्थत्वत इति** ॥ ८ ॥

**न व्यावृत्तमिदं सर्वं पराक्प्रत्ययमानगम् ॥**
**नानुवृत्तं तथैवैतन्नाप्यभावैकनिष्ठितम् ॥ ९ ॥**

ननु कार्यादि ब्रह्मणि निषिद्धमिह निषिद्धघटवदन्यत्रास्तीति चेद्ब्रह्मणो न पूर्णता तस्य ब्रह्ममात्रत्वेऽपि स एव दोषः परिच्छिन्नाभिन्नस्य पूर्णत्वायोगात्तच्चेत्तुच्छमध्यक्षादि-विरोधः स्यादित्याशङ्क्यान्यत्रास्तित्वकृतं दोषं तावन्निरस्यति । **नेत्यादिना** । न हीदं ब्रह्मणोऽन्यत्रास्ति भेदस्य दुर्निरूपत्वान्न च ततोऽर्थान्तरं स्वतः परतश्च सिध्यति जड-त्वाचिदसंबन्धाच्चेत्यर्थः । अभेदप्रयुक्तदोषं प्रत्याह । **परागिति** । न हीदं प्रत्यगभिन्नं पराक्त्वेन भानादित्यर्थः । जडाजडयोर्भेदायोगाच्च न ब्रह्माभिन्नं तदित्याह । **नेति** । यथैतन्न व्यावृत्तं तथैवानुवृत्तमपि न भवतीत्यर्थः । तुच्छत्वनिमित्तदोषं निराह । **नापीति** । अपरोक्षप्रतीतेरर्थक्रियादृष्टेश्चेत्यर्थः ॥ ९ ॥

**अव्यावृत्ताननुगतमात्मप्रत्ययमीरितम् ॥**
**यस्मात्पूर्णमिदं साक्षात्तादात्म्यं तेन वर्ण्यते ॥ १० ॥**

अन्वयव्यतिरेकाभावैर्जगतो दुर्निरूपत्वे फलितमाह । **अव्यावृत्तेति** । यस्मादिदं जगदन्वयादित्यागेनाद्वयं स्वप्रकाशं ब्रह्मैव तस्मात्पूर्णस्येत्यादिवाक्येन यदैक्यं स्फुटमु-च्यते तद्युक्तमित्यर्थः ॥ १० ॥

**अज्ञातमिथ्याविज्ञाततत्त्वमात्रैकनिष्ठितम् ॥**
**सम्यग्ज्ञानं यतस्तस्मात्पूर्णं तज्ज्ञेयमुच्यते ॥ ११ ॥**

ननु प्रत्यग्ब्रह्म ज्ञायते न वा न चेन्न पूर्णतानिश्चयो ज्ञायते चेज्ज्ञानस्य पृथग्भा-वान्न पूर्णत्वं तत्राऽऽह । **अज्ञातेति** । सर्वकल्पनाधिष्ठानतया तत्स्वरूपं ब्रह्म सम्य-ग्ज्ञानस्य विषयस्तस्य च वाक्यीयधीवृत्तिरूपस्य कार्यान्तर्गमाद्ब्रह्मैव यतो रूपमतोऽस्य युक्ता पूर्णतेत्यर्थः ॥ ११ ॥

**गोत्ववन्नानुवृत्तं यन्न व्यावृत्तं च खण्डवत् ॥**
**अनन्यमानमानन्दं पूर्णं तदभिधीयते ॥ १२ ॥**

---

१ ख. निरस्यति । २ ख. °यमामित° ।

पूर्णवाक्यस्याद्वयप्रत्यग्ब्रह्मावेदने तात्पर्यमुक्त्वाऽक्षराणि व्याकुर्वन्पूर्णपदं व्याचष्टे । **गोत्ववदिति** ॥ १२ ॥

**अदः परोक्षमत्यन्तं सर्वकार्यस्य कारणम् ॥**
**कार्यानुमेयं तद्विद्यात्पूर्णमात्रसतत्त्वकम् ॥ १३ ॥**

अदःशब्दं व्याकरोति । **अद इति** । आत्यन्तिकपरोक्षत्वे हेतुमाह । **सर्वेति** । कारणमनूद्य वस्तुमात्रत्वं विधेयमिति वाक्यार्थमाह । **तदिति** ॥ १३ ॥

**इदं यज्जनिमत्किंचिन्नामरूपक्रियात्मकम् ॥**
**प्रत्यक्षाद्यवसेयं यत्पूर्णं तदपि पूर्ववत् ॥ १४ ॥**

पूर्णमद इतिपदाभ्यां तत्पदस्य वाच्यं लक्ष्यं चोक्त्वा पूर्णमिदमित्यस्यार्थमाह । **इदमिति** । तत्रेदंशब्दप्रवृत्तौ निमित्तमाह । **प्रत्यक्षादीति** । यथा कारणमनूद्य वस्तुमात्रत्वं विहितं तथा च कार्यानुवादेन तस्य तन्मात्रत्वं विधेयमित्याह । **पूर्ववदिति** । आभ्यां पदाभ्यां त्वंपदस्य वाच्यं लक्ष्यं चोच्यते तथाच पदचतुष्टयसमभिव्याहारात्तत्त्वमर्थयोरैक्यं विवक्षितम् ॥ १४ ॥

**कार्यकारणयोश्चेष्टा पूर्णात्पूर्णमितीर्यते ॥**
**वस्तुवृत्तमिदं तावत्प्रागपि ज्ञानसंगतेः ॥ १५ ॥**

पूर्णादित्यस्य वाक्यस्य तात्पर्यमाह । **कार्येति** । कार्यस्योत्पादनमित्येवंरूपो व्यापारः पूर्णादित्यादिनोच्यत इत्यर्थः । तत्त्वंपदयोर्वाच्योऽर्थोऽत्र प्रपञ्चितः । ननु पूर्णमित्यादावकार्यकारणं तत्त्वमुक्तं तस्य च ज्ञानोत्पत्तेरूर्ध्वमेवंरूपत्वेऽपि प्राक्कार्यकारणात्मत्वमेवान्यथा पूर्णादित्यादिविरोधादत आह । **वस्तुवृत्तमिति** । यद्वोक्तकार्यकारणत्वस्य वस्तुत्वमाशङ्क्योक्तम् । **वस्तुवृत्तमिति** । ज्ञानात्पूर्वमज्ञानसंभवात्तत्र कार्याद्यात्मकं वस्तुनो वृत्तं तथाऽपि वस्तुतो नैतदस्तीत्यर्थः ॥ १५ ॥

**अथ हेतुफलावेशनिषेधाय परं वचः ॥**
**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ १६ ॥**

पूर्णस्येत्यादेस्तात्पर्यमाह । **अथेति** । पूर्णादित्यादिनोक्तकार्यकारणत्वनिरासद्वारा शिष्टवस्त्वादानेन तज्ज्ञानफलोक्त्यर्थं वाक्यमित्यर्थः ॥ १६ ॥

**ब्रह्म वा इदमित्यादि मधुकाण्डे यदीरितम् ॥**
**तदेव पूर्णमित्यादिवाक्येनेहोपसंहृतम् ॥ १७ ॥**

फलमैक्यज्ञानं ब्रह्मकण्डिकायामुक्तं तदिह कस्मादुच्यते पिष्टपिष्टेरकिंचित्करत्वात्तत्राऽऽह । **ब्रह्मेति** । इहेति खिलकाण्डोक्तिः ॥ १७ ॥

अपीताखिलकार्यं सत्तमोमात्रावशेषगम् ॥
भास्वत्स्वार्थं चिदेकस्थमदः पूर्णमिहोच्यते ॥ १८ ॥

कथं तार्तीयवाक्येन पूर्णवाक्यस्यैकवाक्यतेत्याशङ्क्य ब्रह्मपदेन पूर्णमित्यादिपदद्वय-स्यैकार्थतामाह । **अपीतेति** । मुक्त्यालम्बनं व्यावर्तयति । **तमोमात्रेति** । भास्वदिति साक्षित्वं स्वार्थमित्यन्यानपेक्षत्वमुच्यते । तत्र हेतुः । **चिदेकस्थमिति** । अविद्यासाक्षि-भूतं चैतन्यं तत्पदवाच्यं तृतीये ब्रह्मशब्दितमत्र पूर्णमद इति वाक्येनोक्तमित्यर्थः॥१८॥

तमोन्वितं च यत्कार्यं साक्षिणः साक्ष्यतां गतम् ॥
प्रत्यक्षमागमापायि विद्यात्पूर्णमिदं तथा ॥ १९ ॥

इदंशब्देन पूर्णमिदमितिपदयोरैकार्थ्यमाह । **तमोन्वितं चेति** । बुद्ध्यादेः कार्यत्व-सिद्ध्यर्थं साक्षिण इत्यादिविशेषणानि । बुद्ध्यादिसाक्षिभूतं चैतन्यं त्वंपदवाच्यं पूर्वत्रेदंशब्दितमत्र पूर्णमिदमित्युक्तमित्यर्थः ॥ १९ ॥

ईशक्षेत्रज्ञयोरेवं तमस्तज्जाभिसंस्थयोः ॥
सामानाधिकरण्यादेर्वाक्यादैकात्म्यमुच्यते ॥ २० ॥

तदात्मानमित्यादिना पूर्णस्येत्यादेरैकार्थ्यं दर्शयति । **ईशेति** । तत्त्वमर्थयोराविद्यं कार्यकारणत्वं पूर्णादित्यादिनोच्यते तयोरैक्यज्ञानं सामानाधिकरण्यद्वारा तत्त्वमस्यादि-वाक्यवद्वाक्यादुत्पद्यते तच्च मुक्तिफलं तस्मात्तत्सर्वमभवदिति पूर्वत्रोक्तमत्र पूर्णस्येत्या-दिना गृहीतमित्यर्थः । एवमित्युक्तदृष्टान्तद्योतनार्थम् ॥ २० ॥

क्षेत्रज्ञेश्वरभेदेन ह्यभिन्नं वस्त्वविद्यया ॥
भिन्नं बोधात्तमोध्वस्तौ नेतीत्यात्माऽवशिष्यते ॥ २१ ॥

कथं तयोरैक्यधीर्भेदधीविरोधादित्याशङ्क्याऽऽह । **क्षेत्रज्ञेति** । वस्तुतः श्रुतिस्मृति-युक्तिप्रसिद्धेरभिन्नमपि वस्तु जीवेश्वरजगद्भेदेनाविद्यया भिन्नं प्रतिभाति ततश्च विद्ययाऽ-विद्याविध्वंसे निर्विशेषमेकमेवाऽऽत्मरूपं सिध्यतीत्यर्थः ॥ २१ ॥

न भेदो न च संसर्गो नाप्यभावोऽवसीयते ॥
तन्मूलाज्ञानविध्वस्तेर्यथोक्तागममानतः ॥ २२ ॥

निर्विशेषमात्मतत्त्वमवशिष्टमित्यश्लिष्टं भेदो वा संसर्गो वाऽन्यापोहो वा वाक्यार्थ इति स्थितेरित्याशङ्क्याऽऽह । **नेत्यादिना** । तत्र हेतुः । **तन्मूलेति** ॥ २२ ॥

स्रगज्ञानमनादाय तदुत्थैः संगतिः स्रजः ॥
नैव संभाव्यते यद्वत्तथेहाऽऽत्मानि वीक्ष्यताम् ॥ २३ ॥

वाक्योत्थज्ञानाद्भेदादिमूलाज्ञानध्वंसेऽपि तत्संगतिरात्मनि स्वाभाविकी किं न

---

१ ख. ग. आपीता° । २ ख. °ह । आर्पा° । ३ ख. °वशिष्यते ।

स्यादित्याशङ्क्याऽऽह । स्रगिति । वीक्ष्यतामज्ञानोत्थैर्भेदादिभिः संगतिरज्ञानकृतैवेति शेषः ॥ २३ ॥

**कार्यकारणयोर्ध्वस्तावपूर्वाद्युक्तिबोधतः ॥**
**आत्मप्रत्ययमागम्यः स्वार्थ आत्माऽवशिष्यते ॥ २४ ॥**

अज्ञानादात्मनि भेदादिसंबन्धेऽपि कथं तस्यैकरस्यमित्याशङ्क्याऽऽह । **कार्येति** ॥ २४ ॥

**यादृगस्य द्वये रूपमात्मनैवावगम्यते ॥**
**तावदेव हृतान्ध्यस्य तदन्यानवशेषतः ॥ २५ ॥**

सकार्याविद्याध्वस्तावात्मा स्वरूपेणैव शिष्यते चेत्पूर्वमन्यादृशतया सविशेषतेत्याशङ्क्याऽऽह । **यादृगिति** । देहादौ साक्षित्वलक्षणं यद्रूपमविद्यादशायामस्य स्वरूपेणानुभूतं तदेव विद्यावस्थायां ध्वस्ताविद्यस्याऽऽत्मनो रूपं तद्ध्वस्तावन्यस्यानवशेषादतो युक्तमैकरस्यमित्यर्थः ॥ २५ ॥

**यदेवेहेति च तथा मन्त्रोऽप्युच्चैर्जगाद नः ॥**
**अन्यदेवेति च श्रुतिः कार्येतरनिषेधिनी[1] ॥ २६ ॥**

तत्र श्रुतिं प्रमाणयति । **यदेवेति** । तदमुत्र[2] यदमुत्र तदन्विहेति शेषसंग्रहश्चार्थः । तथेत्यैक्योक्तिः । अकार्यकारणं तत्त्वमित्यत्रापि श्रुतिमाह । **अन्यदिति** ॥ २६ ॥

**आत्मेतिदृष्टेर्मेयत्वं स्वार्थावगतितोऽपरम्[3] ॥**
**नान्यदुत्सहते वोढुमिति पूर्वमवादिषम् ॥ २७ ॥**

आत्मनि ज्ञाते सर्वं ज्ञातं भवतीत्यात्मज्ञानेन सर्वस्य ज्ञेयत्वोपगमात्तन्निषेधश्रुतिः श्रुत्यन्तरविरुद्धेत्याशङ्क्याऽऽह । **आत्मेति** । तद्दृष्टिस्तावन्नानात्मानं गोचरयत्यात्मदृष्टित्वव्याघातान्न चानात्मा तद्विषयस्तत्त्वविरोधादात्मज्ञानेन सर्वज्ञानश्रुतिस्तु तदितरसर्वाभावात्तस्मात्कार्येतरनिषेधसिद्धिरित्यर्थः ॥ २७ ॥

**एवं यथोदिते तावत्प्रमाणार्थेऽप्यवस्थिते[4] ॥**
**अन्यथेदं वचः केचिद्याचख्युरतिनैपुणात् ॥ २८ ॥**

पूर्णवाक्यमखण्डाद्वयप्रत्यग्ब्रह्मपरं व्याख्यातमिदानीं भर्तृप्रपञ्चव्याख्यानमुत्थापयति । **एवमिति** । प्रमाणं पूर्णवाक्यम् ॥ २८ ॥

**पूर्णमित्यादिवाक्यस्य पष्ठान्त्यवचसा सह ॥**
**वक्तुकामो हि संबन्धमेवं यत्नादचीक्लृपत् ॥ २९ ॥**

कथमन्यथा व्याख्यानमित्याशङ्क्य तदर्थं परोक्तसंबन्धमनुद्रवति[5] । **पूर्णमित्या-**

---

१ क. ग. °षेधनी । २ क. °त्र त° । ३ ग. °ति नाप° । ४ ख. °र्थे व्यव° । ५ ख. °नुवदति ।

दीति । पूर्णवाक्यस्य यत्र हीत्यादिवाक्येन संबन्धं वक्तुमिच्छन्तस्तदर्थं वक्ष्यमाणप्रकारेण विचार्य कल्पितवन्त इत्यर्थः । षष्ठाध्यायावसानिकवाक्यप्रतीकवाक्यग्रहार्थो हिशब्दः ॥ २९ ॥

**द्वैताद्वैतात्मकं ब्रह्म मैत्रेय्यै वर्णितं किल ॥**
**यत्र हि द्वैतमित्युक्त्या यत्र त्वस्येति चाऽऽदरात् ॥ ३० ॥**

कल्पितं वाक्यार्थं दर्शयति । **द्वैतेति** । किलेत्यसंमतिरुक्ता । मैत्रेयीब्राह्मणे भिन्नाभिन्नं ब्रह्मेति वाक्यं नास्ति चेत्तत्राऽऽह । **यत्र हीति** । यत्र हि द्वैतमिति द्वैतात्मकं ब्रह्मोक्त्वा यत्र त्वस्येत्यद्वैतात्मकं तदुक्तं तथाच वाक्याभ्यां भिन्नाभिन्नब्रह्मसिद्धिरित्यर्थः ॥ ३० ॥

**यद्यद्वैतं परं ब्रह्म तत्र स्यात्परमार्थतः ॥**
**कल्पितं प्रसजेद्द्वैतं तोयबुद्धिरिवोषरे ॥ ३१ ॥**

संबन्धं वक्तुकामैरर्थश्चेदित्थं कल्पितस्तर्हि कोऽसौ संबन्ध इत्याशङ्क्य तं वक्तुमाक्षिपति । **यदीति** । तत्रेति मैत्रेयीब्राह्मणोक्तिः । अद्वैतं द्वैतं वा वास्तवमिति विकल्प्याऽऽद्ये द्वैतस्य मृषात्वप्रसक्तिरित्युक्तं तत्र हेतुगर्भं दृष्टान्तमाह । **तोयेति** । ऊषरे तोयधीवद्द्वैतधियो भ्रमत्वादित्यर्थः ॥ ३१ ॥

**मृषात्वाद्भेदजातस्य सर्गस्थित्याद्यसंभवात् ॥**
**सर्गस्थितिलयानां स्यादन्वाख्यानं मृषैव तु ॥ ३२ ॥**

इष्टमेव तस्य कल्पितत्वमित्याशङ्क्य निर्विषयतया सृष्ट्यादिश्रुतेरप्रामाण्यप्रसक्तिदोषमाह । **मृषात्वादिति** ॥ ३२ ॥

**श्रवणप्रतिपत्ती च व्यर्थे स्यातां तथाऽद्वये ॥**
**अथ स्वेनैव रूपेण द्वैतमस्तीति भण्यते ॥ ३३ ॥**

तत्रैव दोषान्तरमाह । **श्रवणेति** । अद्वये वास्तवे सति मननादिसहितं श्रवणं तत्पूर्णतावेधिरनाधेयातिशयात्मन्यफले स्यातां तथाचोपनिषदप्रामाण्यमित्यर्थः । द्वितीयमुत्थापयति । **अथेति** ॥ ३३ ॥

**अन्वाख्यानं सतामेव सर्गादीनां तथा भवेत् ॥**
**तथाऽप्यद्वैतसंदृष्टेर्मृषात्वं स्याद्विरोधतः ॥ ३४ ॥**

द्वैतस्य स्वरूपेण सत्त्वे फलितमाह । **अन्वाख्यानमिति** । सर्गादिश्रुतेर्मानत्वमङ्गीकृत्य दूषयति । **तथाऽपीति** । अद्वैतदृष्टेरपि द्वैतदृष्टिवत्प्रमात्वमाशङ्क्याऽऽह । **विरोधत इति** । नैकत्र ते दृष्टिप्रमाणे तमःप्रकाशदृष्टिवदित्यर्थः ॥ ३४ ॥

---

१ क. तत्कृता° । २ क. ख. °वधीर° ।

**परिकल्पिततादोष एवमत्र प्रसज्यते ॥**
**तद्दोषापनुनुत्सायै पूर्णमित्यादिका श्रुतिः ॥ ३५ ॥**

कल्पद्वये दर्शितं दोषं निगमयति । **परिकल्पितततेति** । अत्रेति कल्पद्वयोक्तिः । आक्षेपोत्तरत्वेन मन्त्रमवतारयति । **तद्दोषेति** । शङ्कितदोषस्येष्यमाणापनोदार्थं पूर्णवाक्यमित्यर्थः ॥ ३५ ॥

**न कश्चिदपि दोषोऽत्र यथा तदभिधीयते ॥**
**स्वानुभूत्यनुसारेण सर्वं सुस्थं भवेदतः ॥ ३६ ॥**

कथमत्र तन्निरसनमित्याशङ्क्याऽऽह । **नेति** । द्वैताद्वैतयोरन्यतरस्य मृषात्वप्रयुक्तो दोषो यथा न भवति तथा द्वयोरवस्थयोर्वस्तुत्वमस्मिन्मन्त्रे कथ्यतेऽतः स्वानुभवाद्द्वैतस्याद्वैतस्य च श्रुतिवशादिष्टत्वात्कर्मकाण्डप्रामाण्यादि संभवतीत्यर्थः ॥ ३६ ॥

**अदः परोक्षमत्यन्तं कारणं पूर्णमुच्यते ॥**
**व्योमवद्व्यापि सद्ब्रह्म सर्वतोऽनवखण्डितम् ॥ ३७ ॥**

तात्पर्यमुक्त्वा पूर्णमद इत्यस्यार्थमाह । **अद इति** ॥ ३७ ॥

**ब्रह्मणो याऽद्वयावस्था सैव तावदिहोदिता ॥**
**एवं चेदद्वयं ब्रह्म द्वैतावस्था न सिध्यति ॥ ३८ ॥**
**इतिदोषनिषेधार्थमिदं पूर्णमितीर्यते ॥**
**यथोक्तावस्थयोर्मा भून्मृषात्वं ब्रह्मणः सदा ॥ ३९ ॥**

वाक्यार्थमुपसंहरति । **ब्रह्मण इति** । पूर्णमिदमिति वाक्यं शङ्कापूर्वकमादत्ते । **एवं चेदिति** । द्वयोरवस्थयोर्वास्तवत्वं मन्त्रप्रकाश्यमित्युक्तं कथं निर्वहेदित्याशङ्क्याऽऽह । **यथेति** । तत्र हेतुः । **सदेति** । तयोरवस्थयोः सदा सत्त्वादित्यर्थः ॥ ३८ ॥ ३९ ॥

**पूर्णब्रह्मपरिज्ञानाव्यतिरेकत्वहेतुतः ॥**
**अदोवत्कार्यमप्येतत्पूर्णमेवावसीयताम् ॥ ४० ॥**

अद्वैतावस्था यद्यपि सदा सती वास्तवी तथाऽपि न द्वैतावस्था तथेत्याशङ्क्याऽऽह । **पूर्णेति** । ब्रह्मैव पूर्णं परितो ज्ञातिरूपं तस्मादव्यतिरेकात्कारणवत्कार्यमपि पूर्णमेवेत्यर्थः ॥ ४० ॥

**पूर्णेनाभेदतः कार्यं पूर्णं स्यान्न मृषा श्रुतेः ॥**
**यद्यतो नातिरेकेण तत्तदेवेति निश्चितिः ॥ ४१ ॥**

तथाऽपि कथं वास्तवमित्याशङ्क्याऽऽह । **पूर्णेनेति** । तस्य पूर्णाभेदे मानमाह । **श्रुतेरिति** । पूर्णमिदमितिश्रवणादित्यर्थः । पूर्णात्कार्यस्याव्यतिरेकेऽपि कथं वस्तुत्वं तत्राऽऽह । **यद्यत इति** । अत्र घटशरावाद्युदाहरणम् ॥ ४१ ॥

एवं तर्ह्येकरूपेऽस्मिंस्तत्त्वे सत्ये समर्थिते ॥
ततः सर्गाद्यभावः स्यादेकरूपतया स्थितेः ॥ ४२ ॥

पूर्णादित्यादिवाक्यस्य व्यावर्त्यां शङ्कामाह । **एवं तर्हीति** । अवस्थाद्वयस्य सत्यत्वे कार्यकारणत्वव्यवस्थानुपपत्तिरित्यर्थः । एकरूपत्वमत्र द्वैताद्वैतात्मना द्रष्टव्यम् ॥४२॥

नैवं यतः श्रुतिः प्राह पूर्णात्पूर्णमुदच्यते ॥
पूर्णात्कारणतः पूर्णं द्वैतमेतदुदच्यते ॥ ४३ ॥

तदुत्तरत्वेन वाक्यमवतारयति । **नैवमिति** । तां व्याकरोति । **पूर्णादिति** ॥ ४३ ॥

यस्मादुद्रिच्यमानं हि द्वैतं नैवातिरिच्यते ॥
तदेवोद्रेचनं चेत्स्याद्द्वैतस्येति मतं यदि ॥ ४४ ॥

अद्वैतकार्यत्वे द्वैतस्योक्ते सिद्धान्त्याशङ्कते । **यस्मादिति** । द्वैतस्याद्वैतादुद्रेचनमुद्भवनमिष्टं चेत्तर्हि तस्मादद्वैतादुद्गच्छन्न ततोऽतिरिच्यते किंतु तत्र कल्पितं तदेव स्यान्न हि रज्जोरुद्गच्छन्नुरगस्तस्माद्भिद्यते तथाच विवर्तवादः स्यादित्यर्थः । दृष्टान्तद्योतको हिशब्दः ॥ ४४ ॥

नैतदेवं कुतो यस्माद्दृष्टहानं प्रसज्यते ॥
प्रत्यक्षतो हि दृष्टोऽयं द्वैताख्यो विषयः स्फुटः ॥ ४५ ॥

द्वैतस्य मिथ्यात्वानुपपत्तेर्नैवमित्येकदेशी दूषयति । **नैतदिति** । मिथ्यात्वासंभवे हेतुं पृच्छति । **कुत इति** । एकदेशी हेतुमाह । **यस्मादिति** । प्रसङ्गं प्रकटयितुं दृष्टं व्याचष्टे । **प्रत्यक्षतो हीति** । उक्तदृष्टौ संप्रतिपत्त्यर्थो हिशब्दः ॥ ४५ ॥

तथा दर्शनतः सिद्धो विधितश्चावसीयते ॥
प्रामाण्योच्छेद एव स्याच्छ्रुतेरेवं समर्थने ॥ ४६ ॥

दृष्टत्वमिव श्रुतत्वमपि तस्यास्तीत्याह । **तथेति** । यथा दर्शनतः सिद्धस्तथा विधितश्चेति योजना । द्वैतस्य रज्जुसर्पवन्मिथ्यात्वोक्तौ न दृष्टत्वहानिरेव किंतु कर्मश्रुतेर्विषयाभावादप्रामाण्यं च स्यादिति फलितमाह । **प्रामाण्येति** ॥ ४६ ॥

पारमार्थ्यं क्वचिच्छास्त्रं क्वचिच्चाप्यनृतात्मताम् ॥
विदधन्मानतां जह्यात्परस्परविरोधतः ॥ ४७ ॥

तदप्रामाण्येऽपि का हानिर्ब्रह्मात्मवादिनामित्याशङ्क्य ज्ञानकाण्डस्यापि तत्प्रसक्तेर्नैवमित्याह । **पारमार्थ्यमिति** । अद्वैतविषयः प्रथमः क्वचिच्छब्दः ॥ ४७ ॥

पूर्णत्वेनाजहद्वृत्त्या त्रिष्वप्यध्वसु वर्तते ॥
द्वैताद्वैतात्मकं ब्रह्म पूर्णत्वेनाविभागतः ॥ ४८ ॥

---

१ ख. 'दुदच्य'।

श्रुतावष्टम्भेनाद्वैतवद्वैतमपि पारमार्थिकमिति समर्थितमिदानीं तत्रैव हेत्वन्तरमाह । **पूर्णत्वेनेति** । ब्रह्म द्वैताद्वैतात्मकमुत्पत्तिस्थितिलयकालेषु त्रिष्वपि वर्तते पूर्णत्वेनावस्थाद्वयमपरित्यज्यैव सदावस्थानादन्यतरावस्थानत्यागे पूर्णत्वायोगात्तस्मात्तेन वस्तुरूपेणावस्थयोरविभागात्तयोरस्ति वास्तवत्वमित्यर्थः ॥ ४८ ॥

**कुतोऽविभागो मानाच्चेदुभयोरप्यवस्थयोः ॥**
**पूर्णादित्यादिवचनान्महाप्रलय आत्मनि ॥ ४९ ॥**

अवस्थाद्वयस्य वस्तुरूपेणाविभागे मानं पृच्छति । **कुत इति** । परिहरति । **पूर्णादित्यादीति** । पूर्णात्पूर्णमुदच्यत इति द्वैताद्वैतयोः कार्यकारणत्वमुक्त्वा पूर्णस्येत्यादिना प्रलयावस्थायामात्मन्यवस्थाद्वयस्याविभागेनावस्थानं दर्शयता द्वैताद्वैतात्मकमेवाऽऽत्मवस्तु परिशिष्टमित्यर्थः ॥ ४९ ॥

**इदं च द्वैतमस्त्येव तथाऽदोऽद्वैतमेव च ॥**
**पूर्णत्वाख्याजहद्वृत्त्या समुद्रोर्मिवदीक्ष्यताम् ॥ ५० ॥**

प्रलयावस्थायामद्वैतावस्थैवास्ति नेतरा लीनत्वादित्याशङ्क्याऽऽह । **इदं चेति** । भेदेनासदपि द्वैतं ब्रह्मरूपेणास्तीत्यत्र हेतुदृष्टान्तावाह । **पूर्णत्वेति** । यथा समुद्रात्मन्यूर्म्यादिविभागस्य जलात्मत्वेनैकरूपत्वस्य च सदा सत्त्वं तथा पूर्णत्वाख्यवस्तुनोऽवस्थाद्वयमजहतः सदाऽवस्थानात्तत्रावस्थाद्वयं प्रलयेऽप्यस्तीत्यर्थः ॥ ५० ॥

**अग्रे चलत्वमूर्मीणां मध्य ईषच्चलात्मता ॥**
**निष्कम्पत्वं तथा मूले समुद्रः सर्वरूपभृत् ॥ ५१ ॥**

दृष्टान्तं प्रपञ्चयति । **अग्र इति** ॥ ५१ ॥

**यथैता यौगपद्येन वृत्तीरूर्मिभिरात्मनः ॥**
**अनुभूयन्त एकत्र देवदत्तादिके तथा ॥ ५२ ॥**

तमनूद्य दार्ष्टान्तिकमाह । **यथेति** । आत्मनः समुद्रस्योर्मिद्वारा यौगपद्येनैताश्चलाचलत्वादिवृत्तयो यथाऽनुभूयन्ते तथैकत्र मैत्रादिक्षेत्रज्ञे युगपदेता वृत्तीरालोचयेदित्यर्थः ॥ ५२ ॥

**निष्कम्पा देवदत्तस्य वृत्तिः स्यात्परमात्मना ॥**
**ईषत्प्रचलिता प्राणभावेनेत्यवगम्यते ॥ ५३ ॥**

**विराड्भावेनातितरां चण्डप्रचलितोर्मिवत् ॥**
**ऊर्म्यग्रवत्पिण्डभावे नामरूपक्रियात्मना ॥ ५४ ॥**

दार्ष्टान्तिकं व्याचष्टे । **निष्कम्पेति** । प्राणशब्दः सूत्रार्थः । पिण्डभावश्चतुर्विधभूतग्रामत्वम् । अत्यन्तप्रचलितादपि प्रचलितत्वं व्यष्टिदेहग्रहे केनाऽऽकारेणेत्यपेक्षायामाह । **नामेति** ॥ ५३ ॥ ५४ ॥

**जनिस्थितिलयेष्वेवं त्रिषु कालेषु पूर्णता ॥**
**कार्यकारणयोर्ज्ञेया द्वैताद्वैतस्वभावयोः ॥ ५५ ॥**

अवस्थाद्वयस्य वस्तुत्वमुपसंहरति । **जनीति** ॥ ५५ ॥

**सा चैकैवाविभागत्वात्कार्यकारणभेदतः ॥**
**भेदेन व्यपदेशार्हा सर्वमेवं समञ्जसम् ॥ ५६ ॥**

द्वैतावस्थायामन्या पूर्णताऽन्या चाद्वैतावस्थायामित्याशङ्क्याऽऽह । **सा चेति** । अविभागत्वाद्वस्तुतः पूर्णता विभागसाधकाभावादित्यर्थः । कारणं पूर्णं कार्यं पूर्णमितिभेदोक्तिस्तर्हि कथमित्याशङ्क्याऽऽह । **कार्येति** । द्वैतमद्वैतं च वास्तवमित्युक्तं तन्निगमयति । **सर्वमिति** ॥ ५६ ॥

**आविर्भावतिरोभावैः कार्यकारणरूपिभिः ॥**
**समुद्रवन्नृत्यति च प्रत्यवस्थं विभुः स्थितः ॥ ५७ ॥**

अद्वैतावस्था कारणं कार्यं द्वैतावस्थेत्यवस्थयोरेव तद्भावो ब्रह्म तूभयतो बहिरेकरसमित्याशङ्क्याऽऽह । **आविर्भावेति** । न हि स्वातन्त्र्यमवस्थयोरास्थातुं शक्यमिति भावः ॥ ५७ ॥

**एवं द्वैतस्य सत्यत्वे कर्मकाण्डस्य मानता ॥**
**अनन्तपुरुषार्थाप्तिरिष्यते कर्मकाण्डतः ॥ ५८ ॥**

द्वैतस्य सत्यत्वे फलितमाह । **एवमिति** । किं कर्मकाण्डस्य[1] मानत्वेनेति तदाह । **अनन्तेति** ॥ ५८ ॥

**यदा तु कल्पितं द्वैतमद्वैतं परमार्थतः ॥**
**उच्छिन्नं कर्मकाण्डस्य प्रामाण्यं विषयादृते ॥ ५९ ॥**

द्वैतस्य सत्यत्वे लाभमुक्त्वा तन्मिथ्यात्वे दोषमाह । **यदेति** ॥ ५९ ॥

**एकदेशस्य चामात्वे वेदस्याप्यप्रमाणता ॥**
**सर्वनाशो भवेदेवं सर्वाप्रामाण्यहेतुतः ॥ ६० ॥**

तदप्रामाण्योपगमे पारमार्थ्यं क्वचिदित्यादिनोक्तं दूषणमवतरेदित्यभिप्रेत्याऽऽह । **एकदेशस्येति** । उपनिषद्भागो वेदः । सर्वनाशः स्वर्गापवर्गयोरयोगः ॥ ६० ॥

**अतो विरोधनुत्त्यर्थं सत्यत्वप्रतिपत्तये ॥**
**कार्यकारणयोः शास्त्रं पूर्णमित्यादिनाऽवदत् ॥ ६१ ॥**

उक्तदोषनिरासस्तर्हि कथमित्याशङ्क्याऽऽह । **अत इति** । द्वैतसत्यत्वानङ्गीकारे पूर्वोक्तदोषोऽतःशब्दार्थः । अवदत्पूर्णत्वमिति शेषः ॥ ६१ ॥

---

१ ख. 'स्य सत्यत्वे' ।

**प्रत्यक्षादीनि मानानि भेदग्राहीणि सर्वदा ॥**
**तेषां चाप्यप्रमाणत्वं प्रापदद्वैतवादिनः ॥ ६२ ॥**

न केवलं श्रुतेरेव द्वैतसत्यत्वं किंत्वध्यक्षादेरपीत्याह । **प्रत्यक्षादीनीति** ॥ ६२ ॥

**इति वेदविदः केचिद्भिन्नाभिन्नसतत्त्वकम् ॥**
**सर्वं वस्त्वभिवाञ्छन्ति तत्तु युक्त्या न युज्यते ॥ ६३ ॥**

भर्तृप्रपञ्चपक्षमुपसंहरति । **इति वेदविद इति** । सिद्धान्तयति । **तत्त्विति** ॥ ६३ ॥

**न युक्तिमदिदं गीतं ह्यपवादविकल्पनम् ॥**
**न्यायासंभवतः स्पष्टं स च न्यायो विभाव्यते ॥ ६४ ॥**

प्रतिज्ञातं प्रकटयति । **नेति** । वक्ष्यमाणामुपपत्तिमत्र हेतूकर्तुं हिशब्दः । अद्वयं ब्रह्मेत्युत्सर्गप्रवृत्तं शास्त्रं प्रलयावस्थब्रह्मविषयं सृष्टिशास्त्रं तु विशेषप्रवृत्तं तस्यापवादस्ततो द्वैताद्वैतरूपं ब्रह्म यद्वा सद्वयं कदाचित्कदाचिदद्वयमित्युभयरूपत्वं ब्रह्मण इति चेन्नेत्याह । **अपवादेति** । न तावद्ब्रह्मण्युत्सर्गापवादसंभवो विषयभेदे हि तत्संभवो न चेह तथा न खल्वद्वयं ब्रह्मैव जायते लीयते न चात्र विकल्पो न हि तदद्वयं सद्वयं वेति युक्तं वस्तुनि तदयोगान्न चावस्थाभेदेन तद्योगो वस्तुनि तत्कृतस्यादृष्टत्वान्नापि ब्रह्माद्वयं सद्वयं वेति समुच्चयो विरोधात्तस्मादुत्सर्गापवादयोर्विकल्पसमुच्चययोश्चात्रायोगान्न द्वैताद्वैतात्मकं ब्रह्मेत्यर्थः । केन न्यायेन ब्रह्मण्युत्सर्गादेरसंभवस्तत्राऽऽह । **स चेति** ॥ ६४ ॥

**अहिंसन्सर्वभूतानीत्यहिंसा सर्वभूतगा ॥**
**शास्त्रेणोत्सर्गतः प्राप्ता तीर्थे साऽपोद्यते यथा ॥ ६५ ॥**

तत्रोत्सर्गापवादासंभवे न्यायं दर्शयन्वैधर्म्यदृष्टान्तमाह । **अहिंसन्निति** । तीर्थे यागादाविति यावत् । अपोद्यतेऽग्नीषोमीयादिविधिनेति शेषः ॥ ६५ ॥

**न तथेहाद्वयावस्था श्रुत्योत्सर्गेण यत्नतः ॥**
**प्रापिता तद्विशेषेऽसौ निर्भागत्वान्निषेधभाक् ॥ ६६ ॥**

दार्ष्टान्तिकमाह । **नेति** । इहेति ब्रह्मोक्तिः । तद्विशेषो ब्रह्मैकदेशः । असावद्वैतावस्थेत्येतत् । तस्या ब्रह्मैकदेशे निषेधभाक्त्वाभावे हेतुमाह । **निर्भागत्वादिति** । ब्रह्मणो निरंशत्वादेकदेशाभावादित्यर्थः । यत्नस्तु प्राप्तौ निषेधे चोभयत्र संबध्यते ॥ ६६ ॥

**विकल्पानुपपत्तेश्च षोडशिग्रहणादिवत् ॥**
**वस्तुतन्त्रं हि नो मानं कर्तृतन्त्रं विकल्पते ॥ ६७ ॥**

उत्सर्गाद्ययोगमुक्त्वा विकल्पायोगं साधयति । **विकल्पेति** । द्वैताद्वैतात्मकं ब्रह्मेति कल्पना न युक्तेति शेषः । ब्रह्मणि विकल्पायोगे वैधर्म्यदृष्टान्तः । **षोडशीति** ।

---

१ क. ग. °पत्तिश्च । २ ख. °कल्प्यते ।

वस्तुनि विकल्पायोगे हेतुमाह । **वस्त्विति** । तथाच प्रमिते तस्मिन्विकल्पो नास्तीति शेषः । कुत्र तर्हि विकल्पस्तत्राऽऽह । **कर्त्रिति** ॥ ६७ ॥

**यत्कर्तुं वाऽप्यकर्तुं वाऽप्यन्यथा कर्तुमेव वा ॥**
**कारकैः शक्यते लोके तद्विकल्पस्य गोचरः ॥ ६८ ॥**

तदेव व्यनक्ति । **यदिति** ॥ ६८ ॥

**परस्परविरोधाच्च नैकदैकत्र संभवः ॥**
**द्वयोरवस्थयोर्यद्वत्प्रकाशतमसोरिह ॥ ६९ ॥**

विकल्पाद्ययोगवद्ब्रह्माणि द्वैताद्वैतावस्थयोः समुच्चयासंभवमाह । **परस्परेति** ॥६९॥

**श्रुतिन्यायविरोधाच्च कल्पनेयमशोभना ॥**
**अपूर्वानपरानन्तप्रज्ञानैकरसाद्वयम् ॥ ७० ॥**

एवं ब्रह्माद्वैताद्वैतात्मकमित्यत्र दोषान्तरमाह । **श्रुतीति** । श्रुतिविरोधं साधयति । **अपूर्वेति** ॥ ७० ॥

**अपूर्वानपराबाह्यं भेदसंसर्गवर्जितम् ॥**
**अस्थूलं नेति नेतीति यथोक्तार्थे वचांसि हि ॥ ७१ ॥**

अपूर्वमनपरमनन्तरं सत्यं ज्ञानमनन्तं कृत्स्नः प्रज्ञानघन एकमेवाद्वितीयमित्याद्युदाहृतश्रुतीनामर्थं संक्षिपति । **अपूर्वेति** । ब्रह्मैकरस्ये वाक्यान्तराण्याह । **अस्थूलमिति** । तेषामपौरुषेयत्वेनादोषतया प्रामाण्यद्योतको हिशब्दः ॥ ७१ ॥

**अमात्वाशङ्कासद्भावाद्यथोक्तार्थविनिश्चितौ ॥**
**अब्धौ क्षिप्तानि तानि स्युरन्यार्थासंभवत्वतः ॥ ७२ ॥**

तेषामुपास्यार्थार्पकतया तद्विधिपरत्वं किं न स्यादित्याशङ्क्याऽऽह । **अमात्वेति** । तेषामपौरुषेयतया निर्दोषाणामप्रामाण्यशङ्काबीजाभावात्तद्बलादात्मैक्यनिश्चये सत्युपास्तिपरत्वायोगादात्मैकरस्यानुपगमे निर्विषयाण्येतान्यमानानि स्युरित्यर्थः ॥ ७२ ॥

**तथा न्यायविरोधोऽपि क्रियाकारकरूपिणः ॥**
**जडाध्रुवानात्मनो हि त्वत्कृता कल्पनेष्यते ॥ ७३ ॥**
**न तु चिन्मात्ररूपस्य ध्रुवानंशात्मनः स्वतः ॥**
**नित्यत्वं चाऽऽत्मनः सिद्धं प्रत्यभिज्ञादिमानतः ॥ ७४ ॥**
**प्रसजेत्तद्विरोधश्च भिन्नाभिन्नत्ववादिनः ॥**
**कल्पनायाश्च वैफल्यमनित्यत्वे परात्मनः ॥ ७५ ॥**

श्रुतिविरोधवन्न्यायविरोधं दर्शयति । **तथेति** । सावयवे सक्रियेऽनित्ये जडेऽनात्मवस्तुनि भेदादिकल्पना मृष्यते तथा लोके दर्शनाच्चिदेकरसं तु न तां सहते नित्यत्वान्निरंशत्वाच्चानेकात्मकत्वे तूचिता सांशत्वं सक्रियत्वमनित्यत्वं च स्यादित्यर्थः । तस्या-

नित्यत्वे दोषान्तरमाह । **कल्पनायाश्चेति** । कर्मकाण्डप्रामाण्यार्थं द्वैतसत्यत्वं त्वया कल्प्यते तस्याः कल्पनाया इति यावत् । न हि नित्यात्माभावे तत्प्रामाण्यं फलवदिति भावः ॥ ७३ ॥ ॥ ७४ ॥ ७५ ॥

**अकृताभ्यागमः प्राप्तः कृतनाशश्च सत्वरः ॥**
**कर्मकाण्डस्य वैफल्यमेवं कल्पयतो भवेत् ॥ ७६ ॥**

तत्रैव दोषान्तरमाह । **अकृतेति** । निवारकाभावमाह । **सत्वर इति** । दोषद्वयाङ्गीकारवादिनं प्रत्याह । **कर्मेति** ॥ ७६ ॥

**मकरी ननु दृष्टान्तो भिन्नाभिन्नत्वसिद्धिकृत् ॥**
**ब्रह्मणः प्रागुपन्यस्तोऽसाध्वीयं कल्पना कथम् ॥ ७७ ॥**

भेदाभेदवादे श्रुतिन्यायविरोधमसहमानो दृष्टान्तं स्मारयति । **मकरीति** । अनेकात्मकत्वस्य दृष्टान्ते दृष्टत्वाद्दार्ष्टान्तिकस्य ब्रह्मणो भिन्नाभिन्नत्वकल्पना युक्तेत्यर्थः । मकरी मकरालयः समुद्रः । असाध्वीति च्छेदः ॥ ७७ ॥

**अतोऽन्यविषयत्वात्सोऽविरोधः प्रागुदीरितः ॥**
**नतु चिन्मात्ररूपस्य ह्यत्रावोचं विरुद्धताम् ॥ ७८ ॥**

परिहरति । **अत इति** । निरुपाधिकान्निरवयवाच्चिदात्मनोऽन्यः सूत्रादिरर्थस्तद्विषयः समुद्रदृष्टान्तोऽतः सोऽविरोधो विरोधविधुर इत्यर्थः । अवस्थाद्वयस्य विरुद्धत्वं तर्हि कुत्र त्वयेष्टमित्याशङ्क्याऽऽह । **न त्विति** । न हि तस्य दृष्टान्तो नानारूपत्वं साधयेदन्यविषयत्वादतश्चिन्मात्रे भिन्नाभिन्नत्वस्य विरुद्धत्वमुक्तमित्यर्थः ॥ ७८ ॥

**नाध्येयत्वाच्च शास्त्रार्थकल्पनेयं त्वया कृता ॥**
**षड्भावविक्रियं वस्तु ध्येयं वक्ति न हि श्रुतिः ॥ ७९ ॥**

किंच ब्रह्मणो नानात्वं ध्येयं ज्ञेयं वा नाऽऽद्य इत्याह । **नेति** । तस्याध्येयत्वे हेतुमाह । **षडिति** ॥ ७९ ॥

**स्वतस्तस्य च संप्राप्तेर्विनाऽप्यागमशासनम् ॥**
**ध्येयत्वेनेह सर्वेषां खरोष्ट्रादेरपीक्षणात् ॥ ८० ॥**

तद्ध्येयत्वमङ्गीकृत्यापि नानारसस्याशास्त्रार्थतामाह । **स्वत इति** । शास्त्रं विना तत्प्राप्तिमेव प्रकटयति । **ध्येयत्वेनेति** । व्यवहारभूमौ व्यवहर्तॄणां मध्ये रासभादेरपि नानात्वस्यानुसंधेयत्वेन वीक्षणान्न शास्त्रात्तत्प्रतिपत्त्युपयुक्तमित्यर्थः ॥ ८० ॥

**एकधैवानुविज्ञेयमिति च श्रुतिशासनम् ॥**
**भेददृष्ट्यपवादाच्च मृत्योरिति विनिन्दनात् ॥ ८१ ॥**

द्वितीये श्रुतिविरोधमाह । **एकधेति** । एकरसस्यैव ज्ञेयत्वोक्तेर्मृत्योरित्यादिनिन्दया द्वैतदृष्टेश्चापवादान्न ज्ञेयमपि ब्रह्मण्यनेकरसत्वमित्यर्थः ॥ ८१ ॥

**यत्तूक्तं वेदभागत्वाद्भिन्नवस्त्ववबोधिनः ॥**
**नामात्वं कर्मकाण्डस्येत्यत्र प्रतिविधीयते ॥ ८२ ॥**

नोभयथाऽपि नानारसतेत्युक्त्वा पूर्वोक्तं चोद्यमनुवदति । **यत्त्विति ।** भिन्नवस्तु-बोधि कर्मकाण्डं तस्य विषयाभावादप्रामाण्यं चेज्ज्ञानकाण्डस्यापि वेदत्वात्तत्स्यात्ततः स्वर्गापवर्गयोरसिद्धिरित्यनुवादार्थः । कर्मकाण्डप्रामाण्यात्तदर्थतया द्वैतस्योपेयत्वं वा साध्यते तस्याविषयत्वेनाप्रामाण्यं वेति विकल्पयति । **अत्रेति** ॥ ८२ ॥

**न हि जात्यादिसंभेदसंसिद्धौ मानता श्रुतेः ॥**
**प्रत्यक्षाद्यनवष्टब्धे तस्यामात्वं यतः स्थितम् ॥ ८३ ॥**

प्रथमं प्रत्याह । **न हीति ।** आत्मनो जात्यादिसंबन्धप्रतीतौ कर्मश्रुतेर्न मानता तस्य लोकतो लब्धत्वादतो न तद्विषयत्वेन द्वैतसिद्धिरित्यर्थः । द्वितीयं निराह । **प्रत्यक्षा-दीति ।** अज्ञाते साध्यसाधनसंबन्धे कर्मश्रुतेर्मानत्वान्नास्या निर्विषयत्वादिशङ्के-त्यर्थः ॥ ८३ ॥

**भेदग्राहि न नो मानं लौकिकं वैदिकं च यत्[३] ॥**
**अविचारितसंसिद्धिस्तस्माद्भेदोऽवसीयताम्[४] ॥ ८४ ॥**

यत्तु प्रत्यक्षादीनि भेदग्राहीणि तत्राऽऽह । **भेदेति ।** अन्योन्याश्रयत्वादित्यर्थः । तद्धियो गतिमाह । **अविचारितेति ।** प्रामाणिकत्वाभावस्तच्छब्दार्थः ॥ ८४ ॥

**न स्वतः परतो वाऽयं भेदो वस्तुन ईक्ष्यते ॥**
**सर्वस्यैव स्वतोऽभित्तेस्तदन्यस्याप्यभेदतः ॥ ८५ ॥**

किंच स्वस्मादेव भेदोऽन्यस्माद्वा नोभयथाऽपीत्याह । **नेति ।** वस्तुनः स्वस्माद्भेदो न प्रामाणिकोऽस्तीत्यत्र हेतुमाह । **सर्वस्येति ।** सर्वं वस्तु स्वस्मादभिन्नमन्यथा वस्त्व-भावप्रसङ्गादतो नाऽऽद्यो युक्त इत्यर्थः । परतो भेदोऽपि न प्रामाणिकोऽस्तीत्यत्र हेतुमाह । **तदन्यस्येति ।** वस्तुनोऽन्यत्वेनेष्टस्यापि न सत्त्वं भेदस्याद्याप्यसिद्धेस्तन्न द्वितीयोऽपीत्यर्थः ॥ ८५ ॥

**वस्तु वस्त्वन्तरं भिन्द्याद्योगाद्यद्वा विभागतः ॥**
**योगे[५] नातिशयैकत्वात्तयोश्चाप्येकरूपतः ॥ ८६ ॥**

किंच घटः संबन्धद्वारा पटं भिन्द्यात्स्वरूपेण स्थितो वेति विकल्पयति । **वस्त्विति ।** नाऽऽद्य इत्याह । **योग इति ।** घटस्य पटेन संबन्धो नासौ पटं भेत्तुमर्हत्यति-शयशब्दितसंबन्धस्यैकत्वाद्घटपटयोश्च प्रत्येकमैक्याद्भेदकान्तरस्य चाभावादित्यर्थः ।

---

१ ख. °नः ॥ न मा° । २ ख. °नुद्रवति । ३ क. ग. तत् । ४ क. ग. °यते ॥ ८४ ॥ ५ क. ग. °गेऽनति° ।

अनतिशयैकत्वादिति पाठे भेदोऽतिशयस्तस्मादन्यस्तत्प्रयोजकसंबन्धोऽनतिशयस्तस्यै-क्यान्न भेदः स्यादित्यर्थः ॥ ८६ ॥

**विभागेऽपि न भेदः स्यात्तयोरेकात्मना स्थितेः ॥**
**अन्यदीयोऽपि नान्यस्य भेदः स्यात्कल्पनां विना ॥ ८७ ॥**

कल्पान्तरं प्रत्याह । **विभागेऽपीति** । घटपटयोरसंबन्धेऽपि मिथो न भेदः प्रत्येकं तयोरैकरूप्येण स्थितेरित्यर्थः । पटासंबन्धोऽपि घटः स्वस्मिन्पटाद्भेदमावेदयतीत्याशङ्क्य स एव पटस्य भेदोऽन्यो वेति विकल्प्याऽऽद्यं दूषयति । **अन्यदीयोऽपीति** । पटासंबन्धो घटो न स्वात्मनि ततो भेदावेदकः संबन्धाभावे धर्मिप्रतियोगित्वायोगादित्यरु-चिरपेरर्थः ॥ ८७ ॥

**मेययाथात्म्यसंलेहि मानं मानत्वमश्नुते ॥**
**भेदं न लभते मेये मेयादन्यत्र न प्रमा ॥ ८८ ॥**

द्वितीये स स्वभावो धर्मो वा नाऽऽद्यो वस्त्वभावप्रसङ्गादित्यभिप्रेत्य द्वितीयं निरस्य-न्सामान्यन्यायमाह । **मेयेति** । तथाऽपि प्रस्तुते किं जातं तदाह । **भेदमिति** । मानं मेयं विषयीकुर्वन्न तत्र भेदं गोचरयति तस्य तद्धर्मत्वेन ततोऽन्यत्वान्न च मेयाद-न्यस्मिन्नपि भेदे प्रमाणं प्रसरति मेयैकविषयत्वादतो धर्मभेदोऽपि न प्रामाणिक इत्यर्थः ॥ ८८ ॥

**सतो न व्यतिरेकेण भेदो नापि सदन्वयात् ॥**
**यथैवं[1] नासतोऽप्येवं भेदो नैवावसीयते ॥ ८९ ॥**

किंच भेदः सतो भिन्नोऽभिन्नो वा नाऽऽद्योऽनवस्थानात्सतो भिन्नस्यासत्त्वेन सद-द्वैतापत्तेश्च द्वितीयेऽपि सदद्वैतमित्यभिप्रेत्याऽऽह । **सत इति** । भेदस्य सतो भेदाभेदाभ्यां दुर्निरूपत्ववदसतोऽपि तस्य तौ दुर्वचावित्यतिदिशति । **यथेति** । उक्तं न्यायं निगमयति । **एवमिति** ॥ ८९ ॥

**सर्वं सदेव यस्येष्टमथवाऽसदिदं जगत् ॥**
**भेदः किमाश्रयस्तस्य विरोधान्न[2] द्वयाश्रयः ॥ ९० ॥**

किंच सांख्यबौद्धक्षपणकपक्षेषु भेदो न सिध्यतीत्याह । **सर्वमिति** । पक्षद्वयेऽपि धर्मिप्रतियोगिविशेषाभावाद्भेदकाकाराभावात्तृतीये च विरोधान्न भेदासिद्धिरित्यर्थः॥९०॥

**अन्यापेक्षं पृथक्त्वं चेत्स्वत एवापृथग्घटः ॥**
**बलीयानन्तरङ्गत्वाद्बहिरङ्गं प्रबाधते ॥ ९१ ॥**

तार्किकपक्षेऽपि भेदासिद्धिरित्याह । **अन्यापेक्षमिति** ॥ ९१ ॥

---

१ क. ग. °थैवमस° । २ क. ग. °धान्नाद्व° ।

**द्रव्याद्भिन्नं पृथक्त्वं चेदनवस्थैति सत्वरा ॥**
**द्रव्यमेव पृथक्त्वं चेदपृथक्स्यादिदं जगत् ॥ ९२ ॥**

किंच पृथक्त्वं द्रव्याद्भिन्नमभिन्नं वेति विकल्प्य क्रमेण दूषयति । **द्रव्यादिति ।** अनवस्थाया मूलक्षयकरीत्वे दोषत्वं सूचयति । **सत्वरेति** ॥ ९२ ॥

**स्वतश्चेद्वस्तुनो भेदो वस्तु शून्यं प्रसज्यते ॥**
**आपेक्षिकोऽपि क्लृप्तत्वान्न भेदो रज्जुसर्पवत् ॥ ९३ ॥**

स्वतः परतो वा भेदो नास्तीत्युक्तमुपसंहरति । **स्वतश्चेदिति** ॥ ९३ ॥

**इत्येवमादि बहुशो भिन्नाभिन्नत्वदूषणम् ॥**
**प्रागप्युक्तं तदत्रापि संधेयं वस्तुसिद्धये ॥ ९४ ॥**

भेदस्यासकृन्निरस्तत्वादिह तन्निरासे पुनरुक्तिरित्याशङ्क्याऽऽह । **इत्येवमादीति ।** आदिशब्देन गुरुशिष्यादिव्यवस्थानुपपत्तिर्गृह्यते भेदाद्यवस्थायामभेदात्तदभावात् । प्रागिति संबन्धग्रन्थादावित्यर्थः । इहापि भर्तृप्रपञ्चव्याख्याने पूर्वोक्तन्यायस्यानुसंधानार्थमनुवादश्चेत्तदेव किमर्थमिति तत्राऽऽह । **वस्त्विति ।** ब्रह्मात्मैकरस्यस्फुटीकरणार्थं परमतप्रत्याख्यानमित्यर्थः ॥ ९४ ॥

**अपि वेदैकदेशस्य प्रामाण्यं यदि नेष्यते ॥**
**कर्मकाण्डस्य सर्वस्य वेदस्यापि प्रसज्यते ॥ ९५ ॥**
**इति यत्प्रागुपन्यस्तं तस्य दूषणमुच्यते ॥**
**साध्यसाधनसंबन्धे तस्यापीष्टा प्रमाणता ॥ ९६ ॥**

अद्वैतमते प्रत्यक्षादिविरोधं निराकृत्य श्रुतिविरोधनिराकरणं यत्तूक्तं वेदभागत्वादित्यादिना संक्षिप्तं प्रपञ्चयितुमनुवदति । **अपि वेदेति ।** प्रसज्यते प्रामाण्यराहित्यमित्यर्थः । कर्मकाण्डाप्रामाण्ये ज्ञानकाण्डाप्रामाण्यमित्ययुक्तं तदप्रामाण्यस्यैवाभावादित्याह । **तस्येति ।** कथं विषयाभावादद्वैतमते कर्मश्रुतेर्मानत्वं तत्राऽऽह । **साध्येति** ॥९५॥९६॥

**भेदः प्रमान्तरैः सिद्धो न त्वागमसमाश्रयात् ॥**
**पशवोऽपि हि जानन्ति भेदमक्षादिमानतः ॥ ९७ ॥**

भेदविषयत्वेनैव तत्प्रामाण्यं किं न स्यादित्याशङ्क्याऽऽह । **भेद इति ।** द्वैतवदद्वैतस्यापि न शास्त्रगम्यत्वं वैपरीत्यं वा स्यादित्याशङ्क्याऽऽह । **पशवोऽपीति ।** अद्वैतस्य त्वपूर्वतया शास्त्रीयतेति भावः । अयमेवार्थो हिशब्देन द्योत्यते ॥ ९७ ॥

**न च मिथ्यात्वधीर्भेदे जन्मनैवेह कस्यचित् ॥**
**अप्युत्थापितबुद्धीनां भेदेऽसंभावना न च ॥ ९८ ॥**

साध्यसाधनसंबन्धे कर्मश्रुतेर्मानत्वे द्वैतं सत्यमेष्टव्यमन्यथोपजीव्याभावे संबन्धस्यैवा-

सिद्धेरित्याशङ्क्याऽऽह । न चेति । तन्मिथ्यात्वे ब्रह्मज्ञानं विना न तद्धीस्तथाच प्राग्भाविमिथ्याभेदोपजीवनेन संबन्धसिद्धेस्तस्मिन्कर्मश्रुतेः प्रामाण्यसिद्धिरित्यर्थः । कल्पितं भेदमादाय तत्प्रामाण्ये हेत्वन्तरमाह । अपीति । यथा सुगतादिप्रोरितास्तदीयशिष्या युक्तितो भेदमिथ्यात्वं जानन्तोऽपि भेदापेक्षमेव तदीयागमप्रामाण्यमनुमन्यन्ते तथा विवेकादिहेतोर्देहादिद्वैतविमुखानामपि ब्रह्मविद्याहीनानामसंभावनाबुद्धिर्भेदे नोत्पद्यते तथाच प्राग्ज्ञानात्कल्पितद्वैतेन कर्मकाण्डप्रामाण्यमित्यर्थः ॥ ९८ ॥

**क्रियाकारकसंभित्तौ वस्तुतत्त्वेन मा श्रुतिः ॥**
**साध्यसाधनसंबन्धमात्रैकविषयत्वतः ॥ ९९ ॥**

लोकसिद्धं भेदमुपेत्य तस्य संबन्धविशेषबोधित्वेऽपि बोध्यस्य सत्यत्वमिष्टं स्यादित्याशङ्क्याऽऽह । क्रियेति । संभित्तिः संभेदः संबन्ध इति यावत् । तत्र हेतुमाह । साध्येति । तत्सत्यत्वासत्यत्वयोस्ताटस्थ्यमेकशब्दार्थः ॥ ९९ ॥

**लोकसिद्धमतो भेदमादायेष्टार्थसिद्धये ॥**
**इदं कार्यमिदं नेति वेदशास्त्रं प्रवर्तते ॥ १०० ॥**

कर्मकाण्डप्रामाण्यमुपसंहरति । लोकेति । कर्मकाण्डप्रामाण्ये प्रागुक्तनित्याभेदसत्यत्वापेक्षाभावोऽतःशब्दार्थः ॥ १०० ॥

**सर्वतस्तु विरक्तो यः कर्मभिः शुद्धधीर्नरः ॥**
**कामयानः पूर्णफलमुत्पत्त्यादिविलक्षणम् ॥ १०१ ॥**

यत्तु ज्ञानकाण्डस्यापि वेदभागत्वादप्रामाण्यमिति तत्राधिकार्यभावात्फलाभावाद्विषयाभावाद्वा तदप्रामाण्यमिति विकल्प्याऽऽद्यं प्रत्याह । सर्वतस्त्विति । कामयानः कामयमान इति यावत् । स साधनचतुष्टयसंपन्नोऽधिकारीति शेषः ॥ १०१ ॥

**तमोमात्रान्तरायत्वात्प्रतीचः पूर्णरूपिणः ॥**
**स्वतःसिद्धत्वतस्तस्य व्यञ्जकान्नान्यदीक्ष्यते ॥ १०२ ॥**

द्वितीयं निराह । तमोमात्रेति । सविलासाविद्याध्वस्तिरत्र फलमिति भावः । तृतीयं प्रत्याह । प्रतीच इति । अज्ञातस्य तस्य विषयत्वान्न तद्राहित्यमित्यर्थः । अज्ञानध्वस्तावपि फले कर्मापेक्षां केचिदाहुस्तान्प्रत्याह । स्वत इति ॥ १०२ ॥

**स्वतः प्राप्तस्य संप्राप्तौ वाक्यान्मोहप्रहाणतः ॥**
**मानापेक्षा न भूयः स्यात्फलाप्तेस्तत्कृतार्थतः ॥ १०३ ॥**

प्रतीचः स्वतः स्फुरणात्तदाच्छादकाज्ञानध्वंसार्थं मानमेव मुमुक्षुरपेक्षते न कर्मेत्यत्र हेतुमाह । स्वत इति । उत्पन्नमपि[2] मानमभ्यस्यमानमज्ञानध्वंसीत्यपरे तान्निराकरोति ।

---

१ क. ब्रह्माज्ञा॰ । २ ख. ॰पि ज्ञान॰ ।

**मानेति ।** सकृदुत्पन्नादेव मानादज्ञानध्वस्तेस्तावतैव पुरुषस्य कृतकृत्यत्वान्न मानावृत्त्यपेक्षेत्यर्थः ॥ १०३ ॥

**साध्ये हि साधनापेक्षा सिद्धेऽसौ विनिवर्तते ॥**
**किम्वसाध्ये समस्तस्य पूर्णत्वेन समाप्तितः ॥ १०४ ॥**

अन्ये तु ब्रह्मप्राप्तावभ्यासापेक्षां मन्यन्ते तान्निरस्यति । **साध्ये हीति ।** स्वर्गादौ तदपेक्षायां साध्ये सिद्धे च तदभावस्य दृष्टत्वं हिशब्दार्थः ॥ १०४ ॥

**द्वैताद्वैतात्मकं ब्रह्म यदाऽप्यभ्युपगम्यते ॥**
**तदाऽपि न विरोधोऽयं केनाचिद्विनिवार्यते ॥ १०५ ॥**

अद्वैते श्रुतिविरोधं निराकृत्यान्यत्र तमुपपादयति । **द्वैतेति** ॥ १०५ ॥

**समस्तव्यस्तभूतस्य ब्रह्मण्यवसितात्मनः ॥**
**ब्रूत कर्मणि को हेतुः सर्वानन्यत्वदर्शिनः ॥ १०६ ॥**

कथमत्र विरोधो द्वैतापेक्षया कर्मकाण्डस्याद्वैतापेक्षया च काण्डान्तरस्य प्रामाण्यसंभवादित्याशङ्क्याऽऽह । **समस्तेति** ॥ १०६ ॥

**सर्वजात्यादिमत्त्वे च परस्परविरोधतः ॥**
**व्याघातान्न प्रवृत्तिः स्यान्निषेधेऽथ विधौ तथा ॥ १०७ ॥**

विशिष्टजात्यादिमत्त्वमेव हेतुरित्याशङ्क्याऽऽह । **सर्वेति ।** द्वैताद्वैतात्मके ब्रह्मणि स्थितस्य विदुषः सर्वजात्याश्रमादियुक्तत्वे सति विशेषणभूतजात्यादीनां मिथो विरोधाद्ब्राह्मणत्वाद्बृहस्पतिसवे प्रवृत्तिः क्षत्रियत्वान्निवृत्तिश्चेत्यन्योन्यव्याघाताद्विधिनिषेधयोर्न प्रवृत्तिनिवृत्ती स्यातां तथाच विश्रमप्रवृत्तिकमिति कर्मश्रुत्यप्रामाण्यादुपनिषदामपि तत्स्यादिति भावः ॥ १०७ ॥

**न चावच्छेदमानित्वं विदुषोऽस्त्यासुरत्वतः ॥**
**विदुषोऽप्यासुरत्वे स्यान्निष्फलं ब्रह्मदर्शनम् ॥ १०८ ॥**

किंच सर्वजात्यादिमत्त्वेऽपि विदुषस्तदनभिमानान्न प्रवृत्तिर्निवृत्तिर्वेत्याह । **न चेति ।** विपक्षे दोषमाह । **विदुषोऽपीति ।** परिच्छेदाभिमानस्याऽऽसुरत्वमसुराणां ह्येषोपनिषदिति श्रुतेर्द्रष्टव्यम् ॥ १०८ ॥

**तस्मादसदिदं गीतं भिन्नाभिन्नत्वसिद्धये ॥**
**श्रुतिन्यायविरुद्धत्वात्प्रकृतं त्वधुनोच्यते ॥ १०९ ॥**

परमतनिरासमुपसंहरति । **तस्मादिति ।** ब्रह्मणो भिन्नाभिन्नत्वार्थं यद्भर्तृप्रपञ्चैरुक्तं तदिदमसदित्यत्र तत्पक्षोक्तं हेतुमाह । **श्रुतीति ।** पूर्णवाक्यस्य परेष्टार्थायोगादेकरसार्थपरतेति साधितं संप्रति श्रुतिव्याख्यानमेवानुवर्त्यत इति प्रतिजानीते । **प्रकृतं त्विति** ॥ १०९ ॥

**ओं खं ब्रह्मेति मन्त्रोऽयं श्रुत्येह ध्यानकर्मणि ॥**
**नियुज्यते फलप्राप्तौ यथा तदभिधीयते ॥ ११० ॥**

प्रकृतमेव वर्तयन्नोमित्यादिमन्त्रमवतारयति । **ओं खमिति** । तस्य विनियोगं दर्शयति । **श्रुत्येति** । क्रममुक्तिफलप्राप्तौ विवक्षितायां सगुणब्रह्मणि ध्यानं विधीयते तत्रायं मन्त्रोऽनेन ब्राह्मणेन विनियुक्तो ध्येयार्थप्रकाशनसामर्थ्यादित्यर्थः । कथमस्य ध्येयप्रकाशकत्वेन ध्याने विनियुक्तत्वं तदाह । **यथेति** ॥ ११० ॥

**परस्य ब्रह्मणः साक्षाद्याथात्म्याधिगमो यथा ॥**
**पूर्वैश्चतुर्भिरध्यायैस्तथा श्रुत्योदितोऽञ्जसा ॥ १११ ॥**

किमित्युपासनमुच्यते सम्यग्ज्ञानादेवेष्टसिद्धेरित्याशङ्क्य काण्डद्वयार्थमनुवदति । **परस्येति** ॥ १११ ॥

**अस्यैव प्रतिपत्त्यर्थमुपासनमथोच्यते ॥**
**ओं खं ब्रह्मेति वचसा पुंसां श्रेयोभिवाञ्छताम् ॥ ११२ ॥**

संप्रत्यत्रोच्यमानोपास्तेस्तत्त्वसाक्षात्कारोपायत्वमाह । **अस्यैवेति** । सम्यग्धियो झटित्यनुपपत्तेरुपास्त्यपेक्षाऽस्तीति सूचयति । **अथेति** । मुमुक्षूणामत्राधिकारमवद्योतयति । **पुंसामिति** ॥ ११२ ॥

**ब्रह्मेतीह विशेष्यार्थः खमित्यपि विशेषणम् ॥**
**सामानाधिकरण्योक्तेस्तद्वृत्तिः कृष्णसर्पवत् ॥ ११३ ॥**

तत्र विशेषणविशेष्यत्वव्यवस्थामाह । **ब्रह्मेतीति** । इहेति मन्त्रोक्तिः । अपिना वैपरीत्यमपि सूच्यते । पदयोः सामानाधिकरण्यतात्पर्यमाह । **सामानाधिकरण्येति** । कृष्णः सर्पो नीलमुत्पलमिति यावत् । सामानाधिकरण्यादेकस्मिन्नर्थे वृत्तिः सिध्यतीत्यर्थः ॥ ११३ ॥

**प्रवृत्तिर्ब्रह्मशब्दस्य बृहद्वस्त्वेकगोचरा ॥**
**खेन तद्विशिनष्ट्यत्र सामान्यांशैकपातिना ॥ ११४ ॥**

ब्रह्मेत्युक्ते विशेषणाकाङ्क्षाभावान्नास्य विशेष्यतेत्याशङ्क्याऽऽह । **प्रवृत्तिरिति** । **उक्तं हि** ब्रह्मशब्दस्य[1] हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते बृंहतेर्धातोरर्थानुगमादिति । अत्रेति मन्त्रोक्तिः । सामान्यस्यांशो विशेषस्तदेकमात्रतया स्थितेन खेनेति संबन्धः ॥ ११४ ॥

**अनाकाशस्वभावेभ्यः खेन ब्रह्म निवर्त्यते ॥**
**तथाऽब्रह्मस्वभावेभ्यः सामर्थ्याद्ब्रह्मणा च खम् ॥ ११५ ॥**

---

१ ख. तत्राऽऽह । २ ख. °स्य व्यु° ।

तेन ब्रह्मणो विशेष्यत्वफलमाह । **अनाकाशेति** । ब्रह्मणा खस्य विशेष्यत्वफलमाह । **तथेति** । यथा खेनानाकाशेभ्यो ब्रह्म व्यवच्छिद्यते तद्वदिति यावत् । सामर्थ्याद्ब्रह्मणो विशेषितस्याब्रह्मत्वानुपपत्तेरित्यर्थः ॥ ११५ ॥

**सामान्यमात्रवाचित्वात्खशब्दस्य विशेषणम् ॥**
**पुराणमिति निर्वक्ति कारणप्रतिपत्तये ॥ ११६ ॥**

तेन खस्य विशेष्यत्वे महत्त्वं सिध्यतु तथाऽपि कार्यकारणद्वैविध्यात्कस्यात्र ग्रहणमित्यपेक्षायामाह । **सामान्येति**। खशब्दस्य कार्यं कारणं चेत्युभयं सामान्यं तन्मात्रवाचकत्वात्कस्य ग्रहणमिति संशये पुराणमिति कारणप्रतिपत्तये खस्य विशेषणं निर्वक्ति श्रुतिस्तथा संदेहनिवृत्तिरित्यर्थः ॥ ११६ ॥

**यत्तद्ब्रह्म खमित्युक्तं तदोंशब्दाभिधानकम् ॥**
**चिन्तयेत्सततं धीमानोमालम्बनमेव वा ॥ ११७ ॥**

वाक्यार्थं दर्शयति । **यत्तदिति** । कारणब्रह्मदृष्टिरोंकारे वाचके प्रतीके वा कार्येत्यर्थः ॥ ११७ ॥

**एतदालम्बनं श्रेष्ठमिति च श्रुतिशासनम् ॥**
**एतेनैवाक्षरेणेति ह्यथर्वाणोऽप्यधीयते ॥ ११८ ॥**

द्वितीये पक्षे प्रमाणमाह । **एतदिति** । आद्येऽपि मानमाह । **एतेनेति** । अक्षरेण परं पुरुषमभिध्यायीतेति शेषः । ओमिति ब्रह्मेत्यादावपि प्रसिद्धमेतादिति वक्तुं हिशब्दः ॥ ११८ ॥

**अतीन्द्रियत्वात्तस्यापि कथं स्यात्तदुपासनम् ॥**
**वायुरं खमिति प्राह तदालम्बनसिद्धये ॥ ११९ ॥**

वायुरमित्यादेस्तात्पर्यमाह । **अतीन्द्रियत्वादिति** । अकार्यकारणवदित्यपेरर्थः । ओंकारालम्बनाकाशावच्छिन्नब्रह्मदृष्ट्यर्थं वाक्यमिति तात्पर्यार्थः ॥ ११९ ॥

**खं पुराणं न विज्ञेयं मन्त्रेऽस्मिन्निति मन्यते ॥**
**कौरव्यायणिजो धीमान्वायुरेतिप्रसिद्धितः ॥ १२० ॥**

इति ह स्मेत्यादेरर्थमाह । **खमिति** ॥ १२० ॥

**रूढ्या वृत्तिः खशब्दस्य वायुरे व्योम्नि लक्ष्यते ॥**
**बहुशश्च प्रयोगोऽतो वायुरं खं प्रतीयताम् ॥ १२१ ॥**

प्रसिद्धिं प्रकटयति । **रूढ्येति** । तत्रैव खं वायुरमित्यादौ खशब्दस्य प्रयोगबाहुल्यं दर्शयति । **बहुशश्चेति** । हेतुद्वयफलं निगमयति । **अत इति** ॥ १२१ ॥

---

१ ख. °र्थर्वणेऽप्य°।

**पुराणं यदि तद्व्योम यदि वा वायुरं भवेत् ॥**
**ध्येयं तदोमिति सदा पक्षयोरुभयोरपि ॥ १२२ ॥**

कारणब्रह्मपक्षो भूताकाशपक्षो वा कतरः श्रेयानित्याशङ्क्याऽऽह । **पुराणमिति** । भूताकाशस्यापि कारणवदतीन्द्रियत्वं तुल्यं प्रयोगबाहुल्यं चाविशिष्टं कारणेऽपि ब्रह्मणि बहुशः श्रुतिष्वाकाशशब्दप्रयोगात्तस्मात्तदुभयपक्षयोः शब्दत्वादोंकारे दृष्टिद्वयमैच्छिकमित्यर्थः ॥ १२२ ॥

**आलम्बनतयोंकार उपास्तिविषयो भवेत् ॥**
**चतुर्भुजाङ्कितं दारु विष्णोरिव निगच्छति ॥ १२३ ॥**

ओंकारप्रतीकमुभयविधं ब्रह्म ध्येयमित्युक्त्वा तस्य प्रतीकत्वं दृष्टान्तेनाऽऽह । **आलम्बनतयेति** । विष्णोरालम्बनतयोपास्तिविषयत्वमिति शेषः ॥ १२३ ॥

**नेदीयो ब्रह्मणः स्थानमोमितीदं प्रतीयताम् ॥**
**शालग्रामो हरेर्यद्वत्सर्वानर्थापहारिणः ॥ १२४ ॥**

सत्स्वालम्बनान्तरेषु किमित्यत्रैव ब्रह्मदृष्टिरारोप्यते तत्राऽऽह । **नेदीय इति** । निकटतममतिशयेन संनिहितं प्रेमास्पदमित्यर्थः । तत्रोदाहरणम् । **शालग्राम इति** ॥ १२४ ॥

**यद्वाऽभिधानमों विद्यात्तस्यैव परमात्मनः ॥**
**तस्मिन्निविष्टचित्तस्य तद्ब्रह्माऽऽशु प्रसीदति ॥ १२५ ॥**

अप्रतीकत्वपक्षं प्रतिपादयितुमारभते । **यद्वेति** । अत्र विशेषमाह । **तस्मिन्निति** । अस्यार्थः—सोऽहमिति महावाक्यमोंकारः सकारहकारलोपे तदुत्पत्तेस्तस्य चाकारादयस्त्रयोऽवयवास्तत्र विराड्जागरितविश्वाख्यं त्रयमकारः सूत्रं स्वप्नस्तैजसश्चेति त्रयमुकारोऽव्याकृतं सुषुप्तिः प्राज्ञश्चेति त्रयं मकारस्तेषां च पूर्वपूर्वस्योत्तरोत्तरस्मिन्नुपसंहारे मकारस्य प्रतीच्यवसानं स च नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्मोंकारवाच्यत्वेन ध्यातं प्रत्यग्ब्रह्म झटिति फलदमिति ॥ १२५ ॥

**ओंकारो वेद एवेति ब्राह्मणास्तु प्रचक्षते ॥**
**वेदैनेन यतो वेद्यं ब्रह्म वेदस्ततो मतः ॥ १२६ ॥**

ओंकारवाच्यत्वेनोपास्यं ब्रह्मेत्युक्तेऽर्थे वेदोऽयमित्याद्यवतारयति । **ओंकार इति** । तत्र हेतुत्वेन वेदेत्यादि व्याचष्टे । **वेदेति** ॥ १२६ ॥

**अभिधानतयैवैनमोंकारं विदुरञ्जसा ॥**
**ब्राह्मणास्तदभिध्यानाद्विदन्ति ब्रह्म निर्भयम् ॥ १२७ ॥**

प्रतिज्ञाहेतोर्विवक्षितं संक्षिपति । **अभिधानतयेति** ॥ १२७ ॥

वेदोऽयमिति चोक्तिः स्याद्यथोक्तोपासनं प्रति ॥
स्तुतित्वादर्थवादोऽयं नातोऽन्योऽर्थोऽवसीयते ॥ १२८ ॥

वेदोऽयमित्यादेरर्थान्तरमाह । वेद इति । ओंकारप्रतीकमुपासनं प्रति वेदोऽयमित्यादिरर्थवादस्तत्र तस्य स्तुतित्वेन ततः स्तुत्यर्थादर्थान्तराप्रतीतेर्वेदो ह्ययमोंकारो यस्मादनेन वेदार्थो ब्रह्म वेद्यते तस्मात्तस्मिन्ब्रह्मदृष्टिः कार्येत्यर्थः ॥ १२८ ॥

उद्गीथादिप्रभेदेन यं वा संविद्रते[2] द्विजाः ॥
वेदोऽसाविति विज्ञेयस्त्रय्यास्तत्र समाप्तितः ॥ १२९ ॥

अर्थान्तरमाह । उद्गीथादीति । आदिपदेन प्रस्तावप्रतिहारग्रहः । तत्र हेतुः । त्रय्या इति । ओंकारे हि त्रयी समाप्यते तद्यथा शङ्कुनेत्यादिश्रुतेरतो वेदत्वं तस्येत्यर्थः ॥ १२९ ॥

तस्मिन्प्रयुज्यमानेऽतः सर्वो वेदः ससंग्रहः ॥
प्रयुक्तः स्यादतो वेद ओंकार इति गम्यताम् ॥ १३० ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके पञ्चमाध्यायस्य
प्रथमं ब्राह्मणम् ॥ १ ॥

तत्र तत्समाप्तिफलं दर्शयन्प्रकृतमुपसंहरति । तस्मिन्निति । त्रय्यास्तत्र समाप्तिराद्यातःशब्दार्थः । तत्प्रयोगे सर्वस्य वेदस्य प्रयुज्यमानत्वं द्वितीयातःशब्दार्थः ॥१३०॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां पञ्चमाध्यायस्य
प्रथमं ब्राह्मणम् ॥ १ ॥

श्लोकानामादितः समष्ट्यङ्काः—१०५३८

---

अथ द्वितीयं ब्राह्मणम् ।

---

उक्तमाभ्यन्तरं तावद्ब्रह्मोपासनसाधनम् ॥
ओंकारोऽथ दमादीनां साधनत्वं विधीयते ॥ १ ॥

वृत्तमनूद्योत्तरब्राह्मणतात्पर्यमाह । उक्तमिति[1] ॥ १ ॥

दान्तो दाता दयालुश्च सबाह्याभ्यन्तरः शुचिः ॥
एवंविधोऽधिकारी स्यात्सर्वासूपास्तिभूमिषु ॥ २ ॥

कथं तेषां ध्यानसाधनत्वं तद्धीनस्यापि मनोव्यापारात्मकध्यानासिद्धेरत आह ।

---

१ ख. °क उग्ग° । २ ख. °विदते ।

**दान्त इति** । परवस्तुन्यतिसूक्ष्मे न ध्यानमन्यस्य सिध्यतीति भावः । उपास्त्यन्तरेष्वपि तुल्यमिदमधिकारिविशेषणमिति मत्वा सर्वास्विति विशेषणम् ॥ २ ॥

**दमादिविधिशेषोऽयमर्थवादोऽभ्युपेयताम् ॥**
**त्रया इत्यादिको ग्रन्थः स्पष्टार्थोऽतो न यत्यते ॥ ३ ॥**

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके पञ्चमाध्यायस्य
द्वितीयं ब्राह्मणम् ॥ २ ॥

तात्पर्यमुक्त्वा विभजन्नक्षराणामव्याख्येयत्वमाह । **दमादीति** । तदेतत्त्रयं शिक्षेदिति विधिशेषस्तस्मात्पूर्वो ग्रन्थः स च स्पष्टत्वादव्याख्येय इत्यर्थः ॥ ३ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां पञ्चमाध्यायस्य
द्वितीयं ब्राह्मणम् ॥ २ ॥

**श्लोकानामादितः समष्ट्यङ्काः—१०८४१**

---

अथ तृतीयं ब्राह्मणम् ।

---

**ब्रह्मानुपाधि पूर्वत्र व्याख्यातं यत्नतोऽधुना ॥**
**सोपाधिकस्य तस्यैव ह्युपास्तिर्वक्ष्यते स्फुटा ॥ १ ॥**

वृत्तमनूद्योत्तरसंदर्भतात्पर्यमाह । **ब्रह्मेति** । काण्डद्वये निरुपाधिकं ब्रह्म तात्पर्येणोक्तमोंकारो दमादित्रयं च पूर्वब्राह्मणयोरुपास्त्यङ्गतया गीतमथ तस्यैव ब्रह्मणः सोपाधिकस्य ध्यानभेदोक्त्यर्थमुत्तरं ग्रन्थजातमित्यर्थः । निरुपाधिकोक्त्यनन्तरं तत्प्रतिपत्त्यनधिकारिणः सोपाधिकोक्तिरुचितेति हिशब्दार्थः ॥ १ ॥

**श्रुतः प्रजापतिः पूर्वं कोऽसाविति न गम्यते ॥**
**सामान्योक्तेर्विशेषार्थमेष इत्यादि भण्यते ॥ २ ॥**

अनन्तरब्राह्मणस्याऽऽकाङ्क्षापूर्वकं तात्पर्यमाह । **श्रुत इति** । प्रजापतिर्देवादीनामनुशास्तेति सामान्योक्तेर्दक्षादिष्वपि संभवात्तेभ्यो व्यावर्त्य विवक्षितं प्रजापतिं दर्शयितुमेष प्रजापतिरित्यादि वाक्यमित्यर्थः ॥ २ ॥

**हृद्गिरा मांसपेश्युक्ता तात्स्थ्याद्बुद्धिस्तु लक्ष्यते ॥**
**हृदि नामादिसंहारं यत्र शाकल्य ऊचिवान् ॥ ३ ॥**

यद्धृदयमित्यत्र हृदयशब्दार्थमाह । **हृदिति** । तर्हि वाच्यो लक्ष्यो वा कीदृशोऽत्र हृदयशब्दार्थस्तत्राऽऽह । **हृदीति** । लक्ष्योऽत्र तदर्थः स च पञ्चमे प्रस्तुत इत्यर्थः ॥ ३ ॥

**सर्वभूतसमुत्पत्तेस्तथा सर्वेश्वरत्वतः ॥**
**प्रजापतिरिति ज्ञेयं हृदयं तेन हेतुना ॥ ४ ॥**

तस्य प्रजापतित्वं साधयति । **सर्वेति** । कथं हृदयस्य प्रजापतेश्चैकलक्षणत्वेनैक्यं तदाह । **तेनेति** । शाकल्यब्राह्मणोक्तेन त्र्यन्नाधिकारोक्तेन हेतुना तयोरेकलक्षणत्वादैक्यमित्यर्थः ॥ ४ ॥

**सर्वज्ञेयस्य तद्व्याप्तेर्ब्रह्मापि हृदयं भवेत् ॥**
**यत एवमतो यत्नादुपास्यं हृदयं सदा ॥**
**हृदयाख्याक्षराणां च श्रुत्योपासनमुच्यते ॥ ५ ॥**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके पञ्चमाध्यायस्य**
**तृतीयं ब्राह्मणम् ॥ ३ ॥**

एतद्ब्रह्मेत्यस्यार्थमाह । **सर्वेति** । उक्तरीत्या प्रजापतित्वं तस्य सर्वव्याप्तौ हेतुः । हृदयस्य ब्रह्मत्वे फलितमाह । **यत इति** । तस्य ब्रह्मत्वेन महीकरणस्य फलान्तराभावादित्यर्थः । यत्नादित्यादरनैरन्तर्यदीर्घकालरूपविशेषणत्रयमुपास्तेरुपादीयते । तदेतत्र्यक्षरमित्यादेस्तात्पर्यमाह । **हृदयेति** । हृदयमित्याख्यागताक्षराणां त्रयाणामिति यावत् । उपास्यहृदयस्तुत्यर्थं तन्नामाक्षरोपास्तिवचनमिति चार्थः ॥ ५ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां पञ्चमाध्यायस्य
तृतीयं ब्राह्मणम् ॥ ३ ॥

**श्लोकानामादितः समष्ट्यङ्काः—१०५४६**

---

अथ चतुर्थं ब्राह्मणम् ।

---

**तस्यैव हृदयाख्यस्य ब्रह्मणोऽन्यदुपासनम् ॥**
**सत्योपाधिविशिष्टस्य तद्वै तदिति भण्यते ॥ १ ॥**

ब्राह्मणान्तरस्य तात्पर्यमाह । **तस्यैवेति** । तदन्यत्वे हेतुः । **सत्येति** ॥ १ ॥

**तच्छब्देन परामर्शो वैशब्दः स्मरणाय च ॥**
**प्रकारान्तरनिर्देशे तदासेति च तद्वचः ॥ २ ॥**

वाक्यस्थपदानामपुनरुक्तमर्थमाह । **तच्छब्देनेति** । हृदयाख्यब्रह्मपरामर्शस्तच्छब्देनाऽऽद्येन क्रियते । तदुच्यते विधान्तरेणेति[2] द्वितीयस्तच्छब्दः । किं तादित्युक्ते तदेतदेवाऽऽसेति वक्ष्यमाणमेतच्छब्देनोक्त्वा तदिति तृतीयं[3] वचस्तेन समानाधिकृतमित्यर्थः ॥ २ ॥

---

१ ख. हृदि तत्सदा । २ ख. प्रकारान्तरेति । ३ क. ख. °यं तदिति व° ।

**सत्यमेव तदासेति यदुक्तं हृदयात्मना ॥**
**मूर्तामूर्तात्मकं सत्यं ब्रह्म पूर्वं प्रपञ्चितम् ॥ ३ ॥**

सत्यमेवेतिवाक्यं योजयति । **सत्यमेवेति** । यद्ब्रह्म हृदयात्मनोक्तं तत्सत्यमेवाऽऽसति योजना । सत्यशब्दार्थमाह । **मूर्तेति** । पूर्वमिति मूर्तामूर्तब्राह्मणोक्तिः ॥ ३ ॥

**महत्तत्परिमाणेन यक्षं पूज्यतमत्वतः ॥**
**अग्रजः प्रथमोद्भूतेस्तदन्यत्कार्यजन्मनः ॥ ४ ॥**

महदित्यादि व्याचष्टे । **महदिति** । तस्मात्सत्यादन्यद्वैराजं कार्यं यच्चान्यत्तस्य कार्यं तज्जन्मनः प्रागुत्पत्तेरिति संबन्धः ॥ ४ ॥

**यः कश्चिदेतं व्याख्यातं वेदोपास्ते दिवानिशम् ॥**
**लोकाञ्जयति स सर्वाञ्शत्रुश्चास्य जितो भवेत् ॥ ५ ॥**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके पञ्चमाध्यायस्य चतुर्थं ब्राह्मणम् ॥ ४ ॥**

फलवाक्यं व्याकरोति । **यः कश्चिदिति** । दिवानिशमित्यत्रापि विशेषणत्रयं विवक्ष्यते ॥ ५ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां पञ्चमाध्यायस्य चतुर्थं ब्राह्मणम् ॥ ४ ॥

**श्लोकानामादितः समष्ट्यङ्काः—१०५५१**

---

अथ पञ्चमं ब्राह्मणम् ।

---

**उक्तं प्रथमजं सत्यं कथं तदिति भण्यते ॥**
**आप एवेदमित्युक्त्वा यथोक्तार्थस्तवाय तु ॥ १ ॥**

उत्तरब्राह्मणतात्पर्यमाकाङ्क्षापूर्वकमाह । **उक्तमिति** । यद्ब्रह्म सत्यमुक्तं तत्कथं प्रथमजमित्युक्ते तदुत्तरवाक्येनोच्यते तच्च सत्यब्रह्मोपास्तेः स्तुत्यर्थमित्यर्थः ॥ १ ॥

**पयःसोमादिका आपो ह्यग्निहोत्रादिकर्मसु ॥**
**सर्वाहुतिषु संसृष्टा बाहुल्यादप्परिग्रहः ॥ २ ॥**

तात्पर्यमुक्त्वाऽऽप इति पदं व्याकरोति । **पय इति** । तासामग्निहोत्राद्याहुतिषु संसृष्टत्वं मीमांसकसंमतमिति वक्तुं हिशब्दः । भूतान्तराणामपीह ग्रहणमिष्टं तत्किमित्याप इतिविशेषोक्तिस्तत्राऽऽह । **बाहुल्यादिति** ॥ २ ॥

**सत्स्वप्यन्येषु भूतेषु भूयस्त्वादाप एव तु ॥**
**प्राधान्याच्चैव गृह्यन्ते न त्वन्यद्विनिवार्यते ॥ ३ ॥**

अन्यनिवृत्त्यर्थमेव विशेषणं किं न स्यादित्याशङ्क्याऽऽह । सत्स्विति ॥ ३ ॥

**प्रक्षेपोत्तरकालं ताः सर्वमानातिवर्तिना ॥**
**तस्थुः सूक्ष्मेण रूपेण क्रियामाश्रित्य सर्वतः ॥ ४ ॥**

कर्मसु हूयमानद्रव्याणां द्रव्यबाहुल्यादपां भूयस्त्वं प्राधान्यं त्वाहुतिमयीनां तासामपूर्वीभूतानां सर्वजगत्परिणामकारणस्याग्निहोत्रप्रकरणे श्रुतत्वात्प्रक्षिप्यमाणाः सोमाद्या आपो यद्यपि कर्मसमवायिन्यस्तथाऽप्युत्तरकालं कथं तासां तथात्वं कर्मणोऽस्थायित्वादित्याशङ्क्याऽऽह । प्रक्षेपेति । क्रियामाश्रित्य प्रक्षेपोत्तरकालं सूक्ष्मरूपेण सर्वतस्तस्थुरिति संबन्धः ॥ ४ ॥

**यावत्किंचिज्जगत्यस्मिन्नाहुत्येह व्यपेक्ष्यते ॥**
**अन्तर्भूतं तदप्स्विति ह्याप एवेदमित्यतः ॥ ५ ॥**

अक्षरार्थमुक्त्वा वाक्यं योजयति । यावदिति । इहाग्निहोत्रादावाहुत्या कारणत्वेन स्थितया यावत्किंचिदस्मिञ्जगति जन्यत्वेनापेक्ष्यते तत्सर्वमप्स्वन्तर्भूतं ह्याप एवेत्यादिवाक्याद्दृष्टमिति योजना । दृष्टत्वद्योती हिशब्दः । आप इति मूलकारणं विवक्षितम् ॥ ५ ॥

**अग्रे प्रथमतः सृष्टेरग्रजस्य प्रजापतेः ॥**
**सत्यं ब्रह्मासृजन्नापः कारणत्वादपां ततः ॥ ६ ॥**

तन्मात्रं सूत्रोत्पत्तेः पूर्वं जगदासीदिति वाक्यार्थं संगृह्णाति । अग्र इति । ता इत्यादेरर्थमाह । सत्यमिति । तत्र हेतुः । कारणत्वादिति । उक्तप्रकारादपां मूलकारणत्वात्सत्यस्रष्टृत्वसंभवादित्यर्थः ॥ ६ ॥

**तदिदं हिरण्यगर्भस्य व्यक्तीभावो महेश्वरात् ॥**
**आदित्यस्येह वाक्येन वर्ण्यतेऽग्रजसिद्धये ॥ ७ ॥**

सत्यं ज्ञानमनन्तमिति श्रुतं ब्रह्म कथमव्याकृताज्जायत इत्याशङ्क्य व्याख्यातवाक्याभिप्रायमाह । तदिदमिति । तद्बुभुत्सितं सूत्रस्याऽऽदित्यजीवस्येदं जन्माव्याकृतादस्मिन्ब्राह्मणे ता इत्यादिनोच्यते न चासतः सतो वा जन्मयोगः कारणात्मना स्थितस्यैव व्यक्तीभावो जन्मेत्युपगमात्तदुक्तिश्च सूत्रस्याग्रजत्वप्रत्ययत्वार्थमित्यर्थः ॥ ७ ॥

**भूतादिव्यक्तितो व्यक्तिरग्रजस्यापि नान्यथा ॥**
**ताः सत्यमिति तेनाऽऽह सत्यं ब्रह्मातिविस्तृतेः ॥ ८ ॥**

सूत्रक्षेत्रज्ञस्य तर्हि जन्मस्वीकारान्नाऽऽत्माऽश्रुतेरित्यधिकरणविरोधः स्यादित्याशङ्क्याऽऽह । भूतेति । निरुपाधिकब्रह्मवत्तस्यापि न स्वतो जन्म किंत्वौपाधिकं स च

१ क. ग. °ताभिव्य° ।

भूतोपाधिरपञ्चीकृतमहाभूतानां तद्देहकत्वात्तदुत्पत्तेश्चौपाधिकत्वं चराचरव्यपाश्रयाधिकरणे सिद्धमित्यर्थः । औपाधिकं सूत्रजन्मेत्यत्र लिङ्गमाह । **ता इति** । सतोऽसतश्च जन्मायोगादभिव्यक्तिरेवाभिमतेति भावः । सत्यं ब्रह्मेति वाक्यमनूद्य सूत्रस्य ब्रह्मत्वे हेतुमाह । **सत्यमिति** ॥ ८ ॥

**सूर्यादिकरणं देवं ब्रह्माऽस्राक्षीज्जगद्गुरुम् ॥**
**देवान्विराडपि ब्रह्मा ससर्जेत्यनुषज्यते ॥ ९ ॥**

ब्रह्मेत्यादि व्याकरोति । **सूर्यादीति** ॥ ९ ॥

**एवं सत्याद्यतो जातं क्रमेण ब्रह्मणो जगत् ॥**
**महत्सत्यमतो ब्रह्म यक्षत्वं तूपवर्ण्यते ॥ १० ॥**

सत्यत्वमहत्त्वप्रथमजत्वानि सूत्रे सिद्धानीति निगमयति । **एवमिति** । ते देवा इत्यादेस्तात्पर्यमाह । **यक्षत्वमिति** ॥ १० ॥

**अतीत्य पितरं देवाः पितामहमुपासते ॥**
**यतोऽतो ब्रह्म यक्षं च सत्यं प्रथमजं विदुः ॥ ११ ॥**

तद्व्याकरोति । **अतीत्येति** । यद्ब्रह्म सत्यं प्रथमजमुक्तं तद्यक्षं विदुरिति योजना ॥ ११ ॥

**तस्यापि ब्रह्मणो नाम त्र्यक्षरं सत्यमुच्यते ॥**
**प्रथमोत्तमे त्वमृतमक्षरे सस्वरत्वतः ॥ १२ ॥**

तदेतदित्यादेरर्थमाह । **तस्यापीति** । हृदयब्रह्मदृष्टान्तार्थोऽपिशब्दः । सकारयकारयोरमृतत्वे हेतुमाह । **सस्वरत्वत इति** ॥ १२ ॥

**निरर्चकं मध्यतो[1] मृत्युर्निर्जीवं देहवत्स्थितम् ॥**
**भूयोऽमृतेन तद्ग्रस्तं मृतं चापि स्वतो यतः ॥ १३ ॥**

मध्यत इत्यादेरर्थमाह । **निरर्चकमिति** । तदेतदित्यादेरर्थमाह । **भूय इति** । स्वतो मृतमपि स्वराभावात्तकाराक्षरं सकारयकाराभ्यामुभयतो यतो गृहीतमतोऽकिंचित्करमित्यर्थः ॥ १३ ॥

**इत्येवं पर्युपासीनो नामाभिज्ञो नरः सदा ॥**
**सत्यभूयं भवेदेव नैनमित्यादियुक्तिगीः ॥ १४ ॥**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके पञ्चमाध्यायस्य पञ्चमं ब्राह्मणम् ॥ ५ ॥**

उक्तविभागस्योपास्तिसंबन्धं ब्रुवाणस्तत्फलमाह । **इत्येवमिति** । विदुषः सत्यरूपे-

---

[1] १ ख. °तोमृत्यु निर्जी° ।

णावस्थाने युक्तिकथनार्थं नैनमित्यादिवाक्यमित्याह । नैनमित्यादीति । न हि यथोक्तब्रह्मविदं तद्रूपेण स्थितमनृतं स्पृशतीतस्ततः कार्यकरत्वमित्यर्थः ॥ १४ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां पञ्चमाध्यायस्य
पञ्चमं ब्राह्मणम् ॥ ५ ॥

श्लोकानामादितः समष्ट्यङ्काः—१०५६५

---

अथ षष्ठं ब्राह्मणम् ।

---

संस्थानवदथेदानीमध्यात्मे चाधिदैवते ॥
रूपं प्रकल्प्य सत्यस्य भण्यते तदुपासनम् ॥ १ ॥

प्रथमजत्वादिविशिष्टसत्योपास्यत्वमुक्त्वा ब्राह्मणान्तरतात्पर्यमाह । संस्थानवदिति । विशिष्टसत्योपास्त्यनन्तरमवसरे प्राप्ते सत्यध्यात्माधिदैवतयोः सत्यस्यैव स्थानभेदविशिष्टं रूपं कल्पयित्वा तदुपास्त्यर्थमुत्तरब्राह्मणमित्यर्थः ॥ १ ॥

अक्ष्यादित्याख्यनीडस्थौ स्थानमात्रप्रभेदतः ॥
भिन्नाविव समीक्ष्येते देवतैकैव सा सती ॥ २ ॥

आदित्याक्षिस्थानभेदाद्देवताभेदे ध्यानं भिद्येतेत्याशङ्क्याऽऽह । अक्षीति । यद्यपि सूत्राख्या देवतैकैव तथाऽपि तथाविधस्थानद्वययोगात्तन्मात्रभेदाद्भिन्नेव सा भाति तस्मादादित्यचाक्षुषौ भिन्नाविव दृष्टाविति नोपास्तिभेद इत्यर्थः ॥ २ ॥

उपकार्योपकारित्वसंबन्धेनेतरेतरम् ॥
प्रतिष्ठितौ तावध्यात्मे चक्षुष्यादित्य एव च ॥ ३ ॥

तावित्यादेरर्थमाह । उपकार्येति । इतरेतरं प्रतिष्ठितत्वमभिनयति । अध्यात्म इति । अध्यात्मे चक्षुष्यादित्यः प्रतिष्ठितोऽधिदैवे चाऽऽदित्ये चाक्षुष इत्यर्थः ॥ ३ ॥

प्रतिष्ठितौ तावन्योन्यं कथमित्युच्यते यथा ॥
अक्ष्णि रश्मिभिरादित्यः प्राणैस्तस्मिंश्च चाक्षुषः ॥ ४ ॥

यथोक्तं संबन्धं प्रकटयन्नाकाङ्क्षापूर्वकं रश्मिभिरित्यादेरर्थमाह । प्रतिष्ठिताविति । आदित्यो हि चक्षुषि प्रकाशेनोपकुर्वन्प्रतिष्ठितश्चाक्षुषश्चेन्द्रियैर्मण्डलं प्रकाशयन्नादित्ये तथा । यद्वा चक्षुरादीन्द्रियाणि करणस्वामिनं भोक्तारमुपनयन्ति स चादृष्टद्वाराऽऽदित्यमुत्पादयति तथाच चाक्षुषस्य तत्रावस्थानोक्तिरित्यर्थः ॥ ४ ॥

अरिष्टदर्शनं चात्र प्रासङ्गिकमथोच्यते ॥
ज्ञातारिष्टः कथं नाम कुर्यादात्महितं पुमान् ॥ ५ ॥

स यदेत्यादेस्तात्पर्यमाह । **अरिष्टेति** । उपास्तिप्रस्तावे कथं तदुच्यते तत्राऽऽह । **प्रासङ्गिकमिति** । चाक्षुषादित्यपुरुषप्रसङ्गागतमेतदित्यर्थः । तदुक्तिफलमाह । **ज्ञातेति**॥५॥

**उत्क्रमिष्यन्यदा भोक्ता भवतीहाऽऽयुषः क्षये ॥**
**चन्द्रमण्डलवच्छुद्धं वीक्षते रविमण्डलम् ॥ ६ ॥**

पदानि व्याकरोति । **उत्क्रमिष्यन्निति** । भोगभूमिरिहेत्युक्ता ॥ ६ ॥

**रश्मयो न समायान्ति विज्ञानपुरुषं प्रति ॥**
**भोगेन प्रक्षयाद्भोक्तुस्तद्वशीकारिकर्मणः ॥ ७ ॥**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके पञ्चमाध्यायस्य षष्ठं ब्राह्मणम् ॥ ६ ॥**

तत्र हेतुसिद्ध्यर्थं नैनमित्यादेरर्थमाह । **रश्मय इति** । विज्ञानं बुद्धिस्तदुपाधिकः पुरुषो जीवः । तच्छब्देन रश्मयो गृह्यन्ते ॥ ७ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां पञ्चमाध्यायस्य षष्ठं ब्राह्मणम् ॥ ६ ॥

**श्लोकानामादितः समष्ट्यङ्काः—१०५७२**

---

अथ सप्तमं ब्राह्मणम् ।

---

**शरीरं व्याहृतिमयं कल्प्यतेऽक्षिरविस्थयोः ॥**
**तस्यैव सत्यनाम्नोऽथ तदुपासाप्रसिद्धये ॥ १ ॥**

ब्राह्मणान्तरस्य तात्पर्यमाह । **शरीरमिति** । कल्पनाफलमाह । **तस्येति** । तदुपासनाप्रसिद्धये व्याहृतिशरीरत्वेनोपास्तिसिद्ध्यर्थमिति यावत् । अथशब्दो ब्राह्मणान्तरारम्भार्थः ॥ १ ॥

**तस्यैव नामोपनिषद्ब्रह्मणो भण्यते द्वयोः ॥**
**स्थितस्य स्थानयोः साक्षाद्यद्ग्रहात्तत्प्रसीदति ॥ २ ॥**

तस्योपनिषदित्यादेरर्थमाह । **तस्यैवेति** । नामकरणे फलमाह । **यद्ग्रहादिति** । साक्षात्प्रसीदतीति संबन्धः ॥ २ ॥

**हन्तेर्वेदं जहातेर्वाऽहरित्येतदिहेष्यते ॥**
**पाप्मानं हन्ति तेनातो जहाति च न संशयः ॥ ३ ॥**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके पञ्चमाध्यायस्य सप्तमं ब्राह्मणम् ॥७॥**

अहरहमितिपदयोर्निष्पत्तिप्रकारं सूचयति । **हन्तेरिति** । आङ्पूर्वस्य हन्तेर्जहातेर्वा

---

१ क. °कारक°।

ङसि कृते ह्रस्वत्वे चोपसर्गस्य टिलोपे चाहरिति पदं भवति । आङ्पूर्वाभ्यां ताभ्यामेव धातुभ्यां डमि कृते पूर्ववदुपसर्गह्रस्वत्वादौ चाहंपदं निष्पद्यत इत्यर्थः । नामद्वयविशिष्टसत्योपासकस्य हन्तीत्यादिनोक्तं फलमाह । **पाप्मानमिति** । तेनेत्युपासनोक्तिः । तस्य तद्विरोधित्वमतःशब्दार्थः । उपासनशक्तेरनतिशङ्कनीयत्वमाह । **नेति** ॥ ३ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां पञ्चमाध्यायस्य सप्तमं ब्राह्मणम् ॥ ७ ॥

**श्लोकानामादितः समष्ट्यङ्काः—१०५७५**

अथाष्टमं ब्राह्मणम् ।

**मनोमयोऽयमिति च तस्यैव ब्रह्मणोऽपरम् ॥**
**स्वान्तोपाधिविशिष्टस्य ह्युपासनमथोच्यते ॥ १ ॥**

ब्राह्मणान्तरमाह । **मनोमय इति** । सत्याद्युपाधिविशिष्टस्योपास्तिवदित्यथशब्दार्थः ॥ १ ॥

**मनोभिमानतोऽज्ञानात्पुरुषोऽयं मनोमयः ॥**
**यदि वा मनसि व्यक्तेर्मनसा वोपलभ्यते ॥ २ ॥**
**भाः प्रकाशोऽमलं ज्योतिः सा सत्यमविनाशतः ॥**
**तस्मिन्नित्यादिवचनं पूर्वोक्तस्थानसिद्धये ॥ ३ ॥**

पदानि व्याचष्टे । **मन इत्यादिना** । तस्मिन्नहमभिमाने हेतुः । **अज्ञानादिति** । जडप्रकाशं व्यावर्तयति । **अमलमिति** । तस्मिन्नित्यादेस्तात्पर्यमाह । **तस्मिन्नित्यादीति** । प्रकृताक्ष्यादित्यस्थानत्यागेन यद्धृदयमितिव्यवहितस्थानग्रहार्थं वाक्यं न चैव तेन गतार्थत्वमत्रापूर्वगुणोक्तेरिति भावः ॥ २ ॥ ३ ॥

**बुद्ध्युपाधिव्यवच्छेदाद्व्रीह्यादिपरिमाणता ॥**
**स्वतोऽनन्तत्वतो मानात्सर्वेशानादिरूपता ॥ ४ ॥**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके पञ्चमाध्यायस्याष्टमं ब्राह्मणम् ॥ ८ ॥**

कथं पूर्णे प्रतीचि सूक्ष्मत्वं यथा व्रीहिर्वेत्यादिनोच्यते तत्राऽऽह । **बुद्धीति** । तर्हि सर्वेशानाद्ययुक्तं न हि परमाणुतुल्यस्य तथात्वं तत्राऽऽह । **स्वत इति** । कथमनन्तत्वं सत्यं ज्ञानमनन्तमित्यादिश्रुतेरित्याह । **मानादिति** । अमानादिति वा छेदः । निर्गुणत्वेन परिमाणराहित्यादित्यर्थः ॥ ४ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां पञ्चमाध्यायस्याष्टमं ब्राह्मणम् ॥ ८ ॥

**श्लोकानामादितः समष्ट्यङ्काः—१०५७९**

अथ नवमं ब्राह्मणम् ।

---

**विद्युद्देहस्य तस्यैव ब्रह्मणोऽन्यदुपासनम् ॥**
**अशेषपाप्मविध्वस्त्यै श्रुत्याऽथ प्रतिपाद्यते ॥ १ ॥**

ब्राह्मणान्तरतात्पर्यमाह । **विद्युदिति** । ब्राह्मणान्तराधिकारार्थोऽथशब्दः स च प्रथमतो योज्यः ॥ १ ॥

**विद्युद्ब्रह्मेति युक्तं तद्विद्युद्धि स्याद्विदानतः ॥**
**द्यतेरेतद्यतो रूपमवखण्डनकर्मणः ॥ २ ॥**

अक्षरार्थमाह । **विद्युदित्यादिना** । यद्ब्राह्मणा विद्युद्ब्रह्मेत्याहुस्तद्युक्तं विदानतो हि विद्युदुच्यते ब्रह्मापि पाप्मानमुपासकस्य खण्डयत्यतो विद्युत्स्यादित्यर्थः । कथमित्थं विद्युदित्युक्ते विद्युत्पदनिष्पत्तिं सूचयति । **द्यतेरिति** । अतो विद्युदेवंभूता युक्तेति शेषः ॥२॥

**तमोऽन्धकारमखिलमवखण्डयति क्षणात् ॥**
**विद्युद्यथा तथाऽस्मत्तः पाप्मानं तदुपासितुः ॥ ३ ॥**
**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके पञ्चमाध्यायस्य**
**नवमं ब्राह्मणम् ॥ ९ ॥**

फलवचनं व्याचष्टे । **तम इति** । प्रसिद्धस्य मेघकृतस्य च तमसो ग्रहादपुनरुक्तिः । यद्वा तमःशब्दस्य पाप्मशब्देन संबन्धः । उपासितुरस्मत्तस्तमोमूलं पाप्मानं देवाप्तिप्रतिबन्धकं तदुपास्यं ब्रह्म खण्डयतीति योजना ॥ ३ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां पञ्चमाध्यायस्य
नवमं ब्राह्मणम् ॥ ९ ॥

**श्लोकानामादितः समष्ट्यङ्काः—१०५८२**

---

अथ दशमं ब्राह्मणम् ।

---

**तस्यैव ब्रह्मणोऽथान्यदुपासनमिहोच्यते ॥**
**वाग्धेनूपाधियोगेन फलाय महतेऽधुना ॥ १ ॥**

ब्राह्मणान्तरस्य तात्पर्यमाह । **तस्यैवेति** । अथशब्दस्तु पूर्ववत् । इहेति ब्राह्मणोक्तिः । वाङ्मयी धेनुरुपाधिस्तत्संबन्धेनेति यावत् ॥ १ ॥

**वागित्यत्र त्रयी ग्राह्या न स्थानकरणादयः ॥**
**स्वाहाकारादि नान्यत्र त्रय्याः संभाव्यते क्वचित् ॥ २ ॥**

पदार्थान्व्याकरोति । **वागित्यादिना** । आदिपदेन देवतोक्तिः । तत्र हेतुः । **स्वाहाकारादीति** । क्वचिदिति स्थानेषु करणेषु देवतासु चेत्यर्थः ॥ २ ॥

त्रयीयं धयते सर्वं स्वाहाकारादिभिः स्तनैः ॥
धेनुमित्येव तां तेन सदोपासीत भारतीम् ॥ ३ ॥

त्रय्या वाचो धेनुदृष्ट्योपास्तौ निमित्तं वदन्वाक्यं योजयति । त्रयीति । धयते क्षरतीति यावत् ॥ ३ ॥

केभ्यः क्षरति सा धेनुरित्येतदधुनोच्यते ॥
तस्यै द्वौ स्तनावित्युक्त्या कथ्यन्ते च स्तनास्तथा ॥ ४ ॥

तस्यै द्वावित्यादिवाक्यस्य प्रश्नपूर्वकं तात्पर्यमाह । केभ्य इति । एतदिति संप्रदानोक्तिः । तस्या इत्यादेरर्थमाह । कथ्यन्ते चेति । तथा संप्रदानवदित्यर्थः ॥ ४ ॥

ऋषभोऽस्यास्तथा ज्ञेयः प्राणस्तस्मात्प्रसूयते ॥
अप्राणस्य न वागस्ति वागप्युच्चार्यते बलात् ॥ ५ ॥

तस्याः प्राण ऋषभ इत्यस्यार्थमाह । ऋषभ इति । लौकिक्या धेन्वा लौकिकबलीवर्दवदित्याह । तथेति । तत्र हेतुः । तस्मादिति । वाग्व्यापारस्य प्राणाधीनत्वमन्वयव्यतिरेकाभ्यामाह । अप्राणस्येति । कर्मान्तरस्य बलाधीनत्ववदित्यपेरर्थः ॥५॥

वाक्प्रस्रवणहेतुत्वाद्धेन्वा वत्सो मनो भवेत् ॥
यद्यद्ध्यायति मनसा तत्तद्वाचा प्रभाषते ॥ ६ ॥

मनो वत्स इत्यस्यार्थमाह । वागिति । हेतुं साधयति । यद्यदिति ॥ ६ ॥

यथोक्तोपासनफलमुक्तब्रह्मात्मरूपता ॥
तं यथा यथा इत्युक्तेरनिर्देशेऽपि गम्यते ॥ ७ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके पञ्चमाध्यायस्य
दशमं ब्राह्मणम् ॥ १० ॥

फलश्रुतेरुपास्त्यविवक्षायां महते फलायेत्युक्तमयुक्तमित्याशङ्क्याऽऽह । यथोक्तेति । तं यथा यथेत्यादिवाक्यमित्यत्र विवक्षितं न शब्दस्वरूपं संधिर्वेति द्रष्टव्यम् ॥ ७ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां पञ्चमाध्यायस्य
दशमं ब्राह्मणम् ॥ १० ॥

श्लोकानामादितः समष्ट्यङ्काः—१०५८९

---

अथैकादशं ब्राह्मणम् ।

उपास्त्यन्तरमस्यैव कौक्षेयाग्नेर्वपुर्भृतः ॥
अयमग्निरिति श्रुत्या यत्नेनाथ विधीयते ॥ १ ॥

१ क. °दद्वाक्यं । २ क. ग. यथ इ° । ख. यथेत्यु° । ३ क. °याग्निवपु° । ग. °याग्नेर्वपु° ।

ब्राह्मणान्तरस्य तात्पर्यमाह। **उपास्त्यन्तरमिति।** उपास्यार्थस्य साक्षात्त्वकथनं यत्नः॥ १॥

**वैश्वानरमिराऽस्याग्नेः सामान्येनाभिधानतः॥**
**योऽयमन्तरितीत्युक्त्या तद्विशेषणमुच्यते॥ २॥**

अयमग्निर्वैश्वानर इत्येतावतैवोपास्यार्थसिद्धेर्योऽयमित्यादि किमर्थमित्याशङ्क्याऽऽह। **वैश्वानरेति।** कौक्षेयाग्निग्रहणार्थं विशेषणमित्यर्थः॥ २॥

**तस्याग्नेरेष घोषः स्यात्कर्णौ प्रोर्णूय यच्छ्रुतिः॥**
**उपास्यार्थस्य साक्षात्त्वं घोषरूपेण वर्ण्यते॥ ३॥**

तस्येत्यादेरर्थमाह। **तस्येति।** प्रोर्णूय हस्ताभ्यां पिधायेति यावत्। यच्छ्रुतिर्यस्य श्रवणमित्येतत्। किमर्थमेष घोषो निर्दिश्यते कौक्षेयं हि ज्योतिरिह स्पष्टयितव्यं ब्रह्मणस्तदुपाधिकस्योपास्यत्वात्तत्राऽऽह। **उपास्येति॥ ३॥**

**अरिष्टदर्शनं चात्र प्रासङ्गिकमथोच्यते॥**
**नैनं घोषं शृणोतीति प्रत्यासन्नमृतिर्नरः॥ ४॥**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके पञ्चमाध्यायस्यैकादशं ब्राह्मणम्॥ ११॥**

स यदेत्यादेरर्थमाह। **अरिष्टेति।** अत्रेति प्रकृतवाक्योक्तिः। प्रासङ्गिकं घोषप्रसङ्गागतमिति यावत्। उपास्यप्रदर्शनानन्तर्यमथशब्दार्थः। ज्ञातारिष्टः कथं नामेत्यत्रोक्तमनुसंधेयम्॥ ४॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायामेकादशं ब्राह्मणम्॥ ११॥

**श्लोकानामादितः समष्ट्यङ्काः—१०५९३**

---

अथ द्वादशं ब्राह्मणम्।

---

**गतिः फलं च वक्तव्यं पूर्वत्र तदनुक्तितः॥**
**उपासनानां सर्वेषामित्यर्थः पर आगमः॥ १॥**

ब्राह्मणान्तरस्य तात्पर्यमाह। **गतिरिति।** सार्वत्रिकी गतिः फलमनुक्तविषयमिति भेदः। तत्र हेतुः। **पूर्वत्रेति॥ १॥**

**उत्क्रामति यदा विद्वाञ्शरीरादायुषः क्षयात्॥**
**आश्वेव वायुं दुर्भेद्यं स आगच्छति वेगवान्॥ २॥**
**प्राप्ताय लोकभोगार्थं वायुस्तस्मै विगच्छति॥**
**कियच्छिद्रं मरुद्दद्याद्रथचक्रखमानगीः॥ ३॥**

द्विकाष्ठसंतताघातमाडम्बरमिहोच्यते ॥
भेरीं च दुन्दुभिं विद्यात्तेनोर्ध्वं यात्युपासकः ॥ ४ ॥
लोकं प्रजापतिं ब्रह्म प्रैत्यसौ भावनाबलात् ॥
अशोकमहिमं चैति दुःखतद्धेतुवर्जितम् ॥ ५ ॥
शाश्वतीश्च समा नित्या अस्मिँल्लोके वसत्यसौ ॥
पूर्वत्रानुक्तकार्याणामुपास्तीनामिदं फलम् ॥ ६ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके पञ्चमाध्यायस्य
द्वादशं ब्राह्मणम् ॥ १२ ॥

पदानि व्याकरोति । उत्क्रामतीत्यादिना । स यावत्क्षिप्येदित्यादिश्रुतिमाश्रित्य विशिनष्टि । आश्वेवेति । विगच्छति स्वात्मनि च्छिद्रं प्रयच्छतीति यावत् । हृदयसत्याद्युपासनेषु फलस्योक्तत्वात्कथमिदं सर्वोपास्तिसंबन्धीत्याशङ्क्याऽऽह । पूर्वत्रेति ॥ २ ॥ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां द्वादशं ब्राह्मणम् ॥ १२ ॥

श्लोकानामादितः समष्ट्यङ्काः—१०५९९

---

अथ त्रयोदशं ब्राह्मणम् ।

---

ज्वरादिव्याधिना तप्तो व्याधितस्तप्यते तु यत् ॥
परमं तत्तपश्चिन्त्यं परमं लोकमीप्सता ॥ १ ॥

ब्रह्मोपासनानि सफलानि कानिचिदुक्तानि संप्रत्यब्रह्मोपासनानि सफलानि कानिचिन्निर्दिदर्शयिषुर्ब्राह्मणान्तरं प्रस्तौति । ज्वरादीति ॥ १ ॥

व्याधिग्रहग्रहाविष्टोऽसह्यं दुःखं समश्नुते ॥
तपोऽतः परमं हि स्यात्तच्चिकित्सामकुर्वतः ॥ २ ॥

व्याधिप्रयुक्तदुःखस्य तपस्त्वं साधयति । व्याधीति । आद्यो ग्रहः संबन्धः । द्वितीयः प्रसिद्ध इति भेदः । अनुभवद्योती हिशब्दः । दुःखसामान्यमतःशब्दार्थः । अधिकारिणं विशिनष्टि । तदिति । अनिन्दकत्वमविषादित्वं चात्र द्रष्टव्यम् ॥ २ ॥

निर्हरन्त्यृत्विजोऽरण्यमन्ये वा मां मृतं गृहात् ॥
परमं तदपि ध्येयं वानप्रस्थ्येन संमितम् ॥ ३ ॥

एतद्वै परमं तपो यं प्रेतमित्यादेस्तात्पर्यमाह । निर्हरन्तीति ॥ ३ ॥

---

१ क. ख. 'काष्ठं सं' । २ क. ग. ब्रह्मा । ३ ख. प्रेत्यासौ । ४ ख. चैति ।

**अभ्यादधति यच्चाग्नौ प्रेतं[1] मां ज्ञातयोऽथ तत् ॥**
**परमं तदपि ध्येयमग्न्यावेशसमत्वतः ॥ ४ ॥**

वाक्यान्तरस्यार्थमाह । **अभ्यादधतीति** । अरण्यनयनानन्तर्यमथेत्युक्तम् । एकस्तच्छब्दस्तस्मादर्थे पञ्चम्या संबध्यते ॥ ४ ॥

**उचितं यस्य यद्यत्स्यात्तत्तल्लोकगिरोच्यते ॥**
**तपसस्तापसस्यैवमग्न्यावेशस्य यत्फलम् ॥ ५ ॥**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके पञ्चमाध्यायस्य त्रयोदशं ब्राह्मणम् ॥ १३ ॥**

परमं हैव लोकं जयतीति सर्वत्र फलैक्यश्रुतेरैक्योपास्तेरित्याशङ्क्याऽऽह । **उचितमिति** । तपस्तापसाग्न्यावेशानामेकैकस्य यद्यत्फलं तत्तदिहोक्तोपासनानामप्येकैकस्य यस्माद्योग्यं फलं तस्मादत्र तद्भेदस्य लोकशब्दस्य ग्रहादुपास्तिभेदः ॥ ५ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां त्रयोदशं ब्राह्मणम् ॥ १३ ॥

**श्लोकानामादितः समष्ट्यङ्काः—१०६०४**

---

अथ चतुर्दशं ब्राह्मणम् ।

---

**अन्नं ब्रह्मेति निर्वक्ति पुरेवान्यदुपासनम् ॥**
**उदारफलसिद्ध्यर्थं तस्य न्यायेन निर्णयः ॥ १ ॥**

कण्डिकात्रयेणाब्रह्मोपासनान्युक्त्वा प्रकृतब्रह्मोपासनान्येवानुवर्तयन्ब्राह्मणान्तरस्य तात्पर्यमाह । **अन्नमिति** । विरमितिविशिष्टगुणद्वयविशिष्टान्नप्राणोपाधिकब्रह्मोपासनं विशिष्टफलकं विधातुमुत्तरो ग्रन्थ इत्यर्थः । कथं तथाविधं ब्रह्मोपास्यमिति निर्णीयते तत्राऽऽह । **तस्येति** ॥ १ ॥

**अन्नमेव परं ब्रह्मेत्येक आहुर्विपश्चितः ॥**
**तत्तथा नावगन्तव्यं क्लिद्यत्यन्नमसुं विना ॥ २ ॥**
**प्राणो ब्रह्मेति चाप्यन्ये तच्च ग्राह्यं पुरेव न ॥**
**अन्नादृते यतः प्राणः शोषमाशु निगच्छति ॥ ३ ॥**

न्यायमेव दर्शयन्पदानि व्याकरोति । **अन्नमित्यादिना** । न हि ब्रह्मणो नित्यासिद्धस्य क्लेदनं सिध्यत्यच्छेद्योऽयमित्यादिस्मृतेरिति मत्वाऽऽह । **क्लिद्यतीति** । न हि ब्रह्मणो भूतभौतिकस्य शोषोऽशोष्यत्वस्मृतिविरोधादित्याशयेनाऽऽह । **अन्नादिति** ॥ २ ॥ ३ ॥

---

१ ख. मृतं ।

**ब्रह्मत्वं नानयोर्यस्मादेकैकस्य न युक्तिमत् ॥**
**संभूय देवते तस्माद्ब्रह्मत्वं संनिगच्छतः ॥ ४ ॥**

एते ह त्वेवेत्यादि व्याचष्टे । **ब्रह्मत्वमिति** ॥ ४ ॥

**तदेतत्संप्रधार्याऽऽह प्रातृदः पितरं किल ॥**
**किंस्विदित्यादि संहृष्टस्तद्दोषस्यासमीक्षणात् ॥ ५ ॥**

तद्ध स्मेत्यादेरर्थमाह । **तदेतदिति** । अन्नप्राणोपाधिकं ब्रह्मोपास्यमिति निश्चित्येति यावत् । किलेत्यर्थवादत्वमस्य द्योत्यते । किमाहेत्युक्तेऽनन्तरवाक्यमादत्ते । **किमिति** । तत्र निमित्तमाह । **तद्दोषस्येति** । गुणहीनोक्तब्रह्मोपास्तौ दोषस्येति यावत् ॥ ५ ॥

**किंस्विदेवंविदे साधु कृत्स्नसाध्वाप्तिहेतुतः ॥**
**कुर्यामसाधु वा तस्मै सर्वासाधुनिराकृतेः ॥ ६ ॥**

वाक्यं व्याकरोति । **किंस्विदिति** । अन्नप्राणब्रह्मोपासिता कृतकृत्यो न तस्य प्राप्यं हेयं वाऽस्तीति भावः ॥ ६ ॥

**पाणिना मैवमित्युक्त्या तं पिता प्रत्यषेधयत् ॥**
**संभूय परमत्वं कः स्वतोशक्तिरवाप्नुयात् ॥ ७ ॥**

स ह स्मेत्यादेरर्थमाह । **पाणिनेति** । कस्त्वेनयोरित्यादेस्तात्पर्यमाह । **संभूयेति** । अन्नप्राणयोरगुणयोः प्रत्येकं ब्रह्मत्वे योग्यत्वाभावान्मिलितयोरपि न तथात्वं कश्चिज्ज्ञातुमलमित्यर्थः ॥ ७ ॥

**स्वतोऽशक्तिमतोर्लोके[1] शक्तिर्योगेऽपि नेक्ष्यते ॥**
**जात्यन्धयोर्न योगेऽपि शक्ती रूपवदीक्षणे ॥ ८ ॥**

स्वतोऽशक्तस्याशक्तान्तरयोगेऽपि न शक्तिरित्यत्र दृष्टान्तमाह । **स्वत इति** ॥ ८ ॥

**तस्माच्छक्तिमतोरेव ग्रासांशानां यथा तथा ॥**
**तृप्तिशक्तिरिहापि स्यात्प्राणान्नाद्यात्मनोर्युतौ ॥ ९ ॥**

अशक्तानां मिथो योगेऽपि न शक्तिरिति स्थिते सदृष्टान्तफलितमाह । **तस्मादिति** । यथा ग्रासभागानां स्वतः शक्तानामेव मिलितानामपि तृप्तिसंपत्तिशक्तिस्तथा प्राणान्नयोरपि स्वतः शक्तिमतोरेव मिथः संबन्धे ब्रह्मत्वशक्तिः स्यादित्यर्थः ॥ ९ ॥

**न चेत्परमतां यातः कथं परमतोच्यताम् ॥**
**प्रत्येकं शक्तिमत्त्वोक्तिर्वीत्यादिवचसोच्यते ॥ १० ॥**

कथं तर्हि शक्तिमत्त्वमनयोरिति पृच्छति । **न चेदिति** । तस्मा इत्याद्युत्तरत्वेनावतारयति । **प्रत्येकमिति** ॥ १० ॥

---

१ ख. ग. °तो लोके ।

व्याख्यानाय तु वीत्यस्य त्वन्नं वै वीति भण्यते ॥
अन्ने विष्टानि सन्त्येव भूतत्वं यान्ति येन हि ॥ ११ ॥
अन्नविष्टानि सर्वाणि भूतानीत्यन्नमुच्यते ॥
वीति तेन सदा प्राणो रमित्येवमिहोच्यते ॥ १२ ॥

अन्नं वै वीतिवाक्यतात्पर्यमाह । **व्याख्यानायेति** । व्याख्यानमेव स्पष्टयति । **अन्न इति** । सर्वाणि भूतान्यन्नाश्रितानि सन्ति भूतत्वं येन हेतुना यान्ति तेन तान्यन्ने विष्टानीति व्युत्पत्त्या वीत्यन्नं सर्वभूताश्रयभूतमुच्यते सदेति योजना । सर्वभूताश्रयत्वमन्नस्य लोकप्रसिद्धमिति हिशब्दार्थः । रमित्यादेरर्थमाह । **प्राण इति** । इहेति वाक्योक्तिः ॥ ११ ॥ १२ ॥

प्राणे सति रमन्ते हि लोके दृष्टानि सर्वदा ॥
भूतानि रमिति प्रोक्तस्तस्मात्प्राणोऽपि सूरिभिः ॥ १३ ॥

तदेव साधयन्प्राणे हीत्यादि व्याचष्टे । **प्राण इति** । अन्नं वीत्युक्तिवदित्यपेरर्थः ॥ १३ ॥

स्वतो गुणवतोरेवमन्नप्राणात्मनोर्भवेत् ॥
संभूय परमत्वं हि फलोक्तिः सैव योदिता ॥ १४ ॥

तयोर्गुणवत्त्वोक्तिफलमाह । **स्वत इति** । प्रागुक्तदृष्टान्तसूचको हिशब्दः । यथोक्तब्रह्मोपासकस्य फलवचनमुत्थापयति । **फलेति** । सर्वाणि ह वा अस्मिन्नित्याद्या या श्रुतिरुक्ता सैव प्रकृतोपासकस्य फलोक्तिरिति योजना ॥ १४ ॥

विशन्ति सर्वभूतानि ह्यन्नभूते प्रजापतौ ॥
रमन्ते प्राणभूते च फलमेतदुपासितुः ॥ १५ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके पञ्चमाध्यायस्य
चतुर्दशं ब्राह्मणम् ॥ १४ ॥

फलोक्तिं व्यनक्ति । **विशन्तीति** । अन्नप्राणाधीनतया भूतानां स्थितिरत्योरतिप्रसिद्धिरस्तीति हिशब्दार्थः ॥ १५ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां पञ्चमाध्यायस्य
चतुर्दशं ब्राह्मणम् ॥ १४ ॥

**श्लोकानामादितः समष्ट्यङ्काः—१०६१९**

---

अथ पञ्चदशं ब्राह्मणम् ।

---

उक्थादिगुणपूगेन विशिष्टस्यानरूपिणः ॥
उपासनमथेदानीं ब्रह्मणो भण्यते परम् ॥ १ ॥

---

१ ख. °वत्त्वे फलितमा° ।

अन्नप्राणोपाधिब्रह्मध्यानमुक्त्वा ब्राह्मणान्तरतात्पर्यमाह । **उक्थादीति** । आदिपदेन यजुःसामक्षत्राणि गृह्यन्ते ॥ १ ॥

**उक्थं प्राणः कुतो यस्मात्प्राणे सति चराचरम् ॥**
**उत्थापयति कर्मेदं कर्ता वा नान्यथा ततः ॥ २ ॥**

पदानि व्याकरोति । **उक्थमिति** । उक्थं शस्त्रं तस्य प्राणात्मत्वमप्रसिद्धमित्याह । **कुत इति** । प्राणे सत्येव पुण्यापुण्यं कर्म जीवो वा जगदुत्पादयति न तु तं विना तयोर्यस्मादुत्पादकत्वं तस्मादुक्थं प्राण इत्याह । **यस्मादिति** ॥ २ ॥

**वीरश्चोक्थात्मवित्पुत्र उपासीनस्य जायते ॥**
**दृष्टं फलमदृष्टं तु ह्युक्थस्यैकात्म्यमश्नुते ॥ ३ ॥**

उक्थेत्यादि व्याचष्टे । **वीरश्चेति** । तं यथा यथेत्यादिशास्त्रमत्र प्रमाणयितुं हीत्युक्तम् ॥ ३ ॥

**यजुश्च प्राण एवेति सदोपासीत यत्नतः ॥**
**कुतो यजुष्ट्वं तस्येति युक्तिलेशोऽभिधीयते ॥ ४ ॥**
**युज्यन्ते सर्वभूतानि संहन्यन्ते परस्परम् ॥**
**प्राणे सति यजुस्तस्मात्फलोक्तिः पूर्ववत्तथा ॥ ५ ॥**

यजुरित्यादेरर्थमाह । **यजुश्चेति** । आदरे नैरन्तर्ये च यत्नशब्दः । प्राणे हीत्यादि शङ्कापूर्वकमुत्थाप्य व्याचष्टे । **कुत इत्यादिना** । युज्यन्ते हेत्यादेस्तात्पर्यमाह । **फलोक्तिरिति** । पूर्ववदिति दृष्टादृष्टविभागोक्तिः । तथा सति फलवत्त्वादिदमुपासनं कर्तव्यमिति सूचयति । **तथेति** ॥ ४ ॥ ५ ॥

**सामापि प्राण एवेति कथं तदिति भण्यते ॥**
**सम्यञ्चि सर्वभूतानि प्राणे सति यतस्ततः ॥ ६ ॥**

सामेत्यादेरर्थमाह । **सामापीति** । इतिशब्दः सदोपासीतेति पूर्वेण संबध्यते । प्राणे हीत्याद्युत्थाप्य व्याचष्टे । **कथमित्यादिना** । सम्याञ्चि संगतानि साम्यमापन्नानि ततः प्राणः सामेति शेषः ॥ ६ ॥

**क्षत्रं च प्राण एवेति चिन्तयेत्सततं हृदा ॥**
**त्रायते हेति युक्त्युक्तिः क्षत्रत्वस्य प्रसिद्धये ॥ ७ ॥**

क्षत्रमित्यादेरर्थमाह । **क्षत्रं चेति** । कथं तस्य क्षत्रत्वमित्युक्तेऽनन्तरवाक्यमादत्ते । **त्रायत इति** ॥ ७ ॥

**क्षणितोर्हि[१] क्षतात्प्राणस्त्रायते न तु तं विना ॥**
**क्षत्रं प्राणस्ततो ज्ञेयो यथोक्तन्यायगौरवात् ॥ ८ ॥**

---

१ ख. ग. 'णितोः क्षतायतः प्राण' ।

युक्तिरूपामुक्तिं व्यनक्ति । क्षणितोरिति । न तं प्राणं विना त्राणं पिण्डस्येति शेषः ॥ ८ ॥

**प्राप्नोत्यत्रमसौ क्षत्रमत्रातृकमनीश्वरम् ॥**
**स एव त्राता सर्वस्य ह्यत्रं क्षत्रमतो भवेत् ॥ ९ ॥**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके पञ्चमाध्यायस्य**
**पञ्चदशं ब्राह्मणम् ॥ १५ ॥**

प्र क्षत्रमित्यादेरर्थमाह । **प्राप्नोतीति** । असावित्युपासकोक्तिः । प्राणस्यात्रत्वं साधयति । **अत्रातृकमिति** । तत्र नियन्त्रन्तराभावं हेतुमाह । **अनीश्वरमिति** । तस्यापीश्वरत्वाभावशङ्कां वारयति । **स एवेति** ॥ ९ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां पञ्चमाध्यायस्य
पञ्चदशं ब्राह्मणम् ॥ १५ ॥

**श्लोकानामादितः समष्ट्यङ्काः—१०६२८**

---

अथ षोडशं ब्राह्मणम् ।

---

**हृदयं सत्यमित्यादिबहूपाधिसमाश्रयम् ॥**
**उपासनमतिक्रान्तं ब्रह्मणः फलवद्बहु ॥ १ ॥**

उक्थादिगुणकप्राणरूपब्रह्मोपास्तिमुक्त्वा ब्राह्मणान्तरमवतारयन्वृत्तं कीर्तयति । **हृद-यमिति** ॥ १ ॥

**सर्वोपाध्युपसंहारिगायत्र्युपाधिकं प्रभोः ॥**
**अधुनोपासनं वाच्यमित्यर्थः पर आगमः ॥ २ ॥**

गायत्रीब्राह्मणस्य तात्पर्यमाह । **सर्वेति** ॥ २ ॥

**उदारफलसंप्राप्त्यावैश्वर्यं तत्र तत्र हि ॥**
**श्रुतं श्रुतौ हि गायत्र्यास्तदुपास्तिर्वरा ततः ॥ ३ ॥**

सर्वात्मकगायत्र्युपाधिकत्वेन ब्रह्मोपास्तिं विधातुं किमित्यारम्भोऽन्येषामपि च्छन्दसां भावात्तदन्यतमोपाधिकं ब्रह्म कुतो नोपास्यमित्याशङ्क्याऽऽह । **उदारेति** । तत्र तत्र श्रुतौ तद्द्वयांस्तत्रे तस्माद्गायत्रीत्यादावित्यर्थः । एको हिशब्दो यस्मादर्थो द्वितीयो नान्यस्य च्छन्दसस्तथाविधभक्तिः श्रुतेतिद्योतनार्थः ॥ ३ ॥

**उदारफलसंबन्धो ब्राह्मणस्यैव नान्यतः ॥**
**ब्राह्मणस्य च गायत्री कारणं तेन सा वेरा ॥ ४ ॥**

---

१ ख. °श्रयात् ॥ उ°। २ ख. परा ।

गायत्रीप्राधान्ये हेत्वन्तरमाह। **उदारफलेति। ब्राह्मणा** व्युत्थायेत्यादिश्रुतेरित्यर्थः। नान्यतो नान्यस्येति यावत्। कथं तावता गायत्रीप्राधान्यं तत्राऽऽह। **ब्राह्मणस्येति। गायत्र्या** ब्राह्मणमसृजतेतिश्रुतेरित्यर्थः॥ ४॥

**भूमिरित्यादिवाक्येन त्रिलोक्यष्टाक्षरोच्यते॥**
**अष्टाक्षरं पदं सिद्धं गायत्र्याः प्रथमं च यत्॥ ५॥**

अन्ययोगव्यवच्छेदेन गायत्र्युपाधिकब्रह्मोपास्तिवचने तात्पर्यमुक्त्वा भूरित्यादिवाक्यस्य विवक्षितमाह। **भूमिरित्यादीति**॥ ५॥

**अष्टाक्षरत्वसामान्याद्गायत्र्याः प्रथमं पदम्॥**
**तच्चेदं चैकतामेति संख्यासामान्यहेतुतः॥ ६॥**

किमर्थमित्थं संख्यासाम्यमुच्यते तत्राऽऽह। **अष्टाक्षरत्वेति**। तद्गायत्रीप्रथमपदमिदं च त्रैलोक्यमष्टाक्षरत्वसादृश्यादैक्यं गच्छत्यतः संख्यासाम्याद्गायत्र्याद्यं पदं त्रैलोक्यात्मना ध्येयमित्यर्थः॥ ६॥

**त्रैलोक्याभिहितिरियमष्टाक्षरसमत्वतः[1]॥**
**गायत्र्याद्यपादसमतो विराजाऽऽत्मैक्यमश्नुते॥ ७॥**

तत्रैव हेत्वन्तरमाह। **त्रैलोक्येति**। गायत्र्या यदाद्यं पदं तत्सवितुर्वरेण्यमिति तस्यैव विराड्नाम्ना भूमिरित्यादिना सहाष्टाक्षरत्वसाम्यात्तत्तेन प्रतिपद्यते तथाच त्रैलोक्यात्मनो विराजोऽभिधानमिदं यद्गायत्र्याद्यपदमष्टाक्षरत्वाविशेषादित्यर्थः। विराजा तन्नाम्नेति यावत्॥ ७॥

**एवं पदं त्रयो लोका अभिधानाभिसंगतः॥**
**अत्यन्तमभिधेयस्य विराजैक्यं प्रपद्यते॥ ८॥**

गायत्र्याद्यपदस्य विराजश्चाभिधानाभिधेयभावेऽपि प्रकृते किमिति तदाह। **एवमिति**। उक्तरीत्या वाच्यवाचकत्वेन संगतं गायत्र्याद्यपदं त्रैलोक्यात्मकं विराडभिन्नं वाच्यवाचकयोस्तादात्म्यात्तेन तद्विराडात्मनोपास्यमित्यर्थः। उपासकस्य फलमाह। **विराजेति**॥ ८॥

**उक्ताभिधानद्वारेण संपन्नो यस्त्रिलोकताम्॥**
**यथोक्तोपासनाभ्यासाद्विराडेव भवेदसौ[2]॥ ९॥**

संक्षिप्तं फलं प्रपञ्चयति। **उक्तेति**। विराडभिधेयो गायत्र्याद्यपदं चाभिधानं तद्द्वारेण तयोरभेदानुसंधानेनेति यावत्। त्रिलोकतां विराडात्मतां गायत्र्याद्यपदं विराडात्मकमिति ध्यानं यथोक्तोपासनम्॥ ९॥

---

१ क. ख. °मन्वितः। २ ख. भवत्यसौ।

**त्रिषु लोकेषु यावत्स्यात्पुंभोगायेह साधनम् ॥**
**तावत्सर्वं जयत्याशु प्रथमोपास्तितः फलम् ॥ १० ॥**

श्रुतेर्बहिरेव तत्फलमुक्त्वा श्रौतं फलमाह । **त्रिष्विति** ॥ १० ॥

**रूपराशिरशेषेण भूम्याद्युक्त्योपसंहृतः ॥**
**ऋच इत्यादिना ज्ञेया नामराश्युपसंहृतिः ॥ ११ ॥**

पूर्वकण्डिकायां विवक्षितमनुवदति । **रूपेति** । गायत्रीप्रथमपादात्मनेति शेषः । ऋचो यजूंषीत्यादेस्तात्पर्यमाह । **ऋच इत्यादिनेति** । गायत्रीद्वितीयपादरूपेणेति शेषः ॥ ११ ॥

**अभिधेयाभिधानाख्यराशी नित्यौ व्यवस्थितौ ॥**
**परस्पराभिसंबन्धौ गायत्रीवर्त्मनोदितौ ॥ १२ ॥**

रूपराश्युपसंहारोक्त्यनन्तरं नामराश्युपसंहारोक्तौ को हेतुरित्याशङ्क्य कण्डिकाद्वयार्थं संक्षिप्यानुद्रवति । **अभिधेयेति** ॥ १२ ॥

**ऋगादेरभिधानस्य यावती व्याप्तिरिष्यते ॥**
**तावत्सर्वमवाप्नोति यथोक्तोपासनान्नरः ॥ १३ ॥**

द्वितीयपदस्य त्रय्यात्मनोपासने फलमभिदधानः स यावतीयमित्यादि व्याचष्टे । **ऋगादेरिति** ॥ १३ ॥

**व्याख्या तुल्यैव पूर्वेण वाक्येनोत्तरवाक्ययोः ॥**
**अक्षराणामिह ज्ञेया नातो व्याख्यायते पुनः ॥ १४ ॥**

ऋचो यजूंषि सामानि प्राणोऽपानो व्यान इति वाक्ययोरक्षराणां व्याख्या भूमिरित्यादिपूर्ववाक्येन तुल्यैव ज्ञेया तथाच नोत्तरवाक्ययोरक्षराणि भूयो व्याख्यायन्ते पुनरुक्तिप्रसक्तेरित्युत्तरवाक्यस्थाक्षराण्यव्याचक्षाणस्य भाष्यकृतोऽभिप्रायमाह। **व्याख्येति**। इहेति भाष्यग्रहणम् ॥ १४ ॥

**कर्मराशिरथेदानीं प्राण इत्यादिनोच्यते ॥**
**विधृतिः पूर्वयोः प्राणो मधुकाण्डे यथोदितः ॥ १५ ॥**
**प्राणात्मानं यथोक्तेन पादेनाऽऽपाद्य यत्नतः ॥**
**प्राणात्मैव भवत्याशु सदा तद्भावभावितः ॥ १६ ॥**

प्राणोऽपान इत्यादिवाक्यतात्पर्यमाह । **कर्मराशिरिति** । गायत्रीतृतीयपदात्मनोपसंह्रियमाणत्वेनेति शेषः । राशिद्वयोपसंहारानन्तर्यमथशब्दार्थः । प्राणशब्दार्थमाह । **विधृतिरिति** । पूर्वयोर्नामरूपयोरिति यावत् । न त्वपानव्यानयोरर्थतो वा पाठतो वा पूर्वत्वाभावादिति द्रष्टव्यम् । प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत्सर्वं प्राण एवेत्यत्र सप्तान्नाधिकारे यथोक्तस्य प्राणस्य प्रस्तुतत्वमाह । **मध्विति** । गायत्रीतृतीय-

पादप्राणात्मनाऽनुसंधानस्य फलमाह । **प्राणेति** । तृतीयपादरूपेण प्राणात्मानमापाद्य यत्नतो नैरन्तर्येण तद्भावभावितो देहपाते तत्क्षणादेव प्राणात्मा भवतीति योजना । द्वितीयपादोपासनेऽपि तुल्यमेतत्फलमिति द्रष्टव्यम् ॥ १५ ॥ १६ ॥

**अभिधेयोपसंहारस्त्रिलोकीवचसोदितः ॥**
**ऋच इत्यादिना तद्वदभिधानोपसंहृतिः ॥ १७ ॥**
**कर्मणोऽप्युपसंहारः प्राण इत्यादिना तथा ॥**
**एतावद्वस्तु जगति गायत्रीपादसंश्रयम् ॥ १८ ॥**

नामरूपकर्मात्मकं जगद्गायत्रीपादत्रयात्मनोपसंहृतमिति वाक्यत्रयार्थमुपसंहरति । **अभिधेयेति** । गायत्रीपादत्रयात्मना नामरूपकर्मणामुपसंहृतत्वेऽपि तद्व्यतिरेकेणानुपसंहृतं किंचिदस्ति जगदित्याशङ्क्याऽऽह । **एतावदिति** । यद्गायत्रीपादत्रयनिष्ठं रूपादित्रयमुक्तमेतावदेव व्यवहारभूमौ वस्त्वस्ति व्यावहारिकवस्त्वन्तरे मानाभावादित्यर्थः ॥ १७ ॥ १८ ॥

**अभिधेयस्य गायत्री यस्येयं त्रिपदा मता ॥**
**तस्याभिधित्सयेदानीं प्रारब्धैषोत्तरा श्रुतिः ॥ १९ ॥**

अथास्या एतदेवेत्यादिवाक्यस्य तात्पर्यमाह । **अभिधेयस्येति** । आदित्यात्मकहिरण्यगर्भाभिधानायोत्तरो ग्रन्थ इत्यर्थः । मता वाचकत्वेनेति शेषः ॥ १९ ॥

**व्याचष्टे स्वयमेवार्थं तुर्यादिपदसंहतेः ॥**
**यद्वै चतुर्थमित्यादिवचसा यत्नतः श्रुतिः ॥ २० ॥**

यद्वै चतुर्थमित्यादेः पूर्वेण पौनरुक्त्यमित्याशङ्क्याऽऽह । **व्याचष्ट इति** । व्याख्याने तात्पर्यं यत्नः ॥ २० ॥

**रागो रज इति ज्ञेयः प्रवृत्तेः कारणं तु यत् ॥**
**रञ्जनं काम आसङ्गः सर्वानर्थकृदात्मनः ॥ २१ ॥**

सर्वमु ह्येवैष रज इत्यत्र रजःशब्दं व्याचष्टे । **राग इति** । कः पुना रागो नाम तमाह । **प्रवृत्तेरिति** । तत्र रजःशब्दप्रवृत्तिं साधयति । **रञ्जनमिति** । **उक्तं** हि सुखानुशायी राग इति । तस्य सर्वप्रवृत्तिहेतुत्वे **यद्यद्धि** कुरुते जन्तुस्तत्तत्कामस्य चेष्टितमिति **स्मृतिर्मा**नमित्याह । **काम इति** । **सङ्गात्संजायते** काम इति **स्मृतिमाश्रित्य** तद्धेतुमाह । **आसङ्ग इति** । तस्य त्याज्यत्वं सूचयति । **सर्वेति** ॥ २१ ॥

**तं क्रमित्वोपरि स्थित्वा तपतीति क्रियापदम् ॥**
**भूतानि वा रजोवाचा भण्यन्तेऽत्राखिलानि तु ॥ २२ ॥**

उपर्युपरीत्यादेरर्थमाह । **तमिति** । अत्र लोका रजांस्युच्यन्ते । **स** इमाँल्लोकान्वि-

चक्रमेऽथो वेदानथो वाचमिति श्रुतिमाश्रित्य रजःशब्दः सकललोकवाची भाष्ये व्याख्यातस्तदनुसारेण पक्षान्तरमाह । **भूतानीति** ॥ २२ ॥

**उपर्युपरि तान्येष तपत्युल्बणरश्मिवान् ॥**
**श्रीयशोभ्यां यथैवायं तपत्येवमुपासकः ॥ २३ ॥**
**गुणैः सर्वानतिक्रम्य स्थित्वोपरि श्रिया ज्वलन् ॥**
**यशसा च सुदीप्तेन विद्वांस्तपति विद्विषः ॥ २४ ॥**

रजःशब्दार्थमुक्त्वा वाक्यं योजयति । **उपरीति** । एवं हेत्यादि व्याचष्टे । **श्रीयशोभ्यामिति** ॥ २३ ॥ २४ ॥

**कामितार्थस्य लब्धत्वात्सर्वग्रहणमात्रतः ॥**
**उपर्युपरीति वीप्सा किमर्थमिति भण्यते ॥ २५ ॥**

गायत्र्याश्चतुर्थपादं सूत्रात्मकमादित्यान्तर्गतमहंबुद्ध्या ध्यायतः सर्वाधिपत्यादिफलमुक्तमिदानीमुपर्युपरीति वीप्सामाक्षिपति । **कामितेति** । सर्वाधिपत्यस्येत्यर्थः ॥ २५ ॥

**नैव दोषो यतो येषां सूर्यः स्यादुपरि स्थितः ॥**
**लोकानां सर्वशब्देन तेषामेव ग्रहो भवेत् ॥ २६ ॥**

परिहरति । **नैष इति** । वीप्सावैयर्थ्याभावे हेतुमाह । **यत इति** । अतो वीप्साभावे न सर्वाधिपत्यमिति शेषः ॥ २६ ॥

**पराञ्चो ये रवेर्लोकास्तेषामपि परिग्रहः ॥**
**कथं नु नाम सिद्धः स्यादतो वीप्सा प्रयुज्यते ॥ २७ ॥**

वीप्सापक्षे तु सर्वाधिपत्यसिद्धिरित्याह । **पराञ्च इति** । सिद्धः स्यादिति श्रुतेराकाङ्क्षा यत इति शेषः ॥ २७ ॥

**व्याख्याता या पुरा यत्नाद्गायत्री जगदात्मिका ॥**
**मूर्तामूर्तरसे भानौ त्रिपादेषा[1] प्रतिष्ठिता ॥ २८ ॥**

सैषा गायत्रीत्यादेरर्थमाह । **व्याख्यातेति** । आद्यस्य त्रैलोक्यात्मत्वं द्वितीयस्य त्रय्यात्मत्वं तृतीयपादस्य सर्वप्राणात्मत्वमिति व्युत्पादनं यत्नः ॥ २८ ॥

**तदपीदं पदं तुर्यं सत्येऽध्यात्मे प्रतिष्ठितम् ॥**
**अक्षिण प्रकाशरूपे हि सर्वं रूपं प्रतिष्ठितम् ॥ २९ ॥**

तद्वै तत्सत्ये प्रतिष्ठितमित्यस्यार्थमाह । तदपीति ॥ २९ ॥

**किं पुनस्तत्सत्यमिति सत्यं चक्षुरितीर्यते ॥**
**चक्षुषः सत्यता कस्मादिति चेदुच्यते तथा ॥ ३० ॥**

---

१ ख. त्रिपदैषा । २ क. 'स्ततपदमि' ।

तात्पर्यमुक्त्वाऽक्षरार्थमाह । तामिति ॥ ४३ ॥

**तामेतामेक आचार्या उपनीताय यत्नतः ॥**
**अनुष्टुप्छन्दसं प्राहुः सावित्रीं न्यायसंश्रयात् ॥ ४४ ॥**

तां हैतामित्यत्र तच्छब्दस्य पूर्वकृतगायत्रीपरामर्शकत्वशङ्कान्युदासार्थं पूर्वार्धं विभज्य वाक्यं योजयति । तामेतामिति ॥ ४४ ॥

**वागनुष्टुब्यतः साक्षाद्वाक्च साक्षात्सरस्वती ॥**
**उपनीताय सैवातो वक्तव्या न ततोऽपरा ॥ ४५ ॥**

कोऽसौ न्याय इत्याशङ्क्य वागित्यादेरर्थमाह । वागिति । वाग्वा अनुष्टुबिति श्रुतेरनुष्टुभो वाक्त्वाद्वाचश्च साक्षात्सरस्वतीरूपत्वादनुष्टुबेव माणवकाय वक्तव्या तथाच तत्सवितुर्वृणीमहे वयं देवस्य भोजनम् । श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहीत्यनुष्टुप्छन्दस्कसावित्र्यर्पणे सरस्वत्येवार्पिता स्यादित्यर्थः ॥ ४५ ॥

**यथैतदुक्तमाचार्यैः कुर्याद्विद्वान्न तत्तथा ॥**
**गायत्रीमेव सावित्रीं ब्रूयात्सर्वफलेप्सितः ॥ ४६ ॥**

नेत्यादिसिद्धान्तं व्याकरोति । यथैतदिति । किं तर्हि वक्तव्यं तदाह । गायत्रीमिति । यत्पुनरनुष्टुप्छन्दस्का सावित्री माणवकायार्प्यते चेत्सरस्वत्येवार्पिता स्यादिति सैव वक्तव्येति तत्राऽऽह । सर्वेति । अनुष्टुभो निर्देशे सरस्वतीमात्रं प्राप्यते गायत्रीकथने तु सकलमपि लभ्यते तेन सैव वक्तव्येत्यर्थः ॥ ४६ ॥

**यथोक्तायां हि गायत्र्यां कृत्स्नं जगदुपाहितम् ॥**
**तदुक्तौ सर्वमुक्तं स्याद्यत्पुमर्थाय साधनम् ॥ ४७ ॥**

गायत्र्या उपदेशे सर्वाप्तिं साधयति । यथोक्तायामिति । सर्वस्य जगतो गायत्र्यामुपाहितत्वं प्रागुक्तमित्यर्थः ॥ ४७ ॥

**विज्ञानपुरुषस्येदं स्वभावादेव सर्वदा ॥**
**आत्मैव हि जगत्कृत्स्नं साधारणविशेषवत् ॥ ४८ ॥**

भूमिरित्यादिना गायत्र्युपाधिकब्रह्मोपास्तिमुक्त्वा यदि हेत्यादिपक्षोक्तितात्पर्यं वक्तुं भूमिकां करोति । विज्ञानेति । तत्र श्रुतिप्रसिद्ध्यर्थो हिशब्दः ॥ ४८ ॥

**साधारणानि वस्तूनि तथाऽसाधारणान्यपि ॥**
**नानुपादाय कृत्स्नानि जन्तोः काचित्क्रियेष्यते ॥ ४९ ॥**

कथं स्वभावतः सर्वस्य जीवस्य समष्टिव्यष्ट्यात्मकत्वं तदाह । साधारणानीति । मधुब्राह्मणे प्रपञ्चितमेतदिति भावः ॥ ४९ ॥

---

१ क. ग. °लार्थतः ।

**अभिव्यक्तेः पुराऽप्येतद्रूपमासीत्स्वभावतः ॥**
**अभिव्यंक्तौ तु तत्साक्षात्समष्टिव्यष्टिलक्षणम् ॥ ९० ॥**

उपास्तेरूर्ध्वं समष्टिव्यष्टिरूपता जीवस्य न प्रागिति चेत्तत्राऽऽह । **अभिव्यक्तेरिति** । किमर्थं तर्हि ध्यानमत आह । **अभिव्यक्ताविति** । प्रागेव ध्यानाधीनवस्तुव्यक्तेर्ध्यातुः स्वतः समष्टिव्यष्ट्यात्मत्वेऽपि तत्कृतायां तद्व्यक्तौ ध्येयमात्मरूपमुभयात्मकमपरोक्षं भवत्यतो ध्यानमर्थवदित्यर्थः ॥ ९० ॥

**एवं सिद्धे महिम्न्यस्मिन्यथोक्तेनैव वर्त्मना ॥**
**कनीयस्ता विवृद्धिर्वा नैव संभाव्यते मितेः ॥ ९१ ॥**

अथ फलोक्तितात्पर्यमाह । **एवमिति** । स्वभावतः सर्वस्य चेतनस्य समष्टिव्यष्ट्यात्मत्वमित्युक्तन्यायेनाऽऽत्मरूपे सिद्धे तस्य पूर्वोक्तनीत्या गायत्र्युपासकस्य प्रामाणिकवृद्धिहान्योरयोगाद्बहुतरप्रतिग्रहेऽप्यदोष इत्यर्थः ॥ ९१ ॥

**ऊरीकृत्येममेवार्थं स य इत्यादिनोच्यते ॥**
**महाप्रतिग्रहेणापि नैवंविद्दोषमृच्छति ॥ ९२ ॥**

सामान्येन गायत्रीविदः फलं विधाय विशेषतो विधातुं वाक्यमवतारयति । **ऊरीकृत्येति** । आत्मनः स्वतो वृद्ध्यादि नेत्युक्तं स्वीकृत्यानन्तरवाक्ये प्रतिग्रहकृतदोषाभावो विदुषो विवक्ष्यत इत्यर्थः ॥ ९२ ॥

**दर्शनस्य स्तुतिरियं स य इत्यादिनोच्यते ॥**
**तादृक्प्रतिग्रहस्येह न क्वचित्संभवो यतः ॥ ९३ ॥**

नन्वेवमसत्प्रतिग्रहस्यापि विद्वद्विषये निर्दोषत्वप्रसक्तेः शूद्राद्युपादानकप्रतिग्रहनिषेधकशास्त्रविरोधः स्यादत आह । **दर्शनस्येति** । तत्र हेतुमाह । **तादृगिति** ॥ ९३ ॥

**प्रतिग्रहस्य निन्दा वा विद्वन्मानात्प्रसक्तितः ॥**
**निःशेषपुण्यमोषित्वान्निषेधार्थाय कुत्स्यते ॥ ९४ ॥**

तात्पर्यान्तरमाह । **प्रतिग्रहस्येति** । विद्वानहं मम तद्बलाद्दोषः सर्वो भस्मी भवतीत्यभिमानादसत्प्रतिग्रहस्यापि प्राप्तिर्विद्वानयमिति बहुमानाद्वा तस्मै बहुदानं प्राप्तं न च ब्रह्मसाक्षात्काराद्दते सर्वदोषनिबर्हि किंचिदस्त्यतोऽनेन व्याजेन प्रतिग्रहो निन्द्यते त्रैलोक्यादिपरिमितद्रव्यप्रतिग्रहकृतो भोगो न गायत्रीपदमात्रधीफलेनापि तुल्यस्तन्न प्रतिग्रहः श्रेयानिति भावः । किमर्थमिति स निन्द्यते तत्राऽऽह । **निःशेषेति** ॥ ९४ ॥

**उक्तपादेष्वपि ज्ञानं नैवालमपबाधितुम् ॥**
**गायत्रीवेदिनो जन्तोरपि भूयान्प्रतिग्रहः ॥ ९५ ॥**

---

१ ख. °मित्थं स ।

निन्दास्तुतिपक्षयोर्निन्दापक्षो व्यक्तीकृतः संप्रति स्तुतिपक्षमनुसृत्य स्तुतिं प्रकटयति । उक्तेति ॥ ५५ ॥

नैवं दाता जगत्यस्मिन्न च तादृक्प्रतिग्रहः ॥
ग्रहीता वेह नैवेति कुत इत्यादिनोच्यते ॥ ५६ ॥

कुत इत्यादेस्तात्पर्यमाह । नैवमिति ॥ ५६ ॥

अप्यभ्युपगमे चैषां नैव दोषस्य संभवः ॥
विदुषोऽस्तीत्यतः प्राह स य इत्यादिना श्रुतिः ॥ ५७ ॥

कथं तर्हि स य इमानित्यादिवाक्यमत आह । अपीति । अतो दर्शनस्तुत्यर्थतया सोपपन्नेति शेषः ॥ ५७ ॥

स यः कश्चिदिमाँल्लोकान्पूर्णान्पुंभोगसाधनैः ॥
विद्वान्संप्रतिगृह्णीयात्कथंचित्कामसंप्लुतेः ॥ ५८ ॥
आद्यपादपरिज्ञानमात्रस्यैव प्रतिग्रहः ॥
क्षयायालं न शेषस्य गायत्रीदर्शनस्य सः ॥ ५९ ॥

तां व्याकरोति । स य इति । तस्येत्यध्याहृत्य स प्रतिग्रह इति संबन्धः ॥ ५८ ॥ ॥ ५९ ॥

यावतीयं त्रयी विद्या तावन्तमपि गृह्णतः ॥
द्वितीयपदविज्ञानक्षतिरेव न सर्वतः ॥ ६० ॥

अथ यावतीयमित्यादि व्याचष्टे । यावतीति ॥ ६० ॥

असंभवेऽपि कल्प्येत यदि तादृक्प्रतिग्रहः ॥
त्रैविद्यलक्षणः सोऽपि तृतीयं नाऽऽप्नुयात्पदम् ॥ ६१ ॥

त्रयीपरिमितवस्तुप्रतिग्रहः संभावितो न भवतीत्याशङ्क्याऽऽह । असंभवेऽपीति । तादृक्प्रतिग्रहं कल्पयित्वा विद्यास्तुतिमवोचामेत्यर्थः ॥ ६१ ॥

अन्तरण्डविभक्तस्य यथोक्तैः स्यात्प्रतिग्रहैः ॥
क्षयो नानन्तरूपस्य स्यात्समष्टिवपुर्भृतः ॥ ६२ ॥

अथास्या एतदेवेत्यादेस्तात्पर्यमाह । अन्तरिति । चतुर्थपादज्ञानफलस्याऽऽनन्त्या-त्तत्क्षयो न संभवतीत्यर्थः ॥ ६२ ॥

परिच्छिन्नेन सर्वत्र प्रतिमानं जगत्यपि ॥
अन्तवद्विषयं दृष्टं न त्वनन्तस्य कुत्रचित् ॥ ६३ ॥

इतश्च तत्क्षयो नास्तीत्याह । परिच्छिन्नेनेति । सर्वत्रापि जगति घटादिवन्नश्यति

१ ख. °रज्ञवि° ।

स्वर्गादीति परिच्छिन्नेनान्तवद्विषयमुपासनमुपलब्धं न च चतुर्थपादधीफलस्यानन्तस्य क्षये दृष्टान्तोऽस्तीत्यर्थः ॥ ६३ ॥

**अयं चानन्तमात्मानमक्षिसूर्यव्यवस्थितम् ॥**
**अगादुपासनात्प्राणमात्मत्वेन दिवानिशम् ॥ ६४ ॥**

तदानन्त्यमसिद्धं ब्रह्मज्ञानफलातिरिक्तत्वात्स्वर्गादिवदित्याशङ्क्याऽऽह । **अयं चेति** । दिवानिशमात्मत्वेनोपासनादयमुपासकोऽनन्तं प्राणमात्मानमगादिति संबन्धः ॥ ६४ ॥

**संभाव्यते क्षयस्तस्य न कुतश्चिदनन्ततः ॥**
**अन्तवान्क्षीयते लोके न त्वनन्तः कुतश्चन ॥ ६५ ॥**

उपास्तिफलानन्त्ये सिद्धं निगमयति । **संभाव्यत इति** । तदुपपादयति । **अन्तवानिति** ॥ ६५ ॥

**आवृत्तिः क्षयशब्देन दुःखमायासु भूमिषु ॥**
**कैवल्यावसितेर्नासौ स्यात्समष्टिवपुर्भृतः ॥ ६६ ॥**

क्षयशब्दार्थोक्तिपूर्वकं फलावस्थोपासितुस्तदभावे हेत्वन्तरमाह । **आवृत्तिरिति** ॥ ६६ ॥

**उपस्थानं यथोक्ताया गायत्र्याः श्रद्धयाऽन्वितः ॥**
**गायत्र्यसीतिमन्त्रेण कुर्यादुक्तार्थवित्सदा ॥ ६७ ॥**
**एकद्वित्रिपद्यसीति पूर्वान्पादान्विचिन्तयेत् ॥**
**चतुष्पात्त्वं च तुर्येण यथोक्तेन विचिन्तयेत् ॥ ६८ ॥**
**अपदसीत्यपि गिरा तस्या आनन्त्यमुच्यते ॥**
**अव्यया चाक्षयाऽसीति न ह्यन्तस्तेऽधिगम्यते ॥ ६९ ॥**
**नमस्तेऽस्तु तुरीयायेत्युक्त्या तुर्यप्रधानताम् ॥**
**गुणभावं यथोक्तस्य विद्यात्पादत्रयस्य तु ॥ ७० ॥**
**शत्रुनामगृहीत्यर्थमसावितिपदं त्विह ॥**
**फलोक्तिरद इत्येतदुपासितुरहं तथा ॥ ७१ ॥**

तस्या उपस्थानमित्यस्यार्थमाह । **उपस्थानमिति** । तत्र गायत्र्युपासकस्याधिकारं सूचयति । **उक्तेति** । तदुपस्थितेर्यादृच्छिकत्वं व्यावर्तयति । **सदेति** । मन्त्रत्रयं सप्तम्यर्थः ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥

**शत्रुणा कामितो योऽर्थो मा प्रापत्तमसाविति ॥**
**मा समृद्ध्यथवा सोऽस्मै तं वाऽहं प्राप्नुयामिति ॥ ७२ ॥**

असावदो मा प्रापत्कामोऽस्मै मा समृद्ध्यहमदः प्रापमिति मन्त्रान्योजयति । **शत्रुणेति** ॥ ७२ ॥

अभिचारार्थमेतस्मिन्नुपस्थाने यथोदिते ॥
अभिधानैकदेशोक्त्या विकल्पः फलगोचरः ॥ ७३ ॥

कथमेकस्योपस्थानस्य विरुद्धानेकफलतेत्याशङ्क्याभिचारार्थं चेति द्विधोपस्थानमुपेत्याऽऽद्ये फलविकल्पं दर्शयति । **अभिचारार्थमिति** । अभिधानानि त्रयो मन्त्रास्तेषामेकदेशोक्तिस्तयोर्मन्त्रयोरन्यतरोक्तिस्तयेति यावत् ॥ ७३ ॥

स्वार्थे त्वहमद इति ह्युपस्थाने फलं भवेत् ॥
अदः प्रयोजनं देवि प्राप्नुयां त्वत्प्रसादतः ॥ ७४ ॥

द्वितीये फलनियममाह । **स्वार्थे त्विति** । तत्र सर्वत्र मन्त्रसामर्थ्यं प्रमाणयितुं हिशब्दः । अहमदः प्रापमितिमन्त्रोक्तं स्वार्थोपस्थाने फलं नियतमित्यर्थः । मन्त्रं विभजते । **अद इति** ॥ ७४ ॥

एतावदेव किं ज्ञेयं किंवाऽन्यदपि शिष्यते ॥
अस्त्यन्यदपि विज्ञेयं तद्विनाऽकृत्स्नता यतः ॥ ७५ ॥

एतद्धेत्यादेराकाङ्क्षापूर्वकं तात्पर्यमाह । **एतावदिति** । अन्यस्य विज्ञेयत्वे हेतुः । **तद्विनेति** । अकृत्स्नतेति च्छेदः । यदन्तरेण गायत्रीज्ञानं पूर्णं न भवति तत्प्रतिपादनायोत्तरो ग्रन्थः ॥ ७५ ॥

कात्स्न्र्येन विद्या स्वभ्यस्ता फलायालमुपासितुः ॥
विपर्ययेणानर्थाय तदेतत्प्रतिपाद्यते ॥ ७६ ॥

सत्यपि विज्ञेयान्तरे पूर्वोक्तैव विद्याऽभ्यस्ता फलवतीति कुतस्तद्व्यतिरेकेणाकृत्स्नतेत्याशङ्क्याऽऽह । **कात्स्न्र्येनेति** । उत्सर्गमुक्त्वा प्रस्तुतोपास्तिकात्स्न्र्यार्थमवशिष्टं ज्ञेयं व्युत्पाद्यतेऽनन्तरग्रन्थेनेत्याह । **तदेतदिति** ॥ ७६ ॥

सर्वात्मकत्वाद्गायत्र्या अग्नेरपि परिग्रहः ॥
तन्मुखत्वेनासंसिद्धेस्तादर्थ्येनोत्तरा श्रुतिः ॥ ७७ ॥

गायत्र्याः सर्वात्मकत्वादग्नेरपि तदन्तर्भावात्किमवशिष्टमिति शङ्कते । **सर्वात्मकत्वादिति** । गायत्र्यन्तर्गमेन सिद्धस्यापि तन्मुखत्वेनासिद्धेरग्नेस्तद्विधानार्थमुत्तरं वाक्यमिति परिहरति । **तन्मुखत्वेनेति** ॥ ७७ ॥

मुखविज्ञानविरहादनर्थफलकीर्तनम् ॥
अग्निरेव मुखं तस्या इत्युक्त्या कृत्स्नतोच्यते ॥ ७८ ॥
गायत्रीदर्शनस्येह फलकात्स्न्र्यं तथैव च ॥
यथोक्ताग्निमुखज्ञानाद्यदीत्यादिगिराऽधुना ॥ ७९ ॥

अग्नेर्गायत्रीमुखत्वं विधित्सितं चेत्तर्हि किमर्थं हस्तीभूतो वहसीत्यनर्थफलत्वकथनमित्याशङ्क्याऽऽह । **मुखेति** । तस्या अग्निरेव मुखमित्यस्यार्थमाह । **अग्निरेवेति** । फले-

क्तितात्पर्यमाह । **इहेति** । दर्शनं सप्तम्यर्थः । तस्या अग्निरित्याद्युक्त्या गायत्रीदृष्टिकार्त्स्न्योक्तिवत्तस्या दृष्टौ फलकार्त्स्न्यमुच्यते यदि हेत्यादिनेत्याह । **तथैवेति** । तथाच दर्शनस्य फलस्य च पूर्णत्वादेतद्दर्शनवाक्यमिति चार्थः ॥ ७८ ॥ ७९ ॥

**यो वेदाग्निमुखामेतां गायत्रीमग्निरेव सः ॥**
**अग्निरिन्धनवत्सर्वं दहेद्विद्वान्प्रतिग्रहम् ॥ ८० ॥**

फलश्रुतिं योजयति । **यो वेदेति** । अग्निरेवेत्यग्निमुखत्वोक्तिस्तत्क्रतुन्यायेन समस्तोपासकस्य व्यस्तमात्रत्वायोगादिति मन्तव्यम् । विदुषोऽग्निमुखत्वे फलितमाह । **अग्निरिति** ॥ ८० ॥

**दाहकस्य न वह्नस्ति दाह्ययोगाभिवृद्धितः ॥**
**क्षयश्चाशेषदाह्यस्य यस्मात्तस्मादिवेतिगीः ॥ ८१ ॥**

अपि बह्विवेत्यत्रेवशब्दस्य विवक्षितमाह । **दाहकस्येति** । क्षयश्च दाहकयोगादिति शेषः । एतेन दार्ष्टान्तिकेऽपीवकारो नेयः ॥ ८१ ॥

**एवंविदेवमेव स्यात्पापं वह्निवदिन्धनम् ॥**
**सर्वं संभक्ष्य तत्पापं शुद्धः पापवियोगतः ॥ ८२ ॥**

दार्ष्टान्तिकं प्रपञ्चयति । **एवंविदिति** । उक्तरीत्या वह्निमुखीं गायत्रीं विद्वान्वह्निवदशेषं पापमपाकुर्वन्प्रजापतिरेव स्यादित्यर्थः । उक्तमेव स्फुटयति । **पापमित्यादिना** । यथा वह्निरिन्धनं भस्मी करोति तथा यत्पापमात्मना सृष्टं तत्पापं सर्वं संभक्ष्य शुद्धो भवतीति योजना ॥ ८२ ॥

**पूतोऽसंसर्गिधर्मत्वादजरोऽपरिणामवान् ॥**
**अमृतोऽस्थूलदेहत्वात्प्राणमात्रस्वभावतः ॥ ८३ ॥**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके पञ्चमाध्यायस्य षोडशं ब्राह्मणम् ॥ १६ ॥**

पापवियोगकृतशुद्धिफलमाह । **पूत इति** । पापासंबन्धाधीना शुद्धिस्तत्कार्यासंबन्धात्पूततेति भेदः । स्थूलदेहत्वाभावे हेतुः । **प्राणेति** ॥ ८३ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां पञ्चमाध्यायस्य षोडशं ब्राह्मणम् ॥ १६ ॥

**श्लोकानामादितः समष्ट्यङ्काः—१०७११**

---

१ ख. 'त्तस्य दृ' ।

अथ सप्तदशं ब्राह्मणम् ।

---

यथोक्तोपासनाभ्यासभावितस्य क्रियाकृतः ॥
उपस्थानं प्रवक्तव्यमित्यर्थः पर आगमः ॥ १ ॥

गायत्र्युपासनं तदुपस्थानं च फलवदुक्त्वा समुच्चयकारिणः सावित्रमाग्नेयं चोपस्थानं वक्तुं ब्राह्मणान्तरमित्याह । **यथोक्तेति** । उपस्थानमादित्यादिविषयमिति शेषः ॥ १ ॥

तुरीयं पदमादित्यो लोकद्वारं च येन सः ॥
संभाव्यते प्रसङ्गोऽत आदित्योपस्थितेरिह ॥ २ ॥

आदित्यस्याप्रस्तुतत्वात्तदुपस्थानोक्तिरप्यप्रस्तुतेत्याशङ्क्याऽऽह । **तुरीयमिति** । गायत्रीचतुर्थपादत्वेन स आदित्यमागच्छतीति ब्रह्मलोकमार्गद्वारत्वेन चाऽऽदित्यस्य प्रस्तुतत्वात्तदुपस्थानोक्तिर्गायत्र्युपासनावसाने युक्तैवेत्यर्थः ॥ २ ॥

हिरण्यं ज्योतिरमृतं मण्डलेन तदात्मना ॥
सत्यस्य परमार्थस्य द्वारमाच्छादितं रवेः ॥ ३ ॥

तात्पर्यमुक्त्वा पदानि व्याकरोति । **हिरण्यमिति** । तदात्मना ज्योतिर्मयेनेति यावत् ॥ ३ ॥

त्वद्दर्शनार्थिने मह्यं पूषन्द्वारमपावृणु ॥
जगत्पुष्णाति वृष्ट्याद्यैः पूषाऽऽदित्यस्ततः स्मृतः ॥ ४ ॥

तत्त्वमित्यादेरर्थमाह । **त्वद्दर्शनेति** । पूषशब्दार्थमाह । **जगदिति** ॥ ४ ॥

सत्या अवितथा धर्मा यस्य मानव्यपाश्रयात् ॥
तस्मै मे सत्यधर्माय दृष्ट्यै द्वारमपावृणु ॥ ५ ॥

सत्यधर्मायेत्यादेरर्थमाह । **सत्या इति** । उपास्यात्मना स्थितस्य कामादीनामवैतथ्ये हेतुमाह । **मानेति** । सत्यसंकल्पादिश्रुतिवशादित्यर्थः । यद्वेति शास्त्राद्यस्य मे ज्ञानकर्मात्मानो धर्मा न वितथास्तस्मै मह्यं त्वद्दृष्टिनिमित्तं द्वारं विवरितव्यमित्यर्थः ॥५॥

हिमधर्माम्बुदानेन पुष्णातीदं यतो जगत् ॥
तस्मात्पूषा यतश्चैको गच्छत्येकर्षिता ततः ॥ ६ ॥
संयमात्सर्वयाम्यानां यमोऽसि परमेश्वरः ॥
स्वीरणाच्छीततोयादेः सूर्यस्तेनासि घर्मदः ॥ ७ ॥
प्रजापतिः परं ब्रह्म कारणं तदपत्यतः ॥
प्राजापत्योऽसि तेन त्वं गीयसे विपुलश्रुतेः ॥ ८ ॥

पूषन्नित्यस्यार्थमनुभाष्य चत्वारि संबोधनपदानि व्याचष्टे । **हिमेति** । तत्र विद्वत्प्रसिद्धिं प्रमाणयति । **तेनेति** ॥ ६ ॥ ७ ॥ ८ ॥

**रश्मीनपनुदाशेषांस्तेजः संयच्छ संहर ॥**
**कल्याणं ते यदत्यर्थं रूपं यच्च तवैव तत् ॥ ९ ॥**
**सदा त्वाऽहं प्रपश्यामि सत्यधर्मोन्वयाद्यथा ॥**
**भगवन्सत्यरूपेण मद्धर्मोऽपि भवांस्तथा ॥ १० ॥**

व्यूहेत्यादेरर्थमाह । **रश्मीनिति** । यत्ते रूपमित्यादेरर्थमाह । **कल्याणमिति** । यदतिशयेन कल्याणं ते रूपं तत्पश्यामि यच्च तवैवासाधारणं रूपं तद्यथाऽनुभवामि सत्यलक्षणेन धर्मेण त्वत्स्वरूपेण सदा तादात्म्यान्ममापि तथात्वात्तथा भवानपि सत्यात्मना मदभिन्नो मां सदा पश्यतु सर्वज्ञो हि भवान्प्रार्थितं जानन्योजयतु तेन मामिति योजना ॥ ९ ॥ १० ॥

**योऽसावादित्यगो देवः सोऽहमस्मीतिबुद्धिगः ॥**
**स्थानमात्राच्च तौ भिन्नौ वस्तुतो नाऽऽवयोर्भिदा ॥ ११ ॥**

योऽसावादित्य इत्यादेरर्थमाह । **योऽसाविति** । आदित्यगतो बुद्धिगतश्चेदुपास्योपासकयोर्भेदमाशङ्क्याऽऽह । **स्थानेति** ॥ ११ ॥

**देवतामनिलं यातु वायुर्योऽयं शरीरगः ॥**
**शरीरं भस्मसाद्यातु मर्त्यत्वं ह्येतदाश्रितम् ॥ १२ ॥**

वायुरित्यादेरर्थमाह । **देवतामिति** । वायोः सदा देवताभावस्य सत्त्वात्प्रार्थना व्यर्थेत्याशङ्क्याऽऽह । **योऽयमिति** । अमृतमित्यस्य सोऽहमस्मीत्यत्र संबन्धः । अथेत्यादेरर्थमाह । **शरीरमिति** । तत्र हेतुमाह । **मर्त्यत्वमिति** ॥ १२ ॥

**भस्मान्तमिति लिङ्गाच्च कर्मिणः स्यादुपस्थितिः ॥**
**न तु संन्यासिनो न्याय्या दाहासंभवहेतुतः ॥ १३ ॥**

भस्मान्तविशेषणसामर्थ्यायातमर्थमाह । **भस्मान्तमितीति** । अकर्मिण्यपि लिङ्गं गच्छतीत्याशङ्क्याऽऽह । **न त्विति** ॥ १३ ॥

**वायुरित्यादिकं ग्राह्यमुपलक्षणमेव तु ॥**
**शिष्टानां देवतांशानां यथास्वं प्रतिपत्तये ॥ १४ ॥**

तथाऽन्या देवताः स्वां स्वामित्यादिभाष्यं विभजते । **वायुरित्यादिकमिति** ॥ १४ ॥

**अग्निं स्वात्ममनःसंस्थामधुना देवतां गृही ॥**
**प्रार्थयत्योमिति गिरा मुमूर्षुस्तत्परीप्सया ॥ १५ ॥**

आदित्योपस्थानमुक्त्वा तदात्मकस्यायमग्निरित्यादौ प्रस्तुतस्याग्नेरुपस्थानं प्रस्तौति । **अग्निमिति** । प्रार्थनाफलमाह । **तदिति** ॥ १५ ॥

**सर्वस्याप्यवनादोमें स्यादवतेरोंं यतस्ततः ॥**
**क्रतुर्मनोमयत्वाच्च सा हि संकल्परूपिणी ॥ १६ ॥**

ओमित्यादिवाक्यतात्पर्यमुक्त्वा तदक्षराणि व्याचष्टे । **सर्वस्येति** । तत्र हेतुत्वेन निष्पत्तिमोमित्यस्य दर्शयति । **अवतेरिति** । ततो यथोक्तार्थत्वं तस्य युक्तमिति शेषः । देवतायामोंकारशब्दस्य प्रवृत्तिमुक्त्वा क्रतुत्वं तस्य साधयति । **क्रतुरिति** । सेति देवतोक्तिः । तस्याः संकल्पसाध्यात्वं हिशब्दार्थः ॥ १६ ॥

**ओं क्रतो इति संबोध्य स्मरेत्यत्र नियुज्यते ॥**
**प्रकृष्टफलसंप्राप्तेः स्मृतिमात्रैकहेतुतः ॥ १७ ॥**
**स्मर्तव्यं स्मर तेनाद्य मरणे प्रत्युपस्थिते ॥**
**आदरार्थं स्मरेत्यस्य पुनः पुनरुदीरणम् ॥ १८ ॥**

वाक्यं योजयति । **ओमिति** । अत्रेति स्मर्तव्यस्मृत्युक्तिः । तत्कार्यत्वे हेतुं वदन्नियोगं स्फुटयति । **प्रकृष्टेति** । अनुसंहितादेव पुरुषनिष्ठाज्ज्ञानकर्मनिमित्तात्फलाप्तिरिति तच्छब्दार्थः । अभ्यासतात्पर्यमाह । **आदरार्थमिति** ॥ १७ ॥ १८ ॥

**सुपथा नय नो वह्ने सुपथेति विशेषणात् ॥**
**उदङ्मार्गग्रहो न्याय्यः शिष्टानां पुनरागतेः ॥ १९ ॥**

अग्ने नयेत्यादिना प्रार्थनान्तरमग्निविषयं दर्शयन्पदानि व्याचष्टे । **सुपथेति** । उपसर्गतात्पर्यमाह । **सुपथेतीति** । बहूक्तिर्व्यक्तिभेदाभिप्राया ॥ १९ ॥

**राये कर्मफलायेति रयिः कर्मफलं यतः ॥**
**प्रज्ञानानि च सर्वाणि देव विद्वान्क्रियास्तथा ॥ २० ॥**

राय इत्यादि व्याचष्टे । **राय इति** । उक्तव्याख्याने हेतुः । **रयिरिति** । विश्वानीत्यादेरर्थमाह । **प्रज्ञानानीति** ॥ २० ॥

**कुटिलं च तथा पापमस्मत्तस्त्वं वियोजय ॥**
**वयं तु कृतकृत्यत्वादशक्ताश्च मुमूर्षवः ॥ २१ ॥**
**नमउक्तिमतो भक्त्या तुभ्यं बहुतमां धिया ॥**
**आयुषोऽन्ते विधेमाद्य क्षम देव प्रसीद मे ॥ २२ ॥**

युयोधीत्यादेरर्थं कथयति । **कुटिलं चेति** । देवयानप्राप्तिप्रतिबन्धकत्वं कौटिल्यम् । भूयिष्ठामित्यादेरर्थमाह । **वयं त्विति** । स्वस्थावस्थायामेवास्माभिर्ज्ञानकर्मणोरनुष्ठितत्वादधुना च मुमूर्षादशायां कृत्यान्तरे शक्त्यभावान्मनसा भक्तिश्रद्धाभ्यां नमोमात्रं भवतेऽर्प्यते तच्च सर्वाधिकत्वेन त्वया ग्राह्यमायुरवसाने चावसन्नानां क्षमाप्रसादौ कार्यावित्यर्थः ॥ २१ ॥ २२ ॥

**मस्करीन्द्रप्रणीतस्य भवनामभृतो यतेः ॥**
**भाष्यस्य वार्तिकोक्त्यैवमध्यायः सप्तमो गतः ॥ २३ ॥**

---

१ क. ख. 'ध्याज्ञान'।

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके पञ्चमाध्यायस्य
सप्तदशं ब्राह्मणम् ॥ १७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यभगवत्पूज्यपादशिष्यश्रीसुरेश्वराचार्य-
विरचिते बृहदारण्यकोपनिषद्भाष्यवार्तिके पञ्चमोऽध्यायः ॥५॥

बृहदारण्यकक्रमेण सप्तमोऽध्यायः ॥ ७ ॥

अध्यायार्थमुपसंहरति । **मस्करीन्द्रेति** । मस्करो वैणवो दण्डः स एषां ते मस्क-रिणस्तेषामिन्द्रो भाष्यकारस्तत्कृतस्य भाष्यस्योक्तरीत्या वार्तिकोक्त्या सप्तमोऽध्यायोऽ-तिक्रान्त इत्यर्थः । मस्करीन्द्रसंज्ञा प्रकृष्टे परिव्राजकान्तरेऽपि स्यादित्याशङ्क्याऽऽह । **भवेति** । मस्करीन्द्रेतेति शेषः । मन्दमध्यमोत्तमाधिकारिषु श्रेयोमार्गप्रदर्शनात्साधार-ण्यात्तत्रैव तत्पर्यवसानादित्यर्थः । यद्वा कस्येयं वार्तिकोक्तिरित्याशङ्क्य भवनामभृतो भाष्यकृच्छिष्यस्य सुरेश्वरनाम्नो यतेरित्याह । **भवनामेति** ॥ २३ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां पञ्चमाध्यायस्य
सप्तदशं ब्राह्मणम् ॥ १७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यश्रीमद्भ-
गवदानन्दज्ञानकृतश्रीमद्भगवत्सुरेश्वरवार्तिकटीकायां शास्त्रप्र-
काशिकाख्यायां पञ्चमोऽध्यायः ॥ ५ ॥

श्लोकानामादितः समष्ट्यङ्काः—१०७३४

# अथ षष्ठोऽध्यायः ।

---

**समाप्तः सप्तमोऽध्यायः प्राप्तावसर उच्यते ॥**
**अष्टमः खिलकाण्डेऽस्मिन्पूर्वकाण्डेष्वनुक्तितः ॥ १ ॥**

ध्यानं प्राणप्रधानं फलवदिह तथाऽवादमन्यच्च वाच्यं
श्रीमन्थं पुत्रमन्थं प्रकृतमतियुजो जातभार्यस्य कर्म ॥
सर्वं यत्पूर्वमुक्तं न खलु खिलविधावष्टमं तत्प्रदेष्टुं
प्रारब्धं वंशभेदप्रवचनसहितं लक्षणं लक्षणीयम् ॥ १ ॥

पूर्वोत्तराध्यायसंबन्धमाह । **समाप्त इति** । ओंकारो दमादित्रयं ब्रह्माब्रह्मोपासनानि तत्फलानि तदर्था गतिरादित्याद्युपस्थानमित्येवमर्थः सप्तमस्तावदध्यायोऽस्मिन्खिलकाण्डेऽतिवृत्तः संप्रति प्राधान्येनाब्रह्मोपासनानि सफलानि श्रीमन्थादिकर्म चानुक्तं वक्तव्यमित्यष्टमोऽध्याय आरभ्यत इत्यर्थः । सप्तमादष्टमस्याऽऽनन्तर्ये हेतुमाह । **प्राप्तेति** । ब्रह्मोपासनसंबन्धे विचारे प्राधान्येन व्यतीते सत्यब्रह्मोपास्तिसंबन्धविचारं प्राधान्येन कर्तुमध्यायान्तरं न हि प्रधानविचारादृतेऽप्रधानविचारः संभवतीति भावः । खिलकाण्डस्यैवानुपयुक्तत्वात्कथमित्थमित्याशङ्क्याऽऽह । **पूर्वकाण्डेष्विति** । कर्मकाण्डेन सह बहूक्तिः । अपुनरुक्तार्थसद्भावादुपयुक्तं तदित्यर्थः ॥ १ ॥

**गायत्र्याः प्राणभावोक्तिः कस्माद्धेतोः पुरोदिता ॥**
**न तु वागादिभावोऽस्यास्तत्र हेतुरिहोच्यते ॥ २ ॥**

अध्यायसंबन्धमुक्त्वाऽऽद्यब्राह्मणस्यावान्तरसंबन्धं चोद्यपूर्वकमाह । **गायत्र्या इति** । तत्रेति वागादित्यागेन गायत्र्याः प्राणभावोक्ताविति यावत् । इहेत्यनन्तरब्राह्मणोक्तिः ॥ २ ॥

**ज्येष्ठः श्रेष्ठो यतः प्राणो न तु वागादयस्ततः ॥**
**प्राणात्मभाव एवोक्त आनन्तर्यार्थमेव तु ॥ ३ ॥**

कोऽसौ हेतुरित्यपेक्षायामाह । **ज्येष्ठ इति** । यथोक्तप्राणोपासनस्यान्यशेषतेति चेत्तत्र किमुक्थाद्युपास्तिशेषता गायत्र्युपास्तिशेषता वा मन्थकर्मशेषता वेति विकल्प्याऽऽद्यं प्रत्याह । **आनन्तर्यार्थमिति** । वागादिषु सत्स्वपि तत्त्यागेन प्राणस्यैवोक्थादिगुणस्योपास्तिरुक्ता तत्र हेतुत्वेन ज्येष्ठत्वाद्युच्यते न चेयमुपास्तिरुक्थाद्युपास्तिशेषो ग्रन्थानन्तर्यघटनार्थमेव हि ज्येष्ठत्वादि तन्मात्रोपास्यत्वे हेतुत्वेन संबध्यते गुणभेदात्फलभेदाच्च नास्यास्तच्छेषतेति भावः ॥ ३ ॥

---

१ क. ख. °तिरित्याद्युपासन° । २ क. विहिते । ३ ख. तत् ।

**उपास्त्यन्तरमेवैतत्फलवत्तु विवक्षितम् ॥**
**न तूक्तशेषतैतस्या भिन्नोपास्तित्वकारणात् ॥ ४ ॥**

द्वितीयं दूषयति । **उपास्त्यन्तरमिति** । ज्येष्ठत्वादिगुणकप्राणोपास्तिः स्वतन्त्रे-त्यत्र हेतुमाह । **फलवदिति** । एवकारार्थमाह । **न त्विति** । उक्तशब्देन गायत्र्यु-पास्तिर्गृह्यते । षष्ठी प्राणोपासनार्था । गुणभेदाच्च भिन्नत्वे सति नास्यान्यशेषतेति हेत्वन्त-रमाह । **भिन्नेति** ॥ ४ ॥

**मन्थकर्मणि ये मन्त्राः पञ्च ज्येष्ठादयः श्रुताः ॥**
**प्राणात्मवेदिनस्तेषां प्रयोगोऽत्रोपवर्ण्यते ॥ ५ ॥**

तृतीयं शङ्कते । **मन्थेति** । प्राणात्मवेदिनो यन्मन्थाख्यं कर्म वक्ष्यते तत्र ज्येष्ठाय स्वाहेत्यादयो मन्त्राः श्रुतास्तेषामुपयोगोऽस्मिन्ब्राह्मणे कथ्यते तदर्थस्यात्रोपास्यत्वोक्तेरतो मन्थकर्मशेषता यथोक्तोपास्तेर्युक्तेत्यर्थः ॥ ५ ॥

**पृथग्वा फलनिर्देशाद्यो ह वा इति पञ्चधा ॥**
**प्राणविद्या पृथङ्मन्थान्मन्थस्तु महिमार्थिनः ॥ ६ ॥**

पञ्चेति च्छान्दोग्यश्रुत्यनुसारेणोक्तं दूषयति । **पृथग्वेति** । वाशब्दश्चोद्यनिरासार्थः । न हि मन्थकर्मशेषता प्राणोपास्तेर्युक्ता यो ह वै ज्येष्ठं चेत्यादिना मन्थकर्मणः पृथगेव तस्या बहुधा फलाभिलापात्तद्धैश्वर्यार्थिनो वित्तसिद्धये विधीयते तस्मात्पृथगेव प्राण-विद्येत्यर्थः ॥ ६ ॥

**फलेऽन्यस्मिन्ननिर्दिष्टे वाक्यशेषगतं फलम् ॥**
**तस्मिन्सति हि सद्भावाद्वागादीनां न तं विना ॥ ७ ॥**

प्राणविदो मन्थाधिकारात्प्राणविद्याऽपि महत्त्वफलेत्याशङ्क्याऽऽह । **फल इति** । प्राणोपास्तेः स्ववाक्यस्थफलेनैव नैराकाङ्क्ष्यान्न वाक्यशेषस्थं महत्त्वं फलं न चाधिकृता-धिकारादेकफलता दर्शाद्यधिकृतस्य गोदोहनाधिकारे तद्भेदादिति भावः । ब्राह्मणस्य स्वतन्त्रप्राणोपास्तिविषयत्वमुक्त्वा प्राणस्य ज्येष्ठत्वं व्युत्पादयति । **तस्मिन्निति** । प्राण-विषयस्तच्छब्दः । न सत्त्वमिति शेषः । अन्वयव्यतिरेकाभ्यां प्राणज्येष्ठता सिद्धेत्यर्थः । अयमेवार्थो हिशब्देन द्योत्यते ॥ ७ ॥

**शास्त्रेणोक्ता शरीरेऽस्मिन्वृत्तिः प्राणस्य जीवनम् ॥**
**पूर्वमाविशति प्राणो देहं पश्चाच्च मुञ्चति ॥ ८ ॥**

तत्रैव शास्त्रसंवादमाह । **शास्त्रेणेति** । शरीरे प्राणस्य जीवनं नाम वृत्तिर्वागादिवृ-त्तिस्तदपेक्षया शास्त्रेणोक्तेति योजना । तदेवोदाहरति । **पूर्वमिति** ॥ ८ ॥

**ज्येष्ठः श्रेष्ठश्च सर्वेषां प्राणानामाश्रयो हि सः ॥**
**श्रेष्ठता वक्ष्यमाणेन ग्रन्थेनास्य विभाव्यते ॥ ९ ॥**

अन्वयादिना शास्त्राचोक्तं निगमयति । **ज्येष्ठ इति** । श्रेष्ठत्वं तस्य प्रतिजानीते । **श्रेष्ठश्चेति** । तत्र हेतुः । **सर्वेषामिति** । सर्वप्राणाश्रयता प्राणस्यासिद्धेत्याशङ्क्याऽऽह । **श्रेष्ठतेति** । ते हेत्यादिनेत्यर्थः ॥ ९ ॥

**अस्मिँल्लोके परस्मिंश्च वागेव न विहन्यते ॥**
**देहान्तरस्थान्प्राणांश्च नियुङ्क्ते सा ततोऽधिका ॥ १० ॥**

यो ह वै ज्येष्ठं चेत्यादेस्तात्पर्यमुक्त्वा यो ह वै वसिष्ठामित्यादेस्तात्पर्यमाह । **अस्मिन्निति** । लोकद्वयेऽपि चक्षुरादिवद्वाचो न विहतिः सर्वत्र तत्प्रवृत्तेः स्वदेहस्थप्राणवदन्यदेहस्थानपि तान्नियुङ्क्ते सर्वप्रवृत्तेर्वागधीनत्वादतस्तेभ्योऽधिका सोपास्येत्यर्थः ॥ १० ॥

**श्रुतान्मतात्तथोक्ताद्वा प्रमाणं दृष्टिरात्मनः ॥**
**चक्षुः प्रतिष्ठा ज्ञानानामात्मा तत्र प्रतिष्ठितः ॥ ११ ॥**

यो ह वै प्रतिष्ठामित्यादेस्तात्पर्यमाह । **श्रुतादिति** । मतश्रुतादेर्दृष्टिरेव स्वस्य विश्वासहेतुरतस्तत्करणं चक्षुर्ज्ञानानां प्रतिष्ठाऽऽत्मा च योऽयं दक्षिणेऽक्षन्नित्यादिना चक्षुपि प्रतिष्ठितः श्रुतस्तथाच तदितराधिकं सदुपास्यमित्यर्थः ॥ ११ ॥

**वाग्घि संपद्यते श्रोत्रादश्रुतं न हि भाषते ॥**
**स्ववृत्तेः परवृत्तेश्च संपच्छ्रोत्रे प्रतिष्ठिता ॥ १२ ॥**

यो ह वै संपदमित्यादेरर्थमाह । **वागिति** । श्रोत्राधीना वाक्संपत्तिरित्यत्र हेतुमाह । **अश्रुतमिति** । किंच स्वव्यापारद्वारिका पुरुषान्तरव्यापारद्वारिका च सर्वा संपद्भवति श्रोत्रप्रयुक्तेत्याह । **स्ववृत्तेरिति** । अतः श्रोत्रस्य संपद्गुणकत्वेनेतरापेक्षयोत्कर्षोद्ध्येयतेति भावः ॥ १२ ॥

**मन आयतनं तत्र वागादीनां हि वृत्तयः ॥**
**स्थितास्तत्पूर्विकाश्चैव ध्यायतः साधनं हि तत् ॥ १३ ॥**

यो ह वा आयतनमित्यादेस्तात्पर्यमाह । **मन इति** । करणानां विषयाणां चेति शेषः । अत्र हेतुः । **तत्रेति** । उच्चारणादिक्रियास्तत्पूर्विकाश्च वृत्तयो वागादीनां मनसि प्रतिष्ठितास्तद्व्यतिरेकेण तददृष्टेरन्यथा तन्नैरर्थक्यात्तथाच मनः सर्वायतनमित्यर्थः । किंच न ध्यानसाधनं विना वागादिव्यापारो **यद्धि** मनसेत्यादिश्रुतेरतो मनो वागाद्यायतनत्वात्तद्गुणकं सर्वाधिक्यादुपास्यमित्याह । **ध्यायत इति** ॥ १३ ॥

**उपस्थेन्द्रियं प्रजातिः स्याच्चस्य जन्मैकहेतुतः ॥**
**न हि रेतो विना जन्म प्राणिनोऽत्र समीक्ष्यते ॥ १४ ॥**

यो ह वै प्रजातिमित्यत्र प्रजातिशब्दार्थमाह । **उपस्थेति** । तत्र निमित्तमाह ।

---

१ क. ग. ध्यायते ।

**तस्येति** । तदेव साधयति । **न हीति** । अत्रेति देहग्रहभूमिरुक्ता । प्रजननेन्द्रियं सर्वप्राणिजनकत्वगुणयोगादुत्कृष्टमुपास्यमिति भावः ॥ १४ ॥

**वृत्तीनां प्राणपूर्वत्वाद्व्यपदेशाच्च तत्कृतात् ॥**
**प्राणानां प्रथमः प्राणः स ह्यत्ताऽन्नं हि तस्य तत् ॥ १५ ॥**

तत्किमिदानीमिमानि षडुपासनानि फलवन्ति मिथो भिन्नानि तथाच भिन्नानि वाक्यानि स्युरित्याशङ्क्य ते हेत्यादिवाक्यतात्पर्यमाह । **वृत्तीनामिति** । सर्वेन्द्रियव्यापाराणां प्राणाधीनत्वात्प्राणशब्देन चेन्द्रियाणां व्यपदेशान्मुख्यप्राणस्य च तेषां भोग्यत्वात्तस्य च जीवादव्यतिरिक्तत्वेन भोक्तृत्वात्सर्वापेक्षया स्वामित्वात्प्राणानां मध्ये मुख्यप्राणः श्रेष्ठ इति तस्यैवोपास्यत्वं तच्छेषत्वेनेतरेषामिति कुतो वाक्यभेद इत्यर्थः । प्रथमो हिशब्दो मुख्यप्राणस्य जीवाभेदेनात्तृतोपपादको द्वितीयो वागादेर्भोग्यान्तर्भावेन तथात्वावेदकः ॥ १५ ॥

**ते प्राणाः स्वगुणैरुक्तैर्वसिष्ठत्वादिलक्षणैः ॥**
**श्रेयानस्म्यहमेवेति विवदन्तः परस्परम् ॥ १६ ॥**

पदार्थान्व्याकरोति । **ते प्राणा इति** । विरुद्धं वदन्तो निर्धारयितुं न पारयन्ति स्मेति शेषः ॥ १६ ॥

**निर्णयार्थाय ते ब्रह्म जग्मुरिन्द्रं प्रजापतिम् ॥**
**को नो वसिष्ठ इति तं पप्रच्छुर्निर्णयार्थिनः ॥ १७ ॥**

कथं तर्हि तेषां विवादनिवर्तको निर्णयस्तत्राऽऽह । **निर्णयार्थायेति** । ब्रह्मशब्दं व्याकरोति । **इन्द्रमिति** । अन्यत्राप्रसङ्गार्थमाह । **प्रजापतिमिति** । ते प्रजापतिमुपेत्य किं कृतवन्तस्तत्राऽऽह । **को न इति** । प्रश्नप्रापकमाह । **निर्णयार्थिन इति** ॥ १७ ॥

**यस्मिन्व इति वाक्येन वसिष्ठत्वस्य लक्षणम् ॥**
**प्राणेभ्यः प्राब्रवीद्ब्रह्म पक्षपातभयात्किल ॥ १८ ॥**

ब्राह्मं वचो दर्शयति । **यस्मिन्निति** । लक्षणमुपेत्य साक्षादेव मुख्यं प्राणं किमिति वसिष्ठत्वादिगुणकं नोक्तवान्प्रजापतिः स हि सर्वज्ञ इत्याशङ्क्याऽऽह । **पक्षपातेति** ॥ १८ ॥

**जानन्नपि वसिष्ठादिगुणवत्त्वं यथार्थतः ॥**
**तथाऽपि नावदद्ब्रह्म स्वानुभूत्यवबुद्धये ॥ १९ ॥**

लक्षणमात्रोपदेशे हेत्वन्तरमाह । **जानन्नपीति** । वसिष्ठादिगुणवत्त्वं यथा तथा जानन्यद्यपि वर्तते प्रजापतिस्तथाऽपीति योजना । स्वशब्देन वागादयो गृह्यन्ते ॥ १९ ॥

**उत्क्रान्तेऽन्यतमे यस्मिन्प्रत्येकमपसर्पणे ॥**
**पापीयो मन्यते लोको वसिष्ठो वः समीक्ष्यताम् ॥ २० ॥**

यस्मिन्नित्यादिवाक्यतात्पर्यमुक्त्वा तदक्षराणि व्याकरोति । **उत्क्रान्त इति** । भवतामस्माद्देहात्प्रत्येकमपसर्पणे सति यस्मिन्नपसृते शरीरमतिशयेनपापमस्पृश्यं लोको मन्यते स युष्माकं मध्ये वसिष्ठत्वादिगुणको ज्ञेय इत्यर्थः ॥ २० ॥

**अन्वयव्यतिरेकाभ्यां वसिष्ठत्वावबुद्धये ॥**
**उपास्यार्थपरीक्षायै प्रवृत्तैषा परा श्रुतिः ॥ २१ ॥**

वाग्घोच्चक्रामेत्यादेस्तात्पर्यमाह । **अन्वयेति** । ध्येयनिश्चयार्थमन्वयादिना वसिष्ठत्वादिगुणकं वस्तु निर्णेतुं परा श्रुतिरित्यर्थः ॥ २१ ॥

**संहतानां क्रियासिद्धेः करणानां पृथक्पृथक् ॥**
**नैकैकस्य क्रियासिद्धिः शिबिकोद्वाहवत्ततः ॥ २२ ॥**

सा संवत्सरमित्यादौ प्रतीतसंवत्सरप्रवासाद्यपि विवक्षितमिति शङ्कां निरस्यति । **संहतानामिति** । मिलितानामेव करणानां क्रिया नैकैकस्य पृथक्पृथगित्यत्र दृष्टान्तः । **शिबिकेति** । ततः संवत्सरप्रवासाद्यविवक्षितमिति शेषः ॥ २२ ॥

**प्राणप्राधान्यसिद्ध्यर्थं श्रुत्याऽऽख्यायिकच्छद्मना ॥**
**अन्वयव्यतिरेकाभ्यां न्यायो लौकिक उच्यते ॥ २३ ॥**

यथाऽकला इत्यादेस्तात्पर्यमाह । **प्राणेति** । अथवैकस्यैव पृथक्क्रिया न चेत्कथमुक्तं वाग्घोच्चक्रामेत्यादि तत्राऽऽह । **प्राणेति** ॥ २३ ॥

**यथा मूका विना वाचा यथाऽन्धाश्चक्षुषा विना ॥**
**इत्यादिवचसा प्राणे सति जीवनमुच्यते ॥ २४ ॥**

लौकिकन्यायमेव दर्शयन्वाक्यं योजयति । **यथेति** । तस्मात्प्राणः श्रेयानिति शेषः ॥ २४ ॥

**उत्क्रान्तौ च प्रवेशे च ह्यलं देहः स्वकर्मणे ॥**
**वागादीनां न पातोऽस्य नापि चोत्थानमीक्ष्यते ॥ २५ ॥**

वागादीनां श्रेष्ठत्वाभावमुपसंहरति । **उत्क्रान्तौ चेति** । तदुत्क्रान्तावपि देहो न पतितो न च तेषामस्मिन्प्रवेशेऽपि तस्योत्थानं दृश्यते किंतु तत्प्रवेशाप्रवेशयोः स स्वव्यापारक्षमो दृष्टोऽतो न वागादिप्राधान्यमित्यर्थः । तत्रानुभवानुरोधी हिशब्दोऽत एवेक्ष्यत इत्युक्तम् ॥ २५ ॥

**उत्क्रान्ते प्राण एवास्माच्छरीरं पतति ध्रुवम् ॥**
**उत्तिष्ठति प्रविष्टे च प्राणः श्रेयांस्ततोऽन्यतः ॥ २६ ॥**

अथ हेत्यादेस्तात्पर्यं वदन्प्राणप्राधान्यं निगमयति । **उत्क्रान्त इति** ॥ २६ ॥

**मामृते जीवितुं यूयं यद्यशक्ताः स्थ सर्वदा ॥**
**प्रधानं तर्हि मां वित्त भवन्तश्चापराधिनः ॥ २७ ॥**

ते होचुरित्यादेस्तात्पर्यमाह । मामिति ॥ २७ ॥

**करं बलिं प्रधानाय दत्त वागादयोऽचिरात् ॥**
**इत्युक्तास्ते तथेत्यूचुः सर्वस्वं ददते प्रभोः ॥ २८ ॥**

अपराधनिषेधस्तर्हि कथमिति तत्राऽऽह । करमिति । तथेत्यङ्गीकारतात्पर्यमाह । इत्युक्ता इति ॥ २८ ॥

**त्वद्वसिष्ठतयैवाहं वाग्वसिष्ठेत्युदाहरत् ॥**
**इत्युक्त्वाऽन्येऽपि सर्वस्वं ददुर्वागादयः सुराः ॥ २९ ॥**

सा हेत्यादेरर्थमाह । त्वद्वसिष्ठतयेति । यद्वा अहमित्यादेस्तात्पर्यमाह । इत्युक्त्वेति ॥ २९ ॥

**किमन्नं मे बुभुक्षोः स्याद्वासो वा मे किमीर्यताम् ॥**
**इति प्राणवचः श्रुत्वा प्रत्यूचुः करणानि तम् ॥ ३० ॥**
**आ श्वभ्यो यदिदं किंचिदा कृमिभ्यश्च लक्ष्यते ॥**
**अन्नं तद्भवतः सर्वं वयं त्वच्छेषभोगिनः ॥ ३१ ॥**

तस्येत्यादिप्रश्नद्वयं व्याचष्टे । किमन्नमिति । उत्तरमाह । प्राणेति । कथं तर्हि युष्मज्जीवनं तत्राऽऽह । वयमिति ॥ ३० ॥ ३१ ॥

**जीवः प्राणोऽत्र संसारी भोक्तेन्द्रियमनःपरः ॥**
**प्राणो ह्येतानि सर्वाणि भवतीति च लिङ्गतः ॥ ३२ ॥**

सर्वं प्राणस्यान्नं चेत्प्राणो जीवश्चेत्येकत्र भोक्तृभेदे विरुद्धाभिप्रायानेकचेतनाधिष्ठितं शरीरमनवस्थितं स्यादित्याशङ्क्याऽऽह । जीव इति । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुरिति श्रुतेर्जीवस्यैव भोक्तृत्वात्प्राणस्यापि तत्त्वेनात्रोच्यमानस्य तदभेदो युक्तस्तच्चैकत्र भोक्तृभेदकृतदोषाभाव इत्यर्थः । प्राणशब्देन जीवोक्तौ हेत्वन्तरमाह । प्राणो हीति । सर्वेन्द्रियाणां प्राणाधारत्वश्रवणात्करणस्वामित्वस्य च जीवादन्यत्रायोगादत्र प्राणो जीव एवेत्यर्थः ॥ ३२ ॥

**तन्मया हीतरे प्राणास्तन्मूलास्तन्निबन्धनाः ॥ ३३ ॥**
**एवंविदे हि नानन्नं किंचिदस्तीति दर्शनात् ॥**
**फलं स्यात्प्राणसायुज्यं सर्वं तस्य हि भोजनम् ॥ ३४ ॥**

मुख्यप्राणस्यापि करणस्वामित्वं किं न स्यादत आह । तन्मया हीति । उत्पत्तिस्थितिलयेषु जीवाधीनत्वात्करणानां स एव तेषां स्वामी तमुत्क्रामन्तमित्यादिश्रुतेरित्यर्थः । फलवाक्यस्य तात्पर्यमाह । एवंविदे हीति । प्राणात्मत्वे सति विदुषः सर्वान्नत्वसंभवा-

---

१ क. 'रक्तत्यमा'।

दिति हिशब्दार्थः । सर्वं प्राणस्यान्नमित्युपासितुस्तादात्म्यं फलमित्यर्थः । प्राणात्मत्वेऽपि कथं विदुषः सर्वमिति धीस्तत्राऽऽह । **सर्वमिति** । भवति हि प्राणस्य सर्वमन्नं तथाच तदात्मनो विदुषोऽपि तथा स्यादित्यर्थः ॥ ३३ ॥ ३४ ॥

**भवत्यत्ता स सर्वस्य नान्नं भवति कस्यचित् ॥**
**केवलेऽवस्थितेऽत्तृत्वे मृत्युनाऽपि न गीर्यते ॥ ३५ ॥**

सर्वस्य भोक्ता विद्वान्भोज्यश्च स्यान्नेत्याह । **भवतीति** ॥ ३५ ॥

**अद्भिः परिदधत्येनमशिष्यन्त इति श्रुतेः ॥**
**विदधाति ह्यपां पानमपूर्वं शास्त्रलक्षणम् ॥ ३६ ॥**

उत्तरवाक्यनिरस्यां शङ्कामाह । **अद्भिरिति** । भोक्ष्यमाणं भुक्तवन्तं च प्राणमद्भिः परिदधातीतिश्रवणादपां पानं शास्त्रं विदधाति तच्च स्मार्ताचमनादन्यदेव श्रौतमाचमनमन्यतोऽप्राप्तं विधेयं तस्मात्तद्विधायकमिदं वाक्यमित्यर्थः ॥ ३६ ॥

**शास्त्रं मुख्यार्थमेव[1] स्याद्विध्यर्थे यदि कल्प्यते ॥**
**युक्तः फलानुषङ्गोऽस्य वासोलाभो विधिर्यदि ॥ ३७ ॥**

आचामन्तीतिवर्तमानापदेशात्कुतो विधिरित्याशङ्क्याऽऽह । **शास्त्रमिति** । प्रवृत्त्याद्युपदेशि शास्त्रमिति स्थितेरग्निहोत्रं जुहोतीतिवदत्र विध्युपपत्तिरिति भावः । फलवत्त्वाच्चाऽऽचमने विधिरस्तीत्याह । **युक्त इति** । यद्याचमनस्य विधिस्तदा प्राणस्य वासोलाभो[2] नाफलानुषङ्गो युक्तो विधेस्तदनुपक्तत्वादिति योजना ॥ ३७ ॥

**एके च शाखिनो व्यक्तं विधिरूपमधीयते ॥**
**मन्त्रेण प्राशनं चापामेकेषां शाखिनां मतम् ॥ ३८ ॥**

किंचाशिष्यन्नाचामेदशित्वा चाऽऽचामेदिति च्छान्दोग्ये विधिश्रुतेरत्रापि स स्वीकर्तव्यः सर्ववेदान्तप्रत्ययन्यायादित्याह । **एके चेति** । किंचाशनात्प्रागुपरिष्टाच्चामृतोपस्तरणमस्यमृतापिधानमसीति च मन्त्रचोदितमाचमनमित्येकेऽन्ये तु मन्त्रहीनमेव तदपूर्वं विधेयमित्याहुस्तदस्ति तस्मिन्विधिरित्याह । **मन्त्रेणेति** ॥ ३८ ॥

**अन्नदर्शनवच्चैके वासोदृष्टिं प्रचक्षते ॥**
**प्रायत्यार्थमपां पाने दृष्टेः प्रकरणादिह ॥**
**सर्वाभक्ष्यप्रसक्तिः स्याद्यदि कर्म विधित्स्यते ॥ ३९ ॥**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके षष्ठाध्यायस्य**
**प्रथमं ब्राह्मणम् ॥ १ ॥**

श्रौतमाचमनमिहापूर्वं विधेयमिति पूर्वपक्षिते सिद्धान्तमाह । **अन्नदर्शनवदिति** ।

---

१ क. ख. ग. °मेवं स्या° । २ ख. °भोऽत्ता फ° ।

यथा सर्वं प्राणस्यान्नमिति दृष्टिरेव विधीयते तथा शुद्धयर्थे स्मार्ताचमने सति तदनुवादेनाऽऽचमनीयास्वप्सु वासोदृष्टिर्विधीयते दृष्टेरत्र प्रकृतत्वात्कार्याख्यानादपूर्वमिति च न्यायादित्यर्थः । दृष्टान्ते विवदमानं प्रत्याह । **सर्वेति** । प्राणविदः सर्वान्नभक्षणं विधीयते चेदभक्ष्यस्यापि लशुनादेर्भक्ष्यत्वप्रसङ्गादभक्ष्यभक्षिणः क्रिमयो भवन्तीत्यादिनिषेधविरोधो न च प्राणविदोऽन्यत्र निषेधस्तस्यापि सर्वभक्षणप्रापकाभावाद्वाक्यस्य साधारणनिषेधविरोधे विद्यास्तावकस्य स्वार्थे मानत्वायोगान्न चानापदि कस्यचिदपि सर्वभक्षणं सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनादित्यर्थः ॥ ३९ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां षष्ठाध्यायस्य
प्रथमं ब्राह्मणम् ॥ १ ॥

**श्लोकानामादितः समष्ट्यङ्काः—१०७७३**

---

अथ द्वितीयं ब्राह्मणम् ।

---

**यन्न संभावितं पूर्वं वस्तुप्राधान्यहेतुतः ॥**
**वक्तुं तदत्र वक्तव्यं खिलकाण्डाधिकारतः ॥ १ ॥**

उत्तरब्राह्मणस्य संबन्धोक्त्यर्थं काण्डार्थमनुवदति । **यन्नेति** । कर्मकाण्डे ज्ञानकाण्डे वा यद्वस्तु प्राधान्येन न वक्तुं संभावनोपनीतं तदस्मिन्काण्डे वक्तव्यमस्य खिलकाण्डत्वादनुक्तकथनार्थवत्त्वेनाऽऽरब्धत्वादित्यर्थः । यद्वा यत्पूर्वं ज्ञानकाण्डे वक्तुं न संभावितं तस्य वस्तुप्राधान्यत्वात्तदत्र क्रियारूपं वाच्यं तादर्थ्येनास्याऽऽरम्भादित्यर्थः ॥ १ ॥

**सप्तमावसितावुक्तं मार्गप्रार्थनमग्नितः ॥**
**सुपथेति श्रुतं तत्र श्रुत्या मार्गविशेषणम् ॥ २ ॥**

संप्रति ब्राह्मणार्थमनुक्तं वक्तुमनन्तराध्यायसमाप्तावुक्तमनुभाषते । **सप्तमेति** । समुच्चयकारिणो मुमूर्षोरग्निप्रार्थनेऽपि किं स्यादित्याशङ्क्य विशेषणत्वं दर्शयति । **सुपथेति** ॥ २ ॥

**संभवे व्यभिचारे च विशेषणविशेष्ययोः ॥**
**दृष्टं विशेषणं लोके यथेहापि तथेक्ष्यताम् ॥ ३ ॥**

तथाऽपि किमायातमित्याशङ्क्याऽऽह । **संभव इति** । नीलमुत्पलमित्यत्र विशेषणविशेष्ययोः संभवे विशेषणं विना विशेष्यस्य व्यभिचारे प्रसक्ते नीलमिति विशेषणमर्थवद्दृष्टं तथा सुपथा नयेत्यत्रापि व्यभिचारसंभवे विशेषणमर्थवज्ज्ञेयमित्यर्थः ॥ ३ ॥

सुपथेति ततो युक्तं संभवे भूयसां पथाम् ॥
विशेषणमतो वाच्याः पन्थानः कर्महेतवः ॥ ४ ॥

अस्तु तर्हीदमपि व्यावर्तकमेवेति तत्राऽऽह । सुपथेति । विशेषणस्य व्यावर्तकत्वं ततःशब्दार्थः । विशेषणवशाद्बहवो मार्गा भान्ति तेषामभिधानाय ब्राह्मणमिति फलितमाह । अत इति ॥ ४ ॥

दक्षिणोदगधोमार्गा विहितप्रतिषिद्धयोः ॥
विपाकाः कर्मणोर्वाच्यास्तद्वैराग्यप्रसिद्धये ॥ ५ ॥

के ते मार्गा येषां निरूपणमिष्यतेऽत आह । दक्षिणेति । तेषां स्वरूपमाह । विहितेति । तदुक्तिफलमाह । वाच्या इति । तच्छब्दः कर्मफलार्थः ॥ ५ ॥

नाविरक्तस्य निःशेषसांसारिकपुमर्थतः ॥
प्रवृत्तिर्मुक्तये तस्माच्छ्रुत्या यत्नात्तदुच्यते ॥ ६ ॥

वैराग्योक्तिरकिंचित्करेति चेन्नेत्याह । नेत्यादिना । संसारगतिभेदेषु दुःखबहुलेषूक्तेषु विवेकिनो वैराग्यसिद्धिस्तच्च मुमुक्षुत्वहेतुरतः श्रुत्या कर्मविवेकाद्वैराग्यं विवक्षितमित्यर्थः ॥ ६ ॥

शक्नुवन्ति न कर्माणि सर्वकामसमापनम् ॥
निषेद्धुं वाऽखिलानर्थांस्तत्फलस्यातिफल्गुतः ॥ ७ ॥

कर्मवशादेवाशेषपुरुषार्थसंभवान्न तद्विपाकविषयं वैराग्यं युक्तमित्याशङ्क्याऽऽह । शक्नुवन्तीति ॥ ७ ॥

न कर्म कारणं मुक्तेर्नाग्निर्दाहज्वरापनुत् ॥
कर्मभ्यो जन्म नियतं जन्म चेन्निर्वृतिः कुतः ॥ ८ ॥

तेषां मुक्तिफलत्वाद्धेत्वसिद्धिरित्याशङ्क्याऽऽह । नेति । तदेव साधयति । कर्मभ्य इति ॥ ८ ॥

न कर्मणा कनीयस्ता महत्त्वं चान्तरात्मनः ॥
इति बाहुमिवोद्धृत्य वेदान्तैर्घोषणा कृता ॥ ९ ॥

आत्मरूपे मोक्षे कर्माफलमित्यत्र प्रमाणमाह । न कर्मणेति ॥ ९ ॥

न तत्र दक्षिणा यन्ति विद्ययैव तदाप्यते ॥
इति श्रीयाज्ञवल्क्येन मुक्तकण्ठमुदाहृतम् ॥ १० ॥

तत्रैव स्मृतिमुदाहरति । न तत्रेति ॥ १० ॥

अतो मुक्तिं परीप्सद्भिरुत्पत्त्यादिविरोधिनीम् ॥
त्यक्त्वा कर्माण्यथैकात्म्यज्ञानं सर्वात्मनाऽऽश्रयेत् ॥ ११ ॥

मोक्षस्याकर्मायत्तत्वे फलितमाह । **अत इति** । त्याज्यानि कर्माणीति शेषः । तदनन्तरकार्यमर्थमाह । **त्यक्त्वेति** । श्रवणादिकार्यद्योतकोऽथशब्दः । सर्वात्मनेत्यन्तर्बहिर्व्यापारान्तराभावं द्योतयति । **ब्रह्मसंस्थोऽ**मृतत्वमेतीति हि **श्रुतिः** ॥ ११ ॥

**तमोन्तरायतो मुक्तेर्नान्तरायोऽपरोऽस्ति हि ॥**
**तमोहतिर्न कर्मभ्यो ज्ञानात्सा व्यञ्जकत्वतः ॥ १२ ॥**

मोक्षे कर्मानुपयोगेऽपि तद्व्यवधिभङ्गे तदुपयुक्तमित्याशङ्क्याऽऽह । **तमोन्तरायत इति** । अन्तरायान्तरस्याप्रमाणकत्वद्योतको हिशब्दः । कर्मणामव्यञ्जकत्वात्तेभ्यस्तमोहतेरयोगाज्ज्ञानस्य व्यञ्जकत्वात्तस्मात्तत्सिद्धिर्व्यवधानान्तरं त्वप्रामाणिकमित्यर्थः । सुपथेतिविशेषणप्राप्तबहुमार्गनिरूपणाय ब्राह्मणमित्येकः संबन्धः । ज्ञानस्यैव मुक्तिहेतुता कर्मणां बन्धफलत्वेन तत्रानन्वयादिति वक्तुं तदित्यपरः ॥ १२ ॥

**न तु त्वमेतयोर्वेत्थेत्युत्क्रान्त्यादिस्वलक्षणम् ॥**
**षड्विधं परिणामार्थमग्निहोत्राहुतीहयोः ॥ १३ ॥**

एवं संबन्धद्वयमुक्त्वा संबन्धान्तरं वक्तुमग्निहोत्रप्रकरणे वृत्तमनुवदति । **न त्विति** । षट्प्रकारमुत्पत्त्यादिस्वरूपं जगदग्निहोत्राहुत्यपूर्वपरिणामात्मकं न जानासीति साक्षेपः प्रश्नो न त्वित्यादिवाक्येन याज्ञवल्क्यं प्रति कृतो जनकेनेत्यर्थः ॥ १३ ॥

**इतिप्रश्नप्रतिवचस्ते वा इत्यादिकं जगौ ॥**
**लोकं प्रत्युत्थितं यावदग्निहोत्राहुतीहयोः ॥ १४ ॥**

परिहारवाक्यमवतारयति । **इतिप्रश्नेति** । तस्य परिणामं दर्शयति । **लोकमिति** ॥ १४ ॥

**अपूर्वपरिणामोऽयमग्निहोत्राख्यकर्मणः ॥**
**उत्क्रान्त्यादिर्गिरेहोक्त आलोकोत्थानवाक्यतः ॥ १५ ॥**

तद्व्याकरोति । **अपूर्वेति** । अयमिति षट्प्रकारप्रपञ्चोक्तिः । इहेत्यग्निहोत्राभिकारोक्तिः ॥ १५ ॥

**आहुत्योरग्निहोत्रस्य ह्यन्तरिक्षादिभेदतः ॥**
**आ लोकोत्थानतः श्रुत्या उक्ताऽपूर्वस्य विक्रिया ॥ १६ ॥**

उक्तं प्रपञ्चयति । **आहुत्योरिति** । अग्निहोत्रस्य द्वे सायं प्रातराहुती तयोरपूर्वस्यान्तरिक्षद्युवादिलक्षणं लोकं प्रत्युत्थानौदा षड्विधा जगदात्मिका विक्रिया प्रश्नप्रत्युक्तिरूपया श्रुत्योक्तेति योजना । उक्तयोराहुत्योः श्रुतिसिद्ध्यर्थो हिशब्दः ॥ १६ ॥

**तदेवोक्तमिहाऽऽलम्ब्य तदग्नीक्षणसिद्धये ॥**
**श्वेतकेतुरिति ग्रन्थः पर आरभ्यतेऽधुना ॥ १७ ॥**

---

१ क. ख. 'त्थितं या' । २ क. ख. 'क्षदिवादि' । ३ क. ख. 'नात्ता ष' ।

षट्प्रश्नीये ग्रन्थे सर्वं जगदग्निहोत्रापूर्वपरिणाम इति प्रश्नप्रत्युक्तिभ्यां प्रतिपादितमित्युक्तमिदानीमस्य ब्राह्मणस्य तेन संगतिमाह । **तदेवेति** । तच्छब्दो जगदर्थः । इहेति खिलकाण्डोक्तिः । तस्मिञ्जगति पञ्चधा विभक्तेऽग्निदृष्टिसिद्ध्यर्थमिति यावत् । श्वेतकेतुरित्यस्मादारभ्यानन्तरो ग्रन्थ इति योजना ॥ १७ ॥

**पञ्चाग्निविद्या यत्नेन वृद्धेनाब्राह्मणादपि ॥**
**हित्वा धनं च मानं च लब्धेत्युक्तिः स्तुतिर्धियः ॥ १८ ॥**

ब्राह्मणतात्पर्यमुक्त्वाऽऽख्यायिकातात्पर्यमाह । **पञ्चेति** । यत्नो लोकगमनोपगमनकर्तृतादितात्पर्यम् ॥ १८ ॥

**परिणामो हि पाकेन पाकश्च न विनाऽग्निना ॥**
**दर्शनात्परिणामस्य पक्ता सर्वत्र पावकः ॥ १९ ॥**

पञ्चसु द्युलोकादिष्वग्निशब्दो नोपपद्यते तेषामनग्नित्वादित्याशङ्क्याऽऽह । **परिणामो हीति** । सर्वो हि परिणामः पाकाधीनो न चाग्निं विना पाको द्युलोकाद्यधीनश्च देहाख्यः परिणामो दृष्टः **पञ्चम्यामाहुत्यामित्यादिश्रुतेस्तथाचाग्निरेव पक्तेति** नियमाद्युक्तस्तेष्वग्निशब्द इत्यर्थः । पाकस्याग्न्यधीनत्वं परिणामस्य पाकाधीनत्वं च लोके प्रसिद्धमिति हिशब्दार्थः ॥ १९ ॥

**समाप्ताशेषविद्यं हि समावर्त्य पिता सुतम् ॥**
**समाप्ताशेषविद्योऽसीत्येवमाहोत्ससर्ज च ॥ २० ॥**

आख्यायिकाक्षराणि व्याचिख्यासुर्भूमिकां करोति । **समाप्तेति** । अशेषशब्देन पुराणन्यायसहितवेदोक्तिः । श्वेतकेतोर्विद्यावैशद्यमन्येषामपि प्रतिपन्नमिति प्रकटयितुं हिशब्दः । तस्य संदेहापोहार्थं समाप्तेत्यादि पितृवचनं तस्य स्वातन्त्र्यापादनमुत्सर्गः ॥ २० ॥

**निकषोपलसंस्थेषु वेदवित्सु परीक्ष्यताम् ॥**
**विद्येयं यत्नतो वत्स द्रढिम्ने मच्छ्रुतस्य च ॥ २१ ॥**

तमुत्सृजतो गौतमस्याऽऽशयं दर्शयति । **निकषेति** । सुवर्णपरीक्षापाषाणस्थानीयेषु तेष्वतिनिर्बन्धेन बुद्धिविकाशोदयसमाधानं यत्नः । परीक्षाफलमाह । **द्रढिम्न इति** । मत्तस्त्वया श्रुतस्येति यावत् ॥ २१ ॥

**प्रसिद्धाऽतीव विद्वत्ता पञ्चालब्राह्मणेषु हि ॥**
**तामेव परिषदं तस्मादाजगाम त्वरान्वितः ॥ २२ ॥**

विद्वत्परिषदन्तरेषु सत्सु किमिति पञ्चालपरिषदमेव श्वेतकेतुरागतवानित्याशङ्क्य पदानि व्याचष्टे । **प्रसिद्धेति** । हिशब्दो यस्मादर्थः । विजिगीषातिशयं सूचयति । **त्वरेति** ॥ २२ ॥

**पञ्चालब्राह्मणाञ्जित्वा विद्योत्कर्षैकहेतुतः ॥**
**राजानमपि जेष्यामीत्याजगाम नृपं ततः ॥ २३ ॥**

तस्याऽऽगच्छतोऽभिप्रायमाह । **पञ्चालेति** । ब्राह्मणजयानन्तर्यं ततःशब्दार्थः ॥ २३ ॥

**तं जिगीषुं समायान्तमुन्मार्गे संस्थितं द्विजम् ॥**
**सन्मार्गप्रतिपत्त्यर्थं राजोवाच स्वशास्त्रतः ॥ २४ ॥**

तमित्यादेरर्थमाह । **तं जिगीषुमिति** । द्विजस्य सशमादियोगस्य दर्पाधिक्याज्जिगीषयाऽऽगमनमेवोत्पथवृत्तत्वम् । उन्मार्गगा प्रजा सन्मार्गे संक्रमणीयेति राजकृत्यं सूचयति । **राजेति** । स्वशास्त्रतो जिगीषुमिति संबन्धः ॥ २४ ॥

**आमन्त्रयामास च तं कुमारा३ इति बालवत् ॥**
**प्रतिशुश्राव सोऽप्युक्तो भो३ इत्युक्त्वा गुरुं यथा ॥ २५ ॥**

प्लुत्या निगृह्णन्कुमारपदेन विप्रं राजा संबोधितवानित्याह । **आमन्त्रयामासेति** । कोपाविष्टत्वादयोग्यमपि प्रतिश्रवणं तं प्रति श्वेतकेतुरकरोदित्याह । **प्रतिशुश्रावेति** ॥ २५ ॥

**दर्पोत्सेकसमावेशान्नानुशिष्टोऽयमादरात् ॥**
**पित्रेतिजातसंदेहः पर्यपृच्छदतो नृपः ॥ २६ ॥**

अनुशिष्टो न्वित्यादिवाक्यमादत्ते । **दर्पेति** । यथोक्तसंदेहस्य प्रश्ननिमित्तत्वमाह । **अत इति** ॥ २६ ॥

**अनुशिष्टोऽसि किं पित्रा उताहो नेति भण्यताम् ॥**
**नानुशिष्टस्य जगति वृत्तमीदृक्समीक्ष्यते ॥ २७ ॥**

प्रश्नं व्याकरोति । **अनुशिष्टोऽसीति** । कल्पद्वयस्पष्टतायै विसंधिकरणम् । नायं संशयो मदनुशासनस्य प्रसिद्धत्वादित्याशङ्क्याऽऽह । **नेति** । ईदृगिति दर्पोत्सेकसाचिव्यमाह ॥ २७ ॥

**बाढं पित्राऽनुशिष्टोऽस्मि किं न पश्यसि मज्जयम् ॥**
**त्वत्पण्डितेषु सर्वेषु पृच्छ मां यदि शङ्कसे ॥ २८ ॥**

ओमित्यादेरर्थमाह । **बाढमिति** । अनुशासने राज्ञोऽपि ज्ञानयोग्यं लिङ्गमाह । **किं नेति** । न केवलं तेष्वेव मे जयः किंतु त्वय्यपीति मत्वाऽऽह । **पृच्छेति** ॥ २८ ॥

**एवं राज्ञो यथोक्तोक्त्या ह्यभ्युपेतेऽनुशासने ॥**
**श्वेतकेतुमथाप्राक्षीत्पञ्च प्रश्नान्क्रमान्नृपः ॥ २९ ॥**

वेत्थेत्यादि प्रश्नजातमुत्थापयति । **एवमिति** । अनुशिष्टो न्वित्याद्या राज्ञो यथोक्तोक्तिस्तयाऽनुशासने पितृकर्तृके स्वीये श्वेतकेतुनोपेते सतीति यावत् । ओमित्यङ्गीकारमेवंशब्देन परामृशति । तदङ्गीकारे पितृकर्तृकोपदेशस्य प्राक्प्रवृत्तत्वं हेतुरितिद्योतको

हिशब्दः । अनुशासनाङ्गीकारानन्तरं प्रश्नावसरं सूचयति । **अथेति** । तेषामसांकर्या-त्प्रतिपत्तिसौकर्यं द्योतयति । **क्रमादिति** ॥ २९ ॥

**अनुशिष्टोऽसि चेद्ब्रूहि तुल्येऽपि मरणे प्रजाः ॥**
**यथा विप्रतिपद्यन्ते भिन्नवर्त्मप्रभेदतः ॥ ३० ॥**

तत्राऽऽद्यं प्रश्नं व्याकरोति । **अनुशिष्टोऽसीति** । सर्वासां प्रजानां मरणे तुल्येऽपि मार्गभेदप्रतिपत्त्या यथा ता विप्रतिपद्यन्ते तथा किं जानासि यदि त्वमस्मिन्विषये पित्राऽनुशिष्टस्तर्हि ब्रूहीत्यर्थः ॥ ३० ॥

**येन कर्मविशेषेण समानायां मृतौ प्रजाः ॥**
**अन्या अन्येन संयान्ति यथाऽन्येनापरास्तथा ॥ ३१ ॥**

तदेव प्रपञ्चयति । **येनेति** । तं कर्मविशेषं जानासि चेद्ब्रूहीति शेषः ॥ ३१ ॥

**त्वयोक्तं न विवेदाहं नानुशिष्टिरिहास्ति मे ॥**
**वेत्थेह ता यथा भूय आवर्तन्ते प्रजा इति ॥ ३२ ॥**

श्वेतकेतुराह । **त्वयेति** । ज्ञानाभावे हेतुः । **नेति** । प्रश्नान्तरमाह । **वेत्थेति** । ता मृताः प्रजा लोकान्तरं प्रस्थिता यथा पुनरिहाऽऽवर्तन्ते तथा किं वेत्थेति योजना । इति-शब्दो वाक्यसमाप्तौ ॥ ३२ ॥

**यथा येन मृताः सत्यो हेतुनाऽनेन च प्रजाः ॥**
**तं वेत्थ स्विन्न वेत्युक्तो नेति होवाच तं पुनः ॥ ३३ ॥**

तद्व्याकरोति । **यथेति** । प्रजा आवर्तन्त इति पूर्वेण संबन्धः । तमित्यागतिमार्गं तद्धेतुं चाऽऽह । **तं वेत्थेति** । श्वेतकेतुस्तु पूर्ववदुक्तवानित्याह । **नेतीति** ॥ ३३ ॥

**प्रयद्भिरसकृद्भूतैर्महद्भिर्बहुभिः सदा ॥**
**नैवासौ पूर्यते लोको यथा वेत्थ तथाऽत्र किम् ॥ ३४ ॥**

तृतीयप्रश्नार्थमाह । **प्रयद्भिरिति** । अस्य व्याख्या । **महद्भिरिति** ॥ ३४ ॥

**नेति होवाच पृष्टः सन्राजा पप्रच्छ तं पुनः ॥**
**हुतायामाहुतौ वेत्थ यतिथ्यां पुरुषाभिधाः ॥ ३५ ॥**

परकीयं वचोऽनूद्य चतुर्थप्रश्नमुत्थापयति । **नेतीत्यादिना** । यतिथ्यामाहुतौ हुता-यामापः पुरुषाभिधाः समुत्थाय वदन्ति तथा किं वेत्थेति राजा पृष्टवानिति योजना ॥३५॥

**आप एव समुत्थाय पुरुषाकृतयो हुताः ॥**
**प्रवदन्ति यथा वेत्थ तथाऽऽशु प्रतिपद्यताम् ॥ ३६ ॥**

प्रश्नं प्रपञ्चयति । **आप एवेति** । यत्संख्याकायामाहुतौ हुतायामापो हुताः पुरुषा-कारास्तच्छब्दवाच्या भूत्वा यथा वदनादि कुर्वन्ति तथा तत्संख्याकाहुत्यादिप्रकारं प्रति-पद्यसे चेत्प्रतिपादयेत्यर्थः ॥ ३६ ॥

**राजानं नेति होवाच नाहं वेद्मि त्वयोदितम् ॥**
**पर्यपृच्छदतो राजा शान्तदर्पं द्विजं पुनः ॥ ३७ ॥**
**पथस्त्वं देवयानस्य पितृयाणस्य वाऽञ्जसा ॥**
**वेत्थ प्रतिपदं किंवा न वेत्सीत्यभिधीयताम् ॥ ३८ ॥**

परस्योक्तिमवतार्य व्याचष्टे । **राजानमिति** । प्रश्नान्तरं व्याकरोति । **पर्यपृच्छदिति** । दर्पशान्तौ पूर्वोक्ताज्ञानं हेतुं करोति । **अत इति** । अवशिष्टदर्पलेशशैथिल्यार्थं प्रश्नान्तरमिति द्योतयति । **पुनरिति** ॥ ३७ ॥ ३८ ॥

**प्रतिपद्वचनस्यार्थं यत्कृत्वेत्यादराच्छ्रुतिः ॥**
**व्याचष्टे देवयानादिप्रतिपत्तौ क्रियैव सा ॥ ३९ ॥**

केयं प्रतिपन्नाम तत्राऽऽह । **प्रतिपदिति** । प्रतिपदः संक्षिप्ताया विवरणादादरो विधेर्ज्ञेयः । श्रुत्युक्तां प्रतिपदं संक्षिप्याऽऽह । **देवयानादीति** । क्रियाशब्देनेष्टापूर्तदत्तोपासनान्युच्यन्ते ॥ ३९ ॥

**स्वाभ्यूह इति मा शङ्कीर्यतो मार्गद्वयेऽपि नः ॥**
**ऋषेर्मन्त्रस्य श्रवणमस्ति तच्च विभाव्यते ॥ ४० ॥**

मार्गद्वयमप्रामाणिकं व्यामोहार्थं त्वदुत्प्रेक्षितमित्याशङ्क्याऽऽह । **स्वाभ्यूह इति** ॥ ४० ॥

**द्वे सृती अशृणवं साक्षात्संबन्धिन्यौ दिवौकसाम् ॥**
**पितॄणां चापि मर्त्यानां मार्गौ तावधिकारतः ॥ ४१ ॥**

मन्त्रं व्याकरोति । **द्वे इति** । देवादिवन्मर्त्यानामपि तत्संगतिश्चेत्प्राप्यकोटिप्रवेशाद्गन्त्रभावः स्यादित्याशङ्क्याऽऽह । **अधिकारत इति** ॥ ४१ ॥

**ताभ्यां सर्वमिदं गच्छद्यथाकर्म यथाश्रुतम् ॥**
**समेति मध्ये भोगाय रोदस्योः कर्मणो जगत् ॥ ४२ ॥**

अधिकृतानां मार्गान्तरं वारयति । **ताभ्यामिति** । केन पथा कस्य गमनमिति[1] तत्राऽऽह । **यथेति** । कर्मणो भोगाय द्यावापृथिव्योर्मध्ये जगत्समेतीति संबन्धः ॥ ४२ ॥

**त्वदुक्तात्प्रश्नगणतो न वेद्म्येकमपीरितम् ॥**
**प्रश्नं मा मामतः प्राक्षीरित्युक्त्वाऽवाक्शिरा ह्यभूत् ॥ ४३ ॥**

नाहमित्यादेरर्थमाह । **त्वदुक्तादिति** । चनशब्दसूचितमाह । **मा मामिति** । अत इत्यज्ञानपरामर्शार्थः । अज्ञानकृतलज्जाधीनमवाक्शिरस्त्वमिति द्योतको हिशब्दः ॥ ४३ ॥

**निर्धूताशेषकलुषं शान्तदर्पं समीक्ष्य तम् ॥**
**वसत्याऽऽमन्त्रयांचक्र उष्यतामिति पार्थिवः ॥ ४४ ॥**

---

१ क. ख. °तिविभागधीस्तत्रा° ।

अथैनमित्यादेरर्थमाह । **निर्धूतेति** । कालुष्याभावे हेतुमाह । **शान्तेति** । तत्रानुभवं प्रमाणयति । **समीक्ष्येति** ॥ ४४ ॥

**ह्रीतो रोषाच्च तद्वाक्यं वसत्यर्थमुदीरितम् ॥**
**अनादृत्य प्रदुद्राव यत्राऽऽस्ते गौतमः पिता ॥ ४५ ॥**

अनादृत्येत्यादि व्याचष्टे । **ह्रीत इति** ॥ ४५ ॥

**प्राप्याथ पितरं रोषात्साभ्यसूयं निराह सः ॥**
**इति वावेति वचनं पूर्वोत्तरविरोधतः ॥ ४६ ॥**

तं होवाचेत्यस्यार्थमाह । **प्राप्येति** । रोषे राज्ञोक्तार्थाज्ञानं हेतुमाह । **अथेति** । अभ्यसूयासहितं किमाहैतदाह । **इति वावेति** । पूर्वोत्तरविरोधभ्रान्त्या वाक्यमिति वावेत्यादि पितरं प्रति श्वेतकेतुरुक्तवानित्यर्थः ॥ ४६ ॥

**इतीत्युक्तपरामर्शो वाकोवाक्यं नृपेरितम् ॥**
**अप्रात्यक्ष्यात्किलेत्युक्तिरनुमानाद्धि तद्गतिः ॥ ४७ ॥**

इतिशब्दार्थमाह । **इतीत्युक्तेति** । उक्तशब्देन प्रश्नसमुदायो वा पितृवाक्यं वोच्यते । वावशब्दार्थमाह । **वाकोवाक्यमिति** । तर्कशास्त्रं हि वाकोवाक्यं तेन चात्र प्रश्नसमुदायो राजोक्तो लक्ष्यते तं लिङ्गत्वेनाऽऽदाय पितृवाक्यं समाप्ताशेषविद्योऽसीत्येवंरूपं विरुद्धतया स्मर्यत इत्यर्थः । किलेत्यस्यार्थमाह । **अप्रात्यक्ष्यादिति** । राजोक्तप्रश्नाज्ञानलिङ्गेन पित्रभिहितमनुशासनमसदिति गम्यते न हि तस्यासदनुशासनत्वं प्रत्यक्षं किंतूक्तलिङ्गादेव तद्धीस्तस्मात्किलेत्युक्तिर्युक्तेत्यभिप्रायः । पित्रनुशास्तेराभासत्वमप्रत्यक्षमित्येतदुपपादयति । **अनुमानादिति** ॥ ४७ ॥

**नृपोक्त्यभिभवाल्लिङ्गाद्वञ्चितोऽस्मीति लिङ्ग्यते ॥**
**यथावदनुशिष्टस्य नाभिभूतिर्यतोऽन्यतः ॥ ४८ ॥**

ननु पिता हितमेव सुतं प्रत्युपदिशति कथं तदनुशासनस्याऽऽभासत्वं शङ्क्यते तत्राऽऽह । **नृपेति** । वञ्चितः पित्रेति शेषः । अनुशासनं पित्रा कृतं न वञ्चनं त्वदपराधात्तु ते नृपादभिभूतिरित्याशङ्क्याऽऽह । **यथावदिति** । अतो न यथावदनुशिष्टिरिति शेषः ॥ ४८ ॥

**तं मामननुशिष्यैव किमित्युक्तं त्वया पुरा ॥**
**अनुशिष्टोऽसि पुत्रेति वञ्चितोऽस्मीत्यतो मतिः ॥ ४९ ॥**

यद्यपि यथावदनुशिष्टिर्न कृता तथाऽपि कथं मया पुत्र वञ्चितस्त्वमित्याशङ्क्याऽऽह । **तं मामिति** । अनुशासनमकृत्वैवानुशिष्टोऽसीति वदता वञ्चितोऽहमित्यर्थः ॥ ४९ ॥

---

१ ख. °त्यर्थे समीरि° । २ ख. °स्मीति मे म° ।

कथं त्वं नानुशिष्टोऽसि ब्रूहि तत्कारणं मम ॥
पञ्च मामित्यतोऽवोचद्यथा ह्यननुशासनम् ॥ ५० ॥

कथमित्यादेरर्थमाह । **कथमिति** । पञ्चेत्यादेस्तात्पर्यमाह । **पञ्चेति** । पितृप्रश्नानन्तर्यमतःशब्दार्थः । पितुरननुशासनद्योतकं पुत्रवचनमिति हिशब्दार्थः ॥ ५० ॥

प्रश्नास्ते कतमे वत्स यांस्त्वं न ज्ञातवानसि ॥
प्रश्नप्रतीकानवदत्पृष्टः पित्रा समासतः ॥ ५१ ॥

पित्रा कृतस्य प्रश्नान्तरस्यार्थमाह । **प्रश्ना इति** । इम इति हेत्यादेरर्थमाह । **प्रश्नेति** । प्रतीकशब्देनैकदेशोक्तिः । समासतोऽवददिति संबन्धः ॥ ५१ ॥

ब्राह्मणज्ञानतोऽन्यत्र विद्यां पप्रच्छ भूमिपः ॥
न हि ब्राह्मणविज्ञाने किंचिदस्ति त्वयाऽगतम् ॥ ५२ ॥

स होवाचेत्यस्यार्थमाह । **ब्राह्मणेति** । ननु तैरधिगन्तव्येऽपि ज्ञाने ममावशिष्टमस्तीति राजोक्तप्रश्नाज्ज्ञानात्[1]कल्प्येत नेत्याह । **न हीति** ॥ ५२ ॥

इत्येतद्धृदये कृत्वा तथा न इति सोऽवदत् ॥
मा शङ्किष्ठास्ततो मां त्वं नोक्तं सर्वं ममेति हि ॥ ५३ ॥

तथेत्यादिवाक्यमादत्ते । **इत्येतदिति** । तस्यार्थमाह । **मा शङ्किष्ठा इति** । ब्राह्मणस्थस्य सर्वस्य ज्ञानस्य त्वय्यर्पितत्वादिति ततःशब्दार्थः । शङ्काभावे पितापुत्रसंबन्धहेत्वन्तरं वक्तुं हिशब्दः ॥ ५३ ॥

प्रेहि तत्र गमिष्यावस्तद्विद्यालब्धिसिद्धये ॥
ब्रह्मचर्यं च वत्स्याव आवां तत्र नृपे गतौ ॥ ५४ ॥

प्रेहीत्यादेरर्थमाह । **प्रेहीति** । तत्रेति राजधानीनिर्देशः । गतिफलमाह । **तद्विद्येति** । तदर्थं कार्यं दर्शयति । **ब्रह्मचर्यं चेति** । गतावावामिति संबन्धः । पाषाणा वृक्षेष्वितिवत्संनिध्यर्था सप्तमी ॥ ५४ ॥

यातु तत्र भवानेव नाहं तं गन्तुमुत्सहे ॥
इत्युक्तः सूनुना ह्रीतः स्वयमेव जगाम तम् ॥ ५५ ॥
ससंभ्रमः स चोत्थाय तस्मा आसनमाहरत् ॥
अप आहारयांचक्र अर्घ्यपाद्यार्थसिद्धये ॥ ५६ ॥
सत्कृत्य च यथाशास्त्रं राजाऽथ तमुवाच ह ॥
वरं कामं प्रयच्छामो यः कामो वाञ्छितस्त्वया ॥ ५७ ॥
ऋषिराहाथ राजानं कामितार्थस्य सिद्धये ॥
प्रतिज्ञातो वरस्तावद्भवताऽप्रार्थितोऽपि सन् ॥ ५८ ॥

---

१ क. °त्कल्प्यते ने°।

भवानेवेत्यादेरर्थमाह । **यात्विति** । सूनोरेवं वदने पितृवाक्यातिलङ्घित्वेन प्रत्यवायित्वं शङ्कित्वाऽऽह । **हीत इति** । सत्कारानन्तरमपि मुनेरर्थित्वं दृष्ट्वेत्यथशब्दार्थः । राज्ञो वक्तृत्वयोग्यता निपातेन द्योत्यते । दैवादवकाशमासाद्येति द्वितीयाथशब्दार्थः[1] । कामितार्थस्य विद्यालाभस्येति यावत् । **ब्राह्मणं** स्वयमाहूय याचमानमकिंचनमित्यादिन्यायस्ते मा भूदिति सूचयन्वरं विशिनष्टि । **अप्रार्थितोऽपीति** ॥ ५५ ॥ ५६ ॥ ॥ ५७ ॥ ५८ ॥

**अस्तु सत्यप्रतिज्ञोऽत्र प्रतिज्ञातं त्वयेह यत् ॥**
**देहि प्रश्नात्मिकां वाचं यां मत्सूनोरभाषथाः ॥ ५९ ॥**
**राजाऽपि तमुवाचाथ दैवेष्विति परं वचः ॥**
**दैवेष्वयं वरः सिद्धो मानुषाणां वरं वृणु ॥ ६० ॥**

वाक्यान्तरमवतारयितुं भूमिकां करोति । **अस्त्विति** । इह सभायां यत्त्वया प्रतिज्ञातमस्मिन्प्रतिज्ञाते वस्तुनि सत्यप्रतिज्ञोऽस्तु भवानिति योजना । अप्रतिहतैव मे प्रतिज्ञेति राज्ञो वाक्यमाशङ्क्याऽऽह । **देहीति** । संभ्रमार्थोऽथशब्दः । राजवाक्यं व्याचष्टे । **दैवेष्विति** ॥ ५९ ॥ ६० ॥

**न हि मानुषतो दैवः प्रार्थनीयो विजानता ॥**
**मानुषस्तूचितो दातुमादातुं मानुषाद्वरः[2] ॥ ६१ ॥**

तस्य दुर्लभत्वात्प्रार्थ्यमानत्वमाशङ्क्याऽऽह । **न हीति** । कथं तर्हि प्रतिज्ञेत्याशङ्क्य मानुषवरविवक्षयेत्याह । **मानुषस्त्विति** ॥ ६१ ॥

**ममाप्यस्त्येव तत्सर्वं यद्दित्ससि मानुषम् ॥**
**विज्ञायते मयैवाऽऽदौ भवताऽपि प्रमान्तरात् ॥ ६२ ॥**

गौतमस्त्वाह । **ममापीति** । तव विद्यमानमपि वित्तं मया न ज्ञायते तेन तद्दित्सेत्याशङ्क्याऽऽह । **विज्ञायत इति** । प्रमान्तरमाप्तवाक्यादि ॥ ६२ ॥

**न च तत्प्रार्थनीयं मे भूरि यद्विद्यते मम ॥**
**तस्माद्दैवो वरो मह्यं दीयतां नास्त्यसौ मम ॥ ६३ ॥**

विद्यमानमपि वित्तं भूयस्त्वार्थमर्थ्यतामित्याशङ्क्याऽऽह । **न चेति** । कीदृशस्तर्हि वरस्तुभ्यं दातव्यस्तत्राऽऽह । **तस्मादिति** । मानुषस्य वरस्य प्रार्थनीयत्वाभावादिति यावत् । दैवस्य वरस्य प्रार्थनीयत्वं सूचयति । **नास्तीति** ॥ ६३ ॥

**बहोरनन्तापर्यन्तदैववित्तस्य लोभतः ॥**
**मा भूरभ्यवदान्यस्त्वं दाता भूत्वेह नः प्रति ॥ ६४ ॥**

स दातुमशक्यो लोभादित्याशङ्क्याऽऽह । **बहोरिति** । प्रभूतमपि दैवं वित्तं दीयमानं

---

१ क. ख. °तीयोऽथ° । २ ख. °नुषो वरः ।

क्रमादपगच्छति तत्कथं दातुं शक्यमित्याशङ्क्याऽऽह । **अनन्तेति** । अनन्तत्वादपर्यन्तमवसानहीनं परस्मै दीयमानमतिदृढतया मानुषवित्तविलक्षणमाधिक्यमापद्यते तदेव वित्तं तस्येति यावत् । इह सर्वस्मिन्नर्थिजने दाता भूत्वाऽस्मान्प्रत्येवावदान्यः कदर्यो विभवे सत्यदाता यथोक्तवित्तस्य लोभतो मा भूस्त्वमिति योजना ॥ ६४ ॥

**दैवं वरं न संदातुं प्रत्याख्यातुं च तं द्विजम् ॥**
**इति दुःखित्वमापन्नस्तीर्थेनेच्छेत्युवाच तम् ॥ ६५ ॥**

स वै गौतमेत्यादेस्तात्पर्यमाह । **दैवमिति** । दातुं प्रत्याख्यातुं च न शक्त इति शेषः । विद्याया रहस्यत्वमेकत्र प्रतिज्ञा रक्षणीया द्विजस्य चार्थित्वं राज्ञो देयमित्यपरत्र हेतुः ॥ ६५ ॥

**तीर्थेन विद्या देयेति नातीर्थेनेति चाऽऽगमः ॥**
**यतोऽतस्तीर्थसृत्यैव मत्तो विद्यां त्वमाप्नुहि ॥ ६६ ॥**

किमर्थमित्थं राजा ब्राह्मणं तिरस्कुर्वन्निवोक्तवांस्तत्राऽऽह । **तीर्थेनेति** । शिष्यादीनां षण्णामन्यतमेन तीर्थेनार्थितो यो गुरुस्तेनोपसन्नाय तस्मै विद्या देयेति मन्वादिवाक्यं दर्शयति नातीर्थेन षड्बाह्येनाऽऽचार्योऽर्थितोऽपि तस्मै न दद्यादिति च तदेव वदतीत्यर्थः । उक्तमुपजीव्य राज्ञो वचनमुचितमित्याह । **यत इति** ॥ ६६ ॥

**शास्त्रार्थं स्मारितः सोऽथ राज्ञोपैमीत्यथोचिवान् ॥**
**वाचैव ह्यवरान्पूर्व उपयन्ति यतस्ततः ॥ ६७ ॥**
**स होपायनकीर्त्यैव ब्रह्मचर्यमुवास ह ॥**
**उपैमीति हि संकीर्तनान्यत्किंचिच्चकार सः ॥ ६८ ॥**

उपैमीत्यादेरर्थमाह । **शास्त्रार्थमिति** । राज्ञा स्मारितशास्त्रार्थस्य मुनेस्तदनुष्ठानप्रवृत्तौ तदर्थनिष्ठत्वं हेतुं करोति । **अथेति** । द्वितीयोऽथशब्दस्तथार्थः । यथा विद्याहीनो राजानं विद्यामर्थितवांस्तथा तदुपगमनं चोपगतवानिति योजना । ननु प्रतिलोममिदं यद्ब्राह्मणो राजानमुपगच्छति तत्राऽऽह । **वाचेति** । उद्दालकादीनामश्वपतौ प्रसिद्धमिदमुपगमनमिति हिशब्दार्थः । ब्रह्मचर्यस्य विद्योदयाय प्राधान्यद्योती निपातः । तदेव विवृणोति । **उपैमीतीति** । कर्तव्यान्तराभावं हेतुं कर्तुं हिशब्दः ॥ ६७ ॥ ६८ ॥

**सापराधं स्वमात्मानं राजा परिहरन्नथ ॥**
**क्षमयामास तमृषिं तथा न इतिवाक्यतः ॥ ६९ ॥**

स होवाचेत्याद्यवतारयति । **सापराधमिति** । उपगमनाद्यानन्तर्यमथशब्दार्थः ॥ ६९ ॥

**मानोऽपराधिनो मंस्थास्तव पूर्वे पितामहाः ॥**
**नामन्यन्त यथा तद्वद्भवानप्यपराधिनः ॥ ७० ॥**

---

१ क. ख. °तुं चाश° । २ क. ग. °थ ॥ क्षाम° ।

वाक्यं व्याचष्टे । **मा न इति ।** अस्मानपराधिनो मा त्वं मंस्थास्तव पूर्वे पिता- महा मम पूर्वान्पितामहानपराधिनो नामन्यन्त तद्वदस्मानपराधिनो भवानपि न मन्ये- तेत्यर्थः ॥ ७० ॥

**त्वत्संप्रदानतः पूर्वं विद्येयं हि कदाचन ॥**
**नोवास ब्राह्मणे साध्वी साक्षादपि बृहस्पतौ ॥ ७१ ॥**

ननु ब्राह्मणानां प्रवरे गौतमे राजानमासाद्य विद्यामर्थयमाने तामप्रयच्छन्कथमसौ नापराधीत्याशङ्क्याऽऽह । **त्वत्संप्रदानत इति ।** क्षत्रियेष्वेवामुष्या विद्यायाः प्रसिद्ध- त्वार्थो हिशब्दः । यद्यपि प्रागेषा योग्यताहीने ब्राह्मणे नोषितवती तथाऽपि कुत्रचिद्योग्ये संभावितेत्याशङ्क्याऽऽह । **साक्षादिति** ॥ ७१ ॥

**एवं गुप्तामपि तु तां वक्ष्याम्येवाहमञ्जसा ॥**
**प्रत्याख्यातुं समर्थः को ब्रुवन्तं ब्राह्मणं नृपः ॥ ७२ ॥**

विद्याया गुप्तिमुक्त्वा मत्प्रत्याख्याने प्रवृत्तस्य ते प्रतिज्ञाहानिरित्याशङ्क्याऽऽह । **एवमिति ।** मयि विद्यार्थिनि त्वदभ्याशमागच्छत्यपि तद्दाने ते चित्तं न प्रसीदति चेदस्तु प्रत्याख्यानमित्याशङ्क्याऽऽह । **प्रत्याख्यातुमिति** ॥ ७२ ॥

**असाविति क्रमोऽभेदि कस्माद्धेतोरितीर्यताम् ॥**
**प्रश्नस्येह चतुर्थस्य प्राधान्याद्भिद्यते क्रमः ॥ ७३ ॥**

असौ वै लोकोऽग्निरित्यादिना चतुर्थप्रश्नस्य प्राथम्येन निर्णये हेतुं पृच्छति । **असाविति ।** उत्तरमाह । **प्रश्नस्येति ।** इहेति प्रश्नसमुदायोक्तिः ॥ ७३ ॥

**उत्पत्तेस्तदधीनत्वाज्जन्मायत्ता स्थितिस्तथा ॥**
**स्थित्यपाये प्रयाणं च श्रुत्याऽभेदि क्रमस्ततः ॥ ७४ ॥**

तस्य प्राधान्येन प्राथम्यं प्रकटयन्क्रमभङ्गं साधयति । **उत्पत्तेरिति ।** मनुष्यजन्म- स्थितिलयानां चतुर्थप्रश्ननिर्णयाधीनतया तस्य प्राधान्यात्प्राथम्ये सत्यर्थक्रममाश्रित्या- विवक्षितस्य पाठक्रमस्य भङ्गः कृत इत्यर्थः ॥ ७४ ॥

**दूरतोऽमुष्य लोकस्य स्यादसाविति गीरियम् ॥**
**समिद्धूमादिभी रूपैर्लोक्यते लोकगीरपि ॥ ७५ ॥**
**वैशब्दः स्मरणाय स्यादग्निस्तत्परिणामतः ॥**
**यत आहवनीयोऽग्निर्द्युलोकात्मतया स्थितः ॥ ७६ ॥**

क्रमं भङ्क्त्वा पदानि व्याकरोति । **दूरत इति ।** स्मरणाय प्रसिद्धद्युलोकस्येति शेषः । तस्याग्निपरिणामता कथमित्याशङ्क्याऽऽह । **यत इति ।** अतो द्युलोकाग्नि- परिणामता युक्तेति शेषः ॥ ७५ ॥ ७६ ॥

**अपूर्वपरिणामोऽयमग्निहोत्राख्यकर्मणः ॥**
**द्युलोकोपक्रमो ज्ञेयो यावत्पुरुषसंभवः ॥ ७७ ॥**

कथमाहवनीयाग्नेर्द्युलोकाद्यात्मना स्थितिस्तत्राऽऽह । **अपूर्वेति** । न हि कर्म कारकानपेक्षं साध्यैकस्वभावत्वात्तथाचाग्निहोत्राद्यपूर्वमाहवनीयादिकारकसहितमेव द्युलोकाद्यारभते ते दिवमेवाऽऽहवनीयं कुर्वाते इति श्रुतेरतो युक्तमाहवनीयस्य द्युलोकाद्यात्मनाऽवस्थानमित्यर्थः ॥ ७७ ॥

**आहुत्योरग्निहोत्रस्य या विभूतिः पुरोदिता ॥**
**सैवेह दृष्टिविध्यर्थं श्रुत्या व्याख्यायतेऽञ्जसा ॥ ७८ ॥**

किंचाग्निहोत्राधिकारालोचनायामपि द्युलोकादेरग्नित्वं युक्तमित्याह । **आहुत्योरिति** । पूर्वत्राग्निहोत्राधिकारे कर्मापूर्वपरिणामो जगदित्याहुत्योः स्तुत्यर्थत्वेनोक्तं तदेव जगदत्र दृष्टिविध्यर्थमसावित्यादिश्रुत्याऽनूद्यते तद्युक्तं द्युलोकादेरग्नित्वमित्यर्थः ॥ ७८ ॥

**अध्यात्मे चाधियज्ञे च ह्यधिलोकाधिदैवयोः ॥**
**श्रुतिराहवनीयादेर्व्याचष्टे विस्तृतिं स्फुटाम् ॥ ७९ ॥**

जगतोऽपूर्वपरिणामत्वेऽपि कथं द्युलोकादेराग्नितेत्याशङ्क्य कर्मविभूतिमनुवदति । **अध्यात्म इति** । आहवनीयादिरूपाग्नेरध्यात्मादिविभागेनावस्थानं पट्प्रश्नीये ग्रन्थे श्रूयतेऽतस्तस्यैवाऽऽहवनीयादिपरिणामस्य जगतोऽत्र पञ्चाग्निविद्याविधानायानुवादाद्युज्यते लोकादेरग्नित्वमित्यर्थः ॥ ७९ ॥

**लोक आहवनीयोऽग्निरसाविति विचिन्तयेत् ॥**
**आदित्यादिष्वपि तथा समिदादिसमीक्षणम् ॥ ८० ॥**

एवमनग्नेरग्नित्वमुपपाद्यासावित्यादाविष्टमुपास्तिप्रकारमाह । **लोक इति** । अनग्नावेवाग्निदृष्टिर्द्युलोके कार्येत्यर्थः । तस्येत्यादेस्तात्पर्यमाह । **आदित्यादिष्विति** । तथा द्युलोकेऽग्निदृष्टिवदिति यावत् ॥ ८० ॥

**समिन्धनात्समिद्भानू रश्मयो धूम इत्यपि ॥**
**समिन्निर्गमसामान्यादर्चिरहस्तथैव च ॥ ८१ ॥**

आदित्ये समिदृष्टौ हेतुमाह । **समिन्धनादिति** । रश्मिषु धूमदृष्टिमनूद्य हेतुमाह । **रश्मय इति** । अर्चिर्दर्शनमह्नि कार्यमित्यर्थः । अहरर्चिरित्यत्र हेतुं समिदुत्थत्वं कथयति । **तथैवेति** ॥ ८१ ॥

**शान्तत्वाच्च दिशोऽङ्गाराः समिद्धि[1] परिणामतः ॥**
**अर्चिरङ्गारभावस्य यथैवं भानुहेतुकाः ॥**
**रश्मयश्च दिशश्चैता आदित्यसमिदाश्रयाः ॥ ८२ ॥**

---

१ ग. 'मिद्धिप' ।

दिक्ष्वङ्गारदृष्टौ निमित्तमाह । **शान्तत्वादिति** । रश्म्यहर्दिक्षु धूमार्चिरङ्गारदृष्टीनां कार्यत्वे हेत्वन्तरमाह । **समिदिति** । यथा धूमादीनां समित्परिणामतया समिदाश्रयस्तथा रश्म्यादीनामादित्यविकारत्वात्तदाश्रयत्वात्तेषु धूमादिदृष्टिः कार्येत्यर्थः । दिशामादित्यकार्यत्वं तद्व्यवहारस्य तदधीनत्वाद्द्रष्टव्यम् ॥ ८२ ॥

**अवान्तरदिशस्तद्वद्दिक्षिप्तत्वैकहेतुतः ॥**
**विस्फुलिङ्गा इति ज्ञेयास्तस्मिन्नग्नौ यथोदिते ॥ ८३ ॥**

अवान्तरदिशो विस्फुलिङ्गा इत्यस्यार्थमाह । **अवान्तरेति** । तद्वद्दिशामङ्गारत्ववदिति यावत् । तस्मिन्नित्यादेरर्थमाह । **तस्मिन्निति** । देवा जुह्वतीति शेषः ॥ ८३ ॥

**त्रयस्त्रिंशच्च ये देवाः स्युस्तेऽध्यात्मादिभूमिगाः ॥**
**होतारस्तत्र तत्र स्युः कर्मज्ञानानुरोधतः ॥ ८४ ॥**

के ते देवा ये होतारस्तत्राऽऽह । **त्रयस्त्रिंशदिति** । अष्टौ वसव एकादश रुद्रा द्वादशाऽऽदित्या इन्द्रः प्रजापतिरिति ये देवाः स्युस्तेऽध्यात्मादिभेदभिन्नास्तत्तद्भावभाजि यजमाने तदीयकर्माद्यनुसारतस्तत्र तत्राग्निभेदेषु होतारः स्युरतो यजमानप्राणा वागादयोऽत्र देवा इत्यर्थः ॥ ८४ ॥

**ऋत्विग्रूपेण ते ह्यासन्यथा प्राकृतकर्मणि ॥**
**होतारः परिणामेषु तथैवोत्तरभूमिषु ॥ ८५ ॥**

तदेव दृष्टान्तेन स्पष्टयति । **ऋत्विगिति** । यथा ज्योतिष्टोमादौ ब्राह्मे कर्मणि षोडशर्त्विजो होतारः स्थितास्तथोत्तरेष्वपि कर्मापूर्वपरिणामेषु द्युलोकादिष्वृत्विग्रूपेण ते देवा यजमानप्राणा होतारः स्युरित्यर्थः । यज्ञभूमावृत्विजां प्रसिद्ध्यर्थो हिशब्दः ॥ ८५ ॥

**आहुत्योः परिणामोऽयमूर्ग्रसोऽपूर्वमित्यपि ॥**
**तस्य श्रद्धैकहेतुत्वाच्छ्रद्धा नामेति कीर्त्यते ॥ ८६ ॥**

एवं होतृसिद्धावपि न श्रद्धाया होम्यत्वं प्रत्ययविशेषात्मकत्वादित्याशङ्क्य श्रद्धाशब्दार्थमाह । **आहुत्योरिति** । अग्निहोत्रादिकर्मापूर्वं श्रद्धाकार्यत्वादुपचारतः श्रद्धाशब्दितमित्यर्थः ॥ ८६ ॥

**तस्याश्चाप्याहुतेः सोमो राजा संभवतीति च ॥**
**तस्याभिवृद्धिः संभूतिर्न त्वभूतजनिर्यतः ॥ ८७ ॥**

उत्तरवाक्यमादत्ते । **तस्याश्चेति** । श्रद्धाया होम्यत्वसिद्धौ तदाहुतिकार्यमपि सिध्यत्येवेति वक्तुमाद्यौ निपातौ । वक्ष्यमाणसोमाद्याहुतिकार्यवदितिदृष्टान्तार्थो द्वितीयश्चकारः । इतिशब्दो ध्यानार्थः । कीदृशी सोमस्य संभूतिस्तत्राऽऽह । **तस्येति** । तत्र हेतुः । **न त्विति** । सोमस्य प्रागेव सिद्धेरसतो जन्मायोगाद्वृद्धिरेव संभूतिः सा च सोमलोके

कर्तृभोगाय देहान्तरारम्भकता तत्र द्युलोकं प्रविश्य सोममण्डले कर्तुः शरीरमारभत इति हि भाष्यमित्यर्थः ॥ ८७ ॥

**द्यौरग्निः समिदादित्यः श्रद्धा तस्मिन्हि हूयते ॥**
**सूर्ये समिधि दीप्तायां श्रद्धां जुह्वति देवताः ॥ ८८ ॥**

आदिपर्यायार्थं संक्षिप्योपसंहरति । **द्यौरिति** । तस्याश्चाऽऽहुतेः सोमवृद्धिरिति शेषं सूचयितुं हिशब्दः । तदेव स्पष्टयति । **सूर्य इति** । श्रद्धाशब्देन कर्मापूर्वं गृहीत्वा तदाहुतेः सोमसंभूतिरुक्ता ॥ ८८ ॥

**श्रयतेः श्रद्धधातेर्वा श्रद्धेत्याहुर्विपाश्चितः ॥ ८९ ॥**
**श्रयणाद्धारणाच्चाऽऽपः श्रद्धाह्वाः कारणात्मिकाः ॥**
**भूत्वाऽऽप इति लिङ्गाच्च आपः श्रद्धाभिधास्ततः ॥ ९० ॥**

नन्वपूर्वस्यापि श्रद्धाख्यस्य न होम्यता तस्य द्युलोके प्रवेशमात्रं होमश्चेन्न श्रद्धाशब्दस्य मुख्यार्थस्त्याज्यस्तस्यापीच्छाविशेषस्योक्तहोमसंभवादित्याशङ्क्य श्रद्धाशब्दनिष्पत्तिमाह । **श्रयतेरिति** । वाशब्दश्चार्थः । निष्पन्नशब्दस्य विवक्षितमर्थमाह । **श्रयणादिति** । भौतिकप्रपञ्चस्याऽऽश्रयत्वात्पोषकत्वाच्चाऽऽपो भूतान्तरसहिताः श्रद्धाशब्दा इत्यर्थः । कथं तासां श्रयणादि तत्राऽऽह । **कारणात्मिका इति** । अपामेवात्र श्रद्धाशब्दत्वमित्यत्र हेत्वन्तरमाह । **भूत्वेति** । पदविभागस्पाष्ट्यार्थं संधिर्न गृहीतः । न केवलमापः पुरुषवाचो भूत्वा समुत्थाय वदन्तीत्युपक्रमादेव श्रद्धाशब्देनाऽऽपो गृह्यन्ते किंतु श्रद्धा वा आप इति श्रुतेश्चेति मत्वाऽऽह । **तत इति** ॥ ८९ ॥ ९० ॥

**आकृष्टं रश्मिभिस्तोयमादित्ये प्रतितिष्ठति ॥**
**तस्मादादित्यगः सोमः क्षीण आप्यायते पुनः ॥ ९१ ॥**

श्रद्धाहुतेः सोमस्य संभूतिर्वृद्धिरित्युक्तं कथं निर्वहतीत्याशङ्क्याऽऽह । **आकृष्टमिति** । तच्छब्दस्तोयार्थः । कृष्णपक्षे क्षयिमाणः सोमोऽमावास्यायामादित्यान्तर्गतस्तद्गततोयेन शुक्लपक्षे क्रमेणाऽऽप्यायते सेयं वृद्धिः सोमस्य संभूतिः ।

"विवस्वानंशुभिस्तीक्ष्णैरादाय जगतो जलम् ।
सोमे मुञ्चत्यथेन्दुश्च वायुनाडीमयैर्द्विज" ॥

इत्यादिस्मृतेरित्यर्थः ॥ ९१ ॥

**परिणामो ह्यपां सोमः शीतांशुस्तेन सोऽम्मयः ॥**
**श्रद्धाहुतेर्हि सोमस्य संभवः शास्त्र उच्यते ॥ ९२ ॥**

ये तु सोमस्य तैजसत्वमाहुस्तेषां तस्या आहुत्यै सोमो राजा संभवतीति विरोध इत्याह । **परिणामो हीति** । श्रुतिप्रसिद्ध्यर्थो हिशब्दः । प्रत्यक्षं च तस्याऽऽप्यत्वमित्याह । **शीतांशुरिति** । किंच श्रद्धाख्यानामपां हुतेः सोमस्य संभवो यः शास्त्रे कथ्यते

स सोमलोके कर्तृभोगार्थं देहान्तरारम्भ एव तथाच तस्य तैजसत्वेऽपि न क्षतिरिति विवक्षन्नाह । **श्रद्धाहुतेरिति** ॥ ९२ ॥

**अङ्गाराश्चन्द्रमास्तस्मिन्हुतेऽग्नौ सोमसंभवः ॥**
**सोमचन्द्रमसोरेवं भेदः शास्त्रेण दर्शितः ॥ ९३ ॥**

ननु द्युलोकाग्नौ श्रद्धाहुतेः सोमोत्पत्तिश्चेत्तत्कथं तस्य मनुष्यलोकाग्नावङ्गारत्वं **चन्द्रमा** अङ्गारा इति हि **श्रुतिरित्याशङ्क्य** सोमचन्द्रमसोर्भेदं साधयति । **अङ्गारा इति** । तस्मिन्निति द्युलोकाग्नेरुक्तिः । कारकभूतश्चन्द्रमाः फलभूतः सोम इति भेद इत्यर्थः । तत्र प्रमाणं प्रकटयति । **सोमेति** । शास्त्रमत्र **चन्द्रमा** अङ्गारास्तस्या आहुत्यै सोमो राजेत्यादि ॥ ९३ ॥

**चन्द्रमा मण्डलं स्वच्छं चन्द्रकेण मितो हि सः ॥**
**सोमस्तु मण्डले श्वेतो वर्धते ह्रसते च यः ॥ ९४ ॥**

पदार्थालोचनायामपि भेदसिद्धिरित्याह । **चन्द्रमा इति** । मण्डले चन्द्रमःशब्द-प्रवृत्तिनिमित्तमाह । **चन्द्रकेणेति** । अभ्रकेण तुलित इत्यर्थः । सशब्दो मण्डलार्थः । मण्डलान्तर्वर्तिनि पुरुषे सोमशब्दप्रवृत्तिमाह । **सोमस्त्विति** । तत्र निमित्तमाह । **वर्धत इति** । लतारूपे वृद्धिह्रासदृष्टेरस्मिन्नपि पक्षभेदेन तद्भावात्तच्छब्दप्रवृत्तिः । न च मण्डलस्यैव वृद्धिह्रासौ नियामकाभावादेवमेनांस्तत्र भक्षयन्तीति च श्रुतेर्न च साऽपि मण्डलार्था तन्मात्रस्याभोग्यत्वादित्यर्थः ॥ ९४ ॥

**चन्द्रमाः पर आदित्यादर्वाक्सोमः श्रुतेर्मतः ॥**
**आदित्याच्चन्द्रमित्याह नैते संवत्सरं तथा ॥ ९५ ॥**

भेदकान्तरमाह । **चन्द्रमा इति** । आदित्यात्प्रागूर्ध्वं च श्रुतयोः सोमचन्द्रमसोर्भेदः श्रौतश्चेत्काऽसौ श्रुतिरित्याशङ्क्याऽऽह । **आदित्यादिति** । उत्तरमार्गगाः संवत्सर-द्वाराऽऽदित्यं गतास्तस्माच्चन्द्रं गच्छन्तीति श्रुतिरादित्यात्पराञ्चं चन्द्रं ब्रूते । एते दक्षि-णमार्गगा न संवत्सरमापद्यन्ते किंतु मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रमेष सोमो राजेत्या-दिश्रुतिरादित्यादर्वाञ्चं सोममाह । न च चन्द्रस्याऽऽदित्यात्पराचीनत्वे तदन्तर्वर्तिनः सोमस्य तस्मादर्वाचीनत्वानुपपत्तिरैश्वर्यवशाद्देवतायास्तथात्वसंभवादनेकप्रतिपत्तिन्याया-दित्यर्थः ॥ ९५ ॥

**सोमचन्द्रमसोस्तस्माद्भेदः समवगम्यते ॥**
**देशाभेदादभिन्नौ तावेष सोम इति श्रुतेः ॥ ९६ ॥**

फलितं भेदं निगमयति । **सोमेति** । तयोरत्यन्तभेदश्चेत्कथमभेदोक्तिरित्याश-ङ्क्याऽऽह । **देशेति** । स्वरूपभेदे सत्येव देशाभेदेन पितृलोकाच्चन्द्रमेष सोमो राजेत्यभे-दश्रुतिः सोमस्य मण्डलस्थत्वाद्देशान्तराभावादित्यर्थः ॥ ९६ ॥

भिन्नौ च धर्मभेदेन तस्मादुभयथा श्रुतिः ॥
पर्जन्योऽग्निरिति ज्ञेयः समित्संवत्सरः स्मृतः ॥ ९७ ॥
संवत्सरे समिद्धे हि पर्जन्यस्य समेधनात् ॥
धूमोऽभ्राणीति सादृश्याद्विद्युदर्चिस्तथैव च ॥ ९८ ॥
शान्तिवर्तुलतोऽङ्गाराः पर्जन्यशिखिनोऽशनिः ॥
विक्षिप्तत्वैकसामान्यात्स्फुलिङ्गाः स्तनयित्नवः ॥ ९९ ॥
सोमं जुह्वति तत्राग्नौ देवाश्चात्रोदिताः पुरा ॥
वृष्टेश्च संभवस्तस्माल्लोकेऽस्मिन्साऽपि हूयते ॥ १०० ॥

कथं तर्हि भेदश्रुतिस्तत्राऽऽह । **भिन्नौ चेति** । धर्मभेदेन स्वरूपभेदेनेति यावत् । देशाभेदादभेदश्रुतिः स्वरूपभेदाद्भेदश्रुतिरित्युपसंहरति । **तस्मादिति** । द्वितीयपर्यायं व्याचष्टे । **पर्जन्य इत्यादिना** । ऋतुभिः संवत्सरे दीप्ते सत्येव पर्जन्यप्रसिद्धा दीप्ति-रन्यथा तद्वैयर्थ्यादिति हिशब्दार्थः । धूमोऽभ्राणीत्यत्रेतिशब्दो ज्ञेयत्वानुकर्षणार्थः । अभ्राणां धूमसादृश्यं धूम्रत्वम् । विद्युत्यर्चिर्दृष्टिरित्यत्र वर्णसादृश्यं हेतू करोति । **तथैव चेति** । तृतीयमग्निमवतारयति । **लोकेऽस्मिन्निति** ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥

लोकोऽयमग्निर्विज्ञेयः पृथिवी समिदुच्यते ॥
पृथिव्या हि समिद्धोऽयं समित्तेन क्षितिर्मता ॥ १०१ ॥
अग्निर्धूमस्तदुत्थानाद्रात्रिरर्चिस्तथैव च ॥
रात्रिमाहुः क्षितिच्छायामङ्गाराश्चन्द्रमास्तथा ॥ १०२ ॥
शान्तत्ववर्तुलत्वाभ्यां विस्फुलिङ्गसमत्वतः ॥
नक्षत्राणि स्फुलिङ्गाः स्युस्तस्मिन्नित्यादि पूर्ववत् ॥ १०३ ॥
अन्नस्य संभवस्तस्मात्पुमग्नौ तच्च हूयते ॥
पुरुषोऽग्निरिति ध्येयो व्यात्तं तस्य समित्स्मृता ॥ १०४ ॥
व्यात्ते मुखे हि तद्दीप्तिर्धूमः प्राणो मुखोत्थितेः ॥
पुंदीप्तेर्वाङ्निमित्तत्वादर्चिर्वाक्तेन भण्यते ॥ १०५ ॥
स्थितेरङ्गारवच्चक्षुरङ्गाराः श्रोत्रमेव च ॥
विस्फुलिङ्गा इति ज्ञेयं तस्य विक्षेपसंस्थितेः ॥ १०६ ॥
अन्नं जुह्वति तत्राग्नौ संभवो रेतसस्ततः ॥
योषिदग्निरिति ज्ञेया उपस्थश्च समित्तथा ॥ १०७ ॥
तदुपस्थेन संदीप्तेर्धूमो लोमानि साम्यतः ॥
अर्चिर्वर्णसमानत्वाद्योनिरर्चिर्भवेत्ततः ॥ १०८ ॥

**अन्तः करोति यत्कामी तेऽङ्गारास्तत्समानतः ॥**
**विस्फुलिङ्गाः सुखलवाः क्षणिकत्वैकहेतुतः ॥ १०९ ॥**
**रेतो जुह्वति तत्राग्नौ देवाश्चेन्द्रियरूपिणः ॥**
**पञ्चम्या आहुतेस्तस्याः पुरुषः संभवत्ययम् ॥ ११० ॥**

अयं वै लोकोऽग्निरित्यादिवाक्यं व्याकरोति । **लोकोऽयमित्यादिना** । एतल्लोक-पृथिव्योर्देहदेहिभावेन भेदः । देहिना देहस्य प्रसिद्धा दीप्तिरिति हेतू कर्तुं हिशब्दः । तच्छब्देन पृथिवी समिदुच्यते । तथैव चेति पृथिवीसमिधः समुत्थानादेवेत्यर्थः । कथं पुना रात्रेरुक्तसमिधः समुत्थानं तत्राऽऽह । **रात्रिमिति** । एतानि हि चन्द्रं रात्रेस्तमसो मृत्योर्बिभ्यतमत्यपारयन्निति श्रुते रात्रेस्तमस्त्वावगमात्तस्य च मृत्युर्वै तमश्छाया तेनैव तज्ज्योतिषा मृत्युं तमश्छायां तरतीति भूच्छायाश्रुतेस्तमो राहुस्थानं तच्च भूच्छायेति प्रसिद्धम्——

"उद्धृत्य पृथिवीछायां निर्मितं मण्डलाकृति ॥
स्वर्भानोस्तद्बृहत्स्थानं तृतीयं यत्तमोमयम्" इति स्मृतेः ॥

चतुर्थमग्निमुत्थापयति । **पुमग्नाविति** । पुरुषो वा अग्निरित्यादि व्याक-रोति । **पुरुष इत्यादिना** । वाग्मिनो व्यक्ता दीप्तिरिति वक्तुं हिशब्दः । तेन वागर्चि-रिति वाक्येनेत्यर्थः । योषा वा अग्निरित्यादि व्याचष्टे । **योषिदित्यादिना** । तथेति समिद्धाग्नेः संदीप्तिवदित्यर्थः । लोमसु धूमदृष्टौ वर्णसादृश्यं हेतुमाह । **साम्यत इति** । अङ्गाराः खल्वग्नेरुपशान्तिहेतवस्तथेदमपि कर्म योषिदग्नेः पुरुषस्य च तेजोवीर्यादिनाश-कत्वेन शान्तिकरमतस्तस्मिन्कर्मण्यङ्गारदृष्टिरित्याह । **तत्समानत इति** ॥ १०१ ॥ ॥ १०२ ॥ १०३ ॥ १०४ ॥ १०५ ॥ १०६ ॥ १०७ ॥ १०८ ॥ १०९ ॥ ११० ॥

**यथोक्तवर्त्मना ह्यापः प्राप्ताः पुंस्परिणामताम् ॥**
**पाकजः परिणामोऽयमेवं पञ्चभिरग्निभिः ॥ १११ ॥**

पञ्चाग्निविज्ञानस्य चतुर्थप्रश्ननिर्णायकत्वेन प्रकृतोपयोगं दर्शयति । **यथोक्तेति** । अग्निहोत्रादौ वैदिके कर्मणि प्रकृतानामपां प्रसिद्धताद्योतको हिशब्दः । अग्निहोत्रे हुतानां पयोघृतादीनां पुरुषरूपपरिणामश्चेत्कथं तस्य स्थूलतया व्यवहारयोग्यता तासां स्वभावसौक्ष्म्यादित्याशङ्क्याऽऽह । **पाकज इति** ॥ १११ ॥

**तस्मादापः सूक्ष्मभावाः स्थूलतां यान्ति पाकतः ॥**
**अग्निभिः पञ्चभिः पक्वाः पुरुषाख्या भवन्ति हि ॥ ११२ ॥**

पुरुषाख्यपरिणामस्य पाकजत्वे फलितमाह । **तस्मादिति** । आपो भूतसूक्ष्मलक्षणाः

---

१ ख. °ना । त° ।

पूर्वोक्ताग्निपाकतः सूक्ष्मत्वं हित्वा ततः स्थूलतां गच्छन्ति तथाऽपि कथं पुरुषाख्यत्वमत आह । **अग्निभिरिति** । पाकजपरिणामस्य करचरणादिमत्त्वाद्युक्ता पुरुषाख्येति हिशब्दार्थः ॥ ११२ ॥

**तस्मान्मृतं प्रियं बन्धुं हरन्त्यग्नय ऋत्विजः ॥ ११३ ॥**
**यथैवाऽऽहवनीयाग्नेः प्रसिद्धं समिदादिकम् ॥**
**श्मशानाग्नेस्तथैवैतत्सर्वं ज्ञेयं न कल्प्यते ॥ ११४ ॥**

पञ्चाग्निविदो गतिं विवक्षुर्वक्ष्यमाणगत्युपयोगिदेहप्रदर्शनार्थमन्त्येष्टिविषयं वाक्यं व्याचष्टे । **तस्मादिति** । यद्वा षष्ठोऽग्निरग्निलयोऽहमितिदृष्टिशेषत्वेनोच्यते । वर्तमान-देहस्थितिनिमित्तकर्मक्षयपरामर्शी तच्छब्दः । तस्येत्यादेरर्थमाह । **यथेति** । नित्यानु-वादफलमाह । **नेति** ॥ ११३ ॥ ११४ ॥

**अन्त्यसंस्कारसिद्ध्यर्थं तस्मिन्नग्नौ यथोदिते ॥**
**ऋत्विजो जुह्वति नरमन्त्याहुत्यै विधानतः ॥**
**आहुतेर्जायते तस्याः पुमान्भास्वररूपभृत् ॥ ११५ ॥**

तस्मिन्नित्यादेरर्थमाह । **अन्त्येति** । अन्त्येष्टिरन्त्याहुतिस्तदर्थे यद्विधानं पितृमे-धोक्तं तद्वशादिति यावत् ॥ ११५ ॥

**राजसं तामसं रूपमितो ह्यन्यत्र वक्ष्यते ॥ ११६ ॥**
**इतोऽग्निभ्योऽग्निमेवायं स्वां योनिं प्रतिपत्स्यते ॥**
**इति लोके समाचारादग्निभ्यः संभवस्ततः ॥ ११७ ॥**

भास्वरवर्णविशेषणस्य व्यावर्त्यमाह । **राजसमिति** । इतो विद्वद्रूपात्सात्त्विकादिति यावत् । अन्यत्र कर्मण्युभयभ्रष्टे वेत्यर्थः । पुरुषस्याग्निजन्यत्वे तल्लये च विद्वत्प्रसिद्धिं प्रमाणयति । **इत इति** । समागत इति यावत् । लोकः श्रुतिमार्गानुसारी विद्वद्वर्गः । संभवस्तेषु लयोपलक्षणम् ॥ ११६ ॥ ११७ ॥

**पञ्चम्यामाहुतावेवं पुंनाम्नो जन्म कीर्तितम् ॥**
**गतिस्तस्याथ वक्तव्या उदग्दक्षिणभेदतः ॥ ११८ ॥**

ते य एवमित्यादिवाक्यस्य वृत्तानुवादपूर्वकं संगतिमाह । **पञ्चम्यामिति** । जन्मे-त्युपलक्षणमन्त्याहुतिश्चोक्तेति द्रष्टव्यम् । मृतस्य गत्यपेक्षाद्योतकोऽथशब्दः । संधि-रनुपयोगादविवक्षितः ॥ ११८ ॥

**ते य एतद्यथाजातं ज्ञानं पञ्चाग्निसंश्रयम् ॥**
**विदुरर्चिः समायान्ति बहूक्तेश्च द्विजातयः ॥ ११९ ॥**

---

१ ख. गच्छन्तु । २ ख. एवं यथा° ।

तद्योजयति । **ते य इति ।** ये विदुस्ते संभवन्तीति बहुवचनादत्र त्रैवर्णिकमात्रमधिकारित्वेनोपात्तमित्याह । **बहूक्तेरिति** ॥ ११९ ॥

**उत्पत्तिसंस्थितिलया यथोक्ताग्न्येकहेतवः ॥**
**इत्थं ये विदुरर्चिस्ते संभवन्त्यात्मभाविताः ॥ १२० ॥**

तेषां कदाचित्पञ्चाग्निविद्योदयमात्रमर्चिरादिप्राप्तिहेतुरित्याशङ्क्याऽऽह । **उत्पत्तीति ।** द्युलोकादिषु श्रद्धाद्याहुतिकृतो ममोत्पत्त्यादिरित्येवं ये जानन्ति ते सदा तादृगनुसंधानवन्तोऽर्चिरादिद्वारा ब्रह्मलोकं गच्छन्तीत्यर्थः ॥ १२० ॥

**इष्टापूर्तकृतो ये वै ग्रामस्थेभ्यश्च ये परे ॥**
**अरण्य इति गृह्यन्त इतरेषां पृथग्ग्रहात् ॥ १२१ ॥**

ये चेत्यादौ विवक्षितानधिकारिणो ब्रूते । **इष्टेति ।** एतावदमी गृहिणः श्रौतस्मार्तकारिणो ये चान्ये वनस्थाः श्रौतादिकर्मकर्तारस्ते चारण्य इत्यादिना श्रद्धादिपूर्वकं सत्यब्रह्मोपासनेऽधिकारिणो विवक्षिता इत्यर्थः । ये चेत्यादौ ब्रह्मचारिणामपि प्राप्तिमाशङ्क्याऽऽह । **इतरेषामिति ।** नैष्ठिकब्रह्मचारिणामुत्तरेण पथा ब्रह्मलोकगामित्वे श्रुतिं विना स्मृतेरेव ग्रहान्न तेषामत्र प्राप्तिरित्यर्थः ॥ १२१ ॥

**यज्ञदानतपांसीह गृहस्थ इव तापसे ॥**
**गृहस्थाचार्यवासाच्च न ग्रहो ब्रह्मचारिणाम्[2] ॥ १२२ ॥**

गृहस्थानामिष्टादिकारित्वेऽपि कथं वनस्थानां तत्कर्तृतेत्याशङ्क्याऽऽह । **यज्ञेति ।** अस्मिन्वाक्ये ब्रह्मचारिणामग्रहे हेत्वन्तरमाह । **गृहस्थेति ।** तेषामाचार्यमात्राधीनतया तत्कुलेऽभिवसतामुपासनादावस्वातन्त्र्यादित्यर्थः ॥ १२२ ॥

**नारण्यस्था न च ग्राम्या अपेक्षन्तेऽत्र विद्यया ॥**
**सामान्यवचसोपात्तेर्न विशेषपरिग्रहः ॥ १२३ ॥**

सत्यविद्यायामिव पञ्चाग्निविद्यायामपि गृहस्थवनस्थयोरेवाधिकाराद्बहूक्तेश्चेत्याद्ययुक्तमित्याशङ्क्याऽऽह । **नेत्यादिना ।** अत्रेति पञ्चाग्निविद्याधिकारोक्तिः । विशेषग्रहाभावे हेतुमाह । **सामान्येति ।** ते य एवमेतद्विदुरित्यविशेष[3]ग्रहणाद्गृहस्थादिविशेषासिद्धिरित्यर्थः ॥ १२३ ॥

**सश्रद्धस्यापि सत्यस्य यद्यप्यन्यत्र संभवः ॥**
**तथाऽपि यतयो ग्राह्या अरण्येन विशेषणात् ॥ १२४ ॥**

ये चेत्यादौ गृहस्थवनस्थग्रहणं पूर्वपक्षत्वेनोक्तं संप्रति सिद्धान्तत्वेन वनस्थानां परमहंसातिरिक्तसंन्यासिनां च ग्रहणमत्र विवक्षितमित्याह । **सश्रद्धस्येति ।** यद्यपि

---

१ ख. 'दा तदनु' । २ क. ग. रिणः ॥ १२२ ॥ ३ ख. 'षश्रवणा' ।

श्रद्धापूर्वं सत्योपासनस्य गृहस्थेष्वपि संभवस्तथाऽपि ये चेत्यादौ वनस्थानाममुख्ययतीनां च ग्रहणमरण्यविशेषणस्य तेष्वेव संभवादित्यर्थः ॥ १२४ ॥

**ते य एवं विदुरिति यदि वा गृहिणां ग्रहः ॥**
**अग्निसंबन्धतो न्याय्यो वनस्थस्यापि संभवात् ॥ १२५ ॥**

ये चेत्यादाविव वाक्यान्तरेऽपि यतिवनस्थयोरेव ग्रहणमित्याशङ्क्य सामान्यवचसोपात्तेरित्यत्रोक्तं पक्षं हित्वा पक्षान्तरमाह। **ते य इति** । संभवादग्निसंबन्धस्य वनस्थस्यापि ग्रह इति संबन्धः ॥ १२५ ॥

**न चाग्निहोत्रशेषत्वमुक्तदृष्टेरिहेष्यते ॥**
**सामान्येन ग्रहात्तस्याः पञ्चाग्निरितिलिङ्गतः ॥ १२६ ॥**

केचितु पञ्चाग्निदर्शनस्याग्निहोत्रस्तुतित्वेनाविवक्षितत्वात्तदुपबन्धा गतिरप्यविवक्षितेति गन्तृनिरूपणमस्थाने संभ्रान्तिरित्याहुस्तान्प्रत्याह । **न चेति** । अस्मिन्प्रकरणे प्रदृश्यमानाग्निदृष्टेर्नाग्निहोत्रस्तुतित्वेन तच्छेषत्वं तत्संबन्धादृते दृष्टेरसौ लोकोऽग्निरिति सामान्येनोक्तत्वात्पञ्चाग्नीन्वेदेति च सांपादिकाग्निषु प्रचयशिष्टसंख्याश्रवणादग्निहोत्रशेषदृष्टेश्च षट्प्रश्नोक्तायाः षड्भिरग्निभिः संबन्धदृष्टेरित्यर्थः ॥ १२६ ॥

**त्रिलोकीसाधनत्यागान्नापि संन्यासिनो ग्रहः ॥**
**दैवी विद्या हि वित्तं स्याद्वित्ताच्च व्युत्थितिर्यतः ॥ १२७ ॥**

दृष्टेरनन्यशेषत्वाद्गतेर्निरूपणेन गन्तृनिरूपणेऽपि ये चेत्यादौ परमहंसातिरिक्तयतिग्रहोऽयुक्तोऽरण्यविशेषणात्तेषामपि ग्रहणादित्याशङ्क्याऽऽह । **त्रिलोकीति** । लोकद्वयहेतुप्रजाकर्मत्यागेऽपि देवलोकस्य साधनं ज्ञानं परमहंसैरत्यक्तं तादर्थ्यादित्याशङ्क्याऽऽह। **दैवीति** । वित्तद्वैविध्याभ्युपगमो हिशब्दार्थः । अतो यथोक्तं ज्ञानं त्यक्तं तैरिति शेषः ॥ १२७ ॥

**प्रजया किं करिष्याम आक्षेपो ब्रह्मवेदनात् ॥ १२८ ॥**
**पञ्चाग्निज्ञानवद्भाव्या गतिरप्यत्र सर्वदा ॥**
**यतोऽतो गतिरप्युक्ता नान्यथा तदुदीरणम् ॥ १२९ ॥**

तेषां लोकत्रयहेतुत्यागे मानमाह । **प्रजयेति** । तेषामित्याक्षेपादुक्तत्यागसिद्धिरिति शेषः । ये चेत्यादेरर्थमुक्त्वा पञ्चाग्निविद्यासंनिधौ गत्युक्तेस्तात्पर्यमाह । **पञ्चाग्नीति।** प्रकरणं सप्तम्यर्थः । उपास्यत्वाभावे संनिधिवैयर्थ्यात्तद्बलाद्गतेरुपास्यतेत्याह । **नान्यथेति** ॥ १२८ ॥ १२९ ॥

**देवतोपासनस्येह प्रकृतत्वात्तथा गतेः ॥**
**अर्चिःशब्देन तेनेह देवतैवात्र गृह्यते ॥ १३० ॥**

तेऽर्चिषमित्यत्रार्चिःशब्दस्य ज्वालामात्रविषयत्वं व्यावर्त्य देवताविषयत्वमाह । **देवतेति** । इहेति प्रकरणोक्तिः । अत्रेति वाक्यकथनम् । तथा गतेः प्रकृतविद्यासंनिधौ गतिपर्वत्वेनार्चिषः श्रवणादित्यर्थः । इहशब्दो द्वितीयो विद्यासंनिध्यर्थः ॥ १३० ॥

**अर्चिर्दैवतयैकत्वं प्राप्याहर्दैवतैकताम् ॥**
**संभवन्तीति सर्वत्र संबन्धोऽत्रानुषज्यते ॥ १३१ ॥**

तेऽर्चिरित्यादेरर्थमनूद्यार्चिषोऽहरित्यस्यार्थमाह । **अर्चिरिति** । अस्मिन्वाक्ये संभवन्तीतिसंबन्धवदुत्तरत्रापि सर्वत्र तस्य संगतिरवगन्तव्येत्याह । **संभवन्तीति** ॥ १३१ ॥

**गृह्यते देवता नो चेदर्चिरादिगिरा तदा ॥**
**असंभवोऽन्यत्र मृतेरित्यपार्था गतिश्रुतिः ॥ १३२ ॥**

अर्चिःशब्देनेवाहरादिशब्दैरपि देवतैव ग्राह्येत्यत्र युक्तिमाह । **गृह्यत इति** । यद्यर्चिरादिशब्देन देवता न गृह्यते तदोपासकस्य फलप्राप्त्ययोगः स्यात्कृष्णपक्षादावपि मृतिसंभवात्तत्कालस्यानियतत्वादतो गतिश्रुतिरनर्थिका स्यात्तस्माद्देवतावाचित्वमेवार्चिरादिशब्दानामित्यर्थः ॥ १३२ ॥

**यत्तूदगयनापेक्षा भीष्मस्य श्रूयते स्मृतौ ॥**
**सत्यवादित्वसिद्ध्यर्थं शंतनोस्तदपीक्ष्यताम् ॥ १३३ ॥**

नन्वहरादिशब्दानां कालविशेषविषयत्वमेष्टव्यं विदुषोऽपि भीष्मस्य मरणार्थमुत्तरायणप्रतीक्षादर्शनात्तत्राऽऽह । **यत्त्विति** । भीष्मस्य युद्धमरणे प्राप्तेऽपि तदीयदेहारम्भकस्यादृष्टस्योत्तरायणपर्यन्तमवस्थानमपेक्ष्य पितृस्तुतिरत्र विवक्ष्यते महानुभावो हि शंतनुर्यत्तद्वचोबलाद्भीष्मः स्वच्छन्दमृत्युरभूदित्यर्थः । न तु फलाप्तौ गतिपर्वत्वेन कालविशेषो विवक्षितोऽतश्चायनेऽपि हि दक्षिण इतिन्यायविरोधादग्निर्ज्योतिरहः शुक्ल इत्यत्रापि देवतैव विवक्षिताऽऽतिवाहिकन्यायादित्यर्थः ॥ १३३ ॥

**अन्यथा कृतनाशः स्यादकृताभ्यागमस्तथा ॥**
**देवताग्रहणात्तस्माद्देवतैवार्चिरुच्यते ॥ १३४ ॥**

यदि श्रुतिस्मृत्योर्मार्गपर्वत्वेन कालविशेषोऽपेक्षितस्तदा मरणकालानियमाद्रात्र्यादौ मरणेऽप्यहरादिप्रतीक्षा स्यादन्यथा गतिहीनस्य फलित्वायोगात्ततश्च रात्र्यादौ मृतिप्रापकस्य कृतस्य नाशोऽहरादिप्रतीक्षाहेतोश्चाकृतस्याऽऽगतिरित्याह । **अन्यथेति** । अर्चिःशब्दार्थं निगमयति । **देवतेति** । यस्मादहरादिशब्दैरसंदिग्धं देवताग्रहणं तस्मादिति योजना ॥ १३४ ॥

**तस्मादेवंविदो धीरा अर्चिराद्यभिमानिनीम् ॥**
**क्रमेण देवतां यात्वा वैरिञ्चं यान्ति तत्पदम् ॥ १३५ ॥**

ते य इत्यादिवाक्यार्थमुपसंहरति । **तस्मादिति** । तच्छब्देन देवताग्रहोक्तिः ॥ १३५ ॥

श्रद्दधानास्तपस्यन्तः सत्यं ब्रह्म समाहिताः ॥
उपासते बहिर्ग्रामादर्चिस्ते संभवन्त्यतः ॥ १३६ ॥

पञ्चाग्न्युपासकानामुत्तरमार्गाप्तिमुपसंहृत्य ये चेत्यादिवाक्यार्थमुपसंहरति । **श्रद्दधाना इति** ॥ १३६ ॥

ब्रह्मणः स्थानमायान्ति यद्वा स्वाश्रमकर्मभिः ॥
संन्यासाद्ब्रह्मणः स्थानं तथाच स्मृतिशासनम् ॥ १३७ ॥

*सत्यशब्दस्य सूत्रविषयत्वमुक्त्वा तेन सत्यवदनं गृहीत्वा वाक्यस्यार्थान्तरमाह । **ब्रह्मण इति** । श्रद्धापूर्वकं स्ववर्णाश्रमविहितसत्यवदनाद्यनुष्ठानाद्ब्रह्मलोकमुत्तमाश्रमिणो गच्छन्तीत्यत्र मानमाह । **संन्यासादिति** । केवलादेव यथावदनुष्ठितादित्यर्थः ॥१३७॥

ततोऽहर्देवतां यान्ति शुक्लपक्षं ततः क्रमात् ॥
षण्मासांश्च ततो यान्ति ह्युत्तरायणलक्षणान् ॥ १३८ ॥
देवतां च ततो यान्ति देवलोकाभिमानिनीम् ॥
तत आदित्यमायान्ति वैद्युतं चापि भास्करात् ॥ १३९ ॥
ब्रह्मणा मनसा सृष्टो मानसः पुरुषस्ततः ॥
ब्रह्मलोकान्स नयति सोऽप्यभ्येत्याथ वैद्युतान् ॥ १४० ॥
ते तेषु ब्रह्मलोकेषु दीप्यमानाः पराः समाः ॥
ब्राह्ममानाः समा ग्राह्या ब्रह्मलोकेषु तच्छ्रुतेः ॥ १४१ ॥

तेऽर्चिषमित्यादि व्याख्यायार्चिषोऽहरित्यादि योजयति । **तत इत्यादिना** । अर्चिरादिपदोक्तप्रक्रियाग्रहार्थं क्रमादित्युक्तम् । **षण्मासा** । उत्तरायणमितिस्मृतिप्रसिद्ध्यर्थं हीत्युक्तम् । ततो ब्रह्मलोकादभ्येत्येति संबन्धः । वैद्युतान्विद्युद्देवताधीनान्विदुष इति यावत् । शैघ्र्यद्योतकोऽथशब्दः । तेषु वसन्तीति संबन्धः । समाशब्देनोक्तसंवत्सरग्रहे हेतुमाह । **ब्रह्मलोकेष्विति** । तच्छब्देन समोक्तिः ॥ १३८ ॥ १३९ ॥ १४० ॥ ॥१४१ ॥

सार्ष्टिसालोक्यसायुज्यव्यपेक्षा बहुगीरियम् ॥
समष्टिव्यष्टिभेदं वा व्यपेक्ष्य बहुवागियम् ॥ १४२ ॥

सत्यलोकस्यैक्याद्ब्रह्मलोकानित्यादिबहुवचनं कथमित्याशङ्क्याऽऽह । **सार्ष्टीति** । साधनतारतम्यात्फलतारतम्यं गृहीत्वा बहूक्तिरित्यर्थः । गत्यन्तरमाह । **समष्टीति** । ब्रह्मलोकस्य सूत्रदेहस्य सामान्यविशेषात्मना बहुरूपत्वात्तदपेक्षया बहूक्तिरित्यर्थः ॥ १४२॥

---

* अत्र पुस्तकद्वयेऽपि सत्योपास्तिरतः शब्दस्येति वर्तते परं तु किंचित्त्रुटितं स्यादथवा कानिचिदक्षराण्यधिकपतितानि स्युरिति मत्वा सत्यशब्दस्येत्यर्थानुकूलं स्थापितम् ।

**आवृत्तिर्न पुनस्तेषां यावदाभूतसंप्लवम् ॥**
**आभूतसंप्लवस्थानममृतत्वं हि भाष्यते ॥ १४३ ॥**

तेषामित्यादि व्याकरोति । **आवृत्तिरिति** । देवतानाममृतत्वश्रवणाद्यावदित्यादिविशेषणमयुक्तमित्याशङ्क्याऽऽह । **आभूतेति** ॥ १४३ ॥

**ऐकात्म्यधीसमुत्पत्तेर्यदि वा ब्रह्मलोकतः ॥**
**मुच्यन्ते न निवर्तन्ते यथा धूमादिमार्गगाः ॥ १४४ ॥**

अनावृत्तिश्रुतेर्मुख्यार्थं पक्षान्तरमाह । **ऐकात्म्येति** । तत्र वैधर्म्यदृष्टान्तः । **यथेति** ॥ १४४ ॥

**इमं मानवमावर्तमित्याद्यस्य विशेषणात् ॥**
**अत्रैव कल्पेऽनावृत्तिर्न त्वन्येष्वनिवारणात् ॥ १४५ ॥**

तेषामित्यादिवाक्ये क्रममुक्तिरापेक्षिकी वाऽनावृत्तिरिष्टेत्युक्तं तत्र द्वितीये गमकमाह । **इममिति** । अनावृत्तिशब्दार्थस्येममिति विशेषणाद्वर्तमानकल्पेऽनावृत्तिः कल्पान्तरेषु नैव तत्र निवारकाभावादित्यर्थः ॥ १४५ ॥

**देवयानः समासेन पन्था यत्नात्मपश्चितः ॥**
**व्याख्याऽथ पितृयाणस्य सम्यगारभ्यतेऽधुना ॥ १४६ ॥**

अथ ये यज्ञेनेत्यादिवाक्यस्य वृत्तमनूद्य तात्पर्यमाह । **देवयान इति** । समासेनाल्पग्रन्थेनेति यावत् । अर्चिरादिपर्वणां प्रत्येकमुपन्यासो यत्नः । देवयानोक्त्यनन्तरं पितृयाणोक्तेरवसरार्थोऽथशब्दः ॥ १४६ ॥

**देवादिज्ञानहीनेन येऽथ यज्ञेन सद्द्विजाः ॥**
**लोकाञ्जयन्ति दानेन सद्देशादिमता तथा ॥ १४७ ॥**
**निःशेषकल्मषध्वंसितपसा वाऽविपश्चितः ॥**
**मृतास्ते धूममायान्ति धूमाद्रात्रिं तमस्विनः ॥ १४८ ॥**
**रात्रेरपरपक्षं चदक्षिणायनदेवताम् ॥**
**मासेभ्यः पितृलोकं हि पितरो यत्र शेरते ॥**
**पितृलोकाच्च ते चन्द्रं यान्त्यन्नं तद्दिवौकसाम् ॥ १४९ ॥**

तात्पर्यमुक्त्वा वाक्यं योजयति । **देवादीति** । केवलसुकृतनिर्वर्तनानन्तरं लोकजयप्रसङ्गं दर्शयति । **अथेति**[२] । कर्माधिकारिणमाह । **सद्द्विजा इति** । दातव्यमिति यद्दानमित्यादिस्मृतेर्विशिष्टदेशकालपात्रविशिष्टमेव दानं लोकजयहेतुरिति सूचयति । **सद्देशादीति** । तपसो निःशेषकल्मषध्वंसित्वं **तपसा कल्मषं हन्तीति स्मृतेर्मन्तव्यम्** । अविपश्चित इतिच्छेदः । ते धूममित्यादेरर्थमाह । **मृता इति** । दक्षिणायनदेवताम्[३]इत्युक्तत्वाद्धूमादावपि देव-

---

१ क. °ख्यार्थप° । २ क. ख. °ति । अर्थित्वादिति विशेषणं क° । ३ क. ख. °ता इत्यु° ।

ताग्रहः । पितृलोकस्य देवतां व्यावर्तयति । **पितर इति** । तच्छब्दश्चन्द्ररूपपरामर्शार्थः ॥ १४७ ॥ १४८ ॥ १४९ ॥

**चन्द्रं प्राप्यान्नभावं च ते यतस्तत्र संस्थिताः ॥**
**असकृद्भक्षयन्त्येतानाप्याय्याऽऽप्याय्य सोमवत् ॥ १५० ॥**

ते चन्द्रमित्यादेरर्थमाह । **चन्द्रमिति** । अन्नभावं च यान्तीति संबन्धः । तानित्यादि व्याचष्टे । **यत इति** । यथर्त्विजो यज्ञे चमसस्थं सोममाप्याय्याऽऽप्याय्य भक्षयन्ति तथा पितृलोकस्था देवाश्चन्द्रप्राप्तान्कर्मिणः पुनराप्याय्य यतो भुञ्जतेऽतो युक्ता तेषामन्नतेत्यर्थः ॥ १५० ॥

**पक्षे शुक्ले तमाप्याय्य कृष्णे तं भक्षयन्त्यथ ॥ १५१ ॥**
**भोगसाधनभावश्च भक्षयन्तीति भण्यते ॥**
**न त्वभ्यवहृतिर्न्याय्या वेदवर्त्मनि तिष्ठताम् ॥ १५२ ॥**

दृष्टान्तं विधान्तरेण विवृणोति । **पक्ष इति** । आप्यायनभक्षणयोः पौनःपुन्यमथशब्दार्थः । कर्मिणश्चन्द्रं प्राप्ता देवैर्भक्ष्यन्ते चेदनर्थायैव तत्प्राप्तिरिति प्राप्तमननुष्ठानमित्याशङ्क्य भाक्तं वाऽनात्मवित्त्वादितिन्यायेनाऽऽह । **भोगेति** । श्रौतं भक्षणं मुख्यमेव किं न स्यात्तत्राऽऽह । **न त्विति** । तत्र हेतुः । **वेदेति** । तिष्ठतां सत्त्वाधिकानामहिंसादिप्रवणानामिति यावत् ॥ १५१ ॥ १५२ ॥

**यदा तूपचितं कर्म पर्यवस्यति भोगतः ॥**
**तेषामथैतमध्वानमावर्तन्ते यथागतम् ॥ १५३ ॥**
**आकाशमनुनिष्पद्य वायुमायान्त्यभोगिनः ॥**
**वायोर्वृष्टिमवाप्याथ वृष्टेश्च पृथिवीं ततः ॥**
**अन्नभावं पृथिव्याऽतस्ते समायान्ति भूमिगाः ॥ १५४ ॥**

तेषां यदेत्यादि व्याकरोति । **यदा त्विति** । कृतात्ययेऽनुशयवानिति न्यायादनुशयस्याऽऽगतिहेतुत्वं सूचयति । **अथेति** । तत्र तत्राऽऽकाशादौ भोगप्रसङ्गं प्रत्याह । **अभोगिन इति** । व्रीह्यादिभावात्पूर्वमाकाशादौ नातिचिरेणेति न्यायं सूचयितुमथशब्दः । चकारः साभाव्यापत्तिन्यायसमुच्चयार्थः । अन्नभावो व्रीह्यादिसंश्लेषमात्रमन्याधिष्ठिते पूर्ववदभिलापादिति न्यायात् । सहार्थे तृतीया । सा हि व्रीह्यादिभावेन परिणता तया सह कर्मिणोऽपि वृष्टिरूपेण तत्प्राप्त्यनन्तरं तत्र संश्लिष्यन्ते ततश्चातिकृच्छ्राच्छरीरं लभन्तेऽतो वै खलु दुर्निष्प्रपतरमिति श्रुतेरित्यर्थः ॥ १५३ ॥ १५४ ॥

**घटीयन्त्रवदश्रान्ता एवमेव पुनः पुनः ॥**
**परिवर्तन्ते संसारे कर्मवायुसमीरिताः ॥ १५५ ॥**

---

१ ख. 'प्रयत्नवतामि' ।

एवमित्यादेरर्थमाह । घटीयन्त्रवदिति । न हि वैदिका वेदमूर्तयो वेदवत्प्रयुञ्जाना लौकिकैरुपालभ्येरन् ॥ १९९ ॥

दक्षिणस्य पथो व्याख्या यथावदनुवर्णिता ॥ १५६ ॥
यथोक्तलक्षणौ ये तु पन्थानावुत्तरेतरौ ॥
न विदुस्ते भवन्तीह कीटाद्या दुःखभोगिनः ॥ १५७ ॥

अथेत्यादि वृत्तानुवादेनावतार्य व्याकरोति । दक्षिणस्येत्यादिना ॥१९६॥१९७॥

नाऽऽद्रियन्त इदं ज्ञानमुदङ्मार्गाप्तिसाधनम् ॥
कर्म वा पितृयाणाप्तौ ते कीटाद्यामियुर्गतिम् ॥ १५८ ॥

मार्गद्वयाज्ञानेऽपि तत्प्राप्तिहेत्वोर्ज्ञानकर्मणोः सत्त्वे कथं कीटाद्याप्तिरित्याशङ्क्य विद्याकर्मणोरिति तु प्रकृतत्वादिति न्यायेनाऽऽह । नेत्यादिना ॥ १९८ ॥

गोमयाद्युद्भवाः कीटाः पतङ्गाः शलभास्तथा ॥
दंशाश्च मशकाश्चैव दन्दशूकाः सपन्नगाः ॥ १५९ ॥

कीटादिपदानामपुनरुक्तमर्थमाह । गोमयादीति ॥ १९९ ॥

यतिथ्यामिति यः प्रश्नः स पुंजन्मोक्तितो गतः ॥
तदनन्तरमेवोक्ता व्यावृत्तिश्च पथोर्द्वयोः ॥ १६० ॥

नन्वत्र पञ्च प्रश्ना निर्णेतव्यत्वेन प्रक्रान्तास्तेषां निर्णयो नेह कृतस्तथाच किमिदमकाण्डताण्डवमत आह । यतिथ्यामिति । षष्ठाग्न्याप्त्यनन्तरं केचिदर्चिर्गच्छन्ति केचिद्धूममिति विप्रतिपत्त्याऽऽद्यप्रश्नस्य निर्णीतत्वमाह । तदनन्तरमिति ॥ १६० ॥

आकाशाद्यभिसंभूत्या पुनरावर्तनं गतम् ॥
देवयानं च यत्कृत्वा पितृयाणं च लभ्यते ॥ १६१ ॥
साधनं तदपीहोक्तं ज्ञानकर्मस्वलक्षणम् ॥
लोकस्यापूरणे हेतुः समाप्तावुदितः स्फुटः ॥ १६२ ॥

द्वितीयं प्रश्नं प्रत्याह । आकाशादीति । पञ्चमप्रश्नस्य निर्णीतत्वप्रकारमाह । देवयानं चेति । तृतीयप्रश्नस्योत्तरमाह । लोकस्येति ॥ १६१ ॥ १६२ ॥

कीटादीनामगमनाद्गतानां चाऽऽगतेस्तथा ॥
एवं पञ्चापि निर्णीताः प्रश्ना ये प्राक्प्रचोदिताः ॥ १६३ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके षष्ठाध्यायस्य
द्वितीयं ब्राह्मणम् ॥ २ ॥

उक्तमेव प्रकटयति । **कीटादीनामिति** । संयमने त्वनुभूयेत्यादिन्यायस्तथाशब्दार्थः । ब्राह्मणमुपसंहरति । **एवमिति** ॥ १६३ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां षष्ठाध्यायस्य
द्वितीयं ब्राह्मणम् ॥ २ ॥

**श्लोकानामादितः समष्ट्यङ्काः—१०९३६**

---

अथ तृतीयं ब्राह्मणम् ।

---

**वित्तं विना न सिद्धिः स्याद्दृष्टादृष्टार्थकर्मणः ॥**
**यतोऽतः कर्म मन्थाख्यं तादर्थ्येनाभिधीयते ॥ १ ॥**

ज्ञानकर्मणोर्गतिरुक्ता संप्रत्युत्तरस्य ब्राह्मणस्य तात्पर्यमाह । **वित्तमिति** । तादर्थ्येन वित्तार्थत्वेनेति यावत् ॥ १ ॥

**पितुर्लोक्यो यथा पुत्रः कर्मणेहोपजायते ॥**
**तादृक्पुत्रार्थिनः कर्म त्वेषामित्यादिनोच्यते ॥ २ ॥**

पुत्रमन्थब्राह्मणस्य तात्पर्यमाह । **पितुरिति** । यथाशब्दो यादृगर्थः । इहेति विद्यादशोक्तिः । कर्मणेत्यत्र येनेत्यध्याहारः । कर्मेत्यत्रापि तच्छब्दो द्रष्टव्यः ॥ २ ॥

**यः स्यात्कामग्रहग्रस्तो वित्तापत्योद्भवं प्रति ॥**
**तं प्रत्येवेति विज्ञेयं कर्मेदं न त्वकामिनम् ॥ ३ ॥**

अथात्र शास्त्रे मुमुक्षोरधिकारादिदमपि कर्मद्वयं तं प्रति युक्तमत आह । **यः स्यादिति** । स यः कामयेतेत्युपक्रमान्मुमुक्षोश्च वित्तापत्योद्भवकामानामभावादिति भावः ॥ ३ ॥

**प्राप्नुयां सुमहद्वित्तमिति यः कामयेत ह ॥**
**इत्युक्त्वाऽवाप्तवित्तस्य नेदं कर्मेति गम्यते ॥ ४ ॥**

ब्राह्मणद्वयतात्पर्यमुक्त्वा स य इत्यादि व्याचष्टे । **प्राप्नुयामिति** । यथोक्तकामनाया लोकप्रसिद्धत्वद्योतनार्थो निपातः । तस्येदं कर्म विधित्सितमिति शेषः । वित्तार्थिनं प्रति कर्म ब्रुवतो वाक्यस्याभिप्रायमाह । **इत्युक्त्वेति** ॥ ४ ॥

**महत्त्वमात्मनोऽत्यर्थं यो वा कामयते गृही ॥**
**महत्ता न विना वित्तं कर्मातो वित्तसिद्धये ॥ ५ ॥**

महच्छब्दस्यार्थान्तरं गृहीत्वा विधान्तरेण वाक्यं योजयति । **महत्त्वमिति** । तस्येदं कर्मेति शेषः । महत्त्वार्थिनश्चेदिदं कर्म तर्हि वित्तार्थिनस्तदितिप्रतिज्ञाहानिस्तत्राऽऽह ।

**महत्तेति** । ऐश्वर्यं हि महत्त्वं न च तद्वित्तं विना लभ्यं तथाचार्थोत्तत्सिद्धिरिह फलतीति न प्रतिज्ञाहानिरित्यर्थः ॥ ५ ॥

**कालो विधीयते चास्य मन्थाख्यस्येह कर्मणः ॥**
**श्रुत्योदगयनाद्युक्त्या कर्मसिद्धौ प्रयत्नतः ॥ ६ ॥**

उदगयन इत्यादिवाक्यतात्पर्यमाह । **काल इति** । इह गृहिणि वित्तार्थिनीति यावत् । काले कर्म विधीयते[1] नाकाल इति न्यायमाश्रित्य कर्मण इत्युक्तम् । तद्विधिफलमाह । **कर्मेति** । प्रयत्नत इत्यभ्यासं दर्शयति ॥ ६ ॥

**प्रार्थनीयः पुरा कालो विशुद्धिश्चाऽऽत्मनस्ततः ॥**
**द्रव्याण्योषधयश्चैव देशश्च तदनन्तरम् ॥ ७ ॥**

यस्मिन्कस्मिंश्चित्कालादौ कर्माऽऽरभ्यानन्तरं विशिष्टकालाद्यनुसंधानेन निर्वर्तनमा[2]शङ्क्याऽऽह । **प्रार्थनीय इति** । पयोघृतादीनि द्रव्याणि । ओषधयो व्रीहियवाद्याः॥७॥

**कालादीनां गुणानां च कर्मण्यस्मिन्समुच्चयः ॥**
**न विकल्पः समृद्धिः स्यात्कर्मणोऽस्य समुच्चितौ ॥ ८ ॥**

देशादीनामन्यतमसंपत्त्याऽपि कर्मारम्भसंभवान्न सर्वं पूर्वं निरूप्यमित्याशङ्क्याऽऽह । **कालादीनामिति** । शुद्धिश्रद्धादयो गुणाः । विकल्पेऽपि का हानिरित्याशङ्क्य समुच्चयस्वीकारफलमाह । **समृद्धिरिति** ॥ ८ ॥

**कर्मणश्चास्य निष्पत्तौ विद्वत्ताऽपि समाश्रिता ॥**
**यतोऽतः सूत्रितं नेदं सूत्रकृद्भिर्यथोदितम् ॥ ९ ॥**

अग्निहोत्रादिवदिदं कर्म वैदिकं चेत्किमिति कल्पसूत्रकारैर्न सूत्रितमित्याशङ्क्याऽऽह । **कर्मणश्चेति** । पूर्वोक्तकालवदित्यपेरर्थः ॥ ९ ॥

**यो ह वै ज्येष्ठमित्युक्त्या विद्वत्ता या पुरोदिता ॥**
**तस्यां सत्यामिदं कर्म ज्येष्ठायेत्यादिलिङ्गतः ॥ १० ॥**

कीदृशी विद्वत्ता तत्रोपयुक्तेति तत्राऽऽह । **यो हीति** । प्रकृतकर्मसमवेतमन्त्रसामर्थ्यात्प्राणविदो यथोक्तं कर्माधिगतमित्यर्थः ॥ १० ॥

**भूमिशय्या पयःपानं ब्रह्मचर्यं च वाग्यमः ॥**
**उपसद्व्रतमेतत्स्यादमावास्येति लिङ्गतः ॥ ११ ॥**

उपसद्व्रती भूत्वेत्यत्र किं तदुपसत्सु व्रतं तत्राऽऽह । **भूमीति** । तत्र गमकमाह । **अमावास्येतीति** । उदगयनेऽमावास्यायां दीक्षित्वा पूर्वपक्षस्येत्यादिश्रुत्यन्तरादमावास्यायां च ब्रह्मचर्यादेः साग्निविषये प्रसिद्धत्वादुपसद्व्रतमित्यत्र चतुष्टयमिष्टमित्यर्थः॥ ११॥

---

१ क. ख. 'ते न का' । २ ख. निवर्त' ।

**अग्निमित्येकवचनात्तथैवोल्लेखनादितः ॥**
**न मुख्योपसदामत्र संभवोऽस्तीति गम्यते ॥ १२ ॥**

उपसद एव व्रतमिति व्युत्पत्तेर्नोपदिष्टचतुष्टयग्रहणमित्याशङ्क्याऽऽह । **अग्निमितीति** । अग्निमुपसमाधायेति श्रुतेरेकाग्निसंबद्धमेतत्कर्मोपसदस्तु ज्योतिष्टोमादौ प्रवर्ग्याहे श्रूयमाणास्त्रेताग्निगामिन्यस्तथोल्लेखनपरिसमूहनादिसंबद्धमिदं कर्म न चोपसदां तत्संभवस्तस्मात्तासामत्रासंभवादुपसत्सु व्रतमित्येव व्युत्पत्तिरित्यर्थः ॥ १२ ॥

**ताम्रं नौदुम्बरं ग्राह्यमिध्मैस्तस्य विरोधतः ॥**
**वानस्पत्यमतो ग्राह्यं कर्मण्यौदुम्बरं श्रुतौ ॥ १३ ॥**

विकल्पवाक्ये श्रुतमौदुम्बरं ताम्रमिति केचित्तान्प्रत्याह । **ताम्रमिति** । औदुम्बर इध्म इतिशेषविरोधं हेतुमाह । **इध्मैरिति** । कीदृगौदुम्बरं तर्हि ग्राह्यं तत्राऽऽह । **वानस्पत्यमिति** ॥ १३ ॥

**ग्राम्याणि दश धान्यानि फलपुष्पाणि सर्वतः ॥**
**अप्रमादकराणीह भक्ष्यमेध्यानि यानि च ॥ १४ ॥**

सर्वौषधमित्यादेरर्थमाह । **ग्राम्याणीति** । सर्वतः सर्वाणीति यावत् । मदकराणि फलानि व्यावर्तयति । **अप्रमादेति** । इह भक्षणे सतीति यावत् । लशुनादिव्यावर्त्यमाह । **भक्ष्येति** । तान्यस्मिन्कर्मणि ग्राह्याणीति शेषः ॥ १४ ॥

**दशेति नियमार्थं स्यान्न ततोऽन्यनिषेधने ॥**
**भूरिदोषोपदुष्टत्वात्परिसंख्याविधेरिति ॥ १५ ॥**

वाक्यशेषाद्दशेति विशेषणं तस्य तात्पर्यमाह । **दशेतीति** । नियमस्य गणितद्रव्यग्रहे तात्पर्यं नान्यनिवृत्तौ तदधिकग्रहेऽपि विशेषणमविरोधीति भावः । अन्यनिवर्तकपरिसंख्यार्थमेव विशेषणं किं न स्यात्तत्राऽऽह । **भूरीति** । श्रौतसर्वविशेषणत्यागोऽश्रुतान्यनिवृत्तिस्वीकारः—

> "व्रीहयश्च यवाश्चैव गोधूमा अणवस्तिलाः ।
> प्रियंगवोऽभ्युदाराश्च कोरदूपाः सचीणकाः ॥
> माषा मुद्गा मसूराश्च निष्पावाः सकुलत्थकाः ।
> आढक्यश्चणकाश्चैव श्यामाः सप्तदश स्मृताः ॥
> इत्येता ओषधीनां तु ग्राम्याणां जातयः स्मृताः ।
> ओषध्यो यानकाश्चैव ग्रामारण्याश्चतुर्दश" ॥

इत्यादिस्मृतिविरोधश्चेतिबहुदोषदुष्टत्वादत्र परिसंख्यायोगान्नियम एवेत्यर्थः । इतिशब्दो नियमनिगमनार्थः ॥ १५ ॥

**कंसाद्याकारसिद्ध्यर्थं कंसाद्युक्तिरिहोच्यते ॥**
**तण्डुलान्फलपुष्पाणि पिष्ट्वा पात्रे निधापयेत् ॥ १६ ॥**
**दध्ना च मधुना पिष्टं सम्यगालोड्य पात्रगम् ॥**
**स्थापयेत्कृतरक्षं सच्छुचौ देशे प्रयत्नतः ॥ १७ ॥**

विकल्पवाक्यस्य तात्पर्यमाह । **कंसादीति** । इहेति पात्रमुच्यते ।आकारे विकल्प आकारिणि त्वौदुम्बरे नियम इति भावः । इति संभृत्येत्यस्य तात्पर्यमाह । **तण्डुलानिति** । आलोड्य खजकेन मथित्वेति यावत् । प्रयत्नतः कृतरक्षमिति संबन्धः । रक्षाकरणं काकश्वाद्युपघातपरिहारः ॥ १६ ॥ १७ ॥

**परीत्यादिगिरा चात्र देशसंस्कार उच्यते ॥**
**संस्कृते भूप्रदेशेऽथ ह्यग्निं संस्थापयेद्गृही ॥ १८ ॥**

परिसमुह्यादेस्तात्पर्यमाह । **परीत्यादीति** । परिसमूहनोपलेपनोल्लेखनोद्धारणाभ्युक्षणलक्षणो देशसंस्कारः । अत्रेति प्रकृतवाक्योक्तिः । अग्निमुपसमाधायेत्यस्यार्थमाह । **संस्कृत इति** । भूसंस्कारस्याग्निप्रतिष्ठां प्रति हेतुत्वं सूचयति । **अथेति** । एतच्च गृह्यप्रसिद्धं ग्राह्यमिति हिशब्दार्थः ॥ १८ ॥

**लेपनादि च कर्तव्यं कृतपूर्वेऽपि तद्विधेः ॥**
**इति कातीयवचनमदृष्टार्थत्वकारणात् ॥ १९ ॥**

ननु देशशुद्धिं निरूप्याऽऽरब्धत्वात्कर्मणः शुद्धे देशे पुनः संस्कारो नोपयुज्यते तत्फलस्य सिद्धत्वादत आह। **लेपनादीति** । दृष्टार्थतया कृतशोधनेऽपि देशे लेपनादि कर्तव्यमिति कात्यायनप्रणीतं वाक्यमुपलभ्यते परिसमुह्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्येत्यादि । तथाच परिसमूहनादिविधेर्देशोदिविधिवददृष्टार्थत्वात्तत्कार्यता। द्विविधा हि शुद्धिर्दृष्टादृष्टभेदात्तत्राऽऽद्या प्रागेव प्रयोगादृते विधेः सिद्धा द्वितीया तु वैधीति तादर्थ्येन परिसमूहनादि विधिना कर्तव्यमित्यर्थः ॥ १९ ॥

**पाकयज्ञविधानेन संस्कृत्याऽऽज्यं यथाविधि ॥**
**पुंसा हस्तादिनक्षेण मन्थमानीय सिद्धये ॥ २० ॥**
**खजकेनैकधीकृत्य मन्थद्रव्यमतः परम् ॥**
**आवापस्थान आज्यस्य हुत्वा नित्याहुतीस्ततः ॥ २१ ॥**
**यावन्त इत्युपक्रम्य मन्त्रैराज्यं यथाक्रमम् ॥**
**हुत्वा हुत्वा च मन्थेऽथ संस्रवं प्रक्षिपेन्मुहुः ॥ २२ ॥**

परिस्तीर्याऽऽवृतेत्यादेरर्थमाह । **पाकयज्ञेति** । ब्रह्मासनास्तरणप्रणीतासादनपरिस्तरणादि यथोपदेशं कृत्वा निरूप्याऽऽज्यमधिश्रित्य पर्यग्नि कुर्यादित्युक्तस्थालीपाकप्रक्रिययाऽऽज्यं संस्कृत्य स्रावप्रतापादिद्वारा जुहुयादित्यर्थः । पुंसेत्यादेरर्थमाह । **पुंसेति** ।

नक्षत्रनियमे हेतुमाह । **सिद्ध्य इति** । सा हि तत्साध्यवित्तसिद्धावुपयुक्ताऽन्यथा पुंसेत्यादिश्रुतिविरोधादित्यर्थः । खजकेन प्रथमेन मथेति यावत्[1] मन्थद्रव्यमग्नेरात्मनश्च दक्षिणतः स्थापयेदिति शेषः । जुहोतेरर्थमाह । **अतः परमिति** । आवापस्थानमाहुति-विशेषप्रक्षेपदेशः । हुत्वा संस्रवं प्रक्षिपेदिति संबन्धः । नित्याहुतीरित्याघारावाज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्तं स्विष्टकृच्चेत्येवंलक्षणा विवक्षिताः । यावन्त इत्यादेस्तात्प-र्यमाह । **तत इति** । भो जातवेदस्त्वदधीना यावन्तो देवा वक्रमतयः सन्तो मम पुरुष-स्यार्थान्प्रतिबध्नन्ति तेभ्योऽहमाज्यभागं त्वय्यर्पयामि ते च तेन तृप्ता भूत्वा सर्वैरपि पुरुषार्थैर्मां तर्पयन्तु । अहं त्वदधीनोऽर्पित इत्याद्यमन्त्रस्यार्थः । जातं जातं वेत्तीति वा जाते जाते विद्यत इति वा जातवेदाः । या देवता कुटिलधीर्भूत्वा सर्वस्याहमेव धारयि-त्रीति मत्वा त्वामाश्रित्य वर्तते तां सर्वसाधनीं देवतामहं घृतस्य धारया यजे स्वाहेति पूर्ववदेष द्वितीयमन्त्रार्थः । संस्रवं स्रुवावलिप्तमाज्यं चकारोऽवधारणार्थस्तिङा संबध्यते होमद्वयापेक्षया वक्ष्यमाणहोमेषु विशेषार्थोऽथशब्दः ॥ २० ॥ २१ ॥ २२ ॥

**स्वाहाकारावसानाः स्युर्मन्त्राः सर्वे यथोदिताः ॥ २३ ॥**
**मन्त्रद्वयेन ज्येष्ठादौ होमः कार्यो विजानता ॥**
**अग्न्यादावेकशः कार्यो यावन्मन्थावमर्शनम् ॥ २४ ॥**

मन्त्रपरिमाणं ज्ञापयति । **स्वाहेति** । यद्विवक्षयाऽथशब्दस्तं दर्शयति । **मन्त्रेति** । विजानता यथोक्ते कर्मण्युपदेशवतेत्यर्थः । अग्न्यादावित्यग्नये स्वाहेत्यस्याऽऽदौ रेतसे स्वाहेति मन्त्रस्तस्मिन्निति यावत् । **उक्तं च भाष्ये** रेतस इत्याद्यारभ्यैकैकामाहुतिं हुत्वे**त्यादि** ॥ २३ ॥ २४ ॥

**अथ स्विष्टकृदन्तेऽस्मिन्होमानन्तरमेव तत् ॥**
**द्वितीयेन मथाऽऽलोड्य ह्यथाभिमृशति पाणिना ॥ २५ ॥**

अथैनमित्यत्राप्यथशब्दार्थमाह । **अथेति** । अस्मिन्होमे सत्यवसाने स्विष्टकृद्धोमः कर्तव्य इति यावत् । उक्तमेवाथशब्दार्थं स्फुटयति । **होमेति** । अपरयेत्यादिभाष्यार्थ-माह । **तदिति** । मन्थद्रव्यमिति यावत् । दधिमधुभ्यां सह प्रथमेन मथा यदालोडन-मुक्तं तद्वदिति हिशब्दार्थः । व्यादाय स्वपितीतिवदवमर्शानन्तर्यमालोडनस्य व्यावर्तयति । **अथेति** ॥ २५ ॥

**भ्रमसीत्यादिना मन्थं स्मरंस्तद्देवतां हृदा ॥**
**भ्रमसि प्राणभूतस्त्वं न ह्येकत्रावतिष्ठसे ॥ २६ ॥**

तन्मन्त्रमवतारयति । **भ्रमसीत्यादिनेति** । ज्ञातदेवताकं मन्त्रानुष्ठानं फलवदिति

---

1 ख. 'मं वि' ।

मत्वाऽऽह । **स्मरन्निति** । कथं मन्थद्रव्यं भ्रमदसीत्यभिमृश्यते न हि तस्याचेतनस्य स्वतो भ्रमणं संभवति तत्राऽऽह । **भ्रमसीति** ॥ २६ ॥

**ज्वलज्ज्वाज्वल्यमानस्त्वं जठरस्थान्नपाककृत् ॥**
**पूर्णं च सर्वतोव्यापि सर्वत्रानवखण्डितम् ॥ २७ ॥**

कथं तर्हि ज्वलदसीत्युच्यते न हि प्राणस्य चलनात्मकस्य ज्वलनमस्ति तत्राऽऽह । **ज्वलदिति** । कुतस्तर्हि परिच्छिन्नस्य पूर्णत्वं तत्राऽऽह । **पूर्णं चेति** । व्यापित्वं ब्रह्मरूपेण साधयति । **सर्वत्रेति** ॥ २७ ॥

**प्रस्तब्धोऽसि स्थिरत्वाच्च वियद्वन्न विकम्पसे ॥ २८ ॥**
**सर्वतोऽपरिपन्थित्वात्सर्वैश्चाप्यनुकूलतः ॥**
**त्वमेकशफमित्युक्तं शफैका या त्वदात्मिका ॥ २९ ॥**

तथाऽपि प्राणाद्यात्मना क्रियावतो न प्रस्तब्धत्वमित्याशङ्क्य तदपि ब्रह्मरूपेणैवेत्याह । **प्रस्तब्धोऽसीति** । कथमनवच्छिन्नमविक्रियमेकशफमित्युच्यते न हि पादादिहीनस्य तदर्थत्वं तत्राऽऽह । **सर्वत इति** । प्राणरूपं हि मन्थद्रव्यं प्रतिबन्धकत्वाभावात्सर्वानुकूलत्वाच्च सर्वमपि जगदेकशफवदात्मन्यन्तर्भाव्यानवच्छिन्नतया स्थितमित्यर्थः । उक्तं संक्षिपति । **शफेति** । या खल्वेका शफा जगदात्मिका निखिलमपि जगत्तव पादभागत्वेन वर्तते न तु पादत्वेऽपि पर्याप्तमतोऽनवच्छिन्नस्त्वमित्यर्थः ॥ २८ ॥ २९ ॥

**उद्गात्रा हिंकृतं पूर्वं स्तोत्रमुद्गायता स्फुटम् ॥**
**यज्ञारम्भे तदा मध्ये गीयमानेऽथ सामनि ॥ ३० ॥**
**अपि हिंक्रियमाणोऽसि तथोद्गीथे विनिर्दिशेत् ॥**
**श्रावितोऽध्वर्युणा च त्वमग्नीधा च तथोत्तरम् ॥ ३१ ॥**

तथाऽपि कथमेकमेव हिंकृतं हिंक्रियमाणं चेत्याशङ्क्य कालभेदादित्याह । **उद्गात्रेति** । यत्पूर्वं हिंकृतं तदेव मध्ये हिंक्रियमाणमित्यत्र कर्मिणां संमतिं सूचयितुमथेत्युक्तम् । उक्तमर्थमुद्गीथमसीत्यादावतिदिशति । **तथेति** । कथमुद्गातृनिर्वर्त्यकर्मात्मकस्याध्वर्युप्रभृतिनिष्पाद्यकर्मात्मकतेत्याशङ्क्य सर्वात्मकत्वादित्याह । **श्रावित इति** ॥ ३० ॥ ॥ ३१ ॥

**आर्द्रे मेघोदरे विद्युत्संदीप्तोऽसीति कथ्यते ॥**
**विविधं त्वमेव भवसि यतोऽतो विभुरुच्यते ॥ ३२ ॥**
**सोमो वृष्ट्यादिभावेन प्रभुः प्रभवसीत्यतः ॥**
**आदित्यः प्राणभावेन ह्यन्नभावेन सोमता ॥ ३३ ॥**

आर्द्रे संदीप्तमित्यादि व्याकरोति । **आर्द्र इत्यादिना** । सोमादिभावेन प्रभवसीत्यतः प्रभुरुच्यत इति संबन्धः । ननु विभुत्वेनोक्तस्य कथमन्नमसीत्यादिनाऽन्नादिमात्रत्वं

तत्राऽऽह । **आदित्य इति ।** ज्योतिरसीत्याद्यपादेनान्नमसीत्यस्य च द्वितीयपादेनार्थ उक्त इति विभागः । अनवच्छिन्नस्यान्नादिभावोऽपि संभवति सर्वात्मकत्वादिति हिशब्दार्थः ॥ ३२ ॥ ३३ ॥

**अन्नान्नादद्वयं सर्वं त्वमेव तदपि प्रभो ॥**
**निधनं कारणत्वात्त्वं कारणे कार्यसंलयः ॥ ३४ ॥**

तदेव संक्षिप्याऽऽह । **अन्नेति ।** अन्नत्वान्न निधनत्वमन्नादत्वात्तद्भावेऽन्नत्वात्तदभावोऽपि स्यादित्याशङ्क्याऽऽह । **निधनमिति ।** तथाऽपि कथं निधनत्वं तत्राऽऽह । **कारण इति** ॥ ३४ ॥

**वागग्न्याद्यात्मसंपातात्संवर्गोऽसीति भण्यते ॥**
**इति मन्त्रः समाप्तोऽयमभिमर्शनकर्मणि ॥ ३५ ॥**

संवर्गोऽसीत्यस्यार्थमाह । **वागिति ।** अध्यात्मं प्राणरूपेण वागादीनामधिदैवं च वायुरूपेणाग्न्यादीनामात्मनि संहरणादित्यर्थः । इतिशब्दार्थमाह । **इतीति** ॥ ३५ ॥

**अथैनं मन्त्रपूतं सदुद्यच्छति यथोदितम् ॥**
**आमंसीत्यादिमन्त्रेण तदर्थाविष्कृतिस्त्वियम् ॥ ३६ ॥**

मन्थस्योद्यमनमुक्त्वा तन्मन्त्रमवतार्य तद्व्याख्यानं प्रतिजानीते । **अथेत्यादिना ।** अभिमर्शनानन्तर्यमथशब्दार्थः ॥ ३६ ॥

**आमंसीति भवेद्रूपं ज्ञानार्थस्यैव मन्यतेः ॥**
**लेट्याङ्पूर्वस्य संसिद्धं शब्लुकीत्यवधारणात् ॥ ३७ ॥**

पदार्थं वक्तुमादौ पदनिष्पत्तिप्रकारमाह । **आमंसीतीति ।** मन ज्ञान इत्यस्य धातोराङ्पूर्वस्य लेटि शपो लुकि सत्येतद्रूपं सिद्धं स्यादिति योजना । तत्र वैयाकरणप्रक्रियां प्रमाणयति । **इत्यवधारणादिति** ॥ ३७ ॥

**आसमन्ताद्विजानासि सूक्ष्मादि जगति स्थितम् ॥**
**ज्ञेयं यावज्जगत्किंचिदामंसीति ततः सदा ॥ ३८ ॥**

इदानीं पदार्थमाह । **आसमन्तादिति ।** यावत्किंचित्सूक्ष्मादि ज्ञेयमस्मिञ्जगति स्थितं तत्सर्वं सर्वतो यतः सदा जानास्यतो जगदामंसीति व्यवह्रियस इत्यर्थः ॥ ३८ ॥

**यथाऽस्मांस्त्वं विजानासि तथैव त्वां वयं सदा ॥**
**मन्यामहे वरीयांसं गुणवद्भ्यो गुणाधिकम् ॥ ३९ ॥**

मन्थस्य प्राणात्मतया सर्वज्ञत्वमुक्त्वाऽऽमंहि त इत्यस्यार्थमाह । **यथेति ।** वरीयांसमित्यस्य व्याख्या । **गुणवद्भ्य इति** ॥ ३९ ॥

**महि महत्त्वं जानीम आमोऽसि त्वं तथा प्रभो ॥**
**न त्वं पाकसमायोगात्फलवन्नाशमृच्छसि ॥ ४० ॥**

महीत्यस्यार्थमाह । **महीति** । आमंहीत्यखण्डं पदमादायार्थमुक्त्वा पदद्वयं गृहीत्वाऽऽममित्यस्यार्थमाह । **आमोऽसीति** । तथा महत्त्वज्ञानानुरूप्येणेति यावत् । आमत्वमुपपादयति । **न त्वमिति** ॥ ४० ॥

**आमोऽपर्कं त्वयि गतं महत्त्वमपि भण्यते ॥**
**यस्माद्राजाऽस्य सर्वस्य मां च देवः स सर्वदा ॥ ४१ ॥**
**राजानं च तथेशानं करोत्वधिपतिं च माम् ॥**
**उद्यम्यानेन मन्त्रेण भक्षयत्यथ भागशः ॥ ४२ ॥**

हिशब्दार्थमाह । **आम इति** । त्वयि व्यवस्थितं महत्त्वमपि त्वामिवाऽऽममविनाशि विद्वान्निश्चिनोतीत्यर्थः । महत्त्वस्याविनाशित्वमुपजीव्य स हीत्यादेरर्थमाह । **यस्मादिति** । जातितो राजत्वेऽपि शासनशक्तिराहित्यं क्वचिद्दृश्यते ततो विशेषमाह । **ईशानमिति** । ईशानशक्तिमतोऽपि राजकुमारादेरमात्यादितन्त्रत्वं दृष्टं ततो विशिनष्टि । **अधिपतिमिति** । अथैनमाचामतीत्यस्यार्थं वृत्तानुवादपूर्वकमाह । **उद्यम्येति** । उद्यमनफलं भक्षणमिति वक्तुमथेत्युक्तम् ॥ ४१ ॥ ४२ ॥

**गायत्र्या मधुमत्या च व्याहृत्या चेति पादशः ॥**
**ग्रासमश्नाति मन्थस्य ह्युत्तरेषु तथैव च ॥ ४३ ॥**

कथं भागशो भक्षणं तत्राऽऽह । **गायत्र्येति** । मन्थद्रव्यग्रासचतुष्टयं कृत्वा ग्रासमेकं गायत्रीप्रथमपादेन प्रथमया मधुमत्या व्याहृत्या चाऽऽद्यया भक्षयेत्तथैवावशिष्टेष्वपि ग्रासेषु भक्षणविधिः । द्वितीयं ग्रासं द्वितीयेन गायत्रीपादेन द्वितीयया मधुमत्या व्याहृत्या च द्वितीयया भुञ्जंस्तृतीयं ग्रासं तृतीयेन गायत्रीपादेन तृतीयया मधुमत्या तृतीयया व्याहृत्या चाश्नीयाच्चतुर्थं ग्रासं समस्तया गायत्र्या सर्वया मधुमत्या सकलया च व्याहृत्याऽभ्यवहरेदेवं समन्त्रकं भागशो भक्षणमित्यर्थः ॥ ४३ ॥

**सवितुस्तद्वरेण्यं स्याद्भर्गमन्नं महात्मनः ॥**
**ऋतायन्ते तथा वाता मधुवत्सुखकारिणः ॥ ४४ ॥**

तत्सवितुर्वरेण्यमित्यस्यार्थमाह । **सवितुरिति** । स्वरूपभूतं पदं वरेण्यं वरणीयं भजनीयमित्यत्र हेतुत्वेन भर्गशब्दार्थमाह । **भर्गमिति** । महात्मनः सवितुरिति संबन्धः । महात्मत्वं व्यापित्वं सर्वात्मत्वं सवितृत्वं सर्वप्रसवहेतुत्वं तत्साधकत्वम् । आद्यां मधुमतीं व्याचष्टे । **ऋतायन्त इति** । तथेत्यस्यार्थमाह । **सुखकारिण इति** ॥ ४४ ॥

**अनुद्वेगकरा हृद्या ऋतायन्ते वहन्ति च ॥**
**अमृतं मधु नद्योऽपि मदर्थं सर्वदा शुभम् ॥ ४५ ॥**

तदेव व्याकरोति । **अनुद्वेगेति** । प्रापणविषयमाह । **अमृतमिति** । चकारः

सुखकारित्वस्यामृतवहनेन समुच्चयार्थः । सिन्धवो नद्यस्ताश्च शुभं मध्वमृतं सर्वदा क्षरन्तीति संबन्धः ॥ ४५ ॥

**तृप्ता मोदामहे येन क्षरन्तीति क्रियापदम् ॥**
**अत्यर्थं मधुररसाः सन्तु ह्योषधयश्च नः ॥ ४६ ॥**

मधुक्षरणफलमाह । **तृप्ता इति** । प्रथमार्थे द्वितीयेत्यभिप्रेत्याऽऽह । **अत्यर्थमिति** । ओषधीनां मधुररसत्वं लोके प्रसिद्धमिति वक्तुं हिशब्दः ॥ ४६ ॥

**त्रिकमुच्चार्य भूः स्वाहेत्याहुतिं प्रक्षिपेन्मुखे ॥**
**त्रिकं त्रिकं तथोच्चार्य ह्युत्तरेष्वपि योजयेत् ॥ ४७ ॥**

उक्तार्थद्वयं भूः स्वाहेत्यनेन सह त्रिकं तदुच्चार्य व्याहृत्यन्ते प्रथमग्रासभक्षणमित्याह । **त्रिकमिति** । प्रथमाहुतिवद्द्वितीयतृतीयाहुती त्रिकं त्रिकमुच्चार्य कार्ये चतुर्थी तु सर्वमुच्चार्येति त्रिषु ग्रासेषु प्रयोगं जानीयादित्यर्थः । न्यायसाम्यार्थो हिशब्दः ॥ ४७॥

**देवस्य द्योतनवतो हृद्यं यच्चिन्तयेमहि ॥**
**मधु नक्तमथो रात्रिर्मधुरा दुःखहानिकृत् ॥ ४८ ॥**
**उषसो दिवसस्यापि माधुर्यं नोऽस्तु सर्वदा ॥**
**पार्थिवं च रजो लोको ह्लादकृन्मधुमांस्तथा ॥ ४९ ॥**
**द्युलोकः पितृलोकोऽथ पिता हि द्यौर्यतो मतः ॥**
**भुवः स्वाहेति मन्थस्य द्वितीयामाहुतिं क्षिपेत् ॥ ५० ॥**

भर्गो देवस्येत्यादौ भर्गपदस्य व्याख्यातत्वादवशिष्टं व्याचष्टे । **देवस्येति** । वरेण्यमित्युक्तमनुवदति । **हृद्यमिति** । यद्देवस्य हृद्यं पदं तच्चिन्तयेमहीति योजना । द्वितीयां मधुमतीं व्याकरोति । **मध्विति** । अप्यर्थो रात्रिशब्दादुपर्यथोशब्दः संबध्यते। **लोका** रजांस्युच्यन्ते । स इमाँल्लोकान्विचक्रम इति श्रुतिमाश्रित्याऽऽह । **रजो लोक इति** । नक्तादिदृष्टान्तार्थस्तथाशब्दः । पितृरूपा द्यौरित्यत्र हेतुमाह । **पिता हीति** । मतः श्रुताविति शेषः । इयं वै मातेति पृथिव्या मातृत्ववदितिदृष्टान्तार्थोऽथशब्दः । उक्तार्थगायत्रीद्वितीयपादं द्वितीयां च मधुमतीमुच्चार्य भुवः स्वाहेत्युक्त्वा द्वितीयामाहुतिं कुर्यादित्याह । **भुव इति** ॥ ४८ ॥ ४९ ॥ ५० ॥

**धियः प्रचोदयेद्यो न उद्यन्प्रज्ञेन्द्रियाणि च ॥**
**प्रचोदयतु नो देवः श्रेयसे सर्वदाऽऽत्मनः ॥ ५१ ॥**

गायत्रीतृतीयपादमादाय विभजते । **धिय इति** । यः सविता समुद्गच्छन्वर्तते सोऽस्माकं श्रेयसे ज्ञानानि तत्करणान्यस्मांश्च प्रेरयतु सर्वदेत्यर्थः ॥ ५१ ॥

**वनस्पतिस्तथा चन्द्रः सूर्यस्तु मधुरोऽस्तु नः ॥**
**गावो दीधितयः सन्तु मधुमत्यो दिशोऽथवा ॥ ५२ ॥**

तृतीयां मधुमतीं व्याचष्टे । **वनस्पतिरिति** । वनस्पतीनां चन्द्रो देवता **सोम** ओषधीनामिति श्रुतेस्तद्युक्तं तच्छब्देन तद्ग्रहणमित्यर्थः । तथाशब्दो मधुरोऽस्त्वितिसंबन्धार्थः । सूर्यादिग्रहादेव दीधितीनामपि ग्रहात्पुनरुक्तिमाशङ्क्य पक्षान्तरमाह । **दिश इति** ॥ ५२ ॥

**स्वः स्वाहेत्याहुतिक्षेपः समस्तां व्याहरेत्ततः ॥**
**सावित्रीं मधुमतीश्चैव तिस्रोऽपि व्याहृतीस्तथा ॥ ५३ ॥**
**चतुर्थीं प्रक्षिपेदेवमाहुतिं पूर्ववन्मुखे ॥**
**अहमेव जगत्सर्वं भूयासमिति निर्ब्रुवन् ॥ ५४ ॥**

उक्तार्थद्वयमुक्त्वा स्वः स्वाहेत्युच्चार्य तृतीयामाहुतिं जुहुयादित्याह । **स्वः स्वाहेति** । सर्वां चेत्यादेरर्थमाह । **समस्तामिति** । पूर्ववदित्युक्तत्वाच्चतुर्थ्यामाहुतौ गायत्र्याद्यतिरिक्तमन्त्राराहित्यमाशङ्क्याऽऽह । **अहमेवेति** । आहुतिं प्रक्षिपेदिति पूर्वेण संबन्धः ॥५३॥५४॥

**स्मार्तमाचमनं त्वन्ते प्रायत्यार्थमिहोच्यते ॥**
**अग्नेः पश्चिमतोऽथान्ते प्राक्शिराः संविशेत्ततः ॥ ५५ ॥**

अन्तत आचम्येत्यस्यार्थमाह । **स्मार्तमिति** । चतुर्थग्रासान्ते यदिहाऽऽचमनमुच्यते तन्नापूर्वं किंतु शुद्ध्यर्थम्—

"आचम्य प्रयतो नित्यमुभे संध्ये समाहितः ।
शुचौ देशे जपञ्जप्यमुपासीत यथाविधि" ॥

इत्यादिस्मृतिप्रसिद्धमेवात्रानूद्यत इत्यर्थः । पाणी प्रक्षाल्येत्यादेरर्थमाह । **अग्नेरिति** । अथेत्याचमनानन्तरभाविहस्तप्रक्षालनानन्तर्यार्थः । अन्त इति ग्रासचतुष्टयभक्षणे सतीत्यर्थः । ततो यावत्प्रातःसंध्यं व्रतस्थः शयीतेत्याह । **तत इति** ॥ ५५ ॥

**प्रत्यूषसि ततो भक्त्या ह्यादित्यमुपतिष्ठते ॥**
**वक्ष्यमाणेन मन्त्रेण ह्युपासीत रविं सदा ॥ ५६ ॥**

प्रातरादित्यमित्यादेरर्थमाह । **प्रत्यूषसीति** । ततः शयनादुत्थाय बहिर्गत्वा प्रातःसंध्यामुपास्य भक्तिश्रद्धाभ्यामुदयसमये सवितुरुपस्थानं कुर्यादित्यर्थः । संध्योपासनस्य स्मृतिप्रसिद्ध्यर्थो हिशब्दः । तं मन्त्रमवतारयन्नुपस्थानस्वरूपमाह । **वक्ष्यमाणेनेति** । सदेति प्रत्यहमुदयशब्दो गृह्यते । आदित्योपासनस्यापि प्रसिद्धत्वार्थो हिशब्दः ॥५६॥

**एकपुण्डरीकमिति प्रधानत्वं विवक्षितम् ॥**
**एकशब्देन नो संख्या यथैकः श्वेतवाहनः ॥ ५७ ॥**

मन्त्रं व्याकरोति । **एकेति** । संख्याविषयत्वमाशङ्क्याऽऽह । **एकशब्देनेति** । तस्य प्रधाने प्रयोगाभावं शङ्कित्वाऽऽह । **यथेति** ॥ ५७ ॥

---

१ क. °ध्योपस्थान° ।

दिशां यद्वत्प्रधानस्त्वं मनुष्याणां तथा ह्यहम् ॥
भवेयं त्वत्प्रसादाद्धोः स्फीतः पुंभोगसाधनैः ॥ ५८ ॥

पदार्थमुक्त्वा वाक्यार्थमाह । दिशामिति । स्वकीयप्राधान्यवरपरिज्ञानयोग्यत्वार्थो हिशब्दः । तथाविधं स्वप्राधान्यं स्फुटयति । स्फीत इति ॥ ५८ ॥

यथेतमेत्याथाऽऽसीनः पश्चादग्नेः समाहितः ॥
तं हैतमिति यत्नेन वंशं जपति भक्तितः ॥ ५९ ॥

वंशजपमवतारयति । यथेतमिति । आदित्योपस्थानानन्तरं बहिर्देशाद्यथागतमागत्याग्नेः पश्चादासीनो यत्नतः समाहितो भक्त्या वंशं जपेदित्यर्थः ॥ ५९ ॥

तं हैतं मन्थं यत्नोक्तमुद्दालतनयः सुधीः ॥
उक्त्वाऽथ याज्ञवल्क्याय तं प्रोवाचाथ विस्मितः ॥ ६० ॥

तं हेत्यादि व्याचष्टे । तं हेति । प्राणोपास्त्यानन्तर्यमाद्यस्याथशब्दस्यार्थः । कर्मानुष्ठानानन्तर्यं द्वितीयस्याथशब्दस्यार्थः । उभयं कृत्वा विस्मितः सन्नुद्दालको याज्ञवल्क्याय मन्थमुपदिश्य पुनरुक्तवानित्यर्थः ॥ ६० ॥

मन्थं शुष्केऽपि यः स्थाणौ निषिञ्चेदुक्तसंस्कृतम् ॥
जायेरन्नेव तच्छाखाः प्ररोहेयुर्दलानि च ॥ ६१ ॥

किमुक्तवानित्यपेक्षायामपि य एनमित्यादेरर्थमाह । मन्थमिति ॥ ६१ ॥

यादृगर्थोऽस्य वचस उत्तरेष्वपि तादृशः ॥
चतुरौदुम्बरोक्त्यर्थो व्याख्यातः पूर्वमेव तु ॥
सुखाववोधतश्चैव स्वयमेव प्रतीयताम् ॥ ६२ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके षष्ठाध्यायस्य
तृतीयं ब्राह्मणम् ॥ ३ ॥

एतमित्याद्युत्तरवाक्येषु यथोक्तमतिदिशति । यादृगिति । चतुरौदुम्बरो भवतीत्यादिवाक्यव्याख्याप्रस्तावुक्तम् । चतुरिति । पूर्वमेवौदुम्बरे चमसे कंसे वेत्यत्रेत्यर्थः । किंच चतुरौदुम्बरादिवाक्यस्य निगदव्याख्यातत्वान्नाऽऽकाङ्क्षेत्याह । सुखेति । मन्थद्रव्यमौदुम्बरे पात्रे निक्षिप्य दध्यादित्रयाक्तं कृत्वा पूर्वोक्तविधानेनाऽऽज्याहुतीर्नित्याः संपाद्यानन्तराहुतिषु संपातं कुर्यादित्युक्तमेवेत्येवकारार्थः । चतुरौदुम्बरादिवाक्ये व्याख्यातृकृत्याभावे कथं तदर्थधीरित्याशङ्क्याऽऽह । स्वयमेवेति ॥ ६२ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां षष्ठाध्यायस्य
तृतीयं ब्राह्मणम् ॥ ३ ॥

श्लोकानामादितः समष्ट्यङ्काः—१०९९८

अथ चतुर्थं ब्राह्मणम् ।

---

**एषामिति नृबीजस्य स्तुतिरुक्त्या विवक्ष्यते ॥**
**प्रतिष्ठां कल्पयानीति यस्यां पुंस्त्वं प्रपद्यते ॥ १ ॥**

प्राणोपासकस्य वित्तार्थिनो मन्थाख्यं कर्मोक्त्वा तस्यैव विशिष्टपुत्रार्थिनः पुत्रमन्थोक्त्यर्थं ब्राह्मणान्तरमाह । **एषामिति** । एषामित्यारभ्य रेत इत्यन्तयोक्त्येति संबन्धः । स हेत्याद्यवतारयति । **प्रतिष्ठामिति** । यस्यां प्रतिष्ठितं रेतः पुंस्त्वमापद्यते तादृशीं प्रतिष्ठां कल्पयानीति प्रजापतिरीक्षितवानित्यर्थः ॥ १ ॥

**शुक्रं निषिक्तं यत्रेदं पुरुषत्वं निगच्छति ॥**
**प्रतिष्ठां तादृशीमीशः प्रजापतिरचीक्लृपत् ॥ २ ॥**

तद्व्याकरोति । **शुक्रमिति** ॥ २ ॥

**स्त्रियं ससर्ज तद्योग्यां मधुकाण्डे यथोदिताम् ॥**
**सृष्ट्वाऽथाधः प्रदेशे तामुपास्ते ग्राम्यधर्मतः ॥ ३ ॥**

स स्त्रियमित्यादि व्याचष्टे । **स्त्रियमिति** । तच्छब्दः शुक्रनिषेकार्थः । ततः पतिश्च पत्नी चाभवतामित्यत्र पत्नीशब्दोक्तां शतरूपामित्याह । **मधुकाण्ड इति** । तां सृष्ट्वेत्यादेरर्थमाह । **सृष्ट्वेति** । पशुकर्मयोग्यतानन्तर्यमथशब्दार्थः । उपास्तिप्रकारं कामशास्त्रोक्तं सूचयति । **ग्राम्येति** ॥ ३ ॥

**अपत्योत्पत्तये स्त्रीणामधोदेशं प्रजापतिः ॥**
**प्रागुपासितवान्यत्नादुपास्यं तेन तत्ततः ॥ ४ ॥**

तस्मादित्यादि व्याकरोति । **अपत्येति** । तेनापत्यार्थिना कामुकेनेति यावत् । शास्त्रीयक्रमाक्रमो यत्नः ॥ ४ ॥

**सोमाभिषवरूपत्वक्लृप्तयेऽथाधुनोच्यते ॥**
**एतं ग्रावाणवच्छिश्नमुदपारयदात्मनः ॥ ५ ॥**

स एतमित्यादेस्तात्पर्यमाह । **सोमेति** । अत्र मैथुनकर्मणि वाजपेयकल्पना क्रियते तत्र तदङ्गे प्रजननेन्द्रिये सोमाभिषवपाषाणदृष्टिरारोप्यते तेन पाषाणेन सामर्थ्यं पञ्चमेन्द्रियस्य काठिन्यमनेन वाक्येनोच्यत इत्यर्थः । वाजपेयकल्पनोपक्रमार्थोऽथशब्दः । उक्तेऽर्थे वाक्यं योजयति । **एतमिति** ॥ ५ ॥

**प्राश्वं कृत्वाऽथ तं शिश्नं यथैवाभिषवोपलम् ॥**
**एकीभावेन तं नार्या यत्नात्समुपवेशयेत् ॥ ६ ॥**

---

१ ख. °रमवतारयति । ए° ।

प्रजापतिः स्वीयं प्रजननेन्द्रियं पाषाणवत्कठिनं कृत्वा किमकरोदित्यपेक्षायामाह । **प्राञ्चमिति** । ऋजुतया दीर्घकरणमिह विवक्षितम् । उद्देश्ये 'कार्ये गौरवं यत्नः । नारीशब्दस्तदीयेन्द्रियविषयः । एकीभावो द्वयोर्मिथोमिश्रता ॥ ६ ॥

**तथाभूतेन ग्राव्णैतां स्त्रियमभ्यसृजन्मुहुः ॥**
**आत्मनः पुरुषार्थाय यथोक्तोपासनं भवेत् ॥ ७ ॥**

तेनेत्यादि व्याचष्टे । **तथेति** । किमर्थं पशुकर्मणि वाजपेयसंपादनं तत्राऽऽह । **आत्मन इति** । पुरुषार्थस्तु स यावानित्यादिना वक्ष्यते ॥ ७ ॥

**यस्यां प्रजननं पुंसा स्त्रियामभ्यन्तरीकृतम् ॥**
**तस्या वेदिरुपस्थः स्यादूर्वोरुपरि दर्शनम् ॥ ८ ॥**

तस्या वेदिरित्यादि व्याकुर्वन्नुपास्तिप्रकारमाह । **यस्यामिति** । विवक्षितमर्थमाह । **ऊर्वोरिति** । अवाच्ये देशे वेदिदर्शनं कार्यमित्यर्थः ॥ ८ ॥

**बर्हिस्तज्जानि लोमानि चर्माधिषवणे तथा ॥**
**चर्मेहाऽऽनडुहं पश्येत्सोमाभिषवसिद्धये ॥ ९ ॥**

लोमानीत्यादि व्याचष्टे । **बर्हिरिति** । अवाच्यदेशस्थलोमसु बर्हिर्दृष्टिस्तत्रत्ये चर्मण्यानडुहचर्मदृष्टिस्तथा मुष्कयोरुभयतःस्थितमांसपिण्डयोरधिषवणदृष्टिरनुष्ठेयेत्यर्थः । चर्मेत्युक्तं स्पष्टयति । **चर्मेति** । सोमाभिषवार्थं यदानडुहं चर्म क्रतौ प्रसिद्धं तदिह द्वितीयगुददेशोर्ध्वं चर्म पश्येदिति योजना ॥ ९ ॥

**फलके चाधिषवणे यथासंख्येन निर्दिशेत् ॥ १० ॥**
**यो योन्यन्तर्गतो देशः समिद्धश्चर्म निर्दिशेत् ॥**
**तद्देशमभितस्तौ यौ मुष्कौ तौ वृषणाविति ॥ ११ ॥**

अधिषवणे तथेत्युक्तं व्यनक्ति । **फलके चेति** । अधिषवणे हि सोमाभिषवफलके दक्षिणोत्तरे तद्दृष्टिर्मुष्कयोर्दक्षिणोत्तरवृषणयोरनुसंधेया तथा यथासंख्येन फलकदृष्टिं तयोरुपदिशेदित्यर्थः । समिद्धो मध्यत इत्यस्यार्थमाह । **यो योनीति** । योन्यन्तर्गते देशे वह्निदृष्टिः कार्येत्यर्थः । तौ मुष्कावित्यस्यार्थमाह । **चर्मेति** । योनिदेशमभितो यच्चर्म तदन्तर्वर्तिनौ यौ तौ मुष्कौ तौ वृषणाविति निर्दिशेत् । तयोरधिषवणदृष्टिरुक्तेत्यर्थः ॥ १० ॥ ११ ॥

**लोकः स्याद्वाजपेयेन यजमानस्य मानतः ॥**
**तावन्तं लोकमाप्नोति यावन्तं वाजपेयतः ॥ १२ ॥**

उपास्तिप्रकारमुक्त्वा फलोक्तिमवतारयति । **लोकः स्यादिति** । वाजपेयेन परि-

---

१ ख. विहित॰ ।

माणतो यावाँल्लोकः स्यात्तावानेतदुपासकस्यापीत्यर्थः । तामेव फलोक्तिं व्याकरोति । **तावन्तमिति** ॥ १२ ॥

**अन्नानि संभ्रियन्ते हि दश सप्त च भागशः ॥**
**वाजपेये क्रतावन्नकामस्य स विधीयते ॥ १३ ॥**

पशुकर्माङ्गेषु वाजपेयाङ्गाध्यासेऽपि कथं तत्र तदध्यासः साम्याभावादित्याशङ्क्य साम्यार्थं वाजपेयस्यान्नत्वं साधयति । **अन्नानीति** । सप्तदश प्राजापत्यान्पशूनालभत इति श्रुतेरसांकर्येण तत्तद्देवतोद्देशेन वाजपेयेऽन्नानि संपाद्यन्ते स च सर्वान्नकामस्य विधीयते स्वाराज्यभोज्यत्वेनान्नान्यतिरिक्तस्य तत्फलत्वात्तस्मादन्नात्मकः स इत्यर्थः॥ १३॥

**रेतसोऽन्नरसस्यैव यत्रान्नाहुतिरीक्ष्यते ॥**
**वाजपेयाभिसंपत्स्यान्मैथुनाख्यक्रतोरतः ॥**
**सामान्यादिति विज्ञेयं वाजपेयफलार्थिनाम् ॥ १४ ॥**

पशुकर्मणोऽपि तदात्मत्वमाह । **रेतस इति** । यत्र क्रतावन्नरसस्य रेतसोऽन्नरूपैवाऽऽहुतिरिष्यते तस्य मैथुनाख्यस्य योग्यत्वेनान्नत्वादस्मादेव सामान्यादस्मिन्कर्मणि वाजपेयसंपत्तिः स्यादित्यर्थः । यद्वा यस्मिन्पुरुषेऽन्नाहुतिरिष्टा तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वतीति श्रुतेस्तस्य पुंसो रेतो भुक्तान्नरसस्तस्यैव यस्मिन्कर्मणि हूयमानत्वं तस्य पूर्ववदन्नत्वात्तस्मिन्वाजपेयदृष्टिरित्यर्थः । उपास्तेः सर्वाधिकारित्वमाशङ्क्याऽऽह । **इति विज्ञेयमिति** । उक्तरीत्योपासनं वाजपेयानुष्ठानं विना तत्फलार्थिनामिति यावत् ॥ १४ ॥

**स्त्रीणां च सुकृतं वृङ्क्ते सर्वमावर्जयेच्छुभम् ॥**
**अथोपहासं यो विद्वान्यथोक्तमुपसेवते ॥ १५ ॥**

उपास्तेरधिकफलत्वमाह। **स्त्रीणां चेति**। यथोक्तं पशुकर्मणो वाजपेयसंपन्नत्वं विद्वानिति संबन्धः ॥ १५ ॥

**अनेवंविदुषः पुण्यं सुकृतं वृञ्जते स्त्रियः ॥**
**मैथुनोपनिषत्तत्त्वमेतद्ध स्माऽऽह भावितः ॥ १६ ॥**
**सर्वदैवाऽऽहुतीर्विद्वाञ्जुहोत्यश्नन्पः पिबन् ॥**
**उपगच्छन्स्त्रियं तद्वदारुणिर्गोत्रतः किल ॥ १७ ॥**

विद्याभावेऽपि रागातिरेकात्तत्कर्म कुर्वाणस्य प्रत्यवायं दर्शयति । **अनेवमिति** । एतद्धेत्यादि व्याचष्टे । **मैथुनेति** । तदेतत्कर्म वाजपेयसंपन्नं विद्वान्पुनः पुनस्तत्रैवानुसंधानवानश्नन्पिबन्नुपगच्छन्सर्वव्यापारेष्वाहुती रेतोरूपाः सर्वो[1] जन्तुः सदा जुहोतीत्येवं पश्यन्नारुणिराह स्मेत्यर्थः ॥ १६ ॥ १७ ॥

---

१ क. ख. सर्वो । २ ख. °र्थित्वमि° ।

**ब्राह्मणा जातिमात्रेण स्त्रीभिर्हृतशुभागमाः ॥**
**उक्तं विधिमजानन्तो म्रियन्ते मैथुने रताः ॥ १८ ॥**

किमुक्तवानित्यपेक्षायामाह । **ब्राह्मणा इति** । तस्मादविदुषामिदं कर्मातिगर्हितमिति भावः ॥ १८ ॥

**बह्वेतदिति विज्ञेयं प्रयोजनबहुत्वतः ॥**
**रेतः स्कन्दति यत्सुप्तौ जाग्रतो वाऽपि कामिनः ॥ १९ ॥**

प्राणोपासितुः श्रीमन्थं कृतवतो न यदाकदाचिद्भार्योपगतिरिति तदृतुकाले प्रतीक्ष्यमाणे प्रमादाद्रेतःपाते प्रायश्चित्तार्थं बह्वित्यादि तस्यार्थमाह । **बह्विति** । कथं बहुत्वं तत्राऽऽह । **प्रयोजनेति** । लोक्यपुत्रोत्पत्तिहेतुतया बहुफलत्वाद्रेतसो बहुत्वमित्यर्थः । स्वप्ने वा जागरे वा तत्कामातिरेकाद्यदपि रेतः स्यन्दते तदिति संबन्धः ॥ १९ ॥

**हस्तेनाऽऽलभ्य तद्रेतः पश्चाच्चाप्यनुमन्त्रयेत् ॥ २० ॥**
**यदद्य मेऽपतद्रेत ओषधीरसरच्च यत् ॥**
**अपोऽगच्छत्स्वयोनिं च तदहं भूय आददे ॥ २१ ॥**

तदभिमृशेदित्यादेरर्थमाह । **हस्तेनेति** । अनुमन्त्रणपूर्वकमाददीतेत्यपेरर्थः । यन्मेऽद्येत्यादि व्याचष्टे । **यदद्येति** ॥ २० ॥ २१ ॥

**अभिमर्शनस्य यो मन्त्रो ग्रहणस्य स एव तु ॥**
**पुनर्मामैतु तद्रेतो विज्ञानं तेज उच्यते ॥ २२ ॥**

अभिमर्शनस्य रेतसो ग्रहणस्य वा कथमत्र विभागस्तत्राऽऽह । **अभिमर्शनस्येति** । अभिमृष्टमभिमन्त्रितं च रेतो गृहीतं किमर्थमित्युक्ते ताद्विनियुक्तं विनियोजकमाह । **पुनरिति** । इन्द्रियशब्दार्थमाह । **तद्रेत इति** । तेजःशब्दं व्याचष्टे । **विज्ञानमिति** । इन्द्रियशब्दितं विज्ञानशब्दितं च तद्रेतो बहु भूगतं मामेवाऽऽगच्छतादित्यर्थः ॥ २२ ॥

**सौभाग्यं पुनरग्निः स्युः परिशिष्टाश्च देवताः ॥ २३ ॥**
**प्रकाशकत्वात्सर्वासां धिष्ण्याश्चाप्यग्नयो मताः ॥**
**गमयन्तु यथास्थानं देवा अग्न्यादयो मम ॥ २४ ॥**

पुनर्भग इत्यस्यार्थमाह । **सौभाग्यमिति** । भगं सौभाग्यं तत्पुना रेतोरूपेण बहिर्गतं मामेवाऽऽगच्छत्वित्यर्थः । अग्निरपि रेतोरूपेण बहिर्गतो मामेवाऽऽगन्तुमर्हतीत्याह । **अग्निरिति** । याश्च देवता लोकवेदसिद्धाः स्युस्ता मामेवाऽऽगच्छन्त्वित्याह । **स्युरिति** । पुनरित्यादेरर्थमाह । **प्रकाशकत्वादिति** । सर्वासां देवतानां प्रकाशकत्वादग्नयो देवताः सर्वास्पदत्वाद्धिष्ण्यास्ताः पुना रेतो भूगतं मम स्वस्थानं गमयन्त्वित्यर्थः ॥ २३ ॥ २४ ॥

**अङ्गुष्ठानामिकाभ्यां तद्रेत आदाय चाऽऽत्मनः ॥**
**स्तनौ भ्रुवौ वा निमृजेन्मध्ये च स्तनयोस्तदा ॥ २५ ॥**

अनामिकाङ्गुष्ठाभ्यामित्यादेरर्थमाह । **अङ्गुष्ठेति** । अन्तरेणेत्यादेरर्थं विवृणोति । **मध्य इति** । रेतःस्वीकारानन्तर्यं लेपनस्याऽऽह । **तदेति** ॥ २९ ॥

**रेतःस्वयोनावुदके आत्मानं चेत्प्रमादतः ॥**
**पश्येन्मन्त्रेण तत्तोयमनेनैवानुमन्त्रयेत् ॥ २६ ॥**

अथेत्यादि व्याचष्टे । **रेत इति** । रेतसः स्वभावभूता योनिरुदकं तस्मिन्नात्मनश्छायां यदि प्रमादतो रेतःसिक्पश्येत्ततो मयीत्यादिमन्त्रेण तदुदकमनुमन्त्रयेत्तथा रेतःस्वरूप-जले स्वदृष्टिकृतापराधसमाधिरित्यर्थः ॥ २६ ॥

**मयि तेजोऽस्तु विज्ञानमिति रेतोऽभिधीयते ॥**
**विशिष्टापत्यहेतुत्वाज्जपेदेवं तथोत्तरे ॥ २७ ॥**

मन्त्रार्थमाह । **मयीति** । तेजो विज्ञानं तच्च रेतस्तस्य च विज्ञानादित्वं लोक्यपुत्रहे-तुत्वात्तद्रेतो मयि स्यादित्येवं ज्ञात्वा मन्त्रं जपेदित्यर्थः । तेजःशब्दवदुत्तरत्रेन्द्रियादि-शब्देऽपि सुकृतशब्दपर्यन्ते रेतोविषयमेष्टव्यमित्याह । **तथेति** । रेतसस्तथात्वे विशिष्टा-पत्यहेतुत्वमेव हेतुः ॥ २७ ॥

**उद्गतं मलवद्वासश्चतुर्थेऽहनि यत्स्त्रियाः ॥**
**तां मलोद्वाससं पत्नीमाहुस्तत्कर्मकारिणः ॥ २८ ॥**

रेतःसिचो देशकालावतिक्रम्य प्रामादिकरेतस्स्खलनप्रयुक्तापराधे प्रायश्चित्तं प्रदर्श्ये-दानीमृतुकाले भार्याभिगमनमादर्शयितुं श्रीरित्यादिना भूमिका विरच्यते तत्र मलोद्वासः-शब्दार्थमाह । **उद्गतमिति** । तत्कर्म पत्न्यां पुंसा कृतं कर्म मैथुनाख्यं तत्कारिणो गृहस्था इति यावत् ॥ २८ ॥

**गुणाढ्यापत्यफलवत्पुष्पभूतत्वकारणात् ॥**
**मलवद्वाससं प्राहुः श्रियं श्रीहेतुतः स्त्रियम् ॥ २९ ॥**

कथं तस्याः श्रीत्वं तदाह । **गुणाढ्येति** ॥ २९ ॥

**चतुर्थे दिवसे स्नातां गत्वा तामुपमन्त्रयेत् ॥**
**आत्मनोऽभिमुखीभावे वाग्यत्नोऽत्रोपमन्त्रणम् ॥ ३० ॥**

तस्मादित्यादेरर्थमाह । **चतुर्थ इति** । कीदृगनुमन्त्रणं तत्राऽऽह । **आत्मन इति** । अत्रेति द्वितीयपिण्डोक्तिः ॥ ३० ॥

**प्रेम्णोपमन्त्रिताऽप्यस्मै पत्ये दद्यान्न चेदसौ ॥**
**वस्त्राभरणभोगाद्यैरात्मनो वशमानयेत् ॥ ३१ ॥**

सा चेत्यादि व्याचष्टे । **प्रेम्णेति** । दद्यात्पशुकर्म कर्तुमवकाशमिति शेषः । अनु-क्तवशीकारोपायसंग्रहार्थमादिपदम् ॥ ३१ ॥

तथाऽप्युक्ता न चेद्दद्याद्बलात्तां वशमानयेत् ॥
उपेयात्तामतिक्रम्य शापदानाय रोषितः ॥' ३२ ॥

इन्द्रियेण त इत्यादिमन्त्रेणाथ शपेद्रुषा ॥
पतिशापादपुत्रा सा वशमाशु भवेत्तदा ॥ ३३ ॥

सा चेदस्मै नैवेत्यादेरर्थमाह । **तथाऽपीति** । एवमपि तस्याः स्वानुसारित्वाभावे बलादुपगच्छेदृतुकालातिक्रमणायोगादित्याह । **उपेयादिति** । बलात्कारासंभवे पुनरुपायमुपदिशति । **शापेति** । शापदानायाऽऽरभेतेति शेषः । भार्यायाश्चोक्तकरत्वाभावं शापारम्भे हेतू करोति । **अथेति** । शपेत्तमारभेतेत्यर्थः । तत्फलमाह । **पतीति** । तदा शापारम्भावस्थायामित्यर्थः ॥ ३२ ॥ ३३ ॥

शप्स्यामि त्वामिति ह्युक्त्वा वशं तामानयेत्पतिः ॥
दद्याच्छापभयात्सा चेदनुलोमं तदाऽऽचरेत् ॥ ३४ ॥

स्वभार्याशापो न स्वात्मनो हिताय तत्कथं तदर्थमारम्भ इत्याशङ्क्य वशीकारार्थमित्याह । **शप्स्यामीति** । भार्यावशीकारं विना विवक्षितकर्मायोगो हिशब्दार्थः । सा चेदित्यादि व्याचष्टे । **दद्यादिति** । विवक्षितं कर्मावकाशमिति शेषः ॥ ३४ ॥

अथ शापभयाद्दद्यात्पत्ये कामितमादरात् ॥
तदा निवर्तयेच्छापं मन्त्रेणानेन सत्पतिः ॥ ३५ ॥

किं तदनुलोमाचरणं तदाह । **अथेति** । यद्यर्थोऽथशब्दः । दद्याद्भार्येति शेषः । अनेनेन्द्रियेणेत्यादिनेत्यर्थः ॥ ३५ ॥

पुरुषद्वेषिणीं भार्यां पतिश्चेदभिकामयेत् ॥
मामियं कामयेतेति कुर्यात्तस्या इमं विधिम् ॥ ३६ ॥

स यामित्यादेरर्थमाह । **पुरुषेति** ॥ ३६ ॥

उक्तमन्थविधानेन चरितव्रत एव सन् ॥
उत्तरेष्वपि कार्येषु सर्वं तदनुवर्तयेत् ॥ ३७ ॥

वक्ष्यमाणकर्मप्रकारे सर्वाधिकारं व्यावर्तयति । **उक्तेति** । इमं विधिं कुर्यादिति पूर्वेण संबन्धः । उत्तरेष्ववघातादिषु तत्पदमितिकर्तव्यताजातार्थम् ॥ ३७ ॥

स्त्रीलक्षणे प्रवेश्यान्तरात्मीयं पुंस्त्वलक्षणम् ॥
वक्त्रं वक्त्रेण संधाय स्पृष्ट्वोपस्थं जपेदथ ॥ ३८ ॥

इमं विधिं कुर्यादिति प्रकृतं विधिं दिदर्शयिषुस्तस्यामित्यादि व्याचष्टे । **स्त्रीलक्षण इति** । जपस्य वशीकरणहेतुत्वं वक्तुमथशब्दः ॥ ३८ ॥

अङ्गादङ्गात्संभवसि जग्धान्नपरिणामतः ॥
रसाच्छोणितमित्यादिक्रमाच्छुक्रतया मम ॥ ३९ ॥

जपमन्त्रस्याऽऽद्यं पादमादाय व्याकरोति। अङ्गादिति। आदिशब्दो मांसादिविषयः॥ ३९॥

शुक्रप्रवहया नाड्या हृदयाच्चाभिजायसे॥
स त्वमङ्गकषायोऽसि दिग्धविद्धां मृगीमिव॥
स्नेहोपरोधादेवैतां पत्नीं मे वशमानय॥ ४०॥

हृदयादित्यादि व्याचष्टे। शुक्रेति। दिग्धविद्धामौषधस्पृष्टेन शरेण ताडितामिति यावत्। तस्यां प्रविश्येति शेषः॥ ४०॥

मा बिभर्गर्भमित्येवमथ यां कामयेत सः॥
रूपभ्रंशो हि भवति यतो गर्भस्य धारणे॥ ४१॥
तथा यौवनहानिश्च तस्मादेवं स कामयेत्॥
तस्यां स्वमर्थं निष्ठाय मुखेनेत्यादि पूर्ववत्॥ ४२॥

अथ यामित्यादेरर्थमाह। मा बिभर्गर्भमिति। अथशब्दो वशीकरणानन्तर्यार्थः। तस्यामर्थं निष्ठायेति संबन्धः। पुत्रोत्पादनस्य पुरुषार्थत्वाद्यथोक्ता कामना पत्युरयुक्तेत्याशङ्क्याऽऽह। रूपेति। तत्रानुभवमनुकूलयितुं हिशब्दः॥ ४१॥ ४२॥

प्राण्याऽऽदौ रेचकं कृत्वाऽपानयेत्तदनन्तरम्॥ ४३॥
निषिक्तमपि तद्रेतः प्राणवृत्त्या यथाविधि॥
अपानवृत्त्या तद्ध्वस्तमित्येतत्कर्मणः फलम्॥ ४४॥

अभिप्राण्येत्यादि व्याचष्टे। प्राण्येति। पशुकर्मकाले प्रथमं स्वीयपुंस्त्वद्वारा तदीयस्त्रीत्वे वायुं विसृज्य तेनैव द्वारेण ततस्तदादानाभिमानं कुर्यादित्यर्थः। तत्फलमाह। निषिक्तमिति॥ ४३॥ ४४॥

इन्द्रियेण त इत्यादिमन्त्रोक्त्या तां परामृशेत्॥ ४५॥
इन्द्रियेणैव त्वद्रेतो रेतसा आददे स्वयम्॥
अरेता एव सा स्त्री स्यादेवं पत्याऽभिमन्त्रिता॥ ४६॥

इत्थमभिसंधाय कर्म कुर्वन्निन्द्रियेणेत्यादिना भार्यामभिमन्त्रयेदित्याह। इन्द्रियेणेति। मन्त्रं व्याकरोति। इन्द्रियेणैवेति। श्रौतं पदं तथैवानुवदितुं संधिरुपेक्षितः। तदीयरेतःस्वीकारो मम शक्यो मन्निमित्तत्वात्तदुत्पत्तेरिति मत्वाऽऽह। स्वयमिति। परामर्शफलमाह। अरेता इति॥ ४५॥ ४६॥

दधीत गर्भमित्येवं यामिच्छेत्पतिरङ्गनाम्॥
तामपान्य प्रयत्नेन प्राण्यान्मन्त्रेण कारयेत्॥
इन्द्रियेण त इत्युक्त्या आदधामीति सत्पतिः॥ ४७॥

अथेत्यादेरर्थमाह। दधीतेति। स्वीयपञ्चमेन्द्रियेण तदीयपञ्चमेन्द्रियाद्रेतः स्वीकृत्य

तत्पुत्रोत्पत्तिसमर्थं कृतमिति मत्वा स्वकीयेन रेतसा सह तस्मिन्निक्षिपेत्तदिदमपाननं प्राणनं च तत्पूर्वकं तत्र प्रयुक्तं च यथोक्तमनुचिन्तनं प्राणनं वक्ष्यमाणमन्त्रेण कार्यमित्याह । **मन्त्रेणेति** । तमेवोदाहरति । **इन्द्रियेणेति** । अत्रापि पूर्ववदनादृतः संधिः ॥ ४७ ॥

**अथाऽऽभिचारिकं कर्म प्रसङ्गादभिधीयते ॥**
**उपायत्वेन विज्ञप्त्यै श्येनवन्न विधीयते ॥ ४८ ॥**

अथ यस्येत्यादेस्तात्पर्यमाह । **अथेति** । विवाहानन्तर्यमथशब्दार्थः । पशुकर्मप्रसङ्गादुपपतिहिंसार्थिनः साधनत्वेनाऽऽभिचारिकं कर्मोच्यतेऽनन्तरवाक्येनेति यावत् । न हिंस्यादितिश्रुतिविरोधान्न हिंसार्थो विधिरित्याशङ्क्याऽऽह । **उपायत्वेनेति** । विज्ञप्त्यै ज्ञापनाय ॥ ४८ ॥

**अथ यस्य गृहस्थस्य पत्न्या जारो भवेत्कचित् ॥**
**तं चेद्द्विष्याद्बुधैवैनामारभेत तदा क्रियाम् ॥ ४९ ॥**

संप्रत्यक्षराणि योजयति । **अथेति** । कचिदिति देशकालावस्थाविशेषोक्तिः । तत्राधिकारिणं विशिनष्टि । **तं चेदिति** । अथशब्दस्याऽऽरम्भार्थत्वमुपेत्याऽऽह । **आरभेतेति** ॥ ४९ ॥

**न ह्यद्विष्टमनस्कस्य कर्मैतत्सिद्धिमश्नुते ॥**
**अतोऽधिकारिविज्ञप्त्यै द्विष्यादिति विशेषणम् ॥ ५० ॥**

उक्तमधिकारिविशेषणं व्यतिरेकमुखेनाऽऽह । **न हीति** ॥ ५० ॥

**आमपात्रेऽग्निमित्युक्त्या ह्यभिचाराख्यकर्मणः ॥**
**योग्यतैवाऽऽमपात्रस्य भिदुरत्वसमन्वयात् ॥ ५१ ॥**

आमपात्रेऽग्निमित्यत्राऽऽमपात्रग्रहणं किमर्थमित्याशङ्क्याऽऽह । **आमेति** । अभिचारसंबन्धित्वेनाऽऽमपात्रस्य योग्यतैव प्रकाश्यते विशेषणेनेत्यर्थः । क्रियापदद्योतको हिशब्दः । योग्यत्वं प्रकटयति । **भिदुरत्वेति** । जारभेदस्येष्टत्वादामपात्रस्य च तच्छीलत्वात्तस्यात्र योग्यतेत्यर्थः ॥ ५१ ॥

**यथाऽऽमं भिदुरं पात्रमप्सु सद्यो विलीयते ॥**
**प्राप्तजारोऽपि मे शत्रुस्तथैवाऽऽशु विदीर्यताम् ॥ ५२ ॥**

विशेषणतात्पर्यं निगमयति । **यथेति** ॥ ५२ ॥

**अग्निमित्येकवचनादुल्लिख्यादेश्च लिङ्गतः ॥**
**आवसथ्याग्निनिर्देशो न तु त्रेताग्निसंग्रहः ॥ ५३ ॥**

त्रेताग्निगतमिदं कर्मेति शङ्कां प्रत्याह । **अग्निमिति** । आदिपदेनाऽऽमपात्रादयो

गृह्यन्ते । न चात्रोल्लेखनाद्यप्रस्तुतं परिसमुह्य परिलिप्येत्युपक्रमात् । आवसथ्यो लौकिकोऽग्निः ॥ ५३ ॥

**प्रतिलोममवस्तीर्य कर्मणः प्रतिलोमतः ॥**
**शरबर्हिः प्रयत्नेन विद्वात्रोषसमन्वितः ॥ ५४ ॥**
**तस्मिन्नग्नौ शरेषीका घृताक्ता जुहुयादथ ॥**
**जारस्य दोषं प्रख्याप्य मन्त्रेणानेन सत्वरः ॥ ५५ ॥**

प्रतिलोममित्यादेरर्थमाह । **प्रतिलोममिति** । बर्हिषां प्रतिलोमत्वेन परिस्तरणे हेतुमाह । **कर्मण इति** । तस्मिन्कर्मणि सावधानत्वं प्रयत्नः । विद्वान्प्राणोपासिता मन्थकर्मानुष्ठातेत्यर्थः । विद्यासहकारिकारणमाह । **रोषेति** । होमस्य जारभ्रंशं प्रति हेतुत्वमथशब्दार्थः । होमप्रकारं दर्शयति । **जारस्येति** । ममेत्यादिना मन्त्रेण शत्रुदोषं ज्ञापयित्वा सत्वरो जुहुयादिति संबन्धः । शत्रुनाशशैघ्र्यसिद्ध्यर्थं सत्वर इति विशेषणम् ॥ ५४ ॥ ५५ ॥

**मम स्वभूते योषाग्नौ समिद्धे यौवनादिना ॥**
**शुक्राहुतिं यतोऽहौषीरेष तेऽत्र व्यतिक्रमः ॥ ५६ ॥**
**आददेऽतोऽपराधात्ते प्राणापानौ जिजीविषोः ॥**
**फट्कारेणैव जुहुयाच्छरभृष्टीर्यथोदिताः ॥ ५७ ॥**

मन्त्रं व्याचष्टे । **ममेति** । असाविति स्वस्य शत्रोर्वा नामग्रहणम् । आदद इत्यस्यान्ते फडिति पदं प्रयोक्तव्यमित्याह । **फट्कारेणेति** । यथोदिता इति घृताक्तत्वं प्रतिलोमत्वं चोच्यते ॥ ५६ ॥ ५७ ॥

**तथा पुत्रान्पशूंश्चैव आददे तेऽद्य कामुक ॥**
**श्रौतमिष्टं विजानीयात्स्मार्तं सुकृतमित्यपि ॥ ५८ ॥**

मन्त्रान्तरं व्याचष्टे । **तथेति** । पूर्ववद्दोषं प्रख्याप्येत्यर्थः ॥ ५८ ॥

**श्रौतं स्मार्तं च यत्किंचित्पुण्यं कर्म त्वया कृतम् ॥**
**तत्सर्वं त आददेऽहमाहुतिं प्रक्षिपेद्द्रुषा ॥ ५९ ॥**

इष्टादिपदार्थमुक्त्वा वाक्यार्थमाह । **श्रौतमित्यादिना** । अहमित्यस्मादूर्ध्वमित्युक्त्वेत्यध्याहार्यम् । पूर्वत्राप्याददे इत्यस्मादूर्ध्वमहमित्यादि संबध्यते ॥ ५९ ॥

**प्रार्थनाऽऽशेति विज्ञेया *पराकाशा प्रतीक्षणम् ॥**
**आदानान्तो भवेन्मन्त्रः सर्वत्रैवं विनिर्दिशेत् ॥ ६० ॥**

आशादिपदयोरर्थमाह । **प्रार्थनेति** । असावितिनामग्रहान्तत्वं मन्त्रस्य व्यावर्तयति । **आदानान्त इति** । पूर्वेष्वपि मन्त्रेष्वेतदेव परिमाणमित्याह । **सर्वत्रेति** ॥ ६० ॥

---

* अत्रत्यं पराकाशशब्दस्य स्त्रीलिङ्गत्वं चिन्त्यमुपनिषदि 'आशापराकाशौ' इति पुंलिङ्गपाठात् ।

**वाङ्मात्रेण प्रतिज्ञातं कर्मणा नोपपादितम् ॥**
**तत्प्रतीक्षणमाकाङ्क्षा पराकाशेति भण्यते ॥ ६१ ॥**

पराकाशा प्रतीक्षणमित्युक्तं स्फुटयति । **वाङ्मात्रेणेति** ॥ ६१ ॥

**स वा इत्यादिनाऽथास्य फलमुक्तस्य कर्मणः ॥**
**भण्यते वचसोक्तस्य निरिन्द्रियपुरःसरम् ॥ ६२ ॥**

अभिचारस्वरूपमुक्त्वा तत्फलमवतारयति । **स वा इत्यादिनेति** । कर्मोक्त्यनन्तरं फलोक्त्यवकाशं दर्शयति । **अथेति** । किं तत्फलं तदाह । **उक्तस्येति** । शत्रोरिति यावत् ॥ ६२ ॥

**निःशेषपुरुषार्थाभिलोपकृत्कर्म वर्णितम् ॥**
**जायया मैथुनाख्यं यच्छ्रोत्रियस्य विपश्चितः ॥ ६३ ॥**

तस्मादेवंविदित्यादिवाक्यस्य पातनिकां करोति । **निःशेषेति** ॥ ६३ ॥

**उपहासमतो नेच्छेत्सार्धं श्रोत्रियजायया ॥**
**मैथुनं तु विशेषेण ह्युक्तानर्थजिहासया ॥ ६४ ॥**

तद्व्याकरोति । **उपहासमिति** । साधारणमपि मैथुनमकार्यमितिद्योतको हिशब्दः ॥ ६४ ॥

**कर्माऽऽभिचारिकं प्रोक्तं प्रसङ्गान्न प्रधानतः ॥**
**यदर्थस्तु प्रयासोऽयं तत्कमार्थं प्रपश्च्यते ॥ ६५ ॥**

अथेत्याद्यवतारयितुं वृत्तमनुद्रवति । **कर्मेति** । पशुकर्मद्वारा जारप्रसङ्गेनाभिचारः सफल उक्तो न प्राधान्येन तस्य सत्पुत्रफलकर्मविरोधित्वादित्यर्थः । उत्तरं वाक्यमादत्ते । **यदर्थस्त्विति** । लोक्यपुत्रोत्पादनार्थो हि प्रारम्भस्तथा पुत्रार्थे तस्मिन्कर्मणि धर्मकलापार्थत्वेनोत्तरो ग्रन्थ इत्यर्थः । प्रासङ्गिककर्मोक्त्यनन्तरं प्रकृतकर्मापेक्षितधर्मोक्तेरवसरं दर्शयति । **अथेति** ॥ ६५ ॥

**यस्य मन्थविधिज्ञस्य जाया चेदार्तवं व्रजेत् ॥**
**तिस्रो रात्रीर्न कांस्येन पानं कुर्यात्तथाऽशनम् ॥ ६६ ॥**

तात्पर्यमुक्त्वा वाक्यं योजयति । **यस्येति** । तदा तस्य सा जायेति शेषः ॥ ६६ ॥

**तथैवाहतवासाः स्यादहःस्वेतेषु शुद्धधीः ॥**
**वृषलो वृषली वैनां नोपहन्यात्कदाचन ॥ ६७ ॥**

अहतवासा इत्यस्यार्थमाह । **तथेति** । न ह्यागन्तुकदोषोपहतवासस्त्वमेतेष्वहःसु स्त्रियां युक्तं तत्परिशोधनफलस्नानस्य तेष्वनुपपत्तेरित्यर्थः । **शुद्धधीत्वं** तत्र मनसाऽपि पुरुषाकाङ्क्षाराहित्यम् । नैनामित्यादेरर्थमाह । **वृषल इति** । कदाचनेति स्नानात्पूर्वोत्तरकालोक्तिः ॥ ६७ ॥

**अन्यो वा पापकृत्कश्चित्स्पर्शसंभाषणादिभिः ॥**
**व्रतस्थां नोपहन्यात्तामभीप्सितफलाप्तये ॥ ६८ ॥**

वृषलादिग्रहणं पापकृतामुपलक्षणमित्याह । **अन्यो वेति** । आदिपदं परिहासादिग्रहार्थम् । अनुपहतिफलमाह। **अभीप्सितेति**। सत्पुत्रजन्मेष्टं फलं तादर्थ्येनानुपहतिरतियत्नसाध्येत्यर्थः ॥ ६८ ॥

**सा त्रिरात्रान्त आप्लुत्याहतवासाः शुचिः सती ॥**
**श्रपणाय चरोर्भर्ता व्रीहींस्तामवघातयेत् ॥ ६९ ॥**

त्रिरात्रान्त इत्यादेरर्थमाह । **सेति** । या सा स्वीया भार्या चतुर्थे दिवसे स्नात्वा शुद्धवस्त्रा स्वयं च शुद्धा सती वर्तते तां चरुपाकार्थं भर्ता व्रीहीनवघातयेदिति योजना ॥ ६९ ॥

**शुक्लो गौरोऽत्र विज्ञेयः शुक्लो वा बलदेववत् ॥**
**सुव्याख्येयत्वतः शेषः स्वयमेवावगम्यताम् ॥ ७० ॥**

पुत्रो मे शुक्ल इत्यत्र शुक्लशब्दं द्वेधा व्याकरोति। **शुक्ल इति**। वेदमित्यादेर्व्याख्याप्राप्तावुक्तं सुव्याख्येयत्वत इति । इतिशब्दान्तः शेषः ॥ ७० ॥

**क्षीरौदनं तयैवाथ पाचयित्वा स्वयं पतिः ॥ ७१ ॥**
**दंपती घृतवन्तं तमश्नीयातामथौदनम् ॥**
**स्वतन्त्रावीश्वरौ स्यातां सत्पुत्रप्रसवाय तौ ॥ ७२ ॥**

क्षीरौदनमित्यादेरर्थमाह । **क्षीरेति** । यथोक्तकामानन्तर्यमथशब्दार्थः । सर्पिष्मन्तमित्यादि व्याचष्टे । **दंपती इति**। होमानन्तर्यमथशब्दार्थः। ईश्वरशब्दार्थमाह । **स्वतन्त्राविति** ॥ ७१ ॥ ७२ ॥

**यथोक्तपुत्रप्रसवे यदि वा क्षिप्रकारिणौ ॥**
**यथोक्तकर्मणैतेन स्यातां तावेव दंपती ॥ ७३ ॥**

अदृष्टादिसापेक्षत्वान्न स्वातन्त्र्यमित्याशङ्क्याऽऽह । **यथोक्तेति** । एतेन चरुहोमादिनेति यावत् ॥ ७३ ॥

**दुहिता पण्डितेत्यत्र स्त्रीणामुचितकर्मसु ॥**
**तत्पाण्डित्यमिह ज्ञेयं न तु वेदार्थगोचरम् ॥ ७४ ॥**

दुहिता मे पण्डितेत्यत्र दुहितुर्वेदार्थविषयं पाण्डित्यं कथं काम्यते तस्या वेदाध्ययनानधिकारित्वादित्याशङ्क्याऽऽह । **दुहितेति** । तच्छब्दो दुहितृविषयः । **इहशब्दः** स्त्रीणामुचितकर्मस्वित्यनेन संबध्यते ॥ ७४ ॥

---

१ ख. तथैवा° ।

**विजिगीतो जगत्यस्मिन्नत्यर्थं यो विशब्दितः ॥**
**विद्वत्सभा च समितिस्तद्योग्यः समितिंगमः ॥ ७५ ॥**

विजिगीत इत्यादि व्याचष्टे । **विजिगीत इत्यादिना** ॥ ७५ ॥

**प्रकृतायां त्रिसंख्यायां सर्वशब्दप्रयोगतः ॥**
**प्रतीयाच्चतुरो वेदान्सर्वशब्दार्थवित्तये ॥ ७६ ॥**

सर्वान्वेदानित्यत्र सर्वशब्दस्य वेदत्रयविषयतया चरितार्थत्वात्त्रीन्वेदानित्यनेन पुनरुक्तिरित्याशङ्क्याऽऽह । **प्रकृतायामिति** ॥ ७६ ॥

**तण्डुलान्मांससंमिश्रान्पक्त्वा मांसौदनं विदुः ॥**
**उक्षा सेचनशक्तो गौः स एव ऋषभो महान् ॥ ७७ ॥**

मांसौदनं पाचयित्वेत्यत्र मांसौदनशब्दार्थमाह । **तण्डुलानिति** । औक्षेण वेत्यादौ पदद्वयस्यापौनरुक्त्यमाह । **उक्षेति** ॥ ७७ ॥

**प्रसिद्ध्यसंभवात्त्वद्य ह्युक्तं मांसौदनं प्रति ॥**
**मांसं कृष्णमृगच्छागविषयं त्वद्य कुर्वते ॥ ७८ ॥**

औक्षेणेत्यादिविशेषणवशाद्गोमांसस्यापि भक्ष्यत्वं प्राप्तं तच्च प्रसिद्धिविरुद्धमित्याशङ्क्याऽऽह । **प्रसिद्धीति** । लोकसंप्रतिपत्त्यर्थो हिशब्दः । कथं तर्हि मांसौदनश्रुतिस्तत्राऽऽह । **मांसमिति** । कथं तर्हि विशेषणमित्याशङ्क्य कालविशेषापेक्षयेत्याह । **अद्येति** ॥ ७८ ॥

**यत्नेनोपार्जितं तच्चेत्क्रीत्वा वा मांसमाहरेत् ॥**
**हिंसायाः प्रतिषिद्धत्वात्पशून्हन्यान्न तु स्वयम् ॥ ७९ ॥**

तर्हि कृष्णमृगादि स्वयमेव हिंसित्वा मांसमाहर्तव्यमिति शङ्कते । **यत्नेनेति** । परिहरति । **क्रीत्वेति** । वाशब्दः शङ्कापोहार्थः । स्वयमेव हत्वा मांसं नाऽऽहर्तव्यमित्यत्र हेतुमाह । **हिंसाया इति** ॥ ७९ ॥

**अथशब्दो विकल्पार्थो यथोक्तानां यथारुचि ॥**
**काम्यानां ह्यन्यतमं पक्षमाश्रित्य भण्यते ॥ ८० ॥**

अथ य इच्छेदिति बहुवारमथशब्दप्रयोगस्य तात्पर्यमाह । **अथेति** । विकल्परूपमर्थं प्रकटयति । **यथोक्तानामिति** । कामानामनेकत्वप्रसिद्ध्यर्थो हिशब्दः । भण्यते भोजननियम इति शेषः ॥ ८० ॥

**आरभ्योद्गमने भानोः सर्वं स्नानाद्यशेषतः ॥**
**निर्वर्त्य संस्कारमथ यत्नात्प्राग्य उदाहृतः ॥ ८१ ॥**

पूर्वेद्युर्व्रीह्यवघातादिसंस्कार उत्तरेद्युश्च कामिताशनमिति व्यवस्थां परिहरति । **आरभ्येति** । आदित्योदयदशायामारभ्य नित्यं कर्म सर्वं निर्वर्त्यानन्तरं पूर्वोक्तो योऽवघा-

---

१ ख. योऽतिश ।

तादिसंस्कारस्तं च यत्रान्निष्पाद्य कामिताशनं कार्यं तत्रानयोर्दिनभेदोऽस्तीत्यर्थः । नित्यानुष्ठानानन्तरं नैमित्तिकानुष्ठानमिति वक्तुमथशब्दः ॥ ८१ ॥

**स्थालीपाके क्रिया या सा चाऽऽवृदित्यभिधीयते ॥**
**स्थालीपाकविधानेन संस्कृत्याऽऽज्यं तथैव तु ॥ ८२ ॥**

स्थालीपाकावृतेत्यत्राऽऽवृच्छब्दार्थमाह । **स्थालीपाक इति** । तथैव स्थालीपाकविहितावृत्या जुहोतीत्युत्तरत्र संबन्धः ॥ ८२ ॥

**उपलक्षणमन्येषामाज्यस्य ग्रहणं भवेत् ॥**
**आदिशब्दस्य वा लोपादाज्यादिमिति गम्यताम् ॥ ८३ ॥**

आज्यं संस्कृत्येत्याज्यस्यैव संस्कारश्रवणाच्चर्वादीनां संस्काराविवक्षामाशङ्क्याऽऽह । **उपलक्षणमिति** । यद्वाऽऽज्यादिं संस्कृत्येति वाक्यं न चाऽऽदिशब्दादर्शनं दोषो विद्यमानस्यैव लोपात्तत्सिद्धेस्तद्धेतोश्चाध्यापकप्रमादादेः संभवादित्याह । **आदिशब्दस्येति** ॥ ८३ ॥

**उपहत्योपहत्याथ स्थालीपाकस्य मन्त्रतः ॥**
**नित्यास्तत्राऽऽहुतीर्हुत्वा आवापस्थान आदरात् ॥ ८४ ॥**

स्थालीपाकस्येत्यादेरर्थमाह । **उपहत्येति** । आज्यादिसंस्कारानन्तरमग्नये स्वाहेत्यादिस्थालीपाकमन्त्रबलात्पौनःपुन्येनाऽऽवापस्थाने पूर्वोक्ते नित्यास्तात्पर्यादाहुतीर्हुत्वा चरुहोमः कर्तव्य इत्यर्थः ॥ ८४ ॥

**प्रधानाहुतयस्तिस्रो याः स्युरग्न्यादिपूर्विकाः ॥**
**हुत्वा स्विष्टकृदन्तं तत्समापय्य यथोदितम् ॥ ८५ ॥**
**कर्मेदं तत उद्धृत्य चरुं स्थाल्याः समाहितः ॥**
**सर्पिष्मन्तमथाश्नीयात्कामितार्थानुरोधतः ॥ ८६ ॥**

आघारादिनिर्वर्तनानन्तरं कर्तव्याहुतीनां संख्यानियममाह । **प्रधानेति** । हुत्वोद्धृत्येत्यादेरर्थमाह । **हुत्वेति** । नित्यं नैमित्तिकं च होममाज्यचरुभ्यां स्विष्टकृतं निर्वर्त्य ततः स्थाल्याः सकाशादवशिष्टं चरुं समाहितमनाः समुद्धृत्य घृताप्लुतमिष्टपुत्रोत्पत्तिमुद्दिश्याश्नीयादित्यर्थः । यथोक्तहुतशेषाशनस्येष्टसुतं प्रति हेतुत्वमाह । **अथेति** ॥८५॥ ॥ ८६ ॥

**चरुं प्राश्य स्वयं शेषं भार्यायै संप्रयच्छति ॥**
**उच्छिष्टमेव भार्यायै चरुं भर्ता प्रयच्छति ॥ ८७ ॥**

प्राश्येत्यादि व्याचष्टे । **चरुमिति** । स्थाल्यां व्यवस्थितमेव चरुशेषं भर्ता भार्यायै प्रयच्छतीत्याशङ्क्याऽऽह । **उच्छिष्टमिति** ॥ ८७ ॥

---

१ क. ख °ज्यादि सं° ।

**पाणी प्रक्षाल्य यत्नेन सामर्थ्यादेव गम्यते ॥**
**स्मार्तमाचमनं शुद्ध्यै पाणिप्रक्षालनोक्तितः ॥ ८८ ॥**

प्रक्षाल्येत्यादि व्याचष्टे । **पाणी इति ।** मलत्यागार्थं बहुजलमानीय पौनःपुन्येन क्षालनं यत्नः । जायामभ्युक्षयेदिति संबन्धः । पाणिप्रक्षालनमात्रस्य श्रुतत्वादाचमनं विना शुद्ध्यभावत्वे कथमभ्युक्षणादौ भर्ताऽधिक्रियेत तत्राऽऽह । **सामर्थ्यादिति ।** ततः शुद्धावुद्देश्यायामाचमनं सामर्थ्यात्सिद्धं न हि तदन्तरेणोद्देश्यसिद्धिरिति योजना ॥ ८८ ॥

**उदपात्रमथाऽऽदाय तदद्भिस्त्रिः सुताप्तये ॥**
**वक्ष्यमाणेन मन्त्रेण जायामभ्युक्षयेन्मुहुः ॥ ८९ ॥**

उदपात्रमित्यादेरर्थमाह । **उदपात्रमिति ।** तस्य हस्तक्षालनानन्तर्यमथशब्दार्थः । त्रिरित्युक्त्वा मुहुरिति प्रयुञ्जानोऽभ्युक्षणस्यैवाऽऽवृत्तिर्न मन्त्रस्येत्याह ॥ ८९ ॥

**अतोऽस्मदीयदारेभ्य उत्थायान्यत आव्रज ॥**
**विश्वावस्वभिधानेन गन्धर्वोऽत्र प्रबोध्यते ॥ ९० ॥**

तन्मन्त्रं व्याकरोति । **अत इति ।** अन्यतोऽन्यत्रेति यावत् । अत्रेति मन्त्रोक्तिः ॥ ९० ॥

**प्रपूर्व्यामिति नार्यत्र भण्यते तरुणी किल ॥**
**प्रपूर्वीं पीवरीमन्यां याहि विश्वावसो द्रुतम् ॥ ९१ ॥**

अन्यामिच्छेति व्याकुर्वन्वाक्यं योजयति । **प्रपूर्व्यामिति ।** परिदृढां दृढाङ्गीं समर्थामिति यावत् ॥ ९१ ॥

**प्रपूर्व्यामिति लिङ्गाच्च तरुण्यां सत्पतिः सदा ॥**
**यथोदितं कर्म सत्यां कुर्यात्सत्पुत्रजन्मने ॥ ९२ ॥**

तत्पदसामर्थ्यसिद्धमर्थमाह । **प्रपूर्व्यामिति ।** तारुण्यद्योतकशब्दवशादिति यावत् । तरुण्यां सत्यामिति संबन्धः । ऋतुकालः सदेत्युक्तः । यथोदितं कर्मावघातादि तस्य पशुकर्मान्तस्यानुष्ठानफलमाह । **सदिति ॥** ९२ ॥

**अहं तु स्वामिमां जायां समुपैमीति संगतिः ॥**
**एवं प्रस्थाप्य गन्धर्वमथैनामभिपद्यते ॥ ९३ ॥**

जायामित्यादेरर्थमाह । **अहमिति ।** मया पत्या सह वर्तमानां स्वीयामीमां भार्यामहं समुपगच्छामि तत्रावकाशो देयस्त्वयेति वाक्यघटनेत्यर्थः । अथैनामित्याद्य-वतारयति । **एवमिति ।** गन्धर्वप्रस्थापनानन्तरमालिङ्गने प्रतिबन्धाभावोऽथशब्दार्थः ॥ ९३ ॥

**अभीष्टगर्भाधानाय जायामालिङ्गते पतिः ॥**
**अमोऽहमितिमन्त्रोक्त्या तावावां देवतात्मकौ ॥ ९४ ॥**

**कर्माऽऽरभावहै देवि सत्सुतोत्पत्तिसिद्धये ॥**
**त्वं चाहं चैव संभूय योनौ रेतो दधावहै ॥ ९५ ॥**

केयमभिपत्तिस्तामाह । **अभीष्टेति** । आलिङ्गनमन्त्रं दर्शयति । **अमोऽहमितीति** । तावेहीत्यादेरर्थमाह । **ताविति** । कर्मारम्भफलमाह । **सत्सुतेति** । कोऽयं कर्मारम्भ इत्याशङ्क्य सहेत्यादेरर्थमाह । **त्वं चेति** ॥ ९४ ॥ ९५ ॥

**रेतःक्षेपफलं चाऽऽह पुंसे पुत्राय लब्धये ॥**
**मन्त्रोक्त्यनन्तरं तस्या विजिहीथामितीरयेत् ॥ ९६ ॥**

पुंसे पुत्रायेत्यादेस्तात्पर्यमाह । **रेत इति** । उत्तरवाक्यस्थाथशब्दार्थं दर्शयन्विहापनमन्त्रमवतारयति । **मन्त्रोक्तीति** । अमोऽहमित्यादिमन्त्रोक्तिद्वारा भार्यालिङ्गनानन्तरमूर्वोस्तस्या विश्लेषकरणार्थं मन्त्रं जपेदित्यर्थः ॥ ९६ ॥

**विहापयति मन्त्रेण ऊरू पत्न्याः प्रयत्नतः ॥**
**ऊर्वोरामन्त्रणं चैतद्विजिहीथामितीक्ष्यताम् ॥ ९७ ॥**

अस्या इत्यादिपदानि व्याचष्टे । **विहापयतीति** । विश्लेषयतीति यावत् । मन्त्रेण विजिहीथामित्यादिनेत्यर्थः । प्रयत्नतो वशीकारानुष्ठानद्वारेत्यर्थः । संधिरत्रापि न विवक्षितः । द्यावापृथिवी इत्यस्यार्थमाह । **ऊर्वोरिति** । द्यावापृथिवी इत्येतदूर्वोरामन्त्रणमीक्ष्यतामिति संबन्धः । विजिहीथामित्यूरू प्रति नियोगकरणमित्यध्याहारः ॥ ९७ ॥

**विजिहीतेरिदं रूपं ण्यन्तस्य गतिकर्मणः ॥ ९८ ॥**
**मन्त्रतः पाणिनाऽथैनां त्रीन्वाराननुलोमतः ॥**
**अनुमार्ष्ट्यथ तां जायां मन्त्रं विष्णुरितीरयन् ॥ ९९ ॥**

विहापयतीतिक्रियापदोत्पत्तिप्रकारोक्तिपूर्वकं तदर्थमाह । **विजिहीतेरिति** । त्रिरेनामित्यादि व्याकरोति । **मन्त्रत इति** । अनुलोमतो मूर्धानमारभ्य पादान्तमिति यावत् । पशुकर्मानन्तर्यार्थोऽथशब्दः । कोऽसावनुमार्जनमन्त्रस्तमाह । **मन्त्रमिति** ॥ ९८ ॥ ९९ ॥

**समर्थनं कल्पनार्थस्त्वष्टाऽवयवशस्तथा ॥**
**निर्वर्तयतु रूपाणि शोभनानि सुतस्य मे ॥ १०० ॥**

सहजसिद्धा योनिः कथं कल्प्यते तत्राऽऽह । **समर्थनमिति** । पुत्रजन्मनि शक्तत्वापादनमिति यावत् । त्वष्टेत्यादेरर्थमाह । **त्वष्टेति** । आत्मनो भार्यायाश्चावयवशो रूपाणि निर्वर्तितानि किं तत्र त्वष्ट्रेत्याशङ्क्याऽऽह । **सुतस्येति** ॥ १०० ॥

**दर्शाहर्देवता चेह सिनीवालीति भण्यते ॥**
**पृथुष्टुकेति सैवोक्ता पृथुस्तुतिरसौ यतः ॥ १०१ ॥**

---

१ क. ख. ग. °नुकूलतः ।

गर्भं धेहीत्यादिमन्त्रस्थसिनीवालीपदार्थमाह । **दर्शेति** । गर्भं धेहि पृथुष्टुक इत्यत्र देवतान्तरस्य संबोध्यमानत्वमाशङ्क्याऽऽह । **पृथुष्टुकेतीति** ॥ १०१ ॥

**गर्भं ते सम्यगाधत्तामश्विनौ पुष्करस्रजौ ॥**
**सूर्याचन्द्रमसावेव विज्ञेयावश्विनाविह ॥ १०२ ॥**

गर्भं ते अश्विनावित्यादिभागमादत्ते । **गर्भमिति** । प्रसिद्धावश्विनौ व्यावर्तयन्नश्विनावित्येतद्व्याचष्टे । **सूर्येति** । सर्वत्राश्विनोरुक्तरूपत्वप्रसक्तावुक्तम् । **इहेति** ॥ १०२ ॥

**स्वरश्मिस्रग्विणौ तौ हि प्रसिद्धौ जगति यतः ॥ १०३ ॥**
**हिरण्यं ज्योतिरमृतं तन्मय्यावरणी शुभे ॥**
**निरमन्थतां याभ्यां तावश्विनावमृतं पुरा ॥ १०४ ॥**

तत्र हेतुमाह । **स्वरश्मीति** । यौ तौ सूर्याचन्द्रमसौ तौ स्वरश्मिमालिनौ यतो जगति सिद्धावतोऽश्विनौ पुष्करस्रजाविति विशेषितौ सूर्याचन्द्रमसौ युक्ताविति योजना । विशेषणसामर्थ्यद्योतको हिशब्दः । हिरणमयीत्यादेरर्थमाह । **हिरण्यमिति** ॥ १०३ ॥ ॥ १०४ ॥

**अश्विनौ यादृशं गर्भं प्रयत्नान्निरमन्थताम् ॥**
**आदधावस्तथा रूपं दशमे मासि सूतये ॥ १०५ ॥**

तामित्यादि विभजते । **अश्विनाविति** । अमृततुल्यत्वाद्गर्भस्य प्रयत्नेन भवितव्यमिति सूचयति । **प्रयत्नादिति** ॥ १०५ ॥

**यथाऽग्निगर्भा पृथिवी द्यौरिन्द्रेणेव भानुना ॥**
**वायुर्दिशां यथा गर्भो दृष्टः श्लथनकर्मकृत् ॥ १०६ ॥**

यथेत्यादेरर्थमाह । **यथेति** । इन्द्रशब्दार्थमाह । **भानुनेति** । वायुं व्याचष्टे । **श्लथनेति** ॥ १०६ ॥

**आत्मनाम समुच्चार्य तथा गर्भं दधामि ते ॥**
**तस्या वा नाम गृह्णीयान्मन्त्रमुच्चारयन्पतिः ॥ १०७ ॥**

असावित्यस्यार्थद्वयं वदन्नन्वयप्रकारमाह । **आत्मेति** । तथा पृथिव्यादेरग्न्यादिगर्भवदित्यर्थः । गर्भं दधामि त इति मन्त्रमुच्चारयेदिति शेषः । तमुच्चारयन्भर्ताभार्याया वा नामासाविति गृह्णीयादित्युत्तरार्धस्य योजना ॥ १०७ ॥

**मन्त्रेणाथैष सोष्यन्तीमद्भिरभ्युक्षयेच्छनैः ॥**
**वायुः पुष्करिणीं यद्वत्समिङ्गयति चालयेत् ॥ १०८ ॥**

सोष्यन्तीमित्यादेरर्थमाह । **मन्त्रेणेति** । यथा वायुरित्यादिनेति यावत् । गर्भाधानमारभ्य दशममासपूरणानन्तर्यमथशब्दार्थः । एषशब्दो भर्तृविषयः । पीडानिवृत्त्यर्थं

---

१ क. ख. 'दिसि' । २ क. न. 'गतो य' । ३ क. ग. दृष्टश्चलन' ।

शनैरित्युक्तम्। अभ्युक्षणमन्त्रं व्याचष्टे। **वायुरिति**। सर्वमपि चालयन्वायुः पुष्करिणीमपि चालयतीति यावत् ॥ १०८ ॥

**यथा पुष्करिणीं वायुश्चालयन्नपि सर्वतः ॥**
**न करोति क्षतिं तद्वद्गर्भ एजतु ते सुखम् ॥ १०९ ॥**

दृष्टान्ते विवक्षितमंशमनुवदति । **यथेति** । क्षतिं तस्या इति शेषः । एवेत्यादि व्याचष्टे । **तद्वदिति** ॥ १०९ ॥

**गर्भस्त्वां सुखयन्नेतु सहोल्बेण जरायुणा ॥**
**व्रजो मार्गो हि गर्भस्य सार्गलोऽयं कृतः पुरा ॥ ११० ॥**

सहेत्यादेरर्थमाह । **गर्भस्त्वामिति** । अवेतिनिपातार्थः सुखयन्निति । इन्द्रस्येत्यादि विभजते । **व्रज इति** । पुरेति सृष्टिकाले गर्भाधानकालो वोक्तः । गर्भमार्गस्यार्गलस्य वा प्रसिद्ध्यर्थो हिशब्दः ॥ ११० ॥

**जरायुरर्गलस्तं त्वमिन्द्र निर्जहि सत्वरः ॥**
**गर्भे विनिःसृते पश्चाद्या निर्गच्छति योनितः ॥ १११ ॥**
**मांसपेशी समा तन्वी साऽवरेति निगद्यते ॥**
**प्राणश्चेन्द्रोऽत्र विज्ञेयः स एव प्रार्थ्यते ततः ॥ ११२ ॥**

अर्गलं व्याचष्टे । **जरायुरिति** । अर्गलसहितमार्गं भङ्क्त्वा केवलं मार्गं कुर्वित्यर्थः । गर्भेणेत्यादाववरां व्याकरोति । **गर्भ इति** । समा गर्भेणेति शेषः । तां निर्जहीति पूर्वेण संबन्धः। प्रथमेन्द्रशब्दस्य गर्भविषयत्वेऽपि द्वितीयस्य को विषयस्तमाह । **प्राणश्चेति** । अत्रेति वाक्योक्तिः । तत्र हेतुः । **स एवेति** । यतस्त्वमिन्द्र इत्यत्र प्राण एव पत्या प्रार्थ्यते ततस्तस्यैवेन्द्रशब्दतेत्यर्थः ॥ १११ ॥ ११२ ॥

**जाते कुमारेऽथ पतिरङ्कमारोप्य तं पिता ॥**
**अग्निं ह्युपसमाधाय प्रसिद्धार्थमथापरम् ॥ ११३ ॥**

जातेऽग्निमित्यादेरर्थमाह । **जात इति** । जातकर्मणो जन्मान्व्यवधानार्थोऽथशब्दः । पतिः पोषकः पितोत्पादकः । उपसमाधाय जुहोतीति संबन्धः । आवसथ्याग्निप्रसिद्ध्यर्थो हिशब्दः । कंसे पृषदाज्यमित्यादिव्याख्याप्रसक्तावुक्तं प्रसिद्धार्थमिति ॥ ११३॥

**घृतं दधि च संमिश्रं पृषदाज्यमितीर्यते ॥**
**एकीकृत्याथ संनीय पृषदाज्यस्य मन्त्रतः ॥ ११४ ॥**
**उपघातं जुहोतीति णमुल्वाऽऽभीक्ष्ण्य इष्यते ॥**
**उपहत्योपहत्येति पृषदाज्याहुतीः क्षिपेत् ॥ ११५ ॥**

पृषदाज्यं व्याचष्टे । **घृतमिति** । संनीयेत्यादेरर्थमाह । **एकीकृत्येति** । घृतं दधि च मिश्रीकृत्य कांस्यगं पुरतो निधायानन्तरं पृषदाज्यमुपहत्योपहत्य वक्ष्यमाणमन्त्रैर्जु-

हुयादित्यर्थः । कथमस्य पौनःपुन्यमुच्यते तत्राऽऽह । **णमुल्वेति** । आभीक्ष्ण्यमभिव्यनक्ति । **उपहत्येति** । कर्मणि षष्ठीत्यभिप्रेत्य पृषदाज्यस्य जुहोतीत्यस्यार्थमाह । **पृषदाज्येति** ॥ ११४ ॥ ११५ ॥

**पुष्यासं स्वे गृहेऽत्राहं मनुष्याणां प्रकामतः ॥**
**सहस्रसंख्यया शश्वद्बहोर्नाम सहस्रगीः ॥ ११६ ॥**

तन्मन्त्रं व्याचष्टे । **पुष्यासमिति** । अत्र स्वे गृहे मनुष्याणां सहस्रं प्रकामतः शश्वत्पुष्यासमिति संबन्धः । सहस्रनियमे को हेतुस्तत्राऽऽह । **बहोरिति** ॥ ११६ ॥

**एवं त्वं वर्धमानोऽत्र मन्वीथाः पुत्र संततिम् ॥**
**संततावुपसन्ध्यां त्वं पश्वादेर्मे करिष्यसि ॥ ११७ ॥**

दार्ष्टान्तिकमाह । **एवमिति** । अस्येत्यादेरर्थमाह । **संततावितिं** । अस्य मे संततौ वर्धमानस्त्वमिति संबन्धः । उपसन्ध्यामित्यस्य व्याख्या संततावितिं । पश्वादेः संततिमिति शेषः ॥ ११७ ॥

**नैव व्यपेक्षते व्याख्यां स्पष्टार्थत्वेन हेतुना ॥**
**मयि प्राणानिति ग्रन्थः स्वयमेवावगम्यताम्[1] ॥ ११८ ॥**

व्याख्यानपेक्षत्वमाह । **नैवेति** ॥ ११८ ॥

**अथास्य स्वमुखे कर्णं दक्षिणं प्रणिधाय तु ॥**
**वाग्वागिति हि त्रिर्ब्रूयात्त्रयी वागिति भण्यते ॥ ११९ ॥**

अथास्येत्यादेरर्थमाह । **अथेति** । जातकर्मानन्तर्यमथशब्दार्थः ॥ ११९ ॥

**त्रयी वाक्त्वां श्रोत्रमार्गेण श्रेयसे प्रविशत्वियम् ॥**
**यस्ते स्तन इति गिरा शस्यतेऽत्र सरस्वती ॥ १२० ॥**

पुत्रस्य दक्षिणे कर्णे वाग्वागिति त्रिवारं वदतो जनकस्याभिप्रायमाह । **त्रयी वागिति** । यस्ते स्तन इत्यादेस्तात्पर्यमाह । **यस्त इति** । अत्रेति पुत्रस्य स्तनपानप्रस्तावोक्तिः ॥ १२० ॥

**उदारगुणसंपत्तिः सुतस्यास्त्विति भण्यते ॥**
**शशयः सशयो ज्ञेयः शयश्च फलमुच्यते ॥ १२१ ॥**

प्रशंसाफलमाह । **उदारेति** । सुतस्य स्तनपानद्वारेति शेषः । अक्षराणि व्याचष्टे । **शशय इति** । शयः कर्मफलं शेतेऽस्मिन्कर्तेति व्युत्पत्तेस्तेन सह वर्तत इति सशयः स्तन इत्यर्थः ॥ १२१ ॥

**गुहा शयो वा शशयः श्रुत्यैव प्रतिपादितः ॥**
**मयोभूरन्नभूतोऽयं सर्वप्राणिभृदुच्यते ॥ १२२ ॥**

१ ख. °म्यते ॥ ११८ ॥

**रत्नस्य पयसोऽत्यर्थं रत्नाधारश्च यः स्तनः ॥**
**वसुनो धनस्य लब्धा च तस्य दृष्ट्यादिहेतुनः ॥ १२३ ॥**
**भूरिकल्याणदातृत्वात्सुदत्र इति भण्यते ॥**
**येन पुष्यसि वार्याणि सर्वाणीह सरस्वति ॥ १२४ ॥**

संभावितमर्थान्तरमाह । **गुहेति** । स्तनोत्थानदेहदेशो गुहाशब्दितः शयः । अस्मिन्पक्षे नाक्षरव्यत्यासोऽस्ति शं सुखं तस्य हेतुः शयः स्थितिः स्थानं यस्येति व्युत्पत्तेरित्याह । **श्रुत्येति** । कथमन्नत्वं सरस्वतीस्तनस्येति तत्राऽऽह । **सर्वेति** । स हि तत्र तत्र मातुः स्तने प्रविश्य सर्वेषां भोग्यतया सर्वान्बिभर्ति तेन सर्वप्राणिस्थितिहेत्वन्नभूतः स इत्यर्थः । अत्यर्थं धाता निष्पादक इति शेषः । अर्थान्तरमाह । **रत्नेति** । वसुविदित्यस्यार्थमाह । **वसुन इति** । इहेति व्यवहारदशोक्तिः ॥ १२२ ॥ १२३ ॥ १२४ ॥

**देवादीनि वैराणि त्वं सर्वैर्भोगैः प्रपुष्यसि ॥ १२५ ॥**
**पानाय मम पुत्रस्य स्त्रीस्तने संनिवेशय ॥**
**यथोक्तगुणकं देवि स्वस्तनं सर्वकामदम् ॥ १२६ ॥**

वार्याणीत्यस्यार्थं वदन्वाक्यं योजयति । **देवादीनीति** । येन पुष्यसीति संबन्धः । तमित्यादि व्याचष्टे । **पानायेति** । ममेत्युभयत्र संबन्धः ॥ १२५ ॥ १२६ ॥

**इलाऽसीत्यथ मन्त्रेण सूनोर्मातरमादरात् ॥**
**अभिमन्त्रयते साधुकर्मावाह्यै स्वयं पतिः ॥ १२७ ॥**

**इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके षष्ठाध्यायस्य**

**चतुर्थं ब्राह्मणम् ॥ ४ ॥**

अथास्येत्यादेरर्थमाह । **इलाऽसीति** । स्तनदानादभिमन्त्रणस्याऽऽनन्तर्यमथशब्दार्थः । इलाऽसीति पत्न्याः स्तुत्यर्हतोक्तिः । मित्रावरुणयोरपत्यभूता देवतात्मिका त्वं जीवभर्तृका च मम सत्पुत्रं संपादितवती । जीवपुत्रकत्वं तस्याः प्रार्थयते सा त्वमिति । स्वस्यापि लोक्यपुत्रसाहित्ये पत्नी निमित्तमित्याह याऽस्मानिति । सा त्वमिलाऽसीति संबन्धः । उक्तार्थमन्त्रेण भार्याभिमन्त्रणफलमाह । **साध्विति** । प्रशस्तपुत्रपालनमत्र साधुकर्म ॥ १२७ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां षष्ठाध्यायस्य

चतुर्थं ब्राह्मणम् ॥ ४ ॥

**श्लोकानामादितः समष्ट्यङ्काः—११२५**

---

१ ख. °तुतः ॥ १२३ ॥ २ क. ग. पराणि । ३ क. ख. °धुकामावा° ।

अथ पञ्चमं ब्राह्मणम् ।

---

**संभावितं न यत्पूर्वं कृत्स्नेऽस्मिन्ब्राह्मणेऽपि तत् ॥**
**खिलकाण्डे तदखिलं पुत्रमन्थान्तमीरितम् ॥ १ ॥**

वंशब्राह्मणार्थकथनार्थं वृत्तं संकीर्तयति । **संभावितमिति** । यत्तत्पूर्वं काण्डद्वये सर्वत्रापि ब्राह्मणे वक्तुं न संभावनोपनीतं वक्तव्यत्वेन शिष्टं तत्सर्वमस्मिन्काण्डे पुत्रमन्थावसानमुक्तमित्यर्थः ॥ १ ॥

**पूर्वकाण्डैकदेशत्वात्खिलकाण्डं न वंशभाक् ॥**
**पूर्वत्र विद्यासंभेदाद्भिन्नौ वंशाविहोदितौ ॥ २ ॥**

प्रत्येकं मधुमुनिकाण्डयोर्वंशभाक्त्ववदस्यैवायं वंशः संनिधानात्तथाच कथं समस्तप्रवचनवंश इति भाष्यमित्याशङ्क्याऽऽह । **पूर्वेति** । तदेकदेशत्वं तत्रानुक्तस्य वक्तव्यत्वेनावशिष्टस्यात्रोक्तेरिति द्रष्टव्यम् । कथं पूर्वोक्तयोरपि प्रत्येकं वंशभाक्त्वं तत्राऽऽह । **पूर्वत्रेति** । इहेति चतुर्थान्तं षष्ठान्तं चाऽऽह ॥ २ ॥

**पूर्वैश्चतुर्भिरध्यायैस्त्वाद्यं कक्ष्यं च यन्मधु ॥**
**व्याख्यातं तदशेषेण वंशस्तत्र तदर्थभाक् ॥ ३ ॥**

कथं काण्डद्वयस्य भिन्नविद्याविषयत्वं न हि ब्रह्मविद्योभयत्र भिद्यते भेदकाभावादित्याशङ्क्य मधुकाण्डार्थं दर्शयन्वंशस्य तत्रार्थवत्तामाह । **पूर्वैरिति** । द्वितीयस्तच्छब्दस्तस्मादर्थः । अर्थभाक्चतुर्थान्ते वंशो निर्दिश्यमानो मधुद्वयस्याऽऽगमसंप्रदायप्रतिपादनार्थत्वात्फलवानित्यर्थः ॥ ३ ॥

**मधुकाण्डागमार्थस्य यथावत्प्रतिपत्तये ॥**
**काण्डं स्याद्याज्ञवल्कीयं वंशस्तद्विषयस्तथा ॥ ४ ॥**

मुनिकाण्डप्रवृत्तिप्रदर्शनपूर्वकं वंशान्तरस्यार्थवत्त्वमाह । **मध्विति** । यथावत्प्रतिपत्तिन्यायद्वयेन विप्रतिपत्तिनिरासेनावगतिस्तथा सति तद्विषयकस्य ज्ञानस्य तर्कसंप्रदायप्रतिपादको द्वितीयो वंशो भवत्यर्थवानित्यर्थः ॥ ४ ॥

**अयं तु वंशो विज्ञेयः कृत्स्नप्रवचनाश्रयः ॥**
**समासौ ब्राह्मणस्योक्तेरयमर्थोऽवसीयते ॥ ५ ॥**

तृतीयोऽपि वंशस्तृतीयकाण्डस्यैव किं न स्यादित्याशङ्क्या पूर्वकाण्डैकदेशत्वादित्यत्रोक्तमुपजीव्याऽऽह । **अयं त्विति** । तत्र गमकमाह । **समासाविति** । प्रवचनसमासावस्य वंशब्राह्मणस्योक्तेरयं वंशः सर्वप्रवचनशेषो भातीत्यर्थः ॥ ५ ॥

**उक्तवेदार्थविज्ञानसाकल्यप्रतिपत्तये ॥**
**जपो वंशस्य येनातः श्रुत्या वंश इहोदितः ॥ ६ ॥**

पूर्ववदस्य फलवत्त्वाभावादवक्तव्यत्वमाशङ्क्याऽऽह । **उक्तेति** । इहेति प्रवचनसमाप्तावित्यर्थः ॥ ६ ॥

**सर्वज्ञानां यतो वंशास्त्रयोऽप्येते यथोदिताः ॥**
**अतस्तत्स्मृतितः सम्यग्ज्ञानभानूदयो भवेत् ॥ ७ ॥**

इतश्च वंशत्रयसंकीर्तनं कर्तव्यमित्याह । **सर्वज्ञानामिति** । **यस्य** देवे परा भक्तिरित्यादिश्रुतेः ॥ ७ ॥

**पुत्रमन्थेन संस्कारः स्त्रीणामेवेह वर्णितः ॥**
**यतोऽतः स्त्रीप्रधानोऽयं पुत्राणां वंश उच्यते ॥ ८ ॥**

पूर्वौ वंशौ पुरुषविशेषितौ तृतीयः स्त्रीविशेषितस्तत्र किं कारणमित्याशङ्क्य स्त्रीप्राधान्यादित्यादिभाष्यतात्पर्यमाह । **पुत्रेति** । इहेत्यनन्तरब्राह्मणोक्तिः ॥ ८ ॥

**अन्यतोऽन्यत एवायं संप्रदायो यथाऽभवत् ॥**
**न तथा ब्रह्मणस्तस्मात्तत्स्वयंभ्विति शब्द्यते ॥ ९ ॥**

ब्रह्म स्वयंभ्विति ब्रह्मणि स्वयंभुशब्दप्रयोगे निमित्तमाह । **अन्यत इति** ॥ ९ ॥

**अन्येषां वेदतो ज्ञानं भूरिसाधनसंश्रयात् ॥**
**स्वतो वेदात्मनस्तस्मात्सर्वज्ञानमयो हि सः ॥ १० ॥**

ब्रह्मशब्दार्थं व्याचक्षाणस्तस्याऽऽचार्यानपेक्षत्वं साधयति । **अन्येषामिति** । भूरिसाधनं प्रभूतं श्रवणादि । परमात्मा वेदोपाधिब्रह्म न च तस्याऽऽचार्यापेक्षा सर्वज्ञानमयत्वादित्यर्थः ॥ १० ॥

**सर्वस्यैष वशीत्यादि तथाऽपि प्रागवादिषम् ॥**
**परैव देवता वेदो यच्च किंचिच्चराचरम् ॥ ११ ॥**

परस्य तन्मयत्वे लिङ्गमाह । **सर्वस्येति** । न हि वशित्वादि सर्वज्ञानमयत्वं विना सिध्यतीत्यर्थः । तस्य सर्वज्ञत्वं यः सर्वज्ञः सर्वविदित्यादिश्रुत्यन्तरेऽपि प्रसिद्धमित्यपेरर्थः । परस्य वेदोपाधेर्ब्रह्मशब्दत्वं चेदुपाधितद्भावेन भेदादद्वैतहानिरित्याशङ्क्याऽऽह । **परैवेति** ॥ ११ ॥

**प्रतिपाद्याऽऽत्मनाऽऽत्मानं नामरूपादिसाधनः ॥**
**एति पूर्णात्मतां साक्षाद्धियां वाचामगोचरम् ॥ १२ ॥**

कथं तर्हि प्रतिपाद्यप्रतिपादकत्वमुपाधितद्वत्त्वं च वेदब्रह्मणोरिष्टं तत्राऽऽह । **प्रतिपाद्येति** । कल्पितभेदेन तत्संभवान्न वास्तवाद्वैतहतिरिति भावः । निष्प्रपञ्चत्वं साक्षादिति विवक्षितमत एव धियामित्यादि विशेषणम् ॥ १२ ॥

**त्रय्यैव ब्राह्मणो विद्वानात्मनैवाद्वयं परम् ॥**
**विदित्वा निर्वृतिं याति कार्यकारणयोः पराम् ॥ १३ ॥**

वेदस्य कल्पितभेदस्याऽऽत्मप्रतिपादकत्वे प्रमाणान्तरस्यापि तत्संभवादन्ययोगव्यवच्छेदासिद्धिरित्याशङ्क्याऽऽह । **त्रय्येति** । न हि प्रत्यक्षादिना तद्धीस्तदयोग्यत्वादतो मुमुक्षुर्वेदेनैवाऽऽत्मतयोक्तेन स्वस्वरूपं विदित्वैव निर्वृणोति तमेव विदित्वेत्यादिश्रुतेरित्यर्थः । अद्वयत्वं विशदयितुं निर्वृतिं विशिनष्टि । **कार्येति** ॥ १३ ॥

**वेदोऽसीत्यत एवास्य नाम जातस्य कुर्वते ॥**
**वेदात्मना कथं नाम परं ब्रह्म प्रपत्स्यते ॥ १४ ॥**

स्वरूपभूतवेदेन परस्य प्रतिपत्तिरित्यत्र युक्त्यन्तरमाह । **वेदोऽसीति** । आत्मभूतवेदस्य स्वरूपबोधकत्वमतःशब्दार्थः । जातस्य शिशोर्वेदोऽसीति नाम कुर्वतामभिप्रायमाह । **वेदात्मनेति** ॥ १४ ॥

**वाजिशाखासु सर्वासु ह्यासुरायणपूर्वकाः ॥**
**समाना वंशर्षयोऽमी ह्या समाप्तेरितीक्ष्यताम् ॥ १५ ॥**

ब्रह्म स्वयंभ्वित्यत्र ब्रह्मशब्दार्थमुक्त्वा पूर्ववंशद्वयस्थमवान्तरविशेषमाह । **वाजिशाखास्विति** । पञ्चदशसंख्याकासु सर्वास्वेव तासु वंशद्वयस्यर्षयः पाठक्रमेणाऽऽसुरायणपुरःसरा वेदाख्यब्रह्मपर्यन्तास्तुल्या आसुरायणात्पूर्वे तु प्रतिशाखमुभयत्र मनुष्यान्तास्ते भिद्यन्ते तद्भेदश्रुतेरित्यर्थः । वंशर्षीणां तुल्यत्वमध्यापकप्रसिद्धमित्याद्यो हिशब्दः । तत्सामान्यस्य पाठानुसारेणानुभवयोग्यत्वमिति द्वितीयो हिशब्दः ॥ १५ ॥

**आदित्येन हि प्रोक्तानि यजूंष्येतानि यानि तु ॥**
**आदित्यानीत्यतस्तानि सम्यगाचक्षते बुधाः ॥ १६ ॥**

आदित्यानीमानीत्यत्र यजुषामादित्यत्वं श्रुतं तत्साधयति । **आदित्येनेति** । तेन वाजिशाखावच्छिन्नं यजुषां प्रोक्तत्वं याज्ञवल्क्येन प्राप्तत्वं च पुराणेपु प्रसिद्धमिति हिशब्दार्थः ॥ १६ ॥

**वेदात्मनो रवेरेवं संप्रदायोऽयमागतः ॥**
**परमेष्ठ्यादिकान्सर्वान्पारंपर्येण मानुषान् ॥ १७ ॥**

इतश्च तेषामादित्यात्मत्वमित्याह । **वेदेति** । स हि वेदात्मा[1] हिरण्यगर्भस्ततः परमेष्ठिनो विद्यासंप्रदायोऽतस्तदादिकान्सर्वानेव प्रति पारंपर्येणाऽऽगतोऽयं संप्रदायस्तस्मादेवाऽऽदित्यत्वं यजुषामित्यर्थः । एवमिति वंशब्राह्मणाधीतक्रमकथनम् ॥ १७ ॥

**असंस्पृष्टं परं ब्रह्म सर्वदोपविवर्जितम् ॥**
**एतदादित्यगं भाति तद्वेदानां परं वपुः ॥ १८ ॥**

न केवलं तेषामेवाऽऽदित्यत्वं किंतु सर्वस्यैव वेदस्य तस्य त्रयीमयत्वप्रसिद्धेरित्याह ।

---

१ क. ग. °दात्मा स क° ।

**असंसृष्टमिति । स यश्चायं** पुरुषे यश्चासावादित्ये स एक इत्यादिश्रुतेर्वेदरूपस्य परस्याऽऽदित्ये प्रतिष्ठितत्वात्तस्य सर्वस्याऽऽदित्यता युक्तेति भावः ॥ १८ ॥

**उत्सन्नमपि यद्ब्रह्म तदादित्ये न नश्यति ॥**
**तदार्षेणैव विन्दन्ति तपस्तप्त्वा महर्षयः ॥ १९ ॥**

तत्रैव हेत्वन्तरमाह । **उत्सन्नमिति । तस्माद्यज्ञात्सर्वहुत** इत्यादिश्रुतेर्निःश्वासवत्परस्मात्प्रवृत्तमपि वेदाख्यं ब्रह्माऽऽदित्यात्मनि तस्मिन्प्रलयावस्थायामस्तीत्यत्र प्रमाणमाह । **तदार्षेणेति ।**

'युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा' ॥

इत्यादिवाक्यमत्र मानमित्यर्थः ॥ १९ ॥

**वेदब्रह्मण आरभ्य सर्वेषामपि शाखिनाम् ॥**
**सांजीवीसूनुपर्यन्तो वंश एको न भिद्यते ॥ २० ॥**

वंशद्वयस्थं विशेषं यजुषामादित्यत्वं चोक्त्वा समानमित्यादि व्याकरोति । **वेदेति ।** सर्वेषां प्रकृतपञ्चदशसंख्याकवाजिशाखाध्येतॄणामिति यावत् ॥ २० ॥

**सांजीवीपुत्रतस्त्वर्वाक्प्रतिशाखं पृथक्पृथक् ॥**
**आचार्यभेदाद्भिद्यन्ते वंशा वाजसनेयिनाम् ॥ २१ ॥**

वंशस्तृतीय आ सांजीवीपुत्रादितिविशेषणसामर्थ्यलभ्यमर्थमाह । **सांजीवीति ।** वाजसनेयिनां प्रतिशाखं सांजीवीपुत्रादुपक्रम्य मनुष्यपर्यन्तमन्तिमा वंशाः पृथग्भिद्यन्त आचार्यभेदोपलम्भादिति योजना ॥ २१ ॥

**इत्युक्तैकात्म्यवाक्यप्रविकचकमला प्राज्यसन्न्यायगन्धा**
**काण्डैश्चित्रा षडर्थैर्मधुमुनिखिलकैर्मस्करीन्द्रालिजुष्टा ॥**
**श्लोकग्रन्थिप्रबद्धाऽविषयमितिफला प्रेमसत्सूत्रसूत्रा**
**माला गङ्गेव शंभुं पदममलमजं वैष्णवं साऽनुयाता ॥ २२ ॥**

अथेदं वार्तिकं ख्यातिलाभपूजार्थमाचरितत्वादनाप्तप्रणीतं विद्वद्भिर्नाऽऽदेयं तथाचास्य शिष्टपरिग्रहद्वारा प्रचयगमनाभावाद्वार्तिककृतः श्रमो वृथेत्याशङ्क्य वार्तिकप्रणयनव्याजेन भगवतो वासुदेवस्यानुसंधानमभिप्रेतं न ख्यात्यादीति कुतो यथोक्तदोषाशङ्केत्याह । **इत्युक्तेति ।** अस्य हि वार्तिकस्य भगवत्पादपूजासाधनीभूतमालात्वमत्र संपाद्यते तत्र षड्भिरध्यायैरुक्तनीत्या व्याख्यातान्यैक्यवाक्यान्येव प्रविकचानि कमलानि यस्यां सा तथा न हि विना पुष्पैर्माला युक्ता न चात्र पुष्पान्तराणि सन्ति सा च प्रचुरनिर्दोषन्यायात्मकसौरभ्यभागिनी न हि सौगन्ध्यविधुरां मालामुपाददते न च वाक्यात्मकसरसीरुहचितायां स्रजि तदुपकरणन्यायातिरेकेण सौरभ्यान्तरमस्ति मधुमुनिखिलसंज्ञैश्च काण्डै-

स्त्रिभिर्विचित्रा न हि काण्डानि विना केवलैरेव कमलैरारचिता माला रुचिरा लक्ष्यते न चात्र काण्डान्तराणि विद्यन्ते परमहंसपरिव्राजकपरिदृढभृङ्गैश्च प्रीतिपूर्वकं सेविता न हि चञ्चरीकपरिसेवनं विना दूरस्थानां मालामवलोकयतां तद्गतं सौरभ्यमध्यवसातुं शक्यं न चात्र मधुकरान्तराणि संभावितानि प्रकृतद्वादशसहस्रसंख्याकवार्तिकाख्यश्लोकग्रन्थिभिर्विरचिता न हि ग्रन्थिभिर्विना मालानिर्माणं घटते न चात्र प्रकृतश्लोकग्रन्थिव्यतिरेकेण ग्रन्थयः सन्ति सन्ति च प्रकृतेषु श्लोकेषु ग्रन्थयः प्रकृतां व्याख्यां विहाय तेषां दुर्भेद्यत्वान्न च माला फलविकला केनचिदुपादीयत इयं तु प्रत्यक्षाद्यविषयप्रत्यग्भूतब्रह्मसाक्षात्कारलक्षणपरमानन्दफलोपेता प्रेक्षावतामुपादानपदवीमधिरोहति परप्रेमास्पदं परमानन्दात्मकं निरुपाधिकं परं ब्रह्म तदेवाज्ञानशबलं सच्छब्दं सर्वकारणं तदेवापञ्चीकृतभूतपञ्चकोपाधिकं सूत्रं तद्विधसूत्रोपेता या विरचिता माला न खल्वसूत्रा माला संभावनामर्हति न चात्र सूत्रान्तरं क्रमते सा चेयं भगवतो विष्णोः स्वरूपं मुमुक्षुप्राप्यं तात्पर्येणानुयाता तदलंकारतामाचरति न खलु निखिलगुणवत्यपि माला कस्यचित्पुरुषधौरेयस्यालंकारत्वेनासमर्पिता फलवती भवितुमुत्सहते न च भगवत्पदमन्तरेणान्यत्रालंकर्तव्यमस्तीति योजना। प्रकृतमालायास्तात्पर्येण भगवत्पदानुगतौ दृष्टान्तमाह। **गङ्गेवेति**। यथा स्वर्धुनी स्वर्गादागता भगवतः शंभोरतिरिक्तमात्मनो धारयितारमपश्यन्तीति योजना। प्रकृतमालायाः प्रदर्शितभगवत्पादादन्यदागन्तुकमनुचिता सती तदेवानुगतेत्यर्थः। वैष्णवे पदे यथोक्तमालार्पणमुचितमिति वक्तुं पदं विशिनष्टि। **अमलमिति**। अमलत्वं साधयति। **अजमिति** ॥ २२ ॥

**यत्प्रज्ञोदधियुक्तिशब्दनखजश्रद्धैकसन्नेत्रक-**
**स्थैर्यस्तम्भमुमुक्षुदुःखितकृपायत्नोत्थबोधामृतम् ॥**
**पीत्वा जन्ममृतिप्रवाहविधुरा मोक्षं ययुर्मोक्षिण-**
**स्तं वन्देऽत्रिकुलप्रसूतममलं वेधोभिधं[1] मद्गुरुम् ॥ २३ ॥**

ननु शास्त्रादौ गुरवो नमस्कृतास्तत्फलं च शास्त्रसमाप्तिलक्षणमतिवृत्तं तथाचान्ते तन्नमस्कारो न कर्तव्योऽफलत्वादित्याशङ्क्याऽऽदाविवान्तेऽपि गुरुनमस्कारो विद्याप्राप्तिहेतुताद्योतनाय विधेय इति मन्वानो गुरुं प्रणमति। **यत्प्रज्ञेति**। यस्य भगवतो भाष्यकृतः प्रज्ञैव पारविरहादुदधिस्तस्मान्मथ्यमानाद्युक्तिश्चोपकरणं शब्दनं च करणं तदात्मकेन खजेन मुमुक्षूणामपेक्षितमोक्षनिदानज्ञानममृतं मया निर्वर्तनीयमन्यस्य तदशक्तेरित्यास्तिक्यबुद्धिरूपातिदृढरशनाशालिनाऽस्यैव भगवतः स्थैर्याख्यस्तम्भनिबन्धेन मुमुक्षुषु दुःखितेषु कृतकृपारूपयत्नादुत्पन्नं बोधाभिधानममृतं पीत्वा शुश्रूषादिद्वारा लब्ध्वा जन्मादिप्रवाहशून्या मोक्षिणो बहवो मोक्षं प्राप्तवन्तस्तदशेषदोषशून्यं हिरण्यगर्भमिव साक्षादवस्थितमात्रेय-

---

१ क. ग. बोधाभिधं । ख. वेधाभिधं ।

गोत्रप्रसूतं शिष्टानामग्रेसरं वन्दे मदीयं गुरुमिति योजना । यस्य प्रज्ञा यत्प्रज्ञा सैवोदधिवदुदधिर्निरवधित्वाद्युक्तिश्च शब्दनं च युक्तिशब्दने ते एव खजो यस्य स तथा श्रद्धैवैकं मुख्यं सदतिदृढं नेत्रं वैशाखबन्धनरज्जुर्यस्य स तथोक्तः स्थैर्यमेव स्तम्भो मथ्याश्रयो यस्य स तथा मुमुक्षवश्च ते दुःखिताश्च तेषु कृपैव यत्नो यस्य स तथा यत्प्रज्ञोदधिश्चासौ युक्तिशब्दनखजश्चासौ श्रद्धैकसन्नेत्रकश्चासौ स्थैर्यस्तम्भश्चासौ मुमुक्षुदुःखितकृपायत्नश्च तस्मादुत्थं बोधाख्यममृतमिति विग्रहः । **वेधोभिधमिति**[1] । विदधातीति वेधाः परमेश्वरस्तस्याभिधा शंकराख्या यस्य तं गरीयांसं वाक्कायचेतोभिर्नम्री भवानीति संबन्धः ॥ २३ ॥

**यामस्मद्गुरुरेव वेदशिरसामैकात्म्यतात्पर्यतो**
**वृत्तिं सज्जनशंकरीं सुविमलां नानानयोद्द्योतिताम् ॥**
**चक्रे काण्वसमाश्रितोपनिषदो दुस्तर्कदोषापहां**
**श्रद्धामात्रबलेन वार्तिकमिदं तस्याः समासात्कृतम् ॥ २४ ॥**

अनाप्तप्रणीतत्वमसांप्रदायिकत्वं च परित्यज्य स्वकीयवार्तिकप्रणयनमुपसंहरति । **यामित्यादिना** । यां काण्वसमाश्रितोपनिषदो वृत्तिमस्मद्गुरुश्चक्रे तस्या वार्तिकमिदं कृतमिति संबन्धः । वेदान्तानामैकात्म्यतात्पर्यपर्यालोचनातः काण्वशाखाश्रितबृहदारण्यकनामधेयोपनिषद्व्याख्यानव्याजेन सर्वासामेवोपनिषदां वृत्तिं गुरुरकरोदतो गम्भीरा सा वार्तिकसापेक्षेत्यभिप्रेत्याऽऽह । **वेदशिरसामिति** । सन्तो जनाः साधनचतुष्टयसंपन्नास्तेषां निरतिशयपुरुषार्थकारित्वाच्च निर्दोषा वृत्तिरित्याह । **सज्जनशंकरीमिति** । शब्दतोऽर्थतश्च दोषराहित्यं दर्शयति । **सुविमलामिति** । जल्पवादरूपन्यायोपकरणवत्त्वाच्च निर्दोषा सेत्याह । **नानेति** । श्रेयोमार्गपरिपन्थिपरपक्षप्रतिक्षेपकत्वाच्चादोषा सेत्याह । **दुस्तर्केति** । एवंविधाया वृत्तेः श्रद्धया वार्तिकमारचितं न तु सामर्थ्यादित्यनौद्धत्यं कथयति । **श्रद्धामात्रेति** । अस्मिन्वार्तिके श्रोतृप्रवृत्त्यर्थं ग्रन्थलाघवमर्थपुष्टिं चाऽऽचष्टे । **समासादिति** । भाष्यकारस्यैव भगवतो यथोक्तवृत्तिकरणे सामर्थ्यं नान्यस्यैवमिति वक्तुमेवेत्युक्तम् । अत्र श्लोके यां काण्वोपनिषच्छलेनेत्यत्रोक्तं सर्वमनुसंधेयम् ॥ २४ ॥

**आ शैलादुदयात्तथाऽस्तगिरितो भास्वद्यशोरश्मिभि-**
**र्व्याप्तं विश्वमनन्धकारमभवद्यस्य स्म शिष्यैरिदम् ॥**
**आराज्ज्ञानगभस्तिभिः प्रतिहतश्चन्द्रायते भास्कर-**
**स्तस्मै शंकरभानवे तनुमनोवाग्भिर्नमस्तात्सदा ॥ २५ ॥**

---

१ क. बोधाभिधमिति । ख. वेधाभि° ।

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके षष्ठाध्यायस्य
पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति द्वादशसाहस्रवार्तिकामृतमीरितम् ॥
काण्वारण्यकभाष्यस्य शांकरस्य समासतः ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवत्पूज्यपादशिष्य-
श्रीमत्सुरेश्वराचार्यकृतौ बृहदारण्यकोपनिषद्भाष्यवार्तिकम-
स्थाने षष्ठोऽध्यायः ॥ ६ ॥

बृहदारण्यकक्रमेणाष्टमोऽध्यायः ॥ ८ ॥

यस्य देवे परा भक्तिरित्यादिश्रुतेर्निरतिशयगुरुभक्तिभाजो ब्रह्मज्ञानं नेतरस्येति ज्ञापयितुं पुनर्गुरुं नमस्यति । **आ शैलादिति** । अत्र च भगवान्भाष्यकारो भानुत्वेन तदन्तेवासिनस्तज्ज्ञानं च भानुत्वेन निरूप्यते । उदयास्तगिरिमध्यस्थतया वर्तमानमशेषमपि जगदधिकृतमुमुक्षुजातं यस्य भगवतः शिष्यैः सनन्दनाचार्यप्रमुखैरतिविशदयशोरश्मिशालिभिर्व्याप्तं सदबोधान्धकारविधुरमभूद्यस्य च गुरोर्ज्ञानाख्यकिरणैरान्तिकमुपसृतैः प्रतिहतः सन्भास्करश्चन्द्रवदाचरति स्म भाष्यकृतो हि शिष्याणां यशोरश्मयः सकलमपि मण्डलमश्नुवानास्तत्र तत्राधिकृतं पुरुषधौरेयमुपसन्नमासाद्य तत्तद्गतमबोधं तिरयन्ति भाष्यकारस्य पुनर्भगवतो ज्ञानगभस्तयो भुवमिव द्यामन्तरिक्षं चाधिरुह्य तत्र तत्रान्धकारं ध्वंसयन्ते तस्मै **श्रीमच्छंकरनाम** बिभ्रते भगवते भाष्यकृते भानवे त्रिधा नमस्तादिति संबन्धः । सदेति भक्तिश्रद्धयोरतिशयं द्योतयति तत्पूर्विका हि नमस्क्रिया फलायते ॥ २९ ॥

शब्दान्यथात्वं यत्किंचिदस्मन्मान्द्यादिहेक्ष्यते ।
प्रतिनेयं कथंचित्तच्छन्दोवत्तद्विदां स्थितेः ॥ १ ॥
विश्वानुभवपादानामवाप पदवीमहम् ।
सुरेश्वरगिरां व्याख्यामाख्यातां समर्चाकृपम् ॥ २ ॥
नमो जन्मादिसंबन्धबन्धविध्वंसहेतवे ।
हरये परमानन्दपरिज्ञानवपुर्भृते ॥ ३ ॥
नमस्त्रय्यन्तसंदोहसरसीरुहभानवे ।
गुरवे परपक्षौघध्वान्तध्वंसपटीयसे ॥ ४ ॥
व्याख्याऽसंख्याततर्कक्रकचचयरयस्त्रस्तदुस्तर्कशङ्का-
व्याजप्रश्नप्रकारप्रसरपरमता वस्तुतत्त्वं श्रयन्ती ।
शुद्धानन्दाङ्घ्रियुग्मस्मृतिभरनिभृतप्रौढगूढोक्तिगाढाऽऽ-
नन्दज्ञानप्रणीता जगति मुदमियं सद्धियां संविधत्ताम् ॥ ५ ॥

श्रौतस्मार्तविचारनीरनिवहो नानानयोर्मिर्दृढ-
श्लोकग्रन्थिमहाग्रहस्फुटतरव्याकाररत्नाकरः ॥
प्रत्यग्बोधसुधाविभूतिविभवप्रोद्दाममुख्यैकभूः
सोऽयं वार्तिकवारिधिर्विजयते त्रय्यन्तचूडामणिः ॥ ६ ॥

विहिता निहिता सेयं सुरेश्वरवचोनुगा ।
शास्त्रप्रकाशिकाऽस्माभिरर्पिता पुरुषोत्तमे ॥ ७ ॥

इति वार्तिकपीयूषस्वरसास्वादनेच्छवः ।
शास्त्रप्रकाशिकां व्याख्यां समुपाध्वं मुमुक्षवः ॥ ८ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां षष्ठाध्यायस्य
पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यश्रीम-
द्भगवदानन्दज्ञानकृतायां सुरेश्वरवार्तिकटीकायां शास्त्र-
प्रकाशिकाख्यायां षष्ठोऽध्यायः ॥ ६ ॥

**श्लोकानामादितः समष्ट्यङ्काः—११११८१**

* संपूर्णाघलचारुवर्णवदना निर्दुष्टदृष्टिश्रुति-
नानान्यायसमूहसन्मणिगणाकीर्णप्रमाणोज्ज्वला ।
सर्वज्ञं परमेश्वरं परिगता सन्मानमुक्ताश्रिता
टीका शास्त्रविभासिकाऽन्यगिरिजेवाऽऽस्तां सतां प्रीतये ॥ १ ॥

**इति परिसमाप्तिमगमदिदं शास्त्रप्रकाशिकाख्यटीकासंवलितबृहदारण्य-
कोपनिषद्भाष्यवार्तिकम् ।**

---

* अयं श्लोकः पुस्तकद्वयेऽपि टीकासमाप्त्यनन्तरं बहिर्लिखितो मिलितोऽस्य च टीकामहत्त्वव्यापकत्वात्समीचीनत्वाट्टीकाकृत्कृतत्वसंभवाच्च संगृहीतः ।

१ ख. °व्यापार° ।

# अथ बृहदारण्यकोपनिषद्भाष्यवार्तिक
## श्लोकाद्यचरणवर्णानुक्रमः ।

## आ

इ

| श्लोकाद्यचरणानि | पृष्ठाङ्काः |
|---|---|
| कर्मकृद्धिषणान्तो यः ... ... ... | १५४२ |
| कर्मक्षयात्तथा बुद्धिः ... ... ... | १०८८ |
| कर्मच्छिद्रेषु कुर्वन्ति ... ... ... | ७३५ |
| कर्मज्ञानादिहेतुत्वात् ... ... ... | ५२९ |
| कर्मज्ञानानुरूपेण... ... ... ... | १५४८ |
| कर्मणश्चास्य निष्पत्तौ ... ... ... | २०३९ |
| कर्मणः क्रियमाणस्य ... ... ... | १७४३ |
| कर्मणः फलसंप्राप्तिः ... ... ... | ७२९ |
| कर्मणाऽनार्जितो यस्मात् ... ... | ७८३ |
| कर्मणा निर्मितं लोकं ... ... ... | १५७४ |
| कर्मणा पितृलोकाप्तिः ... ... ... | ८४२ |
| कर्मणा पौरुषेणैवं ... ... ... | १००१ |
| कर्मणां चाऽऽत्मविद्यायां ... ... | १९११ |
| कर्मणैव स्वसिद्ध्यर्थम् ... ... ... | ७२६ |
| कर्मणैवास्य विज्ञानं ... ... ... | १७३६ |
| कर्मणो गमनस्येह ... ... ... | १५४४ |
| कर्मणोऽदृष्टसामर्थ्ये ... ... ... | ११९३ |
| कर्मणोद्भाविता यत्र ... ... ... | १५४८ |
| कर्मणोऽपि तथाऽत्यन्तं... ... ... | १५६३ |
| कर्मणोऽप्युपसंहारः ... ... ... | १९९० |
| कर्मणो भुज्यमानस्य ... ... ... | १७४४ |
| कर्मणोऽवसरश्चेत्स्यात् ... ... ... | ३६८ |
| कर्मण्यादेशशब्दोऽयं ... ... ... | १०२१ |
| कर्मण्युद्गात्रपेक्षावत् ... ... ... | ४२६ |
| कर्मतः कालतो मृत्योः ... ... ... | ११४३ |
| कर्मधारय एवातः ... ... ... | १६९९ |
| कर्म नाऽऽरभते यावत्... ... ... | १५२९ |
| कर्मप्रकरणाकाङ्क्षि ... ... ... | १९०४ |
| कर्मप्रकरणे नायं ... ... ... | १३३६ |
| कर्म प्रधानमित्येवं ... ... ... | १७५७ |
| कर्मप्राधान्यमेवातः ... ... ... | ११७५ |
| कर्मभिश्चाविरुद्धं यत् ... ... ... | ११९४ |
| कर्मभ्य इव च ज्ञानात् ... ... ... | ६५२ |
| कर्मभ्यः प्रव्रजिष्यन्वा ... ... ... | ८४९ |
| कर्मभ्योऽपि न मुक्तिः स्यात् ... ... | ४७५ |
| कर्ममन्त्रौषधितपः ... ... ... | ७२६ |
| कर्मराशिगिराऽऽत्माऽपि ... ... | १८०२ |
| कर्मराशिरथेदानीं ... ... ... | १९८९ |
| कर्मश्रुतानुरोधेन... ... ... ... | १७३७ |
| कर्मसाधनरूपत्वात् ... ... ... | ७९३ |
| कर्म साध्वेव कर्तव्यं ... ... ... | १७५६ |
| कर्महीनेऽपि विदुषि ... ... ... | ४२३ |
| कर्महेतुविरुद्धत्वात् ... ... ... | १९४८ |
| कर्महेतुविरुद्धं तु ... ... ... | १९०४ |
| कर्माणि कर्मसंत्याग- ... ... ... | १८९९ |
| कर्मातः कारणं मुक्तेः ... ... ... | ११८४ |
| कर्मादिपरतन्त्रत्वात् ... ... ... | ११७२ |
| कर्मादिहेतुजं रूप- ... ... ... | ९२१ |
| कर्माधिकारविच्छेदि ... ... ... | १२५४ |
| कर्माधिकारहेतुर्मे ... ... ... | ७९२ |
| कर्माधिकृतिहेतुत्वात् ... ... ... | ७६७ |
| कर्माऽऽभिचारिकं प्रोक्तं ... ... | २०५८ |
| कर्माऽऽरभावहै देवि ... ... ... | २०६३ |
| कर्माऽऽरम्भे विकर्त्रैव ... ... ... | ११५६ |
| कर्मार्थद्योतिका वेद ... ... ... | १८९९ |
| कर्माविद्याविनिर्मुक्त- ... ... ... | १५७५ |
| कर्माश्रयत्वतो लिङ्गात् ... ... ... | ११६८ |
| कर्मिणः कर्मशेषत्वम् ... ... ... | ७६८ |
| कर्मिणोऽपि हि देवाप्तिः ... ... | ४२४ |
| कर्मेतं कर्म तेनेदक् ... ... ... | ११८२ |
| कर्मेदं तत उद्धृत्य ... ... ... | २०६१ |
| कर्मेन्द्रियाणां सर्वेषाम् ... ... ... | ३७९ |
| कर्मेन्द्रियाणां सार्थानां ... ... ... | १७५१ |
| कर्मेप्सिततमं रूपं ... ... ... | १२३६ |
| कर्मेतदेव कुर्वाणः ... ... ... | ५६९ |
| कर्मैव कारणं केचित् ... ... ... | ७२८ |
| कर्मैव वेदशास्त्रेऽस्मिन् ... ... ... | १७५६ |
| कर्मैवावधृतं यद्वत् ... ... ... | १७५७ |
| कर्मैतन्त्रयं तच्च ... ... ... | १२९५ |
| कर्मोत्थत्वात्प्रमात्रादे- ... ... | ९३९ |
| कर्मोपभोगसिद्ध्यर्थं ... ... | १७३३,१५३१ |
| कर्मोपात्तानि भूतानि ... ... ... | १७२१ |
| कर्मोपासनमुक्त्वाऽथ ... ... | ३४५ |
| कलञ्जभक्षणस्येव ... ... ... | ३६६ |
| कलाभिरस्तः कृत्ताभिः... ... ... | ८३५ |
| कलावृद्धिक्षयाभ्यां तु ... ... | ११४२ |
| कलिङ्गारम्भसिद्ध्यर्थं ... ... ... | १००० |
| कल्पनाधिक्यतश्चैतत् ... ... ... | १३१४ |

श्लोकाद्यचरणानि ... पृष्ठाङ्काः

# * अवशिष्टश्लोकाद्यचरणानां वर्णानुक्रमः ।



* वर्णानुक्रमकर्तुरनवधानादेतान्यवशिष्टान्यतोऽत्रान्ते प्रदत्तानि ।

## अवशिष्टश्लोकाद्यचरणानां वर्णानुक्रमः ।



---




[illegible]वार्तिकश्लोकाद्यचरणवर्णानुक्रमः ।